THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

No's, 186, 187, 201, 217, 259, 260, 263, 264, 277, 278, 284, 292, 301, 319, 337, 339, 343, 346, 349, 362 & 365

THE

# GÂDÂDHARÎ

A COMMENTARY ON DÎDHITI THE COMMENTARY OF TATTVA CHINTÂMANI BY

Gadadhara Bhattachârya Chakravartin (With Texts).

Edited by

*(1) M. M. P. Vindhyesvari Pd. Dwivedi and M. M. P. Vamacharana Bhattacharya 1—4 fas (2) M. M. P. Vindhyesvari Pd. Dwivedi and M. M. P. Vamacharana Bhattacharya and Nyayacharya Sri Rama Sastri Bhandari 5—11 fas (3) M. M. P. Vamacharana Bhattacharya and Nyayacharya Sri Rama Sastri Bhandari 12—14 fas (4) M. M. P. Vamacharana Bhattacharya and Nyayopadhyaya P. Dhundiraja Sastri 15—21 fas*

FASCICULUS 1–21.

*PRINTED-PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE
*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1927.

## Agents

1 Luzac & co, Booksellers,
LONDON

2 Otto Harrassowitz, Leipzig
GERMANY.

3 The Oriental Book-supplying Agency,
POONA

चौखम्बा–संस्कृत–ग्रन्थमाला

( ग्रन्थ संख्या ४२ )

नम्बर्स १८६-१८७-२०१-२१७-२५९-२६०-२६३-२६४-
२७७-२७८-२८४-२९२-३०१-३१९-३२७-३३२-
३४३-३४६-३४२-३६२-३६५ ।

# गादाधरी

## श्रीगदाधरभट्टाचार्यचक्रवर्त्तिविरचिता ।

श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या
श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता ।

१-४खण्डान्तं म० म० प० विन्ध्येश्वरीप्रसाद द्विवेदिना, म०म०प० वामाचरण-
भट्टाचार्येण च; ५-११ खण्डान्त म० म० प० विन्ध्येश्वरीप्रसादद्विवेदिना,
म० म० वामाचरणभट्टाचार्येण न्यायाचार्य श्रीरामशास्त्रिणा च; १२-१४
खण्डान्त म०म० प० वामाचरणभट्टाचार्येण, न्यायाचार्य श्रीरामशा-
स्त्रिणा च; १५-२१ खण्डान्तं म०म० प० वामाचरणभट्टाचार्येण,
न्यायोपाध्याय पं० ढुण्ढिराजशास्त्रिणा च संशोधितम् ।

प्रकाशकः–

जयकृष्णदास–हरिदासगुप्तः—

चौखम्बासंस्कृतसीरीज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८३

अनुमानगादाधर्यां

# उपोद्घातः ।

## (१) न्यायशास्त्रस्य माहात्म्यम् ।

अथेयं प्रकाश्यते मुद्रयित्वा नव्यन्यायशास्त्रचूडामणि-मणिग्रन्थ-व्याख्यानरूपायाः, शिरोमणिरित्यपरसंज्ञया प्रथिताया दीधितेष्टीका गादाधरी । एतस्याः खलु निर्माता तर्ककर्कशप्रज्ञाप्रतिमाप्रभाप्रभाव-विहितानेकनिबन्धो वङ्गदेशीयविद्वन्मण्डलाभ्यर्हितपादपीठस्तार्किक-कुलनिकरकैरवकलाकरो बुधकुलकलापकमनीयावनितलस्फुरन्मनी-षाविकाशित आगम इव सदा लोकहितपरायणः पुरन्दरोद्यानमिव विमत्सरः विदुरोऽपि धृतराष्ट्रपक्षगतः कुलाचारनिरतोऽपि कौलाचा-रविरतः कारुण्यकेदाराङ्कुरोऽरुण्यकुङ्कुमस्य क्षीरसागरो विवेकरत्नविस-रस्याप्रतिमप्रतिभाप्रसारविनिर्जितप्रतिपक्षाचार्यवर्यो श्रीजीवाचार्यतः प्राप्तजन्मा द्विजवरो नव्यनैयायिकानामग्रणीर्गदाधरभट्टाचार्यः । नव्य-न्यायशास्त्रस्यातिगहनस्य बीजभूतं षोडपदार्थतत्त्वविवेकदृष्टिसिद्धौ-षधायमानं न्यायदर्शनमप्रतिरूपस्वरूपसंसारान्धकूपप्रतिघातविक-लीकृतानसुभृतः समुद्दिधीर्षुणा करुणावरुणालयेन भगवता महर्षिणा गोतमेन व्यरचि । तच्च—

> अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
> पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

इत्यादिनोक्तचतुर्दशविद्यासु न्यायविस्तरपदेन संगृहीतं न्यायवार्ति-कभूमिकायां म० म० पं० विन्ध्येश्वरीप्रसादद्विवेदिभिः श्रुतिस्मृत्यादि-प्रमाणप्रदर्शनपूर्वकं यथा प्रशंसितं, परमतदूषणोद्धारेण चास्य यथा बौ-द्धादिनास्तिकदर्शनेभ्यः प्राचीनत्वं च व्यवस्थापितं तत्तत्रैव द्रष्टव्यम् । तस्यैव च प्रत्यक्षानुमानोपमानशब्दाख्यप्रमाणचतुष्टयवादिनो महर्षेर्मत-मवलम्बमानेन लोकोत्तरनव्यन्यायप्रपञ्चप्रजापतिना महार्षिकल्पेन श्री-मद्गङ्गेशोपाध्यायेन प्रमाणादिषोडशपदार्थनिरूपणपरस्य पञ्चाध्याया-त्मकस्य न्यायशास्त्रस्य प्रमाणप्रकरणात्मकमेकांशमवलम्ब्य प्रमा-णचतुष्टयव्यवस्थापनपरो युक्तिदीप्तिजालजटिलस्तत्त्वचिन्तामणिर्म-हानिबन्धः सर्वेषां प्रमेयज्ञानसौलभ्याय प्रमाणतत्त्वावधारणार्थमेव निरमायि । तत्रेदमादिमं वाक्यम्-'अथ जगदेव दुःखपङ्कनिमग्न-मुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणि-

को मुनिः प्रणिनाय तत्र प्रेक्षावत्प्रवृत्त्यर्थं प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादावसूत्रयत्। तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते' इति। न्यायदर्शनस्थं 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति पञ्चदशाक्षरात्मकं १ अ०१आ० ३ सूत्रमेकमेवावलम्ब्य श्लोकद्वादशसाहस्र्यात्मकश्चिन्तामणिमहानिबन्धो (१)गङ्गेशोपाध्यायेन स्वमतिप्रागल्भ्येन यथा विदधे तथा नाव्यक्तं नव्यन्यायाम्बुधिपरिशीलनपराणां तर्करसिकानाम्। स चेदानीं मिथिला-वङ्ग-द्रविडादिदेशीयैर्महापण्डितैः साक्षात् परम्परया वा व्याख्यातः क्रोडपत्रादिभिरलङ्कृतः श्लोकानां लक्षाणामष्टाविंशत्योपबृंहितो नव्यन्यायशास्त्रत्वेन व्यवहर्तिं गमितोऽनेकैर्भारतीयैः पाश्चात्यैश्च विद्वद्भिः। एतेनाऽस्य ग्रन्थस्य नवीनत्वन्तद्व्याख्यानरूपाणां च दीधिति-जागदीशी-माथुरी-गादाधरी-क्रोडपत्रादीनां प्रलापत्वमात्रत्वं चेति निरस्तम्। शास्त्रतात्पर्यानवबोधात् गोतमीयसूत्राधारेणास्य विनिर्मितत्वाच्च। सूत्रभाष्यवार्तिकादीन्येवानवस्थितानि नवीनान्यकर्मण्याणि चेत्याद्याक्षेपेण न्यायस्य समूलोच्छेदं कर्तुमिच्छन्तोऽविज्ञातन्यायागममहिमानः पल्लवग्राहिपाण्डित्येनैव नैयायिकंमन्याः पाश्चात्या अभिनवदार्शनिकास्त्वस्माभिः खद्योतभाष्यचन्द्राख्यटीकाद्वयसहितस्य भाष्यस्य भूमिकायां दत्तोत्तरा इति विरम्यतेऽत्रास्मादृशामवर्णनीये न्यायशास्त्रस्य गांभीर्ये। अत एवोक्तं रघुनाथतार्किकशिरोमणिनाऽनुमानचिन्तामणिदीधितौ—

न्यायमधीते सर्वस्तनुते कुतुकान्निबन्धमप्यत्र।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः॥

एवमुदयनाचार्यश्रीहर्षादिभिरपि तत्रतत्र प्रतिमादितमेवास्य माहात्म्यम्।

## (२) न्यायशास्त्रस्य नव्यप्राच्यविवेकः।

केचित्तु अवच्छेदकावच्छिन्नशब्दादिभिर्व्याख्यातत्वेनास्य नवीनत्वसाधनमिच्छन्ति। तदपि शास्त्रतात्पर्यस्यानवगमात्त युक्तमिति भ्रमः। अन्यथा पातञ्जलदर्शनीयसमाधिपादस्य 'पूर्वेषामपि गुरुःका-

(१) गंगेशोपाध्यायप्रभृतीनां नव्यनैयायिकानामैतिह्यं विषयविवेचनप्रकरणे यथाक्रममनुपदमेव टिप्पण्यामुपपादयिष्यते।

लेनाऽनवच्छेदात्' इति २६ सूत्रे तद्भाष्यादौ चावच्छेदकादिशब्दानां व्यवहारात् तेषामपि नव्यत्वं स्यात्।

इदमत्र विचार्यते। किं तावत् न्यायशास्त्रस्य प्राचीनत्वमर्वाचीनत्वं वा? यद्यपि सूत्रकारीयप्रमाणभागनिरूपकत्वाद्गङ्गेशोपाध्यायप्रचलितशैलीसम्पन्नानां ग्रन्थानामद्ययावत्प्राचीनेष्वेवान्तर्भावः समुचितः, तथा तत्त्वचिन्तामण्यादिगादाधर्यन्तेषु सविवेचनेषु ग्रन्थेषु कुत्रापि आद्यन्ते वा नव्यशास्त्रं प्राच्यन्यायशास्त्रं चेति व्यपदेशस्यादर्शनात्सकलमेव न्यायशास्त्रमेकविधमेव भवितुं युक्तम्, तथापि भारद्वाजकृतस्य न्यायवार्तिकस्य 'अतिजरतीना'मित्यादिवाक्येन प्राचीनत्वं संस्थापयन्तो वाचस्पतिमिश्रादय एव प्राच्यनव्यव्यवहारे प्रमाणम्। नचैवमपि तत्त्वचिन्तामण्यादिनिबन्धानां नव्यत्वं पूर्वोक्तरीत्याऽसंभवीति वाच्यम्। न्यायसारमारभ्योपलभ्यमानेषु न्यायशास्त्रनिबन्धेषु 'इति प्राच्याः इति नव्या' इत्यादिना विद्वत्सूभयव्यवहारस्य प्रचलितत्वेन तन्निरासस्याशक्यत्वात्।

अत्र केचित्। आत्मादिप्रमेयपदार्थानां तत्त्वज्ञानान्निःश्रेयसमङ्गीकुर्वद्भिः गौतमादिमहर्षिभिर्निरात्मविज्ञानात्मवादिचार्वाकबौद्धादिपराजयार्थमात्मनोऽनुमानेन सिद्धिस्तावत् प्रदर्शिता। परार्थानुमानापरपर्यायस्य च न्यायस्य पूर्वाङ्गोत्तराङ्गसाकल्येनैव वस्तुसाधनक्षमत्वमिति तदनुसारिणां सूत्रग्रन्थानां शास्त्रीयसकलपदार्थप्रतिपादकानां भाष्यवार्तिकतात्पर्यटीकादिव्याख्याग्रन्थानां समानतन्त्रसिद्धानां चोक्तलक्षणसम्पन्नानां प्राचीनत्वम्। तदेकदेशप्रमाणव्याख्यानरूपाणान्तु तत्त्वचिन्तामण्यादीनां सव्याख्यानां निबन्धानां नव्यत्वमित्याहुः।

तन्मन्दम्। तथासति प्रमाणमात्रविवेचनपराणां जैनबौद्धादिग्रन्थानां प्राचीनानामपि नव्यत्वव्यवहार आपद्येत।

अपरे तु बाहुल्येन नास्तिकत्वेनाभिमतानां चार्वाकबौद्धादीनामेव तत्त्वचिन्तामणिपूर्वकालीनेषु सूत्रभाष्यादिग्रन्थेषु खण्डनस्योपलम्भात्तेषां पुराणत्वव्यवहारः, तत्त्वचिन्तामण्यादिषु तु आस्तिकत्वेन गृहीतानां मीमांसा-सांख्यादिदर्शनानामेवाधिक्षेप इति नव्यत्वव्यपदेश इति वदन्ति।

वस्तुतस्तु अलौकिकनूतनप्रतिभाशालिना विद्वद्वरेण गङ्गेशोपाध्यायेन भाष्यग्रन्थं मन्थानं विधाय तात्पर्यटीकादिङ्नागादिनिबन्ध-

प्रग्रन्थैर्न्यायवैशेषिकसूत्राम्बुधिं मथित्वा तत्सारभूतोऽयं तत्त्वचिन्तामणिर्नूतन एवोदपादीति तत्कालमारभ्य विनिर्मितस्य न्यायशास्त्रनिकरस्य नव्यत्वव्यवहार इति युक्तमुत्पश्यामः।

केचित्तु विद्वांसोऽस्य न्यायशास्त्रस्य प्राच्यं-नव्यं-नव्यनव्यं चेति त्रिविधं विभागं वदन्ति। तत्र सूत्रकारमारभ्योदयनात्पूर्वजातं प्राच्यम्(१) उदयनाद्गङ्गेशाद्वा दीधितिकारात्प्राग् नव्यम्(२) शिरोमणिमारभ्य निबद्धं तु सर्वं न्यायशास्त्रं नव्यनव्यमि(३)ति तेषामाशयः।

अत्र तृतीयविभागस्य मूलं विमृश्यमाणमवच्छेदकादिप्रवेशनिबन्धनमेव प्रतिभासते, तच्च व्यभिचरितत्वादयुक्तमित्युक्तमेव। किन्त्वेवं सति 'अतिजरतीना' मिति वाचस्पत्यवचनाच्चातुर्विध्यमप्यापद्येत। प्रदर्शितवचनबलेनोद्योतकारान्तानां गौतमकणादादीनामतिप्राचीनत्वमुद्योतकरभारद्वाजोत्तरकालवर्तिनां पुराणत्वं स्वस्य स्वसमकालस्थितानामुदयनादीनां च नव्यत्वमाविष्कुर्वता तदुत्तरसमयजातानां गङ्गेशोपाध्यायादीनां नव्यनव्यत्वस्य संभवदुक्तिकतया (१)अतिप्राचीन (२)प्राचीन (३)नव्य (४)नव्यनव्येति चतुर्धा विभागस्य वक्तुं शक्यत्वात्। तस्मादस्मदुक्तस्त्वित्यादिना प्रदर्शित एव प्राचीनार्वाचीनव्यपदेशः साध्विति कृतं वाग्विवादेन।

## (३) नव्यन्यायशास्त्रस्य विषयविवेचनम्।

स चायं प्राचीनतर्कशास्त्राम्बुधिनिर्मन्थनसमुद्भूतो नव्यन्यायशास्त्रकल्पनायुक्तीनामादिमः कल्पस्तत्त्वचिन्तामणिः प्रत्यक्षा(१)नुमानो(२)पमान(३)शब्दा(४)ख्ये खण्डचतुष्टये विभक्तः। तत्रादिमे खंडे त्रयोदश विषया विवेचिताः। तेषु प्रथमं धर्मव्यवस्थापनं विदधतोपाध्यायेन दृष्टादृष्टप्रयोजनककर्मणां साफल्यमङ्गीकुर्वताम् प्याच्छन्ननास्तिकानां पराजयार्थं ग्रन्थारम्भे विहितस्य मङ्गलस्य साफल्यप्रदर्शनापदेशेनाविगीतशिष्टाचारविषयाणां स्वेष्टदेवतोपासनादीनां श्रद्धया कृतानां पूजनान्तानां साफल्यं व्यक्तीकृतं मङ्गलवादे (१)। (२)प्रामाण्यवादे (३)अन्यथाख्यातिवादे च मीमांसकानां स्वतःप्रामाण्यवादिनां निरासो विहितः। (४) (५)लौकिकालौकिकप्रत्यक्षवादौ सर्वतन्त्रसिद्धौ युक्त्या प्रदर्शितौ। (६)समवायवादे च वेदान्तिनां मीमांसकानामपि मतं दूषयित्वा समवायः साधित.।(७)अभावोऽपि सांख्यादिमतविप्रतिपत्तिखण्डनद्वारा स्थापितः। (८)अनुपलब्धिवादेऽनु-




पलब्धेः प्रमाणान्तरत्वं निरस्तम्। (९)प्रत्यक्षकरणवादे लौकिकप्रत्यक्ष-करणानां विवेचनं, (१०)मनोणुत्ववादे मनसोऽणुत्वं च स्थापितम्। (११)अनुव्यवसायवादेन ज्ञानस्य स्वतो ग्राह्यत्ववादिनां मीमांसकानां (१२।१३) सविकल्पकनिर्विकल्पकवादाभ्यां च निर्विकल्पमात्रस्य प्रत्यक्षत्वमिच्छतां बौद्धानां खण्डनं विहितम्।

एवमनुमानखण्डेऽपि सप्तविंशतिविषयाणां निरूपणं विवेचितम्। ते चानुमानखण्डमभ्यस्यतां नैयायिकानां प्रथिता एवानुमित्यादयः ईश्वरानुमानान्तो विषयाः। तत्रापि द्वौ मुख्यभागौ व्याप्तिवादो हेत्वाभासवादश्च। अतो व्याप्तिवादे व्याप्तिसिद्धान्तलक्षणं हेत्वाभासे हेत्वाभाससामान्यलक्षणञ्चातीवोपयोगि सर्वेषामभिमतं प्रथितं चेति,तदुपादाय गंगेशप्रभृतीनां नव्यनैयायिकानामुभयत्र लक्षणे निष्कृष्य विवेचयामः॥

## श्रीसद्गुरुः शरणम्।

### ( ४ ) मण्युक्ते सिद्धान्तलक्षणे मतान्तरप्रदर्शनम्।

अत्रोच्यते [१]प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिरिति व्याप्तिलक्षणं श्रीमता गङ्गेशोपाध्यायेन(१) सिद्धान्तितम्।

---

( १ ) एष खलु नव्यनैयायिकतिलको दरभङ्गामण्डलान्तर्गते कमलारोधसि वर्तमाने कोरानग्रामे कस्यचिच्छ्रोत्रियस्य सदने समजनि। शैशवात एव चायं तर्कशास्त्रे निष्णातो महाकाल्युपासकश्चाभूत्। स च सप्तपदार्थीनिबन्धप्रणेतुः शिवादित्यस्योल्लेखात् वैशेषिकदर्शनावलम्बिनो रत्नकोशाख्यमहानिबन्धधृतमतस्योट्टङ्कनाच्च पञ्चशताधिकैकादशशतईस्वीयसंवत्सरादूर्ध्वमासीद्भूमण्डल इत्यनुमीयते। यतश्चिन्तामणिग्रन्थे व्याघ्रशिशुक-सिंहशिशुकापराह्वयोरानन्दसूरि-अपरचन्द्रसूरिणोर्बौद्धनैयायिकयोर्मतं सिंहव्याघ्राख्यव्याप्तिपूर्वपक्षलक्षणयोरपदेशेनोद्धृत्य निरस्तम्। खण्डनखाद्यमतखण्डनाच्च ११४६ ई० समये वर्तमानस्य कन्नौजाधिपतेर्जयचन्द्रस्य राज्ञः सभापण्डितस्य श्रीहर्षस्य समकालीनोऽयमिति वदन्तीतिहासविज्ञाः। एवं चायमतेन गङ्गेशोपाध्यायस्य समयस्त्रयोदशशताब्द्याः प्रथमभागोऽन्त्येन तु द्वादशशताब्द्या अन्तिमभाग इति विज्ञायते।

तत्र च नैयायिकशिरोमणिना (१)रघुनाथसार्वभौमेन दीधितिग्रन्थे कालो घटवान् कालपरिमाणादित्यत्राव्याप्तिवारणाय [२]साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावरूपोऽर्थो विवक्षितः। एवं च कालिकसम्बन्धसामान्ये महाकालानुयोगिकत्वसत्त्वेऽपि गगनप्रतियोगिकत्वविरहात् गगनाभाव एव घटवान् महाकालत्वादित्यादौ प्रतियोगिव्यधिकरणतया प्रसिद्ध इत्यव्याप्तिदोषो वारितो भवति।

(१)ई० १४७७ परिमितेऽब्दे श्रीमता रघुनाथसार्वभौमेन नदियाशान्तिपुरे जनुर्गृहीता। बाल्य एव तस्य पिता लोकान्तरमगमत्। जनन्या महता कृच्छ्रेण रघुनाथस्य पोषणं विहितम्। पञ्चवार्षिकोऽयं मात्रा कदाचिदग्न्यानयनार्थमादिष्ट आधारं विनैव तमानेतुं कस्यांचित् चतुष्पाठ्यां प्रविष्टः। ततश्च भूतिपुञ्जं करे संस्थाप्याग्निं गृहीत्वा गन्तुकामः स चतुष्पाठीशिक्षकेन वासुदेवसार्वभौमविदुषा लक्षितः। तस्य बुद्धिगाम्भीर्यमवलोक्य जातहार्देन सार्वभौमेन रघुनाथः स्वशिष्यतामानायि। रघुनाथसार्वभौमोऽपि व्याकरणसाहित्यादौ व्युत्पत्तिमुपलभ्य न्यायशास्त्रेऽपि परिश्रमं विधाय तत्र व्युत्पत्तिमुपलिप्सुर्गुरोराज्ञया मिथिलां गत्वा पक्षधरमिश्राणां छात्रो बभूव। रघुनाथस्त्वेकाक्ष एवासीदित्यपि वदन्ति तद्वृत्तज्ञाः। एकदा नैयायिकछात्रैः पंडितैश्च भूयिष्ठे विद्वत्समाजे चतुष्पाठ्या अध्यापकः पक्षधरस्तत्तर्कशास्त्रे व्युत्पन्नं रघुनाथसार्वभौममन्यैर्मैथिलछात्रैर्विवादयित्वा न ते विचारा ग्राह्या इत्यन्तेऽधिक्षिप्तवान्। तदसहमानेन सार्वभौमेन पक्षधरमिश्रान् हन्तुं सासिना तद्गृहसमीपेऽप्रावृतशरीरेणास्थायि। निशि कान्तया सहेन्दोः सुषमां पश्यतो गवाक्षस्थितस्य पक्षधरमिश्रस्य शिरश्छेत्तुं यदा प्रवृत्तो *रघुनाथस्तदेन्दोरप्यधिकं प्रकाशमानमेकं मुख जगत्यस्मिन्* वर्तते यदहमहोरात्रं चिन्तये यदाधारं नैयायिकप्रवरं मिथिलायामद्य जेतु कोऽपि न क्षम, इति पक्षधरवचनश्रवणमात्रेण तद्धस्तादसिर्भूमौ विग्रहश्च चरणयोः पपातेत्यपि रघुनाथसार्वभौमानां कीर्तिपताका वंगदेशेऽधुनापि गीयते। तेन च बौद्धाधिकारे [१] किरणावलीप्रकाशे [२] न्यायलीलावतीप्रकाशे[३] खंडनखंडखाद्ये च[४] दीधित्याख्या टीका कृता। १ पदार्थतत्त्वनिरूपणम् २अवच्छेदकत्वनिरुक्तिः ३नञ्वादः ४आख्यातवादश्चेति चत्वारो मूलग्रन्थाश्च निर्मिताः।

किन्तु कालस्य जगदाधारतया संयोगसमवायाभ्यां गगनादेर्वृत्तित्वे-ऽपि स्वरूपसम्बन्धेन चेत् वृत्तित्वं तदोक्तरीत्या गगनाभावोऽपि प्रतियोगिव्यधिकरणो भवितुं नार्हतीति उक्तकल्पं परित्यज्य-[३]निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वमित्यर्थान्तरं कृतं तेनैव। तथा च संयोगेन घटाद्यभावमादायैवोक्तदोषवारणं सम्भवतीति।

अनयोश्चाद्यकल्पे उक्ताव्याप्तिवारणेऽपि घटवान्नित्यज्ञानत्वादित्यादौ विषयितासम्बन्धे गगनप्रतियोगिकत्वनित्यज्ञानानुयोगिकत्वोभयसत्त्वेन गगनाभावमादायापि प्रतियोगिव्यधिकरणाभावस्य प्रसिद्धयसम्भवादव्याप्तिं निराकर्तुं श्रीमता (१)जगदीशतर्कालङ्कारेण [४]साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्याधिकरणतानिरूपितस्वरूपसम्बन्धे यदभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्त्वं हेतुमतस्तदभावप्रतियोगितानवच्छेदकं यत्साध्यताव-

---

(१) जगद्विख्यातस्य चैतन्यमहाप्रभोः श्वशुराणां सनातनमिश्राणामात्मजस्य प्रपौत्रोऽयं जगदीशतर्कालङ्कारः ई० पञ्चत्रिंशाधिकशोडषेऽब्दे जागदीशीं लिखितवानिति वदन्ति इतिहासज्ञाः। अष्टादशवर्षदेशीयोऽयं मातुकात्तरग्रहणं विधाय भवानन्दसिद्धान्तवागीशानां चतुष्पाठ्यां न्यायशास्त्रमधीतवान्, किन्तु—

श्रीसार्वभौमस्य गुरोः पदाब्जं विद्यार्थिनां कल्पतरोः प्रणम्य।
विनिर्मितः श्रीजगदीशविज्ञैर्विद्योततामाद्यमणेर्मयूखः॥

इत्याद्युक्त्या सार्वभौमान्तेवासिनमेवात्मानं मन्यते स्म जगदीशः। शब्दशक्तिप्रकाशिकायां' इति पुनर्न्यायरहस्येऽस्मद्गुरुचरणा' इत्युल्लेखदर्शनाचार्य न्यायरहस्य-न्यायकुसुमाञ्जलिकारिकाव्याख्या-पदार्थप्रकाशादिन्यायग्रन्थप्रणेता रामभद्रसार्वभौम एवेति सिद्ध्यति। (१) तत्त्वचिन्तामणिदीधितिप्रकाश(जागदीशी) (२) चिन्तामणिमयूख (३) न्यायादर्श (न्यायसारावली) (४) शब्दशक्तिप्रकाशिका- (५) तर्कामृत (६) पदार्थतत्त्वनिर्णय (द्रव्यभाष्यटीका) (७) न्यायलीलावतीदीधितिव्याख्याख्याः सप्त निबन्धा न्यायशास्त्रे जगदीशतर्कालङ्कारेण प्रणीताः तल्लेखे शब्दसंक्षेपेऽपि यदर्थगांभीर्यं तन्नाव्यक्तं नव्यन्यायकोविदानाम्॥

च्छेदकमित्याद्यर्थेनैवोक्तदोषद्वयसमाधानसंभवे निरुक्तप्रतियोगिकत्वे-त्यादिरीत्या दीधितिकारोक्तायां खण्डशः प्रसिद्धौ वैयर्थ्याक्षेपः प्रदर्शितः। [५]यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसंबन्धसामान्ये साध्यतावच्छेदकसम्बन्धत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तयनुयोगिकसम्बन्धत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकत्वस्यैव साध्यतावच्छेदके विवक्षणेऽपि उक्तदोषवारणं संभवतीति कथमेवं नोक्तमित्यादिरीत्यापि दीधित्याक्षेपोऽदर्शि। विश्वनाथन्यायपञ्चाननास्तु गगनादेर्वृत्तित्वमङ्गीकृत्यान्यं प्रतियोगिताघटितमुभयाभावकल्पमेवोद्धृतवन्तो न्यायसिद्धान्तमुक्तावल्याम्।

अन्त्यस्य प्रतियोगिताघटितोभयाभावकल्पस्य व्यभिचारिण्यतिव्याप्तिवारणाय जगदीशतर्कालङ्कारेण—[६] स्वावच्छेदकताघटकसम्बन्धेन यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नावच्छेदकताकत्व – यत्सम्बन्धावच्छिन्नावच्छेदकताकत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वमित्यर्थः। एवं च वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाभावेऽपि प्रतियोगितावच्छेदकताघटकसम्बन्धत्वस्य चैत्रो न पचतीत्यादौ पाकविशिष्टायाः कृतेरभावस्य वृत्त्यनियामकानुकूलत्वसम्बन्धेन चैत्रादावन्वयानुरोधेन सर्ववादिसंमतत्वात्, व्यभिचारिणि च सामान्याभावप्रतियोगितायामेव तादृशोभयाभावविरहान्नातिव्याप्तिरिति पूर्वकल्पोपादि मध्यमतापदेशेनान्यः कल्पोऽपि उल्लिखितः॥

(१)मथुरानाथतर्कवागीशास्तु [७] स्वावच्छेदकसम्बन्धेन स्वा-

---

(१)श्रीमान् नव्यनैयायिकप्रवरो मथुरानाथतर्कवागीशः समस्थिजनचन्द्रशास्त्रज्ञमासीत्। अस्य च पिता—

न्यायाम्बुधिकृतसेतुं हेतुं श्रीराममखिलसंपत्तेः।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा॥ १॥
श्रीमता मथुरानाथतर्कवागीशधीमता।
विशदीकृत्य दर्श्यन्ते मत्यक्षमणिफक्किकाः॥ २॥

इति तत्त्वचिन्तामणिरहस्याख्याया माथुर्याः प्रारम्भिकपद्यद्वयप्रदर्शनेन श्रीरामतर्कलङ्कारनाम्ना प्रथितो रघुनाथशिरोमणेरन्तेवासी पभवेति प्रतीयते। मथुरानाथतर्कवागीशस्तु रघुनाथशिरोमणि

वच्छेदकावच्छिन्नसामान्यासम्बन्धिनिरुक्तहेतुसम्बन्धिका या या प्रतियोगिता तदनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्यादिनोक्तचिन्तामणिसिद्धान्तलक्षणस्यार्थं निष्कृष्य तत्रापि वह्निमान् धूमादित्यादावसम्भवस्य प्रतियोगिताव्यक्तिसु साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेश्य स्वावच्छेदकसम्बन्धेनेत्यत्र साध्यतावच्छेदकसम्बन्धेनेत्युक्त्या वा निवारणेऽपि कालो घटवान् कालपरिमाणादित्यादौ अव्याप्तिं प्रदर्श्य [८]स्वावच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्नसामान्यासम्बन्धिनिरुक्तहेतुसम्बन्धिकप्रतियोगितासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्व-यद्धर्मनिष्ठपर्याप्त्यवच्छेदकत्वोभयाभावस्तद्धर्मावच्छिन्नसाध्यसामानाधिकरण्यमित्यर्थं कृतवन्तः । इत्थं चोक्तस्थले समवायादिसम्बन्धावच्छिन्नघटाद्यभावप्रतियोगितामादाय प्रसिद्धिसंभवेनाव्याप्तिवारणं सुलभमेव । घटवान्नित्यज्ञानत्वादित्यादौ वृत्त्यनियामकविषयतादिसम्बन्धेन साध्यतायामव्याप्तिवारणं च वृत्तिनियामकसम्बन्धवत् वृत्त्यनियामकसम्बन्धस्याप्यभावप्रतियोगितावच्छेदकत्वं स्वीकुर्वद्भिर्मथुरानाथतर्कवागीशैर्जगदीशतर्कालङ्काराणामुक्त[४]लक्षणार्थकरणप्रयासो व्यर्थतामापादितः । एवं तादात्म्यादिवृत्त्यनियामकसम्बन्धेन साध्यत्वे हेतुत्वे चाव्याप्तिवारणायाधिकरणत्वं वृत्तित्वमपहाय सम्बन्धित्वविशेषं शोभनं मन्वानेन मथुरानाथेन दीधितिकारोक्तायाः तादृ-

---

समस्य विद्वद्वरस्योक्तश्रीरामतर्कालङ्कारस्यैव सविधे न्यायशास्त्रमधीत्य माथुरीतिनाम्ना सुप्रथितां मणिग्रन्थस्य व्याख्यां चक्रे । सर्वासु च चिन्तामणिव्याख्यासु अधिकं सरलतया नास्यास्तादृग् प्रचारो नवद्वीपेऽभूद्यथा जागदीश्याः । निम्नलिखिता ग्रन्था मथुरानाथतर्कवागीशेन निबद्धाः—

(१) तत्त्वचिन्तामणिरहस्यम् (माथुरी)
(२) मण्यालोकरहस्यम् ।
(३) दीधितिरहस्यम् ।
(४) सिद्धान्तरहस्यम् ।
(५) लीलावतीप्रकाशरहस्यम् ।
(६) लीलावतीप्रकाशदीधितिरहस्यम् ।
(७) बौद्धाधिकाररहस्यम् ।

शसंयोगिवृत्तिधूमत्वादिरूपव्याप्तेः खण्डनमपि कृतम् ।

(१)गदाधरभट्टाचार्यास्तु सम्बन्धघटितशिरोमण्युक्त[२]उभयाभावघटितकल्पे संयोगेन घटादिसाध्यके घटत्वादिहेतावतिव्याप्तिवा-

(१) नव्यन्यायशास्त्रग्रन्थाम्बुधिपारङ्गतः श्रीमान् चक्रवर्तिनिचिदावलीसम्पन्नः श्रीगदाधरभट्टाचार्यः पूर्ववङ्गदेशावयव-बोग्रामण्डलान्तर्गतलक्ष्मीपासाग्राममधिवसन् सप्तदशशताब्यामभूत् इति इतिहासविदां सम्मतम् । तेन च नदियानाम्नि न्यायशास्त्रस्याद्यपीठे गत्वा हरिरामतर्कवागीशानां सविधे तर्कशास्त्रमधीतम् । किन्तु गुरोः पश्चात् पूर्ववङ्गदेशोद्भवत्वात्प्रथितबुधवंशानुद्भूतत्वाच्च तत्रस्थैश्छात्रैर्न्यायविदां दक्षमतिरप्यसौ नात्याद्दृतोऽभूत् । ततश्च चक्रवर्तिमहाशयेन गुरुचतुष्पाठी त्यक्ता स्थापिता च स्वकीयाऽन्या चतुष्पाठी आरामवाटिका च। कदाचिदेकेन छात्रेण कुसुमावचयार्थं तत्रागत्य कश्चित् पादपमेवोद्दिश्य पूर्वपक्षसमाधाने कुर्वंश्चक्रवर्तिमहाशयो सविस्मयमालोकितः । ततश्च जाता अनेके शिष्यास्तस्य न्यायशास्त्रेऽप्रतिमया प्रतिभयाऽगाधपाण्डित्येन वशीभूताः॥ एकदा तत्समकालीनस्य जगदीशतर्कालङ्कारस्य समीपे गदाधरभट्टाचार्याणां कश्चिच्छात्रः प्राप्तवान् । तर्कालङ्कारेण स्थलविशेषव्याख्यानार्थं पृष्टः स च्छात्रो यथाधीत व्याख्यातवान् । तर्कालङ्कारस्तु अशुद्धमिदं न सम्यक् गुरवे निवेदयेति तमाक्षिप्तवान् । श्रुतवृत्तान्तास्तु गदाधरभट्टाचार्याः-स्वमतिवैभवेनासङ्गतस्यापि तस्य स्वव्याख्यानानुसारेण मूलपाठमपि संयोज्य लिखित्वा कस्यचिद्धस्तेन प्रेषितवन्तः । दृष्ट्वा तु तादृशं बुद्धिदार्ढ्यं चकितो जगदीशतर्कालङ्कारमहाशयो मुग्ध इवाभूदित्येषापि किंवदन्ती तद्वैदुष्ये प्रमाणम् । प्रणीतवांश्चायं (१)तत्त्वचिन्तामणिदीधितिप्रकाशिका (२)चिन्तामणिव्याख्या (३)आलोकटीका (४)मुक्तावलिटीका (५)रत्नकोशवादरहस्यव्याख्यान् व्याख्याग्रन्थान् । (६)आख्यातवाद (७)कारकवाद (८)नञ्वाद (९)मुक्तिवाद (१०)विषयतावाद (११)व्युत्पत्तिवाद (१२)शक्तिवाद (१३)स्मृतिसंस्कारवादादयो मौलग्रन्था अपि तेन निबद्धाः । येन स नव्यनैयायिकेषु प्रधानतया विश्रुतोऽभत् । अयं भवानन्दरायस्य ज्येष्ठसूनोर्नदियाशान्तोन्द्रस्य राघवरायस्य समये सुप्रसिद्धनैयायिको बभूव । नदियाशान्तिपुरमेवातः परं तस्य निवासस्थानमभूद्, गौडदेशीयश्चातःपरं सोऽगण्यत ॥

रणाय संयोगमात्र एव निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणयत्कि-ञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावमादृत्य,-यस्य घटस्याधःस्थितपटे येन संयोगेन घटविशिष्टबुद्धिर्जनिता तेनैव संयोगेन पटेन समं परिवृत्त्य स्थापिते तद्धटे घटविशिष्टबुद्धिरपि जन्यते तत्र संयोगे घटप्रतियो-गिकत्वघटानुयोगिकत्वस्यावश्यकतया संयोगेन घटसाध्यके तद्धट-तत्पटान्यतरत्वरूपेण हेतुतायामतिव्याप्तिं निरसितुं [९]साध्यताव-च्छेदकसम्बन्धानुयोगितासामान्ये निरुक्तप्रतियोगिकत्वविशिष्टसम्ब-न्धनिरूपितत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिष्ठत्वोभयाभावरूपमर्थं विवक्षितवन्तः । एवं च स्वस्मिन् स्वविशिष्टबुद्ध्यनुदयेन स्वप्र-तियोगिकत्वविशिष्टसंयोगनिरूपितत्वस्य स्वनिष्ठानुयोगितायामस-त्त्वात् संयोगीयानुयोगितासामान्ये घटप्रतियोगिकत्वविशिष्टसम्ब-न्धनिरूपितत्वतद्धटनिष्ठत्वोभयाभावोऽक्षत इति नोक्तदोषः । एतेनैत-त्कल्पे समवायैक्यमतेनातिव्याप्तिसमुद्भावनं यथाश्रुताभिप्रायेण बोध्यम् इत्युक्तं तैः । किन्तु 'इदन्तु बोध्य'मित्यादिना गदाधरभट्टाचा-र्येणापि दीधितिकारोक्तस्योभयाभावघटितोक्तप्रतियोगिवैयधिकरण्या-नुधावनस्याक्षेपः कृत एव । साध्यतावच्छेदकावच्छिन्नाभावनिरूपित-त्वविशिष्टसाध्यवन्निष्ठाधिकरणताभिन्नहेतुमन्निष्ठाधिकरणताकत्वस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणेति पदस्यार्थकरणेनैव महाका-लो घटवान् महाकालत्वादित्यादावव्याप्तिवारणसम्भवात् हेतुमन्निष्ठ-तदधिकरणतायाः साध्याभावाधिकरणताभिन्नत्वस्तत्त्वेन विशिष्टभेदस-त्त्वात्, कालिकसम्बन्धावच्छिन्नघटाद्यभावस्यैवैतादृशविशेषणाक्रान्त-तया प्रतियोगिव्यधिकरणस्याभावस्य प्रसिद्धत्वात्। एवं च प्रतियो-गिवैयधिकरण्यस्य 'यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरण-त्वं हेतुमत' इत्यादिक्रमेण निर्वचनेऽननुगमात् तत्तत्प्रतियोगितावच्छे-दकत्वाभावकूटनिवेशने व्याप्तेर्दुर्ज्ञेयतेत्यादि दूषणान्तराणामप्यनवकाश इत्यादिनोक्तार्थकरणस्य प्रयोजनान्तरमपि गदाधरेण प्रदर्शितम्। द्वि-तीयकल्पानुसरणं तु स्वमतेन दीधितिकारजगदीशाभ्यामनुसृतं प्रद-र्श्य मतान्तराभिमतस्य पूर्वोक्ते घटवान्नित्यज्ञानत्वादित्यादिस्थलेऽव्या-प्तिवारकस्य साध्यतावच्छेदकसम्बन्धे [१०] निरुक्तप्रतियोगिप्रति-योगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगित्वसाध्यप्रतियोगिक-त्वैतन्निरत्वावच्छिन्नाभावरूपार्थस्य कालिकसम्बन्धेन घटादिसाध्यके-

ऽव्याप्तिप्रसङ्गकत्वात्कल्पान्तरानुसरणबीजप्रदर्शनं 'अत्र केचि'दित्यादि-ग्रन्थोक्तमुक्तनैयायिकशिरोमणिनाऽधिकं परिहृतम्। अयं च गादाधर्या-मत्र विशेषो द्रष्टव्यः। रघुनाथसार्वभौमेन सम्बन्धघटितोभयो-भावकल्पपरित्यागे द्रव्यं जातेरित्याद्यावतिव्याप्तिवारणरूपं यद्बीजं दत्तम्।, तस्य [११]साध्यतावच्छेदकसम्बन्धतावच्छेदकरूपविशिष्ट-निरूपितानुयोगितासामान्ये निरुक्तप्रतियोगिप्रतियोगिकसम्बन्धनि-रूपितत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिष्ठत्वोभयाभावरूपार्थविव-क्षया समवायभेदमते समवायकालिकविशेषणतोभयसम्बन्धेन द्रव्य-त्वस्य साध्यतायां केवलसमवायादिना द्रव्यत्वादेर्हेतुतास्थलेऽति-व्याप्तिवारणेऽपि न निरुक्तप्रतियोगिप्रतियोगिकसम्बन्धनिरूपितत्व-स्थाने निरुक्तप्रतियोगिप्रतियोगिकत्वविशिष्टसम्बन्धनिरूपितत्वनिवे-शेन द्रव्यं जातेरित्याद्यप्यतिव्याप्तिर्वारयितुं शक्येति वदता गदा-धरभट्टाचार्येण समवायस्यैक्यमतेनैव कथमतिव्याप्तिः पूर्वकल्पे दत्ता दीधितिग्रन्थ इति शिरोमणिमतेऽस्वरसः प्रदर्शितः॥ ययुक्त-प्रतियोगिताघटितोभयाभावकल्पे विषयतादिवृत्त्यनियामकसम्बन्धेन साध्यतायां तादृशसम्बन्धस्य वृत्त्यनियामकतयाऽभावप्रतियोगि-तानवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नत्वस्याप्रसिद्धतयाऽव्याप्ति-वारणाय वृत्त्यनियामकसम्बन्धेन व्यापकतास्वीकारपक्षे तत्स-म्बन्धस्याभावप्रतियोगितानवच्छेदकत्वमङ्गीकृत्य [१२]प्रतियोगिता-वच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकानधिकरणकाभाव-प्रतियोगितावच्छेदकतासामान्ये साध्यतावच्छेदकसम्बन्धावच्छि-न्नत्व-तादृशरूपावच्छिन्नत्वोभयाभावरूपोऽर्थो विवक्षितः। तथाच उक्तसम्बन्धेन साध्यतायां सद्धेतौ तत्सम्बन्धावच्छिन्नावच्छेदक-ताकसाध्यवदभावो न प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रति-योगितावच्छेदकानधिकरणहेत्वधिकरणकः, अतोऽन्यसम्बन्धेन सा-ध्यादिमदभावः तत्सम्बन्धेनान्यावच्छिन्नाभावो वा तादृश इति तत्प्रतियोगितावच्छेदकतायामुभयाभावसत्त्वान्नाव्याप्तिरिति संक्षेपः॥

(४) मदुक्ते हेत्वाभाससामान्यलक्षणे मतान्तरप्रदर्शनम्।

(१) अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम्। (२)यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वम् तत्त्वम्। (३)ज्ञाय-मानं सदनुमितिप्रतिबन्धकं यत्तत्त्वं वा हेत्वाभाससामान्यलक्षणमिति

लक्षणत्रयमुट्टङ्कितं मणिग्रन्थे।

तत्र च प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादावतिप्रसङ्गवारणाय द्वितीयलक्षणमुपात्तमिति रघुनाथ–मथुरानाथादीनामभिप्रायः। तत्र च प्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिवारणाय विशिष्टान्तराघटितत्वनिवेशः शिरोमणिना प्रोक्तः। यद्विषयकत्वेनेत्यादिद्वितीयलक्षणस्य तद्धर्मावच्छिन्नतत्पक्षकतद्धर्मावच्छिन्नतत्साध्यकतद्धर्मावच्छिन्नतद्धेतुकानुमितिप्रतिबन्धकत्वार्थकत्वस्य पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्टधूमत्वेन हेतुत्वे पर्वतादेः काञ्चनमयत्वविरहस्यादोषत्वेन तत्रातिव्याप्तिवारणायावश्यकत्वेन निर्वह्निः पर्वतो वह्निमान् - पर्वतावृत्तिवह्निमान् वा तद्व्यभिचारिणः पर्वतावृत्तेर्वा धर्मादित्यादौ तादृशानुमितेरप्रसिद्धतयाऽव्याप्तिवारणार्थं (४)यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरमनुमितौ अनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यताच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकः तत्त्वं हेतुदोषत्वम्। (५) प्रकृतपक्षे प्रकृतसाध्यवत्त्वस्य प्रकृतसाध्यव्याप्यप्रकृतहेतुमत्त्वस्य चावगाहिनो ज्ञानस्य यद्विषयकं ज्ञानं विरोधिविषयकं तत्त्वं तादृशज्ञानविरोधित्वं वा हेतुदोषत्वम्। (६) यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वं तत्र हेत्वाभासत्वमिति मतान्तरेणार्थत्रयं प्रदर्शितम्।

तत्र च प्रथमकल्पे प्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिं निराकर्तुं *वस्तुतस्त्वित्यादिना* (७) *यद्विषयकनिश्चयत्वविरोधियादृशयादृशप्रतियोगिको* निरुक्तोभयव्यतिरेकस्तदन्ययद्विषयकनिश्चयत्वविरोधितादृशविषयिताप्रतियोगिकस्तथाविधविशिष्टाघटितत्वरूपतादृशविशिष्टान्तराघटितत्वस्य निवेशः प्रदर्शितो जगदीशतर्कालङ्कारेण। साध्याभाववदवृत्तित्वरूपाया अन्वयव्याप्तेरेवानुमित्युपयोगित्वात् तादृशव्याप्तिविशिष्टप्रकृतहेतुमत्त्वावगाहित्वस्यैव लक्षणे निवेशमङ्गीकुर्वतां नव्यानां मतेन तु (८)प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यावगाहित्वस्य प्रकृतसाध्यीयतादृशव्याप्तिविशिष्टप्रकृतहेतुमत्त्वावगाहित्वस्य

च त्रित्वावच्छिन्नाभावो यद्धर्मावच्छेदेन यादृशधर्मवत्तानिश्चयत्वविरोधिविषयिताप्रतियोगिकस्तद्धर्मावच्छिन्न एव तादृशधर्मविशिष्टस्य प्रकृतपक्षतावच्छेदकविशिष्टपक्षकप्रकृतहेतुकसाध्यकन्यायस्थले दोषत्वं विवृतं जागदीश्याम्। अस्मिंस्तु मते जगदीशभट्टाचार्याणामभिमानः'परैरपरिशीलितः पन्था' इत्युक्तेः। (९)यादृशविशिष्टविषयकनिश्चयवृत्तित्वविशिष्टाया विरोधिविषयतायाः प्रयुक्तो व्यापकः प्रकृतपक्षे प्रकृतसाध्यावगाहित्वस्य प्रकृतसाध्यव्याप्यप्रकृतहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वम् इत्यादिस्तु रामभद्रसार्वभौमानां गुरुचरणानामप्यभिप्रेतोर्थः साध्याभावव्याप्यविशेषपक्षात्मकस्वप्रतिपक्षेऽव्याप्तिप्रसङ्गाद्यापादनेन खण्डितः श्रीमज्जगदीशतर्कालङ्कारमहोदयैः। कल्पे चास्मिन् सर्वत्र सर्ववस्तूनां भ्रमे मानाभावाधत्र यस्य यद्व्याप्यस्य वा भ्रमो नास्ति तत्र तस्य साध्यतायां तदभावविशिष्टतद्वस्तुरूपबाधादावव्याप्त्यादिरूपाऽस्वरसबीजस्य 'वदन्ति' इत्युक्त्या सूचितस्योद्घाटनात्र तत्र शिरोमणेर्निर्भर इति जगदीशग्रन्थेन वुध्यते। दीधित्युक्ते (२) कल्पेऽपि यत्र स्थलविशेषे साध्यतव्याप्ययोः पक्षे समूहालम्बनभ्रमो न कस्याप्युत्पन्नः तत्रत्यदोषे पर्वतः पर्वतान्यो धूमादित्यादिस्थलीयबाधादावव्याप्तितादवस्थ्याद्दीधितिकारस्यानिर्भर एवेति जगदीशेनोक्तम्। तृतीयेऽत्वननुगतेऽपि लक्षणे स्वमतेन कस्यचिदस्वरसस्यानुल्लेखात्तत्र दीधितिकारस्य निर्भरः सूचितो जगदीशभट्टाचार्यैः॥

मथुरानाथतर्कवागीशास्तु चिन्तामणुक्त(१)कल्पे दीधितिकारस्यास्वरसं प्रदर्श्य यद्विषयकत्वेनेत्यादि(२)कल्पे प्रमेयत्वविशिष्टव्यभिचारादावतिव्याप्तिनिरासकं जागदीश्यामुक्तं विशिष्टान्तराघटितत्वनिवेशं प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादौ अवृत्तित्वाभाववद्वृत्तिप्रमेयत्वादिरूपव्यभिचारेऽव्याप्तिभिया परित्यज्य प्रतिबन्धकतायां स्वानिरूपितविशिष्टविशेष्यकत्वानवच्छेदकत्वविशेषणं ददतः। तत्र च स्वानिरूपितविशिष्टविशेष्यकत्वानवच्छिन्नत्वं स्वानिरूपितविशिष्टविशेष्यकत्वानतिरिक्तवृत्तिप्रतिबन्धकताभिन्नत्वमुक्तम्। प्रमेयत्वादिविशिष्टवह्न्यभाववद्ध्रदात्मकविशिष्टविषयकत्वावच्छिन्नप्रतिबन्धकतायाः स्वानिरूपितेन केवलवह्न्यभाववद्ध्रदविशेष्यकत्वेनाप्यवच्छिन्नत्वात् नोक्तदोषापत्तिः। (१०)प्रकृतपक्षतावच्छेदकरूपेण प्रकृतपक्षे

प्रकृतसाध्यतावच्छेदकरूपेण प्रकृतसाध्यवैशिष्ट्यावगाहिनी प्रकृतसाध्यतावच्छेदकरूपेण प्रकृतसाध्यनिरूपितव्याप्तिप्रकारेण प्रकृतहेतुतावच्छेदकरूपेण प्रकृतहेतुवैशिष्ट्यावगाहिनी च या बुद्धिः सा यत्र यदवगाहते तत्र तद्वैशिष्ट्यावगाहि यज्ज्ञानं यत्प्रतिबन्धकतानतिरिक्तवृत्ति यादृशविशिष्टनिरूपितविषयतासामान्यं तादृशविशिष्टत्वं हेतुदोषत्वमित्याकारोऽपि उक्तकल्पार्थो निर्वह्निः पर्वतो वह्निमान् वह्निव्यभिचारिधर्मत्वादित्यादिस्थलसङ्ग्रहाय माथुर्यामुक्तः।

गदाधरचक्रवर्तिनस्तु वह्निविषयकनिश्चयस्येत्यादिदीधितिनिबद्धप्रथमकल्पस्यावच्छेदकावच्छेदेन साध्यसिद्धिस्थले (११)वह्निविषयकनिश्चयाऽव्यवहितोत्तरानुमितित्वव्यापको विरोधिविषयताप्रयुक्तो व्यापकत्वविशिष्टसंयोगसंसर्गकवह्निप्रकारकत्वघटितोभयाभावस्तत्स्वरूपमर्थं प्रदर्श्य व्यापकत्वाद्यविशेषितसंयोगसंसर्गकवह्निप्रकारकघटितोभयाभावघटितं साध्यसामानाधिकरण्येन साध्यस्थले निर्दिष्टवन्तः। अवच्छेदकावच्छेदेन साध्यसिद्धौ सामानाधिकरण्येन बाधाव्याप्त्या सामानाधिकरण्येन तत्सिद्धौ च सामानाधिकरण्येन बाधातिव्याप्त्या चोभयसाधारणलक्षणस्यासंभवस्तैः प्रदर्शितः। एवं मेयत्वविशिष्टव्यभिचारादिवारणाय यथाश्रुतविशिष्टान्तराघटितत्वनिवेशमुपदर्शितव्यभिचारघटितबाधादावव्याप्तिवारणाय परिहृत्य विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वरूपं विशेषणं निवेशितं गादाधर्याम्, तथाच मेयत्वविशिष्टव्यभिचारादिविषयिताप्रयोज्याया उक्तोभयाभावप्रयोजकव्यापकत्वयवगाहित्वाभावक्तायाः शुद्धव्यभिचारादिविषयिताप्रयोज्यत्वनियमेन न मेयत्वविशिष्टव्यभिचारादौ विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यनिरुक्तोभयाभावप्रयोजकाभावाधिकरणताकत्वमिति नोक्तदोषप्रसङ्गः। यत्तु रित्यादिना रामभद्रसार्वभौममतमपि निबध्य तत्तुच्छमित्यादिना जगदीशवन्निरस्तम्। पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयतायाश्च विरोधिविषयतात्वमङ्गीकुर्वतां मतेन (१२)यन्निरूपिततादृशविषयताशालिनिश्चयोत्तरानुमितित्वव्यापकः उभयाभावस्तत्त्वमित्याद्यर्थश्चोदासीने पक्षादावनिव्याप्तेर्वारणाय यादृशविरोधिविषयताया विचक्षणीयनया प्रमान्यवृत्तित्वदीयविषयितासामान्यं तादृशनिश्चयावृत्ति तदीयविषयताया एव विचक्षणेन नि-

वह्निसम्भवे विरोधिवह्निविषयकाशालिनिश्चयोत्तरानुमितिसामान्ये द्वयोर्व्यतिरेक इत्यनभिधाय यद्विषयकनिश्चयस्येत्यादिकाभिधानस्यानौचित्यप्रदर्शनेन निरस्तः ॥ दीधित्युक्तद्वितीयकल्पस्य च घटवद्भूतलादिरूपोदासीनपदार्थविपर्ययकसमूहालम्बनात्मकपक्षताववच्छेदकावच्छिन्नविशेष्यकसाध्यतद्व्याप्यहेतुप्रकारकज्ञानविषयकघटवद्भूतलादिज्ञानप्रतिबन्धकज्ञानविषयघटाभाववद्भूतलादावतिव्याप्तिं निरसितुं यद्रूपावच्छिन्ने यद्रूपावच्छिन्नप्रकारकत्वत्वावच्छिन्नं तादृशग्रहत्वव्यापकं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकधर्मवत्त्वरूपोऽर्थो विवक्षितः । तृतीये त्वननुगतकल्पे 'तावदन्यान्यत्वस्येतरभेदानुमापकत्वमेव न तु दोषपदप्रवृत्तिनिमित्तत्वम्, किन्तु अभावप्रयोजकप्रमान्यवृत्तिविषयितानिरूपकत्वमेव, अन्यथा निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इत्यादौ दुष्टपदस्य वह्न्यभावविशिष्टनिर्वह्नित्वाद्यवच्छिन्नान्यतमवदर्थकत्वेन निर्वह्नित्वविशिष्टे निर्वह्निः साधने इत्यादेः प्रसिध्या तस्य हेत्वन्वयिनि निर्वह्नित्वविशिष्टविशेष्यकवह्न्यनुमितिप्रयोजकत्वार्थकत्वासम्भवेनान्वितार्थकत्वप्रसङ्गात् इत्यादिना गदाधरचक्रवर्तिभिरुक्तकल्पे दोषपदार्थविवेचनं विहितम् । पूर्वोक्तेषु च कल्पेषु कश्चित्केचिदित्यन्तीत्यादिपदैरस्वरसस्य प्रदर्शनाद्दीधितिकारस्यान्तिम एव कल्पे निर्भर इति गदाधरचक्रवर्तिनापि सूचितम् ॥

(१)पक्षधरमिश्रास्त्वालोकाख्ये चिन्तामणिव्याख्याने हेत्वाभास-

(१) जयदेवापरसंज्ञाः श्रीपक्षधरमिश्रा दरभङ्गामण्डलान्तर्गते कोरानग्नाम्नि ग्रामे कमलासरित्तटे निवसतो भद्रसेनमिश्रस्य भार्यायां सुमित्रादेव्यां १२७५ ई० वर्षे समजनि । ते च हरिमिश्रविदुषः स्वपितृव्यस्यैवान्तेवासिनोऽभूवन्—

अधीत्य जयदेवेन हरिमिश्रात् पितृव्यतः ।
तत्त्वचिन्तामणेरित्थमालोकोऽयं प्रकाश्यते ॥

इत्यालोकग्रन्थस्याद्यपद्येनोह्यते । तेषां पाण्डित्यविषये एवमाभण्यते—

शङ्करवाचस्पत्योः शङ्करवाचस्पती सदृशौ ।
पक्षधरप्रतिपक्षीलक्ष्यीभूतो न च क्वापि ॥

सामान्यलक्षणं दुष्टानां हेतूनामेव न तु दोषाणां तृतीयलक्षणस्यैव प्रथमस्यापि ज्ञायमानदोषस्य प्रतिबन्धकत्वमते तादृशाभावप्रतियोगिनां यथार्थज्ञानमिति षष्ठीसमासाङ्गीकारेण तादृशाभावप्रतियोगिप्रकारकयथार्थज्ञानविषयत्वरूपस्यार्थस्य सम्भवान्न कश्चिद्दोष इत्याहुः। अत्र च ज्ञानविषयतावच्छेदकस्य प्रतिबन्धकतावच्छेदकत्वज्ञानेऽप्यनुमितिप्रतिबन्धकतावच्छेदको विषय एव वेति कल्पद्वयं प्रदर्श्यान्तिमकल्पाभिप्रायेणाग्रिमं लक्षणद्वयमित्युक्त्वा विशेषोऽपि तैरयमवोचि। प्रथमेऽनुमितिप्रतिबन्धकतावच्छेदकधर्मे यथार्थज्ञानविषयत्वमित्यनेन यथार्थपदगर्भमेव तद्धत्त्वं लभ्यत इति व्यर्थविशेषणत्वात्तादृशधर्मवत्त्वमात्रमुपादाय लक्षणान्तरप्रणयनम्। तत्रापि मध्यमे विषयस्यैव प्रतिबन्धकत्वं प्राप्यते न च तत्सम्भवति ज्ञानस्यैव तथात्वादिति चरममाश्रित्य सिद्धान्तः। एवं च सर्वसामञ्जस्ये प्रथमस्य धर्मिलक्षकत्वमुत्तरयोर्व्यभिचारादिधर्मलक्षकत्वं बाधितादौ व्यभिचारत्वादिनैव सामान्यलक्षणेन सङ्ग्रह इत्यादि कल्पनमकल्पनमेवेति।

मिश्राणां दुष्टलक्षणपरेऽप्यत्र व्याख्याने यथार्थपदसार्थक्यसम्भवाशास्वरससम्भावना। अत एवात्र गदाधरमतस्यास्था प्रतीयते। जगदीशतर्कालङ्कारस्तु पक्षवृत्तितया ज्ञायमानस्य वह्न्यभावरूपबाधस्य स्वरूपसम्बन्धेनैव यद्यथार्थज्ञानं तद्विषयत्वस्य धूमादौ वर्तमानत्वात् पर्वतो वह्निमान्धूमादित्यादावतिव्याप्तिरूपामरुचिं दत्तवान्। तथा च तस्य दुष्टलक्षणपरत्वे निर्भर इति वदामः।

• (१)प्रकाशकृद्रुचिदत्तस्यापि मते 'हेतुवदवभासमान' इति योगाद्दुष्टो धर्म्येव हेत्वाभासपदवाच्य इति तल्लक्षणमाहानुमितीति' प्रतीकस्य

---

एतेषां तार्किकी सृष्टिः—(१) तत्त्वचिन्तामण्यालोकः (२) द्रव्यपदार्थः (द्रव्यकिरणावलीप्रकाश) (३) लीलावतीविवेकः (लीलावतीप्रकाशटीका)। तर्ककर्कशमतयोऽपीमे साहित्यकलालङ्कृतवाग्विभवा बभूवुरिति तन्निर्मिताभ्यां प्रसन्नराघव-चन्द्रालोकाभ्यामवसीयत इति।

(१)रुचिदत्तमिश्रस्तु जयदेवमिश्रस्य प्रधानशिष्यो त्रयोदशशतान्यामलंचकार मिथिलादेशम्। तत्त्वचिन्तामणिप्रकाशः न्यायकुसुमाञ्जलिप्रकाशमकरन्दश्च तत्पाण्डित्यद्योतकरी कृतिरिति इतिहासविदां सम्मतम्।

प्रकरणारम्भे ग्रहणाद्गुरुधर्मिपरतयैवोक्तलक्षणानां व्याख्यानमित्यव-धार्यते। तेन च मण्युक्तप्रथमलक्षणस्य व्यभिचारादिधर्मेऽतिव्याप्ति-वारणायानुमितिप्रतिबन्धकपदेन ज्ञानस्यानुमितिप्रतिबन्धकतावच्छेद-कधर्मानुमितिप्रतिबन्धकज्ञाने विषयतयाऽवच्छेदकरूपान् व्यभिचा-रत्वाद्युपाधीनादाय तद्वत्त्वगोचरयथार्थज्ञानविषयत्वरूपं हेत्वाभासत्वं विवक्षितम्। अत्र व्यर्थविशेषणताया द्वितीयतृतीयलक्षणानुसरणस्य बीजत्वं प्रदर्श्य तथापि ज्ञानविषयीभूतस्य व्यभिचारादेर्न प्रतिबन्ध-कत्वं किन्तु तज्ज्ञानस्यैवेत्यपरितोषो द्वितीयलक्षणानुसरणे हेतुः प्रद-र्शितः। एतेन व्यभिचाराद्य उपाधय एव लक्षिताः तद्विषयकत्वेनैव लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वात् लक्षणद्वये सत्पदस्य च तद्व-त्त्वपरत्वेन तद्वत्त्वमर्थः, तेन व्यभिचारादिधर्मे नाव्याप्तिः धर्मिणि लिङ्गे च नासम्भव इति सूचितम्। एवं च रुचिदत्तमते प्रथमस्य लक्षणस्य धर्मिलक्षकत्वमुक्तरयाश्च दोषलक्षकत्वं प्रतीयते द्वितीयमादाय च सिद्धान्तत्वाभिमानस्तेषाम्। इदं च वर्धमानमतेनोक्तत्वेन पक्षधर-मिश्रोक्तैतन्मतनिरासस्सङ्गतिः॥

(१) न्यायसिद्धान्तमुक्तावल्यां यद्विषयकत्वेनेत्यादिना द्वितीय-लक्षणमेवोद्धृतम्। शिरोमण्युक्तोऽन्यकल्पोपि परिगृहीतः सत्प्रतिपक्षा-दीनामनित्यदोषत्वाभिप्रायेण 'परे त्वि'त्यादिना द्वितीयस्यैव लक्षणस्य कल्पान्तरप्रदर्शनं कृतम्। तत्र यथार्थपदवैयर्थ्यं प्रथमलक्षणस्य परि-त्यागे हेतुः, व्यभिचारादिज्ञानस्यैव प्रतिबन्धकत्वं न तु ज्ञायमानदोषा-णामित्यभिमानेन तु तृतीयं परित्यज्य द्वितीयलक्षणमेव विश्वनाथ-पञ्चाननेन गृहीतमिति दिक्॥

## ( ६ ) उपसंहारः।

एवमनुमानान्ते गङ्गेशोपाध्यायेनोपमानखण्डश्चिन्तामणौ उपमिति-तत्करणादीनां विवेचनं कृत्वा चतुर्थे शब्दखण्डे प्रथमं शाब्दबोध-

(१) विश्वनाथन्यायपञ्चाननानामैतिह्यविषयो न्यायचन्द्रिकोपेतायां काशीसंस्कृतपुस्तकमालामुद्रितायां मुक्तावल्या भूमिकायां सविस्तर-मस्माभिर्निरूपितस्तत्रैव द्रष्टव्यः। डाक्टरसतीशचन्द्रविद्याभूषणमहो-दयैर्निबद्धेन (Indian Logic History) पुस्तकेन ज्ञायते यदुक्त-पञ्चाननेन नञ्वादटीका–अलङ्कारपरीक्षा–कारकचक्रन्यायबोधिन्या-द्या अपरेऽपि निबन्धा विनिर्मिताः।

प्रमां निरूप्य शब्दप्रामाण्यविचारः सविस्तरमुक्तः। ततश्च शाब्दबोधकारणीभूतानाकाङ्क्षायोग्यताऽऽसत्तितात्पर्यादीन् विविच्य शब्दनित्यतावादिमीमांसकमतखण्डनाय तदनित्यतास्थापनं विहितम्। उच्छिन्नप्रच्छन्नवादेन वेदानां पौरुषेयत्वं च व्यवस्थाप्य विधि-अपूर्व-शक्ति-लक्षणा-समास-आख्यात-धातु-उपसर्गाणां वादास्तदर्थविवेचनद्वारा विप्रतिपत्तिनिरासाय प्रदर्शिताः। प्रामाण्यचतुष्टयप्रामाण्यवादे गौतममतेन प्रमाणचतुष्टयस्योपसंहारेण ग्रन्थसमाप्तिः कृता श्रीमता गङ्गेशोपाध्यायेन। (१)खण्डचतुष्टयेष्वप्युक्तमणेर्व्याख्यानानां बाहुल्येष्वप्यनु-

(१) तत्त्वचिन्तामणेर्यावदुपलब्धानां साक्षात्परम्पराव्याख्यानानां निघण्टुपत्रम्—

तत्त्वचिन्तामणिर्मूलम्।

1 मणिव्याख्या (कणादतर्कवागीशभट्टाचार्यकृता) 1560 A. D.
2 चिन्तामणिदीधितिः (रघुनाथतार्किकशिरोमणिकृता). 1477-1547 A. P
- [1] मणिदीधितिटीका (रामरुद्रतर्कवागीश०) 1700A.D.
- [2] दीधितिप्रकाशिका (गदाधरभट्टाचार्य०) 1650 A.D.
- [3] दीधितिटीका (रघुदेवन्यायालंकार०) 1650 A.D.
- [4] मणिदीधितिप्रकाशिका (रुद्रन्यायवाचस्पति०) 1700
- [5] दीधितिगूढार्थविद्योतनं (जयरामन्यायपंचानन०) 1700 A.
- [6] दीधितिप्रकाशिका (जगदीशतर्कालंकार०) 1700A.D.
- [7] दीधितिटीका (रामभद्रसार्वभौम०) 1680 A.D
- [8] दीधितिरहस्यम् (मथुरानाथतर्कवागीश०) 1570 A.D.
- [9] दीधितिप्रसारिणी (कृष्णदाससार्वभौम०) 1515
- [10] दीधितिप्रकाशिका (भवानन्दसिद्धान्तवागीश०) 1625 A,D.

3 तत्त्वचिन्तामणिप्रकाशः(हरिदासन्यायालङ्कार०)1480-1540A.D.
4 अनुमानखण्डटीका (वाचस्पतिमिश्र०) 1450 A.D.
5 चिन्तामणिमयूखः (शङ्करमिश्र०) 1450 A.D.
6 चिन्तामणिप्रकाशः। (वर्धमानोपाध्याय०) 1250 A.D.
7 तत्त्वचिन्तामण्यालोकः (पक्षधरमिश्र०) 1275 A,D.

मानखण्डदीधित्याः प्रायशः पठनपाठनादौ प्रचारस्योपलभ्यमानत्वात् परीक्षासु तद्व्याख्यानप्रकरणानां व्यवस्थापनाच्च काशीस्थचौखम्बा-संस्कृतपुस्तकमालायामनुमानजागदीशीसहिता सा पूर्वं मुद्रिता। अनुमानखण्डदीधितेः गदाधरकृतव्याख्यायास्तु प्राञ्जलत्व स्वरूपगुणमा-गुणपाशवशीभूततार्किकमण्डलीषु सम्प्राप्तपठनपाठनप्रचारायाः अद्यापि कार्त्स्न्येनामुद्रितायाः पुस्तकान्वेषणे बहु क्लिश्यन्तोऽन्तेवासिनः समीक्ष्य पुण्यवल्लभलालसासमेधितोत्साहवशीकृतान्तःकरणः संस्कृतविद्यानुरागी श्रीयुतहरिदासगुप्तमहोदयानामात्मजः श्रेष्ठिकुलावतंसः श्रीजयकृष्णदासगुप्तमहोदयः प्रवर्तयामास मुद्रितपत्रप्रूफपरिशोधनाय महामहोपाध्यायपं०विन्ध्येश्वरीप्रसादद्विवेदिनोऽस्मद्गुरुवरान् म०म० पं० वामाचरणभट्टाचार्यन्यायाचार्यांश्च। महतोऽस्य ग्रन्थस्य परिशोधने भट्टाचार्याणामवकाशाभावादस्मत्सहाध्यायिना न्यायाचार्येण पं० श्रीरामशास्त्रिणा दत्ते साहाय्ये गादाधर्याः संशोधनकार्यं समीचीनतया प्रचलितमासीत्। किन्त्वस्माकं दैवदुर्विपाकवशात् केवलान्वयिप्रकरणपर्यन्तं परिशोध्य

---

[1] त० चि० आलोकारहस्यं ( मथुरानाथ० ) 1570 A.D.
[2] मण्यालोकटिप्पणी ( हरिदासन्यायालंकार० ) 1480-1540
[3] त० चि० आलोककंटकोद्धारः (मधुसूदनठक्कुर०) 1575
[4] आलोकदर्पणः [ महेशठक्कुर० ] 1400
[5] त० चि० आलोकपरिशिष्टम् [ देवनाथठक्कुर० ] 1562
[6] अनुमानालोकप्रसारिणी [ कृष्णदाससार्वभौम० ] 1515
[7] शब्दालोकविवेकः [ गुणानन्दवागीश० ] 1570
[8] प्रत्यक्षालोकसारमंजरी [ भवानन्द० ] 1625
[9] त० चि० आलोकटीका [ गदाधरभट्टाचार्य० ] 1650 A.D.
8 चिन्तामणिप्रकाशः ( रुचिदत्तमिश्र० ) 1275 A.D.
9 त० चिन्तामणिमयूखः [ जगदीशतर्कालङ्कार०। ] 1625 A D.
10 त० चि० आलोकविवेकः [ जयरामन्यायपंचानन० ] 1700
11 त० चिन्तामणिटीका [ भवानन्दसिद्धान्तवागीश० ] 1625
12 DO [ हरिरामतर्कवागीश० ] 1625 A.D.
13 त० चि० गूढार्थदीपिका [ रघुदेवन्यायालङ्कार० ] 1650
14 त० चिन्तामणिव्याख्या [ गदाधरभट्टाचार्य० ] 1650 A.D.

पुरन्दरपुरातिथौ संजाते द्विवेदिमहोदये, श्रीरामशास्त्रिणि चोक्तगुरुमहोदयेनैव प्रोत्साहितोऽहं यथामति प्रावर्तिषि गादाधर्याः संशोधने। अस्याश्च वाराणसीस्थराजकीयसंस्कृतपाठशालापुस्तकालयस्थितं तदध्यक्षपण्डितप्रवर श्रीगोपीनाथकविराज एम० ए० महोदयप्रसादेन लब्धं प्रायशोऽशुद्धं विश्वविख्यातवेदुषीविभवानामस्मद्गुरुवरपूज्यपादश्रीमहामहोपाध्यायवामाचरणन्यायाचार्यमहोदयानां वङ्गाक्षरलिखितं च पुस्तकं, चिन्तामणेस्तु चौखम्बामुद्रितं, दीधितेः जीवानन्दमुद्रितमन्यच्च पुस्तकं समासाद्य हेत्वाभासग्रन्थे केवलव्यतिरेक्यर्थापत्तिप्रकरणयोश्च गादाधरीव्याख्याया अभावात् तत्र प्रातःस्मरणीयैः तर्कतीर्थोपाधिसमलङ्कृतैः रघुनाथशास्त्रिभिरस्मत्तातपादैः कृतं विवरणाख्यव्याख्यानं च सन्निवेश्य योग्यपाठविशेषं च कुण्डल्यन्तर्गतं विधाय यथाबुद्धि वै एवं प्रकाशितोऽसौ महानिबन्धः। दुरवगाहेऽत्र ग्रन्थे अवगमयतां तातकल्पानां गुरुवर्याणां काशीविद्यालयस्थमुख्याध्यापकानां नैयायिकप्रवराणां म० म० पं० श्रीमदम्बादत्तशास्त्रिणां साहाय्येनेव मया विषमस्थलपारावारतरणमकारीति तदुपकाराश्च कदापि विस्मरिष्यामि। तदेवमस्मिन्महति निबन्धजलधावुदुम्बरकोटकल्पेन बहपराद्धं स्यादिति सम्भावयन् प्रकृतिसुभगदिवाभिलाषान्तःकरणो विद्वन्मण्डलीमण्डनायमानान् तार्किकान् साञ्जलिकलिकोपहारं प्रीयतामनेन क्लेशलेशेन कृतज्ञः सर्वान्तर्यामी श्रीजगदीश्वर इत्यभ्यर्थयते—

विदुषामनुचरः
ढुण्ढिराजशास्त्री।

# गादाधरी-दीधितिसहिततत्त्वचिन्तामणेः प्रकरणानां

# सूचीपत्रम् ।

गादाधरी-दीधितिसहिततत्त्वचिन्तामणेः प्रकरणानां

# सूचीपत्रम्।

# गादाधरी–दीधिति–सहितस्य तत्त्वचिन्तामणेः

## अनुमानखण्डस्य ग्रन्थानुक्रमेण

# विषयसूचीपत्रम् ।

( २ ) व्याप्तिपूर्वपक्षप्रकरणे ।



(३) व्यधिकरणधर्मावच्छिन्नाभावप्रकरणे ।

( ४ पूर्वपक्षप्रकरणे )

विषयः पृ०



## (५) सिद्धान्तलक्षणप्रकरणे।

विषयः॥ पृ०

## (६) अवच्छेदकत्वनिरुक्तिप्रकरणे



## (७) सामान्याभावप्रकरणे।



## (८) विशेषव्याप्तिप्रकरणे।

(९) अतएवचतुष्टयप्रकरणे ।

## (११) तर्कप्रकरणे ।

विषय । पृ

(१२) व्याप्त्यनुगमप्रकरणे।



(१३) सामान्यलक्षणाप्रकरणे।

विषयः। पृ०

## (१४) उपाधिप्रकरणे ।

| विषयः | पृ० |
|---|---|
| २२७ पक्षधर्मावच्छिन्नसाध्यविशेषितसाध्यव्यापकत्वघटितस्योपाधेर्दूषणम् । | ९२४ |
| २२८ साधनावच्छिन्नसाध्यव्यापकत्वघटितस्योपाधेः प्रदर्शनं तत्खण्डनञ्च । | ९३० |
| २२९ तत्र किञ्चेत्यादिना दूषणान्तरवर्णनम् । | ९३१ |
| २३० सत्प्रतिपक्षोन्नायकत्वरूपदूषकताबीजपक्षे उपाधिस्वरूपप्रदर्शनम् । | ९३६ |
| २३१ उक्तोपाधेः खण्डनम् । | ९३९ |
| २३२ किञ्चेत्यादिना खण्डनान्तरम् । | ९४४ |
| २३३ दीधितिकारोक्तमुक्तोपाधिपरिष्कारवर्णनम् । | ९४६ |
| २३४ उपाधेः लक्ष्यप्रदर्शनम् । | ९५२ |
| २३५ दीधितौ उपाधिस्वरूपान्तरखण्डनपूर्वकं वस्तुतस्त्वित्यादिना सिद्धान्तोपाधिवर्णनम् । | ९५८ |
| २३६ सिद्धान्तिमतेनोपाधिलक्षणवर्णनम् । | ९७१ |
| २३७ लक्षेतौ सपक्षैकदेशवृत्तिधर्मेतिप्रसङ्गवारणायोक्तोपाधिलक्षण निष्कृष्टार्थप्रदर्शनम् । | ९७५ |
| २३८ दीधितौ सकलोपाधिसाधारणलक्षणप्रदर्शनम् । | ९८५ |
| २३९ मिश्रमतेनोपाधिवर्णनम् । | ९८६ |
| २४० साधनाव्यापकत्वघटितोपाधिलक्षण दूषयतां नव्यानां मतेनोपाधिप्रदर्शनम् । | ९८८ |
| २४१ उपाधिलक्षणघटितधर्मपदार्थनिर्वचनम् । | ९८९ |
| २४२ उपाधिफलभूतव्यभिचारानुमानाकारप्रदर्शनम् । | ९९१ |
| २४३ मिश्रातनयत्वाव्यभिचारित्वे सतीत्यत्राव्यभिचारपदार्थविवेचनम् । | ९९६ |
| २४४ साक्षात्परपरासाधारणव्यभिचारोन्नायकोपाधिस्वरूपप्रदर्शनम् । | ९९९ |
| २४५ दीधितौ मतविशेषेण व्यभिचारोन्नायकविचारः । | १००२ |
| २४६ सोपाध्यनुमाने व्यभिचारोन्नायनप्रकारवर्णनम् । | १००६ |
| २४७ स्थलविशेषपूर्णाघ्यतिव्याप्तिनिरसनम् । | १००७ |
| २४८ आर्द्रेन्धनसंयोगादेरुपाधित्वानुपपत्तिनिरसनम् । | १०११ |

(१९) पक्षताप्रकरणे ।

## (१९) परामर्शप्रकरणे ।

## (१९) अर्थापत्तिप्रकरणे ।

## (२०) अवयवप्रकरणे।

विषयः पृ०

विषयः। पृ०

## (२२) सव्यभिचारप्रकरणे।

विषयः । पृ०



## (२८) असिद्धिप्रकरणे

विषयः । पृ०



## (२९) बाधप्रकरणे

## (३०) असाधकतासाधकत्वप्रकरणे



विषयसंख्या ६३५ पत्रसंख्या १९४०

## (३१) ईश्वरवादप्रकरणे ।

## (३३) मुक्तिवादप्रकरणं ।

श्रीगणेशाय नमः।

—:०:—

# गादाधरी।

श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता।

## श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता।

---

(गा०) अभिवन्द्य मुहुः समादरात् पदपाथोजयुगं सुरद्विपः (१)।
विवृणोति गदाधरः सुधीरतिदुर्बोधगिरः शिरोमणेः॥

प्रारिप्सितग्रन्थपरिसमाप्तिपरिपन्थिप्रत्यूहव्यूहविध्वंसपटीयसीं परमेश्वरप्रणतिमादौ निबध्नाति ओमित्यादि—

(दी०) ओं नमः सर्वभूतानि विष्टभ्य परितिष्ठते।
अखण्डानन्दबोधाय पूर्णाय परमात्मने॥
अध्ययनभावनाभ्यां सारं निर्णीय निखिलतन्त्राणाम्।
दीधितिमभिचिन्तामणि तनुते तार्किकशिरोमणिः श्रीमान्॥
परगुरुनयान्निवर्तमाना मननास्वादरसा विशुद्धबोधैः।
रघुनाथकवेरपेतदोषा कृतिरेषा विदुषां तनोतु मोदम्॥
न्यायमधीते सर्वस्तनुते कुतुकाच्चिबन्धमप्यत्र।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः॥
मान्यान् प्रणम्य विहिताञ्जलिरेष भूयो
भूयो विधाय विनयं विनिवेदयामि।

---

(१) सुरद्विप —पा० २ पु०। किन्तु सुरद्विप इत्येव साधु नत्वा नमस्तनुजमुन्दरपद[illegible]मिति मन्य-परागमश्च वर्तमानत्वात्। [illegible] नत्वेति वै दार्शिक [illegible] वर्तमानत्वात्।

दूष्यं वचो मम परं निपुणं विभाव्य
भावावबोधविहितो न दुनोति दोषः ॥

(गा०) समस्तैरकारोकारमकारैः सन्धिवशेन प्रणवभावमावहद्भिरव्ययतया लुप्तचतुर्थीकैः प्रत्येकशक्त्योपस्थापितस्य वासुदेवादित्रयस्याभेदेन परमात्मनो विशेषणत्वमत्राभिहितम् । अत्र च जगत्पालनादिकर्तृत्वं नाकारादिपदार्थतावच्छेदकम् । उद्देश्यतावच्छेदकस्य परमपदार्थोत्कर्षस्यापि तद्रूपतयाऽन्वयानुपपत्तेः(१) अपि तु विग्रहविशेषवत्त्वमेव ओंपदार्थस्य परमात्मन एकत्वेऽपि पदार्थतावच्छेदकानां नारायणादिशरीराणां भेदो द्वन्द्वस्य साधुतामुपपादयति । यद्यपि जातिविशेषाद्यवच्छिन्नशरीराणां स्वनिष्ठचेष्टानुकूलप्रयत्नवत्त्वरूपपरम्परासम्बन्धेन(२) प्रवृत्तिनिमित्ततापेक्षया धर्मान्तराविशेषितानां शरीरनिष्ठजातिविशेषाणामेव समवायेन तथात्वमुचितं तथापि सर्वं वेत्ति विष्णुरित्यादिप्रामाणिकप्रयोगानुरोधेन विष्ण्वादिपदस्यात्मनि शक्तेर्निरूढलक्षणाया वा आवश्यकत्वात् तत्पर्यायस्याकारादेरपि शरीरविशेषाद्यवच्छिन्नात्मपरता युज्यत एव । न तूक्तस्थले शरीरपरत्वे योग्यता कथञ्चिन्निर्वहति शरीरस्य समवायेन ज्ञानाश्रयत्वविरहात् ईश्वरबुद्धेर्व्याप्यवृत्तितयाऽवच्छेदकत्वस्याख्यातार्थतायाकारेऽप्यप्रतीकारात् । स्वसमानाधिकरणप्रयत्नासाधारणकारणकचेष्टाश्रयत्वादेराख्यातार्थत्वे गौरवात्(३) । शरीरविशेषा एव प्रणवार्थाः तेषाञ्च निपातार्थतया भेदान्वय एव परमात्मनीति तु न साधु ओमित्यस्याव्ययपरतायामेव चादयोऽसत्त्व इत्यादिना निपातत्वसम्भवात् । अनि-

(१) घटो घट इति वाक्यात् शाब्दबोधवारणाय तद्धर्मावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारता-निरूपितविशेष्यतावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौ तद्धर्मभेदस्य कारणत्वं वाच्यम् प्रकृते च तदभावात् शाब्दबोधानुपपत्तिरिति भावः ।

(२) अत्र स्वानुकूलप्रयत्नवत्त्वसम्बन्धेनोपपत्तौ स्वनिष्ठचेष्टानुकूलप्रयत्नवत्त्वपर्यन्तनिवेशनं किमर्थमिति चेन्न । ईश्वरप्रयत्नस्य कार्यमात्रं प्रत्यनुकूलतया स्वानुकूलप्रयत्नवत्त्वसम्बन्धेन घटादिमत्त्वस्यापि विनिगमनाविरहात्प्रवृत्तिनिमित्तता स्यादतः स्वनिष्ठचेष्टानुकूलेति । स्वनिष्ठचेष्टानुकूलत्वं स्वनिष्ठचेष्टात्वावच्छिन्नजन्यतानिरूपितजनकत्वम् ।

(३) ईश्वरप्रयत्नस्य कार्यमात्रं प्रति साधारणकारणतया सर्वविषयकज्ञानसमानाधिकरणप्रयत्नसाधारणकारणकचेष्टाश्रयत्वस्य चैत्रे सत्त्वात्सर्वं वेत्ति चैत्र इत्यपि प्रयोगः स्यादतस्तादृशप्रयत्नासाधारणकारणकत्वनिवेशः ।

पातत्वेऽव्ययत्वमेव कुत इति चेत् स्वराद्यन्तर्गतत्वोपगमात् विगृहीतस्याकारादेरनव्ययत्वेऽपि समस्तस्य तथात्वं कल्प्यते बाधकविरहात् । ईश्वरस्य सर्गादिकर्तृत्वे ब्रह्मादीनां तथात्वबोधकानामागमानामपि प्रामाण्यमित्येतत्सूचयितुं तस्य ब्रह्माद्यभेदाभिधानमिति न तद्वैयर्थ्यमाशङ्कनीयम् । वस्तुतस्तु शरीराविशेषणानवच्छिन्न एव भगवत्योमितिपदस्य रूढिः । ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति समस्तं व्यस्तं त्वां शरणद गृणात्योमितिपदमित्यादिबहुतरतत्साधकसत्त्वात् । रूढेश्चावच्छेदकं जगत्कर्तृत्वमेव । एवं च(१) ओमित्येव विशेष्यपदं तदन्यानि च चतुर्थ्यन्तपदानि सर्वाण्येव विशेषणपराणि । नमःपदं स्वापकर्षबोधकप्रयोक्तृव्यापारार्थकं तदेकदेशीभूतापकर्षान्वयि अवधित्वमवधिमत्त्वं वा नमःस्वस्तीत्यादिसूत्रानुशिष्टचतुर्थ्यर्थः क्रियान्वितताद्दशार्थविवक्षायामेवापादानपञ्चमीप्रसक्त्या नमः पदार्थघटकापकर्षान्विततादृशार्थविवक्षायां शेषषष्ठ्येव प्रसज्यत इति सर्वा ह्युपपदविभक्तयः पञ्चम्यपवादिका इति न विरुध्यते । वस्तुतस्तु(२) स्वावधिकोत्कर्षवत्तया ज्ञापनं नमस्कारः तदेकदेशज्ञानान्वयि विषयत्वं विषयित्वं वा चतुर्थ्यर्थः । गुरुं प्रणमतीत्यादौ तादृशज्ञानविषयतया गुरुप्रभृतेः कर्मत्वेऽपि प्रकृते ज्ञानस्य धात्वनुपस्थाप्यतया न भगवतः कर्मता । नारायणं नमस्कृत्येत्यादौ नारायणादेः कर्मत्वं प्रयत्नेनोपपादनीयम्(३) । नमस्करोति प्रणमतीत्यादौ समभिव्याहृतस्य कर्तुरेव स्वावधिकोत्कर्षबोधको व्यापारः प्रतीयते न तूच्चारयितुरेव प्रकृते च केवलान्नमःपदात् प्रयोक्तुरेव तादृशव्यापारः प्रतीयत इति स्वावधिकोत्कर्षवत्तया भगवज्ज्ञानानुकूलो मदीयो व्यापार इत्याकारकः शाब्दबोधः । विघ्नस्येति । विष्टम्भो धृतिः सा च पतनविरोधिव्यापारः स च ईश्वरप्रयत्न ईश्वरसंयोगो वा । यथा विहायसि भ्राम्यतां विहङ्गमादीनां शरीरधारकप्रयत्नाधिष्ठानान्न पतनं तथा

(१) यत्र रूढपदं यौगिकपदं च वर्तते तत्र रूढपदमेव विशेष्यबोधकं भवतीत्याशयः ।

(२) गुरुं प्रणमतीत्यादौ गुरोर्धात्वर्थतावच्छेदककर्मत्वविरहात् द्वितीयानुपपत्तिरत आह वस्तुतस्त्विति ।

(३) तात्पर्यं नमस्कृत्येत्यत्र नमःपदं तात्पर्यग्राहकं धात्वर्थ एव तादृशव्यापारोऽर्थ इत्येव स्वीकरणीयमिति ।

भूरादिलोकानां गुरुतराणामपि प्रयत्नवदीश्वरसंयोगादेव न पतनमिति निरुक्तधृतिकर्तृत्वं भगवतोऽव्याहतमेव । पतनविरोधित्वं पतनानुत्पादप्रयोजकत्वम् एवं च धात्वर्थतावच्छेदकपतनानुत्पादकतया भूतानां कर्मता मुखं व्यादाय स्वपितीत्यत्रेव समानकालीनत्वमेव क्त्वाप्रत्ययार्थः न तूत्तरकालीनत्वं । भगवतो भूतधारकत्वम् उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर इत्युपनिषदोऽपि प्रमापयन्ति । अखण्डेति । अत्र, नित्यसुखज्ञानवते इति नित्यसुखज्ञानात्मकायेति वा व्याख्यानं वेदान्तिकानामेव शोभते न तु नैयायिकानां तैर्नित्यसुखस्यात्मनि ज्ञानसुखाभेदस्य चानभ्युपगमादतस्तन्मते अखण्डो दुःखासम्भिन्न आनन्दो यस्मात् सोऽखण्डानन्दः एवंभूत उपासनारूपो बोधो यस्येत्येव व्याख्येयम् । अथवा ग्रन्थकृता नित्यसुखाभिव्यक्तिर्मुक्तिरिति भट्टमतस्य परिष्कृतत्वात्तदवलम्ब्यैवैतदभिहितं तथा चाखण्डस्य नित्यस्यानन्दस्य बोधः साक्षात्कारो यस्मादित्युत्पत्त्या भगवत उपासनाविषयतया मुक्तिप्रयोजकत्वमेवाखण्डेत्यादिना प्रतिपादितम् । पूर्णाय तृप्ताय तृप्तिश्च स्वीयसुखेच्छावन्ध्यत्वमिति (१) कुसुमाञ्जलिप्रकाशे भगवतोऽक्षपादकव्याख्यानावसरे वर्धमानोपाध्यायैरभिहितम् । परमेति । परमत्वमुत्कर्षः स चात्मान्तराधिकसर्वविषयकनित्यज्ञानादिमत्त्वमेवेश्वरस्य एवं चाधेत एव तस्यात्मत्वलाभेऽपि आत्मपदसमभिव्याहारेणैवोत्कर्षपरतालाभ इति न तद्वैयर्थ्यम् । वस्तुतस्तु आत्मपदं ज्ञानावच्छिन्नस्य वाचकं न तु सुखादिसमवायिकारणतावच्छेदकीभूतद्रव्यत्वव्याप्यजातिविशेषावच्छिन्नस्य सुखादिसमवायिकारणतारहितस्येश्वरस्य तादृशजातिमत्त्वे मानाभावात् सुखत्वावच्छिन्नं प्रत्यात्मत्वेन हेतुताया अनभ्युपगमेऽपि धर्मादिविरहेणानात्मनि सुखाद्युत्पादासम्भवेन तादृशजातावेव युक्तेर्दुर्लभत्वाच्च । एवं च यथा परमसुन्दर इत्यादौ पदार्थतावच्छेदकसौन्दर्यादिगत उत्कर्षः परमपदेन प्रत्याय्यते तथात्रापि आत्मपदार्थतावच्छेदकज्ञाननिष्ठः सर्वविषयकत्वादिरूप उत्कर्षस्तत्पदेन बोध्यत इति । एवं च भगवत उत्कर्षप्रतिपादकत्वेन स्तुतिरूपतया अयमपि श्लोको मङ्गलरूप इति ध्येयम् ॥

(१) इष्टसमानाधिकरणत्वस्वविषयकत्वोभयसम्बन्धेन सुखविशिष्टेच्छाऽपदस्थत्वमित्यर्थः ।

 

नन्वेकानन्तरमपराभिधाने सङ्गतिसत्त्वमपेक्षितं न तु तत्प्रदर्शनं तथा च प्रत्यक्षोपजीवकत्वादित्यादिना कार्यत्वरूपसङ्गतिप्रदर्शनमफलं न च प्रत्यक्षानन्तरमनुमानं निरूप्यत इत्यभिधाने तत्पूर्वमेव किमेतन्न निरूपितमित्याकाङ्क्षोदयान्निरूपणपौर्वापर्यनियामकस्य प्रत्यक्षानुमानयोरुपजीव्योपजीवकभावस्य प्रदर्शनमावश्यकमिति वाच्यं निरूप्ययोरुपजीव्योपजीवकभावस्य निरूपणक्रमनियामकतायाः स्वयं दूषणीयतया स्वमते क्रमानियामकाकाङ्क्षया तदभिधानासङ्गतेरित्याशङ्कां परिजिहीर्षुः सङ्गतिप्रदर्शनस्य प्रत्यक्षानुमानग्रन्थैकवाक्यताप्रतिपत्तिप्रयोजनकत्वं निरूपणप्रतिज्ञाया निष्फलत्वशङ्कानिराचिकीर्षया तस्याः शिष्यावधानफलकत्वं च दर्शयति पूर्वापरेति ॥

( दी० ) पूर्वापरग्रन्थैकवाक्यताप्रतिपत्तये शिष्याणामवधानाय च सङ्गतिं प्रदर्शयन्ननुमाननिरूपणं प्रतिजानीते प्रत्यक्षेत्यादि ।

( चि० ) प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरं बहुवादिसम्मतत्वादुपमानात् प्रागनुमानं निरूप्यते ।

(गा०) एकवाक्यत्वं साकाङ्क्षत्वे सति एकार्थप्रतिपत्तिपरत्वं तथा च जैमिनिसूत्रम् अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति । एकार्थप्रतिपादकयोर्घटोऽस्तिकलशोऽस्तीत्यादिवाक्ययोरेकवाक्यतावारणाय साकाङ्क्षत्वनिवेशः तदुत्थाप्याकाङ्क्षानिवर्तकत्वतन्निवर्तनीयाकाङ्क्षोत्थापकत्वान्यतरवत्त्वमेव तत्साकाङ्क्षत्वं प्रकृते च प्रत्यक्षग्रन्थोत्थाप्यायाः किमस्योपजीवकमित्याकारिकाया उपजीवकज्ञानविषयिण्या आकाङ्क्षाया विषयसिद्धिसम्पादनेन निवर्तकत्वमनुमानग्रन्थस्येति निरुक्ततत्साकाङ्क्षतानिर्वाहः भूतलं घटवदित्युक्ते को घट इत्याकाङ्क्षया प्रयुक्तस्य कम्बुग्रीवादिमानित्युत्तरस्य तदेकवाक्यतावारणायार्थैक्यनिवेशः यद्यपि तादृशवाक्ययोरपि यं कं चिदर्थमादायार्थैक्यमस्ति तथापि परस्परसहकारेण विशिष्टैकार्थप्रतिपादकत्वं दलद्वयार्थः प्रकृते च प्रत्यक्षपरिच्छेदानुमानपरिच्छेदयोर्मिलित्वा विशिष्टैकार्थविषयकशाब्दबोधाजनकत्वेऽपि चत्वारि प्रमाणानीत्यप्रामाण्यशङ्कानास्कन्दितनिश्चयं प्रति परिच्छेदचतुष्टयस्यैव कथञ्चिदुपयोगितया तादृशप्रतिपत्तिप्रयोजकत्वाभिप्रायविषयत्वरूपमर्थैक्यं निराबाधमे-

घ । एतादृशैकवाक्यताघटकसाकाङ्क्षताज्ञानं सङ्गतिज्ञानाद्भवति यद्यदर्थसङ्गतार्थकं भवति तत्तत्साकाङ्क्षमितिव्याप्तेः सङ्गतिज्ञानस्य साकाङ्क्षत्वानुमितिसामग्रीघटकत्वात् प्रत्यक्षोपजीवकमित्यनभिधाय उपजीवकत्वादिति पञ्चम्यन्ताभिधानमुपजीवकत्वस्य सङ्गतित्वलाभाय प्रयोजकजिज्ञासाजनकज्ञानविषयत्वरूपपरम्परया प्रयोजकत्वस्य हेतुपञ्चम्यर्थतया प्रत्यक्षानन्तरानुमानाभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वरूपानुमानसङ्गतित्वस्य लाभात्। वस्तुतो दर्शितपञ्चम्यर्थस्य जिज्ञासाघटितत्वात्साकाङ्क्षतालाभायैव पञ्चम्यभिधानम् अत एव सङ्गतित्वेन सङ्गतेरेकवाक्यताव्याप्यत्वे उपजीवकत्वत्वरूपतद्व्यान्तररूपेणापि तद्व्याप्यताया आवश्यकत्वात् सङ्गतित्वज्ञानं विनाप्येकवाक्यताप्रतिपत्तिसम्भवात्सङ्गतित्वलाभाय पञ्चम्यन्ताभिधानमनर्थकमित्यपि निरस्तं न च पञ्चम्यर्थान्वयबलात्प्रत्यक्षोपजीवकत्वज्ञानजन्यजिज्ञासाया अनुमानाभिधानप्रयोजकतालाभेपि जिज्ञासायां प्रत्यक्षग्रन्थोत्थाप्यत्वस्यानुमानग्रन्थनिवर्तनीयत्वस्य चालाभान्निरुक्तसाकाङ्क्षत्वलाभो न सम्भवत्येवेति वाच्यं जिज्ञासायां प्रत्यक्षोपजीवकत्वज्ञानजन्यत्वलाभे तादृशज्ञानप्रयोजकीभूतप्रत्यक्षग्रन्थप्रयोज्यत्वस्यानुमानाभिधानप्रयोजकत्वलाभे ऽनुमानप्रतिपादकग्रन्थनिवर्त्यत्वस्य चार्थतो लाभात् । अनुमानग्रन्थे प्रत्यक्षग्रन्थैकवाक्यताप्रतिपत्तिश्च उभयोरेकग्रन्थान्तर्गतत्वज्ञानसम्पादनेन समस्तचिन्तामणिग्रन्थज्ञानाधीनप्रत्यक्षादिचतुष्टयधर्मिकप्रमाणेतरभेदपरिच्छेदरूपफलविशेषेच्छावतोऽधीतप्रत्यक्षपरिच्छेदस्य शिष्यस्य तादृशफलोपयोग्यनुमानपरिच्छेदाध्ययनप्रवृत्तावुपयुज्यते। केचित्तु एकवाक्यत्वं निःश्रेयसरूपैकफलप्रयोजकत्वं तत्प्रतिपत्तिश्चानुमानग्रन्थज्ञानधर्मिकनिःश्रेयसरूपेष्टसाधनताज्ञानरूपा शिष्यप्रवृत्तावुपयुज्यते जायते च सा सङ्गतिमदर्थप्रतिपादकत्वरूपहेतुमत्ताज्ञानजनकात्सङ्गतिप्रदर्शनादिति व्याकुर्वन्ति । तदसत् उक्तहेतोस्तादृशैकवाक्यताशून्यनिःश्रेयसानुपयोगिशास्त्रसाधारणतया व्यभिचारित्वात् । निःश्रेयसत्वं परित्यज्य फलत्वरूपेण फलप्रवेशे फलस्योत्कटेच्छाप्रयोजकरूपविशेषाज्ञानात्प्रेक्षावत्प्रवृत्त्यनुपयोगितापत्तेः एकफलकत्वस्य एकवाक्यतापदार्थताविरहाच्च । शिष्याणामिति अवधानमनुमाननिरूपणात्मकस्य तत्र व्याप्तिविशिष्टेत्यादि

प्रकृतशब्दस्य विशिष्य शुश्रूषा । अनुमाननिरूपणत्वेन सामान्यतस्तादृशशब्दे प्रमाणतत्त्वप्रतिपादकज्ञानविषयत्वावगतावपि विशिष्य तच्छ्रवणे बुभुत्सितार्थप्रतिपादकत्वाग्रहाद्विशिष्य तच्छुश्रूषा न सम्भवतीति अनुमानमिदानीं निरूप्यत इति प्रतिज्ञाय तदभिधाने च विशिष्य प्रकृतनिरूपणे ऽनुमानविषयकत्वग्रहेण बुभुत्सितप्रमाणतत्त्वप्रतिपादकता प्रकृतशब्दश्रवणे विशिष्य गृह्यत इति तादृशशुश्रूषारूपावधानं निर्वहतीति तत्फलकत्वं प्रतिज्ञायाः । तादृशावधानं च विशिष्य तच्छ्रवणे शिष्यप्रवृत्तावुपयुज्यते विरोधिन्याश्वाशुपादिसामग्र्या विघटनेन शब्दश्रवण एव वा । न च सङ्गतिप्रदर्शनानुमाननिरूपणप्रतिज्ञयोः प्रत्येकमुक्तप्रयोजनद्वयान्वये चकारासङ्गतिरिति वाच्यं प्रत्यक्षोपजीवकत्वादित्यादिसमुदितवाक्यस्यैव प्रतिजानीत इति प्रतिज्ञापदेन विवक्षितत्वात् । अन्यथा प्रत्यक्षवित्यादीतिक्रियाविशेषणान्वयायोगादेकपदार्थे एव तदुभयान्वयेन तत्सङ्गतेः एकदेशस्य एकवाक्यताप्रतिपत्त्यादिफलकत्वेनापि समुदाये तत्फलकत्वाबाधात् सङ्गतिभिन्नांशप्रतिपादनद्वारा नैकवाक्यताप्रतिपादकत्वमुक्तप्रतिज्ञावाक्यस्य किन्तु सङ्गत्यंशप्रतिपादनद्वारेति तस्य सङ्गतिप्रदर्शनरूपताप्रतिपत्तये सङ्गतिं प्रदर्शयन्नित्यभिहितं धातुसम्बन्धे प्रत्ययाः इत्यनेन समभिव्याहृतक्रियासमानकालीनतायामनुशिष्टशतृपदात्सङ्गतिप्रदर्शनप्रतिज्ञयोरेककालीनत्वलाभेनार्थतस्तदभेदप्रतीतेः । प्रतिजानीत इति अव्यवहितोत्तरकालकर्तव्यतया बोधयतीत्यर्थः लङ्प्रत्ययस्यात्र वर्तमानसामीप्यार्थकत्वादितिभावः ॥

प्रत्यक्षोपजीवकत्वादितिपञ्चम्या ज्ञापकत्वरूपहेतुत्वपरताभिमानेन निरूपणक्रमनियामकाकाङ्क्षया उपजीव्योपजीवकभावप्रदर्शनमिति साम्प्रदायिका वर्णयन्ति तन्मतमेव प्रथमतोऽनुवर्तमानः फलीभूतप्रत्यक्षानुमितिप्रमयोः प्रत्यक्षानुमानप्रमाणयोश्च कार्यकारणभावस्य प्रमातत्करणनिरूपणक्रमनियामकतामाह अथेति ।

(दी०) अत्रोपजीव्योपजीवकभावः फलतः स्वरूपतश्च प्रत्यक्षफलस्यानुमित्यनुव्यवसायादेरनुमित्युपजीवकत्वेऽपि न सर्वा प्रत्यक्षमितिस्तथा अनुमितयस्तु सर्वाः साक्षात्परम्परया वा व्याप्त्यादिप्रत्यक्षोपजीविकाः पुरस्कृतश्चायमुपजीवकतोत्कर्षः ।

( गा०) अत्र प्रत्यक्षानुमानग्रन्थपौर्वापर्ये इत्यर्थः नियामक इति शेषः नियामकत्वमेव वा ससम्यर्थःफलतः फलयोः प्रत्यक्षप्रमानुमितिप्रमयोरितियावत् । स्वरूपतः स्वरूपयोः प्रत्यक्षप्रमाणानुमानप्रमाणयोरिति यावत् । अत्रानयोः प्रत्यक्षानुमानयोरित्यर्थः फलतः फलद्वितपरम्परासम्बन्धेन स्वरूपतः साक्षात्सम्बन्धेन वर्तत इति शेषः तथा चोभयथैव स निरूपणक्रमनियामक इति भाव इति केचित् । अत्रेतीदंपदं प्रत्यक्षोपजीवकत्वादित्यादिग्रन्थपरं ससम्यर्थः प्रतिपाद्यत्वं तथा च फलयोः प्रमाणयोश्च उपजीव्योपजीवकभावः क्रमनियामकतया एतद्ग्रन्थप्रतिपाद्य इत्यर्थः उपजीव्यत्वस्य शब्दतः साक्षादलाभेपि उपजीवकतानिरूपकत्वेनार्थतस्तल्लाभान्न विरोध इत्यपरे । ननु प्रत्यक्षानुमित्योरुपजीव्योपजीवकभावस्य तन्निरूपणपौर्वापर्यनियामकता तदैव सम्भवति यद्युपजीवकत्वमानन्तर्याभिधानव्याप्यंभवेत् व्याप्तिश्च यत्प्रत्यक्षोपजीवकं भवति तत्प्रत्यक्षनिरूपणाव्यवहितोत्तरनिरूपणविषय इति विशेषतो यद्यदुपजीवकं भवति तत्तन्निरूपणाव्यवहितोत्तरनिरूपणविषय इति सामान्यतो वा ग्राह्या उभयथा प्रत्यक्षानन्तरमनिरूपिते तदुपजीवकपदार्थान्तरे व्यभिचारः तदव्यवहितोत्तरनिरूपणविषयत्वे सतीति विशेषणं हेतौ निवेश्य तादृशव्यभिचारवारणेपि प्रथमे दृष्टान्ताभावः व्यतिरेकिदृष्टान्तः सुलभ इति चेत् तदाऽनुमानत्वमेव प्रत्यक्षनिरूपणानन्तरनिरूपणनियामकं किन्नोच्यते अप्रयोजकत्वशङ्का पुनस्तुल्यैवेति द्वितीय एव पक्ष आदरणीयः तत्रापि अनुमित्युपजीवकतदनुव्यवसायतदात्मकोपनयादिजन्योपनीतप्रत्यक्षादेस्तन्निरूपणाव्यवहितोत्तरनिरूपणेन व्यभिचारो दुर्वार इति शङ्कां निराचिकीर्षुः प्रत्यक्षप्रमानिष्ठानुमित्युपजीवकतातो ऽनुमितिनिष्ठप्रत्यक्षोपजीवकतायामानन्तर्याभिधानव्याप्यतावच्छेदकं विशेषमाह प्रत्यक्षफलस्येति । तथा अनुमित्युपजीविका अनुमितयस्त्विति । यादृशानुमितिकारणज्ञानमनुमित्यादिरूपमेव तत्र साक्षात्प्रत्यक्षोपजीवकत्वासम्भवात्परम्परया चेति । तथा चोपजीवकत्वमत्र जन्यजन्यादिव्यावृत्तं कार्यत्वरूपं न विवक्षितमपि तु तत्साधारणं प्रयोजकत्वरूपमेवेति न दोषः अयं निरूपणविषयतावच्छेदकप्रमाविभाजकधर्मावच्छिन्नत्वरूपोपजीवकतानिष्ठ उत्कर्षः पुरस्कृतः आनन्तर्याभिधानप्रयोजकतया आदृत इत्य-

र्थः त्वर्थेन चकारेणाविभाजकावान्तरधर्मावच्छिन्नत्वस्य पुरस्कृतत्वं व्यवच्छिन्नं तथा च प्रत्यक्षत्वावच्छेदेन प्रत्यक्षे नानुमित्युपजीवकत्वमस्तीति प्रत्यक्षं प्रागेव निरूपितं तथाविधानुमितित्वावच्छेदेन चानुमितौ प्रत्यक्षोपजीवकत्वमस्तीति सा पश्चान्निरूपितेति भावः ॥

प्रत्यक्षेऽपि निरूप्यतावच्छेदकफलविभाजकधर्मावच्छेदेनादृष्टद्वाराऽनुमितिप्रयोज्यत्वमस्तीत्याशङ्कते यद्यपीति ।

(दी०) यद्यपि सकलमेव प्रत्यक्षफलमुपजीवत्यदृष्टजननीं समयमत्कर्तव्यतादि(१)परिच्छेदिकामनुमितिम् ईश्वरप्रत्यक्षन्तु न फलं तथापि दृष्टद्वारकमिह तथात्वमादरणीयम् इतरस्याविनिगम्यत्वात् । सर्वं चानुमितिकरणमिन्द्रियापेक्षोत्पत्तिकम् । अनुमितिं भावयतोऽपीश्वरज्ञानस्य तत्करणतानिर्वाहकप्रत्यासत्तिविरहेणातत्त्वात् । सर्वं पुनरिन्द्रियं नानुमानाधीनजन्म मनःश्रवणयोरजन्यत्वात् । दृष्टद्वारा वा तथात्वमादरणीयम् । न चोत्पत्तिमदपीन्द्रियं दृष्टद्वारकमनुमानमपेक्षते ॥

(गा०) अदृष्टजननीं स्वजनकादृष्टप्रयोजिकां समयः पदसङ्केतः मत्कर्तव्यता स्वकृतिसाध्यता तत्परिच्छेदिकां तद्विषयिणीं शब्दाधीनायामदृष्टजनकयागादिगोचरप्रवृत्तौ प्रवृत्तिपरवाक्याधीनवाक्यार्थबोधो ऽपेक्षितः तत्र च इदं पदमत्रार्थे शक्तं(२) शक्तिभ्रमाजन्यलक्षणाग्रहाजन्यतद्विषयकशाब्दबोधजनकत्वादित्यनुमानाधीनशक्तिग्रहो ऽपेक्षितः अन्यत्र(३) च इदं मत्कर्तव्यं मत्कृतिं विनाऽनुत्पद्यमानत्वे सति मदिष्टसाधनत्वादित्यनुमानाधीनकृतिसाध्यताधीरपेक्षितेति प्रवृत्तिद्वारा ऽदृष्टप्रयोजिकाऽनुमितिर्जन्यमात्रं प्रत्येव प्रयोजिका अदृष्टस्य कार्यमात्रं प्रति हेतुत्वादिति भावः । नन्वेवमपि प्रमाविभाजकप्रत्यक्षत्वाश्रयस्य भगवत्प्रत्यक्षस्य नित्यतयाऽनुमित्यनुपजीवकत्वान्निरूप्यतावच्छेदकधर्मावच्छेदेन प्रत्यक्षे नान-

(१) आदिपदेन मदिष्टसाधनता ग्राह्या ।

(२) अत्रार्थे व्यभिचारवारणाय शक्तिभ्रमाजन्येति ।
लाक्षणिकपदे व्यभिचारवारणाय लक्षणाभ्रमाजन्येति ।

(३) शब्दानर्थानवबुद्धावित्यर्थः ।

मित्युपजीवकत्वसम्भव इत्यत आह ईश्वरेति । न फलमिति तथा च तत्साधारणप्रत्यक्षत्वं न फलविभाजकमतिप्रसक्तत्वादपि तु तद्व्यावृत्तं जन्यप्रत्यक्षत्वमेव तदेव च निरूप्यतावच्छेदकं तदवच्छेदेन चादृष्टद्वारा ऽनुमित्युपजीवकत्वमक्षतमेवेति भावः(१)। दृष्टद्वारकं दृष्टमात्रद्वारकं अदृष्टाद्वारकमिति यावत् तेन दृष्टस्य यागादेरनुमितिद्वारत्वेऽपि न क्षतिः अदृष्टाद्वारकत्वं च स्वजनकादृष्टजनकानिरूपितत्वं स्वं हेतुमत्तया ऽभिमतं तथात्वमुपजीवकत्वम् इह आनन्तर्याभिधाने आदरणीयं नियामकतया स्वीकरणीयं तथा च(२) यत्स्वजनकादृष्टाजनकयन्निरूपितनिरूपणाविषयतावच्छेदकप्रमितिविभाजकधर्मावच्छिन्नोपजीवकतावत्तत्तन्निरूपणाव्यवहितोत्तरनिरूपणविषय इत्येव व्याप्तिरादरणीया तत्र च न व्यभिचारावकाश इति भावः । नन्वदृष्टद्वारकोपजीवकताया आनन्तर्याभिधाननियामकत्वमङ्गीकृत्य प्रत्यक्षमेव किं पश्चान्न निरूप्यत इत्यत आह इतरस्येति । अदृष्टद्वारकोपजीवकत्वस्येत्यर्थः अविनिगम्यत्वात् विनिगमनाया अविषयत्वात् । तथा चादृष्टद्वारा प्रवृत्त्यौपयिकोपादानप्रत्यक्षोपजीवकताया अनुमितौ सत्त्वेनादृष्टद्वारकोपजीवकत्वस्य तुल्यतया आनन्तर्याभिधाननियामकत्वं न सम्भवतीति भावः। प्रत्यक्षप्रमाणस्य चक्षुरादेरप्यदृष्टद्वारा समयादिपरिच्छेदकानुमानोपजीवकत्वात् स्वरूपनिष्ठोपजीवकतायाः कथमानन्तर्याभिधाननियामकत्वमित्याशङ्कां परिजिहीर्षुरनुमाननिष्ठोपजीवकतायां विशेषं दर्शयति सर्वमिति । यत् प्रमाणं

(१) केचित्तु अथ कार्यतावच्छेदकप्रमाविभाजकधर्मावच्छिन्नत्वरूप उपजीवकतानिष्ठोत्कर्षः पुरस्कृतः आनन्तर्याभिधानप्रयोजकतावच्छेदकतया आदृत इत्यर्थः । ननु नित्यानित्यसाधारणधर्मस्य कार्यतानवच्छेदकत्वाज्जन्यप्रत्यक्षत्वमेव जन्यतावच्छेदकं तथा च प्रत्यक्षेऽपि कार्यतावच्छेदकीभूतप्रमाविभाजकधर्मावच्छेदेनादृष्टद्वारा अनुमित्युपजीवकत्वमक्षतमित्याशङ्कते यद्यपीति । ननु नित्यानित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे यतिविरहात् प्रत्यक्षत्वमेव तादृशो धर्मस्तथा च कथमुक्तधर्मावच्छेदेनानुमित्युपजीवकत्वसम्भव इत्यत आह ईश्वरेति । न फले न तादृशप्रत्यक्षसाधारण्यमन्यथा जन्यतावच्छेदकं नित्यानित्यसाधारणधर्मस्य तथात्वे अपसिद्धान्तप्रसङ्गात् तथा च जन्यप्रत्यक्षत्वमेव कार्यतावच्छेदकं तदवच्छेदेनादृष्टद्वारा अनुमित्युपजीवकत्वं सम्भवतीति भावः । इति २ पुस्तके अधिकः पाठः ।

(२) पूर्वाभिहितार्थे निरूपितत्वांशस्याभिवेयेन तत्परित्यज्य यत्पदार्थेऽदृष्टाजनकत्वं प्रवेश्य व्याप्तिमाह तथा चेत्यादिना ।

स्वनिष्ठप्रामाण्यग्रहार्थं प्रमाणान्तरमपेक्षते तदपि तदुपजीवकमुच्यते प्रकृते च तादृशमुपजीवकत्वं न विवक्षितं नित्येनापीन्द्रियेण प्रामाण्यग्रहार्थमनुमानापेक्षणादिति स्वोत्पत्तौ तदपेक्षितत्वरूपमुपजीवकत्वमेवेति स्फुटीकर्तुम् इन्द्रियोपजीवकमित्यनभिधाय इन्द्रियापेक्षोत्पत्तिकमित्यभिहितम् । एतावता एतदेव परीक्षाकृता शङ्कोत्तरभावेन यदभिहितं तत्स्वाभिधानसौष्ठवमादर्शितम् । एवं च निरूपणीयतावच्छेदकानुमितिकरणत्वादिरूपप्रमाणविभाजकरूपावच्छेदेनोपजीवकत्वमेवानन्तर्याभिधाननियामकं धान्यमित्याशयः । नन्वनुमितिं प्रति भगवज्ज्ञानस्य उपादानप्रत्यक्षत्वेन(१) व्याप्तिज्ञानत्वेन च कारणत्वात् तदप्यनुमितिकरणम् अथ च नित्यतया न प्रत्यक्षोपजीवकमिति कथमनुमितिकरणत्वावच्छेदेन प्रत्यक्षोपजीवकतेत्याशङ्क्य तस्यानुमित्यसाधारणकारणत्वाभावं व्यवस्थापयति अनुमतिमिति । भावयतोऽपि उपादानप्रत्यक्षविधया जनयतोऽपि तत्करणतेति अनुमितित्वावच्छिन्ननिरूपितकरणतानिर्वाहकतत्समवायिसमवेतत्वरूपप्रत्यासत्तिविरहेणेत्यर्थः अतत्त्वात् अनुमितित्वावच्छिन्नाकरणत्वात् । अयमभिप्रायः प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्यत्रात्मशरीरादिव्यावृत्त प्रमित्यसाधारणकरणत्वमेव प्रमाणपदेन विवक्षितं तच्च प्रमितिविभाजकधर्मावच्छिन्नकरणत्वम् एवं चानुमानपदेनापि अनुमितित्वावच्छिन्नकरणत्वमेव विवक्षितं तदेव विभाजकम् । ईश्वरज्ञानं च न तथा तथाहि फलायोगव्यवच्छिन्नव्यापारवत्कारणत्वं करणत्वं न तु कारणत्वमात्रं तथा सति छिदानुपधायककुठारादिव्यक्तेरपि तत्करणताप्रसङ्गेन तत्कुठारेण छिनत्तीतिप्रयोगापत्तेः तदर्थश्च स्वनिरूपककार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे तत्कार्योपधायकव्यापाराव्यवहितप्राक्क्षणावच्छेदेन स्वावच्छेदकसम्बन्धेन वर्तते यत्तद्वृत्तित्वविशिष्टकारणत्व(२) स्वं कारणता ।

(१) समवायसम्बन्धेन कार्यमात्रं प्रति विषयतासम्बन्धेन उपादानप्रत्यक्षं कारणमेवं चोपादानप्रत्यक्षविधया ईश्वरप्रत्यक्षमपि हेतुरिति भावः ।

(२) अव्यवहितपूर्वत्वसम्बन्धेन घटत्वावच्छिन्नं प्रति कपालसम्बन्धेन घटपदे कारणत्वसम्भवेऽपीदम् अव्यवहितपूर्वत्वञ्च स्थूलकालसाधारणं तदुत्पत्तिपूर्वक्षणोत्पत्तिकत्वमिति गेहस्थध्वंसप्रागभावे घटपदे स्वोत्पत्तिकत्वमव्यवहितपूर्वत्वावच्छेदेन कार्याधिकरणेऽसत्त्वेऽपि न कारणत्वहानिः । एवं कुठारेण छिनत्तीत्यत्र बोध्यम् ।

ईश्वरज्ञानस्य योपादानप्रत्यक्षविषया कारणता तदवच्छेदकविषयतासम्बन्धेन तस्यानुमितिसमवायिनि वृत्तावपि तस्या जन्यत्वावच्छिन्नानिरूपितायाः अनुमितित्वावच्छिन्नानिरूपितत्वात् अनुमितित्वावच्छिन्ननिरूपिता च या व्याप्तिज्ञानत्वावच्छिन्नकारणता तदवच्छेदकसमवायसम्बन्धेन तस्यानुमितिसमवायिन्यसत्त्वादात्मन्यवृत्तेर्नानुमितित्वावच्छिन्नकारणत्वमिति तथा च तादृशकरणत्वावच्छेदेन प्रत्यक्षप्रमाणोपजीवकत्वमक्षतमेवेति एवं जन्यज्ञानत्वावच्छिन्नकरणस्य मनःप्रभृतेः प्रत्यक्षानुपजीवकत्वेऽपि न क्षतिः उक्तरीत्या तस्याप्यनुमितित्वावच्छिन्नाकरणत्वात्। केचित्तु प्रमाणतावच्छेदकरूपावच्छिन्नोपजीवकत्वस्यानन्तर्याभिधानप्रयोजकत्वाभिमानेनेश्वरज्ञानस्य कार्याधिकरणाप्रत्यासन्नत्वेनाकरणत्वेऽपि अनुमितिकरणतावच्छेदकव्याप्तिज्ञानत्ववत्तया निरुक्तोपजीवकत्वस्यानन्तराभिधाननियामकत्वानुपपत्तिरिति पूर्वपक्षयन्ति नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इति नियमानुरोधाज्जन्यव्याप्तिज्ञानत्वमेवानुमितिजनकतावच्छेदकम् अतस्त्वादित्वस्य च अनुमितिकरणतावच्छेदकरूपाभावादित्यर्थः प्रत्यासत्तिघटितफलोपधायकताया जन्यत्वविशिष्टतादृशरूपव्यापकतया(१) तदभावस्य तादृशरूपाभावहेतुत्वेति समादधति च। तदसत् उक्तरीत्यैव सामञ्जस्यात्। सर्वे पुनरिति तथा च प्रत्यक्षत्वावच्छिन्नकरणतावच्छेदेन नानुमानोपजीवकेताति नानुमानानन्तरं प्रत्यक्षनिरूपणापत्तिरिति भावः। नानुमानोपजीवकमिति परित्यज्य नानुमानाधीनजन्मेत्यभिधाने बीजं पूर्वोक्तमेव अनुमितिस्वरूपयोग्यमात्रस्यैव तत्करणत्वमभ्युपेत्यादृष्टद्वारकोपजीवकत्वस्यानन्तर्याभिधाननियामकतामङ्गीकरोति दृष्टद्वारा चेति। तथा चेश्वरज्ञानस्यानुमितिकरणत्वेऽपि न क्षतिः। निरूप्यतावच्छेदकसामानाधिकरण्येनादृष्टद्वारकोपजीवकताया प्रत्यक्षानन्तर्याभिधाननियामकत्वोपगमात्। यावदनुमितिकरणेषु प्रत्यक्षोपजीवकताविरहेऽपि क्षतिविरहात्। न चोक्ताश्चिमदर्शीति। यद्यपि चक्षुरर्पणप्रवृत्त्यौपायिकमनुमानं खण्डचक्षुष्पदृष्टमद्वारीकृत्यैव महाचक्षुर्नाशकत्ववत्पयोविभागानुकूलावयवक्रियाजनकदर्पणसम्पादनेन प्रयोजकं भवति तथापीदानीं जन्यत्वरूपस्यैवोपजीवकत्वस्यावरणीयतया खण्डचक्षुपद्मानुमाननिष्ठान्यथासिद्धिनिरूपक-

(१) जन्यत्वविशिष्टतादृशव्यापकतयेति २ पु० पा०।

त्वेन तज्जन्यताविरहान्नातिप्रसङ्गः एवं चादृष्टद्वारकस्य प्रवर्तकानुमानस्यान्यथासिद्धतया चक्षुराद्यहेतुत्वेऽपि परमेश्वरीयव्याप्तिज्ञानरूपानुमाननिरूपितचक्षुरादिनिष्ठजन्यतावारणायैव स्वजनकादृष्टाजनकानिरूपितत्वात्मकमदृष्टाद्वारकत्वमुपजीवकताविशेषणमुपात्तमितिध्येयम् । अथवा पुरस्कृतश्चायमिति ग्रन्थ एवं व्याख्येयः अयं निरूप्यतावच्छेदकावच्छिन्नत्वरूपः उत्कर्षः पुरस्कृतः फलस्य स्वरूपस्य चानन्तर्याभिधानप्रयोजकतावच्छेदकतया आदृतः एवं च प्रमितिविभाजकधर्मावच्छिन्नत्वस्य विशिष्यानिवेशान्न दृष्टान्तसौलभ्यमपि बोध्यं । निरूप्यतावच्छेदकं च सर्वत्र विभाजकरूपमेव येन रूपेण विभागः कृतस्तद्रूपावच्छिन्नस्यैव लक्षणादेराकाङ्क्षितत्वात् । यद्यपीत्यादिपूर्ववत् । ननु फलस्यानुमितेर्निरूप्यतावच्छेदकानुमितित्वावच्छेदेन प्रत्यक्षफलोपजीवकत्वेऽपि स्वरूपेऽनुमितिकरणे तादृशप्रत्यक्षप्रमाणोपजीवकत्वमसिद्धमीश्वरज्ञानस्यापि ज्ञानत्वेनानुमितिकरणत्वात्तस्य च नित्यतयाऽनुपजीवकत्वादतः प्रमाणस्यानन्तराभिधाने विभाजकधर्मसमानाधिकरणमुपजीवकत्वमेव नियामकं वाच्यं तच्च न संभवति चक्षुरादौ दीपदानादिगोचरप्रवृत्त्यौपयिकानुमानोपजीवकताया अदृष्टाद्वारकत्वविशेषणेन व्यावृत्तावपि खण्डचक्षुरादिनिष्ठायाश्चक्षुर्घर्षणादिप्रवृत्त्यौपयिकानुमाननिरूपितमद्यचक्षुर्नाशादिद्वारकोपजीवकताया अदृष्टाद्वारकतया अनन्तराभिधानव्यभिचारित्वादित्याशङ्कामनुमितिं प्रतीश्वरज्ञानस्य करणत्वनिराकरणेनानुमितिकरणत्वावच्छिन्ने प्रत्यक्षप्रमाणोपजीवकत्वं व्यवस्थापयन्निराकुरुते सर्वमित्यादिना । अनुमितिमित्यादेः पूर्वोक्त एवार्थः तथा च निरूप्यतावच्छेदकरूपावच्छिन्नोपजीवकत्वमेव सर्वत्रानन्तराभिधानप्रयोजकमितिभावः । एतादृशोपजीवकत्वस्य प्रत्यक्षेऽसत्त्वं दर्शयन् शङ्कितव्यभिचारविरहं स्पष्टयति सर्वं पुनरिन्द्रियमिति । मनःश्रवणयोरजन्यत्वादिति तथा च प्रत्यक्षप्रमितिकरणत्वावच्छेदेनाविशेषितमुपजीवकत्वमेव नास्ति सुतरामदृष्टाद्वारकत्वविशेषितं तत् तादृशस्य जन्येऽपि इन्द्रिये क्वचिदेव सत्त्वादिति भावः । यदि परमेश्वरज्ञानस्यापि स्वरूपयोग्यतामात्रेण करणत्वमुपेयते तदा स्वरूपेऽवच्छेदकावच्छेदेनोपजीवकमसिद्धमिति अन्यादृशमेवोपजीवकत्वमनन्तराभिधाननियामकं वाच्यं तच्चानुमाननिरूपितम-

इष्टद्वारा प्रत्यक्षेऽक्षतमिति व्यभिचार इत्यत आह इष्टद्वारा वेति। स्वरूपनिष्ठमद्दष्टद्वारकं प्रयोज्यव्यावृत्तं कार्यत्वरूपमुपजीवकत्वमेवादरणीयमित्यर्थः। चक्षुर्घर्षणादिप्रवृत्त्यौपयिकानुमानस्यान्यथासिद्धया चक्षुरादिषु न तत्कार्यत्वमिति भावः॥

.. एतावतोपजीवकत्वस्यानन्तर्याभिधानानियामकतापक्षं किञ्चित्परिष्कृत्य तं परित्यक्तुकामो दर्शितसामान्यनियमे व्यभिचारमाशङ्कते अथेति।

( दी० ) अथोपजीव्यं निरूप्यैवोपजीवकं निरूप्यत इति न नियमः क्वचित् कार्यं निरूप्यापि कारणनिरूपणादितिचेत् किं चातः न हि सङ्गतिरनन्तराभिधानव्याप्ता। आनन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थः सङ्गतिः जायते च कार्ये कारणे वा ज्ञाते कारणत्वस्य कार्यत्वस्य वा ज्ञानात् किमस्य कारणं कार्यं वेति जिज्ञासा अतस्तयोर्द्वयोरपि सङ्गतित्वमित्यश्चोपजीवकतायास्तुल्यत्वेऽपि न क्षतिरिति मन्तव्यम्।

(गा०) उपजीवकमुपजीव्यनिरूपणानन्तरनिरूपणविषय एवेति नियमो नेत्यर्थः कार्यं निरूप्यापीति कारणनिरूपणात्प्रागेव कार्यनिरूपणादित्यर्थः यथाऽत्रैवानुमानग्रन्थे ऽनुमानात् पूर्वमेवानुमितिर्निरूपितेति भावः। व्यभिचारस्यान्ततस्तत्तदुपजीवकतामेदात्मकविशेषणान्तरप्रक्षेपेण वारणसम्भवेऽप्यप्रयोजकत्वं दुर्वारमेव अनुमानात् पूर्वमनुमितेरिव बाधकाभावेन प्रत्यक्षात्प्रागेवानुमानस्य निरूपणसम्भवात्तावतापि निरूपणीययोस्तयोरुपजीव्योपजीवकभावाव्याघातादिति हृदयम्। ज्ञापकत्वरूपहेतुतायाः प्रत्यक्षोपजीवकत्वादितिपक्षस्यर्थतोपगम एव दर्शितनियमाभावे विरुध्यते स्वज्ञानजन्याजिज्ञासाद्वारा प्रयोजकत्वरूपं हेतुत्वञ्च नियमाभावेऽप्यविरुद्धमेवेत्याशयेन समाधत्ते किं चात इति। अतो दर्शितनियमाभावात्किमानिष्टं न किञ्चिदपीत्यर्थः। नन्वेवमुपजीवकत्वस्य सङ्गतित्वानुपपत्तिः सामान्यतोऽनन्तराभिधानव्याप्यस्यैव सङ्गतित्वादित्यत आह न हीति। सङ्गतित्वम् अनन्तराभिधाननिरूपितदर्शितप्रकारसामान्यव्याप्तिनिर्वाह्यं यतो नेत्यर्थः। अत्र एतदे-

घ कुत इत्याशङ्कायां यद्यदुपजीवकं भवति तत् तन्निरूपणानन्तरनिरूपणविषय इति व्याप्तिविरहेऽपि उपजीवकतायाः सङ्गतित्वमभिधास्यमानस्तस्यां सङ्गतित्वाभावस्वीकारनिराकरणाय तत्साधारणसङ्गतिलक्षणमाह आनन्तर्येति । हि हेतौ अनन्तरमेवानन्तर्यं चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् यन्निरूपणाव्यवहितोत्तरनिरूपणप्रयोजिका या जिज्ञासा तज्जनकज्ञानविषयो यो धर्मः स तन्निरूपितसङ्गतिरित्यर्थः। उपजीवकत्वादावेतल्लक्षणसङ्गमनप्रकारो ग्रन्थकृताग्रे दर्शयिष्यते। प्रयोजकान्तानुपादाने सङ्गतित्वस्य निरूपकविशेषनियन्त्रितत्वानुपपत्तिः कथञ्चित्तदुपपादने यथाऽस्य किमुपजीवकमित्यादिजिज्ञासां प्रति उपजीवकत्वादिज्ञानं हेतुः घटादिजिज्ञासायां घटत्वादिधीस्तथेति तद्विषयघटत्वादेः प्रत्यक्षादिसङ्गतित्ववारणाय प्रयोजकान्तम्। अथ यत्र प्रत्यक्षादौ निरूपिते स्वसामग्रीवशात्को घट इति कस्यचिज्जिज्ञासया केनचिद्घटो निरूपितस्तादृशनिरूपणप्रयोजकतथाविधजिज्ञासामादाय घटत्वादावपि प्रत्यक्षादिसङ्गतित्वप्रसङ्गः प्रयोजकान्तमुपादायापि न शक्यते वारयितुं यदि चैवं सति तत्र घटत्वादेः सङ्गतित्वमिष्टमेव प्रसङ्गमध्ये तस्यान्तर्भावनीयत्वाच्च न सङ्गतेः षोढात्वव्याघातः अन्यथा तत्र सङ्गत्यन्तराभावेन तादृशनिरूपणस्यासम्बद्धप्रलापतापत्तेः न ह्याकाङ्क्षिताभिधानं तथेत्युच्यते तदा प्रयोजकान्तमनर्थकमितिचेन्न। यन्निरूपणानन्तरं कदाचिदपि कस्यचिद्यद्धर्मावान्तरधर्मप्रकारकज्ञानेच्छा न जाता अपि तु कालान्तरे जायते तदा तस्य सङ्गतित्ववारणायैव प्रयोजकान्तोपादानात् न च कालस्यानवधित्वात्पुंसां चासंख्यत्वात् तादृशधर्म एव दुर्लभ इति वाच्यं तादृशधर्मसम्भावनया ऽतिव्याप्तिसन्देहेन तद्वारकविशेषणदानौचित्यात् । वस्तुतस्तु जिज्ञासुमेकं पुरुषं प्रति सङ्गतमपि अतादृशमन्यं प्रत्यसङ्गतमिति यं प्रतिपादयितुमानन्तर्याभिधानं तादृशाभिधानप्रयोजकतत्पुरुषीयजिज्ञासाजनकज्ञानविषयोऽर्थस्तं प्रति सङ्गतिरिति पुरुषविशेषनियन्त्रितमेव सङ्गतित्वं निर्वाच्यं तथा च यन्निरूपणानन्तरं यद्धर्मावच्छिन्नस्य विशेषजिज्ञासा यस्य पुंसो न जाता ऽपि तु अन्याभिधानानन्तरमेव तस्य धर्मस्य तं प्रति सङ्गतित्ववारणाय तदुपादानमावश्यकम्। आनन्तर्याभिधानप्रयोज-

कज्ञानविषयत्वस्य निवेशने पटादिकं निरूप्य प्रतिपाद्यस्य जिज्ञासामन्तरेणैव यत्रासम्बद्धघटाद्यभिधानं केनचित्कृतं तत्रास्य घटज्ञानं भवत्वित्याकारकेच्छाजनकीभूतवक्तृघटादिज्ञानविषयघटत्वादावतिप्रसङ्गः तादृशज्ञानस्यापि घटादिबुबोधयिषाद्वारा पटाद्यभिधानानन्तरघटाभिधानप्रयोजकत्वाद्तस्तत्प्रयोजकजिज्ञासाजनकेति(१)। परकीयज्ञानगोचरेच्छा च न जिज्ञासा ज्ञातुमिच्छा जिज्ञासेति व्युत्पत्त्या स्वीयज्ञानगोचरेच्छाया एव तत्त्वात् जिज्ञासाया आनन्तर्याभिधानप्रयोजकत्वं च शब्दप्रयोगात्मकाभिधानानुकूलवक्तृबुबोधयिषानुकूलं यत्प्रतिपाद्यज्ञानस्यासिद्धत्वज्ञानं तत्सम्पादकीभूतस्यासिद्धत्वव्याप्येच्छाविषयत्वप्रतिपादकस्य किं प्रत्यक्षोपजीवकमित्यादिप्रश्नवाक्यस्य व्यवहर्तव्यज्ञानविधया निर्वाहकं यज्जिज्ञासाप्रत्यक्षं विषयविधया तदानुकूल्येन। न च जिज्ञासाजनकत्वोपादानेऽपि उक्तस्थले कथञ्चिद्वक्तृघटादिज्ञानानुकूलघटजिज्ञासाजनकज्ञानविषयेऽतिप्रसङ्गो दुर्वार एवेति वाच्यं प्रतिपाद्यपुरुषीयजिज्ञासाया एव तल्लक्षणघटकत्वात्। अथैवमपि अनुमानाद्यनन्तरोपमानादिनिरूपणे यथा उपमानजिज्ञासायाः प्रयोजकत्वं तथा तादृशजिज्ञासानुकूलानुमानादिज्ञानसम्पादनेनानुमानादिजिज्ञासाया अपीति तज्जनकज्ञानविषयानुमानादिनिष्ठप्रत्यक्षोपजीवकत्वादेरप्यनुमानादिनिरूपितसङ्गतित्वापत्तिरिति चेन्न। जिज्ञासामद्वारीकृत्य प्रयोजकत्वस्यैव विवक्षणीयत्वात् प्रतिपाद्यपुरुषज्ञानविषयिणी वक्तुरिच्छा च न जिज्ञासा अतस्तस्याः प्रतिपाद्यजिज्ञासाद्वारत्वेऽपि न क्षतिः। यदभिधानानन्तर्याभिधानप्रयोजकजिज्ञासायां तदभिधानप्रयोज्यत्वमपि निवेद्यम् अन्यथा घटपटनिरूपणानन्तरं यत्र घटसम्बन्धेन दण्डादिस्मरणे को दण्ड इत्यादिजिज्ञासया दण्डादिनिरूपणं तत्र तादृशजिज्ञासाजनक-

---

(१) यथाश्रु आनन्तर्याभिधानप्रयोजकज्ञाने प्रतिपाद्यपुरुषीयत्वानिवेशनादेवोक्तदोषस्य दुरासम्भवे जिज्ञासापदवैयर्थ्यमितिचेन्न। यत्र वक्तुर्घटज्ञानं प्रतिपाद्यपुरुषीयघटादिज्ञानजन्यबुबोधयिषाधीनं तत्र पटाभिधानानन्तरघटाभिधानप्रयोजकीभूतं यद्वक्तृबुबोधयिषानुकूलघटज्ञानं तद्विषयघटत्वादावतिव्याप्तिवारणाय तत्सार्थक्यात् न च तथापि आनन्तर्याभिधानप्रयोजकप्रतिपाद्यपुरुषीयघटज्ञानानुकूलजिज्ञासाजनकघटत्वादावतिव्याप्तिरिति वाच्यं जिज्ञासया आनिरूपित प्रयोजकत्वं तस्य जिज्ञासायामसत्त्वादिति ध्येयम्।

ज्ञानविषयस्य पटनिरूपितसङ्गतित्वप्रसङ्गात् (१)जिज्ञासाजनकसुखादिरूपफलेच्छाविषयेऽतिव्याप्तिवारणाय ज्ञानपदम् । अथैवमपि ज्ञाननिष्ठेष्टसाधनत्वस्यापि जिज्ञासाजनकज्ञानविषयत्वात्तत्रातिव्याप्तिः न च तस्य कारणतारूपसङ्गतित्वेन लक्ष्यतैवेति वाच्यं निरूप्यनिष्ठकारणत्वादीनामेव सङ्गतित्वादनुमानादिज्ञाननिष्ठेष्टसाधनतायाः प्रत्यक्षानुमानादिसङ्गतित्वविरहात् न च जिज्ञासां प्रत्यसाधारणकारणत्वमेव निवेशनीयम् इष्टसाधनताज्ञानं तु उपायेच्छामात्रं प्रत्येव जनकमिति नैतस्य जिज्ञासायामसाधारण्यमिति न तज्जनकतामादायेष्टसाधनत्वेऽतिव्याप्तिरिति वाच्यं जिज्ञासायामसाधारणकारणत्वं हि जिज्ञासात्वघटितधर्मावच्छिन्ननिरूपितकारणत्वं तच्च ज्ञानगोचरेष्टसाधनताज्ञानस्याप्यक्षतमेव ज्ञानगोचरेच्छात्वस्यैव तज्जन्यतावच्छेदकत्वात् एकोपायधर्मिकेष्टसाधनताज्ञानादन्योपायविषयकेच्छानुदयादुपायविशेषविषयकत्वमन्तर्भाव्यैव इष्टसाधनताधिय उपायेच्छाहेतुत्वकल्पनात् यदि च समानविशेष्यताप्रत्यासत्त्यैवेच्छां प्रति इष्टसाधनताज्ञानस्य हेतुत्वकल्पनेनोक्तातिप्रसङ्गवारणसम्भवाद्विशिष्य ज्ञानादिरूपोपायविषयकत्वमिष्टसाधनताधीजन्यतावच्छेदककोटौ न निवेश्यते तथा च जिज्ञासात्वघटितधर्मो नेष्टसाधनताज्ञानजन्यतावच्छेदकः फलसमानविषयकान्यवृत्तित्वस्य जनकताविशेषणत्वाद्वा इष्टसाधनताज्ञानजनकताव्यावृत्तिरित्युच्यते तदाऽसम्भवः इष्टसाधनताज्ञानानात्मकस्य उपजीवकत्वादिप्रकारकज्ञानस्योपजीवकत्वजिज्ञासाजनकतायां प्रमाणाभावेन निरुक्तजनकताया एवाप्रसिद्धेः न च सामान्यधर्मज्ञानस्य विशेषजिज्ञासां प्रति कारणत्वान्तरमन्वयव्यतिरेकासिद्धमशक्यापह्नवमेव घटत्वादिज्ञानं विना को घट इत्यादिप्रश्नमूलीभूताया अवान्तरधर्मप्रकारेण घटादिज्ञानेच्छाया अनुत्पादस्यानुभवसिद्धत्वादिति वाच्यं विशेषधर्मप्रकारेण घटज्ञानं भवत्वित्याकारकतादृशजिज्ञासाजनकतादृशज्ञानत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानस्य घटत्वादिरूपसामान्यधर्मप्रकारकतानियमात् सामान्यधर्मप्रकारकज्ञानाभावस्थले तादृशेष्टसाधनताज्ञानाभावनियमात् तत एव तथाविधेच्छानुत्पादापत्ते-

(१) जिज्ञासायां तदभिधानतयोऽप्यत्वनिवेशपक्षे जिज्ञासामधिकृत्येति विशेष्यं नास्तीति बोध्यम् ।

रूक्तयुक्त्या सामान्यधर्मप्रकारकज्ञानस्य कारणत्वान्तथासिद्धेरिति चेन्न । जनकज्ञानविषयेत्यनेन जनकीभूतेष्टसाधनताज्ञानीयज्ञाननिष्ठविशेष्यतायां विषयितासम्बन्धेन यदवच्छेदकत्वं तन्निरूपितावच्छेदकविषयताविशेषस्य विवक्षितत्वात् तादृशविषयताविशेषलाभार्थं यार्थपदं किमस्योपजीवकमित्यादिजिज्ञासाप्रयोजकीभूतोपजीवकत्वाद्येकदेशोत्तरवर्तित्वादिवारणाय तादृशविषयतापर्याप्त्यधिकरणत्वं निवेश्यं तल्लाभायैव वा तत् । यद्यपि जिज्ञासानिरूपितज्ञाननिष्ठविशेष्यतावच्छेदकतावच्छेदकत्वविशेषस्यापि तयोर्लक्षणत्वं संभवति तथाप्यत्र लक्षणे तदनिवेशान्न वैयर्थ्यावकाशः इच्छादीनां याचितमण्डनन्यायेन जनकज्ञानविषयतयैव सविषयकत्वमिति प्राचीनमताभिप्रायेणैव वा जनकज्ञाननिवेशनं विषयनिष्ठधर्मितावच्छेदकतायां येन सम्बन्धेनावच्छेदकीभूतो यो धर्मस्तेन सम्बन्धेन तद्वत्त्वमेव सङ्गतित्वव्यवहारनियामकं तेन स्वरूपादिसम्बन्धेनोपजीवकत्वादिप्रकारिका या उपजीवकज्ञानं भवत्वित्याकारकजिज्ञासा तद्विषयीभूतोपजीवकत्वादेः कालिकादिसम्बन्धेनाधिकरणे कालादौ नातिप्रसङ्गः । ज्ञायते चेति । कार्ये ज्ञाते कारणत्वस्य ज्ञानात्कारणज्ञानमिष्टसाधनमित्याकारककारणत्वविषयकज्ञानात् किमस्य कारणमिति प्रश्नप्रयोजिका कारणे ज्ञाते कार्यत्वस्य ज्ञानात् कार्यज्ञानमिष्टसाधनमिति कार्यत्वविषयकज्ञानात् किमस्य कार्यमिति प्रश्नमूलीभूता जिज्ञासा जायते अतः कार्यकारणाभिधानानन्तरं तत्कारणकार्याभिधानप्रयोजकतादृशतादृशजिज्ञासाजनकज्ञानविषयत्वात् कारणत्वस्य कार्यत्वस्य च सङ्गतित्वं न तु कार्यत्वस्यैवेत्यर्थः । सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैककार्यैक्ये षोढा सङ्गतिरिष्यते इति सङ्गतिपरिगणने हेतुतापदमजहत्स्वार्थवृत्त्या कार्यत्वकारणत्वोभयसाधारणेन केनचिद्रूपेण तदुभयपरमिति नाधिक्यमिति भावः । अत्र स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग इति प्रसङ्गलक्षणं तत्र स्मृतस्य पूर्वाभिहितवस्तुसम्बन्धेन स्मृतस्य उपेक्षानर्हत्वं द्वेष्यज्ञानविषयताविरोधिरूपं जिज्ञासाविषयतावच्छेदकरूपमिति यावत् स्मृतस्येत्यभिधानं जिज्ञासाया आनन्तर्याभिधानप्रयोजकतालाभाय उपोद्घातादिपञ्चकाभिन्नत्वे सतीति पूरणीयं तथा चोपोद्घातादिपञ्चकभिन्ना सङ्गतिः प्रसङ्ग इति पर्यवसितार्थः ते

नाधेयत्वाधिकरणत्वघटत्वादीनामपि स्थलविशेषे सङ्गतिसामान्यलक्षणाक्रान्ततया प्रसङ्गाद्यनन्तर्भावे उक्तसङ्गतिपरिगणनविरोध इति निरस्तं तेषां सर्वेषामेव यथाव्याख्यातप्रसङ्गसङ्गतिलक्षणाक्रान्ततया तत्रैवान्तर्भावात् उक्तरूपं च विभाजकमात्रमतस्तथाविधरूपेण तादृशधर्माणां निरूपणप्रयोजकजिज्ञासाविषयतावच्छेदकत्वविरहेऽपि न क्षतिः एवं सङ्गत्यन्तरेऽपि बोध्यं यद्यपि भेदमनिवेश्य सर्वा सङ्गतिः प्रसङ्ग एवान्तर्भावयितुं शक्यते तथापि विभाजकस्य स्वतन्त्रेच्छतया न पर्यनुयोगावसरः उपोद्घातश्च प्रकृतोपपादकत्वं तदुक्तं चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा इति प्रकृतसिद्ध्यर्थां प्रकृतोपपादकविषयिणीं किमस्योपपादकमिति चिन्ताम् उपोद्घातमुपोद्घातसङ्गतिनिर्वाहिकां विदुरित्यर्थः तादृशजिज्ञासामादायैवोपपादकत्वे सङ्गतिलक्षणसमन्वयादिति भावः उपपादकत्वं च निर्वाहकत्वं तच्च क्वचित्प्रकृतघटकसाधकतया क्वचिदन्यथापि तत्र विशिष्टपरामर्शत्वस्यानुमितिजनकतावच्छेदकत्वम् अनुमितिलक्षणघटकं तेषां तदुपपादकत्वं तेन विना तद्घटितलक्षणानिर्वाहादिति युक्त्यभिधानरूपतद्व्यवस्थापनेन उपोद्घातसङ्गतिः क्वचित्प्रकृतघटकत्वमेव तद् यथा आचारप्रयोजकत्वं वेदस्य साक्षादप्रवर्तकस्य वाक्यार्थज्ञानजनकत्वगर्भमिति प्रवर्तकज्ञानमाचारप्रयोजकताघटकत्वेन प्रकृतोपपादकमित्युपोद्घातसङ्गत्या विधिवादे प्रवर्तकज्ञाननिरूपणं सामान्यप्रत्यासत्तेरनुमितिपूर्वं नियमतो विशिष्टपरामर्शनिर्वाहकतया विशिष्टपरामर्शत्वावच्छिन्नानुमितिकारणतानिर्वाहकत्वादेव तद्घटितानुमितिलक्षणोपपादकत्वं न तु तादृशलक्षणाघटकतया एवमन्यत्रापि द्विविधमुपपादकत्वं यथा सम्भवमूह्यम् । अवसरसङ्गतिरग्रे विचारणीया हेतुता विवेचितैव । निर्वाहकैक्यम् एकनिर्वाहकनिर्वाह्यत्वं तदन्यत्वे सति तन्निर्वाहकनिर्वाह्यत्वमिति यावत् कार्यैक्यम् एककार्यप्रयोजकत्वं तदन्यत्वे सति तत्प्रयोज्यकार्यप्रयोजकत्वमिति यावत् निर्वाहकैककार्यत्वे इति पाठे निर्वाहकत्वमेकनिर्वाह्यनिर्वाहकत्वं निर्वाहकत्वं च प्रयोजकत्वम् एककार्यत्वम् एककारणकार्यत्वम् । एतेन यथाश्रुतनिर्वाहकत्वस्योपपादकतारूपत्वे उपोद्घातेन गतार्थत्वात्प्रयोजकतारूपत्वे हेतुत्वान्तर्भाव इति परास्तं सर्वत्र तत्तत्प्रकारकजिज्ञासामादाय लक्षणसमन्वयः कार्य इत्यलं विस्तरेण । इदं त्ववधातव्यं किं प्रत्यक्षो-

पजीवकमिति जिज्ञासया नानुमानमत्र निरूपितमपि तु किमनुमानमिति जिज्ञासयैव तथा सत्येवानुमानत्वरूपलक्ष्यतावच्छेदकविशिष्टलक्षणप्रतिपादकस्य तत्करणमनुमानमित्युत्तरस्य सङ्गतेः अन्यथार्थान्तरप्रसङ्गात् किं प्रत्यक्षोपजीवकमितिजिज्ञासायाः प्रत्यक्षोपजीवकत्वविशिष्टेऽनुमितिकरणत्वरूपविशेषधर्मबोधकवाक्यादेव निवृत्तेः तथा चानन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वरूपसङ्गतिरियं प्रकृते नोपजीवकत्वे संभवतीति तादृशजिज्ञासाजनकनिरूप्यतावच्छेदकधर्मप्रकारकस्मरणप्रयोजकनिरूप्यनिष्ठः सम्बन्धः सङ्गतिरित्येव लक्षणं युक्तं प्रत्यक्षानुमानपदार्थयोरुपजीव्योपजीवकभावरूपसम्बन्धज्ञानादनुमानपदार्थत्वरूपप्रकृतलक्ष्यतावच्छेदकप्रकारेणानुमानस्मरणादनुमानपदार्थः क इति जिज्ञासयाऽनुमितिकरणमनुमानपदार्थ इति निरूपणादुपजीवकत्वे सङ्गतित्वनिर्वाहात् एवं सर्वत्र पूर्वापरनिरूपणविषययोः सम्बन्ध एव सङ्गतिर्न तु निरूप्यतावच्छेदकधर्मः एतदनुसारेणैव प्रसङ्गादिस्वरूपाण्यूह्यानीति । इत्थञ्चोपजीवकत्वस्यानन्तर्याभिधानव्याप्यस्यापि सङ्गतित्वे च तुल्यत्वेऽपि प्रत्यक्षसाधारण्येऽपि न व्यभिचारः क्षतिकरः ॥

ननु न्यूनतापरिहारायानुमानोपमानयोरपि सङ्गतिप्रदर्शनमुचितमिति बहुवादिसम्मतत्वादुपमानात्प्रागित्यपि सङ्गतिप्रदर्शनपरमेव भविष्यति सा च कथमुपमानग्रन्थ एव न प्रदर्शितेत्याशङ्कायामाह लाघवायेति ॥

(दी०) लाघवायात्रैवोपमानस्य सङ्गतिं दर्शयति बहुवादीति। सुप्रसिद्धतया निरसनीयाल्पवादिविप्रतिपत्तिकत्वेन सुप्रतिपदतया चानुमान एव व्युत्पित्सोः प्रथमं जिज्ञासा नोपमानेऽप्रसिद्धत्वात् निरसनीयबहुवादिविप्रतिपत्तिकत्वेनातिदुरूहत्वाच्च । औत्सर्गिकीं रीतिमनुरुध्य चेदं तेन प्रथमं कस्यचित् दुरूहे जिज्ञासोदयेऽपि न क्षतिः । तथा चावसरसङ्गत्योपमाननिरूपणमितिभावः । यथा चावसरस्य सङ्गतित्वं तथा व्यक्तमाकरे ॥

(गा०) अनुमानस्येवोपमानस्यापि प्रत्यक्षसङ्गततया प्रत्यक्षनिरूपणादव्यवधानेनोपमानमेव किं न निरूपितमुपमाननिरूपणानन्तरमप्यनु-

माननिरूपणसम्भवादिति क्रमनियामकाकाङ्क्षाया इदानीमुदयात्तन्नि-वृत्तये क्रमनियामकमभिधातव्यं तावतैव सङ्गतिलाभोऽपि भवतीति ग्रन्थान्तरे सङ्गतिप्रदर्शनापेक्षया अत्र क्रमनियामकाभिधानस्य सङ्गतिपरत्वे लाघवमिति भावः। बहुवादिसम्मतत्वस्य प्राथमिकजिज्ञासानिर्वाहकत्वेन प्राङ्निरूपणप्रयोजकत्वं घटयति सुप्रसिद्धतयेति सुप्रसिद्धत्वसुप्रतिपदत्वे जिज्ञासाप्राथम्ये हेतू विप्रतिपत्तिकत्वेनेत्यन्तं सुप्रतिपदत्वे हेतुः अनुमान एवेति स्वोक्तैवकारार्थं विवृणोति नोपमान इति अप्रसिद्धत्वदुरूहत्वे प्रथमतो जिज्ञासानुत्पादे हेतू विप्रतिपत्तिकत्वेनेत्यन्तं दुरूहत्वे हेतुः सुप्रसिद्धार्थस्य बहुधा प्रस्तावो भवति अतस्तज्ज्ञानस्य भूयानुपयोगः न त्वप्रसिद्धार्थज्ञानस्येति तज्ज्ञानस्य बह्वायासानुबन्धित्वेन प्रथमतो बलवान् द्वेषो भवति सूचीकटाहन्यायादिति तेन तत्सामग्र्या वा प्रतिबन्धात्र तादृशार्थे प्रथमतो जिज्ञासेति भावः। औत्सर्गिकीं प्रायिकीम् इदं दुरूहत्वज्ञानस्य बलवद्द्वेषसम्पादकतया जिज्ञासाविरोधित्वं। कस्यचिदिति तज्ज्ञानाधीनसुखदुःखयोर्न्यूनाधिकभावज्ञानरहितस्येत्यादिः। नन्वेतावता क्रमनियामकत्वलाभेऽपि सङ्गतिर्न लब्धैव उक्तरूपस्य सङ्गतित्वविरहादित्याकाङ्क्षायामाह तथा चेति। अनुमाने उपमानापेक्षया प्राथमिकजिज्ञासाविषयत्वप्रयोजकबहुवादिसम्मतत्वकथनेन विरोधिभूतानुमानजिज्ञासाया विषयसिद्ध्या निवृत्तौ सत्यामुपमानं निरूपणीयमिति सूचनादिति भावः। ननु विरोधिजिज्ञासानिवृत्तिरवसरः स च नोपमानाभिधानप्रयोजकजिज्ञासाविषयतावच्छेदक इति कथं तत्र दार्शिनसङ्गतिलक्षणसमन्वय इत्यत आह यथा चेति। तथा व्यक्तमिति आकरे मूलसूत्रे। अयमाशयः विरोधिजिज्ञासानिवृत्तिर्नावसरः अपि तु तन्निवृत्तौ सत्यामवश्यवक्तव्यत्वमेव तत्र च किमिदानीं वक्तव्यमिति जिज्ञासाजनकज्ञानविषयतामादाय लक्षणसमन्वयः यद्यपि तादृशजिज्ञासाविषयताया जिज्ञासानिवृत्तिघटितं नावच्छेदकमिति तेन रूपेण सङ्गतित्वं नास्ति अपि तु निवृत्त्युपलक्षिततत्तत्कालवक्तव्यत्वत्वरूपेणैव तथापि न क्षतिः यादृशस्य सङ्गतित्वं तादृशस्यैव विभाजकत्वमित्यनियमात् जिज्ञासानिवृत्तेर्विभाजकधर्मघटकत्वे बाधकाभावादिति॥

सार्वभौमानां मतमाह शब्दान्तरेति।

(दी०) शब्दान्तरसमयग्राहकं सप्रवृत्तिनिमित्तकत्वबोधकं सामान्यतो दृष्टमन्ततो ऽदृष्टजनकप्रवृत्त्यौपयिकं चानुमानमपेक्षते निखिलमेवोपमानमितीहाप्युपजीवकत्वमेव सङ्गतिरित्यपि केचित्।

(गा०) द्वितीयान्तस्यानुमानमित्यस्य प्रथमोक्तं तथाविधत्रयं विशेषणं शब्दान्तरसमयग्राहकमिति अतिदेशवाक्यस्थस्योपमानग्राह्यशक्तिकगवयादिपदभिन्नगवादिपदस्य शक्तिग्राहकं गोपदं गोत्वविशिष्टवाचकं तद्विशिष्टविषयकशक्तिप्रमाधजन्यशाब्दबोधजनकत्वादित्याकारकमित्यर्थः तादृशानुमानं विना शक्तिग्रहेणातिदेशवाक्यजन्यशाब्दबुद्धेरनुत्पत्त्या उपमानानवतारात्तस्योपमाने ऽपेक्षणीयतेति भावः सप्रवृत्तिनिमित्तकत्वेति । गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादिति सामान्यतो गवयत्वप्रवृत्तिनिमित्तकत्वसाधकमित्यर्थः ईदृशानुमानेनैवोपमानाप्रामाण्यवादिनस्तत्फलं विशेषतः प्रवृत्तिनिमित्तपरिच्छेदमुपपादयन्ति गोसादृश्यगवयत्वजात्योश्च प्रत्यक्षत उपस्थितौ सादृश्यस्य प्रवृत्तिनिमित्तत्वे गौरवं जातिविशेषस्य तथात्वे लाघवमिति लाघवप्रतिसन्धानेन सामान्यतः सप्रवृत्तिनिमित्तकत्वस्य व्याप्यतया गृहीतादपि लिङ्गाद्विशेषतो जातिविशेषप्रवृत्तिनिमित्तकत्वानुमितिसम्भवात् । सिद्धान्तिभिस्तु व्यापकतावच्छेदकेनैव रूपेण साध्यमनुमितौ भासत इति नियममवलम्ब्य उपमानप्रामाण्यं व्यवस्थाप्यते उपमानेन च गवयादिपदे विशेषतो गवयत्वादिप्रवृत्तिनिमित्तकत्वग्रहः गवयत्वादिप्रकारकसादृश्यज्ञानात्तद्रूपेण पदवाच्यत्वे गृह्यमाणे तदवच्छेदेनैव ग्रहात्तादृशग्रहेऽपि गवयपदशक्तिरपरं किञ्चिद्धर्मावच्छिन्ना तत्रानतिप्रसक्तस्य गोसादृश्यादेस्तद्व्यापकत्वानां वावच्छेदकत्वे गौरवं जातिविशेषस्य तथात्वे लाघवमित्याकारकस्तर्कोऽपेक्षितः अन्यथा तद्व्यक्तित्वादिप्रकारेणापि सादृश्यज्ञानसम्भवात्तेषामपि प्रवृत्तिनिमित्तत्वासिद्धिप्रसङ्गात् तादृशलाघवज्ञानसंपादनेन दर्शितसामान्यतो दृष्टस्यापि तथाविधोपमानोपजीव्यत्वमित्यवधेयम् । उक्तानुमानयोः सादृश्यज्ञानरूपोपमानस्वरूपानुपजीव्यतया तस्याप्युपजीव्यमनुमानमाह अन्तत इति । अदृष्टेति अदृष्टजनिका विहितक्रियागोचरप्रवृत्तिस्तत्प्रयोजकं समयादिपरिच्छेदकमनुमानमित्यर्थः उपमानस्याप्यदृष्टजन्यत्वादिति भावः । निखिलोपमानस्यैव निरूपणीयतया

क्षघटितविशेषणपुरस्कारेणानुमाननिरूपणस्येत्यर्थः। प्रत्यक्षनिरूपणेति। विशिष्टज्ञानस्य विशेषणज्ञानाधीनत्वादिति भावः। अनुमानमिश्रत्वेनेति वैशेषिकादिमतनिराकरणाय तेन रूपेणैवोपमानस्य निरूपणीयत्वादितिभावः॥

( दी० ) तत्र लक्षणस्वरूपप्रामाण्यादिभिरनुमाने निरूपणीये करणस्य क्रियाभेदाभिन्नमूर्तिकतया क्रियालक्षणपूर्वकं तल्लक्षणमाह व्याप्तीत्यादिना॥

( चि० ) तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिस्तत्करणमनुमानं तच्च लिङ्गपरामर्शो न तु परामृश्यमानं लिङ्गमिति वक्ष्यते॥

( गा०) तत्रेत्यादिराहेत्यन्त एको ग्रन्थः। तत्र प्रतिज्ञायां सप्तम्यर्थो निरूपणान्वयि विषयत्वं। लक्षणेति लक्षणमितरभेदानुमापकरूपं स्वरूपं लक्षणग्रहोपयोगि अनुमितिकरणतावच्छेदकरूपं तच्च लिङ्गपरामर्शत्वं प्रामाण्यं प्रत्यक्षाद्यतिरिक्तप्रमितिकरणत्वम् आदिपदात्विभाजकरूपपरिग्रहः निरूपणीये प्रतिपादनीये तल्लक्षणं अनुमानलक्षणम् आहेत्यग्रास्यान्वयः सतिसप्तम्याः प्रयोजकत्वमर्थः लक्षणाभिधानस्य निरूपणात्मकतया प्रयोज्यप्रयोजकभावासम्भवेऽपि सविशेषणे हीत्यादिन्यायान्निरूपणघटकप्रतिपत्त्यंशे लक्षणाभिधानस्य प्रयोज्यप्रयोजकभावे तात्पर्यं स्वरूपादिप्रतिपत्त्यापि तदभिधानप्रयोजकाकाङ्क्षोत्थापकतया लक्षणाभिधानस्य प्रयोजकत्वं बोध्यम्। ननु प्रमाणलक्षणात् प्रागेव कथं प्रमा लक्षिता न च प्रमाणलक्षणस्य प्रमाघटिततया तामविज्ञाय न तज्ज्ञातुं शक्यत इति प्रमालक्षणप्राथम्ये बीजं तथा सत्यनुमितिलक्षणघटकव्याप्त्यादेरपि प्रथमं निरूपणापत्तेरित्याकाङ्क्षायामनुमितिलक्षणप्राथम्ये बीजान्तरमाह करणस्येति। अनुमानस्येत्यर्थः क्रियाया अनुमितेर्यो भेदः प्रत्यक्षादिजातीयत्वं तद्भिन्नमूर्तिकतया तदधीनं यत् प्रत्यक्षकरणताभिन्नं प्रमाणान्तरव्यवहारविषयिकं प्रमित्यन्तरकरणतात्मकं स्वरूपं तत्तया तथा च प्रत्यक्षानन्तरमनुमानं निरूप्यत इति प्रतिज्ञातः प्रत्यक्षतोऽनुमान प्रमाणान्तरमिति लाभात् तत्र कथन्तानिवृत्तये तत्प्रमा-

णान्तरतानिर्वाहकप्रमीतिवैलक्षण्यलाभाय तल्लक्षणाभिधानमेव प्रथमतः कृतमिति भावः(१) ॥

केचित्तु तत्रेति मूलपाठधारणं लक्षणेत्यादि निरूपणीय इत्यन्तं तस्य व्याख्येति तत्रानुमाने निरूपणीये इत्युपाध्यायव्याख्यामालोच्य वदन्ति । तदसत् लक्षणस्वरूपप्रामाण्यादिप्रकारकत्वेन निरूपणस्याप्रक्रान्ततया व्याख्यामध्ये तृतीयान्तभागकथनविरोधात् । न च पूरणसंवलितैवेयं व्याख्येति युज्यते तत्पदोपस्थाप्यैकदेशे निरूपणे पूरणीयतृतीयार्थान्वयायोगात् पूरणस्यानुपयुक्तत्वाच्च न च सप्तम्यर्थोऽनुमित्यन्वयि तद्विषयकनिरूपणप्रकारत्वं तल्लाभाय पूरणमुचितमिति वाच्यं तादृशार्थे क्वचिदपि सप्तम्यदर्शनात् मूलस्थतत्पदस्यानुमानपदार्थपरतया घटकत्वस्य निरूपणविषयत्वस्य वा तत्रत्यसप्तम्यर्थत्वात् ॥

यत्तु सतिसप्तम्येवेयं तदर्थः प्रयोजकत्वम् एवं चानुमाननिरूपणानुमितिनिरूपणयोः प्रयोज्यप्रयोजकभावलाभायेव पूरणमिति । तदप्यन्तमसत् निरूपणस्य तत्पदोपस्थाप्यत्वे क्रियात्वाभावेन यस्य च भावेनेति सूत्राविषयतया सतिसप्तम्यनुपपत्तेः न च निरूपणीय इत्यपि पूरणीयमतो नेयमनुपपत्तिरिति वाच्यम् एवमप्यनुमितिनिरूपणस्यानुपस्थिततया तत्र प्रयोजकत्वान्वयासम्भवात् न च मूलेऽनुमितिरित्यनन्तरं निरूप्यत इत्यपि पूरणीयमतो नेयमनुपपत्तिरिति वाच्यं तदकथनेन दीधितिकृतो न्यूनतापातात् लक्षणमध्ये निरूपणप्रतिज्ञान्तरासङ्गतेश्चेत्यलमसदाग्रहेण ॥

उपाध्यायव्याख्यामुपन्यस्यति अत्रेत्यादिना आहुरित्यन्तेन ।

( दी० ) अत्र व्याप्तिविशिष्टत्वपक्षधर्मत्वसामानाधिकरण्यावगाहिज्ञानजन्यत्वमर्थः । कर्मधारयोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्यवचनत्वात् । ज्ञानपदोपसन्धानेन च बाधिताबाधितसाधारणज्ञानलाभाच्च भ्रान्तानुमितावव्याप्तिरित्याहुः ॥

( गा० ) अत्र एतल्लक्षणे अर्थ इत्यनेनान्वयः एतल्लक्षणवाक्यप्रतिपा-

(१) कथितमिति भ० पा० १ पु० ।

याथं इत्यर्थः अथवा व्याचक्षत इत्यर्थकेनाहुरित्यनेनान्वयः । व्याप्तीति व्याप्तिविशिष्टत्वसमानाधिकरणपक्षधर्मत्वावगाहिज्ञानजन्यत्वमित्यर्थः । प्रकृत्यर्थतावच्छेदकरूपमात्रार्थ एव तद्धितप्रत्ययस्यानुशिष्टत्वात् सामानाधिकरण्यस्यातथाभूतस्य प्राधान्येन ज्ञानान्वयासम्भवाद्बाधाश्रुतासङ्गतेः उक्तार्थेऽपि सामानाधिकरण्यान्तं नोपलक्षणं किं तु विशेषणमतो ज्ञानेन समं तस्यान्वयात्केवलपक्षधर्मताविषयकधीनिरासः । अत्रोभयसामानाधिकरण्यावगाहित्वमेकधर्मिण्युभयसम्बन्धावगाहित्वं सम्बन्धसम्बन्धस्यापि विशिष्टज्ञानविषयतायाः प्राचीनैरुपगमात् अनुमितिजनकविशिष्टपरामर्शे व्याप्त्यादिसम्बन्धतया भासमानस्यापि तत्सम्बन्धस्य सम्बन्धो हेतौ भासत इति व्याप्तिविशिष्टत्वपक्षधर्मत्वयोः सामानाधिकरण्यावगाहिता निर्वहतीति लक्षणसमन्वयः पक्षधर्मता च पक्षानुयोगिको हेतुतावच्छेदकसम्बन्धः न तु पक्षवृत्तित्वं पक्षविशेष्यकपरामर्शस्य पक्षवृत्तित्वानवगाहित्वात् तथापि सम्बन्धतया पक्षनिरूपिताधेयत्वभानोपगमे पक्षस्य प्रकारतापत्तेः न च पक्षानुयोगिकहेतुतावच्छेदकसम्बन्धविवक्षयापि पक्षविशेष्यकपरामर्शे तादृशसम्बन्धस्य सम्बन्धः पक्ष एव भासते व्याप्तिसम्बन्धस्य सम्बन्धश्च हेताविति नैकधर्मिण्युभयसम्बन्धावगाहित्वरूपसामानाधिकरण्यावगाहितानिर्वाह इति शङ्क्यं विशिष्टबुद्धौ विशेष्ये सम्बन्धस्यानुयोगित्वरूपसम्बन्धो विशेषणे च तस्य प्रतियोगित्वरूपसम्बन्धो भासत इति सिद्धान्तात् पक्षविशेष्यकपरामर्शेऽपि हेतौ व्याप्तिप्रतियोगिकसम्बन्धानुयोगित्वस्य पक्षानुयोगिकसम्बन्धप्रतियोगित्वस्य च भानेन एकत्रोभयसम्बन्धावगाहिताया अक्षतत्वात् । न चैवं व्याप्यविशेष्यकपरामर्शासंग्रहस्तत्र हि हेतौ पक्षानुयोगिकसंयोगादिरूपहेतुतावच्छेदकसम्बन्धो न पक्षरूपविशेषणस्य सम्बन्धतया भासते विशेष्ये सम्बन्धानुयोगित्वस्य विशेषणे च तत्प्रतियोगित्वस्य भाननियमात् तादृशज्ञानस्य हेतुपक्षयोर्बाधितसंयोगाद्यनुयोगित्वप्रतियोगित्वावगाहित्वे भ्रमत्वप्रसङ्गात् तद्वैपरीत्ये च विशेष्यविशेषणभाववैपरीत्यप्रसङ्गात् भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वयोरेव विशेषणत्वविशेष्यत्वात्मकत्वात् परं तु स्वानुयोगिकसंयोगादिप्रतियोगित्वरूपमाधेयत्वमेव । तथा भासते स च न हेतुतावच्छेदकसम्बन्धः न वा पक्षानुयो-

गिक इति वाच्यं सम्बन्धसम्बन्धतया तत्र संयोगादिरूपहेतुतावच्छेदकसम्बन्धप्रतियोगित्वस्य हेतावभानेऽपि विशेषणीभवत्पक्षसम्बन्धतया तत्र तद्भानादेव एकत्र व्याप्तिवैशिष्ट्यानुयोगित्वपक्षानुयोगिकहेतुतावच्छेदकसम्बन्धप्रतियोगित्वभानेनोभयसामानाधिकरण्यावगाहितानिर्वाहात् । अथवा एतन्मते पक्षविशेष्यकपरामर्श एव सर्वत्रानुमितिहेतुर्लाघवात् । नन्वेवमपि वह्निव्याप्यो धूमः द्रव्यवान् पर्वत इति ज्ञानजन्येऽतिव्याप्तिः तादृशज्ञानस्यापि धूमाद्यात्मकैकहेतौ तदुभयसम्बन्धावगाहित्वात् एकविषयतानिरूपितोभयसम्बन्धाविषयतापर्यन्तस्य लक्षणवाक्यतोऽलाभात् तद्विवक्षणे च तथाविधव्याप्तिवैशिष्ट्यपक्षसम्बन्धविषयतानिवेशेनैवोपपत्तौ मिश्रोक्तद्वन्द्वोपेक्षाया निर्बीजत्वापत्तेः न चोभयसामानाधिकरण्यमेकनिष्ठापरसामानाधिकरण्यं तथा च पक्षसम्बन्धनिष्ठव्याप्तिवैशिष्ट्यवत्सम्बन्धावगाहिज्ञानजन्यत्वमर्थः तत्सम्बन्धस्तत्प्रतियोगिकत्वमेव उक्तसमूहालम्बनस्य केवलपक्षधर्मतादिज्ञानस्य च वस्तुगत्या यो व्याप्तिवैशिष्ट्यवान् धूमादिः पक्षसम्बन्धनिष्ठतत्प्रतियोगिकत्वावगाहित्वेऽपि न क्षतिः तल्प्रत्ययान्तेन यादृशविशिष्टमुपस्थाप्यते तादृशविशिष्टस्यैव वैशिष्ट्यमवगाहित्वे विवक्षणीयमिति कथितज्ञानस्य च व्याप्त्यादिघटिततादृशविशिष्टनिरूपिततविषयिताशून्यत्वेन लक्षणाघटकत्वादिति वाच्यं व्याप्तिविशिष्टहेतुमान् पक्ष इत्येतादृशपरामर्शे संयोगांशे भासमानहेतुप्रतियोगिकत्वानिरूपिताविषयिताया व्याप्तिवैशिष्ट्यवत्प्रतियोगिकत्वरूपविशिष्टविषयनिरूप्यत्वेऽपि पक्षसम्बन्धनिष्ठत्वस्य विशेषणकोटावप्रविष्टत्वेन तद्घटितोक्तविशिष्टविषयनिरूपितत्वाभावेन तदसंग्रहात् पक्षसम्बन्धनिष्ठत्वस्योपलक्षणत्वे च तदविषयकज्ञानवारणासम्भवात् भावप्रत्ययेन वा अवगाहित्वविशेषणतया एकपदार्थतावच्छेदकनिष्ठापरतत्सामानाधिकरण्यं कथं प्रतिपादनीयं भावरूपार्थ एव तदनुशासनात् प्रकृत्यर्थासाधारणधर्मस्यैव भावार्थत्वात् न हि नीलोत्पलत्वमित्यादौ उत्पलत्वादिनिष्ठनीलिमादिसामानाधिकरण्यं प्रकृत्यर्थासाधारणधर्मः तस्य नीलोत्पलादिरूपप्रकृत्यर्थेऽवर्तमानत्वात् । न चैकपदार्थनिष्ठापरपदार्थतावच्छेदकसम्बन्ध एव पदार्थतावच्छेदकद्वयसामानाधिकरण्यं प्रकृते च पक्षसम्बन्धप्रतियोगिनिष्ठव्याप्तिवै-

शिष्टत्वानुयोगित्वमेव तथा तत्र प्रकृत्यर्थासाधारणधर्म एवेति श
ब्दयं पृथिवीत्वमित्यादितो गन्धाद्यप्रतीतेः प्रकृत्यर्थतावच्छेदकधर्मस्यैव
भावार्थत्वस्वीकारेण कथितस्य प्रकृत्यर्थधर्मत्वेऽपि प्रकृतिजन्यबोधे
प्रकारताविरहेण भावार्थत्वानुपपत्तेः न च कृत्तद्धितसमासेभ्य: स
म्बन्धाभिधानमन्यत्र रूढ्यभावादित्यनुशासनाद्भावार्थभिन्नोऽप्युक्तसम्बन्ध-
स्तत्प्रत्ययार्थ एवेति वाच्यं तथा सति अत्रोत्पलत्व नास्तीत्या
दिवाक्यजन्यबोधे ग्राह्याभावानवगाहितया स्वतो विरोधित्वानु
पपत्तेः अनुभवविरोधित्वापत्तेश्च । परामर्शविषयव्याप्तिवैशिष्ट्यानु
योगि त्वस्य विशेषणकोटौ पक्षसम्बन्धप्रतियोगिनिष्ठत्वाभानात् त
स्य निरुक्तविशिष्टविषयकत्वासम्भवेन तत्प्रत्ययेन तादृशविशि
ष्टार्थप्रत्यायनसम्भवेऽप्यप्रतीकाराच्च । अथ सामानाधिकरण्यान्त-
र्न व्याप्तिवैशिष्ट्यसामानाधिकरण्यावच्छिन्न पक्षधर्मत्वमेव विव
क्षित पदार्थतावच्छेदकसमानाधिकरणापरपदार्थतावच्छेदकबोधक
त्वादित्येवार्थ इत्यविरोध उक्त च पक्षपत्युपाध्यायैरेव तदुत्तरत-
त्प्रत्ययो व्याप्तिविशिष्टत्वे सति पक्षधर्मत्व भावमाहेति। एव च सा
मानाधिकरण्यान्तर्भावेन न भावप्रत्ययार्थता नीलोत्पलत्वमित्यादि-
त उत्पलादौ नीलाद्यभेदान्वयेन नीलाभिन्नोत्पलादेः प्रकृतितो
लाभात् तादृशोत्पलादीतरावृत्तित्वसहितसकलतादृशोत्पलवृत्ति-
त्वेन चान्यलभ्यप्रकृत्यर्थ परित्यज्य इतरांशे शक्त्या भावप्रत्य
येन बोधनात् नीलाभिन्नोत्पलादिवृत्तित्वरूपनीलिमादिसामानाधि-
करण्यस्योत्पलत्वादौ लाभनिर्वाहात् प्रकृते च तदितरावृत्तित्वांशः
साकल्यांशश्चोपलक्षणतयैव विवक्षितो न तु ज्ञानान्वयिविषयविशे-
षणतया अतः परामर्शस्य तदविषयकत्वेऽपि न क्षति. व्याप्तिवैशि-
ष्ट्यसामानाधिकरण्य च व्याप्तिविशिष्टप्रतियोगिकत्वमेव पक्षध-
र्मपदस्य प्रतियोगितासंसर्गेण पक्षानुयोगिकसमभिव्याहृतव्याप्तिघट-
कहेतुसम्बन्धावच्छिन्नपरतया प्रकृत्यर्थतावच्छेदकतावच्छेदकसम्ब-
न्धेनैव च प्रकृत्यर्थवृत्तिताया भावप्रत्ययेन बोधनात् प्रतियोगिता
सम्बन्धेन प्रकृत्यर्थवृत्तिताया एव तत्पदोत्तरभावप्रत्ययतो लाभात्
तस्या एव च तत्प्रतियोगिकत्वरूपत्वात् सम्बन्धविधया भासमा-
ने संयोगादौ तत्प्रतियोगिकत्वस्य तदीयसम्बन्धविधया भानाद्व्या-
प्तिविशिष्टप्रतियोगिकत्वमपि सम्बन्धविषयताया अवच्छेदकमिति

व्याप्तिविशिष्टप्रतियोगिकत्वावच्छिन्नपक्षधर्मपदार्थतावच्छेदकपक्षसम्बन्धविषयताकत्वरूपं विशिष्टविषयकत्वं परामर्शे ऽक्षतमिति चेत् । एवमपि व्याप्तिविशिष्टो यः पक्षधर्मः तस्य तत्त्वेन तत्प्रतियोगिकत्वरूपसम्बन्धविशेषणतया तादृशपक्षधर्मत्वावच्छिन्नविशेषिततत्प्रतियोगिकत्वावच्छिन्नविषयताया एव विशिष्टान्वयबलेन लाभात् । परामर्शे च पक्षधर्मत्वावच्छिन्नस्य पक्षांशे ऽप्रकारतया तदवच्छिन्नप्रतियोगिकत्वावच्छिन्नसम्बन्धविषयताकत्वविरहेण तदसंग्रहात् । यदि च पक्षधर्मत्वमप्युपलक्षणमुच्यते तदाप्यभेदसम्बन्धेन पक्षधर्मत्वावच्छिन्नांशे प्रकारीभवतो व्याप्तिविशिष्टत्वावच्छिन्नस्य उपलक्षणत्वे तदन्तर्गतव्याप्तेरपि तथात्वेन तदविषयकज्ञानाव्यावृत्तेस्तस्य विशेषणत्वभ्रौव्यात् पक्षांशे प्रकारीभवति हेतौ व्याप्तिप्रकारकपरामर्शस्यासंग्रहः अभेदेन व्याप्तिविशिष्टस्य हेतुविषयतानवच्छेदकत्वात् एवं भावप्रत्ययार्थप्रविष्टं सकलतद्वृत्तित्वं तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वं साकल्यघटितस्य तस्यान्यादृशस्य दुर्वचत्वात् नानाव्यक्तिकस्य गुरुत्वादेर्यत्र प्रकृत्यर्थतावच्छेदकता प्रत्येकं तत्र प्रकृत्यर्थनिष्ठभेदप्रतियोगितावच्छेदकस्यापि तस्यानुगततदवच्छेदकावच्छिन्नस्य तादृशभेदप्रतियोगितानवच्छेदकत्वमभ्युपेयते नातस्तदसंग्रहः अन्यथा यथाश्रुते अनिस्तारात् । कस्याश्चिदपि गुरुत्वादिव्यक्तेः सकलगुरुत्वादिमदवृत्तित्वात् न चैवं गुरुत्वमित्यादितो गन्धादेरपि बोधापत्तिः तस्यापि गुणत्वावच्छिन्नस्य गुर्वादिनिष्ठभेदप्रतियोगितानवच्छेदकत्वादिति वाच्यं गुणत्वावच्छिन्ने तदितरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वरूपतदितरावृत्तित्वासत्त्वेन तदापत्त्ययोगात् तन्नितरत्वव्यापकभेदप्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नतन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य च भावप्रत्ययप्रवृत्तिनिमित्तत्वात् तदितरावृत्तित्वं तु न यथाश्रुतं प्रकृत्यर्थतावच्छेदकताघटकसम्बन्धेन वृत्तेर्विवक्षणीयतया सत्त्वमित्यादौ सदितरसमवेतत्वाप्रसिद्धेः महानसीयवह्नित्वमित्यादौ गुरुत्वह्नित्वाद्यनतिरेकिणो महानसीयवह्नित्वादेर्महानसीयवह्न्यादिरूपप्रकृत्यर्थेतरपर्वतीयवह्न्यादिवृत्तित्वेन तदितरावृत्तित्वबोधासम्भवाच्च तथा च कर्मधारयोत्तरभावप्रत्ययेन विशेष्यपदार्थतावच्छेदके विशेषणपदार्थतावच्छेदकसामानाधिकरण्यं कथं बोधनीयं प्रकृत्यर्थताव-

च्छेदकनिष्ठाया वृत्तेस्तदर्थाप्रवेशादिति महदसमञ्जसम् । उच्यते कि-ञ्चित्तदितरावृत्तित्वसाहितसकलतद्वृत्तित्वस्य शक्यानन्त्यभयेन प्रकृत्यर्थमनन्तर्भाव्य भावप्रत्ययप्रवृत्तिनिमित्तत्वे सामान्यत इतरत्वव्यापकत्वस्य केवलान्वयिमात्रनिष्ठतया घटत्वावच्छिन्नभेदसाधारण्यविरहेण घटत्वादौ प्रथमदलस्य बाधः वृत्तिमद्भेदप्रतियोगितानवच्छेदकत्वरूपद्वितीयदलमपि प्रमेयत्वाद्यनवच्छिन्ने तत्र बाधितं घटेतरत्वव्यापकत्वादेश्चाप्रसिद्धतया न बोधनिर्वाहः अतो लाघवाच्च धर्मत्वमेव तत्प्रवृत्तिनिमित्तमुच्यते धर्मत्वं च प्रकृत्यर्थतावच्छेदकताघटकसम्बन्धेन सम्बन्धित्वमेव घटत्वमित्यादितो द्रव्यत्वादिबोधप्रसङ्गो रूपादिबोधप्रसङ्गश्च भवतामपि समानः द्रव्यत्वादेरपि घटत्वाविशिष्टतया घटेतरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वात् घटरूपादेरपि घटरूपत्वाद्यवच्छिन्नस्य घटादिनिष्ठभेदप्रतियोगितानवच्छेदकत्वात् एवं गुरुत्वमित्यादितोऽपि गुरुत्वादिसमनियतरसादिबोधो भवतामपि दुर्वारः तदितरावृत्तित्वादिना भासमाने धर्मे तत्प्रकृत्यर्थतावच्छेदकनिष्ठाधेयतासम्बन्धेन प्रकृत्यर्थस्यान्वयमुपगम्य तद्वारणे च धर्मत्वेन शक्तिमतेऽपि धर्मत्वे प्रकृत्यर्थतावच्छेदकनिष्ठत्वसाहितनिरूपितत्वसम्बन्धेन प्रकृत्यर्थान्वयमुपगम्य तत्तत्पदार्थतावच्छेदकनिष्ठाधेयताया धर्मान्तरे ऽसत्त्वेन तादृशातिप्रसङ्गो वारणीयः एवं च व्याप्तिविशिष्टाभिन्नपक्षधर्मप्रतियोगिकत्वेन पक्षसम्बन्धे व्याप्तिविशिष्टपक्षधर्मतापदेन बोध्यमानेऽभेदेन पक्षधर्मान्वयिनि व्याप्तिविशिष्टे विशेषणतापन्नव्याप्तिवैशिष्ट्यस्यापि पक्षधर्मे विशेषणतया भानमुपेयम् एकविशेषणतया उपस्थितस्य पदार्थतावच्छेदकस्य स्वातन्त्र्येणैवेतरविशेषणतयाऽभानात् अन्यथा घटं जानातीत्यादौ घटत्वादिविशिष्टनिरूपितविषयिताशालिज्ञानपर्यन्तस्य तात्पर्यविषयत्वेऽपि लाभासम्भवात् पदार्थतावच्छेदकघटत्वादेः स्वावच्छिन्ननिरूपितत्वसम्बन्धेन विषयितायामन्वयेनैव तल्लाभनिर्वाहात् एवं च व्याप्तिवैशिष्ट्याविशेषितव्याप्तिविशिष्टाभिन्नत्वोपलक्षितपक्षधर्मप्रतियोगिकत्वमेव विषयतावच्छेदकतया विवक्षितमिति पक्षधर्मे व्याप्तिविशिष्टभेदानवगाहिपरामर्शस्यापि संग्रहः वह्निव्याप्यधूमवानितिज्ञाने व्याप्तिवैशिष्ट्यस्य धूमांशे प्रकारत्वेऽपि तदंशे सम्बन्धतया भानादेव धूमनिष्ठावच्छेदक-

तद्रूपविषयतायामवच्छेदकत्वसम्भवात् तद्घटितव्याप्तिविशिष्टधूमप्रतियोगिकत्वविशिष्टहेतुतावच्छेदकसम्बन्धविषयकत्वमव्याहतं न च, व्याप्तिविशिष्टस्य हेतोः संयोगादिरूपसम्बन्धांशे सम्बन्धतया भासमाने तत्प्रतियोगिकत्वे तादृशहेतोः सम्बन्धान्तराभानात्स्यापि च संयोगादौ सम्बन्धान्तराभानात् तदीयसम्बन्धान्तरघटितव्याप्तिविशिष्टप्रतियोगिकत्वविशिष्टसंयोगादिविषयकत्वं वह्निव्याप्यधूमवानित्यादिबुद्धेर्दुरुपपादमेवेति वाच्यं तदवच्छिन्नविषयताकत्वरूपतद्विशिष्टविषयकत्वस्य तदीयसम्बन्धाभानेऽप्यव्याहतेश्च अन्यथा गुरुमते ज्ञानस्य विशिष्टविषयकत्वानुपपत्तेः तैर्विशिष्टबुद्धौ सम्बन्धभानानुपगमात् न च वैशिष्ट्यांशे विशेषणीभवन्त्या व्याप्तेर्व्याप्तिविशिष्टेत्यादिवाक्यजन्यबुद्धौ सम्बन्धसम्बन्धोऽप्येतन्मते विषय इति तद्घटितमेव विशिष्टं व्याप्तिविशिष्टपक्षधर्मतापदार्थः एवं व्याप्ति विशिष्टस्य हेतोः संयोगादिसम्बन्धांशे भासमानतत्प्रतियोगिकत्वांशे ऽपि सम्बन्धान्तरभानमावश्यकं तथा च तद्घटितव्याप्तिविशिष्टप्रतियोगिकत्वस्य पक्षसम्बन्धनिष्ठविषयतावच्छेदकत्वं लक्षणवाक्यलभ्यमिति तादृशविशिष्टस्य च व्याप्तेः संसर्गतया तद्वैशिष्ट्यावगाहिपरामर्शीयविषयतावच्छेदकत्वात् तत्र वैशिष्ट्यांशे व्याप्तिप्रतियोगिकत्वमात्रस्य तत्सम्बन्धतया भानेन तत्र तदीयसम्बन्धान्तराभानादिति वाच्यं लक्षणवाक्यजन्यबोधे वैशिष्ट्यांशे व्याप्तिसम्बन्धसम्बन्धस्याधिकस्य भानेऽपि तस्य वैशिष्ट्यनिष्ठविषयतावच्छेदकत्वाविवक्षणसम्भवेन सामञ्जस्यात् न हि यस्मिन् विषये यस्य यत्सम्बन्धभानं तन्निष्ठविषयतायां तदीयतत्सम्बन्धावच्छिन्नत्वं विशिष्टवैशिष्ट्यबोधे भासत एवेति नियमः प्रामाणिकः घटं जानातीत्यादिवाक्यजन्यघटत्वादिविशिष्टवैशिष्ट्यबोधे घटादिविषयतायां समवायानुयोगित्वावच्छिन्नत्वस्याभानस्यापि नियमेनानभ्युपगमात् । अथ व्याप्तिघटकहेतुसम्बन्धावच्छिन्नबोधकपक्षधर्मपदोत्तरभावप्रत्ययस्य उक्तरीत्या प्रकृत्यर्थतानवच्छेदकसम्बन्धान्तरव्यावृत्तहेतुप्रतियोगिकत्वबोधकतया सम्बन्धान्तरस्याभानत्वेन तत्संसर्गकहेतुमत्ताज्ञानवारणेऽपि हेतुतावच्छेदकसम्बन्धसंसर्गकनिर्धर्मितावच्छेदकज्ञानवारणमशक्यमेव तस्यापि व्याप्तिविशिष्टप्रतियोगिकत्वावच्छिन्नतादृशसम्बन्धविषयकत्वात् न च

पक्षपदस्य धर्मितावच्छेदकविशिष्टार्थकतया पक्षधर्मतापदेन धर्मितावच्छेदकविशिष्टधर्म्यनुयोगिकत्वावच्छिन्नसंसर्गबोधनात् तदवच्छिन्नसंसर्गावगाहिज्ञानमेव ज्ञानान्तार्थ इति निर्धर्मितावच्छेदकज्ञानव्यावृत्तिरिति वाच्यं पक्षधर्मतापदेन पक्षधर्मप्रतियोगिकत्वेनैव पक्षसम्बन्धबोधनात् पक्षानुयोगिकत्वेन सम्बन्धस्य तदबोध्यत्वात्। नैवम् यतः संशयवारणाय ज्ञानपदस्य निश्चयार्थकत्वमावश्यकं निश्चयत्वं च विपरीतकोटिधर्मितावच्छेदकतानात्मधर्मावच्छिन्नविशेष्यताकज्ञानत्वं तथा च तादृशविशेष्यताकत्वावच्छेदेन व्याप्तिविशिष्टप्रतियोगिकत्वावच्छिन्नसम्बन्धावगाहित्वस्य विवक्षणात् हेतुमत्यंशे निर्धर्मितावच्छेदकज्ञानं न लक्षणघटकमिति एवं पक्षपदस्यानुपादानेऽपि सामञ्जस्यात्तदुपादानं धर्मपदस्य हेतुतावच्छेदकसम्बन्धप्रतियोगिपरत्वलाभायेति दिक्। अथवा धर्मान्तरविशिष्टावच्छिन्नबोधकप्रकृतिकभावप्रत्ययः प्रकृत्यर्थतावच्छेदकधर्मान् तादृप्येणैव प्रत्याययति गुरुत्वमेकत्वमित्यादौ जातिविशेषपुरस्कारेणैव गुरुत्वैकत्वादिगुणबोधनात् उक्तं च गुणदीधितौ प्रतीतिस्तु तादृप्येण धर्मत्वेन वेति न च शक्यानन्यमसज्ञानायं पक्षः साधुरिति वाच्यं तदादीनामुपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वेन प्रवृत्तिनिमित्तघटत्वाद्यनुगमेन शक्त्यैक्यवत्प्रकृतेऽपि प्रकृत्यर्थतावच्छेदकतावच्छेदकत्वरूपोपलक्षणेन प्रकृत्यर्थतावच्छेदकजातिविशेषादीनामनुगमेन शक्त्यैक्यसम्भवात् विशेषरूपेण लक्षणाया एव वोपगन्तव्यत्वात् तादृशभावप्रत्ययार्थे च प्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकताघटकसम्बन्धेन सम्बन्धित्वं संसर्गतया भासते तथा च प्रकृते पक्षानुयोगिकसम्बन्धावच्छिन्नबोधकपक्षधर्मपदोत्तरभावप्रत्ययस्य पक्षानुयोगिकसम्बन्धत्वेनैव तादृशसम्बन्धबोधकतया पक्षपदस्य धर्मितावच्छेदकविशिष्टार्थकतया धर्मितावच्छेदकविशिष्टानुयोगिकत्वावच्छिन्नव्याप्तिविशिष्टप्रतियोगिकत्वावच्छिन्नसम्बन्धावगाहिज्ञानलाभात्सामञ्जस्यम्। सम्बन्धिनो विशेषणप्रतियोगिकत्वं यथा विशेषणस्य सम्बन्धतया भासते तथा विशेष्यानुयोगिकत्वमपि विशेष्यस्य सम्बन्धतया भासते अतः पक्षे हेतुसम्बन्धविधया भासमानस्य संयोगादेर्विषयता हेतुप्रतियोगिकत्वेनेव पक्षतावच्छेदकावच्छिन्नानुयोगिकत्वेनाप्यवच्छिन्नेति न किञ्चिदनुपपन्नम्। व्याप्तिवै-

तथापि व्याप्तिवैशिष्ट्ये धर्मिणि प्रकारतया भासमाने वैशिष्ट्यवि-शेषणतापन्ना व्याप्तिरपि तेन संसर्गेण तत्प्रकारतया भासते एक-विशेषणतया उपस्थितस्य स्वातन्त्र्येणैवान्यत्र विशेषणत्वानुपगमात् एवं व्याप्यविशेषितस्य प्रतियोगितया सम्बन्धविशेषणत्वे-इतर-पदार्थविशेषणतापन्नस्य व्याप्यस्यापि प्रतियोगितया सम्बन्धवि-शेषणत्वमिति स्वीकृत्यैवं व्याख्यातम् एवं च सति व्याप्तिविशेषि-तधर्मिणो ज्ञानान्वयमाप्नुवाने सम्बन्धे विशेषणत्वं व्याप्तिवैशिष्ट्य-विशेषितधर्मिणोऽभेदेन व्याप्यविशेषितस्य पक्षसम्बन्धविशिष्टस्य चोपलक्षणत्वमित्यतः सर्वसामञ्जस्यात् । इत्थमेव दण्डांशे लौ-हित्यप्रकारकज्ञाने विशिष्टविषयान्वयपरस्य लौहित्यविशिष्टदण्डं जानातीति वाक्यस्य प्रामाण्यनिर्वाह इत्यलमतिसूक्ष्मानुधावनेन । पदार्थतावच्छेदकत्वयेति । अन्वयबलेन एकपदार्थतावच्छेदकवि-शिष्टधर्मिसंसर्गोपरागेणापरपदार्थतावच्छेदकबोधकत्वादित्यर्थः । ननु कर्मधारयलभ्यव्याप्तिविशिष्टाभिन्नपक्षधर्मरूपप्रकृत्यर्थान्वितप-क्षसम्बन्धरूपतल्प्रत्ययान्तार्थस्य लक्षणवाक्यार्थघटकस्याप्रसिद्धा ह्रदो वह्निमानित्यादिभ्रमानुमितावव्याप्तिरित्याशङ्कायां समाधत्ते ज्ञान-पदेति । ज्ञानपदोपसन्धानेन ज्ञानबोधकपदसमभिव्याहारनियन्त्रि-तव्युत्पत्तिविशेषेण बाधिताबाधितसाधारणतज्ज्ञानलाभात् पक्षध-र्मतांशे बाधिताबाधितसाधारणस्य व्याप्तिवैशिष्ट्यसामानाधिकर-ण्यस्य ज्ञानलाभात् । अयं भावः । ज्ञानवाचकपदसमभिव्याहृतस्य विषयविशेषणतया स्वार्थबोधकस्यापि पदस्य विषये स्वार्थानन्व-यनिश्चयदशायां विषयाविशेषणतयैव ज्ञानविषयतावच्छेदकतया स्वार्थबोधकत्वं व्युत्पत्तिसिद्धं कथमन्यथा विशेषदर्शिनो भ्रान्तिज्ञा लोहितवह्निज्ञानवानयमित्यादिवाक्यं प्रयुङ्क्ते तथा च वह्निव्याप्ति-विशिष्टप्रतियोगिकत्वविषयतानिरूपितह्रदसम्बन्धविषयताशालिज्ञा-नत्वेन भ्रमात्मकपरामर्शस्यापि उक्तलक्षणवाक्याल्लाभः(१) एवं च गु-

(१) अथ लोहितवह्निं जानातीत्यादौ लोहितवह्न्यादिपदार्थस्याभेदेनान्वये तात्पर्यानुपगमे समासानुपपत्त्या तात्पर्यस्यावश्यकत्वेऽपि तादृशवाक्यप्रामाण्यनिर्वाहाय लोहितपदस्य तत्र लौहित्या-दिना भासमानार्थकत्वमुपेयते तत्र तत्प्रकारकत्वविरहेऽपि ज्ञानविषयबोधकतत्तदर्थकपदस्य तत्रैव भासमाने निरुक्तलक्षणोपगमात् । येन रूपेण भासमानत्वञ्च तत्प्रकारतानिरूपकविषयतावत्त्वं ता-दृशविषयतावच्छेदेन च वह्न्यादेर्विषयतानिरूपकत्वं विवक्षितार्थकाभिमानसमभिव्याहारात् धर्मी-

णादिरूपपक्षानुयोगिकहेतुतावच्छेदकसंयोगादिसम्बन्धाप्रसिद्धावपि गुणादिरूपपक्षे संयोगादिना हेतुमत्ताभ्रमजन्यानुमितौ नाव्याप्तिः पक्षानुयोगिकत्वविषयतानिरूपितसंयोगादिविषयताशालित्वेन तादृशभ्रमस्यापि लक्षणवाक्यतो लाभात् । इदं त्वापाततः पदार्थद्वयाभेदविवक्षायामेव कर्मधारयस्य साधुतया अत्र पक्षधर्मे व्याप्तिविशिष्टाभेदाविवक्षायां कर्मधारयानुपपत्तिः तद्विवक्षायां च भ्रमस्थले विवक्षितलक्षणवाक्यार्थाप्रसिद्ध्याऽव्याप्तिः स्फुटैव एतदभिप्रेत्यैव भ्रमानुमित्यव्याप्त्या मतमेतदग्रे दूषयिष्यति उक्तवाक्यस्य चाप्रामाण्यमिष्टमेव किं तु लोहितं वह्निं जानातीत्यस्यैव प्रमाणत्वम् ॥

सांसर्गिकविषयितायाः सम्बन्धान्तरावच्छिन्नत्वं निर्युक्तिकमित्याशयेन दूषयति परामर्शेनेति ॥

(दी०) तत्र परामर्शेन नियमतो व्याप्तिवैशिष्ट्यादिसामानाधिकरण्यग्रहे मानाभावात् गौरवेण तद्विषयत्वेनाहेतुत्वात् । सम्बन्धसम्बन्धाग्रहेऽपि विशिष्टज्ञानत्वस्योपपादितत्वात् भ्रमस्थले

---

यते । अतो वह्निं शुक्ल इत्यादिभ्रमाया लोहितो वह्निरित्यादिज्ञानान्तरीयलौहित्यादिप्रकारतानिरूपकविषयतावद्वह्न्यादिविषयकत्वेऽपि न तज्ज्ञानपरोक्तवाक्यस्य प्रामाण्यापत्तिः लौहित्यादिविशेष्यतापन्नवह्न्याद्यविषयकवह्न्यादिज्ञाननिष्ठतादृशविषयिताया लौहित्यादिविशेष्यतापन्नानिरूपितत्वात् द्रव्यत्वादिनिष्ठघटाद्यनुयोगिकाधिकरणतानिरूपकत्वे घटाद्याधेयतावच्छेदकतायाः पारिभाषिकावच्छेदकत्वविषयतात्मकमपि विषयतायामविरुद्धमेव । एवं च प्रकृतेऽपि व्याप्तिविशिष्टपदं व्याप्तिप्रकारेण भासमानपरं तस्य पक्षधर्मेऽभेदेनान्वयः । तस्य भावप्रत्ययार्थे पक्षसम्बन्धे स्वप्रतियोगिकत्वेन भासमानत्वं सम्बन्धः यस्य विशेषणस्य येन सम्बन्धेन विशेष्येऽन्वयः ज्ञानविषयतया भासमाने विशेष्ये स्वीयतत्सम्बन्धोपरागेण भासमानत्वस्यैव तद्विशेषणसम्बन्धतया भानमिति व्युत्पत्तेः अ- राजकीये धननिष्ठस्वत्वे राजकीयत्वभ्रमरूपज्ञानपरे राज्ञो धनं जानातीत्यादिविशेषदर्शी; षष्ठ्यर्थस्वत्वे निरूपितत्वसम्बन्धेन राज्ञो ऽन्वये योग्यतानुपपत्त्या निरूपितत्वेनैव भासमानत्वस्य तत्र तत्सम्बन्धताया उपगन्तव्यत्वात् । तथा च व्याप्तिप्रकारेण यद्भासते तत्प्रतियोगिकत्वेन भासमानपक्षसम्बन्धावगाहिज्ञानजन्यत्वलाभात् भ्रान्तानुमित्यव्याप्तिर्न वा तत्र लक्षणवाक्यार्थलक्षणबोधानुपपत्तिरिति चेन्न । एवमपि पक्षधर्मपदस्य यथाभूतार्थपरतायाः आवश्यकत्वाद्वह्निव्याप्यजलवान् ह्रद इत्यादिपरामर्शजन्यभ्रमानुमितिसंग्रहेऽपि वह्निव्याप्यधूमवान् ह्रद इति भ्रमजन्यानुमितेर्दुःसंग्रहत्वात् । तत्र व्याप्तिप्रकारेण भासमानधूमे वास्तवपक्षधर्मताविरहात् पक्षधर्मपदस्य पक्षधर्मत्वेन भासमानार्थकत्वे पक्षसम्बन्धस्य प्रकृत्यर्थतानवच्छेदकतया तदुत्तरभावप्रत्ययेन बोधनासम्भवात् तेन रूपेण भासमानत्वरूपप्रकृत्यर्थतावच्छेदकस्य भावप्रत्ययेन विवक्षणे परामर्शस्य तदनवगाहितया असामञ्जस्यादिति १ पुस्तके अधिक पाठ ।

तादृशसामानाधिकरण्याप्रसिद्ध्या तज्ज्ञानस्यासम्भवात् असत्ख्यातिनिरासात् अवान्तरवाक्यार्थायोग्यत्वनिर्णये महावाक्यार्थज्ञानानुदयात् विषाणे शशसम्बन्धाभावनिश्चयदशायां शशविषाणजन्यमिदं कार्मुकमिति शाब्दबुद्धेर्भ्रमणापि दुरुपपादत्वात्

( गा० ) परामर्शत्वस्य व्याप्तिवैशिष्ट्यादिसामानाधिकरण्यग्रहस्य व्याप्यत्वे मानाभावादित्यर्थः । व्याप्तिविशिष्टधूमसंयोगी वह्निव्याप्यधूमवांश्च पक्ष इत्यादिपरामर्शस्य व्याप्तिसम्बन्धपक्षसम्बन्धप्रकारकतया तत्सम्बन्धावगाहित्वं प्रामाणिकमेवेति नियमत इत्युक्तं तथा च यत्र व्याप्तिवैशिष्ट्यं पक्षधर्मता च संसर्गतयैव भासते तज्जन्यानुमितावव्याप्तिर्यथाश्रुतलक्षण इति भावः । ननु तादृशज्ञानादनुमितिर्न भवत्येव तादृशसामानाधिकरण्यविषयकत्वेनैव परामर्शस्यानुमितिहेतुत्वात् तथा च नाव्याप्तिरित्यत आह गौरवेण चेति । व्याप्तिविशिष्टहेतुविशिष्टपक्षज्ञानत्वेनैव लाघवेन हेतुत्वात् व्याप्तिवैशिष्ट्यादिसामानाधिकरण्यविषयकत्वेन हेतुत्वे सामानाधिकरण्यविषयकत्वस्याधिकस्य निवेशात् तथा च तदुभयसामानाधिकरण्यानवगाहिनोऽपि विशिष्टज्ञानादनुमित्युत्पत्तिर्निष्प्रत्यूहैवेति भावः । ननु सम्बन्धसम्बन्ध्यवगाहिज्ञानत्वमेव विशिष्टज्ञानत्वं न तु सम्बन्धज्ञानत्वमेव दण्डपुरुषसंयोगा इत्यादिसमूहालम्बनस्यापि तथात्वापातात् तथा चानुमितिजनकज्ञाने विशेषणीभूतव्याप्तिसाधनयोः ससर्गसंसर्गानवगाहित्वे तद्विशिष्टज्ञानत्वमेव तस्य नोपपद्यत इति कथमनुमितिजनकत्वमित्यत आह सम्बन्धेति । अग्रहेऽपि अविषयीकरणेऽपि । विशिष्टज्ञानत्वस्येति । अयमाशयः सम्बन्धसम्बन्ध्यवगाहिज्ञानत्वमपि न विशिष्टज्ञानत्वं सम्बन्धसम्बन्धमादायापि समूहालम्बनसम्भवात् अपि तु तत्प्रकारकधीत्वमेव तद्विशिष्टधीत्वं प्रकारत्वं च विषयताविशेषः न च प्रकारतात्वं सांसर्गिकविषयतानिरूपितविषयतात्वं यदि तदा विशेष्यताया अपि तथात्वादतिप्रसङ्गः अपि तु सम्बन्धविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितविषयतात्वमेव विशेष्यविषयता च तादृशानुयोगित्वविषयतानिरूपितैव न तु तादृशप्रतियोगित्ववि-

लक्षणवाक्यतः प्रतीयतां तथापि न तदंशस्य लक्षणघटकत्वमुपगम्यते अतिव्याप्त्याद्यवारकत्वात् अवश्यविवक्षणीयव्याप्तिविशिष्टप्रतियोगिकत्वाविषयतानिरूपितसंसर्गीयविषयतामात्रनिवेशेनैव, सामञ्जस्यात् लक्षणवाक्यप्रतिपाद्यतया लक्षणघटकतानियतत्वे ज्ञानान्तकर्मधारयपक्षेऽपि अवश्यविवक्षणीयस्य ज्ञानविशेषणव्याप्तिप्रकारकत्वांशे पक्षधर्मताविषयकत्वावच्छिन्नत्वस्य निवेशेनैव सामञ्जस्याल्लक्षणवाक्यलभ्यस्य ज्ञानांशे पक्षधर्मताविषयकत्वविशेषणस्य वैयर्थ्येन लक्षणदोषात् एवं च भ्रमानुमितौ न लक्षणाव्याप्तिशङ्केत्याशयेनायोग्यताज्ञानाविशेषदर्शिनां नोक्तवाक्याद्भ्रमानुमितौ लक्षणग्रहः सम्भवतीति विशेषदर्शिनं प्रति प्रकृतवाक्यानर्थक्यमिति दूषणान्तरमाह अथान्तरेति । पक्षधर्मांशे ऽविशेषणस्य व्याप्तिवैशिष्ट्यादेर्न स्वातन्त्र्येण ज्ञानान्वयसम्भवः व्युत्पत्तिविरोधात् अपि तु तद्विशेषणतापन्नस्यैवेति तत्र तदनन्वयनिश्चयो ऽवान्तरवाक्यार्थायोग्यतानिश्चयः तस्मिन् सति समुदायलक्षणवाक्यजन्यमहावाक्यार्थज्ञानासम्भवादित्यर्थः । महावाक्यार्थयोग्यताज्ञानस्यावान्तरवाक्यार्थविषयकत्वनैयत्येनावान्तरवाक्यार्थधीविरोधिनोऽयोग्यताज्ञानस्य महावाक्यार्थयोग्यताज्ञानविरोधित्वादिति भावः । एतदेव दृष्टान्तेन द्रढयति विषाण इति । शशसम्बन्धाभावेति । शशस्य विषाणजन्यामिति वाक्यजन्यसम्बन्धप्रकारकबोधाभिप्रायेणेदं शशविषाणजन्यामिति वाक्यजन्यबोधस्य विषाणांशेऽभेदेन शशपदलक्ष्यशशसम्बन्धिप्रकारकतया सम्बन्धिभेदनिश्चयस्यैव तद्विरोधित्वात् समासव्यासयोः समानप्रकारकानुभवजनकत्वानुरोधेन षष्ठीतत्पुरुषस्थले सम्बन्ध एव लक्षणा समासे व्युत्पत्तिवैचित्र्येण नामार्थयोरपि भेदान्वयबोधाभ्युपगमादित्याशयेनेदमिति कश्चित् । शशसम्बन्धविशिष्टविषाणपरस्वर्दनामघटितवाक्यजन्यबोधपरतया व्याख्यानं पुनरसत् तथा सति विषाणे शशसम्बन्धस्य पदार्थतया ऽवान्तरवाक्यार्थत्वायोगात् ॥

भ्रमानुमितेरलक्ष्यतया नाव्याप्तिप्रसक्तिरित्याशङ्कते न चेति ।

( दी० ) न चात्र प्रमाणप्रस्तावात् प्रमैव लक्ष्या । यदि च सल्लिङ्गपरामर्शादपि भ्रान्तानुमितिस्तदा चरमज्ञानपदं प्रमापर-

स्वोपगतेस्तन्नाशकबलाभावादित्यभिसन्धाय उक्तबाधासङ्करस्य तस्य यत्नपतिना दूषितत्वात् तन्मते च न सल्लिङ्गपरामर्शाद्भ्रमानुमितिरपि [illegible] मिथ्याविमत एवेत्यतो यदि चेत्युक्तम् । न च बाधितवह्नौ लाघवज्ञानसत्त्वे सल्लिङ्गपरामर्शादपि बाधितो वह्निः पक्षे भासत इति सर्वेषामेवानुमतं परं तु तादृशानुमितेर्व्यापकतानवच्छेदकविशेषधर्मप्रकारकत्वं प्राचीना न मन्यन्ते अत एव सामान्यधर्मावच्छिन्ननिरूपितव्याप्तिबलात्प्रवृत्तानुमाने विशेषबाधस्याहोपार्यं समानप्रकारकत्वेन विरोधित्वं व्यत्रस्याप्य व्युत्पादितमुपाध्यायैर्बोधग्रन्थे तावतापि च बाधितविषयलाघवज्ञानजन्यानुमितेस्तदभाववति तत्प्रकारकत्वरूपभ्रमत्वावच्छिन्नभेदघटितप्रमात्वं दुरुपपादमेवेति यदि चेत्यसङ्गतमेवेति वाच्यं तदवच्छिन्नाभाववति तदवच्छिन्नप्रकारकत्वावच्छिन्नभेदघटितप्रमात्वस्य लक्ष्यताप्रयोजकत्वोपगमेन पर्वतादौ वह्नित्वादिना बाधितवह्न्यादिविषयकानुमितेर्लक्ष्यतासम्भवेन तत्सङ्गतेः न चोक्तप्रमात्वस्य लक्ष्यतानियामकत्वे जलपर्वतो वह्निमान् पर्वतो जलवह्निमानित्याद्यनुमितौ स्वरूपतो भासमानविषयांशे भ्रमरूपायां विशिष्टपक्षाद्यप्रसिद्ध्याऽव्याप्तिर्दुर्वारैव तत्रापि तादृशप्रमात्वसत्त्वादिति वाच्यम् । तदभाववति स्वरूपतस्तत्प्रकारकभ्रमभेदमपि प्रमात्वशरीरे निवेश्य तद्वारणसम्भवात् । केचित्तु यत्किञ्चिद्विधेयतावच्छेदकावच्छिन्नवत्पक्षावगाहित्वलक्षणपारिभाषिकप्रमात्वेनैव लक्ष्यताया विवक्षितत्वात् लाघवज्ञानाधीनोक्तानुमितौ महानसीयत्वादेः प्रकारत्ववादिमतेऽपि वह्नित्वस्यैव विधेयतावच्छेदकतया पक्षस्य तदवच्छिन्नवत्त्वमेव तादृशप्रमात्वानपायात् । गन्धप्रागभावकालावच्छिन्नो घटो गन्धवानित्यादौ नव्यनये तादृशकालावच्छिन्नसमवायस्य सम्बन्धत्वाचेन सम्बन्धेन च पक्षे विधेयाभावान्न लक्ष्यता न चेदृशप्रमात्वस्य लक्ष्यतानियामकत्वे लिङ्गोपधानमतेऽव्यव्याप्त्यादिलिङ्गकानुमितेरलक्ष्यत्वाप्रसक्त्या लिङ्गोपहितेत्याद्यग्रिमग्रन्थो नावतरतीति वाच्यम् इदानीं लाघवज्ञानजन्यानुमितेरलक्ष्यतायां क्षतिविरहात् प्रमान्यवृत्तिविषयतावत्त्वमेव लक्ष्यतानियामकं वक्तव्यमित्याशयात्तथोक्तिसङ्गतेरिति वदन्ति । प्रमापरमिति । अत्रापि लक्ष्यतानियामकं यादृशं प्रमात्वं तदेव विवक्षणी-

पदार्थयोरिति । पदार्थयोः पदजन्यप्रतीतिविशेष्यतयाऽभिप्रेतयोः । पदार्थतावच्छेदकभेदेनेति । तथा च पदजन्यप्रतीतिविषयतयाऽभिप्रेतत्वरूपपदार्थतावच्छेदकादिसाधारणपदार्थत्वाश्रयस्य भेद एव द्वन्द्वनियामक इति भावः । एतेन नानार्थेतरसरूपैकशेषस्थलेऽपि विशेष्यघटादिव्यक्तिभेदेन द्वन्द्वप्रसक्त्या सरूपैकशेषस्य द्वन्द्वापवादकताप्रवादसङ्गतिः । घटत्वेनैकघटतात्पर्यकघटकलसपदयोः प्रतिपाद्यघटघटत्वयोर्भेदेऽपि न द्वन्द्वः एकपदप्रतिपाद्येऽपरपदप्रतिपाद्यत्वावच्छिन्नभेदस्यापेक्षितत्वात् । वस्तुतः पदार्थयोर्भेदः पदार्थवैलक्षण्यं एकपदप्रतिपाद्यविशिष्टार्थस्यापरपदप्रतिपाद्यविशिष्टार्थापर्याप्तविषयताश्रयत्वं पर्यवसितं द्वन्द्वनियामकम् । एतेन मेयवाच्ययोरभेद इत्यादौ मेयपदप्रतिपाद्ये वाच्यादिपदप्रतिपाद्यत्वावच्छिन्नभेदासत्त्वेऽपि न क्षतिः गगनाकाशयोरभेद इत्यादौ च गगनादिपदं तद्वाच्यत्वावच्छिन्नपरमिति पदार्थतावच्छेदकभेदेन द्वन्द्वः । अथ द्वन्द्वबाधार्थं सरूपैकशेषानुशासनमित्ययुक्तं समस्यमानपदानामानुपूर्वीभेदरूपवैरूप्यस्य द्वन्द्वनियामकतां स्वीकृत्यैव सरूपाणां द्वन्द्ववारणसम्भवादिति चेन्न न हि द्वन्द्वबाध एव सरूपैकशेषफलं किं तु तदननुशासने घटा इत्यादौ बहुत्वान्वयानुपपत्तिः सकृदुच्चरितः शब्दः सकृदर्थं प्रत्याययतीति व्युत्पत्तेरेकघटपदेन बहुघटबोधनासम्भवात् सकृदर्थं प्रत्याययतीत्यस्यानेकशक्तिविषयाबोधकत्वार्थकत्वेऽपि इन्द्रोपेन्द्रचन्द्रपरे हरय इत्यादावगतिः एकशेषानुशासने तु तत्र बहुपदेभ्य एव बहूनां बोधो बहुपदाश्रवणं च इतरेषां लोपात् एकशेषस्य इतरलोपपर्यवसितत्वात् । अत्राहुः सरूपैकशेषः कृतद्वन्द्वानामेव न तु द्वन्द्वापवादकता तस्य तथा सति सविभक्तिकानामेव द्वन्द्वसम्भवात् सविभक्तिकानामेव एकशेषस्य वाच्यतया श्रूयमाणपदोत्तरं सुब्विभक्तेरवस्थानापत्तेः लुप्तपदानां श्रूयमाणबहुवचनाप्रकृतितया तदर्थान्वितस्वार्थबहुत्वबोधकतायास्तत्रानुपपत्तेश्च समासोत्तरं बहुवचनोपगमे च समासान्तर्गतसकलपदानामेव समासोत्तरविभक्तिप्रकृतितया सामञ्जस्यात्(१) वस्तुतस्तु नेष्यत

(१) न च कृतद्वन्द्वानामेकशेषोपगमे पादाः मस्तका इत्यादौ द्वन्द्वश्च भाविसूर्यसेनाद्वन्द्वो धुरमन्तर इत्यादिद्वन्द्वैरेकद्वन्द्वापत्तसक्त्या बहुवचनानुपपत्तिरिति वाच्यम् । तत्र सूत्रे द्वन्द्वपदस्य एक-

एवैकशेषः उक्तव्युत्पत्तेरप्रामाणिकत्वात् सति 'तात्पर्ये युगपदनेकार्थबोधस्येष्टत्वादिति ।' अन्यत्र नीलघटयोरभेद इत्यादौ अत्र पदार्थतावच्छेदकगतमेव 'द्वित्वादिकं द्विवचनादिना प्रत्याय्यते साधुत्वार्थकमेव वा द्विवचनादिकं उर्वश्यप्सरस इत्यादौ बहुवचनवत् तथापि प्रकृत्यर्थगतगुणादिकमादाय बहुत्वबोधकत्वमिति तु न युक्तं गुणादेरप्रकृत्यर्थत्वात् तत्साधारणबहुत्वबोधोपगमे ऽतिप्रसङ्गात् अजहत्स्वार्थलक्षणया गुणादीनामपि प्रकृत्यर्थत्वोपगमे मुख्यार्थपरपदोत्तरबहुवचनस्य पदसाधुत्वमात्रार्थतायामविवादादित्यलमप्रस्तुतानल्पजल्पनेन । नन्वेकधर्मिबोधकपदयोरपि द्वन्द्वोपगमे द्वन्द्वस्य कर्मधारयभेदानुपपत्तिः तादृशपदद्वयसमासस्यैव कर्मधारयत्वात् इत्यत आह पदार्थेति । तथा च वस्तुतोऽभिन्नधर्मिबोधकपदद्वयकसमासत्वं न कर्मधारयलक्षणमपि तु एकपदार्थे ऽपरपदार्थाभेदबोधकसमासत्वमेवेति भावः । भेदाभेदोदासीनत्वं भेदाभेदज्ञानाविषयत्वं भिन्नतया ऽभिन्नतया वा ऽभासमानत्वमेवेतिभावः । भेदोपादानं दृष्टान्तविधया अभेदभानव्यवच्छेदेनैव कर्मधारयविशेषोपपत्तेः कर्मधारयस्थलेऽभेद इव इतरेतरद्वन्द्वस्थलेऽपि पदार्थस्य तदवच्छेदकस्य वा भेदो यथायोगं भासत इति भ्रमनिराकरणाय वा तदुपादानं आस्तां वा पदार्थभेदेनैव द्वन्द्वः तथापि तल्प्रत्ययान्तेन विशिष्टान्तस्य द्वन्द्वोपगमादुक्तार्थतासम्भव इत्याशयेनाह विशिष्टपदस्येति । भावकान्तलोपगमेनेतिशेषः । केचित्तु व्याप्तिविशिष्टपदपक्षधर्मपदयोर्द्वन्द्वे पक्षधर्मपदस्याल्पाच्त्वेन पूर्वनिपातापत्तिरतः पक्षधर्मतापदेन द्वन्द्वमाहेत्यवतारयन्ति । धर्मपरतया वैशिष्ट्यपरतया ज्ञानजन्ये अनुव्यवसायादौ अतिप्रसङ्ग इति तादृशसमूहालम्बनस्यापि व्याप्तिवैशिष्ट्यपक्षधर्मत्वोभयावगाहितया अक्षतत्वादिति भावः । एवं च यथाश्रुताभिप्रायेण तत्त्वेन जनकताविवक्षणे स्वसम्बन्धो बोध्यः । अनुमित्यजनकोपदर्शितसमूहालम्बनसाधारणस्य तदुभयावगाहिज्ञानत्वस्य तज्जनकतानवच्छेदकत्वात् । एकत्रेति एकधर्मिविषयकत्वावच्छेदेनेत्यर्थः तथा

बोधविषयो यो द्वन्द्वस्तत्पदलोपगमात् । इति २ पुस्तके आधिक पाठ ।

च व्याप्तिवैशिष्ट्यावगाहितावच्छेदकविषयितानिरूपकधर्मिविषयिताकत्वावच्छेदेन पक्षधर्मत्वावगाहित्वं पर्यवसितम् । एतादृशार्थस्य लक्षणवाक्ये एकत्रेति पदपूरणादिना लाभो बोध्यः ।

( दी० ) तदप्यसत् । एवमपि धूमो वह्निव्याप्यो द्रव्यं पर्वतवृत्तीतिज्ञानजन्येऽतिप्रसङ्गात् । एकरूपेण तदुभयावगाहित्वस्योक्तौ च मीमांसकमतानुप्रवेशात् । मिथस्तदुभयोपश्लेषावगाहित्वस्य च परामर्शाव्यापकत्वात् । न च तदुभयविषयत्वनियतधर्मावच्छिन्नकारणताप्रतियोगिककार्यताशालित्वमर्थः पक्षधर्मतापदोपादानवैयर्थ्यात् ।

( गा० ) एवमपि एकत्रोभयावगाहिताविवक्षणेऽपि ननु एकधर्मावच्छिन्नधर्मिण्युभयावगाहित्वविवक्षणान्न धूमो वह्निव्याप्यो द्रव्यं पर्वतवृत्तीति ज्ञानजन्ये ऽतिप्रसङ्ग इत्यत आह एकरूपेणेति । मीमांसकमतानुप्रवेशादिति मीमांसकैर्यथा वह्निव्याप्यवानयमित्यादिव्याप्यतावच्छेदकरूपानवगाहिपरामर्शादनुमितिरपलप्यते धूमो वह्निव्याप्यो धूमवान् पर्वत इत्यादिसमूहालम्बनाद्यानुमितिरभ्युपेयते तेषामेकरूपेण व्याप्तिपक्षधर्मताज्ञानस्यानुमितिहेतुत्वात् तथोक्तरीत्या लक्षणं व्याचक्षाणेनापि तत्र तत्रानुमितिरपलपनीया स्वीकार्या च अन्यथाऽव्याप्त्यतिव्याप्त्योः प्रसङ्गादित्यर्थः तथा च विशिष्टपरामर्शत्वेनानुमितिहेतुतावादिनां नैयायिकानां नोक्तरूपावच्छिन्नकारणताया लक्षणे प्रवेशसम्भव इति न्यायमते ऽव्याप्त्यादिदोष आवश्यक एवेति भावः । यद्यपि धर्मिनिरूपितैकविषयितावच्छिन्नतदुभयविषयिताविवक्षणे न समूहालम्बनजन्ये ऽतिप्रसक्तिः न वा व्याप्यतावच्छेदकानवगाहिपरामर्शजन्यानुमित्यसंग्रहः तथापि व्याप्तिपक्षधर्मत्वाप्रसिद्धिस्थले ऽव्याप्तिरेवैतत्कल्पोपेक्षाबीजमित्यवधेयम् । ननु परस्परोपश्लेषेणोभयावगाहित्वविवक्षणान्न समूहालम्बनजन्ये ऽतिप्रसङ्गः तच्चैकतरसम्बन्धविषयकत्वावच्छेदेनापरावगाहित्वं सम्बन्धः सामानाधिकरण्यमित्यत आह मिथ इति । परामर्शाव्यापकत्वादिति । सम्बन्धावगाहिताया विशिष्टबुद्धाव-

प्रामाणिकतया व्याप्तिवैशिष्ट्याद्यप्रकारकपरामर्शस्य तत्सामानाधिकरण्यानवगाहित्वादिति भावः । यद्यप्युभयसामानाधिकरण्यावगाहितायाः परामर्शाव्यापकत्वस्य प्रागेवाभिहितत्वादिदानीम् उक्तशङ्का नावतरितुमर्हति तथापि पूर्वमुपाध्यायमते भ्रान्तानुमित्यव्याप्तेरेव निर्भरस्य कृतत्वात् सम्बन्धसम्बन्धावगाहित्वाभ्युपगमेन शङ्कासम्भवो बोध्यः परामर्शाव्यापकत्वादित्युपलक्षणम् । उक्तार्थस्य लक्षणवाक्यादलाभोऽपि दोषो बोध्यः उभयविषयकत्वाविशिष्टस्य निरूपितत्वेन जन्यतायामन्वयो विवक्षित इत्युभयविषयकत्वस्य जनकतावच्छेदककोटिप्रविष्टत्वस्य लाभात्सानुव्यवसायादावतिव्याप्तिरिति शङ्कते न चेति । तदुभयविषयकत्वे तद्विशिष्टज्ञानत्वे चाऽवच्छेदकत्वपर्याप्तिनिवेशे ऽसम्भवः संशयान्यत्वादेरधिकत्वादनुमितिजनकतावच्छेदककुक्षिनिवेशादतस्तत्पर्याप्त्यनिवेशसूचनाय घटितार्थकं नियतपदम् एतेनोभयविषयकत्वनियतत्वं यदि तद्व्याप्यत्वं तदा व्याप्तिवैशिष्ट्यविषयकत्वपक्षधर्मत्वविषयकत्वोभयाभाववद्वृत्तित्वरूपायां उभयविषयकत्वव्याप्तौ केवलव्याप्तिवैशिष्ट्यविषयकत्वाभाववद्वृत्तित्वाघटितस्योभयत्वावच्छिन्नाभावस्य निवेशाद्भिमपक्षधर्मत्वांशवैयर्थ्यप्रदर्शनासङ्गतिः यदि च ज्ञानत्वस्य तदुभयाभाववद्वृत्तितया विशेषणान्तरविशिष्टज्ञानत्वरूपपरामर्शत्वे तदभावो दुर्घट इति स्वव्यापकतत्कत्वरूपव्याप्तिरेव निवेशनीयेत्युच्यते तदाप्युभयत्वावच्छिन्नविशेषणतया व्यापकतायाः प्रवेशे व्याप्तिवैशिष्ट्यविषयकत्वत्वावच्छिन्नविशेषणतया तदप्रवेशाद्वैयर्थ्यं दुर्वारमेव । एवमुभयविषयकत्वनियतकारणतानिवेशेनापि उपपत्तेस्तन्नियतधर्मावच्छिन्नत्वानिवेशनमप्यफलं नियतत्वांशस्य लक्षणवाक्यादनुपस्थित्या तद्घटितलक्षणालाभश्चेति दूषणमप्यपास्तम् एव केषाञ्चिदुभयविषयकत्वव्याप्यतद्व्यक्तित्वावच्छिन्नविषयादिकारणतामादाय परामर्शानुव्यवसायादावतिव्याप्तिवारणायानेकवृत्तित्वं विषयिताघटितधर्मावच्छिन्नत्वं वा कारणतायामधिकं निवेश्यमित्यप्यनुपादेयमेव यत्राऽऽदरविशेषसाध्यकस्थले एक एव परामर्शस्तत्रानेकवृत्तित्वस्य उभयविषयकत्वावच्छिन्नत्वस्य च कारणताविशेषणत्वेऽव्याप्ति-

रेव तद्व्यक्तित्वेनैव हेतुत्वात् । न च योगिनां तद्विषयकज्ञानस्यावश्यं सत्त्वात् तत्साधारणतद्विषयकत्वेन हेतुत्वं कल्पनीयं तच्चोभयवृत्त्यपीति वाच्यम् । यत्र भ्रमरूप एव तादृशपरामर्शस्तत्र तद्व्यक्तित्वेनैव हेतुत्वाद्व्याप्तेर्दुर्वारत्वादिति तत्र जातिघटितलक्षणमेव शरणीयम् । पक्षधर्मताविषयकत्वमात्रनियतधर्मावच्छिन्नकारणताप्रवेशे साधारणधर्मवत्ताज्ञानजन्यतामादाय संशये प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानजन्यतामादाय च धूमवत्पर्वतो नास्तीत्यभावप्रत्यक्षे घटवानित्यादिविशिष्टवैशिष्ट्यबोधे चातिव्याप्तेर्व्याप्तिवैशिष्ट्यविषयकत्वोपादानमावश्यकमित्याशयेन पक्षधर्मतांशवैयर्थ्यमाह पक्षेति । न च व्याप्तिवैशिष्ट्याविषयकत्वनियतधर्मावच्छिन्नकारणताप्रवेशे वह्निव्याप्यो धूमो द्रव्यं न वेत्याकारकसंशये व्याप्तिविषयकधर्मिज्ञानजन्यतामादायातिप्रसङ्गः इति वाच्यं पक्षधर्मतापदोपादानेऽपि तद्दोषतादवस्थ्यात् तादृशधर्मिज्ञानादेरपि धर्मिवृत्तित्वावगाहित्वात् न च स्वधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नवृत्तित्वावगाहित्वनिवेशान्न दोष इति वाच्यं तादृशसंशयधर्मितावच्छेदकावच्छिन्ने कोटिद्वयसहचरितधर्मवत्ताज्ञानस्य तथात्वाद्व्याप्तिविषयकत्वाच्च तज्जन्यतामादायातिप्रसङ्गस्य दुर्वारत्वात् न च तादृशदोषवारणाय विशेषणान्तरप्रक्षेप आवश्यकः तथा च व्याप्तिवैशिष्ट्याविषयकत्वघटितलक्षणे व्याप्त्यविषयकत्वस्य चरमज्ञाने व्याप्यविषयकवृत्तित्वस्य जन्यतायां वा निवेशेनैव पक्षधर्मताघटितलक्षणेऽपि यदंशे पक्षधर्मतावगाहिज्ञानं जनकं तदंशे पक्षधर्मतानवगाहित्वस्य चरमज्ञाने तदनवगाहिवृत्तित्वस्य जन्यतायां वा निवेशनेन प्रतीकारः सम्भवति धूमवत्पर्वतो नास्तीत्याद्यभावप्रत्यक्षादौ धूमाद्यंशे पक्षधर्मताज्ञानत्वेन जनकत्वेऽपि तादृशप्रत्यक्षादेरपि तदंशे पक्षधर्मत्वावगाहित्वात् साधारणधर्माद्यंशे पक्षधर्मतावगाहिज्ञानजन्ये संशयेऽपि सामग्रीवदेन साधारणादिधर्मांशे पक्षधर्मताभानात्प्रत्यक्षे उपस्थितवस्तुभानसामग्र्या नियतत्वात् चरमज्ञानपदस्य निश्चयपरत्वात् संशयत्वस्यार्थसमाजग्रस्ततया कार्यतावच्छेदकत्वमते च न संशयातिव्याप्तिरिति प्रकृतरोपादानवैयर्थ्यादित्य-

भिधानमेवोचितमिति वाच्यम् । एवमपि साध्यवंशे स्वविषयधर्मिंवृत्तिताज्ञानजन्यायां तत्र तदवगाहिन्यामनुमितावतिव्याप्तेः । ननु व्याप्तिवैशिष्ट्यघटितलक्षणेऽपि वह्निव्याप्यधूमवत्पर्वतसदृशं महानसमित्यतिदेशवाक्यार्थज्ञानजन्यायामुपमितावतिव्याप्तिर्दुर्वारैवेति चेन्न । एतादृशातिव्याप्तेरुभयपदवदानेऽपि सत्त्वात्केवलपक्षधर्मताघटितलक्षणे धूमवत्पर्वतसदृशं महानसमिति ज्ञानजन्योपमितावतिव्याप्तेर्दुर्वारत्वात्तदुपेक्षितम् । केचित्तु साधारणज्ञानजन्यत्वाभावाय संशयातिव्याप्तिवारणमेव पक्षधर्मताघटितलक्षणोपेक्षाबीजमित्याहुः । एतन्मते व्याप्तिवैशिष्ट्यघटितलक्षणेऽपि वह्नितदभावोभयसहचरितधर्मव्याप्यधूमवान् पर्वत इति ज्ञानजन्यसंशये ऽतिव्याप्तिर्दुर्वारैवेति बोध्यम् ।

मिश्राद्युक्तं ज्ञानान्तकर्मधारयपक्षमवलम्ब्य समाधातुमुपक्रमते व्याप्तिविशिष्टमिति ।

( दी० ) व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं तज्जन्यमिति तु स्यात् । यद्यप्यत्रापीन्धनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणेन्धनवानित्यादिपरामर्शजन्येऽव्याप्तिरखण्डव्याप्तेरप्रसिद्धेः भ्रमानुमितेर्लक्ष्यत्वे चात्राकाशवानात्मन इत्यादौ सुतरां तथा तथापि तावत्पदार्थानां तथाविधपरस्परोपश्लेषावगाहित्वं विवक्षितम् । न च व्यतिरेकिण्यव्याप्तिः व्यभिचारधीविरोधिधीविषयत्वेनान्वयव्यतिरेकव्याप्त्योरनुगमात् ॥

( गा० ) व्याप्तिविशिष्टत्वं यदि व्याप्त्याश्रयत्वं तदानुमितिजनकज्ञानमात्रस्य न तथात्वमपि तु लिङ्गस्यैवेत्यसङ्गतिरतस्तद्व्याचष्टे व्याप्तिप्रकारकमिति । व्याप्तिविशिष्टपदेन प्रकारितारूपवैशिष्ट्यस्य व्याप्तिपदेन वा लक्षणया व्याप्तिप्रकारिताया वा विवक्षितत्वादिति भावः । नन्वेवं व्याप्तेः पक्षधर्मताया वा भ्रमजन्यानुमितावव्याप्तिपरीहारेऽपि धूमो वह्निव्याप्यो द्रव्यवान् पर्वत इत्यादिज्ञानजन्येऽतिव्याप्तिर्दुर्वारैव । अथ व्याप्तिप्रकारकत्वपक्षधर्मताविषयत्वयोरवच्छेद्यावच्छेदकभावाविवक्षणान्नाय

दोषः विशृङ्खलरीत्या भासमानपदार्थविषयतयोरवच्छेद्यावच्छेदकभावविरहात् पक्षधर्मताविषयताकत्वावच्छिन्ने ज्ञानरूपोद्देश्ये व्याप्तिप्रकारकत्वस्य विधेयतया तयोरवच्छेद्यावच्छेदकभावलाभोऽपि व्युत्पत्तिसिद्ध एवेति चेत् । एवमपि वह्निव्याप्यकालीनधर्मवानित्यादिज्ञानव्यावर्तनमशक्यं येन सम्बन्धेन यस्य प्रकारता तत्सम्बन्धविषयकत्वेनैव तत्प्रकारकत्वस्यावच्छेद्यावच्छेदकभावोपगमे पक्षानुयोगिकसम्बन्धस्यानुमितिजनकज्ञाने व्याप्यस्यैव सम्बन्धतया भानात् तद्विषयकत्वेन व्याप्यप्रकारकत्वस्यैवावच्छेद्यावच्छेदकभावः स्यान्न तु व्याप्तिप्रकारकत्वस्येत्यसम्भव एव । एवं यत्र अन्यानुयोगिक एव सम्बन्धो व्याप्यस्य पक्षांशे भातस्तादृशभ्रमजन्यानुमितावव्याप्तिरपि दुर्वारा तादृशभ्रमे वास्तवपक्षानुयोगिकसम्बन्धस्य पक्षधर्मतापदार्थस्याभानात् पक्षांशे हेतुतावच्छेदकसम्बन्धेन हेतुप्रकारकज्ञानपर्यन्तं च पक्षधर्मताया ज्ञानमिति समासेनाशक्यप्रतिपादनमिति न तस्य पक्षधर्मताज्ञानशब्दार्थता शब्दव्युत्पत्त्यनादरे चालं समासविशेषमाहत्य व्याख्ययेति । अत्राहुः पक्षे धर्मतया हेतुतावच्छेदकसम्बन्धेन ज्ञानमिति तृतीयासमासगर्भसप्तमीसमासादरात् पक्षविशेष्यकत्वावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकारताकत्वविशिष्टज्ञानं पक्षधर्मताज्ञानपदार्थः पक्षधर्मतयेत्यत्र तृतीयाया एवावच्छिन्नप्रकारताकत्वार्थकत्वात् तत्र व्याप्तिप्रकारताकत्वान्वये च हेतुनिष्ठनिरुक्तप्रकारकत्वावच्छिन्नव्याप्तिप्रकारकत्वयज्ज्ञानलाभः व्याप्तिहेत्वोः साक्षाद्विशेष्यविशेषणभावेन तद्विषयकत्वयोरनुमितिजनकपरामर्शेऽवच्छेद्यावच्छेदकभावो ऽक्षत एवेति सर्वत्रानुमितौ लक्षणसमन्वयः । एवमपि व्याप्तिपदप्रतिपाद्यविशिष्टार्थाप्रसिद्धिस्थले ऽव्याप्तिरित्याशङ्कते यद्यपीति । वह्निव्याप्येन्धनवानित्याकारकज्ञानविषयसाध्याभाववदवृत्तित्वाभावरूपव्याप्तिरपि हेत्वन्तरे प्रसिद्धैवातो हेतुसमानाधिकरणेत्यादिव्याप्तेर्विशेषशब्देनोल्लेखः अखण्डेत्यनेन व्याप्तिघटकहेत्वादिपदार्थानां खण्डशः प्रसिद्धिमात्रमिति सूचितं तावतैव समाधानमप्युपपत्स्यत इत्यपि । अत्र व्याप्त्यप्रसिद्धिः साध्यतावच्छेदके स्वविशेषणहेतुसमाना-

भिधानमेवोचितमिति वाच्यम् । एवमपि सादृश्यादौ स्वविषयधर्मि ज्ञानितावच्छेदकज्ञानजन्यायां तत्र तत्तन्नवगाहिन्यामुपमितावतिव्याप्तेः । नतु व्याप्तिवैशिष्ट्यघटितलक्षणेऽपि वह्निव्याप्यधूमवत्पर्वतसदृशं महानसमित्यतिदेशवाक्यार्थज्ञानजन्यायामुपमितावतिव्याप्तिर्दुर्वारैवेति चेन्न । एतादृशातिव्याप्तेरुभयपदप्रदानेऽपि सत्त्वात्केवलपक्षधर्मताघटितलक्षणे धूमवत्पर्वतसदृशं महानसमितिविज्ञानजन्योपमितावतिव्याप्तेर्दुर्वारत्वात्तदुपेक्षितम् । केचित्तु साधारणज्ञानजन्यतामादाय संशयातिव्याप्तिवारणमेव पक्षधर्मताघटितलक्षणोपेक्षाबीजमित्याहुः । एतन्मते व्याप्तिवैशिष्ट्यघटितलक्षणेऽपि वह्नितदभावोभयसहचरितधर्मव्याप्यधूमवान् पर्वत इति ज्ञानजन्यसंशयेऽतिव्याप्तिर्दुर्वारैवेति बोध्यम् ।

मिश्राद्युक्तं ज्ञानान्तकर्मधारयपक्षमवलम्ब्य समाधातुमुपक्रमते व्याप्तिविशिष्टमिति ।

( दी० ) व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं तज्जन्यमिति तु स्यात् । यद्यप्यत्रापीन्धनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणेन्धनवानित्यादिपरामर्शजन्येऽव्याप्तिरखण्डव्याप्तेरप्रसिद्धेः भ्रमानुमितेर्लक्ष्यत्वे चात्राकाशमात्मन इत्यादौ सुतरां तथा तथापि तावत्पदार्थानां तथाविधपरस्परोपश्लेषावगाहित्वं विवक्षितम् । न च व्यतिरेकिण्यव्याप्तिः व्यभिचारधीविरोधिधीविषयत्वेनान्वयव्यतिरेकव्याप्त्योरनुगमात् ॥

( गा० ) व्याप्तिविशिष्टत्वं यदि व्याप्त्याश्रयत्वं तदाऽनुमितिजनकज्ञानमात्रस्य न तथात्वमपि तु लिङ्गस्यैवेत्यसङ्गतिरत उक्तमपाचष्टे व्याप्तिप्रकारकमिति । व्याप्तिविशिष्टपदेन प्रकारितारूपवैशिष्ट्यस्य व्याप्तिपदेन वा लक्षणया व्याप्तिप्रकारिता वा विवक्षितत्वादिति भावः । नन्वेवं व्याप्तेः पक्षधर्मताया वा भ्रमजन्यानुमितावव्याप्तिपरीहारेऽपि धूमो वह्निव्याप्यो द्रव्यवान् पर्वतः इत्यादिज्ञानजन्येऽतिव्याप्तिर्दुर्वारैव । अथ , व्याप्ति-

प्रकारकत्वपक्षधर्मताविषयत्वयोरवच्छेद्यावच्छेदकभावाविवक्षणान्नाथ

दोषः विशृङ्खलरीत्या भासमानपदार्थविषयतयोरवच्छेद्याव-च्छेदकभावविरहात् पक्षधर्मताविषयताकत्वावच्छिन्ने ज्ञानरूपोद्देश्ये व्याप्तिप्रकारकत्वस्य विधेयतया तयोरवच्छेद्यावच्छेदकभाव-लाभोऽपि व्युत्पत्तिसिद्ध एवेति चेत् । एवमपि वह्निव्याप्यका-लीनधर्मवानित्यादिज्ञानव्यावर्तनमशक्यं येन सम्बन्धेन यस्य प्रकारता तत्सम्बन्धविषयकत्वेनैव तत्प्रकारकत्वस्यावच्छेद्या-वच्छेदकभावोपगमे पक्षानुयोगिकसम्बन्धस्यानुमितिजनकज्ञाने व्या-प्यस्यैव सम्बन्धतया भानात् तद्विषयकत्वेन व्याप्यप्रकारकत्वस्यै-वावच्छेद्यावच्छेदकभावः स्यान्न तु व्याप्तिप्रकारकत्वस्येत्य-सम्भव एव । एवं यत्र अन्यानुयोगिक एव सम्बन्धो व्या-प्यस्य पक्षांशे भातस्तादृशभ्रमजन्यानुमितावव्याप्तिरपि दुर्वारा ता-दृशभ्रमे वास्तवपक्षानुयोगिकसम्बन्धस्य पक्षधर्मतापदार्थस्या-भानात् पक्षांशे हेतुतावच्छेदकसम्बन्धेन हेतुप्रकारकज्ञानप-र्यन्तं च पक्षधर्मतायाः ज्ञानमिति समासेनावाक्यप्रतिपादन-मिति न तस्य पक्षधर्मताज्ञानशब्दार्थता शब्दव्युत्पत्त्यनादरे चालं समासविशेषमादृत्य व्याख्ययेति । अत्राहुः पक्षे धर्मत-या हेतुतावच्छेदकसम्बन्धेन ज्ञानमिति तृतीयासमासगर्भसप्तमी-समासादरात् पक्षविशेष्यकत्वावच्छिन्नहेतुतावच्छेदकसम्बन्धा-वच्छिन्नप्रकारताकत्वविशिष्टज्ञानं पक्षधर्मताज्ञानपदार्थः पक्षध-र्मतयेत्यत्र तृतीयाया एवावच्छिन्नप्रकारताकत्वार्थकत्वात् तत्र व्याप्तिप्रकारताकत्वान्वये च हेतुनिष्ठनिरुक्तप्रकारकत्वावच्छि-न्नव्याप्तिप्रकारकत्वघज्ज्ञानलाभः व्याप्तिहेत्वोः साक्षाद्विशेष्य-विशेषणभावेन तद्विषयकत्वयोरनुमितिजनकपरामर्शे ऽवच्छे-द्यावच्छेदकभावो ऽक्षत एवेति सर्वत्रानुमितौ लक्षणसम-न्वयः । एवमपि व्याप्तिपदप्रतिपाद्यविशिष्टार्थाप्रसिद्धिस्थले ऽव्या-प्तिरित्याशङ्कते यद्यपीति । वह्निव्याप्येन्धनवानित्याकारकज्ञानविष-यसाध्याभाववदवृत्तित्वाभावरूपव्याप्तिरपि हेत्वन्तरे प्रसिद्धै-वातो हेतुसमानाधिकरणेत्यादिव्याप्तेर्विशेषणपदेनोल्लेखः अत्र-त्येत्यनेन व्याप्तिघटकहेत्वादिपदार्थानां खण्डशः प्रसिद्धि-मात्रमिति सूचितं तावतैव समाधानमप्युपपत्स्यत इत्यपि । अत्र व्याप्त्यप्रसिद्धिः साध्यतावच्छेदके स्वविशेषणहेतुसमाना-

धिकरणाभावप्रतियोगितानवच्छेदकत्वासत्त्वेन । अत्र हेतुव्यापकतावच्छेदकत्वस्येन्धनत्वादौ वह्नित्वावच्छिन्नसामानाधिकरण्यस्य प्रकृतहेतावपि प्रसिद्ध्या व्याप्तिविशिष्टेत्यनेन साध्यतावच्छेदके प्रकृतहेतुव्यापकतावच्छेदकत्वावगाहित्वे सति प्रकृतहेतौ साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यावगाहित्वविवक्षया न दोष इत्यतो व्यापकत्वादिघटकपदार्थानामपि खण्डशो निवेशाय अवृत्तिसाध्यहेतुकस्थलेऽव्याप्तिं शङ्कते भ्रमानुमितेरिति । भ्रमस्य पूर्ववदलक्ष्यत्वमभयादुक्त लक्ष्यत्वे चेति । भावसाध्यकानुमितौ साध्यस्य नियमतो विशेषणतया इदमाकाशवदित्याकारिकैवानुमितिर्बोध्या प्रतिज्ञाजन्यबोधस्यानुमितिसमानप्रकारकत्वनियमेन शब्दलाघवायानाकाशमात्मन इत्युक्तं पुनरपि हेतुव्यापकत्वसाध्यसामानाधिकरण्ययोः खण्डश उपादानेऽपि तथा अव्याप्तिः हेत्वधिकरणसाध्याधिकरणयोरप्रसिद्ध्या हेतुव्यापकत्वसाध्यसामानाधिकरण्ययोरप्रसिद्धेरिति भावः । अत्र भ्रमानुमितेरलक्ष्यत्वेऽपि वास्तवव्यापकत्वावगाहित्वनिवेशे धूमवत्त्वादिना पदार्थान्तरावगाहिधूमव्यापकवह्निसमानाधिकरणधूमवानयमित्यादिज्ञानजन्याया प्रमानुमितावव्याप्तिः धूमाधिकरणाद्यनवगाहनेन तादृशज्ञानस्य वास्तवधूमाधिकरणादिघटितव्यापकत्वाद्यनवगाहित्वादिति तु न शङ्क्यं तथा सति तादृशभ्रमजन्यानुमितावपि प्रमात्मकस्य वह्निव्याप्यधूमवान् पर्वत इत्याकारकवास्तवव्यापकत्वाद्यवगाहिपरामर्शस्य स्वरूपयोग्यतया लक्षणगमनसम्भवात् इदं च जातिघटितयथाश्रुतलक्षणाभिप्रायेण जातिघटितनिष्कृष्टलक्षणस्य प्रमारूपपरामर्शजन्यानुमितिवृत्तिजातिमादाय सर्वत्र लक्षणसमन्वयात् न च परामर्शानुव्यवसायादावतिव्याप्तिवारणाय व्याप्तिप्रकारकपक्षधर्मतानिश्चयत्वावच्छिन्ननिरूपितजन्यताया विवक्षणीयतया धूमादिलिङ्गकपरामर्शस्यापि उक्तभ्रमसाधारण्याय व्याप्त्यादिघटकतावत्पदार्थानां परस्परोपश्लेषावगाहिनिश्चयत्वेनैव जनकत्वस्योपगन्तव्यत्वात् न वास्तवव्याप्त्याद्यवगाहित्वाघटितलक्षणसमन्वयः क्वापीति वाच्यं सर्वत्र विषये भ्रमस्य भ्रमजन्यानुमितेश्चाप्रामाणिकतया यत्साध्यलिङ्गपक्षकपरामर्शो अनुमितिजनकपरामर्शो वा प्रमारूप एव तत्साध्यपक्षलिङ्गकानुमितौ लाघवेन व्याप्तिघटकतत्तत्पदार्थानां खण्डशो

ऽनिवेश्य विशिष्टव्याप्त्यादेरेव विषयितया ऽनुमितिजनकतावच्छेदकत्वोपगमात् तादृशजनकताघटितलक्षणस्य व्याप्तिपदार्थघटितस्य निष्प्रत्यूहत्वात् न च प्रमेयत्वकेवलसामानाधिकरण्यत्वादिना व्याप्त्याद्यवगाहिज्ञानवारणाय तादृशानुमितिजनकतायामपि हेत्वादिपदार्थानां परस्परोपश्लेषावगाहित्वमेवावच्छेदकमुपगन्तव्यमिति वाच्य प्रमेयत्वाद्यवच्छिन्ननिरूपितविषयिताया अनुमितिजनकतावच्छेदकतापर्याप्त्यधिकरणहेत्वादिसाध्यसामानाधिकरण्यान्तपदार्थस्तोमघटितविशिष्टपदार्थप्रतियोगिकसम्बन्धत्वविरहेण विषयितासम्बन्धेन तादृशविशिष्टविषयस्य प्रमेयत्वादिना व्याप्त्याद्यवगाहिज्ञानव्यावर्तकतया ततोऽनुमित्यप्रसङ्गात् स्वरूपतो येषां व्याप्तिघटकता रूपान्तरेण तदवगाहितावत्पदार्थस्तोमात्मकव्याप्तिज्ञानवारणाय स्वरूपतस्तत्प्रकारकत्वनिवेशनस्यावश्यकत्वान्न विशिष्टव्याप्तिनिवेशासम्भव इत्यपि न वाच्य विशेषणानवच्छिन्नतत्तत्पदार्थघटितविशिष्टनिरूपितावैलक्षणविषयिताया एव विषयितात्वेन जनकतावच्छेदकतापर्याप्त्यधिकरणतादृशविशिष्टविषयसम्बन्धतया तादृशविषयेणोक्तज्ञानव्यावृत्तेः अत एव दीधितिकारोऽपि परामर्शग्रन्थे अन्यथाख्यात्यनभ्युपगन्तृमते व्यापकताघटकपदार्थानां खण्डशः परस्परोपश्लेषावगाहित्वमनिवेश्यापि विशिष्टविषयपुरस्कारेण व्यापकताज्ञानहेतुता सम्भवतीति अवृत्तिहेत्वनुरोधेन व्यापकत्वस्यापि खण्डशो निरुक्तिस्तेषां परमतिरिच्यत इत्यनेन दर्शयिष्यति। विशिष्टविषयस्य प्रमानिष्ठजनकतावच्छेदकत्वाभिप्रायेणैव च व्याप्त्यादिप्रकारकत्वमनभिदधानो वह्निव्याप्यधूमवत्पर्वतनिश्चयत्वावच्छिन्नकारणतेत्यादिना जातिघटितलक्षणमभिधास्यते तत्र च वह्न्यादिपद दर्शितसाध्यविशेषपरमित्यल पल्लवितेन । तावत्पदार्थानां तथाविधपरस्परोपश्लेषावगाहित्वमिति। साधनाधिकरणादिपदार्थानाम् अधिकरणाधेयत्वादिपदार्थांशे तत्तत्सम्बन्धावगाहित्वमित्यर्थः । तद्रूपदा तेन सम्बन्धेन तत्तत्प्रकारकत्वमितियावत् तेनात्मादीना समवायसम्बन्धाप्रसिद्धावपि नोक्तभ्रमानुमित्यसंग्रहः हेत्वादिप्रकारतापि हेतुतावच्छेदकावच्छिन्नत्वेनैव निवेश्या अतो धूमत्वादिना धूलीपटलादिभ्रमसंग्रहः । यद्यप्येवम-

पि अधिकरणं धूमवत् वृत्तिरधिकरणीयेत्यादिविशृङ्खलरीत्या तावत्पदार्थराशिमवगाहमाना धीर्न व्यावृत्ता तथापि धूमादिप्रकारतानिरूपितविशेष्यतावच्छिन्ना या अधिकरणप्रकारता तन्निरूपितविशेष्यतावच्छिन्ना या वृत्तित्वप्रकारता इत्यादिरीत्या साध्याधिकरणवृत्तित्वप्रकारतापर्यन्तनिवेशात्तादृशबुद्धेः उक्तसमूहालम्बनतो विशिष्टप्रकारकधियो वैलक्षण्याय तत्रान्तराभासमानाधिकरणादिपदार्थविशेषणनिरूपितविशेष्यत्वविशेष्यान्तरनिरूपितप्रकारत्वयोरवच्छेद्यावच्छेदकभावोपगमात्। केचित्तु एकविशेष्यतापन्नस्य यत्रापरांशे प्रकारता तत्र तन्निष्ठप्रकारताविशेष्यत्वयोरभेद एव तथा च धूमादिप्रकारतानिरूपिता या अधिकरणप्रकारता तन्निरूपिता या वृत्तित्वप्रकारता एवं रीत्यैव निवेशः एवं च एकपदार्थनिष्ठावच्छेद्यावच्छेदकभावापन्नविषयताद्वयनिवेशापेक्षया एकविषयतां निवेश्य कारणतावच्छेदकनिर्वचने लाघवमित्यपि वदन्ति। तच्चिन्त्यं तथा सति रक्तदण्डवत्पुरुषवानयमित्यादिज्ञानानां पुरुषादिप्रकारतानिरूपितदण्डादिविशेष्यताकत्वेन पुरुषाभाववान् दण्ड इत्यादिनिश्चयप्रतिबध्यताप्रसङ्गात् तत्र गत्यन्तरानुसरणे गौरवादिति। एवं तु बोध्यं व्याप्तिघटकसाधनतावच्छेदकादिसकलपदार्थानां विषयताविशेषणत्वेन खण्डशो निवेशो न सर्वत्र आत्मघटितलक्षणस्य साध्यादिभेदेन भिन्नत्वात् सल्लिङ्गजायां कूटलिङ्गजायां वा वह्निमत्साध्यकानुमितौ व्यापकताघटकसाधनतावच्छेदकमारभ्य वह्निविशेषणपर्यन्तांशे प्रमात्मक एव परामर्शो हेतुस्तद्विशेषणविशिष्टपर्यन्तविषयस्य विशिष्टत्वेनैव विषयिताविशेषणतया कारणतावच्छेदकताया लाघवेनोचितत्वात्, सकलपदार्थविषयितानां कारणतानवच्छेदकतया तद्घटितधर्मावच्छिन्नकारणताया लक्षणे निवेशासम्भवात् तथा च तादृशविशिष्टविषयिताघटितधर्मावच्छिन्नकारणताघटितमेव लक्षणं यत्र च व्यापकताघटकसाधनतावच्छेदकांशे भ्रमादप्यनुमितिस्तत्रैव च सकलपदार्थानां खण्डशो निवेश इति मूलस्थव्याप्तिपदमपि लक्षणया निरुक्तप्रकारताविशेषपरं निरूपकत्वमेव च तद्वैशिष्ट्यमतो नोपदर्शितस्थले व्याप्तिपदार्थघटितलक्षणासङ्ग-

तिः अथवा इत आरभ्य यथाश्रुतशब्दार्थपरित्याग एवारब्धः विवक्षणीयस्य व्याप्तिप्रकारकपक्षधर्मतानिश्चयत्वावच्छिन्नजनकताकत्वस्य मूलस्थशब्दव्युत्पत्त्यलभ्यतया तत्परित्यागस्याग्रे आवश्यकत्वात् । न च ज्ञानपदस्य लक्षणया निश्चयत्वावच्छिन्नरूपविशेषपरतया निश्चयत्वावच्छिन्नलाभः । निश्चयत्वेन ज्ञानलाभेऽपि निश्चयत्वावच्छिन्नजनकताया अलाभात् यदि च विशिष्टवैशिष्ट्यविवक्षया तादृशनिश्चयत्वविशिष्टनिरूपितजन्यतालाभेन सामञ्जस्यादित्युच्यते ज्ञानविशेषणतया व्याप्तिप्रकारकत्वादीनामेव लाघवेन जनकतावच्छेदकत्वादभेदसम्बन्धेन व्याप्तिप्रकारकादेरेव च ज्ञानविशेषणतया मूलोक्तशब्दतो लाभेन विवक्षणीयालाभादिति जात्यघटितयथाश्रुतलक्षणे व्यतिरेकिलिङ्गकानुमितावव्याप्तिमाशङ्कते न चेत्यादिना । अव्याप्तिरिति व्यतिरेकिणि चिन्तामणिकारमते व्यतिरेकयोर्व्याप्यव्यापकभावस्यैव गमकतया तत्र व्याप्तिप्रकारेण हेतुमत्ताज्ञानस्य विवक्षणे चान्वयिन्यव्याप्तिर्दुष्टव्या । व्यभिचारधीति । साध्याभाववद्वृत्तित्वधीप्रतिबन्धकतावच्छेदकविषयतात्वेन धूमव्यापकवह्निसमानाधिकरणधूमत्ववन्ह्याद्यभावव्यापकतावच्छेदकानुयोगितानिरूपितप्रतियोगितावच्छेदकधूमत्वविषयत्वे ऽनुगमय्य तादृशविषयताशालिपक्षधर्मतानिश्चयस्य निवेशनीयत्वादित्यर्थः । यथाश्रुतविषयानुगमो नादरणीयः भ्रमासंग्रहात् , रूपान्तरेण व्याप्तिविषयकज्ञानजन्येऽतिप्रसङ्गाच्च प्रतिबन्धकतावच्छेदकविषयताशालिज्ञानस्य तादृशविषयतावद्विषयकत्वेन निवेशस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वाच्च । व्याप्त्यवच्छिन्नहेतुविषयतैव वा व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वेन निवेशनीया तत्प्रतिबन्धकत्वेन पक्षधर्मताज्ञानमेव न कथं निवेश्यत इति चेन्न तथा सति वह्निव्याप्यो धूमो द्रव्यवान् पर्वत इति ज्ञानाव्यावृत्तेः प्रतिबन्धकतावच्छेदकविषयतानिरूपितविशेष्यतावच्छिन्ना या हेतुविषयता तन्निरूपितपक्षविषयताशालित्वेन प्रतिबन्धकतावच्छेदकहेतुविषयतावच्छिन्नतत्प्रकारतानिरूपितपक्षविषयताशालित्वेन वा ज्ञाननिवेशस्यावश्यकत्वात् ।

अत्र व्यापकताज्ञानस्य कथञ्चिद्व्यभिचारधीविरोधित्वेऽपि साध्याभावव्यापकाभावप्रतियोगित्वज्ञानस्य तद्विरोधित्वे माना-

भावः ग्राह्याभावाद्यनवगाहित्वात् हेत्वभावप्रतियोगिकाभावत्वेन हेतौ साध्याभावसामानाधिकरण्यावगाहिनी हेत्वभावे साध्याभावस-मानाधिकरणाभावप्रतियोगित्वमवगाहमानां धियं प्रति तस्यातथा-त्वात् हेत्वभावाभावत्वेन हेतुधर्मिकव्यभिचारधीनिवेशे च हेतुव्यापकसाध्यसामानाधिकरण्यज्ञानासंग्रहः हेत्वभावाभावत्वेन हेतुविषयकतत्समानाधिकरणाभावप्रतियोगित्वग्रहे तेनैव तद्विषय-कतत्समानाधिकरणाभावाप्रतियोगित्वज्ञानस्य प्रतिबन्धकत्वादि-त्याशङ्क्य मणिमन्त्रादिन्यायेन एकविधव्यभिचारधियं प्रति उभयज्ञानस्य प्रतिबन्धकत्वद्वयस्यापक तत्सत्त्वे फलानुत्पा-दनियममाह भवति हीति ॥

(दी०) भवति हि धूमसमानाधिकरणात्यन्ता-भावाप्रतियोगिवह्निसमानाधिकरणधूमत्वे वह्न्यभावव्या-पकीभूताभावप्रतियोगित्वे वा गृहीते नियमतो वह्नि-व्यभिचारधीप्रतिरोधः तथाविधधूमसमानाधिकरणत्वादि-कं तु न तथा रासभादौ तद्ग्रहेऽपि व्यभिचा-रग्रहात् । व्यतिरेकसहचारेणान्वयव्याप्तिग्रहणाश्रयणाद्वा । न च भ्रमसंशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुता-मते तत्रातिव्याप्तिः तथाविधनिश्चयत्वेन हेतुताया विव-क्षितत्वात् विशेषदर्शनस्य च भ्रमादिविरोधित्वेन तत्त्व-मित्युक्तत्वात् ॥

(गा०) रासभादौ धूमव्यापकवह्निसामानाधिकरण्यग्रहेऽपि य-ह्निव्यभिचारग्रहाद्वह्निसमानाधिकरणधूमत्वग्रहानुधावनं वह्निव्य-भिचारधीप्रतिरोधः तद्ग्रहसमानधर्मिकव्यभिचारज्ञानानुत्पादः । नन्वत्र प्रतिबन्धकतावच्छेदकत्वं न स्वरूपसम्बन्धविशेषः व्या-पकसामानाधिकरण्यघटकसाधनाधिकरणांशस्य व्यभिचाराघ-टकतया व्यापकताविषयकत्वस्यैव तद्धियो व्यभि-चारधीविरोधितावीजत्वात् सामानाधिकरण्यविषयतायाः प्र-तिबन्धकतावच्छेदकशरीरे ऽनन्तर्भावेन प्रतिबन्धकताव-

च्छेदकतया धूमव्यापकत्वाविषयतायास्तदवच्छिन्नवह्निविषयताया वा उपादेयतया तादृशविषयतया च समं पक्ष-विशेषणतापन्नहेतुविषयत्वादेर्निरूप्यनिरूपकभावविरहेण दर्शितरूपेण परामर्शनिवेशासम्भवात् अतोऽत्र यादृशान्निपयताकनिश्चयत्वव्यापकं प्रतिबन्धकत्वं तादृशत्वमेव प्रतिबन्धकतावच्छेदकत्वं वाच्यं तथा च धूमव्यापकवह्निसमासमानाधिकरणधूमसामानाधिकरण्यादिविषयकनिश्चयत्वस्यापि धूमधर्मिकव्यभिचारधीप्रतिबन्धकताव्याप्यतया तद्विषयताया अपि तथात्वमक्षतमेवेति वह्निव्याप्यधूमसमानाधिकरणरासभवानितिज्ञानजन्ये ऽतिप्रसङ्गः न च पक्षविशेषणतया भासमानो यादृशो धर्मस्तादृशधर्मांशे व्यभिचारज्ञानमेव विवक्षितमतो नायं दोष इति वाच्यं तादृशरासभवान् धूमवांश्च पक्ष इति समूहालम्बनस्य तावताप्यवारणादित्याशङ्क्य पक्षविशेषणतापन्नहेतोर्यादृशविषयता प्रतिबन्धकतावच्छेदिका प्रतिबन्धकतावच्छेदकविषयतानिरूपिता वा स्वावच्छेदकावच्छिन्नधर्मिकव्यभिचारज्ञानप्रतिबन्धकतावच्छेदकविषयतात्वेन तादृशप्रतिबन्धकतावच्छेदकविषयतानिरूपितत्वेन वा सैव निवेश्येत्याशयेन समाधत्ते तथाविधधूमेति । वह्निव्याप्यधूमसामानाधिकरण्याद्यवच्छिन्नरासभादिविषयत्वं तु न स्वावच्छेदकावच्छिन्नधर्मिकव्यभिचारज्ञानप्रतिबन्धकतावच्छेदकत्वादिमदित्यर्थः एवमपि धूमव्यापकवह्निसमानाधिकरणरासभसमानाधिकरणधूमवानित्यादिज्ञानाव्याप्तिरत आह व्यतिरेकेति । ननु वह्नित्वाद्यवच्छिन्नधर्मिकधूमत्वाद्यवच्छिन्नव्यापकताग्रहत्वेनैव धूमो वह्निव्यभिचारीत्यादिव्यभिचारज्ञानप्रतिबन्धकता लाघवात् आवश्यकत्वाच्च न तु धूमव्यापकवह्निसमानाधिकरणधूमत्वादिरूपव्याप्तिज्ञानत्वेन गौरवात् मानाभावाच्च तथा च तादृशव्याप्तिविषयता न व्यभिचारग्रहप्रतिबन्धकतावच्छेदिका । अथ इदन्त्वाद्यवच्छिन्ने तादृशधूमत्वादिरूपव्याप्तिग्रहे तदवच्छिन्ने व्यभिचारग्रहानुदयात् समानधर्मिकव्यभिचारज्ञानं प्रति तादृशधूमत्वादिरूपव्याप्तिज्ञानत्वेनापि मणिमन्त्रादिवत्पृथक् प्रतिबन्धकता वाच्या तथा च तादृशव्याप्तिविषयताया व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वमक्षतमे-

येति न च धर्मितावच्छेदकतानिरूपकविशेष्यतानिरूपकविरोधिप्रकारताया एव प्रतिबन्धकतावच्छेदकतया, धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववत्त्वान् पक्ष इत्याकारकतादृशधूमत्वघटकव्याप्त्यंशे निर्धर्मितावच्छेदककज्ञानीयतादृशव्याप्तिप्रकारताया व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वासम्भवात्तादृशपरामर्शासंग्रहः। प्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रकारताशालिपक्षधर्मताज्ञाननिवेशे च धूमत्वादिना पक्षधर्मान्तरावगाहिपरामर्शासंग्रहः तादृशप्रकारतावच्छेदकतापर्याप्त्यधिकरणस्य वास्तवधूमादिघटितव्याप्तित्वस्य तादृशज्ञानप्रकारतानवच्छेदकत्वादिति वाच्यं धर्मिविशेष्यतानिरूपितव्यभिचारधीप्रतिबन्धकतावच्छेदकतायां निरूपितत्वसम्बन्धेन यत्प्रकारताया अवच्छेदकत्वं तदवच्छेदकतापर्याप्त्यधिकरणरूपाश्रयीभूतप्रकारताशालित्वेन सकलपरामर्शसंग्रहसम्भवादिति चेत्। तर्हि वह्निव्याप्यधूमसामानाधिकरण्यादिविषयत्वेन किमपराद्धं दर्शितव्याप्तिवत्तद्घटितधर्मान्तराणामपि व्यापकस्य घटितत्वाविशेषात् किमपराद्धं वा धूमत्वाद्यसहितेन धूमव्यापकवह्निसामानाधिकरण्यत्वादिना तत्तद्विषयिताया अपि व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वोपगमे वह्निव्याप्यधूमसमानाधिकरणरासभवानयं धूमव्यापकवह्निसमानाधिकरणरासभवानयमित्यादिज्ञानजन्ये ऽतिप्रसङ्गो दुर्वार इत्याशङ्क्य मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वान्तरकल्पनमप्यनुभवानुरोधेनैव धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादिरूपव्याप्त्यंशग्रहे तद्धर्मितावच्छेदकावच्छिन्ने व्यभिचारधीर्नोत्पद्यत इति निर्विवादानुभवात्तद्ग्रहस्य समानधर्मितावच्छेदकव्यभिचारधीप्रतिबन्धकत्वमावश्यकं वह्निव्याप्यधूमसमानाधिकरणो रासभ इत्याद्विज्ञानदशायां च रासभादौ वह्निव्यभिचारग्रहस्यैवानुभवान्न तथाविधधूमसामानाधिकरण्यज्ञानत्वेनापि प्रतिबन्धकत्वान्तरमिति विशेषमाह भवति हीत्यादिना रासभादौ तद्ग्रहेऽपि व्यभिचारग्रहादित्यन्तेन। ननु धूमव्यापकवह्निसमानाधिकरणधूमत्वादिग्रहविषये यदि व्यभिचारज्ञानानुत्पादोऽनुभवसिद्धस्तदा धाद्गृंभव्यापक इत्यादिज्ञानकालीनकेवलधूमत्वादिग्रहवि-

षयेऽपि तदनुत्पादस्तथा सामानाधिकरण्यांशस्याकिञ्चित्करत्वा-दिति साध्ये धूमादिव्यापकताग्रहकालीनधूमत्वादिग्रहत्वेनैव प्रतिबन्धकत्वमुचितम् वस्तुतो वह्न्यादौ धूमत्वाद्यवच्छिन्नव्याप-कताग्रहदशायां धूमत्वाद्यवच्छेदेन वह्न्यव्यभिचारस्यापि सुग्र-हतया धूमव्यापकवह्निसमानाधिकरणधूमत्वादिग्रहविषये ऽव-च्छेदकधर्मदर्शनरूपप्रतिबन्धकवशादेव न व्यभिचारग्रह इति न तादृशधूमत्वादिग्रहविषयताया व्यभिचारग्रहप्रतिबन्धकतावच्छे-दकत्वमिति नोक्तानुगमः साधीयान् अत आह व्यतिरेकसह-चारेणेतीति व्याचक्रुः । व्यतिरेकसहचारेण अन्वयसहचारग्रहनिर-पेक्षव्यतिरेकसहचारग्रहेणापि । अन्वयेति अन्वयव्याप्तिर्गृह्यत इत्या-चार्यमताश्रयणादित्यर्थः । तथा च व्यतिरेकिण्यपि अन्वयव्याप्तेरेव गमकतया अनुगमासम्भवेऽपि नान्याप्तिरिति भावः । यद्यप्येतन्मतं न विचारसहमित्युपेक्ष्य मणिकृता व्यतिरेकव्याप्तेरनुमित्यौपयिक-त्वं व्यवस्थापितं तथापि जातिघटितलक्षणादरेणाननुगमानिबन्ध-नाव्याप्तेः परिहरणीयतया आपाततस्तन्मतावलम्बनेन समाहितम् । ननु विपरीतभ्रमानन्तरं ग्राह्यसंशयानन्तरं च विना ग्राह्यव्याप्य-वत्ताज्ञानं पुरुषत्वादिनिश्चयो नोत्पद्यते सति तु तस्मिन् जायते अतो ऽन्वयव्यतिरेकाभ्यां विपरीतज्ञानानन्तरप्रत्यक्षनिश्चयत्वाव-च्छिन्नं प्रत्यपि ग्राह्यव्याप्यवत्तानिश्चयत्वेन हेतुता कल्प्यते न च ग्राह्याभावज्ञानेन प्रतिबन्धादेव विपरीतभ्रमाद्यनन्तरम् प्रत्यक्ष-निश्चयानुत्पत्तिनिर्वाहे किं विशेषदर्शनस्य हेतुतयेति वाच्यं विपरीतभ्रमादिसत्त्वेऽपि सति विशेषदर्शने प्रत्यक्षनिश्चयोत्पत्त्या प्रत्यक्षनिश्चये ग्राह्याभावग्रहस्याप्रतिबन्धकत्वात् विपरीतनिश्चय-काले ऽनुमित्यादिवारणाय विपरीतनिश्चयस्य विशिष्टधीविरो-धित्वकल्पनाया आवश्यकत्वेऽपि प्रत्यक्षनिश्चयान्यत्वस्य तत्प्रति-बध्यतावच्छेदकत्वोपगमात् । न च प्रत्यक्षनिश्चयं प्रति विपरी-तज्ञानस्याप्रतिबन्धकत्वे शङ्खो न श्वेत इत्यादिपित्तादिदोषजन्य-विपरीतनिश्चयकाले श्वैत्यव्याप्यशङ्खत्वादिदर्शनाच्छङ्खः श्वेत इ-त्यादिचाक्षुषापत्तिः तादृशदोषस्यैव श्वैत्यादिग्रहप्रतिबन्धकत्वात् यदि च विनष्टेऽपि दोषे तादृशविपरीतनिश्चयसत्त्वे न श्वैत्या-दिप्रत्यक्षं तदास्तु प्रत्यक्षे समानेन्द्रियजन्यदोषविशेषाजन्योपनी-

समानाभिलापविपरीतनिश्चयस्य प्रतिबन्धकत्वम् । एवं शङ्खः श्वेत इति चाक्षुषनिश्चयोत्पत्तौ सत्यां यत्र दोषसमवधानं तत्र तादृशनिश्चयसत्त्वे यदि दोषाच्छङ्खो न श्वेत इति चाक्षुषनिश्चयस्तदा तन्निर्वाहोऽपि समानेन्द्रियजन्यविपरीतनिश्चयस्य प्रतिबन्धकत्वादेव अत एव साक्षात्कारिभ्रमं साक्षात्कारिविशेषदर्शनमेव विरोधीत्यनेन भणितं दोषविशेषजन्यभ्रमे समानेन्द्रियजन्यलौकिकग्राह्याभावज्ञानस्य विरोधिता नान्यविपरीतज्ञानस्येत्यभिधानं सङ्गच्छते चक्षुषा वंशे उरगत्वभ्रमेऽपि त्वचा तत्र तदभावग्रहात्समानेन्द्रियजन्यत्वानिवेशनं शङ्खो न श्वेत इत्यादिनिश्चयानन्तरं सति विशेषदर्शने चाक्षुषसामग्रीविगमे शङ्खः श्वेत इत्यादिमानसज्ञानमिष्यत एव विशेषदर्शनेन तन्निश्चयनाशे विशेषदर्शनेन प्रतिबन्धात्तादृशनिश्चयान्तरस्य चानुत्पत्त्या तादृशमानसोत्पादस्यावश्यकतया तत्पूर्वक्षणे तदनुत्पादोपगमे अनुभवविरोधविरहात् । अस्तु वा तादृशमानसादिसाधारणं लौकिकनिश्चयान्यज्ञानत्वमेवानुमित्यादिसाधारणविपरीतनिश्चयप्रतिबध्यतावच्छेदकं यत्र सत्यपि चक्षुरादेः सन्निकर्षे करादर्शनसहितदूरत्वादिदोषादयं स्थाणुरित्यादिभ्रमस्तत्र करादिदर्शने नायं स्थाणुरित्यादिलौकिकनिश्चयस्तथैव भ्रमोत्तरप्रत्यक्षे विशेषदर्शनहेतुता । अथ तत्र भ्रमोत्पत्तिक्षणे न कथं तादृशलौकिकज्ञानं विपरीतज्ञानोत्तरप्रत्यक्ष एव विशेषदर्शनहेतुतया तदुत्पत्तिक्षणे प्रत्यक्षोत्पत्तेः विशेषदर्शनहेतुताविरहेऽपि दुर्वारत्वात् । यदि च दूरत्वादिदोषेण प्रतिबन्धान्न तदा तदुत्पादापत्तिरिति तदा भ्रमोत्तर विशेषदर्शनात्कथं तदुत्पत्तिः तदापि तद्दोषसत्त्वादिति चेन्न विशेषदर्शनसहितस्यैव दूरत्वादेः प्रतिबन्धकत्वेनोभयोपपत्तेः । अस्तु वा तादृशदोषसमवधानकालीनप्रत्यक्षेऽपि विशेषदर्शनस्य हेतुत्वान्तर विपरीतज्ञानवत्तादृशदोषाणां चाप्रतिबन्धकत्वमिति मते प्रत्यक्षविशेषप्रतिव्याप्तिमाशङ्क्य निराकरोतीति न चेत्यादिना । भ्रमो विपरीतनिश्चयः । एतच्च मत मिश्राणामेवानुमतं न तु प्राच्यानां तैर्विशेषदर्शनाभावविशिष्टसंशयसाधारणविपरीतज्ञानप्रतिबन्धकतामुपगम्य संशयानुत्तरं प्रत्यक्षनिश्चयवारणात् । न च विशेषदर्शनाभावविशिष्टग्राह्याभावज्ञानत्वेन विशिष्टबुद्धिप्रतिबन्धकत्वे बाधनिश्चयकाले लिङ्गपरामर्शरूपविशेषद-

र्शनादनुमित्यापत्तिर्विशिष्टाभावसत्त्वादेवं निश्चयत्वानिवेशात् संशयोत्तरं संशयानुपपत्तिः योग्यतासंशयस्य शाब्दबोधप्रतिबन्धकतापत्तिश्च प्रतिबध्यतावच्छेदके निश्चयत्वप्रवेशेन संशयोत्तरसंशयोपपादने बाधनिश्चयोत्तरमपि संशयापत्तेरिति वाच्यम्। परोक्षज्ञाने बाधनिश्चयस्य प्रतिबन्धकत्वान्तरकल्पनेन बाधनिश्चयदशायामनुमित्यापत्तिवारणात् प्रत्यक्षनिश्चयत्वस्यैव च संशयादिसाधारणविपरीतधीप्रतिबध्यतावच्छेदकतया ग्राह्यसंशयोत्तरं संशयशाब्दबोधाद्युपपत्तेः । न चैवं बाधनिश्चयोत्तरं संशयस्यापत्तिः । अनुमित्यादिसाधारणबाधनिश्चयप्रतिबध्यतावच्छेदकगर्भे प्रत्यक्षनिश्चयान्यत्वस्य प्रवेशनीयतया संशयस्य बाधनिश्चयप्रतिबध्यतोपपत्तेः । न च प्रत्यक्षनिश्चयान्यबुद्धौ विपरीतनिश्चयत्वेन प्रतिबन्धकत्वान्तरस्यैतन्मतेऽप्यावश्यकत्वेन प्रत्यक्षनिश्चये विशेषदर्शनाभावविशिष्टविपरीतज्ञानाभावहेतुताकल्पनापेक्षया विशेषदर्शनस्य लघोर्हेतुत्वकल्पनमेवोचितमिति वाच्यम् । व्याप्तेः सम्बन्धादिभेदेन भिन्नतया व्याप्यदर्शनस्याननुगमेन व्यभिचाराच्चहेतुताकल्पनासम्भवात् । नानाविधविशेषदर्शनाभावकूटविशिष्टविपरीतज्ञानाभावस्य चाननुगतत्वाच्च । अन्यथा अत्रैवान्यत्रापि उत्तेजकहेतुतयातिप्रसङ्गवारणसम्भवेन सर्वत्रोत्तेजकविलयप्रसङ्गात् एवमसत्यपि विशेषदर्शने विपरीतज्ञानासत्त्व इव विपरीतज्ञानसत्त्वेऽपि सामग्रीबलात्प्रत्यक्षसामान्यापत्तिर्दुर्वारैवेति विपरीतज्ञानानुत्तरप्रत्यक्षे संशयसाधारणविपरीतज्ञानाभावस्य विशेषसामग्रीत्वमावश्यकमिति गौरवं न च नानाविधविशेषदर्शनाभावानां विपरीतधीप्रतिबन्धकतावच्छेदकगर्भनिवेशो एकाभावविशिष्टत्वेनैवापराभावस्य निवेशनीयतया तावदभावानां परस्परम् अप्रामाण्यग्रहाभावादिभिश्च समं विशेष्यविशेषणभावे विनिगमनाविरहेण कारणतावाहुल्यमिति तादृशतादृशविशेषदर्शनानन्तरप्रत्यक्षे तादृशविशेषदर्शनानां विपरीतज्ञानानुत्तरप्रत्यक्षे तदभावस्य च पृथक्कारणत्वं युक्तमिति वाच्यम् । आनन्तर्यस्य स्वत्वघटितत्वेन कार्यकारणभावस्य तद्व्यक्तिविश्रामापत्तेः यदि च नानाविधविशेषदर्शनानां विपरीतज्ञानविरोधित्वेनानुगमापेक्षविशेषदर्शनस्यान्यविशेषदर्शनजन्यप्र-

त्यक्षे व्यभिचार इति न तज्जन्यतावच्छेदककोटावानन्तर्यनिवेशनम् । अत एवावच्छेदकधर्मदर्शनस्यापि संग्रह इत्युच्यते तदाऽपि विपरीतज्ञानानुत्तरप्रत्यक्षे विशेषदर्शनस्य व्यभिचारवारणाय विपरीतज्ञानाव्यवहितोत्तरत्वस्य विशेषदर्शनजन्यतावच्छेदकगर्भे प्रवेशं निवेशनीयतया विशेषदर्शनजन्यतावच्छेदकस्य तत्तद्व्यक्तिविश्रामो दुर्वार एव विपरीतज्ञानप्रतिबध्यतावच्छेदकशरीरेऽव्यवहितोत्तरत्वप्रवेशस्यावश्यकतया तदननुगमात्तदभावजन्यतावच्छेदकस्य तत्तद्विपरीतज्ञानाव्यवहितोत्तरत्वाभावकूटगर्भत्वाद्गौरवं दुर्वारमेव । यत्तु विशेषदर्शनजन्यप्रत्यक्षं व्याप्यधर्मविशिष्टधर्मिविशेष्यकमेव तदनुत्तरं तु न तथा तथा च तथात्वातथात्वयोर्विशेषदर्शनाविपरीतज्ञानाभावजन्यतावच्छेदकप्रवेशेनैव व्यभिचारवारणे नानन्तर्यप्रवेश इति । तदपि न करादिमान् पुरुष इत्यादिनिश्चयकालीनकरादिमत्त्वनिश्चयरूपावच्छेदकधर्मनिश्चयस्य पुरुषत्वादिनिश्चायकतया तज्जन्यनिश्चये विपरीतज्ञानाभावव्यभिचारस्यानन्तर्यमनिवेश्य दुर्वारत्वात् करादिमत्त्वावच्छिन्नविशेष्यकत्वस्य विपरीतज्ञानाभावजन्यतावच्छेदकत्वे करादिमान् पुरुष इत्यादिनिश्चयशून्यकालीनकरादिमत्त्वाप्रमोत्तरजातस्य करादिमानयं पुरुष इत्यादिप्रत्यक्षस्यासंग्रहप्रसङ्गात् । यत्तु विपरीतज्ञानविरोधित्वेनैव विशेषदर्शनादीनां हेतुता तत्त्वं च विपरीतज्ञानाव्यवहितपूर्वत्वशून्यक्षणवृत्तित्वविशिष्टत्वम् । तदवच्छिन्नं च निश्चयपूर्वं सर्वत्रैव सुलभमिति सामान्यतो निश्चयत्वमेव तज्जन्यतावच्छेदकमिति विपरीतज्ञानानुत्तरप्रत्यक्षे तदभावहेतुतापि नास्ति । न चैवं विशेषदर्शनोत्पत्तिकाले संशयाद्यनुत्पत्त्या तत्पूर्वक्षणेऽपि उक्तकारणसत्त्वाद्विशेषदर्शनानन्तरमिव तदुत्पत्तिक्षणेऽपि निश्चयो जायतामिति वाच्यम् । इष्टत्वात् । न च यत्र संशयाद्यनन्तरम् असत्यपि विशेषदर्शने न संशयादिस्तत्र तन्निश्चयापत्तिरिति वाच्यं विपरीतकोटिभाननिवर्तकविशेषदर्शनाद्यसत्त्वे उपस्थिततत्कोटिज्ञानोत्पत्तेर्बाधकविरहेणावश्यकत्वादिति । तदप्यसत् । अव्यवहितपूर्वत्वस्य तत्तद्व्यक्तिघटिततया गौरवादिति । एवं विशेषदर्शनानां हेतुत्वं दीधितिकाराणामप्यनुमतं संशयोत्तरं विशेषदर्शनासत्त्वे संशयजनककोटिद्वयोपस्थितिधर्मिज्ञानादिघटितसामग्रीबलात्संशयस्यैवोत्पादेन संशयान्यज्ञानत्व-

रूपानिश्चयत्वावच्छिन्नापत्त्ययोगात् । तत्सामग्र्यभावसहितज्ञानसामान्यसामग्र्या एव तज्ज्ञानान्यज्ञानत्वावच्छिन्नोत्पत्तिप्रयोजकत्वात् । अथैवं संशयसामग्र्यभावस्य निश्चयोत्पत्तावपेक्षणे संशयप्रयोजकविशेषदर्शनस्याभावो विशेषदर्शनं तन्निश्चये हेतुरित्यायातामितिचेन्न । तत्प्रयोजकाभावस्य तदन्यत्वावच्छिन्नाजनकस्यापि तदन्यत्वावच्छिन्नोत्पत्तिप्रयोजकत्वात् । अन्यथा पटज्ञानान्यघटज्ञानत्वावच्छिन्नोत्पत्तावपेक्षितस्य पटादिज्ञानसामग्र्यभावस्य पटज्ञानान्यज्ञानत्वावच्छिन्नहेतुताप्रसङ्गात् विपरीतनिश्चयानन्तरं च तेन प्रतिबन्धादेव न प्रत्यक्षं विपरीतनिश्चयस्य प्रत्यक्षसाधारणलौकिकसन्निकर्षाद्यजन्यविशिष्टबुद्धित्वावच्छिन्नं प्रत्येव प्रतिबन्धकत्वात् विपरीतनिश्चयानन्तरं विशेषदर्शनेऽपि तन्नाशानन्तरमेव प्रत्यक्षं जायते यत्तु भूतले घटो नास्तीतिशाब्दादिनिश्चयानन्तरं लौकिकसन्निकर्षवशाद्घटावगाही तत्संशयः कथं नोत्पद्यते लौकिकसन्निकर्षाजन्यतज्ज्ञानस्यैव तदभावनिश्चयप्रतिबध्यत्वादतो लौकिकीनर्णयान्यतज्ज्ञाज्ञानत्वं तदभावनिश्चयाभावजन्यतावच्छेदकं वाच्यम् । एवमपि यादृशसामग्रीबलाल्लौकिकप्रत्यक्षे घटो भासते तत्सहितघटाभावोपस्थित्यादिसहितघटाभावभानसामग्रीतो बाधकाले संशयापत्तिर्दुर्वारैवेति निश्चयेऽपि विशेषसामग्र्यन्तरं कल्पनीयम् । तच्च निरुक्तविपरीतज्ञानविरोधित्वावच्छिन्नमेवेति विशेषदर्शनस्यापि तेन रूपेण हेतुत्वमायातीति । तदसत् लौकिकसामग्र्या बलवत्या विपरीतकोटिभानप्रतिबन्धकत्वात् उक्तसंशयापत्त्ययोगात् । तत्प्रतिबन्धकत्वाकल्पने उक्तबाधनिश्चयानन्तरलौकिकसन्निकर्षाद्यत्र वास्तवो घटादिनिश्चयस्तत्र घटाभावभानप्रतिबन्धकासत्त्वेन तज्ज्ञानापत्त्या संशयापादनस्य ब्रह्मणोऽपि दुर्वारत्वादिति विशेषदर्शनहेतुतायां विवादान्मत इत्युक्तम् । संशयोत्तरप्रत्यक्षनिश्चये विशेषदर्शनहेतुत्वे घटादिप्रकारकमानसेच्छाविरहविशिष्टघटाभावादिशाब्दसामग्र्या योग्यतासंशयात्मकघटादिसंशयघटिताया घटादिमानसं प्रति प्रतिबन्धकत्वं न कल्प्यत इति लाघवं तदानीं घटाभावादिमानसे तादृशशाब्दसामग्र्याः प्रतिबन्धकतया मानसघटादिसंशयस्य विशेषदर्शनरूपकारणविरहेणैव च घटादिमानसनिश्चयस्य च वारणसम्भवात् विशेषदर्शनसत्त्वे च

तस्य विपरीतकोटिशाब्दधीप्रतिबन्धकत्वात् सामग्न्यभावाच्चाप्रत्यक्ष मानसमिति केचित् मिश्रमतं परिष्कुर्वन्ति । ननु दीधितिकारमतेऽपि व्याप्यपक्षधर्मिनिश्चयस्य विशेषणज्ञानादिविधया तदुत्तरप्रत्यक्षे हेतुतया तथाविधनिश्चयत्वेन हेतुत्वाविवक्षादशायां ताद्दृशप्रत्यक्षेऽतिव्याप्तेरावश्यकत्वाद्विशेषदर्शनस्य हेतुतामत इत्यभिधानमयुक्तमिति चेन्न निश्चयत्वेन हेतुत्वविवक्षणे मिश्रान्यमते नातिव्याप्तिर्मिश्रमते च ताद्दृशनिश्चयत्वेनापि प्रत्यक्षविशेषे हेतुत्वेत्याशयेन तथाभिधानात् । अत्र च ताद्दृशनिश्चयत्वेन हेतुताविवक्षामात्रेण न समाधानम् । अपि तु तद्विवक्षया प्रत्यक्षे ताद्दृशनिश्चयत्वेन हेतुताविरहप्रदर्शनेन चेति सामञ्जस्यात् । अथवा ताद्दृशनिश्चयजन्यतावच्छेदकानुभवत्वव्याप्यजातिमत्त्वविवक्षणे नान्यमतेऽतिव्याप्तिरित्याशयेन विपरीतज्ञानोत्तरप्रत्यक्षत्वावच्छिन्नं प्रति विशेषदर्शनहेतुतामतेऽतिव्याप्त्यभिधानम् । विशेषदर्शनस्य चेति । चस्त्वर्थे भ्रमादिविरोधित्वेन ग्राह्याभावविरोधित्वेन । तत्त्वम् प्रत्यक्षविशेषहेतुत्वम् । उक्तत्वादिति । विशेषदर्शनत्वरूपेण हेतुत्वे अन्धकारे घटसंशये आलोकसमवधानात्तन्निश्चयानुपपत्तिः । एवं कुङ्कुमादौ तैलसंयोगादिरूपव्यञ्जकविरहाधीनसौरभादिसन्देहानन्तरं व्यञ्जकसमवधानेऽपि तन्निश्चयानुपपत्तिः । न चालौकिकत्वस्य विशेषदर्शनजन्यतावच्छेदकत्वोपगमान्नेयमनुपपत्तिः । तत्र तत्र घटसौरभादेर्लौकिकप्रत्यक्षस्यैव विशेषदर्शनं विनोत्पत्तेरिति वाच्यम् । लौकिकसन्निकर्षवत्यपि यत्र विशेषादर्शनसहितदूरत्वादिदोषप्रयुक्तः पुरुषत्वादिसंशयः तत्र विशेषदर्शने सत्येव लौकिकप्रत्यक्षोत्पत्तेर्विशेषदर्शनजन्यतावच्छेदकरूपेण लौकिकस्यापि प्रत्यक्षस्य संग्राह्यत्वात् । अत एव विशेषदर्शिनामनुमितिसामग्रीसत्त्वादनुमितिरेव भविष्यति न प्रत्यक्षमिति कथं तस्य प्रत्यक्षहेतुतेत्याक्षिप्य समानविषये प्रत्यक्षसामग्न्या बलवत्त्वमिति प्रत्यक्षमेव जायते नानुमितिरिति मणिकारेण समाहितमुत्पत्तिवादे । विशेषदर्शनस्यालौकिकप्रत्यक्षमात्रहेतुत्वे ताद्दृशप्रत्यक्षसामग्न्या अनुमितिसामग्र्यपेक्षया हीनबलत्वापत्तेः । यदि च विपरीतज्ञानोत्तरप्रत्यक्षानिष्ठविशेषदर्शनजन्यतावच्छेदकशरीरे लौकिकत्वनिवेशेऽपि

न क्षतिः । दूरस्थे धर्मिणि पुरुषत्वादिसन्देहोत्पत्तिक्षण एव लौकिकसन्निकर्षात्तन्निश्चयवारणाय दूरत्वादिदोषसमवधानकालीनप्रत्यक्षेऽपि विशेषदर्शनहेतुताया आवश्यकत्वं तत एव दूरस्थे धर्मिणि संशयोत्तरमपि विशेषदर्शनं विना पुरुषत्वादिनिश्चयवारणसम्भवादित्युच्यते तदापि सम्बन्धादिभेदभिन्ननानाविधव्याप्त्यवगाहिविशेषदर्शनावच्छेदकधर्मदर्शनसाधारणविशेषदर्शनत्वस्याननुगतस्याभावाच्च तेन रूपेण हेतुतासम्भव इति विपरीतज्ञानविरोधित्वमेवानुगमकं वाच्यमिति भावः । अथ यदि आलोकसंयोगादिसाधारण्यं विपरीतज्ञानाविरोधित्वस्य तदा तत्कथमुपपद्यतां घटवद्भूतलादावालोकसंयोगसत्त्वेऽपि तत्र चक्षुःसंयोगाद्यसत्त्वे तत्सत्त्वेऽपि च दूरत्वादिदोषाद्घटादिसंशयोत्पत्त्या आलोकसंयोगत्वेन विपरीतज्ञानाविरोधित्वात् । अस्तु वा लौकिकप्रत्यक्षकारणान्तरसहितालोकसंयोगत्वेन तथात्वं तथापि तस्यात्मनिष्ठोऽन्यः सम्बन्धो ऽन्यश्च विशेषदर्शनस्येति उभयोरनुगतकारणतावच्छेदकसम्बन्धो दुर्वच इति चेन्न । लौकिकप्रत्यक्षकारणालोकसंयोगादिसमवहितात्ममनोयोगस्यैवात्मनिष्ठप्रत्यासत्तस्य विपरीतज्ञानविरोधित्वोपगमेन तत्साधारणतद्रूपावच्छिन्नस्य विशेषदर्शनस्य समवायसम्बन्धेनैव हेतुतासम्भवादित्यलमधिकेन ॥

तथाविधनिश्चयत्वेन हेतुताविवक्षणस्य प्रयोजनान्तरमपि दर्शयति अत एवेति ।

( दी० ) अत एव लिङ्गवत्त्वादिलक्षणातिदेशवाक्यार्थज्ञानजन्योपमितौ नातिव्याप्तिः तथाविधवाक्यार्थप्रतिसन्धानत्वेन तस्य हेतुत्वात् । न चोपनयार्थज्ञानजन्यन्यायार्थज्ञाने तच्छब्देन सङ्केतितशब्दान्तरेण वा व्याप्त्यादिविशिष्टोपस्थितिद्वारा जनिते शाब्दबोधेऽतिव्याप्तिः व्युत्पादयिष्यते च महावाक्यार्थज्ञानस्यावान्तरवाक्यार्थधीजन्यत्वं तदादेश्च विशेषरूपेणोपस्थापकत्वमिति वाच्यं । तत्रातिरिक्तस्य पदजन्यत्वस्य कारणतावच्छेदकेऽनुप्रवेशान्निश्चयत्वस्याप्रवेशाच्च ॥

(गा०) लिङ्गवरत्यादिलक्षणः वह्निव्याप्यधूमवत्त्वादिघटितो योऽतिदेशवाक्यार्थः सादृश्यविशिष्टे पदविशेषवाच्यत्वादिबोधकवाक्यप्रतिपाद्यो योऽर्थः तद्विषयकं यज्ज्ञानं वह्निव्याप्यधूमवत्पर्वतसदृशो महानसपदवाच्य इत्यादिज्ञानं तज्जन्यायामयं महानसपदवाच्य इत्याद्युपमितौ वस्तुगत्या साध्यव्याप्यत्वावच्छिन्नहेतुप्रकारकं पक्षविशेष्यकं यत्तादृशं ज्ञानं तज्जन्यत्वेऽपि नातिव्याप्तिरित्यर्थः । तथाविधवाक्यार्थेति । महानसपदवाच्यत्वविशिष्टवह्निव्याप्यधूमवत्पर्वतसादृश्याद्यवच्छिन्नधर्मिज्ञानत्वेनेत्यर्थः । यद्यपि भ्रमसाधारण्याय तादृशविशिष्टवाक्यार्थघटकतत्तत्पदार्थानां परस्परोपश्लेषावगाहिज्ञानत्वेनैवोपमितिविशेषे हेतुताया वक्तव्यतया पक्षांशे व्याप्तिप्रकारेण हेतुमत्तावगाहिज्ञानत्वरूपमुपमितिजनकतावच्छेदकं तथापि पक्षांशे व्याप्याभावानवगाहितादृशहेतुमत्तावगाहिज्ञानत्वरूपमनुमितिजनकतावच्छेदकव्याप्यवत्पक्षनिश्चयत्वं नोक्तोपमितिजनकतावच्छेदकम् । अतिदेशवाक्यार्थज्ञाने व्याप्यवत्त्वस्य धर्मितावच्छेदककोटिनिविष्टतया भानाद्धर्मितावच्छेदकघटकांशे च संशयस्यानभ्युपगमात् उपमितिजनकतायां तादृशनिश्चयत्वानिवेशस्यानर्थक्यादतो न तादृशरूपावच्छिन्नजनकताकत्वरूपानुमितिलक्षणस्य तत्रातिव्याप्तिः अत एव निश्चयत्वनिवेशनमप्यर्थवत् । अन्यथा निश्चयत्वेनानुमितिजनकत्वेऽप्यधिकं स्वित्यादिन्यायादनुमितिजनकतायाः पक्षविशेष्यकव्याप्यवत्ताज्ञानत्वावच्छिन्नत्वात् तादृशज्ञानत्वावच्छिन्नजनकताकत्वनिवेशमात्रेण भ्रमादिविरोधित्वावच्छिन्नहेतुताकप्रत्यक्षविशेषे ऽतिव्याप्तिवारणसम्भवेन तदानर्थक्यमापद्येत । वस्तुतस्तु वह्निव्याप्यवत्त्वेन पर्वतसदृशो महानसपदवाच्य इत्यतिदेशवाक्यार्थज्ञानसहकृतव्याप्यवत्ताघटितसादृश्यज्ञानजन्यायामुपमितौ जनकतावच्छेदककोटौ व्याप्यांशे पर्वतादिवृत्तित्वावगाहित्वस्याधिकस्य निवेशेऽपि धर्म्यंशे व्याप्यवत्त्वावगाहिनिश्चयत्वरूपानुमितिजनकतावच्छेदकावच्छिन्नहेतुताकत्वस्य तादृशोपमितावक्षतत्वादतिव्याप्तेर्वारणाय तादृशनिश्चयत्वपर्याप्तहेतुतावच्छेदकताकत्वपर्यन्तविवक्षणमावश्यकम् । तथा चानुमितिजनकतावच्छेदकता यादृशसमुदाये पर्याप्ता तादृशसमुदा-

यस्यैव लक्षणे निवेशनमावश्यकम् । अन्यथा समुदायपर्याप्तावच्छेदकताया एकदेशापर्याप्ततया असम्भवापातात् । अत एवोक्तनिश्चयत्वघटकाभावदलस्यापि सार्थकता । एवं चाप्रामाण्यज्ञानानास्कन्दितत्वस्य कारणतावच्छेदकतामते तदंशोऽपि लक्षणे निवेशनीयः । न च सादृश्यज्ञानस्योपमितिहेतुतायां पर्वतादिवृत्तित्वावच्छिन्नव्याप्यादिविषयता पर्वतादिवृत्तित्वावच्छिन्नविषयतात्वेनैव निवेश्या न तु व्याप्यादिविषयतात्वेन प्रयोजनाभावात् । तथा चानुमितिजनकतावच्छेदकधर्मस्योक्तोपमितिजनकतावच्छेदककोटिनिवेशोऽपि नास्ति किं पर्याप्तिनिवेशेनेति वाच्यम् । व्याप्यवत्त्वघटितसादृश्यावच्छिन्नधर्मिकातिदेशवाक्यार्थज्ञानस्य तदघटितसादृश्यज्ञानसहकारेण फलजनकतयोभयत्र सादृश्यात्मकधर्माणां विशिष्यावश्यं निवेशनीयत्वात् । न च पर्याप्तिविवक्षायामपि धूमव्यापकवह्निमत्सादृश्यात्मकतादृशवह्निमद्वृत्तिधूमवत्तानिश्चयजन्योपमितावतिव्याप्तिर्न शक्यते वारयितुमिति वाच्यं । सादृश्यघटकभेदविषयताया अपि प्रवेशेन विवक्षितनिश्चयत्वे तत्कारणतावच्छेदकतापर्याप्तिविरहात् । लाघवाद्भेदाघटितसादृश्यज्ञानमेवोपमितौ कारणमिति तु न शङ्क्यम् । तथा सति गवादावपि तादृशसादृश्यनिश्चयसत्त्वेन गवयादिपदवाच्यत्वोपमित्यापत्तेः । यदि च वैधर्म्यज्ञानादप्युपमितिः स्वीक्रियते वैधर्म्यस्य चेतरवैधर्म्यत्वेन ज्ञानं नापेक्ष्यते तदा व्याप्यधर्मरूपवैधर्म्यज्ञानजन्योपमितावतिव्याप्तिः कारणतावच्छेदकतापर्याप्तिनिवेशेऽपि दुर्वारैवेति तद्वारणप्रकारश्चिन्त्यः । महावाक्यार्थविषयकशाब्दबोधे ऽवान्तरवाक्यार्थविषयकनिश्चयस्य तादृशनिश्चयत्वेनैव हेतुता । एवं विशिष्टपदार्थगोचरशाब्दबोधेऽपि विशिष्टपदार्थोपस्थितेस्तद्विषयकनिश्चयत्वेनैव हेतुता न तु विशेषणान्तरप्रवेश इत्यभिमानेन शाब्दबोधविशेषेऽतिव्याप्तिं शङ्कते न चेत्यादिना । उपनयार्थज्ञानेति । उपनयवाक्यप्रतिपाद्यसाध्यव्याप्यहेतुमत्पक्षरूपावान्तरवाक्यार्थज्ञानेत्यर्थः । न्यायार्थज्ञान इति । निगमनसहकृतोपनयजन्ये वह्निव्याप्यधूमवानयं धूमज्ञानज्ञाप्यवह्निमानित्यादिमहावाक्यार्थज्ञान इत्यर्थः । तेन प्रतिज्ञादिपञ्चवाक्यात्मकन्यायस्य विशिष्टैकार्थज्ञापकतायाः स्वयं दूषणीयत्वेऽपि न क्षतिः । यद्यपि वह्नि-

न्तरवाक्यार्थज्ञानं विना तद्घटितमहावाक्यार्थज्ञानानुदयात् अवान्तरवाक्यप्रतिपाद्यो यादृशविशिष्टार्थः तद्विषयकज्ञानत्वेन महावाक्यार्थज्ञाने हेतुत्वमावश्यकमिति वाच्यम्। दण्डी कुण्डली वासस्वी चैत्र इत्यादौ दण्डादिविशेषणान्वितचैत्रादिज्ञानं विनैव तादृशवाक्यार्थघटिततावद्विशेषणान्वितविशिष्टरूपमहावाक्यार्थधियः समूहालम्बनरूपतावत्पदार्थावगाहिस्मृतित उत्पत्तेर्मणिकृता स्वीकारादित्यत आह व्युत्पादयिष्यत इति। महावाक्यार्थज्ञानस्य एकविशिष्टार्थेनापरपदार्थसंसर्गावगाहिज्ञानस्य। अवान्तरेति। तादृशविशिष्टार्थविषयकज्ञानत्वावच्छिन्नजन्यत्वमित्यर्थः। अयं भावः। यादृशविशेषणविशिष्टस्य विशेष्यस्य विशेषणस्य वा शब्दादुपस्थितिस्तादृशेनैव विशिष्टेन विशेष्यस्य विशेषणान्तरस्य वान्वयबोधोऽनुभवसिद्धः यत्र च युगपदेवैकस्मिन्धर्मिणि समूहालम्बनोपस्थितानां विशेषणानां तुल्यतया भानाभ्यासावेकविशेषणविशिष्टे विशेषणान्तरवैशिष्ट्यबोधः अतो न तत्र विशेषणविशिष्टविशेष्योपस्थितेरपेक्षा एकविशेषणविशिष्टे विशेषणान्तरवैशिष्ट्यं विशेष्ये वा यत्र विशेषणान्तरविशिष्टस्य वैशिष्ट्यं भासते स बोधो विशिष्टविषयकबोधादेवोत्पद्यते न तु विशृङ्खलसमूहालम्बनात्। अत एवेष्टविशेष्यकोपायसाध्यताज्ञानस्य प्रवर्तकतामाशङ्क्य तन्मते विधिवाक्याद्वाच्यभेदभिया कृतिसाध्ययागसाध्यमिष्टमित्येतादृशस्य समूहालम्बनविलक्षणविशिष्टयागविशेषणकबोधस्यैव स्वीकार्यतया तद्धर्मन्तरा कृतिसाध्यो याग इत्यवान्तरवाक्यार्थबोधस्य कल्पनीयतया गौरवम् उपायविशेष्यकफलसाधनताबोधस्य प्रवर्तकत्वे चास्त्येवैकत्र द्वयमिति रीत्या कृतिसाध्यत्वेष्टसाधनत्वरूपविशेषणद्वयावगाही यागः कृतिसाध्य इष्टसाधनमिति बोधः स्वीक्रियते इति लाघवमित्युक्तं विधिवादे मणिकारेण। विशिष्टेन सममन्यान्वयबोधे विशिष्टधियो हेतुत्वे तादृशान्वयतात्पर्यधीघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतायां विशिष्टविषयकैकोपस्थितिर्निविशते अन्यथा तत्स्थाने तत्तद्विशेषणविशेष्योपस्थितिद्वयमतो लाघवादपि तद्धेतुतासिद्धिः। एवं चोपनयप्रतिपाद्यहेतुविशिष्टपक्षविशेष्यकेतरान्वयबोधेऽतिव्याप्तिर्दुर्वारैवेति। ननु तदादेर्विशेषरूपेणोपस्थापकताया विचारासहत्वात्कथं तदादिपदजन्यज्ञा-

ब्दबोधेऽतिव्याप्तिसङ्गतिः तथाहि तदादिपदस्य न घटत्वादिरूपविशेषधर्मविशिष्टे शक्तिर्नानार्थतापत्तेर्गौरवाच्च । घटादिकं बुद्धिस्थीकृत्य प्रयुक्ततच्छब्दात्पटादिबोधस्य शक्तिभ्रममन्तरेणापि प्रसङ्गात् । न च वस्तुगत्या यद्रूपावच्छिन्नं बुद्धिस्थीकृत्य यत्पदव्यक्तिः प्रयुक्ता तद्रूपावच्छिन्ने तस्याः शक्तिरतो नायं दोष इति वाच्यम् । एवमपि पदव्यक्तिभेदेनानन्तशक्तिकल्पनया गौरवात् । यत्पदव्यक्तिप्रयोज्या प्रयोज्यवृत्तिर्नोपलब्धा तत्पदव्यक्तिशक्तेरगृहीतत्वेन ततोऽन्वयबोधानुपपत्तिश्च अतः सामान्यतः स्वप्रयोक्तृपुरुषबुद्धिस्थे तदादिपदसामान्यशक्तिः कल्पनीया । तथा च तस्यैवोपस्थितिः सर्वनामपदाद्भविष्यति न तु विशेषरूपेण । न च बुद्धिस्थत्वेन शक्यानुगमेऽपि तेन रूपेण व्युत्पत्तौ सत्यां घटत्वादिरूपविशेषधर्मपुरस्कारेण बुद्धिस्थत्वरूपविशेषधर्मदर्शनानुपलक्षणीभूतघटत्वादिप्रकारेण शक्तिग्रहसम्भव इति, तेन रूपेण न तत्पदादुपस्थितिर्दुर्लभा सम्बन्धग्रहप्रकारताया एव स्मृतिप्रकारताप्रयोजकतया प्रकारांशे शक्तिग्रहानपेक्षणादिति वाच्यम् । द्रव्यादिपदाद् घटत्वादिप्रकारेण शक्तिभ्रमशून्यस्य शाब्दबोधानुदयात्तच्छक्त्यधीनोपलक्षणीभूतधर्मप्रकारकोपस्थितेः शाब्दबोधानुपयोगित्वादित्यत आह तदादेश्चेति । विशेषरूपेणोपस्थापकत्वं व्युत्पादयत इत्यनुषङ्गेणान्वयः । अयमभिप्रायः । स्वप्रयोक्तृबुद्धिप्रकारत्वेनानुगतीकृतघटत्वादिरूपविशेषधर्मविशिष्टे तत्पदशक्तिरतो न विशेषणभेदेन शक्त्यानन्त्यं न वा विशेषधर्मप्रकारकशाब्दबोधोपयोगिविशेषधर्मप्रकारकोपस्थितेर्दुर्घटता । न च तादृशबुद्धिविषयत्वविशिष्टे शक्त्यैवोपपत्तौ किमेतावता प्रयासेन विशेषरूपेणोपस्थापकतया विरहेऽपि क्षतिविरहादिति वाच्यम् । विशेषधर्मप्रकारकसंशयनिवृत्त्यर्थमपि तदादेर्विशेषरूपेणोपस्थापकताया अवश्योपपाद्यत्वात् । बुद्धिप्रकारत्वेन प्रवृत्तिनिमित्तघटत्वादीनामननुगमेऽपि तादृशधर्मस्याशक्यतया तदंशपरित्यागेन निर्विशेषणकघटत्वादिप्रकारकबोधोपपत्तिः बुद्धिप्रकारत्वस्याशक्यत्वेऽपि च तत्पदं बुद्धिप्रकारविशिष्टं बोधयत्वित्याकारकसङ्केतरूपशक्तौ तेनानुगतरूपेण घटत्वपटत्वादिभानाच्छक्यैक्यं बुद्धिप्रकारत्वस्य सङ्केतविषयत्वेऽपि तस्य शक्यांशलक्षणता

न तु शक्यान्तर्भावेन विशेषणत्वं तदुपलक्षितघटत्वादिप्रकारक-त्वेनैव बोधस्य सङ्केतविषयत्वात् न तु तद्विशिष्टप्रकारकत्वेन शाब्दबोधप्रकारतायां शाब्दबोधविषयतावच्छेदकत्वेन सङ्केत-विषयत्वज्ञानं प्रयोजकं यथा घटपदजन्यशाब्दबुद्धिप्रकारतायां घटत्वावच्छिन्नो घटपदजन्यशाब्दबोधविषयतावान्भवत्वित्याकारक-सङ्केतीयशाब्दबोधविषयतावच्छेदकत्वेन विषयत्वस्य ज्ञानं ताह-शसङ्केतग्रहश्च घटत्वावच्छिन्नत्वविषयतानिरूपितसङ्केतीयशाब्दबो-धविषयत्वप्रकारतानिरूपितविषयतावान्घट इत्याकारकः । शाब्दबो-धप्रकारतावच्छेदकतायां च शाब्दबोधविषयतावच्छेदकतावच्छे-दकत्वेन सङ्केतविषयत्वज्ञानम् । यथा लोमत्वस्य पशुपदजन्यशाब्द-बोधप्रकारतावच्छेदकतायां लोमत्वावच्छिन्नलोमावच्छिन्नः पशु-पदजन्यशाब्दबोधविषयतावान्भवत्वित्याकारकसङ्केतीयशाब्दबोध-विषयतावच्छेदकतावच्छेदकत्वेन विषयत्वज्ञानं ताहशसङ्केतग्रहश्च लोमत्वावच्छिन्नत्वनिष्ठावच्छेदकताकत्वसम्बन्धावच्छिन्नलोमनिष्ठ-प्रकारतानिरूपितविशेष्यतावच्छिन्ना या शाब्दबोधविषयत्वप्रकारता तन्निरूपितविशेष्यतावाल्लोमादिमानित्याकारकः । प्रकृते च बुद्धि-प्रकारताश्रयावच्छिन्नस्तत्पदजन्यशाब्दबोधविषयो भवत्वित्याका-रकभगवत्सङ्केतीयशाब्दबोधविषयतावच्छेदकत्वेन विषयत्वं न बुद्धिप्रकारत्वस्य किं तु तदंशे सङ्केतेन शाब्दबोधविषयतावच्छे-दकतासामानाधिकरण्यस्यैवावगाहनात् सङ्केतीयशाब्दबोधवि-षयतावच्छेदकतासमानाधिकरणत्वेनैव विषयत्वमिति तस्य त-त्पदजन्यशाब्दबोधप्रकारतानवच्छेदकत्वनिर्वाहः । इदं च विशि-ष्टशक्तपदस्थल उपलक्षितवाचकगगनादिपदस्थले च यद्धर्म धर्मितावच्छेदकीकृत्य शाब्दबोधविषयत्वेन सङ्केतविषयत्वग्रहस्त-द्धर्मप्रकारक एव बोध उत्पद्यत इति तत्र शब्दाश्रयत्वाद्यनि-यतधर्मप्रकारकबोधनिर्वाहः । दीधितिकारास्तु सर्वत्रैव शाब्द-बोधप्रकारतायां तदवच्छेदकतायां च सङ्केतीयशाब्दबोधविष-यत्वप्रकारतानिरूपितविशेष्यतावच्छेदकत्वतदवच्छेदकत्वरूपशक्य-तावच्छेदकत्वतदवच्छेदकत्वज्ञानं हेतुः । यथा घटपदपशुपदस्थले घटत्वलोमत्वादेः । गगनपदस्थले च शब्दाश्रयत्व एव निरुक्तशक्य-तावच्छेदकत्वसत्त्वात् शब्दाश्रयत्वप्रकारक एव शक्तिभ्रमाजन्यः

बोध इति घटगोपनपदयोरविशेष इति वदन्ति । तन्मते बुद्धिप्रकारत्वस्य शाब्दबोधप्रकारतानवच्छेदकत्वं दुरुपपादम् । नानार्थद्वयादिपदस्थले चोपलक्षणीभवता केनाप्यनुगतरूपेण प्रवृत्तिनिमित्तानामभावाद् शक्यस्वरूपसदनुगतरूपसत्त्वेऽपि शक्तिभेदान्नानार्थतानिर्वाहः । बुद्धिप्रकारविशिष्टवाचकं तत्पदमिति सर्वोपसंहारेण व्युत्पत्तिसौकर्यादपूर्वचैत्रत्वादिविशिष्टे तदादिघटितवाक्यात्प्रवृत्त्याद्यनुपलम्भेऽपि न तत्प्रकारकशाब्दबोधस्य तदादिपदादनुपपत्तिः । अथ सामान्यतो व्युत्पत्तेश्चैत्रत्वाद्यपूर्वधर्मविशिष्टगोचरत्वेऽपि स्वरूपतस्तद्धर्मप्रकारेण शक्तिग्रहात्स्वरूपतस्तत्प्रकारकोपस्थितेस्तादृशशाब्दबोधस्य चानुपपत्तिः । जातिमान् हस्तिपदसम्बन्धीति ज्ञानात्स्वरूपतो हस्तित्वादिप्रकारकस्मरणानुदयात्स्वरूपतस्तत्प्रकारकस्मृतौ स्वरूपतस्तत्प्रकारकसम्बन्धिधिय एव हेतुत्वात् । यद्यप्यनुगमकधर्ममोपयशात्सामान्यव्युत्पत्त्यधीनं स्वरूपतश्चैत्रत्वादिप्रकारकशक्तिस्मरणं सुघटमिति ततस्तादृशचैत्रत्वादिप्रकारकपदार्थोपस्थितिशाब्दबोधयोर्नानुपपत्तिरिति । तदसत् । स्वरूपतस्तत्प्रकारकस्मृतौ स्वरूपतस्तत्प्रकारकानुभवस्य हेतुताया व्यवस्थापनान्मोपवशेन तद्विशिष्टतत्प्रकारकानुभवाद्विशिष्टतत्प्रकारकस्मरणानुपपत्तेरिति चेन्न । प्रकरणादिना निर्विशेषणकचैत्रत्वाद्यवच्छिन्ने वक्तृबुद्धिविषयताग्रहे वक्तृबुद्धिविषयतावच्छेदकविशिष्टवाचकं तत्पदमिति स्मृतौ सत्यामविशिष्टचैत्रत्वादिविशिष्टवाचकतायास्तदादिपदे मानसज्ञानस्यैवान्ततः सम्भवेन सर्वसामञ्जस्यात् । न च चैत्रोऽस्य बुद्धिस्थ इति निश्चयेऽपि विशिष्य चैत्रत्वादिविशिष्टवाचकताया अनिश्चयेन तत्प्रकारकशाब्दबोधानुपपत्तिरिति वाच्यम् । यद्विशिष्टविषयकबुद्धिप्रयोज्यं यत्पदं तत्तद्विशिष्टवाचकमिति सामान्यतो व्याप्त्यावधारणेन प्रकरणाद्यधीनस्य चैत्रत्वविशिष्टबुद्धिप्रयोज्यत्वग्रहस्य विशेषदर्शनतया तद्विशिष्टवाचकतासंशयविघटकत्वेन विशिष्टवाचकतायाः सुनिश्चेयत्वात् । नन्वेवमपि स्वप्रयोजकबुद्धिप्रकारत्वे स्वपदार्थस्याननुगमेन सकलतत्पदाद्युपसंहारेण व्युत्पत्तिर्दुर्घटेति यत्पदव्यवधीनप्रवृत्तिर्नोपलब्धा तस्या व्युत्पत्त्यनुपपत्तेः तदधीनशाब्दबोधानुपपत्तिवारणमशक्यमेवेति वाच्यम् ।

तदननुगमोद्धारस्यावहितेः परिचिन्तनीयत्वादित्यलमधिकेन । तत्रातिरिक्तेति । शाब्दबोधनिरूपितावान्तरवाक्यार्थबोधपदार्थोपस्थितिनिष्ठजनकतावच्छेदकगर्भेऽनुमितिजनकतावच्छेदकोकधर्माप्रविष्टस्य पदवृत्तिज्ञानजन्यत्वस्य निवेशादित्यर्थः । यत्रावान्तरवाक्यार्थबोधानन्तरं चरमपदज्ञानं तदुत्तरं चरमपदार्थस्मृतिस्तत्र तदानीमवान्तरवाक्यार्थगोचरशाब्दबोधस्य विनष्टत्वात् । महावाक्यार्थबोधहेतुत्वासम्भवेऽपि यत्र तादृशशाब्दबोधोत्पत्तिद्वितीयक्षण एव पूर्वोत्पन्नचरमपदज्ञानात् चरमपदार्थस्मृतिस्तात्पर्यविषयकसमूहालम्बनरूपा तत्रैव तादृशशाब्दबोधस्य महावाक्यार्थबोधहेतुत्वम् । अन्यत्र समूहालम्बनरूपतावत्पदज्ञानजन्यतावत्पदार्थगोचरसमूहालम्बनस्मृतिरेव गतिः । इद तु बोध्यम् । अवान्तरवाक्यार्थबोधस्य महावाक्यार्थबुद्धौ शाब्दत्वजातिपुरस्कारेणैव कारणता न तु पदजन्यत्वेन गौरवात् । न च तथा सति विशिष्टविषयकशाब्दबोधादिव विशिष्टे गृहीतवृत्तिकपदजन्याविशिष्टस्मृतेरपि विशिष्टे इतरान्वयबोधोत्पत्तया तत्र विशिष्टविषयकशाब्दधियो व्यभिचारः स्यादिति तादृशस्मृतिसाधारणपदजन्यत्वेनैव हेतुत्वमुचितमिति वाच्यम् । पदज्ञानजन्यत्वेन स्मृतिशाब्दधियोरनुगमे पदरूपलिङ्गज्ञानजन्यार्थविषयकानुमित्या तत्तत्कारणव्यवहितोत्तरत्वस्य कार्यतावच्छेदकानिवेशेनैव वारणीयत्वात् । यत्रावान्तरवाक्यार्थबोधान्महावाक्यार्थधीस्तत्राप्यवान्तरवाक्यार्थाघटकार्थान्तरस्य पदजन्यस्मृतेरवान्तरवाक्यार्थबोधानन्तरमवश्यकल्पनीयतया तस्याः सकलपदार्थविषयकत्वोपगमेन पदार्थस्मृतेरवान्तरवाक्यार्थधीजन्यशाब्दबोधे व्यभिचारवारणं तु न सम्यक् । विशिष्टे गृहीतवृत्तिकपदाधीनाविशिष्टस्मृतेरिव विशेष्यमात्रे गृहीतवृत्तिकपदाधीनाया उद्बोधकान्तरवशाद्विशेषणमवगाहमानाया विशिष्टस्मृतितो व्याप्यविशिष्टपक्षादिविषयकेतरान्वयबोधवारणाय गृहीतविशिष्टवृत्तिकपदजन्योपस्थितित्वेनैव विशिष्टविषयकस्मृतेस्तादृशान्वयबोधहेतुता या वक्तव्यतया विशिष्टवृत्तिकग्रहानपेक्षावान्तरवाक्यार्थशाब्दधीजन्यबोधे तस्या व्यभिचारस्यावश्यकत्वात् प्रका-

रान्तरेण तद्वारणे तावत्पदार्थविषयकस्मृतिकल्पनाया अकिञ्चित्करत्वात् अतोऽप्यवान्तरवाक्यार्थधियः शाब्दत्वपुरस्कारेण कारणत्वान्तरमावश्यकमिति पदजन्यत्वपदं पदाजन्यबोधव्यावृत्तधर्मपरम् तच्च शाब्दत्वादिकमपीति' । अधिकप्रवेशेन निरुक्तनिश्चयत्वपर्याप्तजनकतावच्छेदकताघटितस्य लक्षणस्य नातिव्याप्तिरित्युक्त्वा निश्चयत्वप्रवेशेन पर्याप्त्यनिवेशेऽपि नातिव्याप्तिरित्याह निश्चयत्वस्येति । परोक्षसंशयानभ्युपगमेन संशयान्यत्वस्योक्तयुक्त्या शाब्दत्वादेर्निवेशनीयतया ज्ञानत्वस्य च पदजन्यबुद्ध्यव्यावर्तकत्वादिति भावः ॥

व्याप्तिविशिष्टहेतुरूपविशेषणतावच्छेदकविशिष्टस्य तद्विशेष्यधर्मितावच्छेदकपर्वतत्वाद्यवच्छिन्नस्य वैशिष्ट्यावगाहिनि शाब्दबोधादौ प्रत्यक्षादिसाधारणविशिष्टवैशिष्ट्यबोधनिष्ठतद्विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतामादायातिव्याप्तिं शङ्कते न चेत्यादिना ॥

(दी०) न च तत्तद्विशिष्टवैशिष्ट्यज्ञानं प्रति तत्तद्विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वात् तादृशे शाब्दबोधे प्रत्यक्षे चातिव्याप्तिः दण्डी रक्तो न वेति संशये रक्तदण्डवानयमिति ज्ञानानुदयादिति वाच्यम् । ज्ञानोपरमेऽपि विशिष्टविषयोपधानेनेच्छाद्वेषयोः क्वचित्र साक्षात्काराद्विशेषणविषयकाद्विशिष्टसंस्कारादेव विशिष्टस्मरणाच्च तद्विषयकगुणानां तत्र हेतुत्वे न्यूनवृत्तेर्ज्ञानत्वस्य तत्राप्रवेशादिच्छादितः संस्कारावानुमितेरनुदयात् संस्काराद्यन्यत्वस्य गुरुतया ज्ञानत्वेनैव तत्र हेतुत्वात् ॥

(गा०) तथापि अवान्तरवाक्यार्थबोधादिनिष्ठशाब्दबोधासाधारणकारणतामादायातिव्याप्तेरुक्तरीत्या वारणेऽपि । तत्तद्विशिष्टवैशिष्ट्यज्ञानं प्रतीति पर्वतत्वादिरूपधर्मितावच्छेदकावच्छिन्नविशेषणतापन्नव्याप्तिविशिष्टधूमादिविशिष्टवैशिष्ट्यज्ञानत्वावच्छिन्नं प्रतीत्यर्थः । तत्तद्विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन पर्वतत्वाद्यवच्छिन्नविशेष्यकव्याप्तिविशिष्टधू-

मादिप्रकारकनिश्चयत्वेन । तादृशे वह्निव्याप्यधूमवत्पर्वतवानित्यादिविशिष्टवैशिष्ट्यबोधरूपे शाब्दबोधेऽतिव्याप्तेर्वारित्वात् तस्यैव प्रथममुपन्यासः स्मृतिव्यावृत्तधर्मस्य जन्यतावच्छेदकत्वे स्मृतौ नातिव्याप्तिसम्भवः । उपमितेः पदवाच्यत्वावगाहिन्याः तादृशविशिष्टवैशिष्ट्यबोधरूपताप्रयाशो न सम्भवत्यतः प्रत्यक्षशाब्दबोधमात्रोपादानम् । अथ किमिदं विशेषणतावच्छेदकप्रकारकधीजन्यतावच्छेदकं विशिष्टवैशिष्ट्यबोधत्वं न तावद्विशिष्टप्रतियोगिकं यद्वैशिष्ट्यं तदवगाहित्वं व्यधिकरणसम्बन्धावगाहिविशिष्टभ्रमे व्यभिचारात् । नापि विशिष्टप्रकारकत्वं काञ्चनमयवह्निमानित्यादिभ्रमप्रकारीभूतविशिष्टाप्रसिद्धेः । तत्र काञ्चनमयो वह्निरित्यादिज्ञानानपेक्षणीयतापत्तेः । नापि विशेषणान्तरप्रकारेण भासमानप्रकारकत्वं । रक्तो दण्डः दण्डवान् पुरुष इति समूहालम्बनस्थलेऽपि रक्तो दण्ड इतिज्ञानापेक्षाप्रसङ्गात् । नापि विशेषणान्तरप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारताकत्वं रक्तत्वादिप्रत्येकपदार्थोपस्थितिमूलके रक्तदण्डवानितिज्ञाने व्यभिचारात् । न हि तादृशाकारकबोधो रक्तो दण्ड इत्यादिविशिष्टज्ञानानन्तरमेव जायत इति दीधितिकाराद्यनुमतम् । बाधग्रन्थे काञ्चनमयत्वविशिष्टवह्न्यसिद्धेर्वोपनीतकाञ्चनमयत्वादिविशिष्टवह्निवैशिष्ट्यानुमितिः शुद्धवह्नित्वाद्यवच्छिन्नव्याप्यधूमादिमत्त्वज्ञानादिना पर्वते न सम्भवतीति कथं तद्विरोधितया व्यधिकरणकाञ्चनमयत्वावच्छिन्नवह्न्यभावस्य दोषान्तरासङ्कीर्णबाधस्य हेत्वाभासतेति मणिकारोक्तेर्विशिष्टविशेषणज्ञानं विनापि विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति रीत्या तादृशानुमितिसम्भव इत्यभिधाय स्वयं दूषणीयत्वात् । विशिष्टव्याप्तिज्ञानं विनापि तद्घटकप्रत्येकपदार्थोपस्थितिभ्यो विशिष्टपरामर्शोत्पत्त्यानुमितिरिति मिश्रेणान्येन चाभिधानात् एकत्वविशिष्टकर्तुः पूर्वमज्ञानेऽपि क्षितिरेककर्तृकेत्यनुमितेरनेन स्वीकृतत्वाच्च । अत्राहुः । विशेषणान्तररक्तत्वादिविशेष्यतापन्नदण्डादिप्रकारकं ज्ञानं द्विधा रक्तत्वाद्यवच्छिन्नप्रतियोगिकत्वेन दण्डादिवैशिष्ट्यावगाहि तद्रूपानवच्छिन्नतद्वैशिष्ट्यावगाहि च । तादृशविशिष्टप्रतियोगि-

कत्वं च दण्डादिप्रकारतानिरूपकसंसर्गताया अवच्छेदकतया भासते तद्विशिष्टसंयोगादेरेव दण्डादिसंसर्गतया भानात् । दण्डादिविशेषणतापन्नरक्तत्वादेरेव वा स्वावच्छिन्नप्रतियोगिकसंयोगात्मकपरम्परासम्बन्धेन पुरुषादौ प्रकारता तादृशविशिष्टवैशिष्ट्यबोधे एव विशेषणतावच्छेदकप्रकारकधीः कारणं न तु विशिष्टविशेषणत्वावगाहिन्यपि रक्तत्वादिकं वैशिष्ट्यप्रतियोगिन्युपलक्षणतयावगाहमाने द्वितीयबोधे । अत एव च प्रतियोगिविशेषिताभावबुद्धौ घटो नास्तीत्याकारिकायां प्रतियोगिनि प्रकारीभवतो घटत्वादेः प्रतियोगितावच्छेदकतयैव भानमिति तत्र घटत्वादिप्रकारकज्ञानापेक्षानियमः । यद्यपि विशिष्टविशेषणावगाहिज्ञानमात्र एव विशिष्टज्ञानापेक्षायां मणिकारादेः स्वरसः । तथापि लाघवोपनीतैकत्वादिविशिष्टकत्रांद्यनुमितिर्वैशिष्ट्यज्ञानमनपेक्ष्यैवोत्पद्यत इत्यनुरोधाद्दीधितिकारादीनां दर्शितविशेषादरः । दण्डो नास्ति रक्तो नास्तीत्यादिज्ञानदशायां नियमतो रक्तदण्डो नास्तीत्यादिज्ञानोत्पादविरह एवोक्तविशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकविशेषणधीहेतुताकल्पकः । दण्डो रक्त इत्यादिज्ञानदशायामपि कदाचित्तादृशसमूहालम्बनबुद्धावुत्पद्यमानायां दण्डो रक्तो नास्तीतिबुद्धेरनुत्पादेऽगत्या तत्रानुगतस्य कस्यचित्प्रतिबन्धकता कल्प्यत इति विवेचनीयं चेदमधिकमन्यत्र । केचित्तु रक्तदण्डवानित्यादिज्ञानीया रक्तत्वादिविशेष्यतापन्नदण्डादिनिष्ठा प्रकारता द्विविधा । काचिद्दण्डादिविशेषणतापन्नरक्तत्वाद्यन्तर्भावेन पर्याप्ता काचित्केवलदण्डादावेव । तत्र प्रथमा विशेषणतावच्छेदकप्रकारकज्ञानाधीना नापरा पुरुषादिविशेष्यतानिरूपितप्रकारताया रक्तत्वादिवृत्तित्वेऽपि पुरुषो न रक्त इत्यादिधीर्न तादृशप्रकारताकोक्तज्ञानविरोधिनी इतरविशेषणतानवच्छिन्नायाः पुरुषादिविशेष्यतानिरूपितरक्तत्वादिप्रकारताया एव तत्प्रतिबध्यतावच्छेदकत्वादित्याहुः । अपरे तु यथा विशेष्यतानिरूपितप्रकारतामात्रं न विशेष्यतावच्छेदकता भूतलं घटवदित्यादौ भूतलत्वादेर्घटादिधर्मितावच्छेदकतापत्तेरवच्छेदकत्वस्यापि प्रसङ्गात् । अपि तु विलक्षणैव विषयता सा च

प्रकारतात्मिका तदन्यैव वा। एवं विशेषणतावच्छेदकतापि विलक्षणविषयता तन्निरूपकदण्डादिनिष्ठप्रकारताशालिनि बोधे विशेषणतावच्छेदकरक्तत्वादिप्रकारकज्ञानापेक्षा प्रत्येकोपस्थितिमूलकं रक्तदण्डवानयमित्यादिज्ञानं च न तथाविधविलक्षणप्रकारताशालीति वदन्ति । तदुभयमपि न सम्यगेव प्रतिभाति विशिष्टज्ञानपूर्वकतदपूर्वकयोरविलक्षणाकारज्ञानयोर्विषयभेदमन्तरेण विषयतावैलक्षण्यस्याननुभवात् । विशिष्टज्ञानकार्यतावच्छेदकतया तत्सिद्धिरित्यपि बालप्रलपितं तादृशविलक्षणविषयतासिद्धावेव तन्नियामकतया विशिष्टज्ञानहेतुतासिद्धेः । यदि च विशिष्टप्रतियोगिकविलक्षणसंसर्गावगाहिनि बोध एवान्वयव्यतिरेकाभ्यां विशिष्टविशेषणज्ञानं हेतुः तज्जन्यतावच्छेदक यदि विशिष्टप्रतियोगिकत्वावच्छिन्नसंसर्गताकबुद्धित्वं तदा गौरवम् उक्तवैलक्षण्यपुरस्कारेण प्रकारताविशेषस्य कार्यतावच्छेदकत्वे च लाघवमिति विशिष्टप्रतियोगिकवैशिष्ट्यावगाहिन्येव ज्ञाने प्रकारताया व्यासज्यवृत्तित्यादिरूपवैलक्षण्यसिद्धिरप्रत्यूहेत्युच्यते तदा न विवदामह इति प्रकृतमनुसरामः । ननु यथा विशेषणतावच्छेदकरक्तत्वांशे निर्धर्मितावच्छेदककताद्विशिष्टवैशिष्ट्यबोधे तत्प्रकारकज्ञानत्वेनैव हेतुता न तु तत्र संशयान्यत्वप्रवेशः तथा तदंशे सधर्मितावच्छेदककविशिष्टवैशिष्ट्यबोधेऽपि तत्तद्धर्मितावच्छेदकावच्छिन्नविशेष्यकतत्प्रकारकज्ञानत्वेनैव संशयसाधारणहेतुता स्वीक्रियते निश्चयत्वेन विशेष्यतावच्छेदकप्रकारकधीहेतुताया मणिकारादिभिरनभिधानादिति कथमतिव्याप्तिरतस्तथा हेतुताभनुभवेन द्रढयति रक्तो दण्डो न वेति । ननु रक्तो दण्डो न वेति संशयानन्तरं रक्तदण्डवानिति निश्चयानुत्पाद एवानुभवसिद्धः स च विशेषणसन्देहे विशिष्टसन्देहस्यौचित्यावर्जितत्वादुपपद्यते निश्चयोत्पत्तौ संशयसामग्र्यभावस्यापेक्षितत्वाद्रक्तदण्डवान्न वेति विशिष्टसंशयस्त्वनुभवसिद्ध एवेति निश्चयत्वेन हेतुतायां साधकविरहो बाधकस्य च सत्त्वम् । अत्र केचित् । यदि विशेषणतावच्छेदकप्रकारकसंशयादपि विशिष्टवैशिष्ट्यबोध उपेयते तदा ऽप्रामाण्यशङ्कास्कन्दितादपि ज्ञाना-

स्तदुपगम आवश्यकः अप्रामाण्यसन्देहेन विषयसन्देहस्यैव जननात् संशये ऽप्रामाण्यसंशयस्याकिञ्चित्करत्वात् । अतो ऽप्रामाण्यानिश्चयास्कन्दितज्ञानात्फलवारणायाप्रामाण्यानिश्चयानास्कन्दितत्वेनैव हेतुता वक्तव्येत्यप्रामाण्यज्ञानीयगुरुशरीरनिश्चयत्वनिवेशाद्गौरवमित्यप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वेन हेतुत्वमेवोचितामिति विशेषणसंशयाद्विशिष्टसंशयानुपपत्तिरूपबाधकमपि कथञ्चिदुद्धरणीयमिति वदन्ति । वस्तुतस्तु संशयस्य विशिष्टवैशिष्ट्यबोधजनकत्वे दण्डो रक्तो न वेत्यादिसंशयाद्रक्तत्वतदभावाद्युभयविशिष्टदण्डादिवैशिष्ट्यावगाहिबोधोऽपि स्यात्, न चेष्टापत्तिः । तादृशज्ञानस्यैकत्र दण्डादौ धर्मिणि विरुद्धोभयप्रकारकतया रक्तत्वादिनिश्चयत्वासम्भवात् । विशेष्यान्तरविशेषणतापन्नधर्मिकसंशयस्य चानुभवविरुद्धतया तत्र संशयत्वोपगमासम्भवाच्च । अत एव च केवलं विशेष्ये विशेषणमिति रीत्या रक्तदण्डवानितिज्ञानेऽपि उक्तसंशयः कार्यसहवृत्तितया प्रतिबन्धक इति वदन्ति । न च तत्र संशयस्य प्रतिबन्धकत्वे विशिष्टवैशिष्ट्यबोधसाधारणधर्म एव तत्प्रतिबध्यतावच्छेदकोऽस्तु तावतैव तत्र संशयानन्तरतद्विशिष्टवैशिष्ट्यबोधवारणे तत्र तत्प्रकारकज्ञानत्वेनैव हेतुत्वमुचितमिति वाच्यम् । तत्संशयद्वितीयक्षणे कथञ्चित्तत्प्रकारकनिश्चये तद्द्वितीयक्षणे तद्विशिष्टवैशिष्ट्यधीनिर्वाहाय विशिष्टवैशिष्ट्यविषयताभिन्नवैशिष्ट्यविषयताया एव संशयप्रतिबध्यतावच्छेदकत्वं वाच्यमिति निश्चयत्वेन विशिष्टवैशिष्ट्यबोधाहेतुत्वे संशयोत्तरं विनापि निश्चयं विशिष्टवैशिष्ट्यधीप्रसङ्गात् । न च यत्र दण्डे रक्तत्वस्य संशयः पुरुषे च दण्डस्यानुमितिसामग्री रक्तेतरदण्डस्य पुरुषे बाधग्रहश्च तत्र संशयसत्त्वेऽपि केवलं विशेष्ये विशेषणमित्यादिरीत्या रक्तदण्डवान्पुरुष इत्याद्यनुमित्युत्पत्तेः कथं तादृशबोधे संशयप्रतिबन्धकतेति वाच्यम् । प्रत्यक्षं प्रत्येव तत्प्रतिबन्धकताया वक्तव्यत्वात् । अलौकिकत्वमपि तत्र विशेषणं देयं संशयसत्त्वेऽपि लौकिकसन्निकर्षाद्रक्तदण्डवानिति ज्ञानोत्पत्तेः । लौकिकप्रत्यक्षसामग्र्या विपरीतज्ञानविरोधितयैव च विशेष्यधर्मिकलौकिकप्रत्यक्षात्मकसंशयस्य ना-

पत्तेः । एवं च विशिष्टवैशिष्ट्यबोधव्यावर्तकविशेषणानव-च्छिन्ने ऽपि विशेष्ये विशेषणमितिरीत्या बोधे विशेषणे तद्वि-शेषणसंशयस्य प्रतिबन्धकत्वेऽपि दण्डो रक्तो न वेति संशयबलादितरबाधाद्युपनीतरक्तत्वादिविशेषितदण्डाद्यनुमितौ र-क्तत्वादिविशिष्टवैशिष्ट्यावगाहिताप्रसङ्गस्य तादृशसन्देहानन्त-रजातरक्तत्वादिविशेषितदण्डादिप्रकारकलौकिकप्रत्यक्षे विशि-ष्टवैशिष्ट्यावगाहिताप्रसङ्गस्य च वारणाय तद्बुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुताकल्पनमावश्यकम् । यत्तु निश्चयत्वेन विशिष्टवैशिष्ट्यबोधहेतुत्वे निश्चयत्वघटकयो-स्तदभावाप्रकारकत्वतत्प्रकारकत्वदलयोर्विशेषणविशेष्यभावे वि-निगमकाभावेन कारणताबाहुल्यमिति तदभावप्रकारकज्ञानत्वेन संशयस्य प्रतिबन्धकत्वमेव कल्पयितुमुचितं यत्र संशयद्वितीयक्षणे स्मरणादिरूपस्तन्निश्चयस्तत्र द्वितीयक्षणे संशयनाशे सत्येव वि-शिष्टबोध उपेयत इति । तदसत् । तथा सति तुल्ययुक्त्यानुमित्या-दावपि लिङ्गादिसन्देहस्य तदभावप्रकारकज्ञानत्वेन प्रतिबन्ध-कत्वापातात् निश्चयत्वावच्छिन्नहेतुताघटितानुमितिलक्षणे ऽस-म्भवापत्तेः । यत्तु विशिष्टवैशिष्ट्यबोधं प्रति निश्चयत्वेन हेतुत्वे विशेषणसंशयजन्यविशिष्टसंशयानुपपत्तिरिति बाधकं तदप्याकिञ्चित्करम् । दण्डत्वसामानाधिकरण्येन रक्तत्वनि-श्चयरूपकोटितावच्छेदकावच्छिन्नप्रसिद्धिस्थल एव चैत्रीयो दण्डो रक्तो न वेतिविशेषरूपावच्छेदेन रक्तत्वाभावावगाहि-संशयाद्रक्तदण्डवान्न वा चैत्र इति विशिष्टसंशयोदयात् तथाविधनिश्चयस्य तादृशसंशयाविरोधित्वात् । यत्तु तत्र विशेष्ये विशेषणमित्यादिरीत्यैव विशिष्टकोटिरवगाही संशयो न तु विशिष्टवैशिष्ट्यावगाहीति समाधानम् । त-दसत् । धर्मिणि रक्तत्वादिविशेषितदण्डादेरुक्तरीत्या भा-नसम्भवेऽप्यभावांशे विशिष्टप्रतियोगिनो वैशिष्ट्यभाननियमात् । अभावांशे रक्तत्वादिविशिष्टदण्डादिवैशिष्ट्यभानस्यावश्यकत्वा-त्तदुपपत्तेर्दर्शितप्रकारं विना असम्भवात् । न च लौकिक-प्रत्यक्ष एवाभावांशे तद्धर्मविशेषितप्रतियोगिनि प्रकारतया भासमाने तद्विशिष्टवैशिष्ट्यावगाहितानियम इति सं-

शये कोट्योरुपनयादेव भानाद्विशिष्टवैशिष्ट्यानवगाहनसम्भव इति वाच्यम् । दण्डसामान्याभावस्यैव रक्तत्वाद्युपलक्षितप्रतियोगिकत्वादभावांशे रक्तत्वादिविशिष्टदण्डादिरूपप्रतियोगिवैशिष्ट्यानवगाहने तादृशसंशयस्य दण्डादिसामान्याभावावगाहितया दण्डवान्नेति विशिष्य निश्चयदशायां दण्डादौ रक्तत्वादिसंशयाद्विशिष्टसंशयानुपपत्तेरित्यधिकमन्यत्रानुसन्धेयम् । रक्तो दण्डो नवेति संशयानुव्यवसाये च रक्तत्वादिविशिष्टदण्डादिरूपविषयप्रकारेण न ज्ञानभानं किं तु दण्डादेर्विशेषणतापन्नरक्तत्वादिप्रकारत्वेनैवेति न तदनुपपत्तिरिति संक्षेपः । विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकसंशयान्यत्वेनैव हेतुता न तु तादृशसंशयान्यज्ञानत्वेनेति संशयान्यत्वविशिष्टज्ञानत्वरूपनिश्चयत्वावच्छिन्नकारणताघटितलक्षणस्य न तत्राव्याप्तिरिति समाधत्ते ज्ञानोपरमेऽपीत्यादिना ज्ञानत्वस्याप्रवेशादित्यन्तेन । ज्ञानत्वस्यावच्छेदककोटावप्रवेशे हेतुगर्भविशेषणं न्यूनवृत्तेरिति । न्यूनवृत्तित्वं चावच्छेद्यत्वाभिमतहेतुताया अव्यापकत्वम् । ज्ञानत्वानिवेशे ऽनुद्बुद्धसंस्काराद्विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षापत्तिः स्मृतावेवोद्बोधकस्य हेतुतया प्रत्यक्षे च तद्विरहस्याकिञ्चित्करत्वात् तेन विनापि ज्ञानेन विशिष्टवैशिष्ट्यप्रत्यक्षजननादिति तु न पेयम् । अगत्योद्बोधकासमवधानविशिष्टसंस्कारत्वाभावस्यावच्छेदककोटौ प्रवेशेन तदापत्तेर्वारणीयत्वात् । कालान्तरे उद्बोधकसमवहितसंस्काराद्विशिष्टवैशिष्ट्यावगाहिस्मरणनिर्वाहाय संस्कारभेदमुपेत्य विशिष्टसंस्कारत्वाभावानुधावनम् । उद्बोधकसमवहिते संस्कारे च विशेषणाभावाद्विशिष्टसंस्कारत्वाभावः सुलभः । भेदस्याव्याप्यवृत्तित्वे तूद्बोधकाभावविशिष्टसंस्कारभेद एव निवेश्यः । अत एव ज्ञानत्वाप्रवेशो लाघवासम्भवेन न्यूनवृत्तित्वमेव तदनिवेशप्रयोजकतयाऽभिहितम् । तद्विषयकगुणानां हेतुत्व इति न्यूनवृत्तिताप्रकाशनाय तद्विषयकगुणानां विशिष्टविशेषणावगाहिनामिच्छाद्वेषकृतिसंस्काराणाम् । ननु विशिष्टविषयकेच्छादिस्थलेऽपि तज्जनकविशिष्टज्ञानस्यावश्यकत्वात् सर्वत्र ज्ञानमेव हेतुर्न त्विच्छादिकमित्याशङ्कायामिच्छादेर्विशिष्टवैशिष्ट्यबोधहेतुत्वे हेतुमाह ज्ञानोपरमेऽपीत्यादिना । ज्ञा-

नोपरमेऽपि इच्छादिजनकविशिष्टज्ञाननाशेऽपि । विशिष्टविषयोपधानेनेति । रक्तत्वादिविशिष्टदण्डादिरूपविषयप्रकारेणेत्यर्थः । इच्छाद्वेषयोः साक्षात्कारादित्यन्वयः । रक्तदण्डमिच्छामि रक्तदण्डं द्वेष्मि इत्याकारकेच्छाद्वेषसाक्षात्कार इच्छात्वादिप्रकारक इच्छादिद्वितीयक्षणोत्पन्नेच्छात्वादिनिर्विकल्पकाविच्छातृतीयक्षण एव उत्पत्स्यते तत्पूर्वक्षण एव जनकज्ञानं नश्यतीति न विशिष्टवैशिष्ट्यावगाहीच्छाप्रत्यक्षाव्यवहितप्राक्क्षणे ज्ञानसत्त्वमिति इच्छादिकमेव हि तत्र हेतुः । यदि चेच्छात्वादिनिर्विकल्पकेऽपि विशिष्टविषयप्रकारेणेच्छादिकं भासते तथा च तदेव निर्विकल्पकमिच्छांशे विशिष्टवैशिष्ट्यबोधात्मकमिच्छासाक्षात्कारपूर्वे स्थास्यतीति तादृशज्ञानस्य न व्यभिचारः अत एव नरसिंहाकारकं तन्निर्विकल्पकमितिसिद्धान्त इत्युच्यते तदापि यत्र विशिष्टविषयकफलसाधनताज्ञानं प्रथमं तदुत्तरं च फलेच्छा तदनन्तरं च विशिष्टोपायविषयिणीच्छा तत्रेच्छात्वनिर्विकल्पकरूपे विशिष्टविषयकेच्छासाक्षात्कारे एवं द्विष्टसाधनताज्ञानानन्तरजातफलद्वेषजन्योपायद्वेषविषयकसाक्षात्कारे च ज्ञानस्य व्यभिचारो दुर्वार एव द्विक्षणस्थायिनो ज्ञानस्य तत्पूर्वक्षण एव नाशादिति भावः । कृतिसाक्षात्काराव्यवहितपूर्वं च ज्ञानस्य विनश्यदवस्थस्यापि सत्त्वं सम्भावितमपि नेति सूचयितुं स्वातन्त्र्येण कृतिसाक्षात्कारे व्यभिचारं दर्शयति कृतेश्चेति । अत्रापि विशिष्टविषयोपधानेनेत्यनुपज्यते । ननु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतया विशेषणज्ञानं विना विषयविशिष्टकृत्यादिसाक्षात्कार एव न भवितुमर्हतीति अगत्या तत्पूर्वं विषयस्मरणमेव कल्पनीयम् । तथा च विशेषणतावच्छेदकप्रकारकज्ञानत्वावच्छिन्नस्यापि न तत्र व्यभिचार इत्यत आह विशेषणेति । ज्ञानोपरमेऽपीत्यनुपज्यते। रक्तत्वादिरूपविशेषणज्ञाननाशेऽपि रक्तत्वादिविषयकाद्रक्तत्वादिविशिष्टदण्डादिविषयकसंस्कारादेव तादृशविशिष्टविषयकस्मरणोत्पत्तेरित्यर्थः । तथा च तत्र व्यभिचारभयेन विशेषणज्ञानस्यापि विशेषणविषयकत्वेनैव विशिष्टधीहेतुता वाच्या तथा च विशेषणविषयककृत्यादित एव विषयविशेषितकृत्यादिसाक्षात्कारसम्भवान्न ज्ञानापेक्षेति विशिष्टवैशिष्ट्यबुद्धावपि विशिष्टविषयकगुणमात्रस्य हेतुत्वम् इत्थं च विशिष्टवैशिष्ट्यावगाहिसंस्कारा-

विशेषणतावच्छेदकप्रकारकज्ञानं विनैव तादृशस्मरणनिर्वाहोऽपीति भावः । एवमुपनायकज्ञानस्यापि सविषयकत्वेन हेतुतातो न विपर्ययापत्त्यर्थं ज्ञानापेक्षेति बोध्यम् । अनुद्बुद्धसंस्कारात् उपनीतभानवारणाय ज्ञानप्रत्यासत्तिहेतुतायामविशिष्टसंस्कारभेद एव निवेश्यः । न तूद्बोधकासमवधानविशिष्टसंस्कारत्वाभावादिः कालान्तरीणोद्बोधकसमवधानविशिष्टसंस्कारादुपनीतभानानुपगमे क्षतिविरहात् ततः स्मरणोत्पादे क्षणैकविलम्बेनैवोपनीतभाननिर्वाहात् । न च स्मरणकल्पने गौरवाद्विशिष्टसंस्कारत्वाभावनिवेशनमेवोचितमिति वाच्यम् । उद्बोधकानामननुगततया तदभावसहस्रस्य निवेशनीयतया महागौरवात् लघुरूपेण कारणतासिद्धौ तन्निर्वाहकस्मरणकल्पनागौरवस्य फलमुखत्वेनादोषत्वात् । अत एव निर्विकल्पकादिस्मरणकल्पनेन विशेषणधियोऽपि विशेषणज्ञानत्वेन हेतुत्वमग्रे व्यवस्थापयिष्यते इदानीं तु निर्विकल्पकस्मृतिर्न सिद्धान्तसिद्धा कृत्यादिसाक्षात्कारव्यान्तराविषयस्मरणं विनैवानुभवसिद्ध इत्याशयेन विशेषणज्ञानादिहेतुतायां ज्ञानत्वाप्रवेशोऽभ्युपगत इत्यवधेयम् । अनुमितावपि सविषयकत्वमात्रेण न कुतो हेतुत्वमित्याकाङ्क्षायामाह इच्छादित इति । व्याप्यवत्पक्षविषयकेच्छादित इत्यर्थः । ज्ञानस्य चिरान्तरितत्वाविरहेण कदाचिदिच्छादेरनुमित्युत्पादकतायामिष्टापत्तिः सम्भवतीत्याशङ्क्याह संस्काराच्चेति । व्याप्यविशिष्टपक्षविषयकसंस्काराच्चेत्यर्थः । ननु विशिष्टवैशिष्ट्यबोधादिहेतुतायामनुद्बुद्धसंस्कारान्यत्ववदनुमितिहेतुतायामपि ज्ञानत्वमुपेक्ष्य संस्कारस्येच्छादेश्च व्यावर्तनाय तदन्यत्वमेव किं न निवेश्यत इति तटस्थप्रश्ने उत्तरयति संस्काराद्यन्यत्वस्येति । अगत्या तु विशेषणतावच्छेदकप्रकारकगुणहेतुतायामवच्छेदकगौरवसहिष्णुतेति भावः । अतिव्याप्तिशङ्कया तु संस्काराद्यन्यत्वस्येत्यादिग्रन्थो नावतरति । संस्काराद्यन्यत्वेनानुमितिहेतुत्वेऽपि उभयत्रैकरूपेणाहेतुतयातिव्याप्तेरनवकाशात् । ज्ञानत्वघटितधर्मावच्छिन्नकारणताघटितलक्षणे ऽसम्भवशङ्कानिरासपरोऽयं ग्रन्थ इत्यप्याहुः ॥

परामर्शाप्रत्यक्षं प्रत्यनुमितावपि परामर्शत्वेन हेतुता परामर्श

विना तत्प्रत्यक्षानुदयादित्यभिमानमूलां परामर्शप्रत्यक्षातिव्याप्ति-शङ्कां तत्र तेन रूपेण हेतुतां निराकुर्वाणो निरस्यति न चेति ॥

( दी० ) न च परामर्शानुव्यवसायेऽतिव्याप्तिः सामान्यतः प्रत्यक्षे विषयत्वेन तत्तद्विषयकप्रत्यक्षे तत्त्वेन कदाचित् ज्ञानादिप्रत्यक्षे ज्ञानत्वादिना तत्र हेतुत्वं न तु यावानेव तत्तदितरत्वादिर्विषयनिष्ठो धर्मस्तेन तद्विषयत्वेन कार्यकारणभावः मैत्रावलोकितचैत्रनिर्मितनीलेतरघटताद्विषयकत्वादिना तत्त्वेऽनन्तकार्यकारणभावप्रसङ्गान्मानाभावादन्यथोपपत्तेश्च ॥

( गा० ) परामर्शादिप्रत्यक्षे साध्यव्याप्यहेतुप्रकारकपक्षविशेष्यकसंशयान्यज्ञानत्वरूपपरामर्शत्वेन हेतुतां निराकर्तुं वस्तुगत्या यत्प्रत्यक्षनिरूपितविषयनिष्ठहेतुतावच्छेदकं तन्निर्धारयति सामान्यत इत्यादिना । सामान्यतः प्रत्यक्षत्वरूपसामान्यधर्मावच्छिन्ने प्रत्यक्षे । विषयत्वेनेति । विषयतायाः स्वाश्रयविषयादिभेदेन भिन्नत्वेऽपि विषयतात्वमनुगमकं कारणस्य प्रत्यासत्तिस्तादात्म्यं कार्यस्य लौकिकसन्निकर्षजज्ञानीयविलक्षणविषयता। अत एवातीतादिविषयस्य न प्रत्यक्षविषयत्वं कार्याव्यवहितपूर्वक्षणवृत्तिविषयरूपकारणस्य तत्र तादात्म्येनासम्बद्धत्वात् । अव्यवहितप्राक्क्षणवृत्तिकारणसम्बन्धस्य कार्यसम्बन्धप्रयोजकत्वात् । अतीतानागतघटादिरूपविषये कार्याव्यवहितप्राक्क्षणवृत्तिचक्षुःसंयोगादेरसत्त्वे अतीतानागतशब्दादिरूपविषयविशेषादाविन्द्रियसमवायतत्संयुक्तसमवाययोः सत्त्वेन तत्प्रत्यक्षस्य विषयतयोत्पत्तिवारणाय विषयस्य हेतुत्वमावश्यकम् । यदि चाव्यवहितप्राक्क्षणावच्छिन्नकारणसम्बन्ध एव कार्योत्पत्तिप्रयोजको न तु तादृशक्षणवृत्तित्वोपलक्षितकारणस्यापि सम्बन्धः तत्क्षणे प्रतिबन्धकसमवहितस्यापि देशस्यान्यदेशावच्छेदेन तत्क्षणवृत्तिप्रतिबन्धकात्यन्ताभावस्यान्यकालावच्छेदेनाधिकरणतया तत्र द्वितीयक्षणे कार्योपत्तेः । एवं चातीतादिविषयस्य वर्तमानकालासम्बन्धितयावच्छेद्याधिकरणसम्बद्धस्यैव चावच्छेदकतया नित्यस्यापि सन्निकर्षस्य वर्तमानकालावच्छेदेन न तत्र

सत्त्वमिति, नातिप्रसङ्गः। अथैवमतीतादौ विषये सामान्यप्रत्यासत्त्यापि प्रत्यक्षं न जायेत, तत्र वर्तमानकालावच्छेदेन नित्यस्यापि सामान्यस्यासत्त्वादिति चेन्न। कारणताघटकव्यापकत्वं द्विधा किञ्चिद्यत्र यदा कार्यं तत्र तदव्यवहितप्राक्क्षणावच्छेदेन कारणमित्येवं रूपं कश्चिच्च यत्र यदा कार्यं तत्र तदव्यवहितप्राक्क्षणवृत्तिकारणमित्येवं रूपं यस्य कारणता प्रथमोक्तव्यापकताघटिता तस्य प्राक्क्षणावच्छेदेन देशे सत्त्वमेव कार्योत्पत्तिप्रयोजकं यस्य कारणता द्वितीयव्यापकताघटिता प्राक्क्षणवृत्तेस्तस्य यदा कदाचिद्देशे सत्त्वं देशे कार्योत्पादप्रयोजकं लौकिकसन्निकर्षादेः प्रत्यक्षहेतुतायां च प्रथमव्यापकत्वं सामान्यप्रत्यासत्त्यादेस्तद्धेतुतायां च द्वितीयमिति नातीतादिविषयस्य लौकिकप्रत्यक्षप्रसङ्गो न वा सामान्यप्रत्यक्षानुपपत्तिरित्युच्यते तदापि पूर्वक्षणावच्छिन्नसन्निकर्षाश्रयनाशकाले तत्प्रत्यक्षापत्तिवारणाय विषयस्य कार्यसहभावेन हेतुत्वमावश्यकम्। यदि च विषयनाशोत्पत्तिकालेऽपि प्रत्यक्षमिष्यते सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिनेति प्रवादस्तु प्राक्क्षणे वर्तमानतापरः अत एवाशुविनाशिसुखादिप्रकारकलौकिकप्रत्यक्षस्य सुखाद्युत्पादतृतीयक्षणे निर्वाहः विशेषणज्ञानस्य हेतुतयोत्पत्तिक्षणे तद्विरहेण द्वितीयक्षणे तद्विशिष्टबुद्ध्यसम्भवादित्युच्यते तदापि प्रत्यक्षविशेषे विषयविशेषस्य हेतुताया व्यवस्थापनीयतया यद्विशेषे यद्विशेषस्य प्रयोजकता तत्सामान्ये तत्सामान्यस्येति नियमात्सामान्यकार्यकारणभाव आवश्यकः। तत्तद्विषयकेति। तत्तद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन हेतुतेत्यर्थः। न चेदृशविशेषकार्यकारणभावो निष्प्रामाणिकः तत्तद्व्यक्तिविषयकप्रत्यक्षस्य सन्निकर्षादिशालिव्यक्त्यन्तरे दृष्टत्वात् यावत्सु सन्निकर्षादिघटितसामग्रीसमवधानं युगपत्तावद्व्यक्तिभासकसामग्र्या तावद्व्यक्तिविषयकस्यैकस्यैव प्रत्यक्षस्योत्पत्तेरिति वाच्यम्। तत्तद्व्यक्तिभेदेनेन्द्रियसन्निकर्षादिघटितसामग्रीभेदनिर्वाहाय तत्तद्व्यक्तित्वेन विषयस्य हेतुताया आवश्यकत्वात्। अन्यथा तत्तद्घटेन्द्रिय- [illegible] साधारणधर्मपुरस्कारेणैव हेतुतया तद्व्यक्तिभा-

सकसामग्र्या एतद्व्यक्तिभासकसामग्रीतो वैलक्षण्यासम्भवात् । तादृशहेतुतासत्त्वे तादृशसामग्र्याः पृथक्तत्तद्व्यक्तित्वावच्छिन्नघटितत्वेनैव वैलक्षण्यात् । तदवैलक्षण्ये च तद्व्यक्तिविषयकबाधग्रहाभावादिघटितायाः समवायेन तद्व्यक्तिविषयकविशिष्टप्रत्यक्षसामग्र्या विषयतासम्बन्धेन तत्तद्व्यक्तिप्रत्यक्षोत्पादकसामग्रीमत्क्षणवृत्तित्वविशिष्टायाः समवायेन तत्तद्व्यक्तिविषयकविशिष्टबुद्ध्युत्पादप्रयोजिकाया व्यक्त्यन्तरमात्रे सन्निकर्षदशायामप्यात्मनि सत्त्वेन तदानीमात्मनि समवायेन तादृशबुद्ध्यापत्तेर्दुर्वारत्वात् । न च सन्निकर्षस्यैव तत्तद्व्यक्तिसन्निकर्षत्वेन हेतुत्वमस्तु तावतान्यन्यव्यक्तिमात्रवृत्तिसन्निकर्षवति काले विषयतया तद्व्यक्तिप्रत्यक्षोत्पादकसामग्रीविरहः सुघटः तदानीं तादृशव्यक्तिसन्निकर्षाभावादिति वाच्यं गुरुणा तत्तद्व्यक्तिसन्निकर्षत्वेन हेतुतापेक्षया लाघवात्तद्व्यक्तित्वेन विषयहेतुताया एवोचितत्वात् । न चोक्तकाले तत्तद्व्यक्तित्वावच्छिन्नस्य विषयस्य सत्त्वेन तद्घटितसामग्र्याक्षतैवेति न विषयतया तद्व्यक्तिप्रत्यक्षोत्पादकसामग्रीविरह इति विशिष्य विषयहेतुतया नोक्तातिप्रसङ्गवारणसम्भव इति वाच्यम् । एकाधिकरणप्रत्यासन्नकारणतावच्छेदकावच्छिन्नस्तोमस्यैव सामग्रीत्वात्तादात्म्यसम्बन्धेन तद्व्यक्तित्वावच्छिन्नसम्बन्धिन्यां तत्तद्व्यक्तौ समवायादिना ऽप्रत्यासन्नस्येन्द्रियसंयोगादेः सत्त्वेऽपि उक्तसामग्रीविरहात् । यदि च तद्धर्मघटितधर्मावच्छिन्नजनकसामग्री तद्धर्मवत्ताप्रयोजकसामग्रीसमवहिता कार्यं जनयति अत आत्मनि तद्व्यक्तिविषयकज्ञानजनकसामग्र्यां तद्विषयकत्वप्रयोजकसमवधानमपेक्षणीयं प्रत्यक्षस्य तद्व्यक्तिविषयकत्वप्रयोजकत्वं च तद्विषयतानियामकसामग्र्यास्तद्व्यक्तित्वसामानाधिकरण्यम् उक्तस्थले चेन्द्रियसन्निकर्षादौ तदभावात्तत्तद्व्यक्तित्वेन तत्तत्प्रत्यक्षाहेतुत्वेऽपि नोक्तापत्तिरित्युच्यते तदापि तत्तद्घटादिव्यक्तिवृत्तितद्रूपाद्यात्मकविशेषणधीघटिता सामग्री तद्विशिष्टबुद्धिजनने तद्घटादिरूपविशेष्यभासकसामग्रीसापेक्षा वाच्या । व्यक्त्यन्तरभासकसन्निकर्षादिघटितसामग्रीतस्तद्व्यक्तिभासकसामग्र्या अविशेषे च व्यक्त्यन्तरमात्रसन्निकर्षदशायामपि तद्व्यक्तिगतरूपादिज्ञानात्तद्विशिष्टबु-

व्याप्तिर्दुर्वारैव । न हि तद्रूपावच्छिन्नजन्यतावच्छेदकगर्भे तत्तद्घटादिव्यक्तिविषयकत्वमपि प्रविष्टं येनोक्तप्रयोजकापेक्षया नातिप्रसङ्गः स्यात् । तथा सति तत्प्रकारकप्रमाधर्मसंग्रहप्रसङ्गादिति तत्तद्व्यक्तित्वेन विषयहेतुत्वमावश्यकम् । तद्व्यक्तिविषयकत्वरूपकार्यतावच्छेदकोपलक्षितप्रत्यक्षस्य समूहालम्बनरूपस्य विषयतासम्बन्धेन व्यक्त्यन्तरे उत्पत्तावपि तद्विशिष्टस्यानुत्पत्तेर्न तद्व्यक्तित्वावच्छिन्नहेतुतायां व्यभिचारः तादृशकार्यतावच्छेदकविशिष्टसमानाधिकरणाभावघटितव्यापकताया अक्षतत्वात् । तद्व्यक्तिवृत्तिविषयतात्वेनैव कार्यतावच्छेदकसम्बन्धत्वोपगमाच्च व्यभिचार इत्याहुः । ननु परामर्शत्वपरामर्शप्रत्यक्षत्वयोरतिसामान्यातिविशेषोक्तरूपबहिर्भावेऽपि मध्यविधकार्यकारणभावस्तेन रूपेणापीति शङ्कामपाकर्तुं मध्यविधकार्यकारणभावस्य प्रामाणिकत्वे तदवच्छेदकं विशिष्टज्ञानात्मकं लघु रूपं दर्शयति कदा चिदिति । तादृशकार्यकारणभावस्य निर्युक्तिकत्वं कदाचिदित्यनेन सूचितम् । यद्यप्यतीन्द्रियाणां गुरुत्वादृष्टभावनास्थितिस्थापकानां प्रत्यक्षस्य चक्षुराद्ययोग्यस्पर्शादीनां च चक्षुरादिना ग्रहणस्य च वारणाय योग्यजातीयानां स्वविषयकप्रत्यक्षे हेतुत्वकल्पनमावश्यकं तथा सति यावद्विशेषकारणबाधेनातीन्द्रिये विषयतया प्रत्यक्षवारणसम्भवात् । तथाद्यादिपदग्राह्यघटादिप्रत्यक्षे घटत्वादिना कार्यकारणभावोऽतिनिर्युक्तिक एव । वस्तुतस्तु अतीन्द्रियविषयाणां तादात्म्येन प्रतिबन्धकत्वकल्पनयैवातिप्रसङ्गवारणे योग्यजातीयानां बहूनां न प्रत्यक्षहेतुता अन्यत्स्वयमूहनीयम् । इदानीं प्रतिबन्दिं दर्शयन् परामर्शप्रत्यक्षे परामर्शत्वेन हेतुतां निराकरोति न चेति । तत्तदितरत्वादिरिति । व्याप्तिप्रकारकत्वपक्षधर्मताविषयकत्वज्ञानत्वसंशयेतरत्वादिघटित इत्यर्थः । घटतद्विषयकत्वादिना घटत्वतत्प्रकारकप्रत्यक्षत्वादिना । ननु हेतुत्वस्य प्रामाणिकत्वे गौरवं न दोषायेत्यत आह मानाभावादिति । ननु परामर्शादिशून्यकाले तत्प्रत्यक्षत्वावच्छिन्नापत्तिवारणायान्यथानुपपत्त्या परामर्शादिप्रत्यक्षे परामर्शत्वादिना कारणत्वकल्पनमावश्यकमित्यत आह अन्यथोपपत्तेरिति । प्रत्यक्षविषयताप्रयो-

जिकाया विषयतासम्बन्धेन प्रत्यक्षोत्पादकसामग्रया विषयनिष्ठतद्धर्मसामानाधिकरण्यरूपात् प्रत्यक्षविषयतायास्तद्धर्मसामानाधिकरण्यप्रयोजकादेव तत्तद्धर्मवद्वृत्तिविषयताकप्रत्यक्षत्वावच्छिन्नोत्पत्तिनियमोपपत्तेरित्यर्थः । अत एव प्रयोजकसमाजनियम्यधर्मान्तराणामपि न कार्यतावच्छेदकत्वमिति भावः ॥

वह्निव्याप्यधूमवान्पर्वत इतिस्मरणे तादृशनिश्चयत्वेन हेतुत्वात्तत्रातिव्याप्तिरिति शङ्कते अथेति ।

( दी० ) अथ विशिष्टस्मरणेऽतिव्याप्तिः । न चोपेक्षान्यत्वेन तत्र हेतुत्वम् उपेक्षात्वं हि न जातिश्चाक्षुषत्वादिना सङ्करप्रसङ्गात् आंशिकत्वोपगमाच्च ॥

( गा० ) विशिष्टस्मरणे व्याप्यविशिष्टपक्षस्मरणे । न च स्मृतिजनकतायाम् अप्रामाण्यज्ञानाभाववैशिष्ट्यानिवेशादनुमितौ च तन्निवेशात्सैकरूपेणोभयत्र हेतुतेति नातिव्याप्तिरितिवाच्यम् । अनुमितिजनकतायामप्रामाण्यज्ञानाभावनिवेशे विशेष्यविशेषणभावे विनिगमनाविरहादप्रामाण्यज्ञानाभावस्य पृथक्कारणत्वोपगमात् । अथ धूमत्वादिनैकधूमादिविषयकज्ञानात्तेन रूपेण धूमाद्यन्तरस्मरणवारणाय तत्तद्धूमादिव्यक्त्यवगाहित्वमपि स्मृतिजनकतावच्छेदके प्रविष्टं न त्वनुमितिजनकतावच्छेदकतायामिति कथमवच्छेदकतापर्याप्तिघटितलक्षणेऽतिव्याप्तिः न च पर्याप्त्यनिवेशाभिप्रायेणैव तदभिधानं न चोपेक्षान्यत्वेनेतिशङ्कानवतारात् न च समानविशेष्यत्वप्रत्यासत्त्यैवानतिप्रसङ्गे तत्तद्व्यक्तिविषयकत्वस्य स्मृतिजनकतायां न निवेश इति वाच्यं । वह्निव्याप्यधूमत्वादिप्रकारकविषयतात्वेन विषयतायाः कार्यकारणसम्बन्धत्वोपगमे कारणतावच्छेदकगर्भे व्याप्त्यादिविषयतानिवेशे प्रयोजनविरहेण तद्रूपावच्छिन्नजनकताघटितोक्तलक्षणस्यातिव्याप्त्यनवकाशात् । उक्तविषयतायाः सम्बन्धत्वे ऽप्यभावत्वादिनाभावान्तरस्य व्याप्तिशरीरे यत्र भानं तत्रापराभावादिविषयकस्मरणापत्तिर्दुर्वारैवेति तत्तद्व्यक्तिविषयतात्वेनैवाभावत्वाद्यवच्छिन्नविषयताः स्मृतिजनकतायां निवेशनीयाः न त्वनुमितिजनकतायामित्यतिव्याप्तिरसङ्गतैवेति चेन्नायत्साध्यव्याप्यहेतुविशिष्टधर्मिविषयकं सर्व-

मेव ज्ञानं तत्तद्धर्मप्रकारेण तद्धर्माश्रयाशेषव्यक्तिविषयकं तत्साध्य-
व्याप्यतद्धेतुविशिष्टतद्धर्मिज्ञानस्य तादृशस्मृतिहेतुतायां तद्धर्मि-
विषयकान्यस्याव्यावर्तकत्वेनानिवेशात्तादृशपरामर्शहेतुताघटितलक्ष-
णाभिप्रायेणैवैतदतिव्याप्त्यभिधानात् । जातिघटितलक्षणस्ये-
दानीमप्रकरणात् । न च तादृशस्थलेऽपि नानासाधनादि-
प्रकारेण नानाधिकरणाश्रयतादिज्ञानस्य यद्यपक्षाधिकरणादेर्यत्त-
त्साधनादिप्रकारेण तद्विषयता तत्तत्साधनादिव्यक्तिभिन्नतत्त-
द्विषयसाधनादिप्रकारेण तद्विषयाधिकरणादिव्यक्त्यन्तरविषय-
कस्मरणापत्तिर्दुर्वारैवेति तत्तद्व्यक्तिप्रकारतानिरूपिततत्तद्व्यक्तिविशे-
ष्यतानां विशिष्य कार्यकारणभावे निवेशनमावश्यकमिति वाच्य-
म् । तत्स्थलीयपरामर्शस्य तत्स्मरणनिष्ठकार्यतावच्छेदकगर्भे
तत्तत्साधनादिव्यक्तिप्रकारतानिरूपिततत्तत्साधनाधिकरणव्यक्तिवि-
षयतानां विशिष्यनिवेशादेव स्मृतौ वैपरीत्येन भानवारणात्
कारणतावच्छेदककोटौ तत्तद्व्यक्तिविषयतात्वेन विषयतानिवेशे
प्रयोजनविरहात् तावतैव च शङ्किताऽतिव्याप्तिसङ्गतेः । परे तु
यद्युपमितिविशेषेऽतिव्याप्तिवारणाय कारणतावच्छेदकत्वपर्याप्तेः
परामर्शत्वांशे निवेशनमावश्यकमिति मन्यते तदापि परामर्शत्व-
शरीरे या या विषयताः प्रविष्टास्तदन्यविषयत्वानवच्छिन्नत्वरूपं प-
रामर्शत्वपर्याप्तावच्छेदकताकत्वमेव लक्षणप्रविष्टकारणतायां नि-
वेश्यं लाघवात् परामर्शत्वघटका यावन्तः पदार्थास्तदन्य-
पदार्थानवच्छिन्नत्वम् अधिकमेवं निवेशे गौरवात् एवञ्चोपमिति-
विशेषे हेतुतावच्छेदकेऽधिकविषयतानिवेशादेव नातिव्याप्त्यव-
काशः स्मृतिकारणतावच्छेदके च तत्तद्विषयाणामधिकानां निवे-
शेऽप्यधिकविषयतानामनिवेशात्तत्रातिव्याप्तिशङ्कासङ्गतेति । अ-
तिरिक्तविषयतानवच्छिन्नत्ववत् उपेक्षान्यत्वानवच्छिन्नत्वमपि
निवेश्यमित्याशयमूलायाः शङ्काया न चेत्यादिना निरास
इत्याहुः । अथ तत्तद्विषयकस्मृतौ तत्तद्विषयकसंस्का-
रत्वेन हेतुतयैव स्मृतेर्विषयनियमे ज्ञानत्वेनैव स्मृतित्वावच्छिन्नं
प्रति हेतुता न तु तत्तद्विषयकस्मृतौ तत्तद्विषयकनिश्चयत्वेनेति
कथमतिव्याप्तिः । न चैवं तत्संशयात्तत्स्मरणवारणाय तत्र
स्मृतौ तन्निश्चयत्वेन हेतुत्वमावश्यकमिति वाच्यम् । सं-

स्कारस्य तद्धर्मिकतद्धर्मप्रकारकस्मरणे तद्धर्मिकतदभावप्रकारकान्यतद्धर्मिकतत्प्रकारकसंस्कारत्वेन हेतुतयैव तद्गोचरसंशयात्तत्स्मरणापत्त्ययोगात्संशयजन्यसंस्कारस्य विरोधिप्रकारकत्वनियमादिति चेन्न । संस्कारस्य संस्कारत्वेनैव हेतुता ज्ञानस्य तु तद्गोचरस्मृतौ तत्तन्निश्चयत्वेनेत्यस्यापि सम्भवेन विनिगमकाभावात् ज्ञानहेतुतायामपि विषयादिनिवेशस्याप्रत्याख्येयत्वात् । न च तद्गोचरज्ञानजन्यस्य संस्कारस्य कालादिना नाशे अन्यगोचरसंस्कारात्तद्गोचरस्मरणवारणाय संस्कारहेतुतायां विषयनिवेशनमावश्यकमिति वाच्यम् । संस्कारहेतुतायां विषयानिवेशेऽप्युक्तस्थले तन्निश्चयरूपकारणव्यापारविरहेण तत्स्मरणापत्त्यसम्भवात् । वस्तुतो ऽन्वयव्यतिरेकाभ्यां तद्गोचरस्मृतौ तद्गोचरनिश्चयत्वेन हेतुत्वसिद्धौ तन्निर्वाहकतया व्यापारीभूतसंस्कारकल्पना संस्कारे प्रमाणान्तराभावादिति कथं संस्कारेण तद्गोचरनिश्चयत्वावच्छिन्नस्यान्यथासिद्धिर्यतस्तद्रूपावच्छिन्नमहेतुः स्यात् । न हि यदुपजीव्य यत्सिध्यति तत्तद्व्याघातकम् । एतेन संस्कारहेतुतायां विषयानिवेशे तदंशे उपेक्षात्मकज्ञानजन्यादन्यगोचरसंस्कारात् तत्स्मरणापत्तिवारणाय तत्तद्विषयकस्मृतौ तत्तद्विषयकसंस्कारत्वेन हेतुत्वमावश्यकमिति ज्ञानहेतुतायां विषयनिवेशो व्यर्थ इत्यपि प्रत्युक्तम् । फलव्यापारौ प्रति करणस्यैकेनैव रूपेण हेतुतेति प्राचीनसम्मतनियमानुरोधेन ज्ञानस्य स्मृतिजनकतायां विषयनिवेशनमावश्यकमित्यपि वदन्ति । यत्तु ज्ञानस्य ज्ञानत्वेनैव स्मृतिहेतुता तद्विषयकस्मृतावुद्बोधकविशेषाणां हेतुताया आवश्यकत्वात्तत एव विषयनियमोपपत्तेः उद्बोधकानां फलबलकल्प्यत्वात् । न च सम्बन्धिपदज्ञानादीनामनुगतरूपेणैव तत्तद्गोचरस्मृतिहेतुतया तद्गोचरज्ञानं विनापि तत्स्मरणापत्तिरिति वाच्यम् । तत्सम्बन्धित्वेन गृहीतं यत्तज्ज्ञानस्यैव तद्विषयस्मारकतया तादृशोद्बोधकसमवधानस्थले तज्ज्ञानस्याप्यावश्यकत्वादिति । तदसत् । तथा सति ज्ञानत्वमात्रेणापि ज्ञानस्य स्मृतिहेतुताया अप्रामाणिकत्वापत्तेः । उद्बोधकेन ज्ञानविशेषान्यथासिद्धौ कालान्तरे यज्ज्ञानस्योपयोगिता तज्ज्ञानार्थं विशेषदर्शिनां शास्त्राध्ययनादावप्रवृत्तिप्रसङ्गाच्च । व-

स्तुतः स्मृतौ सम्बन्धिज्ञानस्य सम्बन्धावगाहित्वेन न हेतुता यत्र सम्बन्धो येन रूपेण गृहीतः सम्बन्धाविषयकावपि तत्प्रकारकज्ञानात्सम्बन्ध्यन्तरस्मरणात्। नापि सम्बन्धग्रहविषयतावच्छेदकावच्छिन्नाविषयकत्वेन सम्बन्धग्रहस्योपलक्षणतया भाविसम्बन्धग्रहविषयकज्ञानस्याप्युद्बोधकतापत्तेः सम्बन्धग्रहे सामान्यतः पूर्वत्वमव्यावर्तकं तज्ज्ञानपूर्वत्वं चाननुगतम्। सम्बन्ध्यनुद्बोधे च पूर्वसम्बन्धग्रहोऽप्यस्मारकः सम्बन्ध्युद्बोधका अप्यननुगता एवं च स्मृत्युपधायकसम्बन्धिज्ञानानां तत्तद्व्यक्तित्वेनैव हेतुता वाच्या तथा च यादृशसम्बन्धिज्ञानसत्त्वे यस्य पुंसो नियमतोऽनुभूतस्य यद्विषयस्य स्मृतिस्तद्वस्तुज्ञानस्य तत्तद्व्यक्तित्वेन नानाहेतुत्वकल्पनापेक्षया तत्पुरुषीयतद्विषयस्मृतौ तद्वस्तुज्ञानत्वेनानुगतरूपेणैकहेतुतैव कल्प्यते यत्पूर्वं च तद्विषयस्य नानुभवस्तत्कालीनतद्वस्तुज्ञानात्स्य तद्विषयस्मृतिवारणाय च तद्गोचरस्मृतौ तद्विषयकनिश्चयत्वेनापि हेतुत्वमावश्यकमिति दिक्। उपेक्षाज्ञानात्स्मरणानुत्पत्त्या तदन्यत्वस्याप्यधिकस्य स्मृतिकारणतावच्छेदके निवेश्यतया नोपदर्शितनिश्चयत्वपर्याप्तावच्छेदकताककारणताकत्वं स्मृताविति नातिव्याप्तिरिति शङ्कां निरस्यति न चेति। उपेक्षान्यत्वम् उपेक्षात्वावच्छिन्नभेदः तस्य तदा स्मृतिकारणतावच्छेदकघटकता स्यात् यद्युपेक्षात्वं स्मृतिजनकधीव्यावृत्तो जातिविशेषः स्यात् स्मृत्यजनकज्ञानत्वरूपस्योपेक्षाव्यवहारविषयस्योपाधेः स्मृतिजनकतायां प्रवेशासम्भवात् स्मृत्यजनकान्यत्वस्य स्मृतिजनकत्वरूपत्वात्। स्वस्य च स्वानवच्छेदकत्वात् न हि तादृशजातिः वाक्यकल्पना जातिसङ्करादिदोषग्रासादित्याह उपेक्षात्वं हीति। अत्र च जातित्वाभावानुमाने, उपेक्षात्वस्य स्मृतिजनकतावच्छेदकभेदप्रतियोगितावच्छेदकत्वेन पक्षता। अथेत्यादिशङ्कितुर्मतेऽपि स्मृतिजनकतावच्छेदकभेदप्रतियोगितावच्छेदकत्वस्य संशयत्वे तद्घटकविरोधिप्रकारकत्वे चाप्रसिद्धत्वात्। तत्र जातित्वाभावस्योभयमतसिद्धत्वेऽप्युक्तपक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वाभावात् सिद्धसाधनं दोषः। अत्रोपेक्षापदप्रवृत्तिनिमित्तत्वेन पक्षता उपेक्षापदप्रवृत्तिनिमित्तत्वस्य प्रसिद्धत्वेऽपि वाचिनस्तस्य स्मृत्यजनकत्वादिरूपतया तदवच्छिन्नान्यत्वस्य स्मृति·

जनकतावच्छेदकत्वासम्भवेन स्मृतेरनुमितिजनकतावच्छेदकपर्याप्तजनकतावच्छेदकताकत्वाक्षतेः । अत्राप्यवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वान्नोक्तदोष इत्यपि केचित् । तच्चिन्त्यम् । उपेक्षात्वस्य जातित्ववादिना तस्योपेक्षापदप्रवृत्तिनिमित्तत्वानभ्युपगमेऽपि क्षतिविरहात् अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽपि तत्र जातित्वाभावासिद्धेः तादृशादपि स्मृत्युत्पादाच्चेत्यग्रिमग्रन्थासङ्गतेश्च । तद्रूपवतः स्मृत्युत्पादकत्वे तद्रूपनिष्ठस्मृतिजनकतावच्छेदकभेदप्रतियोगितावच्छेदकताया एव विरोधित्वान्न तूपेक्षापदप्रवृत्तिनिमित्तताया इति । यत्तु स्मृतिजनकावृत्तिज्ञानधर्मत्वेन पक्षता तादृशधर्मत्वं च तत्तज्ज्ञानान्यतरत्वादौ प्रसिद्धमिति तदसत् । एकांशे उपेक्षात्मकज्ञानस्यापि अन्यस्मृतिजनकतयोपेक्षात्वस्य स्मृतिजनकावृत्तित्वाप्रसिद्धेः अन्यथांशिकत्वोपगमाच्चेति याचकासङ्गतेः । स्वीययावद्विषयविषयकस्मृतिजनकावृत्तिज्ञानधर्मत्वेन तु पक्षत्वं सम्भवति । चाक्षुषत्वादिनेति । आदिना ज्ञानत्वव्याप्यनिखिलजातिपरिग्रहः तत्तज्जातिनिरूपितसङ्करस्य च पृथगेव हेतुता बोध्या न तु मिलितस्य वैयर्थ्यात् । तज्जात्यव्यापकत्वे सति तज्जातिव्यभिचारित्वे सति तज्जातिसामानाधिकरण्यं सङ्करः व्यापकत्वं तत्समानाधिकरणप्रतियोग्यसमानाधिकरणाभावप्रतियोगित्वं तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वं वा । तज्जातिव्यभिचारित्वं च तज्जातित्वावच्छिन्नप्रतियोगिताकतदभावसामानाधिकरण्यम् । यद्यपि व्याप्यजातिमत्यनित्येऽपि कालिकादिसम्बन्धेन व्यापकजात्यवच्छिन्नस्य भेदो वर्तते व्याप्यजातेरपि व्यापकजातिशून्ये कालिकादिसम्बन्धेन वृत्तेर्विरुद्धजातेरपि कालिकादिसम्बन्धेन सामानाधिकरण्यमस्ति समवायेन चावच्छेदकत्वं वृत्तिश्च पक्षस्योपेक्षात्वस्य नोभयमते उपेक्षात्वस्योपाधित्वमते विशेषणताविशेषेणैव वृत्तेरिति स्वरूपासिद्ध्यापत्तिः । वस्तुतस्तु गुणगतजातिसङ्करस्य यत्र हेतुता तत्र साधनाप्रसिद्धिरेव गुणे जातिभिन्नस्यासमवायात् । समवायघटितचाक्षुषत्वसङ्करस्य क्वचिदपि प्रसिद्धिविरहात् । तथापि समवायवैशिष्ट्यविशेषणतान्यतरसम्बन्धेन तथात्वं बोध्यम् । अथवा समवायेनावच्छेदकत्वस्थाने समवायावच्छिन्नावच्छेदकता-

शून्यं यत्समवेतं तदन्यत्वं समवायेन तदभावादिमति समवायेन वृत्तिस्थाने समवायेन तद्वृत्तित्वे सति यत्समवेतं तदन्यत्वं तज्जातिसमानाधिकरणत्वस्थाने तज्जातिमत्समवेतत्वे सति यत्समवेतं तदन्यत्वं च निवेशनीयमिति नासिद्धिः । विशिष्टभेदस्य पक्षस्य समवेतत्वे ऽसमवेतत्वे चाक्षतत्वात् । यदि चैतन्निरूपकजातिभेदेन भिन्नमेव तत्तज्ज्ञानानां वैशिष्ट्योपादानादिति चाक्षुषत्वादिसङ्करस्य यत्र हेतुता तत्र व्याप्यजातौ व्यभिचारवारकं व्यभिचारित्वविशेषणं व्यर्थं चाक्षुषत्वादेर्व्याप्यजात्यप्रसिद्धेः तत्परित्यागे च ज्ञानत्वाद्यव्यापकतत्समानाधिकरणचाक्षुषत्वादेरिव चाक्षुषत्वाद्यव्यापकतत्समानाधिकरणस्योपेक्षात्वस्यापि जातित्वं स्यादित्यप्रयोजकत्वशङ्काग्रास इत्युच्यते तदा यज्जात्यव्यापकत्वे सति यज्जात्यव्यभिचारि यच्च तज्जातिसमानाधिकरणजातिरिति सामान्यतो व्याप्त्या उपेक्षात्वे चाक्षुषत्वादिसमानाधिकरणजातित्वाभावः साध्यः चाक्षुषत्वादिव्यापकज्ञानत्वादौ ज्ञानत्वादिव्याप्यचाक्षुषत्वादौ च व्यभिचारवारणाय दलद्वयम् । वस्तुतस्तु स्वाव्यापकस्वाव्यभिचारिजातिद्वयव्यापकविरोधप्रतियोगि "यद्यत्तद्भेदकूटं हेतूकृत्योपेक्षात्वादौ जातिसङ्कीर्णधर्मे जातित्वाभावः साधनीयः उपेक्षात्वाद्यव्यापकतदव्यभिचारिचाक्षुषत्वादिजातौ तद्विरोधासत्त्वेनोपेक्षात्वादौ निरुक्तस्यानवसरात् । तादृशभेदकूटस्योभयमतसिद्धत्वात् । न च स्वाव्यभिचारिजातेरप्रसिद्ध्या न तादृशं स्वं सम्भवतीति तत्र व्यभिचार इति वाच्यम् । अपरजातित्वाभावस्यैव साध्यत्वोपगमात्तत्र साध्यसत्त्वेन व्यभिचारानवकाशात् । यत्र च तुल्ययुक्त्या आपादितजात्यन्तरेण सङ्करस्य जातित्वबाधकता यथा प्राचां भूतत्वमूर्तत्वयोः परस्परं सङ्करेण जातित्वखण्डनं तत्र जातिसङ्करहेतोरसिद्धत्वेऽपि व्याप्यव्यापकभावापन्नसमानाधिकरणद्वयवृत्तित्वेन स्वाश्रयैकधर्मव्यापकापरवृत्ति यत्तदन्यत्वे सति स्वाश्रयैकधर्मवद्वृत्ति यत्तदन्यत्वे च सति अनेकवृत्तित्वेन वा तदुभयत्वे जातित्वाभावसामानाधिकरण्यं साधनीयम् । विनिगमनाविरहेणोभयत्र जा-

ति वाभावपर्यवसानमिति कृतमतिविस्तरेण । ननु चाक्षुषत्वा- दिव्याप्यमुपेक्षात्वं नानैव स्मृतिजनकतावच्छेदकभेदप्रतियोगितावच्छेदकमुपगन्तव्यं भेदकूटस्य कारणतावच्छेदकत्वे बाधकाभावात् तथा च न जातिसङ्कर इत्याशङ्क्य बाधकान्तरमाह आंशिकत्वेति । यत्र समूहालम्बनज्ञानस्यैकविषयस्मारकत्वमपरविषयास्मारकत्वञ्च तत्रोपेक्षात्वात्वजात्यनभ्युपगमे सकलविषयस्मारकत्वं तदभ्युपगमे च सकलविषयास्मारकत्वं स्यादिति यस्य यद्विषयास्मारकत्वं तस्य तद्विषयावच्छेदेनोपेक्षात्वं स्वीकरणीयम् अन्यविषयांशे च तदभाव इति तद्विषयकस्मृतौ च तद्विषयावच्छिन्नमुपेक्षान्यत्वं प्रयोजकं वाच्यमिति अव्याप्यवृत्तित्वादुपेक्षात्वं न जातिरित्यर्थः । न चांशिकोपेक्षायामपि न विषयान्तरावच्छेदेनोपेक्षात्वाभावः स्वीक्रियते किं तु तद्विषयकत्वस्योपेक्षात्वानवच्छेदकत्वमात्र प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वानियमात् । तथानियमे दण्डादेर्द्रव्यत्वादिना घटादिजनकत्वाभावप्रसङ्गादिति नोपेक्षात्वस्याव्याप्यवृत्तित्वं स्वाभावासामानाधिकरण्यादिति वाच्यम् । जातावभावसामानाधिकरण्यवत् किञ्चिदवच्छिन्नवृत्तिकताया अपि सिद्धान्तविरुद्धत्वात् । यद्यपि उपेक्षान्यत्वस्य स्मृत्यजनकत्वादिरूपोपाधित्वमते न स्वाभावसामानाधिकरण्यमवच्छिन्नवृत्तिकत्वं वेति नायमुभयसिद्धो हेतुस्तथापि तन्मतसिद्धहेतुनैव तं प्रति जातित्वाभावः साध्यते अत एवोपगमादित्युक्तम् । वस्तुतस्तु प्रमेयत्वादिनांशिकत्वजातित्वोभयाभावः साधनीयः । उपेक्षान्यत्वेन स्मृतिहेतुतावादिना च तस्यांशिकत्वोपगमाज्जातित्वाभावमादाय पर्यवसानमित्यांशिकत्वोपगमाद्येत्यनेन दर्शितम् ॥

ननु माभूदुपेक्षात्वं जातिस्तद्गोचरप्रयत्नाजनकत्वरूपोपाधिरेव तद्विषयकस्मृतिप्रयोजकं वाच्यम । अत एवैकज्ञानस्य किञ्चिद्विषयास्मारकत्वं किञ्चिद्विषयस्मारकत्वं चोपपद्यते निरुक्तोपेक्षात्वस्य विषयभेदनियन्त्रितत्वात् । अथवा स्वसमानाधिकरणतद्विषयकजिज्ञासानुत्तरत्वं तदित्याशङ्कां निराकरोति नापीति ॥

( दी० ) नापि प्रवृत्तिनिवृत्त्यजनकत्वमजिज्ञासिताविषयत्वं

वा तादृशादपि स्मृत्युत्पादात् । नापि संस्काराजनकत्वं तज्जनकतावच्छेदकरूपान्तरापरिचयात् अन्योन्याश्रयप्रसङ्गात् । संस्कारानुत्पत्त्यैवास्मरणसम्भवे स्मृतिजनकतायां तदप्रवेशाच्च । नाप्यनुभवत्वेन तथात्वं संस्कारस्य फलनाश्यतया सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात् समानाकारस्यैव फलस्य नाशकत्वात् । समूहालम्बनादितो नैकैकगोचरक्रमिकस्मरणानुपपत्तेः जायते च पुनः पुनः स्मरणाद्दृढतरः संस्कारः ॥

प्रवृत्तिनिवृत्त्यजनकत्वमिति । स्मृतिप्रयोजकभेदप्रतियोगितावच्छेदकमुपेक्षात्वमित्यनुपपद्यते । तादृशादपीति । तथा चोक्तरूपयोः स्मृतिप्रयोजकभेदप्रतियोगितावच्छेदकरूपत्वे तादृशयोः स्मृत्युत्पादकता न स्यादिति भावः । ननूपेक्षाज्ञानात्संस्कारानुत्पादेन तद्विषयकसंस्काराजनकत्वरूपोपेक्षात्वावच्छिन्नभेदस्तत्संस्कारजनकत्वपर्यवसितस्तत्स्मृतिजनकतावच्छेदको वाच्य इत्याशङ्कां निरस्यति नापीति । तज्जनकतावच्छेदकेति । संस्कारं प्रत्युपेक्षासाधारणरूपेण निश्चयत्वमात्रेण हेतुत्वे उपेक्षायाः संस्काराजनकत्वं दुर्घटमिति संस्काराजनकत्वस्य तदैवोपेक्षारूपता सम्भवति यदुपेक्षाव्यावृत्तरूपेण संस्कारजनकता स्यात्तादृशं च रूपमुपेक्षान्यनिश्चयत्वादन्यद्दुर्वचमतः संस्कारं प्रत्युपेक्षान्यत्वेन हेतुता वाच्या ईदृशोपेक्षात्वस्य संस्काराजनकत्वरूपत्वे आत्माश्रयः स्मृत्यजनकत्वरूपत्वे च संस्कारं प्रति स्मृतिजनकत्वेन स्मृतिं प्रति च संस्कारजनकत्वेन हेतुतेत्यन्योन्याश्रय इति नैतद्युक्तमित्यर्थः । ननु संस्कारजनकतावच्छेदकस्योपेक्षासाधारण्येऽपि उपेक्षाव्यक्तीनां तत्तद्व्यक्तित्वेन संस्कारप्रतिबन्धकत्वोपगमात्तासां संस्कारानुपधायकत्वनिर्वाहः । आंशिकोपेक्षाव्यक्तीनां तत्तद्विषयकसंस्कारत्वमेव प्रतिबध्यतावच्छेदकमिति तासामन्यविषयकसंस्कारोपधायकतया ऽन्यविषयस्मारकतोपपत्तिरित्यत आह संस्कारेति । यत्तु ननु तत्तद्व्यक्तित्वेनैवोपेक्षाव्यक्तीनां भेदाः संस्कारजनकतावच्छेदकाः । न चैवं भेदसहस्रस्य विशेष्यविशेषणभावे विनिगमनाविरह एकैकभेद

पृथक्पृथक्निवेश्यैकैककारणताभ्युपगमात् । एकोपेक्षाज्ञानव्यक्तिदशायामन्योपेक्षाव्यक्तिभिन्नज्ञानसत्त्वेऽपि तदुपेक्षाव्यक्तिभिन्नज्ञानरूपकारणविरहेणैव संस्कारानुत्पादसम्भवात् । न चोपेक्षाद्वयसत्त्वे सकलकारणसत्त्वात्संस्कारापत्तिस्तद्वारणाय तादृशव्यक्तिभेदद्वयस्यैकत्र निवेश्यत्वात् तयोर्भेदयोर्विशेषणविशेष्यभावे विनिगमनाविरहात्कारणताद्वयमिष्टमेव । उपेक्षाव्यक्तीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकतामतेऽपि तत्कालीनसंयोगादिव्यक्तीनां विनिगमनाविरहेण प्रतिबन्धकतया गौरवात् । एवं च संस्कारानुपधायकत्वरूपोपेक्षात्वावच्छिन्नभेदस्य स्मृतिजनकतावच्छेदकत्वेऽपि नान्योन्याश्रयः इत्यतः संस्कारेतीत्यवतारणं तदसत् । तत्तदुपेक्षाव्यक्तीनां तत्कालीनसंयोगादिव्यक्तेर्वा तत्प्रतिबन्धकता कल्प्यते इत्यनुयोगस्याशक्यसमाधानत्वात् । संस्कारानुत्पत्तेरेवेत्यस्योपेक्षाज्ञानादित्यादिः। संस्काराजनकत्वस्य तदैवोपेक्षात्वरूपतासम्भवो यद्युपेक्षाधीः संस्कारं जनयेद् तथा सति संस्काररूपव्यापारविरहेणैवोपेक्षाया अस्मारकत्वसम्भवे उपेक्षात्वस्य संस्काराजनकत्वरूपस्य सुनिर्वचत्वेऽपि तदवच्छिन्नान्यत्वस्य निष्प्रयोजनकतया स्मृतिजनकतावच्छेदकगर्भे ऽनिवेशादित्यर्थः । तथा च विशिष्टस्मरणातिव्याप्तिर्दुर्वारैवेति भावः । न च तद्विषयकस्मृतौ तद्विषयकसंस्काररूपव्यापारेण यथा तद्विषयकज्ञानत्वावच्छिन्नस्य नान्यथासिद्धिस्तथोपेक्षान्यत्वसहिततद्रूपावच्छिन्नस्यापीति तेन रूपेण हेतुता दुर्वारैवेति वाच्यम् । संस्कारासिद्धौ संस्काराजनकत्वरूपोपेक्षात्वावच्छिन्नभेदघटितधर्मपुरस्कारेण कारणताकल्पनासम्भवात् । तादृशधर्मावच्छिन्नकारणतायाः संस्काररूपव्यापारसिद्धावुपजीव्यतया तेन तद्रूपावच्छिन्नस्यान्यथासिद्धावुपजीव्यविरोधरूपबाधकानवकाशात् । यत्तु ननूपेक्षात्वस्यानुगतस्य निर्वचनासम्भवेऽप्युपेक्षाज्ञानात्स्मरणानुत्पत्त्या तत्तदुपेक्षाव्यक्तिभिन्नत्वेनैवागत्या स्मृतिहेतुत्वमुपेयं तथापि न विशिष्टस्मृतावतिव्याप्तिरित्यत आह संस्कारानुत्पत्तेरेवेत्यवतार्य उपेक्षाज्ञानात्संस्कारो नोपगम्यते गौरवात् । तन्निर्वाहाय च संस्कारजनकतायामुपेक्षाभेदनिवेशस्यावश्यकत्वे स्मृतिजनकतायां न तन्निवेशः संस्काराभावेनैवोपेक्षितास्मरणोपपत्तेः । न चैवं फलव्यापारौ प्रति कार-

पस्यैकरूपेणाहेतुतेति नियमपरित्यागे निश्चयत्वमपि संस्कारजनकतायामेव निवेश्यतां तथा च कथमतिव्याप्तिरिति वाच्यम् । संस्कारजनकतायां निश्चयत्वानिवेशे उपेक्षान्यत्वेन सह विशेष्यविशेषणभावे विनिगमनाविरहात्स्मृतिकारणतायामेव निश्चयत्वानिवेशौचित्यात् । संशयादुद्बोधकत्वरसंस्कारस्यावश्यकतया निश्चयत्वेन विशिष्टसंस्काराहेतुत्वे संशयजन्यसंस्कारविशिष्टविषयकत्वमात्रकल्पनमुपेक्षान्यत्वेन तदहेतुत्वे च उपेक्षाज्ञानात् विशिष्टविषयकसंस्काररूपधर्मिकल्पनमिति न विनिगमनाविरहेण वैपरीत्यप्रसक्तिः । वस्तुत उपेक्षाज्ञानानां संस्काराप्रतिबन्धकत्वमेवोपेयते तथा च फलव्यापारौ प्रति करणस्यैकरूपेण हेतुत्वनियमादुभयत्रैव निश्चयत्वप्रवेशः । एतेनांशिकोपेक्षाज्ञानादन्यविषयकसंस्कारस्य प्रामाणिकतया तद्भेदाः स्मृतिजनकतायामेव निवेश्यन्ते न तु संस्कारजनकतायां तथा सति सर्वांशे उपेक्षाभेदैः सह विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यप्रसङ्गात् इति निश्चयत्वं संस्कारजनकतायामेव निवेश्यं स्मृतिजनकतायां तन्निवेशेऽप्यांशिकोपेक्षाभेदैः सह विशेष्यविशेषणभावे विनिगमनाविरहतादवस्थ्यादित्यपास्तम् । तथा च विशिष्टस्मरणेऽतिव्याप्तिः सुदृढैवेति व्याख्यानम् । तदसत् व्यापारासिद्धिदशायां कल्पनीयस्य तत्तदुपेक्षान्यत्वेन स्मृतिहेतुत्वस्यान्तरकालकल्प्यव्यापारविरहेण कार्यातिप्रसङ्गवारणसम्भवेऽपि तत्तदुपेक्षान्यत्वेन कारणतामतेऽपि तेन रूपेण ज्ञानस्य संस्कारहेतुतानिराकरणासम्भवादुक्तशङ्कया संस्कारानुत्पत्त्यैवेत्यादिफक्किकावतारणासङ्गतेः । ननु तद्विषयकस्मृतौ तद्विषयकज्ञानत्वेन न हेतुताऽपि तु तत्तद्विषयकानुभवत्वेनैव । अनुभवत्वस्यापि जातित्वेन ज्ञानत्वापेक्षया गौरवाभावात् । स्मृत्युत्तरमपि पूर्वानुभवादेव स्मरणोपपत्तेः स्मृतेः स्मृतिहेतुताया अप्रामाणिकत्वात् । तथा च न ज्ञानत्वघटितधर्मावच्छिन्नकारणताघटितानुमितिलक्षणस्य विशिष्टस्मृतावतिव्याप्तिः । न चानुभवत्वापेक्षयाऽगुरुणा ज्ञानत्वेनापि स्मृतिहेतुताया विनिगमनाविरहेण दुर्वारतया तादृशकारणतामादायातिव्याप्तिर्दुर्वारैवेति वाच्यम् । अगुरुव्याप्यधर्मपुरस्कारेण कारणत्वसम्भवे व्यापकधर्मस्यान्यथासिद्धिनिरूपकत्वादित्याशङ्कां नि-

रस्यति नाप्यनुभवत्वेनेति । संस्कारस्य फलनाश्यतया स्व-जन्यस्मृतिनाश्यतया प्रथमस्मरणेनैव पूर्वानुभवजन्यसंस्कारनाशे सकृदनुभूतस्य स्मरणोत्तरमननुभूतस्य विषयस्यानुभवरूपकरणव्यापारासत्त्वेनास्मरणप्रसङ्गात् स्मरणान्तरानुपपत्तेरित्यर्थः । स्वजन्यस्मरणस्य संस्कारनाशकत्वे स्मृतिसाधारणेन ज्ञानत्वेन स्मृतिहेतुत्वेऽपि घटपटादिरूपनानाविषयावगाहिनानुभवेन जनितस्य तावद्विषयकसंस्कारस्य घटाद्येकैकगोचरस्मरणेनापि विनाशात्तदुत्तरं पटादिस्मरणानुपपत्तिः तद्विषयकसंस्काराभावात्स्मृतिजन्यघटादिगोचरसंस्कारस्य च भिन्नविषयकतया पटादिस्मारकत्वायोगादित्याशङ्कां निरस्यति समानेति । समानाकारस्य अन्यूनाकारस्य अतः प्रत्येकगोचरनानासंस्कारजनितसमूहालम्बनस्मरणे स्वजनकसकलसंस्कारनाशहेतुतानिर्वाहः । अथात्र नाशकता यदि स्वजन्यस्वान्यूनविषयकस्मृतित्वेन तदा स्वपदस्य तत्तत्संस्कारव्यक्तिपरतया आवश्यकत्वात्तत्तद्व्यक्तिभेदेन कारणताबाहुल्यं तदुपगमे तत्तद्व्यक्तित्वेनैव नाशकताया युक्तत्वात् । यदि च प्रतियोगितासम्बन्धेन संस्कारनाशं प्रति जनकत्वानतिरिक्तविषयकत्वोभयसम्बन्धेन स्मृतित्वेन हेतुना जनकत्वानिवेशात् स्वजन्यसंस्कारस्य स्मृत्या न विनाशः जनकत्वस्थाने तद्धटकं पूर्ववर्तित्वमेव वा निवेश्यं नियमानन्यथासिद्धत्वप्रवेशवैफल्यात् । न च व्यधिकरणस्मृतेरपि नाशकतापत्तिः । व्यधिकरणस्मृतिं प्रत्यपि संस्कारस्य स्वरूपयोग्यतया सामानाधिकरण्यनिवेशस्योभयमते आवश्यकत्वात् वस्तुतः सामानाधिकरण्यसहितमनतिरिक्तविषयकत्वमेव सम्बन्धः न तु जनकत्वस्य पूर्वकालीनत्वस्य वा निवेशः ज्ञानादीनां क्षणिकतावारणाय प्रतियोगितासम्बन्धेन नाशं प्रति पूर्वत्वसम्बन्धेन नाशस्य सामान्यकारणताया आवश्यकत्वात् अत एव स्वजनकस्मरणेन संस्कारस्य स्वोत्पत्तिद्वितीयक्षणे नाशापत्त्यनवकाशात् । तदानीं च स्मृतेर्विनाशेन ततस्तदुत्तरक्षणेऽपि तन्नाशापत्त्यसम्भवात् । अनतिरिक्तविषयकत्वं च स्वावृत्तिविषयिताशून्यत्वं न तु स्वाविषयाविषयकत्वं प्रमेयत्वादिना सकलप्रमेयविषयकस्मरणस्याविषयाप्रसिद्धेः संस्कारनाशकतानुपपत्तेः ।

भावत्वादिना सकलमायादिविषयकस्मरणाद्घट इत्यादिज्ञानजन्यसंस्कारनाशापत्तेश्चेत्युच्यते तदापि सम्बन्धमध्ये तत्तत्स्मरणव्यक्तिरूपस्य पदार्थमनन्तर्भाव्यानतिरिक्तविषयकत्वस्याननुगतविषयतया अप्रसिद्ध्या दुर्निर्वचत्वेन तत्तद्व्यक्तिविश्रामस्यावश्यकत्वात् स्वनिष्ठभेदप्रतियोगितावच्छेदकविषयिताशून्यत्वरूपानतिरिक्तविषयकत्वेऽपि भेदे तत्तत्स्मृतिव्यक्तिनिष्ठत्वनिवेशनमावश्यकम् अन्यथावच्छेदकत्वान्तस्य विषयितायामव्यावर्तकतापत्तेरिति चेत् सत्यम्। तत्प्रकारकतद्विशेष्यकसंस्कारनाशं प्रति तत्प्रकारकतद्विशेष्यकस्मृतित्वेन कारणता कार्यस्य सम्बन्धः प्रतियोगिता कारणस्य पूर्ववर्तित्वसहितं तदसहितं वा सामानाधिकरण्यं तत्तद्विषयकसंस्कारभेदोऽपि प्रतियोगिप्रत्यासन्नो हेतुः अतो घटत्वप्रकारकघटविशेष्यकसमूहालम्बनात्मकस्मृत्या यथा समूहालम्बनात्मकस्तत्प्रकारकतद्विशेष्यकसंस्कारो नाश्यते तथा समूहालम्बनात्मकोऽपि तादृशसंस्कारो नाश्यताम् अन्यविषयकस्मृतिविरहस्य तद्विषयकस्मृतिघटितसामग्रीविरहाप्रयोजकत्वादिति दूषणस्य नावकाशः। समूहालम्बनात्मकतद्विषयकसंस्कारनाशप्रयोजकसामग्र्या अन्यविषयकसंस्कारभेदरूपकारणकूटघटितत्वात्। समूहालम्बनसंस्कारनाशप्रयोजकसामग्र्या अन्यविषयस्मृतिघटितत्वात्समूहालम्बनसंस्कारे च तादृश्याः कस्या अपि सामग्र्या उक्तस्थलेऽसत्त्वात्। न चैवं गोत्वाभाववान् गोत्वाभाव इत्यादिज्ञानजन्यसंस्कारस्य गोत्वाभाव इत्याकारकस्मरणाद्विना नाशापत्तिः तादृशसंस्कारनाशे तादृशस्मृतिसहकारिणां यावत्तद्विषयाविषयकसंस्कारभेदानां सत्त्वात्तद्विषयकगोत्वादिविषयकसंस्कारभेदस्य च तत्सहकारित्वाद्गोत्वाभावादिनिष्ठतत्सम्बन्धस्यापि तत्स्वरूपतया तादृशस्मृतिनाश्यसंस्कारविषयत्वेन तद्विषयकसंस्कारभेदस्यापि तादृशस्मृतिसहकारित्वासम्भवादिति वाच्यम्। तत्तत्प्रकारकान्यसंस्कारनाशे तत्तत्प्रकारकसंस्कारभेदत्वेन हेतुताया उपगन्तव्यतया गोत्वाभाव इत्यादिस्मृतिनाश्यसंस्कारसाधारणस्य गोत्वाभावादिप्रकारकसंस्कारभेदस्य तादृशस्मृतिसहकारितया गोत्वाभाववान् गोत्वाभाव इत्यादिधीजन्यसंस्कारे तादृशभेदासत्त्वेनोक्तापत्त्यभावात्। द्रव्यत्वादिना घ-

टपटादिविशेष्यकसंस्कारस्य तेन रूपेण घटमात्रविशेष्यकस्मृतितो विनाशवारणाय तत्तद्विशेष्यकान्यसंस्कारनाशे तत्तद्विशेष्यकसंस्कारभेदस्य हेतुत्वमपि वाच्यम । एवं समानप्रकारकसमानविशेष्यकनानासंसर्गावगाहिसंस्कारस्यैकमात्रसंसर्गकस्मृतितो विनाशवारणाय तत्तद्संसर्गकसंस्कारनाशे तत्तत्संसर्गकसंस्कारभेदस्यापि हेतुता बोध्या । वस्तुतस्तादृशधर्मिविशेष्यतानिरूपिततत्संसर्गावच्छिन्नतादृशधर्मप्रकारताकान्यसंस्कारनाशे तथाविधतादृशधर्मप्रकारताकसंस्कारभेदो हेतुरित्येवोपगन्तव्यम् अन्यथा द्रव्यत्वपृथिवीत्वोभयरूपेण घटं पटं चावगाहमानस्य संस्कारस्य द्रव्यत्वमात्रेण च घटं पृथिवीत्वमात्रेण च पटमवगाहमानात् स्मरणाद्विनाशापत्तेः तत्र द्रव्यत्वमात्रेण घटं पृथिवीत्वमात्रेण पटमवगाहमानस्य संस्कारस्य यादृशसामग्रीतो नाशस्तादृशसामग्र्यास्तत्राक्षतत्वात् तादृशसंस्कारस्यापि द्रव्यत्वपृथिवीत्वोभयप्रकारकतया घटपटोभयविशेष्यकतया च तन्नाशकसामग्र्या तत्तत्प्रकारकभेदतत्तद्विशेष्यकसंस्कारभेदाप्रवेशात् तन्नाशकसामग्रीघटकद्रव्यत्वपृथिवीत्वेतरधर्मप्रकारकसंस्कारभेदघटपटाभिन्नविशेष्यकभेदानां चोक्तसमूहालम्बनसंस्कारेऽपि सत्वात् । संस्कारनाशं प्रति तादात्म्यसम्बन्धेन संस्कारत्वेनाप्येकहेतुता कल्पनीया अतः संस्कारनाशप्रयोजकसामग्र्या नादृष्टादिसाधारण्यम् । केचित्तु समूहालम्बनजन्यघटपटादिसंस्कारा भिन्नभिन्ना एव संस्कारयौगपद्ये क्षतिविरहात् तथा च स्ववृत्तिविषयतावत्त्वस्यापि स्मृतिनिष्ठनाशकतावच्छेदकप्रत्यासत्तिघटकत्वोपगमात् घटादिस्मृत्या पटादिसंस्कारस्य न विनाशनं तस्य तत्स्मृतिवृत्तिघटादिविषयतावत्त्वाभावादित्युत्तरकालं पटादिस्मरणनिर्वाहः । एवं घटवद्भूतलमित्यादिविशिष्टज्ञानाद् घट इत्यादिस्मृतिनिष्ठप्रत्येकपदार्थीयविषयताशून्या एव विशिष्टगोचरसंस्कारा उपगम्यन्ते ते च न तादृशस्मृतितो विनश्यन्ति तत्र तादृशस्मृतिनिष्ठविषयतावत्त्वविरहादत उत्तरकालं विशिष्टस्मृतिनिर्वाहः । घट इत्यादिस्मृतेरपि घटादिविषयकसंस्कारत्वावच्छिन्नविशिष्टसंस्कारफलतया तद्यावर्तनाय फलस्य समानाकारकताकथनसङ्गतिरित्याहुः । स्मृ-

तिधृत्तित्वाभावविशिष्टविषयताविरहः संस्कारप्रत्यासन्नस्तन्नाशकः एकैकगोचरस्मृतिदशायां संस्कारनिष्ठविषयान्तरविषयतायां स्मृतिधृत्तित्वाभावसत्त्वेन तथा प्रतिबन्धाच्च समूहालम्बनसंस्कारनाश इत्यपरे । नन्वनुगतरूपेण स्मृतेर्नाशकत्वं निर्युक्तिकं भवतां चरमस्मृतिजन्यस्यैव ममाप्यनुभवजन्यसंस्कारनाशस्याप्यननुगतेनापि कालादिना नाशसम्भवात् । न च यत्र विषये चरमस्मृतिव्यक्तय उपेक्षारूपाः तत्रानुभवजन्यसंस्कारस्यानुगतस्मरणरूपनाशकाद्वाशोपगम एव युक्तः तत्र चरमस्मृतिजन्यसंस्कारस्याप्रसिद्ध्याननुगतकालादेर्नाशकतया अनावश्यकत्वादिति वाच्यम् । ज्ञानत्वेन स्मृतिसंस्कारहेतुतामते चरमस्मृतिविशेषाणां संस्काराजनकत्वनिर्वाहाय तत्तद्व्यक्तित्वेन तासां संस्कारप्रतिबन्धकतायाः कल्पनीयतयानुभवत्वेन स्मृतिसंस्कारहेतुत्ववादिन उक्तस्थले ऽनुभवजन्यसंस्कारनाशेऽननुगतानां हेतुत्वोपगमेऽपि गौरवानवकाशाच्चरमस्मृतिव्यक्तीनामपि तत्तद्व्यक्तित्वेन संस्कारनाशकतासम्भवात्संस्कारस्य फलनाश्यताप्रवादसङ्गतिरित्यनुभवत्वेन स्मृतिसंस्कारहेतुतायां नोक्तबाधकावकाश इत्यत आह जायते चेति । अनुभवजन्यसंस्कारापेक्षया स्मरणात् दृढस्तदुत्तरस्मरणादितश्च दृढतरदृढतमाः संस्कारा जायन्त इत्यवश्यमेव स्वीकार्यं तावतां चोत्कर्षरूपो जातिभेदो झटिति स्मृत्युत्पादप्रयोजकः न च दैववशसम्पन्नझटित्युद्बोधकसमवधानादेव झटिति स्मृतिनियमोपपत्तौ न तत्प्रयोजकतया संस्कारगतो जातिविशेषः सिध्यतीति वाच्यं यादृशसम्बन्धिविशेषज्ञानसत्त्वे पुनःपुनः स्मरणोत्तरं नियमतः स्मृतिर्न त्वनुभवमात्रोत्तरं तादृशोद्बोधकघटितसामग्र्यनुगमाय संस्कारगतजातिविशेषस्यावश्यकत्वात् झटिति स्मृतेर्दैवाधीनत्वमुपगम्य संस्कारातिशयखण्डने शास्त्रादावभ्यासोऽपि नोपयुज्येतेति नानुभवत्वेन स्मृतिसंस्कारहेतुतासम्भव इत्याशयः । इदं तु बोध्यं दृढदृढतरादिसंस्कारं प्रति समानविषयकस्मृतित्वतादृशस्मरणोत्तरस्मरणत्वादिना न हेतुता पुनःपुनरनुभवादपि संस्कारदार्ढ्यदर्शनात् नापि समानविषयकज्ञानोत्तरज्ञानत्वादिना उपेक्षोत्तरोत्पन्नोपेक्षातो दृढतरसंस्कारानुदयात्

रोगादिना ज्ञातार्थगोचरसंस्कारनाशोत्तरजातज्ञानात्तदनुदयाच्च किं तु समानविषयकसंस्कारत्वेन दृढसंस्कारं प्रति दृढदृढतरादिसंस्कारत्वेन च दृढतरदृढतमसंस्कारं प्रति जनकता अत एव भावनायाः पटुतरभावनाजनकत्वप्रवादः भावनया भावनान्तरजनने चोत्तरोत्तरज्ञानं सहकारि तस्य संस्कारत्वावच्छिन्न प्रत्येव स्मृतिसाधारणज्ञानत्वघटितधर्मपुरस्कारेण हेतुत्वात् न चैवं स्वजन्यज्ञानसहकारेणेव स्वजनकज्ञानसहकारेणापि संस्कारः पटुपटुतरसंस्कारं जनयत्विति वाच्यं स्वजन्यसंस्कारानुपहितज्ञानत्वेनैव संस्कारहेतुत्वोपगमात् । अन्यथा सर्वत्र विनश्यदवस्थज्ञानात पटुतरसंस्कारान्तरस्य दुर्वारत्वादनन्ताप्रामाणिकसंस्कारकल्पनागौरवेण दृष्टापत्तेरयोगादिति ॥

ज्ञानत्वेन स्मृतिसंस्कारहेतुत्वे युक्त्यन्तरमप्याह परित्यज्य चेति ॥

( दी० ) परित्यज्य च निश्चिताव्यभिचारकं रूपं गृह्यमाणव्यभिचारकेण कारणत्वकल्पनानुदयात् इदमेव चान्यत्र सामान्यस्य च हेतुतावच्छेदकत्वे बीजम् । अभिहितं च तात्पर्यटीकायां प्रथमसूत्रे ऽवयवविवेचनप्रस्तावे मिश्रैः । स्मृतीनां स्वकार्यसंस्कारविरोधिनीनामसहभावादिति चेन्न । चरमज्ञानपदस्यानुभवपरत्वात्साक्षात्तज्जन्यत्वस्य वा विवक्षितत्वादित्यपि कश्चित् । किं च व्याप्यविशेष्यकात् पक्षविशेष्यकाच्च परामर्शादनुमितिदर्शनाच्च तदुभयवैशिष्ट्यावगाहिनिश्चयत्वेन तत्र हेतुत्वं लक्षणघटकमपि तदेव ॥

( गा० ) निश्चितः कार्यतावच्छेदकावच्छेदेनाव्यभिचारो यद्रूपावच्छिन्नस्य तन्निश्चिताव्यभिचारकं गृह्यमाणः कार्ये संशयसाधारणज्ञानाविषयीभूतो यद्रूपावच्छिन्नस्य व्यभिचारः तद्रूपं गृह्यमाणव्यभिचारकं तथा च ज्ञानत्वावच्छिन्नस्य स्मृतिसंस्कारयोर्न व्यभिचारशङ्कापि स्मृतेः संस्कारादिजनकत्वस्य सन्दिग्धत्वादनुभवत्वावच्छिन्नस्य तत्र व्यभिचारः सन्दिग्ध इति न तेन रूपेण कारणताग्रहः सम्भवतीति भावः । यद्यपि

व्यभिचारसंशयस्य ग्राह्यसंशयतया कल्पनात्मककारणताग्रहे न विरोधित्वसम्भवः ग्राह्यसंशयस्य परोक्षज्ञानाविरोधितायाः सर्वसम्मतत्वात् । तथापि कारणतायां सामान्यविशेषरूपावच्छिन्नयोः संशये सामान्यरूपस्य नियतपूर्ववर्तितावच्छेदकत्वं क्लृप्तं विशेषरूपस्य तथात्वमसिद्धतया कल्प्यमिति तस्य कारणतावच्छेदकत्वे कल्पनागौरवमिति गौरवप्रतिसन्धानेन प्रतिबन्धाद्विशेषरूपेऽवच्छेदकत्वग्रहो न भवतीति बोध्यम् । इदमेव निश्चिताव्यभिचारकत्वमेव अन्यत्र प्रवृत्त्यादिकार्ये सामान्यस्य इष्टतावच्छेदकप्रकारकप्रवृत्तिविषयाविशेष्यकनिश्चयत्वाद्यपेक्षया ऽधिकसंग्राहकस्य तदुभयवैशिष्ट्यावगाहिनिश्चयत्वादेः । संस्कारस्य स्मृतिजन्यत्वं नापसिद्धान्त इत्याविष्कर्तुं तत्र टीकाकारसंवादमाह अभिहितं चेति । प्रथमसूत्रे प्रमाणप्रमेयेत्यादिसूत्रे अवयवविवेचनप्रस्ताव इति तत्र पूर्वपूर्ववर्णस्मृतिसहित उत्तरवर्णानुभव एव पदप्रत्यक्षहेतुरस्तु इत्याक्षेपे समाधानं स्वकार्येति । स्वं स्मृतिः तत्कार्यो यः संस्कारः स एव स्वानन्तरोत्पन्नविशेषगुणविधया विरोधी नाशको यासां तासामित्यर्थः । एतच्च तृतीयक्षणानवस्थाननिर्वाहकं त्रिचतुरादिव्यक्तीनामेकक्षणानवस्थानरूपासहभावप्रयोजकतया अभिहितम् । चरमज्ञानपदस्येति । अनुभवपरत्वात् अनुभवत्वावच्छिन्नरूपविशेषार्थकत्वात् तथा च तादृशनिश्चयत्वावच्छिन्नजन्यानुभवत्वं लक्षणं तस्य चानुभवत्वशून्यायां स्मृतावतिव्याप्तिर्न शङ्कास्पदमपीति भावः । अन्यस्य समाधानान्तरमुपन्यस्यति साक्षादिति । साक्षात्तज्जन्यत्वं तज्जन्याजन्यत्वे सति तज्जन्यतावच्छेदकावच्छिन्नाजन्यत्वे सति वा तज्जन्यत्वं परामर्शजन्यतावच्छेदकविशिष्टगोचरसंस्कारत्वावच्छिन्नजन्यायां स्मृतौ नास्तीति भावः । अत्र गौरवमस्वरसबीजं विशिष्टवैशिष्ट्यबोधहेतुतायां ज्ञानत्वनिवेशनव्यवस्थापनायाः शक्यत्वेन तत्रातिव्याप्तिर्यथा वारणीया विशिष्टस्मरणेऽपि तेनैव प्रकारेण तद्वारणं सम्भवतीति चरमज्ञानपदस्यानुभवपरत्वं नावलम्बनीयमित्याशयवानाह व्याप्येति । व्याप्यविशेष्यकात् आधेयतासम्बन्धेन व्याप्यरूपविशेष्ये पक्षप्रकारकात्पर्वते वह्निव्याप्य इत्याकारकात् पक्षविशेष्यकात्- अधिकरणतासम्बन्धेन-

पक्षरूपविशेष्ये व्याप्यप्रकारकात् वह्निव्याप्यवान् पर्वत इत्याकारकात्परामर्शात् अनुमितिदर्शनात् अविलक्षणायाः पर्वतो वह्निमानित्यनुमितेरनुभवात् तदुभयवैशिष्ट्यावगाहिनिश्चयत्वेन उभयानुगमकेन व्याप्यपक्षोभयनिरूपितवैशिष्ट्यविषयताशालिनिश्चयत्वेन तत्र हेतुत्वम् अनुमितिं प्रति कारणत्वं न तु विशिष्टवैशिष्ट्यबोधविशिष्टस्मरणजनकतावच्छेदकेन व्याप्यप्रकारकपक्षविशेष्यकनिश्चयत्वादिना अन्यतरासंग्रहादित्यर्थः । ननु वैशिष्ट्यमत्र व्याप्यताघटकसम्बन्धरूपं विवक्षणीयम् । अन्यथातिप्रसङ्गात् एवं च संयोगावच्छिन्नाधारत्वादिकमेव धूमादेर्व्याप्यताघटकं न त्वाधेयत्वं तत्कुत उक्तरूपेण पक्षप्रकारकस्य पर्वते धूम इत्यादिज्ञानस्य संग्रहः तत्र संयोगावच्छिन्नाधेयत्वस्यैव संसर्गत्वात् न च पर्वते धूम इत्यादावपि व्याप्यताघटकः संयोगादिरेव संसर्गः न त्वाधाराधेयभाव इति वाच्यं पर्वतादिप्रतियोगिकसंयोगादेर्धूमादिरूपविशेष्यानुयोगिकत्वविरहेण तादृशप्रत्ययस्य भ्रमत्वापातात् आधाराधेयभावानवगाहने सप्तम्युल्लेखानुपपत्तेश्च न च संयोगाद्यवच्छिन्नाधेयत्वमेव च तत्र सम्बन्धः तत्संसर्गकत्वेऽपि तदन्तर्गतसंयोगादिसंसर्गकत्वमक्षतमिति वाच्यं विशिष्टसंसर्गकत्वेऽपि विशेषणीभूतसंयोगादेः संसर्गतावच्छेदकतया तद्विषयतायाः प्रकारविशेष्योभयनिरूपितत्वाभावात् अन्यथा संयोगावच्छिन्नाधेयतासम्बन्धेन व्याप्यप्रकारकात् व्याप्ये पर्वतः इत्यादिज्ञानात् संयोगावच्छिन्नाधारतासम्बन्धेन पक्षप्रकारकात् पर्वतवान् धूम इत्यादिज्ञानाच्चानुमितिप्रसङ्गात् एतेनाधाराधेयत्वयोस्तुल्यवित्तिवेद्यतया संयोगाद्यवच्छिन्नाधारत्वावगाहित्वेन तादृशाधेयत्वावगाहित्वेन वा व्याप्यपक्षविशेष्यकपरामर्शयोरनुगम इति निरस्तं व्याप्ये पर्वत इत्यादिधियो दुर्वारत्वात् व्याप्यनिरूपिताधारत्वावगाहित्वेन पक्षनिरूपिताधेयत्वावगाहित्वेन वाऽनुगमस्यान्यनिरूपिताधारत्वसम्बन्धाद्यवगाहिभ्रमासंग्रहेनासम्भवात् । अथ पर्वते धूम इत्यादिसप्तम्युल्लेखिप्रतीतौ संयोगावच्छिन्नाधेयत्वमेव पर्वतस्य संसर्गतया भासतां सा च पर्वतधूमयोः संयोगानवगाहितयानुमितावहेतुरेवोक्तरूपेणानुगमस्तु संयोगसम्बन्धेनैव व्याप्यांशे यः पक्षप्रकारकः यश्च

पक्षांशे तत्सम्बन्धेनैव व्याप्यप्रकारकः तयोरेव परामर्शयोः स्वीकरणीयः प्रथमज्ञानस्योक्तयुक्त्या भ्रमत्वेऽपि तस्यानुमितिहेतुतायास्तेनाप्रत्याख्येयत्वात् इति चेन्न । व्याप्यतावच्छेदकसंयोगेन व्याप्यस्य पक्षवृत्तितायाः तत्र साध्यासत्त्वेऽप्युपपद्यमानतया व्याप्यांशे तेन सम्बन्धेन तद्वत्ताज्ञानस्य तत्र पक्षे साध्यानुमितिहेतुताया अनुभवविरुद्धत्वात् । अन्यथा समवायादिना द्रव्यत्वादिव्याप्ये गुणादौ तेन सम्बन्धेन सत्त्वादिप्रकारकप्रमात्मकज्ञानात्सत्त्वादौ बाधानवतारदशायां द्रव्यत्वादिसिद्धिप्रसङ्गः । अत्राहुः आधाराधेयत्वयोस्तुल्यवित्तिवेद्यतामते पर्वते धूम इत्यत्राधारतानिरूपिताधेयता धूमवान् पर्वत इत्यत्र चाधेयतानिरूपिताधारता सम्बन्धः न तु तुल्यमुभयोः संसर्गतया भानं प्रत्येकमुभयोरुभयप्रकारतापत्तेः एवं चोभयत्रैवाधारत्वविषयता पर्वतविषयतया आधेयत्वविषयता च धूमविषयतया निरूपिता तथा च पक्षविषयतानिरूपिता या आधारताविशेष्यविषयता तन्निरूपितनिरूपितत्वविषयतानिरूपिताधेयत्वविषयतानिरूपितव्याप्यविषयताशालित्वेन द्वयोरनुगमः व्याप्ये पर्वतः पर्वतवान् धूम इत्यत्र च पक्षविषयतानिरूपिताधेयत्वविषयता व्याप्यविषयता आधारत्वविषयतानिरूपितेति वैपरीत्यात्मकोऽनुगमकरूपस्यैतत्साधारण्यमिति नातिप्रसङ्गः न चाधारत्वावगाहित्वस्य कारणतावच्छेदकत्वे तदनवगाहिनो व्याप्यतावच्छेदकसंयोगादिना पक्षे हेतुमत्ताज्ञानादनुमित्यनुदयप्रसङ्ग इति वाच्यं प्राचां मते आधाराधेयभावाभेदस्य हेतुसामानाधिकरण्यस्य व्याप्तिघटकतया हेतुनिरूपिताधारत्वावगाहिविधयानुमितिजनकत्वात् यदि च संयोगादिरेव संसर्गतया व्याप्तिप्रविष्टहेतुसामानाधिकरण्यघटको नाधारत्वं तदा संयोगादेर्यत्र हेतुतावच्छेदकसम्बन्धता तत्र तेन सम्बन्धेन व्याप्यप्रकारकं पक्षविशेष्यकज्ञानमेवानुमितिजनकं न तु संयोगाद्यवच्छिन्नाधेयतासम्बन्धेन पक्षप्रकारकं व्याप्यविशेष्यकज्ञानं हेतुपक्षयोः सम्बन्धविधया व्याप्यतावच्छेदकसम्बन्धानवगाहनात् तस्याधिकविषयत्वेन गौरवस्य पक्षविशेष्यकपरामर्शहेतुतायां विनिगमकत्वाच्च परं तु यत्र तादात्म्यसम्बन्धेन हेतुता तत्रैव व्याप्यपक्षविशेष्यकपरामर्शयोर्व्याप्यपक्षोभयविषयतानिरूपिततादात्म्यसंसर्गताकज्ञानत्वेन हेतुता तत्र

च न कश्चिदतिप्रसङ्गः निष्कृष्टजातिघटितानुमितिलक्षणस्याऽवश्यकत्वेन तादृशकारणताघटितलक्षणस्यैव सर्वसाधारण्यसम्भवात् । न च जातिघटितलक्षणे जातावनुभवत्वव्याप्यत्वस्यावश्यं निवेशनीयतया स्मृतौ समानाकारत्वेन कार्यकारणभावव्यवस्थापनमग्रे विफलं तावतैव स्मृतावतिप्रसङ्गवारणसम्भवादिति वाच्यम् । कार्यतासमानाधिकरणानुभवत्वव्याप्यजातिघटितलक्षणापेक्षया लाघवेन कार्यतावच्छेदकजातिघटितलक्षणस्यादरणीयतया स्मृतौ व्याप्यपक्षोभयविशेष्यकपरामर्शद्वयसाधारणरूपेण कारणत्वे तादृशकारणताप्रतियोगिककार्यतावच्छेदकस्मृतित्वजातिमादाय स्मरणातिव्याप्तेः प्रसक्त्या तादृशलक्षणाभिप्रायेणानुभवत्वव्याप्यजातिघटितलक्षणेऽपि स्मृतावनुगतरूपेणाहेतुत्वेऽनुभवत्वान्यानुभवान्यासमवेतत्वरूपानुभवत्वव्याप्यत्वमुपेक्ष्य लघोरनुभवनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपस्य निवेशनं सम्भवतीत्यभिप्रायेण वा स्मृतौ विशेषरूपेण हेतुत्वव्यवस्थापनसङ्गतेः लक्षणेऽपि तादृश्येव कारणता विशिष्टवैशिष्ट्यबोधादावतिव्याप्तिवारणाय निवेश्येत्यवधेयम् । लक्षणघटकमपि तदेवेति । तदेव उभयवैशिष्ट्यावगाहिनिश्चयत्वरूपानुगतधर्मावच्छिन्नकारणत्वमेव प्रकृतलक्षणघटकमुपेयमित्यर्थः अन्यरूपावच्छिन्नहेतुताघटितस्य लक्षणस्यालक्ष्य एव सत्त्वादिति भावः ॥

विशिष्टस्मृतिकारणता नैकानुगतरूपावच्छिन्ना अपि तु विशेषरूपावच्छिन्नेति न तत्रातिव्याप्तिरित्याह एकतरेत्यादिना तत्र विशिष्यैव कार्यकारणभाव इत्यन्तेन ॥

( दी० ) एकतरविशेष्यकज्ञानादन्यतरविशेष्यकस्मरणाभावात् । अन्यथा नियमेन स्मृतेरुभयविशेष्यकत्वप्रसङ्गात् समानप्रकारकत्वेनैव ज्ञानस्मरणयोः कार्यकारणभावाच्च तत्र विशिष्यैव कार्यकारणभावः । न तूक्तरूपेण गौरवात् मानाभावाच्च इत्यपि केचित् । एवं च विशिष्टवैशिष्ट्यबोधादौ क्वापि नातिप्रसङ्गशङ्कापि । वह्न्याद्यनुमितौ वह्न्यादिव्यभिचारधीविरोधिधीविषयधर्मप्रकारकपक्षधर्मताज्ञानत्वेन हेतुतामते तु नितरां तथैव

लक्षणे निवेशात् । अत एव व्याप्यवत्पक्षाद्यभावग्रहं प्रति व्याप्यवत्पक्षादिज्ञानत्वेन हेतुत्वेऽपि न क्षतिः । व्याप्त्यविषयकत्वेन वा जन्यज्ञानं विशेषणीयम् । एतेन स्मृतिं प्रति संस्कारद्वारा अनुभवं प्रति च साक्षाद्विशेषणधियो हेतुत्वस्य निर्विकल्पकात्मकस्य वा स्मरणस्यानुभवं प्रत्येव वा तस्या हेतुत्वस्य नियमतः कॢप्तिसाक्षात्कारपूर्वं विषयस्मृतेश्च कल्पनात् व्याप्यवत्त्वादिज्ञानेऽतिव्याप्तिरित्यपि परास्तम् ॥

( गा० ) तत्र स्मृतिस्थले विशिष्यैव व्याप्यप्रकारकपक्षविशेष्यकस्मृतित्वतादृशनिश्चयत्वादिरूपविशेषधर्ममुपादायैव कार्यकारणभावः कल्प्यत इति शेषः । अत्र हेतुमाह समानप्रकारकत्वेनैव ज्ञानस्मरणयोः कार्यकारणभावाच्चेति । तृतीयाया वैशिष्ट्यार्थकत्वात् । समानप्रकारकत्वेनेत्यसमानप्रकारकयोरित्यर्थः । तथा चासमानप्रकारकज्ञानस्य स्मरणाहेतुत्वादित्यवधारणार्थः । एतावतानुगतरूपस्य कारणतातिरिक्तवृत्तित्वलाभः असमानप्रकारकज्ञानस्य स्मृत्यकारणत्वे तस्य फलानुत्पादकत्वे हेतुमाह एकतरेति । व्याप्त्यादिमात्रविशेष्यकस्मरणानुत्पत्तेरित्यर्थः । एतदेव दर्शयति अन्यथेति । एकतरविशेष्यकज्ञानादपि अन्यविशेष्यकस्मृतीनां पक्षादिविशेष्यकत्वनियमापत्तेरित्यर्थः । केचित्तु नियमेनेत्यत्र अकारप्रश्लेषः । तथा चानियमेन नियामकाभावेन स्मृतेः स्मृतिमात्रस्योभयविशेष्यकत्वप्रसङ्गादिति व्याचक्षते विशिष्टविशेषणतावच्छेदकप्रकारकविशेषणविशेष्यकनिश्चयत्वावच्छिन्नजन्यव्याप्यविशिष्टपक्षवैशिष्ट्यबोधाद्यावित्यर्थः । आदिना विशिष्टस्मृतिपरिग्रहः । व्यतिरेकिणि व्यतिरेकव्याप्तेरेव गमकतापक्षे अन्वयव्यतिरेकव्याप्तिप्रकारतयोर्व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वेनाननुगमस्य कारणतावच्छेदकत्वमते तादृशकारणताया एव लक्षणे निवेशादेकविधव्याप्त्यवगाहिज्ञानादन्यविधव्याप्तिविषयकविशिष्टवैशिष्ट्यबोधाद्यनुदयात् तज्जनकतावच्छेदकगर्भे विशिष्यैव तद्व्याप्तिविषयतानिवेशेन एकरूपेणानुमिति-

विशिष्टवैशिष्ट्यबोधादिहेतुताविरहात् तत्र च नातिव्याप्तिप्रसक्तिरित्याह वह्न्याद्यनुमितावित्यादिना । विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयहेतुतानभ्युपगन्तृमिश्रमते व्याप्यविशिष्टपक्षवैशिष्ट्यावगाहिप्रत्यक्षसामान्येऽतिव्याप्तिविरहेऽप्यभावबुद्धौ प्रतियोगितावच्छेदकप्रकारकप्रतियोगिविशेष्यकनिश्चयत्वेन हेतुता मिश्रेणावश्यं स्वीकरणीयेति वह्निव्याप्यवान्पक्षो नास्तीत्याद्यभावग्रहे तन्मतेऽप्यतिव्याप्तिरस्तीति दर्शितरीत्यैव वारणीयेत्याह । अत एवेति । अत एव उक्तरूपावच्छिन्नकारणताया लक्षणे प्रवेशादेव व्याप्यवत्पक्षाद्यभावग्रहं प्रतीति । पक्षतावच्छेदकावच्छिन्नविशेषणतया व्याप्तिविशिष्टावच्छिन्ना या प्रतियोगिता तन्निरूपितानुयोगिताप्रकारकाभावलौकिकं प्रतीत्यर्थः । व्याप्यधत्पक्षादिज्ञानत्वेन व्याप्तिविशिष्टप्रकारकपक्षतावच्छेदकावच्छिन्नविशेष्यकनिश्चयत्वेनेत्यर्थः । दण्डो रक्तो नास्तीत्याद्यभावग्रहस्य दण्डो रक्तो न वेति संशयादनुत्पत्तेरानुभाविकतया विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकधीहेतुतावादिनां तद्विशेषहेतुतायामिव मिश्रमतेऽपि सधर्मितावच्छेदकप्रतियोगितावच्छेदकप्रकारकज्ञानहेतुतायां निश्चयत्वनिवेशस्यावश्यकत्वादिति भावः। न क्षतिः नातिव्याप्तिः व्याप्यपक्षविशेष्यकयोरन्वयव्यतिरेकव्याप्तिप्रकारकयोश्च परामर्शयोरनुगमकरूपस्याभावप्रत्यक्षजनकतानवच्छेदकत्वादिति भावः । यदि चानुमितिपरामर्शयोः समानविशेष्यकत्वानुभवानुरोधात् विनिगमकान्तराद्वा पक्षविशेष्यक एव परामर्शोऽनुमितिहेतुरुपेयते व्यतिरेकिणि च व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते इति मतं व्यतिरेकव्याप्तेरनुमितिप्रयोजकत्वेऽपि मणिमन्त्रादिन्यायेन विरोधिताया अप्रामाणिकतयानुगमासम्भवेन पृथक् पृथगेव व्याप्तिज्ञानयोरनुमितिहेतुता व्यतिरेकिग्रन्थे दर्शनीयरीत्या च व्यभिचारवारणं तदा नोक्तरीतिद्वयेन विशिष्टवैशिष्ट्यबोधाद्यावतिव्याप्तिवारणसम्भवः । न वा पूर्वोक्तरीत्यानुद्‌बुद्धसंस्काराद्विशिष्टवैशिष्ट्यबोधवारणाय तद्धेतुतायां ज्ञानत्वप्रवेशस्यावश्यकत्वादित्यालोच्य तदतिव्याप्तिवारणाय विशेषणान्तरं प्रवेशयति

व्याप्त्यविषयकत्वेनेति । लिङ्गोपधानस्य मणिकृताभ्युपगमात् तन्मतेऽसम्भवेऽपि न क्षतिः उक्तविशिष्टवैशिष्ट्यबोधविशिष्टस्मरणादेर्व्याप्तिविषयकत्वनियमाभावादतिव्याप्तिरिति भावः । नन्वनुद्बुद्धसंस्काराद्विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादिवारणायोद्बोधकाभावविशिष्टसंस्कारान्यत्वमेव विशेषणतावच्छेदकप्रकारकहेतुतायां निवेश्यं न तु ज्ञानत्वं पूर्वोपदर्शितव्यभिचारस्य दुर्वारत्वात् अनन्यगतिकतया जनकतावच्छेदकगौरवस्यादोषत्वात् भेदस्याव्याप्यवृत्तितया उपगन्तव्यतया उद्बुद्धसंस्कारे उद्बोधकाभावविशिष्टतद्भेदसत्त्वात् तादृशात् संस्काराद्विशिष्टवैशिष्ट्यस्मरणनिर्वाहः । संस्कारनिष्ठत्वविशेषितस्योद्बोधकाभाववैशिष्ट्यस्यात्यन्ताभाव एव वा निवेश्यः स च उद्बोधकासमवहितज्ञानादिसाधारणोऽपि तथा च ज्ञानत्वस्य विशिष्टवैशिष्ट्यधीजनकतायामनिवेशादेव तत्रातिव्याप्तिवारणसम्भवे किं व्याप्त्यविषयकत्वनिवेशनेन विशिष्टस्मरणातिव्याप्तेरनुभवत्वनिवेशेनापि वारणसम्भवादित्याशङ्क्य ज्ञानत्वेन विशिष्टवैशिष्ट्यबोधहेतुतायां व्यभिचारमुद्धरन् व्याप्त्यविषयकत्वनिवेशस्य तदतिव्याप्तिवारणप्रयोजनकत्वं दर्शयति एतेनेत्यादिना । प्रथमतो विशेषणज्ञानस्य हेतुताया ज्ञानत्वेन व्यवस्थितौ विशेषणतावच्छेदकप्रकारकधियोऽपि हेतुत्वे तत्प्रवेशासम्भव इत्याशयेन विशिष्टबुद्धौ विशेषणज्ञानत्वेन हेतुत्वे पूर्वपूर्वोपदर्शितविशिष्टवैशिष्ट्यस्मरणे व्यभिचारमुद्धरति स्मृतेति प्रतीत्यादिना कल्पनत्रयेण । संस्कारद्वारेति विशेषणधियो हेतुत्वस्य कल्पनादित्यनेनान्वयः । तथा च न स्मृतौ ज्ञानत्वावच्छिन्नस्य व्यभिचारः विशेषणज्ञानजन्यसंस्कारोत्पत्तिक्षण एव विशिष्टानुभवस्योत्पत्त्या तत्र संस्कारद्वारा हेतुत्वासंभवेऽपि न क्षतिः साक्षादेव तत्र तथात्वादित्याह अनुभवं प्रति चेति । न च साक्षाद्धेतुत्वे स्मृतौ परम्परया हेतुत्वे चानुभवे व्यभिचारात् कथमयं कल्पः संभवदुक्तिक इति वाच्यं स्वस्वव्यापारान्यतरत्वावच्छेदेन नियतपूर्ववर्तिताया एव कारणताघटकत्वात् प्रत्येकं व्यभिचारस्याकिञ्चित्करत्वात् । ननु व्यापारघटिता तस्य

कारणता तदीयव्यापारमात्रसत्त्वं कार्योत्पत्तावपेक्षितं तथा च संस्कारादप्यनुभवसामग्रीसहकृताद्विशिष्टवैशिष्ट्यबोधापत्तिः यदि च ज्ञानस्य स्वतः पूर्ववर्तितया अपि कारणताघटकत्वात्तत्सत्त्वमपेक्षितं तदा स्मरणेनापि तदपेक्षताम् अतो व्यापारघटितमेकं कारणत्वमन्यच्च तदघटितं वाच्यं तथा च दर्शितव्यभिचारो दुर्वार एवेत्याशयेन कल्पान्तरमाह निर्विकल्पात्मकस्य वा स्मरणस्येति । विशिष्टस्मृतिपूर्वमित्यादिः कल्पनादित्यनेनान्वयः । केचित्तु विशेषणधिय इत्यग्रिमस्य विशेषणतावच्छेदकधिय इत्यर्थकतया विशेषणतावच्छेदकप्रकारकज्ञानस्यैव ज्ञानत्वेन हेतुताव्यवस्थापकोऽयं ग्रन्थः एवं च विशेषणविषयकादित्यादिपूर्वग्रन्थोऽपि विशेषणविषयकपदस्य विशेषणतावच्छेदकप्रकारार्थकतया विशिष्टस्मरणपदस्य विशेषणतावच्छेदकप्रकारकज्ञानत्वेन हेतुतायामिव व्यभिचारप्रदर्शनपर इति न संदर्भविरोधः न चैवं यद्यपि निर्विकल्पकस्मरणकल्पनया विशिष्टवैशिष्ट्यावगाहिस्मरणोपपत्तिः निर्विकल्पकस्य विशेषणतावच्छेदकप्रकारकत्वविरहात् किं तु विशिष्टवैशिष्ट्यस्मरणपूर्वं विशिष्टविशेषणकस्मरणकल्पनयैव तदुपपत्तिः निर्विकल्पकात्मकस्य वा इत्यग्रिमग्रन्थविरोधः । विशेषणतावच्छेदकस्मरणोपपादकतया तद्गोचरनिर्विकल्पकस्मरणोपगमेन सङ्गतावपि अन्तरा विशिष्टविशेषणगोचरस्मरणकल्पनीयत्वाकथनेन न्यूनतापत्तिश्चेति वाच्यं यतः स्मृतेः निर्विकल्पकतायाः सविवादतया तादृशी स्मृतिर्न संभवतीति विशिष्टवैशिष्ट्यस्मरणपूर्वं विशिष्टस्मृतिकल्पनं न सम्भवतीति विशिष्टवैशिष्ट्यधीहेतुतायामिव विशिष्टधीसामान्यहेतुतायामपि ज्ञानत्वनिवेशे युक्तेस्तुल्यत्वादित्युभयत्रैव न ज्ञानत्वप्रवेश इत्यभिप्रायेणैव पूर्वमतिव्याप्तिसमाधानम्। एवं चेदानीं निर्विकल्पकस्मरणोपगमेनैव प्रत्यक्षस्थल इव निर्विकल्पकविशिष्टज्ञानविशिष्टवैशिष्ट्यज्ञानानि स्मृतिस्थले क्रमशो भवन्तीति विशिष्टवैशिष्ट्यबोधं प्रति ज्ञानत्वेन हेतुत्वे बाधकाभाव इत्यर्थतो लाभादन्तराविशिष्टस्मृतिकल्पनाकथनेऽपि न न्यूनतेति ध्येयम् । अथातिप्रसङ्गवारणाय समानप्रकारकत्वेनैव स्मृतिं

प्रति संस्कारज्ञानयोर्हेतुत्वान्न निर्विकल्पकस्मरणसंभवः; घटत्वादिविशिष्टतद्घटादिगोचरसंस्कारादिजन्यतायां, निर्विकल्पकसाधारणस्य घटत्वादिनिष्ठप्रकारतानिरूपितविशेष्यताभिन्नतद्घटादिविषयताशालिघटत्वादिगोचरस्मृतित्वस्यावच्छेदकत्वे च यत्र द्रव्यत्वेन तद्घटावगाहिनो घटत्वेन चैतद्घटावगाहिनः संस्काराद् घटत्वतद्घटादिविषयकं निर्विकल्पकं तत्र घटत्वविशिष्टतद्घटविषयकसंस्कारादेर्व्यभिचारः एवं निर्विकल्पकस्मरणोपगमे प्रमेयत्वादिसामान्यलक्षणाजन्यज्ञानाधीनविश्वविषयकनिर्विकल्पकस्मरणेन स्वरूपतो निखिलजातिप्रकारकज्ञानं स्यात् न च तादृशं ज्ञानं असर्वज्ञस्यानुभवसिद्धं न च स्वरूपतस्तत्प्रकारकस्मृतौ स्वरूपतस्तत्प्रकारकसंस्कारादेर्हेतुतया तादृशकारणाभावात् सकलजातिनिर्विकल्पकसत्त्वेऽपि न स्वरूपतः सकलजातिप्रकारकस्मरणसंभवः तादृशप्रत्यक्षादेरपि युगपत्सकलजातिसन्निकर्षविरहेण नापत्तिसंभव इति वाच्यं ज्ञानरूपसन्निकर्षसत्त्वेन तादृशमानसस्य दुर्वारत्वात् तत्कथमिदानीमपि निर्विकल्पकं स्मरणमङ्गीकृतमिति चेन्न अनुद्बुद्धसंस्कारान्यत्वापेक्षया लघुना ज्ञानत्वेन विशिष्टधीहेतुतासिद्धौ तन्निर्वाहकतया निर्विकल्पकस्मरणस्यावश्यकत्वे तद्वद्विषयकस्मृतौ तद्वद्विषयकसंस्कारत्वादिना सामान्यतो हेतुत्वान्तरस्य कल्पनीयतया विशिष्टसंस्कारादितो विशिष्टस्मरणस्येव तत्पूर्वं निर्विकल्पकस्यापि स्मरणस्य सम्भवः न चोक्तक्रमेण सार्वज्ञ्यापत्तिः स्वरूपतस्तत्प्रकारकोपनीतभाने स्वरूपतस्तत्प्रकारकज्ञानस्य हेतुत्वोपगमात् । उद्बोधकाकल्पनेन वा प्रमेयत्वादिसामान्यलक्षणाप्रयोज्ययावत्प्रमेयगोचरसंस्कारपर्यायावज्जातिनिर्विकल्पकस्यापि वारणसंभवात् तदनभ्युपगमेऽपि स्वरूपतो मानयोग्यप्रमात्वघटकपदार्थनिर्विकल्पकमूलकप्रमेयत्वादिविषयकस्मरणजन्यतत्प्रकारकावच्छिन्नविशेष्यकस्मरणादेव कालादौ प्रमेयत्वादिना सकलप्रमेयप्रकारकस्मरणोपपत्तेरित्याशयेनेदानीं निर्विकल्पकस्मरणोपगमात् । ननु विशिष्टज्ञानत्वं परित्यज्य विशिष्टानुभवत्वस्य जन्यतावच्छेदकत्वोपगमेनैव विशिष्टस्मृतौ व्यभिचारवारणे किं निर्विकल्पकस्मरणादिकल्पनया न च विशिष्ट-

विषयकानुभवत्वापेक्षया लघु विशिष्टविषयकत्वमेव स्मृतिसाधारणं विशेषणधीजन्यतावच्छेदकं तथा च निर्विकल्पकस्मरणमावश्यकमेवेति बोध्यं ज्ञानोत्पत्तिनाशेऽपि तद्व्यापारभूतया इच्छया विशिष्टविषयककृतिजननात्तत्र व्यभिचारेण विशिष्टविषयकत्वमात्रस्य विशेषणधीजन्यतावच्छेदकत्वासंभवात् न चोपादानप्रत्यक्षस्य साक्षात् कृतिहेतुतया कृतौ न ज्ञानत्वावच्छिन्नस्य व्यभिचार इति वाच्यं उपादानप्रत्यक्षस्य फलसमानविषयकत्वानियमेन सुखत्वादिविशिष्टफलविषयककृतौ सुखत्वादिधियो व्यभिचारस्य दुर्वारत्वात् एवं निर्विकल्पकस्मरणोपगमेऽपि कृतिसाक्षात्कारपूर्वं विशिष्टस्मृतिकल्पनया न तदुपपत्तिः कृतिद्वितीयक्षणोत्पन्ननिर्विकल्पकस्मरणेन विशिष्टविषयकस्मृतिजननकाले कृतिनाशेन विशिष्टविषयोपधानेन कृतिसाक्षात्कारासंभवादित्यालोच्य विशिष्टानुभवत्वस्यैव विशेषणधीजन्यतावच्छेदकत्वमाहानुभवमिति । तस्याः विशेषणधियः अनुभवत्वजात्यनङ्गीकारे विशिष्टप्रत्यक्षत्वस्यैव तथात्वं स्वीकरणीयमिति ध्येयम् । इच्छाद्वेषसाक्षात्कारे व्यभिचारस्य कथितरीत्यानवकाशात् कृतिसाक्षात्कारे व्यभिचारमुद्धरति नियमत इति । यत्र यत्र कृतिसाक्षात्कारस्तत्र कृतिद्वितीयक्षणे विशिष्टविषयस्मृतिं कल्पयित्वा तदनन्तरक्षण एव कृतिप्रत्यक्षोपगमादित्यर्थः न च कृतित्वनिर्विकल्पकविषयस्मरणयोर्युगपदुत्पादासम्भवात् क्रमेण तदुभयोत्पत्तौ कृतेर्विनाशाद्विषयविरहेण कृतित्वविशिष्टकृतिप्रत्यक्षानुपपत्तिरिति वाच्यं कृतित्वविशिष्टबुद्धौ तज्ज्ञानस्य हेतुत्वानुपगमेन तन्निर्विकल्पकस्यानभ्युपगमात् तत्र विशेषणधियो हेतुत्वेऽपि विषयस्मरणस्यैव कृतित्वविषयकत्वोपगमेनोपपत्तौ तन्निर्विकल्पकस्यानावश्यकत्वात् अनादौ संसारे सर्वदैव कृतित्वविषयकसंस्कारसंभवेन कृतिसाक्षात्कारजनकविषयस्मृतौ तज्ज्ञाने बाधकाभावात् । न चैवमन्यत्रापि निर्विकल्पकोच्छेदः अपूर्वचैत्रत्वादेः प्राथमिकविशिष्टबुद्धिपूर्वं तत्स्मरणासम्भवेन तन्निर्विकल्पकस्यावश्यकत्वात् यत्र विशिष्टान्तरचाक्षुषादिसामग्रीकाले घटादीन्द्रियसंयोगोत्पत्तिस्तत्रैव द्वितीयक्षणे विशिष्टान्तरचाक्षुषाद्युत्पत्त्या तदुत्तरं

घटन्यायविशिष्टधीनिर्वाहाय घटत्वादिनिर्विकल्पकस्यावश्यकत्वाच्च ।

जन्यज्ञाने व्याप्त्यविषयकत्वानिवेशे यत्र व्याप्तिविशिष्टधूमादेः पक्षतावच्छेदकघटकता तत्रत्यानुमितौ वह्निव्याप्यधूमादिविषयकसमूहालम्बनानुमितौ चाव्याप्तिं साध्याद्यननुगमनिबन्धनव्याप्त्यननुगमप्रयुक्ताऽव्याप्तिवारणानुरोधेनावश्यविवक्षणीयवह्निव्याप्तिविशिष्टपर्वतवृत्तिताज्ञानजन्यव्याप्त्यविषयकज्ञानजातीयत्वस्य लक्षणतया निराकर्तुमाह साध्यादेरिति ।

( दी० ) साध्यादेरननुगमात् एकोपादाने अन्यानुमितौ दैवाद्व्याप्तिविषयिण्यां च तस्यामव्याप्तिः परमवशिष्यते । सापि तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया निरसनीया । एतल्लाभायैव चानुभवार्थकं चरमज्ञानपदम् । एवं चान्वयव्यतिरेकव्याप्त्योः पृथक् प्रयोजकत्वेऽपि न क्षतिः । पर्वतवह्निव्याप्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यताया वह्निव्याप्यवत्पर्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिकव्याप्त्यविषयकवृत्तिकार्यताया वा अवच्छेदिका ज्ञानवृत्तिः सामानाधिकरण्येन वावच्छेदिका या जातिस्तद्वत्त्वं वा बोध्यम् ।

( मा० ) आदिना सम्बन्धविशेषादिपरिग्रहः एकोपादाने एकसाध्यादिघटितव्याप्त्यादिविषयकपरामर्शजन्यताघटितलक्षणे अन्यानुमितौ अन्यसाध्यकाद्यनुमितौ दैवात् दैववशसंपन्नसामग्रीविशेषात् तस्याम् अनुमितौ परमित्यनेनातिव्याप्तेरसंभवस्य च व्यवच्छेदः । तादृशज्ञानवृत्तीति पर्वतवह्निव्याप्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नजन्ये व्याप्त्यविषयके वह्निव्याप्यधूमविशिष्टपर्वतत्वाद्यवच्छिन्नविषयकनिश्चयत्वावच्छिन्नजन्ये वा ज्ञाने समवेतेत्यर्थः । तद्वृत्तित्वं तत्समवेतत्वम् अतो न सम्बन्धान्तरेण तद्वृत्तिप्रत्यक्षत्वादिकमादाय ज्ञानमात्रेऽतिव्याप्तिः सत्तागुणत्वज्ञानत्वानुभवत्वजातिमादायातिव्याप्तिवारणायानुभवत्वव्याप्येति । व्याप्यत्वमिह भेद-

गर्भम् अनुभवत्वान्यत्वे सति अनुभवान्यासमवेतत्वरूपं विवक्षितं तेनानुभवत्वानिरासः । यद्यपि अनुभवनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपं यत्किंचिदनुभवासमवेतत्वरूपं वा तद्व्यापकत्वं निवेश्यापि अनुभवत्वान्तजातीनां वारणं संभवति तथापि ईदृशव्यापकजातिवारकप्रकाराणां जातिघटितान्यलक्षणे बहुशो ग्रन्थान्तरे च दर्शितत्वात् दिक्प्रदर्शनार्थैव एकप्रकारोऽत्र दर्शितः व्याप्यपदमेव उक्तभेदगर्भव्याप्यपेक्षया लघुशरीरदर्शितव्यापकत्वार्थकमिति तु न युक्तं यां कां चिदित्यादौ दर्शितभेदगर्भव्याप्यव्याप्यपदार्थस्य स्फुटतयोपादानेन विरोधादिति । जातिपदं समवायेन तद्वत्त्वलाभाय जातिभिन्नज्ञानसमवेतधर्माप्रसिद्ध्या जातित्वनिवेशावैयर्थ्यात् यद्यपि तादृशधर्मोऽनुमितित्वं तदेव च लक्ष्यतावच्छेदकं तथापि स्वरूपतस्तस्य लक्ष्यतावच्छेदकता दर्शितरूपेण च लक्षणत्वमित्यविरोधः । ननु व्याप्त्यविषयकत्वस्य जन्यज्ञानविशेषणत्वे संस्कारवारणायोपात्तं ज्ञानपदमनर्थकं व्याप्यवत्तानिश्चयत्वावच्छिन्नजन्यसंस्कारस्य व्याप्तिविषयकत्वनियमादित्याशङ्क्य तत्पदमुक्तार्थलाभसंपादकतया सार्थकयति एतल्लाभायैव चेति । जन्यपदस्य लक्षणया अनुभवत्वव्याप्यजातिपुरस्कारेण जन्यजातीयत्वार्थे तात्पर्यग्राहायैवेत्यर्थः । अनुभवत्वोपस्थापकज्ञानपदसमभिव्याहारादनुभवत्वघटितोक्तार्थे झटिति तात्पर्यस्य ग्रहात् पटो घटजातीयं द्रव्यमितिवल्लं घटजातीयं द्रव्यमित्यादिवाक्यस्य स्वरसतोऽप्रयोगात्तत्तज्जातीयार्थकपदस्य समभिव्याहृतपदोपस्थाप्यधर्मव्याप्यजात्या साजात्यपरताया औत्सर्गिकत्वादिति भावः । जातिघटनायाश्च प्रयोजनान्तरमपि दर्शयति एवं चेति । पृथक् प्रयोजकत्वेऽपि अनुमितिनिरूपितविभिन्नकारणतावच्छेदकशरीरे विशेषरूपेण प्रवेशेऽपि न क्षतिः न एकतरघटितलक्षणकरणे अपरव्याप्तिज्ञानजन्यानुमितावव्याप्तिः एकतरव्याप्तिज्ञानजन्यजातीयत्वस्यापरव्याप्तिज्ञानजन्यानुमितावक्षतत्वादितिभावः । कार्यतासामानाधिकरण्यस्थाने कार्यतावच्छेदकत्वनिवेशने जातावनुभवत्वव्याप्यत्वविशेषणं विनैव सत्वादिवारणं संभ-

वति तादृशजातीनां परामर्शजन्यतावच्छेदककोट्यनिविष्टत्वात् अनुमितित्वस्यैव च तथात्वादित्याशयेनाह पर्वतेति । व्याप्यपक्षविशेष्यकपरामर्शयोरनुगतरूपेण हेतुतामते तद्रूपावच्छिन्नजन्यतयैव ज्ञानान्तरातिव्याप्त्यनवकाशात्तादृशकारणताघटितप्रथमकल्पे व्याप्यविषयकत्वानिवेशः अवच्छेदकत्वस्य पर्याप्त्यनिवेशाद्विषयविशेषाविषयकत्वस्याधिकस्य परामर्शजन्यतावच्छेदकत्वेऽपि नासंभवः समुदायस्य एकदेशानतिरिक्ततया समुदायस्यावच्छेदकत्वे तदेकदेशस्यापि तथात्वस्याव्याहतत्वात् अत एवावच्छेदककोटिप्रविष्टवह्नित्वादिजातिमादाय वह्न्यादिरूपविषयेऽतिव्याप्तिवारणाय ज्ञानवृत्तिरिति ज्ञानसमवेतेत्यर्थः । अथ वह्नित्वादिकमवच्छेदकविशेषणतया अवच्छेदकतायामेवावच्छेदकं न तु कार्यतायां तथा च कथं त ज्जातिमादायातिप्रसक्तिः न च स्वावच्छिन्नविधेयताकत्वसम्बन्धेन कार्यविशेषणतया वह्नित्वमपि कार्यतावच्छेदकमिति वाच्यं तादृशपरंपरायाः सम्बन्धत्वे मानाभावात् विषयितासम्बन्धेन च वह्नित्वस्यातिप्रसक्ततया अवच्छेदकत्वायोगादिति चेन्न अवच्छेद्याश्रये साक्षात्परंपरया वा यावन्ति विशेषणानि तावत्स्वेककार्यतावच्छेदकत्वोपगमे बाधकाभावात् कार्यतावच्छेदकादिविशेषणस्य कार्यतादौ तदवच्छेदकत्वे वा अवच्छेदकत्वमित्यत्र विनिगमकाभावेऽपि न ज्ञानवृत्तीत्यस्य वैयर्थ्यम् । न च व्यधिकरणस्यानवच्छेदकत्वनियमाद्विषयवृत्तेर्न कार्यतावच्छेदकत्वसंभव इति वाच्यं साक्षादवच्छेद्याश्रयविशेषणतया विलक्षणावच्छेदकतायामेव सामानाधिकरण्यापेक्षणात् अवच्छेदकघटकानां भेदेऽपि अवच्छेद्यज्ञाननिरूपिताया अवच्छेदकत्वपर्याप्त्यधिकरणं यादृशं तादृशप्रकारावच्छेद्याश्रयविषयताया अभेदादवच्छेद्यकार्यत्वादेरभेद इति वह्निविधेयकानुमितिः परामर्शजन्या इत्याकारके कार्यकारणभावग्रहे अनुमितिविषयताया ऐक्यात् कार्यकारणभावैक्यम् अनुमितित्ववह्नित्वादीनां अवच्छेदकतावैलक्षण्येन तावत्समुदाये यद्यपि नैकमवच्छेदकत्वं तथापि तत्कार्यतानिरूपितावच्छेदकतात्वेन तदवच्छेदकतानां व्यासज्यवृत्तित्वे बाधकाभावः । तादृशानुगतरूपावच्छिन्नाव-

च्छेदकत्वाधारतायाः समुदायवृत्तिधर्मेणैवावच्छेदादित्यलं पल्लवेन । तादृशजातिमज्ज्ञानत्वस्य लक्षणत्वे सामानाधिकरण्यसम्बन्धेन तादृशजातिवैशिष्ट्यस्य ज्ञानत्व इव विषयवृत्तिधर्मेऽपि सत्त्वेन तद्व्यावर्तनाय ज्ञानत्वत्वरूपेण ज्ञानत्वस्याप्यवश्यं निवेशनीयतया गौरवमिति तदुपेक्षितं ज्ञानत्वाद्यवच्छिन्नसाध्यकादिपरामर्शजन्यताघटितज्ञानवृत्तिजातिमादाय लक्षणं दुष्करं तत्र विषयवृत्तिज्ञानत्वादिजातिमादायातिव्याप्तेर्दुर्वारत्वादिति तादृशपरामर्शजन्यताघटितमपि लक्षणं संभवतीति सूचयितुं ज्ञानवृत्तित्वविशेषणं परित्यज्य कल्पान्तरमाह सामानाधिकरण्येन वेति । कार्यविशेषणतया विलक्षणमवच्छेदकत्वमिह सामानाधिकरण्येनावच्छेदकत्वम् । अतो ज्ञानत्वादेः कार्यतासमानाधिकरणत्वेऽपि न क्षतिः । यत्तु आलोकादिलिङ्गकानुमितौ धूमादिलिङ्गकपरामर्शस्य व्यभिचारवारणाय स्वसमानाधिकरणतत्तल्लिङ्गकपरामर्शाव्यवहितोत्तरपर्वताद्युद्देश्यकवह्न्यादिविधेयकानुमितित्वमेव तल्लिङ्गकपरामर्शजन्यतावच्छेदकं वाच्यं तथा च परामर्शविशेषणतया ज्ञानत्वस्य परामर्शजन्यतावच्छेदकत्वात्तदादाय प्रत्यक्षादावतिप्रसक्तिवारणाय सामानाधिकरण्येनेति कल्पानुसरणमिति । तन्न साधीयः । अव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वे ऽनुमितित्वनिवेशस्य निष्प्रयोजनकतयाऽसंभवप्रसङ्गात् न ह्यव्यवहितोत्तरत्वनिवेशे क्वापि व्यभिचारः प्रसज्येत येन तद्वारकतया अनुमितित्वनिवेशनं सार्थकं भवेत् । अथानुमितित्वाप्रवेशे धूमपरामर्शाव्यवहितोत्तरोत्पन्नतत्समानाधिकरणात्मघटसंयोगद्वित्वाद्याधिकरणे घटादौ परामर्शाभावेन व्यभिचार इत्यनुमितित्वनिवेशसार्थक्यम् । न च विषयविशेषावगाहित्वनिवेशान्निर्विषयसंयोगादिव्यावृत्तिरिति वाच्यम् । अव्यवहितोत्तरत्वनिवेशे विषयविशेषावगाहितायाः प्रयोजनान्तराभावेनानिवेशात् । न च कार्यनिरूपितं दैशिकव्यापकत्वं न कारणताघटकम् । अपि तु कार्यतावच्छेदकव्यापकसामानाधिकरण्यप्रतियोगित्वम् । अत एव क्रियानधिकरणोत्तरदेशसंयोगोत्पत्तावपि तस्यास्तत्कारणत्वमिति वाच्यम् । प्रकृते कार्यनिरूपितदैशिकव्यापकतायाः कारणत्वाघटकत्वे कार्याधिकरणदेशत्वस्य

कारणाधिकरणदेशत्वानियतत्वनिर्वाहात् । क्रियाधिकरणे उत्पद्यमानः संयोगो यथा तदनधिकरणोत्तरदेशे जायते तथा परामर्शाधिकरणे इव तदनधिकरणेऽपि सिद्ध्यभावादिघटितानुमित्युत्पादस्य दुर्वारत्वादिति चेत् । सत्यम् । अनुमितित्वमनिवेश्य स्वसमानाधिकरणपरामर्शाव्यवहितोत्तरत्वस्य जन्यतावच्छेदकत्वे संयोगादिविशेषे व्यभिचारोऽस्त्येव तद्वारणाय स्वाव्यवहितपूर्ववर्तिपरामर्शसामानाधिकरण्यमेव विशेषणतया जन्यतावच्छेदकमुपेयतां तथा च तद्विशिष्टाधिकरणं परामर्शाधिकरणमेवेति तदुपलक्षितस्य संयोगादेः परामर्शव्यभिचारेऽपि तद्विशिष्टाधिकरणताघटितव्यापकतागर्भकारणत्वमक्षतमित्यनुमितित्वनिवेशनमफलम् । न च स्वत्वाननुगमेन नोक्तधर्मस्य कार्यतावच्छेदकत्वमपि तु अव्यवहितोत्तरत्वसामानाधिकरण्योभयसम्बन्धेन परामर्शविशेष एव तज्जन्यतावच्छेदकः तस्य चानुमितिरूपकार्ये विशेषणतया न कारणताघटकत्वसंभवः । परामर्शसमानकालीनविनश्यदवस्थपरामर्शजन्यानुमित्यधिकरणतायाः परामर्शविशिष्टानिरूपितत्वेन कारणत्वाघटकतया परामर्शस्य तादृशानुमित्यकारणत्वप्रसङ्गात् । न हि विशेष्यानिरूपिताधिकरणतावच्छेदककालावच्छेदेन विशेष्ये असम्बद्धे व्यावर्तके अधिकरणतानिरूपकतावच्छेदकत्वरूपमाधिकरणतानिरूपकविशेषणत्वमुपेयते किं तूपलक्षणत्वमेव भूतलाद्यधिकरणे पुरुषादेः सत्त्वदशायां पुरुषाद्यसम्बद्धेन तद्व्यावर्तकेनापि दण्डादिना विशिष्टस्य पुरुषादेराधिकरणत्वस्य भूतलादावभावात् । परामर्शोपलक्षितस्य संयोगादेर्यदादौ व्यभिचार एवेत्यनुमितित्वनिवेशनमावश्यकमिति वाच्यम् । तदधिकरणतावच्छेदककालावच्छेदेनावृत्तेरप्येककालावच्छिन्नत्वाविशेषितस्य सामानाधिकरण्यसम्बन्धेन तदधिकरणतानिरूपकतावच्छेदकत्वोपगमात् । अत एव सिद्धिसिषाधयिषोभयकाले कालान्तरावच्छिन्नतदधिकरणात्मवृत्तिसिषाधयिषाविरनिविष्ट [illegible] विशिष्टसिद्ध्यभाव-

... अनिर्वाह इत्यालोच्य दीधितिकृतां पक्षताग्रन्थे एकक्षणावच्छिन्नत्वविशेषितसामानाधिकरण्यसम्बन्धेन सिद्धौ

सिषाधयिषाविरहवैशिष्ट्यमित्यभिधानं संगच्छते अत एव पक्षताया विशिष्टाभावरूपाया अतीन्द्रियक्षणघटितत्वेनातीन्द्रियतया प्रत्यक्षासंभवाभिप्रायेण विशेष्याद्यभावरूपाया इत्यनुपदं तदभिधानस्यापि संगतिः । एवं चानुमितित्वस्य परामर्शजन्यतावच्छेदककोटावप्रवेशेऽपि नोक्तव्यभिचारप्रसङ्गः । यदादौ परामर्शाधिकरणतानियतायाः तदुपलक्षिताधिकरणताविलक्षणायाः सामानाधिकरण्यघटितसम्बन्धेन परामर्शविशिष्टाधिकरणताया असत्त्वात् । नापि विनश्यदवस्थपरामर्शजन्यानुमित्यधिकरणतायाः कारणताघटकव्यापकतायामनिवेशे तस्याः परामर्शरूपकारणनियम्यता न स्यादिति दूषणस्यावकाशः तदधिकरणताया अपि विशिष्टाधिकरणतात्वेन तादृशव्यापकतायां प्रवेशात् अस्तु वा स्ववृत्तित्वस्ववृत्तिधूमादिपरामर्शाव्यवहितोत्तरत्वोभयसम्बन्धेनात्मविशिष्टत्वमेव धूमादिपरामर्शजन्यतावच्छेदकं तावताप्यन्यलिङ्गकानुमितौ तस्य व्यभिचारवारणात् । आत्मवृत्तित्वविशिष्टस्येवाधेयतयात्मविशिष्टस्याप्यनात्मन्यवृत्तेरिति ज्ञानत्वादिकं निवेश्यापि संयोगादौ व्यभिचारवारणसंभवात् । विनिगमनाविरहेण तस्यापि कार्यतावच्छेदकताया दुर्वारत्वादतिप्रसङ्गाच्च । न चाव्यवहितप्राक्क्षणावच्छिन्नवह्निलिङ्गकपरामर्शाधिकरणताविशिष्टसमवायस्तल्लिङ्गकपरामर्शजन्यतावच्छेदकसम्बन्धः एवं च शुद्धमनुमितित्वमेव तज्जन्यतावच्छेदकं शुद्धज्ञानत्वादिकं च नित्यसाधारणमिति न तथात्वसंभव इति वाच्यं तथा सति ज्ञानत्वस्य कार्यतावच्छेदककोट्यप्रवेशेन तद्धारकविशेषणोपादानानुपपत्तेः । तस्मात् यत्साध्यपक्षकानुमितिरेकलिङ्गकपरामर्शजन्यैव प्रसिद्धा तत्पक्षकतत्साध्यव्याप्यवत्तापरामर्शजन्यताघटितमेव लक्षणमभिप्रेतं पर्वतादिपदमपि तत्पक्षादिपरमेव तत्र च न परामर्शविशेषणतया ज्ञानत्वस्य जन्यतावच्छेदककोटिप्रवेशप्रसक्तिरिति । तथा च ज्ञानत्वघटितयादृशसाध्यकानुमितिरेकलिङ्गकपरामर्शादेव तदनुमितिकारणताघटितमपि लक्षणं ज्ञानवृत्तित्वविशेषणमुपेक्ष्य सामानाधिकरण्येनावच्छेदकत्वं निवेश्य कर्तुं शक्यते इत्याशयेन सामानाधिकरण्येन वेत्यभिहितमिति तत्त्वम् ॥

ननु विशिष्टवैशिष्ट्यबोधातिव्याप्तिवारणाय नानापदार्थघटित-गुरुतरव्याप्त्यविषयकत्वनिवेशनमयुक्तं अभावत्वादियत्किंचिद्व्याप्ति-घटकपदार्थाविषयकत्वं निवेश्यापि तद्वारणसम्भवात् जातिघटनया अभावाद्यनुमितेरपि संग्रहादित्याशयेनाह व्याप्तिभान इति।

(दी०) व्याप्तिभाने ऽवश्यं भासमानो यस्तादृशानुमि-त्यविषयस्तद्विषयत्वमात्रं वा ग्राह्यं यां कां चिदनुमितिव्य-क्तिमादाय तद्व्यक्तिसमवेतानुभवत्वान्यानुभवान्यासमवेतधर्म-समवायित्वमिति वा वक्तव्यम्। अनुभवत्वजात्यनङ्गी-कारे तु तद्व्यक्तिसमवेतस्मरणासमवेतधर्मसमवायित्वं वक्त-व्यम्। व्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्य-तावच्छेदकावच्छिन्ना या विशिष्टपरामर्शत्वावच्छिन्नकारण-ताप्रतियोगिककार्यता तत्समानाधिकरणानुभवत्वव्याप्यजाति-मत्त्वं तत्त्वमित्यपि कश्चित्।

(गा०) व्याप्तिज्ञानविषयतद्घटकपदार्थान्तराविषयकत्वनिवे-शेऽतिव्याप्तेर्दुर्वारत्वात् अवश्यमिति। अनुमितौ नियतभास-मानव्याप्तिघटकसाध्याद्यविषयकत्वनिवेशस्यासंभवसंपादकत्वादसं-भव इत्यतस्तादृशानुमित्यविषय इति प्रकृतसाध्यकयत्किं-चिदनुमित्यविषय इत्यर्थः। यत्किञ्चिदनुमितिविषयतायाः प्र-कृतसाध्यादिसाधारणत्वात् सामान्यतोऽनुमितिविषयतायाः प्रकृतसाध्यकयावत्प्रमेयविशेष्यकसमूहालम्बनानुमितिविषयतायाश्च केवलान्वयित्वात्। प्रकृतसाध्यकेति यत्किञ्चिदिति चा-तिव्याप्त्यसम्भवयोर्वारकतामाविष्कर्तुमेवोकमङ्गयाभिधानं निवेशा-स्तु तादृशपदार्थस्य कस्य चिदेकस्य विशिष्यैवेत्यवधेयम्। अनुभवत्वव्याप्यजातिघटितलक्षणे परामर्शत्वावच्छिन्नकारणता-प्रतियोगिकव्याप्त्यविषयकवृत्तिकार्यताशालित्वेन कतिपयानुमि-[illegible] निवेशनमयुक्तं तद्व्यक्तीनाम् एकानुमितिव्यक्तिमुपादाया-नुभवत्वव्याप्यजात्या तद्व्यक्तिजातीयत्वस्यापि लघोर्लक्षणत्व-संभवादित्याशयेन तादृशजातिघटितलक्षणं तथैव निष्क-

र्पयति यां कां चिदिति । अनुभवत्वस्य तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक एव भेदो निविष्टः न त्वनुभवत्वत्वावच्छिन्नप्रतियोगिताकः अनुभवत्वत्वशरीरे सकलानुभवसमवेतत्वस्य निविष्टत्वात् तदवच्छिन्नभेदनिवेशनेनैवानुभवत्वज्ञानत्वादिसकलव्यापकजातिवारणसंभवे भेदप्रतियोगितावच्छेदकशरीरे अनुभवेतरासमवेतत्वनिवेशनेनान्यत्वान्तस्य ज्ञानत्वादिसाधारण्यं संपाद्य तद्वारणायानुयोगिन्यनुभवान्यासमवेतत्वरूपविशेषणान्तरप्रवेशस्य प्रक्षालनाद्धीत्यादिन्यायविषयत्वात् तद्व्यक्तिसमवेतप्रत्यक्षासमवेतधर्मसमवायित्वस्य लक्षणत्वसंभवेऽपि न क्षतिः अनुभवत्वव्याप्यताघटितपूर्वलक्षणस्यैवेदानीं निष्कर्षणात् तद्व्यक्तिपदेन प्रत्यक्षादिव्यक्तिमुपादाय उक्तशब्देन प्रत्यक्षादिलक्षणमपि संभवतीत्याशयेन प्रत्यक्षाद्यसमवेतत्वं नोपात्तमिति केचित् । तन्न तद्व्यक्तिसमवेतयत्किंचिदनुभवासमवेतधर्मसमवायित्वमित्येकशब्देन प्रमाचतुष्टयलक्षणसंभवात्तथानभिधानबीजानुयोगस्य तावतांप्यपरीहारात् । धर्मसमवायित्वमिति । समवायेन तद्वत्त्वमित्यर्थः यथाश्रुते कालिकादिसम्बन्धेन तादृशानुमितित्वसमवायस्यातिव्याप्ततया सम्बन्धविशेषेण समवायवत्तानिवेशस्यावश्यकत्वे समवायस्यैव सम्बन्धताया उचितत्वात् । नन्वनुभवचतुष्टयसाधारणी जातिरप्रामाणिकी प्रत्यक्षत्वस्यैव विशेषणधीजन्यतावच्छेदकत्वसंभवादिति स्मृत्यन्यज्ञानत्वमेवानुभवत्वं तथा चानुभवत्वान्यत्वविशेषणमयुक्तं स्मृत्यन्यत्वविशिष्टस्यापि ज्ञानत्वस्य ज्ञानत्वानतिरिक्ततया विशेषणान्तरेण वारितत्वात् । एवमनुभवान्यासमवेतेति स्मरणान्यज्ञानान्यासमवेतेत्यर्थकं तत्र स्मरणभिन्नज्ञानत्वनिवेशनमनतिप्रयोजनकं ज्ञानान्यसमवेतेच्छात्वादेस्तद्व्यक्तिसमवेतत्वविशेषणेनैव वारणात् स्मरणान्यान्यत्वेन स्मृत्युपादानमपि न हि घट इत्यादिवक्तव्येऽनघट इति कश्चिद्वदतीति न्यायेनायुक्तमित्यत आहानुभवत्वेति । अनुभवत्वजात्यङ्गीकर्तृमते अनुभवत्वान्यत्वविशेषणस्यानुभवत्वव्यावर्तनायावश्यकतया तदनंगीकारे त्वित्युक्तम् । मूलोक्तलक्षणे चक्रवर्तिव्याख्यानमुपन्यस्यति व्याप्तीति । व्याप्तिज्ञानत्वावच्छिन्नेति धूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तिप्रकारकनिश्चयत्वावच्छिन्नत्य-

र्थः । विशिष्टपरामर्शत्वावच्छिन्नेति वह्निव्याप्यप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नेत्यर्थः धूमो वह्निव्याप्य इत्याकारकव्याप्तिप्रकारकनिश्चयस्य करणविधया हेतुत्वं तज्जन्यतावच्छेदकं धूमलिङ्गकवह्निविधेयकानुमितित्वं वह्निव्याप्यधूमवान् पर्वत इत्यादिपरामर्शस्य च तद्व्यापारविधया तत्त्वं तज्जन्यतावच्छेदकं च पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नविधेयताकधूमलिङ्गकानुमितित्वम् एवं च धूमत्वावच्छिन्नविशेष्यकव्याप्तिप्रकारकनिश्चयत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकीभूतोपदर्शितधर्मावच्छिन्नव्याप्यप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नकारणताप्रतियोगिका च या पर्वतो वह्निमानित्येतादृशानुमितिनिष्ठा कार्यता तादृशकार्यतासमानाधिकरणानुभवत्वव्याप्यजातिश्चानुमितित्वजातिरेव तामादाय सकलानुमितौ लक्षणसमन्वयः वह्निव्याप्यधूमवत्पर्वतवानित्यादिविशिष्टवैशिष्ट्यबोधवृत्तितथाविधनिश्चयत्वावच्छिन्नविशेषणतावच्छेदकप्रकारकज्ञानीयकारणताप्रतियोगिककार्यतामादायातिप्रसङ्गवारणायावच्छिन्नान्तं तथा च वह्निव्याप्तिविशिष्टावच्छिन्नपर्वतप्रकारताशालिज्ञानत्वावच्छिन्नतादृशकार्यतायां धूमत्वावच्छिन्नविशेष्यकवह्निव्याप्तिप्रकारकनिश्चयत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकावच्छिन्नत्वाभावान्न तामादायातिप्रसङ्गः वह्निव्याप्यधूमवान् पर्वत इत्येतादृशनिश्चयत्वावच्छिन्नकारणताया अपि धूमत्वावच्छिन्नविशेष्यकवह्निव्याप्तिप्रकारकतादृशनिश्चयवृत्तित्वात्तादृशकारणतानिरूपितकार्यतावच्छेदकावच्छिन्नतादृशकार्यतामादायातिप्रसङ्ग इत्यतस्तादृशनिश्चयवृत्तित्वमपहाय तादृशनिश्चयत्वावच्छिन्नत्वनिवेशनं तादृशनिश्चयत्वान्यूनवृत्तित्वं तदर्थः अन्यथा वह्निव्याप्यधूमवान्पर्वत इत्यादिविशेषणतावच्छेदकप्रकारकनिश्चयस्य वह्निव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन पर्वतत्वावच्छिन्नविशेषणतापन्नधूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तिप्रकारताशालिनिश्चयत्वेन च विनिगमनाविरहेण हेतुत्वाद्धिकं त्वित्यादिन्यायेन तादृशनिश्चयहेतुताया अपि तथाविधनिश्चयत्वावच्छिन्नतया तन्निरूपितकार्यतामादायातिप्रसङ्गवार-

णासंभवात् तादृशनिश्चयत्वान्यूनवृत्तित्वनिवेशे च वह्निव्याप्यधूमवान् पर्वत इत्येतादृशविशेषणतावच्छेदकप्रकारकनिश्चयहेतुताया वह्निव्याप्यो धूम इत्येतादृशनिश्चयावृत्तित्वेन तादृशनिश्चयत्वन्यूनवृत्तित्वेन न दोषः । वह्निव्याप्यधूमवत्पर्वतवान् देश इत्येतादृशविशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नकार्यताया अपि धूमत्वावच्छिन्नविशेष्यकव्याप्तिप्रकारकनिश्चयत्वावच्छिन्ना या विशेषणतावच्छेदकप्रकारकनिश्चयविधया कारणता तत्प्रतियोगिकव्याप्तिविशिष्टधूमवैशिष्ट्यावगाहिबोधनिष्ठकार्यतासमानाधिकरणत्वात् उक्तातिप्रसङ्गवारणासम्भवेन तादृशकार्यतासामानाधिकरण्यमपहाय तदवच्छेदकावच्छिन्नत्वनिवेशनम् । एवं च तादृशव्याप्तिप्रकारकनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकीभूतवह्निव्याप्यवच्छिन्नधूमविशेषणताकबुद्धित्वेन वह्निव्याप्यत्वविशिष्टधूमावच्छिन्नपर्वतविशेषणताकबुद्धित्वावच्छिन्नायाः कार्यतायाः अनवच्छिन्नत्वान्नातिप्रसङ्गः । अथैवमपि वह्निव्याप्यत्वावच्छिन्नधूमविशेषणताकबुद्धित्वावच्छिन्नजन्यतावच्छेदकघटकीभूतेन बुद्धित्वेन वह्निव्याप्यत्वविशिष्टधूमावच्छिन्नपर्वतविशेषणताकबुद्धित्वावच्छिन्नजन्यताया अवच्छिन्नत्वात्सोक्तातिप्रसङ्गवारणसम्भवः न च तदवच्छेदकावच्छिन्नेत्यत्र तदवच्छेदकपदस्यावच्छेदकतापर्याप्त्यधिकरणपरत्वात् नावच्छेदकैकदेशज्ञानत्वावच्छिन्नत्वमादायातिप्रसङ्ग इति वाच्यं समुदायस्य एकदेशानतिरिक्तत्वात् समुदायस्य तथात्वे एकदेशस्यापि तथात्वमित्यस्य शब्दमात्रत्वात् इति चेन्न तदवच्छेदकावच्छिन्नेत्यत्र तदवच्छेदकतापर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिनिरूपकतावच्छेदकताकत्वं विवक्षितं न्यूनाधिकपदार्थावच्छिन्नोक्तजन्यतयोरवच्छेदकत्वे च नैकधर्मावच्छिन्नपर्याप्तिके न्यूनाधिकवृत्तिभ्यां तावत्पदार्थसमुदायत्वाभ्यामेव तत्पर्याप्त्यवच्छेदादिति नातिप्रसङ्गः प्रकृते च व्याप्तिनिश्चयव्याप्यवत्तानिश्चयनिरूपितजन्यतावच्छेदककुक्षिनिविष्टपदार्थानां न्यूनाधिकभावविरहेण एकेनैव समुदायत्वेन तदुभयावच्छेदकतापर्याप्तिरवच्छिद्यते अतो नासंभवः । अथ धूमो वह्निव्याप्य इत्येतादृशव्याप्तिनिश्चयस्य धूमलिङ्गकवह्निविधेयकानुमितित्वमेव

जन्यतावच्छेदकमुपेयते न तु तत्र पक्षविषयत्वान्तर्भावः तथा सत्यनन्तपक्षभेदेन तत्कारणताबाहुल्यप्रसंगात् वह्निव्याप्यधूमवान् पर्वत इतिपरामर्शजन्यतावच्छेदककोटौ च पर्वतविषयत्वान्तर्भाव आवश्यकः अन्यपक्षकानुमितौ तदहेतुत्वात् कथं तादृशजन्यतावच्छेदकत्वयोरेकपदार्थावच्छिन्नपर्याप्तिकत्वं न च तदवच्छेदकावच्छिन्नेऽन्यत्र तदवच्छेदकयावत्पदार्थावच्छिन्नत्वमेव निवेशनीयं न त्वेकधर्मावच्छिन्नपर्याप्तिनिरूपकतावच्छेदकताकत्वं धूमो वह्निव्याप्य इतिविशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदककोटौ धूमनिष्ठविशेषणताया निवेशात्। वह्निव्याप्यधूमवान पर्वत इति विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदककोटौ च तन्निष्ठविशेषणतावच्छेदकताया एव निवेशात् नैतादृशजन्यतायास्तादृशजन्यतावच्छेदकयावत्पदार्थावच्छिन्नत्वमिति नातिप्रसङ्गः प्रकृते च परामर्शजन्यतावच्छेदककोटौ पक्षविषयत्वस्याधिकस्य निवेशेऽपि तज्जन्यताया व्याप्तिज्ञानजन्यतावच्छेदकयावत्पदार्थावच्छिन्नत्वमव्याहतमेवेति नासंभव इति वाच्यं धूमो वह्निव्याप्य इत्येतादृशव्याप्तिनिश्चयजन्यतावच्छेदककोटौ पर्वतविशेष्यतया अनिरूपितमहानसादिनिष्ठविशेष्यतानिरूपितवह्निविधेयताया अपि वह्निविधेयतात्वेन निवेशात् वह्निव्याप्यधूमवान् पर्वत इत्येतादृशपरामर्शजन्यतावच्छेदककोटौ च पर्वतनिष्ठविशेष्यतानिरूपितवह्निविधेयताया एव निवेशात् परामर्शजन्यताया व्याप्तिनिश्चयजन्यतावच्छेदकयावत्पदार्थावच्छिन्नत्वविरहात्। एवं व्याप्तिनिश्चयजन्यतावच्छेदककोटौ तदन्यवह्निहेतोरसत्त्वमन्यलिङ्गकानुमितौ व्यभिचारवारणाय निवेशनीयं न तु व्याप्यवत्ताज्ञानान्यवह्निहेतोरसत्त्वं गौरवात् व्याप्यवत्तानिश्चयजन्यतावच्छेदककोटौ न तन्निवेशः तन्निवेशेऽपि धूमो वह्निव्याप्य इत्येतादृशज्ञानकालीनान्यलिङ्गकानुमितौ व्यभिचारात् अपि तु व्याप्यवत्तानिश्चयान्यवह्निहेतोरसत्त्वमेव तथा च परामर्शजन्यताया न व्याप्तिज्ञानजन्यतावच्छेदकयावत्पदार्थावच्छिन्नत्वमिति चेन्न। करणव्यापारनिरूपितफलनिष्ठजन्यतयोः प्राचीनमते एकधर्मावच्छिन्नत्वनियमादन्यथा पर्वतपक्षकधूमलिङ्गकवह्निविधे-

यकानुमितित्वमेव व्याप्तिज्ञानपरामर्शयोर्जन्यतावच्छेदकं वाच्यं तथा च तादृशजन्यत्वयोरेकधर्मावच्छिन्नपर्याप्तिनिरूपकतावच्छेदकताकत्वमक्षतमेवेति नानुपपत्तिः एतादृशनियमस्याप्रामाणिकत्वात् अयमेवास्वरसः केचिदित्यनेन सूचितः । धूमत्वावच्छिन्नधर्मिकव्याप्तिप्रकारकज्ञानीयकारणताया अपि वह्निव्याप्यधूमवान् पर्वत इत्येतादृशनिश्चयवृत्तित्वात् तत्प्रतियोगिककार्यतायास्तादृशव्याप्तिनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकावच्छिन्नत्वमादायातिप्रसङ्गवारणाय विशिष्टपरामर्शवृत्तित्वमपहाय तदवच्छिन्नत्वनिवेशः पदान्तरव्यावृत्तिस्तु पूर्ववद्बोध्या । अत्र व्याप्त्यविषयकवृत्तित्वस्य निवेशेनैव विशिष्टवैशिष्ट्ययोधादिवृत्तिकार्यतामादायातिप्रसङ्गवारणं संभवति गुरुतरव्याप्तिनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकावच्छिन्नत्वस्य निवेशाद्गौरवमित्यप्यस्वरसः केचिदित्यनेन सूचितः ॥

मिश्रव्याख्यानमुपन्यस्यति परे त्विति ॥

(दी०) परे तु पक्षधर्मतेत्यत्र पक्षता विशेषणं तथा च पक्षतासहकृततादृशपरामर्शजन्यत्वमर्थः यथोक्ताया विशेष्याद्यभावरूपाया वा पक्षतायाः प्रत्यक्षवारणाय परामर्शस्योपादानं तत्त्वेन जनकत्वमेकावच्छेदेन तदुभयजन्यत्वं च विवक्षितं तेन बाधादिकालीनेन दैवात् प्रतियोगिविषयकेन परामर्शेन जन्ये पक्षतायाः प्रत्यक्षे तदुभयसमूहालम्बने वा नातिप्रसङ्गः । तद्वृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया च नाव्याप्तिरित्याहुः । तच्चिन्त्यम् ।

(गा०) यथाश्रुतव्याख्येयलक्षणे पक्षताजन्यत्वनिवेशान्मूलोक्तशब्दात्तल्लाभायाह पक्षधर्मतेत्यत्रेति । प्रतिपाद्यकोटिनिविष्टत्वं सप्तम्यर्थः तच्च पक्षतेत्यत्रान्वेति तथा च पक्षधर्मतेत्यत्र तत्पदप्रतिपाद्यकोटिनिविष्टा पक्षतेत्यर्थः तथा च पक्षपदं न धर्मिमात्रपरमपि तु पक्षताविशिष्टधर्मिपरमेवेति भावः । विशेषणमिति ज्ञानपदार्थे इत्यादिः । धर्मत्वरूपविषयविशेषणत्वेन

विषयतया ज्ञानान्वयिनि धर्मिरूपविशेष्यांशे न तस्य विशेषणत्वसंभवः परामर्शाविषयस्य तस्य तद्विषयविशेषणत्वासंभवात् दण्डाद्यविषयकस्य पुरुषादिज्ञानस्य पुरुषादेर्दण्डादिमत्त्वेऽपि दण्डादिविशिष्टपुरुषाद्यविषयकत्वात् दण्डपुरुषावित्यादिज्ञानस्य दण्डादिविषयकत्वेऽपि न तद्विशिष्टविषयकत्वं विषयतावच्छेदकस्यैव विषयविशेषणत्वादतः पक्षतोपलक्षितधर्मिविषयकमेव ज्ञानमिह विवक्षितं तथा सत्यपि पक्षताजन्यत्वसहितं परामर्शजन्यत्वं जन्यान्तात् लभ्यते विशेष्यीभूततदन्वयिना तदन्वयिनो विशेषणत्वात् ज्ञानविशेषणपक्षताया ज्ञानान्वितजन्यपदार्थजन्यतायामन्वयादित्याशयेन तथैव लक्षणार्थमाह तथा चेति । यथारुणया गवा सोमं क्रीणातीत्यादौ गवादावारुण्यादेः साक्षात् प्रकारतया तत्र तस्य विशेषणत्वसंभवेन गवादिसाध्यतया प्रतीयमाने सोमक्रयादौ आरुण्यादिसाध्यताप्रतीतिः संभवतीति प्रकृतस्थले तु पक्षताया ज्ञानांशे साक्षादप्रकारत्वाज्ज्ञानान्वयिना जन्यत्वेन कथमन्वयः । न चारुणयेत्यत्रापि आरुण्यं गवि न साक्षात्प्रकारः । अभेदसम्बन्धेनारुण्यविशिष्टाया एव तत्र साक्षात् प्रकारत्वात् तथा च परंपरया गवि प्रकारस्यापि आरुण्यस्य यथा गवान्वयिना तृतीयार्थसाध्यत्वेनान्वयस्तथा प्रकृतेऽपि ज्ञानविशेषणधर्मतायां प्रकारीभूतधर्मिणि प्रकारीभवन्त्याः पक्षताया ज्ञानान्वयितावच्छेदकावच्छिन्नजन्यत्वे ऽन्वयः सम्भवतीति वाच्यम् । विशेषणविभक्तेरभेदार्थकतया अरुणाभेदस्यारुण्यपर्यवसितस्य साक्षाद्गोविशेषणत्वसंभवात् । मेवं लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ यथा लौहित्यस्य ऋत्विक्प्रचरणांशे परंपरया विशेषणस्यापि तदन्वयिना इष्टसाधनत्वेनान्वयस्तथा प्रकृतेऽपि परंपरया ज्ञानविशेषणीभूतपक्षताया अपि जन्यतान्वये बाधकाभावात् । एवं विशेषणविभक्तेः सार्थकता-
ने अरुणयेत्यादावारुण्यं गवि परंपरयैव प्रकार इति साक्षात्
तदन्वयिना अन्वय इति नियमाभावात् । अथ
भवतु परंपरया स्वविशेष्येऽन्वयिनापि स्वान्वयः तथापि जन्यतायां ज्ञानान्वये उपलक्षणतया भासमानविषयांशे प्रकारीभू-

तायाः पक्षताया जन्यतान्वयो न संभवतीति उपलक्षणपु-च्छलग्नस्य विशेषणत्वायोगात् लोहितोष्णीषा इत्यादौ लौहि-त्यविशेष्यीभूतोष्णीषादावपि इष्टसाधनतान्वयोपगमेन लौहि-त्यस्यारुणयेत्यादावारुण्यविशेष्यतद्धर्मिणोऽपि क्रयसाधनत्वान्व-योपगमेनारुण्यस्योपलक्षणपुच्छलग्नत्वाभावेन सामञ्जस्यात् प्रकृ-ते च परामर्शविषयेऽनुमितिजनकत्वबाधेन तदन्वयायोगात् । उपलक्षणताया एव वाच्यत्वादिति चेन्न । प्रकृतेऽपि जन्यपद-स्य प्रयोज्यपरतया कारणतावच्छेदकप्रविष्टविषयाणामपि अनुमि-तिप्रयोजकतया तेषामपि जन्यपदार्थान्वयः संभवत्येवेति सा-मञ्जस्यात् परामर्शादिप्रयोज्यतया लक्षणघटकत्वेऽपि परामर्शा-द्यन्यविप्रयोज्यताशरीरे जनकजनकत्वादिना या अन्यथासि-द्धिस्तदनिरूपकत्वस्य निवेशेनानुमितिजन्यप्रत्यक्षादौ अतिव्या-प्तिवारणसंभवात् विषयप्रयोजकतायाश्च लक्षणघटकत्वे-न न विवक्षा अतो न लक्षणे व्यर्थविशेषणता । वस्तुतो ज्ञानां-शे पक्षताश्रयधर्मिवृत्तिताविषयकत्वस्य साक्षात् प्रकारतया भाने पक्षताया अपि धर्मिपारतन्त्र्येण स्वाश्रयधर्मिवृत्तित्वावि-षयकत्वसम्बन्धेन तदंशेऽन्वयः स्वीक्रियते तथा च ज्ञानांशे परं-परासम्बन्धेन साक्षात् प्रकारीभवन्त्याः पक्षताया जन्यत्वान्व-यो निराबाध एव दण्डिनं पुरुषमानयेत्यादौ अन्तरा भास-माने मत्वर्थसम्बन्धे आनयनकर्मत्वबाधेऽपि दण्डादावानय-नकर्मत्वान्वयो दण्डादेरपि स्वसम्बन्धभेदसम्बन्धेन पारतन्त्र्ये-ण पुरुषादौ साक्षात्प्रकारत्वोपगमेनोपपादनीयः । यत्तु प-क्षतायाः सहकृतत्वसम्बन्धेन ज्ञानविशेषणत्वात् पक्षताजन्य-त्वलाभ इति तदसत् । परंपरया विशेषणस्य परंपराघटकत-त्पदार्थघटितपरंपरासम्बन्धातिरिक्तसम्बन्धेनान्वये आकाङ्क्षा-विरहात् अन्यथा दण्डी पुरुष इत्यादौ एककालीनत्वादिस-म्बन्धेनापि पुरुषादौ पारतन्त्र्येण दण्डदण्डत्वाद्यन्वयापत्तेः । अ-रुणयेत्यादावारुण्यरूपधर्म एवारुणपदार्थः तत्पदोत्तरतृतीययैवा-रुण्यस्य क्रयसाधनत्वं बोध्यते न तु विशिष्टान्वयबलात्तल्लाभ इति मीमांसासिद्धान्तः । तदुक्तं तृतीयया गुणस्यैव साधनत्वं क्रयं प्रति विस्पष्टं गम्यते न तु द्रव्यद्वारेव सिध्यति इति । आ-

रुण्यस्य क्रयसाधनत्वं साधनतावच्छेदकतया प्रयोजकत्वमेव धूमाद्वह्निमानित्यत्र धूमपदस्य, मुख्यार्थपरतैवेति मते यथा हेतुपञ्चम्या धूमस्य कारणतायां विषयतया अवच्छेदकत्वरूपं वह्निज्ञानप्रयोजकत्वमेव प्रतिपाद्यते तथापि हेतुतृतीयया साधनतावच्छेदकत्वप्रत्यायनसंभवात् । आरुण्यस्य साधनतावच्छेदकत्वं चाश्रयतासम्बन्धेन । ननु तत्र द्रव्यत्वस्यैवावच्छेदकत्वे लाघवं सिध्यति उपपद्यते इति तदर्थः । एवं च गोः क्रयसाधनतायां श्रुतिसिद्धायामारुण्यस्य तदवच्छेदकत्वे लाघवं तदाश्रयद्रव्यान्तरनिष्ठकारणतान्तरावच्छेदकत्वे गौरवमिति प्रतिसन्धानेन गोनिष्ठकारणतायामारुण्यस्यावच्छेदकत्वनिश्चये आरुण्यविशिष्टगोः क्रयसाधनत्वमर्थात् प्रतीयते तादृशबोधे अरुणयेतिपदस्य तात्पर्याद्गुणिपरतया अरुणपदस्य गुणिपरगोपदसमानलिङ्गतेति कारिकाभिप्रायः । तथा चेति । पक्षताया उपदर्शितविशेषणत्वे चेत्यर्थः । पक्षतासहकृतेति । पक्षताजन्यत्वे सति परामर्शजन्यत्वमर्थः परामर्शजन्यसाध्यव्याप्यहेतुविशिष्टपक्षवैशिष्ट्यावगाहिबोधतादृशपक्षाभावप्रत्यक्षादावतिव्याप्तिवारणाय पक्षताजन्यत्वोपादानं । परामर्शजन्यत्वोपादानस्य प्रयोजनमाह यथोक्ताया इति । यथोक्ताया सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपायाः । ननु तादृशाभावस्य लौकिकप्रत्यक्षमेव न संभवति एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपातीन्द्रियक्षणघटितधर्मावच्छिन्नप्रतियोगिताकत्वात् । यदि चैकात्मवृत्तित्वमेव वैशिष्ट्यं सिषाधयिषाकालीनसिद्धौ कालान्तरावच्छेदेन स्वसमानाधिकरणसिषाधयिषाभावनिरूपिततादृशवैशिष्ट्यसत्त्वेऽपि तदानीं सिषाधयिषाविरहात्मकविशेषणाभावाधीनो विशिष्टाभावोऽक्षत एवान्यथा एकक्षणावच्छिन्नत्वनिवेशेऽपि तादृशसिद्धेर्द्वितीयक्षणे सिषाधयिषाया उत्पत्तिस्तन्नाशो वा तत्र सिषाधयिषाभावनिरूपितवैशिष्ट्यसत्त्वेन तस्या उत्पत्तिद्वितीयक्षणे तरक्षणे वा विशिष्टाभावासत्त्वप्रसंगादिति सिद्धेः सिषाधयिषाविरहेण वैशिष्ट्यं एकक्षणावच्छेदेनैकदेशवृत्तित्वमिति यदि मन्यते तथाप्यनुगतानुगतसिषाधयिषाभावसहस्रस्य तादृशविशिष्टाभावप्रतियोगितावच्छेदकघटकत्वेन, तस्य युगसहस्रेणापि

ज्ञातुमशक्यतया न तल्लौकिकप्रत्यक्षसंभवः सिपाधयिषायोग्यतायां उत्तेजकत्वमते सुतरां तथा योग्यतायास्तत्तत्क्षणात्मकतया अयोग्यत्वादित्यत आह विशेष्याद्यभावरूपाया वेति ।। सिषाधयिषाभावविशेषितासिद्ध्यभावरूपाया इत्यर्थः । आदिना सिषाधयिषाभावरूपविशेषणाभावपरिग्रहः यत्र विषयविशेषे सिषाधयिषावशात् कदापि नानुमितिस्तत्र सिद्ध्यभावमात्रं पक्षता यत्र च सिषाधयिषां विना कदापि नानुमितिस्तत्र सैव पक्षतेति तयोः प्रत्यक्षस्य न दुरपवादत्वमिति भावः । न च परामर्शानुपादानेऽपि स्थलविशेषीयविशिष्टाभावरूपपक्षताजन्यत्वघटितलक्षणं संभवतीति परामर्शोपादानमनर्थकमिति वाच्यं मूलोपात्तपरामर्शजन्यत्वांशसार्थक्याय प्रत्यक्षविषयपक्षताया निवेशयितुं युक्तत्वात् परामर्शजन्यत्वं परामर्शनिष्ठजनकतानिरूपितजन्यत्वं तत्र परामर्शनिष्ठत्वस्थाने परामर्शत्वावच्छिन्नत्वं तदुभयजन्यतयोरेकावच्छेदकावच्छिन्नत्वं च निवेशयति तत्त्वेनेत्यादिना । तत्त्वेन परामर्शत्वेन पक्षताजन्यताघटकजनकतायां च न पक्षतात्वावच्छिन्नत्वनिवेशनं प्रयोजनविरहात् तदुभयजन्यत्वं पक्षतापरामर्शोभयजन्यत्वं तथा च पक्षताजन्यतावच्छेदकावच्छिन्ना या परामर्शत्वावच्छिन्नजनकतानिरूपितजन्यता तद्वत्त्वं पर्यवसितम् । परामर्शत्वेन जनकताविवक्षायाः प्रयोजनमाह तेनेत्यादिना । अथ परामर्शसत्त्वेऽनुमितिरेव भविष्यति न तत्प्रत्यक्षम् अनुमितिसामग्र्या भिन्नविषये बलवत्त्वात्तथा च कथमतिव्याप्तिरित्याशङ्कापरिहारायाह बाधादिकालीनेनेति । आदिपदात् साध्याभावव्याप्यवत्ताज्ञानप्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्रीरूपानुमितिप्रतिबन्धकान्तरपरिग्रहः तथा च तत्रानुमितिसामग्र्येव नास्तीति भावः । पक्षताप्रत्यक्षे परामर्शजन्यतासम्पादकं विशेषणमाह दैवात् प्रतियोगिविषयकेणेति । दैवात् कदाचित् स्वसामग्रीवशात् प्रतियोगिविषयकेण केवलसिद्धिविषयकेण तथा च वह्निव्याप्यधूमवान् पर्वतः पर्वतविशेष्यकवह्निनिश्चयश्चेतिसमूहालम्बनस्मरणोत्तरकालीनैतादृशनिर्णयाभाववानहमित्यादिप्रत्यक्षे पक्षताजन्यतावच्छेदकीभूततादृशासिद्ध्यभावप्रत्यक्षत्वावच्छिन्नायाः परामर्शनिष्ठसिद्धिज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतायाश्च सत्त्वात्प्रसक्तोऽतिप्रसंग

उक्तसिद्धिज्ञानत्वावच्छिन्नजनकतायां परामर्शत्वावच्छिन्नत्वविरहाच्च भवतीति समुदायार्थः । एकावच्छिन्नत्वविवक्षायाः फलमाह तदुभयसमूहालम्बनेति । पक्षतापरामर्शोभयसमूहालम्बनप्रत्यक्षे चेत्यर्थः तादृशप्रत्यक्षे विषयविधया तादृशपक्षतापरामर्शयोः कारणत्वेऽपि पक्षताप्रत्यक्षत्वपरामर्शप्रत्यक्षत्वरूपभिन्नधर्मयोरेव तदुभयजन्यतावच्छेदकतया नातिव्याप्तिरिति भावः । अथ परामर्शप्रत्यक्षे परामर्शत्वेन न विषयस्य हेतुता अपि तु सामान्यतः प्रत्यक्षे विषयत्वेनैवेति प्रागेवोक्तं एवं च एकावच्छिन्नत्वनिवेशनमफलं न च परामर्शप्रत्यक्षस्य वह्निव्याप्यधूमवत्पर्वतं जानामीत्याकारकस्य विशिष्टवैशिष्ट्यबोधतया विशेषणतावच्छेदकीभूतवह्निव्याप्यधूमप्रकारकपक्षनिश्चयत्वरूपपरामर्शत्वेन तत्र हेतुत्वमक्षतमेवेति वाच्यं मिश्रैर्विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वानभ्युपगमात् । यत्तु ज्ञानव्याप्यसुखवदात्मभिन्नमिदं सिद्ध्यभाववाश्चाहमित्येतादृशलौकिकमानसेऽतिव्याप्तिवारणाय तदावश्यकं तत्र साध्यव्याप्यहेतुमत्पक्षनिश्चयत्वस्य प्रतियोगितावच्छेदकप्रकारकनिश्चयत्वात्मकतया मिश्रमते तथाविधप्रत्यक्षजनकतावच्छेदकत्वादिति । तन्न लौकिकमानसायोग्यवह्न्यादिव्याप्यवत्पक्षविषयकनिश्चयत्वरूपपरामर्शत्वावच्छिन्नकारणतया एव लक्षणे निवेशनीयतया ज्ञानव्याप्यसुखवदात्मरूपप्रतियोगिज्ञानमादायातिव्याप्त्यनवकाशात् तद्वृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्यानुपदमेव निवक्षणीयतया ऽव्याप्त्यनवकाशाच्चेति । नैव परामर्शप्रत्यक्षे परामर्शत्वेन हेतुतायाः स्वयं दूषितत्वेऽपि मिश्राभ्युपगततया तन्मते तामादाय स्वमते च उक्तविशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुतामादायातिप्रसङ्गवारणाय उभयजन्यतायामेकधर्मावच्छिन्नत्वनिवेशस्यावश्यकत्वात् । अथैकधर्मावच्छिन्नत्वं यद्यवच्छेदककोटिप्रविष्टैकधर्मकत्वं तदा उक्तस्थले पक्षतापरामर्शजन्यत्वयोः प्रत्यक्षत्वरूपैकधर्मावच्छिन्नत्वात् तद्दोषतादवस्थ्यं यदि च एकधर्मपर्याप्तावच्छेदकताकत्वं तदाऽसम्भवः यदि तल्लिङ्गपरामर्शाव्यवहितोत्तरोत्पन्नानुमितित्वस्य परामर्शजन्यतावच्छेदकत्वात् पक्षताजन्यतावच्छेदककोटौ च तत्प-

घत्वान्तानिवेशात् पक्षताजन्यतावच्छेदकतापर्याप्त्याधिकरणघटितधर्मावच्छिन्नपरामर्शजन्यत्वनिवेशेऽपि न निस्तारः पर्वतो वह्निमानित्यादिसिद्धिकालेऽपि नीलपर्वतो वह्निमानित्याद्यनुमित्युत्पत्त्या पर्वतत्वाद्यंशे उद्देश्यतावच्छेदकत्वपर्याप्तेः परामर्शजन्यतावच्छेदककोट्यप्रविष्टाया अधिकायाः पक्षताजन्यतावच्छेदके निवेशादिति चेन्न । पक्षताजन्यतावच्छेदकतापर्याप्त्यधिकरणघटितधर्मावच्छिन्नपरामर्शजन्यतैव निवेशनीया व्यभिचारविरहेऽपि पक्षतापरामर्शयोः सामान्यसामग्रीत्वविशेषसामग्रीत्वनिर्वाहाय पर्वतो वह्निव्याप्यधूमवानित्यादिपरामर्शजन्यतावच्छेदककोटौ पर्वतत्वाद्युद्देश्यतावच्छेदकतापर्याप्तेरवश्यं निवेश्यतया उक्तदोषासम्भवात् अन्यथा पर्वतो वह्निव्याप्यधूमवान्नीलपर्वतो वह्निव्याप्यधूमवानित्यादिसमूहालम्बनजन्यायाः पर्वतो वह्निमानित्यादिसिद्धिकालीनाया नीलपर्वतो वह्निमानित्याद्यनुमितेः पर्वतो वह्निमानित्यादिसिद्ध्यभावजन्यतावच्छेदकानाक्रान्तायास्तथाविधपरामर्शजन्यतावच्छेदकाक्रान्ततया अन्यलिङ्गकशुद्धपर्वतत्वावच्छिन्नविशेष्यकवह्न्यनुमितेस्तादृशपरामर्शजन्यतावच्छेदकानाक्रान्तायास्तथाविधसिद्ध्यभावजन्यतावच्छेदकाक्रान्ततया तत्कार्यतावच्छेदकव्याप्यव्यापकभावविरहेण सामान्यविशेषभावानुपपत्तेः अन्यथा परामर्शजन्यतावच्छेदके विषयानिवेशस्यापि निष्प्रयोजनकत्वापातात् यदि चान्यलिङ्गकेच्छाकाले सिद्धिसत्त्वे अनुमितिवारणाय सिद्ध्यनुत्तरत्वं तज्जन्यतावच्छेदककोटौ निवेश्यते तदा परामर्शजन्यतावच्छेदककोटावपि तादृशासिद्ध्यनुत्तरत्वं निवेशनीयम् अन्यथा सामान्यविशेषभावानुपपत्त्या परस्परसहकारित्वासम्भवादिति नानुपपत्तिरिति संक्षेपः । पक्षतात्वपरामर्शत्वयोरननुगतसाध्यादिघटिततया पक्षोपादानेऽन्यानुमितावव्याप्तिरित्याशङ्क्याह तद्वत्त्वेति । तादृशजन्यतावच्छेदकाश्रयवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षयेत्यर्थः । नाव्याप्तिः न पक्षोपादानेऽन्यानुमितावव्याप्तिः । चिन्त्यमिति जन्यताया अभावाविषयकवृत्तित्वनिवेशेनैव संकलातिव्याप्तिवारणे गुरुतरपक्षताजन्यत्वनिवेशे गौरवमेव चिन्ताबीजं बोध्यम् ॥

( दी० ) तत्करणमिति । न च व्याप्त्यादिज्ञानकरणत्वे-

नेतरभेदसाधने व्याप्तिज्ञानत्वं तादात्म्यसम्बन्धेन व्याप्तिज्ञानमेव वा गमकं व्याप्तेरननुगमेऽपि अधिकस्य भागासिद्धिवारणमात्रप्रयोजनकत्वादिति वाच्यं फलोपहितस्य लक्ष्यतया व्याप्तिज्ञानत्वादेरतिप्रसक्तत्वात् । करणत्वनिष्ठव्याप्तेस्तादृशव्याप्तिज्ञानत्वत्वाद्यनवच्छेद्यत्वाद्व्यतिरेकव्याप्तेर्गमकतया वैयर्थ्यप्रज्ञानवकाशाच्चेति ॥

(गा०) तत्करणमितीति । तत्करणमनुमानमित्यत्र तत्पदेन पक्षविशेषणतापन्नहेतुविषयकत्वावच्छेदेन व्याप्तिप्रकारकं यज्ज्ञानं तज्जन्यज्ञानं परामृश्यते तेन तादृशज्ञानकरणत्वस्यानुमानलक्षणत्वं लभ्यते तच्च न घटते इतरभेदानुमापकस्यैव लक्षणत्वात् । तादृशलक्षणेन इतरभेदानुमाने तद्घटकस्य हेतुविषयकत्वावच्छेदेन व्याप्तिप्रकारकज्ञानत्वस्यैवानुमापकतासम्भवेन इतरांशस्य वैयर्थ्येन तस्यानुमानेतरभेदानुमापकत्वासम्भवात् । यदि च प्रकृतहेतुतावच्छेदकघटकधर्मस्यानुमापकत्वावच्छेदकत्वसम्भव एव इतरांशस्य वैयर्थ्यम् प्रकृते च व्याप्तिज्ञानत्वस्यानुमापकत्वे व्याप्तिप्रकारकत्ववैशिष्ट्यावच्छिन्नज्ञानत्वत्वमेवानुमापकतावच्छेदकं तच्च प्रकृतहेतुतावच्छेदकीभूततादृशज्ञानकरणतात्वस्य न घटकं तच्छरीरे स्वरूपतो ज्ञानत्वस्य निवेशात् सामानाधिकरण्यरूपस्य व्याप्तिप्रकारकत्ववैशिष्ट्यस्य चानिवेशादिति मन्यते तदापि व्याप्तिज्ञानत्वावच्छिन्नस्य तादात्म्यसम्बन्धेनानुमापकत्वसम्भवात् वैयर्थ्यं दुष्परिहरमेव न च व्याप्तिज्ञानत्वं सामानाधिकरण्यसम्बन्धेन व्याप्तिप्रकारकत्वावच्छिन्नज्ञानत्वं तच्च नोक्तलक्षणघटकं तच्छरीरे ज्ञानत्वावच्छिन्न एव व्याप्तिप्रकारकत्वस्य विशेषणत्वात् इति कथं व्यर्थतेति वाच्यम् उक्तलक्षणघटकयोरेकत्र द्वयमितिरीत्या ज्ञानविशेषणतापन्नव्याप्तिप्रकारकत्वज्ञानत्वयोरेव व्यासज्यवृत्तिव्याप्यतावच्छेदकत्वसम्भवेन वैयर्थ्यानुद्धारात् न च साध्यादिभेदेन विभिन्नानां व्याप्तीनामनुगतरूपेण निवेशासम्भवात् किञ्चिद्व्याप्तिप्रकारकज्ञानत्वमेव हेतुः कार्य्यः । तथा चानु-

मानमात्रस्य पक्षीकृतत्वाद्भागासिद्धिरिति व्याप्तिज्ञानत्वादेर्नानुमापकत्वसम्भवः किञ्चिद्व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्करणत्वं तु निखिलानुमानसाधारणमितिवाच्यम् । भागासिद्धिमात्रवारकविशेषणस्यापि व्यभिचारावारकतया तदन्तर्भावेन व्याप्यत्वच्छेदकत्वाविरहाद्व्यर्थताया अनुद्धारादित्याशङ्कते न चेत्यादिना वाच्यमित्यन्तेन । इतरभेदसाधने अनुमानरूपपक्षे तदितरभेदानुमाने । गमकम् अनुमापकं । तथा चेतरांशस्य वैयर्थ्यमिति भावः । अधिकस्य व्याप्तिज्ञानभिन्नांशस्य । वारणमात्रेति मात्रपदेन व्यभिचारवारणप्रयोजनकत्वव्यवच्छेदः फलोपहितकरणस्य अनुमित्युपहितकरणस्य लक्ष्यतया इतरभेदसाधने पक्षतया व्याप्तिज्ञानत्वादेरित्यादिना तादात्म्यसम्बन्धेन व्याप्तिज्ञानपरिग्रहः । अतिप्रसक्तत्वात् पक्षातिरिक्ते अनुमित्यनुपहितव्याप्तिज्ञानेऽपि वृत्तेः तथा च व्याप्तिज्ञानत्वादेरनुमितिफलोपहितकरणरूपपक्षेतरभेदात्मकसाध्यव्यभिचारवारकत्वेनेतरांशस्य सार्थक्यमिति भावः । स्वरूपयोग्यकरणमात्रस्य लक्ष्यतामभ्युपेत्य समाधत्ते करणत्वनिष्ठव्याप्तेरिति । तादृशव्याप्तिज्ञानत्वत्वाद्यनवच्छिन्नत्वादिति व्यधिकरणत्वेनेत्यादिः तथा च तन्निष्ठतत्साध्यनिरूपितव्याप्तौ लघोरवच्छेदकस्य सम्भवे तद्घटितगुरुधर्मस्य नावच्छेदकत्वं गौरवज्ञानस्यावच्छेदकताग्रहविरोधित्वादन्यथोपपत्त्या तस्यावच्छेदकत्वे मानाभावाच्चेत्येव व्यर्थविशेषणतायां दूषकताबीजं यथा वह्निमान्नीलधूमादित्यादौ प्रकृते च करणत्वनिष्ठेतरभेदव्याप्तौ व्याप्तिज्ञानत्वत्वस्य व्यधिकरणतया अवच्छेदकत्वासम्भवेन व्याप्तेश्चावच्छिन्नत्वनियमेनान्यथानुपपत्त्या गुरोरपि तादृशज्ञानकरणत्वस्यावच्छेदकत्वं वाच्यमिति न व्यर्थविशेषणता दोषः उक्तं च यन्निष्ठा यन्निरूपिता व्याप्तिर्येन विशेषणेन विना ग्रहीतुं न शक्यते तत्तस्य सार्थकमिति । अत एव वह्निमान् धूमप्रागभावादित्यादौ धर्मिभेदान्न वैयर्थ्यमित्यभिप्रायः । न च व्याप्तिज्ञाननिष्ठकरणत्व न व्याप्तिज्ञानत्वावच्छिन्नमनुमितिनियतपूर्ववर्तित्वं फलानुपधायकव्याप्तिज्ञानासंग्रहात् अपि तु तन्नियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव तादृशधर्मश्च व्याप्तिज्ञानत्वमेवेति तन्निष्ठव्याप्तेः कथं व्याप्तिज्ञानत्वत्वाद्यवच्छेद्यत्वासम्भव इति

याच्यं । स्वरूपसम्बन्ध एव करणत्वमित्यभिप्रायेणैव तल्लिखनात् । वस्तुतो व्याप्तिज्ञानत्वं न निखिलव्याप्तिज्ञानवृत्तिकरणतानिरूप्यव्याप्यतावच्छेदकं व्याप्तिज्ञानत्वरूपावच्छेदकघटकस्य ज्ञानविशेषणतापन्नव्याप्तिप्रकारकत्वस्यापि करणतात्मकत्वात् व्याप्तिज्ञानत्वत्वस्य तद्वृत्तित्वाज्ज्ञानत्वे सति व्याप्तिप्रकारकत्वत्वस्य तादृशज्ञानत्वात्मककरणत्वाद्वृत्तित्वात् नियतपूर्ववर्तितावच्छेदकत्वरूपकरणतात्वस्य चोभयसाधारण्येन चोभयनिरूप्यव्याप्यतावच्छेदकत्वं निष्प्रत्यूहमेव व्याप्तेः साध्यादिभेदेनाननुगततयापि व्याप्तिप्रकारकत्वत्वस्य न निखिलव्याप्तिप्रकारकत्वसाधारण्यं तादृशज्ञानजन्यज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्करणत्वं तु सर्वसाधारणमेवेति नानुपपत्तिलेशोपि । धर्मिभेदेऽपि वैयर्थ्यमभ्युपेत्य समाधत्ते व्यतिरेकव्याप्तेरिति । लक्षणस्य केवलव्यतिरेकिहेतुतया व्यतिरेकव्याप्तिरेव प्रकृते गमकतौपयिकी तथा च साध्याभावत्वावच्छेदेन हेत्वभावव्याप्तिमात्रतया हेतुतावच्छेदकस्य साध्यव्याप्यतानवच्छेदकत्वेऽपि न क्षतिरिति भावः ।

( टी० ) लिङ्गस्य नित्यत्वेऽपि अनुमितिकरणस्य स्वरूपतः प्रत्यक्षोपजीवकत्वं व्यवस्थापयन्नाह तच्चेति । अनुमितेर्ज्ञानाकरणकज्ञानत्वेन प्रत्यक्षमितिमध्यानिवेशे तत्करणस्यापि प्रत्यक्षप्रमाणान्तर्भावः स्यादिति तन्निरस्यति तच्चेतीत्यपि केचित् ।

( गा० ) अथ प्रत्यक्षोपजीवकत्वादिति यदुक्तं तन्न घटते ज्ञायमानधूमादेरनुमितिकरणतया तस्य प्रत्यक्षानुपजीवकत्वात् धूमादेरदृष्टद्वारा प्रवृत्तिजनकीभूतोपादानप्रत्यक्षोपजीवकत्वेपि नित्यहेतोरतथात्वेनानुमानत्वावच्छेदेन तथात्वानुपपत्तेः अनुमानसामान्यस्यैव निरूपणीयतया ऽनुमानत्वावच्छेदेनोपजीवकत्वसङ्गतायैव तद्ग्रन्थतात्पर्यादित्याशङ्कोद्धारपरतया तच्चेत्यादिमूलमवतारयति लिङ्गस्येत्यादिना । स्वरूपतः अनुमितिकरणत्वावच्छेदेन । अन्ये तु अनुमानस्य प्रत्यक्षान्तर्भावशङ्कापरिहारकतया तन्मतमाह अनुमितेरिति । ज्ञाना-

करणकज्ञानत्वेनेति । तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वे-नेत्यर्थः यथाश्रुते विशेषणतावच्छेदकप्रकारकज्ञानकरणकविशिष्ट-वैशिष्ट्यबोधादावव्याप्तेः तस्यैव प्रत्यक्षलक्षणत्वादिति भावः । प्रत्य-क्षमितिमध्यनिवेशे प्रत्यक्षविशेषात्मकत्वे तत्करणस्य अनुमि-तिकरणस्य प्रत्यक्षप्रमाणान्तर्भावः स्यादिति प्रमितिवैलक्षण्य-स्यैव स्वतन्त्रप्रमाणत्वनियामकत्वादितिभावः । तत् अनुमितेर्ज्ञा-नाकरणकज्ञानत्वम् अत्र चानुमितेर्ज्ञानाकरणकज्ञानत्वेऽपि न प्रत्यक्ष-प्रमित्यन्तर्भावः अनुमिनोमि न साक्षात्करोमीत्यनुव्यवसायब-लात् अनुमितौ प्रत्यक्षत्वविरुद्धानुमितित्वसिद्धेः उक्तलक्षणे च चाक्षुषत्वचित्वादिकं जातिविशेषणमुपगम्यानुमितेर्व्यावर्तनसम्भवा-दित्यस्वरसः केचिदित्यनेन सूचितः ॥

( दी० ) अनुमानप्रामाण्यं परीक्षितुं चार्वाकमतमुत्थापय-ति अथेति ।

( चि० ) अथानुमानं न प्रमाणं योग्योपाधी-नां योग्यानुपलब्ध्याभावनिश्चयेऽप्ययोग्योपाधिशङ्कया व्यभिचारसंशयात् शतशः सहचरितयोरपि व्य-भिचारोपलब्धेश्च लोके धूमादिदर्शनानन्तरं वह्न्या-दिव्यवहारश्च सम्भावनामात्रात् संवादेन च प्रा-माण्याभिमानादिति नाप्रत्यक्षं प्रमाणमिति । न । अप्रमाणसाधर्म्येणाप्रामाण्यसाधने दृष्टसाधर्म्यस्यानु-मानत्वात् । एतद्वाक्यस्य सन्दिग्धविपर्यस्तान्यतरं प्रत्यर्थवत्त्वात् । तयोश्च परकीययोरप्रत्यक्षत्वात् अ-नुमानमप्रमाणमितिवाक्यस्य प्रामाण्याप्रामाण्ययोर्व्या-घाताच्च ।

( दी० ) अनुमानम् अनुमानत्वेनाभिमतं धूमादिज्ञानम् असत्ख्यात्युपनीतमनुमानमेव वा संवादेन संवादाभिमानेन

सम्भावितस्यासतोऽनुगताकारस्य परमार्थसत्स्वलक्षणमात्रसाक्षिणाऽध्यक्षेणानुल्लेखात् अध्यक्षमूलकविकल्पोल्लिखितत्वाद्वा संवादः अनुमानाप्रामाण्ये च तन्मूलकसमयनिर्णयाद्यधीनप्रवृत्तिकयोः शब्दोपमानयोः सुतरामप्रामाण्यात्प्रत्यक्षं प्रमाणमित्याह इतीत्यादि । अप्रमाणसाधर्म्येण प्रमाणताप्रयोजकरूपशून्यत्वेन दृष्टसाधर्म्यस्य साधर्म्यदर्शनस्य वा । नन्वभिहितमेव साधर्म्यदर्शनं सम्भावनां भावयति संभावनैव च बहुशो व्यवहारहेतुरित्यत आह अनुमानमिति ।

(भा०) परीक्षितुं परमतं निराकृत्य व्यवस्थापयितुम् अनुमित्यात्मकप्रमितेश्चार्वाकेनानभ्युपगमात् तत्करणत्वरूपानुमानत्वावच्छिन्ने तेषामप्रामाण्यसाधनं न सम्भवति अतोऽनुमानपदमन्यथा व्याचष्टे अनुमानमिति । अभिमतमित्यस्य, परैरित्यादिः धूमादिज्ञानं धूमादिज्ञानत्वावच्छिन्नम् अनुमानम् अनुमानपदार्थ इत्यर्थः तथा च धूमादिज्ञानत्वेनैव पक्षतेति नानुपपत्तिरिति भावः । अनुमानपदाद्धूमादिज्ञानत्वाद्विना बोधो लक्षणयैवेत्यभिप्रेत्य मुख्यार्थपरतामपि सङ्गमयति असदिति । ख्यातिः ज्ञानम् उपनीतं विषयीकृतम् अनुमानमेव वा अनुमितिकरणत्वावच्छिन्नमेव वा अनुमानपदार्थ इत्यनुषज्यते तन्मते अलीक एव पदानां शक्तिर्न तु पारमार्थिके सदसत्सम्बन्धाभावेन तत्र पदप्रवृत्तिनिमित्तीभूतानुगताकारासम्बन्धात् अनुगताकारस्य गोत्वादेरतद्व्यावृत्त्यात्मकत्वेनाभावरूपतया ऽलीकत्वात् असतोऽप्यनुमितिकरणत्वावच्छिन्नस्य तन्मते अनुमानपदार्थतेति बोध्यम् । एवं च चार्वाकैरनुमित्यनभ्युपगमेऽपि असत्ख्यातिस्वीकर्तृणां तेषां मते अनुमितिकरणत्वावच्छिन्ने अप्रामाण्यसाधने नाश्रयासिद्धिरूपदोष इति भावः । ननु लिङ्गज्ञानस्य पर्वतो वह्निमानित्याद्यनुमित्यजनकत्वे लिङ्गपरामर्शानन्तरं वह्न्यर्थिनः पर्वतगमनप्रवृत्त्यनुपपत्तिः पर्वतादौ वह्न्यादिनिश्चयं विना तद्गमने वह्निप्राप्तिसाधनतावच्छेदकवह्निमद्देशगमनत्वानिश्चयायोगादित्याशङ्क्य परि

हरति मूले लोक इति सम्भावनामात्रादिति । यद्यपि लिङ्गदर्शनेन स्मारितसाध्यस्य मानसनिश्चयोपगमेनाप्यनुमानस्याप्रामाण्यमायाति तथापि सर्वत्र व्यभिचारसंशयसम्भवेन व्याप्तिनिश्चयस्तावन्न सम्भवतीत्याशयेन सम्भावनादरः । न च यत्र संशये कोटिद्वयांशे तुल्यता विपरीतकोट्यंशे एवौत्कट्यं ततः प्रवृत्त्यादिवारणाय तदभावाप्रकारकत्वस्य तत्प्रकारकज्ञानकरणतायामवश्यं निवेशनीयतया कथं सम्भावनातः प्रवृत्त्यादिकार्यनिर्वाहः।तत्कोट्यंशे औत्कट्यरहिततदभावप्रकारकान्यत्वस्य तत्कोटिकसम्भावनासाधारणस्य कारणतावच्छेदकत्वे च गौरवमिति वाच्यम् । अगत्या गौरवस्यादोषत्वात् । वस्तुतस्तु तन्मतेऽनुगतधर्मस्यालीकतया सर्वत्राव्यवहितपूर्वापरीभावापन्नतत्तद्व्यक्त्योरेव हेतुहेतुमद्भावसम्भवः तत्र च तदभावाप्रकारकत्वस्य निवेशो नास्त्येवेति तत्त्वम् । ननु सम्भावनायाः प्रमाणान्तरगृहीतग्राहित्वरूपसम्वादेन प्रमितित्वसिद्धा तत्करणस्य धूमादिज्ञानस्य प्रमाणत्वं सेत्स्यतीत्यत आह मूले सम्वादेन चेति। वक्ष्यमाणयुक्त्या प्रमाणान्तरगृहीतग्राहित्वरूपसम्वादस्य तन्मते सम्भावनायामसत्त्वेन संवादेन प्रामाण्याभिमानादित्यसङ्गतमतो व्याचष्टे संवादेनेति । यथाश्रुतत्यागे बीजमाह सम्भावितस्येति । सम्भावितस्य सम्भावनाविषयस्यानुगताकारस्य बहिरध्यक्षेण प्रत्यक्षप्रमित्या अनुल्लेखात् अविषयीकरणादित्यर्थः । अनुगताकारस्य प्रमित्यविषयतासम्पादकं विशेषणमाह असत इति । वह्नित्वादेरतद्व्यावृत्तिरूपतया अलीकत्वं बोध्यम् । अध्यक्षस्यालीकाविषयत्वसम्पादकं विशेषणमाह परमार्थसत्स्वलक्षणसाक्षिणेति । परमार्थसत् पारमार्थिको लक्षणः स्वतो व्यावृत्तो वह्न्यादिस्तन्मात्रविषयकेनेत्यर्थः । वह्नित्वादेरनुगताकारस्य पारमार्थिके वह्न्यादावसत्त्वेन तस्य कथमितरव्यावृत्तिः व्यावर्त्तकधर्मादर्शनादित्याशङ्कापरिहाराय स्वलक्षणेत्युक्तं तथा च न सम्भावनायाः प्रमित्यन्तरविषयकत्वरूपसम्वाद इति भावः । न चाध्यक्षस्य सम्भावनाविषयानुगताकाराविषयत्वेऽपि अध्यक्षविषयवह्न्यादिविषयकत्वेन सम्भावनायाः सम्वादित्वमक्षतमिति वाच्यं सदसतोरेकज्ञानाविषयतया अनुगताकारविषयिण्या विशिष्टबुद्धेः पारमार्थिकवह्न्यादि-

विषयकत्वासम्भवात् अनुगताकारवीहित्वादिसम्बन्धपलीकंवृपादेरेव विशिष्टधीविषयत्वात् भ्रमस्यासन्मात्रविषयकत्वेन सद्घटितस्य प्रमित्यन्तरविषयकत्वरूपसम्वादस्याभिमानो न भवतीत्यत आह अध्यक्षमूलकेति । सम्भावितस्येत्यनुपज्यते विकल्पोल्लिखितत्वात् तद्विषयकत्वात् । अनादिवासनामूलकशशविषाणादिविकल्पव्यावर्त्तनायाध्यक्षमूलकेति । सम्वादः सम्भावनाया इति शेषः तथा चाध्यक्षमूलकविकल्पोल्लिखितविषयत्वमेव सम्भावनाविसंवादः स एव प्रामाण्याभिमानप्रयोजकतया मूलकृताक्त इति भावः । योग्योपाधीनामित्यादिग्रन्थेनानुमानाप्रामाण्य एव हेतुकथनादिति नाप्रत्यक्षञ्च प्रमाणमित्यनुमानोपमानशब्दानां त्रयाणामप्रामाण्योपसंहारो न घटते इत्याशङ्कां परिजिहीर्षुरनुमानाप्रामाण्यसाधकहेतोरेवोपमानशब्दयोरप्रामाण्यसम्पादकहेतुपरतां दर्शयति तन्मूलकसमयनिर्णयाधीनप्रवृत्तिकयोरिति । तन्मूलोऽनुमाननिर्णयाधीनो यः समयनिर्णयादिः शक्तिनिर्णयादिः तदधीनप्रवृत्तिकयोः, तादृशसहकारिसमवधानाधीनप्रमारूपफलोपधानकयोरित्यर्थः । आदिपदात्तात्पर्यनिर्णयादिपरिग्रहः समयादिसम्भावनात एव शाब्दादिप्रमा भविष्यतीत्यादिशङ्कापरिहाराय निश्चयेत्युक्तं न चैवमनुमानं न प्रमाणमित्यनेनानुमानाप्रामाण्यमात्रस्य प्रक्रान्ततया त्रयाणामप्रामाण्योपसंहारविरोध इति वाच्यम् अनुमानमप्रमाणमितिवाक्यस्य त्रितयाप्रामाण्य एव तात्पर्यात् अप्रामाण्यसाधने ऽप्रमाणसाधर्म्यस्य यथाश्रुतस्य हेतुता न घटते प्रमाणेऽपि यत्किञ्चिद्रूपेणाप्रमाणघटादिसाधर्म्यसत्त्वादित्याशङ्कोद्धाराय प्रमाणतावच्छेदकरूपशून्यत्वधर्मेण साधर्म्यं विवक्षितं तथा च प्रमाणताप्रयोजकरूपशून्यत्वमेव पर्यवसितो हेतुरित्यभिसन्धायाह अप्रमाणेति । अयं च असाध्याङ्को हेतुः नैयायिकमते व्याप्तिनिश्चयत्वरूपप्रमाणताप्रयोजकरूपस्यानुमाने सत्त्वादिति अत एव पूर्वं मणिकृतोद्धास्यैव तद्धेतोः सिद्ध्यर्थे योग्योपाधीनामित्यादिग्रन्थेन सर्वत्र व्यभिचारसंशयसामग्रीसत्त्वमभिधाय व्याप्तिनिश्चयस्यैव दुर्घटत्वेन व्यभिचाराप्रकारकत्वे सति व्याप्तिप्रकारकज्ञानत्वरूपस्य व्याप्तिनिश्चयत्वस्याप-

सिद्धिः सूचिता । एवं चानुमानमप्रमाणं प्रमितिकरणतावच्छेदकरूपशून्यत्वादिति प्रथमतश्चार्वाकैः प्रयुज्यते तत्र च व्याप्तिनिश्चयत्वात्मकतादृशरूपस्यानुमाने सत्त्वाद्धेतुरयमस्माकमसिद्ध इति नैयायिकैरसिद्धावुद्भावितायां व्याप्तिज्ञानत्वं व्यभिचाराप्रकारकत्वासमानाधिकरणं स्वावच्छिन्नोत्पत्त्यव्यवहितप्राक्क्षणस्वव्यापकव्यभिचारप्रकारकज्ञानसामग्रीकज्ञानमात्रधर्मत्वादिति तैरुद्भावनीयं तावता च निरुक्तनिश्चयत्वग्रहप्रतिबन्धात्तादृशनिश्चयत्वस्य प्रमाकरणतावच्छेदकत्वसन्देहाधीनासिद्धिसन्देहध्वनिः सूचितेति ध्येयम् । इहेत्यत्रातीतत्वमविवक्षितं तथा च ज्ञायमानेत्यर्थः । एतच्च ज्ञायमानलिङ्गकरणतामत एवोपपद्यते अतः, इनमताभिप्रायेण पूरयति साधर्म्यदर्शनस्य चेति । अभिहितमित्यत्र हेतुरित्यनन्तरोक्तोतिपदोपस्थाप्यप्रकृतवाक्यार्थः कर्मत्वेनान्वेति संभावनैव परकीयसंशयादिविषयकसंभावनैव व्यवहारहेतुः अनुमानं न प्रमाणमितिशब्दप्रयोगप्रयोजक इत्यर्थः तथा च, परकीयसन्देहविपर्ययज्ञानस्य तन्निवृत्तिसाधनतारूपेष्टसाधनताज्ञानसम्पादकतया तादृशशब्दप्रयोगप्रयोजकत्वोपपादनाय नानुमानप्रामाण्यमितिभावः । इदमुपलक्षणं जल्पस्थले ऽवयवप्रयोगेन मध्यस्थस्य परिगृहीतकोटिविषयकसंभावनासम्पादकतयैव चाविजय इति बोध्यं तेन हेतुज्ञानान्मध्यस्थानुमितेरवश्याभ्युपेयतया अनुमानप्रामाण्यं निर्वहतीति प्रागुक्तदूषणमप्युद्धृतं भवतीति ध्येयम् ॥

अनुमानमप्रमाणमितिवाक्यस्याप्रामाण्योपगमेऽप्रामाण्यस्य भ्रमजनकत्वरूपतया ऽनुमानस्य प्रामाण्यापातात् अप्रामाण्याभावेऽपि अप्रामाण्यप्रकारकत्वरूपस्य तज्जन्यज्ञानभ्रमत्वस्य विशेष्यांशे प्रामाण्यव्यवस्थानिर्वाहकत्वात् इति मूलोक्तव्याघातमुद्धरति नन्वित्यादिना ॥

( दी० ) ननु न वयमापाततो भ्रमजनकत्वलक्षणमप्रामाण्यं निरूपयामो येन भ्रमस्य विषयबाधाधीनतया प्रामाण्यं संभाव्येतापि परं तु प्रमाकरणत्वव्यतिरेकमत आह अपि चेति।

( चि० ) अपि चानुमानाप्रामाण्ये प्रत्यक्षस्याप्यप्रमाणतापत्तेः प्रामाण्यस्यानुमेयत्वात् स्वतश्च प्रामाण्यग्रहे तत्संशयानुपपत्तेः । व्याप्तिग्रहोपायश्च वक्ष्यते ।

( दी० ) स्वत इति । न चानुगताकारासंस्पर्शिनि परमार्थसत्स्वलक्षणसाक्षिणि स्वसंवेदनसंविदितप्रामाण्ये निर्विकल्पकज्ञानेनाप्रामाण्यं संदिह्यते परं तु तदुत्तरभाविनि समुल्लिखितालीकानुगताकारे सविकल्पक एवेति वाच्यं निर्विकल्पकस्य सन्मात्रावलम्बनस्य स्वविषयत्वप्रामाण्यावगाहित्वेनाप्यनुमानाधीनसिद्धिकत्वात् । सर्वमिदं सति व्याप्तिनिश्चये स्यात् स एव तु न संभवत्युपायाभावात् इत्यत आह व्याप्तीति ।

आपातत इति यावदसत्यविषयकत्वस्य भ्रमत्वरूपस्य न व्यवस्थापितं तावदित्यर्थः । तस्य भ्रमत्वरूपत्वे तस्य प्रामाण्यघटितशरीरकत्वं विनाप्युपपत्तेरनुमानप्रामाण्यानापादकत्वादिति भावः । निरूपयामः अभ्युपगच्छामः विषयबाधाधीनतया विशेष्यतासम्बन्धेन विषयबाधव्याप्यतया संभाव्येत आपाद्येत प्रमाकरणत्वव्यतिरेकमिति निरूपयाम इत्यनुषज्यते । तथा च प्रमाकरणत्वतदभावयोरेव तृतीयपक्षो न संभवतीति अन्यतराभ्युपगम आवश्यकः । न तु प्रमाकरणत्वभ्रमकरणत्वयोरपीति । तदुभयमेव नाभ्युपेयते शब्दस्य विशिष्टज्ञानाजनकत्वेऽपि पदार्थोपस्थितिद्वारा मानसविशिष्टज्ञानप्रयोजकत्वात् । एतदर्थ·प्रत्ययार्थं शब्दप्रयोग उपपद्यते मानसं च ज्ञानं निश्चयः संभावना चेत्यन्यदेतदितिभावः । स्वतः प्रामाण्यग्रहे तत्संशयानुपपत्तिरूपमूलोक्तबाधकमुद्धरति न चेत्यादिना । अप्रामाण्यसंशयाभावसंपादकहेत्वन्तरसूचकं निर्विकल्पकविशेषणमाहानुगताकारेत्यादिना । अनुगताकारासंस्पर्शिनीत्याद्यविषयके एतेन निर्विकल्पके प्रामाण्यसंशयसम्पादकानुगताकारविषयकत्वरूपाप्रामाण्यसहचरितधर्माभावः सूचितः । परमार्थसत्स्व·

लक्षणसाक्षिणि सन्मात्रविषयके एतेन संशयविरोधिसन्मात्रविषयकत्वरूपाप्रामाण्यव्यावर्तकदर्शनं सूचितम् । स्वसंवेदनेति स्वात्मकं यत्संवेदनं ज्ञानं तेन संवेदितं प्रामाण्यं यत्र तत्रेत्यर्थः । निर्विकल्पकस्य स्वांशे प्रामाण्यावगाहिताया: स्वतः प्रामाण्येत्यादिपङ्क्त्यवतारार्थं प्रागेवाशङ्कितत्वेऽपि पुनरभिधानं निर्विकल्पकस्यैव तथात्वं न तु सविकल्पकस्येति सविकल्पके प्रामाण्यसंशयसम्पादकतत्सिद्धान्तसम्पादनाय । नन्वेवं प्रत्यक्षप्रमायाः प्रामाण्यं सन्दिह्यते इत्यनुभवः कथमुपपद्यतामित्यत आह तदुत्तरभाविनीति । निर्विकल्पकाव्यवहितोत्तरभाविनीत्यर्थः । तथा च निर्विकल्पकस्य सविकल्पकादिसाधारण्यात्मकदोषात् भ्रमात्मकस्तादृशानुभव इति भावः । एवं चाध्यक्षस्य स्वतः प्रामाण्यग्रहेऽपि न प्रामाण्यसंशयानुपपत्तिः प्रामाण्यग्रहस्य भिन्नधर्मिकतया ऽविरोधित्वादिति नानुमानप्रामाण्यसिद्धिरिति न वाच्यमिति समुदिततात्पर्यार्थः । निर्विकल्पकस्येति अनुमानाधीनसिद्धिकत्वात् तन्मात्राधीनव्यवस्थितिकत्वादित्यर्थः । तन्मते निर्विकल्पकस्य स्वप्रकाशतया अनुव्यवसायाभावेन स्वस्य स्वनिष्ठस्वविषयकत्वाद्यवगाहित्वोपगमे विषयानवस्थाप्रसङ्गेन संभावनायाश्चाप्रमात्वेन तद्व्यवस्थापकप्रमाणाभावादितिभावः । सर्वमिदं अनुमानप्रामाण्यव्यवस्थापकयुक्तिप्रदर्शनं व्याप्तिनिश्चये सतीत्यन्वयः । स एव व्याप्तिनिश्चय एव न संभवति नोत्पत्तुमर्हति उपायाभावात् निश्चायकाभावात् ॥

इति महामहोपाध्याय गदाधरभट्टाचार्यविरचिता

अनुमितिविवृतिः समाप्ता ॥

---

# अनुमानगादाधर्याम्

व्याप्तिपञ्चकप्रकरणम् ।

---

( दी० ) समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणमारभते नन्वित्यादिना ।

( चि० ) नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः न तावदव्यभिचरितत्वं तद्धि न साध्याभाववदवृत्तित्वं साध्यवद्भिन्नसाध्याभाववदवृत्तित्वं साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यं सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वं साध्यवदन्यावृत्तित्वं वा केवलान्वयिन्यभावात् ॥

( गा० ) अनुमानप्रामाण्योपपादकतया व्याप्तिग्रहोपायस्यैवेदानीमभिधातुमुचितत्वात् वक्ष्यत इत्यनेन तत्प्रतीक्षां विधाय व्याप्तिस्वरूपनिरूपणमयुक्तमित्याशङ्कां परिजिहीर्षुस्तत्प्राथम्ये तस्य व्याप्तिग्रहोपायप्रतिपादनौपयिकत्वरूपबीजं दर्शयन् नन्वित्यादिग्रन्थमवतारयति समारब्धेति । व्याप्तिग्रहोपायाकथनेन प्रामाण्यव्यवस्थापनस्यानिष्पन्नत्वात् समारब्धेति परीक्षाविशेषणम् । परीक्षा परमतनिराकरणपूर्वकस्वमतव्यवस्थापनं कारणीभूतेति प्रतिपादनविशेषणम् । यद्यपि व्याप्तिग्रहोपायप्रतिपादनस्यानुमानप्रामाण्यव्यवस्थापकत्वकथनं न तस्यावश्यकत्वप्रदर्शनाय व्याप्तिग्रहोपायश्च वक्ष्यते इत्येतद्ग्रन्थावतारणात् व्याप्तिग्रहोपायस्यानुमानप्रामाण्योपपादकतालाभेनैव तल्लाभात् तथापि प्रामाण्यव्यवस्थापननिर्वाहकतया भवतु व्याप्तिग्रहोपायस्येदानीमाकाङ्क्षितत्वम् । एवमपि तत्र व्याप्तिस्वरूपनिरूपणं विना

संभवतीति प्रथमत एव तदेवोचितमित्येतत्सूचनायैतदभिहितम् । निदानमिति । व्याप्तिघटकीभूताव्यभिचारांशाभावे बाधाभावमुद्रया व्यभिचारज्ञानाभावो हेतुः । साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकांशग्रहे च विशेषणज्ञानमुद्रया सहचारग्रहो हेतुरितिक्रमेण व्याप्तिग्रहोपायप्रतिपादनस्य व्याप्तिस्वरूपप्रतिपाद्यनावश्यकत्वादितिभावः । प्रथमतः पूर्वपक्षस्यैवाभिधानेन निरूपयतीत्यसङ्गतमत आरम्भ इत्युक्त निरूपणस्य परमतनिराकरणपूर्वकस्वसिद्धान्तकथनरूपतया पूर्वपक्षाभिधानतत्खण्डनयोरपि तदारम्भकतेतिध्येयम् । मूले न तावदव्यभिचरितत्वमिति । व्याप्तिरिति प्रथमस्थमनुषज्यते । तथा चाव्यभिचारपदार्थो नानुमितिजनकज्ञानविषय इत्यर्थः । अनुमितिजनकत्वं न अव्यभिचारपदार्थावच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नमिति तु पर्यवसितम् । अत्र हेतुमाह तद्धि न साध्याभाववदवृत्तित्वमित्यादि । यतः साध्याभाववदवृत्तित्वादिरूपं तदव्यभिचरितत्वं न व्याप्तिरित्यनुषङ्गेणान्वयः । तथा च साध्याभाववदवृत्तित्वादिरूपा ये ये अव्यभिचारपदार्थास्तत्तदवच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नत्वाभावकूटवत्त्वादिति निरुक्तपर्यवसितसामान्याभावसाधकः फलितो हेतुः । न चाप्रयोजकत्वं विशेषाभावकूटस्य सामान्याभावव्याप्यताया अविवादात् । अत्र साध्याभाववदवृत्तित्वादिरूपा ये पञ्चाव्यभिचारपदार्थास्तद्वच्छिन्नविषयताघटितधर्मावच्छिन्नत्वकूटस्य प्रत्येकसाधकं हेतु वक्ष्यति केवलान्वयिन्यभावादिति । साध्ये अत्यन्ताभावाप्रतियोगित्वान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपकेवलान्वयित्वग्रहदशायामत्यन्तान्योन्याभावयोः साध्यतावच्छिन्नप्रतियोगिकत्वभानासम्भवेन प्रतियोगितया साध्यतावाश्रयविशेषितात्यन्तान्योन्याभाववदवृत्तित्वत्वावच्छिन्नविषयतायास्तादृशतादृशविशेषीयानुमितिजनकज्ञाने अभावादित्यर्थः । एवं च तादृशविषयताशून्यवृत्तित्वमेव अनुमितिजनकतायां दर्शितसाध्यसाधको हेतुरभिमत इति नासिद्ध्यादिः । ईदृशादिशा अग्रिमाग्रिमहेतवोऽपि परिष्करणीयाः । दीधितौ अव्याप्येति । कपिसंयोगी एतत्त्वादित्यादावित्यर्थः । अव्याप्तिरिति

तत्र हेत्वाधिकरणे - तद्वृक्षादावप्यन्यदेशकालावच्छेदेन, कपिसंयोगाद्यभावसत्त्वादिति भावः । साध्यवद्भिन्नो यः साध्याभाववान् इति कर्मधारये अभेदसम्बन्धेन साध्यवद्भिन्नोयं यस्साध्याभावाधिकरणं तद्वृत्तित्वमित्यर्थः स्यात्तथा सति तद्घटकीभूतस्य अभेदसम्बन्धेन साध्यवद्भिन्नीयं यत्तद्वृत्तित्वस्यैव लक्षणत्वसंभवात् साध्याभाववत्त्वांशस्य वैयर्थ्यमतः सप्तमीतत्पुरुषं व्याचष्टे साध्यवद्भिन्न इति । तथा च साध्यवद्भिन्नवृत्तिर्यः साध्याभावस्तद्वद्वृत्तित्वमर्थः तत्र पूर्ववदभेदेन साध्यवद्भिन्नपदार्थविशेषितधर्मिवृत्तित्वादेर्न घटकता तादृशपदार्थस्य धर्मिण्यविशेषणत्वात् वृत्यादिविशेषणतयैव साध्यवद्भिन्नस्य निवेशादिति न साध्याभावांशवैयर्थ्यमिति भावः । अभावे साध्यीयत्वानिवेशे ह्रदादिवृत्तिगगनाद्यभाववति पर्वतादौ धूमादेर्वृत्तेरसंभव इति तद्वारणाय साध्यपदसार्थक्यं न चाधिकरणभेदेनाभावभेदमत पर्वेतल्लक्षणकरणात्पर्वतादेर्न ह्रदादिवृत्यभाववत्त्वमिति वाच्यम् अव्याप्यवृत्तिप्रतियोगिकाभावस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वादिरूपविरुद्धधर्माध्यासेन भेदस्य लक्षणकर्तृसंमतत्वात् आकाशाभावादेर्भेदकाभावेन तस्यैक्यात् अत एवोक्तधर्माणां भेदकत्वमेतानि च न भेदकानीत्यनेन दीधितिकृन्निराकरिष्यति । अथ वा साध्याभावपदम् अनुयोगिताविशेषसम्बन्धेन साध्यीयपरम् अभावीयविलक्षणानुयोगिता लाभायैवाभावपदं न त्वभावत्वमपि निवेद्यते प्रयोजनाभावात् इत्थं च साध्यवद्भिन्नवृत्तिर्यस्तादृशाविलक्षणसम्बन्धेन साध्यीयस्तद्वद्वृत्तित्वमर्थः तत्र च साध्यस्य यत्पदार्थाविशेषणत्वे ह्रदादिवृत्तिप्रमेयत्वादिमति हेतोर्वृत्तेरसंभवः स्यादिति तन्निवेशः । अत्र च साध्याभावः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः अन्यथा वह्निमान् धूमादित्यादौ ह्रदादिनिष्ठमहानसीयवह्नित्वाद्यवच्छिन्नप्रतियोगिताकवह्न्याद्यभावस्य धूमवति सत्त्वेन पृथिवीत्वाभावद्रव्यत्वाभावान्यतरवान् जलत्वादित्यादौ साध्यवद्भिन्नपृथिव्यादिनिष्ठस्य द्रव्यत्वाद्यात्मकसाध्यप्रतियोगिकाभावस्य जलादौ सत्त्वेनाव्याप्त्यापत्तेः । साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनापि प्रतियोगिता विशेषणीया अन्यथा ह्रदादिवृत्तिसमवायादिसम्बन्धावच्छिन्नप्रतियोगिता-

कपाद्यभावस्य धूमादिमत्यपि वृत्तेरसम्भवस्य कालिकसम्बन्धेन द्रव्यत्वाभावादौ साध्ये कालत्वादिहेतौ साध्यवन्निष्ठपरमाणुगगनादिवृत्तिदैशिकविशेषणतासम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावात्मकद्रव्यत्वादेर्हेत्वधिकरणावृत्तित्वेनाव्याप्तेर्वा प्रसङ्गः । अथ साध्याभाववत्तायां सम्बन्धविशेषावच्छिन्नत्वानिवेशे वह्निमान् धूमादित्यादौ ह्रदादिवृत्तिवह्न्याद्यभावस्य कालिकादिसम्बन्धेन पर्वतादौ वृत्तेरव्याप्तिः दैशिकविशेषणताविशेषावच्छिन्नत्वनिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावादौ दैशिकविशेषणतया साध्ये आत्मत्वादिहेतौ साध्यवन्निष्ठकालादिवृत्तेराकाशाभावात्मकसाध्याभावस्यात्मादिषु वृत्तेर्घटत्वाभावादिसाध्यकस्थले सद्धेतौ साध्याभावस्य घटत्वादेर्दैशिकविशेषणतासम्बन्धेन वृत्तित्वे मानाभावेन चाव्याप्तिः अतः साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताज्ञानं प्रति यादृशसम्बन्धेन स्वप्रकारकनिश्चयः प्रतिबन्धकस्तेन सम्बन्धेनाभाववत्त्वं निवेश्यं संयोगेन वह्न्यादौ साध्ये तादृशसम्बन्धो दैशिकविशेषणता । कालिकविशेषणतासम्बन्धेनाकाशाभावाभावे दैशिकविशेषणतया साध्ये कालिकसम्बन्ध एव तथा समवायादिना घटत्वादेरभावे दैशिकविशेषणतया साध्ये समवायादिरेवेति न दोषः न चैवं वृक्षनिष्ठा या कपिसंयोगाभावीयमूलावच्छिन्नविशेषणता तादृशसम्बन्धेन वृक्षादौ तादृशाभाववत्ताज्ञानेऽपि कपिसंयोगवत्ताज्ञानोत्पत्तेस्तादृशसम्बन्धो न लक्षणघटक इति साध्यवन्निष्ठवृत्तित्वविशेषणं व्यर्थमिति वाच्यम् संयोगतदभावयोर्विरुद्धत्वज्ञानाभावदशायां वृक्षः कपिसंयोगाभाववानिति ज्ञानस्यापि वृक्षे कपिसंयोगवत्ताज्ञानविरोधितया वृक्षनिष्ठतदभावीयविशेषणताया अपि साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकीभूतसंसर्गताश्रयत्वात् । केचित्तु साध्यात्मकस्वाभावनिरूपितप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वं विवक्षितं स च सम्बन्धो यत्सम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभावः साध्यमिति नोक्तानुपपत्तिः । अथ समवायेन प्रमेयत्वावच्छिन्नसाध्यकद्रव्यत्वप्रकारकप्रमाविषयत्वादिहेतुकस्थले कालिकसम्बन्धस्यापि तत्सम्बन्धावच्छिन्नप्रतियोगिताकघटाभावरूपप्रमेयनिरू-

पितप्रतियोगितावच्छेदकत्वात्तेन साध्याभाववति काले हेतोः वृत्तेरव्याप्तिः न च साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धनिवेशाशयं दोषः कालिकसम्बन्धावच्छिन्नघटाभावादिरूपप्रमेयस्य कालिकसम्बन्धावच्छिन्नप्रतियोगितायाः घटादावेव सत्वात् कालिकसम्बन्धस्य समवायसम्बन्धावच्छिन्नप्रमेयाभावात्मकस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धत्वविरहादिति वाच्यं तादृशप्रमेयाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताको योऽभावस्तस्यापि प्रमेयत्वेन साध्यतया तन्निरूपिततादृशप्रमेयाभावनिष्ठप्रतियोगितावच्छेदकत्वस्य कालिकसम्बन्धेप्यक्षततयाऽव्याप्तेर्दुर्वारत्वात् न च यावत्साध्यनिरूपितप्रतियोगिता निवेशनीया तथा चोपदर्शिताभावात्मकयत्किञ्चित्प्रमेयनिरूपितस्वनिष्ठप्रतियोगितावच्छेदककालिकसम्बन्धमादाय न दोष इति वाच्यम् असमवेतप्रमेयस्य समवायसम्बन्धावच्छिन्नप्रमेयाभावो ऽत्र नास्तीतिप्रत्ययाविषयतया तादृशप्रमेयाभावाभावत्वे मानाभावात् । तादृशप्रमेयाभावनिष्ठयावत्प्रमेयनिरूपितप्रतियोगित्वाप्रसिद्ध्योक्तस्थलेऽव्याप्तितादवस्थ्यात् न च साध्यतावच्छेदकसम्बन्धेन वृत्तिमद्यावत्साध्यनिरूपितप्रतियोगितया निवेशनीयतया नोक्ताप्रसिद्धिरिति वाच्यं सर्वत्र समवायिन्येकया सत्तयैव तादृशप्रमेयाभावाभाववत्तानिर्वाहे सर्वसमवाय्यसंग्राहकगुणादीनां तादृशप्रमेयाभावाभावत्वे मानाभावेन दर्शिताप्रसिद्धेर्दुर्वारत्वादिति चेन्न साध्यतावच्छेदकसम्बन्धेन वृत्तिमद्यत्किञ्चित्साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धनिवेशेनैवोपपत्तेः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य दर्शितसाध्याभावाभावस्य साध्यत्वेऽपि तस्य साध्यतावच्छेदकसमवायसम्बन्धेनावृत्तित्वात् । न चैवमपि कालिकसम्बन्धेन प्रमेयसाध्यककालत्वादिहेतावव्याप्तिः कालिकसम्बन्धावच्छिन्नप्रमेयाभावस्य यः कालिकसम्बन्धावच्छिन्नाभावस्तस्य स्वाभावात्मकस्य प्रमेयत्वेन साध्यस्य प्रतियोगितावच्छेदकीभूतकालिकसम्बन्धेन कालिकसम्बन्धावच्छिन्नप्रमेयाभावाधिकरणे हेतोर्वृत्तेरिति वाच्यं तादृशप्रतियोगितावच्छेदकयत्सम्बन्धेन साध्यवन्निष्ठवृत्तित्वमभावस्य तत्सम्बन्धेन तद्वद्वृत्तित्वस्य विवक्षणीयत्वादुक्तस्थले च साध्याभावस्य कालिकसम्बन्धेन

साध्यवह्निभेदेऽवृत्तेः । अथैवं तादृशप्रतियोगितायां स्वनिष्ठत्वनिवेशो विफलः तदनिवेशे घटभिन्नं घटत्वाभावादित्यादौ घटभेदात्मकसाध्यनिरूपितप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटत्वात्मकसाध्याभाववति घटत्वे हेतोर्वृत्तेः प्रसक्ताया अव्याप्तेरीदृशविवक्षयैव वारणसम्भवात् घटत्वरूपसाध्याभावस्य साध्यनिरूपितप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन साध्यवह्निभेदे घटेऽवृत्तेः न चैवं तादृशसाध्यस्य तादृशसम्बन्धेन साध्यवह्निभिन्नावृत्तेरभाव एवाप्रसिद्ध इति कथमव्याप्तिपरिहार इति वाच्यं घटभेदस्य घटत्वाभावसमनियतत्वेन तदभिन्नतया घटत्वेऽपि समवायसम्बन्धावच्छिन्नायास्तादृशप्रतियोगितायाः सत्त्वेन तादृशप्रतियोगितावच्छेदकसमवायेन साध्यवह्निभिन्नघटवृत्तिघटत्वरूपसाध्याभावस्य प्रसिद्धिसम्भवात् । तादृशाभावयोर्भेदे स्वनिष्ठत्वस्य प्रतियोगिताविशेषणत्वेऽपि घटत्वरूपसाध्याभावनिष्ठसाध्यनिरूपितप्रतियोगित्वाप्रसिद्ध्या तद्दोपतादवस्थ्यात् संयोगिभेदस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वरूपवैधर्म्येण संयोगाभावाभेदासम्भवेऽपि संयोगवत्त्वप्रकारकप्रमाविषयत्वाभावाभेदे वाधकाभावात्स्वरूपसम्बन्धस्यापि साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धतया तेन सम्बन्धेन साध्यवह्निभेदवृत्तेः तादृशप्रमाविषयत्वरूपसाध्याभावस्य प्रसिद्ध्या संयोगिभिन्नं गुणत्वादित्यादावव्याप्तेरनवकाशादिति चेन्न प्रतियोगितायां स्वनिष्ठत्वानिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगिताकेआकाशाभावाभाववो साध्ये आत्मत्वाद्यव्याप्तेर्दुर्वारत्वात् । तादृशसाध्यस्य यः कालिकसम्बन्धावच्छिन्नाभावः दैशिकविशेषणतासम्बन्धावच्छिन्नतदभावस्य तादृशसाध्यस्वरूपतया दैशिकविशेषणतासम्बन्धस्य साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धत्वात्तेन सम्बन्धेनाकाशाभावरूपसाध्याभावस्य साध्यवद्भिन्ने काले हेतुमति च वृत्तेः प्रतियोगितायां स्वनिष्ठत्वनिवेशे दैशिकविशेषणतायाः, आकाशाभावनिष्ठसाध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धत्वविरहेणाव्याप्तेरनवकाशात् न च साध्यनिरूपितस्वनिष्ठप्रतियोगितानिवेशो साध्याभावपदोपादानवैयर्थ्यम् अभावान्तरनिष्ठप्रतियोगितायाः साध्यनिरूपितत्वविरहेणैव तद्व्यावृत्ते-

रिति वाच्यम् । स्वपदार्थस्य द्विधा निवेशेन साध्याभावनिंष्ठसाध्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वानिवेशध्रौव्येण तत्पदवैयर्थ्यानवकाशात् । तादृशसम्बन्धेन साध्यवद्भिन्नवृत्ति यत्तद्वत्त्वमात्रनिवेशे साध्यवद्भिन्नवृत्त्यभावान्तरवति हेतोर्वृत्त्यानुपपत्तेरित्याहुः । अत्रेदं बोध्यं साध्यवत्त्वग्रहविरोधिग्रहविषयसम्बन्धेन साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धेन वा नानुमित्यौपयिकव्याप्तिशरीरेऽभावसम्बन्धनिवेशसम्भवः साध्यभेदेन व्याप्तेर्भेदाल्लाघवेन तत्तत्साध्यकस्थले तत्तत्साध्याभाववति दैशिककालिकविशेषणतासमवायादिसंसर्गाणामेव विशिष्याभावसम्बन्धतया निवेशौचित्यात् । उक्तगुरुरूपेण विशेषणताविशेषादीनां सम्बन्धताया अत्यन्ताप्रामाणिकतया तद्रूपावच्छिन्नस्य सम्बन्धाविधया व्याप्तिघटकत्वायोगाच्च परं तु यादृशसाध्यकस्थले यादृशसम्बन्धोऽभावसम्बन्धतया व्याप्तिघटकः तत्परिचयायैव दर्शितोक्तयः तथा च यादृशसम्बन्धेन प्रकृतसाध्यवति तद्भिन्नवृत्तिसाध्याभावो न वर्तते तादृशसम्बन्धेन तद्वत्त्वं निवेश्यामित्युक्त्यैव तत्परिचयसम्भवादित्यलं वाग्जालेन । तत्र च साध्याभाववत्पदेन साध्याभावत्वविशिष्टाधिकरणं विवक्षणीयं तेन गुणान्यत्वविशिष्टसत्ताभाववान् गुणत्वादित्यादौ विशिष्टस्यानतिरिक्ततया सत्तारूपसाध्याभावस्य गुणादौ सत्त्वेऽपि न क्षतिः गुणे गुणान्यत्वविशिष्टसत्ताभावो नास्तीत्यप्रत्ययात् तत्र तादृशाभावत्वविशिष्टाधिकरणत्वानभ्युपगमात् । अथैतल्लक्षणे घटत्वघटाकाशसंयोगान्यतराभाववानाकाशत्वादित्यादावव्याप्तिः । घटत्वस्य व्याप्यवृत्तितया तद्घटितान्यतराभाववद्भिन्ने घटे वर्तमानस्य घटाकाशसंयोगात्मकसाध्याभावस्य हेत्वधिकरणे गगनेऽपि वृत्तेः निरवच्छिन्नसाध्याभाववत्तानिवेशे च साध्यवद्भिन्नवृत्तित्वांशवैयर्थ्यादितिचेन्न । एतल्लक्षणकर्तृमते स्वप्रतियोगिसामानाधिकरण्यस्वप्रतियोगिवैयधिकरण्यरूपविरुद्धधर्माध्यासो ऽभावस्य भेदक इत्येतादृशयुक्त्या द्रव्यवृत्तिसंयोगाभावगुणवृत्तिसंयोगाभावयोर्भेदसिद्धिरित्यनुसृत्याव्याप्यवृत्तिसाध्यकस्थलेऽव्याप्तिः समाधीयते तथा च घटाकाशसंयोगस्योक्तान्यतराभावप्रतियोगित्वेऽपि न तदभावरूपता तथा च सति तादृशविरुद्धध-

भेदयोः समावेशापत्तेस्तयोर्विरोधाभावे संयोगाभावस्याप्यधिकरणभेदेन भेदासिद्धेरव्याप्यवृत्तिसाध्यके सर्वत्रैवाव्याप्तेः तदभिप्रायेण लक्षणान्तरस्यावतारणीयत्वादिति गगने ऽतिरिक्त एव तदभावः स्वीकरणीयः स च न साध्यवद्भिन्नवृत्तिरिति न दोषः । साध्यवद्भिन्ने वर्तते इत्यनेनानवच्छिन्नाया एव वृत्तेर्विवक्षणाच्च घटाकाशसंयोगात्मकाभावमादाय दोष इति तु न श्रद्धेयं तथा सति सुषुप्त्यादिकालावच्छेदेनात्मसमवायात्मवृत्तौ स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानत्वाद्यभावे साध्ये सुखादावव्याप्तिस्तत्र साध्यवद्भिन्ने ईश्वरे तादृशसम्बन्धेन निरवच्छिन्नवृत्तिकस्य ज्ञानत्वरूपाभावस्य तेन सम्बन्धेन सुखाद्यधिकरणे ऽस्मदाद्यात्मन्यपि वृत्तेः उत्पत्तिकालावच्छिन्नघटादिवृत्तितादृशसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावादिसाध्यकघटत्वादिहेतावव्याप्तिश्च ॥

संयोगाभावनिष्ठयोर्व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोः प्रतियोगिसामानाधिकरण्यप्रतियोगिवैयधिकरण्ययोर्वक्ष्यमाणरीत्या न विरोध इत्यभिप्रायेणाव्याप्यवृत्तिसाध्यकस्थलेऽव्याप्त्या लक्षणान्तरमवतारयति कर्मादाविति ॥

(दी०) कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह साध्यवादिति । हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह सकलेति । साकल्यं साध्याभाववति साध्ये च बोध्यं साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यस्तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः । अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणाय अभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यम् । हेत्वभावो ऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम् तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाव्याप्तिः न वा विशिष्टसत्ता-

त्यादिना तादृशाभावप्रतियोगिनि सत्तादावतिप्रसङ्गः ॥

(गा०) इदं त्ववधेयम् । द्रव्यवृत्तिसंयोगाभावो न गुणादौ स्वीक्रियते अपि तु फलतस्तद्वृत्तिसंयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभाव एव संयोगाभावत्वं कल्प्यते अनन्तगुणाद्यधिकरणे संयोगाभावकल्पनामपेक्ष्य तथाविधैकाभावे संयोगाद्यभावत्वकल्पने लाघवात् । न च संयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभावे द्रव्यत्वाभावे द्रव्यभेदे संयोगिभेदादौ वा संयोगाभावत्वं कल्प्यत इत्यत्र विनिगमकाभाव इति वाच्यम् । तादृशाभावानां समनियतत्वाऽभेदात् । एवं च द्रव्यवृत्तिसंयोगाभावगुणवृत्तिसंयोगाभावयोर्भेदः सप्रमाण एव । अथैवं द्रव्यत्वाभावादीनामप्यानन्त्यापत्तिः । कर्मादौ गुणवृत्तिद्रव्यत्वाभावो न कल्प्यते अपि तु फलतस्तद्वृत्तिद्रव्यगुणान्यतरत्वाभाव एव तदभावत्वमित्यादितर्कगवेषणया कर्मादिवृत्तिद्रव्यत्वाद्यभावस्य गुणादिवृत्तितदभावतो भेदासिद्धिरिति चेत् । इष्टमेवैतदधिकरणभेदेनाभावभेदवादिनां न चैवं संयोगाद्यभावत्वकल्पनायां धर्मिणामप्यानन्त्यादुक्तविनिगमकाभावसम्भव इति वाच्यम् । विनिगमनाविरहेणापि द्रव्यत्वाभावादौ संयोगाद्यभावत्वकल्पनाया निष्प्रत्यूहत्वादिति । हेतोरिति । नानाधिकरणकस्येत्यादिः । अव्याप्तेरिति एतद्रूपवानेतद्रसादित्यादावेतद्रूपाधिकरणस्य क्षित्यादिना भेदसत्त्वेऽपि व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन साध्यवद्भिन्नप्रतियोगितायाः प्रतियोग्यवृत्तित्वेन वा भेदस्य विशेषितत्वेन लक्षणगमनसम्भवान्नासम्भवो दर्शितः । साकल्यमिति । योग्यमित्यस्य विशेषणमित्यादिः । अत्र साध्याभाववति साकल्यविशेषणसत्त्व एव साध्ये तद्विशेषणव्यावृत्तिः सङ्गच्छते अन्यथा साध्याभाववत्तायाः हेतुमत्साधारण्येऽपि साध्याभाववद्यत्किञ्चिद्व्यक्तिनिष्ठाभावप्रतियोगित्वमादाय नानाव्यक्तिसाध्यकसद्धेतौ लक्षणसमन्वयसम्भवादतः साध्ये तदभाववति चेत्यनुक्त्वा साध्याभाववति साकल्यविशेषणं प्रथमतो दर्शितम् । न च साध्याभाववति साकल्यविशेषणासत्त्वेऽपि वह्निमान् पर्वतान्यत्वादित्यादावतिव्याप्तिवारणमेव साध्ये साकल्यविशेषणप्रयोजनमस्ति उभयत्र साकल्यविशेषणादाने यत्किञ्चित्साध्याभाववति प-

ध्वंते हेत्वभावसत्त्वेनातिव्याप्तिः साध्ये साकल्यविशेषणसत्त्वे तु ह्रदादेरेव सकलसाध्याभाववत्तया तत्र हेतुसत्त्वेनातिव्याप्त्युद्धाराशङ्काभिप्रायवर्णनं सम्यगिति वाच्यं साध्याभाववति साकल्यविशेषणासत्त्वे साध्ये साकल्यविशेषणस्योक्तातिव्याप्तिवारणप्रयोजनकत्वसम्भवेऽपि साकल्यविशेषणस्य वक्ष्यमाणप्रयोजनस्यैव वास्तवतया तस्य साध्याभाववति साकल्यविशेषणसत्त्व एव सङ्गतेरादौ तत्प्रदर्शनस्योचितत्वात्। वस्तुतस्तु साध्ये साकल्यविशेषणं परित्यज्य साध्याभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वनिवेशरूपकल्पान्तरस्यावलम्बनीयतया चरममेव तत्प्रदर्शनमुचितं साध्ये तदभाववति च योग्यमित्युक्त्वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको,ऽभावो ग्राह्य इत्युक्ते साध्याभाववति च साकल्यं निवेश्यते साध्याभावो वा एतादृशो निवेश्यते इत्येतादृशविकल्पः प्रतीयते स चाविवक्षित इति सारम्। अव्याप्तिवारणाय साध्याभावे साकल्यविशेषणे धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकीभूतसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकसकलसाध्याभावाधिकरणं गुणादिरेव स्यादयोगोलकादेर्ह्रदासंयुक्तत्वावच्छिन्नप्रतियोगिताकाभावानधिकरणत्वादित्यतिव्याप्तिः वह्निमत्त्वप्रकारकप्रमाविषयो धूमादित्यादौ साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावस्य तत्तद्विपक्षमात्रवृत्तितया सकलसाध्याभावाधिकरणाप्रसिद्ध्याऽव्याप्तिश्चेति तदुपेक्ष्य 'साध्ये साकल्यविशेषणं निवेशितम्। ननु साध्ये साकल्यविशेषणदानेऽपि पर्वतीयवह्नेर्द्वित्वादिना ऽभावसत्त्वेन सकलसाध्याभावसत्त्वात् व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनाभावविशेषणे च वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिः वह्निमतस्तथाविधसकलसाध्याभावानधिकरणत्वात् साध्यतावच्छेदकातिरिक्तो यो व्यासज्यवृत्तिधर्मस्तदनवच्छिन्नप्रतियोगिताकत्वनिवेशने च,लाघवात्साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वमेवाभावे विशेषणमुचितं किं साध्ये साकल्यविशेषणेनेत्यभिप्रेत्य तथैवाह साध्यतावच्छेदकेति। साध्याभाववति साकल्यविशेषण-

प्रयोजनमाह विपक्षेति । वैकल्पिकयोः साध्यतदभावयोः साकल्यसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविशेषणयोर्व्यावृत्तिमाह न वेति । एकव्यक्तिके एतद्रूपवानेतद्रसादित्यादौ हेत्वधिकरणे पूर्वक्षणवृत्तित्वविशिष्टसाध्याभावो न प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः पूर्वक्षणादिवृत्तित्वविशिष्टैतद्रूपाद्रेरेतद्रसाधिकरणे वृत्तेरेतद्रूपतद्रूपोभयत्वावच्छिन्नाभावोऽपि न तथा प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्धेरिति तत्र लक्षणसङ्गतिरित्यतो नानाव्यक्तिक इत्युक्तम् । अत एवाव्याप्तिरेवोक्ता नासम्भवः । अत्र च नानाव्यक्तिसाध्यकत्वं व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदककत्वम् । अत एव एतद्व्यक्तेर्वृत्तियावद्धर्मवानेतत्त्वादित्यादौ नानाव्यक्तिसाध्यके ऽव्याप्तिविरहेऽपि न क्षतिः । अव्याप्यवृत्तीति । कपिसंयोग्येतद्वृक्षत्वादित्यादावित्यर्थः अव्याप्तेर्वारणायेत्यन्वयः । व्यभिचारिणि चेति । पृथिवी कपिसंयोगादित्यादौ चेत्यर्थः । अभावद्वये साध्याभावे हेत्वभावे च तथा चाव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तिवारणाय साध्याभावे व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यमित्यर्थः । यद्यपि हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणस्यावश्यकतया कपिसंयोगी कपिविभागादित्यादौ चाव्याप्यवृत्तिहेतुके ऽव्याप्तिवारणप्रयोजनकत्वं साध्याभावे तद्विशेषणस्य सम्भवतीति व्याप्यवृत्तीफिञ्चित्करं तथापि हेत्वभावे तद्विशेषणप्रतिसन्धानं विनैव व्याप्यवृत्तिहेतुकस्थले व्याप्तिनिर्णयो भवतीत्येतदभिसन्धायैव तदुक्तं प्रतियोगिवैयधिकरण्यं च न प्रतियोग्यधिकरणावृत्तित्वम् । अव्याप्यवृत्तिसाध्यके तथाविधहेतुके च तादृशसाध्याभावहेत्वभावाप्रसिद्ध्या ऽव्याप्तेः अपि तु प्रतियोग्यनधिकरणवृत्तित्वं तथा च प्रतियोग्यनधिकरणवृत्तित्वविशिष्टसाध्याभावाधिकरणेषु यावत्सु प्रतियोग्यनधिकरणवृत्तित्वविशिष्टः सन् वर्तते योऽभावस्तत्प्रतियोगित्वमर्थः तेन कपिसंयोग्येतत्त्वादित्यादौ कपिसंयोगाद्यनधिकरणगुणादिवृत्तित्वोपलक्षितकपिसंयोगाद्यभावस्य हेत्वधिकरणे सत्त्वेऽपि नाव्याप्तिः न वा एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ तथाविधकपिसंयोगाभावस्य सक-

लसाध्याभावाधिकरणे सत्त्वेऽव्यतिव्याप्तिः प्रतियोग्यनधिकरणीभूतसाध्याभावाधिकरणयावन्निष्ठस्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वमिति फलितोऽर्थः । प्रथमे साध्यतावच्छेदकसम्बन्धेन चरमे हेतुतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यं तेनायमात्मा आत्ममहाकालान्यतरत्वादित्यादौ व्यभिचारनिरूपकाधिकरणस्य कालस्य कालिकसम्बन्धेनात्मत्वाधिकरणत्वेऽपि नातिव्याप्तिः न वा वह्निमान् धूमादित्यादौ साध्याभावाधिकरणयावदन्तर्गतकालज्ञानादिषु कालिकविषयित्वादिसम्बन्धेन हेत्वभावप्रतियोग्यधिकरणतासत्त्वेऽपि असम्भवो ऽव्याप्तिर्वा इत्थं च प्रतियोगित्वे सम्बन्धविशेषावच्छिन्नत्वेन न निवेशनीये सम्बन्धान्तरावच्छिन्नप्रतियोगिताकयोः साध्याभावहेत्वभावयोरुक्तसम्बन्धेन प्रतियोगिसमानाधिकरणतया ऽसम्भवातिव्याप्त्योरनवकाशात् हेत्वभावोऽपीति अपिशब्देन साध्याभावेऽपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं निवेशनीयमिति सूच्यते तेन विशिष्टसत्तायान् जातेरित्यादौ हेत्वधिकरणादिषु साध्याभावप्रतियोगिसत्त्वादेः सत्त्वेऽपि नातिव्याप्तिः । अत्र साध्याभावोऽपीत्युक्तौ अग्रिमतत्पदेन हेत्वभावपरामर्शासम्भवः तत्र हेत्वभावपदोपादाने ऽक्षराधिक्यमिति तत्रोक्तं तत्प्रतियोगित्वं साध्याभाववन्निष्ठाभावप्रतियोगित्वं हेतुतावच्छेदकरूपेण हेतुतावच्छेदकावच्छिन्नमित्यर्थः । हेत्वभावनिष्ठप्रतियोगिवैयधिकरण्यशरीरे स्वप्रतियोगितावच्छेदकावच्छिन्नविशेषस्य प्रयोजनमाह द्रव्यत्वादाविति । विशिष्टेति गुणकर्मान्यत्वविशिष्टेत्यर्थः । प्रतियोगितायां हेत्वभावप्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशस्य प्रयोजनमाह न वेति । अत्रापि द्रव्यत्वादौ साध्य इत्यनुषज्यते । विशिष्टसत्तात्वादिना गुणकर्मान्यत्वविशिष्टसत्त्वात्वादिना तृतीयार्थश्चात्रावच्छिन्नप्रतियोगिताकत्वं तस्याभावेऽन्वयः प्रतियोगिपदार्थैकदेशप्रतियोगित्वान्वितमवच्छिन्नत्वं वा तदर्थः । तादृशाभावेति । सकलसाध्याभाववन्निष्ठाभावेत्यर्थः । न च हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यस्थले हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यमेव निवेश्यतां ततोऽपि तत्प्रयोजननिर्वाहात् स-

था च द्रव्यं सत्त्वादित्यादौ गुणादिनिष्ठविशिष्टसत्ताभावस्य हेतुतावच्छेदकावच्छिन्नसमानाधिकरणतयैवातिव्याप्तिवारणसम्भवात्प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशनमफलमिति वाच्यं हेत्वभावे हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे सकलसाध्याभाववन्निष्ठा या हेतुतावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टनिरूपिताधिकरणता तन्निरूपकाभावप्रतियोगित्वमर्थः स्यात्तदपेक्षया सकलसाध्याभाववन्निष्ठा या हेतुतावच्छेदकावच्छिन्नयादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणता तद्वत्त्वरूपास्मदीयफलितार्थस्यागुरुत्वात् न च ममापि सकलसाध्याभाववन्निष्ठं यद्धर्मावच्छिन्नानधिकरणत्वं तद्धर्मवत्त्वमित्येवार्थः स चातिलघुरेवेति वाच्यम् । एतादृशार्थकरणे मूलोक्तं प्रतियोगिताया व्याप्तित्वं व्याहन्येतेति मूलानुसारेण दीधितिकृता गुर्वर्थानुसरणात् उक्तविशेष्यविशेषणभावेनानिवेशे व्यर्थविशेषणतानवकाशात् । केचित्तु हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यानिवेशे सकलसाध्याभाववन्निष्ठविशिष्टसत्तात्वावच्छिन्नव्यधिकरणाभावप्रतियोगित्वरूपव्याप्तिविशिष्टवैशिष्ट्यज्ञानस्य गुणेऽपि सत्त्वात् याधानवतादृशायां तत्र द्रव्यत्वानुमित्यापत्तिः अस्मन्मते तु तत्प्रतियोगित्वं चेत्यतो लब्धस्य तादृशप्रतियोगितावच्छेदकहेतुतावच्छेदकस्य व्याप्तितया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानस्य गुणेऽपि भ्रमत्वादित्याहुः ॥

एतल्लक्षणं दूषयित्वोत्तरलक्षणमवतारयति यत्रैकव्यक्तिकमिति ॥

( दी० ) यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धूमत्वादिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिः तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह साध्यवदन्येति । अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यं न हि भवति नीलो घटो घटादन्य इति ॥

( गा० ) यत्रैकव्यक्तिकं साध्यं तत्राव्याप्तिरित्यन्वयः । एतद्-

यथानेतद्रसादित्यादावनेकाशेषत्वरूपसाकल्यस्य साध्ये ऽसत्त्वा-
दिति भावः । साध्ये साकल्यविशेषणं परित्यज्य कल्पान्तरमनु-
सुसरणाय तत्रैतद्दोषावकाश इत्यत आह विपक्षो वेति ।
विपक्षः साध्याभाववान् अत्रापि एकव्यक्तिक इत्यस्य विपरिण-
तस्यानुषङ्गः तथा चैतद्दृष्टमिदं पटत्वादित्यादौ साध्याभाव-
वत्येतद्घटादौ साकल्याप्रसिद्ध्या ऽव्याप्तिरित्यर्थः । सकलप-
दस्याशेषमात्रपरत्वे दोषान्तरमाह निर्धूमत्वादित्याप्य इति । तत्त्वेन
निर्धूमत्वव्याप्यत्वेन तथा च धूमत्वावच्छिन्नाभाववद्व्याप्यवान् व-
ह्नित्वावच्छिन्नाभावादित्यादावित्यर्थः । धूमत्वावच्छिन्नाभावे
साध्ये एकव्यक्तिकतया पूर्वदोषाक्रान्तत्वेन तद्व्याप्यसाध्यकानु-
सरणं निर्धूमत्वव्याप्यजलत्वादेस्तद्रूपेण साध्यतायां सद्धेतु-
त्वानुपपत्तिरतस्तत्त्वेनेत्युक्तम् । हेत्वभावस्येति । अथ वह्न्यात्मकहे-
त्वभावस्य प्रत्येकं सकलसाध्याभाववन्निष्ठत्वासम्भवेऽपि सक-
लतन्निष्ठवह्न्यभावादिभेदप्रतियोगितामादायैव लक्षणं सङ्गमनीयं
हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यानिवेशादेव व्य-
भिचारिणि सम्बन्धान्तरावच्छिन्नप्रतियोगिताकहेत्वभावमादा-
यातिप्रसङ्गानवकाशेन हेत्वभावप्रतियोगितायां हेतुतावच्छेदक-
सम्बन्धावच्छिन्नत्वानिवेशात् । यत्तु वह्निमद्भेदहेतुताभिप्रायको
ऽयं ग्रन्थः तत्र हेतुभेदमादायापि लक्षणगमनासम्भवात् भे-
दभेदस्यानवस्थाभयेनाधिकरणस्वरूपस्य स्वीकरणीयतया तस्य
च प्रत्येकविश्रान्ततया यावद्विपक्षवृत्तित्वासम्भवादिति तन्न ।
आकाशाभावाद्यधिकरणकभेदभेदस्याकाशाभावाद्यधिकरणस्वरूप-
तया तस्य च यावद्विपक्षवृत्तित्वेन तमादायैव लक्षणगमनसम्भ-
वात् । न चैवाद्ध्योरित्याकाशाभावमादाय भेदहेतुकव्यभिचारि-
ण्यतिप्रसक्त्या हेत्वभावत्वेन सकलसाध्याभावाधिकरणवृत्तित्वं
विवक्षणीयं तथा सत्याधिकरणस्वरूपाभावस्य स्वस्मिन्नेव त-
दभावत्वेन वृत्तिरिति नातिव्याप्त्यवकाशः । एवं चाकाशाभा-
वमादाय नोक्ताव्याप्तिपरिहारसम्भव इति वाच्यम् । उक्तस्थले
आकाशाभावस्य हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकर-
ण्यविरहादेवातिव्याप्तिवारणसम्भवेन तादृशविवक्षाया निष्प्रयो-
जनकत्वात् वह्निमद्भेदहेतुकस्थले च साध्याभावाधिकरणस्य

हेतुरूपप्रतियोग्यनधिकरणत्वेनाकाशाभावरूपहेतुभेदस्य प्रतियोगिव्यधिकरणत्वेनाव्याप्तिवारणसम्भवादिति । अत्र केचित् । यत्र वह्न्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यं साध्यं वह्न्यभावान्यत्वविशिष्टवह्न्यभावो हेतुस्तत्र वह्न्यभावस्यापि सकलसाध्याभाववदन्तर्गततया तत्र वह्न्यभावभेदासत्त्वेन तमादाय लक्षणगमनासम्भवात् । न च तादृशविशिष्टहेतुकस्थले हेतुभेदस्य सकलसाध्याभाववन्निष्ठत्वासम्भवेऽपि अखण्डविशिष्टात्यन्ताभावस्य तथात्वमादायैव लक्षणं सङ्गमनीयमिति वाच्यं प्राचीनमते विशेषणाभावविशेष्याभावाभ्यामनतिरिक्ततया तादृशविशिष्टाभावस्य वह्न्यभावत्ववह्न्युभयरूपत्वेन सकलसाध्याभाववन्निष्ठत्वासम्भवात् । अथैवमपि विषयितादिसम्बन्धावच्छिन्नप्रतियोगिताकस्य वह्न्यभावात्यन्ताभावस्याखण्डतया सकलधूमवन्निष्ठतया तमादायैव लक्षणं सङ्गमनीयमिति चेन्न वृत्त्यनियामकतया विषयितादिसम्बन्धानामत्यन्ताभावप्रतियोगितानवच्छेदकत्वात् । संयोगादिरूपव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावात्यन्ताभावस्याखण्डस्य सकलधूमवन्निष्ठत्वेऽपि तदभावप्रतियोगिता न हेतुतावच्छेदकीभूतवह्न्यभावत्वावच्छिन्ना तत्र लाघवेनाभावत्वस्यैवावच्छेदकत्वादिति न तमादायापि लक्षणसङ्गतिः । न च गुरुधर्मावच्छिन्नहेतुकस्थले लक्षणसङ्गमनाय पारिभाषिकमेवावच्छेदकत्वं हेतुतावच्छेदके निवेश्यं तथा च वह्न्यभावत्वादेरपि तादृशावच्छेदकत्वमक्षतमेवेति वाच्यम् । एतल्लक्षणस्य पारित्याज्यतया निखिलदोषोद्धारानावश्यकत्वेन पारिभाषिकावच्छेदकत्वं न निविष्टमित्यभिप्रायेण तद्दोषप्रदानादिति वदन्ति । तदसत् तथा सत्यपि सकलसाध्याभाववन्निष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाभावमादाय लक्षणसमन्वयसम्भवात् । न च जन्यमात्रस्य कालोपाधितानये साध्याभाववति पर्वतादौ कालिकसम्बन्धेन वह्न्यभावादिसत्त्वात्तत्र तत्सम्बन्धेन तस्याभावो न वर्तत एवेति वाच्यं कालिकसम्बन्धेन तत्र वह्न्यभावसत्त्वेऽपि प्रतियोग्यनधिकरणीभूतवह्निमदवयवावच्छेदेन तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्यापि सत्त्वात् । एवं विशिष्टाभावस्य विशेष्याभाव-

विशेषणाभावाभ्यामनतिरिक्तत्वे द्रव्यं विशिष्टसत्त्वादित्यादावेवाव्याप्तिसम्भवे तदुपेक्ष्याभावसाध्यकाभावहेतुकस्थलानुधावने बीजाभावात् । तस्मात् प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगिवैयधिकरण्यं निविष्टं प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्नैव निविष्टेत्याशयेनैव तद्दोषदानम् । हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यदाने तु अग्रिमलक्षणापेक्षया गौरवमेव तल्लक्षणावतारे बीजं बोध्यम् । एतेन सकलशब्दस्य व्यापकतार्थकतया साध्याभावव्यापकीभूताभावप्रतियोगित्वमेव निष्कृष्टतल्लक्षणार्थः धूमवान् वह्नेरित्यादौ प्रमेयत्वादिना वह्न्यभावस्य साध्याभावव्यापकत्वेऽपि न क्षतिः यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं साध्याभावव्यापकतावच्छेदकं तद्रूपवत्त्वस्यैव लक्षणत्वात् एवं च हेत्वभावे प्रतियोगिवैयधिकरण्यं न निवेश्यते व्यापकतालक्षणे प्रतियोगिवैयधिकरण्यानिवेशेनाव्याप्यवृत्तिहेतुकव्यभिचारिणि हेत्वभावस्य साध्याभाववन्निष्ठहेतुरूपाभावप्रतियोगितया व्यापकत्वासम्भवेनातिप्रसङ्गावरह्लात् । व्यापकताशरीरे च हेतुतावच्छेदकसम्बन्धेन साध्याभाववन्निष्ठत्वमभावे निवेश्यते तेन वह्न्यभाववति कालिकादिसम्बन्धेन धूमादिरूपाभावस्य वृत्तावपि धूमाभावादेर्न साध्याभावव्यापकताक्षतिः सत्तावान् जातेरित्यादौ साध्याभाववति हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या ऽव्याप्तिश्च लक्षणपञ्चक एव दोषः अस्तु वा हेतुतावच्छेदकसम्बन्धेन हेतुमत्ताज्ञानं प्रति यादृशसम्बन्धेन हेत्वभाववत्ताग्रहः प्रतिबन्धकस्तादृशसम्बन्धेन स्वावच्छिन्नाधिकरणभिन्नसाध्याभावाधिकरणकं यद्यत्त्वं तद्भिन्नत्वमेव साध्याभावव्यापकतावच्छेदकत्वम् इत्थं च सत्तावान् जातेरित्यादौ एतादृशं त्वं जातित्वाभावत्वादिकमेव तद्भिन्नं च जात्यभावत्वादिकमिति लक्षणसमन्वयः इत्थं च एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ कपिसंयोगाभावत्वावच्छिन्नानधिकरणत्वाप्रसिद्ध्या कपिसंयोगाभावत्वस्य साध्याभावव्यापकतावच्छेदकत्वादतिव्याप्तिवारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणं देयमेव न देयमेव वा अधिकरणत्वाभावस्यैवाधिकरणभिन्नत्वस्थाने निवेशनीयत्वात् कपिसंयोगाभावादेरि-

च तदधिकरणतया अव्याप्यवृत्तितया तदभावस्य साध्याभाववति सत्त्वेनातिव्याप्त्यनवकाशात् । अधिकरणत्वाभावश्च भावप्रतियोगिकतया ऽतिरिक्त एवेति विशेषणताविशेषेणैव तद्वत्त्वं साध्याभाववति विशेषणीयमिति । एवं च निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वेऽपि हेत्वभावत्वेन तेषां साध्याभावव्यापकत्वान्नाव्याप्तिरिति पूर्वपक्षो ऽप्यकिञ्चित्करः यत्र यावतां साध्याभाववतां सम्भवस्तत्र प्रातिस्विकरूपेण तत्तदधिकरणवृत्तित्वमेव हेत्वभावविशेषणतया लक्षणघटकं न तु साध्याभावव्यापकत्वमित्यभिप्रायेणैवैतद्दोषदानात् प्रकारान्तरानुसारेण परिष्कारे सकललक्षणानामेव परिष्कारसम्भवादिति कृतं पल्लवितेन । परे तु निर्धूमत्वव्याप्ये तत्त्वेन साध्ये इत्यस्य सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावव्याप्ये साध्ये तत्सम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावादाव्याप्तिरित्यर्थः । तत्र च हेतोरपि सकलसाध्याभाववदन्तर्गततया तत्र हेतुभेदासत्त्वेन न वह्न्यभावभेदमादाय लक्षणसङ्गतिरित्यव्याप्तिर्दुर्वारैव तथाहि सामानाधिकरण्यसम्बन्धेन पर्वतत्वादौ वर्तमानस्य वह्निस्तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य पर्वतादौ सत्त्वेन तत्र सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावसत्त्वात् साध्याभावाधिकरणत्वमविवादमेवेतिध्येयमित्याहुः । साध्यवद्व्यक्तिविशेषभेदमादायाव्याप्तिं परिहरति अत्रेति । साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वमिति साध्यतावच्छेदकविशिष्टसाध्यवत्त्वपर्याप्तप्रतियोगितावच्छेदकताकत्वमित्यर्थः । तेन वह्निमान् धूमादित्यादौ तत्तद्वह्निमत्त्वावच्छिन्नप्रतियोगिताकभेदमादाय न दोषः तादृशभेदप्रतियोगितावच्छेदकतायास्तत्ताविशिष्टवह्निमत्त्व एव पर्याप्तत्वात् । व्युत्पत्तिबललभ्यम् अन्यादिपदसमभिव्याहारलभ्यं नञादिपदसमभिव्याहारज्ञानस्येव तादृशपदसमभिव्याहारज्ञानस्याप्यन्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावशाब्दत्वावच्छिन्नं प्रत्येव जनकत्वादिति भावः । व्युत्पत्तिबललभ्यमित्यनेन यथाश्रुतलक्षणवाक्यार्थ एवायमिति सूचितं तादृशसमभिव्याहारस्थले तत्प्रतियोगिताकाभावमात्रबोधे ऽतिप्रसङ्गं सूचयति न हि भवतीति । प्रामाणिकव्यवहार इति

शेषः । तथा चान्यविप्रतियोगिकाभावमात्रबोधे नीलघटेऽपि पीतघटादिभेदसत्त्वेन तादृशव्यवहारोऽपि स्यादिति भावः । द्रव्यं न घट इत्याद्यप्रयोगादनुयोगितावच्छेदकावच्छेदेनैवान्योन्याभावादिरन्यादिपदेन प्रत्याय्यते अनुयोगितावच्छेदकश्च प्रतियोग्यवृत्तिरेव धर्म इति प्रकाशकृदङ्गीकृतव्युत्पत्त्यन्तरविरोधात् घटो घटादन्य इति प्रयोगवारणसम्भवाच्चेति इति । घटादन्य इत्यादौ प्राचीनमते पञ्चम्याः प्रतियोगित्वमर्थः । तत्र च प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य घटत्वाद्यवच्छिन्नत्वविशिष्टाधेयतासम्बन्धेनान्वयः । अथ वा केवलाधेयत्वमेव घटस्य सम्बन्धः धर्मिपारतन्त्र्येण घटत्वादेरपि अवच्छिन्नत्वसम्बन्धेन तत्रान्वयोपगमात् एकविशेषणत्वेनोपस्थितस्याप्यन्यत्र पारतन्त्र्येणान्वयस्य व्युत्पत्तिसिद्धत्वात् । प्रतियोगित्वस्य व्युत्पत्तिवैचित्र्येण अन्यपदार्थैकदेशे भेदे निरूपकतासम्बन्धेनान्वयः घटादन्य इत्यादौ च निरूपकतासम्बन्धेन घटत्वावच्छिन्नप्रतियोगिताविशिष्टे लक्षणया घटादिपदार्थः तत्पुरुषस्थले पूर्वपदस्य तत्तद्विभक्त्यन्तार्थविशिष्टे लाक्षणिकत्वात्तादृशघटादिपदार्थस्य चाभेदसम्बन्धेन भेदेऽन्वयः । नवीनमते घटादन्य इत्यादावनुयोगित्वं पञ्चम्यर्थस्तत्र च प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य स्ववृत्तिघटत्वाद्यवच्छिन्नप्रतियोगितानिरूपकतासम्बन्धेनान्वयः । अनुयोगितायाश्चाश्रयतासम्बन्धेन भेदेऽन्वयः समासस्थले च घटत्वावच्छिन्ननिरूपितानुयोगिताविशिष्टे पूर्वपदस्य लक्षणा तस्य चाभेदसम्बन्धेन भेदेऽन्वयः । अथैव साध्यवदन्यावृत्तित्वमित्येतादृशलक्षणवाक्याद्भेदसम्बन्धेन तादृशप्रतियोगिताविशिष्टविशेषितस्तादृशानुयोगिताविशिष्टविशेषितो वा यो भेदस्तद्वदवृत्तित्वमेव प्रतीयते । तथा चानुमित्यौपयिकव्याप्तिस्वरूपजिज्ञासायां तादृशलक्षणाभिधाने ऽर्थान्तरप्रसङ्गस्तादृशप्रतियोगितासम्बन्धेन तादृशानुयोगितासम्बन्धेन वा साध्यवद्विशेषितभेदवदवृत्तिताज्ञानस्यैव लाघवेनानुमितिहेतुत्वात् । इति चेन्न । यादृशव्याप्तिज्ञानमनुमितिहेतुस्तस्यामेवास्य तात्पर्यात् । शाब्दबोधविषयत्वेऽपि तन्मूलकोटिच्यव्याप्तिविषयकमानसोपनीतभानस्यैव तादृशतात्पर्यनिर्वाहकत्वात् । तादृशशाब्दबोधस्यापि कथं चिदुपपादयितुं

शक्यत्वाच्च नीलो घटः कम्बुग्रीवादिमदन्य इत्यादिवाक्यस्याप्रमाणत्वात् · पटः, कम्बुग्रीवादिमदन्य इत्यादिवाक्यस्य प्रमाणत्वात् । अन्ययितावच्छेदकनिरूपितपारिभाषिकमवच्छिन्नत्वं प्रतियोगितायां भासत इत्युपेयम् अतः साध्यवदन्य इत्यादौ मतुबन्तप्रतिपाद्यतावच्छेदकस्य साध्यसम्बन्धस्य साध्यापेक्षयाः गुरुतयानवच्छेदकत्वेऽपि नोक्तलक्षणवाक्यार्थाप्रसिद्धिः पारिभाषिकं तदवच्छिन्नत्वं च तद्विशिष्टसम्बन्धिनिष्ठाभावीया या या प्रतियोगिता तत्तदवच्छेदकत्वाभावकूटवदवच्छिन्नत्वं एतादृशावच्छिन्नत्वस्य च सम्बन्धतया प्रातिस्विकरूपेण तत्तत्प्रतियोगिताव्यक्तीनां दुर्ज्ञेयत्वेऽपि न क्षतिः सम्बन्धज्ञानस्य विशिष्टबुद्धावनपेक्षितत्वात् अनुमितिं प्रति च साध्यावच्छिन्नप्रतियोगितावगाहिज्ञानमेव कारणं लाघवात् न तु साध्यसम्बन्धावच्छिन्नप्रतियोगितावगाहिज्ञानमित्यनुमित्यौपयिकव्याप्तिशरीरे तादृश्येव प्रतियोगिता निवेश्यते कम्बुग्रीवादिमत्त्वान् घटादित्यादौ विशेषदर्शिनामनुमितेः प्रामाणिकत्वे निरुक्तपारिभाषिकावच्छिन्नत्वमेवानुमित्यौपयिकव्याप्तिघटकं तादृशगुरुधर्मावच्छिन्नसाध्यकानुमानस्य केवलान्वयिसाध्यकसमशीलतावादिनस्तु स्वरूपसम्बन्धरूपमेवावच्छिन्नत्वं व्याप्तिशरीरे निवेशयन्तीति समासः मूले केवलान्वयिन्यभावादित्यादौ एतादृशलक्षणपञ्चकस्य केवलान्वयिनि अप्रसिद्धेरित्यर्थः । न च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्यावश्यं निवेशनीयतया सत्तावान् द्रव्यत्वादित्यादौ अव्याप्तिरस्तीति केवलान्वयिसाध्यकमात्रे अव्याप्तिकथनमसङ्गतमिति वाच्यम् । केवलान्वयिपदेन हेतुतावच्छेदकसम्बन्धेन यत्किञ्चिदधिकरणवृत्त्यभावाप्रतियोगित्वरूपकेवलान्वयित्वाश्रयसाध्यकमात्रस्योक्तत्वात् । अथवा हेतुतावच्छेदकसम्बन्धेन वृत्तित्वमनिवेश्य हेतुतावच्छेदकसम्बन्धातिरिक्तो यो हेतुप्रतियोगिकः सम्बन्धः तदन्यसम्बन्धावच्छिन्नवृत्तित्वमेव निवेश्यं वह्निमान् धूमादित्यादौ कालिकसम्बन्धेन धूमादेः साध्याभाववद्वृत्तित्वेऽपि तत्सम्बन्धस्य हेतुतावच्छेदकसम्बन्धातिरिक्तत्वात् हेतुप्रतियोगिकत्वाच्च लक्षणाघटकतया तदन्यसम्बन्धेन तद्वृत्तित्वाभावः अस्त्येवेति भावः । एवं च सत्तावान् द्रव्यत्वादित्यादौ

हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वाप्रसिद्धावपि हेतुतावच्छेदकसम्बन्धातिरिक्तहेतुप्रतियोगिकसम्बन्धान्यविशेषणताविशेषादिना वृत्तित्वप्रसिद्ध्या नाव्याप्तिरिति ध्येयम् ॥

इति श्रीगदाधरभट्टाचार्यविरचिता शिरोमणिकृतव्याप्तिपञ्चकव्याख्याया विवृतिः समाप्ता ॥

---

# अनुमानगादाधर्याम्

सिंहव्याघ्रप्रकरणम् ।

---

( चि० ) नापि साध्यासामानाधिकरण्यानधिकरणत्वम् । साध्यवैयधिकरण्यानधिकरणत्वं वा तदुभयमपि साध्यानाधिकरणानधिकरणत्वं तच्च तत्र यत्किञ्चित्साध्यानधिकरणाधिकरणे धूमे चाप्रसिद्धम् ॥

( दी० ) नापीति । साध्यमसमानाधिकरणं यस्य यदधिकरणानधिकरणं साध्यं तत्त्वं साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम् । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमिति यावत् । तदनधिकरणत्वमित्यर्थः साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्वृत्तौ नातिप्रसङ्गः साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षः तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः ॥

(गा०) साध्यासामानाधिकरण्यानधिकरणत्वमित्येतल्लक्षणे यदि सध्यधिकरणावृत्तित्वरूपमसामानाधिकरण्यं निवेश्यते तदा द्रव्यं सत्त्वादित्यादावतिव्याप्तिः सत्तायाः द्रव्यत्वाधिकरणवृत्तितया तादृशासामानाधिकरण्यानधिकरणत्वात् तदनधिकरणवृत्तित्वस्यासामानाधिकरण्यपदार्थत्वेऽनन्तरवक्ष्यमाणलक्षणाभेद इत्यतो व्याचष्टे साध्येति । असमानाधिकरणं यस्येत्यत्रासमानाधिकरणपदस्य स्वानधिकरणाधिकरणार्थकत्वे द्रव्यं सत्त्वादित्यादावेवातिव्याप्तिः द्रव्यत्वादेः सत्ताद्यनधिकरणाधिकरणत्वविरहेण यत्पदेन सत्त्वादुपादानासम्भवात् सत्तावान् द्रव्यत्वादित्यादावव्याप्तिश्च सत्तादेर्द्रव्यत्वाद्यनधिकरणाधिकरणत्वादतस्तदधिकरण्यानधिकरणकत्व-

परतया तत्पदं व्याचष्टे यदधिकरणेति । यदधिकरणानधिकरणकं साध्यं तत्त्वानाधिकरणत्वस्य व्याप्तित्वे व्याप्तिविशिष्टैकार्थरूपतानुपपत्त्या विशिष्टपरामर्शस्यानुमितिहेतुत्वानिर्वाहः यत्तत्त्वाननुगमेन तत्त्वाधिकरणत्वाभावकूटस्य निवेशनीयतया गौरवं चेत्याशयेन यत्तत्त्वाघटितं साध्यासामानाधिकरण्यपदार्थमाह साध्यनिष्ठेति । साध्यनिष्ठं यदसामानाधिकरण्यं स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तित्वाभावः तत्प्रतियोगित्वं तत्प्रतियोगिकोटिप्रविष्टाधिकरणकत्वं साध्यनिष्ठाभावीयाधेयत्वनिष्ठप्रतियोगितायां निरूपितत्वसम्बन्धेन यदवच्छेदकं तद्वृत्तित्वमितियावत् । वह्निमान् धूमादित्यादौ साध्यनिष्ठाभावो ह्रदाधेयत्वाभावस्तदीयप्रतियोगितायामुक्तसम्बन्धेनावच्छेदको ह्रदादिस्तद्वृत्तित्वानधिकरणत्वं धूमादाविति लक्षणसमन्वयः । अत्र साध्यनिष्ठाभावप्रतियोग्याधेयत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम् । अन्यथा वह्निमान् धूमादित्यादौ पर्वतादिसमवेतत्वाभावमादायानुपपत्तेः तथा च सत्तावान् समवायित्वादित्यादौ साध्यनिष्ठाभावीयसमवेतत्वनिष्ठप्रतियोगितावच्छेदकाधिकरणाप्रसिद्धेरव्याप्तिः वह्निमान् धूमादित्यादावपि धूमादेरयोगोलकीयवह्न्यादिनिष्ठपर्वतादिवृत्तित्वाभावप्रतियोगितावच्छेदकपर्वतादिवृत्तित्वादव्याप्तिश्च साध्यतावच्छेदकव्यापकीभूताभावनिवेशे च गौरवमित्याशयेन फलितार्थमाह साध्यनिष्ठाधेयत्वेति । आनिरूपकत्वमिह साध्यनिष्ठाधेयतात्वावच्छेदेन ग्राह्यं तेन वह्निमान् धूमादित्यादौ महानसादेः पर्वतीयवह्निनिष्ठाधेयत्वानिरूपकत्वेऽपि नाव्याप्तिः एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाधेयता निवेशनीया तेनायमात्मा आत्ममहाकालान्यतरत्वादित्यादौ कालस्य कालिकसम्बन्धावच्छिन्नात्मत्वादिनिष्ठाधेयतानिरूपकत्वेऽपि नातिव्याप्तिः तादृशाधेयत्वानिरूपकत्वस्याधिकरणत्वमविवक्षितं तदनिरूपकत्वमात्रं निविष्टम् । प्रथमतो द्रव्यं सत्त्वादित्यादावतिव्याप्तिं दाशङ्कितया व्यभिचारिसामान्य एवातिव्याप्तिमुद्धरति साध्यवद्भिन्नस्येति । व्यभिचारनिरूपकाधिकरणस्य चेत्यर्थः । अत्राधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन ग्राह्यम् अ-

न्यथा वह्निमान् धूमादित्यादौ वह्निनिष्ठाधेयत्वानिरूपकस्यावय-वादौ धूमादेः समवायेन वृत्तेरव्याप्त्यापत्तेः इत्थं च सत्ता-वान् द्रव्यत्वादित्यादावव्याप्तिः साध्यनिष्ठाधेयत्वानिरूपकाधि-करणे सामान्यादौ हेतुतावच्छेदकसम्बन्धात्मकसमवायादि-सम्बन्धेन वृत्तेरप्रसिद्धेः एवं द्रव्यं विशिष्टसत्त्वादित्यादा-वपि विशिष्टसत्त्वादेः सत्तानतिरिक्ततया साध्यनिष्ठाधेयत्वा-निरूपकाधिकरणगुणादिवृत्तित्वानधिकरणत्वासम्भवादव्याप्तिरित्य-तो निष्कृष्टार्थमाह साध्यनिष्ठेति । अत्रापि पूर्वदोषवारणाय सा-ध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाधेयत्वं निवेशनीयम् । एवम-धिकरणत्वमप्यविवक्षितं तादृशाधेयत्वानिरूपकत्वव्यापकत्वाभा-वे निवेशनीया तादृशाधेयत्वानिरूपकवृत्तित्वमात्रनिवेशे धूम-वान् वह्नेरित्यादौ वह्न्यधिकरणत्वसामान्याभावस्य साध्यनि-ष्ठाधेयत्वानिरूपकहृदादिवृत्तित्वादतिव्याप्तिरतो व्यापकतानिवेशः व्यापकत्वं च तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं न तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं सर्वस्यैव तथाविधत्वित्वा-वच्छिन्नाभावप्रतियोगितया तदप्रसिद्धेः न वा तद्वन्निष्ठाभा-वप्रतियोगितानवच्छेदकधर्मवत्त्वं तादृशप्रतियोगितानवच्छेदकी-भूताभावत्वादिकमादाय वह्न्यधिकरणत्वसामान्याभावस्यापि धूमनिष्ठाधेयत्वानिरूपकत्वव्यापकतया धूमवान् वह्नेरित्यादावति-व्याप्त्यापत्तेः अनवच्छेदकत्वं चावच्छेदकतापर्याप्त्यनधिकर-णत्वम् । अतो नोभयवन्द्वेदमादाय दोषः । अथवा यदधिकरणता-सामान्याभावत्वं साध्यनिष्ठाधेयत्वानिरूपकवृत्त्यत्यन्ताभावप्रतियो-गितानवच्छेदकं तत्त्वमेव समुदायार्थः । अतो ऽभावत्वादिना व्यापकतामादाय न दोषः । अधिकरणता च हेतुतावच्छेद-कसम्बन्धावच्छिन्ना ग्राह्या तेन वह्निमान् धूमादित्यादौ वह्न्य-नधिकरणधूमावयवादौ धूमाधिकरणत्वसामान्याभावासत्त्वेऽपि न क्षतिः धूमवान् वह्नेरित्यादौ यत्किञ्चिद्वह्न्यधिकरणत्वाभावस्य धूमानधिकरणत्वव्यापकतया ऽतिव्याप्तिवारणाय सामान्यपदं तथा च तादृशाधेयत्वानिरूपकत्वव्यापकाभावप्रतियोगितावच्छे-दकं यद्रूपावच्छिन्नाधिकरणतात्वं यद्रूपावच्छिन्नाधिकरणतात्वा-वच्छिन्नाभावत्वं वा तादृशाधेयत्वानिरूपकत्वव्यापकतावच्छेदकं

तद्रूपवत्त्वं व्याप्तिरिति फलितार्थः तेन धूमानधिकरणत्वव्यापकीभूतवह्न्यधिकरणत्वधूमाधिकरणत्वोभयसामान्याभावप्रतियोगितायाः वह्न्यधिकरणत्वसामान्यनिष्ठत्वेऽपि नातिव्याप्तिः यदधिकरणतामात्रनिवेशे द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावव्याप्तिः द्रव्यत्वानधिकरणगुणादौ हेत्वधिकरणतात्वावच्छिन्नाभावासत्त्वादतो यद्रूपावच्छिन्नेति । हेत्वभावस्य व्यापकतानिवेशे व्यापकताशरीरे हेतुतावच्छेदकसम्बन्धावच्छिन्नं तद्विशिष्टत्वं निवेश्यम् अन्यथा वह्निमान् धूमादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे ह्रदादौ धूमात्मकाभावस्य कालिकसम्बन्धेन वृत्तेरव्याप्त्यापत्तेः तथा च सति सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेरतो हेत्वधिकरणत्वाभावस्य व्यापकताघटितमेव तल्लक्षणं कृतं तथा चाधिकरणताया विशेषणताविशेषेण वृत्तिमत्तया तेन सम्बन्धेन तद्विशिष्टत्वं निवेश्यमतो न दोषः । पूर्वकल्पपरित्यागे बीजमाह तेनेति । न दोष इति सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धावपि तत्सम्बन्धावच्छिन्नाया द्रव्यत्वाधिकरणताया द्रव्ये प्रसिद्धाया अभावस्य साध्यानधिकरणत्वव्यापकत्वादिति भावः ॥

साध्यवैयधिकरण्यस्य निरुक्तार्थकत्वे पुनः पौनरुक्त्यमतस्तद्व्याचष्टे साध्यवैयधिकरण्यमिति ॥

( दी० ) साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणत्वं चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तदपहाय द्वयेकोक्त्या अनूद्य दूषयति तदुभयमपीति । साध्येत्यादेः साध्यं यदधिकरणानधिकरणं तच्चाभावः साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः । तत्र केवलान्वयिनि साध्यनिष्ठाधेयतानिरूपकाधिकरणाप्रसिद्ध्या नानाव्यक्तिसाध्यके च एकसाध्यनिष्ठाधेयतानिरूपकाधिकरणत्वं साधनाधिकरणव्यक्त्यन्तरस्ये-

प्तिः क्वचिद्व्यभिचारिण्यतिप्रसङ्गश्चाद्ये द्वितीये च साध्य-

वैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितस्तदा केवलान्वयिनि यदि च यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः ॥

(गा०) ननु मूले तदुभयमपि साध्यानधिकरणानधिकरणत्वमिकरणताद्वयघटितत्वादनुवादे चाधिकरणताद्वयमात्रस्य निवेशादित्यतस्तादृशमूलं सङ्गमयति चरमाधिकरणत्वांशस्येति । अनतिप्रयोजनकतयेति । अनधिकरणत्वस्याधिकरणत्वाभावरूपतया तद्घटकाधिकरणत्वांशं परित्यज्य साध्यासामानाधिकरण्याभावसाध्यवैयधिकरण्याभावनिवेशेनैवोपपत्तेरिति भावः। असामानाधिकरण्याद्यधिकरणत्वाभावस्याखण्डस्यासामानाधिकरण्याद्यभावाघटिततया न वैयर्थ्यमित्यनतिप्रयोजनकतयेत्युक्तं तदपहाय चरमाधिकरणत्वांशं परित्यज्य द्वयं साध्यासामानाधिकरण्याभावसाध्यवैयधिकरण्याभावरूपनिष्कृष्टलक्षणार्थद्वयं साध्यानधिकरणानधिकरणत्वमित्यनेन सत्तावान् द्रव्यत्वादित्यादावव्याप्तिवारणाय विवक्षितस्य प्रथमलक्षणनिष्कृष्टार्थस्य कथञ्चिदपि प्रतिपादनासम्भवात्तदनुवादकतानुपपत्तिरिति यथाश्रुतार्थानुवादपरतया सङ्गमयितुम् अनुवादनीयलक्षणद्वयार्थमाह साध्येत्यादेरिति । लक्षणद्वयस्य क्रमेणेतिशेषः । तत्स्वाभाव इत्यन्तेन प्रथमलक्षणार्थकथनम् एवं च साध्यानधिकरणानधिकरणशब्देन साध्यं यदधिकरणानधिकरणकं तद्बोध्यते तदुत्तरत्वप्रत्ययेन तत्त्वं साध्यपदोत्तरसन्निकृष्टनञा तदभावः प्रत्याय्यत इति प्रथमलक्षणार्थबोधकत्वं साध्यानधिकरणानधिकरणत्वमित्यस्य । न च साध्याधिकरणानधिकरणत्वपदेन नञ्पदसमासे सत्येव तदर्थाभावो नञा प्रत्याययितुं शक्यते तथा च साध्यपदोत्तरनञ्निपातो ऽसम्भवी समस्यमानपदपूर्वनिपातितस्यैव नञः साधुत्वात् अन्यथा अचित्रगुरित्यादौ चित्रादिपदोत्तरमपि नञ्निपातापत्तेरिति वाच्यं ससम्बन्धिकार्थबोधकोत्तरपदघटितसमुदायेन समं नञो मध्यनिवेशस्यापि साधुतासम्पादकत्वात् अन्यथा घटानधिकरणत्वं साध्याभाववद्वृत्तित्वमित्यादौ च

घटाधिकरणत्वाभावतद्वृत्तित्वाभावप्रत्ययानुपपत्तेः न हि घटानधिकरणत्वादिपदानां घटादिपदैः समासे तादृशार्थप्रतीतिरुपपद्यते अनधिकरणत्वादिपदजन्यप्रतीतिविशेष्यीभूताभावेन सममेव घटादिसंसर्गभानात् समस्यमानपदप्रतिपाद्यतावच्छेदककोटिनिविष्टेनापरपदार्थान्वये राजपुरुषादन्य इत्यर्थे राजा पुरुष इत्यादिसमासापत्तेः । एवं नञाऽन्वयितावच्छेदकावच्छिन्नाभावस्यैव बोधनात् अधिकरणसामान्यभेदवानेवानधिकरणपदार्थः स्यात् तस्य चाप्रसिद्धेः नञ्पदाधिकरणपदयोः प्राथमिकसमासासम्भवाच्चेति साध्यनिष्ठाधेयतानिरूपकाधिकरणवृत्तित्वाभावरूपप्रथमलक्षणस्य निरुक्तयथाश्रुतार्थोऽपि साध्यानधिकरणानधिकरणत्वमिति शब्देन प्रतिपाद्यते तथाहि आधेयतानिरूपकाधिकरणत्वमाधिकरणपदघटितेनाधिकरणानधिकरणपदेन अधिकरणमनधिकरणं आधेयत्वानिरूपकं यस्येति व्युत्पत्त्याऽधिकरणनिष्ठभेदप्रतियोगितावच्छेदकीभूतनिरूपकताकाधेयतावत्त्वेनान्यपदार्थो बोध्यते बहुव्रीहौ विग्रहवाक्याद्यादृशविशेषणविशेष्यभावापन्नस्य बोधः तद्विपरीतविशेषणविशेष्यभावापन्नस्य प्रत्ययाद्यथा गौर्यस्येति विग्रहवाक्यात् यत्पदार्थसम्बन्धित्वेन चित्रगोऽभिन्नगुरित्यत्राभिन्नगोनिष्ठसम्बन्धप्रतियोगित्वेन यत्पदार्थस्य बोधनात् प्रकृतस्थले च विग्रहवाक्यादन्यपदार्थनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदवत्त्वेनाधिकरणप्रतीतेः एवं च साध्यं यदधिकरणानधिकरणं यदधिकरणनिष्ठभेदप्रतियोगितावच्छेदकीभूतनिरूपकताकाधेयतावदिति व्युत्पत्त्या साध्यनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदवदधिकरणवृत्तित्वं साध्यानधिकरणानधिकरणशब्देन प्रत्याय्यते तदुत्तरत्वप्रत्ययेन तत्त्वं तदभावश्च साध्यपदोत्तरनिविष्टनञ्पदघटितवाक्येनेति । द्वितीयलक्षणार्थमाह साध्यस्येति । तथा च साध्यानधिकरणमधिकरणम् आधेयतानिरूपकं यस्येति व्युत्पत्त्या साध्यानधिकरणाधिकरणत्वशब्देन साध्यानधिकरणवृत्तित्वं प्रत्याय्यते तदभावश्च द्वितीयनञेति उक्तशब्दस्यैतदर्थानुवादकतेति भावः । पूरणसंवलितं तत्रेतिग्रन्थं व्याचष्टे तत्रेत्यादिना । मूले केवलान्वयिनि वह्निमान् धूमादित्यादौ चाव्याप्तेरुक्तकथनात्प्रथमलक्षणे केवलान्वयिन्यव्याप्तिहेतुं पूरयति सा-

ध्येत्यादिना अप्रसिद्धेत्यन्तेन । साध्यनिष्ठाधेयतानिरूपकसामान्यभेदानिवेशाभिप्रायेणेयमप्रसिद्धिरभिहिता यत्किञ्चिन्निरूपकभेदनिवेशे च तादृशभेदवदधिकरणे हेतोर्वृत्तेरव्याप्तिर्बोध्या वक्ष्यमाणक्रमेण नानाव्यक्तिसाध्यकहेत्वन्तरे ऽप्यव्याप्तिसत्त्वात् धूममात्रे तत्कथनं मूलकृतो न्यूनतासम्पादकमतो धूम इत्यस्योपलक्षणत्वाभिप्रायेण पाठमधृत्वैव व्याचष्टे नानाव्यक्तिसाध्यकेति । अत्र च यथासम्भवमव्याप्तिर्बोध्या तेनैतद्वृत्तियावद्धर्मवानेतत्त्वादित्यादौ वक्ष्यमाणरीत्याऽव्याप्तिविरहेऽपि न क्षतिः । अत एवाग्रे नानाधिकरणके सर्वत्रेति वक्ष्यति । अथवा नानाव्यक्तिसाध्यक इत्यस्य मिथो व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदकक इत्यर्थः अत्राव्याप्तिहेतुं पूरयति एकसाध्येत्यादिना इतीत्यन्तेन । अनया रीत्या ऽव्याप्तिश्च यत्किञ्चित्साध्यनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदनिवेशाभिप्रायेण साध्यनिष्ठाधेयतानिरूपकसामान्यभेदानिवेशे च केवलान्वयिन्यव्याप्तिरेव दोष इतिध्येयम् । क्वचिदिति पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत् द्रव्यत्वादित्यादौ । अतिव्याप्तिरिति विशिष्टद्रव्यत्वस्य शुद्धद्रव्यत्वानतिरेकितया पृथिव्यादेः साध्यनिष्ठाधेयत्वानिरूपकत्वासम्भवादितिभावः । आधेयतायां साध्यतावच्छेदकावच्छिन्नत्वनिवेशे च नैष दोषः अधिकरणतानिरूपकतावच्छेदकस्यैवाधेयतावच्छेदकतया पृथिवीनिष्ठाधिकरणतानिरूपकतानवच्छेदकपृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वादेः पृथिवीनिरूपिताधेयतानवच्छेदकत्वादितिध्येयम् । द्वितीयलक्षणे साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदनिवेशे च धूमादौ नाव्याप्तिरतस्तत्कल्पे केवलान्वयिसाध्यकाव्याप्तिरेव यत्किञ्चित्साध्यवद्व्यक्तिभेदनिवेशे चोभयस्थल एवाव्याप्तिरिति मूलाभिप्रायं स्फुटयति द्वितीये चेत्यादिना । साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदः साध्यवैयधिकरण्ये विवक्षितः साध्यवैयधिकरण्यघटकतया विवक्षित इत्यर्थः । केवलान्वयिनि केवलान्वयिन्येव । नानाधिकरणकेति । एकव्यक्तिसाध्यकेऽपि सत्तावान् द्रव्यत्वादित्यादावेकस्य साध्यवतो भेदस्यान्यस्मिन् साध्यवति सत्त्वादव्याप्तेर्नानाव्यक्तिसाध्यकेऽपि एतद्वृत्तिधर्मवानेतत्त्वादित्यादावव्याप्त्यसम्भवान्नानाव्यक्तिसाध्यकेति नोक्तं तथा च द्वितीयलक्षणाभिप्रायेण धूम

इति मूलं नानाधिकरणसाध्यकसामान्योपलक्षणमिति भावः ॥

साध्यासामानाधिकरण्यानधिकरणत्वमित्यत्र साध्यासामानाधिकरण्यपदेन साध्याधिकरणवृत्तित्वाभावविवक्षणेऽपि द्रव्य सत्वादित्यादावतिव्याप्तिर्न सम्भवति सामानाधिकरण्यस्याव्याप्यवृत्तितया सत्तायामपि गुणाद्यवच्छेदेन द्रव्यत्वादिसामानाधिकरण्याभावसत्त्वात् किन्तु वह्निमान् धूमादित्यादावव्याप्तिः स्वावयवाद्यवच्छेदेन धूमादौ वह्न्यादिसामानाधिकरण्याभावसत्त्वात् सापि हेतुतावच्छेदकसम्बन्धेन यद्धेतुमत्तद्वच्छिन्नत्वेनाभाव विशेष्य वारयितु शक्यते इत्यभिप्रायेण तत्पद ताद्दशाभावपरतया वर्णयतः सार्वभौमस्य मतमुपन्यस्यति केचित्त्विति ॥

( दी० ) केचित्तु साध्यासामानाधिकरण्यं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवदवृत्तित्वाभावस्तदधिकरणभिन्नत्वमर्थस्तेन धूमस्य स्वावयवे संयोगेन वह्निमति च समवायेनावृत्तावपि न क्षतिः । ताद्दशाभावश्च सम्बन्धान्तरेण तत्रैव वर्तमाने सुलभः व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरण एव ताद्दशे ताद्दशाभाववत्त्वं सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यनुभवात् । न चैवं गुणकर्मान्यत्वविशिष्टसत्त्वेऽव्याप्तिः विशिष्टस्यातिरिक्तत्वात् । अनतिरिक्तत्वे तु विशेषणविशेष्यसम्बन्धस्यैव परम्परया व्याप्तत्वात् केवलान्वयिनि चाव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्याहुः । तच्चिन्त्यम् । सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमितिप्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमितिप्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य परम्परासम्बन्धेन सामानाधिकरण्यस्य वा अभावं गुणेऽवगाहते न तु सत्तायामेव द्रव्यवृत्तित्वाभावं सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरित्यादिसर्वजनसिद्धप्रतीतिविरोधित्वात् बाधकाभावाच्च संयोगतदभावयोरवच्छेदकभेदेनैकत्र

प्रतीत्या तदुभयोरेकत्र सिद्धिः । अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारिण्यातिप्रसङ्गाच्च । तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासम्भवेनासिद्धेः न च तदभाववद्वृत्तित्वेन तत्र तदनुमेयं तद्वृत्तिभिन्नत्वस्योपाधित्वात् । किञ्चेदामिदानीमितिप्रतीतिनियामकविशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः ॥

(गा०) हेत्वाधिकरण इति सप्तम्यर्थो ऽभावान्वितमवच्छिन्नत्वं तेनैव सम्बन्धेनेति तृतीयार्थोऽपि वृत्त्यन्वितमवच्छिन्नत्वं वृत्तिपदस्य सम्बन्धार्थकत्वे तु अभेद एव तदर्थः अनधिकरणत्वपदस्याधिकरणत्वाभावो ऽभावमात्रं वा यद्यर्थः स्यात्तदा अव्याप्यवृत्त्याधिकरणताया अपि अव्याप्यवृत्तितया सत्त्वादौ द्रव्यावच्छेदेन साध्यसामानाधिकरण्याभावाधिकरणत्वाभावस्य सामानाधिकरण्यरूपतदभावाभावस्य चाक्षतत्वादतिव्याप्तिस्तदवस्थैवेत्यनाधिकरणपदमधिकरणभेदपदर्थकतया व्याकरोति तदधिकरणेति । यद्यप्यधिकरणभेदेनाभावभेदाभावात्संयोगादिना धूमाधिकरणपर्वताद्यवच्छिन्नो यः सम्बन्धान्तरेण तद्वृत्तिरूपादिनिष्ठवह्न्यादिमत्संयुक्तत्वाभावस्तस्यैव स्वावयवावच्छेदेन धूमादौ वर्तमानतया धूमादेस्तादृशाभावानधिकरणत्वं दुर्घटं तथापि तादृशहेत्वधिकरणावच्छिन्नत्वविशिष्टाभावानधिकरणत्वस्यैव विवक्षणीयतया न दोषः । रूपे पर्वते न वह्निमत्संयुक्तत्वमितिवद्धूमे पर्वते न वह्निमत्संयुक्तत्वमिति प्रतीत्यनुदयात् पर्वतावच्छिन्नत्वविशिष्टनिरूपिताया वह्निमत्संयुक्त्वाभावीयविलक्षणाधिकरणताया रूपादावेवोपगमात् अभावाधिकरणतायामेव वाधिकरणविशेषावच्छिन्नत्वं निवेशनीयं तावतापि धूमरूपयोरभिन्नस्याप्यभावस्य परस्परानवच्छेदकावच्छिन्नाधिकरणताभेदेन कथितदोषनिराकरणसम्भवात् । उभयत्र हेतुतावच्छेदकसम्बन्धप्रवेशप्रयोजनं क्रमेण दर्शयति तेनेति । स्वावयवे संयोगेनावृत्तावपीत्यन्वयः । तथा च स्वावयवावच्छेदेन साध्यवत्संयुक्तस्यासत्त्वेन तदभावस्याक्षततया प्रथमतो हेतुता-

ष्ठावच्छेदकत्वनिवेशेनापि वारणसम्भवः पर्वतरूपादौ हेतुतावच्छेदकसम्बन्धावच्छिन्नपर्वतादिनिष्ठावच्छेदकताकसाध्यसामानाधिकरण्याभाववत्त्वाप्रसिद्धावपि रूपादिनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतायां धूमादिप्रसिद्धनिरुक्ताधिकरणतानां भेदस्याक्षततया तदन्यत्वेन धूमादौ लक्षणसमन्वयादिति । तन्न साधु। तथा सति किञ्चेत्यग्रिमदोषासङ्गतेः गगननिष्ठसाध्यसामानाधिकरण्याभावाधिकरणताया पर्वोक्ताधिकरणताभिन्नायाः प्रसिद्धेः। वह्निमति चेति । तथा च तेनैव सम्बन्धेनेत्यनुक्त्वा यत्किञ्चित्सम्बन्धेनेत्युक्तौ पर्वतावच्छिन्नवह्निमत्संयुक्तत्ववत्यपि तदवच्छिन्नवह्निमत्समवेतत्वाभावसत्त्वात् धूमस्य वह्निव्याप्यत्वं नोपपद्यत इति भावः। साध्यवत्सम्बद्धत्वसामान्याभावनिवेशो वह्निमत्समवेतत्वसामान्याभावस्य लक्षणाघटकत्वेऽपि हेत्वधिकरणविशेषावच्छिन्नसाध्यवत्सम्बद्धत्वसामान्याभावस्याप्रसिद्ध्या ऽसम्भवो बोध्यः साध्यवद्सम्बद्धस्य गगनादेः हेतुमति सम्बन्धासम्भवाद्वच्छेद्याधिकरणसम्बन्धिन यथावच्छेदकतया तन्निष्ठाभावे हेतुमतोऽनवच्छेदकत्वात् । न क्षतिरिति नाव्याप्तिः नासम्भवश्चेत्यर्थः। साध्यवत्त्वं साध्यतावच्छेदकसम्बन्धेन बोध्यम् । तेन समवायेन वह्नौ साध्ये संयोगेन धूमे पर्वताद्यवच्छिन्नवह्निमद्वृत्तित्वसामान्याभावस्यासत्त्वेऽपि नातिव्याप्तिः न वा सद्धेतावपि यत्किञ्चित्सम्बन्धेन यः साध्यवान् तद्वृत्तित्वसामान्याभावस्यासत्त्वेऽपि नातिव्याप्तिः । साध्यं चोपलक्षणविधया ऽभावप्रतियोगितावच्छेदककोटौ निवेशनीयं न तु विशेषणविधया तेनोत्पत्तिक्षणावच्छिन्नघटादौ गन्धाद्यसत्त्वात्तादृशघटाद्यवच्छेदेन पृथिवीत्वादौ गन्धादिविशिष्टवृत्तित्वाभावसत्त्वेऽपि गन्धवान् पृथिवीत्वादित्यादौ मूलावच्छिन्नवृक्षादौ कपिसंयोगाद्यभावसत्त्वात्तादृशवृक्षाद्यवच्छेदेनैतद्वृक्षत्वादौ कपिसंयोगादिविशिष्टवृत्तित्वाभावसत्त्वेऽपि कपिसंयोगि एतद्वृक्षत्वादित्यादौ नाव्याप्तिः तत्तत्कालदेशावच्छिन्नतत्तदधिकरणावच्छेदेनापि तत्र हेतौ तादृशसाध्योपलक्षितधर्मिवृत्तित्वसत्त्वात् न चैवमपि धूमादौ पर्वतादिवृत्तेरनवच्छेदको यो देशः कालो वा तदवच्छिन्नपर्वताद्यवच्छेदेन वह्न्यादिमद्वृत्तित्वाभावस्य धूमा-

वी सत्त्वादव्याप्तिर्दुर्वारेतिवाच्यं तत्तद्देशकालाद्यवच्छिन्नपर्वतादे-
र्धूमाद्यसम्बन्धितया धूमाद्यभाववृत्तावपि तादृशस्यानवच्छेद-
कत्वात् न चैवमुत्पत्तिक्षणादिविशिष्टपर्वते धूमस्य न वह्निम-
त्संयुक्तत्वमित्यादिप्रतीत्यनुपपत्तिः द्रव्यत्वे गुणे न पृथिवी-
त्वसामानाधिकरण्यमित्यादिप्रतीतिवदुक्तप्रतीतेः सामानाधि-
करण्याद्यवच्छेदकत्वाभावावलम्बनता न सम्भवति विशे-
ष्यस्यावच्छेदकत्वे विशिष्टस्यानवच्छेदकत्वासम्भवादितिवा-
च्यं तादृशप्रतीतीनां सामानाधिकरण्यं विशिष्टपर्वताद्यवच्छे-
द्यत्वाभावावगाहितयैवोपपत्तेः उत्पत्तिक्षणे पर्वते धूमस्य न व-
ह्निमत्संयुक्तत्वमित्यादौ पर्वतावच्छिन्नं यद्धूमस्य वह्निमत्संयुक्तत्वं
तस्योत्पत्तिक्षणो नावच्छेदक इत्यादिरप्यर्थः सम्भवति धूमनि-
ष्ठवह्निमत्संयुक्तत्वाभावे उत्पत्तिक्षणपर्वतोभयावच्छिन्नत्वं तु ना-
र्थः पर्वतस्य प्रतियोग्यवच्छेदकतया तदन्तर्भावेन द्वयोरभावावच्छे-
दकत्वस्यासम्भवात् घटपटोभयाधेयत्वाभावाधिकरणतावत् । एते-
नोक्तोभयावच्छिन्नसाध्यसामानाधिकरण्याभावस्य व्यावर्त्तनाय हे-
त्वधिकरणभावावच्छिन्नत्वप्रवेशनं केषाञ्चिदनुपादेयमेव तथा
सति वह्न्यादिनिष्ठधूमसामानाधिकरण्याभावस्याप्ययोगोलकस्या-
वयवोभयावच्छिन्नतया हेतुतावच्छेदकसम्बन्धेन हेतुमन्मा-
त्रावच्छेद्यतयाऽलिव्याप्तिप्रसङ्गाच्च । केचित्तु विशिष्टपर्वतादेरव-
च्छेदकतामादायाव्याप्तिवारणायावच्छेदकान्तरानवच्छिन्नहेत्वधिक-
रणावच्छिन्नत्वमभावे निवेशनीयम् । एवं च पर्वतादेः कालविध-
या धूमनिष्ठवह्निमत्संयुक्तत्वाद्यभावावच्छेदकत्वस्यापि व्यावृत्तिः
पर्वतादेः स्थूलकालतया वह्निमत्संयुक्तत्वादिरूपप्रतियोगिनोऽप्यव-
च्छेदकत्वात् तन्निष्ठाभावावच्छेदकताया अविरोधायावान्त-
रकालावच्छिन्नत्वोपगमादित्याहुः । हेतुमदसम्बद्धे साध्य-
सामानाधिकरण्याभावस्योक्तयुक्त्या हेत्वधिकरणावच्छिन्नत्व-
विरहाद्धेतुतावच्छेदकसम्बन्धेन हेतुमत्सम्बद्धे हेतुमदवच्छि-
न्नतादृशाभावप्रसिद्धिमाह तादृशेति । हेतुतावच्छेदकसम्बन्धेन
साध्यवद्वृत्तित्वस्य तेन सम्बन्धेन हेत्वधिकरणावच्छिन्नाभाव-
श्चेत्यर्थः तत्रैव 'तादृशहेतुमत्येव । न च तथाविधरूपादौ व-
ह्निमत्संयुक्तत्वाद्यभावो व्याप्यवृत्तिरेवेति तत्राधिकरणविशेष-

स्यावच्छेदकत्वं निर्युक्तिकं प्रतियोगिमत्यभाववृत्तावेव विरोधमञ्जनार्थमवच्छेदकभेदापेक्षणात् धूमवत्कपालादिसमवेतवह्निमन्महानसादिसंयुक्तघटादौ महानसाद्यवच्छेदेन वह्निमत्संयुक्तत्ववति हेतुमत्कपालाद्यवच्छेदेन वह्निमत्संयुक्तत्वाभावसौलभ्येऽपि एतद्रूपवानेतद्रसादित्यादावेतद्रूपवत्समवेतत्ववति हेत्वधिकरणावच्छेदेन साध्यसामानाधिकरण्याभाववृत्त्यसम्भवात् एतद्रूपादिमति सम्बन्धान्तरेण वर्तमाने साध्यवत्समवेतत्वाभावस्य व्याप्यवृत्तितया हेत्वधिकरणानवच्छिन्नत्वात् निरुक्ताभावाप्रसिद्धेर्दुर्वारत्वादिति वाच्यं पर्वते रूपे न वह्निमत्संयुक्तत्वमितिप्रतीतिबलेन व्याप्यवृत्तेरपि सामानाधिकरण्याभावस्याधिकरणविशेषावच्छिन्नत्वोपगमात् । यत्तु व्याप्यवृत्तेरभावस्याधिकरणविशेषावच्छिन्नत्वानुपगमे हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये हेत्वनुयोगिकत्वहेत्वधिकरणविशेषावच्छिन्नत्वोभयाभावो विवक्षणीयः तथा च धूमादिनिष्ठस्वावयवाद्यवच्छिन्नतदधिकरणतायां हेतुतावच्छेदकसम्बन्धेन हेतुमदवच्छिन्नत्वस्य रूपादिनिष्ठवह्निमत्संयुक्तत्वाद्यभावाधिकरणतायां घटादिनिष्ठधूमवत्कपालाद्यवच्छिन्नतदधिकरणतायां च हेत्वनुयोगिकत्वस्याभावेनोभयाभावसत्त्वाल्लक्षणसमन्वय इति । तन्न । व्याप्यवृत्तेरवच्छेदकत्वानुपगमे पृथिवी रूपादित्यादावतिव्याप्तेः पृथिवीत्वादिव्यभिचारिजलीयरूपादिनिष्ठसाध्यसामानाधिकरण्याभावस्य व्याप्यवृत्तितया तदधिकरणतासामान्ये निरुक्तोभयाभावस्याक्षतत्वात् । अथ हेत्वधिकरणावच्छिन्नत्वस्थानेऽवच्छिन्नत्वहेत्वधिकरणानवच्छिन्नत्वोभयाभावस्यैव निवेशनीयत्वान्नायं दोषः जलरूपादिनिष्ठपृथिवीसमवेतत्वाभावाधिकरणतायामवच्छिन्नत्वविरहेणोभयाभावसत्त्वात्तावतैव दर्शिताप्रसिद्धेरपि निवारितत्वात्तादृशोभयाभाववदधिकरणतावदन्यत्वमेव निवेशनीयं न तूक्ताधिकरणतासामान्ये हेत्वनुयोगिकत्वतादृशोभयाभाववत्त्वोभयाभावः प्रयोजनविरहादितिचेत् । एवमपि वक्ष्यमाणायाः कालिकसम्बन्धेन हेतावव्याप्तेरसङ्गतिर्दुर्वारैव । तत्र कालिकसम्बन्धेनावृत्तौ गगनादावेव दर्शितोभयाभाववत्साध्यसा-

मानाधिकरण्याभावाधिकरणतायाः प्रसिद्धेः अवृत्तावेव सर्वत्र तादृशाभावपरत्वप्रसिद्ध्या सम्बन्धान्तरेण वर्तमानपर्यन्तानुधावनवि-रोधश्च । तस्माद्व्याप्यवृत्त्यवच्छेदकत्वमेव ग्रन्थकारानुमतमित्य-वधेयम् । द्रव्यं सत्त्वादित्यादावाशङ्किताव्याप्तिमुद्धरति व्यभिचारि-णश्चेति । तादृशेति हेतुतावच्छेदकसम्बन्धेन हेतुमतीत्यर्थः । अवच्छेदकत्वं सप्तम्यर्थः । तादृशाभाववत्त्वं हेतुतावच्छेदकसम्ब-न्धेन साध्यवद्वृत्तित्वाभाववत्त्वम् । अत्र प्रमाणाकाङ्क्षायामाह सत्तायामिति । तादृशप्रतीत्या द्रव्यत्वसामानाधिकरण्यवत्यामपि सत्तायां तदनवच्छेदकगुणाद्यवच्छेदेन तदभाववत्त्वावगाहनादि-ति भावः । एवं सत्तायां द्रव्यत्वसामानाधिकरण्याभावोपगमे विशिष्टसत्त्वे गुणाद्यन्यत्वविशिष्टसत्तात्वाद्यवच्छिन्ने अव्याप्तिरिति गुणाद्यवच्छेदेन साध्यसामानाधिकरण्याभाववत्त्वं केनापि रू-पेण तदनधिकरणत्वासम्भवादिति भावः । विशिष्टस्येति । तथा च विशिष्टसत्त्वं द्रव्यमात्रवृत्ति तदधिकरणत्वं न गुणादेरिति न हेत्वधिकरणावच्छेदेन हेतौ साध्यसामानाधिकरण्याभाववत्त्व-मिति नाव्याप्तिरितिभावः । यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधि-करणावच्छिन्नत्वं निवेश्यापीयमव्याप्तिर्न शक्यते वारयितुं तथापि प्रकारान्तरेणाव्याप्तिवारणसम्भवे लक्षणेऽधिकनिवेश-नमनुचितमित्यभिप्रेत्य विशिष्टस्यातिरिक्तत्वपक्ष आश्रितः । न च हेतुतावच्छेदकविशिष्टाधिकरणतानिवेशनमावश्यकम् । अन्यथा इदं स्पर्शवत् भूतत्वमूर्तत्वोभयस्मादित्यादौ भूतत्वे मूर्तत्वे च हेतौ स्वाधिकरणे गगने मनसि च साध्यसामानाधिकरण्य-विरहेणाव्याप्तिप्रसङ्गादितिवाच्यम् । उभयत्वस्यैकविशेषपरत्वरूप-तामतमवलम्ब्य विशिष्टस्यातिरिक्तत्वेन तत्र स्वावच्छिन्ननिरूपि-ताधिकरणत्वरूपपरम्परासम्बन्धेनोभयत्वस्यैव हेतुत्वमिति स्वीकृत्यैव वा तत्राव्याप्तेः समाधानसम्भवात् । ननु विशिष्ट-द्रव्यं गुणाद्यन्यत्वे सति सत्त्वादित्यादौ विशिष्टस्यातिरिक्तत्वपक्षमवलम्ब्याव्याप्तेर्वारणं न विचारसहं त-याहि गुणादिवृत्तिसत्त्वादितो, गुणाद्यन्यत्वविशिष्टसत्तादेरति-रिक्तत्वे ऽनुगतधर्ममात्रोच्छेदः एकव्यक्तिवृत्तित्वविशिष्टस्या-परव्यक्तिवृत्त्यन्यत्वात् न च तद्व्यक्तिवृत्तित्वविशिष्टसत्ता-

दीनां मिथो भेदेऽपि शुद्धसत्तादिकमनुगतं निराबाधमेवेति वाच्यं शुद्धसत्त्वादौ तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्याभ्युपगमे भवतां तदेकत्वासम्भवात् तदनभ्युपगमे तस्यावृत्तित्वप्रसङ्गात् एवं सर्वेषामेव वस्तूनां तत्तत्क्षणवृत्तित्वरूपविशेषणभेदाद्भेदप्रसक्त्या क्षणभङ्गापत्तिपर्यवसानं दुर्वारमेव । अथ प्रत्यभिज्ञाद्यनुरोधेन एकस्मिन्नानादेशकालवृत्तित्ववैशिष्ट्यं स्वीक्रियत एव । परं तु गुणे द्रव्यवृत्तित्वविशिष्टसत्ता नास्तीदानीं पूर्वक्षणवृत्तित्ववि-शिष्टघटत्वं नास्तीतिप्रतीत्यनुरोधेन मिथो भिन्ना अपि तत्तद्वि-शेषणविशिष्टसत्त्वघटत्वादयः स्वीक्रियन्ते तदवलम्बनेनैव तादृशप्रतीत्युपपत्तिः द्रव्यवृत्तित्वादिवैशिष्ट्यपुरस्कारेण चानुगतसत्त्वादेर्न द्रव्यत्वानुमापकता स्वीक्रियते अपि तु तदन्यतादृशविशेषणविशिष्टगुणाद्यवृत्तिवस्तुन एवेति तत्र द्रव्यत्वादि-व्याप्तिविरहेऽपि न क्षतिरिति चेत् । तादृशवस्तुनां केन रूपेण व्याप्यता न द्रव्यवृत्तित्वादिविशिष्टत्वेन तादृशरूपस्याव्याप्यानुगतधर्मसाधारण्यात् नापि तादृशविशेषणविशिष्टतद्व्यक्तित्वादिना तादृशविशेषणवैशिष्ट्यांशस्य व्यर्थत्वात् तद्व्यक्तित्वानुपस्थितावनुमानानिर्वाहाच्च । एवं विशिष्टसत्ता नास्तीत्यत्र विशिष्टसत्तात्वावच्छिन्नाभावस्य न विधेयतासम्भवः तद्रूपावलीढानुगतसत्तायाति तद्रूपावच्छिन्नाभावासम्भवात् । नापि तत्तद्व्यक्तित्वावच्छिन्नाभावस्य तत्तद्व्यक्तित्वस्य प्रतियोगिकोटावनुल्लेखात् विशेषणावच्छिन्नप्रतियोगिकसम्बन्धो विलक्षणः स च नानुगतसत्तायाः सम्बन्धो ऽपि तु अतिरिक्तविशिष्टसत्ताया एवेति प्रतियोगितावच्छेदकधर्मस्य गुणादिवृत्तिसत्तासाधारण्येऽपि तत्र विशिष्टाभावो ऽक्षत एव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकसम्बन्धशून्यत्वमात्रस्य विशिष्टाभावसत्त्वे ऽपेक्षितत्वादिति चेत् । तर्हि गुणादिसाधारणसत्ताया एव तादृशातिरिक्तः सम्बन्धः स्वीक्रियतां किं सम्बन्धान्तरकल्पनेनेत्यभिप्रेत्याह अनतिरिक्तत्वे त्विति । विशेषणविशेष्यसम्बन्धस्यैवेति सत्त्वगुणाद्यन्यत्ववैशिष्ट्यस्यैवेत्यर्थः । परम्परया परम्परासम्बन्धेन स्वावच्छिन्ननिरूपितसमवायादिसम्बन्धेनेतियावत् । व्याप्यत्वादिति गुणाद्यन्यत्ववैशिष्ट्यावच्छिन्नाधिकरणताया गुणादावसत्त्वात्तादृ-

शासम्बन्धेन तद्वैशिष्ट्यस्य द्रव्यमात्रवृत्तित्वादिति भावः । एवंप्रकारेण सत्ताया व्याप्यत्वव्यवच्छेदः । यत्र विशेषणवैशिष्ट्यावच्छिन्नसत्ताहेतुकद्रव्यत्वाद्यनुमितिरभिमता तत्र तद्वैशिष्ट्यानुमितिरेवोपेयते वैशिष्ट्ये परम्परासम्बन्धेन व्याप्तिधीविरहे चानुमितिरसिद्धेवेति भावः । यद्यपि विशिष्टनिरूपितसम्बन्धस्य विलक्षणत्वं तादृशसम्बन्धेन सत्ताया अपि व्याप्यत्वं निर्वहति तथापि विशेषणावच्छिन्ननिरूपितसमवायत्वादिना न सत्तादिसम्बन्धता किं तु विशिष्टसत्तावानिति प्रत्यये वैशिष्ट्यस्यैव सत्तादिविशेषणतापन्नस्योक्तपरम्परासम्बन्धेन धर्मिणि विशेषणत्वोपगमात् अतिप्रसङ्गशङ्क्याशयेनेदमभिहितम् । नन्वेवं रीत्या प्रथमलक्षणपरिष्कारे वक्ष्यमाणकेवलान्वयिसाध्यकाव्याप्त्यसङ्गतिः तत्रापि सम्बन्धान्तरेण हेतुमद्वृत्तौ हेत्वधिकरणावच्छिन्नसाध्यसामानाधिकरण्याभावप्रसिद्ध्या लक्षणगमनसम्भवादत आह केवलान्वयिनीति । द्वितीयलक्षणेति । न च तत्रेत्यनेनोभयत्वावच्छिन्नस्यैव परामर्शात्प्रथमलक्षणे ऽव्याप्त्यभावे ऽसङ्गतिर्दुर्वारैवेति वाच्यम् । केवलान्वयिसाध्यके धूमे चाव्याप्तिप्रदर्शनादुभयत्वेनोपस्थितेऽपि लक्षणद्वये यथायोग्यं तत्तत्स्थले ऽव्याप्त्यन्वये तात्पर्यात् । यद्यपि धूमादावपि साध्यसामानाधिकरण्यसामान्याभावघटितस्य प्रथमलक्षणार्थस्य नाव्याप्त्यवकाशः तथापि यत्किञ्चित्साध्यव्यक्तिभेदनिवेशाभिप्रायेण द्वितीयलक्षणस्येव यत्किञ्चित्साध्यसामानाधिकरण्याभावनिवेशाभिप्रायेणैव प्रथमलक्षणस्यापि नानाव्यक्तिसाध्यके ऽव्याप्तिप्रदर्शनमविरुद्धम् । मूले च यत्किञ्चित्साध्यानधिकरणाधिकरण इत्युपलक्षणं यत्किञ्चित्साध्याधिकरणावृत्तावित्यपि बोध्यं तेन प्रथमलक्षणाव्याप्तिसम्पादकहेत्वकथनान्न्यूनत्वस्य नावकाश इति ध्येयम् । सामानाधिकरण्यस्याव्याप्यवृत्तितायां प्रमाणसिद्धायामेव दर्शिताव्याप्तिर्वारयितुं शक्यते तदेव न प्रमाणमुक्तप्रतीतेरन्यथाविषयकत्वादित्याह सत्तायामिति । प्रतीतिर्हीति । अभावं गुणेऽवगाहत इत्यनेनान्वयः । अवच्छेदकत्वस्येति निरूपकत्वस्येत्यर्थः तेन सामानाधिकरण्यस्य व्याप्यवृत्तितामते तदवच्छेदकत्वस्याप्रामाणिकत्वेऽपि न क्षतिः उक्ताकारप्रतीतौ अवच्छेदकत्वानुल्लेखात् अवच्छेदकत्वाभावावगाहित्वं न सम्भवती-

स्याशङ्कयाह परम्परेति । ननु उक्तपरम्परासम्बन्धो न वृत्तिनियामकः आकाशं द्रव्यत्वसामानाधिकरण्यवदित्यप्रत्ययादित्युक्तसम्बन्धावच्छिन्नाभाव प्रत्ययाप्रामाणिक इति तादृशाभावावलम्बनत्वापि नोक्तप्रतीतेः सम्भवति इत्याशङ्कोद्धारायानुरूपं दृष्टान्तमाह द्रव्यत्व इति । गुणस्यावच्छेदकतानियामकद्रव्यत्वसम्बन्धशून्यतया द्रव्यत्वनिष्ठाभावावच्छेदकत्वं न सम्भवतीत्यगत्या गुणनिष्ठो द्रव्यत्ववृत्तिपृथिवीत्वसामानाधिकरण्यावच्छेदकत्वस्य परम्परासम्बन्धेन तादृशसामानाधिकरण्यस्य वाभाव एव तादृशप्रतीतिविषय इत्यवश्यमुपेयं तद्वदत्रापीत्यर्थः । स्वरसतो यादृशशब्दाद्यादृशोऽर्थः प्रतीयते तादृशशब्दोल्लिखितप्रत्यये तादृशार्थविषयकत्वमेवासति बाधके युज्यते इत्याशयेन दर्शितप्रतीतेः सत्तायां गुणावच्छिन्नद्रव्यवृत्तित्वाभावावगाहितायां बाधकप्रतीतिमाह सत्ता न द्रव्यवृत्तित्वाभाववतीति । न च द्रव्यवृत्तित्वाभावाभावस्य द्रव्यवृत्तित्वरूपस्य सत्तायामसम्मतेऽपि सत्त्वान्नैतस्याः प्रतीतेः बाधकत्वं सम्भवति विरोध्यविषयकत्वादिति वाच्यं तादृशशब्देन द्रव्यवृत्तित्वाभाववद्भेदस्यैव प्रत्यायनात्तदाकारप्रतीतेरपि तद्भेदावगाहितया बाधकत्वात् भेदस्याव्यावृत्तिताविरहेण सामानाधिकरण्याभाववद्भेदस्य तदभावविरोधित्वात् यदि च भेदस्याव्याप्यवृत्तित्वमतमवलम्ब्य तादृशप्रतीत्योर्विरोध्यविषयकत्वमुपपाद्यते तदा सत्तायां द्रव्यत्वसामानाधिकरण्याभावेऽपि तदधिकरणभिन्नत्वस्याक्षततया ऽतिव्याप्तिवारणमशक्यमिति भावः । अव्याप्यवृत्तित्वसाधकदर्शितप्रतीतेरभावरूपविशेष्ये सत्तावृत्त्यभावगाहिताया उपगमात्तदभावविरोध्यकसत्तावृत्तित्वविरोधिविषयकप्रत्ययं बाधकतयोपन्यस्यति द्रव्यवृत्तित्वाभाव इति । यद्यपि द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वं सत्तात्वसामानाधिकरण्यरूपं सामानाधिकरण्यस्याव्याप्यवृत्तितामते ऽव्याप्यवृत्तीति तदनवच्छेदकगुणत्वाद्यवच्छेदेन द्रव्यवृत्तित्वाभावे तदभावः सम्भवत्येवेति न विरोधः तथाप्युक्तयुक्त्या दर्शितप्रतीतेः सत्तावृत्तिभेदावगाहितया बाधकत्वं दुर्वारमेव । यत्तु सत्तावृत्ताव-भावे ऽवच्छेदकभेदेन सत्तावृत्तित्वाभावसम्भवेऽपि अवच्छेदका-

२३

प्रतीतिदशायां जायमानतत्प्रत्ययस्य सत्त्वावृत्तित्वग्रहप्रतिबन्धकतया तदुत्तरं जायमानायाः सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमितिप्रतीतेः सामानाधिकरण्याभावे सत्त्वावृत्तित्वावगाहित्वासम्भवेन गुणनिष्ठसामानाधिकरण्यावच्छेदकत्वाभावावगाहित्वे सर्वथैव तदवगाहित्वकल्पनमुचितमिति भाववर्णनं तदसत् । एवं सति प्रयच्छेदकाविषयिण्याः द्रव्यत्वसामानाधिकरण्यत्वेन सत्तायां तत्सामानाधिकरण्यविषयकप्रतीतेरपि बाधकता सम्भवेन सत्ता न द्रव्यवृत्तित्वाभाववतीत्यादिप्रतीतिपर्यन्तानुधावनस्य निर्बीजनापातात् । नन्वेवं संयोगादिमति संयोगादेरप्यभावो मा सैत्सीत् मूले न कपिसंयोग इत्यादिप्रतीतेरपि मूलनिष्ठकपिसंयोगावच्छेदकत्वाभावावलम्बनतयोपपत्तेरित्यत आह बाधकाभावादिति । तत्र कपिसंयोगाभावो वृक्षावृत्तिरित्यादिप्रत्ययस्याननुभवादिति भावः । संयोगाभावे वृक्षावृत्तित्वप्रत्यय इव द्रव्यवृत्तित्वाभावे सत्ताऽवृत्तित्वप्रत्ययेऽपि विवादसम्भवादत्र सामानाधिकरण्याभावस्य न प्रत्यक्षसम्भवस्तत्र तत्सत्त्वे मानाभावेन तदनधिकरणत्वं निष्प्रत्यूहमिति अतिव्याप्तिरित्याह अतीन्द्रियसाध्यकेति । इदं गुरु द्रव्यत्वात् पृथिवी आकाशाभावादित्यादावित्यर्थः । अथवा स्तम्भादौ पिशाचत्वाभावस्येव स्तम्भत्वादौ पिशाचत्वसामानाधिकरण्याभावस्य महति वाय्वादौ रूपाभावस्येव महावायुत्वादौ रूपसामानाधिकरण्याभावस्यापि प्रत्यक्षत्वादुभयत्रातीन्द्रियत्वोपादानम् । तत्रेति । गुरुत्वादिसाध्यकस्थले साध्यसामानाधिकरण्याभावस्यातीन्द्रियप्रतियोगिकत्वेनातीन्द्रियतया ऽतीन्द्रियहेतुकस्थले च धर्मिण एव तथात्वेन हेतौ साध्यसामानाधिकरण्याभावस्य प्रत्यक्षासम्भवेन तत्र तदसिद्धेरित्यर्थः । तदभाववद्वृत्तित्वेन गुरुत्वाभाववद्वृत्तित्वेन तत्र द्रव्यत्वादौ तद्वत् गुरुत्वादिमद्वृत्तित्वाभाववत्त्वम् । अनुमेयमिति तद्विरुद्धदृष्टान्तेनेत्यादिः । तद्वदिति गुरुत्वादिमदित्यर्थः । उपाधित्वादेरिति तद्विरुद्धदृष्टान्ते तद्वद्वृत्तिभिन्नत्वस्य साध्यव्यापकतायाः पक्षीभूते प्रकृतहेतौ च भेदस्य व्याप्यवृत्तित्वेन साधनाव्यापकतायाः सुग्रहत्वात् पक्षे साध्यसन्देहेन पक्षावृत्तितादृशोपाधौ साध्यव्यापकत्वानिश्चयासम्भ-

घेऽपि सन्दिग्धोपाधित्वस्य दुर्वारत्वात् अनुकूलतर्कविरहे सन्दिग्धोपाधेरपि दूषकत्वादिति भावः । नन्वेवमतीन्द्रियसंयोगादेरपि अव्याप्यवृत्तित्वं न स्यात् तद्वति तदभावस्य प्रत्यक्षासम्भवेनासिद्धेः अनुमानस्याप्रयोजकत्वात् । एवं सामानाधिकरण्यस्याव्याप्यवृत्तितामाश्रित्य मणिकृतैव सिद्धान्तलक्षणे हेतुसमानाधिकरणाभावे प्रतियोगिसामानाधिकरण्याभावस्य विशेषणताकल्पे कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण इति ग्रन्थेनाव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिव्याप्तिरुद्धृता तथा च तन्मते युक्तिर्भवतु मा वा उभयथापि तदाश्रित्य पूर्वपक्षलक्षणं व्याचक्षाणो नापराध्यतीत्याशङ्क्य दूषणान्तरमाह इदमिदानीमिति । कालिकविशेषणतात्मकविलक्षणसम्बन्धेनेत्यर्थः । अभावादेरिहेति प्रत्ययनियामको यो दैशिकविशेषणताविशेषस्तत्र तादृशसम्बन्धवैलक्षण्यस्य प्रामाणिकतालाभाय विलक्षणप्रतीतिनियामकत्वाभिधानं न चेदानीमितिप्रतीतौ सम्बन्धवैलक्षण्याभावेऽपि कालत्वेनाधिकरणावगाहनादिहेतिप्रत्ययात्तस्य वैलक्षण्यमुपपद्यते इति किं सम्बन्धवैलक्षण्येनेति वाच्यं सम्बन्धविशेषानुयोगित्वादन्यस्य कालत्वस्य दुर्वचत्वात् इदानीं कालत्वाभाव इत्यादिप्रतीत्या काले कालत्वाभाववृत्तेः प्रामाणिकत्वेऽपि काले कालत्वं नास्तीतिप्रतीत्यनुदयान्नास्तीत्याकारकप्रतीतौ कालिकसम्बन्धव्यावर्त्तकरूपावच्छिन्नाया एव विशेषणताया नियामकत्वस्यावश्यकत्वात् दैशिककालिकसम्बन्धसाधारणसम्बन्धतावच्छेदकस्याप्रामाणिकतया कालिकसम्बन्धतावच्छेदकीभूतस्य वैलक्षण्यस्य सिद्धेर्निष्प्रत्यूहत्वाच्च । सद्धेताविति कालत्वादिसाध्यकघटादिहेतावित्यर्थः । काल इति कालावच्छेदेनेत्यर्थः । अप्रसिद्धेरिति वृत्तिमतः कालावच्छेदेन कालत्वादिसामानाधिकरण्यवत्त्वादवृत्तिनिष्ठतदभावस्य च कालानवच्छिन्नत्वादवच्छेद्याधिकरणासम्बन्धिनोऽनवच्छेदकत्वात् । अथ हेत्वधिकरणमहाकालावच्छेदेन महाकाल एव कालवृत्तित्वाभावः प्रसिध्यति महाकालस्य गगनादिवदवृत्तितया तत्र कालवृत्तित्वासत्त्वात् स्वस्य तादात्म्यसम्बन्धेन स्वसम्बन्धितया स्वनिष्ठाभावावच्छेदकत्वसम्भवात् । न च तादात्म्यसम्बन्धो नावच्छे-

 

दकतानियामकः रूपे पर्वते न वह्निमत्संयुक्तत्वमितिप्रतीतिवत् स्वस्मिन् रूपे न वह्निमत्संयुक्तत्वमित्यादिप्रतीतेः सर्विप्रादत्वादिति वाच्य तथा सति तादात्म्यसम्बन्धेन व्यभिचारिणि तदतिरिक्तसम्बन्धेन स्वासम्बद्धे हेतौ तेन सम्बन्धेन हेतुमत्त्वावच्छेदेन साध्यासामानाधिकरण्यवत्त्वविरहादतिव्याप्तेः स्फुटतया तद्दोषापेक्षाया अनुचितत्वापातात्। अत्र केचित्तु कालिकसम्बन्धेन गगनादेरपि वृत्तिमत्त्वमताभिप्रायकोऽयं ग्रन्थः तथा च कालायच्छेदेन महाकालेऽपि कालिकसम्बन्धेन साध्यवद्वृत्तित्वसत्त्वात्तद्विरहिणोऽप्रसिद्धिर्न विरुध्यत इति वदन्ति। वस्तुतस्तु स्वास्मिन्सामानाधिकरण्यतदभावयोर्वृत्त्यवच्छेदकत्वे स्वाधिकरणत्वमेव नियामकं न तु सम्बन्धितामात्रं स्वाधिकरणावच्छेदेनैव स्वस्मिन् तत्प्रतीतेरनुभवसिद्धत्वात् अत एव सम्बन्धान्तरेण सम्बद्ध इत्युपेक्ष्य सम्बन्धान्तरेण वर्तमान इत्यभिहितं न चैवं तादात्म्यादिवृत्त्यनियामकसम्बन्धेन व्यभिचारिण्यतिव्याप्त्यकथनान्न्यूनता दुर्वारैवेति वाच्यं तादृशसम्बन्धेन साध्यवद्वृत्तित्वस्य हेत्वधिकरणत्वस्य चाप्रसिद्ध्यातिव्याप्त्यसम्भवात् न च तेन सम्बन्धेन सद्धेतौ लक्षणसंगमनाय वृत्तेरधिकरणतायाश्च स्थाने प्रतियोगित्वानुयोगित्वयोरेव निवेशनीयत्वादतिव्याप्तेरावश्यकतेति वाच्यं प्राचां तेन सम्बन्धेन व्याप्त्यनभ्युपगमसम्भवेन वृत्त्यादेरपि निवेशसम्भव इत्यभिप्रायेणैवातिव्याप्त्यनुद्भावनात्॥ एतेन हेत्वधिकरणखण्डकालावच्छेदेन कालिकसम्बन्धेन तद्वृत्तितद्विषयकज्ञान एव साध्यासामानाधिकरण्यप्रसिद्धिः सम्भवति न चैवमपि कालत्ववान् सर्वस्मादित्यादौ खण्डकालस्य हेत्वनधिकरणतया हेत्वधिकरणावच्छिन्नसाध्यासामानाधिकरण्याप्रसिद्धिर्दुर्वारैवेति वाच्यं हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतापर्यन्तानिवेशेन वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नस्य यत्र हेतुत्वमभिहितं तत्र तादृशधर्मस्यैव तन्मते स्वावच्छिन्ननिरूपिताधिकरणत्वरूपपरम्परासम्बन्धेन हेतुत्वस्यानुमततया उक्तस्थले सर्वस्यैव तादृशसम्बन्धेन हेतुतया तादृशसम्बन्धेनावृत्तौ कालिकसम्बन्धेन कालवृत्तौ गगनत्वादावेव तादृशसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य हेत्वधिकरणकालावच्छेदेन प्रसिद्धेरिति निरस्तं तादृशकाले उक्ततज्ज्ञानस्य विषयतासम्बन्धसत्त्वेऽपि तादृशः

सम्बन्धस्य वृत्तिनियामकत्वानभ्युपगमेन तज्ज्ञानस्य तत्कालीनताविरहेण च तज्ज्ञानानधिकरणत्वात्तज्ज्ञाने ऽभाववृत्तौ तत्कालस्यानवच्छेदकत्वात् महाकालानुयोगिकविशेषणताविशेषेण घटादिहेतुकस्थलाभिप्रायकोऽयं ग्रन्थः तादृशसम्बन्धेन हेतुमत्तायाः खण्डकालेऽभावान्नोक्तदिशा प्रसिद्धिरित्यपि केचित्। अत्र स्वनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावानवच्छेदकतादृशसम्बन्धावच्छिन्नस्वाधिकरणतावत्सामान्यकत्वं विवक्षणीयमिति नोक्ताव्याप्त्यवकाशः स्वावयवपरमाण्ववच्छेदेन घटादौ वर्तमानेकालत्वादिसामानाधिकरण्याभावे तदधिकरणकालसामान्यस्यानवच्छेदकतया तत्र लक्षणसमन्वयसम्भवात् केवलान्वयिसाध्यके मेयत्वादौ सर्वाधिकरणावच्छेदेनैव हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वसत्त्वात् स्वनिष्ठतदभावाप्रसिद्ध्याऽव्याप्तिर्न क्षतिमावहति मूलकृतैव तत्राव्याप्तेर्वक्ष्यमाणत्वात्। यदि चैवमात्मभिन्नं ज्ञानवदन्यत्वादित्यादौ हेतोरात्मान्यसकलवस्त्ववच्छेदेनैव दैशिकविशेषणतया साध्यवद्वृत्तित्वसत्त्वात्। आत्मनश्च केनापि सम्बन्धेन हेतुमत्त्वाभावात् तदवच्छेदेन हेतौ साध्यसामानाधिकरण्याभाववृत्त्यसम्भवात् हेतुनिष्ठतादृशाभावप्रसिद्ध्याव्याप्तिरिति विभाव्यते तदा हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छेदेन स्वस्मिन् वर्तते योऽभावस्तत्प्रतियोगितानवच्छेदकतादृशसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वकत्वं व्याप्तिरित्येव विवक्षणीयं कालत्ववान् घटादित्यादौ कालसमवेतत्वाद्यभाव एव प्रसिद्धस्तत्प्रतियोगितानवच्छेदकं च कालिकसम्बन्धावच्छिन्नकालवृत्तित्वत्वादिकमिति लक्षणसमन्वयः। हेतुतावच्छेदकसम्बन्धेन यद्वृत्तिमत्वन्निष्ठतत्सम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावानवच्छेदकतत्सम्बन्धावच्छिन्नतद्वस्तुप्रकृतहेतूभयाधिकरणतावत्सामान्यकत्वं वा वक्तव्यम् आत्मभिन्नं ज्ञानवदन्यत्वादित्यादावात्माद्यवच्छेदेन घटत्वाभावादिनिष्ठस्यात्मान्यवृत्तित्वाभावस्यानवच्छेदकं घटत्वाभावज्ञानवदन्यत्वोभयाधिकरणसामान्यमिति लक्षणसमन्वयः उभयाधिकरणत्वनिवेशाद्वह्निमान् धूमादित्यादौ धूमादिसंयोगिनः कपालादेर्घटादिनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकत्वेऽपि न क्षतिः कपालादेः संयोगेन घटानधिकरणतयोभयाधिक-

धकतानियामकः रूपं पर्वते न वह्निमत्संयुक्तत्वमितिप्रतीतिवत् स्वस्मिन् रूपे न वह्निमत्संयुक्तत्वमित्यादिप्रतीतेः सविप्रादत्वादिति वाच्य तथा सति तादात्म्यसम्बन्धेन व्यभिचारिणि तदतिरिक्तसम्बन्धेन स्वासम्बद्धे हेतौ तेन सम्बन्धेन हेतुमत्त्वावच्छेदेन साध्यासामानाधिकरण्यवत्त्वविरहादतिव्याप्तेः स्फुटतया तद्दोषापेक्षाया अनुचितत्वापातात्। अत्र केचित् कालिकसम्बन्धेन गगनादेरपि वृत्तिमत्त्वमताभिप्रायकोऽयं ग्रन्थः तथा च कालावच्छेदेन महाकालेऽपि कालिकसम्बन्धेन साध्यवद्वृत्तित्वसत्त्वात्तद्विरहिणोऽप्रसिद्धिर्न विरुध्यत इति वदन्ति। वस्तुतस्तु स्वस्मिन्सामानाधिकरण्यतदभावयोर्वृत्त्यवच्छेदकत्वे स्वाधिकरणत्वमेव नियामकं न तु सम्बन्धितामात्रं स्वाधिकरणावच्छेदेनैव स्वस्मिन् तत्प्रतीतेरनुभवसिद्धत्वात् अत एव सम्बन्धान्तरेण सम्बद्ध इत्युपेक्ष्य सम्बन्धान्तरेण वर्तमान इत्यभिहितं न चैवं तादात्म्यादेर्वृत्त्यनियामकसम्बन्धेन व्यभिचारिण्यतिव्याप्त्यकथनान्न्यूनता दुर्वारैवेति वाच्यं तादृशसम्बन्धेन साध्यवद्वृत्तित्वस्य हेत्वधिकरणत्वस्य चाप्रसिद्ध्यातिव्याप्त्यसम्भवात् न च तेन सम्बन्धेन सद्धेतौ लक्षणसमन्वयाय वृत्तेरधिकरणतायाश्च स्थाने प्रतियोगित्वानुयोगित्वयोरेव निवेशनीयत्वादतिव्याप्तेरावश्यकतेति वाच्यं प्राचां तेन सम्बन्धेन व्याप्त्यनभ्युपगमसम्भवेन वृत्त्यादेरपि निवेशसम्भव इत्यभिप्रायेणैवातिव्याप्त्यनुद्भावनात्। एतेन हेत्वधिकरणखण्डकालावच्छेदेन कालिकसम्बन्धेन तद्वृत्तौ तद्विषयकज्ञान एव साध्यासामानाधिकरण्यप्रसिद्धिः सम्भवति न चैवमपि कालत्वयावत् सर्वस्मादित्यादौ खण्डकालस्य हेत्वनधिकरणतया हेत्वधिकरणावच्छिन्नसाध्यासामानाधिकरण्याप्रसिद्धिर्दुर्वारैवेति वाच्यं हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतापर्यन्तानिवेशेन वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नस्य यत्र हेतुत्वमभिहितं तत्र तादृशधर्मस्यैव तन्मते स्वावच्छिन्ननिरूपिताधिकरणत्वरूपपरम्परासम्बन्धेन हेतुत्वस्यानुमततया उक्तस्थले सर्वस्यैव तादृशसम्बन्धेन हेतुतया तादृशसम्बन्धेनावृत्तौ कालिकसम्बन्धेन कालवृत्तौ गगनत्वादावेव तादृशसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य हेत्वधिकरणकालावच्छेदेन प्रसिद्धेरिति निरस्तं तादृशकाले उक्तज्ञानस्य विषयतासम्बन्धसत्त्वेऽपि तादृश-

सम्बन्धस्य वृत्तिनियामकत्वानभ्युपगमेन तज्ज्ञानस्य तत्कालीनताविरहेण च तज्ज्ञानानधिकरणत्वात्तज्ज्ञाने ऽभाववृत्तौ तत्कालस्यानवच्छेदकत्वात् महाकालानुयोगिकविशेषणताविशेषेण घटादिहेतुकस्थलाभिप्रायकोऽयं ग्रन्थः तादृशसम्बन्धेन हेतुमत्तायाः खण्डकालेऽभावाद्युक्तादिशा प्रसिद्धिरित्यपि केचित्। अत्र स्वनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावानवच्छेदकतादृशसम्बन्धावच्छिन्नस्वाधिकरणतावत्सामान्यकत्वं विवक्षणीयमिति नोक्ताव्याप्त्यवकाशः स्वावयवपरमाण्ववच्छेदेन घटादौ वर्तमाने कालत्वादिसामानाधिकरण्याभावे तदधिकरणकालसामान्यस्यानवच्छेदकतया तत्र लक्षणसमन्वयसम्भवात् केवलान्वयिसाध्यके मेयत्वादौ सर्वाधिकरणावच्छेदेनैव हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वसत्त्वात् स्वनिष्ठतदभावाप्रसिद्ध्याऽव्याप्तिर्न क्षतिमावहति मूलकृतैव तत्राव्याप्तेर्वक्ष्यमाणत्वात् । यदि चैवमात्मभिन्नं ज्ञानवदन्यत्वादित्यादौ हेतोरात्मान्यसकलवस्त्ववच्छेदेनैव दैशिकविशेषणतया साध्यवद्वृत्तित्वसत्त्वात् । आत्मनश्च केनापि सम्बन्धेन हेतुमत्त्वाभावात् तदवच्छेदेन हेतौ साध्यसामानाधिकरण्याभाववृत्त्यसम्भवात् हेतुनिष्ठतादृशाभावप्रसिद्ध्याव्याप्तिरिति विभाव्यते तदा हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छेदेन स्वस्मिन् वर्तते योऽभावस्तत्प्रतियोगितानवच्छेदकतादृशसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वकत्वं व्याप्तिरित्येव विवक्षणीयं कालत्ववान् घटादित्यादौ कालसमवेतत्वाद्यभाव एव प्रसिद्धस्तत्प्रतियोगितानवच्छेदकं च कालिकसम्बन्धावच्छिन्नकालवृत्तित्वत्वादिकमिति लक्षणसमन्वयः । हेतुतावच्छेदकसम्बन्धेन यद्वृत्तिमन्निष्ठतत्सम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावानवच्छेदकतात्सम्बन्धावच्छिन्नतद्वस्तुप्रकृतहेतूभयाधिकरणतावत्सामान्यकत्वं वा वक्तव्यम् आत्मभिन्नं ज्ञानवदन्यत्वादित्यादावात्माद्यवच्छेदेन घटत्वाभावादिनिष्ठस्यात्मान्यवृत्तित्वाभावस्यानवच्छेदकं घटत्वाभावज्ञानवदन्यत्वोभयाधिकरणसामान्यमिति लक्षणसमन्वयः उभयाधिकरणत्वानिवेशाद्वह्निमान् धूमादित्यादौ धूमादिसंयोगिनः कपालादेर्घटादिनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकत्वेऽपि न क्षतिः कपालादेः संयोगेन घटानधिकरणतयोभयाधिक-

रणतायत्सामान्यानन्तर्गतत्वात् अथवा हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छिन्नस्ववृत्तिकान्यहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावकत्वविवक्षणाच्च कश्चिद्दोषः सधेत्र सद्धेतावन्ततोऽवृत्तौ प्रसिद्धे साध्यसामानाधिकरण्याभाव एव तादृशस्ववृत्तिकान्यत्वसत्त्वेन लक्षणसमन्वयात् वह्न्यादिनिष्ठधूमादिसामानाधिकरण्याभावे ऽयोगोलकादेरिव तद्वृत्तित्वस्याप्यवच्छेदकत्वात् स्वनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्त्यनवच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नसामानाधिकरण्याभावकत्वं वा विवक्षणीयमित्यादयः परिष्कारस्य पन्थानो द्रष्टव्याः ॥

इति महामहोपाध्यायगदाधरभट्टाचार्यचक्रवर्तिविरचिता
सिंहव्याघ्रलक्षणविवृतिः समाप्ता ॥

---

# अनुमानगादाधर्याम्।

## व्यधिकरणधर्मावच्छिन्नाभावप्रकरणम्।

(चि०) अथेदं वाच्यं ज्ञेयत्वादित्यादौ समवायितया वाच्यत्वाभावो घट एव प्रसिद्धः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात् न चैवं घट एव व्यभिचारः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वं हि व्यभिचारः न च वाच्यत्वाभावस्तादृशो घटे इतिचेत्तर्हि तादृशसाध्याभावसामानाधिकरण्याभावो व्याप्तिस्तथा चाप्रसिद्धिः प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकस्तद्विशिष्टज्ञानस्याभावधीहेतुत्वात् ॥

(दी०) समवायितयेति। वाच्यत्वं यथा न समवायि तथाग्रे वक्ष्यते। घटादिसमवायितयेत्यर्थ इत्यप्याहुः। प्रमेयसाध्यके च भावत्वेनाभावानामभावत्वेन भावानां वह्नित्वेन निर्वह्नौ अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्वपटत्वाभ्यां च सर्वत्र प्रमेयमात्रस्याभावः सुलभः॥

(गा०) अथ समवायितयेतिमूलं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमे एव सङ्गच्छते तादृशाभावाभ्युपगमे सर्वत्र सद्भाववति हेतोर्वृत्तेरसम्भवः साध्याभाववद्वृत्तित्वस्य तादृशाभावमादाय लक्षणसङ्गमने सर्वत्र व्यभिचारिण्यतिव्याप्तिरिति लक्षणपरिष्कारासम्भवेन सौन्दडमतमवलम्ब्य लक्षणकर्तुरीदृशाशङ्का न सङ्गच्छत इति चेत्। अत्रोपाध्यायानुयायिनः केवलान्वयिनि साध्याभावाप्रसिद्धिनिबन्धनस्य दोषस्योद्भावि-

तत्त्वात्साध्याभावस्य कथञ्चित्प्रसिद्धावेव लक्षणस्य निर्दोषत्वेत्यभिमानिनेयमाशङ्का तादृशाभिमानमेव निराकरिष्यत्यग्रे तर्हीतिग्रन्थेन व्यधिकरणधर्मावच्छिन्नाभावोपगमे यथा व्यभिचारलक्षणे साध्यतावच्छेदकावच्छिन्नसाध्याभावो निवेश्यते तथा व्याप्तिलक्षणेऽपि तादृशसाध्याभाव एव निवेश्योऽन्यथासम्भवस्यातिव्याप्तेर्वा प्रसक्तेर्व्याप्तेरव्यभिचाररूपतानुपपत्तेश्चेति पुनरप्रसिद्धिनिबन्धनाव्याप्तिः केवलान्वयिस्थल एवेति तदर्थः । न चैवमपि तत्तद्वह्नित्वावच्छिन्नाभावव्यावर्तकसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपेण साध्याभावस्य निवेशनीयतया वाच्यत्वत्वावच्छिन्नसाध्यकस्थले समवायित्वावच्छिन्नतदभावस्यातादृशत्वात्तादृशाभावप्रसिद्धिरनुपयोगिनीति कथमियमाशङ्का साध्यप्रतियोगिकाभावमात्रनिवेशाभिमानस्याशङ्काबीजत्वे केवलान्वयिसाध्यकस्थले व्यासज्यवृत्तिरूपावच्छिन्नप्रतियोगिताकस्य विशिष्टाभावरूपस्य च तादृशाभावस्य प्रसिद्धिसम्भवेन सौन्दडमतावलम्बनस्य निर्बीजत्वापातादिति वाच्यं महानसीयवह्नित्वावच्छिन्नाभाववारणाय साध्यतावच्छेदकापर्याप्तस्वसमानाधिकरणधर्मनिष्ठावच्छेदकताकप्रतियोगिताभिन्नप्रतियोगिताकाभाव एव निवेश्य इत्यभिमानेनाशङ्कासङ्गतेः प्रमेयत्वादिना प्रमेयमात्रं यत्र साध्यतावच्छेदकं तत्र प्रमेयत्वादिविशिष्टप्रमेयापर्याप्तं तद्विशेषितघटत्वादिनिष्ठमेवावच्छेदकत्वं प्रसिद्धं स्वसमानाधिकरणवृत्तितादृशावच्छेदकतानिरूपकप्रतियोगिताभिन्नं च व्यधिकरणधर्मावच्छिन्नप्रतियोगितामात्रमेव यत्र यादृशं साध्यतावच्छेदकं विशिष्टमविशिष्टं वा तत्र तदनवच्छिन्नत्वसमानाधिकरणधर्मावच्छिन्नत्वोभयाभाववत्प्रतियोगितानिवेशाभिप्रायकोऽयं ग्रन्थ इत्यप्याहुः । न चैवं प्रमेयत्वावच्छिन्नसाध्यकस्थलेऽपि व्यधिकरणधर्मावच्छिन्नाभावमात्रस्यैव लक्षणघटकतासम्भवाद्दीधितिकृतां तत्र गगनत्वघटत्वपटत्वोभयाद्यवच्छिन्नप्रमेयाभावपर्यन्तानुसरणप्रयासो व्यर्थ इति वाच्यं महानसीयवह्नित्वावच्छिन्नाभाववारणाय साध्यतावच्छेदकसमनियतप्रतियोगिताकः साध्यतावच्छेदकापर्याप्तसाध्यनिष्ठधर्मद्वयव-

च्छेदकताकान्यप्रतियोगिताको वा ऽभावो निवेश्यस्तदभिप्रायेणैव तैस्तथाविधाभावानुसरणात् न च घटत्वपटत्वोभयावच्छिन्नाभावप्रतियोगितावच्छेदकता साध्यवृत्तिधर्मनिष्ठैव घटत्वपटत्वयोः प्रत्येकं साध्यनिष्ठत्वादिति कथमसौ लक्षणघटक इति वाच्यं साध्यवृत्तिधर्मनिष्ठेत्यनेन यद्धर्मविशिष्टाधिकरणं साध्यवत्तत्त्वस्य विवक्षिततया घटत्वपटत्वोभयपर्याप्तावच्छेदकताया अन्यत्वप्रतियोगिकोटावनन्तर्भावात्। वस्तुतो वृत्तिमद्वृत्तयो यावन्तः साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावकूटाधिकरणवृत्तित्वाभावास्तद्वत्त्वमेव साध्याभाववदवृत्तित्वमित्यस्यार्थ इत्यभिप्रायकतयाऽपीत्यादिग्रन्थः सार्वभौमैर्व्याख्यातः दीधितिकृतामपि तादृशग्रन्थस्य तदभिप्रायकत्वमेवानुमतं कूटघटितलक्षणस्य स्वयमग्रे दूषणीयत्वेऽप्यापाततः सम्भवदुक्तिकतयैव तस्याशङ्कितुरभिप्रायविषयत्वौचित्यात्। व्यधिकरणधर्मावच्छिन्नाभाववादिमते निर्दोषस्यापि लक्षणस्य सम्भवेन तदुपेक्ष्य सदोषं कूटघटितलक्षणमवलम्ब्य प्रतियोग्यवृत्तिश्चेत्याद्यवतारणमनुचितमित्यभिप्रेत्यैव चाग्रे तल्लक्षणमाक्षेप्स्यामिति न सन्दर्भविरोधः। यत्समानाधिकरणा इत्यादिलक्षणाभिप्रायकता चात्र न युज्यते तादृशव्याप्तेः साध्याभाववदवृत्तित्वरूपत्वाभावप्रसक्तेर्मूलोक्तलक्षणपरिष्कारासम्भवात्। व्यभिचारशरीरे च साध्यतावच्छेदकावच्छिन्नसाध्याभावनिवेशावश्यकतां प्रदर्श्य केवलान्वयिसाध्यकसाधारणसाध्याभाववद्वृत्तित्वरूपव्याप्तेरव्यभिचाररूपता न सम्भवतीत्यभिधानेनाव्यभिचारपदार्थरूपसाध्याभाववदवृत्तित्वाभावस्य व्याप्तित्वे निराकृते च साध्याभाववदवृत्तित्वपदार्थस्य व्याप्तित्वानभ्युपगमेऽपि न क्षतिरित्याशयेन यत्समानाधिकरणा इत्यादिनिर्दोषलक्षणमवलम्ब्यैव प्रतियोग्यवृत्तीत्यादेः स्वयमवतारणीयत्वात्। न च साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावकूटवद्वृत्तित्वस्यापि व्यभिचारपदार्थत्वसम्भवादुक्तव्याप्तेरव्यभिचाररूपत्वमक्षतमेवेति वाच्यं तस्य व्यभिचारपदार्थत्वे न चैवं घट एवेत्यादिदर्शितायाः ज्ञेयत्वादिहेतौ वाच्यत्वव्यभिचारितापत्तेर्दुर्वारत्वाद्वाच्यत्वादेः समानाधिकरणध-

त्वावच्छिन्नाभावाप्रसिद्धेः व्यधिकरणधर्मावच्छिन्नाभावकूटवति च हेतोर्वृत्तेरिति सर्वमनाकुलम् । एवं च कूटघटितलक्षणाभिप्रायेणैव प्रमेयसाध्यकस्थले उक्ताभावानुधावनं ग्रन्थकृतां सफलं घटत्वाद्यवच्छिन्नपटाद्यभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वविरहादितिध्येयम् । ननु वाच्यत्वं पदशक्तिः सा च तत्तत्पदबोद्धव्यत्वप्रकारिका भगवदिच्छैव न तु पदार्थान्तरमपसिद्धान्तत्वात् । तथा च समवायित्वं समवायप्रतियोगित्वरूपं तदनुयोगित्वरूपं वा भवतु उभयथैव वाच्यत्ववृत्तीति तेन रूपेण तदभावस्य कथं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं न च भगवदिच्छाया वाच्यत्वपदार्थत्वे पटादेर्घटादिपदावाच्यतानुपपत्तिः घटादाविव पटादावपि घटादिपदबोद्धव्यत्वप्रकारिकाया भगवदिच्छाया विषयतासम्बन्धेन सत्वात्तदिच्छाया एकत्वादिति वाच्यं यद्धर्म्यंशे यस्य प्रकारता तस्यैव धर्मिणो विशेष्यतासम्बन्धेन तद्धर्मप्रकारकत्वविशिष्टवत्त्वोपगमात् पटादेर्घटादिपदबोद्धव्यतया भगवदिच्छयानवगाहनात्तत्र विशेष्यतासम्बन्धेन तद्बोद्धव्यत्वप्रकारकत्वविशिष्टभगवदिच्छाविरहेण तद्वाच्यत्वोपपत्तेः न चैवं विशिष्टेच्छाया वाच्यत्वरूपत्वे विशेषणांशे समवायित्वाभाववत्त्वेन रूपेण विशिष्टाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वमव्याहतमेवेति वाच्यम् यतो विशिष्टाभावप्रतियोगिता न विशेषणान्तर्भावेन पर्याप्ता अपि तु विशेष्यांशमात्रे अवच्छिद्यते पुनर्विशेषणेनेति प्रतियोगिताया अव्यासज्यवृत्तित्वात् । तथा च विशेष्यवृत्तेः समवायित्वस्य कथं प्रतियोगिताव्यधिकरणधर्मत्वमिति न च प्रतियोगिताया व्यासज्यवृत्तित्वानुपगमे सर्वत्र घटत्वेन घटपटोभयं नास्तीतिप्रतीतिः कथमुपपद्यतां घटादिमात्रे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिसत्त्वेन तद्विषयाभावासम्भवादिति अभावविशेषीयप्रतियोगित्वमवश्यमेव व्यासज्यवृत्त्युपेयं तथा सति च तत्र प्रतियोगितापर्याप्त्यधिकरणस्योभयत्वावच्छिन्नस्य प्रतियोगितावच्छेदकघटत्वादिविशिष्टाभावासम्भवाद्धर्मावच्छिन्ने प्रतियोगितायाः पर्याप्तिः प्रतियोगिता-

वच्छेदकाविशिष्टतदवच्छिन्नस्यैव चाभावविरोधितया तादृशाभावस्य सार्वत्रिकत्वादिति वाच्यं प्रतियोगिताया अव्यासज्यवृत्तित्वेऽपि तत्रैकधर्मावच्छिन्नापर्याप्तिरूपविरोधशालिनोर्घटत्वघटपटोभयत्वयोः प्रतियोगितावच्छेदकत्वस्य व्यासज्यवृत्तित्वोपगमात्तादृशाभावस्य विरुद्धघटत्वपटत्वाद्युभयावच्छिन्नाभाववत्केवलान्वयित्वोपपत्तेः यद्यपि घटपटौ न स्त इत्यादिप्रतीतिविषयसमानाधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वमपि घटत्वाद्यन्तर्भावेण पर्याप्तं तथापि तत्र द्वित्वधर्मितावच्छेदकतापन्नस्यैव घटत्वादेरवच्छेदकता प्रतीयते अत्र च स्वातन्त्र्येणापीति भेदः आस्तां वोभयाभावप्रतियोगिताया गत्यन्तराभावाद्व्यासज्यवृत्तित्वं तथापि विशिष्टाभावप्रतियोगितायास्तथात्वमप्रामाणिकमेव दण्डिपुरुषादिमति पुरुषत्वेन दण्डविशिष्टो नास्तीत्यादिप्रतीतेरसिद्धेरित्यत आह दीधितौ वाच्यत्वं यथेति । तथा वक्ष्यत इति । अयमाशयः । वाच्यत्वं शक्तिविषयत्वं न तु शक्तिर्धातुनैव शक्तिप्रतिपादनात् । प्रत्ययस्य निरर्थकतापत्तेः विषयत्वं च पदार्थान्तरमिति नैयायिकैकदेशिसिद्धान्तः तस्य च समवायो न सम्बन्धः अपि तु स्वरूपमेवेति समवायितया वाच्यत्वपदार्थाभावो व्यधिकरणधर्मावच्छिन्नाभाव एवेति एकदेशिमतानुयायितया मणिकारलिखनसङ्गतिरिति । घटादिसमवायितयेति । तथा च वाच्यत्वपदस्य भगवदिच्छापरत्वेऽपि नासङ्गतिरिति भावः । यथाश्रुतपरतयैवोपपत्तेः समवायिपदस्य विशेषपरतया व्याख्यानमनुचितमित्याहुरित्यनेनास्वरसः सूचितः । नतु वाच्यत्वादिसाध्यकस्थले समवायित्वरूपव्यधिकरणधर्मावच्छिन्नसाध्याभावप्रसिद्धेः सम्भवेऽपि प्रमेयत्वादिना प्रमेयसाध्यकस्थले साध्याभावाप्रसिद्धिर्दुर्वारैव प्रमेयसामान्यावृत्तिधर्मस्याप्रसिद्धा व्यधिकरणधर्मावच्छिन्नस्यापि तस्यासम्भवादित्यत आह प्रमेयसाध्यके चेति । भावाभावयोरभावौ समनियततयाऽभिन्नाविति तत्प्रतियोगितात्वेन प्रमेयत्वादिसमनैयत्यमित्येतादृशाभावोऽपि कूटघटनया परिष्करणीयसाध्याभाववदवृत्तित्वरूपप्रथमलक्षणघटको भविष्यती-

स्याभिप्रायः । न च यदभावीयप्रतियोगितात्वेन साध्यतावच्छेदकसमनैयत्यमिति विवक्षणे वाच्यत्वादिसाध्यके वह्न्यादिसाध्यके वा तादृशाभावाप्रसिद्धिः निखिलव्यधिकरणधर्मावच्छिन्नाभावानां समनियतत्वेनाभिन्नतया घटादेरपि तथाविधवाच्यत्वाभावप्रतियोगित्वात् किञ्चिद्विशिष्टस्वाभावादेरपि वह्न्याद्यभावप्रतियोगित्वादिति तत्तत्प्रतियोगितात्वेन समनैयत्यं विवक्षणीयमिति कथमुक्ताभावस्य लक्षणघटकत्वमिति वाच्यं समनैयत्यशरीरे व्यापकतायास्तदभावप्रतियोगितात्वावच्छिन्नाया व्याप्यतायाश्च विशेषरूपावच्छिन्नाया निवेशनेनानुपपत्त्यभावात् । ननु साध्यनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपा व्यापकता चेत्समनैयत्यशरीरे निवेश्यते तदा व्यधिकरणधर्मावच्छिन्नप्रमेयाभावाभाववृत्तिप्रतियोगित्वयोर्द्वयोरेव प्रत्येकप्रमेयनिष्ठान्योन्याभावप्रतियोगितावच्छेदकतया नोक्ताभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वमित्यतोऽभावान्तरमाह वह्नित्वेनेति । 'प्रमेयमात्रस्याभाव' इत्यग्रेतनेनान्वयः वह्नित्वेन प्रमेयं नास्तीतिप्रतीत्या प्रमेयसामान्य एव वह्नित्वावच्छिन्नप्रतियोगित्वावगाहनात्प्रमेयत्वव्यापिकैव तादृशाभावीयवह्नित्वावच्छिन्नप्रतियोगितेति भावः । यदि च तत्र वह्निर्नास्तीतिप्रतीतिसिद्धवह्निमात्रनिष्ठप्रतियोगितैव प्रमेयत्वसामानाधिकरण्येन भासत इत्युपेयते प्रमेयसामान्यस्यैव तत्प्रतियोगितया भानोपगमे तु वह्निर्नास्तीत्यादावपि तादृशप्रतीतिसिद्धनिखिलप्रमेयनिष्ठप्रतियोगिताया वह्नित्वादिविशेषितप्रतियोगिवृत्तित्वेन भानोपगमसम्भवात् समानाधिकरणधर्मावच्छिन्नवह्नित्वादिसमनियतप्रतियोगित्वाप्रसिद्ध्या वह्निभिन्नत्वादिना वह्न्याद्यभावीयवह्निमात्रवृत्तिप्रतियोगितामादाय वह्निमान् प्रमेयत्वादित्यादावतिव्याप्त्यापत्तेरित्युच्यते तदा तादृशाभावस्य नोक्तरूपतेत्याशङ्क्याभावान्तरमनुसरति अवृत्तिमात्रेति । गगनं नास्तीत्यत्र गगनत्वसामानाधिकरण्येन या गगनत्वावच्छिन्नप्रतियोगिता प्रतीयते सैव गगनत्वेन गगनभिन्नं नास्तीत्यादौ गगनभिन्नत्वादिसामानाधिकरण्येन प्रतीयते अवच्छेदकैक्ये ऽसति बाधके प्रतियोगिताया अप्यैक्यस्वीकारात् गगनाभिन्ननिष्ठप्रतियो-

गिताया गगनभिन्नवृत्तित्वेऽपि गगनत्वरूपप्रतियोगितावच्छेदक-विशिष्टप्रतियोगिनोऽवृत्तित्वेन गगनतया गगनभिन्नाभावस्य केवलान्वयित्वोपपत्तेः वह्नित्वाद्यवच्छिन्नघटादिनिष्ठप्रतियोगितायाश्च वह्निनिष्ठतादृशप्रतियोगित्वाभेदे वह्न्यादिमति वह्नित्वादिना घटाद्यभावसत्त्वानुपपत्त्या उक्तरीत्या तत्र एकप्रतियोगिताप्यसम्भवः । एवं च गगनत्वावच्छिन्नैव प्रमेयत्वसमनियतप्रतियोगिता प्रसिध्यतीति भावः । उक्तविशेषलाभायैवावृत्तिमात्रवृत्तित्वकीर्तनम् । नन्वेवमपि यत्र विषयितासम्बन्धेन प्रमेयसामान्यं साध्यम् ईश्वरज्ञानत्वादिकं हेतुस्तत्र सत्तावान् जातेरित्यादौ साध्याभावकूटवति हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्ध्याऽव्याप्तेर्वारणायोपादेयसाधनसामानाधिकरण्यविशेषणाक्रान्तसाध्यतावच्छेदकसमनियतसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धिः गगनादेरपि विषयितासम्बन्धेनेश्वरज्ञानादिसम्बद्धत्वात्तादृशसम्बन्धेन गगनत्वादिना प्रमेयसामान्याभावस्य साधनसामानाधिकरण्यसम्भवादित्यतोऽभावान्तरमाह विरुद्धेति । येन सम्बन्धेन घटत्वपटत्वयोर्विरोधस्तत्सम्बन्धावच्छिन्नतदुभयनिष्ठप्रतियोगितावच्छेदकताकप्रमेयसामान्याभाव इत्यर्थः । प्रतियोगितावच्छेदकतावच्छेदकोभयत्वविशिष्टघटत्वपटत्वाद्यवच्छिन्नप्रतियोगिनोऽप्रसिद्ध्या विरोधिविरहेणोक्ताभावस्य केवलान्वयितेत्यवधेयम् । इदमुपलक्षणम् । व्यधिकरणधर्मावच्छिन्नाभाववादिनां प्रतियोगितावच्छेदकतावच्छेदकरूपेणैव तादृशसम्बन्धेनाप्यवच्छेदकस्य वृत्तिमत्ताया अवच्छेदकतायामतन्त्रत्वात्समवायादिसम्बन्धेन गगनाद्यवच्छिन्नप्रमेयसामान्याभावस्यापि सौलभ्यं बोध्यम् । अत्यन्ताभावस्येवान्योन्याभावस्यापि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्योपगमात्प्रमेयसामान्यस्य यत्र तादात्म्येन साध्यता तत्र घटत्वपटत्वाभ्यां समवायेन गगनादिना वा प्रमेयसामान्यभेदो लक्षणघटकः प्रतियोगितावच्छेदकावृत्तिसमवायित्वाद्यवच्छिन्नप्रमेयत्वादिना प्रमेयसामान्यभेदो वा तथेत्यवधेयम् ॥

ननु व्यधिकरणधर्मावच्छिन्नसाध्याभावप्रसिद्धावपि व्य-

भिचाराभावरूपव्याप्तौ साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य लक्षणघटकतया ऽप्रसिद्धिनिबन्धनाव्याप्तेर्दुर्वारतयैव वादिनो निवृत्तेः व्यधिकरणधर्मावच्छिन्नाभावखण्डनपरग्रन्थानुत्थितिरित्यतस्तादृशग्रन्थमवतारयति नन्वित्यादिना ॥

( दी० ) ननु पारिभाषिकमेवाव्यभिचारितत्वं तथाहि यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तो ऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्वम् । सर्वत्र वाच्यत्वाद्यभावस्य तथात्वाद् यावत्त्वोपादानम् ॥

( गा० ) पारिभाषिकमिति तान्त्रिकसङ्केतरूपपरिभाषया व्याप्तिप्रतिपादकं न तु योगेनेत्यर्थः । अव्यभिचारितत्व अव्यभिचरितत्वमदम् । अथवा पारिभाषिकमव्यभिचारितत्वं परिभाषया ऽव्यभिचारितत्वपदप्रतिपाद्यं व्याप्यत्वमिति शेषः न तु योगेन तत्पदलभ्यमित्यर्थः । तथा च व्यभिचारघटकस्य साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य व्याप्तिघटकत्वविरहेऽपि न क्षतिरिति भावः । यदिति । यत्पदं यद्धर्मावच्छिन्नपरं अग्रे तत्पदं तद्धर्मावच्छिन्नपरं स च धर्मो हेतुतावच्छेदकीभूतधूमत्वादिः सद्धेतुस्थले हेतुतावच्छेदकावच्छिन्नसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नेत्यादिविशेषणाक्रान्तो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताका घटत्वादिना वह्न्यभावादिरेव तस्य च प्रतियोगिसामानाधिकरण्याभावादेव व्याप्तिविरहेऽपि न क्षतिः — 

मावश्यकामिति लक्षणसमन्वयः । व्यभिचारिणि व्यभिचारनिरूपकाधिकरणीभूते हेत्वधिकरणे साध्यतावच्छेदकेत्यादिविशेषणाक्रान्तः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावादिरपि तस्य च प्रतियोगिसामानाधिकरण्याभावात् तादृशाभावस्य प्रतियोग्यधिकरणे कालिकसम्बन्धेन वृत्तावपि विलक्षणीयास्यावच्छिन्नावच्छेत्वाधिकरणान्तर्भावेण प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः । अयमत्रा मानादिव्याप्तौ समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभाव-

दिकमादायाव्याप्तेर्वारणाय हेतुतावच्छेदकविशिष्टसामानाधिकरण्यमभावविशेषणम् अभाववृत्तौ सम्बन्धभेदानिवेशेन वह्निमान् धूमादित्यादौ वह्नित्वादिना वह्न्यभावस्य प्रतियोगिमति पर्वतादौ कालिकसम्बन्धेन वृत्तेर्लक्षणसम्भवात् तत्राव्याप्तिवारणं तत्फलमिति ध्येयम्। अयमात्मा पृथिव्याद्यन्यत्वे सति द्रव्यत्वादित्यादौ द्रव्यत्वसमानाधिकरणात्मत्वत्वाद्यवच्छिन्नात्मत्वाद्यभावानां प्रतियोगिसामानाधिकरण्यविरहादव्याप्तिरतो हेतुसामानाधिकरण्यघटकहेतौ हेतुतावच्छेदकवैशिष्ट्यनिवेशः। यद्यप्ययमात्मा ज्ञानादित्यादौ समानाधिकरणधर्मावच्छिन्नाभावमादायाव्याप्तिरभावे साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यविशेषणेनापि वारयितुं शक्यते धूमवान् वह्नेरित्यादौ धूमादिसमानाधिकरणस्य तादृशाभावस्य प्रतियोगिसामानाधिकरण्यावश्यकत्वेऽपि स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन प्रतियोगिसामानाधिकरण्यस्यैव विवक्षणीयतया ऽयोगोलकान्तर्भावेन तादृशाभावस्यातथात्वान्नातिव्याप्तिः स्वविशिष्टहेत्वधिकरणेत्यत्र यत्पदेनैव हेतोरुपादेयतया तस्यामित्यत्र तत्पदेन तस्यैव परामर्शाद्व्याप्तेर्हेतुनिष्ठत्वोपपत्तिरिति। तथापि कपिसंयोगाभाववान् जातित्वादित्यादौ साध्यसमानाधिकरणस्य कपिसंयोगाद्यात्मकाभावस्य स्वविशिष्टहेत्वधिकरणाप्रसिद्ध्या सत्तावानात्मत्वादित्यादौ सत्ताधिकरणकाले कालिकसम्बन्धेन विद्यमानस्य सत्ताभावस्य तदप्रसिद्ध्याऽव्याप्तिर्दुर्वारैवेति हेतुतावच्छेदकविशिष्टहेतुसामानाधिकरण्यमेवोपात्तं यत्तु अयमात्मा ज्ञानादित्यादौ आत्मत्वत्वादिना आत्मत्वादेरभावस्य लक्षणघटकत्वेऽपि नाव्याप्तिः तस्य प्रतियोग्यधिकरणीभूतात्मादावेकज्ञानविषयत्वस्वाश्रयाश्रयत्वादिरूपपरम्परासम्बन्धेन वा वर्तमानतया प्रतियोगिसमानाधिकरणत्वादिति सामानाधिकरण्यान्तर्विशेषणमनर्थकमिति। तन्न। एकज्ञानविषयत्वादिना विशिष्टबुद्धौ प्रमाणाभावेन तेषां संसर्गत्वाभावात् न चैवं यदभावो व्यभिचारविरोधीत्युपाधिलक्षणे स्वोपाधिर्नेहोपाधिरितिप्रतीतिव्यवहारानुरोधेनाव्याप्यत्वस्य सम्ब-

( दी० ) अत एव भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वमनोऽन्यत्वाद्यभावस्यातथात्वान्नातिप्रसङ्गः । साधनसमानाधिकरणस्य गोत्वाद्यभावस्य तत्तत्साध्यव्यक्त्यभावस्य चातथात्वात् साध्यतावच्छेदकेत्यादि ॥

(गा०) एवं मूर्तत्वरूपप्रतियोगिसामानाधिकरण्येऽपि तथा च यावत्पदानुपादाने साध्यतावच्छेदकव्यापकप्रतियोगिताकतादृशोभयाभावस्यैव प्रतियोगिसमानाधिकरणतयातिव्याप्तिः स्यादिति भावः । यावत्पदसत्त्वे यादृशाभावमादायातिव्याप्तेर्वारणं तादृशाभावं दर्शयति भूतत्वमनोऽन्यत्वाद्यभावस्येति । भूतत्वाभावस्य मनोऽन्यत्वाभावस्य वेत्यर्थः अतथात्वात् प्रतियोग्यसमानाधिकरणत्वात् यावत्पदे दत्ते साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वनिवेशने वह्निमान् धूमादित्यादौ तादृशयावदन्तर्गतमहानसीयवह्न्याद्यभावमादायैवाव्याप्तिः स्यादिति यथोक्तविशेषणस्यैवोपादेयतया तादृशाभावयोरपि लक्षणघटकत्वादिति भावः । भूतत्वस्य वहिरिन्द्रियग्राह्यविशेषगुणात्मकतया प्रतियोगिस्वरूपाणां तन्निष्ठप्रतियोगितानां चालनीन्यायेनोऽत्यन्तिकालावच्छेदेन वा साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकतया भूतत्वाभावस्य न साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वमित्याशयेनाखण्डव्याप्यवृत्तिमनोऽन्यत्वाभावानुधावनम् । उक्तरीत्या अत एवेत्यादिग्रन्थावतारात्प्रयमतो वाच्यत्वाभावमादाय सर्वत्रैव व्यभिचारिण्यतिव्याप्तेर्दर्शितत्वात्साध्याभावमादाय व्यभिचारिविशेषे ऽतिव्याप्तिप्रदर्शनं सन्दर्भविरुद्धमित्याशङ्कानवकाशः । केचित्तु यावत्पदानुपादाने वाच्यत्वादेरुदासीनपदार्थस्याभावमादाय व्यभिचारिसामान्येऽतिव्याप्तिर्विश्राम्यतु साध्याभावमादायापि क्वचिदतिव्याप्तिः स्यात् सा च यावत्पदोपादानात्त भवतीत्यभिप्रायकतया न सन्दर्भविरोध इत्याहुः । परे तु ननु साध्यतावच्छेदकव्यापकीभूतप्रतियोगिताकयावदभावनिवेशनेनैवोपपत्तेः साध्यतावच्छेदका-

न्धतायाः ग्रन्थकृतैव स्वीकृतत्वात्तेन सम्बन्धेनैवात्मवृत्तेरात्मत्वाभावस्य प्रतियोगिसामानाधिकरण्यमक्षतमेवेति वाच्यम्। अव्याप्यतायाः सम्बन्धताया विवादेन यत्रभावपदस्य यद्व्याप्यायाभावपरतामभ्युपगम्यापि ग्रन्थकृता तादृशलक्षणव्याख्यानात्तत्सम्बन्धताया अप्रामाणिकत्वाभिप्रायेणैवात्र यत्समानाधिकरणा इत्युपादानात्। यावत्पदासत्त्वे साध्यतावच्छेदकेत्यादिविशेषणस्य व्यावृत्तिर्न सङ्गच्छते यत्किञ्चिदभावमादायैव लक्षणसमन्वयसम्भवादतश्चरमोक्तस्यापि तत्पदस्य व्यावृत्तिं प्रथमतो दर्शयति सर्वमेति। तथात्वात् प्रतियोगिसामानाधिकरण्यात्। तथा च यावत्पदादाने व्यभिचारिमात्र एवातिव्याप्तिरिति भावः। यद्यपि व्यभिचारिस्थले एव दोषस्य कथनीयतया सर्वत्र तादृशाभावस्य तथात्वकथनमसङ्गतं तथापि यावत्पदानुपादाने अतिव्याप्तिरेव नाव्याप्तिरित्येतत्सूचनाय सर्वत्रेत्युक्तम्। अथवा सर्वत्र सर्वाधिकरणावच्छेदेन तथा च विवक्षणीयस्य स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेण प्रतियोगिसामानाधिकरण्यस्य सत्त्वं सूचितं ननु यावत्पदादानं साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वं परित्यज्य साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वेनैवाभावो विशेषणीयः तद्व्याप्यत्वं च स्वव्यापकतत्कत्वमतो नानवस्था वह्निमान् धूमादित्यादौ तत्तद्वह्न्याद्यभावानां साध्यतावच्छेदकव्याप्यप्रतियोगिताकानां यथाविवक्षणीयसामानाधिकरण्याविरहेऽपि घटत्वादिना वह्न्याद्यभावमादायैव लक्षणसङ्गतेः। इत्थं च धूमवान् वह्नेरित्यादौ वाच्यत्वाद्यभावमादाय नातिव्याप्तिसम्भवः तस्य धूमत्वाद्यव्याप्यप्रतियोगिताकत्वेन लक्षणघटकताविरहात् एवं सति हेतुसमानाधिकरणत्वविशेषणमनर्थकमिति चेत् तदपि तर्हि त्यज्यतामित्याशङ्कापरिहाराय तथाविधाभावनिवेशेऽपि यत्रातिव्याप्तिस्तत्र यावत्पदस्य व्यावृत्तिमाह अत एवेति। अत एव यावत्पदोपादानादेव द्वित्वावच्छिन्नाभावस्य मूर्तत्वमूर्तत्वोभयत्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि मनसि हेत्वधिक-

( दी० ) अत एव भूतत्वमूर्तत्वोभयवान् मूर्तत्वादि-त्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वमनोऽन्यत्वाद्यभावस्यातथात्वान्नातिप्रसङ्गः । साधनसमानाधिकरणस्य गोत्वाद्यभावस्य तत्तत्साध्यव्यात्यभावस्य चातथात्वात् साध्यतावच्छेदकेत्यादि ॥

(गा०) एवं मूर्तत्वरूपप्रतियोगिसामानाधिकरण्येऽपि तथा च यावत्पदानुपादाने साध्यतावच्छेदकव्याप्यप्रतियोगिताकतादृशोभयाभावस्यैव प्रतियोगिसमानाधिकरणतयातिव्याप्तिः स्यादिति भावः । यावत्पदसत्त्वे यादृशाभावमादायातिव्याप्तेर्वारणं तादृशाभावं दर्शयति भूतत्वमनोऽन्यत्वाद्यभावस्येति । भूतत्वाभावस्य मनोऽन्यत्वाभावस्य चेत्यर्थः अतथात्वात् प्रतियोग्यसमानाधिकरणत्वात् यावत्पदे दत्ते साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वनिवेशने वह्निमान् धूमादित्यादौ तादृशयावदन्तर्गतमहानसीयवह्न्याद्यभावमादायैवाव्याप्तिः स्यादिति यथोक्तविशेषणस्यैवोपादेयतया तादृशाभावयोरपि लक्षणघटकत्वादिति भावः । भूतत्वस्य बहिरिन्द्रियग्राह्यविशेषगुणात्मकतया प्रतियोगिस्वरूपाणां तन्निष्ठप्रतियोगितानां चालनीन्यायेनोत्पत्तिकालावच्छेदेन वा साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकतया भूतत्वाभावस्य न साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वमित्याशयेनाखण्डव्याप्यवृत्तिमनोऽन्यत्वाभावानुधावनम् । उक्तरीत्या अत एवेत्यादिग्रन्थावतारात्प्रथमतो वाच्यत्वाभावमादाय सर्वत्रैव व्यभिचारिण्यतिव्याप्तेर्दर्शितत्वात्साध्याभावमादाय व्यभिचारिविशेषे ऽतिव्याप्तिप्रदर्शनं सन्दर्भविरुद्धमित्याशङ्कानवकाशः । केचित्तु यावत्पदानुपादाने वाच्यत्वादेरुदासीनपदार्थस्याभावमादाय व्यभिचारिसामान्येऽतिव्याप्तिर्विश्राम्यतु साध्याभावमादायापि क्वचिदतिव्याप्तिः स्यात् सा च यावत्पदोपादानाच्च भवतीत्यभिप्रायकतया न सन्दर्भविरोध इत्याहुः । परे तु ननु साध्यतावच्छेदकव्यापकीभूतप्रतियोगिताकयावदभावनिवेशनैवोपपत्तेः साध्यतावच्छेदका-

न्धताया ग्रन्थकृतैव स्वीकृतत्वात्तेन सम्बन्धेनैवात्मवृत्तेरात्मत्वाभावस्य प्रतियोगिसामानाधिकरण्यमक्षतमेवेति वाच्यम्। अव्याप्यतायाः सम्बन्धताया विवादेन यदभावपदस्य यद्व्याप्यत्वाभावपरतामभ्युपगम्यापि ग्रन्थकृता तादृशलक्षणव्याख्यानात्तत्सम्बन्धताया अप्रामाणिकत्वाभिप्रायेणैवात्र यत्समानाधिकरणा इत्युपादानात्। यावत्पदासत्त्वे साध्यतावच्छेदकेत्यादिविशेषणस्य व्यावृत्तिर्न सङ्गच्छते यत्किञ्चिदभावमादायैव लक्षणसमन्वयसम्भवादतश्चरमोक्तस्यापि तत्पदस्य व्यावृत्तिं प्रथमतो दर्शयति सर्वत्रेति। तथा स्यात् प्रतियोगिसामानाधिकरण्यात्। तथा च यावत्पदादाने व्यभिचारिमात्र एवातिव्याप्तिरिति भावः। यद्यपि व्यभिचारिस्थले एव दोषस्य कथनीयतया सर्वत्र तादृशाभावस्य तथात्वकथनमसङ्गतं तथापि यावत्पदानुपादाने ऽतिव्याप्तिरेव नाव्याप्तिरित्येतत्सूचनाय सर्वत्रेत्युक्तम्। अथवा सर्वत्र सर्वाधिकरणावच्छेदेन तथा च विवक्षणीयस्य स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेण प्रतियोगिसामानाधिकरण्यस्य, सत्वं सूचितं ननु यावत्पदादाने साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वं परित्यज्य साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वेनैवाभावो विशेषणीयः तद्व्याप्यत्वं च स्वव्यापकतत्कत्वमतो नानवस्था वह्निमान् धूमादित्यादौ तत्तद्वह्न्याद्यभावानां साध्यतावच्छेदकव्याप्यप्रतियोगिताकानां यथाविवक्षणीयसामानाधिकरण्यविरहेऽपि घटत्वादिना वह्न्याद्यभावमादायैव लक्षणसङ्गतिः। इत्थं च धूमवान् वह्नेरित्यादौ साध्यत्वाद्यभावमादाय नातिव्याप्तिसम्भवः तस्य धूमत्वाद्यव्याप्यप्रतियोगिताकत्वेन लक्षणघटकताविरहात् एवं सति हेतुसमानाधिकरणत्वविशेषणमनर्थकमिति चेत् तदपि तर्हि त्यज्यतामित्याशङ्कापरिहाराय तथाविधाभावनिवेशेऽपि यत्रातिव्याप्तिस्तत्र यावत्पदस्य व्यावृत्तिमाह अत एवेति। अत एव यावत्पदोपादानादेव द्वित्वावच्छिन्नाभावस्य भूतत्वमूर्तत्वोभयत्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि मनसि हेत्वधिक-

त्यादिविशेषणस्थले साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वं विशेषणं किं नोपात्तमित्याकाङ्क्षोदयादादावेव तादृशविशेषणपरित्यागबीजकथनस्यासङ्गतत्वादिति । गोत्वाद्यभावस्येति । प्रतियोग्यसमानाधिकरणत्वादित्यर्थकेनातथात्वादित्यनेनान्वयः । तथा च साध्यतावच्छेदकेत्याद्यनुपादाने ऽसम्भव इति भावः । यद्यपि गोत्वाभावादेरपि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यं तथापि व्यापकतायां लक्षणाघटकत्वे साध्यतावच्छेदकसम्बन्धेनैव प्रतियोगिसामानाधिकरण्यं धूमवान् वह्नेरित्यादौ धूमाभावादेः पूर्वक्षणवृत्तित्वादिविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तेर्वारणायावश्यं विवक्षणीयं तथा चायमसम्भव इति भावः । साध्यप्रतियोगिकाभावनिवेशेऽपि गोत्वाद्यभावमादायासम्भवस्य वारणसम्भवादाह तत्तत्साध्यव्यक्त्यभावस्येति अस्य च नानाव्यक्तिसाध्यक इत्यादिः । तथा च साध्याभावनिवेशेऽपि वह्निमान् धूमादित्यादावव्याप्तिः स्यादिति भावः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वं च साध्यतावच्छेदकावच्छिन्नसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताव्यापकतावच्छेदिकाया अपि द्रव्यत्वाद्यभावप्रतियोगितायाः न साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वं सत्तावति गुणादौ तादृशप्रतियोगित्वावच्छिन्नाभावसत्त्वादतो विशिष्टसत्ताद्यभाव एव लक्षणघटकः तस्य च गुणादौ सत्तादिरूपप्रतियोगिसमानाधिकरणत्वादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नत्वोपादानं तथा च सति द्रव्यत्वाभावप्रतियोगिताया अपि विशिष्टसत्तात्वाद्यवच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकतया तादृशाभावानां च गुणादावतथात्वान्नातिव्याप्तिः यत्किञ्चिद्रूपावच्छिन्नसाध्यवत्तानिवेशे च सत्तावान् जातेरित्यादौ विशिष्टसत्ताव्यापकतावच्छेदकप्रतियोगिताकद्रव्यत्वाद्यभावादिकमादायाव्याप्तिर्बोध्या साध्यवत्त्वं साध्यतावच्छेदकसम्बन्धेन बोध्यम् । अन्यथा धूमवान् वह्नेरित्यादौ धूमाभावायोगोलकान्यत्वाभावादिप्रतियोगितायाः कालिकविशेषणताविषयितादिसम्बन्धेन धूमादिमति काले ज्ञा-

वच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकयावदभावनिवेशनमफलं तादृशप्रतियोगिताकत्वविशेषणव्यावर्तनीयस्य तत्तद्वह्न्याद्यभावस्य वह्नित्वव्यापकप्रतियोगिताकत्वाभावेनोक्तविशेषणेनापि व्यावर्तनसम्भवात् अत आह अत एवेति । यत एव साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावे यावत्त्वमुपात्तं न तु साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावे अत एवेत्यर्थः । भूतत्वेति । साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशे भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ भूतत्वाभावमनोऽन्यत्वाभावप्रतियोगितयोः उभयत्वाव्यापकत्वेनोभयत्वावच्छिन्नप्रतियोगिताकाभावादेरेव लक्षणघटकतयाऽतिव्याप्तिः स्यात् यथोक्तविशेषणाक्रान्ताभावनिवेशे च भूतत्वमनोऽन्यत्वाभावानामपि लक्षणघटकतया नातिव्याप्तिरिति भावः । न च साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशेऽपि हेतुसमानाधिकरणस्य मनोभिन्नभेदस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः साध्यतावच्छेदकावच्छिन्नव्यापकताया लक्षणेऽनिवेशे तादृशव्यापकताघटकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशासम्भवात्प्रतियोगितावच्छेदकसम्बन्धेनैव तत्सामानाधिकरण्यस्य विवक्षणीयत्वादिति वाच्यं प्रतियोगितावच्छेदकसम्बन्धेन तत्सामानाधिकरण्यनिवेशेऽपि वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणस्य वह्नित्वव्यापकप्रतियोगिताकस्य पर्वतभिन्नभेदस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यं पर्वतान्तर्भावेण नास्तीत्यव्याप्त्यापत्त्या तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्यस्य निवेशासम्भवात् साध्यतावच्छेदकसम्बन्धेनैव प्रतियोगिसामानाधिकरण्यमगत्या वाच्यं तथा च मनोभिन्नभेदस्य तेन सम्बन्धेन मूर्तत्वादिरूपप्रतियोगिसामानाधिकरण्यमक्षतमेवेत्यतिव्याप्तेः साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशे वक्ष्यमाणस्थलान्तरेऽप्यतिव्याप्तिः स्यादिति तु नास्माकं दोष इत्यभिप्राय इति व्याचक्रुः । तत्तु समीचीनतया न प्रतिभाति साध्यतावच्छेदकेत्यादिविशेषणव्यावृत्तेः पश्चाद्वक्ष्यमाणतया तदुत्तरमेव साध्यतावच्छेदकावच्छिन्ने-

त्यादिविशेषणस्थले साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वं विशेषणं किं नोपात्तमित्याकाङ्क्षोदयाद्दादावेव तादृशविशेषणपरित्यागबीजकथनस्यासङ्गतत्वादिति । गोत्वाद्यभावस्येति । प्रतियोग्यसमानाधिकरणत्वादित्यर्थकेनातथात्वादित्यनेनान्वयः । तथा च साध्यतावच्छेदकेत्याद्यनुपादाने ऽसम्भव इति भावः । यद्यपि गोत्वाभावादेरपि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यं तथापि व्यापकताया लक्षणाघटकत्वे साध्यतावच्छेदकसम्बन्धेनैव प्रतियोगिसामानाधिकरण्यं धूमवान् वह्नेरित्यादौ धूमाभावादेः पूर्वक्षणवृत्तित्वादिविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमादायातिव्याप्तिवारणायावश्यं विवक्षणीयं तथा चायमसम्भव इति भावः । साध्यप्रतियोगिकाभावनिवेशेऽपि गोत्वाद्यभावमादायासम्भवस्य वारणसम्भवादाह तत्तत्साध्यत्वयत्त्वाभावस्येति अस्य च नानाव्यक्तिसाध्यक इत्यादिः । तथा च साध्याभावनिवेशेऽपि वह्निमान् धूमादित्यादावव्याप्तिः स्यादिति भावः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वं च साध्यतावच्छेदकावच्छिन्नसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताव्यापकतावच्छेदिकाया अपि द्रव्यत्वाद्यभावप्रतियोगिताया न साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वं सत्तावति गुणादौ तादृशप्रतियोगित्वावच्छिन्नाभावसत्त्वादतो विशिष्टसत्ताद्यभाव एव लक्षणघटकः तस्य च गुणादौ सत्तादिरूपप्रतियोगिसमानाधिकरणत्वादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नत्वोपादानं तथा च सति द्रव्यत्वाभावप्रतियोगिताया अपि विशिष्टसत्तात्वाद्यवच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकतया तादृशाभावानां च गुणादावतथात्वान्नातिव्याप्तिः यत्किञ्चिद्रूपावच्छिन्नसाध्यवत्त्वानिवेशे च सत्तावान् जातेरित्यादौ विशिष्टसत्ताव्यापकतावच्छेदकप्रतियोगिताकद्रव्यत्वाद्यभावादिकमादायाव्याप्तिर्बोध्या साध्यवत्त्वं साध्यतावच्छेदकसम्बन्धेन बोध्यम् । अन्यथा धूमवान् वह्नेरित्यादौ धूमाभावायोगोलकान्यत्वाभावादिप्रतियोगितायाः कालिकविशेषणताविषयितादिसम्बन्धेन धूमादिमति काले ज्ञा-

नादौ च संयोगादिसम्बन्धेन स्वावच्छिन्नाभावसत्त्वात् केनापि सम्बन्धेन न व्यापकतावच्छेदकत्वमिति केवलान्वयिवाच्यत्वादिनिष्ठप्रतियोगितैव स्वरूपादिसम्बन्धघटितव्यापकतावच्छेदिका स्यादित्यतिव्याप्तिः । न च सम्बन्धसामान्येन धूमादिमन्निष्ठो योऽभावस्तदीयविषयतासम्बन्धावच्छिन्नप्रतियोगितानवच्छेदिका या भ्रमानिष्ठप्रतियोगिता तन्निरूपकभ्रमाभावस्य च न विवक्षणीयसाध्यतावच्छेदकसम्बन्धेन साध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगित्वावच्छिन्नव्यापकताघटकयावत्सम्बन्धेन स्वविशिष्टयावद्धेत्वधिकरणे प्रतियोगिसामानाधिकरण्यं साध्यतावच्छेदकसंयोगादिसम्बन्धावच्छिन्नसाध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगिनिष्ठव्यापकतायां संयोगादिसम्बन्धावच्छिन्नधूमादिप्रकारतानिरूपितविशेष्यतासम्बन्धस्यापि घटकतया तेन सम्बन्धेनायोगोलकादौ प्रतियोगिनोऽसत्त्वादिति वाच्यं यतो विषयताया विषयतात्वेनैव सम्बन्धता प्रामाणिकी न तु तथाविधविशेष्यतात्वेनेति परन्त्वेतादृशदिशा समवायेन ज्ञानादिसाध्यकद्रव्यत्वादिहेतावेवातिव्याप्तिवारणं सम्भवति तत्र ज्ञानाभावस्य सम्बन्धसामान्येन साध्यनिष्ठव्याप्यतानिरूपितविषयतासम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताकस्य साध्यतावच्छेदकसम्बन्धेन साध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगिनिष्ठव्यापकताघटकयावत्सम्बन्धान्तर्गतसमवायेन घटादौ प्रतियोगिसामानाधिकरण्यविरहादिति न च सम्बन्धसामान्येन धूमादिमन्निष्ठो योऽभावस्तदीयसम्बन्धसामान्यावच्छिन्नप्रतियोगितायां धूमाद्यभावीयसम्बन्धसामान्यावच्छिन्नप्रतियोगित्वमप्यनवच्छेदकं संयोगत्वाद्यवच्छिन्नसंयोगादिसम्बन्धेन धूमादिमत्यभावसत्त्वेऽपि सम्बन्धत्वरूपव्यापकधर्मावच्छिन्नसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकतदभावासत्त्वात् तथा च धूमाद्यभावस्यापि लक्षणघटकतया तस्य च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगित्वावच्छिन्नव्यापकताघटकसंयोगत्वाद्यवच्छिन्नसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिरिति वाच्यं सम्बन्धत्वेन सम्ब-

न्धानामभावप्रतियोगितावच्छेदकसम्बन्धत्वे मानाभावात्तेन रूपेण सम्बन्धानां व्यापकताघटकत्वासम्भवात् । वस्तुतस्तु प्रतियोगिसामानाधिकरण्यशरीरे व्यापकतायाः स्वातन्त्र्येण निवेशस्य प्रतिक्षेप्यत्वाज्ज्ञानवान् द्रव्यत्वादित्यादावतिव्याप्तिरबाधेति ध्येयम् । वस्तुतस्तु संयोगसमवायादिसाधारणानुगतसम्बन्धत्वस्य कथञ्चित्सुवचत्वेऽपि तेन रूपेण संयोगादीनां सम्बन्धतया मानस्य निर्युक्तिकतया व्यापकताशरीरे लाघवानुरोधात्साध्यप्रकारेणाधिकरणस्य भाने साध्यसम्बन्धोऽपि विशिष्य संसर्गतया निवेश्यः तथा च विशिष्य साध्यतावच्छेदकसम्बन्धनिवेशनमावश्यकं यत्किञ्चित्सम्बन्धेन साध्यवत्ताया व्यापकताघटकत्वे तु वह्निमान् धूमादित्यादौ विषयितासम्बन्धेन साध्य प्रति गुणत्वाद्यभावप्रतियोगिताया अपि व्यापकतावच्छेदकतया तादृशाभावस्य लक्षणघटकत्वेन तस्य च पर्वतादौ प्रतियोगिसामानाधिकरण्यविरहादसम्भवो बोध्यः । साध्यवन्निष्ठाभावाप्रतियोगिप्रतियोगिकत्वनिवेशे सर्वस्यैव साध्यवन्निष्ठद्वित्वाद्यवच्छिन्नाभावप्रतियोगितया तादृशाभावाप्रतियोगिनोऽप्रसिद्धिरित्यतोऽवच्छेदकगर्भता । तादृशप्रतियोगितानवच्छेदकत्वं च तादृशप्रतियोगितायां समानाधिकरणं सद्यदवच्छेदकं तत्तदन्यत्वम् अन्यथा व्यतिरेकिप्रतियोगितामात्रस्यैव व्यधिकरणतया साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकतया विरुद्धघटत्वपटत्वोभयाद्यवच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावस्यैव लक्षणघटकत्वेन व्यभिचारिण्यतिप्रसङ्गात् । यत्तु साध्यतावच्छेदकावच्छिन्नसाध्यवन्निष्ठभेदप्रतियोगितानवच्छेदकप्रतियोगिकस्वरूपसाध्यतावच्छेदकावच्छिन्नव्यापकप्रतियोगिकत्वनिवेशेनैव सर्वसामञ्जस्ये निरुक्तव्यापकतावच्छेदकप्रतियोगिताकत्वनिवेशनमफलं वह्निमान् धूमादित्यादौ घटत्वादिना वह्न्याद्यभावप्रतियोगिनां वह्न्यादीनां चालनीन्यायेन साध्यवन्निष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि घटत्वादिना द्रव्यत्वाद्यभावमादायैव लक्षणसमन्वयसम्भवात् व्यभिचारिणि व्यभिचारनिरूपकाधिकरणभेदाभावमादायैवातिव्याप्तिवारण-

सम्भवाच्च । न च साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकत्वापेक्षया तादृशाविशेषणस्य न लघुशरीरतेति वाच्यं व्यापकतावच्छेदकताघटकाभावप्रतियोगितावच्छेदकतायां स्वरूपसम्बन्धावच्छिन्नत्वस्याधिकस्य प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वस्य च निवेशनीयतया एतन्मते तदनिवेशेन लाघवात् तन्मते तदनिवेशे सर्वासामेव प्रतियोगितानां साध्यवन्निष्ठो यो विषयितासम्बन्धेन स्वावच्छिन्नस्याभावस्तत्प्रतियोगितावच्छेदकतया व्यापकतावच्छेदकप्रतियोगिताया एवाप्रसिद्ध्यापत्तेः भेदप्रतियोगितावच्छेदकतायां व्यापकताघटकसम्बन्धावच्छिन्नत्वस्यैतन्मते निवेशवत् भवन्मतेऽप्यभावप्रतियोगितायां तन्निवेशस्यावश्यकतया तदंशे साम्यादिति । तदसत् । यतोऽनवच्छेदकप्रतियोगिकत्वमनवच्छेदकनिष्ठप्रतियोगितानिरूपकत्वं प्रतियोगितायां तन्निष्ठत्वं च स्वरूपसम्बन्धेन वाच्यमन्यथा वह्निमान् धूमादित्यादावपि विषयतासम्बन्धेन साध्यव्यापके प्रमेयमित्याकारकविश्वविषयकज्ञाने विषयितासम्बन्धेन जलत्वाद्यभावीयप्रतियोगिताया वृत्तेस्तादृशाभावस्य लक्षणघटकतापातात् विषयिताया वृत्त्यनियामकतया एतद्दोषानवकाशेऽपि एतद्वह्निमानेतद्धूमादेतद्रूपवानेतद्रसादित्यादौ जलत्वाद्यभावप्रतियोगितायाः कालिकसम्बन्धेन साध्यव्यापकसाध्यतत्समानाधिकरणकर्मादौ वर्तमानतया लक्षणघटकत्वापातात् तथा च व्यापकनिरूपितवृत्तौ स्वरूपसम्बन्धावच्छिन्नत्वानिवेशस्यैतन्मतेऽप्यावश्यकतया न लाघवावकाशः विपरीतमेव गौरवमाधेयत्वांशानिवेशाधिक्येनेति । न च व्यापकनिष्ठप्रतियोगिताकत्वेनाभावो न निवेशनीयो येनोक्तगौरवं स्यादपि तु अनुयोगितासम्बन्धेन व्यापकविशेषित एव तत्र च व्यापकतावच्छेदकप्रतियोगिताकत्वेनाभावनिवेशापेक्षया लाघवमक्षतमेवेति वाच्यं प्रतियोगिप्रकारीभूतधर्मावच्छिन्ननिरूपितत्वावच्छिन्नानुयोगिताया अभावांशे प्रतियोगिसम्बन्धतया भाने घटादिमति घटत्वावच्छिन्नाभावविषयिण्याः द्रव्यं नास्तीत्याकारकप्रतीतेरापत्तेः तदवच्छिन्ननिरूपितानुयोगिताया एव संसर्गतया भानोपगमात् , व्यापकत्वावच्छिन्नविशेषिताभावस्य , लक्षणे निवेशे

व्यापकत्वावच्छिन्ननिरूपितानुयोगितायाः सम्बन्धतया निवेशनीयतया सद्धेतौ हेतुसमानाधिकरणसाध्यव्यापकत्वावच्छिन्नसाध्यव्यापकाभावस्य सम्बन्धविशेषावच्छिन्नप्रतियोगिताकस्य कथञ्चित्प्रसिद्ध्या लक्षणसमन्वयसम्भवेऽपि व्यभिचारिण्यतिव्याप्तिः व्यभिचारनिरूपकाधिकरणेऽपि कस्यचित्साध्यव्यापकस्य वृत्ते व्यधिकरणधर्मावच्छिन्नाभावस्य लक्षणघटकत्वानुपपत्तेश्चेति एवमनवच्छेदकपदेनावच्छेदकतापर्याप्त्यनधिकरणत्वमवश्यं वाच्यम् अन्यथा द्रव्यत्वाभावादेरपि वह्निमन्निष्ठपृथक्त्ववृत्तित्वविशिष्टद्रव्यत्ववद्भेदप्रतियोगितावच्छेदकद्रव्यत्वप्रतियोगिकत्वाल्लक्षणाघटकत्वापत्तेः तथा च घटत्वावच्छिन्नघटाभावादेरपि लक्षणघटकत्वापात्तः वह्निमन्निष्ठभेदप्रतियोगितावच्छेदकतायाः घटत्वविशिष्टपर्याप्ततया शुद्धघटस्य तत्पर्याप्त्यनधिकरणत्वात् । अथ निरुक्तव्यापकतावच्छेदकताया निवेशे कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावानां लक्षणघटकत्वानुपपत्तिः कपिसंयोगाभावादिनिष्ठतत्प्रतियोगितानां साध्यवन्निष्ठकपिसंयोगाद्यात्मकाभावप्रतियोगितावच्छेदकत्वादित्यग्रिमग्रन्थविरोधः न च व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणस्यात्साध्यवन्निष्ठकपिसंयोगाद्यात्मकाभावस्य न व्यापकतालक्षणघटकतेति वाच्यं प्रकृतव्यापकतायां तादृशविशेषणप्रवेशस्य निष्प्रयोजनकत्वात् । अत्र केचित् व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यनिवेशनमावश्यकम् । अन्यथा अभावे सम्बन्धसामान्येन साध्यवन्निष्ठत्वनिवेशे कालपरिमाणवान् द्रव्यत्वादित्यादौ व्यतिरेकितावच्छेदकप्रतियोगितामात्रस्यैव कालिकसम्बन्धेन साध्यवद्वृत्तियः स्वावच्छिन्नाभावस्तत्प्रतियोगितावच्छेदकतया घटत्वादिनिष्ठप्रतियोगिताया एव व्यापकतावच्छेदकतयातिव्याप्त्यापत्तेः दैशिकविशेषणतासम्बन्धेन तन्निष्ठत्वनिवेशे भावस्य तेन सम्बन्धेन वृत्तेरप्रामाणिकतया वह्निमान् धूमादित्यादौ पर्वतत्वाद्यभावनिष्ठप्रतियोगिताया अपि व्यापकतावच्छेदकत्वापत्त्या पर्वतत्वाद्यात्मकाभावस्यापि लक्षणघटकत्वापातात् हेतुसामानाधिकरण्यघटकाभावीयवृत्तावपि तादृशसम्बन्धावच्छिन्नत्वनिवेशे नानास्थाने तादृश-

सम्बन्धनिवेशेन प्रतियोगितानवच्छेदकत्वमित्यत्र च व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितावच्छेदकत्ववारणाय सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वस्य निवेशेन च गौरवात् अभावे प्रतियोगिवैयधिकरण्यनिवेशनमेवोचितं व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगिसमानाधिकरणतयैव तमादाय दोषासम्भवादेतन्मते ऽवच्छेदकतायां सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वस्यानिवेशात् अभावीयवृत्तौ सम्बन्धभेदानिवेशाच्च लाघवं प्रतियोगिवैयधिकरण्यं च न प्रतियोगिसमानाधिकरणभिन्नत्वं तथा सति तद्वह्निसंयोगाद्यभावस्य प्रतियोगिसमानाधिकरणतया अभावान्तरमादाय तद्वह्निसंयोगादिनिष्ठप्रतियोगितया अपि वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वापत्त्या तदभावमादायाव्याप्त्यापत्तेः किन्तु प्रतियोग्यनधिकरणवृत्तित्वं तथा च प्रतियोग्यनधिकरणीभूतसाध्यवन्निष्ठाभाव इत्यभावान्तार्थनिष्कर्षः । अत्र च व्यापकताघटकत्वेनाभिमतो यः सम्बन्धस्तेन सम्बन्धेन प्रतियोग्यधिकरणत्वं वाच्यं तेन कालपरिमाणादिसाध्यकस्थले सम्बन्धसामान्येन प्रतियोग्यनधिकरणसाध्याधिकरणाप्रसिद्धावपि न क्षतिः कालः सर्वेवान् कालपरिमाणादिस्यादौ साध्यतावच्छेदककालिकसम्बन्धेन प्रतियोग्यनधिकरणसाध्याधिकरणाप्रसिद्ध्या तादृशसम्बन्धस्य व्यापकताघटकत्वासम्भवेऽपि न क्षतिः तत्र समवायादिसम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताकं घटत्वादिना द्रव्यत्वाद्यभावमादायैव लक्षणसमन्वयसम्भवात् । अथैवं दैशिकविशेषणतासम्बन्धस्य क्वापि व्यापकताघटकत्वं न स्यात् सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिनस्तेन सम्बन्धेन साध्यवति वृत्तेस्तेन सम्बन्धेन स्वप्रतियोग्यनधिकरणीभूतसाध्यवन्निष्ठाभावाप्रसिद्धेः न च तादृशसम्बन्धस्य व्यापकताघटकत्वेऽपि क्षतिविरहः सामान्यादिमात्रवृत्तिसाध्यकस्थले विषयतासम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताकसाध्यवत्त्वप्रकारकभ्रमाभावमादायैवोपपत्तिसम्भवादिति वाच्यं तादृशसम्बन्धस्यातथात्वे तेन सम्बन्धेन कपिसंयोगाभावादिसाध्यकमेयत्वादिहेतुकस्थले तन्निष्ठकपिसंयोगात्मकाभावीयप्रतियोगितायाः व्यापकतावच्छेदक-

त्वानुपपत्त्या अग्रिमग्रन्थासङ्गतितादवस्थ्यादिति चेन्न लाघवानुरोधेन येन सम्बन्धेन यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणं साध्यवत्तादृशप्रतियोगितानवच्छेदकत्वमेव तादृशसम्बन्धघटितव्यापकतानवच्छेदकत्वं वक्तव्यं इत्थञ्च कपिसंयोगाभावादिसाध्यकस्थले तन्निष्ठप्रतियोगिता नोक्तादृशपदेनोपादातुं शक्यते तादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणत्वस्य साध्यवत्यसम्भवात् किन्तु घटत्वाद्यभावनिष्ठप्रतियोगितैव दैशिकविशेषणतया तदवच्छेदकावच्छिन्नानधिकरणत्वस्य साध्यवति घटादौ सत्त्वात् तदनवच्छेदकत्वं च कपिसंयोगाभावादिनिष्ठप्रतियोगिताया इति कपिसंयोगादेः दैशिकविशेषणताघटितव्यापकतावच्छेदकप्रतियोगिताकत्वनिर्वाहः समनियताभावैक्यमते घटाद्यभावानामपि घटत्वादिना प्रमेयसामान्याभावाभिन्नतया प्रमेयमात्रप्रतियोगिकत्वेन प्रतियोग्यनधिकरणीभूतसाध्यवतोऽप्रसिद्धिरतः प्रतियोगितावदनाधिकरणत्वं विहाय प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वनिवेशः । न च घटाद्यभावानां प्रमेयमात्रप्रतियोगिकत्वेऽपि तदीयघटादिमात्रवृत्तिप्रतियोगितावदनधिकरणत्वमादाय व्यापकतालक्षणसामञ्जस्यमिति वाच्यं तादृशाभावानामभेदे घटो नास्तीत्यादिप्रतीतीनामपि घटत्वादिविशेषितघटादिवृत्तित्वेन यावत्प्रमेयनिष्ठप्रतियोगितावगाहित्वसम्भवात घटादिमात्रवृत्तिप्रतियोगिताया अप्रामाणिकत्वात् समनियताभावानामभेदानभ्युपगन्तृनयेऽपि साध्याभावादिप्रतियोगितया साध्यवदवृत्तिपदार्थाभावस्य प्रतियोगितामादाय तादृशप्रतियोगितानां व्यापकतानवच्छेदकत्वापत्तिवारणाय प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वनिवेशस्यावश्यकम् । अथ द्रव्यत्वाद्यभावीयद्रव्यत्वादिनिष्ठप्रतियोगितानामपि संयोगादिव्यधिकरणसम्बन्धघटितव्यापकतावच्छेदकत्वापत्तिः संयोगादिना तादृशप्रतियोगितात्मकप्रतियोगितावच्छेदकाविशिष्टाधिकरणाप्रसिद्ध्या यादृशप्रतियोगितेत्यत्र तादृशप्रतियोगितावच्छिन्नायाः प्रतियोगिताया उपादातुमशक्यत्वात्प्रतियोगितान्तरमुपादाय तदनवच्छेदकत्वान्तसत्त्वात् तथा च यावद्व्यापकताघटकसम्बन्धान्तर्गतसंयोगादिना द्रव्यत्वाद्यभावस्य प्रतियोगिसामानाधि-

सम्बन्धनिवेशेन प्रतियोगितानवच्छेदकत्वमित्यत्र च व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितावच्छेदकत्ववारणाय सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वस्य निवेशेन च गौरवात् अभावे प्रतियोगिवैयधिकरण्यनिवेशनमेवोचितं व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगिसमानाधिकरणतयैव तमादाय दोषासम्भवादेतन्मते ऽवच्छेदकतायां सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वस्यानिवेशात् अभावीयवृत्तौ सम्बन्धभेदानिवेशाच्च लाघवं प्रतियोगिवैयधिकरण्यं च न प्रतियोगिसमानाधिकरणभिन्नत्वं तथा सति तद्वह्निसंयोगाद्यभावस्य प्रतियोगिसमानाधिकरणतया अभावान्तरमादाय तद्वह्निसंयोगादिनिष्ठप्रतियोगिताया अपि वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वापत्त्या तदभावमादायाव्याप्त्यापत्तेः किन्तु प्रतियोग्यनधिकरणवृत्तित्वं तथा च प्रतियोग्यनधिकरणीभूतसाध्यवन्निष्ठाभाव इत्यभावान्तार्थनिष्कर्षः । अत्र च व्यापकताघटकत्वेनाभिमतो यः सम्बन्धस्तेन सम्बन्धेन प्रतियोग्यधिकरणत्वं वाच्यं तेन कालपरिमाणादिसाध्यकस्थले सम्बन्धसामान्येन प्रतियोग्यनधिकरणसाध्याधिकरणाप्रसिद्धावपि न क्षतिः कालः सर्ववान् कालपरिमाणादित्यादौ साध्यतावच्छेदककालिकसम्बन्धेन प्रतियोग्यनधिकरणसाध्याधिकरणाप्रसिद्ध्या तादृशसम्बन्धस्य व्यापकताघटकत्वासम्भवेऽपि न क्षतिः तत्र समवायादिसम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताकं घटत्वादिना द्रव्यत्वाद्यभावमादायैव लक्षणसमन्वयसम्भवात् । अथैवं दैशिकविशेषणतासम्बन्धस्य क्वापि व्यापकताघटकत्वं न स्यात् सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिनस्तेन सम्बन्धेन साध्यवति वृत्तेस्तेन सम्बन्धेन स्वप्रतियोग्यनधिकरणीभूतसाध्यवन्निष्ठाभावाप्रसिद्धेः न च तादृशसम्बन्धस्य व्यापकत्वाघटकत्वेऽपि क्षतिविरहः सामान्यादिमात्रवृत्तिसाध्यकस्थले विषयतासम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताकसाध्यवत्त्वप्रकारकप्रमाभावमादायैवोपपत्तिसम्भवादिति वाच्यं तादृशसम्बन्धस्यातथात्वे तेन सम्बन्धेन कपिसंयोगाभावादिसाध्यकमेयत्वादिहेतुकस्थले तन्निष्ठकपिसंयोगात्मकाभावीयप्रतियोगिताया व्यापकतावच्छेदक-

त्वानुपपत्त्या अग्रिमग्रन्थासङ्गतितादवस्थ्यादिति चेन्न लाघवानुरोधेन येन सम्बन्धेन यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणं साध्यवत्तादृशप्रतियोगितानवच्छेदकत्वमेव तादृशसम्बन्धघटितव्यापकतानवच्छेदकत्वं वक्तव्यं इत्यत्र कपिसंयोगाभावादिसाध्यकस्थले तन्निष्ठप्रतियोगिता नोक्ततादृशपदेनोपादातुं शक्यते तादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणत्वस्य साध्यवत्यसम्भवात् किन्तु घटत्वाद्यभावनिष्ठप्रतियोगितैव दैशिकविशेषणतया तदवच्छेदकावच्छिन्नानधिकरणत्वस्य साध्यवति घटादौ सत्त्वात् तदनवच्छेदकत्वं च कपिसंयोगाभावादिनिष्ठप्रतियोगितायां इति कपिसंयोगादेः दैशिकविशेषणताघटितव्यापकतावच्छेदकप्रतियोगिताकत्वनिर्वाहः समनियताभावैक्यमते घटाद्यभावानामपि घटत्वादिना प्रमेयसामान्याभावाभिन्नतया प्रमेयमात्रप्रतियोगिकत्वेन प्रतियोग्यनधिकरणीभूतसाध्यवतोऽप्रसिद्धिरतः प्रतियोगितावदनाधिकरणत्वं विहाय प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वनिवेशः । न च घटाद्यभावानां प्रमेयमात्रप्रतियोगिकत्वेऽपि तदीयघटादिमात्रवृत्तिप्रतियोगितावदनधिकरणत्वमादाय व्यापकतालक्षणसामञ्जस्यमिति वाच्यं तादृशाभावानामभेदे घटो नास्तीत्यादिप्रतीतीनामपि घटत्वादिविशेषितघटादिवृत्तित्वेन यावत्प्रमेयनिष्ठप्रतियोगितावगाहित्वसम्भवात् घटादिमात्रवृत्तिप्रतियोगितायां अप्रामाणिकत्वात् समनियताभावानामभेदानभ्युपगन्तृनयेऽपि साध्याभावादिप्रतियोगितया साध्यवद्वृत्तिपदार्थाभावस्य प्रतियोगितामादाय तादृशप्रतियोगितायां व्यापकतानवच्छेदकत्वापत्तिवारणाय प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वनिवेशनमावश्यकम् । अथ द्रव्यत्वाद्यभावीयद्रव्यत्वादिनिष्ठप्रतियोगितानामपि संयोगादिव्यधिकरणसम्बन्धघटितव्यापकतावच्छेदकत्वापत्तिः संयोगादिना तादृशप्रतियोगितात्मकप्रतियोगितावच्छेदकविशिष्टाधिकरणाप्रसिद्ध्या यादृशप्रतियोगितेत्यत्र तादृशप्रतियोगितावच्छिन्नायाः प्रतियोगिताया उपादातुमशक्यत्वात्प्रतियोगितान्तरमुपादाय तन्नानवच्छेदकत्वान्तसत्त्वात् तथा च यावद्व्यापकताघटकसम्बन्धान्तर्गतसंयोगादिना द्रव्यत्वाद्यभावस्य प्रतियोगिसामानाधि-

करण्यासम्भवादसम्भवः न च संयोगादिना द्रव्यत्वाद्यभावस्य स्वसमनियतघटत्वावच्छिन्नप्रतियोगिताकवह्न्याद्यभावाभिन्नतया संयोगादिना वह्न्यादिरूपप्रतियोगिसामानाधिकरण्यसत्त्वान्नासम्भव इति वाच्यम् । एवमपि सत्तावान् जातेरित्यादौ हेत्वधिकरणावच्छेदेन तादृशाभावानां संयोगेन प्रतियोगिसामानाधिकरण्यासम्भवेनाव्याप्तेर्दुर्वारत्वात् । नैवं व्यापकताघटकत्वेनाभिमतो यः सम्बन्धस्तेन सम्बन्धेन वृत्तिमद्विशिष्टत्वेन प्रतियोगिताया विशेषणीयत्वात् द्रव्यत्वादेः संयोगादिनावृत्तितया उक्तदोषानवकाश इत्याहुः । वस्तुतस्तु लघुरूपसमनियतगुरुधर्मस्यानवच्छेदकत्वे घटाद्यभावीयप्रतियोगितायाः अपि वह्न्यादिव्यापकतावच्छेदकत्वापत्तिः तादृशप्रतियोगिताविशिष्टघटाद्यभावप्रतियोगितायां लाघवेन घटत्वादेरेवावच्छेदकतया घटाद्यभावप्रतियोगितानां तदनवच्छेदकत्वात् न च प्रतियोगितायाः तत्तदभावीयप्रतियोगितात्वेनावच्छेदकतायां गौरवेऽपि स्वरूपतोऽवच्छेदकत्वेऽविशेषः प्रतियोगितायाः स्वरूपतो भानाभावेन तेन रूपेणावच्छेदकताया अप्यसम्भवादिति पारिभाषिकमेवावच्छेदकत्वं व्यापकताशरीरे निवेशनीयं तथा च साध्यवन्निष्ठाभावप्रतियोगितावच्छेदको यो धर्मस्तदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकं फलतः साध्यवद्यत्किञ्चिन्निष्ठासम्बद्धस्वविशिष्टसामान्यकं यद्त्वं तदन्यत्वमेव व्यापकतावच्छेदकत्वं तथा च कपिसंयोगाद्यात्मकाभावस्यापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वमनायासेनैव निर्वहति यतः कपिसंयोगाद्यभावनिष्ठप्रतियोगिताविशिष्टस्य सर्वत्रैव साध्यवति वृत्तेस्तस्याश्च स्वपदेनोपादातुमशक्यत्वात् तादृशं स्वं धर्मान्तरमेव तदन्यत्वं च तादृशप्रतियोगितायामक्षतमेवेति । असम्बद्धत्वशरीरे च व्यापकताघटकत्वेनाभिमतो यः सम्बन्धः स एव निवेशनीयः द्रव्यत्वादिनिष्ठप्रतियोगित्वं च संयोगादिसम्बन्धेन साध्यवदसम्बद्धस्वविशिष्टसामान्यकमेवातो न संयोगादिघटितव्यापकतावच्छेदकत्वं तस्येति नोक्तदोषावकाश इति दिक् ॥

( दी० ) येन सम्बन्धेन हेतुस्तेनैव तदधिकरणं बोध्यं तेनात्मत्वे साध्ये समवायेन हेतोर्ज्ञानस्य विषयतयाधिकरणे घटादौ वर्तमानस्य साध्याभावस्यातथात्वेऽपि न क्षतिः ॥

( गा० ) येन सम्बन्धेन हेतुरिति व्याप्यतावच्छेदकत्वेनाभिमतो यः सम्बन्ध इत्यर्थः । बोध्यमित्यस्य हेतुसामानाधिकरण्यघटकमित्यादिः । तेन तादृशसम्बन्धविशेषणेन आत्मत्वे साध्य इति अयमात्मा ज्ञानादित्यादावित्यर्थः । साध्याभावस्य साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य अतथात्वेऽपि स्वविशिष्टस्य हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणस्याप्रसिद्ध्या विवक्षणीयस्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेऽपि न क्षतिः नाव्याप्तिः । वह्निमान् धूमादित्यादौ धूमावयवादिवृत्तेर्वह्नित्वाद्यवच्छिन्नाभावस्य स्वविशिष्टं यद्धेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं तदवच्छेदेन प्रतियोगिसामानाधिकरण्यं सम्भवत्येव तथाविधहेत्वधिकरणपर्वतादेः जन्यमात्रस्य कालोपाधितया कालिकसम्बन्धेन तादृशाभावादिविशिष्टत्वात् तदन्तर्भावेन तेन सम्बन्धेन तादृशप्रतियोगिसामानाधिकरण्यस्यापि सत्त्वाच्च अभाववैशिष्ट्यादौ सम्बन्धविशेषानिवेशादित्यभिप्रायेण नित्यमात्रवृत्तिहेतुकस्थलानुधावनम् । अथ वह्निव्यापकस्य चरमक्रियाभावस्य योऽभावश्चरमक्रियात्मकस्तस्य कालिकसम्बन्धेन हेत्वधिकरणे महाकाले वर्तमानस्य न विवक्षणीयप्रतियोगिसामानाधिकरण्यसम्भवस्तद्विशिष्टस्य हेतुतावच्छेदकसंयोगेन धूमाधिकरणस्याप्रसिद्धेः धूमाधिकरणपर्वतादेस्तदसमानकालीनतया तत्र कालिकसम्बन्धेनापि तद्वैशिष्ट्यासम्भवादिति आत्मत्वसाध्यकपर्यन्तानुधावनमफलं न च वृत्त्यनियामकसंयोगेन धूमसम्बन्धिनि परमाणावेव चरमक्रियावैशिष्ट्यस्य प्रसिद्ध्या तत्र चरमक्रियाभावरूपप्रतियोगिनोऽपि सत्त्वात्सम्भवत्येव विवक्षणीयप्रतियोगिसामानाधिकरण्यं तादात्म्यसम्बन्धावच्छिन्नहेतुताकस्थलानुरोधेन हेत्वधिकरणावच्छेदेनेत्यत्र हेतुसम्बन्धित्वमात्रस्यैव विवक्षितत्वादिति वाच्यं यादृशपरमाणौ क-

दापि धूमसंयोगो नास्ति तदीयचरमक्रियात्मकाभाववैशिष्ट्यस्य हेतुसम्बन्धिन्यसत्त्वेन, तमादायैवाव्याप्तिसम्भवादिति चेन्न महाकालस्यैव वृत्त्यनियामकसंयोगसम्बन्धेन हेतुसम्बन्धितया तत्र कालिकसम्बन्धेन चरमक्रियात्मकाभाववैशिष्ट्यस्य दैशिकविशेषणतया तदभावस्यापि सत्त्वेन विवक्षणीयप्रतियोगिसामानाधिकरण्यसम्भवात् वृत्त्यनियामकसंयोगस्यापि संयोगत्वेन हेतुतावच्छेदकसम्बन्धत्वात् । न च तथापि वृत्तिनियामकसंयोगेन धूमहेतुकस्थलेऽव्याप्तिरस्त्येवेति वाच्यं तेन रूपेण सम्बन्धतायां मानाभावात् कालस्यावृत्तितया काले धूमसंयोगस्य कालनिष्ठधूमाधेयत्वानियामकत्वेऽपि धूमस्य तेन सम्बन्धेन कालवृत्तित्वमस्त्येवेत्यस्यापि सुवचत्वात् वह्निमान् धूमादित्यादौ साध्याभावमादाय नाव्याप्तिसम्भवः किन्तु चरमक्रियात्मकाभावमादायैवेति अव्याप्तेः स्फुटतरप्रतिपत्त्यर्थमात्मत्वादिसाध्यकस्थलानुधावनस्य सार्थकत्वाच्चेति ॥

ननु ज्ञानवान् आत्ममहाकालान्यतरत्वादित्यादौ हेतुसमानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकयावदभावानामेव स्वविशिष्टहेत्वधिकरणमहाकाले कालिकसम्बन्धेन प्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्तिः न च तादात्म्येन ज्ञानव्यापकस्यात्मनोऽभाव एव काले न प्रतियोगिसमानाधिकरणः आत्मनोऽवृत्तितया काले कालिकसम्बन्धेनावृत्तेरिति वाच्यम् । आत्मनः कालावृत्तित्वे कालवृत्तित्वघटितकारणत्वाद्यनुपपत्त्या तदुपगमस्यावश्यकत्वात् नित्यद्रव्याणां कालावृत्तित्वेऽपि महाकालभिन्नो द्रव्यत्वात् ईश्वरज्ञानभिन्नं गुणत्वादित्यादावतिव्याप्तिः वृत्तिमतामेव महाकालभेदेश्वरज्ञानभेदव्यापकतया तदभावानां यावतामपि महाकाले ईश्वरज्ञानादौ च कालिकविशेषणताविवक्षितसम्बन्धघटितप्रतियोगिसामानाधिकरण्यसत्त्वादित्यत आह एवं दलान्तरेऽपीति ॥

( दी० ) एवं दलान्तरेऽपि सम्बन्धभेदनिबन्धनो दोषः सम्बन्धैक्यविवक्षया निरसनीयः ॥

( गा० ) दलान्तरे प्रतियोगिसामानाधिकरण्यघटकप्र-

तियोगिमत्त्वाद्ले सम्बन्धभेदनिबन्धनो दोषः कालिकादिसम्बन्धमादायातिव्याप्तिरूपः सम्बन्धैक्यविवक्षया व्यापकताघटकसम्बन्धप्रतियोगिमत्ताघटकसम्बन्धयोरैक्यविवक्षया तथ च ज्ञानवान् आत्ममहाकालान्यतरत्वात् महाकालभिन्ने द्रव्यत्वादित्यादौ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठव्याप्यतानिरूपितव्यापकताघटकसमवायदैशिकविशेषणतादिसम्बन्धेन ज्ञानाभावमहाकालभेदाभावादिप्रतियोगिनां कालादावृत्ते नातिव्याप्तिरिति भावः । अत्र च येन येन सम्बन्धेन स्वप्रतियोगित्वावच्छिन्नस्य साध्यतावच्छेदकावच्छिन्नव्यापकता तेन तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्यमभावस्य विवक्षणीयम् अन्यथा इदं नित्यज्ञानं नित्यत्वे सति सविषयकत्वादित्यादौ हेतुसमानाधिकरणनित्यज्ञानत्वाद्यभावस्य प्रतियोगिनः साध्यं प्रति विषयितासम्बन्धेनापि व्यापकतया तेन सम्बन्धेन हेत्वधिकरणेश्वरेच्छाकृत्योः प्रतियोगिसामानाधिकरण्येनातिव्याप्तिः येन येनेत्युक्तौ च तथाविधसमवायादिसम्बन्धेनातथात्वान्नातिव्याप्तिः । अत्र साध्यतावच्छेदकावच्छिन्नव्याप्यतानिरूपितस्वप्रतियोगित्वावच्छिन्नव्यापकताघटकयावत्सम्बन्धत्वेन तादृशसम्बन्धस्य प्रतियोगिसामानाधिकरण्यशरीरे न स्वातन्त्र्येण निवेशस्तथा सति अभावे साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वविशेषणवैयर्थ्यापातात् न हि तादृशविशेषणानुपादाने गोत्वाद्यभावमादायासम्भवः सम्भवति गोत्वाद्यभावानामपि हेत्वधिकरणे पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिनिष्ठव्यापकताघटकदैशिकविशेषणतासम्बन्धेन प्रतियोगिसामानाधिकरण्यसत्त्वात् धूमवान् वह्नेरित्यादौ धूमाद्यभावस्यायोगोलके पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्येऽपि यावद्व्यापकताघटकसम्बन्धान्तर्गतसंयोगादिना प्रतियोगिसामानाधिकरण्यविरहात् घटत्वाद्यभाववान् प्रमेयत्वादित्यादौ घटत्वाद्यात्मकाभावस्य च तादृशप्रतियोगिसामानाधिकरण्येऽपि विशेष्यतासम्बन्धघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकस्य घटावृत्तिघटत्वाभावादिप्रकारकप्रमाया अभावस्य तादृशसम्बन्धेन घटे प्रतियोगिसामानाधिकरण्यविरहाद्-

तिव्याप्त्यनवकाशात् अपि तु साध्यतावच्छेदकावच्छिन्नव्यापकतानिरूपितयद्यत्सम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताका ये येऽभावास्तत्तत्सम्बन्धेन प्रतियोगिसमानाधिकरणा इत्येवं क्रमेणैव निवेशाद्व्यापकताया एकधैव लक्षणे निवेश इति । यत्तु साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशान्न कालधानात्ममहाकालान्यत्वत्वादित्यादावतिव्याप्तिः इत्थं च व्यापकतासाध्यतावच्छेदकसम्बन्धघटिता ग्राह्या अत एव वह्निमान् धूमादित्यादौ घटत्वादिना घटवृत्तित्वविशिष्टद्रव्यत्वत्वादिना वा द्रव्यत्वादेरभावस्य समवायादिसम्बन्धघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकस्य साध्यतावच्छेदकसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहेऽपि न क्षतिरिति तन्न । तथा सति कालिकविशेषणतया महाकालान्यत्वविशिष्टघटादौ साध्ये कालत्वादिहेतावतिव्याप्त्यापत्तेः तत्र महाकालान्यत्वविशिष्टघटाभावमहाकालान्यत्वाभावादीनां कालिकसम्बन्धेन महाकाले घटादिरूपप्रतियोगिसामानाधिकरण्यसत्त्वात् यदि च महाकालान्यत्वविशिष्टोऽपि घटो महाकाले वर्तते अन्यथा सिद्धान्तलक्षणे महाकालो घटवान् कालपरिमाणादित्यादौ महाकालान्यत्वविशिष्टघटाभावस्यैव प्रतियोगिव्यधिकरणस्य सुलभतया उभयाभावघटितप्रतियोगिवैयधिकरण्यनिर्वचनायासस्य निष्प्रयोजनकत्वापत्तेरिति दर्शितविशिष्टसाध्यकस्थले कालत्वादिः सद्धेतुरेवेति मन्यते तथापि घटत्वाभाववान् प्रमेयत्वादित्यादौ घटत्वात्मकाभावस्य साध्यतावच्छेदकदैशिकविशेषणतासम्बन्धेन किञ्चिद्विशिष्टत्वाभावात्मकप्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्तिस्त्वन्मते दुर्वारैव न च तेन सम्बन्धेन भावरूपप्रतियोगिसामानाधिकरण्यस्य विवक्षणीयतया नायं दोष इति वाच्यं तथा सत्यभावसाध्यकसद्धेतौ निरुक्तयावदभावान्तर्गतभावरूपसाध्याभावस्य भावरूपप्रतियोग्यप्रसिद्ध्या भावरूपप्रतियोगिसामानाधिकरण्यासम्भवादव्याप्तेः एवं साध्यतावच्छेदकसम्बन्धेन व्यापकत्वादिनिवेशे सर्वत्रेत्यादिना धूमवान् वह्नेरित्यादौ वाच्यत्वाद्यभावमादायातिव्याप्तिप्रदर्शनस्यासङ्गत्यापत्तेश्चेति । यत्तु दैशिकविशेषणताविशेषेण व्यापकता तेनैव सम्बन्धे-

न प्रतियोगिसामानाधिकरण्यं सर्वत्र साध्यवत्त्वप्रकारकप्रमाविषयत्वाद्यभावमादायैव लक्षणसङ्गमनमतिव्याप्तिवारणं चेति तदपि उक्तातिव्याप्तेरात्मत्वादिसाध्यकस्थले साध्याभावमादाय हेतुतावच्छेदकसम्बन्धव्यावृत्तिप्रदर्शनविरोधाच्चानुपादेयमेव । केचित्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यप्रवेशान्न प्रागुक्तातिव्याप्तिः इत्थं च व्यापकतापि तेन सम्बन्धेन बोध्या अतो वह्निमान् धूमादित्यादौ संयोगादिघटितसाध्यव्यापकतावच्छेदकप्रतियोगिताकस्य समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावस्य हेत्वधिकरणे समवायादिना प्रतियोगिसामानाधिकरण्याविरहेऽपि न क्षतिः तादृशाभावानां साध्यतावच्छेदकसम्बन्धघटितसाध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगितावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन निरुक्तयावदभावान्तः पातित्वादिति न चैवं व्यधिकरणधर्मावच्छिन्नाभावस्य सम्बन्धावच्छिन्नप्रतियोगिताकत्वे मानाभावेन तादृशाभावस्य लक्षणघटकत्वानुपपत्तिरिति वाच्यं संयोगेन घटत्वेन पटो नास्तीत्यनुभवबलात्तादृशाभावप्रतियोगितायामपि सम्बन्धस्यावच्छेदकत्वात् अनुभवानादरे च समानाधिकरणधर्मावच्छिन्नाभावप्रतियोगितायामपि सम्बन्धस्यावच्छेदकत्वासिद्धेः । अथ बाधबुद्धिप्रतिबन्धकतायाः सम्बन्धविशेषनियन्त्रितत्वानुरोधेन समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य सम्बन्धावच्छिन्नप्रतियोगिताकत्वमावश्यकम् अन्यथा एकैकविधघटाद्यभावज्ञानस्य संयोगसमवायादिरूपनिखिलसंसर्गावगाहिज्ञानप्रतिबन्धकत्वप्रसङ्गात् न च संयोगसम्बन्धावच्छिन्नघटादिप्रकारकबुद्धिं प्रति वस्तुगत्या संयोगादिसम्बन्धेन घटादिमत्ताविरोधी योऽभावस्तज्ज्ञानत्वेन प्रतिबन्धकत्वान्नोक्तातिप्रसङ्ग इति वाच्यम् वास्तवतादृशाभावत्वादिना प्रतिबन्धकत्वे घटाभावत्वेन पदार्थान्तरावगाहिज्ञानस्य घटादिमत्ताज्ञानाविरोधित्वप्रसङ्गात् तस्मात्तत्संसर्गकविशिष्टबुद्धौ तत्तत्संसर्गावच्छिन्नप्रतियोगिताकाभावत्वावगाहिज्ञानत्वेन प्रतिबन्धकताया वक्तव्यतया समानाधिकरणधर्मावच्छिन्नप्रतियोगितायां सम्बन्धस्यावच्छेदकतासिद्धिरिति चेत्तर्हि घटत्वविशिष्टपटाद्यवगाहिभ्रमघटत्वाद्यवच्छिन्नप्रतियोगिता-

रूपत्वाद्यभावज्ञानयोरपि प्रतिबध्यप्रतिबन्धकभावसत्त्वात् तादृशप्रतिबध्यप्रतिबन्धकभावस्य सम्बन्धविशेषनियन्त्रितत्वानुरोधेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताया अपि सम्बन्धावच्छिन्नत्वावश्यकत्वात् व्यधिकरणधर्मावच्छिन्नाभावज्ञानस्याप्रतिबन्धकत्वे बाधग्रन्थे लाघवोपनीतकाञ्चनमयत्वादिना वह्न्याद्यनुमितिविरोधितया काञ्चनमयत्वाद्यवच्छिन्नप्रतियोगिताकवह्न्याद्यभावस्य हेत्वाभासतोक्तेरसङ्गत्यापत्तेरित्यलमप्रकृतविचारणेति वदन्ति । तदपि न साधीयः निखिलाभावस्य किञ्चिद्विशिष्टाभावनिष्ठप्रतियोगितावच्छेदकीभूतदैशिकविशेषणतासम्बन्धेन तादृशप्रतियोगिसामानाधिकरण्यसत्त्वेन व्यभिचारिण्यतिव्याप्तेः । यावत्प्रतियोगितावच्छेदकसम्बन्धेन क्वचिदपि हेत्वधिकरणे संयोगविषयतादिरूपसकलसम्बन्धेन प्रतियोगिनो ऽवृत्तेरसम्भवापत्तेः प्रकारान्तरानुसरणे च गौरवात् ॥

अथ यावत्त्वमनुपादाय साध्यतावच्छेदकव्यापकप्रतियोगिताकस्य तदुपादाय साध्यतावच्छेदकव्यापकप्रतियोगिताकस्य वाऽभावस्य निवेशे उभयत्वावच्छिन्नसाध्यके व्यभिचारिण्यतिव्याप्तिरुक्ता न तु रूपसामान्याभावसाध्यके प्राचां मते विरुद्धे पृथिवीत्वादिहेतावित्यत्र किं बीजं तथा सति तत्रापि रूपसामान्याभावाभावस्य रूपस्य ध्वंसप्रागभावादिरूपप्रतियोगिसामानाधिकरण्यसत्त्वेनातिव्याप्तिसम्भवादित्याशङ्कापरिहाराय तस्य स्वमते लक्ष्यत्वमेवोपपादयति रूपादीति॥

(दी०) रूपादिसामान्याभावे साध्ये पृथिवीत्वादिकं सद्धेतुरेव प्रलये परमाणावुत्पत्तिकाले चावयविनि तत्सत्त्वात् ॥

(गा०) यथोक्तलक्षणे अतिव्याप्तिशङ्कया तु नैतद्ग्रन्थावतारः तत्र पृथिव्यन्यत्वाद्यभावस्यापि यावदन्तर्गततया तस्य पृथिवीत्वरूपप्रतियोगिसामानाधिकरण्यासम्भवेनातिव्याप्तेरनवकाशात् । यत्तु उत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य पृथिव्यामपि सत्त्वेन पृथिव्यन्यत्वाभावस्य न रूपसामान्याभावव्यापकतावच्छेदकप्रतियोगिताकत्वमित्यभिसन्धिपूर्विकां प्राचीनप्रवादमात्रेणासद्धेतुत्वाभिमानिनां यथोक्तलक्षणे अतिव्याप्तिशङ्कां निराकरोति रूपादीति ।

सद्धेतुरेवेति यादृशरीत्या पृथिव्यन्यत्वाभावस्य लक्षणाघटकत्वोपपत्तिः तादृशरीत्या साध्यवति हेतुमत्ताया अप्यावश्यकतया सद्धेतुरेवेत्यर्थ इति व्याख्यानं तदनुपादेयमेव तादृशाशङ्कितुः पृथिव्यां रूपसामान्याभावसत्त्वेऽविप्रतिपत्तावेवातिव्याप्तिशङ्कासम्भवेनाग्रे पृथिव्यां रूपसामान्याभावव्यवस्थापनोपयिकाकाङ्क्षानुत्पत्त्या तदसङ्गत्यापत्तेः। प्रलये महाप्रलये परमाणूनां नित्यतया तद्योत्पत्तिकालावच्छेदेन रूपसामान्याभावासम्भव इति भावः। यद्यपि पाकाद्रूपनाशोत्पत्तिकाले पूर्वरूपात्मकप्रतिबन्धकसत्त्वेन रूपान्तरानुत्पादेन तदानीमपि परमाणौ रूपसामान्याभावसम्भवः तथाप्यविनश्यदवस्थरूपस्य प्रतिबन्धकत्वे पूर्वरूपनाशोत्पत्तिक्षणे एव पाकजरूपोत्पत्तिसम्भव इत्यभिप्रायेण प्रलयपर्यन्तानुधावनम्। उत्पत्तिकाल इति अवयविद्रव्यस्य जन्यतया प्रलयेऽसत्त्वात्तदवच्छेदेन तत्राभावासम्भव इति भावः तत्सत्त्वात् रूपादिसामान्याभावसत्त्वात् ॥

ननु सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्यात्यन्ताभावात्मकतया रूपप्रागभाववत्युत्पत्तिकालीनावयविनि रूपध्वंसवति प्रलयावच्छिन्नपरमाणौ कथं रूपसामान्याभावसम्भवः ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वादित्याशङ्कां निरस्यति न च प्रतियोगिवदिति ॥

(दी० ) न च प्रतियोगिवत्तद्ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वं मानाभावात्। अत एवान्तराश्यामे रक्तं रूपं नास्तीतिप्रत्ययः । न चैष रक्तिमध्वंसाद्यवगाही पूर्वापररक्तिमध्वंसप्रागभाववतीदानीं रक्तेऽपि तथा प्रत्ययप्रसङ्गात् ॥

(गा०)यथा प्रतियोगिन एककालावच्छिन्नैकदेशावृत्तित्वरूपस्वात्यन्ताभावविरोधिता तथा स्वध्वंसप्रागभावयोरप्यत्यन्ताभावविरोधितेति नेत्यर्थः। मानाभावादिति। ननु रूपध्वंसप्रागभावावच्छिन्नाधिकरणे तदत्यन्ताभावस्य वृत्तौ प्रमाणाभावः घटाद्युत्पत्तिक्षणे तद्द्वितीयक्षणे च तत्प्रत्यक्षासम्भवेन तद्वृत्तित्वेन रूपात्यन्ताभावप्रत्यक्षस्य सुतरामसम्भवात् द्वितीयादिक्षणावच्छेदेन रूपस्यैव त-

ोत्पत्त्या तद्भावीयविशेषणताया असत्त्वेन तृतीयक्षणादावपि तादृशप्रत्यक्षासम्भवात् अनुभवे विप्रतिपन्नस्य प्रत्यक्षप्रमाणमनुद्भाव्य निरसितुमशक्यत्वाच्च अनुमानं चाप्रयोजकमिति ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वमर्थायातमित्यत आह अत एवेति । ध्वंसप्रागभावयोः अत्यन्ताभावाविरोधित्वादेव अन्तराश्यामे पूर्वापरदशायां रक्ते मध्यदशायां श्याम इत्यर्थः । रक्तं रूपं नास्तीति प्रत्यय इति ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे तत्र पूर्वरक्तध्वंसभाविरक्तप्रागभावयोः सत्त्वेनात्यन्ताभावावगाहिन्याः प्रमात्मकतादृशप्रतीतेरनुपपत्तिरिति भावः । एष रक्तं रूपं नास्तीतिप्रत्ययः ध्वंसादीत्यादिना प्रागभावपरिग्रहः । पूर्वापरेति । यत्र घटादौ पाकादेकरक्तनाशानन्तरं रूपान्तरमुत्पन्नं तन्नाशानन्तरञ्च रक्तान्तरं तन्नाशानन्तरोत्पन्नरूपान्तरनाशानन्तरं रक्तान्तरमुत्पद्यते तत्र मध्यरक्तदशायां रक्तं रूपं नास्तीति प्रतीत्यापत्तेरित्यर्थः तत्रापि ध्वंसरूपप्रागभावयोः सत्त्वादिति भावः । एतेन भवन्मते रक्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावधत्तादृशध्वंसप्रागभावौ तादृशप्रतीतिविषयौ अन्तरारक्तसमानकालीनौ पूर्वापररक्तध्वंसप्रागभावौ च न तथाविधाविति नातिप्रसङ्ग इति निरस्तं तादृशध्वंसप्रागभावयोरेव रूपान्तरदशायां तादृशप्रतीतिनियामकतया तयोरपि तथात्वस्वीकारस्यावश्यकत्वात् तत्र मध्यरक्तध्वंसप्रागभावयोस्तथात्वस्वीकारे तु पूर्वापररक्ततादशायां तादृशप्रत्ययापत्तेः । ननु रक्तत्वावच्छिन्नप्रतियोगिताकध्वंसप्रागभावावेव तादृशप्रतीतिविषयौ इत्थं च रक्तरूपतादशायां लौकिकप्रत्यक्षात्मकतादृशप्रत्यय आपाद्यते अनुमित्यात्मको वा आद्ये रक्तरूपलौकिकप्रत्यक्षसामग्र्या रक्तत्वावच्छिन्नप्रतियोगिताकत्वेन तदभावप्रत्यक्षं प्रति प्रतिबन्धकत्वान्नापत्तिः अन्यथा भवन्मतेऽपि रूपान्तरकालावच्छेदेन तद्वृत्तेरक्तत्वावच्छिन्नात्यन्ताभावस्यैव तदानीं धर्म्यन्तरघटितसन्निकर्षात्तद्वृत्तितया प्रत्यक्षापत्तेः विशेष्यघटितसन्निकर्षत्वेन सन्निकर्षस्याहेतुत्वात् रक्तरूपग्रहप्रतिबन्धकदोषादिसत्त्वे च तादृशप्रत्ययस्येष्टत्वात् । नान्त्यः तद्रूपावच्छिन्नव्याप्यवत्ताज्ञानादिसत्त्वे आनुमानिकतथाविधप्रत्ययस्येष्टत्वात् न च तादृशप्रत्ययस्य प्रमात्वापत्तिः भवन्मतेऽपि तथाविधात्यन्ताभावस्य तत्र

सत्त्वात्तादृशप्रत्ययस्य प्रमात्वेन इष्टापत्तेः यदा च तत्र रक्तं रूपं तत्कालावगाहिन इदानीमत्र रक्तं रूपं नास्तीतिप्रत्ययस्य प्रमात्वं पुनरशक्यापादनं तादृशप्रत्ययेन रक्तत्वावच्छिन्नप्रतियोगिताकत्वे तत्कालावच्छिन्नत्वावगाहनात् यदा च न तत्र रक्तं रूपं तत्कालावच्छेदेनैव ध्वंसप्रागभावयो रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेण तादृशविषयबाधात् तद्धर्मोपलक्षिताभावांशे तत्कालावच्छिन्नत्वावगाहिप्रत्ययस्य प्रमात्वं पुनरिष्टमेव न च तद्धर्मिनिष्ठध्वंसादौ तत्कालावच्छेदेन रक्तत्वावच्छिन्नप्रतियोगिताकत्वं कल्प्यते किं वा तत्कालावच्छेदेन तद्धर्मिण्येव रक्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावः कल्प्यत इत्यत्र विनिगमनाविरहात् ध्वंसाद्यधिकरणेऽत्यन्ताभावसिद्धिर्निष्प्रत्यूहैवेति वाच्यं ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावाकल्पने ध्वंसादेरतिरिक्तात्यन्ताभावाकल्पनेन लाघवात् रक्तरूपात्यन्ताभावस्यैव तन्मते रक्तरूपध्वंसात्यन्ताभावसमनियततया तस्यैव ध्वंसात्यन्ताभावत्वात् । मैवं तद्धर्मावच्छिन्नप्रतियोगिताकत्वस्याव्याप्यवृत्तित्वोपगमे विशेषाभावानामेवाधिकरणविशेषावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वसम्भवादतिरिक्तसामान्याभावासिद्धिप्रसङ्गः एवमेकस्यैवाभावस्याधिकरणविशेषकालविशेषवृत्तित्वावच्छेदेन घटत्वपटत्वादिरूपनानाधर्मावच्छिन्नप्रतियोगिताकत्वसम्भवेनाभावभेदाविलोपप्रसङ्गः एवं रक्तानधिकरणकालावच्छेदेन रक्तध्वंसादेरक्तत्वावच्छिन्नप्रतियोगिताकत्वोपगमे तत्समानाधिकरणतदसमनियतध्वंसाद्यन्तरस्य तत्समानाधिकरणैकत्वादेरेव वा तादृशकालावच्छेदेन तत्कल्पनमादाय विनिगमनाविरहप्रसङ्गश्चेति ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावकल्पनमेव न्याय्यम् । अथैतादृशयुक्त्या रक्तध्वंसादिमति तदत्यन्ताभावसिद्धावपि रूपध्वंसादिमत्यां पृथिव्यां रूपत्वावच्छिन्नाभावो निर्युक्तिक एवेति चेन्न रूपोत्पत्तिद्वितीयक्षणे पुनस्तदधिकरणे सामान्यसामग्रीबलात् रूपान्तरापत्तिवारणाय रूपं प्रति रूपत्वावच्छिन्नाभावस्य हेतुत्वं कल्पनीयम् । एवं चोत्पत्तिकाले पाकाद्रूपनाशोत्पत्तिक्षणे च रूपत्वावच्छिन्नाभावस्वीकारे तदनन्तरं रूपानुत्पादप्रसङ्गः रूपोत्पादानन्तरं रूपसामान्यस्य पुनरुत्पादश्च प्रागभावहेतुतया दुर्वारः रूपवत्यपि पाकजभाविरूपप्रागभावस-

स्यात् न चैवमपि पृथिव्यां रूपात्यन्ताभावो निर्युक्तिकः यत्कालावच्छेदेन तत्र रूपात्यन्ताभावो भवता स्वीक्रियते तत्कालावच्छेदेन रूपप्रागभावे रूपत्वावच्छिन्नप्रतियोगिताकत्वस्योक्तरीत्यैवोपपत्तेरिति वाच्यं दत्तोत्तरत्वात्। इदं त्ववधेयम् उक्तयुक्त्या उत्पत्तिकालावच्छेदेन घटादौ रूपत्वावच्छिन्नाभावसिद्धावपि प्रलयकालावच्छेदेन परमाणौ तत्सत्त्वे मानाभावः। एवं रूपं प्रति रूपत्वावच्छिन्नाभावहेतुत्वमेव न कल्प्यते स्पर्शोत्पत्त्यनुरोधेनावश्यकल्पनीयस्पर्शसामान्याभावस्य तद्धेतुतयैव रूपवति रूपान्तरापत्तेः शक्यवारणत्वात् यथा स्पर्शोत्पत्त्यनन्तरं स्पर्शोत्पत्तिवारणाय स्पर्शं प्रति रूपाभावहेतुताया वक्तुमशक्यत्वात् तत्र स्पर्शाभावहेतुताया आवश्यकत्वात् न च रूपं प्रति स्पर्शाभावहेतुत्वे यत्र पाकाद्रूपसत्त्वे स्पर्शनाशस्तत्र स्पर्शान्तरोत्पत्तिकाले रूपान्तरोत्पादप्रसङ्ग इति वाच्यम्। एकजातीयस्यैवाग्निसंयोगस्य रूपरसगन्धस्पर्शनाशकतया स्पर्शनाशकाले रूपनाशस्याप्यावश्यकत्वात् एवं ध्वंसप्रागभावाधिकरणे सामयिकात्यन्ताभावाभ्युपगन्तृमते तादृशात्यन्ताभावो न तदनधिकरणेषु कल्प्यते अनन्ताधिकरणेषु तादृशाभावकल्पनामपेक्ष्य लाघवाद्वैकैकेषु तत्तद्धर्मावच्छिन्नतद्भेदेषु तद्धर्मावच्छिन्नप्रतियोगिताकत्वकल्पनेनैवोपपत्तेरिति॥

( दी० ) तत्सामानाधिकरण्यं च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यं तेन गोत्वजन्यद्रव्यत्वमलयावृत्तित्वादिना गवादेरभावस्य गवाद्यनधिकरणधर्मावच्छेदेन तद्वति काले महाकाले वा वृत्तावपि यत्रा गोत्वं तदा गौर्यत्र कालत्वं तत्र जन्यद्रव्यं मलयावृत्तिर्वेत्यादौ नातिप्रसङ्गः। स्वविशिष्टेतिविशेषणात् कपिसंयोगाभाववान् मेयत्वादित्यादौ संयोगाद्यात्मकस्य साध्याभावस्य सकलहेत्वधिकरणावृत्तित्वेऽपि नाव्याप्तिः॥

( गा० ) तत्सामानाधिकरण्यं प्रतियोगिसामानाधिकरण्यं स्वविशिष्टेति। स्व यत्राभावे प्रतियोगिसामानाधिकरण्यं ग्राह्यं स एव हेत्वधिकरणावच्छेदेनेति हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरण यत्तत्सामान्यान्तर्भावेनेत्यर्थः। तेन

वह्न्यभावस्य धूमावयवावच्छेदेन द्रव्यं विशिष्टसत्त्वादित्यादौ द्रव्यत्वाद्यभावस्य क्वचिदपि प्रतियोगिसामानाधिकरण्यस्योपपाद-यितुमशक्यतया धूमवान् वह्नेरित्यादौ अतिव्याप्त्यप्रसक्तेर्द-र्शितविवक्षायाः स्थलान्तरे प्रयोजनमाह तेन गोत्वेति। तद्वति गवा-दिमति कालिकसम्बन्धेन गोत्वादिना गवादा साध्ये प्रलया-न्तर्भावेन व्यभिचारिणि गोत्वादिहेतौ लक्षणघटकानां गोत्वाद्यव-च्छिन्नाभावानां गवादिमति एतत्काले गवाद्यनधिकरणदेशावच्छे-देन महाकाले च प्रलयावच्छेदेन वर्तमानतया प्रतियोगिसामानाधि-करण्यमक्षतमेव। एवं दैशिकविशेषणताविशेषेण गवादिव्यापकप्रल-यान्यत्वादेरभावोऽपि तेन सम्बन्धेन प्रलयान्यत्वादिमति महाकाले वर्तमानतया प्रतियोगिसमानाधिकरण एव प्रतियोगिसामानाधि-करण्यघटकीभूताभाववृत्तौ सम्बन्धविशेषानिवेशादित्यतिव्याप्तिः स्यात्। निरुक्तविवक्षणे च स्वविशिष्टयावद्धेत्वधिकरणान्तर्गतप्रल-यान्तर्भावेन तादृशाभावानां न प्रतियोगिसामानाधिकरण्य प्रलये तत्प्रतियोगिनोऽवृत्तेरिति समुदायार्थः। गवादिव्यापकस्य च-रमध्वंसादेरभावस्य योऽभावश्चरमध्वसादिस्तस्य गवादिमति खण्डकाले न प्रतियोगिसामानाधिकरण्यं तत्र तस्यावृत्तेरतो महाकाले वेत्युक्तं महाकाले च कालिकसम्बन्धेन वृत्तेस्त-थात्वमक्षतमेव गोसाध्यकस्थले व्यापकतावच्छेदकजन्यद्रव्यत्व-प्रलयावृत्तित्वाद्यवच्छिन्नाभावमादायातिव्याप्तिवारणं न सम्भव-तीति स्फुटीकरणाय तद्रूपावच्छिन्नसाध्यकस्थलेऽप्यतिव्याप्तिमाह यत्र कालत्वमित्यादिना। अथैतादृशविवक्षापेक्षया लाघवात्प्रतियो-गिसामानाधिकरण्यघटकाभावीयवृत्तौ दैशिकविशेषणताविशेषा-वच्छिन्नत्वमेव निवेश्यतां तथा सति दैशिकविशेषणताविशेष-सम्बन्धेन प्रलयान्यत्वादेरभावस्य प्रतियोगिसामानाधिकरण्य-विरहेणातिव्याप्त्युद्धारस्य शक्यत्वात्। न चैवं वह्निमान् धूमा-दित्यादौ कालिकविशेषणताविशेषसम्बन्धेन हेत्वधिकरणवृत्ते-र्द्रव्यत्वत्वादिना द्रव्यत्वादेरभावस्य दैशिकविशेषणतया द्रव्यवृ-त्तित्वाभावादव्याप्तिरिति वाच्य हेतुसामानाधिकरण्यश-रीरेऽपि अभावीयवृत्तौ दैशिकविशेषणतासम्बन्धावच्छिन्नत्व-स्य निवेशनीयत्वात्। तावतापि लाघवानपायात् न

च दैशिकविशेषणताविशेषेण प्रतियोगिसामानाधिकरण्यनिवेशेऽपि उक्तस्थले ऽतिव्याप्तिस्तदवस्थैव प्रलयान्यत्वाभावस्य प्रलयमात्रवृत्तेरभावमात्राधिकरणकतया प्रलयात्मकाधिकरणस्वरूपत्वात्तस्य च प्रलयान्यत्वरूपप्रतियोग्यधिकरणे परमाण्वादौ दैशिकविशेषणतया वृत्तेरितिवाच्यम् । एवमपि प्रलयान्यकालत्वादेरभावस्य प्रलयातिरिक्ते गगनादावपि वर्तमानस्य प्रलयानात्मकतया प्रतियोगिसामानाधिकरण्यस्य दुरुपपादतयातिव्याप्त्यनवकाशात् । मैवं दैशिकविशेषणतया प्रतियोगिसामानाधिकरण्यप्रवेशेऽपि दैशिकविशेषणतासम्बन्धेन प्रलयावृत्तिसाध्यके कालत्वादिहेतावतिव्याप्तिर्दुर्वारैव तत्र प्रलयमात्रस्य व्यभिचारनिरूपकाधिकरणतया साध्यतावच्छेदकसम्बन्धेन साध्यं प्रति व्यापकतावच्छेदिका यदभावप्रतियोगिता व्यापकताघटकसम्बन्धावच्छिन्नप्रतियोगिताकस्य तस्य प्रलयमात्रवृत्तितया प्रलयात्मकत्वान्निरुक्तरीत्यैव प्रतियोगिसामानाधिकरण्यात् इतरसम्बन्धावच्छिन्नाभावस्य प्रलयानात्मकत्वेऽपि प्रलयान्यवृत्तितया सुतरामेव प्रतियोगिसमानाधिकरणत्वादिति निरुक्तविवक्षणमावश्यकम् । एतदभिप्रेत्यैव प्रलयावृत्तिसाध्यकानुसरणं ग्रन्थकृत इति । वस्तुतस्तु प्रलयान्यमात्रवृत्तेरभावस्य प्रलयाद्यनात्मकत्वेऽपि दर्शितस्थलेषु उक्तविवक्षामन्तरेणातिव्याप्तिवारणमशक्यं प्रलयान्यत्वादेरभावस्यापि स्वप्रतियोगिनिष्ठव्यापकताघटकस्वरूपसम्बन्धेन प्रलयात्मकनानाध्वंसान्तर्गतयत्किञ्चिद्ध्वंसवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिना हेत्वधिकरणे ध्वंसान्तरे स्वस्य समानाधिकरणत्वात् यत्किञ्चिद्ध्वंसान्यत्वाभावस्य तद्ध्वंसमात्रवृत्तेस्तद्ध्वंसमात्रवृत्तित्वविशिष्टस्वाभावाधिकरणे ध्वंसान्तरे सत्त्वेऽपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य स्वानधिकरणध्वंसावच्छेदेन स्वाधिकरणेऽपि सत्त्वेन तत्रैव प्रतियोगिसमानाधिकरणत्वात् प्रलयान्यत्वविषयकत्वोपलक्षितप्रमायां विषयतासम्बन्धेन केवलान्वयितया तादृशसम्बन्धावच्छिन्नतादृशप्रमाभावाप्रसिद्धेः प्रलयान्यत्वविषयकत्वविशिष्टप्रमाभावस्य प्रलये प्रसिद्धावपि प्रलये तदन्याविषयकनित्यप्रमारूपप्रतियोगिसमानाधिकरणत्वात् प्रलयाविषयकप्रमाभावस्य च जन्यप्रमामा-

प्रप्रतियोगिकतया कालिकाव्याप्यवृत्तितया प्रतियोगिमत्यपि तच्छून्यकालावच्छेदेन वृत्तेस्तादृशाभावमादायातिव्याप्तिवारणासम्भवात् उक्तविवक्षणे तु प्रलये प्रलयाविषयकप्रमाभावस्य विषयतया प्रतियोगिसामानाधिकरण्यविरहादतिव्याप्तिवारणसम्भवः एवमुक्तरीत्या घटत्वाभाववान् मेयत्वादित्यादौ व्याप्तिर्बोध्या। हेतुमति प्रलय इति हेतुमत्सामान्यान्तर्गतप्रलयान्तर्भावेनेत्यर्थः । तत्सामानाधिकरण्याभावात् गगनादिरूपप्रतियोगिसामानाधिकरण्याभावात् अत्र गगनाद्यभावस्येत्यनुषज्यते। हेतुमति स्वविशिष्टत्वनिवेशफलमाह स्वविशिष्टेतीति। साम्प्रदायिकैर्द्रव्ये संयोगसामान्याभावानभ्युपगमात्सद्धेतुत्वार्थं कपिसंयोगाभावपर्यन्तानुधावनं सकलहेत्वधिकरणावृत्तित्वेऽपीति नित्यगुणादौ केनापि सम्बन्धेन कपिसंयोगासत्त्वादितिभावः । एतेन हेत्वधिकरणसामान्यान्तर्भावेन प्रतियोगिसामानाधिकरण्यं नास्तीति सूचितं नाव्याप्तिरिति नित्यगुणादेः स्वविशिष्टत्वाभावात्तदन्तर्भावेनातथात्वेऽपि स्वविशिष्टहेत्वधिकरणान्तर्भावेन तथात्वस्याक्षतत्वात्। अत्र व्यापकताघटकाभावे उक्तयुक्त्या प्रतियोगिवैयधिकरण्यस्य प्रवेशनीयतया साध्यवद्यत्किञ्चिद्यत्त्वसम्बद्धस्वविशिष्टसामान्यकभिन्नत्वरूपव्यापकतावच्छेदकत्वस्य निवेशनीयतया वा कपिसंयोगाभावादिनिष्ठप्रतियोगिताया अपि व्यापकतावच्छेदकत्वनिर्वाह इत्यभिप्रेत्य कपिसंयोगात्मकाभावमादायाव्याप्तिराशङ्किता अन्यथा पुनः सत्तावान् जातेरित्यादौ काले कालिकसम्बन्धेन हेतुसमानाधिकरणानां सत्तात्वावच्छिन्नसत्ताद्यभावानां हेत्वधिकरणसामान्यान्तर्गतगगनाद्यन्तर्भावेन प्रतियोगिसामानाधिकरण्यविरहात्प्रसक्ताव्याप्तिवारणाय स्वविशिष्टेति विशेषणमावश्यकमिति। आदिपदग्राह्यमपि तादृशस्थलमेवेत्यपि बोध्यम्। अत्र च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तो ऽभावाः प्रत्येकं हेतुतावच्छेदकविशिष्टाधिकरणसामान्यान्तर्भावेन तत्प्रतियोगिसामानाधिकरण्यं तादृशा यावन्तो ऽभावाः यद्रूपविशिष्टाधिकरणत्वव्यापकतावच्छेदकप्रतियोगिताकाः तद्रूपवत्त्वमित्यादिकं तादृशाभावे हेतुसामानाधिकरण्यविशेषणाघटितं हेत्वधिकरणे स्वविशिष्टत्वविशेषणाघटितञ्च व्यधिकरणध-

र्मावच्छिन्नाभाववत्त्वं लघुलक्षणं सम्भवतीति बोध्यम् ॥

ननु धूमवान् वह्नेरित्यादावतिव्याप्तिः धूमाभाववान्दरपि अयोगोलकादौ गोत्वाद्यभावरूपप्रतियोगिसमानाधिकरणत्वात् गोत्वाद्यभावस्य तत्प्रतियोगित्वं च धूमाभावे जलवृत्तित्वविशिष्टगोत्वाभावो नास्तीतिप्रतीतिनियामकाभावस्याभावाधिकरणकाभावप्रतियोगिकाभावतया ऽधिकरणीभूतधूमाभावस्वरूपत्वात् जलवृत्तित्वविशिष्टगोत्वाद्यभावस्य शुद्धविशेष्यानतिरिक्तत्वादित्याशङ्क्य जलवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावातिरिक्तत्वाभावस्वरूपतां प्रदर्शयन् तत्स्वरूपतां प्रतिक्षिपति जलेत्यादिना ।

(दी०) जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावस्तु जलत्वाद्यभावो न तु धूमाद्यभावो जलादावपि तदभावप्रत्ययप्रसङ्गात् ॥

(गा०) न च धूमाभावस्य स्वप्रतियोगिनिष्ठव्यापकताघटकव्यापकत्वसम्बन्धान्तर्गतसंयोगसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहात्कथमतिव्याप्तिशङ्केति वाच्यं जलवृत्तित्वविशिष्टगोत्वाभावद्रव्यान्यतराभावस्याप्युक्तयुक्त्या धूमाभावस्वरूपतासम्भवात् संयोगसम्बन्धेन द्रव्यात्मकप्रतियोगिनैव समानाधिकरणत्वात् न चैवं जलवृत्तिद्रव्यमेव तत्प्रतियोगि तस्यैव प्रतियोगितावच्छेदकजलवृत्तित्ववैशिष्ट्याक्रान्तत्वात् तस्य च धूमाभावविशिष्टत्वकवह्निमति वृत्तौ मानाभावान्नातिव्याप्तिः प्रसज्यते यदि च जलवृत्तित्ववैशिष्ट्यम् अन्यतरत्वघटकीभूतभेदप्रतियोगिनि गोत्वाभावत्वावच्छिन्न एव विशेषणं, न त्वन्यतरत्वावच्छिन्ने विशेषणतया प्रतियोगितावच्छेदकमिति जलावृत्तिद्रव्यस्यापि तत्प्रतियोगित्वमित्युच्यते तदा तादृशाभावस्य विशिष्टाभावात्मकतया अन्यतरत्वरूपप्रतियोगितावच्छेदकविशिष्टगोत्वाभावाधिकरणधूमाभावाधिकरणकत्वानुपपत्तिरिति वाच्यं जलवृत्तिद्रव्यं धूमाभावावीदृष्टपादृशहेत्वधिकरणे नियमतो वर्तते तादृशव्यभिचारिहेतुकस्थल एव धूमाभावात्मकनिरुक्तविशिष्टाभावप्रतियोगिद्रव्यसामानाधिकरण्यमादायातिव्याप्तिमाशङ्क्य जलवृत्तीत्यादिग्रन्थस्यावतारणीयत्वात् । न चैवं तादृशान्यतराभावस्यैव धूमाभावस्वरूपताप-

तिक्षेप उचित इति विशिष्टगोत्वाभावस्याभाव इति ग्रन्थासङ्गतिर्दुर्वारैवेति वाच्यम् । एतादृशग्रन्थस्यापि गोत्वाभावप्रतियोगिकाभावत्वेन रूपेण जलवृत्तित्वविशिष्टतादृशान्यतरत्वावच्छिन्नाभावपरत्वात् न चैवमपि अयोगोलकभेदाद्यभावस्यायोगोलकत्वादिरूपभावात्मकस्य स्वनिष्ठजलवृत्तित्वविशिष्टगोत्वाभावाभावस्वरूपताविरहात्तस्य प्रतियोगिसामानाधिकरण्यं न घटत इत्यतिव्याप्त्यप्रसक्तिः साध्यतावच्छेदकसम्बन्धेन व्यापकतायाः लक्षणाघटकत्वं प्रागेव दूषितम् अतो नायोगोलकान्यत्वाद्यभावस्य लक्षणाघटकत्वसम्भव इति वाच्यम् । अयोगोलकभेदाभावादेरपि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसम्भवात् न चैव धूमाभावस्य गोत्वाभावाद्यप्रतियोगिकत्वेऽपि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्तितादवस्थ्यमितिवाच्यम् तादृशप्रतियोगिना स्वप्रतियोगिनिष्ठव्यापकताघटकयावत्सम्बन्धान्तर्गतसंयोगादिना सामानाधिकरण्यविरहात् घटत्वाभाववान् मेयत्वादित्यादावपि घटत्वाभावादिप्रकारकजन्यप्रमाभावस्य यावद्व्यापकताघटकसम्बन्धान्तर्गतविशेष्यतासम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहेणातिव्याप्त्यनवकाशात् । न चैवं जलवृत्तित्वविशिष्टगोत्वाभावद्रव्यान्यतराभावस्य धूमाद्यभावस्वरूपतया संयोगेन प्रतियोगिसामानाधिकरण्यसत्त्वेऽपि धूमत्वाद्यिप्रकारकप्रमाभावस्य यावद्व्यापकताघटकसम्बन्धान्तर्गतविशेष्यतासम्बन्धेन प्रतियोगिसामानाधिकरण्यासम्भवात् धूमवान् वह्नेरित्यादावतिव्याप्त्यसम्भवात्तादृशाभावस्य धूमाभावस्वरूपताप्रतिक्षेपो न युक्त इति वाच्य तादृशाभावस्य तत्स्वरूपत्वे तुल्ययुक्त्या धूमवत्त्वप्रकारकप्रमाभावनिष्ठस्य जलादिवृत्तित्वविशिष्टगोत्वाभावद्रव्यत्वप्रकारकप्रमान्यतराभावस्य तत्स्वरूपतया द्रव्यत्वप्रकारकप्रमाया अपि तत्प्रतियोगित्वेन तयैव समं विशेष्यतासम्बन्धेन तादृशाभावस्य सामानाधिकरण्यसत्त्वादतिव्याप्तिप्रसक्तिरिति । नन्वेवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिर्दुर्वारा उक्ताभावस्य जलत्वाद्यभावस्वरूपत्वे तुल्ययुक्त्या धूमवद्वृत्तित्वविशिष्टतादृशाभावस्य धूमाभावस्वरूपत्वेन द्रव्यसामान्यस्य तत्प्रतियोगित्वानपायात् एव धूमाद्यभावस्य धूमत्वादिना प्रमेयसामान्याभावसमनियतत्वेन त-

दभिन्नत्वोपगमात् प्रमेयमात्रस्यैव तत्प्रतियोगित्वात् यदि च धूमत्वादिना प्रमेयं नास्तीतिप्रतीतौ धूममात्रस्यैव प्रतियोगित्वग्रहः न तु प्रमेयान्तरस्य अथवा प्रतियोगिसामानाधिकरण्यशरीरे न्यूनवृत्तिसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिता निवेशनीया एवं च तादृशप्रतियोगिताको हेतुसमानाधिकरणाभावो ग्राह्यः यावत्प्रमेयनिष्ठप्रतियोगिता च तथाविधधूमत्वावच्छिन्नैव तादृशधर्मानवच्छिन्ना च धूमादिमात्रवृत्तिप्रतियोगितैव तदाश्रयसामानाधिकरण्यं च नायोगोलकाद्यन्तर्भावेनेति मन्यते तथापि धूमाभावस्य वह्निधूमोभयाभावसमनियततया तदभिन्नत्वेन वह्नेरपि तदभावप्रतियोगितया अयोगोलकान्यत्वाभावस्यायोगोलकान्यवृत्तित्वविशिष्टाकाशाभावाभावसमनियततया तदभिन्नत्वेनाकाशाभावस्यापि तत्प्रतियोगितया .धूमवत्त्वादिप्रकारकप्रमाभावस्य धूमवद्विशेष्यकत्वविशिष्टद्रव्यत्वादिप्रकारकप्रमाभावसमनियततया द्रव्यत्वप्रकारकप्रमाया अपि तत्प्रतियोगित्वेन धूमभेदस्य धूमत्वसत्त्वोभयत्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन सन्मात्रस्यैव तत्प्रतियोगितया हेतुसमानाधिकरणतादृशाभावानां स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन दर्शितप्रतियोगिभिः सामानाधिकरण्यमक्षतमेवेत्यतिव्याप्तिः । अथ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका या या प्रतियोगिता तन्निरूपकाभावानां स्वविशिष्टयावद्धेत्वधिकरणावच्छेदेन तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यं विवक्षणीयमिति नातिव्याप्तिरिति चेत्तर्हि तादृशी या या प्रतियोगिता तदाश्रयसामानाधिकरण्यं यत्र कथंचिद्यावदधिकरणान्तर्भावेन तत्सामत्ये तावतैव सामञ्जस्ये ऽभावे यावत्त्वस्य तत्तत्प्रतियोगितानिरूपकत्वस्य हेतुसामानाधिकरण्यविशेषणस्य हेत्वधिकरणे च स्वविशिष्टत्वविशेषणस्य वैयर्थ्यप्रसङ्गः एवं सर्वत्र हेतुसमानाधिकरणमुभयत्वाद्यवच्छिन्नप्रतियोगिताकं साध्याद्यभावमादाय लक्षणासमन्वयसम्भवाद्व्याधिकरणधर्मावच्छिन्नाभावस्याप्रामाणिकत्वेऽपि क्षतिविरहेण एतादृशव्याप्तिलक्षणाशङ्कायां प्रतियोग्यवृत्तित्वेत्यनेन तादृशाभावखण्डनस्यासङ्गत्यापत्तेरित्यतो लक्षणान्तरमाह यत्समानाधिकरणानामिति ॥

( टी० ) यत्समानाधिकरणानां साध्यतावच्छेदकावच्छि-

न्व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं तत्त्वं वा तत् । ज्ञेयत्वत्वादिना वाच्यत्वादीनामभावः सुलभ एव शेषं दर्शितदिशावसेयमत आह प्रतियोग्यवृत्तिश्चेति ॥

( गा० ) अत्रापि यत्तत्पदयोः पूर्ववद्यत्सद्भावाच्छिन्नपरता बोध्या वह्निमान् धूमादित्यादौ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावा वह्नित्वेन घटाद्यभावा एव तेषां च स्वविशिष्टयावदूस्वधिकरणान्तर्भावेण वह्नित्वादिरूपप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणतया लक्षणसमन्वयः अत्रापि प्रतियोगिसामानाधिकरण्यानिवेशे उक्तक्रमेण धूमवान् वह्नेरित्यादावतिव्याप्तिरतः प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशः तथा च धूमाद्यभावानां वह्निधूमोभयत्वाद्यवच्छिन्नप्रतियोगिताश्रयवह्न्यादिना सामानाधिकरण्यसत्त्वेऽपि प्रतियोगितावच्छेदकीभूततादृशोभयत्वावच्छिन्नसामानाधिकरण्याभावान्नातिव्याप्तिः द्रव्यत्वेन धूमो नास्तीतिप्रतीत्या च द्रव्यत्वादेः प्रतियोगितावच्छेदकत्वं न भासते अपि तु धूमत्वादेरेव द्रव्यत्वादेस्तु तृतीयोल्लिखितवैशिष्ट्यमात्रं धूमादौ भासत इत्युपेयते अतस्तादृशप्रतीतिविषयाभावस्य धूमाभावादिसमनियततया तत्प्रतियोगितावच्छेदकं द्रव्यत्वादिकमपि धूमाद्यभावप्रतियोगितावच्छेदकमिति प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविवक्षणेऽप्यतिव्याप्तेर्दुर्वारतेत्याशङ्काया नावकाशः । एतेन धूमकालावच्छिन्नधूमवद्वृत्तित्वविशिष्टस्य वह्नित्वरूपेण योऽभावस्तस्य धूमाभावसमनियततया वह्नित्वमपि धूमाभावप्रतियोगितावच्छेदकमित्यपास्तं वह्नित्वेन तादृशधूमवद्वृत्तित्वविशिष्टं नास्तीतिप्रतीतौ तादृशधूमवद्वृत्तित्ववैशिष्ट्यस्यैव प्रतियोगितावच्छेदकत्वावगाहित्वोपगमात् अन्यथा धूमवद्वृत्तित्वविशिष्टवह्निमति धूमशून्ये वह्नित्वरूपप्रतियोगितावच्छेदकविशिष्टवह्निरूपप्रतियोगिसत्त्वेन तादृशप्रतीत्यनुदयप्रसङ्गात् अस्तु वा तादृशवैशिष्ट्यसहितस्य वह्नित्वस्य तथात्वं तावतापि न क्षतिः प्रतियोगितावच्छेदकपदस्य प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणपरत्वात् । अथैवमपि घटभिन्नत्वेन धूमघटान्यतरन्नास्तीत्यत्र घटधूमान्य-

तदत्वमात्रस्य न प्रतियोगितावच्छेदकत्वमानं धूमशून्ये घटवति तादृशप्रतीत्यनुपपत्तेः नापि घटभिन्नत्वसहितस्य तस्य गौरवात् किन्तु घटभिन्नत्वमात्रस्यैव एवं च तादृशाभावस्य धूमाभावसमनियततया धूमाभावस्यापि घटभिन्नत्वं प्रतियोगितावच्छेदकम् एवं भेदत्वेनायोगोलकभेदघटात्यन्ताभावान्यतराभावस्यायोगोलकभेदत्वावच्छिन्नाभावसमनियततया भेदत्वमप्ययोगोलकभेदाभावप्रतियोगितावच्छेदकम् । एवं द्रव्यत्वभिन्नत्वेन द्रव्यत्वधूमत्वान्यतराभावस्य धूमभेदसमनियततया द्रव्यत्वभिन्नत्वमपि धूमभेदप्रतियोगितावच्छेदकं तादृशधर्मावच्छिन्नानां चायोगोलकादावपि सत्त्वादतिव्याप्तिस्तदवस्थैवेति चेत् तर्हि प्रतियोगितावच्छेदकेत्यनेन प्रतियोगिताया न्यूनवृत्तिभिन्नं सद्यदवच्छेदकं तदेव विवक्षणीयं न्यूनवृत्तित्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वसमानाधिकरणत्वं, तद्भिन्नत्वं च व्यधिकरणधर्मसाधारणं घटधूमान्यतरादिनिष्ठप्रतियोगितायाश्च न्यूनवृत्त्येव घटभिन्नत्वादिकं न च वह्नित्वेन प्रमेयं नास्तीत्यत्र प्रमेयसामान्यवृत्तित्वेन वह्नित्वावच्छिन्नप्रतियोगिता या प्रतीयते वह्निर्नास्तीत्यत्रापि वह्निवृत्तितया सैव प्रतीयत इत्युपेयते एकधर्मावच्छिन्नविभिन्नप्रतियोगिताकल्पने गौरवात् तथा च कालिकादिसम्बन्धेन हेतुसमानाधिकरणवह्नित्वावच्छिन्नवह्न्यभावप्रतियोगिताया न्यूनवृत्तिभिन्नावच्छेदकाप्रसिद्ध्याऽव्याप्तिरिति वाच्यं वह्नित्वेन प्रमेयं नास्तीतिप्रतीतौ प्रमेयत्वविशेषितस्य वह्नेरेव प्रतियोगित्वं भासते नान्यस्येत्यभ्युपगम इति तादृशाभावप्रतियोगितायाः प्रमेयसामान्यवृत्तित्वस्यैवासिद्धेः । अथवा प्रतियोगितावच्छेदकपदं प्रतियोगिताया अनतिरिक्तवृत्ति सद्यदवच्छेदकं तत्परम् अनतिरिक्तवृत्तित्वं च स्वव्यापकतत्कान्यतरत्तरसामानाधिकरण्योभयाभावत्वं तथात्वं च व्यधिकरणधर्मसाधारणमपि घटधूमान्यतरादिनिष्ठप्रतियोगितायाश्चातिरिक्तवृत्त्येव घटभिन्नत्वादिकं तादृशप्रतियोगिताया यावद्घटभिन्नादिसाधारण्यप्रसक्तेः वह्नित्वाद्यवच्छिन्नप्रतियोगितायाश्च प्रमेयसामान्यवृत्तित्वेऽपि तदनतिरिक्तवृत्त्यवच्छेदकं वह्नित्वादिकमेव स्वव्यापकतत्कान्यतरस्याप्रसिद्धत्वादिति नानुपपत्तिगन्धोऽपीति प्रति-

योगितायाः स्वन्यूनवृत्तिभिन्नं यदवच्छेदकं तदवच्छिन्नसामानाधिकरण्यं वा विवक्षितं न्यूनवृत्तित्वं सामानाधिकरण्यघटितमिति व्यधिकरणधर्मसंग्रहः तत्प्रतियोगितासमानाधिकरणं सद्यत्तत्प्रतियोगितानिरूपकाभाववद्वृत्तितावच्छेदकं तदन्यतत्प्रतियोगितावच्छेदकं वा निवेश्यम् एतल्लक्षणे साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावनिवेशे वह्निमान् धूमादित्यादौ वह्नित्वादिना घटाद्यभावसमनियतत्वेन घटत्वादिना वह्न्याद्यभावस्य हेत्वधिकरणावच्छेदेन वह्नित्वावच्छिन्नरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यसम्भवेऽपि वह्निघटोभयत्वावच्छिन्नाभावस्यापि तथाविधतया तस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्याभावेनासम्भव इत्यतो व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमुक्तम् अत एव व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमे हेतुसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावस्याप्रसिद्ध्या ऽसम्भवः अयमात्मा ज्ञानादित्यादौ केवलान्वयिसाध्यके चाव्याप्तिर्वा भवतीत्यभिप्रायकतया प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थसङ्गतिः न चायमात्मा ज्ञानादित्यादौ पूर्वक्षणावृत्तित्वविशिष्टात्मत्वत्वादेरात्मत्वादिव्यापकतावच्छेदकतया तदवच्छिन्नाभावस्योत्तरक्षणावच्छेदेन हेतुसमानाधिकरणतया इदं वाच्यं ज्ञेयत्वात् गुणत्वाद्दित्यादावपि एतत्क्षणान्यक्षणवृत्तित्वविशिष्टवाच्यत्वत्वादेर्विषयतासम्बन्धेन जन्यज्ञानत्वविश्वविषयकजन्यज्ञाननिष्ठतद्व्यक्तित्वादेः साध्यव्यापकतावच्छेदकतया तदवच्छिन्नाभावस्य चैतत्क्षणावच्छेदेन प्रलयान्तर्भावेन च हेतुसमानाधिकरणतया व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि न तादृशाभावाप्रसिद्धिरिति वाच्यं प्रतियोगिवैयधिकरण्याघटितव्यापकताया एव निवेशनीयतया निरुक्तधर्मावच्छिन्नाभावानामपि साध्यवति सत्त्वेन तादृशधर्माणां व्यापकतावच्छेदकत्वासम्भवात् न च साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव एव किं न निवेश्यते प्रमेयसाध्यकस्थले संयोगसमवायादिरूपव्यधिकरणसम्बन्धावच्छिन्नप्रमेयत्वादिनिष्ठप्रतियोगितावच्छेदकताकाभावमादाय लक्षणसमन्वयादिति वाच्यं तथा सति लघुरूपसमनियतगुरु-

धर्मस्याभावप्रतियोगितानवच्छेदकत्वेन तद्रूपावच्छिन्नसाध्यके तथाविधाभावाप्रसिद्ध्या ऽव्याप्त्यापत्तेः। अत्र च ज्ञानवानात्ममहाकालान्यतरत्वादित्यादावतिव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धेन व्यापकत्वं तेनैव सम्बन्धेन प्रतियोगिसामानाधिकरण्यं विवक्षणीयं महाकालान्यत्वविशिष्टघटादिसाध्यकस्थले कालत्वादेर्व्यभिचारित्वेऽपि तत्र हेतुसमानाधिकरणस्य महाकालान्यत्वविशिष्टघटाद्यभावस्य प्रतियोगितावच्छेदकविशिष्टसामानाधिकरण्याभावेनातिव्याप्त्यभावात् तादात्म्यसम्बन्धेन प्रमेयसाध्यके तादृशसम्बन्धेन साध्यं प्रति तादृशसम्बन्धेन व्यापकतायामवच्छेदकीभूतो यः प्रमेयत्वादिरूपकेवलान्वयिधर्मस्तदवच्छिन्नस्य संयोगसमवायविषयितादिसम्बन्धावच्छिन्नाभावमादायैव लक्षणसमन्वयसम्भवात् अभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रयोजनविरहेणानिवेशात् तन्निवेशेऽपि व्यधिकरणसमवायित्वावच्छिन्नप्रतियोगितावच्छेदकताकप्रमेयत्वादिमद्भेदमादाय लक्षणसमन्वयसम्भवात् समवायितया वाच्यत्ववद्भेदोऽपि द्रष्टव्य इति मिश्रोक्तेस्तादृशभेदस्यापि सोन्दडसम्मतत्वादिति केचित् तदसत् घटत्वाभाववान् प्रमेयत्वादित्यादौ पूर्वोक्तदिशाऽतिव्याप्तेः स्वप्रतियोगितावच्छेदकावच्छिन्नव्यापकताघटकयावत्सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशनमपि न सत् तथा सति इदं वाच्यं ज्ञेयत्वादित्यादौ विषयतासंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि लक्षणसामञ्जस्यात् प्रतियोग्यवृत्तिश्चेति ग्रन्थावतारासङ्गतेः एतेन विषयतासम्बन्धेन व्यापकता तेन सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं विवक्षणीयं साध्यवत्त्वप्रकारकप्रमात्वाद्यवच्छिन्नाभावमादाय सर्वत्र लक्षणसङ्क्रमनमतिव्याप्तिवारणं चेति निरस्तं ज्ञेयत्वत्वादिना वाच्यत्वादीनामभाव इत्येतादृशग्रन्थासङ्गतेश्च ज्ञेयत्वस्य ज्ञानविषयतात्मकस्य विषयतासम्बन्धेनाव्यापकत्वात् किन्तु स्वप्रतियोगितावच्छेदकसम्बन्धेन व्यापकत्वं तेनैव प्रतियोगितावच्छेदकावच्छिन्नभावसामानाधिकरण्यं विवक्षणीयं व्यभिचारिणि साध्याद्यभावस्य किञ्चिद्विशिष्टस्याभाव-

निष्ठप्रतियोगितावच्छेदकविशेषणताविशेषेण तादृशाभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्येऽपि तदवच्छिन्नभावसामानाधिकरण्यासम्भवान्नातिव्याप्तिः किञ्चिद्विशिष्टस्य स्वस्य यो ऽभावः सामानाधिकरण्यसम्बन्धेन तद्विशिष्टस्याभावश्च स्वसमनियतोऽपि स्वस्मादतिरिक्त एव अभावमात्रप्रतियोगिकाभावस्यैव तदभावप्रतियोगिरूपतायाः सिद्धत्वात् अतो धूमाद्यभावस्य सामानाधिकरण्यसम्बन्धेन ह्रदादिवृत्तित्वविशिष्टधूमाद्यभावाभावविशिष्टत्वावच्छिन्नभावसामानाधिकरण्येऽपि न क्षतिः। यावदभावानामित्यत्राभावपदं भावभिन्नपरम् अतः कालिकादिसम्बन्धेन हेतुसमानाधिकरणस्य वह्न्यादिव्यापकतावच्छेदकरूपावच्छिन्नह्रदत्वाद्यभावाभावस्य ह्रदत्वादेः स्वप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यासम्भवेऽपि न क्षतिः न च ह्रदत्वाभावाभावस्य ह्रदत्वाभावप्रकारकप्रमाविषयत्वाभावसमनियततया स्वप्रतियोगितावच्छेदकतादृशप्रमाविषयत्वत्वावच्छिन्नभावसामानाधिकरण्यमस्त्येवेति वाच्यं तस्य भावतया भिन्नत्वात् एवं सति कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगात्मकाभावस्य लक्षणाघटकत्वेऽपि विवक्षणीयस्वविशिष्टत्वस्य सार्थकता पूर्ववद्भावनीया न च भावभिन्नाभावविवक्षणेऽपि अयमात्माज्ञानादित्यादौ दैशिकविशेषणतया हेतुसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकीभूतकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावत्वावच्छिन्नप्रतियोगिताकस्याकाशाभावादेः स्वप्रतियोगितावच्छेदकावच्छिन्नभावसामानाधिकरण्यासम्भवादत्र लक्षणसमन्वयासम्भव इति वाच्यम् आकाशाभावीयतादृशाभावत्वस्य दैशिकविशेषणतया साध्यवृत्तेराकाशाभावस्य प्रतियोगितावच्छेदकतया साध्यव्यापकतावच्छेदकत्वविरहेण लक्षणाघटकत्वात् अस्तु वा व्यापकतावच्छेदकरूप एव भाववृत्तित्वविशेषणम् इदं वाच्यं ज्ञेयत्वादित्यादौ च व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावस्य प्रतियोगितावच्छेदकं न प्रतियोगितावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकमतस्तादृशाभावस्य न लक्षणाघटकतेति नोक्तप्रतियोग्यवृत्तिश्चेत्यादिग्रन्थासङ्गतिरिति न च प्रतियोगितावच्छेदकसम्बन्धेन व्यापकताविवक्षणेऽपि इदं वाच्यं ज्ञेयत्वा-

दित्यादौ विषयितासम्बन्धेन वाच्यत्वत्वादिमतो ज्ञानादेर्यः स्वरूपसम्बन्धेनाभावस्तस्य स्वप्रतियोगितावच्छेदकीभूतस्वरूपसम्बन्धघटितवाच्यत्वनिष्ठव्यापकतावच्छेदकवाच्यत्वत्वाद्यवच्छिन्नप्रतियोगिताकतया हेतुसमानाधिकरणतया स्वरूपसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नवाच्यत्वादिसमानाधिकरणतया च तत्र व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि तमादायैव लक्षणसामञ्जस्यमिति तादृशग्रन्थासङ्गतितादवस्थ्यमिति वाच्यं धूमवान् वह्नेरित्यादौ संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाद्यभावस्य कालिकसम्बन्धेन धूमत्वादिविशिष्टवह्न्यादिना समं संयोगेन समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकस्यायोगोलकावृत्तिजातित्वावच्छिन्नाभावस्य कालिकसम्बन्धेन तादृशजातित्वादिविशिष्टायोगोलकीयरूपादिना समं समवायेन स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्य धूमवत्त्वप्रकारकप्रमाविषयत्वाद्यभावस्य कालिकसम्बन्धेन तादृशविषयत्वत्वादिविशिष्टसंयोगादिध्वंसेन अनुयोगितासम्बन्धेन तादृशविषयत्वत्वादिविशिष्टतादृशविषयत्वत्वाद्यभावेन च समं स्वरूपसम्बन्धेन विषयतासम्बन्धावच्छिन्नप्रतियोगिताकधूमवत्त्वप्रकारकप्रमाद्यभावस्य विषयितासम्बन्धेन कालिकसम्बन्धेन वा तादृशप्रमात्वादिविशिष्ट मदयोगोलकादिविषयकं ज्ञानं तेन समं विषयतासम्बन्धेन सामानाधिकरण्यसत्त्वादतिव्याप्तेर्वारणाय प्रतियोगितावच्छेदकताघटकसम्बन्धेनैव प्रतियोगितावच्छेदकवैशिष्ट्यस्य विवक्षणीयतया वह्निमान् धूमादित्यादौ विषयितासम्बन्धेन द्रव्यत्वत्वादिमतः समवायसम्बन्धावच्छिन्नाभावस्य स्वप्रतियोगितावच्छेदकसमवायादिघटितद्रव्यत्वादिनिष्ठव्यापकतायां स्वरूपसम्बन्धेनावच्छेदकीभूतो यो द्रव्यत्वत्वादिस्तदवच्छिन्नप्रतियोगिताकस्य स्वप्रतियोगितावच्छेदकताघटकविषयितासम्बन्धेन प्रतियोगितावच्छेदकविशिष्टज्ञानादिना समं हेत्वधिकरणे प्रतियोगितावच्छेदकसमवायादिना सामानाधिकरण्यं न सम्भवतीति व्यापकतावच्छेदकतायामपि स्वप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्यावश्यं निवेशनीयत्वेन इदं वाच्यं ज्ञेयत्वादित्यादौ दर्शिताभावानां लक्षणाघटकत्वादिति दिक्। न चात्र लक्षणे समवायित्वादिना वाच्यत्वाद्यभावोऽसमवायित्वादिरूप-

प्रतियोगितावच्छेदकस्य वाच्यत्वादिव्यापकतानवच्छेदकत्वाद्वाच्यत्वादिसाध्यकस्थले न तादृशाभावानां लक्षणघटकता तथा च तादृशाभाव एव दुर्लभ इत्यत आह ज्ञेयत्वत्वादिनेति । वाच्यत्वादीनामित्यादिपदाद् घटादेरपि परिग्रहः । शेषमिति स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविनिवेशन हेतुसामानाधिकरण्यशरीरे सम्बन्धविशेषनिवेशनं तत्प्रयोजनं चेत्यर्थः । अत्र च निरुक्ताभावेषु स्वविशिष्टहेत्वधिकरणसामान्यान्तर्भावेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशापेक्षया प्रतियोगिवृत्तित्वमेव निवेशयितुमुचितं सद्धेतौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकानां तादृशाभावानां केवलान्वयितया प्रतियोगिन्यपि वृत्तेर्लक्षणसमन्वयसम्भवाद्वह्निमान् धूमादित्यादौ कालिकादिसम्बन्धेन हेतुसमानाधिकरणरूपान्यत्वप्रकारकप्रमाविषयत्वाद्यभावस्य दैशिकविशेषणतया हेतुसामानाधिकरण्यनिवेशनेन वह्न्यादिभेदस्य प्रतियोगितावच्छेदकतादात्म्यसम्बन्धघटितसाध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविरहेण लक्षणाघटकतया प्रतियोग्यवृत्तित्वेऽपि न क्षतिः । कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगादेरुक्तरीत्या व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहेण दैशिकविशेषणतया हेतुसामानाधिकरण्यविरहेण भावभिन्नत्वविरहेण च लक्षणाघटकतया प्रतियोग्यवृत्तित्वेऽपि न क्षतिः । धूमवान् वह्नेरित्यादौ धूमाद्यभावस्य प्रतियोगिवृत्तित्वेऽपि अयोगोलकान्यत्वादिप्रकारकप्रमाविषयत्वाभावस्य भावप्रतियोगिकतया अयोगोलकत्वाद्यतिरिक्तस्य प्रतियोगिन्यवृत्तित्वान्नातिव्याप्तिरित्यवधेयम् (१) ॥

---

(१) नन्वयोगोलकान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्यायोगोलकावृत्तित्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन तादृशाभावप्रतियोग्ययोगोलकावृत्तौ अयोगोलके अयोगोलकान्यत्वप्रकारकप्रमाविशेष्यत्वाभावसत्त्वादतिव्याप्तिरिति चेन्न । हेतुसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकायोगोलकत्वप्रकारकप्रमाविषयत्वाभावत्वावच्छिन्नप्रतियोगिताकस्यायोगोलकत्वप्रकारकप्रमाविषयत्वस्वरूपाभावस्याभावमात्रवृत्तिप्रतियोगिताकत्वेन स्वसमनियतादपि भाववृत्तिप्रतियोगिताकत्वेनातिरिक्तादयोगोलकावृत्तित्वावच्छिन्नाभावादतिरिक्तस्य यावदन्तर्गतस्य प्रतियोगिवृत्तित्वविरहेणातिव्याप्तिविरहात् । हेत्वधिकरणवृत्तित्वं प्रतियोगिवृत्तित्वं च तादृशाभावत्वरूपेण बोध्य तेनाधिकरणस्वरूपाभावमादाय कृताव्याप्त्यतिव्याप्त्योर्नावकाशः । एवमयोगोलकभे-

चक्रवर्तिलक्षणमाह केचित्त्विति ।

(दी०) केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगितायाः अनवच्छेदकं हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगिव्यधिकरणस्य वा अभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः एवञ्च व्याप्तेरव्यभिचारिसम्बन्धरूपतापि सङ्गच्छते । हेतौ साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वस्यैव साध्यतावच्छेदके हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात् ॥

(गा०) व्याप्यवृत्तेरिति सद्धेतौ साध्याप्रसिद्धघटकीभूतादिना साध्याभाव एव लक्षणघटकः तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाल्लक्षणसमन्वयः व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यापि लक्षणघटकत्वान्नातिव्याप्तिः कपिसंयोगी एतद्वृक्षत्वादित्यादौ अव्याप्तेर्वारणाय व्याप्यवृत्तेरिति । व्याप्यवृत्तित्वं च निरवच्छिन्नवृत्तिकत्वं न तु अवच्छिन्नवृत्तिकान्यत्वं कपिसंयोगी सत्त्वादित्यादौ कपिसंयोगत्वावच्छिन्नकपिसंयोगाभावादेर्द्रव्ये ऽवच्छिन्नवृत्तिकतया तदन्यत्वाभावात् घटत्वादिना साध्याभावस्यैव लक्षणघटकतयातिव्याप्त्यापत्तेः निरुक्तव्याप्यवृत्तित्वविशिष्टस्य हेत्वधिकरणवृत्तित्वं बोध्यम् । अन्यथा कपिसंयोगी एतत्त्वादित्यादौ कपिसंयोगसामान्याभावस्य द्रव्ये हेतुसमानाधिकरणतया गुणादौ च निरवच्छिन्नवृत्तिकतया तमादायाव्याप्तिवारणासम्भवात् हेत्वधिकरणनिरूपितनिरवच्छिन्नाधेयतावत्त्वं हेत्वधिकरणनिष्ठनिरवच्छिन्नाधिकरणताकत्वं वा इत्युभयपर्यवसितार्थः । केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणसाध्याभावस्येति समुदायस्य हेत्वधिकरणे व्याप्यवृत्तिर्यः साध्याभावस्तस्येत्यर्थः हेत्वधिकरणे व्याप्यवृत्तित्वं च हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानव-

दत्वेन प्रमेयसामान्याभावीयप्रतियोगितायाः यदि यावत्प्रमेयवृत्तित्वं विवक्ष्यते तदा प्रतियोगितावच्छेदकसमानाधिकरणत्वमेव विवक्षणीयमित्यर्थेऽस्य इति १ पुस्तके आधिकः पाठः ।

च्छेदकं यदभावनिष्ठं तद्व्यक्तित्वं तत्त्वं न च विशिष्टसत्तावान् जातेरित्यादौ गुणादिनिष्ठसत्तादिरूपाभावप्रतियोगिताया विशिष्टसत्ताद्यभावनिष्ठतद्व्यक्तित्वस्यावच्छेदकत्वात् विशिष्टसत्त्वाद्यभावस्य व्याप्यवृत्तित्वानुपपत्तिः यदभावाभावत्वावच्छिन्नानधिकरणत्वं हेतुमतस्तत्त्वमितिविवक्षणे व्यधिकरणधर्मावच्छिन्नाभावासङ्ग्रहप्रसङ्गस्तदभावाप्रसिद्धेरिति वाच्यं यत्किञ्चिद्धेत्वधिकरणवृत्तितावच्छेदकानुयोगितानिरूपकतानवच्छेदकं यदभावत्वं तत्त्वस्य विवक्षितत्वात् गुणे गुणान्यत्वविशिष्टसत्ताभावो नास्तीत्यप्रत्ययेन विशिष्टसत्ताभावत्वाद्यवच्छिन्ननिरूपितानुयोगिताविशिष्टायाः सत्ताया गुणादिवृत्तितानभ्युपगमेन विशिष्टसत्त्वाद्यभावस्य व्याप्यवृत्तितानिर्वाहादित्याहुः । ननु संयोगिभिन्नं प्रमेयत्वादित्यत्रातिव्याप्तिः संयोगिभेदाभावस्य तद्भेदप्रतियोगितावच्छेदकीभूतसंयोगात्मकस्याव्याप्यवृत्तित्वेन लक्षणघटकाभावाव्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसङ्गमनादिति चेन्न संयोगिभेदस्य व्याप्यवृत्तित्वे तस्य द्रव्यत्वसंयोगप्रकारकप्रमाविशेष्यत्वाद्यवच्छिन्नभेदसमनियततया तदभिन्नत्वेन तद्भेदप्रतियोगितावच्छेदकद्रव्यत्वादिकमपि संयोगिभेदाभावः तस्य हेत्वधिकरणे व्याप्यवृत्तितया तत्प्रतियोगितावच्छेदकत्वस्य च साध्यतावच्छेदके सत्त्वेनातिव्याप्त्यनवकाशात् एवं द्रव्यान्यत्वविशिष्टसत्ताभाववान् द्रव्यत्वादित्यादौ व्याप्यवृत्तेः सत्तारूपाभावस्य प्रतियोगितावच्छेदकं साध्यतावच्छेदकमित्यव्याप्तिरित्यपि नाशङ्कनीयं सत्तादिसत्त्वेऽपि द्रव्यादौ द्रव्यान्यत्वविशिष्टसत्ताभावो नास्तीत्यादिप्रत्ययानुदयात् विशिष्टनिरूपिताधिकरणताविशेषस्यैव विशिष्टाभावाभावत्वोपगमात् तावतापि नाभावाभावस्य प्रतियोगिरूपताक्षतिः विशिष्टाभावस्य विशिष्टाधिकरणत्वाभावसमनियतत्वेन तदभिन्नतया विशिष्टसत्ताधिकरणताया अपि विशिष्टाभावप्रतियोगित्वात् । परे तु संयोगत्वेन संयोगनिरूपिताधिकरणतायाः किञ्चिदवच्छिन्नत्वेऽपि संयोगिभेदाभावत्वेन तन्निरूपिताधिकरणता निरवच्छिन्नैव द्रव्ये संयोगिभेदस्याप्रत्ययात् अवच्छेदकमनन्तर्भाव्य तदभावत्वावच्छिन्नवत्ताप्रतीतेः एवं द्रव्यादौ सत्तात्वावच्छिन्नसत्ताद्यधिकरणतासत्त्वेऽपि द्रव्यान्यत्वविशिष्टसत्ता-

त्वादिनैव तदवच्छिन्नप्रतियोगिताकाभावाभाववत्त्वेनापि न वृत्तिः तत्र विशिष्टाभावो नास्तीत्यप्रत्ययात्तथा च साध्यनिष्ठयादृशप्रतियोगिताकाभावत्वावच्छिन्ननिरूपितानवच्छिन्नाधिकरणता हेत्वधिकरणवृत्तित्वादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदके निवेश्यमिति न कश्चिद्दोष इत्याहुः। अथात्र हेत्वधिकरणवृत्तित्वं यदि येन केनचित्सम्बन्धेन तदा कालिकसम्बन्धेन धूमाधिकरणवृत्तिवह्नित्वाद्यवच्छिन्नवह्न्यभावादिकमादायाव्याप्तिः यदि च कालिकसम्बन्धेन काले वह्न्यभावादेर्वृत्तिर्वह्न्यनधिकरणदेशावच्छिन्नैवेति नासौ हेत्वधिकरणे निरवच्छिन्नवृत्तिक इति मन्यते तथापि सत्तावान् जातेरित्यादौ विषयितासम्बन्धेन हेतुमति ज्ञानादौ वर्तमानसाध्याभावमादायाव्याप्तिर्दुर्वारैव दैशिकविशेषणतासम्बन्धेन हेत्वधिकरणवृत्तित्वनिवेशे च घटत्वाभावसाध्यके व्यभिचारिण्यतिव्याप्तिः तत्र समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य भावरूपसाध्याभावस्य तेन सम्बन्धेनावृत्तेर्व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात् एवं कालिकसम्बन्धावच्छिन्नप्रतियोगिताके आकाशाभावाभावे साध्ये आत्मत्वादिहेतावव्याप्तिः दैशिकविशेषणतया हेतुसमानाधिकरणस्याकाशाभावस्य प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके सत्त्वात् कालिकसम्बन्धेनाकाशाभावरूपप्रतियोगिमत्ताया एव कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावो नास्तीतिप्रत्ययनियामकत्वादाकाशाभावस्यैव तादृशसाध्याभावरूपत्वे बाधकविरहादिति चेन्न स्वीयतादृशप्रतियोगिताश्रयवत्ताज्ञानं प्रति यादृशसम्बन्धेन स्वप्रकारकज्ञानं विरोधि तादृशसम्बन्धेन हेत्वधिकरणवृत्तियोऽभावस्तदीयतादृशप्रतियोगितानवच्छेदकत्वस्यैव निवेशनीयत्वात् आकाशाभावस्य दैशिकविशेषणतासम्बन्धो न दर्शिताकाशाभावाभाववत्ताज्ञानविरोधिज्ञानविषयः अपि तु कालिकसम्बन्ध एव न च तेन सम्बन्धेन स आत्मनि वर्तते अत आकाशाभावीयसाध्यनिष्ठप्रतियोगितया न यादृशप्रतियोगितेत्यनेनोपादानसम्भवः अपि तु व्यधिकरणधर्मावच्छिन्नसाध्याभावीयप्रतियोगिताया एव तादृशाभावज्ञानस्य दैशिकविशेषणतासंसर्गकस्य व्यधिकरणधर्मप्रकारेण साध्यवत्ताधी-

हिन्नं भ्रमं प्रति विरोधित्वात् सामान्यतः प्रतियोगिप्रकारकज्ञाननिवेशे आकाशप्रकारकज्ञानं प्रति दैशिकविशेषणतासम्बन्धेन आकाशाभावप्रकारकज्ञानस्य प्रतिबन्धकतयोक्तदोषतादवस्थ्यमिति यादृशप्रतियोगिताश्रयेत्युक्तं प्रतियोगिताश्रयवत्ताज्ञानं च तत्प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रकारकं ग्राह्यं तेनाकाशत्वेन तादृशसाध्यवत्ताज्ञानं प्रति दैशिकविशेषणतयाकाशाभावप्रकारकज्ञानस्य विरोधित्वेऽपि न क्षतिः एवं च प्रतियोगिताश्रयावगाहित्वनिवेशे प्रयोजनाभावात् यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानं प्रतिबन्धकमित्येव वक्तव्यं साध्यवत्ताज्ञानविरोधित्वं वा एतल्लक्षणे निवेश्यं न चाकाशत्वादिना साध्यवत्ताज्ञानविरोधितामादाय दर्शितदोषतादवस्थ्यं साध्यतावच्छेदकावच्छिन्नप्रकारताकज्ञानविरोधित्वपर्यन्तनिवेशे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभाववत्ताज्ञानस्य व्यधिकरणधर्मादिप्रकारकसाध्यवत्ताज्ञानं प्रत्येव विरोधित्वेन साध्यतावच्छेदकावच्छिन्नप्रकारताकज्ञानाविरोधितया तादृशसाध्याभावाप्रसिद्धेरिति वाच्यं घटत्वविशिष्टवह्निमदित्यादिज्ञानस्यापि साध्यतावच्छेदकावच्छिन्नप्रकारताकत्वस्याधिकं त्वित्यादिन्यायेनाक्षतत्वात् न च तन्मात्रावच्छिन्नप्रकारताकत्वमवश्यं निवेश्यमन्यथा आकाशत्वनिरुक्तसाध्यतावच्छेदकोभयरूपेण साध्यवत्ताज्ञानं प्रति दैशिकविशेषणतया आकाशाभाववत्ताज्ञानस्य विरोधितया तद्दोषतादवस्थ्यमिति कथं व्यधिकरणधर्मावच्छिन्नाभावसङ्ग्रह इति वाच्यम् । प्रतियोगितावच्छेदकमात्रावच्छिन्नप्रकारतानिवेशेऽपि व्यधिकरणधर्मावच्छिन्नाभावासङ्ग्रहात्तदवच्छिन्नप्रकारतामात्रनिवेशे उक्तस्थले आकाशाभावीयदैशिकविशेषणताया वारणासम्भवात् द्वितीयलक्षणे यादृशप्रतियोगितावच्छेदकयादृशप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकातिरिक्तानवच्छिन्नप्रकारताशालिज्ञानं प्रति येन सम्बन्धेन स्वप्रकारकं ज्ञानं विरोधीति विवक्षणवदेतल्लक्षणेऽपि साध्यतावच्छेदकप्रकृतप्रतियोगितावच्छेदकातिरिक्तानवच्छिन्नप्रकारताकज्ञानविरोधितानिवेशेन प्रतीकारसम्भवात् आकाशत्वादेस्तादृशाकाशाभावाभावत्वादिरूपसाध्यतावच्छेदकातिरिक्ततया तदवच्छिन्नप्रकारताकज्ञानविरोधितामादाय

दोषाभावात् । हेतुसमानाधिकरणस्य व्याप्यवृत्तेर्वह्नित्वा-
दिना घटाद्यभावस्य प्रतियोगितावच्छेदकमेवं वह्नित्वादिरूप-
साध्यतावच्छेदकमतः साध्याभावस्येति । यद्यपि वह्नित्वेन
घटाभावादेर्घटत्वेन वह्न्यभावाद्यभिन्नतया तादृशाभावोऽपि सा-
ध्याभाव एव तथापि प्रतियोगितावच्छेदकभेदेनाभावभे-
दमतेनेदं लक्षणं समनियताभावैक्यमताभिप्रायेण चाग्रिमं लक्षणं
अथवा हेतुसमानाधिकरणाभावीयसाध्यनिष्ठप्रतियोगितानवच्छेद-
कत्वनिवेशान्न दोषः वह्नित्वादिना घटाद्यभावस्य घटत्वादिना वह्न्या-
द्यभावाभिन्नत्वेऽपि तदीयघटादिनिष्ठप्रतियोगिताया एव व्यधिकर-
णवह्नित्वाद्यवच्छिन्नत्वेन वह्न्यादेर्निष्ठप्रतियोगितायां वह्नित्वादेर-
नवच्छेदकत्वात् प्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन
निवेशनीया तेन सम्बन्धान्तरावच्छिन्नप्रतियोगिताकसाध्याभाव-
मादाय नासम्भवः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताया अपि स-
म्बन्धावच्छिन्नत्वं व्यवस्थापितमेव प्रतियोगितावच्छेदकत्वं
च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नं ग्राह्यं तेन गुणवान्
द्रव्यत्वादित्यादौ हेतुसमानाधिकरणस्य विषयितया गुणत्वादि-
मतः समवायेनाभावस्य ज्ञानादिनिष्ठप्रतियोगितावच्छेदकत्वेऽपि सा-
ध्यतावच्छेदकस्य न क्षतिः सर्वत्र वह्नित्वावच्छिन्नप्रतियोगि-
ताकसाध्याभावमादायैव एतल्लक्षणसमन्वयसम्भवाद्व्यधिकरणध-
र्मावच्छिन्नाभावानभ्युपगमेऽपि क्षतिविरहेण व्यधिकरणधर्मावच्छि-
न्नाभावखण्डनं मूलकृतोऽकिञ्चित्करमतो लक्षणान्तरमाह हेतु-
समानाधिकरणस्येति । अत्र च व्यधिकरणधर्मावच्छिन्नाभावस्या-
प्रामाणिकत्वे व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्व-
मादायाव्याप्तिवारणायोपात्तस्य सामानाधिकरण्येनेत्यस्य वैयर्थ्या-
[illegible] तादृशाभावखण्डनं सङ्गच्छते । अत्रापि हेतु-
समानाधिकरणस्य व्याप्यवृत्तेरित्यस्य पूर्वोक्त एव पर्यवसितार्थः
व्यावृत्त्यादिकमपि पूर्वोक्तमेव कालिकसम्बन्धावच्छिन्नप्रतियोगि-
ताकाकाशाभावाभाववानात्मत्वादित्यादावव्याप्तिवारणाय पूर्वो-
क्तरीत्यनुसरणे गौरवाद्व्याप्यवृत्तित्वं परित्यज्य प्रतियोगिव्यधिक-
रणत्वेनाभावं विशेषयति प्रतियोगिव्यधिकरणस्य चेति । पूर्वलक्षणे
साध्याभावस्य विशिष्योपादानावस्य च हेत्वधिकरणे साध्यरूपप्र-

तियोगिना सामानाधिकरण्यमावश्यकमेव एकव्यक्तिवृत्तिसाध्यके अतस्तत्र प्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्ध्या ऽव्याप्तिरिति तन्नोक्तं प्रतियोगिव्यधिकरणत्वं च न प्रतियोग्यधिकरणावृत्तित्वं संयोगि सत्त्वादित्यादौ संयोगाद्यभावस्यातथात्वादभावान्तरमादायातिव्याप्तेः किन्तु प्रतियोग्यनधिकरणवृत्तित्वम् । एवं च प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तेरितिदलद्वयपर्यवसितार्थः प्रतियोग्यनधिकरणत्वं च साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणाभिन्नत्वमतः समवायेन ज्ञानादिसाध्यकद्रव्यत्वादिहेतौ नातिव्याप्तिः इत्थं च प्रतियोगिता न सम्बन्धविशेषावच्छिन्नत्वेन विशेषणीया विशेषणताविशेषेणाभावसाध्यके सर्वस्यैवाभावस्य तेन सम्बन्धेन किञ्चिद्विशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरतो यादृशप्रतियोगिताश्रयानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदक यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यमिति सिद्धान्तलक्षणे वक्ष्यमाणरीत्या निष्कर्षणीयम् । अथ विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिवारणाय यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणत्वं हेतुमत इत्यस्यैव वाच्यतया वह्निमान् धूमादित्यादौ वह्नित्वादिना घटाद्यभावीयप्रतियोगिताया लक्षणघटकत्वासम्भवादवच्छेदकवह्नित्वावच्छिन्नानधिकरणत्वस्य हेतुमत्यसत्त्वात् तथा च सामानाधिकरण्येनेत्यनर्थकम् । अत्र केचित् यादृशप्रतियोगितावच्छेदकविशिष्टयादृशप्रतियोगिताश्रयोभयानधिकरणत्वं हेतुमत इत्येव तत्सार्थक्याय विवक्षणीयं दर्शिताभावीयप्रतियोगितावच्छेदकवह्नित्वादिविशिष्टस्य हेतुमति सत्त्वेऽपि तादृशप्रतियोगिताश्रयघटादेरसत्त्वादुभयानधिकरणत्वं हेतुमतो ऽक्षतमेवेति तादृशप्रतियोगितावच्छेदकत्वमादाय दोषवारणाय सामानाधिकरण्येनेत्यस्य सार्थकता न च वह्नित्वेन घटाद्यभावस्य प्रतियोगिता वह्निभिन्नयावद्वृत्तिरेकैव स्वीक्रियते न तु घटादिरूपप्रतियोगिभेदेन भिन्ना अभावस्य प्रतियोगितावच्छेदकस्य चैक्यात् तथा च घटादिनिष्ठप्रतियोगिताश्रयसाधनादेरेव साधनवति सत्त्वात् तादृशप्रतियोगिताश्रयानधिकरणत्वं न तत्रेति न सामानाधिकरण्येनेत्यस्य सार्थकतासम्भवः प्रतियोगिभेदेन प्रतियोगिताभेदे तु म-

ह्वानसीयवह्न्यादिनिष्ठायाः वह्न्यादिसामान्याभावीयप्रतियोगितायाः पर्वतीयवह्न्याद्यवृत्तितया तादृशप्रतियोगिताश्रयानधिकरणत्वस्य हेतुमति पर्वतादौ सत्त्वात् वह्नित्वादेस्तदवच्छेदकत्वमादायाव्याप्तिरिति वाच्यं, यतः प्रतियोगिभेदेन प्रतियोगिताया न भेदः, अपि त्ववच्छेदकभेदेनैव एवमपि वह्निभिन्नवान् घटादित्यादौ वह्निभिन्नत्वेन घटाद्यभावीयप्रतियोगिताया वह्निभिन्ने ऽसम्भावितया तदाश्रयानधिकरणत्वस्य वह्निशून्ये हेतुमत्यक्षततया तादृशप्रतियोगितावच्छेदकत्वमादायाव्याप्तेर्वारकतया सामानाधिकरण्येनेत्यस्य सार्थकता महाकाले घटवान् कालपरिमाणादित्यादौ तु महाकालान्यत्वविशिष्टघटाद्यभावीयप्रतियोगिता तादृशी महाकालस्य महाकालान्यत्वविशिष्टघटत्वाद्यवच्छिन्नाधिकरणताशून्यत्वात्, अथवा वक्ष्यमाणरीत्या साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वयादृशप्रतियोगिताश्रयप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिदनुयोगिकत्वैतत्त्रितयावच्छिन्नाभावस्तदनवच्छेदकत्वमेव वाच्यम्। एवं च तत्रावृत्तिगगनाद्यभावप्रतियोगितैव तादृशी एवं च वह्नित्वादिना घटाद्यभावप्रतियोगितावच्छेदकवह्नित्वादिविशिष्टप्रतियोगिकत्वतदाश्रयवह्निभिन्नप्रतियोगिकत्वयोरेकस्मिन् सम्बन्धे असत्त्वेन तादृशप्रतियोगिताया अपि तथात्वाद्वारकतयापि सामानाधिकरण्येनेत्यस्य सफलत्वमवधेयमित्याहुः। परे तु अत्यन्ताभावस्येवान्योन्याभावस्यापि प्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वोपगमात् पर्वतादौ वह्नित्वविशिष्टाद्यवच्छिन्नजलादिमद्भेदोऽपि प्रामाणिकः एवञ्च स्वावच्छेदकविशिष्टावच्छिन्नस्वाश्रयवन्निष्ठप्रतियोगिताकभेदवद्वृत्त्यधिकरणकं यत् प्रतियोगित्वं तदनवच्छेदकत्वं साध्यतावच्छेदकस्य निर्वचनीयम्। एवञ्च वह्नित्वादिना जलाद्यभावीयप्रतियोगितापि तादृशं स्वं कथितभेदस्य तदवच्छेदकवह्नित्वादिविशिष्टावच्छिन्नतदाश्रयजलादिमन्निष्ठप्रतियोगिताकत्वादतस्तदवच्छेदकत्वमादाय दोषवारणाय सामानाधिकरण्येनेति। संयोगी द्रव्यत्वात् वह्निमान् धूमादित्यादौ संयोगत्ववह्नित्वाद्यवच्छिन्नसंयोगवह्न्याद्यभावप्रतियोगितायाः गुणत्वह्रदत्वाद्यवच्छिन्नसंयोगिपर्वतभेदं संयोगवह्न्याद्यवच्छिन्नगुणह्रदादिभेदं चादाय त-

धात्ववारणायावच्छिन्नान्तनिष्ठान्तयोरुपादानम् । अथवा यादृशप्रतियोगितावच्छेदकावच्छिन्नयादृशप्रतियोगिताश्रयवृत्तिप्रतियोगितावच्छेदकताकभेदवत्त्वं हेतुमतस्तदनवच्छेदकत्वं विवक्षणीयं वह्नित्वादिना घटाद्यभावप्रतियोगिताप्येतादृशी तादृशप्रतियोगितावच्छेदकवह्नित्वाद्यवच्छिन्नतादृशप्रतियोगितासमानाधिकरणप्रतियोगितावच्छेदकताकस्य वह्नित्वेन घटवान्नेति प्रतीतिविषयभेदस्य हेतुमति सत्त्वात् व्यधिकरणधर्मस्यात्यन्ताभावप्रतियोगितावच्छेदकत्ववदन्योन्याभावप्रतियोगितायामप्यवच्छेदकत्वात् अत एव समवायितया वाच्यत्ववद्भेदोऽपि द्रव्य इति मिश्रैरभिहितम् इत्थं च तादृशप्रतियोगितावारणाय सामानाधिकरण्येनेति । हेतुमतो वह्नित्वेन घटवद्भेदवत्त्वं घटत्वेन वह्निमद्भेदवत्त्वं चादाय वह्निनिष्ठप्रतियोगितायास्तादृशत्ववारणाय प्रकृतप्रतियोगितासमानाधिकरणत्वतदवच्छेदकावच्छिन्नत्वयोर्भेदप्रतियोगितावच्छेदकतायां निवेशनं । महाकालो घटवान् कालपरिमाणादित्यादौ महाकालान्यत्वविशिष्टघटाद्यभावीयप्रतियोगिनामादायैव लक्षणसमन्वयः न तु गगनत्वपटत्वादिना घटाद्यभावीयप्रतियोगितां तस्याः गगनाद्यवच्छिन्नघटाद्यवच्छिन्नकालभेदं गगनत्वपटत्वाद्यवच्छिन्नघटाद्यवच्छिन्नभेदं चादाय पूर्वप्रतीकालाभसम्भवेऽपि सामानाधिकरण्येन तदवच्छेदकस्याप्रसिद्धेः । अथवा तादृशप्रतियोगितासामान्ये यद्धर्मसामानाधिकरण्यविशिष्टयद्धर्मावच्छेद्यत्वाभावस्तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिरित्येव विवक्षणीयम् । एवं च व्यधिकरणधर्मावच्छिन्नप्रतियोगितामादायापि लक्षणसमन्वयस्तत्र सम्भवतीत्यवधेयम् । वह्नित्वेन वह्निधूमोभयं नास्तीत्येतादृशप्रतीतिविषयाभावस्य वह्निमान् वह्नित्वेन वह्निधूमोभयवान्नेतिप्रतीतिसिद्धभेदमादाय प्रतियोगिव्यधिकरणत्वेऽपि तस्य प्रतियोगितावच्छेदकत्वं न वह्नित्वमात्रे पर्याप्तं तथा सति वह्नित्वरूपप्रतियोगितावच्छेदकविशिष्टवह्निरूपप्रतियोगिमति तादृशाभावप्रत्ययप्रसङ्गात् किन्तु वह्नित्वतदुभयत्वयोरेव तत्पर्याप्तिरतस्तादृशप्रतियोगितायां समानाधिकरणतयावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः । यदि च तादृशाभावप्रतियोगितावच्छेदकं वह्नित्वादिकमेव न तु प्रतियोगिविशेषणतापन्नमुभयत्वं प्रतियो-

तीति वाच्यम् अन्यूनवृत्तित्वस्य नानापदार्थघटितस्य संसर्गघटकतया भाने भानान्तरविरहेण स्वरूपसम्बन्धावच्छिन्नत्वभानोपगमस्यैवोचितत्वात् इत्युच्यते तदा व्याप्यवृत्तितानिवेशपक्षे वह्नित्वादेर्व्याप्यवृत्तिघटत्वाद्यवच्छिन्नवह्न्याद्यभावप्रतियोगितावच्छेदकतामादायासम्भवप्रसक्तिरित्यालोच्य प्रतियोगिवैयधिकरण्यनिवेशनमनुससार। तदर्थश्च प्रतियोगितावच्छेदकविशिष्टानधिकरणवृत्तित्वमेव तथा सत्यपि हेतुमतो घटत्वादिविशिष्टानधिकरणतया वह्नित्वादिना घटाद्यभावमादाय दोषप्रसक्त्या सामानाधिकरण्येनेत्यस्य सार्थक्यसम्भवात् न च प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकभेदवत्त्वं तथा च संयोगत्वाद्यवच्छिन्नघटादिभेदमादाय संयोगात्यन्ताभावस्य प्रतियोगिवैयधिकरण्यापत्तिः भेदप्रतियोगितावच्छेदकतायां प्रकृतप्रतियोगितासामानाधिकरण्यनिवेशनेन सामञ्जस्यात्। न च (१) परे त्वित्यादिनाभिहितद्वितीयकल्प एव पर्यवसानमिति घटत्वादिना वह्न्याद्यभावस्यापि प्रतियोगिवैयधिकरण्यापत्त्या वह्नित्वादेस्तत्प्रतियोगितायां सामानाधिकरण्येनावच्छेदकत्वप्रयुक्ताव्याप्तिरिति वाच्यं व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताकभेदानभ्युपगमेनैवोक्तापत्त्यसम्भवात् घटत्वेन पटवान्नेत्यादौ घटत्वाद्यवच्छिन्नपटात्यन्ताभावस्यैव विषयत्वोपगमात् प्रतियोगितावच्छेदकं सामानाधिकरण्येन यन्नावच्छेदकं तादृशप्रतियोगितावच्छेदकताक एव वा भेदो निवेश्य (२)। अथैवमपि घटत्वाद्यवच्छिन्नवह्न्याद्यभावस्य घटत्वाद्यवच्छिन्नघटादिभेदमादाय घटत्वाद्यवच्छिन्नघटादिव्यधिकरणस्य प्रतियोगितावच्छेदकत्वमादायाव्याप्तिर्दुर्वारैवेति

(१) न च घटत्वादिना वह्न्याद्यभावस्यापि घटत्वाद्यवच्छिन्नवह्न्यादिभेदमादाय प्रतियोगिवैयधिकरण्यं दुर्वारं तादृशभेदीयवह्न्याद्यधिकरणवृत्तिप्रतियोगितावच्छेदकतायां घटत्वाद्यवच्छिन्नवह्न्यभावीयवह्न्यादिभेदप्रतियोगिताव्यधिकरणघटत्वादेरिव तत्सामानाधिकरण्यवह्नित्वादेरपि सामानाधिकरण्येनावच्छेदकत्वात् [illegible] प्रतियोगितावच्छेदकतावच्छेदकत्वात्। प्रकृतप्रतियोगितासामानाधिकरण्यधर्मावच्छिन्नत्वस्य भेदवारणासम्भवात् इति वह्नित्वादेस्तत्प्रतियोगितायां सामानाधिकरण्येनावच्छेदकतया व्याप्तिरिति वाच्यम्। इति २ पुस्तके पाठान्तरम्।

(२) प्रतियोगितावच्छेदकसामानाधिकरण्येन यावच्छेदकता तादृशावच्छेदकताकप्रतियोगितावच्छेदकताकभेद एव वा निवेश्य इति २ पुस्तके पाठान्तरम्।

चेन्न सामानाधिकरण्येन प्रतियोगितायामवच्छेदकं यद्यत्तद्वच्छिन्नतत्समानाधिकरणप्रतियोगितावच्छेदकताकभेदस्यैव निवेशनीयत्वात् । अथ वह्नित्वादिना घटाभावस्य यदि घटत्वादिकं प्रतियोगितावच्छेदकं तदा घटादिमति तादृशाभावासत्त्वप्रसङ्ग इति वह्नित्वघटत्वायोरेवावच्छेदकतापर्याप्तिरुपगन्तव्या तथा चानवच्छेदकपदस्यावच्छेदकतापर्याप्त्यनधिकरणपरतया व्याख्ययैव तादृशाभावप्रतियोगितामादाय दोषाप्रसक्तेः सामानाधिकरण्येनेत्यस्य वैयर्थ्यमशक्यवारणमेवेति चेन्न प्रतियोगिविशेषणतापन्नतदनापन्नयोरवच्छेदकतावैलक्षण्येन प्रत्येकमेवावच्छेदकतापर्याप्तेः पर्याप्तिविवक्षामात्रेण प्रतीकारासम्भवात् सामानाधिकरण्येनेत्यस्य सार्थक्यं तदपि प्रतियोगिविशेषणतापन्नस्य यादृशं विलक्षणमवच्छेदकत्वं तत्पर्याप्त्यनधिकरणत्वलाभायैव यथा व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव तत्प्रतियोगितावच्छेदकविशिष्टविरोधित्वोपगमेनोक्ताभावस्य घटादिमति वृत्तौ बाधकाभावात् । अस्तु वा विलक्षणावच्छेदकतात्वेन प्रत्येकं पर्याप्तयोरप्यवच्छेदकतयोस्तत्तत्प्रतियोगितावच्छेदकत्वत्वेनानुगतयोः समानाधिकरणव्यधिकरणधर्मद्वये पर्याप्त्यन्तरं तादृशानुगतरूपावच्छिन्नपर्याप्त्यधिकरणधर्मावच्छिन्नस्यैव वाभावविरोधितेति व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगिमति सत्त्वोपपत्तिः । एवं च ह्रदत्ववह्नित्वोभयावच्छिन्नवह्न्यभावमादाय पर्याप्तिनिवेशव्यावृत्तिप्रदर्शनं समानाधिकरणधर्मस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकत्वपक्षीयव्याप्यवृत्तित्वघटितलक्षणाभिप्रायेणेति वदन्ति । अव्यभिचारिसम्बन्धरूपता अवयवशक्त्या अव्यभिचारिसम्बन्धपदप्रतिपाद्यता तथा च पूर्ववद्य तत्पदस्य पारिभाषिकतेतिभावः । ननु साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वरूपस्य व्यभिचारपदार्थस्य तच्छरीरे ऽनिवेशात्कथमेवमित्यत आह हेताविति । यथा हेत्वन्वयिसाध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वं व्यभिचारः तथा साध्यतावच्छेदकान्वयिनो हेतुसमानाधिकरणाभावप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकत्वस्यापि तथात्वादित्यर्थः । वह्नेर्धूमस्य व्य

भिचारीत्यत्राभाववद्वृत्तित्वं व्यभिचारपदार्थः । तदेकदेशे चाभावे षष्ठ्यर्थप्रतियोगिताया निरूपकत्वसम्बन्धेनान्वयः, प्रतियोगितायां चाधेयतासम्बन्धेन धूमस्यावच्छिन्नत्वसम्बन्धेन धूमविशेषणतापन्नधूमत्वस्यान्वय इति धूमत्वावच्छिन्नधूमाभाववद्वृत्तित्वलाभः साध्यतावच्छेदकावच्छिन्नसाध्यान्तर्भावेन न व्यभिचारपदार्थता शक्यानन्त्यप्रसङ्गात् । साध्यबाधकपदवैयर्थ्यापाताच्च । एवं समानाधिकरणाभावप्रतियोगितायां सामानाधिकरण्येनावच्छेदकत्वं व्यभिचारपदार्थः । सामानाधिकरण्ये च व्युत्पत्तिवैचित्र्यात्प्रथमान्तपदोपस्थाप्यस्यापि वह्नेर्निरूपकत्वसम्बन्धेनान्वयः वह्न्याद्यन्तर्भावेनैव वा शक्तिः धूमपदं लक्षणया धूमत्वपरम् । आधेयत्वं षष्ठ्यर्थः अन्वयश्चावच्छेदकत्वे निरूपकत्वमिन् प्रत्ययार्थः । तथा च धूमत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतानिरूपको वह्निरित्यन्वयबोधः । यद्यपि लाघवरूपविनिगमकसत्त्वादभाववद्वृत्तित्व एव व्यभिचारपदशक्तिकल्पनमुचितं तथापि ज्ञेयत्वं वाच्यत्वस्याव्यभिचारीतिप्रामाणिकव्यवहारानुरोधादुपदर्शितगुरुरूपस्यापि व्यभिचारपदार्थत्वमावश्यकं तत्र वाच्यत्वाभावाप्रसिद्ध्या तदभाववद्वृत्तित्वाभावबोधासम्भवात् उक्तरूपस्य व्यभिचारपदार्थत्वे व्यभिचारस्याभावोऽव्यभिचारमित्यव्ययीभावाश्रयणात् । ज्ञेयत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमव्यभिचारपदार्थः । इन् प्रत्ययार्थौ निरूपकत्वं वाच्यत्वपदं वाच्यत्वत्वपरं षष्ठ्यर्थश्चाधेयत्वं तथा च वाच्यत्वत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतानिरूपकं ज्ञेयत्वमित्यन्वयबोधः । अथैवमप्यव्यभिचारिसम्बन्धपदेनोक्तव्याप्तिः कथं लाभः न चाव्यभिचारिपदं तादृशप्रतियोगितानवच्छेदकत्वाश्रयपरं सम्बन्धश्च तदाश्रयसामानाधिकरण्यमिति तल्लाभ इति वाच्यं वह्नित्वं धूमाव्यभिचारीतिप्रयोगाभावात् उक्तधर्मबोधकाव्यभिचारपदसमभिव्याहृतेन्प्रत्ययस्याश्रयत्वाबोधकत्वात् अव्यभिचारपदार्थान्वयितावच्छेदकं यद्रूप तदवच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वबोधकतया व्युत्पत्तिसिद्धत्वात् साध्यतावच्छेदकस्याव्यभिचारिपदार्थत्वे हेतुसमानाधिकरणत्याद्यग्निबोधस्याशक्यत्वा-

श्वेति चेन्न अव्यभिचारिसम्बन्ध इत्यस्य अव्यभिचारिहेतुनिष्ठं साध्यसामानाधिकरण्यमित्यर्थः। एवं च साध्यतावच्छेदकनिष्ठस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतानिरूपकहेतुनिष्ठसाध्यसामानाधिकरण्यमिति पर्यवसितम् उक्तलक्षणस्याप्यत्रैवार्थे तात्पर्यं न तु यथाश्रुतविशेषणविशेष्यभावे तदापन्नस्याव्यभिचारिसम्बन्धपदेन बोधयितुमशक्यतया पारिभाषिकताया दुर्वारत्वात् । न च यद्रूपावच्छिन्नस्य यस्य व्याप्तित्वं तदन्यरूपेण तस्याव्यभिचारिसम्बन्धपदार्थत्वेऽपि न क्षतिरिति वाच्यम् एवं सति साध्याभाववद्वृत्तित्वमात्रस्य व्यभिचारपदार्थत्वेऽपि व्यतिरेकिसाध्यकोक्त्यासरव्यभिचारिसम्बन्धरूपतोपपत्तेरुक्तधर्मस्य व्यभिचारपदार्थत्वव्यवस्थापनानुपयुक्तत्वात् । उक्तलक्षणेऽपि साध्यसामानाधिकरण्यमन्तर्भाव्याव्यभिचारिसम्बन्धरूपताया व्यवस्थापयितुं शक्यत्वात् । साध्यसामानाधिकरण्यानन्तर्भावेऽपि प्रतियोगिसमानाधिकरणस्वसमानाधिकरणनिरुक्तयावदभावकत्वरूपपर्यवसितपूर्वलक्षणार्थस्याव्यभिचारिसम्बन्धरूपतासम्भवात् ॥

( दी० ) अवच्छेदकत्वञ्चेह तत्पर्याप्त्यधिकरणत्वं तेन विशिष्टवह्न्यभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः सत्त्ववति गुणादौ संयोगाद्यभावोऽपि व्याप्यवृत्तिः वक्ष्यमाणं वा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापि बोध्यं भवति च गुणत्वगुणान्यवृत्तित्वद्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकगुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः ॥

' (गा०) अवच्छेदकत्वमिति अनवच्छेदकमित्यत्र यदवच्छेदकपदं तत्तात्पर्यविषयावच्छेदकत्वमित्यर्थः । तत्पर्याप्त्यधिकरणत्वं पर्याप्तिसम्बन्धेनावच्छेदकतावत्त्वं तथा च पर्याप्तिसम्बन्धेनावच्छेदकत्वावच्छिन्नस्य भेदोऽनवच्छेदकपदेन विवक्षित इति भावः । विशिष्टवह्न्यभावस्य प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्येत्यन्वयः । महानसीयत्वादिविशिष्टवह्न्यभावस्य प्रतियो-

गितायां महानसीयत्वसहितवह्नित्वस्यावच्छेदकत्वेऽपि आश्रयतासम्बन्धेनावच्छेदकतावदन्यत्वस्य वह्नित्वे दुर्लभत्वादिति भावः। प्रतियोगिविशेषणतापन्नधर्मान्तरसहितवह्नित्वावच्छिन्नाभावमादाय दोषं प्रदर्श्य प्रतियोगिविशेषणतापन्नधर्मस्यैव प्रतियोगितावच्छेदकत्वं प्रतीयत इति नियमानभ्युपगन्तुर्व्यधिकरणधर्मावच्छिन्नाभाववादिनः प्रतियोग्यवृत्तिधर्मसहितप्रतियोगिवृत्तिधर्मपर्याप्तप्रतियोगितावच्छेदकताको ऽभावो ऽस्तीति व्युत्पादनाय तादृशाभावमादायापि दूषणं दर्शयति ह्रदत्वेति। उभयावच्छिन्नाभावप्रतियोगितावच्छेदकोभयघटकप्रत्येकस्यावच्छेदकताया अव्याहतत्वादिति भावः। न क्षतिरिति अवच्छेद्याश्रयविशेषणभावापन्नेषु तदनापन्नेषु पर्याप्तं यदवच्छेदकत्वं पर्याप्तिसम्बन्धेन तदवच्छिन्नभेदस्य तत्पर्याप्त्यनवच्छेदकप्रत्येकमात्रवृत्तिधर्मावच्छेदेन सत्त्वाद्वह्नित्वादेस्तादृशप्रतियोगितानवच्छेदकत्वस्य घटत्वाद्यवच्छिन्ने घटपटोभयत्वाद्यवच्छिन्नभेदवन्निष्ठप्रत्यूहत्वादिति भावः। न च वह्निनिष्ठह्रदत्ववह्नित्वोभयावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येन यदवच्छेदकत्वं तद्वह्नित्वमात्रे पर्याप्तं ह्रदत्वस्य व्यधिकरणतयैवावच्छेदकत्वादिति कथं वह्नित्वस्य तादृशावच्छेदकत्वावच्छिन्नान्यत्वनिर्वाह इति वाच्यं यतः सामानाधिकरण्येनानवच्छेदकमित्यस्य तत्तत्प्रतियोगितासमानाधिकरणवृत्तियत्तत्प्रतियोगितावच्छेदकत्वं तदवच्छिन्नभेदकूटवत्त्वमर्थः इत्थं च ह्रदत्ववह्नित्वोभयावच्छिन्नप्रतियोगितायाः समानाधिकरणवृत्त्यप्येकमेवावच्छेदकत्वम् उभयपर्याप्तं तदवच्छिन्नभेदो वह्नित्वे ऽव्याहत एवेति। ननु संयोगादिसाध्यकसद्धेतावव्याप्तिवारणाय तदभावव्यावर्तकव्याप्यवृत्तित्वादिविशेषणोपादाने तत्साध्यकसत्त्वादिरूपव्यभिचारिहेतावतिव्याप्तिप्रसङ्गः अभावान्तरस्यैव लक्षणघटकत्वादित्याशङ्क्य व्यभिचारिहेतुकस्थले संयोगाद्यभावस्य लक्षणघटकत्वप्रदर्शनेन परिहरति सत्त्ववतीति। व्याप्यवृत्तिरित्युपलक्षणं प्रतियोगिव्यधिकरणश्चेत्यपि बोध्यम्। अयं भावः। व्याप्यवृत्तित्वमत्र नावच्छिन्नवृत्तिकान्यत्वं न वा स्वसमानाधिकरणाभावप्रतियोगित्वसामान्याभावः प्रतियोगिव्यधिकरणत्वं च न प्रतियोग्यधिकरणावृत्तित्वं किं त्वनवच्छिन्नवृत्तिकत्वं स्वाधिकरणयत्किञ्चिद्व्यक्तिनिष्ठाभावाप्रतियोगित्वं वा

व्याप्यवृत्तित्वं प्रतियोग्यनधिकरणवृत्तित्वं च प्रतियोगिवैयधिकरण्यं संयोगाद्यभावसाधारणं हेत्वाधिकरणे तथात्वस्य विवक्षितत्वात्सद्धेतुस्थले न तादृशाभावस्य लक्षणघटकता तत्र गुणादेर्हेत्वनधिकरणत्वात् सत्त्वादिहेतुकस्थले तस्य हेत्वधिकरणतया तत्र व्याप्यवृत्तिः प्रतियोगिव्यधिकरणश्च साध्याभावो लक्षणघटक एवेति वक्ष्यमाणमिति सिद्धान्तलक्षण इत्यादिः । तदवच्छेदकत्वं प्रतियोगितावच्छेदकत्वम् इहापि एतल्लक्षणेऽपि बोध्यं विवक्षणीयम् । अन्यथा लघुरूपसमनियतगुरुधर्मावच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्तेरिति भावः तथा च संयोगादिरूपसाध्याभावस्य व्याप्यवृत्तित्वादिरूपविशेषणेन व्यावर्तनेऽपि न क्षतिः व्याप्यवृत्त्यभावान्तरप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य संयोगत्वादौ सत्त्वेन तदवच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्त्यप्रसक्तेरिति यथाश्रुताशयो ऽवगम्यते स च न सङ्गच्छते सत्तावान् जातेरित्यादौ सत्तात्वस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वाद्यनतिरिक्तवृत्तितायाः सत्त्वात्तत्साधारणतयाव्याप्तेर्वारणाय स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वरूपतदनतिरिक्तवृत्तित्वस्यैव विवक्षणीयतया तद्घटकाभावे व्याप्यवृत्तित्वनिवेशे प्रयोजनविरहेण संयोगादिसाध्यकसद्धेतौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसंयोगत्वादेर्निरुक्तानतिरिक्तवृत्तित्वस्य संयोगत्वादिसाधारण्यविरहेणाव्याप्त्यनवकाशेन हेतुसमानाधिकरणाभावे व्याप्यवृत्तित्वनिवेशनवैयर्थ्यात् न च स्वविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणादाने संयोगेन द्रव्यस्याव्याप्यवृत्तितापक्षे संयोगेन साध्यतायां हेतुसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकं तादृशधर्माप्रसिद्धिः तादृशाभावप्रतियोगितावच्छेदकीभूतसकलधर्मावच्छिन्नानामेव संयोगेनाभावानां केवलान्वयित्वादिति स्वविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वावशेषणस्यावश्यकतेति वाच्यं संयोगाद्यभावव्यावर्तकस्यावच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वस्य, निवेशने संयोगेन साध्यताया हेतुसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नाभावो

गितायां महानसीयत्वसहितवह्नित्वस्यावच्छेदकत्वेऽपि पर्याप्तिसम्बन्धेनावच्छेदकताघटकान्यत्वस्य वह्नित्वे दुर्लभत्वादिति भावः। प्रतियोगिविशेषणतापन्नधर्मान्तरसाहित्यवह्नित्वावच्छिन्नाभावमादाय दोषं प्रदर्श्य प्रतियोगिविशेषणतापन्नधर्मस्यैव प्रतियोगितावच्छेदकत्वं प्रतीयत इति नियमानभ्युपगन्तुर्व्यधिकरणधर्मावच्छिन्नाभाववादिनः प्रतियोग्यवृत्तिधर्मसाहित्यप्रतियोगिवृत्तिधर्मपर्याप्तप्रतियोगितावच्छेदकताकोऽभावोऽस्तीति व्युत्पादनाय तादृशाभावमादायापि दूषणं दर्शयति ह्रदत्वेति। उभयावच्छिन्नाभावप्रतियोगितावच्छेदकोभयघटकप्रत्येकस्यावच्छेदकताया अव्याहतत्वादितिभावः। न क्षतिरिति अवच्छेद्याश्रयविशेषणभावापन्नेषु तदनापन्नेषु पर्याप्तं यदवच्छेदकत्वं पर्याप्तिसम्बन्धेन तदवच्छिन्नभेदस्य तत्पर्याप्त्यनवच्छेदकप्रत्येकमात्रवृत्तिधर्मावच्छेदेन सत्त्वाद्वह्नित्वादेस्तादृशप्रतियोगितानवच्छेदकत्वस्य घटत्वाद्यवच्छिन्ने घटपटोभयत्वाद्यवच्छिन्नभेदवत्त्वाप्रत्यूहत्वादितिभावः। न च वह्निनिष्ठह्रदत्ववह्नित्वोभयावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येन यदवच्छेदकत्वं तद्वह्नित्वमात्रे पर्याप्तं ह्रदत्वस्य व्यधिकरणतयैवावच्छेदकत्वादिति कथं वह्नित्वस्य तादृशावच्छेदकत्वावच्छिन्नान्यत्वनिर्वाह इति वाच्यं यतः सामानाधिकरण्येनानवच्छेदकमित्यस्य तत्प्रतियोगितासमानाधिकरणवृत्तियत्तत्प्रतियोगितावच्छेदकत्वं तदवच्छिन्नभेदकूटवत्त्वमर्थः इत्थं च ह्रदत्ववह्नित्वोभयावच्छिन्नप्रतियोगितायाः समानाधिकरणवृत्त्यप्येकमेवावच्छेदकत्वम् उभयपर्याप्तं तदवच्छिन्नभेदो वह्नित्वे ऽव्याहत एवेति। ननु संयोगादिसाध्यकसद्धेतावव्याप्तिवारणाय तदभावव्यावर्तकव्याप्यवृत्तित्वादिविशेषणोपादाने तत्साध्यकसत्त्वादिरूपव्यभिचारिहेतावतिव्याप्तिप्रसङ्गः अभावान्तरस्यैव लक्षणघटकत्वादित्याशङ्क्य व्यभिचारिहेतुकस्थले संयोगाद्यभावस्य लक्षणघटकत्वप्रदर्शनेन परिहरति सत्त्ववतीति। व्याप्यवृत्तिरित्युपलक्षणं प्रतियोगिव्यधिकरणश्चेत्यपि बोध्यम्। अयं भावः। व्याप्यवृत्तित्वमत्र नावच्छिन्नवृत्तिकान्यत्वं न सास्वसमानाधिकरणाभावप्रतियोगित्वसामान्याभावः प्रतियोगिव्यधिकरणत्वं च न प्रतियोग्यधिकरणावृत्तित्वं किं त्वनवच्छिन्नवृत्तिकत्वं स्वाधिकरणयत्किञ्चिद्व्यक्तिनिष्ठाभावाप्रतियोगित्वं वा

व्याप्यवृत्तित्वं प्रतियोग्यनधिकरणवृत्तित्वं च प्रतियोगिवैयधिकरण्यं संयोगाद्यभावसाधारणं हेत्वधिकरणे तथात्वस्य विवक्षितत्वात्सद्धेतुस्थले न तादृशाभावस्य लक्षणघटकता तत्र गुणादेर्हेत्वनधिकरणत्वात् सत्त्वादिहेतुकस्थले तस्य हेत्वधिकरणतया तत्र व्याप्यवृत्तिः प्रतियोगिव्यधिकरणश्च साध्याभावो लक्षणघटकतयेति वक्ष्यमाणमिति सिद्धान्तलक्षण इत्यादिः । तदवच्छेदकत्वं प्रतियोगितावच्छेदकत्वम् इहापि पतल्लक्षणेऽपि बोध्यं विवक्षणीयम्। अन्यथा लघुरूपसमनियतगुरुधर्मावच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्तेरिति भावः तथा च संयोगादिरूपसाध्याभावस्य व्याप्यवृत्तित्वादिरूपविशेषणेन व्यावर्तनेऽपि न क्षतिः व्याप्यवृत्त्यभावान्तरप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य संयोगत्वादौ सत्त्वेन तदवच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्त्यप्रसक्तेरिति यथाश्रुताशयो ऽवगम्यते स च न सङ्गच्छते सत्तावान् जातेरित्यादौ सत्तात्वस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वाद्यनतिरिक्तवृत्तितायाः सत्त्वात्तत्साधारणतयाव्याप्तेर्वारणाय स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वरूपतदनतिरिक्तवृत्तित्वस्यैव विवक्षणीयतया तद्घटकाभावे व्याप्यवृत्तित्वनिवेशे प्रयोजनविरहेण संयोगादिसाध्यकसद्धेतौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसंयोगत्वादेर्निरुक्तानतिरिक्तवृत्तित्वस्य संयोगत्वादिसाध्यकस्थलविरहेणाव्याप्त्यनवकाशेन हेतुसमानाधिकरणाभावे व्याप्यवृत्तित्वनिवेशनवैयर्थ्यात् न च स्वविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणादाने संयोगेन द्रव्यस्याव्याप्यवृत्तितापक्षे संयोगेन साध्यतायां हेतुसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकं तादृशधर्माप्रसिद्धिः तादृशाभावप्रतियोगितावच्छेदकीभूतसकलधर्मावच्छिन्नानामेव संयोगेनाभावानां केवलान्वयित्वादिति स्वविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वावशेषणस्यावश्यकतेति वाच्यं संयोगाद्यभावव्यावर्तकस्यावच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वस्य निवेशने संयोगेन साध्यतायां हेतुसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नाभावो

धस्य विवक्षणीयत्वान्न दोषः । अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिव्याप्तिः साध्याभावस्य साध्यवत्यपि वृत्तेरिति तु नाशङ्कनीयं । व्यभिचारनिरूपकाधिकरणं यत्तद्वृत्तित्वावच्छिन्नाभावस्यापि साध्याभावतया तस्य च साध्यवत्यवृत्तेः । यत्समानाधिकरणेति यद्रूपविशिष्टसमानाधिकरणेत्यर्थः । तेन द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सत्तासमानाधिकरणद्रव्यत्वत्वावच्छिन्नद्रव्यत्वाभावप्रमायाः साध्यवत्ताज्ञानप्रतिबन्धकत्वेऽपि न क्षतिः यद्धर्मावच्छिन्नसामानाधिकरण्यशरीरे च हेतुतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नाधिकरणत्वं निवेशनीयं तत्प्रयोजनं च स्फुटमेव अधिकरणवृत्तित्वं च निरवच्छिन्नं ग्राह्यं तेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ हेतुसमानाधिकरणकपिसंयोगत्वावच्छिन्नकपिसंयोगाभावादिविषयकप्रमाया अव्याप्यवृत्तित्वज्ञानविरहकालीनायाः साध्यवत्ताज्ञानप्रतिबन्धकत्वेऽपि न क्षतिः । प्रमायां प्रमासामान्ये तेन व्यभिचारिणि नातिव्याप्तिः समानाधिकरणधर्मावच्छिन्नाभावत्वेन व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्ताज्ञानस्यापि विरोधित्वात्तद्धेतावपि लक्षणगमनासम्भव इत्यतो ज्ञानसामान्यमुपेक्ष्य प्रमासामान्यनिवेशनं प्रमापदं च यावद्भ्रमभिन्नपरमत उक्तभ्रमात्मकज्ञानस्याभावत्वांशे प्रमात्वेऽपि न क्षतिः साध्यवत्ताज्ञानपदं तत्सामान्यपरम् अतो व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्ताज्ञानस्य तद्धर्मवत्त्वेन साध्यवत्ताज्ञानविरोधित्वेऽपि न क्षतिः एवं च साध्यपदं साध्यतावच्छेदकविशिष्टपरं ज्ञानं च स्वसमानधर्मितावच्छेदकत्वेन स्वविषयीभूताभावप्रतियोगितावच्छेदकसंसर्गकत्वेन च विशेषणीयं तेन धूमत्वाद्यवच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाद्यभाववत्ताज्ञानस्य साध्यवत्ताज्ञानसामान्यान्तर्गतद्रव्यत्वादिना धूमादिप्रकारकं भिन्नधर्मावच्छिन्नविशेष्यकधूमत्वावच्छिन्नप्रकारकं समवायादिसम्बन्धेन धूमत्वाद्यवच्छिन्नप्रकारकं च ज्ञानं प्रत्यप्रतिबन्धकत्वात् कामिनीजिज्ञासादेरेव च तादृशज्ञानसामान्यविरोधित्वादतिव्याप्तेर्नावकाशः । साध्याभावपरं वैयर्थ्यादिति । अत्र च साध्यतावच्छेदकविशिष्टसामानाधिकरण्यावच्छेदकत्वं स्वव्यापकतादृशसामानाधिकरण्यकत्वं तथा च साध्यतावच्छेदकविशिष्टसामानाधिकरण्यत्वं यत्समानाधिकरणसाध्याभावत्व-

व्यापकतावच्छेदकं तत्त्वं व्याप्तिरित्येतादृशार्थकत्वे प्रथमलक्षणे न साध्याभावपदवैयर्थ्यं यत्समानाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावरूपयत्सामानाधिकरण्यव्यापकतावच्छेदकत्वात् यत्समानाधिकरणसाध्याभावनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावरूपस्य यत्समानाधिकरणसाध्याभावत्वव्यापकतावच्छेदकत्वस्यातिरिक्ततया तद्घटितलक्षणे यत्सामानाधिकरण्यव्यापकतावच्छेदकत्वस्यानिवेशात्तद्घटितलक्षणसम्भवेऽपि प्रकृतलक्षणे वैयर्थ्यानवकाशात् एवं यत्समानाधिकरणसाध्याभावप्रमात्वव्यापकः साध्यवत्ताज्ञानप्रतिबन्धकत्वाभावस्तत्त्वमित्येतादृशार्थकत्वे द्वितीयलक्षणेऽपि न तद्वैयर्थ्यं यत्समानाधिकरणप्रमात्वव्यापकताघटकाभावाद्यत्समानाधिकरणसाध्याभावप्रमात्वव्यापकतायामभावान्तरस्यैव निवेशादित्यवधेयम् ।

( दी० ) यत्तु साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वं वा व्याप्तिरिति। तन्न अनुमित्यविरोधित्वज्ञानस्यानुमितिजनकत्वे साध्याभाववद्वृत्तित्वज्ञानस्यानुमित्यविरोधितया व्यभिचारिण्यतिप्रसङ्गात् ॥

(गा०)साध्याभाववतीति। यन्निष्ठसाध्याभाववद्वृत्तित्वविशिष्टनिरूपितविषयितासामान्ये प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावस्तत्त्वमित्यर्थः वह्निमान् धूमादित्यादौ हेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयिता व्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वत्वविशिविषयितैव सा च न वह्न्यनुमितिप्रतिबन्धकतावच्छेदिका तच्छालिज्ञानस्यानुमित्यप्रतिबन्धकत्वात् व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वविषयितापि तादृशी तद्वत्ताज्ञानस्य च व्यभिचारज्ञानविधया ऽनुमितिप्रतिबन्धकत्वात् तादृशविषयिताया अनुमितिप्रतिबन्धकतावच्छेदकत्वान्नातिव्याप्तिः यन्निष्ठत्वानुपादाने धूमाद्यंशे वह्नित्वावच्छिन्नवह्न्यभाववद्वृत्तित्वावगाहिभ्रमनिष्ठवह्न्यभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयिताया अनुमितिप्रतिबन्धकतावच्छेदकत्वाद्वह्निमान् धूमादित्यादावव्याप्तिरतस्तदुपादानं तथा च भ्रमविषयवह्नित्वेन वह्न्यभाववद्वृत्तित्वस्य हेतुनिष्ठत्वाभावान्न दोषः यन्निष्ठपदार्थानिरूपितविषयितासामान्ये यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्य इति वा यत्तूच्यते

तदा व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वमेव यत्र समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन भातं तादृशाहार्यहेतुनिष्ठतथाविधसाध्याभाववद्वृत्तित्वविषयिताया अप्यनुमितिप्रतिबन्धकतावच्छेदकत्वादसम्भवो व्याप्तेर्वेति साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वं विषयिताविशेषणं तादृशभ्रमविषयिता च न साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपिता तादृशविषयितानिरूपकस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य विशेषणीभूतं यत्समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वं तद्विशिष्टत्वाभावात् न च तद्विशिष्टनिरूपितत्वं यदि तदवच्छिन्ननिरूपकताकत्वं तदा समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वस्य तद्भ्रमविषयवृत्त्यावस्त्वेऽपि तन्निष्ठविषयितानिरूपकत्वे व्यधिकरणीभूयावच्छेदकत्वात् भ्रमविषयितायास्तद्विशिष्टनिरूपितत्वमक्षतमेव यदि च वस्तुगत्या यत्र तद्वैशिष्ट्यं तन्निरूपितत्वमेव तद्विशिष्टनिरूपितत्वं तदा व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वमेवोक्तभ्रमविषयिताया अक्षतमिति कथं तद्व्यावृत्तिरिति वाच्यं तदवच्छिन्नतदाश्रयनिष्ठनिरूपकताकविषयताया एव तथात्वात् तथाहि विशेषणीभूतधर्मान्तरविशिष्टेन व्यावर्त्यमानस्य विशेष्यस्य भाने विशेषणांशे प्रकारीभवन्त्यां व्यक्तौ विशेष्यसम्बन्धितावच्छेदकताया विशिष्टवैशिष्ट्यबोधे भानात् साध्याभाववद्वृत्तित्वरूपविशेषणविशिष्टविषयेण निरूपकीभूय विषयिताव्यावर्तने व्यावर्तकविषयस्याश्रयतया व्यावर्तकं यत्साध्याभाववद्वृत्तितात्वं तस्यापि निरूपकतावच्छेदकीभूय विषयिताव्यावर्तकत्वात् उक्तभ्रमविषयिताव्यावृत्तिः तद्व्यावर्तकविषयव्यावर्तकस्य तन्निष्ठसाध्याभाववद्वृत्तितात्वस्य तादृशविषयितानिरूपकतानवच्छेदकत्वात् तादृशविषयिताया लक्षणाघटकत्वात् एवं चभ्रमविषयिताव्यावर्तकतयैव साध्याभाववत्पदसार्थक्यं तादृशविषयिताया उक्तक्रमेण हेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वेऽपि हेतुनिष्ठाधेयतात्वविशिष्टनिरूपितत्वानपायात् साध्याभावपदमनुपादायाधिकरणवृत्तितात्वविशिष्टनिरूपितविषयितानिवेशे वृत्तौ समानाधिकरणधर्मावच्छिन्नाभावाधिकरणीयत्वभ्रमविषयितावारणेऽपि वृत्तिविशेष्ये तन्निरूपकेऽधिकरणे यत्र समानाधिकरणधर्मावच्छिन्नाभावभ्र-

मस्तद्विषयतावारणासम्भवात्साध्याभावांशनिवेशस्यापि सार्थक्यात् न च तावत्पर्यन्तनिवेशेऽपि वह्नित्वावच्छिन्नवह्न्यभावत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकवह्न्यभावमवगाह्य तादृशाभाववद्वृत्तित्वावगाहि यज्ज्ञानं तदीयतादृशसाध्याभाववद्वृत्तित्वविषयितापि साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितैव व्यधिकरणधर्मावच्छिन्नप्रतियोगिताको यः साध्याभावस्तद्वद्वृत्तित्वत्वस्यैव तत्र विशेषणतया भानात्तद्विशिष्टत्वस्य च तादृशज्ञाननिष्ठविषयितानिरूपकसाध्याभाववद्वृत्तित्वे सत्त्वादिति वह्योपत्तादवस्थ्यमिति वाच्यम् । अभावांशे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यप्रकारकव्यभिचारज्ञानमेवानुमितिविरोधि यत्र च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यं प्रकारस्तादृशज्ञानविषयघटकस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टस्य व्यधिकरणधर्मावच्छिन्नाभावस्याप्रसिद्ध्या तादृशज्ञानविषयितायां विशिष्टनिरूपितत्वासम्भवात् न चैवमपि समानाधिकरणधर्मावच्छिन्नसाध्याभावव्यधिकरणधर्मावच्छिन्नसाध्याभावद्वयविशेषिताधिकरणवृत्तित्वावगाहिनः समानाधिकरणधर्मावच्छिन्नाभावांशे भ्रमरूपज्ञानस्य विषयितायां व्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तितात्वविशिष्टनिरूपितत्वात् समानाधिकरणधर्मावच्छिन्नसाध्याभावविषयितानिरूपिताधिकरणविषयितानिरूपिताधेयताविषयतात्वेन च प्रतिबन्धकतावच्छेदकत्वाद्व्याप्तिरिति वाच्यम् । हेतुसामानाधिकरण्यविशिष्टसाध्याभावत्वविशिष्टविषयितायां प्रतिबन्धकतावच्छेदकत्वाभावस्य विवक्षितत्वात्, उक्तभ्रमे च समानाधिकरणधर्मावच्छिन्नाभावविषयितायास्तादृशविशिष्टनिरूपितत्वाभावेन तस्या एव च प्रतिबन्धकतावच्छेदकत्वेनाव्याप्त्यनवकाशात् । अथ यत्र ज्ञाने हेतुसमानाधिकरणतया भासमाने व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेन साध्यस्यैका प्रकारता तादृशज्ञानीयव्यधिकरणधर्मावच्छिन्नाभावविषयितायां साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभावनिरूपितत्वस्य विषयीभयद्भावे साध्यतावच्छेदकावच्छिन्नप्रतियो-

गिताकत्वासम्भवेऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभावनिरूपितत्वस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धविषयितानिरूपकविषयितात्वेनानुमितिप्रतिबन्धकतावच्छेदकत्वस्य चाक्षतत्वादव्याप्तिर्दुर्वारैवेति चेन्न, तादृशभ्रमस्याप्रामाणिकत्वात् प्रामाणिकत्वे च संसर्गीयविषयिताद्वयानिरूपकत्वेनाभावविषयितायाः विशेषणीयतया सामञ्जस्यात्। अथ साध्यरूपविशेषणविशिष्टस्याभावस्य विषयितानिरूपकतया लक्षणघटकत्वे साध्याभावयोः सम्बन्धस्य सम्बन्धविधया लक्षणघटकत्वमावश्यकं, स च सम्बन्धः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपः, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वरूपश्चाननुगत इति प्रथमस्य निवेशे केवलान्वयिनि साध्यविशेषिताभावस्यैवाप्रसिद्धिः, व्यतिरेकिसाध्यकसद्धेतौ च तादृशहेतुसमानाधिकरणाभावाप्रसिद्धिरित्यसम्भवश्चरमस्य निवेशे च सर्वत्र व्यभिचारिण्यतिव्याप्तिः प्रतियोगितावच्छेदकधर्माणां चोपलक्षणीभूतेन केन चिद्रूपेणानुगमस्य तेन रूपेण तेषां निवेशो न सम्भवति प्रतियोगितावच्छेदकोपलक्षणस्य सम्बन्धघटकतया भानासम्भवात् । न चावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिताया एव सम्बन्धतया निवेशादननुगमनिबन्धनोक्तदोष इति वाच्यम् । अवच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिताविषयकाभावज्ञानस्य प्रतियोगिमत्त्वज्ञानाविरोधितया तज्ज्ञानाविरोधिनः प्रतियोगिविशेषिताभावज्ञानस्य चानुभवविरुद्धतयावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगितायाः संसर्गतयाभानात् । न च स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकविशेषित एवाभावो निवेश्यः, न तु साध्यविशेषितः, वह्नित्वादिना घटाद्यभाव एव वह्न्यादिसाध्यकधूमादिहेतुकस्थले लक्षणघटक इति वाच्यम् । प्रमेयत्वाद्यवच्छिन्नसाध्यके तादृशाभावाप्रसिद्धेः एवं स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नित्वादिविशेषिते वह्नित्वादिना घटादेरभावे भासमाने यत्र सम्बन्धघटकप्रतियोगितायां बाधितवह्न्यादिनिष्ठत्वस्य भानं तादृशज्ञानीयाभावविषयिताया उक्तसम्बन्धेन साध्यतावच्छेदकविशिष्टाभावानिरूपिततयानुमितिविरोधितया चानुपपत्तेर्दुर्वारत्वात् स्वावच्छिन्नसाध्यवृत्तित्व

विशिष्टप्रतियोगितानिवेशे च सर्वत्र सद्धेतावप्रसिद्धेः, एवं प्रतियोगिविशेष्यतापन्न एवाभावे प्रतियोगिपारतन्त्र्येण समानाधिकरणधर्मस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रकारत्वं प्रामाणिकं न तु प्रतियोगिविशेष्यतानापन्ने वह्निर्नास्ति वह्नित्वेन घटो नास्तीत्येव प्रतीतेः, न तु वह्नित्वेन नास्तीति तथा च विशिष्य प्रतियोग्यविशेषितस्योक्तसम्बन्धेन साध्यतावच्छेदकविशेषितस्याभावस्य विषयित्वानिरूपकतया निवेशो न सम्भवत्येवेति । मैवं प्रतियोग्यादिविशेषिताभावीयत्वेन विशिष्टनिरूपितविषयिता लक्षणे न निवेश्यते, अपि तु स्वनिरूपकहेतुसमानाधिकरणाभावनिष्ठो यः सम्बन्धस्तत्प्रतियोगिसाध्यनिष्ठतत्सम्बन्धावच्छिन्ननिरूपकतावच्छेदकतावच्छेदकतात्वेन,यत्र हेतुसमानाधिकरणघटत्वाद्यवच्छिन्नवह्न्यभावे वह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्न्यादेः साध्यस्य प्रकारता तादृशज्ञानविषयितानिरूपकाभावनिष्ठो न निरुक्तनिरूपकतावच्छेदकसम्बन्ध इति तद्विषयिताव्युदासः यत्र वह्नित्वावच्छिन्नघटाभावे तन्निष्ठवह्नित्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नेः सम्बन्धतया भासते तत्र तत्सम्बन्धप्रतियोगी न वह्निरपि तु घट एवेति साध्ये वास्तवतत्सम्बन्धप्रतियोगित्वनिवेशात्तादृशज्ञानीयाभावविषयिताव्युदासः साध्यनिवेशाद्यत्र वह्नित्वेन घट एव वह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तत्सम्बन्धानुयोगिनि वह्नित्वावच्छिन्नघटाभावे प्रकारस्तादृशज्ञानीयाभावविषयितायास्तत्सम्बन्धप्रतियोग्यवच्छिन्ननिरूपकताकत्वेऽप्यनुमितिविरोधित्वेऽपि च न दोषः, यत्र घटत्वावच्छिन्नवह्न्यभावे घटत्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नित्वावच्छिन्नप्रतियोगिताकत्वत्वेन वह्नेः संसर्गतया भासते तादृशज्ञानस्य प्रामाणिकत्वे साध्यप्रतियोगिको हेतुसमानाधिकरणाभावानुयोगिको यद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसम्बन्धस्तद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसम्बन्धावच्छिन्नसाध्यनिष्ठनिरूपकतावच्छेदकत्वं विवक्षणीयमिति। साध्याभाववद्वृत्तित्वरूपविषयस्य प्रतिबन्धकतावच्छेदककोट्यप्रवेशादतिव्याप्तिरतो विषयितापर्यन्तनिवेशनं हेतुनिष्ठसाध्याभाववद्वृत्तितात्वविशिष्टप्रतिबन्धकतावच्छेदकविषयितापर्याप्त्यभावविषयकत्वे , साध्यप्र-

वच्छिन्नप्रतियोगिताकत्वरूपश्चाननुगत इति प्रथमस्य निवेशे केव-
लान्वयिनि साध्याविशेषिताभावाप्रसिद्धिः व्यतिरेकिसाध्यकसद्धेतौ
च तादृशहेतुसमानाधिकरणाभावाप्रसिद्धिरित्यसम्भवः चरम-
स्य निवेशे च सर्वत्र व्यभिचारिण्यतिव्याप्तिः प्रतियोगिताव-
च्छेदकधर्माणां चोपलक्षणीभूतेन केनचिद्रूपेणानुगमय्य निवेशो
न सम्भवति प्रतियोगितावच्छेदकोपलक्षणस्य सम्बन्धविधयाऽभा-
नात्। न चावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिताया एव स-
म्बन्धतया निवेशान्नाननुगमनिबन्धनो दोष इति वाच्यम् अव-
च्छेदकावच्छिन्नत्वाविशेषितप्रतियोगित्वविषयकाभावज्ञानस्य प्र-
तियोगिमत्ताज्ञानाविरोधितया तज्ज्ञानाविरोधिनः प्रतियोगिवि-
शेषिताभावज्ञानस्य चानुभवविरुद्धतया ऽवच्छेदकावच्छिन्नत्वा-
विशेषितप्रतियोगितायाः संसर्गतया ऽभानात् न च स्वावच्छिन्न-
प्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकविशेषित एवाभावो
निवेश्यः न तु साध्यविशेषितः वह्नित्वादिना घटाद्यभाव एव
वह्न्यादिसाध्यकस्थले लक्षणघटक इति वाच्यम्। प्रमेयत्वावच्छि-
न्नसाध्यकस्थले तादृशाभावाप्रसिद्धेः एवं स्वावच्छिन्नप्रतियोगि-
ताकत्वसम्बन्धेन वह्नित्वादिविशेषिते वह्नित्वादिना घटादेरभावे
भासमाने यत्र सम्बन्धघटकप्रतियोगितायां बाधितस्य वह्न्यादि-
निष्ठत्वस्य भानं तादृशज्ञानीयाभावविषयितया उक्तसम्बन्धेन
साध्यतावच्छेदकविशिष्टाभावनिरूपिततया अनुमितिविरोधितया
चानुपपत्तेर्दुर्वारत्वात् स्वावच्छिन्नसाध्यवृत्तित्वविशिष्टप्रतियोगि-
तानिवेशे च सर्वत्र सद्धेतावप्रसिद्धिः एवं प्रतियोगिविशेष्यता-
तापन्न एवाभावे प्रतियोगिपारतन्त्र्येण समानाधिकरणधर्मस्य
स्वातन्त्र्येण व्यधिकरणधर्मस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्ब-
न्धेन प्रकारत्वं प्रामाणिकं न तु प्रतियोगिविशेष्यतानापन्ने वह्नि-
र्नास्ति वह्नित्वेन घटो नास्तीत्येव प्रतीतेः न तु वह्नित्वेन ना-
स्तीति तथा च विशिष्य प्रतियोग्यविशेषितस्य उक्तसम्बन्धेन
साध्यतावच्छेदकविशेषितस्याभावस्य विषयित्वनिरूपकतया नि-
वेशो न सम्भवत्येवेति चेन्नैवम् प्रतियोग्यादिविशेषिताभावीयत्वेन
विशिष्टनिरूपितविषयिता न लक्षणे निवेश्यते अपि तु स्वनि-
रूपकहेतुसमानाधिकरणाभावनिष्ठो यः सम्बन्धः तत्प्रतियोगिसा-

ध्यनिष्ठतत्सम्बन्धावच्छिन्ननिरूपकतावच्छेदकताकत्वेन यत्र हेतुसमानाधिकरणघटत्वावच्छिन्नवह्न्यभावे वह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्न्यादेः साध्यस्य प्रकारता तादृशज्ञानविषयितानिरूपकाभावनिष्ठो न निरुक्तनिरूपकतावच्छेदकसम्बन्ध इति तद्विषयिताव्युदासः यत्र वह्नित्वावच्छिन्नघटाद्यभावे तन्निष्ठवह्नित्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नेः सम्बन्धतया भासते तत्र तत्सम्बन्धप्रतियोगी न वह्निः अपि तु घट एवेति साध्ये वास्तवतत्सम्बन्धप्रतियोगित्वानिवेशात्तादृशज्ञानीयाभावविषयिताव्युदासः साध्यनिवेशाद्यत्र वह्नित्वेन घट एव वह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तत्सम्बन्धानुयोगिनि वह्नित्वावच्छिन्नप्रतियोगिताकघटाभावे प्रकारस्तादृशज्ञानीयाभावविषयितायास्तत्सम्बन्धप्रतियोग्यवच्छिन्ननिरूपकताकत्वेऽप्यनुमितिविरोधित्वेऽपि च न क्षतिः । यत्र घटत्वावच्छिन्नवह्न्यभावे घटत्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नित्वावच्छिन्नप्रतियोगिताकत्वत्वेन वह्नेः संसर्गतया भासते तादृशज्ञानस्य प्रामाणिकत्वे साध्यप्रतियोगिको हेतुसमानाधिकरणाभावानुयोगिको यद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टः सम्बन्धः तद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वं विवक्षणीयमिति दिक् । न च व्यभिचारज्ञानस्यानुमितिकारणव्याप्तिज्ञानं प्रत्येव प्रतिबन्धकत्वमिति व्यभिचारिण्यतिव्याप्तिरिति वाच्यं तज्जनकज्ञानप्रतिबन्धकतावच्छेदकत्वाभावस्यैव विवक्षितत्वात् । अनुमित्यविरोधित्वज्ञानस्य अनुमितिप्रतिबन्धकतावच्छेदकत्वाभावप्रकारकज्ञानस्यैव । अनुमिति हेतुत्व इति एतन्मते निरुक्तविषयितानिष्ठतादृशावच्छेदकत्वाभावस्यैवानुमितिकारणीभूतज्ञानविषयत्वादिति भावः । अनुमित्यविरोधितया अनुमितिजनकज्ञानाप्रतिबन्धकतया साध्याभाववद्वृत्तित्वज्ञानस्यानुमितिजनकत्वाभावादिति भावः । अतिप्रसङ्गादिति हेतुनिष्ठसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वविषयितासामान्ये ऽनुमितिजनकज्ञानप्रतिबन्धकतावच्छेदकत्वाभावस्याक्षतत्वादिति भावः । न च हेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयिता ऽनुमितिजनकज्ञानप्रतिबन्धकतावच्छेदिका इत्येतादृशज्ञानीयहेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयिताया अपि तादृश-

विषयितासामान्यान्तर्गततया तत्र च प्रकृतव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकत्वस्यापि सत्त्वेन नातिव्याप्त्यवकाश इति वाच्यम् एवं सति सद्धेतावपि हेतुनिष्ठव्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वविषयितायामनुमितिजनकज्ञानविरोधित्वभ्रमनिष्ठतादृशसाध्याभाववद्वृत्तित्वविषयितायामनुमितिप्रतिबन्धकतावच्छेदकत्वसत्त्वेन लक्षणगमनासम्भवात् तद्वारणाय इतराविशेषणत्वेन तादृशविषयिताया एव लक्षणे निवेश्यतया विषयिताविशेषणत्वेन साध्याभाववद्वृत्तित्वविषयितामादायातिव्याप्तिवारणासम्भवादिति ध्येयम् ॥

मिश्ररीत्या साजात्यघटनेन साध्याभाववदवृत्तित्वरूपां व्याप्तिं परिष्कृत्योपन्यस्यति केचित्त्विति ॥

( दी० ) केचित्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणनिरूपितवृत्तित्वाभावास्तद्वत्त्वं तत्त्वं साजात्यञ्च समानासमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण । साध्याभावश्च पूर्वोक्तद्वितीयरीत्या प्रत्येतव्यो व्याप्यवृत्तिश्च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो वा तेन तत्तत्साध्यव्यक्तेरव्याप्यवृत्तेर्वा साध्यस्याभाववति हेतोर्वृत्तावपि नाव्याप्तिः ।

( गा० ) धूमवान् वह्नेरित्यादौ व्यधिकरणधर्मावच्छिन्नाभावसजातीयस्य घटत्वादिना तदधिकरणवृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरतो यावन्त इति । तथा च यावदन्तर्गतसमानाधिकरणधर्मावच्छिन्नाभावसजातीयस्य तदधिकरणवृत्तित्वाभावस्य हेतावसत्त्वान्नातिव्याप्तिः तत्रैव समानाधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिवारणाय प्रत्येकं तत्तत्सजातीया इति । तथा च वक्ष्यमाणरूपेण व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावस्य समानाधिकरणधर्मावच्छिन्नसाध्याभावसजातीयत्वाभावान्न दोषः । यावत्साध्याभावत्वेन साध्याभावानां निरूपकतया साजात्ये ऽन्वये व्यतिरेकिसाध्यके वह्निमान् धूमादित्यादौ यावत्साध्याभावसाजात्याप्रसिद्ध्याऽव्याप्तिरतस्तत्तद्व्यक्तित्वेन तेषां साजात्ये

ऽन्वयनिवेशलाभाय तत्तदिति । तत्तत्सजातीयत्वेनोपस्थितानां समानाधिकरणव्यधिकरणधर्मावच्छिन्नसाध्याभावसजातीयानामेकस्मिन्नधिकरणवृत्तित्वाभावे एकत्र द्वयमिति रीत्या ऽन्वये पुनर्व्यतिरेकिसाध्यके ऽव्याप्तिः एकत्रोभयसाजात्याभावात् अत एकैकाभावे एकैकाभावसजातीयाभेदान्वय उपगन्तव्यः एतदर्थतात्पर्यग्राहकं प्रत्येकमिति प्रथमाबहुवचनान्तं तत्तदधिकरणवृत्तित्वाभावा इत्यस्य विशेषणम् यावत्साध्याभावत्वेन साध्याभावानामधिकरणे ऽन्वये वह्निमान् धूमादित्यादौ तत्तद्ध्रदावृत्तित्वावच्छिन्नसाध्याभावघटितसमुदायाधिकरणतायाः क्वचिदप्यसत्त्वेनाव्याप्तिः स्यादतः तत्तद्व्यक्तित्वेन साध्याभावानामधिकरणे ऽन्वयलाभाय चरमं तत्तदिति । तत्त्वमिति अव्यभिचरितत्वमित्यर्थः । ननु तत्तत्सजातीयत्वं तत्तद्वृत्तिधर्मवत्त्वं तथा च समानाधिकरणधर्मावच्छिन्नाभाववृत्त्यभावत्वादिधर्मवत्त्वं व्यधिकरणधर्मावच्छिन्नाभावेऽपि वर्तत इति तस्यापि तत्सजातीयत्वाद्व्यभिचारिण्यतिव्याप्तिरत आह साजात्यं चेति । समानासमानाधिकरणेति समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेणेत्यर्थः । तृतीयार्थश्चाभेदस्तस्य च साजात्ये ऽन्वयः विवक्षणीयमिति शेषः । तथा च तत्तत्सजातीया इत्यस्य तत्तदभाववृत्तितादृशान्यतररूपवन्त इत्यर्थः । यद्यपि वह्नित्वावच्छिन्नाभावनिष्ठं स्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं वह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वरूपं तच्च तदधिकरणवृत्तित्वाभावे ऽसम्भावितमेव तथापि स्वासमानाधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तदनिरूपकत्वं स्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं स्वसमानाधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तदनिरूपकत्वमेव व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वमिह विवक्षितं तच्च साध्याभावतद्वृत्तित्वाभावोभयसाधारणमेव समनियताभावैक्यमते च स्वाधिकरणावृत्तिधर्मावच्छिन्ना या प्रतियोगिता तन्निरूपकत्वरूपो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेत्यस्य यथाश्रुतार्थ एवादरणीयः तन्मते व्यधिकरणधर्मावच्छिन्नसाध्याभावतथाविधतद्वृत्तित्वाभावयोरैक्यात्तादृशसाध्याभावस्य यादृशप्रतियोगितानिरूपकत्वं तादृशप्रतियोगितानिरूपक-

त्वस्य तथाविधतद्वद्वृत्तित्वाभावे सत्त्वात् । एतेन समनियताभावानामैक्यमते व्यधिकरणधर्मावच्छिन्नाभावस्य समवायादिसम्बन्धावच्छिन्नगगनत्वावच्छिन्नगगनाद्यभावाभिन्नतया तस्य समानाधिकरणधर्मावच्छिन्नगगनादिनिष्ठप्रतियोगितानिरूपकतया व्यधिकरणधर्मावच्छिन्नाभावस्य निरुक्तरूपवत्त्वानुपपत्त्या स्वसमानाधिकरणधर्मावच्छिन्नासमानाधिकरणसम्बन्धावच्छिन्नप्रतियोगिताया अनिरूपकत्वपर्यन्तनिवेशनप्रयासो नोपादेयः समनियताभावैक्यमते गगनाभावत्वगगनाभावाभिन्नत्वान्यतररूपेणापि साजात्यविवक्षणं सम्भवतीति ध्येयम् । ननु यावत्साध्याभावान्तर्गतानां तत्तत्साध्यव्यक्त्यभावादीनामधिकरणे हेतोर्वृत्त्या वह्निमान् धूमादित्यादावव्याप्तिरत आह साध्याभावश्चेति । द्वितीयरीत्येति यत्समानाधिकरणानामित्यादिद्वितीयलक्षणरीत्येत्यर्थः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाव एव साध्याभावपदेन विवक्षित इति भावः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावविवक्षणे तथाविधवह्निघटोभयाभावमादाय दोषतादवस्थ्यमतः प्रथमरीत्येति नोक्तं साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावविवक्षणे वाच्यत्वादिसाध्यकस्थले लक्षणसमन्वयसम्भवेऽपि स्वरूपसम्बन्धेन तादात्म्यसम्बन्धेन वा प्रमेयमात्रसाध्यकस्थले तथाविधाभावाप्रसिद्ध्या ऽव्याप्तिरतो व्यापकतावच्छेदकपर्यन्तानुधावनं तथा च ज्ञेयत्वत्वादिना वाच्यत्वाभाव एव तथेति न दोषः साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशे च वह्न्यादिसाध्यके तार्णातार्णोभयाभावादिकमादाय दोषस्य व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं प्रतियोगितायां निवेश्य वारणेऽपि सत्तादिसाध्यकस्थले विशिष्टसत्ताभावमादाय दोष इति तादृशाभावो न निवेशितः व्यापकतावच्छेदकावच्छिन्नप्रतियोगिता च न्यूनवृत्तिधर्मावच्छिन्ना अतिरिक्तवृत्तिधर्मावच्छिन्ना वा या या प्रतियोगिता तदन्यत्वेन विशेषणीया तेन वह्न्यादिसाध्यकस्थले वह्नित्वादिना महानसीयवह्निघटान्यतराभावमादाय न दोषः न्यूनवृत्तित्वमतिरिक्तवृत्तित्वं च विरुद्धव्याप्त्या वाच्यं नातो व्यधिकरणधर्मावच्छिन्नाभावासंग्रहः व्यापकता च साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या,

तेन संयोगादिना वह्न्यादिसाध्यके समवायादिना वह्न्याद्यभावमादा-यासम्भववारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगिताया विशेषणीयतया समवायादिना द्रव्यत्वादिसाध्यके विषयतादिसम्बन्धेन साध्यव्यापकस्य ज्ञानादेः समवायादिना ऽभावमादाय दोषस्य नावकाशः तादात्म्यसम्बन्धेन प्रमेयसाध्यकस्थले समवायित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताकभेद एव लक्षणघटकः समनियताभावैक्यमते तादृशभेदस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावाभिन्नतया व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन तत्साजात्यस्य प्रसिद्धिसम्भवात् । यत्तु संयोगेन प्रमेयत्ववानिति प्रतीतिसाक्षिकः संयोगावच्छिन्नप्रमेयत्वानिष्ठप्रतियोगितावच्छेदकताक एव भेदो लक्षणघटकः अत्यन्ताभावस्येव तेन सम्बन्धेन तद्वृत्तिर्यो धर्मः तत्सम्बन्धेन तदवच्छिन्नप्रतियोगितावच्छेदकताकभेदस्यापि उक्तयुक्तिबलात्सिद्धिरिति तन्न वह्निमान् धूमात् गुणवान् द्रव्यत्वादित्यादौ विषयितादिसम्बन्धेन वह्नित्वगुणत्वादिमतः साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावस्य वारणाय व्यापकतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वेन प्रतियोगितावच्छेदकताया अवश्यं निवेशनीयतया तादृशाभावस्य प्रामाणिकत्वेऽपि लक्षणघटकत्वासम्भवात् । ननु कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगत्वावच्छिन्नाभावस्यापि लक्षणघटकतया तदधिकरणे हेतोर्वृत्तेरव्याप्तिः न च साध्यतावच्छेदकावच्छिन्नव्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशस्य निष्फलतया कपिसंयोगत्वादेः साध्यव्यापकतानवच्छेदकत्वेन तादृशाभावानां न लक्षणघटकतेति वाच्यं संयोगेन वह्न्यादिसाध्यकस्थले वह्नित्वादीनां संयोगरूपसाध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकत्वसम्पत्तये व्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशनस्यावश्यकत्वात् अन्यथा साध्यवदुत्पत्तिकालावच्छेदेन वह्नित्वद्रव्यत्वाद्यवच्छिन्नस्य संयोगसम्बन्धेनाभावसत्त्वात् साध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकस्यैवाप्रसिद्धिप्रसङ्गात् तथा च तत्तदधिकरणपदेन तत्तदभावीयव्याप्यवृत्तितानिरूपकाधिकरणमेव विवक्षणीयं व्याप्यवृत्तितानिरूपकत्वं च निरवच्छिन्ना-

धेयतानिरूपकत्वम् एवं च संयोगाद्यभावस्य तथाविधाधिकरणं गुणादिरेवेति न दोषः । इत्थं च कपिसंयोगाभाववान् कपिसंयोगाधिकरणत्वाभाववान् वा मेयत्वादित्यादौ कपिसंयोगतदधिकरणत्वादिरूपाणां यावत्साध्याभावान्तःपातिनामभावानां तथाविधाधिकरणाप्रसिद्ध्या ऽव्याप्तिरतः साध्याभावं व्याप्यवृत्तित्वेन विशिनष्टि व्याप्यवृत्तिश्चेति । तथा च तादृशाभावस्य तथाविधयावदन्तर्गततया तथाविधाधिकरणाप्रसिद्धावपि न क्षतिः व्याप्यवृत्तित्वं च निरवच्छिन्नवृत्तिकत्वं न त्ववच्छिन्नवृत्तिकान्यत्वं तथा सति संयोगेन धूमसाध्यकव्यभिचारिणि संयोगेन धूमत्वाद्यवच्छिन्नधूमाद्यभावस्य महानसादावनवच्छिन्नवृत्तिकतया ऽयोगोलकान्यत्वाद्यभावे साध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहेण व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया ऽतिव्याप्तिः एवं च वह्न्यभावसंयोगाद्यभावस्यापि क्वचिन्निरवच्छिन्नवृत्तिकत्वेन लक्षणघटकतया तदीयव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वाभावमादाय दोषवारणायाधिकरणपदस्य व्याप्यवृत्तितानिरूपकाधिकरणपरत्वमावश्यकमित्यवधेयम् । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावे साध्ये आत्मत्वादिहेतावव्याप्तिः व्याप्यवृत्तेः साध्याभावस्याकाशाभावस्य व्याप्यवृत्तितानिरूपकाधिकरणे आत्मादौ हेतोर्वृत्तेरतस्तदभावीयप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिरूपकाधिकरणमेव तत्तदधिकरणपदेन विवक्षणीयं प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशात् एतद्रूपान्यत्वविशिष्टगुणत्ववान् गुणत्वादित्यादौ समवायरूपसाध्यतावच्छेदकसम्बन्धघटितविशिष्टसाध्यव्यापकतावच्छेदकविशिष्टगुणत्वत्वाद्यवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यनिरूपकतया हेतुमत्यसत्त्वेऽपि नातिव्याप्तिः तथा च कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशत्वाभावाभावादिसाध्यकात्मत्वाद्यव्याप्तिः तत्र व्याप्यवृत्तियावत्साध्याभावान्तःपातिनः आकाशत्वाभावादेः प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिरूपकाधिकरणाप्रसिद्धेः कालेऽप्याकाशावच्छेदेन तादृशसाध्यरूपतदभावीयप्रतियोगिसत्त्वात् सर्वत्रैव तादृशाभावस्य प्र-

तियोगिसमानाधिकरणत्वात् अतो व्याप्यवृत्तित्वमुपेक्ष्य तादृशाभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यमेव निवेशयति प्रतियोगितावच्छेदकावच्छिन्नेति । अत्र च समनिताभावैक्यमते सर्वेषामेव व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितया तत्प्रतियोग्यनधिकरणाप्रसिद्ध्या तदसंग्रहः विशिष्टसाध्यव्यापकतावच्छेदकावच्छिन्नयत्किञ्चित्प्रतियोगिताश्रयवैयधिकरण्यानिवेशे च वाच्यत्वत्वादिना घटाद्यभावस्य घटादिव्यधिकरणत्वेन लक्षणघटकतानिर्वाहेऽपि प्रतियोगिभेदेन प्रतियोगिताभेदमते जन्यज्ञानविषयत्वादिसाध्यकस्थले यत्किञ्चित्कालावच्छेदेन परमाण्वादौ प्रसिद्धस्य साध्यतावच्छेदकावच्छिन्नाभावस्य यत्किञ्चित्प्रतियोग्यनधिकरणवृत्तेः प्रतियोगिवैयधिकरण्यनिरूपकाधिकरणाप्रसिद्ध्या ऽव्याप्तिः तथापि यत्किञ्चित्प्रतियोगितान्तर्भावेन तादृशाधिकरणत्वप्रसिद्धिसम्पादने यत्किञ्चित्प्रतियोगिताश्रयप्रतियोगिवैयधिकरण्यनिरूपकाधिकरणे तत्र हेतोर्वृत्त्याव्याप्तितादवस्थ्यम् एवं वह्निमान् धूमादित्यादौ द्रव्यत्वाद्यवच्छिन्नस्य संयोगेन योऽभावस्तस्य द्रव्येऽप्युत्पत्तिकालावच्छेदेन वर्तमानस्य गुणादौ प्रतियोगिव्यधिकरणस्य प्रतियोगिवैयधिकरण्यनिरूपकाधिकरणे गुणादौ हेतुतावच्छेदकसम्बन्धेन धूमेऽप्रसिद्ध्या ऽव्याप्तिवारणाय हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे प्रतियोगिवैयधिकरण्यमभावे विशेषणं देयम् एवं चैतद्रूपान्यत्वविशिष्टसत्तावान् जातेरित्यादौ समवायघटितसाध्यव्यापकतावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नाभावस्य हेत्वधिकरणे सत्तादिरूपप्रतियोगिसमानाधिकरणतया व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतया ऽतिव्याप्तिरतः प्रतियोगितावच्छेदकावच्छिन्नत्वोपादानम् । अथ केवलान्वयिसाध्यकस्थले लक्षणघटकानां वाच्यत्वत्वाद्यवच्छिन्नघटाद्यभावानां सर्वेषामेव प्रतियोगितावच्छेदकवाच्यत्वत्वाद्यवच्छिन्नानधिकरणाप्रसिद्धिः न च यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वमेव निवेशनीयं तथा च समनियताभावानामैक्योपगमेन व्यतिरेकितावच्छेदकधर्मस्यापि उक्ताभावप्रतियोगितावच्छेदकतया तदवच्छिन्नानधिकरणत्वस्य प्रसिद्ध्या तेषां

लक्षणघटकतेति वाच्यं तथा सति संयोगाभावसाध्यकस्थले संयोगात्मकाभावस्य यत्किञ्चित्प्रतियोगितावच्छेदकसमवेतसामान्याभावत्वावच्छिन्नानधिकरणवृत्तित्वात् तद्यावर्तनासम्भवात् विशिष्टसाध्यव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदकाविशेषणे उक्तस्थले तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणाप्रसिद्धेर्दुर्वारत्वात् प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वनिवेशे च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यप्रसिद्ध्या तादृशप्रतियोगिवैयधिकरण्यं दुर्घटमिति । अत्र केचित् स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिसमानाधिकरणा ये ये तदन्यत्वं व्यधिकरणान्तार्थः न तु प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वं व्यधिकरणधर्मावच्छिन्नाभावस्य विशिष्टप्रतियोग्यप्रसिद्ध्या ऽसंग्रहात् न चैवं धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकीभूतसंयोगसम्बन्धघटितव्यापकतावच्छेदकधूमत्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकानां धूमाद्यभावानाम् उत्पत्तिकालावच्छेदेन धूमादिमति वृत्तेर्व्यधिकरणधर्मावच्छिन्नाभावस्येव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणतयातिव्याप्तिरिति वाच्यं साध्यतावच्छेदकसम्बन्धेन व्यापकतामनिवेश्य येन सम्बन्धेन व्यापकता तत्सम्बन्धावच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभावं निवेश्य विषयतासम्बन्धेन साध्यव्यापकस्य ज्ञानस्य समवायसम्बन्धावच्छिन्नाभावमादायोक्तदोषस्य वारणीयतया अयोगोलकभेदादेरभावमादायैवातिव्याप्तिवारणसम्भवात् यादृशप्रतियोगितावच्छेदको यो धर्मस्तद्विशिष्टतादृशप्रतियोगिताश्रयसामानाधिकरण्यं विवक्षणीयं तेन समनियताभाषैक्यमते वाच्यत्वत्वादिना घटाद्यभावस्यापि घटत्वादिना वाच्यत्वाभावाभिन्नतया वाच्यत्वादिप्रतियोगिकत्वेन प्रतियोगितावच्छेदकवाच्यत्वत्वविशिष्टवाच्यत्वादिरूपप्रतियोगिसमानाधिकरणत्वेऽपि न क्षतिः न चैवमपि वाच्यत्वादिसाध्यके सर्वेषामेवाभावानां पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिना समानाधिकरणतया प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धिरिति वाच्यं स्वावच्छेदकविशिष्टस्वाश्रयाधिकरणवृत्त्यभावीयप्रतियोगिताभिन्नत्वे-

न व्यापकतावच्छेदकावच्छिन्नप्रतियोगिता विशेषणीया इत्यत्रैव प्रतियोगितावच्छेदकेत्यादेस्तात्पर्यात् वाच्यत्वत्वावच्छिन्नघटादिनिष्ठप्रतियोगितायाः स्वावच्छेदकविशिष्टस्वाश्रयाप्रसिद्ध्या निरुक्तप्रतियोगिताभिन्नत्वेन तन्निरूपकाभावमादाय लक्षणसमन्वयसम्भवात् । न च तथापि एतदभावभिन्नं मेयत्वादित्यादौ साध्यव्यापकतावच्छेदकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैतदभावमात्रवृत्तेरभावमात्राधिकरणतया ऽधिकरणस्वरूपत्वादेतदभावभेदादिरूपप्रतियोगिसमानाधिकरणकतया निरुक्तप्रतियोगिताभिन्नव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकोऽभावो व्यधिकरणधर्मावच्छिन्नाभाव एवेत्यतिव्याप्तिरिति वाच्यं स्वावच्छेदकविशिष्टस्वाश्रयाधिकरणे स्वनिरूपकाभावत्वेन वर्तते योऽभावस्तदीयप्रतियोगिताभिन्नत्वेन व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताया विशेषणीयतया एतदभावाधिकरणे एतदभावभिन्ने एतदभावत्वेनैतदभावरूपैतदभावभेदाभावस्य वृत्तावपि तादृशाधिकरणे एतदभावभेदो नास्तीत्यप्रतीत्या एतदभावभेदत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तस्यावृत्तित्वादेतदभावभेदत्वावच्छिन्नप्रतियोगितायां निरुक्तप्रतियोगिताभेदस्याक्षतत्वादित्याहुः । तच्चिन्त्यं व्यापकताघटकसम्बन्धावच्छिन्नाभावनिवेशे व्यापकताशरीरे प्रतियोगिवैयधिकरण्यस्याभावाविशेषणत्वेऽपि संयोगादिसाध्यकव्यभिचारिणि अयोगोलकान्यत्वाभावमादायातिव्याप्तिवारणसम्भवात् तत्र तन्निवेशे प्रयोजनाभावेनाव्याप्यवृत्तिसाध्याभावमादायाव्याप्त्यनवकाशात् अभावे व्याप्यवृत्तित्वविशेषणव्यावृत्त्यसङ्गतेः अस्तु वा साध्यव्यापकतावच्छेदकस्यापि साध्यवन्निष्ठव्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकतया तदभावव्यावर्तनाय व्यापकताशरीरे प्रतियोगिवैयधिकरण्यप्रवेशस्तथाप्येतादृशप्रतियोग्यसामानाधिकरण्यविवक्षणे तस्यातिव्याप्तिवारणप्रयोजनकत्वाभिधानासङ्गतिः अभावे तदनिवेशे व्याप्यवृत्तिसाध्यकेऽपि यावत्साध्यवद्विषयकज्ञानव्यक्तिविशेषस्य प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकताश्रयत्वात् कालविशेषावच्छेदेन हेतुमति तदभाववृत्तेरसम्भवस्यैव प्रसङ्गात् । अत्र वदन्ति । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनाधिकरणवृत्तित्व-

मेव तदर्थः न च व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यप्रसिद्धेः केवलान्वयिसाध्यके प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्धेरव्याप्तिरिति वाच्यं प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वं हि स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिवृत्तिप्रतियोगितावच्छेदकताकभेदवद्वृत्तित्वं ज्ञेयत्वत्वादिना वाच्यत्वाद्यभावस्य तादृशभेदसमानाधिकरणतया प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यं सुघटमेव व्यधिकरणधर्मावच्छिन्नस्वप्रतियोगिवृत्तिप्रतियोगितावच्छेदकज्ञेयत्वत्वादिना वाच्यत्ववद्भेदस्यैव तथात्वात् कपिसंयोगाभाववान्भेदत्वादित्यादौ कपिसंयोगादिरूपसाध्याभावस्यापि ज्ञेयत्वत्वादिना कपिसंयोगाभावादिमद्भेदसामानाधिकरण्यसत्त्वात् । तस्य च स्वप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिरूपकाधिकरणाप्रसिद्धेरतः प्रतियोगितावच्छेदकावच्छिन्नत्वं भेदप्रतियोगितावच्छेदकतायां विशेषणम् । तत्रैव कपिसंयोगात्मकाभावीयप्रतियोगितावच्छेदकीभूतसमवेतसामान्याभावत्वावच्छिन्नसमवेतसामान्याभाववद्भेदस्यापि निरुक्तप्रतियोगितावच्छेदकताकत्वात् तत्सामानाधिकरण्यमादाय कपिसंयोगाद्यात्मकाभावानां प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यवारणाय साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदकं विशेषणीयं समवेतसामान्याभावत्वादेः कपिसंयोगाभावादिव्यापकतानवच्छेदकतया न दोषः न चात्र साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदके विशेषिते तत्तत्साध्यव्यक्त्यभावादीनामीदृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यं न घटते साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकीभूतस्वप्रतियोगितावच्छेदकाप्रसिद्धेः तथा च साध्याभावश्चेत्यादिना साध्याभावपदेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावविवक्षणासङ्गतिरिति वाच्यं साध्याभावश्चेत्यादिग्रन्थस्य व्याप्यवृत्तित्वानिवेशकल्पेऽभावे साध्यतावच्छेदकावच्छिन्नेत्यादिविशेषणपरत्वात् द्वितीयकल्पे च प्रतियोगितावच्छेदकावच्छिन्नेत्यत्र प्रतियोगितावच्छेदकस्य-

तादृशव्यापकतावच्छेदकत्वेन विशेषणात्तादृशरूपावच्छिन्न-प्रतियोगिताक एवाभावो ऽत्र लक्षणघटक इत्यर्थकत्वात् ए-तत्कल्पे चाभावांशे तादृशप्रतियोगिताकत्वविशेषणविरहेऽपि क्ष-तिविरहात् तत्रैव कपिसंयोगाभावत्वादिना घटादिमद्भेदसामा-नाधिकरण्यमादाय तद्दोषवारणाय स्वप्रतियोगिवृत्तित्वं भेदप्रति-योगितावच्छेदकतायां विशेषणं संयोगसामान्याभावादेरपि सं-योगाद्यात्मकाभावप्रतियोगितया कपिसंयोगाद्यात्मकाभावस्य प्र-तियोगितावच्छेदककपिसंयोगाभावत्वादिना संयोगसामान्याभाव-वद्भेदसामानाधिकरण्यमादाय तद्दोषतादवस्थ्यवारणाय या-दृशप्रतियोगितावच्छेदको यो धर्मस्तदवच्छिन्नतादृशप्रतियोगि-ताश्रयवृत्तित्वमेव भेदप्रतियोगितावच्छेदकतायां निवेशनीयं कपिसंयोगाभावत्वम् च कपिसंयोगाभावनिष्ठप्रतियोगितायामेवाव-च्छेदकं संयोगसामान्याभावश्च न तादृशप्रतियोगिताश्रय इति न तादृशभेदमादाय दोषः भेदप्रतियोगितावच्छेदकतायां स्वप्र-तियोगितावच्छेदकसम्बन्धावच्छिन्नत्वमपि निवेशनीयं तेन कपि-संयोगाद्यात्मकाभावस्य कपिसंयोगाभावत्वावच्छिन्नकपिसंयोगाभा-वाविनिष्ठविषयितासम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदसा-मानाधिकरण्येऽपि न तद्दोषतादवस्थ्य एवं प्रतियोगितावच्छेद-कावच्छिन्नप्रतियोगिवैयधिकरण्यनिरूपकत्वं स्वनिष्ठं यत स्वप्रतियो-गितावच्छेदकावच्छिन्नप्रतियोगिनिष्ठप्रतियोगितावच्छेदकताकभेद-मानाधिकरण्यं तन्निरूपकत्वम् अतो व्यधिकरणधर्मावच्छिन्ना-भावस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यप्रसिद्धावपि न ता-दृशाधिकरणाप्रसिद्धिः कपिसंयोगि एतत्वादित्यादौ हेत्वधिकर-णेऽपि द्रव्यत्वादिना कपिसंयोगादिमतः कपिसंयोगत्वादिना च द्रव्यत्वादिमतो भेदसत्त्वात् तस्यापि तादृशाधिकरणत्वाप-त्तितो ऽवच्छिन्नान्तानिवेशान्तयोरुपादानम् पूर्वक्षणादिवृत्तित्ववि-शिष्टस्याभावत्वादिरूपप्रतियोगितावच्छेदकरूपेण कपिसंयोगादि-मद्भेदमादाय तद्दोषतादवस्थ्यमतः तत्प्रतियोगिताश्रयनिष्ठप्रतियो-गितावच्छेदकतायां तदवच्छेदकावच्छिन्नत्वं विवक्षणीयम् एवं वि-शिष्टसाध्यव्यापकतावच्छेदकत्वेनापि प्रतियोगितावच्छेदकं विशे-षणीयं तेन संयोगो द्रव्यत्वादित्यादौ संयोगाभावस्य द्रव्यवृत्ति-

स्यात्तत्प्रतियोगितावच्छेदकद्रव्यवृत्तित्वविशिष्टत्वावच्छिन्नाभावत्वाच्छिन्नद्रव्यवृत्तित्वविशिष्टत्वावच्छिन्नाभावनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वस्य द्रव्ये सत्त्वेऽपि तस्य न प्रति वैय्यधिकरण्यनिरूपकत्वापत्तिः एवं सम्बन्धविशेषनिवेशनमपि पूर्ववद्बोध्यं तथा च स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाः यावन्तः प्रतियोगिताः तदवच्छेदकावच्छिन्नतदाश्रयनिष्ठप्रतियोगितावच्छेदकताकभेदवदधिकरणवृत्तित्वस्वव्यापकप्रतियोगिताकतत्तत्प्रतियोगितानिरूपकाभावसजातीयाभाववत्त्वमिति निष्कर्ष इति संक्षेपः । अभावे यथाश्रुतसाध्यप्रतियोगिकत्वं परित्यज्य स्वप्रतियोगितावच्छेदके साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वविशेषणस्य व्याप्यवृत्तित्वादिविशेषणस्य च व्यावृत्तिमाह तेनेति । तत्तत्साध्यव्यक्तेरभाववति हेतोर्वृत्तावपि नाव्याप्तिरिति योजना । एतद्रूपवानेतद्रसादित्यादौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तिसाध्यमेव तत्र हेतोर्वृत्तेर्लक्षणगमनसम्भवान्नासम्भवः अथ साध्यवति तत्र एतद्रूपवद्भेद्रूपत्वावच्छिन्नाभावसत्त्वेन तत्रापि लक्षणगमनासम्भवादसम्भवः न च नासौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः । प्रतियोगितावच्छेदकीभूतोभयत्वेन रूपेणोभयभेदस्योभयवतोऽप्रसिद्धत्वेनाप्रसिद्धिरिति वाच्यमुभयत्वेनान्यतरभेदस्य तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नतत्प्रतियोगिवृत्तिप्रतियोगितावच्छेदकताकस्योभयत्वेनान्यतराभाववति सत्त्वात् तस्यापि तादृशभेदमादाय तत्त्वादिति चेन्न व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य स्वव्यापकसाध्यतावच्छेदककप्रतियोगिताकस्य वाऽभावस्य निवेशे तादृशोभयाभाववारणं सम्भवतीत्यभिप्रायेणाव्याप्तिलिखनात् अव्याप्यवृत्तेर्येति । यद्यप्येतद्ग्रन्थस्य स्वयमुक्तस्याभावे व्याप्यवृत्तित्वादिनिवेशनस्य प्रयोजनप्रदर्शनपरत्वे साध्यपदं कपिसंयोगाभावादिपरमेव वाच्यं न तु कपिसंयोगादिपरं कपिसंयोगादिसाध्यकस्थले कपिसंयोगाद्यभावस्य लक्षणघटकत्वेऽपि स्वाधिकरणपदस्य व्याप्यवृत्तित्वादिनिरूपकाधिकरणपरतया अभावे व्याप्यवृत्तित्वादिनिवेशनेऽप्यावश्यकत्वात् तदीयत्वं व्याप्यवृत्तितानिरूपकाधिकरणे गुणादौ हेतो-

रवृत्तेरव्याप्यनवकाशात् कपिसंयोगाभावादेर्गुणादौ निरवच्छिन्नवृत्तिकत्वादिरूपव्याप्यवृत्तित्वादिसत्त्वेन तादृशविशेषणेन व्यावर्तनासम्भवाच्च तथा च कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावस्य लक्षणघटकत्वेऽपि तदीयव्याप्यवृत्तितानिरूपकाधिकरणाप्रसिद्धिरेवाव्याप्तिप्रयोजिका न तु तादृशाभावीयाव्याप्यवृत्तितानिरूपकाधिकरणे हेतोर्वृत्तिरिति वृत्तावपि हेतोरिति न सङ्गच्छते तथाप्यभावे व्याप्यवृत्तित्वादिविशेषणानुपादाने यावदन्तर्गतकपिसंयोगादीनां व्याप्यवृत्तितानिरूपकाधिकरणाप्रसिद्धिः स्यादिति तादृशाधिकरणपर्यन्तं न विवक्षणीयं तथा सति अव्याप्यवृत्तिसाध्यकस्थले हेतोः साध्याभाववद्वृत्तित्वनिबन्धनाव्याप्तिः सा च व्याप्यवृत्तिताद्युपादानाच्च सम्भवतीत्यभिप्रायः। अथवा कपिसंयोगादिसाध्यकस्थले हेतोः साध्याभावीयाव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वं तत्स्थलीयाव्याप्तिवारकव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वनिवेशौपयिकमतस्तदधीना या कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावीयतादृशाधिकरणाप्रसिद्धिनिबन्धनाव्याप्तिस्तत्सम्पादकमपीति न तादृशग्रन्थासङ्गतिः। एतेन व्याप्यवृत्तितानिरूपकाधिकरणानिवेशे-व्याप्यवृत्तिसाध्यकस्थले क्षणविशेषवृत्तित्वादिविशिष्टसाध्याभावस्य प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकस्याव्याप्यवृत्तेरधिकरणे हेतोर्वृत्त्या लक्षणगमनासम्भवादसम्भव एव सम्भवतीत्यव्याप्तिरिति लिखनं न युज्यत इत्यपि निरस्तम्॥

तत्तत्साध्याभाववद्वृत्तित्वस्य हेतुवृत्तितानवच्छेदकाविशेषधर्मैक्यासत्त्ववृत्तिधर्मावच्छिन्नाभावमादाय व्यभिचारिण्यतिव्याप्तिस्तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावं निवेश्य चेद्वार्यते तदा व्यधिकरणधर्मावच्छिन्नसाध्याभावसजातीयस्य तादृशस्य तद्वद्वृत्तित्वत्वेन घटाद्यभावस्य प्रसिद्धिः गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाङ्गीकार एव सम्भवति अन्यथा तादृशाभाववद्वृत्तित्वत्वस्य वृत्तित्वत्वरूपलघुधर्मसमनियततया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्धेः अन्यूनानतिरिक्तवृत्तित्वरूपावच्छिन्नत्वनिवेशे ह्रदवृत्तित्वह्रदान्यनिर्धूमवृत्तित्वोभयाभावादेर्निर्धूमवृत्तित्वत्वादिसम-

नियतधर्मावच्छिन्नप्रतियोगिताकतया तद्वति

करूपावच्छिन्नाभावादिनिवेशे च निर्धूमवृत्तित्वत्वादिना वृत्तित्वघटान्यतराभावमादाय

तत्तदधिकरणवृत्तित्वाभावपदेन विवक्षति तत्तदिति ।

( दी० ) तत्तदधिकरणवृत्तित्वाभावश्च यद्वृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकः तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताको वा बोध्यस्तेन - वृत्तित्वस्य पार्थिवत्वादिविशेषितस्य द्वित्वाद्यवच्छिन्नस्य साध्याभाववद्वृत्तित्वस्याभावमादाय नातिप्रसङ्गः ।

(गा०) व्यापकान्तमनवच्छिन्नान्तं च प्रतियोगिताविशेषणं प्रथमविशेषणप्रयोजनमाह तत्तत्साध्याभावव्यक्तिविशेषेति । यद्व्यक्तावपि न वर्तते तादृशह्रदादिरूपव्यक्तीत्यर्थः । रूपकहेत्वधिकरणमात्रवृत्तिर्योऽयोगोलकादिव्यक्तिविशेषावृत्तित्वादिरूपसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावस्तद्व्यक्तिविशेषवृत्तित्वाभावस्य हेतावसम्भवात् किञ्चिद्विशिष्टस्य तादृशाभाववद्वृत्तित्वस्याभावमादायातिप्रसङ्गं दर्शयति पार्थिवत्वादिविशेषितस्येति अग्रिमेण साध्याभाववद्वृत्तित्वस्येत्यनेनान्वितम् । वह्न्यादौ पार्थिवत्वादिविशेषणाभावात्तद्विशिष्टनिर्धूमवृत्तित्वाभावस्यापि तत्र सत्त्वात्तमादायेत्यर्थः । द्वितीयविशेषणप्रयोजनं दर्शयति द्वित्वाद्यवच्छिन्नस्येति । घटानिर्धूमवृत्तित्वोभयत्वाद्यवच्छिन्नस्येत्यर्थः । नातिप्रसङ्ग इति । ह्रदादिवृत्तित्वत्वपार्थिवत्वादिविशिष्टनिर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावप्रतियोगितायाः वह्न्यादिवृत्तिनिर्धूमवृत्तित्वाद्यवृत्तितया तत्तत्साध्याभाववद्वृत्तित्वत्वाव्यापकत्वात् द्वित्वावच्छिन्नाभावप्रतियोगितायाः द्वित्वादिवद्व्यासज्यवृत्तिताविरहेण निर्धूमवृत्तित्वादिनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपानिर्धूमवृत्तित्वत्वाद्यव्यापकत्वसत्त्वेऽपि व्यासज्यवृत्तिधर्मावच्छिन्नत्वात्तादृशाभावानां लक्षणाघटकत्वादिति भावः ।

व्यासज्यवृत्तिधर्मस्य तत्तत्साध्याभाववद्वृत्तित्वनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वविरहात् तत्तत्साध्याभाववद्वृत्तित्वव्यापकधर्मावच्छिन्नाभावनिवेशे द्वित्वावच्छिन्नाभावमादायातिप्रसङ्गस्य वारणसम्भवेऽपि प्रतियोगितायां व्यापकत्वविशेषणाप्रवेशे निर्धूमवृत्तित्वत्वादिना ह्रदादिवृत्तित्वघटान्यतराभावमादायातिप्रसङ्गो न शक्यते वारयितुमिति तत्र तद्विशेषणप्रवेशस्यावश्यकत्वे व्यासज्यवृत्तिधर्मावच्छिन्नाभाववारणाय तादृशधर्मानवच्छिन्नत्वमेव तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकधर्मावच्छिन्नत्वापेक्षया लाघवाद्विवेशयितुमुचितमिति तदेव निवेशितं व्यासज्यवृत्तित्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम् ॥

( दी० ) अत्र च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यं तेन वह्न्यभाववति स्वावयवे धूमस्य वृत्तावपि न दोषः । इत्थं च साध्याभावोऽपि हेतुतावच्छेदकसम्बन्धेन कस्य चिदाधिकरणे वर्तमानो ग्राह्यः तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिरिति ।

( गा० ) साध्याभाववद्वृत्तित्वमिति । साध्याभाववत्सम्बद्धत्वमित्यर्थः । तेन तादात्म्यसम्बन्धेन वृत्तेरप्रसिद्धावपि न तत्सम्बन्धावच्छिन्नहेतुकस्थलेऽव्याप्तिः सम्बन्धप्रतियोगित्वरूपसम्बद्धत्वैकदेशे सम्बन्धे हेतुतावच्छेदकसम्बन्धेनेति तृतीयार्थाभेदान्वयः । वृत्तावपीति सम्बद्धत्वेऽपीत्यर्थः । न दोष इति । हेतुतावच्छेदकसम्बन्धानिवेशे वह्निमान् धूमादित्यत्र वह्न्यभाववत्संयुक्तत्वत्वावच्छिन्नाभावप्रतियोगितायाः वह्न्यभाववत्समवेतत्वाद्यवृत्तितया सामान्यतो वह्न्यभाववद्वृत्तित्वत्वं प्रत्यव्यापकत्वेन तादृशाभावस्य लक्षणघटकत्वानुपपत्तेर्वह्न्यभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य वह्न्यद्वृत्तित्वसामान्याभावस्य वह्न्यभाववत्समवेतत्ववति धूमेऽसत्त्वादव्याप्तिः प्रसज्यते हेतुतावच्छेदकसम्बन्धानिवेशे च निर्वह्निसंयुक्तत्वत्वावच्छिन्नाभावस्यापि तादृशसम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वेन लक्षणघटकतया त-

मादाय लक्षणसमन्वय इति भावः । इत्थं च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वविवक्षणे च सर्वांति शेषः । तद्विवक्षणे च वक्ष्यमाणाप्रसिद्धिविरहादुपदम्भासङ्गतिः । हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्तमान इति । अनुयोगितासम्बन्धेन हेतुतावच्छेदकसम्बन्धवद्वृत्तिरित्यर्थः । अथवा हेतुतावच्छेदकसम्बन्धेन धर्मवद्वृत्तिरित्यर्थः । विशिष्य हेतुतावच्छेदकपुरस्कारेण हेतुमत्त्वनिवेशनसम्भवेऽपि बहुपदार्थघटितहेतुतावच्छेदकस्थले धर्मत्वेन निवेशापेक्षया तेन रूपेण निवेशे गौरवमिति सामान्यतो निवेशलाभाय कस्यचिदित्यभिहितम् । अथ द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यापि साध्याभावस्य सत्तादिरूपहेतुसामानाधिकरण्यसम्भवेऽपि हेतुतावच्छेदकविशिष्टहेतुसमानाधिकरणानिरुक्तसाध्याभावानां व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वनियमात्तादृशहेतुसमानाधिकरणत्वेनाभावविशेषणे केवलव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वरूपेणैव साजात्यविवक्षणं सम्भवतीति तन्निवेशनमेवोचितमिति चेन्न तथा सति तादृशयावत्साध्याभावसजातीयवत्त्वस्यैव लक्षणत्वं सम्भवतीति व्यभिचारिणि समानाधिकरणधर्मावच्छिन्नाभावस्यापि विशिष्टहेतुसमानाधिकरणत्वेन लक्षणघटकतया तद्घटकयावदभावसजातीयाप्रसिद्ध्यैवातिव्याप्तिविरहात् सद्धेतौ तादृशयावदभावसजातीयव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावमादायैव लक्षणसमन्वयसम्भवादिति साध्याभाववद्वृत्तित्वाभावघटकविशेषणवैयर्थ्यापत्तेः । हेतुतावच्छेदकसम्बन्धेनेति समवायादिसम्बन्धेनेत्यर्थः । साध्याभाववद्वृत्तित्वस्य स्वसमानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य । न क्षतिरिति । तादृशसाध्याभावस्य समवायसम्बन्धानुयोग्यवृत्तितया व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात्तद्वति च तादृशसम्बन्धेनापि वृत्तेः प्रसिद्धेरिति भावः । अत्र च द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादावव्याप्तिर्विशेषणविशेष्यसम्बन्धस्य परम्परया हेतुत्वमभ्युपेत्य वारणीयेत्यभिप्रेत्य हेतुतावच्छेदकसम्बन्धेन किञ्चिदधिकरणवृत्तित्वमभावे विवक्षितं यदि च सत्तादेरेव विशिष्टसत्तात्वादिना व्याप्यत्वं हेतुतावच्छेदकविशिष्टनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधि-

करणतासामान्ये तत्तत्साध्याभावसजातीयतत्तदधिकरणानुयोगिकत्वाभावं तत्तत्साध्याभाववदवृत्तितासामान्ये तत्तत्साध्याभावसजातीयहेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविशिष्टहेतुतावच्छेदकावच्छेद्यत्वाभावं वा निवेश्य निवार्यते तदा जातिमान् सत्त्वादित्याद्यनुपदर्शिताप्रसिद्धिनिबन्धनाव्याप्तेरुक्तविवक्षामन्तरेणैव निवारणं सम्भवतीत्यवधेयम् ।

मिश्रास्तु साध्याभाववदवृत्तित्वाभावरूपव्याप्तेर्जातिमान् सत्त्वाद्द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिमालोच्य सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वरूपां व्याप्तिं साजात्यादिघटनया परिष्कृतवन्तस्तत्परिष्कृते च यथाश्रुते वक्ष्यमाणदोषमुद्धर्तुमभावप्रतियोगित्वस्थले स्वावच्छिन्नव्यापकतावच्छेदकतत्प्रतियोगितावच्छेदकत्वरूपपारिभाषिकतत्प्रतियोगितावच्छेदकत्वाश्रयहेतुतावच्छेदकवत्त्वं निवेशयन् तादृशलक्षणमाह यद्वेति ।

( दी० ) यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वम् ।

( गा० ) तादृशा व्याप्यवृत्तयः साध्याभावाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य एकैकं तत्तदभावसजातीयस्य तत्तदभावव्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तत्प्रतियोगितावच्छेदकं यद्धेतुतावच्छेदकावच्छिन्ननिरूपितव्यापकतावच्छेदकं तद्रूपवत्त्वं तत्त्वं तेन रूपेण व्याप्यत्वं वह्निमान् धूमादित्यादौ वह्नित्वाद्यवच्छिन्नवह्न्यभावसजातीयस्तद्व्यापकीभूतो धूमत्वाद्यवच्छिन्नधूमाद्यभावः वह्नित्वावच्छिन्नघटाभावसजातीयस्तद्व्यापकीभूतो धूमत्वाद्यवच्छिन्नघटाद्यभावस्तत्प्रतियोगितावच्छेदकं धूमत्वावच्छिन्नव्यापकतावच्छेदकमिति लक्षणसमन्वयः । व्यभिचारिणि धूमत्वावच्छिन्नवह्न्य-

भावसजातीयतत्तदभावव्यापकवह्नित्वाद्यवच्छिन्नघटाद्यभावतादृशवह्नित्वाद्यवच्छिन्नवह्न्यभावसजातीयतत्तदभावव्यापकवह्नित्वावच्छिन्नघटाद्यभाववह्नित्वावच्छिन्नवह्न्यभावप्रतियोगितावच्छेदकवह्नित्वादेः वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वेऽपि तादृशयावत्साध्याभावान्तर्गतधूमत्वावच्छिन्नधूमाभावसजातीयतद्व्यापकाभावप्रतियोगितावच्छेदकस्य कस्यापि वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वाभावान्नातिव्याप्तिः । प्रथमाभावे व्याप्यवृत्तित्वविशेषणात्कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगत्वाद्यवच्छिन्नकपिसंयोगाद्यभावस्य केवलान्वयिनः सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्त्यभावस्याप्रसिद्धावपि न क्षतिः व्याप्यवृत्तित्वविशिष्टतदभावं प्रति एतद्वृक्षत्वाद्यभावस्य व्यापकत्वात् साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकताया विवक्षणीयतया संयोगेन द्रव्यस्याव्याप्यवृत्तितामते संयोगेन तत्साध्यके तादृशसम्बन्धेन व्यापकताप्रसिद्ध्यर्थं व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यस्यावश्यं निवेशनीयतया साध्यवन्निष्ठप्रतियोगिसमानाधिकरणाभावप्रतियोगितावच्छेदकस्यापि कपिसंयोगत्वादेः साध्यव्यापकतावच्छेदकत्वमक्षतमिति ध्येयम् । नानाव्यक्तिसाध्यके तत्तत्साध्यव्यक्त्यभावस्य नानाधिकरणकैकव्यक्तिसाध्यके यत्किञ्चिदधिकरणवृत्तित्वविशिष्टसाध्याभावस्य व्यापकीभूताभावो न हेतुतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताक इति तादृशसाध्याभावव्यावर्तनाय साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वनिवेशने व्यापकता च साध्यतावच्छेदकसम्बन्धघटिता ग्राह्या तेन समवायेन द्रव्यत्वादिसाध्यकगुणादिहेतौ विषयतया साध्यव्यापकज्ञानादेः साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावं प्रति हेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वभावस्याव्यापकत्वेऽपि न क्षतिः साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः तेन संयोगादिना वह्न्यादिसाध्यकधूमादिहेतौ समवायादिसम्बन्धावच्छिन्नवह्न्यभावं प्रति संयोगादिना धूमादेरभावस्याव्यापकत्वेऽपि न क्षतिः । व्यभिचारिणि समानाधिकरणधर्मावच्छिन्नाभावव्यापकव्यधिकरणहेतुतावच्छेदकावच्छिन्नप्रतियोगिताकाभावमादायातिप्रसक्तिवारणाय सजातीयत्वो-

पादानं व्यतिरेकिसाध्यकस्थले यावत्साध्याभावसजातीयाप्रसिद्ध्या एकैकतत्सजातीयस्वनिवेशनं साजात्यघटकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वादिकमनुगतं निरुक्तभेदकूटरूपमेव ग्राह्यम्। अन्यथा यत्र भिन्नभिन्नसम्बन्धेन साध्यहेतुभावस्तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य यादृशप्रतियोगितानिरूपकत्वं तस्यैव तद्रूपतया सजातीयत्वेन तत्सजातीयाभावनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः सजातीयस्यापि साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावस्य निवेशे हेतुव्यापकताया अपि तत्सम्बन्धघटिताया विवक्षणे उक्ताप्रसिद्धिनिबन्धनदोषासम्भवेऽपि व्यापकीभूतस्येत्यादिवैयर्थ्यस्य दुर्वारत्वात् तत्परित्यागे च चरमलक्षण एव पर्यवसानात्। अथ सजातीयाभावे हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्यानिवेशोऽपि स्वमात्रनिष्ठयथाश्रुतसाजात्यनिवेशपक्षे नातिप्रसङ्गः। आत्मत्वादिसाध्यके विषयतादिसम्बन्धेन हेतौ ज्ञानादौ समवायादिसम्बन्धावच्छिन्नज्ञानाद्यभावस्य साध्याभावव्यापकत्वेऽपि यथाश्रुतसाजात्याभावेनातिव्याप्त्यप्रसक्तेः संयोगादिना वह्न्यादौ साध्ये समवायादिना हेतुं रूपविशेषं प्रति हेतुतावच्छेदकसमवायेन वह्न्याद्यभावप्रतियोगिनोऽव्यापकत्वेऽपि च न दोषः। साध्यतावच्छेदकसम्बन्धेनैव हेतुव्यापकताया विवक्षणीयत्वादिति चेत्तर्हि सजातीयाभावे साध्याभावव्यापकत्वविशेषणस्य वैयर्थ्यमापद्येत। स्वाव्यापकाभावस्य स्वसाजात्यविरहेणैव व्यावर्तनात् व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभावसजातीयहेतुतावच्छेदकावच्छिन्नहेत्वाद्यभावमादायातिप्रसङ्गवारणाय व्यापकीभूतस्येति।व्यभिचारिणोऽभावस्य व्यभिचारनिरूपकाधिकरणसाधारणसाध्याभावाव्यापकत्वान्न दोषः व्यापकत्वं च न तत्समानाधिकरणाभावाप्रतियोगित्वं सर्वस्यैव द्वित्वावच्छिन्नाभावप्रतियोगितयाऽसंभवात् न च तदधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेनावश्यं वाच्यं तथा च वह्न्याद्यभाववति धूमाद्यभावस्य धूमाद्यनात्मकद्वित्वाद्यवच्छिन्नाभावस्य संयोगादिरूपहेतुतावच्छेदकसम्बन्धेनावृत्त्या न तमादाय दोषावसर इति वाच्यम् एवमपि यत्र स्वरूपसम्बन्धेन हेतुता तत्र तादृशाभावप्रतियोगितया हेत्वभावस्य व्यापकत्वानुपपत्तेर्दु-

पर्याप्त्यात् नापि तादृशाभावप्रतियोगितानवच्छेदकरूपवत्त्वम् अभावत्वाद्यात्मकतादृशरूपमादायाभावमात्रस्यैव व्यापकतया व्यापकत्वस्याव्यावर्तकत्वापत्तेः एवं वह्न्याद्यभाववति धूमाद्यवयवादौ समवायाद्विना वर्तमानं धूमादिरूपमभावमादाय तदभावव्यापकताभङ्गभिया हेतुतावच्छेदकसम्बन्धेन सामानाधिकरण्यस्य निवेशनीयतया सत्तावान् जातेरित्यादौ सत्त्वाद्यभाववति सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या ऽव्याप्तिश्चेति तद्भिन्नान्योन्याभावप्रतियोगितानवच्छेदकत्वमेव साध्याभावव्यापकत्वं निर्धूमो वह्निशून्यत्वादित्यादौ हेत्वभावस्य वह्न्यादेः प्रत्येकं धूमादिमद्भिन्नभेदप्रतियोगितावच्छेदकत्वेऽपि अखण्डस्य निर्धूमत्वप्रकारकप्रमाविषयत्वाद्यभावस्य तादृशव्यापकतासम्भवात् तत्प्रतियोगितावच्छेदकावच्छिन्नस्य हेतुव्यापकतयैव लक्षणसमन्वयः तद्भिन्नत्वं दैशिकविशेषणतया ग्राह्यम् अतो वह्न्याद्यभाववति धूमाद्यभाववद्भेदस्य कालिकसम्बन्धेन वृत्तावपि न क्षतिः अभावाभावस्य प्रतियोगिरूपत्वेऽप्यभाववद्भेदो ऽतिरिक्त एव अतो धूमाद्यभाववति अयोगोलकादौ दैशिकविशेषणतया वह्न्याद्यभाववद्भेदस्य वृत्तिरव्याहतैवेति न वह्न्याद्यभावस्य धूमाद्यभावव्यापकत्वापत्तिः । अथवा यदीयदैशिकविशेषणतासम्बन्धसामान्ये तत्तत्साध्याभाववदवृत्तिकाभिन्नघटकानुयोगिकत्वाभावस्तदन्यत्वमेव तदभावव्यापकत्वम् अभावस्येति भावभिन्नस्येत्यर्थकं तेन धूमवान् जलत्वाभावादित्यादौ जलत्वादिनिरूपितदैशिकविशेषणताया अप्रसिद्ध्या तत्र निरुक्तभेदकूटात्मकव्यापकतासत्त्वेऽपि नातिव्याप्तिः अभावरूपसद्धेतौ हेतुमत्त्वप्रकारकप्रमाविषयत्वाभावप्रतियोगितावच्छेदकावच्छिन्नव्यापकतामादायैव लक्षणसमन्वयः धूमवान् वह्नेरित्यादावयोगोलकाद्युत्पत्तिकालावच्छेदेन वर्तमानस्य वह्न्याद्यभावस्य निरुक्तव्यापकतासत्त्वादतिव्याप्तिरतो व्याप्यवृत्तीति यद्यपि तादृशाभावा अपि ह्रदादौ व्याप्यवृत्तयस्तथापि व्याप्यवृत्तित्वविशिष्टस्य व्यापकत्वं विवक्षणीयम् अनवच्छिन्नविशेषणतासम्बन्धेन व्यापकतानिवेशलाभायैव वा तदुक्तम् अवच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वं तु न शक्यते निवेशयितुं संयोगेन सद्धेतौ हेतुतावच्छेदकसम्बन्धेन हेत्वभावस्यातथात्वात् ।

प्रतियोगितावच्छेदकेत्यत्र प्रतियोगिता हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या अन्यथा व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकहेत्वभावस्य साध्याभावव्यापकस्य समनियताभावैक्यमते व्यधिकरणधर्मावच्छिन्नाभावरूपतया समानाधिकरणधर्मावच्छिन्नसाध्याभावासजातीयत्वेन तमादायातिव्याप्तिविरहेऽपि आत्मत्वादिसाध्यके विषयतया हेतौ ज्ञानादौ साध्याभावव्यापकसमवायसम्बन्धावच्छिन्नज्ञानाद्यभावमादायातिव्याप्तिः । अभावे हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वविशेषणं प्रवेश्य च नातिप्रसङ्गवारणसम्भवः समनियताभावैक्यमते समवायसम्बन्धावच्छिन्नज्ञानाद्यभावस्यापि स्वसमवायिविषयकत्वसम्बन्धेन ज्ञानादिविशिष्टज्ञानादेर्विषयताम्बन्धावच्छिन्नाभावसमनियतत्वेन तादृशसम्बन्धावच्छिन्नप्रतियोगिताकत्वात् धूमाभावव्यापकमहानसीयवह्न्यभावप्रतियोगिनो वह्नित्वादिना वह्नित्वाद्यवच्छिन्नव्यापकत्वादतिप्रसङ्ग इति प्रतियोगिनो व्यापकतामुपेक्ष्य प्रतियोगितावच्छेदकस्य तदवच्छेदकत्वपर्यन्तानुधावनं द्रव्यं विशिष्टसत्त्वादित्यादौ साध्याभावव्यापकाभावप्रतियोगितावच्छेदकाविशिष्टसत्तात्वादेर्हेतुतावच्छेदकोपलक्षितहेतुव्यापकत्वासम्भवार्थं प्रतीत्यनुक्त्वा यद्रूपावच्छिन्नं प्रतीत्युक्तं व्यापकता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या अतो महाकालभिन्न कालत्वादित्यादौ साध्याभावव्यापकाभावप्रतियोगितावच्छेदकस्य साध्यतावच्छेदकादेः कालिकादिसम्बन्धेन हेतुव्यापकतायामवच्छेदकत्वेऽपि नातिप्रसङ्गः व्यापकतावच्छेदकताघटकसम्बन्धभेदनिवेशनादिकं स्वयमूह्यं न च धूमवान् वह्निमत्त्वप्रकारकप्रमाविषयत्वादित्यादावतिव्याप्तिः धूमाद्यभावव्यापकस्य धूमाद्यभावस्य प्रतियोगितावच्छेदकजलादिवृत्तित्वविशिष्टधूमाभावाभावत्वादेर्हेतुतावच्छेदकस्वरूपसम्बन्धघटितहेतुव्यापकतायामवच्छेदकत्वादिति वाच्यं भाववृत्तिप्रतियोगितावच्छेदकस्य व्यापकतावच्छेदकताया विवक्षणीयत्वात् ।

यथाश्रुतमित्थंलक्षणं दूषयति साधनस्येति ।

( दी० ) साधनस्य तादृशाभावप्रतियोगित्वं तदवच्छेदकत्वं वा साधनतावच्छेदकस्येति तु न वाच्यम् । द्रव्यं सत्त्वादित्यादौ

सत्त्वादेस्तादृशाभावव्यापकगुणकर्मान्यत्वविशिष्टसत्त्वात्वावच्छिन्नप्रतियोगिताकतादृशाभावप्रतियोगित्वादतिव्याप्तेः । ज्ञेयं प्रमेयादित्यादौ प्रमेयत्वादेस्तादृशप्रतियोगितानवच्छेदकत्वादव्याप्तेश्च प्रमेयत्वव्यधिकरणप्रतियोगित्वस्याप्रसिद्धेः ।

(गा०) तादृशेति ये ये साध्याभावाः प्रसिद्धाः तत्तत्सजातीयतत्तद्व्यापकेत्यर्थः । तदवच्छेदकत्वं तादृशप्रतियोगितावच्छेदकत्वम् । आद्ये द्रव्यं सत्त्वादित्यादाविति द्वितीये ज्ञेयं प्रमेयादित्यादाविति । ननु प्रमेयत्वादेः केवलान्वयितावच्छेदकत्वेऽपि वाच्यत्वत्वादेरिव साध्याभावव्यापकव्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वमक्षतमेवेत्याशङ्कां निरस्यति प्रमेयत्वव्यधिकरणेति । प्रमेयत्वस्य केवलान्वयित्वादिति भावः । धूमाद्यभावं प्रति विषयितासम्बन्धेन वह्नित्वाद्यवच्छिन्नस्य योऽभावस्तस्य व्यापकत्वात्तमादाय समवायेनात्मत्वे साध्ये समवायेन द्रव्यत्वे हेतौ आत्मत्वाभावं प्रति विषयितासम्बन्धेन द्रव्यत्वत्वज्ञानस्य यः समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तस्य व्यापकत्वात्तमादायातिप्रसङ्गवारणाय प्रतियोगितावच्छेदकतायां हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्यावश्यं निवेशनीयतया व्यधिकरणसमवायादिसम्बन्धेन प्रमेयत्वस्याभावप्रतियोगितायामसमानाधिकरणतयाऽवच्छेदकत्वसम्भवेऽपि न निस्तार इत्यवधेयम् । अन्योन्याभाव एव व्यधिकरणधर्मावच्छिन्नावच्छेदकताको न त्वत्यन्ताभाव इत्याशयेनेदम्, अन्यथा घटत्वावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावमादाय लक्षणगमनसम्भवात् । एतदुपलक्षणं गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नहेतुकाव्याप्तिरपि द्रष्टव्या । एतेन व्यापकीभूताभावप्रतियोगितायां हेतुतावच्छेदकानवच्छिन्नत्वव्यधिकरणधर्मानवच्छिन्नत्वोभयाभावविवक्षणे प्रमेयहेतुकस्थले वाच्यत्वत्वादिना घटाद्यभावप्रतियोगितायां तादृशोभयाभावसत्त्वेन लक्षणसमन्वयेऽपि न निस्तारः उक्तस्थले हेतुतावच्छेदकावच्छिन्नत्वाप्रसिद्ध्या ऽप्रतीकारात् ।

उक्तलक्षणे सजातीयादिपरित्यागेन लघुलक्षणमाह यद्वेति ।

( दी० ) यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं वा तत्त्वमित्याहुः ।

(गा०) व्यभिचारिणि व्यधिकरणधर्मावच्छिन्नाभावादिकमादायातिव्याप्तेर्वारणाय यावन्त इति। वह्निमान् धूमादित्यादौ महानसीयवह्नित्वावच्छिन्नाभावप्रतियोगितावच्छेदकस्य धूमत्वावच्छिन्नव्यापकतानवच्छेदकतयाऽव्याप्तिरिति तादृशा इति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका इत्यर्थः। अत्र व्याप्यवृत्तित्वविशेषणं प्रयोजनाभावादनुपादेयं साध्याभावसजातीयत्वादिविशेषणावच्छिन्नस्याभावान्तरस्य प्रक्रान्तत्वाचादृशपदे तत्परत्वभ्रमस्य झटिति निरासायाभावा इत्येतन्मात्रमनभिधाय साध्याभावा इत्युक्तं यावत्साध्याभावानिरूपिता न काचिदपि प्रतियोगितेति प्रत्येकपदम्। अत्र च व्यभिचारिणं प्रत्यपि काचित्किञ्चित्सम्बन्धेन साध्यतावच्छेदकावच्छिन्नस्य व्यापकतया ऽतिप्रसङ्गस्य वारणाय प्रतियोगितावच्छेदकसम्बन्धेनैव व्यापकता निवेशनीया इत्थं च समवायसम्बन्धावच्छिन्नवह्न्यभावप्रतियोगितावच्छेदकसमवायादिसम्बन्धेन वह्नित्वाद्यवच्छिन्नस्य धूमाद्यव्यापकत्वादसम्भव इति प्रतियोगितावच्छेदकसम्बन्धेनैव साध्यव्यापकता विवक्षणीया तथा च केवलान्वयिसाध्यकस्थले व्यधिकरणसम्बन्धावच्छिन्नसाध्याभावमादाय निर्वाहो न भवतीति व्यधिकरणसम्बन्धावच्छिन्नाभावस्योपयोगिता बोध्या । धूमवान् वह्नेरित्यादौ धूमाद्यभावप्रतियोगितावच्छेदकजलादिवृत्तित्वविशिष्टधूमाभावाभावत्वेन वह्न्यादिव्यापकत्वेऽपि नातिव्याप्तिः साध्यतावच्छेदकावच्छिन्ननिरूपितस्यावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकावच्छिन्ना यावत्यः प्रतियोगिताः प्रत्येकं तदवच्छेदकरूपेण तदवच्छेदकसम्बन्धेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमित्येतादृशार्थस्यैव विवक्षणीयत्वात् साध्यव्यापकतावच्छेदकं यद्रूपं तेन व्यापकत्वविवक्षणे व्यधिकरणधर्मावच्छिन्नाभावोपयोगिता न घटते इति साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकत्वेन व्यापकतावच्छेदकानियमाः

यथासन्निवेशो न वैयर्थ्यं प्रतियोगितायाः स्वरूपसम्बन्धरूपत्वे वह्नित्वावच्छिन्नप्रतियोगितायाः यावत्साध्यव्यक्तिभेदेन भिन्नायाः धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वं न सम्भवतीति व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताया व्यापकतावच्छेदकत्वं न निवेशितम् ।

कूटघटितलक्षणे व्यभिचारिणि साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताको न निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभाव अपि तु जगद्वृत्तित्वसामान्याभाव एव स च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताक एव वृत्तिमद्वृत्तिरित्यतिव्याप्तिवारणाय कूटपदमुपाद तादृशातिव्याप्तिः समानाधिकरणव्यधिकरणधर्मावच्छिन्नाभावसाधारणरूपेण साध्याभावस्य व्याप्यतावच्छेदककोटौ प्रवेशन एव प्रसज्यते न तु विशिष्टसाध्याभावनिवेशे तथा सति निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावस्यापि लक्षणघटकता निर्वाहादिति कूटपदमनुपादाय विशिष्य साध्याभाव निवेशयैव लक्षणमुचित तदुपादाने बहूनां दोषाणां वक्ष्यमाणत्वादिति कूटघटितलक्षणवादिनमाक्षिप्तु कूटाघटित लक्षण दर्शयति परे त्वित्यादिना ।

(दी०) परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः येन सम्बन्धेन हेतुता तेनैव वृत्तिमत्त्वमपि बोध्यं तेन व्यधिकरणधर्मावच्छिन्नवह्न्यभाववति संयोगेन या वृत्तिस्तदभावस्य जात्यादौ वर्तमानस्य धूमादावसत्त्वेऽपि न क्षतिः । साध्याभावश्च पूर्ववद्बोध्यः, तद्वद्वृत्तित्वाभावोऽपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकः

[illegible] तिरिक्तेन समानाधिकरणेन साध्याभाववद्वृत्तित्ववृत्तिना वा धर्मेणानवच्छिन्नप्रतियोगिताको बोध्य तेनालोकाद्यवृत्तित्वेन रूपेण यो वह्निसामान्याभाववद्वृत्तित्वस्य यत्किञ्चिन्धनत्वाद्यवच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेरभावस्तस्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्व-

विरहस्य च हेत्वन्तरवृत्तेः स्वस्मिन्नसत्त्वेऽपि न क्षतिरित्याहुः ॥

(गा०) साध्याभाववदवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमादाय व्यभिचारिमात्रे ऽतिव्याप्तिरतो यावन्त इति । तथा च समानाधिकरणधर्मावच्छिन्नसाध्याभाववदवृत्तित्वस्य समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य यावत्तादृशाभावान्तर्गतस्य व्यभिचारिण्यसत्त्वान्नातिव्याप्तिः । वृत्तिमदवृत्तित्वानुपादाने समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्संयुक्तत्वाद्यभावस्यासंयुक्तादौ प्रसिद्धस्य हेतावसत्त्वात् संयोगादिसम्बन्धेन हेतावव्याप्तिः न त्वसम्भवः यादृशसम्बन्धप्रतियोगित्वं वस्तुमात्र एव तादात्म्यविषयतादिरूपतादृशसम्बन्धेन हेतावेव परं लक्षणसमन्वयो भवति तादृशसम्बन्धेन जगत्सम्बद्धत्वस्य समानाधिकरणधर्मावच्छिन्नाभावाप्रसिद्धेरिति तदुपादानम् । ननु वृत्तिमदवृत्तित्वोपादानेऽपि जगत्संयुक्तत्वत्वावच्छिन्नाभावस्य जात्यादिरूपवृत्तिमति वर्तमानस्य वारणासम्भवात् वह्निमान् धूमादित्यादावव्याप्तिर्दुर्वारैव निर्धूमसंयुक्तत्वाद्यभावस्य निर्धूमवृत्तित्वत्वाव्यापकप्रतियोगिताकतया वृत्तिमन्मात्रस्यैव कालादिनिर्धूमवृत्तित्वेन च निर्धूमवृत्तित्वसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमदवृत्तित्वेन धूमवान् वह्नेरित्यादावतिव्याप्तेर्वारणाय हेतुतावच्छेदकसम्बन्धेन साध्याभाववदवृत्तित्वस्य निवेशनीयतया यत्र संयोगादिना हेतुत्वं तत्र जगत्संयुक्तत्वत्वावच्छिन्नाभावस्यापि हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववदवृत्तित्वत्वव्यापकप्रतियोगिताकत्वेन लक्षणघटकत्वात् वृत्तिमत्पदस्य यथाश्रुतार्थकत्वे कालिकसम्बन्धेन गगनादेरवृत्तित्वमते तेन सम्बन्धेन यत्र हेतुता तत्रैव परमव्याप्तिवारकता तेन सम्बन्धेन जगदवृत्तित्वाभावस्यावृत्तिमात्रे प्रसिद्धत्वादित्यत आह येन सम्बन्धेनेति । न क्षतिरिति नाव्याप्तिरित्यर्थः । न तु नासम्भवः तादात्म्यकालिकादिसम्बन्धेन हेतौ लक्षणसमन्वयसम्भवादिति । ननु नानाव्यक्तिसाध्यके तत्तत्साध्यव्यक्त्यभाववद्वृत्तित्वाभावस्य हेतावसत्त्वादव्याप्तिः कूटघटितलक्षण इव साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनि-

वेशे तादृशतादृशवह्न्युभयत्वावच्छिन्नाभावमादाय वह्न्यादिसाध्यके गुणान्यवृत्तित्वविशिष्टसत्ताभाववद्वृत्तित्वाभावमादाय च संयोगादिसाध्यकेऽव्याप्तिर्दुर्वारैव एवमव्याप्यवृत्तिकपिसंयोगादिसाध्यके हेत्वधिकरणस्यैव जगत एव कपिसंयोगत्वाद्यवच्छिन्नाभाववत्तया तद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वेनाव्याप्तिविरहेऽपि तादृशकपिसंयोगाभावादिसाध्यकद्रव्यत्वादिहेतौ कपिसंयोगादिरूपसाध्याभाववद्वृत्तित्वाभावासत्त्वादव्याप्तिरित्यत आह साध्याभावश्चेति । पूर्ववदिति । मिश्रलक्षणे यथा साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिरभावो निवेश्यते तथाऽत्रापि निवेशनीय इत्यर्थः । तत्तद्वह्नित्वकपित्वोभयत्वावच्छिन्नप्रतियोगिताकाभावानां प्रथमविशेषणेन कपिसंयोगादिरूपाणां च द्वितीयविशेषणेन व्यावृत्तिः । ननु साध्याभाववद्वृत्तित्वप्रतियोगिकाभावमात्रनिवेशे प्रकृतहेतुसाधारणस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वविशेषस्य समानाधिकरणधर्मावच्छिन्नाभावोऽपि वृत्तिमद्वृत्तिः सम्भवतीति यावत्तादृशाभावान्तर्गततत्तद्रूपस्य हेतावभावादसम्भवः एवं समानाधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वस्य प्रकृतहेतुवृत्तितावच्छेदकीभूतकिञ्चिद्धर्मावच्छिन्नस्याभावोऽपि यावत्तादृशाभावान्तर्गत इति तद्वत्त्वविरहादपि व्यतिरेकिसाध्यकहेतूनामव्यभिचारित्वानुपपत्तिः तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावश्च विवक्षितुमशक्यः केवलान्वयिनि साध्याभाववद्वृत्तित्वत्वेन घटाद्यभावस्य तादृशगुरुधर्मस्य प्रतियोगितावच्छेदकत्वमते प्रसिद्धावपि तस्यातथात्वमते व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्वघटककेवलवृत्तित्वत्वसमनियततया प्रतियोगितानवच्छेदकावच्छिन्नाभावाप्रसिद्धेर्दुर्वारत्वात् तत्तदभाववद्वृत्तित्वत्वघटकधर्मावच्छिन्नाभावनिवेशे च वह्नित्वावच्छिन्नप्रकृतसाध्यके तदभावत्वाद्यवच्छिन्नाभावस्यापि तादृशतया तस्य च धूमादावसत्त्वादव्याप्तिः साध्याभाववद्वृत्तित्वत्वघटितादृशधर्मावच्छिन्नाभावानिवेशनेऽपि घटवृत्तित्वत्वाद्यवच्छिन्नसाध्यके तादात्म्येन घटत्वव्यापकादिहेतौ तादृशसाध्याभाववान् यो घ-

टत्वाभावादिस्तद्वृत्तित्वनिष्ठतादृशसाध्याभाववत्त्वरूपतथाविधधर्मावच्छिन्नाभावस्य घटादिमात्रवृत्तेर्हेतावसत्त्वादव्याप्तिर्दुर्वारैव साध्याभावादिव्यावृत्तघटकतानिवेशे च प्रयासगौरवमिति तत्तत्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकाभावं विवक्षति तद्वदिति । स्वं प्रतियोगिता । अत्र साध्याभावस्य साध्याभावत्वेन सामान्यतो निवेशे व्यभिचारिणि निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावप्रतियोगितायाः व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्साध्याधिकरणवृत्तित्वसाधारणसाध्याभाववद्वृत्तित्वत्वाव्यापकत्वेन तादृशाभावस्य लक्षणाघटकतया वृत्तित्वसामान्याभावस्य तथाविधप्रतियोगिताकस्य च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तितया ऽतिव्याप्तिरिति तत्तद्व्यक्तित्वेनाभावस्य व्याप्यतावच्छेदककोटिनिवेशलाभाय तत्तदिति । यद्यपि यत्किञ्चित्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकवृत्तिमद्वृत्तियावदभाववत्त्वं व्यभिचारिसाधारणं यावन्तः साध्याभावाः प्रत्येकं तत्तदधिकरणवृत्तित्वत्वसमनियतैकप्रतियोगितायाः नानाविपक्षसाधके ऽप्रसिद्धेः तत्तद्विपक्षावृत्तित्वावच्छिन्नाभाववत्तत्तद्विपक्षवृत्तित्वत्वव्याप्यप्रतियोगित्वाप्रसिद्धेः तथापि यावतामभावानां प्रत्येकाधिकरणवृत्तित्वत्वसामनैयत्यस्य प्रत्येकप्रतियोगितान्वयेन एतदभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताको यो यो ऽभावस्तदभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकश्च यो योऽभावस्तद्वत्त्वमित्येवं रीत्या निवेशान्नानुपपत्तिः एतल्लक्षणे साध्याभावसमुदायो न समुदायत्वेन प्रविष्टः अपि तु प्रातिस्विकरूपेणेति कूटघटिताद्विशेषः । अथात्र स्वपदं न तत्तदभावीयप्रतियोगितात्वरूपेण प्रतियोगितापरं साध्याभाववद्वृत्तित्वत्वातिरिक्तेऽपि तदभावीयप्रतियोगितान्तरसत्त्वादिति तत्तत्प्रतियोगिताव्यक्तिपरं तद्वाच्यं तथा च यत्किञ्चित्प्रतियोगितानिरूपकाशेषाभावस्यातिव्यापकतया यावत्यस्तादृशप्रतियोगिताः प्रत्येकं तन्निरूपकाभाववत्त्वं निवेशनीयं तथा च समानाधिकरणधर्मावच्छिन्नजगद्वृत्तित्वसामान्याभावप्रतियोगितानिरूपकवृत्तिमद्वृत्त्यभावाप्रसिद्ध्या ऽव्याप्तिरिति वृत्तिमद्वृत्त्यभावीयत्वेन यावत्प्रतियोगिता निवेशनीया तथा च तन्नि-

रूपकाभावे वृत्तिमद्वृत्तित्वाविशेषणं व्यर्थं यावत्त्वविशेषणमपि तथेति चेत् नोपादीयत एव तत्र तद्विशेषणं वृत्तिमद्वृत्त्यभावीययावत्प्रतियोगिताविशेष्यीभूताभावे वृत्तिमद्वृत्तित्वमयावत्त्वाभिधानात्। अत्र च गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे स्वव्यापकतदभाववद्वृत्तित्वत्वावच्छिन्नभेदप्रतियोगितावच्छेदकत्वस्याव्याप्यवर्तकव्यापकतान्तविशेषणघटितत्वेनाभावप्रतियोगितानवच्छेदकतया तदवच्छिन्नान्योन्याभावरूपव्यापकत्वपुरस्कारेण न प्रतियोगितानिवेशः सम्भवतीति तादृशावच्छेदकभेदकूटात्मकव्यापकत्वपुरस्कारेणैव तन्निवेशः न च स्वव्यापकतत्तदभाववद्वृत्तित्वत्वकत्वतत्तदभाववद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वावच्छिन्नैकभेदोभयरूपेण प्रतियोगितानिवेशसम्भवादवच्छेदकभेदकूटनिवेशनमफलमिति वाच्यं घटभेदादिसाध्यकस्थले तदभावव्यक्तित्वेन घटत्वद्वियघटितस्य तदभाववद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्य स्वरूपतो घटत्वादिघटितघटवृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वमपेक्ष्य गुरुशरीरतया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नैकभेदनिवेशासम्भवात्। अत्र कल्पे व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकस्य पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभावस्य पर्वतावृत्तिवृत्तिमद्वृत्तेर्धूमादावभावात् एकमात्रवृत्तित्वेऽतावपि तादृशप्रतियोगिताकस्य एतत्क्षणावच्छिन्नवृत्तित्वैतदन्यक्षणावच्छिन्नवृत्तित्वोभयत्वावच्छिन्नाभावस्यैतत्क्षणावच्छिन्नावृत्तौ वृत्तिमति वर्तमानस्याभावादसम्भवः। तादृशाभावव्यावर्तनाय व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वनिवेशे गौरवं पर्वतवृत्तित्वसामान्याभावस्य व्याप्यस्यसम्भवश्चेत्यतः कल्पान्तरमनुसरति तत्तत्साध्याभावेति। अतिरिक्तान्तानिवेशे व्यधिकरणधर्मावच्छिन्नाभावमात्रस्य संप्रदायव्यभिचारिमात्रे अतिव्याप्तिरिति तन्निवेशनं यद्यपि यथाश्रुतेनानेन महानसवृत्तित्वत्वादिना व्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वाभाववारणं न सम्भवति महानसादिनिरूपितत्वविशिष्टवृत्तित्वत्वस्य साध्याभाववन्निरूपितत्वविशिष्टवृत्तित्वत्वरूपसाध्याभाववद्वृत्तित्वत्वान्यत्वविरहात् तथापि साध्याभाववद्वृत्ति-

त्तित्वत्वानिरूपितसमानाधिकरणधर्मनिरूपितावच्छेद्यत्वशून्यत्वस्यानवच्छिन्नान्तेन विवक्षणान्न दोषः महानसवृत्तित्वत्वादिनिरूपितावच्छेद्यत्वस्य साध्याभाववद्वृत्तित्वत्वरूपाविशिष्टपदार्थानिरूपितत्वात् न चैवमपि साध्याभाववन्महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारणमशक्यं तादृशधर्मनिरूपितावच्छेद्यतायां तद्घटकसाध्याभाववद्वृत्तित्वत्वानिरूपितत्वस्याधिकं त्वित्यादिन्यायेनाव्याहृतत्वादिति वाच्यं गुरुधर्मस्याभावप्रतियोगितानवच्छेदकतया महानसादिवृत्तित्वत्वसमनियतोपदर्शितगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वात् । अथ गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे साध्याभावपदस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावपरतया धूमवान् वह्नेरित्यादावतिव्याप्तिः धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वत्वस्य स्वसमनियतधूमत्वावच्छिन्नाभाववद्वृत्तित्वत्वापेक्षया गुरुत्वेनाभावप्रतियोगितावच्छेदकत्वविरहेण तदवच्छिन्नाभावाप्रसिद्धेः धूमत्वाद्यवच्छिन्नाभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगितायाश्च धूमत्वावच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभाववद्वृत्तित्वत्वरूपविशिष्टपदार्थानवच्छिन्नतया तन्निरूपकाभावस्य निरुक्ताभावविशेषणानाक्रान्तत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वाभावस्यैव लक्षणघटकत्वात् । यदि च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्य तेन रूपेण न निवेशः अपि तु तदभावत्वेनैव एतदेव सूचयितुं तत्तत्पदमुपात्तम् एवं च तत्तद्व्यक्तित्वेन धूमाभावघटिततदभाववद्वृत्तित्वत्वाद्यवच्छिन्नाभावस्य लक्षणघटकतया न धूमादिसाध्यकेऽतिव्याप्तिरित्युच्यते तथापि एतद्व्यक्तिभिन्नं घटभिन्नं वा मेयत्वादित्यादावतिव्याप्तिः तत्र तद्व्यक्तित्वेन रूपेण घटभेदाभावघटिततद्व्यक्तिमद्वृत्तित्वत्वापेक्षया लघोस्तत्समनियतस्य किञ्चिद्विशेषणानवच्छिन्नघटत्वघटितस्य घटवृत्तित्वत्वस्यैवाभावप्रतियोगितावच्छेदकतया तद्व्यक्तिमद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः घटवृत्तित्वत्वावच्छिन्नप्रतियोगितायाश्च साध्याभाववद्वृत्तित्वत्वरूपाविशिष्टपदार्थानवच्छिन्नतया तन्निरूपकाभावस्य लक्षणघटकत्वासम्भवात् व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावस्यैव तथात्वात् यदि चाभावधर्मी विशेषणविध-

या न निवेद्यते अपि तु अभावप्रभृतिरेव अभावे तु साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमुपलक्षणतया निवेद्यते एतल्लाभायैव तत्तत्पदोपादानमपि न तु तत्तद्व्यक्तित्वेनाभावनिवेशलाभार्थम् उपलक्षणीभूतप्रतियोगिताविशेषणेनाभावान्तरव्यावृत्तिसम्भवे तत्तद्व्यक्तित्वस्योपलक्षणतया निवेशे प्रयोजनविरहात् एवं च घटवृत्तित्वत्वावच्छिन्नाभावोपि उक्तस्थले लक्षणघटकः घटभेदाभावस्य घटत्वस्य तत्प्रतियोगितावच्छेदकघटकत्वात् प्रतियोगिताविशेषोपलक्षिताभाववद्वृत्तित्वपर्याप्तनिरूपकताकान्यत्वपर्यन्तानिवेशात् धूमादिसाध्यकस्थले निर्धूमवृत्तित्वत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकशरीरे ऽभावविशेषणस्याधिकस्य निवेशेऽपि न क्षतिः न चाभावप्रतियोगिकोटौ उपलक्षणतया भानस्यानुभवविरुद्धत्वात् विशिष्टनिरूपितत्वाभावस्य निरूपितत्वसम्बन्धावच्छिन्नविशिष्टाभावरूपस्य वा विशिष्टानिरूपितत्वस्य प्रतियोगिकोटौ प्रतियोगिताविशेषस्य कथमुपलक्षणविधया निवेश इति वाच्यम् अभावप्रतियोगिप्रकारशरीरे प्रतियोगितावच्छेदककोट्यप्रविष्टस्य न भानमित्यस्यार्थः । प्रकृते निरुक्तप्रतियोगिताकत्वस्य निरूप्यत्वप्रतियोगिविशिष्टाघटकत्वादेव निरूप्यत्वप्रतियोगिन्युपलक्षणत्वं न तु निरूप्यत्वाभावप्रतियोगितावच्छेदकघटकतया अप्रवेशात् । तदभावप्रतियोगितावच्छेदकप्रविष्टाभावस्याभावान्तरव्यावृत्तये तादृशप्रतियोगिताकत्वस्य प्रतियोगितावच्छेदकघटकतयैव निवेशात् यथा द्रव्यत्वस्य द्रव्यत्वोपलक्षितनिरूपितविषयित्वाभावप्रतियोगिनि नोपलक्षणत्वं किन्तु विषयितानिरूपकांश एवेति । निर्धूमवृत्तित्वत्वस्य धूमव्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तितात्वसमनियतत्वे ऽपि व्यापकतावच्छेदकधर्मान्तरावच्छिन्नाभावघटितविशिष्टनिरूप्यत्वे धूमत्वावच्छिन्नधूमाभावघटितविशिष्टनिरूपितत्वरूपताविरहात् तत्तद्विशिष्टनिरूपितत्वयोर्न समनैयत्यम् इति न व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वघटितधर्मावच्छिन्नप्रतियोगिताकनिरूप्यत्वाभावाप्रसिद्धिः । प्रतियोगितासंसर्गकज्ञान एव तादृशभानस्य तथात्वात् जात्यवच्छिन्नप्रतियोगिताकोऽभाव इत्याकारकस्य स्वरूपतो घटत्वावच्छिन्नप्रतियोगिताकाभावभानस्य सर्वस-

म्मतत्वात् प्रकृते च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको योऽभावस्तद्वद्वृत्तित्वत्वनिरूपितत्वप्रतियोगिकाभाववतः समानाधिकरणधर्मावच्छेद्यत्वस्य योऽभावस्तद्वत्प्रतियोगिताका यावन्तोऽभावास्तद्वान् हेतुरित्याकारकव्याप्तिग्रहे प्रतियोगितायाः विशेषणत्वेनानुपपत्त्यभावात् अत एव व्यापकतावच्छेदकत्वादेः उपलक्षणविधया भानोपपत्तिः न च तादृशनिरूपितत्वप्रतियोगिकस्य तत्त्वावच्छिन्नप्रतियोगिताकस्य याऽभावस्य निवेशे निर्धूमवृत्तित्वत्वावच्छिन्नाभावप्रतियोगितानिष्ठावच्छेद्यतायामपि किञ्चिद्विशिष्टतादृशनिरूपितत्वत्वावच्छिन्नाभावसत्त्वात् तादृशाभावासंग्रह इति वाच्यं तत्तदभाववद्वृत्तित्वत्वनिरूपितत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावस्यैव निवेशनीयत्वात् इत्युच्यते तदापि घटत्वभेदादिसाध्यके व्यभिचारिण्यतिव्याप्तिवारणमशक्यं निर्विशेषणकघटत्वादिवृत्तित्वत्वस्यैव तत्र घटत्वादिवृत्तित्वाभावप्रतियोगितावच्छेदकतया घटत्वत्वादिरूपसाध्याभावस्य प्रतियोगितावच्छेदकशरीरे ऽनिवेशेन व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात् न च जातेः समवायेनैव स्वरूपतोऽवच्छेदकत्वं न तु सम्बन्धान्तरेण अत एव गोत्वादिजातिनिष्ठव्याप्तौ पदविशेषप्रवृत्तिनिमित्तत्वगवेतरासमवेतत्वादेरवच्छेदकत्वं स्वीकुर्वन्ति न तु तादात्म्यसम्बन्धेन लघोरपि गोत्वादिजातेरिति निर्विशेषणकघटत्वादिघटिततद्वद्वृत्तित्वत्वस्याभावप्रतियोगितावच्छेदकत्वं न सम्भवतीति वाच्यं तादृशनियमे मानाभावात् यदि चाभावांशस्योपलक्षणत्वं स्वीक्रियते तदा महानसवृत्तित्वत्वावच्छिन्नाभाववारणमशक्यमेव यदि च साध्याभावातिरिक्ताविशेषणाविशेषिताधिकरणवृत्तित्वत्वावच्छेद्यताभिन्नसमानाधिकरणधर्मावच्छेद्यत्वाभावं निवेश्याविशेषितघटत्वादिवृत्तित्वाभावः संगृह्यते तदा तादृशाभावमादाय जातिसाधारणसद्धेतावव्याप्तिर्वज्रलेपायते। एवं साध्याभाववद्वृत्तित्वत्वशरीरेऽभावादेर्विशेषणतया प्रवेशे वृत्तिमद्वृत्तिपदमनर्थकमापद्येत व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य यः समानाधिकरणधर्मावच्छिन्नाभावः तत्प्रतियोगितायाः लाघवेन वृत्तित्वत्वेनावच्छिन्नतया तदवच्छेद्यताया अभावाघटिताविशिष्टपदार्थानिरूपितत्वात् । अत्र वदन्ति । गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वमतेने-

दमभिहितं व्यधिकरणधर्मावच्छिन्नसाध्याभाववन्महानसवृत्तित्वत्वावच्छिन्नाभाववारणाय साध्याभाववद्वृत्तित्वत्वपर्याप्तावच्छेदकताभिन्नसमानाधिकरणधर्मानिष्ठावच्छेदकत्वानिरूपकत्वमेव प्रतियोगितायां विशेषणं देयं न चैवं घटत्वादिना साध्याभाववद्वृत्तित्वाभावसङ्ग्रहफलकं समानाधिकरणपदोपादानं, निषेधरूपनिवेशनं च विफलं तादृशाभावस्यासङ्ग्रहेऽपि केवलान्वयिसाध्यके साध्याभाववद्वृत्तित्वत्वेन घटाभावमादाय लक्षणसमन्वयसम्भवादिति वाच्यं विषयितादिसम्बन्धेन यत्र हेतुना तत्र हेतुतावच्छेदकसम्बन्धेन साध्याभाववति वृत्तेः साध्याभाववद्विषयतारूपाया विषयतादिरूपत्वेन साध्याभाववद्विषयतात्वादिरूपसाध्याभाववद्वृत्तित्वत्वस्य केवलान्वयितया तदवच्छिन्नाभावाप्रसिद्धेः तादृशाभावघटितलक्षणानुपपत्तेः न च साध्याभाववद्विषयतात्वादिकं येन सम्बन्धेनावृत्ति तेन सम्बन्धेन तदवच्छिन्नाभावमादाय लक्षणसमन्वयः सम्भवतीति वाच्यं कालिकसम्बन्धेन साध्याभाववद्वृत्तित्वत्वावच्छिन्नस्य योऽभावस्तस्य ध्वंसाद्यधिकरणहेत्वव्यापकतया स्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकाभावस्यावश्यं निवेशनीयतया व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकाभावस्य लक्षणघटकत्वासम्भवात् विषयताया जात्यादिरूपत्वेऽपि विषयतात्वविशिष्टस्य न समवायादिना वृत्तिः तादृशस्य स्वस्मिन्नेव वृत्तेः जात्यादौ च समवायाभावात् किं तु स्वरूपसम्बन्धेनैव एवं च समवायादिसम्बन्धावच्छिन्नप्रतियोगिताक एव विषयतात्वावच्छिन्नाभावो लक्षणघटको भविष्यतीत्यपि न कालज्ञानादिरूपहेतौ कालिकविषयतादिसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावस्यासत्त्वेन स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव विवक्षणीयत्वात्। न चैवं साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नाभावस्यापि तत्राप्रसिद्धिः घटत्वादेः साध्याभाववद्विषयतानिष्ठप्रतियोगितावैयधिकरण्यासम्भवादिति वाच्यं घटत्वादिना पटाद्यभावस्यैव तथात्वात्। अथैवमपि, सामानाधिकरण्यमुपेक्ष्य साध्याभाववद्वृत्तित्वानिष्ठत्वेन धर्मविशेषणताकल्पे घटत्वादेः, घटादिस्वरूपसाध्याभाववद्विष-

यतानिष्ठत्वेन गगनादेरपि स्वनिष्ठविषयतात्मकत्वेन साध्याभाववद्विषयतानिष्ठतया साध्याभाववद्वृत्तित्वत्वातिरिक्तवृत्तित्ववृत्तिधर्मानवच्छिन्नाभावाप्रसिद्ध्या उक्तस्थले ऽव्याप्तिर्दुर्वारैव येन रूपेण यत्साध्याभाववद्वृत्तित्ववृत्ति तद्रूपविशिष्टतदनवच्छिन्नप्रतियोगिताकाभावविवक्षणे गगनाद्यवच्छिन्नाभावस्य लक्षणघटकतानिर्वाहेऽपि हेतुनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वव्यक्तेः किञ्चिद्विशेषिततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावस्य तथाविधस्य हेतावसत्त्वादसम्भव इति चेन्न। येन सम्बन्धेन यद्वर्तते तेन सम्बन्धेन तन्निष्ठावच्छेदकताकान्यत्वस्य विवक्षणीयतया संयोगादिसम्बन्धेन घटत्वावच्छिन्नप्रतियोगिताकाभावमादायैवोक्तस्थले लक्षणसमन्वयसम्भवात् उक्तार्थलाभायैव च साध्याभाववद्वृत्तित्ववृत्तित्वोपादानं न तु तदपि लक्षणघटकं प्रयोजनाभावात् सर्वत्र दर्शिताभावमादाय लक्षणसमन्वयसम्भवेन समवायादिसम्बन्धेन घटत्वावच्छिन्नसाध्याभाववत्संयुक्तत्वाद्यभावस्य लक्षणाघटकत्वेऽपि क्षतिविरहात् एतेन धूमत्वत्वाद्यवच्छिन्नधूमत्वाद्यभावस्य धूमत्वप्रकारकप्रमाविषयत्वाद्यभावस्य च साध्याभाववद्वृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य वारणाय साध्याभाववद्वृत्तित्वप्रतियोगिकत्वविशेषणमप्यनादेयम् अत एव स्वसमानाधिकरणत्वस्य स्वप्रतियोगितावच्छेदकाविशेषणत्वकल्पापेक्षया लाघवमेव एतत्कल्पानुसरणबीजभूतं निष्प्रत्यूहमिति। यदि च गुरुधर्मो नाभावप्रतियोगितावच्छेदकस्तदा महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारणाय साध्याभाववद्वृत्तित्वत्वातिरिक्तेत्यनेन साध्याभाववद्वृत्तित्वत्वाघटकत्वमेव विवक्षणीयं तदर्थश्च स्वाविषयकप्रतीतिवृत्तिसाध्याभाववद्वृत्तितात्वरूपविशिष्टनिरूपितविषयिताकत्वम् एवं च शुद्धवृत्तित्वत्वावच्छिन्नवृत्तेरभावोपि लक्षणघटक इति वृत्तिमद्वृत्तिपदसार्थक्यम्। स्वाविषयकत्वं च इतरविशेषणतानापन्नस्वविषयिताशून्यत्वमतो विशेषणविधया साध्याभाववद्वृत्तित्वत्वघटकसाध्याभावत्वादेस्तद्घटकत्वनिर्वाह इति पूर्वोक्तदोषानवकाशः। चरमापि विषयिता इतरविशेषणतानापन्ननिरूपितैव ग्राह्या तेन वृत्तित्वत्वादिविशेषणकज्ञाने साध्याभाववद्वृत्तित्वत्वादेर्विशेषणतया विषयत्वे

ऽपि वृत्तित्वत्वादेर्न साध्याभाववद्वृत्तित्वत्वाघटकत्वं न च साध्याभाववद्वृत्तित्वत्वघटकधर्मपर्याप्तप्रतियोगितावच्छेदकताकोऽभावो निवेश्यतां घटकान्तार्थश्च स्वाविषयकप्रतीत्यवृत्तिसाध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताकत्वं तेन साध्याभाववद्वृत्तितात्वकेवलवृत्तितात्वयोरेव घटकतानिर्वाहः न तु स्वाविषयकप्रतीत्यविषयतादृशविशिष्टकत्वं तत्तदभाववद्वृत्तित्वत्वाघटकप्रतीतौ केवलाधेयतात्वस्य विषयतया तदभाववन्निरूपितत्वविशिष्टाधेयतात्वे तदविषयकप्रतीत्यविषयत्वस्य दुर्घटतया तदभाववद्वृत्तित्वत्वादेस्तद्घटकत्वानिर्वाहात् केवलाधेयतात्वस्यैव तद्घटकतया वृत्तिमद्वृत्तित्वं तेन रूपेण घटाद्यभावमादायातिव्याप्त्यापत्तेरिति वाच्यं तथा सति उक्तरीत्या ' विषयितासम्बन्धेन यत्र हेतुता तत्र तादृशाभावाप्रसिद्धेः घटत्वभिन्नं मेयत्वादित्यादौ निर्विशेषणकघटत्वादिवृत्तितात्वस्य यथा समानाधिकरणधर्मावच्छिन्नाभाववद्वृत्तितात्वघटकत्वं तथा वाच्यं ज्ञेयत्वादित्यादावपि तादृशस्य स्वाविषयकप्रतीत्यविषयव्यधिकरणधर्मावच्छिन्नसाध्याभावाविशेषितघटत्वादिघटिततदभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयताकतया तदभाववद्वृत्तित्वत्वघटकतया वृत्तिमद्वृत्तितदवच्छिन्नाभावस्य हेतावसत्त्वेनाव्याप्तेः तदभाववद्वृत्तित्वत्वाघटकधर्मावच्छिन्नाभावनिवेशेनैव वारणसम्भवाच्च । तादृशधर्मे निरुक्तसाध्याभाववद्वृत्तित्वत्वघटकत्वसत्त्वेऽपि स्वाविषयकप्रतीत्यवृत्तिसाध्याभाववद्धर्मान्तरवृत्तित्वविषयिताकत्वेन साध्याभाववद्वृत्तित्वाघटकत्वस्यापि सत्त्वेन तदवच्छिन्नाभावस्यापि यथानिरुक्ताभावानात्मकत्वात् न च स्वाविषयकप्रतीत्यवृत्तितदभाववद्वृत्तित्वत्वनिरूपितविषयितासामान्यकत्वरूपतत्तदभाववद्वृत्तित्वत्वघटकतानिवेशे निर्विशेषणकघटत्वादिवृत्तित्वत्वस्य साध्याभाववद्वृत्तित्वत्वघटकत्वाप्रसक्त्या तदघटकधर्मावच्छिन्नाभावनिवेशोऽपि सम्भवतीति वाच्यं तथा सति व्यापकताघटितसामान्यपदार्थनिवेशने तदघटकधर्मानवच्छिन्नाभावनिवेशापेक्षयाऽतिगौरवात् समानाधिकरणपदसार्थक्यं तु उक्तरीत्यैवेति, ध्येयम् । केचित्तु व्यधिकरणधर्मावच्छिन्नसाध्याभावव-

दवृत्तित्वत्वेन पर्वतवृत्तित्वघटान्यतराभाववारणाय एतन्मतेऽपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वकत्वं प्रतियोगिताविशेषणमावश्यकं तथा च साध्याभाववद्वृत्तित्वत्वेन घटाभावस्य लक्षणघटकता न सम्भवतीति निषेधद्वयनिवेशनसामानाधिकरण्यपदोपादानयोः सार्थकतेत्याहुः । प्रतियोगितायां साध्याभाववद्वृत्तित्वत्वव्याप्यत्वनिवेशनप्रयोजनमाह आलोकाद्यवृत्तित्वेनेति । वह्निसामान्याभाववद्वृत्तित्वस्य योऽभावस्तस्य धूमादावसत्त्वेपीत्यन्वयः वह्निसामान्याभावः वह्नित्वावच्छिन्नवह्न्यभावः । साध्याभाववद्वृत्तित्वत्वव्यापकतानिवेशनप्रयोजनमाह यद्वेति । इन्धनत्वाद्यवच्छिन्नेति साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया घटाभावोपेक्षणं महानसवृत्तित्वादेरभाव इत्यत्र महानसवृत्तित्वत्वादिनैवेति बोध्यं तादृशाभावाधिकरणमहानसवृत्तित्वत्वाद्यवच्छिन्नतादृशवृत्तित्वनिष्ठप्रतियोगिताकत्वं पष्ठ्यन्तार्थ इति तु न सत् गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वेऽपि तादृशाभावाविशेषितमहानसवृत्तित्वत्वाद्यवच्छिन्नाभावपर्यन्तानुसरणे सन्दर्भविरोधात् अधिकरणत्वान्तस्योपलक्षणतया शेषांशस्य विशेषणतया भानस्य व्युत्पत्तिविरुद्धतया तथाविवक्षितुमशक्यत्वात् । अधिकरणविशेषानुपरक्तवृत्तेरभावमादायापि दोषं दर्शयति स्वनिष्ठेति । धूमादिनिष्ठसाध्याभाववद्वृत्तित्वव्यक्तेस्तद्व्यक्तित्वावच्छिन्नाभावस्येत्यर्थः । हेत्वन्तरवृत्तेः आलोकादिवृत्तेः । एतेन वृत्तिमद्वृत्तित्वमस्तीति सूचितम् । स्वस्मिन् धूमादौ । अत्र च लक्षणे सत्ताभाववान् द्रव्यत्वादित्यादौ सत्तावत्समवेतत्वाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव समवेतवृत्तित्वेऽपि द्रव्यावृत्तित्वावच्छिन्नाभावस्यापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यापि तद्वत्समवेतत्वाभावस्य समवेतगुणत्वादिवृत्तितया द्रव्यत्वादेस्तद्वत्त्वाभावान्नातिव्याप्तिः । एवमवृत्तिसाध्यकस्थलेऽपि साध्यतावच्छेदकावच्छिन्नव्यापकत्वाप्रसिद्ध्या नातिव्याप्तिः कूटघटितलक्षणे च तत्र तत्रातिव्याप्तिवारणाय साध्यसमानाधिकरणत्वे सतीति विशेषणं देयम् । एतल्लक्षणे चावृत्तिहेतुके-

ऽतिव्याप्तिवारणाय वृत्तिमत्त्वमात्रमुपादेयं कूटघटितलक्षणवद्-त्रापि महाकालान्यो घटादित्यादावतिव्याप्तिर्दुष्ट्या किं तु त-दन्यदोषाणामेवात्रानवकाश इत्यवधेयम् ॥

( दी० ) अन्ये तु वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वं तादृशवृत्तित्वाभावश्च स्वव्यापकतादृशवृत्तित्वत्वव्यापकप्रतियोगिताको बोध्यः प्रयोजनं चोक्तमायम् । साध्याभावाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नस्यैवाभावस्य वृत्तिमद्वृत्तित्वाद्व्यभिचारिण्यतिव्याप्तिरतः समुदायेति । साध्याभावश्च साध्यतावच्छेदकसम्बन्धेन बोध्यः तेन समवायेन वह्नेः साध्यत्वे धूमे संयोगेन च तथात्वे वह्न्यवयवत्वे पर्वतवह्न्यवयवसंयोगे च पर्वतस्य वह्न्यवयवस्य च सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानाधिकरणत्वेऽपि नातिव्याप्तिः ।

( गा० ) अन्ये त्विति । घटत्वादिना निर्धूमवृत्तित्वाद्यभावमादाय व्यभिचारिण्यतिव्याप्तिवारणाय यावत्त्वोपादानम् एव च केवलान्वयिनः साध्यस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैवाभावस्य प्रसिद्ध्या तत्समुदायाधिकरणजगद्वृत्तित्वस्यावृत्तौ प्रसिद्धः समानाधिकरणधर्मावच्छिन्नाभावोऽपि यावदन्तर्गत इति तद्घस्यविरहात्तादृशसाध्यके विषयितादातिरिक्तसम्बन्धेन हेतावव्याप्तिः साधनसमानाधिकरणत्वेन साध्याभावविशेषणपक्षे च व्यतिरेकिसाध्यस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैवाभावस्य सद्धेतौ लक्षणघटकतया अगत्य एव तत्कूटाधिकरणतया व्यतिरेकिसाध्यकेऽपि विषयितातिरिक्तसम्बन्धेन हेतावव्याप्तिरिति वृत्तिमद्वृत्तित्वमभावविशेषणं तादृशवृत्तित्वेति साध्याभावसमुदायाधिकरणवृत्तित्वेत्यर्थः । प्रयोजनं चेति पूर्वेक्तप्रयोजनम् आलोकाद्यवृत्तित्वेन रूपेण निर्वह्निवृत्तित्वाभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणरूपं पूर्वलक्षणोक्तमेव चरमस्य प्रयोजनं तु साधनसमानाधिकरणत्वस्य साध्याभावविशेष-

णत्वे केवलान्वयिसाध्यके ज्ञेयत्वादिहेतौ घटादिवृत्तित्वाभावमादायाव्याप्तिवारणमेव न तु वह्निमान् धूमादित्यादौ महानसवृत्तित्वाभावव्यावर्तनं, तत्र महानसादेर्वह्नित्वावच्छिन्नवह्न्यभावानधिकरणत्वेन साध्याभावकूटानधिकरणत्वात् एतस्य च प्रागनुक्तत्वादुक्तप्रायामिति । समुदायपदप्रयोजनमाह, साध्याभावाधिकरणेति । व्यधिकरणधर्मावच्छिन्नाभावस्यैवेति । निर्धूमवृत्तित्वत्वाद्यवच्छिन्ननिर्धूमवृत्तित्वाद्यभावस्य प्रतियोगितायाः व्यधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणमहानसादिवृत्तित्वावृत्तितया साध्याभावाधिकरणवृत्तित्वत्वाव्यापकतया जगद्वृत्तित्वसामान्याभावस्यैव तद्व्यापकप्रतियोगिताकतया तस्य च समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यावृत्तावेव प्रसिद्धत्वादिति भावः । व्यभिचारिण्यतिव्याप्तिरिति । तादृशस्य जगद्वृत्तित्वाभावस्य सर्वत्रैव सत्त्वादिति भावः । अत्र च स्वव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वव्यापकत्वे सति साध्याभावसमुदायाधिकरणवृत्तित्वत्वव्यापकत्वं प्रतियोगिताविशेषणं तत्र च शेषदले समुदायानिवेशेऽपि निर्धूमवृत्तित्वत्वावच्छिन्नाभावस्य लक्षणाघटकत्वेऽपि नातिव्याप्तिः सम्भवति व्यतिरेकिसाध्यके तादृशप्रतियोगिताया अप्रसिद्धेः जगद्वृत्तित्वसामान्याभावीयप्रतियोगितायाः साध्याभावाधिकरणवृत्तित्वत्वव्यापकत्वेऽपि स्वव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वव्यापकत्वरूपपूर्वदलविरहात् धूमाद्यभावसमुदायाधिकरणवृत्तित्वत्वशून्ये महानसादिवृत्तित्वे तादृशप्रतियोगितासत्त्वादिति पूर्वपक्षयित्वा शेषदले समुदायपदाप्रवेशे पूर्वदलमेव नोपादेयं तदनुपादानेऽपि वह्निमान् धूमादित्यादौ आलोकाद्यवृत्तित्वत्वाद्यवच्छिन्नाभावप्रतियोगित्वस्य आलोकादिनिष्ठपर्वतादिवृत्तित्वसाधारणसाध्याभावाधिकरणवृत्तित्वत्वाव्यापकतया तादृशाभावमादाय दोषाप्रसक्तेः तदुपादाने व्यतिरेकिसाध्यकमात्र एवोक्तरीत्या तादृशप्रतियोगित्वाप्रसिद्ध्या ऽव्याप्तिप्रसङ्गाच्च तथा च धूमवान् वह्नेरित्यादौ घटत्वेन जगद्वृत्तित्वाभावमादायातिव्याप्तिरित्याशयेन दीधितिकृतेदमभिहितम् । अतिव्याप्तिवारणाय शेषदले समुदायप्रवेशने च निर्वह्निवृत्तित्वत्वव्यापकप्रतियोगिताक-

स्यालोकावृत्तित्वावच्छिन्नाभावस्य वह्निमान् धूमादित्यत्र शेषद-
लाक्रान्ततया पूर्वदलोपादानमावश्यकं तत्र समुदायाप्रवेशे व्य-
धिकरणधर्मावच्छिन्नसाध्याभावाधिकरणवृत्तित्वत्वव्याप्यप्रतियोगि-
ताकस्यालोकावृत्तित्वरूपाभावस्य धूमेऽसत्त्वादव्याप्तिरिति तत्रापि
तत्प्रवेशनमिति केचित्समादधति । परे तु प्रतियोगित्वव्यापकता-
विशेष्यतापन्नमेव 'साध्याभावसमुदायाधिकरणवृत्तित्वत्वं व्याप-
कत्वविशेषणविधया निवेश्यते न तु तद्दलस्योक्तरीत्या द्विधा
निवेशः एवं च पूर्वपक्ष एवायं नावतरति न च गुरुधर्मस्या-
भावप्रतियोगितानवच्छेदकत्वमते प्रतियोगित्वव्यापकत्वविशेषि-
तसाध्याभावसमुदायाधिकरणवृत्तित्वत्वाधिकरणनिष्ठान्योन्याभाव-
प्रतियोगितावच्छेदकत्वस्य नाभावप्रतियोगितावच्छेदकमिति
प्रतियोगित्वे तादृशावच्छेदकत्वत्वावच्छिन्नाभावरूपव्यापकता-
निवेशासम्भवात्तद्दलस्य द्विधाविनिवेशनमावश्यकमिति वाच्यं
व्यापकत्वांशस्योपलक्षणतया साध्याभावसमुदायाधिकरणवृत्ति-
त्वत्वरूपव्याप्यांशे निवेशसम्भवात् व्यापकतावच्छेदकाव-
च्छिन्नाभाववानित्यादिज्ञाने व्यापकतावच्छेदकत्व-तत्स्वघोका-
वच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकाभावबुद्धौ व्यापकताया उ-
पलक्षणतया भानेऽविरोधात् । वस्तुतस्तु गुरुधर्मस्याभावप्रति-
योगितानवच्छेदकत्वे साध्याभावसमुदायाधिकरणवृत्तित्वत्वाधि-
करणनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वत्वमपि नाभावप्रति-
योगितावच्छेदकं वह्नित्वावच्छिन्नवह्न्यभाववद्वृत्तित्वत्वाधिकर-
णनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वत्वादिरूपसमनियतधर्मा-
पेक्षया व्यधिकरणधर्मावच्छिन्नसाध्याभावेनाधिकेन घटितस्य
गुरुत्वादिति तादृशधर्मावच्छिन्नाभावो निवेशयितुमशक्यः किं
तु 'तादृशान्योन्याभावप्रतियोगितावच्छेदकं यद्यत्तत्तद्भेदकूटव-
त्त्वमेव निवेशनीयम् एवं च प्रतियोगिताव्यापकत्वघटितोक्तधर्म-
स्य प्रतियोगितानवच्छेदकत्वमप्याकिञ्चित्करमेवेत्याहुः । तेनेति
समवायेन वह्नेः साध्यत्वे पर्वतस्य सम्बन्धद्वयावच्छिन्नवह्न्यभा-
वद्वयानधिकरणत्वेऽपि धूमे नातिव्याप्तिः संयोगेन वह्नेस्तथा-
त्वे वह्न्यवयवस्य तादृशाभावद्वयानधिकरणत्वेऽपि वह्न्यवयव-
त्वे नातिव्याप्तिः समवायेन वह्नेः साध्यत्वे संयोगेन तस्य त-

थात्वे च पर्वतस्य वह्न्यवयवस्य च तादृशाभावद्वयानधिकरणत्वेऽपि पर्वतवह्न्यवयवसंयोगे नातिव्याप्तिरिति योजना सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वय संयोगसम्बन्धावच्छिन्नवह्न्यभावसमवायसम्बन्धावच्छिन्नवह्न्यभावद्वय साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वानिवेशने तादृशाभावद्वयानधिकरणस्य पर्वताद् साध्याभावकूटानधिकरणतया तत्कूटाधिकरणवृत्तित्वाभावा यावन्तस्तद्धर्म धूमादावव्याहतमेवेत्यतिव्याप्ति स्यादेवेति भाव । न च साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावनिवेशेऽपि समवायेन वह्नौ साध्ये संयोगेन हेतौ धूमे नातिव्याप्तिर्वारयितु शक्यते समवायसम्बन्धावच्छिन्नवह्न्यभावकूटाधिकरणसंयुक्तत्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव संयुक्तवृत्तित्वात् वह्न्यवयवमात्रसंयुक्तामसिद्धे संयुक्तमात्रस्यैव तादृशाभावकूटाधिकरणगगनसंयुक्तत्वादिति कथमत्र व्यावृत्तिप्रदर्शन समवायेन धूमहेतुकस्थलपरता तु न युज्यते समवायेन धूमवत साध्याभावकूटवत्त्वानिराकरणादिति वाच्य संयुक्तमात्रस्यैव गगनादिसंयुक्तत्वेऽपि तादृशासंयोगस्य वृत्त्यनियामकतया तथा यस्य द्रव्यस्य वह्न्यवयव एवाधिकरणत्वप्रत्यय प्रामाणिक न त्वन्यत्र तत्र संयोगेन गगनादिवृत्तित्वाप्रसिद्ध्या संयोगेन वह्न्यवयवान्यवृत्तित्वाभावस्यैव संयोगेन वृत्तिमत्त्वे सुलभतया वृत्तिपदस्य यथाश्रुतपरतामते तादृशव्यावृत्तिदानसङ्गते वृत्त्यनियामकतादात्म्यसम्बन्धेन व्याप्तिस्वीकारे वृत्तिपदस्य सम्बन्ध्यर्थकत्वमावश्यकमित्यभिप्रायेण एतदुपक्ष्य द्वितीयस्थलानुसरण साधनसमानाधिकरणत्वस्य साध्याभावविशेषणत्वपक्षे समवायादिसम्बन्धावच्छिन्नवह्न्यभावस्य वह्न्यवयवत्वरूपसाधनसामानाधिकरण्याभावेन न तत्रातिव्याप्तिसंभव एव सत्ताभाववान् द्रव्यत्वादित्यादावतिव्याप्तिवारणाय साध्यसामानाधिकरण्ये सतीति विशेषणप्रवेशस्यावश्यकतया संयोगादिना वह्निमत्यवर्तमानवह्न्यवयवत्वादौ तेनाप्यतिव्याप्तिर्वारयितु शक्यत इत्यत पर्वतवह्न्यवयवसंयोगहेतुकानुसरण संयोगेन द्रव्यस्याव्याप्यवृत्तितामते पर्वतस्य सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयाधिकरणत्वेऽपि न तस्य व्याप्यवृत्तित्वविशिष्टसाध्याभावकूटवत्त्वम् अन्यथा अव्याप्यवृत्तिसंयोगादिसाध्यके

व्यभिचारिणि जगत एव साध्याभावकूटाधिकरणत्वेनातिव्याप्तिरिति दर्शितहेतोः पर्वतवृत्तित्वेऽपि तादृशाभावकूटाधिकरणवृत्तित्वाभावो ऽक्षत एवेत्यविव्याप्तिप्रसङ्गः।

पूर्ववदत्र साध्याभावपदेन साध्यतावच्छेदकविशिष्टव्यापकतावच्छेदकावच्छिन्नाभावविवक्षणे नानाविपक्षके तथाविधतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावकूटाधिकरणाप्रसिद्ध्या ऽव्याप्तिः साध्यतावच्छेदकविशिष्टसमव्यापकतावच्छेदकावच्छिन्नाभावनिवेशने च गौरवमिति साध्यतावच्छेदकसमव्याप्तप्रतियोगिताकाभाव एव विवक्षितुमुचितः तार्णतार्णदहनवृत्तित्वावच्छिन्नप्रतियोगिताकानां तथाविधसाध्याभावानामधिकरणे धूमादेर्वृत्तावपि वह्नित्वाद्यवच्छिन्नवह्न्यभावघटिततादृशाभावकूटवत्त्यवृत्तेरव्याप्त्यनवकाशादित्याशयेन तथाविधमेवाभावं निवेशयति तथेति।

( दीं० ) तथा स्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रतियोगिताकोऽपि बोध्यस्तेन यत्र पृथिवीत्वाभावादौ साध्ये तत्तद्विपक्षावृत्तित्वाद्यवच्छिन्नाभावकूटाधिकरणमप्रसिद्धं तत्र सद्धेतौ पृथिवीत्वादौ साध्ये जातित्वाद्यवच्छिन्नाभाववति सामान्यादाववर्तमाने द्रव्यत्वप्रकारकप्रमाविषयत्वादौ च नाव्याप्तिरतिव्याप्तिर्वा नाप्यभावत्वादिना अभावादौ साध्ये तत्तत्साध्याभावकूटाधिकरणप्रसिद्ध्या अव्याप्तिरित्याहुः॥

(गा०) एवं प्रतियोगिता समनियताभावैक्यमते साध्याभावप्रतियोगितायाः साध्याभावसमनियताभावप्रतियोगिपदार्थान्तरवृत्तित्वेऽपि साध्यतावच्छेदकेन व्यधिकरणेन वा धर्मेणावच्छिन्नायाः साध्यमात्रवृत्तिप्रतियोगितायाः साध्यतावच्छेदकसमनैयत्यमक्षतमेव। अथ घटत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगिता घटत्वावच्छिन्नघटाद्यवृत्तियोगित्वान्न भिद्यते किं तु घटादिभिन्नयावद्वस्तुवृत्तिरेकैव स्वीक्रियते न तु वाच्यत्वादिमात्रवृत्तिस्तथा सति घटत्वेन प्रमेयत्वं नास्तीतिप्रतीतिविषयप्रतियोगितान्तरकल्पने गौरवादिति तादृशप्रतियोगितायां न वाच्यत्वत्वादिरूप-

साध्यतावच्छेदकसमनैयत्यमिति चेत् का क्षतिः वाच्यत्वाभिन्नत्वेन वाच्यत्वं नास्तीत्यादिप्रतीतिविषयमभावमादायैव तत्र लक्षणसमन्वयसम्भवात् स्वव्यधिकरणवाच्यत्वभिन्नत्वावच्छिन्नायाः प्रतियोगितायाः वाच्यत्वभिन्नवृत्तित्वस्यासम्भावितत्वात्। वस्तुतस्तु घटत्वावच्छिन्नवाच्यत्वाभावप्रतियोगितायाः व्यधिकरणघटत्वादेरिव समानाधिकरणवाच्यत्वत्वादेरपि अवच्छेदकत्वमावश्यकं घटत्वेन वाच्यत्वं नास्तीतिप्रतीत्या वाच्यत्वत्वादेः प्रतियोगितावच्छेदकत्वानवगाहने ताहशप्रतीतेर्वाच्यत्वत्वविशिष्टवैशिष्ट्यानवगाहित्वेन तत्र वाच्यत्वत्वादिप्रकारकज्ञानानपेक्षापत्तेः एवं च घटत्वेन प्रमेयत्वं नास्तीत्यादिप्रतीतिविषयप्रतियोगितायाः अतिरिक्तत्वमावश्यकमवच्छेदकभेदादिति घटत्वेन वाच्यत्वं नास्तीतिप्रतियोगिता वाच्यत्वादावेव वर्तते न त्वन्यत्रापि मानाभावादिति घटत्वादिना वाच्यत्वाभावोऽपि लक्षणघटकः। अथैव साध्यतावच्छेदकरूपावच्छिन्नाभावघटितलक्षणे वह्नित्वावच्छिन्नसाध्यकस्थले वह्नित्वादिना घटाद्यभावो लक्षणघटको न स्यात् व्यापकतावच्छेदकवह्नित्वादिपर्याप्तप्रतियोगितावच्छेदकताकत्वविरहात् महानसीयवह्नित्वाद्यवच्छिन्नाभाववारणायावच्छेदकतापर्याप्तिविवक्षणस्यावश्यकत्वादिति चेन्न व्यापकतावच्छेदकपर्याप्तत्वं हि व्यापकतानवच्छेदकापर्याप्तत्वं व्यापकतानवच्छेदकावृत्तित्वं तच्चेन्धनत्वाद्यवच्छिन्नवह्न्यभावप्रतियोगितावच्छेदकतायामक्षतमिति ताहशाभावमादायैव लक्षणसमन्वयसम्भव इति अत एव यच्चेन्धनत्वावच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेरभाव इति दीधितिग्रन्थः सङ्गच्छते अन्यथा इन्धनत्वादिना घटाद्यभावोपेक्षायां निर्बीजत्वमापद्येत एव च सार्वभौमाणामेतल्लक्षणाभिप्रायकतया समवायितया वाच्यत्वाभावो घट एव प्रसिद्ध इति मूलग्रन्थोपवर्णनमपि सङ्गच्छते । अथ पर्याप्तिसम्बन्धेनोभयत्वादिकं यत्र साध्यतावच्छेदकं तत्र प्रतियोगिताया अव्यासज्यवृत्तित्वेन तत्पर्याप्त्यधिकरणप्रत्येकव्यक्तौ पर्याप्तिसम्बन्धेनोभयत्वादेरत्यन्ताभावस्य तदवच्छिन्नभेदस्य च सत्त्वात्तस्य प्रतियोगिताव्यापकत्वं न सम्भवति न चाव्याप्यवृत्तिसंयोगादेर्यत्र साध्यतावच्छेदकता तत्र प्रतियोगिताव्यापकत्वनिर्वाहाय प्रतियोग्यसा-

मानाधिकरण्यं व्यापकताघटकाभावे निवेशनीयं तावता उभयत्वस्यापि व्यापकत्वं निर्वहति पर्याप्तिसम्बन्धेनोभयत्वपर्याप्त्यधिकरणस्य प्रत्येकानतिरिक्ततया प्रत्येकवृत्तेरुभयत्वाभावस्यापि प्रतियोगिसमानाधिकरणत्वात् इति वाच्यं पृथिवीत्वघटत्वोभयत्वादिना यत्र साध्यता तत्र जातित्वाद्यवच्छिन्नाभावप्रतियोगितासमानाधिकरणस्य तादृशसाध्यतावच्छेदकाभावस्य प्रतियोग्यधिकरणावृत्तित्वविरहेण तादृशप्रतियोगिताव्यापकतापन्नतादृशाभावमादाय तदवच्छिन्नसाध्यकद्रव्यत्वप्रकारकप्रमाविषयत्वादिहेतावतिव्याप्त्यापत्तेः प्रतियोग्यनधिकरणवृत्तित्वस्यैवाभावे निवेशनीयतया उभयत्वाभावस्यावर्तनासम्भवात् तदभाववतः प्रत्येकं तदनधिकरणत्वात् तस्यैव तदधिकरणताया अपि व्यासज्यवृत्तित्वादिति चेन्न सामानाधिकरण्यस्याव्याप्यवृत्तितापक्षे प्रतियोगिसामानाधिकरण्याभावविशिष्टाभाववत्त्वाघटितव्यापकताया एव निवेशसम्भवात् पृथिवीत्वादावुक्तोभयत्ववति पृथिवीत्वावच्छेदेन तदभावस्य प्रतियोगिसमानाधिकरणत्वेऽपि जलत्वादेस्तत्सामानाधिकरण्याभावविशिष्टतदभाववत्त्वेनातिप्रसङ्गाभावात् उभयत्वाद्यभावस्य तदभाववत्येकैकस्मिन्नपि तत्सामानाधिकरण्याभावानभ्युपगमात् तत्सामानाधिकरण्यावच्छेदकस्य प्रत्येकानतिरिक्तत्वात् । अथवा यन्निरूपितसाध्यतावच्छेदकताघटकसम्बन्धसामान्ये प्रतियोग्यधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभावस्तदन्यत्वमेव प्रतियोगिताव्यापकत्वम् उभयत्वनिरूपितपर्याप्तौ तु न प्रत्येकानुयोगिकत्वाभावः तदनुयोगिनः प्रत्येकानतिरिक्तत्वादिति । यत्तु प्राचीनमते रूपादिसामान्याभावस्य रूपतद्ध्वंसतत्प्रागभावेतत्त्रितयप्रतियोगिकतया रूपध्वंसादिसाध्यकरूपादिहेतावतिव्याप्तिः रूपादिसामान्याभावीयरूपध्वंसत्वावच्छिन्नप्रतियोगितायाः साध्यतावच्छेदकसमनियतत्वेन तद्घटिताभावकूटाधिकरणे रूपादेरवृत्तेः न च रूपस्यापि रूपध्वंसाभावरूपतया तद्घटितस्य रूपसामान्याभावाघटितकूटस्यापि यावतामैकाधिकरण्यमिति विवक्षया लक्षणघटकत्वादिति तन्न जलपरमाण्वादौ रूपध्वंसत्वाद्यवच्छिन्नाभावबुद्धिनिर्वाहाय जन्यत्वाद्यवच्छिन्नाभावे रूपध्वंसत्वावच्छिन्नप्रतियोगिताकत्वस्यावश्य-

कतया तत एव रूपादिसामान्याभाववत्यपि तत्प्रतीतिनिर्वाहात् रूपादिसामान्याभावस्य रूपध्वंसाद्यप्रतियोगिकत्वानभ्युपगमात् साधनसमानाधिकरणत्वस्य साध्याभावविशेषणतापक्षे तेनाप्युक्तस्थले रूपादिसामान्याभावव्यावर्तनात् स्वनिरूपकाभाववत्त्वसम्बन्धेन साध्यतावच्छेदकसमनियतप्रतियोगिताकूटाधिकरणत्वमेव निवेश्य लक्षणस्य परिष्करणीयतया रूपादिसामान्याभावानधिकरणस्यापि जलपरमाण्वादेरुक्तस्थले तत्कूटाधिकरणत्वेनातिव्याप्तेरनवकाशाच्च प्रतियोगितायाः प्रतियोगिस्वरूपत्वमते नानाव्यक्तिसाध्यकस्थले साध्यतावच्छेदकसमनैयत्यस्य प्रत्येकप्रतियोगितायामसत्त्वेऽपि स्वावच्छेदकावच्छिन्नतदभावीयप्रतियोगितात्वेन समनैयत्यस्य विवक्षणान्न दोषः तत्तद्वह्नितत्तद्धूमादिस्वरूपप्रतियोगितानामपि स्वावच्छेदकवह्नित्वधूमत्वावच्छिन्नतदभावीयप्रतियोगितात्वेन वह्नित्वधूमत्वादिसमनैयत्यात् वह्नित्वाद्यवच्छिन्नवह्न्यादिस्वरूपप्रतियोगितानां द्रव्यत्वाद्यवच्छिन्नाभावीयवह्न्यादिस्वरूपप्रतियोगितात्मकतया तदवच्छेदकद्रव्यत्वाद्यवच्छिन्नप्रतियोगितात्मकतया घटादावपि सत्त्वात् न तत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितात्वेन वह्नित्वादिसमनैयत्यमिति तदभावीयत्व विशेषणं तथा सति वह्नित्वाद्यवच्छिन्नाभावीयप्रतियोगितायाः घटादावसत्त्वान्नानुपपत्तिः । यद्यप्येवमपि वाच्यत्वत्वादिसमनियतप्रतियोगित्वाप्रसिद्धिर्दुर्वारैव व्यधिकरणधर्मावच्छिन्नाभावानामभिन्नतया वाच्यत्वादिस्वरूपवाच्यत्वभिन्नत्वावच्छिन्नाभावीयप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नप्रतियोगितानां पटादावपि सत्त्वात् यत्किञ्चिदेकधर्मावच्छिन्नतदभावीयप्रतियोगितात्वेन समनैयत्यघटकव्याप्यत्वविवक्षणे च पृथिवीत्वाद्यभावादिसाध्यकस्थले घटावृत्तित्वावच्छिन्नाभाववारणमशक्यं तदभावीयपृथिवीत्वाभावादिप्रतियोगितानां पृथिवीत्वाभावत्वाद्यवच्छिन्नाभावीयप्रतियोगितात्मकतया पृथिवीत्वाभावत्वादिरूपतदवच्छेदकावच्छिन्नप्रतियोगितात्वेन पृथिवीत्वाभावत्वादिसमनैयत्यात् । तथापि यद्धर्मावच्छिन्नप्रतियोगितात्वेन यदभावनिरूपितत्व तादृशधर्मावच्छिन्नतदभावीयप्रतियोगितात्वेन व्याप्यत्वनिवेशान्न दोषः पृथिवीत्वाभावत्वाद्यवच्छिन्नप्रतियोगिता-

त्वेन पृथिवीत्वादिरूपाभावमात्रनिरूपितत्वं न तु घटावृत्तित्वावच्छिन्नाभावनिरूपितत्वमिति । यद्यपि पूर्वदलाप्रवेशे 'वह्न्यादिसाध्यके धूमादिहेतौ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकव्यापकप्रतियोगिताकतत्तद्भेदावृत्तित्वावच्छिन्नाभावकूटाधिकरणत्वस्य गुणादौ प्रसिद्धत्वेऽपि तत्र हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्याऽव्याप्तिसम्भवः तथापि साध्याभावकूटवति तादृशवृत्तेरप्रसिद्ध्या ऽव्याप्तिस्तदनिवेशेऽपि सत्तावान् जातेरित्यादौ वक्ष्यत इति स्थलान्तरे कूटाधिकरणाप्रसिद्ध्या ऽव्याप्तिवारणरूपं तत्प्रयोजनमाह यत्र पृथिवीत्वाभावादाविति । तत्तद्विपक्षेति । घटपटादिरूपेत्यर्थः । तत्र सद्धेतावेवेति तत्र साध्ये यः सद्धेतुर्जलत्वादिस्तत्रेत्यर्थः । नाव्याप्तिरित्यनेनान्वयः यावतामैकाधिकरण्यं सम्भवति तावदभावसमुदायाधिकरणविवक्षायां तद्दोषासम्भवेन स्थलान्तरे व्यावृत्तिमाह पृथिवीत्यादाविति । द्रव्यत्वादेः समवायेन हेतुत्वे जातित्वाद्यवच्छिन्नाभावघटितकूटाधिकरणे समवायेन वृत्तेरप्रसिद्ध्या ऽतिव्याप्तेरनवकाशात् स्वरूपसम्बन्धेन हेतुत्वानुसरणं साधनसमानाधिकरणत्वस्य साध्याभावविशेषणत्वपक्षे जातित्वाद्यवच्छिन्नाभावस्य साधनासमानाधिकरणतया वारणसम्भवेऽपि प्रत्येकं साधनसमानाधिकरणजलावृत्तित्वतेजोवृत्तित्वाद्यवच्छिन्नसमवायसम्बन्धावच्छिन्नाभावकूटाधिकरणतायाः सामान्यादावेव सत्त्वादतिव्याप्तिर्दुर्वारैवेति ध्येयम् । द्वितीयदलप्रयोजनमाह नापीति । घटत्वादिना साध्यतायां घटादावेव साध्याभावकूटाधिकरणत्वप्रसिद्धिरत उक्तमभावत्वादिनेति । आदिपदात्प्रमेयत्वपरिग्रहः तत्तत्साध्येति घटत्वाभावादिरूपसाध्यस्य यः साध्यतावच्छेदकव्याप्यप्रतियोगिताको घटत्वपटत्वादिरूपो ऽभावस्तत्समुदायाधिकरणाप्रसिद्धेरित्यर्थः यावतामैकाधिकरण्यं सम्भवतीति विवक्षायामपि तादृशाभावसमुदायवति घटादौ हेतोर्वृत्तेरव्याप्तिरेव न च यावतामभावानामैकाधिकरण्यसम्भवस्तादृशाभावकूटाधिकरणं यद्यत्तावदन्यतमवृत्तित्वत्वसमानियतप्रतियोगिताकोऽभावो विवक्षणीयः घटवृत्तित्वत्वाद्यवच्छिन्नाभावश्चोपदर्शितस्थले न तथा जगत एव तावदन्यतमान्तर्गतत्वात् अपि तु घटत्वादिना जगद्वृत्तित्वसामान्या-

भाव एव वृत्तिमद्वृत्तित्वस्तथाविधाभावः तावदधिकरणान्यतमत्वं च तत्तदधिकरणावृत्तित्वशून्यत्वं न तु तत्तदधिकरणान्यान्यत्वमतो नाप्रसिद्धिरिति वाच्यम् एवमपि जातिप्रतियोगिकाभाववान् मेयत्वादित्यादौ जातिमतामेव प्रत्येकघटत्वपटत्वघटिततादृशतादृशकूटाधिकरणतया जातिमद्वृत्तित्वत्वावच्छिन्नाभावस्यापि तादृशतया ऽव्याप्तेर्दुर्वारत्वादिति । अत्र साध्याभाववत्तायां सम्बन्धविशेषानिवेशे कालपरिमाणवान् मेयत्वादित्यादावतिव्याप्तिः कालस्यापि कालिकसम्बन्धेन कालपरिमाणाभावाधिकरणतया जगत एव साध्याभावकूटवत्वात् दैशिकविशेषणतासम्बन्धनिवेशे च घटत्वाभाववान् पटत्वादित्यादावव्याप्तिः घटत्वादेस्तेन सम्बन्धेनावृत्तेः तेन सम्बन्धेन तद्घटितकूटाधिकरणाप्रसिद्धेः तेन सम्बन्धेन वृत्तिमत्त्वस्याभावविशेषणत्वे च घटत्वाभावसाध्यके व्यभिचारिणि व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः कालिकसम्बन्धावच्छिन्नप्रतियोगिताके घटत्वाभावाभावे , साध्ये आत्मत्वादिहेतावव्याप्तिश्च घटातिरिक्तवस्तुमात्रस्यैव दैशिकविशेषणतया साध्याभावकूटवत्त्वात् साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धनिवेशेऽप्ययमेव दोषः किञ्चिद्विशिष्टतादृशसाध्यस्य योऽभावस्तस्य दैशिकविशेषणतासम्बन्धावच्छिन्नाभावस्तद्रूप इति दैशिकविशेषणताया अपि निरुक्तसाध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धत्वात् स्वनिष्ठतादृशप्रतियोगितावच्छेदकसम्बन्धेन स्वाधिकरणत्वनिवेशे च व्यधिकरणधर्मावच्छिन्नाभावस्य साध्याप्रतियोगिकतया तदसंग्रहप्रसङ्ग इति साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताज्ञानं प्रति यत्सम्बन्धावगाहियदभाववत्ताज्ञानं प्रतिबन्धकं तेन सम्बन्धेन तदभावाधिकरणत्वं विवक्षणीयं व्यधिकरणधर्मावच्छिन्नाभाववत्ताबुद्धिरपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिप्रकारकबुद्धिं प्रतिबध्नातीति तादृशाभावस्य लक्षणघटकत्वनिर्वाहः यदि चाभाववत्ताज्ञानं प्रति दैशिकविशेषणतासंसर्गकमपि तदभावाभावत्वावच्छिन्नप्रकारकं ज्ञानं प्रतिबन्धकम् । अभावाभावस्यातिरिक्ततामते तादृशज्ञानप्रतिबन्धकताया आवश्यकत्वात् तस्य प्रतियोगिस्वरूपतामतेऽपि फलसाम्यानुरोधेन तदावश्यकत्वात् अभावाभावस्यातिरिक्तताग्रहदशायां तद्ग्र-

( गा० ) तदुभयेति द्रव्यत्वपृथिवीत्वान्यतरत्वावच्छिन्नप्रतियोगिताया अपि तदुभयत्वसमानियततया तादृशाभाववतो गुणादेरेव निरुक्तसाध्याभावकूटाधिकरणत्वादिति भावः । प्रतियोगिवैयधिकरण्याघटितसमव्यापकत्वस्य साध्यतावच्छेदकविशेषणत्वमुपगम्य तदुभयत्ववति प्रत्येकमुभयत्वाभावसत्त्वेन तस्य प्रतियोगिताव्यापकत्वधारणे तु तद्रूपावच्छिन्नसाध्यकसद्धेतावव्याप्तिर्द्रष्टव्या व्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वान्यतररूपेण साध्यतावच्छेदकसजातीयो यो धर्मस्तदवच्छिन्नत्वस्य प्रतियोगिताविशेषणत्वोपगमे नैतादृशातिव्याप्त्यवकाश इत्यतः स्थलान्तरेऽतिव्याप्तिमाह अपि चेति । द्रव्यत्वत्वाद्यवच्छिन्नेति शुद्धद्रव्यत्वत्वाद्यवच्छिन्नेत्यर्थः पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वादिति किञ्चिद्विशेषणावच्छिन्नस्य शुद्धविशेष्यानतिरिक्तत्वादिति भावः । विशिष्टस्यातिरिक्तत्वेन साध्यतावच्छेदकस्य प्रतियोगिताव्यापकत्वस्थाने प्रतियोगित्वावच्छिन्नव्यापकतावच्छेदकत्वनिवेशेन वा विशिष्टद्रव्यत्वादिसाध्यकस्थले शुद्धद्रव्यत्वाद्यभावस्य धारणसम्भवाद्दूषणान्तरमाह किञ्चेति । रूपाभावेति रूपत्वावच्छिन्नाभावेत्यर्थः । सद्धेतावित्यव्याप्तिसूचनाय । सकलरूपव्यक्त्यधिकरणाप्रसिद्धेरिति तथा च तद्घटितसाध्याभावकूटाधिकरणाप्रसिद्ध्याऽव्याप्तिरिति भावः । यावतामिति तथा च प्रकृते सकलरूपघटितसमुदायस्य न लक्षणघटकता सकलरूपाणामैकाधिकरण्यविरहात् । किं तु एकैकरूपव्यधिकरणधर्मावच्छिन्नाभावघटितकूटानामेव प्रत्येकं तदधिकरणता च रूपवत्स्वेव प्रसिद्धेति नाव्याप्त्यवकाश इति भावः । इदमिति वायौ पृथिवीवृत्तिद्वित्वसंयोगादिसत्त्वाद्वायुत्वादेरुक्तसाध्यव्यभिचारिता गुणसामान्याभावस्य साध्यत्वे वायवीयस्पर्शादिरपि साध्याभावः तद्घटितनिरुक्ताभावकूटवद्वृत्तित्वाभावस्य यावदन्तर्गतस्य वायुत्वादावभावान्नातिव्याप्तिसम्भव इति पृथिवीवृत्तीति घटतद्वायुद्वित्वपटतद्वायुद्वित्वादिरूपपृथिवीवृत्तिगुणाभावाभावानां यावतामेकाधिकरण्यसम्भवेन तद्घटितकूटस्यापि लक्षणघटकतया तद्वति वायौ हेतोर्वृत्त्या नातिव्याप्तिसम्भवः । न च द्वित्वादिरूपसाध्याभावस्य उत्पत्तिकाले ऽसत्त्वेन कालिकाव्याप्यवृत्तितया

व्याप्यवृत्तित्वविशेषणेन तद्व्यावृत्तिः पार्थिवपरमाण्वेकत्वादिरेव लक्षणघटक इत्यतिव्याप्तिर्दुर्वारैवेति वाच्यं प्राचीनमते द्वित्वादिमति तत्प्रागभावादिकालावच्छेदेन तदत्यन्ताभावासत्त्वात् द्वित्वादेरपि व्याप्यवृत्तित्वादिति । पृथिवीपदमेतत्पृथिवीपरम् इदपदपृथिवीपदयोः कर्मधारयो वाभिप्रेतः न च स्वसमानाधिकरणाभावाप्रतियोगित्वमनवच्छिन्नवृत्तिकत्वं वा व्याप्यवृत्तित्वं न तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं तच्च न द्वित्वादिसाधारणमिति पृथिवीपदस्य पृथिवीसामान्यपरत्वेऽपि न क्षतिरिति वाच्यम्। एतदतिव्याप्तिवारणानुरोधेनात्यन्ताभावघटितव्याप्यवृत्तित्वस्यैव निवेशयितुमुचितत्वात् एतद्रूपात्यन्ताभाववान् मेयत्वादित्यादावेतद्रूपात्यन्ताभावस्य लक्षणाघटकत्वेनातिव्याप्त्यापत्तेः प्राचीनमते ऽत्यन्ताभावघटितव्याप्यवृत्तित्वनिवेशस्यावश्यकत्वाच्च । अत एवाप्रेतनरूपादिघटितत्वेनेत्यपि साधु सङ्गच्छते। पार्थिवरूपमात्रस्यैवानित्यतया ऽत्यन्ताभावघटितव्याप्यवृत्तित्वानिवेशे तस्य व्याप्यवृत्तित्वाभावेन तदसङ्गत्यापत्तेः पृथिवीवृत्तीत्यत्र वृत्तिः समवायेन बोध्या तेन वायवीयस्पर्शादेः कालिकसम्बन्धेन पृथिवीवृत्तित्वेऽपि न क्षतिः पृथिवीसमवेतत्वावच्छिन्नाभावो गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे ऽप्रसिद्धः पृथिवीसमवेतत्वावच्छिन्नत्वेनाभिमतायां प्रतियोगितायां केवलसमवेतत्वस्यैवावच्छेदकत्वसम्भवेन पृथिवीसमवेतत्वस्याभावप्रतियोगितानवच्छेदकत्वात् न च पृथिवीसमवेतत्वावच्छिन्नाया जलत्वादिव्यावृत्तप्रतियोगितायाः अतिप्रसक्ते समवेतत्वे नावच्छेदकत्वसम्भव इति वाच्यं समवेतत्वावच्छिन्नप्रतियोगितातो ऽतिरिक्तायाः जलत्वादिव्यावृत्तप्रतियोगिताया अप्रसिद्धेः गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वेऽपि पृथिवीसमवेतत्वावच्छिन्नाभावसाध्यके नातिव्याप्तिसम्भवः तादृशाभावस्य समवेतत्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन समवेतमात्रस्यैव तदभाववत्तया वायुत्वादेरपि तथात्वात् न च पृथिवीसमवेतत्वविशिष्टाभाववति जलादौ समवेतत्वावच्छिन्नाभावविरहान्न तयोः समनैयत्यम् एवं च गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वेऽपि पृथिवीसमवेतत्वस्य तादृशावि-

शिष्टाभावप्रतियोगितावच्छेदकत्वमावश्यकं समवेतत्वविशिष्टस्वाति जलादौ तत्सत्त्वेन तन्मात्रस्य तत्प्रतियोगितावच्छेदकत्वासम्भवादिति वाच्यं विशिष्टाभावस्य साध्यत्वे तस्य वायुसाधारणतया सद्धेतुत्वप्रसङ्गेन पृथिवीसमवेतत्वोपलक्षिताभावस्यैव साध्यतया उपगन्तव्यत्वादिति गुणपदोपादानं पृथिवीसमवेतगुणत्वावच्छिन्नाभावो गुणादिसाधारणत्वान्न समवेतत्वावच्छिन्नाभावसमनियत इति नोक्तदोषावसरः ध्वंसप्रागभावावच्छिन्ने सामान्याभावमुपगच्छतां वाय्वादेरप्युत्पत्तिकालावच्छेदेन पृथिवीवृत्तिगुणसामान्याभाववत्त्वात् उक्तसाध्यको वायुत्वादिः सद्धेतुरेवेत्यतो नातिव्याप्तिसम्भव इत्यतः साध्यान्तरमाह सत्तान्येति। सत्तान्यत्वनिवेशप्रयोजनं पूर्ववत् वायुत्वादेरपि सत्तान्यसमवेताभाववत्त्वात् पृथिवीति। अत्र पृथिवीपदं पृथिवीसामान्यपरमेव घटवायुद्वित्वादेः स्वसमानाधिकरणसत्ताभावप्रतियोगित्वेन व्याप्यवृत्तित्वविशेषणव्यावृत्तत्वात् रूपादिघटितत्वेनेत्यत्र रूपपदोपादानं प्राचीनमताभिप्रायेणोपन्यस्तम्। पूर्वसाध्यमभिप्रेत्य हेतौ साध्यसामानाधिकरण्यविशेषणेन वायुत्वे नातिव्याप्तिरतो द्वितीयहेत्वनुसरणम्। ननु समनियताभावैक्यमते सत्तान्यपृथिवीसमवेतत्वावच्छिन्नाभावस्य सत्तान्यद्रव्यसमवेतत्वावच्छिन्नाभावाभिन्नतया विभ्वसमवेतपृथिवीसमवेतत्वावच्छिन्नाभावस्य विभ्वसमवेतस्पर्शवत्समवेतत्वावच्छिन्नाभावाभिन्नतया वायुत्वादेरपि तदभाव इति न तादृशाभावसाध्यके ऽतिव्याप्तिः सम्भवतीति पूर्वोक्तरूपाभाववान् वायुत्वादित्यत्राव्याप्तेरेवोक्तविवक्षायां दुर्वारतामाह वस्तुत इति। अत्रायमाशयः। यावतामेकाधिकरणं तावत्समुदायाधिकरणत्वमित्यस्य यत्किञ्चिदधिकरणवृत्तिसकलसाध्याभावाधिकरणत्वं यत्किञ्चिदधिकरणवृत्तिसाध्याभावत्वव्यापकाधेयताकत्वपर्यवसितमर्थः साध्याभावाधिकरणाधिकरणकसकलसाध्याभावाधिकरणत्वं साध्याभावसमानाधिकरणसाध्याभावत्वव्यापकाधेयताकत्वपर्यवसितं वा आद्ये व्यभिचारिमात्रे ऽतिव्याप्तिः जगत एव साध्यवद्यत्किञ्चिदधिकरणावृत्तिसकलसाध्याभाववत्त्वादिति समुदायोपादानस्याकिञ्चित्करतया तद्विपक्षणासम्भवः द्वितीये च साध्याभावसमानाधिकरणसाध्याभावत्व-

मुकस्थले निखिलरूपाणामेवाक्षतमिति तादृशसाध्याभावत्वव्यापिका न केनाप्यधिकरणेन निरूपिताधेयतेति तादृशाधिकरणाप्रसिद्धिस्तदवस्थैवेति । ननु स्ववृत्तिसाध्याभावत्वव्यापकं यद्यद्धिकरणवृत्तित्वं तत्तदधिकरणवृत्तिसाध्याभावत्वव्यापकस्ववृत्तिताकाधिकरणमेवाधिकरणान्तार्थः धूमवान् वह्नेरित्यादौ महानसादिकं न तथा अयोगोलकवृत्तितायास्तद्वृत्तिसाध्याभावत्वव्यापकत्वात् अयोगोलकादिवृत्तिसाध्याभावत्वस्य च समानाधिकरणधर्मावच्छिन्नसाध्याभावसाधारणतया तद्वृत्तित्वाव्याप्यत्वादिस्ययोगोलकाद्येव तादृशं स्वमिति नातिव्याप्तिः तादृशयत्किञ्चिदधिकरणह्रदादिवृत्तित्वाभावस्य वह्न्यादौ सत्त्वेऽपि न क्षतिः तादृशं यद्यत्स्व तावदन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकाभावस्य निवेशात् अन्यतमत्वं च तत्तद्वृत्तिशून्यत्वं न तु तत्तदन्यान्यत्वम् अतो न केवलान्वयिसाध्यके अप्रसिद्धिरिति तादृशे स्वं यद्यत्तदधिकरणवृत्तित्वाभावकूटवत्त्वनिवेशेऽपि केवलान्वयिसाध्यके अव्याप्तिः हेतुमतोपि तथात्वादिति तदुपेक्षितं रूपसामान्याभाववान् वायुत्वादित्यादौ च सकलरूपवतामेव तथात्वं स्ववृत्तितायाः तत्तद्घटादिवृत्तिसाध्याभावत्वव्यापकत्वादतो नाव्याप्तिः । अथवा स्ववृत्तिसकलसाध्याभावसमानाधिकरणसाध्याभावत्वावच्छेदेन यदधिकरणवृत्तित्वं तादृशाधिकरणवृत्तिसकलसाध्याभाववत्त्वमेव यावत्त्वमित्यादेरर्थःधूमवान् वह्नेरित्यादौ च यत्किञ्चिदधिकरणं न साध्यवत् तद्वृत्तिसकलसाध्याभावसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य तदवृत्तित्वात् । किन्तु अयोगोलकाद्येवेति जगतोऽ तथात्वान्नातिव्याप्तिः रूपाभाववान् वायुत्वादित्यादौ च तादृशाधिकरणं तद्घटादिरेव व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव तद्वृत्तिसकलसाध्याभावसमानाधिकरणत्वात्तस्य च तद्वृत्तित्वनियमाद्राव्याप्त्यवसरः शेषं पूर्ववत् । अथवा व्यासज्यवृत्तिसाध्याभावमात्रवृत्तिधर्मावच्छिन्नाधिकरणत्वमेव साध्याभावकूटाधिकरणत्वं जगत एव साध्याभावत्वावच्छिन्नाधिकरणतया व्यभिचारिण्यतिव्याप्तिवारणाय व्यासज्यवृत्तित्वं धर्मविशेषणं तथा सत्यपि जगत एव व्यधिकरणधर्मावच्छिन्नसाध्याभावमात्रवृत्तितथाविधधर्मावच्छिन्नाधिक-

रणत्वात् स एव दोष इति आधेयतावच्छेदकतादृशधर्मन्यूनवृत्ति सव्याप्यं यद्यत्तदन्यत्वेन धर्मो विशेषणीयः न्यूनवृत्तित्वञ्च स्वसमानाधिकरणाभावप्रतियोगित्वमात्रम् उक्तस्थले तद्रूपव्यधिकरणधर्मावच्छिन्नसाध्याभावोभयत्वादिरेव तादृशो धर्मस्तस्य रूपान्तरसाधारणत्वित्वादिन्यूनवृत्तित्वेऽपि तादृशत्रित्वाद्यवच्छिन्नस्य क्वचिदप्यवृत्तेः । तस्याधेयतानवच्छेदकतया आधेयतावच्छेदकीभूततादृशधर्मन्यूनवृत्तिताविरहात् न च समनियताभावैक्ये व्यधिकरणधर्मावच्छिन्नसाध्याभावमात्रवृत्तिव्यासज्यवृत्तिधर्माप्रसिद्ध्या केवलान्वयिसाध्यकेऽव्याप्तिरिति वाच्यं तथा सति व्यासज्यवृत्तित्वस्थले ऽव्यासज्यवृत्त्यनेकवृत्तिधर्मभिन्नत्वस्य निवेशनीयत्वात् केवलान्वयिसाध्यके साध्याभावत्वस्यैव तथात्वादित्यतो दोषान्तरदानाय हेतुतावच्छेदकसम्बन्धं निवेशयति किञ्चेति ।

( दी० ) किञ्च हेतुतावच्छेदकसम्बन्धेन या साध्याभाववति वृत्तिस्तदभावो वक्तव्यः अन्यथा धूमादावव्याप्तिः साध्यतावच्छेदकसम्बन्धेन साध्याभाववति कालादौ वृत्तिमन्मात्रस्यैव वृत्तेर्व्यभिचारिण्यतिप्रसङ्गो वा तथा च सत्तादिसाध्यके संयोगेन समवायेन वा हेतावव्याप्तिः साध्याभाववति तेन सम्बन्धेन वृत्तेरप्रसिद्धेः साधनसमानाधिकरणत्वेन साध्याभावा विशेषणीया इति चेद्विशेष्यन्तां तथापि भूतत्वमूर्तत्वयोरन्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वादावव्याप्तिः तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्यावृत्तेः। किञ्च महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकविशेषणताविशेषेण हेतावतिव्याप्तिः तादृशसाध्याभावसमुदायवति महाकाले तेन सम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेः ।

( गा० ) धूमादावव्याप्तिरिति वह्निमन्मात्रसमवेतघटादौ वर्तमानस्य निर्वह्निसमवेतत्वाभावस्य तत्रासत्त्वादिति भावः ॥

एतच्च यत्किञ्चित्सम्बन्धावच्छिन्नतादृशवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशाभिप्रायेण अन्यथा निर्वह्निसंयुक्तत्वादिसाधारणतादृशवृत्तित्वत्वं प्रति तथाविधाभावप्रतियोगितायाः अव्यापकत्वात् तस्य लक्षणाघटकतया वृत्तिमन्मात्रस्यैव साध्याभावाधिकरणकालादौ वृत्तेर्निर्वाहेवृत्तित्वसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वादव्याप्त्यसङ्गतेः अत एव सम्बन्धमनिवेश्य तादृशाधिकरणवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशपक्षे दूषणान्तरमाह साध्यतावच्छेदकसम्बन्धेनेति । एतच्च कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य कालादावसत्त्वेऽपि तस्य यथाविवक्षितसाध्याभावसमुदायवत्त्वमक्षतमेवेति सूचनाय । कालादावित्यादिपदाद्विषयितादिसम्बन्धेन वस्तुमात्रसम्बन्धिन ईश्वरज्ञानादेः परिग्रहः । व्यभिचारिणीति यत्साध्यके वृत्तिमन्मात्राधिकरणस्य कालादौ विवक्षितसाध्याभावकूटवत्त्वं तादृशव्यभिचारिहेतावित्यर्थः द्रव्यत्वसाधनके द्रव्यत्वपृथिवीत्वान्यतराभावशुद्धद्रव्यत्वाभावयोवायुत्वादिहेतुके रूपाद्यात्मकसाध्याभावस्य सत्त्वादिसाध्यके संयोगेन समवायेन वा यत्र हेतुता तत्र सत्तात्वावच्छिन्नाभावस्य च साधनवदवृत्तित्वात् साधनसमानाधिकरणत्वेन साध्याभावे विशेषिते न तादृशाभावानादायोक्तस्थलेऽव्याप्त्यतिव्याप्तिप्रसङ्ग इत्याशङ्कते साधनेति । सद्धेतौ व्यधिकरणधर्मावच्छिन्नाभावानामेव साधनसमानाधिकरणतया तादृशाभावकूटाधिकरणं जगदेव व्यभिचारिणि च साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यापि तथात्वात्तादृशाभावकूटाधिकरणं निःसाध्यमेव साधनसामानाधिकरण्योपलक्षिताभावाधिकरणत्वमेव निवेश्यं न तु तद्विशिष्टाधिकरणत्वं तेन व्यतिरेकिणि हेतौ तद्विशिष्टाधिकरणवृत्तित्वत्वावच्छिन्नाभावस्य वृत्तिमद्वृत्तित्वसम्भवेऽपि नाव्याप्तिः साधनसमानाधिकरणत्वं साधनतावच्छेदकसम्बन्धेन साधनतावच्छेदकविशिष्टवद्वृत्तित्वं तेन द्रव्यत्वादेः कालिकसम्बन्धेनाधिकरणस्पन्दादौ सत्ताधिकरणे गुणादौ च द्रव्यत्वपृथिवीत्वान्यतरत्वावच्छिन्नाभावस्य सत्त्वेऽपि द्रव्यत्वपृथिवीत्वोभयादिसाध्यके द्रव्यवृत्तित्वविशिष्टसत्त्वादौ नातिव्याप्तिः न च

रणत्वात् स एव दोष इति आधेयतावच्छेदकतादृशधर्मन्यूनवृत्ति सद्याप्यं यत्तत्तदन्यत्वेन धर्मो विशेषणीयः न्यूनवृत्तित्वञ्च स्वसमानाधिकरणाभावप्रतियोगित्वमात्रम् उक्तस्थले तद्रूपव्य- धिकरणधर्मावच्छिन्नसाध्याभावोभयत्वादिरेव तादृशो धर्मस्त- स्य रूपान्तरसाधारणत्रित्वादिन्यूनवृत्तित्वेऽपि तादृशत्रित्वाद्य- वच्छिन्नस्य क्वचिदप्यवृत्तेः । तस्याधेयतानवच्छेदकतया आधेय- तावच्छेदकीभूततादृशधर्मन्यूनवृत्तिताविरहात् न च समनियताभा- वैक्ये व्यधिकरणधर्मावच्छिन्नसाध्याभावमात्रवृत्तिव्यासज्यवृत्ति- धर्माप्रसिद्ध्या केवलान्वयिसाध्यकेऽव्याप्तिरिति वाच्यं तथा सति व्यासज्यवृत्तित्वस्थले ऽव्यासज्यवृत्त्यनेकवृत्तिधर्मभिन्नत्व- स्य निवेशनीयत्वात् केवलान्वयिसाध्यके साध्याभावत्वस्यैव तथात्वादित्यतो दोषान्तरदानाय हेतुतावच्छेदकसम्बन्धं निवेश- यति किञ्चेति ।

(दी० ) किञ्च हेतुतावच्छेदकसम्बन्धेन या साध्याभा- ववति वृत्तिस्तदभावो वक्तव्यः अन्यथा धूमादावव्याप्तिः सा- ध्यतावच्छेदकसम्बन्धेन साध्याभाववति कालादौ वृत्तिमन्मा- त्रस्यैव वृत्तेर्व्यभिचारिण्यतिप्रसङ्गो वा तथा च सत्तादिसाध्यके संयोगेन समवायेन वा हेतावव्याप्तिः साध्याभाववति तेन स- म्बन्धेन वृत्तेरप्रसिद्धेः साधनसमानाधिकरणत्वेन साध्याभावा विशेषणीया इति चेद्विशेष्यन्तां तथापि भूतत्वमूर्तत्वाद्योरन्यतर- त्वेनाभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिः तादृशसाध्याभाव- समुदायवति पृथिव्यादौ तस्यावृत्तेः । किञ्च महाकालान्यत्वादि- साध्यके व्यभिचारिणि कालिकविशेषणताविशेषेण हेतावति- व्याप्तिः तादृशसाध्याभावसमुदायवति महाकाले तेन सम्बन्धे वृत्तिमन्मात्रस्यैव वृत्तेः ।

( गा० ) धूमादावव्याप्तिरिति वह्निमन्मात्रसमवेतघटा- दौ वर्तमानस्य निर्वह्निसमवेतत्वाभावस्य तत्रासत्त्वादिति भावः ॥

एतच्च यत्किञ्चित्सम्बन्धावच्छिन्नतादृशवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशाभिप्रायेण अन्यथा निर्वह्निसंयुक्तत्वादिसाधारणतादृशवृत्तित्वत्वं प्रति तथाविधाभावप्रतियोगितया अव्यापकत्वात् तस्य लक्षणाघटकतया वृत्तिमन्मात्रस्यैव साध्याभावाधिकरणकालादौ वृत्तेः निर्वह्निवृत्तित्वसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वादव्याप्त्यसङ्गतेः अत एव सम्बन्धमनिवेश्य तादृशाधिकरणवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशपक्षे दूषणान्तरमाह साध्यतावच्छेदकसम्बन्धेनेति । एतच्च कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य कालादावसत्त्वेऽपि तस्य यथाविवक्षितसाध्याभावसमुदायवत्त्वमक्षतमेवेति सूचनाय । कालादावित्यादिपदाद्विषयितादिसम्बन्धेन वस्तुमात्रसम्बन्धिन ईश्वरज्ञानादेः परिग्रहः । व्यभिचारिणीति यत्साध्यके वृत्तिमन्मात्राधिकरणस्य कालादौ विवक्षितसाध्याभावकूटवत्त्वं तादृशव्यभिचारिहेतावित्यर्थः द्रव्यत्वसाधनके द्रव्यत्वपृथिवीत्वान्यतराभावशुद्धद्रव्यत्वाभावयोर्वायुत्वादिहेतुके रूपाद्यात्मकसाध्याभावस्य सत्त्वादिसाध्यके संयोगेन समवायेन वा यत्र हेतुता तत्र सत्तात्वावच्छिन्नाभावस्य च साधनवद्वृत्तित्वात् साधनसमानाधिकरणत्वेन साध्याभावे विशेषिते न तादृशाभावानादायोक्तस्थलेष्वव्याप्त्यतिव्याप्तिप्रसङ्ग इत्याशङ्कते साधनेति । सद्धेतौ व्यधिकरणधर्मावच्छिन्नाभावानामेव साधनसमानाधिकरणतया तादृशाभावकूटाधिकरणं जगदेव व्यभिचारिणि च साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यापि तथात्वात्तादृशाभावकूटाधिकरणं निःसाध्यमेव साधनसामानाधिकरण्योपलक्षिताभावाधिकरणत्वमेव निवेश्यं न तु तद्विशिष्टाधिकरणत्वं तेन व्यतिरेकिणि हेतौ तद्विशिष्टाधिकरणवृत्तित्वत्वावच्छिन्नाभावस्य वृत्तिमद्वृत्तित्वसम्भवेऽपि नाव्याप्तिः साधनसमानाधिकरणत्वं साधनतावच्छेदकसम्बन्धेन साधनतावच्छेदकविशिष्टवद्वृत्तित्वं तेन द्रव्यत्वादेः कालिकसम्बन्धेनाधिकरणस्पन्दादौ सत्ताधिकरणे गुणादौ च द्रव्यत्वपृथिवीत्वान्यतरत्वावच्छिन्नाभावस्य सत्त्वेऽपि द्रव्यत्वपृथिवीत्वोभयादिसाध्यके द्रव्यवृत्तित्वाविशिष्टसत्त्वादौ नातिव्याप्तिः न च

सत्तायां साध्याभावकूटवद्गुणादिवृत्तित्वसत्त्वात् विशिष्टसत्त्वे तदभावस्य दुर्लभतया नोपदर्शितसाध्यके विशिष्टसत्त्वे ऽतिव्याप्तिप्रसक्तिरिति वाच्यं साधनतावच्छेदकावच्छिन्नवत्त्वानिवेशे द्रव्यत्वादिसाध्यके विशिष्टसत्त्वेऽव्याप्तिवारणाय साधनतावच्छेदके साध्याभावकूटवद्वृत्तितावच्छेदकत्वाभावपर्यन्तनिवेशस्यावश्यकतया उक्तस्थले ऽतिव्याप्तिप्रसक्तेः संयोगे साध्ये संयोगेन घटादिहेतौ संयोगत्वावच्छिन्नसंयोगाभावस्य उत्पत्तिकालावच्छेदेन साधनवति वृत्तेर्व्याप्यवृत्तित्वविशिष्टस्याधिकरणे गुणादौ संयोगेन वृत्तेरप्रसिद्ध्या ऽव्याप्तिः संयोगि सत्त्वादित्यादौ जगत एव संयोगाभाववत्त्वेनातिव्याप्तेर्वारणाय व्याप्यवृत्तित्वविशिष्टाभाववत्त्वानिवेशनस्यावश्यकत्वादित्यतो ऽनवच्छिन्नैव वृत्तिरत्र प्रवेश्या । अथ साधनसमानाधिकरणत्वेन साध्याभावे विशेषितेऽपि सत्तावान् जातेरित्यादावव्याप्तिवारणमशक्यमेव प्रत्येकं साधनसमानाधिकरणाभ्यां द्रव्यत्वविशिष्टसत्ताभावद्रव्यान्यत्वविशिष्टसत्ताभावाभ्यां घटिताभावसमुदायस्य सामान्यादावेव सत्त्वात्तत्र च हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेः । यत्तु द्रव्यत्वादिविशिष्टसत्ताभावप्रतियोगितावच्छेदककोटौ सत्तात्वं न निवेश्यते द्रव्यत्वादिवैशिष्ट्यमात्रस्यैव तत्प्रतियोगितावच्छेदकत्वसम्भवादिति द्रव्यत्वादिसाधारणद्रव्यत्वादिवैशिष्ट्यावच्छिन्नतत्प्रतियोगितायाः सत्तात्वसमनैयत्यविरहान्न तादृशाभावस्य लक्षणघटकतेति समाधानं तदपि तुच्छं द्रव्यत्वविशिष्टसत्तावान् जातेरित्यादावपि ईदृशयुक्त्या साध्यतावच्छेदकतादृशविशिष्टसत्तात्वस्याभावप्रतियोगितानवच्छेदकत्वात् द्रव्यत्वादिवैशिष्ट्यावच्छिन्नाभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावात् व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तेर्दुर्वारतया एतल्लक्षणवादिना गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वमतस्यावलम्बनीयत्वात् द्रव्यत्वविशिष्टसत्तात्वादेः प्रतियोगितानवच्छेदकत्वेऽपि समवेतवान् जातेरित्यादौ समवायेनैतद्रूपान्यत्वविशिष्टाभाववद्रूपान्यत्वविशिष्टाभावादीनां समवेतत्वसमनियतप्रतियोगिताकतया प्रत्येकं साधनसमानाधिकरणतया च तद्घटितकूटाधिकरणे सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्याऽव्याप्तिवारणास-

म्भवात् । एवं विशिष्टस्यातिरिक्ततामतावलम्ब्य दर्शितविशिष्टाभावानां साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वविरहोपपादनेन समाधानमपि हेयम् उक्तस्थल एव द्रव्यत्वतदन्यसमवेतोभयगुणत्वतदन्यसमवेतोभयकर्मत्वतदन्यसमवेतोभयाभावानां साध्यतावच्छेदकसमवेतत्वसमनियतप्रतियोगिताकानां प्रत्येकं साधनसमानाधिकरणानां समुदायवति सामान्यादौ समवायेन वृत्तेरप्रसिद्ध्याऽव्याप्तेस्तावतापि वारणासम्भवात् न च यादृशाभावसमुदायाधिकरणं साधनाधिकरणं तादृशसमुदायाधिकरणवृत्तित्वाभावस्य विवक्षितत्वात् उक्ताभावसमुदायाधिकरणतायाः साधनवत्यसम्भवात् न तत्समुदायस्य लक्षणघटकतेति नाप्रसिद्धिरिति वाच्यम् एवं सत्यपि तादृशविशिष्टाभावाद्येकतरघटितव्यधिकरणधर्मावच्छिन्नाभावस्तोमस्य तादृशस्याधिकरणे केषाञ्चिद्वृत्तिमतामवृत्तेः साधनस्य च वृत्तेरव्याप्तितादवस्थ्यात् एतादृशविवक्षानुसरणे भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यत्र भूतत्वमूर्तत्वोभयघटितसाध्याभावकूटवति हेतोरवृत्तितया वक्ष्यमाणातिव्याप्तेरसम्भवप्रसङ्गाच्च साधनवतो निःस्पर्शस्य कस्यचिदपि तादृशोभयघटितस्तोमाधिकरणत्वविरहेण तादृशस्तोमस्य लक्षणाघटकत्वात् प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वविशेषणवैयर्थ्यापत्तेश्च पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलाद्यवृत्तित्वतेजोऽवृत्तित्वावच्छिन्नाभावघटितकूटस्य क्वचिदपि साधनवत्यसत्त्वेन तादृशकूटस्य लक्षणाघटकत्वात् यादृशकूटवत्त्वं साधनवतः तद्वद्वृत्तित्वाभावस्य साधने ऽसम्भावितत्वादित्यतिव्याप्त्यनवकाशादिति चेत् । अत्राहुः । साध्यतावच्छेदकावच्छिन्नसाध्यवद्वृत्तिसमानाधिकरणधर्मावच्छिन्नाभावाभिन्नत्वेन साध्याभावविशेषणादुपदर्शितविशिष्टाभावनिरासः गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तात्वावच्छिन्नाभावस्य संग्रहायावच्छिन्नान्तं वृत्तिर्निरवच्छिन्ना ग्राह्या अन्यथा संयोगी सत्त्वादित्यादौ संयोगत्वाद्यवच्छिन्नसंयोगाद्यभावस्य साध्यवद्वृत्तितया व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतया ऽतिव्याप्त्यापत्तेः सद्धेतौ साधनसमानाधिकरणस्य साध्यवद्वृत्त्यन्यस्याप्रसिद्धेः समाना-

धिकरणधर्मावच्छिन्नेति । तथा च व्यधिकरणधर्मावच्छिन्नसा-
ध्याभाव एव विशिष्टभेदाप्रसिद्धिः न चैवं साध्यतावच्छेदकव्या-
पकत्वं प्रतियोगिताविशेषणं व्यर्थम् अभाववान् मेयत्वादित्यादौ
घटत्वादिरूपाभावस्य उक्तविशेषणेनैव वारणादिति वाच्यं प्रमे-
यसाध्यकस्थले घटत्वपटत्वोभयावच्छिन्नप्रमेयसामान्याभावस्य
गगनत्वाद्यवच्छिन्नगगनाद्यभावाभिन्नस्य संग्रहाय साध्यतावच्छे-
दकव्यापकत्वेन समानाधिकरणधर्मस्यावश्यं निवेशनीयतया
घटत्वपटत्वादिरूपाभावप्रतियोगितावच्छेदकघटत्वाभावत्वादेश्चा-
भावत्वाव्यापकत्वेन घटत्वादौ विशिष्टभेदस्याक्षतत्वात् एतद्वि-
शेषणेन तद्व्यावृत्तेः । न च वाच्यत्वादिसाध्यकस्थले घटत्वा-
वच्छिन्नवाच्यत्वाभावस्य संयोगादिरूपव्यधिकरणसम्बन्धावच्छि-
न्नवाच्यत्वाभावाभिन्नतया साध्यतावच्छेदकव्यापकसमानाधिकर-
णधर्मावच्छिन्नप्रतियोगिताकत्वमक्षतमिति तत्संग्रहाय समाना-
धिकरणसम्बन्धावच्छिन्नत्वस्य समानाधिकरणधर्मावच्छिन्नाभा-
वप्रतियोगित्वविशेषणतया आवश्यकत्वात् प्रमेयसाध्यकस्थ-
लीयोक्ताभावस्य व्यधिकरणसम्बन्धावच्छिन्नगगनाद्यभावाभिन्न-
त्वेऽपि प्रतियोगितावच्छेदकधर्मे साध्यतावच्छेदकव्यापकत्व-
विशेषणमन्तरेणैव विशिष्टभिन्नत्वमव्याहतमिति वाच्यम् एवमपि
गगनत्वादिना प्रमेयसामान्याभावस्य समानाधिकरणतादृशसम्ब-
न्धावच्छिन्नप्रतियोगिताकतयोक्ताभावस्य तदभिन्नत्वेन तत्र वि-
शिष्टभेदनिर्वाहाय तादृशविशेषणस्यावश्यकत्वात् समानाधिकरण-
सम्बन्धावच्छिन्नत्वविशेषणं परित्यज्य साध्यतावच्छेदकसम्ब-
न्धावच्छिन्नत्वं प्रतियोगितायां निवेश्य तत्कार्यस्य साध्यतावच्छेद-
कव्यापकत्वरूपप्रतियोगितावच्छेदकविशेषणसार्थकत्वस्य चोपपाद-
नसम्भवाच्च साध्यवद्वृत्तितादृशाभावश्चोभयत्वादिना साध्या-
भाव एव प्रसिद्ध इति न काप्यनुपपत्तिः । एतेन नीलरूपघट-
त्वोभयाभाववान् नीलघटान्यत्वादित्यादौ साधनसमानाधिकरणं
पटीयं नीलरूपं न घटे इति तादृशनीलरूपघटत्वात्मकसाध्या-
भावकूटाधिकरणाप्रसिद्ध्याऽव्याप्तिरित्यपि निरस्तं तादृशा-
भावे उक्तभेदासत्त्वेन व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्ष-
णघटकत्वात् । एवं घटवृत्तित्वविशिष्टाकाशाभावाभावे साध्ये

मेयत्वादिहेतौ साध्याभावस्य विशिष्टाकाशाभावादेराकाशाभावानतिरिक्ततया जगत एव साध्याभावकूटाधिकरणतापत्त्या ऽतिव्याप्तिरिति साध्याभावत्वविशिष्टाधिकरणत्वमेव विवक्षणीयं तथा च पटे घटवृत्तित्वविशिष्टाकाशाभावाभावो नास्तीतिप्रत्ययाभावात् पटादेर्न तादृशविशिष्टाभावाधिकरणत्वमिति न दोषः। एवं च साधनाधिकरणेऽपि साध्याभावत्वेन वृत्तिर्विवक्षणीया अन्यथा जातिमद्न्यत्वविशिष्टाकाशाभावस्याभावे साध्ये समवायेन हेतौ साधनसमानाधिकरणाकाशाभावस्य साध्याभावत्वविशिष्टस्याधिकरणे सामान्यादौ समवायेन वृत्तेरप्रसिद्धत्वादव्याप्त्यापत्तेस्तादृशविवक्षयापि उेकाभयाभावसाध्यकस्थले ऽव्याप्तिवारणं सम्भवति प्रत्येकाधिकरणे उभयाभावाभावत्वेनावृत्तेः। वस्तुतो घटवृत्तित्वविशिष्टाकाशाभावाद्यभावो घटत्वाद्यभावसमनियततया तदभिन्न इति घटत्वादेरपि तदभावस्तद्घटितकूटाधिकरणता च न जगत इति दर्शितातिव्याप्त्यनवकाशात् साध्याभावत्वविशिष्टाधिकरणत्वविवक्षणमफलं साध्याभावत्वेन साधनवद्वृत्तित्वं तु साध्याभावत्वाविशिष्टाधिकरणत्वाविवक्षणेऽपि घटान्यत्वविशिष्टद्रव्यत्वाभाववान् घटत्वादित्यत्र साध्याभावस्य द्रव्यत्वस्य द्रव्यत्वत्वादिना साधनसमानाधिकरणतया द्रव्यस्यैव तद्घटितकूटाधिकरणत्वेनाव्याप्तेर्वारणाय निवेश्यमेव न चैवमपि पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ साध्यतावच्छेदकविशिष्टवद्वृत्त्योः प्रत्येकं साधनसमानाधिकरणयोः घटान्यत्वविशिष्टद्रव्यत्वाभावघटेतरपृथिव्यन्यत्वविशिष्टद्रव्यत्वाभावयोरधिकरणं गुणादेवेत्यतिव्याप्तिर्दुर्वारैवेति वाच्यं विशिष्टस्यातिरिक्ततामवलम्ब्यैव तादृशातिप्रसङ्गस्य समाधातुं शक्यत्वादिति। भूतत्वमूर्तत्वायोरिति उभयत्वावच्छिन्नाभावस्य साध्यत्वे हेतोर्व्यभिचारित्वाभावादन्यतरत्वावच्छिन्नाभावस्य साध्यत्वानुसरणं पृथिव्यादाविति नाकाशे भूतत्वस्य मनसि च मूर्तत्वस्य साधनसमानाधिकरणतया आकाशस्य मनसस्तत्प्रत्येकं तदुभयानधिकरणत्वेन साध्याभावसमुदायानधिकरणत्वादिति भावः। आदिशब्दात् भूतभेदमूर्तभेदान्यतराभाववान् भूतमूर्तान्यतरत्वादित्यादौ भूतभेदमूर्तभेदात्मकसाध्याभावघटितसमुदायवति कालदिगादौ हेतोरवृत्त्याऽतिव्याप्तेः परिग्रहः। ननु साधनाधिकरणे येषां परस्परमे-

काधिकरण्यं तत्समुदायस्य विवक्षितत्वान्नायं दोषः मूर्तत्वमूर्तत्वयोः प्रत्येकं साधनसमानाधिकरणत्वेऽपि साधनवति परस्परमैकाधिकरण्याभावेन तदुभयघटितकूटस्य लक्षणाघटकत्वात्तदेकतरघटितकूटस्यैव तथात्वात् वह्नित्ति च हेतोर्वृत्तेः प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वविशेषणं त्याज्यमेव एवं च विशिष्टस्यानतिरिक्तत्वेऽपि पृथिव्यन्यद्रव्यत्ववद्द्रव्यत्वादित्यादौ नोक्तरीत्याऽतिव्याप्तिः सम्भवति उक्तविशिष्टाभावानां साधनवति द्रव्यादावैकाधिकरण्याभावात् एवं तादृशकूटाधिकरणपृथिव्यादिवृत्तित्वस्य द्रव्यवृत्तित्वत्वादिना योऽभावस्तस्यापि तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकयावदभावान्तर्गततया तद्रूपविरहादप्युक्तहेतौ नातिव्याप्तिसम्भवः न च द्रव्यवृत्तित्वत्वावच्छिन्नाभावप्रतियोगिताया आकाशादिवृत्तित्वसाधारणतया तादृशवृत्तित्वत्वाव्याप्यत्वान्न तादृशाभावो लक्षणघटक इति वाच्यं साधनसमानाधिकरणत्वस्य साध्याभावविशेषणत्वपक्षे प्रतियोगितायां तादृशवृत्तित्वाद्यव्याप्यत्वविशेषणव्यावृत्त्यभावेन तादृशविशेषणस्य परित्याज्यत्वात् वह्निमान् धूमादित्यत्रालोकाद्यवृत्तित्वेन रूपेण निर्वह्निवृत्तित्वाभावस्य प्रतियोगितायाः आलोकादिनिष्ठपर्वतादिवृत्तित्वसाधारणसाधनसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वं प्रत्यव्यापकतयैव तादृशाभावव्यावर्तनात् व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताविशेषणात्पर्वतसंयुक्तत्वपर्वतान्यसंयुक्तत्वोभयत्वाद्यवच्छिन्नाभावस्य पर्वतासंयुक्तघटादौ वर्तमानस्य धूमादावसत्त्वेऽपि न क्षतिः प्रतियोगितायां तादृशवृत्तित्वत्वव्याप्यत्वविशेषणेऽपि तादृशाभावमादायाव्याप्तेरावश्यकतया एतस्य विशेषणस्य तद्विशेषणसत्त्वेऽप्यावश्यकत्वात् चरमाभावप्रतियोगितायां तादृशवृत्तित्वत्वव्याप्यत्वविशेषणपरित्यागे यत्किञ्चित्साधनाधिकरणवृत्तिसाध्याभावसमुदायस्य विवक्षणेऽपि प्रथमाभावप्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वविशेषणं परित्याज्यमेव पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलादिसमवेतत्वाद्यवच्छिन्नाभावकूटत्वस्य साधनवृत्त्यसत्त्वेऽपि तादृशाभावकूटत्वसामान्यादिवृत्तित्वत्वव्यापकप्रतियोगिताकयावदभावान्तर्गतानां पृ-

थिव्यन्यवृत्तित्वत्वावच्छिन्नाभावानामेव वृत्तिमद्वृत्तीनां हेतावसत्त्वेनातिव्याप्त्यनवकाशात् एवं सत्तावान् जातेरित्यादौ विशिष्टसत्तात्वावच्छिन्नाभावघटितकूटाधिकरणसमवेतत्वाप्रसिद्धिनिबन्धनाव्याप्तिवारणायोपात्तसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वरूपसाध्याभावविशेषणस्थाने साध्याभावप्रतियोगितायां साध्यवद्वृत्त्यभावीयसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताभिन्नत्वं निवेश्य व्यधिकरणधर्मावच्छिन्नाभावीयगगनादिकिञ्चिद्विशिष्टतद्भवनिष्ठप्रतियोगिताभिन्नव्यधिकरणधर्मावच्छिन्नप्रतियोगितामादायेव व्यधिकरणधर्मावच्छिन्नाभावसङ्ग्रहे समानाधिकरणधर्मे साध्यतावच्छेदकव्यापकत्वस्यानिवेशनीयतयाऽभावसाध्यकस्थले साध्यतावच्छेदकन्यूनवृत्तिघटत्वाद्यभावत्वावच्छिन्नप्रतियोगितासु साध्यवृत्त्यभावीयसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताभिन्नत्वाभावेन घटत्वाद्यात्मकाभावव्यावर्तनात् साध्याभावप्रतियोगितायां साध्यतावच्छेदकव्यापकत्वविशेषणमपि परित्यजनीयम् उक्तरीत्यापि पृथिव्यन्यद्रव्यत्वाद्यभावस्य हेतुमत्यसत्त्वेऽपि घटान्यवृत्तित्वत्वादिना गुणादिवृत्तित्वाभावमादायातिव्याप्तिर्वारणीयेत्यतो दोषान्तरमाह किञ्चेति। केचित्तु ननु स्ववृत्तिसाधनसमानाधिकरणसाध्याभावसमुदायाधिकरणं यद्यत्साधनाधिकरणं तद्वृत्तिसाध्याभावसमुदायाधिकरणं यद्यत्स्व तदेव साध्याभावसमुदायाधिकरणेत्यनेन विवक्षिते सद्धेतौ तादृशं स्व जगदेव वह्न्यधिकरणमहानसादिनिष्ठानां निर्वह्निह्रदादिनिष्ठानां च धूमादिसमानाधिकरणसाध्याभावानां व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकानां समुदायवत् यद्यत्साधनाधिकरणं तद्वृत्तितादृशसमुदायवत्त्वस्य महानसादौ साध्यवति साध्यशून्ये च ह्रदादौ सत्त्वाल्लक्षणसमन्वयः भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ तादृशं स्वं मनो गगनं च गगनवृत्तिभूतत्वघटितसाध्याभावसमुदायाधिकरणत्वस्य गगनरूपसाधनाधिकरणं एव मनोवृत्तिमूर्तत्वघटितसाध्याभावसमुदायाधिकरणत्वस्य मनस्येव सत्त्वेन निरुक्तसाधनाधिकरणवृत्तिसाध्याभावसमुदायाधिकरणत्वस्य तत्र तत्र सत्त्वात्। स्वनिष्ठसाध्याभावे साधनसमानाधिकरणत्वविशेषणानुपादाने वह्न्याद्यन्यह-

दादिनिष्ठसमानाधिकरणधर्मावच्छिन्नसाध्याभावसमुदायाधिकरणत्वस्य साधनाधिकरणेऽसत्त्वात् साध्यवदेव तादृशं स्वं तद्वृत्तित्वाभावस्य वृत्तिमद्धेतावसत्त्वादव्याप्तिः अतस्तत्र तद्विशेषणप्रवेशः प्रथमसमुदायपदादाने मूर्तत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ गगनं मनश्च न तादृशं स्वं तद्वृत्तित्वव्यधिकरणधर्मावच्छिन्नाभावाधिकरणमनोगगननिष्ठमूर्तत्वमूर्तत्वोभयघटितसाध्याभावसमुदायाधिकरणत्वस्य गगनमनसोः प्रत्येकमसत्त्वात् किन्तु पृथिव्यादिचतुष्कमेव तथाविधं स्वं तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरिति तदुपादानं धूमवान् वह्नेरित्यादावपि पर्वतादेः स्ववृत्तिसाध्याभावकूटाधिकरणमहानसादिरूपसाधकरणवृत्तिसाध्याभावकूटाधिकरणत्वाभावादेव तादृशस्वं स्यात् अतो यद्यदिति तथा च पर्वतादिवृत्तिसाध्याभावकूटाधिकरणं यद्यत्साधनवदयोगोलकादेरपि तदन्तर्गततया तद्वृत्तिसमानाधिकरणधर्मावच्छिन्नाभावघटितकूटस्य पर्वतादावसत्त्वात् तादृशं स्वं धूमादिशून्यमेवेति नातिव्याप्तिः यद्यत्साधनाधिकरणमित्यनुक्त्वा यद्यदधिकरणमित्येतावदुक्तौ मूर्तत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ गगनादिवृत्तिसाध्याभावकूटाधिकरणं यद्यत्पृथिव्यादेरपि तदन्तर्गततया तद्वृत्तिमूर्तत्वादिघटितकूटस्य च गगनादावसत्त्वात्तादृशं स्वं न गगनादिकं भवेदपि तु पृथिव्यादिकमेवेत्यतिव्याप्तिरतः साधनाधिकरणनिवेशः पृथिव्यादेस्तत्र साधनानधिकरणत्वान्न दोषः। धूमवान् वह्नेरित्यादावयोगोलकादिनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणत्वस्य पर्वतादेः सत्त्वाभावादेव तादृशं स्वमिति चरमसमुदायपदोपादानं पूर्ववत्तादृशं यद्यत्स्वं तावदन्यतमवृत्तित्वत्वव्यापकप्रतियोगिताको ऽभावो विवक्षणीयः अतो नाव्याप्तिरसम्भवो वेत्यतो दोषान्तरमाह किञ्चेत्याहुः। महाकालेति कालान्यत्वसाध्यके कालिकविशेषणताविशेषेण हेतौ साध्यसामानाधिकरण्यविशेषणेनातिव्याप्तिवारणासम्भवान्महाकालभेदसाध्यकानुसरणम्। यद्यपि महाकालत्वसाध्यकेऽप्यतिव्याप्तिः सम्भवति वृत्तिमात्र एव महाकालातिरिक्तकालवृत्तित्वसत्त्वात् तथापि साध्यतावच्छेदकावच्छिन्नाभावघटितलक्षणे तत्कालमात्रवृत्तित्व-

त्कालावृत्तित्वावच्छिन्नाभावकूटाधिकरणाप्रसिद्ध्या नातिव्याप्तिः साधनाधिकरणे सम्भवदैकाधिकरण्यकसाध्याभावसमुदायाधिकरणत्वस्य प्रयोजनान्तरानुरोधेन निवेशे तादृशाप्रसिद्धिविरहेऽपि साधनाधिकरणीभूतखण्डकालव्यक्तिविशेषावृत्तित्वावच्छिन्नाभावघटिततादृशकूटाधिकरणतत्तत्कालवृत्तित्वाभावस्य तत्तत्कालावृत्तौ वृत्तिमति वर्तमानस्य साधने ऽभावान्नातिव्याप्तिरित्यग्रिमस्य एतेनेत्यादेरसङ्गतिरिति एकमात्रविपक्षकानुसरणम् । आदिपदान्महाकालत्वाभावादिपरिग्रहः अवृत्तिहेतौ साध्यसामानाधिकरण्यविशेषणेनातिव्याप्तिवारणसम्भवाच्चाभिचारिणीति । वृत्तिमत्त्वमात्रमत्र विवक्षितं तन्मात्रस्यैव व्यावर्तकत्वात् समवायादिना द्रव्यत्वहेतुके तादृशसम्बन्धेन महाकालवृत्तित्वत्वावच्छिन्नाभावस्य वृत्तिमति पटत्वादौ वृत्तेर्हेतावृत्तेर्नातिव्याप्तिसम्भव इति कालिकसम्बन्धावच्छिन्नहेत्वनुसरणम् । इदमुपलक्षणम् । ईश्वरज्ञानान्यत्वादिसाध्यके विषयितासम्बन्धेन हेतुमात्रे साध्याभावसमुदायवति ईश्वरज्ञानादौ तेन सम्बन्धेन वस्तुमात्रस्यैव वृत्तेरतिव्याप्तिर्द्रष्टव्या । एतेन वृत्तिमद्वृत्तित्वविशेषणस्थले वृत्तिमदवृत्तित्वतादृशवृत्तित्वत्वव्यापकप्रतियोगिताकत्वोभयाभावस्य वृत्तिमदवृत्तित्वसाध्यवदवृत्तित्वप्रतियोगिकत्वोभयाभावस्य वा निवेशे महाकालवृत्तित्वस्य समानाधिकरणधर्मावच्छिन्नाभावे चरमदलाभावेनोभयाभावसत्वेऽपि न निस्तारः एवं यथाश्रुते घटत्वादिसाध्यके व्यभिचारिणि संयोगेन हेतौ साध्याभाववति संयुक्तमात्रस्यैव संयुक्तत्वात् एतद्रूपत्वादिसाध्यके व्यभिचारिणि समवायेन हेतौ समवेतमात्रस्यैव एतद्रूपाद्यतिरिक्तसमवेतत्वादतिव्याप्तिरित्यपि द्रष्टव्यम् ।

साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावकूटाधिकरणस्य नानाविपक्षकस्थले ऽप्रसिद्धावपि साधनसमानाधिकरणतादृशाभावकूटाधिकरणस्य नाप्रसिद्धिरिति साधनसमानाधिकरणत्वविशेषणप्रक्षेपे तादृशाभावकूटाधिकरणत्वगर्भमेव लक्षणं सम्यक् साध्यतावच्छेदकव्यापकत्वापेक्षया साध्यतावच्छेदकावच्छिन्नव्यापकत्वस्य गुरुत्वेऽपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावघटितलक्षणे सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावादिवारकनिरुक्तविशेषणप्रवेशेन महागौरवाद्वविशि-

एस्यानतिरिक्तत्वे पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ घटान्यत्वविशिष्टद्रव्यत्वाभावादेरपि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया उक्तादिशाऽतिव्याप्तिवारणाय तादृशाभावघटितलक्षणेऽपि साधनवति सम्भवदैकाधिकरण्यकतादृशाभावसमुदायाधिकरणस्यावश्यं विवक्षणीयतया पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ समवायसम्बन्धावच्छिन्नजलासमवेतत्वावच्छिन्नाभावघटितकूटाधिकरणसामान्यावृत्तित्वाभावसत्त्वेऽपि अतिव्याप्तेरनवकाशात् साधनवति सम्भवदैकाधिकरण्यकत्वविवक्षामन्तरेणैव पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ घटान्यवृत्तित्वत्वावच्छिन्नाभावमादायातिव्याप्तिवारणे उक्तस्थलेऽपि तादृशाभावमादायातिव्याप्तिवारणसम्भवात् प्रतियोगितायां साध्यतावच्छेदकव्यापकत्वविशेषणं नोपादेयं यद्यपि साधनवति सम्भवदैकाधिकरण्यककूटनिवेशे द्रव्यत्वविशिष्टसत्ताभावद्रव्यान्यत्वविशिष्टसत्ताभावघटितकूटस्य सत्तावान् जातेरित्यादौ न लक्षणघटकताप्रसक्तिस्तथापि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशे तादृशाभावैकतरव्यधिकरणधर्मावच्छिन्नाभावघटितकूटस्य तथात्वाद्व्याप्तिरिति तदुपेक्षितरीत्या सार्वभौमलक्षणपरिष्कारमपि हेतुतावच्छेदकसम्बन्धेन वृत्तिमद्यावदधिकरणमहाकालमात्रविपक्षकव्यभिचारिण्यतिव्याप्त्या निराकुरुते एतेनेति ॥

(दी०) एतेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तयस्तद्वत्त्वं व्याप्तिः केवलान्वयिनः संयोगाद्यभावस्याभावाः संयोगादयो न व्याप्यवृत्तयः एवं साध्यस्य गुणसामान्यस्याभावो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन वर्तमानोऽपि न व्याप्यवृत्तिः उक्तरूपावच्छिन्नप्रतियोगिताकाः क्वचिदप्रसिद्ध्यादिसम्पादकाः पुनरभावा न हेतुसमानाधिकरणाः उक्तसमुदायाधिकरण-

वृत्तित्वतदभाववृत्तिमत्त्वानि पूर्वोक्तरीत्या प्रत्येतव्यानीत्यादिकमपास्तम् ।

( गा० ) अत्र प्रतियोगितायामवच्छिन्नान्ताविशेषणव्यावृत्तिरभाववान् मेयत्वादित्यत्रैव वह्निमान् धूमादित्यत्रापि बोध्या यादृशसाध्याभावकूटाधिकरणं साधनवत् तार्णातार्णदहनोभयाभावादिघटितकूटस्यापि तथाविधकूटतया तथाविधोभयादिमद्वृत्तिपदार्थे वर्तमानस्य तादृशकूटाधिकरणवृत्तित्वाभावस्य हेताव- सत्त्वात् । अत्र च साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनापि प्रतियोगिता विशेषणीया अन्यथा वह्निमान् पर्वतवह्न्यवयवसंयोगादित्यादौ संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावसमवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावयोः साधनाधिकरणे सम्भवदेकाधिकरण्याभावेन तदुभयघटितकूटस्य लक्षणाघटकत्वादतिव्याप्तिविरहेऽपि वह्निमान् धूमादित्यादौ साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नाभावकूटस्योक्तक्रमेण लक्षणघटकतया तद्वति वह्न्यवयवायातिरिक्ते हेतोर्वृत्तेरसम्भवापत्तेः व्यापकतापि साध्यतावच्छेदकसम्बन्धघटिता ग्राह्या अन्यथा समवायेन वह्निसंयोगे साध्ये संयोगेन साध्यव्यापकस्य वह्नेः समवायसम्बन्धावच्छिन्नाभावघटितकूटाधिकरणवह्न्यवयवातिरिक्तवृत्तो सद्धेतावव्याप्त्यापत्तेः इत्थं च संयोगसम्बन्धेन साध्यतायां तेन सम्बन्धेन व्यापकताप्रसिद्ध्यर्थं व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणस्यावश्यकतया व्याप्यवृत्तिपदोपादानसार्थक्यमिति केचित् । वस्तुतस्तु येन सम्बन्धेन व्यापकता तेन सम्बन्धेनाभावो ग्राह्यः साध्यतावच्छेदकसम्बन्धस्य विशिष्य निवेशेऽवच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वानिवेशे संयोगेन धूमादिसाध्यके तत्सम्बन्धावच्छिन्नधूमत्वावच्छिन्नाभावस्य धूमवत्यवच्छिन्नवृत्तिकतया व्यधिकरणधर्मावच्छिन्नाभावमात्रस्य व्याप्यवृत्तित्वेनातिव्याप्त्यापत्त्या ऽनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वस्यैव निवेशनीयतया एवमित्यादिग्रन्थमाणपङ्क्त्यसङ्गत्यापत्तेः अन्योन्याभावघटितव्यापकतानिवेशाच्च व्याप्यवृत्तिपदसार्थक्यम् । संयोगाभावसाध्यकस्थले संयोगघटितकूटाधिकरणताया द्रव्यमात्रे

सत्त्वात्तद्वृत्तिहेतावव्याप्तिवारणरूपं तत्प्रयोजनमाह केवलान्वयिन इति । एतेन तत्साध्यके द्रव्यवृत्तेः सद्धेतुत्वमक्षतमिति सूचितं गुणवान् द्रव्यत्वादित्यादौ गुणादावनवच्छिन्नवृत्तिकगुणाद्यभाववति नित्यद्रव्यातिरिक्ते हेतोर्वृत्त्याऽव्याप्तिवारणरूपमनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वविशिष्टाभावनिरूपिताधिकरणतानिवेशनफलमाह एवमिति । साध्याभावे उत्पत्तिकालावच्छेदेन द्रव्यवृत्तित्वकथनं द्रव्यत्वे तद्वृत्तित्वाभावासत्त्वेनाव्याप्तिप्रसङ्गसूचनाय न व्याप्यवृत्तिरित्यत्र द्रव्यस्याधिकरणेऽपीत्यनुपज्यते इति व्याख्यानमसत् अनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वानिवेशे संयोगी घटादित्यत्रोक्तरीत्याऽव्याप्तेर्वारणाय साधनवति व्याप्यवृत्तित्वस्यावश्यं निवेशनीयतया तत्राव्याप्त्यप्रसक्तेः साधनवति व्याप्यवृत्तित्वपर्यन्तनिवेशनप्रयोजनप्रदर्शनपरतया एतत्पङ्क्तिव्याख्यापि न साधीयसी व्याप्यवृत्तित्वविशिष्टाधिकरणत्वानिवेशे संयोगी सत्त्वादित्यत्र गुणादौ व्याप्यवृत्तेः संयोगाभावस्यैव द्रव्यत्वाभावस्यापि लक्षणघटकतया जगतः साध्याभावकूटानधिकरणत्वात् अतिव्याप्त्यनवकाशेऽपि धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभावकूटाधिकरणतया विश्वस्मिन्सत्त्वात् अतिव्याप्तेर्दुर्वारतया तत्प्रवेशनस्यावश्यकतया तावताप्युक्ताव्याप्तिवारणसम्भवात् तस्माद्व्याप्यवृत्तित्वमवच्छिन्नवृत्तिकान्यत्वमसिमैतमतोऽपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावोपेक्षा तन्निवेशे साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्यैव निवेशनीयतया संयोगेन साध्यतायां व्यभिचारिणि व्यधिकर- [illegible] संयोगेन द्रव्याभावस्यावच्छेद्यवृत्तिकान्यतयाऽतिव्याप्तिः तन्निवेशनस्यैव दैशिककालिकाव्याप्यवृत्तिसाध्यभेदेन स्थलद्वये व्याप्तिरसिद्धिरेवेति सारम् । स्वसमानाधिकरणत्वानिवेशनप्रयोजनमाह उक्तरूपेति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपेत्यर्थः । अप्रसिद्ध्यादीति । सत्तावान् जातेरित्यादौ सत्तात्वाद्यवच्छिन्नाभावकूटाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तित्वाप्रसिद्धिसम्पादका रूपाभावादिसाध्यके रूपाद्यात्मकाभावकूटाधिकरणाप्रसिद्धिस-

म्पादकाः सम्भवदैकाधिकरण्यापन्नसाध्याभावस्तोमाधिकरणत्व-विवक्षणे सत्तान्यपृथिवीसमवेतशून्यं वायुत्वादित्यादावादिपद-ग्राह्यायाः अतिव्याप्तेः सम्पादका बोध्याः । पूर्वोक्तरीत्येति । समु-दायाधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन तदभावास्तादृश-वृत्तित्वत्वव्यापकप्रतियोगिताका हेतुतावच्छेदकसम्बन्धेन वृत्ति-मद्वृत्तित्वं लक्षणघटकं बोध्यमित्यर्थः । अपास्तमिति न च सार्वभौममते सामानाधिकरण्यस्याव्याप्यवृत्तितया साध्याभाव-कूटवन्महाकालवृत्तित्वस्य समानाधिकरणधर्मावच्छिन्नाभावोऽपि सामानाधिकरण्यानिरूपकखण्डकालाद्यवच्छेदेन घटादिरूपवृत्ति-मति वर्तमान एवेति महाकालान्यत्वादिसाध्यके नातिव्याप्ति-सम्भव इति वाच्यं तथा सति वह्न्यादावपि स्वावयवावच्छेदेन निर्धूमसंयुक्तत्वाद्यभावसत्त्वेन धूमवान् वह्नेरित्यादावतिव्याप्तेरुक्त-स्थले ऽतिव्याप्तिवारणस्य सुदूरपराहतत्वात् । यत्तु हेतुतावच्छे-दकसम्बन्धेन हेत्वधिकरणसामान्यावच्छेदेन तद्वत्त्वस्य विवक्षि-तत्वान्नातिव्याप्तिः व्यभिचारनिरूपकाधिकरणावच्छेदेन हेतौ त-द्वत्त्वविरहादिति तन्न एवं सति स्वावयवावच्छेदेन घटादि-वृत्तेः समानाधिकरणधर्मावच्छिन्नजगत्संयुक्तत्वाद्यभावस्य एवं-तावच्छेदेन धूमादावसत्त्वादसम्भवापत्तेः वृत्तिमद्वृत्तिपदेन हेतु-तावच्छेदकसम्बन्धेन यस्य यदधिकरणं तदवच्छेदेन तद्वृ-त्तित्वाविवक्षायामपि व्याप्यवृत्तेरवच्छेदकानभ्युपगमे व्यधिकरण-धर्मावच्छिन्नप्रतियोगिताकस्य साध्याभावकूटाधिकरणवृत्तित्वाभा-वस्याधिकरणानवच्छिन्नतया ऽसम्भवस्य दुर्वारत्वात् यदि च वृत्तिमत्यनवच्छिन्नवृत्तयो यावन्तस्तादृशाभावकूटाधिकरणवृत्तित्वा-भावा अनवच्छिन्नतद्वत्त्वमित्युच्यते तदा सामानाधिकरण्यस्या-व्याप्यवृत्तितापक्षेऽपि न दर्शितदोषनिपातः सम्भवति समाना-धिकरणधर्मावच्छिन्नमहाकालवृत्तित्वाभावस्य वृत्तिमत्यनवच्छि-न्नवृत्तिकत्वविरहेण लक्षणाघटकत्वात् । हेतुतावच्छे-दकसम्बन्धेन यस्य यदधिकरणं तदवच्छेदेन तद्वृत्तित्वकिञ्चि-दवच्छिन्नत्वोभयाभाववन्तो यावन्तस्तादृशाभावकूटवद्वृत्तित्वाभा-वा अनवच्छिन्नतद्वत्त्वं व्याप्तिरित्युक्तौ न कश्चिद्दोषः समा-नाधिकरणधर्मावच्छिन्नमहाकालवृत्तित्वाभावे किञ्चिदवच्छिन्नत्व-

सत्त्वेऽपि कालिकसम्बन्धेन घटाद्यधिकरणखण्डकालावच्छेदेन घटाद्यवृत्तित्वासत्त्वेनोभयाभावत्वाभावात् सत्त्वेन महाकालान्यत्वसाध्यके व्यभिचारिणि तादृशाभावस्य लक्षणघटकत्वेनातिव्याप्तिविरहात् समानाधिकरणधर्मावच्छिन्नजगत्संयुक्तत्वाद्यभावस्य घटादौ कपालाद्यवच्छेदेन वृत्तेः संयोगादिना यद्घटाद्यधिकरणं तदवच्छेदेन घटाद्यवृत्तेर्निरुक्तोभयाभाववत्त्वविरहात् वह्निमान् धूमादित्यादौ न लक्षणघटकता अपि तु अवच्छिन्नत्वविरहेणोभयाभाववतो व्यधिकरणधर्मावच्छिन्नाभावस्यैवेत्यव्याप्त्यनवकाशादिति ध्येयम्। सामानाधिकरण्यस्य व्याप्यवृत्तित्वे हेतुतावच्छेदकसम्बन्धेन किञ्चित्पदार्थाधिकरणवृत्तयो यावन्तस्तादृशाभावकूटाधिकरणवृत्तित्वनिरूपकत्वाभावा यदधिकरणावच्छेदेन वर्तन्ते तत्त्वमिति वक्तव्यं महाकालवृत्तित्वनिरूपकत्वस्य समानाधिकरणधर्मावच्छिन्नाभावः खण्डकालवृत्तिः साधनाधिकरणमहाकाले नास्तीति नातिव्याप्त्यवकाशः सद्धेतौ तादृशाभावकूटाधिकरणजगद्वृत्तित्वनिरूपकत्वस्य व्यधिकरणधर्मावच्छिन्नाभाव एव हेतुतावच्छेदकसम्बन्धेन किञ्चिदधिकरणवृत्तिः स च हेत्वधिकरणसामान्य एव वर्तत इति लक्षणसमन्वयः। अथवा वृत्तिमद्वृत्तयो यावन्तस्तादृशसाध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वाधिकरणतासामान्यकधर्मवत्त्वमेव विवक्षणीयम्। वृत्तिमत्त्वादिकञ्च दैशिकविशेषणतासम्बन्धेनैव ग्राह्यम्। इत्थञ्च कालिकसम्बन्धावच्छिन्नघटत्वावच्छिन्नाधिकरणतायां सम्बन्धान्तरावच्छिन्नाधिकरणतावद्वृत्तेर्दैशिकसम्बन्धावच्छिन्नमहाकालवृत्तित्वाभावस्यासत्त्वादिति कृतं पल्लवितेन॥

(वि०) प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकः तद्विशिष्टज्ञानस्याभावधीहेतुत्वात् अन्यथा निर्विकल्पकादपि घटो नास्तीति प्रतीत्यापत्तेः, गवि शशशृङ्गं नास्तीति प्रतीतेरप्रसिद्धेः शशशृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थः।

(दी०) तद्विशिष्टेति। विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात् अभावप्रत्ययो हि घटत्वादिवि-

शिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमवगाहते न तु स्वातन्त्र्येण घटो नास्तीत्येव प्रतीतेः । तदिहाभावप्रत्ययो यदि व्यधिकरणधर्मेणावच्छिन्नं प्रतियोगिनं नावगाहते नावगाहत एव तदा तस्यापि प्रतियोगितावच्छेदकत्वम् अथावगाहते तर्हि भ्रम एव । न च ततोऽर्थसिद्धिरिति भावः । यदि पुनरानुभविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादिप्रत्ययो न तदा तादृशाभावनिवारणं गीर्वाणगुरूणामपि शक्यमिति मन्तव्यम् ।

(गा०) मूले प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इति व्यधिकरणधर्मावच्छिन्नाभावनिराकर्तृवादिनः प्रतिज्ञावाक्यं तत्र धर्मत्वमनुपादेयम् । अवृत्तेरपि प्रतियोगितावच्छेदकत्वस्य निराकर्तव्यत्वात् तत्त्वे साधकाभाव एव हेतुरूह्यः पक्षतावच्छेदकप्रतियोग्यवृत्तित्वशरीरे साध्यतावच्छेदके च सामान्यतः प्रतियोगितयोर्न प्रवेशः सर्वेषामेव किञ्चिदभावप्रतियोगिनि सम्बन्धितया किञ्चिदभावप्रतियोगितावच्छेदकतया च विशिष्टपक्षाप्रसिद्धेः । किन्तु विशिष्यवाच्यत्वत्वादिना तथा च वाच्यत्वाद्यवृत्तित्वावच्छिन्ने वाच्यत्वादिनिष्ठप्रतियोगितानवच्छेदकत्वं साधनीयं समूहालम्बनानुमितिरुद्देश्या तत्तदभावीयप्रतियोग्यवृत्तित्वावच्छिन्ने तत्तदभावप्रतियोगितानवच्छेदकत्वसाधनं न सम्यक् समनियताभावैक्यमते समवायित्वादिना वाच्यत्वाद्यभावस्य घटत्वाद्यवच्छिन्नपटाद्यभावाभिन्नतया समवायिपटादीनामपि तथाविधवाच्यत्वाद्यभावप्रतियोगितया तद्वृत्तिसमवायित्वादेर्वाच्यत्वाद्यभावीयप्रतियोग्यवृत्तितायाः दुर्घटत्वात् प्रतियोगिताः विशिष्योपादाय तत्तत्प्रतियोगितावदवृत्तित्वावच्छिन्ने तत्प्रतियोगितावच्छेदकत्वाभावसाधनमपि हेयं वाच्यत्वादिनिष्ठायाः प्रसिद्धसमानाधिकरणाद्वित्वाद्यवच्छिन्नाभावप्रतियोगिताया उपादाने सिद्धसाधनात् सोन्दडोपाध्यायैरपि व्यधिकरणसमवायित्वादिधर्मस्य समाना-

धिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकत्वानङ्गीकारात् व्यधिकरणधर्मावच्छिन्नायाश्च प्रतियोगितायाः उभयवाद्यसिद्धतया विशिष्यापादानासम्भवात् । केचित्तु विशिष्य समवायित्वत्वादिकं पक्षतावच्छेदकीकृत्य वाच्यत्वादिनिष्ठप्रतियोगितानवच्छेदकत्वं साधनीयं तादृशप्रतियोगितावदवृत्तित्वमेव हेतुः यो यदवृत्तिः स तन्निष्ठप्रतियोगितानवच्छेदक इति सामान्यतो व्याप्तिप्रदर्शकः प्रतियोग्यवृत्तिश्चेतिग्रन्थः वीप्साद्यभावेऽपि प्राथम्येन व्याप्तिलाभसम्भवात् वाच्यत्वाद्यवृत्तिधर्ममात्रस्यैव व्यधिकरणतया वाच्यत्वादिनिष्ठप्रतियोगितायां तन्मते ऽवच्छेदकतया यद्यपि अत्रान्वयदृष्टान्तदुर्भिक्षं तथापि व्यतिरेकेण वाच्यत्वादिनिष्ठोभयत्वादिकमेव दृष्टान्तः सम्भवतीत्यदोषः । अथवा यो यदवृत्तिः स नतदवच्छेदकः इति सामान्यव्याप्तौ कारणत्वादिव्यधिकरणकारणत्वाद्यनवच्छेदक एवान्वयेन दृष्टान्तः प्रतियोगितावच्छेदकत्वविषयतावच्छेदकत्वोभयसाधारणावच्छेदकतात्वस्यैक्ये भ्रमविषयताव्यधिकरणतदवच्छेदकत्वजातत्वादौ उक्तसामान्यव्याप्तेर्भङ्गवारणाय विषयतान्यत्वेन यत्पदार्थो विशेषणीय इत्याहुः। अथ कालिकादिसम्बन्धेन पटादिवृत्तिघटत्वादेः समवायादिना पटादिनिष्ठप्रतियोगितावच्छेदकत्वखण्डनाय तत्तत्सम्बन्धेन प्रतियोग्यवृत्तित्वं तत्तत्सम्बन्धेन प्रतियोगितावच्छेदकत्वाभावसाधने पक्षतावच्छेदकतया हेतुतया वा विवक्षणीयम् तथा च समवायसम्बन्धेन वाच्यत्वादिवृत्तित्वाप्रसिद्ध्योक्तरीत्या समवायादिसम्बन्धेन घटत्वाद्यवच्छिन्नवाच्यत्वाभावखण्डनानुपपत्तिः न च प्रतियोग्यवृत्तित्वमित्यनेन प्रतियोगिनिष्ठावच्छेदकताघटकसम्बन्धावच्छिन्नाभावप्रतियोगित्वमेव विवक्षणीयं तथा च घटत्वादेरेव वाच्यत्वादिनिष्ठसमवायादिसम्बन्धावच्छिन्नाभावप्रतियोगितया नाप्रसिद्धिरिति वाच्यम् अव्याप्यवृत्तेः संयोग्यभावप्रतियोगितावच्छेदकस्य प्रतियोगिनिष्ठाभावप्रतियोगितया उक्तधर्मस्य पक्षतावच्छेदकत्वे बाधस्य हेतुत्वे च व्यभिचारस्य दुर्वारत्वात् प्रतियोगिनिष्ठभेदप्रतियोगितायामवच्छेदकताघटकसम्बन्धेनावच्छेदकत्वस्य विवक्षणे व्यधिकरणसंयोगादिसम्बन्धेन घटत्वाद्यवच्छिन्नवाच्यत्वाद्यभावनि-

तेन सम्बन्धेन

कत्वस्य यादिनोऽप्यननुमतत्वात् एवं घटत्वादौ समवायसम्बन्धेन घाच्यत्वादिनिष्ठप्रतियोगितायामवच्छेदकत्वस्याभावः प्रतियोग्यप्रसिद्धया साधयितुमशक्यः । मैवं स्वप्रतियोगिकत्वयदनुयोगिकत्वोभयाभाववद्यादृशसम्बन्धसामान्यको यः स स्वनिष्ठत्वतत्सम्बन्धावच्छिन्नत्वोभयाभाववत्तन्निष्ठप्रतियोगितावच्छेदकतासामान्यकः इत्यर्थविवक्षायामेव सामञ्जस्यात् संयोगादिसम्बन्धसामान्ये घटत्वादिप्रतियोगिकत्ववाच्यत्वाद्यनुयोगिकत्वोभयाभावसत्त्वात् प्रथमस्वपदेन घटत्वाद्युपादानस्य मतद्वय एव सम्भवात् तत्र स्वनिष्ठत्वसंयोगादिसम्बन्धावच्छिन्नत्वोभयाभाववद्वाच्यत्वादिवृत्तिप्रतियोगितावच्छेदकतासामान्यकत्वसाधने नोऽऽदृशयासिद्धिः । प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इति मूलग्रन्थस्य तथात्वे मानाभावादिति शेषः । ननु समवायितया वाच्यत्वं नास्तीत्याद्याकारकः समवायित्वादेर्वाच्यत्वादिनिष्ठप्रतियोगितावच्छेदकत्वावगाहिप्रत्यय एव मानमिति उक्तहेतोरसिद्धयाशङ्कायामाह तद्विशिष्टज्ञानस्येति । अत्र च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य अभावलौकिकप्रत्यक्षत्वावच्छिन्नहेतुत्वादित्यर्थः । यद्यपि अन्यथा घटनिर्विकल्पकानन्तरं घटाभावप्रत्ययापत्तेरितिमूलदर्शितयुक्त्या वाच्यत्वं न समवायीतिविशेषदर्शनप्रतिबध्यवाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानपर्यन्तापेक्षा समवायित्वाद्यवच्छिन्नवाच्यत्वाभावप्रत्यक्षे नायाति तथापि स्वतन्त्रमहानसीयत्ववह्नित्वादिप्रकारकज्ञानान्महानसीयवह्निर्नास्तीतिबुद्ध्यनुदयात् महानसीयवह्निर्नास्तीत्यभावबुद्धौ महानसीयवह्नित्वाद्यवच्छिन्नत्वेन वह्न्यादिनिष्ठप्रतियोगितावगाहिन्यां यथा महानसीयत्वप्रकारेण वह्नित्वावच्छिन्नविषयकज्ञानं हेतुः तथा समवायितया वाच्यत्वं नास्तीत्यादिबुद्धेर्वाच्यत्वादिनिष्ठप्रतियोगितायां समवायित्वाद्यवच्छिन्नत्वावगाहित्वे समवायित्वादिना वाच्यत्वत्वाद्यवच्छिन्नधर्मिकज्ञानमपेक्षितं तथा च वाच्यत्वं न समवायीतिविशेषदर्शनदशायामप्यनुभूयमाना तथाकारा प्रतीतिः कथमुपपद्येत तस्याः वाच्यत्वाद्यनुयोगिकसमवायित्वाभावावलम्बनत्वोपगमे सर्वत्रैव तथात्वमुपेयतामिति गतं व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वेनेत्यभिप्राय इति मिश्रानुसारिव्याख्यानं व-

चेयमनुपपत्तिरवतरति । तद्धर्मावच्छिन्नतन्निष्ठप्रतियोगिताकाभावबुद्धौ तद्धर्मप्रकारकतज्ज्ञानत्वेन हेतुत्वासम्भवात् घटत्वेन यत्किञ्चिद्घटज्ञानादपि यावद्घटप्रतियोगिकसामान्याभावबुद्ध्युत्पत्त्या व्यभिचारात् सम्भवेऽपि वा दर्शितविशेषदर्शनकाले निर्धर्मितावच्छेदककवाच्यत्वादिधर्मिकसमवायित्वादिभ्रमसम्भवेन व्यधिकरणधर्मावच्छिन्नाभावप्रतीतिनिर्वाहाय तादृशकारणताया अकिञ्चित्करत्वात् न च वह्नित्वधर्मितावच्छेदककमहानसीयत्वप्रकारकबुद्धिं विना विशृङ्खलमहानसीयत्ववह्नित्वप्रकारकज्ञानसत्त्वेऽपि महानसीयवह्नित्वावच्छिन्नाभावप्रत्यक्षानुत्पत्त्या तद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तद्धर्मावच्छिन्नधर्मिकतद्धर्मप्रकारकज्ञानत्वेन हेतुता वाच्येति वाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानं विना न समवायित्वावच्छिन्नवाच्यत्वाद्यसमानाधिकरणप्रतियोगिताकाभावभानसम्भव इति वाच्यं महानसीयवह्नित्वावच्छिन्नप्रतियोगितायां द्रव्यत्वादेरपि सामानाधिकरण्यात् उक्तकार्यकारणभावोपगमे द्रव्यत्वाद्यवच्छिन्नधर्मिकमहानसीयवह्नित्वप्रकारकज्ञानस्यापि तादृशप्रतियोगिताकाभावबुद्धावपेक्षणीयतापत्तेः । अथ तद्धर्मवद्वृत्तित्वेन भासमानप्रतियोगित्वे तद्धर्मावच्छिन्नत्वावगाहिन्यामभावबुद्धौ तद्धर्मावच्छिन्नधर्मिकतद्धर्मप्रकारकज्ञानत्वेन हेतुता महानसीयवह्निर्नास्तीत्यत्र च वह्नित्वावच्छिन्ननिष्ठत्वेन संसर्गघटकतया भासमानप्रतियोगित्वे महानसीयत्वावच्छिन्नत्वं भासते स्वावच्छिन्नवह्निवृत्तिप्रतियोगिताकत्वस्य अभावांशे प्रतियोगिविशेषणतापन्नमहानसीयत्वस्य सम्बन्धत्वादिति तत्र वह्नित्वावच्छिन्नधर्मिकमहानसीयत्वप्रकारकज्ञानस्यापेक्षा न तु धर्मान्तरावच्छिन्नधर्मिकस्य धर्मान्तरविशेषितवह्निवृत्तित्वेन तत्र प्रतियोगिताया अभानादिति चेत् तर्हि प्रतियोगितावच्छेदकप्रकारकज्ञानमन्तरेणापि अभावप्रत्यक्षसामान्यापत्तिः प्रत्यक्षविशेष एव तद्धेतुतायाः स्वीकृतत्वादेवमप्यनतिप्रसङ्गेन प्रतियोगिविशेषिताभावबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया प्रतियोगितावच्छेदकप्रकारकज्ञानस्य हेतुत्वादेव निर्वाहे स्वतन्त्रतद्धेतुताया निर्बीजत्वापत्तेरस्तु वा एतादृशरीत्यैव हेतुहेतुमद्भावः तथापि समवायित-

या वाच्यत्वं नास्तीत्यत्र वाच्यत्वत्वसामानाधिकरण्याविशेषितस्वावच्छिन्नप्रतियोगिताया एव समवायित्वसंसर्गघटकतया भानोपगमसम्भवेन वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानस्याज्ञानपेक्षणीयत्वमुपपद्यत इति । अत्रेदं समाधानं तदुभयधर्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तदुभयैकतरधर्मावच्छिन्नधर्मिकतदन्यतरप्रकारकज्ञानत्वेन हेतुता समवायितया वाच्यत्वाभावस्य च व्यधिकरणसमानाधिकरणयोः समवायित्ववाच्यत्वत्वोभयोरेव प्रतियोगितावच्छेदकत्वपर्याप्तिरवश्यमङ्गीकार्या समवायित्वमात्रस्य प्रतियोगितावच्छेदकत्वे वाच्यत्वत्वप्रकारकज्ञानमन्तरेणापि तादृशाभावप्रतीत्यापत्तेः अत्र समवायितया वाच्यत्वं नास्तीतिप्रतीत्या समवायित्ववाच्यत्वत्वोभयपर्याप्तप्रतियोगितावच्छेदकत्वानवगाहने तस्याः समवायिवाच्यत्ववदिदमितिभ्रमविरोधित्वानुपपत्तेश्च तं प्रति समवायितया प्रमेयत्ववाच्यत्वोभयं नास्तीतिनिश्चयस्यावृत्तेन तदुभयांशे प्रतियोगितावच्छेदकतापर्याप्त्यवगाहिनिश्चयत्वेनैव प्रतिबन्धकत्वात् न च विलक्षणवाच्यत्वप्रकारतानिवेशनादेव दर्शितनिश्चयव्यावृत्तिसम्भवे उभयांशे अवच्छेदकत्वपर्याप्त्यवगाहित्वमप्रयोजकमिति वाच्यं यतस्तद्धर्मे ऽभावप्रतियोगितावच्छेदकत्वपर्याप्तिस्तदवच्छिन्नस्याभावविरोधित्वप्रयोजिका तदवगाहित्वमेवाभावबुद्धेस्तदवच्छिन्नविशिष्टज्ञानप्रतिबन्धकतायां तत्र समवायितया वाच्यत्वप्रमेयत्वोभयं नास्तीतिप्रतीतेः समवायित्ववाच्यत्वत्वोभयाविशिष्टवत्ताबुद्धिप्रतिबन्धकत्वेऽपि उभयांशे प्रतियोगितावच्छेदकतापर्याप्त्यनवगाहित्वमेव बीजं तस्य च समवायितया वाच्यत्वं नास्तीतिधीसाधारण्ये तस्यास्तादृशविशिष्टधीप्रतिबन्धकत्वं न तु उक्तोभयाभावबुद्धेरिति विशेष एव नोपपद्येत इति । यदि चैतस्याः प्रतीतेः प्रतिबन्धकत्वं नान्यस्या इत्यत्र विषयतावैचित्र्यमात्रं बीजमाश्रीयते तदा समानाधिकरणधर्मावच्छिन्नाभावविषयिण्या घटो नास्तीत्यादिबुद्धेरपि प्रतियोगितावच्छेदकत्वावगाहित्वं विलोप्यतां न हि तत्र घटत्वादिविशिष्टधीप्रतिबन्धकत्वानुरोधमन्तरेण युक्त्यन्तरं परिस्फुरति स च भवतामकिञ्चित्कर एव कपालसमवेतद्रव्यं नास्ति नीलो घटो नास्तीत्यादिप्रतीतिव्यावृत्तप्रकारता-

करीत्या ऽभावलौकिकत्वावच्छिन्नं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य कारणतया तादृशकारणबाधेन व्यधिकरणधर्मावच्छिन्नाभावाप्रत्ययादिति मूलं व्याख्येयं तद्यानुचितम् उक्तविशेषकारणताकल्पनोपजीव्यविशिष्टवैशिष्ट्यबोधसामान्यहेतुताश्रयविशेषणतावच्छेदकविशिष्टविशेषणज्ञानाभावस्यैव दर्शयितुमुचितत्वात् अतो मूले हेतुत्वादित्यस्यापेक्षणीयत्वादित्यर्थः इत्याशयेन प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावधिया अपेक्षणे विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकविशिष्टविशेषणज्ञानकारणत्वमेव हेतुत्वेनाभिप्रेतमित्याह । तथा च जन्यतायामभावविषयकत्वावच्छिन्नत्वमविवक्ष्य विशेषणतावच्छेदकविशिष्टविशेषणज्ञानस्य विशिष्टवैशिष्ट्यबोधत्वावच्छिन्नाभावधीनिष्ठजन्यताप्रतियोगिभूतस्याभावेन समवायितया वाच्यत्वं नास्तीत्यादिप्रतीतेर्व्यधिकरणधर्मावच्छिन्नाभावावगाहित्वासम्भव इत्यर्थपरतया तद्याख्यानमनुचितं न तु विशिष्टवैशिष्ट्यबोधहेतुतायामुपजीव्यकल्प्यहेतुत्वान्तरपरतयेत्याशयेनाह दीधितौ विशेषणतावच्छेदकेति । अयं भावः वाच्यत्वं समवायीति ज्ञानमन्तरेण समवायिवाच्यत्वयानयमिति विशिष्टवैशिष्ट्यबोधानुत्परया वाच्यत्वत्वावच्छिन्ननिरूपितत्वेन भासमानवैशिष्ट्ये समवायित्वावच्छिन्ननिरूपितत्वावगाहिज्ञाने वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानत्वेन हेतुताकल्पनमावश्यकं समवायितया वाच्यत्वं नास्तीतिव्यधिकरणधर्मावच्छिन्नाभावबुद्धेरपि वाच्यत्वत्वावच्छिन्नधीत्वेन भासमाने ऽनुयोगितारूपवैशिष्ट्ये समवायित्वावच्छिन्नत्वावगाहितया तत्र तादृशज्ञानमवश्यमपेक्षणीयमिति । ननु वैशिष्ट्यांशे वाच्यत्वत्वनिष्ठधर्मितावच्छेदकतानिरूपकविशेषणतापन्नसमवायित्वावच्छिन्नप्रतियोगिताकत्वावगाहिबुद्धावेव तदवच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानं हेतुः व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ च वाच्यत्वत्वावच्छिन्ने समवायित्वस्य विशेषणत्वं नोपेयते अपि तु तद्विशेषणतानापन्नस्यैव तस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावांशे विशेषणत्वमुपेयते वाच्यत्वसंसर्गतावच्छेदकतयैव वा तथाविधतदवच्छिन्नत्वस्य प्रतियोगितांशे

भानमुपेयते तथा च तत्र नोपदर्शितज्ञानापेक्षेत्याशङ्कां परिजिहीर्षुर्भावं व्याचष्टे अभावप्रत्ययो हीति । विशेषणस्य प्रतियोगिघटादिनिरूपितविशेषणतापन्नस्य घटत्वादेः प्रतियोगितावच्छेदकत्वमवगाहते प्रतियोगितया भासमानघटादिनिरूपितविशेषणत्वावच्छिन्ना या स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्ना घटत्वादिनिष्ठप्रकारता तच्छाली भवतीति यावत् । न तु स्वातन्त्र्येण न प्रतियोग्यविशेषणत्वेन घटत्वादेः प्रतियोगितावच्छेदकत्वमवगाहते इत्यनुषङ्गेणान्वयः तादृशसम्बन्धावच्छिन्नघटत्वादिनिष्ठप्रकारता प्रतियोगिनिरूपितप्रकारतानवच्छिन्ना न भवतीत्यर्थः । घटो नास्तीत्येवेति अभावांशे स्वातन्त्र्येण घटत्वादिवैशिष्ट्योल्लेखराहित्याया एवेत्यर्थः । प्रतीतेरनुभवादिति शेषः । एतावता किमायातमित्यत आह तदिहेति । अवच्छिन्नं विशेषितं तस्यापि प्रतियोगितावच्छेदकत्वं तस्य प्रतियोगितावच्छेदकत्वमपि तथा च मानाभावेन न व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वासिद्धिरिति भावः । अथ व्यधिकरणधर्मस्य प्रतियोगिविशेषणतयैव व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ भानमुपेयते न चैवं सति तादृशबुद्धेः समवायित्वादिरूपविशेषणतावच्छेदकप्रकारकवाच्यत्वादिज्ञानजन्यतावच्छेदकाक्रान्ततया तादृशज्ञानं विना व्यधिकरणधर्मावच्छिन्नाभावबुद्ध्यनुपपत्तिरिति वाच्यं भ्रमात्मकतादृशज्ञानदशायामेव तद्बुद्ध्युपगमात् विशेषदर्शनदशायामपि आहार्यतत्प्रकारकज्ञानसम्भवात् अनाहार्यस्यैव विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वे विशेषदर्शनकालीनायाः समवायितया वाच्यत्वं नास्तीत्यादिबुद्धेरगत्या वाच्यत्वाद्यधिकरणकसमवायित्वाद्यभावावगाहित्वमुपेयते वाच्यत्वं समवायीत्यादिभ्रमानन्तरं समवायिवाच्यत्वं नास्तीत्याकारकप्रत्यय एव व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वे मानमास्तां तत्र तदवगाहितायाः सर्वानुभवसिद्धत्वेनापह्नोतुमशक्यत्वात् तादृशप्रतीतेर्वाच्यत्वे समवायित्वाभावावगाहित्वोपगमे तत्पूर्वं वाच्यत्वं समवायीतिभ्रमापेक्षानुपपत्तेरित्याशयेनाशङ्कते अथावगाहत इति । समाधत्ते भ्रम एवेति

व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वांशेऽपि भ्रम एवेत्यर्थः वैशिष्ट्यभान एवावच्छेदकतायाः भानादवच्छेदकताया वैशिष्ट्यानियततया तद्बाधे तस्या अपि बाधादिति भावः । न चैवं गवि शशशृङ्गं नास्तीतिप्रतीतेरसिद्धेरिति मूलासङ्गतिः तादृशप्रतीतेः शृङ्गांशे शशीयत्वावगाहित्वानभ्युपगमे शशीयत्वे शृङ्गनिष्ठप्रतियोगितावच्छेदकत्वावगाहनासम्भवासदवगाहित्वे भ्रमत्वादुभयथापि व्यधिकरणधर्मावच्छिन्नाभावासाधकत्वात्तादृशप्रतीतिनिराकरणस्यानुपयुक्तत्वादिति वाच्यम् । अभ्रान्तानामपि गवि शशशृङ्गं नास्तीति व्यवहारमूलप्रतीतिसत्त्वेनोक्तनियमस्यैवासिद्ध्या व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव तादृशप्रतीतेर्गोशृङ्गाधिकरणकशशीयत्वाभावावगाहित्वोपगमे तस्या गवाधिकरणकाभावावगाहितायामनुभवविरोध इत्याशङ्कामुत्थाप्याभ्रान्तपुरुषीयगवाधिकरणकाभावावगाहितादृशाभावप्रतीतिनिराकरणपरतया तद्ग्रन्थस्यावतारणीयत्वात् । ननु अभ्रान्तानां गवि शशशृङ्गं नास्तीति प्रतीतिर्माभूत् शशशृङ्गं नास्तीतिप्रतीतिर्नापह्नोतुं शक्यते सर्वेषामेव तथाविधव्यवहारदर्शनादित्याशङ्कायां शशशृङ्गं नास्तीत्यादिमूलावतारो बोध्यः यद्यपि शशशृङ्गं नास्तीति शब्देन शशे शृङ्गाभाव इत्याकारकः शाब्दबोधो न शक्यते जनयितुम् । अनुयोगिवाचकपदोत्तरं सप्तमीविरहेण निराकाङ्क्षत्वात् तथापि पदार्थोपस्थित्यादिमूलकेदृशमानसबोधजननेच्छया व्युत्पन्नानां तथा प्रयोग इत्याशयः । ननु घटत्वेन घटो नास्तीत्याकारकस्याभावप्रत्ययस्यानुभविकतया प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वमभावप्रत्ययो ऽवगाहत इति न नियमः तादृशप्रतीत्या स्वातन्त्र्येण भासमाने घटत्वादौ प्रतियोगितावच्छेदकत्वावगाहनात् अन्यथा घटत्वेनेत्याकारकतानुपपत्तेः तथा च घटत्वेन पटो नास्तीत्यादावपि घटत्वादौ पटादिनिष्ठप्रतियोगितावच्छेदकत्वावगाहनं निराबाधमेवेति व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव न च तत्र व्यधिकरणधर्मस्यावच्छेदकत्वावगाहनसम्भवेऽपि अतिरिक्ताभावकल्पनागौरवभयेन तादृशप्रतीतेः पटाद्यधिकरणकघटत्वाभावावगाहित्वमेव स्वीक्रियत इति वाच्यम् असति बाधके तच्छब्दोल्लेखिप्रतीतेस्तच्छब्दप्रति-

प्रतियोगिविषयकत्वाप्रतिसन्धानात् घटत्वविशेषणकघटाभावभावस्य च घटांशे घटो नास्तीत्यादिशब्दात्मकभ्रमप्रतीतेः प्रतीतिबलात्प्रामाण्याग्रहनिरासे तात्पर्यकल्पनागौरवस्य फलमुखत्वेनादोषकत्वात् न च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानरूपकारणबाधेन तादृशप्रतीतिर्व्यधिकरणधर्मावच्छिन्नाभावावगाहिनी न सम्भवतीति युक्तं घटत्वावच्छिन्नधर्मिकपटत्वादिप्रकारकप्रतियोगिज्ञानहेतुताया मानाभावात् तादृशज्ञानं विनैव घटांशे पटो नास्तीत्याकारकस्य घटत्वादिविशिष्टपटादिवैशिष्ट्यानवगाहिनः प्रत्यक्षात्मकस्य स्वीकारात् । वस्तुतस्तु कुत्राप्यभावबुद्धौ स्वातन्त्र्येण प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुता नास्ति न च तदकल्पने प्रतियोगिज्ञानशून्यकाले नास्तीत्याकारकप्रतियोग्यविषयकाभावप्रत्यक्षस्य घटत्वादिनिर्विकल्पकानन्तरं विशेष्ये विशेषणमितिरीत्या घटाभावप्रत्यक्षस्याप्यापत्तिरिति वाच्यं प्रतियोगिज्ञानहेतुतामतेऽप्यभावे प्रतियोगितया घटादिरूपप्रतियोगिज्ञानविषयीभावादिप्रसङ्गे प्रतियोग्यविषयकाभावप्रत्यक्षत्वस्य दुर्वारत्वात् यदि च निर्धर्मितावच्छेदकप्रतियोगिज्ञाने बाधकाभावात् प्रतियोग्यविषयकाभावप्रत्ययो नापादयितुं शक्यते तथापि तादृशाभावप्रत्यक्षापत्तौ प्रतियोगिधर्मितावच्छेदकज्ञानप्रत्यक्षाभावत्वप्रकारकस्य स्वातन्त्र्येण प्रत्यक्षायां प्रतियोगिधर्मितावच्छेदकतानापन्नाभावत्वप्रकारकस्य स्वातन्त्र्येण प्रतियोगिविषयकस्य नास्तिघटीयधर्मत्याद्याकारकसमूहालम्बनप्रत्यक्षस्यापत्तिः एवं घटत्वावच्छिन्नप्रतियोगिताकाभावस्य यदा भानं तदा निर्विकल्पकोपस्थितद्रव्यत्वादेर्विशेष्ये विशेषणमितिरीत्या घटांशे भानापत्तिः कारणबाधेन न शक्यते वारयितुं तादृशाभावस्य द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकत्वविरहेण तद्भाने द्रव्यत्वादिप्रकारकज्ञानस्यानपेक्षणात् यदि च यादृशप्रकारता यत्र धर्मे स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नधर्मान्तरानिरूपितप्रकारतातदन्यप्रकारतानिरूपितविशेषणविषयतानिरूपितसंसर्गतासम्बन्धेन भानं प्रति अभावीयानुयोगिताविशेषत्वस्य कारणतां कल्पयित्वा ईदृशोपपत्तिः प्रतियोगिप्रकारतानिरूपितधर्मितावच्छेदकतापर्याप्तिप्रकारतावि-

शेषसम्बन्धेन लौकिकप्रत्यक्षं प्रत्यभावत्वभेदस्य कारणतां कल्पयित्वा च पूर्वापत्तिर्वार्यते तदा तावतैव सकलापत्तिवारणादलं प्रतियोगिज्ञानहेतुतया । न चैवमपि प्रतियोग्यविषयकस्याभावत्वाप्रकारकप्रत्ययस्यापत्तिर्विना प्रतियोगिज्ञानहेतुतां न शक्यते वारयितुमिति वाच्यं प्रतियोगिज्ञानं विना प्रतियोग्यविषयकस्येदन्त्वादिना ऽभावप्रत्यक्षस्येदन्त्वादिरूपतादृशविशेषणज्ञानसत्त्वे च तादृशाभावनिर्विकल्पकस्येष्टत्वात् अभावनिर्विकल्पकानभ्युपगमे प्रतियोगिज्ञानहेतुतयापि तद्वारणासम्भवात् इदन्त्वादिना ऽभावप्रत्यक्षे व्यभिचारवारणायाभावत्वप्रकारकाभावप्रत्यक्षं प्रत्येव प्रतियोगिज्ञानस्य हेतुताया आवश्यकत्वात् विशेषणानवच्छिन्नविषयतासम्बन्धेन प्रत्यक्षं प्रति अभावभेदस्य हेतुतां स्वीकृत्य तद्वारणे च मयापि तस्य तथैव धारणीयत्वात् । वस्तुतस्तु आधाराप्रसिद्ध्यैव तादृशफलापत्त्यनवकाशः प्रसिद्धाया घटो नास्तीत्यादिबुद्धेर्घटत्वादिविशिष्टवैशिष्ट्यावगाहितया तत्र प्रतियोगितावच्छेदकघटत्वादिप्रकारकज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानविधया हेतुतायाः क्लृप्तत्वात्तादृशकारणविरहादेव न तच्छून्यकाले तदापत्तिः । यत्तु अनाहार्यप्रतियोगितावच्छेदकविशिष्टप्रकारकोपलम्भविरहो विशेष्यीभूतधर्मिप्रत्यासत्त्या ऽभावग्रहे हेतुः तथा च यस्य पुंसः समवायित्वादिविशिष्टवाच्यत्वादिप्रकारको ऽनाहार्यभ्रमो ऽप्रसिद्धस्तदीयः समवायितया वाच्यत्वं नास्तीत्याकारकप्रत्ययो न व्यधिकरणधर्मावच्छिन्नाभावमवगाहितुमर्हति तदीयतादृशप्रतियोग्युपलम्भविरहरूपतदीयाभावप्रत्यक्षकारणस्याप्रसिद्धेरिति तत्पुरुषीयतादृशप्रत्ययस्य वाच्यत्वाद्यनुयोगिकसमवायित्वाद्यभावविषयकत्वावश्यकत्वे सर्वत्रैव तादृशप्रकारत्वमुचितम् । एकाकारप्रतीतेः पुरुषभेदेन विषयतावैचित्र्यानुचितत्वादिति मिथोक्तव्यधिकरणधर्मावच्छिन्नाभावनिराकरणपन्थाः सोऽपि न साधीयान् अभावबुद्धौ स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिमत्त्वोपलम्भत्वेन एककारणतायाः स्वत्वाननुगमेन दुर्वचतया विशिष्य कल्पनस्यावश्यकत्वे यत्र तादृशोपलम्भप्रसिद्धिः तत्रैव तादृशोपलम्भानन्तरमभावप्रत्ययवारणाय तदभावहेतुत्वोपगमात् व्यधिकरणधर्मावच्छिन्नाभावबु-

त्तौ कश्चिद्भ्रमसिषाधयिषा तद्भावहेतुत्वात्सम्भवेऽपि सन्निकर्षादिघटितसामग्रीतस्तदुत्पत्तौ बाधकाभावादित्यत आह यदि पुनरिति । स्वरसवाही विवादशून्यः घटत्वेन घटो नास्तीति पाठः घटत्वेन पटो नास्तीति पाठो न साधुः तादृशप्रतीतेः पटाद्यनुयोगिकघटत्वाद्यभावावगाहितया एव व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगन्तृभिरुपगमात् प्रतियोगिविशेष्यतापन्नस्यैव प्रतियोगितावच्छेदकत्वं भासत इति नियमस्य तदाकारप्रतीतिबलेनाशक्यवारणत्वात् आनुभविक इत्यस्य व्यधिकरणधर्मस्यावच्छेदकत्वावगाहितया ऽनुभवसिद्ध इत्यर्थकतया वा कथंचिल्लङ्घनीयः गीर्वाणगुरूणामपि न शक्यमित्यनेन प्रतीतिकारणबाधेन तादृशाभावनिराकरणाशक्तौ मिथ्यात्वस्य आक्षिप्तः यदि तदेत्यनेन तादृशप्रतीतेरानुभविकत्वे विवादं प्रदर्श्य तादृशाभावस्याप्रामाणिकत्वं सूचितम् ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचिता व्यधिकरणधर्मावच्छिन्नाभावदीधितिविवृतिः समाप्ता ॥

# अनुमानगादाधर्याम्

पूर्वपक्षप्रकरणम् ।

---

( चि० ) अथ साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वं व्याप्तिः केवलान्वयिनि साध्यासामानाधिकरण्यं निरधिकरणे आकाशादौ प्रसिद्धमिति चेन्न ।

(दी०) साध्येति । साध्यस्यासामानाधिकरण्यं येषु तेषामनधिकरणत्वं तदभाववत्त्वमिति यावत् तस्मिन् सति साधिकरणत्वं तदवच्छिन्नाधिकरणताकत्वं सतिसप्तम्यावच्छेदकत्वलाभात् तच्चेहान्यूनवृत्तित्वम् एवं च साध्यवदवृत्तिसकलपदार्थाभाववत्त्वं यदधिकरणताया अन्यूनवृत्ति तत्त्वमिति तु फलितार्थः ।

( गा० ) साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वमितिलक्षणे दलयोः सामानाधिकरण्यं सतिसप्तम्यर्थः । तत्र विशेष्यदलमवृत्तिहेतुकातिव्याप्तिवारणपरमिति यथाश्रुतव्याख्यानं न साधु अवृत्तौ साध्याधिकरणावृत्तित्वसत्त्वात् साध्यासामानाधिकरण्यपदस्य साध्यानधिकरणाधिकरणकत्वार्थकतायामेव विशेषणदलस्यावृत्तिसाधारण्यसम्भवात् तथा च सति केवलान्वयिन्यव्याप्तेः अथ साध्यासामानाधिकरण्यं नोक्तरूपं किं तु साध्याधिकरणानधिकरणस्वरूपं तदनधिकरणत्वमप्यवृत्तिसाधारणम् अधिकरणाप्रसिद्ध्या तदनधिकरणाप्रसिद्धेरवृत्तौ तदसत्त्वादिति चेदेवमपि केवलान्वयिनीत्यादिग्रन्थवि-

तौ कश्चिद्भासिकया तदभावहेतुत्वावश्यकत्वेऽपि सन्निकर्षादिघटित-सामग्रीतस्तदुत्पत्तौ बाधकाभावादित्यत आह यदि पुन-रिति । स्वरसवाही विवादशून्यः घटत्वेन घटो नास्तीति पाठः घटत्वेन पटो नास्तीति पाठो न साधुः तादृशप्रतीतेः पटाद्यनुयो-गिकघटत्वाद्यभावावगाहितायां एव व्यधिकरणधर्मावच्छिन्ना-भावानभ्युपगन्तृभिरुपगमात् प्रतियोगिविशेषणतापन्नस्यैव प्रतियो-गितावच्छेदकत्वं भासत इति नियमस्य तदाकारप्रतीतिबले-नावश्यधारणत्वात् आनुभविक इत्यस्य व्यधिकरणधर्मस्यावच्छे-दकत्वावगाहितया ऽनुभवसिद्ध इत्यर्थकतया वा कथंचित्स-ङ्गमनीयः गीर्वाणगुरूणामपि न शक्यमित्यनेन प्रतीतिकारणबाधेन तादृशाभावनिराकरणावन्तो निश्चाद्य आक्षिप्ताः यदि तवेत्यनेन तादृशप्रतीतेरानुभविकत्वे विवादं प्रदर्श्य तादृशाभावस्यापारमा-र्थिकत्वं सूचितम् ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचिता व्यधिकरण-
धर्मावच्छिन्नाभावदीधितिविवृतिः समाप्ता ॥



# अनुमानगादाधर्याम्

## पूर्वपक्षप्रकरणम् ।

(दि०) अथ साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वं व्याप्तिः केवलान्वयिनि साध्यासामानाधिकरण्यं निरधिकरणे आकाशादौ प्रसिद्धमिति चेन्न ।

(दी०) साध्येति । साध्यस्यासामानाधिकरण्यं येषु तेषामनधिकरणत्वं तदभाववत्त्वमिति यावत् तस्मिन् सति साधिकरणत्वं तदवच्छिन्नाधिकरणताकत्वं सतिसप्तम्यावच्छेदकत्वलाभात् तथेहान्यूनवृत्तित्वम् एवं च साध्यवदवृत्तिसकलपदार्थाभाववत्त्वं यदधिकरणताया अन्यूनवृत्ति तत्त्वमिति तु फलितार्थः ।

(गा०) साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वमितिलक्षणे दलयोः सामानाधिकरण्यं सतिसप्तम्यर्थः । तत्र विशेष्यदलमवृत्तिहेतुकातिव्याप्तिवारणपरमिति यथाश्रुतव्याख्यानं न साधु अवृत्तौ साध्याधिकरणावृत्तित्वसत्त्वात् साध्यासामानाधिकरण्यपदस्य साध्यानधिकरणाधिकरणकत्वाद्यर्थकतायामेव विशेषणदलस्यावृत्तिसाधारण्यसम्भवात् तथा च सति केवलान्वयिन्यव्याप्तेः अथ साध्यासामानाधिकरण्यं नोकरूपं किं तु साध्याधिकरणानधिकरणत्वरूपं तदनधिकरणत्वमप्यवृत्तिसाधारणम् अधिकरणाप्रसिद्ध्या तदनधिकरणाप्रसिद्धेरवृत्तौ तदसत्त्वादिति चेदेवमपि केवलान्वयिनीत्यादिग्रन्थवि-

रोधः तेन ग्रन्थेन गगनादौ साध्यासामानाधिकरण्यप्रसिद्धिदर्शनात् साध्याधिकरणयात्किञ्चिदनधिकरणके साध्यन्यूनवृत्तिहेतावव्याप्तिवारणाय साध्याधिकरणसामान्यानधिकरणत्वविवक्षणस्यावश्यकतया वृत्तिमत्यपि केवलान्वयिसामानाधिकरण्यप्रसिद्ध्यसम्भवात्तत्साध्यकेऽव्याप्तेः साध्यसमानाधिकरणे व्यभिचारिणि अतिव्याप्तेश्चेत्यालोच्य लक्षणमन्यथा व्याख्यातुमुपक्रमते साध्यस्येति । साध्यपदासामानाधिकरण्यपदयोर्बहुव्रीहिबलात्साध्यासमानाधिकरणलाभः तदनधिकरणत्वं यदि तदधिकरणत्वाभावः तदा केवलान्वयिनि अवृत्तेरेव साध्यवदवृत्तितया तदधिकरणत्वाप्रसिद्ध्याऽव्याप्तिरतोऽनधिकरणपदमभाववदर्थकतया व्याचष्टे तदभाववद्धर्मीति । सतिसप्तम्याः सामानाधिकरण्यार्थकतया तदभाववदसमानाधिकरणसाधिकरणत्वस्य विवक्षितत्वे धूमाद्विहेतौ वह्न्याद्यसमानाधिकरणधूमत्वादिसत्त्वादव्याप्तिरत आह तदवच्छिन्नेति । अवच्छेद्यावच्छेदकभाव कुतो लभ्यत इत्याशङ्कायामाह सतिसप्तम्येति । अनधिकरणत्वे सतीत्यत्र या सप्तमी तया इत्यर्थः । अवच्छेदकत्वलाभादिति । तदभाववत्त्वरूपप्रकृत्यर्थाधिकरणतानिरूपकत्वरूपसमभिव्याहृतसाधिकरणत्वपदार्थैकदेशाधिकरणतानिरूपकतावच्छेदकत्वलाभादित्यर्थः । अवच्छेदकत्वं चेदनतिरिक्तवृत्तित्वरूपं विवक्ष्यते तदा विषमव्याप्ते धूमाभाववद्व्याप्तिः वह्न्याद्यसमानाधिकरणपदार्थाभावस्य हेतुशून्यसाध्याधिकरणसाधारणस्य हेत्वतिरिक्तवृत्तित्वात् साध्यव्यापके व्यभिचारिण्यतिव्याप्तिश्च तत्र साध्यसमनियतस्य साध्यासमानाधिकरणपदार्थाभाववत्त्वस्य हेत्वनतिरिक्तवृत्तित्वादत आह तद्देहेति । अन्यूनवृत्तित्वं व्यापकत्वं समुदितार्थमाह साध्यवदवृत्तीति । साध्यानधिकरणाधिकरणकत्वरूपं साध्याधिकरणानधिकरणकत्वरूपं च साध्यासामानाधिकरण्यं केवलान्वयिसाध्यके न प्रसिद्ध्यतीति साध्यासामानाधिकरण्यपदस्य साध्यवदवृत्तित्वार्थकता स्फुटीकृता धूमवदवृत्तिवह्नित्वाद्यभावस्य वह्निव्यापकत्वादव्याप्तिरतः साध्यवदवृत्तयो य ये पदार्थास्तदभावकूटलाभाय सफलेति । इत्थं च साफल्यावच्छिन्नतावत्पदार्थाभावस्य केवलान्वयित्वेऽपि न क्षतिः साध्यवदवृत्तित्वावच्छिन्नप्रतियोगिताकैकसा-

मान्याभावश्च निवेशयितुमशक्यः येन येन सम्बन्धेन यस्य साध्यवद्वृत्तित्वं तत्तत्सम्बन्धावच्छिन्नतदभावस्य निवेशनीयत्वात् प्रतियोगितावच्छेदकसम्बन्धाननुगमेनाभावैक्यासम्भवात् विशेषणताविशेषसम्बन्धानिवेशपक्षे तु तदननुगमविरहात् एक एव सामान्याभावो निवेशनीयः साध्यपदं साध्यतावच्छेदकविशिष्टपरम् अतो विशिष्टसत्तावान् जातेरित्यादौ गुणत्वादेः शुद्धसाध्यवद्वृत्तित्वेऽपि न क्षतिः तद्वत्त्वं च साध्यतावच्छेदकसम्बन्धेन बोध्यं तेन समवायेन वह्नौ साध्ये पर्वतत्वादेर्वह्निसंयोगिवृत्तित्वेऽपि संयोगेन हेतौ धूमे नातिव्याप्तिः यत्पदं हेतुतावच्छेदकविशिष्टपरम् अतो द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः तदधिकरणता हेतुतावच्छेदकसम्बन्धेन बोध्या तेन समवायादिना धूमाधिकरणताया निर्वह्निसाधारण्येऽपि नाव्याप्तिः ॥

ननु हेतुव्यापकतानिवेशनैवोपपत्तौ तदधिकरणत्वानिवेशवैयर्थ्यमत आह यथासन्निवेश इति ।

( दी० ) यथासन्निवेशे अधिकरणत्वस्य न वैयर्थ्यं हेतुतावच्छेदकसम्बन्धलाभाय वा तत् । येन येन सम्बन्धेन यो यः साध्यवद्वृत्तिस्तेन तेन सम्बन्धेन तत्तदभावो बोध्यः । एतेन साध्यवद्वृत्तित्वं यदि साध्यतावच्छेदकसम्बन्धेन विवक्षितं तदा समवायेन साध्यतायां साध्यवदसमवेतस्य सार्वत्रिकत्वात् सकलतच्छून्याप्रसिद्धिः । अथ तदभावोऽपि तादृशेनैव सम्बन्धेन वाच्यस्तदा जातिमान् प्रमेयत्वादित्यादावतिव्याप्तिः जातिमदसमवेतानां समवायेनाभावस्य केवलान्वयित्वादत एव न संयोगेन समवायेन वा इदं न जातिमत् जातित्वादित्यादौ साध्यवत्समवेताप्रसिद्धेश्च । नापि साधनतावच्छेदकेन इदमेतद्रूपभिन्नं गुणत्वादित्यादावव्याप्तिः । नापि विषयतया घटभिन्नं मेयत्वादित्यत्राप्यतिव्याप्तेः सविषयकमात्रस्यैव घटभिन्नविषयत्वात् । घटनिर्विकल्पकेऽपि घटत्वादिभानात् । नापि

सम्बन्धमात्रेण द्रव्यं सत्त्वादित्यादावतिव्याप्तेः । वृत्तिमन्मात्रस्यैव स्वरूपसम्बन्धेन महाकाले वृत्तेरवृत्तेरभावस्य च केवलान्वयित्वादिति मदुक्तम् । विशेषणताविशेषेण वा साध्यवदवृत्तित्वं वक्तव्यं सर्वत्रैव तत्तद्व्यक्तित्वे तत्तदन्यत्वे तत्प्रकारकप्रमाविषयत्वे वा तत्सुलभम् । तेनैव सम्बन्धेन तदवच्छिन्नसामान्याभावो वाच्य इति ।

( गा० ) यथोक्तविशेष्यविशेषणभावक्रमेण निवेश इत्यर्थः न वैयर्थ्यमिति हेतुविशेषितव्यापकतायाः प्रकृतलक्षणाघटकतया तद्घटितस्य लक्षणत्वसम्भवेऽपि न वैयर्थ्यावसरः प्रकृतलक्षणघटकस्य तथात्वसम्भव एवाधिकांशवैयर्थ्यात् । ननु वैयर्थ्याभावेऽप्यनतिप्रयोजनकत्वं दुर्वारमेवेत्यत आह हेतुतावच्छेदकसम्बन्धेनेति । हेतुतावच्छेदकसम्बन्धेन हेतुं प्रति व्यापकताया लक्षणघटकत्वसूचनायेत्यर्थः । सम्बन्धसामान्येन हेतुं प्रति व्यापकताया निवेशे वह्न्यादेरपि धूमाद्यव्यापकतापत्तेरिति भावः । यत्किञ्चित्सम्बन्धेन साध्यवदवृत्तेर्यत्किञ्चित्सम्बन्धावच्छिन्नाभावनिवेशे धूमाद्यसमानाधिकरणायोगोलकत्वादेर्व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य वह्न्यादिव्यापकत्वादतिव्याप्तिः साध्यतावच्छेदकादिसम्बन्धेन साध्यवदवृत्तित्वादिविवक्षणे वक्ष्यमाणदोषाणां दुर्वारतेत्यालोच्य साध्यवदवृत्तितानिर्वाहकसम्बन्धाभावप्रतियोगितावच्छेदकसम्बन्धयोरैक्यं विवक्षति येन येनेति । संयोगादिना ऽयोगोलकत्वादेर्धूमादिमदवृत्तित्वात्तत्सम्बन्धावच्छिन्नतदभावस्य च वह्न्यादिव्यापकत्वादतिव्याप्तिरतो येन येनेति वीप्सा । तत्तदभाव इति संयोगादिसम्बन्धावच्छिन्नसाध्यवदसंयुक्तत्वाद्यवच्छिन्नसामान्याभावा एव यथायथं लक्षणघटका न तु तत्तत्पदार्थानां तत्तद्व्यक्तित्वावच्छिन्नाभावा अनन्ताभावनिवेशप्रसङ्गादित्यवधेयम् । एतादृशविवक्षाप्रयोजनं दर्शयति एतेनेत्यादिना । साध्यतावच्छेदकसम्बन्धेनेति अस्य वाभावप्रतियोगितया भासमानायां वृत्तावन्वयः । समवायेनेति संयोगादीनामप्युपलक्षकं साध्यवदसमवेतस्येति । मेयत्वादेरिति

शेषः । असमवेतपदमपि असंयुक्ताद्युपलक्षणं सकलतच्छून्येति साध्यवदवृत्तिसकलपदार्थाभावाप्रसिद्धिरित्यर्थः । एकसम्बन्धेन व्यभिचारनिरूपकाधिकरणवृत्तेरपि अपरसम्बन्धावच्छिन्नाभावस्य हेतुव्यापकतामादायातिव्याप्तिवारणाय साध्यवदवृत्तेः सम्बन्धसामान्येनाभावो ऽवश्यं निवेशनीयः संयोगसमवायस्वरूपादिनिष्ठसम्बन्धताविशेषाणां मिथो भिन्नत्वेऽपि सम्बन्धतात्वेनानुगतानां तावन्निष्ठप्रतियोगितावच्छेदकसम्बन्धतावच्छेदकत्वे मानाभावात् सामान्यविशेषभावेनावच्छेदकीभूतसम्बन्धतयोर्भेदेनात्माश्रयविरहात् प्रत्येकं सकलसम्बन्धावच्छिन्नाभावकूट एव वा निवेश्य इत्यभिप्रायेणेदम् अन्यथा मेयत्वादेरपि समवायादिना ऽभावप्रसिद्ध्या ऽसङ्गत्यापत्तेः । तादृशेनैवेति साध्यतावच्छेदकसम्बन्धेनैवेत्यर्थः । एवकारेण सम्बन्धसामान्यव्यवच्छेदः तावतैव धूमवान् वह्नेरित्यादावतिव्याप्तिवारणसम्भवात् अयोगोलकीयवह्न्यादेः साध्यतावच्छेदकसम्बन्धेनाभावस्य हेत्वन्यूनवृत्तिताविरहादिति भावः । जातिमानिति समवायेन जातित्वावच्छिन्नसाध्यके व्यभिचारिणीत्यर्थः । केवलान्वयित्वादिति व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकत्वेनेत्यादिः केवलान्वयित्वे सुतरामेव हेत्वन्यूनवृत्तित्वमिति तदभिधानम् । विशिष्य समवायादिसम्बन्धनिवेशनं निरस्यति अत एवेति एतादृशातिव्याप्तेरेवेत्यर्थः समवायेन संयोगेन वा साध्यवदवृत्तेस्तेन सम्बन्धेनाभावः शक्यनिवेश इति शेषः । जातिमदसंयुक्तस्य संयोगेनाभावस्यापि केवलान्वयित्वादिति भावः । एतत्पक्षद्वयेऽधिकामव्याप्तिमाह इदमिति । समवेतादीत्यादिना संयुक्तपरिग्रहः । साधनतावच्छेदकेनेति सम्बन्धेनेति शेषः । साध्यवदवृत्तिरित्यादिकमपि पूरणीयम् । एवमग्रेऽपि जात्यादिसाध्यके व्यभिचारिणि स्वरूपसम्बन्धस्यैव साधनतावच्छेदकतया तेन सम्बन्धेन साध्यवदवृत्तिजातित्वादेस्तादृशसम्बन्धावच्छिन्नाभावस्य हेतुव्यापकत्वान्नैतत्कल्पे ऽतिव्याप्तिशङ्कावतारः । इदमिति पक्षनिर्देशः एतदित्यस्य पक्षनिर्देशतान्भ्रमपरिहाराय तथा सति रूपत्वावच्छिन्नभेदस्य साध्यतालाभेन तादृशसाध्यवत्समवेतरूपत्वादेः प्रसिद्ध्या ऽतिव्याप्त्यनवकाशात् । अतिव्याप्तेरिति एतद्रूपमात्रसमवेतताप्रसिद्ध्या एतद्रूपभिन्ना-

समवेतस्य समवायरूपसाधनतावच्छेदकसम्बन्धावच्छिन्नाभावस्य व्यधिकरणसम्बन्धावच्छिन्नाभावतया केवलान्वयित्वादिति भावः। तद्घटादिमात्रासमवेतस्य रूपादेः प्रसिद्ध्या गुणरूपैकव्यक्तिविपक्षानुसरणं नापि विषयतयेति व्यभिचारिणि साध्यवदविषयकस्य व्यभिचारनिरूपकाधिकरणाविषयकज्ञानादेर्विषयतासम्बन्धावच्छिन्नाभावमादायातिव्याप्तिनिराकरणासम्भवात् शङ्कावारः। घटभिन्नं मेयत्वादित्यत्रापीत्यपिना पूर्वोक्तस्थलपरिग्रहः घटभेदसाध्यकस्य नानाव्यक्तिविपक्षकत्वं द्रव्यविपक्षकत्वं च पूर्वकल्पापेक्षया एतत्पक्षस्याविद्येयतासूचनार्थं तस्याधिकस्य प्रदर्शनमतिव्याप्तिबीजं विषयतया साध्यवद्वृत्तेस्तत्सम्बन्धावच्छिन्नाभावस्य केवलान्वयित्वं दर्शयति सविषयकेति। मात्रपदं कृत्स्नपरं घटभिन्नाविषयकत्वादिति घट इत्याकारस्य घटादिविषयकज्ञानादेरपि विशेषणीभूतघटत्वतत्सम्बन्धविषयकत्वादिति भावः निर्विषयकस्य तादृशसम्बन्धावच्छिन्नाभावस्य च व्यधिकरणसम्बन्धावच्छिन्नाभावत्वादिति शेषः। ननु विशिष्टबुद्धौ विशेषणादिविषयकत्वनियमेऽपि घटाभिन्नाविषयकं घटानिर्विकल्पकमेव सम्भवतीत्यत आह घटानिर्विकल्पकेऽपीति। घटत्वादीत्यादिना रूपादिपरिग्रहः तद्ग्राहकसन्निकर्षादिघटितसामग्र्या अपि तदानीं सत्त्वात् इन्द्रियाणां स्वव्यवस्थापकगुणपुरस्कारेणैव प्रवृत्तेश्चाक्षुषादौ रूपादिभानस्यावश्यकत्वाच्चेति भावः। सम्बन्धमात्रेण साध्यवद्वृत्तित्वं साध्यवत्सम्बद्धत्वसामान्यं साध्यवदाधेयत्वसामान्यं वा तादृशसम्बन्धेनाभावः सम्बन्धत्वावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धताक एकोऽभावः प्रतियोगितावच्छेदकतया ये ये सम्बन्धास्तदवच्छिन्नाभावकूटो वा। स्वरूपसम्बन्धेन कालिकविलक्षणसम्बन्धेन प्रत्युक्तमिति यत्र साध्यवति साध्यतावच्छेदकसम्बन्धेनावर्तमानं तेन सम्बन्धेन क्वचिदपि न वर्तते तत्रापि विशेषणताविशेषेण साध्यवद्वृत्तेस्तेन सम्बन्धेन व्यभिचारानिरूपकाधिकरणवृत्तेर्वस्तुनः प्रसिद्धा तस्य तादृशसम्बन्धावच्छिन्नाभावमादायातिव्याप्तिनिराकरणासम्भवादिति भावः। एवं सति विशेषणताविशेषस्यैव विशिष्योपादानमुचितं सम्बन्धान्तरनिवेशने प्रयोजनाभावादित्या-

शयेनाह विशेषणताविशेषेणेति दैशिकविशेषणतयेत्यर्थः । एवं सति दर्शितातिव्याप्तीनां नावकाश इति सूचयितुं व्यभिचारनिरूपकाधिकरणे तेन सम्बन्धेन वृत्तिमति तेन सम्बन्धेन साध्यवदवृत्तित्वसौलभ्यमाह सर्वत्रैवेति व्यभिचारिहेतुक इति शेषः। तत्तद्व्यक्तित्व इति यद्यपि हेतौ साध्यव्यभिचार इत्यादिः अयोगोलकादिनिष्ठतद्व्यक्तित्वं तन्मात्रवृत्तिरूपाधारमकमेव न तु पदार्थान्तरं तस्य च न विशेषणताविशेषेण वृत्तिरिति केवलान्वयिनं तस्य तादृशसम्बन्धावच्छिन्नाभावमादाय नातिप्रसङ्गनिराकरणसम्भव इति तत्र तत्सौलभ्यमनुपयुक्तमित्याशङ्क्याह तत्तदन्यान्यत्व इति तत्तद्व्यक्तित्वावच्छिन्नभेदावच्छिन्नभेदोऽपि स्वप्रतियोगितावच्छेदकतत्तद्व्यक्तित्वादनतिरिक्त एव तथा च वक्ष्यते न हि घटभिन्नभेदो घटत्वादतिरिच्यते इत्याशङ्क्याह तत्प्रकारकेति तत्तद्व्यक्तित्वादिप्रकारकेत्यर्थः । तत्प्रकारकभ्रमाविषयत्वस्य साधयत्यपि सम्भवात्प्रमेति । तत् तेन सम्बन्धेन साध्यवदवृत्तित्वं विशिष्य समवायादिसम्बन्धनिवेशे जात्यभावादिसाध्यकस्थले तेन सम्बन्धेन साध्यवदवृत्तित्वाप्रसिद्धिरुक्ता विशेषणताविशेषस्य विशिष्य निवेशे तु न तद्दोषावसर इति सूचयितुं सर्वत्र सद्धेतौ साध्यवन्निष्ठतद्व्यक्तित्वादौ तेन सम्बन्धेन साध्यवदवृत्तित्वप्रसिद्धिपरमिति तु न सम्भवति ज्ञेयत्वघटान्यत्वादिष्वेव तत्प्रसिद्धिसम्भवात् तत्तद्व्यक्तित्वाद्यनुधावनस्य वैयर्थ्यापातात् अभावे तत्सम्बन्धावच्छिन्नप्रतियोगिताकत्वानिवेशे यत्किञ्चित्सम्बन्धावच्छिन्नाभावमादायातिव्याप्तिः सम्बन्धसामान्येनाभावनिवेशे च तेन सम्बन्धेन साध्यवदवृत्तेः साध्यवत्समवेतादेस्तादृशाभावस्य हेतुमत्यसत्त्वादसम्भव इति तन्निवेशयति तेनैवेति । इदानीं प्रतियोगितावच्छेदकसम्बन्धाद्यनुगमेन एक एवाभावो निवेशयितुं शक्यत इत्यभिप्रायेणाह तदवच्छिन्नसामान्याभाव इति । तादृशसाध्यवदवृत्तित्वावच्छिन्नसामान्याभाव इत्यर्थः ।

मिश्रव्याख्यानमुपन्यस्यति केचित्त्विति ।

( दी० ) केचित्तु-नञ्द्वयपरत्वासेन असाध्यानि साध्यविरो-

धीनि साध्यासमानाधिकरणानीति यावत् तानि सामानाधिकरण्यानधिकरणानि यस्य तत्त्वं साध्यसामानाधिकरण्याभावव्यापकाभावप्रतियोगिसामानाधिकरण्यसामान्यकत्वमिति फलितार्थः । अत्र च साध्यसामानाधिकरण्यं साध्यतावच्छेदकसम्बन्धेन साध्यवति हेतुतावच्छेदकसम्बन्धेन वृत्तिः परं च सामानाधिकरण्यं हेतुतावच्छेदकसम्बन्धेन हेतुमति तेनैव वृत्तिः तेन समवायेन पृथिवीत्वादेः साध्यतायां व्यभिचारिणि कालिकसम्बन्धेन हेतौ घटादौ द्रव्यत्वादेश्च समवायेन साध्यतायां समवायेन हेतौ सत्त्वगुणत्वादौ नातिप्रसङ्गः । न वा संयोगेन वह्न्यादौ साध्ये समवायेन तद्रूप्यास्य रूपविशेषादेः कालिकसम्बन्धेनाधिकरणे काले स्पन्दे च कालपरिमाणस्पन्दत्वादेः समवायेन तदधिकरणे घटादेः संयोगेन वृत्तावपि चाप्रसङ्गः । सम्बन्धविशेषेण व्याप्यत्वलाभाय साधिकरणत्वमित्याहुस्तच्चिन्त्यम् ।

(गा०) नञ्व्यत्यासेन साध्यपदानन्तरं श्रूयमाणस्य नञस्तत्पूर्वाभिसन्धानेन तथा चासाध्यसामानाधिकरण्येति वक्तव्ये साध्यासामानाधिकरण्येनेत्यभिधानं प्रमादेनेति भावः । असाध्यपदस्य साध्यभिन्नार्थकत्वे घतद्वृत्तिधर्मवान् घतत्वादित्याद्यतिरिक्ते सर्वत्र साध्यभिन्नस्य हेतुसमानाधिकरणतया कस्यचित् साध्यभिन्नाप्रसिद्ध्या ऽव्याप्तिरतो नञ्पदस्य विरोध्यर्थकतामाह साध्यविरोधीनीति विरोधस्य तदभावव्याप्यतारूपत्वे केवलान्वयिनि साध्याभावाप्रसिद्ध्या ऽव्याप्तिरतः साध्यासमानाधिकरणानीति । केवलान्वयिन्यद्यावच साध्यासामानाधिकरण्याप्रसिद्धिः व्यभिचारिहेतुकेऽपि साध्यासमानाधिकरणस्यान्ततो ऽवृत्तेरेव हेत्वसमानाधिकरणतयाऽतिव्याप्तिरिति साध्यासामानाधिकरण्यरूपोद्देश्यतावच्छेदकावच्छेदेन हेत्वसामानाधिकरण्यरूपविधेयान्वयो ऽत्र विवक्षित इत्याशयेन व्यापकत्वघरूपमवच्छिन्नत्वमन्तर्भावयन्

सामानाधिकरण्याधिकरणत्वाभावे अधिकरणत्वांशमनतिप्रयोजनकतया परित्यजन् फलितार्थमाह साध्येति । साध्यपदं साध्यतावच्छेदकविशिष्टार्थकं तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः व्यापकत्वं तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं न तु तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् अभावत्वादिकमादायातिप्रसङ्गात् गौरवाच्च साध्यादिनिष्ठहेतुसामानाधिकरण्यव्यक्तिविशेषाभावस्य साध्यसामानाधिकरण्याभावव्यापकतामादायातिव्याप्तिवारणाय सामान्यपदं व्यापकाभावप्रतियोगितावच्छेदकस्वविशिष्टसामानाधिकरण्यत्वकधर्मवत्त्वमिति तु निष्कर्षः तेन व्यभिचारिणि हेतुसामानाधिकरण्यसामान्यगगनोभयत्वावच्छिन्नाभावस्य साध्यसामानाधिकरण्याभावव्यापकत्वेऽपि न क्षतिः स्वपदं हेतुतावच्छेदकपरं तद्विशिष्टसामानाधिकरण्यनिवेशात् द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः परं च सामानाधिकरण्यं हेतुसामानाधिकरण्यं साध्यतावच्छेदकसम्बन्धनिवेशनस्य व्यावृत्तिमाह समवायेन पृथिवीत्वादेरिति । व्यभिचारिणि हेतौ घटादौ नातिप्रसङ्ग इत्यग्रिमेण सम्बन्धः । वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन पृथिवीत्वाधिकरणे काले तादृशहेतुतावच्छेदकसम्बन्धेन वृत्तेरवृत्तिमात्रनिष्ठतदभावं प्रति हेतुसामानाधिकरण्याभावस्य व्यापकत्वेऽपि समवायरूपसाध्यतावच्छेदकसम्बन्धेन साध्यवत्पृथिव्यादिनिरूपितकालिकसम्बन्धावच्छिन्नवृत्त्यभावस्य महाकालादौ हेतुसमानाधिकरणे जन्यपृथिव्यसमानकालीने घटध्वंसादौ सत्त्वेन तं प्रत्यस्याव्यापकत्वादिति भावः । साध्यवद्वृत्तित्वे हेतुतावच्छेदकसम्बन्धनिवेशप्रयोजनमाह द्रव्यत्वादेश्चेत्यादि । समवायेन साध्याधिकरणमहाकाले वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन वृत्तिः साध्यवति सम्बन्धसामान्येन वृत्तेरभावं प्रति हेतुमद्वृत्तित्वाभावस्य व्यापकत्वेऽपि गुणत्वादिसाधारणं हेतुतावच्छेदकसम्बन्धेन द्रव्यादिवृत्तित्वाभावं प्रति तस्याव्यापकत्वादिति भावः । हेतुमत्त्वे हेतुतावच्छेदकसम्बन्धनिवेशप्रयोजनमाह संयोगेन वह्न्यादौ साध्य इति । वह्निमानेतद्रूपादित्यादावित्यर्थः । समवायेनेति व्याप्यतायामपि कालपरिमाणस्पन्दत्वादेर्वृत्तावपि ना-

प्रसङ्ग इत्यन्वयः । काले कालपरिमाणादेर्वृत्तिकथनेन साध्यतावच्छेदकसम्बन्धेन साध्यवति हेतुतावच्छेदकसम्बन्धेन वृत्तेरभाववति तत्र सम्बन्धसामान्येन हेतुमत्समवेतत्वाभावासत्त्वात्र तस्य तादृशाभावव्यापकत्वमित्यव्याप्तिप्रसक्तिबीजं दर्शितं महाकालनिष्ठो यो वह्न्यादिसंयोगस्तत्साधारणरूपेण संयोगस्य साध्यतावच्छेदकसम्बन्धत्वे महाकालपरिमाणे सामानाधिकरण्याभावासम्भवात् स्पन्दत्वाद्युपादानम् । चतुर्थसम्बन्धनिवेशप्रयोजनमाह समवायेनेति । तदधिकरणं रूपविशेषाधिकरणे घटादिः संयोगेन वृत्तावपीति । एतेन साध्यवत्समवेतत्वाभाववति घटादौ हेतुसमवायिनि सम्बन्धसामान्येन वृत्तेरभावसत्त्वात्तस्य तादृशाभावाव्यापकत्वं दर्शितं सत्यन्तस्यैवाव्याप्तिवारकतया साधिकरणत्वमित्यस्य वैयर्थ्यमाशङ्क्याह सम्बन्धविशेषेणेति । उपदर्शितसम्बन्धनिवेशलाभायेत्यर्थः । तथा च साधिकरणत्वं लक्षणे न निवेश्यमिति भावः । तच्चिन्त्यमिति चिन्ताबीजम् एतद्रूपभिन्न गुणत्वान्महाकालान्यो घटादित्याद्यतिव्याप्तिः हेतुतावच्छेदकसमवायकालिकसम्बन्धेन साध्यवदवृत्तित्वस्य तेन सम्बन्धेनाप्रसिद्धेः तादात्म्येन सर्वविषयकज्ञानसाधारणसाध्यके विषयितया च हेतावव्याप्तिः तेन सम्बन्धेन साध्यवदसम्बन्धित्वाप्रसिद्धेः यदि च सामानाधिकरण्यद्वयघटकवृत्तित्वद्वये हेतुतावच्छेदकसम्बन्धं परित्यज्य सम्बन्धैक्यं विशेषणताविशेषसम्बन्धो वा निवेश्यते तदा नैतद्दोषावकाश इत्यवधेयम् ।

यथाव्याख्यातलक्षणस्य निर्दोषतया मूलोक्तदूषणासङ्गतिमाशङ्कयाह यथाश्रुतमिति ।

( दी० ) यथाश्रुतं यथासम्भवं विकल्प्य दूषयति नेत्यादि ।

( चि० ) साध्यासामानाधिकरण्यं हि न साध्यानधिकरणाधिकरणत्वं साध्याधिकरणानधिकरणत्वं वा केवलान्वयिनि यत्किञ्चित्साध्याधिकरणानधिकरणे धूमे चाव्याप्तेः । नापि स्वसमानाधिकरणात्यन्ताभा-

वाप्रतियोगिसाध्यसामानाधिकरण्यं पर्वतीयवह्ने-र्महानसीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगि-त्वात् द्रव्यत्वादेरव्याप्यतापत्तेश्च । न च प्रति-योगिविरोधित्वं व्याप्यवृत्तित्वं वा अभावविशेष-णं देय संयोगादौ साध्ये सत्त्वादेरनैकान्तिकत्वा-भावप्रसङ्गात् । न हि प्रतियोगिविरोधी संयोगादेर-परो ऽत्यन्ताभावोऽस्ति अधिकरणभेदेनाभावभेदा-भावात् । नापि साधनवन्निष्ठान्योन्याभावाप्रतियो-गिसाध्यवत्कत्वं व्याप्तिः मूले वृक्षः कपिसंयोगवान्ने-त्यबाधितप्रतीतेः तदन्योन्याभावस्यापि तत्र सत्त्वात्। न चैवं भेदाभेदः अवच्छेदकभेदेन तत्सत्त्वाभ्युपग-मात् साधनवन्निष्ठान्योन्याभावाप्रतियोगि साध्य-वद्रूपस्येति षष्ठयर्थव्याप्यव्यापकभावानिरूपणात् साध्यसाधनयोर्व्याप्तिनिरूप्यत्वात् वह्निमत्पर्वतस्य धूमवन्महानसनिष्ठान्योन्याभावप्रतियोगित्वाच्च वि-शेषाभावकूटादेवाभावव्यवहारोपपत्तौ सामान्या-भावे मानाभावात् । नापि साधनसमानाधिकरणया-वद्धर्मनिरूपितवैयधिकरण्यानधिकरणसाध्यसामाना-धिकरण्यं साधनसमानाधिकरणस्य प्रमेयत्वादेर्वैय-धिकरण्याप्रसिद्धेः महानसादौ समवायितया वह्नि-वह्निमतोरत्यन्तान्योन्याभावयोः सत्त्वात् धूमादाव-प्युक्तलक्षणाभावाच्च ।

( दी० ) नन्वप्रतियोगिपदेन प्रतियोगितानवच्छेद-कावच्छिन्नं वक्तव्यमत आह द्रव्यत्वादेरिति । प्रतियोगिविरो-

धित्वं प्रतियोगितदधिकरणावृत्तित्वं । व्याप्यवृत्तित्वं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् । अधिकरणेति । तथा सत्यभाव एव न सिध्येदिति भावः । संयोगाद्यभावस्य च द्रव्ये प्रतियोगिसामानाधिकरण्यमव्याप्यवृत्तित्वं च प्रतियोग्यधिकरणीभूतद्रव्यवृत्तित्वं स्वाधिकरणीभूतद्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वं गुणे च, प्रतियोग्यसामानाधिकरण्यं व्याप्यवृत्तित्वं च प्रतियोग्यनधिकरणीभूतगुणवृत्तित्वं स्वाधिकरणीभूतगुणनिष्ठात्यन्ताभावाप्रतियोगित्वम् एतानि न च भेदकान्यविरोधात् सामान्यतश्चाव्याप्यवृत्तौ प्रतियोगिसमानाधिकरणे च न तथात्वव्यतिरेक इति भावः । ननु साध्यवान् यस्येति साध्यवति सम्बन्धोऽन्वेष्टव्यः स चाधिकरणत्वं साध्यसाधनयोरपि सामानाधिकरण्यमेवेत्यतो दूषणान्तरमाह साध्येति । साध्यत्वसाधनत्वे व्याप्तिप्रतियोगित्वानुयोगित्वे । यत्तद्भ्यामेव व्याप्तिर्निर्वक्तव्येत्यत आह वह्निमदिति । ननु यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नं न भवति तद्रूपावच्छिन्नेन समं तस्य सामानाधिकरण्यं व्याप्तिरित्यर्थः । न च धूमसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदको वह्नित्वावच्छिन्नो वह्निः धूमवान् वह्निमान्नेत्यप्रतीतेरत आह–विशेषेति । य एव प्रत्येकं वह्निमद्भेदा धूमसमानाधिकरणास्त एव चैकाधिकरणवृत्तित्वावच्छिन्ना वह्निमत्सामान्यभेदबुद्धिमुपपादयन्ति तत्प्रतियोगितावच्छेदकश्च वह्नित्वावच्छिन्नो वह्निरिति भवत्यव्याप्तिः । साधनेति । वैयधिकरण्यं तदनधिकरणवृत्तित्वं तच्च केवलान्वयिनः साधनस्याप्रसिद्ध्यतिप्रसञ्जकं च पृथिवी द्रव्यत्वादित्यादौ अतः समानाधिकरणोपादानं धूमादेरपि वह्न्यादि-

समानाधिकरणद्रव्यत्वाद्यनधिकरणवृत्तित्वमतो यावदिति । यद्यपि पृथिवीत्वादिसमानाधिकरणघटत्वपटत्वाद्यनधिकरणवृत्तित्वं द्रव्यत्वादेस्तदनधिकरणमात्रवृत्तित्वं च निखिलघटपटादिरूपादीनां तथापि तादृशधर्मानधिकरणमात्रवृत्तित्वानवच्छेदकसाध्यतावच्छेदकवत्त्वं बोध्यम् । न हि पृथिवीत्वसमानाधिकरणस्तादृशः कश्चिदेको धर्मो यदनधिकरणमात्रवृत्तितावच्छेदकं रूपत्वादि धूमत्वादिकं तु वह्न्यादिसमानाधिकरणायोगोलकत्वाद्यनधिकरणमात्रवृत्तितावच्छेदकं तदवच्छेदकत्वं च तदनतिरिक्तवृत्तित्वं तच्च तच्छून्यधर्मावृत्तित्वं तेन मेयत्वसमानाधिकरणगुणत्वाद्यनधिकरणमात्रवृत्तितानधिकरणगगनादिवृत्तित्वेऽपि द्रव्यत्वस्य द्रव्यसाध्यकमेयत्वे नातिप्रसङ्गः ।

( गा० ) दूषयतीत्यनेन सम्बन्धः । यथासम्भवमिति विकल्पक्रियाविशेषणं साधनसमानाधिकरणाभावाप्रतियोगित्वघटितलक्षणे नानाव्यक्तिसाध्यस्य विशेषाभावमादाय दत्तं दोषमुद्धृत्य दूषणान्तरमवतारयति नन्विति । प्रतियोगितानवच्छेदकेति । न चैव धूमवान् वह्नेरित्यादौ धूमादेस्तथाविधद्रव्यत्वाद्यवच्छिन्नत्वमादाय दोषः अनवच्छेदको यो धर्मस्तदवच्छिन्नसामानाधिकरण्यं तद्रूपावच्छिन्ननिरूपितव्याप्तिरिति विवक्षणात् प्रतियोगिविरोधित्वं यदि प्रतियोग्यनाधिकरणवृत्तित्वं व्याप्यवृत्तित्वं च यत्किञ्चित्स्वाधिकरणनिष्ठाभावाप्रतियोगित्वं तदा संयोगी सत्त्वादित्यादौ वक्ष्यमाणातिव्याप्त्यसङ्गतिः हेत्वधिकरणान्तर्भावेन तल्लक्षणे ऽतिव्याप्तिपरिहारस्यापि सम्भवादित्यग्रिमग्रन्थानुरोधेन तदुभयं व्याचष्टे प्रतियोगिविरोधित्वमिति । तथासतीति । अधिकरणभेदेनाभावभेदस्वीकार इत्यर्थः । अभाव एव अधिकरणस्वरूपातिरिक्ताभाव एव अभावाधिकरणस्याभावरूपत्वे घटादिशून्यानन्ताधिकरणव्यक्तीनां घटाद्यभावत्वं कल्पनीयमिति तदपेक्षया घटाद्यभावत्वस्य एकैकव्यक्तावेव कल्पनमुचित लाघवादिति युक्त्या तत्सिद्धिः । यदि चाभावा अपि

अधिकरणसमसंख्यकास्तदा किमपराद्धमधिकरणानामभावत्वकल्पनयेति भावः । ननु द्रव्यगुणादिनिष्ठसंयोगाद्यभावस्याभेदे संयोगाभावो द्रव्ये प्रतियोगिसमानाधिकरणो गुणे न तथा गुणे व्याप्यवृत्तिः द्रव्ये न तथेति व्यपदेशो न स्यात्तस्य मिथो विरुद्धधर्मद्वयविषयकत्वादित्याशङ्क्य तादृशाभावव्यवहारविषयाणामविरोधं व्युत्पादयितुं तन्निर्वक्ति संयोगाद्यभावस्य चेति । द्रव्य इति अव्याप्यवृत्तित्वमित्यत्राप्यनुषज्यते यथासंख्यमुद्देश्यद्वये विधेयान्वयः एवमग्रेऽपि । गुण इति व्याप्यवृत्तित्वमित्यत्रापि सम्बध्यते । न भेदकानि संयोगाभावस्येत्यादिः अविरोधादिति । प्रतियोग्यधिकरणवृत्तित्वतदनधिकरणवृत्तित्वयोर्भावाभावरूपताविरहेण एकत्रापि संभवात् द्रव्यनिष्ठाभावप्रतियोगित्वगुणादिनिष्ठाभावाप्रतियोगित्वयोरपि नीलघटपीतघटाभावसमशीलतया तथात्वादिति भावः । उक्तव्यवहाराः पारिभाषिका एव अवयवव्युत्पत्त्या तादृशार्थालाभादिति ध्येयम् । यादृशयोर्विरोधस्तादृशयोर्न व्यवहारविषयतेत्याह सामान्यत इति तथात्वव्यतिरेक इत्यनेनास्य सम्बन्धः । अव्याप्यवृत्तौ प्रतियोगिसमानाधिकरणे चेति तथात्वेन च व्यवह्रियमाणे संयोगाभाव इत्यर्थः । सामान्यतो न तथात्वव्यतिरेको न स्वाधिकरणनिष्ठाभावप्रतियोगित्वसामान्याभावः प्रतियोग्यधिकरणवृत्तित्वसामान्याभावः व्यपदिश्यत इति शेषः । स्वसमानाधिकरणान्योन्याभावप्रतियोगिसाध्यवत्कत्वमित्यत्र साध्यसाधनयोः सम्बन्धो निविष्टः स च व्याप्यव्यापकभाव इत्यात्माश्रय इति दूषणं दूषणान्तरायवारायोद्धरति नन्विति । यस्येत्यनेन साध्यवति साधनस्य सम्बन्धोऽभिष्टव्यः विवक्षणीयः स चाधिकरणत्वं न तु व्याप्यव्यापकभाव इति शेषः । तथा च नात्माश्रय इति भावः । साध्यसाधनयोः सम्बन्धनिवेशेऽपि न क्षतिः तयोरपि सम्बन्धान्तरसंभवादित्याशयेनाह साध्यसाधनयोरपीति । सामानाधिकरण्यमेव सम्बन्धः संभवतीति शेषः । तथा च स एव वा विवक्षणीय इति भावः । मूले साध्यसाधनयोः साध्यत्वसाधनत्वयोर्व्याप्तिनिरूप्यत्वात् व्याप्तिघटितत्वात् साध्यत्वसाधनत्वे यदि सिद्धिकर्मत्वतत्करणत्वरूपे तदा तयोर्व्याप्तिघटितत्वाभा-

वात् असङ्गतिरतो दीधितिकारः तदन्यथा निर्वक्ति साध्यत्वसाधनत्वे इति । द्वन्द्वादिश्रूयमाणं व्याप्तीत्युभयत्र सम्बध्यते । यत्तद्भ्यामिति । यत्समानाधिकरणान्योन्याभावाप्रतियोगी यद्वान् तत्त्वं तद्व्याप्तिरिति क्रमेण साध्यत्वसाधनत्वेऽन्तर्भाव्य इत्यर्थः। तथा च न व्याप्तेर्घटकता यत्तत्पदयोर्धूमत्ववह्नित्वविशेषरूपेण धूमवह्न्यादिपरत्वात् इत्थं च साधनतावच्छेदकादिभेदेन व्याप्तिभेदस्यागत्या स्वीकारादिति भावः । विशेषान्योन्याभावमादाय उपन्यस्तं दूषणं सामान्याभावखण्डनपरमूलमवतारयितुमुद्धरति नन्विति। यदिति यादृशरूपावच्छेदेन यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वाभावस्तादृशरूपावच्छिन्नसामानाधिकरण्यं तस्य तादृशरूपावच्छिन्ननिरूपिता व्याप्तिरित्यर्थः पर्वतादौ महानसीयवह्न्यादिमदन्योन्याभावसत्त्वेऽपि शुद्धवह्नित्वाद्यवच्छेदेन महानसीयवह्न्यादावेव तत्प्रतियोगितावच्छेदकत्वाभावः सुलभ इत्याह न चेति। न हीत्यर्थः। वह्नित्वावच्छिन्नः शुद्धवह्नित्वावच्छिन्नः। न चावच्छेदकत्वतदभावयोर्विरोधेनैकत्रावस्थान दुर्घटमिति वाच्यम् विभिन्नावच्छेदेन भावाभावयोरेकत्र वृत्त्यविरोधेनावच्छेदकतानवच्छेदकरूपेणावच्छेदकत्वाभावसत्त्वे बाधकाभावात् न च विशिष्टस्यावच्छेदकत्वे एकदेशस्यावच्छेदकतानवच्छेदकत्वमेव न सम्भवतीति कथं तदवच्छेदेन वह्न्यादावेवावच्छेदकत्वाभाव इति वाच्यं यादृशस्यावच्छेदकतावच्छेदकत्वपर्याप्त्यनधिकरणत्वं तादृशधर्मावच्छेदेनावच्छेदकत्वाभावोपगमात् विशिष्टवह्नित्वस्यावच्छेदकत्वेऽपि केवलस्य तस्य तत्पर्याप्त्यनधिकरणत्वेनानुपपत्त्यभावः। ननु सामान्याभावनिराकरणमनुपयुक्तं तावतापि सामान्यधर्मस्य प्रतियोगितानवच्छेदकतया उक्ताव्याप्तिपरीहारात् एवं विशेषाभावमात्रेण निर्वाहोऽपि न सामान्याभावानभ्युपगमे यत्किञ्चिद्विशेषाभाववति पर्वतादौ नायं वह्निमानित्यादिप्रतीतिव्यवहारयोः प्रसङ्गादित्याशङ्कातिरिक्तसामान्याभावासत्त्वपक्षे दर्शितातिप्रसङ्गपरिहरन्नेव लक्षणाव्याप्तिं दृढयति य एवेति । वह्निमद्भेदाः तत्तद्वह्न्यवच्छिन्नभेदाः एकाधिकरणवृत्तित्वावच्छिन्नाः तादृशयावद्भेदाधिकरणैकव्यक्तिवृत्तित्वावच्छिन्नाः वह्निमत्सामान्यभेदबुद्धिद्वयो न वह्निमानित्याकारकबुद्धिम् उत्पादयन्ति विपर्यासूयेप-

पादयन्ति तादृशाधिकरणवृत्तित्वावच्छेदेन तादृशबुद्धिविषयतावच्छेदकरूपवन्त इत्यर्थः । एतावता ऽतिप्रसङ्गो वारितः। तत्प्रतियोगितावच्छेदकश्चेति चकारो वह्नित्वावच्छिन्न इत्यनन्तरं योज्यः वह्नित्वावच्छिन्नः शुद्धवह्नित्वावच्छिन्नः तस्य तत्प्रतियोगितानवच्छेदकत्वे तेषां न वह्निमानित्याकारकप्रतीतौ तादृशसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वेन विषयतां स्वीकृत्य उक्तातिप्रसङ्गवारणानुपपत्तेस्तद्दोषतादवस्थ्यमिति भावः। न च विशेषाभावकूटस्य तादृशप्रतीतिविषयतया यत्किञ्चिद्विशेषाभाववति न तत्प्रसङ्ग इति वाच्यं तत्तद्वह्नित्वेन सकलवह्नीनां युगसहस्रेणापि ज्ञातुमशक्यतया तत्तद्वह्न्याद्यवच्छिन्नभेदसमुदायस्य भानासम्भवात् वह्निमत्प्रतियोगिकभेदत्वेन तावद्भेदभानोपगमे तेन रूपेण यत्किञ्चिद्भेदविषयकज्ञानस्यापि प्रकारगतविशेषाभावेन तदाकारतासम्भवात्पर्वतो न वह्निमानितिप्रतीतेर्दुर्वारत्वात् न हि प्रकारत्वाविशेषे विषयन्यूनाधिक्येन विचित्राकारता बुद्धीनां घटत्वप्रकारेण शतसहस्रादिव्यक्तिविषयकप्रतीतीनां घट इत्येवाकारदर्शनात् अधिकमग्रे वक्ष्यामः । साधनसमानाधिकरणयावद्धर्मनिरूपितवैयधिकरण्यघटितलक्षणे वैयधिकरण्यं यदि तदधिकरणावृत्तित्वं तदा प्रमेयत्वादेर्वैयधिकरण्यस्यावृत्तौ अप्रसिद्ध्या प्रमेयत्वादेर्वैयधिकरण्याप्रसिद्धेरिति मूलविरोध इत्यतो ऽन्यथा व्याचष्टे वैयधिकरण्यमिति । ननु साधनवैयधिकरण्यानधिकरणत्वमेव कुतो न निवेश्यते इत्यत आह तच्चेति तादृशवैयधिकरण्यं चेत्यर्थः। अप्रसिद्धामिति यद्यपि समानाधिकरणयावद्धर्मोपादानेऽपि केवलान्वयिसाधनके साधनस्यापि तादृशयावद्धर्मान्तर्गततया ऽप्रसिद्धिरस्त्येव व्यतिरेकिसाधनकेऽपि तद्दोषाधिक्यं तथापि समानाधिकरणयावद्धर्मोपादाने व्यतिरेकित्वं धर्मविशेषणमङ्गीकृत्य वक्ष्यमाणप्रकारान्तरेण परिष्कारः सम्भवति नान्यथेत्याशयेनेयं व्यावृत्तिर्दर्शिता व्यावृत्त्यन्तरमप्याह अतिप्रसञ्जकं चेति । पृथिवी द्रव्यत्वादित्यादाविति पृथिवीत्वादेर्द्रव्यत्वादिरूपसाधनानधिकरणवृत्तित्वानधिकरणत्वादिति भावः । धूमवान् वह्नेरित्यादौ साधनस्य नानाव्यक्तितया ऽयो-

गोलकीयवह्निवैयधिकरण्यं धूमे सम्भवतीति तदुपेक्षितं धूमादेरपीति तथा च यावत्पदानुपादाने द्रव्यत्वमहानसत्वादिरूपयत्किञ्चिद्धर्मवैयधिकरण्यानाधिकरणत्वमादाय व्यभिचारिण्यतिप्रसङ्गः स्यादिति भावः । यावत्पदोपादानमिति । यावतां धर्माणां प्रत्येकनिरूपितवैयधिकरण्यानधिकरणत्वं निवेश्यम् । अतो नानाधिकरणसाधनके तादृशयावद्धर्माधिकरणाप्रसिद्धावपि न क्षतिः द्रव्यत्ववैयधिकरण्यमादायातिव्याप्तिश्च समवायेन साध्यतायां न तु संयोगेन तथात्वे तेन सम्बन्धेन तद्वैयधिकरण्याप्रसिद्धेरित्यवधेयम् । पृथिवीत्वादीति तथा च द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः द्रव्यत्वादौ पृथिवीत्वादिसमानाधिकरणयावद्धर्मवैयधिकरण्यानधिकरणताविरहादिति भावः । व्यधिकरणयोर्न व्याप्तिरितिमतावलम्बनेन वह्निमान् धूमादित्यादौ महानसीयवह्न्यादौ पर्वतत्वादिवैयधिकरण्यसत्त्वेऽपि न दोष इत्येकव्यक्तिसाध्यकानुधावनम् । ननु तदनधिकरणमात्रवृत्तित्वमत्र वैयधिकरण्यं घटत्वादेस्तादृशवैयधिकरण्यं च सत्ताधिकरणेऽपि वर्तमानद्रव्यत्वादेरत आह तदनधिकरणमात्रवृत्तित्वं चेति । घटत्वपटत्वाद्यनधिकरणमात्रवृत्तित्वं चेत्यर्थः निखिलघटपटादिरूपाणामिति यथासङ्ख्यमन्वयः तथा च रूपवान् पृथिवीत्वादित्यादावव्याप्तिस्तावतापि दुर्वारैव कुत्रापि रूपे तादृशयावद्धर्मवैयधिकरण्यानधिकरणत्वासत्त्वादिति भावः । तादृशाव्याप्तिं परिजिहीर्षुर्वैयधिकरण्यपदस्य तदनवच्छेदकावच्छिन्नपरत्वमवलम्बते तथापीति अव्याप्त्यभावं स्फुटयति न हीति कश्चिदेको धर्मस्तादृश इत्यन्वयः पृथिवीत्वादिसमानाधिकरणनिखिलधर्माणामेव तद्व्यापकरूपादिसमानाधिकरणतया रूपत्वाद्यवच्छेदेन तादृशधर्मानधिकरणमात्रवृत्तित्वासम्भवादिति भावः । अवच्छेदकाघटितलक्षणे धूमवान् वह्नेरित्यादौ यावद्धर्मान्तर्गतमहानसत्वादिकमादायातिव्याप्तेर्वारणं सम्भवति पर्वतीयधूमादेस्तदनधिकरणमात्रवृत्तित्वात् इदानीं तु न तादृशधर्ममादाय तद्वारणसम्भवः धूमत्वाद्यवच्छेदेन तदनधिकरणमात्रवृत्तित्वादिति व्यभिचारनिरूपकाधिकरणमात्रवृत्तिधर्ममादाय तत्रातिव्याप्तिं वारयति धूमत्वादिकं त्विति । नन्ववच्छेदकत्व-

मन्यूनानतिरिक्तवृत्तित्वं तच्च धूमत्वादेर्जलादिसाधारणायोगोलकत्वादिवैयधिकरण्यन्यूनवृत्तित्वादित्यत आह अवच्छेदकत्वं चेति । तादृशवैयधिकरण्यावच्छेदकत्वं चेत्यर्थः । वक्ष्यमाणप्रयोजनानुरोधेन तच्छून्यावृत्तित्वरूपतदनतिरिक्तवृत्तित्वपदार्थे तच्छून्ये धर्मत्वमधिकं निवेशयति तच्चेति । धर्मत्वं वृत्तिमत्त्वं नातिप्रसङ्ग इति गगनादेर्गगनत्वादिवैयधिकरण्यशून्यत्वेऽपि धर्मत्वविरहेण तादृशधर्मावृत्तित्वस्य द्रव्यत्वादावसत्त्वादिति भावः । अथ तच्छून्यधर्मावृत्तित्वमित्यत्र साध्यतावच्छेदकताघटकसम्बन्धेन धर्मवृत्तित्वं निवेशनीयमन्यथा धूमत्वादेरपि कालिकादिसम्बन्धेनायोगोलकत्वादिवैयधिकरण्यशून्यवह्न्यादिवृत्तित्वेनावच्छेदकत्वानुपपत्तेः तथा च द्रव्यवान् मेयत्वादित्यत्र गुणत्वादिवैयधिकरण्यशून्ये गुणादिवृत्तिसत्त्वगुणत्वादौ साध्यतावच्छेदकताघटकसमवायसम्बन्धेन वृत्तेरप्रसिद्ध्या द्रव्यत्वादेः गुणत्वादिवैयधिकरण्यावच्छेदकत्वानुपपत्तिः न च समवायेन तस्य साध्यत्वे साधनसमानाधिकरणघटत्वादिवैयधिकरण्यावच्छेदकत्वं द्रव्यत्वस्य सुघटं तद्वैयधिकरण्यशून्ये घटरूपादौ समवायेन वृत्तेः प्रसिद्धेरिति नातिव्याप्तिरिति वाच्यम् । अतिव्याप्तिवारणसम्भवेऽपि धर्मपदानुपादाने गुणत्ववैयधिकरण्यावच्छेदकत्वानुपपत्त्या ऽतिव्याप्तिप्रदर्शनात् तत्पदोपादानेऽपि तद्वैयधिकरण्यावच्छेदकत्वानुपपत्त्या सन्दर्भविरोधस्य दुर्वारत्वात् द्रव्यवान् द्रव्यसमवायिगुणान्यतरत्वात् सत्तावद्वान्मेयत्वादित्यादावतिव्याप्तेर्दुर्वारत्वाच्च तत्र साध्यतावच्छेदकद्रव्यत्वसत्त्वादौ द्रव्यवृत्तिधर्मवैयधिकरण्यावच्छेदकत्वाप्रसक्तेः द्रव्यावृत्तेर्गुणत्वादिवैयधिकरण्यशून्ये साध्यतावच्छेदकताघटकसमवायेन वृत्तेरप्रसिद्ध्या तद्वैयधिकरण्यावच्छेदकभेदकूटस्याव्याहतत्वादिति चेन्न तच्छून्यधर्मावृत्तित्वमित्यनेन स्वाधिकरणतच्छून्यधर्मसामान्यकत्वस्य तदाश्रयस्वाश्रयधर्मसामान्यकत्वस्य वा विवक्षितत्वात् । एतेन तदनधिकरणमात्रवृत्तित्वं साध्यतावच्छेदकसम्बन्धेन वाच्यम् । अन्यथा धूमादेः कालिकादिसम्बन्धेनायोगोलकवृत्तितया धूमत्वाद्यवच्छिन्नस्यायोगोलकत्वाद्यनधिकरणमात्रवृत्तित्वानुपपत्तेः तथा च समवायेन प्रमेयत्वावच्छिन्नसाध्यके वाच्यत्वादिहेतावतिव्याप्तिः तत्र व्यभिचारानि-

रूपकाधिकरणवृत्तिजातित्वाद्यनधिकरणमात्रसमेवतत्त्वशून्ये ऽभावादौ मेयत्वादेर्वृत्त्याऽवच्छेदकत्वानुपपत्तेः साध्यतावच्छेदकसम्बन्धेन सम्बन्धत्वरूपधर्मत्वानिवेशेऽपि तद्दोषतादवस्थ्यं जात्यादौ समवायेन वृत्त्यप्रसिद्ध्या जातित्वादिवैयधिकरण्यशून्यसमवेताप्रसिद्धेः जातित्वादिवैयधिकरण्यावच्छेदकत्वस्य साध्यतावच्छेदके दुरुपपादत्वादित्यपि निरस्तं मेयत्वाश्रयीभूतसमवेतसामान्यस्य जातित्वाद्यनधिकरणमात्रसमवेतत्वरूपजातित्वादिवैयधिकरण्याश्रयतया मेयत्वादेस्तदवच्छेदकत्वानिर्वाहात् । केचित्तु साध्यतावच्छेदकसम्बन्धेन यत्सम्बद्धत्वं यश्च तादृशसम्बन्धेन तदनधिकरणमात्रवृत्तित्वस्याभावस्तदुभयाभाववद्यावत्त्वाश्रयकत्वविवक्षणान्न दोषः सम्बद्धत्वं सम्बन्धप्रतियोगित्वं न तु सम्बन्ध एवातो यत्र संयोगः साध्यतावच्छेदकसम्बन्धस्तत्रापि सम्बद्धत्वं स्वरूपसम्बन्धेनैव वर्तते अतो वैयधिकरण्याभावानुरोधात् स्वरूपसम्बन्धावच्छिन्नाभावनिवेशे संयोगस्य तेन सम्बन्धेनावृत्त्या तदभाववत्तादृशसाध्यतावच्छेदकसम्बद्धत्वोभयस्य स्वरूपसम्बन्धावच्छिन्नाभावः केवलान्वयीति तमादायावच्छेदकलक्षणातिव्याप्तिरिति निरस्तं न च सम्बद्धत्वस्य स्वरूपसम्बन्धेन वृत्तावपि स्वरूपाननुगमेनैकैकस्वरूपसम्बन्धेनोभयाभावस्य केवलान्वयितया तद्दोषतादवस्थ्यमिति वाच्यं स्वरूपाणामननुगमेऽपि अनतिप्रसक्तेन येन केनचिद्रूपेण तदनुगमसंभवात् अन्यथा विषयादिभेदेन विभिन्नस्य प्रमाविषयत्वादेः प्रमेयत्वत्वादिनापि केवलान्वयित्वानुपपत्तिः तद्घटकसम्बन्धाननुगमादित्याहुः ।

अथ तदनधिकरणमात्रवृत्तित्वं तदधिकरणावृत्तित्वे सति तदनधिकरणवृत्तित्वं तत्र सत्यन्तनिवेशादेव सामञ्जस्ये विशेष्यदलवैयर्थ्यं तत्परित्यागे च सत्यन्तस्यावृत्तिसाधारणतया तच्छून्यत्वमात्रस्यैवावृत्तिव्यावृत्ततया धर्मत्वोपादानविरोधः न च तदधिकरणावृत्तित्वमात्रनिवेशे प्रमेयत्वादेरित्यादिमूलासङ्गतिरिति विशेष्यदलनिवेशनमावश्यकं तदधिकरणावृत्तित्वशून्यत्वादन्यस्यावृत्तिसाधारणस्य विशिष्टशून्यत्वस्याभावान्तरतया चावैयर्थ्यमिति वाच्यं वृत्त्यंशमात्रस्यैव विशेष्यविधया निवेशेनैवाभावान्तरस्य घटकत्वात् तदनाधिकरणत्वांशस्या-

व्यावर्तकस्य निवेशे व्यर्थविशेषणतया दुर्वारत्वात् वैयर्थ्यभिया तदंशस्यैव परित्यागे प्रमेयत्वाद्यधिकरणावृत्तिवृत्तिमतो ऽप्रसिद्ध्या प्रमेयत्वादेरिति मूलसङ्गतावपि महानसादावित्ति मूलस्य वह्नित्वादौ सम्बन्धान्तरावच्छिन्नात्यन्ताभावादिघटितवह्न्यादिरूपसाधनसमानाधिकरणधर्मवैयधिकरण्यावच्छेदकत्वोपपादनपरतया दीधितिकारव्याख्यानासङ्गतेर्दुर्वारत्वात्। एतेनावृत्तिव्यावृत्ततदधिकरणताव्यापकभेदप्रतियोगितावच्छेदकत्वमेव तद्वैयधिकरण्यमित्यपि निरस्तं तथापि साधनसमानाधिकरणधर्मानधिकरणस्याप्रवेशे दीधितिकारीयतन्मूलव्याख्यानासङ्गतिरिति चेन्न तदनधिकरणमात्रवृत्तित्वमित्यनेन स्वव्यापकतदनाधिकरणतावत्त्वस्य विवक्षिततया तन्मूलसङ्गतेर्धर्मपदसार्थक्यस्य चोपपत्तेः न च तादृशमूलसङ्गमनस्य तदनाधिकरणेतरावृत्तित्वनिवेशनेनापि सम्भवति निरुक्तवैयधिकरण्यं निवेश्य धर्मपदोपादानमयुक्तमिति वाच्यं तदनाधिकरणेतरावृत्तित्वमित्यस्य तदनाधिकरणेतरवृत्तित्वप्रतियोगिकाभावार्थकत्वे तादृशव्यक्तिविशेषाभावस्य तत्समानाधिकरणसाधारण्यतया तच्छून्याप्रसिद्धेः तादृशवृत्तित्वत्वावच्छिन्नाभावार्थकत्वे तादृशावृत्तित्वत्वस्य स्वसमानाधिकरणतदधिकरणवृत्तित्वापेक्षया गुरुशरीरत्वेनाभावप्रतियोगितानवच्छेदकतया तादृशाभावाप्रसिद्ध्या तस्य तदर्थकत्वानुपपत्तेरिति तच्छून्यधर्मावृत्तित्वरूपावच्छेदकत्वनिवेशे पक्षतदव्यभिचारिण्युभयसाध्यके विशेष्याव्यभिचारिणि विशिष्टसाध्यके च व्यभिचारिण्यतिप्रसङ्गस्याग्रे दर्शनीयतया कल्पान्तरमाह वस्तुतस्त्विति।

(दी०) वस्तुतस्तु तादृशधर्मानधिकरणमात्रवृत्तित्वावच्छिन्नाधिकरणताकत्वं तदवच्छेदकत्वं वाच्यं तेन सत्ताद्रव्यत्वोभयवान् गुणान्यत्वविशिष्टसत्तावान् वा जातिमत्त्वादित्यादौ नातिप्रसङ्गः। सत्ताया गुणत्वाभाववन्मात्रवृत्तित्वाविरहेऽपि उभयत्वावच्छिन्नाधिकरणताया गुणत्वाभाववन्मात्रवृत्तित्वात्। प्रमेयत्वादेरिति। ननु व्यतिरेकित्वेन धर्मो विशेषणीयः वस्तुतस्तु

यावत्पदं तादृशस्य कस्यापि न वैयधिकरण्यावच्छेदकमेतावन्मात्र-स्फोरणाय तथा च साधनसमानाधिकरणधर्मनिरूपितवैयधिकरण्यावच्छेदकं यद्यद्भिन्नधर्मवत्ता यावत्तादृशावच्छेदकत्वशून्यधर्मवत्ता वा समं सामानाधिकरण्यमिति पर्यवसितमतो दोषान्तरमाह महानसादाविति । तथा च तदनधिकरणत्वं तदभावाधिकरणत्वं तद्भिन्नत्वं वा द्वयमपि दुष्टमित्यर्थः एतेन तदधिकरणावृत्तित्वमत्र वैयधिकरण्यमिति निरस्तं समवायितया महानसवृत्तित्वं वह्नौ नास्तीतिप्रतीतेर्वह्न्यादेरपि तादृशवैयधिकरण्याधिकरणत्वात् सम्बन्धविशेषेण वैयधिकरण्यविवक्षायां तु नोक्त दोष इति ध्येयम् ।

(गा०) यद्यप्यत्रापि तदनधिकरणमात्रवृत्तित्वं स्वव्यापकतदनधिकरणताकत्वमेव न तु तदधिकरणावृत्तित्वे सति तदनधिकरणवृत्तित्वं वृत्तिमत्त्वं वा तदभावप्रवेशेन उक्तरीत्या विशेष्यसार्थक्यस्योपपादयितुमशक्यत्वात् नापि तदधिकरणावृत्तित्वमात्रं तथा सति गगनादौ प्रमेयत्वादेस्तादृशवैयधिकरण्यसत्त्वेन गगनत्वाद्यवच्छिन्नाधिकरणत्वाप्रसिद्धया गगनत्वादौ निरुच्यमानवैयधिकरण्यावच्छेदकत्वासम्भवेन प्रमेयत्वादेरिति मूलस्य वैयधिकरण्यावच्छेदकाप्रसिद्ध्यर्थकतया सङ्गमयितुं शक्यत्वेऽपि उक्तक्रमेण दीधितिकारीयमूलव्याख्यानासङ्गतेर्दुर्वारत्वात् तदनधिकरणमात्रवृत्तित्वावच्छिन्नकत्वनिवेशेनैवोपपत्तेरधिकरणतानिवेशो व्यर्थः तदनधिकरणमात्रवृत्तित्वावच्छिन्नकत्वस्य स्वविशिष्टव्यापकतदनधिकरणताकत्वरूपतया गुणत्वाद्यनधिकरणसत्ताद्रव्यत्वोभयत्वविशिष्टसत्तात्वाश्रयसत्तायाः सत्त्वेऽपि गुणत्वाद्यनधिकरणत्वेऽपि तादृशोभयत्वादिविशिष्टसत्तात्वावच्छिन्नव्यापकतायाः अनपायेन तादृशोभयत्वादौ तदनधिकरणमात्रवृत्तित्वावच्छिन्नकत्वरूपवैयधिकरण्यावच्छेदकत्वस्यापि निर्वाहात् । तथापि विशिष्टाधिकरणतागर्भविशिष्टनिरूपितव्यापकतालाभायैवाधिकरणतापदं वस्तुतो मूलोक्तदोषाणामनिष्क्रष्टलक्षणे यथाकथञ्चित् स-

क्षमणीयत्वेन निष्कृष्टलक्षणे तदधिकरणावृत्तित्वरूपवैयधिकरण्यमेव प्रवेश्यं न तु स्वव्यापकतदनधिकरणताकत्वरूपमित्याशयेन तदधिकरणतापदोपादानं तादृशवैयधिकरण्यांशे स्वविशिष्टाधिकरणत्वे तादृशवैयधिकरण्यप्रवेशे विशिष्टतद्विशेषणत्वोपगमे वक्ष्यमाणातिव्याप्तिरेव दुर्वारा गुणत्वाद्यनधिकरणे सत्तायाः वृत्तौ उभयत्वविशिष्टसत्तात्वाद्यवच्छिन्नायामपि तस्यां तदधिकरणावृत्तित्वरूपतदनधिकरणमात्रवृत्तित्वस्योपपादयितुमशक्यत्वात् वृत्तेर्व्याप्यवृत्तितया भिन्नरूपेणापि तद्वति तदभावात् एवमधिकरणतापदानुपादाने स्वविशिष्टे साध्यतावच्छेदकसम्बन्धेनैव तदधिकरणावृत्तित्वस्य निवेशनीयतया जातिमान् मेयत्वादित्यादौ जातित्वाद्यधिकरणे समवायादिना वृत्तेरप्रसिद्ध्या जातित्वादौ जातित्वादिवैयधिकरण्यावच्छेदकत्वं दुरुपपादम् अधिकरणतापदमधिकरणतासामान्यपरम् । अन्यथा द्रव्यगुणादिवृत्तित्वविशिष्टसत्तादिनिरूपिताधिकरणताविशेषैरेव तत्र तत्र शुद्धसत्तात्वाद्यवच्छिन्नवृत्त्याद्युपपत्तेः शुद्धसत्तात्वाद्यवच्छिन्ननिरूपिताखण्डाधिकरणतान्तरानुपगमेन यत्किञ्चिद्विशिष्टाधिकरणतया गुणत्वाद्यनधिकरणमात्रवृत्तिताभावाय शुद्धसत्तात्वादेरपि गुणत्वादिवैयधिकरण्यावच्छेदकत्वापत्तिः एवं च धूमादेः कालिकसम्बन्धावच्छिन्नाधिकरणतया अयोगोलकादिवृत्तितया धूमत्वादेरयोगोलकत्वादिवैयधिकरण्यावच्छेदकत्वानुपपत्तिरिति साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाधिकरणता विशेषणीया न च तादात्म्यादिवृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः सम्बन्धितायाः एव निवेश्यत्वात् न च सम्बन्धितायाः सम्बन्धरूपतया संयोगेन दण्डादेः साध्यत्वे समवायेन दण्डसमवेतसंयोगादिहेतावतिव्याप्तिः स्वस्य स्वानधिकरणत्वेऽपि स्वसमानाधिकरणस्वसंयोगाधिकरणतायाः दण्डत्वाद्यवच्छिन्नसंयोगस्य साधनसमानाधिकरणतद्दण्डत्वाद्यधिकरणवृत्तित्वेन तद्वैयधिकरण्यावच्छेदकत्वानुपपत्तेः एवं समवायैकत्वमते समवायेन साध्यतायां सद्धेतौ साधनाधिकरणे सर्वत्र समवेतमात्रस्यैव समवायसत्त्वादवच्छेदकाप्रसिद्ध्याऽव्याप्तिरिति वाच्यं सम्बन्धानुयोगितायाः एव सम्बन्धित्वरूपत्वा-

त्सम्बन्धावच्छिन्नप्रतियोगिताकत्वविशिष्टसाध्यतावच्छेदकसम्बन्धानुयोगितायास्तदनाधिकरणमात्रवृत्तित्वं तत्त्वमित्यर्थपर्यवसानेन सर्वसामञ्जस्यात् स्वप्रतियोगिकसंयोगस्य स्वस्मिन् सत्त्वेऽपि तदनुयोगिताया असम्भवात् अन्यथा संयोगेन स्वस्मिन् स्वविशिष्टबुद्धेः प्रमात्वापत्तेः एवं समवायैक्यमते समवायानुयोगिताभेदस्यातिप्रसङ्गभङ्गायावश्यकतया उक्तानुपपत्त्यनवकाशात् । अथैवमपि महाकालो घटवान् महाकालपरिमाणादित्यादौ साधनसमानाधिकरणमहाकालवृत्तिधर्मवैयधिकरण्यावच्छेदकाप्रसिद्ध्याऽव्याप्तिः । अवृत्तिगगनत्वाद्यवच्छिन्नस्य कालिकसम्बन्धेन सम्बन्धित्वाप्रसिद्ध्या गगनादेः कालवृत्तितामते महाकालेऽपि तादृशसम्बन्धित्वसत्त्वात् गगनत्वादेरपि तथात्वायोगात् साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये यद्विशिष्टप्रतियोगिकत्वतदनधिकरणमात्रवृत्तित्वाभावोभयाभाववत्त्वं तदित्युक्तौ गगनादेः कालावृत्तितामते गगनत्वादेरुक्तस्थले ऽवच्छेदकत्वोपपत्तावपि विषयितादिसम्बन्धेन घटादिसाध्यकनित्यज्ञानत्वादिहेतुके तदप्रसिद्धिर्दुर्वारैव वस्तुमात्रस्यैव नित्यज्ञानवृत्तिविषयिताप्रतियोगित्वात् विषयितासामान्ये उभयाभावस्य दुर्घटत्वात् न च यद्धर्मावच्छिन्ननिरूपितयत्तत्सम्बन्धावच्छिन्नाधिकरणता साधनसमानाधिकरणयत्किञ्चिद्धर्मानधिकरणमात्रवृत्तिः तद्धर्मावच्छिन्नतत्सम्बन्धावच्छिन्नाधिकरणताभिन्नत्वं साध्यसामानाधिकरण्यघटकमुक्तसाध्यतावच्छेदकावच्छिन्ननिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतायां निवेश्यं न तु साध्यतावच्छेदके ऽनवच्छेदकत्वम् उक्तस्थले च समवायादिसम्बन्धावच्छिन्नघटत्वावच्छिन्नाधिकरणतानां तथाविधानां भेदस्य कालिकविषयितासम्बन्धावच्छिन्नघटत्वावच्छिन्नाधिकरणतायां सत्त्वाल्लक्षणसमन्वय इति वाच्यम् । उक्तयुक्त्या महानसीयवह्नित्वविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणताभ्यः शुद्धवह्नित्वशुद्धसत्तात्वाद्यवच्छिन्नाधिकरणताया अनतिरेकितया उक्तरूपावच्छिन्नसाध्यके ऽव्याप्तेः । मैवं साधनसमानाधिकरणयत्किञ्चिद्धर्मानधिकरणमात्रवृत्तितावच्छेदकं यादृशयादृशरूपावच्छिन्नयद्यत्सम्बन्धावच्छिन्नाधिकरणतात्वं तादृशरूपावच्छिन्नतत्सम्बन्धा-

वच्छिन्नाधिकरणतात्वावच्छिन्नभेदकूटसमानाधिकरणं साध्यतावच्छेदकसम्बन्धावच्छिन्नयद्रूपावच्छिन्नाधिकरणतात्वं तद्रूपावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति विवक्षया सर्वानुपपत्तिपरिहारसम्भवात्, शुद्धवह्नित्वावच्छिन्नाधिकरणतात्वे प्रत्येकं महानसीयत्वपर्वतीयत्वादिविशिष्टवह्नित्वाद्यवच्छिन्ननिरूपिताधिकरणतात्वावच्छिन्नभेदकूटसमानाधिकरणत्वात् व्यभिचारिणि साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणतात्वस्यापि व्यभिचारानिरूपकाधिकरणवृत्तितानवच्छेदकतया तदवच्छिन्नभेदस्य निरुक्तभेदकूटान्तर्गतत्वात् तादृशाधिकरणतात्वे च तद्भेदसामानाधिकरण्यविरहेणातिव्याप्त्यनवकाशादिति कृतं विस्तरेण । पूर्वकल्पपरित्यागे बीजमाह तेनेति । तदनाधिकरणमात्रवृत्तिताशून्यधर्मावृत्तित्वस्थले तादृशधर्मोपर्याप्तत्वनिवेशे सत्ताद्रव्यत्वोभयत्वादेस्तथाविधसत्तापर्याप्तत्वविरहेणावच्छेदकत्वमुपपद्यत इत्याशयेन विशिष्टसाध्यकानुसरणं गुणत्वाभाववन्मात्रवृत्तित्वविरहेऽपीत्यनेन तद्वृत्तितया उभयत्वादेः पूर्वकल्पे ऽवच्छेदकत्वासम्भवः सूचितः महानसादावित्यादिमूलं साधनाधिकरणे वह्नितद्वत्त्यन्ताभावान्योन्याभावप्रदर्शकं सिंहगुहावलोकनन्यायेन पूर्वलक्षणद्वयदूषणपरतया साम्प्रदायिका व्याचक्षते स्वयं च तेषामसामर्थ्यसूचनाय प्रकृतलक्षणपरतया तत्सङ्गमयिष्यन् तदाकाङ्क्षामुत्थापयितुं प्रमेयत्वादेरिति दूषणमुद्धरति नन्विति । व्यतिरेकित्वेन साध्यतावच्छेदकसम्बन्धेन किञ्चिदधिकरणे वर्तमानो यो व्यतिरेकस्तत्प्रतियोगित्वेन तेन समवायेन साध्यतायां साधनसमानाधिकरणस्य जात्यादिनिष्ठव्यतिरेकप्रतियोगिनः सत्त्वादेतदनधिकरणमात्रे साध्यतावच्छेदकसम्बन्धेनाधिकरणत्वाप्रसिद्धावपि नाव्याप्तिः एतेनाकाशादिरूपव्यतिरेकप्रतियोग्याकाशाभावाद्यनधिकरणाप्रसिद्धिभयेनान्योन्याभावप्रतियोगितावच्छेदकपरतया केषां चिद्व्यतिरेकिपदव्याख्यानमश्रद्धेयम् यद्यपि प्रमेयत्वादेरपि किञ्चित्सम्बन्धावच्छिन्नव्यतिरेकप्रतियोगित्वमक्षतमेव तथापि येन येन सम्बन्धेन यद्यत्साधनसमानाधिकरणं तेन तेन सम्बन्धेन तदनधिकरणमात्रवृत्तितानवच्छेदकत्वे विवक्षणीये स्वनिष्ठव्यतिरेकप्रतियोगितावच्छेदकत्वस्य येन सम्बन्धेनेत्यत्र

सम्बन्धे विशेषणत्वोपगमाच्च दोषः । अत्र चरमनिरुक्तस्यावच्छेदकत्वस्य स्वत्वगर्भतया तत्तद्व्यक्तिविश्रामात् व्यभिचारिण्येकधर्मवैयधिकरण्यानवच्छेदकस्यापि साध्यतावच्छेदकस्य धर्मान्तरवैयधिकरण्यावच्छेदकत्वेन तत्तद्धर्मवैयधिकरण्यावच्छेदकानामेकैकभेदनिवेशासम्भव इति यावन्तो वैयधिकरण्यावच्छेदकधर्माः प्रातिस्विकरूपेण तावद्भेदकूटवत्त्वनिवेशनस्यावश्यकत्वे साधनसमानाधिकरणधर्मे यावत्त्वविशेषणमनर्थकं व्यभिचारिणि एकधर्मवैयधिकरण्यानवच्छेदकस्यापि साध्यतावच्छेदकस्य धर्मान्तरवैयधिकरण्यावच्छेदकत्वेनातिप्रसङ्गविरहादिति व्यतिरेकित्वस्य धर्मविशेषणत्वमन्तरेणैव सामञ्जस्यं प्रमेयत्वादेर्वैयधिकरण्याप्रसिद्धावपि येषां वैयधिकरण्यं प्रसिद्धं तदवच्छेदकभेदकूटमादाय सद्धेतौ लक्षणगमनसम्भवादित्याशयेन धर्मे यावत्त्वोत्कीर्तनं यावदवच्छेदकभेदकलाभार्थकतया व्याचष्टे वस्तुतस्त्विति । तादृशस्य साधनसमानाधिकरणस्य कस्यापि न वैयधिकरण्यावच्छेदकं साध्यतावच्छेदकमिति शेषः । एतावता लक्षणं कीदृशमित्याकाङ्क्षायामाह तथा चेति । साधनसमानाधिकरणेति तादृशयत्किञ्चिदेकधर्मवैयधिकरण्यावच्छेदकं यद्यदित्यर्थः तेन साधनसमानाधिकरणधर्मत्वावच्छिन्नानधिकरणाप्रसिद्धावपि न क्षतिः विशिष्टवह्नित्वादिरूपवैयधिकरण्यावच्छेदकधर्मभेदस्य शुद्धवह्नित्वादावसत्वादव्याप्तिरतो ऽवच्छेदकानां तत्तद्व्यक्तित्वावच्छिन्नभेदकूटनिवेशनपक्षं परित्यज्यावच्छेदकताव्यक्तीनां तत्तद्व्यक्तित्वेनात्यन्ताभावकूटं निवेशयति यावत्तादृशावच्छेदकत्वशून्येति । तादृशावच्छेदकत्वं यद्यत्तच्छून्येत्यर्थः विशेषणविशेष्यान्तर्भावेन वह्नित्वादौ पर्याप्तं यदवच्छेदकत्वं तदभावः केवलविशेष्ये ऽक्षत एवेति भावः । न च यद्धर्मावच्छिन्नाधिकरणता तादृशधर्मानाधिकरणमात्रवृत्तिस्तद्धर्मस्वरूपमवच्छेदकत्वं विशिष्टवह्नित्वादौ विशिष्टवह्नित्वत्वादिरूपमेव यद्यत्पदेन तद्व्याप्यासज्यवृत्त्येवेति कथं तदभावः शुद्धवह्नित्वादाविति वाच्यम् यद्रूपावच्छिन्नपर्याप्तावच्छेदकतानिरूपकाधिकरणतासामान्यं तादृशानधिकरणमात्रवृत्ति तादृशधर्मवत्त्वरूपवैयधिकरण्यावच्छेदकतानिवेशान्महानसीयवह्नित्वाद्यवच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वस्य महानसीयत्वादि-

समुदाये व्यासज्यवृत्तितया तत्पर्याप्त्यवच्छेदकधर्मस्यापि तथात्वेनानुपपत्त्यभावात् । वस्तुतस्तु यादृशावच्छेदकतानिरूपकाधिकरणतासामान्यं तादृशधर्मानधिकरणमात्रवृत्ति तादृशावच्छेदकतारूपमेव वैयधिकरण्यावच्छेदकत्वं निवेशनीयं महानसीयवह्नित्वावच्छिन्नाधिकरणतानिरूपकतावच्छेदकत्वं च महानसीयत्वादौ व्यासज्यवृत्तीति न दोषः तत्तदवच्छेदकतात्यन्ताभावापेक्षया तदवच्छेदकत्वावच्छिन्नभेदस्य धर्मिनियमाधिक्येन गुरुतया न तन्निवेशः तत्र विशिष्टस्यावच्छेदकत्वे शुद्धस्यानवच्छेदकत्वानुपपत्तिभयेन व्यासज्यवृत्तिधर्मावच्छिन्नात्यन्ताभावस्येव तादृशधर्मावच्छिन्नभेदस्यापि एको न द्वावित्यादिप्रतीतिबलेन तद्धर्मवति स्वीकारात् विशिष्टपर्याप्तावच्छेदकतावच्छिन्नभेदस्य शुद्धविशेष्येऽक्षतत्वात् महानसादौ वह्नितद्वतोरत्यन्ताभावान्योन्याभावसत्त्वेन प्रकृतलक्षणक्षतिमाविष्करोति तथा चेति । तदनधिकरणत्वं वैयधिकरण्यघटकं । इयमपि दुष्टमिति साधनसमानाधिकरणस्य वह्नेरिव तादृशोभयावधितदनधिकरणत्वघटितवैयधिकरण्यावच्छेदकत्वस्य वह्नित्वावच्छिन्ने सत्त्वादिति भावः । नचैवं सर्वस्यैव वस्तुनो घटाद्यनधिकरणतया मात्रपदव्यवच्छेद्याप्रसिद्ध्या वह्नित्वावच्छिन्नस्य वैयधिकरण्यं दुरुपपादमिति वाच्यं स्वव्यापकतदनधिकरणताकत्वरूपतदनधिकरणमात्रवृत्तित्वस्य सूपपादत्वात् तदधिकरणावृत्तित्वरूपवैयधिकरण्यप्रवेशे प्रमेयत्वादेरित्यादिदूषणानवकाशात्तन्मूलन्यूनताभङ्गाय तत्पक्षेऽपि दूषणान्तरमाह एतेनेति । सम्बन्धभेदेन वह्न्यादिवैयधिकरण्यस्य वह्नौ सत्त्वेनेत्यर्थः तदेव स्फुटीकरोति समवायितयेति । एतच्च वृत्तिविशेषणं तादृशेति यत्किञ्चित्सम्बन्धावच्छिन्नवह्न्यधिकरणवृत्तित्वाभावरूपेत्यर्थः । तादृशधर्मव्यासज्यवृत्तित्वसामान्याभावनिवेशे च क्वचिद्व्यभिचारिण्यतिव्याप्तिरवच्छेदकाप्रसिद्ध्या क्वचित्सद्धेतावव्याप्तिरपि द्रष्टव्या । सम्बन्धविशेषेणेति । साधनवति येन सम्बन्धेन यद्वर्तते तेन सम्बन्धेन तदधिकरणत्वगर्भस्य उभयत्र विशेषणताविशेषगर्भस्य वा वैयधिकरण्यस्य विवक्षायामित्यर्थः नोक्तदोषः नोक्तोऽपि दोषः । केचित्तु उक्तेति विशेषणान्महाकालो घटवान् कालपरिमाणादित्यादौ अवच्छेदकाप्रसिद्धिरूपदोषो दुर्वार एवेति सूचितमित्याहुः । तत्र ताद-

शदोषस्यापि पूर्वमुद्धृतत्वात् ।

(चि०) अथानौपाधिकः सम्बन्धो व्याप्तिः उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकः व्यापकत्वं तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं व्यभिचारे चावश्यमुपाधिः प्रतियोगित्वं न विरोधित्वं सहानवस्थाननियमलक्षणं गोत्वाश्वत्वयोरतथात्वात् । अन्योन्याभावप्रतियोगिन्यसत्त्वाच्च । किन्तु यथाधिकरणाभावयोः स्वरूपविशेषः सम्बन्धः तथा प्रतियोगित्वमनुयोगित्वमपि अभावविरहात्मत्वं वेति चेत् यत्किञ्चित्साध्यव्यापकसाधनाव्यापकधर्मनिषेधो न धूमादौ प्रकृतसाध्यव्यापकसाधनाव्यापकधर्मश्च सिद्ध्यसिद्धिभ्यां न निषेद्धुं शक्यः यावत्साध्यव्यापके प्रमेयत्वादौ साधनाव्यापकत्वं यावत्साधनाव्यापके च घटत्वादौ साध्यव्यापकत्वं निषिध्यत इति चेन्न व्यधिकरणत्वात् ।

(दी०) उपाधिपदस्य साध्यसमव्याप्तवचनतया आत्माश्रयप्रसङ्गादाह साध्यव्यापकेति । व्यापकत्वं व्याप्तिनिरूपकत्वमात्माश्रयादिग्रस्तमत आह तद्वन्निष्ठेति । यत्रोपाधिरव्याप्यवृत्तिर्नानाव्यक्तिको वा तत्रापि व्याप्यवृत्तिरखण्डश्चान्ततस्तद्भिन्नत्वप्रकारकप्रमाविषयत्वाभावादिरेवास्ति यदि च तस्यापि विशेषणान्तरविशिष्टस्य द्वित्वाद्यवच्छिन्नस्य वा तत्राभावसम्भवस्तदा साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकीभूतसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वं दलद्वयार्थो बोध्यः । अनवस्थां निरसितुमाह प्रतियोगित्वमिति । सहेति । एकदेशकालावच्छेदेनेति

पूरणीयं तेन नाव्याप्यवृत्तेरभावस्य प्रागभावादेश्च प्रतियोगितायामव्याप्तिः। अन्योन्येति। अत्र समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववति महानसादौ संयोगादिना वह्न्यादेर्वृत्तेर्येन सम्बन्धेनाभावः तद्वति तेनावृत्तिर्विवक्षणीया इत्यश्च तेन सम्बन्धेनासम्बद्धत्वोक्तौ नायं दोषः अन्योन्याभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकतया तद्वति तेन सम्बन्धेन प्रतियोगिनोऽसम्बद्धत्वात् परं तु समवायेन सत्ताया अभावस्य प्रतियोगितायामव्याप्तिः तद्वति समवायेन वृत्तेरप्रसिद्धेः तादृशस्वसम्बन्धाधिकरणावृत्तितत्कत्वाभिधाने च व्यधिकरणसम्बन्धावच्छिन्नाभावप्रतियोगितायामव्याप्तिः सिद्धान्तलक्षणवक्ष्यमाणरीत्या च खण्डशः प्रसिद्ध्या तत्परिहारोऽपीति ध्येयम्। अभावाविरहात्मत्वमिति। न चान्योन्याभावप्रतियोगितत्वावच्छेदकयोरप्रसक्त्यतिप्रसक्ती प्रकृतोपयोगिप्रतियोगितामात्रस्य लक्ष्यत्वे तु लक्षणेऽत्यन्तपदवैयर्थ्यं सर्वत्र नित्यस्य नित्यसाधारणरूपावच्छिन्नस्य वा उपाधितासम्भवात् इतरथा तु भेदप्रतियोगितावारणाय संसर्गाभावपरतया तस्य सार्थकत्वादिति वाच्यम्। विरहपदस्य तज्ज्ञानप्रतिबन्धकज्ञानविषयार्थकत्वात्। प्रतिभाति हि तादात्म्येन प्रतियोगिज्ञानमन्योन्याभावबुद्धिं प्रतिबन्धकत्वं चात्रैककालावच्छेदेन एकत्रावर्तमानत्वम् अभावपदस्य च स्वाभावपरत्वात्। वस्तुतस्त्वेकसम्बन्धावच्छिन्नायास्तत्समानाधिकरणाभावप्रतियोगिताया अनवच्छेदकमपि भवत्येव सम्बन्धान्तरावच्छिन्नायास्तस्या अवच्छेदकमतो यत्सम्बन्धावच्छिन्नायाः साध्यसमानाधिकरणाभावप्रतियोगिताया अनवच्छेदकं तत्सम्बन्धावच्छिन्नाया एव, साधनसमानाधिकरणाभावप्रतियोगिताया अव-

च्छेदकं तद्वाच्यम् । तथा च संसर्गाभावत्वमनुपादेयमेव । वाशब्दोऽत्रास्वरससूचनाय । स च व्यधिकरणसम्बन्धेन सर्वस्य प्रतियोगिनस्तादृशभ्रमे मानाभावात् स्वाभावसम्बन्धित्वस्य स्वाभावज्ञानविषयत्वस्य वा लघोः सर्वत्र सम्भवित्वात् स्वाभावेत्यादौ षष्ठ्यर्थप्रतियोगितायाः प्रवेशात् तत्र स्वरूपसम्बन्धस्यैव शरणीकरणीयतया तस्यैवावश्यकत्वेन तथात्वौचित्याच्च । अभावत्वप्रतिबन्धकत्वयोः प्रतियोगिघटितत्वात् तथाविधव्यवहारगोचरस्यापि विना प्रतियोगितां निर्वक्तुमशक्यत्वाच्च ।

(गा०) आत्माश्रयेति साध्यसमव्याप्तत्वघटकसाध्यनिरूपितोपाधिनिष्ठव्याप्तेरप्यनौपाधिकरूपतयाऽनौपाधिकत्वशरीरेऽनौपाधिकत्वनिवेशादिति भावः । यद्यप्यनौपाधिकत्वरूपव्याप्तेः प्रकृतसाधनघटिततया साधनभेदेन भेद आवश्यकः तथा च साध्यसमव्याप्तोपाधिनिष्ठव्याप्तेः प्रकृतसाधननिष्ठव्याप्तिभिन्नत्वान्नात्माश्रयावकाशः तथापि सिद्ध्यसिद्धिव्याघातपरिहाराय साध्यसमव्याप्तस्य व्यभिचारित्वसम्बन्धावच्छिन्नाभावो विवक्षणीयः तत्र च प्रकृतसाधनाप्रवेशात्साधनभेदेन न व्याप्तेर्भेद इत्यभिप्रायेणेदम् आत्माश्रयादीति यावत्साध्यव्यापकव्यापकत्वरूपानौपाधिकत्वे यावत्साध्यव्यापकान्तर्गतं साध्यमपीति व्याप्तिनिरूपकत्वं यदि व्यापकत्वं तदा स्वनिष्ठव्याप्तिनिरूपकप्रकृतसाध्यकत्वघटितं तादृशानौपाधिकत्वं प्रकृतव्याप्तिघटितमित्यात्माश्रयः । यदि च यावत्साधनाव्यापकाव्यापकसाध्यसामानाधिकरण्यमनौपाधिकत्वं तदा प्रकृतसाध्यातिरिक्ते साधनव्यापकतां गृहीत्वापि घटादौ तदव्यापकत्वग्रहसम्भवेन प्रकृतसाधननिष्ठप्रकृतसाध्यव्याप्तिग्रहस्यानौपाधिकत्वग्रहे नापेक्षेति नात्माश्रयः अपि त्वनवस्थैवेत्यभिप्रायेणादिपदम् । ननु साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वघटितोपाधिलक्षणस्य एतद्रूपवान् सत्त्वादित्यादिस्थलीयैतत्संयोगाद्युपाधावव्याप्तिः , तेषामव्याप्यवृत्तितया साध्यवति तदभावसत्त्वात् एवं नानाव्यक्तिकार्द्रेन्धनाद्युपाधावपि तद्व्यक्तित्वाद्यवच्छिन्नाभावप्रतियोगित्वमात्रायाव्याप्तिरित्याशङ्कां

व्याप्तिलक्षणघटकानिरुक्तोपाधित्वस्य सकलोपाधिसाधारणत्वविरहेऽपि सर्वत्र व्यभिचारिणि किञ्चिदुपाधिसाधारण्येनैव व्याप्तिलक्षणातिप्रसङ्ग इति तदव्याप्तिर्न दोषायेति परिहरति यथोपाधिरिति । तद्भिन्नेति । अव्याप्यवृत्तिनानाव्यक्तिकतत्तदुपाधिभिन्नेत्यर्थः तद्वत्त्वप्रकारकप्रमाविषयत्वस्य विषयभेदेन भिन्नतया नाखण्डत्वं संयोगाद्युपाध्यभावप्रकारकप्रमाविषयत्वं केवलान्वयीति तदभावाप्रसिद्धिरतस्तदत्यन्ताभावमुपेक्ष्य तद्भेदमनुसृत्य तद्भेदाभावस्य प्रतियोगितावच्छेदकात्मकतया स एव दोष इति प्रमाविषयत्वानुधावनं साध्यवत्यपि तद्भेदप्रमाविषयतासम्भवाज्ज्ञानसामान्यमुपेक्ष्य प्रमानुधावनम् । आदिपदाद्व्यभिचारनिरूपकाधिकरणभेदादिपरिग्रहः अस्ति निरुक्तोपाधित्वाश्रय इति शेषः । एतावतैव तत्र नानोपाधिकत्वमिति भावः । ननु तादृशाखण्डोपाधेरपि किञ्चिद्देशकालवृत्तित्वविशिष्टस्य द्वित्वावच्छिन्नस्य वाभावः साध्यवत्यपि वर्तत इति तस्याप्युपाधित्वं न घटते यदि चाप्रतियोगिपदं प्रतियोगितानवच्छेदकावच्छिन्नपरं तदा सद्धेतौ साधनाव्यापकस्य घटादेर्द्रव्यत्वमेयत्वादिना साध्यव्यापकतामादायानौपाधिकत्वव्याघात इत्यत आह यदि चेति । केचित्तु विशिष्टाभावस्य विशेष्यविशेषणसम्बन्धप्रतियोगिकत्वमेव स्वीकुर्वन्ति द्वित्वावच्छिन्नाभावं च नाङ्गीकुर्वन्ति अत एव मणिकारेणापि तादृशाभावानभ्युपगमादिति सिद्धान्तग्रन्थे वक्ष्यते इत्यतो यदि सम्भव इत्युक्तं दलद्वयार्थ इति तथा च सद्धेतौ घटत्वादिना साधनाव्यापकस्य घटादेः प्रमेयत्वादिना साध्यव्यापकत्वेऽपि साध्यव्यापकतावच्छेदकस्य साधनव्यापकतानवच्छेदकत्वासम्भवान्न निरुक्तधर्मवत्त्वमिति [illegible] सोपाधितापत्तिरिति भावः । अत्र सम्बन्धादिविवक्षा स्वयमूह्या । सहानवस्थाननियमरूपविरोधितायाः प्रतियोगित्वस्वरूपत्वखण्डनस्य प्रकृतानुपयुक्तत्वशङ्काव्युदासाय तत्प्रयोजनं दर्शयति अनवस्थामिति । सहानवस्थाननियमस्य व्याप्तिरूपतया अनौपाधिकत्वघटकोपाधिताशरीरनिविष्टप्रतियोगितायामनौपाधिकत्वान्तरस्य निवेशे तद्घटकप्रतियोगित्वान्तरे चानौपाधिकत्वस्येत्येवं क्रमेण व्याप्तिविषयानवस्थामित्यर्थः । यद्यपि सहानवस्थाननि-

नियमस्तदधिकरणसामान्यावृत्तित्वं तच्च तदधिकरणवृत्तित्वत्वा-
वच्छिन्नाभावरूपं न व्याप्तिघटितमिति नानवस्थावसरः न च
तदभावव्याप्यत्वरूपसहानवस्थाननियमपदार्थाभिप्रायेणानवस्थाप्र-
दर्शनमिति वाच्यम् एवमप्यग्रे सत्ताभाववत्समवेताप्रसिद्ध्या सम-
वायेन सत्ताभावप्रतियोगितायामव्याप्तिप्रदर्शनस्यासङ्गत्यापत्तेः ।
तथापि तदधिकरणावृत्तित्वं यथाश्रुतं यदि च सहानवस्था न
नियमपदार्थस्तदा विशिष्टसत्ताद्यभावप्रतियोगित्वासङ्ग्रहः वि-
शिष्टस्यानतिरेकेण तत्र विशिष्टाभावाधिकरणावृत्तित्वस्य दुर्ल-
भत्वादितियदभाववन्निष्ठाधिकरणतासामान्ये यद्धर्मावच्छिन्ननिरू-
पितत्वाभावस्तत्त्वमेव विवक्षणीयं घटाभावादिमन्निष्ठान्यदीया-
धिकरणतायां पटादिनिरूपितत्वस्याभावसत्त्वादतिप्रसङ्गस्य वार-
णाय सामान्यपदोपादानं तदर्थञ्च व्याप्तिरित्यभिप्रायेणेदं ता-
दृशाधिकरणतायां प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वनिवे-
शस्यावश्यकतया ऽग्रे ऽप्रसिद्धिप्रदर्शनसङ्गतिः कपिसंयोगादेस्त-
दभावाधिकरणे भिन्नदेशावच्छेदेन घटादेः स्वध्वंसप्रागभावा-
धिकरणे भिन्नकालावच्छेदेन वृत्त्याऽव्याप्तिमाशङ्क्य पूरयति
एकेति । तथा च एकदेशावच्छिन्नं सदेककालावच्छिन्नं यदेकाधि-
करणावस्थानं तदभाव इत्यर्थः देशकालावच्छेदयोरनुगतै-
करूपेण निवेशस्तु न युक्तः कपिसंयोगादितदत्यन्ताभावयोरे-
ककालावच्छेदेन संयोगतत्प्रागभावयोश्चैकदेशावच्छेदेनैकाधि-
करणवृत्तितया तद्दोषतादवस्थ्यात् । यद्यप्येकदेशकालावच्छिन्नमि-
त्यादेरभावावच्छेदकदेशावच्छिन्नं तदवच्छेदककालावच्छिन्नं यत्तद-
धिकरणनिष्ठाधिकरणत्वं तन्निरूपकत्वं तत्सामान्ये यन्निरूपितत्वा-
भावस्तत्त्वं वा ऽर्थो न सम्भवति वृक्षनिष्ठकपिसंयोगावच्छेदकशा-
खायामपि तादृशसंयोगानुत्पाददशायां तत्र तदभावावच्छेदक-
त्वात् तादृशसंयोगावच्छेदककालस्यापि मूलावच्छेदेन तद-
भाववृत्तौ तथात्वाद्व्याप्तेर्दुर्वारत्वात् तथापि शाखावच्छेदेन कपि-
संयोगसत्त्वदशायामपि इदानीं शाखायां वृक्षो न कपिसंयोगीति
प्रतीत्यापत्तिवारणाय तादृशप्रतीत्या कालविशेषावच्छिन्नस्यैव दे-
शस्यावच्छेदकत्वमवगाह्यत इति स्वीकरणीयं तादृशदेशका-
लयोर्ध्वंसे ऽभाववृत्तौ पृथगवच्छेदकत्वसम्भवेऽपि तत्कालाव-

च्छिन्नतद्देशस्यानवच्छेदकत्वान्नातिप्रसङ्गः तथा च यत्कालावच्छिन्नयद्देशस्याभाववृत्त्यवच्छेदकत्वं तत्कालावच्छिन्नतद्देशावच्छिन्नत्वमेकदेशकालावच्छेदेनेत्यस्यार्थ इति न कोऽपि दोषः कालपदं क्षणपरं तेन दिवसात्मकस्थूलकालावच्छिन्नशाखादेः संयोगतदभावावच्छेदकत्वेऽपि न क्षतिः देशपदमवच्छेदकदेशान्तरानवच्छिन्नदेशपरमतो विभिन्नभागावच्छिन्नस्थूलावयवस्य प्रतियोगितदभावोभयावच्छेदकत्वसम्भवेऽपि न क्षतिः । अथैवमपि व्याप्यवृत्तेरवच्छेदकानभ्युपगमाद् घटत्वाभावप्रतियोगित्वासंग्रहः तदवच्छेदकस्यैवाप्रसिद्धेः न चैकदेशकालावच्छेदेनेत्यस्यानवच्छिन्नत्वविशेषणे तात्पर्यान्न दोष इति वाच्यं संयोगाद्यभावस्यानवच्छिन्नाधिकरणतावति गुणादौ संयोगादेरवृत्त्या संयोगाद्यभावस्य प्रतियोगित्वसंग्रहेऽपि संयोगादेरनवच्छिन्नाधिकरणत्वाप्रसिद्ध्या तत्प्रतियोगित्वासंग्रहात् न चाभावाधिकरणतायां न तद्विशेषणमपि तु तन्निष्ठाधिकरणतायामेवेति नायं दोष इति वाच्यमेवमपि कपिसंयोगादेः स्वसमानाधिकरणगगनाद्यभावप्रतियोगितापत्तेर्दुर्वारत्वात् । यत्तु व्याप्यवृत्तेरवच्छेदकानभ्युपगमे यदधिकरणनिष्ठाभावाधिकरणतायां यद्यत्क्षणावच्छिन्नयद्देशानवच्छेद्यत्वं तत्क्षणावच्छिन्नतद्देशानवच्छिन्नतदधिकरणनिष्ठाधिकरणत्वानिरूपकत्वे सति यदधिकरणनिष्ठस्वाधिकरणतायां यद्यत्क्षणावच्छिन्नयद्यद्देशानवच्छिन्नत्वं तत्क्षणावच्छिन्नतद्देशानवच्छिन्नतदधिकरणनिष्ठाधिकरणत्वानिरूपकतद्भावकत्वस्य विवक्षणीयत्वात् व्याप्यवृत्त्यभावप्रतियोगिन्यपि तस्याक्षतत्वात् तथाहि पटादौ घटत्वाभावाधिकरणता यद्देशकालानवच्छिन्ना तदनवच्छिन्ना व्याप्यवृत्तिपटत्वाद्यधिकरणताप्रसिद्ध्या तदनिरूपकत्वात् अनवच्छिन्नस्वाधिकरणतावद् घटादिनिष्ठतादृशपटत्वाभावाधिकरणत्वानिरूपकघटत्वाद्यभावकत्वाच्च व्याप्यवृत्तिघटत्वादेः स्वाभावप्रतियोगित्वानिर्वाहः घटत्वादेरव्याप्यवृत्तिस्वसमानाधिकरणसंयोगादिप्रतियोगितावारणाय सत्यन्तं संयोगादेर्गगनाद्यभावप्रतियोगितावारणाय विशेष्यं विभिन्नक्षणावच्छिन्नस्य संयोगविशेषावच्छेदकमूलादेस्तदभावावच्छेदकत्वाद् वृक्षादिनिष्ठतदभावाधिकरणतायां न मूलानवच्छेद्यत्वं किं तु प्रतियोग्यनाधिकरणघटाद्यवयवानवच्छेद्यत्व-

मेव तदनवच्छिन्ना च वृक्षादिनिष्ठसंयोगविशेषाधिकरणतापीति तत्राव्याप्तिरतः क्षणनिवेशः तन्निवेशे च यत्क्षणावच्छिन्नस्य मूलादेः प्रतियोग्यवच्छेदकत्वं तत्क्षणावच्छिन्नतदनवच्छेद्यत्वम- भावाधिकरणतायां तादृशतदनवच्छेद्यत्वं च न प्रतियोग्यधि- करणतायामिति तथाविधाधिकरणत्वान्तरानिरूपकत्वं प्रतियो- गिन्यक्षतमेवेति नाव्याप्तिरिति । तदपि न । मूलाग्रादिरूपविभिन्ना- वच्छेदेन मध्यभागरूपैकावच्छेदेन च वृक्षादौ वर्तमानयोः सं- योगयोरेकस्यापराभावप्रतियोगित्वापत्तेः एकसंयोगाभावाधिकरण- तायास्तादृशमध्यभागाद्यनवच्छिन्नत्वात् अपरसंयोगाधिकर- णताया स्तदनवच्छिन्नत्वेनापरसंयोगस्यतदनवच्छिन्नाधिकरणतान्त- राप्रतियोगित्वेन सत्यन्तदलसत्त्वात्तत्र संयोगावच्छेदका- रादिभागस्यापरसंयोगाभावाधिकरणतावच्छेदकत्वेन विशेष्यदल- सत्त्वात् । मैवं यादृशयादृशावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभ- याभाववन्निष्ठं यदभावाधिकरणत्वं तन्निष्ठं यत्तादृशावच्छे- दकानवच्छिन्नत्वावच्छिन्नत्वोभयाभाववदधिकरणत्वं तदनिरूपक- त्वविवक्षया सामञ्जस्यात् गगनादेः स्वाभावाभावत्वं नोपेयत इति स्वाभावनिष्ठप्रतियोगित्वासंग्रहो न दोषाय । अन्योन्याभाव- प्रतियोगिनि मूलोपदर्शितामव्याप्तिमुद्धरति अत्रेति । वह्न्यादेर्वृत्ते- रिति सम्बन्धविशेषमनन्तर्भाव्याभावाधिकरणवृत्तित्वसामान्या- भावनिवेशे ऽव्याप्तिरिति शेषः । येन सम्बन्धेनाभाव इति यः सम्बन्धो यदभावप्रतियोगितावच्छेदकतया ऽभिमत इत्यर्थः ए- वमप्यन्योन्याभावप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन वृत्यप्र- सिद्ध्या तत्र तेन सम्बन्धेन तदधिकरणावृत्तित्वं दुर्घटमत आह तेन सम्बन्धेनासम्बद्धत्वोक्ताविति । स्वयं दूषणान्तरमाह परं त्विति तद्वृत्ति सामान्यादाविति शेषः । समवायेन वृत्तेः प्र- तियोगितावच्छेदकीभूतसमवायेन स्वसम्बद्धत्वस्य तादृश इति प्रतियोगितावच्छेदकसम्बन्धेन स्वसम्बद्धं यदधिकरणं तद्वृत्ति- तदभावकत्वाभिधाने चेत्यर्थः तथा सति सत्तासमवाय्यवृत्तित्वस्य तदभावे सत्त्वेन उक्ताव्याप्तिपरिहारासम्भवादिति भावः । व्यधि- करणसम्बन्धेनेति संयोगादिना गुणाद्यभावप्रतियोगितायां तेन सम्बन्धेन गुणादिसम्बद्धाधिकरणाप्रसिद्ध्या ऽव्याप्तिरित्यर्थः । इदमुप-

लक्षणं प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिमत्यपि काले कालिकादिसम्बन्धेनाभावस्य वृत्त्या अनुयोगिताविशेषरूपाभावत्वावच्छेदकसम्बन्धेनावृत्तिरवश्यं वाच्या तथा च स्वरूपसम्बन्धेन सत्ताद्यभावस्य यः सत्तादिरूपोऽभावस्तत्प्रतियोगित्वासंग्रहोऽपि द्रष्टव्यः सत्ताद्यभावसम्बन्धाधिकरणे सामान्यादौ समवायादिरूपतादृशसम्बन्धेन वृत्तेरप्रसिद्धेः। वक्ष्यमाणरीत्येति यादृशसम्बन्धसामान्ये एकदेशकालाद्यवच्छिन्नयदभावाधिकरणानुयोगिकत्वस्य यद्रूपावच्छिन्नप्रतियोगिकत्वस्य च द्वयोर्व्यतिरेकस्तद्रूपवत्त्वं तादृशसम्बन्धेन तदभावप्रतियोगित्वमिति रीत्येत्यर्थः न च व्याप्यवृत्तेरवच्छेदकत्वानभ्युपगमे एकदेशकालाद्यवच्छिन्नाभावाधिकरणत्वाप्रसिद्ध्या तद्घटितोभयाभावाप्रसिद्धिरिति वाच्यम्। एकदेशकालाद्यवच्छिन्नयदभावाधिकरणानुयोगिकत्वस्थले यद्यदधिकरणनिष्ठाभावाधिकरणतायां यद्यद्देशकालानवच्छिन्नत्वावच्छिन्नत्वोभयाभावस्तत्तद्देशकालानवच्छिन्नत्वावच्छिन्नत्वोभयाभावस्य तत्तदधिकरणानुयोगिकत्वद्वयं निवेश्य तदुभयप्रतियोगिकत्वे तद्भिन्नत्वावच्छिन्नाभावनिवेशेन सामञ्जस्यात् न चैवमपि समवायैक्यमते समवायेन द्रव्यत्वाभावप्रतियोगित्वासंग्रहः प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणताधर्मिकोभयाभावविवक्षया अधिकरणभेदेनाधिकरणताभेदं व्यवस्थाप्य तत्संग्रहे चान्योन्याभावप्रतियोगिन्यव्याप्ति तादात्म्यसम्बन्धेनाधिकरणताया अप्रसिद्धेः सम्बन्धिता च सम्बन्ध एवेति तद्धर्मिकोभयाभावविवक्षणे पूर्वोक्त एव दोष इति वाच्यं प्रतियोगितावच्छेदकसम्बन्धनिरूपितानुयोगिताधर्मिकस्य यत्प्रतियोगिकत्वविशिष्टसम्बन्धप्रतियोगिकत्वनिरूपकयदभावाधिकरणवृत्तित्वोभयाभावस्य विवक्षया समवायैक्यमते ऽतिप्रसङ्गवारणाय द्रव्यादिनिष्ठद्रव्यत्वादिप्रतियोगिकत्वविशिष्टसमवायप्रतियोगिकत्वविवक्षयानुयोगितातो गुणादिनिष्ठतदनुयोगिताभेदस्याभ्युपेयत्वेन प्रतीकारसम्भवात् अधिकमग्रे वक्ष्यामः अवृत्तिगगनादेस्तदभावनिष्ठं प्रतियोगित्वं नोपेयत एव तत्स्वीकारे च यस्य येन सम्बन्धेनाधिकरणे यस्य येन सम्बन्धेनावच्छिन्ना एकावच्छिन्ना वा वृत्तिस्तत्तदुभयावृत्तिः स्ववृत्तिर्यो धर्मः स्वभिन्नत्वे सति तद्धर्मवत्त्वमेव तत्सम्बन्धावच्छिन्नस्वनिष्ठानुयोगिता-

निरूपकं तत्सम्बन्धावच्छिन्नप्रतियोगित्वमिति विवक्षणीयं तादृशधर्मश्च घटतद्भावान्यतरत्वादिकमेव स्वभिन्नत्वानिवेशात् स्वस्य न स्वप्रतियोगित्वम् । अवृत्तिद्वयस्य परस्परप्रतियोगित्ववारणाय वृत्तिमन्निष्ठत्वेन धर्मो विशेषणीयः एवमपि गोत्वादेरश्वत्वादिप्रतियोगिताप्रसङ्गवद् घटत्वादौ द्रव्यत्वाद्यभावप्रतियोगित्वप्रसङ्गतादवस्थ्यमेव स्वाभावविरोधित्वनिवेशे वक्ष्यमाणमत इव स्वाभावेत्यत्र षष्ठ्यर्थप्रतियोगितानिवेशे नात्माश्रयः न च द्रव्यत्वाभावादेर्घटत्वादिप्रतियोगिकत्वमिष्टमेव द्रव्यत्वाद्यभाववति घटत्वं नास्तीत्यादिप्रत्ययस्य द्रव्यत्वाभावादिविषयकत्वे क्षतिविरहात् घटत्वं द्रव्यत्वाभावप्रतियोगीतिव्यवहारश्च समनियताभावैक्यमते द्रव्यत्वाभाववद्द्रव्यसमवेतत्वविशिष्टाभावादीनामभेदवादिनामिवास्मन्मतेऽपीष्ट एव घटत्वत्वेन घटत्वं द्रव्यत्वाभावप्रतियोगीत्यादिव्यवहारोऽपि अधिकरणस्वरूपाभाववादिनां प्राभाकराणामिवास्माकमपीष्ट एव गोत्वादेरश्वत्वप्रतियोगिकत्वोपगमेऽपि क्षतिविरहः अश्वादौ गोत्वादिकं नास्तीतिप्रतीतेरश्वत्वादिविषयताया इष्टत्वात् गोत्वमश्वत्वप्रतियोगीति व्यवहारो घटत्वं पटत्वप्रतियोगीत्यादिव्यवहारश्चाधिकरणवृत्त्यसाधारणधर्मस्वरूपाभाववादिभिरिष्यत एवेति वाच्यम् एवं सति सर्वत्र विरुद्धधर्मेणैवाभावप्रत्ययोपपत्त्यावातिरिक्ताभावासिद्धिप्रसङ्गात् एवं विरोधिताघटकोभयाभावेऽपि प्रतियोगितान्तरनिवेशादनवस्थेति ध्येयम् । तत्त्वावच्छेदकेति प्रतियोगितावच्छेदकेत्यर्थः अप्रसक्त्यतिप्रसक्ती इति घटाद्यन्योन्याभावाद्यभावस्य तत्प्रतियोगितावच्छेदकघटत्वादाविति भावः । ननु नेदं प्रतियोगित्वपदमुख्यार्थनिर्वचनं किं तु व्याप्तिलक्षणप्रविष्टोपाधित्वघटकव्यापकतानिविष्टप्रतियोगितास्वरूपनिरूपणमेव तादृशप्रतियोगिताया भेदप्रतियोगिसाधारण्यविरहेऽपि न क्षतिः तावतापि व्याप्तिलक्षणस्य निर्दोषत्वादित्यत आह प्रकृतोपयोगीति । अत्यन्तपदवैयर्थ्यमिति धूमवान् वह्नेरित्यादौ चायोगोलकान्यत्वादिरूपोपाधेः साध्यवन्निष्ठभेदप्रतियोगितया व्यापकत्वानुपपत्तिरिति तद्वारणायैवात्यन्तपदोपादानं यदि चाभावाभावत्वरूपमन्योन्याभावप्रतियोगित्वमनुक्तं प्रतियोगित्वमुपाधित्वघटकव्यापकताशरीरे निवेश्यते तदा साध्यवन्निष्ठोपाधिभेदमादाय दोषस्यानवकाशात्तद्वैयर्थ्यमिति भावः । ननु सा-

ध्यवच्छिन्नध्वंसप्रागभावप्रतियोगिनि आर्द्रेन्धनादेरुपाधितानिर्वाहाया- त्यन्तपदोपादानं तस्यापि तद्ध्वंसाद्यभावरूपत्वादित्यत आह सर्वत्रेति शेषः नित्यस्य व्यभिचारनिरूपकाधिकरणभेदादेः द्वित्वाद्यवच्छि- न्नाभावप्रतियोगितामादायासम्भववारणार्थं प्रतियोगितानवच्छेद- करूपावच्छिन्नत्वाविवक्षाया आवश्यकत्वेनार्द्रेन्धनादेरपि ध्वंसादिप्र- तियोगितानवच्छेदकार्द्रेन्धनायोगोलकादिभेदान्यतरत्वादिनोपाधि- त्वसम्भव इत्याशयेनाह नित्यसाधारणेति। न च ध्वंसप्रागभावा- दीनां सामान्यधर्मो न प्रतियोगितावच्छेदक इति साध्यवच्छिन्न- ध्वंसप्रागभावादिरूपाभावप्रतियोगितावच्छेदकं नार्द्रेन्धनत्वमिति नित्यसाधारणधर्मपर्यन्तानुधावनमफलमिति वाच्यं स्वसमाना- धिकरणार्द्रेन्धनध्वंसासमानकालीनतत्प्रागभावानां तादृशतत्प्रा- गभावासमानकालीनतद्ध्वंसानामार्द्रेन्धनत्वस्यैव प्रतियोगि- तावच्छेदकत्वात् अन्यथा ध्वंसप्रागभावयोरत्यन्ताभाववि- रुद्धत्वमते तादृशध्वंसप्रागभावाधिकरणे ऽत्रेदानीमार्द्रेन्धनं ना- स्तीत्यादिप्रत्ययानुपपत्तेः। वस्तुतस्तु पर्वतद्धूमवान् वह्नेरित्यादावेतत्त्रा- र्द्रेन्धनादिव्यक्तीनां नोपाधिता सम्भवति तत्तद्व्यक्तित्वादेः सा- ध्यवच्छिन्नध्वंसादिप्रतियोगितावच्छेदकत्वादित्याशङ्कया नित्यस्ये- त्यनेन तत्तद्व्यक्तीनां व्याप्तिलक्षणाप्रवेशेऽपि न क्षतिरित्युक्त्वा ता- दृशोपाधीनामपि व्यापकरूपेणोपाधितया व्याप्तिलक्षणे प्रवेश एवेति नित्यसाधारणरूपावच्छिन्नस्य चेत्यनेनाभिहितं नित्यसा- धारण्यं चात्र तद्देशानिष्ठध्वंसाद्यप्रतियोगिसाधारण्यात्मकं तेना- र्द्रेन्धनत्वादेरपि संग्रहान्न न्यूनतेति ध्येयम्। उपाधित्वसम्भवादिति तथा चार्द्रेन्धनत्वाद्यवच्छिन्नस्य प्रकृतोपाधित्वानुपपत्त्यापि न व्याप्तिलक्षणातिव्याप्तिप्रसङ्ग इति भावः। इतरथा भेदप्रतियोगि- तासाधारणरूपावच्छिन्नप्रतियोगितायाः लक्षणघटकत्वे भेदप्रति- योगितेति अयोगोलकभेदादिभेदप्रतियोगितेत्यर्थः। अथायोगोलक- भेदादेः साध्यवच्छिन्नभेदप्रतियोगितया ऽनुपाधित्वेऽपि अयोगोल- कभेदधूमवदन्यतरत्वाद्यवच्छिन्नस्योपाधिता सम्भवात्व्याप्तिलक्षणा- नतिप्रसक्तिर्निर्वहति न हि तादृशान्यतरत्वावच्छिन्ने धूमवति तत्तद्वच्छिन्नभेदो वर्तते येन भेदप्रतियोगितामादाय तदवच्छि- न्नस्योपाधित्वं व्याहन्येत न चेदं जन्यं पृथिवीत्वादित्यादौ पट-

माणुभेदादेर्जन्यनिष्ठभेदप्रतियोगित्वेन साध्याव्यापकतया अन्य-परमाणुभेदान्यतरत्वावच्छिन्नस्य परमाणुसाधारणत्वेन साधन-व्यापकतया उपाधित्वं न सम्भवतीति तत्रानौपाधिकत्ववार-कतया ऽत्यन्तपदस्यार्थक्यमिति वाच्यं साधनाव्यापकतायाम-त्यन्ताभावत्वानिवेशस्य निष्प्रयोजनकतया तादृशान्यतरत्वाव-च्छिन्नस्य परमाणुभिन्नस्य साधनाधिकरणपरमाणुनिष्ठभेदप्रति-योगित्वेन साधनाव्यापकतयोपाधित्वं न सम्भवतीति तत्रानौ-पाधिकत्ववारकतया ऽत्यन्तपदस्यार्थक्यमिति वाच्यं साधना-व्यापकतायामत्यन्ताभावत्वनिवेशस्य निष्प्रयोजनकतया ताद-शान्यतरत्वावच्छिन्नस्य परमाणुभिन्नत्वावच्छिन्नस्य च साधना-धिकरणपरमाणुनिष्ठभेदप्रतियोगित्वेन साधनाव्यापकतयोपाधि-त्वसम्भवात् । यत्तु घटाभावभिन्नत्वाद्यवच्छिन्नस्यापि साध्य-वन्निष्ठघटाद्यभावस्वरूपघटाद्यभावनिष्ठस्वभेदप्रतियोगितया सा-ध्यव्यापकत्वासम्भवेनानौपाधिकत्वापत्त्या तद्वारकतया ऽत्यन्त-पदसार्थक्यं तत्पददाने घटाभावभेदादेरेवोपाधित्वसम्भवादि-ति तन्न । घटाभावभेदात्यन्ताभावस्यापि साध्यवन्निष्ठघटाभावमात्र-वृत्तित्वेन तुल्ययुक्त्या घटाभावरूपतया ऽत्यन्तपदोपादानेऽपि त-त्रोपाधेर्दौर्लभ्यात् न चात्यन्तपददानादत्यन्ताभावत्वनिरूपकप्रतियो-गित्वलाभादुक्तस्थले घटाभावभिन्नस्य घटाभावात्मकभेदत्वनि-रूपकप्रतियोगित्वेपि अत्यन्ताभावत्वनिरूपकप्रतियोगित्वविरहादु-पाधित्वं सम्भवत्येवेति वाच्यं घटाभावभिन्नं पटत्वादित्यादा-वुक्तक्रमेण साध्यव्यापकस्य घटाभावभिन्नस्य साधनसमानाधि-करणघटाभावरूपस्वभेदप्रतियोगितया उपाधितापत्त्या साधना-व्यापकत्वदलेपि अत्यन्ताभावत्वनिरूपकप्रतियोगित्वनिवेशस्याव-श्यकत्वेन उक्तस्थले प्रमेयत्वादिरूपसाधनव्यापकतया तस्योपा-धित्वासम्भवात् विपक्षान्तरेण घटाभावभेदस्योपाधित्वोपपा-दने घटाभावभिन्नस्यापि तदुपपादनसम्भवेनात्यन्तपदवैयर्थ्य-स्यावश्यकत्वादिति चेन्न । अखण्डानित्यायोगोलकभेदरूपोपा-धेः साध्यवति कथंचिदपि नात्यन्ताभावः विशिष्टभाव-स्य विशेष्यविशेषणसम्बन्धप्रतियोगिकत्वमतावलम्बनात् द्वौ न स्त इत्यादिप्रतीतेः परम्परासम्बन्धेन द्वित्वाद्यभाव एव विषय

इति मताश्रयणाच्च व्यासज्यवृत्तिधर्मानवच्छिन्नत्वं वा प्रतियोगितायां विशेषणं देयं तथा चाप्रतियोगित्वगर्भमेव व्यापकत्वं वाच्यं न तु प्रतियोगितानवच्छेदकावच्छिन्नत्वरूपं ग्रन्थकृतापि यदि चेत्यनेनानवच्छेदकावच्छिन्नत्वनिवेशे प्रागनिर्भरो दर्शितः एवं धायोगोलकभेदसाध्यकवह्न्यन्यतरत्वाद्यवच्छिन्नस्योपाधित्वं दुरुपपादमेव तादृशस्य साध्यवतः साध्यवन्निष्ठात्यन्ताभावप्रतियोगित्वाद् अयोगोलकभेदादेश्च तादृशाभावप्रतियोगित्वादित्यत्यन्तपदसार्थक्यात् । नन्वेवमपि नित्यसंसर्गाभावत्वरूपात्यन्ताभावत्वघटकध्वंसादिवारकनित्यत्वांशस्यानतिप्रयोजनकत्वमेवेत्याशङ्कायां नित्यत्वांशो न निवेश्यत एव केवलं संसर्गाभावत्वलाभायैवात्यन्तपदमिति दर्शयितुं संसर्गाभावेति तस्य अत्यन्तपदस्य अन्योन्याभावप्रतियोग्यव्याप्तिं परिहर्तुमाह विरहपदस्येति तज्ज्ञानेति तदन्वितं अभावान्वितं यज्ज्ञानं तत्प्रतिबन्धकज्ञानविषयार्थकत्वादित्यर्थः अभावान्वय उपलक्षणं ज्ञानप्रभृतीनामेव. विरहपदार्थघटकत्वे बोध्यं तेन नाभावपदवैयर्थ्यम् । एवं च तदभावग्रहप्रतिबन्धकग्रहविषयत्वमेव तदभावप्रतियोगित्वमिति फलितम् । एतच्चान्योन्याभावप्रतियोगितासाधारणमेवेत्याह प्रतिबध्नातीति । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिप्रकारकनिश्चयस्याभावधीप्रतिबन्धकत्वादिति भावः । प्रतिबन्धकत्वं यदि कारणीभूताभावप्रतियोगित्वं तदा प्रतियोगित्वान्तर्भावेण तदनवस्थेत्यतस्तदन्यथा निर्वक्ति प्रतिबन्धकत्वं चेति । अत्र प्रतियोगितालक्षणे ऽभावप्रतियोगिमत्ताज्ञानयोरपि भिन्नकालावच्छेदेनैकात्मनि एकक्षणावच्छेदेन च भिन्नात्मनि वर्तमानत्वादेककालावच्छेदेनेति एकत्रेति च । कालपदं क्षणपरं तेन स्थूलकालावच्छेदेन तयोरेकाधिकरणवृत्तित्वेऽपि न क्षतिः अत्रैकत्रेत्यनतिप्रयोजनकम् । अभावज्ञानाधिकरणक्षणावच्छेदेन तच्छून्यात्मनि प्रतियोगिज्ञानासत्त्वेऽपि तज्ज्ञानाधिकरणक्षणावृत्तियत्किञ्चित्प्रतियोगिज्ञानव्यक्तिमादाय लक्षणगमनसम्भवात् न च ज्ञानमात्रस्यैव परमेश्वरीयाभावज्ञानाधिकरणक्षणवृत्तितया ऽभावज्ञानाधिकरणक्षणावृत्तिज्ञानाप्रसिद्धिरिति वाच्यम् । अभावज्ञानावच्छेदकक्षणावच्छिन्नवृत्तिकान्यत्वरूपस्य एककालावच्छेदेनावर्तमानत्वस्य निवेशे नित्यस्य भगवज्ज्ञानस्य काल-

विशेषानवच्छिन्नतया सर्वत्र प्रतियोगिज्ञाने तादृशवृत्तिकत्वानियमात् घटाद्यभावज्ञानावच्छेदकक्षणानवच्छिन्नपटादिज्ञानव्यक्तिमादायातिप्रसङ्गस्तु एकक्षणावच्छेदेन घटाद्यभावज्ञानाधिकरणावृत्तिपटादिज्ञानस्यापि सत्त्वेनातिप्रसङ्गवदभावपदस्य स्वाभावपरतयैव वारणीयःन चैवं सति एकक्षणावच्छिन्नत्वं परित्यज्य एकाधिकरणावृत्तित्वस्य निवेशेनापि निर्वाहसम्भवः एकपुरुषीयघटाद्यभावज्ञानव्यधिकरणपुरुषान्तरीयघटादिज्ञानमादाय घटादौ तदभावप्रतियोगित्वोपपत्तेरिति वाच्यम् । अभावज्ञानस्य हि घटाद्यभावज्ञानत्वेनैव निवेशो न तु तत्तद्व्यक्तित्वादिना तथा च घटाभावज्ञानाधिकरणावृत्तिघटज्ञानमेव दुर्घटं । सर्वेषामेवात्मनां कदाचिद्घटाभावज्ञानवत्त्वादित्येकक्षणावच्छिन्नत्वनिवेशस्यावश्यकत्वात् न च तदधिकरणावृत्तित्वशरीरे प्रतियोगितायां तदधिकरणवृत्तित्वत्वावच्छिन्नत्वनिवेशनमफलं तदधिकरणवृत्तित्वप्रतियोगिकाभावनिवेशेनाप्युपपत्तेः घटाभावज्ञानवद्वृत्तिपटादिज्ञाने तद्वृत्तित्वप्रतियोगिकतद्विशेषाभावसत्त्वेऽपि स्वाभावस्य निवेशनीयतया ऽतिप्रसङ्गानवकाशात् तथा च घटादिज्ञाने घटाभावज्ञानाधिकरणवृत्तित्वसत्त्वेऽपि तत्प्रतियोगिताकाभावसौलभ्यात् घटादेः स्वाभावप्रतियोगित्वमुपपद्यत एवेति वाच्यं तदधिकरणवृत्तित्वनिष्ठप्रतियोगितायाः प्रकारतया निवेशने प्रतियोगित्वज्ञाने प्रतियोगित्वान्तरज्ञानापेक्षया दुर्ज्ञेयत्वापत्त्या ऽभावे तादृशप्रतियोगितायाः सम्बन्धविधयैव निवेश्यतया प्रतियोगितायाः यत्र प्रतियोगिसंसर्गतया प्रवेशस्तत्र प्रतियोगिप्रकारीभूतधर्मावच्छिन्नत्वभानस्यावश्यकतया तदधिकरणावृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावस्यैव प्रतिबन्धकतारूपतया एकक्षणावच्छिन्नत्वानिवेशे उक्तानुपपत्तेरनुद्धारादित्यवधेयम् । अन्योन्याभावप्रतियोगितावच्छेदकेति प्रसक्तिं निराकर्तुमाह अभावपदस्य चेति । स्वाभावपरत्वान्निति । तथा च स्वीयो योऽभावः स्वनिष्ठतद्विरहत्वमेव स्वस्य तदभावप्रतियोगित्वं घटान्योन्याभावो न घटत्वाभाव इति घटत्वाविनिष्ठतद्विरहत्वं न तत्प्रतियोगित्वमिति भावः । घट एतदभावप्रतियोगीत्यादौ अभावपदं लक्षणया घटादिरूपसमभिव्याहृतपदार्थविशेषिताभावपरं प्रतियोगिपदं ज्ञानप्रतिबन्धकज्ञानविषयत्वावच्छिन्नार्थकं तदेकदेशाज्ञाने चाभावविषयकत्वा·

न्वय इति स्वत्वाननुगमेऽपि न प्रतियोगिपदस्य शक्त्यानन्त्यप्रसङ्गो न वाभावपदार्थानन्वयापत्तिरिति ध्येयम् । सम्बन्धविशेषावच्छिन्नत्वस्य व्यापकताघटकप्रतियोगितायामवश्यं निवेशनीयतया भेदप्रतियोगितामादाय दोषासंभवेन संसर्गाभावत्वनिवेशवैयर्थ्यमित्यन्तपदं सम्बन्धविशेषावच्छिन्नत्वकाभावकतयैव व्याख्येयं तथा च प्रकृतोपयोगिप्रतियोगितामात्रस्य लक्ष्यत्वेऽपि न क्षतिरित्याह वस्तुतस्त्वित्यादिना । एकसम्बन्धावच्छिन्नाया इति तथा च साध्यवन्निष्ठाभावप्रतियोगितासामान्यानवच्छेदकत्वनिवेशे प्रतियोगितावच्छेदकमात्रस्यैव साध्यवन्निष्ठयत्किञ्चित्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकतया तादृशप्रतियोगितासामान्यानवच्छेदकसाधनवन्निष्ठाभावप्रतियोगितावच्छेदकाप्रसिद्धिः न चायोगोलकभेदत्वादिकमेव तथा धूमादिमति संयोगादिव्यधिकरणसम्बन्धावच्छिन्नायोगोलकभेदाभावसत्त्वेऽपि तत्प्रतियोगितायां लाघवेन शुद्धभेदत्वादेरवच्छेदकत्वोपगमादिति वाच्यं विषयतासम्बन्धेन कालिकसम्बन्धेन वा अयोगोलकभेदाद्यभावप्रतियोगितायामेवायोगोलकभेदत्वादेरवच्छेदकतया तस्य साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वासम्भवात् अयोगोलकभेदाविषयकभेदान्तरविषयकज्ञाने विपर्ययितासम्बन्धेन भेदत्वरूपसामान्यधर्मावच्छिन्नाभावासम्भवेन तत्साधारणतादृशसम्बन्धावच्छिन्नायोगोलकभेदाद्यभावस्य भेदसामान्यानधिकरणदेशाप्रसिद्ध्या काले कालिकसम्बन्धावच्छिन्नभेदत्वावच्छिन्नाभावासम्भवेनायोगोलकभेदाद्यनधिकरणायोगोलकाद्यवच्छेदेन कालवृत्तेः कालिकसम्बन्धेनायोगोलकभेदाद्यभावस्य च प्रतियोगितायां शुद्धभेदत्वादेरवच्छेदकत्वायोगात् । यदि च यत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं निवेश्यायोगोलकभेदत्वादेस्तथात्वमुपपाद्यते तदा वह्निमान् धूमादित्यादौ वह्न्यादिमन्निष्ठसंयोगसमवायदैशिकविशेषणतासम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकधूमादिमन्निष्ठसमवायसंयोगकालिकसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकवह्नित्वद्रव्यत्वतद्द्रभेदत्वाद्यवच्छिन्नस्योपाधितापत्तिरिति भावः । यत्सम्बन्धावच्छिन्नाया इति । तथा च संयोगादिसम्बन्धावच्छिन्नवह्न्यादिमन्निष्ठाभावप्रतियोगितानवच्छेदक-

वह्नित्वादेः साधनवन्निष्ठतत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वासम्भवाद्धूमादिमन्निष्ठविशेषणताविशेषादिसम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकायोगोलकभेदत्वादेर्वह्न्यादिमन्निष्ठतादृशसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वाच्च न कश्चिद्दोष इति भावः । संसर्गाभावत्वमनुपादेयमेवेति अयोगोलकभेदत्वादेर्धूमवन्निष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि विशेषणताविशेषसम्बन्धादिघटितनिरुक्तोपाधितावच्छेदकत्वस्य तत्राक्षतत्वादिति भावः । स च अस्वरसश्च व्यधिकरणसम्बन्धेनेति तथा च यादृशव्यधिकरणसम्बन्धेन संयोगादिना यस्य रूपादेः क्वचिदपि कस्यचिद्भ्रमो न जातस्तस्य तादृशसम्बन्धावच्छिन्नप्रतियोगित्वानुपपत्तिः प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगिप्रकारकज्ञानस्याभावधीविरोधित्वात्तादृशाभावधीप्रतिबन्धकज्ञानस्यैवाप्रसिद्धेः । यद्यपि समानधर्मिकयोरेवाभावप्रतियोगिमत्ताज्ञानयोः प्रतिबन्धकभाव इति समानाधिकरणसम्बन्धावच्छिन्नाभावस्थलेऽपि विरोधिनोरभावप्रतियोगिज्ञानयोरेकतरस्य भ्रमत्वानियम इति यादृशाभावस्य तत्प्रतियोगिनो वा भ्रमो न कदाचिदपि प्रसिद्धस्तदभावप्रतियोगित्वाव्याप्तिसम्भवः तथापि समानविशेष्यताप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावोपगमे भिन्नधर्मिकज्ञानस्यापि प्रतिबन्धकतावच्छेदकाक्रान्ततया तादृशभ्रमात्मकज्ञानमादाय लक्षणसमन्वयः सम्भवतीति व्यधिकरणसम्बन्धावच्छिन्नाभावानुधावनम् । ननु प्रतिबन्धकत्वं न कारणीभूताभावप्रतियोगित्वमपि स्वैककालावच्छेदेनैकत्रावर्तमानत्वमिति प्रागेवोक्तमेवं च यादृशव्यधिकरणसम्बन्धेन यस्य प्रतियोगिनो भ्रमो ऽप्रसिद्धस्तादृशसम्बन्धावच्छिन्नतदभावज्ञानासमानकालीनवत्प्रतियोगिविषयकसम्बन्धान्तरावगाहिप्रमामादायैव लक्षणसङ्गतिः सम्भवतीत्यतो दूषणान्तरमाह स्वाभावेति । सम्बन्धत्वस्य नियमघटिततया गौरवादाह स्वाभावज्ञानेति । लघोरित्यस्य स्वाभावज्ञानप्रतिबन्धकज्ञानविषयत्वापेक्षयेत्यादिः सर्वत्र सम्भवित्वादिति । सर्वत्र प्रतियोगितारूपत्वसम्भवादित्यर्थः तदभावज्ञानविषयोदासीनेऽतिप्रसङ्गस्य स्वांशनिवेशेनैवायोगादिति भावः । ननु तथैवा स्त्वित्यत आह स्वाभावेत्यपेति । स्वाभावेत्यादावितिति पाठे य-

धाश्रुतविरहत्वानिवेशपक्षे अभाववविरहेत्यस्यादिना परिग्रहः । षष्ठ्यर्थप्रतियोगिताया इति स्वस्याभावः स्वाभाव इति षष्ठ्यर्थस्य प्रतियोगित्वातिरिक्तानतिप्रसक्तस्य दुर्वचत्वादिति भावः । तत्र स्वरूपसम्बन्धस्यैवेति अन्यथा आत्माश्रयादिति भावः । यद्यपि स्वाभावेत्यत्र प्रतियोगितायाः सम्बन्धविधया निवेशे सम्बन्धज्ञानस्य विशिष्टबुद्धिहेतुतया स्वाभावेत्यत्र स्वाभावाभावत्वरूपप्रतियोगितानिवेशेऽपि तज्ज्ञानात्पूर्वं न तज्ज्ञानापेक्षेति न दुर्ग्रहता तथापि विशिष्टसम्बन्धे सम्बन्धसम्बन्धस्यापि घटकतया सम्बन्धविधया भासमानस्य तस्य शरीरे तस्य सम्बन्धाविधया भानं तादृशरीत्या भानान्तर्गतमपि सम्बन्धाविधया तज्ज्ञानमिति विषयतानवस्था दुर्वारैव तथात्वौचित्यात् प्रतियोगितात्वौचित्यात् न च स्वाभावे स्वस्य सम्बन्धोऽनुयोगिता न तु प्रतियोगिता सा च स्वरूपसम्बन्धरूपैवास्तां प्रतियोगिता तु निरुक्तरूपेत्याशङ्क्यम् । अनुयोगितायाः स्वरूपसम्बन्धात्मकत्वेऽपि निरुक्तापेक्षया लघोस्तन्निरूपकत्वस्यैव प्रतियोगितात्वौचित्यात् प्रकारान्तरेण प्रतियोगिताप्रवेशमाह अभावत्वेति । अभावत्वं द्रव्यादिपदप्रतियोगिकभेदवत्त्वं प्रतिबन्धकत्वं यत्कुत्र वर्तमानत्वादिप्रतियोगिकाभाव इति भावः । नन्वभावादिव्यवहारगोचरत्वमेवाभावत्वं न तु प्रतियोगिताघटितं निरुक्तरूपमित्यत आह तथाविधेति । विना प्रतियोगितामिति प्रतियोगितान्तर्भावमन्तरेत्यर्थः तथाविधव्यवहारगोचरत्वम् अभावादिशब्दप्रतिपाद्यत्वं तत्पदशक्तिविषयत्वरूपं वा उभयथापि जन्यताघटितं प्रतिपाद्यत्वस्य तज्जन्यप्रतिपत्तिविषयत्वरूपत्वात् तत्पदशक्तेश्च तत्पदजन्यबोधविषयत्वप्रकारकभगवदिच्छारूपत्वात् जन्यता च व्याप्तिघटिता तस्याश्च प्रतियोगिताघटितत्वादिति भावः । एवं च प्रतियोगिता स्वरूपसम्बन्धविशेष इति पूर्वमत एव मणिकारस्य निर्भर इति सूचितम् । इदं त्ववधेयम् घटो नास्तीत्यभावबुद्ध्याद्यभावांशे प्रतियोगिन एव प्रकारतया भानान्मण्यभावादेः कारणत्वे प्रतियोगिनोऽवच्छेदकत्वाच्च अभावनिष्ठः प्रतियोगिनिरूपितोऽनुयोगिताख्यः स्वरूपसम्बन्धः अवश्यमङ्गीकार्यः प्रतियोगिन्यभावविशिष्टबुद्ध्यात्मको अभावीयो घट इत्यादिप्रत्ययस्तु नानुभवसिद्ध इत्यभावीयप्रतियोगि-

साध्यस्वरूपसम्बन्धे मानाभावः प्रतियोगिव्यवहारस्त्वनुयोगितानिरूपकत्वमेवावलम्बते ध्वंसस्य प्रतियोगिनिष्ठप्रत्यासत्त्या प्रतियोगिजन्यत्वानुरोधेन तस्य प्रतियोगिनि सम्बन्धोपगम आवश्यक इति चेदस्तु तथा तथापि अभावान्तरस्य तादृशसम्बन्धो निष्प्रमाण एव न च जन्यत्वस्य यत्र कार्यतावच्छेदकता तत्र प्रागभावादिनिष्ठानुयोगितानिरूपकत्वापेक्षया प्रतियोगितासम्बन्धेन प्रागभाववत्त्वस्य तथात्वे लाघवात् प्रागभावस्यापि तादृशसम्बन्धः सिद्ध्यतीति वाच्यं तत्र निरूपकतासम्बन्धेनानुयोगिताविशेषरूपप्रागभावत्वस्यैवावच्छेदकत्वोपगमात् अन्यथा प्रागभावनिष्ठात्यन्ताभावादिभेदस्याधिकरणस्वरूपतामते जन्यत्वस्यात्यन्ताभावादिसाधारण्यापत्तेः गौरवाच्चेति ॥

यत्साध्यस्येत्यत्र कर्मधारयसमासे व्याप्तेर्हेतुनिष्ठत्वालाभ इति षष्ठीतत्पुरुषमवलम्ब्य व्याचष्टे यत्समानाधिकरणात्यन्ताभावेत्यादिना ।

(चि० ) यावत्साधनाव्यापकमव्यापकं यत्साध्यस्य यावत्साध्यव्यापकं व्यापकं वा यस्य तत्त्वं तदिति चेन्न । सोपाधेरपि तथात्वात् । तथाहि साधनस्य वह्नेरव्यापकं यावदार्द्रेन्धनं तत् प्रत्येकमव्यापकं साध्यधूमस्य द्वितीये साध्यधूमस्य व्यापकमार्द्रेन्धनं तद्व्यापकं महानसीयवह्निः ।

(दी० ) यत्साध्यस्य यत्समानाधिकरणसाध्यस्य तथात्वमित्यादि । यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यावत् साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यावत् यत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं तत्त्वमित्यर्थे तु नोक्तदोष इति ध्येयम् । प्रतियोगितयोर्भेदसम्बन्धावच्छिन्नत्वं विशेषणताविशेषावच्छिन्नत्वं वा वक्तव्यम् । तेन प्रतियोगितावच्छेदकमात्रस्यैव यत्किञ्चि-

रसम्बन्धावच्छिन्नसाध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वेऽपि एकसम्बन्धावच्छिन्नसाध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकस्य सम्बन्धान्तरावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वेऽपि च न क्षतिः । व्यभिचारिणि तु यत्राधिकरणे व्यभिचारो विशेषणताविशेषावच्छिन्नतन्निष्ठाभावप्रतियोगितावच्छेदकं साध्यवत्त्वप्रकारकप्रमाविषयत्वं विशेषणताविशेषावच्छिन्नसाध्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति नातिप्रसङ्गः । वस्तुतस्तु हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यावद्यद्धर्मावच्छिन्नयत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं तद्धर्मावच्छिन्नसामानाधिकरण्यं साध्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकं यावत्स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकम् तत्त्वं वा व्याप्तिरिति ध्येयम् ।

(गा०) अत्यन्तपदानि मूले तत्पदप्रशस्तीत्युपात्तानि न तु विवक्षितार्थकानि सम्बन्धविशेषावच्छिन्नत्वेन प्रतियोगितायाः अग्रे विशेषणीयतया व्यावृत्त्यभावात् । नोक्तदोष इति आर्द्रेन्धनायोगोलकान्यत्वादीनां धूमादिनां धूमादिसाध्यवन्निष्ठतत्तद्व्यक्तित्वोभयत्वाद्यवच्छिन्नप्रतियोगितावत्त्वेऽपि तत्त्वस्य साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वात्तादृशधर्मस्य महानसीयवह्न्यादिरूपयत्किञ्चित्साधनवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वेऽपि साधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभाववत्त्वाभावादिति भावः । एकसम्बन्धावच्छिन्नत्वमिति । साधनसमानाधिकरणाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वं यस्य तस्य साध्यवन्निष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वं साध्यवन्निष्ठाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं यस्य तस्य साधनवन्निष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदक-

त्वमित्येव विवक्षणीयमित्यर्थः । विशेषणताविशेषसम्बन्धमात्रनिवेशेनैव सामञ्जस्ये सम्बन्धान्तरनिवेशनमफलमित्याशयेनाह विशेषणतेति । प्रथमलक्षणे सम्बन्धविवक्षायाः फलमाह प्रतियोगितावच्छेदकमात्रस्यैवेति । मात्रपदं कृत्स्नार्थकं तथा च सुतरां साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकसामान्ये साध्यसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वमिति सम्बन्धाविवक्षणे ऽतिव्याप्तिः स्यादिति भावः । लघुधर्मसमनियतगुरुधर्मस्य साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्वासम्भवाद्धर्ममात्रमुपेक्ष्य प्रतियोगितावच्छेदकधर्मानुसरणं । यद्यपि कम्बुग्रीवादिमत्त्वादेरपि विषयितासम्बन्धावच्छिन्नतद्विशिष्टाभावप्रतियोगितावच्छेदकत्वं सम्भवति घटत्वादिविशिष्टविषयकेऽपि कम्बुग्रीवादिमत्त्वाप्रकारके ज्ञानादौ तद्विशिष्टस्य विषयितासम्बन्धावच्छिन्नाभावसत्त्वेन लघुघटत्वादेस्तत्प्रतियोगितावच्छेदकत्वासम्भवात् तथापि विषयिताया वृत्त्यनियामकत्वेनाभावप्रतियोगितावच्छेदकत्वं नास्तीत्यभिप्रायेणेदम् । अयोगोलकभेदस्यादेस्तु धूमादिमन्निष्ठकालिकादिसम्बन्धावच्छिन्नाभावप्रतियोगितायामवच्छेदकत्वमिति बोध्यम् । द्वितीयलक्षणे सम्बन्धविवक्षाफलं दर्शयति एकसम्बन्धेति । तथा च यदि यत्किञ्चित्सम्बन्धावच्छिन्नसाध्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकं यद्यत्र साधनसमानाधिकरणाभावीयप्रतियोगितासामान्यावच्छेदकत्वाभावो विवक्षितस्तदा ऽसम्भवः स्यादिति भावः । यदि साधनसमानाधिकरणाभावीययत्किञ्चित्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वाभावो निवेश्यते उभयदले प्रतियोगितासामान्यं वा तदा पुनरतिव्याप्तिरेवेति हृदयम् । उभयलक्षण एव सम्बन्धविवक्षणे व्यभिचारिण्यतिव्याप्तिवारणप्रकारं दर्शयति व्यभिचारिणि त्विति । तन्निष्ठाभावप्रतियोगितावच्छेदकमिति । तथा च साधनवन्निष्ठाभावप्रतियोगितावच्छेदकेषु साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकेषु वा यावत्सु साध्यवत्त्वप्रकारकप्रमाविषयत्वत्वान्तर्भावाच्च च साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्वसाधनवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वयोरभावात्र लक्षणद्वयातिव्याप्तिरिति भावः । अत्यन्ताभावघटितत्वेन गुरुतया तदघटितमन्योन्याभावगर्भलक्ष-

णद्वयमाह वस्तुत इति । यद्यप्यन्योन्याभावगर्भलक्षणेऽपि प्रतियोगितावच्छेदकतयोरैकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा निवेशनमावश्यकम् । अन्यथायोगोलकान्यत्वादेरपि धूमाद्यात्मकसाध्यवन्निष्ठस्य विषयित्वादिसम्बन्धेन स्वावच्छिन्नभेदस्य प्रतियोगितावच्छेदकतयाऽतिप्रसङ्गात् अत्यन्ताभावघटितलक्षणे च तादृशसम्बन्धेनायोगोलकभेदत्वाद्यवच्छिन्नाभावादेर्योऽत्यन्ताभावस्तत्प्रतियोगितावच्छेदकतामादायातिप्रसङ्गो न सम्भवति विशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितायां गुरुभेदत्वादेरेवावच्छेदकत्वसम्भवेन गुरोरयोगोलकभेदत्वादेरनवच्छेदकत्वादिति तत्र प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धानिवेशो नास्ति तथा चान्योन्याभावगर्भव्याप्तौ लाघवानवकाशः तथापि गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमते ऽत्यन्ताभावगर्भलक्षणेपि प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धानिवेश आवश्यक एवं भेदत्वादेर्विषयितासम्बन्धेन प्रतियोगितावच्छेदकत्वेऽप्ययोगोलकभेदत्वादेर्न प्रतियोगितानवच्छेदकत्वानिर्वाहः विशेष्ये पर्याप्तस्यापि विशिष्टानुयोगिकाभावानभ्युपगमादिति तादृशधर्मस्य साध्यव्यापकतावच्छेदकत्वानिर्वाहाय द्वितीये ऽत्यन्ताभावघटितलक्षणे तन्निवेशनस्यावश्यकता सर्वथैवेत्यभिप्रायेणेदम् । वस्तुतस्त्वित्यादि भ्रान्तकल्पितः पाठ इत्यपि वदन्ति ।

यावदव्यभिचारितदव्यभिचारीत्युभयत्रैव षष्ठीविभ्रमनिरासाय व्याचष्टे यावतां तेषामिति ।

( चि० ) नापि साध्यं यावदव्यभिचारि तदव्यभिचारित्वमनौपाधिकत्वम् । साध्याव्यभिचारित्वस्यैव गमकत्वसम्भवात् । तच्च दूषितम् । नापि कार्त्स्न्येन सम्बन्धो व्याप्तिः । एकव्यक्तिके तदभावात् । नानाव्यक्तिकेऽपि सकलधूमसम्बन्धस्य प्रत्येकवह्नावभावात् । अत एव न कार्त्स्न्येन साध्येन सम्बन्धो व्याप्तिः । विषमव्याप्ते तदभावाच्च । न च

यावत्साधनाश्रयाश्रितसाध्यसम्बन्धः । साधनाश्रयमहानसादौ सकले प्रत्येकं वह्नेराश्रितत्वाभावात् नापि साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यम् । यावद्धर्मसामानाधिकरण्यं हि यावत्तद्धर्माधिकरणाधिकरणत्वं तच्चाप्रसिद्धम् । साधनसमानाधिकरणसकलमहानसत्वाद्यधिकरणाप्रतीतेः । नापि स्वाभाविकः सम्बन्धो व्याप्तिः । स्वभावजन्यत्वे तदाश्रितत्वादौ वाव्याप्त्यतिव्याप्तेः । नाप्यविनाभावः केवलान्वयिन्यभावात् ।

( दी० ) साध्यमिति । यावतां तेषामित्यर्थः । दूषितं केवलान्वयिन्यव्याप्त्या । सा च यथोक्तलक्षणेऽपि । गौरवं परमतिरिच्यते इति । कार्त्स्न्यं साधनस्य साध्यस्य साध्याश्रयस्य साध्यसमानाधिकरणस्य वा । आद्ये कृत्स्नसाधनसामानाधिकरण्यं साध्ये कृत्स्नेषु साधनेषु साध्यसामानाधिकरण्यं वार्थः । प्रथमे एकेति नानेति च व्याप्तेश्चाहेतुवृत्तित्वं । पृथिवी पृथिवीत्वव्यापकजातेरित्यादावतिव्याप्तिश्च । अत एव नेतरः । अर्थाभिधानपूर्वकं द्वितीयं निरस्यति अत एवेति । अत एव एकव्यक्तिसाध्यकाव्याप्तेरेव विषमव्याप्तेः समव्याप्तेऽपि च संख्यापरिमाणादावेकत्र साधने सकलसाध्यसम्बन्धस्याभावात् भावाच्च शब्दवान् द्रव्यत्वादित्यादौ । तृतीये साध्याश्रययावद्वृत्तित्वं चतुर्थे साध्यसमानाधिकरणयावत्सामानाधिकरण्यमर्थः । तत्र च यथासम्भवमेकमात्रवृत्तिसाध्यके वह्न्यादौ साध्ये धूमादावव्याप्तिरतिव्याप्तिश्च सत्त्वादौ । अर्थपरिष्कारपूर्वकं पञ्चमं निरस्यति न चेति । एकमात्रवृत्तिसाधने

चान्याप्तिश्च । तथैव पक्षं निरस्यति नापीति । तादृशानां सर्वेषां महानसत्वादीनां प्रत्येकनिरूपितान्यपि सामानाधिकरण्यानि न कुत्रापि वह्नौ । अथ यद्धर्मावच्छिन्नसामानाधिकरण्यत्वेन साधनसामानाधिकरण्यव्यापकत्वं तद्धर्मावलीढसामानाधिकरण्यं विवक्षितमिति चेत् इतोऽपि लघुतया साधनव्यापकतावच्छेदकरूपावच्छिन्नसामानाधिकरण्यमेव व्याप्तिरितिसिद्धान्तयिष्यते । अविनेति साध्यं विना साध्याभाववति यो भावो वृत्तिस्तद्विरहः । साध्यं विना अभावः साध्याभावव्यापकीभावप्रतियोगित्वमिति वा ।

(गा०) दूषितमित्यत्र केन दोषेणेत्याकाङ्क्षायां हेतुं पूरयति केवलान्वयिन्यव्याप्त्येति । ननु साध्याव्यभिचरितत्वमात्रोक्तौ केवलान्वयिन्यव्याप्तिः प्रसज्यत इत्यत एव शेषसार्थक्यं भविष्यतीत्याशङ्कायामाह सा चेति केवलान्वयिन्यव्याप्तिश्चेत्यर्थः । यथोक्तलक्षणे यावतां साध्यमव्यभिचारि तेषामव्यभिचारित्वरूपे केवलान्वयिसाध्यं व्यतिरेकिणो व्यभिचार्येव केवलान्वयिनश्च व्यभिचार एवाप्रसिद्ध इति तदव्यभिचारित्वमपि तथेति साध्यं यस्याव्यभिचारि तादृशवस्तुनोऽप्रसिद्धेरिति भावः । कार्त्स्न्येन सम्बन्ध इत्यत्र साध्यसाधनाश्रयसाधनसमानाधिकरणधर्मेषु कार्त्स्नस्य विशेषणतापक्षा मूलकृता दूषिताः न तु साध्याश्रयतत्समानाधिकरणयोस्तद्विशेषणत्वपक्षौ अतो मूलन्यूनताभङ्गाय स्वयं तौ दूषयितुं तावन्तर्भाव्य वितर्कयति कार्त्स्न्यमित्यादिना । साधनसमानाधिकरणस्य वा विवक्षितमिति शेषः । सकलधूमसम्बन्धस्य प्रत्येकं वह्न्यादावभावादित्यभिधानेन साध्यानुयोगिककृत्स्नसाधनसम्बन्धस्य व्याप्तितापक्षदूषणे मूलस्य तात्पर्यं प्रतीयते तथा च कृत्स्नसाधनानुयोगिकसाध्यसम्बन्धस्यादूषणेन न्यूनतां परिहर्तुं तत्पक्षं दूषयिष्यन् साधनस्य कार्त्स्न्यमन्तर्भाव्य वितर्कयति आद्य इति । प्रथमपक्षे मूलोक्तं दूषणद्वयं सङ्क्रमय्याधिकं दोषद्वयमाह व्याप्तेश्चेति पृथिवीति पृथिवीवृत्तिघटत्वपटत्वसकलधर्म(

धिकरणाप्रसिद्धया सकलतत्सामानाधिकरण्याप्रसिद्धिरतः पृथिवीवृत्तित्वमुपेक्ष्य तत्त्वव्यापकत्वानुसरणे पृथिवीत्वव्यापकत्वं पृथिवीनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वमवृत्तिसाधारणमिति तेन रूपेण हेतुत्वेऽवृत्तेरपि सकलसाधनान्तर्गततया तदधिकरणाप्रसिद्धया नातिव्याप्तिरतो जातिपदं समवेतार्थकम् । अत एव एकव्यक्तिसाधनकाव्याप्तिसहितदर्शितातिव्याप्तेरेव इतरः कृत्स्नसाधने साध्यसम्बन्धो व्याप्तिरिति पक्षः द्वितीयं साध्ये कार्त्स्न्यविशेषणपक्षम् ।-१ एकव्यक्तिके तदभावादित्यत्र एकव्यक्तिकपदं तादृशसाधनपरं तस्य साधने कार्त्स्न्यविशेषणपक्षदूषणपरत्वात् तथा चात एवेत्यस्य तादृशदूषणपरत्वासम्भवादेकव्यक्तिसाध्यकाव्याप्तिपरतया व्याचष्टे अत एवेति न्यूनताभङ्गाय पूरयति समव्याप्तेऽपि चेति । संख्यापरिमाणादौ संख्यादिसाध्यकपरिमाणादौ शब्दवानिति रूपादेः साध्यत्वे सकलतदधिकरणाप्रसिद्धया नातिव्याप्तिरतः शब्दसाध्यकानुधावनं तत्र गगनस्यैव सकलशब्दाधिकरणत्वात् । तृतीयचतुर्थयोरर्थाभिधानपूर्वकं दूषणमाह तृतीये चेत्यादिना एकमात्रवृत्तिसाध्यके यावत्साध्याश्रयाप्रसिद्धिदोषस्तृतीय एव न चतुर्थे वह्निमान् सत्त्वादित्यादावतिव्याप्तिरपि तत्रैव न चतुर्थे यावत्साध्यसमानाधिकरणपर्यन्तत्वमहानसत्वाद्यधिकरणाप्रसिद्धया तदनवकाशादतो यथासम्भवमिति धूमादावव्याप्तिरिति सकले वह्निमति प्रत्येकधूमस्यावृत्तेः वह्निसमानाधिकरणयावद्धर्माधिकरणाप्रसिद्धेश्चेति भावः । सत्त्वादावित्यत्र वह्न्यादौ साध्ये इत्यनुपज्यते पञ्चमे यथाश्रुते यावत्साधनाश्रयसम्बन्धः साध्ये लभ्यते तावता व्याप्तेः साधनान्वयानिर्वाह इति तन्निर्वाहाय तादृशसाध्यसामानाधिकरण्यस्याधिकस्य प्रवेशनमर्थपरिष्कारः । स्वयमधिकं दूषणमाह एकमात्रवृत्तिसाधन इति यावत्साधनाश्रयाप्रसिद्धेरिति भाव. । तथैव अर्थपरिष्कारपूर्वकमेव अत्रापि यथाश्रुते कृत्स्नसाधनसमानाधिकरणसामानाधिकरण्य साध्ये लभ्यते अतो व्याप्तेर्हेतुनिष्ठतासम्पादनाय सामानाधिकरण्यस्याधिकस्य निवेशनमेव परिष्कार इति बोध्यम् । ननु साधनसमानाधिकरणानां मिथो विरुद्धानामेकाधिकरणाप्रसिद्धावपि तेषां प्रत्येकसामानाधिकर-

एवमेव साध्ये निवेश्यमिति न मूलोक्तदोषावसर इत्यत आह ताद्दशानामिति साधनसमानाधिकरणानामित्यर्थः। न कुत्रापि घहावितिसाध्यतावच्छेदके तत्तद्धर्मसमानाधिकरणवृत्तित्वं निवेश्येतद्दोषोद्धारेऽपि नानाधर्मावच्छिन्नसाध्यके दण्डिमान् दण्डसंयोगादित्यादौ कुत्रापि दण्डादिव्यक्तौ साधनसमानाधिकरणानां सर्वेषां प्रत्येकसमानाधिकरणवृत्तित्वासम्भवेनाव्याप्तिर्बोध्या। साधनसमानाधिकरणाः सर्वे यादृशसाध्यसमानाधिकरणाः तत्सामानाधिकरण्यमित्यर्थे न कोऽपि दोष इत्याशङ्कते अथेति। तत्तद्व्यक्तित्वादिना साध्यं चेद्व्यापकतावच्छेदककोटौ निवेश्यते तदा नानाव्यक्तिसाध्यके ऽव्याप्तिरतो यद्धर्मपदं प्रकृतसाध्यतावच्छेदकपरं विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय विशिष्टाधिकरणतागर्भसामानाधिकरण्यं प्रवेश्यमित्येतल्लाभायाश्रयपदमुपेक्ष्यावच्छिन्नपदं धूमादिसामानाधिकरण्यस्यापि प्रमेयत्वादिना वह्न्यादिसामानाधिकरण्यव्यापकतया अतिप्रसङ्ग इति तादृशसामानाधिकरण्यत्वस्य व्यापकतावच्छेदकत्वपर्यन्तानुधावनं साधनसामानाधिकरण्यव्यापकत्वं साधनतावच्छेदकावच्छिन्नसामानाधिकरण्यत्वावच्छिन्नं प्रति व्यापकत्वं तेन धूमसामानाधिकरण्यत्वेन तद्वह्न्यादिसामानाधिकरण्यत्वावच्छिन्नं प्रति व्यापकत्वेऽपि गुणत्वादिसाधारणाविशिष्टसत्त्वाश्रयसामानाधिकरण्यत्वावच्छिन्नं प्रति द्रव्यत्वादिसामानाधिकरण्यत्वेनाव्यापकत्वेऽपि न क्षतिः परिष्कारस्यावश्यापेक्षणीयत्वे एतदपेक्षया लघोः कृत्स्नसाधनाश्रयाश्रितसाध्यसम्बन्धस्य व्यापकत्वरूपकृत्स्नपदार्थमन्तर्भाव्य परिष्कार एवोचितः स च सिद्धान्तग्रन्थ एव कारिष्यत इत्याह इतोऽपीति तथा चेदानीं यथाश्रुतार्थदूषणपर एव मूलग्रन्थ इति नासङ्गतिरिति भावः। मूलोक्तसिद्धान्तलक्षणं तु अन्योन्याभावस्याव्याप्यवृत्तितालये द्रव्यनिष्ठसंयोगाभावोऽपि प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तिरिति संयोगी द्रव्यत्वादित्यादावव्याप्त्या दूषयित्वा साधनसमानाधिकरणधर्मिकतादृश्यविशेषणपक्ष एव दीधितिकारेणाग्रे ऽवलम्बनीयः। अभाववदर्थकं विनापदमत्र सप्तम्यन्तमित्याशयेन व्याचष्टे साध्याभाववतीत्यादिना। साध्याभाववद्वृत्तित्वमिति प्रथमल

क्षणे साध्याभाववद्वृत्तिभेदो विवक्षितोऽत्र तु तत्त्वात्यन्ताभाव इति भेद इति भावः। सत्तावान् जातेरित्यादौ साध्याभाववति हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या व्याप्तिरतो ऽविनाभावमन्यथा व्याचष्टे साध्यं विना ऽभाव इति। तथा च नञ्व्यत्यासः कार्य इति भावः। तथा च विनाशब्दार्थो ऽभाव एव न तु तद्वान् तस्य च निपातार्थतया प्रयुक्तत्वसम्बन्धेनाभावे साक्षादन्वय प्रयुक्तत्वं च व्यापकत्वमेवेत्याशयेनाह साध्याभावव्यापकेति।

साध्यस्य संयोगादिसम्बन्धो न तदीयव्याप्तिरतो व्याचष्टे सामानाधिकरण्यमिति ।

(चि०) अथ सम्बन्धमात्रं व्याप्तिः व्यभिचारिसम्बन्धस्यापि केनचित् सह व्याप्तित्वात् धूमादिव्याप्तिस्तु विशिष्यैव निर्वक्तव्येति । तन्न। लिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावे लक्षणाभिधानस्यार्थान्तरत्वात्। न च सम्बन्धमात्रं तथा। तद्बोधादनुमित्यनुत्पत्तेः। नापि व्याप्तिपदप्रवृत्तिनिमित्तमिदम्। सम्बन्धज्ञानेऽपि व्याप्तिपदाप्रयोगात।

केवलान्वयिनि केवलान्वयिधर्मसम्बन्धो व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः एतयोरनुमितिविशेषजनकत्वम् अनुमितिमात्रे पक्षधर्मतैव प्रयोजिका न चातिप्रसङ्गः विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्यजनकत्वनियमादिति केचित्। तदपि न । साध्यवदन्यावृत्तित्वस्य धूमेऽसत्त्वात् वह्निमत्पर्वतान्यस्मिन् धूमसत्त्वात् न च सकलसाध्यवदन्यावृत्तित्वम् वह्निमतां प्रत्येकं तथात्वात् । सर्वत्र लक्षणे साध्य[illegible]भिमतत्वा-

नां व्याप्तिनिरूप्यत्वेनात्माश्रयः । साध्यत्वं हि न सिद्धिकर्मत्वं सिषाधयिषाविषयत्वं वा । महानसीयवह्नौ तदभावात् । न च सामान्यतो व्याप्त्यवगमोऽस्त्येव परस्य कथमन्यथा दूषणेनासाधकतां साधयेदिति वाच्यम् । स्वार्थानुमानोपयोगिव्याप्तिस्वरूपनिरूपणं विना कथायामप्रवेशादिति ।

( दी० ) अथेति । सम्बन्धः सामानाधिकरण्यम् । व्यभिचारिसम्बन्धस्येति केनचित् किञ्चिद्रूपावच्छिन्नेन । धूमादेरपि द्रव्यत्वादिनावह्निव्यापकत्वात् । तद् बोधादिति । न च व्यभिचाराग्रह सहकृतस्तद् बोधस्तथा । व्यभिचार तद् व्यतिरेकयोः अनुपस्थितावपि समानाधिकरण धर्मवत्ताज्ञानमात्रादनुमित्युत्पादस्य सर्वानुभव सिद्धत्वात् । हेत्वन्तरे तत्रैव च रूपान्तरेण व्यभिचारग्रहे हेतुतावच्छेदकाग्रहेऽप्यनुमित्युत्पादाच्च । विवदन्ते च सामानाधिकरण्यज्ञानस्यैव हेतुतायाम् । व्यभिचारज्ञानाभावकारणत्वमपेक्ष्य कारणीभूतसामानाधिकरण्यज्ञाने लाघवेनाव्यभिचारस्य विषयतावच्छेदकत्वमुचितम् । न च व्यभिचारसंशयेऽनुमित्यनुत्पादादव्यभिचारनिश्चयत्वेन कारणत्वोक्तौ गौरवम् व्यभिचारज्ञानस्य हि भ्रमत्वानिश्चयदशायामेवाविरोधितया भ्रमत्वेनानिश्चीयमानस्य विरोधित्वं वाच्यम् । अव्यभिचारनिश्चयस्य च भ्रमत्वशङ्कायामप्यनुमित्यजनकतया भ्रमत्वेनागृह्यमाणस्यैव हेतुत्वमिति तत्रैव गौरवात् । नानाविधव्यभिचारज्ञानाभावानां नियतपूर्ववर्तित्वेन क्लृप्तानामपि हेतुत्वमपेक्ष्य वक्ष्यमाणैकविधाव्यभिचारज्ञानस्यैव हेतुत्वं युक्तमित्यप्याहुः । सामानाधिकरण्यविशिष्टपक्षधर्मत्वं तु पक्षे साध्यग्रहं विना दुर्ग्रह मिति । केवलान्व-

यित्वस्याग्रहे सामानाधिकरण्यमात्रग्रहादनुमित्यनुत्पत्तेस्तद्ग्रहोऽपि वाच्यः । तच्च वृत्तिमदत्यन्ताभावाप्रतियोगित्वादिकमन्योन्याभावप्रतियोगितानवच्छेदकत्वं वा । तथा च सर्वसाधारण्याय लाघवात्साधनवतस्तद्वृत्तित्वस्य वा वृत्तेरन्योन्याभावस्य वा विशेषणत्वमुचितमिति सिद्धान्तरहस्यम् । शेषं केवलान्वयिखण्डने वक्ष्यामः ।

(गा०)मूले व्यभिचारिसम्बन्धस्येति तद्व्यभिचारिनिष्ठतदीयसम्बन्धस्येत्यर्थः केनचित्सह व्याप्तित्वादित्यत्रान्यदीयव्याप्तित्वं प्रतीयते तच्च न सम्भवतीति व्याचष्टे किञ्चिद्रूपेति तथा च रूपान्तरावच्छिन्नतद्व्याप्तित्वादित्यर्थः तदेव दर्शयति धूमादेरपीति व्यापकत्वात् व्याप्तिनिरूपकत्वात् तथा च वह्न्यादौ धूमादिव्याप्तिरिष्टैवेति भावः। मूले तद्बोधादिति केवलसाध्यसामानाधिकरण्यप्रकारकहेतुमत्ताज्ञानादित्यर्थः अनुमित्यनुदयादिति अनुमित्युदयोपगमासम्भवादित्यर्थः तथा सति द्रव्यत्वादिहेतुना ह्रदादावप्यभ्रान्तानां वह्न्याद्यनुमानापत्तेः उदाहरणे वीप्सितयत्पदप्रयोगे वैयर्थ्यापत्तेः व्यभिचारस्य हेत्वाभासतानुपपत्तेः सर्वत्र मेयत्वादिना सत्प्रतिपक्षतापत्तेश्चेति भावः। ननु व्यभिचारज्ञानाभावः साक्षादेवानुमितिहेतुर्वाच्यस्तथा च साध्याभावव्यभिचारिमेयत्वादेर्न सत्प्रतिपक्षाधायकत्वप्रसङ्गः न वा व्यभिचारस्य हेत्वाभासतानुपपत्तिः व्यभिचारशङ्कानिवर्तनेनैव च उदाहरणे वीप्सोपयोग इत्याशङ्कते दीधितौ न चेति । तद्बोधः साध्यसामानाधिकरण्यप्रकारकहेतुमत्ताबोधः सर्वानुभवसिद्धत्वादिति तथा च तत्रानुमित्यापत्तिरिति भावः । एवमेतन्मते कोटिद्वयसहचरितधर्मद्वयदर्शनादुभयत्र व्यभिचाराग्रहे संशयानुमितिप्रसङ्गोऽपि दुर्वारः विपरीतकोटिसमानाधिकरणधर्मवत्ताज्ञानस्य विशिष्टबुद्ध्यविरोधित्वात् अन्यथा साधारणधर्मदर्शनाधीनप्रत्यक्षसंशयस्याप्युच्छेदापत्तेः व्यभिचारज्ञानाभावहेतुत्वं सम्भवदुक्तिकमपि नेत्याह हेत्वन्तरेति । द्रव्यत्वादौ वह्न्यादिव्यभिचारग्रहदशायां धूमादिलिङ्गकवह्न्यनुमितेरुत्पादादित्यर्थः । तथा च तत्साध्यकानुमितेस्तत्साध्यनिरूपितव्यभिचाराग्रहव्यभिचारित्वात्

तत्र तद्धेतुतासम्भव इति भावः । ननु तल्लिङ्गकतत्साध्यकानुमितित्वस्य तल्लिङ्गधर्मिकतत्साध्यव्यभिचारज्ञानाभावजन्यतावच्छेदकत्वोपगमे नायं व्यभिचार इत्यत आह तत्रैव वेति हेतावितिशेषः । रूपान्तरेणेति द्रव्यत्वादिप्रकारेण व्यभिचारग्रहे धूमत्वाद्यवच्छिन्नवह्निलिङ्गकानुमित्युत्पत्तेरित्यर्थः । ननु तद्धर्मावच्छिन्नतल्लिङ्गकानुमितित्वमेव तद्धर्मावच्छिन्नधर्मिकव्यभिचारज्ञानप्रतिबध्यतावच्छेदकं वाच्यम् तथा च नोक्तदोष इत्यत आह हेतुतावच्छेदकाग्रहे इति धूमत्वादिप्रकारेण पक्षधर्मताज्ञानं विनापि अयमालोको धूमो वेति सन्देहदशायां वह्निव्याप्यवानयमितिव्याप्तिमात्रप्रकारेण पक्षधर्मताज्ञानादनुमित्युत्पत्तेरित्यर्थः तथा च तादृशानुमितौ व्यभिचारग्रहप्रतिबध्यतावच्छेदकनिरुक्तधर्मानाक्रान्तायामव्यभिचारग्रहस्य कारणतायाः आवश्यकत्वेन व्यभिचाराग्रहहेतुत्वं न कुत्रापि कल्पयितुमुचितं न चाव्यभिचारस्य केवलान्वयिस्थले ऽप्रसिद्ध्या व्यतिरेकिस्थलेऽपि केवलान्वयित्वग्रहदशायां दुर्ग्रहतया तत्र व्यभिचाराग्रहसहकृतसामानाधिकरण्यज्ञानादेवानुमितिरुपगन्तव्येति वाच्यम् स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदककत्वरूपस्य सिद्धान्तग्रन्थे निर्वाच्यस्याव्यभिचारस्य सर्वत्रैव सुग्रहत्वात् साध्यस्य केवलान्वयित्वग्रहदशायामनुमितिमनङ्गीकुर्वाणैः साध्याभाववद्वृत्तित्वरूपाव्यभिचारज्ञानस्यानुमितिसामान्यहेतुत्वस्वीकारेऽपि बाधकाभावादिति भावः । ननु हेतुतावच्छेदकाग्रहस्थले व्यभिचारग्रहाभावसहितसाध्यसामानाधिकरण्यप्रकारकपक्षधर्मताज्ञानादेवानुमितिः सम्भवतीति तत्राव्यभिचारज्ञानहेतुत्वमसिद्धम् । एवं स्वसमानाधिकरणेत्यादिसिद्धान्तग्रन्थे निर्वाच्यव्याप्तिज्ञानस्य हेतुतायां रासभादिव्यावर्तकतत्तद्धेतुतावच्छेदकस्य सामानाधिकरण्यधर्मितावच्छेदकविधया विषयतया अवश्यं निवेशनीयतया हेतुतावच्छेदकधर्मप्रकारकज्ञानं विना ऽनुमितिर्भवत्येव नेत्यत आह विवदन्ते चेति । केवलान्वय्यनुमानानभ्युपगन्तारो नव्या इतिशेषः । तथा च सामानाधिकरण्यज्ञानस्यापि हेतुता यैनाव्यभिचारज्ञानहेतुतावादिभिरुपगम्यते तन्मतापेक्षया ऽव्यभिचारज्ञानस्थले व्यभिचार-

ग्रहहेतुतां कल्पयतः सामानाधिकरण्यमात्रस्य व्याप्तित्वं म-न्यमानस्य मते गौरवाभावेऽपि साध्याभाववदवृत्तित्वरूपाव्यभि-चारज्ञानहेतुतावादिनवीनमतापेक्षया कारणताद्वयकल्पने गौरवं दुर्वारमेवेति भावः । हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्ति-ज्ञानहेतुतावादिनां सिद्धान्तिनां मतेऽपि तन्मतापेक्षया लाघ-वमाह व्यभिचारज्ञानेति । सिद्धान्तिमते ऽव्यभिचारज्ञानसामा-नाधिकरण्यज्ञानयोः न कारणताद्वयम् अपि तु स्वसमाना-धिकरणाभावप्रतियोगितानवच्छेदकत्वरूपाव्यभिचारविषयतानिरू-पितत्वं साध्यसामानाधिकरण्यज्ञानहेतुतावच्छेदककोटिप्रविष्टसा-ध्यतावच्छेदकविषयतायां निवेश्यते तथा च कारणताया ऐक्याल्लाघवमक्षुण्णमेवेति भावः । इदमत्रावधेयम् पक्षभेदेन साध्य-समानाधिकरणहेतुमत्ताज्ञानहेतुतानामानन्त्यात्तत्राव्यभिचारविषय-तानिवेशे ऽनन्तस्थले ऽवच्छेदकगौरवं निरुक्तसाध्यतावच्छेद-कविषयतायां निरुक्ताव्यभिचारविषयतानिरूपितत्वं निरुक्ताव्यभि-चारविषयतायां वा साध्यतावच्छेदकविषयतानिरूपितत्वं नि-वेश्यत इत्यत्र विनिगमनाविरहेणानन्तपक्षभेदेनानन्तकारणताधि-क्यं चेति पक्षविशेषमनन्तर्भाव्य सामान्यतस्तल्लिङ्गकतत्साध्य-कानुमितौ तल्लिङ्गधर्मिकतत्साध्यनिरूपितव्यभिचारज्ञानाभावत्वेनै-ककारणताकल्पनमेव सम्यक् । अत्र केचित् व्यभिचारग्रहस्य शा-रीरनिष्ठप्रत्यासत्त्या आत्मनिष्ठप्रत्यासत्त्या वा प्रतिबन्धकत्वं न स-म्भवति परपुरप्रवेशस्थले तच्छरीरे अभिभाव्यस्य व्यभि-चारज्ञानसत्त्वेऽपि अभिभावकभूतादेरनुमित्युदयात् कायव्यूहस्थले एकशरीरावच्छिन्ने आत्मनि व्यभिचारग्रहसत्त्वेऽपि शरीरान्तरा-वच्छिन्ने तत्रानुमित्युदयादिति शरीरविशेषावच्छिन्नत्वं निवे-श्यात्मनिष्ठप्रत्यासत्त्या व्यभिचारग्रहस्य प्रतिबन्धकता वाच्या तथा च चैत्रमैत्रादिशरीरभेदेन तदभावस्यानन्तहेतुतापेक्षया सामानाधि-करण्यसमानावच्छेदकत्वोभयप्रत्यासत्त्या अवश्यकल्प्यसामाना-धिकरण्यज्ञानहेतुतायामव्यभिचारविषयकत्वनिवेश एव लघीयान् न च समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्य साध्यव्यभि-चाराग्रहस्य सामानाधिकरण्यसमानावच्छेदकत्वप्रत्यासत्तिभ्यां कारणताकल्पनेनैव सामञ्जस्याच्छरीरभेदेन तदभावस्य हेतुतामतेऽपि शरीरभेदानिवे-

ज्ञानं नास्तीति वाच्यं तथा सति तच्छरीरावच्छेदेन तदात्मनि व्यभिचारधीसत्त्वेऽपि तदात्मनि तदभावस्यान्यावच्छेदेनान्यात्मनि तदभावस्य तच्छरीरावच्छेदेन वृत्तेस्तच्छरीरावच्छेदेन तदात्मन्यनुमित्यापत्तेर्दुर्वारत्वात् उभयप्रत्यासत्त्यवच्छिन्नैकहेतुतास्थले एककारणव्यक्तेरुभयाधिकरणप्रत्यासत्तेरुभयाधिकरणप्रत्यासन्नकार्योत्पत्तिप्रयोजकतया ऽव्यभिचारविषयकसामानाधिकरण्यज्ञानं तत्र कायव्यूहस्थले तदात्मनि शरीरान्तरावच्छेदेनैतच्छरीरावच्छेदेन परपुरप्रवेशकर्तर्यात्मान्तरे तत्रैतच्छरीरावच्छेदेनैतदात्मनि अनुमित्यापत्त्यनवकाशः आत्मभेदेन ज्ञानव्यक्तिभेदादिति ज्ञानहेतुतायां शरीरभेदनिवेशमन्तरेणैवोपपत्तिरधिकरणभेदेऽव्यभावव्यक्तिभेदाभावेन व्यभिचारज्ञानाभावहेतुतामते शरीरभेदनिवेशनं विना ऽतिप्रसङ्गवारणोपपत्तेरयोगात् न च यद्देशावच्छेदेन यदा यदधिकरणे कार्यं तदवच्छेदेन तदव्यवहितपूर्वक्षणे तदधिकरणे कारणमित्येतादृशावच्छेदकीभूतदेशघटितव्यापताघटितं कारणत्वं व्यभिचारग्रहे स्वीक्रियते तादृशकारणताश्रयस्य तद्देशावच्छेदेन तदधिकरणसत्त्वं तद्देशावच्छिन्नतदधिकरणनिष्ठकार्योत्पादे तन्त्रमिति तच्छरीरावच्छेदेन तदात्मनि व्यभिचारग्रहदशायां तदवच्छेदेन तदात्मनि तद्ग्रहस्य दुर्लभतया नोक्तातिप्रसङ्ग इति वाच्यम् । एवमपि यत्र महाशरीरनाशस्य खण्डशरीरस्य चोत्पाददशायां व्यभिचारग्रहस्तत्र खण्डशरीरोत्पादद्वितीयक्षणे तदवच्छेदेनानुमित्यापत्तेर्व्यभिचाराग्रहहेतुतावादिनां दुर्वारत्वात् तच्छरीरस्य व्यभिचारग्रहपूर्वकाले ऽसत्त्वेन व्यभिचारग्रहानवच्छेदकतया तदवच्छेदेन तद्ग्रहस्यात्मनि सत्त्वात् न च तदा व्यभिचारग्रह एव न सम्भवति शरीररूपकारणविरहादित्याशङ्क्यं यतः शरीरावयवसाधारणचेष्टावत्त्वस्यैव ज्ञानजननोपयिकतया शरीरासत्त्वेऽपि तदवयवावच्छेदेनैव ज्ञानोत्पत्तिसम्भवादित्याहुः । व्यभिचाराग्रहस्यानुमितिहेतुतामते अनुमितिसामग्र्या अधिककारणताघटिततया भिन्नविषयकप्रत्यक्षादौ तत्प्रतिबन्धकतायां गौरवमित्यन्ये । अव्यभिचारग्रहहेतुतामते तत्र संशयान्यत्वप्रवेशप्रयुक्तगौरवमाशङ्कते अव्यभिचारनिश्चयत्वेनेति । व्यभिचाराप्रकारकाव्यभिचारप्रकारकज्ञानत्वेनेत्यर्थः । गौरवमिति

व्यभिचाराग्रहहेतुतामते व्यभिचारसंशयस्यापि प्रतिबन्धकत्वेन तत्साधारणव्यभिचारग्रहत्वावच्छिन्नाभावहेतुतया व्यभिचारग्रहे संशयभेदानिवेशेन लाघवादिति भावः। व्यभिचारज्ञानप्रतिबन्धकतामते व्यभिचारज्ञाने निश्चयत्वानिवेशेऽपि उत्तेजकीभूतभ्रमत्वज्ञाने निश्चयत्वस्य निवेशनीयतया गौरवमिति समाधत्ते व्यभिचारज्ञानस्येति भ्रमत्वानिश्चयदशायामेवेत्येवकारेण तत्संशयदशायामनुमित्यविरोधित्वव्यवच्छेदः अप्रामाण्यशङ्कया निश्चितस्यापि विषयस्य संशयोत्पत्तेः तच्छङ्काकलङ्कितस्य निश्चयकार्यकारित्वमात्र नास्तीति तथाविधस्य व्यभिचारग्रहस्य तत्संशयान्तरवदनुमितिप्रतिबन्धकताध्रौव्यादिति भावः। भ्रमत्वेनानिश्चीयमानस्य-भ्रमत्वनिश्चयत्वावच्छिन्नाभावविशिष्टस्य विरोधित्वं वाच्यं भवता वाच्यं भ्रमत्वशङ्कायामपीति तच्छङ्कास्कन्दितज्ञानस्य विरोध्यप्रकारकज्ञानस्यापि निश्चयकार्यासमर्थत्वादिति भावः। अपिकारात्तन्निश्चयदशासमुच्चयः भ्रमत्वेनागृह्यमाणस्येति भ्रमत्वज्ञानत्वावच्छिन्नाभावविशिष्टस्येत्यर्थः एवकारेण तन्निश्चयत्वावच्छिन्नाभाववैशिष्ट्यस्य कारणतावच्छेदकत्वव्यवच्छेदः। तथैवेति "व्यभिचाराग्रहहेतुतावादिन एवेत्यर्थः। गौरवादिति" व्यभिचारवद्विशेष्यकत्वावच्छिन्नाव्यभिचारप्रकारकत्वज्ञानाभावविशिष्टव्यभिचाराप्रकारकाव्यभिचारज्ञानत्वापेक्षया व्यभिचारवद्विशेष्यकत्वावच्छिन्नव्यभिचारप्रकारत्वाभावाप्रकारकाव्यभिचारवद्विशेष्यकत्वावच्छिन्नव्यभिचारप्रकारकत्वप्रकारकज्ञानत्वावच्छिन्नाभावविशिष्टव्यभिचारज्ञानत्वावच्छिन्नाभावत्वरूपकारणतावच्छेदकस्य गुरुशरीरत्वादिति भावः। न च भ्रमत्वज्ञानास्कन्दितस्यविषयकभ्रमत्वज्ञानदशायामव्यभिचारज्ञानस्यानुमितिजनकतया तदवच्छेदकाभावप्रतियोगिनि भ्रमत्वज्ञाने भ्रमत्वान्तरग्रहाभावविशिष्टत्वं निवेश्य तादृशभ्रमत्वग्रहस्य निश्चयत्वेनैवाभावो निवेश्यः भ्रमत्वशङ्कास्कन्दितस्यापि परामर्शीयभ्रमत्वग्रहस्य भ्रमत्वसंशयान्तरवदनुमित्यनुत्पादप्रयोजकत्वादित्यव्यभिचारग्रहहेतुतामते गौरव-व्यभिचारग्रहोत्तेजकीभूतभ्रमत्वनिश्चये भ्रमत्वान्तरग्रहस्य संशयसाधारणतज्ज्ञानत्वेनैवाभावनिवेशादिति वाच्यम् अप्रामाण्यग्रहेऽप्रामाण्यान्तरग्रहाभावानिवेशे तत्राप्यप्रामाण्यान्तरग्रहाभावस्य नि-

वेशनीयतया तत्र भवतां निश्चयत्वनिवेशेन लाघवविरहात् न चावच्छेदककोटिप्रविष्टाप्रामाण्यग्रहधारायाः एकैकं परित्यज्य निश्चयत्वनिवेशनमुभयमते समानम् । अव्यभिचारग्रहहेतुतामते पुनरव्यभिचारग्रहे निश्चयत्वनिवेशनमधिकमिति वाच्यम् अव्यभिचारविशिष्टवैशिष्ट्यज्ञानत्वेनैव हेतुतायाः वक्तव्यतया तत्संशये च तद्विशिष्टवैशिष्ट्यावगाहित्वानुपगमेनैवाव्यभिचारसंशयादनुमितिवारणसम्भवे तदंशे निश्चयत्वस्यानिवेशात् अव्यभिचारविषयकाप्रामाण्यग्रहे ऽप्रामाण्यग्रहसत्त्वेऽप्यनुमित्यनुपगमेनाप्रामाण्यग्रहे ऽप्रामाण्यान्तरग्रहाभावस्य न विशेषणत्वमन्यथा विशेषणानवस्थाप्रसङ्गादित्यपि वदन्ति । गौरवान्तरेण व्यभिचारग्रहप्रतिबन्धकतामतं दूषयतामन्येषां मतमाह नानाविधेति । हेतुनिष्ठसाध्याभाववद्वृत्तित्वसाध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वतादृशप्रतियोगितानिष्ठसाध्यतावच्छेदकावच्छिन्नत्वादिरूपबहुविधेत्यर्थः यत्किञ्चिदेकविधव्यभिचारग्रहदशायामेवानुमित्यनुत्पादस्यानुभविकतया सर्वविधव्यभिचारज्ञानस्यैव पृथक्प्रतिबन्धकताया आवश्यकत्वादिति भावः । नियतपूर्ववर्तित्वेन क्लृप्तानामपीति । अव्यभिचारज्ञानहेतुतामतेऽपि तद्धेतुभूतयावद्व्यभिचारज्ञानाभावानामनुमितौ नियतपूर्ववर्तित्वादिति भावः । एतेन बह्वप्यनन्यथासिद्धिकल्पनमपेक्ष्य एकधर्मावच्छिन्ने नियतपूर्ववर्तितासहिततत्कल्पने लाघवमिति ध्वनितम् । वक्ष्यमाणैकविधेति । केवलान्वयिखण्डनावसरे साध्याभाववद्वृत्तित्वरूपलघुशरीराव्यभिचारेत्यर्थः तादृशाव्यभिचारज्ञानस्यापि सर्वविधव्यभिचारग्रहप्रतिबन्धकतया तद्धेतुतयैव सकलव्यभिचारज्ञानदशायामनुमितिवारणसम्भवात् अव्यभिचारान्तरग्रहस्य तल्लघुशरीरलाघवस्यैव विनिगमकतया विनिगमनाविरहेण नानाविधाव्यभिचारधियामेव कारणत्वमित्यस्यापि वक्तुमशक्यत्वादिति भावः । आहुरित्यस्वरसोद्भावनं तद्बीजं तु असमानाकारतया व्यभिचारान्तरग्रहस्य साक्षादुक्ताव्यभिचारज्ञानाप्रतिबन्धकतया व्यभिचारान्तरधीदशायामुक्ताव्यभिचारज्ञानसत्त्वेऽनुमितिस्वीकारे गुरुशरीरव्यभिचारान्तरग्रहस्यानुमितिविरोधितया तावतैवोपेक्षितत्वादस्माकमपि लघुशरीर-

साध्याभाववद्वृत्तित्वरूपव्यभिचारग्रहाभाव एव हेतुरिति वक्तुं शक्यतया उक्तलाघवानवकाशात् व्यभिचारान्तरग्रहदशायामुक्ताव्यभिचारग्रहसत्त्वे ऽनुमित्यनुत्पादो ऽनुभवसिद्ध इति चेत्तर्हि अव्यभिचारग्रहासत्त्व एव तदनुत्पादो ऽनुभवसिद्ध इति उक्तास्मदीययुक्तिरेव जागर्ति किमेतावता प्रयासेनेति । ननु केवलसामानाधिकरण्यस्य व्याप्तित्वे द्रव्यत्वादिना ह्रदादौ वह्न्याद्यनुमानापत्तिरेव बाधिका तद्वारणाय साध्यसामानाधिकरण्यविशिष्टहेतुमत्ताज्ञानस्यैवानुमितिहेतुत्वमुपेयतां किमव्यभिचारज्ञानहेतुतया ह्रदादौ वह्निशून्ये वह्निसामानाधिकरण्यविशिष्टवैशिष्ट्यासत्त्वात् व्यभिचारिण्यपि साध्यसामानाधिकरण्यविशिष्टस्य साध्यवत्येव सत्त्वात् पक्षे विशिष्टवैशिष्ट्यग्रहे हेतौ व्यभिचारग्रहेऽप्यनुमितिरिष्टैव सामानाधिकरण्यविशिष्टवैशिष्ट्यस्याव्यभिचारविशिष्टवैशिष्ट्यतुल्यत्वादित्याशङ्कां परिहरति,. सामानाधिकरण्यविशिष्टपक्षधर्मत्वं त्विति । पक्षे साध्यसामानाधिकरण्यविशिष्टवैशिष्ट्यं त्वित्यर्थः पक्षे साध्यग्रहं विना साध्यनिश्चयं विना दुर्ग्रहं दुर्निश्चयं पक्षे साध्यसन्देहदशायां साध्यसामानाधिकरण्यविशिष्टस्यापि सन्देह औत्सर्गिकः स साध्यनिश्चयेनैव व्यावर्तकधर्मदर्शनविधया निवर्तनीय इति भावः । तथा चान्योन्याश्रयात्तत्सामानाधिकरण्यविशिष्टवैशिष्ट्यनिश्चयस्य तन्निश्चयहेतुता न सम्भवतीत्याशयः । पर्वते वह्निसन्देहदशायां निश्चितसाध्यकमहानसादिवृत्तितया अगृह्यमाणायां पर्वतीयधूमव्यक्तौ वह्निसामानाधिकरण्यसन्देह औत्सर्गिक इति तदानीं तत्सामानाधिकरण्योपलक्षितधूमवत्तानिश्चयो दुर्घट इति कथमव्यभिचरितसामानाधिकरण्यप्रकारकहेतुमत्ताज्ञानहेतुतापक्ष एव प्रतीकार इति चेन्महानसीयधूमादौ प्रत्यक्षतो वह्निसामानाधिकरण्ये निश्चीयमाने लाघवज्ञानाधीनात् धूमत्वावच्छेदेन वह्निजन्यत्वनिश्चयरूपविशेषदर्शनतस्तदवच्छेदेनैव तन्निर्णयात् धूमत्वदर्शनविषयपक्षीयधूमेऽपि साध्यसामानाधिकरण्यसंशयायोगात् हेतुव्यापकसाध्यसमानाधिकरणवृत्तित्वोपलक्षितधूमत्वस्य व्याप्तित्वपक्षे तत्प्रकारकहेतुमत्त्वस्य पक्षे साध्यसन्देहदशायामपि निश्चयस्य निष्प्रत्यूहतया ऽनुपपत्त्यनवकाशाच्च । साध्यस्य केवलान्वयित्वज्ञानकालीनायामनुमितौ केवलान्वयिसाध्यसामानाधिकरण्यज्ञानमन्याह-

साध्याभाववद्वृत्तित्वरूपव्यभिचारग्रहाभाव एव हेतुरिति वक्तुं शक्यतया उक्तलाघवानवकाशात् व्यभिचारान्तरग्रहदशायामुक्ताव्यभिचारग्रहसत्त्वे ऽनुमित्यनुत्पादो ऽनुभवसिद्ध इति चेत्तर्हि अव्यभिचारग्रहासत्त्व एव तदनुत्पादो ऽनुभवसिद्ध इति उक्तास्मदीययुक्तिरेव जागर्ति किमेतावता प्रयासेनेति । ननु केवलसामानाधिकरण्यस्य व्याप्तित्वे द्रव्यत्वादिना ह्रदादौ वह्न्याद्यनुमानापत्तिरेव बाधिका तद्वारणाय साध्यसामानाधिकरण्यविशिष्टहेतुमत्ताज्ञानस्यैवानुमितिहेतुत्वमुपेयतां किमव्यभिचारज्ञानहेतुतया ह्रदादौ वह्निशून्ये वह्निसामानाधिकरण्यविशिष्टवैशिष्ट्यासत्त्वात् व्यभिचारिण्यपि साध्यसामानाधिकरण्यविशिष्टस्य साध्यवत्येव सत्त्वात् पक्षे विशिष्टवैशिष्ट्यग्रहे हेतौ व्यभिचारग्रहेऽप्यनुमितिरिष्टैव सामानाधिकरण्यविशिष्टवैशिष्ट्यस्याव्यभिचारविशिष्टवैशिष्ट्यतुल्यत्वादित्याशङ्कां परिहरति.. सामानाधिकरण्यविशिष्टपक्षधर्मत्वं त्विति । पक्षे साध्यसामानाधिकरण्यविशिष्टवैशिष्ट्यं त्वित्यर्थः पक्षे साध्यग्रहं विना साध्यनिश्चयं विना दुर्ग्रहं दुर्निश्चयं पक्षे साध्यसन्देहदशायां साध्यसामानाधिकरण्यविशिष्टस्यापि सन्देह औत्सर्गिकः स साध्यनिश्चयेनैव व्यावर्तकधर्मदर्शनाविधया निवर्तनीय इति भावः । तथा चान्योन्याश्रयात्तत्सामानाधिकरण्यविशिष्टवैशिष्ट्यनिश्चयस्य तन्निश्चयहेतुता न सम्भवतीत्याशयः । पर्वते वह्निसन्देहदशायां निश्चितसाध्यकमहानसादिवृत्तितया अगृह्यमाणायां पर्वतीयधूमव्यक्तौ वह्निसामानाधिकरण्यसन्देह औत्सर्गिक इति तदानीं तत्सामानाधिकरण्योपलक्षितधूमवत्तानिश्चयो दुर्घट इति कथमव्यभिचरितसामानाधिकरण्यप्रकारकहेतुमत्ताज्ञानहेतुतापक्ष एव प्रतीकार इति चेन्महानसीयधूमादौ प्रत्यक्षतो वह्निसामानाधिकरण्ये निश्चीयमाने लाघवज्ञानाधीनात् धूमत्वावच्छेदेन वह्निजन्यत्वानिश्चयरूपविशेषदर्शनतस्तदवच्छेदेनैव तन्निर्णयात् धूमत्वदर्शनाविषयपर्वतीयधूमेऽपि साध्यसामानाधिकरण्यसंशयायोगात् हेतुव्यापकसाध्यसमानाधिकरणवृत्तित्वोपलक्षितधूमत्वस्य व्याप्तित्वपक्षे तत्प्रकारकहेतुमत्त्वस्य पक्षे साध्यसन्देहदशायामपि निश्चयस्य निष्प्रत्यूहतया ऽनुपपत्त्यनवकाशाच्च । साध्यस्य केवलान्वयित्वज्ञानकालीनायामनुमितौ केवलान्वयिसाध्यसामानाधिकरण्यज्ञानमन्याह-

दर्या च साध्यवदन्यावृत्तित्वज्ञानं हेतुरिति मते साध्यव्य-क्तिकिञ्चिद्व्यक्तिभिन्नवृत्तौ नानाधिकरणकसाध्यके हेतावव्याति-मूलोक्ता साध्यवदन्यत्वस्य साध्यतावच्छेदकविशिष्टावच्छिन्नभेदरू-पत्वे तस्या अनवकाशात् स्वयं सिद्धान्तमतापेक्षया गो-त्वेण तन्निराकरोति केवलान्वयित्वेति । साध्य इत्या-दिः अनुमित्यनुत्पत्तेरिति । साध्यसामानाधिकरण्यमात्र-ग्रहस्य व्यभिचारग्रहाविरोधित्वादिति भावः । तद्ग्रहोऽपि साध्ये केवलान्वयित्वग्रहोऽपि हेतुर्वाच्यः अनुमितिहेतुर्वा-च्यः यद्यपि स्वमते अवृत्तिगगनादेः स्वाभावाभावत्वविरहादत्य-न्ताभावे वृत्तिमत्त्वमनिवेश्यैव तदभावसाधारणं केवलान्वयित्वं सुवचं तथापि सांप्रदायिकानुमततद्घटितकेवलान्वयित्वशरीरे वृत्तौ साधनवन्मात्रस्य विशेषणत्वोपगमेनैव व्यापकतापर्यव-सानं भवति स्वमते पुनरत्यन्ताभावांशे साधनवद्वृत्तित्वविशे-षणप्रक्षेपेणैवेति सांप्रदायिकानुमतमेव केवलान्वयित्वं दर्शय-ति तच्च वृत्तिमदत्यन्तेति । आदिपदान्निरुक्तस्य तादृशाभावप्रति-योगितानवच्छेदकधर्मवत्त्वस्य परिग्रहः अन्योन्याभावघटितव्या-पकतापर्यवसानाय तद्घटितमपि केवलान्वयित्वमाह अन्यो-न्याभावेति । गगनादेः स्वात्यन्ताभावप्रतियोगित्वानुरोधेन तदभा-वत्वस्वीकारेऽपि तद्वदन्योन्याभावत्वमप्रामाणिकमित्यन्योन्याभा-वे वृत्तिमत्त्वमव्यावर्त्तकतया नोपात्तं सर्वसाधारण्याय साध्ये व्यतिरेकित्वग्रहकालीनानुमितिकारणीभूतज्ञानविषयत्वनिर्वाहाय लाघवात् साध्यवदन्यावृत्तित्वज्ञाने हेतुत्वान्तराकल्पनालाघवात् । साधनेति साधनवती ऽत्यन्ताभावविशेषणीभूताया वृत्तेः साध-नवद्वृत्तिताया अन्योन्याभावस्य वा विशेषणत्वमुचितं तथा च उच्यत इत्यादिना वक्ष्यमाणसिद्धान्तमत एव पर्यवसानम् अन्य था कार्यकारणभावद्वयकल्पनागौरवस्य प्रसङ्गादित्यर्थः शेषमिति साध्ये केवलान्वयित्वग्रहदशायां पक्षे साध्यस्याननुमितावपि न क्षतिः तदानीं केवलान्वयित्वेन हेतुना साध्यपक्षवृत्तित्वा-नुमित्यैव पक्षे साध्यवत्तानिश्चयकार्यसम्भवात् तथा च साध्यवद-न्यावृत्तित्वमेवानुमित्यौपयिकं लघुशरीरत्वादित्यादिकमित्यर्थः ॥

इति श्रीगदाधरभट्टाचार्यविरचिता शिरोमणिकृत-पूर्वपक्षव्याख्याया विवृतिः समाप्ता ॥

# अनुमानगादाधर्याम्

## सिद्धान्तलक्षणप्रकरणम्।

---

( चिं० ) अत्रोच्यते। प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः।

(गा०) प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवतीति यथाश्रुतमूलाद्यत्पदार्थे साध्ये प्रतियोगितावच्छेदकावच्छिन्नान्यत्वं प्रतीयते ततश्च वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणमहानसीयवह्नित्वाद्यवच्छिन्नाभावमादाय दोषो दुर्वारः सर्वेषामेव वह्न्यादीनां तादृशाभावप्रतियोगितावच्छेदकविशिष्टतया तदन्यत्वासम्भवात् यत्पदस्य यद्रूपावच्छिन्नपरतया यद्रूपावच्छिन्नस्य प्रतियोगितावच्छेदका येये धर्माः प्रत्येकं तदवच्छिन्नान्यत्वमित्यर्थे साध्यतावच्छेदकस्य तत्तत्प्रतियोगितावच्छेदकधर्मावच्छिन्नभेदकूटेन प्रत्येकं सामानाधिकरण्यपर्यवसिते वह्न्यादिसाध्यकहेतौ वह्नित्वादेर्विभिन्नवह्न्यादिव्यक्त्यन्तर्भावेन महानसीयवह्नित्वाद्यवच्छिन्नभेदैः प्रत्येकं सामानाधिकरण्यसत्त्वेऽप्येकव्यक्तिसत्त्वादिसाध्यके सत्त्वात्वादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नभेदसामानाधिकरण्यासत्त्वादव्याप्तिः यद्रूपावच्छिन्नं प्रतियोगितावच्छेदकावच्छिन्नाविषयकप्रतीतिविषय इत्यर्थे उक्तदोषोद्धारेऽपि यद्रूपं प्रतियोगितावच्छेदकभिन्नं प्रतियोगितावच्छेदकाविषयप्रतीतिविषयो वा इत्यत्र एव सामञ्जस्ये प्रतियोगितावच्छेदकविशिष्टाविषयकप्रतीतिविषयत्वस्य साध्यतावच्छेदकविशिष्टे निवेशनमनुचितम् एवं स्वरूपसम्बन्धरूपावच्छिन्नत्वस्य विवक्षया यद्रूपावच्छिन्नं प्रतियोगित्वमुक्ताभावप्रतियोगितावच्छेदकानवच्छिन्नमित्यर्थे शुद्धवह्नित्वरूपसाध्यतावच्छेदकावच्छिन्नप्रतियो-

गित्वे महानसीयत्वादिविशिष्टवह्नित्वाद्यनवच्छेदकत्वं सुलभमेव यद्रूपावच्छिन्नं प्रतियोगित्वं तादृशप्रतियोगिताभिन्नमित्युक्तौ समवायादिना घटादौ साध्ये संयोगादिना घटादिहेतावतिव्याप्तिः संयोगादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रतियोगितायां हेतुमन्निष्ठाभावप्रतियोगिताभेदसत्त्वात् इदं वाच्यं ज्ञेयत्वादित्यादावव्याप्तिवारणाय हेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया व्यभिचारिमात्र एव सम्बन्धान्तरावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नभेदोपादानं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं भेदानुयोगिसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायां निवेश्यातिव्याप्तिवारणे केवलान्वयिसाध्यके तादृशप्रतियोगित्वाप्रसिद्धिरिति मिश्ररीत्या परिष्कारेऽपि गौरवमित्युपाध्यायोपदिष्टनञ्व्यत्यासपक्षमवलम्ब्य व्याचष्टे प्रतियोग्यसमानाधिकरणेति ।

(दी०) प्रतियोग्यसमानाधिकरणेति । प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः ।

(गा०) न च नञ्व्यत्यासेन साध्यतावच्छेदके प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयत्वमेव विवक्षणीयं तदपेक्षया साध्यतावच्छेदकावच्छिन्नप्रतियोगित्वे प्रतियोगितावच्छेदकानवच्छेद्यत्वनिवेशपक्षे न गौरवमिति वाच्यं प्रत्येकं घटादौ घटपटोभयत्वाद्यवच्छिन्नभेदवत् शुद्धवह्नित्वादौ महानसीयत्वाद्यन्तर्भावेन पर्याप्तविशिष्टवह्न्याद्यभावीयप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य सुघटत्वात् अवच्छेदकाविषयकप्रतीतिविषयत्वमन्तरेणैव प्रतीकारात् अवच्छेदकत्वस्य वह्नित्वमहानसीयत्वादिनिष्ठस्य सम्बन्धभेदेन भिन्नत्वेऽपि तत्तत्प्रतियोगितावच्छेदकत्वत्वाद्यनुगतरूपेण व्यासज्यवृत्तितायाश्चकथितलक्षणे वह्नित्वादेरवच्छेदकत्वपर्याप्त्य-

नधिकरणत्वमुपपादितवतो दीधितिकारस्यानुमतत्वात् । सार्वभौमैस्तु विशेषधर्मावच्छिन्नप्रतियोगिताकूटानतिरिक्तसामान्यधर्मावच्छिन्नप्रतियोगितासम्बन्धस्य विशेषरूपेणाव्यासज्यवृत्तेरपि सामान्यधर्मावच्छिन्नप्रतियोगितासम्बन्धत्वेनानुगतेन व्यासज्यवृत्तित्वमिति कण्ठरवेणोक्तम् एवं सति महानसीयवह्निभिन्नवह्निमान् धूमादित्यादौ साध्यतावच्छेदकमहानसीयवह्निभिन्नत्ववह्नित्वायोः प्रत्येकं धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणत्वेऽपि प्रकृतानुमितिविधेयतावच्छेदकता यादृशरूपावच्छिन्ने पर्याप्ता तादृशरूपावच्छिन्नानुयोगिताकतादृशावच्छेदकत्वावच्छिन्नभेदस्यैव व्याप्तिघटकत्वोपगमान्नातिव्याप्तिः उक्तस्थलीयानुमितिविधेयतावच्छेदकतापर्याप्त्यवच्छेदकदर्शितधर्मद्वयनिष्ठद्वित्वाद्यवच्छिन्नहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वपर्याप्तिमति विरोधेन तदवच्छिन्नभेदासत्त्वात् साध्यतावच्छेदकवृत्तिमहानसीयवह्निभिन्नत्ववह्नित्वोभयत्वाद्यनुपस्थितिकाले तदवच्छिन्ने ऽनवच्छेदकत्वस्य दुर्ग्रहतया ऽनुमित्यनुत्पादो व्यापकताज्ञानकारणतावादिनामिष्ट एव तेन तेन रूपेणानवच्छेदकत्वग्रहात्तद्रूपावच्छिन्नविधेयताकानुमित्यनुपपत्तिश्च केवलान्वयिग्रन्थे ग्रन्थकृतैव वक्ष्यते । यत्तत्त्वेन हेतोर्निवेशे हेतुव्यक्तिभेदेन व्याप्तिर्भिद्येत सा च नानुमित्युपयोगिनी पक्षीयधूमादिव्यापकतायाः पूर्वं वह्न्यादावगृहीतत्वादिति यद्रूपविशिष्टेत्युक्तं तथा च धूमत्वादिरूपहेतुतावच्छेदकधर्मेणैव विशिष्य निवेश्य तत्तद्रूपावच्छिन्नहेतुकानुमितीयपक्षव्याप्तिर्निर्वाच्या तथा च महानसादौ धूमवह्न्यादिव्यभिचाराग्रहाद्वह्न्यादिना तत्तद्धूमत्वाद्यवच्छिन्ननिरूपितायाः इव पक्षीयधूमादिसाधारणधूमत्वाद्यवच्छिन्ननिरूपिताया अपि व्यापकताया ग्रहसम्भवात्तद्घटितव्याप्तेः पक्षधर्मे धूमे ग्रहादनुमितिनिर्वाह इति भावः। न च सामानाधिकरण्यस्य व्याप्तित्वपक्षे हेतुव्यक्तिभेदेन व्याप्तिभेद आवश्यक एवेत्यनुगतरूपेण हेतुनिवेशो व्यर्थ इति वाच्यं हेतुव्यक्तिभेदेन व्याप्तिभेदेऽपि अनुगतरूपेण हेतुनिवेशे धूमव्यापकवह्निप्रतियोगिकधूमनिष्ठसामानाधिकरण्यत्वादिना सामानाधिकरण्यव्यक्तीनामनुगमात् सामान्यप्रत्यासत्त्या पक्षीयहेतुनिष्ठव्याप्तेरपि

प्रथममनुगतसामानाधिकरण्यत्वरूपव्याप्तित्वेन ग्रहसम्भवेनानु-
मित्युपपत्तेः तत्तद्व्यक्तित्वेन हेतुनिवेशेऽननुगमात् सामान्यप्रत्यास-
त्त्यापि पक्षीयहेतुनिष्ठव्याप्तेर्व्याप्तित्वेन दुर्ग्रहतयाऽनुमित्यनुपपत्तेः। हे-
तुतावच्छेदकाश्रयाधिकरणत्वमुपेक्ष्य तद्विशिष्टनिरूपिताधिकरणत्व-
प्रवेशप्रयोजनमग्रे वक्ष्यते। प्रतियोगितानवच्छेदकत्वमात्रेण साध्य-
तावच्छेदकानिवेशे वह्नित्वत्वादिना वह्नित्वादिकमनवगाहमानात् प्रति-
योगितानवच्छेदकवत्समानाधिकरणधूमवानिति ज्ञानाद्वह्निमानित्यनु-
मितिः स्यात् न चेष्टापत्तिसम्भवः कदाचिद्वह्नित्वेन कदाचिद् द्रव्यत्वादि-
ना वह्न्यनुमितिरितीतिनियमानुपपत्तेः न चानवच्छेदकत्वेन तत्तद्धर्माव-
गाहित्वमेव व्याप्तिग्रहस्यानुमितौ विधेयतावच्छेदकतया तत्तद्धर्मभा-
ननियामकमिति वाच्यम् अनवच्छेदकत्वेन वह्नित्वादिभाने द्रव्य-
त्वादिभानस्यापि प्रायशः सम्भवात् एव तत्तत्साध्यताव-
च्छेदकावच्छिन्नाव्यभिचारितया हेतुमानस्य हेतुसमानाधिकर-
णाभावप्रतियोगितानवच्छेदकत्वमात्रेण तत्तत्साध्यतावच्छेदकाव-
गाहिव्याप्तिज्ञानाविरोधितया विशिष्य साध्यतावच्छेदकानवगा-
हिव्याप्तिज्ञानस्य हेतुत्वे व्यभिचारस्य हेत्वाभासतानुपपत्तिश्चेति
विशिष्य साध्यतावच्छेदकस्य व्याप्तिघटकतालाभाय प्रतियो-
गितानवच्छेदकावच्छिन्नेनेत्युक्त्वा प्रतियोगितानवच्छेदको यो
धर्मस्तदवच्छिन्नेनेत्युक्तं यत्र वह्नित्वत्वादिविशेषणावच्छिन्नस्य
साध्यतावच्छेदकता तत्र तेन रूपेणैव तत्तद्धर्माणां व्याप्ति-
घटकता यत्र स्वरूपत एव वह्नित्वाद्यखण्डधर्माणां साध्यताव-
च्छेदकत्वं तत्रापि विशेषणावच्छिन्नतत्तद्धर्मघटिततत्तद्धर्मभिन्नवि-
तरावृत्तित्वरूपवह्नित्वत्वादिना तन्निवेशो न तु स्वरूपत एव
अनवच्छेदकत्वरूपविशेषणपुरस्कारेण भाने निर्विशेषणकभाना-
त्मकस्य स्वरूपतो भानस्यासम्भवात् वह्न्यादीतरावृत्तित्वस्य वह्न्या-
दिमात्रवृत्तिधर्मासाधारण्येऽपि तन्मात्रपुरस्कारेण व्यापकता-
वच्छेदकत्वग्रहस्यापि वह्नित्वाद्यवच्छिन्नविधेयकानुमितिहेतुत्वमु-
पेयते सकलवह्न्यादिवृत्तित्वाविषयतानिवेशे गौरवात् सकलवह्न्या-
दिवृत्तित्वस्य वह्न्यादीतरावृत्तिसाधारणतया तन्मात्रपुरस्कारेण
व्यापकतावच्छेदकत्वग्रहस्य न हेतुतासम्भवः तथा सति इन्धना-
दिहेतुनापि वह्नित्वाद्यवच्छिन्नानुमितिप्रसङ्गात् सकलवह्न्यादिवृत्ति-

द्रव्यत्वादौ इन्धनादिव्यापकतावच्छेदकत्वसत्त्वात् वह्नित्वादिनिष्ठतद्व्यक्तित्वधूमजनकतावच्छेदकजातित्वादेर्वह्नित्वादिमात्रवृत्तित्वेऽपि तेन रूपेण व्यापकतावच्छेदकत्वग्रहाद्वह्निमानित्याद्यनुमितिरनुभवविरुद्धा येन रूपेणोपस्थिते वह्नित्वादौ वह्न्यादीतरसाधारण्यसंशयो न जायते तत्पुरस्कारेण व्यापकतावच्छेदकत्वग्रहादेवोक्तानुमित्युत्पादानुभवात् अत एव ज्ञानत्वत्वानुभवत्वव्यापकगुणत्वव्याप्यजातित्वयोरविशेषेण ज्ञानत्वत्वरूपेण व्यापकतावच्छेदकत्वग्रहात् ज्ञानवानयमित्यनुमितिर्न भवितुमर्हतीति दीधितिकारवक्ष्यमाणदूषणं प्रत्युक्तम् अधिकमग्रे वक्ष्यामः । तत्तद्व्यक्तिसामानाधिकरण्यं न तत्तद्व्यक्तिगमकताप्रयोजकं पर्वतीयधूमे महानसीयवह्निसामानाधिकरण्याग्रहेऽपि ततः पर्वते लाघवज्ञानादिवशान्महानसीयवह्न्यनुमितिरिति दर्शयति येन केनापीति यावन्निरूपितेत्यन्तेन । तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरिति तद्रूपावच्छिन्ननिष्ठा तद्धर्मावच्छिन्नयावद्व्यक्तिगमकताप्रयोजिका व्याप्तिरित्यर्थः । यथाश्रुते एकसाध्यव्यक्तिसामानाधिकरण्यस्यापरव्यक्तिप्रतियोगिकत्वासम्भवेनासङ्गतेः ।

यत्रैकैकसाध्यतावच्छेदकव्यक्तिर्न सकलहेतुमद्वृत्तितावच्छेदिका तत्रानुगतरूपावच्छिन्नेनापि तेन रूपेण न तादृशहेतुव्यापकतासम्भवः सकलसाध्यतावच्छेदकव्यक्तीनामेव चालनीन्यायेन हेतुसमानाधिकरणतत्तद्व्यक्त्यवच्छिन्नाभावप्रतियोगितावच्छेदकत्वादित्याशङ्कामिष्टापत्त्या परिहरति दण्डत्वादाविति ॥

(दी०) दण्डत्वादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिः ।

(गा०)परम्परासम्बद्धमिति स्वसमवायिसंयोगादिसम्बन्धेन साध्यसम्बद्धमित्यर्थः । एतच्च साध्यावृत्तिनिष्ठा दण्डत्वादेर्न व्यापकतावच्छेदकत्वसम्भव इत्याशङ्कानिराकरणाय साध्यतावच्छेदक दण्डिसंयोगत्वादिरूपनानाधिकरणवृत्तितावच्छेदकावच्छिन्नहेतुव्यापकतावच्छेदकमित्यर्थः. एवकारेण दण्डादिरूपसखण्डधर्मव्यवच्छेदः तथा च तत्र प्रतियोगितानवच्छेदकत्वस्य दुरुपपादत्वेऽपि न क्षतिः

प्रथममनुगतसामानाधिकरण्यत्वरूपव्याप्तित्वेन ग्रहसम्भवेनानुमित्युपपत्तेः तत्तद्व्यक्तित्वेन हेतुनिवेशेऽननुगमात् सामान्यप्रत्यासत्त्यापि पक्षीयहेतुनिष्ठव्याप्तेर्व्याप्तित्वेन दुर्ग्रहतयाऽनुमित्यनुपपत्तेः। हेतुतावच्छेदकाश्रयाधिकरणत्वमुपेक्ष्य वह्निविशिष्टनिरूपिताधिकरणत्वप्रवेशप्रयोजनमग्रे वक्ष्यते। प्रतियोगितानवच्छेदकत्वमात्रेण साध्यतावच्छेदकानिवेशे वह्नित्वत्वादिना वह्नित्वादिकमनवगाहमानात् प्रतियोगितानवच्छेदकधर्मवत्समानाधिकरणधूमवानिति ज्ञानाद्वह्निमानित्यनुमितिः स्यात् न चेष्टापत्तिसम्भवः कदाचिद्वह्नित्वेन कदाचिद्द्रव्यत्वादिना वह्न्यनुमितिरितिनियमानुपपत्तेः न चानवच्छेदकत्वेन तत्तद्धर्मावगाहित्वमेव व्याप्तिग्रहस्यानुमितौ विधेयतावच्छेदकतया तत्तद्धर्मभाननियामकमिति वाच्यम् अनवच्छेदकत्वेन वह्नित्वादिभाने द्रव्यत्वादिभानस्यापि प्रायशः सम्भवात् एवं तत्तत्साध्यतावच्छेदकावच्छिन्नव्यभिचारितया हेतुमात्रस्य हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमात्रेण तत्तत्साध्यतावच्छेदकावगाहिव्याप्तिज्ञानाविरोधितया विशिष्य साध्यतावच्छेदकानवगाहिव्याप्तिज्ञानस्य हेतुत्वे व्यभिचारस्य हेत्वाभासतानुपपत्तिश्चेति विशिष्य साध्यतावच्छेदकस्य व्याप्तिघटकतालाभाय प्रतियोगितानवच्छेदकावच्छिन्नेनेत्यनुक्त्वा प्रतियोगितानवच्छेदको यो धर्मस्तदवच्छिन्नेनेत्युक्तं यत्र वह्नित्वत्वादिविशेषणावच्छिन्नस्य साध्यतावच्छेदकता तत्र तेन रूपेणैव तत्तद्धर्माणां व्याप्तिघटकता यत्र स्वरूपत एव वह्नित्वाद्यखण्डधर्माणां साध्यतावच्छेदकत्वं तत्रापि विशेषणावच्छिन्नतत्तद्धर्मघटिततत्तद्धर्मेतरावृत्तित्वरूपवह्नित्वत्वादिना तन्निवेशो न तु स्वरूपत एव अनवच्छेदकत्वरूपविशेषणपुरस्कारेण भाने निर्विशेषणकभानात्मकस्य स्वरूपतो भानस्यासम्भवात् वह्न्यादितरावृत्तित्वस्य वह्न्यादिमात्रवृत्तिधर्मेतरसाधारण्येऽपि तन्मात्रपुरस्कारेण व्यापकतावच्छेदकत्वग्रहस्यापि वह्नित्वाद्यवच्छिन्नविधेयकानुमितिहेतुत्वमुपेयते सकलवह्न्यादिवृत्तित्वेऽपि पूर्ववन्निवेशे गौरवात् सकलवह्न्यादिवृत्तित्वस्य वह्न्यादीतरवृत्तिसाधारणतया तन्मात्रपुरस्कारेण व्यापकतावच्छेदकत्वग्रहस्य न हेतुतासम्भवः तथा सति इन्धनादिहेतुनापि वह्नित्वाद्यवच्छिन्नानुमितिप्रसङ्गात् सकलवह्न्यादिवृत्तिः

द्रव्यत्वादौ इन्धनादिव्यापकतावच्छेदकत्वसत्त्वात् वह्नित्वादिनिष्ठतद्व्यक्तित्वधूमजनकतावच्छेदकजातित्वादेर्वह्नित्वादिमात्रवृत्तित्वेऽपि तेन रूपेण व्यापकतावच्छेदकत्वग्रहाद्वह्निमानित्याद्यनुमितिरनुभवविरुद्धा येन रूपेणोपस्थिते वह्नित्वादौ वह्न्यादीतरसाधारण्यसंशयो न जायते तत्पुरस्कारेण व्यापकतावच्छेदकत्वग्रहादेवोक्तानुमित्युत्पादानुभवात् अत एव ज्ञानत्वत्वानुभवत्वव्यापकगुणत्वव्याप्यजातित्वयोरविशेषेण ज्ञानत्वत्वरूपेण व्यापकतावच्छेदकत्वग्रहात् ज्ञानवानयमित्यनुमितिर्न भवितुमर्हतीति दीधितिकारवक्ष्यमाणदूषणं प्रत्युक्तम् अधिकमग्रे वक्ष्यामः । तत्तद्व्यक्तिसामानाधिकरण्यं न तत्तद्व्यक्तिगमकताप्रयोजकं पर्वतीयधूमे महानसीयवह्निसामानाधिकरण्याग्रहेऽपि ततः पर्वते लाघवज्ञानादिवशान्महानसीयवह्न्यनुमितिरिति दर्शयति येन केनापीति यावन्निरूपितेत्यान्ताभ्याम् । तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरिति तद्रूपावच्छिन्ननिष्ठा तद्धर्मावच्छिन्नयावद्व्यक्तिगमकताप्रयोजिका व्याप्तिरित्यर्थः । यथाश्रुते एकसाध्यव्यक्तिसामानाधिकरण्यस्यापरव्यक्तिप्रतियोगिकत्वासम्भवेनासङ्गतेः ।

यथैकैकसाध्यतावच्छेदकव्यक्तिर्न सकलहेतुमद्वृत्तितावच्छेदिका तथानुगतरूपावच्छिन्नेनापि तेन रूपेण न तादृशहेतुव्यापकतासम्भवः सकलसाध्यतावच्छेदकव्यक्तीनामेव चालनीन्यायेन हेतुसमानाधिकरणतत्तद्व्यक्त्यवच्छिन्नाभावप्रतियोगितावच्छेदकत्वादित्याशङ्कामिष्टापत्त्या परिहरति दण्ड्यादाविति ॥

( दी० ) दण्ड्यादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिः ।

(गा०)परम्परासम्बद्धमिति स्वसमवायिसंयोगादिसम्बन्धेन साध्यसम्बद्धमित्यर्थः । एतच्च साध्यावृत्तितया दण्डत्वादेर्न व्यापकतावच्छेदकत्वसम्भव इत्याशङ्कानिराकरणाय साध्यतावच्छेदकं दण्डिसंयोगत्वादिरूपनानाधिकरणवृत्तितावच्छेदकावच्छिन्नहेतुव्यापकतावच्छेदकमित्यर्थः एवकारेण दण्डादिरूपसपण्डधर्मव्यवच्छेदः तथा च तत्र प्रतियोगितानवच्छेदकत्वस्य दुरुपपादत्वेऽपि न क्षतिः

दण्डत्वादिनैव प्रकारेण तद्धेतुकदण्ड्याद्यनुमितेरुपगन्तव्यत्वात्। दण्डादौ व्यापकतावच्छेदकत्वभ्रमादेव दण्डादिप्रकारकदण्ड्यनुमितेरुपगमात् स्वाश्रयघटादिपरम्परासम्बन्धेन यद्धर्मे व्यापकतावच्छेदकत्वग्रहस्तद्विशिष्टधर्मिप्रकारेण सामानाधिकरण्यप्रतियोगितया साध्यावगाहिव्याप्तिग्रहस्यैव वा तद्धर्मविशिष्टदण्डादिरूपधर्मिणो ऽनुमितिविधेयतावच्छेदकताप्रयोजकत्वोपगमेन दण्डिमानित्याद्याकारानुमितेर्भ्रमशून्यतादशायां निर्वाहत्वादिति भावः। अथ महानसीयत्वादिसहितवह्नित्वादेर्धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि शुद्धवह्नित्वादिरूपसाध्यतावच्छेदकस्य तादृशप्रतियोगितानवच्छेदकत्ववत्सत्त्वादिविशिष्टदण्डस्य तादृशप्रतियोगितावच्छेदकत्वेऽपि शुद्धदण्डत्वाद्यवच्छिन्नस्य तादृशप्रतियोगितानवच्छेदकत्वस्य सुघटतया तस्य व्यापकतावच्छेदकत्वानुपगमो न सङ्गच्छते न च तद्दण्डी नास्तीति बुद्धौ तत्त्वोपलक्षित एव दण्डे प्रतियोगितावच्छेदकतापर्याप्तिर्भासत न तु तत्तान्तर्भावेन तदुपलक्षितव्यक्तेरेवानतिप्रसक्ततया तत्ताशस्यावच्छेदकान्तर्भावगौरवात् अतो विशेष्यस्यावच्छेदकतापर्याप्त्यधिकरणतया दण्डत्वाद्यवशिष्टस्यापि तस्यानवच्छेदकत्वं दुर्घटं महानसीयवह्न्यभावप्रतियोगितायां वह्नित्वादेरतिप्रसक्ततया तन्मात्रेऽवच्छेदकतापर्याप्त्यसम्भवेन महानसीयत्वादेरवच्छेदकान्तर्भाव आवश्यक इति शुद्धवह्नित्वादेस्तादृशप्रतियोगितानवच्छेदकत्वं सुघटमिति वाच्य स्वरूपतो भासमानस्यैव स्वरूपतो ऽवच्छेदकतायाः सिद्धान्तसिद्धतया सत्त्वपदार्थस्य दण्डादेः स्वरूपतोऽवच्छेदकत्वासम्भवेन दण्डत्वाद्यविशिष्टस्यातिप्रसक्ततया तत्तादिरूपविशेषणान्तर्भावेन तत्रावच्छेदकत्वपर्याप्त्युपगमात् अभावप्रतियोगितावच्छेदकतया भासमाने उपलक्षणीभूतधर्मान्तरस्य भानोपगमे उपलक्षणतया दण्डत्वमात्रे तत्तद्दण्डावच्छिन्नाभावप्रतियोगितावच्छेदकतया भासमाने तत्तद्दण्डादौ विपर्ययात्, दण्डिमति दण्डी नास्तीति प्रत्ययस्य दुर्वारत्वाच्च। अत्र कश्चित्, उक्तानुशयेनैव दण्डय दावित्यादिप दोपादानम्। आदिपदाच्च पृथिवीत्वादिव्याप्यजातित्वादिना ऽनुगतीकृतघटत्वपटत्वादिव्याप्तिकाधारपावपत्वादिमत समवायादिना पृथिव्यादिहेतुकसाध्यस्य परिग्रह- समवायादिना हेतुभूत

धिव्यादिमिति तन्तुकपालादौ विशेषणानवच्छिन्नघटत्वपटत्वाद्यव-च्छिन्नाभावस्य सत्वात् सर्वास्वेव साध्यतावच्छेदकतादृशजातिषु तथाविधाभावप्रतियोगितावच्छेदकत्वपर्याप्तेस्तासां व्यापकतावच्छेदकत्वासम्भवेन तदनुगमकाखण्डधर्मस्यैव परम्परासम्बन्धेन तथात्वोपगमस्यावश्यकत्वादित्याहुः। अन्ये तु तद्दण्डवान्नास्तीत्यादौ प्रतियोगिविशेषणतया भासमानदण्डादिष्वेव प्रतियोगितावच्छेदकत्वपर्याप्तिर्भासते तद्विशेषणतस्वादौ तु तदवच्छेदकतावच्छेदकत्वमेव प्रतियोगिताव्यधिकरणस्य तदवच्छेदकत्वासम्भवेन तदन्तर्भावेन तदवच्छेदकतापर्याप्त्यसम्भवात् न चानवच्छिन्नावच्छेदकत्वमेव निवेश्यमिति वाच्यं सखण्डसाध्यतावच्छेदकव्यभिचारिण्यतिव्याप्तेः तथा च दण्डादेरनवच्छेदकत्वं दुर्घटं महानसीयवह्निर्नास्तीत्यादौ च महानसीयत्वादेः प्रतियोगिन्येव विशेषणतया भानात्तदन्तर्भावेनैव प्रतियोगितावच्छेदकत्वपर्याप्तिर्भासत इति विशेषः। अथ वह्नित्वाद्यत्र एव सामानाधिकरण्यसम्बन्धेन विशेषणतया महानसीयत्वादिकमवगाहमाना महानसीयत्वविशिष्टवह्नित्ववान्नास्तीत्याकारिका या प्रतीतिस्तस्या उक्तयुक्त्या वह्नित्वादावेव प्रतियोगितावच्छेदकत्वपर्याप्तिविषयकतया वह्नित्वादेरपि अनवच्छेदकत्वं दुर्घटमेव स्यात् यदि च वह्नित्वादेः समवायेन प्रतियोगितया सामानाधिकरण्यसम्बन्धेन च महानसीयत्वादेस्तदवच्छेदकतायामवच्छेदकत्वे गौरवान्महानसीयत्वादिसहितस्य वह्नित्वादेः प्रतियोगितायामेवावच्छेदकत्वमुक्तप्रतीतिस्तु कम्बुग्रीवादिमान्नास्तीतिप्रतीतिवदवच्छेदकत्वांशे भ्रमरूपेत्युच्यते तदा यत्र सामानाधिकरण्यसम्बन्धेन महानसीयत्वादिविशिष्टस्य वह्नित्वादेः साध्यतावच्छेदकता तत्स्थलीये व्यभिचारिणि धूमादिहेतावतिव्याप्तिरिति स्वविशिष्टसम्बन्धिभिन्नत्वादिना निर्वाच्यपारिभाषिकमेवावच्छेदकत्वं निवेशनीयं तच्च तल्लक्षणे यादृशस्य स्वपदार्थस्य निवेशस्तादृशरूपम् परं च महानसीयत्वादिविशिष्टस्य वह्नित्वादेस्तत्र स्वपदेनोपादानासम्भवात् विशिष्टवह्नित्वादिकमेव पारिभाषिकमवच्छेदकं तदवच्छिन्नभेदश्च शुद्धवह्नित्वादावपि दुर्घटस्तथा चावच्छेदकं यादृश स्व तादृशाविषयकप्रतीतिविषयत्वमेवानवच्छेदकत्वपदेन विवक्षणीयं तथा

च सति सखण्डस्य दण्डादेः स्वरूपतोऽभानात्, तत्त्वादिविशेषणविशिष्टस्यैवावच्छेदकलक्षणस्थस्वपदेनोपादेयतया तद्विशिष्टविषयकप्रतीतिविषयत्वस्य दण्डत्वादिविशिष्टस्य सुघटत्वाद्व्यापकतावच्छेदकत्वमव्याहतमेवेति चेन्न पारिभाषिकस्यावच्छेदकत्वस्य स्वत्वघटितत्वेनाननुगमस्याभावकूटज्ञानासम्भवेन प्रतियोगितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वस्यागत्या गुरुधर्मसाधारण्यमङ्गीकृत्य व्याप्तिलक्षणे तदेव निवेशनीयम् एवं च सामानाधिकरण्यसम्बन्धेन महानसीयत्वादिविशेषणावच्छिन्नस्य वह्नित्वादेः हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि महानसीयत्वादिविशिष्टनिरूपितसमवायादेरेव प्रतियोगितावच्छेदकताघटकसम्बन्धत्वं तत्रोपेयते शुद्धसमवायादिना वह्नित्वादेरतिप्रसक्तत्वात् शुद्धसमवायादेस्तदवच्छेदकतावच्छेदकसम्बन्धत्वे महानसीयत्वादिसामानाधिकरण्योपलक्षितवह्नित्वाद्यवच्छिन्नाभावात्तद्विशिष्टवह्नित्वाद्यवच्छिन्नाभावस्य वैलक्षण्यानुपपत्तेश्च तथा च साध्यतावच्छेदकताघटकशुद्धसमवायादिना ऽखण्डवह्नित्वादेरनवच्छेदकत्वं न दुर्लभं न च महानसीयत्वादिसामानाधिकरण्यस्य यत्रोपलक्षणता तत्र तस्यावच्छेदककोटौ न प्रवेशः यत्र विशेषणत्वं तत्र तत्प्रवेश इत्यत एव वैलक्षण्यमिति वाच्यम् उपलक्षणीभवत्तत्तद्धर्मावच्छिन्नप्रतियोगितावच्छेदकताकाभावबुद्धावपि तत्तद्रूपस्य प्रतियोगितावच्छेदकांशे, प्रकारतया भानात् तत्रावच्छेदकत्वभानस्यावश्यकतया ऽवच्छेदकशरीराप्रवेशरूपोपलक्षणताया उपलक्षणविधयाऽवच्छेदके तत्रासम्भवात् यदुपलक्षितनिरूपितसमवायादेरवच्छेदकताघटकसम्बन्धत्वं तस्योपलक्षणविधया अवच्छेदकत्वं यद्विशिष्टनिरूपित-

२०५ छेद ना०

तस्य विशेषणविधया ऽवच्छेदकत्वमित्यस्यैव विशेषत्वात् एवं च एकत्वप्रागभावविशिष्टघटादेः संयोगसम्बन्धेनाभावस्य, प्रतियोगितायामप्रसिद्धतया विशिष्टनिरूपितसंयोगादेरवच्छेदकत्वासम्भवेनागत्या विशेषणविधया प्रतियोगितावच्छेदकत्वस्याप्यथैव वैलक्षण्यस्योपपादनीयतया शुद्धसमवायादेरेव - विशिष्टसत्ताद्यभावप्रतियोगितावच्छेदकसम्बन्धतया - तादृशाभावस्य तादृशसम्बन्धेन प्रति-

योगिसमानाधिकरणतया दीधितिकृतां प्रतियोगितावच्छेदकवि-शिष्टसामानाधिकरण्यपर्यन्तनिवेशव्यावृत्तिसङ्गतिः । माभूद्वा वि-शिष्टनिरूपितसमवायत्वादिना प्रतियोगितावच्छेदकताघटकसम्बन्धता तथापि महानसीयत्वादिसामानाधिकरण्योपलक्षितवह्नित्वादेस्तद्विशिष्टवह्नित्वादेश्च प्रतियोगितावच्छेदकतयोर्भेदेन वैलक्षण्यम् आद्या तद्धर्मावच्छिन्ना विशेष्यमात्रपर्याप्ता अन्त्या च विशेष्यविशेषणभावापन्नयोर्धर्मधर्मिणोर्द्वयोः पर्याप्तेवं रीत्यैवोपपादनीयं तावतापि अखण्डस्य शुद्धवह्नित्वादेर्हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वमुपपद्यते धर्मान्तरोपलक्षितवह्नित्वाद्यवच्छिन्नाभावस्य धूमादिमत्यवृत्तेर्विशिष्टवह्नित्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकतायाश्च विशेषणान्तर्भावेनैव पर्याप्तेः तत्त्वोपलक्षितदण्डावच्छिन्नप्रतियोगिताकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकता च तत्त्वावच्छिन्ने शुद्धविशेष्य एव पर्याप्ता साध्यतावच्छेदकताघटकशुद्धसंयोगसम्बन्धावच्छिन्ना चेति तादृशसम्बन्धेन दण्डादेस्तादृशाभावप्रतियोगितानवच्छेदकत्वं दुरुपपादमिति वदन्ति । वस्तुतो गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे पारिभाषिकावच्छेदकत्वं निवेशनीयं तच्छरीरे यादृशं स्वं निविष्टं तादृशधर्मभेदनिवेशे वह्नित्वादौ विशिष्टवह्नित्वादिभेदासत्त्वेन तादृशधर्माविषयकप्रतीतिविषयत्वं निवेशनीयमिति गौरवमतः प्रतियोगितावच्छेदकं यादृशयादृशरूपस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतत्कत्वरूपं तत्तदतिरिक्तवृत्तित्वमेवानवच्छेदकान्तेन विवक्षणीयं तथा च सर्वासामेव दण्डादिव्यक्तीनां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतया कस्याश्चिदपि दण्डादिव्यक्तेर्न यावत्प्रतियोगितावच्छेदकातिरिक्तवृत्तित्वं स्वस्य स्वातिरिक्तवृत्तित्वविरहादिति अखण्डधर्मस्य व्यापकतावच्छेदकतानुसरणम् । एतश्च एकोक्त्यभिप्रायेण यथाश्रुतमूललक्षणमुपपादयन्तं सार्वभौमप्रभृतिमतमनुसृत्य एकोक्त्यनादरे तु अनुगतरूपेण नानाव्यक्तिविधेयतावच्छेदकानुमित्यौपयिकव्याप्तिर्यद्रूपावच्छिन्नमनवच्छेदकं यद्रूपं वा ऽवच्छेदकतानवच्छेदकं तद्रूपनिरूपिताद्यवच्छिन्नसामानाधिकरण्यं तद्रूपविशिष्टावच्छिन्ननिरूपिता व्याप्तिरित्यादिरीत्या निर्वचनीया तथा सति दण्डिसंयोगादिहेतुकापि दण्डिमानयमित्याकारिकानुमितिविशेषदर्शनामपि निर्वहति एवमेके

त्वा प्रतियोगितावच्छेदकधर्मिकोभयाभावघटितायाः अस्य करणे स्वयमुपदर्शनीयाया व्याप्तेरपि दण्डत्वादिविशिष्टदण्डाद्यवच्छिन्ननिरूपितत्वनिर्वाहः हेतुसमानाधिकरणविशेषाभावप्रतियोगितायां दण्डत्वपृथिवीत्वव्याप्यजातित्वादिविशिष्टावच्छेद्यत्वाभावस्याव्याहतत्वात् दण्डत्वादिसामान्याभावप्रतियोगितायामेव तद्धर्मविशिष्टनिरूपितविलक्षणावच्छेद्यत्वसत्त्वादिति ध्येयम् ॥

(दी० ) इत्थं च इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सत्त्वाद्यधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेर्नाव्याप्तिः । साधनस्य विशिष्टसत्तादेर्गुणाद्यवृत्तेः ।

(ग०) इत्थं चेति हेतुतावच्छेदकोपलक्षितहेतुसामानाधिकरण्यसाधारणरूपमुपेक्ष्य विशिष्टसामानाधिकरण्यत्वेन सामानाधिकरण्यनिवेशे चेत्यर्थः नाव्याप्तिरिति न विशिष्टसत्त्वान्यरूपहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानजन्यानुमित्योपयिकव्याप्त्यनिर्वाह इत्यर्थः तेन विशिष्टसत्त्वाद्युपलक्षितहेतुमत्ताज्ञानजन्यानुमित्योपयिकव्याप्तौ तदुपलक्षितहेतुसामानाधिकरण्यमेव निविष्टमिति लभ्यते अतो द्रव्यत्वाद्यभावे तादृशहेतुसामानाधिकरण्यसत्त्वात्तादृशे हेतौ न द्रव्यत्वादेर्व्याप्तिरित्यभ्रान्तानां गुणादौ विशिष्टसत्त्वाद्युपलक्षितहेतुमत्ताज्ञानसम्भवेऽपि न तत्र द्रव्यत्वाद्यनुमित्यापत्तिः यत्र घटपटवृत्तिसंयोगत्वादिना हेतुना घटपटाद्यन्यतरत्वं साध्यं तत्रोभयवृत्तित्वविशिष्टाधिकरणाप्रसिद्ध्या हेतुतावच्छेदकोपलक्षितहेतुसामानाधिकरण्यगर्भव्याप्तिप्रकारकमेवेदं स्वीकरणीयमन्यथा तद्धेतुकतत्साध्यकानुमित्युच्छेदप्रसङ्गात् ईदृशव्याप्त्यन्तरानभ्युपगमे साध्यहेतुकानुमितिरप्युच्छिद्येत हेतुतावच्छेदकसामानाधिकरण्यसहिततद्वृत्तिधर्मत्वरूपसाध्यत्वे विशिष्टाधिकरणाप्रसिद्ध्या विशिष्टाधिकरणत्वगर्भव्याप्त्यसम्भवात् । अथैव विशिष्टवैशिष्ट्यावगाहिज्ञाने विशिष्टनिरूपितसमवायस्य सम्बन्धतया तेन सम्बन्धेन व्याप्तिहेतुतावच्छेदकसम्बन्धेन हेतुमत्त्वस्याग्रे विवक्षणीयतयैव निर्वहतीति कथमत्र विशिष्टपदोपादानं न च विशिष्टवैशिष्ट्यबोधे विशिष्टनिरूपितसमवायत्वादिना न विशेषणसम्बन्धता अपि तु शुद्ध यत्र

परामर्शनिष्ठकारणतायाः उभयवादिसिद्धत्वाद्विशिष्टहेतुकपरामर्शान्तरकारणत्वाकल्पनप्रयुक्तलाघवानुरोधेन विशिष्टस्य व्याप्तिग्रहस्थले. ऽधिकरणे स्वातन्त्र्येण विशेषणवत्त्वमानमुपगम्य विशेषणेऽपि व्याप्तिमानं कल्पनीयमिति वाच्यं शब्दाधीनविशिष्टवत्त्वगर्भव्याप्तिग्रहे स्वातन्त्र्येण विशेषणवत्त्वगर्भव्याप्तिमानानियमात् तादृशव्याप्तिबोधकशब्दस्य स्वातन्त्र्येण विशेषणवत्त्वामासकत्वात् । अथ तदुत्तरं विशेषणे मानसव्याप्तिग्रह एवानुमित्यर्थे कल्प्यते तत्कारणतायाः फलसत्त्वादिति चेन्न । एवं सति दण्डाद्युपलक्षितधर्मिहेतुकानुमितेर्विलयप्रसङ्गात् तद्धेतुकव्याप्तिग्रहस्थले परम्परासम्बन्धेनोपस्थितदण्डादौ व्याप्तिग्रहस्य कल्पनसम्भवात् स्वातन्त्र्येण सकलपरम्परासम्बन्धघटितसकलविशेषणावत्त्वग्रहस्याप्रामाणिकतया विशेषणहेतुकपरामर्शस्य कारणतायाः फलसत्त्वानियमाच्च ।

ननु वह्निसंयोगिसंयोगाद्यात्मकसाध्यसामानाधिकरण्यस्य व्याप्तित्वे एकैव हि सा व्याप्तिरिति मूलग्रन्थविरोधः महानसपर्वतादिनिष्ठधूमादिगतवह्निसंयोगिसंयोगादेरैक्यासम्भवादित्यत आह सामानाधिकरण्यव्यक्तीनामिति ।

( दी० ) सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्याधिकरणतावच्छेदकस्य चैक्याद्व्याप्तेरैक्यम् । वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वाद्धूमत्वादिमति तादृशसामानाधिकरण्यं तद्वृत्ति धूमत्वादिकं वा व्याप्तिः ।

( गा० ) भेदेऽपीति । अधिकरणभेदेन धूमादिभेदेन चेत्यादिः । निरूपकतावच्छेदकं वह्नित्वादिरूपसाध्यतावच्छेदकं अधिकरणतावच्छेदकं धूमत्वादिरूपहेतुतावच्छेदकं तदैक्यात् साध्यहेतुभेदे ऽप्यभेदात् तदभेद तात्पर्येण ऐक्यं भाक्त एकत्वव्यवहारः । ननु लक्षणया तद्व्यवहारसमर्थनमसङ्गतं सामान्यप्रत्यासत्त्यभावपक्षे विशिष्टपरामर्शनिर्वाहार्थं व्याप्त्यैक्यकथनात् तन्निर्वाहस्य च सामानाधिकरण्यस्य व्याप्तित्वे धूमत्वादेरैक्येऽपि प·

कज्ञानविषयत्वरूपव्याप्तित्वनिर्वाहः द्वितीयपक्षे च धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववद्धूमवान् पर्वत इति ज्ञानं हेतुः न तु स्वरूपतो धूमत्वाप्रकारकं तादृशधूमत्ववत्त्वान् पक्ष इत्याकारकं तादृशज्ञानस्य धूमाभाववान् पक्ष इत्याकारकधूमत्वत्वाद्यप्रकारकासिद्धिज्ञानाप्रतिबध्यत्वात् एतन्मते च हेतुतावच्छेदकद्वयसाधारणधर्मावच्छिन्ने साध्यसमानाधिकरणावृत्तित्वमेव विरोधः न तु हेतुतावच्छेदकावच्छिन्ने साध्यासामानाधिकरण्यमुपदर्शितज्ञानस्य हेतुतावच्छेदकं धर्मितावच्छेदकीकृत्य सामानाधिकरण्यानवगाहितया तथाविधविरोधज्ञानाप्रतिबध्यत्वात् यदि विरोधस्यानुमितिं प्रति साक्षाद्विरोधितया हेत्वाभासत्वमुपपादयितुं शक्यते तदा समानाधिकरणवृत्तित्वांशे तद्धर्मितावच्छेदकसमानाधिरणवृत्तिमद्धूमवान् पर्वत इत्येवादृशामपि ज्ञानं हेतुरुपेयते अन्यथा धूमत्वत्वादिविषयितायाः कारणतावच्छेदककुक्षौ प्रवेशे गौरवात् सामानाधिकरण्यप्रकारकत्वापेक्षया समानाधिकरणवृत्तिप्रकारकत्वस्य गुरुत्वेऽपि सामान्यस्याप्रत्यासत्तित्वे विशिष्टपरामर्शनियमानुरोधेन तेन रूपेण हेतुताया अगत्योपगमात् । आद्या हेतुतावच्छेदकधर्मसहितसाध्यसामानाधिकरण्यरूपा । भिन्नेति प्रतिधूमादिकं भिन्नेत्यादिः । द्वितीया साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकरूपा अभिन्ना सर्वधूमादिसाधारणी अनुगतरूपावच्छिन्ना । नानाव्यक्तिदण्डादिविशिष्टहेतुकस्थलेऽपि परम्परासम्बन्धेन दण्डत्वाद्यखण्डधर्म एव हेतुतावच्छेदकतया उपगन्तव्य इति भावः । यद्यपि साध्यसामानाधिकरण्यावच्छेदकरूपवक्ष्यमाणव्याप्त्यभिप्रायेणापि एकैव हि सा व्याप्तिरित्यादिग्रन्थः सङ्गच्छते तथापि स्वयं तत्र स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशस्य खण्डनीयतया स्वविशिष्टाधिकरणावृत्तियावत्साध्यासमानाधिकरणकत्वरूपपारिभाषिकावच्छेदकत्वस्यैव च विवक्षणीयतया एतदपेक्षया तादृशी व्याप्तिर्गुरुशरीरेति कथंचिदीदृशव्याप्तेरैक्योपपत्तिसंभवेन तज्ज्ञानमनुमितिहेतुरित्येतादृशव्याप्तेरैक्यमुपपादितम् ।

मिश्रादिमतमवलम्ब्य प्रतियोग्यसमानाधिकरणपदप्रयोजनमाह अयं कपिसंयोगीति ।

( दी० ) अयं कपिसंयोग्येतद्वृक्षत्वादित्यादिसंग्रहायासमानाधिकरणान्तम् । यत्तु इदं संयोगि द्रव्यत्वादित्यत्राव्याप्तिवारणाय तत् संयोगस्य शाखाद्यवच्छेदेन वृत्तेर्वृक्षत्वावच्छेदेन तत्सामान्याभाववृत्त्वाविरोधात् । तत्र चातीन्द्रियस्य संयोगस्य सत्त्वात् परितः प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इति नाध्यक्षमिति तन्न । द्रव्ये संयोगसामान्याभावे मानाभावात् ।

( गा० ) अथैतद्वृक्षत्वादेरव्याप्यवृत्तिकपिसंयोगादिव्याप्यत्वोपगमे कपिसंयोगाद्यनवच्छेदकमूलादेः पक्षतावच्छेदकत्वे तदवच्छेदेनापि एतद्वृक्षादौ कपिसंयोगादेः सिद्धिप्रसङ्गः न चेष्टापत्तिः सल्लिङ्गकपरामर्शस्य भ्रमानुमित्यजनकत्वनियमात् न च तदवच्छेदेन हेतुमत्ताज्ञानस्य तदवच्छेदेन साध्यानुमितिहेतुत्वादेतद्वृक्षत्वादिरूपव्याप्यवृत्तिहेतोश्च किञ्चिदवच्छेदेनावृत्तेर्नातिप्रसङ्ग इति वाच्यं यदि स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिन्यामनुमितावपि तादृशहेतुमत्ताज्ञानत्वेन हेतुत्वमुपेयते तदापि तुल्ययुक्त्या एतद्वृक्षत्वादेरिव मूलाद्यवच्छिन्नसंयोगादिविशेषस्यापि कपिसंयोगादिव्याप्यतया तेन हेतुना मूलाद्यवच्छेदेन कपिसंयोगाद्यनुमितेर्निष्प्रत्यूहत्वादिति चेत् अत्रोपाध्यायाः । साध्यस्य पक्षतावच्छेदकसामानाधिकरण्यं विना व्याप्यस्य पक्षधर्मत्वमनुपपन्नमिति पक्षधर्मताबलात्पक्षतावच्छेदकसामानाधिकरण्येनैव साध्यं सिध्यति न तु तदवच्छेदेनापि प्रमाणाभावादिति तादृशानुमितेरप्रामाणिकतया तत्र परामर्शहेतुताकल्पनमेव नास्तीति न तथापत्तिरिति समादधिरे । मिश्रादयस्तु बाधानवतारे मूलाद्यवच्छेदेन कपिसंयोगादिसिद्धिरिष्टैवेति वदन्ति, एतत्तत्त्वं सव्यभिचारहेत्वाभासे वक्ष्यति । प्राचीनसिद्धव्याप्तिस्थलं दूषयितुमुपन्यस्यति यत्त्विति । तत् असमानाधिकरणान्तम् । ननु द्रव्ये संयोगत्वावच्छिन्नाभावसत्त्व · प्रत्यवच्छेदकगर्भोक्तलक्षणाव्याप्तिः प्रसज्यते तदेव न विरोधात् वृक्षादौ च संयोगानवच्छेदकीभूतभागाप्रसिद्ध्या तत्सामान्याभावावच्छेदक एव दुर्लभः शाखामूलादीनां सर्वेषां तत्तत्संयोगावच्छेदकत्वादित्यत आह सं-

योगस्येति । वृक्षत्वावच्छेदेनेति वृक्षत्वादेः प्रत्येकं सकलसंयोगातिप्रसक्तत्वात्तस्य संयोगावच्छेदकत्वासम्भवात् आकाशादिसंयोगस्यापि यावद्वृत्तेरेकस्याभावाद्वृक्षत्वे तत्संयोगानतिप्रसक्तासम्भवादिति भावः । ननु वृक्षत्वावच्छेदेन वृक्षादौ संयोगसामान्याभावसत्त्वे वृक्षे संयोगो नास्तीत्यादिप्रत्यक्षापत्तिरित्यत आह तत्र चेति । अतीन्द्रियस्येति अतीन्द्रियप्रतियोगिकतया संयोगसामान्याभावस्यातीन्द्रियत्वमिति भावः । प्रतियोगितावच्छेदकयोग्यत्वस्य तन्त्रत्वे त्वाह परेत इति । यद्वा ननु संयोगसामान्याभावस्य वृक्षे सत्त्वे महत्त्वोद्भूतरूपवन्मात्रसमवेतसंयोगसामान्याभावोऽप्यावश्यकः तद्व्यापकधर्मावच्छिन्नाभावस्य तद्धर्मावच्छिन्नाभावानियतत्वादिति योग्यमात्रप्रतियोगिको ऽयमभावः कथं वृक्षे साक्षात्क्रियते इत्यत आह परेत इति । प्रतियोग्युपलब्धेर्विभिन्नावच्छेदेनाभावग्रहं प्रति विरोधिज्ञानमुद्रया प्रतिबन्धकत्वं न सम्भवतीति तस्य दोषत्वकथनं दोषविधया प्रतिबन्धकत्वलाभाय । अथ यत्र संयोगाविषयकमेवोपनीतमानात्मकं वृक्षादिरूपाधिकरणज्ञानं तदग्रिमक्षणे वृक्षादौ तादृशसंयोगसामान्याभावग्रहप्रसङ्गः तादृशदोषस्य प्रागसत्त्वात् एवं वृक्षे न संयोग इत्यादिलौकिकप्रत्यक्षस्यालीकतया तत्र तादृशप्रतिबन्धकत्वकल्पनमेवाशक्यमिति चेन्न वृक्षादौ संयोगसामान्याभावलौकिकप्रत्यक्षस्याप्रसिद्धत्वेऽपि गुणादौ तत्प्रसिद्ध्या ऽधिकरणीयविषयतासम्बन्धेन संयोगाभावलौकिकत्वावच्छिन्नं प्रति स्वविषयसंयोगवत्त्वसम्बन्धेन प्रत्यक्षत्वेन प्रतिबन्धकत्वकल्पनात्सर्वत्र द्रव्ये तत ईश्वरीयप्रत्यक्षस्यैव सर्वदा तादृशसम्बन्धेन सत्त्वेनातिप्रसङ्गविरहात् । इदमापाततः द्रव्यरूपाधिकरणविषयकसंयोगाभावविषयकप्रत्यक्षस्य कदाचिदप्यनुदयेन तादृशप्रत्यक्षसामग्र्या एवाकल्पनेनापादकाभावादेवातिप्रसङ्गवारणसम्भवेन तादृशप्रतिबन्धकताकल्पनस्यायुक्तत्वात् कथञ्चिदापत्तिसम्भवेऽपि लाघवात्तादात्म्यसम्बन्धेन द्रव्यत्वेनैव तादृशसम्बन्धेन संयोगाभावलौकिकप्रत्यक्षं प्रति प्रतिबन्धकत्वौचित्यात् । मानाभावादिति लौकिकप्रत्यक्षस्य योग्यानुपलब्धिविरहेणासम्भवादुपनीतभानस्य संयोगाभावो वृक्षावृत्तिरित्याकारकविष-

रीतविषयकस्याप्युपनयवशेन सम्भवाद्धिनिगमनाविरहेण एक-तरस्य प्रामाण्यासिद्धेः शब्दस्याप्तोक्तत्वासिद्धा तदव्यवस्थापकत्वात् अनुमानस्य च लिङ्गाभावेनासम्भवादिति भावः ।

ननु वृक्षादौ यावत्संयोगविशेषाभावानामुभयसिद्धतया तत एव हेतोस्तत्राप्रत्यक्षस्यापि तत्सामान्याभावस्य सिद्धिर्निष्प्रत्यूहैवेतिशङ्कां निरस्यति न चेत्यादिना ।

( दी० ) न च यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानितिव्याप्तेर्यावत्संयोगाभावा एव मानम् । यत्तदर्थयोरननुगमात् एकावच्छेदेन तदीययावद्विशेषाभाववत्त्वस्योपाधित्वाच्च । एतेनायं संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादितिपरास्तम् । व्यर्थविशेषणत्वादप्रयोजकत्वान्निर्गुणत्वादेरुपाधित्वाच्च । न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेदकत्वम् । गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गात् । यथा च घटपूर्ववर्तित्वस्य प्रतिदण्डं वह्निसामानाधिकरण्यस्य वा प्रतिधूमं भिन्नत्वेऽपि दण्डत्वं धूमत्वं वा तत्सामान्यस्यावच्छेदकं तथैव संयोगसामान्यस्यावच्छेदकं द्रव्यत्वादिकमित्यस्यापि सुवचत्वाच्चेति सम्प्रदायविदः ।

( गा० ) यः संयोगीययावद्विशेषाभाववान् स संयोगसामान्याभाववानितिव्याप्तेरेवाग्रे व्यर्थविशेषणत्वाप्रयोजकत्वादिदोषेण निराकरणीयतया प्रथमतः सामान्यमुखीव्याप्तिमनुमानोपष्टम्भकतया दर्शयति योयदीयेति । यद्धर्माश्रयस्य यावद्विशेषाभाववान् यः स तद्धर्मावच्छिन्नाभाववानित्यर्थः संयोगत्वाश्रयस्य विशेषधर्मावच्छिन्नाभावकूटं वृक्षादौ वर्तत इति तत्रोक्तव्याप्तेः संयोगत्वावच्छिन्नाभावसिद्धिः प्रतियोगिनोर्यत्वतत्त्वेन निवेशे संयोगवृत्तिकपिसंयोगत्वादिरूपसामान्यधर्मावच्छिन्नाभावमादाय सिद्धसाधनं स्यादिति धर्मस्य यत्त्वतत्त्वेनोपादानं संयोगादिसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नाभावमादाय सिद्धसाधनवारणाय समवायसम्बन्धावच्छिन्नाभाव एव साधनीयः अन्यसम्बन्धा-

वच्छिन्नविशेषाभावकूटस्य तत्सम्बन्धावच्छिन्नसामान्याभावस्य व्यभिचारित्वे समवायसम्बन्धावच्छिन्नविशेषाभावकूटस्यापि त-त्सम्बन्धावच्छिन्नसामान्याभावव्यभिचारित्वं तुल्यन्यायेन स-म्भाव्येतेति प्रतियोगितावच्छेदकसम्बन्धानामपि यत्वतत्त्वेन व्याप्तावन्तर्भावः अत एव समवायसम्बन्धावच्छिन्नप्रतियोगिता-कयावद्विशेषाभावेन हेतुना तत्सम्बन्धावच्छिन्नसंयोगसामान्या-भावसिद्धिः यद्धर्माश्रयविशेषाभावश्च उभयावृत्तियद्धर्मसमाना-धिकरणधर्मावच्छिन्नाभावः उभयावृत्तित्वं च स्वप्रतियोगिवृ-त्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदवदन्यत्वम्। अतः सं-योगत्वाद्यपेक्षया वृक्षवृत्तिसंयोगत्वादेः विशेषधर्मत्वेऽपि संयो-गसामान्याभावं वृक्षादावनभ्युपगच्छतोऽवयवविशेषरूपावच्छेदक दुर्भिक्षेण वृक्षवृत्तिसंयोगत्वावच्छिन्नाभावस्य वृक्षादावनभ्युपग-मेऽपि च न सन्दिग्धासिद्धिः वृक्षवृत्तिसंयोगत्वादीना-मुभयवृत्तित्वेन तदवच्छिन्नाभावव्यावृत्तेः न च हेतावुभया-वृत्तित्वविशेषणस्यासिद्धिवारकत्वेपि व्यभिचारावारकतया वै-यर्थ्यं यावत्त्वविशेषस्य धीविशेषविषयत्वरूपस्य परिचायकमेव तादृशधर्मावच्छिन्नप्रतियोगिताकत्व न तु हेतुघटितमिति तु न सत तथा सति यत्तत्पदार्थस्य हेतुसाध्यशरीरप्रवेशेन सामान्यव्याप्तित्वानुपपत्तेरिति वाच्यं यावत्पदस्य व्यापकत्वार्थ-कतया तद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावत्वनिरू-पिताया आधेयत्वसम्बन्धावच्छिन्नव्यापकताया एव हेतुतया विशेषधर्मव्यापकत्वाघटकाभावान्तरस्यैव च सामान्यधर्मव्यापक-ताघटकतया वैयर्थ्यानवकाशात् न च तादृशाभावत्वव्याप-कत्वं तादृशाभावत्ववद्भिन्नभेदप्रतियोगितायामाधेयतासम्बन्धेना-वच्छेदकसमनियतधर्माणामसिद्धमिति. तदनवच्छेदकत्वरूपार्हेत्वसि-द्धिरिति वाच्यम्। आधेयतासम्बन्धावच्छिन्नावच्छेदकतासम्बन्धेन प्रतियोगिताया अभावस्यैव प्रतियोगितानवच्छेदकत्वस्थाने नि-वेशनीयत्वात् उक्तस्थले ऽधिकरणतादृशसम्बन्धावच्छिन्नाभा-वप्रसिद्धिसौलभ्यात् यद्धर्मसमानाधिकरणेत्यत्र प्रतियोगिताव-च्छेदकत्वेन धर्मो विशेषणीयः तेन कम्बुग्रीवादिमत्त्वादिव्याप्यध-र्मावच्छिन्नप्रतियोगिताकयावदभाववतस्तद्धर्मावच्छिन्नाभावाप्रसि-

त्वा तादृशाभाववत्त्वासम्भवेऽपि न क्षतिः । न च भेदप्रतियोगितावच्छेदकवाच्यत्वघटाद्यन्यतरत्वव्याप्यधर्मावच्छिन्नसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकयावदभाववत्तस्तद्धर्मावच्छिन्नप्रयोगिताकाभाववत्त्वासम्भवाद्व्यभिचारः वाच्यत्वादेः संयोगादिनावृत्तित्वात् तेन सम्बन्धेन घटादेरेव तादृशाभावाविरोधितया घटत्वादेरेव तत्प्रतियोगितावच्छेदकत्वसम्भवेन गुरोरन्यतरत्वस्य तत्प्रतियोगितानवच्छेदकत्वादिति वाच्यं वाच्यत्वादिसाधारणान्यतरनिष्ठप्रतियोगित्वस्य न्यूनवृत्तिघटत्वादिनानवच्छेदादगत्या गुरुणान्यतरत्वादिनैव तदवच्छेदात् । वस्तुतो यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य साध्यहेतुघटकता तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वेनैव सामान्यधर्मस्य विशेषणीयतया उक्तसामान्यधर्मस्य भेदप्रतियोगितावच्छेदकत्वेऽपि संयोगादिसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकतया तत्सम्बन्धावच्छिन्नाभावाप्रसिद्धावपि न व्यभिचारः अत एव भेदप्रतियोगितावच्छेदकजातित्वघटकानित्यत्वादेः समवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकगर्भे निवेशस्य गौरवेणासंभवेऽपि न जातित्वादिसामान्यव्याप्तिभङ्गः । वस्तुतस्तु यद्धर्मे प्रतियोगितावच्छेदकत्वाविशेषणमनुपादेयमेव कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावनिष्ठभेदप्रतियोगित्वस्य घटत्वादिघटिततादृशधर्मापेक्षया गुरुतया तदवच्छिन्नाभावरूपव्यापकत्वाप्रसिद्धेर्यद्धर्मे इत्यनेन कम्बुग्रीवादिमत्त्वरूपगुरुधर्मोपादानस्य गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वपक्षे ऽसम्भवेन व्यभिचारानवकाशात् । अभावे यावत्त्वादिविशेषणप्रवेशायत्किञ्चिज्जात्यादिव्यक्त्यभाववति जात्यादिसामान्याभावासत्त्वेऽपि न सामान्यव्याप्तिभङ्गः । यद्यपि यत्तदर्थघटितसाध्यहेतूनामननुगमेन नेका व्याप्तिरिति संयोगसामान्याभावतदीयविशेषाभावकूटयोर्व्याप्तौ यावत्त्वादिविशेषणवैयर्थ्यमेव तथापि एतद्दोषस्य स्वयमग्रे वाच्यतया यथाकथंचिदुक्तासंगतिः । अथ वृक्षादौ यावत्संयोगाभाववत्त्वमुभयवाद्यसिद्धं तत्र विभुसंयोगाभावावच्छेदकस्यावयवविशेषस्य दिग्विशेषस्य वा दुर्वचत्वात् ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे कालविशे-

पावच्छेदेनापि तत्र तदभावासंभवात् तयोस्तद्विरोधितामते द्रव्ये संयोगसामान्याभावस्याप्युत्पत्तिकालावच्छेदेन वृत्त्यविरोधात् न च मूलाग्राद्यवच्छिन्नविभुसंयोगव्यक्तीनां भेदादग्राद्यवच्छेदेनाभावः सुलभ इति वाच्यं तासां भेदस्याप्रामाणिकत्वात् न च नानावयवावच्छिन्नसंयोगव्यक्तीनामभेदे तत्तत्संयोगव्यक्तौ तत्तदवयवव्यक्तीनां तादात्म्यसम्बन्धेन कारणतायां व्यभिचार इत्यवच्छेदकभेदेन संयोगभेद आवश्यकः आवश्यकश्चावच्छेदकव्यक्तीनां विशिष्य स्वावच्छिन्नसंयोगव्यक्तिषु हेतुताभ्युपगमः अन्यथा मूलादिमात्रावच्छिन्नमूर्तान्तरसंयोगानामग्राद्यवच्छेदेनैतद्वृक्षादिवृत्तिविभुसंयोगानां च वृक्षान्तरावयवावच्छेदेनाप्युत्पत्तिप्रयोजकस्य दुर्लभत्वापातादिति वाच्यं व्याप्यवृत्तेरवच्छेदकानभ्युपगमेन वृक्षादौ विभुसंयोगस्य व्याप्यवृत्तितया मूलाद्यवच्छेदकानभ्युपगमेन वृक्षादौ विभुसंयोगस्य व्याप्यवृत्तितया मूलाद्यवच्छिन्नत्वविरहेण तत्र मूलादीनां हेतुताविरहात् व्याप्यवृत्तेरवच्छेदकोपगमे तत्तदवच्छेदकस्वरूपतत्सन्निष्ठावच्छेदकताव्यक्तीनामभेदेऽपि व्यभिचारानवकाशात् अन्यथा मूलाद्यवच्छिन्नसंयोगस्य दिग्विशेषैरप्यवच्छिन्नतया तत्तदवच्छेदकतासम्बन्धेन तत्तत्संयोगव्यक्तीनामुत्पत्त्या मूलादेस्तत्र व्यभिचारस्य दुर्वारत्वात् न च मूलावच्छिन्नसंयोगानामग्रावच्छिन्नसंयोगादेरपि भेदः स्वीकर्तुं शक्यते मूले प्राच्यां शरीरवृक्षसंयोग इत्यादिप्रतीत्या एकसंयोगव्यक्तावेव मूलप्राच्याद्यवच्छिन्नत्वावगाहनात् न चाग्रमूलयोः शरीरसंयोग इत्यस्या इव तादृशप्रतीतेरपि संयोगद्वयावगाहित्वमस्मदनुमतमिति वाच्यं यत्र मूलप्रतीचीमात्रावच्छिन्नः एकशरीरेण संयोगः अग्रप्राचीमात्रावच्छिन्नश्च शरीरान्तरसंयोगस्तत्र मूले प्राच्यां शरीरसंयोग इति प्रत्ययापत्तेः शरीरतरुसंयोगव्यक्तीनामैक्ये तासामेव शरीरावयवेन वृक्षावयवेन चावच्छिन्नतया व्यभिचारस्यापि दर्शितसम्बन्धसंकोचमन्तरेण दुर्वारत्वाच्च न हि तत्र शरीरावयवावच्छिन्नशरीरतरुसंयोगमूलावच्छिन्नतदुभयसंयोगयोर्भेदसम्भवः तथा सति मूलावच्छिन्नवृक्षसंयोगस्य शरीरे चरणावच्छिन्नशरीरसंयोगस्य वृक्षे व्याप्यवृत्तितया तदभावास-

त्वप्रसङ्गात् तत्तदवच्छेदकावच्छिन्ननानासंयोगसाधारणं तत्तदवच्छेदकावच्छिन्नत्वमेव तत्तदवच्छेदकजन्यतावच्छेदकं न तु संयोगनिष्ठतत्तद्व्यक्तित्वम् अनन्तकार्यकारणभावप्रसङ्गात् तथा च एकावच्छिन्नसंयोगस्यापरावच्छेदकावच्छिन्नत्वेऽपि तदवच्छिन्नत्वविशिष्टस्य नान्यत्रोत्पत्तिरिति न व्यभिचारशङ्केत्यपि वदन्ति । यत्तु संयोगमात्रस्याव्याप्यवृत्तितासिद्धान्तानुरोधेन मूलाद्यवच्छिन्नतत्तद्विभुसंयोगादीनां भेदस्वीकार आवश्यक इति । तदपि न सम्यक् तादृशसंयोगव्यक्तीनां गगनादौ दिग्विशेषरूपावच्छेदकनियमेनैव तादृशसिद्धान्तसङ्गतेः । अत्र वदन्ति । द्रव्यमात्र एव संयोगसामान्याभावस्याप्रामाणिकतायास्तत्रेत्यादिनोक्तेर्न चेत्यादिना गगनादेरेव संयोगसामान्याभावसाधकमनुमानमाशङ्कितं विभुद्वयसंयोगानभ्युपगमेन तत्र यावत्संयोगव्यक्तीनामेव प्रतिनियतदिग्विशेषावच्छिन्नतया तत्तद्व्यक्तित्वेन तत्र तदभावसत्त्वे ऽविवादादाश्रयासिद्ध्यवकाशः विभुमात्रे संयोगसामान्याभावासिद्धावपि संयोगि द्रव्यत्वादित्यादौ व्यावृत्तिसङ्गतेर्वृक्षादावेतद्व्याप्तिबलात्संयोगसामान्याभावासिद्धावपि न क्षतिः प्रतियोग्यनवच्छेदकस्य तदभावावच्छेदकत्वनियमसत्त्वे वृक्षत्वावच्छेदेन वृक्षादावपि संयोगसामान्याभावसिद्धेः संभवेन तत्रापि तदभावं साधयतां तादृशनियमवादिनामाशङ्कां न च प्रतियोग्यनवच्छेदकवृक्षत्वादेरभावावच्छेदकत्वमित्यादिना निराकरिष्यति पूर्वमपि वृक्षत्वावच्छेदेन संयोगसामान्याभाववृत्तेरविरोधमात्रेण प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वनियमेन वा सेद्धुमर्हतीत्याशयेनैव वृक्षादौ संयोगतत्सामान्याभावयोर्वृत्तौ अवच्छेदकभेद उपपादितः वृक्षे न संयोग इति प्रत्यक्षं च वारितं न तु यो यदीयेत्यादिनियमस्य तत्साधकत्वाशयेनेति न सन्दर्भविरोध इति । यत्र यत्किञ्चिदवयवनाशान्महावृक्षनाशानन्तरं खण्डवृक्षोत्पत्तिस्तत्क्षणे पूर्वोत्पन्नक्रियातो ऽवस्थितयावत्तदवयवैर्गगनादिसंयोगानां विनाशः द्वितीयक्षणे च खण्डवृक्षस्यापरावयवनाशस्तृतीयक्षणे च तन्नाशस्तत्र वृक्षे विभुसंयोगानुत्पत्त्या यावद्विशेषाभावसौलभ्यं न चैवं तादृशवृक्षे मूर्तान्तरेणापि संयोगस्तदवयवसंयोगैस्तत्कर्मणा वा न सम्भवति तदवय-

घगगनादिसंयोगनाशककर्मणा मूर्तान्तरतदवयवसंयोगानामपि तदुत्पत्तिकाले विनाशादवयवावयविनोः संयोगानभ्युपगमेन तदवयवेष्वेवारम्भकसंयोगसत्त्वे तेन तन्निष्ठसंयोगजननासंभवात् उत्पत्तिकाले च द्रव्ये गुणवत्कर्मसत्त्वानुपपत्तेरिति संयोगसाध्यके द्रव्यत्वस्य सद्धेतुतैव न निर्वहतीति वाच्यं तादृशखण्डद्रव्ये तदवयवसंयोगजन्यस्य तत्कर्मजन्यस्य च संयोगस्यासम्भवेपि सर्वत्रैव सतां सदागतिशीलपवनादिपरमाणूनां कर्मभिस्तत्संयोगानुत्पत्तौ बाधकविरहेण द्रव्यस्य संयुक्तत्वनियमादित्यपि कश्चित् । यावत्संयोगाभावा एव मानमिति । ज्ञायमानलिङ्गस्यानुमितिकरणत्वमताभिप्रायेण । यत्तदर्थयोरिति साध्यहेतुघटकयत्तच्छब्दार्थयोः संयोगघटत्वयोरित्यर्थः । अननुगमादिति । एकरूपेण निवेशासम्भवादित्यर्थः एकव्याप्तेर्निर्वाहयितुमशक्यत्वादिति शेषः । तथा च घटत्वाद्यवच्छिन्नाभावघटादिविशेषाभावकूटयोर्व्याप्तेः संयोगसामान्याभावसिद्धावनुपयोगित्वाद्यावत्संयोगविशेषाभावे संयोगसामान्याभावीयविशेषव्याप्तेश्चाग्रे निराकरिष्यमाणत्वान्नोक्तानुमानसम्भव इति भावः । ननु प्रकृतहेतौ प्रकृतसाध्यव्याप्तेरग्रहेपि यथा यो यत्र प्रवर्तते स कार्यतया तज्जानातीत्याकारात् स्तनपानादिप्रवृत्तितद्विषयककार्यताज्ञानयोर्व्याप्तिग्रहात् गवानयनादिप्रवृत्तिलिङ्गेन गवानयनादिकार्यताज्ञानस्य सिद्धिस्तथा प्रकृते संयोगीययावद्विशेषाभावे तत्सामान्याभावव्याप्तेर्यद्धर्मविशेषणत्वादिना अग्रहेपि घटादिविशेषाभावकूटे तत्सामान्याभावव्याप्तिग्रहादेव संयोगीययावद्विशेषाभावे पक्षधर्मताज्ञानाद्गगनादौ संयोगसामान्याभावसिद्धिर्दुर्वारैव व्यतिरेकिहेतुकानुमिताविव सामान्यव्याप्त्यधीनविशेषसिद्धौ व्याप्तिविशिष्टपक्षधर्मताज्ञानस्य हेतुत्वानुपगमात् न च विशेषाभावान्तरे सामान्याभावान्तरव्याप्तिग्रहात्संयोगविशेषाभावेन तत्सामान्याभावसिद्ध्युपगमे यावत्त्वाद्यविशेषितकपिसंयोगादिप्रतियोगिकाभावे कपिसंयोगादिसामान्याभावव्याप्तिग्रहादेव संयोगादिप्रतियोगिकाभावेन तत्सामान्याभावसिद्धिसम्भवाद्यावत्त्वादिविशेषणमनर्थकं प्रकृतहेतुतुल्यानिखिलहेत्वन्तरेषु प्रकृतसाध्यतुल्यसाध्यव्याप्तिग्रहापेक्षायाः स्वीकर्तुमशक्यत्वात् तादृशसकलहेतुसाध्यानां युगसहस्रेणासर्व-

ग्रहीतुमशक्यत्वादिति वाच्यम् । उपस्थितयावत्तादृशहेतुषु तादृशतत्तत्साध्यव्याप्तिग्रहापेक्षया सामञ्जस्यात् तावन्मात्रापेक्षायाश्च तत्तत्साधनधर्मिकतत्तत्साध्यव्याप्तिग्रहाभावविशिष्टतत्तत्साध्यसाधनोपस्थितेरनुमितिप्रतिबन्धकतया सूपपादत्वात् एवं सति यावत्त्वविशेषणानुपादाने जात्यादिविशेषघटत्वाद्यभावे जात्यादिसामान्याभावव्यभिचारोपस्थितिदशायां संयोगादिसामान्याभावसाधनासम्भवेन तादृशविशेषणसार्थक्यात् गगनाद्यवृत्तित्वस्वसमानाधिकरणनिरुक्तधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावकं यद्यत्त्वं तदन्यो यो धर्मः स तन्निष्ठाभावप्रतियोगितावच्छेदक इत्येतादृशोक्तसामान्यव्याप्तिस्थलाभिप्रेतव्याप्त्यैव वा संयोगत्वादौ गगनादिनिष्ठाभावप्रतियोगितावच्छेदकत्वं साधनीयं तत्रानुमाने उपाधिमाह पक्षावच्छेदेनेति । अनवच्छिन्नतदीययावद्विशेषाभावाधिकरणत्वस्य उपाधित्वादित्यर्थः यथाश्रुते गुणादिनिष्ठाया यावत्संयोगाभावाधिकरणताया व्याप्यवृत्तितया ऽवच्छेदकाविरहेण उपाधेः साध्यव्यापकत्वानिर्वाहात् । न च गुणादिनिष्ठाया यावत्संयोगाभावाधिकरणताया व्याप्यवृत्तित्वेपि गुणत्वाद्यवच्छिन्नत्वमावश्यकमन्यथा ऽधिकरणतावच्छेदकप्रकारकज्ञानासम्भवेन गुणादौ तदभावग्रहासम्भवादिति वाच्यं द्रव्यनिष्ठयावत्संयोगाभावाधिकरणताया अपि द्रव्यत्वादिरूपेणावच्छिन्नतयोपाधेः साधनाव्यापकतानिर्वाहाय सप्तमीनिर्देश्यं यदव्याप्यवृत्तित्वनिर्वाहकं विलक्षणमवच्छेद्यत्वं तस्यैव विवक्षणीयतया गुणादिनिष्ठसंयोगाद्यभावाधिकरणतायां तादृशावच्छेद्यत्वविरहेण साध्यव्यापकताया यथाश्रुते दुरुपपादत्वात् । अथैवं कपिसंयोगादिसामान्यस्य मूलाद्यवच्छेदेनाभाववति कपिसंयोगादिमद्वृक्षादौ अनवच्छिन्नतदीययावद्विशेषाभाववत्त्वविरहेण साध्योपाध्योर्न सामान्यव्याप्तिनिर्वाहः । अत्र केचित् अवच्छिन्नत्वैकावच्छेदकानवच्छिन्नत्वोभयाभाववद्यावद्विशेषाभाववत्त्वमिहोपाधित्वेनाभिमतं गुणे यावद्विशेषाभाववत्त्वमवच्छिन्नत्वाभावेनोक्तोभयाभाववत् कपिसंयोगवति वृक्षे कपिसंयोगीययावद्विशेषाभाववत्त्वं मूलाद्यवच्छेदकावच्छिन्नमिति तदनवच्छि-

न्याभावादुभयाभावत्वादिति नोक्तोपाधिसाध्ययोः सामान्यव्याप्तिभङ्गः। अथ वृक्षादिनिष्ठानां यावत्कपिसंयोगविशेषाभावाधिकरणतानां नैकावच्छेदकावच्छिन्नत्वं सम्भवति वृक्षाद्यवृत्तिकपिसंयोगादिव्यक्तीनां ये ऽभावास्तेषां वृक्षादौ व्याप्यवृत्तितया तन्निष्ठतदधिकरणतानामनवच्छिन्नत्वात् न च व्याप्यवृत्त्यधिकरणतानामनवच्छिन्नतया अन्यासां चैकावच्छेदकावच्छिन्नतया सर्वास्वेव तासु उभयाभावो ऽक्षत इति वाच्यम्। एवं सति पक्षनिष्ठसंयोगव्यक्तीनां दिग्देशविशेषाद्यवच्छिन्नानां यावन्तोऽभावाः पक्षनिष्ठतन्निरूपिताधिकरणतानां सर्वासामेकावच्छेदकविरहेऽपि द्वित्वादीनामवच्छेदकैक्यसम्भवेन सर्वास्वेव तादृशतादृशावच्छेदकभादाथैकावच्छेदकावच्छिन्नत्वं सम्भवतीत्युभयाभावसत्त्वादुक्तोपाधेर्यावत्संयोगाभावरूपसाधनव्यापकतापत्तेः स्वसमानाधिकरणयावत्तदभावाधिकरणतावच्छेदकावच्छिन्नत्वस्य एकावच्छेदकावच्छिन्नत्वरूपत्वे च वृक्षादिनिष्ठमूलाद्यवच्छिन्नकपिसंयोगाद्यभावाधिकरणतास्वपि न तथात्वसम्भवस्तत्समानाधिकरणव्याप्यवृत्तिकपिसंयोगाभावाद्यधिकरणतानामपि तादृशयावदधिकरणतान्तर्गतत्वात्तदवच्छेदकस्य चाप्रसिद्धत्वादिति चेन्न एकावच्छेदकावच्छिन्नत्वस्य स्वसमानाधिकरणाकिञ्चिदवच्छिन्नयावत्तदभावाधिकरणतावच्छेदकावच्छिन्नत्वरूपस्य विवक्षितत्वेनानवच्छिन्नाधिकरणताभिः सहावच्छिन्नाधिकरणतानामेकावच्छेदकावच्छिन्नत्वासम्भवेऽपि क्षतिविरहात्। अथवा यावद्विशेषाभाववत्त्वमित्यनेन यावत्तदीयविशेषाभावत्वावच्छिन्ननिरूपितमेकाधिकरणत्वं विवक्षितं न तु तत्समुदायः एकावच्छेदकावच्छिन्नत्वं च एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकावच्छिन्नत्वं न त्वभिन्नावच्छेदकत्वं वृक्षावृत्तिसंयोगानां वृक्षनिष्ठाभावा यद्यपि व्याप्यवृत्तयस्तथापि अव्याप्यवृत्तिसाधारणयावत्त्वेन तेषामव्याप्यवृत्तित्वात्तत्साधारणयावत्त्वावच्छिन्ननिरूपिताधिकरणता एकमात्रवृत्तितत्तन्मूलत्वाद्यवच्छिन्नतत्तन्मूलादिरूपावच्छेदकावच्छिन्नेति तत्रोभयाभावो ऽक्षत इति न साध्योपाध्योः सामान्यव्याप्तिभङ्गः पक्षनिष्ठसंयोगसामान्यीययावद्विशेषाभावाधिकरणता च न प्रत्येकावच्छेदकावच्छिन्ना मूले वृक्षो यावत्संयोगा-

भाववान् इत्यादिप्रतीतिविरहात् अपि त्वनुगतरूपावच्छिन्नतदवच्छेदकावच्छिन्ना यावत्संयोगाभाववद्गगनमितिप्रत्ययात् एकरूपावच्छिन्नस्य प्रतियोग्यभावाधिकरणतावच्छेदकत्वविरोधात् एकस्यापि विशेषरूपसामान्यरूपाभ्यामुभयावच्छेदकत्वोपगमात् तथा च वृक्षनिष्ठसंयोगविशेषाभावानां यावत्त्वावच्छिन्ननिरूपिताधिकरणता न निरुक्तैकावच्छेदकावच्छिन्नत्ववतीति तस्या उक्तोभयवत्त्वाद्युपाधेः साधनाव्यापकत्वमिति वदन्ति । वस्तुतस्तु अनवच्छिन्नयावद्विशेषाभाववत्त्वमेवोपाधिः तादृशोपाधिना साध्यस्य सामान्यव्याप्तिविरहेपि संयोगसामान्याभावरूपपर्यवसितसाध्यव्यापकतया तादृशोपाधेः सत्प्रतिपक्षोत्थापकत्वमव्याहतं तादात्म्येन साध्यवतोप्युपाधिव्याप्यतया तादृशोपाध्यभावेन संयोगसामान्याभावरूपसाध्यवद्भेदो ऽन्यत्राप्रसिद्धोपि साधयितुं शक्यत एव अभावसाध्यकव्यतिरेकिणि प्रतियोगिमात्रप्रसिद्धेरपेक्षितत्वात् उपाध्यभावेन साध्याभावसाधनं तु न सम्यक् संयोगरूपस्य तस्य साधने सिद्धसाधनात् पक्षावृत्त्युपाधिव्याप्यत्वेन साध्ये पक्षावृत्तित्वसाधनात्सत्प्रतिपक्षनिर्वाह इति केचित् । सिद्धसाधनादितः साध्याभावसाधनासम्भवेपि प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकतावच्छेदकतया गृह्यमाणोपाधितावच्छेदकावच्छिन्नाभाववत्ताज्ञानात्पक्षे साध्यानुमितिप्रतिरोध एवेति सारम् । अथवा प्रतियोग्यधिकरणत्वरूपपक्षधर्मावच्छिन्नसामान्याभावरूपसाध्यव्यापकतया एकावच्छेदेनेत्यादेर्यथाश्रुतस्यैवोपाधितानिर्वाहः यत्र प्रतियोगिमति यस्य सामान्याभावस्तत्रैकावच्छेदेन तस्य यावद्विशेषाभाववत्त्वनियमेन सुग्रहत्वात् गुणादावेकावच्छेदेन यावद्विशेषाभावासत्त्वेपि तत्र प्रतियोग्यसत्त्वेनावच्छिन्नसाध्यव्यापकत्वाक्षतेश्च । द्रव्ये च प्रतियोगिमत्त्वविशिष्टयावत्संयोगविशेषाभावाधिकरणे एकावच्छेदेन तदीययावद्विशेषाभावासत्त्वात् प्रतियोगिमत्त्वरूपावच्छेदकविशिष्टसाधनाव्यापकत्वं तस्य वृक्षादिवृत्तिकपिसंयोगादिविशेषाभावाधिकरणताकूटान्तर्गतकतिपयाभावाधिकरणतानामनवच्छिन्नत्वेपि तत्कूटस्य एकावच्छेदकावच्छिन्नत्वं पूर्ववदुपपादनीयम् । अथ एतादृशोपाधेर्व्यभिचारोन्नायकत्वं न सम्भवति प्रकृतसाध्य-

व्यापकस्य एकावच्छेदकावच्छिन्नसंयोगीययावद्विशेषाभाववत्त्व-स्याप्रसिद्धेः, द्रव्ये तदीययावद्विशेषाभाववत्त्वस्यावच्छिन्नत्वेऽपि एकावच्छेदकावच्छिन्नत्वाभावात् गुणे च तस्यावच्छिन्नताया एवाभावात् प्रतियोगिमत्त्वविशिष्टकपिसंयोगादिसामान्याभावव्या-पकस्य तदीयैकावच्छेदकावच्छिन्नयावद्विशेषाभाववत्त्वस्य प्रसि-द्धत्वेऽपि तदभावेन प्रकृतसाध्यवद्भेदसाधनं न सम्भवति प्र-कृतसाध्याव्यापकत्वात् प्रतियोगिमत्त्वविशिष्टकपिसंयोगादिसामा-न्याभाववद्भेदश्च कपिसंयोगादिरूपप्रतियोगिशून्ये हेतुमति साध्य-मानो न कपिसंयोगादिसामान्याभाववद्भेदपर्यवसायी तत्र प्र-तियोगिमद्भेदस्याबाधात् प्रतियोगिमति चैकावच्छेदकावच्छिन्न-तदीययावद्विशेषाभाववत्त्वसत्त्वेन तद्वत्त्वाभावादिहेतोरसिद्धिरि-ति न व्यभिचारोपपादननिर्वाह इति चेत्। मैवं कचिद्द्रव्ये ज-लादिसंयोगवति तत्सामान्याभावस्य सत्त्वे एकावच्छिन्नतदी-ययावद्विशेषाभावसत्त्वात्तदीयप्रतियोगिमत्त्वविशिष्टतत्सामान्याभा-वव्यापकैकावच्छेदकावच्छिन्नतदीययावद्विशेषाभाववत्त्वं यत्र च द्रव्ये सर्वावयवावच्छेदेन भिन्नभिन्नाः जला-दिसंयोगा वर्तन्ते यावत्तद्विशेषाभावरूपहेतुमति तत्रैकावच्छेद-कावच्छिन्नयावद्विशेषाभाववत्त्वरूपोपाध्यभावे प्रतियोगिमत्त्व-विशिष्टतत्सामान्याभाववद्भेदस्य सिद्धौ बाधकाभावात् प्रतियो-गिमति तत्र विशेष्यवद्भेदपर्यवसानेन व्यभिचारसिद्धा सामा-न्यव्याप्तिभङ्गात् संयोगत्वे गगनादिनिष्ठाभावप्रतियोगितावच्छे-दकत्वसाधकानुमानोपधिकदर्शितव्याप्तावपि एकावच्छेदकावच्छे-द्यत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभा-वाधिकरणताशून्यगगनादिकं यदन्यदन्यत्वस्योपाधित्वं बोध्यम्। एतेनेति अनवच्छिन्नयावद्विशेषाभाववत्त्वस्योपाधित्वेनेत्यर्थः। इति विशेषव्याप्त्युपष्टम्भमनुमानं परास्तं दूषणान्तरमप्याह व्य-र्थेति तन्मते संयोगसामान्याभावस्य केवलान्वयितया ऽभा-ववत्त्वस्यैव तद्व्याप्यतावच्छेदकत्वेन इतरांशस्य व्यर्थत्वादित्यर्थः नन्वभावादित्येव हेतुरस्त्वित्यत आह अप्रयोजकत्वादिति व्याप्तिग्राहकतर्कशून्यत्वादित्यर्थः। विशेषव्याप्तौ उपाध्यन्तरमपि सुलभमित्याह निर्गुणत्वादेरिति। आदिना निष्परिमाणत्वादेः

परिग्रहः 'यद्यद्धर्माश्रयानवच्छेदकं तत्तद्धर्मावच्छिन्नाभावावच्छेदकमिति व्याप्युपग्रम्भं वृक्षत्वादेः संयोगसामान्याभावावच्छेदकत्वसाधकमनुमानमाशङ्क्य निराकुरुते न चेति । गुणाद्यनवच्छेदकेति । गुणत्वाश्रयानवच्छेदकेत्यर्थः । तदभावेति गुणत्वाद्यवच्छिन्नाभावेत्यर्थः तथा च गुणत्वाद्यवच्छिन्नस्यापि अव्याप्यवृत्तिताप्रसङ्ग इति भावः । घटादौ द्रव्यत्वावच्छेदेन घटत्वाद्यभावप्रसङ्गो घटत्वादेर्व्याप्यवृत्तितया तदवच्छेदकाप्रसिद्ध्या तदनवच्छेदकत्वरूपापादकाप्रसिद्धेर्न सम्भवतीति नाभिहितः । गुणत्वाद्याश्रयस्य संयोगादेरवच्छेदकप्रसिद्ध्या न गुणत्वाद्यवच्छिन्नाभावावच्छेदकत्वापादकाप्रसिद्धिरिति भावः । ननु यद्धर्माश्रयानवच्छेदकमित्यत्र यत्पदेन अव्याप्यवृत्त्यवृत्तिधर्मो विवक्षितः गुणत्वादेश्च व्याप्यवृत्तिरूपादिवृत्तितया तदाश्रयानवच्छेदकत्वस्य न तदवच्छिन्नाभावावच्छेदकत्वापादकता इत्याशङ्क्य वृक्षत्वादौ संयोगत्वाश्रयानवच्छेदकत्वरूपसंयोगत्वावच्छिन्नाभावसाधकहेतोरसिद्धिमाह यथा चेति । दण्डनिष्ठघटकारणताघटकतदव्यवहितपूर्वकालसम्बन्धस्येत्यर्थः । प्रतिदण्डं भिन्नत्वेपीति दण्डत्वं तत्सामान्यावच्छेदकमित्यन्वयः । प्रतिदण्डं भिन्नत्वेपीत्यनेन दण्डत्वं प्रत्येकातिप्रसक्तमिति सूचितमेवमग्रेपि । तत्सामान्येति घटपूर्ववर्तितात्वावच्छिन्नस्येत्यर्थः । प्रत्येकातिप्रसक्तत्वेपि अवच्छेद्यतावच्छेदकानुगतरूपावच्छिन्नानतिप्रसक्ततया तस्यावच्छेदकत्वम् । अन्यथा घटकारणतावच्छेदकत्वमेव तस्य भज्येतेतिभावः । ननु दण्डत्वस्य घटनियतपूर्ववर्तितावच्छेदकत्वं न घटनियतपूर्ववर्तितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वमपि तु तदव्यवहितपूर्वकालानिष्ठाभावप्रतियोगितानवच्छेदकत्वरूपपारिभाषिकमेव तच्चातिप्रसक्तेऽपि निराबाधमेव स्वरूपसम्बन्धरूपावच्छेदकताया एवावच्छेद्यानतिप्रसक्तत्वनियतत्वादिति प्रत्येकातिप्रसक्तस्य सामान्यानतिप्रसक्तत्वेन सामान्यरूपावच्छिन्नावच्छेदकत्वे दृष्टान्तान्तरमाह वह्निसामानाधिकरण्यस्येति । प्रतिधूमं भिन्नत्वेऽपि धूमत्वं तत्सामान्यावच्छेदकमित्यन्वयः । तत्पदेनात्र वह्निसामानाधिकरण्यपरामर्शः धूमत्वस्य तदनवच्छेदकत्वे तस्य वह्निव्याप्यतावच्छेदकत्वं नोपपद्येत न च व्याप्यतावच्छेदकत्वमपि स्वविशि-

दृव्यापकसाध्यकत्वरूपं पारिभाषिकमेव तच्चातिप्रसक्तसाधारणमिति न दृष्टान्तसङ्गतिरिति वाच्यं साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वं व्याप्तिस्तत्रावच्छेदकत्वं स्वरूपसम्बन्धविशेषः अत एव यत्र व्यर्थविशेषणघटितनीलधूमत्वादिना हेतुता तत्र, व्याप्यत्वासिद्धिरिति प्राचीनमतानुसारेणैतदभिधानात् अन्यथा पुनः स्वरूपसम्बन्धरूपप्रकारत्वप्रतियोगित्वादिनिरूपितमनुगतधर्मनिष्ठस्वरूपसम्बन्धरूपमवच्छेदकत्वं दृष्टान्तविधया बोध्यं संयोगसामान्यस्य संयोगत्वरूपावच्छेदकतावच्छेदकरूपावच्छिन्नस्य सुवचत्वाद्येति प्रत्येकसंयोगादिव्यक्त्यतिप्रसक्तस्यापि द्रव्यत्वादेस्तद्रूपावच्छिन्नानतिप्रसक्तत्वादिति भावः। यद्यप्येवमपि प्रमेयत्वादेः संयोगसामान्यातिप्रसक्तत्वेन तत्सामान्यावच्छेदकत्वाप्रसक्त्या उक्तव्याप्तिबलात्तदवच्छेदेन संयोगसामान्याभावसिद्धिर्न शक्यते वारयितुं तथापि प्रतियोगिमत्सम्बद्धदेशकालयोरेव प्रतियोग्यनवच्छेदकयोरभावावच्छेदकत्वनियमस्तयोरेव तदनुभवात् न तु प्रतियोग्यनवच्छेदकमात्रस्य मानाभावादित्यत्र तात्पर्यं द्रव्ये संयोगसामान्याभावस्य कालभेदाद्यवच्छेदेन स्वयमनुपदं व्यवस्थापनीयतया सम्प्रदायविद इत्यनेनास्वरसो दर्शितः।

(दी०) नवीनास्तूत्पत्तिकालावच्छेदेन घटादौ गुणस्य प्रलयाद्यवच्छेदेन गगनादौ संयोगस्य सामान्याभावो वर्तते तथा धूमवत्यपि विरहो दहनस्य इह पर्वते नितम्बे हुताशनो न शिखरे इति प्रतीतेः संयोगेन द्रव्यस्याव्याप्यवृत्तित्वात्। वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसम्भावितत्वाच्च। एवं प्रतियोगिमतोरपि कालदेशयोर्देशकालभेदावच्छेदेन तदभावः। तथा च तत्तत्साध्यकाव्याप्तिवारणाय तत् नोपादेयं च सर्वथैव व्याप्यवृत्तिसाध्यके साध्यसाधनभेदेन व्याप्तिभेदादित्यपि वदन्ति।

(गा०) गुणस्य सामान्याभावो वर्तत इत्यन्वयः। ध्वंसप्रागभावयोर

त्यन्ताभावविरोधिताया निराकृतत्वादिति भावः । एतेन तदवच्छेदेन संयोगादिसामान्याभावोऽपि सुतरां वर्तते व्यापकधर्मावच्छिन्नाभाववति व्याप्यधर्मावच्छिन्नाभावसत्त्वनियमादिति सूचितं न चोत्पत्तिकालावच्छेदेन घटादौ गुणस्य प्रागभाव एव न तु तत्सामान्यात्यन्ताभावोऽपि मानाभावादिति वाच्यं तदा तत्र जन्यैकत्वहेतुभूतस्य एकत्वत्वावच्छिन्नाभावस्यावश्यकतया तस्यैव स्वसमनियतगुणत्वाद्यवच्छिन्नाभावरूपतया विवादाद्योगात् संयोगादिसोध्यकनित्यद्रव्यमात्रवृत्तिहेतुस्थले व्यावृत्तिदानायाह प्रलयेति । महाप्रलयस्य जन्यभावानधिकरणतया तदानीं संयोगाद्यसत्त्वादिति भावः । तदानीं च गगनादौ नित्यैकत्वपरिमाणादिसत्त्वेन गुणसामान्याभावस्यासत्त्वात्संयोगस्येत्युक्तम् । अत्र च प्रमाणं महाप्रलये गगने न संयोग इत्यादिप्रामाणिकव्यवहार एव तादृशव्यवहारस्य ध्वंसावगाहित्वे ऽतिप्रसङ्गाद्व्यवहारानादरे चातीन्द्रियगगनादौ गोत्वाद्यभावस्याप्रामाणिकतापत्तेः प्रत्यक्षासम्भवात् अनुमानस्याप्रयोजकत्वात् वह्निमान् धूमादित्यत्रापि व्यावृत्तिदानायाह तथेति । दहनस्य दहनत्वावच्छिन्नस्य प्रतीतेरित्यन्तं द्रव्यस्याव्याप्यवृत्तित्वादित्यत्र हेतुः प्रत्यक्षप्रमाणमुक्त्वा युक्तिमप्याह वृत्तेरिति । संयोगरूपसम्बन्धस्येत्यर्थः । वृत्तिमतो व्याप्यवृत्तित्वस्य संयुक्तस्य तत्सम्बन्धेन व्याप्यवृत्तितायाः असम्भावितत्वादिति । अयमाशयः सम्बन्धिसत्तायाः सम्बन्धाधीनत्वाद्यदवच्छेदेन सम्बन्धो नास्ति तदवच्छेदेन तत्सम्बन्धावच्छिन्नतदभावसत्त्वमावश्यकं संयोगादेः सम्बन्धस्य समवायस्य व्याप्यवृत्तित्वेऽपि न संयोगादेर्व्याप्यवृत्तिता गुणादौ समवायसत्त्वेऽपि संयोगाद्यसत्त्ववत्संयोगाद्यनवच्छेदकावच्छिन्ने संयोगादिमति तत्समवायसत्त्वेऽपि तदभावोपपत्तेरिति । केचित्तु वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतोऽव्याप्यवृत्तित्ववत् वृत्तेर्व्याप्यवृत्तित्वे वृत्तिमतोऽपि व्याप्यवृत्तित्वं युक्तितौल्यात् संयोगादिप्रतियोगिकत्वविशिष्टसमवायोऽपि न व्याप्यवृत्तिरित्याहुः । वह्निमान् धूमादित्यादौ कालविशेषावच्छेदेन हेतुमति वर्तमानं साध्याभावमादाय घटत्ववान् कालत्वादित्यादौ पदाद्यवच्छेदेन काले वर्तमानं कालिकसम्बन्धावच्छिन्नाभावमादाय च व्यावृत्तिदानायाह

प्यामिति । प्रतियोगिमतो देशस्य प्रतियोग्यनधिकरणकाला-वच्छेदेन प्रतियोगिमतः कालस्य च प्रतियोग्यनधिकरणदेशाव-च्छेदेनाभाववत्त्वमित्यर्थः । तत्तत्साध्यकेति गुणत्वाद्यवच्छिन्नसा-ध्यकद्रव्यत्वाद्यव्याप्तिवारणायेत्यर्थः .तत् असमानाधिकरणान्तम । अव्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याघटितव्याप्तेरप्रसि-द्ध्या तद्घटितैव व्याप्तिः व्याप्यवृत्तिसाध्यके तु प्रतियोगिवैय-धिकरण्यानुपस्थितिदशायामपि हेतुसमानाधिकरणाभावप्रति-योगितावच्छेदकत्वसामान्याभावग्रहादनुमित्युत्पत्त्या प्रतियोगिवै-यधिकरण्याघटितापि व्याप्तिरस्ति · प्रतियोगिवैयधिकरण्यघ-टितव्याप्तिरुभयत्रैव प्रसिद्धानुमितिप्रयोजिका चेत्याशयेन मूल-कृतस्तदुपादानमित्याह नोपादेयमिति । व्याप्यवृत्तिसाध्यके सा-र्वत्रिकमुपादानं प्रतिक्षिप्तं न त्वनुपादानस्य सार्वत्रिकत्वमुक्तं व्याप्यवृत्तेरपि साध्यस्याव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवै-यधिकरण्यघटितव्याप्तिज्ञानादेवानुमित्युपगमात् व्याप्यवृत्तिसा-ध्यके सर्वत्र तादृशविशेषणोपादानानियमः तदघटिताया अपि व्याप्तेः सर्वत्रानुमित्यौपयिकत्वात् अव्याप्यवृत्तिसाध्यके तु स-र्वत्र तदुपादाननियम एव तदघटितव्याप्तेरप्रसिद्धेरिति भावः व्याप्यवृत्तिसाध्यकत्वं च · स्वसमानाधिकरणाभावाप्रतियोगितव-च्छेदकत्वं सत्तावान् द्रव्यत्वात् कालिकसम्बन्धावच्छिन्नाका-शाभावाभाववान् आत्मत्वादित्यादिकं च न तथा अतस्तत्र सा-ध्यवति कालात्मादौ कालिकदैशिकविशेषणताभ्यां तदभाव-सत्त्वात् प्रतियोगिवैयधिकरण्याविशेषिततेहेतुसमानाधिकरणाभा-वाप्रतियोगित्वस्य साध्ये ऽसत्त्वेन व्याप्तेः प्रतियोगिवैयधिक-रण्याघटितत्वनियमेऽपि न दोषः । केचित्तु व्याप्यवृत्तिसाध्यकत्वं यथाश्रुतमेव हेतुमत्यभावस्य न दैशिकविशेषणतया वृत्तिर्विवक्ष-णीया अतो हेतुमति कालादौ कालिकविशेषणतादिना साध्या-भावसत्त्वेऽपि नाव्याप्तिः भावस्यापि अभावत्वेन दैशिकविशेष-णतया वृत्तिः प्रामाणिकी अतो नाभावसाध्यकव्यभिचारिण्य-तिव्याप्तिः यादृशप्रतियोगितानिरूपकाभावत्वाविशिष्टस्य दैशिकवि-शेषणतया हेतुमति वृत्तिस्तादृशप्रतियोगितानवच्छेदकत्वावि-

५। कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववान्

आत्मत्वादित्यादावव्याप्तेर्निरासः तत्राकाशाभावस्याकाशाभावत्वे-नैव दैशिकविशेषणतया आत्मनि वृत्तिर्न तु उक्तसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन आत्मनि तादृशाभावाभावो नास्तीत्यप्रतीतेः अव्याप्यवृत्तिसाध्यकेऽपि संयोगाभाववान्नित्यगुणत्वादित्यादावनुत्यौपयिकद्विविधव्याप्तेः सम्भवेन सर्वथैवेत्युक्तं तावताप्यव्याप्यवृत्तिसाध्यकेऽपि क्वचित्तदघटितव्याप्तेः सम्भव इति सूचितमित्याहुः। यत्तु व्याप्यवृत्तिसाध्यके ऽव्याप्यवृत्तित्वग्रहाविषयसाध्यके सर्वथैवासमानाधिकरणान्तस्यानुपादेयतया तत्र लाघवेन प्रतियोग्यसामानाधिकरण्याघटितव्याप्तेरेवानुमानाङ्गतास्वीकारादिति व्याख्यानं तदसत्। तत्रापि शब्दादिना प्रतियोग्यसामानाधिकरण्यघटितव्याप्तेरेव यदा ग्रहस्तदा ऽनुमितेरुत्पादाय तादृशव्याप्तेरनुमानाङ्गत्वस्योपगन्तव्यत्वात् अन्यथा यादृशव्यतिरेकिसाध्ये न केवलान्वयित्वभ्रमः तादृशसाध्यके लाघवेन साध्याभाववदवृत्तित्वमात्रस्यैव व्याप्तित्वोपगमप्रसङ्गात् केवलान्वयिनो यस्य साध्यस्य न व्यतिरेकित्वभ्रमविषयता तत्साध्यके हेतुसामानाधिकरण्यविशेषणपरित्यागस्यापि प्रसङ्गाच्च । यत्तु प्रतियोग्यसामानाधिकरण्येत्यत्र प्रतियोगिपदं स्वप्रतियोगिपरमवश्यं वाच्यम् अन्यथा प्रतियोगित्वस्य सामान्यरूपेण केवलान्वयितया प्रतियोग्यसमानाधिकरणाभावस्यैव दुर्लभत्वापत्तेः तथा च स्वपदस्य तत्तदभावपरतया तत्तदभावप्रतियोग्यसामानाधिकरण्यविशिष्टत्वेन हेतुमदवृत्तीनां तत्तदभावव्यक्तीनां प्रतियोगितावच्छेदकत्वाभावकूटज्ञानम् अनुमितिकारणं वाच्यं तादृशं च ज्ञानमसर्वज्ञस्य दुर्घटम् । अतः प्रतियोगिपदस्य प्रकृतसाध्यार्थकतया साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टः सन् हेतुमदवृत्तिरभाव एवानुगतरूपेण निवेश्यः सद्धेतौ सर्वेषामेव हेतुसमानाधिकरणाभावानां सर्वत्र हेत्वधिकरणे साध्यसमानाधिकरणतया साध्यसामानाधिकरण्याभावविशिष्टस्य हेतुमदवृत्तित्वं न प्रसिद्धमितीति साध्याभावनिष्ठत्वं साध्यसामानाधिकरण्ये विशेषणं सद्धेतौ सर्वत्र साध्याभावभिन्नाभावे तत्प्रसिद्धिसम्भवः व्यभिचारिणि च व्यभिचारनिरूपकाधिकरण एव साध्याभावे साध्यसामानाधिकरण्याभावविशिष्टतया

हेतुमदवृत्तित्वमिति साध्याभावस्यापि लक्षणघटकतया नातिव्याप्तिः संयोगेन प्रमेयसाध्यकसद्धेतौ साध्याभावातिरिक्ताभावाप्रसिद्ध्या हेतुमति साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टाभावासिद्धिरिति साध्यतावच्छेदकावच्छिन्नाभावनिष्ठसाध्यसामानाधिकरण्यस्याभावो निवेशनीयः एवं च व्याप्यवृत्तिसाध्यके साध्यतावच्छेदकावच्छिन्नसाध्याभावनिष्ठसामानाधिकरण्याप्रसिद्ध्या ईदृशव्याप्तिर्न प्रसिद्ध्यतीति तत्साध्यके प्रतियोग्यसामानाधिकरण्याघटितैव व्याप्तिरित्युक्तं नोपादेयं चेत्यादिनेति । तदपि न सामानाधिकरण्यविशेषणीभूतसाध्याभावे साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वनिवेशे प्रयोजनाभावाद्व्याप्यवृत्तिसाध्यकेऽपि सम्बन्धान्तरावच्छिन्नसाध्याभाव एव साध्यसामानाधिकरण्यप्रसिद्ध्या तथाप्युक्तव्याप्तिप्रसिद्धेः । परे तु ननु प्रतियोग्यसामानाधिकरण्यगर्भव्याप्तेरनुमितिप्रयोजकत्वे प्रतियोग्यसामानाधिकरण्यानुपस्थितिदशायां तदसामानाधिकरण्याविषयकादेव हेतुसमानाधिकरणाभावप्रतियोगित्वज्ञानादनुमितिरुपेयत इत्यनुपपन्नमत आह नोपादेयञ्चेति । व्याप्यवृत्तिसाध्यके अनुमितिपूर्वमव्याप्यवृत्तित्वज्ञानाविषयसाध्यके सर्वत्र प्रतियोगिवैयधिकरण्यं नोपादेयम् । अनुमितिप्रयोजकव्याप्तिशरीरे न निवेशनीयं । तत्र तदघटितव्याप्तिज्ञानमेव हेतुः । सर्वथैवेत्यनेन यत्साध्यके कदाचिदनुमितिपूर्वं साध्ये हेतुमदव्याप्यवृत्तित्वज्ञानं तत्र तदनुमितिनिर्वाहाय प्रतियोग्यसामानाधिकरण्यमुपादायापि व्याप्तेरनुमितिप्रयोजकत्वमुपेयं वक्ष्यमाणरीत्या व्याप्तेरनुगमात् व्यभिचार इति सूचितं । साध्यभेदेत्युपलक्षणं प्रतियोग्यसामानाधिकरण्यानुपस्थितिदशाभेदेनैकसाध्यकेऽप्यनुमितिप्रयोजकव्याप्तिभेदोपगमोऽपि बोद्धव्य इति व्याचक्रुः । व्याप्यवृत्तिसाध्यकस्थले द्विविधा व्याप्तिर्न त्वव्याप्यवृत्तिसाध्यके इति साध्यभेदेन व्याप्तिभेदाभावो न सम्भवतीत्यत आह साध्यादिभेदेनेति साध्यतावच्छेदकादेर्विशिष्य व्याप्तिघटकतया तद्भेदे तद्भेदस्यावश्यकत्वादित्यर्थः ॥

यद्यपि जात्यादौ गुणकर्मान्यत्वादिसामानाधिकरण्योपलक्षितस्य सत्त्वादेर्व्याप्तिरस्त्येव गुणादौ तदुपलक्षितसत्त्वाद्यनुमितेः

प्रमात्वादिति तत्र तादृशानुमित्यौपयिकव्याप्तिस्वीकारे सल्लिङ्गकपरामर्शादपि भ्रमः स्यादिति तादृशानुमित्यौपयिकव्याप्तिर्गुणादिवृत्तिहेतोर्न स्वीकर्तुं शक्यते ऽतः साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तिशरीरे प्रतियोगितावच्छेदकाविशिष्टवैयधिकरण्यपर्यन्तं निवेश्य तत्र तादृशातिव्याप्तिं वारयति प्रतियोग्यसामानाधिकरण्यं चेति ॥

( दी० ) प्रतियोग्यसामानाधिकरण्यं च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं तेनायं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ नातिप्रसङ्गः । न चोभयत्वमेकविशिष्टापरत्वं विशिष्टं च केवलादन्यदिति तदभावो मनसि सहजत एव प्रतियोग्यसमानाधिकरण इति वाच्यम् उभयत्वं हि न विशिष्टत्वादनतिरिक्तं न वा तदवच्छिन्नाभावः तदवच्छिन्नाभावात् । वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्योभयत्वेन तदभावस्य च प्रत्यक्षसिद्धत्वात् । न च तत्र व्याप्तिरेवोभयत्वाधिकरणमूर्तत्वस्य मनसि सत्त्वादिति वाच्यं तथात्वेऽप्युभयत्वेन रूपेण तत्रासत्त्वान्नात्रोभयमिति प्रतीतेर्दुर्वारत्वात् ।

( गा० ) न च तत्रापि व्याप्तिस्वीकारे क्षतिविरहः गुणो गुणान्यत्वविशिष्टसत्तावानित्यादौ तादृशव्याप्तिसत्त्वेऽपि बाधेनैव हेतोर्दुष्टत्वोपपत्तेः द्रव्यपक्षकतादृशसाध्यकजात्यादिहेतोश्च समीचीनताया एवोपगमे क्षतिविरहात् बाधानवतारदशायां च गुणादौ जात्यादिलिङ्गकविशिष्टवैशिष्ट्यानुमितिर्भ्रमरूपा प्रमात्मकसल्लिङ्गकपरामर्शादपि स्वीक्रियते अत एव गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ बाधानवतारदशायां प्रमात्मकपरामर्शाद्विशिष्टानुयोगिकवैशिष्ट्यावगाहिनी भ्रमानुमितिर्मणिकारेणोपगम्यत इति वाच्यं भ्रमानुमितिजनकपरामर्शस्य भ्रमत्वसम्भवे तदुपादानमावश्यकमित्याशयात्

गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ परामर्शस्य कथञ्चिदपि प्रमत्वासम्भवेनागत्या तत्र प्रमात्मकपरामर्शाद्भ्रमानुमितिस्वीकाराद्गुणो विशिष्टसत्तावान् जातिमत्त्वादिति विशिष्टप्रतियोगिकवैशिष्ट्यविषयकानुमितिस्थलमुपेक्ष्य गन्धप्रागभाववान् घटो गन्धवानित्यादिविशिष्टानुयोगिकवैशिष्ट्यविषयकानुमितिस्थलमसिद्धिव्यभिचारासङ्कीर्णबाधोदाहरणत्वेनाभिहितवता मणिकृता ऽप्युक्तस्थले ऽव्याप्तिर्नास्तीत्याशय उन्नीयते । अथ विशिष्टनिरूपित एव समवायादिर्विशेष्याविरोधिनो विशिष्टाभावस्य प्रतियोगितावच्छेदकसम्बन्धः शुद्धसमवायादेस्तथात्वे दण्डाद्युपलक्षितपुरुषादिमत्त्वविरोधितादृशपुरुषाद्यभावात्तदविरोधितद्विशिष्टपुरुषाद्यभाववैलक्षण्यानिर्वाहात् न च तदुपलक्षितपुरुषाद्यभावस्य स धर्मो न प्रतियोगितावच्छेदकः अपि तु प्रतियोगितासमानाधिकरण एव प्रतियोगितावच्छेदकस्यैव प्रतियोगिनि विशेषणत्वात्तादृशस्यैव चोपलक्षणत्वादिति तादृशाभावयोर्विशेष इति वाच्यम् उपलक्षणेन दण्डादिना व्यावृत्तप्रतियोगिनिष्ठप्रतियोगितायां पुरुषत्वादेरतिप्रसक्ततया तन्मात्रे तदवच्छेदकतायाः पर्याप्त्यसम्भवेन दण्डादेरपि तदवच्छेदककोटाववश्यमन्तर्भावात् अत एव पुरुषादिमात्रेण दण्डाद्युपलक्षितपुरुषाद्यभावस्य न विरोधः तदवच्छिन्नाभावस्यैव तद्विशिष्टाभावत्वे सत्तान्यपृथिवीसमवेतशून्यं वायुत्वादित्यादौ ग्रन्थकृतां कूटघटितलक्षणातिव्याप्तिदानमपि विरुध्येत पृथिवीसमवेतत्वविशिष्टाभावस्य वाय्वादौ सत्त्वेन वायुत्वादेस्तत्र साध्ये सद्धेतुत्वात् तथा च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्याविवक्षायामपि नातिव्याप्तिः प्रतियोगितावच्छेदकसम्बन्धेन गुणादेर्विशिष्टसत्तानधिकरणत्वादिति चेन्न विशिष्टनिरूपितसम्बन्धस्य विशिष्टाभावप्रतियोगितावच्छेदकत्वं सर्वत्र न सम्भवतीति प्रागुक्तत्वात् अगत्या विशिष्टाभावप्रतियोगिता विशेषणान्तर्भावेन पर्याप्ता उपलक्षिताभावप्रतियोगिता तु दण्डादिरूपावच्छेदकोपलक्षितविशेष्य एव पर्याप्तेत्युपगमस्य तयोर्विशेषस्योपपादनीयत्वात् विशिष्टस्यातिरिक्ततामते विशिष्टसत्ताभावः सहजत एव प्रतियोग्यसमानाधिकरण इत्युभयसाध्यकानुसरणम्

नातिप्रसङ्ग इति हेतुमति विशिष्टाभावादेः शुद्धप्रतियोगिसामानाधिकरण्येऽपि विशिष्टप्रतियोगिसामानाधिकरण्यविरहेण न भ्रमानुमितिजनकपरामर्शस्य प्रमात्वप्रसङ्ग इत्यर्थः व्याप्यवृत्तिसाध्यकेऽपि प्रतियोगिवैयधिकरण्यावगाहिपरामर्शस्यानुमितिहेतुतया उक्तसाध्यस्य व्याप्यवृत्तित्वेऽपि नातिप्रसङ्गप्रसक्तिः ।

ननु मूर्तत्वादिहेतौ भूतत्वादिविशिष्टमूर्तत्वत्वादिरूपतदुभयत्वावच्छिन्नस्यैव व्याप्तिर्न तु तदुभयवृत्तिबुद्धिविशेषविषयत्वरूपतदुभयत्वाद्यवच्छिन्नस्य तथा च विशिष्टसत्तातिरिक्ततामते विशिष्टसत्त्वादिसाध्यकजात्यादिहेताविव उक्तोभयसाध्यकमूर्तत्वादिहेतावपि यथाश्रुतप्रतियोग्यसामानाधिकरण्यनिवेशपक्षे नातिव्याप्तिप्रसक्तिरित्याभिमानं न चेत्यादिना निराकरोति न चेति ।

सहजत एव प्रतियोगिपदस्य तत्त्वावच्छेदकाविशिष्टपरतां विनैव उभयत्वम् उभयव्यवहारविषयतावच्छेदकं न विशिष्टत्वात् एकविशिष्टापरत्वात् अनतिरिक्तम् अभिन्नम् अतिरिक्तमित्यनुक्त्वा नानतिरिक्तमित्यभिधानम्। उभयपदार्थतावच्छेदकत्वावच्छेदेनातिरिक्तत्वलाभाय नञ्पदस्यानुयोगितावच्छेदकावच्छेदेनाभावबोधकत्वव्युत्पत्तेः तावता एकविशिष्टापरत्वमुभयनिष्ठव्यासज्यवृत्तिधर्मश्च उभयपदार्थतावच्छेदकमस्तु न तन्मात्रं वक्ष्यमाणानुपपत्तेः प्रकृते च उभयत्वमेकविशिष्टापरत्वमेवेति शङ्काव्युदासः । अत्र हेतुः वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्य प्रत्यक्षसिद्धत्वादिति घटत्वपटत्वयोः सामानाधिकरण्यविरहेऽपि तत्रोभयव्यवहारविषयतावच्छेदकस्य प्रत्यक्षसिद्धत्वादित्यर्थः अन्यथा तत्रोभयव्यवहारानुपपत्तेरिति भावः । यद्यपि घटत्वपटत्वोभयमितिप्रतीतौ कालिकसम्बन्धघटितसामानाधिकरण्यरूपवैशिष्ट्यस्य विषयतासम्भवः तथापि वाच्यत्वघटत्वोभयं समवेतमित्यादिप्रतीतिव्यवहारविरहेण उभयं समवेतमिति प्रतीतिव्यवहारयोः समवायिसमवेतत्वरूपवैशिष्ट्यविषयताया अभ्युपगन्तव्यतया घटत्वपटत्वोभयं समवेतमित्यादौ तादृशवैशिष्ट्याप्रसिद्ध्या व्यासज्यवृत्तिधर्म एव विषय इति भावः । तथा च तदनुरोधेन व्यासज्यवृत्तिधर्मविशेषस्य उभयव्यवहारविषयताया आवश्यकत्वे एकविशिष्टापरत्वस्य तथाव्यवहारविषयत्वमप्रामाणिकमिति न भूतत्वमूर्तत्वोभय-

धात् मूर्तत्वादित्यादावेकविशिष्टापरत्वस्य साध्यतावच्छेदकत्वप्रसक्तिस्तथा सत्यनुमितेरुभयवानित्याकारकतानुपपत्तेरिति निर्व्यूढम् । ननु मूर्तत्वाधिकरणे मनसि भूतत्वमूर्तत्वोभयं नास्तीति बुद्धेरेकविशिष्टपराभावावलम्बनत्वेनैवोपपत्तिः मनसि प्रतियोगिसत्त्वेनोभयवृत्तिधर्मावच्छिन्नाभावासत्त्वादिति क्वचिदेकविशिष्टापरत्वस्यापि उभयव्यवहारविषयतावच्छेदकत्वमावश्यकमित्यत आह नवेति । तद्धर्मावच्छिन्नाभावः प्रत्येकाधिकरणवृत्तिरुभयव्यवहारविषयतावच्छेदकावच्छिन्नाभावः तदवच्छिन्नाभावात् एकविशिष्टापरत्वावच्छिन्नाभावात् नातिरिक्त इति विपरिणतेन सम्बन्धः प्रतियोगितावच्छेदकविशिष्टेनैव प्रतियोगिना ऽभावस्य विरोधावेदकस्याधिकरणेपि व्यासज्यवृत्तिधर्मावच्छिन्नाभावसत्त्वे बाधकाभावात् इति भावः । एतेन मूर्तत्वस्य व्यासज्यवृत्त्युभयत्वावच्छिन्नव्यभिचारितापि व्यवस्थापिता आवश्यकश्च एकाधिकरणे व्यासज्यवृत्तिधर्मावच्छिन्नतदभावः अन्यथा समवायघटितसामानाधिकरण्येन घटत्वादिविशिष्टपटत्वाद्यप्रसिद्ध्या घटादौ समवायेन घटत्वपटत्वोभयं नास्तीतिप्रतीतेरनुपपत्तेस्तत्र समवायिसमवेतत्वरूपयोर्द्वित्वावच्छिन्नाभावस्यैव विषयतायाः स्वीकरणीयत्वात् । अन्यथा एककालीनत्वादिरूपवैशिष्ट्यावच्छिन्नस्य घटत्वादेः समवायेन घटादौ सत्त्वेन तादृशप्रतीत्यनिर्वाहादित्याह वैशिष्ट्यविरहेपि घटत्वपटत्वयोरुभयत्वेनाभावस्य प्रत्यक्षसिद्धत्वादिति । ननु तथापि व्यासज्यवृत्तिनिरुक्तोभयत्वेन साध्यत्वे न मूर्तत्वस्य व्यभिचारिता सम्भवति एकप्रतियोगिमत्यपि अभावस्य प्रतियोगिसमानाधिकरणतया मूर्तत्वाधिकरणे मनसि उभयाभावस्य प्रतियोगिव्यधिकरणत्वाभावात् हेतुमति प्रतियोगिव्यधिकरणस्यैव साध्याभावस्य व्यभिचारत्वात् व्यभिचारलक्षणेपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्यन्तस्यानिवेशादित्याशङ्कां निरस्यति न च तत्रेत्यादिना व्याप्तिरेव व्याप्तिरिष्टैव तथात्वेपीति मूर्तत्वस्य मनसि सत्त्वेपीत्यर्थः । उभयत्वेनेति उभयत्वविशिष्टवत्ताया मनस्यसत्त्वादित्यर्थः । तथा च तत्रोभयत्वविशिष्टवैशिष्ट्यविषयकानुमितेर्भ्रमतया तत्प्रयोजकहेतोर्न सद्धेतुत्वस्वीकारसम्भवः अत एव व्यभिचारलक्षणेपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्यन्तमेव निवेशयामि-

ति भावः । एकाधिकरणे उभयत्वविशिष्टासत्त्वे मानमाह नात्रो-भयमितीति । अत्रोभयमिति प्रतीत्यभावो न हेतुतयोक्तः उभयत्वे-नैकस्य सत्त्वोपगमेपि उभयत्राधिकरणवृत्तितायास्तादृशप्रतीति-विषयतया एकस्मिन्नधिकरणवृत्तित्वाभावेन तादृशप्रतीतेर्भ्रमत्व-स्यावश्यकत्वात्तादृशप्रमाविरहोपपत्तेः ।

ननु प्रतियोग्यसामानाधिकरण्यस्याभावविशेषणत्वे लक्षणे ऽत्यन्तपदवैयर्थ्यं धूमाद्यधिकरणानिष्ठवह्न्यादिभेदस्य प्रतियोगिस-मानाधिकरणत्वेनैव साध्यतावच्छेदकस्य तत्प्रतियोगितावच्छे-दकताया अकिञ्चित्करत्वात् इत्याशङ्कया साम्प्रदायिकोपदर्शि-तमत्यन्तपदप्रयोजनमाह अत्यन्तपदं चेति ।

(दी०) अत्यन्तपदं चात्यन्ताभावत्वनिरूपकप्रतियोग्यसा-मानाधिकरण्यस्यात्यन्ताभावत्वनिरूपकप्रतियोगितायाश्च लाभा-य अन्यथा सर्वस्यैवाभावस्य स्वसमानाधिकरणाभावान्तराभि-न्नत्वात्तद्भेदस्य च स्वस्वरूपानतिरिक्ततया प्रतियोग्यसामाना-धिकरण्यस्यैव दुर्लभत्वापत्तेः । सर्वेषामेवाभावानां हेतुसमाना-धिकरणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणात्यन्ता-भावान्तरात्मकस्य स्वभेदस्य प्रतियोगित्वात् अभावसाध्यका-व्याप्तेश्चेति सम्प्रदायविदः ।

(गा०) अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यस्येति लाभायेत्यग्रिमेणान्वयः स्वं यस्य प्रतियोगिनो ऽत्यन्ताभावस्तादृ-शप्रतियोग्यसामानाधिकरण्यपर्यन्तस्याभावविशेषणत्वलाभायेत्यर्थः अत्यन्ताभावत्वनिरूपकप्रतियोगितायाः इति प्रतियोगितानवच्छे-दकेत्यत्र या प्रतियोगिता निविष्टा तत्रात्यन्ताभावत्वरूपानुयो-गितानिरूपकत्वविशेषणस्य लाभायेत्यर्थः । क्रमेण व्यावृत्तिमाह अन्यथेति सर्वस्यैवाभावस्येति , हेतुसमानाधिकरणाभावत्वे-नोपादेयस्य सर्वस्य गोत्वाद्यभावस्येत्यर्थः स्वसमानाधिकरणाभा-वान्तराभिन्नत्वात् स्वं यस्य समानाधिकरणं तादृशघटत्वाभा-वभेदवत्त्वादित्यर्थः । स्वरूपानतिरिक्तत्वात् गोत्वाद्यभावरूपाधि-करणस्वरूपत्वादभावाधिकरणकाभावप्रतियोगिकाभावस्याधिकर

पीभूताभावस्वरूपतेति सिद्धान्तादिति भावः । प्रतियोग्यसमानाधिकरणाभावस्य दुर्लभत्वापत्तेरिति । गोत्वाद्यभावानामत्यन्ताभावत्वनिरूपकगोत्वादिरूपप्रतियोग्यसमानाधिकरणत्वेपि स्वनिष्ठभेदत्वनिरूपकघटत्वाद्यभावरूपप्रतियोगिसमानाधिकरणत्वनियमादिति भावः । न च भावस्वरूपस्यैवाभावस्य तादृशत्वं सुलभमिति वाच्यं तस्यापि स्वसमानाधिकरणभेदप्रतियोगित्वेन तद्दोषतादवस्थ्यात् भेदभेदस्यानवस्थाभयेनाधिकरणस्वरूपत्वाङ्गीकारात् । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यनिवेशे सर्वत्र न तादृशाभावाप्रसिद्धिः किन्तु विशेषणताविशेषेण साध्यतास्थले तन्मतेऽभावे साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिकत्वस्य निवेश्यत्वात् साध्यतावच्छेदकसम्बन्धस्य तत्र निवेशेऽपि तत्रैव तदप्रसिद्धिर्द्रष्टव्या । अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यनिवेशेपि सर्वेषामेवाभावानां किञ्चिद्विशिष्टस्वाभावादिरूपात्यन्ताभावत्वनिरूपकप्रतियोगिसामानाधिकरण्यनियमात् तदसमानाधिकरणाभावाप्रसिद्धेः । यादृशप्रतियोगित्यादिना वक्ष्यमाणरीतेरनुसरणे प्रतियोगिन्यत्यन्ताभावत्वनिरूपकत्वनिवेशवैयर्थ्यमत्रास्वरसबीजमेव । हेतुसमानाधिकरणेति । हेतुसमानाधिकरणस्य भेदत्वनिरूपकाभावान्तररूपप्रतियोगिसमानाधिकरणत्वेपि विवक्षितात्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यवान् गोत्वाभावादिर्घटत्वाभावादिरूपसाध्यस्य तन्निष्ठत्वनिरूपकस्य तस्य प्रतियोगित्वादित्यर्थः । अभावसाध्यकेति घटत्वाभावादिसाध्यकघटत्वादिसाधनेत्यर्थः । अत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशेपि सम्बन्धान्तरावच्छिन्नसाध्याभावप्रतियोगितावारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशावश्यके एतद्विशेषणमनर्थकं साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यं निवेश्य सम्बन्धान्तरावच्छिन्नाभाववारणेपि सर्वेष्वेवाभावेषु उक्तरीत्याऽत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यस्यापि सत्त्वेन प्रकृतप्रतियोगितावदसामानाधिकरण्यस्यैव निवेशनीयतया साध्यनिष्ठप्रतियोगिताश्रयासामानाधिकरण्यस्य सद्धेत्वधिकरणवृत्तित्वविशिष्टाभावे ऽसत्त्वेनाव्याप्त्यप्रसक्तिरित्यस्वरसबीजम् ॥

सम्प्रदायानुमतात्यन्ताभावत्वानिरूपकप्रतियोगितानिवेशपक्षे ऽतिव्याप्तिमाशङ्कते अथेत्यादिना ।

(दी०) अथ यदा गोत्वं तदा गौरित्यत्रातिव्याप्तिः प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वात् । संसर्गाभावमात्रोक्तावपि यदा स्पन्दः तदा द्व्यणुकं यदादृष्टं तदा जन्यं ज्ञानं दुःखं वा यदा तस्यादृष्टं तदा तदीयं ज्ञानमित्यादावतिव्याप्तिः । द्व्यणुकत्वादेर्द्व्यणुकादिशून्यखण्डप्रलयादिनिष्ठध्वंसप्रागभावप्रतियोगितानवच्छेदकत्वात् । न हि तयोः सामान्याभावत्ववादिमतेऽपि एकविशेषप्रागभावविशेषान्तरध्वंसवत्यपि समये तत्सामान्यावच्छिन्नध्वंसप्रागभावयोः सम्भव इति चेन्न प्रतियोगिमत इव ध्वंसादिमतोऽपि कालस्यात्यन्ताभाववत्त्वेऽविरोधात् । अन्यथात्यन्ताभावस्य कालमात्रावृत्तित्वप्रसङ्गात् । इयांस्तु विशेषो यदेकस्य देशभेदावच्छिन्नं तथात्वमपरस्य तु स्वरूपावच्छिन्नमिति देशे कालस्येव कालेऽपि देशस्यावच्छेदकत्वात् । तच्छून्ये च काले तदभावस्य प्रतियोग्यसमानाधिकरणत्वात् ।

( गा० ) यदा गोत्वमिति कालिकसम्बन्धेन गोगोत्वयोर्हेतुसाध्यत्वलाभाय गोमानयं गोत्वादिति प्रतिज्ञाहेतू अनभिधाय कालिकसम्बन्धावच्छिन्नवृत्तिबोधकदाप्रत्ययघटितोदाहरणाभिधानमेवमग्रेऽपि । प्रलयस्येति व्यभिचारानिरूपकहेत्वधिकरणस्येत्यादिः ध्वंसवत्त्वेनात्यन्ताभावानधिकरणत्वादिति प्राचामनुमतं ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वमादृत्य एतदेवाग्रे निराकृत्य समाधेयम् । अथ कालिकसम्बन्धेन ध्वंसादिमत्यपि काले ऽत्यन्ताभाववृत्तावविरोधः महाकालादौ समवायादिसम्बन्धेन रूपात्यन्ताभावस्य सर्वानुमतत्वात् न च कालिकसम्बन्धावच्छिन्नगवात्यन्ताभावस्य तत्सम्बन्धावच्छिन्नगोध्वंसात्यन्ताभावरूपतायां अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वमङ्गीकुर्वाणैः प्रा-

र्गाभावत्वनिवेशो महाप्रलये गोत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसोऽगन्तृमते ध्वंसप्रागभावोभयस्थलातिव्याप्तिः शक्यते वारयितुमित्याशङ्क्याह संसर्गाभावेति। दैशिकविशेषणतयापि ध्वंसस्य कालवृत्तित्वमित्याशयेनोक्तशङ्कासङ्गतिः अन्यथा ऽभावस्य तादृशसम्बन्धेन वृत्तिनिवेशे ऽत्यन्ताभावमिव ध्वंसमादायातिव्याप्तेर्दुर्वारत्वात् न च प्रतियोग्यधिकरणमहाकाले गोध्वंसस्य दैशिकविशेषणतासत्त्वेपि प्रतियोग्यनधिकरणप्रलये तस्य तादृशसम्बन्धो ऽप्रामाणिक इति वाच्यं यदुपाधिविशिष्टस्य प्रतियोग्यधिकरणत्वं तदन्योपाधिविशिष्टस्यैव महाकालस्य तदभावाधिकरणतया महाकालस्य दैशिकविशेषणतया ध्वंसवत्त्वे प्रलयात्मकोपाधेरपि तादृशसम्बन्धेन तदाधारताया आवश्यकत्वात् अन्यथा प्रलये गौर्नास्तीति व्यवहारानुपपत्तेः। अथवा निष्कर्षे नीयमप्रतियोगिवैयधिकरण्यकल्पाभिप्रायेणेदं तत्कल्पे प्रयोजनाभावादभावे वृत्तिविशेषानिवेशात्। न चाभावे वृत्तिविशेषानिवेशे कालिकसम्बन्धेन गवात्यन्ताभावस्यापि प्रलयवृत्तेः संसर्गाभावमात्रपरत्वोक्तिविरोध इति वाच्यं प्रतियोगितावच्छेदककालिकसम्बन्धेन तत्प्रतियोगिनो ध्वंसस्य हेत्वधिकरणे ऽभावात् गवात्यन्ताभावस्य प्रतियोगिव्यधिकरणत्वाभावात् ध्वंसस्य तत्प्रतियोगिनो ऽत्यन्ताभावस्य प्रतियोगितावच्छेदकदैशिकविशेषणतासम्बन्धेन काले ऽसत्त्वात् प्रतियोगिवैयधिकरण्यमक्षतमेव। यद्वा स्पन्द इति। अत्र च व्यभिचारनिरूपकाधिकरणं खण्डप्रलयो जन्यद्रव्यानधिकरणे तस्मिन् द्व्यणुकासत्त्वात् पुनर्द्व्यणुकोत्पत्त्यनुरोधेन परमाणूनां स्पन्दस्वीकारस्यावश्यकत्वात् तथा च हेत्वधिकरणे तत्र द्व्यणुकसामान्यध्वंसप्रागभावयोरसत्त्वान्नातिव्याप्तिरिति भावः। द्व्यणुकनाशानुगुणक्रियाया उत्तरसंयोगनाश्याया अधिकरणे परमपरमाणुसंयोगनाशरूपमहाप्रलयपूर्ववर्तिक्षणे द्व्यणुकसामान्यध्वंससत्त्वादत्राप्यतिव्याप्तिर्न विचारसहेत्यतो यद्वाऽदृष्टमिति। ज्ञानत्वमात्रेण साध्यतायां प्रलये ईश्वरीयज्ञानसत्त्वादयं सद्धेतुरेवेत्यतो जन्यमिति। नित्यसुखाभिव्यक्तिर्मुक्तिरिति मते खण्डप्रलयेऽपि मुक्तात्मनि जन्यज्ञानसत्त्वात् सद्धेतुत्वं सम्भवतीति अतो दुःखं चेति। जन्यमात्रं प्रत्यदृष्टस्य हेतुतया महाप्रलयाव्यवहितप्राक्क्ष-

णेऽपि तज्जनकीभूतादृष्टस्याऽऽवश्यकत्वामिति तदा, जन्यज्ञानत्व-सुखदुःखत्वाद्यवच्छिन्नध्वंसस्त्वान्नोपदर्शितस्थलयोरतिव्याप्तिः स-म्भवतीत्यतः स्थलान्तरमाह यदा तस्येति । यदात्मसमवेतादृष्टं न प्रलयजनकं स तत्पदेन विवक्षितः। व्यभिचारश्चाऽत्र खण्डप्रलये सुषु-प्त्यादौ च बोध्यः। खण्डप्रलयनिष्ठद्व्यणुकादिध्वंसस्य द्व्यणुकत्वादिरू-पसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वासम्भवं व्युत्पादयति नहीति। तयोः ध्वंसप्रागभावयोः। सामान्याभावत्वमतेपि सामान्यधर्मा-वच्छिन्नप्रतियोगिताकत्वमतेपि ध्वंसप्रागभावयोरत्यन्ताभावाविरो-धित्वमते न तयोस्तथात्वमित्येतत्सूचयितुं मतेपीति। एकविशेषेति। एकविशेषप्रागभाववति न सामान्यावच्छिन्नध्वंसस्य विशेषान्तर-ध्वंसवति न सामान्यधर्मावच्छिन्नप्रागभावस्य संभव इत्यर्थः अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकतया तत्कालीनध्वंसादि-प्रतियोगिताशून्यानागतादिपदार्थसाधारणस्य तादृशप्रतियो-गितावच्छेदकत्वासंभवादिति भावः। यद्यप्येवं महाप्रलयवृत्त-योपि गोध्वंसाः प्रत्येकमेकैकगोव्यक्तिमात्रवृत्तिप्रतियोगिता-का इति न कस्यापि ध्वंसस्य प्रतियोगितायाः समनियतं गोत्वं तथापि चरमध्वंसस्य यावद्गोप्रतियोगिकत्वोपगमे त-त्प्रतियोगितावच्छेदकत्वं गोत्वस्य संभवतीत्यभिप्रायेण संस-र्गाभावत्वनिवेशे पूर्वोक्तस्थलमुपेक्ष्य द्व्यणुकादिसाध्यकस्पन्दादि-हेतुकस्थले ऽतिव्याप्तिरभिहिता। वस्तुतस्तु ध्वंसप्रागभा-वयोऽर्व्यधिकरणप्रतियोगिकत्वविरहाच्चरमगोध्वंसस्यापि यावद्गो-प्रतियोगिकत्वं न संभवतीति ध्येयम्। विरोधिनः प्रतियोगि-नो ऽधिकरणे काले एव चेदभावो वर्तते तदा सुतरां ध्वं-सप्रागभाववति काले प्रलयादावसौ वर्तत इति सूचनाय प्रतियोगिमत इवेति दृष्टान्तः। विरोधाभावात् बाधकाभावात् तथा च हेत्वधिकरणे प्रलयादौ गोत्वाद्यवच्छिन्नाभावसत्त्वान्नोक्त-स्थले ऽतिव्याप्तिरिति भावः। न च प्रलये गोत्वाद्यवच्छिन्नाभा-वो ऽप्रामाणिकः प्रत्यक्षायोगादनुमानस्याऽप्रयोजकत्वादिति वा-च्यं प्रलये गौर्नास्तीति शब्दस्यैव प्रमाणत्वात् न हि तादृ-शवाक्यस्याप्रामाण्यं कश्चिदुपैति न च ध्वंसादिरेव तत्र न-ञर्थो नात्यन्ताभाव इति वाच्यम् अन्वयितावच्छेदकसमानाधिकर-

ऽप्रतियोगिताकाभावमात्रस्य नञा प्रतिपादने प्रतिप्रसङ्गात्पदशक्ति-
प्रतियोगिताकाभावबोधकताया एव तस्य व्युत्पन्नतया ऽत्यन्ताभा-
वमात्रस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमते ध्वंसादेर्नञा
प्रतिपादनासम्भवात् । अन्यथा–प्रतियोगिमति तद्ध्वंसप्रागभाववति
च काले कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्यात्यन्ताभावस्या-
वृत्तौ अत्यन्ताभावस्य तादृशात्यन्ताभावस्य । कालमात्रावृत्तित्वेति
दैशिकविशेषणतयेत्यादिः । ननु ध्वंसप्रागभाववति अत्यन्ताभाव-
वृत्तौ तस्य तदविरोधितावत् प्रतियोगिमति तद्वृत्त्या तस्य प्रतियो-
ग्यविरोधिताव्यापकताविशेषादित्यत आह इयांस्त्विति । एकस्य
प्रतियोगिमतः कालस्य । देशभेदावच्छिन्नम् प्रतियोग्यनवच्छेदक-
देशावच्छिन्नम्। तथात्वम् दैशिकविशेषणतासम्बन्धेन कालिकसम्ब-
न्धावच्छिन्नात्यन्ताभाववत्त्वं तथा च प्रतियोग्यभावयोरेकावच्छेदेन
एकत्रावर्तमानत्वरूपविरोधित्वं तावताप्यक्षतमेवेति भावः । अपर-
स्य ध्वंसादिमतः । स्वरूपावच्छिन्नम् ध्वंसाद्यधिकरणतावच्छेदक-
रूपावच्छिन्नम् तथात्वमित्यनुषज्यते । तथा च एकावच्छेदेन
एकत्र वर्तमानतया ध्वंसाद्यविरोधित्वमत्यन्ताभावस्येति भावः । ननु
काले वृत्तौ देशस्यावच्छेदकत्वे किं मानमत आह देशे कालस्ये-
वेति यथा देशे दैशिकसम्बन्धावच्छिन्नाभावस्य वृत्तौ कालस्याव-
च्छेदकत्वमिदानीमत्र गौर्नास्तीत्यादिप्रतीतिबलात् तथा कालिकस-
म्बन्धावच्छिन्नाभावस्य वृत्तावपि देशविशेषस्यावच्छेदकत्वं तथा-
विधप्रतीतिबलादेव तादृशप्रतीतेः कालावच्छेदेन देशवृत्तिर्देशाव-
च्छेदेन कालवृत्तिर्वा विषय इत्यत्र विनिगमकाभावात् अवच्छेदक-
त्वाधिकरणत्वयोरेव सप्तम्यर्थत्वादिति भावः । प्रतियोगिमत्यपि
काले गवात्यन्ताभावस्य वृत्तौ तस्यासमानाधिकरणत्वेन धार-
णात् कथं तमादायोक्तातिव्याप्तिर्वार्यतेत्यत आह तच्छून्येति ।
प्रतियोगिशून्ये प्रलयादावित्यर्थः तदभावस्य—गवात्यन्ताभावस्य ।
प्रतियोगिव्यधिकरणत्वात् प्रतियोगिसामानाधिकरण्याभाववत्त्वात् ।
सामानाधिकरण्यस्याव्याप्यवृत्तितामत एव प्रतियोगिसामानाधिक
रण्याभावस्याऽभावविशेषणत्वात् अन्यथा संयोगी सत्त्वादित्यादाव-
तिव्याप्तिः तस्य व्याप्यवृत्तितापक्षे च प्रतियोग्यनधिकरणवृत्तित्वस्यै-
व निवेशनीयतया प्रलयादिवृत्तिगवात्यन्ताभावस्यान्यत्र प्रतियोगि-

समानाधिकरणत्वेपि लक्षणघटकत्वाव्याघातादिति भावः ।

' संसर्गाभावत्वतद्घटितात्यन्ताभावत्वयोर्व्याप्तिघटितत्वेनानवस्थामाशङ्कते न चेति ।

( दी० ) न च संसर्गाभावविशेषोऽत्यन्ताभावः । संसर्गाभावत्वं च संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपं जन्यताघटकनियमघटितमिति वाच्यम् । तद्वदन्यावृत्तित्वरूपानियमस्य तत्र घटकत्वात् । एवं नियमान्तरस्यात्र प्रवेशेऽपि न क्षतिः वक्ष्यते च नियमाघटितमपि संसर्गाभावादिलक्षणमनुपदमेव च विवेचयिष्यते संसर्गाभावत्वप्रवेशे प्रयोजनविरहोऽव्याप्तिश्च ।

(गा०) संसर्गाभावविशेषः सदातनसंसर्गाभावः । संसर्गारोपः तादात्म्यातिरिक्तसम्बन्धेन प्रतियोग्यारोपः । तद्वदन्यावृत्तित्वेति । स्वाऽव्यवहितपूर्वक्षणावच्छेदेन तद्वतोऽन्यस्मिन्न वर्तते यत्तदन्यत्वेत्यर्थः । तत्र जन्यत्वे । षष्ठ्यर्थे सप्तमी । नियमान्तरस्य विशिष्टधीव्यावृत्तविशिष्टधीनियामकस्वरूपसम्बन्धत्वघटकनियमस्य । अत्र संसर्गाभावत्वशरीरे । न क्षतिरिति । तद्वदन्यावृत्तित्वरूपानियमस्यैव तत्र प्रवेशनीयत्वादितिभावः । स्वमते नियमानन्तर्भावस्यानुपदं वक्ष्यमाणत्वादाहुरित्युक्तम् । नियमाघटितमिति । आरोपस्याभावबुद्धिहेतुताया निर्युक्तिकत्वात्तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्यैव संसर्गाभावत्वरूपत्वादितिभावः । प्रयोजनविरह इति । साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य निवेशनीयतया ऽन्योन्याभावत्वादिनिरूपकप्रतियोगितामादाय दोषाप्रसक्तेरितिभावः । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशकल्पमभिप्रेत्याह अव्याप्तिश्चेति । तन्मते सम्बन्धान्तरावच्छिन्नसाध्याभावमादाय दोषवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया एव निवेशनीयतया तादात्म्यसम्बन्धेन यत्र साध्यता तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नसंसर्गाभावप्रतियोगित्वाप्रसिद्ध्या ऽव्याप्तिरप्यापद्यत इत्यर्थः ।

('दी० ) अथ ज्ञानवान् द्रव्यत्वात् विशेषगुणवान् मनो-
ऽन्यद्रव्यत्वात् जातिमान् भावत्वादित्यादावतिव्याप्तिः साध्य-
शून्यानामपि हेतुमतां विषयत्वविशेषणत्वैकार्थसमवायैः साध्यव-
त्त्वादिति चेत्। नैवम्। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो
यदधिकरणं तत्सम्बन्धि वा तद्वृत्तित्वाभावस्योक्तत्वात्। भवति
चैवमन्योन्याभावोऽपि प्रतियोग्यसमानाधिकरणः। तद्विशिष्टस्य
च हेत्वधिकरणवृत्तित्वं वाच्यं तेन नाव्याप्यवृत्तिसाध्यकासं-
ग्रहः। तद्वृत्तिभिन्नत्वं तु नार्थः अव्याप्यवृत्तिसाध्यकव्यभि-
चारिण्यतिप्रसङ्गात्।

(गा०) ननु विषयताया वृत्त्यनियामकत्वे प्रतियोगिवैयधिकरण्ये
सम्बन्धित्वानिवेशपक्षे नातिव्याप्तिरित्यत आह विशेषेति। वि-
भुगुणादीनां देशे वृत्त्यवच्छेदकत्वमेव न त्वधिकरणत्वमिति मते
मनसो मूर्तत्वेऽपि न दैशिकविशेषणतया ऽधिकरणत्वमिति
द्रव्यत्वमात्रस्य हेतुत्वे मनोरूपहेत्वधिकरण एव साध्याभावः प्र-
तियोगिव्यधिकरण इति नातिव्याप्तिसम्भव इत्यतो मनोऽन्येति।
दिक्कालौ नेश्वरादतिरिच्येते इति मते सद्धेतुरेवेत्यतः स्थलान्तर-
माह जातीति। साध्यशून्यानामपीति। साध्यतावच्छेदकसम्ब-
न्धेनेत्यादिः। एवं-अधिकरणत्वस्थाने सम्बन्धित्वनिवेशे। अन्यो-
न्याभावोऽपीति। तथा च न तादात्म्यसम्बन्धेन साध्यतायामव्याप्ति-
रिति भावः। तद्विशिष्टस्य प्रतियोग्यसामानाधिकरण्यावच्छिन्नस्य।
तेनेति। कपिसंयोगवान् एतद्वृक्षत्वादित्यादौ कपिसंयोगाभावरू-
पसाध्याभावस्य गुणादौ प्रतियोगिसामानाधिकरण्याभाववत्त्वेऽपि
हेत्वधिकरणीभूतवृक्षादेर्न कपिसंयोगसामानाधिकरण्याभावविशि-
ष्टकपिसंयोगाभाववत्त्वं यत्र सामानाधिकरण्यविशिष्टवत्त्व तत्र तद-
भावविशिष्टाधिकरणत्वाप्रत्ययात् अतः साध्याभावो न लक्षण-
घटक इति नाव्याप्तिरिति भावः। हेत्वधिकरणावच्छेदेन प्रति-
योगिसामानाधिकरण्याभावनिवेशेनाव्याप्तिवारणस्य सुकर-
त्वेऽपि मूलोपात्तहेतुसामानाधिकरण्यांशनिवेशवैयर्थ्यमियात् न

तथा विवक्षितम् । सार्वभौमेनादृतं प्रतियोग्यसामानाधिकरण्यघटकीभूताधिकरणावच्छिन्नहेतुसामानाधिकरण्यस्याऽभावविशेषणत्वमुपेक्ष्य उपाध्यायमते प्रतियोग्यसमानाधिकरणत्वरूपविशेषणवैशिष्ट्यावच्छेदेन हेतुसामानाधिकरण्यरूपविशेषणवैशिष्ट्यनिवेशन एव लाघवमित्यालोच्य तदनुयायिना दीधितिकारेण प्रतियोग्यसामानाधिकरण्यावच्छिन्नहेतुसामानाधिकरण्यं निवेशितं यथाश्रुतमूललभ्यो ऽयमेवार्थः प्रतियोग्यसामानाधिकरण्यहेतुसामानाधिकरण्ययोरुद्देश्यतावच्छेदकविधेयभावस्य विवक्षितत्वादुद्देश्यतावच्छेदकविधेययोरवच्छेद्यावच्छेदकभावलाभस्य च व्युत्पत्तिसिद्धत्वात् । प्रतियोग्यसामानाधिकरण्यस्य हेतुसामानाधिकरण्यावच्छेदकत्वे प्रतियोग्यसामानाधिकरण्यरूपहेतुतावच्छेदकावच्छिन्नसंयोगाभावादेः सत्त्वादिव्याप्यत्वप्रसंगः सत्त्वादिसामानाधिकरण्यावच्छेदकरूपवत्त्वस्य सत्त्वादिव्याप्तित्वादिति सार्वभौमोक्तदूषणमेतन्मते निरवकाशं तादृशव्याप्तावनेन पारिभाषिकस्यैवावच्छेदकत्वस्य विवक्षितत्वात् अन्यथा विषयितासम्बन्धेन घटत्वावच्छिन्नस्य ज्ञानत्वादिव्याप्यतापत्त्या दुर्वारत्वात् तादृशसम्बन्धेन ज्ञानत्वादिसामानाधिकरण्ये ज्ञानविषयतारूपे घटत्वादेरवच्छेदकत्वात् । नन्वव्याप्यवृत्तिसाध्यकाव्याप्तिवारणाय प्रतियोगिसमानाधिकरणभिन्नत्वरूपप्रतियोग्यसमानाधिकरणत्वमेव निवेश्यतां किमुक्तविवक्षया गुणादौ प्रतियोगिसामानाधिकरण्याभाववतोऽपि कपिसंयोगाभावादेः प्रतियोगिसमानाधिकरणभिन्नत्वविरहात् भेदस्याव्याप्यवृत्तित्वानुपगमादित्यत आह तद्वृत्तीति । प्रतियोगिमद्वृत्तीत्यर्थः नार्थः न प्रतियोग्यसमानाधिकरणपदेन विवक्षितः । अव्याप्यवृत्तीति । कपिसंयोगी सत्त्वादित्यादावित्यर्थः । अतिप्रसङ्गादिति । कपिसंयोगाभावरूपसाध्याभावस्य द्रव्यादौ प्रतियोगिसमानाधिकरणतया तद्भिन्नत्वविरहेण लक्षणाघटकत्वादिति भावः । अत्र च सामानाधिकरण्यस्याव्याप्यवृत्तितायाः प्राक् स्वयं दूषितत्वात्प्रतियोगिसामानाधिकरण्याभावनिवेशपक्षेप्यतिव्याप्तिवारणमशक्यमित्येतादृशानुपपत्तिमेव यद्वेत्यादिकल्पान्तरानुसरणबीजतया व्याचष्टे अत्र चेति ।

( दी० ) अत्र च सामानाधिकरण्यवतो न तदभाववत्त्वं

प्रतीतेरन्यथैवोपपादितत्वादित्यस्वरसात् प्रतियोगिवैयधिकरण्येत्यादिविशेषणं वक्ष्यति तच्च हेत्वधिकरणे योऽयं प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति पुनरभावान्तार्थनिष्कर्षः ।

(गा०) असामानाधिकरण्यनिवेशकल्पे चेत्यर्थः । इत्यस्वरसादित्यनेनान्वयः । प्रतीतेः संयोगाभावे गुणे न संयोगसामानाधिकरण्यमित्यादिप्रतीतेः । अन्यथा गुणादिनिष्ठसामानाधिकरण्यावच्छेदकत्वाद्यभावविषयकतया । कपिसंयोगी एतत्त्वादित्यादावपि कपिसंयोगाभावादिरूपसाध्याभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकगुणादिवृत्तित्वाद्यवच्छिन्नतया लक्षणघटकत्वेनेत्यव्याप्तिरत आह तच्चेति । प्रतियोगिवैयधिकरण्यं चेत्यर्थः । हेत्वधिकरणे हेत्वधिकरणनिरूपितं एतत्कल्पे च पृथक् हेतुसामानाधिकरण्यं न निवेश्यमेवेति भावः । एवं च हेत्वधिकरणनिरूपितप्रतियोग्यनधिकरणवृत्तित्वमेवाभावे विशेषणं देयं न तु तदवच्छेदकावच्छिन्नत्वमनतिप्रयोजनकत्वात् वृत्तौ प्रतियोग्यनधिकरणनिरूपितत्वहेत्वधिकरणनिरूपितत्वयोर्निवेशापेक्षया तत्र हेत्वधिकरणनिरूपितत्वस्य निवेशे च लाघवमित्यालोच्य तथैव निष्कर्षयति प्रतियोग्यनधिकरणीभूतेति । प्रतियोगितावच्छेदकावच्छिन्नानधिकरणेत्यर्थः तेन न दर्शिताऽतिव्याप्तिः ।

( दी० ) ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्सामान्यस्य वा प्रतियोगितावच्छेदकयत्किञ्चिदवच्छिन्नस्य वा अनधिकरणत्वमुक्तम् आद्ये ऽव्याप्यवृत्तिसाध्यकाव्याप्तिः एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात् द्वितीये संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्यादावतिव्याप्तिः साध्याभाववतो द्रव्यस्य तत्प्रतियोगिसंयोगविशेषाभाववत्त्वात् नित्यत्वादिविशिष्टद्रव्यत्वाभावात्मकतत्प्रतियोगिनोऽधिकरणत्वाच्च स्वाभावाभावात्मकस्य विशिष्ट-

स्याऽपि द्रव्यत्वस्य द्रव्यत्वाऽनतिरेकात् तृतीये कपिसंयोगाभाववानात्मत्वादित्यत्राऽव्याप्तिः साध्याभावानां कपिसंयोगानां गुणानामधिकरणस्यात्मनस्तत्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नाऽनधिकरणत्वात् । मैवम् । यादृशप्रतियोगितावच्छेदकावच्छिन्नाऽनधिकरणत्वं हेतुमतस्तादृशप्रतियोगिताऽनवच्छेदकत्वस्य विवक्षितत्वात् ।

(गा०) यस्य कस्यचिदित्यादिपञ्चम्यन्तानामनधिकरणत्वमित्यनेनान्वयः प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचिदनधिकरणत्वम् स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणप्रतियोगिकभेदमात्रम् तत्सामान्यस्यानधिकरणत्वम् स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वावच्छिन्नभेदः । प्रतियोगितावच्छेदकयत्किञ्चिदिति । प्रतियोगितावच्छेदकं तत्तद्व्यक्तित्वेन निवेश्य तदवच्छिन्नाधिकरणत्वावच्छिन्नभेदो वा विवक्षित इत्यर्थः । नव्यमते संयोगसामान्याभावस्य केवलान्वयितया तत्र साध्ये सत्तादिः सद्धेतुरेवेत्यतो द्रव्यत्वाभाववान् वेति । तत्प्रतियोगीति संयोगरूपसाध्याभावप्रतियोगीत्यर्थः तत्तत्संयोगत्वावच्छिन्नाभावाभावस्य तत्तत्संयोगादेः संयोगसामान्यानतिरिक्तत्वादिति भावः । द्रव्यत्वरूपाभावस्य एकव्यक्तिकतया व्यक्तिविशेषाभावरूपप्रतियोगिसामानाधिकरण्यं न घटत इत्यतस्तस्य किञ्चिद्विशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमाह नित्यत्वादीति । आदिना अन्यत्वादिपरिग्रहः । ननु विशिष्टाभावो विशिष्टस्यैव द्रव्यत्वस्य प्रतियोगी न तु शुद्धस्य तस्येति कथं शुद्धद्रव्यत्वस्य प्रतियोगिवैयधिकरण्यानुपपत्तिरित्यत आह स्वाभावेति । न च सर्वस्यैवाऽभावस्य पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या नातिव्याप्तिरिति वाच्यम् । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशपक्षेऽसम्भवस्य साध्यतावच्छेदकसम्बन्धेन तद्व्यधिकरण्यनिवेशपक्षे स्वरूपसम्बन्धावच्छिन्नसाध्यकस्थले साध्यतावच्छेदकसम्बन्धेन सर्वेषामेवाऽभावानां प्रतियोगिसमानाधिकरणत्वादव्या-

सिद्धसत्त्वा यत्सम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तत्सम्बन्धावच्छिन्नतद्भावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभाव एव विवक्षणीयः एवं चोक्तस्थले स्वरूपसम्बन्धेन प्रतियोग्यनधिकरणत्वाप्रसिद्धावपि संयोगादिसम्बन्धेन, घटाद्यभावीयप्रतियोग्यनधिकरणीभूतहेतुमन्निष्ठघटाभावीयप्रतियोगितासु स्वरूपसम्बन्धावच्छिन्नत्वद्रव्यत्वाभावत्वाद्यवच्छिन्नत्वोभयाभावस्याक्षतत्वान्नातिव्याप्तिरित्यभिप्रायात् । आत्मनि संयोगसामान्याभावस्य सर्वमतसिद्धत्वविरहात्कपीति । अन्यद्रव्यवृत्तिहेतुके हेत्वधिकरणजन्यद्रव्ये गुणसामान्याभावस्यापि उत्पत्तिकालावच्छेदेन स्वमते सत्त्वात्तत्र तादृशप्रतियोगिवैयधिकरण्यं न घटते अत आत्मत्वहेत्वनुसरणम् । गुणसामान्याभाववत्त्वस्य कपिसंयोगस्वरूपाभावप्रतियोगितावच्छेदकत्वं स्फुटीकर्तुं कपिसंयोगानां गुणत्वकीर्तनम् । तत्प्रतियोगितावच्छेदकेति । तथा च तादृशाभावा अपि यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यधिकरणा एव तत्प्रतियोगितावच्छेदकत्वात् कपिसंयोगाभावत्वस्येत्यव्याप्तिरिति भावः यादृशेति । यद्यत्प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वावच्छिन्नभेदवत्त्वमित्यर्थः । कपिसंयोगाभाववत्त्वादित्यादौ कपिसंयोगाभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणसामान्यभेदवत्त्वासम्भवात् स्वपदेन तादृशी प्रतियोगितोपादातुं न शक्यत इति नाव्याप्तिः । द्रव्यत्वाभाववान् सत्त्वादित्यादौ हेतुमतो गुणादेः विशिष्टद्रव्यत्वाद्यभावरूपप्रतियोग्यधिकरणत्वेऽपि द्रव्यत्वाभावत्वावच्छिन्ना या प्रतियोगिता तदवच्छेदकावच्छिन्नानधिकरणत्वात् तस्य लक्षणघटकत्वेति नातिव्याप्तिः । कपिसंयोगाभाववानात्मत्वादित्यादौ न कपिसंयोगाभावत्वावच्छिन्ना या प्रतियोगिता तदवच्छेदकावच्छिन्नाधिकरणमेव हेतुमत् किन्तु गुणसामान्याभावत्वावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणमेव तदनवच्छेदकमेव साध्यतावच्छेदकमिति नाव्याप्तिरिति भावः । न चैवं घटत्वाद्यवच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं धूमवत्ताकप्रतियोगितानवच्छेदकं च वह्नित्वमित्याकारकस्याभावकूटावगाहिनः समूहालम्बनज्ञानस्यैवानुमितिहेतुतया विशिष्टपरामर्शस्यानुमितिहेतुत्वमनुपपन्नमभावकू-

टघटिततया व्याप्तेर्दुर्ज्ञेयत्वापत्तिश्चेति वाच्यम्। हेतुमन्निष्ठभेदप्रतियोगितायां स्वावच्छेदकावच्छिन्नवत्त्वसम्बन्धेनाऽवच्छेदिका या प्रतियोगिता तदनवच्छेदकत्वस्य एकसामान्याभावरूपस्य निवेशे तात्पर्यात्। तादृशभेदप्रतियोगितायां स्वावच्छिन्नवत्त्वसम्बन्धेनाऽनवच्छेदकत्वस्य साध्यतावच्छेदकविशेषणतयैव सामञ्जस्येऽपि यथासन्निवेशे न वैयर्थ्यम्। तथाविधसम्बन्धेन तादृशभेदप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति पुनरन्योन्याभावघटितलक्षणनिष्कृष्टार्थो बोध्यः।

सम्बन्धसामान्येन हेतुमत्त्वनिवेशेऽव्याप्तेर्वक्ष्यमाणत्वात् सम्बन्धविशेषेण हेतुमत्त्वम प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वानिवेशे चाऽसम्भवस्य वाच्यतया तत्र तच्च निवेशयति। अत्र चेति।

(टी०) अत्र च ग्राह्यसामानाधिकरण्ये हेतोर्यादृशः सम्बन्धः प्रविष्टः तेनैव सम्बन्धेन यो हेतुमांस्तत्र वर्तमानत्वमभावस्य, साध्यस्य च यादृशः सम्बन्धः प्रविष्टस्तत्सम्बन्धावच्छिन्नायाश्च प्रतियोगिताया अनवच्छेदकत्वं बोध्यम् तेन धूमसमवायिनिष्ठाभावस्य संयोगावच्छिन्नप्रतियोगिताया धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्नप्रतियोगिताया अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः॥

यद्वा साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं हेतुमतो वक्तव्यम्। तथा च सम्बन्धभेदेन प्रतियोगिता न विशेषणीया। एवं स्थिते सामानाधिकरण्यादौ सम्बन्धित्वं निवेशनीयं न त्वधिकरणत्वम्। तथाच धर्मिणो ऽपि व्याप्यत्वं व्यापकत्वं च निर्वहति। तथाहि तादात्म्येन सम्बन्धेन धूमवतः सम्बन्धिनि महानसे वर्तमानो योऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना या प्रतियोगिता तदनवच्छेदकत्वह्निमत्त्वावच्छिन्नस्य वह्निमतस्तादात्म्येन सम्बन्धिनि महानसे धूमवतस्तादात्म्येन सम्बन्धित्वम्। एवं धर्मिणो धर्मव्याप्यत्वव्यापकत्वे बोध्ये।

(११०) ग्राह्यसामानाधिकरण्ये । अनुमितिकारणीभूतज्ञानविषयहेतु-
निष्ठसाध्यसामानाधिकरण्यशरीरे । साध्यस्य चेति । अत्रापि ग्राह्यसा-
मानाधिकरण्य इति प्रविष्ट इवि चाऽनुषज्यते । तथा च तत्सम्बन्धेन
हेतुमति वर्तते योऽभावस्तदीयतत्सम्बन्धावच्छिन्नप्रतियोगिता-
नवच्छेदको यो धर्मस्तदवच्छिन्नस्य तेन साध्यतावच्छेदकसम्ब-
न्धेनाऽधिकरणे तेन हेतुतावच्छेदकसम्बन्धेन वर्तमानत्वं तादृश-
साध्यतावच्छेदकसम्बन्धेन साध्यानुमितिप्रयोजकमित्यर्थः ।
व्यापकताघटकसाध्यीयसम्बन्धेन साध्याधिकरणे तादृशसाधनी-
यसम्बन्धेन साधनस्याऽवर्तमानत्वग्रहदशायामनुमितिवारणाय सा-
मानाधिकरण्यशरीरे सम्बन्धविशेषनिवेशनम् । वस्तुतस्तु वि-
रुद्धत्वेन ज्ञायमानधर्मवत्ताज्ञानस्याऽनुमितावेव प्रतिबन्धकताया
वक्ष्यमाणतया सामानाधिकरण्यशरीरे सम्बन्धविशेषानिवेशेऽपि
न क्षतिः । सामानाधिकरण्यावगाहितायाः प्रयोजकत्वं च
विशिष्टपरामर्शनिर्वाहायोपेयते । पर्वतीयधूमव्यापको वह्निरिति व्या-
पकतापरामर्शस्य हेतुताया दूषितत्वात् । न च स्वव्यापकसाध्य-
कहेतुमानित्याकारकः सामानाधिकरण्यानवगाहिविशिष्टपरामर्श
एव हेतुरस्तामिति वाच्यम् । बहुमतार्थस्य सामानाधिकरण्यघ-
टितत्वादिति ध्येयम् । प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगि-
तावच्छेदकसम्बन्धस्थाने साध्यतावच्छेदकसम्बन्धनिवेशन एव
साध्यतावच्छेदकसम्बन्धेन साध्यवद्वृत्त्यधिकरणनिष्ठसम्बन्धान्तरा-
वच्छिन्नसाध्याभावमादाय दूषणस्याऽपि निराकरणसम्भवे प्रतियो-
गितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशनमफलमित्याश-
येनाह । यद्वेत्यादि । तादात्म्यसम्बन्धेन व्यापकतानिर्वाहाय प्रतियो-
ग्यनधिकरणत्वमनुक्त्वा प्रतियोग्यसम्बन्धित्वमभिहितम् । ननु प्रति-
योगिवैयधिकरण्ये सम्बन्धित्वनिवेशेऽपि तादात्म्यसम्बन्धेन व्याप्ति-
र्निर्वहति, तादृशसाध्यतावच्छेदकसम्बन्धेन साध्याधिकरणाप्रसि-
द्ध्या तद्घटितसामानाधिकरण्यस्याऽप्रसिद्धेरित्यत आह । एवं स्थि-
ते इति । प्रतियोगिवैयधिकरण्यशरीरे सम्बन्धित्वानिवेशे सती-
त्यर्थः । सम्बन्धित्वं निवेशनीयमिति । तथा च साध्यसामानाधिक-
रण्यं साध्यसम्बन्धिसम्बन्धित्वम् । अभावस्य हेतुसामानाधिकरण्य-
मपि हेतुसम्बन्धिसम्बन्धित्वमादिना ग्राह्यम् । धर्मिणः । धूम-

वदादेर्वह्निमदादेश्च । तदेव दर्शयति । तथाहीति । तादात्म्यसम्बन्धावच्छिन्नेति पूर्वकल्पाभिप्रायेण । धूमवद्वह्निमतोर्व्याप्तिमुक्त्वा धर्मिणो धूमवदादेर्वह्न्यादिरूपधर्मव्याप्यत्वं वह्निमदादिरूपधर्मिणश्च धूमादिधर्मव्यापकत्वं चाह—एवमिति ।

( दी० ) अत एव जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र तत्रोक्तं संगच्छते । यथा च यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता तादृशेन सम्बन्धेन तस्य पक्षविशिष्टत्वज्ञाने यादृशेन सम्बन्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्यपक्षयोर्विशिष्टानुमितिः । तेन न धूमावयवे संयोगेन नवा समवायेन पर्वते वह्निधीः । तथैवाऽवगतव्यापकताघटकसम्बन्धेन व्यापकस्याऽभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेनैव व्याप्यस्याऽभावः सिद्ध्यतीति । कथमन्यथा समवायेन वह्निविरहिणि महानसे संयोगेन, संयोगेन वा वह्निविरहिणि स्वावयवे धूमः समवायेन न निवर्तते, निवर्तते च संयोगेन वह्निविरहिणि स्वावयवे संयोगेनेति नियम उपपद्यते । तथाच तादात्म्यसम्बन्धेनैव जलादीनां व्याप्यत्वग्रहाद्यापकनिवृत्त्या तादात्म्येनैव तेषामभावः सिद्ध्यति, स एव चाऽन्योन्याभावः । इत्थमेव च तादात्म्याद्धूमशिंशपयोर्व्याप्तिनिश्चय इति संगच्छते ॥

( गा० ) अत एव तादात्म्यसम्बन्धेन व्याप्तिव्यवस्थापनादेव । तत्र तत्रोक्तमिति । पृथिवीत्वेनेतरभेदसाधनायेत्यादिः । सङ्गच्छते इति । अन्यथा जलादीनां संयोगादिना पृथिव्यादिवृत्तितया तेन सम्बन्धेन व्याप्तेर्जलादिभेदसाधनानुपयोगितया च तदुक्तसंगतेरिति भावः । पृथिवीत्वाभावस्य स्वरूपसम्बन्धावच्छिन्नाभावेन पृथिवीत्वस्वरूपेण जलादिभेद· सिद्ध्यति न तु तस्य कालिकसम्बन्धावच्छिन्नाभावेनेत्यत्र, पृथिवीत्वेन व्याप्यस्य जलादेरन्योन्याभाव एव सिद्ध्यति न त्वत्यन्ताभाव इत्यत्र वा किं नियामकमित्याशङ्कायां व्यतिरेकि-

णि तत्सम्बन्धघटितव्यापकत्वेन गृह्यमाणस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताकादेवाऽभावाद्धेतौ येन सम्बन्धेन यस्य व्याप्यता गृहीता तत्सम्बन्धावच्छिन्नप्रतियोगिताक एव तदभावः सिध्यतीति समाधास्यन् अन्वयिनि व्याप्यताघटकसम्बन्धेन व्याप्यवत्ताज्ञानात् व्यापकताघटकसम्बन्धेनैव व्यापकं सिध्यतीति नियमं दृष्टान्तविधया दर्शयति । यथा चेति । तादृशेनैव विशिष्टज्ञाने । पक्षधर्मिकविशिष्टज्ञाने । विशिष्टानुमितिः । वैशिष्ट्यविषयकानुमितिः । व्याप्यताघटकसम्बन्धेनैव व्याप्यवत्ताज्ञानं हेतुरिति नियमस्य व्यापकताघटकेनैव सम्बन्धेन व्यापकस्यानुमितिनियमस्य च क्रमेण प्रयोजनमाह । तेनेति । अनवतीर्णबाधस्याऽभ्रान्तस्येति शेषः । धूमावयवे न वह्निधीरित्यन्वयः । तस्य समवायसम्बन्धेन वह्निव्याप्यधूमवत्त्वेऽपि व्याप्यताघटकेन संयोगेन तद्वत्त्वाभावादिति भावः । नवा समवायेनेति पर्वतवृत्तिहेतुं प्रति समवायेन वह्नेरव्यापकत्वादिति भावः । प्रकृतोपयुक्तनियमद्वयमाह । तथैवेति । सम्बन्धेन । सम्बन्धेनैव । एतन्नियमद्वयस्य प्रयोजनान्तरानुरोधेनाप्यावश्यकत्वमिति दर्शयति । कथमन्यथेति । अन्यथा—एतादृशनियमानभ्युपगमे । इति नियमः कथमुपपद्यत इत्यन्वयः। महानसे संयोगेन धूमो न निवर्तत इत्यन्वयः। महानसधर्मिकसिद्धिविषयसंयोगसम्बन्धावच्छिन्ननिवृत्तिप्रतियोगी नेत्यर्थः । निवर्तते च । धूम इत्यनुषज्यते । प्रकृतमाह । तथा चेति । व्याप्यत्वग्रहात् । स्वरूपसम्बन्धावच्छिन्नपृथिवीत्वाभावनिष्ठव्यापकतानिरूपितव्याप्यताग्रहात् । व्यापकनिवृत्त्या । स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकेनैव पृथिवीत्वाभावाभावेन । तेषाम् । जलादीनाम् । न चैतावताऽपि अत्यन्ताभावसिद्धिः कथं निराकृतेत्यत आह । स एव चेति । स चान्योन्याभाव एवेति योजना । तादात्म्यसम्बन्धावच्छिन्नाभावश्चाऽन्योन्याभाव एव न त्वत्यन्ताभाव इत्यर्थः । अतो नेतरात्यन्ताभावसिद्धिरिति भावः । तादात्म्यसम्बन्धेन व्याप्तौ प्राचां सम्मतिमाह । इत्थमेव चेति । तादात्म्यसम्बन्धेन व्याप्तिस्वीकारेणैव । इति ग्रन्थः सङ्गच्छते इत्यन्वयः । ननु तादात्म्यसम्बन्धेन व्याप्त्यनभ्युपगमे का क्षतिः जलादिभेदसिद्धेर्जलादिभेदाभावव्यापकीभूताभावप्रतियोगित्वेन पृथिवीत्वज्ञानादेव सम्भवात् पृथिव्येकदेशे जलादिभेदप्रसिद्ध्या तादृशव्याप्तिग्रहसम्भवस्य व्यतिरेकिणि वक्ष्यमाणत्वात् । ता-

दात्म्यसम्बन्धेन धर्मिणोऽनुमितेरप्यनुभवसिद्धत्वे धर्मितादात्म्यनिष्ठव्यापकताज्ञानस्यैव तद्धेतुतायाः स्वीकरणीयत्वात्, असति प्रतिबन्धके तत्तादात्म्यादिविधेयकानुमितौ तादात्म्यसम्बन्धेन तस्य विधेयत्वोपगमे क्षतिविरहादित्यत आह—

( दी० ) अत एव गोत्वत्वाद्यग्रहदशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोर्व्यापकत्वग्रहे सास्नादिना तादात्म्येन गौः, गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिद्ध्यति। एवं च संयोगेन गगनादेरपि द्रव्यत्वव्याप्यत्वम् । वृत्त्यनियामकसंयोगमात्रस्याऽभावप्रतियोगितावच्छेदकत्वे साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वमपि । तदभाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात् । सिद्धिरपि तस्य तथैव न तु वृत्तिनियामकसम्बन्धेन । तेनाऽसम्बन्धित्वादव्यापकत्वाच्च । व्यक्तीभविष्यति चैतदुपरिष्टात् ॥

( गा० ) अत एवेति । तादात्म्यसम्बन्धेन व्याप्तिस्वीकारादेव । गोत्वत्वाग्रहदशायां गौः सिद्ध्यतीत्यन्वयः। अन्यथा तत्र गोत्वत्वरूपसाध्यतावच्छेदकानुपस्थित्या गोत्वसाध्यकानुमित्यौपयिकव्याप्तेर्दुर्ग्रहतया गोत्वसाध्यकानुमितेर्गोतादात्म्यस्यापि गोत्वरूपतया तन्निष्ठव्यापकताया अपि गोत्वत्वोपस्थितिमन्तरेण दुर्ग्रहतया तादात्म्यधर्मिकव्यापकताज्ञानाधीनतादात्म्यसंसर्गकगवानुमितेश्चाऽसम्भवेनाऽयं गौरित्याकारकानुमितेरनुभवसिद्धाया अपलापप्रसङ्गादिति भावः। यद्यपि गोत्वांशे गोत्वत्वं धर्मितावच्छेदकीकृत्य व्यापकतावच्छेदकत्वावगाहिग्रह एव गोत्वेन गोसाध्यकानुमितावपि हेतुर्वाच्यः निर्धर्मितावच्छेदकव्यापकतावच्छेदकत्वग्रहस्य व्यभिचारज्ञानाप्रतिबध्यतयाऽनुमित्यजनकत्वादिति तादात्म्येन गोत्वावच्छिन्नसाध्यकानुमितिरपि गोत्वत्वानुपस्थितिदशायां न सम्भवति । तथापि वक्ष्यमाणप्रतियोगिताधर्मिकोभयाभावघटितलक्षणाभिप्रायेणेदमभिहितं तन्मते स्वरूप-

तः साध्यतावच्छेदकप्रकारिकायामनुमितौ स्वरूपतः साध्यतावच्छेदकप्रकारकस्य साधनवन्निष्ठाभावप्रतियोगितात्वावच्छेदेन साध्यतावच्छेदकरूपावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावावगाहिज्ञानस्य हेतुतया तत्र गोत्वत्वज्ञानानपेक्षणेनाऽनुपपत्त्यभावात्। इदृशयुक्त्या तादात्म्येन व्यापकतासिद्धिवत् गोत्वत्वाग्रहदशायां या गौस्तत्र सास्नादिरिति व्याप्तिग्रहाधीनगवादिहेतुकसास्नादिसिद्ध्यनुरोधात् तत्सम्बन्धेन व्याप्यतासिद्धिरपि द्रष्टव्या। केचित्तु तादात्म्यसम्बन्धेन व्यापकत्वानुपगमेऽपि गवान्यावृत्तित्वरूपव्याप्तिज्ञानात् गोत्वादिविधेयकानुमितिर्निष्प्रत्यूहैव। तथा सति अयं गौरित्याकारकताऽप्यनुमितेर्निर्वहति स्वरूपतो गोत्वावगाहिनो गवान्यावृत्तित्वज्ञानात्स्वरूपत एव गोत्वविषयिण्यास्तस्याः सम्भवात्। न चानवच्छिन्नविधेयताया अक्लृप्तत्वात्तादात्म्येन गोरेव विधेयत्वमुचितम्। अयं गौरित्याकारक इदन्त्वावच्छिन्नविशेष्यकगोत्वादिप्रकारकप्रत्यक्षे या गोत्वादिप्रकारता तस्या एव विधेयतात्वोपगमेऽनुमितौ तत्कल्पनेऽतिरिक्तविधेयताकल्पनाभावात्। अस्तु वा गवान्यावृत्तित्वरूपव्याप्तिज्ञानादेव तादात्म्येन गवानुमितिः किं तादात्म्येन व्यापकतयेत्याशङ्कानिरासिकीर्षयोक्तं गोत्वत्वाद्यग्रहदशायामिति। गवेतरावृत्तित्वस्य हेतुभूतसास्नाद्यग्रहदशायामित्यर्थं इत्याहुस्तन्न। गवेतरावृत्तित्वमात्रस्य गोत्वत्वशब्दार्थतायां विरहेणोदक्षरताया दुर्वारत्वात्। गोत्वत्वपदं तद्वृत्तिधर्मपरमिति तु न सम्यक्। गोत्वत्वस्य विशिष्टगोवृत्तित्वस्वरूपस्य स्वरूपतो भानासम्भवेन तज्ज्ञानदशायां तद्वृत्तिधर्मभानस्याऽवश्यकत्वात्। अपरे तु गोत्वत्वाद्यग्रहदशायामपि गोः सिद्ध्यतीत्यन्वयः। यदा गोत्वत्वमनुमितौ न भासते तदापि तत्र गौर्भासत इत्यर्थः स्वरूपतो गोत्वस्यैव सास्नादिलिङ्गकानुमितौ भानस्योपगन्तव्यतया विधेयतायाश्चाऽवच्छिन्नत्वनियमेन स्वरूपतो गोत्वप्रकारकानुमितेरनुभवसिद्धाया अनुपपत्तिरित्युपष्टम्भसंगतिरिति प्राहुः। यत्तु अनवच्छेदकांशे तादात्म्यसम्बन्धेन स्वरूपतः साध्यतावच्छेदकप्रकारकज्ञानादनवच्छेदकत्वांशे आधेयतासम्बन्धेन स्वरूपतस्तत्प्रकारकज्ञानाच्च स्वरूपतस्तत्प्रकारकानुमितिरित्युपगमेन गोत्वत्वाग्रहदशायामपि तादात्म्येन व्यापकताज्ञानादनुमितिर्निर्वहतीति नोक्तानु-

पपत्तिरिति तदसत् । अयंगौरित्यादिज्ञानानुव्यवसाये स्वरूपतो गोत्वादिविशेषितप्रकारिताप्रकारेण ज्ञानभानात् समवायातिरिक्तेन निरूपितत्वसम्बन्धेन गोत्वादेः स्वरूपतःप्रकारताया आवश्यकत्वेऽपि समवायातिरिक्तेनापरसम्बन्धेन स्वरूपतः प्रकारताया अप्रामाणिकत्वात् अन्यथा व्यापकताज्ञानहेतुतामते स्वरूपतो ज्ञानत्वादेर्विधेयतावच्छेदकत्वानुपपत्त्या केवलान्वयिग्रन्थे तज्ज्ञानस्या ऽनुमितिहेतुताखण्डनं दीधितिकृतां विरुद्ध्येत उक्तक्रमेणैव तन्निर्वाहात् । न च तथा सति प्रतियोगिताधर्मिकोभयाभावघटितलक्षणाभिप्रायकतयाऽपि नैतद्ग्रन्थसंगतिरिति वाच्यम् । प्रकारित्वांश इवाऽवच्छेदकत्वांऽशेपि निरूपितत्वसम्बन्धेन जातेः स्वरूपतः प्रकारित्वाभिप्रायेणैतद्ग्रन्थसंगमनात् । तस्याऽप्रामाणिकत्वाभिप्रायेणाऽग्रिमव्यापकताज्ञानहेतुताखण्डनसंगतेः । अपरे तु गोत्वत्वाद्यग्रहदशायामपि स्वरूपतो भासमानगोत्वावच्छिन्ने हेतुमन्निष्ठभेदप्रतियोगितानिरूपिततादात्म्यसम्बन्धावच्छिन्नावच्छेदकत्वाभावरूपान्योन्याभावघटिततादात्म्यसम्बन्धावच्छिन्नव्यापकताज्ञानात्तादात्म्येन स्वरूपतो गोत्वप्रकारिकाऽनुमितिः सम्भवत्येव । एकरूपेणा ऽवच्छेदकेऽपि अवच्छेदकतानवच्छेदकरूपेणा ऽवच्छेदकत्वाभावं स्वीकृत्यैवान्योन्याभावघटितलक्षणस्य ग्रन्थकृता यद्रूपावच्छिन्नमित्यादिना परिष्करणीयत्वात् तदभिप्रायेणैवैतत्संगतेः । केवलान्वयिग्रन्थे च प्रतियोगिनि प्रतियोगितानवच्छेदकरूपेण तत्त्वाभावस्यैवावच्छेदकतानवच्छेदकरूपेणाऽवच्छेदकत्वाभावस्याऽप्रामाणिकतया व्यापकताज्ञाने साध्यतावच्छेदकस्य स्वरूपतो भानं न सम्भवतीत्यभिप्रायेण व्यापकताज्ञानहेतुतामते स्वरूपतो ज्ञानत्वप्रकारकानुमितेरनुपपत्तेर्वक्ष्यमाणतया न पूर्वापरग्रन्थविरोध इति प्राहुः । तादात्म्येन गोव्यतिरेकाघेति । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकात्तादात्म्यसम्बन्धघटितव्यापकतावच्छेदकगोत्वावच्छिन्नस्य भेदरूपाभावादित्यर्थः । समवायसम्बन्धावच्छिन्नाभावस्य साधकत्वेपि तत्प्रतियोगितावच्छेदकगोत्वत्वाद्यग्रहदशायां तदभावस्य ज्ञानासम्भवेन ततः सास्नाभावसिद्ध्यसम्भवादिति भावः । एवं च । अधिकरणत्वस्थाने सम्बन्धित्वनिवेशे च । गगनादेरपीति । तस्याऽधिकरणाप्रसिद्धावपि संयोगेन तत्सम्बन्धिवृत्तित्वस्याऽभावे तत्र च

साध्यवत्सम्बन्धित्वस्य प्रसिद्ध्या यथोक्तव्याप्तिसत्त्वादिति भावः । वृत्त्यनियामकसंयोगन्यावृत्तरूपेण संयोगस्याऽभावप्रतियोगितावच्छेदकसम्बन्धत्वेन साध्यतावच्छेदकसम्बन्धस्य गगनीयसंयोगस्याऽभावप्रतियोगितानवच्छेदकतया प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशकल्पे तथाविधप्रतियोगित्वाप्रसिद्ध्या संयोगेन गगनस्य व्यापकता न निर्वहतीत्यत उक्तं वृत्त्यनियामकसंयोगमात्रस्येति । तादृशसंयोगसाधारणसंयोगत्वावच्छिन्नस्येत्यर्थः । यद्वेत्याद्युक्तकल्पे वृत्त्यनियामकसंयोगसाधारणरूपेण तादृशसम्बन्धत्वाविवक्षेऽपि न क्षतिः तन्मते प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशादित्याशयेनाह । साध्यतावच्छेदकसम्बन्धेनेति । पृथिवीत्वादिव्यापकत्वमपीत्यत्र संयोगेन गगनादेरित्यनुषज्यते । ननु प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे पृथिव्यादिनिष्ठसमवायादिसम्बन्धावच्छिन्नाभावप्रतियोगितया गगनादेर्न पृथिवीत्वादिव्यापकतासम्भव इत्यत आह—तदभाववतोऽपीति । समवायादिना गगनाद्यभाववतोऽपीत्यर्थः । तत्सम्बन्धित्वात् गगनादिसम्बन्धित्वात् । तथा च तादृशगगनाद्यभावो न साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमन्निष्ठ इत्यभावान्तरमादाय लक्षणसत्त्वं निष्प्रत्यूहमेवेति भावः । ननु संयोगेन गगनस्य व्यापकत्वे बाधानवतारदशायामभ्रान्तस्य वृत्तिनियामकसंयोगेनैव कथं न गगनानुमितिरित्यत आह । सिद्धिरपीति । तथैव । वृत्त्यनियामकसंयोगेनैव तेनाऽसम्बन्धित्वादिति । तथा च तत्सम्बन्धावगाहनेऽनुमितेर्भ्रमतया तत्र भ्रमात्मकपरामर्शस्याऽपेक्षितत्वादिति भावः । यद्रूपावच्छिन्नयत्सम्बन्धस्य व्यापकताघटकत्वं तद्रूपावच्छिन्नतत्सम्बन्धेनैवाऽनुमितिरिति नियमाभिप्रायेण दोषान्तरमाह । अव्यापकत्वाच्चेति । वृत्त्यनियामकेन सम्बन्धेनैव गगनाद्यभावस्य प्रतियोगिसमानाधिकरणतया वृत्तिनियामकसंयोगेन प्रतियोगिन्यधिकरणाभावप्रतियोगितायाः गगने सत्त्वेन तत्सम्बन्धस्य व्यापकत्वाघटकत्वादित्यर्थः । तथा च व्यापकत्वाघटकसम्बन्धस्याऽनुमितावभानात् न तेनाऽनुमितिप्रसङ्ग इति भावः । ननु वृत्तिनियामकसंयोगेन गगनादिसम्बन्धिनोऽप्रसिद्ध्या कथं

तेन सम्बन्धेन गगनाद्यभावस्य प्रतियोगिवैयधिकरण्यमित्यत आह। व्यक्तीभविष्यतीति। वक्ष्यमाणोभयाभावघटितप्रतियोगिवैयधिकरण्यं तत्रापि सुलभमिति भावः।

कालिकविशेषणतया घटादिसाध्यके महाकालत्वादिहेतौ अप्रसिद्धिनिबन्धनाऽव्याप्तिं शङ्कते नन्वित्यादिना।

( दी० ) नन्वष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्य विशेषणताविशेषणाऽव्याप्यवृत्ति किमपि व्यापकं न स्यात्। स्वावच्छेदकसम्बन्धेन प्रतियोगिनोऽसम्बन्धिनि काले वर्तमानस्याऽभावस्य प्रतियोगितायां तत्सम्बन्धाऽवच्छिन्नत्वस्य तेन सम्बन्धेन यत् प्रतियोगिसम्बन्धि तदन्यत्वस्य च काले ऽसम्भवात्॥

( गा० ) खण्डकालवृत्त्येतत्कालत्वादिहेतुकस्थले ऽतीतानागतव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नतादृशसम्बन्धावच्छिन्नाभाव एव हेतुमति प्रतियोगिव्यधिकरणः प्रसिद्ध इति नाऽव्याप्तिरतो ऽष्टद्रव्यातिरिक्तद्रव्यात्मकेति। जन्यमात्रस्य कालोपाधितामते द्रव्यात्मकस्याऽपि खण्डकालस्य सम्भवान्न महाकालपर्यन्तलाभ इत्यतो ऽतिरिक्तान्तम्। यद्यपि गगनदिगात्ममनसां नित्यतया खण्डकालत्वासम्भवेन चतुर्द्रव्यातिरिक्तेत्युक्तावपि महाकाललाभस्तथापि यत्किञ्चिच्चतुर्द्रव्यातिरिक्तत्वस्य पृथिव्यादावपि सत्त्वात्पृथिव्यादिचतुष्टयातिरिक्तत्वस्य च विशिष्याऽभिधान एव तल्लाभः। तान्त्रिकैर्महाकालस्यैवाऽष्टद्रव्यातिरिक्तद्रव्यपदेनाऽभिधानात्तथाऽभिधाने विशिष्याऽनभिधानेऽपि नाऽन्यपरत्वशङ्केति तथैवा ऽभिहितम्। खण्डकालसाधारणमहाकालवृत्तेर्हेतुत्वे खण्डकालरूपहेत्वधिकरणे एव लक्षणघटकोक्ताभावप्रसिद्धिरिति कालमात्रवृत्तीत्यत्र मात्रपदम्। समवायादिना कस्यचित्साध्यत्वे समवायादिना घटाद्यभाव एव महाकाले तेन सम्बन्धेन प्रतियोगिव्यधिकरणः प्रसिध्यतीत्यतो विशेषणताविशेषेणेति। कालिकविशेषणतयेत्यर्थः। व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्यानुपादानेन केवलान्वयिव्यत्यादेर्व्यापकतासम्भव इत्यतोऽव्याप्यवृत्तीति। कालिकसम्बन्धे-

नाव्याप्यवृत्तित्वं च व्यतिरेकिमात्रस्यैव, केवलान्वयिनोऽप्यनित्यस्य विषयविषयकजन्यज्ञानविषयत्वादेर्बोध्यम् । एतत्सर्वं वस्त्वभिप्रायेणाऽभिहितम् । महाकालान्यवृत्तिहेतुकेऽन्यसम्बन्धेन साध्यतायां च हेतुमति सर्वत्र साध्यतावच्छेदकसम्बन्धेन वृत्तिमन्मात्रस्यैव तेन सम्बन्धेन वृत्तित्वभ्रमदशायां अनुमितिजनकज्ञानानुपपत्तिरपि द्रष्टव्या । एवं कालिकसम्बन्धेन व्याप्यवृत्तिसाध्यकेऽपि तेन सम्बन्धेन साध्यस्याऽव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्यघटितायाः प्रतियोगिवैयधिकरण्याघटितायाश्च व्यापकताया दुर्ग्रहत्वान्महाकालत्वादिहेतुकानुमित्यनुपपत्तिरपि । स्वावच्छेदकसम्बन्धेन स्वावच्छेदकविशिष्टानधिकरणहेत्वधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानिवेशकल्पे तादृशप्रतियोगित्वाप्रसिद्ध्यभिधानेनाऽव्याप्तिं स्फुटीकरोति । स्वावच्छेदकेति । स्वम् । प्रतियोगिता । काले । महाकाले । तत्सम्बन्धावच्छिन्नत्वस्य । कालिकसम्बन्धावच्छिन्नत्वस्य, असम्भवादिति योजना । कालिकसम्बन्धेन वृत्तिमन्मात्रस्यैव महाकाले वृत्तेः, अवृत्तेश्च तेन सम्बन्धेन सम्बन्धिनोऽप्रसिद्ध्या कस्यापि कालिकसम्बन्धावच्छिन्नाभावस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमद्वृत्तित्वासम्भवेन समवायादिसम्बन्धावच्छिन्नघटाद्यभावस्यैव तथात्वात्तत्प्रतियोगितायाश्च समवायादिसम्बन्धेनैवाऽवच्छिन्नत्वादिति भावः । साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमद्वृत्त्यभावीयसम्बन्धावच्छिन्नत्वाविशेषितप्रतियोगितानिवेशकल्पे तादृशसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमत एवाऽप्रसिद्ध्याऽव्याप्तिरित्याह । तेनेति । तेन सम्बन्धेन । कालिकसम्बन्धेन । गगनाद्यभावप्रतियोगिनस्तेन सम्बन्धेन सम्बन्धिरूपप्रतियोग्यप्रसिद्ध्या तेन सम्बन्धेन प्रतियोग्यसम्बन्धित्वासिद्धिं स्फुटीकर्तुं प्रतियोग्यसम्बन्धित्वस्येत्यनभिधाय यत्प्रतियोगिसम्बन्धि तदन्यत्वस्येत्यसमासेनाऽभिधानम् ।

अथ कालिकसम्बन्धेन महाकालान्यवृत्तित्वविशिष्टस्य घटस्य तत्सम्बन्धावच्छिन्नाभाव एव महाकाले प्रतियोगितावच्छेदकविशिष्टप्रतियोगिन्यधिकरणः प्रसिद्धस्तमादायैव च लक्षणसमन्वयात् कथमव्याप्त्यभिधानं न हि महाकालान्यवृत्तित्वविशिष्टघटादिनिरूपितः कालिकसम्बन्धोऽपि महाकाले सम्भवति

इदानींविशिष्टनिरूपिताधिकरणताविशेषस्य महाकालेऽसत्त्वेऽपि घटादेः घटत्वावच्छिन्ननिरूपिताधिकरणतासत्त्वेनैव सर्वाधारत्वोपपत्तेः ।

अत्र केचित् । कालिकसम्बन्धेनाधारता महाकालस्य न तु सूर्यक्रियादेः, इदानीं घट इत्यादिप्रतीत्या क्रियादिरूपकालोपाधीनां महाकालनिष्ठाधारतावच्छेदकत्वस्यैवाऽवगाहनात् । अत एव तेषां कालिकविशेषणतया कालोपाधित्वप्रवादः । तादृशप्रतीतेः क्रियाद्यावेव घटाद्याधारत्वावगाहित्वोपगमे तादृशप्रतीतीनामनुगताधारतानवगाहित्वानुभवविरोधात् । कालत्वेनाखण्डोपाधिना सर्वेषां क्रियादीनामनुगमेन तादृशानुभवोपपादने महाकालस्यैवाप्रामाणिकतापत्तेरिति प्राचीनमताभिप्रायेणेयमव्याप्त्याशङ्का । तथा च यदि कालिकसम्बन्धेन महाकालान्यवृत्तित्वस्यैवाऽप्रसिद्ध्या तद्विशिष्टघटाद्यभावमादाय लक्षणगमनासम्भवात् । न च क्रियादेः कालत्वानभ्युपगमाभिप्रायेण चेदयं ग्रन्थस्तदाऽष्टद्रव्यातिरिक्तद्रव्यात्मकताया अव्यावर्तकतयाऽभिधानासङ्गतिरिति वाच्यम् । तादृशद्रव्यात्मक एव काल इति मतविशेषसूचनार्थतया तत्सङ्गतेः । तन्मात्रवृत्तित्वं च हेतोर्लक्ष्यतासंपादकत्वेनाऽभिहितम्, इतरवृत्तेर्व्यभिचारित्वात् । अथवा भवतु कालोपाधिरपि कालिकसम्बन्धेनाऽधिकरणं तदधिकरणत्वसाधकश्चेदानीं घट इत्यादिप्रत्ययो व्यवहारश्च तस्य चानुगतोपाधिमात्रविषयकत्वे ऽनुगताधारत्वावगाहित्वानुपपत्त्या क्रियादिरूपोपाधिविशिष्टमहाकालस्य घटाद्याधारतावगाहित्वमावश्यकम्, विशिष्टे घटाद्याधारत्वावगाहित्वे विशिष्टान्तर्गतविशेषणेऽपि तदवगाहित्वमावश्यकमिति खण्डकालस्य कालिकसम्बन्धेनाधारतासिद्धिः । एवं चेदानीं महाकालान्यत्वविशिष्टो घट इति प्रत्ययः खण्डकाले विशिष्टाधारतायां मानं न स्यात् इति तत्साधकप्रत्ययबलादेव महाकालान्यवृत्तित्वानिरूपकस्यापि महाकालस्य विशिष्टाधारत्वसिद्धिर्दुर्वारैव । तथा च महाकाले विशिष्टघटाभावोऽपि विशिष्टप्रतियोगिसमाधिकरणः तादृशप्रतीत्यनभ्युपगमे खण्डकाले न विशिष्टप्रतियोग्यधिकरणत्वप्रसिद्धिरित्युक्तस्थलेऽव्याप्तिवारणमशक्यमित्याहुः ।

अन्ये तु कालिकसम्बन्धः स्वरूपादनतिरिक्तः तथा च खण्ड-

कालमहाकालानुयोगिकतादृशसम्बन्धानां तत्तत्स्वरूपाणामनुगमकतावच्छेदकाभावेन प्रत्येकमेव सम्बन्धता । तथा च महाकालस्वरूपसम्बन्धेनैव घटादेः महाकालत्वादिव्यापकता वाच्येति दुरुद्धरैवाव्याप्तिः, तादृशसम्बन्धेन महाकालान्यवृत्तित्वस्याऽप्रसिद्धेरिति वदन्ति । तदसत् । स्वरूपाणां प्रातिस्विकरूपेण सम्बन्धत्वे यत्किञ्चित्खण्डकालनिरूपितस्वरूपसम्बन्धेन साध्यतायां तादृशखण्डकालमात्रवृत्तिहेतुकेऽपि प्रतियोगिव्यधिकरणाभावाप्रसिद्धिसम्भवान्महाकालमात्रवृत्तिहेतुकानुधावनस्य निर्बीजत्वापातात् ।

परे तु साध्यतावच्छेदकाविशिष्टसाध्यवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तावेव प्रतियोगितावच्छेदकविशिष्टप्रतियोगिवैयधिकरण्यप्रवेशो न तु साध्यतावच्छेदकोपलक्षितसाध्यवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तौ, अन्यथा महाकाले पृथिव्यादिवृत्तित्वोपलक्षितजात्यनुमानानुपपत्तेः । तादृशसाध्यतावच्छेदके प्रतियोगितावच्छेदकाविशिष्टप्रतियोगिव्यधिकरणत्वविशिष्टाभावप्रतियोगितावच्छेदकत्वसत्त्वात् । इत्थं च यत्र साध्यतावच्छेदकोपलक्षितस्य साध्यता तत्रैवाऽव्याप्तिशङ्कापरोऽयं ग्रन्थः, तत्र यथाश्रुतप्रतियोगिवैयधिकरण्यस्यैव निवेशेन महाकालान्यवृत्तित्वविशिष्टघटाभावस्याऽपि लक्षणाघटकत्वादित्याहुः । तदपि न । अग्रिमविशिष्टदोषादानतद्व्याप्तिप्रदर्शनविरोधात् ।

(दी०) न च तादृशसम्बन्धेन हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमेव वक्तव्यम् । तथा चाऽवृत्तिगगनाद्यभावद्वारिकैव तत्सिद्धिः । सत्ताद्यधिकरणकर्मादौ समवायेन ज्ञानसामान्यस्य संयोगसामान्यस्य चाऽवृत्तेर्नोऽतिप्रसङ्गः । भूतत्वमूर्तत्वोभयत्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टसत्तादिकन्तु न मनोगुणादिवृत्ति, संयोगसामान्यं तु न किञ्चिद्द्रव्याऽवृत्तीति वाच्यम् । विशिष्टस्याऽनतिरिक्तत्वात् । समवायेन जातेः साध्यत्वे मेयत्वादावतिप्रसङ्गात् । जातिमन्निष्ठाभावप्रतियोगिता-

या जातित्वेनाऽनवच्छेदात्, जातिशून्ये च तादृशसम्बन्धेन वृत्ते-रप्रसिद्धेः । संयोगादिसाध्यकगुणकर्मान्यत्वादौ चाऽतिव्याप्तिः । अद्रव्ये हेतुमति तादृशसम्बन्धेन वृत्तेरप्रसिद्धेर्द्रव्ये च संयोगादेरपि वृत्तेः । मैवम् ।

(११०) तादृशसम्बन्धेन । प्रतियोगितावच्छेदकसम्बन्धेन साध्य-तावच्छेदकसम्बन्धेन वा । वक्तव्यम् । अभावविशेषणतया अभाव-पूर्वप्रतीकेन विवक्षणीयम् । गगनाद्यभावव्यावर्तकैवेति । तत्प्रतियोगिनः कालिकसम्बन्धेनाऽधिकरणाप्रसिद्ध्या तदनधिकरणत्वाप्रसिद्धावपि वृत्तिमति प्रसिद्धायाः कालिकसम्बन्धेन महाकालवृत्तिताया अभावस्य तत्र प्रसिद्धत्वादिति भावः ।

ज्ञानवान् सत्त्वात् संयोगी सत्त्वादित्यादौ क्रमेण सम्बन्धविशेष-निवेशनयत्किञ्चित्पदोपादानयोर्व्यावृत्तिमाह । सत्ताधिकरणकर्मादा-विति । सम्बन्धविशेषानुपादाने कर्मादौ समवायेन ज्ञानाभावप्रतियो-गिनोऽवृत्तावपि विषयतासम्बन्धेन ज्ञानस्य वृत्तेस्तादृशाभावो न लक्षणघटकः स्यात्, कर्मादौ संयोगाभावप्रतियोगिनोऽसत्त्वेऽपि हेत्व-धिकरणद्रव्यवृत्तितया हेत्वधिकरणवृत्तित्वसामान्याभावसत्त्वासम्भ-वात् सोऽपि न तथा स्यादित्यभावान्तरमादायाऽतिव्याप्तिप्रसक्ति-रिति भावः । यद्यपि यत्किञ्चित्पदस्य व्याप्यवृत्तिज्ञानसाध्यकेऽपि सम्भ-वति ज्ञानस्य समवायसम्बन्धेनाऽव्याप्यवृत्तितया तत्साध्यकेऽपि प्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकत्वात् । तथाऽपि प्रसिद्धा-व्याप्यवृत्तिसाध्यके व्यभिचारिणि संयोगी सत्त्वादित्यादौ त-दनुक्तौ तत्र व्यावृत्तिर्न सम्भवतीति शङ्का स्यात्, तन्निरा-साय तत्प्रदर्शनम् । केचित्तु संयोगसाध्यके आदिपदग्राह्यगुणान्य-त्वविशिष्टसत्त्वादिहेतुके साध्यतावच्छेदकसम्बन्धस्यैव व्यावृत्ति-प्रदर्शनपरं संयोगसामान्यस्य चेत्यपि । विषयताया वृत्तिनियाम-कत्वे प्रतियोगिवैयधिकरण्ये सम्बन्धित्वानिवेशपक्षे पूर्वस्थली-यऽव्याप्यवृत्त्यसद्वृत्तिरित्यस्फुटत्वादेतदनुधावनम् । संयोगाभावस्य का-लिकसम्बन्धेनैव सर्वत्र कर्मण्यपि प्रतियोगिसामानाधिकरण्यसत्त्वा-

दतिव्याप्तिप्रसक्तिरिति वदन्ति । तदसत् । उक्तास्वरसेन पूर्वमपि ज्ञानसाध्यकं परित्यज्य स्थलान्तरानुसरणादत्र निर्वीजताहशस्थलपरित्यागे सन्दर्भविरोधात् । आदिपदेन हेतोः साध्यस्य च विशेषशब्देनोपादानस्या ऽयुक्तत्वाच्च ।

प्रतियोगितावच्छेदकविशिष्टत्वोपादानस्य पूर्वोक्तस्थले एव व्यावृत्तिं स्मारयति । मूलत्वेति । यद्यपि पूर्वं विशिष्टसाध्यकेऽतिव्याप्तिप्रदर्शनोत्तरं विशिष्टस्यातिरिक्ततापक्षे तदसङ्गतिरित्यस्वरसादुभयसाध्यकातिव्याप्तिर्दर्शिता तथा ऽपि द्वन्द्वेऽल्पाक्षरस्य पूर्वनिपातनियमसत्वे उभयत्वविशिष्टान्तस्य प्रागभिधानम् । अत्र पूर्वस्थले द्वित्वाद्यवच्छिन्नप्रतियोगितायाः व्यासज्यवृत्तित्वोपगमे ऽतिव्याप्तिर्न सम्भवतीत्यस्वरसेनैव द्वितीयस्थलातिव्याप्त्यवतरणं पूर्वाभिप्रायविरोधादनुपादेयम् । न मनोगुणादिवृत्तीति । विशेष्ये शुद्धे तद्वृत्तित्वसत्त्वेऽपि विशिष्टे तत्र तद्वृत्तित्वाभावोऽक्षत एव । एकरूपावच्छिन्न एव तत्तदभावयोर्विरोधेनावृत्तेऽरित्यभिमानः । न चैवं विशिष्टान्तानुपादानेपि सत्तादौ विशिष्टसत्तात्वादिना गुणाद्यवृत्तित्वसत्त्वेन विशिष्टसत्ताद्यभावस्य लक्षणघटकतयाऽतिव्याप्त्यप्रसक्तेर्न विशिष्टान्तव्यावृत्तिसम्भव इति वाच्यम् । प्रतियोगिनि किञ्चिद्रूपावच्छिन्ने हेत्वधिकरणयत्किञ्चिद्व्यक्तिवृत्तित्वाभावस्य लक्षणघटकत्वे सत्तावान् द्रव्यत्वादित्यादावपि सत्तात्वाद्यवच्छिन्नाभावस्य लक्षणघटकत्वापत्त्याऽव्याप्त्यापत्तेः, हेत्वधिकरणावृत्तित्वस्य तद्वृत्तिभिन्नत्वरूपस्यैव निवेशनीयतया विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताद्यभावस्य लक्षणघटकत्वानिर्वाहेण ऽतिव्याप्तिप्रसक्तेः। प्रतियोगितावच्छेदकविशिष्टत्वोपादाने प्रतियोगितावच्छेदकविशिष्टत्वावच्छेदेन हेत्वधिकरणवृत्तित्वात्यन्ताभावस्यैव निवेशनीयतया विशिष्टसत्ताद्यभावस्य लक्षणघटकतानिर्वाहेणाऽतिव्याप्तिवारणसम्भवाद्व्यावृत्तिसङ्गतेः । सामान्यपदप्रयोजनमाह । संयोगसामान्यं चेति । संयोगी द्रव्यत्वादित्यादौ संयोगत्वावच्छिन्नाभावप्रतियोगिन्यां यत्किञ्चित्संयोगव्यक्तौ हेत्वधिकरणयत्किञ्चिद्द्रव्यवृत्तित्वसम्भवेऽपि तत्प्रतियोगिसामान्ये तदसत्त्वेन तादृशाभावस्य लक्षणाघटकतया नाऽव्याप्तिरित्यर्थः ।

विशेष्यवृत्तेर्विशिष्टानुयोगिकाभावोऽप्रामाणिक इत्याशयेन दूषयति । विशिष्टस्य अनतिरिक्तत्वादिति । तथा चोभयत्वादिविशिष्टस्य मूर्तत्वादेः शुद्धमूर्तत्वानतिरिक्ततया मूर्तत्वादिवृत्तेर्मनोवृत्तित्वादेरभावस्योभयत्वादिविशिष्टेऽपि तस्मिन्नसम्भवात् भूतत्वमूर्तत्वोभयवान्मूर्तत्वादित्यादावव्याप्तिः विशिष्टान्तोपादानेऽपि दुर्वारैवेति भावः । न च भूतत्वमूर्तत्वोभयं न मनसि, गुणान्यत्वविशिष्टसत्ता न गुणे इत्यादिसर्वानुभवसिद्धप्रतीतिबलादुभयत्वविशिष्टसत्तात्वाद्यवच्छिन्ने मनोगुणादिवृत्तित्वाभावसिद्धेरव्यापकत्वासत्वान्नाव्याप्तिरिति वाच्यम् । तादृशप्रतीत्या मनोगुणाद्यधिकरणकवृत्तित्वावच्छिन्नविशिष्टसत्तात्वावच्छिन्नाभावस्यैवावगाहनात् । जातौ न किञ्चित्समवैतीति निश्चयदशायां जातौ न भूतत्वमूर्तत्वोभयं न वा विशिष्टसत्तेति प्रतीतिवत् मनसि गुणे न किञ्चित्समवैतीति भ्रमदशायामपि तादृशप्रतीतेरानुभविकतया मनोगुणादिसमवेतत्वाभावस्य तद्विषयत्वासम्भवेन मनोगुणाद्यधिकरणकाभावस्य तद्विषयताया आवश्यकत्वात्तादृशभ्रमाभावकालीनतथाकारकप्रतीतावपि तस्यैव विषयत्वौचित्यात्, अन्यथा कल्पनागौरवापत्तेः । भूतत्वमूर्तत्वोभयं न मनोवृत्ति गुणान्यत्वविशिष्टसत्ता न गुणवृत्तिरित्यादिप्रत्ययश्च तादृशोभयत्वविशिष्टसत्तात्वादौ मनोगुणादिवृत्तित्वावच्छेदकत्वाभावं तादृशवृत्तित्वे तादृशोभयत्वविशिष्टसत्तात्वावच्छेद्यत्वाभावं वाऽवगाहते तादृशाभावस्य फलसत्वात् । न च यत्किञ्चिद्धेत्वधिकरणवृत्तितानवच्छेदकत्वप्रतियोगितावच्छेदककत्वमेव विवक्षणीयम्, उभयत्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकोभयत्वादेश्च मनोगुणादिवृत्तितानवच्छेदकत्वात्तादृशाभावसंग्रहेण नाव्याप्तिरिति वाच्यम् । गुणान्यत्वविशिष्टसत्ताद्यभावप्रतियोगितावच्छेदकस्य वैशिष्ट्यसहितसत्तात्वस्य गुणादिवृत्तितावच्छेदकशुद्धसत्तात्वाद्यनतिरिक्ततया तदनवच्छेदकत्वासम्भवेनोक्तविवक्षयाऽपि तादृशाभावसंग्रहासम्भवात् । यदभावीयप्रतियोगितावच्छेदकतायां यत्किञ्चिद्धेत्वधिकरणवृत्तितावच्छेदकत्वपर्याप्त्यवच्छेदकावच्छिन्नपर्याप्तताविरहस्तादृशाभावनिवेशे दर्शितातिव्याप्तिपरिहारः स्यात् इत्याशङ्क्य दूषणान्तरमाह । समवायेनेति । जातिमन्निष्ठतादृशाभावेति । जातिमन्निष्ठो यो घटत्वा-

घभावस्तस्यैव पटाद्यसमवेतप्रतियोगिकत्वेन तत्तत्प्रतियोगिनायां जातित्वस्याऽनवच्छेदकत्वादिति भावः। जातिमद्वृत्तेर्जातित्वावच्छिन्नाभावस्य तादृशत्वं न सम्भवतीति स्फुटयति। जातिशून्ये चेति। तादृशसम्बन्धेन समवायसम्बन्धेन। अप्रसिद्धेरिति। तथा च जातिमद्वृत्तिर्यो ऽभावस्तत्प्रतियोगिसामान्ये हेतुमद्यत्किञ्चित्पदेन जातिशून्यमेवोपादायाऽवृत्तित्वान्तं घटनीयं तच्च न सम्भवति प्रतियोग्यप्रसिद्धा तदप्रसिद्धिरिति नाऽसौ लक्षणघटक इति भावः। जातेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्यस्य प्रयोजनविरहेणाऽप्रवेशेनोक्तदोषानवकाश इत्यव्याप्यवृत्तिसाध्यके एवाऽतिव्याप्तिमाह। संयोगादीति। अतिव्याप्तिरिति। संयोगत्वावच्छिन्नाभावस्य हेत्वधिकरणयत्किञ्चिद्व्यक्त्यसमवेतप्रतियोगिसामान्यकत्वाभावेन लक्षणाघटकत्वादिति। तदसम्भवमेव स्फुटयति। भद्रव्य इति। हेतुमतीति–सामान्यादावित्यर्थः। अप्रसिद्धेरिति। तथाच यत्किञ्चिद्व्यक्तीत्यनेन न सामान्याद्युपादानसम्भव इति भावः। द्रव्ये च संयोगादेरपीति। तथा च द्रव्यमपि किञ्चित्पदेनोपादाय तादृशाभावस्य तथात्वं न शक्योपपादनमिति भावः॥

(दी०) साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाऽभावस्य विवक्षितत्वात्। धूमसंयोगे वह्न्यधिकरणायोगोलकानुयोगिकत्वस्य, चैत्रान्यत्वविशिष्टैतद्दण्डसंयोगे एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्य, गुणकर्मान्यत्वविशिष्टसत्तासमवाये च जात्यधिकरणगुणानुयोगिकत्वस्य विरहान्नातिप्रसङ्गः॥

(गा०) साध्यतावच्छेदकसम्बन्धसामान्ये उभयाभावस्य विवक्षितत्वादिति योजना। तथा च स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभाववत्साध्यतावच्छेदकसम्बन्धसामान्यकत्वमभावे, स्वप्रतियोगितावच्छेदकेत्यत्र स्वावच्छेदकत्वं प्रक्षिप्य तादृशोभयाभाववत्साध्यतावच्छेदकसम्बन्धसामान्यकत्वं प्रतियोगितायां वा विशे-

एवं देयमिति भावः । जलादिसंयोगे वह्न्यादिप्रतियोगिकत्वधूमवदनुयोगिकत्वोभयाभावसत्त्वेऽपि साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गततत्तद्धूमाऽधिकरणानुयोगिकवह्निसंयोगे वह्निप्रतियोगिकत्वतदधिकरणानुयोगिकत्वोभयाभावासत्त्वान्न वह्न्यभावस्य लक्षणघटकतेति घटाभावमादायैव वह्निमान्धूमादित्यादौ लक्षणसमन्वयः । घटवान्महाकालत्वादित्यादौ पुनरवृत्तिगगनादेरभाव एव लक्षणघटकः, कालिकसम्बन्धसामान्ये तत्प्रतियोगिकत्वाभावेनोभयाभावसौलभ्यात् । यत्किञ्चिद्धेत्वधिकरणानुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वाभावनिवेशे जातिमान्मेयत्वादित्यादावुक्ताव्याप्तिवारणमशक्यम् । सामान्यानुयोगिकसमवायाऽप्रसिद्ध्या जात्याश्रयानुयोगिकसमवाये च जात्यादिप्रतियोगिकत्वसत्त्वेन जातित्वावच्छिन्नाभावस्य प्रतियोग्यव्यधिकरणत्वानुपपत्तेः । एवं निरुक्तप्रतियोगिप्रतियोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये हेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वाभावनिवेशे घटवान्महाकालत्वादित्यादावव्याप्तिवारणमशक्यम्, गगनत्वविशिष्टप्रतियोगिककालिकसम्बन्धाप्रसिद्धेर्गगनाभावस्याऽपि प्रतियोग्यव्यधिकरणत्वानुपपत्तेरित्युभयाभावानुसरणम् । यत्किञ्चित्पदप्रयोजनमाह । धूमसंयोगे इति । अयोगोलकानुयोगिकत्वस्य विरहादातिप्रसङ्ग इत्यनेनाऽन्वयः । साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गतधूमसंयोगे धूमप्रतियोगिकत्ववह्निमदनुयोगिकत्वोभयोरेव सत्त्वेन तत्सामान्ये उभयाभावस्य दुर्घटत्वाद्यत्किञ्चित्पदानुपादाने धूमवान्वह्नेरित्यादावतिव्याप्तिः स्यात् । हेत्वधिकरणस्य हेतुमत्त्वेन न निवेशः किन्तु तत्तद्व्यक्तित्वेन यत्किञ्चिदेकहेतुमद्व्यक्तेर्निवेश इत्येतल्लाभाय तदुपादाने पुनर्हेत्वधिकरणायोगोलकानुयोगिकत्वस्य धूमसंयोगेऽभावादन्यसंयोगे च धूमप्रतियोगिकत्वस्याऽभावात् संयोगसामान्यस्यैवोभयाभाववत्त्वाद्धूमत्वावच्छिन्नाभावोऽपि लक्षणघटक इति नातिप्रसङ्ग इत्यर्थः । प्रतियोगितावच्छेदकविशिष्टार्थकनिरुक्तपदोपादानप्रयोजनं संयोगेन चैत्रान्यत्वविशिष्टैतद्दण्डत्वेनैव चैत्रादिनिष्ठैतद्दण्डसाध्यके एतद्दण्डहेतौ, समवायेन विशिष्टसत्तासाध्यके जातिरूपहेतौ चाऽतिव्याप्तिवारणरूपं दर्शयति । चैत्रान्यत्वेति । निरुक्तपदानुपादाने

संयोगसामान्यान्तर्गतचैत्रनिष्ठतद्दण्डसंयोगे हेत्वधिकरणचैत्रानुयोगिकत्वचैत्रान्यत्वविशिष्टतद्दण्डाभावप्रतियोग्येतद्दण्डप्रतियोगिकत्वयोः, समवायसामान्यान्तर्गतगुणानुयोगिकसत्तासमवाये च हेत्वधिकरणगुणानुयोगिकत्वविशिष्टसत्ताभावप्रयोगिसत्ताप्रतियोगिकत्वयोर्द्वयोरेव सत्त्वेन तादृशाभावस्य लक्षणघटकता न स्यादिति प्रसक्तातिप्रसक्तेस्तदुपादानानावकाशः । चैत्रे गुणादौ च संयोगेन समवायेन च विशिष्टदण्डविशिष्टसत्तावैशिष्ट्यप्रत्ययात्तदनुयोगिकसंयोगसमवाययोर्विशिष्टदण्डत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगिकत्वानभ्युपगमेनाऽन्यानुयोगिकयोश्च तयोश्चैत्रगुणाद्यनुयोगिकत्वाभावेनोभयाभावस्याऽक्षततया विशिष्टसाध्याभावस्याऽपि लक्षणघटकत्वादित्यर्थः ।

अथाऽत्र संयोगेन घटादौ साध्ये घटत्वादिहेतावतिव्याप्तिः संयोगसामान्यान्तर्गतघटादिसंयोगे घटाद्यनुयोगिकत्वघटादिप्रतियोगिकत्वोभयसत्त्वेन घटादिनिष्ठघटाद्यभावस्य लक्षणाघटकत्वात् । न च स्वस्मिन् संयोगेन स्वविशिष्टबुद्ध्यनुदयात् अन्यत्र विशिष्टबुद्धिनियामकघटसंयोगे घटप्रतियोगिकत्वमात्रम्, घटे ऽन्यविशिष्टधीमात्रनियामकसंयोगे च तदनुयोगिकत्वमात्रमिति घटानुयोगिकत्वतत्प्रतियोगिकत्वोभयं न कुत्रापि संयोगे ऽस्ति, न हि समवायेन संयोगाधिकरणत्वमेव संयोगानुयोगित्वं येन घटसमवेतसंयोगमात्रस्यैव घटानुयोगिकत्वं स्यात् । तथा सति तत्सम्बन्धानुयोगिताया एव तद्विशिष्टबुद्धिविषयताप्रयोजकत्वेन स्वस्मिन्नपि स्वविशिष्टबुद्ध्यापत्तेर्दुर्वारत्वात्, किन्तु सम्बन्धान्तरमेवेति वाच्यम् । येन सम्बन्धेन घटे ऽन्यविशिष्टधीस्तेन सम्बन्धेना ऽन्यत्र कदाचिद्धटविशिष्टबुद्धिजननादेकत्रैव संयोगे घटानुयोगिकत्वघटप्रतियोगिकत्वयोरुभयोरेवाचभ्यकत्वात् । यस्मिन्सम्बन्धे यत्प्रतियोगिकत्वविशिष्टं यदनुयोगिकत्वं तत्सम्बन्धेन तस्यैव तद्विशिष्टप्रमितेः । स्वप्रतियोगिकत्वविशिष्टे च संयोगे स्वानुयोगिकत्वानुपगमेन स्वस्मिन् तेन सम्बन्धेन स्वविशिष्टप्रमापत्त्यनवकाशात् इति चेन्न । संयोगेनाऽधिकरणांशे आधेयस्यैव विशिष्टबुद्धिर्जन्यते नत्वाधेयांशे, आधाराधेयभावानापन्नयोर्वृत्त्यनियामकसंयोगिनोश्च संयोगेन वि-

शिष्टबुद्धेरप्रामाणिकत्वात् । आधेयत्वानुपस्थितिकालीने भूतले घट इत्यादिप्रत्यये घटादंशो भूतलादेः प्रकारत्वेऽपि आधेयतया एव संसर्गतोपगमात्, न तु संयोगस्य । एवं सति द्रव्यनियामकस्य गगनादिसंयोगस्य सम्बन्धत्वानुपपत्तिः विशिष्टबुद्धिनियामकस्यैव तथात्वादिति चेत् का क्षतिः । एवं च येन संयोगेना ऽन्यत्र घटादिविशिष्टबुद्धिर्जन्यते घटस्य तत्संयोगाश्रयानाधारत्वेन घटे न तेन सम्बन्धेना ऽन्याविशिष्टबुद्धिर्जन्यते इति संयोगमात्र एव तत्प्रतियोगिकत्वतदनुयोगिकत्वोभयाभावस्याऽक्षतत्वात् ।

अथ यस्य घटस्याऽधःस्थितपटे येन संयोगेन घटविशिष्टबुद्धिर्जनिता तेनैव च संयोगेन पटेन समं परिवृत्य स्थापिते तद्घटे पटविशिष्टबुद्धिरपि जन्यते तत्र संयोगे घटप्रतियोगिकात्वघटानुयोगिकत्वोभयस्यावश्यकतया संयोगेन घटसाध्यके तद्घटतत्पटान्यतरत्वरूपेण हेतुतायामतिव्याप्तिर्दुर्वारैवेति चेत्। एवं सति साध्यतावच्छेदकसम्बन्धानुयोगितासामान्ये निरुक्तप्रतियोगिकत्वविशिष्टसम्बन्धनिरूपितत्वहेत्वधिकरणीभूतपालिकाश्रितैकानिष्ठत्वोभयाभाव एव विवक्षणीयः । स्वस्मिन् स्वविशिष्टबुद्ध्यनुदयेन स्वप्रतियोगिकत्वविशिष्टसंयोगनिरूपितत्वस्य स्वनिष्ठानुयोगितायामसत्त्वात् संयोगीयानुयोगितासामान्ये घटप्रतियोगिकत्वविशिष्टसम्बन्धनिरूपितत्वतद्घटनिष्ठत्वोभयाभावो ऽक्षत एवेति। एवं च यद्वैतत्कल्पे समवायेऽन्यमते ऽतिव्याप्तिमुद्भावयिष्यति तदथाभूताभिप्रायेणेति ध्येयम् ।

अथ द्रव्यत्वादिकं प्रति पर्याप्तिसम्बन्धेन द्वित्वादेर्व्यापकत्वापत्तिः । हेतुमत एकैकद्रव्यस्य पर्याप्तिसम्बन्धेन द्वित्वाधनधिकरणत्वेऽपि द्वित्वादिपर्याप्तौ हेत्वधिकरणतद्यक्त्यनुयोगिकत्वाभावासत्त्वादिति द्रव्यत्वादिना पर्याप्तिसम्बन्धेन गगनादौ द्वित्वाद्यनुमानापत्तिः । न चेष्टापत्तिः, एकविशेष्यकपर्याप्तिसंसर्गकव्यासज्यवृत्तिधर्मप्रकारकबुद्धेर्भ्रमतया सद्धेतुकपरामर्शाधारकशानुमितेरनुपगमासम्भवात् । न चैकमात्रवृत्तिधर्मावच्छेदेन द्वित्वादिपर्याप्तेरेकैकस्मिन्नसत्त्वेऽपि उभयादिवृत्तिधर्मावच्छेदेन तत्पर्याप्तिमत्त्वेन सम्बन्धेन तद्वति तत्प्रकारकत्वकत्वप्रमात्वं दुर्वार-

मिति वाच्यम् । तद्यावृत्तप्रमालक्षणस्याऽपि कथञ्चिन्निर्वचनसम्भवादिति चेन्मैवम् । उद्देश्यतावच्छेदकानातिरिक्तवृत्तित्वाविशेषितपर्याप्तेः क्वचिदपि सम्बन्धत्वानभ्युपगमेन तादृशपर्याप्तिसंसर्गकानुमितेरापादनासम्भवात् । गगनत्वाद्यनतिरिक्तवृत्तित्वविशेषितपर्याप्तेर्द्वित्वादिप्रतियोगिकत्वाभावेन द्वित्वादिनिष्ठव्यापकत्वाघटकतया तादृशसम्बन्धेनापि तदनुमित्यापत्त्यनवकाशात् ।

यत्तु हेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वस्थले हेतुमत्त्वपर्याप्त्यवच्छेदकयत्किञ्चिद्धर्मावच्छिन्नानुयोगिताकत्वन्निवेश्यम् । द्वित्वादिपर्याप्तौ च द्रव्यत्वादिपर्याप्त्यवच्छेदकैकमात्रवृत्तिधर्मावच्छिन्नानुयोगिताकत्वविरहान्न तेन सम्बन्धेन द्वित्वादेर्द्रव्यत्वादिरूपप्रत्येकपर्याप्तधर्मव्यापकतापत्तिः । हेतुमद्वृत्तियत्किञ्चिद्धर्मावच्छिन्नानुयोगिताकत्वनिवेशे इमे वह्न्यास्त्रित्वादित्यादौ पर्याप्तिसम्बन्धेन हेतुसाध्यभावेऽव्याप्तिः हेतुमदेकमात्रवृत्तिधर्मावच्छिन्नानुयोगिताकत्वस्य वह्नुत्वादिपर्याप्तावसत्त्वेन तादृशसाध्याभावे निरुक्तप्रतियोगिवैयधिकरण्यस्य दुर्वारत्वात् अतो हेतुपर्याप्त्यवच्छेदकयत्किञ्चिद्धर्मनिवेश इति । तन्न मनोरमम् । एतादृशरीत्या उक्तकल्पपरिष्कारेऽपि प्रतियोगिमद्भेदे हेतुपर्याप्त्यवच्छेदकावच्छिन्नानुयोगिताकत्वस्याऽप्रमकल्पे विवक्षणे आकाश आकाशघटोभयत्वादित्यादौ अतिव्याप्तेर्दुर्वारत्वात् आकाशत्वाद्यवच्छिन्नभेदस्य दर्शितहेतुपर्याप्त्यवच्छेदकतदुभयवृत्तिधर्मावच्छिन्ने ऽसत्त्वात्, प्रतियोगिवृत्तिधर्मस्य भेदाधिकरणतानवच्छेदकत्वात् । न च व्यासज्यवृत्तिधर्मसाध्यके ईदृशी रीतिरुपादेया नाऽन्यत्रेति वाच्यम् । आकाशत्वादेराकाशघटादौ व्यासज्यवृत्तित्वभ्रमदशायां तदवच्छिन्नभेदस्य प्रत्येकं हेत्वधिकरणवृत्तित्वग्रहेऽपि आकाशघटोभयत्वादिहेतुना आकाशत्वाद्यनुमित्युत्पत्त्या तन्निर्वाहाय तत्राऽपि साधनपर्याप्त्यवच्छेदकावच्छिन्नाधिकरणताकप्रतियोगिमद्भेदघटितव्याप्तिज्ञानहेतुताया वाच्यतया तत्राप्यनुमित्यौपयिकव्याप्तिप्रसिद्ध्यापत्तेः तस्माद्द्वित्वादिसाध्यकद्रव्यत्वाकाशत्वादिकं सद्धेतुरेव । इमे वह्नयस्त्रित्वादित्यादावव्याप्तिवारणाय च पर्याप्त्यतिरिक्तस्वरूपसम्बन्धेन प्रतियोग्यधिकरणत्वावच्छिन्नस्य भेद एव हेतुमति निवेशनीयो न तु प्रतियोग्यवच्छिन्नभेदः प्रतियोगिमद्वृत्तिधर्मवत्त्वं वा तेन

प्रत्येकवृत्तित्वघुत्वाद्यवच्छिन्नभेदमादाय न तदभावस्य प्रतियोगिवैयधिकरण्यमित्येव सारम् ।

इदं तु बोध्यम् । साध्यतावच्छेदकावच्छिन्नाभावनिरूपितत्वविशिष्टसाध्यवन्निष्ठाधिकरणताभिन्नहेतुमन्निष्ठाधिकरणताकत्वमेव प्रतियोगिव्यधिकरणहेतुसमानाधिकरणेति प्रतीकार्थः । महाकालो घटवान् महाकालत्वादौ च नैतादृशविशेषणाक्रान्ताभावाप्रसिद्धिः कालिकसम्बन्धावच्छिन्नपटाद्यभावस्यैव तथात्वात् । हेतुमन्निष्ठतदधिकरणतायाः साध्याभावाधिकरणताभिन्नत्वसत्त्वेन विशिष्टभेदसत्त्वात् इत्युभयाभावघटितप्रतियोगिवैयधिकरण्यानुधावनं दीधितिकृतामफलमेव । एवं च प्रतियोगिवैयधिकरण्यस्य यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत इत्यादिक्रमेण निर्वचने ऽननुगमात् तत्तत्प्रतियोगितावच्छेदकत्वाभावकूटनिवेशने व्याप्तेर्दुर्वचतेति दूषणान्तरमनवकाशमिति दिक् ॥

ननु गगनादेरपि कालिकसम्बन्धेन कालवृत्तित्वमावश्यकम्, अन्यथा तेषां परमार्थसत्त्वानुपपत्तिस्तस्य कालवृत्तित्वरूपत्वात् एवं कारणत्वानुपपत्तिश्च तस्य पूर्वकालवृत्तित्वघटितत्वात् अवृत्तित्वप्रवादश्च तत्र कालिकातिरिक्तसम्बन्धेना ऽवृत्तित्वपरः । इत्थं च कालिकसम्बन्धसामान्ये गगनादिप्रतियोगिकत्वमहाकालानुयोगिकत्वोभयाभावोऽपि दुर्लभ इति तदभावेऽपि प्रतियोगिवैयधिकरण्यं दुर्घटम् । एवं स्वरूपसम्बन्धेन गगनादेरवृत्तित्वपक्षेऽपि विषयितया घटादिसाध्यके नित्यज्ञानत्वादिहेतावव्याप्तिः, विषयितासम्बन्धेन पदार्थमात्रस्यैव हेत्वधिकरणनित्यज्ञानसम्बद्धत्वात् तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरित्यालोच्य कल्पान्तरमाह—स्वरूपेत्यादिना ।

अत्र केचित् । साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्यत्किञ्चिदनुयोगिकत्वसाध्यप्रतियोगिकत्वैतत्त्रित्वावच्छिन्नाभावस्य विवक्षणान्न विषयितासम्बन्धेन घटादिसाध्यके नित्यज्ञानत्वादिहेतावव्याप्तिः, पटाद्यभावस्यैव तेन सम्बन्धेन प्रतियोगिव्यधिकरणत्वात् । घटपटविषयित्वयोर्भिन्नत्वेन विषयितासम्बन्धसामान्ये तादृशत्रित्वावच्छिन्नाभावस्य सत्त्वात् । न चैतत्त्रित्वावच्छिन्नाभावनिवेशे स्व-

रूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वेऽपि न घटादिसाध्यककालत्वादिहेतावव्याप्तिः, प्रतियोगिभेदेन कालिकसम्बन्धस्यापि विभिन्नतया गगनाद्यभावस्यैव तादृशप्रतियोगिव्यधिकरणत्वादिति वाच्यम् । कालिकसम्बन्धेन प्रमेयसामान्यसाध्यकस्थले ऽव्याप्तेः, तत्र सर्वस्यैव साध्यतया कालिकसम्बन्धसामान्ये एव साध्यप्रतियोगिकत्वसत्त्वेनोपदर्शितत्रित्वावच्छिन्नाभावस्याऽसत्त्वात् । प्रमेयसामान्यस्य व्याप्यवृत्तित्वेऽपि तस्या ऽव्याप्यवृत्तित्वभ्रमदशायामनुमित्युपपत्त्यर्थं तत्र प्रतियोगिव्यधिकरणत्वघटितव्याप्त्युपपादनस्यावश्यकत्वात् । एतत्क्षणवृत्तित्वविशिष्टप्रमेयसामान्यसाध्यकमहाकालत्वादिहेतोरव्याप्यवृत्तिसाध्यकत्वेन तत्राव्याप्तेश्च । न च तथाऽपि विषयितासम्बन्धेन प्रमेयसामान्यसाध्यके नित्यज्ञानत्वादिहेतावव्याप्तेः सम्भवात्कथं त्वदुक्तिसङ्गतिरिति वाच्यम् । साध्यप्रतियोगिकत्वेत्यनेन साध्यतावच्छेदकविशिष्टप्रतियोगिकत्वस्य विवक्षणात् प्रमेयत्वविशिष्टघटविषयितातो घटत्वविशिष्टघटविषयिताया भिन्नत्वेन घटाद्यभावस्य प्रतियोगिव्यधिकरणत्वात् । न चेश्वरज्ञानीयप्रमेयत्वविशिष्टघटविषयितायां तादृशत्रित्वावच्छिन्नस्य सत्त्वेन कथं तत्र घटाद्यभावस्य प्रतियोगिवैयधिकरण्यमिति वाच्यम् । निरुक्तप्रतियोगिप्रतियोगिकत्वेत्यनेन यदभावीयप्रतियोगितावच्छेदकपर्याप्तप्रतियोगितावच्छेदकताकत्वस्य विवक्षणादीश्वरज्ञानीयतादृशविषयितायां प्रमेयत्वस्याऽपि निरूपकतावच्छेदकत्वेन घटत्वपर्याप्तप्रतियोगितावच्छेदकताकत्वाभावेन घटाद्यभावस्य प्रतियोगिव्यधिकरणत्वात् । इत्थं च स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे कालिकसम्बन्धेन घटादिसाध्यकस्थले ऽप्यव्याप्तिः सम्भवति. प्रमेयत्वादिविशिष्टघटनिरूपितकालिकविशेषणतातो घटत्वविशिष्टघटनिरूपितकालिकविशेषणताया अभिन्नत्वेन कालिकसम्बन्धसामान्ये घटत्वपर्याप्तावच्छेदकताकत्वाभावेन घटाद्यभावस्यापि प्रतियोगिव्यधिकरणतया तत्प्रतियोगितावच्छेदकत्वस्य घटत्वे सत्त्वात् इदानीं प्रमेयघटः इदानीं घट इत्यादिप्रत्ययानामेकेनैव कालिकविशेषणत्वेनोपपत्तेर्निरूपकतावच्छेदकभेदेन तादृशसम्बन्धभेदस्या ऽनभ्युपगमादतः कल्पान्तरमनुसरति–स्वरूपसम्बन्धेनेतीत्याहुः । तदसत् । तथा

सति स्वरूपसम्बन्धेन गगनादेरवृत्तित्वेऽपि विषयितासम्बन्धेन घटादिसाध्यके प्रमेयत्वविशिष्टघटादिमात्रविषयकज्ञानमात्रवृत्तिहेतावतिव्याप्तेः। स्वरूपसम्बन्धेन गगनादेरवृत्तित्वेऽपि नित्यज्ञानीयप्रमेयत्वादिविशिष्टघटादिनिरूपितविषयितातो नित्यज्ञानीयघटत्वविशिष्टनिरूपितविषयिताया अभिन्नत्वेऽपि क्षतिविरहेण विषयितासम्बन्धेन घटादिसाध्यके ईश्वरज्ञानमात्रवृत्तिहेतावव्याप्तेर्दुर्वारत्वाच्च।

एतेन साध्यतावच्छेदकविशिष्टप्रतियोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तोभयाभावस्य विवक्षणान्न घटवान्नित्यज्ञानत्वादित्यादावव्याप्तिः, तत्र घटत्वविशिष्टनिरूपितविषयितासामान्ये पटप्रतियोगिकत्वाभावेन पटाभावस्यापि प्रतियोगिव्यधिकरणत्वात्। स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु घटवान्महाकालत्वादित्यादावुक्तक्रमेण पर्याप्तिनिवेशस्याऽऽवश्यकतया घटाभावस्याऽपि प्रतियोगिव्यधिकरणतया ऽव्याप्तिरतः कल्पान्तरानुसरणमित्यपि परास्तम्। उक्तस्थले साध्यनिरूपितविषयितासम्बन्धसामान्यान्तर्गतप्रमेयत्वविशिष्टघटनिरूपितविषयितायां घटत्वपर्याप्तावच्छेदकताकत्वाभावेन शुद्धघटत्वविशिष्टनिरूपितविषयितायां च हेत्वधिकरणानुयोगिकत्वाभावेन साध्यनिरूपितविषयितासामान्ये उभयाभावस्य सत्त्वादव्याप्तेः। तस्मात्प्राचीनमते वृत्त्यनियामकविषयितादिसम्बन्धेन व्याप्त्यनभ्युपगमादुक्तस्थले ऽव्याप्त्यसम्भवात्। कालिकसम्बन्धेन गगनादेरवृत्तित्वे तु घटवान् महाकालत्वादित्यादावव्याप्तिरतः कल्पान्तरमनुसरति॥

(दी०) स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम्। समवायसम्बन्धेन प्रमेयसामान्याभावस्य सामान्यादौ सत्त्वात्प्रमेयत्वादेरप्यभावप्रतियोगितावच्छेदकत्वं सुलभम्।

(गा०) स्वरूपसम्बन्धेन—कालिकविशेषणतासम्बन्धेन। निरुक्तप्रतियोग्यनधिकरणेति। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छे-

दकावच्छिन्नानधिकरणेत्यर्थः । एवं च स्वावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववत्तादृशप्रतियोगितासामान्यको यो धर्मस्तदवच्छिन्नसामानाधिकरण्यं तद्धर्मावच्छिन्नविधेयकानुमित्यौपयिकी व्याप्तिरिति पर्यवसितम् । घटवान्महाकालत्वादित्यादौ समवायादिना घटाद्यभावीयप्रतियोगितैव प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिरूपिका प्रसिद्धा, तादृशप्रतियोगितासामान्ये कालिकसम्बन्धावच्छिन्नत्वाभावादेव निरुक्तोभयाभाववत्त्वमक्षतमिति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ संयोगादिना घटाद्यभावप्रतियोगितायां समवायादिना धूमाद्यभावप्रतियोगितायां च धूमत्वाद्यवच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वेऽपि साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नाभावप्रतियोगितायां अपि निरुक्तप्रतियोगितासामान्यान्तर्गतत्वेन तत्रोभयाभावासत्त्वान्नातिव्याप्तिः । धूमादिसमानाधिकरणस्य समवायादिना वह्न्याद्यभावस्य संयोगादिना घटाद्यभावस्य च प्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वतादृशसम्बन्धावच्छिन्नत्वयोरेकैकस्य सत्त्वेऽप्येकैकाभावेन द्वित्वावच्छिन्नाभावसत्त्वाल्लक्षणसमन्वयः ।

यद्यपि तादृशाभावीयसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमात्रस्याऽभावनिवेशेऽपि सामञ्जस्यम् । इदं वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वावच्छिन्नभेदादिप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य विरहमादाय, प्रमेयसामान्यसाध्यके संयोगेन जन्यत्वविशिष्टघटादिहेतौ साध्यतावच्छेदकावच्छिन्नभेदस्य संयोगसमवायकालिकविशेषणतासम्बन्धावच्छिन्नतदवच्छिन्नाभावस्य च हेतुमत्यसम्भवेऽपि विषयितासम्बन्धावच्छिन्नतदवच्छिन्नाभावस्य, ज्ञानमात्रवृत्तिहेतौ च संयोगसम्बन्धावच्छिन्नतदवच्छिन्नाभावस्य तद्वृत्तिप्रसिद्ध्या तदीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायामुक्तसम्बन्धावच्छिन्नत्वस्य विरहमादाय लक्षणसमन्वयसम्भवः । तथाऽपि हेतुमति सर्वैरेव सम्बन्धैः साध्यं वर्तते न तु कस्यामपि तादृशाभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वमिति भ्रमदशायामप्यनुमितेरानुभविकतया तदानीं साध्यतावच्छेदकावच्छिन्नत्वेन तादृशाभा-

सति स्वरूपसम्बन्धेन गगनादेरवृत्तित्वेऽपि विषयितासम्बन्धेन घटादिसाध्यके प्रमेयत्वविशिष्टघटादिमात्रविषयकज्ञानमात्रवृत्तिहेतावतिव्याप्तेः। स्वरूपसम्बन्धेन गगनादेरवृत्तित्वेऽपि नित्यज्ञानीयप्रमेयत्वाद्विशिष्टघटनिरूपितविषयितातो नित्यज्ञानीयघटत्वविशिष्टनिरूपितविषयिताया अभिन्नत्वेऽपि क्षतिविरहेण विषयितासम्बन्धेन घटादिसाध्यके ईश्वरज्ञानमात्रवृत्तिहेतावव्याप्तेर्दुर्वारत्वाच्च।

एतेन साध्यतावच्छेदकविशिष्टप्रतियोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तोभयाभावस्य विवक्षणात्र घटवान्नित्यज्ञानत्वादित्यादावव्याप्तिः, तत्र घटत्वविशिष्टनिरूपितविषयितासामान्ये पटप्रतियोगिकत्वाभावेन पटाभावस्यापि प्रतियोगिव्यधिकरणत्वात्। स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु घटवान्महाकालत्वादित्यादावुक्तक्रमेण पर्याप्तिनिवेशस्याऽऽवश्यकतया घटाभावस्याऽपि प्रतियोगिव्यधिकरणतया ऽव्याप्तिरतः कल्पान्तरानुसरणमित्यपि परास्तम्। उक्तस्थले साध्यनिरूपितविषयितासम्बन्धसामान्यान्तर्गतप्रमेयत्वविशिष्टघटनिरूपितविषयितायां घटत्वपर्याप्तावच्छेदकताकत्वाभावेन शुद्धघटत्वविशिष्टनिरूपितविषयितायां च हेत्वधिकरणानुयोगिकत्वाभावेन साध्यनिरूपितविषयितासामान्ये उभयाभावस्य सत्त्वादव्याप्तेः। तस्मात्प्राचीनमते वृत्त्यनियामकविषयितादिसम्बन्धेन व्याप्त्यनभ्युपगमादुक्तस्थले ऽव्याप्त्यसम्भवात्। कालिकसम्बन्धेन गगनादेरवृत्तित्वे तु घटवान् महाकालत्वादित्यादावव्याप्तिरतः कल्पान्तरमनुसरति॥

(दी०) स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम्। समवायसम्बन्धेन प्रमेयसामान्याभावस्य सामान्यादौ सत्त्वान्मेयत्वादेरप्यभावप्रतियोगितावच्छेदकत्वं सुलभम्।

(गा०) स्वरूपसम्बन्धेन-कालिकविशेषणतासम्बन्धेन। निरुक्तप्रतियोग्यनधिकरणेति। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छे-

दकावच्छिन्नानधिकरणेत्यर्थः । एवं च स्वावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववत्तादृशप्रतियोगितासामान्यको यो धर्मस्तदवच्छिन्नसामानाधिकरण्यं तद्धर्मावच्छिन्नविधेयकानुमितौपयिकी व्याप्तिरिति पर्यवसितम् । घटवान्महाकालत्वादित्यादौ समवायादिना घटाद्यभावीयप्रतियोगितैव प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिरूपिका प्रसिद्धा, तादृशप्रतियोगितासामान्ये कालिकसम्बन्धावच्छिन्नत्वाभावादेव निरुक्तोभयाभाववत्त्वमक्षतमिति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ संयोगादिना घटाद्यभावप्रतियोगितायां समवायादिना धूमाद्यभावप्रतियोगितायां च धूमत्वाद्यवच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वेऽपि साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नाभावप्रतियोगिताया अपि निरुक्तप्रतियोगितासामान्यान्तर्गतत्वेन तत्रोभयाभावासत्त्वान्नातिव्याप्तिः । धूमादिसमानाधिकरणस्य समवायादिना वह्न्याद्यभावस्य संयोगादिना घटाद्यभावस्य च प्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वतादृशसम्बन्धावच्छिन्नत्वयोरेकैकस्य सत्त्वेऽप्येकैकाभावेन द्वित्वावच्छिन्नाभावसत्त्वाल्लक्षणसमन्वयः ।

यद्यपि तादृशाभावीयसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमात्रस्याऽभावनिवेशेऽपि सामञ्जस्यम् । इदं वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वावच्छिन्नभेदादिप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य विरहमादाय, प्रमेयसामान्यसाध्यके संयोगेन जन्यत्वविशिष्टघटादिहेतौ साध्यतावच्छेदकावच्छिन्नभेदस्य संयोगसमवायकालिकविशेषणतासम्बन्धावच्छिन्नतदवच्छिन्नाभावस्य च हेतुमत्यसम्भवेऽपि विषयितासम्बन्धावच्छिन्नतदवच्छिन्नाभावस्य, ज्ञानमात्रवृत्तिहेतौ च संयोगसम्बन्धावच्छिन्नतदवच्छिन्नाभावस्य तद्वत्तिप्रसिद्ध्या तदीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायामुक्तसम्बन्धावच्छिन्नत्वस्य विरहमादाय लक्षणसमन्वयसम्भवः । तथाऽपि हेतुमति सर्वैरेव सम्बन्धैः साध्यं वर्तते न तु कस्यामपि तादृशाभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वमिति भ्रमदशायामप्यनुमितेरानुभविकतया तदानीं साध्यतावच्छेदकावच्छिन्नत्वेन तादृशाभा-

वप्रतियोगित्वज्ञानासम्भवाद्वह्निशोषितप्रतियोगिताधर्मिकसम्बन्धवि-शेषावच्छिन्नत्वाभावज्ञानस्याऽनुमितिहेतुता न सम्भवतीत्युभयाभावानुसरणम् ।

वस्तुतस्तु अभावज्ञानज्ञानस्यान्यतमधान्योगिज्ञानत्वादित्यादाव-व्याप्तिर्बोध्या । तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावी-यसाध्यतावच्छेदकावच्छिन्नप्रतियोगित्वाप्रसिद्धेः । एवं निरुक्तप्रति-योग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्न-प्रतियोगितासामान्ये निरुक्तधर्मावच्छिन्नत्वाभावनिवेशे कालो घट-वानित्यादावव्याप्तेरपरिहारो बोध्य इति ।

प्रमेयत्वाद्यवच्छिन्नसाध्यकस्थले साध्यतावच्छेदकावच्छि-न्नाभावाप्रसिद्ध्या तदवच्छिन्नत्वमप्यप्रसिद्धमिति शङ्कां परिहरति । समवायेनेति । यद्यपि विषयताद्वावपि तदवच्छिन्नत्वमप्रसिद्धस-म्भवस्तथाऽपि विषयतादिनिष्ठायास्तत्प्रकारकत्वादिरूपतदवच्छे-द्यतायाः प्रतियोगितानिष्ठाया अन्यूनानतिरिक्तवृत्तिगुरुधर्मनिरूपित-विलक्षणावच्छेद्यतायाश्च एकजातीयत्वस्याऽप्रामाणिकत्वेनाऽतिव्या-प्तिभयेन प्रतियोगितायां यादृशावच्छिन्नत्वं तस्यैव लक्षणे निवेशः कार्य इत्यभिप्रायेण तादृशावच्छिन्नत्वस्यैव प्रसिद्धिर्दर्शिता । अन्य-त्सर्वं स्वयमूह्यम् ।

पूर्वकल्पे दोषान्तरमपि दर्शयति । अत एवेति । पूर्वकल्पं परित्यज्यैतत्कल्पावलम्बनादेवेत्यर्थः । समवायस्योभयघटके हेतु-घटकत्वेनेति । उभयवत्त्वेपीत्यनेन द्रव्यत्वाभावे हेत्वधिकरणगुणादौ उभयाभावघटितप्रतियोगिव्यधिकरणत्वासम्भवः सूचितः । द्रव्यं जातेरित्यादाविति । नाऽतिव्याप्तिरित्यग्रिमेणाऽन्वयः । यद्यपि प्रति-योगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं प्रतियोगि-निरूपिततादृशसम्बन्धानुयोगित्वम् । अधिकरणतानिवेशे तादा-त्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तेः, तथा च समवायैक्ये गुणा-देरपि द्रव्यत्वप्रतियोगिकसमवायानुयोगिता निष्प्रत्यूहैवेत्येतत्कल्पे-ऽपि समवायेन द्रव्यत्वाभावस्य लक्षणघटकत्वानिर्वाहः तथा-ऽपि स्वप्रतियोगिप्रतियोगिकत्वविशिष्टतादृशसम्बन्धानिरूपितवि-लक्षणानुयोगिताया एव निवेशनीयतया गुणादिनिष्ठसमवाया-नुयोगितायाश्च द्रव्यत्वीयविशिष्टानिरूपितत्वेन न दोषः । वस्तुतः

स्वप्रतियोगितावच्छेदकसम्बन्धेन विशिष्टप्रतियोग्यवच्छिन्नभेदो हेतुमद्विशेषणम् । एवं च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्व-विशिष्टसम्बन्धाननुयोगिन्येव भेदाभ्युपगमात्समवायैक्यमतेऽपि समवायेन द्रव्यत्वाद्यवच्छिन्नभेदस्य गुणादावक्षतत्वाद् द्रव्यत्वाद्य-भावस्य गुणादौ समवायेन प्रतियोगिवैयधिकरण्यमव्याहतमेवेति ।

इदमत्रावधेयम् । समवायकालिकविशेषणताद्युभयसम्बन्धेन यत्र द्रव्यत्वादेः साध्यता केवलसमवायादिना द्रव्यत्वादेर्हेतुता तत्र साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गतगगनानुयोगिकसमवायादा-वुक्तोभयाभावासत्त्वेनाऽतिव्याप्तिः समवायभेदमतेऽपि दुर्वारा । साध्यतावच्छेदकसम्बन्धतावच्छेदकरूपविशिष्टनिरूपितानुयोगिता-सामान्ये निरुक्तप्रतियोगिप्रतियोगिकसम्बन्धनिरूपितत्वहेत्वधिक-रणीभूतयत्किञ्चिद्व्यक्तिनिष्ठत्वोभयाभावविवक्षणेन तादृशदोषवारणे च निरुक्तप्रतियोगिप्रतियोगिकसम्बन्धनिरूपितत्वस्थाने निरुक्त प्रतियोगिप्रतियोगिकत्वविशिष्टसम्बन्धनिरूपितत्वनिवेशेन द्रव्यं जा-तेरित्याद्यव्याप्तिः शक्यते वारयितुमिति ।

इदं त्ववधेयम् । स्वसमवायिसंयोगादिसम्बन्धेन यत्र लौहि-त्यादेः साध्यता तत्र सद्धेतावेतत्स्फटिकत्वादावुभयाभावघटित-प्रतियोगिवैयधिकरण्यनिवेशपक्षे स्फटिकाद्यनुयोगिकजपादिसंयोगे लौहित्यादिनिरूपितपरम्परासम्बन्धघटकसाक्षाल्लौहित्यप्रतियोगिक-त्वाभावेन हेतुमन्निष्ठसाध्याभावे प्रतियोगिवैयधिकरण्यं दुर्वारम् । साक्षात्परम्परासम्बन्धघटकसाधारणं तत्प्रतियोगिकत्वं चानुगतं दुर्वचम् । तादृशस्य तस्य निवेशेऽयोगोलकाद्यनुयोगिकवह्निसंयो-गादेरपि धूमादेः परम्परासम्बन्धघटकत्वसम्भवेन धूमादिप्रतियो-गिकतया तन्निष्ठधूमाद्यभावेऽपि प्रतियोगिवैयधिकरण्यानुपपत्तेः । न च तादृशसंयोगे संयोगत्वपुरस्कारेण साक्षाल्लौहित्यप्रतियोगिकत्व-विरहेऽपि साध्यतावच्छेदकसम्बन्धतावच्छेदकस्वसमवायिसंयो-गत्वपुरस्कारेण तत्प्रतियोगिकत्वं स्वीक्रियते इति वाच्यम् । माना-भावात्, समवायस्य तत्प्रतियोगिकतयैव तद्घटितपरम्परायाः सम्बन्धतोपपत्तेः । किञ्चिद्रूपेणाऽपि संयोगादेर्लौहित्यादिप्रतियो-गिकत्वे संयोगादिना किञ्चित्समवायिनिरूपितत्वविशिष्टसंयोगा-दिना वा साक्षात्सम्बन्धात्मकेन स्फटिकादौ लौहित्यादिबुद्धेर्भ्र-

सत्त्वानुपपत्तेश्च । यादृशसम्बन्धे यत्प्रकारप्रतियोगिकत्वयद्विशेष्याऽनुयोगिकत्वोभयाभावस्तादृशसम्बन्धेन तत्प्रकारकतद्विशेष्यकज्ञानं भ्रम इति तल्लक्षणात् । स्वसमवायिसंयोगे चोभयसत्त्वेनोभयाभावासत्त्वात् । न च सम्बन्धभेदेन व्यापकताभेदात्स्वसमवायिसंयोगादिरूपपरम्परासम्बन्धेन यत्र साध्यता तत्र परम्पराघटकविशेष्यांशे स्वप्रतियोगिप्रतियोगिकत्वमुपेक्ष्य स्वप्रतियोगिप्रतियोगिकपरम्पराघटकविशेषणसमवायादिमत्प्रतियोगिकत्वस्यैवाऽभावो निवेशनीयः । परम्पराभिन्नस्थलेऽपि ईश्वरशरीरयोरपीति नानुपपत्तिरिति वाच्यम् । यत्र कालिकसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन घटादिकं साध्यं महाकालवृत्तित्वादिकं हेतुस्तत्र कालिकसम्बन्धेन गगनादेरवृत्तित्वपक्षे प्रतियोग्यव्यधिकरणाभावाप्रसिद्धेर्दुर्वारत्वात् । गगनादिनिरूपितस्य तादृशसामानाधिकरण्यरूपपरम्परासम्बन्धघटकविशेषणांशस्य कालिकसम्बन्धस्याऽप्रसिद्धेः । विशेषणीभूतसम्बन्धं विशिष्यानिवेश्य निरुक्तप्रतियोगिप्रतियोगिकसम्बन्धत्वेन सम्बन्धं निवेश्य तद्वत्प्रतियोगिकत्वनिवेशे कालिकविशेषणतावत्समवेतत्वरूपपरम्परासम्बन्धेन द्रव्यत्वादिसाध्यके द्रव्यवृत्तित्वादिहेतावतिव्याप्तिः, तत्र साध्यतावच्छेदकपरम्परासम्बन्धघटकविशेष्यीभूतसमवेतत्वांशे व्यभिचारनिरूपकाधिकरणशब्दज्ञानाद्यनुयोगिकत्वद्रव्यत्वप्रतियोगिकसम्बन्धत्वावच्छिन्नद्रव्यत्वसमवायप्रतियोगिकत्वोभयसत्त्वेन द्रव्यत्वाभावासद्भावात् । हेत्वधिकरणानुयोगिकविशेष्यीभूतसम्बन्धप्रतियोग्यनुयोगिकत्वनिरुक्तप्रतियोगिप्रतियोगिकत्वोभयाभावस्य परम्परासम्बन्धघटकविशेषणांशे निवेशे स्वसमवायिसमवेतत्वसम्बन्धेन जातिसाध्यकमेयत्वादिहेतावतिव्याप्तिः, तत्र तादृशसम्बन्धघटकविशेषणांशे तादृशसम्बन्धेन साध्याधिकरणहेत्वधिकरणव्यक्त्यनुयोगिकविशेष्यीभूतसम्बन्धप्रतियोग्यनुयोगिकत्वनिरुक्तप्रतियोगिकत्वोभयसत्त्वात् । व्यभिचारनिरूपकाधिकरणहेत्वधिकरणानुयोगिकविशेष्यीभूतसम्बन्धाप्रसिद्धेः साध्याभावस्य लक्षणाघटकत्वेनाभावान्तरस्यैव लक्षणघटकत्वात् । न च परम्परासम्बन्धघटकविशेष्यांशे हेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वपरम्पराघटकविशेषणीभूतसम्बन्धवन्निरूपितत्वनिरुक्तप्रतियोगिप्रतियोगिकसम्बन्धवन्निरूपितत्वानां प्र-

यत्र साध्यता तत्र परम्परापर्याप्तावच्छेदकताकत्वरूपं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम्, उक्तस्थले वाधिकरणविशेषणीभूतसमवायस्य प्रतियोगितावच्छेदकतायामेवावच्छेदकतया प्रतियोगितायां तदन्तर्भावेण पर्याप्तावच्छेदकताकत्वाभावादिति दिक्।

अथैतल्लक्षणे विषयितादिवृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः, तादृशसम्बन्धस्य वृत्त्यनियामकतयाऽभावप्रतियोगितानवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नत्वस्याप्रसिद्धत्वात्। न च तादृशसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेऽपि प्रतियोगितावच्छेदकतायामेव तत्सम्बन्धावच्छिन्नत्वप्रसिद्धिः प्रतियोगित्वतदवच्छेदकत्वनिष्ठावच्छेद्यत्वयोर्भिन्नत्वेऽपि एकजातीयतया तादृशानुगतरूपेण निवेशादिति वाच्यम्। तथा सति तादृशसम्बन्धेन साध्यतायां व्यभिचारिण्यतिव्याप्तिः प्रतियोग्यधिकरणहेतुमन्निष्ठाभावीयान्यसम्बन्धावच्छिन्नप्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वाभावेन तत्सम्बन्धावच्छिन्नप्रतियोगित्वस्य चाऽप्रसिद्धत्वेन तादृशप्रतियोगितासामान्ये तदुभयाभावस्याऽक्षतत्वात्। मैवम्। वृत्त्यनियामकसम्बन्धेन व्यापकतास्वीकारे तादृशसम्बन्धस्याऽभावप्रतियोगितानवच्छेदकत्वे प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकानधिकरणकाभावप्रतियोगितावच्छेदकतासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वतादृशरूपावच्छिन्नत्वोभयाभावस्यैव विवक्षणीयतया सामञ्जस्यात्। तथा हि विषयितासम्बन्धेन साध्यतायां सद्धेतौ तत्सम्बन्धावच्छिन्नावच्छेदकताकसाध्यवदभावो न प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकानधिकरणहेत्वधिकरणक, अतोऽन्यसम्बन्धेन साध्यादिमदभावः तत्सम्बन्धेनान्यावच्छिन्नाभावो वा तादृश इति तत्प्रतियोगितावच्छेदकतायामुभयाभावसत्त्वाल्लक्षणसमन्वयः। तत्सम्बन्धावच्छिन्नसाध्यके व्यभिचारिण्यपि तादृशसम्बन्धेन साध्यवदभावोऽपि तादृश इति तत्प्रतियोगितावच्छेदकतायामुभयसत्त्वेन नातिव्याप्तिः। वह्निमान् धूमादित्यादौ संयोगादिना घटादिमदभावः समवायादिना वह्न्यादिमदभावश्च लक्षणघटकः। तत्प्रतियोगितावच्छेदकतायामुभयाभावस-

त्वाल्लक्षणसमन्वयः । धूमवान्वह्नेरित्यादौ साध्यतावच्छेदकसम्बन्धेन साध्यवतोऽभाव एव तादृश इति तत्प्रतियोगितावच्छेदकतायामुभयस्यैव सत्त्वान्नातिव्याप्तिरिति ।

(दी०) अत एव समवायस्यैकत्वेन द्रव्यत्वप्रतियोगिकत्वगुणाद्यनुयोगिकत्वोभयसत्त्वेऽपि द्रव्यं जातेरित्यादौ, वह्निधूमोभयवान्वह्नेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि च नाऽतिव्याप्तिरित्यपि वदन्ति ॥

(गा०) संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि वह्निधूमोभयवान् वह्नेरित्यादौ नातिव्याप्तिरिति योजना । अयं भावः । प्रत्येकं संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेण वह्निधूमोभयवान् धूमादित्यत्र संयोगसम्बन्धसामान्ये वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणानुयोगिकत्वोभयाभाववत्त्वात्तादृशोभयत्वावच्छिन्नाभावोऽपि संयोगेन प्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणतया लक्षणघटक इत्यव्याप्तिः स्यादतः संयोगेनोभयसाध्यकस्थले प्रतियोगितावच्छेदकावच्छिन्नत्वं परित्यज्य प्रतियोगिताश्रयप्रतियोगिकत्वमेव निवेशनीयं तथा च वह्निधूमोभयवान्वह्नेरित्यादावपि वह्निधूमोभयत्वावच्छिन्नाभावस्य लक्षणाघटकतया पूर्वकल्पेऽतिव्याप्तिः स्यादिति ।

अथ साध्यतावच्छेदकभेदेन चेद्व्याप्तिपदार्थभेदस्तदैव प्रतियोगितावच्छेदकावच्छिन्नत्वपरित्यागः स्थलविशेषे सम्भवति तथा च साधनभेदेनापि तुल्ययुक्त्या तद्द्वाराद्धूमरूपहेतुकवह्निधूमोभयात्मकसाध्यघटितव्याप्तिपदार्थप्रसिद्धिनिर्वाहाय तच्छरीरे प्रतियोगिताश्रयवैयधिकरण्यनिवेशनस्य वह्निहेतुके तदुभयसाध्यकस्थले कथमतिव्याप्तिप्रसञ्जकत्वमिति चेत् ? यथा संयोगसामान्ये द्वित्वावच्छिन्नप्रतियोगिकत्वाभावनिश्चयदशायामपि धूमेन वह्निधूमोभयानुमितिर्भवतीति प्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावविषयकज्ञानं धूमलिङ्गकतादृशोभयानुमितिजनकमङ्गीक्रियते, तथा तादृशनिश्चयदशायां सकलवह्निमतामेव धूमवत्त्वमिति भ्रान्तानां वह्निहेतुकतदुभयानुमितिरप्यनुभवसिद्धा । तत्राऽपि प्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावविषयकज्ञानमेवाऽनुमितिजनकं वा-

च्यम्, तथा च तद्धेतुकतत्साध्यकानुमितिजनकज्ञानस्य प्रमात्वप्रसङ्ग इत्येवातिव्याप्त्यर्थः। एवं यथा वह्निधूमोभयत्वेन उभयं धूमव्यापकमिति वाक्याद्यथोक्तनिश्चयदशायां शाब्दबोधो जायते, तथा वह्निधूमोभयत्वेनोभयं वह्निव्यापकमित्यनाप्तोक्तवाक्यादपि योग्यताभ्रमाच्छाब्दबोधः सर्वानुभवसिद्ध इति प्रतियोगिताश्रयप्रतियोगिकत्वमेव तत्र शाब्दधीविषयः स्वीकरणीयः। तथा च तद्विषयधियः प्रमात्वेन तादृशवाक्यस्य प्रमाणतापत्तिरित्यपीति। वह्निरित्यत्र धूमादिति नातिव्याप्तिरित्यनन्तरमव्याप्तिश्चेति पाठं केचित्कल्पयन्ति, यथासङ्ख्येन च स्थलद्वयेऽतिव्याप्त्यव्याप्ती योजयन्ति।

इदमत्रावधेयम्। घटद्वयवद्भूतलमित्यादौ द्वित्वोपलक्षितघटादिवैशिष्ट्यं तद्विशिष्टवैशिष्ट्यं वा भासते। आद्ये एकघटादिमत्यपि तत्प्रसङ्गः। न च द्वित्वोपलक्षितस्यापि व्यक्तिद्वयस्यैव वैशिष्ट्यद्वयं तत्र भासते इति नातिप्रसङ्ग इति वाच्यम्। एकस्मिन्नपि भेदभ्रमेण द्वित्वभ्रमात्तत्प्रकारकप्रतीतावुभयभानानियमात्। तादृशबुद्धेर्द्वित्वविशिष्टाभावज्ञानविरोधितानुपपत्तिश्च विशिष्टवैशिष्ट्यज्ञानस्यैव विशिष्टाभावबुद्धिविरोधित्वात्। द्वितीये संयोगसंसर्गकतादृशज्ञानमात्रस्यैव भ्रमत्वापत्तिः, संयोगरूपवैशिष्ट्ये द्वित्वादिविशिष्टप्रतियोगिकत्वस्य बाधात्। तस्माद्द्वित्वादिविशिष्टप्रतीतौ संयोगमात्रं न सम्बन्धोऽपि तु द्वित्वावच्छिन्ननिरूपिता संयोगावच्छिन्नाधिकरणतैव। अधिकरणता च पदार्थान्तरं अधिकरणस्वरूपा वा उभयथैव निरूपकभेदेऽपि निरूपकतावच्छेदकद्वित्वस्यैकत्वादैक्यमिति संयोगप्रतियोगितावच्छेदकत्ववत्तत्प्रतियोगितावच्छेदकताया द्वित्वेऽनुपपत्तिरित्युपेयम्। एवं च वह्निधूमोभयत्वावच्छिन्नसाध्यके संयोगावच्छिन्नाधिकरणताया एव साध्यतावच्छेदकसम्बन्धत्वात्तत्र चोभयत्वावच्छिन्नप्रतियोगिताकत्वसत्त्वान्नातिव्याप्तिप्रसक्तिः। अन्यथा द्वितीयकल्पेऽपि प्रतियोगितावच्छेदकावच्छिन्ननिरूपितप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वनिवेशादुभयत्वावच्छिन्नप्रतियोगिकसंयोगाप्रसिद्ध्या संयोगेनोभयत्वावच्छिन्नसाध्यके व्यभिचारिणि तत्सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताया लक्षणाघटकत्वेनाऽतिव्याप्तेर्वज्रलेपत्वात्।

वस्तुतस्तु पर्वतो वह्निमानित्यादावपि संयोगावच्छिन्नाधिकरणतैव सम्बन्धो न तु संयोगमात्रम् । अन्यथा पर्वतो वह्निमानित्यत्रेव पर्वते वह्निरित्यत्रापि संयोगमात्रस्यैव तथात्वापत्त्या अविशेषप्रसङ्गात् । तादृशप्रतीत्योर्विशेषाय प्रथमायां संयोगो द्वितीयायां तदवच्छिन्नाधेयता संसर्ग इत्युपेयते, किंवा प्रथमायां संयोगावच्छिन्नाधिकरणता द्वितीयायां संयोगस्तथेत्यत्र विनिगमकस्य दुर्लभत्वात् । न च तादृशप्रतीत्योः संसर्गांशेऽविलक्षणत्वेऽपि विशेष्यविशेषणभावभेदाद्वैलक्षण्योपपत्तिसम्भव इत्युभयथैव संयोगमात्रस्य सम्बन्धतास्त्विति वाच्यम् । तावतापि पर्वतो वह्निमान् वह्नौ पर्वत इत्यनयोः, पर्वते वह्निः पर्वतवान्वह्निरित्यनयोश्च प्रतीत्योर्विशेषानिर्वाहात् । न चैवं रूपवानित्यादावपि समवायावच्छिन्नाधारतैव सम्बन्धः स्यान्न तु समवाय उक्तयुक्तेरविशेषादिति वाच्यम् । समवायातिरिक्तायाः समवायावच्छिन्नाधारताया अनभ्युपगमात् ।

अथ समवायावच्छिन्नाधारतायाः समवायरूपत्वे समवायावच्छिन्नाधेयताऽप्यतिरिक्ता स्वीकरणीया, अन्यथा रूपवान्घटो घटे रूपमिति प्रतीत्योः संसर्गवैलक्षण्यानुपपत्तेः । तथा च समवायावच्छिन्नाधेयता आधारता वाऽतिरिक्तेत्यत्र विनिगमकं दुर्लभमिति समवायातिरिक्तसमवायावच्छिन्नाधारतासिद्धिर्निष्प्रत्यूहैवेति चेन्न । घटानुयोगिकरूपप्रतियोगिकसम्बन्धो रूपानुयोगिकघटप्रतियोगिकसम्बन्धः परस्परं विलक्षण एव, अन्यथा दर्शितस्थले संसर्गवैलक्षण्यानिर्वाहादिति सत्यम्, तत्र चाधारानुयोगिकः सम्बन्ध एव समवाय इति परिभाषितो न त्वाधेयानुयोगिकः, न त्वाधेयतैत्येव परिभाष्यते तत्र को विनिगमकानुयोगः ? न चैवं संयोगिन्यपि संयोग एवाधारताऽस्तु स चाऽनुयोगितासम्बन्धेनाऽऽधारपदप्रवृत्तिनिमित्तमिति संयोगस्य द्विष्ठत्वेऽपि नाधेये तद्व्यवहार इति वाच्यम् । संयोगीयसमवायातिरिक्ताया आधेयत्वाद्यवृत्त्यानुयोगितायाः स्वीकारे तस्या एव संयोगिनिरूपिताधारतात्वोपगमेनाऽतिरिक्ताधारताया निष्प्रत्यूहत्वात् । न चाधारतायां संयोगिप्रतियोगिकत्वं कल्पनीयमिति गौरवम् । भवन्मतेऽपि संयोगे तत्समवेतत्वातिरिक्तस्य तत्प्रतियोगिकत्वस्य कल्पनीयतया

म्बन्धेन साध्यतायां व्यभिचारिण्यतिप्रसङ्गात् । भावाभावसाधारण इति । भावेनाऽपि घटे घटत्वाभावो नास्ति घटो न घटभिन्न इति प्रतीतेर्जननादिति भावः । तदवच्छिन्ने चाभावपदस्य रूढिशक्तिः परिभाषैव वा, अतो न भावोऽभाव इत्यवयवव्युत्पत्त्या तद्धर्माप्रत्ययेऽपि न क्षतिः । स्वरूपसम्बन्धविशेष इति । अभावे तत्प्रतियोगिस्वरूपनिरूपितानुयोगित्वनामा सम्बन्धविशेष इत्यर्थः । न चा ऽभावत्वस्य स्वरूपसम्बन्धरूपत्वेऽननुगमादनुगतप्रत्ययानुपपत्तिः, तदनुगमकरूपान्तराभ्युपगमात् । पदार्थान्तरत्वेऽपि निरूपकभेदेन सम्बन्धान्तरत्वसङ्क्षेपस्याऽऽवश्यकतयाऽनुगमकरूपान्तरापेक्षणात् ।

यत्तु प्रतियोगिनिरूपितसम्बन्धानामननुगमेऽपि प्रतियोगिधर्मितावच्छेदकस्य नञ्पदप्रवृत्तिनिमित्ताखण्डधर्मान्तरस्य सत्वाद्घटो नाऽस्ति पटो नास्तीत्याद्यनुगतप्रमितिनिर्वाह इति । तन्न साधीयः । घटादौ घटाभावादेः कालिकादिसम्बन्धस्याऽपि स्वरूपतया तत्संसर्गकप्रतीतितो घटाभावो नास्तीत्याद्यनुयोगितासंसर्गकप्रतीतेर्वैलक्षण्याय संसर्गतावैलक्षण्यस्याऽऽवश्यकतया संसर्गतावच्छेदकधर्मविशेषस्वीकारस्य तन्निर्वाहकस्याऽऽवश्यकत्वात्, तेनानुगतीकृतानुयोगिताया एव संसर्गताघटर्मितावच्छेदकताया अपि सम्भवेनाऽभावनिष्ठाखण्डधर्मान्तरे मानाभावात् । नञ्पदप्रवृत्तिनिमित्ततायाअपि तस्यामेवोपगमात् ।

अथ नास्तीत्यादावनुयोगितारूपसम्बन्धविशेषप्रकारेणाऽभावभानोपगमे तदंशे एव स्वनिरूपितत्वसम्बन्धेन प्रतियोगिनः प्रकारत्वसम्भवादभावांशे तत्सम्बन्धेन प्रतियोगिनो भाने मानाभावादनुयोगितायाः सम्बन्धत्वमेव न सिध्येदिति चेन्न । मण्याद्यभावस्य दाहादिहेतुतायां मण्यादिरूपप्रतियोग्यवच्छिन्नानुयोगिताविशेषस्याऽवच्छेदकत्वापेक्षयाऽनुयोगितासम्बन्धेन मण्यादेस्तत्त्वे लाघवेन तत्सम्बन्धतासिद्धेः । न चोभयाभावादिवारणाय मणित्वाद्यवच्छिन्ननिरूपितानुयोगिता मण्यादेः सम्बन्धो वाच्यः, तथा च तादृशानुयोगितायाः स्वाश्रयतासम्बन्धेनावच्छेदकत्वेऽपि न गौरवमिति वाच्यम् । उभयत्वाद्यवच्छिन्ननिरूपितानुयोगिताया मणित्वादिविशिष्टसम्बन्धताविरहात्, शुद्धानुयोगितासम्बन्धेनैव मणित्वादिविशिष्टस्य उभयत्वाद्यवच्छिन्नाभावव्यावर्तकतासम्भवेन तादृशानु-

योगितात्वेन सम्बन्धतानुपगमात्। न च तादृशस्य विशिष्टमणित्वाद्यवच्छिन्नाभावव्यावर्तकता न सम्भवति, विशिष्टमणित्वाद्यवच्छिन्ननिरूपितानुयोगितायामप्यधिकं त्वित्यादिन्यायेन मणित्वादिविशिष्टनिरूपितत्वसत्त्वेन तस्या अपि तत्सम्बन्धत्वादिति वाच्यम्। कारणतावच्छेदकतापर्याप्त्यधिकरणपरिसमाप्तप्रतियोगिताकसम्बन्धेन एव कारणतया मणिर्नास्तीत्याकारकशुद्धमणित्वावच्छिन्नप्रकारकप्रतीत्यविषयविशेषणान्तरसहितमणित्वाद्यवच्छिन्नाभावनिष्ठतादृशमणित्वाद्यवच्छिन्ननिरूपितत्वसम्बन्धे च शुद्धमणित्वादिविशिष्टपरिसमाप्तप्रतियोगिताकत्वविरहेण तादृशाभावव्यावर्तनसम्भवात्।

एतेन विशिष्टमणित्वाद्यवच्छिन्नाभाववारणाय शुद्धमणित्वाद्यवच्छिन्नप्रतियोगिताकत्वेन हेतुता वाच्या, शुद्धमणित्वाद्यवच्छिन्नत्वं च मणित्वान्यधर्मानवच्छिन्नत्वम्, तदपि यदि तादृशधर्मावच्छेद्यत्वत्वाद्यवच्छिन्नाभावस्तदा किञ्चिद्विशिष्टतादृशावच्छेद्यत्वत्वावच्छिन्नाभावमादायातिप्रसङ्ग इति शुद्धतादृशावच्छेद्यत्वत्वावच्छिन्नाभाव एव निवेशनीयः। शुद्धतादृशावच्छेद्यत्वत्वाद्यवच्छेद्यत्वमपि तदतिरिक्तानवच्छिन्नत्वमिति विशेषणानवस्थाप्रसङ्ग इत्यपि निरस्तम्। इत्यलमप्रस्तुताधिकजल्पनया।

तदपि। तादृशाभावत्वमपि। नोपादेयम्। हेतुसामानाधिकरण्यांशे विशेषणतया न निवेशनीयम्। प्रयोजनाभावादिति। स्वावच्छेदकविशिष्टानधिकरणहेतुमन्निष्ठत्वमात्रपुरस्कारेणाभावं निवेश्य तदीयत्वेन प्रतियोगितानिवेशादेव सर्वसामञ्जस्यादिति भावः।

प्रसङ्गात्प्रतियोगित्वादीनामपि पदार्थान्तरत्वं व्यवस्थापयति। विषयतेति। तत्त्वम् विषयतात्वम्। प्राचीनैकदेशिभिर्विषयताया अतिरिक्तपदार्थत्वोपगमाद् दृष्टान्तत्वेन तदुपन्यासः। यथा विषयताया विषयरूपत्वे द्रव्यत्वावच्छिन्नघटविषयकज्ञानाद्घटत्वावच्छिन्नतद्विषयकज्ञानस्य विषयतावैलक्षण्यविरहाद्वैलक्षण्यापत्तिः। न च द्रव्यत्वघटत्वयोरपि तत्र विषयतया तद्वैलक्षण्यादेव वैलक्षण्यमिति वाच्यम्। तावताऽपि द्रव्यत्वेन घटविषयकाद्घटत्वेन च पटविषयकाज्ज्ञानाद्घटत्वेन घटं द्रव्यत्वेन पटमवगाहमानस्य ज्ञानस्य वैलक्षण्याद्युपपादनस्याशक्यत्वात्। ज्ञानस्वरूपत्वे घटपटावित्यादिसमूहालम्बनीयघटपटादिविषयतानामभिन्नतापत्त्या तादृशज्ञानस्य पट-

त्वाद्यवच्छिन्नघटादिनिष्ठविषयताशालितया भ्रमत्वापत्तिः । ज्ञानविषयोभयरूपत्वे च जातिमान् घट इत्यादिज्ञानीयघटत्वादिविषयताया द्वैविध्यानुपपत्तिः ज्ञानविषययोरविशेषादिति जातिमानित्याद्याकारकैकविधघटत्वादिविषयताशालिज्ञानात्तादृशबुद्धेर्वैलक्षण्यापत्ता न स्यादित्यादियुक्त्या विषयतायाः विषयादिभेदभिन्नविषयतानामनुगमकतया च विषयतात्वस्यातिरिक्ततासिद्धिः, तथा प्रतियोगितायाः प्रतियोगिस्वरूपत्वे घटादिनिष्ठानां घटत्वद्रव्यत्वादिरूपविभिन्नधर्मावच्छिन्नानां संयोगसमवायादिरूपविभिन्नसम्बन्धावच्छिन्नप्रतियोगितानामवैलक्षण्येनाऽभाववैलक्षण्यानुपपत्तिः । अभावस्वरूपत्वे घटाद्यभावीयघटत्वाद्यवच्छिन्नप्रतियोगित्वाकोऽविद्विशिष्टघटाभावाभावत्वाद्यवच्छिन्नप्रतियोगितानामवैलक्षण्यापत्तेः । घटत्वादेः प्रतियोगित्वन्यूनवृत्तितया तदवच्छेदकत्वानुपपत्तिः, घटाद्यभावस्य पटादिसाधारण्येन पटादेरपि तत्प्रतियोगितापत्तेश्चेत्यादियुक्त्या प्रतियोगित्वमप्यतिरिक्तं सिद्ध्यति । एवमधिकरणत्वं नाधिकरणस्वरूपमाधेयस्वरूपं वा, भूतले घटसंयोगदशायामिव परम्परासंयुक्तघटभूतलसत्त्वदशायामपीदानीं भूतलं घटवदिति प्रत्ययप्रसङ्गात् । संयोगरूपत्वे आधेयत्वस्यापि तुल्ययुक्त्या तद्रूपतया आधारत्वाधेयत्वयोरभेदप्रसङ्गेन वैपरीत्येनाधाराधेयभावप्रत्ययप्रसङ्गादिति तदप्यतिरिक्तः पदार्थः। सम्बन्धत्वमपि क्लृप्तपदार्थान्तर्भावेण दुर्वचमिति पदार्थान्तरमेवेति भावः । आदिपदादभावत्वादिपरिग्रहः ।

इदं तु बोध्यम् । अभावत्वं प्रतियोगित्वान्नातिरिच्यते तदभावत्वस्य तत्प्रतियोगित्वनियमात् । न चैवं घटादेर्घटभेदाभावत्वापत्त्या घटादिमति भूतले घटभेदो नास्तीत्यादिप्रतीत्यापत्तिरिति वाच्यम् । संसर्गावच्छिन्नप्रतियोगिताया एवाभावत्वरूपतोपगमात् । घटादिभेदस्य घटत्वाद्यत्यन्ताभावसमनियतत्वेन तदभिन्नतया घटत्वादौ तदीयसंसर्गावच्छिन्नप्रतियोगितासत्त्वात्तेनैव तदभावप्रत्यायनात् । न चैवमपि घटभेदादेर्घटाद्यभावत्वानुपपत्तिस्तद्प्रतियोगित्वादिति वाच्यम् । अत्यन्ताभावस्वात्मकानुयोगिताविशेषस्यैव प्रतियोगितानतिरिक्तत्वोपगमादिति ।

इति–अनुमानगादाधर्यां सिद्धान्तलक्षणम् ॥

## अवच्छेदकत्वनिरुक्तिप्रकरणम् ।



प्रतियोगितानवच्छेदकेत्यत्र पारिभाषिकावच्छेदकत्वं निवेशयितुमवच्छेदकपदस्य स्वरूपसम्बन्धरूपावच्छेदकत्वपरतामाक्षिपति । नन्वित्यादिना ।

(दी०) नन्ववच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः । सम्भवति लघौ धर्मे गुरौ तदभावात्, प्रमेयधूमत्वकम्बुग्रीवादिमत्त्वघ्राणग्राह्यगुणत्वादेरतथात्वेन तेन रूपेण साध्यतायां व्यभिचारिण्यतिप्रसङ्गात् । नाऽप्यनतिरिक्तवृत्तित्वम् । प्रतियोगितायाः स्वरूपसम्बन्धात्मिकायाः प्रतिव्यक्तिभिन्नत्वेन धूमत्वादेरपि तदतिरिक्तवृत्तित्वात् ।

(गा०) इह । एतल्लक्षणे, घटकत्वं सप्तम्यर्थः । तथा च घटत्वेन घटोऽभावप्रतियोगीत्यादिप्रतीतिसाक्षिको यो घटादिनिष्ठप्रतियोगितया सह घटत्वादेरवच्छेदकभावरूपः स्वरूपानतिरिक्तः पदार्थान्तरात्मको वा सम्बन्धविशेषः स इह लक्षणे न शक्यनिवेशन इत्यर्थः । स्वरूपसम्बन्धविशेषात्मकावच्छेदकत्वाभावघटितं निरुक्तरूपं न व्याप्तिरूपमिति यावत् । तेन रूपेण साध्यतायां व्यभिचारिण्यतिव्याप्तेरित्यग्रिममत्रैव हेतुः । प्रमेयधूमत्वाद्यवच्छिन्नसाध्यकव्यभिचारिसाधारणत्वादिति तदर्थः । प्रमेयधूमत्वेत्यादिकमतथात्वेनेत्यन्तं तत्र हेतुः । स्वसमानाधिकरणाभावप्रतियोगितानिरूपिततादृशावच्छेदकत्वाभाववत्तादृशसाध्यतावच्छेदकत्वेनेति तदर्थः । संभवत्तादृशप्रतियोगितावच्छेदकताकधर्मापेक्षया गुरुत्वं प्रमेयधूमत्वादेस्तादृशप्रतियोगितावच्छेदकत्वाभावसाधकम् ।

तस्य तत्साधकत्वोपष्टम्भकव्याप्तिमाह—सम्भवतीति । तस्मिन्निति पूरणीयम् । तथा च लघुधर्मे तादृशावच्छेदकत्वस्य सम्भवे इत्यर्थः । गुरौ तदभावात्—तादृशावच्छेदकत्वाभावनियमात् । तथा च सम्भवत्तदवच्छेदकताकधर्मापेक्षया यो गुरुः स न तदवच्छेदक

इति व्याप्तिरिति पर्यवसितार्थः। सम्भवत्तदवच्छेदकताकत्वं च तदवच्छेदकत्वबाधकशून्यत्वम्। बाधकं चावच्छेद्यप्रतियोगित्वासमनियतत्वम्। तथा च तत्प्रतियोगित्वादिसामानैयत्यमेव सम्भवत्तदवच्छेदकताकत्वं पर्यवसितम्। सामानैयत्यघटकदलद्वयनिवेशाद् घटपटान्यतरत्वमहानसीयवह्नित्वाद्यवच्छिन्नाभावप्रतियोगितायाः न्यूनवृत्तित्वघटत्वाद्यतिरिक्तवृत्तिशुद्धवह्नित्वादेरवच्छेदकत्वासम्भवेन तादृशगुरुधर्मस्य नाऽवच्छेदकत्वानुपपत्तिः। प्रतियोगितायाः सामानैयत्यं च प्रतियोगिताया अन्यूनवृत्तित्वे सति तन्निरूपकाभावविरोधितावच्छेदकत्वरूपमवच्छेदकतानिर्वाहकम्। अतः सत्तात्वादेर्विशिष्टसत्ताद्यभावीयप्रतियोगित्वान्यूनानतिरिक्तवृत्तित्वेऽपि तदभावविरोधितानवच्छेदकत्वान्न तत्प्रतियोगितावच्छेदकत्वसम्भवः।

यत्तु स्वावच्छिन्नसमव्यापकतावच्छेदकधर्मापेक्षया गुरुत्वमेवाऽवच्छेदकत्वाभावसाधकतयाऽभिमतम्। स्वसमनियतसत्ताद्यपेक्षया गुरोर्विशिष्टसत्तात्वादेः प्रतियोगितावच्छेदकत्वनिर्वाहाय स्वसमनियतत्वमुपेक्ष्य स्वावच्छिन्नसमव्यापकतावच्छेदकत्वनिवेश इति तन्न। घटप्रागभावत्वावच्छिन्नसमव्यापकतावच्छेदकघटत्वाद्यपेक्षया गुरोर्घटप्रागभावत्वादेरत्यन्ताभावप्रतियोगितावच्छेदकतया, जातित्वावच्छिन्नसमव्यापकतावच्छेदकतद्घटकसमवेतत्वापेक्षया गुरोर्जातित्वादेर्भेदप्रतियोगितावच्छेदकतया च व्यभिचारात्।

ननु प्रमेयधूमत्वं स्वावच्छिन्नधर्मिविशेषणतापन्नमेयत्वसहितधूमत्वम्, सामानाधिकरण्यसम्बन्धेन मेयत्वविशिष्टधूमत्वं वा, उभयथैव तदवच्छिन्नसाध्यके नाऽतिव्याप्तिप्रसक्तिः, शुद्धधूमत्वस्याऽवच्छेदकत्वे तादृशानवच्छेदकताया विशिष्टधूमत्वे दुर्घटत्वात्। एकदेशपर्याप्तवृत्तेर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावस्य विशेष्यपर्याप्तवृत्तेर्विशेषणान्तरवैशिष्ट्यावच्छिन्नानुयोगिताकाभावस्य चाऽनभ्युपगमात्। शुद्धवह्नित्वादौ धूमादिसामानाधिकरण्याभावप्रतियोगितावच्छेदकत्वापर्याप्तेर्मेयवह्नित्वादौ तदनवच्छेदकत्वसौलभ्येन मेयवह्निमान्धूमादित्यादावव्याप्तिविरहादित्यरुचेः कम्बुग्रीवादिमत्त्वानुधावनम्।

नचैवं मेयधूमत्वावच्छिन्नसाध्यकेऽतिव्याप्त्यभिधानमत्यन्तासङ्गतमिति वाच्यम्। व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभा-

यानुपगमेन नानाव्यक्तिदण्डाद्यवच्छिन्नस्य व्यापकतानिर्वाहार्थं प्रतियोगितावच्छेदकापर्याप्तविषयतापर्याप्तिरनवच्छेदकत्वान्तार्थ इत्याशयेनैव तदभिधानात् । कम्बुग्रीवादिमत्त्वं च घटत्वव्यञ्जकसंस्थानविशेषः । घटत्वापेक्षया तस्य गौरवं संस्थानस्य विजातीयावयवसंयोगरूपस्यानन्तत्वात्, अनुगमकजातिविशेषसापेक्षत्वाच्च । घटत्वस्य चैकस्य जातिरूपस्य निर्विशेषणकस्यावच्छेदकत्वे लाघवादिति ।

न च घटसामान्याभावप्रतियोगितायां संस्थानविशेषस्यानवच्छेदकत्वेऽपि तत्तत्संस्थानवद्भावकूटप्रतियोगितासु प्रत्येकं तेषामवच्छेदकत्वमावश्यकम्, तत्राऽतिप्रसक्तघटत्वस्याऽवच्छेदकत्वासम्भवादित्यनुगतरूपावच्छिन्नेऽपि तेष्वनवच्छेदकत्वं दुर्घटमिति तदवच्छिन्नसाध्यके नातिव्याप्त्यवकाश इति वाच्यम् । तत्तत्संस्थानवत्तत्तद्घटाभावप्रतियोगितायामपि घटनिष्ठतत्तद्व्यक्तित्वस्यैव साक्षात्सम्बन्धेनावच्छेदकत्वसम्भवात्परम्परासम्बन्धेन स्वसमवायिसमवेतत्वात्मकेन तत्तत्संयोगानां गौरवेणानवच्छेदकतया तादृशसम्बन्धेन संस्थानविशेषावच्छिन्नघटादिसाध्यके व्यभिचारिहेतावतिव्याप्तेर्दुर्वारत्वात् ।

ननु मृत्पाषाणादिघटसाधारणं घटत्वं नैकम्, मृत्त्वपाषाणत्वादिना सङ्करप्रसङ्गादिति तत्तज्जातिव्यक्त्यं नानैव, तथा च तथाविधफलघटानुगमकसंस्थानविशेषावच्छिन्नप्रतियोगितायां न स्वरूपतो घटत्वस्यावच्छेदकतासम्भवः, न्यूनवृत्तित्वात् । नाप्यनुगतरूपान्तरावच्छिन्नस्य, तादृशरूपान्तरप्रवेशेन गौरवादित्यरुचेर्घ्राणग्राह्यगुणत्वानुधावनम् । घ्राणग्राह्यत्वं घ्राणग्रहणयोग्यता गुणत्वन्यूनवृत्तिघ्राणग्राह्यजातिरूपा, सा चातीन्द्रियेऽपि गन्धे इति न गन्धत्वस्य दर्शितरूपवत्सामान्याभावप्रतियोगितासमनियत्यानुपपत्तिः । तादृशयोग्यतामात्रस्योपादाने गन्धत्वसुरभित्वादिरूपायास्तस्याः स्वरूपतो हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतया तादृशजातित्वाद्यवच्छिन्नाया अप्यनवच्छेदकत्वं दुर्लभमिति तद्विशेष्यतया गुणत्वनिवेशनम् । द्रव्यत्वादिहेतुकस्थले च गुणत्वस्य शुद्धस्यापि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वासम्भवाद्विशिष्टगुणत्वस्य गन्धत्वसमनियतस्य

तादृशप्रतियोगितानवच्छेदकत्वमक्षतमेवेत्यतिव्याप्तिसङ्गतिः । अथवा घ्राणग्राह्यगुणत्वं स्वाश्रयगुणत्वव्याप्यजातिमत्त्वसम्बन्धेन घ्राणजन्यसाक्षात्कारविषयतावत्त्वमेव, गुणत्वव्याप्यजातिघटितसम्बन्धलाभाय गुणपदम्, न तु गुणत्वमपि विशेष्यतया विवक्षितम् ।

एतेन गुणत्वस्य निरुक्तजातित्वावच्छिन्नगन्धत्वादिविशेष्यतया विवक्षितत्वे स्वरूपतो गन्धत्वादेर्गुणत्वविशेषणतायामव्यतिप्रसङ्गात्तादृशजातित्वावच्छिन्नस्य विशेषणत्वानुधावनं निर्बीजमिति दूषणमनवकाशम् । घ्राणग्राह्यगुणत्वं यथाश्रुतमेव ग्राह्यगन्धत्वरूपलघुधर्मसमनियततया न प्रतियोगितावच्छेदकमित्यपि वदन्ति ।

यत्तु अनवच्छेदकत्वमवच्छेदकाविषयकप्रतीतिविषयत्वरूपम् । तथा चावच्छेदकताघटकसम्बन्धेन विशेष्यांशेऽवच्छेदकप्रकारकप्रतीतिभिन्ना साध्यतावच्छेदकताघटकसम्बन्धेन यादृशधर्मप्रकारिका प्रतीतिस्तादृशधर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति पर्यवसितम् । एवं च प्रमेयधूमत्वादिप्रकारकप्रतीतेर्धूमत्वादिप्रकारकत्वानियमात् प्रमेयधूमत्वाद्यवच्छिन्नसाध्यकेऽव्याप्तिपरिहारः सम्भवति न तु निरुक्तघ्राणग्राह्यगुणत्वाद्यवच्छिन्नसाध्यके, गन्धत्वादिकमविषयीकृत्यापि सुरभित्वादिकं सुरभित्वादिकमविषयीकृत्यापि च गन्धत्वादिकं विषयीकृत्य तादृशसाध्यतावच्छेदकप्रकारकप्रतीतिसम्भवादिति । तन्न । तथा सत्युक्तरीत्या दण्डमान् द्रव्यत्वादित्यादावतिव्याप्तेः । प्रत्येकं सकलदण्डमविषयीकृत्यैव दण्डत्वाद्यवच्छिन्नदण्डात्मकसाध्यतावच्छेदकप्रकारकप्रतीतेः सम्भवात् ।

अथ प्रतियोगितावच्छेदकीभूता ये ये धर्मास्तत्प्रकारकप्रतीतिभेदकूटस्य साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकप्रकारिकायामेकप्रतीतावसत्त्वात्तथैव च लक्षणे विवक्षितत्वान्नेयमतिव्याप्तिरिति चेत् ? तर्हि तादृशरीत्या निरुक्तघ्राणग्राह्यगुणत्वावच्छिन्नसाध्यकेऽपि नाऽतिव्याप्त्यवकाश इति ।

अतथात्वेन । प्रतियोगितानवच्छेदकत्वेन । अनतिरिक्तवृत्तित्वमिति । स्वव्यापकतत्कत्वमित्यर्थः । तच्छून्यावृत्तित्वविवक्षणे समवायेन प्रमेयसाध्यके व्यभिचारिण्यतिप्रसङ्गात् । प्रमेयसामान्याभावप्रतियोगिताशून्याप्रसिद्ध्या प्रमेयत्वादेस्तादृशावच्छेदकत्वानिर्वाहात् ।

महानसीयवह्नित्वाद्यवच्छिन्नसाध्यके धूमादौ वह्नित्वादेर्महानसीयवह्न्याद्यभावप्रतियोगिताशून्यवह्न्यन्तरवृत्तितया विशिष्टेऽपि तत्र तच्छून्यावृत्तित्वस्य दुर्घटतयाऽतिप्रसङ्गाच्च। स्वव्यापकतत्कत्वनिवेशने च विशिष्टस्याऽविशिष्टस्य वा यादृशस्यावच्छेदकत्वमभिप्रेतं तादृशस्यैव स्वपदेनोपादेयतया विशिष्टवह्नित्वादिकं प्रति विशिष्टवह्न्याद्यभावप्रतियोगिताया व्यापकत्वस्याऽक्षतत्वेन तादृशस्यावच्छेदकत्वोपपत्तेः। ईदृशं यद्यत्त्वं तत्त्वाभावकूटस्य च साध्यतावच्छेदकविशेषणता योग्या, अतः स्वत्वाननुगमेनैकसामान्याभावनिवेशासम्भवात् यत्किञ्चिदेकावच्छेदकनिष्ठावच्छेदकत्वमादायातिप्रसङ्गानवकाशः।

न च स्वपदस्य तत्तद्व्यक्तिपरतयाऽवच्छेदकनिष्ठं तत्तद्व्यक्तित्वमेव पर्यवसितमवच्छेदकत्वम्, तथा च विशेषणावच्छिन्ननिष्ठतत्तद्व्यक्तित्वस्यापि विशेष्यपर्याप्ततया विशिष्टवह्नित्वादेरवच्छेदकत्वे शुद्धस्यापि अनवच्छेदकतादुर्भिक्षमिति वाच्यम्। शुद्धस्य विशेषणान्तरसहितस्य वा यादृशस्याधिकरणता अभावप्रतियोगितानिष्ठव्यापकताशरीरे निविष्टा तादृशरूपपर्याप्तावच्छेदकतापर्याप्त्यनधिकरणत्वस्य साध्यतावच्छेदकविशेषणत्वोपगमात्। मेयधूमत्वादिपर्याप्ताया अभावप्रतियोगितावच्छेदकताया अप्रसिद्धावपि तथाविधाया विषयतावच्छेदकतायाः प्रसिद्ध्याऽतिव्याप्त्यनवकाशात्। महानसीयत्वादिसहितवह्नित्वादिपर्याप्तावच्छेदकतायाः शुद्धवह्नित्वाद्यपर्याप्तत्वाद्विशिष्टवह्न्याद्यभावमादाय दोषानवकाशात्।

अत्र यदि हेतुसमानाधिकरणाभावप्रतियोगितासामान्यानतिरिक्तवृत्तित्वं निवेश्यते तदा निखिलवह्न्यादेरेव धूमादिसमानाधिकरणविशेषाभावप्रतियोगितया वह्नित्वादेरपि स्वव्यापकतावच्छेदकतादृशप्रतियोगितात्वकत्वरूपतादृशप्रतियोगितासामान्यानतिरिक्तवृत्तित्वेन तथाविधप्रतियोगितानवच्छेदकत्वानुपपत्तिरिति तादृशयत्किञ्चिदेकप्रतियोगिनानतिरिक्तवृत्तित्वं स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकतादृशप्रतियोगिताकत्वरूपं निवेशनीयम्। तथा सति धूमवान् वह्नेरित्यादौ धूमत्वादेरपि तादृशावच्छेदकत्वं न स्यात्, धूमादिसामान्याभावप्रतियोगिताया अपि धूमादिस्वरूपतया प्रतिधूमादिकं भिन्नत्वेन प्र-

त्येकं धूमत्वादिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वादिति तत्तद्धूमत्वादेरेव तथात्वादतिव्याप्तिरित्याह । प्रतियोगितायां इति । स्वरूपसम्बन्धात्मिकायाः इति । प्रतिव्यक्तिभेदप्रयोजकहेतुगर्भविशेषणम् । अतिरिक्तपदार्थरूपप्रतियोगितायाः सिद्धान्तविरुद्धत्वादिति भावः । तादृशप्रतियोगितासामान्यानतिरिक्तवृत्तित्वनिवेशेऽपि हेतुसमानाधिकरणाभावत्वेन तादृशाभावनिवेश एव पूर्वोक्तदोषः, न तु तादृशाभावस्य प्रातिस्विकरूपेण निवेशने, तत्तद्विशेषाभावप्रतियोगितात्वस्य वह्नित्वादिव्यापकतानवच्छेदकत्वादित्याशयेनाशङ्कते—

(दी०) न च तथाविधयत्किञ्चिदेकाभावप्रतियोगितासामान्यशून्यावृत्तित्वं तत् । अत एवातिरिक्तसामान्याभावस्याभावे धूमत्वादेरप्यनवच्छेदकत्वापातादग्रे तत्साधनमपि सङ्गच्छते इति वाच्यम् । वह्निघटवृत्तिद्वित्वतार्णतार्णदहनवृत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियोगितानतिरिक्तवृत्तिद्वित्वादावतिप्रसङ्गात् ।

(गा०) न चेति । तथाविधेति । प्रतियोग्यनधिकरणहेतुमद्वृत्तीत्यर्थः । यत्किञ्चित्परं तत्तद्व्यक्तित्वेनाऽभावनिवेशलाभाय । प्रत्येकनिविष्टस्याऽपि तथाविधाभावस्य सकलस्य नैकप्रावच्छेदकताघटकता किन्तु एकस्यैवेति स्फोरणायैकपदम् । तादृशप्रतियोगितासामान्यशून्यावृत्तित्वं स्वव्यापकतावच्छेदकतादृशप्रतियोगितास्वकत्वम्, अतो न पूर्वोक्तदोषः । अत एव । ईदृशावच्छेदकत्वस्य मूलाभिप्रेतत्वादेव । अतिरिक्तेति । सामान्याभावस्य विशेषाभावकूटातिरिक्तत्वानभ्युपगमे इत्यर्थः । धूमत्वादेरपीति । विशेषाभावकूटान्तर्गतमेकमभावमुपादाय धूमत्वादौ निरुक्तावच्छेदकत्वोपपादनासम्भवादिति भावः । तत्साधनमिति । सामान्याभावस्याऽतिरिक्तत्वव्यवस्थापनमित्यर्थः । सङ्गच्छते इति । अन्यथा स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे विशेषाभावकूटातिरिक्तसामान्याभावानभ्युपगन्तृमतेऽपि विशेषाभावीयप्रतियोगिताकूटस्यैव सामान्यधर्मावच्छिन्नतया धूमत्वादावपि वह्न्यादिस-

मानाधिकरणधूमादिविशेषाभावप्रतियोगितावच्छेदकत्वेनाऽतिव्याप्यप्रसक्त्या सामान्याभावपार्थक्यव्यवस्थापनस्य पतल्लक्षणप्रस्तावेऽनुपयुक्तत्वापत्तेरिति भावः ।

न चातिरिक्तसामान्याभावाभावे उक्तरीत्याऽतिव्याप्तिविरहेऽपि ये एव वन्ह्यभावा ह्रदादौ वह्निर्नास्तीति बुद्धिं जनयन्ति प्रत्येकं धूमसमानाधिकरणानां तेषां प्रतियोगितावच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यव्याप्तिर्दुर्वारैवेति तत्साधनसङ्गत्या उपष्टम्भसङ्गतिरिति वाच्यम् । हेत्वधिकरणवृत्तित्वावच्छेदेन यादृशधर्मावच्छिन्नत्वविशिष्टप्रतियोगिताकत्वमतादृशत्वस्य साध्यतावच्छेदकविशेषणतां स्वीकृत्य तादृशाव्याप्तेर्वारणसम्भवात् । न हि धूमाधिकरणवृत्तित्वावच्छिन्नविशेषाभावे वह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वम्, धूमवति वह्निर्नास्तीत्यप्रत्ययात्, अपि तु यावद्विशेषाभावाधिकरणह्रदादिवृत्तित्वावच्छिन्ने एवेति ।

इदमापाततः । तथाविधाभावीययत्किञ्चिदेकधर्मावच्छिन्नप्रतियोगितासामान्यानतिरिक्तवृत्तित्वं निवेश्याऽनतिरिक्तवृत्तित्वरूपावच्छेदकताविवक्षापक्षेऽपि धूमत्वादेरवच्छेदकत्वस्य सामान्याभावानतिरिक्तत्वमते शक्योपपादनत्वात् । हेत्वधिकरणवृत्तित्वावच्छिन्ने यद्धर्मावच्छिन्नत्वविशिष्टप्रतियोगिताकत्वं तद्धर्मावच्छिन्नप्रतियोगितासामान्यानतिरिक्तवृत्तित्वविवक्षयाऽव्याप्तेरपि शक्यवारणत्वात् । वह्नित्वस्य वह्निघटोभयत्वावच्छिन्नाभावप्रतियोगितानतिरिक्तवृत्तित्वेऽपि तन्न्यूनवृत्तितया अन्यूनानतिरिक्तवृत्तित्वविवक्षया तादृशप्रतियोगितामादाय दूषणस्योद्धारः सम्भवतीति तार्णतार्णेतरवह्नोभयाभावप्रतियोगितानुसरणम् । अतिप्रसङ्गात् । धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रसङ्गात् । तार्णातार्णतरवह्नोभयत्वावच्छिन्नाभावानुसरणप्रयोजनं स्वयमेव स्फुटयति–

(दी०) एतेनान्यूनवृत्तित्वविशेषितमपि परास्तम् । अत एव नानाप्रतियोगिवृत्त्येकप्रतियोगिताङ्गीकारेऽपि न निस्तारः । लघुरूपसमनियतगुरुरूपेण साध्यतायां सद्धेतावव्याप्तिः, तादृशतदवच्छिन्नत्वाप्रसिद्धेरिति चेन्न । प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विवक्षितत्वात् ।

(गा०) एतेनेति । तार्णातार्णदृत्तोभयाभावप्रतियोगितामादा-
याऽतिप्रसङ्गतादवस्थ्येनेत्यर्थः । अन्यूनवृत्तित्वविशेषितम्, अन-
तिरिक्तवृत्तित्वमपि । अत एव । दर्शितोभयाभावमादाय वह्नि-
त्वादावतिप्रसङ्गादेव ।, नानाप्रतियोगिवृत्त्येकप्रतियोगिताङ्गीकारे-
ऽपीति । तथा सति यत्किञ्चिदेकाभावप्रतियोगितासामान्यपर्यन्ता-
निवेशेऽपि धूमत्वादेर्धूमादिसामान्याभावप्रतियोगितावच्छेदकत्वो-
पपादनसम्भवादिति भावः । उभयत्वादिरूपव्यासज्यवृत्तिधर्मा-
वच्छिन्नप्रतियोगितायाः प्रत्येकमपि प्रतीतेरव्यासज्यवृत्तितया
स्वपर्याप्त्यधिकरणपर्याप्तत्वं प्रतियोगितायां निवेश्याऽपि वह्नित्वा-
दावतिप्रसङ्गवारणासम्भव इति ध्येयम् । प्रतियोगिताधर्मिकोभया-
भावघटितव्याप्तिपक्षे मेयधूमवान् वह्नेरित्यादावतिव्याप्तिं सं-
भवयति साध्यतावच्छेदकमेयधूमत्वादिरूपगुरुधर्मावच्छेद्यत्वस्य
कुत्रापि प्रसिद्धिविरहेण तद्घटितोभयाभावाप्रसिद्धेरिति तन्मते
मेयवह्निमान् धूमादित्यादावव्याप्तिमाह । लघुरूपेणेति । तादृशतदवच्छे-
द्यत्वाप्रसिद्धेरिति । तादृशसाध्यतावच्छेदकावच्छिन्नत्वस्याऽप्रसिद्धे-
रित्यर्थः । विवक्षितसम्बन्धस्य वृत्त्यनियामकत्वेनाभावप्रतियोगिता-
नवच्छेदकतया तादृशसम्बन्धावच्छिन्नाभावप्रतियोगितायां तत्प्र-
सिद्धिरित्यस्य वक्तुमशक्यत्वात् । अन्यथा मेयधूमवान् वह्नेरित्या-
दावतिव्याप्तेरेव तादवस्थ्यादिति भावः । प्रतियोगितावच्छेदकान-
तिरिक्तवृत्तित्वस्येति । तथा च धूमादिसामान्याभावप्रतियोगिता-
याः ,प्रतिधूमादिकं भिन्नत्वेऽपि तत्प्रतियोगितावच्छेदकधूमत्वा-
देरैक्येन स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदक-
तत्कत्वात्मकस्वव्यापकतत्कत्वरूपतदनतिरिक्तवृत्तित्वं धूमत्वादा-
वक्षतमेवेति भावः ।

न च प्रतियोगितायाः प्रतियोगिस्वरूपतामते सामान्याभाव-
प्रतियोगितायाः विशेषाभावप्रतियोगितातो न भेदः, प्रतियोगि-
नामभेदात्, तथा च वह्निमान् धूमादित्यादावव्याप्तिर्दुर्वारा, धूम-
समानाधिकरणविशेषाभावप्रतियोगिताकूटे वह्नित्वादेरवच्छेद-
कत्वाभावस्य च तदनतिरिक्तवृत्तित्वादिति वाच्यम् । सामा-
न्याभावविशेषाभावयोः प्रतियोगित्वाभेदेऽपि सामान्याभावीयप्रति-
योगितात्वेनैव सामान्यधर्मावच्छेद्यत्वाद्धेतुसमानाधिकरणाभावप्र-

तियोगितात्वावच्छिन्नावच्छेदकानतिरिक्तवृत्तित्वविवक्षणेनाऽव्याप्तिनिरासात् ।

स्वव्यापकतत्कत्वमित्यत्र स्वस्य व्याप्यता साध्यतावच्छेदकताघटकसम्बन्धेन, प्रतियोगितावच्छेदकस्य व्यापकता प्रतियोगितावच्छेदकताघटकसम्बन्धेन च बोध्या, तेन सम्बन्धसामान्येन धूमत्वादिकं प्रति समवायादिना धूमत्वादेरव्यापकत्वेऽपि समवायादिना वह्नित्वादिकं प्रति कालिकादिसम्बन्धेन घटत्वादेर्व्यापकत्वेऽपि च न क्षतिः । दण्डिमान् द्रव्यत्वादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकदण्डादौ दण्डान्तरसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेऽपि तत्तद्दण्डादौ तत्तद्दण्डादिसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वस्याऽक्षततया सर्वत्रैव दण्डादिव्यक्तौ प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमक्षतमेवेति नातिव्याप्तिः । दण्डाद्यवच्छिन्नसाध्यकसद्धेतावपीदृशरीत्याऽव्याप्तिरिति तु नाशङ्कनीयम् । दण्ड्यादौ साध्ये परम्परासम्बन्धेनाऽखण्डस्य दण्डत्वादेरेव साध्यतावच्छेदकतायाः स्वीकृतत्वात् ।

नन्वेवमपि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकवह्निघटोभयत्वानतिरिक्तवृत्तितया वह्नित्वादेरवच्छेदकत्वं दुर्वारमेव । न चोभयत्वादेरुभयादिपर्याप्ततया प्रत्येकं तदत्यन्ताभावस्तदवच्छिन्नभेदश्च वर्तते, अयमेको न द्वाविति सर्वजनसाधारणानुभवस्य दुरपह्नवत्वात् । तादृशप्रतीतेरेकत्वादौ द्वित्वाद्यवच्छेदकत्वाभावावगाहित्वोपगमे मूलावच्छिन्नो वृक्षो न कपिसंयोगीत्यादिप्रतीतेरपि मूलादौ कपिसंयोगाद्यवच्छेदकत्वाभावावगाहितास्वीकारापत्तेः । यदि च तत्र बाधकाभावाद्वृक्षाद्यधिकरणककपिसंयोगाद्यभावो विषयस्तदा प्रकृतेऽपि एकत्वाद्यवच्छिन्नाधिकरणकद्वित्वाभावादिविषयकत्वं दुर्वारमेव । एकत्वाद्यवच्छिन्ने द्वित्वादिमत्त्वप्रत्ययानुदयेन बाधकविरहस्य तुल्यत्वात् । प्रत्येकमुभयादौ द्वित्वाभावादिसत्त्वेऽपि द्वित्वाभावानुयोगितानवच्छेदकतया द्वौ न द्वाविति प्रतीतेर्दुरुपपादत्वात् । द्वित्वादिसामानाधिकरण्यमात्रेण तदभावप्रत्ययस्येष्टत्वात् । नञ्पदेनाऽन्वयितावच्छेदकावच्छेदेनाभावबोधनात् द्वित्वादिसामानाधिकरण्यमात्रावगाहिन्या अभावप्रतीतेर्द्वौ न द्वावित्याकारकताविरहात् । तदाकारकप्रतीतेरेव चाऽनुभवविरुद्धत्वात् ।

तथा च द्वित्वाद्यनतिरिक्तवृत्तिता कथं वह्नित्वादेरिति वाच्यम्। एवं सति वह्निघटोभयत्वात् धूमादित्यादौ साध्यतावच्छेदकद्वित्वादेरवच्छेदकताया दुरुपपादत्वात्। प्रतियोगितावच्छेदकतादृशद्वित्वादिकमुपादायैव तस्याऽवच्छेदकानतिरिक्तवृत्तित्वस्य सम्पादनात्, तस्य चोक्तरीत्याऽसम्भवादिति स्वव्यापकतत्कत्वरूपत्वानतिरिक्तवृत्तित्वघटकव्यापकतायां प्रतियोगिताव्यधिकरणत्वस्य भेदे निवेशनीयतया उभयत्वादावपि वह्नित्वनिरूपिततादृशव्यापकताया अक्षतत्वेन तदवच्छेदकताप्रसङ्गस्य दुर्वारत्वात्। न हि प्रत्येकवृत्तिरुभयत्वाद्यवच्छिन्नभेदः प्रतियोगिताव्यधिकरणः। उभयत्वादेर्व्यासज्यवृत्तित्वेऽपि तदवच्छिन्नप्रतियोगिताया अव्याप्यवृत्तितया प्रत्येकमुभयत्वाद्यनाधिकरणतावत्तदवच्छिन्नभेदप्रतियोगितानधिकरणत्वस्याऽसम्भवादित्याशङ्क्य प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वघटकमवच्छेदकं स्वसमानवृत्तिकत्वेन विशेषयति—

(दी०) स्वसमानवृत्तिकं चाऽवच्छेदकं ग्राह्यम्। तत्त्वं च स्वपर्याप्त्यधिकरणपर्याप्तिवृत्तिकत्वम्। यावत्त्वादिकं तु न तथा। पर्याप्तिश्चायमेको घट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष एव। त्रित्वादिकमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वादिना साध्यतायां नाव्याप्तिः। घटकं चाऽवच्छेदकत्वं स्वरूपसम्बन्धविशेषः। एवं च यद्धर्मावच्छिन्नेऽस्यत्र यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नेति वक्तव्यम्, तेनोक्ताव्याप्तिनिरासः।

(गा०) स्येति। तथा च वह्निघटोभयत्वादेर्वह्नित्वादिसमानवृत्तिकताविरहाद्वह्नित्वादेस्तदनतिरिक्तवृत्तित्वेऽपि न पारिभाषिकावच्छेदकतापत्तिरिति भावः।

अत्र व्यापकताशरीरे स्वसमानाधिकरणत्वस्य स्वाधिकरणतावच्छेदकावच्छिन्नाधिकरणताकत्वरूपस्याभावविशेषणत्वोपगमे तु द्वित्वाद्यधिकरणस्य प्रत्येकं द्वित्वाद्यवच्छिन्नभेदाद्यधिकरणत्वेऽपि द्वित्वादेर्द्वित्वादिव्यापकत्वं भेदे प्रतियोगितावैयधिकरण्यमनिवेश्यैवो-

पपादयितुं शक्यमिति स्वसमानवृत्तिकत्वनिवेशनमयुक्तम् । न चाऽव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याऽव्याप्यवृत्तितामते संयोगेन दण्डादेर्यत्र साध्यतावच्छेदकता तत्र व्यभिचारिणि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं दण्डादिकमादाय दण्डादिरूपसाध्यतावच्छेदके पारिभाषिकावच्छेदकत्वं व्यापकताशरीरे *प्रतियोगितावैयधिकरण्याप्रवेशे न स्यादिति वाच्यम्* । अव्याप्यवृत्तिदण्डादिकमादाय पारिभाषिकावच्छेदकत्वासम्भवेऽपि व्यभिचारनिरूपकाधिकरणयत्किञ्चिद्वृत्त्यन्यवृत्तित्वरूपहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकमुपादाय दण्डादेः साध्यतावच्छेदकस्य तथात्वोपपादनसम्भवात् । तदवृत्तौ साध्ये तदवृत्तित्वावच्छिन्नभेदस्य कथमप्यसम्भवादिति तु चिन्तनीयम् ।

ननु किमिदं समानवृत्तिकत्वम् ? यद्यन्यूनानतिरिक्तवृत्तित्वं तदाऽनतिरिक्तवृत्तित्वान्तनिवेशवैफल्यम्, स्वान्यूनवृत्ति यत्तदनतिरिक्तवृत्तित्वस्य स्वस्मिन्नियतत्वात् । ताणांतार्णदहनोभयत्वादिकमादाय *दहनत्वादेरवच्छेदकत्वापत्तेश्च दुर्वारता* । यदि चैकजातीयवृत्तिकत्वमेव तत्, तच्च स्वनिष्ठव्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वान्यतररूपवत्त्वम्, द्वित्वादौ च वह्नित्वादेर्नैतादृशसमानवृत्तिकत्वं वह्नित्वादेरव्यासज्यवृत्तित्वादित्युच्यते तदाऽपि वह्निधूमोभयवान् धूमादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकवह्निधूमघटत्रित्वाद्यनतिरिक्तवृत्तितया साध्यतावच्छेदकस्य तथात्वापत्तेः । द्वित्वत्रित्वाद्योरुभयोरेव *व्यासज्यवृत्तितया निरुक्तसमानवृत्तिकताया* दुरुपपादत्वादित्यत आह । तत्त्वं चेति । स्वसमानवृत्तिकत्वं चेत्यर्थः ।

वह्निनिष्ठयावत्त्वतार्णातार्णोभयत्वादिकमादाय वह्नित्वादावतिप्रसङ्गाभावं स्फुटयति । यावत्त्वादिकमिति । आदिना दर्शितद्वित्वादिपरिग्रहः । न तथा । न स्वपर्याप्त्यधिकरणपर्याप्तत्वरूपवह्नित्वादिनिरूपितसमानवृत्तिकत्ववत् । वह्नित्वादेः प्रत्येकवह्न्यादौ पर्याप्तत्वात्तस्य चाऽतथात्वादिति शेषः । तथा च यावत्त्वादेः धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि वह्नित्वाद्यन्यूनानतिरिक्तवृत्तित्वेऽपि च न क्षतिरिति भावः ।

ननु पर्याप्तिराश्रयत्वमेव वह्नित्वादिसमानाधिकरणयावत्त्वादेर्वह्नित्वादिपर्याप्त्यधिकरणपर्याप्तत्वमक्षतमेवेत्यत आह । पर्याप्तिश्चेति ।

अयमेको घट इत्यनेनाऽव्यासज्यवृत्तिघटत्ववह्नित्वादीनां प्रत्येकमेव पर्याप्तिरिति दर्शितम् । इमौ द्वाविति प्रतीतिकथनेन व्यासज्यवृत्तिद्वित्वादीनां न प्रत्येकपर्याप्तिस्तथा सति अयमेको द्वावित्यादिप्रतीत्यापत्तेरिति दर्शितम् ।

यद्यपि समुदायपर्याप्तत्वेऽपि तदेकदेशप्रत्येकपर्याप्तत्वमनपवादम्, समुदायस्यैकदेशानतिरिक्तत्वादिति यावत्त्वादेर्वह्नित्वादिपर्याप्त्यधिकरणप्रत्येकवह्निपर्याप्तत्वं दुर्वारम् । तथाऽपि स्वपर्याप्त्यवच्छेदकावच्छिन्नपर्याप्तिकत्वमत्र विवक्षितमिति न दोषः । व्यासज्याव्यासज्यवृत्त्योः समानजातीयवृत्तिकधर्मावच्छिन्नपर्याप्तयोरेकधर्मिणि पर्याप्तिसत्त्वेऽप्येकधर्मावच्छिन्नेऽपर्याप्तेः । अन्यथाऽयमेको वह्निरितिवदयमेको यावानिति प्रतीत्यापत्तेर्दुर्वारत्वात् ।

अथ घटावित्यादौ यदि घटत्वादिसामानाधिकरण्यमात्रेण द्वित्वादिपर्याप्तिर्भासते तदा आकाशावित्याकारकप्रतीतेरपि प्रमात्वापत्तिः, आकाशत्वादिसामानाधिकरण्येनाऽऽत्माकाशोभयत्वादेः पर्याप्तत्वादतस्तत्र धर्मितावच्छेदकघटत्वाद्यवच्छिन्नपर्याप्तेरेव विषयत्वमङ्गीकार्यम् । तथा चाऽव्यासज्यवृत्तेरपि द्वित्वावच्छेदकत्वमायातमिति व्यासज्यवृत्तेरव्यासज्यवृत्तिसमानवृत्तिकत्वं दुर्वारमेव । न चानेकवृत्तेरव्यासज्यवृत्तेरपि व्यासज्यवृत्तिधर्मपर्याप्त्यवच्छेदकत्वमास्तां तादृशधर्मस्य च नाऽव्यासज्यवृत्तिपर्याप्त्यवच्छेदकत्वं किं त्वेकैकमात्रवृत्तेरेवेति ॥ व्यासज्यवृत्त्यव्यासज्यवृत्त्योरेकधर्मावच्छिन्नपर्याप्तत्वप्रसङ्ग इति वाच्यम् । घटौ द्रव्यमित्यादिप्रतीत्या तथाविधघटत्वाद्यवच्छेदेन द्रव्यत्वादिपर्याप्त्यवगाहनादेकमात्रवृत्तेरेवाऽव्यासज्यवृत्तिपर्याप्त्यवच्छेदकत्वमित्युक्त्यसम्भवात् । तत्र घटत्वादिसामानाधिकरण्यमात्रेण द्रव्यत्वादिपर्याप्तिर्भासते न तु तदवच्छेदेनेत्युक्तावयमेको घट इत्यादावपि इदन्त्वादौ घटत्वादिपर्याप्त्यवच्छेदकताभाने विवादसम्भवेनाऽव्यासज्यवृत्तिधर्मपर्याप्तेरवच्छिन्नत्वस्यैवाप्रसिद्धिप्रसङ्गात् । धूमत्वादिपर्याप्त्यवच्छेदकाप्रसिद्ध्या तत्राऽवच्छेदकलक्षणाव्याप्तिप्रसङ्गात् । न च स्वपर्याप्त्यवच्छेदकताव्यापकपर्याप्त्यवच्छेदकताकत्वमेव विवक्षणीयम्, अव्यासज्यवृत्तिपर्याप्त्यवच्छेदकैकमात्रवृत्तिधर्मे व्यासज्यवृत्तिपर्याप्त्यवच्छेदकताविरहान्न

तस्या व्यासज्यवृत्तिपर्याप्त्यवच्छेदकताव्यापकत्वमिति व्यासज्याव्यासज्यवृत्त्योर्न समानवृत्तिकताप्रसङ्ग इति वाच्यम् । एव सति अनतिरिक्तवृत्तित्वनिवेशवैफल्यापत्तेः । न्यूनवृत्तिमहानसीयवह्नित्वादिपर्याप्त्यवच्छेदकताया वह्नित्वादिपर्याप्त्यवच्छेदकताव्यापकताविरहेणैव तादृशधर्ममुपादाय वह्नित्वादेरवच्छेदकतापरयसम्भवादिति चेन्न । अनेकवृत्तिघटत्वादेर्हि तत्तद्घटत्वादिरूपैकैकमात्रवृत्तिधर्मावच्छिन्नपर्याप्तिकूटस्य घटनिष्ठपर्याप्तित्वादिरूपानुगतधर्मावच्छिन्नस्याऽवच्छेदकत्वमेवोपेयते न तु घटत्वावच्छिन्ने द्रव्यत्वादेर्यावद्घटादिषु पर्याप्त्यन्तरम्, मानाभावात् । एवं चैकमात्रवृत्तिधर्मावच्छिन्नायाः पर्याप्तेरवच्छेदकत्वस्यैव विवक्षणीयतयानुगतरूपावच्छिन्नपर्याप्तिकूटावच्छेदकानेकवृत्तिधर्मावच्छिन्नपर्याप्तिमादाय व्यासज्यवृत्तेनाव्यासज्यवृत्तिसमानवृत्तिकतापत्तिरिति ।

न च कालाकाशावित्यादिप्रतीत्या एकमात्रवृत्तिकालत्वादेरपि द्वित्वादिपर्याप्त्यवच्छेदकत्वावगाहनादेकमात्रवृत्तिधर्माणामपि व्यासज्यवृत्तिधर्मपर्याप्त्यवच्छेदकतया तस्याव्यासज्यवृत्तिधर्मसमानवृत्तिकत्वं दुर्वारमिति वाच्यम् । तादृशप्रतीत्या तथाविधधर्मद्वयादौ व्यासज्यवृत्तेरेव द्वित्वादिपर्याप्त्यवच्छेदकताया अवगाहनात् । प्रकृते चाव्यासज्यवृत्त्यवच्छेदकताया एव निवेशेनातिप्रसङ्गविरहात् ।

अत्राऽऽहुः । अव्यासज्यवृत्तिघटत्वादीनां पर्याप्त्याख्यसम्बन्धान्तरे मानाभावः समवायादिसम्बन्धेनैवोपपत्तेः । न च समवायस्यैक्येन पटादावपि घटत्वादिविशिष्टबुद्धिप्रसङ्ग इति प्रतिनियतप्रतियोगिकपर्याप्तिसम्बन्धस्वीकार इति वाच्यम् । प्रतिनियतप्रतियोगिकैकविधसम्बन्धेनैवोपपत्तेर्द्विविधसम्बन्धासिद्धेः कथमप्यसम्भवात् । एवं द्वित्वादेरपि पर्याप्तिसमवायादिरूपसम्बन्धद्वयकल्पनमयुक्तम्, अनेकवृत्तिधर्मावच्छिन्नैकविधसम्बन्धेनैव निर्वाहात् ।

न चायमेको द्वित्वसम्बन्धीति प्रतीतेरेकमात्रवृत्तिधर्मावच्छेदेनाऽपि द्वित्वादेः सम्बन्धान्तरस्वीकार आवश्यक इति वाच्यम् । तादृशप्रतीतावपि एकत्वसामानाधिकरण्येनानेकवृत्तिधर्मावच्छिन्नसम्बन्धस्यैव भानोपगमात् । द्वित्वादिप्रकारकतत्सम्बन्धसंसर्गकबुद्धावेव तत्सम्बन्धांशे धर्मितावच्छेदकावच्छिन्नत्वभाननियमात् ।

सम्बन्धप्रकारकैकबुद्धौ धर्मितावच्छेदकसामानाधिकरण्यमात्रावगाहितासम्भवादिति । तथा च समवायातिरिक्तस्य संसर्गकोटावनन्तर्भावेऽप्यतिप्रसङ्गवारणसम्भवः । स्वाधिकरणतावच्छेदकावच्छिन्नाधिकरणताकत्वरूपस्य समानवृत्तिकत्वस्य लक्षणे निवेशनीयत्वात् ।

व्यासज्यव्यासज्यावृत्तित्वान्यतररूपेण सजातीयत्वरूपसमानवृत्तिकत्वमुपेक्ष्य स्वपर्याप्त्यधिकरणपर्याप्तत्वनिवेशस्य प्रयोजनं सूचयति । त्रित्वादिकमिति । द्वित्वादिसमानवृत्तिकम् । द्वित्वादिपर्याप्त्यधिकरणपर्याप्तवृत्तिकम् । त्रयो द्वावित्यादिप्रत्ययविरहादिति भावः । द्वित्वादिना । वह्निधूमोभयत्वादिना साध्यतायाम् । नाऽव्याप्तिः । न धूमाद्यव्याप्तिः । द्रव्ये द्रव्याणीत्यादिप्रतीत्या द्रव्यत्वाद्यैकैकधर्मस्य द्वित्वत्रित्वादिन्यूनाधिकवृत्तिसंख्यापर्याप्त्यवच्छेदकत्वेऽपि तादृशधर्मस्य प्रत्येकतत्पर्याप्त्यतिप्रसक्तत्वेनाऽननुगमकत्वात्किञ्चिद्रूपावच्छिन्नपर्याप्तिकूटं प्रत्येवाऽवच्छेदकतया पूर्वविवक्षया सामञ्जस्यमिति ध्येयम् ।

आत्माश्रयशङ्कां निरस्यति । घटकं चेति । स्वरूपसम्बन्धविशेष इति । तादृशावच्छेदकताश्रयसमनियतलघुधर्मानतिरिक्तवृत्तित्वमात्रस्यैव कम्बुग्रीवादिमत्त्वादावच्छेदकत्वोपपादनसम्भवादिति भावः । प्रतियोगिताधर्मिकोभयाभावघटनापक्षे गुरुधर्मावच्छिन्नसाध्यकसद्धेतौ साध्यतावच्छेदकावच्छिन्नत्वाप्रसिद्धिनिबन्धनामव्याप्तिं परिहरति । एवमिति । यद्धर्मान्यूनवृत्तीति । तदन्यूनवृत्तित्वं तत्समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम्, तत्र पूर्वोक्तयुक्त्या भेदे प्रतियोगितावैयधिकरण्यनिवेशाद्वह्निघटोभयत्वादेर्वह्नित्वाद्यन्यूनवृत्तित्वमक्षतमेवेति यद्धर्मपर्याप्त्याधिकरणपर्याप्तत्वमपि निवेश्यमतो धूमसमानाधिकरणाभावप्रतियोगितायां तादृशोभयत्वाद्यवच्छिन्नत्वसत्त्वेऽपि न क्षतिः । प्रतियोगितायाः प्रतियोगिभेदेन भेदे धूमादिसामान्याभावप्रतियोगितायाः प्रत्येकं धूमत्वाद्यन्यूनवृत्तिताविरहेणातिव्याप्तिः । नानाप्रतियोगिवृत्तिप्रतियोगिताया ऐक्ये वह्निघटोभयत्वाद्यवच्छिन्नप्रतियोगितायां प्रत्येकपर्याप्तायां वह्नित्वादिपर्याप्त्यधिकरणपर्याप्तत्वसत्त्वेऽपि वह्नित्वाद्यन्यूनवृत्तित्वसत्त्वादव्याप्तिरतस्तदन्यूनवृत्तित्वमात्रमुपेक्ष्याऽन्यूनवृत्तिधर्माव-

च्छिन्नत्वपर्यन्तस्योभयाभावप्रतियोगितायां निवेशः ।

अथात्र दण्डादिनानाव्यक्तिसाध्यतावच्छेदकके व्यभिचारिविशेषेऽतिव्याप्तिः, निखिलानामेव दण्डादिव्यक्तीनां दण्डादिरूपसाध्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकतया हेतुसमानाधिकरणदण्डाद्यवच्छिन्नाभावप्रतियोगितायां तादृशभेदप्रतियोगितानवच्छेदकावच्छिन्नत्वाभावसत्त्वात् । तादृशभेदप्रतियोगितावच्छेदकतानवच्छेदकं यद्रूपं तद्रूपविशिष्टावच्छेद्यत्वाभावनिवेशे दण्डादिमन्निष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकदण्डत्वादिविशिष्टावच्छेद्यत्वस्य दण्डादिसामान्याभावप्रतियोगितायां सत्त्वेन तत्रातिव्याप्तिपरिहारेऽपि धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमाद्यभावप्रतियोगितायां लाघवेन स्वरूपत एव धूमत्वादेरवच्छेदकतया विशेषणान्तरविशिष्टधूमत्वाद्यवच्छेद्यत्वाभावसत्त्वात् । न च विशेषणान्तरविशिष्टधूमत्वाद्यवच्छेद्यत्वाप्रसिद्ध्या नातिव्याप्तिरिति वाच्यम् । घटावृत्तिजातिमत्सामान्याभावप्रतियोगितायामेव तत्प्रसिद्धेरिति चेन्न । दण्डाद्यात्मकसाध्यतावच्छेदकस्य साध्यनिष्ठभेदप्रतियोगितानवच्छेदकत्वासम्भवेऽपि व्यभिचारनिरूपकाधिकरणं यत्तद्वृत्त्यन्यत्वस्याखण्डस्य तथात्वात्तदवच्छेद्यत्वाभावस्यापि हेतुसमानाधिकरणाभावप्रतियोगितासामान्येऽसत्त्वेन दण्डादिसाध्यके ऽनतिप्रसङ्गात् ।

अथ वा साध्यतावच्छेदकवन्निष्ठभेदप्रतियोगितायां यादृशरूपावच्छिन्नत्वं नास्ति तादृशरूपावच्छिन्नत्वाभावस्य विवक्षणीयत्वाद् दण्डादिसाध्यतावच्छेदकके व्यभिचारिणि दण्डादिनिष्ठभेदप्रतियोगितायां तत्ताविशिष्टदण्डाद्यवच्छिन्नायां दण्डत्वादिविशिष्टावच्छेद्यत्वाभावसत्त्वाद्दण्डादिसामान्याभावप्रतियोगितायां च तादृशाभावासत्त्वेनातिव्याप्त्यनवकाशात् । अवच्छेदकतयोरेकसम्बन्धावच्छिन्नत्वे निवेश्य सम्बन्धभेदनिबन्धनो दोषो निरस्यः।

सत्तावान् जातेरित्यादौ सत्तात्वादेर्हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकाविशिष्टसत्तात्वाद्यनतिरिक्तवृत्तितयाऽव्याप्तिरिति प्रतियोगितावच्छेदकाव्यभिचारित्वरूपस्य स्वव्यापकतत्कत्वरूपस्य च तदनतिरिक्तवृत्तित्वस्य निवेशो न सम्भवतीति यद्धर्मविशिष्टस्य प्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नाव्यभिचा-

रिता, प्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नस्य वा यद्रूपविशिष्टव्यापकता तत्तद्रूपं प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव निवेशनीयम्, तावतैव च वह्निघटोभयत्वादिरूपप्रतियोगितावच्छेदकमादाय वह्नित्वादेः पारिभाषिकावच्छेदकत्वनिरासः सम्भवति, वह्नित्वादिविशिष्टस्य तादृशोभयत्वाद्यवच्छिन्नव्यभिचारित्वात्, तादृशोभयत्वादेर्वह्नित्वादिविशिष्टव्यापकतानवच्छेदकत्वाच्चेति प्रतियोगितावच्छेदके स्वसमानवृत्तिकत्वविशेषणनिवेशं विनैव निर्वाहः, एवं यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नत्वाभावस्य प्रतियोगिताधर्मिकस्य व्याप्तिघटकतापक्षेऽपि तदन्यूनवृत्तित्वं यदि तद्व्यापकत्वं तदा सत्तात्वव्यापकविशिष्टसत्तात्वावच्छिन्नत्वस्य हेतुसमानाधिकरणाभावप्रतियोगितायां सत्त्वादुक्तस्थले व्याप्तिरिति तद्विशिष्टव्यापकतावच्छेदकत्वरूपं तदन्यूनवृत्तित्वमेव निवेश्यम्, तावतैव वह्निघटोभयत्वादेर्वह्नित्वादिविशिष्टव्यापकतानवच्छेदकतया धूमादिसमानाधिकरणाभावप्रतियोगितायां तादृशोभयत्वाद्यवच्छिन्नत्वसत्त्वेऽप्यव्याप्त्यनवकाशात् । यद्धर्मान्यूनवृत्तिधर्मे यद्धर्मसमानवृत्तिकत्वविशेषणप्रक्षेपमन्तरेणैव सामञ्जस्यमित्याशयेनाह । वस्तुतस्त्वित्यादि ।

(दी०) वस्तुतस्तु तदवच्छिन्नप्रतियोगिताकाभाववदसम्बद्धत्वविशिष्टसामान्यकत्वम्, स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वं वा तदनतिरिक्तवृत्तित्वं वक्तव्यम् ।

(गा०) तदवच्छिन्नेति । तत्पदमनतिरिक्तवृत्तित्वप्रतियोगिभूतहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वपर्याप्त्यधिकरणपरम् । स्वपदमनतिरिक्तवृत्तित्वेनाभिमतपरम् । धूमत्वाद्यवच्छिन्नाभाववति मेयधूमत्वादिविशिष्टस्यासम्बद्धतया मेयधूमत्वादेरवच्छेदकतानिर्वाहः । धूमत्वाद्याश्रयमहानसीयधूमाद्यभाववति धूमत्वादिविशिष्टस्य सम्बद्धतया धूमत्वादेरवच्छेदकत्वानुपपत्त्या तद्धूमत्वादिरूपावच्छेदकभेदमादायातिव्याप्तिरिति तदाश्रयप्रतियोगिकत्वं परित्यज्य तदवच्छिन्नप्रतियोगिताकत्वमभावविशेषणमुपात्तम् । हेतुसमानाधिकरणाभावप्रतियोगितायां यस्य येन सम्बन्धेनावच्छेदकता तेन सम्बन्धेन तदवच्छिन्नत्वं निवेशनीयम्, तेन विषयितया धूमत्वाद्यवच्छिन्नस्य ज्ञानादेर-

भाववति धूमत्वादिविशिष्टधूमादेः सम्बद्धत्वेऽपि न धूमत्वादेरवच्छेदकत्वानुपपत्तिः । उत्पत्तिकालावच्छेदेन धूमत्वाद्यवच्छिन्नाभाववति धूमत्वादिविशिष्टस्य संयोगरूपसाध्यतावच्छेदकसम्बन्धेन सम्बद्धतया तादृशं स्वं गुणत्वादिकमेवेति संयोगेन धूमादिसाध्यके व्यभिचारिण्यतिप्रसङ्गस्य वारणाय प्रतियोगिवैयधिकरण्यमभावे विशेषणं देयम् । धूमाद्यभावस्यापि ह्रदादौ प्रतियोगिव्यधिकरणतया तद्भाववारणासम्भवात् । साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगिमद्वृत्तिर्यो यस्तद्भिन्नत्वनिवेशे संयोगेनावृत्तेर्गुणादेरेवाभावस्य प्रसिद्ध्या तद्वति धूमत्वादिविशिष्टस्य संयोगेन सम्बद्धतया धूमत्वादेरवच्छेदकत्वानुपपत्त्या पूर्ववद् गुणत्वादेरेवावच्छेदकत्वादतिव्याप्तितादवस्थ्यम् । स्वपदेनानुयोगिभूताभावोपादाने संयोगेन साध्यतायां सद्धेतौ तादृशसम्बन्धेन गुणाभावप्रतियोगिनोऽधिकरणाप्रसिद्ध्या तादृशाभावाप्रसिद्धेरव्याप्तिरतः प्रतियोगिवैयधिकरण्यविशिष्टाभावाधिकरणासम्बद्धत्वं विवक्षणीयम् । द्रव्यं गुणादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकपृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वाद्यवच्छिन्नाभावप्रतियोग्यनधिकरणगुणादौ द्रव्यत्वत्वादिविशिष्टस्यासम्बद्धतया द्रव्यत्वत्वादेरवच्छेदकत्वापत्तिरिति प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यमेव प्रवेश्यम् । तद्धर्मस्य तद्धर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वेनोपादानं शिरोवेष्टनेन नासिकास्पर्शमनुकरोतीति तद्धर्मावच्छिन्नवैयधिकरण्यविशिष्टत्वमेव निवेशनीयम् । तद्धर्मावच्छिन्नानधिकरणासम्बद्धस्वविशिष्टसामान्यकत्वं तु फलितार्थः । तद्धर्मावच्छिन्नानधिकरणत्वं साध्यतावच्छेदकसम्बन्धेन तदसम्बन्धित्वम् । तेन गुणवान् द्रव्यत्वादित्यादौ हेतुसमानाधिकरणसमवायसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकगुणादिविषयकज्ञानत्वाद्यवच्छिन्नस्य विषयतया द्रव्यादिसम्बद्धस्य सम्बन्धसामान्येनानधिकरणे नित्यगुणादौ गुणत्वादिविशिष्टस्यासमेवतत्वेऽपि न गुणत्वादेरवच्छेदकताप्रसङ्गः । एवं च महाकालो घटवान् कालपरिमाणादित्यादौ उभयाभावघटितप्रतियोगिवैयधिकरण्यशालिहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकगगनत्वादिविशिष्टस्य साध्यतावच्छेकसम्बन्धेन सम्बन्धिनोऽप्रसिद्ध्याऽव्याप्तेर्वारणाय साध्यतावच्छेदकसम्बन्धसामान्ये तद्-

वच्छिन्नप्रतियोगिकत्वयदधिकरणानुयोगिकत्वोभयाभाववत्तदधिकरणासम्बद्धत्वविशिष्टसामान्यकत्वं विवक्षणीयम्। ईदृशं च स्व तत्र गगनत्वादिकमेव प्रसिद्धमिति नाऽव्याप्तिः। तदसम्बद्धत्वं च तदनुयोगिकसाध्यतावच्छेदकसम्बन्धाप्रतियोगित्वं तेन संयोगादिसम्बन्धेन घटत्वाद्यवच्छिन्नाभाववति ज्ञाने कपालादौ विषयित्वसमवायादिना घटत्वादिविशिष्टस्य सम्बद्धत्वेऽपि वह्निमान् धूमादित्यादौ नावच्छेदकाप्रसिद्धिः। तादात्म्येन साध्यतायां साध्यतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्याऽव्याप्तिः स्यादित्यवृत्तित्वमुपेक्ष्यासम्बद्धत्वानुधावनम्। विशिष्टसत्तावान् जातेरित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति गुणादौ विशिष्टसत्तात्वाद्याश्रयसत्तादेः सम्बद्धतया विशिष्टसत्तात्वादेरवच्छेदकत्वानुपपत्तिरिति स्वाश्रयेऽसम्बद्धत्वमनिवेश्य स्वविशिष्टे तन्निवेशनम्।

यद्यपि विशेष्यस्य तत्सम्बन्धित्वे विशिष्टे तदसम्बन्धित्वं दुर्घटम्, तथापि स्वविशिष्टप्रतियोगिकत्वाभाववत्त्वावच्छिन्नाभाववदनुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्यकत्वस्य तदवच्छिन्नाभाववदनुयोगिकसाध्यतावच्छेदकसम्बन्धप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणापर्याप्तविषयतापर्याप्त्यधिकरणत्वस्य वा विवक्षणीयतया न दोषः। स्वविशिष्टप्रतियोगिकत्वानि च विशिष्योपादाय तदभावकूटमेव निवेशनीयम्। तेन मेयधूमत्वादिविशिष्टप्रतियोगिकत्वत्वावच्छिन्नाभावस्य गुरुधर्मस्याभावप्रतियोगितानवच्छेदकतामतेऽप्रसिद्धावपि न क्षतिः।

वस्तुतो मेयधूमत्वादिविशिष्टप्रतियोगिकत्वाभावस्य शुद्धधूमत्वादिप्रकारकज्ञाननिष्ठविषयितासम्बन्धसाधारणत्वाद् धूमत्वादिविशिष्टप्रतियोगिकत्वरूपस्य लघुधर्मस्य न तत्प्रतियोगितावच्छेदकत्वसम्भव इति न मेयधूमत्वादिविशिष्टप्रतियोगिकत्वत्वावच्छिन्नाभावाप्रसिद्धिरिति सामान्यत एकाभावनिवेशोऽपि सम्भवतीति ध्येयम्।

येन रूपेण यस्य यद्धर्मिसम्बन्धिता तदन्यरूपावच्छिन्ने तत्र तत्सम्बद्धत्वाभावसत्त्वमभ्युपेत्य वा एतल्लक्षणम्। द्वितीयलक्षणं च तदनभ्युपगमेन। धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकमहानसीयवह्नित्वाद्यवच्छिन्नाभाववति वह्नित्वादिवि-

शिष्टमहानसीयवह्न्यादेरसम्बद्धतया वह्नित्वादावतिप्रसङ्गवारणाय सामान्यपदम् ।

अथ साध्यतावच्छेदकसंयोगादिसम्बन्धेन घटत्वाद्यवच्छिन्नाभाववति कालिकादिसम्बन्धेन घटत्वादिविशिष्टस्य पटादेः संयोगादिसम्बन्धेन सम्बद्धत्वादवच्छेदकाप्रसिद्धिः । साध्यतावच्छेदकताघटकसम्बन्धेन स्वविशिष्टत्वानिवेशेऽपि कालिकसम्बन्धेन घटत्वादिविशिष्टस्य कालिकसम्बन्धेन साध्यतायां महाकालपरिमाणादिहेतुके ऽवच्छेदकाप्रसिद्धिर्दुर्वारैव गगनत्वाद्यवच्छिन्नाभाववति काले कालिकसम्बन्धेन गगनत्वादिविशिष्टस्य स्पन्दादेः कालिकसम्बन्धेन सम्बद्धत्वात् । प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धेन वैशिष्ट्यनिवेशे घटत्वादिसमनियतासमवेतगुरुधर्मस्य यत्र साध्यतावच्छेदकता तत्र तादृशधर्मस्य घटत्वादिकमादायावच्छेदकत्वानुपपत्तिः । घटत्वादेः समवायेन घटाद्यभावप्रतियोगितावच्छेदकत्वात्तत्सम्बन्धेन च तद्धर्मविशिष्टाप्रसिद्धेरिति चेन्न । यत्किञ्चित्सम्बन्धेन स्वविशिष्टसामान्ये ऽसम्बद्धत्वनिवेशनेन सामञ्जस्यात् ।

न चैवं वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नाभाववति विषयितासम्बन्धेन वह्नित्वविशिष्टस्य साध्यतावच्छेदकसंयोगेनाऽसम्बद्धत्वाद्वह्नित्वादेर्गुणवान् द्रव्यत्वादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसविषयकत्वाद्यवच्छिन्नाभाववति घटादौ विषयितया गुणत्वादिविशिष्टस्याऽसमवेतत्वात् गुणत्वादेरवच्छेदकत्वापत्त्याऽव्याप्तिरिति वाच्यम् । साध्यतावच्छेदके तादृशपारिभाषिकावच्छेदकताशून्यत्वमनिवेश्य साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकावच्छिन्ननिरूपिताधिकरणत्वांशे साध्यसामानाधिकरण्यघटके पारिभाषिकावच्छेदकताघटकसम्बन्धेन तादृशावच्छेदकावच्छिन्नानिरूपितत्वस्य निवेशनीयतया विषयितया वह्नित्वादेरवच्छेदकत्वेऽपि समवायरूपसाध्यतावच्छेदकताघटकसम्बन्धेन वह्नित्वाद्यवच्छिन्ननिरूपितायामधिकरणतायां विषयितासम्बन्धेन वह्नित्वाद्यवच्छिन्ननिरूपितत्वाभावसत्त्वेन लक्षणसमन्वयात् । गुरुधर्मस्यापि प्रतीतिबलेनाधिकरणतानिरूपकतावच्छेदकत्वोपगमान्न गुरुधर्मावच्छिन्नसाध्यकस्थले साध्यतावच्छेदकावच्छिन्नाधिकरणत्वाप्रसिद्धिः ।

अथ यावच्छेदकताघटकसम्बन्धेनावच्छेदकविशिष्टवृत्तिविधेयिताकत्वं साध्यतावच्छेदकतावच्छेदकसम्बन्धेन साध्यतावच्छेदकविशिष्टविशेषणमङ्गीकार्यम् । समवायसम्बन्धेन वह्नित्वादिविशिष्टस्य या विषयता तस्याः सम्बन्धान्तरेण वह्नित्वादिविशिष्टनिष्ठविषयतान्यतया नाव्याप्त्यवकाशः । स्वरूपसम्बन्धरूपावच्छेदकताप्रवेशमतेऽपि ईदृशी रीतिरेवादरणीया, अन्यथा वह्नित्वादिधर्मिकानवच्छेदकत्वादिग्रहस्य वह्नित्वाद्यवच्छिन्नविधेयकानुमितिहेतुत्वे धर्मितावच्छेदकतया वह्नित्वत्वादिविषयताया हेतुतावच्छेदककोटौ निवेशात् गौरवस्य वह्नित्वत्वाद्यनुपस्थितिदशायां वह्निमानित्याद्याकारकानुमित्यनुपपत्तेश्च दुर्वारत्वात् ।

अत्र च यत्किञ्चिद्धेत्वधिकरणासम्बद्धत्वविशिष्टसामान्यकत्वस्य लघोरवच्छेदकान्तार्थत्वसम्भवे हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नाभाववदसम्बद्धत्वविशिष्टसामान्यकत्वस्य गुरुतरस्य निवेशनं मूलोपात्तप्रतियोगितान्तस्य यथाश्रुतार्थकत्वानुरोधेन । अन्यथाऽवच्छेदकान्तसमुदायस्य पारिभाषिकैकपदतापत्तेः । यथा निरुक्तावच्छेदकतानिवेशोऽवच्छेदकपदस्यैवावच्छेदकावच्छिन्नाभाववदसम्बद्धत्वविशिष्टसामान्यकत्वे पारिभाषिकत्वं तद्वत् ।

अत्र च जातिमान् मेयत्वादित्यादौ जातित्वादेरवच्छेदकत्वानुपपत्तिः, हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूतयद्धर्मावच्छिन्नाभाववति साध्यतावच्छेदकसमवायसम्बन्धेन सम्बद्धत्वप्रसिद्धिस्तद्धर्मावच्छिन्नाभाववति जातित्वादिविशिष्टस्याऽपि समवेतत्वात् । जातित्वाद्यवच्छिन्नाभाववति च समवेतत्वस्यैवाप्रसिद्ध्या तदभाववदसमवेतत्वस्य जातित्वादिविशिष्टादौ दुर्निरूपत्वात् । एवं यथाश्रुते विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तात्वादेरप्यवच्छेदकत्वानुपपत्तिरतोऽन्यथानतिरिक्तवृत्तित्वं निर्वक्ति । स्वविशिष्टेति । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकशुद्धधूमत्वादेर्मेयधूमत्वादिविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतया मेयधूमत्वादेरवच्छेदकत्वोपपत्तिः । जातिमान् मेयत्वादित्यादौ मेयत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकजातित्वादेर्जातित्वविशिष्टसमवायिनिष्ठाभावप्रतियोगितानवच्छेदकतया तस्य तथात्वोपपत्तिः । विशिष्ट-

सत्तावान् जातेरित्यादौ द्रव्यत्वत्वविशिष्टसत्तात्वादेर्विशिष्टसत्ताश्रयसम्बन्धिगुणादिनिष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि विशिष्टसत्तात्वादिविशिष्टसम्बन्धिद्रव्यादिनिष्ठाभावप्रतियोगितानवच्छेदकत्वाद्विशिष्टसत्तात्वादेरवच्छेदकतानिर्वाहः । सम्बन्धित्वं साध्यतावच्छेदकसम्बन्धेन बोध्यं तेन घटत्वादेर्विषयितादिसम्बन्धेन घटत्वादिविशिष्टसम्बन्धिज्ञानादिनिष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि तावच्छेदकाप्रसिद्धिः ।

अथैवं महाकालो घटवान् कालपरिमाणादित्यादावबच्छेदकाप्रसिद्धिः । साध्यतावच्छेदकसम्बन्धेन गगनत्वादिविशिष्टसम्बन्धिनोऽप्रसिद्ध्या स्वपदेन गगनत्वाद्युपादानासम्भवात् ।

न च सम्बन्धसामान्येन स्वविशिष्टसम्बन्धिनिष्ठः सम्बन्धसामान्येन प्रतियोगिव्यधिकरणाभावो निवेश्यः । विषयितया गगनत्वादिविशिष्टसम्बन्धिनि तद्विषयकज्ञानादौ सम्बन्धसामान्येन प्रतियोगिव्यधिकरणस्य तादृशज्ञानासमानकालिकतत्तद्घटाभावादेः प्रतियोगितायां गगनत्वादेरनवच्छेदकत्वादुक्तस्थले गगनत्वादिकमवच्छेदकं प्रसिध्यति, तादृशज्ञानादौ कालिकसम्बन्धेन गगनादेरभावसत्त्वेऽपि तस्य विषयितासम्बन्धेनैव प्रतियोगिसमानाधिकरणतया सम्बन्धसामान्येन प्रतियोगिव्यधिकरणत्वाभावादिति वाच्यम् । वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकज्ञानत्वादेर्वह्नित्वादिविशिष्टसम्बन्धिनिष्ठस्य सम्बन्धसामान्येन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकतया वह्नित्वादेरवच्छेदकत्वापातात् । ज्ञानत्वावच्छिन्नाभावस्य विषयतासम्बन्धेन प्रतियोगिसमानाधिकरणतया लक्षणाघटकत्वात् ।

न च तादात्म्यसम्बन्धेन स्वविशिष्टसम्बन्धिनिष्ठभेदप्रतियोगितानवच्छेदकत्वं विवक्षणीयम्, कालो घटवान् कालपरिमाणादित्यादौ गगनत्वादिविशिष्टाभिन्ननिष्ठभेदप्रतियोगितानवच्छेदकत्वाद् गगनत्वादिकमवच्छेदकमिति वाच्यम् । सत्तावान् जातेरित्यादौ तादात्म्येन सत्तात्वादिविशिष्टसम्बन्धिनि सत्तादौ यो भेदस्तत्प्रतियोगितानवच्छेदकत्वस्य विशिष्टसत्तात्वादौ सत्त्वेन सत्तात्वादेरवच्छेदकत्वापातात् । तादात्म्यसाध्यतावच्छेदकान्यतरसम्बन्धेन स्वविशिष्टसम्बन्धिनिष्ठस्य तेन सम्बन्धेन प्रतियोगिव्यधिकरणा-

भावस्य निवेशेऽपि घटत्वाभाववान् घटान्यत्वादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकघटत्वाभावान्यवृत्तित्वविशिष्टघटत्वाभावत्वादेरन्यतरसम्बन्धेन घटत्वाभावत्वादिविशिष्टसम्बन्धिनिष्ठस्यान्यतरसम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकत्वादव्याप्त्यापत्तेः। घटत्वाभावत्वादिविशिष्टसम्बन्धिनि पटादौ घटत्वाभावान्यवृत्तित्वविशिष्टघटत्वाभावत्वाद्यवच्छिन्नस्य साध्यतावच्छेदकसम्बन्धेन सत्त्वात्, घटत्वाभावे च तदवच्छिन्नस्य तादात्म्यसम्बन्धेन सत्त्वात्तादृशतदभावस्याऽन्यतरसम्बन्धेन प्रतियोगिसमानाधिकरणत्वात्।

एतेन यत्किञ्चित्सम्बन्धेन स्वविशिष्टसम्बन्धिनिष्ठो यस्तेन सम्बन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकत्वविवक्षापि निरस्ता। तादात्म्येन सत्तात्वाद्यवच्छिन्नं प्रति तत्सम्बन्धेन विशिष्टसत्तात्वाद्यवच्छिन्नस्य व्यापकतयोक्तस्थले सत्तात्वादेरवच्छेदकताया दुर्वारत्वात्। कालिकसम्बन्धेन वह्नित्वाद्यवच्छिन्नं प्रति तेन सम्बन्धेन घटत्वाद्यवच्छिन्नस्य व्यापकतया वह्निमान् धूमादित्यादौ वह्नित्वादेरवच्छेदकत्वापाताच्च।

न च येन येन सम्बन्धेन यो यः स्वविशिष्टसम्बन्धी तेन तेन सम्बन्धेन प्रतियोगिव्यधिकरणो यस्तन्निष्ठोऽभावस्तत्प्रतियोगितानवच्छेदकत्वं विवक्षणीयम्, संयोगसमवायादिना वह्नित्वसत्तात्वाद्यवच्छिन्नं प्रति तेन सम्बन्धेन घटत्वविशिष्टसत्तात्वाद्यवच्छिन्नस्याऽव्यापकतया च नोक्तदोषावकाश इति वाच्यम्। एवं सति विषयितासम्बन्धेन कम्बुग्रीवादिमत्त्वादिविशिष्टसम्बन्धिनि तेन रूपेण घटाद्यवगाहिनि घटत्वाद्यप्रकारकज्ञानादौ विषयितया घटत्वादिविशिष्टस्यासत्त्वेन घटत्वादेस्तेन सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणाभावप्रतियोगितावच्छेदकतया घटत्वादिकमादाय कम्बुग्रीवादिमत्त्वादेरवच्छेदकत्वनिर्वाहासम्भवात्।

न च हेतुसमानाधिकरणाभावीययत्सम्बन्धावच्छिन्नयत्किञ्चित्प्रतियोगितायां यदवच्छेदकं तेन सम्बन्धेन स्वविशिष्टसम्बन्धिनिष्ठस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्य साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकत्वं तस्य वाच्यम्, घटवान् कालपरिमाणादित्यादौ तादात्म्यं वि-

षयितां च तादृशसम्बन्धमादाय गगनत्वादेरवच्छेदकत्वं सङ्गमनीयम् । विशिष्टसत्तात्वादेर्गुणादिनिष्ठभेदप्रतियोगितायां गौरवेण नावच्छेदकत्वमपि तु शुद्धसत्तात्वादेरेवेति हेतुसमानाधिकरणतादृशभेदस्य साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणत्वेन तदुपादानासम्भवात् । सत्तावान् जातेरित्यादौ यत्सम्बन्धेत्यनेन तादात्म्यसम्बन्धमुपादाय सत्तात्वादेर्नावच्छेदकताप्रसङ्गः । वह्निमान् धूमादित्यादौ संयोगरूपसाध्यतावच्छेदकसम्बन्धधर्मिकोभयाभावघटितप्रतियोगिवैयधिकरण्यशालिन उत्पत्तिकालावच्छेदेन धूमाधिकरणवृत्तेः समवायसम्बन्धावच्छिन्नाभावस्य प्रतियोगितावच्छेदकं . रूपत्वादिकं वह्नित्वादिविशिष्टसमवायिनिष्ठस्य समवायेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगिनानवच्छेदकमतो वह्नित्वादेरवच्छेदकत्वापत्तिरिति प्रतियोगितावच्छेदकसम्बन्धं परित्यज्य साध्यतावच्छेदकसम्बन्धः प्रतियोगिवैयधिकरण्यशरीरे निवेशितः । तथा च सति संयोगसम्बन्धधर्मिकोभयाभावघटितप्रतियोगिवैयधिकरण्यशालिनो रूपत्वाद्यवच्छिन्नाभावस्य वह्नित्वादिविशिष्टसम्बन्धिनि सत्त्वान्नायं दोष इति वाच्यम् । वह्निद्व्यणुकत्वादेर्यत्र संयोगेन साध्यतायामवच्छेदकता तत्र तदवच्छिन्नसमवायितेजःपरमाणौ समवायसम्बन्धावच्छिन्नरूपत्वाद्यवच्छिन्नाभावासत्त्वेन तत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वस्य कालविशेषावच्छेदेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकरूपत्वादौ सत्त्वेन साध्यतावच्छेदकस्यावच्छेदकताप्रसङ्गात् ।

यत्तु स्वविशिष्टप्रतियोगिकत्वतदवच्छिन्नाभाववदनुयोगिकत्वोभयाभाववत्साध्यतावच्छेदकसम्बन्धसामान्यकत्वस्य विवक्षणीयतया न कश्चिद्दोषः । जातिमान् मेयत्वादित्यादौ जातित्वावच्छिन्नाभाववत्समवेतत्वाप्रसिद्धावपि जातित्वादिविशिष्टप्रतियोगिकत्वतादृशाभाववदनुयोगिकत्वोभयाभावस्य समवायसामान्ये सत्त्वेन जातित्वादेरवच्छेदकत्वोपपत्तेः । कालो घटवान् कालपरिमाणादित्यादौ कालिकसम्बन्धेन गगनत्वादिविशिष्टसम्बन्ध्यप्रसिद्धावपि तादृशसम्बन्धसामान्ये गगनत्वादिविशिष्टप्रतियोगिकत्वतदवच्छिन्नाभाववदनुयोगिकत्वोभयाभावसत्त्वेन गगनत्वादेरवच्छे-

दकतानिर्वाहादिति तन्न । तावता प्रथमलक्षणस्यैव परिष्कारेण द्वितीयलक्षणानुसरणानुपपत्तेः ।

अत्र वदन्ति साध्यतावच्छेदकसम्बन्धेन यदवच्छेदकविशिष्टसम्बन्धिनः प्रसिद्धिर्यत्र तदवच्छिन्नाभाववत्सम्बद्धत्वविशिष्टसामान्यकत्वमेव तत्र तदवच्छेदकत्वम्, तेन घटवान् कालपरिमाणादित्यादौ गगनत्वादाववच्छेदकत्वप्रसिद्धिः, यदवच्छेदकविशिष्टे तदवच्छिन्नाभाववति साध्यतावच्छेदकसम्बन्धेन सम्बद्धत्वाप्रसिद्ध्या तदभावो दुर्निरूपः तत्रावच्छेदकत्वं स्वविशिष्टेत्यादिरूपम्, तेन जातिमान् मेयत्वादित्यादौ जातित्वादेरवच्छेदकत्वोपपत्तिः। सर्वसाधारणस्यैकविधावच्छेदकत्वस्य दुर्वचत्वेऽपि न क्षतिर्वाकारो व्यवस्थितविकल्पार्थक इति ।

अत्रेदं चिन्त्यते । द्वयावच्छेदकत्वयोरभावद्वयविषयकज्ञानमनुमितिहेतुः, प्रत्येकाभावस्य वा वैकल्पिकी कारणता ? आद्ये, कालो घटवान् कालपरिमाणादित्यादौ भ्रमं विनानुमित्यनुपपत्तिः, द्वितीयस्यावच्छेदकत्वस्याऽसिद्धेः । द्वितीये, जातिमान् मेयत्वादित्यादौ प्रथमनिरुक्तावच्छेदकत्वाभावस्य जातित्वेऽबाधितत्वात्तज्ज्ञानाद्भ्रमं विनैवानुमित्यापत्तिः ।

न च साध्यसाधनभेदेन कार्यकारणभावभेदस्याऽऽवश्यकत्वात् कालिकसम्बन्धेन घटादिसाध्यककालपरिमाणादिहेतुकानुमितौ प्रथमनिरुक्तावच्छेदकत्वाभावज्ञानस्यैव, मेयत्वादिलिङ्गकजात्याद्यनुमितौ च चरमनिरुक्तावच्छेदकत्वाभावज्ञानस्यैव हेतुतास्वीकारान्नोक्तदूषणद्वयावकाश इति वाच्यम् । साध्यसाधनभेदेनानुमितिव्याप्तिज्ञानयोः कार्यकारणभावभेदेऽपि एकसाध्यसाधनस्थले यादृशज्ञानादनुमितिस्तादृशज्ञानसत्त्वेऽन्यत्रानुमित्यनुत्पादस्यानुभवविरुद्धतया प्रथमनिरुक्तावच्छेदकत्वाभावज्ञानात्कालो घटवान् कालपरिमाणादित्यत्राऽनुमितिस्वीकारे तादृशज्ञानान्मेयत्वादिलिङ्गकजात्याद्यनुमितेरवश्यस्वीकरणीयत्वापातात् । अन्यथा सद्धेतुकानुमितावतिव्याप्तिवारणायोपात्तप्रतियोगितावच्छेदकावच्छिन्नत्वाद्यविषयकतज्ज्ञानस्यैव लाघवेन हेतुत्वापत्तिः । मेयत्वादिलिङ्गकजात्याद्यनुमितौ चरमनिरुक्तावच्छेदकत्वाभावज्ञानस्यैव हेतुत्वे समवेतमात्रमेव सकलहेतुमति समवेतमिति भ्रमदशायामनुमित्युपपादनाऽसम्भवाच्च ।

तदानीं समवेतवृत्तितया गृहीतघटत्वादिविशिष्टव्यापकतावच्छेदके हेतुव्यापकतावच्छेदकत्वग्रहादसमवेतवृत्तितया गृहीतगगनत्वादिविशिष्टस्य च समवायेन सम्बन्धिताया दुर्ग्रहत्वात् स्वविशिष्टत्वादिरूपावच्छेदकत्वस्य क्वचिदपि गृहीतुमशक्यत्वात् । वृत्तिमन्मात्रमेव महाकाले कालिकसम्बन्धेन वर्तते इति निश्चयदशायां महाकालत्वादिहेतुकघटाद्यनुमितेरिव तदानीं मेयत्वादिलिङ्गकजात्याद्यनुमितेर्दुरपह्नवत्वादिति ।

इदं तु तत्त्वम् । यद्रूपावच्छिन्नस्य येन सम्बन्धेन सम्बन्धिनि वर्तमानस्य तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं तेन सम्बन्धेन तद्रूपावच्छिन्नविशिष्टावृत्तिविषयतावान् यः साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नविशिष्टस्तद्वृत्तित्वं व्याप्तिः । धूमवान् वह्नेरित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं धूमत्वादिकं संयोगादिसम्बन्धेन धूमत्वाद्यवच्छिन्नसम्बन्धिनिष्ठस्य तत्सम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकं साध्यतावच्छेदकीभूततादृशसम्बन्धेन धूमत्वाद्यवच्छिन्नविशिष्टनिष्ठविषयता च न तेन सम्बन्धेन धूमत्वाद्यात्मकतद्रूपावच्छिन्नविशिष्टावृत्तिरिति नातिप्रसङ्गः । महाकालो घटवान् कालपरिमाणादित्यादौ साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावस्य प्रतियोगितावच्छेदकं गगनत्वादिकमेव तादात्म्यादिना तद्विशिष्टसम्बन्धिनि वर्तमानस्य तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकं तेन सम्बन्धेन तदवच्छिन्नविशिष्टावृत्तित्वं च कालिकसम्बन्धेन घटत्वाद्यवच्छिन्नविशिष्टनिष्ठविषयताया इति लक्षणसमन्वयः । धूमादिसमानाधिकरणस्य साध्यतावच्छेदकसंयोगादिसम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितावच्छेदकं ज्ञानत्वादिकं वह्नित्वादिविशिष्टसम्बन्धिनिष्ठस्य सम्बन्धसामान्येन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकं ज्ञानाद्यभावस्य विषयतासम्बन्धेन प्रतियोगिसमानाधिकरणत्वादिति वह्नित्वादेरवच्छेदकत्वप्रसङ्ग इत्यतस्तेन सम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशनम् । संयोगादिना वह्न्यादिमन्निष्ठो ज्ञानाद्यभा-

पक्ष संयोगादिसम्बन्धधर्मिकोभयाभावघटितप्रतियोगिवैयधिकरण्याश्रय इति न दोषः। साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशे कालः सर्ववान् मेयत्वादित्यादौ सर्वत्वस्यावच्छेदकत्वोपपत्तये उभयाभावघटितस्यैव प्रतियोगिवैयधिकरण्यस्य निवेशनीयतया तादात्म्यादिना गगनादिसम्बन्धिगगनादिनिष्ठगगनाद्यभावस्य कालिकसम्बन्धधर्मिकोभयाभावघटितप्रतियोगिवैयधिकरण्यशालितया कालो घटवान् महाकालत्वादित्यादाववच्छेदकाप्रसिद्धितादवस्थ्यमिति तादृशसम्बन्धेन तन्निवेशितम्। सत्तावान् जातेरित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकाविशिष्टसत्तात्वादेः सत्तात्वाविशिष्टसम्बन्धिनिष्ठप्रतियोग्यधिकरणाभावप्रतियोगितानवच्छेदकतया सत्तात्वादेरवच्छेदकत्वापत्तितः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यमेव निवेशनीयम्।

न च सर्वत्वावच्छिन्नस्य यत्र विषयितासम्बन्धेन साध्यता ज्ञानत्वादिकं हेतुस्तत्र सर्वत्वस्य पारिभाषिकावच्छेदकत्वानुपपत्तिः सर्वत्वविशिष्टस्य विषयितासम्बन्धेन सम्बन्धिनि सर्वविषयकज्ञाने तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरिति वाच्यम्। घटत्वाद्यवच्छिन्नाविषयके सर्वत्वावच्छिन्नविषयकेऽस्मदादिज्ञाने घटत्वाद्यवच्छिन्नाभावस्यैव प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नव्यधिकरणतया सर्वत्वस्य तादृशाभावप्रतियोगितानवच्छेदकत्वेन सर्वत्वस्यावच्छेदकत्वोपपत्तेः।

न चैवमपि यत्र नित्यत्वविशिष्टसर्वत्वं साध्यतावच्छेदकं तत्र अन्यज्ञानस्य साध्यतावच्छेदकीभूतस्वविशिष्टसम्बन्धित्वान्नित्यज्ञाने चाभावस्य प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यस्याऽप्यसम्भवात्तादृशसाध्यतावच्छेदके पारिभाषिकावच्छेदकत्वानुपपत्तिरिति वाच्यम्। नित्यज्ञानाधिकरणे नित्यत्वविशिष्टसर्वमिति ज्ञाने विषयितया नित्यत्वविशिष्टसम्बन्धितया अनपायात् तत्र तदसत्त्वे तुल्ययुक्त्या अन्यत्वविशिष्टस्य घटादेरपि ईश्वरज्ञानसम्बन्धितया तादृशविशिष्टाभावस्यैव ईश्वरज्ञाने विशिष्टप्रतियोगिव्यधिकरणस्य सुलभत्वसम्भवात्। अन्यत् सर्वं पूर्ववद्बोध्यम्।

यद्रूपावच्छिन्नस्य येन सम्बन्धेन सम्बन्धिनि वर्तमानस्य तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकं हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं तत्सम्बन्धिनिष्ठतद्रूपावच्छिन्नप्रतियोगिकत्वाभिन्नं यत्साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वं तद्वत्साध्यतावच्छेदकसम्बन्धिसम्बन्धो वा व्याप्तिः । प्रतियोगित्वाद्यन्तर्भावासहिष्णुतायां यद्रूपावच्छिन्नस्य यादृशसम्बन्धेनाऽसम्बन्धित्वं हेतुमत्तस्तादृशसम्बन्धनिष्ठतद्रूपावच्छिन्नप्रतियोगिताकत्वाभिन्नत्वमेव साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वे निवेशनीयमिति दिक् ।

यथाश्रुतानतिरिक्तवृत्तित्वपदार्थपरित्यागप्रयोजनं स्वयमेव दर्शयति ।

( दी० ) अत एव सत्तावान् जातेरित्यादौ जातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणान्यत्वविशिष्टसत्तात्वतुल्यवृत्तिकत्वेऽपि सत्तात्वस्य न क्षतिः । एवं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं बोध्यम् ।

( गा० ) अत एवेति । ईदृशानतिरिक्तवृत्तित्वनिवेशादेवेत्यर्थः । विशिष्टसत्तात्वतुल्यवृत्तिकत्वेऽपीति । स्वव्यापकस्वपर्याप्त्यधिकरणपर्याप्तविशिष्टसत्तात्वकत्वेऽपीत्यर्थः । न क्षतिः । न सत्तात्वादेरवच्छेदकत्वापत्तिः । प्रतियोगिताधर्मिकोभयाभावघटितव्याप्तिपक्षे विशिष्टसत्तात्वादेः सत्तात्वाद्यन्यूनवृत्तितामादायाऽव्याप्तिवारणाय व्यापकत्वं परित्यज्याऽन्यादृशमन्यूनवृत्तित्वं निवेशयति । एवमिति । स्वविशिष्टेति । स्वपदं साध्यतावच्छेदकपरम्, तथा च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितासामान्यवृत्तितत्सम्बन्धावच्छेद्यत्वस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वोभयाभावकत्वं तेन सम्बन्धेन व्यापकतावच्छेदकत्वं बोध्यमित्यर्थः । विशिष्टसत्तात्वादेर्विशिष्टसत्तात्वाश्रयसम्बन्धिगुणादिनिष्ठाभावप्रतियोगितावच्छेदकतया तदनवच्छेदकसत्तात्वाद्यवच्छेद्यत्वाभावस्य जात्यादिसमानाधिकरणाभावप्रतियोगितायां सत्वेन विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरतः स्वविशिष्टेति । स्ववैशिष्ट्यं च साध्यतावच्छे-

दकताघटकसम्बन्धेन बोध्यम्, अन्यथा धूमवान् वह्नेरित्यादौ कालिकादिसम्बन्धेन धूमत्वादिविशिष्टवह्न्यादिसंयोगिनिष्ठाभावप्रतियोगितायां धूमत्वादेरवच्छेदकतया तदनवच्छेदकद्रव्यत्वाद्यवच्छेद्यत्वाभावस्य हेतुसमानाधिकरणाभावप्रतियोगितासामान्ये सत्त्वेनाऽतिव्याप्त्यापत्तेः। सम्बन्धित्वं साध्यतावच्छेदकसम्बन्धेनापि विवक्षणीयम्, अन्यथा कालिकादिसम्बन्धेन धूमादिमति संयोगादिसम्बन्धेन धूमत्वाद्यवच्छिन्नाभावसत्त्वात् सम्बन्धसामान्येन धूमादिमन्निष्ठाभावीयसंयोगादिसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकं तादृशसम्बन्धावच्छिन्नप्रतियोगितासामान्यानवच्छेदकघटाभावत्वादिकमेव, अभावत्वादेः केवलस्यैव संयोगादिसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वेन तादृशगुरुधर्मस्याऽवच्छेदकत्वात्, भेदप्रतियोगितायां प्रसिद्धस्य तदवच्छेद्यत्वस्याभावमादाय उक्तस्थलेऽप्यतिव्याप्तिः। संयोगेन धूमत्वाद्यवच्छिन्नाभावस्योत्पत्तिक्षणावच्छेदेन धूमत्वादिविशिष्टसम्बन्धिनिष्ठतया तादृशाभावप्रतियोगितानवच्छेदकघटाभावत्वाद्यवच्छेद्यत्वाभावमादाय तत्रैवातिव्याप्तिवारणाय प्रतियोगिव्यधिकरणत्वेनाऽप्यभावो विशेषणीयः। तत्र च प्रतियोगिपदं प्रतियोगितावच्छेदकावच्छिन्नपरमेव, अन्यथा सत्तावान् जातेरित्यादौ सत्तात्वविशिष्टसम्बन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकविशिष्टसत्तात्वाद्यवच्छेद्यत्वस्य हेतुसमानाधिकरणाभावप्रतियोगितायां सत्त्वेनाव्याप्तेः। वह्न्यादिमन्निष्ठस्य घटाद्यभावस्य कालिकादिसम्बन्धेन प्रतियोगिव्यधिकरणतया सम्बन्धसामान्येन प्रतियोगिव्यधिकरणतन्निष्ठाभावप्रतियोगितावच्छेदकं तत्समानकालीनघटादिव्यक्तिनिष्ठतद्व्यक्तित्वादिकमेवेति तदनवच्छेदकघटत्वाद्यवच्छेद्यत्वस्य हेतुसमानाधिकरणाभावप्रतियोगितायां सत्त्वादव्याप्तिरतः प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यं निवेश्यं न तु साध्यतावच्छेदकसम्बन्धेन, कालो घटवान् कालपरिमाणादित्यादौ कालिकसम्बन्धेन साध्यतावच्छेदकविशिष्टसम्बन्धिनि खण्डकाले तेन सम्बन्धेन प्रतियोगिव्यधिकरणस्याभावस्य सुलभत्वेऽपि सर्ववान् कालपरिमाणादित्यादौ महाकालस्यैव कालिकसम्बन्धेन सर्वत्वविशिष्टसम्बन्धितया तत्र तादृशसम्बन्धेन

प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्त्यापत्तेः । कालिकसम्बन्धेन गगनादेर्वृत्तिमत्त्वपक्षे प्रतियोगिताघर्मिकोभयाभावघटितलक्षणकरणात्तन्मते उभयाभावघटनयाऽपि गगनाद्यभावे कालिकसम्बन्धेन वैयधिकरण्यस्य निर्वाहयितुमशक्यत्वात् ।

न च साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमप्यंऽभावप्रतियोगितायां निवेशयिष्यति, एवं च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशोऽपि सर्वत्वावच्छिन्नसाध्यके तदवच्छिन्नसम्बन्धिमहाकालनिष्ठस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणस्याभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धिः । कालिकातिरिक्तसम्बन्धावच्छिन्नाभावस्यैव प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणत्वात् तत्प्रतियोगितायां च कालिकसम्बन्धावच्छिन्नत्वविरहादित्यव्याप्तितादवस्थ्यमिति वाच्यम् । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणो यः स्वविशिष्टसम्बन्धिनिष्ठाभावस्तत्प्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तत्सम्बन्धावच्छिन्नत्वतद्धर्मावच्छिन्नत्वोभयाभाववत्ताद्दशहेतुसमानाधिकरणाभावप्रतियोगितासामान्यक यत्त्वं तद्धर्मवत्त्व तेन सम्बन्धेन व्यापकत्वमिति विवक्षया सर्वसामञ्जस्यात् । सर्वत्वविशिष्टसम्बन्धिनि महाकाले समवायादिना प्रतियोगिव्यधिकरणस्य तत्सम्बन्धावच्छिन्नघटाद्यभावस्य प्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वसर्वत्वावच्छिन्नत्वोभयाभावस्य सत्त्वात् साधनसमानाधिकरणतथाविधघटाद्यभावप्रतियोगितायामपि तथाविधोभयाभावसत्त्वेन कालिकसम्बन्धेन सर्वत्वावच्छिन्नस्य कालपरिमाणादिव्यापकत्वोपपत्तेः ।

न चैवं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रतियोगित्वाविशेषणतया प्रतियोगित्वं साध्यतावच्छेदकसम्बन्धेन वाच्यमित्यग्रिमग्रन्थविरोध इति वाच्यम् । तादृशग्रन्थस्याप्युक्तोभयाभावविशेषणतायामेव तात्पर्यात् ।

वस्तुतस्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाविशेषितप्रतियोगितासामान्ये प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणस्वविशिष्टसम्बन्धिनिष्ठाभावीयत्वयद्धर्मावच्छिन्नत्वोभयाभाव-

स्तादृशधर्म एवानवच्छेदकान्तार्थ इति नाग्रिमग्रन्थविरोधो न वा महाकालः सर्ववान् महाकालपरिमाणादित्यादावप्रसिद्धिः, प्रसिद्धायां कालिकसम्बन्धावच्छिन्नघटाद्यभावीयप्रतियोगितायां सर्वस्वविशिष्टसम्बन्धिमहाकालनिष्ठो यः समवायसम्बन्धेन प्रतियोगिव्यधिकरणस्तत्सम्बन्धावच्छिन्नघटाद्यभावस्तदीयत्वसर्वत्वाद्यवच्छिन्नत्वोभयाभावस्य सुलभत्वात्।

ननु स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वं तादृशावच्छेदकत्वावच्छिन्नप्रतियोगिताको भेदः, यत्किञ्चित्प्रतियोगिकभेदस्य तादृशावच्छेदकयत्किञ्चिद्भिन्नतादृशावच्छेदकसाधारणत्वात्। तथा च लघुरूपसमनियतं यद् गुरु रूपं तद्विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य तादृशलघुरूपविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वात्मकस्वसमानियतधर्मापेक्षया गुरुत्वेन प्रतियोगितानवच्छेदकतया तादृशावच्छेदकत्वावच्छिन्नभेदाप्रसिद्ध्या द्वितीयावच्छेदकलक्षणस्य प्रमेयधूमत्वादौ प्रतियोगिताधर्मिकोभयाभावघटितव्याप्तिलक्षणस्य प्रमेयवह्निमान् धूमादित्यादावव्याप्तिः, प्रतियोगिताधर्मिकोभयाभावघटितलक्षणेऽनवच्छेदकान्तेन स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितासामान्ये यद्रूपावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावस्तद्रूपविवक्षणे स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदाप्रवेशेऽपि सामान्यपदार्थघटकतया स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानिष्ठभेदप्रतियोगितावच्छेदकत्वावच्छिन्नभेदरूपस्य तादृशप्रतियोगितात्वव्यापकत्वस्योभयाभावविशेषणतया प्रवेशात् प्रमेयवह्नित्वाद्यवच्छिन्नसाध्यके तद्रूपविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानिष्ठभेदप्रतियोगितावच्छेदकत्वावच्छिन्नभेदाप्रसिद्ध्यैवाव्याप्तिः। साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितासामान्ये स्वविशिष्टसम्बन्धिनिष्ठाभावीयत्वयद्रूपावच्छिन्नत्वोभयाभावस्तद्रूपस्यानवच्छेदकान्तार्थत्वे प्रमेयवह्नित्वविशिष्टसम्बन्धिनिष्ठाभावीयत्वघटितोभयत्वावच्छिन्नाभावाप्रसिद्ध्यैवाव्याप्तिरित्याशङ्कयाह।

(टी०) तादृशप्रतियोगिताश्च त्रिविधोपादेयाः नातो

गुरोरवच्छेदकत्वं विना दुर्वचत्वम् । प्रतियोगित्वं सम्बन्धित्वं च साध्यतावच्छेदकसम्बन्धेन बोध्यम्, अतो न सम्बन्धभेदमादाय दोषः । कालिकविशेषणताविशेषेण च साध्यतायां तादृशप्रतियोगितावच्छेदकत्वमनिरुक्तत्वव्यक्तित्वे प्रसिद्धम् । अभावश्च प्रतियोगिव्यधिकरणो बोध्यः ।

(गा०) तादृशप्रतियोगिताश्चेति । स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितास्त्विरत्यर्थः । विशिष्य । तत्तद्व्यक्तित्वेनैवेत्यर्थः । तथा च वस्तुगत्या या याः स्वविशिष्टसम्बन्धिनिष्ठाभावीयानरूपेताः प्रतियोगितास्तत्तदवच्छेदकत्वावच्छिन्नभेदकूटवत्त्वमेवानवच्छेदकान्तार्थ इति गुरुधर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेऽपि न क्षतिः ।

यद्यपि घटत्वावच्छिन्नाभावीया या प्रतियोगिता तदवच्छेदकत्वं घटत्वादिनिष्ठतत्तद्व्यक्तित्वादिसमनियतमिति तदपेक्षया गुरुत्वेन न प्रतियोगितावच्छेदकमिति तादृशप्रतियोगिता विशिष्योपादायाऽनवच्छेदकत्वादिकं दुर्वचम् । तथाऽपि यत्र प्रतियोगितायां समशरीरनानाधर्मसमनैयत्यं तत्र नानाधर्माणामेवैकप्रतियोगितायामवच्छेदकतयावच्छेदकनिष्ठतत्तद्व्यक्तित्वानां लघुत्वेऽपि तत्प्रतियोगितावच्छेदकत्वन्यूनवृत्तितया तत्प्रतियोगितावच्छेदकत्वस्य भेदप्रतियोगितावच्छेदकत्वमव्याहतमेवेति तादृशप्रतियोगितानां विशिष्य निवेशाभिप्रायकोऽयं ग्रन्थः, अन्यादृशप्रतियोगितावच्छेदकानां च तत्तद्व्यक्तित्वेनैव भेदो निवेश्यः ।

न चावच्छेदकभेदेन प्रतियोगिताभेदान्नानाधर्मावच्छिन्नैकप्रतियोगित्वासम्भव इति वाच्यम् । अवच्छेदकासमनैयत्यस्यैव प्रतियोगिताभेदकत्वात्, समनियतनानाधर्मावच्छिन्नप्रतियोगितैक्ये बाधकविरहात् । एवं यत्रानुगतैकरूपावच्छिन्ननानाव्यक्तीनामेकप्रतियोगितावच्छेदकत्वं तत्राऽप्यवच्छेदकनिष्ठतत्तद्व्यक्तित्वानां न्यूनवृत्तितया तत्राऽपि तत्प्रतियोगितावच्छेदकत्वस्य भेदप्रतियोगितावच्छेदकत्वमक्षतम् ।

न च तत्राऽपि तत्प्रतियोगितानिरूपितावच्छेदकत्वत्वननुगत-

रूपावच्छिन्नैकावच्छेदकतायास्तद्व्यक्तित्वेन भेदप्रतियोगितायामवच्छेदकत्वसम्भवात् तत्प्रतियोगितावच्छेदकत्वत्वविशिष्टावच्छिन्नभेदोऽप्रसिद्ध्या निवेशयितुमशक्य एवेति वाच्यम् । तादृशभेदनिवेशासम्भवेऽपि अवच्छेदकतासम्बन्धेन तत्प्रतियोगितावच्छिन्नभेदनिवेशेऽविरोधेन प्रतियोगितानां विशिष्य निवेशेनोक्तसङ्गतेः । न हि आश्रयतासम्बन्धेन तत्तद्व्यक्तित्वावच्छिन्नावच्छेदकतायां अवच्छेदकत्वापेक्षयाऽवच्छेदकतासम्बन्धेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितायां अवच्छेदकत्वे गौरवं येनोक्तभेदस्याऽप्रसिद्धिः स्यात् । एवं धूमत्वादेरपि धूमत्वादिविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायां महानसीयत्वादिसहितस्याऽवच्छेदकतया धर्मान्तरसहितरूपावच्छिन्नप्रतियोगितावच्छेदकानां तत्तद्व्यक्तित्वेन भेदनिवेशो न सम्भवतीति धूमत्वादेर्धूमत्वादिविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वानुपपत्तिः । विशेषणावच्छिन्नधूमत्वादिनिष्ठतद्व्यक्तित्वस्यापि विशेष्यीभूतधूमत्वादिपर्याप्ततया तदवच्छिन्नभेदस्य विशेष्यीभूतधूमत्वादावसम्भवादिति तत्तत्प्रतियोगितावच्छेदकस्य तादृशावच्छेदकत्वावच्छिन्नभेद एव निवेश्यः । तथा सति तादृशप्रतियोगितावच्छेदकताया व्यासज्यवृत्तितया धूमत्वादौ प्रत्येकं तदवच्छिन्नभेदसत्त्वेनोक्तानुपपत्त्यनवकाशात् ।

न च तथावच्छेदकताव्यक्तेस्तद्व्यक्तित्वेन भेदप्रतियोगितावच्छेदकत्वं सम्भवतीति दर्शितरूपावच्छिन्नभेदाप्रसिद्धिरिति शङ्कास्पदमपि । महानसीयत्वधूमत्वादिनिष्ठावच्छेदकतानामवच्छेदकसम्बन्धादिभेदेन भिन्नतया तत्तद्व्यक्तित्वेन तासामव्यासज्यवृत्तितया धूमत्वादिनिष्ठभेदप्रतियोगितावच्छेदकत्वासम्भवात्, तत्तत्प्रतियोगितावच्छेदकतात्वेन च व्यासज्यवृत्तितया तेनैव रूपेण तादृशभेदप्रतियोगितावच्छेदकत्वात् । दुर्वचत्वमिति । प्रतियोगितापारिभाषिकावच्छेद्यावच्छेदकभावस्येति शेषः । प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायां यदि सम्बन्धविशेषावच्छिन्नत्वं न निवेश्यते तदा प्रतियोगितावच्छेदकमात्रस्यैव वह्नित्वादिविशिष्टसम्बन्धिनिष्ठकिञ्चित्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वात् तादृशप्रतियोगितानवच्छेदकावच्छेद्यत्वाप्रसिद्ध्यासम्भवः महानसादि-

निष्ठसमवायसम्बन्धावच्छिन्नवह्न्यभावस्य साध्यतावच्छेदकसंयोगादिसम्बन्धेन प्रतियोगिसमानाधिकरणत्वेऽपि एतल्लक्षणे प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यस्यैव निवेशेन तादृशाभावाव्यावर्तनात् ।

न चाकाशाभावत्वादिकमेव तादृशाभावप्रतियोगितानवच्छेदकम्, संयोगसमवायादिसम्बन्धावच्छिन्नाकाशाभावादिनिष्ठप्रतियोगितायां शुद्धस्याभावत्वादेरेव लघोरवच्छेदकत्वात् । तादृशधर्मावच्छेद्यत्वं च स्वरूपसम्बन्धावच्छिन्नाकाशाभावाभावात्मकाकाशादिनिरूपितप्रतियोगितायां प्रसिद्धमिति वाच्यम् । आकाशाभावत्वादेरपि साध्यवन्निष्ठभेदप्रतियोगितावच्छेदकत्वात् । आकाशाभाववह्निमदन्यतरत्वादेर्वह्न्यादिमन्निष्ठभेदप्रतियोगितानवच्छेदकत्वेऽपि विषयितादिसम्बन्धावच्छिन्नतन्निष्ठाभावप्रतियोगितावच्छेदकत्वं दुर्वारमेव तदुभयैकतरमात्रविषयकज्ञानादौ विषयितासम्बन्धेनान्यतरत्वावच्छिन्नाभावासत्त्वात्, अभावत्ववह्निमत्त्वाद्यवच्छिन्नाभावस्य च सत्त्वादभावत्ववह्निमत्त्वादेस्तादृशसम्बन्धावच्छिन्नान्यतराभावप्रतियोगितावच्छेदकत्वासम्भवात् । विषयित्वादेर्वृत्त्यनियामकतयाऽभावप्रतियोगितावच्छेदकसम्बन्धत्वानुपगमे तु धूमवान् वह्नेरित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितायामाकाशाभावधूमवदन्यतरत्वादिरूपधूमादिमन्निष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्नत्वस्योभयाभावसत्त्वादव्याप्तिरित्येतल्लक्षणे प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वम्, दर्शितप्रयोजनानुरोधेन द्वितीयावच्छेदकलक्षणे च साध्यतावच्छेदकसम्बन्धात्मकस्वविशिष्टनरूपित्वं च निवेशयति । प्रतियोगित्वमित्यादिना । कालो घटवान् कालपरिमाणादित्यादौ घटत्वादिविशिष्टसम्बन्धिनि महाकाले प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणो योऽभावस्तदीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धावपि यथाश्रुतस्य प्रतियोगिताधर्मिकोभयाभावघटितलक्षणस्य न तत्राऽव्याप्तिप्रसक्तिः । खण्डकालस्यापि तद्विशिष्टसम्बन्धितया तन्निष्ठस्यातीतानागतव्यक्तीनामिव तादृशाभावस्य तथाविधप्रतियोगिताप्रसिद्धेरित्याह । कालिकेति । कल्पद्वये एवाऽभावे प्रतियोगिवैयधिकरण्यं निवेशयति । अभा-

पक्षेति । योग्य इति । अन्यथाऽव्याप्यवृत्तिसाध्यके व्यभिचारिण्य-तिव्याप्तेरिति शेषः ।

अव्याप्यवृत्तिसंयोगादिसाध्यकव्यभिचारिण्यतिव्याप्तिमवच्छेद-कलक्षणघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणप्रक्षेपमन्तरेणा-ऽप्युद्धरणात्तादृशविशेषणस्य तद्घटकत्वे हेतुसमानाधिकरणाभावे तादृशविशेषणस्यापि दर्शितव्याप्तिघटकत्वसङ्गतेस्तस्य चानुपादेयत्व-माशङ्कते । न चेत्यादिना ।

(दी०) न च मौलमिदमीयं च प्रतियोगिवैयधिकरण्यमनु-पादेयम्, संयोगत्वावच्छिन्नाभाववति संयोगत्वादिविशिष्टस्य द्रव्यगुणादिनिष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वत्वद्रव्यमात्रसम-वेतत्वाद्यवच्छिन्नाभाववति चाऽवृत्तेरव्याप्यवृत्तित्वाऽव्याप्तेरनवका-शादिति वाच्यम् ।

(गा०) मौलम् । मूलस्थं हेतुसमानाधिकरणाभावे तद्विशेषणम् । मौलस्यानुपादेयत्वे हेतुभूताव्याप्त्यनवकाशे हेतुमाह । संयोगत्वाव-च्छिन्नाभाववतीति । द्रव्यादाविति शेषः । संयोगत्वादिविशिष्टस्य वृत्तेरिति । तथा च तदनुपादानेऽपि संयोगि द्रव्यत्वादि-त्यादौ संयोगित्वादिरूपसाध्यतावच्छेदके स्वरूपसम्बन्धरूपोक्तप्र-तियोगितावच्छेदकत्वसत्त्वेऽपि निरुक्तोभयविधपारिभाषिकावच्छे-दकत्वस्याऽसत्त्वादुक्तप्रतियोगितायां तद्विशिष्टसंयोगिनिष्ठाभा-वप्रतियोगितानवच्छेदकावच्छेद्यत्वाभावस्य च सत्त्वान्नाऽव्याप्ति-रिति भावः । इदमीयस्य तद्विशेषणस्याऽनुपादेयत्वे हेतुभूताति-व्याप्त्यनवकाशे हेतुमाह । गुणादीति । द्रव्येतरासमवेतत्वमात्रस्यै-व द्रव्यत्वात्यन्ताभावविरोधितावच्छेदकतया तत्प्रतियोगितावच्छे-दकत्वसम्भवात् सकलद्रव्यसमवेतत्वरूपाधिकांशघटितद्रव्यत्वत्वं नात्यन्ताभावप्रतियोगितावच्छेदकमित्यपरितोषाद् द्रव्यमात्रसमवे-तत्वेति । अवृत्तेरिति । संयोगत्वादिविशिष्टस्येत्यनुषज्यते । तथा च तदनुपादानेऽपि संयोगि सत्त्वादित्यादौ नातिव्याप्तिः । अवच्छे-दकलक्षणघटकतत्पदेन संयोगत्वाद्युपादानासम्भवेऽपि द्रव्यत्वत्वा-दिकमादायैव संयोगत्वादौ पारिभाषिकावच्छेदकत्वस्य सूपपाद-

त्वात् । संयोगत्वादौ संयोगत्वादिविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वविरहेऽपि तादृशप्रतियोगितानवच्छेदकद्रव्यत्वत्वावच्छिन्नत्वस्य हेतुसमानाधिकरणाभावप्रतियोगितायां सत्त्वेन तत्र निरुक्तोभयाभावासत्त्वाच्चेति भावः । समवायादिनाऽव्याप्यवृत्तिसाध्यके तेन सम्बन्धेन साध्यतावच्छेदकविशिष्टव्यापकतावच्छेदकस्य व्याप्यवृत्तितावच्छेदकधर्मान्तरस्य साधननिष्ठव्यभिचारनिरूपकतावच्छेदकस्य सम्भवेनातिव्याप्त्युद्धारेऽपि संयोगेनाव्याप्यवृत्तेः साध्यतायामतिव्याप्तिर्दुर्वारैव संयोगेन किञ्चिद्रूपावच्छिन्नस्य व्याप्यवृत्तिताविरहात् साधनवन्निष्ठसंयोगसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकस्य साध्यवन्निष्ठतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वनियमेन तत्सम्बन्धावच्छिन्नतद्वच्छिन्नाभाववदसम्बद्धत्वविशिष्टसामान्यकत्वस्यासंयुक्तमात्रवृत्तिगुणत्वादावेव प्रसिद्धेरिति इदमीयप्रतियोगिवैयधिकरण्यविशेषणोपादानमावश्यकम्, तदावश्यकत्वे च हेतुसमानाधिकरणाभावे तद्विशेषणस्याप्यावश्यकताऽन्यथा संयोगि द्रव्यत्वादित्यादावेवाऽव्याप्तेरिति समाधत्ते धूमवानिति ।

(दी०) धूमवान् वह्नेरित्यादावतिव्याप्तेः । न ह्युत्पत्तिकालावच्छेदेनाऽपि महानसादौ संयोगेन किञ्चिद्वर्तते, येन वह्निमदयोगोलकानिष्ठात्यन्ताभावप्रतियोगितावच्छेदकायोगोलकावृत्तिद्रव्यत्वाद्यवच्छिन्नाभाववदवृत्तित्वं धूमत्वादिविशिष्टस्य सम्भाव्येत ।

(गा०) ननु धूमादिमत्यपि पर्वतादौ शिखरावच्छेदेन धूमत्वाद्यवच्छिन्नाभावसत्त्वात्तेन रूपेण धूमादीनां व्याप्यवृत्तिताविरहेऽपि अयोगोलकावृत्तिद्रव्यत्वादिना तेषां तथात्वमव्याहतमेव, शिखराद्यवच्छेदेनाऽपि तदवच्छिन्नद्रव्यान्तरसत्त्वादिति साधनाव्यापकतावच्छेदकतादृशधर्मावच्छिन्नाभाववत्त्वमयोगोलकादेरेव, धूमत्वादिविशिष्टस्य तदसम्बद्धत्वाच्चातिव्याप्तिरित्याशङ्कां निराकरोति । न हीति । उत्पत्तिकालेति । तथा च धूमवति किञ्चिद्देशावच्छेदेनायोगोलकावृत्तिद्रव्यत्वाद्यवच्छिन्नाभावासत्त्वेऽपि कालविशेषावच्छेदेन तद्वच्छिन्नाभावस्य तत्र सत्त्वाद्धूमत्वादेरवच्छेदकत्वं दुर्घटमेवेति भावः । द्वितीयकल्पेऽवच्छेदकाप्रसिद्ध्याऽतिव्याप्तिविरहेऽपि प्रथम-

कल्पे प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे च धूमत्वादिविशिष्टसम्बन्धिनिष्ठसंयोगसम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकयद्धर्मावत्त्वाद्यवच्छेद्यत्वसंयोगसम्बन्धावच्छिन्नत्वोभयाभावमादायाऽतिव्याप्तिर्बोध्या ।

वस्तुतो द्वितीयावच्छेदकलक्षणेऽपि प्रतियोगिवैयधिकरण्यांशे संयोगेन साध्यतायां सद्धेतौ तादृशावच्छेदकाप्रसिद्ध्याऽव्याप्तिः स्यादिति साध्यतावच्छेदके स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वं यद्यत्तद्धेदस्थाने स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकतादृशप्रतियोगितावच्छेदकसामान्यकत्वं निवेश्यैव तादृशव्याप्तिर्धारणीयेति तथैवाऽतिव्याप्तिरसद्धेतौ स्यादित्यत्र तात्पर्यम् ।

अथैवमपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्यन्तविशेषणमकिञ्चित्करमेव, हेतुसमानाधिकरणाभावे यथाश्रुतप्रतियोगिवैयधिकरण्यनिवेशनेऽपि गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादौ हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकगुणासमवेतत्वाद्यनतिरिक्तवृत्तित्वस्य साध्यतावच्छेदके सत्त्वेनाऽतिव्याप्त्यनवकाशात् । हेतुसमानाधिकरणाभावविशेषणप्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशने द्रव्यं गुणादित्यादौ पृथिव्यन्यत्वविशिष्टद्रव्यत्वाद्यभावस्य प्रतियोगिताश्रयानधिकरणहेत्वधिकरणकत्वाभावेन लक्षणाघटकतया विशिष्टद्रव्यत्वत्वे द्रव्यत्वत्वविशिष्टसम्बन्धिनिष्ठस्वप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेऽपि अव्याप्त्यनवकाशेन इदमीयप्रतियोगिवैयधिकरण्यशरीरेऽपि तन्निवेशनव्यावृत्त्यसम्भवात् ।

परन्तु प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशे यत्प्रतियोगिताश्रयानधिकरणत्वं हेतुमत इत्यादिक्रमेण व्याप्तिर्निर्वाच्या, तथा च प्रतियोगितायाः प्रतियोगिस्वरूपत्वे वह्न्यादिव्यक्तिभेदेन तन्निष्ठप्रतियोगितानां भेदाद्वह्नित्वाद्यवच्छिन्नमहानसीयवह्न्यादिनिष्ठप्रतियोगिताश्रयानधिकरणत्वस्य हेतुमति पर्वतादौ सत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिरिति । तदसत् । प्रतियोगितायाः प्रतियोगिस्वरूपत्वे महानसीयवह्नित्वाद्यवच्छिन्नप्रतियोगिताया वह्नित्वाद्यवच्छिन्नमहानसीयवह्न्यादिनिष्ठप्रतियोगित्वाभिन्नतया प्रतियोगितावच्छे-

दकावच्छिन्नानधिकरणत्वनिवेशेऽपि वह्नित्वाद्यवच्छिन्नप्रतियोगितावच्छेदकमहानसीयवह्नित्वाद्यवच्छिन्नानधिकरणत्वमादाय तद्दोषताद्वस्थ्यात् । द्रव्यत्वादेरपि धूमादिस्वरूपधूमत्वाद्यवच्छिन्नप्रतियोगितावच्छेदकत्वेन प्रतियोगितावच्छेदकसामान्यावच्छिन्नानधिकरणत्वनिवेशेऽयोगोलकादावपि धूमत्वाद्यवच्छिन्नप्रतियोगितावच्छेदकसामान्यावच्छिन्नानधिकरणत्वस्य दुर्लभतया तथा विवक्षणासम्भवात् ।

यदि च यादृशरूपावच्छिन्नप्रतियोगिताया अवच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तद्रूपावच्छिन्नानवच्छेदकत्वविवक्षया महानसीयवह्नित्वादेर्वह्नित्वाद्यवच्छेद्यतावच्छेदकवह्निवृत्तिप्रतियोगित्वत्वावच्छिन्नानवच्छेदकत्वान्न दोष इत्युच्यते, तदा यद्रूपावच्छिन्नप्रतियोगिताश्रयानधिकरणत्वं हेतुमतस्तद्रूपावच्छिन्नानवच्छेदकत्वविवक्षया प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशेऽपि सामञ्जस्यात् ।

नैवम् । प्रतियोगितावच्छेदकावच्छिन्नत्वानुपादाने एतद्रूपान्यत्वविशिष्टसत्तावान् जातेरित्यादावतिव्याप्तेर्दुर्वारत्वात् । तत्र हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य एतद्रूपासमवेतत्वादेरेतद्रूपविजातीयरूपान्तरसाधारणमेतद्रूपान्यत्वविशिष्टसत्तात्वाद्यवच्छिन्नं प्रति समवायेन व्यापकतानवच्छेदकत्वात् ।

सम्बन्धभेदनिबन्धनदोषवारणाय हेतुसमानाधिकरणाभावप्रतियोगित्वतदवच्छेदकानतिरिक्तवृत्तित्वघटकप्रतियोगितयोर्यदि साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेश्यते तदैव प्रतियोगिवैयधिकरण्यद्वयानुपादाने संयोगेन साध्यतायां व्यभिचारिणि दर्शितरीत्याऽतिव्याप्तिरापद्यते । यदि च तद्दोषवारणाय हेतुमन्निष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितायां यदवच्छेदकं तत्सम्बन्धावच्छिन्नतदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वं स्वविशिष्टसम्बन्धिनिष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकतत्कत्वं वा निवेश्यते, उभयत्र विशेष्य विशेषणताविशेषसम्बन्ध एव वा, तदा धूमवान् वह्नेरित्यादौ सम्बन्धान्तरेण विशेषणताविशेषेण वा प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकतायामवच्छेदकस्य तत्सम्बन्धघटितहेत्वव्यापकतावच्छेदकायो-

गोत्वकभेदत्वादेः प्रसिद्ध्या धूमत्वादेरवच्छेदकत्वोपपत्तेरतिव्याप्त्यनवकाश इत्यालोच्य साध्यतावच्छेदकसम्बन्धानिवेशपक्षे प्रतियोगिवैयधिकरण्यद्वयस्याऽनुपादेयतामाह । प्रतियोगितयोरिति ।

(टी०) प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा विवक्षणे पुनरनुपादेयमेव प्रतियोगिवैयधिकरण्यद्वयम् ।

(गा०) यद्यपि वह्निधूमादिनिरूपितसंयोगसम्बन्धघटितव्यापकता विशिष्य समवायादिसम्बन्धावच्छिन्नप्रतियोगिताद्वयघटितपारिभाषिकावच्छेदकत्वमन्तर्भाव्याऽपि निर्वक्तुं शक्यते तथा सत्यव्याप्त्यनतिप्रसङ्गात् । तादृशहेतुसमानाधिकरणाभावीयसमवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकस्य वह्निविशिष्टसंयोगिनिष्ठतत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वं तदन्यत्वस्य तद्धेतुव्यापकतावच्छेदकसाधारण्याभावात् । यत्राऽधिकरणे तदवच्छिन्नस्य व्यभिचारस्तत्समवेतान्यस्य हेतुमन्निष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकस्य संयोगेन तद्धर्मविशिष्टं प्रति समवायेन व्यापकतायामवच्छेदकतया तादृशधर्माणां पारिभाषिकावच्छेदकत्वाभावात् । तथापि विशेषणतादिघटितव्यापकतायां समवायादिसम्बन्धावच्छिन्नप्रतियोगिताद्वयघटितावच्छेदकत्वनिवेशे महानसभेदत्वादिविशिष्टस्य विशेषणताविशेषादिना यः सम्बन्धी सामान्यादिस्तन्निष्ठाभावीयसमवायादिसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य वह्न्यादिसमानाधिकरणाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकेऽसम्भावितत्वान्महानसभेदत्वादेरपि वह्न्यादिव्यापकतावच्छेदकताप्रसङ्गात् । अत्र विशेषणताविशेष्यसम्बन्धावच्छिन्नप्रतियोगिताद्वयघटितावच्छेदकत्वाभावकूटव्यापकतावच्छेदकत्वमेवाऽनुमित्यौपयिकं वाच्यम् । तथा च सर्वत्र तादृशावच्छेदकत्वाभावज्ञानस्यैवानुमितिहेतुत्वमुचितम्, प्रकृतातीयावच्छेदकत्वाभावसत्त्वानुरोधादित्याशयेनाह । विशेषणताविशेषेति । अनुपादेयमिति । तथा च साध्यतावच्छेदकसम्बन्धादिनिवेशाभिप्रायेण मूलकृता प्रतियोगिवैयधिकरण्यमुपात्तमिति भावः । अतिव्याप्तिवारणप्रकारं दर्शयति ।

(दी०) यत्राधिकरणे व्यभिचारस्तदन्यत्वत्वतदन्यत्वप्रकारकप्रमाविषयत्वत्वमाध्यवत्त्वप्रकारकप्रमाविषयत्वत्वादीनां साध्यतावच्छेदकविशिष्टसाध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वाद्धेतुतावच्छेदकविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाच्चातिव्याप्तेरनवकाशात् । तथा च विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्सम्बन्धावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये नास्ति साधने तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिरिति पर्यवसितोऽर्थः । यत्र सद्धेतौ साध्यतावच्छेदकं न प्रतियोगितावच्छेदकं तत्रैवेयं रीतिरुपादेयेत्यपि वदन्ति ॥

(गा०) यत्राधिकरण इति। साध्यतावच्छेदकस्यापि कालिकसम्बन्धेन साध्यवद्वृत्तेरभावस्य प्रतियोगितावच्छेदकतया येन सम्बन्धेन हेतुमद्वृत्तित्वमभावस्य तेन सम्बन्धेन स्वविशिष्टसम्बन्धिनिष्ठत्वं वाच्यम्, उभयत्र विशेषणताविशेष एव चाभावस्य सम्बन्धः । एतत्कल्पे च घटभिन्नं मेयत्वादित्यादौ घटादिभेदाभावस्य घटत्वादिरूपस्य तद्व्यक्तिभेदाभावस्य तदीयासाधारणधर्मरूपाद्यात्मकतद्व्यक्तित्वस्य च विशेषणताविशेषेणावृत्तेर्घटभेदत्वादेर्लक्षणघटकत्वासम्भवः । एतद्घटतद्घटान्यतरत्वाद्यवच्छिन्नभेदाभावस्य तादृशान्यतरत्वस्य भेदविशेषात्मकतया तादृशसम्बन्धेन वृत्तावपि तादृशभेदत्वानुसरणे प्रयासगौरवम् । गगनभिन्नं मेयत्वादित्यादौ व्यभिचारनिरूपकाधिकरणगगनभेदाभावस्य शब्दात्मकस्य गगननिष्ठास्यविशेषरूपस्य वा समवायेनैव गगनवृत्तेस्तद्भेदत्वस्य लक्षणघटकत्वासम्भवाद्व्यभिचारनिरूपकाधिकरणं यत्तदन्यत्वमादायातिव्याप्तिनिराकरणायोगश्चेति तदन्यत्वप्रकारकप्रमाविषयत्वत्वानुधावनम् ।

यत्तु अयं घटो घटतद्भिन्नान्यतरत्वादित्यादौ व्यभिचारनिरूपकाधिकरणघटादिभेदस्य यो भेदस्तस्य भेदधारानवस्थाभयेनाऽधिकरणरूपस्य साध्यवति घटादौ न विशेषणतया वृत्तिर्द्रव्या-

द्विरूपाभावस्य विशेषणतानभ्युपगमादिति तदन्यत्वं न तत्सम्बन्धेन व्यापकतायामवच्छेदकमिति प्रमाविषयत्वानुधावनमिति। तदसत्। घटादिरूपभेदस्य घटादौ वृत्तिनियामकसम्बन्धान्तराभावेन भेदत्वरूपेण वृत्तिनियामकस्वरूपसम्बन्धस्यावश्योपेयत्वात्।

अयोगोलकान्यत्वप्रकारकप्रमाविषयत्वत्वापेक्षया धूमादिप्रकारकप्रमाविषयत्वत्वे धूमादिव्यापकतावच्छेदकत्वमस्तु ग्राह्यमित्याशयेन तदेवानुसरति। साध्यवत्त्वप्रकारकेति। साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नप्रकारकेत्यर्थः। प्रतियोगितेति। अभावीयविशेषणतासम्बन्धावच्छिन्नप्रतियोगितेत्यर्थः। अतिव्याप्तिरिति। अवच्छेदकताघटकाभावे प्रतियोगिवैयधिकरण्यानिवेशेऽपि धूमवान् वह्नेरित्यादावित्यादिः। हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वोक्तेरर्थतः स्वविशिष्टसामान्ये तदवच्छिन्नाभाववदसम्बन्धित्वं लभ्यते इति कल्पद्वये एवाऽतिव्याप्तिनिरासो लभ्यते।

अत्रानवच्छेदकत्वघटितव्याप्तिलक्षणे यथाश्रुतप्रथमनिरुक्तावच्छेदकताया निवेशे 'जातिमान् मेयत्वादि'त्यादौ सामान्यादिसमवेतत्वाप्रसिद्ध्या जातित्वादेरवच्छेदकताया दुरुपपादत्वेनाऽतिव्याप्तिः। अवच्छेदकलक्षणे स्वविशिष्टप्रतियोगिकसाध्यतावच्छेदकसम्बन्धे तदवच्छिन्नाभाववदनुयोगिकत्वनिवेशने कालो घटवान् कालपरिमाणादित्यादौ अवच्छेदकाप्रसिद्धिः, गगनत्वादिविशिष्टप्रतियोगिककालिकसम्बन्धाप्रसिद्धेः। एवं चरमनिरुक्तावच्छेदकतानिवेशपक्षेऽपि तत्रावच्छेदकाप्रसिद्धिः, साध्यतावच्छेदकसम्बन्धेन गगनत्वादिविशिष्टसम्बन्धिनोऽप्रसिद्धेर्दर्शितरीत्यनुसरणे च गौरवमिति कालिकसम्बन्धेन गगनादेरवृत्तित्वपक्षेऽपि प्रतियोगिताधर्मिकपारिभाषिकावच्छेदकत्वाभावघटितव्याप्तिरेवाऽवलम्बनीया इत्याशयेन तत्पक्षमालम्ब्यैव निष्कृष्टार्थमाह। तथा चेति।

प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशपक्षे तस्यावच्छेदकत्वाभावानुयोगिविशेषणता न सम्भवति, स्वावच्छेद-

कसम्बन्धेन प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया दर्शितस्थलेऽप्रसिद्धेरिति तत्पक्षे प्रतियोगिदिशि साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेश्योभयाभावो निवेशितः । विशेषणताविशेषरूपसम्बन्धनिवेशे च हेतुसमानाधिकरणकालभेदाद्यभावस्यैव तत्सम्बन्धावच्छिन्नप्रतियोगित्वप्रसिद्धा तत्सम्बन्धावच्छिन्नप्रतियोगिताधर्मिकतादृशावच्छेद्यत्वमात्राभावनिवेशोऽपि सम्भवतीत्युभयाभावोपेक्षा ।

यद्यपि हेतुसमानाधिकरणाभावप्रतियोगितासामान्ये साध्यतावच्छेदकावच्छिन्नसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छेद्यत्वानिवेशेनैवोपपत्तावभावद्वयनिवेशनमनतिप्रयोजनकम् । तथापि तदनिवेशे प्रतियोगितायां पारिभाषिकसाध्यतावच्छेदकावच्छेद्यत्वाभावस्य लक्षणाघटकतया लक्षणान्तरमेवेदं स्यान्न मूलोक्तलक्षणार्थ इति तदुपादानम् । यथासन्निवेशे चावैयर्थ्यम् । अन्यथा साधनसमानाधिकरणाभावप्रतियोगितासामान्ये साधनसमानाधिकरणसामान्ये वा यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयत्वं यद्धर्मविशिष्टसम्बन्धिनिष्ठत्वं वा तद्धर्मविशिष्टसामानाधिकरण्यस्यैव व्याप्तित्वसम्भवेन भागान्तरस्याप्यनुपादानापत्तेः । वक्ष्यते च मूलमननुरुध्य स्वसमानाधिकरणाः सर्वे यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मावलीढसामानाधिकरण्यं व्याप्तिरिति व्याप्तिग्रहोपायशेषे दीधितिकृतव ।

केचित्तु सामान्यपदस्य व्यापकतार्थकतया हेतुसमानाधिकरणाभावप्रतियोगितानिष्ठाभावप्रतियोगितानवच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वाभावत्वं, तादृशप्रतियोगितानिष्ठभेदप्रतियोगितानवच्छेदको वा यद्विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वाभाव इत्येव फलितार्थः । तत्र चाऽभावद्वयानुपादाने तादृशप्रतियोगितानिष्ठाभावप्रतियोगितानवच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकावच्छेद्यतात्वमित्यर्थपर्यवसाने मेयधूमवान् वह्नेरित्यादावतिव्याप्तिः, मेयधूमत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकावच्छेद्यतात्वस्य गुरुतयाऽयोगोलकभेदाभावप्रतियोगितानिष्ठतादृशावच्छेदकावच्छेद्यत्वाभावप्रतियोगितायामप्यनवच्छेदकत्वा-

त्। विशिष्य तत्तत्प्रतियोगितावच्छेदकावच्छेद्यत्वरूपेण च व्यापकत्वमशक्यनिवेशनम्, वह्न्यादिसमानाधिकरणह्रदत्वाद्यभावीया या प्रतियोगिता तत्तदवच्छेदकावच्छेद्यत्वरूपेण धूमादिसमानाधिकरणाभावान्तरप्रतियोगितासाधारणनिरुक्तप्रतियोगितात्वव्यापकत्वाभावात्सम्भवापत्तेः। अभावद्वयोपादाने च तत्तत्प्रतियोगितावच्छेदकभेदकूटवन्तो ये ह्रदभेदत्वादयो धर्मास्तदवच्छेद्यत्वाभावानां प्रत्येकं तथाविधसकलाभावप्रतियोगितासाधारणतया तादृशावच्छेद्यत्वाभावकूटस्य प्रातिस्विकरूपेण व्यापकतानिवेशादतिव्याप्त्यनवकाश इत्याहुः।

अन्ये तु अभावद्वयानुपादाने प्रतियोगितायाः प्रतियोगिस्वरूपत्वमते धूमवान् वह्नेरित्यादावतिव्याप्तिः वह्निसमानाधिकरणायोगोलकभेदाद्यभावप्रतियोगितायामयोगोलकभेदादिरूपायां धूमत्वादिविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकमहानसवृत्तित्वविशिष्टायोगोलकभेदत्वाद्यवच्छेद्यत्वसत्त्वात्। विशिष्टभेदत्वाद्यवच्छिन्नविशिष्टभेदरूपप्रतियोगितातः शुद्धायोगोलकभेदादिरूपप्रतियोगिताया अनतिरेकात्। अभावद्वयोपादाने चायोगोलकभेदत्वाद्यवच्छिन्नप्रतियोगिताया धूमत्वादिविशिष्टवन्निष्ठो योऽभावस्तन्निरूपितप्रतियोगितात्वावच्छिन्नानवच्छेदकशुद्धायोगोलकभेदत्वाद्यवच्छिन्नत्वाभावासत्त्वान्नातिव्याप्तिः।

न चैवं वह्निमान् धूमादित्यादौ धूमादिसमानाधिकरणपर्वतादिवृत्तित्वविशिष्टह्रदभेदाद्यभावीयविशिष्टह्रदभेदात्मकप्रतियोगितायां वह्न्यादिसमानाधिकरणाभावप्रतियोगितानवच्छेदकशुद्धह्रदभेदत्वाद्यवच्छिन्नत्वमप्यक्षतम्। शुद्धह्रदभेदादिरूपतदभावप्रतियोगितातो विशिष्टह्रदभेदादिरूपप्रतियोगिताया अनतिरेकादित्यव्याप्तिरसम्भवो वेति वाच्यम्, ह्रदभेदाद्यात्मकप्रतियोगितायां शुद्धह्रदत्वाद्यवच्छिन्नत्वसत्त्वेऽपि विशेषणवैशिष्ट्यावच्छेदेन तदवच्छिन्नत्वाभावोपगमादिति।

तदसत्। विशेषणवैशिष्ट्यावच्छेदेनावच्छेद्यत्वाभावोपगमे धूमवान् वह्नेरित्यादावतिव्याप्तिवारणस्याप्यशक्यत्वात्। अयोगोलकभेदादिरूपायां शुद्धायोगोलकभेदत्वाद्यवच्छिन्नायामपि प्रतियोगितायां किञ्चिद्विशेषणवैशिष्ट्यावच्छेदेन तदवच्छिन्नत्वाभावसम्भवात्।

न च यादृशयादृशरूपेण प्रतियोगितानां हेतुसमानाधिकरणा-

भावीयत्वं तादृशतादृशरूपावच्छेदेन तथाविधावच्छेद्यत्वाभावविवक्षणान्न दोष इति वाच्यम् । एवं सत्यभावद्वयानुपादानेऽपि सामञ्जस्यात् शुद्धे विशिष्टायोगोलकभेदत्वाद्यवच्छेद्यत्वासत्त्वात् । विशिष्टे तत्सत्त्वेनैव शुद्धे तत्सत्त्वे विशिष्टेऽयोगोलकभेदत्वाद्यवच्छेद्यत्वाभावसत्त्वात् शुद्धेऽप्ययोगोलकभेदादिरूपप्रतियोगित्वे तादृशाभावसत्ताया दुर्वारत्वादभावद्वयोपादानेऽप्यतिव्याप्तितादवस्थ्यात् । प्रतियोगिनाधर्मिकावच्छेद्यत्वाभावघटितव्याप्तिपक्षे प्रमेयवह्निमान् धूमादित्यादौ साध्यतावच्छेदकनिरूपितस्वरूपसम्बन्धरूपावच्छेद्यत्वाप्रसिद्ध्या तत्र तदभावघटितलक्षणासम्भवात्, निरुक्तपारिभाषिकावच्छेद्यत्वाभावघटितलक्षणस्याऽऽदरणीयत्वेऽपि वह्निमान् धूमादित्यादौ लाघवात्स्वरूपसम्बन्धरूपावच्छेद्यत्वाभावघटितव्याप्तिरेवोचिता, साध्यतावच्छेदकभेदेन व्याप्तिभेदात् ।

न चैवमनवच्छेदकत्वघटितव्याप्तिपक्षेऽपि धूमवति क्वचिद्वह्न्यभावसत्त्वेऽपि प्रमेयवह्नित्वं गौरवाद्धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति भ्रमदशायामनुमितिवारणाय गुरुधर्मावच्छिन्नसाध्यकव्याप्तिशरीरे पारिभाषिकावच्छेदकत्वाभावस्यैव निवेशेऽपि वह्नित्वाद्यवच्छिन्नसाध्यकव्याप्तिशरीरे स्वरूपसम्बन्धरूपावच्छेदकत्वाभाव एव लाघवान्निवेशयितुमुचित इति वाच्यम् । धूमादिसमानाधिकरणाभावप्रतियोगित्वीयस्वरूपसम्बन्धरूपावच्छेदकत्वाभावस्य धूमादिव्यापकतानवच्छेदककम्बुग्रीवादिमत्त्वादिसाधारणतया व्यापकतावच्छेदकतानात्मकत्वेन वह्नित्वादिधर्मिकानवच्छेदकत्वज्ञानस्याऽप्यहेतुत्वादिति केषाञ्चिन्मतमाह । यत्रेति । यद्रूपावच्छिन्नसाध्यके इत्यर्थः । प्रमेयवह्नित्वादौ गौरवप्रयुक्तानवच्छेदकत्वग्रहदशायां भ्रान्तानां द्रव्यत्वादिव्यभिचारिलिङ्गेन तद्रूपावच्छिन्नसाध्यकानुमितेरनुरोधेन सलिङ्गकलघुरूपसमनियतगुरुधर्मावच्छिन्नसाध्यकानुमितावप्यवच्छेद्यत्वाभावघटितव्याप्तिपक्षे पारिभाषिकावच्छेद्यत्वाभावज्ञानमेव यद्यपि हेतुस्तथाऽपि वास्तविकी व्याप्तिः सद्धेतावेवेत्यभिप्रायेण सद्धेतावित्युक्तम् ।

वदन्तीत्यस्वरसः सूचितः । तद्बीजं च यदि गुरुधर्मावच्छिन्नसाध्यकस्थले पारिभाषिकावच्छेद्यत्वाभावज्ञानादनुमितिस्तदा वह्नित्वाद्यवच्छिन्नसाध्यकस्थले तज्ज्ञानान्नानुमितिरित्युक्तेरनुभवविरोधे-

नाऽसम्भवात् । एकजातीयपरामर्शसत्त्वे विषयस्वभावात् क्वचिदेवानुमितिः क्वचिन्नेत्यननुभवात् । अन्यथा यत्र व्यतिरेकिणि केवलान्वयित्वभ्रमदशायां नानुमितिस्तादृशव्यतिरेकिसाध्यके साध्यवदन्यावृत्तित्वमेव व्याप्तिर्न तु व्यापकसामानाधिकरण्यं गौरवादित्युक्तिसम्भवेन मूलकृतो व्यापकसामानाधिकरण्यमात्रस्य सिद्धान्तप्रणयनविरोधापातात् । एवं समवायेन भेदप्रतियोगितावच्छेदकजातित्वाद्यवच्छिन्नसाध्यकानुमितौ स्वरूपसम्बन्धरूपावच्छेद्यत्वाभावज्ञानस्य हेतुत्वे हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितायां नित्यत्वादेर्वैयर्थ्येन समवेतत्वादिकमेवाऽवच्छेदकं न तु तद्घटितजातित्वादिकमिति ज्ञानदशायां हेतौ तदवच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभावसामानाधिकरण्यग्रहेऽपि व्यभिचारिहेतुनाऽभ्रान्तानां जातित्वाद्यवच्छिन्नसाध्यकानुमित्यापत्तिः, भेदप्रतियोगितायां जातित्वाद्यवच्छेद्यत्वप्रसिद्ध्या तदभावज्ञानस्य प्रमात्वात् । एवमभावप्रतियोगितावच्छेदकमहानसीयवह्नित्वादेर्वह्नित्वादिसमनैयत्यभ्रमेण गौरवप्रयुक्तानवच्छेदकत्वभ्रमदशायां हेतौ तदवच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभावसामानाधिकरण्यग्रहेऽपि महानसीयवह्नित्वाद्यवच्छिन्नसाध्यकानुमितिप्रसङ्ग इति तद्रूपावच्छिन्नसाध्यकानुमितावपि स्वरूपसम्बन्धरूपावच्छेद्यत्वाभावज्ञानस्य हेतुत्वासम्भवः । वस्तुतो भेदप्रतियोगितायां प्रसिद्धस्य स्वरूपसम्बन्धरूपमहानसावृत्तिद्रव्यत्वाद्यवच्छिन्नत्वस्य संयोगसम्बन्धावच्छिन्नत्वस्य च द्वयोर्व्यतिरेको धूमादिसमानाधिकरणाभावप्रतियोगितासामान्ये वर्तते, संयोगादिसम्बन्धावच्छिन्नप्रतियोगितायाः शुद्धमहानसावृत्तित्वादिनाऽवच्छेदादिति स्वावच्छेद्यत्वघटितोभयाभाववद्धूमादिसमानाधिकरणाभावप्रतियोगितासामान्यकत्वं धूमादिव्यापकतानवच्छेदकमहानसावृत्तिद्रव्यत्वादिसाधारणतया न व्यापकतावच्छेदकतास्वरूपमिति वह्नित्वादावपि तज्ज्ञानं नानुमितिजनकम् । अवच्छेदकत्वाभावघटितव्याप्तिपक्षेऽपि वह्नित्वाद्यवच्छिन्नसाध्यकस्थले स्वरूपसम्बन्धरूपावच्छेदकत्वाभावग्रहस्य हेतुताया एतादृशयुक्तेरेवाऽनवकाशात्—इत्यादिकं बोध्यम् ।

केचित्तु पारिभाषिकावच्छेद्यावच्छेदकभावघटितव्याप्तावुक-

रीत्या प्रतियोगिवैयधिकरण्यानिवेशेन लाघवात् सर्वत्रैव तद्घटितव्याप्त्यादर उचित इत्यस्वरसबीजमाचक्षते ।

गुरुधर्मस्याऽपि स्वरूपसम्बन्धरूपमवच्छेदकत्वं व्यवस्थाप्य तद्घटितव्याप्तिं परिष्कुर्वतो मतमाह ।

(दी०) गौरवप्रतिसन्धानदशायामपि कम्बुग्रीवादिमान्नास्तीति प्रतीतिबलाद् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः । न चास्यास्तत्प्रतियोगिकाभावमात्रमवलम्बनम्, तथाविधयत्किञ्चिद्व्यक्तिसत्त्वे एव तादृशप्रतीतेरनुदयात् । अत एव एकघटवति भूतले कम्बुग्रीवादिमान्नास्तीति शब्दो न प्रमाणम्, प्रमाणं च घटसामान्यशून्ये ।

(गा०) गौरवप्रतिसन्धानदशायामिति । घटत्वाद्यपेक्षया कम्बुग्रीवादिमत्त्वादौ गुरुत्वज्ञानदशायामित्यर्थः । इति प्रतीतिबलादिति । इत्याकारिकायाः कम्बुग्रीवादिमत्त्वाद्यात्मकप्रतियोगिविशेषणांशे प्रतियोगितावच्छेदकत्वावगाहिन्याः प्रतीतेर्बलादित्यर्थः । भवति चेति शेषः । गौरवस्याऽवच्छेदकताव्यावर्तकत्वे गौरवज्ञानस्याऽवच्छेदकताग्रहविरोधिताप्रसङ्गेन तद्दशायां तादृशप्रतीत्यनुपपत्तेरिति भावः । उक्तप्रतीतेरवच्छेदकतांशे प्रमात्वस्य सविवादतया तादृशप्रतीतेरवच्छेदकतासाधकत्वमुपेक्ष्य गौरवज्ञानकालीनतादृशप्रतीत्यनुपपत्तिः साधकतयोपन्यस्तेति ध्येयम् ।

न च कम्बुग्रीवादिमान्नास्तीति प्रतीतावप्यवच्छेदकत्वं न प्रकारः, अपि तु संसर्ग एवेति तदंशे सम्बन्धविशेषावगाहित्वतत्प्रकारकत्वघटितभ्रमत्वमप्रसक्तमिति वाच्यम् । भ्रमत्ववत्प्रमात्वस्याऽपि प्रकारतादिघटितत्वेन प्रमात्वविवादानपायात् ।

वस्तुतस्तु कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वमभावे प्रतियोगिसम्बन्धः । कम्बुग्रीवादिमत्त्वावच्छिन्नत्वाप्रसिद्धिपक्षेऽपि विशेष्यविशेषणभावापन्नानां प्रतियोगित्वावच्छिन्नत्वकम्बुग्रीवादिमत्त्वानां सम्बन्धघटकता, एवं च तेषां परस्परसम्बन्धभानमप्यावश्यकम्, तेन विना विशेष्यविशेषणभावानिर्वाहात् । संसर्गसंसर्गो न विशिष्टधीविषय इति प्रवादस्य च संसर्गघटकवस्त्व-

न्तराविशेषणत्वेन यस्य संसर्गता तत्संसर्गो न भासते इत्यर्थः तथा चोक्तप्रतीतेरवच्छिन्नत्वे कम्बुग्रीवादिमत्त्वप्रमात्वं गुरुधर्मस्याऽनवच्छेदकत्ववादिनां निष्प्रत्यूहमेव, संसर्गताविशेषसाधारणसंसर्गविशेषावच्छिन्नविषयतात्वरूपेणैव प्रकारतायाः प्रमात्वघटकस्योपगमात्। प्रकारतात्वं पुनरखण्डधर्मान्तरं संसर्गताव्यावृत्तमेवातो न संसर्गविशेषभाने तज्ज्ञानापेक्षा, तादृशधर्मपुरस्कारेणैव विषयताविशेषस्य विशेषणज्ञानजन्यतावच्छेदकत्वात्। इत्थं च नोक्तप्रतीतेः प्रतियोगितायां गुरुधर्मावच्छिन्नत्वसाधकत्वमित्यवधेयम्।

गौरवप्रतिसन्धानकालीनायां कम्बुग्रीवादिमान्नास्तीत्याकारिकायामपि प्रतीतौ कम्बुग्रीवादिमत्त्वादेः प्रतियोगितावच्छेदकत्वं न भासते, अपि तु तत्सामानाधिकरण्यमात्रमित्याशङ्कते। न चेति। तत्प्रतियोगिकेति। कम्बुग्रीवादिमत्त्वाश्रयप्रतियोगिकेत्यर्थः। अवलम्बनम्। विषयः। तथाविधेति। कम्बुग्रीवादिमत्त्वाश्रय इत्यर्थः। तादृशप्रतीतेरनुदयादिति। तथा च तत्त्वाश्रयतत्प्रतियोगिकाभावमात्रावलम्बनत्वे यत्किञ्चिद्घटादिमत्यपि तथाविधघटाद्यभावस्याबाधेन तादृशप्रतीतिः स्यादेवेति भावः। अत एवेति। यत एव कम्बुग्रीवादिमान्नास्तीत्यादिप्रतीतौ कम्बुग्रीवादिमत्त्वादेः प्रतियोगितावच्छेदकत्वं नियमतो भासते, गुरुरपि च धर्मः प्रतियोगितावच्छेदकोऽत एवेत्यर्थः। एकघटवतीति। प्रतिपादकत्वं शब्दान्वयितया सप्तम्यर्थः। भूतले इति ज्ञानाकारान्तर्गतम्। एकघटवति, भूतले, इत्यनयोर्मिथोऽन्वये तदुत्तरमत्रेति ज्ञानाकारान्तर्गतं पूरणीयम्। न प्रमाणमिति। तादृशप्रतीतेरवच्छेदकत्वावगाहित्वानियमे एतादृशशब्दजन्यतादृशप्रतीतेः प्रमात्वस्याऽपि सम्भवेन प्रमाणमपि स्यादित्युपष्टम्भसङ्गतिः। प्रमाणं चेति। गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे बाधितावच्छेदकावग्राहकतया तादृशशब्दोऽपि प्रमाणं न स्यादित्युपष्टम्भः।

एतेन गुरुधर्मस्यावच्छेदकतायां युक्त्यन्तरमपि दर्शितम्। न च कम्बुग्रीवादिमान्नास्तीति प्रतीतौ कम्बुग्रीवादिमत्त्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमेव संसर्गतया भासते इत्युपेयम्, तथा च गुरोरनवच्छेदकत्वेऽपि नोक्तदोषावसर इति वाच्यम्। तत्तत्प्रतियोगितावच्छेदकभेदानामनन्तानां

सम्बन्धघटकत्वे मानाभावात्, गौरवाच्च । गुरुधर्मस्यानवच्छेदकत्वे द्रव्यं गुणाद् गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वस्य द्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वरूपसमनियतधर्मापेक्षया गुरोः प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्ध्याऽव्याप्तिरपीत्याह । न चेदिति ।

(दी०) न चेदेवं लघुरूपसमनियतानां गुरूणामव्याप्यत्वापत्तिः, गुणादिगुणकर्मान्यत्वविशिष्टसत्तादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्ठायाः प्रतियोगितायाः लाघवेन द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनैवावच्छेदात् । तत्तदवच्छेदकत्वव्यक्तीनां च प्रातिस्विकरूपेणाभावानां युगसहस्रेणाऽपि ज्ञातुमशक्यत्वात् ।

(गा०) एवम् । गुरोरवच्छेदकत्वम् । लघुरूपेति । विशेषणानवच्छिन्नद्रव्यत्वादीत्यर्थः । अधिकगौरवप्रदर्शनाय विशिष्टसत्तारूपहेत्वनुसरणम् । लाघवेनेति । गुणत्वाद्यवच्छिन्नप्रकारेण हेतुमन्निवेशापेक्षया निर्विशेषणकद्रव्यत्वादिपुरस्कारेण तन्निवेशे लाघवादित्यर्थः ।

ननु हेतुसमानाधिकरणाभावप्रतियोगित्वावच्छेदकत्वानां तादृशावच्छेदकत्वत्वेन नाऽभावो व्याप्तौ निवेशनीयः किन्तु तत्तद्व्यक्तित्वेन सर्वेषामभावकूट एवेति तादृशावच्छेदकतात्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेऽपि न क्षतिरित्यत आह । तत्तदवच्छेदकत्वेति । प्रातिस्विकेति । तत्तद्व्यक्तित्वेनेत्यर्थः । ज्ञातुमशक्यत्वादिति । अनन्तानां तादृशावच्छेदकत्वरूपप्रतियोगिनां प्रतियोगितावच्छेदकतत्तद्व्यक्तित्वेन ज्ञानासम्भवादिति भावः । निर्विशेषणकस्वघटितधर्मापेक्षया विशिष्टस्वघटितस्य गौरवेणानवच्छेदकत्वनिबन्धनामप्यव्याप्तिमाह ।

(दी०) एवं द्रव्यत्वत्वादिविशिष्टद्रव्यत्वादेरव्याप्यताप्रसङ्गोऽनुसन्धेयः । उपदर्शितप्रकारस्यापि स्वत्वादिघटितत्वेन दुर्ज्ञेयत्वात् । अत एव घ्राणग्राह्यगुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वमपि सङ्गच्छते इत्यपि केचिदिति कृतं पल्लवितेन ॥

(गा०) एवमिति । रीत्येति शेषः । अव्याप्यत्वप्रसङ्गोऽनुसन्धेय

इति । अतो गुरोरवच्छेदकत्वमावश्यकमेवेति शेषः । अत्रैव हेत्वन्तरमप्याह । उपदर्शितप्रकारस्याऽपीति । अपिर्दुर्ज्ञेयत्वादित्यनन्तरं योज्यः । उपदर्शितप्रकारस्य । मेयधूमवान् वह्नेरित्यादावतिव्याप्तिवारणायानुसृतस्य पारिभाषिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य । स्वत्वादीत्यादिना प्रातिस्विकरूपावच्छिन्नतत्तत्प्रतियोगितापरिग्रहः । दुर्ज्ञेयत्वादिति । तथा च गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे गुरुधर्मावच्छिन्नसाध्यकव्यभिचारिण्यावृत्तशक्यज्ञानकव्याप्तिनिर्वचनमप्यशक्यं स्यादिति भावः । उक्तस्थले हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य गुरुतया स्वरूपसम्बन्धरूपप्रतियोगितावच्छेदकत्वासम्भवेऽपि उक्तरीत्या पारिभाषिकतदीयप्रतियोगितावच्छेदकत्वस्यैव व्याप्तौ निवेशनीयतया न तदवच्छिन्नाभावाप्रसिद्धिनिबन्धनाव्याप्तिरित्याशङ्क्य उपदर्शितेत्यादिग्रन्थावतरणं तु न सम्भवति । तादृशावच्छेदकत्वत्वनिष्ठतथाविधावच्छेदकतायां स्वपदेन तन्मात्रस्योपादानात् । तादृशावच्छेदकत्वत्वविशिष्टव्यापकतावच्छेदकावच्छिन्नाभावनिवेशस्य पर्यवसितत्वात् । व्यभिचारित्वमपि सङ्गच्छते इति । व्यभिचारस्य साध्यतावच्छेदकावच्छिन्नाभाववद्वृत्तित्वरूपत्वात् गुरुधर्मस्यानवच्छेदकत्वे घ्राणग्राह्यगुणत्वावच्छिन्नप्रतियोगिताप्रसिद्ध्या तदनुपपत्तेरिति भावः ।

न च साध्यतावच्छेदकविशिष्टव्यापकतावच्छेदकावच्छिन्नाभावसामानाधिकरण्यमेव व्यभिचार इत्युक्तस्थले गन्धत्वावच्छिन्नाभावमादाय व्यभिचार उपपादनीय इति वाच्यम् । व्यापकतावच्छेदकताशरीरे साध्यतावच्छेदकविशिष्टस्यान्यनिष्ठाभावप्रतियोगितानां विशिष्योपादेयतया तत्तत्प्रतियोगितावच्छेदकभेदकूटस्यान्तर्भावनीयत्वेन व्यभिचारज्ञानस्याऽशक्यतयाऽनुमितिविरोधित्वासम्भवेन व्यभिचारस्य हेत्वाभासतानुपपत्तेः ।

एतेन व्यभिचारज्ञानाभावसहकृतसामानाधिकरण्यज्ञानस्य साक्षादनुमितिहेतुतामतावलम्बनासम्भवोऽपि दर्शितः । इदमुपलक्षणम् । जलं घ्राणग्राह्यगुणवत् उत्पत्तिकालावच्छिन्नो घटो घ्राणग्राह्यगुणवानित्यादौ बाधानुपपत्तिरपि द्रष्टव्या ॥

इति अनुमानगादाधर्यामवच्छेदकत्वनिरुक्तिप्रकरणम् ॥

# अथ सामान्याभावप्रकरणम् ।



व्याप्तिलक्षणावसरे सामान्याभावपार्थक्यव्यवस्थापनमुक्तलक्षणाव्याप्त्यतिव्याप्तिशङ्कानिराकरणपरतया सङ्गमयति । नन्विति ।

(दी०) ननु ये एव मिलिता वह्न्यभावा जलह्रदादौ वह्निर्नास्तीति बुद्धिं जनयन्ति, त एव प्रत्येकं धूमवति महानसादौ वर्तन्ते, तत्र च तेषां स्वस्वावच्छेदकतत्तद्वह्नित्वावच्छिन्नवैयधिकरण्यनिरूपिका याः प्रतियोगितास्तदवच्छेदकमेव वह्नित्वमतोऽव्याप्तिः ।

(गा०)अनुगतधर्मस्य वह्नित्वादेस्तदभावप्रतियोगितावच्छेदकताया आवश्यकत्वप्रदर्शनाय तादृशाभावानां वह्निर्नास्तीति धीविषयत्वकथनम् । तादृशप्रतीत्या प्रतियोगिविशेषणवह्नित्वांशे प्रतियोगितावच्छेदकत्वावगाहनात् । अन्यथा प्रतियोगितायामवच्छिन्नत्वस्यैवासिद्धेरिति भावः । विशेषाभावानां तादृशबुद्धिविषयत्वे एकविशेषवत्यपि महानसादौ विशेषान्तराभावमादाय तादृशधीप्रसङ्ग इत्याशङ्कावारणाय मिलिता इति । समुदिता इत्यर्थकम् । तथा च महानसादौ वह्निप्रतियोगिकयावदभाववत्त्वविरहान्नातिप्रसङ्ग इति भावः ।

अथ तथाविधयावदभावत्वेनाभावानां नोक्तप्रतीतिविषयतासम्भवः, यावत्त्वस्य बुद्धिविशेषविषयत्वरूपस्याऽनुपस्थितावपि तादृशप्रतीत्युदयात् । नापि वह्न्यभावत्वमात्रेण यावतां वह्न्यभावानाम्, प्रकारावैलक्षण्येन पर्वतीयवह्निर्नास्तीति प्रत्ययात्तद्वैलक्षण्यानुपपत्तेः । वह्न्यभावानवगाहिनस्तत्त्वेनाभावान्तरभ्रमस्य वह्निर्नास्तीत्याकारकतानुपपत्तेश्चेति चेन्न । वह्नित्वावच्छिन्नप्रतियोगिताकत्वेन तादृशसम्बन्धेन वह्निप्रकारेण वाऽभावानां तादृशप्रतीतिविषयत्वोपगमात् । न चैवं महानसे वह्निर्नास्तीत्याद्याकारिकाऽपि प्रतीतिरबाधितवत्किञ्चिद्विशेषाभावमवलम्बमाना प्रमा

स्यादिति वाच्यम् । ईदृशातिप्रसङ्गस्य ग्रन्थकृतैवाग्रे समाधास्यमानत्वात् । धूमवति महानसादाविति । यथाश्रुतमूललभ्यमभावे हेतुसामानाधिकरण्यमुपपादयितुमुक्तम् ।

ननु सामान्यधर्मस्य विशेषाभावप्रतियोगितावच्छेदकत्वे हेतुमतस्तदवच्छिन्नाधिकरणत्वनियमेन स्वावच्छेदकावच्छिन्नाधिकरणहेत्वधिकरणकाभावीयस्वरूपविशेषणाक्रान्तत्वं न विशेषाभावप्रतियोगितानामिति कथं ता उपादायाव्याप्तिप्रसक्तिरित्याशङ्कायामाह । तत्र चेति । तत्र । धूमवति महानसादौ । वैयधिकरण्यान्वयिघटितत्वं सप्तम्यर्थः । तेषाम् । अभावानाम्, एतत् प्रतियोगिता इत्यत्र सम्बध्यते । स्वस्वावच्छेदकतत्तद्वह्नित्वावच्छिन्नवैयधिकरण्यनिरूपिकाः । स्वस्वावच्छेदकतत्तद्वह्नित्वावच्छिन्नानधिकरणधूमाधिकरणिकाः । तथा च स्वस्वावच्छेदकतत्तद्वह्नित्वावच्छिन्नानधिकरणधूमाधिकरणवृत्तितत्तद्वह्न्यभावीया याः प्रतियोगिता इति समुदितार्थः । एवं प्रतियोगिता । सामान्याभावानतिरिक्तनामते तत्तद्वह्नित्वावच्छिन्नवह्न्यतिरिक्तस्य वह्नित्वादिसाधारणतत्प्रतियोगितावच्छेदकत्वविशिष्टावच्छिन्नवह्नेरस्याभावात् प्रतियोगिवैयधिकरण्यशरीरे तादृशाभेदानिवेशेऽपि तत्तद्वह्नित्वावच्छिन्नवह्निमादाय विशेषाभावेषु प्रतियोगिवैयधिकरण्यस्य शक्योपपादनत्वादिति भावः ।

एतच्च सामान्याभावस्य विशेषाभावकूटानतिरिक्तत्ववत् सामान्यधर्मावच्छिन्नप्रतियोगिताया अपि विशेषधर्मावच्छिन्नप्रतियोगिताकूटानतिरिक्तत्वमित्यभिप्रायेणाभिहितम् । यदि पुनरभाव एव नातिरिच्यते प्रतियोगिता त्वतिरिच्यत एव, अन्यथा सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य व्यासज्यवृत्तितामुपगम्यातिप्रसङ्गवारणसम्भवादिति मतम्, तदाऽपि तत्तद्वह्नित्वावच्छिन्नवह्नेरनभ्युपगमेन हेतुमन्निष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वरूपं प्रतियोगिवैयधिकरण्यनिरूपकत्वं सामान्यधर्मावच्छिन्नप्रतियोगितायामक्षतमेवेत्यव्याप्तिर्द्रष्टव्या । एतद्रूपवानतद्रसादित्यादावेकवृत्तिसाध्यके लक्षणगमनाय सम्भव उक्तः । नानाधिकरणवृत्त्येकव्यक्तिसत्तादिसाध्यकेऽपि सत्तात्वाद्यवच्छिन्नाभावस्य तत्तदधिकरणवृत्तित्वविशिष्टतदभावकूटानतिरिक्ततयाऽव्याप्तिर्द्रष्टव्या ।

अथ स्वावच्छेदकविशिष्टवह्निदसमुदायवत्स्वरूपं स्वावच्छेदक-

त्वविशिष्टावच्छिन्नप्रतियोगितावच्छेदकताकत्वविशिष्टप्रतियोगिताकत्वविशिष्टभेदवत्त्वं वाऽनधिकरणान्तार्थः प्रतियोगिवैयधिकरण्यशरीरे निवेश्यः। धूमवति महानसादौ च तादृशसमुदायान्तर्गतमहानसादिभेदस्यासत्त्वान्न तत्र वह्न्यभावस्य प्रतियोगिवैयधिकरण्यमित्याशङ्कते । न चैवमिति ।

(दी०) न चैवं वह्नित्वावच्छिन्नस्य तद्वृत्तित्वान्न तथात्वम् । तथा सति ह्रदवृत्तिधूमाभावप्रतियोगितावच्छेदकह्रदावृत्तित्वावच्छिन्नस्य वह्निमदयोगोलकवृत्तित्वादतिव्याप्तेः ।

(गा०) एवम् । वह्नित्वादेर्विशेषाभावप्रतियोगितावच्छेदकत्वे । *तद्वृत्तित्वात् । महानसादिवृत्तित्वात् । न तथात्वम् । न विशेषाभावप्रतियोगितानां महानसादौ प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिरूपकत्वम्* । तथा च नोक्ताव्याप्तिरिति भावः । तथा सतीति । तदधिकरणे स्वावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नसत्त्वे एव प्रतियोगितायास्तदधिकरणे स्वावच्छेदकावच्छिन्नवैयधिकरण्यानिरूपकत्वमित्यर्थः । ह्रदवृत्तीति धूमाभावान्वयि । तदुक्तिश्च ह्रदे ह्रदावृत्तिर्नास्तीति धीविषयह्रदनिष्ठह्रदावृत्तित्वत्वपर्याप्तविशेषाभावकूटस्य धूमाभावघटितत्वलाभाय, तावता ह्रदावृत्तित्वस्य तत्प्रतियोगितावच्छेदकत्वे कथन्तानिवृत्तिः । अतिव्याप्त्यापत्तेरिति । धूमवान् वह्नेरित्यत्रेत्यादिः । इदमपि विशेषधर्मावच्छिन्नप्रतियोगिताकूटस्यैव सामान्यधर्मावच्छिन्नत्वमित्यभिप्रायेण । अन्यथा ह्रदावृत्तित्वादेर्धूमत्वाद्यवच्छिन्नप्रतियोगितानवच्छेदकतया धूमत्वाद्यवच्छिन्नप्रतियोगितायाः स्वावच्छेदकावच्छिन्नवैयधिकरण्यनिरूपकत्वोपपत्तेः ।

न च धूमाभावस्येव घटजलाद्यभावस्यापि घटजलादिनिष्ठह्रदपर्वताद्यवृत्तित्वं प्रतियोगितावच्छेदकमित्ययोगोलके प्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणाभावाप्रसिद्ध्या अतिव्याप्त्यसङ्गतिरिति वाच्यम् । संयोगेन गोत्वाभावादावेव उभयाभावघटितस्य साध्यतावच्छेदकसंयोगसम्बन्धेन प्रतियोगिवैयधिकरण्यस्य प्रसिद्धेः ।

न च गोत्वादेरपि ह्रदावृत्तितया ह्रदाद्यवृत्तित्वरूपतत्प्रतियोगितावच्छेदकावच्छिन्नस्य वह्न्यादेः संयोगेनायोगोलकवृत्तित्वान्न

संयोगेन प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यमिति वाच्यम् । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकस्य गोत्वाद्यभावस्य केवलान्वयितयाऽव्यावर्त्तकत्वेन तस्य ह्रदावृत्तिसामान्याभावप्रतीतिविषयताया निर्युक्तिकत्वात् । धूमाद्यभावशून्ये महानसादौ तादृशसामान्याभावप्रतीतेः प्रमात्ववारणाय संयोगेन वृत्तिमतां धूमादीनामेव तादृशसम्बन्धावच्छिन्नाभावानां तादृशसम्बन्धावच्छिन्नह्रदावृत्तिसामान्याभावघटकत्वोपगमात् ।

केचित्तु वह्निमान् धूमादित्यादावप्युक्तक्रमेण प्रतियोगिव्यधिकरणाभावाप्रसिद्धिभयेन प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेतुमन्निष्ठाभावप्रतियोगिताधर्मिकसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभावघटितव्याप्तिरेवाऽऽदरणीया । तथा च येन सम्बन्धेन हेत्वधिकरणे पर्वतादौ किमपि वस्तु न वर्तते तादृशेन विषयितासम्बन्धेन, जन्यमात्रस्य कालोपाधित्वानभ्युपगमे कालिकसम्बन्धेन च घटाद्यभाव एव प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणः प्रसिद्ध इति तत्प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभावेन वह्निमान् धूमादित्यादाविव धूमवान् वह्नेरित्यादावपि लक्षणगमनं सम्भवतीत्याशयेन तदभिधानम् ।

न चैवमनुगतरूपस्य विशेषाभावप्रतियोगितानवच्छेदकत्वे तस्याभावप्रतियोगितामात्रे एवानवच्छेदकतया तद्रूपावच्छिन्नसाध्यके व्यभिचारिण्यग्रेऽतिव्याप्त्यभिधानविरोधः, तद्रूपस्य प्रतियोगितासामान्यानवच्छेदकत्वे तद्रूपावच्छिन्नत्वस्याप्रसिद्ध्या प्रतियोगिताधर्मिकोभयाभावघटितलक्षणगमनासम्भवादिति वाच्यम् । अननुगतधर्मस्याभावप्रतियोगितानवच्छेदकत्वे तद्रूपावच्छिन्नत्वस्याप्रसिद्ध्या तदवच्छिन्नसाध्यकेऽव्याप्तिरिति तन्मते साध्यतावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वघटितमेव लक्षणमादरणीयम्, तन्मते वह्न्यादेः कथंचिदपि घटाद्यभावप्रतियोगितावच्छेदकावच्छिन्नत्वासम्भवेन घटाद्यभावस्यैव तदवच्छिन्नव्यधिकरणस्य प्रसिद्ध्या अनयाऽप्यनवकाशादित्याशयेनाग्रे तादृशातिव्याप्त्यभिधानादिति वदन्ति ।

( चि० ) सामान्यावच्छिन्नप्रतियोगिताकाभावः पृथगेव । अन्यथा सकलप्रसिद्धरूपाभावे प्रसिद्धरूपवद्न्यत्वे चाऽवगते वायौ रूपं न वा, वायू रूपवान्नवेति संशयो न स्यात् । विशेपाभावकूटस्य निश्चितत्वात् ॥

( दी० ) अथानुगतं रूपं तत्तदभावप्रतियोगितानां नावच्छेदकम् । अनवच्छेदकमेव तह्यभावप्रतियोगितायाः, अभावान्तरे मानाभावात् । तथा च तद्रूपावच्छिन्नसाध्यके व्यभिचारिण्यतिव्याप्तिरत आह । सामान्येति । संशयान्यथानुपपत्तिं प्रमाणयति । अन्यथेति ।

(गा०) अथ वह्नित्वादेरनुगतधर्मस्य प्रत्येकं तत्तद्वह्न्यभावप्रतियोगिताकूटातिप्रसक्ततया तदवच्छेदकत्वं न सम्भवतीति नोक्तक्रमेण वह्निमान् धूमादित्यादावव्याप्तिरित्याशङ्कते-अथेति ।

अभावप्रतियोगितायाः । अभावप्रतियोगितासामान्यस्य । अभावान्तरे । तत्तद्विशेषाभावातिरिक्ताभावे । मानाभावादिति । वह्निर्नास्तीति धुर्वह्निप्रतियोगिकयावदभावत्वेन तत्तद्वह्न्यभावसमुदाय एव विषय इत्यभिमानः । तद्रूपावच्छिन्नसाध्यके । अनुगतरूपावच्छिन्नसाध्यके । उक्तसाध्ये प्रमाणमनुपन्यस्य तर्कमात्रप्रदर्शने न्यूनता स्यादिति कथमन्यथेत्यादिग्रन्थस्य सामान्याभावो यदि विशेषाभावेभ्यो नातिरिच्यते तदा विशेषाभावकूटनिश्चयदशायां सामान्यसंशयो न स्यादिति विपयपरिशोधकतर्कपरत्वपि प्रमाणसूचकतामाह । संशयान्यथानुपपत्तिमिति । संशयस्य । सामान्याभावरूपपक्षनिष्ठविशेपाभावकूटनिश्चयकालीनसामान्यधर्मावच्छिन्नकोटिकसंशयकोटित्वस्य । अन्यथानुपपत्तिम् । विशेपाभावपार्थक्याभाववति असत्त्वरूपां पार्थक्यसाधकव्याप्तिमित्यर्थः । प्रमाणयति । प्रमाणमाचष्टे । कृदन्तादाख्यानात् कृल्लुक् प्रकृतिप्रत्ययापत्तिः, प्रकृतिवच्च कारकमित्यत्र कृदन्तपदं भावकृदन्तपरमिति प्रकृते प्रमाणपदस्य करणकृदन्ततया कृल्लुक्प्रकृतिप्रत्ययापत्तिभ्यां प्रमापयतीत्येवं स्यादिति शङ्कानवकाशः । विषयपरिशोधकतर्क-

प्रदर्शनात्तत्प्रयोजकत्वाभिलाषः । अन्यथानुपपत्तेर्न्यायमते पृथक् प्रमाणताविरहेऽपि तज्ज्ञानस्य व्याप्तिज्ञानरूपानुमानविधया प्रमाणत्वाव्यासङ्गतेः । अनुपपत्तिपदस्य तज्ज्ञानपरत्वात् । अनुमानं च रूपत्वाद्यवच्छिन्नाभावो रूपत्वादिन्यूनवृत्तिधर्मावच्छिन्नाभावेभ्यस्तदवच्छिन्नन्यूनवृत्तितावच्छेदकधर्मावच्छिन्नाभावेभ्यो वा भिन्नः तादृशयावदभावनिश्चयकालीनतत्समानधर्मितावच्छेदककसमानाधिकरणसंशयकोटित्वात्, घटाद्यभाववदित्येतादृशं बोध्यम् । व्याप्तिश्च यत्तद्भ्यां रूपत्वादिकमुपादाय सामान्यतो विशेषत एव वा, तथा सत्यपि घटाभावादिदृष्टान्तसौलभ्यात् । अत्र च सामान्याभावो विशेषाभावानतिरिक्तोऽपि तन्निश्चयकालीनसंशयकोटिः स्यादित्यप्रयोजकत्वशङ्काया नावकाशः । सामान्याभावबुद्धेर्विशेषाभावकूटविषयकत्ववादिना पूर्वपक्षिणा विशेषाभावेष्वेव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य स्वीकरणीयतया सामान्यधर्मावच्छिन्नाभावविषयकनिश्चयत्वरूपस्य तादृशयावदभावनिश्चयत्वरूपस्य वा सामान्यधर्मावच्छिन्नविशिष्टबुद्धिप्रतिबन्धकतावच्छेदकस्य "वायौ रूपं नास्तीति बुद्धाविव वायौ पार्थिवादिरूपं नास्तीति बुद्धावपि तन्मते सत्त्वेन तादृशबुद्धेरिवैतादृशबुद्धेरपि वायौ रूपं न वेत्यादिसंशयविरोधिताया दुर्वारत्वात् । वायौ पार्थिवरूपं नास्तीति निश्चयकालीनसंशयकोटिजलीयरूपाद्यभावे व्यभिचारवारणाय हेतावभावे यावत्त्वविशेषणम् । सामान्याभावस्य पार्थक्येऽपि विशेषाभावकूटनिश्चयदशायां घटाभावत्वरूपसामान्याभावत्वादिना रूपविशेषाभावकोटिकसंशयोत्पत्त्या व्यभिचार इति व्यधिकरणधर्मानवच्छिन्नत्वेन कोटित्वं विशेषणीयम् । अथवा तादृशनिश्चयकालीनसंशयः स्वप्रतियोगितावच्छेदकावच्छिन्नकोटिकत्वेन विशेषणीयः । विशेषाभावनिश्चयकालीनस्य सामान्याभावत्वेन तद्विशेषाभावसंशयस्य सामान्यधर्मपुरस्कारेणैव प्रतियोगिकोटिकतया सामान्यधर्मस्य विशेषाभावप्रतियोगितानवच्छेदकतया विशेषाभावस्य स्वपदेनोपादानासम्भवाच्च व्यभिचारः ।

एतेन विशेषाभावाधिकरणकसामान्याभावस्याधिकरणस्वरूपत्वे सामान्याभावत्वेन विशेषाभावनिष्ठकोटितायाः स्वाधिकरणधर्मानवच्छिन्नतया तादृशकोटितामादाय व्यभिचारस्य पूर्वकल्पे

दुर्वारत्वेऽपि न क्षतिः । द्वितीयकल्पे स्वप्रतियोगितावच्छेदकेत्यनेन यद्रूपावच्छिन्नप्रतियोगिनाकत्वेन स्वस्य स्वभिन्नवृत्तिता तद्रूपस्य विवक्षितत्वाद्रूपत्वस्य विशेषाभावात्मकतन्निष्ठसामान्याभावप्रतियोगितावच्छेदकत्वेऽपि निरुक्तरूपत्वाभावेन तत्कल्पे उक्तदोषाभावात् ।

न चाभावे स्वभिन्नाभावानुपगमे विशेषाभावाधिकरणकसामान्याभावानामपि पक्षतावच्छेदकाक्रान्ततया अंशतो बाध इति वाच्यम् । रूपसामान्याभावत्वेन स्वभिन्नवृत्तेरभावस्य पक्षतया सामान्याभावपार्थक्यमते विशेषाभावानां सामान्याभावत्वेन स्वस्मिन्नेव वृत्तेरपक्षत्वात् । सामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यत्वे अंशतो बाधस्यादोषत्वाच्च । न चैवमपि सामान्याभावाधिकरणकविशेषाभावस्य तदात्मकतया सामान्याभावे विशेषाभावभेदो बाधित इति वाच्यम् । रूपवद्वृत्तिविशेषाभावानां भेदस्य साधनीयत्वात् । सामान्याभावात्मकविशेषाभावस्य च रूपवदवृत्तित्वात् । रूपवद्वृत्तित्वं रूपविशिष्टवृत्तित्वम्, अतो रूपसामान्याभावस्य समयभेदावच्छेदेन रूपोपलक्षितधर्मिवृत्तित्वेऽपि न क्षतिः । न च स्वनिष्ठरूपसामान्याभावाभिन्नो द्रव्यत्वाद्यभावस्तत्तदधिकरणवृत्तित्वविशिष्टद्रव्यत्वाद्यभावकूटातिरिक्तो रूपसामान्याभावत्वेन स्वभिन्नवृत्तिरभ्युपगम्यतां तस्य च तावता स्वनिष्ठरूपसामान्याभावात्मकतया पक्षतावच्छेदकाक्रान्ततया रूपवन्निष्ठाभावभिन्नतया च अंशतोऽर्थान्तरमिति वाच्यम् । अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् । वायुवृत्तित्वस्य रूपोपलक्षितधर्मिवृत्तित्वस्य वा पक्षतावच्छेदकनिवेशेनापि तद्वारणसम्भवात् । घटाभावत्वादिना रूपविशेषाभावकूटनिश्चयकालीनसंशयकोटित्वमादाय विशेषाभावे व्यभिचारवारणाय भ्रमभिन्नत्वेन हेतुघटकनिश्चयो विशेषणीयः ।

वस्तुतोऽभावेऽनुयोगितासम्बन्धेन प्रतियोगिभ्रमोऽप्रामाणिक एवेत्याशयेनेदमनुमानम् । अन्यथा घटाभावत्वादिना रूपाभावनिश्चयदशायां रूपसंशयोपपादकरीत्यैव पार्थिवत्वादिना रूपाभावकूटनिश्चयदशायामपि रूपसामान्याभावसंशयोपपत्तेरप्रयोजकोऽयं हेतुः स्यात् । न च प्रमात्वेन प्रतिबन्धकत्वमादाय प्रमात्वघटितहेतोरप्रयोजकत्वं निरसनीयमिति वाच्यम् । तथा सति रूपाभावत्वेन घटाभावादिभ्रमस्य रूपसंशयाविरोधित्वप्रसङ्गात् । तथा च

निश्चये प्रमासिद्धत्वविशेषणमनुपादेयमेव। परं तु शुद्धाभावत्वादिना अभावकूटनिश्चयकालीनसंशयकोटितामादाय व्यभिचारवारणाय प्रतियोगिधर्मितावच्छेदकतापन्नाभावत्वप्रकारको निश्चयो निवेश्यः। तादृशयावद्विशेषाभावनिश्चयत्वेन सामान्यधर्मावच्छिन्नकोटिकसंशयविरोधितया नाप्रयोजकत्वशङ्कावसरः।

अथैवं सिद्धान्तिमते पार्थिवं जलीयं तैजसं च रूपं वायौ नास्तीत्याकारकोऽनुयोगितासम्बन्धेनाऽभावांशे प्रतियोगिप्रकारकनिश्चयो न रूपत्वव्याप्यधर्मावच्छिन्नप्रतियोगिताकयावदभावविषयकः, अभावविशेषणे प्रतियोगिनि प्रकारतया भासमानधर्मे प्रतियोगितावच्छेदकत्वभानस्याऽऽवश्यकतया तद्विषयस्य पार्थिवरूपत्वादिसामान्यधर्मावच्छिन्नाभावस्य तत्तद्रूपत्वाद्यवच्छिन्नाभावानात्मकत्वात्। प्रतियोगिविशेषितत्तद्व्यक्तित्वाद्यनन्तधर्मावच्छिन्नाभावकूटविषयकश्च प्रत्ययो नासर्वज्ञस्य सम्भवति, तावद्रूपेण प्रतियोगितानामनुपस्थितेः, सर्वज्ञस्य च न संशय इति हेतुरयमसिद्धः।

न चैकैकशस्तत्तद्धर्मावच्छिन्नाभावनिश्चयकालीनसंशयकोटित्वेन तत्तद्धर्मावच्छिन्नाभावभेदः सामान्यधर्मावच्छिन्नाभावे साधनीयः। अवच्छेदकावच्छेदेन साध्यस्य साधनीयतया पूर्वपक्षिणां एकविशेषाभावात्मकसामान्याभावे अपरविशेषाभावभेदसत्त्वेनांशतः सिद्धसाधनं न दोषायेति वाच्यम्। सिद्धान्तिमते सकलविशेषाभावनिश्चयकाले सामान्यसंशयस्याप्रामाणिकतया यादृशविशेषाभावव्यक्तिनिश्चयकाले न सामान्यसंशयस्तद्भेदसाधकहेतोरप्रसिद्ध्या तद्भेदस्य सामान्याभावे साधनासम्भवात्। पूर्वपक्षिणा सामान्यसंशये रूपादिप्रतियोगिकयावदभावनिश्चयत्वेनैव प्रतिबन्धकता स्वीकर्तव्या, न तु रूपत्वादिसामान्यधर्मावच्छिन्नाभावनिश्चयत्वेनैव। तथा च सामान्याभावस्यापार्थक्येऽपि एकैकविशेषाभावनिश्चयकाले सामान्यसंशयोपपत्त्यैकैकाभावनिश्चयकालीनसंशयकोटित्वहेतोरप्रयोजकताया दुर्वारत्वाच्च।

एतेन विशेषाभावं पक्षीकृत्य सामान्यसंशयाव्यवहितपूर्ववर्तित्वसमानधर्मितावच्छेदककसमानाधिकरणनिश्चयप्रकारत्वेन हेतुना सामान्याभावभेदः साधनीयः, संशयानुपपत्तिमित्यनेनापि विशेषा

भावस्य तादृशनिश्चयप्रकारत्वानुपपत्तिरेव विवक्षितेत्यपि प्रत्युक्तम्। उक्तयुक्त्या सामान्याभावभेदस्य विशेषाभावे सत्त्वेऽपि एकैकाभावप्रकारकनिश्चयमादाय तत्रोक्तहेतोरुपपत्तेरप्रयोजकत्वस्य दुर्वारत्वात् ।

यत्तु रूपत्वावच्छिन्नाभावं पक्षीकृत्य पार्थिवजलीयतैजसरूपत्वावच्छिन्नप्रतियोगिविशेषिताभावनिश्चयकालीनतत्समानधर्मितावच्छेदककसमानाधिकरणसंशयकोटित्वेन हेतुना रूपवृत्त्युभयावृत्तिधर्मावच्छिन्नाभावभेदः साधनीयः। वायुः पार्थिवजलीयतैजसरूपाभाववानित्यादिनिश्चयकालीनं नीलरूपवान्न वा वायुरित्यादिसंशयमादाय नीलत्वाद्यवच्छिन्नाभावे व्यभिचारवारणाय उभयावृत्तित्वमेव धर्मे निवेशितं न तु रूपत्वव्याप्यत्वमिति । तदपि न । उक्तनिश्चयकालीनं तद्रूपवान्न वा वायुरित्यादिसंशयमादाय तद्रूपत्वावच्छिन्नाभावे व्यभिचारस्य दुर्वारत्वात् ।

उच्यते । रूपत्वावच्छिन्नकोटिकसंशयाव्यवहितप्राक्कालीनतत्समानधर्मितावच्छेदककसमानाधिकरणनिश्चयत्वावच्छेदेन धर्मितावच्छेदकविशिष्टे प्रतियोगिविशेषितरूपत्वावच्छिन्नाभावाविषयकत्वं साधनीयं हेतुश्च रूपत्वावच्छिन्नकोटिकसंशयाविरोधिनिश्चयत्वम् । तत्समानधर्मितावच्छेदककत्वं च तद्धर्मितावच्छेदकताव्याप्यधर्मितावच्छेदकताकत्वं तेन वायू रूपवान्न वेत्यादिसंशयपूर्वकालीने वायौ पार्थिवरूपं नास्ति गगने च रूपं नास्तीति समूहालम्बननिश्चये न बाधासिद्धी। व्याप्तिश्च यत्तद्भ्यां सामान्यतो विशेषतश्च सुग्रहा । सामान्याभावपार्थक्यमन्तरेण उक्तपक्षतावच्छेदकाक्रान्तवायौ पार्थिवादिरूपं नास्तीत्यादिनिश्चये तद्रूपं नास्तीति निश्चये च रूपत्वावच्छिन्नाभावाविषयकत्वानिर्वाहादतिरिक्तसामान्याभावपर्यवसानम्। संशयान्यथानुपपत्तिमित्यस्य विशेषाभावकूटनिश्चयस्य सामान्यसंशयाविरोधित्वानुपपत्तिमित्यर्थः । अभावेष्वतिरिक्ताभावः स्वीक्रियते इत्यभिप्रायको मूलग्रन्थ इति विशेषाभावस्य स्वनिष्ठसामान्याभावरूपतया बाधस्यानवकाशः । अन्यथा सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वावगाहितायाः सामान्यसंशयप्रतिबन्धकतानवच्छेदकत्वे सामान्याभावस्य पार्थक्येऽपि विशेषाभावस्यापि स्ववृत्तिसामान्याभावात्मकतया तन्निश्चये सामान्यसंशयानुपपत्तेर्दुर्वारत्वात् । तदवगाहितायाः सामान्यसंशयप्रतिबन्धकतावच्छेदकत्वं च सामा-

न्याभावापार्थक्येऽपि संशयोपपत्तेर्वक्ष्यमाणत्वात् ।

न च सामान्याभावपार्थक्ये तदवगाहित्वमनिवेश्यापि रूपवद्वृत्तिरूपाभावनिश्चयत्वेन प्रतिबन्धकत्वोपगमे स्वनिष्ठसामान्याभावात्मकविशेषाभावनिश्चयस्य सामान्यसंशयविरोधित्वमुपपद्यते इति, वाच्यम् । तादृशरूपेण प्रतिबन्धकत्वे विशेषाभावे धर्मिणि सामान्याभावत्वेन तन्निश्चयस्य सामान्यसंशयाविरोधित्वप्रसङ्गात् ।

अस्तु वा विशेषाभावस्य स्वनिष्ठसामान्याभावरूपता, तथापि रूपसामान्याभावत्वेन वायुवृत्तियोऽभावस्तदविषयत्वस्य साध्यतया बाधवारणं सम्भवतीति । वस्तुतः पार्थिवादिरूपाभाववान् वायुरित्याकारकनिश्चयव्यक्तिं विशिष्योपादाय तदनन्तरोत्पन्नसंशयकोटित्वेन तन्निश्चयविषयाभावभेदः सामान्याभाव साधनीयः, भावकोटिरेव सुलभो दृष्टान्तः । यन्निश्चयव्यक्त्यनन्तरक्षणोत्पन्नसंशये विशेषाभावस्य न विषयता सैव व्यक्तिरुपादेया अतो न बाधः, न वा व्यभिचारः । सामान्यधर्मावच्छिन्नकोटिकसंशये यावद्विशेषाभावनिश्चयत्वादिना प्रतिबन्धकत्वे सामान्याभावस्य तन्निश्चयविषयत्वमन्तरेण रूपत्वावच्छिन्नकोटिकत्वनियततदवच्छिन्नाभावकोटिकसंशयत्वानिर्वाहात्तत्राप्रयोजकत्वशङ्कावकाश इति दिक् ।

(दी०) वायाविति । यद्यप्ययं संशयो न वायुविशेष्यकः, तस्य विशेषणत्वेनोल्लेखात् । न वा रूपविशेष्यकः, तथा सति रूपतदभावयोर्विरोधिनोरकोटितायां प्रकृतानुपयोगप्रसङ्गात् । तथाऽपि वायू रूपवान् तदभाववान् वेति रूपतदभावकोटिकसंशये तात्पर्यम् । अन्यस्तु रूपवद्यदन्योन्याभावकोटिक इति नाभेद इति सम्प्रदायविदः ।

(गा०) अयम् । संशयः । वायौ रूपं न वेत्याकारकः प्रथमोक्तसंशयः । वायुविशेष्यक इति । रूपतदभावात्मकविरोधिप्रकारद्वयावच्छिन्नवायुनिष्ठविशेष्यताक इत्यर्थः । तस्य । वायोः । विशेषणत्वेनोल्लेखादिति । रूपादंशे परम्परया स्वविशेषणकबोधजनकेनैव शब्देनाभिलापादित्यर्थः । ससम्यन्तवायुपदेन रूपाद्यान्वितसप्तम्यर्थ

वायोर्विशेषणतया प्रतिपादनादिति भावः । रूपविशेष्यक इति । वायुवृत्तित्वतदभावरूपप्रकारद्वयावच्छिन्नरूपविशेष्यताक इत्यर्थः । अकोटितायामिति । कोटितायाः प्रकारताविशेषरूपत्वादित्याशयः । प्रकृतानुपयोगः । अतिरिक्तसामान्याभावासाधकत्वम् । तत्साधकोक्तहेतौ रूपाभावनिश्चयप्रतिबध्यस्य रूपकोटिकसंशयस्यैव प्रवेशादिति भावः । मूलोक्तसंशयद्वयस्यैव वायुविशेष्यकत्वेनाभेदमाशङ्क्य निराकुरुते । अस्त्यस्त्विति । रूपवत्तदन्योन्याभावेति । तादात्म्यविशेषणताभ्यामित्यादिः । अत एव मूले प्रसिद्धरूपवद्भेदनिश्चयोपदर्शनमपि सङ्गच्छते इति भावः ।

यथाश्रुतपरित्यागेनास्वरसः सम्प्रदायविद् इत्यनेन दर्शितः । वायौ रूपं रूपाभावो वेति धर्मिविशेषणककोटिद्वयविशेष्यकसंशय एवायम्, विधेयताया इव कोटिताया अपि प्रकारत्वानियतत्वात् । न चैवमस्य रूपविशिष्टबुद्ध्यनात्मकतया रूपाभावनिश्चयाप्रतिबध्यतया पूर्ववत्प्रकृतानुपयोगप्रसङ्ग इति वाच्यम् । धर्मिणि रूपविशिष्टबुद्धेरिव रूपांशे धर्मिविशिष्टबुद्धेरपि रूपाभावनिश्चयप्रतिबध्यत्वात् । धर्मधर्मिसम्बन्धावगाहिताया एव विपरीतज्ञानप्रतिबध्यतायां बीजतया विशेष्यविशेषणभावविपर्यासेऽपि तादृशबुद्धेरेकस्याः प्रतिबध्यता नान्यस्या इत्यत्र विनिगमकाभावात् ।

न च वायू रूपवानित्यत्र समवायो रूपसम्बन्धः, तदपेक्षया च गुरुशरीरसमवायप्रतियोगित्वरूपं समवेतत्वं वायौ रूपमित्यत्र वायुसम्बन्ध इति विनिगमना सम्भवतीति वाच्यम् । अधिकविषयतया अप्रतिबध्यत्वे तदभावनिश्चयापेक्षया अधिकविषयकस्य तदभावव्याप्यवत्तानिश्चयादेस्तद्वत्ताग्रहाप्रतिबन्धकत्वापातात् । उभयत्रैव समवायस्य सम्बन्धतोपगमाच्च । एकत्रानुयोगिता सम्बन्धतावच्छेदकसम्बन्धः, अन्यत्र तु प्रतियोगितेत्यभ्युपगमेन रूपवान् वायुः वायौ रूपमिति प्रतीत्योर्विशेषात् ।

न च विशेषणे प्रकारतावच्छेदकसम्बन्धप्रतियोगितायां विशेष्ये च तादृशसम्बन्धानुयोगितायां वास्तवसत्त्वं प्रतीतेः प्रमात्वप्रयोजकम् । तथा च घटे रूपमित्यादौ समवायस्य संसर्गत्वे प्रमात्वानुपपत्तिः । रूपे घटप्रतियोगिकसमवायानुयोगित्वासत्त्वादिति वाच्यम् । यत्रानुयोगिता सम्बन्धतावच्छेदकसम्बन्ध-

स्वधैर्ये(?)क्तस्य प्रमात्वनियामकतया यत्र च प्रतियोगिता तादृशसम्बन्धस्तत्र विपरीतस्य तन्नियामकतायाः स्वीकरणीयत्वात्, न चैवं सम्बन्धसम्बन्धो न विशिष्टधीविषय इति सिद्धान्तभङ्गप्रसङ्ग इति वाच्यम्। अनुयोगित्वप्रतियोगित्वयोरविषयत्वेऽपि सम्बन्धतावच्छेदकत्वसम्भवात्।

वस्तुतो धर्मिणि धर्मस्येव धर्मे धर्मिणः सम्बन्धान्तरमेव न तु धर्म्यनुयोगिको यः सम्बन्धस्तत्प्रतियोगित्वम्, एवं सति विपरीतस्यापि धर्त्तुं शक्यत्वात्। तथा चोभयत्र समशरीर एव सम्बन्ध, एवं सति विशिष्य सम्बन्धभेदनिवेशस्याऽऽवश्यकतया उपदर्शितोभयविधबुद्धेरेकरूपेण प्रतिबध्यत्वासम्भवेऽपि न क्षतिः। प्रतिबध्यप्रतिबन्धकभावद्वयस्यैवोपगन्तव्यत्वात्। एवं धर्मिणि तदभावप्रकारकस्येव तदंशे धर्मिप्रकारकस्यापि निश्चयस्य उक्तज्ञानविरोधिता बोध्या। एवं च दर्शितकोटिद्वयविशेष्यकज्ञानस्य स्वनिष्ठकोटिविषयिताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदककोटिप्रविष्टापरकोटिविषयितास्वरूपसंशयलक्षणमपि निष्प्रत्यूहमिति नवीनमतमाह। विरुद्धयोरिति।

( दी० ) विरुद्धयोरेकधर्मिसंसर्गावगाहिज्ञानमेव संशयो न तु तदुभयप्रकारताऽपि नियता, तथा च रूपतदभावविशेष्यको वायुविशेषणकोऽसाविति तु नव्याः।

( गा० ) विरुद्धोभयांशे एकधर्मिनिरूपितधर्मतावगाहित्वस्य, एकस्मिन् तादृशोभयनिरूपितधर्मितावगाहित्वस्य च द्वयोरेकतरसत्त्वमेव संशयत्वप्रयोजकमित्यर्थः। तदुभयेति। विरुद्धोभयेत्यर्थः। नियता। संशयत्वव्यापिका। असौ। प्रथमोक्तसंशयः।

न च कोटिद्वयविशेष्यकसंशये मानाभावः। प्रत्येककोटिद्वयविशेष्यकधर्मिविशेषणकज्ञानसामग्रीद्वयसमाजात्तादृशज्ञानोत्पत्तौ बाधकाभावात्। विरोधिद्वयनिश्चयस्य चैकदाऽनभ्युपगमेन तस्य संशयताया निष्प्रत्यूहत्वात्। न चैकसामग्र्या अपरकार्यप्रतिबन्धकत्वान्न तादृशज्ञानमिति वाच्यम्। तुल्यबलसामग्र्या अबाधत्वात्।

अथैवमेककोटौ धर्मिविशेषणको धर्मिणि चापरकोटिप्रकारको वायौ रूपं रूपाभाववान्वायुरित्याकारकोऽपि संशयः स्यादिति चेत् ? स्यादेव । न चैवं आधेयतासम्बन्धेन एकधर्मिसाध्यककोटिद्वयपक्षकलिङ्गपरामर्शसंवलनदशायां कोटिद्वयविशेष्यकधर्मिविशेषणकानुमितेर्ग्राह्याभावव्याप्यवत्तानिश्चयप्रतिबन्धकतया वारणासम्भवेनानुमितिरपि संशयाकारा स्यादिति वाच्यम् । आधेयतासंसर्गकानुमित्यनभ्युपगमसम्भवेन तादृशपरामर्शघटितानुमितिसामग्र्या एवासिद्धेः । धर्मिणि विपरीतकोटिसम्बन्धानिश्चायकत्वाविशेषेण धर्मिणि विपरीतकोटिव्याप्यवत्तानिश्चयस्येव विपरीतकोटौ धर्मिव्याप्यवत्तानिश्चयस्यापि धर्मधर्मिभावावगाहिप्रत्यक्षविशेषादिविरोधितया फलप्रतिबन्धकतयैव तादृशानुमितिवारणसम्भवाच्च ।

धर्मधर्मिभावसंसर्गकस्येव धर्मधर्मिभावप्रकारकस्यापि ज्ञानस्यानुभवबलेन धर्मिणि धर्माभावनिश्चयप्रतिबध्यतां व्यवस्थाप्य रूपधर्मिकवायुवृत्तित्वकोटिकसंशयस्य प्रकृतोपयोगित्वमुपपादयतामपरेषां मतमाह ।

( दी० ) वायुवृत्तित्वतदभावकोटिको रूपधर्मिक एवायं संशयः, अधिकरणे तत्तदभावान्यतरनिश्चयस्यापि तत्राधिकरणवृत्तित्वसंशयविरोधित्वात् । अन्यथा भूतले घटतदभावान्यतरनिर्णयेऽपि घटो भूतलवृत्तिर्न वेति संशयप्रसङ्गादित्यपरे ।

( गा० ) वायुवृत्तित्वेति । तत्तदभावान्यतरेति । तद्धर्मतद्धर्माभावान्यतरेत्यर्थः । तत्राधिकरणवृत्तित्वविशिष्टबुद्धौ अधिकरणे तद्भावनिश्चयस्य विरोधित्वे तत्र अधिकरणवृत्तित्वाभावबुद्धावव्यधिकरणे तद्वत्तानिश्चयस्य प्रतिबन्धकता स्यादिति प्रतिबन्दिनिराकरणाय तत्र तत्प्रतिबन्धकतायामिष्टापत्तिं दर्शयितुमधिकरणे तद्वत्तानिश्चयस्य तत्राधिकरणवृत्तित्वसंशयविरोधित्वाभिधानमिति न तस्य प्रकृतानुपयोगिता । अपिकारोऽधिकरणवृत्तित्वादिनिश्चयस्य समुच्चयपरः । तत्प्रतिबन्धकतायाः प्रकृतानुपयोगित्वेऽपि अवधारणपरत्वशङ्कानिराकरणाय तच्छब्दोपादानम् । विरोधित्वात् । प्रतिबन्धकत्वात् । अन्यथा । तत्र तदविरोधित्वे ।

अपरे इत्यस्वरससूचनाय। तद्बीजं च तत्सम्बन्धसम्बन्धादिप्रकारक इव तत्सम्बन्धादिप्रकारकज्ञानेऽपि तदभावनिश्चयस्य स्वतो विरोधित्वे मानाभावः । विरोधिज्ञानान्तरसम्पादनद्वारैव तद्विरोधित्वोपगमादिति ।

(दी०) अथैतावन्त्येव रूपाणीत्यनिर्णयाद्यावद्रूपाभावानिर्णये संशयो न विरुध्यते इति चेत् ? यावद्रूपाभावानिर्णय इत्यस्य यावन्तो रूपाभावास्तेषाम्, यावत्त्वेन रूपेण तेषाम्, यावन्ति रूपाणि तावदभावानाम्, यावद्रूपत्वेन तदभावानां वाऽनिर्णय इत्यर्थः ? न प्रथमतृतीयौ, तथा निर्णीतत्वात् । नेतरौ, प्रतियोगितदभावयोर्यावत्त्वानुल्लेखेऽपि योग्यानुपलब्ध्या भूतले घटो नास्तीति निश्चयमात्रादेव घटतदभावसंशयोच्छेददर्शनेन तस्याकिञ्चित्करत्वात् ।

(गा०) एतावन्त्येव रूपाणीति । सर्वाणि रूपाणि आप्यतैजसपार्थिवरूपानतिरिक्तानीत्यर्थः । इत्यनिर्णयात् । संशयस्थलेऽतिरिक्तसम्भावनाविरोधिनस्तादृशनिश्चयस्यासत्त्वात् । यावद्रूपाभावानिर्णय इति । यावत्त्वेन रूपविषयके तदभावविषयके वा रूपाभावनिश्चये चासतीत्यर्थः । रूपे तत्तद्रूपातिरिक्तत्वसम्भावनायां वायुनिष्ठाभावप्रतियोगितायां रूपत्वव्यापकतायाः, रूपाभावे तन्निरूपिताभावातिरिक्तत्वसम्भावनायां च वायुवृत्तित्वे रूपाभावत्वव्यापकतायाः दुर्निश्चेयत्वादिति भावः । संशयो न विरुध्यते इति । सामान्यधर्मावच्छिन्नवत्ताज्ञाने प्रतियोगिन्यभावे वा यावत्त्वावगाहिन एव विशेषाभावनिश्चयस्य प्रतिबन्धकत्वादिति भावः ।

यावद्रूपाभावानिश्चय इत्यत्र यावत्त्वस्य उपलक्षणतायाः शङ्कितुरनभिप्रेतत्वेऽपि तस्योपलक्षणविशेषणभावभेदेन यावन्तोऽर्थाः सम्भवन्ति तावत एव विकल्प्य दूषयति । यावदिति । अभावे प्रतियोगिनि च यावत्पदार्थान्वयसम्भवात् प्रत्येकमुभयत्रैवोपलक्षणत्वस्य विशेषणत्वस्य च सम्भवात् विकल्पचतुष्टयम् । तेषां वायौ केनापि रूपेणानिर्णय इत्येकः पक्षः । यावत्त्वेन तेषां वायावनिर्णय

इति द्वितीयः । रूपाभावत्वावच्छेदेन वायुवृत्तित्वानिश्चयस्तदर्थः । यावन्ति रूपाणि येन केनापि रूपेण विशेषितानां तेषां वाय्वभावनिश्चय इति तृतीयः । यावद्रूपत्वेन विशेषितानां तेषां वाय्वभावनिश्चय इति चतुर्थः । रूपत्वावच्छेदेन वायुवृत्त्यभावप्रतियोगित्वानिश्चयस्तदर्थः । तथा निर्णीतत्वादेवेति । पार्थिवरूपत्वावच्छिन्नाभावत्वादिना केनापि रूपेण सर्वेषां रूपाभावानां पार्थिवरूपत्वादिना केनचिद्रूपेण भासमानसकलरूपाणामभावानां च निश्चितत्वादेवेत्यर्थः । प्रतियोगीति । प्रतियोगिनि घटे तदभावे च यावत्त्वाभानेऽपीत्यर्थः । घटत्वावच्छेदेनाभावप्रतियोगितया घटाभावत्वावच्छेदेन भूतलवृत्तितायाश्चानवगाहनेऽपीति यावत् । यावद्विशेषाभावलिङ्गकसामान्याभावानुमितिस्थले यावत्त्वावगाहिविशेषाभावकूटनिश्चयस्याऽऽवश्यकत्वात् । योग्यानुपलब्ध्येति । तस्य । पार्थिवादिरूपाभाववान् वायुरिति निश्चयेऽभावांशे यावत्त्वानवगाहनस्य । अकिञ्चित्करत्वात् । रूपसामान्यसंशयानुपपादकत्वात् ।

विशेषाभावकूटनिश्चयस्य सामान्यसंशयप्रतिबन्धकतायां अतिरिक्तसम्भावनाया उत्तेजकतया संशयोपपत्तिमाशङ्कते ।

(दी०) न चातिरिक्तसम्भावनाविरहसहकृत एव तद्बोधस्तथा। सम्भावना च रूपं पार्थिवादित्रितयभिन्नं न वेत्याकारा । निवर्तते चेयं रूपत्वावच्छेदेनैतत्त्रितयभिन्नत्वाभावनिश्चयादेवेति वाच्यम् । गौरवात् । विनाऽपि अतिरिक्तसम्भावनां विशेषाभावनिश्चये सामान्यसंशयदर्शनाच्च ।

(गा०) न चेति । सहकृतत्वं सामानाधिकरण्यसम्बन्धेन तद्विशिष्टत्वम् । तद्बोधः । यावद्रूपाभावनिश्चयः । तथा । रूपत्वावच्छिन्नकोटिकसंशयविरोधी । नन्वतिरिक्तरूपाप्रसिद्ध्या तद्विषयकसम्भावना न सम्भवतीति कथमतिरिक्तसम्भावनया संशयोपपादनमत आह । सम्भावना चेति । संशयोपपादिकेति शेषः । रूपमिति । तथा च पार्थिवादित्रितयभिन्नरूपाप्रसिद्धावपि प्रसिद्धरूपे रूपत्वेन स्पर्शादौ प्रसिद्धस्य पार्थिवादिभिन्नत्वस्य सम्भावना सम्भवत्येवेति भावः । ननु

प्रसिद्धरूपे पार्थिवाद्यनतिरिक्तत्वनिश्चयेन तद्धर्मिकातिरिक्तत्वसंशयो न युज्यते इत्यत आह । निवर्तते इति । इयम् । रूपत्वसामानाधिकरण्येनातिरिक्तत्वावगाहिनी सम्भावना । निश्चयादेवेत्येवकारेण रूपत्वसामानाधिकरण्यमात्रावगाह्यनतिरिक्तत्वनिश्चयव्यवच्छेदः । तथा च रूपत्वसामानाधिकरण्येन सकलप्रसिद्धरूपेऽप्यनतिरिक्तत्वनिश्चयेऽपि तत्सामानाधिकरण्यमात्रावगाहिन्या अतिरिक्तत्वसम्भावनायाः सम्भवात् प्रकृतसंशयोपपत्तिरिति भावः।

गौरवादिति । अतिरिक्तसामान्याभाववादिमते तन्निश्चयस्य सामान्यसंशयप्रतिबन्धकतायामतिरिक्तसम्भावनाविरहानिवेशात्तदनभ्युपगमे च विशेषाभावकूटनिश्चयस्य तत्प्रतिबन्धकतायां तादृशाभावनिवेशाधिक्यादिति भावः । अतिरिक्तसम्भावनाया उत्तेजकत्वेऽपि न संशयनिर्वाह इत्याह । विनापीति । सामान्यसंशयदर्शनात् । सामान्यसंशयस्याऽऽनुभविकत्वात् । इदमुपलक्षणम् । रूपसामान्यसंशयं प्रति तदभावनिश्चयप्रतिबन्धकतायां रूपे पार्थिवादिभिन्नत्वसम्भावनाया उत्तेजकत्वे वायौ रूपं नास्तीत्याकारकनिश्चयदशायामपि तादृशसम्भावनया वायौ रूपं न वेति संशयापत्तिश्चेत्यपि द्रष्टव्यम् ।

प्रकारान्तरेण संशयमुपपाद्य सामान्याभावपार्थक्यमाक्षिपति अथेत्यादिना ।

(दी॰) अथाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वनिश्चय एव तादृशसंशयविरोधी । अन्यथा तत्राप्यतिप्रसङ्गात् । स च न प्रकृते । अभावस्य च यावद्विशेषाभावाधिकरणवृत्तित्वेन विशिष्टस्य तदवच्छेदेन वा सामान्यावच्छिन्नप्रतियोगिताकत्वम् । सम्भवति चेदम्, तादृशाभावप्रतियोगिताया अतिरिक्तत्वात् । तेन नैकविशेषवतो विशेषान्तराभाववत्त्वेन सामान्याभाववत्त्वप्रसङ्गः ।

(गा॰) अभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वनिश्चय एवेति । रूपं नास्तीत्याद्याकारको धर्मिणि सामान्यावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रतियोगिविशेषिताभावावगाहिनिश्चय एवेत्यर्थः ।

एवकारेण विशेषधर्मावच्छिन्नप्रतियोगिताकत्वविषयकनिश्चयव्य-वच्छेदः। तादृशसंशयविरोधीति। सामान्यधर्मावच्छिन्नकोटिकसंशयप्रतिबन्धक इत्यर्थः। तादृशनिश्चयत्वस्यैव तत्प्रतिबन्धकतावच्छेदकत्वादिति भावः। अन्यथा। सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वीयविषयताविशेषस्य प्रतिबन्धकतावच्छेदककुक्षावनिवेशे। तथापि। अतिरिक्तसामान्याभाववादिनोऽपि। अतिप्रसङ्गात्। तद्रूपाभावत्वादिना रूपसामान्याभावावगाहिनो भ्रमाद्यात्मकनिश्चयस्य रूपसामान्यसंशयविरोधित्वप्रसङ्गात्। तस्यापि वास्तवरूपत्वावच्छिन्नाभावविषयकत्वात्। स च। तादृशनिश्चयश्च। प्रकृते। प्रकृतसंशयाव्यवहितपूर्वकाले। तादृशस्य रूपं नास्तीत्याकारकनिश्चयस्य सत्त्वे रूपवन्न वेति संशयस्य केनाप्यनभ्युपगमात्। तथा च यावद्विशेषाभावानां तादृशनिश्चयविषयतामतेऽपि नोक्तसंशयानुपपत्तिरिति किमतिरिक्तसामान्याभावेनेति भावः।

ननु विशेषाभावानामेव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वे पृथिव्यादावपि रूपविशेषाभावसत्त्वाद्रूपं नास्तीति प्रतीतिप्रसङ्गः। तादृशप्रतीतेरभावे यावत्त्वावगाहितया निराकृतत्वात् पृथिव्यादौ यावद्रूपाभावासत्त्वस्याकिञ्चित्करत्वादित्यत आह। अभावस्य चेति। विशेषाभावस्य चेत्यर्थः। विशिष्टस्येति। सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमित्यग्रिमेणान्वितम्। तथा च तादृशविशेषणान्तर्भावेणाभावे तादृशप्रतियोगिताकत्वपर्याप्तिरित्यर्थः। एवं च वायो रूपं नास्तीत्यादिप्रत्ययो वाय्वादिवृत्तित्वविशिष्टाभावे रूपत्वावच्छिन्नप्रतियोगिताकत्वपर्याप्तिमवगाहते पृथिव्यादिवृत्तित्वविशिष्टे च तत्पर्याप्तेर्बाधान्न पृथिव्यां रूपं नास्तीत्यादिप्रत्ययः।

ननु विशेषणांशे भावरूपे सामान्यावच्छिन्नप्रतियोगिताकत्वासत्त्वात्तदन्तर्भावेण तत्पर्याप्तिर्न सम्भवति। न चैवं दण्डी नास्तीत्याद्यभावप्रतियोगिताव्यधिकरणदण्डत्वादेस्तदवच्छेदकत्वासम्भवात्तादृशविशेषणविशिष्टेऽवच्छेदकत्वपर्याप्तिर्न स्यादिति वाच्यम्। इष्टत्वात्। तत्र दण्डत्वादिरूपविशेषणस्यावच्छेदकतायामेवावच्छेदकत्वोपगमात्। एवमन्यत्रापि कुत्रचिद्विशिष्टे पर्याप्तिर्नास्त्येवेत्याशयेनाह। तदवच्छेदेन वेति। तादृशाधिकरणवृत्तित्वावच्छेदेनेत्यर्थः। एवं च वायौ रूपं नास्तीत्यादौ प्रत्यये वाय्वादि-

पृथिवीत्वावच्छिन्नं रूपत्वाद्यवच्छिन्नप्रतियोगिताकत्वं भासते इति पृथि-
व्यादिवृत्तित्वस्य तदनवच्छेदकत्वान्न पृथिव्यां रूपं नास्तीत्यादि-
प्रतीतिरिति भावः।

विशेषधर्मावच्छिन्नप्रतियोगिताकूटातिरिक्तसामान्यधर्मावच्छि-
न्नप्रतियोगितानभ्युपगमे विशेषधर्मावच्छिन्नप्रतियोगिताकत्वावच्छे-
दकपृथिव्यादिवृत्तित्वस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वान-
वच्छेदकत्वं न सम्भवतीत्याशयेन सामान्यधर्मावच्छिन्नप्रतियो-
गितायास्तत्तत्प्रतियोगिताकूटातिरिक्तत्वमभ्युपेत्यैतदुपपादयति ।
सम्भवतीति । इदम् । एकविशेषाभाववद्वृत्तित्वस्य सामान्यधर्मा-
वच्छिन्नप्रतियोगिताकत्वानवच्छेदकत्वम् । अतिरिक्तत्वात् । विशेष-
रूपावच्छिन्नप्रतियोगिताभ्यो भिन्नत्वोपगमात् । सामान्याभावस्याति-
रिक्तत्वेऽपि तथात्वस्याऽऽवश्यकत्वात् । अन्यथा सामान्याभावत्वस्य
विशेषाभावसाधारण्येनातिप्रसङ्गस्य दुर्वारत्वादिति भावः । एक-
विशेषवतः । पृथिव्यादेः । सामान्याभाववत्त्वप्रसङ्गः । वस्तुगत्या
रूपत्वाद्यवच्छिन्नप्रतियोगिताकस्याभावस्याश्रयत्वेऽपि न रूपत्वाद्य-
वच्छिन्नप्रतियोगिताकत्वविशिष्टाभाववत्त्वप्रसङ्गः । अतो न पृथिव्यां
रूपं नास्तीत्यादिप्रत्ययप्रसङ्ग इति भावः ।

अयं चाभ्युपगमवादः । वस्तुतः सामान्यधर्मावच्छिन्नत्वस्य
विशेषधर्मावच्छिन्नप्रतियोगितासु स्वीकारेऽपि सामान्यधर्मावच्छि-
न्नत्वविशिष्टतादृशप्रतियोगितानिरूपकत्वे पृथिव्यादिवृत्तित्वस्या-
नवच्छेदकत्वसम्भवेनातिप्रसङ्गवारणसम्भवात् ।

सामान्याभावविशेषाभावप्रतियोगितावच्छेदकसामान्यधर्मवि-
शेषधर्मयोर्भेदात्तादृशाभावयोर्भेद इति सिद्धान्तमाशङ्कते । न चेति ।

(दी०) न च प्रतियोगितावच्छेदकभेदस्याभावभेदनिया-
मकतया भेदसिद्धिः । प्रतियोगिभेदस्य तत्त्वे एकघटप्रतियोगि-
कस्य प्रागभावादिचतुष्कस्याभेदप्रसङ्गात् । अवच्छेदकं तु
भिद्यत एव तत्र, क्वचित् तादात्म्यस्य क्वचित् संसर्गस्य क्वचि-
त्पूर्वापरकालीनतद्वत्त्वादेश्च तथात्वादिति वाच्यम् । संसर्गप्रति
योगिविशेषणसाधारणस्यैकस्यावच्छेदकत्वस्य दुर्वचत्वात्, पूर्वा

परकालीनत्वादेर्ध्वंसादिप्रतियोगितावच्छेदकत्वे मानाभावाच्च ।

( गा० ) विशेषधर्मावच्छिन्नप्रतियोगिताकूटस्य सामान्यधर्मावच्छिन्नत्वोपगमे प्रतियोगिताभेदस्याभावभेदनियामकत्वेऽपि न समीहितसिद्धिरिति प्रतियोगितावच्छेदकभेदपर्यन्तानुधावनम् । न चैवं दण्डत्वाद्यनुगतरूपावच्छिन्ननानादण्डाद्यवच्छिन्नप्रतियोगिताकाभावस्यैक्यानुपपत्तिरिति वाच्यम् । अवच्छेदकताभेदस्यैव *विवक्षितत्वात्* तत्रानुगतरूपावच्छिन्नासु नानाव्यक्तिषु अवच्छेदकताया एकस्या एवोपगमात् । अत एव महानसीयवह्नित्वशुद्धवह्नित्वाद्योरभेदेऽपि न तदवच्छिन्नाभावभेदाप्रसिद्धिप्रसङ्गः ।

अथ वाऽवच्छेदकभेदोऽवच्छेदकतापर्याप्त्यधिकरणवैलक्षण्यम । तथा च यादृशधर्मे यदभावीयप्रतियोगितावच्छेदकता न पर्याप्ता सोऽभावस्तादृशधर्मपर्याप्तप्रतियोगितावच्छेदकताकाभावभिन्न इति पर्यवसितम् । संसर्गप्रतियोगिविशेषणसाधारणमवच्छेदकत्वमेकमेवातो नैकाभावस्य तदुभयावच्छिन्नप्रतियोगिताकत्वानुपपत्तिरित्यभिमानः ।

ननु प्रतियोगितावच्छेदकभेदो नाभावभेदकः,अपि तु प्रतियोगिभेद एव । विशेषाभावप्रतियोगिनमेव च सामान्याभावप्रतियोगित्वाच्च तयोर्भेदः । न च प्रतियोगिभेदस्य तथात्वेऽपि एतद्रूपभिन्नरूपप्रतियोगिकतया विशेषान्तराभावस्येव सामान्याभावस्याप्येतद्रूपत्वावच्छिन्नाभावभेदसिद्धिर्दुर्वारैवेति वाच्यम् । रूपान्तरविशेषाभावस्यापि सामान्याभावतया सिद्धसाधनात् । रूपत्वावच्छिन्नाभावत्वावच्छेदेन च नैतद्रूपत्वावच्छिन्नाभावभेदसिद्धिसम्भवः, एतद्रूपत्वावच्छिन्नाभावस्यापि सामान्याभावत्वोपगमेन भागासिद्धिसन्देहादित्यत आह । *प्रतियोगीति* । *अभेदप्रसङ्गादिति* । भेदकविरहेण भेदानुपपत्तेरित्यर्थः । तत्र भेदकान्तरानुसरणे च तदपेक्षया सर्वत्रावच्छेदकभेदस्यैव भेदकत्वमुचितमिति भावः ।

प्रागभावादिचतुष्कस्य प्रतियोगितावच्छेदकभेदं व्यवस्थापयन् स्वमते तद्भेदमुपपादयति । *अवच्छेदकं त्विति* । तत्रेत्यत्रेव छेदः । क्वचित् । अन्योन्याभावप्रतियोगितायाम् । क्वचित्त । अत्य-

न्ताभावादिप्रतियोगितायाम् । संसर्गस्य । संयोगादेः । क्वचित् । ध्वंसप्रागभावप्रतियोगितयोः । पूर्वापरेति । स्वपूर्वकालीनतद्घटत्वस्वोत्तरकालीनतद्घटत्वायोरित्यर्थः । यथासङ्ख्यमन्वयः । पूर्वापरकालीनघटादिसामान्यं न कस्यापि ध्वंसादेः प्रतियोगि अतस्तद्घटत्वानुधावनम् । प्रतियोगितामेदस्य नियामकत्वं तु न निराकृतम् । अवच्छेदकभेदेन प्रतियोगिताभेदे तावताऽपि सामान्याभावपार्थक्यसिद्धेः, अवच्छेदकभेदेन तद्भेदेऽपि ध्वंसप्रागभावादिप्रतियोगिताया अप्यभेदसम्भवेन प्रतियोगिभेदपक्षोक्तदूषणमात्रात् । दुर्वचत्वादिति । संयोगेन घटो नास्तीत्यादौ संयोगी घटो नास्तीत्यादौ विलक्षणप्रत्यये च संयोगादिनिष्ठविलक्षणावच्छेदकत्वयोरेव मानस्याऽनुभविकत्वादित्यर्थः । एवं च प्रकृतनियमे एकविधावच्छेदकत्वान्तर्भावेऽन्यविधावच्छेदकभेदाद् भेदानुपपत्तिः । कथंचिदवच्छेदकताद्वयानुगमे एकाभावस्यापि संसर्गप्रतियोगिविशेषणरूपावच्छेदकयोर्भेदाद् भेदापत्तिरिति भावः ।

अवच्छेदकतायां सजातीयावच्छेदकताभेदस्याभावभेदकत्वे नोक्तदोषावसर इत्यतो दोषान्तरमाह । पूर्वेति । मानाभावादिति । अव्यावर्तकत्वादिति भावः ।

ननु ध्वंसप्रागभावयोर्भेदकमन्यदेवोभयसिद्धम्, सदातनाभावभेदकः प्रतियोगितावच्छेदकभेद एवोपगन्तव्यः । प्रतियोगिभेदस्य च न तथात्वसम्भवः, एकप्रतियोगिकान्योन्यात्यन्ताभावयोः संयोगसमवायादिनानासम्बन्धावच्छिन्नैकप्रतियोगिकात्यन्ताभावानां चाभेदापत्तेरित्यत आह । किञ्चेति ।

(दी०) किञ्चावच्छेदकभेदस्याभावभेदनियामकत्वं न तज्जनकत्वम्, अत्यन्ताभावादिस्वरूपस्य तस्याजन्यत्वात् । नापि तद्व्याप्यत्वमपि, वैयधिकरण्यात् । अत एव न तद्व्यापकत्वमपि, अभेदेऽप्यविरोधाच्च ।

(गा०) तज्जनकत्वम् । अभावभेदजनकत्वम् । अत्यन्ताभावादीत्यादिना प्रागभावान्योन्याभावयोः परिग्रहः । तस्य । अत्यन्ताभावादीनां परस्परभेदस्य । अजन्यत्वादिति । तथा च तज्जनकत्वमप्रसिद्धमिति भावः । वैयधिकरण्यादिति । अवच्छेदक-

निष्ठस्य मिथस्तद्भेदस्य व्यापकत्वाभिमताभावपरस्परभेदवैयधिकरण्यादित्यर्थः । यद्यपि अभावप्रतियोगितावच्छेदकयोरपि मिथो भिन्नतया प्रतियोगितावच्छेदकनिष्ठे अभावप्रतियोगितावच्छेदकभेदे नाभावनिष्ठाभावभेदवैयधिकरण्यम् । तथापि अभावान्तरप्रतियोगितावच्छेदकनिष्ठस्वप्रतियोगितावच्छेदकभेदस्य स्वभेदानधिकरणे स्वस्मिन्नपि सत्त्वेन व्यभिचारात् । साध्यानधिकरणवृत्तित्वरूपव्यभिचार एव चात्र वैयधिकरण्यपदेन विवक्षितः । प्रतियोगितावच्छेदकवृत्तित्वविशिष्टस्य भेदस्य व्याप्यत्वविवक्षणे च तादृशस्याभावावृत्तित्वेन तत्राभावभेदासाधकत्वं द्रष्टव्यम् । अत एव । वैयधिकरण्यादेव । अभावभेदस्य प्रतियोगितावच्छेदकभेदानधिकरणवृत्तित्वादेवेति यावत् ।

व्यापकतापक्षे दोषान्तरमाह । अभेदेऽपीति । सामान्याभावस्य विशेषाभावाभेदेऽपीत्यर्थः । अविरोधात् । प्रतियोगितावच्छेदकभेदाविरोधात् । व्यापकव्यभिचारस्यादोषत्वादिति भावः । तथा च तस्य व्यापकत्वानुरोधान्न सामान्याभावपार्थक्यमिति भावः ।

व्याप्यतापक्षमेव परिष्कृत्य शङ्कते । न चेति ।

(दी०) न च तदितरधर्मावच्छिन्नप्रतियोगिताकत्वं तदवच्छिन्नप्रतियोगिताकान्यत्वस्य व्याप्यम् । मानाभावात् । अत एव च समनियतसुखदुःखादितत्तत्संख्यापरिमाणव्यक्त्यादिनानाधर्मावच्छिन्नोऽप्यभिन्न एवाभावः । भेदसिद्धिस्तु भाववदभावस्यापि विरुद्धधर्माध्यासादेव ।

(गा०) तदितरधर्मावच्छिन्नप्रतियोगिताकत्वम् । तदवच्छेदकताभिन्नप्रतियोगितावच्छेदकताकत्वम् । तद्धर्मावच्छिन्नप्रतियोगिताकान्यत्वं च तदवच्छेदकतानिरूपकप्रतियोगिताकान्यत्वम् । सामान्याभावत्वावच्छेदेन च उक्तहेतुना विशेषाभावभेदः साधनीयः । अतो विशेषाभावान्तरे सामान्याभावत्वेनाभ्युपगते विशेषाभावभेदसत्त्वेऽपि न दोषः । मानाभावात् । विपक्षबाधकतर्काभावात् । अत एवेति । प्रतियोगितावच्छेदकभेदस्याभावभेदाव्याप्यत्वादेवेत्यर्थः । संख्यादिसामान्यस्याभावप्रतियोगितावच्छेदकत्वं न सम्भवति

तत्समनियतस्य लघोर्द्रव्यत्वस्यैव तथात्वादिति तत्त्वसंख्ये-त्युक्तम्। आत्मत्वजातेरीश्वरसाधारण्येन न सुखादिसमनैयत्यमिति सुखादिसामान्यस्य प्रतियोगितावच्छेदकत्वसम्भवः। वस्तुतोऽव-च्छेदकतासम्बन्धेन सुखाद्यवच्छिन्नाभावो विवक्षितः, शरीरनिष्ठ-स्य च सुखादिसमनियतलघुधर्मान्तरस्यासम्भवात् तत्सामान्य-स्य तथात्वमक्षतमिति सुखादिसामान्यमेवोपात्तम्। अभिन्न एवा-भावः। स्वीक्रियते इति शेषः। मतः प्रतियोगितावच्छेदकभेदे-नाभावभेदमते तादृशाभावानामपि भेदादुपष्टम्भासङ्गतिरिति दूष-णमनवकाशम्।

नतु प्रतियोगितावच्छेदकभेदस्याभावभेदासाधकत्वे घटत्व-पटत्वाद्यवच्छिन्नाभावानामपि भेदो न सिद्ध्येदित्यत आह। भे-दसिद्धिस्त्विति। भाववदिति। भावस्य घटपटादेर्यथा घटत्वपट-त्वादिविरुद्धधर्मसम्बन्धाद् भेदसिद्धिस्तथा घटपटाद्यभावानामपि एकदेशकालाद्यवच्छिन्नघटपटाद्यधिकरणवृत्तित्वतदभावादिरूपधर्मस-म्बन्धान्मिथो भेदसिद्धिरित्यर्थः। घटाभावादेः घटाद्यधिकरणा-वृत्तित्वं च घटवति पटो नास्तीतिवद् घटो नास्तीत्यादिप्रतीति-विरहात् सिद्ध्यतीति भावः। सामान्यधर्मावच्छिन्नाभावस्य विशे-षधर्माश्रययत्किञ्चिद्व्यक्त्यधिकरणवृत्तित्वेऽपि तत्र तादृशाभावप्रका-रकप्रतीतिविरह इव पटादिमति पटाद्यभाववृत्तावपि पटाद्यभावप्र-कारकप्रतीतिविरहस्तुल्यन्यायेन शक्योपपादन इति प्रतिबन्दिस्तु सिद्धान्तग्रन्थे स्वयमेव दर्शयिष्यते इति प्रतियोगितावच्छेदकभेदव-त्तद्विरोधो ऽप्यभावभेदाप्रयोजक इति दर्शयति। अत एव चेति।

(दी०) अत एव गगनादीनामवृत्तीनां समनियतानां वा धर्माणामेक एवात्यन्ताभावः। युगपदुत्पन्नविनष्टानां समान-देशानामसति बाधके एक एव ध्वंसः प्रागभावो वेति। व्यधि-करणधर्मावच्छिन्नप्रतियोगिताकोऽपि चेदभावः प्रामाणिकस्तदा तस्यैकस्यैव प्रतियोगिताः सर्वैरेव व्यधिकरणैर्धर्मैः सर्वैश्च समानासमानाधिकरणैः सम्बन्धैरवच्छिद्यन्ताम्, आकाशाभाव एव वा तथाऽस्तामिति। मैवम्।

(गा०) गगनादीनाम् । गगनत्वाद्यवच्छिन्नानाम् । समनियतानाम् । परस्पराभावासमानाधिकरणानाम्, संख्यात्वपरिमाणत्वाद्यवच्छिन्नानाम् । एक एवेति । समनियतानामभावानामभेदे बाधकविरहादिति भावः । प्रतियोगिनामवृत्तित्वे समनैयत्ये वा नान्योन्याभावस्य समनैयत्यसम्भव इत्यत आह । अत्यन्तेति । अग्रे इवात्राप्यसति बाधके इति बोध्यम् । अग्रेतनमेव वा योज्यम् । तेनैतद्रूपरसाद्यभावानां भिन्नेन्द्रियग्राह्याणामभेदे एतद्रूपं नास्तीत्यादिवदेतद्रसो नास्तीति चाक्षुषाद्यापत्तेर्बाधकतया तेषां भेद एवेति लभ्यते ।

न चाभावानामभेदेऽपि रूपत्वरसत्वाद्यवच्छिन्नप्रतियोगिताकत्वानां प्रतिनियतेन्द्रियग्रहणयोग्यत्वोपगमान्नोक्तातिप्रसङ्गः । समनियतरूपरसादीनामभेदस्तु नैवमापादयितुं शक्यते, शुक्लत्वमधुरत्वादिजातीनां सङ्करापत्तेः । नापि रसगुरुत्वादीनाम्, समनैयत्यप्रसङ्गेन रसत्वगुरुत्वत्वादिजातीनामभेदप्रसङ्गादिति वाच्यम् । रसाद्यभावस्य चक्षुरादिग्रहणयोग्यत्वे तद्धर्मानुयोगिताविशेषादीनामपि तद्योग्यताया दुर्वारत्वात् । आश्रययोग्यताया एव तद्योग्यताप्रयोजकत्वात् । चाक्षुषादिविषयविशेषणताया इन्द्रियप्रत्यासत्तिघटकीभूतायाः सत्त्वे चाक्षुषादिसामग्रीसत्त्वेन चक्षुराद्ययोग्यताया दुर्निर्वाहत्वाच्च ।

एतेनाभावानामिव तन्निष्ठानुयोगिताविशेषादीनामपि प्रतियोगितावच्छेदकयोग्यताधीनं योग्यत्वमिति निरस्तमिति केचित् ।

वस्तुतस्तूक्ताभावानामभेदेऽपि न क्षतिः । भेदेऽपि रसाभावादेश्चक्षुःसंयुक्तविशेषणताबलाच्चाक्षुषादिवारणायाभावचाक्षुषप्रत्यक्षं प्रति चाक्षुषधर्मावच्छिन्नप्रतियोगिताया निरूपकत्वसम्बन्धेन हेतुताया आवश्यकत्वादनुयोगिताप्रत्यक्षेऽपि तद्धेतुतां स्वीकृत्यैव रसत्वाद्यवच्छिन्ननिरूपितानुयोगितानामपि चाक्षुषादिविषयत्ववारणसम्भवात् । रसादिसामान्याभावानां चक्षुरादियोग्याभावान्तरासमनियतत्वेन उभयमते चक्षुराद्ययोग्यतया अभावचाक्षुषादावुक्तहेतुताया उभयानुमतत्वेऽपि नानुयोगिताचाक्षुषादौ कारणान्तरकल्पनाधिक्यम् । अभावतदीयानुयोगित्वयोश्च प्रतियोगितानिरूपकत्वेनानुगमसम्भवेनाभावप्रत्यक्षस्थलीयकारणतयैव निर्वाहात् ।

युगपदिति । युगपद्विनष्टानां समानदेशानामेको ध्वंसः, युग-

पद्युत्पन्नानां समानदेशानामेकः प्रागभाव इति योजना। व्यधिकरणानामेकनाशाभ्युपगमे तदनधिकरणदेशान्तरेऽपि तन्नाशादिप्रत्ययप्रसङ्ग इत्यतः समानदेशत्वानुसरणम्। समानदेशत्वं च देशतः समनैयत्यम्। रूपद्वित्वादीनां समानाधिकरणानामपि एकनाशाभ्युपगमे तद्रूपाद्यनधिकरणतद्द्वित्वाद्यधिकरणव्यक्त्यन्तरे तद्रूपनाशप्रत्ययप्रसङ्गात्। विभिन्नावच्छेदकानवच्छिन्नत्वमपि समानदेशत्वघटकं बोध्यम्। तेन युगपद्विनष्टानामुत्पन्नानां च मूलाग्रावच्छेदेन शरीरमहीरुहादिसमवेतविभिन्नसंयोगविभागानां व्युदासः। तद्ध्वंसप्रागभावानामभेदे स्वानवच्छेदकावच्छेदेनापि स्वध्वंसादिप्रतीतिप्रसङ्गात्। तुल्यप्रागभावेतरसकलकारणानां पाकजरूपरसादीनां प्रागभावैक्ये सामग्र्यभेदेन कार्यभेदानुपपत्तिरतस्तत्र प्रागभावभेदस्याऽऽवश्यकतया तद्व्यावर्तनायासति बाधके इति दर्शितबाधकाभावपरं न तु बाधकसामान्याभावपरम्। क्रमविनष्टक्रमोत्पन्नानां समानदेशानामपि ध्वंसाद्यैक्ये प्रत्ययातिप्रसङ्गरूपबाधकसत्त्वेन युगपद्विनष्टत्वादेरूपविशेषणवैयर्थ्यप्रसङ्गात्। एवं सति भवद्रूपरसाद्यात्मककारणभेदेनैव विभिन्नसामग्रीकाणामपाकजरूपरसादीनां युगपदुत्पन्नानां प्रागभावैक्यमिति ध्येयम्।

अभावसमनैयत्ये प्रतियोगितावच्छेदकभेदादेर्नैवाप्रयोजकत्वे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकपटत्वघटत्वाद्यवच्छिन्नघटपटाभावादीनामपि न भेदः स्वीक्रियते इत्याह। व्यधिकरणेति। प्रतियोगिविशेषणतानापन्नस्य प्रतियोगितावच्छेदकत्वं नाभावबुद्धौ भासते इति नियमानभ्युपगमे एव व्यधिकरणधर्मावच्छिन्नाभावस्य प्रामाणिकतेति मनसि कृत्य चेत् प्रामाणिक इत्युक्तम्। प्रतियोगिताः। घटपटादिनिष्ठा विभिन्नप्रतियोगिताः। व्यधिकरणैः। पटत्वघटत्वादिधर्मैः। अवच्छिद्यन्तामित्यग्रेतनेनान्वयः। धर्मैरिति तु येन सम्बन्धेन यस्य प्रतियोग्यवृत्तित्वं तेन सम्बन्धेन तस्यावच्छेदकत्वलाभाय, न तु धर्मत्वं विवक्षितम्, गगनादीनामप्यवच्छेदकत्वोपगमात्। प्रतियोगितावच्छेदकसम्बन्धभेदेनापि न व्यधिकरणधर्मावच्छिन्नाभावभेद इत्याह। सर्वैश्चेति। समानासमानाधिकरणैः। प्रतियोगिनिरूपितैस्तद्‌निरूपितैः। सम्बन्धैः। व्यधिकरणधर्मावच्छिन्नाभावप्रति-

योगिता अवच्छिद्यन्ताम् । तथा च संयोगसमवायादिसम्बन्धाव-च्छिन्नघटत्वाद्यवच्छिन्नपटगुणाद्यभावोऽभिन्न एवेति फलितम् । व्यधिकरणसम्बन्धावच्छिन्नव्यधिकरणधर्मावच्छिन्नाभावयोरपि न भेद इत्याह । आकाशाभाव इति । समवायादिना आकाशत्वाद्य-वच्छिन्नाकाशाद्यभाव इत्यर्थः । तथा । व्यधिकरणधर्मावच्छिन्न-प्रतियोगिताकः । एवं च व्यधिकरणधर्मावच्छिन्नाभावत्वादिना नाभावकल्पनाधिक्यम्, अपि तु प्रतियोगिताकल्पनाधिक्यमेवे-ति ध्येयम् ।

पूर्वपक्षिमुखेनैव समाधानं प्रकाशयितुं प्रथमतः प्रतिबन्दि-माह । एवं हीति ।

(दी०) एवं हि तत्तद्देशकालाद्यवच्छिन्नानवच्छिन्नतत्तद-धिकरणवृत्तित्वेन विशिष्टस्य तत्तदवच्छेदेन वा एकस्यैवाभाव-स्य घटपटगोत्वाश्वत्वादिप्रतियोगिकत्वसम्भवेन तत्तद्भेदोऽपि विलुप्येत । तत्तत्प्रतियोगिकत्वं तत्तत्स्वभावो न च तत्राधिकर-णविशेषवृत्तित्वस्यान्तर्भावोऽवच्छेदकत्वं चेति तु समानम् ।

(गा०) एवम् । सामान्याभावस्य विशेषाभावाभेदेऽपि । एकविशे-षाभाववत्यपरविशेषाधिकरणे सामान्याभावत्वविशिष्टवत्साप्रत्यय-स्य कथितरीत्या वारणसम्भवेन तत्तदिति । यत्राधिकरणे यद्देशका-लावच्छेदेन न घटादिसत्त्वं तद्देशकालावच्छिन्नं यत्तदधिकरणवृ-त्तित्वं तद्विशिष्टे तदवच्छेदेन वा एकस्मिन्नेवाभावे देशतः कालत-श्चाव्याप्यवृत्तिघटपटादिप्रतियोगिकत्वस्य कल्पनया यत्राधिकर-णे न गोत्वाश्वत्वादिकं अवच्छेदकविशेषानवच्छिन्नतद्वृत्तित्वविशि-ष्टे तदवच्छेदेन वा तत्रैवाभावे व्याप्यवृत्तिगोत्वाश्वत्वादिप्रतियो-गिकत्वस्य कल्पनया घटादिमति तदवच्छेदकदेशकालाव-च्छिन्ने पटो नास्तीत्यादिप्रतीतिवद् घटो नास्तीत्यादिप्रतीतेः, गवादावश्वत्वं नास्तीतिवद्गोत्वं नास्तीत्यादिप्रतीतेश्च वारण-सम्भवेन अभावमात्रमेद एवोच्छिद्येतेत्यर्थः । अवच्छिन्नानवच्छि-न्नवृत्तिकत्वरूपाव्याप्यवृत्तित्वव्याप्यवृत्तित्वयोरेकस्मिन्नप्यभावे वि-भिन्नप्रतियोगिकत्वावच्छेदकविधया स्वीकारे विरोधविरहादिति

भावः । घटपटाद्यभावभेदव्यवस्थापकयुक्तेः प्रकृते तुल्यतामाह । तदिति । तत्प्रतियोगिकत्वमिति । अभावनिष्ठं घटादिप्रतियोगिकत्वमित्यर्थः । तत्तत्स्वभावः । तत्तदभावस्वरूपम् । अधिकरणविशेषवृत्तित्वस्य । तत्तद्देशकालावच्छिन्नानवच्छिन्नतद्देशवृत्तित्वस्य । अन्तर्भावः । स्वाश्रये विशेषणतया प्रवेशः । अवच्छेदकत्वं वा सम्भवतीति शेषः । अभावस्य विशेषणादिकमनन्तर्भाव्यैव स्वस्मिन्पर्याप्तेर्व्याप्यवृत्तित्वाश्चेति भावः । प्रकृतेऽपीति । सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वेऽपीत्यर्थः । समानमिति । तस्यापि अभावस्वरूपानतिरिक्तत्वादिति भावः । धर्मविशेषावच्छिन्नप्रतियोगिताकत्वस्य अभावस्वरूपानतिरिक्तत्वे सामान्याभावस्यानतिरिक्तत्वमते विशेषधर्मावच्छिन्नप्रतियोगिताकत्वेभ्यः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्यातिरिक्ततया अव्यनिर्वाहेन एकविशेषवति विशेषान्तराभावत्वेनेव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वेनाऽप्यभाववत्ताप्रत्ययप्रसङ्गो बोध्यः ।

यदि चाभावविशेषणस्यापि सामान्यावच्छिन्नप्रतियोगिताकत्वस्य तत्त्वेनाधिकरणविशेषवृत्तित्वावच्छिन्नत्वं स्वीकृत्यातिप्रसङ्गो वारयितुं शक्यते । तदा घटपटादिप्रतियोगिकत्वस्यापि तत्त्वेन तथात्वमुपगम्यातिप्रसङ्गवारणसम्भवाद् घटपटाद्यभावानामपि भेदो न सिद्ध्येत्तस्माद् घटपटाभावभेदवादिनां सामान्याभावविशेषाभावभेद आवश्यक एवेति ।

सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्याव्याप्यवृत्तित्वादिकमुपगम्य सामान्याभावपार्थक्यनिराकरणे उक्तप्रतिबन्द्या दुरुद्धरतामालोच्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं यावद्विशेषाभावेषु व्यासज्यवृत्ति ये मन्यन्ते तन्मतमपि निराकरोति ।

(दी०) अत एव सामान्यावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्तीत्यपि मत्युक्तम् । अव्यासज्यवृत्तेस्तत्तत्स्वभावस्य तत्त्वानुपपत्तेः, अतिरिक्तकल्पने च किमपराद्धमतिरिक्ताभावेन ।

(गा०) अत एवेति । सामान्याभावत्वस्य धर्मिस्वरूपानतिरिक्तत्वादेवेत्यर्थः । व्यासज्यवृत्तीति । तथा च यत्किञ्चिद्विशेषवति या-

यदाश्रयसन्निकर्षविरहेण सामान्यधर्मावच्छिन्नाभावत्वग्राहकाभावान्न तेन रूपेणाभावग्रहप्रसङ्ग इति भावः । अव्यासज्यवृत्तेः प्रत्येकस्वरूपस्य प्रत्येकविश्रान्तत्वेनासम्भवद्व्यासज्यवृत्तिताकस्य तथात्वानुपपत्तेर्व्यासज्यवृत्तित्वस्वीकारायोगात् ।

ननु सामान्यावच्छिन्नप्रतियोगिताकत्वमतिरिक्तमेवोपगन्तव्यमतो न तद्व्यासज्यवृत्तित्वानुपपत्तिरित्यत आह । अतिरिक्तेति । अतिरिक्ताभावेनेति । अभावस्यातिरिक्तत्वे सामान्यावच्छिन्नप्रतियोगिताकत्वं तत्स्वरूपमेव न त्वतिरिक्तमिति हृदयम् ।

ननूक्तयुक्त्या सामान्यावच्छिन्नप्रतियोगिताकत्वमतिरिक्तसामान्याभाववादिनाऽप्यतिरिक्तमेवोपेयम्, तथा चालमतिरिक्ताभावेन, फलतो विशेषाभावकूटे तादृशधर्मस्य व्यासज्यवृत्तितयैवोपपत्तेः । अभावविशेषणस्यापि गुणादिनिष्ठबुद्धिविशेषविषयतात्मकद्वित्वादिवत् कथञ्चिद् व्यासज्यवृत्तितासम्भवश्चेत्यत आह । किञ्चेति ।

(दी०) किञ्च व्यधिकरणयोर्घटपटयोर्द्वित्वप्रतीतिवद् व्यधिकरणानामपि विशेषाभावानां युगपदिन्द्रियसन्निकर्षे सामान्यावच्छिन्नप्रतियोगिताकत्वप्रत्ययोऽपि स्यात् ।

(गा०) व्यासज्यवृत्तिधर्मग्रहे एकाधिकरणघटितयावदाश्रयसन्निकर्षो यदि हेतुरुपेयते तदा वक्ष्यमाणातिप्रसङ्गानवकाशात्, तन्निराकरणाय व्यधिकरणयोरित्यादिदृष्टान्तप्रदर्शनम् । व्यधिकरणयोः । एकाश्रयघटितसन्निकर्षरहितयोः । व्यधिकरणानाम् । पृथिवीजलादिरूपनानाविशेषाधिकरणे सन्निकृष्टानाम् । सामान्यावच्छिन्नेति । रूपत्वाद्यवच्छिन्नेत्यर्थः ।

अथ रूपत्वाद्यवच्छिन्नप्रतियोगिताकत्वविशिष्टाभाववत्तानवगाहितत्प्रत्यक्षमलीकम्, पृथिव्यादौ च तद्विशिष्टवत्त्वविरहेण तदवगाहिप्रत्यक्षापादनासम्भव इति चेन्न । पृथिव्यादिघटितसन्निकर्षदशायां सामग्रीबलाद्रूपत्वाद्यवच्छिन्नप्रतियोगिताकत्वे विषयतया प्रत्यक्षसामान्यस्यान्यत्र प्रसिद्धस्याऽऽपत्तेर्दुर्वारत्वात् । यावद्विशेषाभावानां सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वविशिष्टानां विशेषाधिकरणव्यावृत्तविलक्षणाधिकरणतोपगमे अतिरिक्ताभावादिमतेऽप्यगौरवात् ।

नन्वभाववृत्तिधर्मग्रहे प्रत्यासत्त्यन्तरमिन्द्रियसंयुक्तविशेषणविशेषणतारूपं वाच्यम्, तत्र इन्द्रियसंयुक्तवृत्तितावच्छेदकत्वमेव प्रत्यासत्तिरपेक्ष्यते । रूपत्वाद्यवच्छिन्ननिरूपितानुयोगितायां च न पृथिव्यादिवृत्तितावच्छेदकत्वमिति यावद्विशेषाभावानामेकाश्रयघटितसन्निकर्षो व्यासज्यवृत्तितादृशधर्मप्रत्यक्षेऽप्यपेक्षित इत्यत आह । अपि चेति ।

(दी०) अपि च रूपान्तरेण सम्बन्धविधया वा व्यासज्यवृत्तिधर्मस्य ज्ञाने न यावदाश्रयसन्निकर्षापेक्षा, मानाभावात् । एवं चैकाभावसन्निकर्षेऽपि सामान्याभावबुद्धिप्रसङ्गः । यादृशे च तस्य ज्ञाने यावदाश्रयाणां सन्निकर्षोऽपेक्ष्यते तत्र तेषां तद्भेदस्य च ज्ञानमपि । तदज्ञाने तद्भेदज्ञाने च तदग्रहात्, आश्रयभेदभ्रमेण तद्भ्रमदर्शनाच्च । न चात्र यावद्विशेषाभावानां प्रथममुपस्थितिः सम्भवति, तत्प्रतियोगिनां विशेषतोऽनुपस्थितेरिति दिक् ।

(गा०) रूपान्तरेण । मेयत्वादिसामान्यप्रत्यासत्त्या । सम्बन्धविधया वेति । असन्निकृष्टस्यापि संयोगादेः संसर्गतया भानोपगमादिति भावः । मानाभावादिति । सम्बन्धसामान्यप्रत्यासत्त्याप्युपनीतस्याध्यक्षविलक्षणैव विषयता यावदाश्रयसन्निकर्षजन्यतावच्छेदिकेति शेषः । सामान्याभावबुद्धिप्रसङ्ग. । सामान्यावच्छिन्नप्रतियोगिताकत्वसंसर्गकाभावसाक्षात्कारप्रसङ्गः ।

नन्वनुयोगिताविशेषसंसर्गकाभावलौकिकत्वस्य तादृशसंसर्गांशे उक्तसन्निकर्षविशेषजन्यतावच्छेदकलौकिकत्वनिरूपकविषयताविशेषशालित्वनियतत्वोपगमान्न तादृशसन्निकर्षं विना उक्तापत्तिरित्यत आह । यादृशेति । तस्य । व्यासज्यवृत्तिधर्मस्य । तेषाम् । यावदाश्रयाणाम् ।

यद्यपि तेषां परस्परं भेदज्ञानापेक्षयैव तज्ज्ञानापेक्षालाभः, तथाऽप्याश्रयाणां लौकिकप्रत्यक्षापेक्षालाभाय स्वातन्त्र्येण स्वाश्रयज्ञानापेक्षोक्तिः । ज्ञानमप्यपेक्ष्यते इत्यनुषङ्गेणान्वयः । तदपेक्षायां प्रमाणमु-

तावन्वयव्यतिरेकावाह तदज्ञाने इत्यादिना । तदज्ञाने । यावदाश्रयसन्निकर्षसत्त्वेऽपि दोषादिवशात्तत्साक्षात्कारविरहदशायाम् । तदभेदज्ञाने । दूरत्वादिवशादाश्रयाणामभेदभ्रमे । तदग्रहात् । द्वित्वाद्यग्रहात् । आश्रयभेदभ्रमेण । एकस्मिन्नेव मध्यापिहितदीर्घदण्डादौ भेदभ्रमेण । एतावता प्रकृते किमायातमित्यत आह । न चात्रेति । विशिष्य । तत्तद्रूपत्वादिरूपप्रतियोगितावच्छेदकधर्मेण । अनुपस्थितेरिति । यावद्रूपादीनां युगपदसन्निकर्षादिति भावः। प्रतियोगितावच्छेदकावच्छिन्नानुपरागेणाभावसाक्षात्कारानुपगमादिति शेषः।

यद्यप्यनेनेदन्त्वादिनाप्यभावप्रत्यक्षमङ्गीकरिष्यते । तथाप्यनुभवानुरोधेन तमस एव तथा भानं नाभावान्तरस्य । अस्तु वा इदन्त्वेन यावद्रूपाद्यभावज्ञानं तथापि प्रतियोगितावच्छेदकपुरस्कारेणानुपस्थितानाममभावानां न भेदग्रहः । अनुभवविरोधादिति । तद्गतव्यासज्यवृत्तिधर्मग्रहोऽशक्य एवेति भावः । अत्र च द्वित्वादिप्रत्यक्षेऽनुभवानुरोधाद्यावदाश्रयप्रत्यक्षादेर्हेतुत्वेऽपि प्रकृते तद्धेतुत्वमप्रामाणिकम् । एकधर्माश्रयप्रत्यक्षाद्वितोऽन्यस्याग्रहात् स्वाश्रयप्रत्यक्षादिहेतुत्वे ऽनुगतकार्यकारणभावासम्भवात् । सम्भवेऽप्यनेकसमवेतसङ्ख्याप्रत्यक्षत्वस्यैव तत्र जन्यतावच्छेदकत्वोपगमात् । एवमतीन्द्रियसामान्याभावस्य विशेषाभावभेदो निर्युक्तिक एव, तत्रोपदर्शिताभेदे बाधकानवकाशादित्यालोच्य दिगित्युक्तम् ।

दिगर्थस्तु यथाऽनन्ताधिकरणेऽभावो नाधिकरणस्वरूपः, तत्राभावत्वकल्पनापेक्षया लाघवात्तदाश्रयैकाभावकल्पनमुचितम् । तथानन्तविशेषाभावे सामान्यावच्छिन्नप्रतियोगिताकत्वादिकल्पनापेक्षया लाघवात्तदाश्रयैकाभावकल्पनमुचितमिति । एवं रूपं नास्तीति प्रतीतिविषयतया सामान्यावच्छिन्नप्रतियोगिताकत्वेन यावद्विशेषाभावनिरूपितातिरिक्तैकाधिकरणताऽवश्यं कल्पनीया । अन्यथा रूपादिमति तादृशप्रतीतेः प्रमात्वापत्तेरिति किं लाघवम् ।

न च रूपवति तत्तद्रूपाभावरूपविषयबाधेनैव तादृशप्रतीतेरप्रमात्वमिति वाच्यम् । घटवद्भूतलमित्यादौ घटत्वादिना यावद्घटादिभानानियमवदुक्तप्रत्ययेऽपि रूपाभावत्वादिना यावद्रूपाभावादिभानानियमात् । योग्यतादिवशाच्छब्दादिजन्यतादृशज्ञानेऽबाधिताभावमात्रभानसम्भवात् । न च शब्दविशेषादेर्यावदभावाव-

गादित्यं कार्यतावच्छेदकं कल्पयितुं शक्यते, येन नियमः स्यात् । तथा सति गौरवात् । सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वे व्यासज्यवृत्तित्वकल्पनेगौरवाच्च ।

अतिरिक्ताधिकरणतानभ्युपगमे प्रतिबन्धकसमवहितेऽपि प्रतिबन्धकतावच्छेदकधर्मावच्छिन्नाभावत्वरूपकारणतावच्छेदकावच्छिन्नविशेषाभावसम्बन्धस्य कार्योत्पत्तिप्रयोजकस्याक्षतत्वात्तदापत्तिरिति केचित् । तन्न । सामान्याभावपार्थक्येऽपि यावद्रूपाभावत्वाद्यवच्छिन्ननिरूपिताधिकरणताविशेषकल्पनमावश्यकम्, रूपवति यावद्रूपाभावप्रतीतेरप्रमात्वात् । सैव चाधिकरणता सामान्यावच्छिन्नप्रतियोगिताकत्वविशिष्टनिरूपिता न त्वतिरिक्तेति सामान्याभावपार्थक्यवादिभिरभ्युपगमात् । घटपटाद्यभावानामभेदे घटाभावत्वपटाभावत्वावच्छिन्नाधिकरणतानामतिरिक्तानां कल्पनमावश्यकम् । क्लृप्ताधिकरणतान्तर्भावेण निर्वाहासम्भवादिति दर्शितप्रतिबन्धनयकाशात् ।

वस्तुतः कारणतावच्छेदकोपलक्षितकारणसत्त्वं सर्वत्र कार्योत्पत्तौ तन्त्रं न तु विशिष्टसत्त्वं गौरवादिति परामर्शे स्वयं वक्ष्यते । एवं च सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य विशेषाभावेष्वप्यभ्युपगमे तद्विशिष्टाधिकरणताया विलक्षणत्वेऽपि प्रतिबन्धकविशेषाभावात् कार्योत्पत्तिप्रसङ्गो दुर्वार एव इत्यादियुक्तिरेव दिगित्यनेन दर्शिता ।

सार्वभौममतमाह । केचित्त्विति ।

( दी० ) केचित्तु अनन्तविशेषाभावानां सामान्यावच्छिन्नप्रतियोगिताकत्वस्य तद्व्यासज्यवृत्तित्वस्य च कल्पनापेक्ष्य लाघवात् सामान्यावच्छिन्नप्रतियोगिताकत्वेनैक एवाभावः कल्प्यते । कल्पनीयशरीरस्योभयत्र तुल्यत्वेऽपि एतदपेक्ष्य तस्य गुरुत्वात् । विनिगमकाभावेऽपि च सामान्याभावसिद्धिरप्रत्यूहैव । धर्मकल्पनातो धर्मिकल्पनाया गुरुत्वं कल्पनीयानेकत्वप्रयुक्तम् ।

( गा० ) ननु सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वविशिष्टाभावस्यातिरिक्तस्य कल्पनापक्षेऽप्यतिरिक्तयोर्विशेष्यविशेषणयोः कल्पनी-

यतया कल्पनीयांशसाम्यमित्याशङ्क्याह । कल्पनीयेति । शरीरस्य । अंशस्य । एतदपेक्षया । अतिरिक्तसामान्याभाववादिमतापेक्षया । तस्या तदनतिरिक्ताभाववादिमतस्य । गुरुत्वादिति । सामान्याभावत्वकल्पनायां धर्मिणामानन्त्यादिति भावः । अभ्युपेत्याह । विनिगमकेति । अप्रत्यूहैवेति । सिद्धिविरोधिनो गौरवस्यानवकाशादिति भावः ।

ननु धर्मकल्पनातो धर्मिकल्पना गरीयसीति प्रवादादतिरिक्ताभावरूपधर्मिकल्पनङ्गौरवपराहतमित्यत आह । धर्मेति । कल्पनीयानेकत्वेति । धर्मकल्पनापक्षे क्वचित्तन्मात्रकल्पना, धर्मिकल्पनापक्षे तु धर्मस्यापि कल्पनीयत्वात्तदुभयकल्पने कल्पनीयाधिक्यप्रयुक्तमेव, न तु धर्मिकल्पनामात्रप्रयुक्तमित्यर्थः । तथा च प्रकृते कल्पनीयाधिक्यविरहादतिरिक्तसामान्याभावपक्षे न गौरवमिति भावः ।

गौरवान्तरमाशङ्कते । न चेति ।

(दी०) न चातिरिक्ताभावस्य तत्र च सामान्यावच्छिन्नप्रतियोगिताकत्वस्यानन्तवाय्वाद्यधिकरणवृत्तित्वस्य च कल्पनामपेक्ष्य क्लृप्तानन्तवाय्वाद्यधिकरणवृत्तित्वानां यावद्विशेषाभावानामेव सामान्यावच्छिन्नप्रतियोगिताकत्वस्य तद्व्यासज्यवृत्तित्वस्य च कल्पनैव लघीयसीति वाच्यम् । एवं सत्यभावमात्रासिद्ध्यप्रसङ्गादित्याहुः ॥

(गा०) लघीयसीति । न च सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वे ऽप्यनन्ताभाववृत्तित्वकल्पनासाम्यमिति वाच्यम् । विशेषाभावानामपि सामान्याभावाधिकरणतया सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वे यावद्धर्मिवृत्तित्वं कल्पनीयं तदपेक्षयाऽतिरिक्तसामान्याभावे यद्वृत्तित्वकल्पना तेषां भूयस्त्वेन साम्यानवकाशात् । एवं सतीति । एवम् । कल्पनीयेऽभावेऽनन्ताधिकरणवृत्तित्वकल्पनागौरवस्यातिरिक्ताभावसिद्धिविरोधित्वे । अभावमात्रेति । अधिकरणादावभावत्वकल्पनादेवोपपत्तेर्भावातिरिक्तः कोऽप्यभावो न सिद्ध्येदित्यर्थः । अतिरिक्ताभावस्य तत्रानन्ताधिकरणवृत्तित्वस्य च कल्पनामपेक्ष्य अभावत्वेऽनन्ताधिकरणादिवृत्तित्वकल्पनाया लघुत्वादिति भावः ॥

इति अनुमानगादाधर्यां सामान्याभावप्रकरणं समाप्तम् ॥



## अथ विशेषव्याप्तिप्रकरणम् ।

(चि०) यद्वा प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यम् ।

(दी०) यद्वेत्यादि । अथात्र नानाव्यक्तिरूपादिसाध्यकैकव्यक्तिपृथिवीत्वादावव्याप्तिः । न च तत्र रूपवत्त्वादिकमेव साध्यम्, तच्च परम्परासम्बन्धेन रूपत्वादिकमेव, तेन च सम्बन्धेन न तदभावः क्वापि पृथिव्यादाविति वाच्यम् । रूपादेरसाध्यतापत्तेः ।

(गा०) व्यधिकरणवह्निधूमयोर्व्याप्त्यनभ्युपगमेन वह्निमान् धूमादित्यादौ तत्तद्वह्न्यभावमादाय दोषासंस्पर्शाद्विशेषलक्षणेऽन्यथाऽव्याप्तिमाशङ्कते । अथात्रेति ।

नानाव्यक्तिरूपादिसाध्यकेति । यद्यद्यवच्छेदकत्वाघटितप्रकृतलक्षणे यथा यावद्धेत्वधिकरणवृत्तिसाध्यैक्यविरहेण सकलसाध्यव्यक्तीनामेव हेतुसमानाधिकरणतत्तद्व्यक्तित्वाद्यवच्छिन्नाभावप्रतियोगितया हेतुसमानाधिकरणाभावाप्रतियोगिसाध्यदुर्भिक्षम् । तथा साध्यैक्येऽपि प्रतियोगितावच्छेदकावच्छिन्नव्यधिकरणहेतुमन्निष्ठत्वाद्यवच्छिन्नाभावप्रतियोगितायाः साध्येऽक्षततया ऽव्याप्तिर्दुर्वारैव । उभयाभावघटितप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशपक्षे च एतद्रूपवानेतद्रसादित्यादावपि, एतद्रूपतद्रूपोभयत्वाद्यवच्छिन्नाभावेऽपि तस्य सत्त्वेन लक्षणगमनाभावादसम्भव एव । तथापि यथाश्रुतप्रतियोगिवैयधिकरण्यनिवेशेऽपीत्यस्याऽऽदौ पूरणीयतया नासङ्गतिः ।

तन्निवेशाभिप्रायेणैवोपाध्यायस्यैतद्दोषोद्धरणप्रकारमाशङ्कते । न चेति । तत्र । पृथिवीत्वादिहेतुके । रूपवत्त्वादिकमेव साध्यमिति । तथा च रूपव्याप्तेस्तत्रानभ्युपगमान्नाव्याप्तिरिति भावः । ननु रूपवत्त्वं रूपसमवायः तस्य च समवायस्यैकत्वेन साध्यतानिर्वाहेऽपि तन्मते द्रव्यत्वादिनापि शक्यसाधनस्य वाय्वा-

द्विसाधारणस्य तस्य सिद्धावपि रूपस्यासिद्ध्या तत्सिद्ध्यनुरोधेन पृथिवीत्वादौ रूपव्याप्तेरावश्यकत्वेत्यत आह । तच्चेति । तच्च । प्रकृतसाध्यं रूपवत्त्वादिकं च । परम्परासम्बन्धेन । साध्यमानमिति शेषः । परम्परासम्बन्धेन स्वसमवायिरूपाद्यात्मकेन रूपत्वादेः पक्षे सिद्धावेव रूपादेस्तत्र सिद्धिनिर्वाह इति भावः ।

ननु रूपत्वादेरपि समवायादिना हेतुमन्निष्ठाभावप्रतियोगित्वात् कथं व्यापकत्वनिर्वाह इत्यत आह । तेन चेति । तेन । स्वसमवायिरूपात्मकेन । न तदभाव इति । तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितायास्तादृशसम्बन्धेन प्रतियोगिवैयधिकरण्यस्य वा निवेशान्नानुपपत्तिरिति भावः । असाध्यतापत्तेरिति । पृथिवीत्वादिलिङ्गकप्रमापरामर्शजन्यानुमितौ समवायादिना विधेयतानुपपत्तेरित्यर्थः । तथा चानुभविकतदुपपत्तये रूपादिव्याप्तेरावश्यकत्वाद्व्याप्तिर्दुर्वैवेति भावः ।

नन्ववच्छेदकत्वघटितलक्षणपक्षेऽपि नानाव्यक्तिदण्डाद्यवच्छिन्नसाध्यकव्याप्त्यनिर्वाहेण प्रातिस्विकरूपावच्छिन्नसकलदण्डाद्यवच्छिन्नव्यभिचारिहेतुकानुमितौ दण्डादेर्विधेयतावच्छेदकत्वं यथाऽपलप्यते तथैतल्लक्षणपक्षेऽपि पृथिवीत्वादिलिङ्गकानुमितौ रूपादेर्विधेयताऽप्यपलपनीयेत्यतः प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशावश्यकत्वाभिप्रायेण दोषान्तरमाह । द्रव्यान्यत्वादीति ।

(दी०) द्रव्यान्यत्वादिविशिष्टसत्ताद्यभावस्य द्रव्यादिवृत्तित्वात् सत्तादिसाध्यकद्रव्यत्वादावव्याप्तेश्च । अन्यथा विशिष्टतया सत्तादेः साध्यत्वे व्यभिचारिणि जातिमत्त्वादावतिप्रसङ्गात् । व्युत्पादयिष्यते च विशिष्टाभावस्य विशेष्यप्रतियोगिकत्वम् । द्वित्वाद्यवच्छिन्नसाध्याभावस्य तत्र सत्त्वाच्च ।

- (गा०) सत्तादीत्यादिना गुणान्यत्वादिविशिष्टसत्तादिसाध्यकपरिग्रहः । विशिष्टप्रतियोगिवैयधिकरण्यप्रवेशप्रयोजनं प्रकाशयति । अन्यथेति । विशिष्टतया । द्रव्यान्यत्वादिविशिष्टतया । सत्त्वादेः साध्यत्वे । व्यभिचारिणि । भ्रमविषयतयैव तत्साध्यके अतिप्रसङ्गात् । भ्रमं विनाऽपि गुणत्वादिना गुणादाविव विशिष्टवैशिष्ट्यसाधकताप्र-

सङ्गात् । न च द्रव्यादौ द्रव्यान्यत्वादिविशिष्टसत्तादिसिद्धिर्बाधादेवा-शक्यापादनेति वाच्यम् । बाधानवतारदशायामापत्तेर्दुर्वारत्वात् । अन्यथा सामानाधिकरण्यमात्रस्य व्याप्तित्वापत्तेः । बाधादेव बाध्यादौ द्रव्यत्वादिना रूपाद्यनुमानोपपत्तेः ।

ननु विशेष्यवति विशिष्टाभावप्रतीतिर्विशेषणाभावं सर्वत्र विशेषणविशेष्योभयसम्बन्धाभावं वाऽवगाहते, न तु विशेष्यप्रतियोगिकाभावम्, प्रतियोगिमति विरोधेनाभावासत्त्वात्तत्कथं विशिष्टाभावमादाय सत्तादिसाध्यकेऽव्याप्तिः । न चैव विशिष्टसत्तादिसाध्यके जात्यादिहेतावतिव्याप्तिः, जातिमन्निष्ठाभावप्रतियोगितायाः सत्तात्मकसाध्येऽसत्त्वादिति वाच्यम् । गुणाद्यन्यत्वविशिष्टत्वादिनाऽपि सत्तादेः साध्यत्वे जात्यादिहेतौ व्याप्यत्वोपगमात् । विशेषणविशेष्यसम्बन्धस्य साध्यतायामेव तादृशहेतोरलक्ष्यत्वोपगमादित्यत आह । व्युत्पादयिष्यते चेति । विशिष्टाभावोऽतिरिक्तो विशेषणाद्यभावस्वरूपो वा भवतु तस्य विशेषणावच्छिन्नविशेष्यप्रतियोगिकत्वमावश्यकम्, विशेषणावच्छिन्नविशेष्यज्ञानं विनाऽसम्भवत्याऽऽतत्प्रतीतेस्तादृशविशेष्यांशे तत्प्रतियोगितावगाहिताया दुरपह्नवत्वादिति भावः ।

ननु विशिष्टस्यातिरिक्ततामते विशिष्टाभावमादाय न दूषणावसर इति पक्षव्यक्तिसाध्यकेऽपि छित्त्वाद्यवच्छिन्नसाध्याभावमादाय दूषणमाह । छित्त्वेति । तत्र । हेतुमति । न च विशिष्टस्यातिरिक्तत्वे प्रतियोगितावच्छेदकावच्छिन्नत्वविशेषितप्रतियोग्यसामानाधिकरण्यमेव निवेशनीयमिति नोभयाभावादिकमादायाव्याप्तिप्रसक्तिरिति वाच्यम् । सत्तागुणत्वोभयवान् द्रव्यत्वादित्यादावतिव्याप्तिवारणाय विशिष्टस्यातिरिक्ततामतेऽपि प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशनस्याऽऽवश्यकत्वात् ।

न च द्रव्यत्वादौ सत्तादिव्याप्तिरिष्टैव, गुणत्वादेश्च तत्समानाधिकरणप्रतियोगिव्यधिकरणाभावान्तरप्रतियोगित्वान्न तद्व्यापकतापत्तिरिति किं तद्विवक्षयेति वाच्यम् । गुणत्वस्य तादृशाभावप्रतियोगित्वेऽपि सत्तागुणत्वोभयत्वसामानाधिकरण्येन तादृशाभावप्रतियोगित्वाभावसत्त्वात् । भ्रम विनैव द्रव्यत्वहेतुकाया द्रव्यं सत्तागुणत्वोभयवदित्यनुमितेर्वारणायाभावे प्रतियोगि-

तावच्छेदकावच्छिन्नवैयधिकरण्यस्यावश्यं निवेशनीयत्वात् । वह्नित्वाद्यवच्छेदेन किञ्चिद्धूमादिव्यक्तिसमानाधिकरणाभावाप्रतियोगित्वासत्त्वेन विधेयतावच्छेदकसामानाधिकरण्येन तादृशाभावाप्रतियोगित्वज्ञानस्यैवानुमितिहेतुतायाः प्रतियोगित्वाभावघटितलक्षणवादिना स्वीकरणीयत्वात् ।

अत्र यथा अवच्छेदकदेशकालावच्छिन्नपक्षकस्थलेऽपि शुद्धसमवायादिना व्यापकताग्रहाच्च तद्विशिष्टानुयोगिकवैशिष्ट्यानुमितिरुपाध्यायैरङ्गीक्रियते । तथा विशेषणान्तरवैशिष्ट्यावच्छिन्नसत्त्वादिसाध्यकेऽपि विशिष्टप्रतियोगिकसमवायादिना व्यापकताग्रहमन्तरेण न विशिष्टवैशिष्ट्यानुमितिस्तैरुपगम्यत इति साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाविशेषितप्रतियोगिवैयधिकरण्यानिवेशेऽपि नातिप्रसङ्ग इति न विशिष्टाभावमादाय विशिष्टत्वाद्यवच्छिन्नाभावमादाय वा सत्तेतावव्याप्तिः । साध्यतावच्छेदकविशिष्टनिरूपितसमवायादिना प्रतियोग्यनधिकरणहेत्वधिकरणस्य सत्तेतावप्रसिद्धावपि न क्षतिः, उभयाभावघटितप्रतियोगिवैयधिकरण्यस्य प्रवेशनीयत्वात् । विशिष्टवैशिष्ट्यसाध्यकस्थल एव वा विशिष्टवैशिष्ट्यानुमितिरुपेयते ।

न च विशिष्टप्रतियोग्यसामानाधिकरण्यानिवेशे द्रव्यं सत्तागुणत्वोभयवद् द्रव्यत्वादित्यादावतिप्रसङ्गो दुर्वार इति वाच्यम् । तत्रोभयत्वोपलक्षितवत्त्वानुमितेः प्रमारूपतया इष्टत्वात् । विशिष्टवैशिष्ट्यानुमितेश्चोक्तरीत्या वारणसम्भवादिति यथाश्रुतलक्षणपरिष्कारप्रकारो हेयः । तथापि धूमादिना पर्वतादौ अपूर्ववह्न्याद्यनुमानानुपपत्तेर्दुर्वारत्वात् । क्वचिदपि वह्नौ धूमसमानाधिकरणाभावाप्रतियोगित्वासत्त्वात् । पर्वतीयधूमसमानाधिकरणाभावाप्रतियोगित्वस्यान्यवह्नावसत्त्वात् । पर्वतीयवह्नेरसान्निकर्षेण तत्र दुर्ग्रहत्वात् । महानसीयधूमसमानाधिकरणाभावाप्रतियोगित्वस्य तादृशवह्नौ गृहीतत्वेऽपि तद्ग्रहस्य तादृशधूमे पक्षधर्मताग्रहविरहेणाकिञ्चित्करत्वात् ।

न च व्याप्तिपदार्थनिर्वचनमिदं न त्वनुमित्यौपयिकव्याप्तिस्वरूपकथनमिति वाच्यम् । अर्थान्तरप्रसङ्गात् । धूमो वह्निव्याप्य इत्यादौ तत्तद्धूमत्वादिप्रकारेण हेत्वनुपस्थितेः, तत्तद्धूमादिसमानाधिकरणाभावाप्रतियोगित्वस्य शब्देन बोधयितुमशक्यत्वाच्च ।

यत्तु सामानाधिकरण्यस्याव्याप्यवृत्तितामभ्युपेत्यैतल्लक्षणम्, तथा च साध्याभावनिष्ठं यत् साध्यसामानाधिकरण्यं हेतुमति तच्छून्योऽभावोऽभावान्तरार्थः । केवलान्वयिसाध्यके द्वित्वाद्यवच्छिन्नसम्बन्धान्तरावच्छिन्नप्रतियोगिताक एव साध्याभावः प्रसिद्धः । न च स्वरूपसम्बन्धेन प्रमेयमात्रसाध्यकस्थलेऽभावमात्रस्यैव साध्याभावतया साध्याभावनिष्ठसाध्यसामानाधिकरण्यशून्याभावाप्रसिद्धिरिति वाच्यम् । अभावप्रतियोगिसाध्यस्य वृत्तिमत्त्वेन विशेषणीयतया अवृत्तेरभावस्य तादृशस्य प्रसिद्धेः । तत्प्रतियोगिनोऽवृत्तेरननुमेयत्वाद्व्यापकताविरहे क्षतिविरहादिति । तदपि न । तादात्म्येन प्रमेयमात्रसाध्यकस्थले वस्तुमात्रे एव व्यापकताया उपपादनीयतया उक्तप्रसिद्धिप्रकारासम्भवात् ।

प्रगल्भसमाधानमाशङ्कते । अथेति ।

(दी०) अथाप्रतियोगित्वं प्रतियोगित्वाभावः, स च येन रूपेण तद्रूपावच्छिन्नव्याप्यत्वं हेतौ । अस्ति चायं रूपादौ, रूपत्वादिना न पृथिवीनिष्ठाभावप्रतियोगित्वमिति प्रत्ययादिति चेन्न ।

(गा०) प्रतियोगित्वस्याव्याप्यवृत्तित्वेऽपि प्रतियोगिनि तद्भेदस्य दुर्घटतया नञोऽत्यन्ताभावार्थकत्वमाह । अप्रतियोगित्वमिति । प्रतियोगिनि प्रतियोगित्वाभावस्वीकारे व्यभिचारिण्यतिव्याप्तिमाशङ्क्याह । स चेति । येन रूपेणेति । यद्रूपावच्छिन्नसाध्ये इत्यर्थः । तद्रूपावच्छिन्नव्याप्यत्वमिति । तथा च धूमत्वादिना वन्ह्यादिमन्निष्ठाभावप्रतियोगिनो धूमादेर्द्रव्यत्वादिना तत्त्वाभाववत्त्वेऽपि न वह्न्यादेर्धूमत्वाद्यवच्छिन्नव्याप्यतापत्तिः । द्रव्यत्वाद्यवच्छिन्नव्याप्यत्वं त्विष्टमेवेति भावः ।

ननु तत्तद्व्यक्तित्वादिना पृथिव्यादिनिष्ठाभावप्रतियोगिनि रूपादौ प्रतियोगितानवच्छेदकरूपत्वावच्छेदेन तदभाववत्त्वे मानाभाव इत्यत आह । अस्ति चेति । अयम् । पृथिव्यादिनिष्ठाभावप्रतियोगित्वाभावः । इति प्रत्ययात् । इत्याकारकप्रतियोगित्वाभावावगाहिप्रत्ययस्याऽऽनुभविकत्वात् ।

(दी०) तादृशप्रतीत्या हि रूपत्वादौ प्रतियोगिताया अ-

वच्छेदकत्वाभावो गृह्यते, न तु तदभावावच्छेदकत्वम्, सर्वत्रैव रूपे पृथिवीनिष्ठाभावप्रतियोगित्वं न तु कुत्रापि रूपे तदभाव इत्यबाधितप्रत्ययात् । अन्यथा यो यो धर्मो यस्य यस्य नावच्छेदकस्तत्तदवच्छेदेन तत्तदभावोऽप्युक्तरीत्या सिद्ध्येत् । प्रमेयधूमत्वेन न, वह्निमन्निष्ठाभावप्रतियोगित्वमिति प्रत्ययात्तदवच्छेदेन तादृशप्रतियोगित्वाभावस्यापि सुवचत्वाच्च ।

( गा० ) अभिमतत्पदस्य प्रतियोगितापरत्वं स्फुटयितुं प्रतियोगितायाः इत्यसमासाभिधानम् । ननु शब्दव्युत्पत्तिबललभ्यं रूपत्वाद्यवच्छिन्नप्रतियोगित्वाभावं परित्यज्य रूपत्वादिनिष्ठतदवच्छेदकत्वाभावावगाहित्वं कुतः स्वीक्रियते इत्यत आह । सर्वत्रैवेति । तद्धर्मे स्वरूपसम्बन्धात्मकतदवच्छेदकतासिद्धौ तद्धर्मविरोधिसामानाधिकरण्यमात्रावगाहिप्रतीतेर्बाधकतया रूपत्वे पृथिवीनिष्ठाभावप्रतियोगितात्वरूपानुगतरूपावच्छिन्नप्रतियोगितावच्छेदकत्वावगाहित्वसूचनाय, सर्वत्रेत्युक्तम् ।

ननूक्तप्रतीत्या रूपत्वेऽनतिरिक्तवृत्तित्वरूपं तादृशप्रतियोगितात्वावच्छिन्ननिरूपितावच्छेदकत्वमेवावगाह्यते, न तावतापि बाधकतानिर्वाहः । स्वरूपसम्बन्धरूपयोरेव विरोधिद्वयावच्छेदकत्वयोर्विरोधात्तो बाधकप्रत्ययान्तरमाह । न त्विति । तादृशप्रतियोगित्वाभावो रूपसामान्यावृत्तिरित्यर्थः ।

ननु तादृशाभावे रूपावृत्तित्वप्रत्ययोऽसिद्धः, स्वयमेव संयोग्यन्योन्याभावे वृक्षावृत्तित्वप्रत्ययस्यासिद्धिमुद्भाव्य तदन्योन्याभावस्याव्याप्यवृत्तिताया व्यवस्थापनीयत्वात्, तत्प्रत्ययात् प्रकृतप्रत्ययस्याविशेषात् । न च रूपत्वेन न रूपे प्रतियोगित्वमिति शब्दात् रूपत्वावच्छिन्नप्रतियोगित्वाभाव इव प्रतियोगितानिष्ठो रूपत्वावच्छिन्नत्वाभावोऽपि क्लृप्तव्युत्पत्तितः प्रतीयते, अवच्छिन्नप्रत्ययान्तस्य तृतीयान्तेनोपस्थितस्य नञर्थाभावेन प्रथमान्तपदार्थान्वितेन प्रतियोगितयाऽन्वयेऽविरोधात् । एवं च बाधकप्रत्ययस्य विवादग्रस्तत्वेऽपि प्रतियोगित्वे रूपत्वावच्छिन्नत्वाभाव एव उभयसिद्धत्वानुरोधादुक्तप्रत्ययविषयः स्वीकार्यः, न तु रूपे प्रतियोगित्वाभावोऽक्लृप्त-

त्वेन गौरवस्यैव बाधकत्वादिति वाच्यम् । एवं सति वृक्षे मूले न संयोग इति प्रत्ययस्यापि वृक्षवृत्तिसंयोगे सप्तम्यन्तार्थमूलावच्छिन्नत्वाभावावगाहितापत्त्या संयोगादेरव्याप्यवृत्तित्वानुपपत्तेः ।

न च संयोगवत् प्रतियोगित्वस्याव्याप्यवृत्तित्वे वृक्षे मूले न संयोग इतिवद्रूपे रूपत्वे न रूपाभावप्रतियोगित्वमिति अवच्छेदकपदोत्तरसप्तम्युल्लिखितप्रत्ययापत्तिरिति वाच्यम् । प्रतियोगिताया अव्याप्यवृत्तिताविरहेऽपि रूपत्वादेस्तदवच्छेदकत्वेन रूपत्वे रूपाभावप्रतियोगित्वमिति प्रतीतिव्यवहारापत्तेर्देशकालादेर्विलक्षणमेवावच्छेदकत्वं सप्तम्यर्थो न त्ववच्छेदकत्वमात्रमिति समाधानस्यात्रापि तुल्यत्वात् । तादृशावच्छेदकतानिरूपकमेवाव्याप्यवृत्तीति नियमस्याप्रामाणिकत्वात् ।

शुद्ध्यते च साध्यतावच्छेदकावच्छेदेन साध्ये प्रतियोगित्वाभावावगाहिज्ञानस्यैवानुमितिहेतुत्वम्, न तु साध्यतावच्छेदकधर्मिकानवच्छेदकत्वग्रहस्य, धर्मितावच्छेदकतया साध्यतावच्छेदकानिष्ठवह्नित्वादिविषयताया अवच्छेदककोटौ प्रवेशनीयतया गौरवात् । कदाचिद्वह्नित्वत्वादिना कदाचिच्च स्वरूपतो वह्नित्वादेर्विधेयतावच्छेदकतया भानमिति नियमस्य कथञ्निर्वाहत्वात् । दण्डिसंयोगादिहेतुकानुमितौ दण्डादेर्विधेयतावच्छेदकत्वानुपपत्तेः । एतन्मते च तत्तद्दण्डत्वादिविशिष्टावच्छिन्ने विशेषाभावप्रतियोगित्वसत्त्वेऽपि अवच्छेदकतावच्छेदकभेदेन एकावच्छेदेनापि विरुद्धद्वयसत्त्वोपगमाद्दण्डत्वादिविशिष्टावच्छिन्ने तदभावसत्त्वेऽविरोधेनैव तदुपपत्तेः सुकरत्वादित्याशङ्क्य प्रतियोगितानवच्छेदकरूपेण प्रतियोगित्वाभावोपगमे प्रतिबन्दिमाह । अन्यथेति । यस्य । कारणस्वकार्यत्वादेः । उक्तरीत्येति । दण्डे द्रव्यत्वेन न घटजनकत्वमिति प्रतीतिबलेनेत्यर्थः । अत्रापीष्टापत्तिसम्भवेन लक्षणे दूषणान्तरमाह । प्रमेयेति । इति प्रत्ययादिति । अतिप्रसक्ततया द्रव्यत्वादेरिव प्रमेयधूमत्वादेर्गुरुतया धूमाभावप्रतियोगितानवच्छेदकत्वेऽविशेषादिति भावः । सुवचत्वाच्चेति । तथा च प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः ।

एतदतिव्याप्त्युद्धारमाशङ्कते । अथेति ।

(दी०) अथ प्रमेयधूमत्वं न गौरवेण सामानाधिकरण्यप्रतियोगितावच्छेदकम्, विवक्षितं चात्र तथेति चेत् ? असमानाधिकरणधूमकव्यक्तिवृत्तितया वन्हित्वमपि न तदवच्छेदकम्, कम्बुग्रीवादिमत्त्वादिना च घटादेरसाध्यतापत्तिरिति बहुव्याकोपश्च । अत एव प्रमेयधूमत्वं गौरवेण प्रतियोगिताया इव तच्छून्यताया अपि नावच्छेदकमित्युक्तावपि न निस्तारः ।

(गा०) अथ । लक्षणे । तथा । साध्यतावच्छेदकस्य हेतुनिष्ठसामानाधिकरण्यप्रतियोगित्वावच्छेदकत्वम् । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसामानाधिकरण्यस्यैव व्याप्तित्वोपगमादिति भावः । चेदित्यनन्तरं नहीति पूरणीयम् । असमानाधिकरणधूमकेति । असमानाधिकरणो धूमो यस्येति व्युत्पत्त्या धूमनिष्ठसामानाधिकरण्यप्रतियोगिताशून्येत्यर्थकम् । न तदवच्छेदकमिति । अनतिप्रसक्त एव स्वरूपसम्बन्धरूपावच्छेदकत्वोपगमादिति भावः । तथा च वह्निमान् धूमादित्यादावेवाव्याप्तिरिति भावः ।

धूमनिष्ठसामानाधिकरण्यप्रतियोगितात्वावच्छिन्नातिप्रसक्तत्वेऽपि वह्निवृत्तिप्रतियोगितात्वावच्छिन्नानतिप्रसक्ततया तादृशप्रतियोगितावच्छेदकत्वं वह्नित्वादेर्दुर्वारमित्यरुच्याह । कम्बुग्रीवेति । इदं तु गुरुधर्मावच्छिन्नसाध्यके व्यभिचारिण्यतिप्रसङ्गवारणाय गुरुधर्मस्य सम्बन्धप्रतियोगितानवच्छेदकत्वमभ्युपगतमिति तन्मतमनुसृत्यैवाव्याप्त्यभिधानम् । वस्तुतः सम्बन्धप्रतियोगितावच्छेदकत्वं गुरोरपि, अत एव स्वविशिष्टसम्बन्धीत्यादिपारिभाषिकावच्छेदकत्वनिरुक्तिरपि सङ्गच्छते । अन्यथा स्वविशिष्टसम्बन्धस्य स्वावच्छिन्नप्रतियोगिकसम्बन्धरूपतया गुरुधर्मे तादृशावच्छेदकताया अप्यनिर्वाहादित्यवधेयम् । अत एव । कम्बुग्रीवादिमत्त्वादिना घटादेरसाध्यतापत्तेरेव । तच्छून्यताया अपीति । गौरवरूपबाधकासत्त्वे एव प्रतियोगितानवच्छेदकस्य तदभावावच्छेदकत्वनियमादिति भावः । इत्युक्तावपि । इत्युक्त्वा उक्ताव्याप्तिविरहेऽपि । न निस्तारः । न लक्षणस्यादोषता ।

(दी०) अत्र वदन्ति । अप्रतियोगित्वं प्रतियोगितानव-

च्छेदकधर्मवत्त्वम् । न चैवं पूर्वस्मादभेदः, तत्र साध्यजातीयसमानाधिकरणसाधनजातीयत्वस्य, अत्र च साध्यसाधनयोः सामानाधिकरण्यस्य व्याप्तित्वे तात्पर्यात् । घटकयोस्तादृशप्रतियोगितावच्छेदकतत्त्वान्योन्यात्यन्ताभावयोर्भेदेन भेद इत्यपि कश्चित् ।

(गा०) साध्यजातीयेति । सजातीयत्वं साध्यतावच्छेदकसाधनतावच्छेदकाभ्याम्, तेन अनवच्छेदकवह्नित्वाद्यवच्छिन्नसमानाधिकरणवृत्तिधूमत्वादेरित्यर्थः । अत एव व्यधिकरणयोरपि सामान्यतो व्याप्तिनिर्वाहात् सामान्यलक्षणानुपगमेऽप्यनुमानोपपत्तिः । साध्यसाधनसामानाधिकरण्यस्य अनवच्छेदकरूपावच्छिन्नस्वसामानाधिकरण्यसाधनतावच्छेदकोभयस्य युक्त्यन्तरेण सामान्यप्रत्यासत्तौ व्यवस्थापितायां साध्यसाधनव्यक्तिभेदेन भिन्नानामपि व्याप्तीनां तया युगपज्ज्ञानसम्भवेन सर्वसाधारणैकव्याप्त्यग्रहविरहादिति भावः ।

कश्चिदित्यस्वरसबीजम् । व्यधिकरणयोर्न व्याप्तिरिति ग्रन्थकृतैवात्राभिधानादुक्तरीत्या भेदस्याऽऽवश्यकत्वम् ।

(चि०) यत्समानाधिकरणान्योन्याभावप्रतियोगि यन्न भवति तेन समं तस्य सामानाधिकरण्यं वा, स्वसमानाधिकरणान्योन्याभावाप्रतियोगियद्वत्कत्वं वा ।

अन्यवृत्तिवह्नितद्वतोरन्यवृत्तिधूमवन्निष्ठात्यन्ताभावान्योन्याभावप्रतियोगित्वात् व्यधिकरणवह्निधूमयोर्न व्याप्तिः, किं तु तत्तद्धूमस्य समानाधिकरणतत्तद्वह्निना । न चैवं धूममात्रे न व्याप्तिरिति वाच्यम् । सर्वधूमव्यक्तेस्तथात्वेन धूममात्रस्य व्याप्यत्वात् । धूमसम्बन्धिवह्निस्तद्व्याप्य एव । युगपदुत्पन्नविनष्टयोश्च व्याप्तिरेव । कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरणः । यद्वा प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वमत्यन्ताभावविशेषणम् । कर्मणि

च संयोगाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वम्। न चान्योन्याभावस्याव्याप्यवृत्तित्वम्, अभेदस्याबाधितप्रत्यभिज्ञानात्।

(दी०) अत्यन्ताभावगर्भवत्सामान्यविशेषभेदेनान्योन्याभावगर्भमपि व्याप्तिद्वयमाह यत्समानाधिकरणेत्यादिलक्षणद्वयेन।

(गा०) अन्योन्याभावगर्भव्याप्तिद्वयमिदमाशङ्क्याऽऽह। अत्यन्तेति। अत्यन्ताभावगर्भवदिति। अत्यन्ताभावगर्भव्याप्तिद्वयं यथा सामान्यविशेषभेदेनोक्तमित्यर्थः। एतेन सामान्यविशेषभेदेन भेदगर्भव्याप्तिद्वयानभिधाने न्यूनतेति सूचयितुं उक्तरीत्यैव भेदे ग्रन्थकारस्यस्वरस इति दर्शितम्।

नन्वत्यन्ताभावगर्भलक्षणयोः प्रतियोगितानवच्छेदकावच्छिन्नत्वाप्रतियोगित्वमात्राभिधानेन सामान्यविशेषभावः सूचित इत्यत्रापि तथा भेदेऽभिप्रेते तथाभिधीयेतेति शङ्कया अन्यथा भेदमाह। प्रथमे इति।

(दी०) प्रथमे एकस्य साध्याधिकरणा—शस्याऽऽधिक्याद्द्वितीयलक्षणम्। अत्र यद्यपि नानाव्यक्तिसाध्यकस्थले तत्तत्साध्यवतस्तत्तत्साध्यवत्त्वस्य च साधनसमानाधिकरणान्योन्याभावप्रतियोगित्वात्तदवच्छेदकत्वाच्चाव्याप्तिः। तथापि यद्रूपावच्छिन्नं तादृशान्योन्याभावप्रतियोगितानवच्छेदकं तद्रूपावच्छिन्नसामानाधिकरण्यमित्यत्र तात्पर्यम्।

(गा०) आधिक्यादिति। यद्वत्त्वप्रतियोगित्वं तद्वद्वृत्तित्वरूपे प्रथमे साध्यवतोऽप्रतियोगितया सामानाधिकरण्यघटकतया च पृथङ्निवेशः। द्वितीये च अप्रतियोगिसाध्यवद्वृत्तित्वरूपे अप्रतियोगित्वविशेष्यतापन्नस्यैव वृत्तिविशेषणत्वमित्येकधैव तन्निवेश इत्याशयः। इदमुपलक्षणम्। प्रथमे विशिष्टपरामर्शानिर्वाहोऽपि द्रष्टव्यः।

अत्राप्यवच्छेदकत्वमन्तर्भावयितुं यथाश्रुतमाक्षिपति। अत्रेति। नानाव्यक्तिसाध्यकस्थले इति। नानासाधनाधिकरणे यत्र विभिन्नं

साध्यं तत्रेत्यर्थः । प्रतियोगित्वात्तदवच्छेदकत्वाच्चेत्यस्य साध्यवत्साध्यवत्त्वयोर्यथासंख्यमन्वयः । साध्येऽवच्छेदकभेदनिवेशेऽपि न निस्तार इति सूचनाय साध्ये प्रतियोगितावच्छेदकत्वाभिधानम् । अव्याप्तिरिति । यद्यपि एकाधिकरणसाध्यके एतद्रूपवानेतद्रसादित्यादावपि उभयत्वावच्छिन्नभेदप्रतियोगित्वमादायाप्रतियोगित्वघटितलक्षणे यथाश्रुतेऽसम्भव एव सम्भवति । तथापि प्रतियोग्यवृत्तित्वस्य भेदविशेषणत्वोपगमेन तत्र लक्षणसमन्वयः सम्भवतीत्याशयः । यद्रूपावच्छिन्नेति । यत्पदं साध्यतावच्छेदकपरम् । अनवच्छेदकम् । अवच्छेदकत्वात्यन्ताभाववत् । तत्तद्वह्नित्वादिना विशेषान्योन्याभावप्रतियोगितावच्छेदकस्यापि वह्न्यादेरवच्छेदकानानवच्छेदकसामान्यरूपावच्छेदेनावच्छेदकत्वात्यन्ताभाववत्त्वमित्याशयः ।

न चावच्छेद्यानवच्छेदकरूपावच्छिन्नेऽवच्छेद्याभावस्योपगमे यद्रूपविशिष्टावच्छिन्ने प्रतियोगित्वाभाव इति विवक्षया यथाश्रुतप्रतियोगित्वाभावघटितलक्षणमेव सुपरिष्करमिति कथं तदुपेक्षेति वाच्यम् । अवच्छेदकताया व्यासज्यवृत्तित्वस्य सिद्धान्तसिद्धतया तस्याः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपमव्याप्यवृत्तित्वमपि सिद्धान्तसिद्धम् । अवच्छेदकैकदेशे पर्याप्तिसम्बन्धेन तदभावसत्त्वादित्यवच्छेदकतापर्याप्त्यनवच्छेदकरूपावच्छिन्नेऽप्यवच्छेदकत्वाभावः स्वीक्रियते इति । प्रतियोगिताया अव्याप्यवृत्तित्वं त्वपसिद्धान्त इत्याशयात् ।

ननु वह्निसंयोगवान् धूमादित्यादौ साध्यतावच्छेदकवह्न्याद्यवच्छिन्ने तत्तद्वह्निसंयोगादिमदन्योन्याभावप्रतियोगितावच्छेदकत्वसत्त्वादव्याप्तिः । न च तत्तद्वह्नित्वादिविशिष्टवह्न्याद्यवच्छिन्ने तत्सत्त्वेऽपि वह्नित्वविशिष्टवह्न्याद्यवच्छिन्ने तदभावः सुलभः । एकस्यापि विभिन्नविशेषणावच्छिन्नस्य विरोधिद्वयावच्छेदकत्वोपगमादिति वाच्यम् । एवं सति तद्वह्निसंयोगवान् धूमादित्यादावतिव्याप्तेः । तद्वारणायाविशेषितसाध्यतावच्छेदकावच्छिन्नेऽवच्छेदकत्वाभावस्य विवक्षणे उक्ताव्याप्तेर्दुर्वारत्वात् । साध्यतावच्छेदकतावच्छेदकविशिष्टावच्छिन्नस्यानवच्छेदकत्वविवक्षणे चानवच्छिन्नवह्नित्वादिसाध्यतावच्छेदककस्थलेऽव्याप्तिरित्यत आह । वह्न्यादाविति ।

( दी० ) वह्न्यादौ तत्संयोगादौ तद्वदादौ वा साध्ये सर्वत्र साक्षात् परम्परया वा अनुगमकं वह्नित्वादिकमेव साध्यतावच्छेदकम्, तदवच्छिन्नवत्त्वस्य च न तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वमिति । यद्वा यद्रूपावच्छिन्नं यादृशरूपावच्छिन्नमनवच्छेदकमिति वा यथायथं वक्तव्यम् । शब्दैक्यस्यानुपादेयत्वात् ।

( गा० ) वह्न्यादिसाध्यकस्थले वह्नित्वादेः साक्षादवच्छेदकत्वाभिधानं दृष्टान्तविधया । वह्निसंयोगादौ साध्ये स्वाश्रयप्रतियोगिकत्वरूपपरम्परासम्बन्धो वह्नित्वादेः साध्यतावच्छेदकताघटकः, वह्निसंयोगवत्त्वानित्यादौ च स्वाश्रयप्रतियोगिकसंयोगवत्त्वादिरूप इति नानाविधपरम्परायास्तथात्वसूचनाय तद्वदादावित्युक्तम् । वह्नित्वादेरनुगमकत्वाभिधानेन च तस्य विशेषान्योन्याभावप्रतियोगितावच्छेदकतानवच्छेदकत्वं तदवच्छिन्ने तादृशप्रतियोगितावच्छेदकत्वाभावोपपादकं दर्शितम् । तादृशेति । हेतुमन्निष्ठेत्यर्थः । अवच्छेदकत्वमितीति । अविशेषिततदवच्छिन्ने एव अवच्छेदकत्वाभावसौलभ्यमिति शेषः । वह्न्यादेर्विधेयतावच्छेदकतया अनुमितौ भानमनुरुध्य कल्पान्तरमाह । यद्वेति । एकव्यक्तिवह्नित्वादिसाध्यकस्थले एकाधिकरणकहेतुकस्थले च यदनवच्छेदकमिति वक्तव्यम् ।

न च वह्निर्द्रव्यत्वादित्यादौ जातित्वाद्यवच्छिन्नवह्नित्वादेरवच्छेदकत्वाभावमादाय यथाश्रुतेऽतिप्रसङ्गः । अविशेषितसाध्येऽनवच्छेदकत्वग्रहश्च निर्धर्मितावच्छेदककतया नानुमितिहेतुरिति वाच्यम् । यतोऽविशेषितस्यानवच्छेदकत्वमित्यस्यानवच्छिन्नोऽवच्छेदकत्वाभावोऽर्थः, तस्य च साध्यतावच्छेदकप्रकारेण भासमानेऽपि ग्रहसम्भवः । वस्तुतो यदनवच्छेदकमित्यत्रावच्छेदकभेदस्यैव विवक्षणान्नोक्तातिव्याप्तिरिति तत्त्वम् । यद्रूपावच्छिन्नम् । अनवच्छिन्नयद्रूपावच्छिन्नम् । अनवच्छेदकमिति । अनुगतरूपेण नानाव्यक्तिसाध्यके वह्निमान् धूमादित्यादौ वक्तव्यम् । साध्यतावच्छेदकेऽनवच्छिन्नत्वप्रवेशाज्जातित्वादिविशिष्टवह्नित्वाद्यवच्छिन्नस्यान-

घच्छेदकत्वमादाय वह्निमान् द्रव्यत्वादित्यादौ नातिप्रसङ्गः । महानसीयत्वादिसहितवह्नित्वादेर्यत्रावच्छेदकतायामवच्छेदकता तत्रापि तत्पर्याप्त्यनधिकरणकेवलवह्नित्वाद्यवच्छिन्नेऽवच्छेदकत्वाभाववृत्तावविरोध इति नाव्याप्तिः । यत्रानुगतैकरूपविशिष्टनानाव्यक्त्यवच्छिन्नानां साध्यता तत्र यद्रूपविशिष्टसाध्यतावच्छेदकावच्छिन्नस्यानवच्छेदकत्वं तद्रूपविशिष्टावच्छिन्नं व्यापकम् । यत्र च साध्यतावच्छेदकविशेषणमप्यननुगतं तद्विशेषणं त्वनुगतं तत्र यद्रूपावच्छिन्नविशिष्टावच्छिन्नस्यैवानवच्छेदकत्वं तद्रूपावच्छिन्नविशिष्टावच्छिन्नं व्यापकमित्यादिकं यादृशरूपेत्यादिना दर्शितम् । अत्रापि सर्वत्रानवच्छिन्नत्वेन यद्रूपं विशेषणीयम् । तेन नोक्तदोषावकाशः । शब्दैक्यस्येति । साध्यसाधनभेदेन कार्यकारणभावभेदस्याऽऽवश्यकतयेत्यादिः । व्यधिकरणयोर्व्याप्यव्यापकभावविरहे प्रतियोगित्वादित्यन्तहेत्वसङ्गतिमाशङ्कते । यद्यपीति ।

( दी० ) अन्वेत्यादि । यद्यप्युक्तरीत्या सर्वत्र तादृशप्रतियोगितानवच्छेदकत्वपर्यन्तानुधावनस्याऽऽवश्यकत्वेनाकिञ्चित्करमेव तादृशाभावप्रतियोगित्वम् । तथापि विशिष्टसामानाधिकरण्यरूपाया व्याप्तेर्व्यधिकरणासम्भवित्वमात्रे तात्पर्यम् व्याप्तिरेवेत्यस्य कालिकीत्यादिः ।

( गा० ) उक्तरीत्येति । रूपादिनानाव्यक्तिसाध्यके पृथिवीत्वाद्येकव्यक्तिहेतुव्याप्तिवारणानुरोधेनेत्यर्थः । सर्वत्र । लक्षणे । अकिञ्चित्करम् । व्यधिकरणयोर्व्याप्तिबाधकसाध्यविशेषणदलविरहाप्रयोजकम् । विशिष्टेति । तादृशप्रतियोगितानवच्छेदकरूपविशिष्टेत्यर्थः । सामानाधिकरण्यरूपाया इत्यन्तं हेतुगर्भविशेषणम् । तथा च यतो न व्याप्तिः साध्यसमानाधिकरणवृत्तिधूमत्वादिरूपा अपि तु साध्यसामानाधिकरण्यरूपैव अतो व्यधिकरणपर्वतीयधूममहानसीयवह्न्योस्तदसम्भवः । सामानाधिकरण्यदलविरहादित्येतावन्मात्रे तात्पर्यम्, सामानाधिकरण्यविरहस्यैव प्रतियोगित्वादित्यन्तेन सूचनान्न तु साध्यविशेषणदलविरहस्य तत्र व्याप्तिविरहप्रयोजकत्वमित्यर्थः ।

कपिसंयोगिभिन्नभेदज्ञानम् । कपिसंयोगिभेदवत्तद्भेदस्याप्यव्याप्यवृत्तित्वेनाविरोधात् । नापि मूलावच्छेदेन तज्ज्ञानम् । असिद्धेः । तद्धर्मवद्भिन्नभेदस्य तद्धर्ममात्रपर्यवसिततया कपिसंयोगिभिन्नभेदात्मनः कपिसंयोगस्य मूलवृत्तित्वे विरोधाच्च । न हि घटभिन्नभेदो घटत्वादतिरिच्यते, अवश्यक्लृप्तघटत्वेनैवोपपत्तौ अतिरिक्तकल्पनायां मानाभावात् । अन्यथा सर्वत्राभावस्याभावो अतिरिक्त एव कल्प्येत ।

(गा०) अतएव । कपिसंयोगिभेदाभावस्य कपिसंयोगावच्छेदकमात्रावच्छिन्नकपिसंयोगादिरूपत्वादेव । न तथा । न एकावच्छेदेनाभावविषयकत्वेन बाधकतया वक्तुं शक्यम् । संयोगरूपत्वपक्षेऽसम्भवादिति । मूलावच्छेदेन कपिसंयोगस्यावृत्तेर्भेदमतेऽपि तादृशज्ञानासम्भवादित्यर्थः । अतिरिक्तमते आह । असिद्धेश्चेति । मयाऽनभ्युपगमादित्यर्थः । द्वितीयं दूषयति । नापीति । असिद्धिं विवृणोति । तद्वृत्तित्वस्येति । ग्रहात् । ग्रहोपगमात् । तृतीयं दूषयति । नापीति । अव्याप्यवृत्तित्वेन । अव्याप्यवृत्तित्वोपगमेन । अव्याप्यवृत्तिधर्मावच्छिन्नभेदस्यैवास्माकमप्यव्याप्यवृत्तित्वादिति भावः ।

तज्ज्ञानम् । भिन्नभेदज्ञानम् । असिद्धेरिति । कपिसंयोगावच्छेदकमात्रावच्छेदेन तदुपगमादिति भावः । तस्य कपिसंयोगरूपतया भवतोऽपि मूलावच्छेदेन तज्ज्ञानासम्भव इत्याह । तद्धर्मेति । तद्धर्ममात्रपर्यवसिततया । तद्धर्मात्मकतानियमेन । एतच्च कपिसंयोगिभिन्नभेदकपिसंयोगयोस्तादात्म्ये हेतुः । मूलवृत्तित्वविरोधात् । मूलावच्छिन्नत्वविरहात् । उपदर्शितसामान्यनियममेव दृष्टान्तेन द्रढयति । न हीति । एतदेवासिद्धमित्यत आह । आवश्यकेति । भावेन कथमभावव्यवहाराद्युपपत्तिरित्याशङ्कामपनिनीषुराह । अन्यथेति । अत्यन्तान्योन्याभावयोरभावावपि प्रतियोगितदवच्छेदकाभ्यामतिरिच्येयातामित्यर्थः । तथा चाभावाभावस्यानतिरिक्ततावादिनां सिद्धान्तानुरोधिनामभावत्वं न भावाभिन्नत्वं तन्नियतं वा, किं तु भावसाधारणः स्वरूपसम्बन्धविशेष एवेति भेदावच्छिन्नभेदस्य भेदप्रतियो-

गितावच्छेदकरूपत्वे न किञ्चिद्बाधकमिति भावः ।

भेदस्याव्याप्यवृत्तितां प्रकारान्तरेण निराकुर्वाणस्य यस्य कस्यचिन्मतमाशङ्क्य निराकरोति । अत एवेति ।

(दी०) अत एवात्यन्ताभावप्रतियोगिनोरन्योन्याभावप्रतियोगितावच्छेदकयोः सामान्यत एव क्लृप्तो विरोधः । तत्र कपिसंयोगवत्यपि वृक्षे मूले न कपिसंयोग इति प्रतीतेरन्यथानुपपत्त्या तावदाद्ययोः स सङ्कोच्यताम्, न ह्येषा प्रतीतिः कपिसंयोगिभेदविषयत्वेनोपपादयितुं शक्या, नियमतः संयोगवत्त्वेन प्रतियोगिनोऽनुपस्थितेः, प्रतियोगिकोटौ तदनुल्लेखाच्च । मूले न कपिसंयोगीति प्रतीतेस्तु शिखी विनष्ट इतिवद्भासमानविशेषणस्याभावमात्रविषयत्वेनोपपन्नत्वान्नान्तिमयोरपीति परास्तम् ।

(गा०) अत एव । वक्ष्यमाणदूषणादेव । सामान्यतः । सकलात्यन्ताभावान्योन्याभावसाधारणरूपेण । तत्र । तयोर्विरोधयोर्मध्ये । अन्यथानुपपत्त्या । अन्यविषयकतयोपपादनासम्भवेन । आद्ययोः । अत्यन्ताभावप्रतियोगिनोः । सः । विरोधः । सङ्कोच्यताम् । संयोगाद्यभावव्यावर्त्तकविशेषमन्तर्भाव्येत्यादिः । एतेन संयोगात्यन्ताभावस्याव्याप्यवृत्तित्वप्रतिबन्दिनिरासः कृतः । अन्यथोपपत्तिमाशङ्कते । न हीति । नियमत इति । तादृशप्रतीतिपूर्वमिति शेषः । संयोगवत्त्वेनेति । तथा चाभावबुद्धौ प्रतियोगितावच्छेदकप्रकारकबुद्धेर्हेतुतया संयोगप्रकारकोपस्थितेः प्रागसत्त्वेन जायमानायास्तादृशप्रतीतेर्न तदवच्छिन्नभेदविषयकत्वसम्भव इति भावः । तदुपस्थितिविरहदशायां तादृशप्रतीतेरपलापः सम्भवतीत्याशङ्क्य दूषणान्तरमाह । प्रतियोगिकोटाविति । तदनुल्लेखात् । संयोगवतोऽभानात् । तथा च न तदंशे अभावप्रतियोगित्वावगाहनं सम्भवतीति भावः । भासमानविशेषणस्येति । प्रतियोगिकोटौ भासमानस्य संयोगस्येत्यर्थः । भासमानेत्यनेन पूर्वतो विशेषो दर्शितः । अन्तिमयोरपि । अन्योन्याभावप्रतियोगितावच्छेदकयोर-

पि । न सङ्कोच्यतामित्यनुपज्यते । तथा च बाधकप्रतीतिविरहे-ऽपि विरोधसङ्कोचे प्रथमावधारणस्य भ्रमत्वकल्पनप्रसङ्गरूपबाधकबलादेव दर्शितप्रतीतेर्विशेषणात्यन्ताभावविषयकत्वमिति न तद्बलादन्योन्याभावाव्याप्यवृत्तित्वमिति भावः।

सामान्यतो विरोधस्य क्लृप्तत्वमेव निराकुरुते ।

( दी० ) अन्योन्याभावान्तरस्य प्रतियोगितावच्छेदकान्तरसमानाधिकरणतया स्वस्वप्रतियोगितावच्छेदकासामानाधिकरण्यपर्यवसायिनो विरोधस्य स्वत्वघटितत्वेन विशेष एव विश्रामात् । अत्यन्ताभावप्रतियोगिनोरिवान्योन्याभावप्रतियोगितावच्छेदकयोरबाधितसामानाधिकरण्यानुभवेन प्रतिरुद्धतया तथाविधविरोधकल्पनाया अनवकाशाच्च ।

( गा० ) अन्योन्याभावान्तरस्येति । एकस्यान्योन्याभावस्यान्यदीयप्रतियोगितावच्छेदकसमानाधिकरणतया तत्तदन्योन्याभावे तत्तत्प्रतियोगितावच्छेदकासामानाधिकरण्यरूप एव विरोधः क्लृप्तः । तथा च तत्तदभावत्वरूपाननुगतधर्माणामेव विरोधितावच्छेदकत्वम्, न तु घटभेदसयोगिभेदादिसाधारणैकधर्मस्येत्यर्थः । तथा च न प्राथमिकनियमावधारणस्य भ्रमत्वप्रसङ्ग इति भावः । ...त्वावच्छिन्नप्रतियोगिताकत्वविशिष्टसामानाधिकरण्यसम्बन्धेन धर्मविशिष्टान्यत्वमेव भेदस्य सामान्यतः प्रतियोगितावच्छेदकविरोधः सुवचः । न च सामानाधिकरण्यघटकसम्बन्धद्वयनिवेशस्याऽऽवश्यकत्वादिदमपि न सर्वसाधारणमिति वाच्यम् । स्वनिरूपकत्वस्वावच्छेदकताघटकसम्बन्धावच्छिन्नस्वावच्छेदकाधिकरणतावच्छेदकावच्छिन्ना या स्वावच्छेदकवत्ताग्रहविरोधितावच्छेदकसम्बन्धेन वृत्तित्वस्वावच्छेदकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यानुयोगितात्वमेवानुगतमन्योन्याभावनिष्ठविरोधित्वम् । द्वित्वावच्छिन्नप्रतियोगिताकनिरूपितभेदनिष्ठानुयोगितायां द्वित्वावच्छिन्नप्रतियोगिताविशिष्टत्वसत्त्वाद्विरोधानुपपत्तिवारणाय स्वाधिकरणवृत्तितावच्छेदकत्वमुपेक्ष्य स्वावच्छेदकाधिकरणतावच्छेदकत्वनिवेशः । गोत्वाभावाधिकरणकगोत्वाभावस्वरूपघटभेदस्य

घटवृत्तित्वाद्विरोधानुपपत्तिवारणायाभावे प्रतियोगितावच्छेदकाधिकरणवृत्तित्वमुपेक्ष्य अनुयोगितायां तदवच्छेदकत्वं निवेशितमित्यस्वेरविरोधानुभवप्रतिरोधेन सामान्यतो विरोधकल्पनैव न सम्भवतीत्याह । अत्यन्ताभावेति ।

बाधकसत्त्वमभ्युपेत्यापि दृष्टान्तवैषम्यं प्रदर्शयन् संयोगीति प्रतीतेर्विशेषणसंसर्गाभावविषयकत्वं निराकरोति । किञ्चेति ।

( दी० ) किञ्च शिखी विनष्ट इति प्रतीतेर्विशिष्टध्वंसोल्लेखिन्या विशेष्ये तद्बाधादास्तां विशेषणध्वंसविषयता, न संयोगीति प्रतीतेर्विशिष्टभेदमवगाहमानायाः कथं विशेषणसंसर्गाभावविषयकत्वेनोपपत्तिः । न खलु सहस्रेणापि बाधकैरिदं रजतमिति प्रतीतेरङ्गत्वावलम्बनं व्यवस्थापयितुं शक्यते । न च विशेषणभेद एव तस्या विषयः । अग्रेऽपि न कपिसंयोगीति प्रतीत्यापत्तेः ।

( गा० ) तद्बाधात् । ध्वंसप्रतियोगित्वबाधात् । आस्तां विशेषणध्वंसविषयतेति । तावतापि ध्वंसविषयकत्वमव्याहतमेवेति भावः । ननु तावतापि ध्वंसे विशिष्टधर्मिप्रतियोगिकत्वस्य बाधितस्यावगाहनात्तादृशप्रतीतेर्न प्रमात्वोपपत्तिः, तदवगाहित्वानुभवापलापे च मूले न संयोगीति प्रतीतेर्भेदावगाहित्वानुभवापलापः किं पाणिपिहित इत्यत आह । न खल्विति । इति प्रतीतेः । इत्याकारिकाया रङ्गविषयकप्रतीतेः । शक्यते इति । अपि तु तस्या भ्रमत्वमेव कल्प्यते इति शेषः ।

अयं भावः । यादृशप्रतीतेर्यादृशव्यवहारजनकत्वे तस्या एव तदाकारता रङ्गत्वविषयकप्रतीतितश्च न रजतमिदमिति व्यवहारः, अपि त्विदं रङ्गमित्येव, अतो रङ्गे इदं रजतमिति प्रतीते रजतत्वावगाहितामन्तरेण इदं रजतमिति व्यवहारजनकत्वासम्भवात् तस्यास्तदवगाहित्ववद् वृक्षो न कपिसंयोगीति व्यवहारजनकप्रतीतेस्तादृशवाक्यप्रतिपाद्यसंयोगिभेदविषयकत्वमावश्यकम् । तादृशवाक्यस्यानुयोगिवाचकपदोत्तरसप्तमीविरहेण संयोगसंसर्गाभावाबोधकत्वात्, संयोगिभेदावगाहनमन्तरेण प्रतीतेः संयोगिभेदबोधक-

वाक्यप्रयोजकत्वासम्भवात् । शिखी विनष्ट इत्यादिशब्दाच्च शिखायामपि नाशप्रतियोगित्वस्य मत्वर्थीयार्थविवक्षयान्वयोपपादनस्य शक्यतया तदाकारकप्रतीतेः शिखाप्रतियोगिकनाशविषयकत्वसम्भवः । विशेषणसंसर्गाभावविषयकत्वासम्भवेऽपि शिखी विनष्ट इत्यादिप्रतीतेर्विशेषणनाशविषयकत्ववत्, प्रकृतप्रतीतेर्विशेषणभेदविषयकत्वं सम्भवति बाधकबलादिति न विशिष्टभेदस्याव्याप्यवृत्तितासिद्धिस्तत्रेति शङ्कते । न चेति ।

प्रत्यक्षादिप्रतीतेरपि तन्मूलकव्यवहारबलेन विषयव्यवस्थापकत्वमालोच्य व्यवहारबलेनैवान्योन्याभावस्याव्याप्यवृत्तितां साधयितुमुपक्रमते । युज्यते चेति ।

(दी०) युज्यते चान्योन्याभावोऽव्याप्यवृत्तिः, कथमन्यथा पक्वतादशायां घटादावयं न श्यामो, दण्डादिविनाशसमये चैत्रादौ नायं तद्दण्डवानित्यादयो व्यवहाराः । न च तत्र विशेषणसंसर्गाभाव एव प्रतीयते, अनुयोगिनि सप्तमीं विना तदनुपपत्तेः । न खलु भूतलं न घट इत्यादीनि वाक्यानि कदाचिदपि घटसंसर्गाभावं बोधयन्ति । तथात्वे वा घटो न घट इत्यादेरपि प्रसङ्गात् ।

( गा० ) पक्वतादशायामित्यादिसप्तमीद्वयं व्यवहाराणामविषयविषयत्वबोधकं न त्वधिकरणत्वार्थकम्, अन्यकालीनतथाविधव्यवहाराणामपि प्रकृतसाधकत्वात् । एवं च व्यवहाराकारे उभयत्राप्यवच्छेदककालबोधकपदं पूरणीयम् । इत्थं च इत्यादिपदादेशिकाव्याप्यवृत्तित्वसाधकानां मूले नायं कपिसंयोगीत्यादिव्यवहाराणां परिग्रहः । इदानीमयं न श्याम इत्यादौ इदानीं यः श्यामस्तद्भेदः प्रतीयते इत्युक्तिसम्भवात् स्थलान्तरानुधावनम् । तद्दण्डनाशसमये च तद्दण्डवत्त्वोऽर्मलभ्या तत्र नायं प्रकारः सम्भवतीति भावः । अत एव च तद्दण्डपरित्यागमुपेक्ष्य तन्नाशानुधावनं तद्दण्डपर्यन्तानुसरणं च । अनुयोगिनीति । अनुयोगिबोधकपदे इत्यर्थः । तदनुपपत्तेः । संसर्गाभावप्रतीत्यनुपपत्तेः । नञ्पदजन्यत-

दनुयोगिकसंसर्गाभावबोधे तेन समं संसर्गाभावस्याऽऽधाराधेय-भावः प्रकारतयैव भासते इति नियमेन तदुपस्थापकविभक्तेरपेक्षितत्वादिति भावः।

ननु नञर्थसंसर्गाभावे आधाराधेयत्वस्य प्रकारतानियमस्यासिद्ध्या सप्तमीं विनापि प्रकृते श्यामरूपादिसंसर्गाभावस्य घटादौ सम्बन्ध संसर्गमर्यादया ऽवगाह्य प्रत्ययः स्यादेवेत्यत आह। न चान्वियतीति। तथा च तादृशनियमानङ्गीकारे भूतलं न घट इत्यादितोऽपि आधाराधेयभावसंसर्गकाभावबोधः स्यादिति भावः। न च तादृशनियमस्वीकारेऽपि न कथमियमापत्तिः, सामग्रीसत्त्वे नियमभङ्गभयस्य कार्योत्पत्तिविरोधित्वासम्भवादिति वाच्यम्। तादृशनियमवादिनां फलाभावेन नञ्समभिव्याहारज्ञानघटितायास्तादृशबोधसामग्र्या एवाक्लृप्तत्वात्। उक्तस्थले विशेषणसंसर्गाभावप्रतीतिमङ्गीकुर्वतैव नञ्पदघटितसामग्र्यास्तादृशबोधोत्पत्तिप्रयोजकतायाः वाच्यत्वात्।

ननु प्रामाणिकैर्भूतलं न घट इत्यादिवाक्यं प्रयुज्यते एव, ततश्च तात्पर्यसत्त्वे संसर्गाभावप्रतीतिरिष्टैवेत्यत आह। तथात्वे चेति। तथात्वे। तत्र संसर्गाभावबोधकत्वोपगमे। प्रसङ्गात्। प्रामाणिकप्रयोगप्रसङ्गात्। घटादौ घटादिसंसर्गाभावस्याबाधितत्वात्तस्य च भवतामुक्तवाक्येन बोधसम्भवादिति भावः।

ननु आधाराधेयभावसंसर्गकसंसर्गाभावबोधने इतरविशेषणतया स्वार्थान्वयपरपदजन्यप्रतियोग्युपस्थितिरपेक्ष्यते, भूतलं न घट इत्यादौ च तदभावान्नापत्तिः। न चैवमपि नाय तद्दण्डवानित्यादौ धर्मिणोऽनन्वयेन तद्विशेषणतया स्वार्थान्वयबोधपरत्वं प्रतियोगिवाचकपदस्य न सम्भवतीति कथं प्रकृतोपपत्तिरिति वाच्यम्। तत्र तद्दण्डवानयमिदानीं तद्दण्डाभाववानित्येव बोधोपगमेन धर्मिणोऽपि प्रवेशात्। यत्र धर्मिणि तद्दण्डसत्त्वं न कदापि तत्र विशिष्टभेदबोधस्यैव स्वीकारात् तावता अन्योन्याभावस्याव्याप्यवृत्तित्वासिद्धिरित्याशङ्क्याह। अपि चेति।

(दी०) अपि च विशिष्टवाचकदण्ड्यादिपदेभ्यो धर्म्युपसर्जनतयोपस्थितस्य दण्डादेः कथं प्रतियोगित्वेनाभावेऽन्वयः? इ-

तदविशेषणतयोपस्थापितस्य निराकाङ्क्षतयाऽन्यत्र विशेषणत्वे-नान्वयायोगात् ।

(गा०) विशिष्टेति । विशिष्टपदस्थ्यादिपदान्तर्गतदण्डादिपदेभ्यो धर्मिविशेषणतया स्वार्थान्वयपरेभ्य उपस्थितस्येत्यर्थः । एतेन पदार्थोपस्थितौ पदार्थस्य प्राधान्येन भानेऽपि नासङ्गतिः । प्रतियोगित्वेन प्रतियोगिविधया । अनुयोगितासम्बन्धेन विशेषणविधयेति यावत् । इतरविशेषणतयोपस्थापितस्य । एकपदार्थविशेष्यतया स्वार्थान्वयपरपदभिन्नपदानुपस्थापितस्य । अन्यत्र । तत्पदार्थोपस्थितांशे । विशेषणतयाऽन्वयस्य निराकाङ्क्षतयाऽयोगादित्यर्थः ।

अथैतादृशव्युत्पत्तिकल्पनं निरर्थकम् । न च दण्डिनो रूपमित्यादौ सम्बन्धिविशेषणतया भासमानदण्डादेर्विभक्त्यर्थविशेषणतया भानवारणाय उक्तव्युत्पत्तिकल्पनमावश्यकमिति वाच्यम् । प्रकृत्यर्थैकदेशे न प्रत्ययार्थस्यान्वय इति व्युत्पत्त्यन्तरविरोधेन तादृशातिप्रसङ्गस्याप्यनवकाशात् । दण्डिनावित्यादौ दण्डादेर्द्वित्वादावन्वयवारणाय तादृशव्युत्पत्तेरावश्यकत्वात् । न च तदकल्पने वह्निमाश्वास्तीत्यादौ वह्न्यादेरभावविशेषणतया ऽन्वयापत्तिरिति वाच्यम् । प्रतियोगिपदादन्यपदजन्यत्वकारकादपि । वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते । इति व्युत्पत्त्यन्तरविरोधेनैव तादृशान्वयबोधाप्रसक्तेः । समासस्येव तद्धितान्तस्यापि वृत्तिशब्दत्वात् । पर्वतस्य वह्निमानित्यादौ पर्वतसम्बन्धादेर्वह्न्यादावन्वयवारणाय तादृशव्युत्पत्त्यन्तरकल्पनस्याऽऽवश्यकत्वादिति चेत् ? राज्ञः पुत्रधनमित्यादौ धनांशविशेषणपुत्रादिविशेषणतया विवक्षितस्य राजसम्बन्धादेर्धनादिविशेषणतयाऽन्वयवारणायोक्तव्युत्पत्तिकल्पनमावश्यकम् । एवं राजपुरुषादिपदानां यत्र द्वन्द्वस्तत्र समासघटकपूर्वपदार्थेऽपि प्रत्ययार्थान्वयात् प्रकृतित्वघटकमव्यवधानं प्रत्ययान्तरव्यवधानाभावरूपं वाच्यम् । तथा च तत्पुरुषस्थपूर्वपदोपस्थाप्येऽपि समुदायोत्तरप्रत्ययार्थस्यान्वयवारणाय तदावश्यकत्वम् । न च प्रतियोगिपदादित्यादिव्युत्पत्तिविरोधेनैव न तदन्वयप्रसक्तिरिति वाच्यम् । समस्यमानपदार्थान्वये एकदेशान्वयित्वविरहात् । अन्यथा द्वन्द्वोपस्थापितसकलपदार्थानां विभक्त्यर्थान्वयानुपपत्तेरिति भावः ।

अथ घटपटावित्यादौ घटादिविशेषणतया स्वार्थान्वयपरद्वि-वचनाद्युपस्थाप्यसंख्यादेः, चैत्रस्य घटपटावित्यादौ तथाविधचैत्रसम्बन्धादेश्च पटादौ विशेषणतयाऽन्वयो निर्विवाद इति कथमुक्तव्युत्पत्तिकल्पनम् ? न च स्वविशेषणविशेषणतयोपस्थापितस्य साक्षात्स्वविशेषणतयाऽनन्वय इत्येव व्युत्पत्तिः । अत्राप्युपस्थापितान्तार्थः पूर्ववन्निष्कर्षणीयः । इत्थं च चैत्रस्य घटपटौ पश्यतीत्यादौ कर्मत्वादिविशेषणतया भासमानघटादिविशेषणस्य द्वित्वचैत्रसम्बन्धादेः पटादिविशेषणत्वे न बाधक घटादेः पटाद्यविशेषणत्वात्प्राथमिकविशेषणद्वयं साक्षात्परम्परासाधारणमिति वाच्यम् । एवं सति नाय तद्दण्डवानित्यादौ अभावांशे दण्डिनो विशेषणत्वानुपगमे दण्डस्य तद्विशेषणतया अन्वये बाधकविरहादुद्दर्शितव्युत्पत्तेः प्रकृतानुपयोगप्रसङ्ग इति चेत् । न । एकविशेषणतया स्वार्थबोधकपदमन्यत्र पृथग् विशेषणतया न तद्बोधकमित्येव व्युत्पत्त्यङ्गीकारात् । घटपटावित्यादौ विभक्त्यर्थद्वित्वादेरेकधर्मेबोभयादिविशेषणतया भानेनाविरोधात् । राज्ञ पुत्रधनमित्यादौ तत्पुरुषे च पुत्रधनाद्योरेकधा राजसम्बन्धादेर्नान्वयबोधप्रसङ्गः । तादृशान्वयबाधे तयोरेकांशे अपरविशेषणकबोधपरत्वग्रहस्य विरोधित्वादिति । आकाङ्क्षा जिज्ञासारूपा ऽन्वयबोधाङ्गम्, तत्र च पदविशेषजन्योपस्थितिः कारणमिति मतानुसारेण निराकाङ्क्षतयेत्यभिहितम् । आनुपूर्वीविशेषस्याऽऽकाङ्क्षात्वपक्षे तु निरुक्तपदभिन्नपदजन्योपस्थितिरूपकारणविरहो हेतुर्बोध्यः ।

यत्तु न दण्ड इत्यानुपूर्वीविरह एव तत्र निराकाङ्क्षतेति । तदसत् । तथा सतीतरविशेषणतयोपस्थितिकथनस्यानुपयोगितापत्तेः । तादृशानुपूर्व्या दण्डादिसंसर्गाभावबोधप्रयोजकत्वे दण्डादिपदस्य मत्वर्थाविवक्षया दण्डादिपरत्वेऽपि दण्डादिसंसर्गाभावबोधानिर्वाहेणाग्रिमशङ्कानुपस्थितेः ।

दण्ड्यादिपदस्य विशेषणमात्रपरत्वे आधाराधेयभावस्य प्रकारतानुरोधेन सप्तम्यपेक्षामनवदधानः शङ्कते । न चेति ।

(दी०) न चात्र विशिष्टोपस्थापकं पदं विशेषणमात्रपरम् । तथा सति चैत्रो न दण्डो घटो न श्यामं रूपमित्यादावपि दण्डा-

दिसंसर्गाभावप्रतीत्यापत्तेर्दुर्वारत्वात् । एतेन नञोऽभाववल्लाक्षणिकतया विनैव सप्तमीमन्वयबोधसमर्थनं प्रत्युक्तम् । एवं च चैत्रो न पचतीत्यादावाख्यातार्थकृत्या लक्षणया वोपस्थितस्य कर्त्तुरेव भेदो भासते इत्यस्तु ।

(गा०) विशेषणमात्रपरमिति । तथा च दण्डादेर्निरुक्तस्येतरविशेष्यणतयोपस्थितत्वस्याभावान्न तत्र संसर्गाभावबोधे दर्शितव्युत्पत्तिविरोध इति भावः । एवं च सति सप्तम्यपेक्षां स्मारयति । तथा सतीति । तथा सति, अधिकरणसंसर्गाभावयोः संसर्गस्य संसर्गतया भानोपगमे इत्यर्थः । संसर्गाभावबोधप्रसङ्गादिति । विशेषणमात्रपरदण्ड्यादिपदेभ्यो दण्डादिपदस्याविशेषादिति भावः । इदमुपलक्षणम् । मत्वर्थाविवक्षायां मतुपोऽसाधुत्वापत्तिरित्यादिदूषणमपि द्रष्टव्यम् ।

एतेन । चैत्रो न दण्ड इत्यादौ दण्डादिसंसर्गाभावबोधप्रसङ्गेन । विनैव सप्तमीमिति । नञर्थसंसर्गाभावेन सममनुयोगिन्याधाराधेयभावबोधे एव सप्तम्यपेक्षा नञर्थेन संसर्गाभावेन सममाधाराधेयभावस्य प्रकारतयैव भाननियमात् । नञर्थसंसर्गाभाववतोऽभेदान्वयबोधे तु न इत्याशयेनेति भावः । प्रत्युक्तमिति । न दण्डीत्यादौ मत्वर्थविवक्षायामितरविशेषणतयेत्यादिव्युत्पत्तिविरोधेन दण्डादेरभावान्वयासम्भवात् । तदविवक्षायां नञः संसर्गाभावबोधकत्वेऽपि प्रतियोगिवाचकपदसमानविभक्तिकानुयोगिवाचकपदेन नाभावबोधोपयिकाकाङ्क्षाकल्पनं तत्र सम्भवति उक्तातिप्रसङ्गस्य दुर्वारत्वादिति भावः । यद्यपि न दण्डीत्यत्र मत्वर्थाधिकरणानुयोगिकप्रकृत्यर्थदण्डादिप्रतियोगिकसंसर्गाभावस्यापि नञा बोधनं सम्भवति, न कलञ्जं भक्षयेदित्यादौ नानुपमृद्य प्रादुर्भावादित्यादौ च प्रकृतिप्रत्ययार्थयोरन्तरा नञर्थप्रवेशस्य दृष्टचरत्वात् । तथापि न श्याम इत्यादावगतिरेवेति ध्येयम् ।

ननु न पचति चैत्र इत्यादौ पाककृत्यादिसंसर्गाभावस्याऽऽश्रयतासम्बन्धेनान्वयान्नञर्थसंसर्गाभावे आधाराधेयभावः प्रकारतयैव भासते इति नियमासिद्धा सप्तम्यपेक्षा कथं प्रकृते इत्यत आह । एवं चेति । एवं च, उक्तातिप्रसङ्गवारणाय संसर्गाभावबोधे सप्त-

धर्म्यं चेति। श्यामादिवैधर्म्यं चेत्यर्थः। रक्तत्वादिकमेवेति। र-क्तत्वादे, श्यामरूपाद्युपलक्षितवृत्तित्वेऽपि तद्विशिष्टावृत्तित्वादिति भावः। न च श्यामरूपविशिष्टावृत्तित्वं श्यामरूपावच्छिन्नाधिकरण-ताकत्वाभाववत्त्वं तच्चासम्भव न च श्याम इत्यतः सम्भवति, पदा-र्थैकदेशस्य धर्म्युपसर्जनतया च उपस्थितस्य श्यामरूपस्याधिकर-णत्वे विशेषणतया अन्वयासम्भवादिति वाच्यम्। धर्मिणः श्या-मरूपावच्छिन्नत्वसम्बन्धेनान्वयोपगमादेव तच्चासम्भवात्।

स्वस्मिन् विशिष्टवैधर्म्यमाचार्याणामनुमतमित्याह। यदाहुरिति। एवं च मूले न कपिसंयोगी वृक्ष इत्यादिप्रतीतेरपि संयोगाविशि-ष्टवैधर्म्यमेव विषयः तच्च कपिसंयोगाभाव एव तस्य कपिसंयो-गावच्छिन्नावृत्तित्वात्। विभिन्नकालावच्छेदेनेव विभिन्नदेशाव-च्छेदेनापि वर्तमानयोरेकाधिकरणतायामपरस्यानवच्छेदकत्वादिति लोकप्रतीतिबलाद्दैशिकमव्याप्यवृत्तित्वं भेदस्येत्यवधेयम्।

(चि०) व्याप्यव्यापकभावाज्ञानेऽपि वस्तुसत-स्तथात्वेनाज्ञायमानस्य सम्बन्धत्वेनैव भानस्य पं-ष्ठ्यर्थत्वम्। न चैवमननुगमो दोषाय, कस्य का व्याप्तिरित्यननुगतस्यैव लक्ष्यत्वात्। अथ धूमवति वह्निहृदौ न स्तः, धूमवान् वह्निमद्धृदो न भवतीति प्रतीतिव्यासज्यवृत्तिप्रतियोगिकौ वह्निवह्निमतोरत्य-न्तान्योन्याभावौ धूमवति विषये इति कथमेते ल-क्षणे इति चेन्न। तादृशाभावानभ्युपगमात्। अभ्यु-पगमे वा तत्र तदुभयं प्रतियोगि न वह्निवह्निमन्तौ।

(गा०) मूले व्याप्यव्यापकभावाज्ञानेऽपीति। निरुक्तव्याप्तित्व-व्यापकत्वरूपाभ्यां व्याप्तिव्यापकत्वयोरज्ञानेऽपीत्यर्थः। वस्तुसतः। वस्तुगत्या यो व्याप्यव्यापकभावस्तस्य। तथात्वेन। व्याप्तित्वादिना। अज्ञायमानस्य। अविशेषितस्य। षष्ठ्यर्थत्वम्। समासविवरणवाक्य-स्थषष्ठ्या प्रतिपत्तिः। सम्भवतीति शेषः। व्याप्यव्यापकभावस्य विशेषणानवच्छिन्नस्य शब्दात प्रतिपत्तिः सम्भवत्येत आह।

सम्बन्धत्वेनैवेति । भातस्य । अवच्छिन्नस्य । अतो निरुक्तव्याप्तित्वादिना व्याप्त्यादिज्ञाने तेन रूपेण तज्ज्ञानापेक्षाविरहान्नात्माश्रयादिरिति भावः ।

सम्बन्धत्वस्य नियमघटितत्वमाशङ्क्याऽऽह । निरूपितेति ।

(दी०) सम्बन्धत्वेनेति । निरूपिततत्त्वमेतत् । कस्येति । इत्थं चाननुगताया अपि व्याप्तेर्ज्ञानं यथाऽनुमितिहेतुस्तथा वक्ष्यते । एते । अन्योन्याभावात्यन्ताभावगर्भे ।

(गा०) सम्बन्धत्वं विशेष्यत्वादिभिन्नविषयतारूपं पदार्थान्तरं वा तच्च नियमाघटितमेवेति भावः । तत्त्वमस्य निरूपितमित्यर्थः । मूले न चैवमननुगम इति । एवम् । साध्यादिविशेषघटितनिरुक्तधर्मस्य व्याप्तिलक्षणत्वे । अननुगमः । प्रत्येकं सकलव्याप्तिसाधारण्यविरहः । दोषाय । अव्याप्त्यै । कस्य । साध्यादेः । का व्याप्तिरिति प्रश्ने । अननुगतस्यैव । तत्तत्साध्यादिनिरूपितव्याप्तिस्वरूपाननुगतलक्ष्यतावच्छेदकावच्छिन्नस्यैव । लक्ष्यत्वात् । निरुक्ताननुगतलक्षणवत्त्वेन प्रतिपादनीयत्वात् । तथा च लक्ष्यतावच्छेदकैक्याभावान्नाव्याप्तिरिति भावः ।

ननु लक्ष्याननुगमान्माभूल्लक्षणाव्याप्तिदोषः, तथाप्यनुमितौ व्याप्तिज्ञानहेतुताया अननुगतव्याप्तिघटितरूपावच्छिन्नाया व्यभिचारवारणासम्भव इत्याशङ्कायां दीधितिकृदाह । इत्थं चेति । इत्थम् । साध्यादिविशेषघटितत्वेन । अननुगतायाः । अनतिप्रसक्तेनैकरूपेण कारणतावच्छेदककोटौ निवेशयितुमशक्यायाः । तथा वक्ष्यते इति । सामान्यतोऽनुमितित्वावच्छिन्नं प्रति व्याप्तिज्ञानत्वेन न हेतुता अपि तु अभावज्ञानत्वेन ज्ञानत्वेन वा हेतुता विशेषसामग्र्यैवानतिप्रसङ्गात् । तत्तत्साध्यादिविषयकतत्तल्लिङ्गकानुमितित्वेनैवाननुगततत्तत्साध्यलिङ्गादिघटितव्याप्तिज्ञानजन्यतावच्छेदकमतो न व्यभिचार इत्याशयः । अश्रूयमाणावच्छेदकत्वांशे लक्षणत्रये एवाऽऽक्षेपसङ्गतेरेते लक्षणे इत्यस्याव्यवहितान्योन्याभावगर्भलक्षणद्वयपरताभ्रमं निराकुरुते । एते इति । अत्यन्तान्योन्येति । अन्योन्याभावगर्भत्वेन लक्षणयोरैक्यमिति द्विवचनसङ्गतिरिति भावः ।

तादृशाभावानभ्युपगमादिति समाधानस्याभिप्रायवितर्केण वि- चारासहत्वं प्रदर्श्याभ्युपगमे वेत्यादिसमाधानमवतारयति । नन्वि- त्यादिना ।

(दी०) तादृशेति । ननु किं द्वित्वादिकं प्रतियोगितावच्छे- दकमेव न भवति, किं वा भवत्येव, परं तु क्लृप्तानामेव स्वसमा- नाधिकरणतत्तद्धर्मावच्छिन्नप्रतियोगिताकानामभावानां लाघवा- दित्यभिप्रायः ? नाद्यः, एकैकाभावप्रतीतितो द्वौ न स्त इति प्रतीतेर्विलक्षणत्वात् । शब्दादिना द्वौ न स्त इति निश्चयेऽप्ये- कैकाभावसंशयाच्च । विषयानुगमं विना अनुगताकारप्रत्यया- योगात् ।

( गा० ) क्लृप्तानामेवेति । घटो नास्ति पटो नास्तीत्याद्यन- न्यथासिद्धप्रतीतिविषयाणामित्यर्थः । इत्यभिप्राय इति । समाधा- तुरभिप्रायः । एकैकाभावप्रतीतितः । घटो नास्तीत्यादिप्रतीतितः । द्वौ न स्त इतीति । तत्र घटपटौ न स्त इतीत्यर्थः । एवमग्रेऽपि । विलक्षणत्वादिति । तथा च तादृशप्रतीतिवैलक्षण्यानुरोधेन घटत्वा- द्यवच्छिन्नप्रतियोगिताकत्वं न तद्विषयः, अपि तु घटपटोभयत्वाद्य- वच्छिन्नप्रतियोगिताकत्वमेवेति,स्वीकरणीयमिति भावः ।

ननु घटो नास्ति पटो नास्तीत्यत्रेव घटपटौ न स्त इत्यत्रापि घटपटत्वाद्यवच्छिन्नप्रतियोगिताकत्वेनाभावद्वय भासते । घटपटांशेऽपि अधिकस्य द्वित्वस्योपलक्षणतया भानेनैव प्रतीतिवै- लक्षण्यमित्यत आह । शब्दादिनेत्यादि । प्रत्यक्षे घटपटौ न स्त इति निश्चयस्थले घटादिशून्ये प्रत्येकघटत्वाद्यवच्छिन्नाभावस्यानि- निश्चयसम्भवात् प्रत्येकाभावे संशयो न भवत्येवेत्यत आह । शब्दादि- नेति। एकैकाभावसंशयात् । अत्र घटो न वेत्यादिसंशयात् । उक्तप्रत्य- यस्योक्तरूपेण प्रत्येकाभावविषयकत्वे तस्य एतादृशसंशयप्रतिबन्ध- कत्वापत्तिरिति भावः । तच्च तादृशसंशयानुत्पादे कदाचिदिष्टाप- त्तिः सम्भवतीत्यतो दूषणान्तरमप्याह । विषयानुगमं विनेति । अभावद्वयरूपविषयस्यानुगतरूपेण भानं विनेत्यर्थः ।

अभावद्वयमनुगतरूपेणैव भासते इति शङ्कते । न चेति ।

(दी०) न चाभावस्य द्वित्वाधिकरणप्रतियोगिकत्वमात्रं द्वित्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं वा द्वयं नास्तीति प्रतीतेर्विषयः । तादृशद्वित्वाधिकरणव्यक्तिविशेषविरहिणि तथाविधोभयशालिनि तादृशौ द्वौ न स्त इत्यप्रत्ययात् । द्वित्वसामानाधिकरण्याभानेऽपि प्रतीतेरनुगताकारत्वाच्च ।

(गा०) प्रतियोगिकत्वमात्रमित्यनेन विशिष्य घटत्वादेः प्रतियोगितावच्छेदकत्वविरहस्य व्यवच्छेदः । एतावतोक्तसंशयानुपपत्तिरपि परिहृता । तदवच्छिन्नकोटिकसंशये तदंशे प्रतियोगितावच्छेदकत्वावगाहिन एवाभावनिश्चयस्य प्रतिबन्धकत्वात् । द्वित्वसमानाधिकरणेति । द्वित्वसामानाधिकरण्योपलक्षितेत्यर्थः । तेन प्रत्येकाभावप्रतियोगितावच्छेदकघटत्वादौ द्वित्वसामानाधिकरण्यस्य विशेषणत्वविरहेऽपि न क्षतिः । प्रतियोगिताप्रकारकज्ञाने च उपलक्षणस्यापि प्रतियोगितावच्छेदकादौ प्रकारत्वोपगमात् ।

यद्यपि द्वित्वसामानाधिकरण्यं घटपटद्वित्वसामानाधिकरण्यं च तद्घटत्वादिसाधारणमिति तदवच्छिन्नाभावमादाय घटपटोभयवत्यपि घटपटौ न स्त इति प्रत्ययापत्तिरेतत्कल्पेऽपि यथाश्रुते ऽवतरति । तथापि घटपटद्वित्वसामानाधिकरण्यं तत्सामान्यनिष्ठसामानाधिकरण्यप्रतियोगित्वं वा विवक्षितम् । प्रथमपक्षे दोषमाह । तादृशेति । तादृशो घटपटादिरूपो यो द्वित्वाधिकरणव्यक्तिविशेषस्तद्विरहिणि तथाविधोभयशालिनि घटपटाद्युभयवति घटपटादिरूपौ द्वौ न स्त इत्यप्रत्ययात्, तथा च तादृशप्रत्ययापत्तिरिति भावः । द्वितीये दोषमाह । द्वित्वसामानाधिकरण्येति । द्वित्वसामानाधिकरण्येन रूपेण घटत्वाग्रहदशायामपि घटपटौ न स्त इत्याद्याकारकानुगतप्रतीत्युदयादित्यर्थः ।

(दी०) अत एव न तादृशप्रतीतेर्घटत्वपटत्वाद्यन्यतरावच्छिन्नप्रतियोगिताकाभावविषयकत्वम् । अन्यतरत्वानुल्लेखेऽपि घटपटौ न स्त इत्यनुगतप्रत्ययाच्च । न च परम्परासम्बन्धेन तादृशद्वित्व-

सामान्याभाव एव द्वौ न स्त इति प्रतीतेर्विषयः । द्वित्वाधिकरणयोरेव प्रतियोगित्वोल्लेखात् । द्वित्वादेर्घटादिवृत्तित्वानुपस्थितावपि अन्ततः शब्देनापि घटपटौ न स्त इत्यादिप्रत्ययाच्च ।

(गा०) अत एव । वक्ष्यमाणतादृशदोषादेव । अन्यतरावच्छिन्नेति । अन्यतरत्वोपलक्षितावच्छिन्नेत्यर्थः । अभावविषयकत्वमित्यन्तस्य तादृशाभावस्य प्रकारकमित्यर्थः । अन्यतरत्वानुल्लेखेऽपि । अन्यतरत्वाग्रहदशायामपि । परम्परासम्बन्धेन । स्वावच्छिन्नाश्रयत्वसम्बन्धेन । द्वित्वसामान्याभावः । घटपटवृत्तिद्वित्वत्वावच्छिन्नाभावः । द्वौ न स्त इतीति । घटपटौ न स्त इतीत्यर्थः । द्वित्वाधिकरणयोः । घटपटयोः । प्रतियोगित्वोल्लेखात् । प्रतियोगित्वबोधकशब्देन विषयाभिलापात् ।

ननु घटपटौ न स्त इत्यादिवाक्यतो विशेषणीभूतद्वित्वस्यापि प्रतियोगित्वप्रत्ययः शिखी विनष्ट इत्यादौ शिखादेरिव कथंचित्सम्भवतीत्यत आह । द्वित्वादेरिति ।

(दी०) अत एवैकविशिष्टापराभावोऽपि न तदालम्बनम् । विरुद्धयोरपि जलत्वपृथिवीत्वयोर्द्वित्वेनाभावप्रत्यय इत्युक्तत्वाच्च । नान्त्यः, तथात्वेऽपि साध्यवद्वृत्तेस्तादृशाभावप्रतियोगित्वानपायात् ।

(गा०) अत एव । एकविशिष्टापरत्वेनानुपस्थितावपि तादृशप्रत्ययस्याऽऽनुभविकत्वादेव । वैशिष्ट्याग्रहस्थले प्रतीत्यनुपपत्तिमुक्त्वा वैशिष्ट्याभावस्थले तामाह । विरुद्धयोरपीति । उक्तत्वाच्चेति । मयेत्यादिः ।

इदमत्रावधेयम् । घटपटौ न स्त इत्यादिप्रतीत्या घटत्वपटत्वयोस्तदवच्छिन्नधर्मिविशेषणतापन्नद्वित्वे च प्रतियोगितावच्छेदकत्वपर्याप्तिरवगाह्यते न तु द्वित्वमात्रे केवलघटत्वादौ च, यत्किञ्चिदुभयवति प्रत्येकघटादिमति च तादृशप्रतीतेरनुदयापातात् । नापि घटपटवृत्तित्वविशिष्टद्वित्वेऽपि, तादृशविशिष्टानुपस्थितावपि तथाप्रत्ययात् । न च निरुक्तधर्मत्रयस्यैकत्र प्रतियोगित्वाधिकरणे कुतः कथमवच्छेदकतापर्याप्तिसम्भव, अवच्छेद्याधिकरण-

वृत्तिर्यादृशसमुदायस्तत्रैव तन्नियमादिति वाच्यम् । प्रतीतिबलेन व्यधिकरणानामपि व्यासज्यवृत्त्यवच्छेदकान्तरधर्मितावच्छेदकतापन्नानामवच्छेदकत्वोपगमात् ।

न च प्रतियोगितावच्छेदकत्वपर्याप्त्यधिकरणसमुदायवत्तैवाभावस्य विरोधात्, व्यधिकरणधर्मावच्छिन्नाभाववादिना विरुद्धधर्मद्वयावच्छिन्नाभावस्येव घटपटोभयत्वावच्छिन्नाभावस्यापि, केवलान्वयित्वापत्तिरिति वाच्यम् । स्वप्रतियोगितावच्छेदकतापर्याप्तिर्यादृशे तादृशपर्याप्तप्रतियोगितावच्छेदकताकाधिकरणतया सममभावस्य विरोधात् घटपटावत्रेति प्रतीतिसाक्षिकद्वित्वतद्धर्मितावच्छेदकतापन्नघटत्वपटत्वसमुदायपर्याप्तप्रतियोगितावच्छेदकताकाधिकरणताधति अत्र घटपटौ न स्त इति प्रतीतिसिद्धतादृशसमुदायपर्याप्तप्रतियोगितावच्छेदकताकाभावासत्त्वान्नानुपपत्तिः । द्वित्वविशेष्यतावच्छेकतापन्नघटत्वपटत्वपर्याप्तप्रतियोगितावच्छेदकताकमधिकरणत्वं न कुत्रापि प्रतीयते इति घटत्वपटत्वाभ्यां किमपि नास्तीति प्रतीतिसिद्धतादृशघटत्वपटत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावस्य केवलान्वयित्वमप्याहतमेवेति भाव । तथात्वेऽपीति । द्वित्वादेः कल्पप्रत्येकाभावप्रतियोगितावच्छेदकत्वेऽपीत्यर्थः । तादृशाभावेति । वह्निह्रदोभयत्ववह्निमद्ध्रदोभयत्वावच्छिन्नप्रतियोगिताकह्रदान्यन्तान्योन्याभावेत्यर्थः । प्रतियोगित्वानपायादिति । पर्वते वह्निह्रदौ न स्त इत्याद्याकारकह्रदाद्यभावविषयकप्रतीत्या वह्न्यादिसाधारणप्रतियोगिताया द्वित्वाद्यवच्छिन्नत्वेनावगाहनादिति भावः ।

अभ्युपेत्यातिरिक्तद्वित्वाद्यवच्छिन्नाभाव व्यवस्थापयति । अन्तरेण चेति ।

(दी०) अन्तरेण चाभावान्तरमेकैकघटवति जायमानाया यत्किञ्चिद्घटद्वयवति चानुत्पद्यमानाया घटौ न स्त इति प्रतीतेरुपपादयितुमशक्यत्वादित्यत आह । अभ्युपगमे चेति । तदुभयत्वमेव प्रतियोगितावच्छेदकं न तु साध्यतावच्छेदकं साध्यवत्त्वं वेत्यर्थः । अश्रूयमाणावच्छेदकत्वांशे ऽपि लक्षणे तथैव विवक्षितमिति भावः ।

मिति स्वम । स्वपदार्थः । साधनत्वाभिमतामिति । यद्रूपावच्छिन्नस्य व्याप्यत्वमभिमतं तद्रूपावच्छिन्नमित्यर्थः । यथाश्रुतमूलार्थस्याग्रे दूषणीयतया प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणं यत् साध्यमिति यथाश्रुतमूललभ्यं विशेषणविशेष्यभावं परित्यज्य तद्विपरीतमवलम्ब्य व्याचष्टे । तथा चेति । ईदृशमनौपाधिकत्वं पूर्वपक्षे स्वयमपि निर्दोषतया दर्शितम् ।

(दी०) एतेन सर्वत्र तादृशैर्धर्मैरवच्छिन्नस्य, तादृशावच्छिन्नयावत्प्रतियोगिकस्य चातिप्रसङ्गात् यावत्त्वाद्यनवच्छिन्नप्रतियोगिताकादतिरिक्तस्याभावस्य अप्रसिद्धिः । तादृशावच्छिन्नप्रतियोगिताकानां यावदभावानामधिकरणस्य प्रायशस्तथा, रूपादिसाध्यकपृथिवीत्वादावव्याप्तिश्च । क्वापि रूपादिव्यक्तौ तादृशयावदभावसामानाधिकरण्यासम्भवादिति प्रत्युक्तम् ।

(गा०) सर्वत्रेति । अप्रसिद्धिरित्यनेन सम्बध्यते । अवच्छिन्नस्येत्यन्तमपि । तादृशैः । साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकघटत्वपटत्वादिभिः । अवच्छिन्नस्य । विशिष्टस्य । प्रत्येकं तदवच्छिन्नप्रतियोगिकाभावसामानाधिकरण्यनिवेशेऽपि न निस्तारः । साध्यव्यापकतावच्छेदकविशिष्टस्यापि द्वित्वादिना ऽभावेन साध्यसामानाधिकरण्यसत्त्वादतिव्याप्त्यापत्तेः । अवच्छेदकावच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्यनिवेशेऽपि वक्ष्यमाणरूपादिसाध्यकपृथिवीत्वादावव्याप्तिरिति द्रष्टव्यम् ।

अवच्छिन्ने धर्मिणि यावत्त्वस्य विशेषणतामाक्षिपति । तादृशावच्छिन्नेति । यावत्प्रतियोगिकस्याभावस्येत्यन्वयः । प्रमेयमात्रस्यैव तथात्वाद्यावत्प्रमेयप्रतियोगिकत्वस्य च क्वचिदप्यभावे ऽसत्त्वात्तथाविधाभावाप्रसिद्धिः । ननु तादृशो व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताक एव तत्तत्क्षणविरुद्धक्षणवैशिष्ट्यावच्छिन्नप्रतियोगिताको यत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगिताकश्चाभावः प्रसिद्ध एवेत्यत आह । अतिप्रसङ्गादिति । तादृशाभावसाधारणरूपेणाभावनिवेशे तादृशाभावसामानाधिकरण्यमादाय व्यभिचारिण्यतिव्याप्तिरिति तादृशधर्मानवच्छिन्नसम्बन्धसामान्यावच्छि-

प्रतियोगिताकयावदभावो विवक्षणीयः, तादृशस्याप्रसिद्धिरित्यर्थः ।

द्वितीयाभावे यावत्त्वस्य विशेषणतां मूलस्थसमासान्तर्गतयावत्पदावलाभेऽप्युक्तिसम्भवमात्रेण प्रसक्तां तां निराकुरुते । तादृशेति । अवच्छेदकविशिष्टत्वस्य न प्रतियोगिविशेषणत्वं धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकह्रदवृत्तित्वादिविशिष्टद्रव्यत्वत्वावच्छिन्नाभावस्यापि यावदभावान्तर्गततया तत्र ह्रदादिसामानाधिकरण्याभावेनाव्याप्तिरिति प्रतियोगितायां तदवच्छिन्नत्वस्य तथात्वं निवेशितम् । प्रायशः । अनेकाधिकरणकहेतुके । तथा । अप्रसिद्धिः । वह्निमत्पर्वतादीनां धूमवन्महानसादिनिष्ठाभावप्रतियोगितावच्छेदकपर्वतत्वत्वमहानसावृत्तित्वाद्यवच्छिन्नाभावानधिकरणत्वादिति भावः । एकवृत्तिहेतुके तद्धेत्वधिकरणस्यैव तादृशयावदभाववत्त्वासम्भवात् इत्युक्तम् ।

यावतामभावानां प्रत्येकनिरूपितसामानाधिकरण्यनिवेशेऽपि न निस्तार इत्याह । रूपादेरिति । अव्याप्तौ हेतुमाह । कापीति । असम्भवादिति । घटीयरूपादौ तादृशघटत्वाद्यभावासामानाधिकरण्यादिति भावः । साध्यतावच्छेदके तत्तदभावसामानाधिकरण्यावच्छेदकत्वनिवेशो नानाव्यक्तिसाध्यतावच्छेदककस्थलेऽव्याप्तिग्रस्त्या ।

ननु आर्द्रेन्धनाद्युपाधेस्तत्तदार्द्रेन्धनत्वादिना धूमादिमन्निष्ठाभावप्रतियोगित्वेऽपि अयोगोलकान्यत्वादेरुपाधेरतथात्वादवच्छेदकानुसरणं व्यर्थमित्यत आह । सर्वत्रेति ।

(दी०) सर्वत्र सोपाधौ एकव्यक्तिकस्य सम्भवतोऽप्युपाधेर्धर्मान्तरविशिष्टत्वादिना अभावो भवत्येव साध्यसमानाधिकरण इत्यवच्छेदकानुसरणम् ।

(गा०) धर्मान्तरम् । ह्रदवृत्तित्वादिकम् । आदिना द्वित्वादिपरिग्रहः । अभावसमानाधिकरण यत् इत्यत्र अभावाः समानाधिकरणा यस्य साध्यस्येति बहुव्रीहिमवलम्ब्य द्वितीयाभावे यावत्त्वस्य विशेषणत्वमुपगम्य उक्तविशेषणविशेष्यभाववैपरीत्य विनैव मूलं वर्णयतामन्येषां मतमाह साधनेति ।

(दी० ) साधनसमानाधिकरणात्यन्ताभावप्रतियोगिताव-

च्छेदकावच्छिन्नप्रतियोगिताका यावन्तोऽभावा यद्धर्मावच्छिन्न-समानाधिकरणास्तद्धर्मावलीढसामानाधिकरण्यमित्यर्थः। अभावश्चात्र भावभिन्नो ग्राह्यः। तेन इदं जलं स्नेहवत्त्वादित्यादौ स्नेहवत्त्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकरूपसामान्याभावत्वावच्छिन्नप्रतियोगिताकाभावानां सकलरूपाणां जलत्वसामानाधिकरण्यविरहेऽपि नाव्याप्तिः।

( गा० ) उक्तयावदभावानां प्रायशोधिकरणाप्रसिद्धावपि तेषु साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यसौलभ्यात् घटत्वपटत्वाद्यभावसमुदाये रूपत्वावच्छिन्नसामानाधिकरण्यसौलभ्याच्च मूलोक्तदूषणयोरत्रानवकाशः। न च यावदभावानामेकाधिकरणाप्रसिद्धिवद्यावदभावानुयोगिकस्य एकसाध्यसामानाधिकरण्यस्याप्रसिद्ध्या नोक्तदूषणोद्धारस्सम्भवतीति वाच्यम्। यावत्पदस्य व्यापकत्वार्थकतया साध्यसामानाधिकरण्यव्यक्तीनां प्रातिस्विकरूपेण तत्साध्यव्यक्तिसामानाधिकरण्यत्वादिना च तादृशाभावत्वव्यापकताविरहेऽपि साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यत्वेन व्यापकत्वाविवक्षया प्रतीकारात्। तत्पुरुषपक्षे च तादृशाभावत्वव्यापकप्रतियोगिताकसामानाधिकरण्यपर्यवसितयावदभावसामानाधिकरण्ये प्रतियोगितात्वेन व्यापकत्वविवक्षणे व्यभिचारिण्यतिप्रसङ्गः। साध्यनिष्ठसामानाधिकरण्यप्रतियोगितात्वेन व्यापकत्वं च तेन रूपेण समभिव्याहृतपदानुपस्थित्या दुर्लभम्। साध्यसामानाधिकरण्यत्वेन व्यापकत्वापेक्षया गुरु चेत्यसावुपेक्षितः।

नाव्याप्तिरिति। रूपात्मकाभावानां भावत्वेन लक्षणाघटकत्वादिति भावः। प्रथमाभावे अनवच्छिन्नवृत्तिकत्वनिवेशे धूमादिसमानाधिकरणजन्यरूपात्मककालविशेषावच्छिन्नवृत्तिकाभावस्य लक्षणाघटकत्वाद्रूपत्वावच्छिन्नाभावरूपं हेतुमन्निष्ठाभावप्रतियोगिनमादाय वह्निमान् धूमादित्यादावव्याप्तेरनवकाशाज्जलत्वादिसाध्यकस्नेहादिहेत्वनुसरणम्। स्नेहवति जलपरमाणौ नित्यस्य रूपस्यानवच्छिन्नवृत्तिकत्वादुक्ताविवक्षया तत्राप्रतीकारात्। समवेतत्वाद्यवच्छिन्नाभावमादाय च तत्राऽप्यव्याप्तेर्दुर्वारत्वं बोध्यम्,

तस्य धूमादिमत्यप्यनवच्छिन्नवृत्तिकद्रव्यत्वादिरूपाभावप्रतियोगित्वात् । यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वविशिष्टवत्त्वं हेतुमतस्तद्रूपावच्छिन्नाभावे साध्यसामानाधिकरण्यविवक्षया हेतुसमानाधिकरणतेजस्त्वाभावप्रतियोगितावच्छेदकजलत्वाभावतेजस्त्वाभावोभयाभावत्वावच्छिन्नप्रतियोगिताके जलत्वाभावे जलत्वसामानाधिकरण्यविरहेऽपि न क्षतिः । तज्जलावृत्तित्वाद्यवच्छिन्नाभावाभावस्तज्जलत्वाभाव एव न तु तज्जलावृत्तिर्जलत्वाभावादिरपि, तज्जलत्वाभावेऽपि तथात्वस्यावश्यकतया तत एवाजले तादृशाभावप्रत्ययोपपत्तेरिति हेतुसमानाधिकरणतज्जलावृत्तित्वरूपाभावमादाय नाव्याप्तिः । एवं तज्जलत्वाभावजलत्वाभावान्यतराभावत्वाद्यवच्छिन्नाभावोऽपि तज्जलत्वाद्यभाव एव । एवं भूतत्वाभावमूर्तत्वाभावान्यतराभावत्वावच्छिन्नाभावोऽपि न भूतत्वाभावमूर्तत्वाभावौ किं त्वतिरिक्त एको भूतत्वविशिष्टमूर्तत्वाद्यभाव एव इति मूर्तं मनस्त्वादित्यादौ मनोनिष्ठभूतत्वाद्यभावमादाय शुद्धमूर्तत्वाद्यभावो न लक्षणघटक इति ।

यद्यपि भावभिन्नत्वविशेषणेऽपि स्नेहसमानाधिकरणाभावप्रतियोगितावच्छेदकरूपत्वावच्छिन्नाभावत्वावच्छिन्नप्रतियोगिताकानां निखिलरूपध्वंसप्रागभावानां जलत्वासमानाधिकरणतयाऽव्याप्तिर्दुर्वारैव । तथापि सदातनत्वेनाप्यभावस्य विशेषणीयतया न दोषः ।

न च स्नेहसमानाधिकरणजलान्यत्वविशिष्टसत्ताभावप्रतियोगितावच्छेदकं यज्जलान्यत्वविशिष्टसत्ताभावतेजोन्यत्वादिविशिष्टसत्ताभावान्यतराभावत्वं तदवच्छिन्नप्रतियोगिताके तेजोन्यत्वविशिष्टसत्ताभावे जलत्वसामानाधिकरण्यविरहादव्याप्तिरभावे भावभिन्नत्वं निवेश्यापि न शक्यते वारयितुमिति प्रतियोगितायां भाववृत्तित्वमेव निवेश्यम् । अभावश्चेत्यादिफक्किकाऽपि कथञ्चित् तत्परतया व्याख्येया । एवं चाभावांशे सदातनत्वविशेषणमनर्थकमिति वाच्यम् । प्रतियोगितायां भाववृत्तित्वनिवेशेऽपि स्नेहसमानाधिकरणपार्थिवादितत्तद्रूपात्यन्ताभावप्रतियोगितावच्छेदकतत्तद्रूपत्वावच्छिन्नप्रतियोगिताकतत्तद्रूपप्रागभावध्वंसेषु जलत्वसामानाधिकरण्यविरहेणाभावे सदातनत्वनिवेशस्यावश्यकत्वात् ।

जलान्यत्वविशिष्टसत्त्वाभाववत्तेजोन्यत्वविशिष्टसत्त्वाभावान्यतराभावोऽपि जलतेजोन्यतरान्यत्वविशिष्टसत्त्वैव तदभाव एव तादृशान्यतराभावाभावो न तु जलान्यत्वविशिष्टसत्त्वाभावादिरिति प्रतियोगितायां भाववृत्तित्वनिवेशमन्तरेणापि उपपत्तेरुदक्षरतयोक्तग्रन्थस्य तस्य तत्परत्वाभावाच्च । भावभिन्नत्वं च प्रथमाभावे न विशेषणम्, तत्र तस्य विशेषणत्वेऽपि द्वितीयाभावे तस्यातथात्वे हेतुसमानाधिकरणरूपप्रागभावप्रतियोगितावच्छेदकरूपसामान्याभावत्वावच्छिन्नप्रतियोगिताकनिखिलरूपेषु साध्यसामानाधिकरण्यविरहादव्याप्तेर्द्वितीयाभावे तद्विशेषणस्यावश्यकतया तत्र तद्विशेषणस्य निष्प्रयोजनकत्वात् ।

न च प्रथमाभावे सदातनत्वनिवेशो प्रागभावस्य चातथात्वाच्चेयमव्याप्तिरिति वाच्यम् । प्रथमाभावे सदातनत्वनिवेशेऽपि द्वितीयस्यातथात्वे हेतुसमानाधिकरणतत्तद्रूपात्यन्ताभावमादाय दर्शितदोषस्य दुर्वारतया द्वितीयेतद्विशेषणस्यावश्यकत्वे प्रथमे तद्विशेषणस्य प्रयोजनान्तरविरहेणानुपादानात् । द्वितीयाभावे सदातनत्वविशेषणेन जन्यरूपव्यावर्त्तनेऽपि तेजःपरमाणुरूपेषु जलत्वसामानाधिकरण्यविरहेण उक्ताव्याप्तेस्तत्र भावभिन्नत्वविशेषणेनैव वारणीयत्वादिति ।

केचित्तु हेतुसमानाधिकरणैतज्जलत्वरूपाभावप्रतियोगितावच्छेदकैतज्जलत्वजलत्वाभावान्यतराभावत्वावच्छिन्नप्रतियोगिताकजलत्वाभावे जलत्वसामानाधिकरण्यविरहेणाव्याप्तेर्वारणाय प्रथमाभावे हेतुमन्निष्ठतेजस्त्वाभावप्रतियोगितावच्छेदकैतत्तेजस्त्वतेजस्त्वाभावान्यतराभावत्वावच्छिन्नप्रतियोगिताकैतत्तेजस्त्वरूपाभावे जलत्वसामानाधिकरण्यविरहादव्याप्तेर्वारणाय द्वितीयाभावेऽपि भावभिन्नत्वविशेषणमित्याहुः । तन्न । एतज्जलत्वजलत्वाभावान्यतराभाव एतज्जलान्यजलत्वमेवेति तदवच्छिन्नाभावस्यैतज्जलान्यजलत्वाभावरूपत्वादेतज्जलत्वस्यातथात्वात् ।

वस्तुत उक्तदोषवारणार्थं द्वितीयाभावे इव प्रथमाभावेऽपि सदातनत्वविशेषणमावश्यकम् । अन्यथा जलनिष्ठरूपप्रागभावप्रतियोगितावच्छेदकरूपत्वावच्छिन्नात्यन्ताभावे जलत्वसामानाधिकरण्यविरहेणाव्याप्तिवारणासम्भवात् ।

न च प्रागभावस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वविरहात्तत्प्रतियोगितावच्छेदकतद्रूपत्वावच्छिन्नात्यन्ताभावस्य च साध्यसामानाधिकरण्यादव्याप्तिप्रसक्तिरिति वाच्यम्। ध्वंसप्रागभावयोरत्यन्ताभावविरोधितामते द्रव्योत्पत्तिकाले तत्र रूपं नास्तीति सामान्याभावबुद्धेः प्रागभावविषयकतया तत्रापि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्यावश्योपेयत्वात्। अन्तराद्यामे रक्तं रूपं नास्तीतिवत् पूर्वापररक्तिमध्वंसप्रागभाववति रक्तेऽपि तादृशप्रतीतेः कालविशेषावच्छिन्नत्वस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वे क्वचित् स्वीकारेण वारणसम्भवात्। एवं च समुपदर्शितदोषवारणाय द्वितीयेऽपि तद्विशेषणमावश्यकम्। एवं च हेतुसमानाधिकरणजलपरमाणुरूपात्मकाभावप्रतियोगितावच्छेदकरूपसामान्याभावत्वावच्छिन्नप्रतियोगिताकं तेजःपरमाणुरूपमादायाव्याप्तिवारणाय भावभिन्नत्वं प्रथमे द्वितीये वाऽभावे विशेषणमिति।

ननु घटध्वंसो ध्वंसत्वादित्यादावतिव्याप्तिः, हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकघटध्वंसत्वत्वाद्यवच्छिन्नप्रतियोगिताकाभावानां गोत्वाद्यभावाधिकरणकानां अभावाधिकरणकाभावधर्मप्रतियोगिकतयाऽधिकरणीभूततत्तदभावात्मकानां साध्यसामानाधिकरण्यात् भावेषु तदभावत्वेन क्लृप्तगोत्वाभावादिभिरेव घटध्वंसत्वं नास्तीति बुद्ध्युपपत्तेस्तत्राप्यतिरिक्ततदभावाकल्पनात्, पटध्वंसादिनिष्ठतदभावस्य पटध्वंसादिरूपत्वेऽपि सदातनत्वाभावेन पटध्वंसादेर्लक्षणाघटकत्वात्। भाववृत्तिघटध्वंसत्वाभावस्य गोत्वाभावाद्यतिरिक्तत्वेऽपि वह्निमान् धूमादित्यादौ साध्यासमानाधिकरणद्रव्यत्वाभावरूपतदधिकरणध्वंसत्वाद्यभावे साध्यसामानाधिकरण्यविरहेणाव्याप्तेः। एवं जलान्यत्वविशिष्टसत्ताभावतेजोन्यत्वविशिष्टसत्ताभावान्यतराभावाभावस्य तेजोन्यत्वविशिष्टसत्ताभावादिरूपत्वे अभावे भावभिन्नत्वविशेषणत्वप्रक्षेपेऽप्यगतेस्तत् परित्यज्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकयावदनुयोगितास्वेव स्वाश्रयघटितपरम्परासम्बन्धेन साध्यवद्वृत्तित्वस्य विवक्षणीयतया प्रतियोगितावच्छेदकैक्ये अभावव्यक्तिभेदेनानुयोगिताभेदानभ्युपगमेन भावादिवृत्त्यभावानां साध्यासमानाधिकरण्येऽपि घटध्वंसत्वत्वाद्यवच्छिन्ननिरूपितानां यावदनुयोगिता-

नामुक्तसम्बन्धेन साध्यसामानाधिकरण्यस्याक्षतत्वात् । घटध्वंसान्यत्वतत्प्रकारकप्रमाविषयत्वाद्यभावश्च स्वाधिकरणघटध्वंसादिरूपोऽसदातनतया लक्षणाघटकः ।

न च यावत्त्वस्यानुयोगिताविशेषणत्वे ऽनुयोगितायां सदातनवृत्तित्वविशेषणमफलम्, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतत्तद्रूपत्वावच्छिन्ननिरूपितध्वंसत्वरूपानुयोगितायां सम्बन्धविशेषावच्छिन्नप्रतियोगिताकत्वस्य निष्प्रमाणकतया सम्बन्धविशेषावच्छिन्नप्रतियोगिताकत्वविशेषणेनैव वारणात् । ध्वंसादिसाधारणसम्बन्धविशेषावच्छिन्नतत्तद्रूपत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववृत्तितया उक्ताव्याप्त्यनवकाशात् । तथा च घटध्वंसान्यत्वाभावमादायैवातिव्याप्तिवारणसम्भव इति वाच्यम् । अभावप्रतियोगितामात्रस्यैव किञ्चिद्धर्मावच्छिन्नत्वनियमवत्सम्बन्धावच्छिन्नत्वनियमः सिद्धान्तसिद्ध इति तद्रूपनिरूपितध्वंसादिरूपानुयोगितामादायाव्याप्तेर्दुर्वारतया यावदनुयोगितानिवेशमतेऽपि सदातनवृत्तित्वस्य अवश्यं निवेशनीयत्वात् इत्यत आह । घटध्वंस इति ।

(दी०) घटध्वंसो ध्वंसत्वादित्यादौ च घटध्वंसत्वादेस्तत्प्रकारकप्रमाविशेष्यत्वादेर्वा भावाभाववृत्तिरतिरिक्तोऽभावस्तादृशो न घटध्वंसत्वादिसमानाधिकरण इति नातिव्याप्तिरित्यपि वदन्ति।

(गा०) भावाभाववृत्तिरित्यतिरिक्तत्वे हेतुगर्भविशेषणम् । तथा चाभाववृत्तिप्रतियोगिकाभावाधिकरणकाभावत्वं नाधिकरणस्वरूपत्वे तन्त्रमपि तु अभावमात्राधिकरणकत्वमेवेति भावः । अधिकरणीभूताभावान्तरादतिरिक्तत्वं व्यवस्थाप्य तदेव साध्यासामानाधिकरण्यप्रयोजकतयोपदर्शयति । तादृश इति ।

यद्यपि घटध्वंसत्वाद्यभावस्य गोत्वाद्यभावरूपत्वेऽपि घटध्वंसान्यत्वविशिष्टाभावत्वाद्यभावस्य गोत्वाभावावृत्तितया गोत्वाभावानात्मकस्य साध्यासमानाधिकरणतयैव नातिव्याप्त्यवकाशस्तथापि समाधिसौकर्येण साध्याभावस्यातिरिक्तत्वं व्यवस्थाप्य तमादायातिव्याप्तिर्वारिता ।

केचित्तु अभावाभावत्वं यन्मते प्रतियोगित्वं तन्मते तज्जलत्वाभावजलत्वाभावान्यतराद्यभावाभावो जलत्वाभावादिरपि, अन्य-

या तस्य सामान्यतस्तत्प्रतियोगित्वानुपपत्तेः। तथा चाभावे भावभिन्नत्वनिवेशोऽपि दर्शिताव्याप्तिर्दुर्वारैवेति अनुयोगिताया-मुभयावृत्तित्वमेव तन्मते विशेषणं प्रक्षिप्य तादृशानुयोगितावद्या-वदभावे साध्यसामानाधिकरण्यं निवेश्यमिति दर्शितविशिष्टाभावो लक्षणघटक इत्यभिप्रायकतया फक्किकामेतां सङ्गमयन्ति।

परे तु नन्वयमभावो ध्वंसत्वादित्यादौ हेतुसमानाधिकरणा-भावप्रतियोगितावच्छेदकं ध्वंसान्यत्वविशिष्टाभावत्वं तदव-च्छिन्नप्रतियोगिताको ध्वंसवृत्तिरभावो ऽभावाधिकरणकाभाववृत्ति-धर्मप्रतियोगिकाभावतयाऽधिकरणीभूतध्वंसरूप इति भाववृत्ति-रप्यभावत्वाभाव एव। तत्र च निरुक्तयावदभावान्तर्गते साध्य-सामानाधिकरण्यविरहादव्याप्तिरिति सदातनत्वमभावविशेषणं प-रित्यज्यानुयोगितायामेव कादाचित्कावृत्तित्वं निवेश्य तादृशानु-योगितावद्यावदभावे सध्यसामानाधिकरण्यं विवक्षणीयम्। उक्त-विशिष्टनिरूपिता च ध्वंससाधारणी एकैवानुयोगितेति नाव्याप्तिः।

वस्तुतस्तु प्रथमाभावे स्वभिन्नहेतुमन्निष्ठत्वमेव प्रवेश्य दर्शि-ताव्याप्तिर्वारणीया उक्तस्यानुयोगिताविशेषस्य निवेशोऽयमभा-वोऽत्यन्ताभावत्वादित्यादौ घटात्यन्ताभावभेदविशिष्टाभावत्वाभा-वमादायोक्तरीत्या ऽव्याप्तेर्दुर्वारत्वात्। एवं च घटध्वंसो ध्वंस-त्वादित्यादावतिव्याप्तिः, हेतुसमानाधिकरणस्याभाववृत्तिधर्माभा-वस्य तदधिकरणस्वरूपत्वेन लक्षणाघटकत्वात्। अभाववृत्तिध-र्माभावस्य च साध्यसमानाधिकरणत्वादित्याशङ्कायां घटध्वंस इ-त्यादिफक्किकामवतारयन्ति।

(चि०) एतदेव यावत्स्वव्यभिचारिव्यभिचारि-साध्यसामानाधिकरण्यमनौपाधिकत्वं गीयते।

यद्वा यावत्स्वसमानाधिकरणात्यन्ताभावाप्रतियो-गिप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वम्। सोपाधौ तु साध्यवन्नि-ष्ठात्यन्ताभावाप्रतियोगिन उपाधेर्योऽत्यन्ताभावस्तेन

समं हेतोः सामानाधिकरण्यम् । उपाधेः साधनाव्यापकत्वात् ।

(दी०) यावदिति स्वं व्यभिचारि येषां तेषां यावतां व्यभिचारिणा साध्येन सामानाधिकरण्यमित्यर्थः ।

( गा० ) यावत्स्वव्यभिचारीत्यादिलक्षणे स्वस्य व्यभिचारीति तत्पुरुषे विपमव्यासे हेतुव्यभिचारिसाध्यादेः साध्याव्यभिचारित्वादव्याप्तिः, साध्यव्यापके व्यभिचारिण्यतिव्याप्तिश्च । व्यापकव्यभिचारिणां यावतां व्याप्यव्यभिचारित्वात् अतो बहुव्रीहिमवलम्बते । स्वमिति । यावन्तः स्वव्यभिचारिणो व्यभिचारिणो यस्येति बहुव्रीहौ धूमाद्यव्यापकमहानसत्वादीनां वह्न्याद्यव्यभिचारितया वह्निमान् धूमादित्यादावव्याप्तिरिति व्यभिचारिव्यभिचारीत्यत्र तत्पुरुषमाश्रयते । तेषामिति । यावत्स्वं स्वस्मिन् साध्ये वा न विशेषणमिति स्फुटयति । यावतामिति । एवं च निरुक्तयावत्साधनाव्यापकाव्यापकसाध्यसामानाधिकरण्यं पर्यवस्यतीति भावः ।

यत्समानाधिकरणेत्यत्र यत्पदस्य साधनपरत्वे यस्येति यत्पदस्य च साध्यपरत्वे साध्यस्य यावत्साधनव्यापकव्याप्यत्वं लभ्यते तच्च विषमव्याप्तसद्धेत्वादावव्याप्तिकवलितमिति प्रथमयत्पदस्य साध्यपरतामाह । यत्पदमिति ।

(दी०) यावदिति । यत्पदं साध्यत्वाभिमतपरम् । सोपाधिवारणाय यावदिति लुप्तसप्तमीकस्य द्वितीयात्यन्ताभावस्य विशेषणम् । तथा च साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वव्यापकस्वसामानाधिकरण्यसामान्याभावकत्वमर्थः । केवलान्वयिस्थले त्वाकाशादेरेव तथाविधोऽभावः प्रसिद्ध इति सम्प्रदायः ।

(गा०) एतेनैवाग्रिमयत्पदस्य साधनपरतालाभाय सा वर्णिता । तदेवानौपाधिकत्वमिति मूले तदेवेत्यनन्तरं तत्साध्यनिरूपितमिति पूरणीयम् । प्रथमाभावादौ यावत्त्वविशेषणे यावदभावप्रतियोग्यप्रसिद्ध्यासम्भवः । यावतां प्रत्येकप्रतियोगित्वनिवेशने ऽपि

साध्यव्यापकयत्किञ्चिद्धर्मव्याप्यत्वमादाय व्यभिचारिण्यतिव्याप्तिरतो द्वितीयाभावे तस्य विशेषणतामाह लुप्तेति । अभावस्यासामानाधिकरण्यनिवेशे केवलान्वयिनि साध्यव्यापकाभावस्य गगनादेः सामानाधिकरण्याप्रसिद्ध्याऽव्याप्तिरतोऽभावे यस्यासामानाधिकरण्यमित्यर्थं स्पष्टयितुं लुप्तसप्तमीकस्येति । अप्रतियोगिप्रतियोगिकस्य यथाश्रुतस्याप्रसिद्ध्यादिग्रस्ततया तस्य प्रतियोगितानवच्छेदकावच्छिन्नप्रतियोगिताकार्थकतां दर्शयन् यावत्पदार्थव्यापकतामन्तर्भाव्य व्याप्तेर्विशिष्टैकार्थरूपतामुपपादयति । तथा चेति । गगनादेर्गगनाद्यभावाभावत्वं स्वयं निराकरिष्यति अतः सम्प्रदाय इति ।

(दी०) केचित्तु तादृशयावदभावशून्यत्वं यदधिकरणताया व्यापकं तत्त्वमर्थः । न च तादृशप्रतियोगितानवच्छेदकवन्तमेव यावत्त्वेन विशिष्य यावत्तादृशाश्रयत्वं यदधिकरणताया व्यापकं तत्त्वमित्यर्थलाभादेव सामञ्जस्ये ऽभावद्वयोपादानमनतिप्रयोजनकमिति वाच्यम् । यावतां तादृशानामिन्धनादीनामेकाधिकरण्यस्याप्रसिद्धेः । न चावच्छेदकांशमपहाय अप्रतियोग्येव यावत्त्वेन विशिष्यताम् । साध्यव्यापकस्यापि रूपान्तरेण साध्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्योपदर्शितत्वादित्याहुः ।

(गा०) तादृशयावदभावशून्यत्वमिति । साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताका यावन्तोऽभावाः प्रत्येकं तच्छून्यत्वमित्यर्थः । तेन धूमवान् वह्नेरित्यादौ सर्वत्र वह्न्याद्यधिकरणे धूमादिव्यापकतावच्छेदकवह्नित्वाद्यवच्छिन्नाभावाभावेन यावत्त्वावच्छिन्नतावद्भावाभावसत्त्वेऽपि न क्षतिः । यावत्तादृशाश्रयत्वमिति । यत्सम्बन्धघटितव्यापकतावच्छेदकं यद्यत् तेन सम्बन्धेन तदाश्रयत्वमित्यर्थः । साध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकाश्रयत्वानां यावत्त्वावच्छिन्ननिरूपितं साध्यतावच्छेदकसम्बन्धेनाश्रयत्वमिति चार्थः । यथा सन्निवेशे ऽवैयर्थ्यादनतिप्रयोजनकमिति । तादृशानाम् । व्यापकतावच्छेदकरूपवताम् । ऐकाधिकरण्याप्रसिद्धेरिति । तथा

च न तावतामेकं प्रति व्यापकत्वप्रसिद्धिरिति । अप्रतियोग्येवेति । तथा च इन्धनादीनां न तथात्व अपि त्वखण्डजलत्वाभावादीनामेव विशेषणताविशेषसम्बन्धेनैव व्यापकत्वस्य विवक्षणात् तेन सम्बन्धेनैव चाश्रयत्वविवक्षया यावत्तादृशाश्रयत्वमेकस्यापीति नाप्रसिद्धिरिति भाव । रूपान्तरेण । द्वित्वादिना । प्रतियोगित्वेनैतदन्वयः । साध्यव्यापकतावच्छेदकावच्छिन्नाभावात् प्रातिस्विकरूपेणोपादाय तदभावत्वेन हेतुव्यापकत्वनिवेशापेक्षया यावद्व्यापकतावच्छेदकधर्मान् विशिष्योपादाय तेन रूपेण व्यापकतानिवेशनमवोचितमिति एतन्मते ऽस्वरसवीज बोध्यम् ।

( चि० ) यद्वा यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः । तथा हि धूमस्य वह्निसम्बन्धित्वे धूमत्वमवच्छेदकम्, धूममात्रस्य वह्निसम्बन्धित्वात् । वह्नेस्तु धूमसम्बन्धे न वह्नित्वमवच्छेदकं धूमासम्बन्धिनि गतत्वात् । न व्यातिप्रसक्तमवच्छेदकम्, संयोगादौ तथात्वादर्शनात् । किं तु वह्न्यार्द्रेन्धनप्रभववह्नित्वं धूमसम्बन्धितावच्छेदकं तादृशं च व्याप्यमेव ।

अथवा यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत्तस्य व्याप्यम् । वह्निसामानाधिकरण्यं हि धूमे धूमत्वेनावच्छिद्यते सोपाधौ तूपाधिना ।

(दी०) अवच्छिन्नं सामानाधिकरण्यं सामानाधिकरण्यावच्छेदकरूपं वा व्याप्तिः । इत्थं च धूमत्वद्रव्यत्वत्वादेर्व्याप्यतावच्छेदकत्वं दण्डत्वादेर्नियतपूर्ववर्तितावच्छेदकधर्मात्मककारणतावच्छेदकत्ववदभेदे ऽपि उपहितानुपहितभेदाद्वा समर्थनीयम् । तत्र आद्यमभिप्रेत्याह । यत्सम्बन्धितेति ।

(गा०) यत्सम्बन्धितेत्यादिलक्षणयोर्भेदं स्फुटीचिकीर्षुः प्रागेव

निरुक्तं तदुभयार्थं दर्शयति । अवच्छिन्नमित्यादिना । अवच्छिन्नम् । तत्तद्धर्मावच्छिन्नम् । साध्यस्य सामानाधिकरण्यं साध्यसामानाधिकरण्यावच्छेदकतत्तद्धर्मवत्त्वं वा तेन रूपेण व्याप्तिः ।

ननु साध्यसामानाधिकरण्यावच्छेदकधर्मस्य व्याप्तित्वे धूमत्वद्रव्यत्वत्वादेर्वह्निसत्तादिव्याप्यतावच्छेदकत्वानुपपत्तिः, आत्माश्रयप्रसङ्गेन स्वस्य स्वानवच्छेदकत्वादित्यत आह । इत्थं चेति । इत्थम् । सामानाधिकरण्यावच्छेदकस्य व्याप्तित्वे । नियतपूर्ववर्तितावच्छेदकधर्मात्मकेति । स्वरूपयोग्यतारूपकारणतायाः पूर्ववर्तिताशून्यदण्डादिव्यक्तिसाधारणतया पूर्ववर्तितानात्मकत्वादिति भावः । अभेदेऽपीति । अन्यूनानतिप्रसक्तस्यैव तत्र तत्तावच्छेदकव्यवहारविषयत्वात् स्वरूपसम्बन्धरूपस्वावच्छेदकत्वस्यैव च स्वस्मिन्ननभ्युपगमादिति व्याप्त्यादिघटकसामानाधिकरण्यादिभागावच्छेदकतामादायैव तादृशव्यवहारसमर्थनादिति वा भावः । अभ्युपेत्य स्वात्मकयथोक्तव्याप्त्यादेरपि स्वरूपसम्बन्धरूपावच्छेदकत्वं स्वस्मिन् सम्भवतीत्याह । उपहितेति । साध्यसामानाधिकरण्यावच्छेदकत्वरूपविशेषणावच्छिन्नत्वतदनवच्छिन्नत्वरूपवैलक्षण्यादेवावच्छेद्यावच्छेदकभाव उपपादनीय इत्यर्थः । एकरूपेणैव स्वस्य स्वावच्छेदकत्वानभ्युपगमाद्विशेषणविशेष्यावच्छेदे स्वस्मिन् स्वरूपतः स्वस्यावच्छेदकत्वे बाधकाभावादिति भावः । आद्यम् । सामानाधिकरण्यव्याप्तिपक्षम् । सेत्यनेनावच्छेदकरूपपरामर्शासम्भवान्न वैपरीत्यमिति ध्येयम् ।

सम्बन्धितापदस्य सम्बन्धसामान्यार्थकत्वे जनकतादिसम्बन्धमादाय वह्नित्वाद्यवच्छिन्नस्य धूमादिव्याप्यतापत्तिरतो विशेषपरत्वाभिप्रायेण व्याचष्टे । सामानाधिकरण्येति ।

(दी०) सा । सम्बन्धिता । सामानाधिकरण्यरूपा, जनकत्वादिव्यावृत्ता । अत्र च विशिष्टसत्तात्वाद्यवच्छिन्नगुणादिसामानाधिकरण्याधिकरणसत्त्वादेः कर्मादौ परामर्शाद् गुणाद्यनुमित्यापत्तेः । साध्यसामानाधिकरण्यविशिष्टहेतुमत्तापरामर्शस्तु पक्षे साध्यनिर्णयात् प्रागसम्भवीत्यनुशयेन द्वितीयम् । अयमा-

लोको धूमो वेत्यादौ विशिष्य सन्देहेऽपि सामान्यतोऽवच्छेदकरूपवत्त्वनिर्णयः सम्भवत्येवेति हृदयम् ।

(गा०) विशेषानुसरणस्य फलं स्वयमेवाह । जनकत्वादीति । व्यावृत्ता । भिन्ना । तथा च तदादाय नातिप्रसङ्ग इति भावः । प्रथमेऽनुपपत्तेः सत्त्वात् तामेव पक्षान्तरानुसरणबीजतया दर्शयति । अत्र चेति । परामर्शात् । गुणकर्मान्यत्वविशिष्टसत्तात्वाद्यवच्छिन्नसामानाधिकरण्यप्रकारेण प्रमारूपादेव ज्ञानात् । न चेष्टापत्तिः शङ्क्या । परामर्शभ्रमं विना भ्रमानुमितेरनुभवविरुद्धत्वात् । एतत्प्रदर्शनायैव परामर्शस्य प्रमात्वसम्पादकं सत्त्वादिहेतौ तादृशव्याप्तिसत्त्वमभिहितम् । सामानाधिकरण्यावच्छेदकरूपस्य व्याप्तितापक्षे च तद्विशिष्टस्य पक्षेऽसत्त्वात्तद्विशिष्टवैशिष्ट्यावगाहिपरामर्शो भ्रम एवेति नातिप्रसङ्ग इति भावः ।

ननु गुणादौ विशिष्टसत्तात्वादिविशिष्टस्येव गुणादिसामानाधिकरण्यविशिष्टस्याप्यसत्त्वात् प्रथमपक्षेऽपि नातिप्रसङ्ग इत्याशङ्कां निरस्यति । साध्येति । असम्भवीति । तथा च सामानाधिकरण्यव्याप्तिपक्षे व्याप्त्युपलक्षितहेतुवैशिष्ट्यस्यैव ज्ञानं कारणं वाच्यम्, गुणादिसामानाधिकरण्योपलक्षितसत्त्वादिवैशिष्ट्यं च कर्मादावपीत्यतिप्रसङ्गो दुर्वार एवेति भावः । न च सामानाधिकरण्यव्याप्तिपक्षे तद्धर्मितावच्छेदकतापन्नतदवच्छेदकतद्धर्मविशिष्टवैशिष्ट्यज्ञानस्य हेतुतयाऽतिप्रसङ्गवारणं सम्भवतीति वाच्यम् । गौरवात् । एतत्कल्पे पक्षवृत्त्यधिकरणतानिरूपकतावच्छेदकावच्छिन्नं सामानाधिकरण्यमिति ज्ञानस्यैव कारणत्वे तु न कोऽपि दोषः ।

ननु साध्यसामानाधिकरण्यावच्छेदकधूमत्वादेर्व्याप्तित्वे यत्र पक्षवृत्तौ धूमत्वालोकत्वयोर्विशिष्य संशयो व्यर्थविशेषणतया साध्यसम्बन्धितानवच्छेदकस्य धूमालोकान्यतरत्वस्यैव व्याप्यत्वावधारणं तत्रानुभवसिद्धाया अनुमितेरनुपपत्तिः । तत्र विशेषणसन्देहेन धूमत्वादिरूपव्याप्तिविशिष्टस्यापि पक्षे सन्दिग्धत्वात् । धर्मिवृत्तौ यस्य विशेषणस्य निश्चयस्तद्विशेषणवत्त्वस्ववृत्तिकत्वरूपतद्विशिष्टाभावव्यावर्तकधर्मस्यापि धर्मिणि निश्चयसम्भवात् विशिष्टसंशयो न सम्भवतीति धर्मिवृत्तौ विशेषणनिश्चयविघटकत-

या तत्र विशेषणसंशयस्य धर्मिणि विशिष्टसंशयनिर्वाहकत्वादित्यत आह । अयमिति । अयम् । पक्षवृत्तिः । इत्यादौ । इत्यादिसंशयस्थले । विशिष्य । धूमत्वादिना । सन्देहेऽपि । सामान्यतः । साध्यसामानाधिकरण्यावच्छेदकत्वरूपसामान्यधर्मपुरस्कारेण । अवच्छेदकरूपवत्त्वनिर्णयः । अवच्छेदकप्रकारकः पक्षे हेतुनिश्चयः । सम्भवत्येवेति । इदं च स्वरूपसम्बन्धरूपावच्छेदकत्वं प्रविष्टमित्यभिप्रायेण । वक्ष्यमाणानतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य स्वत्वघटिततया धूमत्वालोकत्वादिसाधारणसामान्यधर्मस्यासम्भवात् तन्निवेशनासङ्गतेः । तन्मते च धूमालोकान्यतरत्वादेरेवावच्छेदकतया तत्प्रकारकनिश्चयादेवानुमित्युपपत्तिर्द्रष्टव्या ।

अवच्छिन्नसामानाधिकरण्यादेर्व्याप्तित्वेऽपि अतिप्रसङ्गवारणाय सामानाधिकरण्यधर्मितावच्छेदकतापन्नसामानाधिकरण्यावच्छेदकतत्तद्धर्मप्रकारकहेतुमत्तानिश्चयस्य हेतुतयाऽन्यतरत्वादिप्रकारकहेतुमत्तानिश्चयादेवोक्तस्थलेऽनुमितेरुपपाद्यत्वात् ।

न चानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशपक्षे नीलधूमत्वादिवारणाय स्वसमानाधिकरणतादृशधर्मान्तराघटितत्वं यदि निवेश्यते तदा धूमत्वादिघटितधूमालोकान्यतरत्वस्यावच्छेदकत्वासम्भवात् कथं तत्प्रकारकज्ञानादनुमितिरिति वाच्यम् । तन्मतेऽपि धूमत्वालोकत्वान्यतरत्वादिशरीरेऽवच्छेदकताघटकसमवायेन धूमत्वादेरप्रवेशात्तस्यावच्छेदकत्वसम्भवेन तत्प्रकारकपक्षधर्मताज्ञानादेवानुमित्युपपत्तेः ।

(दी०) अत्रावच्छेदकत्वं नान्यूनवृत्तित्वम्, अन्यूनानतिरिक्तवृत्तित्वं वा । वह्न्यादौ साध्ये मेयत्वादावतिप्रसङ्गात्, धूमत्वादावप्रसङ्गाच्च । किं तु अनतिरिक्तवृत्तित्वम् । तच्च यद्यपि न तदभाववदवृत्तित्वम् । गुणवान् सत्त्वादित्यत्र सत्तात्वेऽतिप्रसङ्गात् । न च कर्मादिवृत्तित्वावच्छेदेन गुणसामानाधिकरण्याभाववत्या सत्तायां वर्तमानत्वान्न तथा । तथा सति विशिष्टसत्तात्वे प्रागुक्तदिशा च धूमत्वादावव्याप्तिप्रसङ्गात् ।

( गा० ) अन्यूनवृत्तित्वमित्यादिपक्षयोराद्ये दोषमाह । वह्न्यादाविति । उभयत्र तमाह । धूमत्वादाविति । अत्रापि वह्न्यादौ साध्ये इत्यनुषज्यते । अप्रसङ्गादिति । तस्य वह्न्यादिसामानाधिकरण्यन्यूनवृत्तित्वादिति भावः । सत्तात्वेऽतिप्रसङ्गादिति । सत्तायां गुणसामानाधिकरण्याभावविरहादिति भावः । सामानाधिकरण्यस्याव्याप्यवृत्तितापक्षमालम्ब्य शङ्कते । न चेति । न तथा । न उक्तस्थले सत्तात्वेऽतिप्रसङ्गः । तथा सति । सामानाधिकरण्यस्याव्याप्यवृत्तित्वे सति । प्रागुक्तदिशा । स्वावयवावच्छेदेन धूमादावपि वह्निसामानाधिकरण्याभावसत्त्वेन । अव्याप्तिप्रसङ्गात् । गुणादिवह्न्यादिसामानाधिकरण्यानवच्छेदकत्वप्रसङ्गात् ।

( दी० ) तथापि अतिरिक्ते यद्धर्मविशिष्टहेत्वधिकरणवृत्तित्वं न वर्तते तत्त्वम् । साध्यासमानाधिकरणावृत्तित्वविशिष्टाधिकरणवृत्तित्वसामान्यकत्वम्, स्वविशिष्टाधिकरणावृत्तियावत्साध्यासमानाधिकरणकत्वमिति तु फलितार्थः । सत्तात्वविशिष्टसत्ताधिकरणकर्मादिवृत्तित्वस्य साध्यासमानाधिकरणे कर्मत्वादौ सत्त्वान्नातिप्रसङ्गः । कर्मान्यत्वविशिष्टसत्ताश्रयश्च न कर्मादिरिति नासङ्गः । एवं च मेयत्वादेरपि केवलान्वयिसामानाधिकरण्यावच्छेदकत्वोपपत्तिः ।

( गा० ) अतिरिक्ते । साध्यासमानाधिकरणे । न वर्तते इत्यनेनान्वयः । तथा च यद्धर्मविशिष्टाधिकरणवृत्तित्वं साध्यासमानाधिकरणावृत्तीत्यर्थः । यद्धर्मवत्त्वमुपेक्ष्य यद्धर्मविशिष्टत्वस्य निवेशाद् गुणवद् विशिष्टसत्त्वादित्यादौ नाव्याप्तिरित्यग्रे स्वयमेव वक्ष्यते । सम्बन्धविशेषलाभाय हेतुपदम् । साध्यसमानाधिकरणवृत्तिहेतुसामानाधिकरण्यव्यक्तिविशेषे साध्यासमानाधिकरणावृत्तित्वमादायातिप्रसङ्गवारणाय सामानाधिकरण्यसामान्यमन्तर्भाव्य एतल्लक्षणार्थमेव समासघटितैकवाक्येनाह । साध्यासमानाधिकरणेति ।

अत्रैकवृत्तेरधिकाया निवेशादितो लघुलक्षणान्तरमाह । स्वविशिष्टेति । गुणवत् सत्त्वादित्यत्र सत्तात्वे लक्षणत्रयस्यैवातिप्रस-

प्रसुसरति । सत्तात्वेति । इदं चात्र मेयादित्यादौ घटत्वादिसामानाधिकरण्यशून्ये हेतुतावच्छेदकसम्बन्धेनावृत्तौ मेयत्वादेर्वृत्तया अतिप्रसक्ततया तस्य सामानाधिकरण्यावच्छेदकत्वानुपपत्तिरिति दूषणस्यापि यथोक्तानतिरिक्तवृत्तित्वविवक्षया नावकाश इत्याह। एवं चेति । केवलान्वयीति। हेतुतावच्छेदकसम्बन्धेन किञ्चिद्वस्तुनोऽधिकरणे वर्तमानस्याभावस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताशून्यत्वमेव केवलान्वयित्वं तेन समवायादिना द्रव्यत्वसत्त्वादिसाध्यकस्य संयोगादिना हेतोर्मेयत्वाद्यवच्छिन्नस्य व्याप्यत्वोपपत्तेरपि संग्रहः। उपपत्तिरिति । साध्यासमानाधिकरणमात्रस्यैव मेयत्वादिविशिष्टासमानाधिकरणत्वादिति भावः ।

(दी० ) यत्तु वृत्तिमत्त्वादिकमेव तत्र व्याप्तिः, तद्ग्रहश्च मेयत्वादिनेति । तन्न । व्याप्तिविरहिवृत्तितया गृह्यमाणेन रूपेण व्याप्तिग्रहासम्भवात् । अन्यथा अतिप्रसङ्गात् ।

( गा० ) वृत्तिमत्त्वादिकमिति । वृत्तिमत्त्वं हेतुतावच्छेदकसम्बन्धेन बोध्यम्, केवलस्य हेतुतावच्छेदकसम्बन्धघटितसाध्यसामानाधिकरण्यातिप्रसक्तत्वात् । आदिपदात् संयोगेन मेयत्वाद्यवच्छिन्नहेतुकस्थले द्रव्यत्वस्य परिग्रहः । तत्र व्याप्तिरिति । तथा च मेयत्वादेरतिप्रसक्तत्वं न क्षतिमावहतीति भावः।

ननु धूमवान्वह्निरित्यादिप्रयोगविरहात् पञ्चम्याः प्रकृत्यर्थतावच्छेदकावच्छिन्नं गमकताबोधकत्वं व्युत्पन्नम् । गमकतावच्छेदकं च व्याप्यतावच्छेदकरूपम्, सामानाधिकरण्यावच्छेदकरूपस्य व्याप्तित्वमते तदेव रूपं तथा, अभेदेऽप्यवच्छेद्यावच्छेदकभावसमर्थनात्। व्यापकसामानाधिकरण्यरूपव्याप्तिपक्षे व्यापकतानिरूपकतावच्छेदकम् । एवं चोक्तस्थले मेयत्वादेर्गमकतानवच्छेदकतया मेयादिति हेतुप्रयोगानुपपत्तिरित्यत आह। तद्ग्रहश्चेति । तद्ग्रहः तादृशावच्छेदकवृत्तिमत्त्वादिरूपव्याप्तिग्रहः । मेयत्वादिना । धर्मितावच्छेदकमेयत्वादिप्रकारेण । अनुमितिहेतुरिति शेषः । अयमाशयः । व्याप्यता यदि गमकतात्मकः पञ्चम्यर्थः स्यात्तदा व्याप्यतावच्छेदकत्वमेव गमकतावच्छेदकत्वम्, तदेव च न, तथा सति पञ्चम्यैव

हेतौ व्याप्यताबोधनादुदाहरणाकाङ्क्षानिवृत्तेः । अपि तु साध्यानुमित्यौपयिकव्याप्तिपक्षधर्मताज्ञानविषयता साध्यगमकता पञ्चम्यर्थः । तदवच्छेदकं च रूपं यदवच्छिन्ने धर्मिणि व्याप्त्यादिग्रहः तादृश च रूपं व्यापकसामानाधिकरण्यस्य व्याप्तित्वे व्यापकत्वनिरूपकतावच्छेदकधर्म एव । धूमव्यापकवह्निसमानाधिकरणद्रव्यवानित्यादिज्ञानादनुमित्यनुत्पत्त्या तद्रूपावच्छिन्ने व्यापकसामानाधिकरण्यग्रहस्यैवानुमितिहेतुत्वोपगमात् । साध्यसम्बन्धितावच्छेदकरूपव्याप्तिपक्षे साध्यसम्बन्धितावच्छेदकवत्त्वानित्याकारकनिर्धर्मितावच्छेदककव्याप्तिज्ञानादनुमित्यनुत्पत्त्या मेयत्वाद्यवच्छिन्नधर्मिकतादृशज्ञानस्याप्यनुमित्युत्पादकतया मेयत्वादेरपि वाच्यत्वादिगमकतावच्छेदकत्वमिति । तद्धर्मविशिष्टबोधकपदोत्तरपञ्चम्या च तद्धर्मावच्छिन्ने निरुक्तं गमकत्वं प्रत्याय्यताम्, तद्धर्मावच्छिन्नविषयकव्याप्त्यादिप्रमाधीनानुमितिविधेयत्वरूपं गम्यत्वं वा साध्ये प्रत्याय्यतामित्यन्यदेतत् ।

धर्मितावच्छेदकावच्छेदेन तत्सामानाधिकरण्यमात्रेण वा व्याप्तिधीरनुमितिहेतुः? तत्र न प्रथमः, तथा सति मेयत्वादेर्वाच्यत्वादिगमकतावच्छेदकत्वानुपपत्तिरित्याह । व्याप्तिविरहीति । गृह्यमाणेन रूपेण । गृह्यमाणरूपावच्छेदेन । व्याप्तिग्रहासम्भवादिति । तादृशमेयत्वादिरूपधर्मावच्छेदेन व्याप्तिग्रहस्य प्रमात्मकत्वग्रहासम्भवादित्यर्थः । तथा च विशेषदर्शिनस्तद्रूपेण गमकतावच्छेदकत्वग्रहासम्भवेन प्रमेयादिति हेतुवाक्यादर्थबोधानुपपत्तेरिति भावः । न द्वितीयः । तथा सति वह्नित्वादेरपि धूमादिगमकतावच्छेदकत्वप्रसङ्गात् । सामानाधिकरण्येन धूमादिसम्बन्धितावच्छेदकार्द्रेन्धनप्रभववह्नित्वादिप्रमासम्भवादित्याशयेनाह । अन्यथेति ।

अधिकरणे साध्यस्य सम्बन्धविशेषानिवेशने अयमात्मा आत्ममहाकालान्यतरत्वादित्यादावतिव्याप्तिः । कालस्य कालिकसम्बन्धेन साध्यवत्त्वात् साधनसमानाधिकरणत्वस्य साध्यसामानाधिकरण्यनियतत्वात् । एवं हेतोः सम्बन्धविशेषानिवेशे वह्निमान् धूमादित्यादौ साध्यासमानाधिकरणधूमावयवत्वादेः समवायादिना धूमादिमति वृत्तेरव्याप्तिः । साध्यवति सम्बन्धसामान्येनावृत्तित्वनिवेशे द्रव्यं सत्त्वादित्यादौ वृत्तिमन्मात्रस्यैव साध्यवति काले वृत्तेरवृत्तेश्च हे-

स्वसमानाधिकरणत्वानियमाविरयतः सम्बन्धविशेषं निवेशयति । साध्यतेति ।

( दी० ) साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणे येन येन सम्बन्धेन अवर्तमानत्वं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणेऽपि तेन तेन तथात्वं बोध्यम् ।

( गा० ) नन्वनतिप्रसक्तत्वरूपावच्छेदकत्वविवक्षणे व्यर्थविशेषणघटितनीलधूमत्वादावपि तस्याक्षतत्वात्तदवच्छिन्नस्यापि व्याप्यतया व्याप्यत्वासिद्धिरूपहेत्वाभासविरहेण नीलधूमादिति वाक्यप्रयोक्ता न निगृह्येतेत्यत आह । नीलेति ।

( दी० ) नीलधूमत्वादेर्वारणीयत्वे तु स्वसमानाधिकरणतादृशधर्मान्तराघटितत्वेन विशेषणीयम् । सामानाधिकरण्योपादानाद् धूमप्रागभावत्वादिसङ्ग्रहः । तदघटितत्वं च तद्विषयकप्रतीतिविषयत्वम् ।

( गा० ) वारणीयत्वे त्वित्यनेन तदवारणेऽपि न क्षतिः । तत्र हेत्वाभासविरहेऽपि आधिक्येन निग्रहोपपत्तेरिति हेत्वाभासे वक्ष्यमाणं सूचितम् । स्वेति । स्वम्, अवच्छेदकत्वेनाभिमतम् । यादृशं रूपं विशिष्टमविशिष्टं वा स्वसमानाधिकरणं यत्तादृशं साध्यसम्बन्धितानतिरिक्तवृत्ति धर्मान्तरं तदघटितत्वेनेत्यर्थः । विशेषणीयम् । सामानाधिकरण्यानतिरिक्तवृत्तित्वमिति शेषः । नीलधूमत्वादेर्वह्न्यादिसामानाधिकरण्यानतिप्रसक्तत्वरूपविशेष्यदलघटत्वेऽपि तस्य तथाविधधूमत्वादिघटितत्वाद्विशेषणदलेन तन्निरास इति भावः ।

स्वस्य स्वाविषयकप्रतीतिविषयत्वरूपस्वाघटितत्वात्तत्वाद्धर्मान्तरेति । तदर्थश्च न स्वभिन्नं धूमत्वादेर्नीलधूमत्वाद्यभिन्नत्वात्, किं तु स्वाविषयकप्रतीतिविषयत्व स्वावृत्तिविषयताश्रयत्वपर्यवसितम् । शुद्धधूमत्वपर्याप्तविषयतायाः नीलादिसहितधूमत्वादिपर्याप्तविषयताभिन्नत्वेनादोषात् ।

सामानाधिकरण्यपदप्रयोजनमाह । सामानाधिकरण्येति । धूमप्रागभावत्वादेर्धूमत्वादिरूपसामानाधिकरण्यावच्छेदकधर्मान्तरघटितस्यापि सङ्ग्रह इत्यर्थः । तत्सङ्ग्राह्यत्वं च धर्मिभेदे न वैयर्थ्यमिति

प्रवादानुरोधेन। अवच्छेदकताघटकसम्बन्धेन स्वाधिकरणे तेन सम्बन्धेन वृत्तिः स्वसामानाधिकरण्यम्, तेन धूमत्वधूमप्रागभावत्वयोः स्वाश्रयप्रतियोगिकत्वस्वाश्रयप्रतियोगित्वाभ्यां प्रागभावधूमयोर्वर्तमानत्वेऽपि च क्षतिः। येन सम्बन्धेन यस्य धर्मान्तरस्यावच्छेदकत्वं तेन सम्बन्धेन तदघटितत्वं तेन सम्बन्धेन तत्प्रकारकत्वशून्यप्रतीतौ स्वीयावच्छेदकताघटकसम्बन्धेन प्रकारत्वपर्यवसितं विवक्षणीयम्, तेन संयोगादिना वह्नयादौ साध्ये न तत्सम्बन्धावच्छिन्नवह्नयभाववत्वप्रमाविषयत्वाभावावच्छिन्नस्य तादात्म्येन व्याप्यताऽनिर्वाहः। तादृशाभावादिप्रकारकप्रतीतौ वह्निमत्तत्तादात्म्येन व्याप्यतायां संयोगादिना अवच्छेदकस्य वह्नयादेः संयोगादिना प्रकारकत्वानियमात्।

अथैतादृशविशेषणप्रवेशे वह्नित्वादिरूपसाध्यतावच्छेदकघटितवह्निमदन्यावृत्तित्वाद्यवच्छिन्नस्य वह्नयादिव्याप्यत्वानुपपत्तिः। तत्र चाधिकांशस्य प्रकाशकत्वादवैयर्थ्येन इष्टापत्तेरयोगात्। न च, धर्मान्तरस्य विशेष्यविधया घटकत्वविवक्षा सम्भवति। धूमान्यान्यत्वादेर्व्याप्यतावच्छेदकत्वापत्तेः। सामानाधिकरण्यस्थाने व्यापकत्वं निवेश्यमित्यपि न युज्यते। धूमालोकान्यतरत्वादेर्व्याप्यतावच्छेदकत्वापातात्, तद्घटकधूमत्वादेस्तदव्यापकत्वादिति। मैवम्। स्वघटकसाध्यसम्बन्धितावच्छेदकधर्मान्तरत्वेन यादृशधर्मं प्रति व्यापकता अतादृशत्वस्य तादृशधर्मपर्याप्तविषयतापर्याप्तिपर्यवसितस्य विवक्षया प्रतीकारात्।

घटितत्वं तदविषयकप्रतीत्यविषयत्वरूपं तदभावस्य तादृशप्रतीतिविषयत्वरूपस्य तदभावत्वेन निवेशोऽनघटन्यायादनुचित इत्याशयेनाह। तदघटितत्वमिति।

मिश्रादिमतमाह। स्वरूपसम्बन्धविशेष इति।

(दी०) स्वरूपसम्बन्धविशेष एवावच्छेदकत्वम्। अत एव न ह्यतिप्रसक्तमवच्छेदकमित्यादिकमपि सङ्गच्छते। अन्यथाऽतिप्रसक्ते ऽनतिप्रसक्तत्वस्याप्रसक्तत्वेन तन्निराकरणायोगात्। विरुद्धयोश्च भावाभावयोरधिकरणे एकस्यैकेन सम्बन्धेन वृत्तिर्विरुध्यते, अतस्तत्रावच्छेदकभेदापेक्षा।

(गा०) अन्यथा। अनतिप्रसक्तत्वस्य विवक्षणे। अतिप्रसक्ते। अतिप्रसक्तत्वेनोपस्थिते। अप्रसक्तत्वेन। शङ्कानास्पदत्वेन। निराकरणायोगात्। निराकरणवैयर्थ्यप्रसङ्गात्। सत्तात्वादिर्गुणादिसामानाधिकरण्याव-च्छेदकत्वं निराकुरुते। विरुद्धयोश्चेति। चस्त्वर्थः। भावाभावयोरिति स्वरूपकीर्तनम्। एकस्य। एकरूपावच्छिन्नस्य। वृत्तिर्विरुध्यते इति। तत्सामानाधिकरण्यावच्छेदकं न तद्विरुद्धसामानाधिकरण्यावच्छेदकमिति नियम इति पर्यवसितसमुदायार्थः।

यद्यपि धूमत्वादेर्वह्न्यादिसामानाधिकरण्यावच्छेदकत्वे विरुद्धपर्वतत्वपर्वतत्वाभावादिसामानाधिकरण्यावच्छेदकत्वमवर्जनीयम्, पर्वतत्वादिसामानाधिकरण्यस्य तदभावसामानाधिकरण्यस्य च वह्न्यादिसामानाधिकरण्यरूपत्वादिति दर्शितनियमो न सम्भवति। तथापि तत्सामानाधिकरण्यत्वतद्विरुद्धसामानाधिकरण्यत्वावच्छिन्नयोर्नैकावच्छेद्यत्वमिति नियमोपगमान्न दोषः। वह्न्यादिसामानाधिकरण्यत्वरूपेणैव पर्वतत्वतदभावसामानाधिकरण्यस्य धूमत्वाद्यवच्छेद्यत्वात्, लक्षणे ऽपि साध्यसामानाधिकरण्यत्वावच्छिन्ननिरूपितमवच्छेदकत्वं निविष्टम्। अन्यथा द्रव्यसामानाधिकरण्यत्वादिना धूमादिसामानाधिकरण्यस्य वह्नित्वाद्यवच्छिन्नतया व्यभिचारिण्यतिप्रसङ्गात्। अत उक्तनियमबलेन सत्तात्वादिर्गुणादिसामानाधिकरण्यस्यावच्छिन्नानवच्छेदकत्वासिद्धेव समीहितसिद्धिः। अत इति। तत्र। तत्तद्विरुद्धसामानाधिकरण्ययोः। अवच्छेदकभेदापेक्षा। विभिन्नधर्मावच्छिन्नत्वस्यावश्यकता। सामानाधिकरण्यस्यावच्छिन्नत्वनियमादिति भावः।

(दी०) अत एव व्यभिचारिणि साध्यतदभावसामानाधिकरण्ययोर्विरुद्धयोरुभयाद्यनवच्छेद्यत्वादवच्छेदकात्वनुमन्यन्ते न्यायाचार्याः। सत्तात्वं तु गुणाद्यभावस्येव गुणस्यापि न सामानाधिकरण्यावच्छेदकम्, विरोधात्। अव्याप्यवृत्तेश्च कपिसंयोगादेराधिकरणे वृक्षादौ तदभावस्य संयोगेन च वह्नेरधिकरणे महानसादौ समवायावच्छिन्नप्रतियोगिताकतदभावस्य सत्त्वेनाविरुद्धत्वात्, वह्निमति च संयोगेन वर्तमानस्य

धूमादेर्वह्न्यभाववति स्वावयवे संयोगेनावर्तमानत्वाच्च तद्वृक्षत्वत्वधूमत्वादेर्न साध्यसामानाधिकरण्यावच्छेदकत्वविरोधः ।

( गा० ) अत एव । विरुद्धसामानाधिकरण्ययोर्विभिन्नावच्छेदत्वस्यावश्यकत्वादेव । व्यभिचारिणि । सपक्षविपक्षवृत्तिहेतौ । विरुद्धयोः । असम्भवदेकावच्छेद्यताकयोः । उपपादनाय । अवच्छिन्नत्वनियमनिर्वाहाय । अवच्छेदकौ । यथा क्रमेणावच्छेदककोटिप्रविष्टौ । अनुमन्यन्ते । स्वीकुर्वन्ति । एतावता किमायातमित्यत आह । सत्तात्वं त्विति । विरोधात् । तत्सामानाधिकरण्यावच्छेदकत्वस्यैव तदभावसामानाधिकरण्यावच्छेदकत्वस्यापि प्रसङ्गात्, विनिगमकस्य दुर्लभत्वादित्याशयः । एवं च सत्तात्वं न गुणसामानाधिकरण्यावच्छेदकं तद्विरोधिसामानाधिकरण्यानतिप्रसक्तत्वात् इत्यनुमानेनानवच्छेदकत्वसिद्धिर्द्रष्टव्या, तादृशानुमाने च दर्शितप्रतिबन्दिरेव विपक्षबाधिका । उक्तनियमे भावत्वाभावत्वमेव विवक्ष्यतां किं विरुद्धत्वनिवेशेनेत्याकाङ्क्षायां तत्प्रयोजनमाह । अव्याप्यवृत्त्येति । कपिसंयोगादेरधिकरणे तदभावस्य सत्त्वेनाविरुद्धत्वादेतद्वृक्षत्वत्वादेर्न साध्यसामानाधिकरण्यावच्छेदकत्वविरोध इत्यन्वयः । विरुद्धत्वं तदनधिकरणवृत्तित्वविशिष्टत्वम् । तादृशश्च विरोधः कपिसंयोगाभावादौ कपिसंयोगादेर्गुणादौ, अतस्तादृशविरोधविशिष्टतदभावाधिकरणगुणादिवृत्तित्वयत्यां सत्तायां संयोगसामानाधिकरण्यस्यावच्छेदकं न सत्तात्वं विरोधादिति नातिप्रसङ्गः । अथ वा संयोगतदभावयोरविरोधेऽपि द्रव्यत्वाद्यभावस्य संयोगविरुद्धतया सत्तात्वस्य संयोगसामानाधिकरण्यावच्छेदकत्वे द्रव्यत्वाद्यभावसामानाधिकरण्यावच्छेदकत्वस्यापि प्रसक्त्योक्तविरोधेन तदुभयसामानाधिकरण्यावच्छेदकत्वासम्भवाच्च कस्यापि सामानाधिकरण्यस्यावच्छेदकं तदिति नातिप्रसङ्गः ।

द्रव्ये संयोगाद्यभावस्याव्याप्यवृत्तितया व्याप्यवृत्त्यभावमन्तर्भाव्याव्याप्त्यवारणसम्भवाद्विरोधानवेशस्य प्रयोजनान्तरमाह । संयोगेन चेति । तदभावस्य । वह्न्यभावस्य । सत्त्वेनाविरुद्धत्वाद् धूमत्वादेर्नावच्छेदकत्वविरोध इत्यन्वयः । तत्सम्बन्धेन वह्नेति वृक्षे-

त्वत्सम्बन्धेन तद्वत्त्वविरोध्यधिकरणवृत्तित्वेनैव समं विरोधित्वाद्द्रव्यसमवायिवृत्तिधूमनिष्ठवह्निसंयोगिवृत्तित्वस्य धूमत्वावच्छिन्नत्वाविरोध इत्यर्थः ।

एकेन सम्बन्धेनेत्यस्य प्रयोजनमाह । वह्निमति च संयोगेनेति । संयोगेनावर्तमानत्वात् । विरुद्धस्य संयुक्तत्वस्यासत्त्वात् । तत्र समवेतत्वस्य च विरुद्धत्वादिति शेषः । अत्रापि धूमत्वादेर्न वह्निमत्संयुक्तत्वावच्छेदकत्वविरोध इत्यन्वयः ।

नन्वेवं साध्यानधिकरणवृत्तित्वादिरूपव्यभिचारस्य हेत्वाभासत्वानुपपत्तिर्ग्राह्याभावावगाहित्वेन तज्ज्ञानस्येदृशव्याप्तिज्ञानाविरोधित्वादित्यत आह । व्यभिचारधीरिति ।

( दी० ) व्यभिचारधीरप्येतद्व्याप्तिबुद्धौ विरोधिन्येव । तद्धर्मविशिष्टस्य साध्यानधिकरणवृत्तित्वग्रहे तदवच्छेदेन साध्याधिकरणवृत्तित्वग्रहायोगात् । अस्तु वा एतन्मते हेतुवृत्तिधर्मस्य साध्यसामानाधिकरण्यानवच्छेदकत्वमेव व्यभिचारः । तद्धीरेव साक्षाद्विरोधिनी, व्यभिचारान्तरधीस्तु परम्परयेति ।

( गा० ) व्यभिचारधीः । साध्यानधिकरणवृत्तित्वधीः । ग्रहायोगात् । ग्रहानुत्पत्तेरानुभविकत्वात् । यद्धर्मविशिष्टस्य तदनधिकरणवृत्तित्वं तद्धर्मस्य तद्वद्वृत्तितावच्छेदकत्वाविरुद्धत्वेन विषयविरोधादिति भावः । वस्तुतो विरुद्धस्यापि विरुद्धत्वानवगाहिधियो ऽविरोधित्वादाह । अस्तु वेति । हेतुवृत्तिधर्मस्य । हेतुतावच्छेदकतया ऽभिमतस्य । व्यभिचारः । व्यभिचाररूपहेत्वाभासः । सधर्मितावच्छेदकक पक्षावच्छेदकत्वग्रहो हेतुरित्याशयेनेदम् ।

ननु तथाप्यनुमितिजनकस्थाने व्यभिचारान्तरधियो ऽनुभवसिद्धं विरोधित्वं भज्येतैवेत्यत आह । तद्धीरेवेति । तद्धीः । हेतुवृत्तिधर्मे तादृशानवच्छेदकत्वरूपव्यभिचारधीः । परम्परया । उक्तव्यभिचारधीद्वारा ।

एतन्मते नीलधूमत्वादिवारणाय विशेषणान्तरमपि न प्रवेश्यमित्याह । नीलेति ।

(दी० ) नीलधूमत्वादिकं तु गौरवान्नावच्छेदकम् । एवं च लघुघटत्वादिकमेव सामानाधिकरण्यावच्छेदकं व्याप्तिः, न तु तत्सहचरितकम्बुग्रीवादिमत्त्वादिकम् । तेन च गुरुणाऽपि रूपेण व्याप्तिग्रहे कथायां हेतोरुपन्यासे वाऽनुयोगः प्रकारान्तरव्याप्तिवादिनामपि समानः

( गा० ) गौरवात् । सम्भवदवच्छेदकताकधूमत्वाद्यपेक्षया गुरुशरीरत्वात् । अवच्छेदकम् । वह्न्यादिसामानाधिकरण्यनिरूपितस्वरूपसम्बन्धात्मकावच्छेदकत्ववत् ।

नन्वेवं तादृशधर्मान्तराघटितघटत्वादिसमनियतकम्बुग्रीवादिमत्त्वाद्यवच्छिन्नस्यापि व्याप्यत्वानुपपत्तिरित्यत आह । एव चेति ।

ननु द्रव्यवान् कम्बुग्रीवादिमत इत्यादौ घटत्वादेर्व्याप्तित्वेऽपि सामानाधिकरण्ये इव तदवच्छेदकघटत्वादिरूपव्याप्तावपि गौरवेण कम्बुग्रीवादिमत्त्वादेरनवच्छेदकतया तदवच्छेदेन व्याप्तिग्रहानुपपत्तिः, तथा च सति तस्य गमकतानवच्छेदकतया तद्विशिष्टबोधकपदेन हेतूपन्यासानुपपत्तिश्च । न च तस्यानतिरिक्तवृत्तिवरूपव्याप्त्यवच्छेदकतयैवोभयोपपत्तिरिति वाच्यम् । एवं सति नीलधूमत्वादेरपि अवच्छेदकधूमत्वादिरूपव्याप्त्यनतिरिक्तवृत्तितया नीलधूमत्वाद्यवच्छेदेनापि व्याप्तिग्रहसम्भवान्नीलधूमादित्यपि प्रयुज्येतेत्यत आह । तेन चेति । अनुयोगः । कथन्ता । प्रकारान्तरव्याप्तिवादिनाम् । धूमव्यापकवह्निसमानाधिकरणधूमत्वादिरूपव्याप्तिवादिनाम् । समान इति । तन्मतेऽपि नीलधूमादित्यादिप्रयोगवारणाय स्वरूपसम्बन्धरूपावच्छेदकत्वग्रहविषयताया एव गमकतावच्छेदकतानिर्वाहकत्वस्योपेयत्वादिति भावः । तथा प्रयोगोऽपि नेष्यते एव यदुपस्थितिनियता स्वस्योपस्थितिस्तदपेक्षया गौरवमेव व्याप्यतावच्छेदकत्वविरोधीति समाधानमपि तुल्यमेवेति द्रष्टव्यम् ।

व्यक्तिबाहुल्यकृतगौरवेण रूपत्वरसत्वादीनां द्रव्यत्वादिसाध्यसामानाधिकरण्यावच्छेदकत्वमेव न स्यादित्यत्रापीष्टापत्तिमाह । एवमिति ।

(दी०) एवं द्रव्यं रूपात् रसादित्यादौ सकलगुणसाधारणस्य गुणत्वस्य द्रव्यत्वादिसाधारणस्य गुणासमवेतत्वे सति द्रव्यसमवेतत्वस्य वैकल्यावच्छेदकत्वसम्भवे बहूनां रूपत्वादीनां न तत्त्वम्। विरुद्धधर्मद्वयाधिकरणयोश्च एकस्यैकेन सम्बन्धेन वृत्तौ कथं विरोधः? कथं वा द्रव्यत्वादौ साध्ये हेतुत्वेन विशिष्य रूपादेः प्रयोगः? तथा परामर्शाद्वा अनुमितिरिति विभावनीयम्।

(गा०) द्रव्यादीति। अन्यद्रव्यादीत्यर्थः। आदिपदात् कर्मद्रव्यत्वादिपरिग्रहः। द्रव्यसमवेतेत्यत्र कर्मत्वादिवारणाय द्रव्यपदम्। अत्र कल्पेऽस्वरसं प्रकाशयति। विरुद्धधर्मद्वयेति। कथं विरोध। किंप्रमाणको विरोधः। विशिष्य। रूपत्वादिविशिष्टरोधकपदेन। तथा परामर्शात्। विशिष्य रूपादिमत्त्वपरामर्शात्। अनुमितिरिति। कथमित्यनुषज्यते।

न च प्रकारान्तरव्याप्तिवादिनामप्ययमनुयोगः समान इति प्रागेवोक्तमिति वाच्यम्। व्याप्त्यन्तरवादिमत पक्षधर्मताग्रहप्रकारीभूतधर्मे तदवच्छेदकत्वभानस्यानपेक्षितत्वात्, नीलधूमादिति प्रयोक्तुरधिकेनैव निग्रहात्। एतन्मते तन्मार्गानुसरणे स्वरूपसम्बन्धरूपावच्छेदकत्वस्य लघुत्वेऽपि सविवादतया निवेशनानौचित्यात्।

न च कारणतादेरिवाऽऽधेयत्वादेरपि स्वरूपसम्बन्धरूपमवच्छेदकत्वं प्रतीतिसिद्धतया दुरपह्नवमिति वाच्यम्। वह्निमान् धूमादिति प्रतीत्या धूमत्वे वह्निसामानाधिकरण्यावच्छेदकत्वावगाहनवत् धूमवति वह्निरिति प्रतीत्यातिप्रसक्तेऽपि वह्नित्वे धूमसामानाधिकरण्यावच्छेदकत्वभानस्याविशेषेण सिद्धेरित्यभिप्रायः।

सार्वभौममतमाह। अपरेत्विति।

(दी०) अपरे तु यद्धर्मविशिष्टहेत्वधिकरणत्वं साध्याधिकरणताया अवच्छेदकं स धर्मो व्याप्तिः। अन्यस्तु धूमस्य धूमवत्त्वः, धूमत्वम्, धूमवत्त्वं वह्नेस्तु वह्निमतस्त्वित्यादिप्रकारेण

व्याख्येयः। अत्र चावच्छेदकत्वं न स्वरूपसम्बन्धविशेषः। विरुद्धदिक्कालावच्छिन्नवृत्तिकस्य न्यूनदेशकालवृत्तिकादेश्चाधिकरणतायां तदसम्भवात्, तुल्यवृत्तिकधर्मद्वयाधिकरणत्वयोर्मिथोऽवच्छेद्यावच्छेदकभावस्य च नियन्तुमशक्यत्वात्। नाप्यन्यूनवृत्तिकत्वम्। न्यूनवृत्तिकधूमादेरव्याप्यतापत्तेः। किं त्वनतिरिक्तवृत्तित्वम्, स्वान्यूनवृत्तितरत्वमिति यावत्। अतो न केवलान्वयिन्यव्याप्तिः। अत्र च यदन्यूनवृत्ति साध्यं तत्त्वं स्वव्यापकसाध्यसम्बन्धित्वपर्यवसन्नमपेक्ष्य गौरवं परमवशिष्यते। तच्च ग्रन्थकार एवाग्रे विवेचयिष्यते इत्याहुः।

(गा०) यद्धर्मविशिष्टेति। गुणवत् सत्त्वादित्यादौ सत्तात्वादिविशिष्टसत्ताद्यधिकरणत्वं गुणादावतिप्रसक्तत्वेन न साध्याधिकरणतावच्छेदकमिति नातिप्रसङ्ग इति। एतत्कल्पे झटितिस्फूर्तिकं धूमस्य वह्निसम्बन्ध इत्यादिमूलविरोधमवच्छेदकत्वमनिरुच्यैवोद्धरति। ग्रन्थस्त्विति। विरुद्धेति। एकस्मिन्नेव गृहादौ प्राचीप्रतीच्यवच्छेदेन वर्तमानस्य व्यक्तिद्वयस्य एकस्मिन्नेव घटादौ द्वित्वस्योत्पत्तिक्षणावच्छिन्नध्वंसतत्प्रागभावादेश्च एकस्मिन् साध्ये हेतुभूतस्यापरस्येत्यर्थः। न्यूनदेशकालेति। वन्ह्यादौ साध्ये धूमादेरित्यर्थः। तदसम्भवादिति। तादृशावच्छेदकत्वासम्भवात्। तत्र तदभावसत्त्वादिति भावः। तुल्यवृत्तिकेति। तद्रूपतद्रसादीत्यर्थः। नियन्तुमशक्यत्वादिति। तथा च विनिगमनाविरहेण द्वयोरेव परस्परावच्छेदकत्वेन अन्योन्याश्रयादुभयोरेवानवच्छेदकत्वमिति भावः। एवं च लक्षणेऽसम्भव इति द्रष्टव्यम्। केवलान्वयिसाध्यक साध्याधिकरणताशून्यावृत्तित्वरूपतदनतिरिक्तवृत्तित्वाप्रसिद्ध्या तत्सङ्ग्रहायाह। स्वान्यूनवृत्तीति। स्वव्यापकसाध्याधिकरणताकत्वमित्यर्थः। नन्वप्रामाणिकप्रयोजनकाधिकरणताद्वयप्रवेशेन गौरवम्, तत्परित्यागे च प्राथमिकसिद्धान्तलक्षणाभेद इत्यत आह। अत्र चेति। अग्रे। उक्तव्याप्तीत्यादौ। अत्रोद्धरत्वमस्वरसबीजम्।

(दी०) उपाधिनेति । विशेषणतामापन्नेनोपाध्यनुप्रवेशेनेति यावत् । वह्न्यार्द्रेन्धनप्रभववह्नित्वेन रासभार्द्रेन्धनादौ च तथाविधवह्निविशिष्टत्वेन धूमसम्बन्धेऽवच्छिद्यमाने तथाविधवह्नेरप्यनुप्रवेशात् । रासभत्वादिकं तु निविशते न वेत्यन्यदेतत् ।

(गा०) ननु सोपाधिहेतावनुगतेन उपाधिना तन्निष्ठसाध्यसम्बन्धिताया अवच्छेदासम्भवादुपाधिनेत्यसङ्गतमत आह । विशेषणतेति । अवच्छेदकविशेषणतापन्नेनेत्यर्थः । तथा चावच्छेदकविशेषणतामापन्नीभूयावच्छेदकत्वे एवावच्छेद्यसामानाधिकरण्यं तन्त्रमिति उपाधिवैशिष्ट्यावच्छिन्नसाध्यतावच्छेदकादिना साध्यसम्बन्धेऽवच्छिद्यमाने ऽवच्छेदकविशेषणकोटिप्रविष्टतया साधनाव्यापकस्याप्युपाधेरवच्छेदकत्वं दुरपवादमिति भावः ।

ननु धूमवान् वह्नेरित्यादावार्द्रेन्धनप्रभववह्नित्वं सामानाधिकरण्यावच्छेदकं तथार्द्रेन्धनप्रभवत्वविशिष्टवह्नित्वं तत्र च वैशिष्ट्यघटकतयार्द्रेन्धनप्रभववह्नेः प्रवेशो न तु विशेषणतयेत्यत आह । उपाध्यनुप्रवेशेनेति । उपाधिघटितधर्मेणेत्यर्थः । विशेषणवत् सम्बन्धस्यापि घटकत्वान्न दोष इति भावः । सम्बन्धविधया विशेषणविधया च घटकत्वं स्थलभेदेन दर्शयति । वह्न्याविति । ननु वह्निहेतुके यथा साधनतावच्छेदकस्यावच्छेदकघटकत्वं न तथा रासभार्द्रेन्धनहेतुके इत्यत आह । रासभत्वादीति । अन्यदेतदिति । तदनिवेशेऽप्युपाध्यनुप्रवेशस्याक्षतत्वात् उपाध्यनुप्रवेशेन साधनतावच्छेदकस्यावच्छेदकताया अविवक्षणादिति भावः ।

सोपाधौ तु उपाधिनेत्यस्यैवकारपूरणेन नियमपरतया केषांचिद्व्याख्यानं नियमासम्भवेन दूषयति । अत्र चेति ।

(दी०) अत्र चेदं स्नेहवत् निःस्नेहं वा स्पर्शादित्यत्र विनाप्युपाधिप्रवेशं शीतत्वेन शीतान्यत्वेन वा साध्यासमानाधिकरणतया साधनव्यापकतया वा स्वयमनुपाधिना केवलेन विशेषणीभूय वा शीतान्यस्पर्शत्वेन चोपाधिना स्वत एव स्पर्शे साध्यसम्बन्धोऽवच्छिद्यते इत्युपाधिनैवेति नियमे न तात्पर्यम् ।

परं तु शुद्धस्य साधनतावच्छेदकस्यानवच्छेदकतामात्रे ।

(गा०) नियमे न तात्पर्यमित्यग्रिमेणान्वयः । स्नेहवत् स्पर्शादित्यत्र विनाप्युपाधिप्रवेशनं साध्यासमानाधिकरणतया स्वयमनुपाधिना शीतत्वेन केवलेन स्पर्शे साध्यसम्बन्धोऽवच्छिद्यते इत्येकोऽन्वयः । सर्वत्र शीतपदं शीतस्पर्शपरम् । केवलेन । किञ्चिदवच्छेदकविशेषणतानापन्नेन । एतेन उपाधिपदस्योपाधिघटितपरत्वलभ्ये सोपाधिनिष्ठसाध्यसम्बन्धितायां उपाधिघटितधर्म एव स्वतोऽवच्छेदक इति नियमे तस्य पदस्य यथाश्रुतार्थपरत्वलभ्ये तादृशसाध्यसम्बन्धे ऽनुपाधिरेव स्वतोऽवच्छेदक इति नियमे च व्यभिचारो दर्शितः । अवच्छिद्यते इत्यस्य विशेषणतयाऽवच्छेदकत्वपरतालभ्ये उपाधिभिन्नस्य तदघटितस्य च तादृशावच्छेदकत्वाभावनियमे व्यभिचारं दर्शयति । निःस्नेहमित्यादिना । निःस्नेहं स्पर्शादित्यत्र विनाप्युपाधिप्रवेशं साधनव्यापकतया स्वयमनुपाधिना शीतान्यत्वेन विशेषणीभूय स्पर्शे साध्यसम्बन्धोऽवच्छिद्यते इत्यन्वयः । विशेषणीभूय । अवच्छेदकीभूते स्पर्शत्वे सामानाधिकरण्यसम्बन्धेन विशेषणीभूय । व्यभिचारपर्यादृशनियमे प्रकृतानुपयोगोऽपि बोध्यः । विशेषणतापन्नेनैवेति पूरणलभ्ये उपाधेः स्वतोऽनवच्छेदकत्वनियमे व्यभिचारं दर्शयति । शीतान्यस्पर्शत्वेन चेति । अस्य च शुद्धनिःस्नेहत्वाव्यापकत्वेऽपि पक्षधर्मजलोष्णस्पर्शान्यतरत्वावच्छिन्नसाध्यव्यापकतयोपाधित्वम् । अत्रापि नियमे प्रकृतानुपयोगो द्रष्टव्यः ।

ननु नियमस्यानभिप्रेतत्वे प्रकृतानुपयोगितेत्याशङ्कां परिहरति । परं त्विति । अनवच्छेदकतामात्रे इति । वह्न्यादिपदस्य साध्यादिसामान्यपरतया पूर्वोक्तस्य साधनतावच्छेदके साध्यसम्बन्धितावच्छेदकत्वस्य सोपाधौ तुकारेण व्यवच्छेदादिति भावः ।

उपाधिपदस्य साधनतावच्छेदकातिरिक्तपरतया तुकारस्य चैवकारार्थतया उपाधिनैवेति नियमपरत्वमपि सम्भवतीत्यपि केचित् ।

इति अनुमानगादाधर्यां विशेषव्याप्तिप्रकरणम् ॥

७८

## अत एवचतुष्टयप्रकरणम् ।

(चि०) अत एव साधनतावच्छेदकाभिन्नेन येन साधनताभिमते साध्यसम्बन्धोऽवच्छिद्यते स एव, तत्र साधने विशेषणमुपाधिरिति वदन्ति ।

(दी०) यत एव सोपाधौ साधनतावच्छेदकातिरिक्तं नियतमवच्छेदकं अत एव तद्विशेषस्तत्रोपाधिरिति वदन्तीत्याह । अत एवेत्यादि ।

(गा०) सोपाधौ साधनतावच्छेदकस्यानवच्छेदकत्वोक्तेरर्थतः साधनतावच्छेदकातिरिक्तस्य नियमतोऽवच्छेदकत्वं लभ्यते इति तदुपष्टम्भेनात एवेत्यादिकं व्याचष्टे । यत एवेति ।

तद्विशेषः । साधनतावच्छेदकातिरिक्तविशेषणीभूतसाध्यसम्बन्धितावच्छेदकधर्मः । उपाधिरित्यस्य नियमेनेत्यादिः । साधनतावच्छेदकातिरिक्तसाध्यसम्बन्धितावच्छेदकस्य सोपाधावनियतत्वे यत्र न तत्सत्वं तत्रोपाधेः साधनतावच्छेदकातिरिक्तसाध्यसम्बन्धितावच्छेदकविशेषत्वानियमभङ्गेनोपष्टम्भसङ्गतेः । वदन्तीत्यस्य प्राभाकरा इत्यादिः ।

यद्यप्युपाधिलक्षणघटकं साध्यसम्बन्धितावच्छेदकत्वमन्यूनवृत्तित्वरूपं साध्यविशिष्टसाधनव्यापकत्वपर्यवसितमनुपदं निर्वक्ष्यते, साधनतावच्छेदकस्यानतिरिक्तवृत्तित्वरूपं स्वरूपसम्बन्धात्मकं वाऽवच्छेदकत्वमेव च सोपाधौ तूपाधिनेति ग्रन्थलभ्यम्, तादृशावच्छेदकताया एवोक्तव्याप्तिघटकतया साधनतावच्छेदके प्रतिक्षेपात् । तथा च एतादृशव्याप्तिघटकावच्छेदकताश्रयसाधनतावच्छेदकातिरिक्तधर्मसत्त्वानियमेऽपि उक्तान्यूनवृत्तित्वरूपसाध्यसम्बन्धितावच्छेदकत्वनियमस्योपाधेः सम्भवेनोपष्टम्भासङ्गतिः । तथापि यत एव सर्वत्र सोपाधौ साधनतावच्छेदकाति-

दिकं नियतमवच्छेदकं साधनतावच्छेदकं नावच्छेदकं, साध्याभावविशिष्टसाधनवृत्तीति यावत्, अत एव तद्विशेष्यविशेषणीभूतसाध्यसम्बन्धितावच्छेदकधर्म एव उपाधिरिति प्राभाकरोक्तिः सङ्गच्छते। क्वचित्सोपाधौ साधनतावच्छेदकस्य साध्याभावविशिष्टावृत्तित्वे उपाधेः साध्याभावविशिष्टसाधनवदवृत्तित्वरूपनिर्वक्ष्यमाणविशेषणत्वनियमभङ्गेन तदसङ्गतिप्रसङ्गादित्यभिप्रायायासङ्गतिः।

उपाधेः प्रायशः साधनावृत्तितया तन्निष्ठसाध्यसम्बन्धितायाम् आश्रयतासम्बन्धेन नावच्छेदकत्वसम्भव इत्यत आह। अत्रावच्छेदकत्वमिति।

(दी०) अत्रावच्छेदकत्वं सामानाधिकरण्येन, तत्त्वञ्चान्यूनवृत्तित्वम्, व्यापकत्वमिति यावत्। तच्चाधिकरणान्तर्भावेण। तेन साध्यविशिष्टसाधनतावच्छेदकावच्छिन्नसाधनवत्त्वव्यापकाधिकरणताकत्वं पर्यवस्यति। निरुक्तविशिष्टसाधनव्यापकत्वमिति तु निष्कर्षः। इत्थं च सत्तादेकव्यक्तिकहेतुनिष्ठद्रव्यत्वादिसामानाधिकरण्यव्यापकसामानाधिकरण्यप्रतियोगिनि घटत्वादौ नातिप्रसङ्गः, न वा द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ द्रव्यत्वविशिष्टसत्ताद्यव्यापके स्पर्शवत्त्वादावप्रसङ्गः।

(गा०) अन्यूनवृत्तित्वघटकसामानाधिकरण्यांशं परित्यज्य निष्कृष्टमर्थमाह। व्यापकत्वमिति। सामानाधिकरण्यसम्बन्धस्य व्यापकताघटकत्वविरहे व्यापकीभूतसामानाधिकरण्यप्रतियोगित्वमेव विवक्षणीयम्। द्रव्यं सत्त्वादित्यादौ घटत्वादावतिव्याप्तिवारणायाह। तच्चेति। अधिकरणान्तर्भावेणेति। यत्र यत्राधिकरणे हेतोः साध्यसामानाधिकरण्यं तत्र यत्सामानाधिकरण्यं तत्त्वरूपमित्यर्थः। एतावता सामानाधिकरण्यनिरूपकाधिकरणव्याप्तिरेव पर्यवसितेत्याशयेनाह। तेनेति। साध्येति। साध्यतावच्छेदकावच्छिन्नेत्यर्थः। व्याप्यदिशि साधनप्रवेशो व्यापकदिशि वैयर्थ्येन न तस्य प्रवेशनम्। उभयदिश्यनतिप्रयोजकतया अधिकरणतांशमपि परित्यजति। निरुक्तेति।

साध्यतावच्छेदकावच्छिन्नविशिष्टेत्यर्थः । विशिष्टेति । साधनतावच्छेदकविशिष्टेत्यर्थः । साधनतावच्छेदकविशिष्टत्वनिवेशप्रयोजनमाह । न वेति । गुणाद्यन्यत्वविशिष्टसत्तावान् जातेरित्यादौ शुद्धसत्ताविशिष्टजात्यव्यापकद्रव्यत्वादेः सङ्ग्रहाय साध्यतावच्छेदकविशिष्टत्वनिवेशनम् ।

विशेषणत्वनिवेशप्रयोजनमाह । निःस्नेहमिति ।

( दी० ) निःस्नेहं स्पर्शाद् द्रव्यं सत्त्वादित्यादौ शीतस्पर्शान्यत्वरूपान्यत्वादेर्वारणाय तत्रेत्यादि । तत्र । साध्यविशिष्टे साधने । विशेषणम् । साध्याभावविशिष्टात् साधनात् सामानाधिकरण्येन व्यावर्तकम्, साध्याभावविशिष्टनिरुक्तसाधनवद्वृत्तीति यावत् ।

( गा० ) यत्किञ्चित्साधनवद्वृत्तित्वं निवेश्यापि प्रथमे शीतस्पर्शान्यत्ववारणसम्भवाद्विशेषणघटकसाधनवदंशे साध्याभावविशिष्टत्वविशेषणस्य वक्ष्यमाणस्य व्यावृत्तिमाह । द्रव्यमिति । द्रव्यं सत्त्वादित्यत्र रूपान्यत्वं विरोधाभञ्जकत्वान्न गुरुमते उपाधिरिति भावः । तत्रेत्यस्य व्याख्या साध्यविशिष्टे साधने इति । तादृशसाधनविशेषणत्वसमुदितं निर्वक्ति । साध्याभावविशिष्टेत्यादि । व्यावर्तकत्वं भेदानुमितियोग्यत्वम् । योग्यता च प्रकृते व्याप्तिरेव न तु पक्षधर्मताया अपि प्रवेशः, साध्यविशिष्टसाधननिष्ठसामानाधिकरण्याप्रतियोगिनः साधनानिष्ठसाध्यसम्बन्धितावच्छेदकत्वविरहेणैवानतिप्रसङ्गेन तादृशसाधनरूपपक्षस्यैव समुदितार्थे निवेशात् ।

अत्र यथाश्रुते एकव्यक्तिसाधनके साध्याभावविशिष्टस्यापि साधनस्य साध्यवत्युपाधिसमानाधिकरणतया सामानाधिकरण्यसम्बन्धेन नोपाधेः साध्याभावविशिष्टसाधनभेदव्याप्यत्वमिति वक्ष्यमाणानुपपत्तेर्निष्कृष्टमर्थमाह । साध्याभावविशिष्टनिरुक्तसाधनेति ।

न च, अयोगोलकादावप्यार्द्रेन्धनप्रभववह्न्यादेः कालिकादिसम्बन्धेन वृत्तेरुपाधितावच्छेदकसम्बन्धेनावृत्तित्वं विवक्षणीयम् । तथा च जातिमान् मेयत्वादित्यादौ सत्ताद्युपाधावव्याप्तिः, सामान्यादौ समवायेन वृत्तेरप्रसिद्धेः । एवं विशिष्टस्यानतिरिक्ततया

द्रव्यं जातेरित्यादौ गुणकर्मान्यत्वविशिष्टसत्ताद्युपाधौ गुणादिवृत्तित्वाद्व्याप्तेरिति वाच्यम् । साध्याभावविशिष्टनिरुक्तसाधनव्यापकाभावप्रतियोगितावच्छेदकरूपवत्त्वस्य विवक्षितत्वात् ।

(दी०) एवं च द्रव्यं सत्त्वादित्यत्र सत्तायाः अभेदे ऽपि गुणकर्मान्यत्वे नाव्याप्तिः । नापि द्रव्यं कर्मान्यत्वे सति सत्त्वादित्यत्र गुणान्यत्वादौ । इत्थं च साधनतावच्छेदकस्यानवच्छेदकत्वद्योतनाय परं तद्भिन्नत्वमुक्तम्, न तु विवक्षितमेव तत्, वैयर्थ्यात् । इदं दधि जन्यं वा दध्न इत्यादौ दधित्वाद्यव्याप्तेश्च ।

(गा०) एवं च । इदानीमपर्यवसितार्थविवक्षणे च । साधनतावच्छेदकविशिष्टार्थकनिरुक्तपदव्यावृत्तिमाह । नापीति । इत्थं च । विशेषणपदार्थस्य साध्याभावविशिष्टसाधनघटितत्वे च । परम् । केवलम् । विवक्षितम्, उपाधिलक्षणे । वैयर्थ्यादिति । साध्यविशिष्टहेतुव्यापकस्य सद्धेतावनुपाधित्वस्य तत्र साध्याभावविशिष्टसाधनाप्रसिद्ध्या विशेषणत्वासम्भवेनैव वारणादिति भावः । विवक्षायां विरुद्धफलकत्वमपि दर्शयति । इदमिति । साध्यं च नोपाधिरिति प्रवादेन वाच्यसाध्यके तस्यानुपाधित्वोपगमसम्भवात् जन्यत्वसाध्यकानुसरणम्, तत्र च साधनावच्छिन्नसाध्यव्यापकतया दधित्वस्योपाधित्वं दध्नो हेतुता समवायेनेति द्व्यणुकारम्भकपरमाणौ व्यभिचारो बोध्यः ।

भिन्नान्तं सार्थकयितुं कल्पान्तरमाह । यद्वेति ।

(दी०) यद्वा प्रकृतसाधनतावच्छेदकानवच्छेद्यप्रकृतसाधनानिष्ठसाध्यसम्बन्धितावच्छेदकत्वं पूर्वदलार्थः । अनवच्छेदकत्वं च तस्य साध्याभावविशिष्टसाधनवृत्तितया तद्विशिष्टसाधनस्य साध्याभाववदवृत्तित्वेन साध्याभाववत्तन्निष्ठविशिष्टसाधनवत्त्वेनेति यावत् ।

(गा०) स्वातन्त्र्येण साध्यसम्बन्धितावच्छेदकार्थकस्य भिन्नेत्यन्तस्याद्यधारणपरतया साध्यसम्बन्धितायां ...

कानवच्छेद्यत्वलाभः। तद्विवक्षणं च सद्धेतौ साध्यसामान्यादेर्वारणाय, निर्वक्ष्यमाणविशेषणत्वस्य तत्रापि सत्त्वादिति भावः। प्रमेयमात्रस्य साधनतावच्छेदकत्वे तदनवच्छेद्यत्वाप्रसिद्ध्याऽव्याप्तेर्वक्ष्यमाणत्वात् साधननिष्ठसाध्यसम्बन्धितावच्छेदकत्वदलप्रविष्टसाधनतावच्छेदके साध्यसम्बन्धितानवच्छेदकत्वस्यैव निवेशनीयतया तस्य च स्वरूपसम्बन्धरूपतदवच्छेदकत्वाभावरूपत्वे गुरुधर्मावच्छिन्नहेतुकस्थले अतिप्रसङ्गस्य वक्ष्यमाणत्वात् तच्छून्यवृत्तित्वरूपत्वे द्रव्य सत्त्वादित्याद्येकव्यक्तिहेतुकस्थलीयोपाध्यव्यापनादन्यादृशं तन्निर्वक्ति। अनवच्छेदकत्वं चेति। तस्य। साधनतावच्छेदकस्य। साधनवृत्तितयेत्यादौ तृतीया अभेदे।

अत्र कल्पे गुणवद् गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ सत्तादेरभेदेन विशिष्टसत्तात्वादेः साध्याभावविशिष्टसाधनवृत्तितया द्रव्यत्वादावतिव्याप्तिरतः कल्पान्तरमाह। तद्विशिष्टेति। साधनतावच्छेदकविशिष्टसाधनस्येत्यर्थः। विशिष्टस्यानतिरेके विशेष्यस्य साध्याभाववद्वृत्तित्वे विशिष्टस्य न तथात्वमिति न शक्यते वक्तुमित्याशङ्कया निष्कृष्टमर्थमाह। साध्याभाववत इति। स्वविशिष्टसाधनाधिकरणसाध्याभाववत्कत्वेनेत्यर्थः। विशिष्टनिरूपितविलक्षणाधिकरणताया निवेशान्नोक्तदोषः। साधनतावच्छेदकसम्बन्धनिवेशसूचनाय साधनपदम्।

(दी०) एतेन धूमवान् मेयवत इत्यादौ मेयानवच्छेद्यसाध्यसम्बन्धाप्रसिद्धिः। गुणवद् गुणकर्मान्यत्वे सति जातिमत्त्वादित्यादौ जातित्वघटकानित्यत्वादेर्वैयर्थ्येन विशिष्टस्यानवच्छेदकतया गुणकर्मान्यत्वादेरुपाधितापत्तिश्चेति निरस्तम्। अवच्छेदकत्वं च सामानाधिकरण्येन। तथा च साध्यविशिष्टस्य साध्यसम्बन्धितानवच्छेदकसाधनतावच्छेदकावच्छिन्नसाधनस्य व्यापकत्वमर्थः पर्यवस्यति।

(गा०) जातित्वघटकेति। यद्यपि गुणकर्मान्यत्ववैशिष्ट्यमात्रस्यैवावच्छेदकत्वसम्भवेन समुदितस्य जातित्वस्यैव वैयर्थ्यम्। तथापि तद्घटकसमवेतत्वस्य वैशिष्ट्यघटकतयैव निवे-

शाम्रोत्याद्विशिष्य नित्यत्वादेर्वैयर्थ्याभिधानम् । अवच्छिद्यते इत्यत्रावच्छेदकत्वमेतत्कल्पेऽपि पूर्वनिरुक्तमेव ग्राह्यमित्याह । अवच्छेदकत्वं चेति । समुदितनिष्कृष्टार्थमाह । तथा चेति । साधनतावच्छेदकेऽनवच्छेदकत्वनिवेशसार्थक्याय विशेषणत्वमन्यथा व्यास्यस्यन् तद्विशेषणस्य पूर्वोक्तमेव प्रयोजनमाह । उपदर्शितेति ।

( दी० ) उपदर्शितशीतस्पर्शान्यत्वादिवारणाय तत्रेत्यादि । तत्र । साधनतावच्छेदकविशिष्टे साधने । विशेषणम् । साध्यशून्याद्यावृत्त्यौपयिकम् । यत्सामानाधिकरण्यविशिष्टप्रकृतसाधनवत्त्वं साध्याभाववति न वर्तते इति यावत् । साध्याभावविशिष्टप्रकृतसाधनाधिकरणसामान्यात् साध्यविशिष्टप्रकृतसाधनाधिकरणसामान्यस्य व्यावर्तकमिति समुदायार्थनिष्कर्ष इत्याहुः ।

( गा० ) द्रव्यं कर्मान्यत्वे सति सत्त्वादित्यादौ गुणान्यत्वादिसङ्ग्रहाय साधनतावच्छेदकविशिष्टेति । साध्यशून्याद्यावृत्त्यौपयिकत्वम्, साध्यशून्यावृत्तित्वानुमापकसामानाधिकरण्यप्रतियोगित्वम् । एकव्यक्तिकव्यभिचारिहेतौ साध्यशून्यावृत्तित्वस्य बाधेनानुमेयत्वासम्भवात् तत्रत्योपाधावव्याप्तिमाशङ्क्य निष्कृष्टार्थमाह । यदिति । प्रकृतसाधनवत्त्वम् । साधनत्वावच्छेदकविशिष्टसाधनाधिकरणत्वसामान्यम् । तेन शीतस्पर्शान्यत्वादिसामानाधिकरण्यविशिष्टस्पर्शत्वावच्छिन्नशीतस्पर्शादिनिरूपितयत्किञ्चिदधिकरणतायाः निःस्नेहत्वशून्यजलाद्यवृत्तित्वेऽपि नोकस्थलेऽतिप्रसङ्गः । लाघवाय वृत्त्ययनिष्कृष्टार्थमाह । साध्याभावेति । साध्याभाववत्प्रकृतसाधनाधिकरणसामान्यभेदव्याप्यत्वे सति साध्यवत्प्रकृतसाधनाधिकरणसामान्यवृत्तित्वमित्यर्थः । तादृशाधिकरणभेदव्याप्यत्वं च तादृशाधिकरणावृत्तित्वं तदावृत्तिः स्फुटैव ।

विरोधभञ्जनाक्षमदर्शितशीतस्पर्शान्यत्वव्यावृत्तमेवावच्छेदकत्वमवच्छिद्यते इत्यनेन विवक्षितम् । विशेषणपदोपादानं तु सामानाधिकरण्यप्रत्यासत्त्याऽवच्छेदकपरतालाभमात्रफलकमिति सार्वभौममतमुपन्यस्यति । केचित्त्विति

(दी०) केचित्तु विशेषणं सामानाधिकरण्यम् । तथा च सामानाधिकरण्यप्रत्यासत्त्या येनावच्छिद्यते अवच्छेदकीभूतसामानाधिकरण्यप्रतियोगीति यावत् । अवच्छेदकत्वं चेदमन्यूनानतिरिक्तवृत्तित्वम् । गुरोरप्युपाधिसामानाधिकरण्यस्याक्षतमेव ।

(गा०) निर्वाच्यावच्छेदकत्वघटकमन्यूनवृत्तित्वं व्यापकत्वपर्यवसितम् । तत्र यदि सामानाधिकरण्यस्य वृत्त्यनियामकतया न व्यापकताघटकत्वं तदा तेन सम्बन्धेनावच्छेदकत्वमसम्भवीत्याशयेनाह । अवच्छेदकीभूतेति । शीतस्पर्शान्यत्वादिसामानाधिकरण्यस्यापि हेतुनिष्ठसाध्यसामानाधिकरण्यान्यूनवृत्तितया तत्रातिप्रसङ्गवारणायानतिरिक्तवृत्तित्वमवच्छेदकत्वेऽन्तर्भावयति । अवच्छेदकत्वं चेदमिति । निःस्नेहत्वादिसामानाधिकरण्यशून्ये शीतस्पर्शादौ शीतस्पर्शान्यत्वादिसामानाधिकरण्यसत्त्वान्न तस्यानतिरिक्तवृत्तित्वमिति भावः । धूमवान्वह्नेरित्यादौ महानसत्वादेर्वारणायान्यूनवृत्तित्वनिवेशनम् । स्वरूपसम्बन्धरूपावच्छेदकत्वपरित्यागफलं दर्शयति । गुरोरपीति ।

(दी०) यद्यपि प्रत्यक्ष उद्भूतरूपवत्त्वादित्यत्र महान् अनित्यद्रव्यत्वादित्यत्र महत्त्वस्य अनित्यद्रव्यसमवेतत्वस्य च वक्ष्यमाणलक्षणाक्रान्तस्योपाधेः सामानाधिकरण्यं साध्यसामानाधिकरण्यन्यूनातिरिक्तवृत्ति । तथापि हेतुनिष्ठसाध्यसामानाधिकरण्यस्य हेतुनिष्ठं यत्सामानाधिकरण्यमन्यूनानतिरिक्तवृत्ति तत्त्वं विवक्षितम् ।

(गा०) रूपमात्रस्य हेतुत्वे प्रत्यक्षत्वाभावविशिष्टरूपवति पिशाचादौ महत्त्वस्य वर्तमानत्वाद्वक्ष्यमाणलक्षणाक्रान्तता न स्यादत उद्भूतपदम् । ननु प्रत्यक्ष उद्भूतरूपवत्त्वादित्यत्रापि महत्त्वं नोपाधिः सामग्रीविरहेणाप्रत्यक्षघटादावुद्भूतरूपवति वर्तमानत्वेन वक्ष्यमाणलक्षणानाक्रान्तत्वादतस्तदसङ्गतो न दोषायेत्यत आह । महानित्यादि । अत्रापि द्रव्यत्वमात्रस्य हेतुत्वे साध्यविशिष्टसाधनाव्यापकत्वादनित्यसमवेतत्वस्य वक्ष्यमाणलक्षणाक्रान्तता न

दयादित्यनित्यपदम् । महत्त्वस्येत्यादिद्वयमुक्तस्थलयोर्यथासङ्ख्यम न्येति । लक्ष्यतां द्रढयितुं वक्ष्यमाणलक्षणकान्तस्येति । न्यूनाति रिक्तवृत्तीति । महत्त्वसामानाधिकरण्यस्य गुणत्वाद्यावृत्तेः प्रत्यक्षत्वसामानाधिकरण्यन्यूनवृत्तित्वं शब्दादौ, वृत्तेस्तदतिरिक्तवृत्तित्वम् । अनित्यद्रव्यसमवेतत्वसामानाधिकरण्यस्य शब्दाद्यवृत्तेर्महत्त्वसामानाधिकरण्यन्यूनवृत्तित्वं गुणत्वादौ वृत्तेस्तदतिरिक्तवृत्तित्वं बोध्यम् ।

हेतुनिष्ठेति । हेतुतावच्छेदकावच्छिन्ननिष्ठत्वार्थकम् । तेन द्रव्यं अन्यत्वे सति सत्त्वादित्यत्र शुद्धसत्तानिष्ठसाध्यसामानाधिकरण्यावच्छेदकगगनावच्छिन्नवृत्तिकाभावप्रतियोगित्वेऽपि स्वर्ष्टसामानाधिकरण्यस्य, द्रव्यं गुणान्यत्वे सति सत्त्वादित्यत्र शुद्धसत्तानिष्ठसाध्यसामानाधिकरण्याभावावच्छेदकगुणावच्छिन्नवृत्तिकत्वेऽपि कर्मान्यत्वसामानाधिकरण्यस्य नाव्याप्तिः । तादृशविशेषणस्य चान्यूनवृत्तित्वानुयोगितावच्छेदकतया ऽनतिरिक्तवृत्तित्वप्रतियोगितावच्छेदकतया च न प्रवेशः व्यापकसङ्कोचे प्रयोजनाभावादित्यवधेयम् ।

तद्धर्मिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपान्यूनवृत्तित्वस्य तद्वदन्यावृत्तित्वरूपानतिरिक्तवृत्तित्वस्य च द्रव्यं सत्त्वादित्याद्येकवृत्तिहेतुके कर्मान्यत्वपृथिवीत्वयोः सामानाधिकरण्येऽक्षतत्वात्तयोरतिव्याप्तिमाशङ्क्याह । सत्त्वनिष्ठेति ।

( दी० ) सत्त्वनिष्ठद्रव्यत्वसामानाधिकरण्यस्य च तन्निष्ठकर्मान्यत्वसामानाधिकरण्यमतिरिक्तवृत्ति, गुणे तदभावावच्छेदकावच्छिन्नवृत्तिकत्वात् । पृथिवीत्वादिसामानाधिकरण्यं तु न्यूनवृत्ति, जलादौ तदवच्छेदकावच्छिन्नवृत्त्यभावप्रतियोगित्वात् । साध्यव्यापकानां सद्धेतौ उपाधित्ववारणाय साधनतावच्छेदकभिन्नेनेति तदनवच्छेद्यार्थकमित्याहुः ।

(गा०) गुणे तदभावावच्छेदकावच्छिन्नवृत्तिकत्वादिति । तथा

नोक्तरूपमिति भावः । एतच्च सामानाधिकरण्यस्यान्यूनवृत्तित्वा

प्रायेण। तदभाववद्वृत्तित्वमात्रनिवेशे गुणवत्त्वाद्युपाधेरप्यसङ्ग्रहः। अन्यावच्छेदेन साध्यसामानाधिकरण्याभाववति सत्त्वेऽन्यावच्छेदेन तत्सामानाधिकरण्यसत्त्वादित्यवच्छेदकावच्छिन्नत्वोपादानम् । जलादावित्यादि । तथा च तदवच्छेदकावच्छिन्नवृत्तिकात्यन्ताभावप्रतियोगित्वमेकं तदन्यूनवृत्तित्वं न तु कूरूपमिति भावः । गुणवत्त्वादिसामानाधिकरण्यस्यापि साध्यसामानाधिकरण्यवति सत्त्वेऽन्यावच्छेदेनाभावसत्त्वात्तदवच्छेदकावच्छिन्नवृत्तिकत्वपर्यन्तमभावे विशेषणम् । विशेषणपदस्य समानाधिकरणत्वार्थकत्वे उदक्षरत्वादिकमेवैतत्कल्पे ऽस्वरसबीजम् ।

( चि० ) अत एव च तत्र साधनाव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकत्वं लक्षणं ध्रुवम् । व्यभिचारिणि साधने एकत्र साध्यतदभावयोर्विरोधेनावच्छेदकभेदं विना तदुभयसम्बन्धाभावादवश्यं साध्यसम्बन्धितावच्छेदकमस्ति । तदेव च साधनावच्छिन्नसाध्यव्यापकं साधनाव्यापकं तत्रोपाधिः ।

( दी० ) ननु सर्वत्र सोपाधौ सर्वेणोपाधिना साध्यसम्बन्धोऽवच्छिद्यते इति न नियमः । अयं प्रत्यक्षो मूर्तत्वादित्यादावुद्भूतरूपवत्त्वादेस्तदसम्भवादित्यत आह । अत एव च तत्रेति । यत एव उद्भूतरूपवत्त्वादेर्न तथात्वसम्भवः, अत एव तत्र तादृशनियमवादिमते इदं लक्षणमिति । साधनाव्यापकत्वमिह साध्याभावविशिष्टसाधनव्यापकीभूताभावप्रतियोगित्वं तादृशसाधनासामानाधिकरण्यमिह पर्यवसितम् । तेनोपदर्शितोद्भूतरूपवत्त्वव्युदासः ।

( गा० ) एकव्यक्तिविपक्षके सर्वेषामेवोपाधीनां साध्यसम्बन्धितावच्छेदकविशेषणत्वस्याक्षतत्वात् सर्वत्रेति । वक्ष्यमाणस्थलेऽपि महत्त्वविशिष्टोद्भूतरूपाद्युपाधेस्तथात्वात् सर्वेणेति । अवच्छिद्यते इत्यस्य विशेषणीभूयेत्यादिः । अतो वक्ष्यमाणस्थले उद्भूत-

रूपसामानाधिकरण्यस्यान्यूनवृत्तित्वरूपसाध्यसामानाधिकरण्याव-च्छेदकताया अक्षतत्वेऽपि नासङ्गतिः, तथापि साध्यशून्यहेतुमति परमाणौ तत्सत्त्वेन विशेषणत्वासम्भवात् । तदसम्भवात् । अ-वच्छेदकत्वे सति विशेषणत्वासम्भवात् । अत एवेत्यत्रैतत्पदस्य परामर्शनीयं व्याचष्टे । यत एवेति । एवकारः सम्पातायातः। अत इत्येतत्परामर्शनीयमध्ये ऽवधारणानुपयोगात् । न तथात्व-सम्भव इति । तथात्वासम्भवेन । तस्योपाधित्वानुपगमेन । उपाधि-त्वस्य तथात्वनैयत्यमित्यर्थः । अतो नात इत्यस्य प्रक्रान्तवाचि-त्वानुपपत्तिः शङ्कानुद्धारो वा । तत्रेत्यस्य व्याख्या तादृशनिय-मवादिमते इति । लक्षणमित्यन्तस्यानुकरणम् इदं लक्षणमिति ।

उक्तस्य उपाधित्वे लक्षणस्य तद्व्यावृत्ततया लक्षणं सदोषं स्यादि-त्युपष्टम्भसङ्गमनाय लक्षणघटकसाधनाव्यापकत्वदलं तद्व्यावृत्तं नि-वेक्ति । साधनेति । असम्भववारणाय साध्याभावविशिष्टेति । तादृशसाधनवन्निष्ठत्वनुद्भूतरूपाभावादेरपीति अभावे व्यापकत्व-निवेशनम् । लाघवादाह । तादृशेति । साध्याभावविशिष्टार्थकम् ।

यद्यप्युपाधिताघटकसम्बन्धेनासामानाधिकरण्यनिवेशान्नोव्या-ज्ञातिमान्मेयत्वादित्यादौ तादृशसाधनाधिकरणजात्यादौ समवायेन वृत्त्यप्रसिद्ध्या समवायेनोपाधेः सत्त्वादेर्न सङ्ग्रहो यथाश्रुते । तथापि तादृशसाधनस्य सामानाधिकरण्यसम्बन्धावच्छिन्नाभावोऽत्र विव-क्षित इति न दोषः । साध्यसाधनत्वभेदेनोपाधित्वभेदाद् यादृशसाध्य-शून्ययादृशसाधनवति येन सम्बन्धेन वृत्तिरप्रसिद्धा तेन सम्बन्धेन तत्साध्यकतत्साधनकोपाधित्वे एतद्दलानिवेश एव नास्तीति वाऽभि-प्रायः । तेन । यथाश्रुतसाधनाव्यापकत्वपरित्यागेन ।

विशेष्यदलस्य तदन्तर्गतसाधनावच्छिन्नत्वविशेषणदलस्य च फलं दर्शयति । अथेत्यादिना ।

(दी०) अथ प्रत्यक्षो द्रव्यत्वादित्यादौ घटत्वादावतिव्या-प्तिः । साध्यव्यापकत्वेन विशेषणे च स श्यामो मित्रातनय-त्वादित्यादौ शाकपाकजत्वादावव्याप्तिरत उक्तं साधना-वच्छिन्नेत्यादि ।

(गा०)उपदर्शितस्थले उद्भूतरूपादीनां व्यभिचारोन्नयनसमर्थ-

नामपि यतोऽनुपाधित्वं तद्बीजप्रदर्शनपरतया व्यभिचारिणीत्या-
दिग्रन्थस्य प्रकृतोपयोगितां दर्शयति । साध्याभावेति ।

(दी०) साध्याभावसम्बन्धिनि विरुद्धस्य साध्यसम्ब-
न्धस्यावच्छेदकभेदं विनाऽनुपपद्यमानस्यावच्छेदकीभूयोपपादन-
मुपाधिफलम्, तदसमर्थानां चोपदर्शितोद्भूतरूपवत्त्वादीनां
नोपाधिभावः सम्भवतीत्याह । व्यभिचारिणीति । व्यभि-
चारः सपक्षविपक्षवृत्तित्वम् ।

(गा०) सम्बन्धः । सामानाधिकरण्यम् । विरुद्धस्य । साध्या-
भावसम्बन्धविरुद्धस्य । विरोधश्चैकावच्छेदेनैकत्रावर्तमानत्वम् ।
तदसमर्थानामिति । मूर्तत्वादौ साध्यसामानाधिकरण्यानवच्छेदका-
पत्त्वाद्यवच्छेदेनो द्भूतरूपादिसामानाधिकरण्यसत्त्वेनातिप्रसक्ततया
न तस्य साध्यसामानाधिकरण्यावच्छेदकत्वमित्याशयः। विपक्षगा-
मित्वरूपव्यभिचारवति विरुद्धे साध्यसम्बन्धाभावेन साध्यसम्ब-
न्धितावच्छेदकस्यावच्छेदकत्वावश्यकत्वासम्भव इत्यतो व्यभिचा-
रिणीत्यत्र व्यभिचारं व्याचष्टे । व्यभिचार इति ।

(चि०) अत एव व्यभिचारे चावश्यमुपाधिरिति
सङ्गच्छते । अन्यथा व्यभिचारादेव तत्रागमकत्वेन
व्यभिचारेण न तदनुमानम्, अप्रयोजकत्वात् ।

(दी०) अथ विपक्षगामित्वरूपव्यभिचारोन्नयनमेवोपाधि-
फलम् । तच्चोद्भूतरूपादीनामप्यस्तीत्यत आह । अत एवेति ।

(गा०) सपक्षगामित्वज्ञानस्यानुमानाविरोधितया तद्घटितव्यभि-
चारस्योपाधिनानुमानमफलमित्याशयेनाह । विपक्षगामित्वरूपेति ।
अस्तीति । तत्कुतस्तस्यानुपाधित्वमिति शेषः । आहेत्यस्य व्य-
भिचारोन्नयनस्योपाधिफलत्वे प्राचीनप्रवादासङ्गतिमित्यादिः । एवं
चात एवेति मूलस्य विरोधभञ्जनमात्रस्योपाधिफलत्वादेवेत्यर्थः ।
अन्यथा । व्यभिचारोन्नयनस्य तत्फलत्वे । व्यभिचारादेव । उपाध्य-
नुमापकत्वेनाभिमताद्व्यभिचारज्ञानादेव । तत्र । व्यभिचारिणि हेतौ ।
अगमकत्वे । अननुमापकत्वनिर्णये । व्यभिचारेण न तदनुमानम् ।

उपाध्यनुमानम् । उपयुज्यते इति शेषः । अप्रयोजकत्वात् । निष्फलत्वात् । तथा च उपाध्यनुमापकतानिर्वाहकस्य व्यभिचारे उपाधिनियमस्य प्रदर्शनपरोऽयम्प्रवादोऽसफलः स्यादेवेति मूलाशय इति दीधित्यनुसारेण मूलव्याख्या ।

गुरुमतोपष्टम्भेनातएवत्रयं व्याख्यायाचार्यमतोपष्टम्भेन चतुर्थमतएवेत्यादि व्याचष्टे । यत एवेत्यादिना ।

(चि०) अत एव च तस्य साध्यसम्बन्धितावच्छेदकरूपलक्षणा व्याप्तिः साधनताभिमते चकास्तीति स्फटिके जपाकुसुमवदुपाधिरसावुच्यते । लक्षणं तु साध्यसाधनसम्बन्धव्यापकत्वे सति साधनाव्यापकत्वम् । विषमव्याप्तस्तु नोपाधिपदवाच्यः । प्रवृत्तिनिमित्ताभावात् । दूषकता च तस्य व्यभिचारोन्नायकतया । न च व्यभिचारोन्नायकत्वमेवोपाधित्वम् । अप्रयोजकसाध्यव्यापकव्यभिचारिणोऽप्युपाधित्वापत्तेरिति ॥

(दी०) यत एव साध्यसम्बन्धितावच्छेदकं रूपं व्याप्तिः, सोपाधौ तु स्वाभाविकं हेतुतावच्छेदकं न साध्यसम्बन्धितावच्छेदकम् । यत एव स्वसमीपवर्तिनि स्वसमानाधिकरणे व्यभिचारिणि हेतौ स्वनिष्ठसाध्यसम्बन्धितावच्छेदकरूपलक्षणव्याप्तिसङ्क्रामकतया साध्यव्याप्यस्यैवोपाधित्वमाचार्यैरनुमन्यते इत्याह । अत एवेति ।

(गा०) स्वाभाविकम् । शुद्धम् । न साध्यसम्बन्धितावच्छेदकमिति । इति न तथोक्ताव्याप्तिरिति शेषः । स्वसमीपवर्तिनीत्याद्युपपत्त्यर्थविवरणम् । स्वनिष्ठेत्यादिकमादधातीत्यर्थः । सङ्क्रामकतया । आरोपजनकतया । साध्यव्याप्यस्यैवेति । विषमव्यापकस्य स्वनिष्ठव्याप्यप्रसिद्ध्या उक्तयोगिकप्रवृत्तिनिमित्तानाक्रान्तत्वादिति भावः । एवं च मूले अ-

साविस्यस्य समव्याप्त एवेत्यर्थः । सोपाधावपि साधनतावच्छेदकस्य साध्यसम्बन्धितावच्छेदकत्वे तत्रापि उक्तव्याप्तिप्रसक्त्या आरोपानुपपत्त्या उपाधिपदस्य यौगिकत्वानुपपत्तेरुपष्टम्भसङ्गतिः।

यद्यपि शुद्धस्य साधनतावच्छेदकवह्नित्वादेः साध्यसम्बन्धितानवच्छेदकत्वेऽपि विशेषणान्तरावच्छिन्नस्यातथात्वाद्याभिचारिण्यपि साधने साध्यसम्बन्धितावच्छेदकरूपलक्षणाव्याप्तिरस्तीति तत्सङ्क्रामकत्वञ्चोपाधेः । न च शुद्धसाधनतावच्छेदके स्वनिष्ठव्याप्यभेदसङ्क्रामकतासम्भवान्नानुपपत्तिः शुद्धवह्नित्वादौ विशिष्टवह्नित्वाद्यवच्छिन्नभेदविरहेऽपि विशेषणान्तर्भावेण वह्नित्वादिपर्याप्तायाः साध्यसम्बन्धितावच्छेदकताया व्यासज्यवृत्तित्वेन तदवच्छिन्नभेदस्य तादृशसाधनतावच्छेदके सत्त्वात्तत्र तादृशावच्छेदकत्वरूपव्याप्तित्वावच्छिन्नाभेदग्रहस्यारोपत्वादिति वाच्यम् । तादृशीं व्याप्तिसङ्क्रामकतामादाय स्फटिके लोहिते जपाकुसुममुपाधिरितिवत् प्रकृते वह्नित्वे धूमव्याप्तावयमुपाधिरित्यस्यैव व्यवहारस्य सम्भवात्, न तु वह्नौ व्याप्येऽयमुपाधिरित्यादेः । एवं येन सम्बन्धेन यत्सम्बन्धिनस्तेन सम्बन्धेनान्यत्रारोपः स एव तत्रोपाधिरिति व्यवह्रियते । स्फटिकादौ जपाधारदेशादिसंयुक्तजपादिरूपलोहितपदार्थाभेदारोपमादाय तथाव्यवहारविरहात् । न च जपाधिकरणदेशे न तादृशारोपजनकत्वं अपि तु जपाया एवेति सम्बन्धैक्यस्यानपेक्षायामपि नैष दोष इति वाच्यम् । एवमपि चक्षुःसंयुक्तजपारूपलोहितपदार्थाभेदारोपमादाय चक्षुषोऽप्युपाधिव्यवहारस्य दुर्वारतया सम्बन्धैक्यस्यापेक्षणीयत्वात् तत् कथमुपाधिभिन्ने तन्निष्ठव्याप्यभेदारोपमादायोपाधिव्यवहार इति । तथापि व्याप्तिबोधकपदसमभिव्याहृतोपाधिपदस्य स्वनिष्ठसाध्यसम्बन्धितावच्छेदकरूपव्याप्तेर्यो स्वभिन्नसमभिव्याहृतपदोपस्थाप्यतावच्छेदकवह्नित्वादिसम्बन्धेन सङ्क्रामकता तत्प्रत्यायकत्वमेव स्वीक्रियते तथाविधसम्बन्धेन च वह्न्यादौ तथाविधव्याप्तेर्बाधान्नानुपपत्तिः । तेन सम्बन्धेन तस्या उपाधिनिष्ठत्वविरहेऽपि न क्षतिः । व्याप्तिबोधकसमभिव्याहारस्थले सम्बन्धैक्यस्यानपेक्षितत्वादिति ।

अथ स्फटिकलौहित्ये जपाकुसुममुपाधिरित्यादौ स्वसमीपवर्तिस्फटिकादौ स्वधर्मलौहित्यादिसङ्क्रामकत्वं जपाकुसुमादेः प्रती-

यते तत् कथं उपपाद्यताम् ? विशिष्य लौहित्यस्फटिकाद्यन्तर्भावेण शक्तिकल्पने शक्त्यानन्त्यात्। उपपदार्थे समीपवर्तिनि स्फटिकादेरा-धानघटकस्वधर्मे लौहित्यस्याप्यभेदान्वयबलाचादृशप्रतीतिरित्यपि न। समानविभक्तिकपदोपस्थाप्ये एव नामार्थस्याभेदान्वयव्युत्पत्तेः। स्फटिकादेरितरविशेषणतयोपस्थितत्वेन समीपवर्तिनि विशेषणतया अन्वयासम्भवात्। समासघटकविशेषणपदस्य पदान्तरसापेक्षत्वे-ऽसामर्थ्येन समासानुपपत्तेश्च। यच्च स्वधर्माभ्वयभेदो लौहित्यादि-पदोत्तरसप्तम्यर्थ इति तदपि न। अभेदे सप्तम्या अननुशिष्टत्वात्। एवं लौहित्यादौ स्फटिकादेरन्वयेऽयोग्यत्वम्, अनन्वये चासामर्थ्येन समासानुपपत्तिः।

अत्राहुः। स्फटिकस्य लौहित्यमिति षष्ठीसमासे स्वविशेष्यता-निरूपितप्रकारतारूपसम्बन्ध एव षष्ठ्यर्थः। ज्ञानसमभिव्याहा-रस्थले ज्ञानविषयितासम्बन्धबोधकत्वस्य षष्ठ्या व्युत्पन्नत्वात्। लौहित्यादिपदोत्तरसप्तम्या निरूपितत्वमर्थः। निरूपकस्याप्या-धारत्वात्, अन्यथा पृथिव्यां रूपगन्धयोः सामानाधिकरण्यमित्या-दौ सप्तम्यनुपपत्तेः। निरूपितत्वस्य चाधानघटकस्वधर्मप्रकारि-तायामन्वयः। निरूपकप्रकारभेदे च प्रकारिताभेदस्यावश्यकत्वात्, स्वधर्मनिरूपितप्रकारिताया लौहित्यादिनिरूपितत्वस्य स्वधर्मलौहि-त्ययोरभेदनिर्वाहतया अर्थतस्तदभेदलाभः, न तु साक्षाच्छब्दतः। सप्तम्यर्थः प्रकारिता तस्याः स्वधर्मप्रकारकभ्रमेऽन्वय इति न साधीय.। स्वधर्मलौहित्ययोर्भेदेऽपि उभयप्रकारकसमूहालम्बन-प्रतीतिसम्भवात्। प्रतीत्यभेदस्य प्रकाराभेदानाक्षेपकत्वात्।

न च स्वधर्मलोहित्ययोरभेदज्ञानं मानसमेव स्वीकार्यम्, तत्र चाऽनुपपत्तेर्नोपयोग इति वाच्यम्। मानसज्ञाने उपस्थितविपरी-तकोटेरपि मानसम्भवेन निर्णयनियमानुपपत्तेः। एवं स्वधर्मप्रतीतौ लौहित्यप्रकारकत्वोपगमे यत्र स्फटिकद्वये एकस्मिन्नेव वा अंशभेदेन जपापराजिताभ्यां लौहित्यनीलिम्नोर्युगपत् सङ्क्रान्तिस्तत्र स्फटि-कलौहित्येऽपराजितोपाधिरिति प्रयोगापत्तेर्दुर्वारत्वाच्च।

न चैवमपि स्फटिकादिसमीपवर्तिनोऽभेदाक्षेपकाभावेन तः लाभो दुर्घटः। एवं यत्र स्फटिकव्यक्तौ सिन्दूराद्युपाधिसमवधा-नादेव शुक्लत्वाभावादिभ्रमस्तत्रकाप्येतदशुक्लत्वं जपोपाधिरिति

ऽव्यवहारापत्तिः । जपाया अपि तदंशे प्रकारताश्रयत्ववृत्तिशुक्लत्वाभावस्य अन्यत्र स्वसमीपवर्तिनि सङ्क्रामकत्वादिति वाच्यम् । समीपवर्तिविशेष्यकत्वावच्छिन्नायां स्वधर्मप्रकारितायां स्फटिकादिरूपविशेष्यनिरूपितप्रकारताविशिष्टलौहित्यादिनिरूपकत्वेन अन्वयोपगमाद् विशेषणीभवन्त्यां प्रकारतायामपि तादृशप्रकारितानिरूपकत्वलाभात्तद्विशेष्यांशे प्रकारताया एव च तद्विशेष्यकत्वावच्छिन्नप्रकारितानिरूपकत्वेन अर्थत एव समीपवर्तिनि स्फटिकाद्यभेदलाभात् । लोहिते स्फटिके जपोपाधिरित्यादौ अभेदेन लोहितसङ्क्रामकत्वं प्रतीयते स्फटिकादिपदं लक्षणया स्फटिकादिविशेष्यकप्रतीतिप्रकारपरम्, तस्य च अभेदेन लोहितादिपदार्थेऽन्वय इति दिक् ।

उपाधिपदस्य केवलयौगिकत्वे साध्यन्यूनवृत्तावपि स्वनिष्ठव्याप्तिसङ्क्रामकत्वसत्त्वादुपाधिव्यवहारापत्तिरिति शङ्कानिराकरणपरत्वेन लक्षणं त्वित्यादिमूलं प्रकृते सङ्गमयति । साध्येति ।

( दी० ) साध्यन्यूनवृत्तावुपाधिव्यवहारं दूषणौपयिकरूपस्यावश्यं वाच्यतयोपाधिपदस्य योगरूढित्वव्यवस्थापनेन निराकुरुते । लक्षणं त्विति । लक्षणम् । लक्षणौपयिकं रूपम् । साध्येति । अत्र साध्यव्यापकत्वमात्रं विवक्षितं तावतैव साधनवद्वृत्तित्वव्यतिरेकेण साध्यव्यतिरेकानुमानसम्भवात् । साधनवति व्यापकनिवृत्त्या साध्यसाधनसम्बन्धनिवृत्तिसिद्धावर्थात्साध्यनिवृत्तिः सिद्ध्यति इति प्रकारान्तरप्रदर्शनाय परं तथाविधोक्तिः । रूढ्या न्यूनवृत्तावुपाधित्वव्यवहारं निरस्य योगेनाधिकवृत्तौ तन्निरस्यति । नविषमेति । प्रवृत्तिनिमित्तम् । यौगिकम् । व्यभिचारोन्नायकत्वमेवेत्येवकारेण योगार्थानादरं सूचयति । उपाधित्वम् । उपाधिपदप्रवृत्तिनिमित्तम् । उपाधिता । उपाधिपदवाच्यता । योगादरे तु लाघवात्साध्यव्यापकतामात्रे रूढिरिति भावः ॥

इति व्याप्तिवादः समाप्तः ॥

(गा०) वाच्यतया। रूढ्यर्थतावच्छेदकतया। विषमव्याप्तेऽतिप्रसक्त्या नास्य लक्षणत्वमिति लक्षणपदं व्याचष्टे। लक्षणमिति। सम्बन्धव्यापकत्वपर्यन्तं साध्यव्यभिचारानुमापकतायामनुपयुक्तमिति तस्याविवक्षितत्वमाह। अत्रेति। ननु तस्याविवक्षायां तदभिधानमयुक्तमत आह। साधनवतीति। प्रकारान्तरप्रदर्शनाय। व्यभिचारानुमानसम्भवप्रदर्शनाय। योगेन। अवयवार्थान्वयेन। अधिकवृत्तावपि दूषणौपयिकरूपात्मकप्रवृत्तिनिमित्तसत्त्वात् प्रवृत्तिनिमित्ताभावादित्यसङ्गतमत आह। प्रवृत्तिनिमित्तमिति। यौगिकम्। योगलभ्यतावच्छेदकम्। व्यभिचारोन्नायकत्वमेवेत्येवकारस्योक्तरूपे रूढ्यर्थतावच्छेदकत्वव्यवच्छेदमात्रपरत्वेऽप्रयोजकेत्याद्युपाधिव्यवहारापादनमसङ्गतं स्यात् तत्र योगलभ्यस्वनिष्ठव्याप्तिसङ्क्रामकत्वाभावादित्यतश्च स्वनिष्ठव्याप्तिसङ्क्रामकत्वस्य प्रवृत्तिनिमित्तत्वव्यवच्छेदपरतापि तस्येत्याह। व्यभिचारोन्नायकत्वमेवेतीति। उपाधित्वमित्यस्यार्थो यदि व्यभिचारोन्नायकत्वं तदा अभेदेन व्यभिचारोन्नायकत्वे तदन्वयानुपपत्तिरतो व्याचष्टे। उपाधित्वमिति। उपाधितापत्तेरित्यत्र उपाधिता यदि व्यभिचारोन्नायकता तदेष्टापत्तिरतो व्याचष्टे। उपाधितेति।

नन्वेतदतिप्रसङ्गवारणाय योगादरोऽप्यस्तु रूढिस्तु व्यभिचारोन्नायकताविशिष्टे एवास्तामत आह। योगादरे इति। लाघवादित्यस्य व्यभिचारोन्नायकतापेक्षयेत्यादिः। साध्यव्यापकतामात्रे इति। मात्रपदेन दूषणौपयिकरूपान्तर्गतसाधनाव्यापकत्वांशव्यवच्छेदः। व्यभिचारिसाधनव्यापकस्य साध्याव्याप्यत्वनियमेन स्वनिष्ठव्याप्तिसङ्क्रामकत्वाभावादेवानतिप्रसङ्गादिति।

इति अनुमानगादाधर्यां पञ्चचतुष्टयप्रकरणम्॥

इति व्याप्तिवादः समाप्तः॥

## अथ व्याप्तिग्रहोपायप्रकरणम् ॥

(चि०) सेयं व्याप्तिर्न भूयोदर्शनगम्या, दर्शनानां प्रत्येकमहेतुत्वात्, आशुविनाशिनां क्रमिकाणां मेलकाभावात् ।

(दी०) व्याप्तिस्वरूपं निरूप्य परमतनिराकरणपूर्वकं स्वमतेन तद्ग्रहोपायमभिधातुं प्रथमं प्राभाकरमतमुपदर्शयति । सेयमित्यादिना । दर्शनानां प्रत्येकं वा हेतुत्वं मिलितानां वा ? मिलनमपि स्वरूपतो व्यापारतो वा ? आद्ये दर्शनानामिति । द्वितीये आशुवित्ति । क्रमिकाणामपि स्थिराणामस्थिराणामपि सहोत्पन्नानां मिलनमस्तीत्युभयमुपात्तम् ।

(गा०) उपायाभावाद्व्याप्तिनिश्चयासम्भवेनानुमानप्रामाण्यं न सम्भवतीति चार्वाकपूर्वपक्षे भूयःसाध्यसाधनसहचारदर्शनं व्याप्तिग्राहकमिति जरन्नैयायिकसिद्धान्तः । व्याप्तिर्न भूयोदर्शनगम्या, अपि तु सकृद्दर्शनगम्येति तु प्राभाकरमतं तदेव मतमादावुपन्यस्तं मूले सेयमित्यादिना । तत्र प्रथमं साध्यसाधनसम्बन्धग्राहकातिरिक्तानपेक्षग्रहकत्वरूपस्य सकृद्दर्शनगम्यत्वसाधकहेतोः सिद्ध्यर्थं भूयोदर्शनस्य व्याप्तिग्राहकतानिराकरणम् ।

यद्यपि व्याप्तिस्वरूपस्य मेयत्वादिना ज्ञाने न भूयोदर्शनापेक्षा, अपि तु व्याप्तित्वेन तज्ज्ञाने एव । तथा च तेन रूपेण ज्ञाने तदपेक्षायामपि उपाध्यभावरूपव्याप्तेरधिकरणादिरूपत्वमुपगम्याधिकरणतावच्छेदकादिरूपेण सकृद्दर्शनग्राह्यत्वे व्यवस्थापनीये न किञ्चिद्बाधकमिति भूयोदर्शनस्य व्याप्तिग्राहकताखण्डनमनुपयुक्तम् ।

न च परमतनिराकरणायैव तत्खण्डनं न तु सकृद्दर्शनग्राह्यत्वसाधकहेतोः परिशेषस्य सिद्ध्यर्थमिति वाच्यम् । तथा सति भूयोदर्शनादीनां व्याप्तिग्राहकतां निराकृत्य तस्मात्परिशेषेणेत्याद्यु-

पसंहाराविरोधात् । तस्मादित्यनेन साध्यसाधनसम्बन्धग्राहकातिरिक्तानपेक्षग्राहकत्वरूपे परिशेषे भूयोदर्शनाग्राह्यताया हेतुत्वाभिधानात् । तथापि व्याप्तिप्रत्यक्षमात्रे एव कदाचिद् भूयोदर्शनापेक्षां परिशेषासिद्धिनिबन्धनां नैयायिको ब्रूयादतस्तत्र तदपेक्षाखण्डनम् ।

सकृद्दर्शनग्राह्यत्वं च न भूयोदर्शनानपेक्षग्राहकत्वं भूयोदर्शनानुत्तरग्रहविषयत्वमेव वा, तद्व्यवस्थापनस्य व्याप्तिग्रहोपायनिरूपणानात्मकतया उपायजिज्ञासायां तद्व्यवस्थापने ऽर्थान्तरप्रसङ्गात् ।

एतेन साध्यसाधनसम्बन्धग्रहव्यापकविषयिताकत्वं तदित्यपि हेयमेव । अपि तु साध्यसाधनसम्बन्धग्राहकसामग्रीसामान्यग्राह्यत्वमेव तत् ।

न च तथाविधयत्किञ्चित्सामग्रीग्राह्यत्वव्यवस्थापनेनैव चार्वाकपूर्वपक्षनिराससम्भवात्तादृशयावत्सामग्रीग्राह्यत्वव्यवस्थापनमाकिञ्चित्करमिति वाच्यम् । तादृशकतिपयसामग्र्या अग्राहकत्वे यादृशकारणविरहेणाग्राहकत्वं साध्यसाधनसम्बन्धग्राहकातिरिक्तस्य तस्य नियमानिर्वाहेण च तादृशकतिपयसामग्रीणामपि ग्राहकता नोपेयेतेति सकलतादृशसामग्रीग्राह्यत्वस्यैव साधयितुमुचितत्वात् । चार्वाकमतवद् भूयोदर्शनानुत्तरसाध्यसाधनसम्बन्धग्रहविषयत्वस्य जरन्नैयायिकमतस्यापि निराकरणस्योद्देश्यत्वाच्च ।

अत्र सैव व्याप्तिरित्यस्य दुर्निश्चयतया चार्वाकाभिमतानुमित्यौपयिकव्याप्तिरित्यर्थः । पक्षधर्मताया अप्यनुमित्यौपयिकतया तद्व्यावृत्त्यै विलक्षणमनुमित्यौपयिकत्वं पक्षतावच्छेदकमित्येतल्लाभाय व्याप्तिपदोपादानम्, न तु व्याप्तित्वं पक्षतावच्छेदककोटिप्रविष्टं किं तु मतभेदेनानुमित्यौपयिकीनां नानाव्याप्तीनामनुमितिजनकतावच्छेदकप्रकारताविशेषवत्त्वेन पक्षत्वं बोध्यम् । अतो विशिष्य व्यापकसामानाधिकरण्यरूपमणिकाराभिमतव्याप्तेः पक्षत्वे अग्रे उपाध्यभावरूपव्याप्तिग्रहे उपाधिज्ञानाद्यनपेक्षाद्युपपादनेन परिशेषसाधनविरोधः । उपाध्यभावरूपव्याप्तेर्विशिष्योपादाने चानौपाधिकत्वज्ञानस्य व्याप्तिग्राहकतया भूयोदर्शनापेक्षामतनिराकरणविरोध इत्यादिकं समाहितम् ।

भूयोदर्शनगम्यत्वं च भूयःसहचारदर्शनापेक्षग्रहकत्वम्। एवं तर्काद्यपेक्षग्रहकत्वमप्यग्रे निराकरणीयमिति साध्यसाधनसम्बन्धग्राहकातिरिक्तयावद्विशेषापेक्षग्रहकत्वाभावकूटसिद्धा तदतिरिक्तापेक्षग्रहकत्वसामान्याभावरूपपरिशेषसिद्धिः। तदपेक्षग्रहकत्वं च तदभावप्रयोज्यस्वग्रहत्वावच्छिन्नाभावकत्वम्। विशिष्टबुद्धौ विशेषणज्ञानहेतुताया गुरुणानङ्गीकारेऽपि सहचारविशिष्टवैशिष्ट्यबोधे सहचाररूपविशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुतायास्तेनोपगमात् तादृशवैशिष्ट्ये एव तत्प्रसिद्धिः। तद्ग्रहे च भूयस्त्वविशिष्टसहचारदर्शनत्वेनाहेतुत्वेऽपि तद्ग्रहजनकतावच्छेदकसहचारप्रकारकज्ञानत्वावच्छिन्नप्रतियोगिताकस्य भूयःसहचारदर्शनप्रतियोगिकाभावस्य तद्ग्रहत्वावच्छिन्नाभावप्रयोजकत्वात्। व्याप्तिविशिष्टवैशिष्ट्यबोधस्य सहचारविशिष्टवैशिष्ट्यबोधतया तत्र सहचारप्रकारकज्ञानहेतुत्वेऽपि तद्विशिष्टवैशिष्ट्यबोधात्मकतद्ग्रहसाधारणग्रहत्वाद्यवच्छिन्नाभावो न सहचारज्ञानविरहप्रयुक्त इति नाभावसाधने बाधः।

यदि च विशेषसामग्र्यभावकूटस्य सामान्यकार्याभावप्रयोजकतया व्याप्तिविशिष्टवैशिष्ट्यबोधसामग्र्यभावकूटस्यापि व्याप्तिग्रहत्वरूपसामान्यधर्मावच्छिन्नाभावप्रयोजकत्वं सम्भाव्यते तदा व्यासज्यवृत्तिधर्मानवच्छिन्नप्रयोजकत्वं निवेशनीयम्। हेतुमुख्यविशेष्यकव्याप्तिग्रहरूपविशेषसामग्र्यभावसंवलितस्यैव व्याप्तिविशिष्टवैशिष्ट्यबोधसामग्र्यभावस्य व्याप्तिग्रहत्वरूपसामान्यधर्मावच्छिन्नाभावप्रयोजकतया नोक्तदोषः। व्यापकधर्मावच्छिन्नसामग्र्यभावस्य व्याप्यधर्मावच्छिन्नाभावप्रयोजकतया व्यापकताग्रहत्वस्य भूयोदर्शनजन्यतावच्छेदकत्ववादिनां भूयोदर्शनाभावस्य व्याप्तिग्रहत्वावच्छिन्नाभावप्रयोजकत्वमक्षतमेवेति न सिद्धसाधनावकाशः। सहचारविषयकसमूहालम्बनरूपहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वज्ञानस्य प्रतियोगिज्ञानमुद्रया विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया वा व्यापकताग्राहकस्य यत्तादृशावच्छेदकत्वज्ञानत्वेन रूपेणाभावस्तस्य व्याप्तिग्रहत्वावच्छिन्नाभावप्रयोजकतया बाधवारणाय सहचारज्ञानमात्रप्रतियोगिकोऽभावो निवेशनीयः।

अथ यदि विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारक ज्ञानहेतुतापि न गुरुसिद्धान्तस्तदा तन्मते निरुक्तभूयोदर्शनापेक्ष· ग्रहकत्वाप्रसिद्धिः ।

न च सहचारविषयकत्वनियतव्याप्तिज्ञाननिष्ठकारणताकानु· मितिविषयसाध्यवत्पक्षादौ तत्प्रसिद्धिसौलभ्यम् । व्याप्तिज्ञाना· भावस्य साध्यवत्पक्षविषयकानुमितित्वावच्छिन्नाभावं प्रत्येव प्रयोज· कतया तस्य प्रत्यक्षसाधारणतद्विषयकग्रहत्वावच्छिन्नाभावेऽवश्य विवक्षणीये तत्प्रत्यक्षत्वावच्छिन्नाभावे वा प्रयोजकत्वादिति चेत् ? तर्हि भूयःसम्बन्धग्रहानपेक्षग्रहकत्वमेव तैः समर्थनीयं न तु तदपेक्ष· ग्रहकत्वाभावः, तदनपेक्षग्रहकत्वं च तदभावाप्रयोज्यस्वग्रहत्वाव· च्छिन्नाभावकत्वम् । सहचारग्रहाभावप्रयोज्यत्वप्रसिद्धिरनुमित्यभावे एव सुलभा, परिशेषोऽपि साध्यसाधनसम्बन्धग्राहकातिरिक्ता· मान्यानपेक्षग्रहकत्वरूप एवोक्तरीत्या निर्वाच्य. ।

एतेन सामानाधिकरण्यविशिष्टवैशिष्ट्यबोधे सामानाधिकरण्य· प्रकारकज्ञानहेतुतायाः उभयसिद्धत्वेऽपि प्रमेयत्वेन तद्विशिष्टवै· शिष्ट्यग्रहे सहचारग्रहस्याहेतुतया सहचारविशिष्टवैशिष्ट्येऽपि सहचारग्रहाभावप्रयोज्यस्वग्रहत्वावच्छिन्नाभावकत्वाप्रसिद्धिरित्यनु· पपत्तिरपि समाहिता ।

यद्यपि व्यापकसामानाधिकरण्यरूपमणिकाराभिमतव्याप्तेरपि केवलसाध्यसामानाधिकरण्यत्वादिना ग्रहे भूयोदर्शनापेक्षा नास्तीति निरुक्तभूयोदर्शनाग्राह्यत्वं तत्र सिद्धमेव तथापि तन्मतेऽनौपाधि· कत्वमेतन्मते व्यापकत्व येनानतिप्रसक्तरूपेण सङ्ग्रहीतु शक्यते तादृशस्य पक्षतावच्छेदकत्वान्न दोषः ।

न च व्यापकताया अन्यभावत्वादिमात्रेण ग्रहे सहचारदर्श· नापेक्षाविरहेण सिद्धसाधनं दुर्वारमेवेति वाच्यम् । निरुक्तभूयोदर्श· नाग्राह्यत्वे लौकिकग्रहस्यैव प्रवेशनीयत्वात् नैयायिकैर्व्यापकतारूपा· भावस्य केनापि रूपेण लौकिकज्ञानस्य विना भूयोदर्शनमन· भ्युपगमात् ।

न च तर्हि न्यायमते व्यापकताया योग्यानुपलब्ध्यभावेनाती· न्द्रियतया लौकिकप्रत्यक्षगम्यत्वमात्रसाधनेनैव नैयायिकमतस्य चार्वाकमतस्य च निराकरणात्सकृद्दर्शनगम्यत्वतत्साधकभूयोदर्श·

(दी०) तृतीयपाशङ्कां निराकुरुते । न चेति । व्यापकसाध्यसामानाधिकरण्यात्मिकायां व्याप्तौ साध्यसामानाधिकरण्यांशस्य प्रथममेव गृहीतत्वादगृहीतव्यापकत्वांशग्रहे सहचारदर्शनजन्यसंस्काराणां हेतुत्वं वाच्यं तच्च न सम्भवति भिन्नविषयकत्वादित्याह । समानेति । भ्रमस्त्वगृहीतभेदं ज्ञानद्वयं न तु वैशिष्ट्यावगाहीति भावः ।

(गा० ) तथा च भूयोदर्शनजसंस्कारस्यापि हेतुत्वकथनं मूले संस्कारद्वारा भूयोदर्शनस्य हेतुतालाभायैव । एवं च भूयोदर्शनस्य व्याप्तिग्राहकताप्रवादस्याप्यभङ्ग इति भावः । व्याप्तिप्रत्यक्षे एव भूयोदर्शनं हेतुरिति लाभाय इन्द्रियसहकृतेति । प्रत्यक्षात्मकज्ञाने संस्कारो न हेतुरिति नियमखण्डनाय प्रत्यभिज्ञायामिति । समानविषयकमेव ज्ञानं संस्कारजन्यमिति नियमाद्भिन्नविषयकव्याप्तिज्ञानं प्रति सहचारविषयकसंस्कारस्य हेतुत्वं न सम्भवतीति समानविषयक इति मूलार्थः । तत्र च यदि संस्कारजन्यज्ञानमवश्यं स्वजनकसंस्काराविषयाविषयकमिति कथितनियमार्थस्तदा प्रत्यभिज्ञाजनकसंस्काराविषयेदन्त्वस्य प्रत्यभिज्ञाविषयतया व्यभिचारात् ।

न चोपनीतभानानङ्गीकर्तुर्गुरोस्तत्तास्मरणेदन्त्वविशिष्टानुभवरूपज्ञानद्वयमेव प्रत्यभिज्ञा, न तु विशिष्टविषयकं ज्ञानं तत्र चानुभवस्य संस्काराजन्यत्वात् स्मरणस्य च संस्कारविषयमात्रविषयकत्वान्न व्यभिचारावकाश इति वाच्यम् । प्रत्यभिज्ञायाः स्थैर्यसाधकत्वान्यथानुपपत्त्या विशिष्टज्ञानत्वमभ्युपेत्यैवैतल्लिखनात् । अन्यथा समानविषयके स्मरणे इत्यनेनैव गतार्थत्वात्प्रत्यभिज्ञायां संस्कारहेतुतायाः पृथक्कथनासङ्गतेः ।

यदि च संस्कारजन्यं ज्ञानं स्वजनकसंस्कारविषयाविषयकं तादृशसंस्कारविषयविशेष्यकं वा नियमार्थस्तदा हेतुधर्मिकसहचारप्रकारकसंस्काराद्व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानं हेतुविशेष्यकं व्याप्तिविशेष्यकं वा भवतु उभयथापि तादृशसंस्कारविषयविशेष्यकमेवेति कथं तादृशनियमबलात्तथाविधसंस्कारस्य

व्याप्तिग्राहकताप्रतिक्षेपसङ्गतिरित्यतः संस्कारोपनीततत्साध्यविशिष्टस्य प्रत्यभिज्ञाने मुख्यविशेष्यतैव न तु तद्विषयांशे कदाचित् प्रकारतापीति संस्कारजन्यं यज्ज्ञानं तत् स्वजनकसंस्कारविषयमुख्यविशेष्यकमेवेति नियमाभिप्रायकतया मूलं सङ्गमयितुं व्याचष्टे । व्यापकेति । प्रथममेव गृहीतत्वात् । तादृशसंस्कारं विनैव गृहीतत्वात् । व्यापकत्वांशस्य ग्रहे इत्यवधारणार्थः । तथा च साध्यधर्मिकव्यापकताग्रहत्वमेव तादृशसंस्कारजन्यतावच्छेदकं न तु हेतुधर्मिकव्याप्तिग्रहत्वम्, तथा च सति तादृशसंस्कारं विना व्यापकताग्रहस्य दुर्वारत्वात्, तादृशसंस्कारं विना केवलव्यापकताग्रहोऽनिष्ट एव तदानीं व्यापकता न गृह्यते इत्यस्यैव तद्घटिताया व्याप्तेर्ग्रहे बीजत्वात् तदितरांशस्य तदानीमपि ग्रहादिति भावः । तच्च । तद्रूपावच्छिन्नहेतुत्वं च । भिन्नविषयकत्वात् । तद्रूपाक्रान्तस्य व्यापकताविशेष्यकप्रत्यक्षस्य भिन्नमात्रविषयकत्वात् । तादृशसंस्कारविषयाविशेष्यकत्वादिति यावत् ।

न च व्यापकताप्रकारकप्रत्यक्षत्वस्य जन्यतावच्छेदकत्वाद्व्यापकताप्रकारकज्ञानस्य च तादृशसंस्कारविषयसाध्याविशेष्यकत्वान्न तादृशसंस्कारस्य व्यापकताग्राहकतामतेऽपि नियमानुपपत्तिः । संस्कारजन्यज्ञाने तादृशमुख्यविशेष्यविशेष्यकत्वनियमस्य घटवद्भूतलादिविषयकसंस्कारेणापि भूतलाद्यनुद्बोधकदशायां घटादिमुख्यविशेष्यकस्मरणजननेन कदर्थयितुमशक्यत्वात् । साध्यमुख्यविशेष्यकसाधनसहचारज्ञानजन्यतादृशसंस्कारस्य व्यापकताग्राहकत्वोपगमेनापि तत्र तादृशनियमस्य सत्त्वाच्चेति वाच्यम् । साध्यव्यापकताविशेष्यकप्रत्यक्षस्य सकृद्दर्शनादितो धारणानुरोधात्सद्विशेष्यकतत्प्रकारकप्रत्यक्षसाधारणधर्मस्यैव जन्यतावच्छेदकत्वध्रौव्यमित्याशयात् ।

रजतादिगोचरसंस्कारजन्यस्य शुक्त्यादौ रजतादिभ्रमस्य तादृशसंस्कारविषयविशेष्यकत्वाभावादुक्तनियमे व्यभिचार इत्याशङ्कां निराकरोति । भ्रमस्त्विति । अगृहीतभेदम् । भेदाग्रहसहितम् । ज्ञानद्वयम् । रजतादिस्मरणशुक्त्याद्यनुभवरूपम् । तैरन्यथाख्यात्यनभ्युपगमादिति भावः । एवं च तत्र शुक्त्याद्यनुभवस्य संस्काराजन्यत्वात्संस्कारजन्यरजतादिस्मरणे च संस्कारवि-

पयरजतादिविशेष्यकत्वसस्थायोक्तानुपपत्तिरित्यभिप्रायः ।

अथ संस्काराणां स्वाविषयपदार्थविषयताघटितधर्मावच्छिन्नजं-न्यत्वानिरूपकत्वनियमेऽपि व्याप्तिग्रहत्वस्यापि भूयोदर्शनजसंस्कार-जन्यतावच्छेदकत्वं न सम्भवति व्याप्तिविषयतानिवेशात्, तादृशसं-स्काराविषयव्यापकत्वविषयताया अपि तज्जन्यतावच्छेदकगर्भे नि-वेशादतस्तादृशनियमपरतया यथाश्रुतस्य सङ्गतेर्भूयोदर्शनजन्य-संस्कारस्य व्याप्तिग्राहकतावादिमते व्यापकताग्रहत्वस्य तज्जन्य-तावच्छेदकताया आवश्यकत्वं व्यवस्थाप्य तदसम्भवपरतया मूल-व्याख्यानमनुचितम् । एवं भ्रमस्य विशिष्टज्ञानत्वेऽपि रजता-दिभ्रमनिरूपितशुक्त्यादिविषयताया रजतादिगोचरसंस्कारजन्यतो-वच्छेदकाघटकत्वादुक्तनियमस्याव्याहतत्वादन्यथाख्यातिप्रतिक्षेपोऽ-प्यनुपयुक्त इति चेन्न । संस्कारस्य व्याप्तिग्राहकतामते व्याप-कताग्रहत्वस्योक्तयुक्त्या तज्जन्यतावच्छेदकत्वं वास्तवम् । एवं भ्र-मस्य ज्ञानद्वयात्मकत्वमपि गुरुमते तथेति तदभिप्रायेण यथाश्रुत-नियमपरतयैवोपपत्तेरीदृशनियमपर्यन्तपरताया मूलस्यायुक्तत्वात् ।

केचित्तु संस्कारस्य तदंशे तद्धर्मवैशिष्ट्यावगाहिन एव तदंशे तद्धर्मभासकत्वनियमो गुरूणामभिमतः । अत एव तेषां न पक्ष-धर्मादौ व्याप्तिज्ञानसम्भव इति ज्ञानद्वयस्यानुमितिहेतुता । तादृशस्य च नियमस्यान्यथाख्यातिवादिनां मते ऽसम्भवदुक्तिकतेत्यन्यथा-ख्यात्यनभ्युपगमस्य स्फुटीकरणम् । सहचारदर्शनजन्यसंस्कारस्य व्याप्तिघटकसहचारमात्रग्राहकत्वे तादृशनियमाविरोधाद् व्यापकतां-शग्राहकत्वं तस्य प्रागुपदर्शितमित्याहुः । तच्चिन्त्यम् । संस्कारस्य स्वाविषयभानाप्रयोजकत्वनियमेनैव प्रकृतोपपत्तेर्धर्मिघटितोक्तनियमे व्यभिचाराशङ्कया भ्रमस्थित्यादिनियमस्य कथनायुक्तत्वात् ।

( चि० ) किं च सम्बन्धभूयोदर्शनं भूयःसु स्थाने-षु दर्शनं भूयसां वा दर्शनं भूयांसि वा दर्शनानि न तथा ? एकत्र रूपरसयोर्द्रव्यत्वघटत्वयोश्च व्या-प्तिग्रहात् । एकत्रैव धारावाहिके तद्ग्रहप्रसङ्गात्, भू-यस्त्वस्य त्रिचतुरादित्वेनाननुगमाच्च । अपि च पार्थि-

घस्थलीहलेख्यत्वादौ शतशो दर्शनेऽपि व्याप्त्यग्रहात्। तर्कसहकृतं तथेति चेत्? तर्हि सहचारदर्शनव्यभिचारादर्शनसहकृतः स एव व्याप्तिग्राहकोऽस्तु आवश्यकत्वात्, किं भूयोदर्शनेन? न च तेन विना तर्क एव नावतरति। प्रथमदर्शने व्युत्पन्नस्य तर्कसम्भवात्।

(दी०) न तथा। न व्याप्तिग्राहकम्। व्यभिचारादर्शनं व्यापारतया सहकारीति व्यभिचारादर्शनसहचारदर्शनसहकृतस्तर्क एव व्याप्तिग्राहकः। भूयोदर्शनं तु कचित् तर्कमहिम्नाऽनुपयुज्यते इति निर्गलितम्

(गा०) न तथेत्यस्य न भूयोदर्शनपदार्थ इत्यर्थकत्वं न सम्भवतीति व्याप्तिग्राहकत्वाभावार्थकतया व्याचष्टे। न तथेति। तथ च भूयोधिकरणनिरूपितसाध्यसाधनसहचारदर्शनरूपो भूयःसाध्यसाधनसहचारदर्शनरूपः साध्यसाधनसहचारविषयकभूयोदर्शनरूपो वा सम्बन्धभूयोदर्शनपदार्थो न व्याप्तिग्राहक इति किं चेत्यादिमूलार्थः।

ननु व्यभिचारादर्शनस्य हेतुत्वेनान्यथासिद्धतया व्यभिचारज्ञानविरोधिनस्तर्कस्यान्यथासिद्धिरिति भूयोदर्शनसहकृतस्य तर्कस्य व्याप्तिग्राहकत्वापादनासङ्गतिरित्यत आह। व्यभिचारादर्शनमिति। व्यापारतयेति। तत्प्रयोज्यत्वे सति तज्जन्यजनकत्वमेव तद्व्यापारत्वम्। प्रयोज्यत्वं च प्रतिबन्धकसत्त्वात्कार्याभाव इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषो नित्यस्यापि व्यभिचारज्ञानाभावस्येति तस्य तर्कव्यापारतेति। तेन तर्को नान्यथासिद्धो व्यापारेण व्यापारिणस्तथात्वाभावादिति भावः।

न च तर्कस्य हेतुत्वे साक्षादपि तस्य तथात्वसम्भवेन किं व्यभिचारज्ञानाभावस्य तद्व्यापारतया? न हि तर्कस्य हेतुत्वे व्याप्तिप्रत्यक्षे सशयसाधारणव्यभिचारज्ञानप्रतिबन्धकतायां किमपि प्रमाणमस्तीति वाच्यम्। तर्काद् व्यभिचारशङ्कानिवृत्तौ सत्यां तर्कविनाशेऽपि व्याप्तिग्रह इति तदाशयात्।

ननु भूयोदर्शननिरपेक्षतर्कस्य व्याप्तिग्राहकत्वे भूयोदर्शनस्य व्याप्तिग्राहकताप्रवादव्याघात इति कथं न चैवमेवास्त्वित्यादिनेष्टापत्त्याशङ्क्यत आह । व्यभिचारादर्शनेति । क्वचित्तर्कप्रवृत्ताविति । यत्र प्रथमद्वितीयदर्शनदशायां धूमे वह्न्यसमवहिताजन्यत्वं न गृहीतं अपि तु भूयोदर्शनोत्तरमेव तत्र भूयोदर्शनात् कार्यकारणभावनिश्चयेन व्याप्तिग्राहकतर्कप्रवृत्तेरिति भावः । तथा च भूयोदर्शनस्य व्याप्तिग्राहकताप्रवादः काचित्कव्याप्तिग्रहोपयोगितापर इति तस्य व्याप्तिग्रहकारणत्वाविरहेऽपि न नैयायिकानां स्वमतपरित्याग इति भावः ।

(चि०) न चैवमेवास्तु । तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थानात् । जातमात्रस्य प्रवृत्तिनिवृत्तिहेत्वनुमितिजनकव्याप्तिज्ञानं तर्कं विनैवातो नानवस्थेति चेत् ? तर्हि व्यभिचारात् सोऽपि न व्याप्तिग्रहे हेतुः। न चैतद्धावबान्तरजातिरस्ति । सामान्यप्रत्यासत्त्या सर्वोपसंहारादविनाभावग्रहः सामान्यरूपता च न सकृद्दर्शनगम्येति भूयोदर्शनापेक्षेति चेन्न । सामान्यस्य हि प्रत्यासत्तित्वं लाघवान्न तु सामान्यतया ज्ञातस्य, तदनभ्युपगमाच्च । न च काकतालीयत्वादिशङ्काव्युदासार्थं द्वितीयादिदर्शनापेक्षेति वाच्यम् । द्वितीयादिदर्शनेऽपि शङ्कातादवस्थ्यात् । न त्वनौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुः । तद्देशकालतत्रावस्थितघटादीनामुपाधित्वशङ्कानिरासः कस्यचित् साधनव्यापकत्वज्ञानेन कस्यचित् साध्याव्यापकत्वज्ञानेन स्यात्, तच्च भूयोदर्शनं विना नावतरतीति चेन्न । अयोग्योपाधिव्यतिरेकस्यानुमानाधीनज्ञानत्वेनानवस्थापातात् ।

(दी०) नैयायिकमतमाशङ्क्य निराचष्टे । न चैवमिति ।

जातमात्रस्येति । तथा च तन्मूलको व्याप्त्यन्तरग्राहकतर्कांवतार इति भावः । तर्हीति । न च व्याप्तिप्रत्यक्षं प्रति तर्को हेतुस्तत्तु स्मरणमिति न व्यभिचारावकाशः, विनानुभवं स्मरणस्यायोगात् । न च जन्मान्तरीणः सः । जन्मान्तरेऽपि पर्यनुयोगतादवस्थ्यात् । अनादित्वेन च परिहारः परतो विचारयिष्यते । न चेति । मानाभावात्, तर्कस्य च हेतुत्वासिद्धेः । यदि चागृहीतस्यागृहीतपुरोवर्तिसंसर्गस्य वा प्रत्यासत्तित्वेऽतिप्रसङ्गस्तदा पुरोवर्तिनि तद्ग्रहो मृग्यतां न तु सामान्यत्वेनेत्याह । न त्विति ।

(गा०) ननु जातमात्रस्य प्रवृत्त्यादिजनकइष्टसाधनत्वानुमित्यौपयिकव्याप्तिग्रहस्य तर्कं विनोत्पत्तावपि वह्निधूमादिव्याप्तिग्राहकतर्कमूलव्याप्तितन्मूलापरव्याप्तिपरम्परान्तर्गतानां सकलव्याप्तीनां तर्काधीनग्रहसामान्यकत्वोपगमेऽपि तादृशव्याप्तिग्रहसामान्ये उक्तानिष्टप्रदर्शनस्य दुर्वारत्वमित्याशङ्कां परिहरति दीधितौ । तथा चेति । तन्मूलक इति । तदिव मूलं यस्येति व्युत्पत्त्या तत्तुल्यतर्कानपेक्षकाचित्कव्याप्तिग्रहमूलक इत्यर्थो यज्ञपतिप्रभृतिव्याख्यानुसारेणैव कर्तव्यः । सः । जातमात्रबालकीयव्याप्तिस्मरणमूलभूतोऽनुभवः । पर्यनुयोगेति । तादृशानुभव एव तर्कापेक्षयानवस्थासत्त्वादिति भावः ।

नन्वियमनवस्था न दोषाय जन्मप्रवाहस्यानादितया सर्वत्रैव जन्मनि स्वस्वपूर्वजाततर्कापेक्षव्याप्तिप्रत्यक्षमूलकस्मरणस्य प्रथममव्यवहितप्राक्काले तर्कं विनापि सम्भवेन कार्योत्पत्तौ विरोधाभावात्, अन्यथा बीजाङ्कुरस्थलीयानवस्थाया अपि दोषत्वापत्तेरित्यत आह । अनादित्वेनेति । जन्मप्रवाहस्येत्यादिः । परतः । सिद्धान्तग्रन्थे । न चैतद्बुद्धाववान्तरजातिरस्तीति मूले हेत्वनुक्तेर्हेतुं पूरयति । मानाभावादिति ।

ननु तर्कजन्यतावच्छेदकतयैव जातिः सेत्स्यतीत्यत आह । तर्कस्येति । असिद्धेरिति । तर्कस्य विजातीयव्याप्तिबुद्धौ हेतुत्वे तं विनापि

व्यभिचारग्रहदशायां व्याप्तिग्रहसामान्यापत्तेर्दुर्वारत्वात् तत्र व्यभिचारज्ञानाभावहेतुताया आवश्यकत्वे तर्कहेतुतायां युक्त्यभावादिति भावः। सामान्यत्वेन ज्ञातं सामान्यं प्रत्यासत्तिरित्यभिमानेन सामानाधिकरण्यस्य व्याप्तित्वमते ऽनुगितयौपयिकयावद्धूमधर्मिकव्याप्तिग्रहे असन्निकृष्टाया व्याप्तेर्भानमनेकसामानाधिकरण्यवृत्तित्वेन सामानाधिकरण्यत्वज्ञानादेव भविष्यतीत्यनेकसामानाधिकरण्यज्ञानमपेक्षितं तदेव सम्बन्धभूयोदर्शनमित्याशङ्कते मूलकृत्। सामान्येति। सामान्यस्य हि प्रत्यासत्तित्वं इत्यतः स्वरूपसत एव सामान्यस्य प्रत्यासत्तित्वं लभ्यते। तथा च यदा सामान्यस्य ज्ञानमेव नास्ति किं वा ज्ञानमस्ति न त्विन्द्रियसम्बद्धव्यक्तौ तदापि तत्प्रत्यासत्त्या यावत्तदाश्रयप्रत्यक्षापत्तिरित्याशङ्कावतार इत्यतस्तन्निरासाय भावं पूरयति। यदि चेति। सामान्यत्वेन। अनेकव्यक्तिवृत्तित्वेन। न तद्ग्रहो मृग्यतामित्यन्वयः। सामान्यत्वप्रकारकत्वस्य ज्ञानविशेषणत्वाभावेऽपीन्द्रियसम्बद्धविशेष्यकत्वनिवेशस्यावश्यकत्वात्तादृशविशेषणोपादानानर्थक्यादिति भावः।

मूले काकतालीयत्वशङ्केति। धूमवतो वह्निसम्बन्धे काकगमनकालस्य तालपतनसम्बन्धतुल्यत्वशङ्केत्यर्थः, तुल्यत्वं चानियतत्वेन। तथा च वह्नौ धूमाधिकरणव्यक्त्यन्तरनिष्ठाभावप्रतियोगित्वशङ्कापर्यवसायिन्यास्तादृशशङ्काया व्यभिचारशङ्काविधया विरोधित्वात्तद्विधूननार्थं धूमाधिकरणव्यक्त्यन्तरे वह्निसम्बन्धदर्शनमपेक्षितमिति भावः। द्वितीयादिदर्शनेऽपीति। व्यक्त्यन्तरे वह्निसम्बन्धदर्शनेऽपि अपरापरव्यक्त्यन्तर्भावेण तादृशशङ्कोत्पादे बाधकाभावादिति भावः।

(चि०) अथ साध्यसाधनसहचरितधर्मान्तराणामनुपाधित्वसंशये न व्याप्तिग्रहोऽतस्तेषामनुपाधित्वज्ञानं भूयोदर्शनाधीनसाध्याव्यापकत्वज्ञाने सतीत्येतदर्थं भूयोदर्शनापेक्षा। अत एव यावता दर्शनेन तन्निश्चयस्तावद् भूयोदर्शनं हेतुरिति न वारसङ्ख्यानियमो न वाऽननुगमः। यद्यपि चान्यस्य साध्यव्यापक-

स्वसाधनव्यापकत्वसंशयो नान्यव्याप्तिग्रहप्रतिबन्धक स्तथापि तदाहितव्यभिचारसंशयः प्रतिबन्धक इति तद्विधूननमावश्यकमिति चेन्न।

( दी० ) साध्याव्यापकत्वं साध्यसमानाधिकरणाभावप्रतियोगित्वं तद्ग्रहश्च साध्याधिकरणैकव्यक्तिवृत्तितया गृह्यमाणस्य तादृशव्यक्त्यन्तरग्रहं विना न सम्भवतीति भूयोदर्शनापेक्षा।

( गा० ) साध्यव्यापकत्वग्रहे भूयोदर्शनोपयोगितामुपपादयति दीधितौ । साध्याव्यापकत्वमिति । तच्छून्यसाध्याधिकरणव्यक्त्यन्तरस्यैव तद्ग्रहव्यापकताघटकत्वादिति भावः । भूयोदर्शनापेक्षेति । तथा च भूयोदर्शनस्य व्याप्तिग्राहकत्वप्रवादोऽनेकसाध्याधिकरणदर्शनस्य तथात्वपर इति भावः ।

मूलस्थतद्व्यापारपदस्य बहिरिन्द्रियव्यापारार्थकत्वे बहिरिन्द्रियस्य व्यभिचारेण व्याप्तिग्राहकत्वासम्भवाद् भूयोदर्शनाहितसंस्कारस्य तत्सहकारिता न सम्भवतीति लभ्यते तच्च नोपपद्यते चाक्षुषत्वादेश्चक्षुरादिजन्यतावच्छेदकतया मानसव्याप्तिग्रहे तद्व्यभिचाराप्रकाशात् । भूयोदर्शनव्यापारार्थकत्वे तादृशसंस्कार विना भूयोदर्शनकारणतावादिना मानसस्यापि व्याप्तिग्रहस्यानुपगमेनासङ्गतिः । स्वतःसिद्धशङ्काविरहस्थले सकृद्दर्शनादपि व्याप्तिग्रहोपगमे ईदृशव्यभिचारेण मनःसहकारितायाः अप्यसम्भवेन तादृशसंस्कारस्य प्रमाणान्तरतापरया मनःसहकारिताप्रतिक्षेपपरस्य नापीत्यादेरनुपस्थितिरित्यन्यथा व्याख्यातु वितर्कयति । तदाहित इति ।

( चि० ) अयोग्योपाधिसंशयाधीनव्यभिचारसंशयस्य तथाप्यनुच्छेदात् । स च न भूयोदर्शनान्नाप्यनुमानादित्युक्तम् । अपि च भूयोदर्शनाहितसंस्कारो न बहिरिन्द्रियसहकारी तद्व्यापारं विनापि च सहचारादिज्ञानवतो व्याप्तिग्रहात् । नापि मनसः, इन्द्रिया-

दिवद् भूयोदर्शनजन्यसंस्कारस्य तज्जन्यस्मरणस्य वा प्रमाणान्तरत्वापत्तेः ।

( दी० ) तदाहितः संस्कारो बहिरिन्द्रियमात्रस्य सहकारी मनसोऽपि वा ? आद्ये तद्व्यापारं विनेति । द्वितीये नापीति ।

( गा० ) सकलेन्द्रियसहकारित्वेऽपि वक्ष्यमाणप्रमाणान्तरतापत्तिसत्त्वाद्विशिष्य मनोमात्रोपादानमयुक्तमित्याशयेनाधिकारमन्तर्भाव्य विकल्पयति । मनसोऽपीति । आद्य इति । बहिरिन्द्रियव्यापारं विनापि व्याप्तिग्रहे तत्साधारणधर्मस्यैव तादृशसंस्कारजन्यतावच्छेदकत्वमुपेयम्, अन्यथा तादृशसंस्कारं विनापि तत्सध्रीचीनसामग्रीबलाद्व्याप्तिप्रत्यक्षापत्तेः । एवं च बहिरिन्द्रियेतरस्य मनसोऽपि सहकारित्वमव्याहतमेवेति तन्मात्रसहकारित्वानुपपत्तिरिति मूलाभिप्राय इति भावः ।

( चि० ) तस्मात् परिशेषात् सकृद्दर्शनगम्या सा । तथा हि उपाध्यभावो व्याप्तिः । अभावश्च केवलाधिकरणं तत्कालसम्बन्धो वा स्वप्रकाशरूपं तज्ज्ञानं वा ? तच्च प्रथमदर्शनेनावगतमेव चक्षुरादिना । न चाधिकस्तदभावोऽस्ति । न च प्रतियोगिज्ञानमधिकरणादिज्ञानजनकं येनोपाधिज्ञानं विना तन्न स्यात् । एवमुपाध्यभावे ज्ञाते किंचिन्न ज्ञातुमवशिष्यते । उपाध्यभावव्यवहारस्तु तद्द्वयमपेक्षते, दीर्घत्वादिव्यवहार इवावधिज्ञानम् । न चैवं रासभसम्बन्धतुल्यवह्निधूमसम्बन्धज्ञानादेवानुमितिः स्यादिति वाच्यम् । उपाधिस्मरणे सति उपाधितद्व्याप्येतरसकलतदुपलम्भकसमवधाने चोपाध्यनुपलम्भसहितस्य केवलाधिकरणज्ञानस्यानुमितिहेतुत्वात्तद्व्यवहारहेतुत्वाच्च ।

(दी०) परिशेषात् । साध्यसाधनसम्बन्धग्राहकातिरिक्तान-

पेक्षग्राहकत्वात् । उपाध्यभावग्राहकस्यापेक्षणीयत्वादसिद्धिं निरस्यति । तथा हीति । उपाधिस्मरणे इत्यादि ।

( मा० ) ननु व्याप्तिग्राहकभूयोदर्शनकत्वे सति ग्राह्यत्वं परिशेषः, तच्च घटादौ निर्धूयमाणसकृद्दर्शनग्राह्यत्वव्यभिचारीति कथं हेतुवेत्यत आह । परिशेषादिति । साध्यसाधनसम्बन्धेति । ननु साध्यसाधनसामानाधिकरण्यग्राहकातिरिक्ताजन्यग्रहविषयत्वं घटादेरपि, तादृशसामानाधिकरण्यविषयकघटादिविषयकसमूहालम्बनग्रहस्य तत्सामानाधिकरण्यग्रहाजनकाजन्यत्वात् । साध्यसाधनसम्बन्धग्राहकातिरिक्तजन्यग्रहाविषयत्वस्य साध्यसाधनसम्बन्धाविषयकग्रहाविषयत्वपर्यवसितस्य तदर्थत्वे च साधननिष्ठतत्स्वरूपोपाध्यभावरूपायां व्याप्तावसिद्धिः । साधनस्वरूपस्य साध्यसाधनसम्बन्धाविषयके ज्ञानेऽपि कदाचिद्भानादुपाध्यभावविशिष्टसाध्यसाधनसामानाधिकरण्यस्य व्याप्तित्वेऽपि साध्यादेरेव दर्शितव्याप्तौ दृष्टान्ततया तदसिद्धितादवस्थ्यमेव । एवं साध्यसाधनसम्बन्धघटितपदार्थान्तरे व्यभिचारोऽपि दुर्वार इति । एतेन साध्यसाधनसम्बन्धविषयित्वावच्छिन्नजन्यत्वानिरूपकहेतुत्वादिनिरूपितजन्यतानवच्छेदकविषयिताकत्वस्य साध्यसाधनसम्बन्धविषयितानवच्छिन्नजन्यतानवच्छेदकविषयिताकत्वस्य वा विवक्षितत्वेऽपि न निस्तारः । साधनादिविषयिताया अपि तादृशजन्यताविशेषावच्छेदकत्वादिति चेन्न ।

साध्यसाधनसम्बन्धग्रहत्वावच्छिन्नाभावाप्रयोजकाप्रयुक्तग्रहत्वावच्छिन्नाभावकत्वस्य साध्यसाधनसम्बन्धविषयितावच्छिन्नजन्यतासामान्यावच्छेदकविषयिताकत्वस्य वा विवक्षितत्वात् साध्यसाधनग्रहत्वावच्छिन्नाभावप्रयोजकस्तद्ग्राहकसामग्र्यभावश्च न साध्यसाधनसम्बन्धग्रहत्वावच्छिन्नाभावाप्रयोजकः, व्यापकधर्मावच्छिन्नाभावप्रयोजकस्य व्यापकधर्मावच्छिन्नसामग्र्यभावस्य व्याप्यधर्मावच्छिन्नानुत्पादप्रयोजकत्वानियमादित्यतः प्रथमस्य, साध्यसाधनसामानाधिकरण्यविषयितान्तःपातिन्याः साध्यादिविषयितायास्तादृशसकलजन्यतावच्छेदकत्वाच्च द्वितीयस्य नासिद्धिः ।

वस्तुतस्तु ग्रहपदस्य विषयितार्थकतया साध्यसाधनसम्ब

न्धविषयित्वाप्रयोजकानधीनविषयिताकत्वमेव साध्यसाधनेत्या-
दिहेतुभागार्थः । एकदेशभानं विना विशिष्टभानानिर्वाहात् सा-
ध्यादिविषयिताप्रयोजकस्य साध्यसाधनसम्बन्धविषयिताप्रयोजक-
त्वनियमाच्च दृष्टान्तासिद्धिः । साध्यसाधनसम्बन्धावगाहिज्ञानज-
नकातिरिक्ताजन्ये समूहालम्बने घटादेर्विषयत्वेऽपि तद्विषयकत्वस्य
साध्यसाधनसम्बन्धभानाप्रयोजकघटेन्द्रियसन्निकर्षादिप्रयोज्यत्वान्न
व्यभिचारः । प्रयोज्यप्रयोजकभावश्च प्रतीतिसाक्षिकः स्वरूपस-
म्बन्धविशेष एवेति सर्वमनाकुलम् ।

साध्यसाधनसम्बन्धग्राहकताव्यापकग्राहकताकत्वं सकृद्दर्शन-
ग्राह्यत्व बोध्यम् ।

अनुमितिजनकतावच्छेदकहेतुविषयतानिरूपितप्रकारताश्रयत्वे-
न पक्षता अतो व्यापकसामानाधिकरण्यरूपव्याप्तेः पक्षत्वे या-
प्त्यसिद्धौ तथा इत्यादिग्रन्थविरोधश्च, उपाध्यभावरूपव्याप्तेः प-
क्षत्वे यादृशव्याप्तेर्भूयोदर्शनग्राह्यता नैयायिकानामभिमता तस्याः
सकृद्दर्शनग्राह्यतासाधनासम्भवेनार्थान्तरप्रसङ्ग इति दूषणमनवका-
शम् । तादृशप्रकारताश्रयो भूयोदर्शनग्राह्यः सकृद्दर्शनग्राह्यो वेति वि-
वादेन तादृशरूपावच्छिन्ने सकृद्दर्शनग्राह्यत्वस्याकाङ्क्षितत्वात् । ता-
दृशरूपावच्छिन्नं च नैयायिकानां मते व्यापकसामानाधिकरण्यं
तन्मते तु उपाध्यभाव इत्यन्यदेतत् ।

सकृद्दर्शनानन्तरमनुमित्यापत्तिवारणप्रस्तावे व्यवहारसामग्री-
कथनस्यानाकाङ्क्षितत्वात्तद्व्यवहारहेतुत्वादिति मूलासङ्गतिशङ्कानि-
रासायोपाधियोग्यानुपलम्भस्यानुमितिहेतुत्वे अतीन्द्रियासन्निकृष्ट-
हेतुकानुमित्यनुपपत्तेस्तत्रोपाध्यभावव्यवहारस्यानुपपत्त्या समं स-
मानसमाधानतालाभाय तत्र तद्व्यवहारानुपपत्तिसूचकं व्यवहारे
योग्यानुपलब्धेर्हेतुताभिधानमिति सूचयितुं तद्ग्रन्थमवतारयति ।
नन्वेवमिति ।

( दी० ) नन्वेवमसन्निकृष्टादिहेतुकानुमितिर्न स्यात् , उ-
पाधियोग्यानुपलम्भविरहादत आह । तद्व्यवहारेति । तथा च
तद्व्यवहारस्य हेतुरेवानुमितिहेतुः । तच्चोपाध्यभावत्वेन ज्ञा-
नम् । उपाधिस्मरणे इत्यादि तु तत्कारणप्रदर्शनपरम् । अभा-

यत्त्वत्रेदमिह नास्तीति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषो ऽतिरिक्तः पदार्थो वेत्यन्यदेतत् । एवं चोपाध्यभावत्वेन ज्ञानेऽधिकापेक्षा न वारयाम इति भावः ।

( गा० ) तादृशसमाधानस्फुटीकरणाय भावं व्याचष्टे । तथा चेत्यादिना भाव इत्यन्तेन । तथा च । व्यवहारस्याप्यनुपपत्तिसत्त्वेन तत्रान्यस्य कारणत्वं च । हेतुः । कारणम् । स एवेत्येवकारेण उपाधियोग्यानुपलम्भस्य कारणत्वव्यवच्छेदः ।

नन्वेवमुपाधियोग्यानुपलम्भस्यानुमित्याद्यभावव्यवहारे च हेतुत्वाभिधानमसङ्गतमित्यत आह । उपाधिस्मरणे इत्यादि । तत्कारणेति । प्रत्यक्षात्मकोपाध्यभावप्रकारकज्ञानकारणेत्यर्थः । तथा च तत्र हेतुपदं योग्यतानिरूपहेतुकानुमित्यादिविशेषप्रयोजकपरमिति नासङ्गतिरिति भावः ।

अभावाख्यस्य भावभिन्नत्वातिरिक्तस्य दुर्निर्वचतया तेन प्रकारेणाधिकरणस्वरूपाभाववादिनामभावज्ञानहेतुता न सम्भवति भावभिन्नत्वस्य तन्मतेऽप्रसिद्धेरतोऽभावत्वं निर्वक्ति । अभावत्वं चेति । प्रतीतिसाक्षिकं इति । तादृशप्रतीतौ प्रतियोग्यविरिक्तस्य नञ्पदनिर्देश्यतावच्छेदकस्य वस्तुनो ऽभावांशे प्रकारतया अनुभवादिति भावः । स्वरूपविशेषत्वे ऽनुगतप्रतीत्युपपादकत्वायोग इत्याशयेनाह । पदार्थान्तर वेति । उपाध्यभावत्वप्रकारकव्याप्तिज्ञाने योग्यानुपलम्भहेतुत्वे साध्यसाधनसम्बन्धग्राहकातिरिक्तानपेक्षग्राहकत्वस्य व्याप्त्यसिद्धिरित्याशङ्कापरिहाराय स्वयं व्याचष्टे । एवं चेति । न वारयाम इति । तादात्म्याधिकरणतावच्छेदकधूमत्वादिप्रकारेण तद्ग्रहेऽधिकापेक्षाविरहेणासिद्धिशङ्कानवकाशादिति भावः ।

( चि० ) नन्वेवं प्रथमदर्शनेन व्याप्तिनिश्चयादिशोपदर्शने सति रासभादिसंशयवत् तत्संशयो न स्यादिति चेत् ? व्याप्तिज्ञानानन्तरं किं विद्यमान एवोपाधिर्मयोपाधित्वेन न ज्ञात इति शङ्कया गृहीतव्याप्तावपि संशयः । अतस्तत्र भूयोदर्शनेनोपाधिनिरासद्वारा व्याप्त्यभावशङ्काऽपनीयते ।

(दी०) व्याप्तिस्वरूपे संशयाभाव आपद्यते निरुपाधिसम्बन्धस्वरूपव्याप्तित्वेन वा ? आद्ये इष्टापत्तिः, द्वितीयमपि किमुपाधिस्मरणादिकं विना तत्समवधाने सति वा सम्बन्धग्रहे ? आद्ये किं विद्यमान इति । तथा च तद्ग्रहमात्रं न तु तदभावत्वेनापि ग्रह इति समानप्रकारकनिश्चयाभावात्तत्संशयो नानुपपन्न इति भावः ।

(गा०) उपाध्यभावविशिष्टसाध्यसामानाधिकरण्यरूपव्याप्तेस्तत्स्वरूपवृत्तिसाध्यसामानाधिकरण्यत्वप्रकारेण संशयाभावापत्तौ समानाकारकनिश्चयाभावेन संशयो नानुपपन्न इति किं विद्यमान इत्यादिग्रन्थलभ्यसमाधानस्यासङ्गतिः, तत्प्रकारकनिश्चयस्य प्रथमतो वृत्तत्वात् अतस्तादृशानुपपत्तिं स्वयं समाधातुं अन्यादृशसंशयाभावापत्तौ च मूलोक्तसमाधानं योजयितुं वितर्कयति । व्याप्तिस्वरूप इति । तत्स्वरूपवृत्तिसाध्यसामानाधिकरण्यत्वाद्यवच्छिन्ने इत्यर्थः । निरुपाधिसम्बन्धस्वरूपेति । उपाध्यभावत्वाद्यवच्छिन्नविशिष्टसाध्यसामानाधिकरण्यस्वरूपेत्यर्थः । उपाधिस्मरणानन्तरोत्पन्नप्रथमदर्शनोत्तरं संशयाभावापत्तौ मूलोक्तप्रथमसमाधानासङ्गतिः । तत्र योग्यानुपलम्भसत्त्वेन निरुपाधिसम्बन्धत्वप्रकारकस्यापि निश्चयस्य सम्भवात् तत्समवधानानन्तरोत्पन्नदर्शनोत्तरं तदापत्तौ च विरोधिनिश्चयकालीनार्थसंशये एव प्रामाण्यसंशयस्योपयोगितया तदानीं च निरुपाधिसम्बन्धत्वप्रकारकनिश्चयानुत्पत्त्या यद्वेत्यादिना प्रामाण्यसंशयं कल्पयित्वा तत्प्रकारकसंशयोपपादनमकिञ्चित्करमिति द्वितीयपक्षं पुनर्वितर्क्य समाधानद्वयं योजयति । द्वितीयमपीति । आपादनमिति शेषः । उपाधिस्मरणादिकं विना सम्बन्धग्रहे इत्यन्वयः । यादृशसम्बन्धग्रहपूर्वमुपाध्यभावत्वप्रकारकज्ञानजनकोपाधिस्मरणादिघटितो योग्यानुपलम्भो नासीत्तदुत्तरमित्यर्थः ।

तत्समवधाने इति । तादृशयोग्यानुपलम्भसमवधानोत्तरजातसम्बन्धदर्शनोत्तरं चेत्यर्थः । यथात्र हेतावुपाधित्वेनानुपलभ्यमान उपाधिरत्र विद्यमानो न वेति संशयात्व्याप्तिसंशय इति यथाश्रुतमूलार्थो न सङ्गच्छते, उपाधिनिष्ठस्य प्रकृतहेतुवर्तमानत्वाभावस्याप्युपाधिरू-

पधर्मिस्वरूपतया निश्चितत्वेन संशयायोगात् । हेनाशुपाध्यभावनिश्च यस्यापि तादृशसंशयविरोधित्वात् । अप्रामाण्यसंशयातिरिक्तसंश यस्य विपरीतनिश्चयप्रतिबन्धकतायामुत्तेजकत्वे मानाभावाच्च । स मानाकारकनिश्चयाभावादेव संशयोपपत्तेस्तमनुक्त्वा प्रकारान्तरा नुसरणे न्यूनतानुद्धारायेति । विद्यमाने । ज्ञायमाने हेतौ । उपाधि त्वेनोपाधिरेव न ज्ञात इति मूले योजनीयमित्यभिसन्धिना ता दृशमूलस्य फलितार्थमाह । तथा चेति । तद्ग्रहमात्रम् । उपा ध्यनुपलम्भमात्रम् । उपाध्यनुपलम्भयोग्यत्वमिह मात्रपदव्यवच्छे द्यम् । तद्व्यवच्छेदलभ्यमाह । न त्विति । तदभावत्वेन । उपाध्यभा वत्वेन । ग्रह इति । तादृशग्रहप्रयोजकस्योपाधियोग्यानुपलम्भस्या भावादिति भावः । तावतैव कथं संशय इत्यत आह । समानेति ।

(चि०)यद्वा ज्ञानप्रमाण्यसंशयाद्व्याप्तिसंशयः, यथा घटज्ञानसामग्र्यां सत्यां 'घटज्ञाने सति तत्प्रामाण्य- संशयाद्घितस्तत्संशयो न स्वधर्मिसंशयानुरोधेन तत्र घटज्ञानमेव न वृत्तमिति कल्प्यते । तथेहाप्युपा ध्यभावस्य व्याप्तित्वात्तस्य च केवलाधिकरणरूपस्य प्रथमदर्शनेऽपि निश्चितत्वाद् व्याप्तिग्राहकान्तरस्याभा- वाच्च परिशेषेण सकृद्दर्शनस्य व्याप्तिग्राहकत्वात्त- न्निश्चये प्रामाण्यसंशयादेव तत्संशयः । न चैवं रासभे- ऽपि प्रथमं व्याप्तिपरिच्छेदः स्यादिति वाच्यम् । तत्र व्याप्तेरभावात् प्रत्यक्षज्ञाने विषयस्य हेतुत्वात् क्वचिद्संसर्गाग्रहात् तथा व्यवहारो दोषमाहात्म्यात् । न चात्रापि तथा, आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इत्यभ्युपगमात् ।

(दी०) द्वितीये ज्ञानप्रामाण्येति । प्रथमेति । सत्युपाधिस्म- रणादावित्यादिः । न चात्रापीति । सर्वत्र रासभादावित्यर्थः ।

(गा०) ननु प्रथमदर्शनेऽपि निश्चितत्वात्प्रामाण्यसंशयादेव

तत्संशय इति मूलमसङ्गतं प्रथमदर्शने उपाध्यभावत्वेन व्याप्तेरभानात् प्रामाण्यसंशयस्य तदुत्तरसंशयेऽनुपयोगादित्यतः पूरयति । सत्युपाधीति । तथा चोपाध्यभावत्वप्रकारकज्ञानजनकस्योपाधियोग्यानुपलम्भस्य सत्त्वेन प्रथममुपाध्यभावत्वेन ज्ञानं सम्भवतीति प्रामाण्यसंशयोपयोग इति भावः । एवं च निश्चितत्वादिति मूलस्य उपाध्यभावत्वेनेत्यादिः । ननु उपाध्यभावत्वेन ज्ञाने उपाधियोग्यानुपलम्भवत् प्रथमदर्शनदशायां दुर्घटमन्यदपि किञ्चित्कारणं कल्प्यतां तत एव तथोपाध्यभावत्वप्रकारकज्ञानाभावोपपत्तौ किं ज्ञानप्रामाण्यसंशयकल्पनयेत्यत आह मूले । व्याप्तिग्राहकान्तरेति । भूयोदर्शनादेर्व्याप्तिग्राहकत्वासम्भवादित्यर्थः । सकृद्दर्शनस्य । उपाधियोग्यानुपलम्भमात्रसहकृतस्याधिकरणस्वरूपस्य । ग्राहकत्वात् । उपाध्यभावत्वेन व्याप्तिनिश्चायकत्वात् । तन्निश्चये । तादृशनिश्चयावश्यम्भावे । न चात्रापीत्यत्रात्रेत्यस्य रासभे इत्यर्थकत्वेऽसङ्गतिः क्वचिद्रासभे व्याप्यव्यवहारस्येष्टत्वादू अतो दीधितिकृद्व्याचष्टे । सर्वत्र रासभादावित्यर्थ इति ।

अधिकरणादिस्वरूपातिरिक्तत्वमभावस्याभ्युपेत्यापि उपाधिसामान्याभावस्यातीन्द्रियत्वाशयेन व्यापकसामानाधिकरण्यरूपव्याप्तिमवलम्ब्य तस्यास्तादृशव्याप्तित्वेन सहचारदर्शनसामग्रीजन्यलौकिकप्रत्यक्षविषयत्वरूपसकृद्दर्शनग्राह्यत्वं व्यवस्थापयतामेकदेशिनां मतमुपन्यस्यति मूले । केचित्त्विति ।

( चिं० ) केचित्तु साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्, साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वं वा व्याप्तिस्तदुभयमपि योग्यं प्रत्यक्षेण वह्निधूमसम्बन्धानुभवेन प्रथममवगतमेव । महानसे योऽत्यन्ताभावोऽन्योन्याभावो वाऽवगतस्तस्य प्रतियोगी न वह्निर्न वा वह्निमानित्यनुभवात् । रासभे तथाऽवगमेऽप्यग्रे स बाध्यते इति तन्न । एवं हि तद्वह्नितद्धूमयोरेव व्याप्तिः स्यान्न तु

धूमत्ववह्नित्वावच्छेदेन न च तदनुमानोपयोगिवह्नित्वं वह्निमत्त्वं वा न प्रतियोगितावच्छेदकमिति प्रथमतो ज्ञातुमशक्यमेवेति । मैवम् ।

(दी०) अवगत इति । स्वरूपकथनमात्रम् । महानसे इत्यस्य । अस्मिन्नित्यादिः । महति वायौ योग्यायोग्ययोरुद्भूतरूपसामान्यतद्वतोरिव योग्ये वह्नौ तादृशप्रतियोगित्वसामान्यतद्वतोरप्यत्यन्तान्योन्याभावयोर्योग्यत्वादिति भावः । न प्रतियोगितावच्छेदकमिति । न धूमसामान्यसमानाधिकरणतादृशाभावप्रतियोगितासामान्यावच्छेदकमित्यर्थः ।

(गा०) नन्ववगतत्वस्य व्यापकत्वाघटकत्वाद्व्यापकताज्ञानाकारमध्येऽवगत इति कीर्तनमकिञ्चित्करमित्यत आह दीधितौ । अवगत इतीति । धूमसामान्यसमानाधिकरणाभावप्रतियोगित्वाभाववन्महानससामान्यनिष्ठाभावप्रतियोगित्वाभावोऽपि न योग्यः । विप्रकृष्टमहानसनिष्ठाभावप्रतियोगित्वसत्त्वेऽपि अनुपलम्भसम्भवादित्यतः पूरयति । महानसे इत्यस्येति । अवगतत्वस्य विवक्षितत्वे महानसान्तरेऽभावान्तरस्यानवगतत्वदशायां महानसाद्यवगताभावप्रतियोगितावच्छेदकत्वाभावस्य ग्रहसम्भवादस्मिन्निति पूरणमप्रयोजकमतोऽवगतत्वांशापरित्यागात्पूर्वं नैतत्पूरितम् ।

ननु तादृशाभावप्रतियोगित्वस्यापि पिशाचादिनिष्ठस्यायोग्यत्वात्तत्साधारणतादृशप्रतियोगित्वत्वावच्छिन्नात्यन्ताभावतद्भेदयोः कथं योग्यतेत्यत आह । महतीति । तथा च योग्यमात्रप्रतियोगिकत्वं नाभावयोग्यतानियामकं अपि तु योग्यानुपलम्भः, महति वायौ पक्षवृत्तिमहत्त्वविशेषणविशिष्टोद्भूतरूपवत्त्वं आपादकीकृत्य उद्भूतरूपोपलम्भस्येव योग्ये वह्नौ योग्यताविशिष्टतादृशप्रतियोगित्वमापादकीकृत्य तदुपलम्भापादनस्य सम्भवात्पक्षावृत्तिविशेषणविशेषितप्रतियोगित्वापादकापत्तेर्योग्यप्रतियोगित्वप्रतियोग्युपलम्भाभावरूपयोग्यानुपलम्भोऽक्षत एवेति तादृशप्रतियोगित्वतद्वतोरत्यन्तान्योन्याभावौ

न्नायोग्याविति भावः । महत्त्वविशेषितस्यैवोद्भूतरूपस्य तदुपलम्भव्याप्यतया वायवीयाणौ नोद्भूतरूपतद्वत्तोरत्यन्तान्योन्याभावौ योग्यौ महत्त्वरूपविशेषणस्य तादृशपक्षावृत्तित्वादतो महतीत्युक्तम् । अत्र वाय्वंशेऽलौकिकं वायुविशेषणकमेवोद्भूतरूपाभावविशेष्यकं प्रत्यक्षं न तु वायुविशेष्यकं तस्यायोग्यत्वादित्यवधेयम् । चक्षुरादौ व्यभिचारेण महत्त्वविशेषणविशिष्टरूपसत्त्वस्य रूपोपलम्भाव्याप्यत्वाद् रूपसामान्याभावो न प्रत्यक्ष इत्येतल्लाभाय उद्भूतेति ।

न च पक्षवृत्त्यनुद्भूतरूपसामान्याभावविशिष्टनादृशरूपोपलम्भाव्याप्यत्वाद्रूपसामान्याभावोऽपि प्रत्यक्षः स्यात् प्रतियोगिग्राहकातिरिक्तविशेषणाविशेषितत्वस्य प्रतियोगिसत्त्वविशेषणत्वेऽपि नैतद्दोषोद्धारो रूपसहितानुद्भूतरूपसामान्याभावस्य प्रतियोगिग्राहकत्वादिति वाच्यम् । यतो रूपसहितानुद्भूतरूपाभावो न प्रत्यक्षकारणं अपि तु अनुद्भूतरूपभेदकूटविशिष्टमुद्भूतत्वरूपजातिविशेषविशिष्टं वा रूपमिति मतावलम्बनेनैनदभिधानात् । वह्निव्यणुके भर्जनकपालस्थवह्नौ च तादृशप्रतियोगित्वाभावतद्वद्भेदौ च न योग्यौ तद्वद्वृत्तियोग्यताविशिष्टस्यैव तादृशप्रतियोगित्वस्य स्वोपलम्भापादकत्वादतो योग्ये वह्नावित्युक्तम् । इदं तु विशेषव्याप्तिरवच्छेदकत्वाभावाघटितेत्यभिमानेन तत्प्रतियोगी न वह्निरिति मूलीयव्यापकताज्ञानाकारप्रदर्शनमनुरुध्य वह्नौ प्रतियोगित्वाभावस्य योग्यत्वोपपादनम् ।

वह्नित्वादौ प्रतियोगितासामान्यानवच्छेदकत्वस्य व्याप्त्यघटकत्वाद्वह्नावित्युक्तम् । वह्नित्वादिकं न प्रतियोगितावच्छेदकमित्याकारकज्ञानस्य प्रथमतो ऽशक्यत्वं न सामान्यव्याप्तेः सकृद्दर्शनग्राह्यत्वाभावोपपादकं अतः प्रतियोगितापदं प्रतियोगिताविशेषपरतया व्याकुरुते । न धूमेति । धूमव्यक्तिविशेषसमानाधिकरणाभावप्रतियोगितासामान्यावच्छेदकत्वाभावस्य सुग्रहत्वाद्धूमसामान्येति । तादृशाभावप्रतियोगिताविशेषावच्छेदकत्वाभावस्य सुग्रहत्वात्प्रतियोगितासामान्येति । आद्यन्तयोः सामान्यपदोपादानादभावपदस्यापि तत्सामान्यपरतालाभः, अतस्तादृशाभावविशेषप्रतियोगितावच्छेदकत्वाभावस्य सुग्रहत्वेऽपि न क्षतिः ।

( चि० ) प्रकृतसाध्यव्यापकसाधनाव्यापको वा साधनस्याभिमतेन समं प्रकृतसाध्यसम्बन्धितावच्छेदकं विशेषणं वोपाधिः । उभयथापि तदभावो न व्याप्तिः । सिद्ध्यसिद्धिभ्यां तन्निर्वचनानुपपत्तेः । किं तु यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमनौपाधिकत्वम् । तस्य च प्रथमं ज्ञातुमशक्यत्वात् । किं च न वस्तुगत्या व्याप्तेर्ज्ञानं हेतुः किन्तु व्याप्तित्वेन तच्चोपाध्यभावत्वम् । न चोपाधेरज्ञाने तदभावत्वेन ज्ञानं सम्भवति, विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्य । न च नियमतः प्रथममुपाधिधीरस्ति । यथोक्तं प्रतियोगिज्ञानं व्यवहारहेतुर्नाभावज्ञाने इति । अस्तु तावदेवम् । तथापि तदभावो मा व्यवहारि । उपाध्यभावज्ञानाधीनानुमितिः स्यादेव उपाधिज्ञानं विनापि । न चैवम् । वस्तुतस्तु विशेषादर्शने सहचारादिसाधारणधर्मदर्शनाद्व्यभिचारसंशयात्प्रथमदर्शनेन न व्याप्तिनिश्चयः ।

( दी० ) अथ साधनाव्यापकव्याप्यत्वाभावः साध्येऽधिकरणस्वरूपमेव, एवं साधननिष्ठसाध्यसम्बन्धे साधनतावच्छेदकातिरिक्तावच्छेद्यत्वाभावोऽपीत्यनुमानो येन रूपेण ज्ञाता व्याप्तिरनुमित्यङ्गं तद्रूपविशिष्टा न सकृद्दर्शनगम्या, सामानाधिकरण्यमात्रस्य च तथाभावं न वारयाम इत्याशयेनाह । किञ्चेति । विशेषणज्ञानसाध्यत्वात् तत्सामग्रीसाध्यत्वाद्वा । न चेति । उपलक्षणमेतत् । उपाधेरयोग्यस्यापि सम्भवादुपाधिसामान्यतद्वत्तोर्मूर्तत्वादिसामान्यतद्वतोरिवात्यन्तान्योन्याभावयोरयोग्यतया प्रत्यक्षेण गृहीतुमशक्यत्वात् । न च योग्यो-

पाधिव्यतिरेकग्रह एवानुमानाद्वम्, अयोग्योपाधिग्रहेऽप्यनुमितिप्रसङ्गात् । यथाश्रुतं दूषयति । यच्चोक्तमित्यादिना ।

. (गा०) तस्य च प्रथमं ज्ञातुमशक्यत्वादिति मूले यद्यपि यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यस्य व्याप्तित्वेऽपि साध्यसामानाधिकरण्यत्वेन सकृद्दर्शनग्राह्यत्वं तस्याः सुवचम् । व्याप्तित्वेन ग्राह्यत्वासम्भवस्तु यथाश्रुतोपाध्यभावरूपव्याप्तित्वपक्षेऽपि किं चेत्यादिना वाच्य इति पारिभाषिकानौपाधिकत्वस्य व्याप्तित्वं स्वीकार्य सकृद्दर्शनग्राह्यतानिराकरणं न सङ्गच्छते । तथापि साध्यसाधनसामानाधिकरण्यभागस्य तथात्वे ऽविवादात्साध्यसाधनसामानाधिकरण्यविषयतान्तःपातिविषयतानिरूपितानुमितिजनकतावच्छेदकप्रकारताश्रयस्य येन केनापि रूपेण सकृद्दर्शनग्राह्यत्वं गुरोर्मतमित्याशयेन सङ्गनिर्दीधितौ साधनाव्यापकव्याप्यत्वाभाव इति ।

स्वावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाधनतावच्छेदकावच्छिन्नसमानाधिकरणाभावप्रतियोगितावच्छेदककत्वाभाव इत्यर्थः । साध्ये साध्यतावच्छेदके । साधनव्यापकतानवच्छेदका यावन्तो धर्माः प्रत्येकं तत्तदवच्छिन्नाभाववद्वृत्तितानवच्छेदकत्ववृत्त्यवच्छेदकत्वोभयाभावकूटवत्वं साध्यतावच्छेदके इत्यर्थ इत्यप्याहुः । अधिकरणस्वरूपमेवेति । तथा च तादृशाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यात्मकानौपाधिकत्वसम्बन्धरूपव्याप्तेः सकृद्दर्शनगम्यत्वमव्याहतमेवेति भावः । साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपोपाधिलक्षणानुसारेणानौपाधिकत्वं निरुच्य साध्यसम्बन्धितावच्छेदकविशेषणरूपोपाधिलक्षणानुसारेण तन्निर्वक्ति । एवमिति । साधनतावच्छेदकातिरिक्तावच्छेद्यत्वाभावोऽपीति । अधिकरणस्वरूप एवेत्यनुपज्यते ।

यद्यपि धूमादिनिष्ठवह्निसामानाधिकरण्येऽपि प्रकृतसाधनतावच्छेदकीभूतधूमत्वाद्यतिरिक्तत्तद्व्यक्तित्वावच्छेद्यत्वमक्षतम् । तथापि साधनतावच्छेदकातिरिक्तमात्रावच्छेद्यत्वमत्र विवक्षितम् । यत्र प्रमेयसामान्यमेव साधनतावच्छेदकं तत्र तदतिरिक्ताप्रसिद्धावपि न क्षतिः । साधनतावच्छेदकानवच्छेद्यत्वविशिष्टावच्छेद्यत्वस्यैवावच्छेद्यत्वान्तार्थतया साधनतावच्छेदकातिरिक्तांशस्यानिवेशात् ।

प्रमेयसामान्यस्य साधनतावच्छेदकता यत्र तत्रावच्छेद्यमात्रस्य साधनतावच्छेदकयत्किञ्चिन्मेयावच्छेद्यत्वनियमेऽपि साधनतावच्छेदकतापर्याप्त्यधिकरणमेयत्वविशिष्टानवच्छेद्यत्वसहितमवच्छेद्यत्वरूपान्तरेण स्वरूपतो वा मेयावच्छेद्ये वस्तुनि प्रसिद्धमेव । महानसीयवह्न्यादिसामानाधिकरण्यस्य वह्न्यादिसामानाधिकरण्यत्वेन धूमत्वावच्छेद्यत्वेऽपि महानसीयवह्निमान् धूमादित्यादौ नातिव्याप्तिः। साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यत्वे साधनतावच्छेदकधर्मावच्छेद्यतावच्छेदताविरहविशिष्टावच्छेद्यतावच्छेदकत्वाभावस्यैव विवक्षितत्वात् । अभावस्य भावप्रतियोगिकतयाऽधिकरणस्वरूपतानिर्वाहाय प्रतियोगिकोटौ विशेष्यदलम् ।

वस्तुतः स्वरूपसम्बन्धरूपावच्छेद्यावच्छेदकभावस्य दूषितत्वात्पारिभाषिकमवच्छेदकत्वं निवेश्यं तथा च साधनतावच्छेदकावच्छिन्नसमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वं स्वविशिष्टनिरूपकाधिकरणवृत्तितावच्छेदकसाधनतावच्छेदककत्वं वा साधनतावच्छेदकावच्छेद्यतानवच्छेदकत्वं तदभाव एव साध्यसामानाधिकरण्यत्वे निवेशनीय इति ।

व्याप्तित्वेन व्याप्तेः प्रथमदर्शनाविषयत्वेऽपि साध्यसामानाधिकरण्यत्वेन तथात्वानपायात् गुरूणामभिमतं सेत्स्यतीति शङ्कायाः किं चेत्यादिदूषणोपरि सत्त्वात्तां निराकर्तुमाशयं पूरयति । येनेत्यादिना । सामानाधिकरण्यमात्रस्य । केवलसाध्यसामानाधिकरण्यत्वावच्छिन्नस्य । तथाभावम् । सकृद्दर्शनगम्यत्वम् । न वारयाम इति । अनुमितिजनकज्ञानोपायमधिकृत्यैव विचारात्तद्विषयस्य रूपान्तरेण ग्रहोपायस्याप्रकृतत्वादिति भावः । गुरूणां विशिष्टबुद्धौ विशेषणज्ञानहेतुत्वानभ्युपगमाद्विशेषणज्ञानसाध्यत्वादिति हेतुः स्वमते एव सङ्गच्छतेऽतस्तन्मते हेतुं पूरयति । तत्सामग्रीसाध्यत्वाद्वेति । उपलक्षणमेतदिति । उपाधिधीरित्यत्रापि उपाधिसामग्रीत्यपि बोध्यम् । अयोग्यत्वादपि सम्भवादिति । तथा च तत्सामान्यात्यन्ताभावत्वादिना तादृशाभावादिग्राहकयोग्यानुपलम्भो न सम्भवतीति भावः । उपाधिसामान्यतद्वतोरिति । अत्यन्तान्योन्याभावयोरित्यत्र यथासंख्यमन्वेति । इद च साधनाव्यापकरूपस्योपाधिपदार्थस्य व्याप्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्तत्सम्बन्धेन तद्वतोऽन्यो-

न्याभावो वा साध्यनिष्ठो व्याप्तिघटक इत्याशयेन । योग्योपाधिव्यतिरेकग्रह इति । तादृशव्यतिरेकस्य योग्यतया सुग्रहत्वादिति भावः । अनुमानाङ्गम् । अनुमितिहेतुः । अनुमितिप्रसङ्गादिति । तदानीमपि योग्योपाधिव्यतिरेकस्य सुग्रहत्वादिति भावः ।

ननु यथोक्तमित्यादिना उपाध्यभावस्वरूपज्ञाने उपाधिज्ञानानपेक्षामतमुद्भाव्य उपाधिज्ञानशून्यकाले अनुमित्यापादनेन तन्निराकरणं मूलकृतो न सङ्गच्छते तादृशापत्तेरुपाधियोग्यानुपलम्भहेतुत्वाभिधानेन प्रागेव निराकृतत्वात् । न चासन्निकृष्टहेतुकस्थले व्यभिचारायोग्यानुपलम्भस्य हेतुता न सम्भवतीति तदसहकृतस्यैवोपाधिज्ञानानपेक्षव्याप्तिज्ञानस्य हेतुत्वं गुरुणा वक्तव्यमित्याशयेनैतद्दूषणमिति वाच्यम् । व्यवहार इवानुमितावप्युपाध्यभावस्वप्रकारकज्ञानस्यैव कारणताया उपाधिस्मरण इत्यादिग्रन्थाभिमेतत्वेन स्वयं व्याख्यानादित्याशङ्कां निराचिकीर्षुर्योग्यानुपलम्भसहकृतमधिकरणतावच्छेदकप्रकारेणैवाधिकरणस्वरूपोपाध्यभावज्ञानं हेतुरिति यथाश्रुतपूर्वग्रन्थार्थपर्यवेऽक्तदोषेण योग्यानुपलम्भकारणत्वं न सम्भवतीत्याशयेन दूषणमिदमिति मूलं सङ्गमयति । यथाश्रुतमिति । उपाध्यभावत्वेन तज्ज्ञानं हेतुरिति निष्कृष्टमते तु तेन रूपेण सकृद्दर्शनग्राह्यत्वासम्भवादुद्देश्यासिद्धिरित्युक्तदूषणस्यैव दुर्वारत्वादिति भावः ।

( चि० ) अथ व्यभिचारसंशयो नाव्यभिचारनिश्चयप्रतिबन्धकः, ग्राह्यसंशयस्य निश्चयाप्रतिबन्धकत्वात् । अन्यथा संशयोत्तरं क्वापि निश्चयो न स्यात् इति चेत् ? न व्यभिचारसंशयः प्रतिबन्धक इति ब्रूमः । किन्तु विशेषादर्शने सति सहचारादिसाधारणधर्मदर्शनात् संशयः स्यान्न तु संशयसामग्रीतो निश्चयः । किं च यद्धीसामग्री यत्र प्रतिबन्धिका विशेषादर्शने तत्र तद्धीरपीति व्यभिचारसंशयोऽपि प्रतिबन्धकः । एवं भूयोदर्शनमपि संशायकं तर्कस्त्वन-

परथाग्रस्त एवेति कथं व्याप्तिग्रहः ।

अत्रोच्यते । व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकम् । ज्ञानं निश्चयः शङ्का च । सा च क्वचिदुपाधिसन्देहात् क्वचिद्-विशेषादर्शनसहितसाधारणधर्मदर्शनात् । तद्विरहश्च क्वचिद् विपक्षबाधकतर्कात् क्वचित् स्वतः सिद्ध एव ॥

( दी० ) व्यभिचारेत्यादि । अत्र प्रत्यक्षे ग्राह्यसंशयस्यापि प्रतिबन्धकत्वमाहत्य व्यभिचारशङ्कायास्तथात्वाभिधानम् । अन्यथा पुनरसाधारणतत्तत्कारणमेलकरूपा सामग्री प्रतिबन्धिका बोध्या । विवेचितश्चेदं प्रत्यक्षमणिदीधितौ । वक्ष्यते चाधिकमुपरिष्टात् ।

( गा० ) ननु ग्राह्यसंशयस्याविरोधितया मूलकृतैवाभिधानात् ज्ञानं निश्चयः शङ्का चेत्यनेन व्यभिचारशङ्काया अव्यभिचाररूपव्याप्तिग्रहप्रतिबन्धकत्वाभिधानं तस्य विरुध्यते इत्यत आह । अत्रेति । अत्र । ग्रन्थे । प्रत्यक्षे । प्रत्यक्षनिश्चये । धारावाहिकसंशयोत्पत्त्या संशये संशयप्रतिबन्धकताया असम्भवात् ग्राह्यसंशयस्येति । विशेषादर्शनसहकृतस्येत्यादिः । आहत्येत्यनेनास्य विचारासहत्वं सूचितम् । तद्बीजं तु संशयोत्पत्तिकाले निश्चयापत्तिवारणाय संशयसामग्र्यास्तत्प्रतिबन्धकत्वस्यावश्यकत्वाद्विशेषादर्शनसहितसंशयकालेऽपि संशयसामग्रीसत्त्वेन तत्प्रतिबन्धादेव तदुत्तरमपि निश्चयासम्भवात्संशयस्य प्रतिबन्धकत्वे मानाभावः । कथञ्चित्संशयसामग्रीविरहे च संशयोत्तरमपीष्यत एव निश्चयः, भवतोऽपि क्षणव्याजेन तत्र तदुत्पत्तेः । यद्वा सामग्रीत्यादिनियमश्चाप्रयोजकः ।

न च संशयोत्पत्तिदशायां निश्चयवारणाय संशयाभाव एव कार्यसहचरो हेतुरस्त्विति वाच्यम् । संशयोत्पत्तिकाले तद्विषयकाप्रामाण्यग्रहसत्त्वे निश्चयापत्तेः संशयप्रतिबन्धकतया वारयितुमशक्यत्वादिति । एतन्मतमेवानुसृत्याह । अन्यथा पुनरिति ।

ग्राह्यसंशयस्याप्रतिबन्धकत्वे इत्यर्थः । कालादिसाधारणकारणान्तर्भावस्य निष्प्रयोजनकत्वादाह । असाधारणेति । तत्तत्कारणेति । विपरीतकोट्युपस्थितिधर्मिज्ञानविशेषादर्शनादिरूपेत्यर्थः । तेषां संशयकारणत्वेन प्रतिबन्धकतावच्छेदकमध्ये न निवेशो यावत्कारणव्यक्तीनां एकदाऽसम्भवात्, अपि तु संशयकारणतावच्छेदकीभूततद्धर्मपुरस्कारेणेति सूचयितुं तत्तदित्युक्तम् । प्रत्येककारणस्याप्रतिबन्धकत्वान्मेलकेति समुदायार्थकम् । सामग्री । व्यभिचारज्ञानसामग्री । विवेचितं चेदमिति । यत एव निश्चयत्वादेः कार्यतावच्छेदकत्वमत एव तुल्यबलविरोधिज्ञानसामग्र्यास्तदवच्छिन्नं प्रति कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वम् । निश्चयत्वस्यार्थसमाजप्रस्ततया कार्यतानवच्छेदकत्वमिति निष्कृष्टमते च तादृशसामग्र्या न तथाविधप्रतिबन्धकत्वमपि तु फलानुत्पादप्रयोजकत्वमेव परं तु तद्विशिष्टबुद्धौ बलवत्यास्तद्विपरीतकोटिभानसामग्र्या एव कारणीभूताभावप्रतियोगित्वं बलवती च सामग्री दोषविशेषाद्युपबृंहितेति विवेचितमित्यर्थः । उपरिष्टात् । सत्प्रतिपक्षग्रन्थे ।

( दी० ) अत्र च यद्यपि साधनगोचरसाध्याभाववद्वृत्तित्वग्रहाभावो हेतुरिति न युक्तम् । केवलान्वयिनि ग्राह्याप्रसिद्ध्या ग्रहाप्रसिद्धेः । खण्डशः प्रसिद्ध्या कचित्तादृशभ्रमसम्भवेऽपि सर्वत्र तथा भ्रमे मानाभावात्

( गा० ) साधनगोचरेति । प्रकृतसाधनतावच्छेदकावच्छिन्नधर्मिकस्य साध्याभाववद्वृत्तित्वग्रहस्याभाव इत्यर्थः । केवलान्वयिनि । केवलान्वयिसाध्यके । ग्राह्याप्रसिद्ध्येति । साध्याभाववद्वृत्तित्वाप्रसिद्ध्या तद्ग्रहाप्रसिद्धेरित्यर्थः । एवं च प्रतियोग्यप्रसिद्ध्या तादृशग्रहाभावस्याप्रसिद्धेस्तत्स्थलीयव्याप्तिज्ञाने व्यभिचाराग्रहस्य हेतुत्वासम्भव इति भावः, इत्यादिदूषणं च सर्वत्रैव व्यभिचाराग्रहस्य व्याप्तिग्राहकत्वं मूलाभिप्रेतमित्यभिमानेन । अभिमानश्च वस्तुतस्त्वित्यादिनाऽग्रे निराकरिष्यते ।

ननु व्यभिचारज्ञानेत्यनेन व्यभिचारघटकपदार्थानां परस्परो-

पदलेपावगाहिज्ञानमेव विवक्षितं केवलान्वयिसाध्यस्याभावाप्र सिद्धावपि अन्यदीयाभावे साध्यीयत्वभ्रमसम्भवात् भ्रमरूपस्तथा विधो ग्रहः प्रसिद्ध्यतीति तदभावहेतुतासम्भव इत्यत आह। खण्डशः प्रसिद्धेति। विशिष्टाप्रसिद्धावपि साध्यादिप्रत्येकपदार्थस्य प्रसिद्धेत्यर्थः। तादृशभ्रमसम्भवेऽपीति। तावत्पदार्थानां परस्परोपदलेपावगाहिभ्रमप्रसिद्धावपि। सर्वत्रेति। तथा च यत्र न तादृशो भ्रमस्तादृशकेवलान्वयिसाध्यकव्याप्तिग्रहे व्यभिचाराग्रहस्य हेतुत्वासम्भव इति भावः।

ननु केवलान्वयिनि साध्याभाववद्वृत्तित्वरूपव्यभिचाराप्रसिद्धावपि साध्यतावच्छेदकधर्मिकसाधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपव्यभिचारग्रहाभावः प्रसिद्ध एवेत्यत आह। अत एवेति।

(दी०) अत एव साध्यतावच्छेदकगोचरसाधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहोऽपि प्रत्युक्तः। सकलसाध्यतावच्छेदके तादृशग्रहे मानाभावात्। तथापि साध्यतावच्छेदके तत्पुरुषीयतादृशावच्छेदकत्वग्रहस्य विषयतया ऽभावस्तद्विषयत्वाभावो वा तत्पुरुषीयव्याप्तिग्रहे हेतुः।

(गा०) अत एव। सर्वत्र भ्रमे मानाभावादेव। तादृशग्रहे मानाभावादिति। सद्धेतुस्थले साध्यतावच्छेदकस्य तादृशप्रतियोगितानवच्छेदकत्वनियमात्तत्र तादृशावच्छेदकत्वग्रहस्य भ्रमत्वनियमादिति भावः। तथा च यादृशसाध्यतावच्छेदके न तद्भ्रमस्तद्रूपावच्छिन्नसाध्यकव्याप्तिग्रहे व्यभिचाराग्रहहेतुत्वासम्भव इति सकलव्याप्तीनां व्यभिचाराग्रहग्राह्यत्वं नोपपद्यते इति [illegible] पक्षः। साध्यतावच्छेदके इति। ग्रमाय इत्यनेन सम्बध्यते। एवं च तादृशप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मधर्मिकस्य [illegible] च्छेदकत्वग्रहस्य प्रसिद्धा सर्वत्रैव साध्यतावच्छेदकनिष्ठो [illegible] सम्बन्धावच्छिन्नप्रतियोगिताकतादृशग्रहाभावः प्रसिद्ध एवेति नोक्तानुपपत्तिरिति भावः। अत्र प्रकृतसाध्यतावच्छेदकधर्मिकतादृश

प्रतियोगितानवच्छेदकत्वग्रहत्वमेव कार्यतावच्छेदकं न तु व्याप्ति-ग्रहत्वं गौरवात् । तत्पुरुषीयत्वनिवेशादेकपुरुषीयतादृशावच्छेदक-त्वग्रहदशायां नान्यस्य पुंसस्तत्समानधर्मिकतादृशावच्छेदकत्वाभाव-ग्रहस्यानुपपत्तिः । तद्धर्मप्रकारतानिरूपितविषयतैव तद्धर्मप्रकारक-त्वविशिष्टस्य सम्बन्धः, अतो वह्नित्वे प्रमेयत्वादिकं घटत्वादौ च तादृशावच्छेदकत्वमवगाहमानाया धियो वह्नित्वे तादृशावच्छेद-कत्वप्रकारकत्वविशिष्टाया विषयतासम्बन्धावच्छिन्नप्रतियोगिता-कोऽभावः सुलभ एवेति तादृशावच्छेदकत्वप्रकारतानिरूपितविशे-ष्यतात्वेन सम्बन्धताविरहेऽपि न क्षतिः । विषयतासम्बन्धस्य वृत्य-नियामकतया प्रतियोगितावच्छेदकसम्बन्धत्वे विवादात् कल्पान्तर-माह । तद्विषयत्वाभावो वेति । ज्ञानविशिष्टायास्तादृशावच्छेदकत्व-प्रकारतानिरूपितविषयताया अभावो वेत्यर्थः । ज्ञानशून्यकाले ज्ञान-विषयतायाः सत्त्वेऽपि ज्ञानविशिष्टतदभावो विशेषणाभावप्रयुक्तो-ऽक्षत एव । उक्तसमूहालम्बनीयधर्मान्तरप्रकारतानिरूपितविषयता-व्यावर्तनाय निरूपितान्तम् । उभयकल्पे एव साध्यतावच्छेदकनि-ष्ठत्वमभावविशेषणं न तूपलक्षणम्, अतः साध्यतावच्छेदकधर्मिक-तादृशावच्छेदकत्वग्रहदशायामपि कालान्तरे तत्र धर्मिणि वर्तमान-स्य तादृशग्रहाभावस्य सत्त्वेऽपि नातिप्रसङ्गः । कालिकप्रत्यासत्त्यैव कार्यकारणभावो न स्वात्मनिष्ठप्रत्यासत्त्या अतो वह्नित्वादिवृत्ति-त्वविशिष्टस्याभावस्यात्मन्यसत्त्वेऽपि न क्षतिः ।

नन्वेवमपि येन पुंसा यादृशसाधनवन्निष्ठाभावप्रतियोगिताव-च्छेदकत्वं क्वचिदपि न गृहीतं तस्य तादृशावच्छेदकत्वग्रहाप्रसि-द्ध्या तदीयतादृशसाधननिष्ठव्याप्तिग्रहे व्यभिचारज्ञानाभावस्य हे-तुत्वासम्भवः । अथ यस्य पुंसो व्यभिचारधीः प्रसिध्यति तस्यैव व्याप्तिग्रहे ऽतिप्रसङ्गनिराकरणाय तादृशतदभावस्य हेतुत्वमुपेयते अन्यत्र तदहेतुत्वेऽपि क्षतिविरहः, सम्भवस्थलाभिप्रायेणैव मूल-सङ्गतेरिति चेत् ? तदा यत्साध्यकयत्साधनकव्याप्तिग्रहविरोधिनी व्यभिचारधीः प्रसिध्यति तत्साध्यकतत्साधनकव्याप्तिग्रह एव त-दभावस्य हेतुता कल्प्यते नान्यत्रेति समाधानस्यैव सुलभतया व्य-भिचारग्रहाप्रसिद्धिस्थले दर्शितरीत्या प्रसिद्धाया अन्यधर्मिकव्य-भिचारधियो ऽभावस्य निर्युक्तिककारणताकल्पनमनुचितम् । त-

त्मसिद्धिस्थलीयव्याप्तिग्रहेऽपि पुरुषनिष्ठप्रत्यासत्त्यैव हेतुत्वकल्पनमुचितं न तु विषयनिष्ठस्याभावस्य कालिकप्रत्यासत्त्या, तत्तत्पुरुषीयत्वनिवेशेन पुरुषभेदात् कार्यकारणभावभेदापत्तेरित्याशयेन तथैव समाधत्ते । वस्तुत इति ।

( दी० ) वस्तुतो व्याप्तेः साध्यसाधनभेदभिन्नतया विशिष्यैव कार्यकारणभावः । तथा च यत्र साधनं साध्याभाववद्वृत्ति साध्यतावच्छेदकं साधनवन्निष्ठाभावप्रतियोगितावच्छेदकमेकविधमनेकविधं वा व्यभिचारज्ञानं प्रसिद्धं तत्र यथायोगं तदभावः पुरुषनिष्ठो व्याप्तिग्रहहेतुः । अत एवैकविधव्यभिचारज्ञानविरहे ऽन्यविधव्यभिचारग्रहाद्व्याप्तिधीविरोधः । एवं च क्वचिद्व्यभिचारज्ञानस्याप्रसिद्ध्या तदभावस्याहेतुत्वे ऽपि न क्षतिः । प्रसिद्धायाः साधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वादिबुद्धेः समानविषयतया तदभावबोधविरोधित्वानुरोधेन तु तथाभावं न वयं वारयामः, यदि तत्तत्प्रकारादिविशेषनिवेशेन विशेषे न पर्यवस्येदिति दिक् ।

( गा० ) विशिष्यैवेति । तत्तत्साध्यकतत्तत्साधनकव्याप्तिग्रहत्वतत्साधनादिधर्मिकतत्साध्याभाववद्वृत्तित्वादिप्रकारकाभावत्वादिरूपविशेषधर्मावच्छेदेनेत्यर्थः । सर्वसाधारणव्याप्तिग्रहत्वव्यभिचारग्रहत्वयोर्दुर्वचत्वादेकत्र साधने एकस्य साध्यस्य व्यभिचारग्रहदशायामप्यपरस्मिन्नपरस्य व्याप्तिग्रहोत्पत्तेः सर्वसाधारणैककार्यकारणभावासम्भवाच्चेति भावः । यथायोगमिति । यत्र यावद्विधव्यभिचारधीः प्रसिद्ध्यति तत्र तावद्विधतदभावः समवायसम्बन्धावच्छिन्नप्रतियोगिताक आत्मनिष्ठप्रत्यासत्त्या हेतुरित्यर्थः । अत एव ।

प्रसिद्धाशेषव्यभिचारग्रहत्वावच्छिन्नप्रतियोगिताकाभावहेतुत्वादेव । अत्र च यद्यत्साध्यतावच्छेदकधर्मिकसाधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वज्ञानं प्रसिद्धं तत्तद्धर्मिकतादृशावच्छेदकत्वग्रहस्य तत्तद्धर्मिकतत्तदभावग्रहप्रतिबन्धकत्वे कल्पनीये विशेष्यविशेषणभावनिवेशस्य समानविशेष्यताप्रत्यासत्त्या प्रतिबन्धकताकल्पनमेवोचितम्,

अन्यथा विशेष्यीभूततत्तद्धर्मिभेदेनानन्तप्रतिबन्धकताप्रसङ्गात् । एवं च यद्धर्मधर्मिकयादृशावच्छेदकत्वग्रहोऽप्रसिद्धस्तद्धर्मिकतदभावग्रहेऽपि विषयनिष्ठस्य व्यभिचाराग्रहस्य हेतुत्वमायातमिति मिश्राणां सकलव्याप्तिग्रहे एवं तद्धेतुत्वोपपादनप्रकारमाक्षिपति । प्रसिद्धाया इति । तथाभावस् । सकलव्याप्तिग्रहे व्यभिचाराग्रहहेतुभावम् । प्रकारादिविशेषनिवेशेनेति । वह्नित्वत्वादिरूपतादृशावच्छेदकत्वत्वादिरूपविशेष्यताप्रकारतावच्छेदकादिनिवेशेनेत्यर्थः । आदिपदात् सम्बन्धविशेषपरिग्रहः । विशेषे न पर्यवस्येदिति । तद्रूपेण कारणता न भिद्येतेत्यर्थः ।

वस्तुनोऽसमानप्रकारकस्य सम्बन्धान्तरावगाहिनश्चावच्छेदकत्वज्ञानस्यानवच्छेदकत्वज्ञानविरोधिताया वारणाय विशिष्य तन्निवेशनस्यावश्यकतया विशेष्यनिवेशस्य चात्मनिष्ठप्रत्यासत्तिकल्पेऽप्यभावात् । समानविशेष्यताप्रत्यासत्त्यादरस्तु तत्पुरुषीयत्वनिवेशनप्रयुक्तगौरवायैव, न वा तावतापि व्यभिचाराग्रहहेतुतायाः सर्वसाधारण्यनिर्वाहः, यद्धर्मे धर्मितावच्छेदकीकृत्य यत्साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य तादृप्येण स्वरूपसम्बन्धावगाहिज्ञानं यस्य पुंसो ऽप्रसिद्धं तद्धर्मावच्छिन्नविशेष्यकतत्साधनव्यापकतावच्छेदकत्वावगाहितत्पुरुषीयग्रहे व्यभिचाराग्रहहेतुत्वासिद्धेरिति भावः । समानधर्मितावच्छेदकत्वप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावस्वीकारेऽपि यस्य पुंसो यत्साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावगाहेतद्धर्मितावच्छेदककधीधोऽप्रसिद्धस्तदीयतत्साधनव्यापकताग्रहे व्यभिचाराग्रहहेतुत्वमशक्योपपादनमेवेति ध्येयम् ।

व्याप्तिग्रहे सहचारग्रहस्य स्वातन्त्र्येण हेतुताया निर्युक्तिकतया विशेषणविधयैव तस्य कारणत्वं व्यवस्थापनीयम्, सहचारस्य च विशेषणविधया व्याप्तिघटकत्वे एव तदुपपद्यते अन्यथा व्याप्तिविशेष्यकप्रत्यक्षे हेतुत्वानिर्वाहात् अतस्तस्य तथा व्याप्तिघटकत्वं स्फुटीकर्तुं व्याप्तिरूपमाह । व्याप्तिश्चेति ।

(दी० ) व्याप्तिश्च धूमादिव्यापकवह्निसमानाधिकरणवह्निधूमत्वादिकम् । तादृशसामानाधिकरण्यमात्रस्य रासभादि-

साधारणत्वात् । अत्र च व्यापकत्वांशग्रहे व्यभिचाराग्रहः समानाधिकरणवृत्तित्वांशग्रहे च तद्विशेषणतया सामानाधिकरण्यस्य ग्रहो हेतुरिति वक्तव्यम् । साध्यसम्बन्धितावच्छेदकरूपवत्त्वलक्षणव्याप्तिग्रहे विशेषणतया सम्बन्धस्य ग्रहो हेतुरित्यपि केचित् ।

( गा० ) रासभादिसाधारण्यादिति । तथा च तावन्मात्रस्य व्याप्तित्वेऽभ्रान्तस्यापि रासभादिलिङ्गकवह्न्याद्यनुमितिप्रसङ्ग इति भावः । इदं च दूषणं केवलव्याप्तिप्रकारकहेतुमत्ताज्ञानस्य यद्यनुमितिहेतुता तदैव, यदि च तद्धर्मावच्छिन्नव्यापकसामानाधिकरण्यतद्धर्मोभयावच्छिन्नहेतुमत्ताज्ञानस्य तथात्वमुपेयते तदा नैतद्दोषावकाशः, तादृशसाध्यसमानाधिकरणवृत्तित्वतद्धर्मावच्छिन्नप्रकारकमानहेतुतापेक्षया लाघवं च, तथापि सामान्यप्रत्यासत्त्यनभ्युपगमपक्षे विशिष्टपरामर्शानुपपत्त्या समानाधिकरणवृत्तिहेतुतावच्छेदकस्य व्याप्तित्वमावश्यकम् ।

अथ सामानाधिकरण्यव्याप्तितापक्षेऽपि स्वाश्रयनिष्ठधूमत्वादिमत्त्वरूपपरम्परासम्बन्धेन तत्प्रकारकज्ञानस्यानुमितिहेतुत्वोपगमात् पक्षनिष्ठधूमादौ तादृशसम्बन्धे महानसीयवह्न्यादिसामानाधिकरण्यस्य सत्त्वाद्विशिष्टपरामर्शनिर्वाह इति किं समानाधिकरणवृत्तिधूमत्वस्य व्याप्तित्वेनेति चेत् ? तर्हि स्वाश्रयसमानाधिकरणवृत्तिधूमत्वादिसम्बन्धेन व्यापकताज्ञानस्यैव हेतुता किं नोपेयते । तादृशपरम्परायाः सम्बन्धत्वे मानाभाव इति चेत् ? तुल्यं प्रकृतेऽपि । व्याप्तेः सर्वांशभाने सामानाधिकरण्यज्ञानस्योपयोगिताविरहोऽप्रयोजकः, व्यभिचाराग्रहस्याप्यतथात्वादिति सूचयितुं व्यभिचाराग्रहस्य व्यापकतांशमात्रग्राहकतामाह । अत्रेति । ईदृशव्याप्तौ चेत्यर्थः । अत्रान्वयि घटकत्वं सप्तम्यर्थः । व्यापकत्वांशग्रहे इति । साध्यतावच्छेदकधर्मिकव्यापकतावच्छेदकत्वावगाहिग्रहत्वावच्छिन्ने । इतरांशग्रहे व्यभिचारग्रहस्याविरोधित्वादिति भावः । व्यभिचाराग्रहः । साध्यतावच्छेदकधर्मिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकग्रहाद्यभावः । विरोधिविषयकज्ञानाभावमुद्रयेत्यादिः ।

समानाधिकरणवृत्तित्वांशग्रहे इति । यद्यपि समानाधिकरणांशग्रहे एव सामानाधिकरण्यज्ञानस्य विशेषणज्ञानविधया हेतुत्वं सम्भवति तथापि तदंशमात्रभाने हेतुधर्मिकसहचारग्रहपर्यन्तानपेक्षणात्तदुपयोगितानिर्वाहाय समानाधिकरणवृत्तित्वांशानुधावनम् । तदंशग्रहस्य सामानाधिकरण्यविशिष्टहेतुवैशिष्ट्यावगाहितया तत्र हेतौ साध्यसहचारप्रकारकज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानमुद्रयापेक्षितत्वाद् विशेष्ये विशेषणमिति रीत्या तदंशस्यापि ग्रहे तादृशसहचारग्रहापेक्षाविरहेऽपि न क्षतिः । विशिष्टवैशिष्ट्यावगाहिग्रहस्यैवानुमित्युपयोगितयाऽन्यादृशव्याप्तिग्रहस्यानथार्थत्वात्, अनुमित्युपयोगिव्याप्तिग्रहोपायस्यैव प्रकृतत्वादिति । विशेषणतयेत्यपि सामानाधिकरण्यस्येत्यनेन सम्बध्यते ।

अन्येषां मतमाह । साध्यसम्बन्धितेति । अत्रास्वरसबीजं पारिभाषिकावच्छेदकत्वघटिततादृशव्याप्तेर्गुरुशरीरतया ऽनुमित्यनुपयोगित्वम् । अत एव मणिकृताप्यन्योन्याभावगर्भव्याप्तिरेवानुमितिहेतुरिति वक्ष्यते ।

मिश्रास्तु विशेषणज्ञानमुद्रया सहचारग्रहस्य व्याप्तिग्राहकत्वं यदि मूलकृतोऽभिप्रेतं तदा व्यभिचारादेरपि विशेषणतया तज्ज्ञानस्य तथात्वाकथनेन विरोध इत्यालोच्य सहचारज्ञानस्य स्वातन्त्र्येणैव व्यापकताग्राहकत्वं व्यवस्थापितवन्तस्तन्मतं दूषयितुमुपन्यस्यति । यत्त्विति ।

(दी० ) यत्तु विरुद्धे सहचारभ्रमेण व्यापकत्वभ्रमात् सामान्यत एव सहचारज्ञानं हेतुरिति तन्न । असिद्धत्वात् । विरुद्धेऽपि हि व्यापकत्वसामानाधिकरण्ययोर्ग्राहकसामग्रीक्रमयौगपद्याधीनं ग्रहणक्रमयौगपद्यं न तु मिथः कार्यकारणभाव इति ।

( गा० ) सहचारभ्रमेण व्यापकत्वभ्रमादिति । व्यापकताभ्रमस्य सहचारभ्रमान्वयव्यतिरेकानुविधायितया अनुभवसिद्धत्वादिति भावः । सामान्यत एव । भ्रमप्रमासाधारणसहचारज्ञानत्वेनैव । हेतुः । भ्रमप्रमासाधारणव्यापकताज्ञानत्वावच्छिन्नहेतुः । कार्य-

कारणभावावच्छेदककोटौ भ्रमत्वनिवेशे गौरवादिति भावः । न च क्वचिद्धर्मावच्छिन्नधर्मिणि सहचारग्रहस्यान्यधर्मावच्छिन्नविशेष्यकव्यापकताग्रहाजनकतया धर्मितावच्छेदकविशेषनियन्त्रितकार्यकारणभावकल्पनाया आवश्यकत्वाद्वह्नित्वावच्छिन्नधर्मिकधूमादिव्यापकताग्रहे सहचारग्रहहेतुता नोक्तयुक्त्या सिद्ध्यतीति वाच्यम् । धर्मितावच्छेदकानियन्त्रितस्यासत्त्वे साध्यधर्मिकहेतुसहचारज्ञानस्य व्यापकताग्राहकत्वमित्यभिप्रायात् ।

यदि व्यापकताभ्रममात्र एव सहचारभ्रमस्य हेतुत्वमविवादं स्यात्तदैवोक्तयुक्त्या व्यापकताग्रहसामान्ये सहचारग्रहस्य हेतुता स्यात्तदेव नेत्याह । असिद्धत्वादिति । नन्वनुभवसिद्धान्वयव्यतिरेकाभ्यां व्यापकताभ्रमे सहचारभ्रमहेतुतासिद्धिरित्याशङ्कामपनेतुं नियतान्वयव्यतिरेकानुविधायित्वमेवासिद्धमित्याह । विवक्षेऽपि हीति । क्रमयौगपद्याधीनमिति । क्रमयौगपद्यमित्यत्र यथासङ्ख्यमन्वयो बोध्यः । कार्यकारणभाव इति । नियतपौर्वापर्यमित्यर्थः । न च सहचारस्य व्यापकत्वसहचरिततया तज्ज्ञानस्य दोषविधया व्यापकताभ्रमं प्रति चाकचक्यादिज्ञानस्य रजतत्वादिभ्रमं प्रतीव हेतुत्वं सर्वमतसिद्धमेवेति वाच्यम् । क्वचिद्व्यापकताभ्रमे दोषविधया तद्धेतुत्वादेव तद्भ्रमसामान्ये तज्ज्ञानसामान्ये वा तद्धेतुतासिद्धौ सहचारभ्रमं प्रत्यपि उक्तक्रमेण दोषविधया क्वचिद्व्यापकताज्ञानहेतुतायाः सुवचतया विपरीतस्यापि वक्तुं शक्यत्वादिति भावः ।

प्रसङ्गाद् धूमसामान्यादौ वह्निसामान्यव्याप्तेरतीन्द्रियत्वं व्यवस्थापयति । इद पुनरिति ।

(दी०) इदं पुनरवधेयम् । यथा विद्यमानमपि वह्नित्वे व्यवहितविप्रकृष्टरासभादिदेशनिष्ठाभावप्रतियोगितावच्छेदकत्वं न गृह्यते अभावदेशविप्रकर्षादिना ग्राहकाभावात् । तथा धूमत्वनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽप्यग्रहसम्भवात् । नानुपलब्धेः प्रतियोगिसत्त्वविरोधित्वादिलक्षणा योग्यतेति न तत्सामान्याभावो लौकिकप्रत्यक्षगम्यः परं तु क-

ांचिद् विरोधस्फुरणादिवशाद् धूमत्वादौ गृहीतो धूमवन्निष्ठा-
यन्ताभावप्रतियोगितानवच्छेदकत्वाभावो वह्नित्वादावुपनयम-
ादया गृह्यते ।

( गा० ) व्यवहितेति । मध्यवर्तिभित्त्यादिप्रयुक्तमिन्द्रियसन्निक-
शून्यत्वं व्यवहितत्वम् । विप्रकृष्टत्वं दूरत्वप्रयुक्तं तथात्वम् । रा-
भादिदेशेति । रासभाद्यधिकरणदेशेत्यर्थः । न गृह्यते इति ।
ाद्रूप्येण नोपलभ्यते इत्यर्थः । एतेन वह्नित्वादिनिष्ठतादृशप्रतियोगि-
ावच्छेदकत्वस्य स्वरूपानतिरिक्तत्वेऽपि नासङ्गतिः । अभावदेशे-
े । अभावाधिकरणदेशेत्यर्थः । विप्रकर्षादिनेति । आदिना व्यवधा-
परिग्रहः । ग्राहकाभावादिति । तादृशाभावाधिकरणतद्देशग्राहक-
ामग्रीघटितायास्तन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्यावच्छिन्नग्रा-
कसामग्र्या अभावादित्यर्थः । सत्त्वेऽप्यग्रहसम्भवादिति ।
न्द्रियसन्निकर्षादिमति घटत्वादौ तत्सत्त्वेऽपि घटादिशून्यधूमा-
धिकरणविप्रकर्षादिनानुपलम्भसम्भवादित्यर्थः ।

अनुपलब्धेरिति । तादृशावच्छेदकत्वरूपप्रतियोग्युपलम्भाभाव-
येत्यर्थः । प्रतियोगिसत्त्वविरोधित्वलक्षणेति । प्रतियोगिसत्त्वप्रस-
ञ्जितप्रतियोगिकत्वरूपेत्यर्थः । पक्षावृत्तिविशेषणाविशेषितस्य ता-
दृशावच्छेदकत्वरूपप्रतियोगिनस्तदुपलम्भाव्याप्यतया मूलशैथि-
ल्येनानुपलब्धिप्रतियोग्यनापादकत्वादिति भावः । तत्सामान्या-
भाव इति । धूमाधिकरणसन्निकृष्टदेशनिष्ठाभावप्रतियोगितावच्छे-
दकत्वाभावग्राहकयोग्यानुपलम्भसम्भवात्सामान्यपरम् । उपनीत-
ज्ञाने योग्यानुपलब्ध्यनपेक्षणात् लौकिकेति ।

अथैवमीदृशी व्याप्तिर्न गृह्येतैव लौकिकप्रत्यक्षासम्भवेन ज्ञाना-*
न्तरसापेक्षस्योपनीतभानानुमानादेरप्यसम्भवात् । न च तादृशा-
वच्छेदकत्वस्य लौकिकसन्निकर्षात्सामान्याभावस्य वा अभावत्वा-
देःसामान्यप्रत्यासत्तितो भाने तादृशावच्छेदकत्वीयत्वेन तत्सा-
मान्याभावस्योपनीतभानसम्भव इति वाच्यम् । एवमपि सामान्य-
प्रत्यासत्तेः स्वयं निराकरणीयतया तदनभ्युपगमपक्षे तद्ग्रहानुपपत्तेर्दु-
र्वारत्वादित्याशङ्कामपनिनीषुराह । परं क्वचिदिति । विरोधस्फुरणादि-
वशादिति । धूमत्वाद्यवच्छिन्नाभावे धूमादिविरोधग्रहादिवशादित्य-

र्थः । गृहीतः । धूमविरुद्धाभावप्रतियोगितावच्छेदकत्वादिरूपव्यतिरेकिहेतुनानुमितः । उक्तविरोधग्रहस्य चैतादृशहेतुमत्ताग्रहसम्पादकत्वेनोपयोगिता वाच्या । साध्यप्रसिद्धिं विनाऽप्यभावसाध्यकव्यतिरेकिप्रवृत्तेर्न साध्यप्रसिद्ध्यपेक्षा, धूमाभावादौ धूमवद्वृत्तित्वसामान्याभावरूपस्य विरोधस्याप्युक्तदिशा लौकिकप्रत्यक्षासम्भवेन धूमत्वादिरूपपक्षे उक्तहेतुग्रहोऽपि दुर्ग्रहः । एवं वाऽत्यन्ताभावस्याप्युक्तदिशा लौकिकप्रत्यक्षासम्भवेन व्यतिरेकग्रहस्याग्रहोऽपि तथैवेत्यत उक्तं कथञ्चिदिति । साध्यप्रसिद्धेरनपेक्षणात् किञ्चिल्लिङ्गकव्यतिरेक्यनुमानाद् धूमवद्वृत्तित्वमभावप्रतियोगि एतद्धटावृत्तित्वादित्याद्यनुमानेन पक्षतावच्छेदकावच्छेदेनाभावप्रतियोगित्वं सेत्स्यति । पक्षधर्मताबलेन धूमवद्वृत्तित्वसामान्याभावरूपविरोधभाने तादृशोपनायकज्ञानबलात् धूमाभावादौ धूमविरोधग्रहसम्भवेन तत्पक्षे उक्तहेतुमत्ताग्रहः सम्भवति । एवमप्रसिद्धसाध्यकानुमानात् धूमविरुद्धाभावप्रतियोगितावच्छेदकत्वमभावप्रतियोगि घटत्वावृत्तित्वादित्याद्यनुमानेनोक्तधर्म्या तादृशावच्छेदकत्वसामान्याभावभानोपनायकज्ञानबलादपि व्यतिरेकदृष्टान्ते उक्तहेतुव्यतिरेकग्रहसम्भव इति भावः ।

यद्यप्युक्तरीत्याऽभावप्रतियोगित्वसाध्यकानुमाने धर्मिणमन्तरेणोपस्थितस्यापि धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावस्य वह्नित्वादावुपनीतभानसम्भवः । तथापि यत्किञ्चिद्धर्मिविशेष्यकमप्युपनायकज्ञानं भवतीति व्युत्पादनायाप्रसिद्धसाध्यकानुमानमभिहितम् । न च व्याप्तिग्रहेऽनुमानान्तरापेक्षायामनवस्थितिरिति वाच्यम् । चिरानुमितव्यापकतावच्छेदकत्वस्मरणादिनापि प्रकृतानुमित्युपधायकतदुपनीतभानसम्भवेनानवस्थिताविरलव्याप्तिज्ञानानुमितिधारानपेक्षणेन दोषानवकाशात् । वह्न्यभावे धूमविरोधस्याभानदशायां तदुभयसामानाधिकरण्यस्यापि भानसम्भवादगृहीतधूमवह्निव्याप्तिकस्य वह्न्यभावे धूमविरोधनिश्चयो दुर्घटः । तत्राभावे चोपस्थितिमात्रेणैव स्वविरोधः सुनिश्चयः । अव्याप्यवृत्तित्वग्रहं विना स्वस्मिन् स्वाभावसामानाधिकरण्याग्रहादिति वह्नित्वादावित्यनभिधाय धूमत्वादावित्युक्तम् ।

केचित्तु विरोधस्फुरणवशाद् धूमत्वादौ धूमवन्निष्ठाभावप्रति

योगितावच्छेदकत्वाभावरूपं यत् साध्यं तदभावव्यापकीभूताभाव-प्रतियोगित्वरूपविरोधस्फुरणवशाद् धूमत्वादौ गृहीतो धूमत्वं धूमवशिष्टाभावप्रतियोगितावच्छेदकत्वाभाववद् धूमत्वत्वादित्याद्यनुमितिविषयः । तथा च तादृशविरोधस्फुरणस्य एतदनुमितौ व्यतिरेकव्याप्तिज्ञानविधयोपयोगित्वं निरुक्तसाध्याभावविरोधस्य साध्यव्यतिरेकव्याप्तित्वात् । कथंचिदित्यस्य प्रयोजनं निरुक्तप्रायम् । न चैवं वह्नित्वादावुक्तक्रमेण तदनुमितिसम्भवाद् धूमत्वपर्यन्तानुधावनं व्यर्थमिति वाच्यम् । प्रत्यक्षत एव प्रथमतस्तद्ग्रहार्थं तदनुसरणादिति वदन्ति ।

( दी० ) अत एवानुमानादिना व्यभिचारग्रहे ऽपि न व्याप्तिधीः । निर्णयात्मनि साधारणे वा दोषविशेषाजन्योपनीतभाने संशयादिसाधारणस्य निश्चयात्मनो वा विपरीतज्ञानमात्रस्यैव प्रतिबन्धकत्वात् तत्तद्धूमादौ देशान्तरवृत्तित्वसम्भावनाविरहादिवशाद् गृह्यमाणो वह्न्याद्यभाववद्वृत्तित्वाभावो धूमत्वाद्यवच्छेदेन गृह्यते लाघवादित्यपि वदन्ति ॥

( गा० ) अत एवेति । व्याप्तेर्लौकिकप्रत्यक्षासम्भवादेव । व्याप्तेर्लौकिकप्रत्यक्षोपगमे आनुमानिकादिविपरीतज्ञानस्य लौकिकप्रत्यक्षाविरोधितया आनुमानिकव्यभिचारग्रहदशायामपि लौकिकव्याप्तिज्ञानमुत्पद्येतेत्युपष्टम्भसङ्गतिः । उपनीतभाने पुनरानुमानिकादिव्यभिचारज्ञानमपि विरोधीति दर्शयति । निर्णयात्मनीति । निर्णयात्मनि । दोषविशेषाजन्योपनीतभाने । संशयादिसाधारणस्य विपरीतज्ञानमात्रस्यैव प्रतिबन्धकत्वादिति योजना । एतच्च ग्राह्यसंशयस्य प्रत्यक्षनिश्चयप्रतिबन्धकतामाश्रित्योक्तम् । संशयस्य संशयाप्रतिबध्यत्वनिर्वाहाय निर्णयात्मनीति । मण्डूकवसाञ्जनादिरूपदोषविशेषजन्यस्योरगत्वोपनीतभानस्यानुमानिकोरगत्वाभावज्ञानाप्रतिबध्यत्वादजन्यान्तम् । लौकिकसन्निकर्षजन्यनिर्णयस्यानुमानिकादिविपरीतज्ञानाप्रतिबध्यतया उपनीतभाने इति । लौकिकसन्निकर्षाजन्यप्रत्यक्षे इत्यर्थः । प्रत्यक्षत्वनिवेशादनुमितेः संशयाप्रतिबध्यत्वनिर्वाहः । संशयादिसाधारण-

स्येत्यनेन प्रतिबन्धकतावच्छेदककोटौ संशयान्यत्वरूपानिर्णयत्वानिवेशः सूचितः। एतन्मते संशयेऽनुमित्यादौ च विपरीतनिर्णयस्य प्रतिबन्धकत्वान्तरं बोध्यम्। विवेचितं चेदमधस्तात्।

प्राचसंशयस्याप्रतिबन्धकत्ववादिनां मतमाह। साधारणे चेति। साधारणे दोषविशेषाजन्योपनीतभाने निश्चयात्मनो विपरीतज्ञानमात्रस्यैव प्रतिबन्धकत्वादित्यन्वयः। साधारणे। संशयनिश्चयसाधारणे। तथा च पूर्ववत् संशयान्यत्वं न प्रतिबध्यतावच्छेदकमिति भावः। उपनीतभानत्वमत्र कल्पे लौकिकसन्निकर्षजन्यनिर्णयान्यज्ञानत्वम्, अत आनुमानिकादेरपि विपरीतनिर्णयस्य लौकिकसन्निकर्षजन्यमपि संशयं प्रति विरोधिता। प्रत्यक्षत्वानिवेशादनुमित्यादौ न प्रतिबन्धकत्वान्तरकल्पनम्। संशयस्य संशयाप्रतिबन्धकत्वमुपपादयितुं निर्णयात्मन इति। ज्ञानमात्रस्येति। मात्रस्येति कृत्स्नार्थकम्।

तदभावपदवृत्तित्वरूपव्याप्तेर्लौकिकप्रत्यक्षमुपपादयतां मतमाह। तत्तद्धूमादाविति। देशान्तरेति। व्यवहितविप्रकृष्टदेशेत्यर्थः। ईदृशसम्भावनाविरहो देशान्तरावृत्तिरयं धूमो यदि वह्न्यभाववद्वृत्तिः स्यात्तदा तत्त्वेनोपलभ्येतेति योग्यानुपलब्धिघटकापत्तिनिर्वाहकपक्षतावच्छेदकनिश्चये उपयुज्यते। पक्षतावच्छेदकातिरिक्तविशेषणाविशेषितप्रतियोगिसत्त्वापादककापत्तेरेव योग्यानुपलब्धिघटकतया देशान्तरवृत्तौ व्यभिचारवारणाय देशान्तरवृत्तित्वस्यापादकविशेषणतया आवश्यकत्वेन तस्य पक्षविशेषणत्वमप्यावश्यकमिति हृदयम्। धूमान्तरे व्यभिचारसंशयसत्त्वेन पक्षे व्याप्यवत्तानिश्चयोपयोगी व्याप्तौ धूमत्वावच्छिन्नत्वनिश्चयो न सम्भवतीत्याशङ्कानिराकरणार्थमाह। लाघवादिति। व्यभिचारसंशयप्रतिबन्धकतायां लाघवज्ञानस्योत्तेजकत्वादिति भावः। प्रतियोगिग्राहकातिरिक्तविशेषणानवच्छिन्नत्वस्यापादकविशेषणतया आवश्यकत्वाद्देशान्तरावृत्तित्वस्य च प्रतियोग्यग्राहकत्वेन तदवच्छिन्नापादककापत्तेर्न योग्यानुपलम्भनिर्वाहकतेत्यादिरस्वरसो वदन्तीत्यनेन सूचितः।

इति अनुमानगादाधर्यां व्याप्तिप्रदीपाख्यप्रकरणम्॥

## अथ तर्कप्रकरणम् ।

(चि०) तर्कस्य व्याप्तिग्रहमूलकत्वेना(१)नवस्थेति चेत् ? न । यावदाशङ्कं तर्कानुसरणात् । यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः ।

(गा०) तर्को यत्रानुमित्यौपयिकव्याप्तिनिश्चयविरोधिशङ्कानिवृत्तिरूपेयते तत्र तर्ककारणीभूतस्यापादकनिष्ठापाद्यव्याप्त्यापाद्यव्यतिरेकपक्षतावच्छेदकादीनां निश्चयस्य विरोधिनी या शङ्का तन्निवृत्त्यर्थमपि तर्कात् पूर्वं तर्कान्तरमुपेयं तत्पूर्वमपि तज्जनकनिश्चयविरोधिशङ्कान्तरनिवृत्त्यर्थं तर्कान्तरमित्यनवस्थिततर्कधारास्वीकारप्रसङ्ग इत्याशङ्कते मूले । तर्कस्येति । व्याप्तिग्रहमूलकत्वेन । व्याप्त्यादिनिश्चयजन्यत्वेन । यावदाशङ्कमिति । यत्र यत्राशङ्कायास्तर्कात्यतोऽनिवृत्तिस्तत्रैव शङ्कानिवृत्त्यर्थं तर्कस्वीकारादित्यर्थः । यत्र । यादृशतर्के उत्पत्स्यमाने इति शेषः । यादृशतर्कात्पूर्वमित्यर्थः । व्याघातेन शङ्कैव नावतरतीति । प्रवृत्तिव्याघातेन शङ्कानवतारः कारणान्तराभावप्रयुक्तः सिध्यतीत्यर्थः । केचित्तु व्याघातेनैव तद्विरोधिनी शङ्का नावतरति, तर्कान्यस्य विरोधितयैव तादृशशङ्काविरह इति यावदिति वर्णयन्ति । तर्कं विनैव । तर्कान्तरं विनैव । तर्ककारणव्याप्त्यादिनिश्चयसम्भयो यत इत्यर्थः । तथा च तत्रैव विच्छेदाद्वानवस्थितिरिति भावः ।

कीदृशतर्कविरोधिनीनां कीदृशशङ्कानां तर्कान्यस्य कस्य प्रतिबन्धकतया निवृत्तिरित्याकाङ्क्षायां तर्कविशेषविरोधिशङ्काविशेषेषु अन्यप्रतिबन्धकताव्यवस्थापकं तेषां दुरपह्नवप्रवृत्तिविशेषानिर्वाहप्रसञ्जकत्वं दर्शयन्नुपादानस्य तत्प्रतिबन्धकत्वमभिधत्ते । तथाहीत्यादिना तस्मात्तदुपादानमेव शङ्काप्रतिबन्धकमित्यन्तेन ।

(चि०) तथा हि । धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यात्नोत्पन्नः

(१) व्याप्तिमूलकत्वेनेति पाठान्तरम् ।

स्यादित्यत्र किं धूमोऽवह्नेरेव भविष्यति ? क्वचिद् वह्निं विनापि भविष्यति ? अहेतुक एव वोत्पत्स्यते ? इति शङ्का स्यात्, सर्वत्र स्वक्रियाव्याघातः स्यात् । यदि हि गृहीतान्वयव्यतिरेकं हेतुं विनापि कार्योत्पत्तिं शङ्केत, तदा स्वयमेव धूमार्थं वह्नेः, तृप्त्यर्थं भोजनस्य, परप्रतिपत्त्यर्थं शब्दस्य चोपादानं नियमतः कथं कुर्यात् ? तेन विनापि तत्सम्भवात् । तस्मात्तदुपादानमेव तादृशशङ्काप्रतिबन्धकम् ।

(दी०) हुताशनरासभादिपदार्थसार्थस्यान्वयव्यतिरेकयोरन्वयव्यतिरेकौ धूमस्योपलभमानो ऽयमेतेषामन्यतमं कारणं धूमस्येत्यवधार्य सन्दिग्धे किमेतानि सर्वाण्येव कारणानि ? किं वा कानिचित्तथा कानिचिच्च नेति ? । तत्र च यस्य व्यतिरेकेऽपि इतरेभ्यस्तथाविधेभ्यो धूमोत्पत्तिमुपलभते तस्याहेतुत्वमेवावधारयति यथा रासभादेः । यस्य च व्यतिरेके तादृशापरसकलान्वयेऽपि धूमानुत्पत्तिं पश्यति तस्य कारणत्वमेव निश्चिनुते यथा वह्नेः । तत्र चाकारणत्वसन्देहो विरोधितामानाद्यन्निवर्तते येन तर्केण तमाह । धूम इत्यादि ।

(गा०) धूमो वह्नीत्यादितर्कस्य प्रकृतव्याप्तिग्रहानुपयोगित्वे तत्पूर्वं तर्कान्तरानपेक्षाव्युत्पादनस्यानवस्थयानुमित्यौपयिकव्याप्तिग्रहासम्भवाक्षेपोद्धारानुपयोगितेत्याशङ्कां परिजिहीर्षुर्दीधितिकारो व्याप्तिग्रहोपयोगिनमन्वयव्यतिरेकेण कार्यकारणभावग्रहं प्रत्युपयोगितया मूलोक्ततर्कस्य प्रकृतव्याप्तिग्रहोपयोगितां घटयिष्यन् वह्निधूमकारणताग्राहकान्वयव्यतिरेकं(१) प्रदर्शयति । हुताशनेत्यादिना । अन्वयव्यतिरेकग्रहविषयसमुदायमध्येऽकारणरासभादिकमनन्तर्भाव्य कारणमात्रघटितसमुदायस्यान्वयव्यतिरेकग्रहसम्भवेऽपि तादृशसमुदायत्वसामानाधिकरण्यमात्रेण प्रथमं कारण-

(१) अन्वयव्यतिरेकग्रहमिति पुस्तकान्तरे ।

त्वसन्देहेऽपि तत्समुदायान्तर्गतस्य कस्यापि व्यभिचारज्ञानास-म्भवेनैतत्समुदायव्यभिचारिधूमाकल्पने लाघवमिति प्रतिसन्धा-नेन च तद्घटितसमुदायत्वावच्छेदेन कारणतानिश्चयात्तर्कवैयर्थ्यं स्यादिति तदन्तर्भावस्यावश्यकत्वमाविष्कर्तुं रासभपदोपादानं बोध्यम् । यद्यप्यकारणघटितसमुदायत्वावच्छेदेनापि कदाचि-त्कारणत्वनिश्चयसम्भवात्तर्कवैफल्यं सम्भवति । तथापि विशे-षदर्शिनां न तर्कवैयर्थ्यमित्याविष्कर्तुं रासभपदोपादानं बोध्यम् ।

वस्तुतस्तु तादृशान्वयव्यतिरेकग्रहदशायामकारणेऽपि कारणत्व-ग्रहसम्भवाद्वह्न्यसमवधानकाले तादृशयत्किञ्चिद्व्यक्त्यसत्त्वदशायां वह्न्यसमवधानकालीनवह्नितत्समवधानेतरयावत्कारणकत्वनिश्चया-सम्भवात्तर्क एवानुपपन्न इत्याशङ्कापरोऽयमवधार्य सन्दिग्धे इत्य-न्तग्रन्थः । यस्य च व्यतिरेकेऽपीत्यादिग्रन्थेनाकारणे कारणत्वा-भावनिश्चयं सम्पाद्य तर्कसम्भवो दर्शितः । तथा च रासभादिरू-पाकारणेऽकारणताग्रहसम्भवाय रासभादिघटितसमुदाये व्यतिरेक-व्यभिचारो दर्शित इति ध्येयम् । अवश्यमेतेषामिति । धूमसामग्री एतत्समुदायान्तर्गतैवेत्यवधार्येत्यर्थः । एतदवधारणं च धूमे वह्न्यस-मवधानकालीनवह्नितत्समवधानेतरयावत्कारणकत्वस्वरूपाद्यव्यतिरे-करूपस्य निश्चये उपयुज्यते । तदनिश्चये वह्नितत्समवधानेतरयाव-द्धूमकारणवति वह्न्यसमवधानकाले तादृशयावद्धूमकारणव-त्त्वस्य दुर्निश्चेयत्वात्तत्समुदायानन्तर्गतेष्वपि वस्तुषु धूमकारणत्वसं-शयसम्भवात् ।

केचित्तु । अवश्यमेतेषामिति । धूमो हुताशनरासभाद्यन्यत-मकारणक इति निश्चित्येत्यर्थः । सामान्यरूपेण कारणताग्राही ए-तादृशनिश्चय अहेतुक एवोत्पत्स्यते इत्येतादृशशङ्कानिवर्तकतया धूमस्य वह्निकारणकत्वनिश्चायकतर्कसम्पादक इत्याहुः । तच्चि-न्त्यम् । कादाचित्कतया सकारणकत्वनिश्चयान्नाहेतुकत्वशङ्का-निवृत्तिसम्भवादुक्तसमुदायान्तर्गतकारणकत्वनिश्चयपर्यन्तानपेक्षणा-त् । सन्दिग्धे इति । अग्रिमेण इतीत्यनेनान्वयः । किमेतानीति । धू-मकारणत्वरूपभावकोटिकसमुदायत्वावच्छेदेन भानलाभाय सर्वा-णीति । सामानाधिकरण्यमात्रेण कोटिद्वयावगाहने संशयत्वायोगात्,

एसंशयादित्याशङ्कानिराकरणायोक्तलाघवेनोक्तसमुदायत्वावच्छेदेन धूमकारणतानिश्चयासम्भवप्रदर्शनाय च व्यभिचारानिर्णयेन रासभत्वाद्यवच्छिन्नस्य कारणताविरहो निश्चीयते इत्याह । तत्र चेति ।

यद्यपि धूमान्तरे रासभादेर्व्यभिचारदर्शनेऽपि तद्धूमत्वावच्छिन्नं प्रति रासभादेः कारणतासन्देहो नापैति । तथापि यत्सामान्ये यत्सामान्यस्य कारणत्वमसति बाधके तद्विशेषस्यैवेत्यादिनियमात् सामान्यकारणताविरहावधारणादेव विशेषकारणताविरहावधारणमित्यवधेयम् । धूमत्वावच्छिन्नं प्रति महानसीयवह्नित्वेन कारणताग्राहकतर्कावतारसम्भवेऽपि व्यभिचारानिश्चयादेव न तद्ग्रहः । यावद् व्यभिचारो न निश्चीयते वक्ष्यमाणतर्कश्चावतरति तद्धूमत्वापेक्षया धूमत्वस्य जन्यतावच्छेदकत्वे लाघवं च प्रतिसन्धत्ते तावत्तद्धूमत्वावच्छिन्नं प्रति तद्व्यापकतानवच्छेदकरूपावच्छिन्नस्यापि कारणतां निश्चिनोत्येव, उत्तरकालं च व्यभिचारे प्रत्यक्षतो निश्चिते तादृशकारणतानिश्चये भ्रमत्वं गृह्यते इति भावः ।

यस्य चेति । यद्व्यतिरेकविशिष्टतद्व्यापारभिन्नसकलधूमकारणसमवधानक्षणे तदधिकरणनिष्ठधूमोत्पत्त्यव्यवहितपूर्वत्वाभावं पश्यतीत्यर्थः । तस्य कारणत्वमेवेति । धूमे स्वाधिकरणदेशावच्छिन्नतदभाववत्त्वाव्यवहितप्राक्क्षणकत्वाभावरूपवह्न्यसमवहितजन्यत्वविशिष्टतरसमवधानकालीनतद्व्यापारेतरयावत्स्वकारणकत्वरूपतत्कारणकत्वव्याप्यधर्मनिश्चयेन तत्कारणकत्वाभावमापादकीकृत्य निश्चिनतादृशधर्माभावापादनसम्भवादिति भावः । ईदृशक्रमेण कार्यकारणभावग्रहे तर्कस्य हेतुत्वे मानाभावात् प्रतिबन्धकशङ्काविघटनद्वारा तत्र तर्कोपयोगिता दर्शयति । तत्र चेति । धूमे वह्निकारणकत्वनिश्चये चेत्यर्थः । अकारणत्वसन्देहः । धूमे वह्निकारणकत्वाभावसन्देहः । विरोधिताम् । एकत्रैककालावच्छेदेनानुत्पद्यमानताम् । निवर्तते इति । तथा च ग्राह्यसंशयस्य प्रत्यक्षनिश्चयप्रतिबन्धकत्वमतमवलम्ब्यैनदभिहितम् । तदप्रतिबन्धकत्वमते संशयसामग्रीविघटनेन तदभावज्ञानप्रतिबन्धकस्य तदभावापादकतर्कस्य तन्निश्चयोपयोगितेति भावः ।

अथ तर्कहेतुतापाद्यव्यतिरेकनिश्चय एवापादककोटिकशङ्कां नि-

वर्तयिष्यति, आपादकस्यापाद्यव्याप्यतया आपाद्यव्यतिरेकस्यापादकव्यतिरेकव्याप्यतया तन्निश्चयस्य विरोधिदर्शनत्वादिति किं तर्केण ? न चापाद्यव्यतिरेकस्यापादकव्यतिरेकव्याप्यत्वेऽपि तादृशव्याप्तिप्रतिसन्धानानियमेन तर्कस्योपयोग इति वाच्यम् । आपाद्ये आपादकव्यापकतानिश्चयस्य तर्ककारणतया तादृशाकारणज्ञाननियमेनापाद्याभावे आपादकाभावव्याप्तिज्ञानाभावस्याकिञ्चित्करत्वात् । पुरुषत्वाभावे कराभावव्याप्यग्रहेऽपि करादिव्यापकत्वेन पुरुषत्वादिग्रहसहितपुरुषत्वाद्यभावग्रहस्य करादिसंशयनिवर्तकत्वादिति चेन्न । तर्ककारणीभूतज्ञाननाशेऽपि तर्कस्यैव शङ्कानुत्पत्त्यनुरोधेन तर्कस्योपयोगित्वात् ।

न च पूर्वजातस्यापाद्यव्यतिरेकनिश्चयस्य नाशेऽपि तन्मूलकान्मानसतादृशज्ञानादापादकव्यापकताज्ञानाच्चोत्तरकालमपि शङ्कानुत्पादनिर्वाहात्तर्कस्याकिञ्चित्करतेति वाच्यम् । कुतश्चित्प्रतिबन्धकात्तादृशज्ञानानुत्पादेऽपि तर्केण शङ्काप्रतिबन्धात् ।

आहार्यशङ्काया विशेषदर्शनानिवर्तनीयतया तादृशशङ्काया अप्रतिबन्धकत्वेऽपि तत्सामग्रीसत्त्वे निश्चयोत्पत्त्यसम्भवात्तत्सामग्रीविघटनाय तर्कापेक्षेति मिश्राः ।

ननु कार्यकारणभावग्रहस्यैव का प्रकृतोपयोगिता यदर्थं तद्ग्राहकतर्कविरोधिशङ्कायां व्याघात उपदर्श्यते इत्यत आह ।

( दी० ) अनुसन्धेयश्चावश्यं कार्यकारणभावग्रहः, तदधीनत्वाद्व्याप्तिबुद्धेः । सामानाधिकरण्येनान्वयव्यतिरेकग्रहाज्जायमानस्य तथैव हेतुहेतुमद्भावं गृह्णतस्तस्यैव वा व्याप्तिपरिच्छेदकत्वात् । विपर्यये तत्कोटिमात्रपर्यवसायिनश्च तर्कस्य तदभावकोटिकशङ्कानिवर्तकत्वम् । अन्यथा धूमो यदि वह्निनच्छन्यजन्यान्यतरो न स्यादित्यादेरपि तथात्वापत्तेः । तथा पर्यवसायिता च क्वचिद् विशेषतो व्याप्त्या सामान्यतोऽपि क्वचित्पक्षधर्मताबलात् तत्सम्पत्तये चात्र वह्न्यसमवहितजन्यत्वेन पक्षो विशेष्यः । विशेषणवत्त्वेनोपस्थिते विशिष्टाभावबुद्धेर्विशे-

वह्न्यसमवहिताजन्यत्वविशिष्टवह्निसमवहिताजन्यत्वमापादकम्, जन्यत्वाभाव आपाद्यः। वह्न्यसमवहिताजन्यत्वविशिष्टधूमत्वं पक्षतावच्छेदकम्। घटादौ व्यभिचारवारणाय वह्न्यसमवहिताजन्यत्वरूपमापादकविशेषणमुपात्तम्। तादृशविशेषणाभावमात्राय विपर्ययपर्यवसानवारणाय तस्य पक्षविशेषणतयोपादानम्। अतोऽवह्नेरेवेत्यादिशङ्काद्वयनिराकरणमप्युपपद्यते। तदुभयस्यापाद्यव्यतिरेकनिश्चयाविरोधित्वेऽपि विशिष्टपक्षग्रहविरोधितया तर्कविरोधित्वादित्युपाध्यायप्रभृतयो व्याचक्षते। तत्र वह्न्यसमवहितजन्यत्वसाधारणविशिष्टाभावत्वप्रकारेण वह्निसमवहितजन्यत्वरूपस्यापादकाभावस्य जन्यत्वाभावरूपेणापाद्याभावेन सिद्धावपि न क्षतिः। तादृशसिद्धेरसमानप्रकारकतया वह्निसमवहितजन्यत्वत्वेन वह्निसमवहितजन्यत्वाभावकोटिकशङ्काविरोधित्वविरहेऽपि तदवच्छिन्नापादककापत्तेस्तदवच्छिन्नप्रकारकज्ञानविरोधित्वेन वह्निसमवहितजन्यत्वाभावत्वावच्छिन्नापादककस्य प्रकृततर्कस्य तादृशशङ्काविघटनद्वारा वह्निसमवहितजन्यत्वत्वावच्छिन्ननिश्चायकतासम्भवादिति दर्शितपक्षविशेषणमनर्थकम्। यदि च शुद्धतद्धर्मावच्छिन्नापादककतर्कस्यैव तद्रूपावच्छिन्नविशिष्टज्ञानप्रतिबन्धकता, अन्यथा यदि रूपं गुणान्यत्वविशिष्टसत्तावत् स्यात्तर्हि गुणो न स्यादित्यादितर्कावतारदशायां रूपं सत्तावदिति ज्ञानानुदयप्रसङ्गादिति नोक्तविशिष्टापादककतर्कस्य वह्निसमवहिताजन्यत्वकोटिकशङ्काविरोधितेति मन्यते, तदा तादृशपक्षविशेषणोपादानेऽपि न तस्य तादृशशङ्काविरोधिता निर्वहतीत्यत तादृशपक्षविशेषणोपादानेनेत्याशङ्कां निराकृत्य तादृशविशेषणोपादानं सार्थकयति। विपर्यये तत्कोटिमात्रपर्यवसायिन इति। तत्कोटितावच्छेदकावच्छिन्नसाधकविपर्ययप्रतियोगितावच्छेदकावच्छिन्नापादकस्येत्यर्थः।

तदभावशङ्केति। तदवच्छिन्नाभावशङ्केत्यर्थः। तेन धूमजनकतेजस्वी न स्याद्धूमः स्यादित्याद्यापत्तेर्धूमजनकतेजस्त्वादिना वह्निमात्रपर्यवसायित्वेऽपि न वह्निमान् वेति शङ्काविरोधित्वम्। विपर्ययानुमानादनाहार्यतादृशशङ्काया निवृत्तिस्तर्कादप्याहार्यसाधारण्यास्तादृश्या एवेति तु पर्यवसितार्थः। न तु विशेषिताविशेषितसाधारणतद्धर्मावच्छिन्नापादककतर्कस्यैव तदवच्छिन्नकोटिकशङ्काविरो-

न्तरोत्पन्नत्वरूपवह्निसमवहितजन्यत्वस्याधिकरणदेशावच्छिन्नवह्न्यभावचरक्षणानन्तरक्षणोत्पन्नत्वरूपतदसमवहितजन्यत्वसाधारणस्योभयसाधारणस्यानुगतस्याभावेन(१) न तादृशान्यतरत्वावच्छिन्नतदत्यन्ताभावरूपापादकाप्रसिद्धिः ।

वह्नितच्छून्यान्यतरजन्यो न स्यादिति पाठे तु तच्छून्यपदं वह्नित्वशून्यपरम् । वह्निवह्नित्वशून्यान्यतरत्वं च वह्निवृत्ति सद् वह्नित्वशून्यावृत्ति यत्तच्छून्यत्वं न तु तद्भिन्नभिन्नत्वम्, वह्निभिन्नत्वे सति वह्नित्वशून्यभिन्नत्वस्याप्रसिद्धेः । गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वोपगमात् तदन्यतरजन्यतात्वस्य जन्यतात्वसमनियतत्वेऽपि न तदवच्छिन्नाभावाप्रसिद्धिः । आदिपदात् किञ्चिज्जन्यो न स्यादुत्पन्नो न स्यादित्यादितर्कपरिग्रहः । तथात्वापत्तेः । वह्निजन्यत्वाभावशङ्कानिवर्तकत्वापत्तेः । वह्निपदस्य वह्निसमवहितपरत्वपक्षे वह्निसमवहितजन्यत्वाभावशङ्कानिवर्तकत्वापत्तेरित्यर्थः । अस्यापि तर्कस्य वह्न्यसमवहितजन्यत्वसाधारणरूपेण वह्निजन्यत्वपर्यवसायित्वादिति भावः ।

तथा पर्यवसायिता तु । निरुक्ततत्कोटिमात्रपर्यवसायिता तु । विशेषतो व्याप्त्या । आपाद्याभावनिष्ठया तद्रूपावच्छिन्ननिरूपितया तद्रूपतन्मात्रवृत्तिधर्मावच्छिन्ननिरूपितया वा व्याप्त्येत्यर्थः । निर्वहतीति शेषः । सामान्यत इति । व्याप्त्येत्यनुषज्यते इति । तथा च तादृश्या तद्धर्मव्यापकधर्मावच्छिन्ननिरूपितया व्याप्त्यापि कश्चिन्निर्वहतीत्यर्थः । पक्षधर्मताबलात् । प्रकृतपक्षे तद्रूपावच्छिन्नेतरव्यापकतावच्छेदकरूपाक्रान्तस्य बाधबलात् । इतरथा बाधादिसहकृतपरामर्शस्य व्यापकतानवच्छेदकेनापि विशेषरूपेण साध्यानुमितिजनकत्वादिति भावः । तत्सम्पत्तये । जन्यत्वव्यापकतावच्छेदकीभूतविशिष्टाभावत्वाक्रान्तस्य वह्न्यसमवहितजन्यत्वरूपविशेषणाभावस्य धूमत्वावच्छिन्ने बाधनिश्चयसम्पत्तये । पक्षः । धूमत्वावच्छिन्नः । विशेषणीय इति । अन्यथा जन्यत्वस्य वह्निसमवहितजन्यत्वत्वावच्छिन्नासाधकत्वेन प्रकृततर्कस्य तद्धर्मावच्छिन्नाभावशङ्कानिवर्तकत्वानुपपत्तिः । उपस्थिते । निश्चिते । विशिष्टाभावबुद्धेः । विशिष्टाभावत्वावच्छिन्नसाध्यकानुमितेः । विशेष्याभावमात्रावलम्बितत्वात् ।

(१) अभावेऽपीति पाठान्तरम् ।

विशेष्याभावमात्रवृत्तिधर्मावच्छिन्नप्रकारकत्वानियमात् । तादृशध-र्माश्रयमात्रविधेयकत्वानियमाद्वा, विशेषणवत्तानिश्चयस्यैव विशि-ष्टाभावत्वाक्रान्तविशेषणाभावरूपैकविशेष्यबाधरूपत्वादिति भावः ।

न च तर्कस्य तादृशशङ्कानिवर्तकत्वे विपर्ययानुमितिफलोपधानम-तन्त्रम्, यत्किञ्चित्कारणविरहेण तदनुपधानस्थलेऽपि तस्य तथात्वात् अत आपाद्याभावस्य तद्रूपावच्छिन्नासिद्धियोग्यतैव तर्कस्य तद्रूपाव-च्छिन्नाभावशङ्कानिवर्तकत्वोपयोगिनी वाच्या । तथा चैतादृशेतर-बाधनिश्चयशून्यकालेऽपि योग्यताया अव्याहतत्वात् तर्कस्य पक्षे तादृशनिश्चयसम्पादकविशेषणदानमप्रयोजकमिति वाच्यम् । पर्वतो निर्वह्निः स्यान्निर्धूमः स्यादित्यादितर्कस्याभौमवह्निबाधानवतारद-शायां भौमवह्नित्वावच्छिन्नाभावशङ्कानपनायकत्वात् प्रकृततर्कौप-यिकव्याप्त्यवगाहिप्रकृतपक्षतावच्छेदकावच्छिन्नधर्मिकयद्रूपावच्छि-न्नाभाववत्ताज्ञानाधीनापादकाभावानुमितेरसति प्रतिबन्धके यत्को-टितावच्छेदकावच्छिन्नप्रकारतानियमस्तद्रूपावच्छिन्नापाद्यविषयक-त्वस्यैव तर्के तत्कोटितावच्छेदकावच्छिन्नाभावशङ्काविरोधित्वप्रयो-जकत्वात् पक्षतावच्छेदके वह्न्युपसमवहिताजन्यत्वप्रवेशनस्यावश्य-कत्वात् ।

धूमादिलिङ्गकद्रव्यत्वावच्छिन्नसाध्यकानुमितौ वह्नित्वावच्छिन्न-प्रकारताकत्वविरहादुक्तनियमासम्भव इति प्रकृततर्कप्रयोजक-व्याप्त्यवगाहित्वमाद्याभावज्ञानविशेषणम् । यत्र धूमस्तत्र वह्निरित्युक्ततर्कप्रयोजकव्यतिरेकव्याप्तिज्ञानजन्यायां वह्न्यभावलि-ङ्गकधूमाभावानुमितौ वह्नित्वावच्छिन्नप्रकारताविरहादुक्तनियमा-सम्भव इति प्रकृतापाद्याभाववत्तावगाहित्वं व्याप्तिज्ञानविशे-षणम् । शुद्धपर्वतत्वावच्छिन्नपक्षकस्य पर्वतो निर्वह्निः स्या-दित्यादितर्कस्याप्यभौमवह्निशून्यः पर्वत इत्याद्याकारकस्य-तन्त्रनिश्चयदशायां पर्वतो भौमवह्निमान्न वेत्यादिसंशयनिवर्त-कत्वे पुनरसति प्रतिबन्धके यादृशनिश्चयसहकृतयद्रूपावच्छिन्नाभा-वत्ताज्ञानजन्यापादकाभावानुमितेस्तत्कोटितावच्छेदकावच्छिन्नप्रका-रतानियमतादृशनिश्चयविशिष्टत्वे सति तद्रूपावच्छिन्नापाद्यविषय-कत्वमेव तादृशशङ्काविरोधित्वप्रयोजकं वाच्यम् । पक्षतावच्छेदके वह्न्युसमवहिताजन्यत्वविशेषणप्रवेशनं च तादृशनिश्चयवैशिष्ट्य-

न्ह्यसमवहिताजन्यं च सम्भवतीति वन्हिजन्यत्वपर्यवसितं वह्निसमवहितजन्यत्वं वाच्यम् । तथा च घटादौ व्यभिचारवारणाय आपाद्यकोटिप्रतियोगिविशेषणार्थकं(१) प्रसन्तम् । अजन्ये जन्ये च नान्तरीयकवह्निके व्यभिचारवारणाय जन्य इति । तदर्थस्तु वन्ह्यसमवधानकालीनवन्हितत्समवधानेतरयावत्कारणजन्यत्वम्, तथाविधयावत्कारणकत्वमिति यावत् । तथा च वन्ह्यसमवहिताजन्यत्वे सति वन्ह्यसमवधानकालीनवह्नितत्समवधानेतरयावत्कारणको न स्यादिति पर्यवसितोऽर्थः ।

( गां० ) नान्तरीयकवन्हिकं घटादौ स्वसमानाधिकरणवह्निमत्क्षणवृत्तिसामग्रीजन्यत्वरूपस्य तादृशक्षणाव्यवहितोत्तरक्षणोत्पन्नत्वपर्यवसितस्य वह्निसमवहितजन्यत्वपदार्थस्य वन्ह्यसमवहिताजन्यत्वस्य च सत्त्वादिति भावः । वह्निजन्यत्वपर्यवसितम् । वह्निजन्यत्वस्वरूपम् । वह्निसमवहितजन्यत्वं वाच्यम् । वह्निसमवहितजन्यपदार्थतावच्छेदकं वाच्यम् । अन्यथा यथाश्रुतवह्निसमवहितजन्यत्वस्य शुद्धस्य वह्न्यसमवहिताजन्यत्वविशेषितस्य च वह्निजन्यत्वाव्याप्यत्वेन प्रकृततर्कांङ्गवन्ह्यसमवहिताजन्यत्वविशिष्टवह्निसमवहितजन्यत्वनिश्चयेऽपि तादृशनिश्चयस्य तत्स्थापकतर्कस्य च वह्निजन्यत्वाभावशङ्कायामविरोधितया तादृशशङ्कायां बाधकविरहेण वह्निधूमयोः कार्यकारणभावनिश्चयानुपपत्तेः ।

न च वह्निसमवहितजन्यत्वस्य वह्निव्याप्यत्वनियततया तन्निश्चयादेव व्याप्तिनिश्चयनिर्वाहात् कार्यकारणभावग्रहोऽकिञ्चित्कर इति वाच्यम् । स्वाव्यवहितपूर्वक्षणावच्छिन्नवह्निमति तादृशवह्निशून्ये च यदुत्पत्तिस्तत्साधारण्येन वह्निसमवहितजन्यत्वस्य वह्निव्याप्यव्याप्यत्वात् ।

न च वन्ह्यसमवहिताजन्यत्वविशिष्टवह्निसमवहितजन्यत्वस्य वह्निव्याप्यत्वनियततया तन्निश्चयादेव व्याप्तिनिश्चय इति वाच्यम् ।

---

(१) आपाद्यकोटिप्रतियोगिविशेषणमित्यपि पाठान्तरमिति ज्ञायते व्याख्यानुरोधात् ।

यकवह्निके व्यभिचारवारणरूपप्रयोजनप्रदर्शनेन न्यूनतापातात् ।

अजन्ये व्यभिचारस्य यथाश्रुतजन्यत्वनिवेशेनैव वारणात् पारिभाषिकतदर्थविवक्षायाः प्रयोजनमाह । जन्ये च नान्तरीयकवह्निके इति । नान्तरीयकः स्वोत्पत्त्यर्थमनपेक्षितोऽपि दैवात् स्वाव्यवहितप्राक्क्षणे स्वाश्रयवृत्तिर्वह्निर्यस्य स तथा । व्यभिचारवारणायेति । तत्र वह्निजन्यत्वाभावस्यापादकस्य वह्न्यसमवहितजन्यत्वस्य च सत्त्वादिति भावः । वह्न्यसमवधानकालीनेति । वह्न्यसमवधानकालीनानि स्वाधिकरणदेशावच्छिन्नवह्न्यभावत्क्षणवृत्तीनि वह्नितत्समवधानेतराणि यावन्ति स्वकारणानि तज्जन्यत्वमित्यर्थः । एतत्प्रसिद्धिश्च वह्निजन्ये धूमादौ द्रष्टव्या । अत्र यावत्त्वविशिष्टेषु वह्नितत्समवधानेतरस्वकारणेषु वह्न्यसमवधानकालीनत्वं विधेयम्, तेन नान्तरीयवह्निके घटादौ यावन्ति वह्न्यसमवधानकालीनानि स्वकारणानि तज्जन्यत्वस्याक्षतत्वेऽपि न क्षतिः । यावत्तु वह्नितत्समवधानेतरतादृशघटादिकारणेषु वह्न्यसमवधानकालीनत्वाभावात् यद्विलम्बेन वह्निसमवधानोत्पत्तिक्षणे तत्पूर्वं वा तादृशघटादेरनुत्पादो वन्हिसमवधानकालीनस्य तादृशकारणस्यापि यावत्तादृशकारणान्तर्गतत्वात् । ईदृशाभिमतोद्देश्यविधेयभावं स्फुटयितुं व्युत्पत्तिसिद्धपूर्वपदार्थविधेयकान्वयबोधजनकबहुव्रीहिणोक्तमेवार्थं विवृणोति । तथाविधेति ।

केचित्तु जन्यत्वानिवेशप्रयुक्तलाघवमनुसृत्याह । तथाविधेतीति व्याचक्रुस्तन्न शोभनम् । एतन्मतेऽपि वह्निर्यस्य सम्बन्धस्य जन्यत्वरूपतया तादृशं यत्त्वं तत्त्वाभावकूटस्य तत्तद्भेदकूटस्य वा विशिष्यैवापादनीयतया आपाद्यकोटौ तादृशयावत्कारणजन्यत्वादेरनिवेशेन लाघवगौरवविचारानवकाशाच्च । नान्तरीयवह्निकस्यापि घटादेर्यत्किञ्चित्कारणस्य तत्प्रागभावादेर्वह्न्यसमवधानकालीनत्वात्तद्दोषतादवस्थ्यमतो यावदिति ।

ननु यादृशघटस्य यत्कारणविलम्बेन पूर्वं नोत्पादस्तादृशचरमसंयोगादिरूपं कारणं वह्निसमवधाननाशकालपर्यन्तमासीत्तत्र व्यभिचार ईदृशविवक्षायामपि दुर्वार एव । न च वह्न्यसमवधानकालीनत्वं वह्निसमवधानप्रागभावकालीनत्वम्, ता-

दृशाचरमसंयोगादीनां चातथात्वान्न तद्घटादौ व्यभिचार इति वाच्यम् । तद्वह्निसमवधाननाशकालस्यापि भाविवह्न्यन्तरसमवधानप्रागभावकालतया तेषामपि तथात्वादिति चेन्न । स्वीययावत्कारणत्वावच्छेदेन स्वाधिकरणदेशावच्छिन्नवह्निसमवधानाभाववत्क्षणवृत्तित्वस्य विवक्षणीयत्वात् । उक्तस्थले यावत्कारणानां प्रत्येकं तथाविधक्षणवृत्तित्वेऽपि मिलितानां न तादृशक्षणवृत्तित्वं वह्निसमवधाननाशक्षणानां तथाविधघटादियावत्कारणान्तर्गततत्प्रागभावानधिकरणत्वात् वह्निसमवधानप्रागभावक्षणानां च तदन्तर्गतचरमसंयोगाद्यनधिकरणत्वादिति तदीयकारणनिष्ठयावत्त्वस्य तादृशेन केनचिदपि क्षणेन निरूपितायां वृत्तावनवच्छेदकत्वविरहेण तादृशघटादौ विशेष्यदलाभावस्याक्षतत्वात् ।

तत्तद्वह्न्यसमवहिताजन्यत्वविशिष्टस्य तत्तद्वह्निसमवधानप्रागभावकालीनवह्नितत्समवधानेतरयावत्कारणकत्वस्याभाव आपादनीय इत्यतो न व्यभिचार इत्यपि कश्चित् ।

अत्र धूमादिजननयोग्यसमुदायस्यासमानकालीनेन्धनादिव्यक्तिघटितस्य यावत्त्वेन न कुत्रापि क्षणे वृत्तिरिति आपाद्याप्रसिद्धिरतः कारणपदं फलोपहितकारणपरं बोध्यम् । यावद्धूमकारणसमुदायान्तर्गतवह्नितत्समवधानयोर्वह्न्यसमवधानकालीनत्वाभावात् धूमेऽपि नैतद्दलप्रसिद्धिसम्भव इत्यतो वह्नितत्समवधानेतरत्वं कारणविशेषणमुपात्तम् ।

अथ वह्नेर्वह्निसमवधानाभाववत्त्वोत्पत्तिक्षणवृत्तित्वाद्वह्निभेदस्य कारणविशेषणत्वमनर्थकम् । न च वह्निसंयोगाभावो न वह्न्यसमवधानपदार्थः किं तु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाव एव, वह्न्युत्पत्तिक्षणश्च न तादृशः, तस्य कालिकसम्बन्धेन वह्निमत्त्वादिति वह्नेर्न वह्न्यसमवधानकालीनत्वं निर्वहतीति वह्निभेदनिवेशनमावश्यकमिति वाच्यम् । वह्निमतोऽपि वह्न्युत्पत्तिक्षणस्य देशविशेषावच्छिन्नतदभाववत्त्वात् ।

न च वह्निसमवहितजन्यघटादिसामान्याधिकरणक्षणस्यापि देशान्तरावच्छिन्नवह्न्यभाववत्तया स्वाधिकरणदेशावच्छिन्नवह्न्यभाववत्त्वस्य विवक्षितत्वात् वह्न्युत्पत्तिक्षणस्य च धूमाधिकरणावच्छेदेन वह्न्यभाववत्ताविरहाद्वह्नेर्न वह्न्यसमवधानकालीनत्वमिति

यकवह्निके व्यभिचारवारणरूपप्रयोजनप्रदर्शनेन न्यूनतापातात् ।

मजन्ये व्यभिचारस्य यथाश्रुतजन्यत्वनिवेशेनैव वारणात् पारिभाषिकतदर्थविवक्षायाः प्रयोजनमाह । जन्ये च नान्तरीयकवह्निके इति । नान्तरीयकः स्वोत्पत्त्यर्थमनपेक्षितोऽपि दैवात् स्वाव्यवहितप्राक्क्षणे स्वाश्रयवृत्तिर्वह्निर्यस्य स तथा । व्यभिचारवारणायेति । तत्र वह्निजन्यत्वाभावस्यापादकस्य वह्न्यसमवहिताजन्यत्वस्य च सत्त्वादिति भावः । वह्न्यसमवधानकालीनेति । वह्न्यसमवधानकालीनानि स्वाधिकरणदेशावच्छिन्नवह्न्यभावलक्षणवृत्तीनि वह्नितत्समवधानेतराणि यावन्ति स्वकारणानि तज्जन्यत्वमित्यर्थः । एतत्प्रसिद्धिश्च वह्निजन्ये धूमादौ द्रष्टव्या । अत्र यावत्त्वविशिष्टेषु वह्नितत्समवधानेतरस्वकारणेषु वह्न्यसमवधानकालीनत्वं विधेयम्, तेन नान्तरीयवह्निके घटादौ यावन्ति वह्न्यसमवधानकालीनानि स्वकारणानि तज्जन्यत्वस्याक्षतत्वेऽपि न क्षतिः । यावत्सु वह्नितत्समवधानेतरतादृशघटादिकारणेषु वह्न्यसमवधानकालीनत्वाभावात् यद्विलम्बेन वह्निसमवधानोत्पत्तिक्षणे तत्पूर्वं वा तादृशघटादेरनुत्पादो वह्निसमवधानकालीनस्य तादृशकारणस्यापि यावत्तादृशकारणान्तर्गतत्वात् । ईदृशाभिमतोद्देश्यविधेयभावं स्फुटयितुं व्युत्पत्तिसिद्धपूर्वपदार्थविधेयकान्वयबोधजनकबहुव्रीहिणोक्तमेवार्थं विवृणोति । तथाविधेति ।

केचित्तु जन्यत्वानिवेशप्रयुक्तलाघवमनुसृत्याह । तथाविधेतीति व्याचक्रुस्तन्न शोभनम् । एतन्मतेऽपि बहुव्रीह्यर्थस्य सम्बन्धस्य जन्यत्वरूपत्वात् तादृशं यत्त्वं तत्त्वाभावकूटस्य तत्तद्भेदकूटस्य वा विशिष्यैवापादनीयतया आपाद्यकोटौ तादृशयावत्कारणजन्यत्वादेरनिवेशेन लाघवगौरवविचारानवकाशाच्च । नान्तरीयवह्निकस्यापि घटादेर्यत्किञ्चित्कारणस्य तत्प्रागभावादेर्वह्न्यसमवधानकालीनत्वात्तद्दोषतादवस्थ्यमतो यावदिति ।

ननु यादृशघटस्य यत्कारणविलम्बेन पूर्वं नोत्पादस्तादृशचरमसंयोगादिरूपं कारणं वह्निसमवधाननाशकालपर्यन्तमासीत्तत्र व्यभिचार ईदृशविवक्षायामपि दुर्वार एव । न च वह्न्यसमवधानकालीनत्वं वह्निसमवधानप्रागभावकालीनत्वम्, ता-

क्षणचरमसंयोगादीनां चातथात्वान्न तद्घटादौ व्यभिचार इति वाच्यम् । तद्वह्निसमवधाननाशकालस्यापि भाविवह्न्यन्तरसमवधानप्रागभावकालतया तेषामपि तथात्वादिति चेन्न । स्वीययावत्कारणत्वावच्छेदेन स्वाधिकरणदेशावच्छिन्नवह्निसमवधानाभाववत्क्षणवृत्तित्वस्य विवक्षणीयत्वात् । उक्तस्थले यावत्कारणानां प्रत्येकं तथाविधक्षणवृत्तित्वेऽपि मिलितानां न तादृशक्षणवृत्तित्वं वह्निसमवधाननाशक्षणानां तथाविधघटादियावत्कारणान्तर्गततत्प्रागभावानधिकरणत्वात् । वह्निसमवधानप्रागभावक्षणानां च तदन्तर्गतचरमसंयोगाद्यनधिकरणत्वादिति तदीयकारणनिष्ठयावत्त्वस्य तादृशेन केनचिदपि क्षणेन निरूपितायां वृत्तावच्छेदकत्वविरहेण तादृशघटादौ विशेष्यदलाभावस्याक्षतत्वात् ।

तत्तद्वह्न्यसमवहिताजन्यत्वविशिष्टस्य तत्तद्वह्निसमवधानप्रागभावकालीनवह्नितत्समवधानेतरयावत्कारणकत्वस्याभाव आपादनीय इत्यतो न व्यभिचार इत्यपि कश्चित् ।

अत्र धूमादिजननयोग्यसमुदायस्यासमानकालीनेन्धनादिव्यक्तिघटितस्य यावत्त्वेन न कुत्रापि क्षणे वृत्तिरिति आपाद्याप्रसिद्धिरतः कारणपदं फलोपहितकारणपरं वाच्यम् । यावद्धूमकारणसमुदायान्तर्गतवह्नितत्समवधानयोर्वह्न्यसमवधानकालीनत्वाभावाद् धूमेऽपि नैतद्दलप्रसिद्धिसम्भव इत्यतो वह्नितत्समवधानेतरत्वं कारणविशेषणमुपात्तम् ।

अथ वह्नेर्वह्निसमवधानाभाववत्स्वोत्पत्तिक्षणवृत्तित्वाद्वह्निभेदस्य कारणविशेषणत्वमनर्थकम् । न च वह्निसंयोगाभावो न वह्न्यसमवधानपदार्थः किं तु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाव एव, वह्न्युत्पत्तिक्षणश्च न तादृशः, तस्य कालिकसम्बन्धेन वह्निमत्त्वादिति वह्नेर्न वह्न्यसमवधानकालीनत्वं निर्वहतीति वह्निभेदनिवेशनमावश्यकमिति वाच्यम् । वह्निमतोऽपि वह्न्युत्पत्तिक्षणस्य देशविशेषावच्छिन्नतदभाववत्त्वात् ।

न च वह्निसमवहितजन्यघटादिसामग्र्यधिकरणक्षणस्यापि देशान्तरावच्छिन्नवह्न्यभाववत्तया स्वाधिकरणदेशावच्छिन्नवह्न्यभाववत्त्वस्य विवक्षितत्वाद् वह्न्युत्पत्तिक्षणस्य च धूमाधिकरणावच्छेदेन वह्न्यभाववत्त्वविरहाद्वह्नेर्न वह्न्यसमवधानकालीनत्वमिति

वाच्यम् । यदा यत्र यस्याधिकरणतानियामकः संयोगादिस्त-द्धिकरणमेव तदानीं तद्वृत्तावच्छेदकमन्यथा देशान्तरवृत्तौ दिनान्तरे चात्रानेष्यमाणे घटादाविहाद्य स घट इत्यादिप्रतीति-प्रसङ्गात् । एवं च वह्न्यादेः स्वोत्पत्तिक्षणवृत्तौ तत्कालीनसम्बन्ध-वतः स्वावयवस्यैवावच्छेदकत्वं न तु स्वसंयोगिनोऽपि धूमवत-स्तदा तत्र तत्संयोगाभावादिति, तत्र च धूमवदवच्छेदेन वह्न्यभाव-वत्त्वस्याक्षतत्वाद् वह्नेरपि तदसमवधानकालीनत्वस्य दुर्वार-त्वात् । मैवम् । यत्र वह्निसमवधानदशायां महाघटनाशस्तदुत्त-रक्षणे च वह्निसमवधानप्राक्कालीनैरेवावयवसंयोगादिभिर्वह्निमति खण्डघटो जनितस्तादृशस्य खण्डघटस्य यावतां द्रव्याभावसंयो-गादिरूपकारणानां वह्निसमवधानप्राक्कालीनतया तत्र वह्न्यसमव-धानकालीनयावत्कारणकत्वमेवेति व्यभिचारः ।

न च महाघटोत्पत्तिदशायामेव तादृशखण्डघटोत्पत्तिवारणाय महाघटनाशव्यक्तेरपि तद्घटहेतुताया आवश्यकत्वात् तद्घटित-कारणसमुदायस्य च वह्न्यसमवधानकालीनत्वविरहान्न व्यभिचार इति वाच्यम् । यत्र महाघटसामग्रीसमवधानोत्तरं महाघटाधिकरण-कपालसंयुक्तकपालान्तरमन्तर्भाव्य महाघटारम्भककपालेषु खण्ड-घटोत्पत्तिस्तत्र पूर्वं तत्संयोगव्यक्तिरूपकारणविरहादेव तद्घटोत्प-त्तिवारणसम्भवेन महाघटनाशव्यक्तिहेतुतायां मानाभावात् ।

न च तत्संयोगतन्नाशव्यक्त्योः कस्य हेतुत्वमित्यत्र विनिगम-नाविरह इति वाच्यम् । सामान्यरूपेण क्लृप्तहेतुताकत्वस्यैव सं-योगव्यक्तिहेतुत्वे विनिगमकत्वात् । एवं चैतादृशव्यभिचारवा-रणाय स्वोत्पत्तिप्रयोजकप्रत्यासत्तिविशिष्टानां कारणानां वह्न्य-समवधानक्षणवृत्तित्वं विवक्षणीयम् । तथा च सति तादृशघट-जनकस्य समवायसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यरूपप्रतिबन्ध-काभावस्य तद्घटोत्पत्तिप्रयोजकतत्कपालप्रत्यासत्तिविशिष्टस्य महाघटाधिकरणकालेऽसत्त्वेन व्यभिचारवारणसम्भवात् । एवं च स्वोत्पत्तिक्षणे धूमोत्पादप्रयोजकसंयोगरूपप्रत्यासत्तिविशिष्टस्य वह्ने-रसत्त्वात्तस्य न वह्न्यसमवधानकालीनतेति वह्निभेदनिवेशनमर्थवत् ।

यदि चागन्तुककपालसम्बन्धस्यापि तादृशप्रत्यासत्तितया त-द्विशिष्टद्रव्याभावस्य तादृशक्षणेऽनपाय इति मन्यते तदा स्वाधि-

करणदेशावच्छेदेन वह्न्यभाववान् यः क्षणस्तदवच्छिन्नत्वप्रयोजकवह्नितत्समवधानेतरकारणाधिकरणतासमुदायकत्वमेव विवक्षणीयम् । तादृशसमुदायान्तर्गतायाः पूर्वघटारम्भककपालनिष्ठद्रव्याभावाधिकरणतायास्तथाविधक्षणानवच्छिन्नत्वेन न व्यभिचारः । एवं च धूमोत्पत्तिप्रयोजककारणाधिकरणतासमुदायान्तर्गतस्य संयोगसम्बन्धावच्छिन्नवह्न्यधिकरणत्वस्य वह्न्युत्पत्तिक्षणानवच्छिन्नतया तादृशक्षणमादाय स्वाधिकरणदेशावच्छिन्नवह्न्यभाववत्क्षणावच्छिन्नतत्समवधानेतरकारणाधिकरणतासमुदायकत्वस्य धूमे प्रसिद्धसम्भवेन वह्निपदवैयर्थ्याभावात् ।

यद्वा यद्यत्कारणं यद्यदधिकरणप्रत्यासन्नं सत् स्वोत्पत्तिप्रयोजकं तत्तदधिकरणवृत्तित्वविशिष्टतत्कारणसमुदायवह्न्यसमवधानक्षणकत्वविवक्षणात् सामञ्जस्यम् ।

यत्तु वह्न्यसमवधानकालीनत्वं स्वसमानाधिकरणवह्निमदन्यक्षणवृत्तित्वमेव विवक्षितम् । तथा च वह्न्युत्पत्तिक्षणस्यापि धूमसमानाधिकरणवह्निमत्तया वह्निपदसार्थक्यमिति केचिदाहुस्तदसत् । स्वाधिकरणवृत्तित्वविशिष्टवह्निमदन्यत्वस्य वह्न्युत्पत्तिक्षणसाधारणतया तन्निवेशे वह्नीतरत्वनिवेशनं विनाप्युपपत्तेः स्वाधिकरणवृत्तित्वोपलक्षितवह्निमदन्यत्वं निवेश्य वह्नीतरत्वनिवेशनस्यायुक्तत्वात् । एवं स्वसमानाधिकरणवह्निमदन्यक्षणवृत्तित्वं यदि वह्न्यसमवधानकालीनत्वं तदा स्वसमानाधिकरणवह्निमत्स्वाव्यवहितप्राक्क्षणकत्वरूपस्य वह्निसमवहितजन्यत्वस्य विशेषणतयैव सामञ्जस्ये वह्न्यसमवहिताजन्यत्वरूपनिषेधद्वयघटितसत्यन्तानुसरणमनर्थकम् । स्वाधिकरणदेशावच्छिन्नवह्निसमवधानाभाववत्क्षणवृत्तित्वं यदि पुनर्वह्न्यसमवधानकालीनत्वं तदा एकस्या एव घटव्यक्तेर्यत्र स्वाव्यवहितप्राक्कालावच्छिन्नवह्निसमवधानवति तत्समवधानाभाववति चोत्पत्तिस्तादृशघटव्यक्तेर्वह्निसमवहितजन्यतया यत्किञ्चिद्देशावच्छिन्नवह्न्यभाववत्क्षणवृत्तिसामग्रीजन्यतया च तत्र व्यभिचारः स्यादिति सत्यन्तनिषेधद्वयोपादानसार्थक्यमिति ।

वह्निसमवहितजन्यपदस्य वह्निजन्यार्थकत्वे जन्यपदस्य यथाश्रुतार्थपरतामभ्युपेत्यापि नान्तरीयवह्निके प्रकारान्तरेण व्यभिचारं वारयतां मतं दूषयितुमुपन्यस्यति । वह्निचेति ।

(दी०) यत्तु नान्तरीयवह्निके व्यभिचारवारणाय आपादककोटावेव विशेषणं सत्यन्तार्थः । स च वह्न्यघटितसामग्र्यजन्यत्वमिति । तन्न । प्राक् तदसिद्धेः ।

(गा०) आपादककोटावेवेत्येवकारेणापाद्यप्रतियोगिविशेषणत्वव्यवच्छेदः । विपर्ययपर्यवसायितानिर्वाहाय पक्षांशेऽपि तस्य विशेषणस्यमावश्यकमेवेति ध्येयम् । वह्न्यघटितसामग्र्यजन्यत्वमिति । वह्निसमवहितजन्यघटादौ च न तादृशसामग्र्यजन्यत्वं वह्नेस्तत्कारणतया तदुत्पत्तिप्रयोजककारणसमूहात्मकतत्सामग्र्यघटकत्वादिति न व्यभिचार इति भावः ।

प्रागिति । वह्नौ धूमजनकतानिश्चयात् पूर्वमित्यर्थः । तदसिद्धेः । धूमे वह्न्यघटितसामग्र्यजन्यत्वानिश्चयाद्वह्नौ धूमजनकत्वसन्देहे धूमसामग्र्यां वह्न्यघटितत्वस्यापि संशयादिति भावः ।

ननु वह्न्यसमवहिताजन्यत्वस्यापाद्यप्रतियोगिकोटिविशेषणत्वेऽप्यङ्केरेव भविष्यतीत्यादिशङ्काद्वयस्य कथं तर्कविरोधिता, एतन्मते तस्य पक्षाविशेषणतया तादृशशङ्कायाः पूर्वमते इव विशिष्टपक्षग्रहविरोधित्वासम्भवादित्यत आह ।

(दी०) अत्र आद्या द्वयी शङ्का इष्टापत्तिपर्यवसायिनी(१)। तृतीया पुनरापादकाद्यप्रसिद्धिपर्यवसायिनी। अवह्नेः,वह्निशून्यात् ।

(गा०) अत्रेति । एतन्मते इत्यर्थः । इष्टापत्तिपर्यवसितेति । आपाद्यस्य विशिष्टाभावस्य इष्टतापर्यवसितेत्यर्थः । इष्टत्वं च पक्षेऽबाधितत्वम्, पक्षे सत्त्वमिति यावत् । तज्ज्ञानजनकत्वमत्र तत्पर्यवसानं बोध्यम्, धूमे वह्न्यसमवहितजन्यत्वस्य सन्देहे तद्व्यापकस्य तदभावविशिष्टजन्यत्वाभावस्यापि संशयादिति भावः । इष्टापत्तिशङ्कायाश्च कारणीभूतापाद्यव्यतिरेकनिश्चयविघटनतया तर्कविघटकत्वं बोध्यम् ।

नन्वेवमप्यहेतुक एवोत्पत्स्यते इति तृतीयशङ्काया एतन्मते कथं तर्कविरोधिता ? तथा हि सम्प्रदायमते उत्पन्नत्वरूपजन्यत्वाभावस्यापाद्यतयोत्पन्नत्वरूपतदभाववति अहेतुकत्वशङ्का मूलशैथिल्य-

(१) पर्यवसितेति पाठान्तरम् ।

शङ्कापर्यवसायिनी, यतस्तस्यां सत्यां तत्र वह्न्यसमवहिताहेतुकत्वसहितवह्निसमवहिताहेतुकत्वरूपापादककोटिकशङ्का जायते । तद्विरोधिनो यद्ययं वह्न्यसमवहिताहेतुकत्वे सति वह्निसमवहिताहेतुकः स्यात्तदा ऽहेतुकः स्याद्वह्न्यसमवहितात्तत्समवहितात्यातिरिक्तस्याप्रसिद्धेरित्येतादृशतर्कस्य इष्टापत्त्या असम्भवात् सा च मूलशैथिल्यशङ्कैव, व्यापकाभिमताभाववति व्याप्याभिमतसत्ताया व्यभिचारत्वादिति । एतन्मते चोत्पन्नत्वं नापाद्यव्यतिरेकः, अपि तु वह्न्यसमवधानकालीनोत्पत्तिकारणकत्वम्, तद्विशिष्टे चाकारणकत्वशङ्का नावतरत्येवेति नोक्तदिशाऽहेतुकत्वशङ्कायां मूलशैथिल्यशङ्कापर्यवसानम् ।

न चापाद्यव्यतिरेकवत्तया निश्चिते धूमे ऽहेतुकत्वशङ्का व्याप्यसंशयविधया आपादकीभूतवह्न्यहेतुकत्वशङ्कामादधती मूलशैथिल्यशङ्कायां पर्यवस्यति, एकस्मिन् धर्मिणि आपाद्याभावनिश्चयसहिताया आपादकशङ्काया आपादके आपाद्यव्यभिचारशङ्कारूपत्वात् । पक्षे आपाद्याभावनिश्चयस्य च तर्कपूर्वमवश्यमुपेयत्वात् । यदि चाहेतुकत्वशङ्कायां सत्यां धूमे सकारणकत्वघटितापाद्याभावनिश्चय एव न सम्भवतीत्युच्यते तदा आपाद्यव्यतिरेकनिश्चयविघटकतया धूमेऽहेतुकत्वशङ्का इष्टापत्तिशङ्कैवेति वाच्यम् । यतो धूमत्वविशिष्टे ऽहेतुकत्वशङ्कातस्तद्विशिष्टे एव वह्न्यहेतुकत्वशङ्का भविष्यति तदानीं तद्विशिष्टे आपाद्यव्यतिरेकनिश्चयसत्त्वेऽपि तच्छङ्कातादृशापाद्यव्यतिरेकनिश्चययोरापाद्याभावापादकौ(१) परस्परोपरागेणाविषया(२)विति न व्यभिचारग्रहरूपता, तादृशाभाववत्त्वविशिष्टे तादृशापादकसंशये च तेन रूपेण व्याप्यसंशय एव हेतुर्न तु रूपान्तरेण, भिन्नधर्मितावच्छेदककत्वात्तादृशनिश्चयो सम्भवतीति प्रागेवोपपादितम् । एवं धूमत्वादिरूपेण पक्षे वह्न्यहेतुकत्वसंशयो विनैवाहेतुकत्वशङ्कां सुलभ एव तामेवोच्छेत्तुं तर्कानुसरणात् सा चेत्तर्कमुच्छिन्द्यात्तर्हि अलमहेतुकत्वशङ्कानिराकरणायासेन ।

---

(१) आपाद्याभावापादकवत्त्वेनेति पाठान्तरम् ।
(२) विषयाविति पाठान्तरम् ।

यच्च शङ्कितं धूमेऽहेतुकत्वशङ्का आपाद्यव्यतिरेकानिश्चयविघटकतया इष्टापत्तिशङ्कारूपेति तदपि न। यत उत्पन्नतया निश्चितेऽपि धूमे यद्यहेतुकत्वशङ्का स्यात्तदा उत्पन्नमात्रे एव सा स्यादिति सहेतुकत्वस्य न कुत्रापि प्रसिद्धिरिति तदभावशङ्काया एवासम्भव इत्यत आह। तृतीया पुनरिति। पुनः शब्देनेष्टापत्तिपर्यवसायित्वव्यवच्छेदः। आपाद्याप्रसिद्धिस्थले इष्टापत्तेरयोगात् सा च व्यक्तीभविष्यत्यग्रे। आपादकेति। आपादकमिह वह्न्यजन्यत्वं वह्निकारणकत्वाभावरूपम्। तदप्रसिद्धिपर्यवसानम्। तत्स्वरूपज्ञानविरोधः। उत्पन्नमात्रेऽहेतुकत्वसंशये क्वचिदपि सहेतुकत्वघटितवह्निहेतुकत्वरूपप्रतियोगिनोऽनिश्चयेन तदभावज्ञानासम्भवात्।

न चाभावबुद्धौ प्रतियोगिनः कुत्रचिन्निर्णयो नापेक्ष्यते अपि तु प्रतियोगिनि प्रतियोगितावच्छेदकप्रकारकनिश्चय एवेति वाच्यम्। सर्वत्राहेतुकत्वशङ्कादशायां हेतुतायां वह्न्यादिवृत्तित्वनिश्चयासम्भवेन प्रतियोगितावच्छेदकप्रकारकनिश्चयस्यापि प्रकृते दुर्लभत्वात्। अहेतुकत्वसंशयश्च तदीयनियतपूर्ववर्तिसामान्ये तं प्रत्यनन्यथासिद्धत्वसंशयः, तं प्रति अनन्यथासिद्धसामान्यं च तदीयनियतपूर्ववर्तितासंशयः। अतः प्रतियोग्यप्रसिद्ध्या ऽहेतुकत्वशङ्कानुपपत्तिर्नाशङ्कनीया। आदिपदादापाद्यपरिग्रहः। आपाद्यप्रतियोगिनश्च सहेतुकत्वघटितस्य वह्न्यसमवधानकालीनोक्तयावत्कारणकत्वस्य सहेतुकत्वाप्रसिद्ध्याऽप्रसिद्धिरिति भावः।

अथ कार्यान्तरे सहेतुकत्वप्रसिद्धिदशायां धूमधर्मिकाहेतुकत्वशङ्काया व्याप्यसंशयविषया धूमे तादृशयावत्कारणकत्वाभावरूपापाद्याभावकोटिक(१)संशयसम्पादकत्वादिष्टापत्तिशङ्कापर्यवसानं सम्भवति, तत्कथमहेतुक एवोत्पत्स्यत इति शङ्काया धूमपदानुपक्षेण धूममात्रधर्मिकत्वमुपगम्येष्टापत्तिपर्यवसायिता न व्याख्यातेति चेन्न। उत्पत्तिमत्तयाऽवधृतेऽपि धूमे यद्यहेतुकत्वसंशयस्तदा कार्यान्तरेऽपि तत्सम्भवेन सहेतुकत्वप्रसिद्धेर्दुर्लभत्वात्, न ह्युत्पत्तिमत्त्वादन्यत्तादृशशङ्काविरोधिरूपं सम्भवतीति।

अवह्निरित्यत्र मूलेऽवह्निपदस्य वह्निभिन्नार्थकत्वे वह्निभिन्नजन्य-

(१) आपाद्यकोटिकेति पाठान्तरम्।

रवं तन्मात्रजन्यत्वं या कोटिः स्यात् तत्कोटिकशङ्कयोश्च न प्रकृते विरोधिता सम्भवति प्रथमे पक्षसाधारणत्वात् द्वितीये च वह्निजन्यत्वशङ्कापर्यवसायिन्यास्तच्छङ्कायास्तर्कात् पूर्वं दुरुच्छेदत्वात् तदभावव्याप्यप्रतियोगिकोटौ निवेशासम्भवादतस्तद्याचष्टे । अवह्नेरिति । वह्निशून्यात् । वह्न्यसमवहितात् । तथा च वह्न्यसमवहितजन्यत्वकोटिकत्वं शङ्कायां लभ्यं तादृश्याश्चाव्याप्यप्रतियोगिकोटिप्रविष्टवह्न्यसमवहिताजन्यत्वविरोधिविषयकत्वात्तर्कविरोधित्वोपपत्तिः ।

मूले । इत्यत्र । इत्यादितर्के । उपस्थयमाने इति शेषः । इति शङ्का स्यात् । इत्यादिशङ्का जायेत । सम्भावनायां लिङ् । सर्वत्र । शङ्कायाम् । स्वक्रियाव्याघातः । धूमादौ गृहीतवह्न्याद्यन्वयव्यतिरेकानुविधानस्य पुंसो धूमाद्यर्थितया वह्न्यादौ प्रवृत्तेर्विरोधः, तदभावापादकत्वमिति यावत् । आपादनाकारमेवाह । यदीति । गृहीतान्वयव्यतिरेको यो हेतुर्वह्निस्तं विना । कार्योत्पत्तिम् । धूमे तदसमवहितजन्यत्वं कार्यसामान्ये ऽहेतुकत्वं चेति शेषः । उपादानं कथं कुर्यात् । वह्न्यादिसमवधाने न प्रवर्तेतेति यावत् । तेन विनापि तत्सम्भवादिति । तदसमवहितादपि तत् सम्भवतीत्यादिज्ञानस्य प्रवर्तककारणताग्रहविरोधिनः सत्त्वादित्यर्थः । तस्मात् । तादृशप्रवृत्तिनिर्वाहानुरोधात् । तदुपादानम् । वह्न्युपादानम् । शङ्काप्रतिबन्धकम् । आस्थीयते इति शेषः । अत्रोपादानपदस्य भावव्युत्पत्त्या प्रवृत्त्यादिपरत्वं न सम्भवति प्रवृत्त्यादेः शङ्काप्रतिबन्धकत्वविरहादतो व्याचष्टे दीधितौ । तदुपादानमितीति ।

( दी० ) तदुपादानमिति करणव्युत्पत्त्या तदीयकार्यप्रयोजकताज्ञानपरम्, तादृशान्वयव्यतिरेकानुविधानबोधपरं वा । अग्रेतनमपि स्वक्रियापदं तत्परमेव । कृत्यादेः शङ्काप्रतिबन्धकत्वे मानाभावात्, कारणताग्रहोत्तरकालीनत्वाच्च ।

( गा० ) करणव्युत्पत्त्येत्युपलक्षणम् । तस्य उपादानं यस्मादिति बहुव्रीहिसमासादरादित्यपि बोध्यम् । तदीयकार्येति । वह्न्यादिकार्यधूमादीत्यर्थः । वह्न्यादौ धूमादिप्रयोजकताज्ञानस्य धूमादौ वह्न्यादिप्रयोज्यत्वरूपवह्न्यसमवहितजन्यत्वव्यावर्तकधर्मविषयकतया तच्छङ्काप्रतिबन्धकत्वोपपत्तिः । एवं तृप्त्यादिकार्ये प्रत्यन्नस्य-

थासिद्धभोजनादौ तन्नियतपूर्ववर्तित्वाभावत्या तत्तत्प्रयोजकत्वज्ञानस्य कार्यसामान्ये ऽहेतुकत्वशङ्कानिवर्तकत्वम् । प्रयोजकत्वं च कारणत्वादन्यदेव सम्बन्धविशेषः कारणाकारणसाधारण इति पूर्वं तन्निश्चयेऽपि न कारणताग्राहकतर्कवैयर्थ्यम् ।

ननु, कारणत्वस्येव प्रयोजकत्वस्यापि प्रथमं दुर्निश्चेयतया कथं तन्निश्चयाच्छङ्काप्रतिबन्ध इत्याशङ्कायां प्रकारान्तरमनुसरति । तादृशान्वयेति । धूमादिधर्मिकवह्न्याद्यन्वयव्यतिरेकानुविधायित्वान्वयव्यतिरेकवत्त्वनिश्चयपरं वेत्यर्थः । तदन्वयव्यतिरेकानुविधायित्वनिश्चयश्च तर्कात् पूर्वमपि सम्भवति, प्रत्यक्षतो यत्र न वह्निस्तत्र न धूम इति निश्चये विरोधिशङ्कानवकाशात् तादृशनिश्चयो न वह्न्यजन्यत्वशङ्काविरोधी तदन्वयव्यतिरेकानुविधायित्वस्य नान्तरीयकतदकारणकसाधारणतया तदजन्यत्वाव्यावर्तकत्वादिति न तर्कवैयर्थ्यमिति भावः । अग्रेतनमपीत्यत्रापिकारः स्वक्रियापदमित्यनन्तरं योज्यः । उक्तरीत्या स्वक्रियाव्याघात इति प्राक्तनस्वक्रियापदस्य प्रवृत्तिपरताया एव सम्भवादग्रेतनमिति ।

केचित्तु स्वक्रियाव्याघात इति ग्रन्थस्य प्रवृत्त्यभावप्रसञ्जनपरत्वे मिथ्यास्त्वित्यादिना वक्ष्यमाणमताभेदः स्यादिति ग्रन्थकारमते तादृशग्रन्थस्य सकलशङ्कानां स्वक्रियया प्रतिबन्ध इत्येवार्थः । स्वक्रियायाः शङ्काप्रतिबन्धकत्वे प्रमाणाकाङ्क्षया यदि हीत्यादिना स्वक्रियायाः शङ्कायामप्रतिबन्धकत्वे प्रवृत्त्यनुपपत्तेरभिधानं तस्मात्तदुपादानमिति ग्रन्थेन स्वक्रियायाः शङ्काप्रतिबन्धकत्वोपसंहारः, एवकारः प्रतिबन्धकमित्यनन्तरं योज्यः । इह चाग्रेतनमपीत्यपिकारो यथास्थानस्थ एव प्राक्तनस्वक्रियापदसमुच्चायक इत्याहुः ।

तन्न । मिश्रमते तादृशग्रन्थस्य परार्थानुमानस्थलाभिप्रायकतया एतन्मते च स्वार्थानुमानस्थलपरतया विशेषात् स्वक्रियापदस्य यथाश्रुतार्थपरत्वपरित्यागानौचित्यात् । तत्परमेवेति । तदुपादानपदं यत्परं तत्परमेवेत्यर्थः । तदुपादानपदस्य प्रवृत्त्यादिपरत्वपरित्यागे बीजं स्वयमेवाह । कृत्यादेरिति । आदिपदाच्चेष्टादिरूपव्यापारपरिग्रहः । मानाभावादिति । विरोधिनिश्चयस्येव तथात्वादिति भावः ।

ननु तत्तत्फलसाधनतासंनिजन्या इच्छैव तत्तत्फलसाधनताविषयिकैव स्वीकरणीया तृप्तये भोजनं करोमीत्याकारकतदनुभ-

चपलात् । अत एव एकफलेच्छासहकृतापरफलसाधनताज्ञानात् प्रवृत्तिवारणाय विशिष्य तत्तत्फलगोचरेच्छात्वेन तत्तत्फलसाधनताज्ञानत्वेन च प्रवृत्तिहेतुताया आवश्यकत्वात् एकफलेच्छादिजन्यप्रवृत्तावन्यफलेच्छादेर्व्यभिचारस्य नावकाशः । तत्फलेच्छादिजन्यतावच्छेदककोटौ तत्तत्फलसाधनत्वावगाहित्वस्य निवेशेनैव वारणसम्भवात् ।

न च तत्तत्फलेच्छादिजन्यतावच्छेदककोटौ तत्तत्फलोद्देश्यकत्वनिवेशेनैव व्यभिचारवारणसम्भवात्साधनतायाः कृतिविषयत्वे मानाभाव इति वाच्यम् । उच्छृङ्खलफलविषयताया अनुभवविरुद्धतया तत्फलसाधनत्वेनोपायान्तरविषयकेण फलान्तरसाधनत्वेन चैतदुपायविषयकेण ज्ञानेन जनितायां फलद्वयोपायद्वयविषयकप्रवृत्तौ तत्फलसाधनताधियो व्यभिचारवारकतया च उपायविषयतानिरूपितफलविषयतोपगमे, उपायफलयोः सम्बन्धविधया कार्यकारणभावभानस्यावश्यपेयत्वात् । न हि ययोः सम्बन्धो न भासते तद्विषयतयोर्निरूप्यनिरूपकभावो दृष्टचरः । एवं च कृतेः कार्यकारणभावविषयकतया तद्विषयकज्ञानस्यैव तस्या अपि शङ्काविरोधित्वमक्षतमेव । शान्तत्वमनन्तर्भाव्य सघायान्यविरोधिविषयकत्वेनैव प्रतिबन्धकत्वात् । निविशतां, वा, संस्कारव्यावृत्तगुणलौकिकमानसप्रयोजको जातिविशेष इत्याशङ्क्य कृतेः शङ्काच्छेदकत्वं प्रकारान्तरेणापि निराकरोति । कारणताग्रहेति । तथा च प्रवृत्तितः शङ्कानिवृत्तौ तर्कावतारे सति कार्यकारणभावग्रहः कार्यकारणभावग्रहे च सति प्रवृत्तिरिति अन्योन्याश्रय इति भावः ।

परीक्षाकारस्तु नास्य तर्कस्य कार्यकारणभावनिश्चयोपयोगितामनुमन्यते किं तु प्रथमं सामानाधिकरण्यप्रत्यासत्तिमनन्तर्भाव्य कार्यकारणभावे निश्चिते लाघवाद्वह्न्याधारत्वरूपवह्निसमवधानाभावस्य धूमानुत्पत्तिप्रयोजकत्वे चावधृते वह्न्यधिकरणदेशानुत्पत्तिकत्वशङ्कयाऽव्याप्यत्वशङ्कासम्भवेन व्याप्तिग्रहो न सम्भवतीति वह्न्यधिकरणदेशोत्पत्तिकत्वनिश्चयार्थमयं तर्क इत्याह । दीधितिकृतापि इदमेव वाचोभङ्ग्येत्यादिना मतमेतत्प्रदर्शयिष्यते । तथा च सति प्रवृत्तेः कार्यकारणभावग्रहसापेक्षत्वे नान्योन्याश्रयप्रयोजकमित्युपादानादिपदमसौ कृतिपरतयैव व्याचकार । शान्त्यासहितमेव च विरोधि-

विषयकत्वं शङ्काप्रतिबन्धकताप्रयोजकमङ्गीचकार ।

तथेदं चिन्तनीयम् । विरोधिनिश्चयप्रतिबन्धकतावच्छेदकशरीरे ज्ञानत्वानन्तर्भावे विरोधिविषयकानुद्बुद्धसंस्कारस्यापि शङ्काप्रतिबन्धकत्वापत्तिः । संस्कारव्यावृत्तजातिविशेषनिवेशने तु किमपराद्धं ज्ञानत्वेन ।

न च तादृशजातौ प्रमाणान्तरसत्त्वे विनिगमनाविरहात्तत्पुरस्कारेणापि प्रतिबन्धकत्वान्तरमावश्यकमित्यव्याहतमेव ज्ञतेस्तथात्वमिति वाच्यम् । ज्ञानत्वावच्छिन्नाभावस्य निश्चिनाव्यभिचारकत्वं क्लृप्त्याद्यनन्तरं शङ्कानुत्पादनिश्चयेन च तादृशजात्यवच्छिन्नाभावस्य तथात्वमित्यस्यैव विनिगमकत्वादिति ।

ननु वह्निशून्ये तत्तद्धूमत्वावच्छिन्नानुत्पाददर्शनेऽपि धूमत्वावच्छेदेन वह्न्याद्यन्वयव्यतिरेकानुविधायित्वं न शक्यते निश्चेतुं धूमान्तरे तत्पत्त्यधिकरणे वह्न्यभावशङ्काया दुरुच्छेदत्वात् तथा च सामान्यतो धूमत्ववह्निभ्यां कार्यकारणभावावधारणं तर्कादपि न सम्भवति वह्न्यजन्यतया धूमत्वावच्छेदेनैव वह्न्यसमवहितजन्यत्वे सति जन्यत्वाभावस्यापत्तिसम्भवात् तादृशापत्तेश्च धूमत्वसमानाधिकरण्येन वह्न्यजन्यत्वसंशयानिवर्तकत्वात् । तादृशसंशयदशायां च धूमत्वे तज्जन्यतावच्छेदकत्वनिश्चयासम्भवात् । न हि पक्षतावच्छेदकावच्छेदेनापत्तिस्तत्सामानाधिकरण्यमात्रेणापादकज्ञानं निवर्तयितुमीष्टे । यतो यादृशापादकज्ञानं यादृशीमापत्तिं जनयति सा तादृशज्ञाने ऽनिष्टसाधनत्वमुपनयन्ती इच्छाविघटनद्वारा मणिमन्त्रादिवत् स्वत एव वा तन्निवर्तयति । अवच्छेदकावच्छेदेनापत्तौ तदवच्छेदेनापादकवत्ताज्ञानं हेतुः, तदेकदेशे अभ्युपगतस्य तत्सामान्येऽनिष्टाप्रसञ्जकत्वात् । न वा पक्षतावच्छेदकसामाधिकरण्यमात्रेणापादकज्ञाननिवर्तनक्षमस्तत्सामानाधिकरण्यमात्रावगाही तर्कः प्रकृते सम्भवति धूमत्वसामानाधिकरण्यमात्रावगाहिवह्न्यसमवहिततज्जन्यत्वशङ्काया यत्किञ्चिद्धूमे ऽन्वयव्यतिरेकानुविधायित्वनिश्चयानिवर्तनीयाया जागरूकतया तादृशतर्कहेतोर्धूमत्वावच्छेदेनापाद्यव्यतिरेकनिश्चयस्यानुदयात् ।

न चापत्तौ समानधर्मितावच्छेदकापाद्यव्यतिरेकनिश्चयमात्रमपेक्षितं स चावच्छेदकावच्छेदेन तत्सामानाधिकरण्य-

मात्रेण वा व्यतिरेकमवगाहतामिति वाच्यम् । विरोधिविषयकस्यैव निश्चयस्य तर्कहेतुत्वोपगमात् । तथा च तद्व्यतिरेकसामानाधिकरण्यमात्रस्य तत्सामानाधिकरण्याविरोधित्वात् तद्व्यतिरेकावच्छेदकत्वस्यैव च तथात्वात् । अत एव तर्कस्याहार्यारोपरूपता । अत एव च प्रमेयत्वादिसामानाधिकरण्येन गुणवत्त्वाद्यव्यतिरेकनिश्चयेऽपि द्रव्यत्वादिना तत्सामानाधिकरण्येन न गुणवत्त्वाद्यापत्तिरदेति । तथा चोदात् धूमापत्तिशङ्कानुच्छेदात् धूमत्वसामानाधिकरण्येन वह्न्यजन्यत्वशङ्कानिवर्तकतर्कानुदयेन सामान्यतः कार्यकारणभावानिश्चयेन वह्नित्वे धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावग्रहाविरोधितादृशावच्छेदकत्वरूपव्यभिचारशङ्कायाः कथं निवृत्तिः, धूमत्वसमानाधिकरणजन्यताप्रतियोगिकजनकतायाः सामानाधिकरण्यस्यावच्छेदकत्वस्य वा तादृशप्रतियोगितावच्छेदकत्वाविरोधित्वादित्याशङ्कते । यद्यपीति ।

(दी० ) यद्यपि चैतावता धूमत्वावच्छिन्नं प्रति वह्नेर्जनकत्वं नायाति । तृणारणिमणिन्यायेन वैकल्पिककारणताया अपि तथात्वसम्भवात् । तथापि विशेषाणां कार्यकारणभावग्रहस्तर्केण तद्विरोधिशङ्कायामपनीतायां जायमानः सामान्यव्यभिचारानिर्णयानुगतागुरुविशेषरूपान्तरानुपस्थितिलाघवप्रतिसन्धानादिवशात् सामान्यत एव तं परिच्छिनत्ति । प्रामाणिकौ च तथैवान्वयव्यतिरेकौ । फलबलेन लाघवादिज्ञानशून्याया एव सामान्यव्यभिचारशङ्कायाः प्रतिबन्धकत्वं कल्प्यते ।

(गा०) नायाति । न सिद्ध्यति । ननु धूमत्वसमानाधिकरणजन्यताया धूमत्वान्यधर्मावच्छिन्नत्वबाधसहकृतावच्छिन्नत्वग्राहकजन्यतात्वाविहितो धूमत्वावच्छिन्नत्वं सेत्स्यतीत्यत आह । तृणारणीति । यथा तृणादीनां वह्नित्वसमानाधिकरणजन्यताकत्वेऽपि न तदवच्छिन्नजन्यताकत्वम्, अपि तु तदवान्तरधर्मावच्छिन्नजन्यताकत्वमेव तथा प्रकृतेऽपि अवान्तरधर्मस्यावच्छेदकत्वेऽपि जन्यताया धूमत्वसामानाधिकरण्योपपत्तिरित्यर्थः । तथा चावान्तरधर्मस्यावच्छेदकत्व-

सम्भावनया न जन्यतायां धूमत्वान्यधर्मावच्छिन्नत्वबाध इति भावः । विशेषाणां कार्यकारणभावग्रह इति । विशेषधर्मावच्छेदेनान्वयव्यतिरेकग्रहाज्जायमान सामान्यधर्मसामानाधिकरण्येन कार्यत्वकारणत्वग्रह इत्यर्थः । सामान्येन एव । सामान्यधर्मावच्छेदेनैव । तम् । कार्यकारणभावम् । परिच्छिनत्ति । विषयीकरोतीत्यग्रिमेणान्वयः । पूर्वकारेण विशेषधर्माणामवच्छेदकत्वावगाहित्वव्यवच्छेदः ।

ननु विरोधिशङ्कासत्त्वे सामान्यधर्मसामानाधिकरण्येनापि कार्यकारणभावग्राहकसामग्री न सम्भवतीत्यत आह । तर्केणेति । उक्ततर्केणेत्यर्थः । तद्विरोधिशङ्कायाम् । तादृशकार्यकारणभावग्रहविरोधिन्यां सामान्यधर्मावच्छेदेन कार्यकारणभावाभावशङ्कायाम् । अपनीतायाम् । निवर्तितायाम् । सत्या जायमानः ।

नन्वेवं कस्यचित्सामान्यधर्मस्योपस्थितौ तदवान्तरधर्मावच्छेदेन क्वचिदपि कार्यकारणभावग्रहो न स्यादपि तु सामान्यधर्मावच्छेदेनैवेत्यादिशङ्कामपनिनीषुः सामान्यधर्मसामानाधिकरण्येन कार्यकारणभावग्राहकसामग्र्यास्तन्मात्रावच्छेदेन तद्ग्रहजनने ऽपेक्षणीयान्तरमाह । सामान्यव्यभिचारानिर्णयेति । सामान्यधर्मावच्छिन्नविशेष्यताकप्रकृतकार्यत्वाभावानिश्चयेत्यर्थः ।

एतेन वह्नित्वाद्यवच्छेदेन तृणादेः संयोगविभागादिविशेषसाधारणगुणत्वाद्यवच्छेदेन च कर्मादेर्जन्यताग्रहप्रसङ्गो वारितः । तृणादिकं विनापि वह्न्याद्युत्पत्तिदर्शनेन वह्नित्वादिसामानाधिकरण्येन तृणाद्यजन्यत्वनिश्चयात् प्रत्येकं तृणाद्यन्वयव्यतिरेकानुविधायिषु यावद्वह्निषु अनुगतागुरुविशेषान्तरस्य जातिरूपस्य प्रागसिद्धेः । क्रियान्वयव्यतिरेकानुविधायिसंयोगविभागादिषु संयोगत्वादिना सङ्करप्रसङ्गेनानुगतजातेरसम्भवाच्च तत्र द्वितीयप्रयोजकसत्त्वमव्याहतमेवेति ध्येयम् । प्रकृते सामान्यधर्मधूमत्वसामानाधिकरण्येन वह्न्यजन्यत्वस्य संशयसत्त्वान्निश्चयानुदयवर्णनम् । तस्य च यावन्निश्चयाभावरूपस्य कारणत्वेनैवोपयोगिता बोध्या ।

न च गन्धप्रागभावसामानाधिकरण्येन गन्धवत्त्वानिश्चये ऽपि तदवच्छेदेन गन्धात्यन्ताभावग्रहाद्धर्मितावच्छेदकांशे ऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाहिन्यामेव विशिष्टबुद्धौ तत्सामानाधिकरण्यमात्रावगाहिबाधनिश्चयो विरोधी न तु स्वरूपसम्बन्धरूप-

तदवगाहिन्यामिति वह्नित्वादौ स्वरूपसम्बन्धरूपतृणादिजन्यतावच्छेदकत्वग्रहे कथं तत्सामानाधिकरण्यमात्रेण तृणाद्यजन्यत्वनिश्चयो विरोधीति वाच्यम् । अनुभवानुरोधेनान्यूनानतिप्रसक्तत्वनियतविलक्षणस्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिन्यामपि बुद्धौ सामानाधिकरण्यावगाहिग्राह्याभावनिश्चयस्य प्रतिबन्धकत्वोपगमात् । गन्धप्रागभावादेस्त्ववच्छेदकत्वमन्यादृशमेव ।

कश्चित्तु व्यभिचारानिर्णयपदमवच्छेद्यावच्छेदकभावविरहानिश्चयपरतया व्याकुरुते । तन्न । अवच्छेद्यावच्छेदकभावस्य संसर्गविधया भाने तद्विरहनिश्चयस्याविरोधित्वात् ।

न च वह्नित्वादिधर्मिकावच्छेदकतासम्बन्धावच्छिन्नजन्यत्वाभावनिश्चयपरमेव तदस्तामिति वाच्यम् । वह्नित्वाद्यवच्छेदेन जन्यतावगाहिनः स्वरूपतो वह्नित्वाद्यात्मकधर्मितावच्छेदकावगाहिज्ञानस्य तादृशाभावग्रहधर्मितावच्छेदकप्रकारेण वह्नित्वत्वाद्यविषयकतया तत्प्रतिबन्धकत्वासम्भवात् । अनुगतागुरुविशेषान्तरानुपस्थितीति । यावत्सु अन्वयव्यतिरेकानुविधायित्वं गृहीतं तावत्साधारणस्य सामान्यधर्मापेक्षया ऽगुरोस्तन्न्यूनवृत्तिधर्मस्यानुपस्थितीत्यर्थः ।

एतेन विशिष्टानुभवत्वाद्युपस्थितिदशायां तद्व्यापकविशिष्टज्ञानत्वावच्छेदेन विशेषणज्ञानादिजन्यताग्रहो निरस्तः । न हि तत्र स्मरणे व्यभिचारनिश्चयः सम्भवति, प्रत्यक्षस्येव स्मरणस्यापि निर्विकल्पकरूपस्य सम्भवात् । प्रकृते धूमनिष्ठजन्यतायां यावत्सु वह्न्यन्वयव्यतिरेकानुविधायित्वग्रहस्तावद्वह्न्यन्यतमत्वस्य द्रव्यत्वादेश्चोपस्थितिसम्भवात्तदुपस्थितिसत्त्वेऽपि तद्ग्रहोपपत्तये विशेषणत्रयानुसरणम् । तादृशधर्मोपस्थितिसत्त्वे च न तदपेक्षयाऽधिकदेशवृत्तिधर्मस्यावच्छेदकत्वग्रहः सम्भवति, सामान्यधर्मस्यावच्छेदकत्वग्रहेऽवच्छेद्यजन्यतायास्तदधिकरणीभूताधिकदेशवृत्तित्वकल्पने गौरवं विशेषधर्मस्य तथात्वे तु तदकल्पनेन लाघवमिति प्रतिसन्धानेन प्रतिबन्धादिति तादृशधर्मोपस्थितिविरहापेक्षा । एतादृशलाघवज्ञाने एव धर्मान्तरस्य न्यूनवृत्तित्वमुपयुज्यते इति तदभिहितम् । एवं धर्मान्तरस्य शरीरगौरवे तद्घटकनानावस्तुषु अवच्छेदकतायाः कल्पनीयतया गृहीतान्व-

व्यतिरेककार्यान्तरावृत्तित्वे च कार्यान्तरे ऽन्यधर्मावच्छेदेन कार्यत्वान्तरस्य कल्पनीयतया नोक्तलाघवावकाश इत्यतोऽनुगतत्वगुरुशरीरत्वेऽपि तादृशलाघवज्ञाने उपयुज्येते इति ध्येयम् ।

लाघवप्रतिसन्धानेति । तत्तद्धूमत्वतत्तद्वह्नित्वादीनां कार्यकारणभावावच्छेदकत्वे नानाकार्यकारणभावकल्पने गौरवं धूमत्ववह्नित्वयोस्तदवच्छेदकत्वे पुनस्तदैक्येन लाघवमित्यादिप्रतिसन्धानेत्यर्थः । ईदृशं च प्रतिसन्धानं पक्षकारलम्पविशेषधर्मावच्छेदेन कार्यकारणभावाग्रहे उपयुज्यते । आदिपदात् समनियतधर्मान्तरापेक्षया गौरवप्रतिसन्धानाभावपरिग्रहः, तत्र धूमत्वाद्यपेक्षया गुरुणा धूमत्वादिसमनियतधूमत्वादिप्रकारकप्रमाविशेष्यत्वादिरूपेण वह्न्यादिजन्यत्वग्रहनिरासः ।

ननु सामान्यधर्मसामानाधिकरण्यमात्रेणान्वयव्यतिरेकग्रहस्य सामान्यव्यभिचारानिर्णयादिसहकारेण सामान्यधर्मावच्छेदेन कार्यकारणभावग्राहकत्वमसिद्धमित्यत आह । प्रामाणिकी चेति । अनुभवसिद्धावेवेत्यर्थः तथैव । सामान्यधर्मावच्छिन्नकार्यकारणभावग्राहकतयैव । अन्वयव्यतिरेकाविति । विशेषाणामिति शेषः । नन्वुक्तजन्यत्वाभावशङ्कारूपप्रतिबन्धकसत्त्वात्कथं सामग्रीतः सामान्यधर्मावच्छेदेन कार्यकारणभावग्रहः सम्भवतीत्यत आह । फलबलेनेति । अनुभवसिद्धफलान्यथानुपपत्त्येत्यर्थः । लाघवज्ञानादिशून्याया इति । कस्यचिद् धूमस्य वाह्नजन्यत्वे धूमत्वापेक्षया गुरुशरीरः कश्चन धर्मो नानाविशेषधर्मा वा जन्यतावच्छेदकाः स्युरिति गौरवम् । धूमत्वावच्छेदेन तज्जन्यत्वे च न तथेति लाघवमित्यादिलाघवज्ञानाद्यभावविशिष्टाया इत्यर्थः । आदिपदाद्विशेषदर्शनपरिग्रहः । सामान्यव्यभिचारशङ्कायाः । धूमत्वादिसामानाधिकरण्येन वह्न्याद्यजन्यत्वशङ्कायाः । प्रतिबन्धकत्वमित्यस्य धूमत्वाद्यवच्छेदेन वह्न्यादिजन्यत्वग्रहे इत्यादिः ।

न चैवं लाघवज्ञानसत्त्वे ग्राह्याभावनिश्चयदशायामपि प्रत्यक्षनिश्चयापत्तिः, संशयविपरीतनिश्चयसाधारणविपरीतज्ञानत्वेनैव प्रतिबन्धकतया तस्य प्रतिबन्धकत्वान्तराभावादिति वाच्यम् । विपरीतनिश्चयानन्तरं संशयादिवारणाय संशयादिसाधारणज्ञानत्वावच्छिन्नं प्रति विपरीतनिश्चयत्वेन स्वतन्त्रप्रतिबन्धकताकल्प-

नस्यावश्यकतया तत्र च लाघवज्ञानाद्यभाववैशिष्ट्यानिवेशात् तादृशप्रतिबन्धकतावच्छेदकावच्छिन्नसत्त्वेनोक्तापत्त्यनवकाशात्। भ्रमोत्तरं विशेषदर्शने जातेऽपि भ्रमनाशानन्तरमेव प्रत्यक्षनिश्चयोपगमेन निश्चयप्रतिबध्यतावच्छेदककोटौ प्रत्यक्षनिश्चयभेदानिवेशात्। इदं च प्रत्यक्षनिश्चये ग्राह्यसंशयस्य अप्रतिबन्धकतामभ्युपेत्याभिहितम्। स्वमते तु विशेषदर्शनवल्लाघवज्ञानस्यापि विपरीतकोटिभानानिवर्तकत्वेन निश्चयोपयोगिता बोध्या।

इदमत्रावधेयम्। यत्रोपदर्शिततर्कावतारपूर्वमेव धूमत्वसामानाधिकरण्येन वह्न्यसमवहितजन्यत्वशङ्काजनकसाधारणधर्मदर्शनात्मकदोषादिसमवधानं दैववशाद्भवति तत्र तादृशशङ्काविरहप्रयोजकस्य दुर्लभतया धूमत्वावच्छेदेनान्वयव्यतिरेकनिश्चयासम्भवात् सामानाधिकरण्यमात्रावगाहितर्कौ नावतरितुमीष्टे इति तादृशस्थलाभिप्रायकोऽयं सामान्यधर्मावच्छेदेन जन्यताग्रहोपायप्रयासः। यत्र च तर्कात् पूर्वं दोषादिविरहात्तादृशशङ्कानुदयस्तत्र धूमत्वावच्छेदेन वह्न्यसमवहितजन्यत्वनिश्चयात्तत्सामानाधिकरण्यमात्रेणापादकत्वज्ञानसहितात्सामानाधिकरण्यमात्रेणापत्तिः सुलभेति तत एव सामान्यकार्यकारणभावः सुग्रहः। तदभिप्रायेणैव क्वचिद्वह्निं विनापि भविष्यतीत्याकारिकाया अंशत इष्टापत्तिशङ्कायास्तर्काविरोधित्वाभिधानसङ्गतिः। अन्यथा पक्षतावच्छेदकावच्छेदेनापत्तौ तादृशशङ्काया अविरोधित्वात्तदसङ्गतमापद्येत। न चैवमन्वयव्यतिरेकानुविधायित्वज्ञानस्योपादानपदार्थस्य तादृशशङ्काविरोधित्वाभिधानमसङ्गतमेव, तादृशशङ्काविरोधिनोऽवच्छेदकावच्छेदेनान्वयव्यतिरेकग्रहस्याशक्यत्वादिति वाच्यम्। उपादानपदेनान्वयव्यतिरेकग्रहवत् शङ्काविरहप्रयोजककारणान्तराभावस्यापि विवक्षितत्वादिति सर्वं समञ्जसम्।

वस्तुतस्तु क्वचिद्वह्निं विनापि भविष्यतीति शङ्कापि धूमत्वावच्छेदेन वह्न्यसमवहितजन्यत्वकोटिविषयिण्येव। पूर्वशङ्कायां स्वाव्यवहितप्राक्कालावच्छिन्नवह्न्यभाववन्मात्रोत्पत्तिकत्वं द्वितीयायां च मात्रार्थानन्तर्भावेण तादृशाभाववदुत्पत्तिकत्वं कोटिरित्यत एव शङ्कयोर्भेदसम्भवादिति।

उपाध्यायास्तु सत्यप्यन्वयव्यतिरेकदर्शनेऽतीतानागतधूमे प-

ह्न्यसमवहितजन्यत्वशङ्कासम्भवाच्च धूमत्वावच्छेदेन तज्जन्यत्वे निश्चयः सम्भवतीति न सामानाधिकरण्येनापादकशङ्काविरोधिनी सामानाधिकरण्येनापत्तिः सम्भवतीत्याशङ्क्य धूमत्वावच्छेदेन तन्निश्चयमुपपाद्य सामानाधिकरण्येनापत्तिमुपपादयितुं प्रकारान्तरेण तादृशशङ्काविरहमुपपादितवन्तः । तत्र च वह्न्यसमवहिताजन्यत्वस्य कृत्स्नविशेषणत्वे धूमत्वावच्छेदेन तन्निश्चयेऽपि नोक्तकौत्सुद्धधूमत्वसामानाधिकरण्येन वह्न्यजन्यत्वशङ्कानिरासः सम्भवति शुद्धधूमत्वावच्छिन्नपक्षकतर्कस्यैव तन्निवर्तकत्वादिति प्रयासवैयर्थ्यमतस्तदभ्युपगतमपि वह्न्यसमवहिताजन्यत्वस्यापादकविशेषणत्वमुपेक्ष्यापाद्यप्रतियोगिकोटौ तद्विशेषणनिवेशेन वह्निसमवहितजन्यादिपदस्य वह्निजन्यादिपरतया च तदेव मतं परिष्कृत्य दर्शयति । अपरे त्विति ।

( दी० ) अपरे तु धूमत्वावच्छिन्नस्य वह्न्यजन्यत्वेन जन्यत्वविशिष्टस्य यथाश्रुतवह्न्यसमवहिताजन्यत्वस्य व्यतिरेक एव आपादनीयः । नचोक्तन्यायेन तादृशवह्नियुक्ततृणकलापजन्यत्वग्रहेण तद्व्यतिरेकजन्यत्वशङ्कानिरासात् वह्निविरहेऽपि निरतिशयस्यैव तादृशसमूहस्य धूमजनकत्वसन्देहस्य च तथाविधात् धूमानुत्पाददर्शनेनायोगात् तादृशस्यैव क्वचिद्वह्निं क्वचिच्चेतरदालाय जनकत्वसम्भावनापात्(१) क्वचिद् धूमानुत्पादप्रयोजकत्वेनावधृतस्य वह्निविरहस्यैव तथाविधसमूहसत्त्वे धूमानुत्पत्तिसामान्यं प्रति लाघवात् प्रयोजकत्वनिर्णयेनापनयात्मनसैव सुग्रहम् । वह्नेः, वह्निसमवहितस्योपादानम् । अत्र च नियमव्यवच्छेद्यस्य च वह्न्यसमवहितानुपादानस्य प्रयोजके तदजन्यत्वज्ञाने परम्परया वह्निसमवहितोपादानस्य वा प्रयोजके तत्र तात्पर्यम् ।

( गा० ) धूमत्वावच्छिन्नस्य वह्न्यसमवहिताजन्यत्वस्येत्यन्वयः ।

(१) जनकत्वस्य सम्भावनायाश्चेत्यपि पाठो व्याख्यानुरोधात् ।

तथा च धूमत्वावच्छेदेन निश्चितस्य वह्न्यसमवहिताजन्यत्वस्य व्यतिरेको धूमत्वसामानाधिकरण्येनापादनीय इत्यर्थः । तथा चोक्तप्रयासमन्तरेणैव तादृशतर्काद् धूमत्वावच्छेदेन वह्निजन्यत्वं सुनिश्चेयमिति भावः, न तु धूमत्वावच्छिन्नस्य वह्न्यजन्यत्वेनेत्यन्वयाद् धूमत्वावच्छेदेन निश्चितेन वह्न्यजन्यत्वेनापादनीय इति, धूमत्वावच्छिन्नस्यापादनीय इति अन्वयेन वा धूमत्वावच्छेदेनापादनीय इत्यर्थः, तद्धर्मावच्छेदेनापत्तेस्तत्सामानाधिकरण्यमात्रविषयकापादकसंशयाविरोधितायाः प्राग् व्यवस्थापनेन तादृशापत्तेरकिञ्चित्करत्वात् । जन्यत्वविशिष्टस्येति । तेनाजन्ये न व्यभिचार इति भावः । नान्तरीयपङ्क्तिके व्यभिचारवारणाय वह्निसमवहिताजन्यपदस्य वह्न्यघटितसामान्यजन्यत्वार्थकता नाभ्युपेया, अपि तु जन्यत्वमेव प्राचां पारिभाषिकं निर्वचनीयमित्येतत्सूचयितुं वह्न्यसमवहिताजन्यत्वस्य यथाश्रुतत्वमभिहितम् । अग्रेतनस्य तद्धेत्वस्य वह्न्यसमवहिताजन्यत्वपरामर्शकतामाविष्कर्तुं तदत्र विशेष्यविधया प्रवेशितम्, विशेषणविशेष्यभावविपर्यये क्षतिविरहात् ।

विरोधिशङ्कानिराकरणप्रकारं प्रदर्शयन् धूमत्वावच्छेदेन वह्न्यसमवहिताजन्यत्वनिश्चयस्य सुघटतामाह । तच्चेति । मनसैव सुग्रहमित्यनेनान्वयः । मनसैवेत्यस्य उक्तन्यायसहकृतेनेत्यादिः । एतावता वह्न्यसमवहितजन्यत्वसामान्याभावस्यायोग्यपिशाचादिजन्यत्वप्रतियोगिकतया प्रत्यक्षासम्भव इति सार्वभौमाभिहितदूषणमुद्धृतम् । उक्तन्यायेनेति । हुताशनरासभादीत्याद्युक्तप्रणाल्येत्यर्थः । वह्नियुक्तकारणकलापजन्यत्वग्रहेण धूमोत्पादकसामग्र्यां वह्निसमवधाननियतत्वरूपवह्निसमवहितत्वग्रहेण तद्व्यतिरेकजन्यत्वशङ्कानिरासादिति धूमसामग्रीत्वावच्छेदेन वह्न्यसमवहितत्वशङ्काया अनुत्पादादित्यर्थः । तथा च तादृशशङ्काधीनाया धूमत्वावच्छेदेन वह्न्यसमवहितसामग्रीकत्वशङ्काया अनवकाशात्तदवच्छेदेन तादृशसामग्रीकान्यत्वनिश्चयात् स्वाधिकरणदेशावच्छिन्नवह्न्यभाववत्त्वाव्यवहितप्राक्क्षणकत्वशङ्कानिवृत्तौ तादृशप्राक्क्षणकान्यत्वरूपवह्न्यसमवहिताजन्यत्वनिश्चयः सम्भवतीति भावः ।

ननु तथापि धूमसामग्रीत्वसामानाधिकरण्येन वह्न्यसमवहित-

त्वशङ्कासम्भवात्तदधीना धूमत्वसामानाधिकरण्येन वह्न्यसमवहितेन्धन-सामग्रीकत्वशङ्का स्यादेवेति कथं धूमत्वावच्छेदेन वह्न्यसमवहिता-जन्यत्वनिश्चयः ? न चेन्धनत्वाद्यवच्छिन्नसमूहे धूमोत्पादकसामग्री-त्वस्यान्वयव्यतिरेकेण निश्चयदशायां तादृशसमूहस्य वह्न्यसम-वहितस्य धूमोत्पादकत्वसंशयात् धूमोत्पादकसामग्रीत्वरूपेण व-ह्न्यसमवहितेन्धनसंशयो भविष्यति स च वह्निविरहे तथाविधाद् धूमा-नुत्पाददर्शनेन वन्ह्यसमवहितेन्धनादिसमूहे धूमोत्पत्त्यप्रयोजकत्वनि-श्चयादेव निवर्तते इत्युपाध्यायोक्तं सम्यगिति वाच्यम् । क्वचिद्वह्निं विना तथाविधसमूहाद् धूमानुत्पाददर्शनेऽपि वह्निसमवहितादिव क्वचित्सहकार्यन्तरसमवहितात्तादृशसमूहाद् धूमो भविष्यतीति श-ङ्कानपायेन तादृशसमूहस्वरूपसामान्यधर्मावच्छेदेन धूमोत्पत्त्यप्रयो-जकत्वनिश्चयस्य दुर्निश्चेयत्वादित्याशङ्क्य वह्न्यसमवहिततादृशसमू-हत्वरूपसामान्यधर्मावच्छेदेन धूमोत्पत्त्यप्रयोजकत्वनिश्चयस्य स-म्पादके इतरानपेक्षया धूमोत्पादकत्वाभावस्य इतरापेक्षया तथा-त्वाभावस्य च मिलित्वा धूमोत्पादकत्वसामान्याभावव्याप्यस्य निश्चये विरोधिन्याः शङ्काया निवृत्तिप्रकारमाह । वह्निविरहे-ऽपीति । तादृशसमूहस्येत्यनेनान्वितम् । वह्न्यसमवहिततादृश-समूहस्येत्यर्थः । निरतिशयस्यैव धूमजनकत्वसन्देहस्यायोगादि-त्यन्वयः । अतिशयः । सहकार्यन्तरसमवधानरूपो विशेषः । तथा च सहकार्यन्तराघटिततादृशसमूहे धूमोत्पत्तिप्रयोजकतायाः सन्देह-स्यानुदयादिति पर्यवसितार्थः । तथाविधात् । वह्न्यसमवहिततादृश-समूहात् । धूमानुत्पाददर्शनेनेति । तथाविधसमूहे धूमानुत्पादाव्य-वहितप्राक्क्षणावच्छेदेन तदधिकरणत्वस्य दर्शनेनेत्यर्थः । तस्ये-तरानपेक्षया धूमोत्पादकत्वव्यावर्तकत्वादिति भावः । तादृशस्यैव । इन्धनादिसमूहस्यैव । आसाद्य । सहकारिकूटम् । जनकत्वस्य । उत्पत्तिप्रयोजकत्वस्य । इतरघटिततादृशसमूहे धूमोत्पादकत्वस्येति यावत् । फलार्थस्य जनकत्वयोरन्वयो न तु सम्भावनायामिति स्फुटीकर्तुमसमासेन लिखनम् । सम्भावनाया अपनयादित्यन्वयः । क्वचिदिति । यत्र वह्निं विना इन्धनादिसमूहाद्धूमानुत्पादो दृष्टस्तत्रे-त्यर्थः । अवधृतस्य । निश्चितस्य । एतेन वह्निविरहस्य तादृशसमूह-कालीनधूमानुत्पादप्रयोजकत्वं फलतमितरविरहस्य च तथात्वम-

फलत्वमिति तदकल्पनरूपं लाघवमत्र स्फुटीकृतम् ।

वह्निविरहस्यैवेत्यादि । तादृशावस्थानानन्तरं धूमसामान्यानुत्पादस्य वह्नित्वावच्छिन्नविरहमात्रप्रयोज्यत्वनिर्णयेनेत्यर्थः । तत्तद्धूमत्वावच्छिन्नानुत्पादे तत्तदवच्छिन्नहेतुतावच्छेदकतत्तदिन्धनत्वाद्यवच्छिन्नाभावस्यापि प्रयोजकत्वात् सामान्यपदोपादानम् । इत्थं चेतरसहकारेण धूमोत्पादकताया व्यावर्तकस्येतराप्रयोज्यत्वसमवधानकालीनधूमानुत्पादकत्वदर्शनाद्व्याप्तिशङ्का शङ्कास्पदमपीति भावः ।

अत्र तदुपादानपदेन वह्निसमवहितमात्रोपादानं विवक्षणीयम्, तथ तदो वह्निसमवहितपरामर्शकत्वे एव सम्भवति तदर्थं वह्नेरुपादानमित्यत्र वह्निपदं वह्निसमवहितपरतया व्याचष्टे । वह्नेरिति । उपादानं नियमतः कथं कुर्यादिति मूले वह्निसमवहितनिरूपितनियमार्थकान्नियमशब्दाद्विशेषणे तृतीयार्थकर्तासन्प्रत्ययेन वह्निसमवहितनियतकृतिमान् कथं भवेदित्यर्थकम् । नियतत्वं विषयताविशेषसम्बन्धेन व्याप्यत्वं वह्निसमवहितेतरविषयकत्वस्याभावरूपम् ।

ननु तदुपादानमेव शङ्काप्रतिबन्धकमित्यत्रोपादानपदमेतन्मतेऽपि करणव्युत्पत्त्या प्रवृत्तिप्रयोजकपरं प्रवृत्तेः शङ्कायामविरोधित्वात्, तथापि चासङ्गतिः, वह्निसमवहितोपादाने वह्निसमवहितजन्यत्वज्ञानस्यैव वह्निसमवहितात्मकोपाये धूमरूपफलजनकत्वावगाहनेन जनकत्वात्,तथा च वह्न्यसमवहितजन्यत्वशङ्काविरोधित्वानुपपत्तिः । तत्समवहितजन्यत्वतदसमवहितजन्यत्वयोरविरोधादित्याशङ्कामपनेतुं तदुपादानपदं वह्न्यसमवहिताजन्यत्वनिश्चयपरतया व्याचष्टे । अत्र चेति । नियमव्यवच्छेद्यस्येति । तस्यैव वह्निसमवहितस्यैव उपादानं यस्मादिति लुप्तपदबहुव्रीहेराश्रयणीयतया एवकारलभ्यव्यवच्छेदरूपस्येत्यर्थः । वह्न्यसमवहितानुपादानस्य । वह्न्यसमवहितगोचरधूमार्थिप्रवृत्त्यभावस्य । प्रयोजक इति । तादृशप्रवृत्तिजनकवह्न्यसमवहितधर्मिकधूमजनकताग्रह विघटय्य निर्वाहक इत्यर्थः । तद्जन्यत्वग्रहे । धूमे वह्न्यसमवहिताजन्यत्वज्ञाने । वह्न्यसमवहितधर्मिकधूमानुत्पादकत्वनिश्चये इति यावत् । एतेन वह्न्यसमवहितजन्यत्वशङ्कानिवृत्तिसम्पर्ककारणवह्न्यसमवहिताजन्यत्वनिश्चयार्थमपेक्ष्यते अ साक्षादेव तर्के, तादृशशङ्कानिवृत्त्यर्थं यदि तादृशनिश्चयमपेक्षते तदा-

ऽन्योन्याश्रयः, एवं तद्वोक्तन्यायेनेत्यादावन्यस्यैव शङ्कानिवर्तकत्वाभिधानात्सन्दर्भविरोधश्चेति दूषणमनवकाशं वेदितव्यम्। तर्ककारणीभूते धूमधर्मिकवह्न्यसमवहितसामग्रीकान्यत्वनिश्चये ऽपेक्षिताया शङ्कानिवृत्तेः ततोऽन्यस्यैव वह्न्यसमवहितधर्मिकधूमसामग्रीत्वविरहनिश्चयस्यापेक्षितत्वाभिधानात्। प्रागप्येतन्निश्चयस्यैव शङ्कानिवर्तकत्वमभिहितमिति सन्दर्भविरोधविरहाच्च।

एवकारान्तर्भावमन्तरेणापि विवक्षितार्थलाभसम्भवतीत्याह। परम्परयेति। कारणतानिश्चायकतर्कसम्पादनद्वारेत्यर्थः। तत्र। निरुक्तवह्न्यसमवहिताजन्यत्वज्ञाने।

एतन्मतमालम्ब्य मिश्राभ्युपगतमन्वयव्यतिरेकानुविधायित्वज्ञानस्य शङ्कानिवर्तकत्वमाक्षेप्तुमुपन्यस्यति। यत्त्विति।

(दी०) यत्तु अन्वयव्यतिरेकानुविधायित्वस्य ज्ञानमेव विशेषदर्शनतया शङ्काप्रतिबन्धकं तदेव तर्कघटकं तदिदमुक्तं यदि गृहीतान्वयव्यतिरेकं हेतुमितीति। तन्न। यादृच्छिकस्य तदनुविधानस्य व्यभिचारित्वान्नियतस्य च उक्ताभेदसम्पादकत्वादिति वदन्ति। तच्चिन्त्यम्।

(गा०) अन्वयव्यतिरेकानुविधायित्वस्य। यत्क्षणे वह्नित्तदग्रिमक्षणे उत्पन्नत्वे सति उत्पन्नत्वे सत्येव वा पूर्वक्षणे वह्निव्यतिरेक अनुत्पद्यमानत्वस्येत्यर्थः। सत्यन्तनिवेशाद्दनुत्पन्नगगनादौ न व्यभिचारः। ज्ञानम्। धूमधर्मिकनिश्चयः। विशेषदर्शनतया। ग्राह्याभावव्याप्यदर्शनविधया। शङ्काप्रतिबन्धकम्। धूमधर्मिकवह्न्यसमवहितजन्यत्वशङ्काप्रतिबन्धकम्। वह्न्यन्वयव्यतिरेकानुविधायित्वस्य वह्न्यसमवहितजन्यत्वाभावव्याप्यत्वादिति भावः।

नन्वेवं वह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चय एव धूमे वह्न्यजन्यत्वशङ्कामपि विशेषदर्शनतया निवर्तयिष्यति किं तर्कस्य प्रतिबन्धकत्वकल्पनेनेत्यत आह। तदेवेति। एवकारोऽप्यर्थे। अन्वयव्यतिरेकानुविधानमपीत्यर्थः। तर्कघटकम्। तर्कप्रयोजकीभूतज्ञानविषयतया तर्कनिर्वाहकम्। तथा च तर्कात्मके मानसज्ञाने प्रागुपस्थितपदार्थान्तराणामुपनयमर्यादया भाने बाधकाभावात्तत्राप्यन्वयव्यतिरेकाद्य-

नुविधानज्ञानात्मकमिति तर्कस्य स्वातन्त्र्येण शङ्काप्रतिबन्धकत्वविर-हेऽपि विशेषदर्शनविधयैव तथात्वस्याक्षततया तर्कस्य शङ्कानिवर्त-कत्वाभिप्रायेण मूले तदुपन्यासस्य नासङ्गतिः । तत्र स्वातन्त्र्येण शङ्कानिवर्तकत्वे तात्पर्यानुपगमादित्याशयः ।

एतच्च तर्कस्यैवान्वयव्यतिरेकानुविधानज्ञानत्वादित्यादिमिश्र-समाधानमनुसृत्य तदन्वयाद्यनुविधानज्ञानस्य तदजन्यत्वशङ्का-प्रतिबन्धकत्वाभ्युपगमेनाभिहितम् । वस्तुतस्तु तदन्वयव्यतिरेका-नुविधानस्य नान्तरीयकवह्निकत्वाधारणस्य तदजन्यत्वाव्यावर्तक-त्वात्तज्ज्ञानस्य तदजन्यत्वशङ्कानिवर्तकत्वमप्रसक्तमेवेति परमार्थः ।

केचित्तु दर्शितमिश्रग्रन्थे तर्कपदं तर्कमूलीभूतज्ञानपरतया व्याख्याय तर्ककारणीभूतान्वयाद्यनुविधानज्ञानस्य तत्त्वेऽपि दुरपवाद इति हरिदासभट्टाचार्याणां मिश्राभिप्रायवर्णनमनुसृत्य तदेव तर्कघटकमिति ग्रन्थ अन्वयाद्यनुविधानज्ञानमेव शङ्काविघटन-द्वारा तर्कसम्पादकमित्यर्थपरतया व्याख्याय दीधितिकृतामपि तादृशमेवाभिप्राय वर्णयन्ति । तदसत् । तर्कवैयर्थ्यशङ्कायां तर्को-त्पत्तौ बाधकविरहाभिधानस्यानुपयुक्तत्वात् ।

न च तत्र सामग्रीबलात्तर्कोत्पत्तेरभिधाने सम्भेदे नान्यतरवै-यर्थ्यमिति न्यायेन तर्कस्य सार्थकत्वं लभ्यते इति वाच्यम् । अन्व-याद्यनुविधानग्रहस्थले तर्कस्याशङ्कानिवर्तकतायाः क्लृप्तत्वे एव तादृशन्यायावकाशात् । तादृशस्थले च तर्कानुत्पत्त्या तत्र तस्य त-थात्वकल्पनानवकाशात् ।

न च तर्कपूर्वमन्वयव्यतिरेकानुविधानग्रहस्यावश्यकत्वेऽपि तर्क-दशायां तत्सत्त्वानियमात्तत्प्रतिबन्धकतया सर्वत्र तर्कानन्तरं शङ्का-वारणासम्भवात् तर्कस्यापि प्रतिबन्धकत्वकल्पनमावश्यकमिति वाच्यम् । एवं सति मूलस्यैव तादृशशङ्कास्थले शङ्कानिवृत्त्युपयोगि-त्वाभिप्रायकतासम्भवात्तदुपरि तर्कवैयर्थ्यशङ्काया एवानवतारात् । यत्र च कारणान्तरविरहाच्छङ्कानवतारस्तस्य स्वतःसिद्धशङ्काविर-हस्थलतया मूलस्य तदन्यस्थले एव तर्कस्य शङ्कानिवर्तकत्वपरतया उभयसम्भेदस्थले तर्कसार्थक्यप्रदर्शनस्यात्यन्तासङ्गतत्वाच्च । एवं च मिश्रग्रन्थस्यापि दर्शितदिशा यथाश्रुतार्थपरत्वमेव सम्यगित्यवधेयम् ।

अन्वयव्यतिरेकानुविधानबोधस्य शङ्काविरोधित्वे मूलस्यापि

स्वरम इत्याद्। तदुक्तमिति। यदि हीत्यादिस्तादृशवोधस्य शङ्का-विरोधित्वपरत्वाभावे गृहीतान्वयव्यतिरेकत्वाभिधानवैयर्थ्यादिति भावः। वह्निव्यतिरेकानुविधायित्वं तद्व्यतिरेकसमानाधिकरणव्यतिरेकप्रतियोगित्वं तद्व्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वं वा तच्च धूमत्वावच्छिन्नाभावे वह्न्यभावसामानाधिकरण्यस्य प्रत्यक्षासम्भवनार्थं धूमत्वावच्छेदेन सुग्रहमपि घटादिसाधारणतया वह्न्यसमवहितजन्यत्वव्यावर्तकमिति तन्निश्चयस्य न तच्छङ्कानिवर्तकत्वमित्याह। यादृच्छिकस्येति। नियमागर्भस्य यत्किञ्चिदधिकरणे तदन्वयव्यतिरेकानुविधानस्येत्यर्थः। व्यभिचारित्वात्। वह्न्यसमवहिताजन्यत्वव्यभिचारित्वात्। द्वितीयं घटादिव्यावृत्तत्वेन वह्न्यसमवहितजन्यत्वविरोध्यपि धूमत्वावच्छेदेन दुर्ग्रहम्, धूमत्वसामानाधिकरण्येन वह्निव्यभिचारसन्देहदशायां धूमत्वावच्छिन्नाभावे वह्न्यभावव्यापकत्वग्रहासम्भवात्। लाघवज्ञानादिवशात् कथञ्चित्तन्निश्चये तु उक्तजन्यताग्राहकतर्कवैयर्थ्यम्। नियतान्वयव्यतिरेकानुविधायित्वस्यैव जन्यतात्मकतया प्रागेव तन्निश्चयात्।

न चान्यथासिद्ध्यनिरूपकत्वसाहितमेव तज्जन्यतात्मकं तत्तु प्रागनिश्चितमिति तन्निश्चायकतया तर्कसार्थक्यमिति वाच्यम्। अन्यथासिद्ध्यनिरूपकत्वाविशेषितस्यापि नियतान्वयव्यतिरेकानुविधायित्वस्य व्यभिचारव्यावर्तकतया तन्निश्चयस्यैव व्याप्तिनिश्चयसम्पादकत्वेन तादृशविशेषणघटितजन्यतापदार्थनिर्णयस्य प्रकृतेऽकिञ्चित्करत्वादित्याशयेनाह। नियतस्य त्विति। नियमगर्भस्य त्वित्यर्थः। उक्तभेदसम्पादकत्वादिति। प्रकृतोपयुक्तजन्यतांशाभिन्नत्वादित्यर्थः। अन्वयव्यतिरेकानुविधायित्वज्ञानस्य शङ्काविघटनद्वारा धूमत्वावच्छेदेन वह्न्यसमवहिताजन्यत्वनिश्चायकतावादिनामिदं दूषणमित्यवधेयम्। दीधितिकारमते तु तत्तद्धूमत्वावच्छिन्ने वह्न्यसमवहिताजन्यत्वनिश्चयविरोधिशङ्कानिवर्तकं तज्ज्ञानम्, तन्निवर्तकत्वं च धूमत्वावच्छेदेनान्वयव्यतिरेकानुविधायित्वानवगाहिनोऽपि तत्तद्धूमत्वावच्छिन्नविशेष्यकतज्ज्ञानस्याक्षतम्। तत्तद्धूमत्वावच्छिन्नाभावे च वह्न्यभावव्यापकतायाः सुग्रहत्वेन तत्तद्धूमत्वावच्छिन्ने नियतान्वयव्यतिरेकानुविधायित्वं सुग्रहमेव। तादृशग्रहेण जन्यताग्राहकतर्कवैयर्थ्यमित्यपि ना-

शङ्कनीयम् । तर्कं विना धूमत्वावच्छेदेन व्याप्तिनिश्चयसम्पादकस्य धूमत्वावच्छेदेन जन्यतानिश्चयस्यानिर्वाहात् ।

न च तद्धूमत्वावच्छिन्नधर्मिकान्वयव्यतिरेकानुविधानबोधमूलकतर्कस्य लाघवज्ञानसहकारादेव धूमत्वावच्छेदेन जन्यताग्राहकत्वम् । एवं च धूमत्वसामानाधिकरण्येन तदन्वयव्यतिरेकानुविधानरूपजन्यतांशनिश्चायकप्रमाणेनापि लाघवज्ञानसहकारात् धूमत्वावच्छेदेन तन्निश्चयजननसम्भवात्तत एव च धूमत्वावच्छेदेन व्याप्तिनिश्चयोपपत्तेस्तर्कवैयर्थ्यं दुर्वारमेवेति वाच्यम् । यतस्तत्तद्धूमत्वावच्छेदेन वह्निजन्यत्वकल्पनापेक्षया धूमत्वावच्छेदेन तत्कल्पने लाघवमिति लाघवज्ञानमुक्ततर्केण धूमत्वावच्छिन्नस्य वह्निजन्यत्वग्रहे सहकारि तादृशं च लाघवज्ञानं ऽनन्यथासिद्धत्वघटितकार्यकारणभावकल्पनायामेवोपपद्यते न तु नियतपौर्वापर्यमात्रकल्पने, तत्तद्धूमत्वरूपविशेषधर्माणां नियतान्वयव्यतिरेकानुविधायितावच्छेदकत्वस्योभयमतसिद्धत्वादिति । तच्चिन्त्यमिति । धूमत्वावच्छेदेनान्वयव्यतिरेकनिश्चये लाघवज्ञानापेक्षाया आवश्यकत्वे धूमत्वसामानाधिकरण्येनान्वयव्यतिरेकज्ञानमूलकादेव तर्काल्लाघवज्ञानवशेन सामान्यधर्मावच्छेदेन जन्यताग्रहोऽस्तु किमुक्तप्रयासेनेति चिन्तावीजं बोध्यम् ।

केचित्तु उपादानपदं यथाश्रुतप्रवृत्तिपरमेव । न च प्रवृत्तेः कार्यकारणभावनिश्चयसापेक्षतया तदधीनशङ्कानिवृत्तेः कार्यकारणभावनिश्चयापेक्षणीयत्वेनान्योन्याश्रयः कार्यकारणभावनिश्चयस्य शङ्कानिवृत्त्यधीनतर्कमूलत्वादित्याशङ्कनीयम् । अन्वयव्यतिरेकदर्शनेन विनापि तर्कं कार्यकारणभावनिश्चयसम्भवात् तद्विरोधिशङ्काया अन्वयव्यतिरेकनिश्चयेनापि निवर्तनसम्भवात् ।

न चान्यथासिद्धत्वशङ्कां नान्वयव्यतिरेकधीर्निवर्तयितुं प्रभवतीति तन्निवृत्तिस्तर्कमपेक्षते एवेति वाच्यम् । तर्कं विनापि कारणान्तरविरहेण कदाचिदन्यथासिद्धत्वशङ्काविरहसम्भवात् ।

एतेन धूमत्वावच्छेदेनान्वयाद्यनुविधानस्य निश्चेतुमशक्यतया तत्सामानाधिकरण्येन वह्निजन्यत्वशङ्का नियमत एव जायते तत्कथं धूमत्वावच्छेदेन वह्निजन्यत्वनिश्चय इत्यपि परास्तम् । कोट्युपस्थित्यादिविरहेण लाघवज्ञानेन वा तादृशशङ्काया अपि निवृत्तिसम्भवात् ।

अथ तर्कं विनैव कार्यकारणभावनिश्चयस्य तर्कविरोधिशङ्कानिवृत्त्यर्थमुपगमे तर्कवैयर्थ्यं तन्निश्चयार्थमेव तर्कानुसरणादिति चेन्न । कार्यकारणभावे निश्चितेऽपि संयोगघटितसामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यत्वनिश्चयं विना यत्र संयोगेन धूमस्तत्र संयोगेन वह्निरिति व्याप्तिनिश्चयासम्भवः । सामान्यतो वह्निजन्यत्वस्य वह्निसमवेतरूपादिसाधारणस्य वह्न्यभाववद्वृत्तित्वरूपव्यभिचाराव्यावर्तकत्वादिति सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यत्वनिश्चयार्थं दर्शिततर्कस्यापेक्षितत्वात् । प्रत्यासत्तिविशेषावच्छिन्नत्वाविशेषितस्यैव तादृशप्रत्यासत्त्यवच्छिन्नत्वविशेषितस्यापि जन्यत्वस्य प्रकारान्तरेण निश्चयसम्भवेऽपि यत्र धूमत्वावच्छेदेन तन्निश्चये विरोधिशङ्काविरहप्रयोजकान्तरसमवधानं नासीत्तत्रैवोक्ततर्कस्य सार्थक्यसम्भवात् । एवं च वह्निसमवहितपदमप्यर्थवत् । वह्न्यसमवहिताजन्यपदं च सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वह्न्यजन्यपरम्, जन्यो न स्यादित्यस्य च वह्निजन्यो न स्यादित्यर्थः । अवन्हेरेवेत्यस्य च वह्निभिन्नादेवेत्यर्थः । तथा च तादृशशङ्का द्वितीयशङ्का च वह्न्यजन्यत्वकोटिकैव, तस्याः प्रकृततर्के इष्टापत्तिशङ्काविधया विरोधित्वम् । शङ्कयोर्भेदः पूर्ववत् । तत्र च कार्यकारणभावनिश्चयस्य ग्राह्याभावनिश्चयमुद्रयैव विरोधित्वात्तादृशनिश्चयार्थं कार्यकारणभावविषयकप्रवृत्तेरपि तद्विरोधित्वम् ।

न च कार्यकारणभावनिश्चयाधीनप्रवृत्तेः शङ्कानिवर्तकत्वकथनमसङ्गतं कार्यकारणभावनिश्चयार्थमेवान्वयव्यतिरेकदर्शनादितः शङ्कानिवृत्तेरावश्यकत्वादिति वाच्यम् । यत्रान्वयव्यतिरेकदर्शनाद्यधीनशङ्कानिवृत्तिं सम्पाद्य कार्यकारणभावनिश्चयव्यक्त्या सहकार्यन्तरविरहान्न तर्को जनितस्तदधीनप्रवृत्युत्तरमेव सहकार्यन्तरसमवधानं तदव्यवहितप्राक्क्षणे चान्वयव्यतिरेकदर्शनादिकं नासीत्तत्र पूर्वोत्पन्नकार्यकारणभावनिश्चयाधीनप्रवृत्तेः शङ्कानिवृत्तिमन्तरेण न पुनः(१) कार्यकारणभावनिश्चयः सम्भवतीति न तर्कानुपपत्तिरिति तादृशस्थलाभिप्रायेण कार्यकारणभावनिश्चयाधीनप्रवृत्तेः

(१) शङ्कानिवृत्तिसम्भवेन पुनरिति पाठान्तरम् ।

शङ्काविरोधित्याभिधानसङ्गतेरिति सर्वसामञ्जस्यमित्याहुः तेषां मतमुपन्यस्यति । केचित्त्विति ।

( दी० ) केचित्तु कार्यकारणभावग्रहानन्तरं व्याप्तिग्रहाय व्यधिकरणस्य जनकत्वशङ्कानिरासार्थमयं तर्कः । तथा च धूमो यदि सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वह्न्यजन्यत्वे सति सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यो न स्याद्वह्निजन्यो न स्यात् । अप्रत्यासन्नस्याजनकत्वात् । तादृशाजन्यत्वं च प्रत्यासत्त्यन्तरशालिवह्निसत्त्वेऽपि धूमानुत्पादादिना ग्राह्यमिति ।

( गा० ) यत्त्वेतन्मतेऽप्युपादानपदं अन्वयव्यतिरेकानुविधानज्ञानपरमेव, तदधीनशङ्कानिवृत्तिमूलकः, कार्यकारणभावनिर्णयस्तु शङ्कानिवृत्त्यर्थकतया नाभिहितः, अपि त्वापाद्यव्यतिरेकनिश्चयविधया साक्षात्तर्कोपयोगित्वेनैव, ईदृशश्च प्रयासः समभिव्याहृतपदसार्थक्यायैव, आपाद्यदिशि जन्यपदस्य पूर्वोक्तार्थपरत्वापेक्षया वह्निजन्यत्वपरत्वौचित्याच्चेति । तदसत् । सार्वभौमेन उपादानपदस्य प्रवृत्तिपरत्वे कार्यकारणभावनिश्चयस्य तर्कपूर्वमवश्यमपेक्षणीयतया तर्कवैयर्थ्यमित्याक्षेपे एतन्मतस्य प्रवृत्तिपरत्वोपपादकतया उपन्यस्तत्वात् एतन्मतस्य तदुपपादकत्वविरहे दीधितिकृतोऽपि तर्कव्याख्यानावसरे एतन्मतमनुपन्यस्य तदुपादानमेवेति ग्रन्थव्याख्यावसरे एतदुपन्यासस्य निर्बीजत्वापत्तेश्च । व्याप्तिग्रहायेति । यत्र संयोगेन धूमस्तत्र संयोगेन वह्निरिति व्याप्तिनिश्चयार्थमित्यर्थः । व्यधिकरणस्य जनकत्वशङ्कानिरासार्थमिति । व्यधिकरणोऽपि वह्निर्धूमं जनयिष्यतीति शङ्काधीनाया धूमे सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नवह्निजन्यत्वाभावशङ्कायाः प्रतिबन्धार्थमित्यर्थः । स्तोकं पाक इतिवत् क्रियाविशेषणत्वाद्द्वितीया ।

सामानाधिकरण्यातिरिक्तेनेति । संयोगान्यसम्बन्धावच्छिन्नवह्निनिष्ठजनकत्वानिरूपकत्वे सति वह्निनिरूपितसंयोगान्यसम्बन्धावच्छिन्नजन्यताशून्यत्वे च सति संयोगसम्बन्धावच्छिन्नवह्निनिष्ठजनकताप्रतियोगिकसंयोगसम्बन्धावच्छिन्नजन्यताशून्यः स्याद्वह्निजन्यो न स्यादित्यर्थः । सत्यन्तं चापादककोटावापाद्यप्रतियोगि-

फोटावेव वा निवेशनीयम् । संयोगातिरिक्तसम्बन्धेन धूमं प्रत्येव संयोगेन वह्निः कारणं संयोगेन धूमं प्रति संयोगातिरिक्तसम्बन्धेन वा वह्निः कारणमित्येतादृशशङ्कादशायां संयोगेन धूमं प्रति संयोगेन वह्नेर्व्यापकत्वनिश्चयायोगाद्विशेष्यदले जन्यतायां जनकतायां च संयोगसम्बन्धावच्छिन्नत्वविशेषणम् । तादृशजन्यताप्रसिद्धिर्वह्निजन्यालोकादौ । संयोगसम्बन्धावच्छिन्नवह्निनिष्ठजनकतानिरूपितसंयोगावच्छिन्नजन्यताशून्यस्यापि वह्निसमवेतरूपादेः पाकजपार्थिवरूपादेश्च वह्निजन्यत्वाद्व्यभिचार इति चरमसत्यन्तोपादानम् । वह्निनिष्ठतादृशजनकतानिरूपिततादृशजन्यताशून्यस्यापि संयोगान्यसम्बन्धावच्छिन्नवह्निनिरूपितजन्यताशून्यस्यापि च धूमस्यान्यसम्बन्धावच्छिन्नवह्निनिष्ठजनकतानिरूपितसंयोगसम्बन्धावच्छिन्नवह्निजन्यतानियहर्तीत्यप्रयोजकत्वशङ्कानिरासाय प्रथमसत्यन्तम् ।

न चैवमपि वास्तवव्यभिचारावारकतया तस्य वैयर्थ्यं दुष्परिहरमेवेति वाच्यम् । तथात्वेऽपि व्याप्तिग्रहौपयिकतया तस्य सार्थक्यात् । अत एवासाधारण्यवारकस्य मिश्रमते सार्थक्यम् ।

वस्तुतो व्यर्थविशेषणतास्थले व्याप्तित्वेन परार्थानुमानस्थले एव तस्याधिक्यरूपनिग्रहस्थानसम्पादकतया दोषत्वं न तु स्वार्थानुमाने इत्यकिञ्चित्करमेतत् । अस्तु वा संयोगान्यसम्बन्धावच्छिन्नवह्निनिष्ठजनकत्वाप्रतियोगिकत्वसंयोगान्यसम्बन्धानवच्छिन्नत्वोभयाभाववद्वह्निजन्यताशून्यत्वमेव सत्यन्तार्थः । अखण्डस्योभयाभावस्य निवेशान्न वैयर्थ्यसम्भावना । वह्निजन्यो न स्यादित्यनन्तरं इति पर्यवसिततर्कावतार इति पूरणीयम् । सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या सामानाधिकरण्यप्रत्यासत्त्या च वह्निजन्यत्वाभावेऽपि वह्निजन्यत्वसामान्याभावो न घटते इत्यप्रयोजकत्वशङ्कासम्भवात्कथमयं तर्क इत्यत आह । अप्रत्यासन्नस्येति । तथा च जन्यजनकभावस्य प्रत्यासत्त्यवच्छिन्नत्वनियमावधारणेन मिलितोक्तविशेषाभावद्वये सामान्याभावव्याप्तिनिश्चयः सुघट एवेति भावः ।

ननु धूमे सत्यन्तस्य दुर्निश्चेयतया नायं तर्कः सम्भवतीत्यत आह । प्रत्यासत्त्यन्तरशालिवह्निसत्त्वे इति । तादात्म्यादिना वह्निसम्बन्धिनीत्यर्थः । धूमानुत्पादादिनेति । धूमानुत्पादादिद-

र्शनेनेत्यर्थः । आदिपदेन सम्बन्धान्तरघटितव्यतिरेकव्यभिचार-परिग्रहः ।

सार्वभौममतमाक्षिपति ।

(दी०) इदमेव च वाचोभङ्ग्या परे परिष्कुर्वन्ति । धूमो यदि वह्न्यनधिकरणदेशानुत्पत्तिकत्वे सति वह्न्यधिकरणदेशोत्पत्तिको न स्यात् जन्यो न स्यात् । तादृशानुत्पत्तिकत्वग्रहश्च धूमानुत्पत्तिं प्रति वह्निसम्बन्धाभावस्य प्रयोजकत्वे ग्राह्ये उपस्थितत्वाल्लाघवाच्च तादृशसम्बन्धाभावस्यैव तथात्वावधारणादिति । तच्चिन्त्यम् ।

(गा०) इदमेव चेति । अव्यवहितमतमेवेत्यर्थः । वाचोभङ्ग्येति । तथा च ईदृशादिशैव कार्यकारणभावस्य तर्कात्पूर्वं निश्चितत्वेऽपि तर्कस्यावैयर्थ्यमुपपादितवन्तो न तु स्वातन्त्र्येणेत्याक्षेपः । एतन्मतेऽपि यथाश्रुतोपादानपदार्थः कार्यकारणभावनिश्चयाधीना प्रवृत्तिरेव शङ्काविरोधिनी कार्यकारणभावनिश्चयः पूर्वमते इवान्वयव्यतिरेकनिश्चयाधीन एव न तु तर्कमपेक्षते अतो नान्योन्याश्रयः । अवह्नेरेव भविष्यतीति शङ्काद्वयं वह्न्यनधिकरणदेशोत्पत्तिकत्वकोटिकं वह्न्यनधिकरणदेशानुत्पत्तिकत्वरूपतत्त्वस्तदलानिश्चयविघटनेन तर्कविरोधि । तत्र च कार्यकारणभावविषयिणी प्रवृत्तिः धूमानुत्पत्तिवह्न्यधारताविरहयोः प्रयोज्यप्रयोजकभावनिश्चयसम्भाव्य विरोधिनी वह्न्याधारताविरहप्रयोज्यानुत्पत्तिकत्वस्य वह्न्यनाधारोत्पत्तिकत्वव्यावर्तकतया तन्निश्चयस्य तत्संशयविरोधित्वात् । तत्कारणकत्वस्य च तत्समवधानविरहाप्रयोज्यानुत्पत्तिकत्वव्यावर्तकतया संशयान्यतद्विपयकस्य तच्छङ्काविघटकतया प्रयोज्यप्रयोजकभावनिश्चायकत्वात् । एवं प्रयोज्यप्रयोजकभावनिश्चयविरोधितया किञ्चिदप्रयोज्याभावप्रतियोग्युत्पत्तिकत्वरूपाहेतुकत्वकोटिकतृतीयशङ्कापि तर्कस्य विरोधिनी ।

न च वह्न्यनधिकरणानुत्पत्तिकत्वनिश्चयस्यैवोत्पत्त्याश्रयवृत्तित्वविशिष्टे उत्पत्तिविशेषसम्बन्धेन शुद्धे वा धूमे वह्निव्यभिचारसंशयविघटकतया व्याप्तिनिश्चायकत्वसम्भवेन तर्कवैयर्थ्यमिति वाच्यम् । व्यभिचारशङ्कानिवृत्तावपि धूमेवह्न्यधिकरणदेशानुत्पत्तिकत्वसन्दे-

ह्यानिवृत्त्या उत्पत्त्याश्रयवृत्तित्वविशिष्टे उत्पत्तिविशेषसम्बन्धेन शुद्धे, धा धूमसामान्ये वह्निसामानाधिकरण्यनिश्चयासम्भवेन तादृशवह्नि-सामानाधिकरण्यघटितव्याप्तेर्दुर्निश्चेयतया वह्न्यधिकरणदेशानुत्पत्तिकत्वसंशयनिवर्तकप्रकृततर्कस्य तादृशव्याप्तिनिश्चयोपयोगित्वात्। न ह्युक्ततर्कं विना धूमान्तरे वह्न्यधिकरणदेशानुत्पत्तिकत्वसंशयस्यान्यतो निवृत्तिः सम्भवति, नित्यानित्यसाधारणस्य वह्न्यनधिकरणदेशानुत्पत्तिकत्वादेस्तद्व्यावर्तकत्वात्तत्सहितस्योत्पन्नत्वस्य तद्विरोधित्वेऽपि विशिष्टस्य धूमेऽग्रहदशायां तर्कसार्थक्यात् ।

न चापाद्यव्यतिरेकनिश्चयविषया धूमे विशिष्टोत्पत्तिमत्त्वग्रहस्य तर्ककारणतया तदावश्यकतेति वाच्यम् । सत्यन्तदलस्यापादकविशेषणतापक्षे विशिष्टाभावस्यानापाद्यतया विशिष्टनिश्चयस्यानावश्यकत्वात् । अपाद्यव्यतिरेकनिश्चयस्य शङ्काविरोधितया तर्कवैयर्थ्यस्य विशिष्टाभावापाद्यतावादिनां दीधितिकृतां मते एव दुरुद्धरत्वात् ।

न च सत्यन्तस्यापादकविशेषणतापक्षे विपर्ययपर्यवसायितानिर्वाहाय तस्य पक्षविशेषणताया आवश्यकतया पक्षे तत्सहितोत्पन्नत्वस्य निश्चय आवश्यक इति वाच्यम् । तावता पक्षे उभयनिश्चयध्रौव्येऽपि विरोधितावच्छेदकैकविशिष्टापरत्वेन निश्चयस्यातथात्वात् । एवमेतन्मते विशिष्टे वह्न्यधिकरणदेशानुत्पत्तिकत्वविरोधग्रहस्यानावश्यकतया तद्ग्रहदशायामपि तर्कसार्थक्यमवगन्तव्यम् । वह्न्यधिकरणेति । उभयत्राधिकरणत्वमुत्पत्तिश्च संयोगेन । प्रयोजनं स्वयमूह्यम् ।

नतु वह्निकारणकत्वं सामान्यतो वह्निसमवधानविरहप्रयोज्यानुत्पत्तिकत्वस्य व्याप्यं न तु संयोगरूपतत्समवधानविरहप्रयोज्यानुत्पत्तिकत्वस्यापि वह्निसमवेतरूपादिसाधारणत्वादिति कथं तद्विषयिणी प्रवृत्तिर्वह्निसंयोगविरहप्रयोज्यानुत्पत्तिकत्वं संयोगेन वह्न्यनधिकरणदेशोत्पत्तिकत्वव्यावर्तकं निश्चाययिष्यति ?

न च संयोगघटितसामानाधिकरण्यप्रत्यासत्त्या वह्निकारणकत्वं संयोगेन वह्न्यधिकरणताविरहप्रयोज्यानुत्पत्तिकत्वानियतमिति तद्विषयकमुपादानमेव तन्निश्चाययेदिति वाच्यम् । संयोगघटितसामानाधिकरण्यप्रत्यासत्त्या वह्निकारणकत्वस्य प्राङ् निश्चये तस्यैव विशे-

पक्षदर्शनतया संयोगेन वह्न्यधिकरणदेशोत्पत्तिकत्वनिश्चायकतासम्भवेन प्रकृततर्कवैयर्थ्यप्रसङ्गेन यत्र सम्बन्धविशेषमनन्तर्भाव्यैव स्वरूपसम्बन्धविशेषरूपकार्यकारणभावः प्रागवगतस्तत्रैव तर्कोपयोगितायाः स्वीकरणीयतया वह्निसंयोगविरहप्रयोज्यानुत्पत्तिकत्वस्य च तत्र दुर्निश्चयत्वेन प्रकृततर्कानुपपत्तेस्तत्राशक्यसमाधानत्वादित्यत आह । तादृशानुत्पत्तिकत्वेति । संयोगेन वह्न्यनधिकरणदेशानुत्पत्तिकत्वनिश्चयस्त्वित्यर्थः । वह्निसम्बन्धाभावस्य । वह्निसम्बन्धप्रतियोगिकाभावस्य । आद्ये । वह्निधूमयोर्हेतुहेतुमद्भावनिश्चयबलात् गृह्यमाणे । लाघवात् । परम्परासम्बन्धापेक्षया लघुशरीरत्वात् । तादृशसम्बन्धाभावस्य । संयोगरूपसम्बन्धाभावस्य । तथात्वावधारणात् । प्रयोजकत्वनिश्चयात् । अत्र च उपादानपदस्य यथाश्रुतार्थपरतोपपत्त्यर्थमेतावान् प्रयासः, अन्यथा उक्तरीत्या धूमत्वावच्छेदेन व्याप्तिनिश्चयविरोधिन्या धूमत्वसामानाधिकरण्येन व्यभिचारशङ्काया विरोधिनो धूमत्वावच्छेदेन वह्निजन्यतानिश्चयस्य जननेनैव उक्ततर्कसार्थक्यसम्भवे तदुपेक्षाया अनुचितत्वात्, सैव च न सङ्गच्छते प्रवृत्तेः शङ्काविरोधित्वस्याभिप्रेतत्वे यदि हीत्यादिना उपादानं कथं कुर्यादित्यन्तेन शङ्कासम्भावनया तत्सत्त्वे प्रवृत्त्यनुत्पादप्रसञ्जनस्यासङ्गत्यापत्तेः । न हि कार्यसत्त्वं प्रतिबन्धकानुत्पादप्रयोजकम् । कार्यकारणभावनिश्चयघटितप्रवृत्तिसामग्रीसत्त्वे तदुत्पत्तौ बाधकाभावात् ।

न च कार्योत्पत्तिपूर्वं प्रतिबन्धकाभावस्यावश्यकतया शङ्कोत्पत्त्या तत्पूर्वमुपादानरूपतत्प्रतिबन्धकाभावस्य शक्यापादनतया तत्रापत्तिपरतया तद्ग्रन्थसङ्गतिरिति वाच्यम् । एवमप्युपादानस्य शङ्काप्रतिबन्धकतासिद्धिमन्तरेण तादृशापत्त्ययोगात् । ईदृशापत्त्या शङ्काविरहं प्रसाध्य तन्निर्वाहकतयोपादानस्य शङ्काप्रतिबन्धकत्वव्यवस्थापनपरतया तस्मात्तदुपादानमेवेत्यस्य दुस्सङ्गमत्वात् । एवं धूमत्वावच्छेदेन वह्निमदुत्पत्तिकत्वनिश्चयोऽप्यकिञ्चित्करः, हेतुतावच्छेदकावच्छेदेन साध्यसामानाधिकरण्यज्ञानस्यानुमितावनपेक्षितत्वात् । तदपेक्षायामवृत्तिसाधारणद्रव्यत्वाद्यवच्छिन्नलिङ्गकानुमितिविलोपप्रसङ्गात् । धूमत्वसामानाधिकरण्येन वह्निमदुत्पत्तिकत्वं च प्रागेव निश्चितम् । अन्वयव्यतिरेकग्रहस्य तद्वि-

पयकत्वादिति तर्कवैयर्थ्यं दुर्वारमेव। एवं प्रवृत्तेः शङ्काविरोधित्व-मपि प्राग् दूषितमित्यादि चिन्तावीजं बोध्यम्।

(चि०) शङ्कायां न नियतोपादानं नियतोपादाने च न शङ्का। तदिदमुक्तं तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातो न भवतीति। न हि सम्भवति स्वयं वह्न्यादिकं धूमादिकार्यार्थं नियमेन उपादत्ते तत्कारणं तन्नेत्याशङ्कते चेति। एतेन व्याघातो विरोधः स च सहानवस्थाननियम इति तत्राप्यनवस्थेति निरस्तम्। स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात्।

(गा०) मिश्रास्तु उपादानपदस्य यथाश्रुतार्थकत्वोपपादनाय एवं वर्णयन्ति। तर्कस्य व्याप्तिमूलकत्वेनानवस्थेति शङ्का न स्वार्थानुमानस्थलाभिप्रायिका, क्वचित्कोटयुपस्थित्यादिरूपशङ्काकारणविरहेणापि मूलशैथिल्यादिशङ्काविरहसम्भवेन सर्वत्र तर्कानपेक्षयाऽनवस्थानिवृत्तेर्व्याघातोपदर्शनवैयर्थ्यादपि तु परार्थस्थले धूमादिना कार्येण वह्न्यादिसाधनावसरे प्रतिवादिना ऽनुमानाप्रामाण्यवादिना चार्वाकेण व्यभिचारशङ्कया व्याप्तिग्रहो मम न जायते इत्युक्ते तं प्रति व्याप्तिग्रहं स्वीकारयितु वादिना शङ्कानिवर्तकस्योद्भावने मम तर्कविरोधिमूलशैथिल्येष्टापत्त्यादिशङ्कासत्त्वात्तर्क एव नावतरतीति परेणोत्तरयितव्यम्। तच्छङ्काविरोधितर्कान्तरोपन्यासेऽपि तत्तर्कविरोधिशङ्कान्तरं परेणोद्भावनीयमिति सर्वत्रैव शङ्कोद्भावनसम्भवात्तर्कोपन्यासानवस्थया परार्थानुमानोच्छेद इत्येवं तर्कस्येत्यादिशङ्कार्थः।

इत्थं च यावदाशङ्कमित्यादेरनवस्थासमाधानपरमूलस्य यावत् परस्य तर्कादिविरोधिन्याः शङ्काया उद्भावनं निराबाधं तावदेव तर्कोपन्यासः, यत्र शङ्कासत्त्वे परस्यैव प्रवृत्तिव्याघातस्तत्र व्याघातोपदर्शनेनैव शङ्कोद्भावनान्न तर्कोपन्यास इति न तदुपन्यासानवस्थेत्यत्र तात्पर्यम्। एवं च तर्कानुसरणादित्यस्य तर्कोपन्यासादित्यर्थः। व्याघातेनेति। प्रतिवादिनश्चार्वाकस्यैव प्रवृत्तेर्व्याघातो-

पन्यासेनेत्यर्थः । शङ्कैव नावतरतीति । परेण स्वशङ्कोद्भावनं न सम्भवतीत्यर्थकम् । तर्कं विनैव व्याप्तिग्रह इति तर्कान्तरमनुपन्यस्यापि परं प्रति व्याप्तिस्वीकारणसम्भव इत्यर्थकम्, न तु व्याघातेनेत्यादेर्व्याप्तिग्रह इत्यन्तस्य यत्र प्रमाणासद्भवृत्त्यन्यथानुपपत्त्या प्रवृत्तिमतः कारणान्तराभावाधीनशङ्कानवतारसिद्धिस्तत्र तर्कानुपयोगेन तं विनैव व्याप्तिग्रहसम्भवान्न तर्कव्याप्तिग्रहधारानवस्थेत्यर्थः । व्याप्तिग्रहमूलकीभूततर्कोपन्यासानन्तरं तद्विरोधिकीदृशशङ्कायाः प्रवृत्तिव्याघातेनोद्भावनासम्भव इत्याशङ्कायां तथा हीत्यादिग्रन्थः । इत्यथ इति । शङ्का स्यादिति । तर्के उपन्यस्यमाने इति मम शङ्का भवतीति परेणोद्भावनीयमित्यर्थकम् । सर्वत्र शङ्कायां स्वक्रियाव्याघातः । स्वक्रियाव्याघातकत्वं स्वक्रियाविरुद्धप्रयोजकत्वमिति यावत् । यदि हीत्यादिना तादृशस्वक्रियाव्याघातस्फुटीकरणम् । तेन विनापि तत्सम्भवादिति । उक्तशङ्काविरोधेन वह्निधूमादीनां हेतुहेतुमद्भावनिश्चायकतर्कानवतारेण वह्न्यादिकं विनापि धूमादिसम्भवादिति शङ्कोदयादित्यर्थः । धूमादौ वह्न्याद्यजन्यत्वशङ्काया अनिराकरणादिति यावत् । तस्मात् । शङ्कायाः प्रवृत्तिविरोधित्वात् । तदुपादानमेव । धूमाद्यर्थिनः परस्य प्रवृत्तिरेव । शङ्काप्रतिबन्धकम् । मूलशैथिल्यादिशङ्कया कथं तर्कोऽवतरेदिति परशङ्काविरोधि । प्रवर्तमानस्य स्वप्रवृत्तिव्याघातकशङ्कासत्त्वाविशङ्कनस्य निग्रहप्रयोजकत्वादिति भावः । तदेव 'ह्याशङ्क्यते इति । विचारदशायामित्यादिः । यस्मिन्नाशङ्क्यमाने इति । आशङ्क्यमानस्य यस्य सत्त्वे इत्यर्थः । स्वक्रियाव्याघातः । स्वप्रवृत्त्यनुपपत्तिः । तदेव द्रढयति । न हि सम्भवतीति । तत्कारणम् । तस्य धूमादेः कारणम् । तत् । वह्न्यादिकम् । इत्याशङ्कते चेति । तर्कविरोधिशङ्कासत्त्वेन कारणतानिश्चायकतर्कानवतारादेतादृशी शङ्का जायते इति विचारदशायां शङ्कते इत्यर्थः । उक्तशङ्कायां शङ्काप्रवृत्त्योर्विरोधज्ञाने प्रतिबन्धकमित्येव व्याघातेनेत्यादिनोक्तमित्यभिमानेनाह मूलेऽनुपन्यस्यापीति । यत्नेनेति । तत्राप्यनवस्थेति । शङ्कानिवृत्त्यर्थं तर्कान्तरापेक्षायामप्यनवस्थेत्यर्थः । नियमघटितविरोधिनिश्चयस्यापि तद्विरोधिशङ्कानिवर्तकतर्कापेक्षणादिति भावः । स्वक्रियायां चेति । प्रतिवादिप्रवृत्तेरेव शङ्काप्रतिबन्धकत्वात्प्रतिवादिनः शङ्कोद्भावनप्रतिबन्धकत्वेनाभिधानात्, न तु शा-



द्भायां विरोधग्रहस्येत्यर्थः । एतदेव मतमुपन्यस्यति । मिथास्त्विति।

'(दी०) मिथास्तु परं प्रति व्याप्तिग्रहोपाये प्रदर्श्यमान व्यभिचारशङ्कानिरासहेतुत्वेनोपदर्शिते तर्के मूलशैथिल्यादिशङ्कोद्भावकं तं प्रति व्याघातोऽयमुपदर्श्यते, मैवं शङ्किष्ठाः, तथा सति तत्तत्कार्यार्थितया तत्र तत्र कारणे तवैव प्रवृत्तयो व्याहन्येरन् । यदाह, न हि सम्भवति स्वयं वह्न्यादिकमितीति प्राहुः।

( गा० ) परं प्रतीति । व्यभिचारशङ्कया व्याप्तिग्रहोपायाभावेन मम व्याप्तिग्रहो न सम्भवतीति वादिनं प्रतीत्यर्थः । व्यभिचारशङ्कानिरासहेतुत्वेनेति । परोद्भावितायास्तदीयव्यभिचारशङ्काया निवर्तकत्वेनेत्यर्थः । तं प्रति । पर प्रति । परेण मूलशैथिल्यादिशङ्कोद्भावनस्य निवृत्तये इति यावत्। व्याघातोऽयमुपदर्श्यते इति । सर्वत्र स्वक्रियाव्याघात इत्यादिनेति शेषः । व्याघातोपदर्शनाकारमेवाह । मैवं शङ्किष्ठा इति । शङ्किष्ठाः । शङ्कामुद्भावयेथाः । व्याहन्येरन् । नोत्पद्येरन् । शङ्कया तर्कानवतारेण तवापि कारणतानिश्चयासम्भवादिति भावः । न हि सम्भवतीत्यादिनापि शङ्कासत्त्वे चार्वाकप्रवृत्त्यसम्भव एव उक्त इत्याह । यदाहेति । यदिति व्याघातक्रियापरामर्शकम् । प्राहुरिति प्रशब्देनास्वरसाभावा दर्शितः।

मूले स्वक्रियाया एवेति । यद्यपि क्रियापदस्यान्वयव्यतिरेकानुविधानबोधपरतया तस्य च विशेषदर्शनविधयैव विरोधित्वेन व्याप्तिग्रहापेक्षातादवस्थ्यमेव तथापि कालान्तरगृहीतव्याप्त्यवच्छेदकधर्मप्रकारेण व्याप्यदर्शनस्यापि शङ्काविरोधितयाऽविच्छिन्नप्रवर्तकव्याप्तिग्रहधाराभ्युपगमस्य नावश्यकतेति ध्येयम् । एवकारेण व्याघातबोधव्यवच्छेदः ।

"शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् । व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मत" इति कारिकया शङ्कायाः कचिद्व्याघातप्रयोज्यानुत्पत्तिकत्वमभिहितमाचार्यैरित्यभिमानेन तदुपरि खण्डनकृतां शङ्कानिष्ठप्रवृत्तिप्रतियोगिकविरोधरूपव्याघात आश्रयतासम्ब-

न्धेन शङ्काप्रत्यासन्नीभूय तत्प्रतिबन्धक इत्यनुमतं तत्र सम्भवति व्याघातस्य शङ्काश्रितत्वेन शङ्कोत्पत्तावेव तत्र व्याघातरूपप्रतिबन्धकसम्भवेन तदुत्पत्तेरावश्यकतया व्याघातस्य तत्प्रतिबन्धकत्वव्याघातादित्याक्षेपमुपन्यस्य निराकरोति । अत एवेति ।

(चि०) अत एव "व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् । व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुत" इति खण्डनकारमतमप्यपास्तम् । न हि व्याघातः शङ्काश्रितः, किं तु स्वक्रियैव शङ्काप्रतिबन्धिकेति । न वा विशेषदर्शनात् क्वचिच्छङ्कानिवृत्तिरेवं स्यात् । न चैतादृशतर्कावतारो भूयोदर्शनं विनेति भूयोदर्शनादरः। न तु स स्वत एव प्रयोजकः। अत एव न तदाहितसंस्कारो न मानान्तरम् । तर्कस्याप्रमात्वात् ।

(गा०) व्याघातो यदीति । शङ्काप्रत्यासन्नतया स्वीक्रियते इति शेषः । शङ्कास्तीति । तदा शङ्कोत्पादोऽवश्यमङ्गीकार्य इत्यर्थः । न चेदिति । शङ्काप्रत्यासन्नो व्याघातश्चेन्नास्ति तदा प्रतिबन्धकसमवधानाभावाच्छङ्का जायेतैवेत्यर्थः । अतो व्याघातावधिः व्याघातप्रयोज्यानुत्पत्तिका 'आशङ्का इति कुतः, तर्कः शङ्कावधिः शङ्कानुत्पादप्रयोजक इति वा कुतः, तर्कविरोधिशङ्काया व्याघातानिवर्त्यत्वेनानवस्थया तर्कस्यैवानवतारादित्यर्थः ।

अथ वा तर्कः शङ्कावधिः शङ्काव्यवधिक', यत्र व्याघाताच्छङ्काविच्छेदस्तत्र तर्कान्तरानुपयोगात्तर्कधाराया अपि विरह इति यावत्, एतावता नानवस्थावकाश इति कुत इत्यर्थः । न हि व्याघातः शङ्काश्रितः प्रतिबन्धकविधया शङ्कानुत्पादप्रयोजक इत्युच्यते इति शेषः । किं तु स्वक्रियैवेति । आचार्यकारिकायां व्याघातावधिराशङ्केत्यस्य यत्र शङ्कोत्पत्तौ प्रमाणसिद्धप्रवृत्त्यनुपपत्तिरूपो व्याघातस्तदवधिका शङ्केत्यर्थः । तादृशस्थले स्वक्रियाप्रतिबन्धेनैव शङ्काया अनुत्पाद इति यावत्, न तूक्तार्थ इति भावः ।

केचित्तु व्याघातावधिराशङ्केत्यत्र व्याघातपदं न शङ्कानिष्ठप्रवृत्तिविरोधपरं अपि तु स्वक्रियानिष्ठशङ्काप्रतिबन्धकतावच्छेदकधर्मवत्त्वपरं व्याघातस्य शङ्कावधित्वं शङ्कानुत्पादप्रयोजकत्वरूपमाचार्याभिप्रेतं तच्चाव्यवहितपूर्वकाले प्रतिबन्धकस्येवाव्यवहितप्राक्कालीनानिष्टप्रतिबन्धकतावच्छेदकधर्मवत्त्वस्यापि कार्यानुत्पादप्रयोजकत्वादिति नानवस्था शङ्कास्पदमिति भाव इत्याहुः ।

ननु स्वक्रियाया अपि शङ्कानिवर्तकत्वं विचारासहं तस्याः शङ्काविरोधित्वे एव तन्निवर्तकतासम्भवात् तत्र च शङ्काप्रतियोगिकविरोधसत्त्वे विरोधघटकशङ्कासत्त्वस्यावश्यकतया शङ्कानिवर्तकताया एव व्याघातादित्यत आह । न चेति । क्वचिदपि विरोधिज्ञानात्(१) शङ्कानिवृत्तिरेव न स्यात् सर्वत्रैवेदशवितर्कसम्भवादित्यर्थः । तथा च सर्वानुभवसिद्धं करादिदर्शनस्य स्थाणुत्वादिशङ्कानिवर्तकत्वमपि भज्येत । यदि च विरोधप्रतियोगिनः कस्यचित्कचित्सत्त्वे एव तत्प्रतियोगिकविरोधस्तन्निवर्तकस्य निर्वहति न तु यदा यत्र निवृत्तिरभिमता तदा तत्र विरोधप्रतियोगिसत्त्वमपेक्ष्यते इत्युच्यते तदा तुल्य प्रकृतेऽपीति भावः ।

ननु व्यभिचारादर्शनसहकृतस्य सहचारदर्शनमात्रस्य व्याप्तिग्राहकत्वोपगमे भूयोदर्शनस्य व्याप्तिग्राहकताप्रवादो भज्येतेत्यत आह । न चैतादृशेति । तदादर । भूयोदर्शनस्य तर्कसम्पादनद्वारा व्याप्तिग्रहोपयोगितेत्यर्थः । यद्यप्यापाद्यव्याप्तिज्ञानादिसत्त्वे प्रथमदर्शनेऽप्येतादृशतर्कप्रवृत्तिः सम्भवतीति तर्केऽपि साध्यसाधनभूयःसहचारदर्शनमकिञ्चित्कर तथापि यत्र महानसे प्रथमं सहचारदर्शनेऽपि गोष्ठे वह्निं विनापि धूम उत्पत्स्यते इति शङ्का जाता गोष्ठे वह्निधूमयोः सहचारदर्शने च तन्निवृत्त्या कोट्युपस्थित्यादिविरहेण चान्याधिकरणान्तर्भावेण शङ्कानुदयेन तर्कावतारस्तत्र द्वितीयदर्शनस्यैव क्रमेण तृतीयादिदर्शनस्यापि क्वचिदपेक्षासम्भव इति नासङ्गतिः ।

न चाधिकरणान्तरान्तर्भावेण तथा शङ्कायामपि महानसीयधूमे वह्न्यसमवहिताजन्यत्वनिश्चयसम्भवेन धूमत्वावच्छेदेनापत्तिः

(१) विशेषदर्शनादिति पुस्तकान्तरे पाठः ।

सम्भवत्येवेति द्वितीयादिदर्शनमकिञ्चित्करमेवेति वाच्यम् । एवमपि क्वचिद् धूमत्वसामानाधिकरण्येनापत्तिनिर्वाहकतया लाघवज्ञानासम्भवधानस्थले धूमत्वावच्छेदेन वह्न्यसमवहिताजन्यत्वनिश्चये द्वितीयादिदर्शनस्योपयोगित्वात् ।

न तु स स्वत एव प्रयोजक इति । सः भूय-सहचारग्रहः । स्वत एव । तर्कमद्वारीकृत्यैव । न व्याप्तिग्रहोपयोगीत्यर्थः । अत एव न तदाहितेति । तर्कमद्वारीकृत्य तस्य व्याप्तिग्रहोपयोगित्वस्वीकारे एव तज्जन्यसंस्कारस्य व्याप्तिग्रहजनकताया आवश्यकत्वात् प्रमाणान्तरत्वं स्यात् तर्कं द्वारीकृत्य तस्य व्याप्तिग्रहोपयोगित्वस्वीकारे तु तज्जन्यसंस्कारस्य व्याप्तिग्रहजनकतायां मानाभावेन न तत्र प्रमाणान्तरताप्रसक्तिरुक्तापादकाभावादित्यर्थः । तर्कस्यापि शङ्कानिवृत्तिद्वारैव व्याप्तिग्रहोपयोगितया व्याप्तिग्रहकारणत्वाभावान्न मानान्तरताप्रसक्तिरिति भावः । भूयोदर्शनजन्यसंस्कारस्य तर्ककारणतया तर्कोपयोगितेत्यभिमानेन तादृशसंस्कारस्य प्रमाणान्तरत्वप्रसक्तिं तादृशसंस्कारस्य तर्ककारणत्वमभ्युपेत्यैव निराकरोति । तर्कस्येति । यत्रापाद्यमप्यापादिन बाधभ्रमाद्यापत्तिस्तत्रापि जनकज्ञानविषयापाद्यव्यतिरेकावगाहित्वं स्वीकृत्याप्रमात्वमुपपादनीयमिति भावः ।

(चि०) तच्च प्रत्यक्षे व्याप्तिज्ञाने हेतुः, तदभावेऽपि शब्दानुमानाभ्यां तद्ग्रहात्[1] । ननु सहचारदर्शनव्यभिचारादर्शनवद् व्यभिचारशङ्काविरहानुकूलतर्कयोज्ञानं व्यभिचारिसाधारणमिति न ततोऽपि व्याप्तिनिश्चय इति चेन्न । स्वरूपसतोरेव तयोर्व्याप्तिग्राहकत्वात् । सत्तर्काद् व्याप्तिप्रमा तदाभासात्तदप्रमा विशेषदर्शनसत्यत्वासत्यत्वाभ्यां पुरुषज्ञानमिव ।

(दी०) तच्चेति । तत् । व्यभिचारादर्शनम्, व्यभिचारज्ञानसामान्याभावः । योग्यतादिसन्देहेऽपि शब्दादिना अर्थनिश्चयात् । तत् तर्कस्वरूपमिति केचित् ।

( गा० ) तच्चेत्यादिमूलग्रन्थे तत्पदं यदि सहचारदर्शनपरं तदाऽसङ्गतिः सहचारज्ञानस्य विशेषणज्ञानविधया प्रत्यक्षे इव मानजन्येऽपि व्याप्तिज्ञाने हेतुत्वादतो व्यभिचारज्ञानविरहेत्यनेन पूर्वोक्तव्यभिचारादर्शनपरतया तद्व्याचष्टे दीधितौ। तदिति । व्यभिचारादर्शनं यदि व्यभिचारानिश्चयस्तदाप्यसङ्गतिर्ग्राह्याभावनिश्चयाभावस्य शाब्दादिबुद्धावपि हेतुत्वादतो व्यभिचारादर्शनस्य संशयसाधारणव्यभिचारज्ञानाभावरूपतां ज्ञानं निश्चय इत्यादिना मूलकृतैव सूचितां स्मारयितुं व्याचष्टे । व्यभिचारज्ञानसामान्याभाव इति । व्याप्तिग्रहविशेषोपादानबीजप्रदर्शनपरं व्यभिचारज्ञानाभावाभावेऽपीत्यर्थक तदभावेऽपीति मूल यदि व्यभिचारनिश्चयस्थलपरं तदाऽसङ्गतिः । तत्र व्याप्तिज्ञानमप्रानुत्पादात् । अतः संशयदशापरतया अधुनैव तद् व्याचष्टे । योग्यतादीति । आदिना साध्यपरिग्रहः । शाब्दादिनेति । आदिनाऽनुमानपरिग्रहः । यद्यपि संशयप्रतिबन्धकतायां व्याप्यदर्शनस्योत्तेजकतया व्याप्यदर्शनरूपानुमानेन तन्निश्चये न व्यभिचारावकाशः । तथापि सामान्यव्याप्यवत्ताज्ञानजन्यायां लाघवज्ञानादिवशाद्विशेषप्रकारिकायां तादृशसंशयोत्तरानुमितौ व्यभिचारो बोध्यः । तच्चेति तत्पदं तर्कपरतया वर्णयतस्तथा सत्यपि नपुंसकलिङ्गतां कथंचिदुपपादयतो मतमाह । तदिति । अत्रास्वरसो व्याघाताच्छङ्काविरहस्थले व्यभिचारेण तर्कस्याहेतुत्वात् । हेतुपदस्य शङ्काविरहद्वारोपयोगितापरत्वे तदपेक्षया तत्पदस्य शङ्काविरहपरताया एवोचितत्वाद् बोध्यः ।

परार्थस्थले व्यभिचारशङ्कानुकूलतर्कविरहयोरुद्भावनात्तज्ज्ञानं विरोधीति तदभावयोर्ज्ञानमेव व्याप्तिग्राहकं व्यभिचारानिश्चयाभावश्च स्वरूपसँस्तथा इत्यभिमानेनाशङ्कते मूले । नन्विति । व्यभिचारादर्शनवत् । व्यभिचारानिश्चयवत् । व्यभिचारिसाधारणम्(१) । व्यभिचारसन्देहकालीनसाधारणम् । न ततो व्याप्तिनिश्चयः सम्भवतीति शेषः । संशयनिवर्तकस्यैव निश्चायकत्वादिति भावः । स्वरूपसतोरिति । तथा च तथाविधयोः संशयविरोधितया संशयदशाव्या-

(१) व्यभिचारसाधारणमित्यपि पाठः ।

वर्तकतया व्याप्तिनिश्चायकत्वं सम्भवत्येवेति भावः । एवं च परार्थस्थले प्रतिवादिनः स्वव्यभिचारसन्देहोद्भावने तदुद्भावने व्यभिचाराव्यभिचारसहचरितव्यभिचारज्ञानविषयत्वज्ञानान्मध्यस्थस्य व्यभिचारसन्देहो भविष्यति न तु व्याप्तिनिश्चय इत्यभिसन्धायैव, न तु व्यभिचारसन्देहज्ञाने तदभावज्ञानासम्भवेन कारणाभावाद् व्याप्तिनिश्चयो मा भूदित्याशयेन, अनुकूलतर्कविरहोद्भावनमपि स्वकीयव्यभिचारसंशयज्ञापनायैव न त्वनुकूलतर्कज्ञानविघटनायेति न व्यभिचारज्ञानाभावानुकूलतर्कयोर्ज्ञानहेतुता प्रामाणिकीत्याशयः ।

अथोक्तरीत्यानुकूलतर्कविरहोद्भावन - सङ्कलनां स्वरूपसत एवानुकूलतर्कस्यापादकशङ्कानिवर्तकतया तदभावनिश्चायकत्वेन साध्यतद्व्याप्त्यादिनिश्चयार्थं वादिनोऽनुकूलतर्कावतारजनकस्तदुद्भावनजनकस्तदुपन्यासः कथमुपपद्यतामिति चेदित्थम् । यत्र निर्वह्निः स्यान्निर्धूमः स्यादित्याकारेण तर्कोपन्यासः क्रियते तत्र निर्वह्निनिर्धूमपदसमभिव्याहृतभवनार्थकास्धातुभ्यां निर्वह्निनिर्धूमयोरसाधारणधर्मरूपो भावः प्रत्याय्यते सम्भावनार्थकयदितदाभ्यां हेतुहेतुमद्भावापन्नतदारोपविषयताबोधः, आख्यातपदाभ्यां च तदन्वितमाश्रितत्वरूपं कर्तृत्वं प्रथमान्तपदार्थे बोध्यते अन्यथार्थद्वारापि क्रियान्वितस्य स्वार्थस्याख्यातेन बोधने व्युत्पत्तिविरोधविरहात् । अत एव गुरुमते न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणाभावविषयकं कार्यमिति बोधः । न्यायमते तु कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववदिति । तत्र धात्वर्थाख्यातार्थयोरन्तरा नञर्थस्य भानात् । तथा च निर्वह्नित्वारोपविषयताश्रयोऽयं तदारोपविषयताप्रयोज्यनिर्धूमत्वारोपविषयताश्रय इति बोधः । निर्वह्नित्वारोपस्तर्ककारणमापादकज्ञानं निर्धूमत्वारोपश्च तर्क एव तयोरारोपत्वेनैव भानमुपेयते न तु ज्ञानत्वमात्रेण हृदादावाहार्यवह्न्यभावभ्रमया धूमभ्रमसहकारेण धूमाभावापत्तिजननेऽपि तत्तात्पर्यकस्य हृदोऽयं निर्वह्निः स्यान्निर्धूमः स्यादिति वाक्यस्याप्रामाण्यं एतादृशस्य तर्कबोधकवाक्यस्य तज्जन्यशाब्दबोधस्य च साक्षात् परकीयतर्कात्मकज्ञानाजनकत्वेऽपि आपाद्यापादकयोर्व्याप्यव्यापकभावप्रयोजकव्याप्त्याकाङ्क्षासम्पादनद्वारा साक्षात्तर्ककारणव्याप्तिबोधजनकोदाहरणप्रयोजकतया परकीयतर्क-

सम्पत्त्युपयोगः । अनुमानस्थले साध्यहेत्वोर्व्याप्यव्यापकभावबोधक-हेत्वन्तभागस्यानुमित्युपयोगवत् ।

न चोदाहरणवाक्याद्व्याप्तिबोधेऽपि तर्ककारणाहार्यापादकव्याप्तिज्ञानस्य वाक्येन जननासम्भवात्परकीयतर्कसम्पादनासम्भव इति वाच्यम् । पर्वतो न वह्निमानित्यादिप्रतिवादिवाक्याद्वादिनः साध्यनिर्देशेन सहितात्संशयोत्पत्त्या तज्जन्यदुःखनिवृत्तीच्छया पक्षकोटिनिश्चयेच्छातः स्वत एव मध्यस्थस्याहार्यापादकव्याप्तिज्ञानसम्भवेन व्याप्तिमुद्भाव्यैव वादिना तस्य तर्कसम्पादनसम्भवात्

ननु तर्कस्य सत्यत्वं न प्रमात्वं तर्कस्याप्रमात्वनियमात् । नापि प्रमात्मकापाद्यव्यतिरेकनिश्चयजन्यत्वं व्याप्तिप्रमाजन्यत्वं वा, धूमस्याद्रव्यत्वभ्रमदशायामुत्पन्नाद् धूमो यदि वह्निव्यभिचारी स्याद्द्रव्यं स्यादित्यादितर्काद्व्याप्तिप्रमाया उत्पादस्य व्याप्तिभ्रमानुत्पादस्य चानिर्वाहादित्याशङ्कानिराकरणपरतया समाधिसाम्यसूचकं विशेषदर्शनेत्यादिमूलोक्तदृष्टान्तं सङ्गमयति । नन्विति

(दी०) ननु वस्तुतो व्याप्तिसत्त्वे तर्काभासात् प्रमाभ्रमयोरुत्पादानुत्पादाभ्यां व्यभिचार इत्यत आह । विशेषदर्शनेति । तथा च यथा तस्य बोध्यतदभाववद्विषयत्वे सत्यत्वासत्यत्वे तथा तर्कस्यापीति । अत्र च सत्यत्वादिसम्पादके धर्मिणो बोध्यादिमत्त्वे बोध्यादिमद्धर्मिसन्निकर्षे वा तात्पर्यम्, लाघवात्, तर्कस्य व्यभिचारेणाहेतुतायाः स्वयमेव दर्शितत्वाच्च ।

(गा०) प्रमेति । प्रमाया उत्पादाद् भ्रमस्यानुत्पत्तेरित्यर्थः । व्यभिचारः । व्याप्तिप्रमायां सत्तर्कस्य व्यतिरेकव्यभिचारः । तद्भ्रमे तर्काभासस्य चान्वयव्यभिचार इत्यर्थः । यथायोगं हेत्वोरन्वयः । समाधानं स्फुटीकरोति । बोध्येति । बोध्यत्व प्रकृतनिश्चयविषयत्वम् । सत्यत्वासत्यत्वे इति । न तु प्रमात्वभ्रमत्वे इति शेषः । पुरुषे पुरुषत्वव्याप्यतया शास्त्रादिभ्रमात्पुरुषत्वप्रमाया उत्पादात्तद्भ्रमस्य चानुत्पादादिति भावः । तर्कस्यापीति । सत्यत्वासत्यत्वे इत्यन्तमनुषज्यते, न तु व्याप्त्यादिप्रमाजन्यत्वतदभावरूपे इति शेषः । यथाश्रुतेऽस्वरसस्य वक्ष्यमाणत्वात्तात्पर्यार्थमाह । अत्र चेति । धर्मिणः ।

विशेष्यस्य । योऽप्यादित्यादिपदाद्योग्याभावस्य फलीभूतज्ञानाप्रमात्वप्रयोजकस्य परिग्रहः । तथा च विशेष्यतासम्बन्धेन तत्संसर्गकतत्प्रकारकप्रमाभ्रमौ प्रति तत्संसर्गकविशेषणताविशेषाभ्यां तद्धर्मतत्संसर्गावच्छिन्नतदभावौ हेतू अतो न तदभाववति तत्प्रमायास्तद्वति च भ्रमस्य प्रसङ्ग इति भावः । विशेष्यविशेषणादिकमन्तर्भाव्य कालिकादिप्रत्यासत्त्या कार्यकारणभावो द्वेयः । विशेष्यतया अपुरुषादौ पुरुषत्वप्रमादेरनुत्पादस्य कारणाभावनिर्वाह्यत्वासम्भवात् ।

अथ अपुरुषे पुरुषत्वप्रकारकत्वविशिष्टप्रमादेर्विशेष्यतया आपादनं पुरुषत्वप्रकारतानिरूपितपुरुषादिनिष्ठविशेष्यतापादनपर्यवसितं तच्च न सम्भवति, पुरुषान्तरे एतत्पुरुषनिष्ठायाः पुरुषत्वप्रकारतानिरूपितविशेष्यताया अभावे एतद्व्यक्तित्वाभावस्यैव कारणतावच्छेदकसम्बन्धावच्छिन्नकारणाभावात्मकस्यापि समवायादिना पुरुषत्वाद्यभावस्य प्रयोजकत्वादिति चेन्न । एवं सत्युक्तकार्यकारणभावकल्पनाया अपि निष्फलत्वात् । तद्वारणीयातिप्रसङ्गान्तराप्रसक्तेस्तादृशकार्यकारणभावकल्पनमप्रामाणिकमिति ध्येयम् ।

नन्वनित्यविशेषणस्य तत्तत्सम्बन्धावगाहिप्रमायां विशेषणस्य तत्सम्बन्धस्य वा हेतुता न सम्भवति तस्याविद्यमानतादशायामपि प्रमारूपतदुपनीतभानोदयात् । एवमनित्यप्रतियोगिकाभावस्य तत्सं-
४ सर्गकभ्रमे ~ स्वाव्यवहितपूर्वकालावृत्तिप्रतियोगिरूपतत्संसर्गकयोग्याभावस्य तत्संसर्गस्य वा न हेतुतासम्भवः ।

१ न चानित्यस्य घटादेर्भूतलादिवृत्तित्वेऽपि तदभावस्य तत्र सत्त्वान्न भ्रमसम्भव इति वाच्यम् । स्वविषयघटाद्यनधिकरणकालमात्रस्थायिज्ञानादेः विषयितासम्बन्धावच्छिन्नघटाद्यभावस्य तेन सम्बन्धेन तद्वतो भेदस्य चासत्त्वात्तन्न तद्भ्रमसम्भवेन तादृशभ्रम एव योग्याभावादिहेतुत्वानुपपत्तेरिति तत्राप्यन्यत्कारणमाह । योग्यादिमदिति । वाकारो व्यवस्थितविकल्पपरः । नित्यप्रमायां लाघवेन विशेषणस्यैव हेतुत्वौचित्यात्, प्रमात्वस्य विशेषणभेदेन भिन्नतया तद्भेदेन कार्यकारणभावभेदस्यावश्यकत्वात् । सन्निकर्षस्य तद्वृत्तित्वविशिष्टत्वेनैव हेतुता सामान्यतः, आश्रयत्वं तदवच्छेदकसम्बन्धोऽतः सन्निकर्षत्वस्याननुगतस्य दुर्वचत्वेऽपि न क्षतिः । ज्ञानरूपप्रत्यासत्तेर्विषयानाश्रितत्वेऽपि न क्षतिः । तद्विषयत्वस्यै-

बोक्तरूपेण हेतुत्वोपगमात् । धर्मस्येव धर्मिणामप्युपलक्षणतया कारणतावच्छेदकत्वे वृत्तिरेव विशेषणमतो नाविद्यमानधर्मिविशेष्यकप्रमानुपपत्तिर्न वातिप्रसङ्गः ।

नन्वु तद्वद्वृत्तिविषयतासम्बन्धेन तर्कत्वेन हेतुत्वे न द्वितीयकल्पापेक्षया गौरवं तर्कत्वं च मानसत्वव्याप्यजातिविशेषः । जातेरनांशिकत्वेऽपि साध्यरूपविषयमात्रोपरागेणानुमितित्वस्येव लौकिकसन्निकर्षयलभातविषयमात्रोपरागेण साक्षात्कारत्वस्येव चापाद्यमात्रोपरागेण तर्कत्वस्यापि ग्रहनिर्वाहादित्यत आह । स्वयमिति ।

उक्तव्यभिचारगौरवयोः परिहारमाशङ्कते । अथेति ।

(दी०) अथ विपरीतज्ञानोत्तरप्रत्यक्षे तन्निवर्तकत्वेन विशेषदर्शनस्य हेतुत्वं तच्च तर्कस्यापीति चेत् ? अस्तु तावदापाततस्तथा, तथाप्यन्यत्र क्लृप्तप्रामाण्यादिप्रयोजकादेव तत्र प्रामाण्याद्युपपत्तौ न तस्यापि विशेषतः कारणत्वं गौरवात् । उक्तं च विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वमते सर्वत्र विशेष्यसम्बन्धासम्बन्धविशेषणज्ञानमेव प्रमाभ्रमप्रयोजकमिति वदन्ति ।

(गा०) तन्निवर्तकत्वेन। विपरीतज्ञाननिवर्तकत्वेन। तच्च। विपरीतज्ञाननिवर्तकत्वं च। तर्कस्य। विपरीतापादकतर्कस्य। तथा च क्लृप्तकारणतयैव निर्वाह इति भावः । स्वयं विशेषदर्शनहेतुत्वानुपगमादाह । आपातत इति। तथा च विशेषदर्शनसाधारणरूपेण तर्कस्य भ्रमप्रमासाधारणनिश्चयविशेषहेतुत्वम्। अन्यत्र। विपरीतज्ञानानुत्तरप्रत्यक्षस्थले। तत्र। विपरीतज्ञानोत्तरप्रत्यक्षे। तस्यापि। तर्कस्यापि। अपिकारो विशेषदर्शनसमुच्चायकः । विशेषतः । बोध्यादिमद्विशेष्यकत्वविशिष्टेन विपरीतज्ञानविरोधित्वेन विशेषधर्मेण। कारणत्वम्। विपरीतज्ञानोत्तरप्रमादिरूपप्रत्यक्षनिश्चयत्वावच्छिन्नकारणत्वम्। गौरवादिति । प्रमाभ्रमसामान्यप्रत्यक्षप्रयोजकसमाजादेव प्रमादिरूपप्रत्यक्षनिश्चयनिर्वाहादिति भावः ।

ननु किं प्रमादिसामान्यप्रयोजकम् ? न तावद्धर्मिणि विशेषणादिमत्त्वम्। अनित्यप्रमादिसाधारण्याभावस्योक्तत्वात्। नापि बोध्यादिमद्धर्मिसन्निकर्षः, अनुमित्यादौ तदहेतुत्वात् । न च तादृशध-

मेवद्वृत्तित्वेनैव तद्धेतुताया उक्तत्वाद् अनुमित्यादिसाधारण्यसम्भव इति वाच्यम् । सर्वत्र कार्योत्पत्तौ कारणतावच्छेदकोपलक्षितप्राक्सत्तायाः प्रयोजकत्वमतेऽतिप्रसङ्गात् । न च वृत्तिमत्त्वेन तस्य हेतुता योग्यादिमद्वृत्त्याश्रयत्वं प्रत्यासत्तिरिति वाच्यम् । वृत्तिमत्त्वस्यैतादृशसम्बन्धेन नियतपूर्ववर्तिताया अवच्छेदकं यद्भावत्वविषयत्वत्वादिरूपधर्मान्तरं तद्व्यापकत्वेनान्यथासिद्धिनिरूपत्वादित्यत आह् । उक्तं चेति । कारणत्वमते इति । कारणत्ववादिनां नैयायिकानां मते इत्यर्थः । तेन वक्ष्यमाणकारणताया निर्विकल्पकनित्यज्ञानानभ्युपगन्तृमीमांसकमतेऽसम्भवेऽपि न क्षतिः, तैः प्रमात्वस्य कार्यतावच्छेदकत्वानुपगमादिति ध्वनितम् । विशेष्यसम्बन्धेति । विशेष्यनिष्ठेन स्वविषयतत्तद्विशेषणवत्त्वतत्तद्विशेषणवदन्यत्वरूपसम्बन्धेन ज्ञानत्वावच्छिन्नमेवेत्यर्थः । प्रमाभ्रमेति । विशेष्यतासम्बन्धेन प्रमात्वभ्रमत्वावच्छिन्नं प्रति हेतुरित्यर्थः । तद्वद्वृत्तितद्वदन्यवृत्तिविषयतासम्बन्धेनापि भगवज्ज्ञानसाधारणेन ज्ञानत्वेन हेतुतासम्भव इति विशेष्यविषयकस्यापि भगवज्ज्ञानस्य नियमतः प्राक् सत्त्वादित्यवधेयम् । तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपस्य तत्प्रमात्वस्यार्थसमाजग्रस्तत्वेऽपि तद्वद्वृत्तिविशेष्यतासम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति तादृशसम्बन्धेन स्वविषयतद्वत्त्वसम्बन्धेन वा ज्ञानत्वेन हेतुताकल्पनमावश्यकम्, अन्यथा दोषसमवधानं विनापि तद्वत इव तदभाववतस्तत्प्रकारकज्ञानविषयतापत्तेर्दुर्वारत्वात् । प्रमास्थले विशेषसामग्र्यन्तराभावेन तद्वतस्तत्प्रकारकज्ञानविषयत्वे यत्प्रयोजकं सन्निकर्षादि तस्य प्रकृतसाधारण्यात् ।

न चैवमप्यनेकवृत्तिघटत्वादिप्रमायां घटत्वादिज्ञानस्य उक्तप्रत्यासत्त्या कारणत्वकल्पनमफलम्, तत्तद्व्यक्तिवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तादृशसम्बन्धेन स्वविषयतद्व्यक्तित्वसम्बन्धेन वा ज्ञानत्वेनावश्यकल्पनीयहेतुतयैव पटादौ घटत्वादिग्रहातिप्रसङ्गवारणसम्भवादिति वाच्यम् । तादृशसम्बन्धावच्छिन्नप्रतियोगिताकानामनन्ताभावानां पटादौ घटत्वादिग्रहाभावप्रयोजकत्वापेक्षया एकैक(१)घटादिवृत्तिविषयतासामान्यसम्बन्धावच्छिन्नज्ञा-

(१) एकैकेषामिति पुस्तकान्तरे पाठः ।

नाद्यभावानां स्वविषयघटत्वादिसम्बन्धावच्छिन्नाभावानां वा तथात्वे लाघवेन तादृशसम्बन्धेन विशेषणज्ञानहेतुतासिद्धिरित्यलं पल्लवितेन ।

(चि० ) अपरे तु यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तरापेक्षा, यत्र तु व्याप्तिस्मरणं हेतुस्तत्र न तर्कान्तरापेक्षेति नानवस्था । अस्ति च जातमात्राणामिष्टानिष्टसाधनतानुमितिहेतुव्याप्तिस्मरणं तदानीं व्याप्त्यनुभावकाभावात् । तन्मूलानुभवमूला चाग्रेऽपि व्याप्तिस्मरणपरम्परेति । यत्तु अनादिसिद्धकार्यकारणभावविरोधादिमूलाः केचित्तर्का इति। तन्न। तत्र प्रमाणानुयोगे ऽनुमाने एव पर्यवसानात् । न च व्याप्तिग्रहान्यथानुपपत्त्यैव तर्कस्यानादिसिद्धव्याप्तिकत्वज्ञानमिति वाच्यम् ८अनुपपत्तेरप्यनुमानत्वात् ।

(दी० ) तत्र प्रमाणेति । इदमनादिसिद्धत्वज्ञानस्य प्रयोजकत्वमभिमेत्य, परार्थाभिप्रायेण वा । अनुमानत्वात् । व्याप्तिग्रहाधीनप्रवृत्तिकत्वात् ।

(गा०) मूले न तर्कान्तरापेक्षेति । न तर्कमूलीभूतव्याप्त्यादिग्रहाय तर्कान्तरापेक्षेत्यर्थः । पूर्वपक्षे दर्शित तर्कानपेक्षजातमात्रबालकीयव्याप्तिज्ञाने तर्कस्य व्यभिचारमुद्धरति । अस्ति चेति । सम्भवतीत्यर्थः । व्याप्तिस्मरणम् । तर्कं विनैवेति शेषः । तस्य तर्कजन्यतावच्छेदकतयोपेतप्रत्यक्षरूपत्वशून्यत्वादिति भावः ।

ननु तदपि ज्ञानं प्रत्यक्षमूलकमेवानुभवं विना स्मरणायोगादित्यत आह । तदानीमिति । अनुभावकस्य सहचारदर्शनादेरभावात् । तथा चागत्या जन्मान्तरानुभवजनितसंस्कारोद्बोधकं कल्पयित्वा स्मरणमुपपाद्यमिति भावः ।

ननु जातमात्रीयव्याप्तिज्ञाने तर्कापेक्षाविरहेऽपि न निस्तारः, तदुत्तरं सुषुप्त्यादिना प्रवाहविच्छेदे तर्कावतारासम्भवेन वह्न्यादि-

व्याप्तिप्रत्यक्षासम्भवादित्यत आह । तन्मूलेति । अनुभवमूला चेति । एतद्द्वयानुभवमूला (१)चेत्यर्थः । अग्रेऽपीति । तर्के विनेति. शेषः ।

अनादिसिद्धेति । अनादिप्रसिद्धिप्रवाहविषयेत्यर्थः । कार्यकारणभावो धूमवह्न्यादिव्याप्तिग्राहके तर्के मूलम्, विरोधश्च भेदाभेदयोस्तादात्म्यादिना वृक्षशिंशपादिव्याप्तिग्राहके शिंशपा यदि वृक्षान्यतादात्म्या स्यात् वृक्षतादात्म्या न स्यात्, भेदाभेदयोर्विरोधादित्यादितर्केऽनादिसिद्धत्वस्य स्वरूपतः शङ्काविरोधित्वे तज्ज्ञापकप्रमाणानुयोगासम्भव इत्यतो दीधितावदमिति । अनादिसिद्धत्वज्ञानस्य । वह्न्यादावनादिसिद्धकारणताकत्वनिश्चयस्य । प्रयोजकत्वम् । विशेषदर्शनतया वह्न्यादिधर्मिकधूमकारणत्वादिविरहशङ्काविरहनिर्वाहकत्वम् ।

ननु ग्राह्याभावनिश्चयत्वतया उक्तनिश्चयेन वह्न्यादौ कारणताप्रकारकानादिप्रसिद्धिविशेष्यत्वस्यैवावगाहनं न तु कारणतायाः परार्थोभिप्रायकत्वे स्वरूपसद्विरोधित्वेऽपि नासङ्गतिः, अनादिसिद्धत्वसाधकान्तराभावेऽनुमानप्रामाण्ये विवदमानं प्रति शङ्काविरोधितया तस्य उपन्यासानर्हत्वादित्याशयेनाह । परेति । चाकारोऽनास्थायाम् । स्वरूपसद्विरोधिताया अप्रामाणिकत्वादन्वयव्यतिरेकागृहीतवतो वह्न्यादौ धूमकारणत्वसन्देहस्य दुरपह्नवतयासम्भवाच्च । वस्तुतस्तु स्वरूपसद्विरोधित्व विचारसह भवतु वा मा वा मूलं तु परार्थाभिप्रायकमेव, व्याघातेनानुमानप्रामाण्यस्य तदौपयिकव्याप्तिनिश्चयविषयताया आवश्यकत्वात्तदन्यथानुपपत्त्यैव कार्यकारणभावादेरनादिसिद्धत्वसिद्धिरित्यग्रिमशङ्काया अन्यथाऽसङ्गतेरिति ध्येयम् । मूले । तर्कस्येति । तर्कविषयस्य वह्न्यादेः । अनादिसिद्धव्यापकत्वज्ञानम् । तादृशकारणताकत्वनिश्चयः । अर्थापत्तेः पार्थक्येऽपि व्याप्तिग्रहापेक्षयाऽनवस्थाया दुरुद्धरतया ऽनुमानान्तर्भावावलम्बनमनुचितमित्याशयेन दीधितौ व्याचष्टे । अनुमानत्वादिति । प्रवृत्तिः । फलोपधानम् ।

( चि० ) अन्ये तु विपक्षबाधकतर्कादनौपाधिकत्वग्रह इति तदधीनो व्याप्तिग्रह इति । तदपि न । तर्क-

(१) एतद्द्वयप्रभवानुभवमूलेति पाठान्तरम् ।

स्याप्रमाणत्वात् । व्यभिचारादिशङ्कानिरासद्वारा प्रत्यक्षादिसहकारी स इति चेन्न । अनवस्थाभयेन तर्कं विना व्याघातात् । यत्र शङ्काविरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात् । यत्तु योग्यानामुपाधीनां योग्यानुपलब्ध्याऽभावग्रहः, अयोग्यानां तु साध्याव्यापकत्वसाधनव्यापकत्वसाधनादभावग्रह इत्यनौपाधिकत्वं मनसा सुग्रहमिति । तत्तुच्छम् । अनुमानेन तत्साधनेऽनवस्थानात् प्रमाणान्तरस्याभावात् ।

(दी०) व्यभिचारशङ्केति । द्वारेण द्वारिणो नान्यथासिद्धिरिति भावः ।

(गा०) तर्कस्य प्रमाणविधया अनौपाधिकत्वग्राहकत्वं स्वतस्तत्सहकारितया(१) वा तत्राद्यं दूषयति मूले । तर्कस्येति । द्वितीयं शङ्कते । व्यभिचारशङ्केति । व्यभिचारः सोपाधित्वम् । अग्रेतनमपि व्याप्तिपदमनौपाधिकत्वपरं शङ्काविरहेण तर्कस्यान्यथासिद्धिमाशङ्क्याह दीधितौ । द्वारेणेति । मूले । व्यभिचारादिति । तर्कस्य व्याप्तिग्रहकारणत्वमन्येषामनुमतमित्याशयेन शङ्कानिवर्तकतयाप्रयोजकत्वस्य तथात्वे व्याप्तिग्रह एव तथास्तामिति भावः । अनौपाधिकत्वं तर्कं विनैव गृह्यते अत एव तर्कानपेक्षो व्याप्तिग्रह इति मतान्तरमाह । यत्त्विति । साधनात् । प्रमाणान्तरेण निश्चयात् । अभावग्रहः । उपाधित्वाभावग्रहः । इति । विरोधिशङ्कानिवृत्तौ । अनौपाधिकत्वं मनसा सुग्रहम् । प्रमाणान्तरस्य तत्राभावात् । अनुमानभिन्नस्य प्रमाणस्य तत्राभावादित्यर्थः ।

व्यभिचारनिश्चयाभाव एव व्याप्तिग्रहेऽपेक्षितो न तु तच्छङ्काविरहोऽपि तथा च तर्कस्यानपेक्षणान्नानवस्थेति वादिनां मतमाक्षिपति । ये चेति ।

(चि०) ये चानुकूलतर्कं विनैव सहचारादिदर्शन-

(१) व्यभिचारशङ्कानिवर्तकतयेति पुस्तकान्तरे पाठः ।

मात्रेण व्याप्तिग्रहं वदन्ति, तेषां पक्षेतरत्वस्य साध्यव्यापकत्वग्रहेऽनुमानमात्रमुच्छिद्येत। अनुमानमात्रोच्छेदकत्वादेव पक्षेतरो नोपाधिरिति चेत् ? भ्रान्तोऽसि, न हि वयमुपाधित्वेन तस्य दोषत्वमाचक्ष्महे, साध्यव्यापकत्वेन तद्व्यतिरकात् पक्षे साध्यव्यावर्तकतया व्यापकव्यतिरेके व्याप्यव्यतिरेकस्य वज्रलेपत्वाच्च । अपि च करवह्निसंयोगः शरीरातिरिक्तातीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वान्न साधकम् । तत्र व्याप्तस्य पक्षधर्मत्वे किमप्रयोजकं नाम । तस्माद्विपक्षबाधकतर्काभावान्न तत्र व्याप्तिग्रह इति अप्रयोजकत्वामिति ॥

( दी० ) अनुमानमात्रेति । अनिश्चितसाध्यपक्षके सर्वत्र सम्भवित्वात् पक्षे साध्यनिर्णयेऽनुमानवैयर्थ्यात् उपाधित्वेन स्वव्यभिचारेण व्यभिचारोन्नायकत्वेनानुमानमात्रोच्छेदकताज्ञानमेव साध्यव्यापकताबुद्धिं विरुन्ध्यादित्याशङ्क्याह । अपि चेति । करवह्नीति । परमतेनेदम् । स्वमते तु वाय्वादौ स्पर्शादिना रूपादिसाधने शरीरातिरिक्तविशेषणाप्रक्षेपेण वा तद् बोध्यम् ॥

(गा० ) अनुमानमात्रोच्छेदे हेतु पूरयति दीधितौ । अनिश्चितेति । पक्षे साध्यनिश्चये व्यभिचारनिश्चयेन तदितरत्वेन साध्यव्यापकताग्रहः सम्भवतीत्यतोऽनिश्चितसाध्यकानुसरणम् । सम्भावित्वादिति । पक्षेतरत्वे उपाधित्वग्रहस्येत्यादिः ।

(१) नन्वेवमपि नानुमानमात्रोच्छेदः, निश्चितसाध्य एव सिषाधयिषया तत्सम्भवादित्यत आह । पक्षे इति । तथा च सकलानुमानप्रामाण्योच्छेद इति मूलार्थ इति भावः । सत्प्रतिपक्षोत्थापकस्वरूपोपाधित्वेन दूषकतायाः किन्त्वित्यादिना स्वयमपि वक्ष्यमाणतया न हि वयमुपाधित्वेनेति ग्रन्थासङ्गतिरित्यतो व्याचष्टे । उ-

पाधित्वेनेति । स्वव्यभिचारेणेत्यादि । साध्यव्यभिचारानुमापकव्यभिचारप्रतियोगित्वेनेत्यर्थः। एवं च शङ्कास्थले नोपाधिरित्यत्राप्येतदेवोपाधित्वं बोध्यम् । मूले साध्यव्यापकत्वेन तद्व्यतिरेकादिति । साध्यव्यापकत्वेन निश्चीयमानस्य तस्य पक्षे व्यतिरेकनिश्चयादित्यर्थः। साध्यव्यावर्तकतया । साध्यबुद्ध्यनुत्पादप्रयोजकतया। तादृशनिश्चयस्य किंविषयया विरोधित्वमित्याशङ्कायामाह। व्यापकेति । धर्मलेपस्वात्। आवश्यकत्वात्। तथा च व्यापकव्यतिरेकनिश्चयस्य तदभावव्याप्यवत्ताज्ञानमुद्रयैव तद्वत्ताग्रहविरोधित्वमिति भावः । अनुमानमात्रोच्छेदकताज्ञानं पक्षेतरत्वपक्षकसाध्यव्यापकत्वापादकतर्करूपम्। परमतेनेति । नैयायिकनये शक्तेरप्रसिद्ध्या तदतिरिक्तत्वघटितसाध्याप्रसिद्धेरिति भावः। तत्। अप्रयोजकत्वम्॥

इति अनुमानगादाधर्यां तर्कप्रकरणम् ॥

## अथ व्याप्त्यनुगमप्रकरणम् ।

(चि०) उक्तव्याप्तिप्रकारेष्वन्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुर्लाघवात् । अतो नाननुगमः । अनौपाधिकत्वं तल्लक्षणम् । नन्वेवमुपाधिरसिद्ध्युपजीव्यत्वेन व्यभिचारवद्धेत्वाभासान्तरं स्यान्न तु व्याप्त्यभाववत्त्वेनासिद्धिरिति चेत् ? तज्ज्ञानमुपजीव्यमपि न स्वतो दूषकम् । नान्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्तिज्ञाने प्रतिबन्धकम्, अतिप्रसक्तेः । व्यभिचारज्ञानस्य तद्धेतुत्वात्तद्धीस्तथा, न चानौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुरित्युक्तम् । तथा च व्यभिचारज्ञानद्वारा स दूषकः । एवं च परमुखनिरीक्षकतया सिद्धसाधनवन्न पृथक् । न चैवमव्यभिचारस्य व्याप्तित्वे व्यभिचारस्तदभाववत्त्वेनासिद्धिः स्यादिति वाच्यम् । साध्याभाववद्वृत्तित्वं हि व्यभिचारस्तदभावश्च नाव्यभिचारः, केवलान्वयिन्यभावात् । किं तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यम् । न चानयोः परस्परविरहत्वमिति ॥

(दी०) उक्तव्याप्तीति । प्रतियोग्यसामानाधिकरण्यादिविशेषणविरहेण लाघवात् । अथ संयोगाभावस्येव संयोगवद्भेदस्यापि हेतुसामानाधिकरण्यग्रहे ऽप्यनुमितिदर्शनात्तत्रापि तदवश्यं निवेशनीयमिति क्व लाघवम् ?

(गा०) लाघवादित्यस्य हेतुं पूरयति । प्रतियोगीति । आदिपदात् प्र-

दिति भावः । अज्ञायमानस्य तत्कालावच्छिन्नतज्ज्ञानविषयत्वाभाववत्त्वं न तु तत्कालीनतज्ज्ञानस्याविषयत्वम्, प्रतियोगिसामानाधिकरण्याद्यनुपस्थितिदशायां तत्कालीनतज्ज्ञानाप्रसिद्ध्याऽनुमित्यनुपपत्तेः ।

न च ज्ञानांशे तत्पुरुषीयत्वस्यावश्यं निवेशनीयतया यादृशशरीरावच्छिन्नस्य पुंसः कदाचिदपि कस्मिंश्चिदप्यभावे प्रतियोगिसामानाधिकरण्यग्रहो न जातस्तस्यानुमित्यनुपपत्तिः, तदीयतज्ज्ञानाप्रसिद्धेरिति वाच्यम् । शरीरविशेषमनन्तर्भाव्य तत्तदात्मसमवेतत्वरूपतत्पुरुषीयत्वस्यैव निवेशनीयतयाऽप्रसिद्ध्यनवकाशात् । तत्कालावच्छिन्नो यः स्वविषयकप्रतियोगिसामानाधिकरण्यग्रहाविरहस्तद्वत्तत्पुरुषकत्वस्य तत्कालावच्छिन्नतत्पुरुषीयत्वस्वाविषयकत्वोभयाभाववत्प्रतियोगिसामानाधिकरण्यप्रकारकज्ञानसामान्यकत्वस्य तत्कालावच्छिन्नतत्पुरुषीयज्ञाननिरूपितत्वस्ववृत्तित्वोभयाभाववत्प्रतियोगिसामानाधिकरण्यप्रकारतानिरूपितविशेष्यतासामान्यकत्वस्य वा अभावविशेषणत्वोपगमात् ।

एतेन यस्मिन्नभावे कस्यापि प्रतियोगिसामानाधिकरण्यभ्रमो नासीत्तद्विषयकतज्ज्ञानस्याप्रसिद्धावपि न साध्यतावच्छेदके हेतुमन्निष्ठतत्प्रतियोगितावच्छेदकत्वज्ञानदशायामनुमित्यापत्तिः । व्यभिचारज्ञानदशायामपि तथाविधयत्किञ्चिदभावप्रतियोगितावच्छेदकत्वाभावस्य ग्रहादनुमित्यापत्तिरतो यावदिति ।

यद्यप्यत्र कालपुरुषाणां विशिष्य निवेशेनाननुगमो दुर्वारः । एवं संयोगी सत्त्वादित्यादौ द्रव्ये प्रतियोगिसमानाधिकरणत्वेन ज्ञायमानसंयोगाद्यभावभिन्नाभावसामान्यप्रतियोगितानवच्छेदकत्वस्य संयोगत्वादौ सुग्रहत्वादतिप्रसङ्गः । हेत्वधिकरणसामान्ये प्रतियोगिसमानाधिकरणत्वेन ज्ञायमानान्यत्वनिवेशे कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगाद्यात्मकाभावेऽपि तस्याज्ञातत्वादनुमित्यनुपपत्तिरतो यद्धेत्वधिकरणे प्रतियोगिसमानाधिकरणत्वेन ज्ञायमानो यस्तद्धेत्वधिकरणनिष्ठतदीयाधिकरणताभिन्नहेतुमन्निष्ठाधिकरणतानिरूपकाभावप्रतियोगितानवच्छेदकत्वग्रहो हेतुर्वाच्यः, तथा च यत्तत्त्वाननुगमादप्यननुगमः । स्वप्रतियोग्यधिकरणत्वेनाज्ञायमानहेत्वधिकरणवृत्तित्व-

मभावविशेषणं तु यद्धेत्वादिकल्पानुसारेणैव सङ्गच्छते । तथापि स्फुटत्वाच्चमुपेक्ष्यान्यद्दोषमाह । तादृशाभावेत्यादिना ।

( दी० ) तादृशाभावग्रहो हि न हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वेन रूपेण, प्रतियोगिसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वग्रहे तदसम्भवात् । नापि प्रातिस्विकरूपेण, जन्मसहस्रेणाप्यसम्भवात् । नापि रूपान्तरेण, वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य धूमसामानाधिकरण्यभ्रमेऽपि वह्नित्वानवच्छिन्नप्रतियोगिताकधूमसमानाधिकरणनिखिलाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादप्यनुमितिप्रसङ्गात् ।

( गा० ) तादृशाभावग्रहः । तादृशहेतुसमानाधिकरणयावदभावप्रतियोगितावच्छेदकत्वाभावग्रहः । अवच्छेदकत्वत्वेन रूपेण । प्रतियोग्यवगाही अनुमितिहेतुरिति शेषः । तादृशावच्छेदकत्वत्वेन प्रतियोग्यवगाहित्वं च तद्धर्मपर्याप्तं प्रतियोगितावच्छेदकतावगाहित्वम्, अतो न हेतुमन्निष्ठघटाभावप्रतियोगितानवच्छेदकाभिन्न्यादिज्ञानादनुमितिप्रसङ्गः । तदसम्भवात् । तादृशस्य ग्रहस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावावगाहित्वेनासम्भवात् । सामान्याभावग्रहे सामान्यघटितविशेषरूपावच्छिन्नवत्तानिश्चयस्य विरोधित्वादिति भावः । तथा चैतावान् प्रयासो विफल एवेति भावः ।

प्रातिस्विकरूपेण । तत्तदभावप्रतियोगितावच्छेदकत्वत्वेन प्रतियोगिविषयकोऽभावकूटग्रह एव हेतुरिति शेषः । असम्भवादिति । तादृशग्रहस्यैवासम्भवादित्यर्थः । तत्तदभावत्वेन तावदभावानां युगपदनुपस्थितेरिति भावः । रूपान्तरेण । येन केनापि रूपेण तावदभावप्रतियोगितावच्छेदकत्वप्रतियोगिकाभावग्रहो हेतुरिति । शेषः । तथा च विशिष्य प्रतियोगितावच्छेदकं न निवेश्यमिति भावः ।

यद्यप्येवमपि साध्याभावे प्रतियोगिसामानाधिकरण्यग्रहकालीनानुमित्युत्पादकस्य प्रतियोग्यसमानाधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावमात्रग्रहस्यासङ्ग्रहः, तादृशप्रतियोगिता-

यच्छेदकत्वाभावस्य प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानो यो वस्तुगत्या प्रतियोगिसमानाधिकरणो हेतुमन्निष्ठः कश्चिदन्योऽभावस्त-त्प्रतियोगितावच्छेदकत्वाभावत्वविरहात् तथापि प्रतियोगिसमाना-धिकरणत्वेनाज्ञायमानप्रतियोगिसमानाधिकरणाभावान्तरप्रतियो-गितावच्छेदकत्वस्यापि साध्याभिन्नान्याभावप्रतियोगितावच्छेदक-त्वत्वादिना ऽभावावगाहिनः प्रतियोग्यसमानाधिकरणहेतुसमाना-धिकरणाभावप्रतियोगितानवच्छेदकत्वज्ञानादेव तदानुमितिरवगन्त-व्येत्यभिमानः ।

तादृशज्ञानस्य प्रतियोग्यसामानाधिकरण्यघटितव्यभिचारज्ञा-नाविरोधितया व्यभिचारधीदशायामतिप्रसङ्गं पुनः स्वयमाह । वह्नित्वेति । भ्रमेऽपीत्येतेनानुमितावित्यापत्तिशङ्काव्युदासाय व्यभिचारज्ञानसत्त्वं दर्शितम् । इति ज्ञानादिति । एतादृश-ज्ञानस्य विशेषाभावावगाहित्वेन दर्शितव्यभिचारग्रहाविरो-धित्वेन तद्दशायामुत्पत्तौ बाधकाभावादिति भावः । अनुमिति-प्रसङ्गादिति । वह्नित्वावच्छिन्नाभावस्य हेत्वसमानाधिकरणतया उक्तग्रहविषयस्याप्यभावस्य हेतुसमानाधिकरणयावदभावप्रतियो-गितावच्छेदकत्वप्रतियोगिकत्वादिति भावः ।

( दी० ) न च हेतुसमानाधिकरणत्वेन ज्ञायमाना इति वाच्यम् । वह्नित्वे धूमसमानाधिकरणरासभाद्यभावप्रतियोगिता-वच्छेदकत्वभ्रमेऽप्युक्तरूपेण तथा ग्रहसम्भवात् । धूमाधिकर-णान्तरानुपस्थितौ वह्नित्वे रासभत्वादौ च तादृशभ्रमोत्पादेऽपि रासभादेरिव वह्नेरप्यननुमानाच्च । एवं वह्नित्वावच्छेदेन शुक्ल-त्वाभावभ्रमदशायां शुक्लप्रतियोगिका वह्नीतरप्रतियोगिकाश्च ये धूमसमानाधिकरणाभावास्तत्प्रतियोगितानवच्छेदकं वह्नित्व-मिति ग्रहेऽपि ।

( गा० ) हेतुसमानाधिकरणत्वेन ज्ञायमाना इति । तथा चोक्त-व्यभिचारज्ञानदशायां हेतुसमानाधिकरणत्वशून्यस्यापि वह्नित्वा-वच्छिन्नाभावस्य तेन रूपेण ज्ञायमानत्वाद्वह्नित्वस्य तत्प्रतियोगि-तावच्छेदकत्वात्तत्प्रतियोगितावच्छेदकत्वाभावानवगाहिन उक्त-

शालानानुमित्यापत्तिरिति भावः । उक्तरूपेण । हेतुमन्निष्ठवह्नित्वानवच्छिन्नाभावप्रतियोगितावच्छेदकत्वाभावेन । तथा ग्रहसम्भवात् । तादृशहेतुसमानाधिकरणत्वेन ज्ञायमानप्रतियोगिसमानाधिकरणत्वेनाज्ञायमानयावदभावप्रतियोगितावच्छेदकत्वाभावग्रहसम्भवात् । व्यभिचारग्रहे वास्तववह्नित्वावच्छिन्नाभावाभानेन हेतुमद्वृत्तित्वेन ज्ञायमानसकलाभावानां वह्नित्वानवच्छिन्नाभावत्वेन भानादिति भावः । तथा च तत्रानुमित्यापत्तिरिति भावः ।

वास्तवहेतुसामानाधिकरण्यनिवेशपक्षे यत्र नातिप्रसङ्गः तत्रापि तेन रूपेण ज्ञायमानत्वनिवेशपक्षेऽतिप्रसङ्ग इत्याह । धूमाधिकरणेति ।। तादृशभ्रमोत्पादेऽपि । एतद्धूमाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वाभावेन निरुक्तयावदभावप्रतियोगितावच्छेदकत्वाभावभ्रमोत्पादेऽपि । धूमाधिकरणान्तरानुपस्थित्या एतद्धूमसमानाधिकरणाभावानामेव हेतुसमानाधिकरणत्वेन ज्ञायमानत्वादिति भावः । भ्रमत्वकथनेन रासभादेरनुमानं दृढीकृतम् । बाधितार्थविषयकलाघवज्ञानादिरूपदोषं विना अभ्रान्तस्य व्यभिचारिलिङ्गकानुमित्यनुदयात् । रासभादेरिवेति दृष्टान्तेन च तदा वह्न्यनुमित्यापत्तिशङ्का निरस्ता । अनुमितिप्रयोजकाविशेषे कस्यचिन्नानुमितिः कस्यचिच्चानुमितिरिति वक्तुमशक्यत्वात् ।

हेतुसमानाधिकरणाभावत्वमात्रेण रासभाद्यभावावगाहितत्प्रतियोगितावच्छेदकत्वग्रहेऽपि हेतुसमानाधिकरणवह्नित्वानवच्छिन्नाभावत्वाविना तादृशाभावविषयकतत्प्रतियोगितानवच्छेदकग्रहादिव वास्तववह्नित्वावच्छिन्नाभावत्वेन तादृशाभावविषयकव्यभिचारज्ञानदशायामपि रूपान्तरेण तादृशाभावविषयकतत्प्रतियोगितानवच्छेदकत्वग्रहादनुमित्यापत्तिः सम्भवतीति न्यूनताभङ्गाय तामपि दर्शयति । वह्नित्वावच्छेदेनेति । वह्नौ शुक्लत्वग्रहे हेत्वधिकरणे वह्नित्वावच्छिन्नाभावे गृह्यमाणे हेतुमन्निष्ठशुक्लाभावप्रतियोगितावच्छेदकत्वस्यापि वह्नित्वे ग्रहसम्भवाद्वक्ष्यमाणग्रहासम्भव इति वह्नित्वावच्छेदेन शुक्लत्वाभावभ्रमदशानुसरणम् । सति च हेतुमति वह्नित्वावच्छिन्नाभावभ्रमे इति पूरणीयम् । प्रकृतग्रहस्य हेतुसमानाधिकरणत्वेन ज्ञायमानयावदभावान्तर्गतवह्नित्वावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वावगाहितानिर्वाहाय शुक्लप्रतियोगिका इति । अभावे, हेतुसामानाधिकर

पर्याप्तत्वविशेषणेनाप्यस्याव्यावर्त्यतोपपत्तये धूमसमानाधिकरणेति । तत्प्रतियोगितानवच्छेदकम् । तदन्यतरप्रतियोगितानवच्छेदकम् । ग्रहेऽपि । अनुमानादित्यनुषज्यते । तथा च तत्र तत्रानुमित्यापत्तिरिति भावः ।

नन्वित्यादिपूर्वपक्षे समाधत्ते । मैवमिति ।

( दी० ) मैवम् । प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधिग्रहविषयत्वेन तेषां तादृशावच्छेदकत्वग्रहविरोधित्वेन तद्बुद्धीनां वानुगमात् ।

( गा० ) तेषाम् । साध्यतावच्छेदकविशेषणतयानुमितिजनकग्रहविषयाणामभावानाम् । विरोधिग्रहविषयत्वं यद्रूपविशिष्टविषयकग्रहत्वावच्छेदेन विरोधिता तद्रूपविशिष्टत्वम् । अतस्तादृशग्रहविषयत्वस्य यथाश्रुतस्य केवलान्वयित्वेऽपि नातिप्रसङ्गः । अत्र यत्पदार्थनिवेशेनाननुगमाद् विरोधिग्रहविषयविषयकज्ञानत्वेन विरोधिज्ञानहेतुत्वस्य च शिरोवेष्टनेनेत्यादिन्यायेनायुक्तत्वाद्विरोधित्वेनैव जनकज्ञानमनुगमयति । तादृशेति । यद्यप्युक्तव्यभिचारावगाहिसमूहालम्बनधीयराधित्वमतिप्रसक्तं तथापि तादृशग्रहसामान्यप्रतिबन्धकत्वस्य विवक्षितत्वान्न दोषः । तच्च तादृशालौकिकग्रहत्वव्यापकप्रतिबध्यताकत्वम् । तादृशावच्छेदकत्वविषयितावच्छिन्नप्रतिबध्यताकत्वविवक्षयाऽतिप्रसङ्गवारणमनुपादेयम् । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणवह्न्यभावेतराभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नविषयकग्रहत्वावच्छिन्ननिरूपितां प्रतिबन्धकतामादायातिप्रसङ्गस्य दुर्वारत्वात् । तादृशावच्छेदकत्वत्वावच्छिन्नविषयितासामान्यावच्छिन्नप्रतिबध्यतानिवेशे गौरवात् । तादृशावच्छेदकत्वग्रहत्वपर्याप्तप्रतिबध्यतावच्छेदकतानिवेशेऽपि पर्याप्तिपदार्थविवेचनाया गौरवात् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामान्याभावग्रहस्य प्रतियोगिवैयधिकरण्यानवगाहिज्ञानेऽपि विरोधितया प्रतियोगिवैयधिकरण्यविषयिताघटितधर्मस्य तत्प्रतिबध्यतावच्छेदकत्वायोगात्तादृशज्ञानासङ्ग्रहाच्च । प्रतिबन्धकत्वं च प्रतिबन्धकतावच्छेदकीभूता या साध्य-

तावच्छेदकविषयतानिरूपितासाध्यविषयतानिरूपितानुयोगित्वविषयता तद्वत्त्वमतो न तादृशावच्छेदकत्वाभावव्याप्यवत्ताज्ञानसाधारण्यम् । तादृशावच्छेदकत्वाभावव्याप्यवद्वृत्त्यभावान्याभावप्रतियोगितावच्छेदकत्वाभावत्वादिप्रकारेण, व्याप्यवत्ताज्ञानीयव्याप्तिधर्मितावच्छेदकविषयितान्तर्गतानुयोगित्वविषयिताया व्यभिचारज्ञानप्रतिबन्धकतावच्छेदककोटौ प्रयोजनविरहेणानिवेशात् ।

(१) [न च निरुक्तप्रतियोगितावच्छेदकभेदतत्त्वाभावयोरिव तद्व्याप्यधर्मस्यापि साध्यतावच्छेदकविशेष्यकज्ञानादनुमितिस्वीकारः सम्भवति व्यभिचारज्ञानविरोधिताया अविशेषादिति वाच्यम् । व्यभिचारज्ञानविरोधिनो ऽभावप्रतियोगितावच्छेदकत्वादिज्ञानादनुमित्यनुत्पादसम्भावनाया यदि चेत्यादिना ग्रन्थकृताग्र दर्शनीयत्वद्वारणप्रकारस्यैवोक्तज्ञानादनुमित्यनुत्पादे एतद्वारणप्रकारस्याप्यनुसरणीयत्वात् । व्यापकतावच्छेदकत्वज्ञानस्य व्यभिचारज्ञानप्रतिबध्यत्वप्रतिबन्धकत्वोभयवत्त्वेन तज्ज्ञानस्य तत्प्रतिबध्यत्वेनापि विशेषात् । व्यभिचारनिश्चयाप्रतिबध्यस्यानुमितिहेतुत्वे व्यभिचारनिश्चयद्वितीयक्षणे तादृशज्ञानोत्पत्त्या तत्तृतीयक्षणेऽनुमितिप्रसङ्गात् ।]

अथ व्यापकसामानाधिकरण्यरूपतदभावव्याप्तिज्ञानप्रतिबन्धकतायां व्याप्तिधर्मितावच्छेदकधर्मविशेषविषयितानिवेशनमावश्यकम् । व्यापकत्वनिरूपकतावच्छेदकतया भासमानधर्मावच्छिन्नांशे एव तादृशसामानाधिकरण्यावगाहिताया प्रतिबन्धकतायां तन्त्रत्वात् । एवं च तादृशव्याप्त्यवगाहिनो दर्शितज्ञानादप्यनुमितिप्रसङ्गो दुर्वारः । एवमुक्तावच्छेदकत्वव्यापकाभाववत्ताज्ञानस्यापि प्रतिबन्धकतावच्छेदकीभूतकथितानुयोगित्वविषयताश्रयत्वात् ततोऽप्यनुमितिप्रसङ्गः ।

न चानुयोगित्वविषयितायामवच्छेदकत्वत्वावच्छिन्नविषयितानिरूपितत्वनिवेशान्न व्यापकाभाववत्ताज्ञानादनुमितिप्रसङ्ग इति वाच्यम् । तादृशावच्छेदकत्वव्यापकवद्वृत्त्यभावातिरिक्ताभावप्रतियोगितावच्छेदकत्वाभाववद्वृत्तित्वमिति ज्ञानीयानुयोगित्वविषयितायामवच्छेदकत्वत्वावच्छिन्नविषयितानिरूपितत्वस्याप्यक्षतत्वात् ।

---

(१) [ ] पुस्तकान्तरे पाठोऽयं नोपलभ्यते ।

यद्यपि तत्समानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपव्यापकताविशिष्टधर्मान्तरावच्छिन्न(१)धर्म्यभाववत्ताग्रहो न तद्वत्ताग्रहविरोधी धूमव्यापकतावच्छेदकधर्मवन्महानसीयवह्निर्नास्तीति बुद्धावपि धूमवत्ताज्ञानोदयात्। तथापि तद्वन्निष्ठभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वग्रहधर्मितावच्छेदकपर्याप्तप्रतियोगितावच्छेदकताकाभावग्रहस्यैव तादृशव्यापकत्वसहिततद्धर्मितावच्छेदकधर्मान्तरावच्छिन्नाभावग्रहस्य तद्वत्ताग्रहविरोधित्वमनुभवसिद्धमेव।

न च तादृशतद्व्यापकताग्रहविशिष्टतद्धर्मितावच्छेदकावच्छिन्नाभाववत्ताज्ञानप्रतिबन्धकतयैवोपपत्तेर्व्यापकत्वविशिष्टतद्धर्मितावच्छेदकावच्छिन्नाभावज्ञानस्य पृथक् प्रतिबन्धकत्वं न कल्प्यते, व्यापकताविषयकज्ञानान्तरविशिष्टज्ञानप्रतिबन्धकतामादाय च नातिप्रसङ्गः, ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताया एव विवक्षणीयत्वात्। एवं व्यापकसामानाधिकरण्यरूपतदभावव्याप्त्यवगाहिपूर्वोक्तज्ञानादपि नानुमितिप्रसङ्गः। ग्राह्याभावे यद्धर्मव्यापकता गृह्यते स्वतन्त्रतद्वत्ताज्ञानस्यापि प्रतिबन्धकतया तत्प्रतिबन्धकतावच्छेदकग्राह्याभावधर्मिकतद्धर्मव्यापकताग्रहविशिष्टतद्धर्मवत्ताज्ञानत्वस्य व्यापकसामानाधिकरण्यरूपतदभावव्याप्तिविशिष्टवत्ताज्ञानसाधारण्येन ईदृशविशिष्टज्ञानस्य पृथक् प्रतिबन्धकत्वाभावात्। ज्ञानद्वयसाधारणप्रतिबन्धकताया उक्तविशेषणेनैव वारणादिति वाच्यम्। यद्रूपावच्छिन्ने निरुक्तव्यापकत्वं गृहीतं विशेषणान्तरविशिष्टतद्रूपावच्छिन्नाभावग्रहवारणाय तद्धर्मनिष्ठप्रतियोगितावच्छेदकत्वपर्याप्त्यवगाहित्वस्य तद्धर्मपर्याप्तप्रकारताविशेष्यावच्छेदकताकत्वस्य वा निवेशनीयतया व्यापकताविशिष्टतद्धर्मितावच्छेदकविशेषावच्छिन्नाभावग्रहस्य पृथक् प्रतिबन्धकताया आवश्यकत्वात्।

अस्तु वा ज्ञानद्वयदर्शितविशिष्टज्ञानयोरनतिप्रसक्तेन येन केनचिद्रूपेणैकमेव प्रतिबन्धकत्वं तथापि कथितानुयोगित्वविषयिताया अवच्छेदकत्वत्वावच्छिन्नविषयितानिरूपितत्वनिवेशे वक्ष्यमाणावच्छेदकभेदासङ्गतिः। एवं शुद्धतदभावव्याप्तिविशिष्टज्ञानतद-

(१) धर्मान्तरावच्छिन्नेति पुस्तकान्तरे नास्ति।

भावव्याप्तिविशिष्टावच्छेदकताविशेषाभावत्वादिना विशिष्टज्ञानसाधारणस्य निश्चयत्वादेः प्रकारतावच्छेदकतापर्याप्त्यधिकरणतत्तद्धर्मविशेषाणां निवेशस्य दुर्निर्वचतया तन्निवेशस्य पृथक् प्रतिबन्धकताकल्पनस्यावश्यकतया । तादृशावच्छेदकत्वाभावव्याप्यावच्छेदकताविशेषाभावज्ञानीयसाध्यतावच्छेदकविषयतानिरूपिताभावविषयतानिरूपितानुयोगित्वाविषयताया अपि निरुक्तज्ञानप्रतिबन्धकतावच्छेदककोटिप्रवेशोऽक्षत एवेति तादृशज्ञानादनुमितिप्रसङ्गो दुर्वार एव ।

अत्राहुः । तादृशावच्छेदकत्वग्रहत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकविषयित्वावच्छिन्नत्वेन तादृशग्रहप्रतिबन्धकताया विशेषणीयतया न तादृशावच्छेदकत्वाभावव्याप्यवत्त्वादिज्ञानसाधारण्यं तदभावव्याप्यवत्ताज्ञानीयविषयितायास्तद्वत्ताज्ञानप्रतिबध्यतानवच्छेदकत्वात् । न चैवं तादृशप्रतिबध्यताशालिज्ञानत्वेनैव हेतुतास्तु किं प्रतिबन्धकतानिवेशनेति वाच्यम् । प्रतिबन्धकत्वानिवेशे संशयात्मकतादृशप्रतियोगितानवच्छेदकत्वग्रहादप्यनुमित्यापत्तेः । दर्शितोभयविधज्ञानसाधारणस्य निश्चयत्वस्य दुर्निर्वचतया तन्निवेशेन संशयवारणासम्भवात् ।

न च तादृशप्रतिबन्धकताशालिज्ञानत्वेन हेतुत्वे तादृशप्रतियोगितानवच्छेदकं वह्नित्वमित्याकारकात् साध्यसमानाधिकरणहेतुमत्पक्षानवगाहिनः स्वातन्त्र्येण तदवगाहिसमूहालम्बनाच्च ज्ञानादनुमित्यापत्तिः, तद्वारणायैव पक्षविशेष्यतानिरूपितहेतुविषयतानिरूपितसामानाधिकरण्यविषयतानिरूपितसाध्यविषयतानिरूपिता या तादृशप्रतिबन्धकतावच्छेदकीभूतसाध्यतावच्छेदकविषयता तच्छालिज्ञानत्वेनैव हेतुता वाच्या । तथा च तादृशसंशयवारणमशक्यमेव । संशयस्याप्रतिबन्धकत्वेऽपि प्रतिबन्धकतावच्छेदकविषयिताशालित्वादिति वाच्यम् । स्वावच्छेदकतादृशसाध्यतावच्छेदकविषयितावत्त्वविशेषणताविशेषोभयसम्बन्धेनैव तथाविधप्रतिबन्धकतावत्त्वेनैव हेतुतायाः स्वीकरणीयतया संशयादितोऽनुमित्यापत्तिवारणसम्भवात् । तदभावव्याप्यवत्तानिश्चयप्रतिबन्धकतावच्छेदकगर्भे व्याप्तेर्धर्मितावच्छेदकीयविषयतानिवेशविरहसम्भवे तु तादृशसाध्यतावच्छेदकनिष्ठविषयतानिरूपिताभावविषयतानिरूपित-

स्वावच्छेदकीभूतावच्छेदकत्वत्वातिरिक्तप्रकारत्वानिरूपितावच्छेदक-त्वविषयतावत्त्वघटितोभयसम्बन्धेनैव(१)तादृशग्रहप्रतिबन्धकतायाः कारणतावच्छेदकत्वं स्वीकरणीयं प्रतिवध्यता तु न निवेशनीया। अ-वच्छेदकभेदग्रहे चावच्छेदकत्वमपि पारतन्त्र्येण स्वावच्छिन्नप्रतियो-गिताकत्वसम्बन्धेन भेदांशे प्रकारतया भासते। तथा च तादृशभे-दात्मकाभावविषयतानिरूपितप्रतियोगितावच्छेदकत्वत्वातिरिक्त-प्रकारत्वानिरूपिता या प्रतिबन्धकतावच्छेदकीभूतावच्छेदकत्वविष-यता तद्वत्त्वमक्षतमेव।

अथ वा स्वावच्छेदकीभूतावच्छेदकत्वविषयतायां तादृशा-भावविषयतानिरूपितविषयतानिरूपितत्वमेव निवेश्यं न तु ता-दृशाभावविषयतानिरूपितत्वम्, अवच्छेदकत्वात्यन्ताभावग्रहे तादृ-शाभावविषयतानिरूपितानुयोगितात्मकसम्बन्धनिष्ठसांसर्गिकवि-षयतानिरूपितत्वमवच्छेदकत्वविषयतायामक्षतमेवेति न तादृशग्र-हासङ्ग्रहः। ज्ञानद्वयसाधारणप्रतिबन्धकताविशेषाणां वारणं पूर्ववत्।

(दी०) विरुणद्धि च सामान्याभावबोधो ऽपि सामान्य-घटितविशेषवत्ताबुद्धिम्। सत्यां हि घटो नास्तीति बुद्धौ जा-त्वपि नीलो घटो ऽस्तीति बोधानुदयात्। तत् कस्य हेतोः? तद्विशिष्टप्रतियोगिमत्ताबुद्धिं प्रति तदवच्छिन्नप्रतियोगिताकाभाव-बुद्धेर्विरोधित्वात्। अवगाहते च नीलघटवत्ताबुद्धिरपि घटत्व-विशिष्टतद्वत्ताम्। अत एव अवच्छेदकतत्त्वयोरन्योन्यात्यन्ताभा-वयोरुपसङ्ग्रहः। हेत्वाभासे च वक्ष्यमाणरीतिरिहाप्यनुसन्धेया।

*(गा०) ननु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रति-*योगितानवच्छेदकं वह्नित्वमित्याकारकज्ञानस्य प्रतियोगिवैयधिकर-ण्याविषयकतादृशज्ञानस्य च प्रतियोग्यनधिकरणत्वप्रकारताभिन्ना या हेतुप्रकारताभिन्नप्रकारता तदनिरूपिता या हेतुप्रकारतानिरूपि-ताधिकरणविषयता तदतिरिक्तप्रकारत्वानिरूपिता या अधिकरणप्र-

---

(१) स्वावच्छेदकीभूतावच्छेदकत्वविषयतावत्त्वघटितोभयस-म्बन्धेनैवेति..पाठान्तरम्।

कारतानिरूपिता आधेयत्वविषयता तदतिरिक्तप्रकारत्वानिरूपिता आधेयताप्रकारतानिरूपिता या अभावत्वावच्छिन्नविषयतेत्येवं क्रमेण विषयताकूटं निवेश्यानुगमः सम्भवति, उभयसाधारणनिश्चयत्वस्यापि कथंचिन्निर्वक्तुं शक्यत्वादिति। किं प्रतिबन्धकताघटितनिरुक्तरूपेण हेतुतयेत्याशङ्क्य तादृशरूपेण हेतुतायाः प्रयोजनान्तरमाह। अत एवेति। अन्यथावच्छेदकत्वविषयतानिरूपितात्यन्ताभावविषयतायाः कारणतावच्छेदकत्वेऽवच्छेदकभेदग्रहस्यावच्छेदकत्वावच्छिन्नविषयतानिरूपितभेदविषयतायास्तथात्वेऽवच्छेदकत्वात्यन्ताभावग्रहस्यासङ्ग्रहप्रसङ्गात्।

न चावच्छेदकत्वविषयतानिरूपिता या विषयता तन्निरूपिताभावविषयताशालिज्ञानत्वेन द्वयोरनुगमः सम्भवति, अवच्छेदकत्वात्यन्ताभावग्रहस्याप्यवच्छेदकत्वविषयतानिरूपिता या सांसर्गिकविषयता तन्निरूपिताभावविषयताशालित्वादिति वाच्यम्। तथा सत्यवच्छेदकत्वभेदाद्यवगाहिज्ञानमादायातिप्रसङ्गादिति भावः।

ननु साध्यतावच्छेदकधर्मिकतादृशप्रतियोगितावच्छेदकत्वग्रहविरोधित्वेनानुगमे हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वादिसाध्यतावच्छेदककस्थले तादृशसाध्यतावच्छेदकधर्मिकतादृशप्रतियोगितावच्छेदकत्वप्रकारकज्ञानस्य नियमत आहार्यरूपतया तत्प्रतिबन्धकताया अप्रसिद्ध्या कारणतावच्छेदकाप्रसिद्धिरत आह। हेत्वाभासे चेति। तथा च प्रकृतसाध्यतावच्छेदकधर्मिकतादृशप्रतियोगितावच्छेदकत्वप्रकारकग्रहत्वं प्रति यद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नप्रकारितात्वेन व्यापकता तद्रूपावच्छिन्नांशे तद्रूपावच्छिन्नप्रकारकग्रहप्रतिबन्धकतावच्छेदकीभूता या अभावविषयतानिरूपितप्रकृतसाध्यतावच्छेदकविषयता तस्याः कारणतावच्छेदकत्वमुपगन्तव्यम्, प्रकृते च शुद्धवह्नित्वत्वावच्छिन्नविशेष्यताकतादृशप्रतियोगितावच्छेदकत्वप्रकारकोऽनाहार्यग्रहोऽपि तादृशस्तत्प्रतिबन्धकश्च तादृशविशिष्टवह्नित्वविशेष्यकव्यापकतावच्छेदकत्वग्रह इति न दोषः। शुद्धवह्नित्वत्वावच्छिन्नविशेष्यकव्यापकतावच्छेदकत्वग्रहस्य तादृशग्रहप्रतिबन्धकत्वेऽपि न तादृशप्रतिबन्धकतावच्छेदकीभूततादृशानवच्छेदकत्वविशिष्टवह्नित्वरूपसाध्यतावच्छेदकविषयताशालित्वमिति न तादृशज्ञानादिविशिष्टवह्नित्वावच्छि-

अविधेयताकानुमितिप्रसङ्गः ।

अत्र च यादृशप्रकृतसाध्यतावच्छेदकविषयताशालिनिश्चयाऽव्यवहितोत्तरोत्पन्नानाहार्यमानससामान्ये, प्रकृतसाध्यतावच्छेदके तादृशावच्छेदकत्ववैशिष्ट्यावगाहित्वाभावस्तादृशविषयताशालिनिश्चयत्वेन हेतुतेति रीतिर्न सम्भवति । 'तथा सति तादृशविशिष्टवह्नित्वावच्छिन्नसाध्यकस्थले साध्यतावच्छेदकधर्मिकमेयत्वादिनिश्चयस्यापि कारणत्वप्रसङ्गात् । दर्शितरीतावपि यद्रूपावच्छिन्नप्रकारितात्वेनैव व्यापकतात्यन्तं परिचायकमात्रम्, विशिष्यवह्नित्वत्वाद्यवच्छिन्नविशेष्यकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकग्रहत्वेन प्रतिबध्यीभूतज्ञानस्य कारणतावच्छेदककोटौ निवेशः साध्यतावच्छेदकादिभेदेन कार्यकारणभावभेदस्यावश्यकतया शब्दैक्यस्याकिञ्चित्करत्वादित्यवधेयम् ।

(१) [अथैवमपि यत्र हेतुव्यापकतावच्छेदकत्वमात्रेणैव वह्नित्वादेः साध्यतावच्छेदकता न तु तद्विशिष्टवह्नित्वत्वादिना तत्र व्यापकतावच्छेदकत्वांशपरित्यागे निर्धर्मितावच्छेदककमेव व्यापकतानवच्छेदकत्वज्ञानं भवेत् तस्य च व्यापकतावच्छेदकत्वज्ञानाप्रतिबध्यतया नोक्तरीत्या प्रतियोगिवैयधिकरण्याघटिततद्घटितव्यापकताज्ञानयोरनुगमसम्भवः । न च शुद्धेन हेतुव्यापकतावच्छेदकत्वेन विशिष्टस्य वह्नित्वादेर्यत्र साध्यतावच्छेदकता तत्र तदवच्छिन्नव्यापकतावच्छेदकत्वान्तरानवगाहिनोऽपि शुद्धतदवच्छिन्नविशिष्टसमानाधिकरणहेतुमत्ताज्ञानादनुमितिस्वीकारेण नोक्तरीत्या व्यापकताद्वयज्ञानानुगमापेक्षेति वाच्यम् । वह्नित्वत्वादिसहितेन व्यापकतावच्छेदकत्वेन साध्यतावच्छेदकावगाहिनो ज्ञानस्य व्यापकतावच्छेदकत्वान्तरानवगाहिनोऽपि तेन रूपेण वह्नित्वादिप्रकारकानुमितिजनकत्वे वह्नित्वत्वादिसहितेन तेन रूपेण वह्नित्वादिविषयकस्य व्यापकतावच्छेदकत्वान्तरानवगाहिनस्तेन रूपेण तद्विषयकानुमित्यजनकताप्रयुक्तफलवैषम्यस्याधिकं स्वित्यादिन्यायेनानुचितत्वात् व्यापकतावच्छेदकत्वविशेषितवह्नित्वाद्यप्रकारकतत्प्रकारकानुमितिविलयप्रसङ्गादिति चेन्न । यत्र शुद्धव्यापकतावच्छे-

(१) [ ] पुस्तकान्तरे नास्त्ययं पाठः ।

दकत्वेन साध्यतावच्छेदकता तत्रापि विशेष्यतया तत्प्रविष्टम-भावमवच्छेदकत्वरूपप्रतियोग्यविशेषितं धर्मितावच्छेदकीकृत्याव-च्छेदकावच्छेदेन व्यापकतानवच्छेदकत्वावगाहिनोऽनाहार्यज्ञानस्य सम्भवेन तद्विरोधित्वेनैव व्यापकतावच्छेदकत्वावच्छिन्नधर्मिकद्वि-विधव्यापकताज्ञानस्यानुगमसम्भवात् । ]

ननूक्तरूपेणानुमितिहेतुत्वे वह्नित्वमभावप्रतियोगितानवच्छेद-कं वह्नित्वं प्रतियोगितानवच्छेदकमित्यादिज्ञानादनुमित्यापत्तिः, तादृशज्ञानानामपि सामान्याभावावगाहितया प्रतियोग्यसमाना-धिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वरूपविशेष-धर्मप्रकारकग्रहविरोधित्वादित्यत आह । यदि चेति ।

(दी०) यदि च साध्यतावच्छेदकस्याभावप्रतियोगिता-नवच्छेदकत्वादिग्रहान्नानुमितिस्तदा तादृशावच्छेदकत्वग्रहाविरो-धित्वेन विशेषणीयम् । अन्योन्याभावस्याव्याप्यवृत्तित्वपक्षे तु सुतरां विशेषणदानमिति । सत्यम् । तथाप्यन्योन्याभावे प्रतियोग्यवृत्तित्वस्यैव विशेषणत्वम्, न वा प्रतियोगितावच्छेदक-सम्बन्धभेदानुधावनमतो लाघवमिति, यथाश्रुतग्रन्थानुरोधिनः ।

(गा०) तादृशज्ञानानामपि व्यभिचारज्ञानविरोधितया तेभ्यो-ऽनुमित्यभ्युपगमे क्षतिविरहात् यदि चेत्युक्तम् । अनवच्छेदकत्वा-दीत्यादिपदात्प्रतियोगितावच्छेदकत्वसामान्याभावावच्छेदकत्वसा-मान्याभावयोः समानाधिकरणाभावप्रतियोगितावच्छेदकत्वसामा-न्याभावस्य च परिग्रहः।

तादृशावच्छेदकत्वादीति । अभावप्रतियोगितावच्छेदकत्वादी-त्यर्थः । आदिपदात्केवलप्रतियोगितावच्छेदकत्वादिपरिग्रहः । त-द्विरोधित्वं तादृशग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानव-च्छेदकत्वम् । निवेशनीयमित्यस्य निरुक्तव्यभिचारज्ञानप्रतिबन्ध-कतावच्छेदकविषयितायामित्यादिः । तादृशप्रतिबन्धकताशून्य-त्वस्य ज्ञानविशेषणत्वेऽभावप्रतियोगितानवच्छेदकं हेतुसमाना-धिकरणाभावप्रतियोगितानवच्छेदकं च वह्नित्वमित्यादिसमूहाल-म्बनासङ्ग्रहप्रसङ्गात् तादृशप्रतिबन्धकतानवच्छेदकत्वस्य विषयि-

ताविशेषणत्वपर्यन्तानुसरणम् । अभावप्रतियोगितावच्छेदकं वह्नित्वमित्यादिज्ञाननिष्ठप्रतिबध्यता च लौकिकसन्निकर्षाद्यजन्यवह्नित्वत्वाद्यवच्छिन्नविशेष्यकसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रकारकग्रहत्वव्यापकप्रतिबध्यतात्वेन निवेशनीया न तु तादृशग्रहत्वावच्छिन्नप्रतिबध्यतात्वेन, भेदकूटनिवेशापत्त्या गौरवात् । अभावप्रतियोगितावच्छेदकत्वप्रकारकतादृशग्रहत्वव्यापकप्रतिबध्यतात्वेन निवेशे तुल्ययुक्त्यानुमित्यनुत्पादकत्सामानाधिकरण्यांशे साधनीयत्वानवगाहिनस्समानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानादनुमित्यापत्तिरतोऽभावांशे सामानाधिकरण्यावगाहिज्ञानपर्यन्तानिवेशनम् । प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहत्वावच्छिन्नप्रतिबध्यतानामपि समानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकतादृशग्रहे एव वर्तमानतया ऽप्रसिद्धिरतस्तादृशग्रहनिष्ठत्वमपहाय तादृशग्रहत्वव्यापकत्वस्य प्रतिबध्यतायां निवेशः ।

वस्तुतस्तु तादृशग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकत्वस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयितायां निवेशापेक्षया लाघवात्तादृशप्रतिबध्यतायामेव तादृशग्रहत्वाव्यापकत्व निवेशनीयं तावतैवाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानवारणसम्भवात् तदीयप्रतिबध्यतायास्तथाविधग्रहत्वव्यापकत्वादित्यवधेयम् ।

एतावत्पर्यन्तेनान्योन्याभावघटितव्याप्तिरत्यन्ताभावघटितव्याप्तिश्च ज्ञानस्य कारणतावच्छेदककोटौ प्रतियोगिवैयधिकरण्यविषयतानिवेशसाम्यरूपस्वव्यापेनान्योन्याभावघटितव्याप्तिज्ञानहेतुतायां लाघवं निराकृत्य वास्तवतादृशव्याप्तिशरीरलाघवमपि स्वमतमाश्रित्य निराकरोति । अन्योन्याभावस्येति । सुतरां विशेषणदानमिति । व्याप्तिशरीरे ऽपि प्रतियोग्यसामानाधिकरण्यविशेषणप्रवेशावश्यकत्वमित्यर्थः ।

अत्रेदं तत्त्वम् । प्रतियोगिवैयधिकरण्यावगाहितदनवगाहिज्ञानयोः पृथगेव हेतुता । अन्यलिङ्गकाद्यनुमितौ व्यभिचारवारणाय कारणतावच्छेदकोटौ वैशिष्ट्यस्यावश्यं निवेशनीयतया परस्परं व्यभिचारानवकाशात् ।

न च पृथक्कारणताकल्पनापेक्षयैकानुगतरूपेण हेतुताकल्पनमुचितमिति वाच्यम् । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावति तादृशावच्छेदकत्वाभावप्रकारकं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्ववति तादृशावच्छेदकत्वाभावप्रकारकमित्याकारकयोरप्रामाण्यज्ञानयोः पृथगभावविशिष्टनिवेशानुरोधेन कारणताद्वयकल्पनाया आवश्यकत्वात् ।

न चाप्रामाण्यग्रहास्कन्दितज्ञानस्य व्यभिचारज्ञानाप्रतिबन्धकतयैव ततोऽनुमित्यापत्तिवारणसम्भवादप्रामाण्यज्ञानानास्कन्दितत्वस्य निवेश एव नास्तीति वाच्यम् । अप्रामाण्यज्ञानविशिष्टस्यापि ज्ञानस्य तदभावदशायां अप्रामाण्यग्रहाभावविशिष्टत्वेन व्यभिचारज्ञानप्रतिबन्धकत्वात् कारणीभूताभावप्रतियोगित्वरूपस्य प्रतिबन्धकत्वस्य किञ्चित्कालावच्छिन्नत्वविरहेण कारणतावच्छेदकविशिष्टप्राक्सत्तायाः फलोपधाने तन्त्रत्वोपगमेनाप्यनिस्तारात् । न च व्यभिचारग्रहप्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणधर्मविशिष्टत्वेन हेतुत्वोपगमादेव नाप्रामाण्यग्रहविशिष्टज्ञानादनुमित्यापत्तिरिति वाच्यम् । अवच्छेदकताया व्यासज्यवृत्तित्वस्य दूषितत्वात् प्रतिबन्धकतावच्छेदकघटकज्ञानत्वादेरपि तत्पर्याप्त्यधिकरणतयाऽप्रामाण्यादिग्रहकालेऽनुमित्यापत्तेर्वज्रलेपत्वात् । एवं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकाभाववति साध्ये तादृशप्रतियोगितानवच्छेदकप्रकारकं हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकाभाववति तादृशप्रतियोगितानवच्छेदकप्रकारकमित्याकारकाप्रामाण्यग्रहकालीनज्ञानस्यापि उक्तव्यभिचारज्ञानप्रतिबन्धकतया ततोऽनुमित्यापत्तिवारणाय तादृशाप्रामाण्यग्रहाभावयोः पृथक् पृथगेव निवेशनीयतया क्वानुगम इति ।

अथ प्रतियोगिवैयधिकरण्यविषयकव्याप्तिज्ञानस्य हेतुत्व न विचारसहम् । तथा हि प्रतियोगिवैयधिकरण्यशरीरे प्रतियोग्यधिकरणत्वावच्छिन्नसामान्यभेदो निवेशयितुमशक्यः, सर्वेषामेव यत्किञ्चिदभावीयप्रतियोग्यधिकरणतया तादृशभेदाप्रसिद्धेः । संयोगसम्बन्धेन प्रतियोग्यधिकरणसामान्यभेदस्य गुणादौ प्रसिद्धत्वेऽपि धूमादिरूपहेत्वधिकरणे तदसत्त्वात्प्रमात्मकतादृशज्ञानस्य

क्वचिदप्यसम्भवात् ।

न च तादृशज्ञानं प्रमात्मकमेव सर्वत्रानुमितिहेतुरिति वाच्यम् । तथा सत्यव्याप्यवृत्तिसाध्यकस्थले प्रमात्मकपरामर्शजन्यानुमितिविलयप्रसङ्गात् । यत्किञ्चित्प्रतियोग्यनधिकरणत्वं चाव्यावर्तकम्, स्वप्रतियोग्यधिकरणसामान्यभेदनिवेशे च स्वपदस्याभावसामान्यपरत्वे दर्शिताप्रसिद्धितादवस्थ्यं यत्किञ्चिदभावपरत्वे च व्यभिचारिस्थलेऽपि यत्किञ्चिदभावीयप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्तत्रापि विशेषदर्शिनामनुमित्यापत्तिरतस्तत्तदभावीयप्रतियोग्यनधिकरणहेत्वधिकरणवृत्तितत्तदभावप्रतियोगितावच्छेदकत्वाभावग्रह एव हेतुर्वाच्यः । तत्र च तत्तदभावप्रतियोगितावच्छेदकत्वानां येन केनापि रूपेणाभावग्रहस्य हेतुत्वे धूमसमानाधिकरणवह्नित्वानवच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानादप्यनुमित्यापत्तिः, तत्तदभावप्रतियोगितावच्छेदकत्वत्वेन तदभावग्रहस्य हेतुत्वे तत्तदभावत्वेन तादृशसकलाभावानां जन्मसहस्रेणापि ज्ञानं न सम्भवतीति उपाध्यायमतदूषणग्रासः ।

एवं यादृशयादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशतादृशप्रतियोगितानवच्छेदकत्वस्यैव सिद्धान्तलक्षणे व्याप्तिशरीरघटकतया विवक्षितत्वात् तत्तत्प्रतियोगितावच्छेदकत्वानां येन केनापि रूपेण तत्तत्प्रतियोगितावच्छेदकत्वत्वेन वाऽभावज्ञानस्य हेतुत्वेऽपि सुतरामुक्तदोषप्रसङ्ग इति । मैवम् । स्वावच्छेदकावच्छिन्नानधिकरणत्वसम्बन्धेन हेत्वधिकरणनिष्ठप्रतियोगितावच्छेदकत्वत्वावच्छिन्नसामान्याभाव एव व्याप्तिघटकस्तज्ज्ञानमेवानुमितिहेतुः स्वपदं परिचायकमात्रं न तु तदर्थस्यापि निवेशः, अन्यदीयावच्छेदकावच्छिन्नानधिकरणत्वस्यान्यदीयवृत्तिनियामकसम्बन्धताविरहान्न संयोगादिनिष्ठप्रतियोगितायास्तादृशसम्बन्धेन हेत्वधिकरणवृत्तितामादायाव्याप्त्यवकाश इति न स्वपदार्थस्य तत्तद्व्यक्तित्वेन तत्तत्प्रतियोगितात्वेन वा निवेश इति विकल्पावसरः ।

अथ वा हेतुमन्निष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वरूपमनुगतं प्रतियोगिवैयधिकरण्यनिरूपकत्वं भेदस्याव्याप्य-

वृत्तित्वानभ्युपगन्तृमते प्रतियोगिताविशेषणं देयम्, स्वनिरूपकानुयोगिताविशिष्टनिरूपितत्वस्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यत्व हेतुमन्निष्ठाभावाधिकरणताविशेषण भेदस्याव्याप्यवृत्तितामतेऽपि सम्यगिति दिक् ।

अथेत्यादिपूर्वपक्षे समाधत्ते । सत्यं तथापीति । प्रतियोग्यवृत्तित्वस्यैवेत्येवकारेण प्रतियोगितावच्छेदकावच्छिन्नाधिकरणावृत्तित्वरूप विशेषणत्वव्यवच्छेदः । तथा चात्यन्ताभावघटितव्याप्तौ अवच्छेदकावच्छिन्नांशनिवेशाधिक्याद्गौरवमिति भावः । अत्र च प्रतियोगिभिन्नत्वं हेत्वधिकरणे निवेशयितुं न शक्यते अन्योन्याभावस्याव्याप्यवृत्तित्वे संयोगी द्रव्यत्वादित्यादौ हेतुमति संयोगिभेदप्रतियोगिनः संयोगिनो भिन्नत्वस्याक्षततयाऽव्याप्तेरपरिहार्यत्वात् तस्य व्याप्यवृत्तित्वेऽपि तस्याव्याप्यवृत्तित्वभ्रमदशायां संयोगिभेदप्रतियोगिभिन्नहेत्वधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य सयोगे ग्रहादनुमित्यपलापप्रसङ्गश्चेत्यभिप्रेत्य प्रतियोग्यवृत्तित्वस्य विशेषणत्वमुक्तम् ।

न चैव सयोगी सत्त्वादित्यादावतिव्याप्त्यापत्तिरिति वाच्यम् । सामानाधिकरण्यस्याव्याप्यवृत्तित्वाभ्युपगमेन गुणाद्यवच्छेदेन संयोगिभेदे प्रतियोगिवृत्तित्वाभावसत्त्वात् हेत्वधिकरणावच्छेदेन तद्वत्त्वस्य विवक्षणीयतयाऽव्याप्तेरनवकाशात् ।

सामानाधिकरण्यस्याव्याप्यवृत्तित्वं प्रागेव दूषितमित्यभिप्रायेण चेदत्रावधेयमित्यादिना प्रतियोग्यवृत्तित्वघटितव्याप्तिलक्षणस्य स्वयमेव दूषणीयत्वात् निरवच्छिन्नहेत्वधिकरणवृत्तित्वमेवाभावविशेषणं देयं न तु प्रतियोग्यसामानाधिकरण्यमिति नोक्तलाघवावकाश इत्यभिप्रेत्य लाघवान्तरमाह । न चेति । न वेत्यर्थः । अत्यन्ताभावघटितव्याप्तौ प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यस्य निवेशे सम्बन्धान्तरावच्छिन्नप्रतियोगिताकसाध्याभावमादायासम्भववारणायात्यन्ताभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य अवश्यं निवेशनीयतया गौरवादिति भावः ।

यथाश्रुतग्रन्थानुरोधिन इत्यस्वरससूचनाय । स चात्यन्ताभावप्रतियोगितायामिवान्योन्याभावप्रतियोगितावच्छेदकतायामपि साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशेन लाघवविरहात्, अन्यथा

समवायादिना वह्न्यादिमतो भेदमादायासम्भवप्रसङ्गात् ।

न चात्यन्ताभावघटितव्याप्तावपि प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया तदंशे साम्यम्, अन्यथा विषयितासम्बन्धेन वह्नित्ववज्ज्ञानात्यन्ताभावमादाय दोषादिति वाच्यम् । यतोऽन्योन्याभावघटितव्याप्तावपि साध्यतावच्छेदके प्रतियोगितावच्छेदकतानवच्छेदकत्वं विवक्षणीयम्, तादृशावच्छेदकतावच्छेदकत्वं च साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वेन विशेषणीयम् । साध्यतावच्छेदकविशिष्टे प्रतियोगितानवच्छेदकत्वपर्यन्तानिवेशने नानाव्यक्तिसाध्यके हेतुमन्निष्ठतत्तत्साध्यव्यक्तिभेदमादायाव्याप्तेः, अवच्छेदकरूपविशिष्टे(१)ऽवच्छेदके अनवच्छेदकत्वस्याप्रामाणिकत्वात् । अन्यथा प्रतियोगितावच्छेदकविशिष्टे प्रतियोगिन्यपि अप्रतियोगित्वस्य सुवचतया ऽत्यन्ताभावघटितव्याप्तावपि प्रतियोगितानवच्छेदकत्वपर्यन्तनिवेशनानर्थक्यप्रसङ्गात् । अवच्छेदकतावच्छेदकतायां सम्बन्धभेदानिवेशे गुणवद् द्रव्यत्वादित्यादौ विषयितासम्बन्धेन गुणत्वविशिष्टावच्छिन्नभेदमादायाव्याप्तेः ।

न चैकव्यक्तिसाध्यकस्थलेऽन्योन्याभावप्रतियोगितावच्छेदकतानवच्छेदकत्वानिवेशात्तत्साध्यकानुमितिकारणतायां लाघवमक्षुण्णमेवेति वाच्यम् । नानाव्यक्तिसाध्यकस्थले एकावच्छेदकत्वांशानिवेशादत्यन्ताभावघटितव्याप्तिज्ञानहेतुतायामपि लाघवसम्भवेन तत्स्थलविशेषीयलाघवस्याकिञ्चित्करत्वात् ।

अथैवमपि प्रतियोग्यसामानाधिकरण्यनिवेशापेक्षया प्रतियोग्यवृत्तित्वनिवेशने लाघवमक्षतमेव । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववानात्मत्वादित्यादावव्याप्तिप्रसङ्गेन प्रतियोग्यसामानाधिकरण्यं परित्यज्य निरवच्छिन्नवृत्तिकत्वस्य निवेशयितुमशक्यत्वाद् भवता प्रतियोग्यसामानाधिकरण्यस्यावश्यं निवेशनीयत्वात् ।

न चात्यन्ताभावघटितव्याप्तौ हेत्वधिकरणे प्रतियोग्यनधिकरणत्वं निवेशनीयं न त्वभावे तदधिकरणावृत्तित्वं तथा चान्योन्याभावविशे-

(१) अवच्छेदकतानवच्छेदकरूपविशिष्टे इति २ पु० पाठः ।

पणप्रतियोग्यवृत्तित्वस्य न प्रतियोग्यनधिकरणत्वापेक्षया लघुशरीरत्वेति वाच्यम् । प्रतियोग्यनधिकरणत्वमित्यत्र प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वस्यैव विवक्षणीयतया तदपेक्षया प्रतियोग्यवृत्तित्वस्य लघुत्वात् । एतन्मते प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशात् । अन्योन्याभावस्याव्याप्यवृत्तित्वे वक्ष्यमाणदोषेण प्रतियोग्यनधिकरणत्वनिवेशासम्भवात् । सामानाधिकरण्यस्याव्याप्यवृत्तित्वमभ्युपेत्य प्रतियोग्यधिकरणावृत्तित्वस्यैवात्यन्ताभावे निवेशनीयत्वादिति चेन्न । अत्यन्ताभावप्रतियोगिताघटितलक्षणे स्वावच्छेदकविशिष्टवद्वृत्तित्वाभावावच्छेदकहेत्वधिकरणकत्वं प्रतियोगितायां विशेषणं देयम् । अन्योन्याभावीयप्रतियोगिताघटितलक्षणे च स्वाधिकरणवृत्तित्वाभावावच्छेदकहेत्वधिकरणकत्वं प्रतियोगिताविशेषणमित्येव निष्कर्षः । तत्र यावच्छेदकविशिष्टांशनिवेशाधिक्यमस्त्वत्यन्ताभावीयप्रतियोगिताघटितव्याप्तौ, तथापि चरमव्याप्तौ तादृशप्रतियोगितानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वाभावो विशेषणं साध्यतावच्छेदके, प्रथमव्याप्तौ च तादृशप्रतियोगितानिरूपितसाध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकत्वाभावो विशेषणम्, तत्र चरमव्याप्तौ साध्यतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितत्वांशस्याधिकस्य निवेशाद्विपरीतगौरवम् अवच्छेदकविशिष्टांशापेक्षया एतदंशस्य गुरुत्वात् ।

न च प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्य भवतोऽप्यावश्यकत्वात् अवच्छेदकत्वनिरूपितत्वांशस्यैवैतन्मते आधिक्यमिति वाच्यम् । स्वावच्छेदकविशिष्टस्य सम्बन्धतया साध्यतावच्छेदकसम्बन्धनिवेशादेवोपपत्तौ प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य मयाऽनिवेशनीयत्वात् ।

न चैवमपि साध्यतावच्छेदकसम्बन्धनिवेश उभयमते एवेति वाच्यम् । तथाप्यवच्छिन्नावच्छेदकतानिरूपितत्वस्य तन्मते निवेशाधिक्येन लाघवानवकाशादिति दिक् ।

( दी० ) अपरे त्वन्योन्यात्यन्ताभावगर्भव्याप्त्योरेकतरा-

ग्रहे ऽन्यतरज्ञानादनुमितेरानुभविकतया तदुभयज्ञानमेव हेतुः । इन्द्रियसंयोगादिवच्च विशिष्यैव कार्यकारणभावान्न व्यभिचारः ।

( गा० ) इन्द्रियसंयोगादिवच्चेति । यथा द्रव्यप्रत्यक्षत्वतत्समवेतप्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियसंयोगत्वतत्संयुक्तसमवायत्वादिना सन्निकर्षहेतुतायां कारणतावच्छेदकाननुगमेऽपि कार्यतावच्छेदकाननुगमान्न व्यभिचारः । तथात्र कारणतावच्छेदकाननुगमेऽपि तत्तद्व्याप्तिज्ञानाव्यवहितोत्तरोत्पन्नानुमितित्वरूपविशेषधर्माणामेव तत्तद्व्याप्तिज्ञानजन्यतावच्छेदकत्वोपगमेन कार्यतावच्छेदकाननुगमान्न व्यभिचार इत्यर्थः ।

केचित्तु अत्यन्ताभावान्योन्याभावगर्भव्यभिचारज्ञानेऽनुगमय्य तद्विरोधित्वरूपानुगतधर्मेण उभयविधव्याप्तिज्ञानहेतुतां स्वीकुर्वन्ति तेषां मतमुपन्यस्य परे दूषयन्ति । यत्त्विति ।

( दी० ) यत्तु यद्रूपावच्छिन्नप्रतियोगिताकत्वेनोपस्थितो ऽभावो धर्मिणि गृह्यमाणः साध्यवत्ताबुद्धिं विरुणद्धि तद्रूपावच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्यावगाहिनो ग्रहस्य विरोधित्वेन व्याप्तिबुद्धयो ऽनुगमनीयाः । प्रतिबध्नीतश्च साध्यतद्वदत्यन्ताभावान्योन्याभावग्रहौ साध्यवत्ताबुद्धिम् । केवलान्वयिस्थले च भ्रमरूपस्यैव तद्ग्रहस्य कथञ्चित् प्रसिद्धिरिति । तच्चिन्त्यम् ।

( गा० ) यद्रूपावच्छिन्नप्रतियोगिताकत्वेनोपस्थित इति । यद्रूपावच्छिन्नप्रतियोगिताकत्वनिष्ठविषयतानिरूपितविषयताश्रयः । धर्मिणि गृह्यमाण इति । धर्मिविषयतानिरूपितविषयताश्रयः । साध्यवत्ताबुद्धिं विरुणद्धि । साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयताश्रयः । तथा च स्वावच्छिन्नयत्सम्बन्धावच्छिन्नप्रतियोगिताकत्वसंसर्गावच्छिन्नयद्धर्मनिष्ठप्रकारतानिरूपिता या धर्मिविषयतानिरूपिताभावविषयता साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदिका स्वावच्छिन्नतत्सम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नतद्धर्मप्रकारतानिरूपिताभावप्रकारतानि-

रूपितसामानाधिकरण्यविषयताशालिप्रदविरोधित्वेन व्याप्तिज्ञानानुगम इति पर्यवसितार्थः। प्रतियोगितायां यत्सम्बन्धावच्छिन्नत्वतत्सम्बन्धावच्छिन्नत्वयोः प्रकारतायां यद्रूपनिष्ठत्वतद्रूपनिष्ठत्वयोर्निवेशाद्वह्नित्वावच्छिन्नभेदवद्वह्निमत्त्वावच्छिन्नात्यन्ताभावसामानाधिकरण्यप्रदविरोधिनो हेतुमत्समानाधिकरणभेदप्रतियोगितानवच्छेदकं वह्नित्वं हेतुमत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं वह्निमत्त्वमित्यादिज्ञानात्र वह्न्याद्यनुमित्यापत्तिः। वह्निमत्त्वादिधर्मितावच्छेदककवह्न्यादिमत्ताज्ञानं प्रति तत्तद्धर्मितावच्छेदककसंयोगसम्बन्धावच्छिन्नवह्न्यभाववत्ताज्ञानप्रतिबन्धकतायां वह्न्यादिभेदनिष्ठविषयताया अपि निवेशादुक्तज्ञानात्पुनर्वह्न्यनुमानापत्तिरतो धर्मिविषयतानिरूपितेति। विषयस्य धर्मितावच्छेदकतापर्याप्त्याश्रयो यादृशो धर्मस्तद्विशिष्टविशेष्यतानिरूपितेत्यर्थकम्, धर्मितावच्छेदकतानात्मिकेति तु फलितार्थः। प्रतिबन्धकस्य च तदभावव्याप्यवत्ताज्ञानादिप्रतिबन्धकताविलक्षणमुपादेयम्, अतो नातिप्रसङ्गः। पक्षधर्मत्वाद्यविषयकव्यापकताज्ञानवारणाय पूर्ववत्प्रतिबन्धकतावच्छेदिका या पक्षविशेषणतावच्छेदकसामानाधिकरण्यविशेषणीभवत्साध्यविषयतानिरूपिता साध्यतावच्छेदकविषयता तद्वत्त्वमेव विरोधित्वपदेन विवक्षणीयम्। साध्याभाववद्वृत्तित्वादिधीश्च नानुमितिहेतुरतस्तदसङ्ग्रहो न दोषाय। तादृशी च साध्यतावच्छेदकविषयता अत्यन्ताभावघटितव्याप्त्यवगाहिनि परामर्शे प्रतियोगितावच्छेदकत्वाभावस्य विशेष्यविधया अन्योन्याभावघटितव्याप्त्यवगाहिनि च परामर्शे विशेष्यतावच्छेदकविधया विषयतैव।

वस्तुतस्तु साध्यतावच्छेदकांशे प्रतियोगितावच्छेदकतानवच्छेदकत्वमेव भेदघटितव्याप्तौ निविष्टमिति उभयत्रावच्छेदकत्वाभावविशेष्यतया साध्यतावच्छेदकविषयतैव व्यभिचारधीप्रतिबन्धकतावच्छेदिका अतः प्रतिबन्धकतावच्छेदकीभूतदर्शितसाध्यतावच्छेदकविषयतावत्त्वेन हेतुत्वे वह्नित्वत्वादिना पदार्थान्तरेऽत्यन्ताभावप्रतियोगितावच्छेदकत्वाभावावगाहिभ्रमासङ्ग्रहः[१]। तादृशविषयताया साध्यतावच्छेदकीयत्वमनिवेश्य तत्सङ्ग्रहे च भेदप्रतियोगितानवच्छेदकवह्निमत्समानाधिकरणहेतुमानिति ज्ञानस्यापि सामानाधिकरण्यविशेषणविषयतानिरूपितव्यभिचारधीप्रतिबन्धक-

तावच्छेदकसाध्यविषयताशालित्वात्ततोऽनुमित्यापत्तिः, वह्नित्वत्वाद्यवच्छिन्नविषयतात्वेन भ्रमविषयतासाधारणेन प्रतिबन्धकतावच्छेदकविषयतानिवेशो च स्वरूपतो वह्नित्वाद्यवगाहिभेदप्रतियोगितानवच्छेदकवह्निसमानाधिकरणहेतुमानिति ज्ञानासद्भाव इति दूषणमनवकाशम् । साध्यतावच्छेदकांशेऽवच्छेदकतावच्छेदकत्वाभावावगाहिन एव भेदघटितव्याप्तिज्ञानस्यानुमितिहेतुतया तस्य च वह्नित्वत्वावच्छिन्नविषयतावत्त्वनियमात्तादृशविषयतात्वेनैव प्रतिबन्धकतावच्छेदकविषयतानिवेशात् ।

ननु केवलान्वयिनि साध्यतावच्छेदकावच्छिन्नात्यन्ताभावस्याप्रसिद्धेस्तत्सामानाधिकरण्यधीरप्रसिद्धेति कथं तद्विरोधित्वेनानुगम इत्यत आह । केवलान्वयीति । भ्रमरूपस्येति । तद्रूपावच्छिन्नप्रतियोगिविषयतानिरूपिताभावविषयताया एव निवेशितत्वाद्वास्तवसाध्याभावाप्रसिद्धावपि इतराभावांशे प्रतियोगितया साध्यप्रकारकस्य व्याप्तिधीप्रतिबन्धकज्ञानस्य प्रसिद्धेर्वानुगमनिर्वाह इति भावः ।

तच्चिन्त्यमिति । अत्र यत्त्वतत्त्वनिवेशादननुगमो दुर्वारः । साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकाभावविषयतात्वेन च व्यभिचारज्ञानीयात्यन्ताभ्योन्याभावविषयतयोर्नानुगमसम्भवः, व्यभिचारधियोऽभावांशे निर्धर्मितावच्छेदकतया तदीयाभावविषयतायाः साध्यधीप्रतिबन्धकतावच्छेदकत्वविरहात् । साध्याभावांशे सधर्मितावच्छेदकं साध्याभाववन्महानसवृत्तिहेतुरित्याकारकज्ञानं प्रति हेतुमन्महानसनिष्ठाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमित्यादिज्ञानस्यापि विरोधितया ऽभावांशे सधर्मितावच्छेदकज्ञानविरोधित्वेनानुगमे ततोऽप्यनुमितिप्रसङ्गात् ।

एवं दर्शितव्यभिचारज्ञानस्य प्रतियोगितांशे साध्यतावच्छेदकाद्यवच्छिन्नत्वावगाहित्वेऽपि साध्यतावच्छेदकांशे प्रतियोगितावच्छेदकत्वावगाहित्वानियमात्साध्यतावच्छेदकांशे ऽवच्छेदकत्वाभावग्रहस्य कथं तद्विरोधिता ग्राह्याभावानवगाहित्वात् । मणिमन्त्रादिन्यायेन ग्राह्याभावानवगाहिनोऽपि विरोधित्वोपगमे एकाभावघटितव्याप्तिग्रहस्याप्यभावान्तरघटितव्यभिचारधीप्रतिबन्धकत्वोपगमसम्भवात्किं व्यभिचारज्ञानानुगमेन ।

एवमुक्तानुगतरूपावच्छिन्नव्यभिचारज्ञानसामान्यविरोधित्वं नियताभावघटितव्याप्तिधीविरोधितामते न कुत्रापि व्याप्तिबुद्धौ, यत्किञ्चिद्विरोधित्वं च समूहालम्बनव्यभिचारधियमादाय घटाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ग्रहे महानसवृत्तित्वविशिष्टवह्न्यभावादिसामानाधिकरण्यग्रहमादाय च हेतुसमानाधिकरणमहानसवृत्त्यभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानेऽतिप्रसक्तमित्यादि चिन्तावीजमवसेयम् ।

व्यभिचारज्ञानानुगममन्तरेणापि प्रातिस्विकरूपेण व्यभिचारद्वयमुपादाय तद्विषयकज्ञानविरोधित्वेन व्याप्तिज्ञानानुगमसम्भवात्किं व्यभिचारज्ञानानुगमेनेति पूर्वमतमेवाक्षेप्तुं समूहालम्बनज्ञानविरोधित्वेन व्याप्तिज्ञानमनुगमयति । साध्यतावच्छेदके इति ।

( दी० ) साध्यतावच्छेदके साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वावगाही साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च साधनसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वावगाही यो ग्रहस्तद्विरोधित्वं साध्याभाववद्वृत्तित्वसाध्यवदन्यवृत्तित्वोभयावगाहिग्रहविरोधित्वादिकं वानुगमकं वाच्यम् । प्रसिद्धिः पूर्ववत् । अधिकं हेत्वाभासे वक्ष्यमाणरीत्या बोध्यम् । ग्रन्थस्तूपलक्षणपरो ऽनौपाधिकत्वमात्रव्यवच्छेदाय । यद्वक्ष्यति अनौपाधिकत्वं तु तल्लक्षणमितीति वदन्ति ।

( गा० ) तद्विरोधित्वमिति । तादृशग्रहसामान्यविरोधित्वमित्यर्थः । तेन घटाभावप्रतियोगितावच्छेदकत्वावगाहिसमूहालम्बनव्यभिचारज्ञानविरोधितामादाय नातिप्रसङ्गः । अत्यन्ताभावादिघटितव्यापकताज्ञानस्य साध्याभाववद्वृत्तित्वादिरूपव्यभिचारज्ञानविरोधित्वे साधनधर्मिकतादृशव्यभिचारद्वयग्रहविरोधित्वरूपलघुधर्मेणैवानुगम उचित इत्याशयेनाह । साध्याभावेति । पूर्ववदिति । भ्रमप्रमादायेत्यर्थः ।

ननु साध्याभाववद्वृत्तिधूमत्वावच्छिन्नहेतुकस्थले प्रकृतहेतुतावच्छेदकावच्छिन्नधर्मिकानाहार्यव्यभिचारग्रहप्रतिबन्धकाप्रसिद्धिरित्यत आह । अधिकमिति । तत्रेत्यत्रापि एकदेशविषयकज्ञानविरोधि-

ता निवेशनीयेति भावः ।

न चात्यन्ताभावघटितव्याप्तिज्ञानस्यापि हेतुत्वेऽन्योन्याभावगर्भैवेति मूलविरोध इत्यत आह । ग्रन्थस्त्विति । उपलक्षणपरः । अजहत्स्वार्थलक्षणयाऽत्यन्तान्योन्याभावगर्भव्यापकताघटितव्याप्तिद्वयसाधारणरूपावच्छिन्नपर इत्यर्थः ।

नन्वेवं व्यवच्छेद्याप्रसिद्धिरत आह । अनौपाधिकत्वेनेति । मानपदेनात्यन्ताभावगर्भव्याप्त्यव्यवच्छेदलाभः । अथाग्रिममूलस्वरसमाह । वक्ष्यतीति । अत्यन्ताभावगर्भव्याप्तेरनुमित्यहेतुत्वेऽनौपाधिकत्वव्यवस्यापि अनुमित्यौपयिकव्याप्त्यनुमापकत्वमभिव्यक्तमिति भावः ।

व्यभिचारस्योपाधेश्चाभासत्वानाभासत्वप्रयोजकविशेषदर्शनपरमूलस्य समुदिततात्पर्यार्थमभ्युत्थैव व्याचष्टे । व्यभिचाराज्ञानस्येत्यादिना ।

( दी० ) व्यभिचाराज्ञानस्य व्याप्तिधीहेतुत्वाद् व्याप्तिग्रहप्रतिबन्धकग्रहविषयत्वेन व्यभिचारस्याभासत्वम् । सोपाधित्वज्ञानं तु न साक्षाद्व्याप्तिधीविरोधि विरोध्यविषयकत्वात्, किं तु व्यभिचारधीद्वारा । वक्ष्यते चानुमितेस्तत्कारणज्ञानस्य साक्षाद्विरोधिन एवाभासत्वम् । निरुपाधित्वस्य ज्ञानं तु न व्याप्तिधीहेतुः, मानाभावात् । तथात्वेऽप्युपाधेराभासत्वायोगाच्चेति ।

( गा० ) व्यभिचाराज्ञानस्य । व्यभिचारज्ञानविरहस्य । व्याप्तिधीहेतुत्वादिति । विरोधिविषयकज्ञानाभाववत्तयेत्यादिः । साध्यधर्मिकसाधनाव्यापकव्याप्यत्वज्ञानस्य तद्धर्मिकसाधनव्यापकताज्ञानसमानधर्मिकतया मूलोक्तमुपाधिज्ञानाप्रतिबन्धकत्वबीजं भिन्नधर्मिकत्वं सुपरिहरमतो बीजान्तरमाह । विरोध्यविषयकत्वादिति । प्राप्ताभावत्वादिविशिष्टाविषयकत्वादित्यर्थः । साक्षादविरोधित्वेऽपि विरोधितामात्रेणैव न कथमाभासतेत्यत आह । वक्ष्यते चेति । साक्षाद्विरोधिन एवेति । कारणीभूताभावप्रतियोगिज्ञानविषयस्यैवेत्यर्थः ।

अनुमितिप्रयोजकज्ञानविरोधित्वेन हेत्वाभासतेत्यभिमानमूला-

माशङ्कां निराकर्तुं मूलकृताऽनौपाधिकत्वज्ञानस्य व्याप्तिज्ञानाहेतुत्वमनात्त तदनुपदर्शनत्वं हेतुमाह । निरुपाधीत्यादिना । तद्धेतुत्वमभ्युपेत्यापि स्वयमभिमानं निराकुर्वाण समाधत्ते । तथात्वेऽपीति । आभासत्वायोगादिति । प्रयोजकज्ञान साक्षाद्विरोधित्वेऽपि जनकज्ञानेऽतथात्वात्, जनकज्ञान साक्षाद्विरोधित्वेन एवाभासत्वादिति भाव ।

मूले । परमुखनिरीक्षकतयेति । अनुमितौ तद्धेतुज्ञाने वा साक्षादविरोधित्वेनेत्यर्थः । सिद्धसाधनत्वादिति । सिद्धेः सिषाधयिषाविरहविशिष्टरूपपक्षताविघटनद्वारानुमितिविरोधिता न तु स्वत इति मतमालम्ब्येदमभिहितं तस्य स्वतोऽनुमितिविरोधित्वे परमुखनिरीक्षकत्वासम्भवेन दृष्टान्तताविरहाद्ग्रन्थकृत् तु स्फुटतरमेतदभिधास्यति ।

अन्योन्याभावस्याव्याप्यवृत्तित्वे मणिकारोक्तव्याप्तिद्वयं दूषयितुमुपक्रमते । इदं पुनरिति ।

( दी० ) इदं पुनरिहावधेयम् । यदन्योन्याभावस्याव्याप्यवृत्तित्वे प्रतियोग्यवृत्तित्वविशेषिततद्घटितलक्षणस्य संयोगादिसाध्यकव्यभिचारिण्यतिव्याप्तिः । संयोग्यन्योन्याभावस्य केवलान्वयित्वात् ।

( गा० ) प्रतियोग्यवृत्तित्वविशेषिततद्घटितेति । प्रतियोग्यवृत्तित्वविशेषितान्योन्याभावघटितेत्यर्थः । केवलान्वयित्वादिति । प्रतियोगिन्यपि वृत्तलक्षणाघटकत्वादिति शेषः । इदं च संयोगिभेदप्रतियोगितायाः अव्याप्यवृत्तित्वाभिमानेन । वस्तुतस्तु प्रतियोगितायाः प्रतियोगिस्वरूपत्वे ऽव्याप्यवृत्तित्वासम्भवात् अतिरिक्तत्वेऽपि च तस्यास्तथात्वे मानाभावात् । मूले न संयोगीति प्रतीतिवत् न संयोगिभेदप्रतियोगीति प्रतीतेरानुभविकत्वविरहात् । प्रतियोगितावच्छेदकरूपत्वेऽपि संयोगादिरूपाया अपि तस्याः प्रतियोगित्वेन(१) व्याप्यवृत्तित्वे मानाभावात् । एवं च स्वप्रतियोगितात्वविशिष्टावच्छिन्नभिन्नहेत्वधिकरणनिष्ठभेदघटितलक्षणं सम्यगेव ।

न चैवमपि स्वस्वानुगमो दुर्वार एवेति वाच्यम् । हेतुमन्नि

(१) प्रतियोगितात्वेनेति साधु ।

घ्रभेदप्रतियोगितावच्छेदकभेदप्रतियोगितानवच्छेदकत्वस्यैव साध्यघत्वे निवेशनीयत्वादित्यवधेयम् ।

(दी०) अथ व्याप्यवृत्तिसाध्यके स्वव्यापकसाध्यसामानाधिकरण्यमेव व्याप्तिः । अव्याप्यवृत्तिसंयोगादिसाध्यके तु स्वव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकात्यन्ताभावेन तादृशरूपविशिष्टावच्छिन्नप्रतियोगिताकान्योन्याभावेन वा समसामानाधिकरण्यमिति चेत् ? स्मृतिसंस्कारजन्यज्ञानाविषयत्वादिकेवलान्वयिसाध्यकेषु का गतिः ।

(गा०) स्वव्यापकेति । अत्र व्यापकता प्रतियोग्यवृत्तित्वाविशेषितान्योन्याभावघटितैव बोध्या अतो नोक्तदोषः । स्वव्यापकतावच्छेदकेति । स्व साध्यम्, व्यापकतापि पूर्ववत् संयोगादिव्याप्यत्ता, अतस्संयोगादेर्द्रव्यत्वादेर्वा यत्र साध्यता तत्रत्यसद्धेतो संयोगत्वावच्छिन्नाभावेन संयोगत्वावच्छिन्नद्रव्यत्वावच्छिन्न च सामानाधिकरण्येऽपि नाव्याप्तिः । व्याप्यवृत्तितावच्छेदकद्रव्यत्वत्वादेरेव साध्यव्यापकतावच्छेदकतया तदवच्छिन्नाभावादिना हेतो सामानाधिकरण्यविरहात् । यत्र द्रव्यत्वावच्छिन्नस्य संयोगेन साध्यता तत्र च सम्बन्धेन कस्यचिद्धेतुता तत्र साध्यव्यापकतावच्छेदकावच्छिन्नाभावति हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धावपि न क्षतिः । स्वाधिकरणावृत्तितादृशाभावकत्वस्य विवक्षणीयत्वात्, अतः संयोगी गुणकर्मान्यत्वे सति सत्त्वादित्यादावपि नाव्याप्तिः । विशिष्टस्यानतिरिक्ततया विशिष्टेऽपि हेतो द्रव्यत्वाभावासामानाधिकरण्यस्य दुर्वारत्वेऽपि द्रव्यत्वाद्यभावे विशिष्टहेत्वसामानाधिकरण्यस्या...त्वात् ।

अव्याप्यवृत्तिकेवलान्वयिसाध्यके प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकतावच्छेदक व्याप्यवृत्तितावच्छेदक केवलान्वयितावच्छेदकरूपमेव तदवच्छिन्नाभावादेश्चाप्रसिद्धिरित्याह । स्मृतीति । संयोगाभावादिसाध्यके गुणत्वादौ व्याप्यवृत्तिसाध्यकस्थलोक्तस्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिरक्षणत्वात् द्रव्यत्वादिरूपहेतुविशेषानुसरणप्रसङ्ग इति यादृशसाध्यकहेतुमात्र एवाव्याप्तिस्तादृशस्मृतिविषयत्वरूपसाध्यकानुसरणम् । स्मृतिविषयत्वादेः स्मृति-

विषयवस्तुन्येव स्वविषयकस्मरणाभाववदशावच्छेदेनाभावसत्त्वात् कालिकमव्याप्यवृत्तित्वम् । ईश्वरज्ञानविषयत्वस्य व्याप्यवृत्तितया ज्ञानविषयतात्वेन ज्ञानविषयत्वाभावो न क्वापीति तदुपेक्ष्य स्मृतिविषयत्वत्वेन साध्यत्वमनुसृतम् ।

ननु विश्वेषां स्मृतिविषयत्वमप्रामाणिकम्, सामान्यलक्षणप्रत्यासत्त्या विश्वविषयकानुभवसम्भवेऽपि स्मृतेरुद्बोधकाधीनतयोद्बोधकस्य च फलोन्नेयतया यादृशवस्तुस्मृतौ प्रमाणान्तरविरहस्तदुद्बोधकस्याप्रामाणिकत्वेन स्मृतिविषयतायां अपि तथात्वात् । तथा च स्मृतिविषयत्वस्य न केवलान्वयित्वेत्याशयेन, संस्कारविषयत्वानुधावनम् ।

ननु यत्र स्मृतेरप्रामाणिकता तत्र संस्कारोऽप्यप्रामाणिकस्तस्य फलैकप्रमाणकत्वात् । न च तद्विषयकस्मृतेरप्रामाणिकत्वेऽपि तद्विषयकानुभवघटितसामग्री तद्विषयकसंस्कारे प्रमाणमिति वाच्यम् । संस्कारे प्रमाणान्तरविरहे तादृशसामग्र्या एवाकल्पनादित्यनुशयेन जन्यज्ञानविषयत्वेति ।

(दी०) अथ स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तिधर्मानवच्छिन्नप्रतियोगिताकान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वम्, यद्धर्मविशिष्टयत्किञ्चिदधिकरणवृत्तिधर्मानवच्छिन्नप्रतियोगिताकान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वे सति तद्धर्मविशिष्टत्वं वा सेति चेत् ? अत्र किं यथा कथञ्चित्सम्बन्धेन तदधिकरणवृत्तित्वं विवक्षितं साध्यतावच्छेदकसम्बन्धेन वा ? आद्ये गुणः स्पन्दत्वादित्यत्रातिव्याप्तिः, गुणत्वस्य स्वरूपसम्बन्धेन स्पन्दवृत्तितया तद्वत्त्वस्य स्पन्दनिष्ठतादृशान्योन्याभावप्रतियोगितानवच्छेदकत्वात् । द्वितीये समवायेन जातेः साध्यत्वे मेयत्वादावतिव्याप्तिः, जातिमन्मेयव्यक्तिनिष्ठतादृशान्योन्याभावप्रतियोगिताया जातिमत्त्वेनानवच्छेदाज्जातिशून्यमेयव्यक्तौ समवायेन वर्तमानस्यासिद्धत्वात् ।

( गा० ) स्वाधिकरणेति । इदं संयोगि द्रव्यत्वादित्यादौ हेतुमन्निष्ठस्य संयोगाद्यवच्छिन्नान्योन्याभावस्य न हेत्वधिकरणयत्किञ्चिद्यत्किवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वं यतः संयोगवत्त्वादिरूपतत्तत्प्रतियोगितावच्छेदकस्य सकलहेत्वधिकरणे सत्त्वेन तादृशं न किञ्चिद्धेत्वधिकरणं यद्वृत्तिधर्मानवच्छिन्ना तदीयप्रतियोगिता स्यादिति लक्षणसमन्वयः । संयोगि सत्त्वादित्यादौ हेत्वधिकरणगुणादिव्यक्तिवृत्तिधर्मानवच्छिन्नैव साध्यवत्त्वावच्छिन्नभेदप्रतियोगितेति नातिप्रसङ्गः । तत्रैव साध्यवत्त्वावच्छिन्नभेदप्रतियोगितायां द्रव्यादिवृत्तिधर्मावच्छिन्नायां न हेत्वधिकरणवृत्तिधर्मावच्छिन्नत्वसामान्याभाव इत्यतिव्याप्तेर्वारणाय यत्किञ्चिदिति । स्वपदं हेतुतावच्छेदकविशिष्टपरम्, अतो न द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः । यादृशधर्मस्य हेत्वधिकरणवृत्तित्वं तादृशधर्मपर्याप्तावच्छेदकताकान्यत्वं प्रतियोगितायां विशेषणीयमतो विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तावच्छेदस्य प्रतियोगितायां गुणादिवृत्तिसत्तावच्छिन्नाया अपि सत्तात्वविशिष्टपर्याप्तावच्छेदकताकान्यत्वान्नातिव्याप्तिः ।

अत्र च तादृशधर्मानवच्छिन्नप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वमेव विवक्षितम्, अन्यथा प्रतियोगिताया द्विधा निवेशनान्योन्याभावस्य चाधिकस्य निवेशेन गौरवादित्यवधेयम् । तादृशप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वं च तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकविशिष्टं तत्सामानाधिकरण्यम् । एवं च विशिष्टसत्तावद्द्रव्यनिष्ठधर्मानवच्छिन्नप्रतियोगितानवच्छेदकगुणत्वादिविशिष्टसामानाधिकरण्यरूपव्याप्त्युपलक्षितसत्तावत्ताज्ञानात् कर्मादौ गुणाद्यनुमित्यापत्तिरतस्तादृशसामानाधिकरण्यसहितहेतुतावच्छेदकस्य व्याप्तित्वमाह । तद्धर्मेति । हेतुतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमनुमितिहेतुरिति सूचनाय तद्धर्मविशिष्टत्वमित्यत्र विशिष्टपदोपादानम् । सामानाधिकरण्यस्य विशेषणत्वासम्भवश्च प्रागेव दर्शितः । स्वरूपसम्बन्धेन । कालिकसम्बन्धेन । तद्द्रव्यस्य । गुणत्ववत्त्वस्य । तादृशान्योन्याभावेति । यत्किञ्चित्स्पन्दवृत्तिधर्मानवच्छिन्नप्रतियोगिताकघटादिमदन्योन्याभावेत्यर्थः । अत्र चातिव्याप्तिर्व्यापकतालक्षणस्य न तु सामानाधिकरण्यघटि-

तव्यामिलक्षणस्य तस्यातिव्याप्तिश्च एतत्स्पन्दभिन्नः स्पन्दत्वादित्यादौ बोध्या । जातिमत्प्रेयव्यक्तिनिष्ठत्वेन तादृशव्यक्तिवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वरूपं तादृशत्वं घटाद्यन्योन्याभावस्य सम्पादितम् ।

ननु जातिमद्भेद एव न कथं तादृश इत्यत आह । जातिशून्येति । अप्रसिद्धिरिति । तथा च हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिपदेन जातिशून्यस्योपादानासम्भवाज्जातिमद्भेदो न हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तिधर्मानवच्छिन्नप्रतियोगिताक इत्यर्थः ।

(दी०) एतेन ग्रहो व्याख्यातः । एवं तथात्वेऽत्यन्ताभावगर्भमपि दुर्वचम् । तथा हि; प्रतियोग्यनधिकरणीभूतहेत्वधिकरणनिष्ठात्यन्ताभावेत्यादिकमव्यापकमेव संयोगादिसाध्यकद्रव्यत्वादौ, स्वाधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगिकात्यन्ताभावप्रतियोगितानवच्छेदकत्वघटितावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि पूर्ववद् गुणः स्पन्दत्वाज्जातिमान् मेयत्वादित्यत्रातिव्याप्तिः । एवं स्वप्रतियोगिनिष्ठाधेयत्वानिरूपकहेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकत्वघटितावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि उत्पत्तिकालावच्छेदेन जन्यानां द्रव्याणामजन्यानां च प्रलयावच्छेदेन वा संयोगानिष्ठाधेयत्वानिरूपकत्वोपगमे संयोगसाध्यकद्रव्यत्वे कालपरिमाणे वा हेतावव्याप्तिरिति कृतं पल्लवितेन ।

(गा०) एतेनेति । ग्राह्यव्याप्तेरप्रसक्तातिप्रसङ्गकथनेनेत्यर्थः । ग्रहः । अनुमितिजनकीभूतो ग्रहः । व्याख्यातः । अप्रसक्तातिप्रसङ्गग्रस्ततया व्याख्यातः । तथात्वे । भेदस्याव्याप्यवृत्तित्वे । अव्यापकमेवेति । द्रव्यस्याप्युत्पत्तिकालावच्छेदेन संयोगाभावप्रतियोगिसंयोगवद्भेदवत्तया संयोगाभावस्यापि । प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तित्वादिति भावः । यत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगिकेति । यत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगिसामान्यकेत्यर्थः । यत्किञ्चिद्व्यक्तिवृत्त्यप्रतियोगिकेति यावत् ।

मानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वव्यापकसाध्यसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वकत्वं वा । स्वसमानाधिकरणाः सर्वे यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मावलीढसामानाधिकरण्यम् । साध्यसामानाधिकरण्याभावव्यापकतावच्छेदकस्वसामानाधिकरण्यसामान्याभावत्वकत्वं वा व्याप्तिः । अत्र च साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं तद्वृत्तिद्वयं च एकेन सम्बन्धेन विशेषणताविशेषेण वा बोध्यमिति ॥

(गा०) प्रथमं यावत्साध्यव्यापकतावच्छेदकव्यापकतावच्छेदकत्वरूपां व्याप्तिमुक्त्वाऽवच्छेदकत्वाभावघटितप्रवेशेन लघीयसीं यावत्स्वव्यापकतानवच्छेदकसाध्यव्यापकतानवच्छेदकत्वरूपां तामुक्तवान् । न च समानाधिकरणेत्यादिना संबन्धभेदनिबन्धनदोषवारणाय प्रथमे व्यापकताद्वयं द्वितीये चाव्यापकताद्वयं एकसम्बन्धेन निवेशितं साध्यतावच्छेदकसम्बन्धेन तन्निवेशे यत्र संयोगेन साध्यता तत्र तेन सम्बन्धेन व्यापकताया अप्रसिद्ध्यापत्तेः । द्वितीये च तेन सम्बन्धेन वस्तुमात्रस्यैव साध्यव्यापकतया तादृशाव्यभिचारित्वापत्तिप्रसङ्गादिना तन्निवेशः स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रविष्टसामानाधिकरण्यांशमात्रस्य व्याप्यव्यापकभावनिवेशेनैवोपपत्तौ तावद्दूरपर्यन्तनिवेशनमफलमित्याशयेनाह । स्वसमानाधिकरणा इति । स्वसामानाधिकरण्यव्यापकतावच्छेदकसाध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यत्वकत्वमित्यर्थः । सामानाधिकरण्यस्याव्याप्यवृत्तित्वानुपगमान्न तस्य व्यापकतानुपपत्तिः । एतत्कल्पेऽपि साध्यसामानाधिकरण्याव्याप्यवृत्तित्वभ्रमदशायां तत्र व्यापकताग्रहासम्भवात् अनुमित्यनुपपत्तिमालोच्य लक्षणान्तरमाह । साध्येति । अत्र साध्यसामानाधिकरण्याभावघटितहेतुसामानाधिकरण्याभावस्याव्याप्यवृत्तित्वभ्रमस्तादृशहेतुसामानाधिकरण्यभ्रमपर्यवसितस्तत्सत्त्वे चानुमितिरनुभवविरुद्धैव हेतोः साध्याभावसामानाधिकरण्यग्रहवत्, साध्यविरोधिसामानाधिकरण्यग्रहस्यावि

थनुमितिविरोधित्वादिति तादृशभ्रमकाले हेतुसामानाधिकरण्याभाववत्वे साध्यसामानाधिकरण्याभावव्यापकतावच्छेदकताया दुर्ग्रहत्वेऽपि न क्षतिः । व्यापकतावच्छेदकत्वमप्रत्यन्ताभावप्रतियोगितानवच्छेदकत्वगर्भं न तु भेदप्रतियोगितावच्छेदकतानवच्छेदकत्वगर्भं तथा सति धर्मिणि तत्समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वनिवेशेनैव सामञ्जस्ये धर्मे व्यापकतावच्छेदकत्वपर्यन्तनिवेशविरोधादिति दिक् ॥

इति अनुमानगादाधर्यां व्याप्त्यनुगमप्रकरणम् ॥



मानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वव्यापकसाध्यसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वकत्वं वा । स्वसमानाधिकरणाः सर्वे यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मावलीढसामानाधिकरण्यम् । साध्यसामानाधिकरण्याभावव्यापकतावच्छेदकत्वसामानाधिकरण्यसामान्याभावत्वकत्वं वा व्याप्तिः । अत्र च साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं तद्वृत्तिद्वयं च एकेन सम्बन्धेन विशेषणताविशेषेण वा बोध्यमिति ॥

(गा०) प्रथमं यावत्साध्यव्यापकतावच्छेदकव्यापकतावच्छेदकत्वरूपां व्याप्तिमुक्त्वा ऽवच्छेदकत्वाभाववत्वाप्रवेशेन लघीयसीं यावत्स्वव्यापकतानवच्छेदकसाध्यव्यापकतानवच्छेदकत्वरूपां तामुक्तवान् । न च समानाधिकरणेत्यादिना संबन्धभेदनिबन्धनदोषवारणाय प्रथमे व्यापकताद्वयं द्वितीये चाव्यापकताद्वयं एकसम्बन्धेन निवेशितं साध्यतावच्छेदकसम्बन्धेन तन्निवेशे यत्र संयोगेन साध्यता तत्र तेन सम्बन्धेन व्यापकताया अप्रसिद्ध्यापत्तेः । द्वितीये च तेन सम्बन्धेन वस्तुमात्रस्यैव साध्यव्यापकतया तादृशाव्यभिचारित्वातिप्रसङ्गादिना तन्निवेशः स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रविष्टसामानाधिकरण्यांशमात्रस्य व्याप्यव्यापकभावनिवेशेनेवोपपत्तौ तावद्दूरपर्यन्तनिवेशनमफलमित्याशयेनाह । स्वसमानाधिकरणा इति । स्वसामानाधिकरण्यव्यापकतावच्छेदकसाध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यत्वकत्वमित्यर्थः । सामानाधिकरण्यस्याव्याप्यवृत्तित्वानुपगमान्न तस्य व्यापकतानुपपत्तिः । एतत्कल्पेऽपि साध्यसामानाधिकरण्याव्याप्यवृत्तित्वभ्रमदशायां तत्र व्यापकताग्रहासम्भवात् अनुमित्यनुपपत्तिमालोच्य लक्षणान्तरमाह । साध्येति । अत्र साध्यसामानाधिकरण्याभाववति हेतुसामानाधिकरण्याभावस्याव्याप्यवृत्तित्वभ्रमस्तादृशहेतुसामानाधिकरण्यभ्रमपर्यवसितस्तत्सत्त्वे चानुमितिरनुभवविरुद्धैव हेतोः साध्याभावसामानाधिकरण्यग्रहवत् साध्यविरोधिसामानाधिकरण्यग्रहस्यापि

अनुमितिविरोधित्वादिति तादृशभ्रमकाले हेतुसामानाधिकरण्याभावत्वे साध्यसामानाधिकरण्याभावव्यापकतावच्छेदकताया दुर्ग्रहत्वेऽपि न क्षतिः । व्यापकतावच्छेदकत्वमप्यत्यन्ताभावप्रतियोगितानवच्छेदकत्वगर्भं न तु भेदप्रतियोगितावच्छेदकतानवच्छेदकत्वगर्भं तथा सति धर्मिणि तत्समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वनिवेशेनैव सामञ्जस्ये धर्मे व्यापकतावच्छेदकत्वपर्यन्तनिवेशविरोधादिति दिक् ॥

इति अनुमानगादाधर्यां व्याप्त्यनुगमप्रकरणम् ॥



## अथ सामान्यलक्षणाप्रकरणम् ।

(चि०) व्याप्तिग्रहश्च सामान्यलक्षणाप्रत्यासत्त्या सकलधूमादिविषयकः । कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे तस्मादनुमितिः ? सा चेन्द्रियसम्बद्धविशेषणता, अतिरिक्तैव वा । तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसन्निकर्षस्य हेतुत्वेनानागतादौ संयोगादेरभावादिति वदन्ति । तदपरे न मन्यन्ते ।

(दी०) प्रसङ्गात् सामान्यलक्षणां व्यवस्थापयितुमाह । व्याप्तिग्रहश्चेति । केचित्तु समानाधिकरणयोरेव व्याप्तिरिति पक्षे पर्वतीयधूमे वह्निव्याप्तिविशिष्टधीर्न पर्वतीयवह्निव्याप्तिग्रहं विना, स च न सामान्यलक्षणां विनेति कथितव्याप्तिविशिष्टत्वादिलक्षणोपोद्घातोऽपीत्याहुः ।

(गा०) व्याप्तिग्रहश्चेत्यादिमूलेन व्याप्तिग्रहस्य सकलधूमविषयकतायाः पर्वतीयधूमज्ञानजन्यानुमित्यन्यथानुपपत्त्या व्यवस्थापनं कुत्रोपयोगीत्याकाङ्क्षायां तस्य सामान्यलक्षणप्रत्यासत्तिव्यवस्थापनोपयोगितां सामान्यलक्षणप्रत्यासत्तिनिरूपणप्रयोजकसङ्गतिं च दर्शयति । प्रसङ्गादिति । सामान्यप्रत्यासत्त्या सर्वोपसंहारादित्यादिना ग्रन्थेनाशङ्किततया इदानीं स्मृतत्वादित्यर्थः । सामान्यलक्षणामिति । प्रत्यासत्तिमिति शेषः । व्यवस्थापयितुम् । प्रमाणवत्त्या निरूपयितुम् । व्याप्तिग्रहश्चेत्याद्यभिधानं चाकाङ्क्षोत्थापनेन सामान्यप्रत्यासत्तिव्यवस्थापनोपयोगीति ध्येयम् ।

यद्यपि सामान्यलक्षणप्रत्यासत्तिं विनानुपपद्यमानं व्याप्तिग्रहस्य सकलधूमादिविषयकत्वमेव तत्प्रत्यासत्तित्वे मानमिति व्याप्तिग्रहश्च सामान्यलक्षणप्रत्यासत्त्या सकलधूमविषयक इति

याप्यमेव तत्प्रत्यासत्तिव्यवस्थापकमिति व्यवस्थापयतीत्येव वक्तुं युक्तं तथापि कथितमपि सकलधूमविषयकत्वं युक्तिमन्तरेणा वधारयितुं न शक्यते, कथमन्यथेत्यादिना वक्ष्यमाणा च युक्तिः पूर्वपक्षिणा दूषयिष्यते, उच्यते इत्यादिग्रन्थेन व्यभिचारसंशयान्यथानुपपत्तिकथनमेव तद्व्यवस्थापकमिति युक्त्या तस्मिन् साधित एव तदन्यथानुपपत्त्या प्रत्यासत्तिव्यवस्थितिर्निर्वहतीति व्यवस्थापयितुमित्युक्तम् ।

मूले सकलधूमविषयक इत्यस्य धूमनिष्ठसकलव्याप्तिविषयक इत्यर्थः । पूर्वं पर्वतीयधूमग्रहेऽपि तन्निष्ठव्याप्यग्रहे तत्र व्याप्त्यवगाहिप्रमाया अबाधितव्याप्त्युपनायकाविरहेणासम्भवात् । तन्निष्ठव्याप्तिग्रहे पूर्वं तद्ग्रहेऽपि लौकिकसन्निकर्षादिबलात्तस्मिन् भासमाने उपनायकसत्त्वेन तत्र व्याप्त्युपनीतभानसम्भवात् सकलधूमविषयकत्वस्याकिञ्चित्करत्वात् उपोद्घातसङ्गत्या सामान्यप्रत्यासत्तिव्यवस्थापनमिति वदतां मतमाह दीधितौ । केचित्विति । सकलधूमसाधारणैकव्याप्तिमते विनापि सामान्यप्रत्यासत्तिं विशिष्टपरामर्शनिर्वाहस्याग्रे वाच्यत्वात् समानाधिकरणयोरेवेति । पक्षे । मते । व्याप्तिविशिष्टधीः । व्याप्तिप्रमालक्षणोपोद्घातः । लक्षणघटकस्यानुमितिकारणतायां व्याप्तिविशिष्टवैशिष्ट्यनिश्चयत्वावच्छिन्नत्वस्योपपादकत्वं सामान्यप्रत्यासत्तेरिति शेषः । अनुमितिपूर्वं नियमतो विशिष्टपरामर्शनिर्वाहे तत्त्वेनानुमितिहेतुताया व्यभिचारादिनाऽसम्भवात् , गृह्यमाणव्याप्यतावच्छेदकताकधर्मप्रकारकपक्षधर्मताज्ञानत्वेनैवानुमितिहेतुताया अगत्या वाच्यत्वादिति भावः । अपिना प्रसङ्गसम्भवोऽपि दर्शितः ।

एकव्यक्तिहेतुकस्थले विशिष्टपरामर्शत्वेन हेतुताया निष्प्रत्यूहत्वात्तादृशकारणताघटितमेव जातिघटितलक्षणं निर्दोषमिति न कथितलक्षणोपोद्घातावसर इत्यस्वरससूचनाय केचित्त्विति । लक्षणानुपपादकत्वेऽपि सामान्यलक्षणानुपगमे विशिष्टपरामर्शत्वेन हेतुत्वानुपपत्तौ व्याप्यतावच्छेदकानवगाहिशाब्दपरामर्शादनुमित्यनुपपत्त्या दर्शितज्ञानद्वयसाधारणरूपेण च हेतुत्वासम्भवाद् धूमादिज्ञानस्य प्रामाण्यमेव नोपपद्यते इत्यनुमानप्रामाण्योपोद्घातो ऽव्याहत एव ।

न च नानाव्यक्तिकहेतुज्ञानस्यानुमितिहेतुत्वासम्भवेऽपि एकव्यक्तिकहेतुज्ञानस्य तथात्वसम्भवात्तत्रैवानुमानप्रामाण्यं निराबाधमिति न तदुपपादकत्वमपि सामान्यप्रत्यासत्तेरिति वाच्यम् । धूमादिदर्शनानन्तरमनुमित्यसम्भवे तत्र यथा प्रवर्तकज्ञाननिर्वाहस्तथैव सर्वत्र तन्निर्वाहेणानुमितेरेव विलोपापत्त्या अनुमानप्रामाण्यानिर्वाहात् । एवं व्याप्तिविशिष्टेत्यादिलक्षणवाक्यस्य वह्निव्याप्यधूमवत्पर्वतनिश्चयत्वावच्छिन्नकारणतावटितलक्षणपरत्वे तदुपोद्घातोऽपि दुर्वार एवेति ध्येयम् ।

विकल्पेन प्रत्यासत्तितया स्वीकार्यस्य ज्ञायमानसामान्यस्य सामान्यज्ञानस्य च सामान्यलक्षणपदार्थत्वं व्युत्पादयति । अत्र चेति ।

( दी० ). अत्र च सामान्यं लक्षणं स्वरूपं यस्या इत्यर्थे सामान्यमेव प्रत्यासत्तिः । सामान्यं लक्षणं निरूपकं यस्या इत्यर्थे तु तज्ज्ञानम् । तत्राद्यमाह । सा चेन्द्रियेति । इन्द्रियेण सम्बद्धं धूमादि तस्य विशेषणं तद्विशेष्यकज्ञानप्रकारीभूतो धूमत्वादिरित्यर्थः । विशेषणतेत्यत्र भावार्थो न विवक्षितः । तत्र विशेषणत्वं यस्या इति बहुव्रीहिर्वा । सम्बद्धपदस्यैव वा परम्परासम्बद्धस्तत्सम्बद्धविशेष्यकज्ञानप्रकारोऽर्थः । तथा च सैव विशेषणतेत्यर्थः ।

( गा० ) तज्ज्ञानमिति । सामान्यज्ञानमित्यर्थः । ज्ञानस्य विषयनिरूप्यत्वादिति भावः । सा चेन्द्रियसम्बद्धविशेषणेति ग्रन्थस्य सामान्यलक्षणाया इन्द्रियसम्बद्धविशेषणतारूपाभावग्राहकप्रत्यासत्त्यन्तर्भावपरत्वं न सम्भवति इन्द्रियसम्बद्धानुयोगिकविशेषणताया अभावग्राहकत्वात् प्रकृते चेन्द्रियसम्बद्धधूमत्वादिप्रतियोगिकविशेषणतायास्तद्वद्विशिष्टरूपाया यावद्धूमादिप्रत्यासत्ताया यावद्धूमादिभासकतायाः स्वीकरणीयत्वात्, धूमत्वसामान्यस्याकिञ्चित्करत्वात् ।

न चेन्द्रियसम्बद्धानुयोगिकसामान्यनिरूपितविशेषणतैव सामान्याश्रयाणां प्रत्यासत्तिरिति प्रत्यासत्त्यन्तरकविधत्वमिति वाच्यम् । अभावे ग्राह्यप्रतियोगिकविशेषणताया अत्र च ग्राह्यनिष्ठधू-

मत्वादिप्रतियोगिकविशेषणताया ग्राहकत्वेन विशेषात् । सम्बन्धमात्रस्य विशेषणतापदार्थत्वे इन्द्रियसम्बद्धानुयोगिककालिकसम्बन्धस्याप्यभावग्राहकतोपपत्तेः । अभावीयविलक्षणसम्बन्धपरत्वे प्रकृतासङ्गतात् ।

एतेन इन्द्रियसम्बद्धसामान्ये धर्मिणो विशेषणतासामान्यलक्षणेत्यपि परास्तम् । अत इन्द्रियसम्बद्धविशेषणतापदं ज्ञायमानसामान्यपरतया व्याचिकीर्षुराह । तत्राद्यमिति । विशेषणपदस्य वैशिष्ट्यप्रतियोग्यर्थकत्वे दोषस्य वाच्यतया तदर्थमाह । तद्विशेष्यकेति । तन्निष्ठविशेष्यतानिरूपितज्ञानप्रकारताश्रय इत्यर्थः । तेनेन्द्रियसम्बद्धांशेऽन्यप्रकारकात्तदसम्बद्धांशे धूमत्वप्रकारकाद् धूमकालीनोऽयमित्यादिज्ञानान्न यावद्धूमादिग्रहप्रसङ्गः ।

ननु विशेषणपदोत्तरभावप्रत्ययलभ्यप्रकारताया एव प्रत्यासत्तित्वमेतावता लभ्यते न तु धूमत्वादेरित्यत आह । विशेषणतेत्यन्तेति ।

ननु देवनेतिवत्स्वार्थे तल्प्रत्ययानुशासनाभावाद्भावार्थाविवक्षायां तल्प्रत्ययस्यासाधुतापत्तिरित्यतः प्रकारान्तरमनुसरति । तत्रेति । तत्र इन्द्रियसम्बद्धे । विशेषणत्वं पूर्वनिरूक्तमेव । व्यधिकरणबहुव्रीह्यसहिष्णुतातः प्रकारान्तरमालम्ब्यते । सम्बद्धपदस्यैव चेति । परम्परासम्बद्धं विवृणोति । तत्सम्बद्धेति । एवं सति विशेषणादिपदेन सप्तमीतत्पुरुषासम्भवाद् विशेषणतापदेन कर्मधारयमवलम्ब्य व्याचष्टे । तथा चेति । विशेषणतेति । इन्द्रियसम्बन्धात्मिकेत्यर्थः । एतदभिधानं च सामान्यस्य प्रत्यासत्तित्वप्रवादरक्षणाय ।

यद्यपि धूमत्वादिसामान्यस्य इन्द्रियप्रतियोगिकत्वविरहात् स्वतस्तत्प्रत्यासत्तित्वमनुपपन्नं तथापि विशिष्टघटकसंयोगादेस्तत्प्रतियोगिकत्वाद्विशिष्टस्य तत्प्रत्यासत्तिता व्यापारस्तु संयोग एव तस्य न तु सामान्यं तदजन्यत्वादित्यवधेयम् ।

(दी०) अत्र च बहिरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य तदिन्द्रियजन्यत्वञ्च नियामकम् । एवं चाणुत्वेन यत्किञ्चिदणूपस्थितावपि सकलाणुगोचरो मानसो बोध इति वदन्ति ।

(गा०) अत्रेति । सामान्यप्रत्यासत्तिहेतुतायामित्यर्थः । अवच्छेदकमित्यर्थकेन नियामकमित्यनेनास्याभिसम्बन्धः । लौ-

किकसम्बन्ध इति । साक्षात्करोमीतिप्रतीतिनियामकविषयतायाः प्रयोजकः संयोगादिसम्बन्ध इत्यर्थः । तदिन्द्रियजन्यत्वं तदिन्द्रियजन्यतावच्छेदकीभूतजातिविशेषः, तथा च धूमत्वादिप्रकारतानिरूपितलौकिकान्यमुख्यविशेष्यतासम्बन्धेन चाक्षुषत्वाद्यवच्छिन्नं प्रति चक्षुःसंयोगादिमद्धर्मिनिष्ठविशेष्यतानिरूपितचाक्षुषादिप्रकारतावद्धूमत्वत्वादिना हेतुता द्रव्यत्वादिसामान्यलक्षणाजन्यज्ञाने व्यभिचारवारणाय धूमत्वादिप्रकारतानिरूपितत्वं विशेष्यताविशेषणं द्रव्यत्वादिसामान्यलक्षणाजन्ययावद्द्रव्यभाने स्मरणाद्युपनीतधूमत्वादेर्लौकिकसन्निकर्षशून्ये धूमादौ न प्रकारतया भानमुपेयते अतो न तत्रोक्तप्रकारताविशिष्टधूमत्वादेर्व्यभिचारः । ज्ञानलक्षणया धूमत्वाद्युपनीतभानजनने विशेष्यभासकसामग्र्याः सहकारित्वे कल्पनीये विशेष्यलौकिकप्रत्यक्षतदीयविशेष्यान्तरभासकलौकिकसन्निकर्षादिघटिततदुपनीतभानसामग्र्योरेव सहकारिता कल्प्यते न तु द्रव्यत्वादिसामान्यघटिततद्भासकसामग्र्या अतो न तत्रोपनायकज्ञानबलाद् द्रव्यत्वादिना मुख्यविशेष्यतया भासमानधूमाद्यंशे धूमत्वादिभानम् ।

केचित्तु तत्रानुपस्थितासन्निकृष्टधूमाद्यंशे धूमत्वाभानेऽपि न क्षतिः, धूमत्वान्यसामान्यप्रकारतानिरूपितमुख्यविशेष्यताया एव तादृशधूमत्वजन्यतावच्छेदकत्वोपगमात् उक्तस्थले च धूमत्वद्रव्यत्वोभयप्रकारकैकविषयताया एवोपगमात् । उभयसामान्यज्ञानं च समूहालम्बनरूपमुपेयते । तत्र च प्रकारताभेदेन विषयताभेद इति द्रव्यत्वाद्यप्रकारिकैव धूमत्वप्रकारकविषयतेति न तदसङ्गतिः इत्याहुः ।

लौकिकविषयतान्यत्वस्य विशेष्यताविशेषणत्वात् प्राथमिकधूमत्वादिप्रकारकलौकिकप्रत्यक्षे न व्यभिचारः मुख्यविशेष्यतापर्यन्तनिवेशाद् धूमत्वादिना धूमाद्युपनीतभाने न व्यभिचारः । यावद्धूमविषयकत्वस्य जन्यतावच्छेदकत्वानुपगमेऽपि यावत्सु धूमेषु कारणसत्त्वेन तत्र विषयतासम्बन्धेन ज्ञानोत्पत्त्यैवार्थतो यावद्धूमविषयकत्वनिर्वाहः । यदिरिन्द्रियस्येत्यनेन मानसस्थले मनसो लौकिकसम्बन्धस्य ज्ञानस्य मानसताया एवापेक्षणीयत्वं प्रदर्शितं तत्प्रयोजनमाह । एवं चेति । तद्व्यक्तित्वादिना अणूपस्थितौ सकलाणुप्रत्यक्षानुदयः, द्रव्यत्वादिना यत्किञ्चिदणूपस्थितिस्थले च तेन रूपेण याव-

दणुज्ञानस्य यत्किञ्चिद्द्रव्यलौकिकप्रत्यक्षसामग्रीवशोत्पन्नयावद्द्रव्यप्रत्यक्षमूलकसंस्कारात् स्मरणरूपस्यैव सम्भवेन तत एव सकलकार्योपपत्तेस्तदानीं सामान्यजयावदणुप्रत्यक्षासम्भवेऽपि क्षतिविरहाद्दोषप्रसङ्गासङ्गतिरित्यतोऽणुत्वेनेति । अणुत्वमात्रेणेत्यर्थः । एतच्च सकलाणुगोचर इत्यत्रापि सम्बध्यते । तदानीं च प्रत्यक्षादिप्रकारकज्ञानस्याननुभवेन तेन रूपेण यावदणुस्मरणाभ्युपगमासम्भवात् सामान्यजयावदणुज्ञानस्यावश्यकत्वेनानुपपत्तिसङ्गतिः । सकलाणूपस्थितिस्थले सकलाणुगोचरस्य मानसोपनीतभानस्यैव सम्भवादनुपपत्तिरतो यत्किञ्चिदिति । लौकिकसन्निकर्षादावणु-भ्रमदशायां यावदणुप्रत्यक्षानुपपत्तिविरहादणूपस्थितीति । इन्द्रियसम्बन्धादिनिवेशस्य स्वयं हेयतया वक्ष्यतीति ।

तदनुयोगिकत्वे दोषस्य प्रतियोगित्वरूपतद्विशेषणत्वं परित्यज्य तदंशे प्रकारतया भासमानत्वरूपविशेषणत्वपर्यन्तनिवेशस्य ज्ञाने तदिन्द्रियजन्यत्वनिवेशस्य धर्मिणि लौकिकसन्निकर्षनिवेशस्य च प्रयोजनमाह । एतेनेत्यादिना । परास्तमित्यन्तेन ।

( दी० ) एतेन धूलीपटले धूमभ्रमे तत्र च वह्निव्याप्तिग्रहे तत्रासता धूमत्वेन सामान्येन धूमेषु व्याप्त्यग्रहाद् धूमदर्शनाद्वह्न्यनुमितिर्न स्यात्, हेत्वभावेन परामर्शानुत्पादात् । किञ्च धर्मिणि दोषवशान्नियमेनागृह्यमाणेन स्मरणप्रकारीभवता सामान्येन गृह्यमाणेन वा लौकिकसन्निकर्षविगमेऽपि चाक्षुषज्ञानापत्तेरिति परास्तम् ।

( गा० ) तत्र चेति । धूमत्वेनेति शेषः । तत्रासतेति । धूलीपटलेऽवर्तमानेनेत्यर्थः । अग्रहे हेतुगर्भविशेषणमेतत् । धूमत्वेन सामान्येन धूमेषु व्याप्त्यग्रहादिति । धूमग्राहकप्रत्यासत्तिविरहेण तद्ग्रहासम्भवादिति भावः । हेत्वभावेनेति । धूमरूपविशेषणधर्मिकव्याप्तिरूपविशेषणतावच्छेदकप्रकारकज्ञानाभावेनेत्यर्थः । परामर्शानुत्पादादिति । व्याप्तिविशिष्टधूमवैशिष्ट्यावगाहिनोऽनुमितिकारणचरमपरामर्शस्योत्पादासम्भवादित्यर्थः ।

इदमापाततः, स्मृतव्याप्तेः पक्षीयधूमे धूमत्वदर्शनाद्ग्रहे क्षणिकव्या-

जेन पक्षे व्याप्तिविशिष्टवैशिष्ट्यग्रहसम्भवात् ।

न च पूर्वं यत्र धर्मिणि यद् गृहीतं तत्रैव तदुपनय इति मते धूलीपटलमात्रे गृहीताया अपि व्याप्तेरिन्द्रियसन्निकृष्टे धूमे उपनयासम्भवेन परामर्शासम्भव इति वाच्यम् । विशिष्टवह्निमद्वृत्तित्वरूपाया व्याप्तेः पर्वतरूपधर्मिवृत्तित्वांशस्य लौकिकसन्निकर्षादेव भानात् पर्वते वह्निमत्त्वपर्यन्तस्यैवोपनेयतया पूर्वं धूमाग्रहेऽपि वह्निमत्त्वसामान्यलक्षणया वह्निमत्त्वप्रकारेण पर्वतस्यापि ग्रहात्तदुपनयसम्भवेनानुपपत्त्यभावात् ।

यत्र धूमे लौकिकसन्निकर्षो नास्ति तत्र पूर्वं धूमाग्रहे पक्षे धूमोपनयासम्भवेन नानुमितिनिर्वाह इत्येतत्परतापि न सम्भवति, एवं सति धूमाग्रहस्यैव वक्तुमुचिततया व्याप्त्यग्रहाभिधानविरोधात् । धूलीपटले धूमत्वभ्रमस्थले(१) धूमत्वसामान्यलक्षणया धूमग्रहासम्भवेऽपि संयोगित्वादिसामान्यलक्षणया धूमग्रहस्य दुर्वारत्वाच्च ।

एतेन यत्र पर्वते धूमे च लौकिकसन्निकर्षो वर्त्तते न तु तदुभयसंयोगग्राहकविलक्षणसन्निकर्षः, असन्निकृष्टस्यापि संयोगस्य संसर्गविधया भानोपगमेन पक्षधर्मताज्ञाननिर्वाहः, तत्र पूर्वं धूमे व्याप्त्यग्रहे उक्तनियमसत्त्वे लौकिकसन्निकर्षवत्त्वेऽपि धूमवह्निमत्संयोगात्मकव्याप्तिग्रहासम्भवात्तत्र तस्योपनीतभानस्यैव स्वीकरणीयत्वात् ।

न च धूलीपटले धूमत्वभ्रमदशायां पक्षीयधूममानेऽपि तद्विशेषणतया व्याप्तिभानमुपनयाधीनमेव मुख्यविशेष्यतया एव सामान्यप्रत्यासत्तिप्रयोज्यत्वात् । तथा चोक्तनियमसत्त्वे प्रागपि पक्षीयधूमे व्याप्त्यग्रहाज्ज्ञानघटितविशेषणताया निवेशोऽपि नोक्तस्थले विशिष्टपरामर्शनिर्वाह इति वाच्यम् । संयोगित्वसामान्यलक्षणयैव उक्तसंयोगरूपव्याप्तिप्रकारेण धूममानस्योक्तस्थले सम्भवेन उक्तनियमसत्त्वेऽपि ज्ञाननिवेशे विशिष्टपरामर्शनिर्वाहादित्यपि निरस्तम् ।

संयोगित्वसामान्यलक्षणया दर्शितस्थले तेन रूपेण धूममानोपगमे धूलीपटले धूमत्वासत्त्वस्याकिञ्चित्करतया धूलीपटल इत्यादिफक्किकाया दुःसङ्गतत्वात् । तस्मात् धूमत्वग्रहप्रतिबन्धकदोषादिसमवधानदशायां धूमत्वेन धूमग्रहस्यापत्तिवारणमेव ज्ञानघटित-

(१) व्याप्तिग्रहकाले इति २ पु० पाठः ।

विशेषणतानिवेशफलमित्यवधेयम् ।

धर्मिणीति । नयनसन्निकृष्टधूमादावित्यर्थः । अस्य चागृह्यमाणेनेत्यनेन स्मरणप्रकारीभवतेत्यनेन गृह्यमाणेनेत्यनेन च सम्बन्धः । धूमेन्द्रियसन्निकर्षोत्पत्तिक्षणे पूर्वसन्निकर्षविरहेण सामान्यस्य नयनागृह्यमाणतासम्भवेऽपि नन्तुत्तरसामान्यप्रकारकलौकिकचाक्षुषोत्पत्त्या तस्य यावत्सामान्याश्रयविषयकत्वे इष्टापत्तिसम्भवाद्दोषवशादित्युक्तम् । दोषसमवधानस्थले, च प्रत्यासत्त्यन्तरेण सामान्यप्रकारकज्ञानाजननात् प्रत्यासत्त्यन्तराधीनसामान्यप्रकारकज्ञाने जायमान एव सामान्येन यावत्सामान्याश्रयज्ञानोत्पत्तेरानुभविकतया नेष्टापत्तिसम्भव इति ध्येयम् ।

इन्द्रियसम्बद्धे सामान्यस्य ज्ञायमानत्वरक्षायै स्मरणप्रकारीभवतेति । सामान्येन चाक्षुषज्ञानापत्तिरित्यन्वयः । यत्र सामान्यप्रकारकचाक्षुषोत्पत्तिकाले दोषसमवधानं तत्र तदुत्तरसामान्यजचाक्षुषापत्तिश्च सामान्याश्रयचाक्षुष(१)जनककालोत्कृसंयोगनाशोत्तरं वक्ष्यमाणसामान्यजन्यचाक्षुषापत्तिरिव दोष एवेत्यभिमते । गृह्यमाणेन चेत्यत्र नयनेनेत्यनुषज्यते । सामान्येनेति न लौकिकसन्निकर्षविगमे सामान्यजप्रत्यक्षानुत्पत्तिबीजं पूर्वोक्तं बोध्यम् । चक्षुःसंयोगादेश्च विशेषणतया कारणतावच्छेदकत्वं नोपलक्षणतया अतः कारणतावच्छेदकविशिष्टस्याव्यवहितपूर्वकालसत्त्वायाः प्रकृते कार्योत्पत्तिप्रयोजकतया कालान्तरीयचक्षुःसंयोगादिकमादाय नातिप्रसङ्गः ।

नन्विन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभवतः सामान्यस्य प्रत्यासत्तित्वे वह्न्यादिरूपसामान्यप्रत्यासत्त्या यावतां वह्न्यादिमतां प्रत्यक्षानुपपत्तिः, इन्द्रियसम्बद्धे गृह्यमाणवह्न्यादिव्यक्तेर्यावति वह्न्यादिमत्यसत्त्वादिति महानसीयधूमे व्याप्तिग्रहदशायां पर्वतीयधूमादौ व्याप्तिग्रहानुपपत्तिः वह्न्यादिमत्त्वेन पर्वतादिग्रहासम्भवात् ।

यदि च तदानीं वह्निमत्त्वेन पर्वताग्रहेण पर्वतीयधूमे व्याप्त्यग्रहेऽपि वह्नित्वसामान्यलक्षणया पर्वतीयवह्निग्रहेण पर्वतसन्निकर्षदशायां स्मरणोपनीतपर्वतीयवह्निप्रकारेण पर्वतांशे लौकिक एव पर्वतीयधूमे वह्निमद्वृत्तित्वरूपव्याप्तिग्रहः सम्भवतीति मन्यते तदापि यत्र वह्न्यादिमत एव साध्यता तत्र वह्न्यादिमत्त्वसामान्यप्रत्यासत्त्या

(१) सामान्यचाक्षुषेति पाठान्तरम् ।

यावद्वह्निमतामभानेन असन्निकृष्टाया अपूर्वव्यक्तेरनुमानानुपपत्तिस्त-द्व्यक्तिव्याप्तेरग्रहादित्यत आह । सामान्यं चेति ।

( दी० ) सामान्यं च सखण्डाखण्डभेदेन द्वेधा । सखण्डे चाखण्डेऽपि परम्परया सम्बद्धं प्रत्यासत्तिः । येन सम्बन्धेन चेन्द्रियसम्बद्धे सामान्यं ज्ञायते तेन सम्बन्धेनाधिकरणानां प्र-त्यासत्तिरिति ।

( गा० ) सखण्डेति । यावतामाश्रयाणां भानमुपपाद्यं तावद्वृत्ति-त्वे सति तावद्वृत्तितावच्छेदकधर्मवत्त्वमेव सखण्डत्वं यथा वह्नि-त्वाद्यवच्छिन्नस्य, तावद्व्यक्तिवृत्तित्वमखण्डत्वं यथा वह्नित्वादेः । सखण्डे । सखण्डसामान्याश्रये वह्न्यादिमिति । अखण्डम् । वह्नित्वा-दिकम् । परम्परासम्बद्धं प्रत्यासत्तिरिति । स्वाश्रयघटितपरम्परा-सम्बन्धेन इन्द्रियसम्बद्धे भासमानं सत्तेन सम्बन्धेनाश्रयज्ञाने हेतु-रित्यर्थः । वह्न्यादिप्रकारेणाश्रयविषयकयावद्वह्न्याद्याश्रयभासकज्ञाने च फलानुरोधात् स्वाश्रयवह्न्यादिमत्त्वसम्बन्धेन वह्न्याद्याश्रये वह्नि-त्वादेरपि नियमतः प्रकारत्वमुपेयत इति भावः ।

यदि च परम्परासम्बन्धेन वह्नित्वादिप्रकारकज्ञानं विनापि व-ह्न्यादिप्रकारेण यावतां वह्न्यादिमतां भानमानुभविकं तदा तादृश-प्रत्यक्षे इन्द्रियसम्बद्धविशेषणतावच्छेदकवह्नित्वादेः परम्परासम्ब-न्धेन हेतुता वाच्या ।

न चैवं तादृशविशेषणतावच्छेदकवह्नित्वादिना वह्न्यादेरेव न कथं साक्षात्सम्बन्धेन हेतुत्वमुपेयते इति वाच्यम् । तथा सत्यती-तानागतवह्न्यादेराश्रयस्य प्रत्यक्षानुपपत्तेः ।

दीधितिकारस्तु परम्परासम्बन्धेन प्रकारीभवतो वह्नित्वादेः प्र-त्यासत्तिताया आवश्यकत्वात्तत एवोपपत्तेः साक्षात्सम्बन्धावच्छि-न्नप्रकारतायामवच्छेदकीभवतो वह्नित्वादेः प्रत्यासत्तित्वकल्पनम-युक्तमित्यालोच्य नैवमङ्गीचकार ।

न च परम्परासम्बन्धेन वह्नित्वादिप्रकारकज्ञानेऽपि वह्न्यादेः प्रकारत्वोपगमसम्भवात् प्रकारतावच्छेदकीभवतो वह्नित्वादेरपि सर्वत्र प्रत्यासत्तितासम्भवेन विनिगमनाविरह इति वाच्यम् । यत्र वह्नित्वादिकमेवोपस्थितं न तु वह्न्यादिस्तत्र परम्परासम्बन्धेन

वह्नित्वादिप्रकारकज्ञाने विशेषणज्ञानविरहेण वह्नित्वाद्यवच्छिन्नस्य प्रकारत्वासम्भवेन प्रकारतावच्छेदकवह्नित्वादिप्रत्यासत्त्या यावद्वह्न्याद्याश्रयभानानिर्वाहात् ।

ननु यदि सामान्यं येन केनापि सम्बन्धेन स्वाश्रयमात्रभासकं तदा धूमत्वादिसामान्यलक्षणया धूमादिमात्रभानदशायां जगदेव भासतां जगत एव स्ववृत्तिप्रमेयत्ववत्त्वादिसम्बन्धेन धूमत्वादिमत्त्वादित्यत आह । येन चेति । तत्सम्बन्धावच्छिन्नायां सामान्यहेतुतायां तत्सम्बन्धेनेन्द्रियसम्बद्धांशे प्रकारत्वमवच्छेदकमुपेयमित्यर्थः । एवं च समवायेन तत्प्रकारीभवतो धूमत्वादेः समवायेनैव हेतुतया समवायेन धूमत्वादिप्रकारकज्ञानान्न धूमत्वासमवायिनः प्रत्यक्षप्रसङ्ग इति भावः ।

अखण्डमपि यदनित्यं सामान्यं तस्यातीतत्वानागतत्वदशायां स्वाश्रयभासकता न सम्भवतीत्याशङ्कते । नन्विति ।

( दी० ) ननु यत्र नानाधिकरणप्रत्यासन्न एकव्यक्तिर्घटादिस्तत्प्रागभावादिर्वा अनित्यः प्रत्यासत्तिस्तत्र तदभावदशायां तथा प्रत्यासत्त्या तज्ज्ञानानुदयप्रसङ्ग इति चेन्न । तत्रापि तद्व्यक्तिद्वारा प्रत्यासन्नस्य घटत्वादेरेव प्रत्यासत्तित्वात् । एतदस्वरसेनैव वा द्वितीयं पक्षमाह । अतिरिक्तैव वेति । अतिरिक्ता । इन्द्रियसम्बद्धतादृशसामान्यज्ञानात्मिका, अतीताद्यनुरोधात् सामान्यज्ञानं प्रत्यासत्तिः ।

( गा० ) एकव्यक्तेर्नानाधिकरणप्रत्यासन्नता 'यत्र तन्नानुगततद्वृत्तिधर्मस्य प्रत्यासत्तितया उक्त्वात् शङ्कानास्कन्दित्यतो नानेति । नित्यस्य नाभावदशा सम्भवतीति तत्सम्भवप्रयोजकविशेषणमाह । अनित्य इति । तद्व्यक्तिद्वारेति । तादृशघटतद्व्यक्तिप्रागभावादिव्यक्तिघटितसम्बन्धेनेत्यर्थः । स च सम्बन्धः स्वाश्रयाश्रयत्वं स्वाश्रयप्रतियोगिकप्रागभावादिमत्त्वं च, ईदृशपरम्पराविशेषव्युत्पादनायैवाक्षेपे स्वातन्त्र्येण प्रागभावाद्युपादानं स्वाश्रयप्रतियोगिकप्रागभावादिमति स्वाश्रयाश्रयत्वसम्भवेऽपि घटादिमत्त्वेनाश्रयज्ञाने एव स्वाश्रयघटादिमत्त्वस्य घटत्वादिसम्बन्धतया

भाननियमो न तु घटप्रागभावादिमत्त्वेनाश्रयज्ञाने तत्र प्रागभावादिघटितस्यैव तत्सम्बन्धतानियमादित्याशयेन प्रागभावादिघटितसम्बन्धेन घटत्वादेः प्रागभावाश्रयभासकत्वाभिधानम् ।

अत्र कल्पे परम्परासम्बन्धेन घटत्वादिना स्वाश्रयभानं विनापि तद्धटादिमत्त्वज्ञानाद्यावत्तदाश्रयप्रत्यक्षस्यानुभाविकत्वेन निर्वाह इति इममेव दोषं द्वितीयकल्पानुसरणबीजतया व्याचष्टे । एतदिति । अतिरिक्तपदस्य क्लृप्तपदार्थातिरिक्तपरता न सम्भवतीति सामान्यातिरिक्ततज्ज्ञानपरतामाह । अतिरिक्तेति । इन्द्रियेति । तदिन्द्रियसम्बद्धविशेष्यकतदिन्द्रियजन्यसामान्यप्रकारकज्ञानरूपेत्यर्थः । इन्द्रियसम्बन्धाद्यनिवेशे ऽपीन्द्रियसम्बन्धादिशून्यकाले अतिप्रसङ्गवारणधर्मिणो दर्शनीयतया स्वयं तादृशविशेषणानि परित्यज्य निष्कृष्टमतमाह । अतीतेति । सामान्यज्ञानमेव । सामान्यज्ञानत्वावच्छिन्नमेव । प्रत्यासत्तिः । सामान्यविषयकज्ञानत्वमेव प्रत्यासत्तितावच्छेदकमिति यावत् । एवकारेण इन्द्रियसम्बद्धविशेष्यकत्वतदिन्द्रियजन्यत्वसम्बन्धविशेषावगाहित्वानां कारणतावच्छेदकत्वव्यवच्छेदः । इन्द्रियसम्बन्धादिशून्यकालोत्तरमिव सामान्यविषयकज्ञानशून्यकालोत्तरमपि सामान्यप्रकारकज्ञानसामग्र्या अपेक्षयैव सामान्यजप्रत्यक्षवारणसम्भवात् स्वरूपसत एव सामान्यस्य प्रत्यासत्तित्वं किं नोपेयते इत्याकाङ्क्षायामुक्तमतीताद्यनुरोधादिति । आदिपदादनागतपरिग्रहः ।

यद्यपि सामान्यस्येन्द्रियकारणताघटकप्रत्यासत्तित्वे तस्य कार्यकालपूर्वसत्त्वमनपेक्षितं तथापि प्रत्यक्षस्य इन्द्रियसन्निकर्षजन्यत्वनियमानुरोधेन सामान्यप्रत्यासत्तेः कारणत्वमावश्यकमित्यभिप्रायेणेदम् ।

न च सामान्यप्रत्यासत्त्यधीनज्ञानस्य यत्किञ्चिद्विषयांशे लौकिकत्वनियमात् तन्निष्ठलौकिकसन्निकर्षजन्यत्वमादायैव तन्नियमोपपत्तेः सामान्यप्रत्यासत्तेर्हेतुत्वमकिञ्चित्करं सर्वांशे ऽलौकिकसामान्यजमानसस्यापि किञ्चिद्विषयनिष्ठज्ञानसन्निकर्षजन्यतया तादृशनियमस्याव्याहतत्वात् इति वाच्यम् । प्रत्यक्षविषयताया इन्द्रियसन्निकर्षरूपकारणप्रयोज्यत्वनियमानुरोधेन सामान्यप्रत्यासत्तिहेतुताया आवश्यकत्वात् स्वजन्यज्ञानविषयवत्त्वसामान्यवत्त्वसम्बन्धे-

नेन्द्रियत्वेन मनस्त्वेन वा कारणत्वमपेक्ष्य स्वविषयवत्त्वसामान्यव-स्वसम्बन्धेन ज्ञानत्वेन हेतुतायां लाघवाच्च ।

मिश्रास्तु संयोगादेरिव सामान्यलक्षणप्रत्यासत्तेरपीन्द्रियसामान्यस्य मनस एव वा कारणतावच्छेदकसम्बन्धत्वमिति स्वीकुर्वन्ति । नैव तस्या बहिरिन्द्रियप्रत्यासत्तिता मनोमात्रप्रत्यासत्तिता चेति मतभेदेन चेदं लक्षणव्याख्याने लिखितं तेषामुपपद्यते इत्यवधेयम् ।

यद्यपि सामान्यभेदेन कार्यकारणभावभेद आवश्यक एतन्मतेऽपि, अन्यथा घटत्वादिप्रकारकप्रत्यक्षसामग्रीसहकारेण घटत्वादिसामान्यलक्षणयेव तत्सहकारेण द्रव्यत्वादिप्रकारकप्रत्यक्षसामग्रीं विनैव द्रव्यत्वादिसामान्यलक्षणया यावद्द्रव्यादिप्रत्यक्षजननप्रसङ्गात् । एवं च नित्यघटत्वादिसामान्यस्य स्वरूपसतोऽपि हेतुतासम्भवस्तथापि घटत्वादिहेतुतायामतिगुरुशरीरं घटत्वत्वादिकमेवावच्छेदकं वाच्यं तदपेक्षया निर्विशेषणकघटत्वादिघटिततज्ज्ञानत्वेन तद्धेतुतायां लाघवाच्चापि ज्ञानस्य प्रत्यासत्तितोपेयते ।

न च घटत्वादिज्ञानस्य विषयघटत्वादिकमेव कार्यतावच्छेदकप्रत्यासत्तिर्वाच्या तत्र च घटत्वत्वादेः सम्बन्धतावच्छेदकतया निवेशनमावश्यकम्, स्वविषयत्वस्यातिप्रसक्ततया तन्मात्रस्य तथात्वासम्भवात् । तथा च क लाघवमिति वाच्यम् । ज्ञानस्यात्मनिष्ठप्रत्यासत्त्येव हेतुताया उपेयत्वात् घटादिविषयकत्वस्य कार्यतावच्छेदकतयैवाविशेषेण सकलघटादिज्ञानस्य घटत्वादिसामान्यलक्षणातो निर्वाहात् ।

यदि च आत्मनिष्ठप्रत्यासत्त्या हेतुतामते द्रव्यत्वादिसामान्यजघटादिप्रत्यक्षे घटत्वादिज्ञानस्य व्यभिचारवारणाय घटत्वादिप्रकारकत्वमप्यधिकं कार्यतावच्छेदककुक्षौ प्रवेश्यम् । यथा च घटविषयकत्वादिना तस्य विशेषणविशेष्यभावे विनिगमनाविरहेण गौरवमिति विभाव्यते । तदास्तु घटत्वादिमद्वृत्तिविषयतासम्बन्धेन प्रत्यक्षं प्रति भगवज्ज्ञानसाधारणेन ज्ञानत्वेन हेतुतायां आधेयतासम्बन्धेन निर्विशेषणकघटत्वादिव्यावृत्तविषयतापुरस्कारेण घटत्वादेः प्रत्यासत्तिता तत्र च नोक्तगौरवावकाशः ।

घटेन्द्रियसन्निकर्षादिशून्यकाले घटत्वादिसामान्यजप्रत्यक्षं वारयितुमाह ।

(दी०) अपेक्षणीयं च तदिन्द्रियकरणकतद्धर्मवत्त्वबोधसामग्र्यन्तरम् । अत एवान्धतमसे सौदामनीसम्पातजनितेऽपि द्रव्यप्रत्यक्षे चरमे न चाक्षुषो निखिलद्रव्यसाक्षात्कारसन्तान इति तु नव्याः ।

(गा०) अपेक्षणीय चेति । घटत्वादिसामान्यप्रत्यासत्त्या समवायादिना घटत्वाद्याश्रयचाक्षुषे जननीये समवायादिसंसर्गकघटत्वादिप्रकारकचाक्षुषादे प्रत्यासत्त्यन्तरघटितसामग्रीसहकारिणीत्यर्थः । घटचक्षुःसंयोगाद्यसत्त्वे तत्सत्त्वेऽपि च घटादौ घटत्वादिग्रहप्रतिबन्धकदोषसमवधाने तादृशसहकारिविरहादेव नातिप्रसङ्ग इति भावः । एतन्मते तु घटत्वादिरूपविशेषणस्य स्मरणात्मकं निर्विकल्पकरूपं सम्बन्धान्तरावगाहिसविकल्पकरूपं वा यज्ज्ञानं ततो जायमानं प्राथमिकं समवायादिना घटत्वादिप्रकारकं किञ्चिद्घटांशे लौकिकचाक्षुषादिकमेव निखिलघटादिविषयकं न तु क्षणविलम्बादिकल्पनेत्यपि सौष्ठवम् । स्पार्शनादिसामग्रीसहकृतघटत्वादिज्ञानेन घटादिविषयकचाक्षुषाद्यजननाय तदिन्द्रियकरणकेति बोधविशेषणम् । चाक्षुषत्वादिप्रयोजिकालौकिकत्वप्रयोजकचक्षुःसंयोगादिमात्ररूपा सामग्र्येव न तु तत्र सामान्यप्रत्यासत्त्यन्तर्भावः सामान्यप्रत्यासत्तिघटितचक्षुःसंयोगादिसमुदायश्च निखिलघटादिभानप्रयोजक इत्यवधेयम् ।

घटत्वादिप्रकारकस्य कालिकसम्बन्धेन घटत्वादिप्रकारकस्य च लौकिकस्य चाक्षुषादेर्या घटादिसन्निकर्षघटितसामग्री तत्सहकारेण घटत्वादिज्ञानस्य घटादिचाक्षुषजनकतावारणाय तत्सम्बन्धेन तत्प्रकारकत्वं बोधविशेषणं चक्षुःसंयोगादिरूपसामग्र्याश्च लौकिकप्रत्यक्षे हेतुतायाः क्लृप्तत्वात् । सामान्यप्रत्यासत्तिजन्यचाक्षुषादेश्च तत्तत्स्थलीयकार्यतावच्छेदकाक्रान्ततया न तत्र तस्याः स्वातन्त्र्येण हेतुता तदकल्पनेऽपि सहकारित्वोपपत्तेः ।

केचित्तु सामान्यसामग्र्या यावद्विशेषसामग्र्यन्यतमानपेक्षणे तदभावदशायां सामान्यसत्ताया यावद्विशेषाभावविरोधित्वानु-

रोधात् यत्किञ्चिद्विशेषधर्माक्रान्तस्यैव सामान्यकार्यस्य स्वीकरणीयतया तत्र विशेषसामग्र्या व्यभिचारः, विशेषसामग्र्या सामान्यसामग्र्यनपेक्षणे च तदसत्त्वे विशेषस्य सामान्याभावेन विरोधो व्याहन्येत इति सामान्यात्मकस्यैव विशेषकार्यस्य स्वीकरणीयतया सामान्यसामग्र्या व्यभिचार इति सामान्यविशेषसामग्र्योः परस्परापेक्षया फलोपधानम्, सामान्यलक्षणया लौकिकसामग्र्यनपेक्षणेऽपि च लौकिकत्वशून्ये तदनपेक्ष्य सामान्यप्रत्यासत्तिजन्यकार्ये लौकिकत्वप्रयोजकसामग्र्या न व्यभिचारप्रसक्तिरिति कथं तया सा अपेक्ष्यतामित्यनुयोगसमाधानाय तत्सम्बन्धावच्छिन्नसामान्यप्रकारतानिरूपितलौकिकविषयताशालित्वे सति तत्सम्बन्धेन सामान्याश्रयप्रत्यक्षत्वं सामान्यप्रत्यासत्तिजन्यतावच्छेदकं मानसस्थले च कार्यकारणभावान्तरमित्याहुः ।

अथ चक्षुःसंयोगादेर्घटचक्षुःसंयोगत्वादिना न घटत्वसामान्यलक्षणासहकारितासम्भवः । तेन रूपेण तस्य लौकिकप्रत्यक्षं प्रत्येव हेतुत्वात् । सामान्यतो द्रव्यचाक्षुषत्वावच्छिन्नं प्रति विषयनिष्ठप्रत्यासत्त्या चक्षुःसंयोगत्वादिनैव हेतुत्वात्तेन रूपेण सहकारित्वोपगमे च घटादौ घटत्वादिग्रहप्रतिबन्धकदोषासत्त्वेऽपि पटादिचक्षुःसंयोगसहकारेणैव पटादौ घटत्वादिभ्रमजनकदोषासत्त्वे पटादिचक्षुःसंयोगसहकारेणापि घटत्वादिसामान्यप्रत्यासत्त्या चाक्षुषजननप्रसङ्ग इति चेन्न । प्रत्यक्षं प्रति विषयस्य तत्तद्व्यक्तित्वेनापि हेतुत्वात् एकाधिकरणप्रत्यासन्नतत्तद्घटत्वचक्षुःसंयोगत्वदोषविशेषाभावत्वाद्यवच्छिन्नसमुदायादिरूपायास्तत्तद्घटत्वचक्षुःसंयोगत्वदोषविशेषाभावत्वाद्यवच्छिन्नसमुदायादिरूपायाश्च सामग्र्या घटत्वसामान्यलक्षणप्रत्यासत्तिसहकारिता कल्प्यते उक्तस्थले च तादृशी काचिन्न सामग्री घटचक्षुःसंयोगस्य घटरूपविषयाप्रत्यासन्नत्वात् दोषासमवहितत्वाच्च । तादृशरीत्यैव घटत्वादिप्रकारकलौकिकचाक्षुषत्वाद्यवच्छिन्नोत्पत्तिनियमोऽपि निर्वाहणीय इति कृतमधिकेन ।

तदिन्द्रियकरणकतद्धर्मप्रकारकज्ञानसामग्र्या अनपेक्षणे इन्द्रियसम्बन्धादिनिवेशोऽप्यतिप्रसङ्ग इति दर्शयति । अत एवेति । अन्धतमस इत्यनेन इष्टापत्तिशङ्कानिरासाय चक्षुःसन्निकर्षसत्त्वेऽपि द्रव्यत्वादिप्रकारकलौकिकचाक्षुषसामग्रीविरहो दर्शितः । सौदाम-

नीत्यादिना प्राचीनमतसिद्धचाक्षुषज्ञानरूपकारणं सम्पादितम् । सौदामनीति । चक्षुःसंयोगविगमपूर्वावगतालोकसंयोगमात्रोपलक्षकम् । चरमम् । तादृशचाक्षुषजनकसौदामन्यालोकविगमोत्तरम् । तादृशालोकविगमश्चान्धतमसनिर्वाहकतया अभिहितः । तदानीमपि तमःप्रत्यक्षप्रयोजकचक्षुर्मनोयोगादिविगमे मानसद्रव्यसाक्षात्कारस्येष्टत्वात् चाक्षुष इति । नत्तमोविशेष्यकतत्तद्देशावस्थितकिञ्चिद्वृत्त्योपनीतभानस्य तमश्चाक्षुषदशायामिष्टत्वान्निखिलेति । सौदामनीसम्पातजचाक्षुषसन्निहितद्व्येकसाक्षात्कारस्वीकारे अनुभवविरोधविरहात् सन्तान इति । चाक्षुषधारापत्तिश्च चक्षुःसंयुक्तनिष्ठलौकिकसाधारणविषयतामात्रनिवेशाभिप्रायेण बोध्या । लौकिकत्वनियामकविलक्षणविषयतानिवेशे तु आलोकविगमोत्तरस्वीकृतप्रत्यक्षे तादृशविषयत्वासम्भवान्न धारापत्तसाक्षात्कारापत्त्यवकाश इति ध्येयम् ।

ननु सामान्यलक्षणाया अपि ज्ञानत्वेन प्रत्यासत्तित्वे ज्ञानलक्षणप्रत्यासत्तितोऽस्याः को भेदः ? प्रत्यासत्तेः प्रत्यासत्तितावच्छेदकरूपस्य चाभेदादित्यत आह । इयं चेति ।

( दी० ) इयं च धर्मविषयकं ज्ञानं धर्मिणां प्रत्यासत्तिरितरा तु यद्विषयकं ज्ञानं तस्य । अत एव सुरभि चन्दनमित्यादौ सौरभत्वादेरपि भानमिति ।

( गा० ) इयम् । सामान्यलक्षणा । धर्मविषयकम् । घटत्वादिविषयकम् । धर्मिणाम् । घटादीनाम् । प्रत्यासत्तिः । भानप्रयोजकसम्बन्धः । इतरा । ज्ञानलक्षणा । तस्य । प्रत्यासत्तिरित्यनुषङ्गेणान्वयः । एवं च घटादिज्ञानस्य घटादिप्रत्यक्षत्वावच्छिन्नं प्रति सामान्यप्रत्यासत्तिविधया कारणत्वस्य घटत्वादिप्रत्यक्षत्वावच्छिन्नं प्रति ज्ञानप्रत्यासत्तिविधया यत्कारणत्वं ततः कार्यतावच्छेदकभेदेन भिन्नत्वात्तत्प्रत्यासत्तिभेदव्यवहार इति भावः ।

ननु ज्ञानलक्षणायाः प्रत्यासत्तित्वे किं मानम् ? सुरभि चन्दनमित्यादिचाक्षुषे सौरभत्वप्रकारकलौकिकप्रत्यक्षसामग्रीविरहेण सौरभत्वसामान्यलक्षणया सौरभभानानिर्वाहेऽपि सौरभत्वसामान्य-

रोधात् यत्किञ्चिद्विशेषधर्माक्रान्तस्यैव सामान्यकार्यस्य स्वीकरणीयतया तत्र विशेषसामग्र्या व्यभिचारः, विशेषसामग्र्या सामान्यसामग्र्यनपेक्षणे च तदसत्त्वे विशेषस्य सामान्याभावेन विरोधो व्याहन्येत इति सामान्यात्मकस्यैव विशेषकार्यस्य स्वीकरणीयतया सामान्यसामग्र्या व्यभिचार इति सामान्यविशेषसामग्र्योः परस्परापेक्षया फलोपधानम्, सामान्यलक्षणया लौकिकसामग्र्यनपेक्षणेऽपि च लौकिकत्वशून्ये तदनपेक्ष्य सामान्यप्रत्यासत्तिजन्यकार्ये लौकिकत्वप्रयोजकसामग्र्या न व्यभिचारप्रसक्तिरिति कथं तया सा अपेक्ष्यतामित्यनुयोगसमाधानाय तत्तत्सम्बन्धावच्छिन्नसामान्यप्रकारतानिरूपितलौकिकविषयताशालित्वे सति तत्तत्सम्बन्धेन सामान्याश्रयप्रत्यक्षत्वं सामान्यप्रत्यासत्तिजन्यतावच्छेदकं मानसस्थले च कार्यकारणभावान्तरमित्याहुः।

अथ चक्षुःसंयोगादेर्घटचक्षुःसंयोगत्वादिना न घटत्वसामान्यलक्षणासहकारितासम्भवः। तेन रूपेण तस्य लौकिकप्रत्यक्षं प्रत्यहेतुत्वात्। सामान्यतो द्रव्यचाक्षुषत्वावच्छिन्नं प्रति विषयनिष्ठप्रत्यासत्त्या चक्षुःसंयोगत्वादिनैव हेतुत्वात्तेन रूपेण सहकारित्वोपगमे च घटादौ घटत्वादिग्रहप्रतिबन्धकदोषासत्त्वेऽपि घटादिचक्षुःसंयोगसहकारेणैव पटादौ घटत्वादिभ्रमजनकदोषासत्त्वे पटादिचक्षुःसंयोगसहकारेणापि घटत्वादिसामान्यप्रत्यासत्त्या चाक्षुषजननप्रसङ्ग इति चेन्न। प्रत्यक्षं प्रति विषयस्य तत्तद्व्यक्तित्वेनापि हेतुत्वात् एकाधिकरणप्रत्यासन्नतत्तद्घटत्वचक्षुःसंयोगत्वदोषविशेषाभावत्वाद्यवच्छिन्नसमुदायादिरूपायास्तत्तद्घटत्वचक्षुःसंयोगत्वदोषविशेषाभावत्वाद्यवच्छिन्नसमुदायादिरूपायाश्च सामग्र्या घटत्वसामान्यलक्षणप्रत्यासत्तिसहकारिता कल्प्यते उक्तस्थले च तादृशी कापि न सामग्री घटचक्षुःसंयोगस्य घटरूपविषयाप्रत्यासन्नत्वात् दोषासमवहितत्वाच्च। तादृशरीत्यैव घटत्वादिप्रकारकलौकिकचाक्षुषत्वाद्यवच्छिन्नोत्पत्तिनियमोऽपि निर्वाहणीय इति कृतमधिकेन।

तदिन्द्रियकरणकतद्धर्मप्रकारकज्ञानसामग्र्या अनपेक्षणे इन्द्रियसम्बन्धादिनिवेशोऽप्यतिप्रसङ्ग इति दर्शयति। अत एवेति। अन्धतमस इत्यनेन इष्टापत्तिशङ्कानिरासाय चक्षुःसन्निकर्षसत्त्वेऽपि द्रव्यत्वादिप्रकारकलौकिकचाक्षुषसामग्रीविरहो दर्शितः। सौदाम-

नीत्यादिना प्राचीनमतसिद्धचाक्षुषज्ञानरूपकारणं सम्पादितम् । सौदामनीति । चक्षुःसंयोगविगमपूर्वावगतालोकसंयोगमात्रोपलक्षकम् । चरमम् । तादृशचाक्षुषजनकसौदामन्यालोकविगमोत्तरम् । तादृशालोकविगमश्चान्धतमसनिर्वाहकतया अभिहितः । तदानीमपि तमःप्रत्यक्षप्रयोजकचक्षुर्मनोयोगादिविगमे मानसद्रव्यसाक्षात्कारस्येष्टत्वात् चाक्षुष इति । नचमोविशेष्यकतत्तद्देशावस्थितकिञ्चिद्द्रव्योपनीतभानस्य तमश्चाक्षुषदशायामिष्टत्वान्निखिलेति । सौदामनीसम्पातजचाक्षुषसन्निहितश्चैकसाक्षात्कारस्वीकारे अनुभवविरोधविरहात् सन्तान इति । चाक्षुषधारापत्तिश्च चक्षुःसंयुक्तनिष्ठलौकिकसाधारणविषयतामात्रनिवेशाभिप्रायेण बोध्या । लौकिकत्वनियामकविलक्षणविषयतानिवेशे तु आलोकविगमोत्तरस्वीकृतप्रत्यक्षे तादृशविषयत्वासम्भवान्न धारापन्नसाक्षात्कारापत्त्यधिकारा इति ध्येयम् ।

ननु सामान्यलक्षणाया अपि ज्ञानत्वेन प्रत्यासत्तित्वे ज्ञानलक्षणप्रत्यासत्तितोऽस्याः को भेदः ? प्रत्यासत्तेः प्रत्यासत्तितावच्छेदकरूपस्य चाभेदादित्यत आह । इयं चेति ।

( दी० ) इयं च धर्मविषयकं ज्ञानं धर्मिणां प्रत्यासत्तिरितरा तु यद्विषयकं ज्ञानं तस्य । अत एव सुरभि चन्दनमित्यादौ सौरभत्वादेरपि भानमिति ।

( गा० ) इयम् । सामान्यलक्षणा । धर्मविषयकम् । घटत्वादिविषयकम् । धर्मिणाम् । घटादीनाम् । प्रत्यासत्तिः । भानप्रयोजकसम्बन्धः । इतरा । ज्ञानलक्षणा । तस्य । प्रत्यासत्तिरित्यनुषङ्गेणान्वयः । एवं च घटादिज्ञानस्य घटादिप्रत्यक्षत्वावच्छिन्नं प्रति सामान्यप्रत्यासत्तिविधया कारणत्वस्य घटत्वादिप्रत्यक्षत्वावच्छिन्नं प्रति ज्ञानप्रत्यासत्तिविधया यत्कारणत्वं ततः कार्यतावच्छेदकभेदेन भिन्नत्वात्तत्प्रत्यासत्तिभेदव्यवहार इति भावः ।

ननु ज्ञानलक्षणायाः प्रत्यासत्तित्वे किं मानम् ? सुरभि चन्दनमित्यादिचाक्षुषे सौरभत्वप्रकारकलौकिकप्रत्यक्षसामग्रीविरहेण सौरभत्वसामान्यलक्षणया सौरभभानानिर्वाहेऽपि सौरभत्वसामान्य-

लक्षणात एव सौरभभानसम्भवात्, तत्कार्यतावच्छेदकशरीरे सौरभरूपसामान्यप्रकारतानिवेशात्, सौरभप्रकारकलौकिकप्रत्यक्षसामग्र्याः सौरभसामान्यलक्षणासहकारिण्याश्च तत्र सत्त्वात्।

अथ, सामान्यज्ञानस्येश्वरज्ञानसाधारणभानत्वेन स्वविषयतत्तत्सामान्यवत्त्वसम्बन्धेन हेतुत्वे तत्तत्सामान्यप्रकारकत्वं न तज्जन्यतावच्छेदकघटकमन्यप्रकारकतत्तत्सामान्याश्रयप्रत्यक्षे व्यभिचाराप्रकाशात् तत्तत्सामान्यानाश्रयविषयकप्रत्यक्षे व्यभिचारस्य च तत्तत्सामान्याश्रयविषयकत्वस्य निवेशेनैव वारणात्। तदनिवेशे तत्तत्सामान्यप्रकारकत्वनिवेशेऽपि तत्तत्सामान्यप्रकारकभ्रमे व्यभिचारस्य दुर्वारतया तन्निवेशस्यावश्यकत्वात्। तथा च सौरभादिसामान्यलक्षणया न दर्शितस्थले सौरभादिभाननिर्वाह इति चेत्? अस्तु तर्हि सुरभि चन्दनमित्यादिप्रत्यक्षं मानसमेव न तु चाक्षुषादिरूपं तत्र च सौरभत्वादिसामान्यलक्षणयापि सौरभादिज्ञानं निर्वहति मानसस्थले सामान्यप्रकारकलौकिकप्रत्यक्षसामग्रीविरहेऽपि सामान्यलक्षणातः सामान्याश्रयभानात्। न हि सुरभित्वेन चन्दनं पश्यामीत्यनुव्यवसायः प्रामाणिको यद्बलात् तदाकारं चाक्षुषादिकं तत्र च सौरभादिभानार्थं ज्ञानलक्षणप्रत्यासत्तिश्च सिध्येत् चन्दनचक्षुःसंयोगदशायामपि चक्षुर्मनोयोगादिविगमं कल्पयित्वा मानसज्ञानकल्पनं संभवति।

वस्तुतः सौरभत्वसामान्यलक्षणात एव सुरभि चन्दनमित्यादौ चाक्षुषादिप्रत्यक्षेऽपि सौरभादिभानं निर्वहति सौरभत्वादिप्रकारकलौकिकप्रत्यक्षसौरभत्वाद्यवच्छिन्नसौरभादिप्रकारकताशालिप्रत्यक्षान्यतरसामग्रीसहकारेणैव सौरभत्वादिसामान्यलक्षणायाः सौरभादिप्रत्यक्षोत्पादकत्वस्योपगन्तव्यत्वादतः प्रकृते द्वितीयसामग्र्या एव सहकारिण्याः सत्त्वात्।

न चैवं सौरभत्वादिप्रकारकलौकिकविषयताशालिप्रत्यक्षे इव उक्तस्थलेऽपि यावत्सौरभादिभानापत्तिः। यावत्स्वेव सौरभादिषु विषयतानियामिकायाः सामान्यज्ञानरूपप्रत्यासत्तेः सत्त्वात्। न चेष्टापत्तिः, सुरभि चन्दनं सौरभमित्याकारकज्ञानस्य सौरभमुख्यविशेष्यकज्ञानस्य तदा अनुभवविरुद्धत्वात्। अन्यथान्धतमसे सौदामनीसम्पातजचाक्षुषानन्तरं अन्धकारविशेषणतया यत्किञ्चिद्द्रव्योपनीतभानेऽपि यावद्द्रव्यभानस्वीकारसम्भवेन निखिलद्रव्य-

च दर्शितस्थले सौरभादिभाने सामान्यलक्षणायाः प्रयोजकत्वसम्भवे तत्सहकारिसौरभादिज्ञानस्य प्रत्यासत्तित्वव्यवहारभाजनत्वमनुपपन्नमेवेत्यत आह । अत एवेति । अत एव । ज्ञानप्रत्यासत्तित एव । सौरभत्वादेरपीति । स्वरूपेणैव भासमानस्येत्यादिः । तथा च तद्भासकप्रत्यासत्त्यन्तराभावात् ज्ञानप्रत्यासत्तित एव तज्ज्ञानमिति समुदायार्थः । न हि सौरभत्वादौ तल्लौकिकप्रत्यक्षीयत्वे चक्षुरादेर्लौकिकप्रत्यासत्तिसम्भवः । न वा सामान्यप्रत्यासत्तेस्तद्भासकता सम्भवति । अन्यदीयजातित्वादिसामान्यज्ञानस्य स्वविषयसामान्याश्रयत्वसम्बन्धेन तत्र सत्त्वेऽपि तादृशसामान्यज्ञानस्य तत्तत्सामान्यप्रकारेण किञ्चिद्विषयकतत्पुरुषीयज्ञानजनकप्रत्यासत्त्यन्तरघटितसामग्रीसहकारेणैव तत्तत्सामान्याश्रयभासकत्वात् तत्पुरुषीयजातित्वादिविशेषणसामान्यज्ञानासत्त्वे च तादृशसामग्र्या अभावात् । नापि सौरभत्वादिसामान्यलक्षणात एव तज्ज्ञानम् । सौरभत्वादिज्ञानस्य विषयताप्रयोजकस्वविषयसौरभत्वादिमत्त्वरूपप्रत्यासत्तेः सौरभत्वादावसत्त्वात्, सौरभत्वादिविषयतायास्तत्कार्यतानवच्छेदकत्वाच्च तदनिवेशेऽपि क्षतिविरहस्य प्रागुक्तत्वात् । सौरभत्वादिसामान्यलक्षणायाः सौरभत्वादिभासकत्वानुरोधेनैव तज्जन्यतावच्छेदककोटौ तद्विषयताप्रवेशे गौरवात् ।

न च ज्ञानप्रत्यासत्तेः स्वतन्त्रहेतुत्वापेक्षया क्लृप्तसामान्यप्रत्यासत्तिजन्यतावच्छेदककोटौ सामान्यविषयतानिवेशनमुचितमिति वाच्यम् । ज्ञानप्रत्यासत्तेर्विशेषणज्ञानविधया क्लृप्तहेतुतयैवोपपत्तेः अनुमित्यादौ विशेषणज्ञानस्य कारणत्वान्तरविरहेऽपि क्षतिविरहात् । प्रत्यक्षत्वस्यैव तज्जन्यतावच्छेदकत्वोपगमेनासाधारणतया तत्कारणतामादायापि ज्ञानस्य प्रत्यासत्तितानिर्वाहात् ।

केचित्तु सौरभत्वादिप्रकारतायाः सौरभत्वादिसामान्यलक्षणाजन्यतावच्छेदकत्वेऽपि सौरभत्वादिप्रकारकभ्रमे सौरभत्वादिभानार्थं ज्ञानप्रत्यासत्तेरावश्यकता तत्र सौरभाभानात्तादृशज्ञानस्य सौरभत्वादिसामान्यलक्षणाजन्यतावच्छेदकानाक्रान्तत्वात् । प्रकृतग्रन्थोऽपि "सौरभार्थकसुरभिपदचन्दनपदयोः समासादरेण तादृशभ्रमपर एवेति तन्न । तत्रापि सौरभत्वसामान्यलक्षणया सौरभभाने बाधकाभावात् । तत्रापि सौरभभासकसौरभत्वसामान्य-

लक्षणप्रत्यासत्तिघटितसामग्रीसत्त्वेन सौरभविषयकत्वोपगमात् ।

न च चाक्षुषज्ञाने सौरभभानासम्भवः, स्वयोग्यमुख्यविशेष्यकज्ञानस्य बहिरिन्द्रियेणाजननादिति वाच्यम् । उपनीतं विशेषणतयैव भासते इति नियमानुरोधेन ज्ञानप्रत्यासत्त्यैव बहिरिन्द्रियस्य तादृशज्ञानाजनकत्वात्, सामान्यप्रत्यासत्त्या तु तस्य तज्जनकत्वोपगमात् । अत एव वेदार्थस्य प्रमेयत्वादिसामान्यलक्षणया प्रत्यासन्नबहिरिन्द्रियरूपासाधारणकरणजन्यप्रमितिविषयतया वेदलक्षणासम्भवो विशेषणान्तरप्रवेशेन मिश्रैर्वारितः ।

यत्तु रजतत्वादिप्रकारकप्रमुष्टतत्ताकशुक्त्यादिस्मरणजन्यतादृशतन्मानसोपनीतभाने शुक्त्यादिभानार्थं ज्ञानप्रत्यासत्तेरावश्यकता तत्र शुक्तिवृत्तिधर्मांशानेन सामान्यलक्षणातस्तज्ज्ञानानिर्वाहात् इति तन्न । तत्र तादृशस्मरणमूलीभूतभ्रमात्मकप्रत्यक्षे सामान्यलक्षणया रजतस्यापि भानात्तस्यापि स्मरणसम्भवेन स्मरणाजन्यमानसेऽपि तस्यैव भानोपगमेन शुक्तिभानस्याप्रामाणिकत्वात् शुक्तिवृत्तिधर्मस्मरणस्थले एव शुक्तिभानोपगमादिति ।

अथोक्तसामान्यप्रत्यासत्तिहेतुत्वे किं प्रमाणम् ? सामान्यधर्मज्ञानस्यान्तत ईश्वरीयस्यैव उक्तप्रत्यासत्त्या सर्वदा सर्वत्र सत्त्वेनान्वयव्यतिरेकविरहात् ।

न च स्वविषयघटत्वादिमत्त्वसम्बन्धेन घटादौ ज्ञानविरहात् तत्र घटवृत्तिविषयतासम्बन्धेन प्रत्यक्षव्यतिरेक इति तत्कारणत्वमावश्यकम्, अन्यथा तत्र तादृशव्यतिरेकप्रयोजकस्य दुर्वचत्वादिति वाच्यम् । घटवृत्तिविषयतात्वादिना विषयतायाः प्रतियोगितावच्छेदकसम्बन्धताया अप्रामाणिकत्वात् तादृशसम्बन्धावच्छिन्नव्यतिरेकस्यैवाप्रसिद्धेः ।

न चैवमसन्निकृष्टघटादौ घटत्वादिप्रकारकप्रत्यक्षादिविषयतायाः किञ्चित्कारणजन्यतानवच्छेदकत्वात्तस्या न सामग्रीप्रयोज्यतानिर्वाह इति वाच्यम् । घटादिविषयकप्रत्यक्षेच्छाविरहविशिष्टभिन्नविषयकानुमितिसामग्र्यभावस्यैव तादृशघटादिविषयकत्वघटितधर्मावच्छिन्नहेतुतया घटत्वादिप्रकारकलौकिकप्रत्यक्षसामग्रीसहकृततादृशस्यैव तादृशघटादिविषयताप्रयोजकत्वसम्भवात् । मैवम् ।

घटादिलौकिकप्रत्यक्षेच्छाबलाच्चलौकिकसन्निकर्षं विनोपनीत-

प्रत्यक्षवारणाय, उपनीतभानस्थलीयप्रतिबन्धकतायां लौकिकत्वाप्रकारकेच्छाया एव उत्तेजकताया उपगन्तव्यत्वात् तल्लौकिकप्रत्यक्षेच्छाविरहविशिष्टसामग्रीविशेषाभावस्य तल्लौकिकप्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वान्तरमावश्यकम् । उपनीतभानेच्छाधीनोपनीतभाने व्यभिचारवारणाय च तत्र लौकिकत्वनिवेशनम् । एवं च सामान्यजप्रत्यक्षस्य किञ्चिद्देशे लौकिकत्वनियमास्तस्यापि सामग्रीविशेषदशायामापत्तेरुक्तकारणतयैव वारणात् । सामान्यप्रत्यासत्तिप्रयोज्यविषयतासाधारणघटादिविषयतासामान्य जन्यतावच्छेदककोटौ निवेश्य सामान्यभावहेतुताकल्पनस्य निष्प्रामाणिकतया सामान्यप्रत्यासत्तेरेवातीतादिभानप्रयोजकत्वात् ।

न च तथापि मनोयोगस्यैव घटादिप्रत्यक्षत्व जन्यतावच्छेदकमास्तां स एव घटत्वादिप्रकारकलौकिकप्रत्यक्षसामग्रीसहकृतो याबद्घटादिभानप्रयोजको भवत्विति वाच्यम् । हेतुत्वान्तरकल्पनस्यावश्यकत्वेऽपि अन्ततो विनिगमनाविरहेणापि सामान्यहेतुताया निष्प्रत्यूहत्वात् । वस्तुतो घटादिवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति स्वविषयघटत्वादिमत्वसम्बन्धेन ज्ञानहेतुत्वमावश्यकमन्यथा दोषसत्त्वेऽपि घटादौ चक्षुःसंयोगादिघटितयादृशसामग्रीबलाद्घटत्वादिप्रकारकज्ञानं घटादिवृत्तिविषयतासम्बन्धेनोत्पद्यते तद्बलात् तादृशसम्बन्धेन पटादौ तदापत्तेर्दुर्वारत्वापातात् तत्तद्घटादिवृत्तिविषयतासम्बन्धेन प्रत्यक्षहेतुभूततद्घटादिरूपविषयभेदकूटस्य तादृशसम्बन्धेन ज्ञानानुत्पादप्रयोजकत्वे गौरवात् । स्वविषयघटत्वादिमत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकस्य एकैकस्य ज्ञानाभावस्य तथात्वे लाघवात् । अन्यथा तत्तत्कार्यव्यक्त्युत्पादप्रयोजकविशेषसामग्र्यैव सर्वत्रातिप्रसङ्गवारणसम्भवे सामान्यकारणविलोपप्रसङ्गात् ।

न चैवमुक्तापत्तिवारणाय घटादिप्रत्यक्षे घटत्वादिनैव तादात्म्यप्रत्यासत्त्या हेतुत्वमास्तामिति वाच्यम् । तथा सति घटत्वादिप्रकारकप्रत्यक्षे अतीतानागतघटादिविषयभासककारणान्तरकल्पनाया गौरवादित्यलमतिनिबन्धेन ।

(चि० ) तथा हि धूमत्वावच्छिन्ना व्याप्तिः सन्निकृष्टधूमविषये धूमत्वेन प्रत्यक्षेण ज्ञायते ततः स्मृता

सा तृतीयलिङ्गपरामर्शे पक्षनिष्ठधूमवृत्तितया ज्ञायते, ततोऽनुमितिः । तदनभ्युपगमेऽपि सन्निकृष्टधूमाविषये धूमत्वेन धूमो वह्निव्याप्य इत्यनुभवस्तथैव व्याप्तिस्मरणं ततो धूमवानयमिति व्याप्तिस्मृतिप्रकारेण धूमत्वेन पक्षवृत्तिधूमज्ञानादनुमितिः, व्याप्त्यनुभवतत्स्मरणपक्षधर्मताज्ञानानामेकप्रकारकत्वेनानुमितिहेतुत्वात् ।

(दी०) ततः स्मृता सेति । धूमसमानाधिकरणात्यन्ताभावाप्रतियोगिवह्निसमानाधिकरणवृत्तिधूमत्वम्, वह्निमदन्यावृत्तित्वम्, वह्निसम्बन्धितावच्छेदकरूपवत्त्वं वा व्याप्तिः । एवं च सा सर्वधूमसाधारणीति भावः । व्याप्तिनानात्वे तु पर्वतीयवह्नेरसन्निकर्षे तत्सामानाधिकरण्यग्रहायोगः, अन्यदीयवह्निसामानाधिकरण्यस्य तत्र भानाङ्गीकारे भ्रमत्वापत्तिरिति द्रष्टव्यम् ।

(गा०) व्याप्तेः सामानाधिकरण्यरूपत्वे हेतुभेदेन भेदात् सामान्यप्रत्यासत्त्यनभ्युपगमे विशिष्टपरामर्शानिर्वाहस्य दर्शयिष्यमाणत्वात् सर्वसाधारणीं व्याप्तिं दर्शयति । धूमेति । धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वत्वेन व्याप्तिप्रकारकज्ञानहेतुत्वे गुरुशरीरधूमत्वत्वविषयतायाः कारणतावच्छेदकघटकतया गौरवमिति तादृशवह्निसामानाधिकरण्यत्वेन सामानाधिकरण्यप्रकारकविशेषणान्तराविशेषितधूमत्वावच्छिन्नविषयकज्ञानहेतुत्वं लाघवात् सेत्स्यति तथा च सामान्यलक्षणायाः प्रत्यासत्तित्वं निरपवादमतो लघुशरीरसर्वसाधारणव्याप्त्यन्तरमाह । वह्निमदिति । मीमांसकैः केवलान्वय्यनुमानानभ्युपगमादेतद्व्याप्तिः केवलान्वयिन्यव्याप्तिस्तेषां न दोषायेति भावः ।

यद्यपि गुरुमते अभावस्याधिकरणरूपतया वह्निमदन्यवृत्तित्वाभावस्यैकस्य न सर्वधूमसाधारण्यं तथापि नायं ग्रन्थो गुरुमतनिर्वाहपरः, उपनीतभानमनभ्युपगन्त्रा गुरुणा विशिष्टपरामर्शहेतुताया

पर्यानभ्युपगमात् । अत एव सम्मते अनुपपत्त्यन्तरप्रकाशं मिश्रधर्मिकव्याप्तिपक्षधर्मताज्ञानहेतुतां प्रदर्शयन्नग्रे व्यक्तीकरिष्यति, किन्त्वयं ग्रन्थो मिश्रादिमताभिप्रायक इति नासङ्गतिः।

केवलान्वयिसाध्यकसाधारणीमप्यभिन्नां व्याप्तिमाह । वह्निसम्बन्धितेति । दण्डादेः सखण्डधर्मस्य यत्र हेतुतावच्छेदकता तत्रापि साध्यसामानाधिकरण्यस्य परम्परासम्बन्धेनावच्छेदकस्तेन सम्बन्धेन हेतुवृत्तिश्च दण्डत्वाद्यखण्डधर्म एव व्याप्तिरिति पूर्वगृहीतसाध्यसमानाधिकरणावृत्तिपक्षवृत्तिदण्डादावपूर्वसाध्यसामानाधिकरण्यावच्छेदकत्वग्रहानुरोधेन सामान्यप्रत्यासत्तेरावश्यकतेति भावः । व्याप्त्यैक्याभिप्रायवर्णनप्रयोजनं दर्शयितुं तन्नानात्वमाक्षिपति । व्याप्तीति । तत्सामानाधिकरण्यग्रहायोग इति । तद्व्यक्त्युपरागेण पर्वतीयधूमे तत्सामानाधिकरण्यप्रत्यक्षसम्भवः, तद्वह्नेः पूर्वमगृहीतत्वेन उपनीततज्ज्ञानस्याप्ययोगादित्यर्थः ।

ननु मा भूत्तत्र पर्वतीयवह्निसामानाधिकरण्यभानं पूर्वगृहीतमहानसीयवह्निसामानाधिकरण्यविषयक एव विशिष्टपरामर्शः सम्भविष्यतीत्यत आह । अन्यदीयेति । तत्र । पर्वतीयधूमे । भ्रमत्वापत्तेरिति । तथा चाभ्रान्तस्यानुमितिविलोपप्रसङ्ग इति भावः । न त्वन्यथाख्यातिस्वीकारापत्तिरित्यर्थः । तद्ग्रन्थस्योपनीतभानाङ्गीकर्तृमिश्रादिमताभिप्रायकत्वादन्यथाख्यातेश्चोपनीतभानानङ्गीकर्तृगुरोरेवासंमतत्वात् ।

(चि०) गवादिपदेष्वपि शक्त्यनुभवतत्स्मरणयथार्थानुभवानामेकप्रकारकत्वेन हेतुहेतुमद्भाव इत्यपूर्वे वक्ष्यते । तत्र योग्यतादिबलादपूर्वव्याप्तिलाभोऽनुमाने तु पक्षधर्मताबलात् धूमो वह्निव्याप्य इत्यनुभवो न तु सर्वो धूमो वह्निव्याप्य इति येन सर्वभानार्थं तत्स्वीकारः ।

(गा०) ननु सामान्यप्रत्यासत्त्यनभ्युपगमे अपूर्वगवादेर्गवादिपदाच्छाब्दबोधानुपपत्तिः, शक्तिधियः पदार्थस्मृतेश्च तद्विषयकत्वानुप-

-पत्तेः । अन्यविषयकशक्तिग्रहपदार्थस्मरणयोरन्यविषयकशाब्दबोध-जनकत्वे सति अतिप्रसङ्गादित्यत आह मूले । गवादिपदेष्वपीति । तत्स्मरणेति । तत्पदं पदार्थपरम् । न तु प्रक्रान्तशक्तिपरम् । पदार्थस्मृतेः समानविषयकत्वेन हेतुताया अप्रतिक्षेपेण न्यूनताप्रसङ्गात् ।

न च शक्तिस्मृतेस्तदप्रतिक्षेपेणापि न्यूनत्वं समानमिति वाच्यम् । शक्तिस्मृतिं विनापि गृहीतशक्तिकपदज्ञानरूपोद्बोधकाधीनपदार्थस्मृतितः शाब्दबोधोत्पत्त्या शक्तिस्मृतेः शाब्दबोधानुपयोगित्वात् ।

न च वृत्तिज्ञानजन्यपदार्थोपस्थितेः शाब्दबोधहेतुतया प्राचीनशक्त्यनुभवस्य च पदार्थस्मृत्यहेतुतया शक्तिस्मृतिजन्यैव पदार्थोपस्थितिस्तद्धेतुर्वाच्या तथा च शक्तिस्मृतेरप्युपयोगित्वं दुर्वारमिति वाच्यम् । स्वविषयगृहीतवृत्तिकपदज्ञानजन्यपदार्थोपस्थितेरेव शाब्दबोधहेतुत्वोपगमात् । विस्मृतशक्तिकपदज्ञानेन च पदार्थस्मृतेरेवाजननेनानातिप्रसङ्गात् ।

यदि च गृहीतविस्मृतवृत्तिकादगृहीतसम्बन्धान्तरात् पदात् पदार्थोपस्थितिदशायामतिप्रसङ्ग इत्युच्यते तदा वृत्तिग्रहाधीनत्वमुपस्थितौ विशेषणं देयम् । अन्तरा शक्त्यस्मृतावपि प्राचीनशक्त्यनुभवाधीनतया पदार्थोपस्थितेः शाब्दजनकत्वमव्याहतमेव । अत एवापूर्ववादे पदार्थस्मृतिरेव स्फुटमभिहिता दीधितिकृतापि शक्त्यनुभवशक्यस्मरणे इत्यत्र पदार्थमेव शक्यपदेनोपादाय विवृतं शाब्दबोधे शक्तिस्मरणापेक्षायामपि शक्त्यनुभवस्य तद्द्वारा अपेक्षितत्वस्य समानविषयकत्वापेक्षाप्रतिक्षेपेणैवार्थतस्तस्य समानविषयतापेक्षाप्रतिक्षेपसिद्धेर्न्यूनतानवकाशाच्च ।

पदार्थस्मरणे शक्त्यनुभवस्य समानविषयताया मीमांसकमते अनपेक्षितत्वेऽपि तत्प्रतिक्षेपः प्रकृते अनुपयुक्तः, तत्र तदपेक्षायामपि समानप्रकारकान्यविषयकस्मरणादपूर्वगवादिबोधोपपत्तेः । शक्यत्वानुभवतत्स्मरणयोर्हेतुहेतुमद्भावोऽपि न मूलतः प्रतीयते युगपत् पदद्वयस्य द्वन्द्वे समसङ्ख्यताविरहेण यथाक्रमं हेतुत्वहेतुमत्त्वयोरन्वयासम्भवेन प्रत्येकत्रितयपक्षोभयान्वयापत्त्या परस्परहेतुहेतुमद्भावालाभात् । शक्यत्वानुभवतत्स्मरणयोर्द्वन्द्वं कृत्वा तन्नसंबन्धान्तरेण समसङ्ख्यतोपपादने शक्यत्वानुभवतत्स्मरणयोर्हेतुता वाक्यार्थानुभवस्य

हेतुमत्ताया एतन्मात्रलाभात्, अतो वाक्यार्थानुभवं प्रत्युभयहेतुतामात्रपरत्वं दीधितिकारो विवृणोति। शक्त्यनुभवेति।

(दी०) गवादिपदेष्वपीति। शक्त्यनुभवशक्यस्मरणे हेतु हेतुमान् वाक्यार्थबोधः। न चैवं जातिशक्तिवादविरोधः। जातौ व्यक्तौ च शक्तिः परं तु जातिविषयत्वेनैव ज्ञात्वा शक्तिर्व्यक्तिं स्मारयति अनुभावयति चेति। तदर्थादिति वक्ष्यमाणत्वात्। अतद्गुणसंविज्ञानबहुव्रीहिणा पश्वादिलिङ्गादिपदाभिप्रायेण परीक्षा यत्त्वपि कश्चित्।

(गा०) अत्र हेतुपदं प्रयोजकत्वार्थकं तच्च कारणतावच्छेदकोऽप्यक्षतमिति शक्त्यनुभवस्य शाब्दधीकारणताविरहेऽपि नासङ्गतिः। यद्यपि शाब्दबुद्धौ शक्तिज्ञानादीनां समानविषयकत्वेनोपयोगित्वेऽपि अनुमितौ समानप्रकारकतामात्रेण परामर्शस्य हेतुतया व्याप्तिज्ञानाधीनशक्त्यनुमितौ उपस्थितानामनुपस्थितानामपि सकलगवादिव्यक्तीनां भानसम्भवात् तत एव अपूर्वव्यक्तीनां पदार्थस्मरणेऽपि भानसम्भवान्न किञ्चिदनुपपन्नम्। तथापि वस्तुगतिमनुरुध्येदम्।

ननु जातिशक्तिवादिनां परेषां गौर्गोपदशक्येति शक्यांशे शाब्दधीप्रकारप्रकारकज्ञानं न शाब्दधीहेतुः, व्यक्तौ शक्तिविरहेण अन्यथाप्यातिरिक्तकारापत्तेः। किं तु गोत्वं गोपदशक्यमित्याकारकं शाब्दबोधप्रकारविशेष्यकमेवेति शक्तिज्ञानस्य समानप्रकारकत्वेन न शाब्दधीहेतुताकथनविरोधः।

न च गोत्वशक्तं गोपदमित्याकारकज्ञानमेव तन्मते शाब्दहेतुतयोपेयं तच्च शक्यांशे एव शाब्दप्रकारगोत्वादिप्रकारकमिति न विरोध इति वाच्यम्। अपूर्ववादे लिङ्पदशक्तिग्रहस्य प्रकृततया मादृशशक्तिग्रहस्य च कार्यत्वप्रकारेण घटादिरूपकार्यविषयकस्य शक्त्यंशे शाब्दधीप्रकारप्रकारकत्वविरहेण शक्यांशे तत्प्रकारकताया एव समानप्रकारकत्वेनेव विवक्षितत्वादन्यादृशसमानप्रकारकत्वविवक्षणे इत्यपूर्वे वक्ष्यते इत्यनेन विरोधादिति शङ्क्ते। न चैवमिति। कुब्जशक्तिमते व्यक्तावपि शक्तिसत्त्वेन न व्यक्ति

विशेष्यकशक्तिधियो ऽन्यथाख्यातित्वमिति समाधत्ते । जाताविति ।

नन्वेवमपि विरोध एव, तथा हि कुब्जशक्तिमते व्यक्तौ शक्तिर्विद्यते एव शक्यज्ञानविषयत्वात् । किं तु तदंशे शक्तिः स्वरूपसती हेतुर्जाताविव, ज्ञातोपयुज्यते इति व्यक्तौ शक्तिसत्त्वेऽपि न तस्या वाच्यता अपि तु जातेरेवेति मतम्, एतन्मते व्यक्तावपि शक्तिज्ञातापेक्षायां न्यायमते व्यक्तिरपि पदार्थो न तु तन्मते इति विशेषानुपपत्तेरित्याशङ्क्यान्यथा विशेषमुपपादयति । परं त्विति । ज्ञाता व्यक्तिं स्मारयतीत्यत्र ज्ञानस्य विशेषणतया विशेष्यशक्ताविव तत्रापि स्मरणाद्युपयोगित्वान्वयः । तथा च तदन्वयिन्यामुपयोगितायां जातिविषयकत्वेनैवेत्यर्थस्य जातिमात्रविषयकत्वावच्छिन्नत्वस्यान्वयः । एवं च जातिमात्रविषयकत्वं व्यक्तिस्मरणाद्युपयोगितावच्छेदकं न तु व्यक्तिविषयकत्वमिति पर्यवसितार्थः । तथा च व्यक्तौ शक्तिज्ञानापेक्षायामपि फलीभूतबोधविषयव्यक्तौ तदनपेक्षया व्यक्त्यंशे शक्तेः कुब्जता यद्विषयकत्वेन शक्तिज्ञानस्य बोधोपयोगिता, तदेव वाच्यम्, व्यक्तेश्चातथात्वान्न वाच्यता । समानविषयकत्वतन्त्रतावादिनां च गोत्वादिविशिष्टतत्तद्व्यक्तिविषयकशाब्दबुद्धौ विशिष्य गोत्वादिविशिष्टतत्तद्व्यादिधर्मिकशक्तिज्ञानत्वेन हेतुत्वाद्विशिष्टस्य वाच्यतेति विशेष इति भावः ।

यद्यपि गौर्गोपदशक्येत्याकारकस्य गोशक्तं गोपदमित्याकारकस्य वा शक्तिज्ञानस्य हेतुत्वं गोत्वावच्छिन्नविषयतात्वेन व्यक्तिविषयकत्वमप्यवच्छेदकमावश्यकं तथापि व्यक्त्युपरागेण तद्विषयितानावच्छेदिकेति न तस्याः पदार्थत्वम् ।

यद्यप्येतन्मतापेक्षया गोत्वशक्तिप्रकारकपदज्ञानहेतुतैव युक्ता, इयक्तिशक्तिज्ञानहेतुतामते व्यक्तिविषयताया व्यक्त्यनुयोगिकजातिसम्बन्धविषयतायाश्च निवेशाधिक्येन गौरवात् । सम्बन्धविषयतानिवेशे कालिकादिसम्बन्धेन गोत्वादिप्रकारकशक्तिग्रहादपि समवायेन तत्प्रकारकशाब्दबोधापत्तेर्दुर्वारत्वात् । एवमर्थविशेष्यकस्य पदविशेष्यकस्य च शक्तिज्ञानस्य विनिगमनाविरहेण हेतुतायाः कल्पनीयतयापि गौरवात् । जातिशक्तिप्रकारकज्ञानहेतुत्वे च जातिविशेष्यकपदशक्तिज्ञानहेतुताया न विनिगमनाविरहेण प्रसक्तिः, विपरीतज्ञानाप्रतिबध्यस्य निर्धर्मितावच्छेदककशक्तिग्रहस्य हेतुत्वे

अनुभवविरोधात् । जातित्वाविनोपस्थितिदशायां जातौ शक्ति-भ्रमात् शाब्दबोधवारणाय च गोत्वत्वाद्यवच्छिन्नविशेष्यकत्वेनैव जातिविशेष्यकधियो हेतुतया वाच्यतया तदपेक्षया अनवच्छिन्नगोत्वादिविशेषितशक्तिप्रकारकपदविशेष्यकज्ञानस्य हेतुत्वे लाघवाच्छक्तिज्ञानस्य जातिसम्बन्धाविषयकत्वेऽपि समवायरूपतत्सम्बन्धस्य, ततो भानः व्यक्तिभानवन्निष्प्रत्यूहमेव । जातिशक्तिज्ञानजन्यतायां समवायेन जातिप्रकारकव्यक्तिविषयतायाः अवच्छेदकत्वात् सम्बन्धान्तरभानप्रसक्तस्य च तद्विषयतायाः शक्तिज्ञानजन्यतावच्छेदकत्वानभ्युपगमेन नावकाशः । शक्तिभ्रमेण गवादिपदादपि कालिकादिसम्बन्धेन गोत्वादिप्रकारकधीरनुभूयते इति चेत् ? अस्तु तर्हि तेन सम्बन्धेन गोत्वादौ व्यक्तिशक्यतावच्छेदकतायाः भ्रमस्य तेन सम्बन्धेन तत्प्रकारकत्व कार्यतावच्छेदकं तादृशभ्रमरूपकारणाभावादेव नाभ्रान्तस्य जातिशक्तिज्ञानात्तादृशबोधापत्तिः । भ्रमस्तु विशिष्टज्ञान ज्ञानद्वय वेत्यन्यदेतत् ।

वस्तुतो गुरूणां व्याप्त्यादिभ्रमस्थले यथा नानुमितिः किं त्वसंसर्गाग्रहमात्रं तथा शक्तिभ्रमस्थलेऽपि न शाब्दानुभवः अपि तूपस्थितपदार्थानामसंसर्गाग्रहमात्रम् । सम्बन्धाविषयकशक्तिज्ञानात् कालिकादिसम्बन्धस्य न भानं तादृशादपि समवायस्य भानमित्यनुभवविरोधः । सम्बन्धानामविशेषेण तादृशविशेषबीजविरहादिति तु न शङ्क्यम्, समवायरूपसम्बन्धांशे कुब्जा शक्तिर्न तु सम्बन्धान्तरे इत्यत एव विशेषात् । शक्तिज्ञानाविषयत्वाविशेषेऽपि गावद्वाद्यादिर्न भासते अपि तु गौरित्यत्रापि स्वरूपसच्छक्तितद्भिरहकृतविशेषस्यैव बीजत्वात् । कुब्जशक्त्यनुपगमे तु स्वसमवायिव्यक्तिं विना अभानं जातेः स्वभावो न तु सम्बन्धान्तरेण स्वाश्रय स्वासमवायिनमन्तरेण न भानमिति विशेषाद्यथा व्यक्तिभाननियमस्तथा सम्बन्धभाननियमोऽपीति । तथापि समवायातिरिक्तसम्बन्धेन जातेः स्वरूपतः प्रकारत्वमप्रामाणिकमिति शक्यांशे गोत्वत्वेन गोत्वप्रकारकमेव ज्ञानं व्यक्तिशक्त्यनवगाहिज्ञानकारणतावादिना कारणं वाच्यम् । समानप्रकारकज्ञानकारणतामते च स्वरूपतो गोत्वप्रकारकव्यक्तिशक्तिज्ञानमिति लाघवमित्याशयेनेदशः कुब्जशक्तिमतनिष्कर्षः कृतः । अत

एव तेषां जातेर्व्यक्तिग्रहमात्रवेद्यतासिद्धान्तोऽपि सङ्गच्छते, अन्यथा व्यक्तिं विना शक्तिज्ञाने एव जातिभानात्तादृशनियमस्यात्यन्तमसम्भावितत्वात् ।

न च गां जानातीत्यादिविशिष्टवैशिष्ट्यबोधे ज्ञानांशेऽपि स्वावच्छिन्नविषयताकत्वसम्बन्धेन गोत्वादेः स्वरूपतः पारतन्त्र्येण प्रकारत्वात् समवायेनैव जातेः स्वरूपतः प्रकारत्वनियमोऽसम्भावित इति वाच्यम् । स्वातन्त्र्येण प्रकारतामात्रायैव तथा नियमात् । एवं एकसम्बन्धिज्ञानस्य सम्बन्धग्रहप्रकारीभूतधर्मप्रकारेणैवापरसम्बन्धिस्मारकत्वं फलतं न तु स्वरूपतः, तथा च गोत्वसम्बन्धिपदज्ञानात् स्वरूपतो गोत्वस्मरणानुरोधेन सम्बन्धिज्ञानस्याधिककारणत्वं कल्प्यमित्यादिकमपि यथाश्रुततन्मतोपेक्षाबीजमवधेयम् । अधिकमन्यत्र प्रपञ्चितम् ।

प्रकारान्तरेणाविरोधमुपपादयतो मतमाह । अतद्गुणेति । गवादीत्यत्र गोत्वं आदिर्यस्य पश्वादिपदस्येति अन्यपदार्थमात्रपरबहुव्रीहिणेत्यर्थः । पश्वादिपदेति । पशुत्व हि लोमादिमत्त्वरूपोपाधिर्न तु जातिः तैजसोच्चैःश्रवःशरीरादिवृत्तित्वेन पृथिवीत्वादिना सङ्करात्, अतः पश्वादिपदस्य धर्मिण्यपि शक्तिर्लोमादिरूपधर्मस्याश्रयविनिर्मोकेणापि भानात्तस्मात्शक्तेस्तन्निष्ठाकिञ्चित्पदलक्षणाया इव धर्मिभासकत्वासम्भवादतस्तत्र समानप्रकारकत्वेन शक्तिज्ञानस्य शाब्दबोधहेतुत्वमविरुद्धमेवेति भावः । घटत्वादिवत् पशुत्वादेरपि नानात्वे जातिसङ्करानवकाशेन जातिरूपता सम्भवतीत्याशयेनाह । लिङ्गादीति । लिङ्गादिपदस्य कार्यत्वेनोपाधिना अपूर्वरूपधर्मिवाचकतायास्ततिसद्धान्तत्वादिति भावः । समानविषयकत्वेन शक्तिज्ञानपदार्थस्मरणहेतुत्वमादाय गवादिपदमधिकृत्याप्याक्षेपाधतारात्तद्गुणसंविज्ञानबहुव्रीहिणा समाधानग्रन्थस्य पदान्तरपरत्वे परिहारन्यूनतेति व्यक्तिशक्त्यभ्युपगमवादेन तादृशग्रन्थस्य पदसामान्यपरतामेवोपपादयति । पररीत्या चेति । परो नैयायिकः ।

(चि० ) अथ वह्निमानयमित्यनुमितिर्विशेषणज्ञानसाध्या विशिष्टज्ञानत्वादिति पर्वतीयवह्निभानार्थं तत्कल्पने, धूमेऽपि तथा क्वचिद् धूमस्यापि व्यापक-

त्त्वादिति चेन्न । विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्यावश्यकत्वेन हेतुत्वात्; तच्च धृत्तमेव न तु विशेषणज्ञानमपि तथा, गौरवात् । गौरवमिति विशिष्टज्ञाने युगपद्विशेष्ये विशेषणे सन्निकर्ष एव कारणं न तु निर्विकल्पकं मानाभावात् । विशिष्टज्ञानत्वमेव मानमिति चेन्न । दृष्टान्ताभावात्, दण्डी पुरुष इत्यत्र विशेषणधीजन्यत्वानुपगमात् । विशिष्टवैशिष्ट्यज्ञानत्वात् । अपि च प्रमेयत्वेन व्याप्तिं परिच्छिन्दन् सर्वज्ञः स्यात् तथा च परकीयज्ञानविषये घटत्वं न वेति संशयो न स्यात् प्रमेयत्वेन तदन्यतरनिश्चयात् । प्रमेयत्वेन घटं जानात्येव घटत्वं तस्य न जानाति इति चेन्न । तत् किं घटत्वं न प्रमेयं येन तन्न जानीयात् । सकलघटवृत्तिधर्मस्य प्रमेयत्वेन तदज्ञानासम्भवात् ।

(दी०) विशेषणज्ञानसाध्येति । न च पक्षतावच्छेदकज्ञानजन्यतया सिद्धसाधनम्, यद्यद्विशिष्टज्ञानं तत्तद्धीसाध्यमिति सामान्यव्याप्त्यादरादभावत्वप्रतियोगित्वयोरप्यनुपस्थितयोरप्रकारत्वात् ।

(गा० ) विशेषणज्ञानसाध्येति मूले विशेषणपदस्य स्वप्रकारीभूतधर्मसामान्यपरतामाश्रित्याह न चेत्यादिना । पक्षतावच्छेदकेति । साध्यतावच्छेदकवह्नित्वादेरप्युपलक्षकम् । सिद्धसाधनमिति । अनुमितौ स्वप्रकारपर्वतत्वादिविषयकपरामर्शस्य हेतुतायाः सामान्यप्रत्यासत्तिमनङ्गीकुर्वतापि स्वीकारात् पर्वतीयवह्निज्ञानजन्यत्वपर्यन्तासिद्धेरुद्देश्याया उक्तानुमानेनासम्भव इत्यर्थः ।

यत्तु केचित् सामान्यतो व्याप्त्या पक्षधर्मताबलादसिद्धविशेषसिद्धिरिति प्राचीनमतमालम्ब्य समाधत्ते । अपि चेति । तथा च विशे-

पणपद पर्वतीयवह्निपर विशिष्टज्ञानपदमपि वह्निविशिष्टज्ञानपरमिति न सिद्धसाधनमिति भावः ।

ननु अभावसन्निकर्षे प्रतियोगिज्ञानमात्रादय घटप्रतियोगिकाभावत्वादिना अभावप्रत्यक्षमुत्पद्यते न तु अभावत्वादिज्ञानमपि तत्रापेक्षितं तदुक्तमभावप्रतीतौ प्रतियोगित्वाभावत्वयोरिवेति, तथा च अभावत्वादिप्रकारक तादृशप्रत्यक्षे अभावत्वादिज्ञानजन्यत्वाभावेन व्यभिचारात्साकसामान्यव्याप्तिसम्भव इत्यत । अभावत्वेति । अप्रकारत्वात् । प्रकारत्वानुपगमात । घटो नास्तीत्यादिविशिष्टबुद्धिपूर्वमभावत्वस्यापि निर्विकल्पकोपगमात् । प्रतियोगितायाः संसर्गतयैव तत्र भानादिति भावः ।

यत्वतरत्वाननुगमादुक्तरीतिर्न विचारसहेति विशेषतो व्याप्तिमेवावलम्बते । वह्नीति ।

( दी० ) वह्निविशिष्टज्ञानत्वेन तद्वह्निविशिष्टज्ञानत्वेन वा तज्ज्ञानजन्यत्वमाधनाद्वा विशिष्टवैशिष्ट्येत्यायभ्युपगमवादः । वस्तुतो विशेषणतावच्छेदकादीनां युगपदिन्द्रियसन्निकर्षात्तादृशप्रत्यक्षम्, अनुमित्यादेस्तु तद्रूपेण व्याप्यादिग्रहात् । अत एवानेकव्यक्तिकद्रव्यादिविशेषणतावच्छेदककानुमित्या तज्ज्ञानार्थं(१) न सामान्यलक्षणादरः ।

( गा० ) वह्निज्ञानजन्यतात्वेन साध्यतायामपि प्रसिद्धयाह्निज्ञानजन्यत्वेन सिद्धसाधन दुर्वारमेव इत्यतस्तद्वह्नीति । विशेषतो व्याप्यैवेति पूरणीयम् । अत्र च तद्वह्निविषयकज्ञानत्वावच्छिन्नकारणताया उभयमते कुत्राप्यसत्त्वेऽपि साध्याप्रसिद्धिर्नाशङ्कनीया तद्विषयकज्ञानसाध्यत्वमित्यानी साध्यमित्याशयात । तादृशसाध्यस्यैव विशेषणतावच्छेदकीभूतवह्नित्वप्रकारकज्ञानत्वादिना यत्र तद्वह्निज्ञानस्य हेतुता तादृशविशिष्टवैशिष्ट्यबोधात्रैव प्रसिद्धत्वात् । साध्यत्व चान्यवह्नितोऽसत्त्व नात ईश्वरीयज्ञानमादायार्थान्तर परेषां स्वर्धविशेषणत्व न दोषायेति ध्येयम् ।

उक्तानुमानप्रयोजकान्तु विशिष्टबुद्धित्वेन विशेषणज्ञानत्वाव

(१) तज्ज्ञानार्थमिति पाठान्तरम् ।

च्छिन्नजन्यता मपहायितुमुपक्रमते मूले । विशिष्टवैशिष्ट्येत्यादिना । ननु विशिष्टविशेषणकविशिष्टबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानरूपहेतुना निर्वाहेऽपि तादृशज्ञानाद्धेतुकनिर्विकल्पकविशेषणधीहेतुकगौरवमित्यादिनिर्विशेषणकविशेषणाद्यगादिहेतुत्वानुरोधेन । विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानत्वेन हेतुताकल्पनमावश्यकमित्यत आह । गौरवमिति । मानाभावादिति । तादृशविशिष्टबुद्धेरपि विशेषणधीत्वावच्छिन्नहेतुकत्वे मानाभावादित्यर्थः । दृष्टान्ताभावादिति । किञ्चिद्रूपावच्छिन्नविशेषणधीहेतुकत्वसाधने गौरवमिति अनुमित्यादेः परामर्शत्वादिना विशेषणविषयकपरामर्शादिहेतुकस्य दृष्टान्तस्य सम्भवेऽपि विशेषणज्ञानत्वावच्छिन्नहेतुकत्वसाधने दृष्टान्ताभावादित्यर्थः । तथा च साध्याप्रसिद्ध्या नानुमानसम्भव इति भावः । एव चोक्तकार्यकारणभावाभावे तद्व्यक्तिप्रकारकज्ञानप्रकाशात् । पर्वतीयवह्निज्ञानं विनापि तत्प्रकारकानुमितिनिष्प्रत्यूहैव तमविषयीकृत्यापि महानसीयवह्न्यादिविषयकस्यैव परामर्शस्य सम्भवेन परामर्शत्वावच्छिन्नकारणताया उपपत्तेरिति किं सामान्यलक्षणयेति समुदितत्तात्पर्यार्थः । विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानहेतुत्वेऽपि सामान्यप्रत्यासत्त्यावश्यकताया वक्ष्यमाणत्वात् तत्रापि मूलकृताऽनिर्भरं दर्शयति दीधितौ । विशिष्टेति । अभ्युपगमवादः । आपाततः परमताभ्युपगमेनोक्तिः । तर्हि किं वास्तव विशिष्टवैशिष्ट्यबोधकारणमित्यत आह । वस्तुत इति । अत एव । विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यबोधे हेतुत्वादेव । तज्ज्ञानार्थम् विशेषणतावच्छेदकीभूतापूर्वदण्डादिप्रकारकज्ञानार्थम् ।

ननु तदुत्पादीनां इन्द्रियसन्निकर्षादिसत्त्वेऽपि तद्धर्मप्रकारकज्ञानानन्तरमेव तद्विशिष्टविलक्षणप्रकारताशालिज्ञानं जायते न त्वन्यदा इत्यनुभवानुरोधाद्विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानहेतुत्वमावश्यकम् । अत एवासंसर्गाग्रहदशायामपि कदाचिद्दण्डपुरुषावित्यादिसमूहालम्बनं विशिष्टवैशिष्ट्यबोधात्मकमनुभूयते । विशिष्टज्ञानसत्त्वे त्वासंसर्गाग्रहादिदशायामेव तादृशज्ञानमुपपद्यते ।

यदि च विशिष्टज्ञानासंसर्गाग्रहादिसत्त्वेऽपि न कदाचित् तादृश

ज्ञानमानुभविकं तदा तज्ज्ञानस्यैव विशिष्टवैशिष्ट्यबोधप्रतिबन्धकत्वं वाच्यम् । एवं कदाचित् संयोगेनैव दण्डादिविशिष्टस्य प्रकारत्वं कदाचित्सम्बन्धान्तरेणैव तद्विशिष्टस्येत्यत्रानुगतनियामककल्पनमपेक्ष्य तत्तत्सम्बन्धेन तत्तद्विशिष्टविषयकज्ञानस्य तादृशविशिष्टप्रकारकज्ञाने हेतुत्वकल्पनमुचितम् । एवं च किञ्चिद्विशिष्टविषयकज्ञानादिकल्पनागौरवं फलमुखतया न दोषायेत्यत आह अस्तु वेति ।

( दी० ) अस्तु वा दण्डीत्यादिप्रत्यक्षे दण्डत्वादिना दण्डसंयोगवानित्यादौ च दण्डसंयोगत्वादिना यत्किञ्चिद्व्यक्तिज्ञानं कारणम् । दृष्टान्ताभावादिति । विशेषणज्ञानत्वेन हेतुत्वस्य विशेष्यज्ञानादेरपि कारणत्वापत्त्या मानाभावेन च निरस्तत्वादिति ।

( गा० ) दण्डीत्यादौ दण्डत्वादिना यत्किञ्चिद्व्यक्तिज्ञानं कारणं न तु फलीभूतप्रत्यक्षविशेषणव्यक्तिज्ञानपर्यन्तम् एतच्च दृष्टान्तविषयकम् । नानाव्यक्तिविशेषणतावच्छेदकदण्डसंयोगवानित्यादौ अपूर्वदण्डादिज्ञानानपेक्षाया एव प्रकृतत्वात् । दण्डसंयोगत्वादिनेति । दण्डत्वसंयोगत्वादिनेत्यर्थः । तेन दण्डत्वादिना फलीभूतप्रत्यक्षविशेषणतावच्छेदकदण्डादिव्यक्तिज्ञानानपेक्षालाभः । यथाश्रुते फलीभूतज्ञानविशेषणसंयोगादिव्यक्तिज्ञानानपेक्षामात्रलाभेनासङ्गतिप्रसङ्गात् । संयोगत्वादिना यत्किञ्चिज्ज्ञानकारणत्वाभिधानं तु पूर्ववद् दृष्टान्तविधया विशेषणतावच्छेदकप्रकारकज्ञानहेतुतायां तद्विशेषणविषयकत्वनिवेशे वह्निमानित्याद्यनुमितौ अपूर्वरक्तत्वादिरूपविशेषणभानार्थमेव सामान्यप्रत्यासत्तेरावश्यकतया तन्निवेशस्य प्रागेव व्यवस्थापितत्वादिदानीं दृष्टान्तता ।

मूले विशिष्टवैशिष्ट्यज्ञानत्वादिति । विशिष्टप्रकारकज्ञानत्वादित्यर्थः । विशेषणान्तरविशेष्यताप्रकारकज्ञानत्वादिति यावत् । अतो दण्डत्वादिविशिष्टप्रतियोगिकत्वानवच्छिन्नवैशिष्ट्यविषयताशालिनो दण्डी पुरुष इति ज्ञानस्यापि सङ्ग्रहः । तदसङ्ग्रहे तादृशज्ञाने विशेषणज्ञानजन्यत्वानभ्युपगमात् हेत्वनभिधाने न्यूनतापातात् । न च तत्र विशेषणज्ञानजन्यतानभ्युपगमोऽपि न विवक्षित इति

घाच्यम् । तथा सति तादृशानुमितेर्दृष्टान्तत्वाप्रतिक्षेपात् ।

यद्यपि विशिष्टवैशिष्ट्यज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानजन्यत्वमेव विशेषणज्ञानजन्यत्वानभ्युपगमे बीजं विशेषणतावच्छेदकप्रकारकज्ञानस्य च विशिष्टप्रतियोगिकवैशिष्ट्यावगाहिन्यामेव बुद्धौ हेतुता न तु विशिष्टविशेषणकज्ञानमात्रे। मणिकृता भवान्तरवाक्यार्थज्ञानं विनापि युगपत्, सकलपदार्थसंसर्गावगाहिरक्तदण्डवान् पुरुष इत्यादिशाब्दबोधस्योपगमात् । स्वप्रकाशग्रन्थे ज्ञानत्वानिर्विकल्पकानन्तरं व्यवसायतृतीयक्षणे विशेष्ये विशेषणमित्यादिरीत्या जानामीत्याकारकविशिष्टज्ञानविशेषणकानुव्यवसायस्योपगतत्वाच्च । काञ्चनमयत्वादिविशिष्टवह्निप्रसिद्धिं विनापि काञ्चनमयवह्निमानित्यादिबुद्धेर्विशेष्ये विशेषणमित्यादिन्यायेन सम्भवस्य दीधितिकृता हेत्वाभासे वक्तव्यत्वात् । विशिष्टव्याप्तिज्ञानं विनापि विशिष्टपरामर्शोत्पादस्य मिश्रप्रभृतिभिः परामर्शग्रन्थे कथनात् । लाघवोपनीतयत्किञ्चिद्विशिष्टसाध्यप्रसिद्धिं विनापि तद्विशिष्टसाध्यविशेषणकानुमित्युपगमाच्च । तथापि प्राचीनैर्विशिष्टोपस्थितिं विना विशिष्टप्रतियोगिकवैशिष्ट्यविषयकमपि विशिष्टविशेषणकज्ञानं नोपेयते मणिकृता विशिष्टाप्रसिद्ध्यैव काञ्चनमयत्वविशिष्टवह्न्यनुमित्यसम्भवस्य हेत्वाभासे कथनादिति नासङ्गतिः । अत एव साध्याप्रसिद्धिस्थले साध्यविशेष्यिकैवानुमितिरुपेयते न तु विशेष्ये विशेषणमित्यादिन्यायेनापि साध्यप्रकारिकेति ।

ननु तद्विशिष्टज्ञानत्वेन तज्ज्ञानत्वावच्छिन्नहेतुकत्वानुमाने मूलोक्तदृष्टान्ताभावो ज्ञानमयत्वासिद्धिस्वीकर्तृमते न सङ्गच्छते उपनीतभानस्यैव दृष्टान्ततासम्भवात् अतः स्वयं तत्र दूषणान्तरमाह । विशेषणेति । हेतुत्वस्येति । निरस्तत्वादित्यग्रिमेणान्वयः । कारणत्वापत्त्येति । तद्विशेषणकबुद्धित्वस्येव तद्विशेष्यकबुद्धित्वादेरपि तद्विशेष्यकोपनीतभाने तज्ज्ञानत्वावच्छिन्नहेतुकत्वसहचरितत्वाल्लौकिकविशिष्टबुद्धिपूर्वं विशेषणगोचरस्येव विशेष्यगोचरस्यापि निर्विकल्पकस्य नैयायिकसम्मततया व्यभिचारनिर्णयाविषयत्वाच्च तज्ज्ञानत्वावच्छिन्नजनकत्वानुमापकत्वसम्भवादिति भावः ।

प्रतिबन्द्यनुसरतया दोषान्तरमाह । मानाभावेन चेति । विशिष्टज्ञानत्वे विशेषणज्ञानजन्यत्वानुमापकत्वोपाधिकृतसम्भवेन

धेत्यर्थः । मानाभावपर्यन्तानुसरणबीजं प्रतिबन्देरकिञ्चित्करत्व-मिष्टापत्त्यादिना दर्शयति ।

( दी० ) एतेनास्तु विशेष्यज्ञानमपि कारणम् , अन्यथा निर्विकल्पकमपि सामान्यलक्षणया सर्वज्ञत्वापत्त्या तस्यास्तदजनकत्वे तु तत एव बाधकाच्च तत् कारणमिति निरस्तम् ।

( गा० ) एतेनेति । ननु विशेष्यज्ञानत्वेन हेतुत्वे सामान्यलक्षणातोऽपि निर्विकल्पकस्वीकारप्रसङ्गः अज्ञातातीतानागतघटादिव्यक्तीनां प्रथमतो विशेष्यतया भानासम्भवादित्यत्रापीष्टापत्तिमाह । अन्यथा चेति । सामान्यलक्षणायाः सामान्यप्रकारकसामान्याश्रयविषयकप्रत्यक्षत्वं जन्यतावच्छेदकं न तु सामान्यप्रकारतानिरूपितसामान्याश्रयविषयताकप्रत्यक्षत्वमतो ज्ञातधर्म्यंशे सामान्यप्रकारकप्राथमिकसामान्यज्ञानीयाज्ञातसामान्याश्रयनिष्ठप्रकारस्य विशेष्यतात्मकविषयताया अपि सामान्यप्रत्यासत्तिनियम्यतेति भावः । एतन्मते च संसर्गतानिरूपकतदीयविषयताशालिज्ञानत्वमेव तज्ज्ञानस्य जन्यतावच्छेदकं न तु तद्विशेष्यकज्ञानत्वतत्प्रकारकज्ञानत्वे कार्यकारणभावद्वयापत्तेः । संसर्गतानिरूपकत्वस्य प्रकारताविशेष्यतासाधारणत्वेनोक्तधर्मेणोभयसङ्ग्रहः । सौरभाद्यप्रकारकतन्मानसानुरोधेनापि ज्ञानप्रत्यासत्तेः स्वतन्त्रकारणत्वमेतन्मते नास्ति इदंताकारणतयैवोपपत्तेः ।

न च विशेष्यज्ञानाहेतुतामतेऽपि तत्र सामान्यलक्षणया सौरभभानसम्भवात्तदनुरोधेन न ज्ञानप्रत्यासत्तिहेतुतेति वाच्यम् । यत्र नित्यत्वादिना सौरभत्वादिकमेवोपस्थितं न तु सौरभादिकमपि तत्र किञ्चिद्विशेष्यभासकप्रत्यासत्त्यन्तराभावेन सामान्यप्रत्यासत्त्यापि मानससौरभभानाजननात् सौरभत्वादिसामान्यलक्षणया मानसज्ञाने जननीये यत्किञ्चित्सौरभादिज्ञानसहकारिताया आवश्यकत्वात् , तदनुरोधेनैव ज्ञानप्रत्यासत्तेस्तन्मते हेतुत्वाम्तरस्यावश्यकत्वादित्यवधेयम् ।

ननु सामान्यलक्षणया निर्विकल्पकजननोपगमे जातित्वादिसामान्यलक्षणया सज्ञातनिखिलजातिनिर्विकल्पकं जनयित्वा स्वरूपत-

स्तत्तज्जातिप्रकारकज्ञानं जनयिष्यते स्वरूपतस्तद्विशिष्टबुद्धिहेतु-भूतस्य स्वरूपतस्तज्ज्ञानस्य सत्त्वात् । तादृशं च ज्ञानमसर्वज्ञस्यानुभवविरुद्धमत आह । सार्वज्ञापत्त्येति । यावत्प्रमेयभासकप्रमेयत्वादिसामान्यज्ञानतृतीयक्षणजातसंशयधर्मितावच्छेदकतत्तादिविशिष्टधर्मिज्ञानानन्तरं यत्र घटत्वादिरूपकोट्युपस्थितिस्तदुत्तरं स घटो न वेत्यादिसंशयः तत्र धर्मिज्ञानं सामान्यलक्षणाजन्यघटत्वादिनिर्विकल्पकात् घटत्वाद्यंशेऽन्याप्रकारकात् स्वरूपतोऽपि धर्मितावच्छेदकतत्तादिविशिष्टे घटत्वादिभानसम्भवेन समानप्रकारकनिश्चयसत्वेन स घटो न वेत्यादिसंशयानुपपत्त्येत्यर्थ इति सम्प्रदायः ।

अत्रेदं चिन्त्यते । सामान्यलक्षणया निर्विकल्पकाजननेऽपि यत्र धर्मिज्ञानात् पूर्वं स्वरूपतो घटत्वादिप्रकारिका उपस्थितिः तत्ताविशिष्टधर्मिधीरेव वा दूरत्वादिविशिष्टे घटत्वाद्यंशे अन्याप्रकारकतत्प्रकारकसमूहालम्बनरूपा तत्रापि धर्मिज्ञानानन्तरं घटभेदाद्युपस्थित्या स घटो न वेत्यादिसंशयः कदाचिदनुभूयते तदनुपपत्तिर्दुर्वारैव तत्ताविशिष्टेऽपि तत्र घटत्वादेः स्वरूपतो भाने बाधकाभावात् ।

यदि च दूरत्वादिरूपसंशयजनकदोषात्तत्र तत्ताविशिष्टे स्वरूपतो घटत्वादेर्न विशिष्टधीरित्युच्यते तदा सामान्यलक्षणया निर्विकल्पकजननेऽपि तत एव तत्ताविशिष्टे घटत्वादेरभानात्र स घटो न वेति संशयानुपपत्तिः ।

वस्तुतस्तूपनीतभाने दूरत्वादिदोषो न प्रतिबन्धकः तथा सति दूरस्थे धर्मिणि घटत्वादिसंशयस्याप्यनुपपत्तेः । न हि निश्चयत्वं दोषप्रतिबध्यतावच्छेदकं तस्य कार्यतानवच्छेदकत्वात् । तथा च दर्शितस्थले तत्ताविशिष्टे घटत्वादेरुपनीतभानात्मकनिश्चये बाधकाभावः ।

न च धर्मिज्ञानस्य संशयहेतुतायाः संशयत्वस्य कार्यतावच्छेदकत्वानभ्युपगन्तृभिरनभ्युपगमादुक्तधर्मिज्ञानमेव संशयरूपं भविष्यतीति न संशयानुपपत्तिरिति वाच्यम् । विपरीतकोट्युपस्थितेः प्रागसत्त्वेन प्रथमं संशयासम्भवात् । तस्माद्धर्मिविशेषे स्वरूपतो घटत्वाद्युपनीतभाने अननुगततत्तदुपनायकज्ञानव्यक्तीनामेव हेतुत्वं स्वीकरणीयमिति सामान्यलक्षणया निर्विकल्पकजननेऽपि तस्य

स्वरूपतो घटत्वाद्युपनायकतानभ्युपगमाल्लोकसंशयानुपपत्तिरिति तस्मात् सार्वज्ञापत्तेरित्यस्य प्रमेयत्वादिसामान्यज्ञानतृतीयक्षणे घटत्वादिरूपयावदखण्डधर्माणां स्वरूपतः प्रकारतया भानापत्तेरित्यर्थः । येन पुंसा लौकिकसन्निकर्षेण घटत्वादिकं कदापि न गृहीतं घट इत्याद्याकारकतदीयज्ञानस्यानुभवविरुद्धतया इष्टापत्तेरयोगात् ।

न च उपनायकज्ञानस्योक्तयुक्त्या अननुगतरूपेण हेतुत्वे अस्या अव्याप्तेर्नावकाशः । स्वरूपतो विशेषणविषयकधीसहकृतज्ञानप्रत्यासत्तिबलादेव तादृशज्ञानस्यापादनीयत्वात् । सामान्यलक्षणाघटितायाः सामग्र्याः सामान्याश्रयप्रकारताप्रयोजकत्वानभ्युपगमात् ज्ञातसामान्याश्रयप्रकारकज्ञानस्य ज्ञानप्रत्यासत्तित एव सर्वत्र निर्वाहात् कथञ्चिदुक्तापत्तिसम्भवे संशयानुपपत्तेरपि दुर्वारत्वादिति वाच्यम् । यतो धर्मिज्ञानात् पूर्वं यत्राविशेषितघटत्वादिकमेवोपस्थितं तादृशोक्तस्थले संशयधर्मितावच्छेदकतत्त्वाविशिष्टे निर्विशेषणकघटत्वाद्युपनीतभानवारणाय सधर्मितावच्छेदकक एव तादृशोपनीतभाने उपनायकज्ञानस्याननुगतरूपेण हेतुता स्वीक्रियते न तु निर्धर्मितावच्छेदकके तत्रानुगतसामग्रीस्वीकारे संशयानुपपत्त्यादिरूपानिष्टप्रसङ्गविरहात् । तथा च सामान्यलक्षणाया निर्विकल्पकजनकत्वमते निर्धर्मितावच्छेदककोक्तज्ञानापत्तिर्दुर्वारैव ।

न च निर्धर्मितावच्छेदककोपनीतभानसामग्र्या अपि नानुगमसम्भवस्तथा सत्युपस्थितानां वस्तूनां सन्निकृष्टयावद्वस्तुष्वेव उपनीतभानापत्त्या उपनीतभानमात्रस्यैव भ्रमत्वप्रसङ्गादिति वाच्यम् । एतादृशातिप्रसङ्गवारणाय यत्र यस्य बाधितत्वं तत्र तदुपनीतभानसामग्र्या अनुगमासम्भवेऽपि तदाश्रयधर्मिकतदुपनीतभानसामग्र्या अनुगमोपगमे बाधकाभावात् ।

एतेन लौकिकप्रत्यक्षे स्वरूपतो घटत्वादिभासकं तद्ग्राहकसन्निकर्षविशेषादिकमेव केवलजातिमानित्याकारकघटत्वादिलौकिकप्रत्यक्षानुपगमात् । अन्यथा जातिमत्त्वाद्युपस्थितिसत्त्वे प्रहरावधि निरीक्ष्यमाणेऽपि घटे अयं घटो न वेति संशयविच्छेदानुपपत्तेः । उपनीतभानसामग्री चाननुगतैवेति घट इत्याकारकोपनीतभाने अनियम इति स्वरूपतस्तत्प्रकारकत्वज्ञौ स्वरूपतस्तज्ज्ञान-

हेतुत्वं तदेकयुक्तिकं निर्विकल्पकं च विलीयेतेति निरस्तम् । बाधितस्थलेऽननुगतत्वेऽपि अबाधितस्थले तस्यानुगतत्वात् । एवं च स्वरूपतस्तत्प्रकारकोपनीतभाने स्वरूपतस्तद्विषयकज्ञानहेतुत्वे सिद्धे तत्रैव लाघवाल्लौकिकान्यत्वमनिवेश्य स्वरूपतस्तत्प्रकारकज्ञानत्वावच्छिन्नं प्रति स्वरूपतस्तद्विषयकज्ञानत्वेन हेतुत्वं कल्प्यते प्रथमतो जातित्वाद्युपस्थितिस्थले लौकिकसामग्रीतो जातित्वेन घटत्वप्रत्यक्षेऽपि निर्विकल्पकोपघटत्वविषयत्वोपगमे बाधकाभावात् तन्मूलिकैवायं घट इति धीः स्वरूपतस्तद्विषयकज्ञानत्वावच्छिन्नं प्रति स्वरूपतस्तद्विषयकज्ञानत्वेन हेतुत्वे निर्विकल्पकास्वीकारे प्राथमिकविशिष्टबुद्धौ व्यभिचारः, निर्विकल्पकस्वीकारे च तत्रैव व्यभिचार इति स्वरूपतस्तत्प्रकारकत्वमेव कार्यतावच्छेदकमिति ।

तस्याः । सामान्यलक्षणायाः । तदजनकत्वे । तन्निर्विकल्पकाजनकत्वे । तत एव बाधकात् । सामान्यप्रत्यासत्तिजप्राथमिकाज्ञातविशेष्यकप्रत्यक्षे व्यभिचारात् । तत् । विशेष्यज्ञानम् । न कारणम् । न सम्भवत्कारणताकम् । तथा च तावतैव प्रतिबन्द्युद्धार इति विशेषणज्ञानहेतुत्वं निष्प्रत्यूहमिति भावः ।

निरस्तमिति । यद्यपि विशेषणज्ञानहेतुत्वे ज्ञानलक्षणायाः स्वतन्त्रकारणता नास्तीति लाघवं तन्मुख्यविशेष्यकमानसतदुपनीतभानेऽपि नियमतः स्वांशे तादात्म्यसम्बन्धेन तत्प्रकारकत्वोपगमात् । तत्प्रकारकत्वं लौकिकविषयतान्यतद्विषयताया एव ज्ञानलक्षणाजन्यतावच्छेदकत्वाधश्यकत्वात् । सामान्यस्य प्रत्यासत्तितामते सामान्यप्रत्यासत्तिज्ञातवद्विशेष्यकमानसे व्यभिचारेण ज्ञानप्रत्यासत्तिहेतुताया एवासम्भवात् । तथापि विशिष्टप्रत्यक्षत्वस्यैव विशेषणज्ञानजन्यतावच्छेदकत्वसम्भवेन विशिष्टबुद्धित्वस्यानुमित्यादिसाधारणस्य तज्जन्यतावच्छेदकत्वमप्रामाणिकमित्यनुमित्यादावपूर्वभानानुरोधेन न सामान्यप्रत्यासत्त्यादर इत्यवधेयम् । ननु प्रसिद्धधूमेऽव्यभिचारनिश्चयसत्त्वेन तत्र व्यभिचारसंशयायोगात् धूमान्तरधर्मिक एव व्यभि-

... वाच्यः । तादृशस्य च धर्मिणो भानं न सामान्यप्र-

मूलसिद्धान्तो धर्मिज्ञानस्य सन्देहहेतुतायामेवो-

... सैव मीमांसकानां नानुमता अत एव तेषां स्वतःप्रामाण्यवादिनामप्यज्ञात एव ज्ञानरूपे धर्मिणि प्रामाण्यसन्देहनिर्वाहः ।

न च तुरगारोहे वेगेन गच्छत इन्द्रियसन्निकर्षादिशालिनामनन्तधर्मिणां क्वचिदेव धर्मिणि संशयो न सर्वत्रेति नियमानुरोधात् तद्धर्मिकसंशये तत्र धर्मिज्ञानहेतुत्वमावश्यकमिति वाच्यम् । इन्द्रियसन्निकर्षादिसत्त्वे कस्यचिदेव धर्मिणो ज्ञानमित्यत्र नियामकस्य दुर्वचतया धर्मिज्ञानहेतुतयापि उक्तस्थले संशये धर्मिणि नियमस्योपपादयितुमशक्यत्वात् ।

न च तत्तत्सन्निकर्षादिव्यक्तीनां तत्तद्धर्मिज्ञाने विशिष्य हेतुताकल्पनाद्धर्मिणां संशयजनकज्ञानविषयतानियम इति वाच्यम् । तथा सति संशयीयधर्मिविषयताया अपि तत एव नियमोपपत्तेर्धर्मिज्ञानहेतुत्वासिद्धेः ।

न च संशयात्मकधर्मिज्ञाने अननुगततत्तत्सन्निकर्षादिव्यक्तीनां हेतुतापेक्षया लाघवेन तत्रानुगतधर्मिज्ञानहेतुत्वे सिद्धे तद्बलाद् संशयपूर्वं तद्विषयधर्मिविषयकज्ञानान्तरसिद्धौ तत्र संशयाविषयधर्मिविषयतावारणाय तत्र तत्तत्सन्निकर्षादिव्यक्तीनां हेतुताकल्पने गौरवं फलमुखतया न दूषणमिति वाच्यम् । सन्निकृष्टेष्वनेकधर्मिषु यत्र न संशयः तादृशधर्मिणां कियतामपि भानस्यानुभविकतया अनुगतधर्मिज्ञानहेतुतया संशये धर्मिविषयतानियमानुपपत्तेः ।

अथ साधारणादिधर्मवद्धर्मिज्ञानं संशये धर्मिविषयतानियामकं साधारणधर्मवत्त्वेन धर्मिभाने च नियामकान्तरमुभयसिद्धमेव अत एव ज्ञातेष्वपि धर्मिषु क्वचिदेव धर्मिणि कस्यचिदेव धर्मस्य संशय इति नियमोऽप्युपपद्यते तत्तद्भावसहचरितधर्मवत्ताज्ञानविषयतायास्तत्संशयविषयताप्रयोजकत्वात् ।

एतेन न तत्तद्विशेष्यकत्वावच्छिन्नबुद्धित्वावच्छिन्नोत्पत्तौ तत्तद्विशेष्यभासकसामग्रीणां चाक्षुषस्पार्शनादिभेदेनाननुगतानां गुरुशरीराणां च प्रयोजकत्वमपेक्ष्य तत्तद्विशेष्यविषयकज्ञानाव्यवहितप्राक्क्षणवृत्तित्वविशिष्टस्यानुगतरूपेण हेतुतां कल्पयित्वा प्रयोजकत्वकल्पनमेव तद्धेतोरेवेति न्यायात् लाघवादुचितमिति तत एव संशये विशेष्यभाननियम इति मिश्रानुसारेण धर्मिज्ञानहेतुताखण्डनमप्यपास्तम् । तावता साधारणधर्मदर्शनाद्यविषये ज्ञायमाने धर्मिणि संशयाविषयत्वानिर्वाहात् ।

न च तद्धर्मिकसाधारणधर्मवत्ताज्ञानसामग्रीत्वेनैव तद्धर्मिकसं-

शयहेतुत्वमाह्नामिति वाच्यम् । तादृशज्ञानसामग्रीत्वापेक्षया तादृशज्ञानत्वस्यातिलघुत्वात् ।

न चैनादृशसामग्रीत्वस्य गुरुशरीरत्वेऽपि तदवच्छिन्नस्य नियतपूर्ववर्तितायाः फलमुखत्वात्तदन्यथासिद्धत्वमात्रं कल्पनीयमिति लाघवं तादृशज्ञानस्य तु उभयमेव कल्पनीयमिति सामग्रीहेतुत्वमेवोचितमिति वाच्यम् । साधारणधर्मदर्शनादिविशिष्टसंशयत्वरूपतत्कार्यतावच्छेदकाक्रमितधर्मावच्छिन्नं प्रति तादृशज्ञाननियतपूर्ववर्तितायाः अभ्युपगमवादिसिद्धत्वात् ।

न च संशये साधारणधर्मादिज्ञानस्य हेतुत्वेऽपि उक्तस्थले सन्निकर्षादिशालिसकलधर्मिषु प्रत्येकं तत्तत्कोटिविशिष्टबुद्ध्यापत्तिर्दुर्वारैवेति तत्तद्धर्मिकतत्तद्धर्मविशिष्टबुद्धौ अननुगतनियामककल्पनमावश्यकं तत एव च तत्तद्धर्मिकसंशयस्यापि नियमनिर्वाहात् संशयसाधारणधर्मवत्ताज्ञानहेतुताकल्पनमयुक्तम् । अत एव संशयत्वस्य सामग्रीसमाजनियम्यतया न कार्यतावच्छेदकत्वमिति नवीनमतनिर्वाह इति वाच्यम् । संशयत्वावच्छिन्नं प्रति साधारणादिधर्मवत्ताज्ञानस्याहेतुत्वेऽपि आरोपसाधारणतत्तद्धर्मिकतत्तत्कोटिविशिष्टबुद्धौ तत्तत्कोटिसहचरितधर्मादिमत्तत्तद्धर्मिज्ञानस्य हेतुतायाः आरोपे धर्मिज्ञाननियमावश्यंकल्पनीयतया तत एव संशये धर्मिज्ञानस्यापेक्षणीयत्वात् । मैवम् । संशये धर्मितावच्छेदकमात्रनियमाय तत्तद्धर्मावच्छिन्नधर्मिकसंशये तत्तद्धर्मावच्छिन्नधर्मिकसाधारणादिधर्मज्ञानस्य हेतुतायाः आवश्यकत्वात् यादृशधर्मावच्छिन्ने क्वचिद्धर्मिणि साधारणादिधर्मदर्शनं तत्तद्धर्माश्रयेन्द्रियसन्निकर्षादिशालिसकलधर्मिणामेव तेन रूपेण संशयविषयतोपगमात्तत्तद्धर्मिविषयकत्वमन्तर्भाव्य साधारणादिधर्मिज्ञानस्य हेतुताया अकल्पनात् ।

(चि०) उच्यते । यदि सामान्यलक्षणा नास्ति तदा अनुकूलतर्कादिकं विना धूमादौ व्यभिचारसंशयो न स्यात् । प्रसिद्धधूमे वह्निसम्बन्धावगमात् कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात् ।

सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते ।

( दी० ) प्रसिद्धधूम इत्यादि । धर्मिज्ञानस्य संशयहेतुत्वानङ्गीकारेऽपि संशये एव धर्मिभानार्थं सा स्वीकार्या धर्मितावच्छेदकप्रकारकज्ञानस्य प्रत्यासत्तित्वाभ्युपगमे त्वविवादात् । तद्धर्मप्रकारकज्ञानस्य तद्धर्माश्रयप्रत्यासत्तित्वोपगमात् ।

( गा० ) समानधर्मिकसाधारणादिधर्मज्ञानाद्यनुरोधेन सामान्यप्रत्यासत्तिसिद्धेरयोगात् धूमत्वादिना प्रसिद्धधूमादिषु साधारणादिधर्मज्ञानादेवाप्रसिद्धधूमादौ धूमत्वादिना व्यभिचारसंशयोपपत्तेरित्यालोच्य धर्मिज्ञानहेतुत्वेऽपि सामान्यप्रत्यासत्तेरावश्यकतामाह । धर्मिज्ञानस्येति । सा । सामान्यप्रत्यासत्तिः । स्वीकार्येति । संशयस्यापि प्रत्यक्षतया तत्राप्रत्यासन्नस्य भानासम्भवादिति भावः ।

ननु विशिष्टानुयोगिकवैशिष्ट्यबोधे विशेष्यतावच्छेदकप्रकारकज्ञानहेतुत्वमावश्यकं तत्र च सधर्मितावच्छेदकबुद्धित्वमेव कार्यतावच्छेदकमुपेयते लाघवात् । एवं च सामान्यप्रत्यासत्त्यनभ्युपगमेऽपि न क्षतिः । धर्मितावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकगर्भे एव तत्तद्धर्मावच्छिन्नधर्मिविषयतानिवेशात्तज्ज्ञानस्यैव धर्मिभासकप्रत्यासत्तित्वसम्भवादत आह । धर्मितावच्छेदकेति । अविवादमेव स्फुटयति । तद्धर्मेति ।

न चैवमपि संशयात्मकव्याप्तिज्ञाने यावद्धूमादिविषयकत्वं न सिध्यतीति वाच्यम् । धूमत्वप्रकारकज्ञानस्य धूमभासकतायां विपरीतकोटिभानसामग्र्याः प्रयोजकत्वाकल्पनेन निश्चयेऽपि तद्बलात् सकलधूमभाने बाधकाभावात् विपरीतनिश्चयस्य धर्मितावच्छेदकसामानाधिकरण्यमात्रावगाहिविशिष्टधीप्रतिबन्धकतायां तत्समानविषयकत्वमात्रं तद्धर्मितावच्छेदकघटितधर्मावच्छेदेन विरोधिविषयकत्वविशिष्टं तत्समानविषयकत्वं वा न प्रयोजकं अपि तु शुद्धधर्मितावच्छेदकावच्छेदेन विरोध्यवगाहित्वमेवेति व्यवस्थापयन् संशयानुपपत्तिरूपमूलोक्तसामान्यप्रत्यासत्तियुक्तिं दूषयितुमुपक्रमते । अथ वदन्तीति ।

( दी० ) अत्र वदन्ति । प्रसिद्धधूमे धूमत्वेन व्याप्तिज्ञानमेतद्धूमत्वेन वा ? आद्ये संशयोऽसिद्धः । द्वितीये धूमत्वावच्छेदेन व्याप्तिग्रहस्यैव तद्विरोधितया संशयो नानुपपन्नः । कथमन्यथा पृथिव्यादिरूपे वायुत्वाभावव्याप्यतानिर्णयेऽपि रूपं वायुत्वाभावव्यभिचारि न वेत्यादिसंशयः । न चातिरिक्तसम्भावनया तथा, विशेषतश्चोपस्थितानामतिरिक्तानां विशेषदर्शनाक्रान्ततया अतिरिक्तान्तरोपस्थितये अवश्यं सा स्वीकरणीयेति वाच्यम् ।

( गा० ) धूमत्वेन । शुद्धधूमत्वावच्छेदेन । एतद्धूमत्वेन । महानसीयधूमत्वावच्छेदेन । व्याप्तिज्ञानमिति । प्रसिद्धधूमधर्मिकव्यभिचारसंशयविरोधितया अभिमतमिति शेषः । आद्ये । प्रसिद्धधर्मिकव्याप्ति(१)निश्चयकाले । संशयोऽसिद्ध इति । तादृशनिश्चयस्य यावद्धूमविषयकत्वे समानविषयकत्वमात्रेण विरोधितामतेऽपि अनीदृशधूमरूपधर्मिणो दुर्लभतया संशयाप्रसक्तेः । प्रसिद्धधूममात्रविषयकत्वेऽपि धूमत्वव्यापकताया विरोधिन्या अवगाहनेन धूमत्वपुरस्कारेण स्वाविषयधूमधर्मिकमपि संशयं प्रति तस्य विरोधित्वौचित्यात् । यथा एकधर्मिणि विरोधिद्वयसत्त्वे विरोधभङ्गप्रसङ्गस्तत्समानधर्मिकविरोधिज्ञानप्रतिबन्धकतायां बीजम् । तथा तत्समानाधिकरणधर्मं प्रति तद्विरोधिनो व्यापकत्वेऽपि विरोधभङ्गप्रसङ्गस्य उक्तज्ञानप्रतिबन्धकताबीजत्वादिति भावः ।

धूमत्वावच्छेदेन । शुद्धधूमत्वव्यापकत्वेन । पृथक्कारेण तादृशव्यापकतानवगाहिसमानविषयकज्ञानव्यवच्छेदः । तद्विरोधितया । धूमत्वसामानाधिकरण्यमात्रेण व्यभिचारविषयकसंशयविरोधितया । स नानुपपन्नः । संशयो नानुपपन्नः ।

ननु दर्शितबीजेनोक्तव्यापकतामवगाहिनोऽपि समानविषयकज्ञानस्य विरोधित्वमावश्यकम्, अनिबध्यप्रतिबन्धकत्वाभिमतधियोर्विषयविरोधभङ्गप्रसङ्गेऽपि प्रतिबध्यप्रतिबन्धकभावानुपगमे धर्मितो-

(१) प्रथमोक्तव्याप्तीति २ पु० पाठः

वच्छेदकत्व्यापकतावगाह्यपि भिन्नधर्मिकं ज्ञानमविरोधि तद्वन्वगाह्यपि समानधर्मिकं ज्ञानं विरोधीति विपरीतमेव कुतो न स्यात् । व्यापकतावगाहित्वेन विरोधित्वे अवच्छेदकावच्छेदेन विशिष्टबुद्धौ तत्सामानाधिकरण्यमात्रेण विरोधिनिश्चयस्य प्रतिबन्धकत्वान्तरस्य कल्पनया गौरवं चेत्याशङ्कयाह । कथमन्यथेति । अन्यथा । समानविषयतामात्रेण निश्चयस्य संशयविरोधित्वे । पृथिव्यादिरूप इति । सर्वत्र पार्थिवरूपत्वादिनेति शेषः । कथं संशय इत्यन्वयः । प्रसिद्धरूपातिरिक्तस्य रूपस्याप्रसिध्या प्रसिद्धरूपाणां च विपरीतनिश्चयविषयतया संशयधर्मिणः सामान्यप्रत्यासत्तिमतेऽपि दुर्लभत्वादिति भावः । अतिरिक्तसम्भावनया । प्रसिद्धरूपातिरिक्ते रूपत्वसम्भावनया । तथा । विशेषरूपेण सर्वेषां व्याप्तिनिश्चयेऽपि सामान्यरूपेण संशयः । विशेषधर्मपुरस्कारेण निश्चयस्य सामान्यधर्मपुरस्कारेण संशयं प्रति प्रतिबन्धकतायां तद्विशेषधर्मशून्ये सामान्यधर्मसम्भावनाया उत्तेजकत्वोपगमादिति भावः । सम्भावनायाश्च निश्चयसाधारणेन ज्ञानत्वेनैवोत्तेजकत्वात् पार्थिवाद्यतिरिक्तमपि रूपमस्तीति भ्रमेऽपि रूपं वायुत्वाभावव्यभिचारि न वेति संशयस्योक्तनिश्चयदशायामुत्पत्तेः ।

नन्वेवं सामान्यस्याप्रत्यासत्तित्वेऽपि व्याप्तिनिश्चयविषयप्रसिद्धधूम एव अतिरिक्तसम्भावनया व्यभिचारसंशयोपपत्तेः प्रकृतासिद्धिरित्यत आह । विशेषतश्चेति । लौकिकसन्निकर्षादितः । उपस्थितानाम् । प्रसिद्धधूमरूपातिरिक्तानाम् । घटगुणादिद्रव्यत्वादीनाम् । विशेषतः । विशेषधर्मघटत्वादिपुरस्कारेण । विशेषदर्शनाक्रान्ततया । धूमत्वरूपत्वाद्यभावनिश्चयविषयतया तेषु धूमत्वरूपत्वादिसम्भावनाया असम्भवात् । प्रसिद्धधूमाद्यतिरिक्तत्वेन रूपेण विशेषदर्शनाविषयतया अनुपस्थितवस्त्वन्तरमेवातिरिक्तसम्भावनायां धर्मितया विषयो वाच्यः । तादृशातिरिक्तोपस्थितिश्च सामान्यलक्षणां विना नेति तदर्थमेव तस्याः प्रत्यासत्तित्वं स्वीकार्यमित्यर्थः ।

अतिरिक्तसम्भावनापदार्थं यथासम्भवं विकल्प्य दूषयति । यत इति ।

(दी०) यतो रूपेषु नातिरिक्तत्वसम्भावना तेषु वि-

शेषदर्शनात् । नाप्यतिरिक्ते रूपत्वसम्भावना रूपान्यश्च रूपं द्रव्यादयो रसादयश्च न रूपं प्रसिद्धरूपभिन्नं यद्रूपभिन्नं द्रव्यं रसादि वा तत् सर्वं न रूपं रूपत्वाभाववच्चेत्यादिविशेषदर्शनेन तस्या अप्रयोगात् । तदानीञ्चोक्तसंशयस्य सर्वजनानुभवसिद्धत्वात् अतिरिक्तसम्भावनाया गौरवेणाप्रयोजकत्वाच्च । तस्मात्तत्रैव धूमे रूपे वा धूमत्वेन रूपत्वाद्यवच्छेदेन व्याप्तेरग्रहाद् व्यभिचारसंशयो नायुक्तः ।

( गा० ) अतिरिक्तत्वसम्भावना । प्रसिद्धरूपातिरिक्तत्वकोटिकसम्भावना । प्रकृते उत्तेजिका भवितुमर्हतीति शेषः । तेषु । सर्वेषु रूपेषु । विशेषदर्शनात् । विशेषतोऽनतिरिक्तत्वनिश्चयात् । समानविषयकत्वमात्रेण विरोधितामते रूपधर्मिकसम्भावनाया एवोत्पादासम्भवादिति शेषः । न रूपमित्यन्तत्रयं इत्यादीत्यनेतिपदेन प्रत्येकं सम्बध्यते । रूपान्यरूपमित्यादिविशेषदर्शनं सामान्यप्रत्यासत्तिपक्षे तद्बलात् सर्वेषामेवातिरिक्तानां धर्मितया रूपत्वसम्भावनाधर्मिणो दुर्लभतया तस्या अयोगादित्यर्थः । रूपभिन्ने रूपभिन्नत्वेन सामान्यतो विशेषदर्शनमुक्त्वा विशेषतो द्रव्यत्वादिनापि तद्वक्तुं द्रव्यादय इति । समानविशेष्यकत्वेन विरोधितामतेऽपि समानप्रकारकत्वस्य तन्त्रत्वे प्रसिद्धरूपातिरिक्तत्वेन प्रकारेणातिरिक्तधर्मिकसम्भावनायां केवलरूपान्यत्वादिप्रकारेणातिरिक्तधर्मिकविशेषदर्शनस्याविरोधित्वसम्भवात् । सामान्यतो विशेषतश्च विशेषदर्शने प्रसिद्धरूपभिन्नत्वमपि धर्मितावच्छेदके अन्तर्भावयति । प्रसिद्धेति । प्रसिद्धरूपभिन्नं सर्वं न रूपमिति विशेषदर्शने प्रसिद्धरूपेषु सर्वत्र वायुत्वाभावव्याप्तिनिश्चये च सति रूपे तद्व्यभिचारसंशयाभावस्यानुभविकतया तदानीं तादृशसम्भावनाविरह इष्ट एवेति रूपभिन्नत्वमपि सामान्यतो विशेषतश्च विशेषदर्शनस्य धर्मितावच्छेदकेऽन्तर्भावितम् । सर्वमिति च सर्वेषां विशेषदर्शनविषयत्वलाभाय न तु तस्य व्यापकतावगाहित्वलाभाय एतन्मते तदवगाहिताया अकिञ्चित्करत्वात् । रूपभेदनिश्चयस्य यदि तादात्म्येन रूपकोटिकमेव संशयं प्रति विरोधिता न तु समवा-

येन रूपत्वकोटिकं तदभिप्रायेण रूपत्वाभावनिश्चयोऽपि दर्शितः। तादृशविशेषदर्शनदशायां संशयोऽप्यपलपनीय इत्यत आह। तदर्मी चेति। उक्तसंशयस्य। रूपं वायुत्वाभावव्यभिचारि न वेति संशयस्य। रूपं वायुत्वाभावव्यभिचारि न वेति संशयस्य अनुभवे विवदमानं गौरवेण निराकरोति। अतिरिक्तेति। गौरवेण। प्रतिबन्धकतावच्छेदकगौरवेण। तत्तद्विशेषधर्मपुरस्कारेण निश्चयत्वेन प्रतिबन्धकताया तत्तद्विशेषधर्मशून्ये सामान्यधर्मसम्भावनाया विशिष्य उत्तेजकतया प्रतिबन्धकताधिक्येन वा। अप्रयोजकत्वात्। अनुत्तेजकत्वात्। तथा च तद्धर्मसामानाधिकरण्येन विशेषणावगाहिज्ञाने शुद्धतद्धर्मावच्छेदेन तद्धर्मावच्छेदेन विशेषणाग्रहे च तद्धर्मसामानाधिकरण्येन विपरीतनिश्चयो विरोधी न तु तद्धर्मसामानाधिकरण्यमात्रेण विशेषणग्रहे तद्धर्मसामानाधिकरण्यमात्रेण विपरीतनिश्चय इति भावः। उपसंहरति। तस्मादिति। नायुक्त इति। तथा च नोक्तयुक्त्या सामान्यप्रत्यासत्तिसिद्धिरिति भावः।

सामान्यप्रत्यासत्तौ युक्त्यन्तरं निराकर्तुमुपन्यस्यति। यत्त्विति।

( दी० ) यत्तु सामान्याभावभानार्थं सा स्वीकार्या तां विना सकलतत्प्रतियोगिज्ञानासम्भवादिति। तन्न। न हि अभावस्य ज्ञानमात्रे लौकिकप्रत्यक्षे वा प्रतियोगिज्ञानं कारणं तत्र सामान्यलक्षणया इदन्त्वादिना च भाने व्यभिचारान्यानाभावाच्च।

(गा०) सामान्याभावभानार्थम्। घटादिसामान्याभावभानार्थम्। घटादिसामान्याभावभासकसकलघटादिभानार्थम्। सा। सामान्यप्रत्यासत्तिः। सकलप्रतियोगीति। घटादिसामान्याभावीयसकलप्रतियोगीत्यर्थः। इदं च सकलप्रतियोगिज्ञानत्वेनाभावधीहेतुता तत्तद्घटादिव्यक्तिप्रतियोगिकाभावबुद्धौ तत्तद्घटादिव्यक्तिज्ञानत्वेन वा हेतुतेत्यभिमानेन स चाग्रे निराकरणीयः। प्रथमतः प्रतियोगिज्ञानस्य स्वातन्त्र्येणाभावधीहेतुतामेव खण्डयति। न हीति। ज्ञानमात्र इति। लौकिकालौकिकसाधारणप्रत्यक्ष इत्यर्थः। अभावप्रत्यक्षत्व अभावलौकिकप्रत्यक्षत्वं वा प्रतियोगिज्ञानजन्यतावच्छेदकमित्युभयमपि

नेति फलितम् । स्वमते सामान्यप्रत्यासत्त्यभावेन तज्जन्याभावप्रत्यक्षे व्यभिचारोऽसम्भवदुक्तिक इत्यतस्तत्रेति । सामान्यलक्षणयेति । अग्रिमेण भाने व्यभिचाराद्दित्यनेन सम्बध्यते ।

द्वितीयपक्षेऽभावत्वादिसामान्यजप्रतियोगिज्ञाननिरपेक्षाभावप्रत्यक्षे लौकिकत्वविरहेण व्यभिचारानवकाशात् पक्षत्रये दोषमाह । इदन्त्वादिनेति । तेजोरूपप्रतियोगिज्ञानशून्यकालीने इदं नीलमिति तमःप्रत्यक्षे इत्यर्थः । प्रतियोगिविशेषिताभावविषयकप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वोपगमे उक्तव्यभिचारानवकाशात्तन्मते दोषान्तरमाह । मानाभावादिति । प्रतियोगिज्ञानशून्यकाले प्रतियोग्यविशेषिताभावविषयकस्य नेत्याकारकाभावप्रत्यक्षस्य सर्वानुभवविरुद्धस्य वारणायैव प्रतियोगिज्ञानहेतुतामङ्गीकरोषि प्रतियोग्युपरागावगाहित्वस्य प्रतियोगिज्ञानजन्यतावच्छेदकत्वोपगमे च प्रतियोग्यनुपरक्ताभावप्रत्यक्षापत्तौ प्रतियोगिज्ञानविरहस्याकिञ्चित्करतया प्रकारान्तरेणैव तस्य वारणीयतया प्रतियोगिज्ञानहेतुतायां मानाभावादित्यर्थः ।

ननूक्तप्रतीतिविषयस्तमोनिष्ठमिदन्त्वं तेजोभावत्वमेव, तेन रूपेण ज्ञानं च तेजोज्ञानं विना न कस्याप्यनुभवमिति प्रतियोगिप्रकारकत्वस्य प्रतियोगिज्ञानजन्यतावच्छेदककोटावनिवेशेऽपि न व्यभिचार इत्यत आह ।

( दी० ) अत एवेदन्त्वादिनोपस्थिते तमसि भावत्वाभावत्वसंशयः तेजोभावत्वेनोपस्थिते तदयोगात् । प्रतियोगिविशेषितत्वज्ञानं तु विशिष्टवैशिष्ट्यबोधमर्यादा नातिरिच्यते, सकलप्रतियोगिविषयत्वं तु तस्यासिद्धम् , प्रतियोगिज्ञानस्य हेतुत्वेऽपि प्रतियोगितावच्छेदकविशिष्टयत्किञ्चित्प्रतियोगिज्ञानादेव तत्सम्भवात् यावत्प्रतियोगिज्ञानत्वेन गौरवेणाहेतुत्वात् ।

( गा० ) अत एवेति । तेजोज्ञानं विनापि तेजोभावत्वानात्मकेन इदन्त्वेन तमःप्रत्यक्षोत्पत्तेरेवेत्यर्थः । इदन्त्वादिनोपस्थिते । इदन्त्वादिरूपधर्मितावच्छेदकप्रकारेण प्रत्यक्षतः प्रतीते । तेजोभावत्वेनोपस्थिते । तेजोभावत्वरूपधर्मितावच्छेदकविशिष्टे । तदयो-

गात् । आप्तत्वसंशयायोगात् । तद्व्यावर्तकधर्मस्य तत्संशयधर्मितावच्छेदकताया अनुभवविरुद्धत्वादिति भावः ।

ननु प्रतियोगिज्ञानहेतुतामते तज्जन्यतावच्छेदके प्रतियोगिप्रकारतानिवेशे प्रतियोगिज्ञानशून्यकाले न प्रतियोग्यनुपरक्ताभावप्रत्यक्षापत्तिः, तादृशाभावलौकिकप्रत्यक्षस्याप्रसिद्धेः प्रतियोगिज्ञानकारणत्वानुपगमे च प्रतियोगिज्ञानशून्यकाले प्रतियोगिज्ञानदशाप्रसिद्धवैधाभावप्रत्यक्षस्यापत्तिरिति तत्कारणत्वमावश्यकमित्यत आह । प्रतियोगिविशेषितेति । तज्ज्ञानम् । अभावज्ञानम् । विशिष्टवैशिष्ट्यबोधमर्यादाम् । प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यावगाहिताम् । नातिशेते । नातिक्रामति । तच्छून्य न भवतीति यावत् । तथा च तत्र विशेषणतावच्छेदकप्रकारकज्ञानविधयैव प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानमपेक्षितं किं तत्र स्वतन्त्रप्रतियोगिज्ञानहेतुतयेति भावः ।

ननु मा भूदभावबुद्धौ स्वातन्त्र्येण प्रतियोगिधीः कारणं तथापि सामान्याभावबुद्धौ प्रत्यासत्त्यन्तराभावेन सकलप्रतियोगिभानमनुपपन्नमिति तदुपपत्तये सा स्वीकार्येत्यत आह । सकलेति । तस्य । सामान्याभावप्रत्यक्षस्य । अभिन्नमिति । घटो नास्तीति सामान्याभावबुद्धौ घटत्वादिसामान्यधर्मे प्रतियोगितावच्छेदकत्वपर्याप्तिभानान्नीलघटो नास्तीति बुद्धौ च तत्र तदभावाच्च तयोर्वैलक्षण्योपपत्तेरिति भावः । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य स्वतन्त्रहेतुताम्भ्युपेत्यापि पूर्वपक्षाभिमानं निराकृत्य सामान्यप्रत्यासत्तिं खण्डयति । प्रतियोगिज्ञानस्येति ।

(दी०) न च तदभावबुद्धौ तज्ज्ञानहेतुत्वात् यावत्प्रतियोगिज्ञानस्य हेतुत्वमर्थायातम् । मानाभावात्, ध्वंसप्रागभावात्यन्ताभावाश्च प्रतियोग्यादिभिन्नत्रयप्रतियोगिकाः द्रुपाद्रेऽप्येकग्रहादेव गृह्यन्ते इत्यभ्युपगमात् । अन्धकारस्तु तेजोविशेषसामान्याभावो नाभावसमुदायः यावत्तदभावानामेकत्रासम्भवात् अननुगमात् गौरवात्तेजोविशेषत्वादिज्ञानस्य तेजःसामान्याय विरहेऽपि तेजोविशेषात्यन्ताभावप्रागभावेना प्रत्यक्षानभ्युपगमाच्च प्राग-

भावप्रत्ययोऽपि च प्रतियोगिवृत्तिघटत्वादिप्रकारकज्ञानसाध्यो न प्रतियोगिज्ञानमपेक्षते ।

(गा०) न चेत्यनन्तरं भावस्वस्य कारणतावच्छेदककोटावप्रवेशेऽपीति पूरणीयम् । तदभावबुद्धौ । तत्तद्व्यक्तिप्रतियोगिकाभावबुद्धौ । तज्ज्ञानत्वेन हेतुत्वात् । तत्तद्व्यक्तिज्ञानत्वेन हेतुत्वात् तत्तदभावप्रत्यक्षे तत्तदभावीयप्रतियोगिज्ञानत्वेन हेतुत्वे चाभावानामेकप्रतियोगिकानामपि सम्बन्धादिभेदेन नानात्वेन प्रतियोग्यपेक्षया बहुतरतया कार्यकारणभावबाहुल्यमिति भावः । मानाभावादिति । एकधर्मप्रकारकप्रतियोगिज्ञानादन्यधर्मावच्छिन्नाभावप्रत्यक्षवारणाय तत्तद्धर्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तत्तद्धर्मप्रकारकज्ञानत्वेन हेतुतया आवश्यकत्वे उक्तकार्यकारणभावे मानाभावादित्यर्थः ।

ननु ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वाभावात् घटो ध्वस्त इत्यादिप्रत्यक्षानुरोधेन तत्तद्घटादिव्यक्तिप्रतियोगिकाभावप्रत्यक्षे तत्तद्व्यक्तिज्ञानत्वेन कारणत्वमावश्यकमित्यत आह । ध्वंसेति । घटध्वंसस्य घटात्यन्ताभावविरोधितया स एव घटात्यन्ताभावस्यात्यन्ताभावः प्रागभावध्वंसस्य प्रतियोगितद्ध्वंसस्वरूपतया स घटप्रागभावस्य ध्वंसोऽपीति घटतदत्यन्ताभावतत्प्रागभावत्रयप्रतियोगिकः । एवं घटप्रागभावो घटात्यन्ताभावस्यात्यन्ताभावः घटध्वंसस्य प्रागभावश्च ध्वंसप्रागभावस्य प्रतियोगितत्प्रागभावात्मकत्वादिति सोऽपि घटादित्रयप्रतियोगिकः । घटात्यन्ताभावोऽपि तद्ध्वंसतत्प्रागभावात्यन्ताभावसमनियततया तदभिन्न इति घटादित्रयप्रतियोगिक. अथ चैकैकप्रतियोगिज्ञानादेव गृह्यते इत्यभ्युपगमेन तत्प्रत्यक्षे परापरप्रतियोगिज्ञानस्य व्यभिचारादित्यर्थः । स्वमते समनियतरूपपरिमाणाद्यभावस्याभिन्नतया संख्यादिज्ञानजन्ये तदभावप्रत्यक्षे परिमाणादिज्ञानस्य व्यभिचारोऽपि बोध्यः । तथा चागत्या प्रतियोगिज्ञानहेतुतामते तदभावप्रत्यक्षे तत्तदभावीयप्रतियोगिज्ञानत्वेनैव हेतुता वाच्येति न सामान्याभावप्रत्यक्षे यावत्प्रतियोगिज्ञानापेक्षेति भावः ।

अथाभावाभेदेऽपि प्रतियोगितावच्छेदकादिभेदेनानुयोगिताभेदात् तत्तद्व्यक्तिनिरूपितानुयोगितात्प्रत्यक्षत्वस्य तत्तद्व्यक्तिज्ञानजन्यता-

इहास्तेजस्विनि देशे यत्किञ्चित्तेजोऽभावमादायातिप्रसङ्गः । किं वा यावतीनां तादृशतेजोव्यक्तीनां तत्तद्व्यक्तित्वेनाभावानां तत्तद्व्यक्त्यभावत्वेन(१) तमःप्रतीतिविषयता प्रतियोगिनि यावत्यामेदेशास्त तेजोविशेषाधिकरणे तमःप्रत्ययः तत्तेजोव्यक्तेरेव तत्राभावासत्त्वात् । व्यासज्यवृत्तिधर्मावच्छिन्नस्य किञ्चिद्विशेषणविशिष्टस्य च तेजसस्तेजोविशेष्यप्यभावस्याक्षतत्वादतिप्रसङ्ग इति तत्तद्व्यक्तित्वेनेति ।

ध्वंसप्रागभावप्रतियोगितायां प्रतियोगिवृत्तिधर्मविशेषावच्छिन्नत्वस्याप्रामाणिकत्वे तत्समुदाय तत्तद्व्यक्तित्वान्यधर्मानवच्छिन्नत्वमेव प्रतियोगितायां निवेशनीयं सम्बन्धान्तरावच्छिन्नाभावमादायातिप्रसङ्गस्य वारणाय संयोगसम्बन्धावच्छिन्नत्वं संयोगान्यसम्बन्धानवच्छिन्नत्वं वा प्रतियोगितायां निवेश्यम्, अनयोः प्रथमं पक्षं दूषयति । यावदभावानामिति । एकत्रासम्भवादिति । ध्वंसप्रागभावयोः प्रतियोगिदेश एव सत्त्वेन व्यधिकरणतेजसो ध्वंसद्वयस्य प्रागभावद्वयस्य चैकाधिकरण्यासम्भवादिति भावः ।

ननु स्ववृत्तिसमानकालीनयावदभावस्य स्वाधिकरणकतमःप्रत्ययविषयत्वोपगमे नोक्तदोषः समानकालीनत्वनिवेशात्स्ववृत्त्यतीतानागतप्रागभावध्वंसघटितसमुदायस्य स्वस्मिन्नेकत्राऽसत्त्वेऽपि न क्षतिरित्यत आह । अननुगमादिति । तथा च नानाधिकरणे एकाकारतमःप्रत्ययानुपपत्तिर्विषयाननुगमादिति भावः । ध्वंसप्रागभावाविघटिताभावसमुदायस्य एकत्रासम्भवेऽपि एकैकव्यक्तेरेकैकाभावघटितसमुदायस्य सर्वत्र तमःप्रत्यक्षदशायामक्षतत्वात्तृतीयपक्षे नोक्तदोष इत्यतः पक्षद्वये दोषमाह । गौरवादिति । अनन्तानामभावानां तमःप्रतीतिविषयताकल्पने इत्यादिः । दोषान्तरमाह । तेजोविशेषेति । सामान्यप्रत्यासत्त्याप्यनुपपद्यमान स्वप्रतियोगितावच्छेदकतेजोनिष्ठतत्तद्व्यक्तित्वप्रकारकज्ञानमन्तरेण तत्तद्व्यक्तित्वावच्छिन्नतेजोत्यन्ताभावस्य प्रतियोगिसामग्रीध्वंस्यतया तेजःसामग्रीविरहे तत्प्रागभावस्य च प्रत्यक्षानभ्युपगमादित्यर्थः । तथा च तदानीमप्यनुभूयमानस्य तमःप्रत्यक्षस्य तेजोभावकूटविषयकत्वासम्भव इति भावः ।

(१) तत्तद्व्यक्तित्वेनेति–२ पु० पा० ।

ननु सामान्याभावप्रत्यक्षस्य यत्किञ्चित्प्रतियोगिज्ञानात् सम्भवेन तदनुरोधात् सामान्यप्रत्यासत्तेरनावश्यकत्वेऽपि प्रागभावप्रत्यक्षजनकतत्प्रतियोग्यनागतव्यक्तिज्ञानार्थं तदावश्यकतेति युक्तिं प्रतियोगिज्ञानहेतुतामनङ्गीकुर्वन् दूषयति । प्रागभावप्रत्ययोऽपीति । प्रतियोगिविशेषितप्रागभावप्रत्ययोऽपीत्यर्थः । घटत्वादेः सामान्यधर्मस्य प्रागभावादिप्रतियोगितानवच्छेदकत्वात् प्रतियोगिवृत्तीत्युक्तम् । घटत्वादिप्रकारकज्ञानस्य तद्विशिष्टघटाद्युपरक्तप्रागभावप्रत्यक्षेऽपि विशिष्टविशेषणकधियो हेतुत्वेनापेक्षा तज्जन्यतावच्छेदककोटौ घटत्वादिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छिन्नघटादिनिष्ठप्रकारताशालित्वस्य विशेष्ये विशेषणमिति रीत्या ज्ञानसाधारणस्य तद्याहृत्तस्य घटत्वावच्छिन्नप्रकारताकत्वरूपघटत्वविशिष्टप्रकारताकत्वस्य घटत्वघटोभयपर्याप्तप्रकारताकत्वरूपघटत्वविशिष्टपर्याप्तप्रकारताकत्वस्य वा निवेशात् न तु तदवच्छिन्नप्रतियोगिताकत्वविशिष्टसंसर्गकत्वरूपतद्विशिष्टप्रतियोगिकवैशिष्ट्यावगाहित्वस्य येन घटत्वादेरतिप्रसक्ततया ध्वंसप्रागभावप्रतियोगितानवच्छेदकत्वेन तत्प्रतीतौ प्रतियोग्यंशे उपलक्षणतयैव भानेन तस्या घटत्वविशिष्टप्रतियोगिकवैशिष्ट्यानवगाहित्वेनासङ्ग्रहः स्यादिति ध्येयम् ।

यद्यपि विशिष्टप्रतियोगिकत्वेन वैशिष्ट्यानवगाहिविशेषणान्तरविशेष्यतापन्नप्रकारकेऽपि ज्ञाने न विशिष्टविशेषणज्ञानत्वेन हेतुता दीधितिकारसम्मता एकत्वविशिष्टकर्त्रादिज्ञानं विनापि विशिष्टप्रकारककर्त्राद्यनुमितेस्तेनोपगमात्तथापि प्रत्यक्षे विशिष्टप्रकारके एव विशिष्टविशेषणज्ञानं पूर्वोक्तयुक्त्या हेतुः विशिष्टप्रतियोगिकत्वेन वैशिष्ट्यावगाहिता क्वचिद्विशिष्टप्रकारकज्ञानेन सर्वत्रान्यत्र नियामकं बाधविशेषाभावादिकमेवेत्यभिप्रायेणेदम् ।

केचित्तु विशेषणान्तरप्रकारतानिरूपितविशेष्यतावच्छिन्नप्रकारता न विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदिका अत एकत्वविशिष्टकर्त्रादिज्ञानं विनापि लाघवोपनीतैकत्वादिविशेष्यतापन्नकर्त्रादिप्रकारिकानुमितिर्ज्ञानत्वादिनिर्विकल्पकात्तद्विशेष्यतापन्नज्ञानादिप्रकारकानुव्यवसायश्चोत्पद्यते नापि विशिष्टप्रतियोगिकत्वेन वैशिष्ट्यावगाहित्वं तथा घटत्वादिनिर्विकल्पकादुपलक्षणीभूतघट-

त्वादिविशेष्यतापन्नप्रतियोग्युपरागेण ध्वंसप्रागभाव(१)प्रत्यक्षाप-
त्तेः। किं तु विशिष्टप्रकारकत्वं तथा विशिष्टप्रकारकत्वं च विशेषण-
विशेष्योभयपर्याप्तप्रकारताकत्वं विशेषणनिरूपितावच्छेद्यताख्यस-
म्बन्धघटप्रकारकत्वं वा घटत्वाद्युपलक्षितघटादिप्रतियोगिकानुयो-
गितविशेषरूपवैशिष्ट्यावगाहिन्यपि प्रागभावादिप्रत्यक्षे तादृश्यैव
घटत्वादिप्रकारितोपेयते अतो न घटादिनिर्विकल्पकात्तादृश-
प्रागभावप्रत्यक्षमित्याहुः। 'तच्चिन्त्यम्। तद्धर्मविशिष्टविशेषण-
ज्ञानपूर्वकतद्धर्मोपलक्षितवैशिष्ट्यावगाहिज्ञाने तद्धर्मनिर्विकल्प-
कानन्तरजातघटवद्भूतलमित्यादिज्ञाने ऽवच्छेद्यमानाया व्यासज्य-
वृत्त्यादिप्रकारताया आनुभविकत्वविरहेणाप्रामाणिकत्वात्। प्रा-
तवैलक्षण्यानुभवविरहे कार्यतावच्छेदकत्वेनातिरिक्तविषयतास्वी-
कारेऽप्यसिद्धान्तात्।

अत एव पट्साध्यकानुमानव्याख्यावसरे संवादिप्रवृत्ति-
त्वावच्छिन्ननिरूपितजनकतारूपहेतुग्रहः तादृशजनकतावच्छेद-
कप्रमात्वग्रहं विना न सम्भवतीत्याक्षिप्य द्वयी संवादित्वघि-
शिष्टप्रवृत्तिविशेषितजनकताग्रहसामग्री एका विशिष्टविशेषणज्ञान-
घटिता अपरा तदघटिता जनकत्वरूपविशेष्ये प्रवृत्तिं प्रवृत्तौ चोपल-
क्षणतया संवादित्वमवगाहमानाया धियः सामग्री तत्राद्यसामग्रीज-
न्यज्ञाने जनकतायां संवादित्वविशिष्टप्रवृत्तिप्रतियोगिकनिरूपितत्व-
रूपवैशिष्ट्यविषयकत्वेन प्रमात्वावच्छिन्नजनकताया एव विषयतया
प्रमात्वाग्रहात्तदसम्भवेऽपि तद्ग्रहं विनापि संवादित्वोपलक्षितप्र-
वृत्तिनिरूपितसामान्यजनकताविषयको हेतुग्रहः सम्भवतीति मि-
श्राणां समाधानमपि सङ्गच्छते संवादित्वोपलक्षितप्रवृत्तिवै-
शिष्ट्यावगाहिग्रहेऽपि विशिष्टविशेषणज्ञानजन्यतावच्छेदकप्रका-
रतोपगमे तादृशज्ञानसामग्र्या अपि विशिष्टविशेषणज्ञानघटित-
तया विशिष्टज्ञानघटितसामग्र्याः प्रामाण्यरूपावच्छेदकाग्रहप्रयुक्ता-
सम्भवाभिधानासङ्गतेः।

अभावबुद्धौ प्रतियोगिज्ञानस्य स्वातन्त्र्येणाहेतुत्वेऽपि प्रति-
योगिविशेषितप्रागभावप्रत्यक्षे प्रतियोग्युपनायकतज्ज्ञानापेक्षादुर्वा-

(१) स्वप्रागभावेति—२ पु० पा०।




रेव तथा चानागतप्रतियोगिभानार्थं सामान्यप्रत्यासत्त्यादर इत्याशङ्कते । अथेति ।

( दी० ) अथ घटो भविष्यतीति प्रत्यक्षं प्रतियोगिविशेषितं प्रागभावमवगाहते, न च प्राचीनास्तत्प्रतियोगिनस्तत्प्रतियोगित्वावगाहने च भ्रमत्वम्, न चानागते घटे प्रत्यासत्त्यन्तरमस्ति अतः सामान्यप्रत्यासत्त्या घटत्वेनानुभूतं स्मृतञ्च तं तदालम्बते । न च चरमकारणरूपसामग्रीध्वंस्यः प्रागभावो वाच्यः अन्यदा तत्प्रत्ययापत्तेः स्वरूपसत्याः स्वरूपेण वा ज्ञातायास्तथात्वेऽतिप्रसङ्गात् व्याप्यत्वेन गृहीतायास्तथात्वं वाच्यम् तथा च तद्धेतुका प्रागभावस्यानुमितिरेव तावत्कालं प्रागभावस्यासत्त्वेन प्रत्यक्षायोगाच्चेति वाच्यम् ।

( गा० ) घटो भविष्यतीति प्रत्यक्षमिति । घटो भविष्यतीति व्यवहारप्रयोजकं प्रागभावप्रत्यक्षमित्यर्थः । तच्च इदानीमत्र घटो नास्ति इदानीमत्र घटप्रागभाव इत्याकारकं तावतैवोपनीतानागतघटस्य प्रकारतासम्भवात् तस्य तथाविधव्यवहारप्रयोजकता यथाकथञ्चिद्वर्त्तमानप्रागभावप्रतियोगित्वरूपभविष्यत्त्वविषयकतया तथाविधप्रत्यक्षस्योक्तव्यवहारापेक्षणीयत्वाभिधानं चापलापनिराकरणायेत्यवधेयम् । प्राचीनाः । प्रत्यक्षपूर्वकालीनाः । तत्प्रतियोगिनः । तत्प्रत्यक्षविषयवर्त्तमानप्रागभावप्रतियोगिनः । येन लौकिकसन्निकर्षेण तज्ज्ञानसम्भवात्तत्सामान्यप्रत्यासत्तिः स्यात् ।

ननु प्राचीनानामप्रतियोगित्वेऽपि प्रतियोगितया तेषामेव भानमङ्गीकार्यं न त्वनागतानामित्याशङ्कायामाह । तत्प्रतियोगिकत्वेति । भ्रमत्वमिति । नियमेन प्रागभावप्रत्यक्षस्येत्यादिः । स्यादिति शेषः । प्रत्यासत्त्यन्तराद्वेवानागतप्रतियोगिज्ञानं भविष्यतीत्यत आह । न चेति । सामान्यप्रत्यासत्त्या घटत्वेनेति । घटत्वरूपसामान्यलक्षणप्रत्यासत्त्येत्यर्थः । प्रागभावप्रत्यक्षे सामान्यप्रत्यासत्त्याप्यज्ञातप्रतियोगिनः प्रकारतया भानासम्भवादनुभूतमिति । अनुभवोपनीतमित्यर्थः । प्रत्यासत्त्येत्यस्यानुभवेनान्वयः । घटान्तरेणापि सन्निकर्षविरहे घटत्वसा-

मान्यलक्षणया अनागतघटज्ञानासम्भवात् सर्वत्र प्रागभावप्रत्यक्षे अनुभवोपनीतानागतप्रतियोगिभानासम्भवात् । स्मृतं चेति । क्वचित्सामान्यप्रत्यासत्तिजप्राचीनानुभवमूलकस्मरणोपनीतमपीत्यर्थः तम् । अनागतघटम् । तद् । प्रागभावप्रत्यक्षम् । आलम्बते । अवगाहते ।

प्रागभावप्रत्यक्षमेव न भवतीत्याशङ्कते । न चेति । चरमकारणरूपेति । विलक्षणकपालसंयोगादिरूपेत्यर्थः । अन्यदा । तादृशसामग्र्यसमवधानदशायाम् । तदप्रत्ययात् । अत्र घटो भविष्यतीत्याद्यनिश्चयात् । स्वरूपसत्याः । स्वज्ञानानपेक्षाया । स्वरूपेण ज्ञाताया । कारणताघच्छेदकविलक्षणसंयोगत्वादिप्रकारकज्ञानमात्रापेक्षायाः । तथात्वे । प्रागभावव्यञ्जकत्वे । अतिप्रसङ्गात् । तादृशसामग्र्या कार्योत्पत्तेः प्रागभावस्य वा व्यभिचारस्य धर्म्यवृत्तित्वस्य वा ग्रहदशायामपि प्रागभावप्रत्ययप्रसङ्गात् । तत्र चेह घटो भविष्यति न वेत्यादिसंशयस्यानुभविकतया प्रागभावप्रत्यक्षे नेष्टापत्तिसम्भव इति भावः । व्याप्यत्वेन प्रागभावव्याप्यत्वेन । धर्मिवृत्तित्वेन चेत्यपि द्रष्टव्यम् । तद्धेतुका । सामग्रीहेतुका । अनुमितिरेव सम्भवति । व्याप्यवत्ताज्ञानघटितत्सामग्रीसत्त्वादिति शेषः । तथा च किं तत्प्रत्यक्षोपगमेन अनुमितौ चानागतभानं पक्षधर्मताबलादेवेति न सामान्यप्रत्यासत्तिसिद्धिरिति भावः ।

अनुमितिसम्भवेऽपि साक्षात्करोमीत्यनुव्यवसायानुरोधेन तत्प्रत्यक्षमवश्यमङ्गीकर्तव्यमित्याशङ्कयाह । तावदिति । तावत्कालम् । सामग्रीज्ञानपर्यन्तम् । प्रागभावस्यासत्त्वेनेति । प्रागभावस्य प्रतियोगिकाले असत्त्वनियमात् सामग्रीसमवधानोत्तर तज्ज्ञानोत्पत्तिसमये प्रतियोग्युत्पत्त्यावश्यकतया तत्प्रागभावावस्थानासम्भवेनेत्यर्थः । प्रत्यक्षायोगादिति । विषयस्य प्रत्यक्षहेतुत्वादिति भावः । प्रागभावव्याप्यत्वेन सामग्रीज्ञानं न व्यञ्जकं येन प्रागभावानुमितिसामग्री नियता स्यात् अपि तु कार्योत्पादव्याप्यत्वेनैव न हि कार्योत्पत्तिव्याप्यवत्तानिश्चये इह घटो भविष्यति न वेत्यादिसंशय आनुभविको येन तादृशनिश्चयदशायामपि प्रागभावव्याप्यवत्तानिश्चयं विनापि प्रागभावप्रत्यक्षस्वीकारो न सम्भवेत् ।

न च कार्योत्पादव्याप्यवत्तानिश्चये भिन्नविषयकानुमितिसामग्री-

सत्त्वाच्च प्रागभावप्रत्यक्षसम्भव इति वाच्यम् । येन रूपेण व्याप्तिर्गृहीता तेन रूपेण धर्मिवृत्तिताज्ञानस्यैव व्यञ्जकत्वोपगमात्तादृशव्यञ्जकसमवधानस्य च ज्ञानद्वयदशायामपि सत्त्वेन तदानीमेव प्रागभावप्रत्यक्षसम्भवात् व्याप्तिविशिष्टवत्ताज्ञानस्यैवानुमितिसामग्रीत्वात् ।

न चैव प्रागभावव्याप्यत्वेन गृहीताया एव सामग्र्याः प्रागभावव्यञ्जकता किमोपयते इति वाच्यम् । स्वतन्त्रप्रागभावव्याप्तिज्ञानधर्मिवृत्तिताज्ञानापेक्षायामपि क्षणकव्याजेन विशिष्टज्ञानेत्पत्त्या प्रागभावानुमितिसम्भवेन तत्प्रत्यक्षापलापसम्भवात् सामग्र्या ज्ञानमात्रं हेतुर्न तु लौकिकप्रत्यक्षमेव अतः सामग्रीपूर्वं सामग्रीक्षणे च उपनीतभानाविरूपतज्ज्ञानसम्भवात् न सामग्रीज्ञानपर्यन्तप्रागभावानवस्थानरूपोक्तदोषावसरः सामग्रीपूर्वं सामग्रीक्षणेऽपि उक्तव्यञ्जकबलात् प्रागभावप्रत्यक्षमिष्टमेव अन्यथा पुनः स्वरूपसत्या अपि सामग्र्या उक्तव्यञ्जकसहकारिता वाच्येति समाधत्ते । यादृशेति ।

( दी० ) यादृशकारणकलापानन्तरं कार्योत्पादो दृष्टस्तद्बुद्धेरेव व्यञ्जकत्वाभ्युपगमात् । अनुयोगिताविशेषरूपप्रागभावत्वादेः क्वचिदप्रतीतौ तादृूप्येणानुमानासम्भवाच्चेति चेत् ?

( गा० ) यादृशकारणकलापानन्तरम् । यद्रूपावच्छिन्नकारणकलापानन्तरक्षणे । दृष्ट इत्यस्य नियमेनेत्यादिः । अनन्तरमित्यत्यन्तसंयोगार्थकद्वितीयायलाभेन वा नियमलाभः । तद्बुद्धेः । तद्रूपावच्छिन्नबुद्धेः ।

ननु सामग्र्याः कार्योत्पत्तिव्याप्यत्ववत्प्रागभावव्याप्यत्वमपि सुग्रहमिति प्रागभावप्रतीतिपूर्वं प्रागभावव्याप्तिज्ञानकल्पना सम्भवतीति किं प्रागभावप्रत्यक्षोपगमेनेत्यत आह । अनुयोगितेति । प्रागभावत्वस्यातीन्द्रियत्वे प्रागभावत्वस्य क्वचिदप्रतीत्या तेन रूपेण व्यापकताग्रहासम्भवेन तद्रूपावच्छिन्नस्यानुमानासम्भवादित्यर्थः । अत्यन्ताभावादावभावत्व घटादौ च विनाशित्वं प्रतीत्य विनाश्यभावत्वरूपं प्रागभावत्वं सामान्यप्रत्यासत्त्या प्रतीयमाने तदनभ्युपगमे, कथञ्चिदनुमानेनोपस्थिते प्रागभावे प्रत्येतुं शक्यते इति अनुयोगिताविशेषरूपेत्युक्तम् । विनाश्यभावत्वं न प्रागभावत्वं घटादेर्घटात्यन्ताभावाद्यभावत्वात् विनाशित्वाच्च घटा-

त्यन्ताभावादिप्रागभावत्वापत्तेः, किं तु प्रागभावत्वमनुयोगिता-विशेष एवेति भावः। प्रमेयत्वादिनामाप्यलक्षणया प्रागभावत्वादेः प्रतीतिसम्भवेऽपि प्रमेयत्वाद्यनवच्छिन्नतत्प्रकारकविलक्षणप्रतीति-दुरुपपादेति ध्येयम्।

घटो भविष्यतीत्यादिव्यवहारविषयकं प्रागभावप्रत्यक्षं न स-म्भवति तादृशव्यवहारविषयस्यातीन्द्रियत्वात् किं त्वनुमित्यादिरूप-मेव तज्ज्ञानम्, आनुमानिकादिज्ञाने चाबाधत्वस्यापि पक्षधर्मताबला-ज्ज्ञानसम्भव इति न दर्शितव्यवहारमूलभूतज्ञानेऽनागतभानानुरो-धेन सामान्यप्रत्यासत्तिरिति दूषयितुं वर्तमानप्रागभावप्रतियोगि-त्वमात्रस्य तद्व्यवहारविषयतां निराकरोति। भविष्यत्वं हीति।

(दी०) भविष्यत्त्वं हि न वर्तमानप्रागभावप्रतियोगित्वं श्वो भाविन्यद्य भविष्यतीति प्रत्ययप्रसङ्गात्, किं तूत्पत्स्यते भ-विष्यतीत्यादेः समानार्थकत्वाद्वर्तमानप्रागभावप्रतियोग्युत्पत्तिक-त्वं वर्तमानकालोत्तरकालोत्पत्तिकत्वं वा तत्त्वम्, न चेदम-ध्यक्षम्, उत्पत्तेरतीन्द्रियत्वात्। इहाद्य घटो भविष्यतीत्यादौ च तादृशोत्पत्तेर्देशविशेषः कालविशेषश्चाधिकरणत्वेन प्रतीयते न तु प्रागभावस्योत्पत्तिमतो वा।

(गा०) अद्य भविष्यतीति प्रत्ययप्रसङ्गादिति। एतन्मते च प्राग-भाव एवाद्यादिकालान्वयस्योपगन्तव्यत्वात् श्वोभाविनः प्रागभावे-ऽप्यद्यतनत्वस्याबाधितत्वादिति भावः। इदमुपलक्षणम्, उपदर्शित-भविष्यत्वस्याख्यातार्थस्य धात्वर्थे एवान्वयस्य व्युत्पन्नतया घटादौ नामार्थे तदनन्वयप्रसङ्गोऽपि द्रष्टव्यः।

न च कालसम्बन्धरूपसत्ता भूधातोरर्थः तत्रैव वर्तमानप्रा-गभावप्रतियोगित्वरूपानागतत्वस्यान्वयः स्वीक्रियते तथा च वर्त-मानप्रागभावप्रतियोगिसत्ताकत्वमेव भविष्यत्वं तादृशसत्तायामे-वाद्यादिकालान्वयः। श्वोभाविनः सत्तायां चाद्यतनत्वस्य बा-धान्नोक्तातिप्रसङ्ग इति वाच्यम्। एवं सत्यपि श्वोभाविनि परश्व-स्थायिनि घटादौ परश्वो भविष्यतीति प्रयोगस्य दुर्वारत्वात्

परश्व:कालसम्बन्धस्य वर्त्तमानप्रागभावप्रतियोगिनः परश्वस्तत्वात् कालसम्बन्धत्वावच्छेदेन कालान्वयोपगमे च तादृशघटादौ श्वो भविष्यतीति प्रयोगानुपपत्तिः । तदीयकालसम्बन्धसामान्ये परश्वः कालवृत्तित्वस्येव श्वस्तनत्वस्यापि बाधात् । समानार्थकत्वादिति । तथा च उत्पत्स्यमानत्व भविष्यत्वं तच्चानागतोत्पत्तिकत्वं लृट्प्रत्ययेन धात्वर्थोत्पत्तावनागतत्वप्रत्यायनादिति भविष्यत्वमपि तथा, अनागतत्वं च प्रागभावस्य प्रामाणिकत्वे वर्त्तमानप्रागभावप्रतियोगित्वं तदप्रामाणिकत्वे वर्तमानकालध्वंसाधिकरणकालीनत्वमिति तदुत्पत्तिकत्वमेव भविष्यत्वमिति भावः । प्रागभावे वर्त्तमानत्वं तत्तच्छब्दप्रयोगाधिकरणक्षणवृत्तित्वं काले वर्त्तमानत्वं च तत्तच्छब्दप्रयोगाधिकरणत्वमेव प्रागभावाघटितानागतत्वे उत्तरकालः क्षणरूपो ग्राह्यस्तेनातीतादुत्पत्तेरपि वर्तमानकालध्वंसाधिकरणमहाकालावृत्तितया अतिप्रसङ्गस्य नावकाशः ध्वंसस्यापि कालोपाधितया वर्तमानकालध्वंसवृत्तित्वमेव वा विवक्षणीयम् ।

उत्पत्तेरतीन्द्रियत्वादिति । तदुत्पत्तिकत्वाधिकरणकालध्वंसाधिकरणत्वसामान्याभावस्यातीन्द्रियस्यापि स्वाधिकरणकालस्य सम्भवेनातीन्द्रियतद्धटप्रतियोगिकत्वेनायोग्यत्वादिति भावः ।)

अथातीन्द्रियतया भविष्यत्त्वस्य लौकिकप्रत्यक्षासम्भवेऽपि घटो भविष्यतीति व्यवहारप्रयोजकमानसादिज्ञानेऽनागतघटादिभानार्थं सामान्यप्रत्यासत्तेरावश्यकता । न चोत्पत्तिशरीरे उत्पत्तिमतः स्वपदार्थस्य तत्तद्व्यक्तित्वेन प्रविष्टतया अनागतव्यक्तीनां च विशिष्य तेन रूपेण ज्ञानस्य सामान्यलक्षणासहस्रेणाप्यसम्भवादुत्पत्तिघटितभविष्यत्त्वस्य मानसादिज्ञानमपि न सम्भवतीति वाच्यम् । सामान्यलक्षणया प्रमेयत्वादिप्रकारेण यावद्वस्तुज्ञानजन्यसंस्कारात्प्रमेयत्वादिमोपदशायां स्वरूपतस्तत्तद्व्यक्तित्वादिना अनागतस्यापि भानमङ्गीकृत्य तन्मूलकमानसादिज्ञानस्यावश्यमुपपादनीयत्वात् अन्यथा व्यवहारविलोपप्रसङ्गादिति चेन्न । विशिष्टप्रकारकसंस्काराद्विशेषणमोपवशेन स्वरूपतस्तत्प्रकारकस्मरणस्योपनीतभानस्य चोपगमे सामान्यलक्षणानुपगमेऽपि प्रमेयत्वादिनाऽनागतयावद्वस्तुप्रकारकानुमित्यादिजन्यसंस्कारात् स्वरूपतस्तद्व्यक्तित्वादिप्रकारकस्मरणसम्भवेनानागतघटादिज्ञानस्य च सम्भवेन व्य-

घटादिजनकविशिष्टगोचरमानसादिवानोपपत्तेः । भविष्यत्त्वस्योत्पत्तिघटितत्वे पूर्वोक्तं श्वोभाविन्यद्य भविष्यतीति प्रयोगातिप्रसङ्गं वारयति । इहाद्य इति । तादृशोत्पत्तेरिति । देशविशेषः कालविशेषश्च तादृशोत्पत्तेरधिकरणत्वेन प्रतीयते इत्यन्वयः देशविशेषोपादानं दृष्टान्तार्थं उत्पत्तौ तदन्वयस्योक्तातिप्रसङ्गवारणानुपयुक्तत्वात् । न तु प्रागभावस्येति । येनोक्तातिप्रसङ्गः स्यादिति शेषः । घटादौ देशकालान्वयेऽपि उक्तातिप्रसङ्गवारणसम्भवादुत्पत्तिघटनानर्थक्यमित्याशङ्क्य तदपि निराकरोति । उत्पत्तिमतो वेति ।

दृष्टान्तवाक्यार्थे प्रागभावे देशान्वये अतिप्रसङ्गं प्रथमतो दर्शयति । कपालनाशेति ।

(दी०) अत एव कपालनाशजन्यघटनाशस्य घटाद्यात्मकतत्प्रागभाववत्यपि तत्र कपाले नेह घटध्वंसो भविष्यतीति बुद्धिः, न वा भवने श्वः समुत्पद्य ब्राह्मणे परश्वो गमिष्यति मैत्रे ब्राह्मणे परश्वो भविष्यतीति धीः ।

(गा०) तत्कपालसत्त्वे घटनाशे तत्र कपाले घटध्वंसो भविष्यतीति प्रयोगस्येष्टत्वात् कपालनाशजन्येति । प्रागभावप्रतियोगिनि घटादौ देशकालान्वये अतिप्रसङ्गं दर्शयति । न वेति । ब्राह्मण इति । तादृशमैत्रे ब्राह्मणवृत्तित्वस्य परश्वःकालवृत्तित्वस्य चाबाधात् अतिप्रसङ्गः, उत्पत्तौ देशकालान्वयोपगमे तत्र तद्देशकालान्वयबाधान्नातिप्रसङ्गः ।

न च प्रागभावे तत्प्रतियोगिनि चोभयत्र कालाद्यन्वयस्वीकारेऽपि कोऽप्यतिप्रसङ्गः अद्यतनत्वस्य श्वोभाविनि विनष्टकपालवृत्तित्वस्य तन्नाशजन्यघटध्वंसे परश्वस्तनत्वब्राह्मणवृत्तित्वयोर्दर्शितमैत्रप्रागभावेऽसत्त्वादिति किमुत्पत्त्यन्तर्भावेणेति वाच्यम् । कालस्योभयत्रान्वयोपगमे दर्शाद्यक्षणे भविष्यतो मैत्रस्य प्रागभावे दर्शवृत्तित्वबाधेन दर्शे मैत्रो भविष्यतीति प्रयोगानुपपत्त्या उत्पत्त्यन्तर्भावस्यावश्यकत्वात् उभयत्र देशान्वयापेक्षया लाघवेनोत्पत्तिमात्रे देशान्वयस्याप्युचितत्वात् निरुक्तभविष्यत्त्वस्य भविष्यदर्थकलृट्प्रत्ययार्थत्वे धातुवैयर्थ्यं उत्पत्तेः प्रत्ययार्थे प्रधान्तर्भावात्तदुत्पत्त्यानुत्पत्तिभानो-

पगमे चानुभवविरोध इत्युत्पत्तिघटितमविश्वस्तया प्रकृतिप्रत्ययो-भयलभ्यतामाह । अत्र चेति

(दी०) अत्र च धातुनोत्पत्तिः प्रत्याय्यते प्रत्ययेन च धात्वर्थनिष्ठं तादृशप्रतियोगित्वं तादृशकालीनत्वं वा नङ्क्ष्यति नश्यति नष्ट इत्यादौ च प्रत्ययेन यथायथमनागता वर्तमानातीता चोत्पत्तिः तस्यामेव च कालविशेषादिर्विशेषणत्वेनान्वेति ।

(गा०) अत्र । निरुक्तभविष्यत्त्वे । घटकत्व सप्तम्यर्थः । तादृशप्रतियोगित्वम् । वर्त्तमानप्रागभावप्रतियोगित्वम् । तादृशकालीनत्वम् । वर्त्तमानकालोत्तरकालीनत्वम् । उत्पत्तिघटितमपि भविष्यत्त्व क्वचित् प्रत्ययार्थ इति दर्शयति । नङ्क्ष्यतीति । कालान्तरविहितलडादेरुत्पत्तिघटितार्थकत्व च दृष्टान्तत्वेनोक्तम् । अतीता । वर्त्तमानध्वंसप्रतियोगिनी । तस्यामेवेत्येवकारेण नाशादिक्रियाव्यवच्छेदः । तद्व्यवच्छेदप्रयोजन दर्शयति । एतेनेत्यादिना परास्तमित्यन्तेन ।

(दी०) एतेन श्वोभाविनाशके परश्वो नङ्क्ष्यतीति नष्टे च नश्यतीति च व्यवहारः स्यात् न स्याच्च नाशस्य विद्यमानत्वात् नष्ट इत्यादिव्यवहारः । न च तत्रातीतकालसम्बन्धित्वं वर्त्तमानत्वं वा निष्ठादेरर्थः, चिरविनष्टेऽपि पूर्वेद्युर्नष्टोऽधुना वेति व्यवहारप्रसङ्गादिति परास्तम् ।

(गा०) व्यवहारः स्यादिति । श्वोभाविनोऽपि नाशस्य परश्वस्तनत्वात् अतीतोत्पत्तिकनाशस्यापि वर्तमानत्वादिति भावः । न स्यादित्यत्रापि नष्ट इत्यनुषज्यते । तथा च नष्टेऽपि नष्ट इति व्यवहारो न स्यात् नाशोऽतीतत्वस्य बाधादित्यर्थ । एतदनुपपत्तेरुद्धारमाशङ्कते । न च तत्रेति । तत्र । नष्ट इत्यादौ । अतीतकालसम्बन्धित्व वर्तमानध्वंसप्रतियोगिकालवृत्तित्वम् । लाघवादाह । वर्तमानत्वं वेति । नाशोत्पत्तिक्षणेऽपि नष्ट इति व्यवहारस्येष्टत्वात् इति हृदयम् ।

व्यवहारप्रसङ्गादिति । उत्पत्त्यनन्तर्भावे उक्तनिष्ठार्थस्येव काल-

रूपाधिकरणस्यापि नाशे एवान्वयस्योपगन्तव्यत्वात्। चिरातीतोत्पत्तिकेऽपि च विनाशे पूर्वेद्युरुत्पन्न इत्यस्य अद्यतनत्वादेर्बाधाविति भावः। देशस्य नाशान्वये गृहोत्पन्नप्रागभावनाशात्मकघटादिमति प्राङ्गणे घटप्रागभावो नष्ट इतीति प्रयोगापत्तिर्बोध्या। परास्तमिति। उत्पत्तौ कालान्वयोपगमे ह्यस्तनोत्पत्तिकनाशादौ परश्वस्तनोत्पत्तिकत्वादेर्बाधेन नाशस्य विद्यमानत्वेऽपि तदुत्पत्तेरतीतत्वेनोक्तातिप्रसङ्गाप्रसङ्गयोरनवकाशादिति भावः।

यद्यपि कारकविभक्त्यर्थस्याप्यत्र क्रियायामेवान्वयो दृष्टस्तथापि अगत्या व्युत्पत्तिवैचित्र्येणात्र क्रियान्वितप्रत्ययार्थेऽपि तदन्वय उपेयते इदं च नाशत्वमनुयोगिताविशेषरूपं नशधातुवाच्यमित्याशयेनाभिहितम्। नशधातोरुत्पत्तिमदभावत्वरूपनाशत्वावच्छिन्नवाचकत्वे तु अनागतत्वादिकमेव नष्टवानित्यादावपि प्रत्ययार्थः, तस्य कालविशेषदेशविशेषयोरुत्पत्तिरूपधात्वर्थैकदेशान्वयेनैव सामञ्जस्यात्, किं तु दर्शान्तलक्षणाद्युत्पन्नप्रतिपदादिपर्यन्तस्थायिचन्द्रादिकमादाय प्रतिपदि गमिष्यतीत्यादिव्यवहारस्याप्रामाणिकत्वे तं वतिप्रसङ्गवारणाय तत्रोत्पत्तिघटितं भविष्यत्वादिकं लडादिप्रत्ययार्थो वाच्य इत्यवधेयम्।

ननु भविष्यति नष्टातीत्यादौ प्रत्ययार्थस्यानागतत्वादेरनागताद्युत्पत्तेर्वा धात्वर्थविशेषणत्वेनान्वये धात्वर्थस्योत्पत्तेराश्रयतासम्बन्धेन नाशस्य च प्रतियोगितासम्बन्धेन साक्षादेव नामार्थे स्वाश्रये प्रतियोगिनि चान्वयो वाच्यः स चायुक्त नामार्थधात्वर्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात् प्रतियोगितासम्बन्धस्याभावप्रतियोगितानवच्छेदकतया न नष्टघाटे इत्यादावगतिश्चेत्यत आह। कर्त्तरि विहितेन चेति।

( दी० ) कर्त्तरि विहितेनाख्यातेन कृता वा यथायथमाश्रयत्वप्रतियोगित्वलक्षणं कर्तृत्वं आश्रयप्रतियोगिरूपश्च कर्त्ताऽभिधीयते। कार्यानुत्पाददशायां चाभावधीः सामयिकात्यन्ताभावमवगाहते। न च प्रतियोगिसमवायिनि समयावच्छेदेनात्यन्ताभावरचौ मानाभावः, भाविनि नष्टे वा घटे इह कपाले

घटो नास्तीति प्रत्ययात् । न ह्ययं घटप्रतियोगिकाभावमात्रम-वगाहते, यत्किञ्चिद्घटवत्यपि तादृशप्रत्ययप्रसङ्गात् । परं तु घटत्वावच्छिन्नप्रतियोगिताकम्, न च ध्वंसप्रागभावौ तथा सम्भवतो न्वा न तत्र कपाले ततः पूर्वं परतश्च बहूनां घटानां नष्टत्वादुत्पत्स्यमानत्वाच्च ।

(गा० ) आख्यातेन भविष्यतीत्यादावाश्रयत्वरूप नङ्क्ष्यतीत्यादौ प्रतियोगित्वरूप भाक्कर्तृत्व कर्तरिकृता भविष्यन्नित्यादौ आश्रयरूपः कर्ता नङ्क्ष्यन्नित्यादौ प्रतियोगिरूपः कर्ता ऽभिधीयते इत्यर्थः । तथा च धात्वर्थविशेषिततादृशप्रत्ययार्थयोरेव साक्षाद्भेदाभेदाभ्यां नामार्थे ऽन्वयान्नोक्तव्युत्पत्तिविरोध इति भावः ।

ननु माभूद्भविष्यतीत्यादिव्यवहारप्रयोजक लौकिकप्रत्यक्ष तथापि कार्यानुत्पाददशायां कपालादौ घटो नास्तीदानीमित्यादिलौकिकप्रत्यक्षे प्रागभावविषयके ध्वंसप्रागभाववत्यत्यन्ताभावासत्त्वनियमेनासम्भवद्घटत्वावच्छिन्नसामान्याभावविषयताकानागतप्रतियोगिभानार्थं सामान्यप्रत्यासत्तेरावश्यकतेत्याशङ्कां ध्वंसप्रागभावयोरत्यन्ताभावाविरोधिता व्यवस्थापयन्निराकुरुते । कार्यानुत्पादेत्यादिना'। सामयिकेति । समयविशेषावच्छेदेन प्रतियोगिमद्वृत्तीत्यर्थकम् । अत्यन्ताभावमवगाहते इति । प्रतियोगिमत्यत्यन्ताभावस्य विरोधनोऽपि ध्वंसादिमत्समयविशेषावच्छिन्नवृत्तौ बाधकाभावादिति भाव. । तथा च प्राचीनघटादिरेव तत्र प्रतियोगितया भासते तेषामपि घटादिसामान्याभावप्रतियोगित्वादिति, नानागतभानानुरोधेन सामान्यप्रत्यासत्तिसिद्धिरित्याशयः

साधकविरह एव बाधक इति शङ्कां निराकुरुते । न चेति । अभावम् । ध्वंसादिरूपम् । तादृशप्रत्ययप्रसङ्गादिति । ध्वंसादिकमादाय घटो नास्तीति प्रत्ययप्रसङ्गात् । घटत्वावच्छिन्नप्रतियोगिताकं अभावमवगाहते इत्यनुषङ्गेणान्वयः । न च । न हि । तथा च घटत्वावच्छिन्नप्रतियोगिताकौ ध्वंसप्रागभावप्रतियोगितायामतिप्रसक्तस्य सामान्यधर्मस्यानवच्छेदकत्वात् । प्रत्येकं ध्वंसादिप्रतियोगितायां अतिप्रसक्तस्यापि घटत्वादेरनुगतकिञ्चिद्रूपावच्छिन्नानतिप्रसक्ततया अव-

च्छेदकत्वसम्भव प्रतीतिबलेनातिप्रसक्तेऽपि स्वरूपसम्बन्धरूपाव-च्छेदकत्वकल्पना सम्भवत्येवेत्यत आह । सम्भवतो चेति । तत्र कपाले इति । तथा ध्वंसप्रागभावावित्यनुपञ्जनीयम् । कुत इत्याकाङ्क्षायामाह तत इति । अत्रापि तत्रेत्यनुपञ्जनीयम् ।

ध्वंसप्रागभावयोः सामान्याभावत्वबाधादिनापि समानाधिकरणसामान्यधर्मावच्छिन्नसमानकालीने ध्वंसादौ सामान्यधर्मावच्छिन्नप्रतियोगिताकत्व नाभ्युपगम्यते तथा सति तमादाय घटादिसत्वदशायामपि घटो नास्तीति प्रत्ययापत्तेरिति भावः ।

नन्वस्मन्मते प्रतियोग्यत्यन्ताभावस्य ध्वंसादिविरोधित्वेन ध्वमात्यन्ताभावत्वात् तस्यैव ध्वंसो नास्तीत्यादिबुद्धिविषयत्व भवन्मते तस्य तदविरोधित्वात् कपालादौ घटध्वंसो नास्तीत्यादिबुद्धेः को विषय ? न हि तदविरोधिन्यपि तदत्यन्ताभावस्य स्वीकर्तुं शक्यते अतिप्रसङ्गात् ध्वंसप्रतियोगिकाभावस्वीकारे चाभावप्रतियोगिकातिरिक्ताभावो नाङ्गीक्रियते इति सिद्धान्तभङ्गप्रसङ्ग इत्याशङ्कते । अथेति ।

( दी० ) अथैवं कपालादौ कथं घटध्वंसादिशून्यताबुद्धिः, अत्यन्ताभावस्य ध्वंसाद्यविरोधित्वादिति चेत् ? तत्तदधिकरणस्वरूपादतिरिक्तादेवानुगतादभावाद्वा इहेदानीं घटप्रागभाव इति च प्रत्ययो न लोकानाम् ।

( गा० ) एवम् । ध्वंसादिविशिष्टेऽप्यत्यन्ताभावोपगमे । ध्वंसाद्यविरोधित्वात् । भवन्मते ध्वंसाद्यविरोधित्वेन तदभावप्रत्ययविषयत्वासम्भवात् । अनवस्थाप्रसङ्गेनाभावाभावो(१) नातिरिक्त इति सिद्धान्तमनुरुध्य समाधत्ते । तत्तदधिकरणस्वरूपादिति । लाघवमनुरुध्याह । अतिरिक्तादेवेति । अनुगतादित्यनेन पूर्वमते ऽननुगतभूयोधिकरणे ऽभावत्वकल्पनाया गौरवमिति सूचितम् ।

नन्वत्यन्ताभावप्रतीतिविलक्षणे इहेदानीं घटप्रागभाव इति प्रत्यये प्रतियोगिमानार्थं सामान्यप्रत्यासत्तेरावश्यकता तादृशप्रत्यये

(१) ध्वंसात्यन्ताभाव इति–२ पु० पा० ।

प्रसिद्धस्य प्रतियोगितया भानासम्भवादित्यत आह। इदानीमिति। प्रत्ययः। अत्यन्ताभावप्रतीतिविलक्षण । एतावता प्रागभावस्य कथञ्चिदपि न लौकिकप्रत्यक्षमिति पर्यवसित प्रागभावे युक्तिप्रदर्शनासमर्थ प्रागभावस्य प्रत्यक्षतामेव स्वीकरिष्यतीत्यभिसन्धिना प्रागभावस्याप्रत्यक्षत्वे तस्याप्रामाणिकत्वं प्रसञ्जयति। अथेति।

( दी० ) अथैव जातो घट इत्यादिवदुत्पन्नो घटध्वंस इत्यादिविलक्षणप्रत्ययबलेन नाशोऽतिरिच्यतां न तु प्रागभावः, पूर्वत्वतत्पूर्वत्वादिव्यवहारश्चातीतकालवृत्तित्वतदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वादिविषयक एवास्तु दुःखात्यन्ताभावस्य स्वस्मिन्नुत्तरकालानुवृत्तिं दुःखसाधनध्वंसं वा समुद्दिश्य क्रियाविशेषे प्रवृत्तिरस्तु मानान्तरसिद्धं हि प्रयोजनमुद्दिश्य पुमांसः प्रवर्तन्ते न तु प्रवृत्त्यैव तत्सिद्धिः, उत्पन्नस्य पुनरुत्पादप्रसङ्गश्च लाघवात् कार्यादेः प्रतिबन्धकत्वेनापि निरसनीयः ।

( गा० ) प्रागभावो नातिरिच्यतामित्यनेनान्वयः प्रमाणान्तरस्याप्रे खण्डनीयत्वादिति भावः । ननु कार्यानुत्पादद्दशायामिव कार्योत्तरमपि तदधिकरणेऽभावप्रत्ययस्य सामयिकात्यन्ताभावविषयकत्वसम्भवादतिरिक्तसंसर्गाभावखण्डनमेव सम्भवति, किं तु ध्वंसः प्रागभावान्यतरं विना उत्तरत्वपूर्वत्वादिकं न शक्यते निर्वक्तुमिति अन्यतरस्वीकार आवश्यकस्तथा च विनिगमनाविरहादुभयमेव सेत्स्यतीति शङ्काव्युदासाय ध्वंसस्यातिरिक्तत्वमभ्युपगच्छन्नपि प्रागभावमपाकरोति । जात इति । उत्पत्यंशे उपनीतभानात्मकादपि प्रत्ययाद्यथा उत्पत्तिविशिष्टो घटादिः सिध्यति तथा तादृशप्रत्ययादुत्पत्तिविशिष्टोऽभावः सेत्स्यति एतावतैवातिरिक्तध्वंसः सिद्धः अत्यन्ताभावस्यानुत्पन्नत्वात् न च सामयिकात्यन्ताभाव एवोत्पादविनाशशील इति मतमवलम्बनीयम्, प्रतियोग्युत्तरकालीनस्याभावस्याविनाशित्वे बाधकाभावात्तस्य विनाशकल्पनायां गौरवादविनाशिजन्याभावसिद्धावेव समीहितनिर्वाहात्तस्यात्यन्ताभावत्वे नास्त्येव विवाद इत्यर्थः प्रागभावो नष्ट इत्यादिप्रत्ययश्चासिद्ध इत्याशयः । पूर्वत्वतत्पूर्वत्वतदुत्तरत्वव्य-

वहारस्य प्रागभावकालीनत्वतत्प्रागभावकालीनत्वतत्कालीनप्रागभावप्रतियोगित्वविषयकत्वेन ग्रन्थ एवातिरिक्तप्रागभावं मानमिति शङ्कया ध्वसमन्तभाव्यं तन्निर्वक्ति । पूर्वत्वेति । अयं पूर्व इति सामान्यतोऽवधिविनिर्मुक्तव्यवहारस्य ध्वंसप्रतियोगिकालवृत्तित्वं चरमध्वसव्यावृत्तं विषयः, तद्वृत्तित्वं तदनुयोगिकसम्बन्धप्रतियोगित्वं स च सम्बन्धः कालिको ग्राह्यः, अन्यथा ध्वंसप्रतियोगित्वविषयकज्ञानरूपकालनिष्ठविषयितासम्बन्धप्रतियोगिनि चरमध्वसे ऽतिप्रसङ्गः एतल्लाभाय च कालपदम् । प्रतियोगित्वं ध्वंसत्वनिरूपकं ग्राह्यम् । अन्यथा ध्वसरूपकालस्यापि प्रागभावध्वंसात्मकप्रतियोगिरूपप्रागभावप्रतियोगितया अतिप्रसङ्गात् प्रागभावास्वीकारेऽपि ध्वसस्य स्वभेदात्मकघटादिध्वंसप्रतियोगित्वेनातिप्रसङ्गात् घटात् पूर्व इत्यादिव्यवहारस्य च घटाद्युत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं विषयः स्वस्य स्वोत्तरोत्पन्नस्यापि कस्यचित्स्वसमानकालीनध्वंसप्रतियोगित्वोत्पत्तिक्षणावृत्तित्वादतिप्रसङ्ग इत्युत्पत्तिनिवेशनम् । स्वोत्पत्तिक्षणादेरपि स्वोत्पत्त्यधिकरणमहाकालादिवृत्तिध्वंसप्रतियोगित्वादुत्पत्तिकालपदेन उत्पत्त्यधिकरणक्षणो विवक्षणीयः ।

वस्तुतस्तु महाप्रलयानङ्गीकारे तदधिकरणकालध्वंसानधिकरणकालः तदङ्गीकारे तद्वृत्तित्वनिष्ठध्वंसप्रतियोगिकालवृत्तित्वाभावकः । कालस्तदुत्पत्तिकालस्तदुत्पत्तिद्वितीयक्षणपर्यन्तस्थायिस्थूलकालादिस्तु न तथा तथाविधकाले तदधिकरणाद्यक्षणध्वसस्य सत्वात्तादृशकालवृत्तिध्वंसप्रतियोग्याद्यक्षणादिवृत्तितद्घटादौ तद्घटादिपूर्वत्वव्यवहारप्रसङ्ग इति क्षणत्वमनुपादेयमेव ।

(१)[तदधिकरणकालध्वंसानाधिकरणत्वं तद्वृत्तित्वनिष्ठध्वंसप्रतियोगिवृत्तित्वाभावकत्वमेव वा, कालशतसमुदायाध्वंसस्य कालतया तदीयाद्यक्षणादिध्वसेऽपि तदधिकरणकालध्वसस्य वृत्तेस्तादृशध्वंसे न तथाविधतदुत्पत्तिकालीनताप्रसङ्गः।]

अत्र चोत्पत्तिकालीनत्वस्य पृथगेव पूर्वपदार्थत्वमतोऽवधिविनिर्मुक्तव्यवहारस्य न तद्विषयकत्वं, उत्पत्तिप्रतियोगिनो

(१) [ ]पाठोऽयं पुस्तकान्तरयोर्नास्ति ।

घटादेः स्वशब्देनैव लाभ इति तद्विनिर्मोकेणैव शक्तिः कल्प्या षष्ठ्यर्थप्रतियोगित्वस्य घटादिविशेषितस्य निरुक्तोत्पत्तिकाल-घटकवृत्त्यावन्वयः । अथ वा ध्वंसप्रतियोगिकालवृत्तित्वमेव पूर्व-पदार्थः, उत्पत्तिकालीनत्वं पूर्वपदयोगानुशिष्टपञ्चम्या प्रत्यर्थ इति बोध्यम् । आदिपदाभ्यां तदुत्तरत्वव्यवहारस्य ध्वंसा-धिकरणकालवृत्तित्वतदधिकरणकालध्वंसाधिकरणकालोत्पत्तिक-त्वविषयकत्वस्य च परिग्रहः ।

ननु प्रागभावानङ्गीकारे प्रायश्चित्तवैफल्यप्रसङ्गः । तथा च तत्प्रवृत्त्यनुपपत्त्या दुःखप्रागभावसिद्धिः । पापध्वंसस्य सुखदुःखा-भावान्यत्वेन स्वतःप्रयोजनतायास्तत्साधनतया गौणप्रयो-जनतायाश्चासम्भवात् अतो दुःखानुत्पादस्य तत्प्रागभावरूपस्यैव, प्रायश्चित्तफलत्वमावश्यक(१) अत एव दुःखं मे मा भूत् इति कामनयैव तदाचरणं न तु पापं नश्यत्विति कामनया ।

न च दुःखात्यन्ताभाव एव दुःखानुत्पादः स च सिद्धोऽप्य-ग्रिमकालसम्बन्धरूपासिद्धविशेषणविशिष्टः प्रागभाववत् प्रयोजनी-भवितुमर्हति अत एवासिद्धस्वत्वानुपरागेण सिद्धप्रामाशाविच्छे-ति वाच्यम् । तदात्मनि दुःखस्यातीततया प्रायश्चित्तानन्तरं पुन-र्निषिद्धाचरणस्थले दुःखस्योत्पत्स्यमानतया च तदत्यन्ताभावास-म्भवादिति ध्वंसप्रागभावयोरत्यन्ताभावविरोधितावादिनां मते प्रागभावयुक्तिः प्रतियोग्यधिकरणेऽपि समयभेदेनात्यन्ताभाववृत्तावि-विरोधः, अन्यथा प्रतियोग्युत्पादपूर्वकाले तद्वत्यभावप्रत्ययबलेनैव प्रागभावसिद्धौ युक्त्यन्तरानुसरणवैयर्थ्यात् इत्याशयेन तदविरो-धितामतमनलस्य दूषयति । दुःखात्यन्ताभावस्येति । स्वस्मिन्नुत्त-रकालानुवृत्तिम् । स्वात्मावच्छेदेनोत्तरकालसम्बन्धम् । इदं च दुःखा-भावस्योत्तरसम्बन्धस्यापि स्वतःप्रयोजनत्वमित्यभिप्रायेण, स्वस्मिन् उत्तरकालानुवर्तमानदुःखाभावमित्येव वार्थः, दुःखाभावस्य तत्स्व-रूपतःसम्बन्धस्य वा नित्यत्वेऽपि प्रायश्चित्ते क्षेमसाधारणतत्सा-धनत्वमव्याहतमेवेति भावः । आत्मतत्त्वविवेकटीकायां स्वयं क्षे-मसाधारणफलसाधनताज्ञानस्य प्रवर्तकत्वं निराकृत्य दुःखसाध-नगोचरद्वेषान्निष्फलेऽपि तदभावे इच्छा सम्भवतीत्युपगमादौ का-

(१) प्रायश्चित्तफलत्वात्—इति २ पु० पा० ।

मनाया दुरपह्नवत्वात् इति युक्त्या पापध्वंसस्यापि प्रयोजनताया अवश्यस्वीकर्तव्यत्वात् तन्मतमनुवर्तमान आह । दुःखसाधनेति । प्रवर्तनक्रियया समानकर्तृकतया उद्दिश्येति क्त्वाप्रत्ययः प्रायश्चित्तविधेफलत्वे तत्प्रवृत्त्यनुपपत्तेः प्रागभावासिद्धिरन्योन्याश्रयादसम्भवदुक्तिकैवेत्याह । मानान्तरेणेति । प्रवृत्तौ सत्यामेव तदनुपपत्तिर्ग्राह्या प्रवृत्तिश्च प्रयोजनसिद्ध्यधीना प्रमाणान्तरात् प्रयोजनसिद्धावेव सम्भवतीति प्रयोजनमन्तरेणानुपपद्यमानापि सा न प्रयोजनकल्पनायामुपयुज्यते अन्योन्याश्रयादित्यर्थः ।

न चान्यदीयप्रवृत्तिमवगत्य तदन्यथानुपपत्त्या प्रयोजनं परिकल्प्यान्यः प्रवर्तते इति नान्योन्याश्रय इति वाच्यम् । तथाप्यनवस्थाया दुर्वारत्वात् अन्यस्य प्रायश्चित्तप्रवृत्तिमजानतोऽपि तत्प्रवृत्तेश्च । इदन्त्वापाततः, प्रयोजनासिद्धौ प्रवृत्त्युदयेऽपि विधिनः प्रायश्चित्ते प्रवृत्तिसाध्यतामवगत्य तदन्यथानुपपत्त्या प्रयोजनकल्पनाया निराबाधत्वात् अन्यथा पापस्याप्रामाणिकत्वापत्तेः निषिद्धकर्मणः स्वध्वंसद्वारापि दुःखसाधनत्वसम्भवेन प्रायश्चित्तफलध्वंसप्रतियोगितयैव तत्सिद्धेः किं तु दुःखात्यन्ताभावादेः फलत्वसम्भवेन प्रागभावरूपफलापर्यवसाने एव निर्भरः ।

न चैवमपि पापध्वंसस्य फलत्वपक्षे पापे युक्त्यन्तराभावेन पापं कल्पयित्वा तद्ध्वंसस्य फलत्वमुपेयते दुःखप्रागभावं कल्पयित्वा तस्य नेत्यत्र विनिगमनाविरहात् प्रागभावसिद्धिरिति वाच्यम् । यतो दुःखप्रागभावानुवृत्तेः फलत्वेऽपि पापध्वंसस्य तन्निर्वाहकस्य फलत्वमावश्यकं पापसत्त्वे दुःखोत्पत्तेरावश्यकतया तदनिर्वाहादिति पापध्वंसफलत्वध्रौव्ये किं प्रागभावेन पापध्वंसस्येष्टान्तरासाधनत्वेऽप्येतोपपत्तेर्दर्शितत्वात् । एवं प्रायश्चित्तोत्तरं निषिद्धानाचरणस्थले प्रागभावोऽपि न सम्भवति प्रतियोगिनो दुःखस्यानुत्पत्स्यमानत्वात् । न चान्यत्रोत्पत्स्यमानं दुःखं प्रतियोगि, प्रागभावस्य प्रतियोगिसमानदेशवृत्तित्वादित्यादि तत्त्वम् ।

ननु प्रागभावानङ्गीकारे जातेऽपि घटज्ञानशब्दादिरूपकार्ये तदुत्पत्त्यादिप्रयोजकतत्सामग्र्या अक्षतत्वात् पुनस्तत्कार्योत्पत्तेस्तत्कार्यस्यैव वा आपत्तिरिति तदानीं सामग्र्यभावनिर्वाहकव्यतिरेकप्रतियोगिनः प्रागभावरूपकारणस्य कल्पनमावश्यकमिति युक्ति

दूषयति । उत्पन्नपुनरुत्पादेति । तत्र कार्ये तदुत्पत्त्यनन्तरोत्पादापत्ति-
रित्यर्थः । आपाद्यप्रसिद्धिश्च कार्यान्तरे । प्रसङ्गाकारस्तु अयं घटो
यदि तदुत्पत्तिक्षणवृत्तिसामग्रीकः स्यात् तदा तत्क्षणानन्तर-
मुत्पद्येतेति ।

न चोत्पत्तेः स्वत्वघटितत्वेनाननुगततया आपादकानुगमे मूल-
शैथिल्यं आपादकस्य स्वसामग्रीघटितया अननुगमे च दृष्टा-
न्तासिद्धिस्वरूपासिद्ध्योरन्यतरप्रसङ्ग इति वाच्यम् । एतत्क्षणावृत्ति-
स्वसामग्रीकं यद्यत्तद्भेदकूटेनानुगतेन एतत्क्षणानुत्तरस्योत्पत्तिकं
यद्यत्तद्भेदकूटस्यापादनीयत्वात् ।

केचित्तु उत्पन्नस्य कार्यस्य द्वितीयादिक्षणे उत्पादप्रसङ्ग उत्पन्न-
पुनरुत्पादप्रसङ्गः । आपादनाकारश्च एतद्घटाद्युत्पत्तिद्वितीयादिक्षणो
यद्येतदुत्पत्तिप्रयोजकसामग्र्युत्तरः स्यात् एतदुत्पादाधिकरणं
स्यात् प्रथमक्षण एव चापाद्यप्रसिद्धिरित्याहुः । कार्यादेः प्रतिबन्ध-
कत्वेन कार्याभावादेर्हेतुत्वोपगमेन घटादिरूपकार्यस्य सामान्यतः
कार्यत्वेन प्रतिबन्धकत्वमसम्भवि तत्पूर्वं तदधिकरणे संयोगादिरूप-
कार्यस्यावश्यकत्वात् अपि तु समवायेन जन्यद्रव्यत्वावच्छिन्नं प्रति
द्रव्यत्वादिना ज्ञानादिरूपकार्यं प्रति च ज्ञानत्वादिना अनुगतरूपेण
प्रतिबन्धकत्वासम्भवादगत्या तत्तद्व्यक्तित्वेनैव प्रतिबन्धकता वाच्या
घटादिनाशोत्तरं तदधिकरणे खण्डघटाद्युत्पाददशायां तदुत्पादाप-
त्तेः कार्यप्रतिबन्धकताया दुर्वारत्वात् तत्तद्घटादिव्यक्तिनाशस्यापि
प्रतिबन्धकत्वं वक्तव्यमिति कार्यध्वंसपरिग्रहाद्यादेरित्युक्तम् ।

न च परसंयोगादिव्यक्तिनाशात् महाघटादिव्यक्तिनाशस्तद्व्य-
क्तेरपि तद्घटव्यक्तिहेतुतया तदभावादेव न पुनस्तदुत्पादप्र-
सङ्ग इति किं तत्र नाशप्रतिबन्धकतयेति वाच्यम् । तत्सं-
योगादिव्यक्तीनां तत्तद्व्यक्तित्वेन हेतुत्वस्य सर्वत्रासिद्धेस्तस्य प्रामा-
णिकत्वेऽपि धारावाहनस्थले प्राथमिकनिर्विकल्पकस्य चतुर्थादिक्ष-
णे आपत्तिवारणाय तत्र कार्यध्वंसस्य प्रतिबन्धकताया आवश्य-
कत्वाच्चेति ।

न चैवमनन्तप्रतिबन्धकताकल्पनापेक्षया प्रागभावहेतुत्वे लाघ-
वात् तत्सिद्धिरिति वाच्यम् । तत्कार्ये उत्पन्नेऽपि कार्यान्तरप्राग-
भाववत्त्वात् तत्कार्योत्पादवारणाय तत्कार्यं प्रति तत्कार्यप्रागभा-

त्वेन, प्रागभावस्वीकर्तव्यत्वे । अतस्तत्कारणतानामनन्तप्रागभावानां च कल्पनीयत्वात् ।

न च तादात्म्यसम्बन्धेन कार्यसामान्यं प्रति प्रतियोगितासम्बन्धेन प्रागभावत्वेन एकहेतुतयैव सर्वत्रोत्पन्नपुनरुत्पत्तिवारणं, न सम्भवति उत्पन्नप्रतियोगिकप्रागभावस्य विनाशादुत्पन्नकार्ये प्रतियोगितया प्रागभावस्यासत्त्वादिति वाच्यम् । उत्पन्नव्यक्तौ प्रतियोगितया प्रागभावासत्त्वेऽपि तस्याः समवायिदेशे पुनरनुत्पादप्रयोजकस्य, दुर्वारत्वात्तदुत्पादप्रयोजकसामग्र्यास्तत्प्रागभावविनाशेऽप्यक्षतत्वात् ।

न च समवायेन कार्योत्पत्तौ सम्बन्धान्तरेण कार्योत्पादकसामग्रीसमवधानमप्यपेक्षितमिति तादात्म्येन कार्योत्पादकसामग्र्यभावादनुपपत्तिरिति वाच्यम् । तादृशसामग्रीसमवधानस्याव्यवहितप्राक्क्षणे एवापेक्षितत्वात्, तदा च कार्यान्तरप्रागभावस्यैव सत्त्वात् इति ।

ननूत्पत्तिराद्यक्षणसम्बन्धः आद्यत्वं च स्वाधिकरणक्षणवृत्तेः स्ववृत्तेर्वा प्रागभावस्य प्रतियोगित्वमिति, प्रागभावघटितोत्पत्तिप्रत्यय एव तत्साधक इत्याशङ्क्य प्रागभावमन्तरेणोत्पत्तिं निर्वक्ति । तदुत्पत्तिश्चेति ।

( दी० ) तदुत्पत्तिश्च महाप्रलयमनङ्गीकुर्वतां मते स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धः, तदुक्तम् 'अध्वस्तक्षणयोगस्य क्षणयोगो जनिर्मतेति' । क्षणः समयः ।

( गा० ) महाप्रलयाङ्गीकारे चरमध्वंसरूपतदुत्पत्तावव्याप्तिस्तदधिकरणसमयस्य महाकालस्य ध्वंसस्य च ध्वंसाप्रसिद्धेरिति तदनङ्गीकारपक्षावलम्बनम् । स्वाधिकरणेति । स्वमुत्पत्तिमत्त्वेनाभिमतम् । द्वितीयादिक्षणस्य स्वाधिकरणाद्यक्षणध्वंसाधिकरणतया न तत्सम्बन्ध उत्पत्तिः तदधिकरणसमयस्य तत्प्रकारेणैव निवेशो न तु तदीयाधिकरणताप्रकारेण गौरवात् । एवं च स्वविषयकातीतज्ञानस्य स्वानधिकरणत्वेऽपि विषयितासम्बन्धेन स्वावच्छिन्नतया तद्ध्वंसमादायासम्भवस्य, संयोगादिना घटादिमतो यो ध्वंसस्तदवच्छिन्नभेदस्य द्वितीयक्षणादावपि सत्त्वेनातिव्याप्ते-

वारणाय, कालिकसम्बन्धः स्वसम्बन्धतया, प्रवेशनीयः तल्लाभायैव प्रथम,समयपदम् ध्वंसानधिकरणत्व च,कालिकसम्बन्धेन ध्वंसावच्छिन्नभिन्नत्व, कालिकसम्बन्धाप्रवेशे, द्वितीयादिक्षणस्यापि विषयितासम्बन्धेन स्वाधिकरणसमयध्वंसावच्छिन्नज्ञानादिभिन्नतया अतिप्रसङ्गापत्तिः तन्निवेशलाभाय द्वितीयं समयपदम् । स्वपूर्वोत्पन्नस्वविषयकज्ञानादिनिष्ठस्वीयविषयितादिसम्बन्धस्यानुत्पत्तितया तादृशसमयसम्बन्धोऽपि कालिको ग्राह्यः तल्लाभोऽपि द्वितीयसमयपदादेव ।

, एतादृशोत्पत्तिपदार्थं आचार्याणामप्यनुमत इत्याह । तदुक्तमिति । अध्वस्तेति । अध्वस्तः यत्क्षणेऽविनष्टःक्षणयोगः क्षणनिष्ठतत्स्वरूपसम्बन्धो यस्य यदीयक्षणयोगध्वंसानधिकरणं यत्क्षण इति यावत् तस्य तादृशतत्सम्बन्धो जनिरुत्पत्तिरित्यर्थः । यदीयक्षणयोगे यत्क्षणनिष्ठध्वंसाप्रतियोगित्वं तस्य तत्क्षणयोग इति यथाश्रुतार्थो नादरणीयः । तदीयाद्वितीयादिक्षणयोगस्य द्वितीयादिक्षणवृत्तिध्वंसाप्रतियोगितया द्वितीयादिक्षणसम्बन्धेऽतिव्याप्तेः, यदीयक्षणयोगत्वावच्छेदेन यत्क्षणवृत्तिध्वंसाप्रतियोगित्वविवक्षयाऽतिप्रसङ्गवारणे गौरवात् महाप्रलयानङ्गीकारे स्वीयक्षणयोगध्वंसाधिकरणत्वसामान्याभावस्यैव लाघवेन लक्षणे निवेशौचित्यात् तदङ्गीकारे तदुत्पत्तावप्रसिद्धिनिबन्धनाव्याप्तेर्वारणाय यथाश्रुतार्थविवक्षयैव क्वचिदपोस्यादिलक्षणं वक्ष्यते । आद्यक्षणे स्वाधिकरणक्षणध्वंसानधिकरणत्वस्येव स्वीयकालसम्बन्धध्वंसाधिकरणत्वसामान्याभावस्यापि सत्त्वात् द्वितीयादिक्षणे स्वीयाद्यक्षणसम्बन्धध्वंसवति स्वीयकालसम्बन्धध्वंसाधिकरणत्वसामान्याभावस्यासत्त्वात्प्रथमक्षणस्य द्वितीयक्षणपर्यन्तावस्थायिस्थूलकालस्य स्वीयकालसम्बन्धध्वंसाधिकरणत्वात् प्रथमक्षणपर्यन्तावस्थायिस्थूलकालस्य,चान्त्यक्षणावच्छिन्न एव सम्बन्धत्वेन तत्सम्बन्धस्योत्पत्तित्वव्यवहारस्येष्टत्वात् द्वितीयस्यापि क्षणस्य क्षणत्वप्रवेशो वृथेत्याशयेनाह । क्षणः समय इति ।

न च तादृशस्थूलकालसम्बन्धस्योत्पत्तित्वे तस्य तादृशकालस्वरूपस्य स्वपूर्वक्षणेऽपि सत्त्वात्स्वस्मिन्स्वपूर्वक्षणोत्पन्नत्वव्यवहारप्रसङ्गः घटादेः कालसम्बन्धस्य घटादिस्वरूपत्वे च द्वितीयादि-

क्षणेऽपि तात्स्वरूपाद्यक्षणसम्बन्धसत्त्वेन तत्र तद्द्वितीयक्षणावृत्तित्वव्यवहारप्रसङ्गः। द्वितीयक्षणादेस्तदीयकालसम्बन्धध्वंसाधिकरणत्वानुपपत्त्या आद्यस्वक्षणयोगस्येत्यनेन द्वितीयक्षणसम्बन्धध्वंसेनायोगाच्चेति वाच्यम्। तदीयकालसम्बन्धस्य तत्तदधिकरणकालाभेदरूपत्वात् अन्यथा स्वानधिकरणकाले स्वाधिकरणकालात्मकतदीयसम्बन्धसत्त्वेन स्वस्मिन् स्वानधिकरणकालवृत्तित्वप्रसङ्गस्य भवतोऽपि दुर्वारत्वात्।

अथोत्पत्त्यर्थकपदस्योत्पत्तिमत्तत्तत्पदार्थान्तर्भावेण शक्त्युपगमे शक्त्यानन्त्यप्रसङ्गः अपूर्वपदार्थोत्पत्तौ प्राक्शक्तिग्रहेण तत्प्रतीत्यनुपपत्तिश्च। न च तत्पदार्थानन्तर्भावेणैव शक्तिः तत्तत्पदार्थाधिकरणसमयध्वंसानधिकरणत्वलाभश्च तत्तत्पदसमभिव्याहारादिति वाच्यम्। घट उत्पद्यते इत्यादौ धात्वर्थैकदेशसमयविशेषणतया नामार्थघटादीनामन्वये आकाङ्क्षाविरहेण तदन्वयोपगमेऽपि घटत्वादिनैव तस्यान्वयो वाच्यो न तु तत्तद्व्यक्तित्वेन तेन तेन रूपेण घटादिपदादनुपस्थितेः तथा च तत्र सामान्यतो घटादिमत्समयध्वंसानधिकरणत्वं समये प्रत्येतव्यं तथा च बाधः समयमात्रस्यैव पूर्वपूर्वघटादिमत्समयध्वंसवत्त्वात्।

एतेन समभिव्याहृतपदार्थतावच्छेदकत्वोपलक्षितधर्मवदधिकरणसमयध्वंसानधिकरणसमयसम्बन्धत्वेन सर्वनामवदेकशक्तिस्वीकारेऽपि न निस्तार इति चेत्? सत्यम्। स्वप्रतियोगिवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकध्वंसाभावविशिष्टस्वप्रतियोगिकसमयसम्बन्धोऽनुगत एवोत्पत्तिपदार्थः द्वितीयादिक्षणोत्पत्तिकध्वंसप्रतियोगिनि काले स्वस्यावृत्तेः द्वितीयादिक्षणे न स्वस्य तादृशसम्बन्धावच्छिन्नध्वंससामान्याभावविशिष्टत्वमिति तादृशाभावविशिष्टस्वप्रतियोगिकसम्बन्ध आद्यक्षण एवेति नातिप्रसङ्गः। प्रतियोगी च उपलक्षणविधया सम्बन्धघटक इति ध्वंसकाले तत्प्रतियोग्यसत्त्वेऽपि न तद्घटितसम्बन्धावच्छिन्नध्वंसाभावो द्वितीयक्षणे।

न च ध्वंसकाले तत्प्रतियोगिसमयवृत्तित्वस्याप्यसत्त्वात् कथं तत्सम्बन्धावच्छिन्नाभाववैलक्षण्यं तत्सम्बन्धासत्त्वे सम्बन्धावच्छिन्नाभावस्याप्यावश्यकत्वात् कालान्तरीणसम्बन्धाश्रयेऽप्यवर्तमानस्योपलक्षणीभूतसम्बन्धावच्छिन्नाभावस्य प्रामाणिकत्वादिति वा-

त्वयम् । स्वप्रतियोगिवृत्तितादात्म्यस्य, सम्बन्धतास्वीकारेणानुपपत्त्यनवकाशात् स्वतादात्म्यस्य स्वस्मिन्सर्वदैव सत्त्वात् ।

( दी० ) तदङ्गीकारे तु कचिदपि यदीयसमयसम्बन्धे यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्ति तस्य तत्समयसम्बन्धतदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वं वा । क्षणत्वं च स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वं स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयत्वं स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वं स्ववृत्तियावदभावविशिष्टसमयत्व स्वस्वपूर्ववर्तियावत्पदार्थविशिष्टसमयत्वं वा ।

( गा० ) तदङ्गीकारे तु । महाप्रलयाङ्गीकारे तु । कचिदपीति । यदीयसमयसम्बन्धसामान्ये यत्समयवृत्तिध्वंसप्रतियोगित्वाभाव इत्यर्थः । स्ववृत्तिध्वंसाप्रतियोगितदीयसमयसम्बन्धसामान्यकसमयानुयोगिकस्तत्सम्बन्ध उत्पत्तिरिति समुदायार्थः । तदीयसमयसम्बन्धस्य कस्याप्याद्यक्षणे ध्वंसासत्त्वात्तत्सम्बन्धसामान्यस्याद्यक्षणवृत्तिध्वंसाप्रतियोगितया आद्यक्षण एवेदृश स्वमिति तत्सम्बन्ध उत्पत्तिः । चरमध्वंसीयसमयसम्बन्धस्याप्रसिद्धावपि तदीयसम्बन्धसामान्ये प्रलयवृत्तिध्वंसाप्रतियोगित्वसत्त्वात्प्रलयसम्बन्ध एव तदुत्पत्तिः द्वितीयादिक्षणसम्बन्धस्य द्वितीयादिक्षणवृत्तिध्वंसाप्रतियोगितया तत्सम्बन्धातिप्रसङ्गवारणाय सामान्यपदं तदुपादाने च सामान्यान्तर्गतप्रथमक्षणसम्बन्धस्य द्वितीयादिक्षणवृत्तिध्वंसाप्रतियोगित्वविरहान्न द्वितीयक्षणादि तादृश स्वमिति नातिप्रसङ्गः । तदीयसमयसम्बन्धाप्रतियोगिकस्ववृत्तिध्वंससामान्यकसमयानुयोगिकस्तत्सम्बन्ध उत्पत्तिरित्यपि लक्षणं सम्भवति सामान्यपदमनन्तर्भाव्य स्ववृत्तिध्वंसप्रतियोगिसम्बन्धाप्रतियोगितत्कसमयानुयोगिकस्तत्सम्बन्धस्तथेत्यपि शक्यते वक्तुं उत्पत्तिनिर्वचनोपयोगितयैव क्षणलक्षणमवतारयितुं गुरुशरीरामपि क्षणघटितामुत्पत्तिं निर्वक्ति । तदधिकरणेति । व्याप्यत्वं स्वव्यापकतत्कत्वं तथा च स्ववृत्तिध्वंसप्रतियोगिताव्यापकतदधिकरणक्षणवृत्तित्वा-

नाशकसमये तत्सम्बन्ध उत्पत्तिरित्यर्थः । तदीयाद्यक्षणवृत्तिध्वंसप्रतियोगिमात्रस्यैव तदधिकरणक्षणे अवृत्तेस्तत्सम्बन्धसत्त्वात् । द्वितीयादिक्षणोत्पत्तिकध्वंसप्रतियोगिनस्तदधिकरणाद्यक्षणावृत्तेः, वृत्तेर्नातिप्रसङ्गः द्वितीयादिक्षणवृत्तिकध्वंसप्रतियोगिनश्चिरविनष्टस्य तदधिकरणक्षणावृत्तितया अतिप्रसङ्गवारणाय ध्वंसप्रतियोगिवृत्तित्वमुपेक्ष्य ध्वंसप्रतियोगिताव्यापकत्वमभावविशेषणमुपात्तं प्रतियोगितायां तदधिकरणक्षणवृत्त्यवृत्तित्वरूपतादृशक्षणावृत्तित्वव्याप्तिनिवेशे चिरविनष्टनिष्ठद्वितीयादिक्षणवृत्तिध्वंसप्रतियोगितायां तत्सत्त्वेनातिप्रसङ्गः तादृशप्रतियोगितासामान्ये तथाविधव्याप्तिनिवेशे सामान्यपदार्थस्य व्यापकताघटिततया गौरवमिति स्वव्यापकत्वरूपव्याप्तेरत्र निवेशः ।

न च यादृशक्षणद्वयात्मककालमध्ये न कस्यापि विनाशो जातस्तत्रातिव्याप्तिरिति वाच्यम् । प्रतिक्षणं कस्यचिदुत्पत्तेः कस्यचिद्विनाश इति नियमात् आद्यक्षणवृत्तिध्वंसप्रतियोगिनोऽपि तदधिकरणस्थूलकालवृत्तितया असम्भवादित्यतः क्षणनिवेशनम् । तदधिकरणक्षणावृत्तित्वस्थले कालिकसम्बन्धेन तद्वृत्तित्वनिवेशेनाप्युपपत्तौ उक्तयुक्त्या क्षणघटनानुरोधेन गुरुतरारम्भः ।

नन्वत्र क्षणत्वं स्ववृत्तिप्रागभावप्रतियोग्यनधिकरणत्वं स्ववृत्तिप्रतियोगिकप्रागभावानाधारत्वं वा प्रागभावघटितमेवेत्यत आह । क्षणत्वं चेति । स्ववृत्तीति । ध्वंसतत्प्रतियोगिनोरेकक्षणावृत्त्योरधिकरणं स्थूल एव कालो न तु क्षण इति स्ववृत्तिध्वंसप्रतियोग्यनधिकरणत्वं तस्य सुघटम् । न च क्षणिकपदार्थानङ्गीकारे कर्मादेरेव यादृशविशेषणविशिष्टस्य क्षणमात्रस्थायिता तादृशविशेषणविशिष्टस्य क्षणतयोक्तलक्षणासम्भवः कालमात्रस्यैव स्ववृत्तिध्वंसप्रतियोग्याधारत्वादिति वाच्यम् । प्रतियोग्यनधिकरणत्वं हि न प्रतियोग्याधारभिन्नत्वं किं तु प्रतियोग्याधारताविरहः प्रतियोगिविरह एव वा उपान्त्यादिक्षणावच्छेदेन स्ववृत्तिध्वंसप्रतियोग्यधिकरणस्यापि कर्मादेरन्त्यक्षणावच्छिन्नस्य तादृशाभावविशिष्टत्वान्न दोषः तदधिकरणक्षणावृत्तित्वेत्यादिलक्षणे च 'तदधिकरणतावच्छेदकस्ववृत्तिध्वंसप्रतियोग्याधारताविरहवैशिष्ट्यरूपक्षणत्वावच्छिन्नावृत्तित्वमेव' विवक्षितं तेन घटाद्यधिकरणस्थलकाले उक्तविशेषणावच्छिन्नतया क्षणा-

रूपे तदीयाद्यक्षणवृत्तिध्वंसप्रतियोगिनां वृत्तावपि नासम्भवः स्वप्रतियोगिकध्वंसवत्त्वादात्म्यसम्बन्धावच्छिन्नप्रतियोग्यभावविशिष्टत्वमनुगतं क्षणत्वं सम्बन्धमध्ये स्वपदार्थनिवेशे क्षतिविरहादित्यवधेयम्। अत्र यथाश्रुतं स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वं यदि तादृशाधारताप्रतियोगिकाविरहो विवक्षितस्तदा स्ववृत्तिध्वंसप्रतियोगिपूर्वविनष्टपदार्थाधारताविशेषविरहविशिष्टत्वं कर्मादीनां सर्वदैवेत्यतिप्रसङ्गात्तादृशाधारतात्वावच्छिन्नाभावस्तादृशप्रतियोगित्वावच्छिन्नाभावो वा विवक्षणीयः तथा च महाप्रलयात्मकक्षणेऽव्याप्तिः तद्वृत्तिध्वंसप्रतियोग्याधारतात्वादेः स्वसमनियतध्वंसप्रतियोग्याधारतात्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाप्रसिद्धेः । न च महाप्रलयस्य क्षणत्वाभाव इष्ट एवेति वाच्यम् । तथा सति चरमध्वंसाधिकरणक्षणाप्रसिद्धेस्तदुत्पत्त्यनुकूलक्षणाव्याप्तिरिति स्ववृत्तिध्वंसप्रतियोगित्वाद्यवच्छिन्नाभावमुपेक्ष्य तादृशप्रतियोगिकाभावकूटं निवेश्य लक्षणान्तरमाह । स्ववृत्तीति । अभावकूटान्तर्गतध्वंसभिन्नाभावनिवेशे प्रयोजनाभावः प्रागभावस्य प्रामाणिकत्वमते प्रागभावादिघटितकूटनिवेशेऽसम्भवात् सर्वमतसाधारण्यानुरोधाच्च यावन्तो ध्वंसा एव निवेशिताः स्ववृत्तिध्वंसप्रतियोगिपूर्वविनष्टप्रतियोगिकध्वंसवैशिष्ट्यस्य कर्मादौ सर्वदा सत्त्वाद् यावत्त्वं ध्वंसविशेषणम् । यावद्ध्वंसवैशिष्ट्यं प्रलयान्त्यक्षणमात्रव्याप्तमतः स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकत्व यावत्त्वविशेष्यतावच्छेदकतया निवेशित यावद्ध्वंसविषयकज्ञानादेर्विषयितालक्षणवैशिष्ट्यं द्विक्षणावच्छिन्नस्येति कालिकसम्बन्धात्मकवैशिष्ट्यनिवेशलाभाय समयपदम् । वस्तुतः स्ववृत्तिध्वंसप्रतियोगिशब्दादिप्रतियोगिकया ध्वंसविशिष्टत्वं गगनादेरपि महाप्रलये न च तस्य क्षणत्वं कालत्वविरहादिति तद्वारणाय समयपदम् ।

न च कालिकसम्बन्धेन स्ववृत्तित्वनिवेशादेव न गगनाद्यतिप्रसङ्गप्रसङ्गः तत्र कालिकसम्बन्धानिवेशात् तन्निवेशलाभस्यैव वा समयपदप्रयोजनत्वात् ।

एतेन पापध्वंसविषयकत्वस्य ज्ञानादौ द्विक्षणावच्छिन्ने सत्त्वेऽपि अन्त्यक्षणोत्पन्नध्वंसस्य प्राक्क्षणेऽसत्त्वेनोपलक्षणतया यावद्ध्वंसरूपविशेषणावच्छिन्नस्य क्षणिकत्वमेवेति पूर्वोक्तव्यावृत्त्यसङ्गतावपि

न क्षतिः। स्ववृत्तियावद्धर्मवैशिष्ट्यस्य लक्षणत्वसम्भवेऽपि गुणाद्युक्तलक्षणे यथासन्निवेशो वैयर्थ्यावरहः पूर्वलक्षणानुसारेण गुणलक्षणमभिधाय पर्यवसितस्योक्तस्यैव लक्षणरूपतामाह। स्ववृत्तीति। ध्वंसत्वं यदि जन्याभावत्वं तदा प्रागभावानङ्गीकारे जन्यत्वांशवैयर्थ्यं अत्यन्तान्योन्याभावयोः सर्वदैव सत्त्वेन तद्व्यावृत्तेर्विफलत्वात् अन्त्यक्षणावच्छिन्नस्ववृत्तिध्वंसप्रतियोगिस्ववृत्तिभाववैशिष्ट्यस्यान्त्यक्षणावच्छिन्नेऽप्यसत्त्वेनाभावत्वस्य भावभिन्नत्वरूपस्यैव सफलत्वादिति यावद्भावघटितमेव लक्षणमाह। स्ववृत्तीति। अन्त्यक्षणावच्छिन्नस्य कर्मादेः क्षणत्वमते लक्षणान्युक्त्वा आद्यक्षणावच्छिन्नानां तेषां क्षणत्वमतेनान्यल्लक्षणमाह। स्वस्वपूर्वेति। स्वस्मिन् स्वपूर्वकाले च वर्त्तते ये तादृशयावद्वैशिष्ट्यमर्थः पदार्थस्य न निविष्ट अव्यावर्त्तकत्वात् कर्मादीनां द्वितीयादिक्षणेऽपि स्वस्वपूर्ववर्त्तियत्किञ्चिद्वस्तुविशिष्टत्वाभावादिति। तथा च द्वितीयक्षणे विनष्टतथाविधपदार्थवैशिष्ट्यस्याद्यक्षण एव सत्त्वादतिप्रसङ्गः स्वपूर्ववर्त्तिनां स्वोत्पत्तिकालीननाशप्रतियोगिनां वैशिष्ट्यस्य क्वाप्यसत्त्वादसम्भव इति स्ववृत्तित्वं पदार्थविशेषणम्। स्ववृत्तीनां द्वितीयादिक्षणोत्पन्नानामाद्यक्षणावच्छिन्नेऽपि स्वस्मिन्वैशिष्ट्याभावादसम्भव इति स्वपूर्ववर्त्तित्वं विशेषणम्।

अत्र प्राग्निरुक्तस्य स्वोत्पत्तिकालीनध्वंसप्रतियोगित्वरूपकालनिष्ठपूर्वत्वस्य निवेशे उत्पत्तिघटकक्षणत्वे उत्पत्तिनिवेशादन्योन्याश्रय इत्याशङ्क्य उत्पत्त्यघटितपूर्वत्वं निर्वक्ति। स्वपूर्वत्वं चेति।

(दी०) स्वपूर्वत्वं च स्वाधिकरणयावत्कालवृत्तिध्वंसप्रतियोगित्वं जन्यमात्रस्यैव कालोपाधित्वाददोषः। यो यत्कालवृत्तिध्वंसप्रतियोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपि केचित् इति चेत्? नैवमपचीयते किञ्चिदस्माकमित्येकदेशिनो वर्णयन्ति।

(गा०) स्वद्वितीयादिक्षणोत्पन्नानामपि वस्तूनां स्वाधिकरणतृतीयादिक्षणावृत्तिध्वंसप्रतियोगिद्वितीयक्षणादिपर्यन्तकालवृत्तित्वात् क्षणलक्षणेऽसम्भव इति यावत्त्वं कालविशेषणम्। द्वितीयादिक्षण-

पर्यन्तस्थायिकालध्वंसस्य तृतीयक्षणादावेव वर्त्तन इति न स्वाधिकरणयावत्कालवृत्तिध्वंसप्रतियोगीति न दोषः । स्वानधिकरणत्वे सति स्ववृत्तिध्वंसप्रतियोगित्वं स्वपूर्वत्वमिति तु ज्यायः । स्ववृत्तिप्रतियोगिकध्वंसाधारत्वाभावविशिष्टत्वं स्वप्रतियोगिमत्तादात्म्यसम्बन्धावच्छिन्नध्वंसाभावविशिष्टत्वात्मकं प्रलयसाधारणमप्याद्यक्षणावच्छिन्नकर्मादिसाधारणं क्षणत्वमित्यवधेयम् ।

ननु क्रियाचरमध्वंसैतदुभयमात्रस्य कालोपाधित्वे यस्य द्वितीयक्षणे क्रियाध्वंसो न जातस्तस्य द्वितीयक्षणसम्बन्धोऽप्युत्पत्तिः स्यात् द्वितीयक्षणस्यापि तदधिकरणकालध्वंसानधिकरणत्वात् अन्त्यक्षणावच्छिन्नवस्तुनः क्षणत्वमते यदुत्तरक्षणे क्रियाध्वंसो न जातस्तदा क्षणव्यवहारानुपपत्तिः एतमाद्यक्षणावच्छिन्नस्य क्षणत्वमते यदा क्रियोत्पत्तिर्न जाता तदाद्यक्षणव्यवहारानुपपत्तिः न हि प्रतिक्षणे क्रियोत्पत्ति. क्रियाविनाश इति नियमः किं तु प्रतिक्षणं कस्यचिदुत्पत्तिः कस्यचिद्विनाश इत्येवंस्यत आह । जन्यमात्रस्येति । केषाञ्चित्क्षणघटितं चरमध्वंसोत्पत्तिसाधारणमुत्पत्तिलक्षणान्तरमुपन्यस्यति । यो यदिति । स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वं स्ववृत्तित्वमुत्पत्तिरित्युत्पत्तिलक्षणसम्भवेऽपि क्षणव्यवहारानुरोधेनैव प्रागभावाघटितक्षणनिर्वचनमावश्यकमित्यनादरसूचनाय केचिदिति । प्रागभावोऽपि न स्वीकार्य इत्याशयेन सिद्धान्तिमुखेनैव तत्प्रयोजनमन्यथोपपाद्य तमाशयं स्फुटयति । नैवमिति ।

सामान्यप्रत्यासत्ति प्रमाणपदवीमारोहन्तीमनुधावन्तं प्रागभावमालोक्यातिव्याकुलं सिद्धान्तितामुपेक्ष्य प्रागभावमेव साधयितुं तत्र प्रमाणमाशङ्कते । अथेति ।

( दी० ) अथ पटस्य स्वानधिकरणेषु तन्तुपूत्पत्तिवारणाय सहस्रादीनां तत्तत्तन्तुत्वेन तत्तत्पटजनकत्वं वाच्यम्, तथा च लाघवादेक एव प्रागभावः कल्प्यते स च स्वाश्रय एव प्रतियोगिजनक इति नातिप्रसङ्गः । इत्थं चानेकत्र प्रागभावसिद्धौ प्रागभावत्वेन प्रतियोगिजनकत्वाद्धितन्तुकेऽपि तत्सिद्धिरिति चेत् ?

( गा० ) पटस्य । सहस्रादितन्त्वारभ्यस्य । स्वानधिकरणेषु ।

तदानीं मिथः संयुक्तेषु । उत्पादवारणायेति । तत्तन्तुत्वेन तत्पटत्वावच्छिन्नं प्रति हेतुत्वे प्रागभावसत्त्वे सामान्यसामग्रीशालिनि तन्त्वन्तरे तद्व्यक्त्यनुत्पादप्रयोजकस्य दुर्वचत्वात् कार्यानुत्पत्तौ कारणतावच्छेदकावच्छिन्नाभावस्यैव प्रयोजकत्वादिति भावः । तत्पटजनकत्वम् । तादात्म्यसम्बन्धेन तत्पटत्वावच्छिन्नजनकत्वं

। न च तत्पटत्वावच्छिन्नस्य तत्तत्तन्तुत्वावच्छिन्नव्यभिचारिणः तज्जन्यतेति वाच्यम् । तत्तन्तुसमवेतत्वविशिष्टस्य तत्तन्तुत्वव्यभिचारितया तादृशविशेषणावच्छिन्नस्य तज्जन्यत्वे बाधकाभावात् । तत्तन्तुत्वविशिष्टसमवायः कार्यतावच्छेदकसम्बन्धः तेन च सम्बन्धेन तत्पटस्य तत्तन्तुत्वव्यभिचारितैवेत्यप्याहुः ।

तच्च विशेषरूपेण समवायादेः सम्बन्धतायाः प्रामाणिकत्व एवोपपद्यते । न च तत्तन्तुत्वेन तत्पटहेतुत्वे स्वाधिकरणतन्त्वन्तर एव तत्पटानुत्पादापत्तिः, तत्प्रयोजककारणतावच्छेदकावच्छिन्नाभावसत्त्वात् न हि यावत्कारणतावच्छेदकावच्छिन्नाभावसत्त्वमेव कार्यानुत्पत्तिप्रयोजकं दण्डादिमति चक्रादिविरहिणि घटाद्यनुत्पादानुपपत्तेः किन्तु किञ्चित्कारणतावच्छेदकावच्छिन्नाभाव एवेति वाच्यम् । यतस्तत्सम्बन्धेन तद्धर्मावच्छिन्नानुत्पादे तत्सम्बन्धेन तद्धर्मावच्छिन्ननिरूपितकिञ्चित्कारणतावच्छेदकावच्छिन्नाभाव एव प्रयोजकः स्वाधिकरणतन्त्वन्तरे तत्तत्तन्तुसमवेतत्वविशिष्टतत्पटत्वावच्छिन्नस्य तत्तन्तुवृत्तित्वविशिष्टसमवायेन तत्पटत्वावच्छिन्नस्य वाऽनुत्पाद इष्ट एव । एवं सामान्यधर्मावच्छिन्नकार्यव्यतिरेके सामान्यसम्बन्धावच्छिन्नतद्व्यतिरेके च विशेषधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकसकलधर्मावच्छिन्नतत्तन्तुवृत्तिव्यतिरेकनिकरो विशेषसम्बन्धावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकसकलधर्मावच्छिन्नव्यतिरेकनिकरश्च, प्रयोजकः स्वाधिकरणतन्त्वन्तरे चैतत्तन्तुभेदसत्त्वेऽपि तत्तन्तुसमवेतत्वविशिष्टपटत्वावच्छिन्नजनकतावच्छेदकावच्छिन्नस्य तत्तन्तुवृत्तिसमवायसम्बन्धावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकावच्छिन्नस्य वा व्यतिरेकासत्त्वान्न तत्र सामान्यतः समवायेन तत्पटत्वावच्छिन्नानुत्पादः विशिष्टतत्पटत्वतत्पटत्वयोरभेदेऽपि कथञ्चित्सामान्यविशेषभावः समर्थनीयः ।

अथ तद्धर्मावच्छिन्नोत्पत्तौ तद्धर्मावच्छिन्नसामग्री तद्व्यतिरेके च तद्धर्मावच्छिन्नसामग्रीव्यतिरेकः प्रयोजकः यत्किञ्चित्कारणतावच्छेदकावच्छिन्नाभावस्य च सामग्रीविरहनिर्वाहकतयैव कार्यानुत्पादप्रयोजकत्वं तद्धर्मावच्छिन्नसामग्री च तद्धर्माश्रययत्किञ्चिद्व्यक्तिनिरूपितकारणतावच्छेदकसकलधर्मावच्छिन्नसमुदायः तत्समुदायविरहश्च प्रकृते केवलान्वयीति स्फुटतरो ऽनिर्वाहः यत्किञ्चिदेकधर्मावच्छिन्ननिरूपितकारणतावच्छेदकसकलधर्मावच्छिन्नसमुदायश्च न सामग्री सामान्यविशेषसामग्र्योः परस्परापेक्षानुपपत्तेरिति चेत् ? तत्तन्तुवृत्तित्वविशिष्टसमवायस्य तत्तन्तुजन्यतावच्छेदकसम्बन्धत्वमते समवायस्यानुयोगिभेदेन भेदोपगमे च न काप्यनुपपत्तिः । तद्धर्मवद्यत्किञ्चिदेकव्यक्तिनिष्ठयत्किञ्चिदेकतादृशसम्बन्धावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नस्तोमस्यैव तादृशतद्रूपावच्छिन्नसम्बन्धेन तद्धर्मावच्छिन्नोत्पादकसामग्रीत्वात् तादृश्याः समवायेन तत्पटत्वावच्छिन्नोत्पादप्रयोजकसामग्र्याः प्रत्येकं तत्समवायिसकलतन्तुष्वेव सत्त्वात् समवायेन तदनुत्पत्तौ प्रयोजकस्य तादृशसामग्रीविरहकूटस्यान्यत्रैव सत्त्वात् । विशिष्टतत्पटत्वस्य तत्तन्तुजन्यतावच्छेदकत्वमते च समवायस्यानुयोगिभेदेन भेदेऽपि समवायत्वेनैकतन्तुनिष्ठसमवायस्याप्यपरतन्तुनिरूपितकार्यतावच्छेदकसम्बन्धत्वादेकसमवायसम्बन्धावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकधर्मेषु तत्पटारम्भकसकलतन्तुनिष्ठतत्तद्व्यक्तित्वानां चान्तर्भावात् तदवच्छिन्नसमुदायव्यतिरेकः सर्वत्रैवेति दर्शितदोषस्य दुर्वारतया तद्धर्मवद्यत्किञ्चिदेकव्यक्तिनिरूपिततत्सम्बन्धावच्छिन्नयत्किञ्चिदेकाधिकरणताघटिता यावत्यः कारणतास्तत्र तदवच्छेदकावच्छिन्नसमुदायस्यैव तेन सम्बन्धेन तद्धर्मावच्छिन्नोत्पादकसामग्रीत्वमुपेय तत्तत्तन्तुत्वावच्छिन्नजनकताघटकोत्पत्तिशरीरे तत्तद्व्यक्तिसमवेतत्वविशिष्टनिरूपिता कार्याधिकरणतैव निवेश्यते अन्यथा व्यभिचारेण तादृशव्यापकत्वानिर्वाहात् समवायिभेदाभिन्नानां तादृशाधिकरणतानां च एकैकाधिकरणतामुपादाय निरुक्तसामग्रीसमवधाने तत्पटारम्भकतत्तत्तन्तुषु सुघटमेव । विजातीयसंयोगादिरूपसामान्यकारणनिरूपितकार्यताशरीरेऽपि जन्यद्रव्यत्वादिरूपसामान्यधर्मावच्छिन्नाधिकरणता-

त्वेन दर्शितविशिष्टाधिकरणतानामस्यैव निवेशः । विशेषधर्माव-च्छिन्नाधिकरणताभ्यः सामान्यधर्मावच्छिन्नाधिकरणताया अ-तिरिक्ताया अनभ्युपगमात् फलताधिकरणताकूट एव सा-मान्यधर्मावच्छिन्ननिरूपितत्वोपगमादिति तत्तत्तन्तुरूपविशेषसा-मग्र्या पटजनने उक्तसामान्यसामग्र्यपेक्षा तत्तत्कारणताया अपि तत्तन्तुसमवेतत्वविशिष्टाधिकरणताघटितत्वादेकारणतान्तर-त्वादित्यलं विस्तरेण ।

यत्किञ्चिदधिकरणतामन्तर्भाव्य दर्शितरीत्या सामग्रीनिर्वचने च शुद्धः तत्पटत्वमेव कार्यतावच्छेदकं शुद्ध एव समवायः कार्य-तावच्छेदकसम्बन्धः ।

न चोक्तव्यभिचारान्न तत्सम्बन्धेन तद्रूपेण कार्यत्वस्वीकार इति वाच्यम् । यत्र कार्यतावच्छेदकं तत्र स्वावच्छिन्नाव्यवहि-तपूर्ववर्तिनः कारणतावच्छेदकावच्छिन्नस्य सामानाधिकरण्यमिति नियमस्यैव कार्यकारणभावघटकतोपगमेन तादृशनियमभ्रमपण्डयत उक्तव्यभिचारस्याकिञ्चित्करत्वादित्यप्याहुः । लाघवात्सद्भावविका-रणत्वकल्पनमपेक्ष्य तत्पटकारणत्वेन एकतत्प्रागभावकल्पने लाघवा-त् । कल्प्यत इति । कारणत्वेनेत्यादिः । तथापि कुतो नातिप्रसङ्ग इत्यत आह । स चेति । स्वाश्रय एव प्रतियोगिजनक इति । सामा-नाधिकरण्यप्रत्यासत्त्यैव तस्य प्रतियोगिहेतुत्वादिति भावः ।

ननूक्तयुक्त्या द्वितन्तुकपटादेः प्रागभावो न सिद्ध्यति अयातिरि-क्तप्रागभावस्य तत्रानन्यथासिद्धत्वनियतपूर्ववर्तित्वयोश्च कल्पना-मपेक्ष्य क्लृप्तस्य क्लृप्तनियतपूर्ववर्तित्वकस्य तन्तुद्वयादेरनन्यथा-सिद्धत्वमात्रकल्पने लाघवात् तत्र एकस्याः संयोगाव्यवहितेरेव वा देशा-नियमाय हेतुताकल्पनादित्यत आह । इत्थं चेति । प्रतियोगिजन-कत्वात् । जन्यत्वावच्छिन्नप्रतियोगिजनकत्वात् । येषां विशेषरूपेण कार्यकारणभावस्तेषां सामान्यरूपेणापीति नियमानुरोधादिति भाव ।

न चोक्तयुक्त्या सिद्धस्य पदार्थस्य विनाशित्वे सप्रतियो-गिकत्वे च मानभाव इति वाच्यम् । तत्तत्पटादिनाशानन्तरं तदा-श्रयतत्तत्तन्तुषु पटान्तरोत्पत्तिसमये पूर्वपटव्यक्तेरापत्तिवारणानु-रोधेन तस्य विनाशिताया आवश्यकत्वात् अन्यथा तादृशकारणस्य सामान्यसामग्रीसहितस्य सत्त्वेन तदापत्तेः तत्पटादिव्यक्तिध्वंसस्य

प्रतिबन्धकतामन्तरेण दुर्वारत्वात्, एवं च सप्रतियोगिकत्वमप्यावश्यकं अन्यथा अनुगतप्रागभावनाशकस्य दुर्वचत्वात् सप्रतियोगिकत्वे च स्ववृत्तिप्रतियोगिकत्वसम्बन्धेन कालत्वेनैव सामान्यतः प्रागभावनाशकतासम्भवात् ।

न च तत्र प्रतियोगिपूर्वमेव कथं प्रागभावो न नश्येत् प्रतियोग्यधिकरणस्थूलकालस्य सर्वदैव सम्भवादिति वाच्यम् । स्वप्रतियोग्यधिकरणत्वस्ववृत्तिप्रतियोगिकध्वंसवत्त्वोभयसम्बन्धेन ध्वंसवदन्यत्वस्य कालविशेषणत्वोपगमात् द्विक्षणमात्रावस्थायिन एव कालस्य तथात्वात् क्षणत्रयावस्थायिनस्तादृशोभयसम्बन्धेन द्वितीयादिक्षणोत्पन्नध्वंसवत्त्वात् ।

प्रागभावहेतुत्वेऽपि तावत्तन्तूनां कारणत्वमावश्यकं अन्यथाऽतिप्रसङ्गादिति प्रागभावकल्पनमनर्थकमित्याह । त्रिचतुरेष्वेवेति ।

( दी० ) त्रिचतुरेष्वेव तन्तुपूत्पन्नेषु संयुक्तेषु च तत्पटोत्पत्तिप्रसङ्गः । तावत्तन्तुवृत्तेः पटस्य कतिपयविरहे कथमुत्पत्तिरिति चेन्न । कार्यानुत्पादस्य विनाकारणविरहमनभ्युपगमात्, सामग्रीसत्त्वेऽग्रिमक्षणे कार्यसत्त्वस्यावश्यकत्वाच्च ।

( गा० ) असमवायिकारणसमवधानाय संयुक्तेष्विति ।

न च चरमतन्तुकारणतयैवायमतिप्रसङ्गो वार्यतां किं सकलतन्तुहेतुतया ? एकप्रागभावहेतुतयैव च देशनियम उपपद्यतामिति वाच्यम् । प्रथमोत्पन्नतन्तुद्वयसंयोगोत्तरं यत्रापरसकलतन्तूनां चरमात्मकतत्संयोगानां वा एकदा उत्पादस्तत्र विनिगमनाविरहेण तावतां तन्तूनां तत्संयोगानां वा कारणताया आवश्यकत्वात् प्रागभावादिकल्पनामपेक्ष्य प्राथमिकस्य तन्तुद्वयस्य तत्संयोगस्य वा देशनियमाय हेतुताया एवोचितत्वात् ।

यद्यप्येवमपि यत्र क्रमेणैव सहस्रादितन्तूनां तत्संयोगानां वोत्पत्तिस्तत्र चरमव्यक्तिहेतुतया पूर्वं पटोत्पादवारणसम्भवे सर्वव्यक्तीनां हेतुत्वमनावश्यकमिति प्रागभावस्यैकहेतुताकल्पनमेव देशिकातिप्रसङ्गवारणायोचितम् । एवं यत्र युगपदेव सकलतन्तूनां संयोगानां वोत्पत्त्या पटोत्पादस्तत्रापि तावतां तन्तूनां संयोगानां

था विशिष्य कारणत्वं नावश्यकमिति तत्रापि प्रागभावेकारणत्वं प्रत्यूहम् । तथापि तत्र तावद्वृत्तिसंख्याविशेषहेतुतयैवातिप्रसङ्गवारणं सम्भवतीति किं प्रागभावेनेति पश्चाद्व्यक्तीभविष्यति ।

अथ यत्र क्रमेण तन्तूनां संयोगोत्पत्त्या सहस्रादितन्तुकपटोत्पत्तिस्तत्र कतिपयसंयोगानन्तरमेव तत्पटोत्पत्तिवारणाय तत्पटं प्रति तावतां संयोगानां हेतुत्वेऽपि तदानीं पटसामान्योत्पत्तिर्दुर्वारैव सामान्यसामग्र्या अक्षतत्वात् ।

न च तदानीं द्वितन्तुकादिपटोत्पाद इष्ट एवेति वाच्यम् । तथा सति द्रव्यवति द्रव्यान्तरानुत्पत्त्या सहस्रतन्तुकपटोत्पादानुपपत्तेः सहस्रतन्तुकपटपूर्वं द्वितन्तुकादिपटनाशकसामग्रीसमवधानानियमात् ।

न च तत्तत्पटव्यक्त्यतिरिक्तपटसामान्यासिद्धेस्तत्र च प्रसिद्धपटव्यक्तीनां सामग्रीविरहेण न पटसामान्यापत्तिस्सहस्रतन्तुकपटनाशे सत्युत्पत्स्यमानद्वितन्तुकादिखण्डपटस्य समवायिकारणासमवायिकारणयोः सत्त्वेऽपि सहस्रतन्तुकपटनाशरूपतन्निमित्तकारणासत्त्वेन तत्सामग्र्या महापटपूर्वमसत्त्वात् महापटनाशस्य प्रतिबन्धकसंसर्गाभावमुद्रया सामान्यहेतुतावत् खण्डपटादिव्यक्तिं प्रति विशिष्य तन्नाशत्वेनापि हेतुताया अपि पूर्वं तदापत्तिवारणानुरोधेन कल्पनीयत्वादिति वाच्यम् । तत्तद्व्यक्तिसामग्रीबाधेन सामान्यकार्यवारणसम्भवेन सामान्यकार्यकारणतोच्छेदापत्तेरिति चेत् ? यत्र सामान्यकार्यकारणभावकल्पनया अतिप्रसङ्गवारणसम्भवस्तत्र तत्तद्व्यक्तिसामग्रीविरहकूटस्य सामान्यकार्यानुत्पादप्रयोजकता नोपेयते गत्यन्तराविरहे च तादृशविशेषसामग्रीविरहकूटस्यापि तथात्वकल्पनं निराबाधमेव । अत एव स्मृतावुद्बोधकविशेषाणामनुगमासम्भवेन तत्तद्व्यक्तित्वेनैव हेतुत्वेऽपि तदभावात् स्मृतिसामान्यानुत्पादः । एवं चागत्योक्तस्थले तत्तत्पटसामग्रीविरहकूटस्यैव सामान्यकार्यानुत्पादप्रयोजकत्वमुपगन्तव्यमिति नातिप्रसङ्गः ।

अस्तु वा तत्तन्महापटसामग्रीपूर्वकालावच्छिन्नतत्तत्पटारम्भकसंयोगरूपप्रतिबन्धकाभाव एव पटसामान्यसामग्री पूर्वत्वं च प्रागभावाघटितमेव निरुक्तरूपं ग्राह्यमिति दिक् ।

तावत्तन्तुवृत्तेः पटस्य तावत्तन्तुविरहदशायामुत्पत्तौ तस्य तावत्त-

 

न्तुवृत्तित्वानुपपत्तिरित्यत एव न तदापत्तिरिति शङ्कते तावदिति। आपत्तौ बाधोऽननुगुण एवेत्याशयेनाह । कार्यानुत्पादस्येति । कार्य- विरहम् । कारणतावच्छेदकावच्छिन्नाभावम् । अनभ्युपगमे तदभ्युपगमे कार्यानुत्पादे कारणतावच्छेदकावच्छिन्नाभावाधीनत्व- नियमभङ्गापत्तिरिति भावः । उक्तापत्तिमूलीभूतव्याप्तिमाह । सामग्रीति ।

आपत्तिवारणं पुनः शङ्कते । तत्पटेति ।

(दी०) तत्पटप्रागभावाश्रययावत्तन्तुत्वेन तत्पटजनकत्वमिति चेत् ? अवच्छेदककोटौ प्रागभावस्य प्रवेशाप्रवेशयोः कारणत्वे प्रमाणाभावः । परस्परासंयुक्तेषु कतिपयतन्तुषु तत्पटो जायेत । न च तत्पटप्रागभावव्याप्ययावत्संयोगानामपि जनकत्वं कतिपयतन्तुसंयोगेष्वतीतेषु अनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात् । तत्पटप्रागभावमपेक्ष्य एव पटो लघीयान्, यावत्त्वानिरुक्तेश्च । एतेन त्रित्वाद्युत्पत्तिर्व्याख्यातेति ।

(गा०) तावत्तन्तूनामनेन रूपेण हेतुत्वे तावत्स्वेव देशिकातिप्रसङ्गवारणसम्भवेन प्रागभावहेतुताया अप्रामाणिकत्वेऽपि तादृशकारणतावच्छेदकतयैव प्रागभावः सिद्ध्य- तीत्यभिमानः । अवच्छेदकतया सिद्धस्य प्रतियोग्यजनकत्वे प्रतियोगिजनकाभावलक्षणः प्रागभावोऽसिद्ध एवेत्याशयेनाह । प्रवेशाप्रवेशयोरिति । यावत्त्वविशेषस्य तादृरूप्येणावच्छेदकत्वे प्रागभावाप्रवेशोऽपि सम्भवतीत्याशयेन प्रागभावप्रवेशोऽनास्था सूचिता । उक्तहेतुतयापि न कालिकातिप्रसङ्गवारणं सम्भवतीत्याह । परस्परेति । तावत्तन्तुषु । उत्पन्नेष्वपीत्यादिः । तत्पटो जायेतेति । उक्त- यावत्तन्तुरूपकारणसत्त्वादिति भावः ।

न चेति । विनष्टानामनागतानां च तन्त्वन्तरसंयोगानामुदासीन- तन्तुसंयोगानां च तत्पटपूर्वमसत्त्वेन तत्साधारणयावत्त्वस्य कारणतावच्छेदकता न सम्भवतीति व्याप्यान्तम् । व्याप्यत्वनिवेशोऽपि तत्पटारम्भकतन्तुमात्रसमवेतानामपि तत्पटानारम्भकसंयोगानां

वा विशिष्य कारणत्वं नावश्यकमिति तत्रापि प्रागभावकारणत्वं [illegible]मभ्यूह्यम् । तथापि तत्र तावद्वृत्तिसंख्याविशेषहेतुतयैवातिप्रसङ्गवारण सम्भवतीति किं प्रागभावेनेति पश्चाद्व्यक्तीभविष्यति ।

अथ यत्र क्रमेण तन्तूनां संयोगोत्पत्त्या सहस्रादितन्तुकपटोत्पत्तिस्तत्र कतिपयसंयोगानन्तरमेव तत्पटोत्पत्तिवारणाय तत्पटं प्रति तावतां संयोगानां हेतुत्वेऽपि तदानीं पटसामान्योत्पत्तिर्दुर्वारैव सामान्यसामग्र्या अक्षतत्वात् ।

न च तदानीं द्वितन्तुकादिपटोत्पाद इष्ट एवेति वाच्यम् । तथा सति द्रव्यवति द्रव्यान्तरानुत्पत्त्या सहस्रतन्तुकपटोत्पादानुपपत्तेः सहस्रतन्तुकपटपूर्वं द्वितन्तुकादिपटनाशकसामग्रीसमवधानानियमात् ।

न च तत्तत्पटव्यक्त्यतिरिक्तपटसामान्यासिद्धेस्तत्र च प्रसिद्धपटव्यक्तीनां सामग्रीविरहेण न पटसामान्यापत्तिः सहस्रतन्तुकपटनाशे सत्युत्पत्स्यमानद्वितन्तुकादिखण्डपटस्य समवायिकारणासमवायिकारणयोः सत्त्वेऽपि सहस्रतन्तुकपटनाशरूपतन्निमित्तकारणासत्त्वेन तत्सामग्र्या महापटपूर्वमसत्त्वात् महापटनाशस्य प्रतिबन्धकसंसर्गाभावमुद्रया सामान्यहेतुतावत् खण्डपटादिव्यक्तिं प्रति विशिष्य तत्पटनाशत्वेनापि हेतुताया अपि पूर्वं तदापत्तिवारणानुरोधेन कल्पनीयत्वादिति वाच्यम् । तत्तद्व्यक्तिसामग्रीबाधेन सामान्यकार्यवारणसम्भवेन सामान्यकार्यकारणतोच्छेदापत्तेरिति चेत् ? यत्र सामान्यकार्यकारणभावकल्पनया अतिप्रसङ्गवारणसम्भवस्तत्र तत्तद्व्यक्तिसामग्रीविरहकूटस्य सामान्यकार्यानुत्पादप्रयोजकता नोपेयते गत्यन्तरविरहे च तादृशविशेषसामग्रीविरहकूटस्यापि तथात्वकल्पनं निराबाधमेव । अत एव स्मृतावुद्बोधकविशेषाणामनुगमासम्भवेन तत्तद्व्यक्तित्वेनैव हेतुत्वेऽपि तदभावात् स्मृतिसामान्यानुत्पादः । एवं चागत्योक्तस्थले तत्तत्पटसामग्रीविरहकूटस्यैव सामान्यकार्यानुत्पादप्रयोजकत्वमुपगन्तव्यमिति नातिप्रसङ्गः ।

अस्तु वा तत्तन्महापटसामग्रीपूर्वकालावच्छिन्नतत्तत्पटारम्भकसंयोगरूपप्रतिबन्धकाभाव एव पटसामान्यसामग्री पूर्वत्वं च प्रागभावाघटितमेव निरुक्तरूपं ग्राह्यमिति दिक् ।

तावत्तन्तुवृत्तेः पटस्य तावत्तन्तुविरहदशायामुत्पत्तौ तस्य तावत्त-

न्तुवृत्तित्वानुपपत्तिरित्यत एव न तदापत्तिरिति शङ्कते किं तावदिति। आपत्तौ बाधोऽनुगुण एवेत्याशयेनाह । कार्यानुत्पादस्येति । कारण[illegible] विरहम् । कारणतावच्छेदकावच्छिन्नाभावम् । अनभ्युपगमे[illegible] तदभ्युपगमे कार्यानुत्पादे कारणतावच्छेदकावच्छिन्नाभावाधीनत्व-नियमभङ्गापत्तिरिति भावः । उक्तापत्तिमूलीभूतव्याप्तिमाह । सामग्रीति ।

आपत्तिवारणं पुनः शङ्कते । तत्पटेति ।

( दी० ) तत्पटप्रागभावाश्रययावत्तन्तुत्वेन तत्पटजनकत्वमिति चेत् ? अवच्छेदककोटौ प्रागभावस्य प्रवेशाप्रवेशयोः कारणत्वे प्रमाणाभावः । परस्परासंयुक्तेषु कतिपयतन्तुषु तत्पटो जायेत । न च तत्पटप्रागभावव्याप्ययावत्संयोगानामपि जनकत्वं कतिपयतन्तुसंयोगेष्वतीतेषु अनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात् । तत्पटप्रागभावमपेक्ष्य स एव पटो लघीयान्, यावत्त्वानिरुक्तेश्च । एतेन त्रित्वाद्युत्पत्तिर्व्याख्यातेति ।

( गा० ) तावत्तन्तूनामनेन रूपेण हेतुत्वे तावतैव दैशिकातिप्रसङ्गवारणसम्भवेन प्रागभावहेतुताया अप्रामाणिकत्वेऽपि तादृशकारणतावच्छेदकतयैव प्रागभावः सेत्स्यतीत्यभिमानः । अवच्छेदकतया सिद्धस्य प्रतियोग्यजनकत्वे प्रतियोगिजनकाभावलक्षणः प्रागभावोऽसिद्ध एवेत्याशयेनाह । प्रवेशाप्रवेशयोरिति । यावत्त्वविशेषस्य तादृरूप्येणावच्छेदकत्वे प्रागभावाप्रवेशोऽपि सम्भवतीत्याशयेन प्रागभावप्रवेशेऽनास्था सूचिता । उक्तहेतुतयापि न कालिकातिप्रसङ्गवारणं सम्भवतीत्याह । परस्परेति । तावत्तन्तुषु उत्पन्नेष्वपीत्यादिः । तत्पटो जायेतेति । उक्तयावत्तन्तुरूपकारणसत्त्वादिति भावः ।

न चेति । विनष्टानामनागतानां च तन्त्वन्तरसंयोगानामुदासीनतन्तुसंयोगानां च तत्पटपूर्वमसत्त्वेन तत्साधारणयावत्त्वस्य कारणतावच्छेदकता न सम्भवतीति व्याप्यान्तम् । व्याप्यत्वनिवेशोऽपि तत्पटारम्भकतन्तुमात्रसमवेतानामपि तत्पटानारम्भकसंयोगानां

क्तिविगमे तत्पूर्वं चक्षुःसंयोगादिव्यक्त्यन्तरात्तन्निर्विकल्पकापत्तिवारणाय कल्पनीयहेतुना कृतचक्षुःसंयोगादिव्यक्तिविरहादेव न चतुर्थक्षणे तदुत्पादसम्भव इति प्राथमिकचक्षुःसंयोगादिव्यक्तीनां तावत्पर्यन्तस्थायित्वालाभाय, धारावहनानुसरणं तत्तद्विशेषणज्ञानव्यक्तिविनाशेन तत्तद्विशिष्टबुद्धिव्यक्तीनां चतुर्थक्षणे नापत्तिसम्भव इत्यतो निर्विकल्पकानुसरणम्। कार्यस्य प्रतिबन्धकतया तृतीयक्षणे उत्पादवारणसम्भवात् चतुर्थक्षणानुसरणम्।

प्रथमातिप्रसङ्गवारकमाह। एकावच्छेदादिनेति। तृतीयार्थो वैशिष्ट्यं तथा च तत्तत्कार्यावच्छेदकावच्छिन्नत्वादिविशिष्टतत्कार्याभावस्येत्यर्थः। आदिपदात्सम्बन्धविशेषावच्छिन्नत्वपरिग्रहः। उत्पन्नस्य संयोगादेरन्यावच्छेदेनाभावसत्त्वेऽपि तदवच्छेदकावच्छिन्नत्वविशिष्टतदभावासत्त्वादतिप्रसङ्गवारणासम्भवो बोध्यः। द्वितीयातिप्रसङ्गवारकमाह। उत्तरज्ञानाभावस्येति। अत्र तज्ज्ञानध्वंसाभाव एव तात्पर्यं तत्र चैकज्ञाननाशेऽपि पञ्चमादिक्षणे प्राथमिकनिर्विकल्पकापत्तिवारणाय उत्तरज्ञानस्य तज्ज्ञानध्वंसविशिष्टज्ञानत्वेनैव प्रतिबन्धकतायाः वक्तव्यत्वात् तदपेक्षया तज्ज्ञानध्वंसाभावस्य लघुत्वात्। चकारेण विशिष्टस्य कार्याभावस्यापि निर्विकल्पकरूपस्याव्यवृत्तिकार्यहेतुनासमुच्चयः। तेन सामग्न्यानन्तर्यस्य कार्याधिकरणत्वमात्रनियतत्वेऽपि न तृतीयक्षणे तदापत्तिः।

लाघवादिति। कारणतावच्छेदकस्य तत्प्रागभावत्वस्य एकावच्छेदकावच्छिन्नत्वविशिष्टतदत्यन्ताभावत्वापेक्षया शरीरलाघवात् कारणताद्वयकल्पनापेक्षया एककारणताकल्पने च लाघवादित्यर्थः। प्रागभावस्य प्रमाणान्तरासिद्धत्वे च प्रागभावरूपातिरिक्तधर्मिणस्तत्रानन्यथासिद्धत्वनियतपूर्ववृत्तित्वयोश्च कल्पनामपेक्ष्य संयोगादौ गुरोरपि नियतपूर्ववर्त्तित्वेन क्लृप्तस्य तदीयावच्छेदकावच्छिन्नत्वादिविशिष्टतदभावस्यानन्यथासिद्धत्वमात्रकल्पने, निर्विकल्पकस्थले नियतपूर्ववर्त्तितया क्लृप्तयोस्तादृशकार्याभावोत्तरज्ञानाभावयोरनन्यथासिद्धत्वमात्रकल्पने च लाघवमिति प्रत्यक्षतः प्रागभावसिद्धिः प्रागभिहिता।

ननु संयोगादेरवच्छेदकतानियमाय तत्तदवच्छेदकावच्छिन्नसंयोगं प्रति तत्तदवच्छेदकावच्छिन्नत्वविशिष्टतदभावस्य हेतुत्वमा-

वश्यकमित्यत आह । स्वभावाधीनत्वाच्चेति । इतरानधीनत्वरूपं स्वभावाधीनत्वं प्रागभावप्रादेशिकत्वविशेषणं प्रागभावस्य देशविशेषावच्छिन्नत्वं एव किं नियामकमित्यनुयोगसमाधानाय प्रदर्शितम्। अजन्यस्याधिकरणत्वमिवावच्छेदकत्वमपीतरानधीनमित्यभिप्रायः । प्रदेशनियम. । अवच्छेदकतानियमः । एकैकसंयोगावच्छेदकनाना प्रदेशाभिन्नेदस्य उक्तरूपेणात्यन्ताभावहेतुतामपेक्ष्य समानावच्छेदकत्वसामानाधिकरण्यप्रत्यासत्त्या प्रागभावस्य हेतुत्वमेवोचितमिति तदवच्छेदकत्वमेव प्रतियोग्यवच्छेदकत्वनियामकमिति समुदायार्थः।

न च कारणप्रादेशिकत्वस्य कार्यप्रादेशिकत्वनियामकत्वेऽसमवायिकारणकपालद्वयसंयोगस्य प्रादेशिकत्वाद् घटस्य प्रादेशिकत्वप्रसङ्ग इति वाच्यम् । यादृशकारणतावच्छेदकतात्यत्यालंघिघटिता तत्कारणप्रादेशिकत्वस्यैव कार्यप्रादेशिकत्वनियामकत्वात् कपालद्वयसंयोगस्य समवायमात्रघटितेति न दोषः। अत्र अत्यन्ताभावप्रत्यय इव विलक्षणप्रागभावप्रत्यय एव सिद्ध इत्यस्वरसबीजम् । एव निर्विकल्पकं प्रति तत्तद्व्यक्तिप्रागभावत्वेन नानाकारणताकल्पनमपेक्ष्य तत्र विशेषणज्ञानत्वेनैकप्रतिबन्धकत्वकल्पनमेवोचित प्रतिबध्यतावच्छेदक च निष्प्रकारकज्ञानत्वं संसर्गानवच्छिन्नविषयताशालिज्ञानत्व वेत्यन्यदेतत् ।

न च संयोगादीनामवच्छेदकत्वनियमाय प्रागभावस्य समानावच्छेदकत्वप्रत्यासत्त्या हेतुत्वमेवोचितमिति प्रागभावसिद्धिः,एकैकसंयोगस्यैवानेकावयवावच्छिन्नतया एकैकव्यक्तिं प्रति अनेकेषामवच्छेदकानां तत्तद्व्यक्तित्वेन हेतुत्वे महागौरवादिति वाच्यम् । तावदवच्छेदकवृत्तित्वस्याविशेषहेतुतयैवावच्छेदकनियमोपपत्तेरित्यादिकमपि बोध्यम् ।

आश्रयाणां क्रमोत्पादस्थले कतिपयतन्तुप्रत्यक्षेष्वेव पटादेर्वारणाय तावत्तन्त्वादिव्यक्तीनां तत्संयोगादिव्यक्तीनां वा विशिष्य कारणत्वकल्पनमावश्यकमित्युक्त्वा पटोत्पादनियामकतया प्रागभावसिद्धिः पूर्वं निराकृता तावता युगपदुत्पन्ननानाश्रयसमवेतकार्योत्पादनियामकतया प्रागभावसिद्धिर्न निराकर्तुं शक्यते इत्याशयेन प्रागभाव व्यवस्थापयता मतमुपन्यस्यति । अन्य त्विति ।

(दी०) अन्ये तु 'सर्वत्र तत्तत्संख्याविशेषाणां विशिष्य हेतुत्वोपगमेनैव तत्तद्द्रव्योत्पादनियमसम्भवेऽपि युगपदुत्पन्नेषु नित्येषु च विलक्षणोत्पत्तिनियामकत्वेन प्रागभावः कल्प्यते इत्याहुः।

(गा०) तत्र घटादिस्थलमुपेक्ष्य संख्यास्थलपर्यन्तानुधावनबीजं प्रथमतो दर्शयति। सर्वत्रेति। सर्वत्र। युगपदुत्पन्नाश्रयकद्रव्यस्थले। संख्याविशेषाणाम्। स्वसमनियतसहस्रत्वादिसंख्यानाम्। हेतुत्वोपगमेनेति। कारणत्वस्य समवायिकारणतावच्छेदकत्वस्य वा उपगमेनेत्यर्थः।

एतेन समनियतसंख्याव्यक्तीनां कारणत्वं कल्प्यते इत्यत्र विनिगमनाविरहात् प्रागभावासिद्धिः गगनादौ असमवायिविलक्षणसंयोगविरहेण द्रव्यारम्भकतावच्छेदकस्पर्शवत्त्वादिविरहेण च द्रव्योत्पादापत्तिविरहेण तत्साधारणसंख्याहेतुतयापि घटादेर्देशनियम उपपद्यत इति निरस्तम्। कारणतावच्छेदकत्वकल्पे व्यापकसंख्याया अन्यथासिद्धिनिरूपकत्वेन विनिगमनाविरहानवकाशात्।

(१) (क्रमिकनानावस्तुसमवेतकार्यसमवायिनामसमवायिनां वा तत्तद्व्यक्तित्वेन हेतुतायाः प्राग् व्यवस्थापिततया देशानियामकत्वेऽपि अतथाभूतवस्तुसमवेतकार्योत्पत्तेर्देशानियामकतया प्रागभावसिद्धिर्निष्प्रत्यूहेत्यन्येषां मतमुपन्यस्यति। अन्येति। क्रमोत्पन्नद्रव्यस्थले नैतदुक्तावकाश इति विशेषं प्रथमतो दर्शयति। सर्वत्रेति। तत्तत्संख्याविशेषाणामिति। तत्तत्पटारम्भकतन्तुसमवेतसहस्रादिसंख्यानामित्यर्थः)।

न चानेकाश्रितसंख्याया अपेक्षाबुद्ध्यधीनतया यत्र द्रव्योत्पादपूर्वं तदवयवेषु संख्या न जाता तत्र का गतिरिति वाच्यम्। न्यायमते ईश्वरापेक्षाबुद्धिजन्यसंख्यायाः सर्वत्र सम्भवात्। मीमांसकमते चापेक्षाबुद्धेः संख्याव्यञ्जकतया तामनपेक्ष्यैव संख्योत्पत्तेर्द्रव्योत्पत्तिपूर्वं तदाश्रयसंख्याविशेषविरहस्य दुर्घटत्वात्। न चारम्भस्वरूपयोग्यगगनादिसाधारणव्यापकसंख्यानामपि हेतुत्वं विनिगमनाविरहेणापद्येतेति प्रागभावकल्पनमेवोचितमिति वाच्यम्। संख्याविशेषाणां

(१) ( ) एतदन्तर्गतः पाठः पुस्तकान्तरे नास्ति।

समवायिकारणतावच्छेदकताया एवोपगमात्, गगनादिसाधारण-संख्यानां व्यापकधर्मत्वेनान्यथासिद्धिनिरूपकतया विनिगमनाविरहानवकाशात् ।

न च व्यासज्यवृत्तिसंख्याविशेषावच्छिन्नानां प्रत्येकं न क्वचिदपि समवायिनि प्रत्यासन्नतेति कथं तदवच्छिन्नस्य कारणत्वं देशनियामकमिति वाच्यम् । तादृशधर्मस्योपलक्षणतया कारणतावच्छेदकत्वात् प्रत्येकं तद्विशिष्टनिरूपिततादात्म्यस्य सत्त्वेऽपि तदुपलक्षिततादात्म्यस्याक्षततया तस्यैव देशनियामकत्वासम्भवात् ।

यत्तु एते दश इत्यादिप्रतीतेर्व्यवहारस्य चोपपत्तये दशत्वादिपर्याप्त्याश्रय प्रत्येकमपि तद्विशिष्टनिरूपिततादात्म्यमवश्यमेवोपगन्तव्यमिति संख्याविशेषस्य विशेषणतयाप्यवच्छेदकत्वसम्भव । एवं च क्रमोत्पन्नवृत्तिकार्यस्थले कतिपयसमवाय्यनुत्पादसमये आपत्तिवारणमपोदशाकारणबलात्सम्भवतीति तत्र प्रत्येकस्मिन् संख्याविशेषविशिष्टभेदशालिनि कार्यद्रव्यपर्याप्त्यनुपपत्तेः ।

(१)(युगपदिति । युगपदुत्पन्नेषु च समवेतं यद्वित्वादिकं तस्योत्पाददेशनियमार्थमित्यर्थः । यस्याः संख्याया एकं द्वयं वा समवायिद्रव्यमासीत् अनन्तरं च युगपदेव समवायिनामुत्पत्तिः तेषामनुत्पाददशायामेव तत्तत्सख्योत्पादवारणाय चरमोत्पन्नसमवायिनां तत्र विशिष्य हेतुताया आवश्यकत्वात् देशनियमायातिरिक्तप्रागभावतद्धेतुत्वकल्पनापेक्षया पूर्वावस्थितस्यैकस्योभयस्य वा समवायिनो हेतुत्वे लाघवात् तत्प्रागभावासिद्धिरिति । तादृशसंख्यातिरिक्तत्रित्वादिसंख्याया एवोपलक्षणमेतत् । तेन यत्र क्रमश एव सर्वसमवायिनामुत्पत्तिस्तत्समवेतचतुष्ट्वादौ कालनियमाय चरमसमवायिना देशनियमाय च पूर्वोत्पन्नत्रिचतुरादिसमवायिनां हेतुतामपेक्ष्य प्रागभावस्य तद्धेतुताकल्पने गौरवाभावात् प्रागभावसिद्धेर्निष्प्रत्यूहतया यत्र वा युगपदेव त्रिचतुरादिसमवायिनां प्रागुत्पत्तिरनन्तरं चापरस्य तत्रापि प्रागुत्पन्नानां कारणतापेक्षया प्रागभावस्य तद्धेतुताकल्पने गौरवाभावात् तत्सिद्धेरावश्यकतया तत्स्थलेऽनुपदर्शनान्न्यूनताया अनवकाशः । क्रमोत्पन्नेषु यद्वित्वादिकं तत्र समवायिनामसमवायिकारणानां वा पूर्वोक्तयुक्त्या विशिष्य हेतुताया आवश्यकत्वात्तत एव तेषां देशनियमोपपत्तिसम्भवात् युगपदु-

न्यसोऽपीत्युक्तम् । स्वपूर्ववर्त्तिद्रव्यमन्तर्भाव्य युगपदुत्पन्नानि यानि द्व्यादिद्रव्याणि स्वोत्तरोत्पन्नद्रव्यान्तरमनन्तर्भाव्य प्रकृतसंख्यामुत्पादयन्ति तदन्यद्व्यादिद्रव्यान्यूनवृत्तिसंख्याया नित्यत्रयसमवेतत्रित्वादेश्च उत्पाद्देशनियमार्येत्यर्थः ।

एतेन यत्र प्रथमत एकं द्वयं वा द्रव्यमासीदनन्तरं च द्रव्यत्रयं युगपदुत्पन्नं तावत्तु चतुष्टं पञ्चत्वं वा जातं तत्र तेषां त्रयाणां विशिष्य कारणतया आवश्यकत्वात्तत्र प्रागभावासिद्धावपि न क्षतिः यत्र पूर्वावस्थितद्रव्यमिव स्वोत्तरोत्पन्नद्रव्यान्तरं चान्तर्भाव्य युगपदुत्पन्नानि त्रिचतुराणि संख्यामुत्पादयन्ति, तत्र चरमद्रव्यहेतुतयैव कालनियमेऽपि देशनियामकतया प्रागभावसिद्धेरावश्यकतया तादृशस्थलसङ्ग्रहाय स्वोत्तरद्रव्यान्तरानन्तर्भावो भेदप्रतियोगिकोटौ वा युक्तः । त्रित्वस्थले क्लृप्तनियतपूर्ववर्तिताकसमवायित्रयानन्यथासिद्धत्वकल्पनैवातिरिक्तप्रागभावरूपधर्मितन्नियतपूर्ववर्तिताऽनन्यथासिद्धत्वकल्पनापेक्षया लघीयसीति त्रित्वाद्यनुसरणम् ।

न च त्रित्वस्थले समवायिनांस्तदेकत्वयोश्च विशिष्य कारणत्वं विनिगमनाविरहात्कल्पनीयमिति तत्रापि प्रागभावकल्पने लाघवमिति वाच्यम् । त्रित्वादेरसमवायिकारणानुपगमे एकत्वस्य सामान्यरूपेण त्रित्वादावहेतुतया समवायिन· क्लृप्तसामान्यरूपावच्छिन्नहेतुताकस्यैव विशिष्य हेतुतायां विनिगमकत्वात् त्रित्वस्थले कल्पनीयलाभ्येऽपि विनिगमनाविरहात् प्रागभावसिद्धिः चतुष्टादिस्थले तु प्रागभावहेतुतापक्ष एव लाघवं बोध्यम् ।

न च तत्तदपेक्षाबुद्धिव्यक्तेर्विषयतासम्बन्धेनैतत्त्रित्वादिव्यक्तिहेतुतयैव तदुत्पादनियमसम्भवे किं प्रागभावकल्पनयेति वाच्यम् । द्रव्यान्तरमन्तर्भाव्य चतुष्टादिजनकबुद्धेरपि न्यूनवृत्तित्रित्वादिसंख्याजनकतया अतिरिक्तायास्तद्बुद्धिविषयतायास्तज्जन्यत्रित्वादिव्यक्त्युत्पादनियामकत्वासम्भवान्नानापुरुषीयापेक्षाबुद्धिभिरेकदैव संख्याजनने तत्रापेक्षाबुद्धिव्यक्तेस्तत्संख्याव्यक्तिहेतुत्वे विनिगमनाविरहान्नानाव्यक्तीनामेव तत्तद्व्यक्तित्वेन हेतुतायाः कल्पनीयतया तद्धेतुतया एकैकप्रागभावकल्पनायाः एव उचितत्वाच्च इदृशयुक्त्या सिद्धस्य वस्तुनो ऽभावत्वे सप्रतियोगिकत्वे विनाशित्वे वा मानाभाव

(१) ()एतदन्तर्गतः पाठः पुस्तकान्तरे नास्ति ।

इत्यस्वरससूचनायाहुरिति ।

सामान्यप्रत्यासत्तौ युक्त्यन्तरमुपन्यस्यति । यत्त्विति । ज्ञानेच्छेति । इच्छां प्रति ज्ञानस्य कृतिं प्रति इच्छायाश्च कारणत्वग्रह इत्यर्थः । तदुपस्थितिमिति । तत्कार्योपधायकज्ञानेच्छाऽव्यक्त्युपस्थितिमित्यर्थः । विनेति । सम्भवतीति शेषः । अन्वयसहचारनिरूपककारणव्यक्तिग्रहं विना तद्घटितान्वयव्यतिरेकग्रहस्य ज्ञानसत्त्वे तदधिकरणे तदग्रिमक्षणे इच्छा न तेन विनेत्याकारकस्यासम्भवादिति भावः । सामान्यप्रत्यासत्तिं विना च नेच्छाद्युपधायकज्ञानादिव्यक्तिप्रत्यक्षमिति दर्शयितुमिच्छाद्युत्पत्तिकाले तल्लौकिकप्रत्यक्षं निराकुरुते । न चेच्छेति ।

यत्र त्रित्वाश्रयस्य क्रमेणोत्पादस्तत्र कतिपयाश्रयोत्पत्त्यनन्तरमेव तत्तत्त्रित्वादेरुत्पादवारणाय तदाश्रयव्यक्तीनां समवायिकारणानामसमवायिकारणानां तत्तदेकत्वव्यक्तीनां वा कारणताकल्पनमावश्यकमिति तत्कारणतयैव देशनियमोपपत्तिरन्यत्र तादृशाकारणविरहादित्यतो युगपदुत्पन्नेषु नित्येषु चेति । तत्रोक्तातिप्रसङ्गविरहेणाश्रयादिव्यक्तीनां विशिष्य कारणताया अनावश्यकतया देशनियामकैकप्रागभावैकैकतत्कारणताकल्पनस्यैवोचितत्वादिति भावः ।

यद्यपि क्रमोत्पन्नेऽपि रूपादिव्यक्तीनां रूपादिकारणतापेक्षया चरमोत्पन्नव्यक्तेः कालनियमाय एकैकप्रागभावव्यक्तेश्च देशनियमाय कारणताकल्पने न गौरवं तथापि यत्र एका आश्रयव्यक्तिः प्रथममुत्पन्नाऽनन्तरं च युगपदपरसकलाश्रयोत्पत्तिरीदृशक्रमोत्पादस्थले चरमोत्पन्नसकलव्यक्तीनां विनिगमनाविरहेण विशिष्य कारणताया आवश्यकत्वादतिरिक्तप्रागभावहेतुतामपेक्ष्य प्रथमोत्पन्नव्यक्तेरेव विशिष्य हेतुतया देशनियमोपपादनमुचितमित्याशयेनेदृशक्रमोत्पादव्यावर्त्तनाय युगपदित्युक्तम् । द्वित्वस्थले क्लृप्तस्याश्रयद्वयस्यानन्यथासिद्धत्वमात्रकल्पनामपेक्ष्यातिरिक्तस्य प्रागभावस्य तत्रानन्यथासिद्धत्वानियतपूर्ववृत्तित्वयोश्च कल्पने गौरवमिति द्वित्वोपेक्षा । त्रित्वस्थले व्यक्तित्रयस्यानन्यथासिद्धत्वकल्पने एकस्य प्रागभावस्य तत्रानन्यथासिद्धत्वनियतपूर्ववृत्तित्वयोश्च कल्पनं यद्यपि तुल्यं तथापि विनिगमनाविरहेणापि प्राग-

भावसिद्धिदुर्वारैव चतुष्ट्वादिस्थले च प्रागभाववादिमते लाघवमित्याशयः। उत्पादनियामकत्वेन । उत्पादस्य देशिकनियमनिर्वाहकत्वेन। अन्ये त्वाहुरित्यस्वरससूचनाय, स चैतादृशयुक्त्या सिद्धस्य पदार्थस्याभावत्वे सप्रतियोगिकत्वे विनाशित्वे च मानाभावे ज्ञेयः।

मिश्रमतं दूषयितुमुपन्यस्यति। यत्त्विति।

( दी० ) यत्तु ज्ञानेच्छाकृतीनां कार्यकारणभावग्रहो न तदुपस्थितिं विनेति, न, चेच्छाकृतिकाले ज्ञानेच्छासाक्षात्कारौ, योग्यविशेषगुणयौगपद्यस्यात्मनि निषेधात् अतो ज्ञानाद्यन्तरसाक्षात्कार एव ज्ञानत्वादिनेच्छाजनकज्ञानादिकं गृह्णातीत्यभ्युपेयमिति। तन्न।

( गा० ) तदुपस्थितिं विना। इच्छोपधायकज्ञानकृत्युपधायकेच्छाव्यक्तीनामुपस्थितिं विना। ज्ञानसत्त्वे तदुत्तरक्षणे इच्छा ज्ञानं विना नेत्यन्वयव्यतिरेकग्रहस्य कार्यकारणभावग्राहकतया तत्र च फलोपधायकव्यक्तिमात्रीयैवान्वयांशस्य ग्राह्यतया तदुपस्थितेरपेक्षणीयत्वादिति भावः।

न चेच्छाकृतिकाले ज्ञानेच्छासाक्षात्काराविति। इच्छोत्पादकाले तज्जनकज्ञानस्य कृत्युत्पादकाले च तज्जनकेच्छायाः साक्षात्कारो न सम्भवतीत्यर्थः। योग्यविशेषगुणेति। एकयोग्यविशेषगुणोत्पत्तिक्षणे तद्वत्यात्मनि योग्यविशेषगुणान्तरानुत्पादनियमादित्यर्थः। अदृष्टसंस्कारोत्पादकाले ज्ञानादेर्नाशोत्पादकाले च अदृष्टादेरुत्पादमादाय व्यभिचारवारणायोभयत्र योग्यतानिवेशः। योग्यत्वं च न लौकिकसाक्षात्कारविषयत्वं तथा सति निर्विकल्पकेन समं विशेषगुणान्तरयौगपद्यानिराकरणासम्भवात् किं तु लौकिकसाक्षात्कारविषयसंस्कारत्वान्यगुणत्वव्याप्यजातिमत्त्वं तथा चात्मनि संयोगाद्धित्वादेर्युगपदुत्पादाद्व्यभिचार इति विशेषगुणोपादानम्। चक्षुरादिना वेगे गृह्यमाणायाः संस्कारत्वजातेर्भावनायां सत्त्वात्तद्व्यावृत्तिर्न स्यादिति संस्कारत्वान्यत्वनिवेशनम्।

न च लौकिकमानसविषयजातिमत्त्वमेव निवेश्यतां संयोगत्वादेश्चाक्षुषादिविषयत्वेऽपि लौकिकमानसाविषयत्वान्नोक्तव्यभिचार इति

किं विशेषगुणविशेषणेनेति वाच्यम् । मनोयोग्यजातिमत्त्वनिवेशे आत्मैकत्वप्रत्यक्षत्वमते संख्यात्वस्य मनोयोग्यतया तद्वतां द्वित्वादीनामात्मनि युगपदुत्पादेन विशेषगुणान्तर्भावं विना व्यभिचारानुद्धारात् ।

न च योग्यजातिमत्त्वनिवेशे जीवनयोनिकृतेरपि यत्नत्वादिरूपयोग्यजातिमत्त्वाज्ज्ञानादिना समं तस्य युगपदुत्पादानुपपत्तिरिति वाच्यम् । गुणत्वव्याप्यत्वस्थाने जीवनयोनिकृत्यवृत्तित्वस्यैव जातिविशेषणतया निवेश्यत्वात् प्रवृत्तित्वादिजातिमादायैव तदितरकृतेर्योग्यतानिर्वाहात् । विशेषगुणत्वं चात्रानेकावृत्तित्वमेव आत्मपरिमाणादेरुत्पादविरहेण तत्साधारण्यस्य व्यभिचाराप्रसञ्जकत्वात् । रूपरसादेः शब्दादेश्चैकत्र युगपदुत्पादादात्मनीति । योग्यत्वस्य मनोयोग्यगुणत्वव्याप्यजातिमत्त्वरूपत्वे तदनुपादेयमेव । अतः । उक्तकार्यकारणभावग्रहानुरोधात् । ज्ञानाद्यन्तरेनि । इच्छाद्यनुपधायकज्ञानादीत्यर्थः । ज्ञानत्वादिनेति । सामान्यप्रत्यासत्त्येति शेषः । इच्छादिजनकम् । इच्छाद्युपधायकम् । गृह्णाति । अवगाहते ।

( दी० ) पौर्वापर्यापरिचये धर्मिस्वरूपग्रहेऽपि कारणत्वग्रहासम्भवात् । इच्छाकृत्यनुत्पादस्थले ज्ञानेच्छयोः साक्षात्कारात् ज्ञानेच्छासामान्यव्यतिरेकनियतेच्छाकृतिव्यतिरेकग्रहे मनसा कार्यकारणभावग्रहस्यावश्याभ्युपेयत्वात् । कृत्यनुत्पादस्थले ज्ञानेच्छयोः कृत्यनन्तरमिच्छाकृत्योः समूहालम्बने साक्षात्कारस्य स्मरणेन च ज्ञानानुमानस्य च सम्भवात्, विशत्यङ्गुल्यवच्छेदेन युगपद्विंशतिप्रयत्नोत्पादवदिच्छाकृतिकाले ज्ञानोत्पादस्याविरोधाच्च ।

( गा० ) पौर्वापर्यापरिचय इति । तत्तज्ज्ञानतत्तदिच्छाव्यक्त्योरव्यवहितपूर्वापरीभावाग्रह इत्यर्थः । तद्ग्रहश्च न सामान्यलक्षणयापि तत्तद्व्यक्तिनाशाधिकरणसमयध्वंसानधिकरणत्वरूपाव्यवधानशरीरे तत्तद्व्यक्तित्वेन कारणव्यक्तीनां निवेशावश्यकतया तत्तद्रूपेण व्यक्तीनां ग्रहस्य सामान्यलक्षणयाप्यनिर्वाहादिति भावः ।

कारणत्वग्रहासम्भवादित्यस्यान्वयांशग्रहस्य कारणताग्राहकत्वोपगम इत्यादिः। इच्छाकृत्यनुत्पादस्थले ज्ञानेच्छयोः साक्षात्कारापत्तेरिति यथासंख्यमन्वयो बोध्यः। एतच्च ज्ञानत्वेच्छात्वावच्छिन्नाभावग्रहे हेतुः। व्यतिरेके। व्यतिरेकग्रहस्थले। नियतेच्छाकृतिव्यतिरेकग्रहे। इच्छाकृतिव्यतिरेकस्य नियमतो ग्रहे सति।

एतेन व्यभिचारग्रहाभावः सम्पादितः। मनसेति। अन्वयांशग्रहनिरपेक्षेणेत्यादिः। कार्यकारणभावग्रहस्य। उपनीतभानरूपस्य। ज्ञानेच्छयोरेकदा लौकिकप्रत्यक्षासम्भवेन तत्कार्यकारणभावस्यापि तदसम्भवात्। तथा चालं सामान्यप्रत्यासत्त्येति भावः।

अभ्युपेत्य। फलोपधायकज्ञानेच्छयोरपि। प्रत्यक्षमुपपादयति। कृत्यनुत्पादस्थल इति। ज्ञानेच्छयोः समूहालम्बनसाक्षात्कारस्येत्यनेनान्वयः। विनश्यदवस्थस्यापि विषयस्य हेतुत्वोपगमादिच्छोत्पत्त्यनन्तरक्षणे ज्ञानस्य विनाशेऽपि न क्षतिरित्याशयः। तादृशश्च साक्षात्कारो जनकज्ञानस्य ज्ञानत्वावगाहित्वे ज्ञानत्वविशिष्टधीरूपः तस्य तद्विषयकत्वे ज्ञानत्वांशे निर्विकल्पकरूपः, तदुत्तरमेव चोपनीतभानरूपो ज्ञानत्वविशिष्टतज्ज्ञानग्रह इति बोध्यम्। एवमग्रेऽपि। विषयस्य कार्यसहभावेन हेतुत्वेऽपि इच्छोपधायकज्ञानग्रहमुपपादयति। स्मरणेनेति। इच्छाकालोत्पन्नसंस्काराधीनकालान्तरीणस्मरणरूपकार्यलिङ्गेनेत्यर्थः। अनुमानं चाहं पूर्वकालीनैतद्विषयकानुभववान् एतद्विषयकवर्तमानस्मृतिमत्त्वादित्याकारकं, व्याप्तिः सामान्यतो ग्राह्या। नानावयवेषु युगपन्नानाजातीयचेष्टास्थले तन्नियामकनानाजातीयनानाकृतीनां युगपदुत्पादस्य नानावैभववादे मणिकारादिभिः स्वीकारात्तद्दृष्टान्तेन ज्ञानेच्छादियौगपद्यमभ्युपेत्य। इच्छाद्युत्पादकाले तज्जनकज्ञानेच्छासाक्षात्कारमुपपादयति। विंशतीति।

अथ विंशत्यङ्गुल्यवच्छिन्नादेकस्मादपि प्रयत्नाद्विंशत्यङ्गुलीषु विंशतेश्चेष्टानामुत्पादसम्भवात्किमर्थं कृतिभेदोपगमः ?

न चैकजातीयचेष्टास्थले प्रयत्नैक्यसम्भवेऽपि यत्र विंशत्यङ्गुलीषु मिथो विलक्षणविंशतिचेष्टोत्पत्तिर्युगपदेव तत्र प्रयत्नवैजात्यस्यावश्यकतया प्रयत्नभेद आवश्यकः, एकस्य प्रयत्नस्य नानाजातीयचेष्टोत्पादकत्वेन सर्वाङ्गुलीषु प्रत्येकं सर्वजातीयचेष्टोत्पादप्रसङ्गादिति वाच्यम्। प्रयत्ने वैजात्यस्वीकारेऽपि एकस्यां यज्जातीयः

प्रयत्न, उत्पद्यते अन्याङ्गुल्यां तदनुत्पादनियामकस्य दुर्वचतया सर्वत्र सर्वजातीयचेष्टोत्पादस्य दुर्वारत्वात् ।

न च चिकीर्षावैजात्यात् कृतिवैजात्यनियमः कृतिवच्चिकीर्षाणामपि योगपद्यस्वीकारादिति वाच्यम् । विजातीयनानाकृतिस्थले तज्जनकनानाचिकीर्षाणां परस्परविलक्षणानां स्वीकारेऽपि तासां प्र। त्यासत्तः सर्वाङ्गुलीषु तुल्यतया एकजातीयप्रयत्नावच्छेदकाङ्गुलावन्यजातीयप्रयत्नस्यावच्छेदकतासम्बन्धेनानुत्पत्तौ प्रयोजकाभावात् ।

न च तत्तज्जातीयकृत्युत्पादनियामक तत्तदङ्गुलीनिष्ठविजातीयचिकीर्षावच्छेदकत्व प्रतिनियतमेवोपेयत इति नातिप्रसङ्ग इति वाच्यम् । तादृशावच्छेदकताया नियामकस्य दुर्वचत्वात् विजातीयकृत्याद्यवच्छेदकत्वेऽननुगततत्तच्चिकीर्षातत्तदङ्गुलीनां नियामकत्वे तत्तज्जातीयचेष्टासमवाय एव तत्तत्कृतिसहिततत्तदङ्गुल्या नियामकत्वसम्भवेन कृतिभेदस्य निर्युक्तिकत्वापातात् ।

न च चेष्टागोचरकृतिसाध्यत्वप्रकारकेच्छाधीना कृतिः चेष्टाजननी कृतेश्चोपादाननिष्ठविलक्षणविषयतायां तत्तदङ्गुल्यां विजातीयचेष्टां कृत्या साधयामीत्याकारकचिकीर्षायास्तत्तदङ्गुल्यादिनिष्ठविलक्षणविषयता नियामिका । एव च पुरुषान्तरीयावयवव्याप्यसमवच्छेदकतासहितं तादृशेच्छाविषयस्य विजातीयचेष्टाजनकविजातीयकृत्यवच्छेदकत्वनियामकं सम्भवति तत एवानुगततत्तज्जातीयचेष्टानियमः सम्भवतीति वाच्यम् । एवं सति तत्तज्जातीयचेष्टानिष्ठसाध्यतानिरूपितोपदर्शितविशिष्टावच्छेदकतासम्बन्धेन एकस्या एव कृतेः समवायेन तत्तज्जातीयचेष्टां प्रति हेतुतया तत्तज्जातीयचेष्टोत्पादनियमसम्भवेन कृतिभेदं विनाप्युपपत्तेरिति । मैवम् । उपदर्शितोपादानताविशिष्टावच्छेदकतासम्बन्धेन एकस्या एव कृतेर्विजातीयचेष्टां प्रति हेतुत्वे सम्बन्धगौरवाल्लाघवेन शुद्धावच्छेदकतासम्बन्धेन विजातीयकृतिहेतुतौचित्यात् कृतिवैजात्यस्य तद्भेदस्य च सिद्धेर्निष्प्रत्यूहत्वात् अवच्छेदकतासम्बन्धेनो विजातीयकृतिं प्रति विजातीयचेष्टाविषयकचिकीर्षाया विजातीयचेष्टोत्पत्तिनिष्ठविशेष्यतानिरूपिताधेयतासम्बन्धावच्छिन्नप्रकारताविशिष्टावच्छेदकतासम्बन्धेन हेतुता वाच्या, परकीयाङ्गुल्यादिसाधारणोपादानताविशेषसम्बन्धेन कृतित्वावच्छिन्नं प्रत्यवच्छेदक-

तामनन्तर्भाव्य हेतुतायाः अतिरिक्तायाः कल्पनेनैतन्मते गौरवं तु फलमुखतया न दूषणावहमिति सद्ध्येय ।

गोत्वादिहेतुकानुमाने गोत्वत्वादिकमेव हेतुतावच्छेदकं तच्च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपं तच्च सकलगवादिव्यक्तिविषयकज्ञानाविषय इति सकलगवादिज्ञानार्थं सामान्यलक्षणादर इति प्रगल्भयुक्तिं दूषयति । गोत्वे चेति ।

(दी०) गोत्वे च गोनिष्ठात्यन्ताभावाप्रतियोगित्वेन समवेतत्वेन च विशेषितमविशेषितं वा गवेतरासमवेतत्वं व्याप्यतावच्छेदकं न तु सकलगोवृत्तित्वविशेषितं सामान्यलक्षणयापि ग्रहीतुमशक्यत्वात् न तु समानविषयकत्वेनापीति ।

(गा०) साध्याधस्त्वादौ साध्ये गवेतरासमवेतत्वमविशेषितमेव व्याप्यतावच्छेदकं गोपदप्रवृत्तिनिमित्तत्वे साध्ये तादात्म्येन गोत्वे हेतौ असमवेते व्यभिचारवारणाय समवेतत्वेन विशेषणीयं गोनिष्ठरूपादौ व्यभिचारवारणाय गोनिष्ठाभावाप्रतियोगित्वेन च तद्विशेषणीयम् । एवं च सति समवेतत्वांशवैयर्थ्यं असमवेतस्य गोनिष्ठाभावप्रतियोगित्वेनैव वारणादिति वाच्यम् । द्वित्वाद्यवच्छिन्नगोत्वाभाववारणाय प्रतियोगिव्यधिकरणत्वेनाभावस्य विशेषणीयतया गगनाभावस्य प्रतियोग्यधिकरणाप्रसिद्ध्या प्रतियोगिवैयधिकरण्यासम्भवेन गगनादेरपि प्रतियोगिव्यधिकरणाभावाप्रतियोगितया तद्वारकतया समवेतत्वांशसार्थक्यादिति ।

न च स्वप्रतियोगिसमानाधिकरणो यो यस्तदन्यत्वेनाभाव विशेष्य द्वित्वाद्यवच्छिन्नगोत्वाद्यभाववारणसम्भवात् गगनाभावस्य चासङ्ग्रहात्समवेतत्वविशेषणमनर्थकमिति वाच्यम् । प्रतियोग्यधिकरणवृत्तिभिन्नस्याभावविशेषणत्वापेक्षया गवि प्रतियोग्यनधिकरणत्वस्य गवेतरासमवेते समवेतत्वस्य च निवेशे गौरवाभावात् ।

(दी०) स्यादेतत् समानप्रकारतामात्रस्य प्रयोजकत्वे कचिदेव रजतत्वप्रकारिकेच्छा कचिन्नेति नियमो न स्यात् तादृशप्रकाराश्रये एव तदुत्पादोपगमे कथमरजते रजतत्वप्रका-

रिकेच्छा अनुपस्थिते चासंसर्गाग्रहोऽपि न नियामकः । वस्तुतोऽसंसर्गाग्रहमपेक्ष्य लघीयसस्तद्विषयतामात्रस्यैव नियामकत्वमुचितं सामान्यतश्च तादिच्छायां व्यवस्थितहेतुभावस्य तद्विषयकज्ञानस्य तत्प्रकारकत्वमवच्छेदकं कल्प्यते लाघवात् ।

( गा० ) क्वचिदेवेति । रजतत्वादिना रजतादिज्ञानाद्रजतत्वादिना रजतादिविशेषविषयिण्येवेच्छा जायते न तु तेन रूपेण प्रमेयमात्रविषयिणीति नियमो न स्यादित्यर्थः, ज्ञानस्य भवन्मते प्रकारतामात्रनियामकत्वादिति भावः ।

ननु तत्तद्धर्मप्रकारकस्य ज्ञानस्य तत्तद्धर्माश्रयविषयकतत्तद्धर्मप्रकारकेच्छात्वं कार्यतावच्छेदकमिति रजतत्वादिना रजतादिज्ञानाद्घटादिविषयकेच्छाप्रसङ्ग इत्यत आह । तादृशेति । तादृशप्रकाराश्रये । जनकज्ञानप्रकारीभूतरजतत्वादिरूपधर्माश्रये । कथमरजत इति । रजतत्वभ्रम इत्यादिः । भ्रमश्च विशिष्टज्ञानं ज्ञानद्वयं चेत्यन्यदेतत् ।

ननु रजतत्वाद्यसंसर्गाग्रहविषयस्यावृत्तस्तदग्रहविषयत्वाभाव एव रजतत्वादिप्रकारकेच्छाविषयत्वनियामकस्तस्यैव विशेषणतासम्बन्धेन तादृशेच्छां प्रति हेतुत्वोपगमात् रजतत्वादिज्ञानमपि तत्सहकारि कल्प्यते अतो नानुपस्थितरजतत्वाद्यसंसर्गाग्रहात् तत्प्रकारकेच्छाप्रसङ्ग इत्यत आह । अनुपस्थित चेति । अनुपस्थितविषयनिष्ठो रजतत्वाद्यसंसर्गाग्रहो न तत्प्रकारकेच्छाविषयताप्रयोजकः सम्भवति किं तु उपस्थितिविषयतासहकृत एव स तथा वाच्यः अन्यथा असंसर्गाग्रहस्यानुपस्थितयावद्वस्तुसाधारणतया तादृशयावद्वस्तूनामेव रजतत्वादिप्रकारकेच्छाविषयतापत्तेरित्यनागतेच्छाविषयोपस्थित्यर्थं सामान्यप्रत्यासत्तेरावश्यकतेति समुदिततात्पर्यार्थः । स्वसिद्धान्तसिद्धं विशिष्टज्ञानस्य हेतुत्वमपि व्यवस्थापयति । वस्तुत इति । लघीयसः । अतिलघुशरीरस्य । तद्विषयतामात्रस्य । रजतत्वादिप्रकारकज्ञानविषयतामात्रस्य । नियामकत्वम् । तत्प्रकारकेच्छाविषयताप्रयोजकत्वम् ।

ननु गौरवेऽपि फलसनियतपूर्ववर्तिताकस्यासंसर्गाग्रहस्यैव त-

द्धेतुत्वमुचितं न तु समानविषयकविशिष्टज्ञानस्येत्याशङ्कां निरा-करोति । सामान्यतश्चेति । असंसर्गाग्रहाविषयानुपस्थितवस्तुनीच्छा-वारणायेत्यादिः । सामान्यतः । सामान्यरूपेण । तद्विषयकज्ञानत्वेने-ति यावत् । तदिच्छायाम् । तद्विषयकेच्छायाम् । व्यवस्थितहेतुभा-वस्य । असंसर्गाग्रहहेतुत्ववादिनापि कल्पनीयकारणताकस्य । तत्प्र-कारकत्वम् । फलीभूतेच्छाप्रकाररजतत्वादिप्रकारकत्वम् । अवच्छे-दकनिरस्य कारणतायामित्यादिः । लाघवादिति । कारणत्वान्तरक-ल्पनामपेक्ष्य फलतकारणतायामवच्छेदकाभिवृद्धौ लाघवादित्यर्थः ।

नन्वनुपस्थितस्याप्यसंसर्गाग्रहाविषयस्येच्छाविषयत्वमिष्टमेव, नेष्यते परमसंसर्गाग्रहविषयस्येति तद्विषयविषयकेच्छायां तद्विषय-कत्वेन ज्ञानस्य हेतुत्वं नोभयसिद्धं कुत्रावच्छेदकाभिवृद्धिरित्यत आह । अस्तु वेति ।

( दी० ) अस्तु वा समानप्रकारकत्वेन व्यवस्थिते कार्य-कारणभावेऽतिप्रसङ्गभङ्गाय सामानाधिकरण्यमिव समान-विषयत्वमपि प्रत्यासत्तिः । असंसर्गाग्रहादेः कारणतामपेक्ष्य समानविषयत्वस्यावच्छेदककोटिनिवेशोऽपि लघीयान् कार-णयथार्थत्वायथार्थत्वाधीनस्तु कार्यस्य तथाविधो विशेषः[1] ।

( गा० ) व्यवस्थिते । उभयवादिसिद्धे । अन्यथानुपस्थित-रजतत्वादेरपीच्छाप्रकारतापत्तेरिति भावः । अतिप्रसङ्गभङ्गायेति । यथा एकस्य पुंसो रजतत्वादिप्रकारकज्ञानादन्यस्य तादृशेच्छावा-रणाय एकार्थसमवायरूपसामानाधिकरण्यं कार्यकारणभावघटक-प्रत्यासत्तिरुपेयते तथा एकविषयनिष्ठविषयताद्वयरूपं समानविशे-ष्यत्वमपि तादृशप्रत्यासत्तिरित्युपेयत इत्यर्थः । तावतैवासंसर्गा-ग्रहविषयेच्छावारणसम्भवेनासंसर्गाग्रहस्य कारणत्वान्तरं न कल्प्यते तदपेक्षया, प्रत्यासत्तिवृद्धौ लाघवात् ।

[1] न च प्रत्यासत्तिभेदात्कारणताभेद, आवश्यकताद्वयघटितायाः एककारणताया अपि सम्भवात् । अन्यत्र यथा सामानाधिकरण्यं प्रत्यासत्तिस्तथा प्रकृते समानविशेष्यकत्वमेव प्रत्यासत्तिरिति तु नार्थः, प्रकृते सामानाधिकरण्यप्रत्यासत्त्यनादरे समवायेनोत्पत्तिनि-

यमाय तत्पुरुषीयत्वस्यावश्य निवेशनीयतया पुरुषभेदेनानन्तकारणताप्रसङ्गात् सामानाधिकरण्यप्रत्यासत्त्यैव कारणतायाः फलसत्त्वासादृश्यप्रत्यासत्तिपरित्यागासम्भवाच्च ।

न च प्रत्यासत्तिद्वयादेरपि विभिन्नपुरुषयोर्विभिन्नधर्मिकज्ञानदशाया वैपरीत्येन प्रत्येकमुभयधर्मिविषयकेच्छाप्रसङ्ग । उभयप्रत्यासत्तिघटितैककारणताश्रयस्य एकस्य उभयकारणतावच्छेदकप्रत्यासत्त्या उभयदेशे प्रत्यासन्नीभूय कार्यतावच्छेदकसम्बन्धेन तदुभयदेशप्रत्यासन्नैककार्योत्पादकत्वस्वाभाव्यात् । तत्तदात्मसमवेतज्ञानाविषये तदात्मसमवेतेच्छाया विषयतया उत्पत्त्यसम्भवात् ।

न चास्तूभयप्रत्यासत्त्यैक कारणत्व तथापि विषयनिष्ठप्रत्यासत्त्या व्यापकत्व ज्ञानस्य कल्पनीयम्, असंसर्गाग्रहस्य तु तत् फलसमिति न लाघवमिति वाच्यम् । गुरुधर्मावच्छिन्ने असंसर्गाग्रहे अनन्यथासिद्धत्वकल्पनामपेक्ष्य लघुरूपावच्छिन्ने अनन्यथासिद्धज्ञाने उक्तव्यापकताकल्पने लाघवस्य दुर्वारत्वात् विषयप्रत्यासन्नासंसर्गाग्रहप्रतियोगिनि तत्तत्पुरुषीयत्वस्यावश्य निवेशनीयतया असंसर्गाग्रहनिष्ठावच्छेदकस्यानन्त्याच्च । समानविषयकत्वस्यावच्छेदककोटिनिवेशेऽपि समीहितसिद्धेः समानविशेष्यकत्वस्य प्रत्यासत्तित्वेऽतिनिर्बन्धोऽयुक्त इत्याशयेन समानविषयकत्वेन हेतुतायामपि लाघव दर्शयति । असंसर्गाग्रहादेरिति । आदिना रजतभेदाग्रहरजतत्वासंसर्गाद्यव्याप्यतदवच्छेदकनानाधर्माग्रहपरिग्रह । लघीयानिति ।

यद्यपि समानविशेष्यकत्वस्य कारणतावच्छेदककोटौ विशेषणतया प्रवेशे विशेष्यतत्तद्व्यक्तिभेदेन कारणताभेदस्तथापि रजतत्वादिविशिष्टबुद्धिविरोधिदर्शितनानाविधज्ञानाभावानां पुरुषभेदेन भिन्नकारणताकल्पनापेक्षया लाघवमक्षुण्णमेवेति बोध्यम् ।

नन्विच्छायाः संवादित्वविसंवादित्वयोर्धर्मिण्यविद्यमानविद्यमानासंसर्गाग्रहविरहोऽन्यस्य प्रयोजको वाच्य इत्यसंसर्गाग्रहकारणत्वमावश्यकमित्याशङ्कां निरस्यति । कारणेति । कारणीभूतरजतत्वादिप्रकारकज्ञानस्य यथार्थत्व फलीभूतेच्छाया याथार्थ्य तस्यायाथार्थ्ये च तस्या अयाथार्थ्यं प्रयोजक तेनैव रूपेण ज्ञानेच्छयोर्विशेषकार्यकारणभावान्नैकासंसर्गाग्रहविशेषस्य तत्प्रयोजकत्वमिति भावः ।

(दी०) एतेन रजतत्वप्रकारकेच्छायां तत्प्रकारकज्ञानं संवादिन्यां तस्यां दोषाभावसहितम्, विसंवादिन्यां तूपस्थितरजतगतभेदाग्रहसहितं हेतुरिति परास्तम्। स्वादृशापि च संवादिन्यामुपस्थितरजतभेदाग्रहस्यैव हेतुत्वौचित्यात्। दोषाणां रजतभेदग्रहप्रतिबन्धकानामभावमपेक्ष्य लघुत्वात्।

(गा०) एतेनेति। लघीयसोः समानविशेष्यकज्ञानयाथार्थ्यायाथार्थ्ययोरिच्छासंवादविसंवादप्रयोजकत्वसम्भवेनेत्यर्थः। इति परास्तमित्यग्रेतनेनान्वयः। तत्प्रकारकं ज्ञानमिति। समानविषयकत्वविशेषणानवच्छिन्नमिति शेषः। हेतुरित्यग्रेतनेनान्वयः। दोषाभावसहितमिति। अरजते रजतत्वभ्रमजनकदोषाभावसहितमित्यर्थः। तथा च संवादीच्छायां तादृशदोषाभावो विशेषसामग्रीति समानविषयकज्ञानाभावाच्च तादृशभ्रमस्थले संवादीच्छाविरहोऽपि तु तादृशदोषादेवेति संवादीच्छायामनागतभानानुरोधेन नानागतज्ञानापेक्षा, यद्वा यत्र रजते रजतभेदभ्रमः तत्रापि रजतत्वेन रजतान्तरज्ञाने रजतत्वेन तद्रजतेच्छा स्वीक्रियते रजतान्तरे रजतत्वग्रहाविरोधिनो विपरीतज्ञानस्य तद्रजतेऽपि तद्ग्रहाविरोधितया व्यवस्थापितत्वात् तत्र समानविषयकत्वविशिष्टज्ञानस्यापि सम्भवेन भवतोऽपि तदावश्यकत्वादिति भावः। उपस्थितरजतेति। उपस्थितं यद्रजतं तन्निष्ठरजतभेदाग्रहसहितमित्यर्थः। अनुपस्थितवस्तुमात्रे रजतत्वप्रकारकेच्छाप्रसङ्गस्य पूर्वोपदर्शितस्यैव वारणायोपस्थितेति। न चैतावता सामान्यप्रत्यासत्तिसिद्धिः, विसंवादीच्छायां सिद्धस्यैवारजतस्य विषयत्वोपगमादित्याशयः। रजते विसंवादिरजतत्वप्रकारकेच्छावारणायारजतेति। अन्यथाख्यातिमनङ्गीकुर्वतां अरजते रजतत्वविशिष्टज्ञानाप्रसिद्धेस्तत्कार्यकारिभेदाग्रहानुसरणम्। भेदाग्रहश्च दोषप्रयोज्यो विवक्षणीयः अतो रङ्गरजतेइति(१) समूहालम्बनस्मरणादिकाले भेदाग्रहसत्त्वेऽपि नाभ्रान्तस्य विसंवादीच्छा, भेदाग्रहपदेन, भेदग्रहविरोधिदोष एव वा विवक्षितः। उपस्थितरजतेति।

(१) अन्यथा रङ्गरजतेइति—पु० पा०।

उपस्थितरजतनिष्ठरजतभेदाग्रहस्येत्यर्थः । रजतभेदग्रहप्रतिबन्धकानाम् । रजतभेदग्रहप्रतिबन्धकत्वेनानुगतानाम् । लघुत्वादिति । उक्तप्रतिबन्धकत्वापेक्षया भेदग्रहत्वरूपप्रतियोगितावच्छेदकस्य लघुशरीरत्वादिति भावः । लाघवमुपलक्षणम् । दोषाभावस्य हेतुत्वे प्रमाभ्रमोभयरूपज्ञानात्संवादीच्छानुपपत्तेस्तदनुरोधोऽपि द्रष्टव्यः । तथा च संवादीच्छायामनागतविषयकत्वनिर्वाहकतदुपस्थित्यर्थं सामान्यप्रत्यासत्तेरावश्यकतेति भावः ।

न चात्रोपस्थितिर्नापेक्ष्यत इति वाच्यम् । तथा सति संवादिभिन्नाया इच्छाया भेदाग्रहदशायामनुपपत्तेः संवादीच्छासामान्यानियतत्वात् उपस्थित्यपेक्षायां रजतानुपस्थितिदशायामेव भ्रमात्ताहशेच्छोत्पत्तेः । एतच्चापाततः, संवादीच्छायां स्वप्रकारीभूतरजतत्ववत्त्वसम्बन्धेन रजतत्वज्ञानत्वेन हेतुताया एवोपस्थितरजतनिष्ठरजतभेदाग्रहहेतुतापेक्षया लाघवात्कल्पयितुमुचितत्वमिति । सिद्धरजतज्ञानादेवानागतरजतगोचरसंवादीच्छोपपत्तेः सामान्यप्रत्यासत्त्यसिद्धेः ।

किं तु इदमत्र तत्त्वम्, संवादीच्छात्वादिकं न कस्यचित्कार्यतावच्छेदकं प्रमात्वादिवदर्थसमाजग्रस्तत्वादतः संवादिविसंवादिसाधारणरजतत्वादिप्रकारकेच्छां प्रति तत्प्रकारकज्ञानत्वेन सामान्यतः एकहेतुतैव कल्प्यते अत्र च प्रमात्मकज्ञानाद्विसंवादीच्छाया रङ्गादिविषयकज्ञानाच्छुक्त्यादिगोचरेच्छायाश्च वारणाय समानविशेष्यत्वं प्रत्यासत्तिरुपेयते अतोऽनागतगोचरेच्छानुरोधेन सामान्यप्रत्यासत्त्यादरः । समानविषयकत्वं च न विशेषणमुपेयते विषयभेदेन कारणताबाहुल्यप्रसङ्गादिति समानविषयकत्वविशेषणस्य तत्तद्व्यक्तिविषयकत्वपर्यवसानेन भ्रमप्रमाभेदेन कारणताभेदस्यावश्यकत्वात् भ्रमस्यैव तत्तद्व्यक्तिविषयकत्वात् भ्रमस्यैव तत्तद्व्यक्तिविषयकत्वेन तदवच्छिन्नेच्छाहेतुत्वमुपेयते प्रमायां तु सामान्यतो रजतत्वज्ञानत्वेनैव रजतविषयकेच्छात्वावच्छिन्नं प्रति हेतुतेति न सामान्यप्रत्यासत्त्यवकाश इति पूर्वपक्षाशयप्रकाशः ।

न च समानविशेष्यत्वं समानप्रकारकत्वं वा प्रत्यासत्तिरित्यत्र विनिगमनाविरह इति वाच्यम् । विनिगमनाविरहेणोभयप्रत्यासत्त्या

ज्ञानहेतुत्वेऽपि सामान्यप्रत्यासत्तेरावश्यकत्वादितीच्छायां समानविषयकज्ञानापेक्षामङ्गीकृत्यैव सामान्यप्रत्यासत्तिं स्वयं प्रकारान्तरेण खण्डयितुमुपक्रमते अत्राहुरिति।

(दी० ) अत्राहुः सिद्धे एव सुखे सुखत्वेन रूपेणेच्छा, लाघवात्तत्प्रकारकेच्छायां तत्प्रकारावच्छेदेन सिद्धत्वज्ञानमेव हि विरोधि न च तत् प्रकृते, तत्सत्त्वे इच्छोत्पत्तेस्त्वयाऽप्यनङ्गीकारात् । कथमन्यथा चिरप्रोषितस्याज्ञातकान्तामरणस्य तत्कान्तावलोकनादाविच्छा, जातावलोकनादीनां सिद्धत्वज्ञानात् अतिरिक्तस्य चासत्त्वादित्यादि बहुतरमूहनीयम् ।

(गा० ) सिद्ध एवेत्येवकारेण अनागतव्यवच्छेदः, अतो न तज्ज्ञानानुरोधेन सामान्यप्रत्यासत्तिरिति भावः।

ननु सिद्धत्वज्ञानरूपप्रतिबन्धकसत्त्वेन सिद्धसुखे नेच्छासम्भव इत्याशङ्कयाह। लाघवादिति। सिद्धत्वज्ञानमेवेत्येवकारेण सुखत्वादिसामानाधिकरण्यमात्रावगाहिसिद्धत्वबुद्धेः सुखत्वादिप्रकारकेच्छाप्रतिबन्धकत्वव्यवच्छेदः। तत्सुखत्वादिप्रकारावच्छेदेन सिद्धत्वज्ञानं प्रकृते सुखत्वादिप्रकारकेच्छापूर्वकाले कुत इत्याकाङ्क्षायामाह। नचेति। तत्सत्त्वे। तादृशसिद्धत्वज्ञानसत्त्वे। अनङ्गीकारादिति। अनुभवविरोधेनेत्यादिः। समानविषयकसिद्धत्वज्ञानमात्रस्य विरोधित्वे बाधकमाह। कथमन्यथेति। ज्ञातकान्तामरणस्य तत्कान्तावलोकनत्वावच्छेदेनापि सिद्धत्वज्ञानसम्भवान्न तत्कान्तावलोकने इच्छा कस्यचिदप्यनुमता इत्यज्ञातकान्तामरणस्येति। प्रोषितस्येति। कान्तामरणाज्ञाने हेतुः।

न च कान्तामरणज्ञाने कान्तावलोकनेच्छानुत्पत्तौ विनष्टपुत्रशोकार्तस्य पुत्रदर्शनेच्छोत्पत्त्यभिधानं मिथ्याणां विरुध्येतेति वाच्यम् । तदभिधानस्य पुत्रो दर्शनविषयो भवत्वित्याकारकदर्शनत्वावच्छिन्नविषयकेच्छापरत्वात् तादृशेच्छायां च दर्शनत्वावच्छेदेनैव सिद्धत्वज्ञानस्य विरोधितया तत्पुत्रदर्शनत्वावच्छेदेन सिद्धत्वज्ञानसत्त्वेऽपि बाधबुद्धेरिच्छायामविरोधित्वे तदुत्पादे बाधकाभावात्। अतिरिक्तस्य। सिद्धत्वज्ञानाविषयतत्कान्तावलोकनादेः। असत्त्वात्। अप्रसि-

द्धत्वात् । तथा च सामान्यलक्षणोपगमेऽपि नेच्छानिर्वाह इति भावः ।

न च तत्कान्ताविषयकत्वेनान्यावलोकनविषयिण्येवेच्छा भविष्यतीति वाच्यम् । तेन रूपेण तद्विषयकभ्रमं विना तदनुपपत्तेः ।

(दी० ) अथ सिद्धत्वनिश्चयाभावापेक्षया लाघवाद्सिद्धत्वज्ञानमेव हेतुः । न च सिद्धत्वेन ज्ञाते तत् सम्भवतीत्यसिद्धत्वज्ञानार्थं सामान्यलक्षणेति चेन्न । विशेषरूपावच्छेदेन सिद्धत्वेन ज्ञाते एव सामान्यरूपेणासिद्धत्वग्रहसम्भवात्, तदेकं ज्ञानं ज्ञानद्वयं वेत्यन्यदेतत्, सामान्यलक्षणासहस्रेणाप्यसिद्धत्वस्य ज्ञातुमशक्यत्वाच्च ।

( गा० ) लाघवादिति । निश्चयत्वानिवेशात् वर्त्तमानप्रागभावप्रतियोगित्वरूपाद् वर्त्तमानकालध्वंसानुत्पत्तिकत्वरूपाद्वा सिद्धत्वात् तत्प्रतियोगिनोऽसिद्धत्वस्य लघुशरीरत्वाच्चेति भावः । तदसिद्धत्वज्ञानं सम्भवतीति । विपरीतज्ञानस्य विरोधिनः सत्त्वादिति भावः । असिद्धत्वज्ञानार्थम् । असिद्धत्वज्ञाने विशेष्यीभूतासिद्धव्यक्तिभानार्थम् ।

यद्यप्यसिद्धत्वज्ञानस्य हेतुत्वे अप्रामाण्यनिश्चयाभावस्यावच्छेदकताया वाच्यत्वात् सिद्धत्वज्ञानप्रतिबन्धकत्वे चाप्रामाण्यज्ञानाभावस्यैव तथात्वात् तत्प्रतिबन्धकत्वमेव कल्पयितुमुचितमिति तथाप्यसिद्धत्वज्ञानहेतुत्वाभ्युपगमेनैव सामान्यप्रत्यासत्तिं खण्डयति । विशेषेति । विशेषरूपम् । तत्तत्सुखत्वादिकम् । सामान्यरूपम् । सुखत्वादिकम् । असिद्धत्वग्रहसम्भवादिति । तथा च सिद्धसुख एवासिद्धत्वभानादिच्छाप्रवृत्तिनिर्वाहात्र सामान्यलक्षणादर इति भावः ।

नन्वन्यथाख्यातिमनङ्गीकुर्वतां गुरूणां मते सिद्धेऽसिद्धत्वज्ञानं न सम्भवतीत्यसिद्ध एव तत् ज्ञानमङ्गीकार्यमित्यत आह । तदेकमिति । एकज्ञानम् । अन्यथाख्यातिरूपम् । ज्ञानद्वयम् । ज्ञानान्तरविषयधर्मिसाकाङ्क्षासिद्धत्वज्ञानं न तु ज्ञायमानधर्म्यगृहीतासंसर्गकासिद्धत्वविषयकं ज्ञानान्तरं सिद्धत्वज्ञानाभावहेतुतायामेव पर्यवसानप्रसङ्गात् । आकाङ्क्षा च धर्मधर्मिणोर्विशेष्यविशेषणभावः, स च

न्यायमते एकधर्मिविषययोरेव, गुरुमते च भ्रमस्थले भिन्नज्ञानविषययोरपि धर्मधर्मिणोरित्येव विशेषः स पुनः स्वरूपसम्बन्धविशेषः पदार्थान्तरं चेत्यन्यदेतत् । तस्य च ज्ञानेनापि समं निरूप्यनिरूपकभावः सम्बन्धो न्यायमतसाधारण एव यतो असंसर्गाग्रहकालीनधर्मधर्मिविषयकज्ञानयोरपि वस्तुगत्या विशेष्यविशेषणभाववद्धर्मधर्मिविषयकतया ततोऽपीच्छाद्यापत्तिरिति परास्तम् । धर्मधर्मिणोः परस्परासाकाङ्क्षानिरूपकज्ञानस्यैव विशिष्टज्ञानकार्यकारित्वोपगमात् असंसर्गग्रहकालीनज्ञानयोर्धर्मधर्मिसाकाङ्क्षानिरूपकत्वात् इत्यन्यत्र विस्तरः ।

नन्वेवमभ्रान्तस्येच्छानुपपत्तिरिति सामान्यप्रत्यासत्तेरावश्यकतेत्यत आह । सामान्येति । अशक्यत्वादिति । सामान्यलक्षणायाः सुखत्वादिसामान्यप्रकारेणैवासिद्धभानप्रयोजकत्वाच्च असिद्धत्वेनेति भावः ।

ननु सामान्यप्रत्यासत्त्या भासमानेऽसिद्धसुखे सामान्यलक्षणाजन्यज्ञानोपनीतानामसिद्धत्वघटकपदार्थानां विशेष्ये विशेषणमित्यादिरीत्या मानेनैवासिद्धत्वप्रकारकासिद्धज्ञाननिर्वाहः ।

न च इच्छालक्षणक्षणस्य तत्क्षणत्वेन वर्तमानत्वघटितासिद्धत्वघटकत्वादिच्छापूर्वं च तेन रूपेण तस्य कथञ्चिदपि ज्ञानं सम्भवतीति वाच्यम् । तथा सतीच्छाक्षणापेक्षायां सिद्धत्वस्यापि प्राग् दुर्ग्रहतया तज्ज्ञानस्य प्रतिबन्धकताया अप्यसम्भवित्वापातात् । क्रियादिरूपतादृशक्षणस्य प्रागपि सत्त्वेन तत्तद्व्यक्तित्वेन तदंशे लौकिकस्य तद्वृत्तिप्रतियोगिकप्रागभावाधारत्वाभावस्वरूपतदीयक्षणत्ववैशिष्ट्यांशे प्रत्येकपदार्थोपस्थितिमूलकोपनीतभानात्मकासिद्धत्वज्ञानस्य कथञ्चित्सम्भवे त्वसिद्धत्वज्ञानस्यापि तथा सम्भवादित्याशङ्क्य विनापि सामान्यलक्षणामनुमानेनासिद्धविषयकासिद्धत्वज्ञानमुपपादयति । वस्तुतस्त्वित्यादि ।

(दी०) वस्तुतस्तु सामान्यलक्षणां विनाऽप्ययं कालः सुखप्रागभाववान् सुखोत्पादकालीनध्वंसप्रतियोगी वा कालत्वादेतादृशकालत्वाद्वेत्यनुमानादसिद्धसुखस्य तदसिद्धत्वस्य

च ज्ञानं सुलभमेव, निपुणतरमुपपादयिष्यते चेदं शब्दमणि-दीधिताविति कृतं पल्लवितेन ।

(गा०) अथ काल इति । अथ क्षण इत्यर्थः । तेन वर्तमानस्थूलकालवृत्तिप्रागभावप्रतियोगित्वस्य सिद्धसाधारण्ये-ऽपि न क्षतिः । सुखप्रागभाववानिति । प्रागभावमभ्युपेत्य । तावतापि सामान्यप्रत्यासत्त्यसिद्धेरवश्यस्वीकरणीयत्वात् ।

न चानागतस्यैतादृशानुमानादेव सिद्धावीदृशानुमानपूर्वं साध्याप्रसिद्धिरेव दुर्लभा, प्रतियोगिभासकाभावेन सुखप्रागभावस्य प्रत्यक्षासम्भवादिति वाच्यम् । अभावत्वं विनाशिवृत्ति पदार्थविभाजकोपाधित्वाद्द्रव्यत्ववदित्यनुमानाद्विनाशित्वसमानाधिकरणाभावत्वरूपप्रागभावत्वसिद्धौ सुखं प्रागभावप्रतियोगि उत्पत्तिमत्त्वादित्यनुमानेन सुखप्रागभावरूपसाध्यप्रसिद्धेः ।

न चानुमाने तुल्यवित्तिवेद्यतया भानस्य निर्युक्तिकत्वादुक्तप्रयासेनापि न साध्यतावच्छेदकावच्छिन्नप्रसिद्धिनिर्वाह इति वाच्यम् । उक्तानुमानाद्विपरीतविशेष्यविशेषणभावापन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नघटकपदार्थानां सिद्धौ विपरीतशङ्कोत्पत्त्यसम्भवे ज्ञानप्रत्यासत्तिसहितमनसैव प्रकृतज्ञानजननसम्भवात् तादृशरीत्यैव प्रकृतानुमानेनाप्यसिद्धत्वधीनिर्वाहो बोध्यः । प्रागभावानङ्गीकारपक्षे स्वीकार्यप्रागभावाघटितमसिद्धत्वं सा दयति । सुखोत्पादादिति । महाप्रलयोपगमे तत्र व्यभिचार इत्यतो हेत्वन्तरमाह । एतादृशेति । असिद्धत्वस्य । वर्तमानप्रागभावप्रतियोगित्वादिरूपस्य । शब्दमणिदीधिताविति । पाकानुमानव्याख्यायामिति शेषः । सिद्धमेव संकेतदानीन्तनकृतिसाध्यत्वव्याप्यवत्ताया बाधितत्वेन अन्यथाख्यातिमनङ्गीकुर्वतां असिद्ध एव पाके परामर्शस्य स्वीकरणीयत्वादनागतभानासम्भवे प्रवर्तकानुमानस्य दुर्घटत्वादिति भावः ।

(चिं०) यत्तु पाकादौ चिकीर्षा सुखादौ इच्छा न स्यात् सिद्धे इच्छाविरहात् असिद्धस्याज्ञानात् तस्मात्सुखत्वादिना ज्ञातेषु सर्वेषु सिद्धं विहायासिद्धे इच्छा भवतीत्यभ्युपेयम् । तन्न । असिद्धस्याज्ञा-

नेऽपि सिद्धगोचरज्ञानादेव इच्छाप्रवृत्तिस्याभाव्याद्‌सिद्धे तयोरुत्पत्तेः । न चातिप्रसङ्गः, समानप्रकारकत्वेन ज्ञानेच्छाकृतीनां कार्यकारणभावात् न तु समानविषयकत्वेनापि क्वचिदप्यकल्पनात्, समानविषयकत्वे सत्यपि समानप्रकारकज्ञानाभावेनेच्छाकृत्योरभावात् तस्यावश्यकत्वेन गौरवाच्चेति परसिद्धान्तात् । न च सर्वज्ञत्वे संशयो न स्यादिति दोषः, घटः स इति घटत्वप्रकारकं हि ज्ञानं संशयविरोधि तच्च न वृत्तं स्वसामग्रीविरहात् अतो घटत्वादिसकलविशेषज्ञानेऽपि स घटो न वेति संशय इति ॥

( दी० ) घटः स इत्यादिसंशयसमानाकारो हि निश्चयस्तद्विरोधी घटो न वेति संशयः कोटितावच्छेदके घटत्वांशे निष्प्रकारकश्च,न च प्रमेयवानिति प्रत्ययस्तथा । अत एव जातिमानिति निश्चयेऽपि घटो न वेति संशय घटत्ववन्निश्चयस्तु घटेतरावृत्तित्वविशिष्टमवगाहमानो घटान्यतासन्देहं विरुणद्धि, पुरुषावृत्तिवक्रकोटरादिनिश्चय इव पुरुषत्वसंशयम् । स्वसामग्रीविरहादिति । घट इति निश्चयं प्रति घटत्वांशे निर्विकल्पकं ज्ञानं कारणं जातित्वादिना घटत्वादिज्ञानेऽपि तदनुदयात् सामान्यलक्षणायाश्च सामान्यप्रकारकज्ञानजनकत्वनियमात् विशिष्टज्ञानसामग्रीसत्त्वात् ॥

( गा० ) घटत्वप्रकारकस्य घट स इति ज्ञानस्यैव स घटो न वेति संशयविरोधिता न तु तादृशस्यापि प्रमेयवान् स इत्यस्येति मूलोक्तविशेषस्य बीजं स्फुटयति । संशयेति ।

समानाकार इति । निश्चय । अभेदेन घटत्वावच्छिन्नप्रकारक समवायेन घटत्वप्रकारको वा समानधर्मितावच्छेदकनिश्चय । तद्विरोधी । घटभेदसंशयविरोधी एकजातीयविषय

ताक इत्यर्थः। कोटितावच्छेदके। ग्राह्यघटभेदप्रतियोगिनिष्ठप्रकारतावच्छेदकांशे तत्प्रतियोगितावच्छेदकांशे वा। घटत्वाद्यंशे निष्प्रकारक इति। प्रकारानवच्छिन्नघटत्वादिविषयताक इत्यर्थः। तथा। निष्प्रकारकघटत्वादिविषयताकः। तथा च नासौ स घटो न वेति संशयविरोधीति भावः। अत एव। असमानाकारकनिश्चयस्य संशयाविरोधित्वादेव।

न चैव घटो न वेति संशये घटत्ववानयमिति निश्चयस्याविरोधितया तदुत्तरं तादृशसंशयस्यापत्तिस्तस्य कोटितावच्छेदकांशे घटत्वस्वप्रकारकतया तदंशे निष्प्रकारकत्वविरहादित्यत आह। घटत्ववानिति। अवगाहमान इत्यन्तं हेतुगर्भविशेषणम्। तथा च घटान्यावृत्तित्वविशिष्टवत्त्वावगाहितया ग्राह्याविरोधविशिष्टवत्तानिश्चयमुद्रया घटान्योन्याभावकोटिकमुक्तसंशयं विरुणद्धि न तु प्रतियोगितावच्छेदकप्रकारकज्ञानविधयेत्यर्थः। तथा च तस्य धर्मिविशेषणतापक्षे कोटीभूतघटभेदप्रतियोगितायाः स्वरूपतोऽवच्छेदके घटत्वे इतरप्रकारकत्वेऽपि विरोधप्रतियोगितया भासमानग्राह्यघटभेदांशे संशयीयतद्विषयतातोऽविलक्षणविषयताकतया विरोधित्वमक्षतमेवेति भावः। विरोधप्रकारकज्ञानविरोधितां दृष्टान्तेन द्रढयति। पुरुषेति।

ननु प्रमेयवानित्यादिनिश्चयस्थले विशेषणधीतत्सन्निकर्षादिसत्त्वात्कथं स घट इत्यादिनिश्चयसामग्रीविरह इत्याकाङ्क्षायामाह। घट इतीति। निश्चयमित्यत्र निश्चयत्वस्य जन्यतावच्छेदकत्वमविवक्षितम्, विशेषणान्तरानवच्छिन्नघटत्वप्रकारताशालिज्ञानत्वस्यैव तादृशघटत्वविषयिताशालिज्ञानजन्यतावच्छेदकत्वात् निर्विकल्पकं प्रकारानवच्छिन्नविषयताकमतो घट इत्यादिबुद्धेरपि तादृशबुद्ध्यन्तरजनकत्वोपपत्तिः। एतादृशविशिष्टबुद्धिविशेषणज्ञानविशेषयोः कार्यकारणभावे मानमाह। जातित्वेति। तदनुदयात्। घट इत्याकारकविशिष्टबुद्ध्यनुदयात्।

न च घटत्वांशे सप्रकारकत्वप्रयोजकसामग्र्यभावस्तदंशे निष्प्रकारकत्वप्रयोजकः तत्प्रयोजकाभावस्य तदभावप्रयोजकत्वादिति जातित्वाद्युपस्थितिदशायां घटत्वांशे तत्प्रकारकत्वप्रयोजकसामग्रीसत्त्वान्न तदंशे निष्प्रकारकस्य घट इति ज्ञानस्यापत्तिरिति वाच्यम्। जातित्वादिरूपेण घटत्वोपस्थितिघटितसामग्रीदशायाम-

पि कत्राचिज्जातिमान् घट इति ज्ञानोत्पत्त्या घटत्वांशे सप्रकारकत्वप्रयोजकसामग्र्यभावस्यानवच्छिन्नघटत्वविषयत्वाप्रयोजकतया प्रमेयत्वादिसामान्यलक्षणयापि प्रमेयः स घट इत्याकारकनिश्चयसम्भवस्य दुर्वारत्वात् तादृशकार्यकारणभावानभ्युपगमे जातित्वाद्युपस्थितिकालीनतदवच्छिन्नघटत्वादिविशिष्टज्ञाने। विशेषणानवच्छिन्नघटत्वादिप्रकारताविरहप्रयोजकस्य दुर्लभतया जातिमानित्याकारकधियो नियमतो जातिमान्घट इत्याकारकतापत्तेश्च।

न च घटत्वादेः स्वरूपतः प्रकारता क्वचिज्ज्ञाने समवायेनैव क्वचिच्च कालिकादिनेत्यत्र न स्वरूपतस्तज्ज्ञानं नियामकं तादृशप्रयोजकस्य साधारण्यात् अतो अननुगतमेव तन्नियामकं वाच्यं तथा च तावतैव तादृशप्रकारतासामान्यनियमोऽप्युपपद्यते विशेषप्रयोजकसामग्र्याः सामान्यप्रयोजकत्वात् तादृशसामग्र्यभावकूटस्यैव सामान्यविरहप्रयोजकत्वादिति वाच्यम्। यत्र सामान्यकार्येऽनतिप्रसक्तसामान्यकारणविरहस्तत्रैवागत्या विशेषसामग्रीविरहकूटस्य सामान्यकार्याभावप्रयोजकत्वात्। एवं च विशेषणज्ञानस्य सामान्यकारणस्य सम्भवेनानन्तानामननुगतविशेषप्रयोजकाभावानां निरुक्तप्रकारताद्विविरहप्रयोजकताया गौरवेणानभ्युपगमात्।

न चोक्तकार्यकारणभावोपगमे जातित्वाद्युपस्थितिकालीनलौकिकसन्निकर्षात् जातित्वादिनैव घटत्वादिज्ञानस्य प्रथमं जनने निर्विकल्पकासम्भवाच्चिरनिरीक्ष्यमाणस्यापि घट इति प्रत्यक्षानुपपत्तिरिति वाच्यम्। तथापि फलानुरोधेन निर्विकल्पकोपगमात् जातित्वादिविशिष्टज्ञानेऽपि क्वचिन्निर्विकल्पकविषयताभ्युपगमे बाधकविरहात्।

एतेन विशेषणान्तराविशिष्टविशेषणकबुद्धिसामान्यं प्रति विशेषणज्ञानसामान्यहेतुतायाः पूर्वं निराकृतत्वेन निर्विकल्पकबुद्धौ मानाभाव इति पूर्वपक्षोऽपि निरस्तः। एतादृशकार्यकारणभावानुरोधेनैव निर्विकल्पकोपगमस्यावश्यकत्वात्।

न च घटत्वादिव्यञ्जकविलक्षणसन्निकर्षाद्यधीनघटत्वादिविशिष्टबुद्धौ नियमत एव घटत्वादेः स्वरूपतः प्रकारत्वमानुभविकमित्युपनीतमान एव स्वरूपतो घटत्वादिज्ञानस्य प्रत्यासत्ति-

तया हेतुत्वमुपेयते न तु लौकिकप्रत्यक्षेऽपीति न निर्विकल्पकसिद्धिरिति वाच्यम् । लाघवेन लौकिकालौकिकसाधारणस्य विशेषणानवच्छिन्नत्वविशिष्टबुद्धित्वस्य विशेषणानवच्छिन्नविशेषणज्ञानजन्यतावच्छेदकत्वोपगमात् गोत्वादिनिर्विकल्पकदशायां च जातित्वादिविशिष्टगोत्वाद्युपनीतभाने गोत्वादेः स्वरूपतः प्रकारत्वमिष्टमेव निर्विकल्पकोपनायकतावादिनां मतेन तद्वारणाय स्वरूपतो गोत्वाद्युपनीतभाने स्वरूपतस्तत्प्रकारकधियो हेतुत्वान्तरस्यावश्यकत्वे किं लौकिकालौकिकसाधारणविशिष्टबुद्धौ विशेषणज्ञानहेतुतयेति पूर्वपक्षानवकाश इत्यलमधिकेन ।

ननु लौकिकसन्निकर्षादिव सामान्यलक्षणातोऽपि निर्विकल्पकसम्भवेन दुष्परिहरमेव सार्वज्ञ्यमित्यत आह । सामान्येति । सामान्यप्रकारकज्ञानजनकत्वनियमात् । सामान्यधर्मावच्छिन्नविषयतामात्रप्रयोजकत्वात् । तादृशविषयताया एव तज्जन्यतावच्छेदकत्वादिति भावः ।

ननु सामान्याश्रये धर्मिणि सामान्यधर्मविशिष्टज्ञानसामग्र्यसत्त्वे सामान्यधर्मानवच्छिन्नविषयताशालिप्रत्यक्षमपि सामान्यप्रत्यासत्तितोऽगत्या स्वीकरणीय तत्कुतस्तादृश्येव विषयता तज्जन्यतावच्छेदिकेत्यत आह । विशिष्टेति । सामान्यज्ञानस्यैव प्रत्यासत्तितया सामान्यजप्रत्यक्षपूर्वं धर्मिणि विशेषणज्ञानादिघटितसामान्यविशिष्टबुद्धिसामग्रीसत्त्वादित्यर्थः ।

यद्यपि प्रमेयत्वादिसामान्यप्रत्यासत्त्युपस्थापितघटत्वादेः स्वरूपतो विशिष्टबुद्ध्युपगमेऽपि यदा तस्य परकीयज्ञानविषयत्वादिरूपतरत्वादिविशिष्टबुद्धिरुत्पद्यते " तदैव घटान्यत्वादेरपि तत्र भानं सम्भवति निश्चयस्य प्रागसत्त्वात् तुल्यबलविरोधिभासकसामग्र्याश्चाप्रतिबन्धकत्वादिति संशयोपपत्त्या उक्तप्रयासो निष्फलः । तथापि यत्र पूर्वं घटान्यत्वमनुपस्थितं प्रमेयवानिति ज्ञानानन्तरमेव तदुपस्थितिस्तत्र स्वरूपतस्तद्विशिष्टबुद्धौ स्वरूपतस्तज्ज्ञानानपेक्षायां स घट इति निश्चयस्य प्राक् सम्भवेन तादृशनिश्चयेऽप्रामाण्यशङ्कामन्तरेणाप्यानुभविकस्य न घटो न वेति संशयस्यानुपपत्त्या सामान्यलक्षणातः सर्वज्ञादीनामिवास्मदादीनां स्वरूपतो निखिलजातिप्रकारिकाया आनुभविकधियोऽप्यापत्त्या

## अथ उपाधिप्रकरणम् ॥

( चि० ) उपाधिज्ञानाद्व्यभिचारज्ञाने सति न व्याप्तिनिश्चय इत्युपाधिर्निरूप्यते । तत्रोपाधिः साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः । अनौपाधिकत्वज्ञानं च न व्याप्तिज्ञाने हेतुः, अतो व्यापकत्वादिज्ञाने नान्योन्याश्रयः । यद्वा व्यापकत्वं तन्निष्ठात्यन्ताभावाप्रतियोगित्वम्, तत्प्रतियोगित्वञ्चाव्यापकत्वम् । प्रतियोगित्वं च तदधिकरणानधिकरणत्वमिति वदन्ति तन्न, साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेः । न च तयोरनुपाधित्वम्, दूषकताबीजसाम्यात् ।

( दी० ) प्रसङ्गादुपाधिं निरूपयितुमाह उपाधीति । सोपाधौ साध्यत्वसाधनत्वे न सम्भवतोऽत अभिमतेति । यो यद्व्यापकत्वे सति यदव्यापकः स तत्रोपाधिरिति निर्गलितोऽर्थः । व्यापकत्वाव्यापकत्वे एकरूपेण विवक्षिते ।

( गा० ) उपाधिज्ञानाद्व्यभिचारज्ञाने सति न व्याप्तिनिश्चय इत्यत्र मूले व्यभिचारज्ञाने सत्युपाधिज्ञानादिति योजना, यां व्यभिचारज्ञानस्य हेतुज्ञानविधया उपाधिज्ञापकत्वलाभादुपाधेर्व्यभिचारव्यापकताऽर्थतो लभ्यते, तद्व्यापकतां विना तज्ज्ञानज्ञाप्यत्वानुपपत्तेः, तथासत्युपाध्यभावस्य व्यापकाभावविधया व्यभिचाराभावज्ञापकत्वलाभात् उपाधेः प्रतियोगितया तदभावज्ञानजनकज्ञानविषयतायाः स्वरसत एव लाभेन प्रकृतस्य व्यभिचाराभावरूपव्याप्तिज्ञानस्य प्रयोजकज्ञानविषयत्वरूपोपपादकत्वमुपा-

तत्र तदपेक्षा तदवस्थेत्यवधेयम् ॥

गिरीन्द्रदुहितुर्नमत्सुरवराचनंसौभग-
त्पदाम्बुजरजःकृपाकलिततीक्ष्णधीसम्पदाम् ।
गदाधरधिनिर्मिता विषमतर्कदुर्गाटवी
नवीनपदवीमुदं वितनुतां सतां धीमताम् ॥

इति श्रीयुतगदाधरभट्टाचार्यचक्रवर्तिविरचिता सामान्यलक्षणादीधितिटिप्पणी समाप्ता ॥



## अथ उपाधिप्रकरणम् ॥

( वि० ) उपाधिज्ञानाद्व्यभिचारज्ञाने सति न व्याप्तिनिश्चय इत्युपाधिर्निरूप्यते । तत्रोपाधिः साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः । अनौपाधिकत्वज्ञानं च न व्याप्तिज्ञाने हेतुः, अतो व्यापकत्वादिज्ञाने नान्योन्याश्रयः । यद्वा व्यापकत्वं तन्निष्ठात्यन्ताभावाप्रतियोगित्वम्, तत्प्रतियोगित्वञ्चाव्यापकत्वम् । प्रतियोगित्वं च तदधिकरणानधिकरणत्वमिति वदन्ति तन्न, साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेः । न च तयोरनुपाधित्वम्, दूषकताबीजसाम्यात् ।

( दी० ) प्रसङ्गादुपाधिं निरूपयितुमाह उपाधीति । सोपाधौ साध्यत्वसाधनत्वे न सम्भवतोऽत अभिमतेति । यो यद्व्यापकत्वे सति यदव्यापकः स तत्रोपाधिरिति निर्गलितोऽर्थः । व्यापकत्वाव्यापकत्वे एकरूपेण विवक्षिते ।

( गा० ) उपाधिज्ञानाद्व्यभिचारज्ञाने सति न व्याप्तिनिश्चय इत्यत्र मूले व्यभिचारज्ञाने सत्युपाधिज्ञानादिति योजनायां व्यभिचारज्ञानस्य हेतुज्ञानविधया उपाधिज्ञापकत्वलाभादुपाधेर्व्यभिचारव्यापकताऽर्थतो लभ्यते, तद्व्यापकत्वं विना तज्ज्ञानज्ञाप्यत्वानुपपत्तेः, तथा सत्युपाध्यभावस्य व्यापकाभावविधया व्यभिचाराभावज्ञापकत्वलाभात् उपाधेः प्रतियोगितया तदभावज्ञानजनकज्ञानविषयतायाः स्वरसत एव लाभेन प्रकृतस्य व्यभिचाराभावरूपव्याप्तिज्ञानस्य प्रयोजकज्ञानविषयत्वरूपोपपादकत्वमुपा-

धेऽलंभ्यत इति उपोद्घातसङ्गतिप्रदर्शनपरं तादृशमूलमिति मिश्राः । तत्र न व्याप्तिनिश्चय, इत्यनेनोपाधिज्ञानस्य व्याप्तिनिश्चयाभावप्रयोजकत्वकथनमनुपयुक्तमिति यथाश्रुतयोजनायां उपाधेर्व्याप्तिनिश्चयप्रतिबन्धकव्यभिचारज्ञानजनकत्वनिविषयत्वरूपव्याप्तिनिश्चयसम्बन्धलाभेन व्याप्तिग्रहोपाये सा च क्वचिदुपाधिसन्देहादित्यादिग्रन्थेन स्मृतत्वलाभात् स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गतिप्रदर्शनपरतैव तादृशमूलस्येत्याशयेन दीधितिकृदाह । प्रसङ्गादिति ।

. केचित्तु व्यभिचारज्ञाने न सतीति योजनया उपाधिरूपप्रतियोगिज्ञानादृव्याप्यभावज्ञानेन तादृशव्यावर्तकधर्मदर्शनरूपप्रतिबन्धकवदव्यभिचारज्ञानाभावे सति व्याप्तिनिश्चय इत्यर्थलाभात्प्रकृतव्याप्तिनिश्चयप्रयोजकत्वरूपप्रकृतोपपादकत्वलाभेनोपोद्घातप्रदर्शनपरता मूलस्येत्याहुः ।

. वस्तुतस्तद्विशिष्टस्योपाधिज्ञाने तदुद्भावनेन मध्यस्थस्य व्यभिचारज्ञानं सम्पाद्य वादिसिषाधयिषितसाध्यानुमित्यौपाधिकव्याप्तिनिश्चयप्रतिबन्धात् वादिविजयो भवतीत्युपाधिनिरूपणस्य प्रयोजनवत्तेति मूलाभिप्रायः । सोपाधो साध्यत्वसाधनत्वे – न सम्भवत इति । साध्यत्वं सिद्धिविषयत्वयोग्यत्व सिद्धिविषयताप्रयोजकधर्मवत्त्वरूपम्, तादृशो धर्मो व्यापकत्वमेव, साधनत्वमपि सिद्धिजननयोग्यत्वं तज्जननौपयिकव्याप्तिपक्षधर्मत्वे इति १५० । यद्यपि परस्परनिरूपितसाध्यसाधनभावाविवक्षणे नासम्भवः, तथापि सामान्यतस्साध्यत्वसाधनत्वयोरव्याप्तत्तकत्वदा तदीयसाध्यव्यापकत्वे सति तदव्यापकत्वं तद्धेतुकोपाधित्वम्, तदीयसाधनाव्यापकत्वे सति तद्व्यापकत्वं तत्साध्यकोपाधित्वमिति यदि विवक्ष्यते तदभिप्रायेणासम्भवप्रदर्शनम् ।

ननु धूमादिसाध्यताभिमानविषयघटादिव्यापकतामादाय तद्व्यापकधूमाद्यव्यापके वह्न्यादिसाधनत्वाभिमानविषयद्रव्यत्वाद्यव्यापकतामादाय तद्व्यापकवह्न्यादिव्यापके वह्न्यादिसाध्यकधूमादिहेतुकोपाधित्वं दुर्वारम्, उपाधित्वस्य साध्यसाधनविशेषद्वयनियन्त्रितत्वानुपपत्तिश्च, विशिष्य साध्यसाधनयोर्निवेशे च अभिमानपर्यन्तनिवेशो वृथैवेत्याशयेनाभिमतत्वनिवेशोऽपि वि-

शिष्य साध्यसाधननिवेशाभिप्रायक इत्याशयेनाह । यो यदिति । यत्पदं यद्धर्मावच्छिन्नपरम् , तत्पदमपि तद्धर्मावच्छिन्नपरम् । –

अनौपाधिकत्वं यदि साध्यव्यापकानां यावतामव्याप्य-त्वसम्बन्धावच्छिन्नाभावः यद्व्यापकं तद्व्यापकं तद्भिन्नप्रकृत-साध्यकत्वं वा तदा धूमादिनिष्ठार्द्रेन्धनादिनिरूपितव्याप्तिग्राहक-कार्द्रेन्धनादिनिरूपितानौपाधिकत्वशरीरे धूमादिनिष्ठार्द्रेन्धनादि-व्याप्तिर्न निविशते किन्तु आर्द्रेन्धनादिनिष्ठा द्रव्यत्वादिव्याप्तिरे-वेत्यन्योन्याश्रयानवकाशात् अनौपाधिकत्वज्ञानस्य व्याप्तिग्राहक-त्वानुपगमस्य मूलकृतो ऽन्योन्याश्रयनिराकरणासङ्गतिरित्यतो ऽन्यादृशानौपाधिकत्वाभिप्रायेण अन्योन्याश्रयाशङ्कया मूलमव-तारयति नन्वित्यादिना ।

( दी० ) ननूपाधिः साध्यव्यापकत्वं साध्यनिष्ठव्याप्ति-निरूपकत्वम्, सा च यावदुपाधिव्यापकव्यापककत्वरूपानौपाधि-कत्वज्ञानादेव ग्राह्या, उपाधिव्यापकयावदर्थान्तर्गतस्य चोपाधे-स्साध्यव्यापकत्वग्रहश्च साध्यनिष्ठव्याप्तिग्रहात् इत्यन्योन्याश्रय इत्यत आह । अनौपाधिकत्वेति । व्यापकत्वं व्याप्तिनिरूपकत्वम्, सा चानौपाधिकत्वग्रहाद् ग्रहीतव्या, तत्सविष्टव्याप्तिज्ञानमपि अनौपाधिकत्वान्तरग्रहादित्यनवस्थेत्यत आह । अनौपाधिक-त्वेति । अन्योन्याश्रयपदमनवस्थापरमिति सम्प्रदायः ।

( गा० ) तत्समानाधिकरणाभावाप्रतियोगित्वरूपव्यापकता-ग्रहे नानौपाधिकत्वधर्मो हेतुः किन्तु व्याप्तिज्ञान एव, अत एवं अनौपाधिकत्वधियो व्याप्तिग्राहकत्वाभ्युपगमेन य-द्वेत्यादिमूलेन 'तादृशव्यापकता निरुक्ता, अतो व्याप्तिघटि-तव्यापकत्वमुपाधिताघटकमिति दर्शयति । साध्यव्यापकत्व सा-ध्यनिष्ठव्याप्तिनिरूपकत्वमिति । सा च । साध्यनिष्ठोपा-धिव्याप्तिश्च । यावदुपाधिव्यापकव्यापककत्वरूपानौपाधिकत्वज्ञाना-दिति । सिद्ध्यसिद्धिव्याघातवारणाय तन्निरूपितव्याप्तिग्राहकतया मायत्तव्यापकव्यापककत्वरूपानौपाधिकत्वस्यैवादृतत्वादिति भावः ।

उपाधीति । आर्द्रेन्धनादिरूपप्रकृतोपाधीत्यर्थः । उपाधेरिति । तदुपाधेरित्यर्थः । साध्यव्यापकत्वग्रहः । धूमादिनिष्ठार्द्रेन्धनादिनिरूपितव्याप्तिग्रहार्थमनौपाधिकत्वज्ञानरूपतया अपेक्षित इति पूरणीयम् । साध्यनिष्ठव्याप्तिग्रहादिति । प्रकृतसाध्यनिष्ठप्रकृतोपाधिनिरूपितव्याप्तिग्रहादित्यर्थः । तादृशव्याप्तेस्तादृशव्याप्तिनिरूपकस्वरूपप्रकृतसाध्यव्यापकत्वघटकतया विशेषणज्ञानादिविधया तज्ज्ञानस्य तादृशव्यापकत्वग्राहकत्वादिति भावः । अन्योन्याश्रयेति । धूमनिष्ठव्याप्तिज्ञानाधीनस्य यावदार्द्रेन्धनव्यापकधर्मिकधूमव्यापकताज्ञानस्य धूमनिष्ठव्याप्तिज्ञाने अपेक्षितत्वादिति भाव ।

न चार्द्रेन्धननिष्ठधूमव्यापकताग्रहे विशेषणज्ञानादिविधया अपेक्षित यद् धूमनिष्ठव्याप्तिज्ञानं तत्र नानौपाधिकत्वज्ञानं हेतुः प्रतियोग्यनुपरक्तव्याप्तिज्ञाने एव तद्धेतुत्वात्, प्रतियोग्यनुपरक्तव्याप्तिज्ञानस्यापि विशेषणज्ञानादिमुद्रया व्याप्तिनिरूपकत्वग्राहकतासम्भवादिति वाच्यम् । व्याप्तेस्साध्यमनन्तर्भाव्य निर्वक्तुमशक्यतया प्रतियोग्युपरागेणैव तज्ज्ञानात् ।

व्यापकत्वमित्यादि सम्प्रदाय इत्यन्तमन्यमतम् । व्यापकत्वमित्यादिना ऽव्यवस्थाकृतया व्याप्तिघटितव्यापकताप्रदर्शनम् । अनौपाधिकत्वेति । अव्याप्यत्वसम्बन्धावच्छिन्नसाध्यव्यापकाभावरूपेत्यादिः । सम्प्रदाय इत्यनेनोदक्षरतया अस्वरसस्सूचितः ।

(दी०) अव्याप्यवृत्तीनां व्यापकत्वमुपपादयितुमाह । प्रतियोगित्वं चेति । तदधिकरणानधिकरणत्वं तदधिकरणाधिकरणत्वविरोधि यत् प्रतियोगित्वं प्रतियोगिव्यधिकरणाभावप्रतियोगित्वं तदिह गृहीतव्यम् । प्रतियोगिव्यधिकरणत्वेनाभावो विशेषणीय इति फलितोऽर्थः । साधनेति । अनयोरसङ्करोऽग्रे प्रदर्शयिष्यते ।

(गा०) अव्याप्यवृत्तीनामिति । द्रव्यत्वादिसाध्यकसंयोगाद्युपाधीनामिति शेष । व्यापकत्वमुपपादयितुमिति । साध्यवन्निष्ठाभावाप्रतियोगित्वमुपपादयितुमित्यर्थः । इदमुपलक्षणम्, द्रव्य गुणादित्यादौ संयोगादीनां गुणोऽभिधेयादित्यादौ संयो-

गाभावादीनाञ्च साधनाव्यापकत्वमपि निराकर्तुमित्यपि द्रष्टव्यम् ।

ननु संयोगाभावाधिकरणगुणाद्यनधिकरणकत्वस्य संयोगे सत्त्वात्सदधिकरणानधिकरणकत्वरूपप्रतियोगित्वनिवेशेऽपि संयोगस्य द्रव्यत्वादिव्यापकत्वानुपपत्तिः, गुणादिरूपसाधनाव्यापकतापत्तिश्च । तदधिकरणयावदनधिकरणकत्वस्य विवक्षणे च संयोगादेस्सत्तादिव्यापकतापत्तिः, सत्तादिसमानाधिकरणसंयोगाभावाधिकरणयावदन्तर्गतस्य द्रव्यस्य संयोगाधिकरणत्वेन तादृशाभावाप्रतियोगित्वात् ।

अथ सत्तादिसमानाधिकरणद्रव्यत्वाद्यभावीययावदधिकरणानधिकरणकत्वस्य सत्त्वेन तादृशाभावाप्रतियोगित्वं दुर्घटमिति चेत् ? एवमपि यावद्रूपव्यापकत्वान्तरघटिततयाऽतिगौरवम्, तदधिकरणावृत्तित्वरूपसामान्याभावविवक्षणे च द्रव्यं सत्त्वादित्यादौ पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वादिना उपाधिताप्रसङ्गः विशिष्टद्रव्यत्वाद्यभावमपि विशिष्टद्रव्यत्वादेर्द्रव्यत्वत्वादिना वृत्तेस्साध्यसमानाधिकरणाभावाप्रतियोगित्वाक्षतेः । सत्तादिसमानाधिकरणशुद्धद्रव्यत्वाद्यभावषदवृत्तित्वेन साधनाव्यापकत्वस्यापि सत्त्वात् ।

न च तस्य वक्ष्यमाणसिद्धान्तलक्षणाक्रान्ततया लक्ष्यत्वमेवेति वाच्यम् । तत्समशीले धूमादिसाध्यकवह्न्यादिहेतुकमहानसत्वाद्युपाधौ एतल्लक्षणागमनेन इदानीं तादृशमहानसत्वाद्युपाधेरिवोक्तस्थलीयविशिष्टद्रव्यत्वादेरपि लक्ष्यतानौचित्यात् । एवं जातिमान्सत्त्वादित्यादौ समवायेन सत्ताद्युपाधावव्याप्तिः, उपाधिताघटकसम्बन्धेन वृत्तेरवश्यं विवक्षणीयतया सत्ताद्यभावाधिकरणसामान्यादौ समवायेन वृत्तेरप्रसिद्ध्या साधनाव्यापकत्वस्य दुर्घटत्वात्, इत्यतः प्रतियोगित्वं चेत्यादि मूल न प्रतियोगित्वनिर्वचनपरम् अपि तु स्वरूपसम्बन्धरूप एव प्रतियोगित्वेऽव्याप्यवृत्त्यभावीयप्रतियोगित्वव्यावर्त्तकविशेषणदानपरमित्याह । तदधिकरणेति । साध्यसामानाधिकरण्यविशिष्टाभावाधिकरणं यत्किञ्चिद्विशिष्टानधिकरणं तदन्यधर्मवत्त्वं साध्यव्यापकत्वम्, साधनसामानाधिकरण्यविशिष्टाभावाधिकरणं यत्किञ्चिद्रूपावच्छिन्नानधिकरणं तद्रूपवत्त्व साधनाव्यापकत्वमित्यभिप्रायकतया

यथाश्रुतमूलस्यापि सङ्गतिर्बोध्या । तदधिकरणाधिकरणत्वविरोधीति । अधिकरणत्वाविरोधित्वं स्वावच्छेदकविशिष्टाधिकरणत्वग्रहप्रतिबन्धकग्रहाविषयत्वम् । स्वं प्रतियोगिता, विरोधित्वप्रविष्टज्ञाने विशेष्यताश्रयकसप्तम्यन्ततदधिकरणपदार्थान्वयः, तत्पदस्याभावपरम्, तथा च तदभावाधिकरणविशेष्यकस्वावच्छेदकविशिष्टवत्ताग्रहप्रतिबन्धकप्रमाविषयीभूततदभावीयप्रतियोगित्वं इह गृहीतव्यमित्यर्थः । अनवच्छिन्नविशेषणतासंसर्गविषयकाभावज्ञानस्यैव प्रतियोगिमत्ताज्ञानप्रतिबन्धकतया तादृशसम्बन्धावच्छिन्ना द्रव्ये संयोगाभावप्रमाया अप्रसिद्ध्या तत्प्रतियोगित्वमादाय न संयोगस्य द्रव्यत्वाद्यव्यापकतापत्तिः । साध्यसामानाधिकरण्योपलक्षितसंयोगाभावस्याधिकरणे अनवच्छिन्नविशेषणतासंसर्गकसंयोगाभावप्रमाविषयत्वं तदीयप्रतियोगितायामक्षतमेवेति साध्यसामानाधिकरण्यविशिष्टाभावाधिकरणत्वमेव साध्यव्यापकतायां निवेश्यम् । एवं साधनाव्यापकत्वशरीरेऽपि साधनसामानाधिकरण्यविशिष्टाभावाधिकरणत्वं निवेश्यम्, अन्यथोक्तरीत्या साध्यव्यापकसंयोगादावतिव्याप्तेः ।

लाघवाय फलितार्थमाह । प्रतियोगीति । अत्र च साध्याधिकरणे प्रतियोगिव्यधिकरणत्वमवश्यमेव निवेश्यम् अन्यथा द्रव्यत्वादिसमानाधिकरणसंयोगाभावस्यापि गुणादौ प्रतियोगिव्यधिकरणतया उक्ताव्याप्तिवारणासम्भवात् । तथा च तादृशाभावीयत्वस्य अधिकस्य प्रतियोगित्वविशेषणत्वोपगमे मूलस्याभावान्वयर्थत्वमित्याशङ्कां निराकरोति । प्रतियोगिव्यधिकरणत्वेनेति । अभाव इति । साध्यादिसमानाधिकरणाभाव इत्यर्थः । विशेषणीय इति । न तु तादृशाभावविशेषितं प्रतियोगित्व प्रतियोगिव्यधिकरणाभावीयत्वेनेति शेषः । प्रतियोग्यनधिकरणत्वेन साध्याधिकरणं विशेषणीयमिति तु परमार्थः । उपाधितावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वसाध्यवद्वृत्त्यनुयोगिकत्वोभयाभावः तादृशप्रतियोगित्वमेव प्रतियोगितान्तार्थनिष्कर्षः, तेन कालपरिमाणवान् द्रव्यत्वादित्यादौ कालिकसम्बन्धेन घटाद्युपाधेरसङ्ग्रहः, यथाश्रुते कालिकसम्बन्धेन प्रतियोग्यनधिकरणस्य साध्यवतोऽप्रसिद्ध्या तदसङ्ग्रहापत्तेः ।

ननु मित्रातनयपक्षकश्यामत्वसाध्यकमित्रातनयत्वहेतुके साधनावच्छिन्नसाध्यव्यापकशाकपाकजत्वोपाधिः पक्षधर्मावच्छिन्नसाध्यव्यापकोऽपि साधनस्यापि पक्षधर्मत्वात् । एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र पक्षधर्मबहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकमुद्भूतरूपवत्त्वं साधनावच्छिन्नसाध्यव्यापकमपीति मूले उभयोर्भेदेनोपादानमनुपपन्नमत आह । अनयोरिति । अनयोः । साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्योः । असङ्करः । भेदः । अग्रे प्रदर्शयिष्यत इति । यत्र साधनशून्यस्य साध्यवतः काकादेः पक्षता तत्र शाकपाकजत्वादेः साधनावच्छिन्नसाध्यं प्रति व्यापकता न पक्षधर्मावच्छिन्नं प्रति, यत्र पक्षधर्मशून्ये साध्यवत्यपि साधनं द्रव्यत्वादिरूपं तत्र पक्षधर्मावच्छिन्नमेव साध्यं प्रत्युद्भूतरूपादेर्व्यापकता न तु साधनावच्छिन्नं प्रतीति उभयोपादानसङ्गतिरिति भावः।

( चिं० ) मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजत्वस्य प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च शास्त्रे प्रयोजकत्वेनोपाधित्वस्वीकाराद्येति पक्षेतरेऽतिव्याप्तिश्च । न च व्यतिरेके पर्वतेतरान्यत्वादित्यत्र इतरान्यत्वस्याप्रसिद्धिवारणार्थं पर्वतपदं विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वान्न स उपाधिः, बाधोन्नीतस्याप्यनुपाधितापत्तेः । न चेष्टापत्तिः, इतरान्यत्वस्याप्रसिद्ध्या विशेषणं विना व्याप्त्यग्रहेण तत्सार्थक्यात् ।

( दी० ) पक्षेतरेति । पक्ष इतरो यस्मादिति बहुव्रीहिः । भावप्रधानश्च निर्देशः । पक्षमितरयति व्यावर्तयतीति व्युत्पत्त्या तद्वृत्तिधर्मवचन इत्यपि कश्चित् । तादात्म्येन धर्मिण एव व्यापकत्वमिति तु परमार्थः । अत एवाग्रे पर्वतेतरान्यत्वादि-

ति साधु सङ्गच्छते। इतरथा तु व्यापकाभावस्येव व्यापकवद्न्योन्याभावस्यापि गमकत्वमाश्रित्य सङ्गमनीयम्। व्यतिरेक इति। यद्यपि व्यापकाभावमुद्रया गमकत्वे तथा वैधर्म्यं न दोषाय तथापि वास्तववैधर्म्यशून्यत्वमेव विशेषणं देयमिति भावः।

(गा०) ननु दूषकताबीजाक्रान्तत्वेऽपि शुद्धसाध्याव्यापकस्य लाक्षणिकव्यवहाराविषयतया न लक्ष्यतेत्यत आह मूले मित्रेति। प्रत्यक्षस्पर्शाश्रयत्वेनेति।

न च प्रत्यक्षस्पर्शाश्रयत्वहेतुकस्योद्भूतरूपोपाधेस्साधनावच्छिन्नसाध्यं प्रत्यपि व्यापकतया द्रव्यत्वादिहेतुकताहशोपाधेरेव पक्षधर्मावच्छिन्नसाध्यव्यापकत्वोपपादनं दीधितिकृत्सम्मतम् अतस्तन्मते तस्य लक्ष्यतासम्पादनं विरुध्यत इति वाच्यम्। अव्याप्त्यभिधानस्य प्रत्येकावच्छिन्नसाध्यव्यापकोपाधिपरतावत् उभयावच्छिन्नसाध्यव्यापकोपाधिपरताप्यावश्यकी तत्राव्याप्त्यप्रदर्शने न्यूनतापत्तेः, अतस्तस्यापि लक्ष्यतासम्पादनौचित्यात्। उभयावच्छिन्नसाध्यव्यापकोपाधेस्साध्यप्रयोजकतया उपाधित्वव्यवस्थापने प्रत्येकावच्छिन्नसाध्यव्यापकस्य तथात्वेनोपाधितायाः व्यवस्थापितप्रायतया तद्व्यवस्थापनाधीनन्यूनताया अयोगाच्च।

मित्रैस्तु ज्ञानगर्भमादाय उभयोपादानमुपपादितम्, तन्मते साधनावच्छिन्नमेव पक्षधर्मावच्छिन्नमेव वा साध्यं प्रति गृहीतव्यापकत्वकस्य शाकपाकजत्वोद्भूतरूपाद्युपाधेः शुद्धसाध्यव्यापकताघटितनिरुक्तोपाधित्वज्ञानाविषयत्वादिति साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेरिति मूलार्थः। तयोरनुपाधित्वमिति च तादृशतादृशसाध्यं प्रत्येव व्यापकत्वेन ज्ञातयोरनुमित्यविरोधित्वं उपाधिव्यवहाराविषयत्वं चेत्यर्थकम्। तयोरिति द्विवचनं नीलघटयोरभेद इत्यत्रेव प्रकृत्यर्थतावच्छेदकभेदात्। तथा च तत्र निरुक्तोपाधित्वाग्रहेऽपि न क्षतिरिति भावः। तादृशसाध्यव्यापकताग्रहदशायामपि व्यभिचाराद्युन्नायकत्वस्य च शास्त्रीयोपाधिव्यवहारस्य सत्त्वादिति दूषकतेत्यादरर्थः। पक्षेतर इति मूले अतिव्या-

सिपदं अनुमानमात्रोच्छेदकक्षानातिव्याप्तिपरम्, इदानीं चायमाशयो न स्फुट इत्यग्रे शङ्कोत्तराभ्यां स्फुटयिष्यते ।

पक्षेतर इत्यत्र सर्वनामकार्येऽस्मिन्नादेशाभावमुपपादयति दीधितौ पक्ष इतर इति । बहुव्रीहिरिति । तथाच न बहुव्रीहावित्यनेन सर्वनामत्वनिषेध इति भावः । पक्षेतरस्य पर्वतत्वादेः पक्षे सत्तया साधनव्यापकत्वेन नातिव्याप्तिरिति शङ्कां निराकरोति । भावप्रधानश्चेति । प्राधान्येन पक्षनिष्ठभेदप्रतियोगित्वरूपबहुव्रीहिलभ्यतावच्छेदकधर्मपर इत्यर्थः ।

मिश्रास्तु पक्षभेदरूपभावपरतयैव प्रकृते सर्वनामकार्याभावः अर्थविशेषपरस्यैव सर्वादेः सर्वनामत्वात्, अन्यथार्थान्तरसङ्केतितसर्वादिपदेऽपि तत्कार्यापत्तिरित्याहुः । तन्न शोभनम् । संज्ञायां सर्वनामत्वनिषेधानुशासनेन तत्कार्याभावात्, लक्षणया भावप्रधानत्वे सर्वनामकार्यस्य दुर्वारत्वात् । सञ्ज्ञायां निषेधादाधुनिकसङ्केतसहकारेण अर्थबोधस्थले तादृशसङ्केतमूललक्षणास्थलेऽपि सङ्केतस्य लक्षणाघटकस्य सहकारितास्त्येवेति तत्कार्याभावः ।

यद्यपि दीधितिकारव्याख्यायामपि इतरपदस्य लक्षणया भेदार्थकत्वे भेदप्रतियोगित्वार्थकत्वे च उक्तबहुव्रीह्यर्थपरित्यागाद्बहुव्रीह्यनुपपत्त्या असङ्गतिः । तथापि अनेनैवाशयेन भावप्रधाननिर्देशमुपेक्ष्य तादात्म्यसम्बन्धेन धर्मिण उपाधित्वमङ्गीकृत्य साधनाव्यापकत्वस्योपपादनीयत्वाददोषः ।

व्युत्पत्त्यन्तरेण सर्वनामकार्याभावं साधनाव्यापकत्वं च साधयतो मतमुपन्यस्यति । पक्षमिति । व्यावर्तयतीति । स्वाश्रयरूपपक्षे भासमानभेदप्रतियोगितया ज्ञापयतीत्यर्थः । तद्वृत्तीति । पक्षावृत्तीत्यर्थः । कश्चिदित्यस्वरससूचनाय । तद्बीजं तु पर्वतेतरान्यत्वादित्यग्रिमग्रन्थे पर्वतेतरपदस्योक्तव्युत्पत्त्या पर्वतावृत्तिधर्माधिकरणेऽपि तदन्यत्वस्याश्रयत्वरूपोपाधितावघटकसम्बन्धावच्छिन्नोपाधिभावानात्मकतया तेन सम्बन्धेन तदन्यत्वानात्मकतया च तद्ग्रन्थासङ्गतिः । धर्मिण एवेति । पक्षनिष्ठभेदप्रतियोगिन एवेत्यर्थः । व्यापकत्वम् । साध्यव्यापकत्वम् । तथा च येन सम्बन्धेन साध्यव्यापकता तेनैव सम्बन्धेन साधनाव्यापकत्वमपि तस्याक्षतमिति भावः । मत एव । तादात्म्यसम्बन्धेन धर्मिण उपाधित्वस्य

अभिप्रेतत्वादेव । साधु सङ्गच्छत इति । पक्षेतरान्यत्वस्य उपाधितावच्छेदकसम्बन्धावच्छिन्नोपाधिव्यतिरेकरूपतया साध्याभावानुमाने तस्य हेतुताप्रदर्शनौचित्यादिति भावः । भावप्रधाननिर्देशपक्षेऽपि तादृशहेतुप्रदर्शनं कथञ्चित्सङ्गमयति । इतरथा त्विति । गमकत्वमाश्रित्येति । गमकतायां विशेषणवैयर्थ्यस्यानुपाधितावीजत्वपरतामाश्रित्येत्यर्थः । व्यतिरेके व्यर्थविशेषणत्वादिति मूलम्, पक्षेतरान्यत्वस्य साध्याभावव्याप्यतानवच्छेदकपक्षरूपविशेषणघटितत्वादित्यर्थः । अप्रसिद्धिवारकस्यापि व्यभिचारावारकतया व्याप्यतावच्छेदकाघटकत्वमित्यभिमानः । अप्रसिद्ध्या पक्षाघटितस्य इतरान्यत्वस्य तद्व्याप्यतावच्छेदकत्वासम्भवात् व्याप्यतावच्छेदकधर्मान्तराघटितत्वेन पक्षेतरान्यत्वस्य व्याप्यतावच्छेदकत्वमावश्यकमित्यग्रे वक्ष्यते ।

पक्षेतरव्यतिरेकस्य व्यर्थविशेषणघटिततया साध्याभावासाधकत्वात् तत्र साध्यव्यापकताघटितोपाधिस्वग्रहे नानुमानमात्रोच्छेद इति मूलाशयमाक्षिपति दीधितौ । यद्यपीति । व्यापकाभावमुद्रयेति । व्यापकतया गृह्यमाणस्याभावमुद्रयेत्यर्थः । गमकत्वे । साध्याभावानुमापकत्वे । तथा । वैयर्थ्यम् । स्वघटितस्य व्याप्यतानवच्छेदकत्वप्रयोजकत्वरूपविशेषणस्य वैयर्थ्यम् । न दोषाय । न साध्याभावानुमापकताव्याघाताय । उपाध्यभावे अन्वयव्याप्तिग्रहस्यानपेक्षितत्वादिति भावः ।

आशयान्तरवर्णनेन मूलं सङ्गमयति । तथापीति । वास्तवेति । साध्याभावानुमापकताविरोधिविशेषणानवच्छिन्नेत्यर्थः । वैयर्थ्यशून्यत्वम् । साध्याभावनिरूपितस्वाभावनिष्ठव्याप्यतावच्छेदकाघटकविशेषणाघटितत्वम् । विशेषणमिति । उपाधितावच्छेदकस्येत्यादिः । साध्याभावव्याप्यतानवच्छेदकरूपावच्छिन्नाभावत्वकं यत्साध्यव्यापकतावच्छेदकं तदन्यत्वेन धर्मो विशेषणीय इति फलितार्थः । भेदप्रतियोगिनि विशेष्यदलप्रवेशात् न साध्यव्यापकत्वे सतीत्यस्य वैयर्थ्यम् । विशेषणान्तरप्रवेशस्यैव पक्षेतरे ज्ञानातिव्याप्तिं वारयतः प्रगल्भस्य मतमुपन्यस्यति । यदिचेति ।

(दी०) यत्तु ययोर्व्यतिरेकव्याप्तिस्तयोरेव व्याप्यवृत्तिव्यतिरेकिणोरन्वयव्याप्तिरिति नियमः। इह तु व्यर्थविशेषणतया व्यतिरेके व्याप्त्यभावादन्वयेऽपि न तथा अतः साध्याव्यापकत्वान्नायमुपाधिरिति भाव इति तन्न। अहेतुकत्वशरीराहेतुकत्वयोर्व्यभिचारात्, एवमपि संयोगादौ केवलान्वयिनि च साध्ये पक्षेतराविव्याप्तितादवस्थ्याच्च।

(गा०) ययोर्व्यतिरेके व्याप्तिरिति। यद्व्यतिरेके यद्व्यतिरेकनिरूपितव्याप्तिरित्यर्थः। तयोरेवेति। तस्यैव व्याप्यवृत्तिव्यतिरेकिणो व्याप्यवृत्तिव्यतिरेकितद्व्यापकत्वमिति नियम इत्यर्थः। अन्ययोगव्यवच्छेदार्थकैवकारबलाद्व्याप्यवृत्तिव्यतिरेकिनिष्ठताद्दशधर्मनिरूपितव्यापकत्वस्य तयोर्व्यतिरेकव्याप्तिव्याप्यत्वलाभः, वह्निमान् यस्स एव धूमवानित्यादौ धूमादेर्वह्न्यादिनिरूपितव्याप्यत्वलाभवत्। यद्योगप्राथम्यसत्वेऽपि यत्पदस्य द्विरुक्तिं विना क्वचित्सामानाधिकरण्यमात्रबोधात् ययोर्व्याप्यवृत्तिव्यतिरेकिणोरन्वये व्याप्तिस्तयोर्व्यतिरेकव्याप्तिरित्यभिधाने ऽन्वयव्याप्तौ व्यतिरेकव्याप्तिव्याप्यताया झटिति लाभो न सम्भवतीति एवकारमन्तर्भाव्य वैपरीत्येन लेखन ययोर्ययोर्व्याप्यवृत्तिव्यतिरेकिणोरित्याद्यनभिधानबीजम्। अशोकवनिकान्यायेन अवश्यं व्यतिरेकव्याप्तेरभावेनान्वयव्याप्तेरभावसाधनस्य वक्ष्यमाणतया व्यतिरेकव्याप्तिव्यतिरेके अन्वयव्याप्तिव्यतिरेकावश्यम्भावप्रदर्शनेन तत्साधने झटिति कथन्तानिवृत्तिरित्याशयेन एवकारघटितोक्तवाक्येन तत्प्रदर्शनम्। यद्योगेन प्रथमतो व्याप्यभूतान्वयव्याप्त्यभिधाने तन्निरूपकविशेषणव्याप्यवृत्तिव्यतिरेकित्वविशिष्टयोर्व्यतिरेकव्याप्तिनिरूपकयोस्तत्पदेन लाभस्स्यात्, तत्र च तादृशविशेषणमविवक्षितम्; वैयर्थ्यादिति वैपरीत्येन लेखनम्। यत्पदोत्तरतत्पदस्य यत्पदार्थमात्रपरामर्शकत्वादुक्तविशेषणस्य च यत्पदानुपस्थाप्यतया तद्विशिष्टस्य तत्परामर्शनीयत्वासम्भवेऽपि प्रथम अन्वयव्याप्त्यभिधाने तयोरेवेत्यत्र व्याप्यवृत्तिव्यतिरेकीत्यस्य अनुषङ्गाभिमानेन तत्पदार्थे उक्तविशेषणप्रवेशः शक्येतेति प्रथमं तदनभिधान-

बीजमिति केचित्।

यद्यपि व्यतिरेकनिष्ठव्याप्तेः वैयधिकरण्येनान्वयव्याप्तिव्यापकत्वं न सम्भवति तथापि तद्व्यतिरेकव्याप्यव्यतिरेकप्रतियोगित्वस्य तद्व्यापकता वाच्या, तयोरैक्यत्वमेन तत्पदोपस्थाप्यव्याप्तिनिरूपकव्यतिरेकप्रतियोगिभिन्ने अन्वयव्याप्तिव्यतिरेकप्रत्यायनात्, उक्तशब्देन व्यतिरेकप्रतियोगितया एव नियमबोधनात्।

यद्यपि पर्वतादिभेदाभावस्य तत्त्वेनैव व्याप्यता न सम्भवति पर्वतादिरूपाप्रसिद्धिमात्रधारकविशेषणघटितत्वात्, पर्वतत्वादिरूपेण व्याप्यत्वं चाव्याहतमेवेति व्यतिरेकव्याप्यभावेन पक्षेतरत्वसाध्ययोरन्वयव्याप्तिविरहसाधनं न सम्भवति स्वरूपासिद्धेः, मेयत्वाभाववत्त्वादिना पर्वतभेदादेरपि वह्न्यादिव्यापकताया निर्विवादतया तदभावसाधने बाधश्च। तथाप्युपाधितावच्छेदकत्वाभिमतपर्वतभेदत्वादौ वह्न्याद्यभावव्याप्यतावच्छेदकत्वावच्छिन्नाभावत्वकत्वविरहेण वह्न्यादिव्यापकतावच्छेदकत्वाभावसाधनौपयिको यो धर्मः व्याप्यवृत्तिव्यतिरेकप्रतियोगितावच्छेदकत्वे सति तादृशप्रतियोगितावच्छेदकयद्धर्मावच्छिन्नव्यापकतावच्छेदकस्सो ऽवश्यं तद्धर्मावच्छिन्नाभावव्याप्यतावच्छेदकत्वावच्छिन्नाभावत्वक इत्येव पर्यवसितो नियमः। द्रव्यत्वादिव्यापकतावच्छेदकघटत्वत्वादौ स्वावच्छिन्नाभावाप्रसिद्ध्या द्रव्यत्वाद्यभावव्याप्यतावच्छेदकत्वावच्छिन्नाभावत्वकत्वासम्भवात् व्यभिचार इति व्यापकतावच्छेदक व्यतिरेकप्रतियोगितावच्छेदकत्वं विशेषणम्। प्रतियोगिता व्यापकताघटकसम्बन्धावच्छिन्ना ग्राह्या अन्यथा, वाच्यत्वत्वादेरपि भेदादिप्रतियोगितावच्छेदकतया व्याप्त्युपयोगात्। अव्याप्यवृत्तिव्यतिरेकप्रतियोगितावच्छेदके द्रव्यत्वादिव्यापकतावच्छेदकसंयोगत्वादौ द्रव्यत्वाद्यभावव्यभिचारितावच्छेदकत्वावच्छिन्नाभावत्वके व्यभिचारवारणाय व्यतिरेके व्याप्यवृत्तित्वं विशेषणम्। व्याप्यवृत्तित्वं च अवच्छिन्नवृत्तिकान्यत्वे सति वृत्तिमत्त्वं न त्वनवच्छिन्नवृत्तिकत्वम्, संयोगाभावादेरपि गुणाद्यनवच्छिन्नवृत्तिकतया तदव्यवच्छेदात् वृत्तिमत्त्वविशेषणात् प्रतियोगिरूपाभावप्रतियोगितावच्छेदके द्रव्यत्वव्यापकतावच्छेदकगगनाभावत्वा-

दौ द्रव्यत्वाद्यभावव्याप्यतानवच्छेदकस्वावच्छिन्नाभावत्वके न व्यभिचारः। द्रव्यं विशिष्टसत्तावद् गुणादित्यादौ द्रव्यादिभेदे विशिष्टसत्तात्वोपलक्षितसत्ताव्यापकताविरहसाधनमनुपयुक्तम्, साध्यतावच्छेदकविशिष्टनिरूपितव्यापकताया एव उपाधिताघटकत्वादिति विशिष्टसाध्यव्यापकताविरहसाधनाय व्याप्यदिशि यद्धर्मावच्छिन्नेति। तादृशधर्मे व्याप्यवृत्तिव्यतिरेकप्रतियोगितावच्छेदकत्वस्य विशेषणात् संयोगत्वावच्छिन्नव्यापकतावच्छेदकद्रव्यत्वादौ अभावत्वस्यैव केवलान्वयिसंयोगाद्यभावव्याप्यतावच्छेदकत्वसम्भवेन द्रव्यत्वाद्यभावत्वस्य तद्व्याप्यतानवच्छेदकत्वेऽपि न व्यभिचारः, संयोगत्वादेः व्यतिरेकप्रतियोगितावच्छेदकत्वेऽपि व्याप्यवृत्तिव्यतिरेकप्रतियोगितानवच्छेदकत्वात्।

न च व्याप्यवृत्तितावच्छेदकत्वमेव विशेषणमस्तु, तावतैवोक्तव्यभिचारवारणसम्भवात्, व्यतिरेकप्रतियोगितावच्छेदकांशस्य वैयर्थ्यम्, केवलान्वयिनावच्छेदकधर्मावच्छिन्नव्यापकतावच्छेदकस्य व्यतिरेकप्रतियोगितावच्छेदकधर्मस्य अप्रसिद्ध्या वाच्यत्वादिरूपव्याप्यतावच्छेदकधर्ममादाय व्यभिचारासङ्गतेरिति वाच्यम्। व्याप्यवृत्तित्वस्य व्याप्यभावच्छेदकप्रविष्टव्यतिरेक एव विशेषणतया व्याप्यवृत्तितावच्छेदकत्वस्य व्याप्यतावच्छेदकविशेषणतया यथासन्निवेशे अवैयर्थ्यात्। व्यर्थविशेषणघटितकम्बुग्रीवादिमत्त्वरूपधर्मावच्छिन्नव्यापकतावच्छेदकघटत्वादौ तदवच्छिन्नाभावाप्रसिद्ध्या असम्भवस्तदवच्छिन्नाभावव्याप्यतावच्छेदकस्वावच्छिन्नाभावत्वकत्वे व्यभिचारवारकत्वाच्च।

केचित्तु व्याप्यवृत्तिव्यतिरेकिणोरित्यत्र द्वन्द्वाश्रयणात् व्याप्ये व्याप्यवृत्तित्वमात्रस्य व्यापके च व्यतिरेकित्वमात्रस्य विशेषणत्वम्। न च व्यापके व्याप्यवृत्तित्वाविशेषणे पूर्वोपदर्शितव्यभिचारो दुर्वारः। प्रतियोगिवैयधिकरण्यघटितव्यापकताया एव व्याप्यत्वोपगमात्, संयोगादौ च द्रव्यत्वादिनिरूपितायास्तादृशव्यापकताया असत्त्वात्, व्यतिरेकिनिष्ठायाः केवलान्वयिव्यापकताया अप्रसिद्ध्या व्यापके व्यतिरेकित्वविशेषणादेव व्यतिरेकिनिरूपितव्यापकताया व्याप्यत्वपर्यवसानात्, केवलान्वयिनिरूपितव्यापकतायां व्यतिरेकव्याप्तिव्याप्यत्वासम्भवेऽपि अविरोधात्। वक्ष्यमाणस्य केवलान्वयिसा-

ध्यकपक्षेतरत्वातिप्रसङ्गस्य व्याप्ये व्यतिरेकित्वविशेषणं विनापि सङ्गतिः ।

न च प्रतियोगिवैयधिकरण्यघटितव्यापकताया एव उपाधित्वघटकतया तस्या व्याप्यत्वमन्तरेण पक्षेतरातिप्रसङ्गस्य दुर्वारत्वाद्व्यापकेऽपि व्याप्यवृत्तित्वविशेषणस्यावश्यकत्वमिति वाच्यम् । व्याप्यवृत्तौ पक्षेतरत्वे प्रतियोगिवैयधिकरण्याघटितव्यापकत्वाभावसिद्धौ व्याप्यवृत्तित्वविशिष्टतदभावेन प्रतियोगिवैयधिकरण्यघटितव्यापकताया अभावस्यापि सिद्धिसम्भवात् । अव्याप्यवृत्तावेव प्रतियोगिवैयधिकरण्याघटितव्यापकताविरहेणैतद्घटितव्यापकतायाः क्वचित्सत्त्वेन व्यभिचारात् । व्याप्यवृत्तित्वाविशेषिततद्घटितव्यापकत्वाभावेन तद्घटितव्यापकत्वाभावसाधनायोगादिति वदन्ति । तदयुक्तम् । तथाहि तदवच्छिन्नसामानाधिकरण्यरूपतद्धर्मावच्छिन्नव्याप्तिनिरूपकस्वरूपसाध्यतावच्छेदकावच्छिन्नव्यापकत्वमेवोपाधिघटकतया मूलाभिप्रेतमित्याशयेनैव प्रगल्भानां पक्षेतरातिव्याप्तिवारणसङ्गमनम्, अन्यथा पर्वतभेदादौ द्रव्यभेदादिसमानाधिकरणाभावाप्रतियोगित्वरूपतद्व्यापकत्ववति पर्वतादिविशेषणवैयर्थ्याद्व्यतिरेकव्याप्तिविरहेण व्यभिचाराद्व्यतिरेकव्याप्तिविरहेण तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपव्यापकत्वाभावसाधनासम्भवात् । पर्वतभेदादौ द्रव्यभेदादिसमनियतात्यन्ताभावाप्रतियोगित्वसत्त्वेऽपि गौरवात् व्यर्थविशेषणघटितधर्मस्य साध्यसामानाधिकरण्यनिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वाभाववदुक्तव्याप्त्यनुरोधेन द्रव्यभेदत्वादौ तादृशपर्वतभेदादिसामानाधिकरण्यावच्छेदकत्वाभावोपगमेन दर्शितव्यभिचाररूपदोषस्योक्तव्यापकत्वाभावसाधने नावकाशः । तथा च संयोगादौ द्रव्यादिनिष्ठाभावप्रतियोगित्वसत्त्वेऽपि द्रव्यत्वत्वादेस्संयोगादिसामानाधिकरण्यावच्छेदकतया द्रव्यत्वत्वावच्छिन्नव्यापकत्वमक्षतमेवेति व्यापकेऽपि तद्विशेषणमर्थवत् ।

न चैवं व्यर्थविशेषणतया यत्र शरीराहेतुकत्वाभावस्तत्राहेतुकत्वाभाव इति व्यतिरेकव्याप्त्यसम्भवेऽपि उक्तव्याप्त्यनुरोधेन अहेतुकत्वे शरीराहेतुकत्वव्याप्यतावच्छेदकत्वानुपगमसम्भवादुक्तव्याप्तौ दीधितिकारवक्ष्यमाणव्यभिचारसङ्गतिरिति वाच्यम् । इह शरीराहे-

तुकमहेतुकत्वादित्यनुमाननिर्वाहायाहेतुकत्वत्वावच्छिन्नशरीराहेतुकत्वव्याप्तेरवश्योपेयत्वात् ।

न चैवमिदं पर्वतभिन्नं द्रव्यभेदादित्यनुमानानुरोधेन द्रव्यभेदत्वाद्यवच्छिन्नेऽपि पर्वतभेदादिव्याप्त्युपगम आवश्यक इति वाच्यम्। यः पर्वतस्तद्द्रव्यमित्यादिव्यतिरेकव्याप्तित एव तादृशानुमानसम्पत्तेः । इह शरीराहेतुकमहेतुकत्वादित्यनुमानस्य च यच्छरीरहेतुकं तत्सहेतुकमिति व्यतिरेकव्याप्तेरपि शरीरविशेषणवैयर्थ्येन असम्भवेनानिर्वाहात् । धूमादिव्यापकतावच्छेदकवह्नित्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वादेः ह्नित्वाद्यवच्छिन्नाभावसाधारणधूमत्वाद्याश्रयप्रतियोगिकाभावव्याप्यतावच्छेदकत्वं न सम्भवति शुद्धस्याभावत्वस्यैव तद्व्याप्यतावच्छेदकत्वसम्भवादिति व्यभिचारः स्यात्, अतस्तदाश्रयप्रतियोगिकाभावमुपेक्ष्य तदवच्छिन्नाभावप्रवेशनम् । व्याप्यताघटकसम्बन्धावच्छिन्नत्वेनापि तदवच्छिन्नप्रतियोगिता विशेषणीया, अन्यथा ऽन्यसम्बन्धावच्छिन्नाभावसाधारणतया धूमत्वाद्यवच्छिन्नाभावत्वस्य केवलान्वयितावच्छेदकतया तदवच्छिन्ननिरूपितवह्न्याद्यभावनिष्ठव्याप्तेरभावत्वेनैवावच्छेदेन व्यभिचारात् । ह्नित्वाद्यवच्छिन्नाभावसाधारणवह्नित्वाद्याश्रयप्रतियोगिकाभावत्वस्य धूमत्वाद्यवच्छिन्नाभावव्याप्यतानवच्छेदकतया व्यभिचारवारणाय स्वाश्रयप्रतियोगिताकत्वमुपेक्ष्य स्वावच्छिन्नप्रतियोगिताकत्वनिवेशनम् । तादृशप्रतियोगिता व्यापकताघटकसम्बन्धावच्छिन्नत्वेनापि विशेषणीया, तेन समवायादिसम्बन्धावच्छिन्नवह्न्याद्यभावस्य संयोगादिसम्बन्धावच्छिन्नधूमाद्यभावव्यभिचारित्वेऽपि न व्यभिचारः ।

अथोक्तव्यभिचारवारणाय द्रव्यभेदत्वादेः पर्वतभेदादिव्याप्यतानवच्छेदकत्वे गुणो द्रव्यभिन्नो घटान्यत्वादित्यादौ पर्वतभेदादेरनुपाधितापत्तिरिति चेन्न । बाधोन्नीतपक्षेतरत्ववत्तादृशोपाधेरप्यसद्धेतुदोषस्य तन्मते सत्त्वेन तद्वारणासम्भवात्, उक्तविशेषणपक्षेऽपि तदावश्यकत्वात् ।

इदमत्र चिन्त्यते । उक्तव्याप्तिस्वीकारे यत्र आर्द्रेन्धनाभावस्तत्र धूमाद्यभाव इति व्याप्तिर्न सम्भवति, व्यर्थविशेषणतया यत्र धूमाद्यभावाभावस्तत्रार्द्रेन्धनाभावाभाव इति व्यतिरेकव्याप्तेरसम्भवात् तथा च यत्र धूमस्तत्रार्द्रेन्धनमिति व्याप्त्यापि प्रस्थितम्, तद्वध-

तिरेकगोर्व्याप्तिविरहादिति उपाधिमात्रोच्छेदस्स्यात्। यदि च व्यापकतावच्छेदकं यद्रूपं तदवच्छिन्नाभावत्वेन व्याप्यता न नियमे निवेश्यते अपि तु तदवच्छिन्नविरोधितावच्छेदकरूपेणैव उक्तस्थले आर्द्रेन्धनाभावव्यापकतावच्छेदकधूमाभावत्वावच्छिन्नाभावत्वेन अप्रसिद्धिवारकधूमादिविशेषणघटितेन व्याप्यताविरहेऽपि धूमाभावत्वावच्छिन्नविरोधितावच्छेदकधूमत्वादिना आर्द्रेन्धनाद्यभावाभावादिव्याप्यतासत्त्वेनोक्तनियमभङ्ग इत्युच्यते तदा तादृशनियमस्य प्रकृतानुपयोगप्रसङ्गः पर्वतभेदत्वावच्छिन्नविरोधितावच्छेदकपर्वतत्वादिनिष्ठतद्व्यक्तित्वादिना साध्याभावव्याप्यताग्रहसम्भवेन पर्वतभेदत्वादौ व्यापकतानवच्छेदकत्वसाधकहेत्वसिद्धेः पूर्वोक्ताया दुर्वारत्वादिति।

व्यतिरेके व्याप्यभावात्। पक्षेतरत्वव्यतिरेकत्वावच्छिन्ने साध्याभावव्याप्यत्वभावग्रहात्। अन्वयेऽपि न तथा। साध्यतावच्छेदकावच्छिन्ने पक्षेतरत्वव्याप्यभावग्रहः। पक्षेतरत्वाभावत्वे साध्याभावव्याप्यतानवच्छेदकत्वग्रहेण पक्षेतरत्वत्वे साध्याभावव्याप्यतानवच्छेदकत्वग्रहेण पक्षेतरत्वत्वे साध्याभावव्याप्यतावच्छेदकस्यावच्छिन्नाभावत्वकाव्यत्वेन हेतुना साध्यतावच्छेदकावच्छिन्नव्याप्तिनिरूपकतानवच्छेदकत्वसाधनमिति फलितोऽर्थः। साध्याव्यापकत्वात्। पक्षेतरत्वत्वे साध्यव्यापकतावच्छेदकत्वाग्रहात्। नायमुपाधिः। नोक्तरूपावच्छिन्न उपाधिताग्रहविषयः। उक्तनियमानवधारणस्थले चोपाधिताग्रह इष्ट एवेत्याशयः। अहेतुकत्वेति। व्यर्थविशेषणतया व्यतिरेकव्याप्यसत्त्वेऽपि अहेतुकत्वे शरीराहेतुकत्वव्याप्तिसत्त्वेन उक्तनियमे व्यभिचारादित्यर्थः। अभ्युपेत्याह। एवमपीति। उक्तनियमसत्त्वेऽपीत्यर्थः। स्वयोगादाविति। अव्याप्यवृत्ताविरयर्थः। अतिव्याप्तितादवस्थ्यादिति। साध्यव्यापकत्वाभावसाधनासम्भवेनेत्यादिः। अव्याप्यवृत्तिनिरूपितायाः केवलान्वयिनिरूपितायाश्च व्यापकतायास्तदभावव्याप्यव्यतिरेकप्रतियोगित्वाव्याप्यत्वेन तदभावाप्रसिद्ध्या च तादृशप्रतियोगित्वाभावेन तदभावसाधनस्य व्याप्तिविरहेण साधनाप्रसिद्ध्या चासम्भवादिति भावः।

यद्यपि वाच्यत्वादौ केवलान्वयित्वनिश्चयदशायां व्यतिरेकित्व-

घटितसाधनव्यापकतया गृह्यमाणे पक्षेतरत्वे न वाच्यत्वादिव्यापकताग्रहसम्भवः केवलान्वयित्वेन लिङ्गेन तत्र व्यतिरेकिणो व्यभिचारानिश्चयात्, तथापि तत्र साध्ये पक्षनिष्ठाभावप्रतियोगित्वसंशयदशायां तत्रातिप्रसङ्ग इति बोध्यम् । व्याप्यवृत्तिव्यतिरेकप्रतियोगितावच्छेदकत्वे सति यो यः किञ्चिद्धर्मावच्छिन्नव्यापकतावच्छेदकः स यत्किञ्चिदभावव्याप्यतावच्छेदकस्त्वावच्छिन्नाभावत्वक इति व्याप्तिरूप्यते तदा नायं दोषः, संयोगादिव्यापकतावच्छेदकद्रव्यत्वाद्यवच्छिन्नाभावत्वस्य व्यर्थविशेषणतया संयोगाद्यभावव्याप्यतावच्छेदकत्वेऽपि घटत्वाद्यभावव्याप्यतावच्छेदकतया व्याप्यदिशि व्याप्यवृत्तित्वानिवेशे क्षतिविरहात्, अव्याप्यवृत्तिव्यापकत्वाभावस्यापि व्यतिरेकव्याप्यभावेन साधनसम्भवात्, पक्षेतरत्वाभावत्वस्य व्यर्थविशेषणतया केनचिदपि निरूपिते व्याप्यत्वे ऽवच्छेदकत्वाभावात्, वाच्यत्वाद्यभावघटितसाधनाप्रसिद्धावपि सामान्यतो व्याप्यतावच्छेदकस्वावच्छिन्नाभावत्वकत्वविरहेण वाच्यत्वादिव्यापकतावच्छेदकत्वाभावसाधनासम्भवादिति ध्येयम् ।

बाधोन्नीतपक्षेतरस्योपाधित्वानभ्युपगमेऽपि न प्रतीकारः, तथा सत्यपि व्यभिचारवारकस्यैव व्याप्तिग्रहौपयिकतया ऽप्रसिद्धिवारकस्यापि विशेषणस्य व्याप्यतावच्छेदके ऽवश्यं प्रवेशादुक्तरीत्या बाधोन्नीतपक्षेतरे ऽतिव्याप्तेदुर्वारत्वादित्याह मूले न चेत्यापत्तिरित्यादिना ।

( चि० ) वस्तुगत्या साध्यव्यापकः पक्षेतर उपाधिरिति चेत् ? अस्तु तथा, तथापि पक्षातिरिक्ते साध्यव्यापकताग्रहादुपाधेर्दूषकत्वम्, तच्च तत्रास्ति, अन्यथा पक्षे साध्यसन्देहादनुपाधित्वे उपाधिमात्रमुच्छिद्येत । विपक्षाव्यावर्तकविशेषणशून्यत्वं विशेषणम्, तेन बाधोन्नीतपक्षेतरस्य परिग्रहः, तत्र पक्षस्यैव विपक्षत्वात्, न तु पर्वतेतरत्वादेरिति चेन्न । न हि वस्तु विपक्षव्या-

**यर्तकविशेषणशून्यम् , सर्वत्र प्रमेयत्वादेरसत्त्वात् । तत्रोपात्तेति विशेषणे सिद्ध्यसिद्धिव्याघातः ।**

(दी०) वस्तुगत्येति । तथा च पक्षे साध्यवति तदितरत्वं साध्याव्यापकं तद्वहिते च बाधोन्नीतत्वादुपाधिरेवेति भावः । यद्विषयतया ज्ञानस्यानुमितिप्रतिबन्धकत्वं तदेव प्रकृते उपाधिरं वाच्यं नान्यदनुपयुक्तत्वात्, तच्चेदुक्तं रूपं तदा तद्वत्तया पक्षेतरस्यापि ग्रहादनुमितिमात्रोच्छेद इत्यभिप्रायवानाह । अस्त्विति । उपाधिमात्रमिति । सत्प्रतिपक्षोन्नायकतया दूषकत्वमिति मते । इतरथा तु पक्षावृत्तेरुच्छेदो बोध्यः । विपक्षेति । विपक्षव्यावर्तकधर्मान्तरावच्छिन्नपक्षेतरत्ववारणाय निषेधद्वयगर्भता ।

(गा०) पक्षेतरेऽतिव्याप्तिरिति ग्रन्थस्य ज्ञानातिव्याप्तिपरत्वेऽपि वस्त्वतिव्याप्तिपरत्वाभिमानेन मूल वस्तुगत्येत्यादिशङ्का । तत्र पर्वतो वह्निमान् धूमादित्यादौ पक्षेतरस्यालक्ष्यतया नाव्याप्तिरित्यभिप्रायप्रकाशनमन्तरेण दोषोद्धारो न स्फुटीभवतीति शङ्कतो लक्ष्ये बाधोन्नीतपक्षेतरत्वे वास्तवसाध्यव्यापकत्वघटितलक्षणसत्त्वमात्रलाभेऽपि एकविशेषे तादृशलक्षणसत्ताकथनादपरे तद्व्यवच्छेदलाभो व्युत्पत्तिसिद्ध इत्यर्थत औत्सर्गिक तादृशाभिप्राय प्रकाशयति श्रीधितिकृत् । तथा चेति ।

अत्र स्वाभिप्राय प्रकाशयन् उक्तातिव्याप्तिं सङ्गमयति मूले अस्तु तथेति । तथा । अलक्ष्ये पक्षेतरत्वे वस्तुतस्साध्यव्यापकताघटित लक्षणासत्त्वम् । पक्षातिरिक्ते । साध्यवत्तया निश्चिते । उपाधिव्यतिरेकाग्रहमात्रेणेति शेषः । साध्यव्यापकताग्रहादिति । साध्यसंदायविषये उपाधिव्यतिरेकग्रहस्य व्यभिचारसंशयरूपतया तस्य च व्यापकताग्रहाविरोधित्वोपगमेन तद्ग्रहसम्भवादित्यर्थः । उपाधेः । व्यभिचारहेतुकवास्तवोपाधेः । अनुमितिविरोधित्वम् । तत्रापि । पक्षेतरत्वेऽपि ।

ननु पक्षेतरत्वस्य साध्यव्यापकताभ्रमकाले दूषकत्वापत्तावपि ज्ञानागर्भस्योक्तविशेषधर्मस्य वस्त्वतिव्याप्तिविरहेणेतरभेदा

नुमापकत्वरूपलक्षणत्वं दुरपवादमेवेत्याशङ्कां निराचिकीर्षुः अ-स्त्वित्यादेर्भावमाविष्कुरुते दीधितौ। यद्विषयतयेति। यद्रूपयतया। यद्धर्मविशिष्टविषयकत्वेन। ज्ञानस्य। उपाधिनाज्ञानस्य। अनुमि-तिप्रतिबन्धकत्वम्। तत्प्रतिबन्धकज्ञानसम्पादकत्वम्। तदेवोपा-धित्वम्। तान्त्रिकोपाधिव्यवहारविषयतावच्छेदक तद्रूपमेव। प्रकृ-ते वाच्यम्। प्रकृतनिरुक्तिविषयः। अन्यत्। इतरभेदानुमापकम्। अनुपयुक्तत्वात्। अजिज्ञासितत्वात्। तच्चेदुक्तरूपमिति। उक्तम्। साध्यव्यापकत्वे सतीत्यादिकं यदि तदनुमितिप्रतिबन्धकज्ञानवि-षयतावच्छेदकमित्यर्थः। ग्रहात्। प्रायशो ग्रहसम्भवात्। अनु-मितिमात्रोच्छेदः। स्वार्थस्थले प्रायशः परार्थस्थले सर्वत्रैवानु-मितेरुच्छेदप्रसङ्गः।

मूले साध्यसन्देहात्। साध्यसंशयरूपव्यभिचारज्ञानात्। अनु-पाधित्वे। पक्षवृत्त्यभावप्रतियोगितया गृह्यमाणे उपाधित्वघट-कसाध्यव्यापकत्वाग्रहे।

ननु उपाधिमात्रमुच्छिद्येत इति मूलमसङ्गतम्, पर्वतो धूमवा-न्वह्नेरित्यादौ व्यभिचारोन्नायकार्द्रेन्धनाद्युपाधौ सन्देहविषयपर्व-तादिरूपपक्षानिश्चितव्यतिरेके साध्यव्यापकताग्रहसम्भवेनोपाधि-त्वग्रहानुच्छेदादित्यत आह दीधितौ। उपाधिमात्रमितीति। सत्प्रतिपक्षोन्नायकतयेति। तथा चोपाधिमात्रस्य दूषकताच्छेद इति मूलार्थः। उपाधिव्यवहारबीजदूषकतावीजस्य पक्षावृत्तित्व-नियतस्य तन्मते उक्तोपाधावसत्त्वेन तत्र साध्यव्यापकताग्रहस-म्भवेऽपि तत्सङ्गतिः, व्यभिचारोन्नायकतयोपाधेर्दूषकत्वेऽप्युपाधि-पदस्य तद्विशेषपरतया तत्सङ्गतिरित्याह। इतरथा त्विति। पक्षावृत्तेः। पक्षनिष्ठाभावप्रतियोगितया गृह्यमाणमात्रस्य।

विपक्षाद्व्यावर्त्तकविशेषणशून्यत्वं विशेषणमिति मूलम्। विपक्षात्। साध्याभाववतः। स्वविशेष्यतावच्छेदकावच्छिन्नव्याव-र्त्तक यत्तदन्यविशेषणशून्यत्वमुपाधिलक्षणे निवेशनीयमित्यर्थः। तथा च पर्वतभेदपर्वतनिष्ठभेदप्रतियोगित्वादौ नातिप्रसङ्गः, तत्र प्रविष्टस्य भेदप्रतियोगित्वादिरूपविशेष्ये पर्वतनिष्ठभेदादिरूप-विशेषणस्य ह्रदादिरूपविपक्षात् स्वविशेष्यतावच्छेदकभेदत्वप्रति-योगित्वाद्यवच्छिन्नव्यावर्त्तकत्वात्, तद्विशेषणानवच्छिन्नस्यैव त-

विशेषणावच्छिन्नस्यापि भेदत्वाद्यवच्छिन्नस्य इत्यादिरूपविपक्षवृत्तित्वादिति भावः । विपक्षावृत्तिविशेष्यतावच्छेदकावच्छिन्नव्यावर्तकत्वं च स्वविशिष्टतद्विशेष्यतावच्छेदकावच्छिन्नाभाववद्विपक्षकत्वम्, पर्वतादिरूपविशेषणविशिष्टभेदत्वाद्यवच्छिन्नाभावस्यापि विपक्षे सत्त्वात् पर्वतादिरूपविशेषणस्य न विपक्षव्यावर्तकता ।

अथैवमपि पर्वतावृत्तित्वपर्वतान्यवृत्तित्वादिविशेषणविशिष्टवह्न्यादेः पर्वतपक्षकवह्न्यादिसाध्यकोपाधितापत्तिर्दुर्वारैव, तादृशविशेषणस्य वह्नित्वावच्छिन्ने विपक्षव्यावर्तकत्वात् ।

न च स्वप्रतियोगितावच्छेदकस्य तादृशविशेषणघटितत्वप्रयुक्तं विशिष्टाभावस्य विपक्षवृत्तित्वं तादृशत्वमेव विशेषणस्य विपक्षव्यावर्तकत्वम्, पर्वतावृत्तित्वादिविशेषणविशिष्टवह्न्यभावस्य विपक्षवृत्तित्वे च तादृशाभावप्रतियोगितावच्छेदकस्य वह्नित्वादिघटितत्वस्यैव प्रयोजकं न तु पर्वतावृत्तित्वादिविशेषणम्, वह्नित्वादिपरित्यागेन तद्विशिष्टस्य विपक्षे सत्त्वादिति वाच्यम् । प्रयुक्तत्वस्य दुर्वचत्वात् ।

न च स्वविशेष्यतावच्छेदकावच्छिन्नाधिकरणीभूतविपक्षवृत्तिस्वविशिष्टतद्विशेष्यतावच्छेदकावच्छिन्नाभावकत्वमेव स्वस्य विपक्षव्यावर्तकत्वम्, पर्वतावृत्तित्वादिविशेष्यतावच्छेदकवह्नित्वावच्छिन्नाधिकरणत्वस्य विपक्षेऽसत्त्वात्तादृशविशेषणविशिष्टवह्नित्वावच्छिन्नाभावस्य विपक्षवृत्तित्वेऽपि न तस्य विपक्षव्यावर्तकतेति वाच्यम् । घटाद्यन्तर्गते विपक्षे पर्वतीयघटात्यन्ताभावसत्त्वेन पर्वतभेदादावतिव्याप्तेर्वारयितुमशक्यत्वात् । प्रकृतोपाधिप्रविष्टस्य विशेष्यतावच्छेदकस्य विवक्षणे च यादृशोपाधिप्रविष्टविशेष्यतावच्छेदकं न किञ्चिद्विपक्षवृत्तितावच्छेदकं तद्विशिष्टाधिकरणविपक्षाप्रसिद्ध्या तादृशोपाधावव्याप्तिरिति चेन्न । स्वविशेष्यतावच्छेदकतद्धर्मावच्छिन्नाधिकरणविपक्षवृत्तिस्वविशिष्टतद्धर्मावच्छिन्नाभावकं यद्यत्त्वं तदन्यविशेषणविशेष्यतावच्छेदकतापन्नतद्धर्मघटितत्वेनोपाधितावच्छेदकविशिष्टस्य विशेषणीयतया सामञ्जस्यात् । उक्तरीत्या पर्वतादिविशेषणस्य घटत्वावच्छिन्ने विपक्षव्यावर्तकत्वेऽपि भेदत्वाद्यवच्छिन्ने ऽतथात्वात् भेदरूपविशेष्यतावच्छेदकावच्छिन्नस्य व्यावर्तकं इत्याद्येव, तदन्यपर्वतरूपविशेषणविशेष्यतावच्छेदकतापन्नभेदत्वादिघटिते पर्वतभेदादौ नातिव्याप्तिः । वह्न्यादि-

विशिष्टपर्वतभेदाद्यभावस्य विपक्षवृत्तितया भेदत्वाद्यवच्छिन्ने पर्वतादेर्विशेषणस्य विपक्षव्यावर्त्तकत्वं नाशङ्कनीयम्, स्वविशिष्टतद्धर्मावच्छिन्नाभाव इत्यनेन स्वविशिष्टतद्धर्मपर्याप्तप्रतियोगितावच्छेदकताकाभावस्य विवक्षणीयत्वात् । आर्द्रत्वादिविशेषणस्य इन्धनत्वादिरूपविशेष्यतावच्छेदकावच्छिन्ने विपक्षाव्यावर्त्तकत्वाभावात् तादृशविशेषणविशेष्यतावच्छेदकेन्धनत्वादिघटिते आर्द्रेन्धनाद्युपाधौ लक्षणसमन्वयः ।

न चैवं धूमवान्वह्नेरित्यादौ धूमवद्भेदाभावस्य अनुपाधिताप्रसङ्गः भेदत्वाद्यवच्छिन्नविशेषणतया तद्घटकस्य धूमवदादिविशेषणस्य भेदत्वादिरूपविशेष्यतावच्छेदकावच्छिन्ने विपक्षाव्यावर्त्तकत्वादिति वाच्यम् । विपक्षाव्यावर्तकविशेषणविशेष्यतावच्छेदकतापन्नधर्मस्य इतरविशेषणतानवच्छेदकतया तद्घटकत्वस्य विवक्षणीयत्वात्, उक्तोपाधिशरीरे च धूमवन्निष्ठविशेष्यतावच्छेदकतापन्नभेदत्वादेः तदभावादिविशेषणतावच्छेदकतयैव प्रवेशात् । एवं पर्वतभेदादेस्तद्व्यक्तित्वादिना उपाधितावारणाय विपक्षनिष्ठाभावप्रतियोगितावच्छेदकत्वेनाप्युपाधितावच्छेदकं विशेषणीयम् । तादृशविशेषणेन पर्वतभेदत्वाद्यवच्छिन्नस्योपाधितावारणसम्भवेऽपि पर्वतभेदविशिष्टह्रदभेदादिवारणाय निरुक्तविपक्षाव्यावर्त्तकविशेषणशून्यत्वनिवेशनमिति ध्येयम् । एवं सति पक्षभेदस्य विपक्षह्रदादिभेदविशिष्टतद्व्यक्तित्वेन विपक्षह्रदादिभेदविशिष्टभेदत्वेन वोपाधिताप्रसङ्गः, एतद्विशेषणेऽपि अणवः सकर्तृकाः कार्यत्वादित्यादौ अनणुत्वादेस्तत्प्रसङ्गवत्, तथापि लक्षणमतिव्यापकमेवेत्यग्रिमे मूलतात्पर्यविषयतया न क्षतिमावहति ।

विपक्षव्यावर्त्तकविशेषणवत्त्वस्य विपक्षनिष्ठाभावप्रतियोगितावच्छेदकत्वपर्यवसितस्योपाधितावच्छेदकविशेषणत्वं किमुपेक्षितमित्याशङ्कां निराकुरुते दीधितौ विपक्षव्यावर्त्तकधर्मान्तरावच्छिन्नेति । विपक्षावृत्तिसाध्यादिविशिष्टेत्यर्थः ।

उक्तविशेषणस्य पूर्वविशेषणवन्न बाधोन्नीतपक्षेतरव्यावर्तकता तथापि तत्सत्त्वादित्याह मूले तेनेति । तेन । उक्तविशेषणेन । बाधोन्नीतपक्षेतरस्येत्यनन्तरमपिः पूरणीयः । परिग्रहः । आक्रमणम्, स्वाश्रयीकरणमिति यावत् । तदेतत्स्फुटयति । तत्रेति । तत्र । बाधस्थले ।

पक्षस्येति । विशेषणतया स्वस्मात्स्वभेदव्यावर्त्तकस्येत्यादिः । पक्षेतरत्वादेरिति । वह्न्यादिसाध्यकस्थले इत्यादिः । परिग्रह इत्यनुषज्यते । तत्र पक्षस्य साध्यवत्तया विपक्षत्वाभावादिति भावः । तादृशविशेषणाभाववत्त्वमुपाधौ विशेषणतयाऽभिमतमित्यभिमानेन दूषयति । न हीति । वस्तु किमपीति शेषः । तत्रोपाधेति । प्रकृतोपाधितावच्छेदकानिविष्टेत्यर्थः ।

(चि०) तथापि च साध्यव्यापकत्वसाधनाव्यापकत्वे तत्र स्त इति तद्व्यावृत्त्या पक्षे साध्यव्यावृत्तिरतो हेतोर्व्यभिचार एव, व्यभिचारे चावश्यमुपाधिरिति पक्षेतर एव तत्रोपाधिः स्यात् । तावन्मात्रस्यैव दूषकत्वाच्च व्यर्थं विशेषणम् । अत एवानुमानमात्रोच्छेदकतया जातित्वान्न पक्षेतर उपाधिरित्यपास्तम् । दूषणसमर्थत्वेन जातित्वाभावात् । एतेन पक्षेतरव्यावृत्त्यर्थं प्रकारान्तरमपि निरस्तम्, उपाधित्वाभावेऽपि दूषणसमर्थत्वात् ।

(दी०) विपक्षाव्यावर्तकविशेषणानवच्छिन्नसाध्यव्यापकत्वसाधनाव्यापकत्वशालित्वं तद्विवक्षितमित्याशङ्क्य पक्षेतरत्वरूपोपाधित्वमनङ्गीकुर्वतस्तव मते नातिव्याप्तिरभिहिता । वस्तुतो दूषकताप्रयोजकरूपवतस्तस्यानुपाधित्वाभ्युपगमः तद्वारणाय च विशेषणोपादानं द्वयमपि न युक्तमित्यभिप्रायवानाह । तथापीति । तावन्मात्रस्य । साध्यव्यतिरेकोन्नयनक्षमसाध्यव्यापकतामात्रस्य । दूषकत्वात् । दोषोन्नयनोपयोगित्वात् । जातित्वादिति । त्वदुत्तरस्येत्यादिः । उपाधित्वाभावेऽपीति । उपाधित्वानङ्गीकारेऽपीत्यर्थः ।

(गा०) अभिमाननिराकरणेनोक्तदूषणमुद्धृत्य तथापीत्यादिदोषम-

पक्षसत्त्वापादके पक्षे साध्यव्यतिरेकोन्नयनयोग्यत्वे साधनाव्यापकत्वांशानुपयोगात् प्रक्रान्तमपि तदंशं विशिष्यानुपादाय साध्यव्यापकताभावस्येत्युक्तम् । मात्रपदेनोक्तविशेषणस्यैव व्यभिचाराद्युन्नयनोपयोगिताव्यवच्छेदः । व्यभिचारोन्नयने साधनाव्यापकतायाः सत्प्रतिपक्षोन्नयने च पक्षावृत्तिताया उपयोगात्तद्व्यवच्छेदायोगात्साध्यव्यापकतेत्यनेनान्यतरसहितव्यापकताया विवक्षणीयत्वात् । दूषकत्वादित्यनेन स्वतो दूषकत्वविवक्षासम्भवात् । तदर्थमाह । दोषोन्नयनेति । व्यभिचारसत्प्रतिपक्षान्यतरोन्नयनेत्यर्थः । व्यभिचारस्योन्नयनं तदनुमितिः, सत्प्रतिपक्षोन्नयनं च साध्यानुमितिप्रतिरोधप्रयोजकसाध्यव्यापकाभाववत्ताज्ञानसम्पादनम् ।

मूले अनुमानमात्रोच्छेदकतयेति । सर्वत्रैवानुमाने पक्षेतरस्योपाधितयोद्भावनसम्भवात् पक्षेतरत्वव्यभिचारेण साध्यव्यभिचारानुमानमपि न सम्भवतीति दूषणसमर्थत्वेनेत्यर्थः । अनुमानपदं परार्थानुमानपरम्, स्वार्थानुमाने सर्वत्र पक्षेतरत्वे साध्यव्यापकताग्राहकसामग्र्या नियतत्वाभावेन अनुमानमात्रोच्छेदासम्भवात् ।

दूषणासमर्थमुत्तरं जातिरिति जातिलक्षणादुत्तरस्यैव जातित्वं न तु पक्षेतरोपाधेरिति मूलासङ्गतेर्वारणाय पूरयति दीधितौ । स्वयुत्तरस्येति ।

मूले न पक्षेतर उपाधिरिति । इत्युत्तरकत्वस्यालक्ष्यताप्रयोजकत्वादिति शेषः । तथा च तद्वारणाय विशेषणदानमुचितमेवेति भावः । अत एवेत्यनेनोक्तमुपाधिताहेतुं विवृणोति । दूषणसमर्थत्वेनेति । उक्तयुक्त्या व्यभिचाराद्यननुमापकत्वेऽपि पक्षे साध्यव्यापकाभावज्ञानसम्पादनेन साध्यानुमितिप्रतिरोधसमर्थत्वेनेत्यर्थः । प्रकारान्तरम् । विशेषणान्तरनिवेशनम् । तच्च बाधोन्नीतपक्षेतरभिन्नत्वम् ।

पक्षेतरस्य लक्ष्यताव्यवस्थापनदशायां उपाधित्वाभावेऽपीति कथनासङ्गतेस्तदर्थमाह दीधितौ । उपाधित्वानङ्गीकारेऽपीति । भवतेत्यादिः ।

( दी० ) अथोपाधिस्स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापकतया दूषणम् ? पक्षेतरत्वव्यतिरेकश्च न सा-

ध्याभावसाधकोऽसाधारणत्वात्, न तु व्यभिचारो ज्ञापकतया दूषणम् । यथा हि साध्यव्यापकोपाधेः व्याप्यतया हेतोस्साध्याव्याप्यत्वं तथा साध्यव्याप्यहेत्वव्यापकतयोपाधेर्न साध्यव्यापकत्वमपि सिद्ध्येत्, व्याप्तिग्राहकस्योभयत्रापि साम्येन विनिगमकाविरहात् । तस्माद्यथा साध्यव्याप्येन हेतुना साध्यं साधनीयं तथा साध्यव्यापकोपाधिव्यावृत्त्या साध्याभावोऽपि साधनीयो व्याप्तिग्रहतौल्यादिति दूषकताबीजं सोऽयं सत्प्रतिपक्ष एवेति । मैवम् । एवं हि सत्प्रतिपक्ष उपाध्युद्भावनं न स्यात्, सत्प्रतिपक्षान्तरवत् । किञ्च एवं बाधोन्नीतोऽपि पक्षेतरो नोपाधिस्स्यात्, व्यतिरेके ऽसाधारण्यात् ।

(दी०) दूषकताबीजसत्त्वे तस्योपाधित्वं दूषकताबीजं च न व्यभिचारादेर्ज्ञापकत्वमपि तु सत्प्रतिपक्षस्य तच्च तत्र नास्तीत्यतो न स उपाधिरिति शङ्कते अथेति । व्यभिचारोन्नायकतया । व्यभिचाराद्युन्नायकतया । अव्याप्यतया । अव्याप्यत्वादिना । अव्याप्यत्वम् । अव्याप्यत्वादि । सत्प्रतिपक्षान्तरवदिति । व्याप्तिपक्षधर्मताऽऽख्यबलसत्त्वेनैकेनापि बहूनां प्रतिरोधसम्भवात्, बहुत्वस्याबलत्वात् । यत्तु प्रमाणतत्त्वबोधादौ बहुत्वमपि बलमुक्तम्, तन्न सत्प्रतिपक्षतायां किन्त्वेकत्राङ्गभङ्गप्रसङ्गे । बहुषु तत्कल्पनागौरवं एकत्र च लाघवमिति तर्कोत्थापकतयेति नोपाधेस्सत्प्रतिपक्षोत्थापकतया तत्र दूषणत्वसम्भव इति भावः । एवम् । सत्प्रतिपक्षोन्नायकतया दूषकत्वे ।

(गा०) व्यभिचाराद्युन्नायकत्वस्य दूषकताबीजत्वनिराकरणेन सत्प्रतिपक्षोन्नायकत्वस्य तथात्वं व्यवस्थाप्य तस्य पक्षेतरत्वे ऽस-

स्त्रकथने विशेषणान्तरौचित्यप्रयोजकतदलक्ष्यतानिर्वाहकतया प्रकृते उपयोजयितुं अथेत्यादिमूलतात्पर्यं सङ्क्षेपेण प्रदर्शयति । दूषकतायोजकत्वे इति । न व्यभिचारादेरुन्नायकत्वमिति । येन पक्षेतरव्यभिचारादिना साधने असाधारण्यादिदोषविरहेण सोऽपि लक्ष्यस्स्यादिति शेषः । आदिना अव्यभिचारविशिष्टसाध्यसामानाधिकरण्यरूपव्याप्त्यभावपरिग्रहः । तदुन्नायकताया दूषकताबीजत्वेऽपि पक्षेतरालक्ष्यत्वानिर्वाहात् । उन्नायकत्वम् । अनुमापकव्यभिचारादिप्रतियोगित्वम् । सत्प्रतिपक्षस्येति । साध्यानुमितिप्रतिरोधस्येत्यर्थः । अत्रानुपपद्यमानस्य उन्नायकत्वमित्यस्य प्रयोजकव्यतिरेकप्रतियोगित्वमर्थः । स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापकतयेति मूलस्यापि प्रतिरोधप्रयोजकस्वव्यतिरेकतयेत्येवार्थः । तथ । सत्प्रतिपक्षोत्थापकत्वं च । तत्र । पक्षेतरे । न स उपाधिरित्युपलक्षणम्, व्यतिरेकेऽसाधारण्याभावनिर्वाहकविपक्षाव्यावर्तकविशेषणशून्यत्वविनिर्मुक्तसाध्यव्यापकत्वस्य न दोषाद्यनोपयोगित्वमित्यपि बोध्यम्, तेन तावन्मात्रस्येत्यादिदूषणोद्धारः । अव्याप्यत्वोन्नायकतया अप्रतिक्षेपे न्यूनता स्यादिति तत्सङ्ग्राहकादिपदमन्तर्भाव्य व्याचष्टे । व्यभिचारेति । व्यभिचारोन्नायकतया अदूषणत्वस्यापि प्रकृतत्वात्तद्व्यवस्थापनेन न्यूनतां परिहर्तुं साध्यव्यापकोपाध्यव्याप्यतयेत्यादौ व्यभिचारपरिग्राहकमादिपदमन्तर्भावयति अव्याप्यतयेत्यादिना ।

साध्याव्याप्यत्वमिति मूले सेद्धुमर्हतीति शेषः । व्याप्तिग्राहक । व्यभिचारनिश्चयविरहसहकृतसहचारदर्शनस्य । उभयत्र । साध्योपाध्योर्हेतुसाध्ययोश्च । विनिगमकाविरहादिति । तथा च हेतौ साध्यस्य व्यभिचारादिसाधनाय परोद्भावितोपाधौ वादिनोक्तहेतुना साध्यव्यापकत्वे साधयितुमारब्धे व्यभिचाराद्यनुमापकव्याप्तेरनिश्चयात् न व्यभिचारानुमाननिर्वाह इति भावः । व्याप्तिग्रहविरोधिव्यभिचारज्ञानस्य गृहीतायां व्याप्तौ अनुपयोगाद्व्याप्तावगृहीतायां यत्रोपाधौ साध्यव्यापकताग्रहस्तत्रैव व्यभिचारोन्नायकतयोपाधेर्दूषकत्वाङ्गीकारात् स्वार्थस्थले व्यभिचारोन्नायकत्व सम्भवतीति परार्थानुमानाभिप्रायकतया दर्शितम् । अत एवाग्रे साधनीयमित्याद्युक्तिः साधु सङ्गच्छते । साधनीयम् । वादिना साधनीयम् । व्याप्तिग्रहेति । व्याप्तिग्रहसामग्रीत्यर्थः । सोऽयम् प्रकारः । सत्प्रतिपक्ष एव ।

प्रतिरोधसम्पादनरूप एव । तथा च पक्षेतरव्यतिरेको ऽसाधारण्य-दोषदुष्टतया निग्रहभयेन परेणोद्भावयितु न शक्यत इति तेन न प्रतिरोधसम्भव इति नासावुपाधिरिति भाव । एव हीति । सत्प्रतिपक्षोन्नायकत्वस्यैव दूषकताबीजत्वे इत्यर्थः । उपाध्युद्भावनम् न स्यात् । नोपयुज्येत । तत्साधनीयस्य साध्याभावाभावरूपसाध्यस्य साधनाय प्रयुक्तात् प्रथमहेतोरेव प्रतिहेतोर्विरुद्धत्वादिति भावः । सत्प्रतिपक्षान्तरवदिति । प्रतिहेतुदूषणाय प्रकृतसाध्यसाधकहेत्वन्तरस्य यथा वादिना नोद्भावन पूर्वोपन्यस्तहेतुनैव तत्कार्यप्रतिरोधादित्यर्थः ।

ननु पूर्वोपन्यस्तहेतोर्हेत्वन्तरसाहित्यरूपाधिकबलनानिर्वाहाय उपाधेः सत्प्रतिपक्षान्तरस्य च उद्भावनं युज्यत एवेत्यत आह दीधितौ । व्याप्तिपक्षधर्मतारूपबलेति । एकेनापि हेतुना बहूनां हेतूनां कार्यस्य प्रतिरोधसम्भवात् प्राचीनग्रन्थे हेतुबहुत्वस्य बलत्वोक्तिविरोधं परिहरति । यद्यपीति । बहुत्वमपि बलमिति यदुक्तमित्यन्वयः । उक्तमिति । उपायकृदुक्तमित्यर्थः । सत्प्रतिपक्षतायामिति । विरोधितयेति शेषः । एकतराङ्गभङ्गप्रसङ्ग इति । एकसाध्यसाधकहेतुविषयकव्याप्तिपक्षधर्मताज्ञानाप्रामाण्यस्य अनयोरेकतरं बाध्यमित्याद्यनुमानेन सामान्यतस्साधन इत्यर्थः । इति तर्कोत्थापकतयेति । विशेषपर्यवसानसम्पादकताद्दशप्रतिसन्धानसम्पादकतयेत्यर्थः । बहुत्व बलमुक्तमित्यनुषज्यते ।

न चैवं तादृशतर्कावतारार्थमेव सत्प्रतिपक्षे उपाधेः प्रतिपक्षान्तरस्य चोद्भावनमुपयुज्यतामिति वाच्यम् । तावतापि अनयोः कस्य बाध्यता कल्प्यतामित्याकाङ्क्षामन्तरेणाप्युपाधेः प्रतिहेतौ तान्त्रिकैरुद्भावनस्यानुपपत्तेः । किञ्चेत्यनन्तरमेवमिति मूलं गृह्णन् व्याचष्टे । एवमिति ।

(चि०) ननु बाधे नोपाधिनियमः, धूमेन ह्रदे वह्निसाधने तदभावात्,न तु हेतुमति पक्षे बाधे पक्षेतरोपाधिनियमः, प्रत्यक्षे वह्नौ कृतकत्वेनानुष्णत्वे साध्येऽतेजस्त्वादेरुपाधित्वसम्भवदिति चेन्न । तेजोमात्रपक्षत्वे ऽतेजस्त्वं विना ऽन्यस्योपाधेरभावात् ।

( दी० ) बाधस्यानिश्चये ऽसाधारण्यानिश्चये च वैयर्थ्या-न्मायूत्सोऽप्युपाधिरित्यभिप्रायेण शङ्कते । नन्विति ।

हेतुमतीति । न चासङ्कीर्णबाधस्थले व्यभिचारः, प्रतियोगिव्यधिकरणसाध्याभावस्यैव प्रकृते बाधत्वात् तदनभ्युपगमाद्वा । अतेजस्त्व विनेति । तत्समशीलं विना शुद्धसाध्यव्यापकस्योपाधेरभावादित्यर्थः । तेन भास्वररूपशून्यत्वादे रूपवत्त्वावच्छिन्नसाध्यव्यापकगुरुत्वादेश्च सत्त्वेऽप्यदोषः ।

( गा० ) ननु नोपाधिः स्यादित्यत्र हेतुतया उक्त व्यतिरेके ऽसाधारण्यादित्यसङ्गतम्, वह्न्यावनुष्णस्वबाधावतारे तस्य विपक्षतया वह्नितरत्वव्यतिरेकस्य विपक्षव्यावृत्तत्वाभावादित्यतो बाधानवतारदशाभिप्रायकतया तत्सङ्गमयितुं पूरयति । बाधस्येति । न्यूनताभङ्गाय बाधावतारस्थले वह्नयादीतरत्वस्योपाधितया कूपकत्वं पूरणेन निराकुरुते । निश्चये चेति । बाधस्येत्यनुषज्यते । वैयर्थ्यादिति । साध्याभावस्यानिश्चिततया तत्साधकोपाधेर्निष्फलत्वादित्यर्थः ।

नन्वित्यादिमूले बाधे उपाधिनियमखण्डनस्य बाधोत्रीतपक्षे तस्यानुपाधितापत्तिरूपदूषणसमाधानतामुपपादयति । मा भूत्सोऽप्युपाधिरिति । तस्यानुपाधित्वमिष्टमेवेति न तदापत्तिसम्भव इत्यर्थः । एवं च नोपाधिनियम इति मूलस्य येन तन्नियमरक्षायै वह्नितरत्वादेरुपाधित्वमावश्यकं स्यादिति शेषः ।

मूले हेतुमति पक्षे बाधे इति । बाधितसाध्यकपक्षवृत्तिहेताविन्यर्थः । पक्षेतरेति नियमे नान्तर्भावनीयम् । पक्षतावच्छेदकावच्छिन्नभेदात्मकातेजस्त्वादिरूपोपाधिमादाय नियमस्य अस्य निर्वाह्यत्वात् ।

बाधहेत्वाभासशालिनि पक्षवृत्तिहेतौ सोपाधित्वनियम इति मूलाभिप्रायेण शङ्कते दीधितौ । न चेति । व्यभिचारेणासिद्धा चासङ्कीर्णो यत्र बाधहेत्वाभासः पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिविरोधी तदवच्छेदेन साध्याभावप्रसरूपः तादृशे गन्धप्रागभावादिविशिष्टघटादिपक्षकगन्धादिसाध्यकपृथिवीत्वादिहेतावित्यर्थः ।

व्यभिचार इति । तादृशहेतोस्साध्यव्याप्यतया उपाधेर्व्यभिचारो ज्ञापकतया दूषकतामभ्युपगच्छत उक्तनियमवादिनो मते साधनाव्यापकत्वस्योपाधिलक्षणे ऽवश्यं प्रवेशात्तादृशलक्षणाक्रान्तस्य उपाधेस्तत्रासम्भवादिति भावः । प्रकृते बाधत्वादिति । बाधपदेन प्रकृते विवक्षणादित्यर्थः । तथा च तादृशसाध्याभाववत्पक्षवृत्तिहेतोस्सोपाधित्वनियम इति मूलार्थः । उक्तस्थले च पक्षे न तादृशसाध्याभाव इति न व्यभिचार इति भावः । सर्वत्र पक्षतावच्छेदकसामानाधिकरण्येनैवानुमितिस्साध्यमपगाहते इतरबाधकाधनज्ञानबलादपि न व्यापकतानवच्छेदकरूपेण साध्यभानमिति प्राचीनमते ऽसिद्धिव्यभिचारान्यतरासङ्कीर्णबाधस्थलमेव नास्ति, तथा च तन्मते हेत्वाभासग्रन्थे निर्वक्ष्यमाणबाधहेत्वाभासविभाजकधर्मपुरस्कारेण बाधोपपादनेऽपि न व्यभिचारः, गन्धादिमत्त्विगुगन्धप्रागभावादिरूपपक्षतावच्छेदकावच्छिन्नगन्धाद्यभावस्यानुमित्यविरोधितया बाधत्वविरहादित्याशयेनाह । तदनभ्युपगमाद्वेति । असङ्कीर्णबाधस्यैवोक्तनियमवादिनाऽनभ्युपगमादित्यर्थः ।

। ननु तेजस्त्वावच्छिन्नपक्षकानुष्णत्वावच्छिन्नसाध्यकस्थले ऽतेजस्त्वरूपपक्षेतरत्वं विना अन्योपाधेरभावादुक्तनियमानुरोधेन तस्योपाधित्वमावश्यकम्, सत्प्रतिपक्षोन्नायकत्वस्य दूषकताबीजत्वमते च तद्व्यतिरेकस्यासाधारणतया तस्य दूषकत्वासम्भव इति मूलोक्तं न सङ्गच्छते अतेजस्त्वभिन्नस्यापि शुद्धसाध्यव्यापकभास्वररूपशून्यत्वाद्यवच्छिन्नसाध्यव्यापकगुरुत्वादेश्चोपाधेस्सम्भवादित्यतो ऽतेजस्त्वं विनेत्यादि व्याचष्टे । अतेजस्त्वमिति । तत्समशीलमिति । असाधारणव्यतिरेकप्रतियोगित्वेन तत्तुल्यमित्यर्थः । तथा चासाधारणव्यतिरेकप्रतियोगिनः उपाध्यन्तरस्य सत्त्वेऽपि पक्षेतरत्वव्यतिरेकस्येव तद्व्यतिरेकस्य असाधारणत्वेन सत्प्रतिपक्षानुन्नायकत्वात्, सत्प्रतिपक्षोन्नायकत्वस्योपाधिदूषकताबीजत्वमते उक्तनियमस्य पक्षेतरत्वेनेव तादृशोपाधिनापि न निर्वाहः पक्षेतरस्येव तस्यापि तन्मते उपाधित्वासम्भवादिति मूलाभिप्रायः । शुद्धसाध्यव्यापकस्येति । तथा चावच्छिन्नसाध्यव्यापकोपाधिसत्त्वेऽपि उक्तलक्षणस्य शुद्धसाध्यव्यापकताघटितत्वेन तल्लक्षणकर्तृमते तस्याप्यनुपाधित्वेन तमादायापि नोक्तनियम-

निर्वाह इति मूलाशयः । प्रदेश इति । अतेजस्त्वं विनान्यस्योपाधेरनावश्यकत्वादित्युक्तेनासङ्गतिः ।

(दी०) न चैतद्व्यतिरेको नासाधारणः, पक्षे साध्यस्यासिद्धौ सपक्षाभावात्, सिद्धौ च तत्रैव सपक्षे वर्तमानत्वादिति वाच्यम् । पक्षमात्रवृत्तिरसाधारण इत्यभिप्रायात् । जलादावुष्णत्वभ्रमदशायां तथात्वमित्यपरे । ग्रीष्मोष्मणि तेजस्त्वाग्रहदशायामप्रतीतसाध्यतदभावसहचाररूपत्वमसाधारण्यमित्यन्ये ।

(गा०) एतद्व्यतिरेक इति । तेजस्त्वाभावविशिष्टपक्षे अनुष्णत्वाभावस्य उष्णत्वस्य साधने पक्षमात्रवृत्तिरप्यतेजस्त्वव्यतिरेक इत्यर्थः । पक्षे साध्यस्यासिद्धाविति । तेजसि अनुष्णत्वानिर्णयदशायामित्यर्थः । सपक्षाभावादिति । स्वधर्मिकतदानींतनतन्निश्चयविषयसाध्यवतोऽप्रसिद्ध्या असाधारण्यघटकतद्व्यावृत्तत्वदलासत्त्वादित्यर्थः । सिद्धौ च । पक्षे साध्यस्य सिद्धिदशायां च । तत्रैव । पक्ष एव । सपक्षे । स्वविषयनिश्चीयमानसाध्यवति । वर्तमानत्वात् । वर्तमानत्वेन तद्व्यावृत्तत्वाभावात् । पक्षमात्रवृत्तिरिति । पक्षत्वं सन्दिग्धसाध्यकत्वम्, तथा च क्वचित्तेजसि तदानीं उष्णत्वानिश्चयेऽपि कालान्तरीणोष्णत्वग्रहजन्यसंस्कारमूलककोटिस्मृत्या यदा तेजोमात्रे तत्संशयः तदा तेजस्त्वव्यतिरेकस्य साध्यसंशयविषयमात्रवृत्तित्वात् साध्यसहचारमात्रग्रहविरोधितादृशासाधारण्यरूपदोषेण तादृशव्यतिरेकस्य सत्प्रतिपक्षोत्थापकत्वासम्भव इति भावः ।

अथ वा अनुमितिविशेष्य एव पक्षः, पक्षे साध्यनिश्चयदशायां तन्मात्रवृत्तित्वस्य सहचारग्रहाविरोधित्वेऽपि तदा बाधादेव पक्षे विपरीतसाध्यसिद्धेः सत्प्रतिपक्षस्याकिञ्चित्करतया नोपाधेर्दूषकत्वमिति भावः । जलादावुष्णत्वभ्रमदशायामिति । तथात्वम् । अस्य व्यतिरेकस्य हेतोरसाधारण्यम् । तच्छरीरे धर्मिणि वास्तवसाध्यवत्त्वानिवेशादिति शेषः । तथा च तदानीमेव सत्प्रतिपक्षानुमापकत्वेन तत्प्रतियोगिनो नोपाधित्वसम्भव इति मूलाशयः । ग्रीष्मोष्मणीति । उष्णतया निश्चीयमान इति शेषः । तेजस्त्वव्यञ्जकभास्व-

स्वरूपग्रहाभावलाभायानुद्भूतरूपवत्तेजोनुसरणम् । तत्र तेजस्त्वाग्रह-दशायामपि वास्तवतत्प्रावृत्तत्वघटितासाधारण्यायोगादाह । अप्रतीतेति । उष्णत्वाग्रहेऽपि साध्यतदभावसहचरिततया ऽप्रतीयमानत्वरूपासाधारण्यं यद्यपि निर्वहति, तथापि तदानीं साध्याप्रसिद्धैव सत्प्रतिपक्षासम्भवादसाधारण्यमकिञ्चित्करं स्यादित्युष्णत्वग्रहानुसरणम् ।

अथ वा अप्रतीतसाध्यतदभावसहचारत्वमित्यस्य साध्यादिमत्त्वया निश्चीयमाने धर्मिणि अप्रतीयमानत्वमित्येवार्थः, तथा चासाधारण्यसम्पादक पयोऽष्णत्वनिश्चयः, अपरेषामन्येषां च मते दशाविशेषे ऽसाधारण्येऽपि अन्यदा सत्प्रतिपक्षोत्थापकत्वेन भतेजस्त्वादेरुपाधित्वसम्भवेन तदानीन्तनोपाधित्वमादायैव च उक्तनियमनिर्वाहादसाधारण्यदशायां तस्यादोषत्वं न क्षतिरित्यस्वरसबीजमाहुः ।

न च पक्षमात्रवृत्तित्वस्यासाधारणत्वेऽपि पक्षत्वं यदि सन्दिग्धसाध्यकत्वं तदाऽव्यभिचारित्वमिति तुल्योऽनुयोगः यदि चानुमितिविशेष्यत्वमात्रं तत्तदा विपक्षैकदेशे साध्यनिश्चयदशायां साध्यसहचारग्रहसम्भवेन व्याप्तिग्रहसम्भवात् पक्षतावच्छेदकावच्छेदेनातेजस्त्वादिज्ञानाद्युक्तसाध्यवत्त्वनिश्चयाप्रतिबध्याया एकदेशे साध्यानुमितेः प्रतिरोधादुपाधेर्दोषत्वमक्षतमेवेति व्यतिरेकेऽसाधारण्यमकिञ्चित्करमेवेति वाच्यम् । पक्षतावच्छेदकावच्छेदेन यत्रानुष्णत्वसिद्धिरुद्देश्या तत्रानुमितिविशेष्यपक्षमात्रवृत्तेरुपाधिव्यतिरेकहेतोः पक्षैकदेशे उष्णत्वनिश्चयदशायां उष्णत्वव्याप्तिग्रहसम्भवेऽपि बाधनिश्चयबलादेव उद्देश्यानुमितेरसम्भवेन तद्विपरीतस्त्वप्रयोज्यत्वादशानुमितिविरोधित्वाधरूपदोषवान् यः पक्षधर्मो हेतुः स उपाधिज्ञानाधीनदोषज्ञानाप्रयोज्यतादशानुमित्यनुत्पादप्रयोजकोपाधिमानित्येतादृशनियमनिर्वाहान्मूलसङ्गतेः ।

( चि० ) किञ्च पर्वतावयववृत्त्यन्यत्वं पर्वतेतरद्रव्यत्वं ह्रदपर्वतसंयोगानाधारत्वं ह्रदपर्वतान्यत्वादिकमुपाधिः स्यादेव, व्यतिरेकेऽसाधारण्याभावात्, व्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्च । न चासाधारण्यम्, तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वात्, तस्मा-

दुभयोरपि व्याप्तिग्राहकसाम्ये विरोधान्न व्याप्तिनिश्चयः, किन्तूभयत्र व्यभिचारसंशयः । तथा च व्यभिचारसंशयाधायकत्वेनोपाधेर्दूषकत्वम्, तच्च पक्षेतरेऽप्यस्ति । तदुक्तं उपाधेरेव व्यभिचारशङ्केति ।

(दी०) असाधारणे हि साध्यसहचारग्रहप्रतिबन्धेन व्याप्तिग्रहप्रतिबन्धः, व्यतिरेकव्याप्त्यादरे तु साध्यतदभावयोरपि तदविशेषात्सत्प्रतिपक्षो दूषकताबीजम् । न चेहाद्यः, व्यतिरेकित्वात्, न द्वितीयः सत्प्रतिपक्षे तदनवकाशात्, अतः पक्षेतरोऽपि सत्प्रतिपक्षोन्नायकतयोपाधिरेवेत्याह । व्यतिरेकिणेत्यादिना । नन्वेवं प्रागुक्तरीत्या व्यभिचाराद्युन्नायकत्वस्य सत्प्रतिपक्षेऽनुद्भावनीयतापत्त्या च सत्प्रतिपक्षोन्नायकत्वस्य दूषकतायाबीजत्वे उपाधिर्दूषणमेव न स्यात् बीजाभावादत आह । तस्मादिति । तदुक्तमुपाधेर्व्यभिचारशङ्कयेति ।

(गा०) सत्प्रतिपक्षोत्थापकताया दूषकताबीजत्वं स्वीकृत्यापि पक्षेतरत्वसमशीलानामन्येषामुपाधित्वमुपपादयति मूले किञ्चेति । व्यतिरेके असाधारण्याभावादिति । पर्वतावयवरूपादौ गुणादौ ह्रदे च सपक्षे उक्तधर्माणां व्यतिरेकरूपस्य साध्याभावसाधकहेतोर्वर्त्तमानत्वादिति भावः । पर्वतेतरत्वस्यापि सत्प्रतिपक्षोत्थापकत्वमुपपादयति । व्यतिरेकिणेति । व्यतिरेकिहेतुरूपेण पर्वतेतरत्वाभावेन साध्याभावसाधनसम्भवादित्यर्थः ।

व्यतिरेकितया सत्प्रतिपक्षोन्नायकत्वमाशङ्कते व्यतिरेकित्वस्यासाधारण्यदूषकतानिवारकत्वलाभात्तच्छङ्कानुदयेन न चासाधारण्यमित्यग्रिमग्रन्थानुत्थितिरतोऽसाधारण्यस्य दूषकताबीजद्वय व्यतिरेकितया तदेकतराकारेऽप्यपरतच्छङ्कया न चेत्यादिग्रन्थोत्थितिरिति सूचयति दीधितौ असाधारणे हीति । शब्दादौ । नित्यत्वादिसाध्यकशब्दत्वादिहेतावित्यर्थः । साध्यसहचारग्रहप्रतिबन्धेनेति । सपक्षव्यावृत्तेरित्यादि । व्याप्तिग्रहप्रतिबन्धः । अन्वयव्याप्ति-

ग्रहप्रतिबन्धः । दूषकताबीजमित्यग्रिमेणान्वयः । व्यतिरेकव्याप्त्यादरे त्विति । तादृशदूषणोद्धारायेत्यादिः । साध्यतदभावयोरपि तद्विशेषादिति । हेतुव्यतिरेके साध्याभावस्येव साध्यस्यापि व्यापकताग्राहकतत्सहचारज्ञानघटितसामग्र्यास्सत्त्वादित्यर्थः । सत्प्रतिपक्षः । स्वेनैव स्वसाध्यानुमितिप्रतिरोधः । इह प्रतिरोधायोपन्यस्तस्योपाधेर्व्यतिरेके हेतौ अन्वयव्याप्यग्रहरूप आद्यो दोषो नेत्यर्थः । सत्प्रतिपक्षे तदनवकाशादिति । प्रतिरोधे प्रतिरोधकपदोपादानवकाशादित्यर्थः । परेण प्रतिरुद्धकार्यस्यापि परकार्यप्रतिरोधकत्वात् अन्यथा वाक्युपन्यस्तहेतुना प्रतिरुद्धस्यैव प्रतिरोधकत्वानुपपत्तिरिति भावः । व्यतिरेकिणेत्यादिनेति । दोषत्वान्निर्व्यन्तेनेति शेषः । एवं च व्यतिरेकित्वादरे अन्वयव्याप्तिग्रहप्रतिबन्धरूपबीजासम्भवेऽपि अन्यदेव, किमपि दूषकताबीजं स्यादस्यतीति नाशङ्क्यम् उक्तबीजशून्यस्य असाधारण्यस्यापि सत्प्रतिपक्षोन्नायकतामात्रेण दोषत्वात् तादृशदोषस्य च सत्प्रतिपक्षे ऽनवकाशादिति न चेत्यादिमूलार्थं इति भावः । पक्षेतरस्य सत्प्रतिपक्षानुन्नायकताव्यवस्थापनेन तस्य दूषकताबीजत्वमुपगम्य पक्षेतरस्य अलक्ष्यत्वमुपपादयतः सिद्धान्तिनो निराकृतवनस्तस्मादित्यादिना व्यभिचारसंशयाधायकतया तस्य लक्ष्यताव्यवस्थापनमाकाङ्क्षाविरहेण नावतारितुमर्हतीति तटस्थस्योपाधेर्दूषणत्वशङ्कायां व्यभिचारसंशायकतया तद्दोषत्वव्यवस्थापनमवतार्य तादृशदूषकताबीजस्य पक्षेतरे सत्त्वकथनं सङ्गमयति । नन्वेवमिति । प्रागुक्तरीत्येति । न तु व्यभिचारोन्नायकतयेत्यादिसिद्धान्तिप्रदर्शितरीत्येत्यर्थः । सत्प्रतिपक्षे ऽनुद्भावनीयतापत्त्या । पूर्वपक्षिप्रदर्शितया । मूले उभयोरपि व्याप्तिग्राहकसाम्य इति । साध्यसाधनयोरुपाधिसाध्यनिरूपितव्याप्तिग्राहकसामग्र्याविशेषेणेत्यर्थः । विरोधादिति । वह्न्यादौ ग्राह्यया धूमादिव्याप्त्या आर्द्रेन्धनादौ च वह्न्याद्यव्यापकत्वग्राहकसामग्रीसहितया आर्द्रेन्धनादौ धूमादिव्यापकताग्राहकसामग्रीग्राह्यस्य धूमादिव्यापकाद्व्याप्यत्वस्य विरोधादित्यर्थः । न व्याप्तिनिश्चय इति । एकयापि सामग्र्येति बोध्यम् । उभयत्र व्यभिचारसंशयः । साध्ये उपाधेः साधने च साध्यस्य व्यभिचारसंशय एव । व्यभिचारसंशयाधायकत्वेनेति । स्वधर्मिकोपाधित्वग्राहकसामग्रीसवलनाधीनसाधनधर्मिकव्यभिचारसंशयप्रयो-

अकलयेत्यर्थः ।

ननु उपाधेरेव व्यभिचारशङ्केति मूलमसङ्गतम्, सहचारादिकपसाधारणधर्मदर्शनादितोऽपि व्यभिचारसंशयेनोपाधिभिन्ने तद्यवच्छेदकत्वव्याघात्, अत एवकारं व्यत्यस्यति दीधितौ उपाधेरिति । ईदृशैवकारेण चानुमितिविरोधिकार्यान्तरे व्यभिचारनिश्चयादौ उपाध्यधीनत्वव्यवच्छेदः ।

( चि० ) भवतु वोक्तन्यायेन सकलानुमानभङ्गभिया पक्षेतरोऽनुपाधिः, तथापि लक्षणमतिव्यापकम् । नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वम्, दूषकताबीजस्य व्यभिचारोन्नयनस्य सत्प्रतिपक्षस्य वा साम्येन विषमव्याप्तस्याप्युपाधित्वात् । तथा दूषकतायां साध्यव्याप्यत्वस्याप्रयोजकत्वाच्च ।

( दी० ) भवतु वा पक्षेतरो नोपाधिः, उपादीयताञ्च तद्व्यावृत्तये विपक्षाव्यावर्तकेत्यादिकं विशेषणम्, तथापि लक्षणमतिव्यापकमेव । अणवो जन्याणवो वा सकर्तृकाः कार्यत्वादित्यादावनणुत्वादौ* । ननु व्यभिचाराद्युन्नायकतामात्रेणोपाधित्वे व्यापकव्यभिचारित्वादतिप्रसङ्ग इत्यत आह । तथेति । तथा । तेन रूपेण । स्वाव्यभिचारेण स्वाव्यतिरेकेण वा । दूषकतायाम् । व्यभिचारस्य सत्प्रतिपक्षस्य वोन्नायकतायाम्, अतिप्रसङ्गभञ्जिकायां साध्यव्याप्यत्वस्य व्यर्थत्वात् ।

( गा० ) भवतु वेत्यादिना पक्षेतरस्यालक्ष्यत्वमभ्युपेत्य तत्रातिव्याप्तिप्रसञ्जनमसङ्गतम्, अलक्ष्यत्वे उक्तविपक्षाव्यावर्त्तकविशेषणशून्यत्वेनातिव्याप्तेर्वारितत्वात्, अत उक्तविशेषणेऽपि पक्षेतरविशेषेऽतिव्याप्तिरित्यर्थकतां पूरणेन प्रकाशयति भवतु वेत्यादिना । अणवस्सकर्तृकाः कार्यत्वादित्यादौ अनणुत्वादिरूपपक्षेतरविशेषणस्याणोः परमाणुरूपविपक्षव्यावर्त्तकत्वेऽपि पक्षतावच्छेदकानाक्रान्तविपक्षाव्यावर्तकतानिवेशेनातिव्याप्तिरतो जन्याणवो वेति । अनणुत्वादाविति ।

न च अणुत्वेन भेदविशेषणयोः परमाणुद्व्यणुकयोः परमाणुरूपविशेषणस्य परमाणुरूपविपक्षव्यावर्तकत्वेऽपि द्व्यणुकरूपविशेषणस्य न तथेति नानिव्याप्तिरिति वाच्यम् । अणुत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन द्व्यणुकविशेषितस्यापि भेदस्य भेदाधिकरणपरमाण्ववृत्तितया द्व्यणुकस्यापि परमाणुरूपविपक्षव्यावर्तकत्वात् ।

यद्यपि पर्वतो धूमवान् पर्वतो वह्निमानित्यादावपि पर्वतेतरत्वादौ अतिव्याप्तिस्सम्भवति, पर्वतादिरूपविशेषणस्य निर्वह्निपर्वतादिरूपविपक्षव्यावर्तकत्वात्, तथापि पर्वतादिविशेषे वह्न्याद्यभावनिश्चये पर्वतादिविशेषणस्य विपक्षव्यावर्तकत्वं दुर्ग्रहम्, तत्र च वह्न्याद्यभावनिश्चयो न सार्वत्रिकः, उक्तस्थले च भजन्याणौ कर्तृजन्यत्वरूपसकर्तृकत्वशङ्कया असम्भवेन तत्र तदभावानिश्चयस्य परार्थस्थले प्रतिवादिना सम्पादनसम्भवेन अनणुत्वस्योपाधित्वनिश्चयः सर्वत्र सम्भवतीतीश्वरसाधकतादृशानुमानस्यैवोच्छेद इति विशेषात् उक्तस्थलानुधावनम् । व्यभिचाराद्युन्नायकतावि शेषेणोक्तविषमव्याप्यस्योपाधित्वे तथा दूषकतायामित्यादिना व्यभिचाराद्युन्नायकत्वे साध्यव्याप्यत्वस्याप्रयोजकताया हेतुत्वेनाभिधानेऽप्रयोजकत्वाच्चेति चकारासङ्गतिः, अतस्तादृशग्रन्थावतारबीजशङ्कां दर्शयति । नन्विति । व्यभिचारादीत्यादिना सत्प्रतिपक्षपरिग्रहः । व्यापकव्यभिचारादीत्यादिना व्यापकाभावपरिग्रहः । अतिप्रसङ्ग इति । साध्यव्यापकस्योपाधेरुन्नायकव्यभिचारादिप्रतियोगित्वमिव तद्व्यभिचारादेरपि स्वतो व्यभिचाराद्युन्नायकत्वादिति भावः । इत्यतः । उन्नायकतायां विशेषानभिधानादवतीर्णतादृशाशङ्कातः । आह । उन्नायकताविशेषस्योपाधित्वप्रयोजकत्वप्रदर्शनेनातिप्रसङ्गं वारयन् उपाधित्वे साध्यव्याप्यत्वस्यानुपयोगितां दर्शयति । तथेत्यस्य व्याख्या तेन रूपेणेति । एतस्यैव विवरणं स्वव्यभिचारेण स्वव्यतिरेकेण चेति । उन्नायकस्य स्वव्यभिचारस्य स्वव्यतिरेकस्य वा ज्ञानसम्पादनेनेत्यर्थः । दूषकतायामित्यस्य व्याख्या व्यभिचारस्येत्यादि । तादृशोन्नायकतया उपाधित्वप्रयोजकत्वेनातिप्रसङ्गलाभाय पूरयति । अतिप्रसङ्गभञ्जिकायामिति । सत्यामिति शेषः ।

( चि० ) अथ साध्यप्रयोजको धर्म उपा-

धिः, प्रयोजकत्वं च न न्यूनाधिकदेशवृत्तेः, तस्मिन् सत्यभवतस्तेन विनापि भवतस्तदप्रयोजकत्वात्, अन्यथा पक्षेतरस्याप्युपाधित्वप्रसङ्गादिति चेन्न। दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितम्, तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति तदेव प्रयोजकम्, न त्वाधिक्यं व्यर्थत्वात्।

(दी०) साधनाव्यापकधर्मस्योपाधित्वे साध्यान्वयव्यतिरेकोन्नायकान्वयव्यतिरेकशालित्वरूपं साध्यप्रयोजकत्वं नियामकम्, अन्यथाऽतिप्रसङ्गादित्याशङ्कते। अथेति। अभवतः। असतः। भवतः। सतः। व्यर्थत्वादिति। न चैवं पक्षेतरेऽतिप्रसङ्गः, तत्रापि पक्षेतरसाध्यवत्त्वादौ अतिप्रसङ्गात्।

(गा०) नापीत्यादिलक्षणे साध्याविषमव्याप्तपक्षेतरत्वेऽतिव्याप्तिवारणाय साध्याव्याप्यत्वोपादाने दूषणानौपयिकत्वेनानुचितम्, दूषकतया आवश्यकोपाधिभावे आर्द्रेन्धनादावव्याप्तिकरं चेत्युक्तविषमव्यापकस्य अलक्ष्यताव्यवस्थापकं तादृशपक्षेतरादिव्यावर्तकविशेषणान्तरघटितलक्षणाभिधानमयुक्तमित्यतः अथ साध्येत्यादिग्रन्थस्य न लक्षणपरता, किन्तु विषमव्यापकस्य अलक्ष्यत्वव्यवस्थापनपरतैवेति स्फुटयितुं तत्तात्पर्यार्थं प्रकाशयति। साधनाव्यापकेति। सद्धेतुव्यापकसाध्यसमव्याप्तधर्मसाधारण्येन साध्यप्रयोजकत्वस्योपाधित्वनियामकत्वासम्भवात् साधनाव्यापकधर्मस्येति पूरणम्। प्रयोजकत्वं च न न्यूनाधिकदेशवृत्तेरित्यत्र कथन्तान्निवृत्तये प्रयोजकत्वस्वरूपं निर्वक्ति। साध्यान्वयेति। अन्वयव्यतिरेकयोरन्वयव्यतिरेकोन्नायकयोर्यत्वस्य यथासङ्ख्यमन्वयः। तस्मिन् सत्यभवत इति मूले तदधिकरणे अभवत इत्यर्थः। तथा चार्द्रेन्धनादेर्विषमव्यापकस्य यत्किञ्चिदधिकरणे धूमादिसाध्यस्यासत्त्वेन आर्द्रेन्धनादेर्धूमान्वयानुमापकान्वयप्रतियोगित्वघटितधूमादिप्रयोजकत्वाभावान्नोपाधित्वमिति भावः। तत्र च भूधालोकपदस्यार्थकत्वे तदीययत्किञ्चिदधिकरणोत्पत्तिकान्यस्येति तदीययत्किञ्चिद-

धिकरणे यस्य नोत्पत्तिस्तस्येति वाऽभवत इत्यस्यार्थः स्यात्, प्रथमे नित्यसाध्यस्योपाध्यधिकरणोत्पत्तिकान्यस्य उपाध्यप्रयोज्यतापत्तिः, द्वितीये नित्यसाध्यस्योत्पत्त्यप्रसिद्धेरनुत्पत्तेरप्रसिद्ध्या यत्पदेनोपादानासम्भवात् तत्र विषमव्यापकाप्रयोज्यत्वालाभात्तदुपाधित्वनिराकरणायोग इति तस्य वृत्त्यर्थकतामाश्रित्य व्याचष्टे दीधितौ अभवतः असत इति । तेन विनापि भवत इति मूलस्य तदनधिकरणे भवत इत्यर्थः, तेन धूमादिन्यूनवृत्तिमहानसत्वादेर्धूमादिव्यतिरेकोन्नायकव्यतिरेकप्रतियोगित्वघटितप्रयोजकत्वाभावात्तस्यानुपाधितेति लब्धम्, तत्रापि भवतेरुत्पत्त्यर्थकत्वे नित्यसाध्यस्य न्यूनवृत्तिधर्माप्रयोज्यत्वालाभात् न तत्र तस्योपाधित्वनिराकरणम्, अतस्तत्रापि तदर्थकतामाह दीधितौ भवतः सत इति ।

मूले इह विवक्षितम् । उपाधित्वे नियामकम् । तच्च । दूषणौपयिकञ्च । तदेव । तावदेव । प्रयोजकम् । उपाधित्वे प्रयोजकम् । अधिकम् । साध्यव्यापकत्वपर्यवसिताधिकधर्मसहितम् । व्यर्थं स्यात् । तादृशस्य व्यर्थत्वात् ।

दीधितौ न चैवमिति । एवम् । साध्यव्यापकत्वे सति साधनाव्यापकत्वमहिमात्रस्य उपाधितानियामकत्वे । अतिप्रसङ्ग इति । तथा च तद्वारणाय उपाधित्वप्रयोजकशरीरे अधिकनिवेशनमावश्यकमिति भावः ।

तथापि । पक्षेतरत्वव्यावृत्तोक्तधर्मस्य उपाधितानियामकत्वमङ्गीकृतवतोऽपि । पक्षेतरसाध्यवत्त्वादाविति । पक्षेतरत्वविशिष्टसाध्यवत्त्वादावित्यर्थः । अतिप्रसङ्गात् । साध्यसमव्याप्तत्वगर्भनिरुक्तरूपज्ञानस्यातिप्रसक्तत्वात् । तथा चानुमानमात्रोच्छेदनादृवस्थ्ये आर्द्रेन्धनादिरूपविषमव्यापकधर्मस्य उपाधितानभ्युपगमो निरर्थक इति भावः ।

( दी० ) अथोपाधिरसौ उच्यते यद्धर्मोऽन्यत्र प्रतिबिम्बते, यथा जपाकुसुमं स्फटिकलौहित्ये उपाधिः । तथा चोपाधिवृत्तिव्याप्यत्वं हेतुत्वाभिमते चकास्ति तेनासावुपाधिः, न च व्याप्यत्वमात्रेण ऽदूषकत्व-

मिति साध्यव्यापकतापीष्यते । तथा च समव्याप्त एवोपाधिरिति चेत् ? तर्कि विषमव्याप्तस्य दूषकताबीजाभावान्नोपाधिशब्दवाच्यत्वम्, तथात्वेऽप्युपाधिपदप्रवृत्तिनिमित्ताभावाद्वा ? नाद्यः, तस्यापि व्यभिचारानुमापकत्वात्, नापरः, न हि लोके समव्याप्त एवान्यत्र स्वधर्मप्रतिबिम्बजनके 'एवोपाधिपदप्रयोगः । लाभाद्युपाधिना कृतमित्यादौ लाभादावुपाधिपदप्रयोगात् । किञ्च न शास्त्रे लौकिकव्यवहारार्थमुपाधिव्युत्पादनम्, किन्त्वनुमानदूषणार्थं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमात्रमिति शास्त्रे तत्रैवोपाधिपदप्रयोगः ।

( दी० ) विषमव्याप्तस्यानुपाधित्वे योगाभावं नियामकमाशङ्कते । अथेति । उप । समीपवर्तिनि, आदधाति स्वीयं धर्ममित्युपाधिः । यद्धर्मबोधकपदसमभिव्याहारेण चोपाधिपदं प्रयुज्यते तद्धर्मसङ्क्रामकत्वं तद् बोधयति । यथा स्फटिकलौहित्ये जपाकुसुममुपाधिरित्यत्र लौहित्यसङ्क्रामकत्वम् । प्रयुज्यते च शास्त्रे व्याप्यत्वबोधकपदसमभिव्याहारेण तत्, यथा अत्र साधने असावुपाधिरिति, अतो व्याप्तिसङ्क्रामकत्वलाभः ।

(गा०) अथोपाधि· स उच्यत इत्यादिना उपाधिपदव्युत्पादनं विषमव्यापकस्यालक्ष्यतासम्पादकतया पूर्वोक्तलक्षणे साध्यव्याप्यत्वविशेषणसार्थक्योपपादकमिति प्रदर्शयन् तत्सङ्गमयति । विषमव्याप्तस्येति । योगाभावम् । अवयवार्थान्वयलभ्यस्वनिष्ठव्याप्तिसङ्क्रामकत्वरूपोपाधिव्यवहारविषयताप्रयोजकधर्माभावम् । नियामकम् । प्रयोजकम् ।

यद्धर्मोऽन्यत्र प्रतिबिम्बते यस्य धर्मः समीपवर्तिनि स्वभिन्ने भासत इति मूलार्थः । कथं तादृशस्य उपाधिपदाल्लाभ इत्याकाङ्क्षायामाह दीधितौ उपेति । उपेत्यस्य सप्तम्यन्तोपपदस्य व्याख्या समीप·

वर्त्तिनीति। आद्यान्तरारोपजननात्मकाधानार्थकस्य स्वधर्माधानरूपविशेषपरत्वाशयेनाह। आदधाति स्वीयं धर्ममिति। उक्तव्युत्पत्त्या सामान्यतः स्वधर्मसङ्क्रामकत्वलाभेऽपि कुतः स्वनिष्ठव्याप्तिसङ्क्रामकत्वलाभ इत्यत आह। यद्धर्मेति। उपाधिपदमित्यस्य यदित्यादिः। तदिति। तदुपाधिपदमित्यर्थः। एतत् दृष्टान्तेन द्रढयति। यथेति। लौहित्यसङ्क्रामकत्वम्। स्फटिके लौहित्यभ्रमजनकत्वम्, यथा चैतत्प्रकारोऽधस्तात्प्रदर्शितः। शास्त्रे। शास्त्रीयकथायाम्। व्याप्यत्वबोधकपदम्। साधनादिपदम्, सिद्धिस्वरूपयोग्यतायां व्याप्तिपर्यवसितत्वादिति भावः।

(चि०) अन्ये तु यदभावो व्यभिचारविरोधी स उपाधिः न च विषमव्याप्तस्याभावो व्यभिचारं विरुणद्धि, तस्याभावेऽपि व्यभिचारात्, अस्ति ह्यनित्यत्वव्यापकं प्रमेयत्वम्, तद्व्याप्यं च गुणत्वम्, न चानित्यत्वगुणत्वयोर्व्याप्तिरस्ति। समव्याप्तिकस्य च व्यतिरेकस्तथा। न हि साध्यव्यापकव्याप्यीभूतस्य व्याप्यं यत्तत्साध्यं व्यभिचरति। व्यभिचारे चान्ततस्साध्यमेवोपाधिः, अभेदेऽपि व्याप्यव्यापकत्वात्साधनाव्यापकत्वादिति स्वीचक्रुः।

तन्न। तत्रापि ह्यव्यभिचारे साध्यव्याप्यव्याप्यत्वं तन्त्रम्, आवश्यकत्वात् लाघवाच्च। न तु साध्यव्यापकव्याप्यत्वमपि, भवतैव व्यभिचारस्य दर्शितत्वात्। न च साध्यव्याप्यव्याप्यत्वमेवानौपाधिकत्वम्; साध्यव्याप्यमित्यत्रापि ह्यनौपाधिकत्वं तदेव वाच्यम्, तथा चानवस्थेति।

(दी०) यदभाव इति। अस्ति तावदिह हेतावुपाधिर्नेह हेतावुपाधिरिति प्रतीतिर्व्यवहारश्च, तावालम्ब्य चेदं लक्षणवाक्यम्। तत्र

यदि साधने उपाधिव्यभिचाराव्यभिचारौ तद्व्याप्यत्वव्याप्यत्वे वा, यदि वा तेन सम्बन्धेन तद्वृत्त्यवृत्ती एव तदालम्बनम् उभयथापि नेह क्षतिः, यदभावशब्देनापि तथैव वक्तुं शक्यत्वात् । तदभावस्य च व्यभिचारविरोधित्वं तत्सत्त्वेऽवश्यं व्यभिचारविरहस्तद्विरहिणि धर्मे चावश्यं व्यभिचारसत्त्वम्, तत्सत्त्वेऽवश्यं व्यभिचारविरहः, व्यभिचारविरहिणि धर्मे चावश्यं तत्सत्त्वमिति वा । ईदृशश्च विरोधो न विषमव्यापकाभावस्य, तत्सत्त्वेऽपि व्यापक एव व्यभिचारसत्त्वात्, नापि विषमव्याप्याभावस्य, साध्य एव तद्विरहेऽपि व्यभिचाराभावात्, तादृशधर्मस्य चोक्तसम्बन्धेन उक्ततत्सम्बन्धस्य वा यत्र वृत्तिस्तत्रायमुपाधिः, स एव च सोपाधिः ।

( गा० ) विषमव्याप्तस्य दूषकतावीजाक्रान्तत्वेऽपि नोपाधिता, उपाध्यभावरूपव्याप्तौ यस्य प्रतियोगितया प्रवेशस्तस्यैव दूषकस्य लक्ष्यत्वात्, साध्यसमव्याप्ताभावस्यैव साधननिष्ठस्य व्याप्तित्वात्, विषमव्यापकाभावस्य व्यभिचारिसाधारणतया ऽव्याप्तत्वात् तस्य तत्राप्रवेशादिति सौन्दडोपाध्याया वदन्ति । तन्मतसिद्धलक्ष्यतावच्छेदकं दर्शयति मूले । अन्ये त्वित्यादि । यदभावः । यद्धर्मावच्छिन्नाभावः । व्यभिचारविरोधी । साध्यव्यभिचारविरोधी । सः । तद्धर्मावच्छिन्नः । उपाधिरिति । व्यभिचारिसाधारणस्य व्याप्तित्वासम्भवेन व्यभिचारिव्यावृत्तस्यैवाभावस्य व्याप्तिरूपतया तत्प्रतियोगिन एवानौपाधिकत्वरूपव्याप्तिघटकत्वादिति भावः ।

तत्रोपाध्यभावरूपव्याप्तौ प्रतियोगितावच्छेदकसम्बन्धाविशेषानिवेशे धूमादिरूपसाध्यसमव्याप्तार्द्रेन्धनप्रभववह्न्यादिरूपोपाधेरपि यत्किञ्चित्सम्बन्धावच्छिन्नाभावस्य साध्यव्यभिचारिवह्न्यादिसाधारणतया अतिव्याप्तिः, उपाधितावच्छेदकसाधनतावच्छेदकसम्बन्धद्वयघटितसामानाधिकरण्यसम्बन्धावच्छिन्नाभावनिवेशे साधनव्यापकसाध्यसमव्याप्तस्य सद्धेतुघटितस्याप्रसिद्ध्या साधनाव्यापकत्वं प्रतियोगिविशेषणं परित्यज्य साध्यसमव्याप्ताभावस्यैव निवेशनीयत-

यां सद्धेतावपि साध्यसमव्याप्तसाध्यादिसामानाधिकरण्येनासम्भवः, पारिभाषिकानौपाधिकत्वस्य व्याप्तित्वोपगमे उपाधेर्व्याप्तिघटकत्वानुपयोगः ।

अथ साधनाव्यापकसाध्यसमव्याप्तोपाधेरप्रसिद्धावपि व्यधिकरणधर्मावच्छिन्नाभावरूपः साधनाव्यापकत्वावच्छिन्नसाध्यसमव्याप्ताभावः प्रसिद्ध एव शशीयत्वावच्छिन्नविषाणाभाववत्, सौन्दडमते व्यधिकरणधर्मानवच्छिन्नाभावस्यापि सत्त्वात्, व्यधिकरणधर्मावच्छिन्नाभावस्य केवलान्वयितया व्यभिचारिसाधारणत्वेऽपि स्वाव्यापकत्वावच्छिन्नसाध्यसमव्याप्ताभावस्य स्वनिष्ठत्वाविशेषितस्य व्यभिचारिण्यवृत्तितया व्याप्तिरूपता निरावाधैव, धूमादिव्यभिचारिवह्न्याद्यव्यापकत्वस्य धूमादिसमव्याप्तोपाधिनिष्ठतया तेन रूपेण सामानाधिकरण्यसम्बन्धावच्छिन्नसाध्यसमव्याप्ताभावस्य व्यधिकरणधर्मावच्छिन्नाभावात्मकतया वह्न्यादावसत्त्वेनातिव्याप्तिविरहात् । एवञ्च यदभाव इत्यादावपि यद्रूपवत्सामानाधिकरण्यसम्बन्धावच्छिन्नस्वव्यापकत्वावच्छिन्नप्रतियोगिताकाभावस्वनिष्ठत्वविशेषितः साध्यव्यभिचारिण्यवृत्तः तद्रूपावच्छिन्न उपाधिरित्येवार्थः, प्रकृतसाधनाव्यापकत्वस्यापि निवेशनीयतया सद्धेतौ साध्यसमव्याप्तस्य नोपाधितामसङ्ग इति चेन्न । असद्धेतावपि साध्यसमव्याप्तस्योभयत्वादिना साधनाव्यापकतया तेन रूपेण तदभावस्य सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकस्यासत्त्वादसम्भवापत्तेः ।

न च साधनाव्यापकतावच्छेदकत्वरूपेण साध्यसमव्यापकतावच्छेदकरूपाभाववत्तद्रूपाभयत्व व्याप्तिरित्येव वक्तव्यम् अतो नोक्तदोष इति वाच्यम् । तथा सति व्याप्तरूपाव्यभावरूपत्वाभावेन पारिभाषिकानौपाधिकत्वरूपतापत्तेः ।

न च व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताकः स्वव्यापकतावच्छेदकत्वावच्छिन्नसाध्यसमव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकाभावः स्वस्य व्याप्तिरित्यस्त्विति वाच्यम् । व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य सत्त्वेऽपि तदवच्छिन्नप्रतियोगितावच्छेदकताकसंसर्गाभावस्याप्रामाणिकत्वात् । केनापि ग्रन्थकारेण तस्यानभ्युपगतत्वाच । तत्सत्त्वे केवलान्वयिस्थले साध्यताव-

न्धाभावात्तस्य सोपाधितामङ्गविरहात्साधनाव्यापकत्वानन्तर्भावेऽपि न क्षतिरिति भावः ।

यद्यपि चैतावता केवलान्वयिसमव्याप्तस्य केवलान्वयिनः क्वचिदप्युपाधित्वाभावात् तत्रोपाधिव्यवहारावच्छिन्नविशेषणान्तरप्रवेश्य दुर्वारत्व, तथापि व्यतिरेकित्वविशेषणेन तद्वारणसम्भवाच्च साधनाव्यापकत्वनिवेशः, उपाधिपदार्थे व्यतिरेकित्वनिवेशेऽपि तत्र पृथक् शक्तेरुपगमात्तभावप्रतियोगितया यत्रोपाधिभानं तत्रैव तदन्वयोपगमेन केवलान्वयिसाध्यके नानौपाधिकत्वप्रतियोग्यप्रसिद्धिः ।

( दी० ) अत एव तदभावलक्षणमनौपाधिकत्वं व्याप्तिरिति गीयते । त्रिरोधघटकदलद्वये च एकैकस्य व्याप्तिशरीरघटकता दूषकता वा न स्यादित्युभयोपादानमिति सर्वं सुस्थम् । यदि च समव्याप्ताकाशोभयमाश्रहत्तिधर्मेणाकाशस्योपाधित्वं वारणीयं तदा यत्पदं वृत्तिमत्परं बोध्यम् । अत्र च व्यभिचारस्य घटकत्वेऽग्रे प्रमेयत्वपदं व्यतिरेकिधर्मोपलक्षकम् ।

अथैतादृशोपाध्यभावस्य व्याप्तिलक्षणत्वे यत्र व्यभिचारिणि नैतत्सम्भवस्तत्रातिव्याप्तिः, तस्यात्यन्तमसत्त्वेनाभावानिरूपणे तु तत्रसद्धेतावव्याप्तिरत आह । व्यभिचारे चेति । यस्य यद्व्यभिचारस्य यदव्याप्यत्वस्य वा अभावः साध्यव्यापके साध्यव्यभिचारविरोधी स साधनाव्यापक उपाधिरित्यपि वदन्ति । यद्व्यभिचाराभावस्साधने साध्यव्यभिचाराभावापादकस्स साध्यव्यापक उपाधिरित्यपि केचित् ।

( गा० ) अत एवेति । सोपाधिनिरुपाधिव्यवहारविषयोपाधिपदार्थे साध्यसमव्याप्तमात्रनिवेशादेव । तदभावलक्षणम् । उपाध्यभावस्वरूपम् । अनौपाधिकत्वम् । यौगिकानौपाधिकत्वपदप्रतिपाद्यम् । व्याप्तिरिति गीयत इति । साधनाव्यापकत्वस्य व्यतिरेकित्वस्य चाधिकस्योपाधिपदार्थे घटकत्वे सर्वथैव सद्धेतौ केवलान्वयिसाध्यके वा प्रतियोग्यप्रसिद्ध्या अनौपाधिकत्वानुपपत्तिरिति भावः । उक्त-

क्षणतावच्छेदकघटकं साध्यव्याप्यताप्रापकं साध्याव्यापकताप्रापकं च दलं सार्थकयति । विरोधघटकेति । एकैकस्येति । व्यापकताप्रापकदलमात्रस्य व्याप्यताप्रापकदलमात्रस्य वेत्यर्थः । तदवच्छिन्नाभावस्य व्यभिचारिसाधारणतया व्याप्तिघटकता तत्प्रकारकज्ञानस्यानुमित्यविरोधितया दूषकता न स्यादिति यथासङ्ख्येनान्वयः ।

ननु साध्यसमव्यापकतावच्छेदकार्द्रेन्धनप्रभववह्न्याकाशान्यतरत्वाद्यवच्छिन्नाभावस्य साध्यव्यभिचाराभावसमनियततया तेन रूपेणावृत्तेरुपाधितापत्तिरित्यत आह । यदि चेति । तेन रूपेण तस्योपाधित्वे क्षतिविरह इत्यभिसन्धाय यदि चेत्युक्तम् । यत्पदं वृत्तिमत्परमिति । यद्धर्मावच्छिन्नवृत्तिमयदभावो व्यभिचारविरोधी स तेन रूपेणोपाधिरिति विवक्षणीयमित्यर्थः ।

ननु यदभावपदेन यद्व्यभिचाराभावविवक्षणपक्षे अस्ति ह्यनित्यत्वव्यापकं प्रमेयत्वमित्यप्रिममूलेन सह विरोधः, तादृशमूलस्य हि तत्पक्षेऽनित्यत्वविषमव्यापकं प्रमेयत्वं तद्व्याप्यं तद्व्यभिचाराभाववद् गुणत्वम्, न चानित्यत्वगुणत्वयोर्व्याप्तिरस्ति गुणत्वेनानित्यत्वव्यभिचाराभाव इत्यर्थः, स च प्रमेयत्वव्यभिचाराप्रसिद्ध्या सङ्गत इत्यत आह । अत्र चेति । व्यभिचारस्य घटकत्वे इति । अभावप्रतियोगितया प्रविष्टत्वे इत्यर्थः । व्यभिचारित्वसम्बन्धावच्छिन्नयद्भावस्य यद्व्याप्यत्वाद्यभावस्य वा घटकत्वे तु प्रमेयत्वव्यभिचाराप्रसिद्धावपि व्यभिचाररूपव्यधिकरणसम्बन्धावच्छिन्नाभाव अवृत्तौ प्रसिद्धस्य तद्व्याप्यत्वस्य चाभावः प्रसिद्ध एवेति तद्घटकत्वपक्षे नासङ्गतिरिति । व्यतिरेकिधर्मोपलक्षकमिति । अनित्यगुणान्यतरत्वतत्प्रकारकप्रमाविषयत्वादिरूपव्यतिरेकिधर्मपरमित्यर्थः । व्याप्तिलक्षणत्वे । व्याप्तिस्वरूपत्वे । यत्र व्यभिचारिणीति । अयमेतद्वृत्तियावद्धर्मवान् मेयत्वादित्यावावित्यर्थः । नेतरसम्भव इति । न समव्याप्तोपाधिसम्भव इत्यर्थः । तत्र साध्यसमव्याप्तत्वेनाभिमतधर्ममात्रस्यैव साध्यान्तर्गततया तद्भेदघटितसमव्याप्तत्वासम्भवादिति भावः । अतिव्याप्तिरिति ।

न च प्रतियोग्यप्रसिद्ध्या अभावाप्रसिद्धिरित्यतिव्याप्तिर्न सम्भवति, यद्यपीयमनुपपत्तिः स्वयमेव तस्यात्यन्तमसत्वेनेत्यादिना प्रदर्शयिष्यते, तथाप्यसम्भवयुक्तिकृतया इदानीमतिव्याप्तिप्रसञ्जनमनु-

चितमेवेति वाच्यम् । व्यधिकरणधर्मावच्छिन्नाभावाङ्गीकारे साध्यसमव्याप्तत्वघटकसाध्यभेदापच्छिन्नघटकदलान्तरविशिष्टाभावरूपानौपाधिकत्वस्य वक्ष्यमाणाव्याप्तिवारणाय विवक्षणे इयमतिव्याप्तिरित्याशयात्, व्यधिकरणधर्मावच्छिन्नाभावानुपगमेन तत्सत्त्वेऽपि समव्याप्तत्वघटकभेददलान्तरयोरुभयोरेव प्रतियोगिविशेषणतापक्षयोः प्रतियोगितावच्छेदकविधया निवेशेन वा अतिव्याप्तिवारणेऽव्याप्तिरभिधास्यते इति सामञ्जस्यात् ।

न चोपाधिपदस्य साध्यभेदस्वव्यापकसाध्यव्यापकत्वोभयविशिष्टार्थकतया प्रतियोगिविशेषणतानापन्नभेदस्य प्रतियोगितावच्छेदकतया अनौपाधिकत्वशब्दार्थे प्रवेशो न सम्भवति, येन व्यधिकरणधर्मावच्छिन्नाभावघटकतया अतिव्याप्तिः प्रसज्येतेति वाच्यम् । भेदे स्वसम्बन्धुत्तिस्वीकारेण उपाधिरस्तीत्यादौ दलान्तरविशिष्टधर्मिणि भेदान्वयोपगमेन उभयदलविशिष्टधर्मिलाभेऽपि उपाधिर्नास्तीत्यादौ नञर्थाभावे स्वातन्त्र्येण प्रतियोगितावच्छेदकतया भेदस्यान्वयसम्भवात् । वृत्तिस्तु शक्तिस्ताल्पर्यकसङ्केतो वेत्यन्यदेतत् । ईदृशरीत्यैव साधनाव्यापकत्वस्य उपाधिपदार्थघटकत्वे व्यधिकरणतादृशधर्मावच्छिन्नसाध्यसमव्याप्ताभावस्य उपाध्यभावरूपतानिर्वाहः ।

केचित्तूक्तस्थले भेदघटितसाध्यसमव्याप्तेरप्रसिद्धावपि यस्य समव्याप्तं प्रकृतसाधनाव्यापकं तदन्यप्रकृतसाध्यकत्वं प्रकृतसाधने प्रकृतसाध्यनिरूपिताऽनौपाधिकत्वलक्षणा व्याप्तिरिति चेदग्रिमाव्याप्तिवारणाय विवक्ष्यते तत्रेयमतिव्याप्तिरिति भावं वर्णयन्ति । तथा सत्यनौपाधिकत्वस्य पारिभाषिकतापत्त्या साध्यव्याप्यत्वनिवेशवैयर्थ्येन विषमव्यापकस्योपाधितायाः दुर्वारत्वात् तदनुपादेयम् ।

आहेति । समव्याप्ततायाः अभेदसाधारणतया साध्यभिन्नतत्समव्याप्त्यप्रसिद्धिस्थलेऽपि साध्यसमव्याप्त्यप्रसिद्धिमित्यादिः । व्यभिचारविरोधित्वं यथाश्रुततदभावव्याप्यत्वमेव, विरोधित्वभावे साध्यव्यापकनिष्ठत्वानिवेशात्र साध्यान्यूनवृत्तावतिप्रसङ्गः, साधनाव्यापकत्वस्यापि प्रवेशनीयतया न साधनव्यापकस्योपाधित्वमिति वर्णयतां मतमुपन्यस्यति । यस्येति । साध्यव्यापके साध्यव्यभिचारविरोधी साध्यव्यापकनिष्ठस्सन् साध्यव्यभिचाराभावव्याप्यः । सा-

व्यन्यूनवृत्तिव्यभिचारस्य साध्यव्यापकेऽवश्यं सत्त्वात्तद्व्युदासः । यद्यभिचाराद्यभावे साध्यनिष्ठत्वनिवेशेनैव न्यूनवृत्तिवारणसम्भवात् साध्यव्यापकनिष्ठत्वनिवेशो ऽनतिप्रयोजनक इति नाशङ्क्यम्, उपाध्यभाववति सम्बन्धान्तरेण वृत्तित्वरूपव्यभिचारस्य साध्येऽपि सत्त्वादुपाधिव्यभिचाराभावस्य साध्यनिष्ठत्वं दुर्लभमिति साध्यतावच्छेदकसम्बन्धेन वृत्तेर्व्यभिचारशरीरे निवेशनीयतया जातिमान् मेयत्वादित्यादौ सत्ताद्युपाधावव्याप्तिः, साध्यतावच्छेदकसमवायादिसम्बन्धेन सत्ताद्यभाववति वृत्तेरप्रसिद्धेः । साध्यव्यापकनिष्ठत्वनिवेशे च व्यापकतायां व्यभिचारे च विशेषणताविशेषसम्बन्धस्यैव निवेशनीयतया अप्रसिद्धिविरहेण तत्राव्याप्त्यनवकाशात् ।

केचित्तु साध्यव्यापके साध्यव्यभिचारविरोधीत्यस्य साध्यव्यापकवृत्तिस्सन् साध्यव्यभिचारविरोधीति नार्थः, तथा सति साध्यव्यापक इत्यत्र साध्ये साध्याधिकरणत्वे वा इत्युक्तावेव निर्वाहात्, अपि तु साध्यव्यापकान्तर्निवेशात्साध्यव्यभिचारस्य विरोधीत्येवार्थः, व्यापकान्तर्भावेण तद्विरोधित्वं च स्वाधिकरणीभूतसाध्यव्यापकनिष्ठाभावप्रतियोगिसाध्यव्यभिचाराभावकत्वम्, तत्र च व्यापकांशमनुपादायोक्तदिशा साध्यान्तर्भावेणाविरोधित्वनिवेशे विषमव्यापकार्द्रेन्धनादिवारणासम्भवः, धूमादिव्यभिचाराभावस्य आर्द्रेन्धनादिव्यभिचाराभाववत्साध्यनिष्ठाभावाप्रतियोगित्वादित्यतो व्यापकनिवेशः । तथा चार्द्रेन्धनादेरपि साध्यव्यापकतया धूमादिव्यभिचाराभावस्य आर्द्रेन्धनादिव्यभिचाराभाववदार्द्रेन्धनादिनिष्ठाभावप्रतियोगित्वादार्द्रेन्धनादिव्यभिचाराभावस्य साध्यव्यापकान्तर्भावेण व्यभिचारविरोधित्वमित्यनतिप्रसङ्गादित्याहुः ।

अत्र चास्वरसबीजं साधनाव्यापकत्वस्योपाधिपदार्थे प्रवेशो व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमे विशिष्टप्रतियोग्यप्रसिद्ध्या व्याप्तिरूपाभावरूपत्वासम्भवः । एतत्प्रकाशनायैव व्यभिचारित्वादिपङ्क्तिकावतरणोत्तरमेतद्व्याख्यानमुपन्यस्तम् । तादृशावतरणमध्ये प्रतियोगिनो ऽत्यन्तासत्त्वे ऽभावज्ञानासम्भवोक्तेर्विशेषणान्तरपूरणञ्च तद्बीजम् ।

विरोधिपदार्थविवरणेन साधनाव्यापकत्वं साध्यव्यापकपदपूरणेन च साध्यव्यापकत्वविशेषणं घटयतां मतमाह । यद्व्यभिचारा-

भाव इति । साधने साध्यव्यभिचाराभावापादक इति । साध नपक्षकसाध्यव्यभिचाराभावापत्तियोग्य इत्यर्थः । आपत्तियोग्यता च पक्षे आरोपितत्वे सत्यापाद्यव्याप्यत्वम्, तत्रारोपितत्वं तद्वृत्तित्वपर्यवसितम्, आरोपितत्वस्य विषयबाधाधीनत्वात् । उपाधिव्यभिचाराद्यभावस्य साधनावृत्तित्वादिलाभे साधने उपाधिव्यभिचारादिलाभात्फलत उपाधेस्साधनाव्यापकत्वलाभः । अत्रापि दर्शितमेवास्वरसबीजम् ।

साध्यसमव्याप्तस्य व्यभिचाराद्यभावस्साध्यसमव्याप्यव्याप्यत्वपर्यवसितानौपाधिकत्वरूपा व्याप्तिरुपाधेस्साध्यव्याप्यत्वव्यापकत्वे तादृशव्याप्तिघटकतायामुपयुज्यते, अतस्तदुभयपर्यवसितविशेषणद्वयं लक्ष्यतानियामकमित्युक्तलक्ष्यतावच्छेदकनिर्वक्तुराशयं मन्वानो व्यापकताया व्याप्तिघटकतया उपयोगितां खण्डयति मूले तथापीत्यादिना । साध्यव्याप्यव्याप्यत्वमव्यभिचारे तन्त्रमित्यन्वयः । अव्यभिचारे । साध्यव्यभिचाराभावे । तन्त्रम् । प्रयोजकम् । आवश्यकत्वादिति । तदव्यभिचारिणि तद्व्याप्यव्याप्यत्वस्यावश्यं सत्वादित्यर्थः । लाघवात् । व्यापकताघटितसमव्याप्यत्वापेक्षया लघुशरीरत्वात् ।

(चि०) अनौपाधिकत्वे च व्याप्तिलक्षणे यावदिति पदं साध्यव्यापके विशेषणं दत्तमेव। किञ्च यस्मिन् सत्यनुमितिर्न भवति तदेव तत्र दूषणम्, न तु यद्व्यतिरेके भवत्येवेत्येतद्धर्मम्, विरुद्धत्वादेरप्यदोषत्वापत्तेः । नापि पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम्, साधनावच्छिन्नसाध्यव्यापकोपाध्यव्यापनात् ।

(दी०) न तु यद्व्यतिरेक इति। यद्व्यतिरेकेऽनुमितिप्रयोजकं रूपं व्याप्त्याद्यन्यतमं भवत्येव, यथाऽसिद्धिव्यतिरेके सिद्धिरित्यर्थः। विरुद्धत्वादेरिति । विपक्षमात्रगामित्वसपक्षविपक्षगामित्वलक्षणविरोधव्यभिचारयोरेकैकविरहेऽपि व्याप्तेरनियमादित्यर्थः।

( गा० ) ननु व्याप्यत्वाघटितं साध्यव्यापकव्याप्यत्वमेव किं नाव्यभिचारप्रयोजकमुच्यते, इत्याकाङ्क्षायामाह । न त्विति । एवञ्चाव्यभिचारप्रयोजकतया साध्यव्याप्यव्याप्यत्वमेव अनौपाधिकत्वरूपा व्याप्तिः, न तु साध्यव्याप्ये तद्व्यापकत्वमपि निविष्टम्, तथा च अनौपाधिकत्वघटकस्य साध्याविषमव्याप्यस्यानुपाधितावत् तद्घटकस्यापि विषमव्यापकस्योपाधिता स्यादिति भावः । मा भूद्व्यापकत्वांशस्य व्याप्तिघटनोपयोगितया लक्ष्यतानियामकत्वम्, दूषकतोपयोगितया तु स्यादेवेत्याशङ्कते । न चेति । अनौपाधिकत्वमिति । व्यापकत्व तु दूषणोपयिकमिति शेषः । इत्यत्रापि । प्रविष्टं साध्यव्याप्यत्वरूपमनौपाधिकत्वम् । तत्रैव । साध्यव्याप्यव्याप्यत्वमेव । तथा चेति । स्वनिष्ठानौपाधिकत्वरूपव्याप्यत्वशरीरे स्वव्यापकनिष्ठानौपाधिकत्वस्य, तच्छरीरे च तद्व्यापकनिष्ठानौपाधिकत्वान्तरस्य प्रवेश इति रीत्या अन्यान्यानौपाधिकत्वप्रवेशेनेत्यर्थः । अनवस्थेति । तथा च साध्यव्याप्यत्वाघटितमव्याप्यत्वसम्बन्धावच्छिन्नसाध्यव्यापकाभावरूपमेवानौपाधिकत्वं साध्यव्यापकव्यापकत्वपर्यवसित घकत्वम्, तत्र च विषमव्यापकमपि प्रविष्टमिति कथं तस्याः लक्ष्यतेति भावः ।

ननु साध्यव्यापकव्यापकत्वमव्याप्यत्वसम्बन्धावच्छिन्नसाध्यव्यापकाभाववत्वं च यत्किञ्चिद्व्यापकमादाय व्यभिचारिसाधारणमिति न तस्य व्याप्तिरूपतेत्यत आह । अनौपाधिकत्वे चेति । विशेषणं यत्तमेवेति । तथा च स्वव्यापकतावच्छेदकयावत्साध्यव्यापकतावच्छेदककत्वपर्यवसितम्, साध्यव्यापकतावच्छेदका यावन्तो धर्मा अव्याप्यत्वसम्बन्धावच्छिन्नतद्वच्छिन्नाभाववत्त्वमनौपाधिकत्वव्यभिचारिव्यावृत्तमेवेति भावः ।

ननु स्वव्यापकसाध्यव्यापकाभावो ऽनौपाधिकत्वम्, तत्र च नानौपाधिकत्वरूपव्याप्तिप्रवेश इति नानवस्था, यद्रूपेण व्यापके यावत्त्वं निवेश्य विषमव्यापकसाधारणस्य व्यापकमात्रस्याभाव एवानौपाधिकत्वमुच्यते । भवतु वा विषमव्यापकसाधारणसाध्यव्यापकाभाव एवानौपाधिकत्वम्, वार्यतां च व्यापके यावत्त्वविशेषणेनातिप्रसङ्गः, तथापि न विषमव्यापक उपाधिः यद्व्यतिरेके ऽनुमितिप्रयोजकरूपनियमस्तस्यैव दूषणत्वात् यदभावो व्यभिचारविरोधी

तदभावे.ऽनुमितिप्रयोजकव्याप्तिनियमेन तस्यैवोपाधित्वात् समव्याप्तस्यैव च तथात्वादित्यत आह। किञ्चेति। यस्मिन् सति। यज्ज्ञाने सति। अनुमितिर्न भवति। यज्ज्ञानमनुमित्यनुत्पादप्रयोजकमिति समुदितार्थः। तदेव दूषणमिति। दूषणत्वं तस्यैव व्याप्यमित्यर्थः। एवकारलभ्यमुक्तव्यवच्छेद्यं स्पष्टयति। न त्विति।

१ यस्य यज्ज्ञानस्य वा व्यतिरेके ऽनुमितिर्भवत्येवेत्येतद्रूपं दूषणं तत्त्वनियतं दूषणत्वमिति यथाश्रुतं न सङ्गच्छते, असिद्ध्यादेस्तज्ज्ञानस्य वा व्यतिरेकेऽपि कारणान्तराभावेनानुमित्यनुत्पत्त्योक्तनियमस्यासम्भवदुक्तिकत्वात्। विपमव्यापकाभावस्यानुमितिप्रयोजकव्याप्त्यनियतत्वेनादूषणत्ववादिनानुमितिप्रयोजकव्याप्त्यादिनियतव्यतिरेकप्रतियोगित्वस्य दूषणतानियामकतया एव शङ्कितत्वात्, यथाश्रुतनियमस्य तदनाशङ्कितत्वेन तत्प्रतिक्षेपायोगाच्चेत्यतो दीधितिकृदाशयमूलं विवृणोति। यद्व्यतिरेक इति। अनुपपद्यमानानुमितिपदं तत्प्रयोजकं लाक्षणिकमित्याशयेनोक्तमनुमितिप्रयोजकमिति। अत्र प्रयोजकत्वं यदि जनकज्ञानविषयत्वं तदा अबाधितत्वादिज्ञानस्यानुमित्यजनकतया बाधादौ व्यभिचारः, अबाधितत्वादिरूपस्य सङ्ग्रहसम्भवे विरुद्धत्वादेरित्यादिपदेन बाधादिपरिग्रहानौचित्यात्, भावसाधारणव्याप्तिघटकाभावत्वे तथाविधानुमितिप्रयोजकत्वसत्त्वाद्विरोधव्यतिरेकिण्यपि तस्यावश्यकतया विरुद्धत्वादेरित्यादिमूलविरोधः प्रकृतानुपयोगश्च, अन्यादृशं चानुगतं दुर्वचमित्यतोऽनुमितिपदस्य न तत्प्रयोजकत्वावच्छिन्नपरता अपि तु व्याप्त्याद्यनुगतधर्मान्तरावच्छिन्नपरतैव, अनुमितिप्रयोजकमिति तु शक्यसम्बन्धकथनमिति प्रदर्शयति। व्याप्त्याद्यन्यतमेति। आदिपदात् पक्षधर्मत्वासत्प्रतिपक्षितत्वाबाधितत्वपरिग्रहः। ईदृशव्याप्तेरापातत उक्तिसम्भवमाविष्कर्तुं स्वयं दृष्टान्तमाह। यथेति। असिद्धिः। अपक्षधर्मता व्याप्त्यभावश्च। सिद्धिः। पक्षधर्मत्वं व्याप्तिश्च।

१ मूले विरुद्धत्वादेरित्यादिपदेन न बाधसत्प्रतिपक्षपरिग्रहः, तद्व्यतिरेके अनुमितिप्रयोजकाबाधितत्वादिरूपसत्त्वनियमात्, अतो व्यभिचारस्यैव परिग्रह इति प्रदर्शयन् विरोधव्यभिचारयोस्स्वरूपप्रदर्शनेन तदभावयोः व्याप्त्यनियतत्वं स्फुटयति। विपक्षेति। विरोधस्य साध्यासामानाधिकरण्यरूपत्वे व्यभिचारस्य च विपक्षगामि-

स्वमात्ररूपत्वे व्याप्तिपदेन विशकलितयो विपक्षासत्त्वसपक्षसत्त्वयोरुपादाने न तयोरुक्तनियमभङ्गप्रसङ्ग, तयोरेकैकस्य व्यतिरेके सपक्षसत्त्वविपक्षासत्त्वयोरेकैकसत्त्वनियमात्, अतोऽन्यादृशयोस्तयोर्निर्वचनम् । तथा सति सपक्षावृत्तित्वसहितवृत्तिमत्त्वरूपविपक्षमात्रगामित्वव्यतिरेकिणि अवृत्तौ सपक्षसत्त्वस्य, व्यभिचारिणि च विपक्षासत्त्वस्याभावाद्विरोधव्यतिरेकेण तदेकतरनियमस्य पक्षविपक्षाभयगामित्वविरहिणि च विरुद्धे सपक्षसत्त्वस्य विपक्षासत्त्वस्य वाऽभावात् व्यभिचारव्यतिरेके न तदेकतरनियम इति मूलसङ्गतिः । उक्तविरोधस्यापि व्यतिरेकं प्रति सपक्षसत्त्वविपक्षासत्त्वयोरन्यतरत्वेन व्यापकत्वेऽपि न क्षति, अन्यतरत्वघटकभेदप्रतियोगितावच्छेदकरूपेण व्यापकताया नियमप्रविष्टत्वनाभिमतत्वादिति ।

(दी०) यत्र पक्षे हेतुमति च साध्यम्, हेतुश्च पक्षवृत्तिः तत्रैकः पक्षावृत्तिर्हेतुसमानाधिकरणः, अपरश्च पक्षनिष्ठः साध्यवति हेत्वसमानाधिकरणः, हेत्वसमानाधिकरण एव वा उपाधिः, तत्र साधनपक्षधर्मावच्छिन्नसाध्यव्यापकयोरसङ्करो बोध्यः । यथा घटः प्रत्यक्षो नित्यद्रव्यत्वात् विभुत्वाद्वेत्यादौ साधनावच्छिन्नसाध्यव्यापकमात्मत्वं पक्षधर्मावच्छिन्नसाध्यव्यापकमुद्भूतरूपवत्त्वं प्रत्यक्षस्पर्शाश्रयत्वं वा मिथोऽसङ्कीर्णमुपाधिः ।

(गा०) पक्षधर्मसाधनावच्छिन्नसाध्यव्यापकत्वरूपविशेषणद्वयघटितलक्षणयोः साधनपक्षधर्मावच्छिन्नसाध्यव्यापकयोरव्याप्ति-मूलकता दूषण तादृशविशेषणयोरसङ्करस्थलसत्त्व एव सङ्गच्छते, तदेकतरस्य विशेषणस्यापरविशेषणव्यापकत्वे व्यापकविशेषणघटितलक्षणस्याव्याप्त्यनवकाशादतस्तयोरसङ्करं एकपक्षसाध्यसाधनकस्थले सामान्यतो दर्शयति । यत्रेति । काकः श्यामो मित्रातनयत्वादित्यादौ शाकपाकजत्वाद्युपाधौ पक्षधर्मावच्छिन्नसाध्यव्यापकतायाः, वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ उद्भूतरूपाद्युपाधौ साधनावच्छिन्नसाध्यव्यापकताया असत्त्वेन लक्षणद्वयस्याव्याप्तिसङ्गतावपि पक्षादिभेदेन लक्षणभेदात्प्रथमस्थलीयोपाधिलक्षणे साधनावच्छिन्नत्वस्य,

च्छिन्नावच्छेदकोपाधिलक्षणे च पक्षधर्मावच्छिन्नत्वस्य निवेशे नाव्या-प्तिप्रसङ्ग इत्यत एतद्दले परस्परासङ्कीर्णोपाधिद्वयानुधावनम् ।

वायुः प्रत्यक्षो नित्यद्रव्यत्वादित्यादौ पक्षावृत्तिसाध्यके साध-नावच्छिन्नसाध्यव्यापकत्वासम्भवादेः पक्षधर्मावच्छिन्नत्वस्यैतदव-च्छिन्नसाध्यव्यापकत्वस्य पक्षधर्मावच्छिन्नत्वघटितलक्षणे नाव्या-प्तिरतः पक्षस्य साध्यवत्त्वानुसरणम् । यत्र हेतुमति न साध्यं वायुः प्रत्यक्ष आकाशत्वादित्यादौ तत्र साधनावच्छिन्नसाध्याप्रसि-द्ध्या न तद्व्यापकोपाधिसम्भव इत्यतो हेतुमतस्साध्यवत्त्वानुसरणम् । यत्र हेतोः पक्षे सत्त्वं घटोऽप्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ तत्र साधनस्यापि पक्षधर्मतया साधनावच्छिन्नसाध्यव्यापकस्याप पक्षधर्मावच्छिन्नसाध्यव्यापकत्वनियम इत्यतो हेतुश्च पक्षावृत्तिरि-ति । तथैकः पक्षावृत्तिर्हेतुसमानाधिकरण उपाधिरित्यन्वयः । स एव साधनमात्रावच्छिन्नसाध्यव्यापकः । पक्षवृत्तित्वे पक्षनिष्ठयत्कि-ञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वसम्भवात् पक्षावृत्तिरित्युक्तम् । हेतु-मत्यवृत्तित्वे साधनविशिष्टसाध्यवद्व्यावृत्तत्वे तादृशसाध्यव्याप-कतासम्भव इत्यतो हेतुसमानाधिकरण इत्युक्तम् । हेतुसामानाधि-करण्य साध्यवत्सकलहेत्वधिकरणवृत्तित्वम् । अपरश्च पक्षनिष्ठ इति । अयमेव पक्षधर्ममात्रावच्छिन्नसाध्यव्यापकः । पक्षावृत्तित्वे त-स्यासम्भवात् पक्षनिष्ठेत्युक्तम् । साध्यवद्धेत्वधिकरणवृत्तित्वे साध-नावच्छिन्नसाध्यव्यापकत्वमपि सम्भवत्येवेति साध्यवति हेत्वसमा-नाधिकरण इत्युक्तम् । वक्ष्यमाणे घटः प्रत्यक्षो नित्यद्रव्यत्वादित्यत्रो-द्भूतरूपोपाधौ साध्यशून्यहेतुमत्पार्थिवादिपरमाणुवृत्तितासत्त्व-ग्रहाय साध्यवतीत्युक्तम् । अन्यस्यापि पक्षधर्मावच्छिन्नसाध्यव्या-पकासङ्कीर्णोपाधेः सम्भवात्कोपाधेरसङ्ग्रहेऽपि क्षतिरित्याशयेनाह । हेत्वसमानाधिकरण एव वेति । असङ्करः । मिथो भेदः । तदेव स्थलं विशिष्य दर्शयति । यथेति । शुद्धद्रव्यत्वस्य नित्यत्वस्य वा हेतुत्वे आत्मत्वोपाधेर्घटादौ जन्यद्रव्ये नित्ये च जात्यादौ साध्यवत्यवर्तमा-नतया साधनावच्छिन्नसाध्यव्यापकत्वासम्भवान्नित्यत्वविशिष्टद्रव्य-त्वहेत्वनुसरणम् । उद्भूतरूपोपाधेः साधनवत्सामान्यावृत्तित्वमप्यु-पपादयितुं हेत्वन्तरमाह । विभुत्वाद्वेति । उद्भूतरूपवत्त्वमसङ्कीर्ण-मुपाधिरिति योजना । अत्रासङ्कीर्णत्वं साधनावच्छिन्नसाध्यव्या-

पकत्वम् । आत्मत्वे चासङ्कीर्णत्वं पक्षधर्मावच्छिन्नसाध्यव्यापकत्वम् । उद्भूतत्वाविशेषितरूपस्यापि यथोक्तोपाधित्वसम्भवेऽपि तान्त्रिकैस्तद्विशिष्टरूपस्य साध्यप्रयोजकतयोपाधित्वोपगमात्तदुपादानम् । नित्यद्रव्यत्वहेतुकस्थलेऽपि हेत्वसमानाधिकरणमुपाध्यन्तरमाह । प्रत्यक्षस्पर्शाश्रयत्व वेति । स्पर्शे प्रत्यक्षत्वविशेषण तदविशेषितस्य हेतुमत्परमाणुवृत्तित्वाद्धेत्वसामानाधिकरण्यायोगात्तम् । एतच्च प्रमाया अप्रत्यक्षतामते वह्निद्रव्यत्वरूपपक्षधर्मावच्छिन्नस्यापि साध्यस्य व्यापकम्, तत्प्रत्यक्षतामते तु पृथिवीत्वादिधर्मावच्छिन्नस्येति बोध्यम् ।

**(चि०) शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वस्योपाधित्वापत्तेश्च, शब्दधर्मगुणत्वावच्छिन्नाभिधेयत्वं यत्र रूपादौ तत्राश्रावणत्वं व्यापकं, पक्षे प्रमेयत्वस्य साधनस्याव्यापकं हि तत् । आर्द्रेन्धनवत्त्वाद्युपाधौ पक्षनियतताद्दशधर्माभावाच ।**

(दी०) अश्रावणत्वेति । घटो मेयो द्रव्यत्वादित्यादौ गन्धवत्त्वावच्छिन्नसाध्यव्यापकपृथिवीत्वादावतिव्याप्तिर्द्रष्टव्या । न चानेन रूपेण ज्ञातस्य दूषकत्वमित्याह । आर्द्रेन्धनेति ।

(गा०) शब्दो ऽभिधेय इत्यादावश्रावणत्व मूलकृता ज्ञानातिव्याप्तिर्दर्शिता, घस्त्वतिव्याप्तिमपि स्वयमाह । घट इति । आदिपदाभ्यां पर्वतो वह्निमान् धूमादित्यादौ महानसान्यत्वावच्छिन्नसाध्यव्यापकव्यञ्जनवदन्यत्वादिपरिग्रहः ।

मूले आर्द्रेन्धनवत्त्वाद्युपाधाविति । पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं ग्राह्यमिति शेषः । पक्षनियतेति । पक्षनिष्ठेत्यर्थः ।

नन्वयोगोलकं धूमवद्वह्निरित्यादावप्ययोगोलकमहानसान्यतरत्वादिरूपताद्दशपक्षधर्मसम्भव इति मूलासङ्गतिमाशङ्क्याह । न चेति । अनेन । पक्षधर्मावच्छिन्नसाध्यव्यापकत्वेनैव । ज्ञातस्य दूषकत्वमिति । शुद्धसाध्यव्यापकतया ज्ञातस्यापि दूषकत्वात्साद्दशव्यापकताग्रहदशायामयोगोलकमहानसान्यतरत्वादिरूपपक्षधर्मोपस्थित्यनैयत्येन पक्षधर्मावच्छिन्नसाध्यव्यापकताग्रहानैयत्यादिति

भावः । इत्याहेति । तादृशधर्माभावादित्यस्य तादृशधर्मोपस्थित्यनियमादित्यर्थकत्वादिति भावः । केचित्तु गुणत्वाद्यवच्छिन्नसाध्यव्यापकतया उक्तातिप्रसङ्गवारणाय पक्षधर्मपदेन पक्षधर्मावच्छिन्नधर्मो विवक्ष्यते तदा दूषणान्तरमाह । आर्द्रेन्धनेति । अयोगोलकं धूमवद्वह्नेरित्यादावित्यादिः । तादृशधर्माभावादिति । अयोगोलकमहानसान्यतरत्वादेः पक्षमात्रवृत्तित्वादिरूपपक्षनियतत्वाभावादित्यर्थ इति मूले व्याकुर्वते ।

( चि० ) अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः, तेन ध्वंसस्य जन्यत्वेन ध्वंसप्रतियोगित्वे साध्ये साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः, श्यामत्वे शाकपाकजत्वमुपाधिरिति । तन्न । पक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्यापनात्, जलं प्रमेयं रसवत्त्वादित्यत्र रसवत्त्वावच्छिन्नसाध्यव्यापकपृथिवीत्वस्योपाधित्वप्रसङ्गात्, सोपाधित्वादसाधकमित्यत्र साधनावच्छिन्नसाध्यव्यापकव्यभिचारित्वे वा साधनावच्छिन्नेत्यस्य व्यर्थत्वप्रसङ्गाच्च ।

( दी० ) पक्षधर्मेति । विरुद्धस्थलीयोपाध्यव्याप्तिरपि द्रष्टव्या । साधनावच्छिन्नेति । स्वावच्छिन्नेत्यर्थात्साधनवतीति विशेषणाद्वा न व्यभिचारः ।

( गा० ) अवच्छेदकांशप्रयोजनमाह मूले । तेनेति । विरुद्धस्थले साधनावच्छिन्नसाध्याप्रसिद्ध्या तत्स्थलीयोपाधिमात्र एवाव्याप्तेरपि सत्त्वात् स्वयं तद्दोषमाह दीधितौ । विरुद्धेति ।

मूले जलं प्रमेयमित्यादिनातिव्याप्तिर्दर्शिता, अत्र च पूर्वलक्षणवन्न क्वापि सङ्केतो वस्त्वतिव्याप्तिसम्भवः, हेतोः साध्यव्यापकत्वे तद्विशिष्टसाध्यव्यापकस्य तदव्यापकत्वाप्रसक्तेरिति ध्येयम् । येन रूपेणोपाधेरसाधकत्वसाधकता तदेव रूपमुपाधित्वमित्यभिमानेन

मवच्छिन्नसाध्यव्यापकताघटितमुपाधित्वं निराकरोति मूले। सोपाधित्वादिति। व्यभिचारित्त्वे। व्यभिचारित्वरूपसोपाधित्वहेतौ।

ननु मित्रातनयत्वं श्यामत्वासाधकम्, मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकव्यभिचारित्वादित्याद्यनुमानमसम्भवदुक्तिकमेव, तादृशहेतुमति फाकत्वादौ श्यामत्वसाधकत्वसत्त्वेन व्यभिचारादित्यत आह दीधितौ। स्वावच्छिन्नेति। न व्यभिचार इति। हेतुस्थस्वपदेन हेतुमत एवोपादेयतया फाकत्वादौ फाकत्वाद्यवच्छिन्नश्यामत्वव्यापकव्यभिचाराद्यसम्भवादिति भावः।

स्वपदार्थाननुगमेन मित्रातनयत्वादिपक्षकानुमाने विशिष्य मित्रातनयत्वादिकमेवोपादेयम्, तथा च दर्शितव्यभिचारस्तदवस्थ एव, मित्रातनयत्वरूपस्ववृत्तित्वाविशिष्टस्य व्यभिचारस्य हेतुत्वे च विशिष्य विशेष्यतावच्छेदकस्य वैयर्थ्यं दुर्वारमेवेत्याशङ्क्य समाधानान्तरमाह। साधनवतीति। विशेषणाद्वेति। मित्रातनयत्वादिमन्निरूपितत्वस्य व्यभिचारविशेषणाद्वेत्यर्थः। मित्रातनयत्वादिनिरूपितवृत्तिमात्रस्य हेतुत्वे श्यामत्वादावेव व्यभिचारस्स्यात् तद्वारकतया वृत्तिविशेषणेऽसाध्याभावाधिकरणपर्यन्तसार्थक्यम्।

( चि० ) किञ्च पक्षद्वयेऽपि विशिष्टसाध्यव्यभिचारं विशिष्टसाध्यव्यतिरेकं वा प्रसाध्य पश्चात्केवलसाध्यव्यभिचारः केवलसाध्यव्यतिरेको वा साधनीयः, तथा चार्थान्तरम्, केवलसाध्ये हि विवादो न तु विशिष्टे।

( दी० ) ननु शुद्धसाध्याव्यापकस्थले एवासिद्धिशङ्कानिरासायावच्छेदकांशोऽपि निवेशनीयः। अखण्डाभावस्य घटकतया च न वैयर्थ्यम्, येन रूपेणोपाधिता विशेषणत्वेति तद्रूपावच्छिन्नव्यभिचारस्यैव वा हेतुत्वम्, शुद्धसाध्यव्यापकस्थले तु साध्यव्यापकव्यभिचारो व्यापकतावच्छेदकार्द्रेन्धनत्वाद्यवच्छिन्नव्यभिचारो वा हेतुरुपन्यसनीयः, मांसत्वस्तद्धर्मवति तद्धर्मविशिष्टसाध्यव्यापकव्यभिचारित्वस्य हेतुत्वेऽपि

न वैयर्थ्यम्, अखण्डाभावस्यातिरिक्तत्वात्। वस्तुतस्तु उपाधिना असाधकत्वासाधनेऽपि न क्षतिः, उद्भावितयावद्दोषैरेव तत्साधनीयमिति नियमाभावात्, तदुन्नीतव्यभिचारेण तत्साधनसम्भवात् सन्दिग्धोपाधिसमशीलस्सन्दिग्धो व्यभिचार इत्यत आह। किञ्चेति। केवलेति। तथा च केवलस्यैव साध्यस्य व्यभिचारो व्यतिरेको वा जिज्ञासितो विरोधित्वात्, न तु विशिष्टस्य, अविरोधित्वादिति भावः।

(गा०) किञ्चेत्यादिदूषणमवतारयितुं पूर्वदूषणोद्धारायासाधकतासाधकव्यभिचारप्रतियोगिन एव उपाधित्वनियमेऽपि तत्साधकशरीरप्रविष्टरूपमेव उपाधित्वमिति नियमो नास्तीत्याशयेन यत्र साधनावच्छिन्नत्वप्रवेशो व्यापकतायां नाभावान्तरस्य घटकता तत्र तत्प्रवेश एव नास्ति, यत्र तत्प्रवेशस्तत्राभावान्तरस्य घटकतया तद्वैयर्थ्यमित्याह नन्वित्यादिना। शुद्धसाध्याव्यापकस्थले एवेति। शाकपाकजत्वाद्युपाधिस्थल एवेत्यर्थः। असिद्धिशङ्कानिरासायेति। मित्रातनयत्वादौ शुद्धश्यामत्वादिव्यापकव्यभिचारहेतोरित्यादिः। व्यभिचारिणि मित्रातनयत्वादिहेतौ शुद्धश्यामत्वादिव्यापकस्यान्तःश्यामत्वादेरेव व्यभिचारस्य सत्त्वेनासिद्धिविरह इति शङ्कोपादानं साध्यव्यभिचारस्य सिद्धिदशायां तेनैवासाधकतापादनसम्भवादुपाधेरनुपयोगेन तत्सन्देहदशायामेव उपाधिव्यभिचारेणासाधकत्वस्य साधनीयतया साधनावच्छिन्नत्वानिवेशे निश्चितव्यभिचारप्रतियोगिनश्शाकपाकजत्वादेरनन्तर्भावेनासिद्धिशङ्का, तदन्तर्भावे च व्यभिचारनिश्चयसत्त्वेन हेतुसंशयनिरास इति भावः।

अखण्डाभावस्येति। अतिरिक्तस्येति शेषः। शाकपाकजत्वादिव्यावृत्ताच्छुद्धश्यामत्वादिव्यापकतावच्छेदकत्वात्तत्साधारणसाधनविशिष्टश्यामत्वादिव्यापकतावच्छेदकत्वात्मकाभावस्य भिन्नतया तद्घटितहेतोः शुद्धश्यामत्वव्यापकताघटितहेतुघटिततया न वैयर्थ्यमित्यर्थः। उक्तनियमाभ्युपगमे ऽवच्छिन्नसाध्यव्यापकोपाधिस्थलेऽपि अवच्छिन्नसाध्यव्यापकतावच्छेदकशाकपाकजत्वादिकं विशिष्योपादाय शाकपाकजत्वावच्छिन्नाभाववदवृत्तित्वादित्येव हेतुर्वक्तव्यो

न तु विशिष्टस्यासत्त्वाद्व्यापकतावच्छेदकत्वेन तन्निवेश इति न वैयर्थ्यशङ्कापीत्याह । येन रूपेणेति । विशेषणवतीति । विशेषणम् । साध्यनिष्ठोपाधिव्याप्यतावच्छेदक साधन पक्षधर्मो वा तद्वन्निरूपितस्येत्यर्थः ।

शुद्धसाध्याव्यापकस्थले एवेत्यनेन शुद्धसाध्यव्यापकोपाधिस्थलीयं विशेषं प्रदर्श्य विशिष्योपाधितावच्छेदकनिवेशे उभयस्थलाविशेषं दर्शयति । शुद्धसाध्येति । शुद्धसाध्यव्यापकार्द्रेन्धनादिव्यभिचारेण वह्न्यादेर्धूमाद्यसाधकत्वसाधने वह्न्यादिविशिष्टधूमादिव्यापकत्वेनार्द्रेन्धनाद्युपादाने वह्न्यादिविशिष्टत्ववैयर्थ्यं दुर्वारम्, धूमाद्यधिकरणस्य वह्न्यादिविशिष्टतदधिकरणत्वनियमेन शुद्धधूमादिव्यापकताघटकतद्भिन्नाभावप्रतियोगितावच्छेदकत्वाभावाद्वह्न्यादिविशिष्टतदधिकरणाभिन्नाभावप्रतियोगितावच्छेदकत्वाभावस्यानतिरिक्तत्वात् अतस्तत्रावच्छेदकांशो नोपादीयते, तदनिवेशेऽपि निश्चितव्यभिचारप्रतियोगिन आर्द्रेन्धनादुपाधेर्हेतुघटकतया तदसिद्धिशङ्काया असम्भवात्, व्यापकतावच्छेदकपर्यन्तमेव वा ऽनिवेश्य वस्तुतो व्यापकतावच्छेदकमार्द्रेन्धनत्वादिकं विशिष्य निवेश्य तदवच्छिन्नव्यभिचारो हेतुरुपन्यसनीयः, व्यापकतावच्छेदकत्वस्य च वह्निरूपपक्षवृत्तिव्यभिचारप्रतियोगितावच्छेदक आर्द्रेन्धनत्वे यदि धूमासाधकत्वसाधकव्यभिचारप्रतियोगितावच्छेदक न स्यात् धूमव्यापकतावच्छेदक न स्यात् व्यापकव्यभिचारिणो व्याप्यव्यभिचारनियमादिति तर्कसम्पादनोपयोग इत्यर्थः । शुद्धसाध्यव्यापकार्द्रेन्धनादेरपि पक्षधर्मायोगोलकमहानसान्यतरत्वाद्यवच्छिन्नसाध्यव्यापकत्वेनासाधकतासाधकशरीरे निवेशस्सम्भवति, तद्विशिष्टसाध्यव्यापकताघटकस्याभावस्य शुद्धसाध्यव्यापकताघटकाभावभिन्नतयाऽवैयर्थ्यादित्याह । प्रायश इति । एकमात्रवृत्तितद्धूमादिसाध्यके विशिष्टसाध्यव्यापकताघटकस्याभावस्यातिरिक्तत्वासम्भवात् प्रायश इत्युक्तम् । साध्यादौ व्यभिचारवारणाय तद्वन्मवतीति व्यभिचारविशेषणम् । असाधकतासाधकव्यभिचारप्रतियोगिन एव उपाधित्वमिति नियमस्याप्रामाणिकतया व्यर्थविशेषणतया उपाधिव्यभिचारस्य तदसाधकत्वेऽपि न क्षतिरित्याह । वस्तुतस्त्विति ।

ननूद्भावितहेतुरूपेणासाधकत्वं साध्यते इति नियमानुरोधादु-

पाधौ दोषत्वयोरुद्भाविते तेनासाधकत्वसाधनमावश्यकम्, तथा चावच्छिन्नसाध्यव्यापकोपाधिर्नोद्भावयितुं शक्यः व्यर्थविशेषणतया तेनासाधकत्वसाधनासम्भवादिति नासौ दोष इत्यत आह। उद्भावितेति। उक्तनियमसत्त्वेऽपि यावद्दोषान्तर्भावेन तथा नियमाभावेनोक्तोपाधिनाऽसाधकत्वासाधनेऽपि क्षतिविरहादित्यर्थः। तर्हि तत्साधकस्तत्र को दोष इत्याकाङ्क्षायामाह। तदुन्नीतेति। व्यभिचारस्योपाध्युन्नीतत्वकथनं व्यभिचारे पक्षधर्मताज्ञानसत्त्वेऽप्युपाध्युन्नायकत्वं साधर्म्यं च सूचयितुम्। अवच्छिन्नसाध्यव्यापकोपाधिना व्यभिचारसाधने व्यर्थविशेषणतापरिहारकोक्तरीतेरादरे यद्यप्यसाधकत्वसाधनमपि तेन सम्भवति तथापि तदनावश्यकतया मूलकृतां तद्दूषणमेवायुक्तम्, किं तत्र दूषणोद्धारेणेत्याशयेनेदम्।

ननु सन्दिग्धव्यभिचारेणासाधकत्वसाधनं न सम्भवति, यत्रोपाधिर्व्यभिचारसंशयमेवाद्धाति तत्र उपाधिनैवासाधकत्वं साधनीयमित्यत आह। सन्दिग्धोपाधीति। सन्दिग्धोपाधेरेव व्यभिचारसंशयाधायकत्वम् निश्चितेन तेन व्यभिचारानुमानस्यैव सम्भवात्, तथा च व्यभिचारसंशयस्थले उपाधेरपि सन्दिग्धतया नासाधकत्वसाधकत्वसम्भव इत्युपाधिसंशयविषयत्वमेव तत्साधकत्वेनोपेयम्, तथा च तस्यैव व्यभिचारसंशयविषयत्वस्यापि तत्रासाधकत्वसाधकत्वसम्भव इति तस्य निश्चितत्वाद्व्यभिचारादेरेव दोषतया तत्संशयस्यादोषत्वेऽपि न क्षतिः, उपाधिसंशयस्याप्यदोषतया दोषेणैवासाधकतासाधनमिति नियमस्यानभ्युपगमादित्यर्थः।

मूले पक्षद्वयेऽपीति। पक्षधर्मावच्छिन्नसाध्यव्यापकस्योपाधितापक्षे साधनावच्छिन्नसाध्यव्यापकस्योपाधितापक्षे चेत्यर्थः। प्रसाध्येति। विशिष्टसाध्यव्यापकस्य उपाधेर्व्यभिचारेण व्यतिरेकेण वा साधने पक्षे चेत्यादिः। पश्चादिति। तादृशोपाधिव्यभिचारादिना प्रथमं शुद्धसाध्यव्यभिचारादिसाधनासम्भवादिति भावः। साधनीय इति। विशेषणव्यभिचारविशिष्टविशिष्टव्यभिचारेण विशेषणविशिष्टव्यतिरेकेण चेत्यादिः। अर्थान्तरमिति। विशिष्टसाध्यव्यभिचारादिसाधने इत्यादिः।

विशिष्टसाध्यस्य विप्रतिपत्तिविषयत्वाभावस्य विशिष्टव्यभिचारादिसाधने ऽर्थान्तरताहेतुत्वं मूलोक्तमुपपादयति दीधितौ। तथा

चेति । केवलसाध्यस्यैव विवादविषयत्व इत्यर्थः । विरोधित्वादिति । तादृशसाध्यसिद्धिविरोधित्वादित्यर्थः । यादृशसाध्य विप्रतिपत्तिविषयस्तत्साधनायोपन्यस्तहेतौ तद्व्यापकताविरोधित्वेऽपतदभावयोः सन्दिग्धतया तादृशसंशयविरोधितदेकतरकोटिनिर्णये निश्चयादयादिति भावः । न तु विशिष्टस्येति । व्यभिचार इत्यादिरनुषञ्जनीयः ।

( चिं० ) अथ प्रकृतसाध्यव्यभिचारासिद्ध्यर्थं विशिष्टसाध्यव्यभिचारः साध्य इति चेन्न । अप्राप्तकालत्वात् । प्रथमं साध्यव्यभिचार एवोद्भाव्यः, तत्रासिद्धावुपाधिरिति चेत् ? तर्हि प्रकृतानुमाने नोपाधिर्दूषणं स्यात् । किञ्च साध्यव्यभिचारहेतुत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकव्यभिचार एवोपन्यसनीयो नोपाधिः ।

( दी० ) उद्भाव्यः । विशेषणाव्यभिचारित्वे सति विशिष्टसाध्यव्यभिचारेण साधनीयः । तत्र । विशिष्टव्यभिचारे असिद्धौ उद्भावितायां तत्सिद्धये उपाधिरुद्भाव्य इति । तर्हीति । प्रकृतानुमितिविरोधिशुद्धसाध्यव्यभिचारासाधकत्वादिति भावः । अथ वक्ष्यमाणरीत्याऽवच्छिन्नसाध्यव्यापकेनाप्युपाधिना आहत्यैव साध्यव्यभिचारस्साधनीय इत आह । किञ्चेति । पक्षधर्मावच्छिन्नेत्यादिकमुपाधिमात्रव्यभिचारोपलक्षकम् । न प्राधान्येनोपाधिर्व्याप्त्यादिविरहेणाहेतुत्वात ।

( गा० ) ननु प्रथमं साध्यव्यभिचारादेराकाङ्क्षितत्वेऽपि तत्साधकतया विशिष्टव्यभिचारादेरप्याकाङ्क्षितत्वादुपाधिना तत्साधने नार्थान्तरमित्याशयेन शङ्कते मूले । अथेति । विशिष्टसाध्यव्यभिचार इति । साधनीय इति शेषः । अप्राप्तकालत्वात् । शुद्धसाध्यव्यभिचारमनुद्भाव्य उपाधिना विशिष्टव्यभिचारसाधने तदानीमनाकाङ्क्षितत्वरूपाप्राप्तकालत्वस्य तावताऽपि दुर्वारत्वादित्यर्थः ।

उद्भावितव्यभिचारासिद्धिर्न दोषः, हेत्वसिद्धेरेव दोषत्वादत-स्तत्रासिद्धाविति तत्पदेन साध्यव्यभिचारस्य प्रक्रान्तस्य परामर्शे-

ऽसङ्गतिरतः तत्परामर्शनीयत्वलाभार्थं पूरयन् उद्भाव्येति व्याचष्टे
वाधितौ । उद्भाव्य इति । विशेषणीभूतमिश्रानन्तपदसाध्यव्यभिचा-
रित्वरूपहेतुविशेषण इत्तौ सिद्धमेवेति विशेष्यमात्रपरामर्शकतां त-
त्पदस्याह । तत्र विशिष्टव्यभिचार इति । असिद्धौ उपाधिरित्यत्र
सतिसप्तम्याऽऽकाङ्क्षितस्य सत्यामिति क्रियान्तरस्य पूरणं, ऽत्र
इति, उक्तहेतौ वास्तविकासिद्धेरसत्त्वादतः क्रियान्तरं पूरयति ।
उद्भावितायामिति । उपाध्युद्भावनस्य फलमाह । तत्सिद्धये इति ।
पक्षीभूतप्रकृतहेतौ तत्सिद्धयर्थमित्यर्थः । उपाधिरिति मूले क्रिया-
न्तराकाङ्क्षापूरणाय पूर्वोक्तक्रियापदमनुषञ्जयति । उद्भाव्य इति ।
उपाधेः प्रकृतानुमाने ऽदूषणत्वापत्तौ मूलाभिप्रेतमाकाङ्क्षितं वक्तुमाह ।
प्रकृतेति । विरोधीति । साक्षाद्विरोधीत्यर्थः । व्यभिचारस्यापि शुद्ध-
साध्यव्यभिचारोन्नयनद्वारा विरोधित्वाद्यथाश्रुतासङ्गत्या, परम्परया
विरोधिनस्साधकस्य दूषणत्वे उपाधिसाध्यतत्साधकपरम्परया अपि
दोषतापत्तेरिति भावः । वक्ष्यमाणेति । सिद्धान्ते वक्ष्यमाणेत्यर्थः ।
सा च रीतिः विशिष्टव्यभिचारसाध्यके विशिष्टव्यापकव्यभिचार-
रूपहेतौ विशेषणव्यभिचारस्याभावाद्धेत्वम्, व्यभिचारवारणाय विशे-
षणाव्यभिचारित्वेन तादृशहेतु विशेष्य शुद्धसाध्यव्यभिचारस्यैव
साध्यत्वादरो वा । शुद्धसाध्यसाधनावच्छिन्नसाध्यव्यापकयोरु-
पाध्योस्तद्व्यभिचारेणैव साध्यव्यभिचारसाधकतया तत्र तद्व्यभिचा-
रमात्रस्य उद्भावयितुमुचिततया सङ्कोचेन पक्षधर्मावच्छिन्नसाध्य-
व्यापकोपाधिमात्रस्योपन्यसनीयताव्यवच्छेदो न युज्यते, ऽतस्ता-
दृशोपाधिसामान्योपलक्षणतामाह । पक्षेति । उपाधिव्यभिचारे हे-
तावुपाधिविशेषणत्वेनावश्यापाद्यतया तदुद्भावनव्यवच्छेदासङ्गति-
माशङ्क्य पूरयति । साधान्येनेति । अत्रायमुपाधिरित्याकारेण इतरा-
विशेषणतयेत्यर्थः । हेतु पूरयति । व्याप्यत्वादीति । साध्यव्यभि-
चारव्याप्यत्वादीत्यर्थः । आदिपदात्साधनरूपपक्षधर्मतापरिग्रहः ।
व्यभिचारस्य सम्बन्धत्वे मानाभावादिति भावः ।

(चि०) स्यादेतत्, पर्यवसितसाध्यव्यापकत्वे सति
साधनाव्यापक उपाधिः, पर्यवसितं साध्यं पक्षधर्म-
तावललभ्यम्, यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्मा-

तिरिक्तधर्मेवान् मेयत्वादित्यत्र पर्यवसितं यत्साध्यमनित्यत्वं तस्य व्यापकं कृतकत्वमुपाधिः ।

( दी० ) पर्यवसितेति । अत्र लक्ष्यतानियामकं दूषकताबीजं सत्प्रतिपक्षोन्नायकत्वम्, व्यभिचारोन्नायकत्वस्य तत्त्वे साध्यवत्पक्षावृत्तौ व्यभिचारोन्नायकेऽव्याप्तेः, वक्ष्यमाणकृतकत्वोपाधेरदूषकतापत्तेश्च । न हि तद्व्यभिचारेण हेतौ शुद्धसाध्यव्यभिचारश्शक्योन्नयनः, बाधानवतारदशायां तादृशव्यभिचारासिद्धेः । न च पर्यवसितसाध्यव्यभिचारस्साध्यव्याप्यताबोधविरोधीति । न चैवमपि कथं तत्र सद्धेतावुपाधिसम्भवः ? मीमांसकमतेन तदभिधानात् । शब्दशब्दयोर्भावप्रधानत्वाद्वा । पक्षतावच्छेदकादेरुपाधितावारणाय पक्षावृत्तित्वे सतीति विशेषणीयम् ।

( ना० ) तत्त्वे । लक्ष्यतानियामकत्वे । साध्यवत्पक्षावृत्तौ । साध्यवत्पक्षावृत्तितया पक्षधर्मतावलप्र्यपक्षीयसाध्यव्यापके काकादिपक्षकद्यामत्वादिसाध्यकमित्रातनयत्वादिहेतुकशाकपाकजत्वाद्युपाधौ उपदर्शितरीत्या व्यभिचारोन्नायके । अव्याप्तेरिति । सत्प्रतिपक्षोन्नायकस्य लक्ष्यत्वे च पक्षस्य साध्यवत्तया तत्र साध्याभावसाधकत्वेनालक्ष्यत्वान्नाव्याप्तिरिति भावः ।

दोषान्तरमाह । वक्ष्यमाणेति । अनुपदं सङ्ग्रहनीये तल्लक्षण इत्यर्थः । अदूषकतापत्तेरिति । व्यभिचारोन्नायकतया लक्ष्यतानुपपत्तेरित्यर्थः । तथा चाप्रिममूलविरोधस्स्यादिति भावः । तादृशोपाधेस्सत्प्रतिपक्षोत्थापनमयिकलम्, पक्षधर्मताबलेन तत्रानित्यत्वभाने तद्व्यापककृतकत्वाभावज्ञानस्य प्रतिबन्धकत्वात्, इतरथा-तद्व्यापकतावच्छेदकरूपेणैव विशेषभानमते समानाविषयकत्वमात्रस्य विरोधितावीजत्वेन विशेषरूपेण व्यापकाभावज्ञाने सामान्यरूपेणापि विरोधाभानात् । एवं विशिष्टसाध्यव्यापकाभावज्ञानस्यापि विशेषणवत्तानिश्चयसहकृतस्य शुद्धसाध्याभावानुमितिसामग्रीत्वेन शुद्धसाध्यानुमितिप्रतिबन्धकतया वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रय-

त्वादित्यादौ उद्भूतरूपादेस्तथात्वमधिकमित्यवधेयम् ।

ननु शब्दस्य नित्यतापक्षे प्रमेयत्वमनित्यत्वाभिन्नो यः शब्दधर्मस्तद्भिन्नधर्मव्यभिचारि शब्दत्ववान् कृतकत्वव्यभिचारित्वादिति रीत्या वक्ष्यमाणसाध्यव्यभिचारोन्नायकत्वं कृतकत्वस्य सम्भवत्येव व्यभिचाराविरहादित्यत आह । बाधेति । व्यभिचाराप्रसिद्धेरिति । उक्तसाध्याभावस्य पक्ष एव सत्त्वेन तत्प्रसिद्धिं विना शब्दत्वांशे तद्वृत्तित्वरूपव्यभिचारसाध्यस्य प्रसिद्ध्यसम्भवादित्यर्थः । भावसाध्यके साध्यप्रसिद्धिं विना व्याप्यग्रहेण अनुमानायोगादिति शेषः । बाधावतारदशायां च तत्र प्रयागमकत्वसम्भवात्स्योपाधित्वाव्यवस्थितेरिति भावः ।

ननूपदर्शितसाध्यतावच्छेदकावच्छिन्नाभावस्य पक्षातिरिक्तेऽप्रसिद्धावप्यनित्यतारूपपर्यवसितसाध्यस्य तत्त्वेनाभाव आकाशादौ प्रसिद्ध इति तदभाववद्वृत्तित्वरूपव्यभिचारस्य आकाशादिवृत्तौ बाधानवतारदशायामपि प्रसिद्धिरस्तीत्यत आह । न चेति । न हीत्यर्थः । साध्यव्याप्यतेति । उपदर्शितसामान्यधर्मावच्छिन्नसाध्यव्याप्यतेत्यर्थः । बाधविरोधीति । तथा च तादृशव्याप्तिबोधाधीनायां, पक्षधर्मताबलान्नित्यत्वासिद्धौ विशेषव्यभिचारस्याक्षेपतया तदुन्नयनेन नोपाधेरुपकारित्वमिति भावः । न्यायमते शब्दस्यानित्यतया उक्तानुमानं सदनुमानमेवेति तत्र कृतकत्वे उपाधिलक्षणसङ्गमनं विरुद्धमिति शङ्कते । न चैवमपीति । मीमांसकमतेनेति । शब्दनित्यतावादिनां तेषां मते तदनुमानस्य दुष्टत्वादिति भावः । स्वमतेऽपि तन्मूलं सङ्गमयति । शब्दशब्दयोरिति । पक्षस्थसाध्यस्थशब्दपदयोरित्यर्थः । भावप्रधानत्वात् । शब्दत्वपरत्वात् । तथा च न्यायमते शब्दत्वस्य नित्यतया तत्रोक्तरीत्या ऽनित्यत्वसाधकमनुमानमसदेवेति भावः । सत्प्रतिपक्षानिर्वाहायानित्यत्वशून्यशब्दत्वस्य पक्षत्वे साध्ये शब्दत्वानन्तर्भावे शब्दत्वे पक्षे शब्दधर्मातिरिक्तस्याबाधेनानित्यत्वपर्यवसानमिति तत्रापि भावप्रधानत्वादरः । तद्धर्मविशिष्टे तद्धर्मवद्वृत्तित्वादिविशिष्टस्य संशयाभावाच्छब्दत्वादिविशिष्टे शब्दावृत्तिधर्माभावस्य सुनिश्चेयतया तत्रानित्यत्वस्य वस्तुतो बाधितस्यापि संशयसम्भवेन तत्र पर्यवसानसम्भव इत्यवधेयम् । पक्षतावच्छेदकादेरिति । पर्वतो वह्निमानित्यादौ पर्व-

घसितपर्यवसितसाध्यव्यापकसाधनाव्यापकपर्यवसितत्वादावि त्यर्थ । विशेषणमिति, इदं च परमतेऽपि साधनाव्यापकस्य नोपाधितेत्यभिमानेन विशेष्यदलस्यावश्यकतया स्वतन्त्रविशेषण इ- त्यम् । वस्तुतो विशेष्यदलस्य सत्प्रतिपक्षोत्थापकतायामनुपयो गितयाऽव्याप्तिकरत्वेन च तेनैव पक्षावृत्तित्व विवक्षणीयमिति ।

( चि० ) यदि च तथैव कृतकत्वमपि शब्दे साध्य- ते तदा अनित्यत्वमुपाधिः, तदुक्तम् यदुक्तसाध्य- नियमच्युतोऽपि कथमेकोपाधिरुद्धाव्यः पर्यवसितं नि- यमयन्दूषकताबीजसाम्राज्यादिति। अनेन पक्षधर्मसा- धनावच्छिन्नसाध्यव्यापकोपाधिस्सङ्गृह्यते, तादृशा- साध्यस्य पर्यवसितत्वादिति तन्न । एवं हि द्व्यणुकस्य सावयवत्वे सिद्धे द्व्यणुकमनित्यद्रव्यासमवेतं जन्य- महत्त्वानधिकरणद्रव्यत्वादित्यत्र निस्स्पर्शद्रव्यसमवे- तत्वमुपाधिस्स्यात् । भवति हि नित्यद्रव्यसमवेतत्वं पर्यवसित साध्यम्, तस्य व्यापकं साधनाव्यापकं च ।

( दी० ) यदि चेति । एतच्च स्वतन्त्रकृतकत्वसाधनदशायां बोध्यम् । अनित्यत्वसाधनोपयोगितया तु कृतकत्वसाधने द्वयो- रपि सन्दिग्धत्वेनैकतरव्यतिरेकस्यान्यतरव्यतिरेकासाधकत्वा- त् । एव हीत्यादि । असमवेतत्वेन द्रव्यासमवेतत्वेन वा, अर्था- न्तरवारणाय सावयवत्व इति । साध्ये द्रव्यपदं नित्यद्रव्यवृत्ति- तायास्स्फुटतरसिद्ध्यर्थम्, द्रव्यसमवेते ऽनित्यद्रव्यासमवे- तत्वस्य नित्यद्रव्यसमवेतत्वमादाय पर्यवसानात् । हेतौ च जन्यपदं परमाणुनित्यत्वासिद्धिदशायामाकाशादौ व्याप्तिग्रहाय। विशिष्टाभावस्यातिरिक्तत्वान्न वैयर्थ्यम् । नित्यमहत्त्वव्यावृत्ता- नित्यपावन्महत्त्ववृत्तिजातिपरिचयाय तदिति तु न । तादृशजा-

तौ मानाभावात् । वैभवापेक्षिकापकर्षव्यवहारस्याननुगतजातिभि-
रेव सम्भवात् । तुल्यन्यायतया त्रसरेणुमहत्त्वापेक्षिकोत्कर्षेणैक-
जात्या सङ्करप्रसङ्गाच्च । नित्यस्पर्शेति । साध्योपाध्योर्व्याप्तिदा-
र्ढ्यप्रदर्शनाय द्रव्यपदम्, गमकता तु तेन विनापि । पर्यवसि-
*तसाध्यसमव्याप्त एवोपाधिरिति मतेनेदमित्यपि कश्चित् ।*

( गा० ) मूले तथैवेति । यत्किञ्चिदुद्देश्यता पक्षावृत्तिसामान्य-
साधारणतद्वृत्तिनोकसमशीलरूपेणैवेत्यर्थः ।

बोधितौ स्वतन्त्रकृतकत्वसाधनेति । कृतकत्वस्यानित्यत्वसा-
धनाप्रयोजकसाधनेत्यर्थः । अनित्यत्वासाधने उद्भावितस्य कृत-
कत्वोपाधेः सत्प्रतिपक्षोत्थापकतानिराकरणाय तत्साधने नित्य-
त्वस्योपाधित्वासम्भवमाह । अनित्यत्वेति । द्रव्यसमवेतत्वरूपसा-
ध्यवत्त्वसिद्धिवशानुसरणप्रयोजनमाह । असमवेतत्वेन द्रव्यासमवे-
तत्वेन चेति । उभयथैव अनित्यद्रव्यासमवेतत्वोपपत्तेरिति भावः ।
समवेतत्वमात्रसिद्धावपि असमवेतत्वेनार्थान्तरानवकाशात् द्रव्या-
समवेतत्वानुधावनम् । अर्थान्तरवारणायेति । अर्थान्तरेणानित्यद्रव्य-
समवेतत्वरूपसाध्यपर्यवसानासम्भवस्य वारणायेत्यर्थः ।

मूले इत्यत्रेति । इति रीत्या अणुकसमवायिना नित्यद्रव्यस्य
साधने इत्यर्थः ।

ननु पक्षधर्मताबलाद्व्यापकतावच्छेदकाक्रान्तस्यैव सामान्यरूपे-
ण विशेषरूपेणापि वा सिद्धे कथममावसाध्यकानुमानान्नित्यद्र-
व्यसमवेतत्वसिद्धिः ? अत्र केचित् द्रव्यसमवेतत्वसिद्धौ तदपि
पक्षतावच्छेदकेऽन्तर्भाव्यम्, तच्च द्विविधम् नित्यद्रव्यसमवेतत्व-
रूपमनित्यद्रव्यसमवेतत्वरूपं च, तत्रानित्यद्रव्यसमवेतत्वरूपैकवि-
शेषाभावरूपसाध्यव्याप्यहेतुमत्तानिश्चयरूपतादृशविशेषभानविरो-
धिसद्भूतात्सामान्यरूपेणोक्तपक्षतावच्छेदकस्य साध्यधर्मितावच्-
छेदकतया भासकात्तादृशव्याप्यवत्तापरामर्शान्नित्यद्रव्यसमवेत-
त्वात्मकविशेषरूपेण तदुद्भावनमविरुद्धमिति तन्न । मूलकृता सावय-
वत्वस्य पक्षतावच्छेदकत्वेनानुपादानात्स्वतन्त्रतत्सिद्धेरेवोक्तत्वात् ।
भवतु वा सावयवत्वस्य पक्षतावच्छेदकप्रवेशो मूलाभिप्रेतः, तथापि

पक्षतावच्छेदकतया भाने पर्यवसितसाध्यताविरोध एव ।

वस्तुतस्तु यथा सामान्यानुमितिसामग्री एकविशेषबाधसहकृताऽपरविशेषरूपेण सामान्यं बोधयति, तथा विशेषबाधसामग्र्यपि सामान्यनिश्चयसहकृताऽपरविशेषरूपेण सामान्यबोधिका, सामान्यनिश्चयविशेषान्तरबाधयोरेकतरसामग्र्या सह परस्परवलनस्य द्विरूपस्य एकविधानुमितिजनकत्वानुभवात् । अतो नित्यद्रव्यासमवेतत्वनिश्चयसहितं द्रव्यसमवेतत्वव्याप्यवत्ताज्ञानमिव द्रव्यसमवेतत्वनिश्चयसहितमनित्यद्रव्यासमवेतत्वव्याप्यवत्ताज्ञानमपि नित्यद्रव्यसमवेतत्वेन सामान्यं गमयति द्रव्यसमवेतत्वेनानित्यद्रव्यासमवेतत्वेन च निश्चये नित्यद्रव्यसमवेतत्वसंशयानुदयात् ईदृशानुभवानादरे इतरबाधबलादव्यापकस्यापि विशेषरूपेण भानविलयप्रसङ्गादिति मूलकृतामाशयः । अत एव भ्रमत्वाभावसाध्यकानुमानाद्भावरूपप्रामाण्यसिद्धिस्तैरङ्गीकृता । न च नित्यद्रव्यसमवेतत्वेनानुपस्थितौ तेन रूपेण भानासम्भवः, विशेष्ये विशेषणमिति न्यायेन अनुमितौ विशेषणतावच्छेदकप्रकारकज्ञानानपेक्षणात् ।

न च यद्रूपावच्छिन्नं बाध्यते तद्रूपविरोधिरूपेणैव विशेषान्तरभानमानुभविकम्, न तु तत्समनियतरूपान्तरेणापि, उक्तस्थले समवेतत्वद्रव्यसमवेतत्वादिना नित्यद्रव्यसमवेतत्वभानस्य त्वयाऽप्यनभ्युपगमात्, तथा च प्रकृतस्थले ऽनित्यद्रव्यसमवेतत्वाभावत्वविशेषितेन द्रव्यसमवेतत्वेन नित्यद्रव्यसमवेतत्वं भासताम्, न तु अनित्यद्रव्यसमवेतत्वग्रहाविरोधिग्रहाविषयनित्यद्रव्यसमवेतत्वेनेति वाच्यम् । विशेष्यघटितसामान्यधर्मतया निश्चिते यादृशविशेषणावच्छिन्नयादृशविशेष्यघटितस्य विशेषरूपावच्छिन्नस्य यत्र बाधः तत्रापरविशेषसिद्धौ तत्र तादृशविशेषणाभावविशेषिततादृशविशेष्यघटितविशेषधर्मप्रकारकत्वानुभवात्, प्रकृते ऽनित्यत्वविशेषणावच्छिन्नद्रव्यसमवेतत्वबाधनिश्चयमहिम्नाऽनित्यत्वाभावरूपनित्यत्वविशेषितद्रव्यघटितविशेषप्रकारकताया निष्प्रत्यूहत्वात् । अत एव वह्नित्वाभाववति वह्नित्वप्रकारकत्वस्याभावे सिद्ध्यति वह्नित्ववति वह्नित्वप्रकारकत्वत्वेन भावरूपप्रामाण्यसिद्धिर्मूलकृतोक्ता सङ्गच्छते । यत्र च विशेषणविशिष्टविशेष्यस्य तादृशविशेष्यविशिष्टस्य वा ऽभावे भासमाने तदुपपादकस्य विशेष्ये

विशेषणाभावस्य भानं तत्र प्रदर्शितविशिष्टाभावादिप्रतियोगिकोटिप्रविष्टतया भासमानतद्विशेषणधर्मितावच्छेदकत्वमेव पर्यवसितसाध्यसिद्धौ विशेषणाभावधर्मितावच्छेदकतानियामकम्, दण्डवान् पुरुषो रक्तदण्डाभाववानित्यादौ पुरुषादिरूपधर्मिणि पर्यवसितारक्तत्वादिविशेषितदण्डादिभाने च दण्डत्वादेरेवारक्तत्वादिधर्मितावच्छेदकतया भानात्। अत एव पुरोवर्त्तिनि वह्नित्वप्रकारकं ज्ञानं वह्नित्वाभाववति वह्नित्वाप्रकारकमित्याद्यनुमितौ वह्नित्ववति वह्नित्वप्रकारकत्वादिरूपप्रामाण्यज्ञानं वह्नित्वांशे निर्धर्मितावच्छेदकमेव, भ्रमत्वाभावघटकतया भासमानवह्नित्वाभावादेर्धर्मितावच्छेदकाभानादिति द्व्यणुके ऽनित्यासमवेतत्वसाधने तद्घटकतया भासमानानित्यत्वांशे द्रव्यत्वस्य धर्मितानवच्छेदकतया पर्यवसितनित्यद्रव्यसमवेतत्वभानमपि नित्यत्वांशे निर्धर्मितावच्छेदकमेव स्यात्, नित्यद्रव्यसमवेतं द्व्यणुकमित्याकारिका उद्देश्यभूता सिद्धिर्न स्यादिति द्रव्यपदोपादानमित्याहुर्दीधितौ। साध्येति। स्फुटतरासिद्धिः। नित्यद्रव्यसमवेतत्वत्वेन सिद्धिः। तदर्थम्। एतदेव स्पष्टयति। द्रव्यसमवेत इति। द्रव्यसमवेतत्वेन निश्चित इत्यर्थः। अनित्यद्रव्यासमवेतत्वस्य। अनित्यत्वविशेषितद्रव्यत्वावच्छिन्नसमवेतत्वाभावभानस्य। नित्यद्रव्यसमवेतत्वम्। नित्यत्वविशेषितद्रव्यत्वावच्छिन्नसमवेतत्वम्। आदाय। अवगाह्य। व्यभिचारावारकस्यापि महत्त्वविशेषणस्य जन्यत्वस्य च हेतावुपादानमुपपादयितुं तत्प्रयोजनमाह। हेताविति। परमाणुनित्यत्वासिद्धिदशायामिति। महत्त्वानधिकरणद्रव्यमात्रस्य नित्यतादशायामित्यर्थः। आकाशादाविति। तदा महत्त्वसामान्यानधिकरणस्यापि भूतपरमाणोर्मनसश्च अनित्यद्रव्यासमवेतत्वरूपसाध्यनिश्चयाविषयत्वेन दृष्टान्तत्वाभावात् परममहतां आकाशादीनामेव दृष्टान्ततायाः स्वीकार्यतया महत्त्वे जन्यत्वविशेषणं विना तेषामपि साधनवैकल्येन, तत्त्वानुपपत्तेरिति भावः। तथापि व्यभिचारावारकतया तद्वैयर्थ्यं दुष्परिहरमेवेत्याशङ्कां निराकरोति। विशिष्टाभावस्येति। प्रकृतहेतुघटकस्य जन्यत्वविशेषितमहत्त्वाभावस्येत्यर्थः। अतिरिक्तत्वात्। शुद्धमहत्त्वाभावभिन्नत्वात्। अभावान्तरप्रवेशेऽपि वैयर्थ्याभिमानिनां प्रकारान्तरेण व्यर्थविशेषणतासमाधानमुपन्यस्य दूषयति। नि-

त्येति । जातिपरिचयायेति तादृशजातिपुरस्कारेण महत्त्वस्य हेतु प्रवेशलाभायेत्यर्थः । तन्‌ । जन्यपदम् । तथा च जन्यत्वस्याप्रवेशान्न वैयर्थ्यशङ्का, तादृशजातेः नित्यगगनादिमहत्त्वावृत्तितया गगनादौ न साधनवैकल्यम् । अनित्ययावन्महत्त्ववृत्तितया सर्वत्रैवानित्यद्रव्यसमवेतद्रव्ये तदवच्छिन्नसत्त्वेन साध्यशून्ये तदवच्छिन्नाभावविशिष्टद्रव्यत्वासत्त्वान्न व्यभिचार इति भाव । मानाभावादिति । -

न च द्रव्यचाक्षुषत्वावच्छिन्नं प्रति महत्त्वत्वेन हेतुत्वे नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भावाद्गगनादीनामपि चाक्षुषापत्तेरिति, तज्जनकतावच्छेदकतया नित्यमहत्त्वावृत्तिजातेरावश्यकतेति वाच्यम् । तादृशनियमस्याप्रामाणिकत्वात् महत्त्वत्वेन तद्धेतुत्वेऽपि सहकारिविरहेणापत्त्यभावात् । अवयविमहत्त्व ऽवयवमहत्त्वस्य सामान्यतो हेतुतायाः प्रामाणिकत्वेऽपि तज्जन्यतावच्छेदिका जातिः त्रुटिमहत्त्वव्यावृत्तैव, तादृशजात्यवच्छिन्नाभावस्य च न हेतुतासम्भव त्रुटौ व्यभिचारात् ।

ननु त्रसरेण्वादिमहत्त्वे गगनादिमहत्त्वापेक्षया अनुगतापकर्षव्यवहारनियामकतया तत्सिद्धेरावश्यकतेत्याशङ्कयाह । वैभवेति । अननुगतजातिभिरेवेति । आवश्यकत्रुटित्वत्वादिजातिभिरेवेत्यर्थः । सम्भवादिति । विषयाननुगमेऽपि नानार्थशब्दमादायानुगतव्यवहारे बाधकाभावात्, अन्यथा उक्तजात्याऽव्यणुपरिमाणसाधारणस्य वैभवापेक्षयाऽनुगतापकर्षव्यवहारस्यानुपपत्तिरिति भावः । तादृशव्यवहारेण जातिसिद्धौ बाधकमप्याह । तुल्येति । तुल्यन्यायतया । तुल्ययुक्तित्वात् । सिद्धेति शेषः । उत्कर्षेण । उत्कर्षरूपया जात्या ।

मूले निस्स्पर्शद्रव्यसमवेतत्वमुपाधिस्स्यादिति । गगनादौ बाह्येन्द्रियत्वस्य न्यस्तसाध्यव्यापकतारहितमपि निस्स्पर्शद्रव्यसमवेतत्व पक्षे पर्यवसितसाध्यस्यासिद्धतादशायां सर्वदोपाधित्वेन शक्योद्भावनस्यादित्यर्थः । पर्यवसितसाध्यव्यापकतायास्सुग्रहत्वादिति भावः । तदेवोपपादयति भवति हीति । तस्य व्यापकम् । द्रव्यग्रहव्यापकताकम् । साधनाव्यापक चेति । गगनादाविति शेषः ।

निस्स्पर्शद्रव्यसमवेतत्वस्य पर्यवसितसाध्यव्यापकत्वे निस्स्पर्शसमवेतत्वेऽपि तथात्वस्याऽऽवश्यकतया द्रव्यत्वनिवेशवैयर्थ्यमित्याशङ्क्याह दीधितौ । साध्योपाध्योरिति । व्याप्तिदार्ढ्यप्रदर्शनायेति । व्याप्तेर्निश्चयलाभायेत्यर्थः । निस्स्पर्शद्रव्येत्युक्तौ साध्यघटकनि-

रिति विवक्षिणीयम्, तन्मते इतरबाधात्रिबलात् महानसीयवह्नित्वाद्यवच्छिन्नसिद्धौ महानसत्वाद्यभावग्रहस्य विरोधितया महानसत्वादेर्दूषकतेति ।

न चैव घाम्यादौ सामान्यतः प्रत्यक्षविषयत्वादिविवाददशायां सामान्यतस्तत्साधन उद्भूतरूपाद्युपाध्युद्भावनानुपपत्तिः, तदभावग्रहस्य सामान्यतः स्पार्शनप्रत्यक्षविषयत्वादिसिद्धावविरोधित्वात्, समानविषयकत्वमात्रेण विरोधित्वेऽपि सामान्यतो मानसप्रत्यक्षविषयत्वादिसिद्धावतथात्वादिति वाच्यम् । समानविषयकत्वमात्रेण विरोधितामते वाय्वादौ प्रमाणान्तरेण मानसप्रत्यक्षादिविषयत्वादिग्रहदशायां तादृशोपाध्युद्भावनोपपत्तेः, समानप्रकारकत्वेन विरोधित्वेऽपि बहिर्द्रव्यत्वादिविशिष्टतादृशरूपाद्यभावेन शुद्धसाध्याभावसाधनसम्भवात्तदर्थमेव तादृशोपाध्युद्भावनादिति परिष्कारो द्रष्टव्यः ।

( दी० ) ननु लभ्यत्वं कामयोग्यता पक्षे यादृश साध्यं सेद्धुमर्हति तद्व्यापकत्वे सति पक्षावृत्तित्वम्, पक्षे साध्यसिद्धिविरोधिव्यापकताशालित्वमिति यावत् । स्वव्यतिरेकेण पक्षे साध्यसिद्धिविरोध्युन्नायकत्वमिति तु निर्गलितोऽर्थः । भवति च शब्दधर्मातिरिक्तधर्मराहित्ये शब्दे ऽनित्यत्वाभावसिद्धिर्यथोक्तसाध्यसिद्धिविरोधिनी, तथा साधनादिमति साधनाद्यवच्छिन्नसाध्याभावसिद्धिरपि । वस्तुतस्तु पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति पक्षावृत्तित्वमेवोपाधित्वम् । सिद्ध्यति च विशेषणवति विशिष्टसाध्यव्यापकव्यतिरेकेण शुद्धसाध्यव्यतिरेकः । तादृशश्च साधनव्यापकस्सङ्ग्राह्यः, व्यभिचारोन्नायक इव पक्षवृत्तिरितरेषाम् । अपरेषां सत्प्रतिपक्षोन्नायकस्य साधनव्यापकस्येवास्माकमपि व्यभिचारोन्नायकस्य 'पक्षवृत्तेरसङ्ग्रहो न दोषाय' । परेषां साधनभेदादिवास्माकमपि पक्षभेदादुपाधिभेद इति चेत् ? अत्र वक्ष्यते ग्रन्थकृतैव ।

(गा०) दीधितिकृदन्यथैतल्लक्षणपरिष्कारमाशङ्कते । नन्विति । लाभयोग्यतेति । तथा च सोपाधितया निश्चिते पक्षधर्मताबलात् साध्यस्यालाभेऽपि न क्षतिरिति भावः । योग्यतामन्तर्भाव्य साधनाव्यापकत्वस्थले पक्षावृत्तित्व प्रवेश्य समुदितलक्षणार्थमाह । पक्ष इति । यादृशम् । यद्रूपाक्रान्तम् । तद्व्यापकत्वे । तदवच्छिन्नव्यापकत्वे । अहेत्यर्थस्य दुर्वचत्वात् सत्यन्तस्य फलितार्थमाह । पक्षे साध्यसिद्धीति । प्रकृतपक्षे प्रकृतसाध्यवत्ताबुद्धेः विरोधिनी या व्यापकता तद्वत्त्वमित्यर्थः । तादृशव्यापकतावच्छेदकपक्षनिष्ठाभावप्रतियोगितावच्छेदकधर्मवत्त्वं दलद्वयार्थः । विरोधित्वं च प्रतिबन्धकतावच्छेदकप्रकारताश्रयत्वम्, तथा च यद्धर्मप्रकारकनिश्चयविशिष्टयदवच्छेदकावच्छिन्नाभावनिश्चयत्वेन उपदर्शितसाध्यवत्ताबुद्धिविरोधिता तादृशधर्मावच्छेदकत्वं व्यापकतावच्छेदकान्तार्थः ।

एतेन व्याप्यव्यापकताया विशेषघटिततया तद्विशेषमनन्तर्भाव्य ताद्रूप्येण निवेशासम्भवेऽपि न क्षतिः, तदनन्तर्भावेणाप्युक्तरूपेण व्यापकतानिवेशसम्भवात् । शब्दधर्मातिरिक्तधर्मरहितत्वेन निश्चिते शब्दे अनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवत्ताबुद्धौ अनित्यत्वव्यापकं कृतकत्वमिति निश्चयसहितस्य कृतकत्वाभावनिश्चयस्य प्रतिबन्धकतया अनित्यत्वव्यापकताया उक्तरूपतया कृतकत्वे लक्षणसमन्वयः । शुद्धवह्निव्यापकतात्वेन महानसत्वस्यापच्छिन्नमहानसीयवह्निव्यापकताग्रहसहितमहानसत्वाभावज्ञानस्य पर्वते वह्निमत्ताज्ञानविरोधितया महानसत्वादावतिव्याप्तेर्वारणाय प्रतिबन्धकतायां भ्रमत्वमियतधर्मविशिष्टज्ञानानवच्छिन्नत्वमपि निवेश्यम्, तेन च पर्वते महानसीयेतरवह्न्यभाववत्ताभ्रमदशायां महानसीयवह्निव्यापकताप्रकारेण महानसत्वज्ञानविशिष्टस्य पर्वते महानसत्वाभावज्ञानस्य सत्त्वे पर्वते वह्निविशिष्टबुद्धेरनुदयेऽपि न पर्वतो वह्निमानित्यत्र महानसत्वेऽतिव्याप्तिः, तत्र तादृशव्यापकताज्ञानसहकृततदवच्छेदकावच्छिन्नाभावज्ञानप्रतिबन्धकताया महानसीयेतरवह्न्यभाववान् पर्वत इति ज्ञानेन भ्रमत्वनियतधर्मविशिष्टेनावच्छिन्नत्वात् ।

अथ भ्रमवैशिष्ट्यानवच्छिन्नस्यापि महानसीयवह्निव्यापकताप्रकारेण महानसत्वग्रहविशिष्टस्य पर्वते महानसत्वाभावग्रहस्य

पर्वते महानसीयवह्निरूपसाध्यवत्ताग्रहविरोधितया उक्तस्थले महानसत्वातिव्याप्तिर्दुर्वारैव ।

न च पक्षे साध्यवत्ताग्रहसामान्यविरोधितानिवेशान्न दोष इति वाच्यम् । उक्तकृतकत्वोपाधेरव्याप्तत्वापातात्, अनित्यत्वव्यापककृतकत्वाभावज्ञानस्य शब्दावृत्तिधर्मवत्ताज्ञानाविरोधित्वात् ।

न च शब्दावृत्तिधर्माभाववत्तानिश्चयसहितस्य साध्यसामान्यवत्ताज्ञानप्रतिबन्धकतया तद्गुपाधिसङ्ग्रह इति वाच्यम् । तत्त्वविशिष्टविरोधिनिश्चयप्रतिबन्धकतयैवोपपत्तौ समानविषयकत्वेन विरोधितामते सामान्यज्ञाने एकविशेषविरोधिनिश्चयविशिष्टापरविशेषविरोधिनिश्चयप्रतिबन्धकतायां मानाभावात् । नैवम्, प्रतिबन्धकत्वमत्र फलानुत्पत्तिप्रयोजकत्वम्, तथा च भ्रमाविशिष्टस्य यत्प्रकारकनिश्चयविशिष्टस्य यद्यवच्छेदकावच्छिन्नाभावनिश्चयस्य पक्षे साध्यानुमितिसामान्यानुत्पादप्रयोजकत्वम् तादृशधर्मशालित्वमित्यर्थविवक्षया सामञ्जस्यात् । पर्वतो वह्निमानित्यादौ वह्निनाममवाच्यविनिष्ठवह्न्याद्यव्यापकताज्ञानविशिष्टः वह्निसामग्रीत्याद्यवच्छिन्नाभावस्य पर्वतादौ या धीस्तस्याः पर्वतादौ वह्न्यादिज्ञानप्रतिबन्धकतया तादृशव्यापकतामादाय वह्निसामग्र्यादावतिव्याप्तिवारणाय पक्षावृत्तित्वनिवेशः,उक्ताभावज्ञानस्य भ्रमत्वेऽपि तत्प्रतिबन्धकताया भ्रमानवच्छिन्नत्वात् । पक्षावृत्तित्वस्य यथाश्रुतस्य निवेशे उपाधितावच्छेदकसम्बन्धेन तत्र वृत्तेर्विवक्षणीयतया जात्यादिपक्षकजात्यादिसाध्यके समवायादिना सत्ताद्युपाधौ समवायादिना पक्षवृत्तित्वाप्रसिद्ध्या अव्याप्तिरतः पक्षवृत्त्यभावप्रतियोगित्वपरतया तदुपवर्णितम् ।

पर्वतत्वादिरूपपक्षतावच्छेदकसमानाधिकरणाभावप्रतियोगिवह्न्यादिसामग्र्यावतिव्याप्तिभिया पक्षतावच्छेदकव्यापकाभावप्रतियोगित्वनिवेशे च द्रव्यत्वावच्छेदेन वह्न्यादिसाधनेऽपि वह्निसामग्र्यादेरनुपाधितापत्तिरतः समुदितपर्यवसितार्थमाह । स्वव्यतिरेकेणेति । पक्षे साध्यविरोध्युन्नायकव्यतिरेकप्रतियोगित्वमित्यर्थः । पक्षतावच्छेदकसाध्ययोर्यादृशसम्बन्धावगाहिज्ञानविरोधिनो या अनुमितिस्तज्जनकतावच्छेदकसामान्यपरामर्शविषयताव्यतिरेकप्रतियोगितावच्छेदकावच्छिन्नः पक्षतावच्छेदकसाध्ययोस्तादृशसम्ब-

न्धसाधने उपाधिरिति निष्कर्षः । पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितौ तदवच्छेदेन साध्याभावानुमितिरव विरोधिनी, तज्जनकश्चावच्छेदकावच्छेदेन साध्यव्यापकाभावपरामर्श एवेति द्रव्यत्वादिपक्षतावच्छेदकवह्न्यादिसाध्यसामानाधिकरण्यसाधने वह्निसामग्र्यादिर्नोपाधिः, द्रव्यत्वाद्यवच्छेदेन प्रमान्यवह्निसामग्र्याद्यभावविषयकपरामर्शाप्रसिद्धेः। अवच्छेदकावच्छेदेन अनुमितौ च अवच्छेदकसामानाधिकरण्यमात्रेण साध्याभावानुमितिरपि विरोधिनीति द्रव्यत्वादौ वह्न्यादिसाध्यस्यावच्छेदकत्वसाधने वह्निसामग्र्यादिरुपाधिः, तादृशसाध्यकानुमितिजनकप्रमान्यद्रव्यत्वादिसामानाधिकरण्यमात्रविषयकपरामर्शविषयव्यतिरेकप्रतियोगित्वात् । उपाध्यभावसमानाधिकरणाभावान्तरस्यापि व्याप्तिघटकतया विरोध्यनुमापकपरामर्शविषयत्वात् तत्प्रतियोगिन्यतिव्याप्तिवारणाय विरोध्यनुमापकज्ञानीयमुख्यविशेष्यतानिरूपितप्रकारतारूपविषयतैव व्यतिरेकविशेषणतया निवेश्या ।

उक्तकृतकत्वोपाधौ गौरमिश्रातनयादिपक्षकश्यामत्वादिसाध्यकशाकपाकजत्वाद्युपाधौ च लक्षणसङ्गमनाय तादृशोपाधीनां यादृशसाध्यविशेषव्यापकत्व तादृशसाध्यविशेषाभावानुमितेः पक्षे सामान्यरूपेण साध्यसिद्धिविरोधितां दर्शयति। भवति चेति । रहिते । रहिततया निश्चिते । यथोक्तसाध्यसिद्धिविरोधीनीति । अनित्यत्वातिरिक्तेत्यादिसाध्यसिद्धिविरोधिनीत्यर्थः । समानप्रकारकत्वस्याऽतन्त्रत्वादिति भावः । अत्रापि साध्यतावच्छेदकावच्छिन्नसाध्यसिद्धसामान्यप्रतिबन्धकत्वमवश्यं विवक्षणीयम्, अन्यथा पर्वतो वह्निमानित्यादौ महानसत्वादेरुपाधितापत्तिः, महानसीयवह्न्यादिमत्ताग्रहविरोधिमहानसीयवह्न्याद्यभावानुमापकव्यतिरेकप्रतियोगित्वात् । तथा चानित्यत्वाभावसिद्धेरुक्तसाध्यतावच्छेदकाक्रान्तानित्यत्वसिद्धिप्रतिबन्धकत्वेऽपि शब्दावृत्तिधर्मसिद्धिविरोधित्वाभावादनित्यत्वाभावोन्नायकव्यतिरेकप्रतियोगिनोऽपि कृतकत्वस्य नोपाधितासम्भव इति पूर्ववत्पक्षे साध्यसिद्धिसामान्यविरोधित्वं तत्सिद्धिसामान्यानुत्पादप्रयोजकत्वरूपं वाच्यम्, एवं चैकविशेषसामग्रीविरहसहकृतापरविशेषसामग्र्यभावस्य सामान्यकार्यानुत्पादप्रयोजकतया एकविशेषाभावनिश्चयसहितापरविशेषाभावनिश्चय-

स्य यथोक्तसाध्यवत्ताग्रहसामान्यानुत्पादप्रयोजकत्वमक्षतमेवेति नोक्तदोषावसरः। एवं पर्वते महानसीयेतरवह्नयभावनिश्चयसहितमहानसीयवह्नयभावनिश्चयस्यापि वह्निमत्ताग्रहसामान्यानुत्पादप्रयोजकतया पर्वतो वह्निमानित्यादौ महानसत्वादावतिव्याप्तिः पूर्ववदेव वारणीया। साधनादिमतीति। मित्रातनयत्वादिमत्तया निश्चिते इत्यर्थः। आदिपदात्पक्षधर्मविशेषपरिग्रहः। साधनाद्यवच्छिन्नसाध्याभावसिद्धिरपीति। मित्रातनयत्वाद्यवच्छिन्नश्यामत्वाद्यभावसिद्धिरपीत्यर्थः। यथोक्तेत्यादिकमनुपज्यते, श्यामत्वादिसिद्धिसामान्यविरोधिनीति तदर्थः।

अत्र कल्पे समानप्रकारकत्वेन विरोधित्वे न निर्वाहः, एवं सकलसाध्यस्य तदनधिकरणे सर्वत्र भ्रमे मानाभावायत्र पक्षे साध्यस्य विशिष्टज्ञानमप्रसिद्धं तत्पक्षकतत्साध्यकोपाधावव्याप्तिः, एवं सकलसाध्याभावानुमितेरप्रामाणिकतया यदुपाध्यभावलिङ्गकयत्साध्याभावानुमितिर्यत्र पक्षे न प्रसिध्यति तत्पक्षकतत्साध्यकतदुपाधावव्याप्तिरिति दूषणमाशङ्क्याह वस्तुतस्त्विति। पक्षधर्मावच्छिन्नेति। यत्किञ्चित्पक्षधर्मविशिष्टेत्यर्थः। वैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन। एतदुपादानाच्छुद्धसाध्याव्यापकोपाधिसङ्ग्रहः। साध्याधिकरणमात्र एव पक्षधर्ममेयत्वादिविशिष्टसाध्यसत्त्वाच्छुद्धसाध्यव्यापकस्यासङ्ग्रह इति यत्किञ्चिदित्युक्तम्। पक्षधर्मविशिष्टधर्मान्तरस्य यत्र पक्षे साध्यतावच्छेदकसम्बन्धेन वृत्तिः तत्रत्योपाधावव्याप्तिवारणाय साध्येति, साध्यतावच्छेदकविशिष्टार्थकम्, तेन गुणो द्रव्यत्वविशिष्टसत्तावानित्यादौ गुणवत्त्वाद्युपाधिसङ्ग्रहः।

व्यापकत्वे सति पक्षावृत्तित्वम्। व्यापकतावच्छेदकपक्षनिष्ठाभावप्रतियोगितावच्छेदकरूपवत्त्वम्, तेन न विभिन्नरूपेण तादृशसाध्यव्यापकत्वपक्षनिष्ठाभावप्रतियोगित्वे आदाय पक्षतावच्छेदकादावतिप्रसङ्गः। पक्षनिष्ठत्वं पक्षतावच्छेदकव्यापकत्वमेव यत्र पक्षतावच्छेदकसामानाधिकरण्यमात्रेण साधनम्, अन्यत्र यथाश्रुतमेव, लक्ष्यानुगमेन लक्षणानुगमस्यादोषत्वाच्छब्दैकयस्यानुपादेयत्वात्, अतो न पूर्वोक्तदोषावसरः। उत्कृतकत्वोपाधौ शब्दघटान्यतरत्वादिरूपपक्षधर्मावच्छिन्नयथोक्तसाध्यव्यापकतामादायैव लक्षणसमन्वयः।

नन्ववच्छिन्नसाध्याभावव्यतिरेकप्रतियोगिनोऽवच्छिन्नसाध्यव्यापकोपाधेः सत्प्रतिपक्षोत्थापकता न सम्भवति, विशिष्टव्यापकाभावज्ञानस्य शुद्धविशेष्यज्ञानाप्रतिबन्धकत्वादित्याशङ्क्याह । सिध्यति चेति । विशेषणवतीति । विशेषणवत्त्वे सति विशिष्टव्यापकव्यतिरेकेणेत्यर्थः । शुद्धसाध्यव्यतिरेक इति । मित्रातनयत्वादिविशिष्टस्य शाकपाकजत्वादिव्यतिरेकस्य शुद्धश्यामत्वाद्यभावव्याप्यतया तद्वत्त्वज्ञानस्य शुद्धश्यामत्वादिसिद्धिविरोधित्वात्पक्षधर्मावच्छिन्नसाध्यव्यापकस्याप्युपाधेः सत्प्रतिपक्षोत्थापकत्वमविकलमिति भावः ।

इदमुपलक्षणम्, शुद्धसाध्याभावव्याप्यतया विशेषणविशिष्टोपाध्यभावज्ञानं विनापि विशेषणवत्तया निश्चिते पक्षे विशेषणविशिष्टसाध्यव्यापकतया गृहीतस्योपाधेरभावज्ञानात् पक्षधर्मताबलेन शुद्धसाध्याभावसिद्धिसम्भवात् तदवच्छिन्नसाध्यव्यापकोपाधेः शुद्धसाध्यानुमितिविरोधितादृशसामग्रीसम्पादकतयापि सत्प्रतिपक्षोत्थापकत्वं द्रष्टव्यम् ।

नन्वेवं ह्रदो वह्निमान् धूमादित्यादौ साधनव्यापकवह्निसामग्र्यादेरप्युपाधिस्स्यादित्यत आपत्तिमाह । तादृशश्चेति । उक्तलक्षणाक्रान्तश्चेत्यर्थः । सङ्ग्राह्य इति । लक्ष्यतानियामकसत्प्रतिपक्षोन्नायकत्वाक्रान्तत्वादिति भावः । तस्य व्यभिचारोन्नायकत्वं नतन्मते लक्ष्यताप्रयोजकम्, व्यभिचारोन्नायकत्वेनोपाधेर्दूषकतावादिनां मते सत्प्रतिपक्षोन्नायकतावदिति दृष्टान्तेन दर्शयति । व्यभिचारोन्नायक इति । पक्षवृत्तिरिति । धूमवान् वह्नेरित्यादावार्द्रेन्धनादिरित्यर्थः । सत्प्रतिपक्षानुन्नायकोऽपीति शेषः । इतरेषाम् । व्यभिचारोन्नायकत्वेन दूषकतावादिनाम् । सङ्ग्राह्य इत्यनुषज्यते । एतन्मते उक्तस्थले व्यभिचारोन्नायकार्द्रेन्धनाद्यप्रमेतन्मते सिद्धस्य कस्यचिदुपाधेरन्यमतालक्ष्यतादृष्टान्तेनालक्ष्यतां प्रदर्शयन् परिहरति । अपरेषामिति । साधनव्यापकस्यैवेति । ह्रदो वह्निमान् धूमादित्यादौ वह्निसामग्र्यादेरित्यर्थः । उपाधिलक्षणस्य पक्षघटितत्वे एकसाध्यकैकसाधनस्थले एव एकस्य पक्षभेदेनोपाधित्वमनुपाधित्वं च स्यादित्यत्र एकसाध्यकैकपक्षकस्थले एकैकस्य साधनभेदे परमते उपाधित्वानुपाधित्ववद्दृष्टान्तेन इष्टापत्तिमाह । परेषामिति । वक्ष्यते इति । केचित्तु

साधनव्यापकोऽपीत्यादिना।

( चि० ) अत्रोच्यते यद्धर्माविच्छिन्नत्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिः।

( दी० ) लक्ष्यतावच्छेदकमाह यद्व्यभिचारित्वेनेत्यादि उन्नीयत इति शेषः। उन्नायकत्वं तद्याप्यता, सा च व्याप्तिपक्षधर्मते इति। तथा च यद्व्यभिचारो यद्धर्मावच्छिन्नाभावाधिकरणीभूतयत्किञ्चिदधिकरणवृत्तित्वसामान्यं साध्यव्यभिचारव्याप्यं साधनवृत्ति च तद्धर्मावच्छिन्नं तत्रोपाधिरित्यर्थः। तेनार्द्रेन्धनाभाववद्वृत्तित्वेन वह्नौ धूमव्यभिचारसाधनेऽप्यार्द्रेन्धन द्रव्यत्वादिना न तत्रोपाधिः। तद्रूपावच्छिन्नाभाववद्वृत्तित्वस्य वह्न्यवृत्तित्वात्। शुद्धसाध्यव्यापके तदभाववन्मात्रवृत्तित्वं साध्यव्यभिचारव्याप्यम्, अवच्छिन्नसाध्यव्यापके त्ववच्छेदकाधिकरणीभूततदभावाधिकरणवृत्तित्वमित्युभयत्रापि सङ्गतिः। द्रव्यत्वेन रूपवत्त्वेन साध्ये सत्ताद्रव्यत्वजलत्वमात्रविशेष्यिका या धीस्तद्विशेष्यत्वे जलसमवेतनित्यत्वे वा सति पृथिवीत्ववद्वृत्तित्वादित्यादिना प्रकारेण व्यभिचारोन्नयनसमर्थोऽपि पृथिवीत्वाभावादिर्नोपाधिः।

( गा० ) यद्व्यभिचारित्वेनेत्यादेर्लक्षणत्वे लक्षण त्विन्यग्रिमग्रन्थविरोध इत्यत आह।

लक्ष्यतेति। उपाधिव्यभिचारस्य साध्यव्यभिचारोन्नायकतालाभाय पूरयति। उन्नीयते इति। एव च मूले साधनस्येति सप्तम्यर्थे षष्ठी, तथा च साधने पक्षे साध्यव्यभिचारानुमापकव्यभिचारप्रतियोग्युपाधिरिति मूलार्थ इति भाव.।

यद्यपि जनकत्ववज्ज्ञापकत्वरूपहेतुत्वमपि तृतीयापञ्चम्योरर्थ इत्युक्तपूरणमन्तरेणापि व्यभिचारोन्नायकत्व व्यभिचारस्य लभ्यते।

न च धूमाद्वह्निमानयमितिवत् धूमेन वह्निरित्यप्रयोगाद्धर्मिविशेषणतापन्नसाध्य एव तृतीयार्थज्ञापकत्वान्वय इति व्युत्पत्तिः, प्रकृते मुख्यविशेष्यतया भासमाने साध्यव्यभिचारे न तृतीयया ज्ञापकत्वबोधनसम्भव इति वाच्यम्। तथा व्युत्पत्तौ अस्यैव अत्राकाशमात्मन इत्यादिलिखनविरोधात् सम्प्रदायविरोधेन वह्निधूमादित्यादिप्रतिज्ञानिराकरणविरोधाच्च।

न चोन्नीयते इत्यस्यापूरणे तृतीयया साधनविषयोन्नयनप्रयोजकत्वं न बोधयितुं शक्यते, तथा च सति साधनस्येतरस्य व्यभिचारित्वमित्यनेनैव सम्बन्धात् साधनसम्बन्धिसाध्यव्यभिचारस्यैव उन्नायकतालाभात्। तथा च साधनव्यापकस्यापि व्यभिचारस्यात्र साधनसम्बन्धिसाध्यव्यभिचारोन्नायकतया तत्रातिव्याप्तिरिति वाच्यम्। यद्धर्म्युपरागेण भासमानसाध्य तृतीयार्थान्वयस्तद्धर्मिणि साध्यज्ञापकताया ज्ञापकत्वार्थकविभक्त्या बोध इति व्युत्पत्तेः, अन्यथा पर्वतो वह्निमान् धूमादित्यादौ पर्वतांशे ज्ञापकताया अलाभे तदुपपादकपर्वतवृत्तित्वाद्याकाङ्क्षानुदयेन तत्प्रदर्शकोपनयानुत्थानप्रसङ्गात्, पर्वतो वह्निमान् महानसत्वादित्यादावपि योग्यताप्रसङ्गाच्च, तथापि तृतीयादिना व्याप्तिपक्षधर्मतानिर्वाह्य हेतुविधया ज्ञापकज्ञानविषयत्वमेव बोध्यते न तु ज्ञापकज्ञानविषयतामात्रम्, पर्वतो वह्निमान् वह्निव्याप्तेरित्याद्यप्रयोगात्, तथा च तद्व्यभिचारस्य पक्षतावच्छेदकहेतुसामानाधिकरण्यविधया साधनरूपपक्षतावच्छेदके साध्याभावरूपसाध्यसामानाधिकरण्यरूपव्यभिचारोन्नायकत्वमिति यद्व्यभिचारित्वेनत्यस्य यदभावेन साधनवति साध्याभाव उन्नीयत इत्यर्थपर्यवसानस्याग्रे कर्तव्यस्य विरोधः, उक्तविधया ज्ञापकतायास्तृतीययाऽबोधनादित्युन्नीयत इत्येतत्पूरितम्। तथा सति पर्वतत्वस्य धूमसामानाधिकरण्येन वह्निसामानाधिकरण्यमनुमीयत इति प्रयोगाद्धात्वर्थानुमितौ उक्तविधया प्रयोज्यत्वस्यापि तृतीयया बोधनान्न विरोधः।

नन्वनुपाधिव्यभिचारस्यापि साध्यव्यभिचारव्याप्तेः पक्षधर्मताया वा भ्रमेण साधने साध्यव्यभिचारानुमापकत्वादतिप्रसङ्गः, एवं सकलोपाधिव्यभिचारस्य सकलसाधने व्यभिचारानुमित्युपधायकताया अप्रामाणिकतया ऽव्याप्तिश्चेत्यत आह। उन्नायकत्वमिति। ननु

भ्रमेण फलोपधायके स्वरूपयोग्यता वर्त्तत एवेत्युक्तातिप्रसङ्गो दुर्वार इत्यत आह । सा चेति । व्याप्तिपक्षधर्मते इति । साध्यव्यभिचारव्याप्तिसाधनवृत्तित्वोभयरूपे इत्यर्थः ।

ननु शुद्धेन यद्व्यभिचारित्वेन व्याप्यता विवक्षिता, विशेषिताविशेषितसाधारणव्यभिचारित्वेन वा, येन केनापि रूपेण वा ? आद्ये अवच्छिन्नसाध्यव्यापकोपाध्यव्यापनात्, श्यामत्वादिव्यभिचारशून्यकाकत्वादौ शाकपाकजत्वावच्छिन्नव्यभिचारत्वावच्छिन्नत्वेन शुद्धतद्व्यभिचारत्वस्य श्यामत्वादिव्यभिचारव्याप्यतानवच्छेदकत्वात्, अन्त्ययोः रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभावादावतिव्याप्तिः, पृथिवीत्वाभावव्यभिचारस्यापि रूपवन्मात्रवृत्तिधर्मव्यावर्तककिञ्चिद्विशेषणविशिष्टतद्व्यभिचारत्वेन रूपव्यभिचारव्याप्यत्वात् । समानाधिकरणमात्रस्यैव किञ्चिद्विशिष्टत्वेन अवश्यमेव व्याप्यतया व्याप्यान्तपर्यन्तनिवेशावैयर्थ्याच्च ।

न च पृथिवीत्वाभावव्यभिचारत्वस्य पृथिवीत्वाभावाभाववद्वृत्तित्वरूपस्य गौरवेण न व्याप्यतावच्छेदकघटकता, उक्तस्थले पृथिवीवृत्तितात्वस्यैव निवेशेन व्यभिचारवारणसम्भवादिति न मध्यमपक्षे अतिप्रसङ्ग इति वाच्यम् । एवं सतीदं जल गुरुत्वादित्यादावपि पृथिवीत्वाभावादेरुपाधितापत्तेः, लघुगुरुसाधारणव्याप्यतावच्छेदकताया एव विलक्षणीयत्वादित्याशङ्क्य निष्कृष्टार्थमाह । तथा चेति । यद्व्यभिचार इत्यस्य व्याख्या यद्धर्मावच्छिन्नेत्यादि सामान्यमित्यन्तम् । यत्किञ्चिदधिकरणवृत्तित्वसामान्यम् । यत्किञ्चिदधिकरणवृत्तित्वत्वावच्छिन्नम्, तथा च तादृशयत्किञ्चिदधिकरणवृत्तितात्वं साध्यव्यभिचारव्याप्यतावच्छेदकत्वे सति साधनवृत्तिवृत्तीत्यर्थः । सामान्यपदशून्य एव क्वचित्पाठः, तत्रापि अन्वयितावच्छेदकावच्छेदेन व्याप्यत्वान्वये यत्किञ्चिदधिकरणवृत्तित्वमित्यस्य यत्किञ्चिदधिकरणवृत्तित्वत्वावच्छिन्नमित्यर्थकतया उक्त एवार्थ, अतो ऽयोगोलकादिव्यक्तिवृत्तित्वसामान्यान्तर्गतान्यानिष्ठतद्वृत्तित्वस्य तन्निष्ठपदार्थावृत्तित्वेऽपि न क्षतिः । उपाधेरपि कचित् केनचिद्रूपेणैव उपाधितेति उपाधितावच्छेदकरूपनिवेशस्य आवश्यकतया यद्व्यभिचारशरीरे यत्प्रतियोगिकाभावत्वेन, अभाववन्निवेश्य, यद्धर्मावच्छिन्नाभावत्वेन तन्निवेशः। यद्धर्माश्रयप्रतियोगिकाभावत्वेन तन्नि-

वेशे अतिप्रसङ्गमाह । तेनेति । आर्द्रेन्धनेत्यादि । द्रव्यत्वाद्याश्रये-त्यादिः । तादृशार्द्रेन्धनाद्यभाववद्वृत्तित्वस्य वह्निधूमव्यभिचारसिद्धियोग्यत्वेऽपीत्यर्थः । तद्रूपेति । द्रव्यत्वादीत्यर्थः । वह्न्यवृत्तित्वात् । यद्वयवृत्तित्वमन्न यत्पदेन द्रव्यत्वाद्युपादानासम्भवादित्यर्थः । यत्किञ्चिदधिकरणवृत्तित्वस्य व्याप्यताविवक्षणात् शुद्धसाध्यव्यापक इव अवच्छिन्नसाध्यव्यापकेऽपि लक्षणसमन्वयसम्भव इत्याह । शुद्धेति । तदभावधर्माप्रवृत्तित्वम् । तदभाववत्सकलाधिकरणवृत्तित्वम्; तथा च यत्किञ्चिदधिकरणवृत्तित्वस्य सुतरां व्याप्यतेति भावः । अवच्छेदकेति । व्याप्यतावच्छेदकमिश्रातनयत्वाद्यधिकरणीभूता या शाकपाकजत्वाद्यभावाधिकरणव्यक्तिस्तद्व्यक्तित्वमित्यर्थः । सामानाधिकरण्यमुपेक्ष्य व्याप्यतापर्यन्तनिवेशस्य यत्किञ्चिदधिकरणवृत्तितात्वे व्याप्यतावच्छेदकत्वपर्यन्तानवेशस्य च प्रयोजनमाह । द्रव्यत्वेनेति । रूपवत्त्वे साध्ये पृथिवीत्वाभावादिर्नोपाधिरित्यन्वयः । समर्थोऽपीत्यन्तेन यथाश्रुतव्यभिचारोन्नायकत्वं प्रदर्शितम् । पृथिवीत्वाद्यौ रूपव्याप्यधर्मे व्यभिचारवारणाय पृथिवीवृत्तित्वे सत्ताविषयमात्रविशेष्यकधीविशेष्यत्वजलसमवेतनित्यत्वयोर्वैकल्पिकविशेषणयोरुपादानम् । सत्ताया धीविशेष्यतयोपादानं तस्या दृष्टान्तत्वनिर्वाहाय, अन्यथा हेतोर्द्रव्यत्वरूपपक्षमात्रवृत्तितया व्यभिचारोन्नायकतानुपपत्तेः ।

यद्यपि पक्षमात्रवृत्तित्वेऽपि व्याप्तिपक्षधर्मतारूपोन्नयनयोग्यत्वमविकलमेव, तथाप्युन्नयनौपयिकसपक्षवृत्तित्वानिवेशेऽप्यतिप्रसङ्गस्य दुर्वारत्वमित्येतत्प्रदर्शनाय तदुपादानम् । विशेष्यस्य विशेष्यतावच्छेदकपृथिवीवृत्तितात्वस्य वा सार्थक्याय जलत्वोपादानम्, तथा सति जलत्वे व्यभिचारवारकतया तत्सार्थक्यात् ।

न च धीविशेषविशेष्यत्वविशिष्टत्वेन पृथिवीत्वाभावव्यभिचारस्य साध्यव्यभिचारोन्नायकतयापि तत्रोपाधित्वप्रसक्त्या पृथिवीत्वांशसार्थक्यप्रयासो विफल इति वाच्यम् । तद्व्यभिचारसाधनवृत्तिधर्मपुरस्कारेण उन्नायकतेति विवक्षणे, अतिप्रसङ्गवारणसम्भवे उक्तविवक्षाया निष्प्रयोजनतापातात् पृथिवीवृत्तित्वांशसार्थक्यस्यावश्यकत्वात् ।

न च व्यर्थविशेषणघटितधर्मपुरस्कारेणोन्नायकस्य, व्याप्तिपक्ष-

भ्रमेण फलोपधायके स्वरूपयोग्यता वर्त्तत एवेत्युक्तातिप्रसङ्गो दुर्वार इत्यत आह । सा चेति । व्याप्तिपक्षधर्मते इति । साध्यव्यभिचारव्याप्तिसाधनवृत्तित्वोभयरूपे इत्यर्थः ।

ननु शुद्धेन यद्व्यभिचारित्वेन व्याप्यता विवक्षिता, विशेषिताविशेषितसाधारणव्यभिचारित्वेन वा, येन केनापि रूपेण वा ? आद्ये अवच्छिन्नसाध्यव्यापकोपाध्यव्यापनात्, श्यामत्वादिव्यभिचारशून्यपाकत्वादौ शाकपाकजत्वावच्छिन्नव्यभिचारस्यावच्छिन्नसत्त्वेन शुद्धतद्व्यभिचारत्वस्य श्यामत्वादिव्यभिचारव्याप्यतानवच्छेदकत्वात्, अन्त्ययोः रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभावादावतिव्याप्तिः, पृथिवीत्वाभावव्यभिचारस्यापि रूपवन्मात्रवृत्तिधर्मव्यावर्तककिञ्चिद्विशेषणविशिष्टतद्व्यभिचारत्वेन रूपव्यभिचारव्याप्यत्वात् । समानाधिकरणमात्रस्यैव किञ्चिद्विशिष्टत्वेन अवश्यमेव व्याप्यतया व्याप्यान्तपर्यन्तनिवेशवैयर्थ्याच्च ।

न च पृथिवीत्वाभावव्यभिचारत्वस्य पृथिवीत्वाभावाभाववद्वृत्तित्वरूपस्य गौरवेण न व्याप्यतावच्छेदकघटकता, उक्तस्थले पृथिवीवृत्तितात्वस्यैव निवेशेन व्यभिचारवारणसम्भवादिति न मध्यमपक्षे अतिप्रसङ्ग इति वाच्यम् । एवं सतीदं जल गुरुत्वादित्यादावपि पृथिवीत्वाभावादेरनुपाधितापत्तेः, लघुगुरुसाधारणव्याप्यतावच्छेदकतायाः एव विवक्षणीयत्वादित्याशङ्क्य निष्कृष्टार्थमाह । तथा चेति । यद्व्यभिचार इत्यस्य व्याख्या यद्धर्मावच्छिन्नेत्यादि सामान्यमित्यन्तम् । यत्किञ्चिदधिकरणवृत्तित्वसामान्यम् । यत्किञ्चिदधिकरणवृत्तित्वत्वावच्छिन्नम्, तथा च तादृशयत्किञ्चिदधिकरणवृत्तितात्व साध्यव्यभिचारव्याप्यतावच्छेदकत्वे सति साधनवृत्तिवृत्तीत्यर्थः । सामान्यपदशून्य एव क्वचित्पाठः, तत्रापि अन्वयितावच्छेदकावच्छेदेन व्याप्यत्वान्वये यत्किञ्चिदधिकरणवृत्तित्वमित्यस्य यत्किञ्चिदधिकरणवृत्तित्वत्वावच्छिन्नमित्यर्थकतया उक्त एवार्थ, अतो ऽयोगोलकादिव्यक्तिवृत्तित्वसामान्यान्तर्गतान्यनिष्ठतद्वृत्तित्वस्य तन्निष्ठपदस्याऽऽवसत्त्वेऽपि न क्षतिः । उपाधेरपि क्वचित् केनचिद्रूपेणैव उपाधितेति उपाधितावच्छेदकरूपनिवेशस्य आवश्यकतया यद्व्यभिचारादशरीरे यत्प्रतियोगिकाभावत्वेन अभावमनिवेश्य यद्धर्मावच्छिन्नाभावत्वेन तन्निवेशः । यद्धर्माश्रयप्रतियोगिकाभावत्वेन तन्नि-

घेऽशे अतिप्रसङ्गमाह । तेनेति । आर्द्रेन्धनेत्यादि । द्रव्यत्वाद्याश्रये-त्यादिः । तादृशार्द्रेन्धनाद्यभाववद्वृत्तित्वस्य वह्निधूमव्यभिचारसिद्धियोग्यत्वेऽपीत्यर्थः । तद्रूपेति । द्रव्यत्वादीत्यर्थः । वह्न्यवृत्तित्वात् । वह्न्यवृत्तित्वेन यत्पदेन द्रव्यत्वाद्युपादानासम्भवादित्यर्थः । यत्किञ्चिदधिकरणवृत्तित्वस्य व्याप्यताविवक्षणात् शुद्धसाध्यव्यापक इव अवच्छिन्नसाध्यव्यापकेऽपि लक्षणसमन्वयसम्भव इत्याह । शुद्धेति । तदभाववन्मात्रवृत्तित्वम् । तदभाववत्सकलाधिकरणवृत्तित्वम्; तथा च यत्किञ्चिदधिकरणवृत्तित्वस्य सुतरां व्याप्यतेति भावः । अवच्छेदकेति । व्याप्यतावच्छेदकमित्रतनयत्वाद्यधिकरणीभूता या शाकपाकजत्वाद्यभावाधिकरणव्यक्तिस्तद्व्यक्तित्वमित्यर्थः । सामानाधिकरण्यमुपेक्ष्य व्याप्यतापर्यन्तनिवेशस्य यत्किञ्चिदधिकरणवृत्तित्वे व्याप्यतावच्छेदकत्वपर्यन्तनिवेशस्य च प्रयोजनमाह । द्रव्यत्वेनेति । रूपवत्त्वे साध्ये पृथिवीत्वाभावादिर्नोपाधिरित्यन्वयः । समर्थोऽपीत्यन्तेन यथाश्रुतव्यभिचारोन्नायकत्वं प्रदर्शितम् । पृथिवीत्वादौ रूपव्याप्यधर्मे व्यभिचारवारणाय पृथिवीवृत्तित्वे सत्ताद्विमात्रविशेष्यकयोर्विशेष्यत्वजलसमवेतनित्यत्वयोर्वैकल्पिकविशेषणयोरुपादानम् । सत्ताया धीविशेष्यतयोपादानं तस्या दृष्टान्तत्वनिर्वाहाय, अन्यथा हेतोर्द्रव्यत्वरूपपक्षमात्रवृत्तितया व्यभिचारोन्नायकतानुपपत्तेः ।

धर्मतारूपोऽप्यनयोरपरधर्मविकलम्, परार्थस्थले एव आधिक्येन निग्रहप्रयोजकविशेषणवैयर्थ्यमिति वाच्यम्। व्यर्थविशेषणशून्यत्व-गर्भव्याप्यतावच्छेदकताया व्यभिचारमात्रवृत्तिधर्मस्य विवक्ष-णेऽपि न प्रतीकार इत्याशयेन विशेषणसार्थक्योपपादनात्। सत्ता द्रव्यत्वाभिन्नाविशेष्यकत्वात् त्रितयाभिन्नाविशेष्यकत्वरूप त्रितयमा-त्रविशेष्यकत्वघटक अभावान्तरमिति जलत्वादावैयर्थ्यम्। पक्षवृ-त्तित्वसम्पत्तये द्रव्यत्वोपादानम्। घटत्वादिविशेष्यकत्रितयविशे-ष्यकसमूहालम्बनविशेष्ये घटत्वादौ व्यभिचारवारणाय मात्रपदम्। त्रितयमात्रविषयकधीरप्रसिद्धा, तत्रितयनिर्विकल्पकेऽपि व्यक्ति-भाननियमादतः त्रितयमात्रविशेष्यकत्वोपादानम्। विशेष्यपदेन मुख्यविशेष्यता विवक्षणीया, अतस्सत्ताद्रव्यत्वजलत्वानीति बुद्धा-वपि सदितरावृत्तित्वादिरूपसत्तात्वादिघटकसदितराद्‌ सदितरत्-त्वादिविशेष्यतया न त्रितयमात्रविशेष्यकत्वानुपपत्तिः। तादृशवि-षयत्वनिवेशे उक्तधीविषये सत्तात्वादिघटकरूपाद्यात्मकसदादौ व्य-भिचार इति धीविशेष्यतानिवेश। इयमपि विशेष्यता मुख्यविशेष्य-तारूपा, अन्यथा तद्दोषतादवस्थ्यात्। लाघवमनुसृत्य द्वितीयविशेष-णानुसरणम्। तत्र नित्यपृथिवीत्वादौ व्यभिचारवारणाय जलसमवे-तत्वोपादानम्। जलसमवेतजलपृथिवीसंयोगादौ व्यभिचारवारणाय नित्यत्वोपादानम्। एतद्घटितहेतावपि सत्ता दृष्टान्तः। जलत्वा-दौ व्यभिचारवारणाय विशेष्यदलम्। नोपाधिः। नोक्तलक्ष्यतावच्-छेदकाक्रान्त। साध्यव्यभिचारनिरूपकाधिकरणधाव्यादौ द्रव्य-त्वस्य पृथिवीत्वाभावव्यभिचारविरहात् अस्यासङ्ग्राहकता, तदुक्तम्— "सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः। हेतोरेकाश्रये येषां स्व-साध्यव्यभिचारिते" ति।

(दी०) न हि पृथिवीत्वात्मकतदभावाधिकरणं तादृशं किञ्चिदस्ति यद्वृत्तित्वसामान्यं साध्यव्यभिचारव्याप्यम्, पृथिवीत्वादावेव व्यभिचारात्। न च व्यभिचारोन्नायकतामात्रेण प्रकृतोपाधितानिर्वाहः, अपि तु कथकानां तान्त्रिकाणां च त-थाविधव्यवहारविषयत्वेन, तदवच्छेदकञ्चोक्तरूपम्। व्याप्यत्वा-

च्छिद्व्यापकत्वादिकं सम्भवदपि न तथा, गौरवात्। अत एवेदं जलमाकाशादित्यत्र स्वाव्याप्यत्वेन जलत्वाव्याप्यत्वोन्नायकस्यापि द्रव्यत्वादेरसङ्ग्रहो न दोषाय।

(गा०) यथानिरुक्तस्य तत्रासत्त्वं स्फुटयति। न हीति। तदभावेति। पृथिवीत्वाभावाभावेत्यर्थः। यद्वृत्तित्वसामान्यम्। यद्वृत्तित्वत्वावच्छिन्नम्। पृथिवीत्वादावेवेति। रूपव्यभिचाराविरहेणेत्यादिः। व्यभिचारात्। पृथिवीत्वाधिकरणव्यक्तिवृत्तित्वत्वावच्छिन्नस्य तादृशव्यभिचाररूपसाध्यव्यभिचारित्वात्। तादृशयत्किञ्चिदधिकरणवृत्तितात्वस्य साध्यव्यभिचारव्याप्यतानवच्छेदकत्वं च, स्वावच्छिन्नव्यापकतावच्छेदकसाध्यव्यभिचारत्वकत्वम्, न तु साध्यव्यभिचारशून्यवृत्तितानवच्छेदकत्वम्, अयोगोलकवृत्तितात्वादौ विशेष्यभूताधेयतात्वस्य साध्यव्यभिचारशून्यवृत्तितावच्छेदकतया विशिष्टाधेयतात्वरूपे तस्मिन् साध्यव्यभिचारशून्यवृत्तितानवच्छेदकत्वस्य दुर्घटत्वादिति ध्येयम्।

उक्तरीत्या व्यभिचारोन्नायकस्य पृथिवीत्वाभावादेः कथमनुपाधित्वम्? यतः तद्वारणायायं प्रयास इत्यत आह। न चेति। प्रकृतोपाधिता। एतच्छास्त्रनिर्णेयोपाधिता। कथकानाम्। वादजल्पादिकथानिपुणानाम्। तथाविधव्यवहारः। उपाधिव्यवहारः। तथा च कथकादीनामुपाधिव्यवहारविषयताविरहान्न पृथिवीत्वाभावादेरुक्तस्थल उपाधितेति भावः। तद्व्यवहारविषयतावच्छेदकं यदि व्यभिचारोन्नायकत्वमेव तदा तदाक्रान्तस्य पृथिवीत्वाभावादेरप्युपाधित्वमावश्यकं स्यादित्यत आह। तदवच्छेदकं चेति। उक्तरूपमिति। पृथिवीत्वाभावादिव्यावृत्तनिरुक्तधर्म इत्यर्थः। तत्रोपाधिव्यवहारविरहस्य निर्विवादत्वादिति भावः।

नन्ववृत्तिहेतुके साध्यव्यापकस्यासद्ग्राहकतया न निरुक्तरूपस्य उपाधिव्यवहारविषयतावच्छेदकत्वसम्भव इत्यव्याप्यत्वोन्नायकत्वमेव तथास्तु, तच्च यद्धर्मावच्छिन्नाभावाधिकरणयत्किञ्चित्पक्षत्ववृत्तित्वविशिष्टवृत्तिमत्त्वाभावः, साध्याभाववदवृत्तित्वविशिष्टवृत्तिमत्त्वाभावव्याप्यः साधनवृत्तिश्च तद्धर्मावच्छिन्नत्वम्, अवृत्तिहेतौ

व्यभिचारासत्त्वेऽपि वृत्तिमत्त्वाभावेन निरुक्तसाध्योपाध्योर्व्याप्तिविरहाऽक्षत एवेति तद्धेतुकोपाधेरसङ्ग्रह इत्यत आह। व्याप्यत्वेति। व्याप्यत्वासिद्धेः। व्याप्यत्वाभावः। सम्भवत्यपीति। पृथिवीत्वाभावादिव्याप्तत्वमित्यादि। न तथा। नोपाधिव्यवहारविषयतावच्छेदकम्। गौरवात्। निरुक्तव्यभिचारोन्नायकत्वापेक्षया गुरुशरीरत्वात्। अपि तु लघुशरीरं निरुक्तव्यभिचारोन्नायकत्वमेवेति शेषः। अत एव। अव्याप्यत्वोन्नायकत्वस्य गौरवेण तदनवच्छेदकत्वादेव। असङ्ग्रह। निरुक्तरूपेण। न दोषायेति। तत्रोपाधिव्यवहारस्य स्वारसिकस्य सविवादतया तदनभ्युपगमसम्भव इति भावः।

(दी०) अथैवं स्वव्यभिचारेण व्यभिचारोन्नायकत्वमेव तथास्तु, लाघवात्, तथोक्तोपाधावप्यस्तीति चेत्? एवं तर्हि साध्याभावसाधनोभयाधिकरणवृत्त्यभावप्रतियोगित्वमेव तथास्तु, अतिलाघवात्, अस्तु च सहार्थतृतीयाश्रवणेनास्यापि स एव फलितोऽर्थः। एतद्रूपमात्रज्ञाने तेषां नोपाधिव्यवहार इति चेत्? तुल्यं त्वदुक्तेऽपि। अत एव शुद्धसाध्यव्यापकस्थले साध्ये व्याप्यतावच्छेदक नियमतस्तादृश धर्ममनुसरन्ति यद्व्याप्ते साध्यव्यभिचारनियमो भवत्युपाधिव्यभिचारस्य। वस्तुतस्तु यदभावेन यद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिर्लाघवात्। अत एव जलत्वतेजस्त्वयोः तदुभयत्वेन क्वचिदप्युपाधित्वम्।

(गा०) ननु यदि व्यवहारविषयतावच्छेदकलाघवानुरोधाद्वृत्तिहेतुकोपाधौ स्वारसिकव्यवहारो न स्वीक्रियते तदा उक्तस्थलीयपृथिवीत्वाभावादिसाधारणस्य यथाकथञ्चित्साध्यव्यभिचारोन्नायकव्यभिचारप्रतियोगित्वस्य लघीयसो व्यवहारविषयतावच्छेदकत्वानुरोधात्तदाक्रान्तोक्तस्थलीयपृथिवीत्वाभावादौ उपाधिव्यवहारस्स्वीक्रियताम्, तत्र तद्व्यवहारस्यासिद्धत्वादित्याशङ्कते। अथेति। एवम्।

लाघवादरे । स्वव्यभिचारेणेति । साध्यव्यभिचारसहितयद्व्यभिचारा-
धिकरणं साधनं तत्त्वमित्यर्थः । उक्तोपाधौ । उक्तस्थलीयपृथिवीत्वा-
भावादुपाधौ । तादृशधर्मे उपाधिव्यवहारविरहस्य सविवादत्वेऽपि
तत्साधारणोक्तरूपादपि लघुतरं तद्व्यावृत्तं तद्विषयतावच्छेदकरूपा-
न्तरं सम्भवतीति तस्यानुपाधित्वमेवेत्याह । एवमिति । यदीति
शेषः । यदि लाघवानुरोधेन पृथिवीत्वाभावादावुपाधिव्यवहाराभावे
विप्रतिपद्यामहे इत्यर्थः । तर्हि । तदानीम् । साध्याभावसाधनोभया-
धिकरणेति । साध्याभाववत्साधनाधिकरणेत्यर्थः । तेन सर्वत्र सा-
ध्याभावसाधनयोरेकसम्बन्धासम्भवेन तदुभयत्वावच्छिन्ननिरूपितै-
काधिकरणतानिवेशासम्भवेऽपि न क्षतिः । प्रतियोगित्वम् । प्रति-
योगितावच्छेदकं यद्रूपं तदवच्छिन्नत्वम्, पृथिवीत्वाभावादेश्च न
तथात्वम्, नीरूपसाधनाधिकरणवाय्वादौ पृथिवीत्वाभावाभाव-
विरहादिति भावः । यद्व्यभिचारित्वेनेति मूलस्यापीदृशार्थकत्व-
सम्भवान्न तदुपेक्षानिबन्धनो मूलविरोध इत्याह । अस्तु चेति ।
सहार्थेति । पक्षाधिकरणनिरूपितस्वरूपसाहित्यार्थकेत्यर्थः । स एव
फलितार्थः । तादृश पदार्थे पर्यवसानम् । साधने साध्योपाध्योरेका-
धिकरणान्तर्भावेण व्यभिचारस्य साध्याभाववति साधनाधिकरणे
उपाधेरभाववत्त्वेनैव निर्वाहादिति भावः । शङ्कते । एतद्रूपेति । मात्र-
पदेन व्यभिचारोन्नायकत्वपक्षान्तरव्यवच्छेदः । तेषाम् । कथकादीनाम् ।
नोपाधिव्यवहार इति । तथा च लघीयस्त्वेऽपि नोक्तरूपस्य तद्व्यवहा-
रविषयतावच्छेदकत्वसम्भव इति भावः । इदम् । नोपाधिव्यवहार
इतीदम् । तदुक्तेऽपि । पृथिवीत्वाभावादिसाधारणयथाकथञ्चिद्व्यभि-
चारोन्नायकव्यभिचारप्रतियोगित्वमात्रज्ञानेऽपि पृथिवीत्वाभावादौ
कथकादीनामुपाधिव्यवहाराभावात्, तत्र विवादे मदुपवर्णितरूप-
ज्ञानेनोपाधिव्यवहार इत्यत्रापि विवादसौकर्यादिति भावः । यथा-
कथञ्चित्स्वव्यभिचारेण व्यभिचारोन्नायकतयैवोपाधित्वेऽवच्छिन्न-
साध्यव्यापकशाकपाकजत्वाद्युपाधिस्थले सर्वत्र धर्मविशेषविषय-
त्वेनोपाधिव्यभिचारं विशेष्यैव साध्यव्यभिचारानुमानसम्भवे धर्म-
विशेषावच्छिन्नसाध्यव्यापकतया तेषामुपाधित्वसमर्थनप्रयासोऽन-
र्थक एवापद्येत, तादृशसाध्यव्यापकतामप्रतिसन्धायापि साधना-
व्यापकतामात्रं प्रतिसन्धाय साध्यव्यभिचारसंशयनिष्पादके हेतौ उपा-

धिव्यभिचारसामान्यस्य साध्यव्यभिचारानुमापकतायाः सुग्रहत्वात्, यत्किञ्चिदधिकरणान्तर्भावेणोपाधिव्यभिचारसामान्यस्य साध्यव्यभिचाराऽनयनयोग्यतया उपाधितानियामकत्वे तु यदवच्छिन्नसाधनाव्यापकत्वमुपाधेस्तदवच्छिन्नसाधनाव्यापकत्वप्रतिसन्धाने तादृशावच्छेदकधर्माधिकरणसाधनवत्युपाधिव्यभिचारसामान्यस्य साध्यव्याप्यता पक्षधर्मता च गृहीतुं शक्यते तदवच्छिन्नसाध्यव्यापकाभाववति तद्धर्माधिकरणे साध्याभावस्यावश्यकतेति ग्रहण तदधिकरणवृत्तिसामान्येऽवश्यं साध्याभाववद्वृत्तित्वमिति ग्रहात्, अतस्साधनावच्छिन्नसाध्यव्यापकताग्रहस्य निरुक्तोपाधिताप्रयोजकरूपग्रहोपयोगितया उपाधितासमर्थनाय व्याप्यतावच्छेदकधर्मविशेषानुसरणमित्याह । अत एवेति । निरुक्तव्यभिचारोन्नायकताया उपाधितानियामकत्वादेवेत्यर्थः । शुद्धसाध्य व्यापकाद्रेन्धनादुपाधेः व्याप्यतावच्छेदकधर्माननुसरणात् शुद्धसाध्याव्यापकस्थले इत्युक्तम् । साध्ये व्याप्यतावच्छेदकम् । साध्यनिष्ठोपाधिव्याप्यतायां सामानाधिकरण्येनावच्छेदकम् । ते । कथकतान्त्रिकाः । यद्वतीति । यद्धर्मावच्छिन्नाधिकरणे इत्यर्थः । साध्यव्यभिचारनियम इति । उपाधिव्यभिचारसामान्यस्य साध्यव्यभिचारव्याप्यतेत्यर्थः ।

ननु द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ गुणवत्त्वादेरुपाधिताप्रसङ्गः, गुणवत्त्वाद्यभावाधिकरणगुणादिवृत्तित्वसामान्यस्य साध्यव्यभिचारव्याप्यत्वात् साधनवृत्तित्वाच्च, साधनस्य विशिष्टसत्तादेः शुद्धसत्त्वाद्यनतिरिक्तत्वात् । साध्यव्यभिचारव्याप्यतावच्छेदकीभूततादृशकिञ्चिदधिकरणवृत्तितात्वाश्रयस्य, साधनतावच्छेदकावच्छिन्नत्वविवक्षयैतदुद्धारेऽपि महाकालान्यत्वादिसाध्यके कालिकसम्बन्धेन घटादिहेतुके खण्डकालभेदादेरुपाधितापत्तिः, खण्डकालभेदाभावाधिकरणखण्डकालवृत्तित्वसामान्यस्य महाकालभेदाभावाधिकरणमहाकालवृत्तित्वव्याप्यत्वात् साधनवृत्तित्वाच्च, साधने खण्डकालभेदव्यभिचारस्य खण्डकालान्तर्भावेणैव महाकालभेदव्यभिचारस्य च महाकालान्तर्भावेणैव तत्त्वात्, एकाधिकरणे उभयव्यभिचारविरहेण रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभाववत्त्वस्यानुपाधित्वात् ।

न च महाकालवृत्तित्वरूपमहाकालभेदव्यभिचारव्याप्यताव-

च्छेदकं लाघवाद् वृत्तित्वत्वमेव न तु यत्किञ्चिदधिकरणवृत्तित्व-त्वम्, अतो नोक्तातिप्रसङ्गः, उपाध्यभावोपलक्षितस्याधिकरणस्य व्याप्यतावच्छेदकप्रवेशाविवक्षणादिति वाच्यम् । तथा सत्युक्त-स्थलीयोपाधौ महाकालपरिमाणाभावव्याप्तिप्रसङ्गात्, उक्तन्यायेन तदभावोपलक्षिताधिकरणस्यापि साध्यव्यभिचारव्याप्यतावच्छेद-कानन्तर्भावात् ।

न चोपाधिव्यभिचारस्य तादात्म्यसम्बन्धेन साध्यव्यभिचार-व्याप्यत्वविवक्षया नैष दोषः, आधेयताया निरूपकाधिकरणभेदेन भेदात् खण्डकालमहाकालनिरूपितयोराधेयतयोस्तादात्म्याभावेन तादृशसम्बन्धेन व्याप्तिविरहात्, एतेनैतद्रूपभिन्न गुणत्वादित्यादौ एतद्रूपजातीयरूपान्तरव्यक्तिभेदादेरुपाधितापत्तिरपि निरस्तेति वाच्यम् । एवं सति साधनानुप्तोपाधिव्यभिचारे साध्यव्यभिचार-तादात्म्यनिवेशेनैवोपपत्तौ व्याप्यतानिवेशवैयर्थ्यात्, पृथिवीवृत्ति-त्वरूपे पृथिवीत्वाभावव्यभिचारे वाय्वादिवृत्तित्वरूपसाध्यव्यभि-चारतादात्म्यविरहेणैव पृथगीत्वाभावातिप्रसङ्गनिवारणात्, उपा-धिव्यभिचारस्य तादात्म्यसम्बन्धेन पक्षावृत्तितया तेन सम्बन्धेन तस्य साध्यव्यभिचारव्याप्यतायास्साधने साध्यस्य व्यभिचारोन्नय-नयोग्यतानात्मकत्वाच्च । एतेन निरूपकतासम्बन्धेन व्याप्यत्वविव-क्षया उक्तातिप्रसङ्गवारणमपि हेयमेवेत्यत आह । वस्तुतस्त्विति । यदभावो यद्वन्द्वो वा विशेषितोऽविशेषितो वा हेतुमति पक्षे सा-ध्याभावोन्नायक इत्यर्थः । अत्राप्युन्नायकत्वमुन्नयनयोग्यता, तथा च साध्याभावव्याप्यतावच्छेदकरूपेण यद्रूपावच्छिन्नाभावो यद्रूपाव-च्छिन्नवद्वन्द्वो वा साधनतावच्छेदकविशिष्टवृत्तिः तद्रूपावच्छिन्न उपाधिरित्यर्थः । द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्टसत्त्वाधिकरणी-भूतद्रव्ये द्रव्यत्वाद्यभावव्याप्यतावच्छेदकावच्छिन्नस्यावर्तमानत्वान्न गुणवत्त्वादावतिप्रसङ्गः । एवं महाकालभेदादिसाध्यके खण्डकाल-भेदाद्यभावस्य साध्याभावव्याप्यताविरहात्खण्डकालभेदादौ रूप-वान् द्रव्यत्वादित्यादौ पृथिवीत्वाद्यभावाभावस्य पृथिवीत्वादेरूपा-द्यभावाद्यव्याप्यतया च पृथिवीत्वाभावादौ नातिप्रसङ्गः । साध्या-भावासामानाधिकरण्यावच्छेदकरूपेण यद्रूपावच्छिन्नाभावः साधन-वद्वृत्तिरित्युक्तौ वह्निमान् धूमादित्यादौ महानसत्वादेरुपाधितापत्तिः,

१२१

वह्न्यभावसामानाधिकरण्यावच्छेदकमहानसत्वाभावत्वेन तदभावस्य धूमादिमत्पर्वतादिवृत्तित्वात्, अतः साध्याभावव्याप्यतापर्यन्तनिवेशः। ह्रदादिवृत्तित्वविशिष्टत्वेन वह्न्याद्यभावव्याप्यस्य महानसत्वाद्यभावस्य तदभावत्वेन साधनवद्वृत्तित्वाद्यद्रूपावच्छिन्नाभावः साध्याभावव्याप्यः साधनवद्वृत्तिरित्येतावन्मात्रोक्तौ तत्रैवातिव्याप्तिस्स्यादिति व्याप्यतावच्छेदकरूपेण साधनवद्वृत्तित्वं विवक्षितम्।

अथ यदभावेन साध्याभाव उन्नीयते इत्येतत्कल्पे धूमवान् वह्नेः पृथिवी द्रव्यत्वादित्यादौ साधनव्यापकसंयोगादेरभावस्य उत्पत्तिकालावच्छेदेन अयोगोलकादिवृत्तितया तद्वृत्तित्वविशिष्टत्वेन साध्याभावव्याप्यत्वात् साधनवद्वृत्तित्वाच्च तत्रातिव्याप्तिवारणाय यदभावमात्रवृत्तिधर्मावच्छिन्ना साध्याभावव्याप्यतेति विवक्षणीयम्, तथा चायोगोलकादिवृत्तित्वविशिष्टत्वस्य च संयोगाद्यभावभिन्नेऽपि वृत्तेर्न तद्रूपावच्छिन्नव्याप्यतामादायातिप्रसङ्गः, अयोगोलकादिवृत्तित्वविशिष्टसंयोगाद्यभावत्वस्य च संयोगाद्यभावमात्रवृत्तित्वेऽपि विशेष्यवैयर्थ्यान्न व्याप्यतावच्छेदकतेति तेन रूपेण व्याप्यतामादायातिप्रसङ्गस्यापि नावकाशः, द्रव्यं सत्त्वादित्यादौ गुणादिवृत्तित्वविशिष्टत्वेन संयोगादौ लक्षणसमन्वयस्य उक्तन्यायेनासम्भवेऽपि व्याप्यवृत्तित्वविशिष्टसंयोगाद्यभावत्वरूपतदभावमात्रवृत्तिधर्मावच्छिन्नसाध्याभावव्याप्यतामादाय लक्षणं सङ्गमनीयम्।

वस्तुतो लघुरूपसमनियतगुरुधर्मावच्छिन्नोपाधौ तदवच्छिन्नाभावाप्रसिद्ध्या अव्याप्तेर्वारणाय तद्रूपविशिष्टव्यापकतावच्छेदकावच्छिन्नाभावस्यैव उन्नायकताया विवक्षणात् द्रव्यं सत्त्वादित्यादौ द्रव्यमात्रसमवेतत्वाद्यवच्छिन्नाभावत्वेन साध्याभावोन्नायकतया संयोगत्वाद्यवच्छिन्नस्योपाधितानिर्वाहः, अत एव सत्तावान् प्रमेयत्वादित्यादौ व्याप्यवृत्तित्वविशिष्टसंयोगाभावत्वाद्यवच्छिन्नाभावस्य गुणादिवृत्तितया सत्ताद्यभावानुन्नायकत्वेऽपि न संयोगाद्युपाध्यसङ्ग्रहः, संयोगत्वादिविशिष्टव्यापकतावच्छेदकजातित्वाद्यवच्छिन्नाभावस्य सत्ताद्यभावोन्नायकत्वेन सङ्ग्रहात्। तथा च व्याप्यतावच्छेदकरूपेण साधनवद्वृत्तित्वानिवेशेऽपि वह्निमान् धूमादित्यादौ महानसत्वाद्यभावस्येतरसाधारणह्रदादिवृत्तित्वविशिष्टत्वेन व्याप्यता-

मादाय नातिव्याप्तिसम्भव इति किं तन्निविशेनेति चेन्न । एवमपि तदनिवेशे वह्निमान् धूमादित्यादौ संयोगाभावादेः व्याप्यवृत्तित्वविशिष्टसंयोगाद्यभावत्वेन वह्न्याद्यभावव्याप्यतया केवलसंयोगाभावत्वादिना च हेतुमद्वृत्तितया संयोगादेरुपाधिताप्रसङ्गात् । कथञ्चिदुद्धारेऽपि द्रव्यं गुणादित्यादौ द्रव्यान्यविशिष्टसत्ताभावादौ अतिप्रसङ्गस्य दुर्वारत्वात्, तदभावस्य सत्त्वादेस्तन्मात्रवृत्तिविशिष्टसत्तात्वादिना द्रव्यत्वाद्यभावव्याप्यत्वात्, सत्तात्वादिना च साधनवद्वृत्तित्वादिति तद्विवक्षाया आवश्यकत्वात् ।

यदभावेनेति कल्पे व्यभिचारिणि साध्यव्यापकसंयोगादेरुपाधितावारणाय यदभावमात्रवृत्तिधर्मपुरस्कारेण व्याप्यताप्रवेशे गौरवम्, अतो लाघवाय यद्वदन्यत्वेन वेत्युक्तम् ।

न च धूमवान् वह्नेरित्यादौ साध्यविरुद्धस्य ह्रदत्वादिविशिष्टद्रव्यत्वादेर्वारणाय यद्वदन्यत्वेन वेति कल्पेऽपि यद्धर्मावच्छिन्नयद्भेदमात्रवृत्तिधर्मपुरस्कारेण साध्याभावव्याप्यतेति विवक्षणीयम्, अन्यथा तादृशविशिष्टद्रव्यत्वादिमद्भेदस्यायोगोलकादिवृत्तित्वविशिष्टत्वेन साध्याभावव्याप्यत्वसाधनवद्वृत्तित्ववत्तया विशिष्टस्य अनतिरिक्तत्वेन विशिष्टद्रव्यत्वत्वादावपि साध्यसमानाधिकरणवृत्तित्वरूपवक्ष्यमाणविशेषणवत्तया च तदवच्छिन्नवारणासम्भवादिति वाच्यम् । साध्यवद्वृत्तितावच्छेदकत्वस्य साध्यवद्वृत्तित्वापेक्षया गुरोर्विशेषणतया विशिष्टद्रव्यत्वादेर्वारणासम्भवेन यद्वदन्यत्वेन वेति कल्पे तन्मात्रवृत्तिधर्मपुरस्कारेण उन्नायकत्वाविवक्षणेऽपि प्रतीकारस्तु ।

अथ यदभावेनेति कल्पेऽपि यदभावमात्रवृत्तिधर्मपुरस्कारेणोन्नायकत्वमिति न विवक्षणीयम्, गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे यद्धर्मावच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभावस्यैवोन्नायकताया विवक्षणीयतया तद्धर्मविशिष्टनिरूपितव्यापकतायां विशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगितानिवेशे प्रतियोगिवैयधिकरण्यानिवेशे क्षतिविरहेण संयोगत्वादेः संयोगादिव्यापकतानवच्छिन्नत्वेन तदवच्छिन्नाभावस्यायोगोलकादिवृत्तित्वविशिष्टत्वेन वह्न्यादिमति धूमाद्यभावोन्नायकत्वेऽपि साधनव्यापकसंयोगादावातिव्याप्त्यप्रसक्तेः ।

एतेन यदभावेनेति कल्पे द्रव्यत्वाभाववान् सत्त्वादित्यादौ सं-

योगाद्यभावेऽतिव्याप्तिः तदभावस्य संयोगादेः संयोगत्वादिना द्रव्यत्वादिव्याप्यत्वात् अतो द्वितीयकल्पानुसरणमित्यपि निरस्तम्। संयोगाभाववदादौ प्रतियोगिवैयधिकरण्याघटिततद्व्यापकतावच्छेदकत्वाभावेन तदवच्छिन्नाभावस्य संयोगस्याप्रवेशादिति चेत् सत्यम्। एवमपि गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वमते उपाधितावच्छेदकावच्छिन्नाभावस्यैव यथाश्रुतस्य निवेशेऽपि गुरुधर्मावच्छिन्नोपाध्यभावव्याप्तधनवकाशाद् धूमवान् वह्नेरित्यादौ संयोगाद्यतिव्याप्तिवारणायैव यदभावेनेति कल्पे व्यापकतावच्छेदकावच्छिन्नाभावस्य निवेशनीयतया गौरवेण यद्व्याप्यत्वेन सति कल्पाश्रयणसङ्गतेरिति।

अत एवेत्यादिपाठः प्रामादिकः, धूमादिसाध्यके ह्रदत्वविशिष्टद्रव्यत्वाद्यावतिव्याप्तिवारणाय सकलकल्प एव साध्यसामानाधिकरण्यावच्छेदकत्वेन धर्मस्य विशेषणीयतया द्रव्य सत्त्वादित्यादौ जलत्वतेजस्त्वोभयावच्छिन्नाभावाधिकरणगुणादिवृत्तित्वसामान्यस्य द्रव्यत्वादिव्यभिचारव्याप्यस्य सत्त्वादौ सत्त्वेऽपि गुणादिवृत्तित्वविशिष्टत्वेन द्रव्यत्वाभावव्याप्यस्य तदभावस्य सत्त्वादिमति सत्त्वेऽपि च क्वचिदपि कल्पे तादृशोभयत्वावच्छिन्नेऽतिप्रसङ्गाभावादुपष्टम्भासङ्गतेः।

न च धूमवान् ह्रदवृत्तित्वविशिष्टद्रव्यत्ववान् द्रव्यं जलत्वतेजस्त्वोभयवदित्येव न प्रतीयते, विशिष्टद्रव्यत्वं धूमवद्वृत्ति जलत्वतेजस्त्वोभयं द्रव्यवृत्तीति प्रतीयत एव, तथा च विशिष्टद्रव्यत्ववत्तादृशोभयत्वादिकं साध्यसामानाधिकरण्यावच्छेदकमेव, धूमाधिकरणस्य विशिष्टद्रव्यत्वाद्यधिकरणत्वमेव परं नास्तीति वाच्यम्। विशिष्टद्रव्यत्वत्वादेर्धूमाद्यधिकरणवृत्तितायामवच्छेदकत्वे तदधिकरणवृत्तितासमशीलतन्निष्ठाधिकरणतानिरूपकत्वेऽप्यवच्छेदकत्वध्रौव्यात् तदवच्छिन्ननिरूपकताकाधिकरणताया एव च तद्विशिष्टाधिकरणतारूपतया धूमाद्यधिकरणस्य विशिष्टद्रव्यत्वाद्यधिकरणतायां अपि दुर्वारत्वापत्तेः। साध्यवन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वविवक्षयाप्युक्तोभयत्वावच्छिन्नेऽतिप्रसङ्गवारणासम्भवाच्च।

अथ साध्यसामानाधिकरण्यावच्छेदकत्वस्य धर्मविशेषणत्वे धार्द्रेन्धनत्वादिनापि धूमादिसाध्यकोपाधितानुपपत्तिः, सामाना-

धिकरण्यातिप्रसक्तस्य तदवच्छेदकत्वानुपपत्तेः ।

न च प्रतियोगित्वकारणत्वादेरवच्छेदकतायामेव अवच्छेद्यानतिप्रसक्तत्वं तन्त्रम्, न त्वाधेयत्वादेरवच्छेदकत्वेऽपीति वाच्यम् । मणिकृतैव व्याप्तिवादे साध्यसम्बन्धितावच्छेदकरूपात्मकव्याप्तिलक्षणे न ह्यतिप्रसक्तमवच्छेदकमित्युक्त्वा वह्नित्वादौ धूमसामानाधिकरण्यावच्छेदकत्वं निरस्य अतिव्याप्तेर्वारितत्वात् । अत एव दीधितिकृता विरुद्धातिप्रसङ्गवारणाय लक्षणव्याख्याने साध्यसामानाधिकरण्यावच्छेदकत्वमुपेक्ष्य साध्यसमानाधिकरणयत्किञ्चिद्धर्मव्यापकतावच्छेदकत्वं धर्मविशेषणं वक्ष्यते । एवं च समानाधिकरणवृत्तित्वं धर्मविशेषणं तेजो द्रव्यत्वादित्यादौ स्पर्शाभावादिवारकम् । ह्रदवृत्तित्वविशिष्टद्रव्यत्वादेर्वारणं च यदभावादिमात्रवृत्तिधर्मपुरस्कारेणाव्यापकत्वविवक्षया । वस्तुतस्त्वित्यादिकल्पे पूर्वकल्पे च जलत्वतेजस्त्वोभयत्वादिना व्यभिचारमात्रे ह्रदवृत्तित्वविशिष्टद्रव्यादिना च धूमादिसाध्यके उपाधिता धर्मस्य साध्यसमानाधिकरणवृत्तित्वविशेषणेन दुर्वारेति कल्पद्वयाभिप्रायेणैव अत एवेत्यादिग्रन्थः सङ्गच्छते । अत्र च जलत्वतेजस्त्वयोरित्यादिकमुपलक्षणम्, विशिष्टद्रव्यत्वत्वादिना नोपाधित्वमित्यपि बोध्यम् । अथ वा साध्यसमानाधिकरणयत्किञ्चिद्धर्मव्यापकतावच्छेदकत्वमेव साध्यसमानाधिकरणवृत्तित्वं धर्मविशेषणम्, तच्च साध्यवद्यत्किञ्चिद्व्यक्तिनिष्ठभेदप्रतियोगितावच्छेदकत्वमेव, अत्यन्ताभावगर्भव्यापकतायामपि प्रतियोगिवैयधिकरण्यनिवेशेन भेदगर्भव्यापकतायामेव पर्यवसानात्, तथा च यदभावेनेति कल्पेऽपि एतादृशविशेषणेन विशिष्टद्रव्यत्वादिवारणसम्भवेऽपि जलत्वतेजस्त्वोभयत्वावच्छिन्नवारणमशक्यम्, तादृशोभयवद्भेदाप्रसिद्ध्या तादृशोभयत्वस्य भेदप्रतियोगितावच्छेदकतानवच्छेदकत्वादिति यद्वदन्यत्त्वेनेति । कल्पाभिप्रायेणैव अत एवेति ।

न च यदभावेनेति कल्पे धूमवान् वह्नेरित्यादौ संयोगादावतिव्याप्तेर्वारणाय यदभावमात्रवृत्तिधर्मेण व्याप्यताया विवक्षणीयत्वात् उक्तोभयत्वेनोपाधिताया अपि ततो वारणसम्भवान्नोपष्टम्भसङ्गतिरिति वाच्यम् । उक्तसंयोगाद्युपाध्यतिव्याप्तिवारणायैव तद्द्वितीयकल्पानुसरणेन प्रथमकल्पे यदभावमात्रवृत्तिधर्मपुरस्कारेणो-

ज्ञापकताया अविवक्षणीयत्वात् । तदविवक्षणेऽपि वस्तुतोऽनवच्छिन्ना या आधेयता तद्विशिष्टत्वेनोपाध्यभावस्य साध्याभावोन्नायकताविवक्षया उक्तसंयोगाद्युपाधिवारणसम्भवाच्च, अयोगोलकवृत्तित्वविशिष्टत्वेन संयोगाभावस्य धूमाभावोन्नायकतायामुत्पत्तिकालावच्छिन्नाया एव संयोगाभावनिष्ठाधेयताया अवच्छेदकप्रवेशात् ।

न च महाकालपरिमाणवान् द्रव्यत्वादित्यादौ कालिकसम्बन्धेन साध्यवन्निष्ठभेदप्रतियोगितायामवच्छेदकाप्रसिद्ध्या तेन सम्बन्धेन घटादेरुपाधितानुपपत्तिरित्युपाधिताघटकसम्बन्धसामान्ये यद्धर्मविशिष्टप्रतियोगिकत्वसाध्यवत्सामान्यानुयोगिकत्वोभयाभावस्तद्व्यस्वरूपव्यापकतावच्छेदकताया एव निवेशनीयतया उक्तोभयत्वे तादृशव्यापकतावच्छेदकताविरहेण पूर्वकल्पे यदभावेनेति कल्पे च तदवच्छिन्नेऽतिप्रसङ्गानवकाश इति वाच्यम् । कालिकसम्बन्धेन गगनादेरपि वृत्तिमत्त्वस्यावश्यकतया कालिकसम्बन्धेन महाकालवृत्तित्वकिञ्चिद्धर्मविशिष्टप्रतियोगिकत्वोभयाभावाप्रसिद्ध्या उक्तस्थले कालिकसम्बन्धेनापाधकत्वस्यापि दुरुपपादतया साध्यवत्किञ्चिद्व्यक्तिनिष्ठभेदप्रतियोगितावच्छेदकतासामान्ये उपाधिताघटकसम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः तत्स्वरूपव्यापकतावच्छेदकताया एव निवेशनीयतया यद्वदन्यत्वेनेत्येतदन्यकल्पे उक्तोभयत्वस्य तादृशविशेषणेनापि दुर्वारत्वात्, समवायेनोभयत्वावच्छिन्नस्य भेदप्रतियोगितानवच्छेदकत्वेन भेदप्रतियोगितावच्छेदकतासामान्ये समवायावच्छिन्नत्वतादृशोभयत्वावच्छिन्नत्वोभयाभावसत्त्वादिति चेन्न । आर्द्रेन्धनत्वादेस्साध्यसामानाधिकरण्यानवच्छेदकत्वे उक्तयुक्त्या साध्यवतस्तद्विशिष्टत्वासम्भवेन तत्र तद्विशिष्टाभावप्रत्ययापत्तेरतिप्रसक्तस्यापि सामानाधिकरण्यावच्छेदकतायाः स्वरूपसम्बन्धरूपाया अवश्योपेयत्वात्, अनतिरिक्तवृत्तित्वरूपावच्छेदकताभिप्रायेण मणिकृतो न ह्यतिप्रसक्तमित्युक्तेः शिरोमणिसम्मतत्वात्, तत्र स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशस्य तदसम्मतत्वात् ।

( दी० ) पक्षाभिचारित्वेनेत्यस्यापि स एवार्थः, तथा हि पक्षाभिचारित्वेन हेतुमद्वृत्तित्वाविषया साधनस्य पक्षतावच्छेदकी-

भूतस्य साध्याभावरूपसाध्यवत्पक्षवृत्तित्वं सिद्ध्यतीति । अत्र च साध्यसमानाधिकरणत्वेनावच्छिन्नो धर्मो साध्यसमानाधिकरणार्द्रेन्धनादिव्यक्तेरार्द्रन्धनत्वादिनोपाधित्वे पुनरवच्छेदको धर्म एव साध्यसमानाधिकरणवृत्तित्वेन विशेषणीयः । तेन जलहृदत्वाभावाधिकरणायोगोलकवृत्तित्वस्य धूमव्यभिचारव्याप्यस्य वह्निवृत्तित्वेऽपि जलहृदत्वादौ नातिप्रसङ्गः, न वा द्रव्यत्वेन तेजस्त्वसाधने शीतस्पर्शजलत्वाद्यात्मकस्वाभावेन तद्वद्वृत्तित्वेन वा द्रव्ये द्रव्यत्वे वा साध्याभावस्य व्यभिचारस्य वा साधके स्पर्शाभावजात्यभावादौ । द्रव्यत्वादिना तु कम्बुग्रीवादिमत्त्वादौ साध्ये स्वव्यभिचारेण स्वाभावेन वा हेतौ तद्वृत्ति वा व्यभिचारस्य साध्याभावस्य वा साधके घटत्वादिव्यभिचारित्वमुपाधिरेव । घटत्वादेस्तदभावस्य वा गमकत्वेऽपि धूमप्रागभाववद्वैयर्थ्यम् ।

(गा०) साधनवति साध्याभावोन्नायकाभावप्रतियोगित्वस्य तत्र तदुन्नायकभेदप्रतियोगितानवच्छेदकत्वस्य च स्वोक्तस्य मूललभ्यत्वमुपपादयति । तथा हीति । यद्व्यभिचारित्वेनेत्यादि ।

यद्व्यभिचारित्वं यदभाववद्वृत्तित्वं यद्वदन्यवृत्तित्वं वा । साधनवान् साध्यव्यापकाभाववान् साध्यव्यापकयद्भेदवांश्चेति ज्ञाने तुल्यवित्तिवेद्यतया भासमानयदभावादिरूपहेतुसामानाधिकरण्यविधया साधनरूपपक्षतावच्छेदके साध्याभावरूपसाध्यवत्पक्षवृत्तित्वरूपसाध्यसामानाधिकरण्यावगाहिनी साधनवान् साध्याभाववान् साध्यवद्भिन्नो चेति या सिद्धिः तत्प्रयोजकमित्यर्थः । इतीति । तन्मूलार्थ इति शेषः । साध्यविरुद्धधर्मस्योपाधितां वारयितुमाह । अत्र चेति । यद्धर्मावच्छिन्नव्यभिचारः साधने साध्यव्यभिचारसाधक इत्यत्र प्रविष्ट इत्यर्थः । अवच्छिन्नो धर्मीत्यनेन अवच्छेदको धर्म इत्यनेन चास्य सम्बन्धः । धर्मीत्यस्य विशेषणीय इत्यग्रिमेणान्वयः । अत्र कल्पे साध्यसमानाधिकरणार्द्रेन्धनव्यक्तेरलक्ष्यतैव । तल्लक्ष्यता-

पक्षे धर्मिण्युक्तविशेषणदानासम्भवादाह । साध्येति । तद्व्यक्तित्वेन तादृशव्यक्तेरनुपाधित्वं सर्वथैवेत्यत आर्द्रेन्धनत्वादिनेति । पूर्वकल्पे एतद्विशेषणप्रयोजनं दर्शयति । जलह्रदत्वेति । वस्तुतस्त्वित्यादिकल्पे यदभावमात्रवृत्तिधर्मस्योन्नायकतावच्छेदकत्वविवक्षणं अयोगोलकवृत्तित्वविशिष्टत्वेन जलह्रदत्वाभावादेः साध्याभावोन्नायकत्वेऽप्यति-व्याप्तिवारणाय साध्यव्यापकतावच्छेदकव्याप्तिघटकतामाह । न चेति । द्रव्यत्वेन तेजस्त्वसाधने स्पर्शाभावजात्यभावादावतिप्रसङ्ग इति योजना । अतिप्रसक्तिं दर्शयति । शीतस्पर्शेति । शीतस्पर्शात्मकेन स्पर्शाभावाभावेन जलत्वात्मकेन जात्यभावाभावेनेत्यर्थः ।

द्रव्ये साध्याभावस्य साधक इति योजना । पूर्वकल्पेऽप्यतिव्याप्तिप्रसक्तकस्सत्त्वात्तत्कल्पेऽपि तामाह । तद्वद्वृत्तित्वेन द्रव्यत्वे व्यभिचारस्य वा साधक इति । तद्वद्वृत्तित्वम् । शीतस्पर्शादिमद्वृत्तित्वम् । उत्पत्तिकाले जन्यतेजस्यपि स्वमते स्पर्शाभावसत्त्वात्साध्यसमानाधिकरणतया जलतेजःपरमाणुषु च साधनाव्यापकतया स उपाधिरेवेति जात्यभावपर्यन्तानुसरणम् ।

ननु कम्बुग्रीवादिमान् द्रव्यत्वादित्यादौ संयोगेन समवायेन वा घटत्वादिव्यभिचारस्योपाधेः सर्वेष्वेव कम्बुग्रीवादिमत्सु घटेषु घटत्वाभाववति भूतलादौ घटोपर्युत्पन्नविनष्टघटव्यक्तेरध्वस्तनघटावयवे संयोगानवच्छेदेन तादृशे च कपाले समवायेन वृत्तिमत्त्वेन साध्याव्यापकत्वेऽपि तद्व्यभिचारस्य व्यर्थविशेषणतया व्यभिचारानुन्नायकत्वादव्याप्तिः, तथा हि साधनपक्षकव्यभिचारानुमाने घटत्वव्यभिचारित्वव्यभिचाररूपहेतुघटत्वस्यैव कम्बुग्रीवादिमत्त्वव्यभिचारव्याप्यतया स्वरूपासिद्धिवारकेतरांशस्य व्यभिचारावारकतया वैयर्थ्यम् साधनवत्पक्षकसाध्याभावसाधकानुमानेऽपि घटत्वव्यभिचाराभावादिरूपहेतुघटकघटत्वाभावस्यैव तादृशसाध्यव्याप्यतया इतरांशवैयर्थ्यमित्याशङ्कां निराकरोति । द्रव्यत्वादिनेति । उपाधिरित्येवकारः साधकमित्यनन्तरं योज्यः । व्यभिचारावारकविशेषणवत्त्वस्तादृशोपाधिव्यभिचारादेः कथं साधकत्वमित्याकाङ्क्षायामाह । घटत्वादेरिति । यत इत्यादिः । धूमप्रागभाववादिति । यथा धूमत्वावच्छिन्नस्य वह्निगमकत्वेऽपि धूमप्रागभावहेतौ वह्निष्ठा वह्निरूपितेत्यादिन्यायेन नेतरांशवैयर्थ्यं तथा धर्मिभेदाद् घटत्वव्यभिचारित्व-

व्यभिचारादिहेतावितरांशवैयर्थ्यमित्यर्थः ।

न च साधनपक्षकव्यभिचारानुमाने हेतौ घटत्वव्यभिचारित्वाभाववद्वृत्तित्वे वृत्तिघटीयरूपादिवृत्तित्वात्मके घटत्वव्यभिचारित्वभेदाभावात् तद्घटत्वव्यभिचारस्य कम्बुग्रीवादिमत्त्वव्यभिचारगमकतया इतरांशवैयर्थ्यं दुर्वारमेवेति वाच्यम् । संयोगेन घटत्वव्यभिचारस्य उपाधितायां हेतुतावच्छेदकसमवायसम्बन्धेन तादृशोपाधिव्यभिचारस्य स्वघटकसंयोगावच्छिन्नघटत्वव्यभिचारित्वाभेदाप्रसक्तेः समवायघटितघटत्वव्यभिचारस्य तादृशव्यभिचारे स्वघटकीभूततादृशघटत्वव्यभिचाराभेदाद् वैयर्थ्येन घटत्वव्यभिचारित्वव्यभिचारित्वेन अगमकत्वेऽपि घटत्वव्यभिचारित्वेनैवोपाधिव्यभिचारस्य गमकतया उपाधिव्यभिचारित्वेन गमकतायाश्चाविचक्षणं नाव्याप्त्यनवकाशात् ।

अथ पूर्वकल्पेऽपि उपाध्यभावाधिकरणयत्किञ्चिद्व्यक्तिवृत्तित्वविशिष्टव्यापकत्वमेव साध्यव्यभिचारावच्छेदकम्, न तूपाधिव्यभिचारत्वे साध्यव्यभिचारसामानाधिकरण्यनिरूपितस्वरूपसम्बन्धरूपावच्छेदकतात्मकतद्व्याप्यतावच्छेदकता, अवच्छिन्नसाध्यव्यापकोपाध्यसङ्ग्रहात्, तथा चोपाधिव्यभिचारित्वघटकाविशेषणवैयर्थ्येऽप्यव्याप्तिशङ्कानवकाशः। अस्तु वा तादृशाभावाधिकरणत्वोपलक्षितकिञ्चिदधिकरणवृत्तितात्वे तादृशव्याप्यतावच्छेदकत्वे विशेषणम्, तथापि तच्छरीरे दर्शितघटत्वादेरनिवेशात् तदवच्छिन्नस्य गमकत्वेऽपि तादृशवृत्तितात्वस्य व्याप्यतानवच्छेदकत्वाप्रसङ्गः। एवं वस्तुतस्त्वित्यादिकल्पेऽपि उपाध्यभावत्वे न व्याप्यतावच्छेदकत्वं विशेषणम् उक्तदोषात्, किन्तु उपाध्यभावमात्रवृत्तिधर्मस्यैव तथात्वम्, तथा च सति दर्शितस्थले उपाध्यभावत्वस्य विशेषणवैयर्थ्येन साध्याभावव्याप्यतानवच्छेदकत्वेऽपि उपाध्यभावमात्रवृत्तितद्व्यक्तित्वस्य तद्व्याप्यतावच्छेदकत्वे बाधकविरहात् नाव्याप्तिशङ्कावकाश इति तच्छङ्कया घटत्वादेरित्यादिग्रन्थमवतार्य धर्मिभेदेन लक्षणतावच्छेदकसमन्वयपरतया तद्व्याख्यानमयुक्तमिति चेन्न । उपाधिव्यभिचारित्वे तदभावत्वे च व्यर्थविशेषणघटितरूपव्यावृत्तव्याप्यतावच्छेदकत्वनिवेशाभिमानेनाव्याप्तिशङ्कया प्रस्थानस्य तन्निवेशस्य स्वानभिमतत्वेऽपि तमभ्युपगमसम्भवाभिप्रायेण धर्मिभेदेन समाधानस्य

च सङ्गतेः। अत यथोपाधिव्यभिचारत्वादिना गमकत्वनिवेशाभ्यु-पगमे ऽभावस्यानुपाधित्वापत्तिरभावाभावरूपधर्मिणः प्रतियोगि-भेदाभावेन दुर्वारेति तदनिवेशप्रकाशनेनाग्रे तां निराकरिष्यति।

वस्तुतस्तु विशेषिताविशेषितसाधारणयद्व्यभिचारत्वाद्यवच्छि न्नेन हेतौ साध्यव्यभिचारस्य तादृशयदभावत्वावच्छिन्नेन हेतुमति वा साध्याभावस्य साधने न निग्रहः तस्यैवोपाधित्वनियमात् द्रव्यत्वादि-ना कम्बुग्रीवादिमत्त्वादिसाधने घटत्वादिव्यभिचारो व्याख्यातलक्ष्य-तावच्छेदकाक्रान्तोऽपि नोपाधि',तद्व्यभिचारादिना साध्यव्यभिचारा-दिसाधने व्यर्थविशेषणतया निग्रहात्, तादृशनियमेऽप्यवच्छिन्नसा-ध्यव्यापकस्योपाधिता निर्वहति,विशेषणव्यभिचारादि विशेषिततद्व्य-भिचारत्वाद्यवच्छिन्नेन साध्यव्यभिचारसाधने निग्रहाभावात्, तथा च यथाव्याख्यातलक्ष्यतावच्छेदकस्य घटत्वादिव्यभिचारित्वेऽति-प्रसङ्ग इत्याशङ्कां तादृशोपाधिव्यभिचारादौ विशेषणवैयर्थ्यमुद्धृत्य निराचकार। एवं च साधकं घटत्वादिव्यभिचारित्वमुपाधिरेवेत्य-स्य यथाव्याख्यातसाधकतावद् घटत्वादिव्यभिचारित्वं लक्ष्यमेवे-त्यर्थः। तथा च यथास्थानस्थ एवैवकारः, घटत्वादेरित्यादौ पूर्व-घचत इति पूरणीयम्। अवैयर्थ्यम्। अवैयर्थ्येन घटत्वव्यभिचारि-त्वेत्थाविप्रयोक्तुर्न निग्रह इत्यर्थः।

( दी० ) न चाभावस्यानुपाधितापत्तिः, प्रतियोगिनस्तत्-द्वद्वृत्तित्वस्यैव वा हेतुत्वादिति वाच्यम् । तदप्रवेशेऽपि वस्तुतो यत्तदभावस्तस्य तद्वद्वृत्तित्वस्य च हेतुत्वानपायात् । तदभावाभाववद्वृत्तित्वेनोपस्थितावपि तद्वद्वृत्तित्वेनानुपस्थितेर्व्य-भिचारसाधने न वैयर्थ्यमित्यपि वदन्ति ।

( गा० ) न चेति। तथापीति शेषः। अभावस्य। धूमवान् वह्नेरित्या-दौ अयोगोलकत्वाभावस्य। अनुपाधितापत्तिः । उपाधित्वानुपप-त्तिः। तथा च लक्ष्यतावच्छेदकस्य तत्रातिप्रसङ्गो दुर्वार एवेति भावः। प्रतियोगिनः। प्रतियोगितावच्छेदकावच्छिन्नस्य। साध्याभावे साध्ये। तद्वद्वृत्तित्वस्य। तद्वद्वृत्तित्वत्वावच्छिन्नस्य। हेतुत्वात्। साध्यव्य-भिचारसाधने हेतुत्वात्। पञ्चकारस्य प्रतियोगिन इत्यत्रापि सम्ब-

म्येन, साध्याभावसाधने ऽभावाभावत्वावच्छिन्नस्य व्यभिचारसाधने ऽभावव्यभिचारत्वावच्छिन्नस्य वैयर्थ्येन हेतुताव्यवच्छेदात् तद्रूपेण हेतूपन्यासानुपपत्तिः । उपाध्यभावादेर्हेतोरुपाध्यभावत्वाद्विना उपन्यासासम्भवेऽपि येन केनापि रूपेण उपन्याससम्भवादेव उपाधित्वमित्याशयेनाह । तदप्रवेशेऽपीति । हेतुतावच्छेदके उपाधेरप्रवेशेऽपीत्यर्थः । व्यभिचारसाधने वैयर्थ्यं प्रकारान्तरेण परिहर्तां मतमाह । तदभावेति । अनुपस्थितेः । उपस्थित्यनियमात् । न वैयर्थ्यमिति । यद्रूपावच्छिन्नोपस्थितिकाले लघुव्याप्यतावच्छेदकान्तरोपस्थितिनियमः तद्रूपघटकविशेषणस्यैव वैयर्थ्यमिति भावः । उक्तनियमस्याप्रामाणिकत्वात् वदन्तीति ।

**( चि० ) लक्षणं तु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम् । यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नं पर्यवसितं साध्यम् ।**

( दी० ) लक्षणमाह । पर्यवसितेति । पर्यवसितपदार्थमाह । यद्धर्मेति । यद्धर्मवतीत्यर्थः ।

( गा० ) मिश्रैः लक्षणं त्विति लक्षणपदं व्यभिचारोन्नायकताप्रयोजकपरतया व्याख्यातम्, अतः स्वमते तद्यथाश्रुतार्थकमेवेति सूचनायाह । लक्षणमाहेति । यद्धर्मावच्छेदेनेत्यत्र धर्मस्यानतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षणे मित्रातनयत्वादेः श्यामत्वादिसाध्यातिरिक्तवृत्तितया तस्य तादृशधर्मपरत्वाभिमानविरोधः, सामानाधिकरण्यमात्रविवक्षयैवोपपत्तौ अनतिरिक्तवृत्तित्वपर्यन्तविवक्षाया वैफल्यं चेत्यतो व्याचष्टे । यद्धर्मवतीति । सम्बन्धमात्रस्यैवावच्छेदकपदार्थतया विशेषणे तृतीयया धर्मिणीति पूरणेन यद्धर्मसम्बन्धिनीत्यर्थलाभ इति भावः । इत्थं च यद्धर्मवति साध्यं प्रसिद्धं तद्धर्मस्यैव सामानाधिकरण्यसम्बन्धेन साध्यनिष्ठव्याप्यतावच्छेदकत्वसम्भवात् यद्धर्मावछेदेनेत्यादि न लक्षणघटकम्, परन्तु धर्मविशेषपरिचायकमात्रम्, किञ्चिद्धर्मविशिष्टसाध्यव्यापकत्वमेव लक्षघटकमिति ध्येयम् ।

(दी०) नन्वेवं सद्धेतौ सपक्षैकदेशवृत्तिधर्मेऽतिप्रसङ्गः। अथ यद्धर्मावच्छेदेन साधनवति साध्यं प्रसिद्धं तद्धर्मावच्छिन्नसाध्यव्यापकत्वम्,साध्यसाधनसम्बन्धव्यापकत्वमिति यावत्। विरुद्धमात्रे चोपाधिविरहेऽपि न क्षतिः । लक्ष्यतावच्छेदके च साध्यसमानाधिकरणत्वेन साधनं तादृशवृत्तित्वेन वा साधनतावच्छेदकं विशेषणीयम् । साधनव्यापकीभूतधर्मावच्छिन्नसाध्यव्यापकत्वं वा विवक्षितम्। विरुद्धेऽपि साधनव्यापकेनान्ततोऽन्यतरत्वादिनावच्छिन्नस्य साध्यस्य व्यापकत्वमस्त्येवोपाधीनाम् । प्रमेयत्वादिना च वाय्वादौ प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वादिर्नोपाधिः,लक्ष्यतावच्छेदकवाक्यस्यप्रयोजकत्ववाचितृतीयावलाद्व्यभिचारस्थले साधनस्य साध्यव्यभिचारनियम इत्यर्थे पर्यवसानात् । मैवम्, जनकत्वेन वह्नौ कार्यानुकूलत्वाद्यात्मकशक्तिसाधने वहिरिन्द्रियाप्रत्यक्षत्वस्योपाधेर्ग्रन्थकृतैवोद्भावयिष्यमाणत्वात्, तस्य च गुरुत्वात्मकसाध्यस्य साधनस्य चाधिकरणे घटादावृत्तेरुक्तरूपाभावादेवंविधबहुलग्रन्थविरोधात् । दूषकताबीजस्य तत्रापि सम्भवाच्च ।

(गा०) सद्धेतौ । वह्न्यादिसाध्यकधूमादौ । सपक्षैकदेशवृत्तिधर्मे । महानसत्वाद्यवच्छिन्नसाध्यव्यापकव्यञ्जनवत्त्वादौ । सद्धेतौ यावत्साध्याधिकरणवृत्तेः साधनाव्यापकत्वासम्भवादेकदेशेत्युक्तम् । यद्धर्मावच्छेदेन साधनवति साध्यमिति । साधनवद्विशिष्टसाध्यवत्त्वे यो धर्मोऽवच्छेदक इत्यर्थः । अवच्छेदकत्वं चान्यूनवृत्तित्वम्, व्यापकत्वमिति यावत् । महानसत्वादिश्च साधनविशिष्टसाध्याधिकरणपर्वतादाववर्त्तमानतया न तादृशसाध्यवत्त्वव्यापक इति न तदवच्छिन्नसाध्यव्यापकेऽतिप्रसङ्गः। तादृशधर्मावच्छिन्नसाध्यव्यापकत्वस्य साध्यसाधनसम्बन्धव्यापकत्वसमनियतत्वाल्लाघवेन तन्निर्वचनमेवोचितमित्याशयेनाह।साध्येति।

नन्वेव विरुद्धस्थलीयोपाधिमात्र एव अव्याप्तिः, साध्यसामा-

स्यन्धाप्रसिद्धेरित्यत आह । विरुद्धमात्रे चेति । मात्रपदं कृत्स्नार्थकम् । न क्षतेरिति । दुष्टहेतुमात्रस्य सोपाधित्वनियमानभ्युपगमादिति शेषः । तथा चायं गौरश्वत्वादित्यादौ विरुद्धे सास्नादिमत्त्वादिरलक्ष्य एवेति न तत्राव्याप्तिरिति भावः । तस्यालक्ष्यत्वे निरुक्तलक्ष्यतावच्छेदकस्य तत्साधारण्यं दोषायेति लक्ष्यतावच्छेदके तद्व्यावर्त्तनाय विशेषणान्तरं प्रवेशयति । लक्ष्यतावच्छेदक इति । साध्यसमानाधिकरणत्वेन साधनं विशेषणीयमित्यग्रिमेणान्वयः । धूमवान् वह्नेरित्यादौ साध्यसमानाधिकरणमहानसीयवह्न्यादौ साध्योपाध्योर्व्यभिचारासत्त्वात् साध्यसमानाधिकरणसाधने नोपाधिव्यभिचारस्य साध्यव्यभिचारोन्नायकत्वसम्भव इत्याशङ्क्याह । तादृशेति । साध्यसमानाधिकरणवृत्तित्वेनेत्यर्थः । स्वविशिष्टाधिकरणसाध्याधिकरणकत्वेनेति यावत् । तेन गुणवद् द्रव्यान्यत्वे सति सत्त्वादित्यादौ विरुद्धे द्रव्यान्यत्वविशिष्टसत्त्वादेः साध्यसमानाधिकरणगुणसत्त्वादिवृत्तित्वेऽपि न द्रव्यत्वादावतिव्याप्तिः । विरुद्धस्थलीयोपाधिसङ्ग्रहायान्यथोपाधिलक्षणमाह । साधनव्यापकीभूतेति । महानसत्वादेर्धूमाद्यव्यापकतया न व्यञ्जनवत्त्वादावतिप्रसङ्गः । विरुद्धस्थलीयोपाधावेव तद् घटयति । विरुद्धेऽपीति । अन्यतरत्वादिनेति । साधनाधिकरणसामान्यसाध्याधिकरणान्यतरत्वादिनेत्यर्थः । आदिना तदुभयविशेष्यकधीविशेष्यत्वपरिग्रहः ।

नन्वेवं वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ उद्भूतरूपादावव्याप्तिः, साध्यसाधनसम्बन्धस्य साधनव्यापकधर्मावच्छिन्नसाध्यस्य चाधिकरणे आत्मादाववर्त्तमानत्वेन तदव्यापकत्वादिति शङ्कां तस्यालक्ष्यत्वोपगमेन परिहरति । प्रमेयत्वादिनेति । लक्ष्यतावच्छेदकस्य तत्साधारण्यं वारयति । लक्ष्यतावच्छेदकेति । प्रयोजकत्ववाचीति । नियतस्वरूपवैशिष्ट्यवाचीत्यर्थः । यद्व्यभिचारस्थले साधनस्य साध्यनिष्ठव्यभिचारनिरूपकाधिकरण इत्यर्थः । साध्यव्यभिचारनियमः । साध्यव्यभिचारनिरूपकत्वनियमः । तथा च प्रमेयत्वादिनिष्ठोद्भूतरूपादिव्यभिचारनिरूपकाधिकरणात्मगुणादौ साध्यसत्त्वेन तद्व्यभिचारनिरूपकत्वाभावादुक्तस्थलीयोद्भूतरूपादेर्न तादृशत्वमिति भावः । जनकत्वेन । जनकत्वहेतुना । वह्नौ । पक्षे । कार्यानु-

कूलेत्याद्यारम्भकेति । स्वकार्यानुकूलाद्विष्ठातीन्द्रियधर्मात्मकशक्तेः
तादृशधर्मत्वेन साधन इत्यर्थः । शक्तिरूपपदार्थान्तरस्यैव तस्य
वह्न्यादिकार्यदाहाद्यनुकूलत्वासिद्धेरप्युद्देश्यतया स्वकार्यानुकूलत्वं
धर्मस्य विशेषणम् । स्थितिस्थापकस्य पृथिवीमात्रवृत्तित्वमत इद-
मनुमानम् । अतो न क्रियारूपकार्यानुकूलतद्धर्मवत्त्वेन सिद्धसाधनम् ।
। केचित्तु दाहजनकत्वेन हेतुना दाहानुकूलधर्मसमवायित्वं सा-
ध्यम्, अतो न क्रियानुकूलस्थितिस्थापकेन सिद्धसाधनम्, यो
यत्कार्यजनकः स तदनुकूलाद्विष्ठातीन्द्रियधर्मसमवायीति सामा-
न्यमुखी व्याप्तिः, आत्मनो दाहाजनकत्वेऽपि सुखादिजनकतया त-
दनुकूलादृष्टात्मकाद्विष्ठातीन्द्रियधर्मवत्तया च दृष्टान्ततानिर्वाहः । उ-
भयमत एवानुकूलत्वस्य जनकजनकतावच्छेदकसाधारणतया अदृ-
ष्टस्य जनकत्वेन सुखाद्यनुकूलतया दृष्टान्ते शक्तेश्च वह्निनिष्ठदाह-
जनकतायामवच्छेदकत्वेन दाहानुकूलतया पक्षे साध्यवत्त्वनिर्वाह
इत्याहुस्तन्न । सामान्यमुखव्याप्त्यादरे यत्त्वतत्त्वाननुगमेन व्याप्ति-
ग्रहस्यैव प्रकृतानुमानोपयोगितया बहिरिन्द्रियाप्रत्यक्षत्वस्य पतन-
जनके पतनानुकूलगुरुत्ववति वा शरीरेऽपि सुखाद्यनुकूलातीन्द्रिय-
धर्मरूपसाध्यव्यापकतया शरीरादौ सुखादिजनकत्वरूपसाधनाव्या-
पकतया च सुखादिघटितसाध्यव्याप्तिविघटकतया दुर्वारतया
प्रत्यावियोधनिर्वाहात् एतद्ग्रन्थासङ्गतेः । अन्यथा वह्नौ स्थि-
तिस्थापकोपगमपक्षे वक्ष्यमाणरीत्या लक्षणपरिष्कारेऽप्यगुरुत्व-
रूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वेन बहिरिन्द्रियाप्रत्यक्षत्वस्य
उपाधित्वसमर्थनं नोपपद्यते, तेजस्यगुरुत्वावच्छिन्नक्रियानुकूल
स्थितिस्थापकरूपसाध्यसत्त्वेन तादृशसाध्याव्यापकत्वात् । वह्नि
कार्यदाहानुकूलादृष्टवदात्मसंयोगेन सिद्धसाधनवारणाय द्विष्ठत्व
विशेषणम् । दाहानुकूलोष्णस्पर्शेन सिद्धसाधनवारणायातीन्द्रि
येति । उक्तरूपाभावात् । साध्यसाधनसम्बन्धव्यापकत्वाभावात् ।

नतु पक्षावृत्तित्वे सति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमिति
सत्प्रतिपक्षोन्नायकत्वेन दूषकतावादिनामुपाधिलक्षणाभिप्रायेण त
दुग्रन्थसङ्गतिः, व्यभिचारोन्नायकत्वेन दूषकतावादिनां चैतल्लक्षणम्
तन्मते च दर्शितोपाधीनामलक्ष्यतैवेत्यत आह । दूषकतेति । दूष
कताबीजस्य । व्यभिचारोन्नायकत्वस्य । सत्त्वेन तन्मतेऽप्यलक्ष्य

त्वायोगात् ।

(दी०) अत्राहुः यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वम्, अवच्छेदकत्वं च सामानाधिकरण्येन । न चैतद्घटोत्पत्तिकालीनत्वसामानाधिकरण्यविशिष्टरूपवति तद्घटेऽवर्तमानमपि तद्घटान्यत्वं तद्व्यापकम्, येन पृथिवीत्वेन रूपे साध्ये तद्घटोत्पत्तिकालावच्छिन्नरूपव्यापकतयोपाधिस्स्यात् । स्वानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं वा ।

(गा०) यद्धर्मावच्छिन्नेति । अवच्छिन्नत्वं विशिष्टत्वम् । महानसत्वादिविशिष्टवह्न्यादिव्यापकव्यञ्जनवत्त्वादेः तद्विशिष्टधूमादिकं प्रत्यपि व्यापकत्वान्नोक्तातिप्रसङ्गः ।

नन्वेवं रूपवान् पृथिवीत्वादित्यत्र तद्घटान्यत्वादिकमुपाधिस्स्यात्, आधेयतासम्बन्धेन एतद्घटोत्पत्तिक्षणविशिष्टस्य आश्रयतासम्बन्धेनैतद्घटोत्पत्तिक्षणवृत्तित्वविशिष्टस्य वा रूपस्य एतद्घटे सत्त्वेन तद्विशिष्टरूपं प्रति एतद्घटान्यत्वस्य व्यापकत्वात्तादृशविशेषणविशिष्टस्य पृथिवीत्वस्य तद्घटेऽपि सत्त्वेन तद्विशिष्टमपि पृथिवीत्वं प्रति तस्याव्यापकत्वादिति प्रगल्भोक्तदूषणोद्धाराय मिश्रसमाधानमुपन्यस्यति । अवच्छेदकत्वं चेति । अवच्छेदकत्वं विशेषणत्वम् । सामानाधिकरण्येनेति । तथा च सामानाधिकरण्यसम्बन्धेन यद्धर्मविशिष्टसाध्यव्यापकत्वं तेन सम्बन्धेन तद्धर्मविशिष्टसाधनाव्यापकत्वमित्यर्थः । तावता न तद्दोष इति स्फुरयति । न चेति । न हीत्यर्थः । एतद्घटोत्पत्तिकालीनत्वसामानाधिकरण्यविशिष्टरूपवतीति । सामानाधिकरण्यसम्बन्धेन एतद्घटोत्पत्तिक्षणवृत्तित्वविशिष्टरूपवतीत्यर्थः ।

न चोत्पत्तिक्षणवृत्तित्वविशिष्टस्य घटोत्पत्तिक्षण एव सत्त्वात् रूपस्य, तदानीमसत्त्वात् सर्वथैव विशेषणविशेष्ययोरेकतराभावसत्त्वात् विशिष्टाभाव इति नैतद्घटस्य विशिष्टरूपवत्त्वमिति वाच्यम् । एकक्षणावच्छिन्नत्वाविशेषितसामानाधिकरण्यसम्बन्धेन एकविशिष्टापराधिकरणताया भिन्नकालावच्छेदेन विशेषणविशेष्योभयवत्यपि स्वीकारात् । विवेचनीयमिदमग्रे ।

अथ वा सामानाधिकरण्येनावच्छेदकत्वमित्यस्य सामानाधिकरण्यविशेषणतया धर्मस्यावच्छेदकत्वं विवक्षणीयमित्यर्थः। एवं च यद्धर्मसामानाधिकरण्यविशिष्टसाध्यव्यापकत्वं तद्धर्मसामानाधिकरण्यविशिष्टसाधनाव्यापकत्वमित्यर्थः। इत्थं च सामानाधिकरण्यविशिष्टरूपघटीति लिखनमपि यथाश्रुतमेव सङ्गच्छते। तथा च यद्धर्मसामानाधिकरण्येत्यत्र यद्धर्मोपलक्षितधर्मिवृत्तित्वमेव विवक्षितमित्येतद्घटादस्यापलक्षणवृत्तित्वोपलक्षितधर्मिवृत्तित्वविशिष्टरूपवत्त्वमेव तद्घटेऽव्यक्षतमिति, न तद्विशिष्टरूपव्यापकत्वमेतद्घटान्यत्वस्येति नातिव्याप्तिः। तद्व्यापकमिति। उक्तविशेषणविशिष्टरूपव्यापकमित्यर्थः। धर्मस्याननुगततया यत्त्वतत्त्वाभ्यां प्रवेशे एकस्याप्युपाधेस्तात्तानाधर्मभेदेन उपाधित्वं भिद्यत इति स्वयमन्यत् सद्धेतुस्थलीयसाध्यसामानाधिकरण्याव्यावृत्तलक्षणमाह। स्वानधिकरणीभूतेति। स्वमुपाधित्वेनाभिमतधर्मः।सद्धेतो व्यञ्जनवत्त्वाद्यनधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यस्य तदनधिकरणे अवश्यं सत्त्वान्न तस्य तादृशधर्मावच्छिन्नसाध्यव्यापकतासम्भव इति नातिव्याप्तिः। साधनाव्यापकत्वस्यात्र पृथक्प्रवेशो व्यर्थः,साधनाधिकरणस्य साधनव्यापकधर्मानधिकरणस्याप्रसिद्ध्यैव साधनव्यापकस्य उपाधित्ववारणादतो न तन्निवेशितम्। साधनवतः स्वानधिकरणत्वलाभायैव मूले साधनाव्यापकत्वोपादानमित्याशयः। इत्थं सत्त्वादित्यादौ सत्त्वाद्यनधिकरणसाधनाधिकरणाप्रसिद्धावपि सत्त्वादेर्विशिष्टसत्त्वादिना उपाधित्वनिर्वाहाय यद्धर्मावच्छिन्नस्योपाधित्वमभिमतं तद्विशिष्टानधिकरणत्वं निवेश्यम्। इत्थं विशिष्टसत्त्वादित्यादौ गुणादेरुपाधितावारणाय साधनतावच्छेदकविशिष्टानधिकरणत्वं विवक्षणीयम्। स्वानधिकरणवृत्तिधर्मव्यापकतायाः स्वस्मिन्नसम्भवात् तादृशधर्मविशिष्टसाध्यव्यापकत्वनिवेशः। यादृशधर्मो विशिष्योपादाय तादृशधर्मत्वेन निवेशे साध्याधिकरणमात्रस्यैव तादृशमेयत्वादिविशिष्टसाध्याधिकरणतया शुद्धसाध्यव्यापकोपाध्यसङ्ग्रहात्। साध्यपदं विशिष्टसाध्यपरम्, तेन श्यामत्वविशिष्टसत्त्वाश्मित्रातनयत्वादित्यादौ गौरमित्रातनयादेस्साध्यवत्त्वेऽपि न तद्वृत्तिशाकपाकजत्वादेरसङ्ग्रहः। वह्निमान् धूमादित्यादौ व्यञ्जनवत्त्वानधिकरणपर्वतादिवृत्तिद्रव्यत्वादिसमानाधिकरणवह्न्यादेः समा-

नाधिकरणव्यञ्जनवत्त्वादावतिव्याप्तिवारणाय तादृशसाध्यसामानाधिकरण्यमुपेक्ष्य व्यापकत्वनिवेशः । यद्धर्मविशिष्टानधिकरणत्वं साधनवतस्तेन रूपेण व्यापकत्वं बोध्यम्, तेन प्रमेयत्वादिना व्यापकत्वमादाय न व्यञ्जनवत्त्वायतिव्याप्तिः ।

(दी०) यद्यपि शुद्धसाध्यव्यापकस्थलेऽवच्छिन्नसाध्यत्वेन न व्याप्यता, तथापि तद्धर्माधिकरणीभूतसाध्याधिकरणनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वादिरूपं तद्व्यापकत्वमक्षतमेव । गुणत्वादिना प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वं द्व्यणुकजन्यत्वाद्यवच्छिन्नसाध्यव्यापकं भवत्येवोपाधिः । एवं च यत्रैव स्वानधिकरणे साधनस्य साध्यव्यभिचारो यत्र च स्वाधिकरणे साध्यं तदुभयमात्रवृत्तिर्यो धर्मस्तद्वति व्यभिचारेण साधने साध्यव्यभिचारस्साधनवति वा तद्धर्मवत्त्वे सति तदभाववत्त्वेन साध्याभावस्साधनीयः । साध्यासमानाधिकरणस्य साध्यव्यापकाभावस्य वाऽधिकरणं यत्साधनवत्त्वनिष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसाध्यसमानाधिकरणवृत्तिधर्मवत्त्वमुपाधित्वम् ।

(गा०) ननु शुद्धसाध्यव्यापकार्द्रेन्धनादौ अयोगोलकमहानसान्यतरत्वादिरूपतादृशधर्मावच्छिन्नसाध्यव्यापकतामादाय लक्षणं सङ्गमनीयम्, तच्च न सम्भवति, शुद्धधूमत्वादेरेव तद्व्याप्यतावच्छेदकत्वसम्भवेन विशिष्टधूमत्वादेर्व्याप्यतानवच्छेदकतया तत्र विशिष्टव्यापकत्वानुपपत्तेरित्याशङ्कां परिहरति । यद्यपीति । अवच्छिन्नसाध्यत्वेन । विशिष्टधूमत्वादिना । तद्व्यापकत्वम् । तद्धर्मविशिष्टसाध्यव्यापकत्वम् । अक्षतमेवेति । तथा च तादृशमेव व्यापकत्वं विवक्षितम्, न तु विशिष्टसाध्यतावच्छेदकावच्छिन्नव्याप्तिनिरूपकत्वमिति नाव्याप्तिरिति भावः ।

ननु घटरूपं प्रत्यक्षं गुणत्वादित्यादौ शुद्धस्य साधनावच्छिन्नस्य पक्षधर्मावच्छिन्नस्य च साध्यस्य व्यापके उद्भूतरूपेऽतिव्याप्तिः, तस्यापि स्वानधिकरणीभूतसाधनाधिकरणद्व्यणुकरूपादिवृत्तिद्व्यणुक-

जन्यत्वादिरूपपक्षधर्मविशिष्टप्रत्यक्षत्ववति नियमतः सत्त्वेन तद्विशिष्टसाध्यव्यापकत्वादित्याशङ्कां लक्ष्यतया परिहरति। गुणत्वादिनेति।

केचित्तु उक्तस्थले उद्भूतरूपे कथमुक्तलक्षणसमन्वयः, तादृशोपाधिव्याप्यतावच्छेदकबहिर्द्रव्यत्वादेस्साधनाधिकरणवृत्तित्वात् स्वानधिकरणेत्यादिना तदुपादानासम्भवात्, अतो यादृशधर्मावच्छिन्नसाध्यव्यापकतया तत्र लक्षणसमन्वयस्तं दर्शयति। गुणत्वादिनेति। साध्यव्यापकमित्यनन्तरमत्र इति पूरणीयम्। उपाधिरिति। उक्तोपाधिलक्षणाक्रान्त इत्यर्थं इत्याहुः।

साध्यसाधनयोरेकरूपेणोपाधिव्याप्यत्वाव्याप्यत्वस्य उपाध्यनधिकरणसाधनवद्वृत्तिधर्मावच्छिन्नसाध्यव्यापकताया वा लक्षणघटकत्वे यादृशधर्मो लक्षणघटक अनुगतोक्त्या तं दर्शयन् तादृशधर्मवत्युपाधिव्यभिचारेण शुद्धसाध्यव्यभिचारानुमानस्य सर्वत्र सम्भवं दर्शयति। एवं चेति। यत्र स्वानाधिकरणे साधनस्य साध्यव्यभिचार इति। स्वाभावसाध्याभावोभयाधिकरणे यत्साधनवदित्यर्थः। अत्राग्रे च स्वमुपाधिः। तादृशमधिकरणं श्यामो मित्रातनयत्वादित्यादौ गौरमित्रातनयः। यत्र च स्वाधिकरणे साध्यमिति। साध्योपाध्युभयाधिकरणे यदित्यर्थः। तादृशमधिकरणं श्याममित्रातनयः। तदुभयमात्रवृत्तिः। मित्रातनयत्वादिः। तद्वति व्यभिचारेण। उपाध्यभावाधिकरणतद्धर्मवद्वृत्तित्वेन। साधने। पक्षे। साध्यव्यभिचारः, साधनीय इत्यग्रिमेणान्वयः। साधनवति। पक्षे। तद्धर्मवत्त्वे सति तदभाववत्त्वेन। तद्धर्मविशिष्टोपाध्यभाववत्त्वेन। उक्ताधिकरणद्वयवृत्तिद्रव्यत्वादिकमपि तद्वत्युपाधिव्यभिचारादिव्यभिचारेण न साध्यस्य व्यभिचारसाधकमिति मात्रपदोपादानम्, तेन च तदधिकरणभिन्न यदुपाधिशून्यसाध्याधिकरणं तद्वृत्तित्वमेव व्यवच्छेद्यम्, तद्वृत्तिधर्मे तद्वत्युपाधिव्यभिचारस्यान्ततः साध्य एव, साध्यव्यभिचारित्वात् तदधिकरणभिन्नाधिकरणस्य साध्यशून्यस्योपाधिमतः साध्योपाधिसाधनशून्यस्य च सम्भवेऽपि तद्वृत्तित्वस्य व्यवच्छेदोऽविवक्षितः, तत्साधारणधर्मस्याधिकरणे तत्रोपाधिव्यभिचारस्य साध्यव्यभिचारित्वाप्रसक्तेः, उभयोरेव साध्यशून्यतया साध्यव्यभिचारानिरूपकत्वात्, प्रथमान्तमात्रेण उपाधिव्यभिचाराप्रसिद्धेश्च। एवं च वायुः प्रत्यक्षः

प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ प्रत्यक्षत्वशून्योद्भूतरूपोपाधिमत परमाण्वादौ तृतीयशून्यगगनादौ वर्त्तमानस्य वहिर्द्रव्यत्वादेरपि सङ्ग्रहः, एव चोपाधिशून्यसाध्यवद्वृत्तित्वरूपविशेषणाक्रान्ते साध्याभावोपाध्यभावसाधनैतत्त्रितयाधिकरणवृत्तित्वविशेषणे साध्याभावप्रवेशो ऽनर्थकः, उपाध्यभावाधिकरणस्य साध्याभावशून्यत्वे तद्वृत्तेरुपाधिशून्यसाध्यवद्वृत्तित्वासम्भवेन तादृशविशेषणाक्रान्तधर्माधिकरणे उपाध्यभावसत्त्वे साध्याभावसत्त्वनियमादिति ।

यत्र स्वानधिकरणे साधनस्य साध्यव्यभिचार इत्यस्य उपाध्यनधिकरण यत्साधनवदित्येवार्थः, तथा यत्र स्वाधिकरण साध्यमित्यत्रापि साध्याधिकरणमात्र विवक्षितम्, उक्तविशेषणाक्रान्तधर्मस्याधिकरणे साध्याधिकरणत्वसत्त्वे उपाधेरावश्यकत्वात्, अन्यथा वृत्तित्वान्तविशेषणव्याघातात् । तथा च व्यवच्छेद्यविशेषणतयैव तदुपादानम् । उपाध्यनधिकरणसाध्यवद्वृत्तित्वे सत्युपाध्यनधिकरणसाधनाधिकरणसाध्याधिकरणोभयवृत्तिधर्म एव विवक्षितः । सत्यन्तमध्य उपाध्यनधिकरणत्वस्य साध्यवद्विशेषणत्वे साध्याधिकरणमादायोभयवृत्तौ साध्याधिकरणवृत्तित्वाप्रसिद्धिस्स्यादिति तदुपादानम् । उपाध्यनधिकरणवृत्तित्वमात्रविशेषणेऽप्यसिद्धिः, उपाध्यनधिकरणसाधनाधिकरणवृत्तौ तदसम्भवात्, अतो अवृत्तित्वप्रतियोगिकोटौ साध्यवत्त्वनिवेशः । उद्भूतरूपाद्यनधिकरणप्रत्यक्षत्वाश्रयावृत्तिघटत्वादिमति, तादृशोपाधिव्यभिचाराप्रसिद्धया तद्धर्मव्यावृत्तये उपाध्यनधिकरणसाधनाधिकरणवृत्तित्वनिवेशः । साधनशून्योपाध्यनधिकरणसाध्याश्रयघटादावुभयवृत्तिगगनघटान्यतरत्ववत्युपाधिव्यभिचारस्य, प्रत्यक्षस्पर्शादिरूपसाधने ऽसिद्धिः, अत उपाध्यनधिकरणे साधनाधिकरणत्वविशेषणम् । उपाधिमत्साधनाधिकरणवृत्तित्व न घटत्वादिव्यावर्त्तकम्, अत उपाध्यनधिकरणत्वनिवेशः । उद्भूतरूपानधिकरणसाधनाधिकरणवृत्तिवायुत्वादिमत्युपाधिव्यभिचारेण साध्यव्यभिचारसाधने वायुत्वादिमद्वृत्तित्वस्यैव हेतुतासम्भवेनोपाधिव्यभिचारघटकोपाध्यभावांशवैयर्थ्यमिति तत्सार्थक्याय साध्याधिकरणवृत्तित्वोपादानम् ।

उक्तलक्षणे स्वत्वेनोपाध्युपादानात् तदननुगमेन साध्यसाध-

नभेदेनेव उपाधिभेदादप्युपाधित्वं भिद्यते इति तदसहिष्णुतया एकसाध्यसाधनकसकलोपाधिसाधारणमनुगतमुपाधित्वमाह । सा-ध्यासमानाधिकरणस्येति । धूमाद्यधिकरणावृत्त्ययोगोलकत्वादेः श्यामत्वाद्यधिकरणावृत्तिगौरामित्रातनयत्वादेश्च अधिकरणं साध-नाधिकरणायोगोलकगौरमित्रातनयादिः, तन्निष्ठस्य प्रतियोगिताव-च्छेदकविशिष्टप्रतियोगिव्यधिकरणस्यार्द्रेन्धनशाकपाकजत्वादेरभा-वस्य प्रतियोगितावच्छेदकं साध्यसमानाधिकरणवृत्ति आर्द्रेन्धन-त्वशाकपाकजत्वादिकम्, तदादाय सर्वत्र लक्षणसमन्वयः । सद्धेतौ साध्यासमानाधिकरणाधिकरणसाधनाधिकरणाप्रसिद्ध्या व्यञ्जनय-त्वादौ नातिप्रसङ्गः । तदर्थमेव साधनवति साध्यासमानाधिकर-णाधिकरणत्वं विशेषणम् । यद्यपि साध्यानधिकरणत्वं निवे-श्यापि तद्वारणं सम्भवति, तथापि तथा सति उपाधि-लक्षणज्ञानस्येव हेतौ साध्यानधिकरणवृत्तित्वरूपव्यभिचारविषय-कतया उपाधित्वज्ञानानन्तरमुपाधिना व्यभिचारानुमानमनर्थकमा-पद्येतेति तदुपेक्ष्य गुर्वप्युक्तविशेषणमादृतम् । अत्रोपाधित्वघटकेन साध्यासमानाधिकरणधर्मेणापि हेतुना साधनवति साध्याभावसिद्ध्या व्यभिचारः सिद्ध्यतीति वक्ष्यते,तत्र तादृशधर्मेणापि साध्याभावसाधने तादृशधर्मे साध्याभावस्य व्याप्त्यन्तरज्ञानमपेक्षितमतो यादृशविशे-षणेन साध्याभावसाधने न व्याप्त्यन्तरज्ञानमपेक्षितं तादृशं वैकल्पिकं विशेषणान्तरमाह । साध्यव्यापकाभावस्येति । सद्धेतौ साधनवति साध्यव्यापकाभावस्यासत्त्वात् न व्यञ्जनवत्त्वादावतिप्रसङ्गः । साधन-पदं साधनतावच्छेदकविशिष्टार्थकम्, नातो द्रव्यं गुणकर्मान्यत्व-विशिष्टसत्त्वादित्यादौ घटत्वादावतिप्रसङ्गः न वा द्रव्यं गुणान्यत्वे सति सत्त्वादित्यादौ साधनव्यापकगुणान्यत्वादौ । धूमवान् वह्नेः पृथिवी द्रव्यत्वादित्यादौ संयोगादिवारणाय व्यधिकरणान्तम् । द्रव्यं जातेरित्यादौ विशिष्टसत्त्वाद्युपाधिसङ्ग्रहाय प्रतियोगिताव-च्छेदकावच्छिन्नेति ।

न च साधनवति स्वप्रतियोगितावच्छेदकावच्छिन्नानाधिकरण-त्वनिवेशे तत्तदुपाध्यभावस्य स्वपदेनोपादानात् तदननुगमेन सक-लोपाधिसाधारणमीदृशोपाधित्वमपि न सम्भवतीति वाच्यम् । सा-धनवन्निष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वेन प्रतियो-

गितानामनुगमसम्भव- इत्याशयात् । साध्यविरुद्धजलत्वादेरुपाधितावारणाय साध्यसमानाधिकरणवृत्तित्व धर्मविशेषणम् । धर्मिणि साध्यसामानाधिकरण्यनिवेशे साध्यासमानाधिकरणार्द्रेन्धनादिव्यक्तीनामसङ्ग्रहप्रसङ्गात् न तन्निवेशितम् ।

न चैवमपि जलवृत्तित्वविशिष्टद्रव्यत्वादावतिप्रसङ्गो दुर्वारः, स्वविशिष्टाधिकरणसाध्याधिकरणकत्वेन धर्मविशेषणे स्वत्वाननुगमात् सकलोपाधिसाधारण्यानिर्वाह इति वाच्यम् । साध्यवन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वस्य विवक्षणीयत्वात् ।

(दी०) एवं च साध्यसमानाधिकरणत्वेनैव साध्यवदवृत्तिवारणसम्भवे पर्यवसितसाध्यव्यापकत्वाभिधानं तु व्यापकाभावेन व्याप्याभावस्यावश्यम्भावप्रदर्शनार्थम् । तत्साध्यकतत्साधनकसकलोपाधिसाधारणं चेदम् । साध्यव्यापकत्वसाधनाव्यापकत्वावच्छेदकरूपानतिरिक्तवृत्तिसाध्यसमानाधिकरणयत्किञ्चिद्धर्मव्यापकत्वावच्छेदकरूपवत्त्वमुपाधित्वम् । अवच्छिन्नसाध्यव्यापकोपाधौ चान्ततस्साध्योपाधिशून्या साधनवती या व्यक्तिस्तद्वृत्तित्वमेव तादृशं रूपमित्यपि वदन्ति । रूपादिसाध्यकद्रव्यत्वादिहेतौ पृथिवीत्वाभावादेरुपाधितापक्षे तु स्वविशिष्टसाध्यानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वम् । अत्र च पूर्वदलप्रविष्टा या साधनव्यक्तिस्तदव्यापकत्वं बोध्यम्, तेन रूपादिना गुरुत्वादौ साध्ये पृथिवीत्वाभावादौ नातिप्रसङ्गः । विवेचयिष्यते चेदमुपरिष्टात् ।

(गा०) उक्तविशेषणेन लघीयसा विरुद्धवारणात् तन्मात्रवारणप्रयोजनकपर्यवसितसाध्यव्यापकत्वाप्रवेशात् मूलविरोधमुद्धरति । एव चेति । व्यापकाभावेनेति । उपाधेः पर्यवसितसाध्यव्यापकतया तदभावे तादृशसाध्याभावस्यावश्यम्भावेन तेन साधनवति साध्याभावो वक्ष्यमाणरीत्या साधयितु शक्यते इत्युपाधेर्व्यभिचारोन्नायकतां स्फुटीकर्तुमित्यर्थः ।

तत्साध्यकेति । तत्संसर्गकेत्यपि बोध्यम् । उपाधिताघटकसम्बन्धेन प्रतियोगिवैयधिकरण्यस्यावश्यं निवेशनीयतया विशिष्य तादृशसम्बन्धनिवेशावश्यकत्वात् । मूलानुसारेण साध्यव्यापकत्वसाधनाव्यापकत्वघटितमपि लक्षणान्तरमाह । साध्येति । साध्यव्यापकत्वसाधनाव्यापकत्वयोरवच्छेदकं यद्रूपं तदनतिरिक्तवृत्ति यत्साध्यसमानाधिकरणयत्किञ्चिद्धर्मव्यापकतावच्छेदकं रूपं तद्वत्त्वमित्यर्थः । सद्धेतौ साध्यव्यापकतावच्छेदकसाधनाव्यापकतावच्छेदकरूपाप्रसिद्ध्या नातिप्रसङ्गः । आर्द्रेन्धनाद्युपाधौ तादृशार्द्रेन्धनत्वादेरेवानतिरिक्तवृत्त्यार्द्रेन्धनत्वादिकम्, शाकपाकजत्वादौ तु तादृशगौरमित्रातनयावृत्तित्वाद्यनतिरिक्तवृत्ति शाकपाकजत्वादिकमादाय लक्षणसमन्वयः । शाकपाकजत्वादेस्साध्यव्यापकतानवच्छेदकत्वात् तत्सङ्ग्रहाय तादृशरूपानतिरिक्तवृत्तित्वनिवेशः । तदनतिरिक्तवृत्तित्वं च न तच्छून्यावृत्तित्वम्, तथा सति द्रव्यं सत्त्वादित्यादौ तादृशविशिष्टसत्तात्वादिरूपशून्यावृत्तिसत्तात्वाद्यवच्छिन्नस्योपाधिताप्रसङ्गात्, अपि तु स्वविशिष्टव्यापकतावच्छेदकतादृशधर्मकत्वम् । धूमादिसाध्यके व्यभिचारिणि साध्यविरुद्धजलवृत्तित्वविशिष्टद्रव्यत्वादिवारणाय साध्यसमानाधिकरणेत्यादि । शाकपाकजत्वादेः साध्यसामानाधिकरण्यविशिष्टधर्मसामान्यं प्रति व्यापकतानवच्छेदकत्वात् यत्किञ्चिदिति । तथा च साध्यवद्यत्किञ्चिन्निष्ठाभावप्रतियोगितानवच्छेदकत्वमवच्छेदकान्तार्थः ।

यद्यपि साध्यवन्निष्ठाधिकरणतानिरूपकतावच्छेदकत्वमेव तदपेक्षया लघु, उक्तस्थले विशिष्टद्रव्यत्वादेरव्यावृत्तेश्च, तथापि, विशिष्टद्रव्यत्वादिवारकप्रकारान्तरप्रदर्शनायैव तदुक्तम् । साध्यवन्निष्ठाधिकरणत्वनिरूपकतावच्छेदकत्वमेव वा तात्पर्यम्, अवच्छिन्नसाध्यव्यापकोपाधौ साध्यव्यापकत्वसाधनाव्यापकतावच्छेदकतया यादृशं रूपमादाय लक्षणं सङ्गमनीयं तादृशरूपमनुगतीकृत्य, दर्शयति । अवच्छिन्नेति । उपाधिशून्या साध्यसाधनवती या व्यक्तिः तदवृत्तित्वं न साध्यव्यापकतावच्छेदकम्, साध्यशून्याप्युपाधिमती या व्यक्तिः तदवृत्तित्वानतिरिक्तवृत्ति नोपाधितावच्छेदकम्, तादृशं साधनशून्या या व्यक्तिः तदवृत्तित्वं साधनव्यापकतावच्छेदकमेवेति साध्यशून्यत्वादित्रयोपादानम् । तदवृत्तित्वमित्युपलक्षणम् । नियता-

रूपादीनि। स्वविशिष्टेति । वाय्वादेः रूपात्मकसाध्यानधिकरणत्वेन पृथिवीत्वाभावाधिकरणत्वेऽपि तद्विशिष्टसाध्यानधिकरणतया तादृशसाधनाधिकरणवृत्तिवायुजलान्यतरत्वाद्यवच्छिन्नसाध्यव्यापकतया उक्तस्थले पृथिवीत्वाभावादिसङ्ग्रहः। साधनाधिकरणे च स्वविशिष्टत्वाविशेषितसाध्यानधिकरणत्वनिवेशे उपाधिशरीरे व्यभिचारप्रवेशात् तज्ज्ञानस्य व्यभिचारभाननियततया उपाधित्वज्ञानानन्तरं व्यभिचारानुमानस्यानुपपत्तिः। कथञ्चिदुपपत्तावपि वैयर्थ्यमतः स्वविशिष्टत्व -साध्यविशेषणम्। अखण्डाभावघटकतया न तद्वैयर्थ्यम्। स्वानधिकरणत्वस्थाने स्वविशिष्टसाध्यानधिकरणत्वनिवेशे साधनव्यापकमपि तादृशं सम्भवति, द्रव्यत्वादेः स्वविशिष्टधूमाद्यनधिकरणवह्न्यधिकरणायोगोलकादिवृत्तिधर्मावच्छिन्नधूमादिव्यापकत्वादतोऽत्र साधनाव्यापकत्वस्यापि निवेशः।

नन्वेवमिदं गुरु रूपादित्यादावपि पृथिवीत्वाभावादेरुपाधितापत्तिः, पृथिवीत्वाभावविशिष्टगुरुत्वानधिकरणतेजोवृत्तिजलतेजोन्यतरत्वावच्छिन्नगुरुत्वव्यापकत्वात् पृथिव्यां रूपाव्यापकत्वाच्चेत्यत आह। अत्र चेति। पूर्वदलप्रविष्टेति। साधनतावच्छेदकविशिष्टयत्साधनव्यक्त्यधिकरणं यत्स्वविशिष्टसाध्यानधिकरणं तदधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनतावच्छेदकविशिष्टतद्व्यक्त्यव्यापकत्वं विवक्षणीयमित्यर्थः। नातिप्रसङ्ग इति। तैजसरूपव्यक्तीनां अधिकरणमेव पृथिवीत्वाभावविशिष्टगुरुत्वानधिकरणत्वेनोपादाय तद्वृत्तिधर्मावच्छिन्नसाध्यव्यापकतायाः पृथिवीत्वाभावे सम्पादनीयत्वात् तद्व्यक्त्यव्यापकतायाः पृथिवीत्वाभावस्याऽऽवश्यकत्वादिति भावः। द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ पृथिवीत्वविशिष्टद्रव्यत्वाद्यनधिकरणसत्ताधिकरणगुणादिवृत्तिगुणघटान्यतरत्वावच्छिन्नसाध्यव्यापके गुणाद्यन्यत्वविशिष्टसत्त्वविशिष्टसत्ताव्यक्त्यव्यापके च पृथिवीत्वादावतिव्याप्तिवारणाय प्रथमं विशिष्टान्तम्। इदं गुरु रूपविशिष्टद्रव्यत्वादित्यादौ पूर्वदलप्रविष्टद्रव्यत्वाद्यात्मकसाधनव्यक्तिरूपवैशिष्ट्यानवच्छिन्नं प्रति पृथिवीत्वाभावस्याव्यापकतया अव्याप्तिवारणाय द्वितीयं विशिष्टान्तम्।

ननु रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभावाद सङ्ग्राहाये इदं गुरु रूपादित्यादौ तदसङ्ग्राह्यतायां किं बीजमित्यत आह।

विवेचयिष्यते इति । रूपवान् द्रव्यत्वादित्यादौ हेतोरेकव्यक्तिकतया यत्र हेतावुपाधिव्यभिचारः तत्रैव साध्यव्यभिचार इत्युपदर्शितविशेषणावच्छिन्नोपाधिव्यभिचारस्य हेतौ साध्यव्यभिचारानुमापकत्वसम्भवः, इदं गुरु रूपादित्यादौ च विभिन्नयोस्तैजसपार्थिवरूपादिव्यक्त्योरेव गुरुत्वादिसाध्यपृथिवीत्वाभावव्यभिचारयोः सत्त्वेन विशेषणविशेषं निवेश्य व्यभिचारजारणसम्भवेऽपि व्यधिकरणयोरन्यतरस्य दुष्परिहरतया हेतौ पृथिवीत्वाभावस्य साध्यव्यभिचारानुमापकत्वासम्भव इति विशेषो वक्ष्यत इत्यर्थः ।

( दी० ) साध्यासमानाधिकरणधर्मस्य साध्यव्यापकाभावस्य वा समानाधिकरणं यत्साधनं तद्वन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसाध्यसमानाधिकरणवृत्तिधर्मवत्त्वं वा । एवं चावगते साधनवति साधने वा साध्यासमानाधिकरणधर्मादिना तत्सामानाधिकरण्येन वा साध्याभावो व्यभिचारो वा शक्यते ज्ञातुमिति ध्येयम् । उपाधिशरीरभानस्य साधननिष्ठसाध्याव्यभिचारादिविषयत्वसहिष्णुतायां तु साध्यव्यभिचारित्वेन साध्याव्याप्यत्वेन वा साधनं विशेषणीयम् ।

( गा० ) तत्साध्यकतत्साधनकसकलोपाधिसाधारण साध्यासमानाधिकरणधर्मस्येत्यादिलक्षणमुक्तोपाधिसङ्ग्रहाय परिष्करोति । साध्येति । वाय्वादौ रूपाद्यसमानाधिकरणवायुत्वादेरुपाधिव्यापकतावच्छेदकवायुभेदाद्यवच्छिन्नाभावस्य च समानाधिकरण यत्साधन द्रव्यत्वादिक ताद्दशधर्मसमानाधिकरण्योपलक्षिततदधिकरणे पृथिव्यादौ पृथिवीत्वाभावत्वावच्छिन्नाभावसत्त्वात् पृथिवीत्वाभावे लक्षणसमन्वयः । इदं गुरु रूपादित्यत्र साध्यासमानाधिकरणतेजस्त्वसमानाधिकरण यद्रूपं तद्वति तेजसि तदभावासत्त्वान्न तस्योपाधिता । अन्यत्सर्वं पूर्ववत् । एव चावगते इति । साध्यासमानाधिकरणधर्मेत्यादिना निरुक्तोपाधित्वेनोपाधौ गृहीत इत्यर्थः । उक्तरूपघटकतया साधनवति साध्यासमानाधिकरणधर्म-

धत्त्वस्य साधने च तादृशधर्मादिसामानाधिकरण्यस्याग्रहीतत्वादिति शेषः। साधनवति साध्यासमानाधिकरणधर्मादिना साध्याभावस्साधने वा साध्यासमानाधिकरणधर्मादिसामानाधिकरण्येन व्यभिचारः शक्यते ज्ञातुमिति योजना। तथा चोपाधिव्यभिचाररूपहेतुप्रतिसन्धानमन्तरेणैव व्यभिचारानुमानस्य सौकर्यमिति भावः।

निरुक्तोपाधित्वशरीरे साधनस्य साध्यव्यभिचारनिवेशेऽपि उक्तोपाधित्वाज्ञानदशायां व्यभिचारोन्नायकताप्रयोजकतद्धर्मावच्छिन्नसाध्यव्यापकत्वसाधनाव्यापकत्वाभ्यां ज्ञातस्योपाधेर्व्यभिचारेण साध्यव्यभिचारानुमानं सुकरमेव, येन रूपेण ज्ञातस्य व्यभिचारोन्नायकत्वं तदेवोपाधिलक्षणमिति नियमानभ्युपगमादित्याशयेनाह। उपाधीति। व्यभिचारादीत्यादिना साध्याव्याप्यत्वपरिग्रहः। साध्यवदन्यवृत्तित्वरूपसाध्यव्यभिचारस्य साध्यासमानाधिकरणधर्मसामानाधिकरण्यापेक्षया लघुतया तन्निवेशस्यैव युक्तत्वादिति भावः। साध्याव्याप्यत्वेन साधनज्ञानेऽपि साध्यव्यभिचारानुमान सम्भवति सिद्धसाधनानवकाशादिति तदेव विशेषणमाह। साध्याव्याप्यत्वेनेति। साध्यवदन्यावृत्तित्वविशिष्टवृत्तिमत्त्वाभावेनेत्यर्थः।

यद्यप्यस्य साध्यवदवृत्तिमद्वृत्तित्वापेक्षया न लाघवम्, तथाप्येतद्घटितोपाधित्वज्ञानं स्वतो व्याप्तिज्ञानविरोधीत्याशयेन एतद्विशेषणादरः।

(दी०) मिश्रास्तु यद्व्यभिचारित्वेनेत्याद्येव लक्षणम्, पर्यवसितेत्यादिकं तु व्यभिचारोन्नायकताप्रयोजकरूपप्रदर्शनम्, तत्र पूर्वं प्रतीकं व्याप्तेर्द्वितीयं च पक्षधर्मतायाः प्रदर्शनार्थम्, एवं चायमेतत्साधननिष्ठसाध्यव्यभिचारोन्नायकव्यभिचारप्रतियोगीत्यर्थके अयमत्र हेतावुपाधिरित्युक्ते कथमस्य व्यभिचारोन्नायकत्वमित्याशङ्कायां व्यभिचारोन्नयनमपि साधु सङ्गच्छते इत्याहुः।

(गा०) लक्षणमिति। उपाधित्वस्वरूपमित्यर्थः, इतरभेदानुमापकमित्यर्थे पर्यवसितसाध्येत्यादेरपि इतरभेदानुमापकत्वस्य दुर्वारतया एवकारासङ्गतेः। उक्तस्योपाधिपदार्थतावच्छेदकत्ववि-

रहे च तस्य व्यभिचारोन्नायकत्वाबोधकतया कथमस्य व्यभिचारोन्नायकत्वमित्याकाङ्क्षानुत्थापकत्वेन एवं चेत्याद्यग्रिमग्रन्थासङ्गतेः । एवं सति लक्षणं त्वित्यस्य विरोधमुद्धरति । पर्यवसितेत्यादिकं त्विति । व्यभिचारोन्नायकतेति । लक्षणपदस्य तादृशरूपार्थकत्वादिति भावः । उन्नायकताप्रयोजकव्याप्तिपक्षधर्मतयोः कस्य कुतो लाभ इत्याकाङ्क्षायामाह । तत्रेति । पूर्वप्रतीको व्यापकत्वान्तभागः, उपाधेः साध्यव्यापकत्वे तद्व्यभिचारस्य तद्व्यभिचारव्याप्यतायां अवश्यम्भावाद्व्याप्तेः प्रदर्शकः, द्वितीयभागोऽव्यापकत्वान्तः, उपाधेस्साधनाव्यापकत्वे साधनरूपपक्षे उपाधिव्यभिचाररूपहेतुसत्त्वावश्यम्भावात् पक्षधर्मतायाः प्रदर्शक इत्यर्थः । लक्षणपदस्योक्तरव्याख्यानं उपाधिपदस्य उक्तधर्मार्थकत्वावश्यकतया आवश्यकमित्याह । एवं चेति । इत्थमेवेत्यर्थः । अयमित्यारभ्य प्रतियोगीत्यन्तमर्थकथनम् । इत्युक्ते । इति वाक्ये प्रतियन्त्रिना प्रयुक्ते सति । कथमस्य व्यभिचारोन्नायकत्वमिति । अस्य । उपाधिव्यभिचारस्य, व्यभिचारोन्नायकताप्रयोजकाकाङ्क्षायामित्यर्थः । व्यभिचारोन्नयनम्, उदाहरणादिना व्यभिचारव्याप्त्यादिप्रदर्शनम् । सङ्गच्छत इति । उपाधिरित्यस्य पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक इत्यर्थकत्वे तस्योक्ताकाङ्क्षानुत्थापकतया व्यभिचारानुमाने ऽर्थान्तरप्रसङ्गादिति भावः । मिश्रा आहुरित्यस्वरससूचनाय । अयमुपाधिरित्यस्योक्तार्थकत्वे तत एवोपाधिव्यभिचारस्य साध्यव्यभिचारज्ञापकतालाभे हेत्वाकाङ्क्षाविरहात् अयं हेतुः साध्यव्यभिचारी एतदुपाधिव्यभिचारित्वादिति हेत्वन्तरप्रयोगे ऽर्थान्तरं दुर्वारम् । एवमुन्नायकत्वमुन्नयनयोग्यतारूपमेव वाच्यम्, सा च व्याप्तिपक्षधर्मते इति तल्लाभे तदुन्नायकताप्रयोजकरूपाकाङ्क्षापि दुर्घटा ।

न चोन्नायकताप्रयोजकत्वेन सामान्यरूपेण व्याप्तिपक्षधर्मतालाभेऽपि किं तत्प्रयोजकमिति विशेषजिज्ञासायां विशिष्य तत्प्रयोजकप्रदर्शनसङ्गतिरिति वाच्यम् । उन्नयनप्रयोजकत्वेन व्याप्तिपक्षधर्मतयोरुपाधित्वघटकत्वे तदुपाधिव्यभिचारलिङ्गकयत्साध्यव्यभिचारानुमितिरप्रसिद्धा तत्प्रव्याप्तेर्दुर्वारतया विशिष्यैव व्याप्तिपक्षधर्मतयोरुपाधिलक्षणे निवेशनीयत्वादित्यादिकं तद्बीजम् ।

( दी० ) नव्यास्तु संयोगवदन्यत्वेन द्रव्यत्वाभावस्येव संयोगाभावस्याभावेन संयोगेन द्रव्यत्वाभावाभावस्य द्रव्यत्वस्य साधनसम्भवात्, एकशेषस्य दुष्करत्वात् तस्याप्युपाधित्वम्, लक्षणं तु साधनवति साध्याभावोन्नायकव्यतिरेकप्रतियोगितावच्छेदकरूपवत्त्वम्, प्रतियोगित्वं च तदभावत्वम्, व्युत्पादितं च प्रतियोगितावच्छेदकस्यैवान्योन्याभावाभावत्वम्, शेषं पूर्ववदिति ।

( गा० ) क्वचित्साधनस्यापकस्यापि स्वव्यभिचारेण साधने साध्यव्यभिचारोन्नायकतया उपाधित्वमभ्युपगम्य साधनाव्यापकत्वघटितोपाधिलक्षणं दूषयतां मतमुपन्यस्यति । नव्यास्त्विति । संयोगवदन्यत्वेन द्रव्यत्वाभावस्येति । यथा द्रव्यं सत्त्वादित्यत्र द्रव्यसाधारणतया संयोगाभावस्य गुणादौ द्रव्यत्वाभावासाधकत्वेऽपि तद्भेदेन तत्सम्भव इत्यर्थः । संयोगाभावस्याभावेनेति । द्रव्यत्वाभाववान् सत्त्वादित्यादावित्यादिः । एकशेषस्य दुष्करत्वादिति । यद्वदन्यत्वस्य साधनवति साध्याभावोन्नायकत्वं यदभावाभावस्य वा तथात्वं तयोरेकस्यैवोपाधित्वमिति नियन्तुमशक्यत्वादित्यर्थः । तस्यापि । उक्तस्थले संयोगाभावस्यापि । उपाधित्वम् । उपाधित्वमेव । साधनवतीति । द्रव्ये साधनवति द्रव्यत्वोन्नायकसंयोगरूपव्यतिरेकप्रतियोगितावच्छेदकसंयोगाभावत्वमादाय संयोगाभावे लक्षणसमन्वयः ।

नन्वेवं द्रव्यं सत्त्वादित्यत्र संयोगस्यासङ्ग्रहः, साध्याभावोन्नायकसंयोगवदन्यत्वप्रतियोगितायां संयोगत्वस्यानवच्छेदकत्वादित्यत आह । प्रतियोगित्वं चेति । व्यतिरेकप्रतियोगित्वं चेत्यर्थः । तदभावत्वम् । व्यतिरेकाभावत्वम् । क्वचित्तदभावाभावत्वमिति पाठः, तत्र तत्पदाभावपदयोः कर्मधारयः । संयोगत्वस्य संयोगवद्भेदप्रतियोगितानवच्छेदकत्वेऽपि तदभावत्वावच्छेदकत्वाल्लक्षणसमन्वयः । तदेवोपपादयति । व्युत्पादितं चेति । शेषम् । उपनयनयोग्यतादिविपक्षणम् ।

(चि०) स च धर्मः क्वचित्साधनमेव, क्वचित् द्रव्यत्वादि, क्वचित् महानसत्वादि । तथा हि समव्याप्तस्य विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्यभिचारः स्फुट एव, व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारनियमात् । साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमेव, यथा ध्वंसस्यानित्यत्वे साध्ये भावत्वस्य, वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च विशेषणाव्यभिचारिणि साधने विशिष्टव्यभिचारस्य विशेष्यव्यभिचारित्वनियमात् । अत एव नार्थान्तरम् ।

(गा०) अवच्छिन्नसाध्यव्यापकोपाधिव्यभिचारेण परं प्रति प्रथमं विशिष्टसाध्यव्यभिचारस्यैव साधनीयतया ऽर्थान्तरमिति पूर्वपक्षग्रन्थोक्तदूषणं परिमार्ष्टुं प्रथममेव सर्वत्र शुद्धसाध्यव्यभिचारप्रसिद्धिप्रकारं दर्शयन् सर्वत्र निरुक्तव्यभिचारोन्नयनयोग्यतारूपलक्ष्यतावच्छेदकसत्त्वं सूचयति मूले । तथा हीत्यादि । प्रथमं विशिष्टसाध्यव्यभिचारसाधनस्य विशेषणव्यभिचारबाधेन शुद्धसाध्यव्यभिचारसिद्धिपर्यवसानं वक्ष्यति, तथा सति च हेतोरेकाधिकरणे साध्योपाध्योर्व्यभिचार आवश्यकः, विशेषणाव्यभिचारिहेत्वधिकरणे विशेषणसत्तानियमेन यत्र हेत्वधिकरणे उपाध्यभावस्तत्र साध्यसत्त्वे तत्र विशिष्टसाध्यस्योपाधिव्यभिचारिताप्रसङ्गेन उपाधेर्विशिष्टसाध्यव्यापकत्वानुपपत्त्या शुद्धसाध्याभावस्याऽऽवश्यकत्वात्, अतोऽवच्छिन्नसाध्यव्यापकेऽप्युपाधौ यद्व्यभिचारेणेत्यादेर्यथाव्याख्यातार्थसत्त्वलाभः, चरमं च विशेषणवति विशिष्टसाध्यव्यापकोपाधिव्यभिचारेण हेतुना शुद्धसाध्यव्यभिचारत्वावच्छिन्नसाध्यसिद्धिं वक्ष्यति, तथा सत्यपि एकहेत्वधिकरणे उभयव्यभिचारस्याऽऽवश्यकतया व्याख्यातोपाधितालाभः । साध्यव्यापकस्येति । शुद्धेत्यादिः । साधनस्य । साधने । साध्यव्यभिचारः । साक्षाच्छु-

( दी० ) नव्यास्तु संयोगवदन्यत्वेन द्रव्यत्वाभावस्येव संयोगाभावस्याभावेन संयोगेन द्रव्यत्वाभावाभावस्य द्रव्यत्वस्य साधनसम्भवात्, एकशेषस्य दुष्करत्वात् तस्याप्युपाधित्वम्, लक्षणं तु साधनवति साध्याभावोन्नायकव्यतिरेकप्रतियोगितावच्छेदकरूपवत्त्वम्, प्रतियोगित्वं च तदभाववत्त्वम्, व्युत्पादितं च प्रतियोगितावच्छेदकस्यैवान्योन्याभावाभाववत्त्वम्, शेषं पूर्ववदिति ।

( गा० ) क्वचित्साधनव्यापकस्यापि स्वव्यभिचारेण साधने साध्यव्यभिचारोन्नायकतया उपाधित्वमभ्युपगम्य साधनाव्यापकत्वघटितोपाधिलक्षणं दूषयतां मतमुपन्यस्यति । नव्यास्त्विति । संयोगवदन्यत्वेन द्रव्यत्वाभावस्येवेति । यथा द्रव्यं सत्त्वादित्यत्र द्रव्यसाधारणतया संयोगाभावस्य गुणादौ द्रव्यत्वाभावासाधकत्वेऽपि तद्वद्भेदेन तत्सम्भव इत्यर्थः । संयोगाभावस्याभावेनेति । द्रव्यत्वाभाववान् सत्त्वादित्यादावित्यादिः । एकशेषस्य दुष्करत्वादिति । यद्वदन्यत्वस्य साधनवति साध्याभावोन्नायकत्वं यदभावाभावस्य वा तथात्वं तयोरेकस्यैवोपाधित्वमिति नियन्तुमशक्यत्वादित्यर्थः । तस्यापि । उक्तस्थले संयोगाभावस्यापि । उपाधित्वम् । उपाधित्वमेव । साधनवतीति । द्रव्ये साधनवति द्रव्यत्वोन्नायकसंयोगरूपव्यतिरेकप्रतियोगितावच्छेदकसंयोगाभावत्वमादाय संयोगाभावे लक्षणसमन्वयः ।

नन्वेवं द्रव्यं सत्त्वादित्यत्र संयोगस्यासङ्ग्रहः, साध्याभावोन्नायकसंयोगवदन्यत्वप्रतियोगितायाः संयोगत्वस्यानवच्छेदकत्वादित्यत आह । प्रतियोगित्वं चेति । व्यतिरेकप्रतियोगित्वं चेत्यर्थः । तदभाववत्त्वम् । व्यतिरेकाभाववत्त्वम् । क्वचित्तदभावाभाववत्त्वमिति पाठः, तत्र तत्पदाभावपदयोः कर्मधारयः । संयोगत्वस्य संयोगवद्भेदप्रतियोगितानवच्छेदकत्वेऽपि तदभावत्वावच्छेदकत्वाल्लक्षणसमन्वयः । तदेवोपपादयति । व्युत्पादितं चेति । शेषम् । उपनयनयोग्यतादिविलक्षणम् ।

(चि०) स च धर्मः क्वचित्साधनमेव; क्वचित् द्रव्यत्वादि, क्वचित् महानसत्वादि । तथा हि समव्याप्तस्य विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्यभिचारः स्फुट एव, व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारनियमात् । साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमेव, यथा ध्वंसस्यानित्यत्वे साध्ये भावत्वस्य, वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च विशेषणाव्यभिचारिणि साधने विशिष्टव्यभिचारस्य विशेष्यव्यभिचारित्वनियमात् । अत एव नार्थान्तरम् ।

(गा०) अवच्छिन्नसाध्यव्यापकोपाधिव्यभिचारेण परं प्रति प्रथमं विशिष्टसाध्यव्यभिचारस्यैव साधनीयतया ऽर्थान्तरमिति पूर्वपक्षग्रन्थोक्तदूषणं परिमार्ष्टुं प्रथममेव सर्वत्र शुद्धसाध्यव्यभिचारप्रसिद्धिप्रकारं दर्शयन् सर्वत्र निरुक्तव्यभिचारोन्नयनयोग्यतारूपलक्ष्यतावच्छेदकसत्वं सूचयति मूले । तथा हीत्यादि । प्रथमं विशिष्टसाध्यव्यभिचारसाधनस्य विशेषणव्यभिचारबाधेन शुद्धसाध्यव्यभिचारसिद्धिपर्यवसानं वक्ष्यति, तथा सति च हेतोरेकाधिकरणे साध्योपाध्योर्व्यभिचार आवश्यकः, विशेषणाव्यभिचारिहेत्वधिकरणे विशेषणसत्तानियमेन यत्र हेत्वधिकरणे उपाध्यभावस्तत्र साध्यसत्वे तत्र विशिष्टसाध्यस्योपाधिव्यभिचारिताप्रसङ्गेन उपाधेर्विशिष्टसाध्यव्यापकत्वानुपपत्त्या शुद्धसाध्याभावस्याऽऽवश्यकत्वात्, अतोऽवच्छिन्नसाध्यव्यापकेऽप्युपाधौ यद्व्यभिचारेणेत्याद्युक्तयथाव्याख्यातार्थसत्त्वलाभः, चरमं च विशेषणवति विशिष्टसाध्यव्यापकोपाधिव्यभिचारेण हेतुना शुद्धसाध्यव्यभिचारत्वावच्छिन्नसाध्यसिद्धिं वक्ष्यति; तथा सत्यपि एकहेत्वधिकरणे उभयव्यभिचारस्याऽऽवश्यकतया व्याख्यातोपाधितालाभः । साध्यव्यापकस्येति । शुद्धेत्यादिः । साधनस्य । साधने । साध्यव्यभिचारः । साक्षाच्छु-

रुमाध्यव्यभिचारग्रहः । व्यभिचारित्वेन । व्यभिचारित्वेनापि साधनस्य साध्यव्यभिचारित्वमेव । साक्षाच्छुद्धसाध्यव्यभिचारित्वग्रह एव । तदेवोदाहरति । यथेति । विशेष्यव्यभिचारित्वनियमात् । विशेष्यव्यभिचाररूपतानियमात् ।

( चि० ) विशेषणाव्यभिचारित्वेन ज्ञाते साधने विशिष्टव्यभिचारसिद्ध्यन्विशेष्यसाध्यव्यभिचारमादायैव सिद्ध्यति, पक्षधर्मताबलात्, अन्यथा प्रतीतेरपर्यवसानात् । न च पक्षधर्मताबलात्प्रकृतसिद्धावर्थान्तरम् ।

( दी० ) विशेषणाव्यभिचारित्वेनेत्यादि । सामान्यतो दृष्टमेवैकविशेषबाधे भावयति विशेषान्तरप्रकारिकामनुमितिम्, न चातिरिच्यते विशिष्टाभावो विशेषणविशेष्याभावाभ्यामिति मतेनेदम् ।

( गा० ) ननूपाधिव्यभिचाररूपहेतुव्यापकतावच्छेदकविशिष्टसाध्यव्यभिचारत्वस्य विशेषणव्यभिचारसाधारणतया तमादायैव न कथं पर्यवसानमित्याशङ्कां परिहरति । विशेषणाव्यभिचारित्वेनेति । ज्ञाते । निश्चिते । विशेष्यव्यभिचारमादायैवेत्येवकारो व्यभिचारमित्यनन्तरं योज्यः, तेन च विशेषणव्यभिचारसिद्धिव्यवच्छेदः । तत्रैव हेतुस्तदव्यभिचारितया निश्चितत्वं विशेषणतयोपात्तम् ।

ननु तथापि विशेष्यव्यभिचारित्वत्वावच्छिन्नस्य न व्याप्तिनिरूपकत्वम्, अपि तु विशिष्टव्यभिचारित्वस्यैवेति व्याप्तिज्ञानबलात्तेनैव रूपेण व्यभिचारसिद्धिर्भविष्यति, सा च न प्रकृतव्याप्तिग्रहविरोधिनी, असमानप्रकारकत्वादित्यत आह । पक्षधर्मताबलादिति । इतरबाधनिश्चयविशिष्टधर्मिवृत्तित्वव्यापकविषयकपरामर्शबलादित्यर्थः । अन्यथा प्रतीतेरपर्यवसानादिति । इतरबाधबलादपि साध्यव्यभिचारित्वासिद्धौ तत्कालीनानुमानिकप्रत्ययस्य साध्यव्यभिचारी न वेति संशयानिवर्तकत्वेन तदेकतरकोटिजिज्ञासानिवर्तकत्वानुपपत्तेरित्यर्थः ।

एतदेवोपपादयति दीधितौ । सामान्यतो दृष्टमिति । सामान्यतः । सामान्यधर्मावच्छिन्ननिरूपितव्याप्तिप्रकारेण । दृष्टम् । गृहीतं लिङ्गम् । एकविशेषबाधे । सामान्यव्याप्यैकधर्मावच्छिन्नाविरोधिग्रहे । भावयति । जनयति । विशेषान्तरप्रकारिकाम् । बाधितविशेषावृत्तितादृशधर्मावच्छिन्नप्रकारिकाम् । तथा च विशिष्टव्यभिचारित्वेन व्याप्तिग्रहादपि शुद्धसाध्यव्यभिचारित्वेन सिद्धिर्निष्प्रत्यूहेति भावः ।

ननु साधनपक्षकोपाधिव्यभिचारलिङ्गकानुमानाद्विशिष्टसाध्यव्यभिचारसिद्धिः शुद्धसाध्यव्यभिचारत्वमवगाहताम्, विशिष्टाभावस्य विशेषणविशेष्याभावाभ्यामतिरिक्तत्वेऽपि तस्य तादृशाभावद्वयव्यापकतया तद्वद्वृत्तित्वत्वरूपस्य व्यापकतावच्छेदकविशिष्टाभाववद्वृत्तित्वत्वस्य विशेष्यविशेषणाभाववद्वृत्तित्वत्वव्यापकतया विशेषणाभाववद्वृत्तित्वत्वावच्छिन्नबाधे विशेष्याभाववद्वृत्तित्वत्वरूपविशेषधर्मप्रकारेणानुमितिसम्भवात्, तथाप्यवच्छिन्नसाध्यव्यापकोपाधिना सत्प्रतिपक्षो न सम्भवति, तद्व्यतिरेकेण विशिष्टव्यतिरेकस्यैव साधनीयतया पक्षे विशेषणवत्तानिश्चयेऽपि तत्सत्त्वे विशेष्याभावविषयकत्वानिर्वाहात्, विशिष्टाभावस्य विशेष्याद्यभावाद्यतिरिक्ततया उक्तरीत्यसम्भवादिति पश्चादेव शुद्धसाध्यव्यतिरेकस्य साधनीयतया मूलोपदर्शितप्राप्तकालतया दुर्वारत्वादित्याशङ्क्य उक्तोपाधेस्सत्प्रतिपक्षोन्नायकतां विशिष्टाभावस्यानतिरिक्ततामतमालम्ब्योक्तरीत्या शुद्धसाध्याभावसिद्धिं सूचयन्नुपपादयति । न चातिरिच्यते इति । नापि भिद्यत इत्यर्थः । इति मतेन इति प्राचीनमतेन ।

( चि० ) यदा प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वात् महत्त्ववत् । तथा मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनयत्वाव्यभिचारित्वे सति श्याममित्रातनयत्वव्यापकव्यभिचारित्वात् अघटत्ववत् । अव्यभिचारश्च तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वम् । तच्चाभेदेऽपि ।

(दी०) स्वमतेनाह यद्वेति । प्रत्यक्षस्पर्शाश्रयत्वमित्यादि प्रत्यक्षसङ्ख्यापरिमाणत्त्वाद्युपाध्यभिप्रायेण यथाश्रुतमेव साधु, आत्मैकत्वादेरपि प्रत्यक्षत्वाङ्गीकारात् । उद्भूतरूपादिपरत्वे च साध्ये हेतौ च प्रत्यक्षपदं बहिरिन्द्रियप्रत्यक्षपरम्, द्रव्यपदे वा बहिर्द्रव्यपरे, महत्त्वपदं च जन्यमहत्त्वपरमिति । व्यापकव्यभिचारित्वं च व्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वम् । न च द्रव्यपदवैयर्थ्यम्, विशिष्टाभावस्यातिरिक्तत्वात् । द्रव्यत्वाव्यभिचारित्वे सति उद्भूतरूपादिव्यभिचार एव हेतुः । व्यापकत्वोपन्यासस्तु तत्क्रमदर्शनायेति तत्त्वम् । द्रव्यत्वाव्यभिचारः । द्रव्यत्वाभाववद्वृत्तित्वम् । मित्रातनयत्वमिति । अनुमानमिदमुपाधेः प्रमाणान्तरेण साधनाव्यापकतानिर्णयदशायाम् ।

(गा०) पक्षधर्मताबलात्प्रकृतसिद्धिमवलम्ब्य उभयपक्षे ऽर्थान्तरवारणम् । स्वमतेनेति । विशिष्टाभावातिरिक्तवादिग्रन्थकारमतेनेत्यर्थः । आहेति । व्यभिचारोन्नयनपक्षे हेतौ सङ्कोचकविशेषणं प्रक्षिप्य विशेषधर्मावच्छिन्नव्याप्त्यैव शुद्धसाध्यव्यभिचारसिद्धिप्रकारं दर्शयन् तद्दिशा सत्प्रतिपक्षोन्नयनपक्षेऽपि पक्षधर्मविशेषादिरूपविशेषणविशिष्टेनोपाध्यभावहेतुना पक्षे विशेषव्याप्त्यैव शुद्धसाध्याभावसिद्धिस्सम्भवतीति दर्शयतीत्यर्थः ।

केचित्तु यथाश्रुतासङ्गतिमालोच्य एवं वर्णयन्ति, इतरबाधबलाच्छुद्धसाध्यव्यभिचारत्वेन व्यापकस्य विशिष्टसाध्यव्यभिचारस्य सिद्धिरित्युक्तमुपपादयितुं विशिष्टव्यभिचारत्वस्य शुद्धसाध्यव्यभिचारसाधारण्यं दर्शयति । न चेति । विशेषणाभावविशेष्याभावाभ्याम् । विशेषणाभावविशेष्याभावाधिकरणाभ्यां विशिष्टाभावो न व्यावृत्तो भवतीत्यर्थः । तथा च विशेष्याद्यभाववतो विशिष्टाभाववत्त्वनियमेन विशेष्याद्यभाववद्वृत्तित्वं विशिष्टव्यभिचाररूपमेवेति भावः । इति मतेन । इतरबाधबलाद्व्यापकतानवच्छेदकप्रकारेणाप्यनु-

मितिरिति पक्षाश्रयणेन । स्वमतेनेति । व्यापकतावच्छेदकप्रकारेणै-धानुमितिरिति स्वमतेनेत्यर्थ इति । तदसत् । समानविषयकत्वेन विरोधिताया विचारासहत्वात्। पक्षधर्मतावलात्प्रसिद्धं वाधाय सिध्यतीत्यादिना पर्यमित्यन्तेन मणिकृता प्रदर्शितं वाधस्य दूषणान्तरासङ्करं सङ्गमयितुं चैत्रो जीवनमरणान्यतरप्रतियोगी प्राणित्वादित्याद्यनुमानेन पक्षिस्सत्त्वसाधकहेतुघटकजीवित्वसिद्धिप्रकारस्य मणिकारोक्तस्यान्यथानुपपत्त्या व्यापकतानवच्छेदकप्रकारेण साध्यानुमितिस्तन्मतसिद्धेति दीधितिकृता प्रदर्शनीयत्वात् स्वमतेनेत्यस्यासङ्गतेः । समानप्रकारकत्वेन विरोधितामते व्यापकतानवच्छेदकप्रकारेणानुमितेरावश्यकत्वाच्च । अन्यथा कर्तुरेकत्वे लाघवमिति ज्ञानकालीनसकर्तृकत्वानुमित्या क्षितिरेककर्तृका न वेति संशयनिवर्तनायोगात् । समानविषयकत्वेन विरोधित्वे च विशिष्टव्यभिचारित्वेन शुद्धसाध्यव्यभिचारसिद्धयापि प्रकृतव्याप्तिग्रहप्रतिबन्धसम्भवात् तादृप्येण सिध्यर्थं यद्वेत्यादिकल्पानुसरणानुपपत्तेश्चेति ।

प्रत्यक्षस्पर्शाश्रयत्वमित्याद्यनुमानमुद्भूतरूपोपाध्यभिप्रायेण यथाश्रुतं न सङ्गच्छते, तस्य द्रव्यप्रत्यक्षत्वव्यापकतया आत्मनि व्यभिचारेणासम्भवात् द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वेन तद्व्यभिचारोपादानासम्भवादित्युपाध्यन्तराभिप्रायेण यथाश्रुतं सङ्गमयति । प्रत्यक्षेति । यथाश्रुतमेव साध्विस्यनेन सम्बध्यते । प्रत्यक्षसङ्ख्यापरिमाणयोः प्रत्येकमेवोपाधिता । साधनाव्यापकत्वनिर्वाहाय उभयत्र प्रत्यक्षत्वविशेषणम् । तच्च लौकिकप्रत्यक्षविषयत्वयोग्यतारूपम्, तेनाऽऽवरणादिदोषेण प्रत्यक्षद्रव्यविशेषनिष्ठपरिमाणादेर्नियमतोऽप्रत्यक्षत्वेऽपि नोक्तोपाधेर्द्रव्यप्रत्यक्षत्वाव्यापकता ।

तद्योग्यता च तत्प्रयोजकसन्निकर्षाश्रयत्वम् वायुपरिमाणादेर्विषयत्वादिना प्रत्यक्षस्वरूपयोग्यस्यापि लौकिकविषयताप्रयोजकलौकिकविषयतावदाश्रयघटितसन्निकर्षानाश्रयत्वान्न निरुक्तयोग्यतेति न सत्। वायोः प्रत्यक्षत्वमते तदीयसङ्ख्यापरिमाणयोरपि उक्तसन्निकर्षाश्रयतया वायौ प्रत्यक्षयोग्यसङ्ख्यादिमत्त्वोपाधेः सत्त्वेन साधनाव्यापकताया दुर्निर्वाच्यत्वात्, आत्मैकत्वादेरप्रत्यक्षत्वेऽपि तादृशसन्निकर्षाश्रयत्वस्वरूपयोग्यतासत्त्वेन आत्मैकत्वादेरिति पक्षस्यनुत्थानाच्च ।

एतेनोद्भूतरूपशून्यमूर्तावृत्तित्वमेव योग्यतेत्यपि परास्तम् । आत्मैकत्वादेरप्रत्यक्षत्वेऽपि एतादृशयोग्यतायास्तत्रानपायादिति ।

अपि तूद्भूतरूपवदन्यवृत्तित्वाप्रत्यक्षत्वोभयाभाव एव तद्योग्यता, आत्मैकत्वादावप्रत्यक्षत्वाभावेनोभयाभावमुपपादयितुमात्मैकत्वादेरित्युक्तम् । आश्रयप्रत्यक्षदशायामर्थावरणदोषेण परिमाणादिगतजातिभेद एव न गृह्यते, परिमाणादिकं गृह्यते एवेत्यभिप्रेतमिति केचित् ।

साध्ये हेतौ च प्रत्यक्षत्वं लौकिकप्रत्यक्षविषयत्वमेव तत्र योग्यताप्रवेशे प्रयोजनाभावात्, आत्मैकत्वपरिमाणयोरप्रत्यक्षत्वे ईदृशोपाधेरप्यात्मनि साध्याव्यापकत्वं स्यात्, अतस्तत्प्रत्यक्षतामतमवलम्ब्य निरस्यति । आत्मैकत्वादेरिति । पूर्वं उद्भूतरूपोपाधेर्व्यभिचारस्य पक्षधर्मताबलात् शुद्धसाध्यव्यभिचारसाधकताकथनात् इदानीं व्याप्तिबलेन तस्य तत्साधकत्वानुक्तौ सन्दर्भविरोधः । एवं वायोः प्रत्यक्षतामते तदीयसङ्ख्यादिकमपि प्रत्यक्षम्, अत एव दीधितिकृता फूत्कारादौ च स्फुटतरप्रत्यक्षास्तत्सङ्ख्यादय इत्युक्तमित्याशयेनाह । उद्भूतरूपेति । साध्ये प्रत्यक्षत्वव्यभिचारि इत्यत्र । हेतौ । द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वादित्यत्र । बहिरिन्द्रियप्रत्यक्षेति । बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयेत्यर्थः । बहिष्ट्वं मनोभिन्नत्वम् । हेतौ प्रत्यक्षपदस्य यथाश्रुतार्थकत्वे व्यापकान्तेनोद्भूतरूपस्यैवासङ्ग्रहः, साध्यस्थतत्पदस्य यथाश्रुतार्थकत्वं च प्रत्यक्षत्वाव्यभिचारिणि सुखादावुद्भूतरूपव्यभिचारस्य व्यभिचारस्स्यादिति उभयत्र यथाश्रुतार्थपरित्यागः । एवं च वायोः प्रत्यक्षत्वे साध्ये इति पूर्वग्रन्थेऽपि प्रत्यक्षपदं दर्शितार्थकमेव, अन्यथा तद्ग्रन्थोपदर्शितानुमाने दर्शितोद्भूतरूपादेस्तदीयसाध्यव्यभिचारानुमापकत्वाकथनेन सन्दर्भविरोधापरिहारात् । प्रत्यक्षे मनोभिन्नेन्द्रियजन्यत्वविवक्षापेक्षया द्रव्ये आत्मभिन्नत्वविवक्षणमेव लाघवादुचितमित्याशयेनाह । द्रव्यपदे वेति । हेतुस्थद्रव्यपदद्वयमित्यर्थः । विशेष्यदलस्थद्रव्यपदस्य यथाश्रुतार्थकत्वे व्यापकान्तेन उद्भूतरूपस्यैवासङ्ग्रहः, सत्यन्तस्थतत्पदस्य तथात्वे सुखादौ व्यभिचारः स्यादित्युभयत्र बहिष्ट्वनिवेशनम् ।

नन्वेवं महत्त्ववदिति दृष्टान्तासङ्गतिः, महत्त्वस्य आत्मन्यपि

सत्त्वेन वह्निर्द्रव्यत्वाव्यभिचारासत्त्वात्,। महत्त्वविशिष्टस्य दृष्टान्तस्यासम्भवादित्यत आह । महत्त्वपदं चेति ।

ननु महत्त्वत्वविशिष्टगगनादिमहत्त्वे एव साध्यसाधनोभयसत्त्वात्तादृशस्य च दृष्टान्तत्वं सम्भवत्येव, तत्सामान्यस्य तथात्वमकिञ्चित्करम्, अन्यथा जन्यमहत्त्वसामान्यान्तर्गतघटादिमहत्त्वे उद्भूतरूपादिव्यभिचाराभावेन तत्सामान्यस्यापि दृष्टान्तत्वासम्भवात्।

न च वह्निर्धूमाव्यभिचारीति व्यवहाराभावात् अव्यभिचारस्थलनञर्थसामान्यस्यैवान्वयितावच्छेदकावच्छेदेनान्वयानियमान् महत्त्वत्वावच्छेदेन वह्निर्द्रव्यत्वाद्यव्यभिचारान्वयो बाधेन न सम्भवतीति जन्यमहत्त्वपरतया महत्त्वपदवर्णनसङ्गतिः, जन्यमहत्त्वत्वावच्छेदेन तदन्वये बाधात् उद्भूतरूपादिव्यभिचारान्वयस्य च तत्सामानाधिकरण्येनैवोपगमादिति वाच्यम् । द्रव्यत्वाद्यव्यभिचारित्वे सतीत्यादितो वह्निर्द्रव्यत्वाव्यभिचारसामानाधिकरण्यविशिष्टोद्भूतरूपव्यभिचाररूपहेतोरेव लाभात् स्वातन्त्र्येण वह्निर्द्रव्यत्वाव्यभिचारस्य महत्त्वे ऽनन्वयात, विशिष्टहेतोश्चावच्छेदकावच्छेदनान्वयस्य महत्त्वपदस्य जन्यमहत्त्वपरत्वेऽप्यसम्भवात्, घटादिमहत्त्वे विशेष्यासत्त्वात् । मैवम् । हेतुतावच्छेदकविशिष्टे साध्यव्यभिचार एव दोषो न तु तदुपलक्षितेऽपि, तथा सति द्रव्यत्वादौ साध्ये विशिष्टसत्त्वादेर्दुष्टत्वापत्तेः, पक्षतावच्छेदकविशिष्टे साध्यसाधनं च यद्विशिष्टे हेतुस्तद्विशिष्टे साध्यमिति व्याप्त्यैव, गन्धप्रागभावादिविशिष्टे गन्धानुमानस्य सल्लिङ्गतानभ्युपगमात्, उक्तव्याप्तिश्च यद्विशिष्टस्य दृष्टान्तता तद्विशिष्टस्य साध्यसाधनोभयवत्त्वादेव निर्वहति, एवं च वह्निर्द्रव्यत्वाभाववद्वृत्तित्वावच्छेदकस्य महत्त्वत्वस्य तदभावानुयोगितानवच्छेदकतया तद्विशिष्टे न वह्निर्द्रव्यत्वाव्यभिचार इति तद्घटितसाधनविकलतया जन्यमहत्त्वस्य दृष्टान्तत्वानुसरणमिति केचित् ।

ननु निरुक्तप्रत्यक्षत्वव्यापकव्यभिचारित्वं यदि तादृशप्रत्यक्षत्वव्यापकत्वावच्छिन्नाभाववद्वृत्तित्वं तदा तद्व्यापकस्य प्रमेयत्वादेः केवलान्वयितया तादृशाभावाप्रसिद्धिः, उपाधितावटकसमवायसम्बन्धावच्छिन्नाभावस्य सामान्यादौ प्रसिद्धावपि साधनवति वायौ तदभावासत्त्वेन प्रत्यक्षस्पर्शाश्रयत्वे हेत्वसिद्धिः, व्यापक-

प्रतियोगिकाभावनिवेशे चोद्भूतरूपादिविशेषाभाववद्वृत्तितया घटत्वादौ साध्यव्यभिचारशून्ये व्यभिचार इत्यतो व्याचष्टे । व्यापकव्यभिचारित्वं चेति । व्यापकतावच्छेदकरूपेति । व्यापकतावच्छेदकत्वोपलक्षितेत्यर्थः । तथा चोद्भूतरूपत्वावच्छिन्नाभाववद्वृत्तित्वमादायैव हेतुसिद्धिरिति भावः । द्रव्यपदवैयर्थ्यमिति । शुद्धप्रत्यक्षत्वव्यापकव्यभिचारस्यापि प्रत्यक्षत्वव्यभिचारव्याप्यतया प्रत्यक्षत्वे द्रव्यवृत्तित्वविशेषणस्य व्यभिचारावारकत्वात्, तदनुपादाने उद्भूतरूपव्यभिचारस्याप्रवेशेन यदा तद्व्यभिचारस्यैव प्रकृतहेतौ निश्चयो न तु शुद्धप्रत्यक्षत्वव्यापकव्यभिचारस्य तदा सन्दिग्धासिद्धिः स्यादिति तन्मात्रवारकत्वात्तस्येति भावः । विशिष्टाभावस्येति । द्रव्यप्रत्यक्षत्वव्यापकताघटकस्य द्रव्यवृत्तित्वरूपविशेषणविशिष्टप्रत्यक्षत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावस्य शुद्धप्रत्यक्षत्वव्यापकताघटकावच्छेदकत्वाभावादतिरिक्तत्वादित्यर्थः । उद्भूतरूपत्वरूपोपाधितावच्छेदकस्योपलक्षणीभूतव्यापकतावच्छेदकत्वेन । निवेशे प्रयोजनाभावाद्वैयर्थ्यशङ्कैव नास्तीत्याह । द्रव्यत्वाव्यभिचारित्व इति । तर्कप्रदर्शनायेति । उद्भूतरूपत्वं यदि साध्यव्यभिचारव्याप्यव्यभिचारप्रतियोगितावच्छेदकं न स्यात् साध्यव्यापकतावच्छेदकं न स्यादित्येताद्दशव्याप्तिग्राहकतर्ककारणोपाधिव्यतिरेकनिश्चयसम्भवप्रदर्शनायेत्यर्थः । अव्यभिचारपदस्य तदभाववदवृत्तित्वरूपयथाश्रुतार्थं परित्यज्य अव्यभिचारश्च तत्समानाधिकरणाभावाप्रतियोगित्वमिति मिश्रातनयत्वमित्याद्यनुमाने ऽघटत्वरूपदृष्टान्तसङ्गमनाय व्याख्यास्यति, अत्रानुमाने द्रव्यत्वाव्यभिचारित्वे सतीत्यत्राव्यभिचारपदस्य यथाश्रुतार्थकत्वेनैवोपपत्तिरिति तद्व्याख्यानमग्रिमाव्यभिचारपदस्यैवेत्यस्य यथाश्रुतार्थकतामाह । द्रव्यत्वेति ।

ननु शाकपाकजन्य साधनाव्यापकतासन्देहेन सन्दिग्धोपाधितया उदाहरिष्यत्यग्रे, तथा च तद्व्यभिचारस्य साधने सन्दिग्धतया तेनात्र साध्यव्यभिचारसाधनोपन्यासे विरोध इत्यतो दशाभेदेन उभयाविरोधमुपपादयति । अनुमानमिदमिति । प्रमाणान्तरेण । शब्दादिना ।

( दी० ) ननु तदव्यभिचारित्वं तदसत्ताभाववदवृत्तित्वम्,

तथा च साधनविकलोऽयं साध्यवान् दृष्टान्त इत्यत आह। अव्यभिचारश्चेति । नन्वेवं विशेष्यवैयर्थ्यम्, धूमप्रागभाववद्धर्मिभेदाद्वैयर्थ्यमिति चेत् ? तथापि मित्रातनयत्वव्यापकत्वविशेषितं वृत्तिमत्त्वमेव गमकमिति चेन्न । यत्किञ्चिदधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वस्य फलतस्सामानाधिकरण्यपर्यवसितस्योक्तत्वात् । तथा चायमर्थः, मित्रातनयत्वाधिकरणयत्किञ्चिन्निष्ठात्यन्ताभावाप्रतियोगित्वं तत्र शाकपाकजत्वव्यभिचारित्वात्, मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति यावत् । तेन श्यामत्वादौ न व्यभिचारः । अव्यभिचारश्चेत्यादि । तथा च बहुव्रीहिः । यद्धर्माव्यभिचारित्वे सति तद्धर्मावच्छिन्नयत्साध्यव्यापकव्यभिचारि तत्तत्साध्यव्यभिचारीति सामान्यव्याप्तेरघटत्वं दृष्टान्त इत्यप्याहुः ।

( गा० ) मित्रातनयत्वाव्यभिचारित्वे सतीत्यत्राव्यभिचारपदार्थस्याव्यभिचारश्चेत्यादिना प्रसिद्धार्थपरित्यागेन वर्णनमघटत्वघदिति दृष्टान्ताविरोधोपपादकतया सङ्गमयितुमवतारयति । नन्विति । अयम् । अघटत्वरूपो दृष्टान्तः । साधनविकलः । अघटत्वस्य पटादौ मित्रातनयत्वव्यभिचारित्वात्, तथा च दृष्टान्तासम्भव इति भावः । व्यतिरेकदृष्टान्ततैवास्त्विति शङ्कां निराकरोति । साध्यवानिति । अघटत्वस्य श्यामत्वव्यभिचारित्वादिति भावः । विशेष्यवैयर्थ्यमिति । मित्रातनयत्वव्यापकत्वरूपस्य सत्यन्तार्थस्यैव श्यामत्वव्यभिचारगमकत्वसम्भवादिति भावः । शङ्कते । धूमप्रागभाववदिति । यथा धूमप्रागभावस्य वह्निगमकधूमघटितत्वेऽपि तद्भिन्नतया यन्निष्ठेत्यादिन्यायेन विशेष्यावैयर्थ्यं तथा मित्रातनयत्वव्यापकत्वाविशिष्टशाकपाकजत्वव्यभिचारस्य स्वघटकमित्रातनयत्वव्यापकताभिन्नत्वेन विशेष्यावैयर्थ्यमित्यर्थः । तथापि । विशेष्यावैयर्थ्येऽपि । व्यापक त्वविशेषितम् । व्यापकत्वमात्रविशिष्टम् । वृत्तिमत्त्वम् । वृत्तिमत्त्वरूपं उपाधिव्यभिचारित्वम् । गमकम् । गमकमस्तु, हेतुतया उपन्यस्तमस्त्विति यावत् । विशेष्यतावच्छेदकस्य

शाकपाकजत्वाभाववद्वृत्तित्वस्य वैयर्थ्येन श्याममित्रातनयत्वव्यापकव्यभिचारित्वादित्युपन्यासासङ्गतेरिति भावः । यत्किञ्चित्तदधिकरणेति । मित्रातनयत्वाधिकरणयत्किञ्चिद्व्यक्तीत्यर्थः । तथा सति श्याममित्रातनयमात्रवृत्तिवस्तुनोऽपि तादृशाभावाप्रतियोगित्वेन तत्र व्यभिचारवारवारकतया विशेष्यसार्थक्यमिति भावः । तत्समानाधिकरणमात्रस्यैव यत्किञ्चित्तदधिकरणनिष्ठाभावाप्रतियोगितया सामानाधिकरण्य एव पर्यवसानमाह । फलत इति । उक्तत्वात् । विवक्षितत्वात् । श्यामत्वादौ व्यभिचारं परिजिहीर्षुर्व्याचष्टे । तथा चेति । मित्रातनयत्वाधिकरणेति । श्यामत्वादेः श्याममित्रातनयव्यक्तिनिष्ठाभावाप्रतियोगित्वमेव, तत्र च शाकपाकजत्वनियमात्र तदन्तर्भावेण शाकपाकजत्वव्यभिचारित्वमिति श्यामत्वादेर्नाकहेतुत्वमिति भावः । उक्तपर्यवसितार्थस्य व्यभिचारवारणाय तस्य निष्कर्षं दर्शयति । मित्रातनय इति । शाकपाकजत्वाभाववन्मित्रातनयवृत्तित्वादिति भावः । मतान्तरमाह । अव्यभिचारश्चेत्यादीति । विशेष्यसार्थक्याया ऽऽह । तथा च बहुव्रीहिरिति । तत्र मित्रातनयत्वं यत्समानाधिकरणाभावाप्रतियोगीति बहुव्रीह्याश्रयणेन स्वव्यापकमित्रातनयत्वकत्वं विवक्षितमित्यर्थः । तथा च तन्मात्रस्य न गमकता, श्याममित्रातनयमात्रवृत्तिधर्मे व्यभिचारादिति भावः ।

नन्वेवमघटत्ववदिति दृष्टान्तविरोधो दुरुद्धरः, मित्रातनयत्वस्याघटत्वाव्यापकत्वादित्यत आह । यदिति । अघटत्वं दृष्टान्त इति । अघटत्वमघटत्वाव्यभिचारित्वे सति अघटत्वविशिष्टद्रव्यत्वादिव्यापककम्बुग्रीवादिमदन्यद्रव्यत्वादिव्यभिचारि, अथ च द्रव्यत्वादिव्यभिचारीति क्रमेणेत्यर्थः । विशेषणीभूतधर्मे यत्त्वतत्त्वेन निवेश्य प्रकृतसाध्यं विशिष्य निवेश्य व्याप्तिस्वीकारेऽप्येतद्दृष्टान्तसङ्गतिरिति ध्येयम् । आहुरित्यस्वरससूचनाय, स चैवं तदभाववद्वृत्तिस्वरूपपथाश्रुतार्थपरित्यागे बीजाभावादवसेयः ।

केचित्तु विशेषव्याप्तावेव मित्रातनयत्वविशिष्टमघटत्वं दृष्टान्तः, तत्र विशेष्यस्याघटत्वस्य मित्रातनयत्वाभाववद्वृत्तितया न विशिष्टे तदवृत्तित्वसम्भव इति स्वव्यापकतत्कत्वरूपाव्यभिचारनिवेशः, विशिष्टघटत्वव्यापकत्वं च मित्रातनयत्वस्याक्षतमेवेति मूलं सङ्गमयन्ति । तत्र स्वत्वाननुगमेन हेतुविशेषस्य न दृष्टान्तपक्षसाधारण्यम् ।

एवं साध्यव्यभिचारोऽपि स्वाव्यापकसाध्यकत्वरूप एव साधनी-य, साध्याभाववद्वृत्तित्वस्य व्यभिचारिविशेष्यघटितविशिष्ट-रूपसद्धेतुसाधारणतया ऽदोषत्वात्, तथा च मित्रातनयत्वरूपपक्षे साध्यव्यभिचारसन्देहदशायां तद्विशिष्टाघटत्वेऽपि, साध्यव्यभिचा-रस्योकरूपस्य दुर्निश्चेयतया न दृष्टान्ततासम्भवः।

न च हेतुतावच्छेदकावच्छेदेन साध्याभाववद्वृत्तित्वस्य दोष-तासम्भवात्तदेव प्रकृते ऽनुमेयमित्यघटत्वे तन्निर्णयादेव निशिष्टस्य तस्य दृष्टान्ततासम्भव इति वाच्यम्। एवं सति बाधानवतारदशायां शुद्धसत्तादिकं दृष्टान्तीकृत्य विशिष्टसत्तात्वाद्यवच्छेदेन गुणादि-व्यभिचारेण द्रव्यत्वव्यभिचारसाधनेन द्रव्यं विशिष्टसत्त्वादित्या-दिप्रयोक्तुर्निग्रहापत्तेरित्यादिकं चिन्त्यम्।

केचित्तु मित्रातनयत्वं मित्राजन्यवृत्त्येककालीनोभयावृत्तिजाति-रूपं समवायेन हेतुः, तत्सम्बन्धघटितयोस्साध्योपाधिव्यभिचारयो-र्व्यतिरेको ऽसमवेत ऽघटत्वे सुलभ इति व्यतिरेकदृष्टान्त एवा-पमित्याहुः।

**( चि० ) यद्वा पक्षसाध्यव्यभिचारी साध्यव्यभि-चारोन्नायकस्स उपाधिः । तत्त्वं च साक्षात्परम्पर-या वेति नार्थान्तरम् ।**

( दी० ) मेयत्वादावपि विशेषणवति विशिष्टसाध्यव्यापको-पाधिव्यभिचारेण शुद्धसाध्यव्यभिचारस्साधनीयः। एवं वि-शिष्टसाध्यव्यापकस्यापि साक्षाच्छुद्धसाध्यव्यभिचारोन्नायक-तयोपाधित्वं समर्थ्य साक्षात्परम्परासाधारणतदुन्नायकतामात्रेण तथात्वं व्यवस्थापयति। यद्वेत्यादिना। अत्रापि पूर्ववद्विरुद्धवा-रणाय साध्यसमानाधिकरणेति बोध्यम्। व्यभिचारोन्नायकत्वं च यत्र क्वचित्। एवं च पृथिवीत्वादिना गुरुत्वादौ साध्ये द्र-व्यत्वादौ व्यभिचारोन्नायकस्य रूपवत्त्वादेर्वारणाय साधन-व्यभिचारीति बहुव्रीहिः। न चैवमपि गुरुत्वादिसाध्यके रस-

यत्त्वादिहेतौ द्रव्यत्वं गुरुत्वादिव्यभिचारि जलभिन्नं पृथिवी- त्वादिव्यभिचारित्वादिति व्यभिचारोन्नायके पृथिवीत्वादावतिप्रसङ्गः, साधननिष्ठं यद्व्यभिचारित्वं साध्यव्यभिचारोन्नायकं तत्त्वस्योक्तत्वात्। उक्तिवैचित्र्यमात्रं पूर्वस्मादिदम्॥

(गा०) ननु यथाश्रुताव्यभिचारनिवेशेऽपि गौरमित्रातनयमात्रवृत्तिधर्माणां दृष्टान्तानां सौलभ्यात्तदुपेक्षणं मूलकृतां ऽनुचितमित्याशङ्कां निराकर्तुं यथाश्रुताव्यभिचारघटितहेतोर्मित्रातनयमात्रवृत्तिहेतुकस्थले सम्भवेऽपि प्रमेयत्वादिहेतुके स्वरूपासिद्ध्या ऽसम्भवादुक्तरीतेरावश्यकतेत्याह । मेयत्वादावपीति । विशेषणवतीति । मित्रातनयत्वादिमतीत्यर्थः । मित्रातनयत्वाव्यभिचारित्वे सतीत्यत एवोक्तरीत्या तादृशार्थलाभादित्यर्थः।

व्याप्यव्यापकभावस्य भेदघटितत्वाभिमानेन स्वरूपासिद्धयाशङ्काया अप्येवं नावकाश इत्याह मूले। तद्यभेदेऽपीति । तस्य च साक्षात्परम्परया चेत्यग्रिमग्रन्थस्वरसेन मा भूदवच्छिन्नसाध्यव्यापकोपाधिव्यभिचारेण साक्षाच्छुद्धसाध्यव्यभिचारसिद्धिः, तथापि तस्योपाधित्वमक्षतमेवेति परम्परया व्यभिचारोन्नायकस्य प्रथममुद्भावनेऽप्रातकालत्वेऽपि तस्य निरूप्यमाणोपाधित्वाव्याघातस्वादित्यभिप्रायकतया यद्वेत्यादि मूलं सङ्गमयति । एवमिति । उक्तरीत्येत्यर्थः । उपाधित्व समर्थ्य । निरुक्तोपाधित्वनिर्वाहं सूचयित्वा । तदुन्नायकतामात्रेण तथात्वं व्यवस्थापयति । शुद्धसाध्यव्यभिचारोन्नायकतासामान्येनैवोपाधित्वं निर्वहतीति दर्शयतीत्यर्थः । शाकपाकजत्वादिव्यभिचारत्वेन तद्व्यभिचारमेव हेतूकृत्य विशिष्टसाध्यव्यभिचारत्वावच्छिन्नसाधनसम्भवेऽपि शाकपाकजत्वाभाववन्मित्रातनयत्वादिमद्वृत्तित्वरूपस्य तद्व्यभिचारस्य तत्त्वेन शुद्धसाध्यव्यभिचारव्याप्यत्वरूपोन्नयनयोग्यताया आवश्यकत्वादिति भावः । पूर्वं साक्षादुन्नायकत्वघटितमुपाधित्वं निरुक्तम्, इदानीं साक्षात्परम्परासाधारणोन्नायकतासामान्यघटितं निर्वक्तीति तु नार्थः, तदुन्नयनयोग्यताया अवश्य विवक्षणीयतया तस्या व्याप्त्यादिरूपाया अविशेषात्।

न च साक्षादुन्नयनयोग्यत्व तद्व्याप्यत्वम्, परम्परया तथात्वं च तद्व्याप्यव्याप्यत्वमिति विशेष इति वाच्यम् । तथा सति तयोरननुगमेनात्र साधारणोन्नायकताप्रवेशासम्भवात्, उक्तिवैचित्र्याच्च पूर्वस्मादिदं इत्युत्तरग्रन्थासङ्गतेश्च । इत्थं च वरवं चेत्यादेरुपाधित्वघटकमुन्नायकत्व च साक्षात्परम्परया वेति नार्थः, अपि तु निरुक्तोपाधितानियतमुन्नयन साक्षात्परम्परया वेति नार्थान्तर क्षतिकरमिति । विरुद्धवारणाय । साध्यविरुद्धजलत्वादिवारणाय । पूर्ववत्साध्यसमानाधिकरणेति बोध्यम् । धर्मिणि साध्यसामानाधिकरण्य धर्मे वा साध्यसमानाधिकरणवृत्तित्वविशेषण बोध्यम् । साधने साध्यव्यभिचारोन्नायकत्वविवक्षणे साधनव्यभिचारीत्यस्य वैयर्थ्यादाह । व्यभिचारोन्नायकत्व च यत्र क्वचिदिति । एवं चेति । तत्साार्थक्यं दर्शयति । द्रव्यत्वादौ व्यभिचारोन्नायकस्येति । द्रव्यत्व गुरुत्वव्यभिचारि रूपव्यभिचारित्वादिति रीत्येत्यादिः ।

यद्यपि वह्निमान् धूमादित्यादावपि रासभादौ वह्निव्यभिचारोन्नायकव्यभिचारप्रतियोगिवह्निसामग्र्यादिवारकमपि तत्, तथाप्यग्रे गुरुत्वसाध्यकपृथिवीत्वाद्यतिप्रसङ्गस्य शङ्कनीयतया गुरुत्वसाध्यकानुधावनम् । यद्धर्मोहिरिति । साधन व्यभिचारि यस्येतीत्यादिः । तत्पुरुषेण उक्तातिप्रसङ्गस्यैव दुर्वारत्वादिति भाव. । पृथिवीत्वाद्यातिप्रसङ्ग इति । अवच्छिन्नसाध्यव्यापकसङ्ग्रहाय विशेपितावशेषितसाधारणयद्व्यभिचारोन्नायक इति वक्तव्यत्वादिति भावः । साधननिष्ठमिति । उन्नायकत्व तद्योग्यता, सा चात्र व्याप्तिरेव, पक्षधर्मतायाः अन्तर्भावस्य वैयर्थ्यात्, साधननिष्ठत्वनिवेशेनैव साधनव्यापकधारणात् । रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभावव्यभिचारस्य वारणाय पूर्वोक्तैव रीतिरानुसरणीया ।

नन्वेव यद्व्यभिचारेणेत्याद्यभेद इत्यत आह । उक्तिवैचित्र्याच्चेति । पूर्वमुन्नयनस्य साधनपक्षकत्वोक्तेर्यद्व्यभिचारस्य साधनरूपपक्षधर्मतालाभः, अत्र तु साधनव्यभिचारोऽस्येत इति विशेषावित्यर्थः । तथा च पूर्वनिरुक्तस्यैव उक्तिभङ्ग्या ऽनुवादोऽयम, न तु निरुक्त्यन्तरम, पूर्वमुपाधेः साक्षात्साध्यव्यभिचारानुमापकत्वविवक्षा आग्रह , इदानीं तु न तथात्वाभ्युपगम इत्येतावतैव फलभेदादिति भावः ।

वत्त्वादिहेतौ द्रव्यत्वं गुरुत्वादिव्यभिचारि जलभिन्नं पृथिवीत्वादिव्यभिचारित्वाच्चेति व्यभिचारोन्नायके पृथिवीत्वादावतिप्रसङ्गः, साधननिष्ठं यद्व्यभिचारित्वं साध्यव्यभिचारोन्नायकं तत्त्वस्योक्तत्वात् । उक्तिवैचित्र्याच्च पूर्वस्माद्भेदः ।

( गा० ) ननु यथाश्रुताव्यभिचारनिवेशेऽपि गौरमित्रातनयमात्रवृत्तिधर्माणां दृष्टान्तानां सौलभ्यात्तदुपेक्षण मूलकृतोऽनुचितमित्याशङ्कां निराकर्तुं यथाश्रुताव्यभिचारघटितहेतोर्मित्रातनयमात्रवृत्तिहेतुकस्थले सम्भवेऽपि प्रमेयत्वादिहेतुके स्वरूपासिद्ध्याऽसम्भवादुक्तरीतेरावश्यकतेत्याह । मेयत्वादावपीति । विशेषणवतीति । मित्रातनयत्वादिमतीत्यर्थः । मित्रातनयत्वाव्यभिचारित्वे सतीत्यत्र प्रयोक्तरीत्या तादृशार्थलाभादित्यर्थः ।

व्याप्यव्यापकभावस्य भेदघटितत्वाभिमानेन स्वरूपासिद्ध्याशङ्काया अप्येवं नावकाश इत्याह मूले । तदभेदेऽपीति । तस्य च साक्षात्परम्परया वेत्यग्रिमग्रन्थस्वरसेन मा भूदवच्छिन्नसाध्यव्यापकोपाधिव्यभिचारेण साक्षाच्छुद्धसाध्यव्यभिचारसिद्धिः, तथापि तस्योपाधित्वमक्षतमेवेति परम्परया व्यभिचारोन्नायकस्य प्रथममुद्भावनेऽप्राप्तकालत्वेऽपि तस्य निरूप्यमाणोपाधित्वाव्याघातकत्वादित्यभिप्रायकतया यद्वेत्यादि मूलं सङ्गमयति । एवमिति । उक्तरीत्येत्यर्थः । उपाधित्व समर्थ्य । निरुक्तोपाधित्वनिर्वाहं सूचयित्वा । तदुन्नायकतामात्रेण तथात्वं व्यवस्थापयति । शुद्धसाध्यव्यभिचारोन्नायकतासामान्येनैवोपाधित्वं निर्वहतीति दर्शयतीत्यर्थः । शाकपाकजत्वादिव्यभिचारत्वेन तद्व्यभिचारमेव हेतूकृत्य विशिष्टसाध्यव्यभिचारत्वावच्छिन्नसाधनसम्भवेऽपि शाकपाकजत्वाभाववन्मित्रातनयत्वादिमद्वृत्तित्वरूपस्य तद्व्यभिचारस्य सत्त्वेन शुद्धसाध्यव्यभिचारव्याप्यत्वरूपोन्नयनयोग्यताया आवश्यकत्वादिति भावः । पूर्वं साक्षादुन्नायकताघटितमुपाधित्वं निरुक्तम्, इदानीं साक्षात्परम्परासाधारणोन्नायकतासामान्यघटितं निरुक्तमिति तु नार्थः, तदुन्नयनयोग्यताया अवश्यं विवक्षणीयतया तस्या व्याप्यत्वादिरूपाया अविशेषात् ।

न च साक्षादुन्नयनयोग्यत्वं तद्व्याप्यत्वम्, परम्परया तथात्वं च तद्व्याप्यव्याप्यत्वमिति विशेष इति वाच्यम् । तथा सति तयोरननुगमेनात्र साधारणोन्नायकताप्रवेशासम्भवात्, उक्तिवैचित्र्याद्य पूर्वस्माद्भेद इत्युत्तरग्रन्थासङ्गतेश्च । इत्थं च वस्तुं चेत्यादेरुपाधित्वघटकमुन्नायकत्वं च साक्षात्परम्परया वेति नार्थः, अपि तु निरुक्तोपाधितानियतमुन्नयनं साक्षात्परम्परया वेति नार्थान्तरं क्षतिकरमिति । विरुद्धवारणाय । साध्यविरुद्धजलत्वादिवारणाय । पूर्वन्तत्साध्यसमानाधिकरणेति बोध्यम् । धर्मिणि साध्यसामानाधिकरण्यं धर्मे वा साध्यसमानाधिकरणवृत्तित्वविशेषणं बोध्यम् । साधने साध्यव्यभिचारोन्नायकत्वविवक्षणे साधनव्यभिचारीत्यस्य वैयर्थ्यादाह । व्यभिचारोन्नायकत्व च यत्र क्वचिदिति । एवं चेति । तत्साधर्क्यं दर्शयति । द्रव्यत्वादौ व्यभिचारोन्नायकस्येति । द्रव्यत्व गुरुत्वव्यभिचारि रूपव्यभिचारित्वादिति रीत्येत्यादिः ।

यद्यपि वह्निमान् धूमादित्यादावपि रासभादौ वह्निव्यभिचारोन्नायकव्यभिचारप्रतियोगिवह्न्यभावाद्यादिवारकमपि तत्, तथाप्यग्रे गुरुत्वसाध्यकपृथिवीत्वाद्यतिप्रसङ्गस्य शङ्कनीयतया गुरुत्वसाध्यकानुधावनम् । यद्वुर्वीहिरिति । साधन व्यभिचारि यस्येतीत्यादिः । तत्पुरुषेण उक्तातिप्रसङ्गस्यैव दुर्वारत्वादिति भाव । पृथिवीत्वाद्यावतिप्रसङ्ग इति । अवच्छिन्नसाध्यव्यापकसङ्ग्रहाय विशेषिताविशेषितसाधारणव्यभिचारोन्नायक इति वक्तव्यत्वादिति भावः । साधननिष्ठमिति । उन्नायकत्व तद्योग्यता, सा चात्र व्यतिरेक, पक्षधर्मतायां अन्तर्भावस्य वैयर्थ्यात्, साधननिष्ठत्वनिवेशेनैव साधनव्यापकवारणात् । रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभावव्यभिचारस्य वारणाय पूर्वोक्तैव रीतिरादरणीया ।

नन्वेव यद्व्यभिचारेणेत्याद्यभेद इत्यत आह । उक्तिवैचित्र्याद्येति । पूर्वमुन्नयनस्य साधनपक्षकत्वोक्तेर्यद्व्यभिचारस्य साधनरूपपक्षधर्मतालाभः, अत्र तु साधनव्यभिचारीत्यत इति विशेषादित्यर्थः । तथा च पूर्वनिरुक्तस्यैव उक्तिभङ्ग्या ऽनुवादोऽयम, न तु निरुक्तयन्तरम, पूर्वमुपाधेः साक्षात्साध्यव्यभिचारानुमापकत्वविवक्षाद् थाग्रद, इदानीं तु न तथात्वाभ्युपगम इत्येतावतैव कल्पभेदादिति भावः ।

( दी० ) केचित्तु व्यभिचारोन्नायकत्वमिह तद्व्याप्यकोटि-प्रविष्टतामात्रेण, इत्थं च जलत्वेन करकात्वे साध्ये जलत्वं क-रकात्वव्यभिचारि स्नेहव्यापकत्वात्, घटेन वा घटत्वे साध्ये घटो घटत्वव्यभिचारी जन्यद्रव्यत्वादिति व्यभिचारोन्नयनस-मर्थस्य स्नेहस्य द्रव्यत्वस्य च वारणाय साधनव्यभिचारी-ति। अयं घटः सत्त्वादित्यादौ सत्त्वं घटत्वव्यभिचा-रि शब्दादिवृत्तित्वादिति व्यभिचारोन्नायकस्य शब्दादेर्वार-णाय साध्यसमानाधिकरणेत्यपि वक्तव्यम्, एवं च रूपेण गुरु-त्वादौ साध्ये रूपं गुरुत्वादिव्यभिचारि जलभिन्नपृथिवीत्वाभाव-वद्वृत्तित्वादिति व्यभिचारोन्नायकस्य गुरुत्वव्यभिचारितैजस-रूपनिष्ठव्यभिचारप्रतियोगिनः पृथिवीत्वाभावस्य वारणाय यत्राधिकरणे साधनाव्यापकत्वं तत्र व्यभिचारोन्नायकत्वं व-क्तव्यम्। यथाकथञ्चित्स्वव्यभिचारेण व्यभिचारोन्नायकमात्रस्य लक्ष्यत्वे यत्साधनव्यक्त्यव्यापकत्वं तद्व्यक्तौ व्यभिचारोन्नायकं वाच्यमित्याहुः।

(गा०) ये तु पूर्वकल्पमेवायाम्यथा व्याचक्षते तन्मतमाह। केचि-दिवति। तद्व्याप्यकोटिप्रविष्टतामात्रेणेति। व्यभिचारव्याप्यतावच्छे-दकावच्छिन्नघटकत्वरूपमेव न तु पूर्ववद्व्यभिचारप्रतियोगित्वरूपमि-त्यर्थः। स्नेहव्यापकत्वादिति। व्यभिचारोन्नयनसमर्थस्य स्नेहस्य वारणायेत्यन्वयः व्यभिचारोन्नयनसमर्थत्वं स्नेहव्यभिचारोन्नयनयो-ग्यो यो हेतुस्तद्घटकत्वम्। घटेनेति। घटस्य हेतुता संयो-गेन समवायेन वा, उभयथैव व्यभिचारिता। जन्यद्रव्यत्वा-दिति। व्यभिचारोन्नयनसमर्थस्य द्रव्यत्वस्य चेत्यन्वयः। अवृत्ती व्यभिचारशून्ये व्यभिचारवारणाय जन्येति। घटरूपादौ व्यभि-चारवारणाय द्रव्येति। स्नेहव्यापकत्वे स्नेहस्य विशेषणतया अन्य-द्रव्यत्वे च द्रव्यत्वस्य विशेष्यतया प्रवेशः, उभयथैवातिप्रसङ्गः, प्रवेशे वैलक्षण्यस्य अविवक्षणादित्येतत्सूचनाय स्थलान्तरकथ-

नम् । करका जलत्वादित्यादौ स्नेहादिवारणं; साधनव्यभिचारीत्यत्र षष्ठीसमासेनापि, घटत्ववान् घटादित्यत्र द्रव्यत्वस्य घटाभाववद्वृत्तितया बहुव्रीह्यनादरे न वारणसम्भव इति तदादरप्रयोजनप्रदर्शनाय वा द्वितीयस्थलानुधावनम् । धूमवान् वह्नेरित्यादौ साध्यविरुद्धद्रव्यत्वाद्यभावाधिकरणायोगोलकवृत्तित्वत्वादिना धूमादिव्यभिचारोन्नयने द्रव्यत्वादेरप्रवेशेन तत्रातिव्याप्त्यप्रसक्त्या स्थलान्तरेऽतिव्याप्तिवारणाय साध्यसामानाधिकरण्यं प्रवेशयति । अयमिति । शब्दादीत्यादिना ज्ञानादिपरिग्रहः । मन्मते सपक्षैकदेशवृत्तिधर्मवारकतया साध्यव्यभिचारोन्नायकप्रविष्टस्य सार्थक्यं बोध्यम् । इदं गुरु रसवत्त्वादित्यादौ द्रव्यत्वादौ गुरुत्वादिव्यभिचारोन्नायकजलान्यपृथिवीत्वाभाववद्वृत्तित्वाद्यघटकपृथिवीत्वादावतिव्याप्तिवारणाय साधने साध्यव्यभिचारोन्नायकत्वं विवक्षणीयम् । इति व्यभिचारोन्नायके । इति रीत्या व्यभिचारोन्नायके, उक्तहेतौ प्रविष्टस्य पृथिवीत्वाभावस्येत्यनेनान्वयः । तस्यानुपाधिताप्रयोजकविशेषणमाह । गुरुत्वादीति । तथा च तद्व्यतिरेकेण कथञ्चिदपि रूपेण न साध्यव्यभिचारानुमानसम्भव इति भावः । यत्राधिकरणे इति । यत्र साधनाधिकरणे स्वाभावः साध्याभाववत्तदधिकरणवृत्तित्वोन्नायकत्वमित्यर्थः । उक्तस्थले च तादृशसाधनाधिकरणे पृथिव्यां साध्याभाववत्त्वात्पृथिवीत्वाभावस्य न तादृशत्वमिति नातिव्याप्तिरिति भावः ।

नन्वेवं रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभावस्य सङ्ग्राहकत्वे तत्राव्याप्तिरित्यत आह । यथाकथञ्चिदिति । यत्साधनेति । उक्तस्थले पृथिवीवृत्तिसाधनव्यक्त्यधिकरणं वाय्वादिकमपीति तदन्तर्भावेण साध्यव्यभिचारस्य हेतौ सत्त्वाल्लक्षणसमन्वय इति भावः । अत्र स्वाभावरूपोपाधेः प्रतियोगिमद्वृत्तित्वरूपेण व्यभिचारोन्नायकतया तत्प्रविष्टत्वादसङ्ग्रहः, गुरुधर्मसाधारणस्योन्नायकतावच्छेदकत्वस्य प्रवेशेनैतद्दोषस्य वारणेऽपि यत्र साधनाधिकरणे स्वाभावः साध्याभाववत्तदधिकरणत्वस्य साध्याभाववत्तदीयाधिकरणत्वस्य वा साधुतया दोषवैयर्थ्यम्, पूर्वनिरुक्तोपाधिद्वयस्यैव परम्परया व्यभिचारोन्नायकत्वेऽप्यवच्छिन्नसाध्यव्यापकोपाधिसाधारण्येनान्यादृशोपाधित्वनिर्वाहानौचित्यमित्यस्वरसबीजम् ।

( चि० ) किञ्च अर्थान्तरस्य पुरुषदोषतयाऽऽभासान्तरस्य तत्राभावादुपाधिरेव भावत्वादिकं दोषः।

( दी० ) नन्वस्तु पारिभाषिकमुपाधित्वम्, तथापि साक्षाद् व्यभिचारानुन्नायकतया दोषत्वाभावेन तदुद्भावनेऽर्थान्तरं स्यादित्यत आह। किञ्चेति। आभासान्तरस्य। तदानीं ज्ञायमानस्य, तथा च तस्यावश्याभ्युपेयदोषभावत्वे तदुद्भावने नार्थान्तरमिति भावः।

( गा० ) अवच्छिन्नसाध्यव्यापकस्य साक्षाद्व्यभिचारानुन्नायकत्वाभ्युपगमपक्षे कथञ्चिदुपाधित्वसमर्थनेऽपि तान्त्रिकाणां परार्थस्थले तदुद्भावनमर्थान्तरादिदोषेणानुपपन्नमेवेति शङ्कानिवर्तकतया किञ्चेत्यादिमूलमवतारयति । नन्वस्त्विति । उपाधित्वम् । तान्त्रिकाणामुपाधिव्यवहारविषयत्वम् । पारिभाषिकम् । स्वकल्पितपरिभाषानिर्वाह्यमित्यतोऽवच्छिन्नसाध्यव्यापकस्य साक्षात्साध्याव्यापकत्वेऽपि अस्तु उपाधित्वनिर्वाह इत्यर्थः । साक्षादिति । परम्परया व्यभिचारोन्नायकस्य दोषत्वे उपाध्युन्नायकपरम्पराया अपि तथात्वापत्तेरिति गूढोऽभिसन्धिः । दोषत्वाभावेनेति । प्रथममनाकाङ्क्षितत्वादिति शेषः । आहेति । तस्य दोषत्वं व्यवस्थापयतीत्यर्थः ।

मूले अर्थान्तरस्य । अर्थान्तरादेः । पुरुषदोषतया । वादिनां तदुद्भावनदशायां आकाङ्क्षाविरहाधीनतया । आभासान्तरस्य । दोषान्तरज्ञानस्य । तत्र । तदानीम्, तदुपाध्युद्भावनदशायामिति यावत् ।

उपाधिस्थले व्यभिचारस्याऽऽवश्यकतया आभासान्तरस्य तत्राभावादिति यथाश्रुतासङ्गतिः, अत आभासपदं तज्ज्ञानार्थकमुक्त्वा पूरणेन उक्तासङ्गतिं दीधितिकृत् परिहरति । तदानीमिति ।

मूले उपाधिरेवेति । एवकारव्यत्यासेन उपाधिर्भावत्वादिकं दोष एव दोषतया उद्भाव्यमेवेत्यर्थः ।

अर्थान्तरसत्त्वे उद्भाव्यत्वासम्भवादर्थान्तरप्रयोजकत्वेनाभिहितस्य आकाङ्क्षाविरहस्य प्रकृते ऽसत्त्वलाभायाभासान्तरज्ञानाभावाभिधानस्य भावं प्रकाशयति दीधितौ । तथा चेति । तस्याव-




ध्येति। परम्परया व्यभिचारोन्नायकत्वेनापि तस्य अनुमितिविरोधितायाः अवश्याभ्युपेयत्वेन तेन रूपेणाकाङ्क्षितत्व इत्यर्थः।

( दी० ) अत्र वदन्ति साध्योपन्यासानन्तरं तत्साधकस्येव साधनोपन्यासानन्तरं तद्दोषस्य व्यभिचारादेराकाङ्क्षितत्वात्तमनुद्भाव्य साक्षात्तत्साधकस्य शुद्धसाध्यव्यापकस्योपाधेरुद्भावने एवाऽप्राप्तकालत्वम्, केव कथा परम्परया तत्साधकस्यावच्छिन्नसाध्यव्यापकस्य, अन्यथा तत्साधकपरम्पराया अपि प्रथममुपन्यासे तथात्वं न स्यात्। न च निग्रहस्थानत्वेन विशेषः, प्रतिज्ञाहान्यादितो हेत्वाभासाच्च बहिर्भूतस्य तथात्वायोगात्।

(गा०) परम्परया व्यभिचाराद्युन्नायकस्य प्रथममाकाङ्क्षितत्वे उपाध्युन्नायकपरम्परोद्भावनप्रतिबन्देरनुद्धारात् स्वयमन्यानुद्भावनपरिपाटीं प्रदर्शयिष्यन् साम्प्रदायिकोद्भावनक्रमं निराकरोति। अत्र वदन्तीति। साध्योपन्यासानन्तरं तत्साधकस्येवेति। पक्षे साध्यस्योद्भावने कृते उद्भावयितुरनाप्तत्वशङ्कया उद्भावितार्थेऽप्रमितत्वशङ्कया मध्यस्थस्य यथा तन्निवर्तकप्रमाणगोचरनिर्णयेच्छा सम्भवति तथा साधनोपन्यासे कृते तस्य दुष्टत्वादुष्टत्वकोटिकशङ्कया तन्निवर्तकतदन्यतरकोटिनिर्णयेच्छया व्यभिचारादिरूपदोषस्याकाङ्क्षितत्वाद्व्यभिचारादिकमनुद्भाव्य प्रथममनाकाङ्क्षितस्य साक्षाद्व्यभिचारादिसाधनस्यापि शुद्धसाध्यव्यापकोपाधेरुद्भावन एव अप्राप्तकालत्वमित्यर्थः। परम्परया। अवच्छिन्नसाध्यव्यभिचारादिसाधनद्वारा। तत्साधकस्य शुद्धसाध्यव्यभिचारादिसाधकस्यावच्छिन्नसाध्यव्यापकस्य, उद्भावने अप्राप्तकालतायाः। का कथा। को विपरीतकथारसः। अन्यथा। तदाकाङ्क्षावसर एव तत्साधकाकाङ्क्षायाम्। तत्साधकेति। तादृशोपाधिप्रभृतिसाधकेत्यर्थः। तथात्वम्। अप्राप्तकालत्वम्। निग्रहस्थानत्वेनेति। उपाधेरित्यादिः। विशेषः। अनथाभूततत्साधकपरम्परातः, तथा च निग्रहप्रयोजकत्वेन हेत्वाभासादीनामिव उपाधेरपि प्रथममाकाङ्क्षितत्वमिति प्रथमं तदुद्भावने नाप्राप्तकालत्वम्, अपि तु त-

स्साधकोद्भावन एवेति भावः । प्रतिज्ञाहान्यादेरिति । "प्रतिज्ञाहानिः प्रतिज्ञान्तर"मित्यादिसूत्रपरिगणितादित्यादिः । प्रतिज्ञाहान्यादेरुपाधेर्वैलक्षण्यमतिस्फुटतर एव । अनौपाधिकत्वस्य व्याप्तित्वमते उपाधेर्व्याप्यत्वासिद्धिरूपतया हेत्वाभासान्तर्भावसम्भवात् हेत्वाभासाश्चेति परिगणितत्वेऽपि आदिपदार्थे तमनन्तर्भाव्य हेत्वाभासाश्चेति पृथगुपादानम् । अनौपाधिकत्वस्य व्याप्तित्वनिरासादित्यादिः । तथात्वायोगात् । निग्रहस्थानत्वायोगात् ।

(दी०) न च विभाजकसूत्रस्थेन हेत्वाभासाश्चेति चकारेणानुक्तसमुच्चयपरेण साक्षात्परम्परया वाऽनुमितिदोषोन्नायकस्य सङ्ग्रहः, तथा सति व्यभिचारस्येवाऽऽश्रयासिद्ध्यादेरप्युन्नायकस्य तदुभयोन्नायकपरम्परायाश्च तथात्वापातात् । न चाप्रकाशितमासादयन्नपि प्रथममुपाध्युपन्यासः कथकसम्प्रदायानुरोधादेव कर्तव्यः, तादृशसम्प्रदायमननुरुन्धानस्य तदुद्भावकं पराभवतश्शपथनिवारणीयतापत्तेः । तस्मात्प्रथमं शुद्धसाध्यव्यभिचार एवोद्भाव्यः, तत्र कथन्तायां तद्धेतुत्वेन शुद्धसाध्यव्यापकोपाधिव्यभिचारः, विशेषणाव्यभिचारित्वे सति विशिष्टसाध्यव्यापकस्योपाधेर्विशिष्टसाध्यस्य वा व्यभिचारः, अत्र च विशेष्ये विशिष्टसाध्यव्यापकोपाधिव्यभिचार इति । वक्ष्यते च व्यभिचारादेरिव तद्व्याप्यवत्त्वादेरपि ज्ञानं व्याप्त्यादिग्रहप्रतिबन्धकम्, तथा च साध्यव्यभिचारव्याप्योपाधिव्यभिचारवानयमिति वोद्भावनीयमिति ।

(गा०) तदुभयेति । व्यभिचाराश्रयासिद्ध्याद्युभयेत्यर्थः । तथात्वापातात् । निग्रहस्थानत्वापातात् । तथा चाश्रयासिद्ध्याद्युन्नायकस्य प्रथममुद्भावनेऽपि तथात्वं न स्यादिति भावः । चकारेणोपाधिरेव महर्षिणा सङ्गृहीत इति नाशङ्कनीयम्, दोषोन्नायकत्वाविशेषेणाश्रयासिद्ध्याद्युन्नायकोपेक्षाया निर्बीजत्वात् । तदुद्भावकम् । उपाध्युद्भावकम् । पराभवतः । निगृह्णतः ।

नन्वेवमुपाधिः किमनुद्भाव्य एवेत्याकाङ्क्षायामाह । तस्मादिति । तत्र । शुद्धसाध्यव्यभिचारे । कथन्तायाम् । साधकाकाङ्क्षायाम् । तद्धेतुत्वेन शुद्धसाध्यव्यापकोपाधिव्यभिचारः, उद्भाव्य इत्यनुपपद्यते । एवमुत्तरत्रापि । व्यभिचारादेस्सम्बन्धताविरहे प्राधान्येनोपाधिर्नोद्भाव्यते एवेति भावितम् । अवच्छिन्नसाध्यव्यापकोपाधिव्यभिचारस्य विशेषणान्तरानवच्छिन्नशुद्धसाध्यव्यभिचारासाधकत्वेऽपि विशेषणान्तरविशिष्टतया तदुद्भावनमपि प्रथमतस्सम्भवतीत्याह । विशेषणेति । अविशिष्टेनापि विशिष्टसाध्यव्यापकव्यभिचारेण विशिष्टसाध्यव्यभिचारे सिद्ध्यति पक्षधर्मताबलात् शुद्धसाध्यव्यभिचारसिद्धिसम्भवेऽपि विशेषणान्तरानवच्छिन्ने विशिष्टसाध्यव्यापकोपाधिव्यभिचारे शुद्धसाध्यव्यभिचारावच्छिन्नस्य साधकतयोपन्यस्ते तद्रूपावच्छिन्नसिद्धौपयिकतद्रूपावच्छिन्ननिरूपितव्याप्तिस्तादृशोपाधिव्यभिचारहेतावाकाङ्क्षोदयात् तस्याश्च तादृशहेतौ धावेनोद्भावनासम्भवात् सत्यन्तविशेषितस्यैवोद्भाव्यत्वमुक्तम् । तादृशविशेषणाविशेषितेन तादृशोपाधिव्यभिचारेणैव तथाविधेन विशिष्टसाध्यव्यभिचारेणापि शुद्धसाध्यव्यभिचारसाधनसम्भवात्तस्याप्युद्भावनीयतामाह । विशिष्टसाध्यस्य चेति । अत्रापि सत्यन्तमनुपज्यते । वाकारो व्यवस्थितविकल्पार्थः । अत्र च विशेष्य इति । उपन्यस्तस्य विशेषणाव्यभिचारविशिष्टसाध्यव्यभिचारस्य घटके विशिष्टसाध्यव्यभिचार इत्यर्थः । व्यभिचारव्याप्यत्वविशिष्टस्य व्यभिचारान्तर्भावात्तादृशस्योपाधिव्यभिचारस्य प्रथममुद्भावनेऽपि नाप्राप्तकालतेत्याह । वक्ष्यते चेति । व्याप्यत्वग्रहप्रतिबन्धकमिति । साक्षादित्यादिः । तथा च तद्याप्यवत्त्वमपि हेत्वाभास इति भावः ।

( चि० ) न चैवं शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वम्, जलं प्रमेयं रसवत्त्वादित्यत्र पृथिवीत्वमुपाधिः स्यात्, केवलान्वयित्वसाधकप्रमाणेन तत्र साध्यसिद्धेरुपाधेर्विशिष्टाव्यापकत्वात् । न च पक्षेतरे स्वव्याघातकत्वेनानुपाधावतिव्याप्तिः, तत्रानुकू-

लतर्काभावेन साध्यव्यापकत्वानिश्चयात्,

(दी०) साध्यव्यापकत्वानिश्चयात्। उपाधित्वौपयिकतदनिश्चयात्। अनुकूलतर्कादिना तादृशव्यापकत्वनिश्चये तु बाधोन्नीतवह्निवत्येव निश्चितोपाधिः। न च स्वव्याघातकत्वान्नायमुपाधिः, तद्धि न सर्वानुमानसाधारण्यम्, अनुकूलतर्कादिनिश्चितव्याप्तिके हेतौ तदभावात्। नापि तद्व्यभिचारेण व्यभिचारानुमानेऽपि पक्षेतरान्तरस्योपाधित्वसम्भवः, अनुकूलतर्कादिना तस्य साध्यव्यापकत्वनिश्चये व्यापकव्यभिचारिणि व्याप्यव्यभिचारावश्यम्भावेन तदयोगात्। अत एव पक्षेतरस्योपाधित्वे सर्वत्रैव तादृशोपाधिसम्भवेनानुमानमात्रविलोपे व्यभिचारानुमापकत्वगर्भस्योपाधित्वस्याव्याघात इति परास्तम्। कथकसम्प्रदायानुरोधाद्बाधानुन्नीतः पक्षेतरो नोपाधित्वेन कथायामुद्भाव्य इति तु वदन्ति।

(गा०) ननु पक्षेतरत्वे व्यापकताग्राहकतर्काभावेन साध्यव्यापकत्वानिश्चयात् न तस्य दूषकत्वमिति मूलोक्तं न सङ्गच्छते, तत्र शुद्धसाध्यव्यापकाघानिश्चयस्यावच्छिन्नसाध्यव्यापकोपाधिसाधारणतया अदूषकत्वाप्रयोजकत्वात्, किञ्चिद्विशिष्टसाध्यव्यापकतायाः पक्षेतरत्वेऽपि निश्चयसम्भवादित्याशङ्क्य साध्यव्यापकत्वानिश्चयादिति व्याचष्टे। उपाधित्वौपयिकेति। उपाधित्वौपयिकस्य तस्यानिश्चयादित्यर्थः। उपाधित्वौपयिकं च साध्यव्यापकत्वं पूर्वनिरुक्तं यदवच्छिन्नसाधनाव्यापकत्वं तदवच्छिन्नसाध्यव्यापकत्वरूपम्। सद्धेतौ च पक्षेतरत्वेन तन्निश्चयसम्भवः, तदसत्त्वादिति भावः।

ननु तत्र तादृशव्यापकताया असत्त्वेऽपि तर्काभासात् स्वतःसिद्धव्यभिचाराग्रहाद्वा तन्निश्चयः सम्भवत्येवेत्यत आह। अनुकूलतर्कादिनेति। तादृशेति। उपाधित्वौपयिकेत्यर्थः। बाधोन्नीतवत्। वह्निरनुष्णः इत्यादिस्थलीयवह्नीतरत्वादिवत्। निश्चितोपाधि। व्यभिचारनिश्चयाधायकतया अनुमानविरोधी। अयम्। बाधानुन्नीत

पक्षेतरः । नोपाधिः । न दूषकः । हि । यतः । तत् । अदूषकताप्रयोजकं स्वव्याघातकत्वम् । सर्वानुमानसाधारण्यम् । सर्वत्रैवानुमाने पक्षेतरत्वस्य साध्यव्यापकतानिश्चयसम्भवेन दूषकताप्रसक्तिः । स्वपदस्यानुमानसामान्यपरतया ईदृशसर्वानुमानसाधारण्यस्य स्वव्याघातकता । निश्चितव्याप्तिके इति । प्रथमतो हेतौ व्याप्तिनिश्चये सतीत्यर्थः । तदभावात् । पक्षेतरत्वे साध्यव्यापकत्वज्ञानेन प्रतिबन्धात् साध्यव्यापकतानिश्चयासम्भवात् । स्वपदस्य स्वव्यभिचारहेतुकव्यभिचारानुमानार्थकतया अन्यादृशं स्वव्याघातकत्वपदार्थं निराकुरुते । नापीति । तद्व्यभिचारेण । पक्षेतरव्यभिचारेण । उपाधित्वसम्भवः । दूषकताप्रसक्तिः । तस्य । पक्षेतरस्य । व्यापकव्यभिचारिणि । व्यापकतया गृहीतस्य व्यभिचारिणि । व्याप्यंति । व्याप्यस्य । व्याप्यतया गृहीतस्य साध्यस्य व्यभिचारावश्यम्भावनिश्चयेनेत्यर्थः । पक्षेतरो यदि साध्यव्यभिचारव्याप्यव्यभिचारप्रतियोगी न स्यात् साध्यव्यापको न स्यात पक्षेतरव्यभिचारो यदि साध्यव्यभिचारव्याप्यो न स्यात् तद्व्यापकव्यभिचारो न स्यात् इति तर्केण पक्षेतरव्यभिचारस्य साध्यव्यभिचारव्याप्यतया निश्चयेनेति यावत् । तदयोगात् । व्यभिचारानुमाने साधनरूपपक्षेतरस्य दूषकत्वायोगात् । स्वं स्वस्योपाधित्वम् तद्व्याघातकत्वमित्यर्थः । दूषयति । अत एवेति । अत एव । पक्षतरत्वस्य अनुकूलतर्कादिना यत्र साध्यव्यापकताग्रहस्तत्रोक्तयुक्त्या तद्व्यभिचारेण साध्यव्यभिचारसिद्धरत्रपवादत्वादेव । पक्षेतरत्वस्य क्वचित् दूषकत्वसम्भवेऽपि उपाधितया अनुद्भावनं व्यवस्थापयतां मतमाह । कथकेति । अत्र कथकसम्प्रदायमननुरुन्धानस्य तदुद्भावनं दुर्निवारमेवेत्यस्वरसः ।

(चि० ) सहचारदर्शनादेस्तेन विना संशायकत्वादित्युक्तम् । बाधोन्नीते चानुकूलतर्कोऽस्त्येवेति । एवं पर्वतावयववृत्त्यन्यत्वादेरपि नोपाधित्वम्, पक्षमात्रव्यावर्तकविशेषणवत्त्वात् । अत एव धूमे आर्द्रेन्धनप्रभववह्निमत्त्वम्, द्रव्यबहिरिन्द्रियप्रत्यक्षत्वे उद्भूतरूपवत्त्वम्, मित्रातनयश्यामत्वे शाकपाकजत्वम्,

जन्यानित्यत्वे भावत्वमुपाधिः । *

( दी० ) पक्षमात्रेति । यद्यपि पर्वतावयवरूपादेरपि व्यावर्त्तकं तत्, तथापि तस्य व्यावृत्तिर्नोपाधितायामुपयुज्यते, अपि तु पक्षस्यैवेति तन्मात्रव्यावर्तकत्वमुक्तम् । इदं चानुपाधितायां न बीजं परिभाषामात्रत्वात्, किन्त्वनुकूलतर्काभावेन तादृशसाध्यव्यापकत्वानिश्चय इति द्रष्टव्यम् । अत एव । व्यापकताग्राहकप्रमाणसम्भवादेव । आर्द्रेन्धनेति ।

( गा० )पर्वतावयववृत्त्यन्यत्वादौ वृत्त्यन्तस्य भेदविशेषणस्य पक्षभिन्नमपि व्यावर्त्यमस्तीति मूलोक्तस्य पक्षमात्रव्यावर्त्तकविशेषणवत्त्वादिति तदनुपाधित्वप्रयोजकहेतोरसङ्गतिमाशङ्कते । यद्यपीति । नोपाधितायामुपयुज्यत इति । उपाधेस्सङ्कोचनं तल्लक्षणप्रविष्टसाधनाव्यापकत्वसम्पादकतयोपयुज्यते, तदव्यापकत्वसम्पादकता च तदधिकरणानुपाधिव्यावृत्तिरेव, न तु तदनधिकरणपर्वतावयवरूपादिव्यावृत्तिरिति भावः । पक्षस्यैवेति । व्यावृत्तिरुपाधितायामुपयुज्यते इत्यनुषज्यते । पक्षस्य साधनवत्त्वादिति भावः । इति । इत्याशयेन । उक्तमिति । मात्रपदेन उपाधित्वौपयिकपक्षभिन्नव्यावृत्तिप्रयोजकताया विशेषणे व्यवच्छेदात् पर्वतभिन्नतदवयवरूपादिव्यावर्त्तकत्वेऽप्युक्तविशेषणे उक्तव्यावृत्तिविशेषणप्रयोजकत्वाभावस्याक्षततया मात्रार्थसङ्गतेरिति भावः । अनुपाधितायाम् । अव्यापकतायाम् । न बीजम् । न प्रयोजकम् । परिभाषेति । तादृशविशेषणवत्त्वेऽपि साध्यव्यापकत्वादिग्राहकरूपकताया दुर्निवारत्वादिति भावः । द्रष्टव्यम् । अनुपाधित्वबीजतया ।

केचित्तु पक्षमात्रव्यावर्त्तकं विशेषणं यस्य पक्षेतरस्य तत्तथा, तद्वत्त्वात् तत्तुल्यत्वात् । विशेषणवत्त्वादिति । तादृशार्थकवतिप्रत्ययबलान्मूलस्यार्थः । पक्षेतरतुल्यता च व्यापकताग्राहकानुकूलतर्कराहित्येन, तथा च दीधितिकारोक्तदूषकताबीज एव मूलस्य तात्पर्यमिति वदन्ति ।

अत एवेति मूलस्याव्यवहितोक्तपक्षेतरत्वानुपाधित्वोपष्टम्भपरत्वासम्भवादनुपाधिताप्रयोजकाभावप्रतियोगितया प्रकान्तानु-

कूलतर्कसम्भवोपष्टम्भपरतामाह । व्यापकताग्राहकेति । प्रमाणपदं प्रमाणसहकारितत्कारणपरम् ।

( दी० ) अथात्र स्वतन्त्रान्वयव्यतिरेकाभ्यामार्द्रेन्धनत्वेनैव कारणत्वम्, न पुनरार्द्रेन्धनप्रभववह्नित्वेनेति चेत् ? किञ्चातः ? न हि कारणतावच्छेदकमेव व्यापकतावच्छेदकम्, तादृशाभावप्रतियोगितानवच्छेदकस्यैव तथात्वात्, तदवच्छिन्नप्रतियोगिताकाभावस्य चातिरिक्ततया तद्वृत्तित्वेन साध्यव्यभिचारसाधने वैयर्थ्याभावात् ।

( गा० ) कारणतावच्छेदकमेवेत्यग्रिमग्रन्थस्य उपाधितावच्छेदकावच्छिन्नस्य कारणतानिश्चयेनेत्यर्थाभिमानेन आर्द्रेन्धनप्रभववह्नित्वेन धूमकारणतया तेन रूपेण उपाधित्वानुपपत्तिं शङ्कते । अथेति । स्वतन्त्रान्वयव्यतिरेकाभ्यामिति । आर्द्रेन्धनस्य वह्नेश्च पृथगन्वयव्यतिरेकयोर्धूमान्वयव्यतिरेकप्रयोजकत्वदर्शनादित्यर्थः । न पुनरिति ।

यद्यपि आर्द्रेन्धनप्रभववह्नित्वेन कारणत्वेऽपि तादृशान्वयव्यतिरेकोपपत्तिः ।

न च तेन रूपेण कारणत्वे आर्द्रेन्धनप्रभववह्निमत्त्वे आर्द्रेन्धनविरहे धूमविरहो नोपपद्यत इति वाच्यम् । कारणतावच्छेदकघटितस्य प्राक्सत्तायाः प्रकृते कार्योत्पादप्रयोजकत्वोपगमेनाकारणस्याप्यार्द्रेन्धनस्य कारणतावच्छेदकतया तदभावेन धूमाभावोपपत्तेः, तथापि आर्द्रेन्धनप्रभवत्ववह्नित्वयोरन्यैकविशिष्टत्वेनापरस्य जनकतावच्छेदकत्वं वाच्यम्, तथा च तयोर्विशेषणविशेष्यभावे विनिगमनाविरह इति प्रत्येकमेव कारणत्वम्, अन्यथा घटादावपि चक्रविशिष्टदण्डत्वादिना हेतुताप्रसङ्गात् ।

न चैवमार्द्रेन्धनस्य शुष्केन्धनमात्रजन्यवह्नेश्च सत्त्वे धूमोत्पत्तिप्रसङ्ग इति वाच्यम् । प्रत्येकरूपेण स्वरूपयोग्यत्वेऽपि आर्द्रेन्धनवह्न्योर्जन्यजनकभावरूपप्रत्यासत्तेः फलोपधाने तन्त्रतया आर्द्रेन्धनप्रभववह्नित्वस्य धूमोपधायकतावच्छेदकत्वात् । अत एव दण्डत्वचक्रत्वादिना पृथग्घटादिस्वरूपयोग्यत्वेऽपि चक्रादिविशिष्टदण्डत्वं घटाद्युपधायकतावच्छेदकम् ।

अथ कारणतावच्छेदकसम्बन्धेनैकक्षणावच्छिन्नसामानाधिकरण्यमेव कार्योपधाने प्रयोजकम्, न तु जन्यजनकभावादिरूपप्रत्यासत्तिः, अव्यापकत्वात्, यत्तु कृतिसाध्यताज्ञानेष्टसाधनताज्ञानयोः पृथक्पृथक्प्रवृत्तिहेतुत्वेऽपि तयोरभेदस्य कार्योपधानप्रयोजकतया कृतिसाध्यताविषयकेष्टसाधनताज्ञानत्वं फलोपधानरूपकारणतायामवच्छेदकमिति विधिवादे मिश्राणां मणिकारतात्पर्यवर्णनं तदपि इच्छातद्विषयफलसाधनताज्ञानकृतिसाध्यताज्ञानानां त्रयाणां युगपदवस्थानासम्भवेनैकक्षणावच्छिन्नसामानाधिकरण्यापेक्षायामेव ज्ञानयोरभेदापेक्षापर्यवसानमित्यभिप्रायेण सङ्गच्छते, अन्यथा कारणयोः क्वचिदभेदरूपायाः क्वचिज्जन्यजनकभावरूपायाः प्रत्यासत्तेः फलोपधानप्रयोजकतामभ्युपेत्यातिप्रसङ्गवारणे कृतिसाध्यताविषयकनिश्चयत्वादिना प्रवृत्त्यादिहेतुत्वे तद्विषयकत्वसंशयान्यत्वज्ञानत्वादीनां विशेषणविशेष्यभावे विनिगमनाविरहेण तेन रूपेण पृथगेव कारणता, तत्तत्कारणतावच्छेदकावच्छिन्नानामभेदः कार्योपधाने प्रयोजक इत्यपि स्यात्। एवं च दण्डचक्रसंयोगादेः कारणप्रत्यासत्तिविधया न घटाद्युपधाने अपेक्षा, अपि तु स्वतन्त्रान्वयव्यतिरेकेण तस्यापि घटादिकं प्रति कारणता, इति चेत् ? सत्यम्, इन्धनारम्भकपरमाणुषु वह्निनोदनाख्यसंयोगात्तेषां क्रिया, ततो विभागः, ततो द्व्यणुकारम्भकसंयोगनाशः, तन्नाशाद् द्व्यणुकनाशः, ततः पाकजविलक्षणरूपवद्भिः परमाणुभिः धूमद्व्यणुकाद्युत्पत्त्या त्रसरेण्वादिक्रमेण महाधूम उत्पद्यते, सामानाधिकरण्यप्रत्यासत्त्या धूमहेतुरूपविशेषस्याग्निसंयोगेन जनने च परमाणूनां जलसंयोगरूपमार्द्रत्वं सहकारि, अम्लद्रव्यसंयोग इव दधिहेतुमधुरतरसविशेषस्य दुग्धारम्भकपरमाणुषु तेजस्संयोगेन जनने, एवं च वह्नित्वादिना कारणत्वे वह्न्यार्द्रेन्धनयोरुभयोस्सत्त्वे आर्द्रेन्धनदाहं विना धूमोत्पत्तेर्नावकाशः, द्रव्यान्तरारम्भरहितानां रूपविशेषविशिष्टपरमाणूनामभावादिति किमार्द्रेन्धनप्रभववह्नित्वेन कारणतयेति।

न चैवं वह्नित्वादिनापि कारणत्वमनर्थकम्, पूर्वद्रव्यविनाशरूपविशेषोपपादकस्य वह्नेस्तेनैवान्यथासिद्धत्वात्, स्वनाशेन इन्धनस्यापि तथात्वात्, अन्यथाऽन्यत्रापि स्वनाशद्वारा प्रतिबन्धकस्य हेतुताप्रसङ्गादिति वाच्यम्। वह्निना इन्धनं विनाश्य परमाणुषु रूप-

विशेषे जनितेऽपि वह्नीन्धनयोरसत्त्वे धूमानुत्पादेन तद्धेतुताया आवश्यकत्वात् ।

न च रूपविशेषमुत्पाद्य विनष्टे वह्नौ परमाण्वाद्यारम्भकसंयोगानुकूलक्रियानुत्पादान्न धूमोत्पत्तिः, तादृशक्रियामुत्पाद्य वह्नौ विनष्टे च तादृशक्रियारम्भकसंयोगजनने जायत एव त्रिचतुरादिक्षणमध्ये धूमः, वह्न्यवयवेषु संयुक्तेषु कारणान्तरविरहात् कार्यद्रव्यं नोत्पद्यते, अवयवसंयोगानां चरमकारणत्वादिति वाच्यम्'। एवं सत्यवयवसंयोगसम्पादकत्वात्सद्धेतुत्वस्याप्रत्याख्येयत्वात्, अन्यथा घटपटादावपि दण्डवेमादेरन्यथासिद्ध्या अहेतुतापत्तेः ।

न चैवं वह्नेर्हेतुत्वेऽपि इन्धनस्य हेतुत्वमप्रामाणिकमिति वाच्यम् । इन्धनासत्त्वे वह्नेरनवस्थानेन तदवस्थापनद्वारा तस्यापि हेतुताया आवश्यकत्वात् । जलसंयोगरूपमार्द्रत्वं रूपविशेषद्वारा पृथगेव हेतुः । न हीन्धनकारणतायां तस्यावच्छेदकत्वम् । आर्द्रेन्धनत्वादिनैव कारणत्वमित्यस्याप्यत्रैव तात्पर्यम् ।

यत्तु आर्द्रेन्धनप्रभववह्नेर्जातिविशेषपुरस्कारेण हेतुता, न तु तादृशवह्नित्वेनेति नोक्तविनिगमनाविरह इति तदपि न सत् । प्रामाणिकवह्नित्वजात्या कारणत्वेऽप्युक्तदिशाऽतिप्रसङ्गवारणसम्भवेनाधान्तरजातौ मानाभावादित्यलमाधिकेन ।

कारणतावगमेन इति मूलस्य आर्द्रेन्धनप्रभववह्नित्वादिरूपोपपाधितावच्छेदकाभिमतरूपेण कारणतानिश्चयेनेति नार्थः, परन्तु याद्दशायादृशकार्यकारणभावादिना तत्तद्रूपावच्छिन्नस्य फलोत्पत्तिप्रयोजकत्व तादृशकार्यकारणभावपरमेव तदित्याशयेन समाधत्ते । किञ्चात इति ।

नन्वेवमार्द्रेन्धनप्रभववह्नित्वं यदि धूमव्यापकतावच्छेदकं न स्यात् तदा तत्कारणतावच्छेदकं न स्यादिति व्यापकताग्राहकतर्कस्येष्टापत्तया नावतार इति कथं तद्ग्रहसम्भवतीत्यत आह । न हीति । यतः स्वरूपयोग्यतावच्छेदकत्वमात्रं व्यापकतावच्छेदकत्वनिर्वाह्यमिति न, येन आर्द्रेन्धनप्रभववह्नित्वादेरन्यथासिद्धिनिरूपकत्वेन स्वरूपयोग्यतानवच्छेदकत्वस्येष्टतया तदापत्तेरसम्भवेनैव व्यापकतावच्छेदकत्वग्रहो न स्यात्, अपि तु फलोत्पत्तिप्रयोजकतावच्छेदकत्वमपि तन्निर्वाह्यम्, तदभावापत्त्यैव व्यापकतावच्छेदकत्वं

सुगममित्यर्थः । यादृशान्यथासिद्धया आर्द्रेन्धनप्रभववह्नित्वादिकं न स्वरूपयोग्यतावच्छेदकं तादृशी यदि व्यापकतावच्छेदकत्वमपि विघटयेत्तदा तद्रूपसाधारणं धूमानुत्पादसामान्यप्रयोजकतावच्छेदकस्य व्यापकतावच्छेदकत्वानियतं न स्यादिति तदभावस्तदभाव न प्रसज्जयेत्, नैव न, कारणतावच्छेदकत्वे इव व्यापकतावच्छेदकत्वे ऽन्यथासिद्धप्रवेशस्याभावादित्याह । तादृशीति । तथास्यात् । व्यापकतावच्छेदकत्वात् ।

ननु तथापि, आर्द्रेन्धनप्रभववह्नित्वादिना वह्न्यादेर्नोपाधितासम्भवः, वह्नित्वावच्छिन्नव्यभिचारस्यैव धूमादिव्यभिचारव्याप्यतया आर्द्रेन्धनप्रभवत्वादिविशेषणस्यासिद्धिमात्रवारकतया वैयर्थ्येन तद्घटितरूपावच्छिन्नव्यभिचारस्य साध्यव्यभिचारासाधकत्वादित्यत आह । तदवच्छिन्नाभावस्य चेति । विशिष्टवह्नित्वावच्छिन्नाभावस्येत्यर्थः । अतिरिक्ततया शुद्धवह्नित्वावच्छिन्नाभावभिन्नतया । तद्वद्वृत्तित्वेन । शुद्धवह्नित्वावच्छिन्नाभावाघटितेन विशिष्टवह्नित्वावच्छिन्नव्यभिचारेण ।

(दी०) सत्यपि चाऽऽर्द्रेन्धने तत्संयुक्ते च वह्नौ दाहप्रतिबन्धकसत्त्वे धूमानुत्पादात् क्लृप्तकारणभावस्य वह्नेर्विशेषरूपेण कारणत्वकल्पनयैवोपपत्तावक्लृप्ततत्कारणभावानां दाहप्रतिबन्धकाभावानां तत्कारणत्वकल्पनानौचित्यात् । एकस्यामार्द्रेन्धनव्यक्तौ प्रतिबद्धायां तत्रैव व्यक्त्यन्तराद्धूमोत्पादात् तत्तदिन्धनजन्यधूमं प्रति तत्तदभावानां कारणत्वस्य वाच्यत्वेऽतिगौरवाच्च । महति चाऽऽर्द्रेन्धने तत्प्रभवे चाणीयसि वह्नौ महति वह्न्यन्तरे विद्यमानेऽप्यार्द्रेन्धनप्रभवमहावह्नेरनुत्पाददशायां प्रकृष्टधूमानुत्पादादार्द्रेन्धनप्रभववह्नित्वेन कारणत्वमित्यपि वदन्ति ।

(गा०) आर्द्रेन्धनप्रभववह्नित्वेनापि धूमस्वरूपयोग्यत्वं व्यवस्थापयतां मतमाह । सत्यपि चेत्यादिना वदन्तीत्यन्तेन । धूमानुत्पादादित्यत्रापि आर्द्रेन्धनप्रभववह्नित्वेन कारणमित्यग्रिमे हेतुः । आर्द्रेन्धने वह्नेरसंयोगस्थले पृथक्कारणतामतेऽपि धूमानुत्पादो निर्वहति, कार-

णानां कारणतावच्छेदकसम्बन्धघटितसामानाधिकरण्यातिरिक्तप-रस्परप्रत्यासत्तेः कार्योत्पत्तावनपेक्षितत्वेऽपि संयोगविशेषसम्बन्धेन धूमं प्रति तादात्म्यसम्बन्धेनाऽऽर्द्रेन्धनस्य संयोगसम्बन्धेन च वह्नेः कारणत्वे आर्द्रेन्धनतादात्म्यवति वह्निसंयोगस्य धूमोत्पत्तावपेक्षा-सम्भवात्, अत उक्तं तत्संयुक्ते च वह्नाविति । आर्द्रेन्धने दाहसं-योगे सति तस्यापि दाहसम्भवेन धूमोत्पत्तिरिष्टैवेत्यत आह । दाह-प्रतिबन्धकसत्त्वे इति । एतदुपलक्षणम्, दाहप्रतिबन्धकासत्त्वेऽपि दाहोत्तरमेव धूमोत्पादात् तत्पूर्वं धूमोत्पत्त्यापत्तिरपि पृथक्कारणता-मते द्रष्टव्या । दाहप्रतिबन्धकसत्त्वे धूमोत्पत्तिस्तदभावस्य धूमका-रणताकल्पनेनापि शक्यते वारयितुमित्याशङ्कां निराकरोति । क्लृप्ते-त्यादिना । क्लृप्तकारणभावस्य । अवश्यकल्पनीयकारणताकस्येत्य-र्थः । विशेषरूपेण । आर्द्रेन्धनप्रभववह्नित्वेन । अक्लृप्तेति । उभया-सिद्धेत्यर्थः । दाहप्रतिबन्धकाभावानाम् । मणिमन्त्रादिविशेषाद्य-भावादीनाम् । तत्कारणत्वेति । धूमकारणत्वेत्यर्थः । अनौचित्यं कारणताबाहुल्येन । मणिविशेषादीनामपि धूमसामान्यं प्रति नैकप्रतिबन्धकतया निर्वाह इति दर्शयति । एकस्यामिति । प्रतिरुद्धायाम् । दाहप्रतिबन्धकमण्यादिसमवहितायां सत्याम् । तत्रैव । तदिन्धनव्यक्तावेव । व्यक्त्यन्तरात् । सन्निहिता-र्द्रेन्धनान्तरात् । तत्तदभावानाम् तत्तदिन्धनप्रत्यासन्नमण्याद्यभा-वानाम् । कारणत्वस्येति । एतदुपलक्षणम्, यद्व्यक्तिजन्यधूमोऽ-प्रसिद्धः तज्जन्ये धूमे प्रतिबन्धकाभावकारणत्वस्य दुष्कल्पतयाऽस-ति प्रतिबन्धके वह्न्यादिघटितसामान्यसामग्रीबलात् तत्र धूमोत्प-त्तिवारणाय तत्तदिन्धनानां विशेषसामग्रीत्वस्य कल्पनीयतयेत्यपि द्रष्टव्यम् । आर्द्रेन्धनदाहस्य धूमकारणतयाऽप्युक्तापत्तिवारणसम्भ-वः, एवमिन्धनस्यादाहे तदारम्भकाणुषु द्रव्यान्तरावष्टम्भरूपप्रति-बन्धकसत्त्वेन धूमोत्पत्तिप्रयोजकरूपविशेषाभावेन च न धूमोत्पत्ति-रित्यनुशयान प्रकृष्टापकृष्टधूमयोग्यप्रकृष्टापकृष्टार्द्रेन्धनप्रभववह्न्यन्व-यव्यतिरेकानुविधायितया तादृशतादृशधूमं प्रति तादृशतादृशवह्नि-विशेषरूपेण हेतुताया आवश्यकतया वह्निविशेषयोरिति न्यायेन धूमसामान्यं प्रत्यार्द्रेन्धनप्रभववह्नित्वेन कारणत्वमावश्यकमित्याह । महतीति चेति । आर्द्रेन्धनस्य वह्निसामान्यस्य च प्रकर्षो न धूमप्रकर्ष-

प्रयोजक इत्यादिफलतमार्द्रेन्धनमहावह्न्यन्तरयोस्तत्त्वानुधावनम्। आर्द्रेन्धनवह्न्योः पृथक्कारणत्वेऽपि तयोरन्यजनकभावप्रत्यासत्तेर्धूमोत्पत्त्यवच्छिन्नत्वेन आर्द्रेन्धनप्रभववह्निं विना धूमोत्पत्त्यापत्तेः कथञ्चित्कारणसम्भव इत्यतोऽणीयसि तत्प्रभवे वह्नावित्युक्तम्।

अदन्तीत्यस्वरसस्सूचनाय, तद्बीजं च धूमनिष्ठप्रकर्षो महत्त्वविशेषः, रूपविशेषवदारम्भकसंयोगवदवयवभूयस्त्वघटितसामग्रीवशादेव धूमस्य तत्सत्त्वनिर्वाहेण तस्य न धूमजनकतावच्छेदकत्वम्, अन्यथा नीलघटत्वादेरपि नीलकपालजन्यतावच्छेदकतापातात्, भूयसां परमाणूनां पाकजरूपविशेषे धूमारम्भानुगुणसंयोगविशेषे च व्यापकवह्नेरपेक्षया तदन्वयव्यतिरेके महाधूमान्वयव्यतिरेक इति।

**(चि०) तदुत्कर्षेण साध्योत्कर्षात्। अनन्यथासिद्धान्वयव्यतिरेकतो वैजात्यकारणतायामेव घटोन्मज्जनप्रसङ्गेन साध्यव्यापकतानिश्चयात्।**

(दी०) तदुत्कर्षेणेति। आर्द्रेन्धनप्रभववह्निसामान्यं विना धूमसामान्यस्य प्रकृष्टतादृशवह्निं विना प्रकृष्टधूमस्यानुत्पादनियमादार्द्रेन्धनप्रभववह्नेरेव धूमव्यापकत्वम्, तत्रार्द्रेन्धनप्रभववह्नित्वं कारणतावच्छेदकमथवैशसम्पन्नं नान्तरीयकमेवास्तु, फलतो न कश्चिद्विशेष इति भावः। अनन्यथेति। तादृशान्वयव्यतिरेकाभ्यामुद्भूतरूपस्य तद्वतो द्रव्यस्यैव वा कारणत्वम्, उभयथापि व्यापकत्वम्, उद्भूतरूपत्वेन तत्त्वं पुनरुपचारितमेव। घटोन्मज्जनेति। ध्वंसप्रागभावानधिकरणकालस्य प्रतियोग्यधिकरणत्वनियमात्। न च प्रागभावस्य ध्वंसप्रतियोगिध्वंस, इव तद्ध्वंसोऽपि प्रतियोगिनो ध्वंस इति वाच्यम्। अप्रामाणिकध्वंसतत्कारणधाराकल्पनातो ध्वंसानन्तत्वकल्पनाया एवोचितत्वादिति भावः।

(गा०) पूर्वोक्तमाशयं प्रकाशयन् तदुत्कर्षेणेत्यादिमूले धूमत्वावच्छिन्नं प्रत्यार्द्रेन्धनप्रभववह्नित्वादिना अकारणत्वेऽपि सङ्गमयति।

तदुत्कर्षेणेतीति । अर्थवशसम्पन्नं नान्तरीयकमिति । तेन रूपेणाहेतुत्वेऽपि प्रत्येककारणतानिर्वाह्यव्यापकतावच्छेदकताकमित्यर्थः । वाय्वादेः प्रत्यक्षवारणाय उद्भूतरूपस्यापि प्रत्यक्षे हेतुतां प्राञ्चो न स्वीकुर्वन्ति अपि तु विषयनिष्ठतद्धेतुतायामवच्छेदकत्वमेव तस्येति तथाऽपि न प्रकृतक्षतिरित्याह । अनन्यथेतीति । अनन्यथासिद्धत्वं च कारणत्वं तदवच्छेदकत्वं च विनाऽनुपपद्यमानत्वम् । अन्वयव्यतिरेकाभ्याम । उद्भूतरूपान्वयव्यतिरेकाधीनप्रत्यक्षविशेषान्वयव्यतिरेकाभ्याम् । उद्भूतरूपस्य समवायेन तद्वतो द्रव्यस्यैव वा तादात्म्येन कारणत्वम् । तत्वं पुनरिति । विषयस्य सामान्यतःप्रत्यक्षे विषयत्वेन तद्व्यक्तिप्रत्यक्षे तद्व्यक्तित्वेन हेतुना, बहिर्द्रव्यादिप्रत्यक्षे च बहिर्द्रव्यादिरूपविषयस्य कारणत्वान्तरं निष्प्रमाणमेव, कुत उद्भूतरूपस्यावच्छेदकत्वम् ।

न च वाय्वादेः प्रत्यक्षवारणान्यथानुपपत्तिरेव बहिर्द्रव्यप्रत्यक्षे उद्भूतरूपवत्त्वेन विषयहेतुतायां प्रमाणमिति वाच्यम् । उद्भूतरूपत्वेन लघुना हेतुतयैव तद्वारणसम्भवेन अन्यथानुपपत्त्यनवकाशात् ।

वस्तुत उद्भूतरूपत्वेनापि न हेतुता, उद्भूतत्वस्य दुर्वचत्वात् ।

न च तद्रूपत्वव्याप्यजातिविशेषः, नीलत्वादिजात्या सङ्करात् । न च नीलत्वादिव्याप्यं नानैवोद्भूतत्वम्, कारणतावच्छेदकाननुगमेन व्यभिचारात् ।

न च नीलादिप्रत्यक्षत्वं नीलत्वादिव्याप्योद्भूतत्वाद्यवच्छिन्नजन्यतावच्छेदकमिति न व्यभिचारः, नीलादिरूपस्य विषयोपलक्षणत्वे न्यायमते पाकरक्तघटादिप्रत्यक्षे व्यभिचारात्, तद्विशेषणत्वे निर्विकल्पकासङ्ग्रहात्, स्वविषयनीलादिमत्त्वविशिष्टविषयतासम्बन्धेन शुद्धप्रत्यक्षत्वावच्छिन्नस्य नीलादिजन्यतेत्युक्त्या निर्विकल्पकसङ्ग्रहेऽपि नीलाद्यभिभवकालीनतदाश्रयप्रत्यक्षस्य दुस्सङ्ग्रहत्वात्, नापि लौकिकप्रत्यक्षविषयत्वमुद्भूतत्वम्, गुणादेः लौकिकप्रत्यक्षविषयतायां सन्निकृष्टाश्रयनिष्ठलौकिकप्रत्यक्षविषयतायाः प्रयोजकत्वादन्योन्याश्रयेणाश्रयप्रत्यक्षतायां तस्याः प्रयोजकत्वासम्भवात् ।

अनुद्भूतत्वं जातिः नीलत्वादिव्याप्या नानैव, तदवच्छिन्नभेदकूट एवोद्भूतत्वमिति चेत् ? तर्हि तेन रूपेण रूपस्य हेतुत्वे वाय-

भेदानां मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताया बाहुल्यस्य अवच्छेदकगौरवस्य च प्रसङ्गाद्रूपत्वेन तत्त्वावच्छिन्नस्य अनुद्भूतत्वावच्छिन्नान्यत्वाभावत्वेन च पृथक्कारणत्वकल्पनमेवोचितम्, तावता उद्भूतरूपत्वावच्छिन्नस्य बहिर्द्रव्यप्रत्यक्षत्वावच्छिन्नव्यापकत्वमव्याहतमेव।

यदि च अनुद्भूतत्वं शुक्लत्वव्याप्यं भास्वरत्वविरुद्धमेव, रसनेन्द्रियादिरूपस्य शुक्लतया घ्राणेन्द्रियादावपि शुक्लरूपस्यैव कल्पनादित्युच्यते, तदा तदवच्छिन्नाभावस्य पृथक्कारणत्वमेवोचितम्। अन्यथा तदवच्छिन्नभेदरूपत्वयोर्विशेष्यविशेषणभावे विशेष्यविशेषणतावच्छेदकभावे वा विनिगमनाविरहेण कारणताद्वयस्याऽऽवश्यकत्वात्, अवच्छेदकगौरवाधिक्यादित्याधिक्यमुपदर्शितप्रायमित्यर्थः।

उच्छृङ्खलास्तु पृथिव्यादिवृत्तिर्नानाजातिविशेष एव बहिर्द्रव्यप्रत्यक्षजनकतावच्छेदकतया स्वीक्रियते, तदभावादेव न वाय्वादीनां प्रत्यक्षता।

न च तादृशजातेः पृथिवीत्वादिना सङ्करभयेन घ्राणेन्द्रियादाववयवेऽपि तत्प्रत्यक्षवारणायानुद्भूतरूपप्रतिबन्धकताया आवश्यकत्वेन रूपत्वेन हेतुतयैव नीरूपप्रत्यक्षवारणसम्भवे किमुक्तजात्येति वाच्यम्। रूपत्वेन हेतुत्वे नानाजातीयरूपवदारब्धद्रव्ये अतिरिक्तचित्ररूपस्य नीलपीतादीनां वा कल्पनीयतया गौरवात्। एतन्मते तत्र विजातीयसकलनप्रतिबन्धेन रूपानुत्पादस्यैवोपगमात्।

अथ वा उद्भूतत्ववच्छेदकत्वमेव प्रत्यक्षजनकम्, तद्गतमुद्भूतत्वं चैकैव जातिः, सङ्करानवकाशात्। घ्राणेन्द्रियाद्येकत्ववत्यावृत्तैव सा जातिः, अतो न तत्प्रत्यक्षता। न च प्रभायाश्चाक्षुषत्वानुरोधेन तदेकत्वे तादृशजातेरावश्यकतया तस्य स्पार्शनापत्तिरिति वाच्यम्। स्पार्शनप्रत्यक्षेऽनुद्भूतस्पर्शविशेषस्य प्रतिबन्धकतां स्वीकृत्य तस्य वारणीयत्वात्। अस्तु वा स्पार्शनप्रत्यक्षप्रयोजकमपि प्रभैकत्वव्यावृत्तं चाक्षुषप्रयोजकजातिव्याप्यं जात्यन्तरम्, न्यायादिमते वायोरिवोष्मणोऽप्यतीन्द्रियतया तदेकत्वे स्पार्शनप्रयोजकजातेरप्यनभ्युपगमेन तद्व्याप्यतानिर्वाहादित्याहुः।

मूले पैत्तिकादिति। पैत्तिकस्यातः शाकाद्याहारपरिणामजन्यत्वस्य नरश्यामरूपप्रयोजकत्वाभ्युपगमेनेत्यर्थः। जाठरानलेनाभ्यवहृ-

तच्छाकाद्यारम्भकेष्ववयवेषु शरीरगतश्यामरूपसजातीयं रूपमुत्पाद्यते, तैश्चावयवैरदृष्टविशेषप्रेरिताभ्यन्तरसमीरणसञ्चारितैर्गर्भाशयं प्रविश्य परस्परसंयुक्तैः शरीरमारभ्यते इति तत्रावयवश्यामरूपात्तज्जातीयं रूपमुत्पद्यते, तत्र शरीरगतशाकपाकजत्वस्य शाकपाकजत्वेन शरीरस्य वा हेतुतायां निष्प्रमाणकत्वेऽपि जाठरानलपाकाधीनरूपविशेषशाकाद्यवयवस्य वा तादृशविजातीयाग्निसंयोगस्य वा हेतुतयाऽपि शाकेतरभुक्तद्रव्ये तादृशरूपस्य जाठरानलेन जनयितुमशक्यत्वाच्छाकावयवजन्यत्वस्य मित्रातनयशरीरे श्यामविशेषोत्पादप्रयोजकतायां वैद्यकबोधितायां आवश्यकत्वेन तदनुपपत्त्या तस्य मित्रातनयश्यामत्वव्यापकतानिश्चयो निर्वहत्येवेति बोध्यम्। घटोन्मज्जनेति । तद्घटोत्तरकाले तद्घटसत्त्वापत्त्येत्यर्थः। आपत्तिश्च जन्यत्वविशिष्टं विनाशित्वं यद्यत्यन्ताभावाद्यवृत्तित्वे सति भावत्वव्यभिचारि स्यात् ध्वंसवृत्ति स्यात् ध्वंसत्ववदित्याकारा भावत्वोपाधौ विशिष्टसाध्यव्यापकतां ग्राहयति, विशेषणवत्त्वेन निश्चिते पक्षे विशिष्टापादकतर्कस्य विशेष्यशङ्कानिवर्तकत्वात् जन्यत्वविशिष्टे विनाशित्वे अत्यन्ताभावाद्यवृत्तित्वविशेषणस्य निश्चयादुक्ततर्के सति जन्यत्वविशिष्टे विनाशित्वे भावत्वव्यभिचारशङ्कानिवृत्तेः, तादृशापत्तिपरिपन्थिन्या विनाशित्वे ध्वंसवृत्तित्वस्येष्टापत्तिशङ्काया निवृत्त्यर्थमेव तर्कः घटादिध्वंसो यदि किञ्चित्कालवृत्तिध्वंसप्रतियोगी स्यात् स्वानधिकरणतत्कालेः स्यात्, तद्घटप्रागभावानधिकरणतया निश्चितस्य कालस्य तद्घटध्वंसानधिकरणत्वे इष्टापत्तिशङ्कायां च स कालस्तद्घटप्रागभावानधिकरणत्वे सति यदि तद्घटध्वंसानधिकरणकालः स्यात् तद्घटाधिकरणं स्यादिति घटोन्मज्जनप्रसङ्गो विरोधिपरम्परया साध्यव्यापकताया ग्राहकः।

उक्ततर्के मूलशैथिल्यशङ्कानिरासाय सामान्यतो व्याप्तिं घटयति दीधितौ । ध्वंसेति । तदीयकादाचित्काभावानधिकरणकालत्वस्य तदधिकरणत्वव्याप्यत्वादित्यर्थः। तदधिकरणत्वं कालिकसम्बन्धेन, अतो विश्वविषयकज्ञानध्वंसस्य ध्वंसाधिकरणत्वेनाभ्युपगते काले विषयतया तज्ज्ञानवति तज्ज्ञानोन्मज्जनप्रसङ्गे नेष्टापत्त्यवसरः। गगनादौ व्यभिचारवारणायाऽऽपादके कालत्वप्रवेशः। यत्र काले यद्घटध्वंसादिध्वंसो येनाभ्युपेयते तेनापि तत्र काले तद्घटध्वं-

सामानाधिकरण्यं नोपगम्यते इति कथमुक्तापत्तिः, विपर्ययानुमाने सिद्धसाधनादिति शङ्कते । न चेत्यादिना । प्रागभावस्य प्रतियोगिध्वंस इवेति । यथा प्रागभावप्रतियोगिनो घटादेर्ध्वंसोऽपि तत्प्रागभावप्रतियोगिकः स्वीक्रियते इत्यर्थः । अन्यथा प्रतियोगिध्वंसकाले प्रागभावोन्मज्जनप्रसङ्गात्, प्रागभावप्रागभावाप्रसिद्ध्या तत्प्रागभावानधिकरणत्वगर्भापादकाप्रसिद्धावपि कारणाचित्वाभावत्वेनोभयसङ्ग्राहकापादकप्रसिद्धिसौलभ्यादिति भावः । तद्ध्वंसोऽपि । प्रतियोगिध्वंसध्वंसोऽपि । प्रतियोगिनो ध्वंसः । प्रतियोगिप्रतियोगिकः । उपेयत इति शेषः । तथा च तद्ध्वंसध्वंसाधिकरणकालस्यापि तत्प्रतियोगिकध्वंसाधिकरणत्वमेवेति भावः । एवं कल्पनया घटोन्मज्जनप्रसङ्गोद्धारेऽपि लाघवेन ध्वंसस्याविनाशित्वसिद्ध्या भावत्वस्य जन्यानित्यत्वव्यापकत्वं सुघटमेवेत्याह । अप्रामाणिकेति । ध्वंसतत्कारणधाराकल्पनात इति । ध्वंसप्रतियोगिकध्वंसपरम्परायास्तद्ध्वंसे तत्तत्प्रतियोगिपरम्परायाः प्रतियोगितानियामककारणानां च कल्पनामपेक्ष्येत्यर्थः । अन्यत्वम् । अविनाशित्वम् । उचितत्वादिति । लाघवेनेत्यादिः ।

अथ विनाशं प्रति जन्यभावत्वेन एककारणत्वस्य जन्यत्वेन भावत्वेन कारणताद्वयस्य च कल्पनातो लाघवात् जन्यत्वमात्रेण प्रतियोगिनां कारणत्वकल्पनेन तदवच्छिन्नमात्रस्य च लाघवात् ध्वंसप्रतियोगितानियामकत्वसिद्धौ ध्वंसेऽपि तादृशसामग्र्याः प्रामाणिकत्वात् ध्वंसप्रतियोगिकध्वंसधारायाः प्रामाणिकत्वमेवेत्यप्रामाणिकेत्यसङ्गतम् ।

अत्र वदन्ति प्रागभावप्रतियोगित्वरूपजन्यत्वापेक्षया लघीयसा जातिरूपसत्त्वेनैव प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्यसम्बन्धेन हेतुता कल्प्यते, तदवच्छिन्नघटिता च सामग्री न ध्वंसे, कालिकसम्बन्धेन सत्त्वं कारणतावच्छेदकं समवायेन वेत्यत्र विनिगमनाविरहेऽपि समवायेन तदवच्छिन्नहेतुताया निष्प्रत्यूहतया, ध्वंसे सामग्रीविरहस्य सूपपादत्वात् ।

न च समवायसम्बन्धेन सत्त्वावच्छिन्नस्य हेतुत्वे नित्यानां द्रव्यगुणानां नाशः स्यादिति कालिकसम्बन्धेन सत्तावत्त्वेन जन्यमात्रस्य कालोपाधित्वाभावे च प्रागभावप्रतियोगित्वेन हेतुता वाच्येति, ध्वंसेऽपि तत्सत्त्वेन तस्यापि नाशो भवेदिति



वाच्यम् । प्रतियोगिमात्रस्य प्रतियोगितासम्बन्धेन कार्योत्पादक-सामग्रीत्वेन जन्यत्वेन प्रतियोगिनो हेतुत्वेऽपि द्वितीये तृतीये वा क्षणे घटादिनाशः स्यादिति द्रव्यादिनाशे विशेषसामग्र्यन्तरस्याऽऽवश्यकतया तदभावादेव नित्यद्रव्यादीनां नाशवारणसम्भवे समवायेन सत्ताया अपि प्रतियोगिनिष्ठकारणतावच्छेदकत्वसम्भवात् तथा हि आश्रयनाशानाश्यद्रव्यस्य नाशे ऽसमवायिकारणविजातीयसंयोगनाशो विशेषसामग्री, आश्रयनाशजन्यद्रव्यनाशे व्यभिचारवारणाय आश्रयनाशानाश्यत्वं कार्यतावच्छेदके नाशप्रतियोगिविशेषणम्, आश्रयनाशानाश्यत्वं च स्वप्रतियोगिसमवेतत्वकालिकविशेषणत्वोभयसम्बन्धेन नाशविशिष्टान्यत्वम्, शिरोमणिमते द्रव्यनाशत्वमेव कार्यतावच्छेदकम्, तन्मते सर्वत्रासमवायिकारणनाशादेव द्रव्यनाशात्, कारणतावच्छेदकप्रत्यासत्तिः स्वप्रतियोगिजन्यत्वम्, तेन च सम्बन्धेनासमवायिकारणनाशस्य गगनादौ अभावान्न तन्नाशापत्तिः, आश्रयनाशकालस्थायिगुणकर्मणोर्विनाशे च आश्रयनाशो हेतुः, विभागसंयोगादिजन्ये संयोगविभागकर्मादिनाशे व्यभिचारवारणाय आश्रयनाशकालस्थायित्वं कार्यतावच्छेदककोटौ प्रतियोगिविशेषणम्, तदर्थश्च स्वप्रतियोगिसमवेतत्वकालिकविशेषणत्वोभयसम्बन्धेन नाशविशिष्टत्वम्, आश्रयनाशस्य नाशत्वेनैव हेतुता, स्वप्रतियोगिसमवेतत्वं प्रत्यासत्तिः, तादृशसम्बन्धेन नाशश्च न नित्यगुणे, तदाश्रयस्यापि नित्यत्वेन नाशप्रतियोगित्वात्, आश्रयनाशानाश्यरूपरसगन्धस्पर्शनाशे विजातीयतेजस्संयोगरूपः पाको हेतुः, कारणतावच्छेदकसम्बन्धः सामानाधिकरण्यम्, तेन सम्बन्धेन तस्य पार्थिवपरमाण्वेकत्वादिषु सत्त्वेऽपि रूपादिनाशे तादात्म्यसम्बन्धेन रूपत्वादिनापि हेतुत्वात्तेन सम्बन्धेन तेषामेकत्वादिष्वसत्त्वाश्च पाकघटितसामग्रीबलात्तद्विनाशापत्तिः रूपाद्यात्मकप्रतियोगिनां पाकसहकारित्वानुपगमे जन्यत्वेन प्रतियोगिनां हेतुत्वेऽपि पाकाद्रूपादिनाशसमये तत्समानाधिकरणविभागादेरूपजन्यगुणानां विनाशप्रसङ्गात्, आश्रयनाशानाश्यसंयोगादिनाशे स्वावच्छेदकावच्छिन्नत्वस्वव्यापकत्वोभयसम्बन्धेन विभागो हेतुः, तादृशसम्बन्धेन विभागो न नित्यगुणे न वा तत्र तत्सहकारिसंयोगरूपप्रतियोगी सावां-

स्वसम्बन्धेन प्रत्यासत्तिः, एवं विभागनाशे स्वजनकसंयोगनाशजनकत्वसम्बन्धेन संयोगो हेतुः, कर्मनाशेऽपि जनकत्वसम्बन्धेन संयोगो हेतुः पूर्वसंयोगनाशोत्तरसंयोगजनकत्वस्येश्वरज्ञानादिसाधारण्यवत् तदाश्रयजन्यद्रव्यसाधारण्यात् तदुत्तरसंयोगात्तन्नाशवारणाय तथापि विभागकर्मरूपप्रतियोगिनोऽसहकारिताया आवश्यकत्वात्तत एवेश्वरज्ञानादिव्यावृत्तिः । अपेक्षाबुद्धिजन्यगुणनाशे अपेक्षाबुद्धिनाशः स्वप्रतियोगिजन्यत्वसम्बन्धेन हेतुः, नित्ये तेन सम्बन्धेन नाशासत्त्वान्नातिप्रसङ्गः, शब्दज्ञानादिरूपयोग्यविभुविशेषगुणनाशे स्वपूर्वत्वस्वसामानाधिकरण्योभयसम्बन्धेन विशेषगुणत्वेन हेतुता, स्वपूर्वत्वं च कालिकसम्बन्धेन स्वप्रागभावाधिकरणत्वम्, गगनैकत्वादौ शब्दादिरूपविशेषगुणस्य सामानाधिकरण्यसत्त्वेऽपि कालिकसम्बन्धेन न तत्प्रागभाववत्त्वम्, महाकाले तत्सत्त्वेऽपि न सामानाधिकरण्यमिति न तद्बलात्तन्नाशापत्तिः ।

वस्तुतस्तु तत्रापि तादात्म्येन तादृशप्रतियोगिनां सहकारित्वमावश्यकम्, अन्यथा संयोगादिनाशादावपि तज्जन्यतावच्छेदकावच्छिन्नापत्तेः, तथा च नित्ये तद्विलम्बादपि तद्घटितसामग्रीविलम्बः ।

एतेनापेक्षाबुद्धेरपि तृतीयक्षणे विनाशस्य शिरोमणिना स्वीकृतत्वात् शब्दादिनाशे च तत्समानकालीनपदार्थनाश एव नाशत्वेन हेतुः, कालिकसम्बन्धेन प्रतियोगिसत्त्वं प्रत्यासत्तिः, नाशत्वमेव जन्यतावच्छेदकम्, जन्यमात्रस्य कालोपाधितया सर्वत्रैव नाशप्रतियोगिनि तादृशकारणसत्त्वेन व्यभिचारानवकाशात्, तथा च तादृशकारणबलान्महाकालस्य नाशापत्तिरिति परास्तम् । घटादावपि समकालपदार्थनाशस्योक्तसम्बन्धेन तद्द्वितीयक्षणे सत्त्वात् तृतीयक्षणे तन्नाशापत्तिवारणाय शब्दादीनां तादात्म्यसम्बन्धेन तत्सहकारिताया आवश्यकत्वात् तत एवातिप्रसङ्गनिर्वाहात् ।

न चैवं सत्त्वेन हेतुत्वमप्यनर्थकम्, सत्ताशून्यानां जात्यादीनां नाशस्योक्तविशेषसामग्र्यभावादेव वारणसम्भवादिति वाच्यम् । तत्र स्वप्रतियोगिसमवेतत्वसम्बन्धेन नाशहेतुभूताश्रयनाशस्य एकत्वपरिमाणादाविव जातावपि सत्त्वेन तादृशविशेषसामग्रीबलात् तस्या नाशवारणाय सत्त्वेन तादृशप्रतियोगिनां कारणत्वस्याऽऽवश्यकत्वात् । एकत्वादिनाशे एकत्वादीनां विशिष्य कारणताया अ-

नावश्यकत्वात्, नाशप्रतियोगिनां सर्वेषां स्वनाशे विशिष्य हेतुत्वे- ऽपि यद्विशेषयोरिति न्यायबलात् सत्त्वेन तेषां सामान्यहेतुताया आवश्यकत्वाच्च अन्यथा तत्तद्विशेषसामग्रीविरहकूटस्य जात्यादौ प्रतियोगितया नाशसामान्यानुत्पादप्रयोजकत्वकल्पनायां गौरवात्, अन्यथा तत्तद्व्यक्तिस्थलीयविशेषसामग्र्यभावेन सर्वत्र सामान्य- कार्यातिप्रसङ्गवारणसम्भवेन सामान्यकारणमात्रोच्छेदप्रसङ्गात्। —

अथ नाशत्वावच्छिन्नं प्रति स्वप्रतियोगिसत्त्वसम्बन्धेन नाशत्वेन हेतुतामते तादृशसामान्यकारणाभावादेव न जात्यादावाश्रयनाश- घटितसमग्रीतो नाशापत्तिः, यद्विशेषयोरित्यादिनियमश्चाप्रयोजक इति चेन्न। प्रागभावस्य कालोपाधित्वाभावेन तत्र कालिकसम्ब- न्धेन प्रतियोगिसत्त्वाभावाच्चनाशे व्यभिचारवारणाय समानकाली- नपदार्थनाशस्य स्वप्रतियोगिवृत्तित्वसम्बन्धेनैव नाशत्वावच्छिन्नं प्रति हेतुताया वक्तव्यतया प्रागभावेऽपि तादृशसम्बन्धेन तस्य सत्त्वा- न्न व्यभिचार इति जातावपि तादृशसम्बन्धेन तस्य सत्त्वात् सत्त्वेन हेतुतां विना तन्नाशापत्तिवारणासम्भवात्। यदि चासमवायिका- रणनाशस्यैव द्रव्यनाशकतामतेऽवयवनाशादसमवायिकारणसंयो- गनाशोत्पत्तिक्षण एव द्रव्यनाशस्य वारणं च गुणकर्मणोर्द्रव्यान्यत्वेन कारणतां कल्पयित्वा तदुत्पत्तावाश्रयनाशसहकारिता वाच्या, तथा सति कारणतावच्छेदकगौरवात् लाघवेन गुणकर्मणोर्द्रव्यावृ- त्तिजातिविशेषमङ्गीकृत्य तेन रूपेण तयोराश्रयनाशसहकारित्व- मुचितम्, तादृशसहकारिविरहादेव न जातेर्नाशापत्तिरिति विभा- व्यते, मा भूत् तदा सत्त्वेन हेतुत्वम्, ध्वंसध्वंसापादकसामग्रीदुर्भि- क्षं दुर्वारमेव, चरमसंयोगानां विनाशे ऽदृष्टविशेषनाशस्य कालिक- सम्बन्धेन हेतुत्वात, तस्य च ध्वंसेऽपि सत्त्वात् तदुत्पत्त्या ध्वंस- ध्वंसापत्तिरिति चेन्न। विजातीयसत्त्वावच्छिन्नस्यैव तत्सहकारितो- पगमेन तदापत्त्यभावात, चरमध्वंसातिरिक्तस्य ध्वंसस्य कालोपा- धितायां निर्युक्तिकतया तत्र, कालिकसम्बन्धेनादृष्टविशेषनाशास- त्त्वाच्च, चरमध्वंसे च चरमध्वंसवृत्तिपदार्थनाशरूपकारणाभावेन तन्नाशापत्तेरयोगादिति कृतं पल्लवितेन।

(चि०) ननु किं कार्यकारणयोरेव व्याप्तिः, तथा च

यद्युभा व्याकुली स्यादिति चेन्न । तदुपजीव्यान्येषामप्यनुकूलतर्केण व्याप्तिग्रहात् । यत्र साध्योपाध्योर्हेतुसाध्ययोर्वा व्याप्तिग्राहकसाम्यान्नैकत्र व्याप्तिनिश्चयस्तत्र सन्दिग्धोपाधित्वम्, व्यभिचारसंशयोपधायकत्वात् । यदा च नाद्ययैकत्रानुकूलतर्कावतारस्तदा हेतुत्वमुपाधित्वं वा निश्चितम् । पक्षेतरस्य स्वव्याघातकत्वेन न हेतुव्यभिचारसंशायकत्वम्, अतो न सन्दिग्धोपाधिरपि सः । यत्तु पक्षेतरस्य यथा साध्यव्यापकत्वं तथा साध्याभावव्यापकत्वमपि, ग्राहकसाम्यात्, तथा चोभयव्यापकनिवृत्त्या साध्यतदभावाभ्यां पक्षे निवर्तितव्यम्, न चैवम्, तथा च पक्षेतरस्साध्यव्यापकतासंशयेन सन्दिग्धः कथं परं दूषयेदिति, तन्न । तथापि हि साध्यव्यापकतापक्षमालम्ब्य हेतुव्यभिचारसंशयाधायकत्वेन दूषणं स्यादेव । ननु यत्रोपाधिस्तत्रानुकूलतर्को यदि नास्ति तदा तदभावेनैव,व्याप्तेरग्रहः, अथास्ति तदा साध्यव्याप्याव्यापकत्वेनोपाधिः साध्याव्यापकत्वनिश्चयान्नोपाधिरित्युभयथापि नोपाधिर्दूषणम् । न च व्याप्त्यभावव्याप्यमुभयमत उपाधिरपि तदभावोन्नयनेन दोष इति वाच्यम् । उपाधेरात्मलाभार्थमनुकूलतर्काभावोपजीवकत्वेन तस्यैव दोषत्वादिति चेन्न ।

( दी० ) कार्यकारणयोरेव । कार्यकारणभावग्राहकप्रमाणक्रोडीकृतयोरेव ।

(गा०) ययोर्न मिथः कार्यकारणभावस्तयोरपि साध्योपाध्योः प्रदर्शितत्वात् कार्यकारणयोरेवेति मूलाशङ्काया असङ्गतिः । तथा हि स्या-

मरूपे शाकारम्भकावयवसमवेतत्वरूपशाकपाकजत्वं न कारणमपि तु तादृशावयवरूपमेव प्रत्यक्षविषयत्वरूपं, प्रत्यक्षत्वमपि नोद्भूतरूप-कार्यमपि तु मतविशेषे प्रत्यक्षमेव तत्कार्यम्, परन्तु प्रदर्शितेषु धूमा-र्द्रेन्धनप्रभववह्न्यादेरेव कार्यकारणभावः, तादृशवह्नेः तादृशवह्नित्वेन वह्नित्वेन वा कारणत्वमित्यन्यदेतत्, इत्यतः कार्यकारणयोरिति व्याचष्टे । कार्यकारणयोरेवेति । प्रमाणकोडीकृतत्वम् । प्रमाणाविषय-त्वम्, तथा च एककारणताप्रविष्टविषयान्तःपातिप्रमाविषयताश्रय-योरुभयोरेवेत्यर्थः । तेन कार्यकारणभावविषयकसमूहालम्बनप्रमा-विषयत्वस्य केवलान्वयित्वेऽपि न व्यवच्छेद्याप्रसिद्धिः । तथात्वं च कार्यकारणयोः कार्यत्वकारणतावच्छेदकत्वयोः कारणतावच्छेदक-कार्यतावच्छेदकयोश्चेति दर्शितसकलोपाधिसङ्ग्रहः । वह्निधूमयोः कारणकार्योभयरूपत्वात्, विनाशप्रतियोगित्वस्य भावत्वावच्छिन्नका-रणताप्रतियोगिककार्यतावच्छेदकसम्बन्धत्वात्, सम्बन्धरूपावच्छे-दकस्यापि कारणताघटकव्यापकतामविष्टत्वेन निरुक्तप्रमाविषयता-वत्वात्, शाकारम्भकावयवसमवेतत्वस्य चावयवश्यामरूपनिष्ठकार्य-भूतश्यामरूपकारणतावच्छेदकसम्बन्धत्वात्, प्रत्यक्षविषयत्वस्य च रूपस्य रूपवतो वा कार्यतावच्छेदकसम्बन्धत्वादिति ध्येयम् ।

मूले बहुधा व्याकुली स्यात् । द्रव्यत्वपृथिवीत्वाद्योर्व्याप्तिनिश्चया-नुपपत्तिस्स्यादित्यर्थः । तदुपजीव्येति । कार्यकारणभावग्राहकप्रमाणप-रम्परयोपजीव्येत्यर्थः । अन्येषाम् । द्रव्यत्वपृथिवीत्वादीनाम् । अनु-कूलतर्केति । पृथिवीत्वं यदि द्रव्यत्वशून्यवृत्ति स्यात् जन्यगुणशून्यवृ-त्ति स्यादिति तर्कः पृथिवीत्वादौ द्रव्यत्वादिव्याप्तिग्राहकः, तत्र द्र-व्यत्वशून्याऽपि पृथिवी जन्यगुणशून्या न भविष्यतीत्यादिव्यभिचार-शङ्का विरोधिनी, तां च जन्यगुणा यदि द्रव्यत्वव्यभिचारिणः स्युः *द्रव्यत्वावच्छिन्नसमवायिकारणजन्या न स्युरित्यादितर्को विघट-*यति, तत्र चेष्टापत्तिशङ्काविरोधितया जन्यसत्त्वद्रव्यत्वादिना कार्य-कारणभावग्राहकप्रमाणमुपयुज्यते, प्रथमतर्के च नेष्टापत्तिसम्भवः, पृथिव्यादेस्संयोगादिरूपगुणशून्यत्वे मूर्तत्वानुपपत्तेः, मूर्तत्वादेः वि-भुसंयोगादिव्याप्यत्वादिति । एवमन्यत्रापि कार्यकारणभावस्योपयो-गित्वमूह्यम । कार्यकारणभावग्रहोपजीवनं प्रायिकं बोध्यम् ।

( दी० ) पक्षेतरस्येत्यादि । ननु सन्दिग्धोपाध्यन्तरव-

यद्वुभा व्याकुली स्यादिति चेन्न। तदुपजीव्यान्येषाम-प्यनुकूलतर्केण व्याप्तिग्रहात्। यत्र साध्योपाध्योर्हे-तुसाध्ययोर्वा व्याप्तिग्राहकसाम्याद्वैकत्र व्याप्तिनि-श्चयस्तत्र सन्दिग्धोपाधित्वम्, व्यभिचारसंशयोपधाय-कत्वात्। यदा च तादृशैकत्रानुकूलतर्कावतारस्तदा हेतुत्वमुपाधित्वं वा निश्चितम्। पक्षेतरस्य स्वव्याघा-तकत्वेन न हेतुव्यभिचारसंशायकत्वम्, अतो न स-न्दिग्धोपाधिरपि सः। यत्तु पक्षेतरस्य यथा साध्य-व्यापकत्वं तथा साध्याभावव्यापकत्वमपि, ग्राहक-साम्यात्, तथा चोभयव्यापकनिवृत्त्या साध्यतदभा-वाभ्यां पक्षे निवर्तितव्यम्, न चैवम्, तथा च पक्षेतर-स्साध्यव्यापकतासंशयेन सन्दिग्धः कथं परं दूषये-दिति, तन्न। तथापि हि साध्यव्यापकतापक्षपातस्य हेतुव्यभिचारसंशयाधायकत्वेन दूषणं स्यादेव। ननु यत्रोपाधिस्तत्रानुकूलतर्को यदि नास्ति तदा तदभावे-नैव व्याप्त्यग्रहः, अथास्ति तदा साध्यव्याप्यव्यापक-त्वेनोपाधिः साध्याव्यापकत्वनिश्चयान्नोपाधिरित्युभय-थापि नोपाधिर्दूषणम्। न च व्याप्त्यभावव्याप्यनुभ-पमत उपाधिरपि तदभावोन्नयनेन दोष इति वाच्य-म्। उपाधेरात्मलाभार्थमनुकूलतर्काभावोपजीवकत्वेन तस्यैव दोषत्वादिति चेन्न।

(दी०) कार्यकारणयोरेव। कार्यकारणभावग्राहकप्रमाण-क्रोडीकृतयोरेव।

(गा०) ययोर्न मिथः कार्यकारणभावस्तयोरपि साध्योपाध्योः प्रद-र्शितत्वात् कार्यकारणयोरेवेति मूलाशङ्काया असङ्गतिः। तथा हि श्या-

मरूपे शाकारम्भकावयवसमेधनत्वरूपशाकपाकजत्वं न कारणमपि तु तादृशावयवरूपमेव प्रत्यक्षविषयत्वरूपं, प्रत्यक्षत्वमपि नोद्भूतरूपकार्यमपि तु मतविशेषे प्रत्यक्षमेव तत्कार्यम्, परन्तु प्रदर्शितेषु धूमार्द्रेन्धनप्रभववह्न्यादेरेव कार्यकारणभावः, तादृशवह्नेः तादृशवह्नित्वेन वह्नित्वेन वा कारणत्वमित्यन्यदेतत्, इत्यतः कार्यकारणयोरिति व्याचष्टे । कार्यकारणयोरेवेति । प्रमाणकोडीकृतत्वम् । प्रमाणविषयत्वम्, तथा च एककारणताप्रविष्टविषयान्तःपातिप्रमाविषयताश्रययोरुभयोरेवेत्यर्थः । तेन कार्यकारणभावविषयकसमूहालम्बनप्रमाविषयत्वस्य केवलान्वयित्वेऽपि न व्यवच्छेद्याप्रसिद्धिः । तथात्वं च कार्यकारणयोः कार्यत्वकारणतावच्छेदकत्वयोः कारणतावच्छेदककार्यतावच्छेदकयोश्चेति दर्शितसकलोपाधिसङ्ग्रहः । वह्निधूमयोः कारणकार्योभयरूपत्वात्, विनाशप्रतियोगित्वस्य भावत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकसम्बन्धत्वात्, सम्बन्धरूपावच्छेदकस्यापि कारणताघटकव्यापकताप्रविष्टत्वेन निरुक्तप्रमाविषयतावत्त्वात्, शाकारम्भकावयवसमवेतत्वस्य चावयवश्यामरूपनिष्ठकार्यभूतश्यामरूपकारणतावच्छेदकसम्बन्धत्वात्, प्रत्यक्षविषयत्वस्य च रूपस्य रूपवतो वा कार्यतावच्छेदकसम्बन्धत्वादिति ध्येयम् ।

मूले बहुधा व्याकुली स्यात् । द्रव्यत्वपृथिवीत्वाद्योर्व्याप्तिनिश्चयानुपपत्तिस्स्यादित्यर्थः । तदुपजीव्येति । कार्यकारणभावग्राहकप्रमाणपरम्परयोपजीव्येत्यर्थः । अन्येषाम् । द्रव्यत्वपृथिवीत्वादीनाम् । अनुकूलतर्केति । पृथिवीत्वं यदि द्रव्यत्वशून्यवृत्ति स्यात् जन्यगुणशून्यवृत्ति स्यादिति तर्कः पृथिवीत्वादौ द्रव्यत्वादिव्याप्तिग्राहकः, तत्र द्रव्यत्वशून्याऽपि पृथिवी जन्यगुणशून्या न भविष्यतीत्यादिर्व्यभिचारशङ्का विरोधिनी, तां च जन्यगुणा यदि द्रव्यत्वव्यभिचारिणः स्युः द्रव्यत्वावच्छिन्नसमवायिकारणजन्या न स्युरित्यादितर्को विघटयति, तत्र चेष्टापत्तिशङ्काविरोधितया जन्यसत्त्वद्रव्यत्वशादिना कार्यकारणभावग्राहकप्रमाणमुपयुज्यते, प्रथमतर्के च नेष्टापत्तिसम्भवः, पृथिव्यादेस्संयोगादिरूपगुणशून्यत्वे मूर्तत्वानुपपत्तेः, मूर्तत्वादेः विभुसंयोगादिव्याप्यत्वादिति । एवमन्यत्रापि कार्यकारणभावस्योपयोगित्वमूह्यम् । कार्यकारणभावग्रहोपजीवनं प्रायिकं बोध्यम् ।

( दी० ) पक्षेतरस्येत्यादि । ननु सन्दिग्धोपाध्यन्तरव-

त्पक्षेतरोऽपि व्यभिचारशङ्कामादधानः केन वारणीयः, स्वव्या-
घातकत्वं च निराकृतमेव ।

( गा० ) पक्षेतरस्य स्वव्याघातकत्वेन न हेतुव्यभिचारसंशायकत्वमिति न सन्दिग्धोपाधिरपि स इति मूलस्य यथाश्रुतार्थमाक्षिपति । नन्वित्यादिना । सन्दिग्धोपाध्यन्तरवदिति । व्यभिचारशङ्काधायकत्वे दृष्टान्तः । साध्यव्यापकत्वेन सन्दिग्धं साधनाव्यापकधर्मान्तरमेवेत्यर्थः । व्यभिचारशङ्कामादधान इति । व्याप्यसंशयात्मकसाध्यधर्मिकसाधनाव्यापकव्याप्यत्वसंशयद्वारा साध्ये साधनाव्यापकत्वशङ्कां साध्यव्यापकत्वसंशयाधीनसाधनधर्मिकसाध्यव्यापकताव-च्छेदकावच्छिन्नाभाववद्वृत्तित्वसंशयरूपव्याप्यसंशयद्वारा साधनधर्मिकसाध्याभाववद्वृत्तित्वशङ्कां वा जनयन्नित्यर्थः । तादृशशङ्काया जनने स्वव्याघातकत्वं मूलोक्तबाधकमुद्धरति । स्वव्याघातकत्वं चेति । निराकृतमेवेति । तद्धि न सर्वानुमानसाधारण्यमित्यादिनेति शेषः ।

( दी० ) अथात्र कश्चिदुपाधिर्भविष्यतीति शङ्का शङ्कापिशाचीत्वाद्यथा न व्यभिचारशङ्काधायिका, तथा पक्षेतरस्योपाधित्वशङ्काऽपि, तदाहिताऽपि च व्यभिचारशङ्का पक्षे व्यभिचारशङ्केव न प्रतिबन्धिका, अन्यथा निरुपाधिकसहचारभङ्गप्रसङ्गमात्रबलप्रवृत्तानामनुमानानां विलयप्रसङ्गादिति चेन्न । सन्दिग्धोपाध्यन्तरसाधारणव्यभिचारशङ्काधीनप्रयोजकरूपवत्ता पक्षेतरेण तदाधाने प्रयोजनक्षतेः प्रतिबन्धकत्वासम्भवात् । व्यभिचारज्ञानत्वेन च प्रतिबन्धकतायां कारणविशेषजन्यत्वादिकं न निविशते गौरवात् मानाभावाच्च । कथमन्यथा करवाह्निसंयोगः सर्वः संयोगो वा प्रत्यक्षसंयोगधर्मातिरिक्तधर्मसमवायी समवायित्वादित्यादितो न शक्त्यादिसिद्धिः ? निरुपाधित्वेऽप्यप्रयोजकत्वादिति चेन्न । निरुपाधित्वस्यैव प्रयोजकत्वात् । तथात्वेऽपि चाप्रयोजकत्वे निरुपाधित्वाभिमतानामितरेषामपि तथात्वात् ।

(गा०) अत्र कश्चिदुपाधिर्भविष्यतीति शङ्केति। विशेषत उपाधिताऽवच्छेदकमनुल्लिख्य एतत्साध्यव्यापक एतत्साधनाव्यापको न वा, एतत्साधनाव्यापक एतत्साध्यव्यापको न वेति शङ्केत्यर्थः । शङ्कापिशाचीत्वात् । दुरुच्छेदशङ्कात्वात् । पक्षेतरस्योपाधित्वशङ्काऽपीति। शङ्कापिशाचीत्वाच्च व्यभिचारशङ्काधायिकेत्यनुपज्यते । अत्र व्यभिचारशङ्कासामग्र्याः स्थलान्तरे बलृप्ताया अपि सत्त्वे तच्छङ्काया अनुत्पादोऽनुभवविरुद्ध इत्यनुशयानो न हेतुव्यभिचारसंशयाधायकत्वमित्यस्यानुमितिविरोधिव्यभिचारशङ्कानाधायकत्वाशयेन प्रकारान्तरेण पक्षेतरस्यादूषकत्वं शङ्कते । तदाहिताऽपि वेति । तस्योपाधित्वशङ्काहिता चेत्यर्थः । पक्ष व्यभिचारशङ्केवेति। पक्षे साध्यसन्देहदशायामप्यनुमित्युत्पत्त्या पक्षान्तर्भावेण व्यभिचारशङ्का यथा न प्रतिबन्धिकेत्यर्थः। न प्रतिबन्धिका। नानुमितिप्रतिबन्धिका । एतच्चानुमितिं प्रत्येव साक्षात्संशयसाधारणव्यभिचारग्रहः प्रतिबन्धक', व्याप्तिज्ञाने तु व्यभिचारनिश्चय एवेति मतेन, व्याप्तिज्ञानाविघटनद्वारा व्यभिचारसंशयस्यानुमितिविरोधित्वमते व्याप्तिज्ञानप्रतिबन्धकतायाः पक्षविशेषनियन्त्रितत्वाभावेन तत्र पक्षीयव्यभिचारसंशयस्यानुमितिविरोधित्वव्यावर्त्तनायोगात्, सामान्यतः पक्षत्वस्य केवलान्वयित्वात् । अन्यथा । उक्तव्यभिचारशङ्काया अपि प्रतिबन्धकत्वे । निरुपाधिकेति । पक्षेतरत्वतत्समशीलातिरिक्तोपाधिविरहविशिष्टसहचारभङ्गापत्तिमात्रबलेन प्रवृत्तानां गगनं परिमाणवत् द्रव्यत्वाद् घटादिवदित्यनुमानानामुच्छेदापत्तेरित्यर्थः । तत्र पक्षे साध्यसन्देहेन तदन्तर्भावेण व्यभिचारशङ्कायां पक्षेतरत्वोपाधित्वशङ्काहितव्यभिचारशङ्कायाश्च सम्भवादित्यर्थः ।

न च तत्र व्यभिचारापादकनिरुपाधित्वभङ्गप्रसङ्ग एव व्यभिचारशङ्कानिवर्त्तक इति नोक्तानुमानविलयप्रसङ्ग इति वाच्यम् । अनौपाधिकत्वस्य दुर्निश्चेयतया तद्भङ्गापत्तेरयोगात् । बलान्तेन च उपाध्यन्तराग्रहसहितव्यभिचारग्रहमात्रसमाधानस्यैव विवक्षिततया तत्सङ्गतेश्च ।

प्रथमपक्षं दूषयति । सन्दिग्धेति । रूपवतेति । साध्यव्यापकतासंशयविषयत्वधर्मवतेत्यर्थः । प्रतिबन्धकत्वासम्भवादिति । न हि प्रयोजनक्षतिभिया सामग्री कार्यं न जनयतीति न्यायादिति भावः।

द्वितीयपक्षं दूषयति। व्यभिचारज्ञानत्वेन चेति । कारणविशेषजन्यत्वाजन्यत्वादिकमिति। पक्षेतरत्वोपाधित्वसंशयाघटितसामग्रीजन्यत्वादिकं तत्संशयाजन्यत्वादिकं चेत्यर्थः । आदिपदात्साध्याभावांशे संशयान्यत्वपक्षीयव्यभिचारसंशयान्यत्वपरिग्रहः।

ननु द्रव्यत्वादौ पक्षान्तर्भावेण व्यभिचारसंशयेऽपि तस्य परिमाणाद्यनुमापकतया तदन्यथानुपपत्तिरेव तादृशसंशयान्यत्वस्य प्रतिबन्धकतावच्छेदककोटिप्रवेशे मानमित्यत आह । कथमन्यथेति। अन्यथा। साध्याभावांशे संशयरूपस्य व्यभिचारसंशयस्य पक्षान्तर्भावेण व्यभिचारेण संशयस्य वाऽप्रतिबन्धकत्वे । साध्याभावांशे संशयान्यत्वस्यैव निवेशे करवह्निसंयोगमात्रपक्षकानुमानादपि शक्तिसिद्ध्यापत्तिः, संयोगान्तरेऽपि कार्यान्तरानुकूलशक्तेः सन्दिग्धतया साध्याभावांशे निश्चयरूपव्यभिचारज्ञानासम्भवात्, पक्षीयव्यभिचारसंशयान्यत्वानिवेशे च न तदापत्तिः, पक्षभिन्नसंयोगान्तरे व्यभिचारसंशयस्य प्रतिबन्धकत्वसम्भवादित्याशयेनाऽऽह । सर्वः संयोगो वेति। संयोगे संयोगधर्मातिरिक्तधर्मस्य बाधात् प्रत्यक्षधर्मातिरिक्तत्वप्रतियोगिविशेषणम्, तथा सति शक्तेरतीन्द्रियतया तत्र विशिष्टभेदसत्त्वेन तत्समवायितायाः सन्दिग्धत्वान्न बाधः। पक्षातिरिक्तघटरूपादौ व्यभिचारस्य तत्संशयस्य वारणाय संयोगधर्मेति । कालिकादिसम्बन्धेन प्रसिद्धातीन्द्रियधर्मवत्तया सिद्धसाधनवारणाय समवायीति । इत्यतः। अनुमानात्। न शक्त्यादिसिद्धिरिति। पक्षेतरत्वाद्यतिरिक्ते तत्रोपाधित्वाग्रहेण त्वन्मतसिद्धप्रतिबन्धकताकव्यभिचारज्ञानाभावादिति भावः ।

शङ्कते। निरुपाधित्वेऽपीति। अप्रयोजकत्वात्। हेतोर्गमकतौपयिकरूपशून्यत्वात् । निरुपाधित्वस्येति। त्वदभिमतस्येत्यादिः, स्वमते पक्षेतरत्वादेरेवोपाधितासम्भवाद्यथाश्रुतासङ्गतेः। तथात्वेऽपि। तादृशनिरुपाधित्वसत्त्वेऽपि। अप्रयोजकत्वे। अप्रयोजकत्वस्य त्वयाऽपि स्वीकारे। इतरेषाम् । द्रव्यत्वादिहेतुकपरिमाणादिसाध्यकानुमानानाम् । तथात्वात् । अप्रयोजकताया आवश्यकत्वात् । तथा च तादृशानुमानोपपत्तये व्यभिचारज्ञानप्रतिबन्धकतायां विशेषणान्तरप्रवेशस्यापि सम्भव इति भावः।

(दी०) अत्र च क्वच पक्षातिरिक्ते व्यभिचारशङ्का कश्चायं,

व्यामोहो यद्व्याप्तिग्राहकदृढतरप्रमाणविरहिणां निरुपाधित्वमिति, यतस्तत्र तत्रान्ततः पक्षसपक्षैकदेशवृत्तिधर्मावच्छिन्नसाध्यव्यापकानां सपक्षैकदेशवृत्तिधर्माणामुपाधित्वं सम्भाव्यते । इत्थं च यथा नातिप्रसङ्गस्तथा तत्र तत्र वक्ष्याम इति । सत्यम्, कथकसम्प्रदायानुरोधात् कथायां सन्दिग्धोपाधित्वेन पक्षेतरो नोद्भाव्य इत्येवम्परोऽयं ग्रन्थ इत्याहुः ।

(गा०) उक्तशक्तिसाधकानुमाने सिद्धान्तिमनसिद्धप्रतिबन्धकतानाकव्यभिचारशङ्काविरहं स्पष्टयति । अत्र चेति । कुत्र पक्षातिरिक्ते इति । पक्षातिरिक्तकिंधर्म्यन्तर्भावेणेत्यर्थः । संयोगातिरिक्ते सर्वत्रैव समवायिनि संयोगधर्मातिरिक्तधर्मसमवायितारूपसाध्यस्य निश्चितत्वादिति भावः । पक्षेतरत्वादेरनुपाधित्वेऽपि सिद्धान्तिनां गगनं परिमाणवत् द्रव्यत्वादित्याद्यनुमानस्य निरुपाधित्वाभिमानं निराकरोति । कश्चायमिति । कः । कुत्सितः । व्यामोहः । भ्रमः । दृढतरेति । सत्तर्केत्यर्थः । पक्षसपक्षैकदेशवृत्तिधर्मेति । गगनघटान्यतरत्वादीत्यर्थः । सपक्षैकदेशवृत्तिधर्माणाम् । घटत्वादीनाम् । उपाधित्वम् । सन्दिग्धोपाधित्वम् । पक्षे साध्यव्यापकत्वसंशयस्य दुर्वारत्वात् ।

ननूक्तव्यभिचारशङ्कायाः प्रतिबन्धकत्वे पर्वतो वह्निमान् धूमादित्यादावपि वह्न्यादिसिद्ध्यभावप्रसङ्ग इत्यत आह । इत्थं चेति । तत्र तत्र । व्यभिचारादिग्रन्थे । वक्ष्याम इति । प्रकृतहेतुसाध्ययोर्व्याप्तिग्राहकतर्कसत्त्वेन धूमादौ वह्न्यादिव्याप्तिनिश्चयात्तत्र तस्य व्यभिचारसंशयायोगः, तादृशतर्कस्य व्याप्तिनिश्चयस्य च तत्संशयप्रतिबन्धकत्वादिति वक्ष्याम इत्यर्थः । आहुरित्यनेन सम्प्रदायाननुरोधेन तदुद्भावनं दुर्वारमित्यस्वरसः सूचितः ।

(चि०) सोपाधावेकत्र साध्यतदभावसम्बन्धस्य विरुद्धत्वादवच्छेदकभेदेन तदुभयसम्बन्धो वाच्यः, तथा च साधने साध्यसम्बन्धितावच्छेदकरूपमनुकूलतर्काभावोपजीवनमन्तरेणोपाधिरावश्यकः तथाऽनुकूलतर्काभावोऽप्यावश्यक इति उभयोरपि विनिग-

भक्ताभावाद् दूषकत्वम् ।

..( दी० ) सोपाधावेकत्रेत्यादि । उपलक्षणमेतत् । व्यभिचारिण्युपाधेरवश्यम्भावमात्रे तात्पर्यम् । उपजीव्योपजीवकभावो हि न कार्यकारणभावः, असम्भवात्, व्याप्यव्यापकभावस्त्वकिञ्चित्कर एव, विशेषतस्तु ज्ञायमानदूषकतायामेकमविज्ञायाऽप्यन्यतरज्ञानाच्च न ज्ञाप्यज्ञापकभावः,न चानुकूलतर्कविरहादेव व्याप्तेरग्रहे कृतमुपाधिज्ञानेन, विनाऽप्यनुकूलतर्कं व्यभिचाराग्रहे व्याप्तिग्रहसम्भवादिति भावः ।

( गा० ) अनुकूलतर्काभाव उपाधिज्ञानोपजीवक इति तद्दूषकतयैवोपपत्तौ उपाधेर्दूषकत्वं निर्युक्तिकमिति पूर्वपक्षे सोपाधावेकत्रेत्यादिना मूलकृत उपाधेर्दूषकताव्यवस्थापनं न सङ्गच्छते, व्यभिचारिणि साध्यतदभावसहचारयोरविरोधाद्योपाधेरवश्यसत्ताया दूषकताव्यवस्थापकत्वादित्यत आह । उपलक्षणमेतदिति । युक्त्यन्तरस्यैव उपाधेर्दूषकत्वसाधकत्वपरमेतदित्यर्थः ।

ननु यथाश्रुते उपाधेरवश्यम्भावस्य तद्दूषकतासाधकत्वेऽस्य तात्पर्यमित्याह । व्यभिचारिणीति । अवश्यम्भावमात्रेति । मात्रपदेन तद्दूषकतासाधकत्वव्यवच्छेदः । अनुकूलतर्काभावे उपजीव्यतायाः तद्दूषकतायां विनिगमकत्वेनोक्तत्वात् तां निराकृत्य उपाधेर्दूषकतां व्यवस्थापयति। उपजीव्योपजीवकभावो हीति। प्रकृते इति शेषः। असम्भवात्। अनुकूलतर्काभावस्याऽऽर्द्रेन्धनादिकारणत्वासम्भवात् । अकिञ्चित्करः। सम्भवन्नपि दूषकताया अविनिगमकः। उभयोरेव प्रत्येकमपरव्यापकत्वादिति भावः । विपर्ययस्य व्याप्यव्यापकभावेऽपि व्यापकस्याज्ञानदशायां व्याप्यज्ञानसत्त्वेऽनुमित्यनुत्पादनिर्वाहाय व्याप्यज्ञानस्यापि दूषकताया आवश्यकत्वादुपाध्यनुकूलतर्काभावयोर्ज्ञायमानयोर्विरोधित्वे तयोर्व्याप्यव्यापकभावः सुतरामविनिगमक इत्याह । विशेषतस्त्विति । दूषकतायामित्यत्राकिञ्चित्कर इत्यनुषज्यते । ज्ञानाच्चेति चस्त्वर्थः । अनुकूलतर्काभावः स्वरूपसन्नेव व्याप्यग्रहप्रयोजकः, उपाधिस्तु ज्ञायमानः, एवं चोपाधित्वज्ञानदशायामनुकूलतर्काभावस्य स्वरूपसतो नियततया तत

एव व्याप्तिग्रहनिर्वाहे उपाधेर्न तत्प्रयोजकत्वमित्याशङ्कां निराकरोति । न चेत्यादिना । विनाऽप्यनुकूलतर्कमिति । तथा चानुकूलतर्काभावो न स्वतो व्याप्तिग्रहप्रयोजकोऽपि तु व्यभिचारग्रहद्वारा, स च सोपाधित्वज्ञानमपेक्षत इति तद्द्वारोपाधेर्दूषकत्वं निराबाधमेवेति भावः ।

(चि० ) अन्ये तु 'यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्तते स धर्मस्तत्र हेतावुपाधिः, स च धर्मो यस्याभावात्पक्षे साध्यसाधनसम्बन्धाभावः, यथा आर्द्रेन्धनवत्त्वम् । व्यावर्तते हि तद्व्यावृत्त्या धूमवत्त्वमयोगोलके । अत एव तत्र साध्यसाधनसम्बन्धाभावः पक्षे । एवं भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वयोस्सम्बन्धो निवर्तमानः पक्षधर्मताबलादनित्यत्वाभावमादाय सिद्ध्यति, तथा वायावुद्भूतरूपवत्त्व निवर्तमानं बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्तयत् प्रत्यक्षत्वाभावमादाय सिद्ध्यति, तथा चोभयत्रापि पक्षे साध्याभावसिद्ध्या साध्यसाधनसम्बन्धाभावोऽस्तीति । अत एव बाधानुन्नीतपक्षेतरस्यानुपाधित्वं स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्तकत्वादिति ।

( दी० ) यद्व्यावृत्त्येति । अत्र पक्ष इति पूरणात्पक्षनिष्ठसाध्यव्यावृत्त्युन्नायकव्यावृत्तिप्रतियोगित्वमर्थः । सत्प्रतिपक्षोन्नायकत्वं चात्र दूषकताबीजम् । तत्र चाप्रयोजकत्वात्साधनाव्यापकत्वं नोक्तम् । साधनस्य सोपाधित्वव्युत्पादनायैव केवलं यस्य साधनस्येति । यद्वा साधनस्येत्यनन्तरमधिकरणे इति पूरणात् साधनवन्निष्ठसाध्यव्यावृत्त्युन्नायकव्यावृत्तिप्रतियोगित्वमर्थः, तथा च यद्व्यभिचारित्वेनेत्यादेरुपदर्शितार्थनिष्कर्ष

प्रयोगम् । शुद्धस्य साधनावच्छिन्नस्य च साध्यस्य व्यापकतानुपाधीनां पक्षे कस्मिंश्चित्साधनवति वा साध्याभावस्यानुमापकत्वप्रकारमाह । स चेत्यादि । साधनवत्त्वेन ज्ञायमाने पक्षे साध्यसाधनसम्बन्धाभावविशिष्टव्यतिरेकप्रदर्शनाद्व्यभिचारसाध्याभावयोरेव पर्यवस्यति ।

( गा० ) पर्वतो वह्निमान् धूमादित्यादौ ह्रदादौ साध्याभावाभावकव्यतिरेकप्रतियोगिनि वह्निमत्प्रयत्नाद्यतिव्याप्तिवारणायाऽऽह । अथेति । पक्षे यथाश्रुत्या साध्यं निवर्तेत इत्यत्र निवृत्तिपदार्थविषयोऽभावः, प्रतियोगित्वमाख्यातार्थः, तृतीयायाः स्वरूपार्थोऽन्वयार्थः, तथा च यत्साध्यप्रयुक्तपक्षविशेष्यकोभयवत्त्वविषयाभावप्रतियोगि साध्यम्, पक्षविशेष्यकसाध्याभावोभयवत्त्वयोरन्यतरनियामि य इत्यर्थः पर्यवसितः, तादृशाभावश्च पक्षवृत्तित्वघटितत्वादाशयेन व्याचष्टे । पक्षनिष्ठेति । पक्षनिष्ठत्वमनुमापकत्वाद्वृत्तिविशेषणम्, अनुमापकत्वं च व्याप्यत्वमेव, तथा च पक्षवृत्तितावच्छेदकरूपेण साध्याभावव्याप्यो योऽभावस्तत्प्रतियोगित्वमित्यर्थः, तेनायोगोलके धूमवत्त्वहेतुकत्वादौ पक्षनिष्ठसाध्याभावस्य ह्रदत्वाद्यनुमापकव्यतिरेकप्रतियोगिनि वह्न्यादौ नातिव्याप्तिः, न वा पर्वतो वह्निमान् धूमादित्यादौ ह्रदादिवृत्तित्वविशिष्टत्वेन वह्न्याद्यभावव्याप्यव्यतिरेकस्य प्रतियोगिनि महानसत्वादौ । अत्र साधनाव्यापकत्वानुपादानात् साध्यसाधनोभयव्यापकपक्षावृत्तावतिप्रसङ्ग इत्याशङ्कां तस्य लक्षणत्वेन परिहरति । सम्यगितरथेति । यस्य साधनस्येति भागस्य लक्षणप्रवेशोऽपि तदुक्तिं सार्थकयति । साधनस्येति । सोपाधिरेवेति । सोपाधित्वव्यवहारविषयत्वप्रयोजकोपाधिसम्बन्धलाभायेत्यर्थः । साध्यसाधनसम्बन्धकथनेन तदभावसाधकव्यतिरेकप्रतियोगिन्युपाधावपि तस्य परम्परासम्बन्धलाभादिति भावः । तदंशस्य लक्षणप्रवेशनिर्वाहाय कल्पान्तरमनुसरति । यद्वेति । साधनवन्निष्ठेत्यादिफक्किकयाऽर्थो निष्कर्षणीयः । उपदर्शितेति । वस्तुतस्तु इत्यादिनाऽस्मद्दर्शितनिष्कर्षार्थ इत्यर्थः । तथा च न पौनरुक्त्यदोषः, अस्य यथाश्रुतपरित्यागेन तल्लक्षणविवरणरूपत्वादिति भावः ।

शुद्धसाध्यव्यापकार्द्रेन्धनोपाधेः साक्षात्साध्याभावोन्नायकतयैव ल-क्षणसमन्वये अत एवेत्यादिना शुद्धसाध्याभावसाधकतया साध्यसाधनसम्बन्धाभावोन्नायकत्वसम्पादनं व्यर्थमित्याशङ्क्य नि-रस्यति । शुद्धस्येति । 'साधनावच्छिन्नस्येति । पक्षधर्माव-च्छिन्नसाध्यव्यापकस्याभावात् साध्यसाधनसम्बन्धाभावभिन्नैरस-म्भवेन वक्ष्यमाणप्रकारेण साध्याभावोन्नायकत्वं न तस्येति साध-नावच्छिन्नस्येत्युक्तम् । सत्प्रतिपक्षोन्नायकतया उपाधितापक्षे पक्षा-व्यापकविपर्ययस्य उपाध्याभासतया पक्षतावच्छेदकसामानाधिक-रण्येन साध्यासिद्धेरुद्देश्यत्वे पक्षतावच्छेदकावच्छेदेन साध्याभा-वोन्नयनमेवोपाधिनानिर्वाह्यमतः पक्ष इति सामान्यत उक्तम् । व्य-भिचारोन्नायकतया उपाधितापक्षे साधनवत्त्वावच्छेदेन साध्याभा-वोन्नयनमप्रयोजकम्, यत्किञ्चित्साधनवति साध्याभाववत्त्वस्यैव व्यभिचारत्वादतः क्वचित् साधनवतीत्युक्तम् । एकमुन्नयनप्रकारम् । साध्यसाधनसम्बन्धाभावे साध्यमाने पक्षधर्मताबलात् साध्याभाव-साधकत्वरूपम् ।

मूले साध्यसाधनसम्बन्धाभावः साध्यसाधनयोरेकाधिकरण्याप-राभावः । पक्ष इत्यस्य उत्तरकल्पे साधनवतीत्येवार्थः । एवमग्रेऽपि ।

साध्यसाधनसम्बन्धाभावसाधकतयाऽपि कथं साध्याभावसा-धकत्वमित्यत आह दीधितौ । साधनवत्त्वेनेति ।

( दी० ) ननु शुद्धसाध्याभावोन्नायकस्यार्द्रेन्धनवत्त्वादेः कथं साध्यसाधनसम्बन्धाभावोन्नायकत्वमत आह । आर्द्रेन्धने-ति । अत एवेति । साध्याभावसत्त्वे साध्यसाधनसम्बन्धाभाव-स्याऽऽवश्यकत्वात्तदुन्नायकत्वमक्षतमिति भावः । द्रव्यत्वे इति । द्रव्यत्वस्य हेतुत्वाभिप्रायेण । अयञ्च प्रायशस्सम्भवतीत्यभिहितः । वस्तुतः प्रकारभेदेऽपि न क्षतिः । तथा च शुद्धसाध्यव्यापको-पाधिस्थले शुद्धसाध्याभावः अवच्छिन्नतद्व्यापकस्थले त्ववच्छे-दकरत्यवच्छिन्नसाध्याभावोऽवच्छेदकवत्त्वविशेषितेन चोपाधि-विरहेण शुद्धसाध्याभावस्साधनीयः, अत एव गगनादौ स्पर्श-

यत्वेन प्रमेयत्वेन च प्रत्यक्षत्वे साध्ये वह्निर्द्रव्यत्वावच्छिन्नसाध्य-व्यापकस्योद्भूतरूपस्य तादृशसाध्याभावोन्नयनहेतुत्वमिति । पक्षे यद्व्यावृत्त्या यस्य साधनस्य सम्बन्धि यत्साधनविशिष्टं साध्यं निवर्तते इत्यर्थस्तु यथाश्रुतग्रन्थस्वरससिद्धः, तत्र दूषकताबीजं यदि सत्प्रतिपक्षोन्नायकत्वं तदा साधनानुप्रवेशो व्यर्थः, जलं द्रव्यं गन्धवत्त्वादित्यादौ पृथिवीत्वादावतिव्याप्तिश्च ।

( गा० ) शुद्धसाध्यव्यापकाभावस्य तावच्छिन्नसाध्याभावसाधकत्वमित्यभिमानविजृम्भितशङ्कावारकतया यथाऽऽर्द्रेन्धनवत्त्वमित्यादिग्रन्थमवतारयति । नन्विति । अत एवेत्यादिना साध्याभावस्य साध्यसाधनसम्बन्धाभावप्रयोजकत्वमुक्तम्, तावता तत्सत्त्वे तत्सत्त्वावश्यकत्वलाभादुक्तशङ्कानिराकरणमिति स्फुटयति । अत एवेतीति । तदुन्नायकत्वमित्यस्य बाधव्यभिचारयोरप्रसक्त्येत्यादिः । द्रव्यत्वे सति प्रत्यक्षत्वं निवर्तयदित्यस्य साध्यसाधनोभयसम्बन्धाभावसाधनपरत्वाभावे साध्याभावसिद्ध्या साध्यसाधनसम्बन्धाभावोऽस्तीत्यग्रिममूलस्य यदभावात् पक्षे साध्यसाधनसम्बन्धाभाव इत्यस्य च विरोधः, प्रत्यक्षस्पर्शाश्रयत्वस्य हेतुत्वं च तत्परत्वासम्भव इत्यतो द्रव्यत्वस्येति ।

मूलकृता तथा चेत्यादिना तदुभयसम्बन्धाभावस्याबाधो दर्शितः । साध्याभावसिद्ध्या । साध्याभावस्य प्रमितत्वेन ।

मूलकृतोऽप्युन्नयनप्रकारैक्ये निर्बन्धमाह । अयं चेति । सत्प्रतिपक्षोन्नायकस्य उपाधितामते पक्षे साधनस्यासत्त्वे तत्र साधनवत्त्वानिश्चयादुपाध्यभावेनोभयसम्बन्धाभावसाधने साध्याभावपर्यवसानासम्भवात् प्रायश इत्युक्तम् । प्रकारभेदं दर्शयति । तथा चेति । उक्तप्रकारसम्भवस्थलं दर्शयति । अत एवेति । स्पर्शवत्त्वेन प्रमेयत्वेन चेति । प्रथमे उपाध्यभावेन साध्यसाधनसम्बन्धाभावसाधने शुद्धसाध्याभावापर्यवसानम्, स्पर्शरूपसाधनाभावाबाधे पक्षधर्मताबलाभावात्, द्वितीये तद्व्याप्तिविरहेण साध्यसाधनसम्बन्धे प्रवेश्य उक्तलक्षणव्याख्यानं दूषयितुमाह । पक्ष इति । गौरत्वाभाववान् मित्रातनयत्वादित्यादौ शाकपाकजत्वायु-

पाधेः साधनसामानाधिकरण्योपलक्षितसाध्यव्यापकतया न स्वव्यतिरेकेण तादृशसाध्याभावसाधकत्वम्, अतो यत्साधनविशिष्टमिति वर्णितम्। सत्प्रतिपक्षोन्नायकत्वम् तदुन्नायकतामात्रम् । लक्ष्यतानियामकमिति शेषः । साधनानुप्रवेशो व्यर्थ इति । शुद्धसाध्याव्यापकस्यापि पक्षे उक्तरीत्या शुद्धसाध्याभावोन्नायकतया तदन्तर्भावेऽपि लक्षणसमन्वयसम्भवादिति भावः । अतिव्याप्तिरिति । पक्षे साध्यसत्त्वेन सत्प्रतिपक्षानुन्नायकत्वात् साधनावच्छिन्नसाध्यव्यापकतया यथोक्तलक्षणसत्त्वाच्चेति भावः ।

( दी० ) अथासिद्ध्युन्नायकत्वं तदा साध्यानुप्रवेशो निरर्थकः, जलं गन्धवत् द्रव्यत्वादित्यादौ पृथिवीत्वादावतिप्रसङ्गश्च । अथ यथासम्भवमसिद्धेस्सत्प्रतिपक्षस्य चोन्नायकत्वं तदा वायुः स्नेहवान् गन्धवत्त्वादित्यादौ जलत्वपृथिवीत्वादावतिव्याप्तिः, साधनविशिष्टसाध्याप्रसिद्धेः । साध्यसाधनवत्त्वप्रकारकबोधविरोधिबुद्धिकाभावोन्नायकत्वमर्थः, विरुणद्धि चैकैकाभावबुद्धिरुभयवत्ताबोधम्, विरुद्धस्थले तु भ्रमादिरूपतथाविधबोधप्रसिद्ध्या समन्वय इत्यपि वदन्ति ।

( गा० ) असिद्ध्युन्नायकत्वम् । असिद्ध्युन्नायकतामात्रम् । एवं सति साधनानुप्रवेशसार्थक्यं भवति, उक्तस्थलीयपृथिवीत्वादेः स्वरूपासिद्ध्युन्नायकतया लक्ष्यस्य सङ्ग्राहकत्वात् । साध्यानुप्रवेश इति । आत्मा प्रत्यक्षः स्पर्शाश्रयत्वादित्यादौ शुद्धसाधनाव्यापकस्योद्भूतरूपादेरभावेन पक्षधर्मविभुत्वादिर्विशिष्टेन साधनाभावोन्नयनसम्भवेन तदन्तर्भावेऽपि लक्षणसमन्वयसम्भवात्, पृथिवीत्वादौ पक्षे साधनसत्त्वेन स्वरूपासिद्ध्यनुन्नायकतया ऽलक्ष्ये साधनावच्छिन्नसाध्यव्यापकतया यथोक्तलक्षणसत्त्वेनातिप्रसङ्गः । प्रत्येकोन्नायकेऽपि यथोक्तलक्षणसत्त्वादुभयोन्नायकत्वस्य लक्ष्यतानियामकत्वेऽतिव्याप्तिरिति यथासम्भवमित्युक्तम्, तथा चैकोन्नायकतयैव लक्ष्यतया नोक्तातिव्याप्तेरवकाशः, तदुपाधिसङ्ग्राहकतया चोभयानुप्रवेशसार्थक्यमिति भावः । जलत्वपृथिवीत्वादाविति । प्रथमस्य सत्प्रतिपक्षोन्नायकतया द्वितीयस्यासिद्ध्युन्नायकतया ल-

श्यत्वात् इति भावः। साधनविशिष्टसाध्यस्याभावो न 'प्रविष्ट'; अपि तु द्वयोरभावद्वयमनुगतरूपेणेति नोक्ताऽव्याप्तिरिति वदतां मतमाह। साध्येति। साध्यसाधनोभयप्रकारकबोधविरोधिनी बुद्धिर्यस्य तादृशाभावोन्नायकत्वमित्यर्थः। यत्किञ्चिदेकधर्मिकतादृशोभयप्रकारकलौकिकसन्निकर्षाद्यजन्यज्ञानसामान्यप्रतिबन्धकतावच्छेदकतद्धर्मिविशेष्यतानिरूपकप्रकारताश्रयाभावोन्नायकत्वं विवक्षितम्। पदार्थान्तरसहिततदुभयप्रकारकबोधविरोधितावच्छेदकत्वमन्यथाऽपीति तदुन्नायकेऽतिव्याप्तिवारणाय सामान्यस्युक्तम्। नानाधर्मिकोभयप्रकारकज्ञानसामान्यप्रतिबन्धकतावच्छेदकत्वं विशेष्यभेदभिन्नाया न कस्या अपि साध्याभावादिप्रकारताया इति प्रतिबध्यज्ञाने यत्किञ्चिदेकधर्मिकत्वनिवेशः। विशिष्टद्वयाद्येत्र साध्यता साधनता वा तत्र साध्यादौ तद्विशेषणाभावग्रहस्यापि विशिष्टसाध्यादिप्रकारकज्ञानविरोधितया प्रकृतपक्षे तदुन्नायकस्य वारणाय तद्धर्मिविशेष्यतानिरूपकत्वं प्रकारताविशेषणम्। प्रकृतपक्षे तादृशाभावोन्नायकत्वविवक्षयाऽन्यत्र तदुन्नायकेऽनुपाधौ नातिप्रसङ्गः।

ननु उभयवत्ताज्ञानप्रतिबन्धकमुभयाभावज्ञानम्, तथा सति च यत्र एकसम्बन्धेनैव साध्यसाधनभावः तत्र तत्सम्बन्धेनोभयप्रकारकज्ञानविरोधितत्सम्बन्धावच्छिन्नोभयाभावोन्नायकतया सत्प्रतिपक्षाद्युन्नायकसङ्ग्रहेऽपि यत्र भिन्नसम्बन्धेन तथात्वं तत्र विभिन्नतत्सम्बन्धेन साध्यसाधनोभयप्रकारकज्ञानं प्रति नैकसम्बन्धावच्छिन्नोभयाभावज्ञानं प्रतिबन्धकमिति कीदृशाभावोन्नायकतया लक्षणं सङ्गमनीयमित्याशङ्कां निराचिकीर्षुः साध्यसाधनोभयस्य विभिन्नतत्सम्बन्धावगाहिज्ञानस्याधिकं स्थिति न्यायेन प्रत्येकसम्बन्धावच्छिन्नप्रत्येकाभावज्ञानप्रतिबध्यत्वमपीति तदुन्नायकत्वमेवोभयविरोध्यनुगमकम्, अत उभयस्याप्रकारकोभयज्ञाने उभयाभावज्ञानस्याविरोधित्वेऽपि न क्षतिरिति समाधत्ते। विरुणद्धीति। विरुद्धसाध्यसाधनयोरेकधर्मिणि प्रमारूपज्ञानासम्भवेऽपि भ्रमरूपस्य संशयरूपस्य वा उभयज्ञानस्य विरोधित्वेनैव तन्नाभावद्वयानुगम इत्याह। विरुद्धस्थले चेति। अत्र च यादृशविरुद्धस्य न कुत्रापि धर्मिणि भ्रमः संशयो वा प्रसिद्धस्तदेकतरसाध्यकापरहेतुकोपाधावव्याप्तिः, यत्किञ्चिदेकधर्मिणि साध्यप्रकारकं यत्किञ्चिदेकधर्मिणि च साधनप्रकारक-

मिति रीत्या निवेशो भिन्नधर्मिकेनदुभयप्रमामादाय वृत्तिमत्साध्यसाधनकोपाधिसङ्ग्रहेऽपि साध्यतावच्छेदकादिसम्बन्धेनावृत्तिसाध्यादिके तेन तेन सम्बन्धेनोभयप्रकारकस्य भिन्नधर्मिकस्यापि प्रमारूपज्ञानस्याप्रसिद्ध्या तत्र प्रमाप्रसिद्धावव्याप्तिः, एवं साध्याभावोन्नायकताया एव मूलकृतोपादानादसिद्ध्युन्नायकस्य लक्ष्यत्वं न तदभिप्रेतमित्यादिकमस्वरसबीजम् ।

(दी० ) यत्तु साध्यावृत्तित्वे सति साधनावृत्तिर्यस्तच्छून्यत्वेन साध्यसाधने अनुगमय्य तदभावोन्नायकत्वं वाच्यमिति तन्न । यत्र भिन्नाभिन्नसम्बन्धेन साध्यसाधनभावस्तत्र सद्धेतुके हेतुतासम्पादकेन सम्बन्धेन साध्यस्य साध्यतासम्पादकेन च हेतोरन्यत्रापि च यथा कथञ्चित्सम्बन्धेनोभयस्याभावोन्नायकेऽतिव्याप्तेः । किञ्च तादृशधर्मशून्यत्वेन रूपान्तरेण वा तदभावस्योन्नायकत्वमभिमतम् ? नाद्यः, साध्यसाधनान्यतरवति तदसम्भवात् । नान्त्यः, धूमेन पर्वते वह्नौ साध्ये महानसीयवह्नित्वावच्छिन्नाभावोन्नायकमहानसत्वादावतिव्याप्तेः ।

( गा० ) साध्यसाधने अनुगमय्य तदभावत्वेनाभावद्वयानुगमनं दूषयितुमुपन्यस्यति । यत्त्विति । यत्र प्रमेयमात्रस्य साध्यता साधनता वा तत्र साध्यसाधनयोस्तदन्यान्यत्वेनानुगमो न सम्भवति, प्रमेयभिन्नाप्रसिद्धेरिति तत्तदवृत्तिशून्यत्वेनानुगमः । प्रमेयावृत्तित्वाप्रसिद्धेरेव प्रसिद्धम् । यत्रेति । पर्वतो वह्निमान् धूमसंयोगादित्यादावित्यर्थः । सद्धेतुक इति । अभावोन्नायक इत्यनेनान्वितम् । हेतुतासम्पादकेन सम्बन्धेनाभावस्य विवक्षणे तादृशेन समवायादिना साध्यस्य वह्न्यादेरभावस्योन्नायके वह्न्यवयववत्त्वादौ, साध्यतासम्पादकेन सम्बन्धेनाभावस्य विवक्षणे तादृशेन संयोगादिना हेतोर्धूमसंयोगादेरभावस्योन्नायके महानसत्वादौ, यत्किञ्चित्सम्बन्धेनाभावस्य विवक्षणे च तत्तत्सम्बन्धेन तत्तदभावस्योन्नायके तत्र तत्रैवातिव्याप्तिरित्यर्थः । अभावस्य प्रतियोगितावच्छेदकं विकल्प्यापि दूषयति । किञ्चेति । तादृशधर्मेति । धर्मपदं स्वरूपार्थकम्, तादृशान्यतरत्वावच्छिन्नप्रतियोगिताकस्य तादृशान्यतरत्वाश्रयप्रतियोगिताक-

स्य वाऽभावस्योन्नायकत्वं विवक्षितमित्यर्थः। अन्यतरवतीति। पक्षे। तदसम्भवात्। अन्यतरत्वावच्छिन्नाभावस्य बाधेनोन्नायकत्वास-म्भवात्। तथा च ह्रदो वह्निमान् द्रव्यत्वादित्यादौ वह्निसामग्र्यादेः, पर्वतो वह्निमान महानसत्वादित्यादौ च व्यञ्जनवत्त्वादेः सत्प्रतिप-क्षस्यासिद्धेश्च उन्नायकस्यासङ्ग्रह इति भावः।।

( दी० ) यत्र पक्षावृत्तित्वे सति ये साधनवदवृत्तयस्तच्छू-न्यत्वेन पक्षसाधनवन्ताविति प्रमाविशेष्यत्वेन वा द्वावनुगतीकृत्य तत्र साध्यव्यावर्त्तकत्वपर्यमाहुः। तत्र यदि सत्प्रतिपक्षव्यभिचा-रयोरन्यतरमात्रोन्नायकत्वं दूषकताबीजम् तदा द्वयोरनुगमनम-फलम्। अथ यथासम्भवमुभयोन्नायकत्वम् तदाऽवृत्तिहेतुके सत्प्रतिपक्षोन्नायकेऽतिव्याप्तिः।

( गा० ) सत्प्रतिपक्षव्यभिचारयोरुन्नायकसङ्ग्रहाय उन्नयनपक्ष-भूतपक्षसाधनवतोरनुगतरूपेणान्तर्भावं दूषयति। यत्रेत्यादिना। प्रमेयत्वस्य यत्र पक्षतावच्छेदकता साधनता वा तत्राप्रसिद्धिभयेन तत्तदन्यान्यत्वोपेक्षा। पक्षसाधनवन्ताविति। इतरविशेष्यकसमू-हालम्बनव्यावृत्ततद्व्यक्तित्वेन प्रमाया निवेशो बोध्यः, अतः पूर्वापे-क्षया लाघवम्, तादृशसमूहालम्बनव्यावृत्तस्य पूर्वापेक्षया लघुरूपा-न्तरस्य दुर्वचत्वात्। साध्यव्यावर्त्तकत्वम्। साध्याभावोन्नायकत्वम्। अर्थम्। उक्तलक्षणस्यैवेति शेषः। सत्प्रतिपक्षेति। सत्प्रतिपक्षोन्नायक-त्वमात्रम्। व्यभिचारोन्नायकत्वमात्रमित्यर्थः। अवृत्तिहेतुके इति। ह्रदो वह्निमान् गगनादित्यादिस्थले वह्निसामग्र्यादावित्यर्थः। अव्याप्तिः, साधनवतोऽप्रसिद्ध्या।

( दी० ) यदपि च पक्षतावच्छेदके साधने च न वर्तते य-धर्मच्छून्यस्य पक्षतावच्छेदकसाधने इति प्रतीतिविशेष्यस्य वाऽऽ-श्रये साध्यव्यावर्त्तकत्वपर्यमाहुः। तत्रापि किं येन सम्बन्धेन हेतुता तेन, अथ येन पक्षतावच्छेदकं पक्षे वर्तते तेन, उत येन केनचित् तादृशधर्माश्रये साध्यव्यावर्तकत्वमाभिमतम्? नाद्यः, जलं वह्निमद्धूमादित्यादौ जलपक्षकवह्निसाध्यके संयोगसम्बन्धेन

साधने धूमादौ वह्निसामग्र्यादावव्याप्तेः; पक्षतावच्छेदकस्य संयोगेनावृत्तेः, संयोगेन धूमवतश्च वह्निमत्त्वानियमात् । न द्वितीयः, घटो जातिमान्मेयत्वादित्यादौ समवायित्वादावव्याप्तेः, वह्निमत्पर्वतपक्षके पर्वतो वह्निमान् धूमादित्यत्र धूमावयवे वह्निव्यावर्तके वह्निसामग्र्यादावतिव्याप्तेश्च । अत एव नेतरोऽपि, इत्यादि स्वयमूहनीयमिति कृतं पल्लवितेन ।

( गा० ) साधनपक्षतावच्छेदकान्यतराश्रयत्वेनोभयोर्निवेशे साधनवतोऽप्रसिद्धावपि नान्यतराश्रयाप्रसिद्धिरित्याशयेन तत्र साध्याभावोन्नायकत्वार्थकत्वेन तल्लक्षणव्याख्यामुपन्यस्य दूषयति । यद्यपीत्यादि । पक्षतावच्छेदक इति । प्रमेयमात्रस्य यत्र पक्षतावच्छेदकता साधनता वा तत्सङ्ग्रहानुरोधेन तदन्यान्यत्वमुपेक्षितम् । पक्षतावच्छेदकसाधने इतिप्रथमाद्विवचनम् । तेनेति । द्वय ताद्दशधर्माश्रय इत्यन्वयि । येन पक्षतावच्छेदकमिति । येन सम्बन्धेन पक्षतावच्छेदकावच्छिन्नं साध्यं साधनीयमित्यर्थः । वह्निसामग्र्यादौ । सत्प्रतिपक्षोन्नायके । संयोगेनावृत्तेरिति । तथा च जलरूपपक्षस्य साधनशून्यस्यान्यतराश्रयत्वेनोपादानासम्भवात् तत्र साध्याभावोन्नायकतया न लक्षणगमनसम्भव इति भावः । साधनतावच्छेदकसम्बन्धेन साधनवतः प्रसिद्धावपि साध्याभावस्य तत्र बाधेनोन्नायनं न सम्भवतीत्याह । संयोगेन धूमवतश्चेति । समवायित्वादौ । व्यभिचारोन्नायके । अव्याप्तेरिति । पक्षतावच्छेदकताघटकसमवायेन मेयत्वाश्रयाप्रसिद्धेः, पक्षतावच्छेदकघटत्वाश्रयस्य च साध्यवत्त्वनियमादिति भावः । अतिव्याप्तिमप्याह । वह्निमदिति । पक्षस्य साध्यशून्यत्वे वह्निसामग्र्यादिः सत्प्रतिपक्षोत्थापकतया लक्ष्य एव स्यादिति वह्निमत्पर्वतपक्षक इत्युक्तम् । धूमावयवे । पक्षतावच्छेदकताघटकसमवायेनान्यतरान्तर्गतसाधनाश्रये । अत एव । यत्किञ्चित्सम्बन्धेन धूमावयवादेर्धूमाद्याश्रयतया तत्र साध्यव्यावर्तकवह्निसामग्र्यादावतिव्याप्तेरेव ।

( चि० ) यत्तूपाधिमात्रस्य लक्षणं व्यतिरेकिधर्मत्वं पक्षेतरोऽपि कश्चिदुपाधिः, तत्तदुपाधेस्तु

तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाव्यापकत्वम् । न च वह्निधूमसम्बन्धोपाधिः पक्षेतरत्वं स्यादिति वाच्यम् । आपाद्याप्रसिद्धेरिति । तन्न । अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूपणम् । तच्च न व्यतिरेकित्वम्, अतिप्रसङ्गात्, विशेषलक्षणत्वे तु वह्निधूमसम्बन्धे पक्षेतरत्वस्योपाधित्वप्रसङ्गाच्च ॥ [2] [1]

१ (गा०) मूले व्यतिरेकिधर्मत्वमिति । तत्सम्बन्धावच्छिन्नसाध्याभावप्रतियोगितावच्छेदकत्वे सति तत्सम्बन्धावच्छिन्नसाधनाभावावच्छेदको यो धर्मस्तद्वत्त्वं तेन सम्बन्धेन तद्रूपेणोपाधित्वमित्यर्थः, अतो द्वित्वाद्यवच्छिन्नव्यतिरेकप्रतियोगित्वस्य यत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगित्वस्य वा व्यावर्तकत्वेऽपि न क्षतिः । संयोगादिसम्बन्धेन गुणत्वगुणघटोभयत्वाद्यवच्छिन्नस्योपाधितावारणाय विशेष्यदलम् । तत्तदुपाधेस्तु । तद्रूपावच्छिन्नहेतुकोपाधेस्तु । लक्षणमित्यनुषज्यते । तत्तत्साध्येति । तद्रूपावच्छिन्नसाध्यसाधनव्यापकत्वाव्यापकत्वावच्छेदकरूपवत्त्वमित्यर्थः । पक्षेतरत्वं वह्निधूमसम्बन्धोपाधिः स्यादिति योजना । वह्निधूमसम्बन्धोपाधिः । वह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकोपाधिः ।

२ (दी०) आपाद्याप्रसिद्धेः । आपाद्यस्य वह्निव्यापकत्वे सति धूमाव्यापकत्वस्य अप्रसिद्धेः । अनुमितीति । अस्मदुक्तं व्यभिचारोन्नायकत्वं तदुन्नयनस्वरूपयोग्यत्वं तद्व्याप्तिपक्षधर्मतारूपम् पर्यवसितसाध्यव्यापकत्वादिकं चानुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमेवेति भावः । ननु सामान्यलक्षणमितरव्यावृत्त्यौपयिकम्, विशेषलक्षणं तु दूषकतायामुपयुज्यते इत्यत्राऽऽह । विशेषेति ।

(गा०) तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाव्यापकत्वस्य तत्तत्साध्यसाधनकोपाधिव्यवहारविषयतावच्छेदकत्वमुपगम्य वह्निव्यापकत्वे सति धूमाव्यापकत्वस्य वह्निसाध्यकधूमसाधनकोपाधिव्यवहारविषयतावच्छेदकत्वोपगमात् तस्य तद्व्याप्यतया वह्नि-

व्यापकत्वे सति धूमाव्यापकत्वेन तथाविधोपाधिव्यवहारविषयतावच्छेदकत्वापत्तिरभिमता, एकस्यैव भिन्नरूपेणापाद्यापादकभावाविरोधादित्याशयेनापाद्याप्रसिद्धिं दीधितिकृदाचष्टे । आपाद्यस्येति । धूमाव्यापकत्वस्य । धूमाव्यापकत्वरूपतादृशव्यवहारविषयतावच्छेदकस्य । अप्रसिद्धेः । तादृशावच्छेदकत्वेनापि क्वचित् प्रसिद्धिविरहात् ।

मूले आपाद्येत्युपलक्षणम्, उक्तधर्माप्रसिद्ध्या आपादकाप्रसिद्धिरपि द्रष्टव्या । तादृशव्यवहारविषयत्वापादनेऽपि उक्तस्यापादकत्वे आपादकाप्रसिद्धिः । भ्रान्तस्य तथा व्यवहारादिष्टापत्तिः । यथार्थतादृशव्यवहारविषयत्वापादने आपाद्याप्रसिद्धिरपि । व्यवहारस्य याथार्थ्यापादने वह्निव्यापकत्वसहितधूमाव्यापकत्वरूपव्यवहारविषयतावच्छेदकरूपोपाधिकत्वस्यैवापादकत्वेनोपगन्तव्यतया आपादकाप्रसिद्धिर्दुर्वारैत्यवधेयम् । एतेन पक्षेतरत्वे वह्निव्यापकत्वे सति धूमाव्यापकत्वरूपस्याऽऽपादकस्यापि उक्तलक्षणकत्वाऽनुपगमात्तस्याऽऽपत्यप्रसक्त्याऽऽपाद्याप्रसिद्ध्या तन्निराकरणासङ्गतिरिति परास्तम् ।

ननु व्यतिरेकिधर्मत्वस्यैव सिद्धान्तिनिरुक्तव्यभिचारोन्नायकत्वादिज्ञानस्यापि स्वतो व्यभिचारज्ञानद्वारा वाऽनुमित्यप्रतिबन्धकत्वेन सिद्धान्तिनिरुक्तरूपस्यापि न यथोक्तरूपतेति तुल्यानुयोग इत्यत आह । अस्मदुक्तमिति । तच्च व्याप्तिपक्षधर्मतारूपम् । साध्यव्यभिचारव्याप्यत्वे सति साधनरूपपक्षवृत्तितारूपम् । अनुमितेः प्रतिबन्धकेत्यादिनाऽन्वयः । तस्य तथात्वं च व्यभिचारानुमितिजनकज्ञानविषयत्वावच्छेदकतया पर्यवसितसाध्यव्यापकताघटितोक्तरूपस्यापि उपाधिव्यभिचारे पर्यवसितसाध्यव्यभिचारव्याप्यत्वादिग्राहकज्ञानविषयतावच्छेदकतया पर्यवसितसाध्यव्यभिचारसिद्धेरेव पक्षधर्मताबलेनानुमितिविरोधिशुद्धसाध्यव्यभिचारसिद्धिरूपत्वादित्यवधेयम् ।

नन्वस्यापि वादिनो विशेषलक्षणमनुमितिविरोधिज्ञानविषयतावच्छेदकमित्येतन्मतेऽपि न दोष इत्याशङ्कायां विशेषलक्षणे दोषमवतारयति । नन्वित्यादि । दूषकतायाम् । अनुमितिप्रतिबन्धकव्यभिचारज्ञानजनने ।

मूले विशेषलक्षणत्वे इति । उक्तविशेषधर्मस्य लक्षणत्वे । अनु-

मितिप्रतिबन्धकज्ञानविषयतावच्छेदकत्वे स्वीकृते इत्यर्थः । वह्नि-धूमेति । पक्षेतरत्वे वह्निसाध्यकधूमहेतुकानुमितिप्रतिबन्धकज्ञान-विषयतावच्छेदकरूपत्ववत्त्वापत्तेरित्यर्थः ।

(दी०) यथाश्रुते ऽवच्छिन्नसाध्यव्यापकोपाध्यव्याप्त्या य-त्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकत्वमेव वक्तव्यम्, तथा च वह्निना धूमस्य धूमेन वह्नेर्वा साधने पक्षेतरस्य तद्रूपज्ञानादनुमितिप्रति-बन्धापत्तिरित्यर्थः । व्यवहारौपयिकत्वे च, तत्रोपाधिव्यवहारापत्ति, पर्यवसितेत्याद्यभिधाने,चास्मत्प्रमेयेश इति भावः । व्यव-हारौपयिकम् । स्वव्यभिचारेण साध्यव्यभिचारोन्नायकत्वम् । लक्षण तु तत्तत्साध्यसमानाधिकरणत्वे सति तत्तत्साधनाव्याप-कत्व साध्यसाधनभेदाद्भिन्नमेव । वस्तुतो व्यभिचारिणस्साधन-स्यैवानुप्रवेशाच्च नातिप्रसङ्गः । न च रूपेण गुरुत्वे साध्ये पृथि-वीत्वाभावादेरुपाधितापत्तिः, गुरुत्वव्यभिचारिरूपव्यक्तेस्तव्द्या-प्यत्वात् तद्व्याप्यरूपव्यक्तेश्च गुरुत्वाव्यभिचारादिति । दूषणौपयिकं तु यथासम्भवमननुगतमेवेति मतमिदं परे परिष्कुर्वन्ति । तन्न । तथा हि साध्यसाधनव्यक्तिस्वरूपगर्भ नोपाधित्वम्, अपि तु साध्यतावच्छेदकसाधनतावच्छेदकधर्मगर्भम्, तत्तद्गुण-त्वेन सकलगुणव्यक्तिषु सोपाधेरपि द्रव्यत्वस्य गुणत्वेन सकल-गुणेष्वेव निरुपाधित्वात्, गुणत्वेन गुणे साध्ये सत्तात्वेन रूपेण सोपाधेरपि सत्ताया गुणकर्मान्यत्वविशिष्टसत्तात्वेन निरुपाधि-त्वात् । तथा च तद्रूपावच्छिन्ने साध्ये तद्रूपावच्छिन्ने साधने च क उपाधिरित्यत्र तद्रूपावच्छिन्नसाध्यसमानाधिकरणत्वे सति तद्रू-पावच्छिन्नसाधनाव्यापकत्वमनुगतं लक्षणं वाच्यम्, न तु तद्रू-पावच्छिन्नतत्तत्साधनव्यक्त्यव्यापकत्वम्, अननुगमापत्तेः, तथा च गुरुत्वत्वावच्छिन्नसमानाधिकरणस्य रूपत्वावच्छिन्नाव्यापकस्य

पृथिवीत्वाभावादेरुपाधित्वं दुर्वारम् । व्यभिचारित्वेन साधन-विशेषणं तूपदर्शितमेवेति सङ्क्षेपः ।

( गा० ) अत्रापि तादृशरूपाप्रसिद्ध्या पूर्ववदापत्त्यसम्भव इति तत्सम्भवं दीधितिकृदुपपादयति । यथाश्रुते इति । शुद्धसाध्यव्यापकत्वान्तर्भाव इत्यर्थः । तद्रूपवत्ताज्ञानादनुमितिप्रतिबन्धापत्तिरिति । यद्यपि नेयमापत्तिर्यथाश्रुतमूलतो लभ्यते, तथापि पक्षेतरत्वेऽनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकरूपवत्त्वापत्तौ पक्षेतरत्वनिष्ठयत्किञ्चित्साध्यव्यापकताघटितरूपेऽनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकत्वापत्तिः पर्यवस्यति, तस्याश्च पर्यवसानं तद्रूपावच्छिन्नविषयकज्ञानस्यानुमितिप्रतिबन्धकत्वापत्त्यावेति न विरोधः ।

उक्तरूपस्य व्यवहारमात्रौपयिकत्वेऽपि न निर्वाह इत्याह । उपाधिव्यवहारापत्तिरिति । वह्निसाध्यकधूमहेतुकोपाधिव्यवहारस्य यथार्थतापत्तिरित्यर्थः । अतो न पूर्वोक्तव्यवहारापत्तिदूषणावसरः । अत्रापादकं पूर्वोक्तव्यवहारविषयतावच्छेदकवह्निविषयकत्वमेव तच्च रूप नेदानीमप्रसिद्धमित्यवधेयम् ।

ननु निरुक्तपर्यवसितसाध्यव्यापकताघटितमेव लक्षणमेतन्मतेऽपि विवक्षणीयम्, अतो नावच्छिन्नसाध्यव्यापकासङ्ग्रहः, न वा पक्षेतरातिव्याप्तिरित्यत आह । पर्यवसितेत्यादीति । एतन्मतं परिष्कुर्वतां मतमुपन्यस्यति । व्यवहारादीति । व्यवहारौपयिकम् । उपाधिव्यवहारौपयिकम् । लक्षणम् । इतरभेदानुमापकम् । तत्तत्साध्येति । अवच्छिन्नसाध्यव्यापकोपाधिसङ्ग्रहाय लाघवाय च व्यापकत्वमुपेक्ष्य सामानाधिकरण्यनिवेशः । साध्यविरुद्धवारणाय साध्यसामानाधिकरण्यावच्छेदकसाधनाव्यापकतावच्छेदकरूपवत्त्वविवक्षया धूमवान् वह्नेरित्यादौ द्रव्यवृत्तित्वविशिष्टद्रव्यत्वादिकं वारणीयम् । साध्यसाधनयोर्विशिष्य निवेशस्याऽऽवश्यकतया तद्भेदादुपाधिभेद इष्ट एवेत्याह । साध्येति । सद्धेतौ सपक्षैकदेशवृत्तिधर्मेऽतिव्याप्तिं वारयति । वस्तुत इत्यादि । वस्तुतः । वस्तुगत्या । व्यभिचारिण इति । साध्यसाधनयोर्विशिष्य प्रवेशाद्यत्साध्यस्य यत्साधनं व्यभिचारि तदुभयघटितमेव लक्षणं कर्तव्यम्, तथा च यस्य यद्व्यापकं तदुभयघटितं नोपाधित्वमिति क्वातिप्रसङ्ग इत्यर्थः । गुरुत्व-

व्यभिचारीति। तैजसरूपव्यक्तीनां पृथिवीत्वाभावव्याप्यत्वादित्यर्थः। तथा च तत्तद्व्यक्तित्वेनैव साध्यसाधनयोर्निवेशनीयतया तैजसरूपहेतुकगुरुत्वसाध्यकोपाधिलक्षणप्रविष्टतद्रूपाव्यापकत्वस्य पृथिवीत्वाभावे ऽसत्त्वादतिप्रसङ्ग इत्यर्थः। तद्रूपघटितलक्षणस्य तत्रातिव्याप्तिविरहेऽपि पार्थिवरूपात्मकहेतुघटितलक्षणातिव्याप्तिरेवेति शङ्कामुद्धरति। तद्व्याप्येति। पृथिवीत्वाभावो यद्व्यापकस्तद्रूपेत्यर्थः। गुरुत्वाव्यभिचारादिति। तथा च गुरुत्वतद्रूपोभयघटितलक्षणमेव नास्ति, क्वातिप्रसङ्ग इति भावः।

ननु उक्तरूपज्ञानं व्यभिचारानुमानानुपयोगि, व्यापकत्वाघटितत्वात्, नापि साध्यव्यापकत्वघटितम्, अवच्छिन्नसाध्यव्यापकासङ्ग्रहात्, नापि साधनपक्षधर्मावच्छिन्नसाध्यव्यापकताघटितम्, अननुगमादित्यसमुक्तरीतिरेवाऽऽदरणीयेत्यत आह। दूषणतेति। दूषणता। व्यभिचारोन्नायकता। अननुगतमेव। शुद्धसाध्यतत्तद्धर्मावच्छिन्नसाध्यव्यापकताघटितमेव, तदननुगमस्यादोषत्वादिति भावः। स्वरूपगर्भम्। स्वरूपमात्रगर्भम्। मात्रपदेन साध्यतावच्छेदकगर्भताव्यवच्छेदः। धर्मगर्भमिति। तत्कुत इत्यपेक्षायामाह। तत्त्वदिति। गुणव्यक्तिषु। साध्यीभूतासु। घटत्वाद्युपाधिना, सोपाधेरपि। द्रव्यत्वस्य निरुपाधित्वादिति। तथा च साध्यस्य रूपभेदानिवेशे रूपभेदेन एकसाध्यके सोपाधिनिरुपाधिभेदानुपपत्तिरिति भावः। साध्यस्य रूपभेदान्तर्भावफलमुक्त्वा साधनस्य रूपभेदान्तर्भावफलमाह। गुणत्वेनेति। रूपभेदान्तर्भावेन यादृशं लक्षणं तद्दर्शयति तथा चेति। रूपभेदपक्षे हेतुभूतधर्मिणोऽपि विशिष्यान्तर्भावे रूपेण गुरुत्वे साध्ये पृथिवीत्वाभावस्योपाधितावारणं सम्भवतीति तदन्तर्भाव निराकरोति। न त्विति। अनुगमादिति। हेतुव्यक्तिभेदेनोपाधिताभेदस्य निष्प्रयोजनकत्वादित्यर्थः। धूमादौ साध्ये वह्नित्वाद्यवच्छिन्नमहानसीयवह्न्यादिहेतावप्यार्द्रेन्धनादेरुपाधित्वानुपगमादिति भावः। तावता लक्षणे को दोष इत्यपेक्षायामाह। तथा चेति। पृथिवीत्वाभावादेरपीति। रूपत्वावच्छिन्नतैजसरूपव्यक्त्यव्यापकताशून्यस्यापीति शेषः।

ननु साध्यव्यभिचारिसाधनाव्यापकत्वनिवेशे नाय दोषो वारणीय इत्यत आह। व्यभिचारित्वेनेति। तथा चासमग्रय एव प्रवेशः

इति भाव ।

(चि० ) केचित्तु साधनव्यापकोऽप्युपाधिः क्वचिद् यत्र पक्षावृत्तिर्हेतुः । यथा करका, पृथिवी काठिनसंयोगादित्यत्रानुष्णाशीतस्पर्शवत्त्वम् । । न ह्यत्र स्वरूपासिद्धिरेव दोष, सर्वत्रोपाधेर्दूषणान्तरसङ्करादित्याहु ।

(दी० ) उपाधिलक्षणे साधनाव्यापकत्वं न विशेषणम्, दूषकतायामनुपयोगात्, अव्याप्तिकरत्वाच्चेति सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिनामभिप्रायं प्रकाशयति केचित्त्विति ।

( गा० ) ननु साधनाव्यापकत्वघटितस्यैवोपाधिलक्षणस्योक्तत्वात् करका पृथिवी काठिनसंयोगादि यत्र साधनाव्यापकस्य कथम् उपाधित्वस्वीकार इत्याशङ्का निराकरोति । उपाधिलक्षण इति । दूषकतायाम् । सत्प्रतिपक्षोन्नायकतायाम् । व्यभिचारिणि साधने साध्यस्यापि निरुक्तोपाधिलक्षणाक्रान्ततयोपाधित्वे व्यभिचारसाधने तद्व्यभिचाररूपसाधनस्य साध्याविशेषादिदोषस्याकिञ्चित्करतया साध्य च नोपाधिरिति मूलासङ्गतिपरिजिहीर्षया पर प्रत्युद्धाव्य इति पूरयिष्यन् साध्यतावच्छेदकावच्छिन्नसाध्यस्योपाधितयोद्भावने वक्ष्यमाणसाध्यविशेषादिदोषानवकाशात तद्रूपावच्छिन्नोद्भावनखण्डनायोगात् साध्यविशेषण पूरयति । साध्यतावच्छेदकावच्छिन्नमिति । साध्याविशिष्टत्वादिति मूल धारयन् साध्याविशिष्टतया दूषकताबीज पूरयति । पक्षे इति । पक्षे साधनरूपे । साधनस्य । साध्यात्मकोपाधिव्यभिचारस्य । अनुमानस्य । सिषाधयिषया सम्भवेऽपि वैयर्थ्यात् । हेतुजन्यत्वेनैव व्याप्तिविज्ञानाविघटनात् । अनिश्चये । पक्षे साधनस्येत्यनुषज्यते । तस्य । अनुमानस्य । यद्यप्युपाध्यन्तरव्यभिचारलिङ्गकव्यभिचारानुमापकपरामर्शस्यापि व्याप्तिज्ञान प्रति व्यावर्त्तकधर्मदर्शनत्वेन विरोधितया सर्वत्रैव व्यभिचारानुमितिवैयर्थ्यम्, तथाप्युपाध्यन्तरोद्भावने तादृशपरामर्शसम्पादकतयैवोपयुज्यते, साध्यस्य च । साध्याव्यापकताघटितोपाधितयोद्भावनम-

नुपयुक्तम्, उपाधिव्यभिचारे साध्यव्यभिचारव्याप्तिनिश्चयस्यैवोपाधौ साध्यव्यापकतोपदर्शनफलत्वात्, साध्यव्यभिचारे तु साध्यव्यभिचारव्याप्तिग्रहस्यानुपयुक्तत्वात्, तद्ग्रहमन्तरेणापि हेतौ तद्ग्रहस्य स्वतो व्याप्तिज्ञानप्रतिबन्धकत्वादित्यत्र तात्पर्यम्। हेतौ साध्यग्राहकतर्कसद्भावे सन्दिग्धोपाधेर्नानुमानोच्छेदकत्वम्, अतः साध्यस्य सन्दिग्धोपाधितया उद्भावनं स्वयं निराकरोति। हेताविति। कृत सन्दिग्धोपाधिनेति। तत्कर्तव्यस्य व्यभिचारसंशयान्तरस्यानपेक्षणात् साध्ये उपाधित्वसंशयस्यैव साध्ये साधनाव्यापकत्वसंशयरूपत्वादिति भावः। कथमिति। साध्ये, साध्यव्यापकत्वसंशयायोगेन साधने तद्व्यभिचारसंशयरूपेण तत्र साधनाव्यापकत्वसंशयेनैव सन्दिग्धोपाधित्वनिर्वाहादिति भावः।

(चि०) साध्यं च नोपाधिः, व्यभिचारसाधने साध्याविशिष्टत्वात्, अनुमितिमात्रोच्छेदप्रसङ्गाच्च। स चायं द्विविधः निश्चितः सन्दिग्धश्च। साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाधायकतया निश्चितोपाधिः। यथा वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वम्। यत्र च साधनाव्यापकत्वसन्देहस्साध्यव्यापकत्वसंशयो वा तदुभयसन्देहो वा तत्र हेतुव्यभिचारसंशयाधायकतया सन्दिग्धोपाधिः।

(गा०) मूले स चेति। उपाधित्वग्रहेणानुमानदूषकश्चेत्यर्थः, ईश्वरसाधकसदनुमानेऽपि सन्दिग्धोपाधेरुदाहरणीयतया तस्य चानुपाधित्वेन एतद्ग्रन्थस्य वास्तवोपाधिविभाजकत्वायोगात्। निश्चितः। उपाधित्वनिश्चयविषयः। सन्दिग्धः। तत्संशयविषयः। निश्चितोपाधिः। निश्चयविषयतयाऽनुमानदूषकः। तथा दूषकत्वे हेतुः व्यभिचारनिश्चयाधायकतयेति। यत्र चेति। यत्र धर्मे इत्यर्थः। तत्र धर्मे। सन्दिग्धोपाधिरिति भावप्रधानम्। तथा च संशयविषयतया दूषकत्वमित्यर्थः। तथात्वे हेतुव्यभिचारसंशयाधायकतयेति। शाकपाकजत्वादावुपाधित्वसंशयस्य साधने सोपाधित्वसंशयपर्यवसिततया

तत्र साध्यव्यभिचारसंशयाधायकतयेत्यर्थः ।

( दी० ) साध्यतावच्छेदकावच्छिन्नस्य साध्यं च नोपाधिः परं प्रत्युद्भाव्यः, साध्याविशिष्टत्वात् पक्षे साधनस्य निश्चयेऽनुमानस्य वैयर्थ्यात् अनिश्चये च तस्यायोगात् । सन्दिग्धोपाधित्वेनापि न तदुद्भावनमित्याह । अनुमितीति । हेतौ साध्यव्यभिचारस्सन्दिग्धश्चेत्कुतं सन्दिग्धोपाधिना ? असन्दिग्धश्चेत्कथं तस्य सन्दिग्धोपाधित्वमिति तु तत्त्वम् । हेतुव्यभिचारेति । व्याप्यसंशयस्य व्यापकसंशयहेतुत्वादिति भाव । न च तत्र मानाभावः, कोटिस्मरणादित एव तदुपपत्तेः, क्वचित्तदनुविधानस्यापि व्याप्यतदभावयोर्व्यापकतदभावसाहचर्यस्य गृहीतत्वेन तत्स्मरणे एवोपक्षीणत्वात् । तदग्रहे तु तत्संशयाद्व्यापकसंशयाभावादिति वाच्यम् । महानसे हुताशनो न जलह्रदे इति स्मरतां पर्वतादिकमपि पश्यता धूमादिसंशयभावाभावाभ्यां हुताशनसंशयभावाभावदर्शनात्तस्यापि तद्धेतुत्वात् । अत एवोत्कटकोटिकाद्व्याप्यस्य संशयाद्व्यापकस्याप्युत्कटकोटिकः संशयः, कारणोत्कर्षेणैव कार्योत्कर्षात् । समानेत्यादिसूत्रं तूपलक्षणपरम्, तत्रस्थश्चकारो वाऽनुक्तसमुच्चयार्थ इति वदन्ति ।

(गा०) तत्संशयस्य व्यभिचारसंशायकत्वमेव कथमित्यत आह दीधितौ । व्याप्यसंशयस्येति । तथा च व्याप्यसंशयविधया व्यभिचारव्याप्यसोपाधित्वसंशयस्य तत्संशयाधायकत्वमिति भावः । तत्र । व्याप्यसंशयस्य व्यापकसंशयहेतुत्व । तस्य तद्धेतुत्वे तद्संशयं तदनुत्पादः कुतः कारणादित्यपेक्षायामाह । कोटिस्मरणादित इति । अवश्यकल्प्यहेतुभावादित्यादिः । तदुपपत्ते । व्यापकसंशयोपपत्तेः । व्याप्यसंशयासत्त्वे क्वचिदनुत्पन्नस्य व्यापकसंशयस्य तदनन्तरमुत्पत्तेस्तद्धेतुत्वसिद्धिः स्यादित्यत आह । क्वचिदिति । तदनुविधानस्य । अन्वयव्यतिरेकानुविधानस्य । तत्स्मरण एव । व्यापकतदभावरूपकोटिस्मरण एव । उपक्षीणत्वात् । उपयोगितया चरितार्थ-

स्यात्। व्याप्यतदभावयोर्व्यापकतदभावसाहचर्यग्रहस्थले व्याप्यसंशयस्य व्यापकतदभावास्मारकतया न कोटिद्वयोपस्थापकतया उपयोगित्वमित्यत आह। तस्मिन्निति। तद्ग्रहे। साहचर्यग्रहे। तत्संशयात्। व्याप्यसंशयात्। व्यापकसंशयाभावात्। तादृशकारणासाधनानुत्पादात्। प्रकारान्तरेण कोटिद्वयोपस्थितिस्थले इतरसकलकारणसत्त्वे व्याप्यसंशयान्वयव्यतिरेकाभ्यां व्यापकसंशयान्वयव्यतिरेकनिश्चय तद्धेतुत्वं दुरपह्नवमेव, अन्यथा साधारणधर्मदर्शनादेः कोटिस्मरणादिनाऽन्यथासिद्धिः स्यादिति समाधत्ते। महानस इति। पर्वतादिकमपि पक्षतामित्यनेन धर्मिज्ञानसत्त्वं दर्शितम्। भावाभावाभ्यां भावाभावदर्शनादिति यथासङ्ख्यमन्वयः। अत एव। तस्य तद्धेतुत्वादेव। उत्कटकोटिकात्। व्याप्यांश तदभावांश वा उत्कटात्। उत्कटकोटिकः। व्याप्यांशे तदभावांशे वा उत्कटः। औत्कट्यं च व्याप्यवृत्तिजातिविशेषो विषयताविशेषो वा। कारणोत्कर्षेणेति। कारणोत्कर्षस्यैव कार्योत्कर्षप्रयोजकत्वात्, तस्याकारणत्वे कोटिस्मरणादिरूपकारणस्याविशेषेण व्यापकसंशयौत्कट्यस्याकस्मिकतापत्तेरित्यर्थः। व्याप्यसंशयस्य साधारणधर्मदर्शनादितुल्यत्वे समानानेकधर्मोपपत्तेरित्यादिसूत्रविरोधः, संशयहेतुसाधारणधर्मदर्शनादित्रयस्यैव परिगणनादित्यत आह। समानेत्यादीति।

"तत्सूत्रं तु समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति। अस्यार्थः समानपदं योऽनेकयोः तत्कोटितदभावकोटिमतोः धर्मः तत्तदभावसहचरितत्वेन तत्तदभावसहचरितवृत्तिधर्मवत्त्वेन वा गृहीतो गृह्यमाणो वा यो धर्मः इति यावत्, तदुपपत्तेः धर्मिणि तद्वत्ताज्ञानात्, तादृशज्ञानस्य कोट्युपस्थितिद्वारा साक्षादेव वा हेतुत्वमिति हेत्वाभासे व्यक्तीभविष्यति। विप्रतिपत्तेः। एकधर्मिणि विरुद्धकोटिद्वयप्रतिपत्तिजनकवाक्यद्वयं शब्दो नित्यो न वेत्यादिरूपम्, ततः तादृशवाक्ययोर्मिथो विरोधेन शाब्दबोधानुपधायकयोर्धर्मिणि कोटिद्वयोपस्थितिद्वारा मानससंशयजनकत्वम्; तादृशवाक्यज्ञानस्य तत्तद्धर्मिकतत्तत्कोटिसंशये तत्तद्धर्मिबोधकपदसाकाङ्क्षतत्तत्कोटिबोधकपदज्ञानत्वेन हेतुता, त-

रूपावच्छिन्नजन्यत्वेऽपि संशयस्य न शाब्दत्वापत्तिः, विरोधिकोटि-गोचरशाब्दसामग्र्यभावादिघटितसामग्रीजन्यत्वात्, तज्जन्यत्वस्यैव शाब्दत्वप्रयोजकत्वात् । तत्तत्कोटिप्रत्यक्षे तुल्यबलायास्तद्विपरीतकोटिप्रत्यक्षसामग्र्या इव तच्छाब्दबोधे विपरीतकोटिशाब्दसामग्र्या अपि प्रतिबन्धकत्वे मानाभावात्, तत्र संशयाकार एव शाब्दबोध इत्येकदेशिनः । उपलब्धिः । तत्कोटिनिश्चयः । अनुपलब्धिः । तत्कोट्युपलब्धिविरोधिनी तदभावोपलब्धिः । तदव्यवस्था । धर्मिणि तद्विषयत्वव्याप्यवृत्तधर्मवत्त्वधीः, ततश्च तत्कोटिमद्व्यावृत्तत्वविशिष्टवत्ताज्ञानस्य तत्कोटिविशिष्टवद्विरोधितया कोटिद्वयविशिष्टधीरूपसंशयजनकत्वासम्भवात् तत्तत्कोटिमत्त्वमुपेक्ष्य स्वरूपसत्तत्कोटिनिश्चयविषयवत्त्व धर्मिणि विशेषणतयोपात्तम् । अत्र च तत्तत्कालसहकृतस्य तत्तत्कालीनतत्तत्पुरुषीयतत्तत्कोटिनिश्चयविषया ये ये तत्तद्धर्मिव्यावृत्तत्वज्ञानस्य संशयजनकत्वे तत्तद्धर्मिव्यावृत्तत्वज्ञानाभावविशिष्टतत्तद्धर्मिकतत्तत्कोटिनिश्चयस्य संशयप्रतिबन्धकत्वे वा गौरवमित्यालोच्य तत्तत्कोटिसहचरिताभावप्रतियोगित्वमेव ज्ञानागर्भमसाधारण्यं संशयप्रयोजकमिति दीधितिकृता वक्ष्यते । निरुक्तसाधारणधर्मदर्शनादित्रयस्य प्रत्येकमेव संशयोपधायकता, तृणारणिमणीनां वह्न्युपधायकतावत्, चाक्षुषत्वादिभिः सङ्करेणेह प्रकृते जनकतावच्छेदकजातिकल्पनासम्भवात् व्यभिचारः प्रकारान्तरेण वारणीयः । साधारणधर्मदर्शनादीनां संशयहेतुत्वेऽपि तदसत्त्वे कोटिस्मरणादिघटिततुल्यबलकोटिभानकसामग्रीभ्यां विरोधग्रहसत्त्वेऽपि स्वस्वकार्यजनने बाधकाभावात् न संशयो दुर्वारः, तादृशयोरपि प्रत्यक्षसामग्र्योः परस्परप्रतिरोधकत्वे साधारणधर्मदर्शनादिसत्त्वेऽपि संशयविलोपप्रसङ्ग इति संशयत्वस्य विषयताविशेषरूपतायामेव निर्वाहः, तथा सति तादृशविषयताभिन्नविषयताया एव विरोधिकोटिग्रहसामग्रीप्रतिबध्यतावच्छेदकत्वोपगमात् तादृशविषयताप्रयोजकसाधारणधर्मदर्शनादितः संशयनिर्वाहः, विरोधग्रहेण तद्वादृकसामग्र्या वा सहिताया एव विरोधिकोटिभासकसामग्र्याः प्रतिबन्धकत्वाच्च कोटिद्वयसमुच्चयानुपपत्तिरित्यादि बोध्यम् ।

साधारणधर्मदर्शनादिकमन्तरेणापि तुल्यबलसामग्रीभ्यां संश-

यो ऽन्यते, साधारणधर्मदर्शनादेः कोटिद्वयोपस्थापकतयैवोपयोग इति संशयत्वादेः कार्यतावच्छेदकत्वविद्वेषिणो नव्याः, तन्मते संशयत्वं न विषयताविशेषः, परन्तु एकधर्मिकभासमानविरोधिकोटिद्वयज्ञानत्वं तत्तत्सामग्रीसमाजप्रयोज्यमेवेति। विशेषापेक्ष इति विशेष्यते व्यावर्त्यते विशेषदर्शनविषयो ऽनेनेति विशेषो विशेषदर्शनम्, तदपेक्षस्तज्जन्यः, तादृशविशेषापेक्षत्वं संशयसामान्यस्यैव। विमर्शः। एकधर्मिणि विरुद्धकोटिद्वयज्ञानम्, तच्च संशयलक्षणमिति।

साधारणधर्मदर्शन एव व्याप्यसंशयस्यान्तर्भावनीयतया तस्य स्वतन्त्रतायामस्वरसो वदन्तीत्यनेन सूचितः।

( दी० ) कोटिद्वयसहचरितधर्मवत्तया धर्मिज्ञानं हेतुः, धर्मस्यैकत्वं ज्ञानस्य च निश्चयत्वं नोपयुज्यते गौरवात्, अवगाहते च लिङ्गसन्देहो लैङ्गिकतदभावसहचरितौ लिङ्गतदभावौ धर्मिणः, तथा च साधारणधर्म एव तस्यान्तर्भाव इति तु नव्याः।

( गा० ) नव्यमतमाह। कोटिद्वयेति। तत्तत्कोटिसहचरितधर्मवद्धर्मिज्ञानत्वेन साधारणधर्मवज्ज्ञानं संशयहेतुरित्यर्थः। अत्र तत्तत्कोटिसहचरितधर्मयोः पृथगन्तर्भावेन कारणताद्वयम्, न तु कोटिद्वयसाहचर्यावच्छिन्नत्वद्वयं धर्मस्यैकविषयतायां निवेश्यैककारणत्वं कल्प्यते, येनोभयसहचरितधर्मभेदादेकस्यापि धर्मस्य विषयतायां साहचर्यावच्छिन्नत्वद्वयासत्त्वेन कोटिद्वयसहचरितव्याप्याभावोभयावगाहिसंशयो न सङ्गृहीतः स्यादित्याह। धर्मस्यैकत्वमिति। निश्चयत्वेन हेतुत्वे संशयासङ्ग्रहात् तत्परित्यागमपि स्फुटयति। ज्ञानस्य च निश्चयत्वमिति।

न च ज्ञानस्य निश्चयत्वाविवक्षणे कारणतावच्छेदकाभावप्रतियोगिन्यप्रामाण्यग्रहे निश्चयत्वस्य निवेशनीयतया गौरवमिति वाच्यम्। भवतामप्रामाण्यनिश्चयाभावविशिष्टत्वेन व्याप्यसंशयस्य हेतुत्वान्तरकल्पनेन महागौरवात्।

एतेन तत्तत्कोटिसहचरितधर्मवत्ताज्ञानस्य हेतुतायां तत्तद्धर्मविषयता अवश्य विशिष्य निवेश्या, साहचर्यावच्छिन्नविषयतात्वेन सकलधर्मविषयतानामनुगमे सकलधर्मघटितभ्रमत्वप्रकाराणामभावकूटस्यैकत्र निवेशनीयतया एकधर्मघटितभ्रमत्वप्रकारविषयधर्मा-

न्तरग्रहस्य संशयाजनकत्वापत्तेः, तथा च तत्कोटिसहचरिततद्धर्मवत्ताज्ञानस्य तदभावसहचरिततद्धर्मवत्ताज्ञानसहकारेणैव फलोपधायकत्वमुपेयते, न तु तादृशधर्मान्तरज्ञानसहकारेण गौरवादिति धर्मस्य एकत्वापेक्षेत्यादि परास्तम् । व्याप्यसंशयस्य पृथक्कारणत्वादिकल्पनापेक्षया लाघवेन तत्कोटिसहचरितैकधर्मवत्ताज्ञानेन फलजनने तदभावसहचरितधर्मान्तरवत्ताज्ञानस्यापि फलसकारणताकस्य सहकारित्वोपगमात् ।

यत्तु तत्तत्कोटिसहचरितधर्मवत्तानिश्चयजन्यसंशये तादृशधर्माणामपि धर्मितावच्छेदकतया भानमुपेयते, तथा च तत्र विशेष्यतावच्छेदकज्ञानविधयैव तादृशधर्मवत्तानिश्चयस्य हेतुत्वात् संशये न तस्य स्वतन्त्रहेतुत्वमिति व्याप्यसंशयस्य पृथक्कारणत्वमावश्यकमिति तदपि न । तत्कोटिसंशये तद्व्याप्यतद्व्याप्याभावोभयप्रकारज्ञानत्वरूपव्याप्यसंशयत्वेन हेतुत्वे व्याप्यतदभावप्रकारकत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहात्, सामानाधिकरण्यापेक्षया गुरुशरीरस्य व्याप्यत्वस्य निवेशे गौरवाच्च तत्तत्कोटिसहचरितधर्मवत्ताज्ञानत्वेन पृथक् पृथक् कारणतान्तरकल्पनाया एवोचितत्वात् । व्याप्यसंशयस्य कोटिद्वयसहचरितधर्मावगाहित्वं स्फुटयति-। अवगाहते चेति । लिङ्गम् । व्याप्यम् । लैङ्गिकम् । व्यापकम् । लिङ्गतदभावयोर्लैङ्गिकतदभावसहचारितत्वस्य यथासङ्ख्यमन्वयः । व्याप्यसंशयदशायां व्याप्ये व्याप्तिघटकसहचारितत्वस्य ग्रहनियमेऽपि तदभावे व्यापकाभावसहचारग्रहो न नियत इति चेत्? एवमेव, परन्तु यदा व्यापकसंशयस्तदा तद्ग्रहोऽपि फलबलात् कल्प्यते, यत्र च तदग्रहस्तत्र व्यापकसंशयस्यैवापलाप इति भावः ।

(दी० ) लिङ्गतदभावयोः प्रत्येकमेकैककोटिसाधारण्येऽपि मिलितयोरसाधारण्यम्, सत्प्रतिपक्षस्थले विरुद्धयोरिव हेत्वोरिति तु टीकाकारानुयायिनः ।

(गा० ) सत्प्रतिपक्षस्थले- विरुद्धहेतुद्वयज्ञानस्यासाधारणधर्मवत्ताज्ञानविधया साध्यसंशायकत्वम्, तदभावव्याप्यवत्ताग्रहप्रतिबन्धकतायां तद्व्याप्यवत्ताज्ञानस्योत्तेजकतया न हेतुरूपपरामर्शस्य संशयप्रतिबन्धकत्वमिति टीकाकारमतमनुसृत्य व्याप्यसंशयस्या-

प्यसाधारणधर्मज्ञानान्तर्भावं वदतां मतमाह। लिङ्गेति। कोटिसाधारण्येऽपि। कोटिसहचरितत्वेऽपि। मिलितयोरिति। उभयत्वावच्छिन्नयोरित्यर्थः। असाधारण्यम्। तत्तदभावव्यापकाभावप्रतियोगित्वम्। उभयत्वावच्छिन्नाभावस्य तत्तत्कोटिव्यापकत्वग्रहे च व्यापकसंशयोऽपलपनीय एवेति भावः। हेत्वोरित्यत्र प्रत्येकमित्यादिकं सर्वमनुपपद्यते।

अत्रेदमस्वरसबीजम्, शब्दत्वादेः शब्दत्वघटत्वादिना नित्यत्वादिमद्व्यावृत्तत्वस्य जातित्वादिना च धर्मिवृत्तित्वस्य ग्रहे संशयानुदयात् येन रूपेणासाधारण्यग्रहस्तेनैव रूपेणासाधारणधर्मस्य धर्मिणि धीः संशयहेतुरुपेया, धूमादिसंशयस्य च धूमधूमाभावाणुभयत्वेन उभयाविषयकतया कथं संशायकता? विरुद्धतया गृह्यमाणयोरेकविशिष्टेऽपरप्रकारकमिथोभयत्वेनोभयप्रकारकमपि ज्ञानमनाहार्यमनुभवविरुद्धमिति न संशयस्य तथात्वसम्भवः।

यदि च तत्तद्रूपावच्छिन्नोभयत्वेनासाधारण्यग्रहसहिततत्तद्रूपावच्छिन्नोभयवत्ताज्ञानस्य हेतुतायां तत्तद्रूपावच्छिन्नप्रकारकत्वमेवावच्छेदकं न तूभयत्वसहिततत्तद्रूपावच्छिन्नप्रकारताकत्वं गौरवादित्युच्यते, तथापि उभयत्वेनासाधारण्यग्रहसहितस्य भावाभावोभयवत्ताज्ञानस्यान्यत्र संशयहेतुताया अक्लृप्तत्वात्तन्मते व्याप्यसंशयत्वेन पृथक्कारणताखण्डनानुपपत्तिः, उभयत्वेन तत्तदभावव्यापकाभावप्रतियोगित्वज्ञानसाहित्यं निवेश्य भावाभावोभयप्रकारकज्ञानहेतुतापेक्षया धूमादौ वह्न्यादिव्याप्यत्वग्रहसहितधूमादितदभावप्रकारकज्ञानत्वरूपसंशयत्वेन हेतुतायामेव लाघवात्,

यदि चोभयत्वेनासाधारण्यग्रहसहितभावाभावोभयप्रकारकज्ञानहेतुता तदुभयसमुच्चयस्थले क्लृप्तेत्युच्यते, तथाप्येतन्मते संशयमात्रीयकोटिद्वयमात्रस्यैव मिलितस्यासाधारणतया व्यभिचारिजलत्वादिसंशयाद्व्याप्यधूमादिसंशयस्याविशेषः।

न च साधारणधर्मदर्शनान्तर्भावमतेऽपि जलत्वादेर्वह्न्यादावभावस्य जलत्वाद्यभावस्य च वह्न्यादेः सहचरिततया तत्संशयविशेष इति वाच्यम्। व्याप्यत्वस्य व्यापकसामानाधिकरण्यनियततया व्याप्याभावत्वस्य च व्यापकाभावसामानाधिकरण्यनियततया तत्तत्कोटिसाधारण्यग्राहकत्वेन संशयोपयोगितया तन्मते व्याप्यसंशय-

स्य संशयान्तरो विशेषात्, असाधारण्यग्रहे च व्याप्त्यादिग्रहस्यानुपयोगात्, एवमेकसम्बन्धेन तत्तत्कोटिमद्व्यावृत्तस्य सम्बन्धान्तरेण धर्मिणि ग्रहे संशयानुत्पत्त्या सम्बन्धैक्यमवश्यमपेक्षणीयम्, धूमतदभावयोश्च मिलितयोः संयोगेन विशेषणताविशेषेण वा व्यावृत्तत्वग्रहेऽपि धूमादिसंशये तादृशेन केनापि सम्बन्धेन धर्मिण्युभयप्रकारकताविरहेण कथं संशायकता ?

यत्तु अन्यतरसम्बन्धेन भावाभावोभयस्य व्यावृत्ततया, तेन सम्बन्धेन च संशयस्योभयप्रकारकतया संशायकत्वमिति । तदसत् । यद्रूपावच्छिन्नसम्बन्धेन उभयत्वावच्छिन्नस्यासाधारण्यग्रहः अन्यतरत्वरूपतद्रूपावच्छिन्नस्य संसर्गतया संशये भानात् । यद्रूपावच्छिन्नसम्बन्धघटितासाधारण्यग्रहस्तद्रूपाश्रयसम्बन्धेन धर्मिण्यसाधारणधर्मग्रहमात्रस्य संशायकत्वे शब्दस्य नित्यसम्बन्धेनोभयव्यावृत्तमिति ग्रहदशायां समवायस्यानित्यत्वभ्रमेऽपि अखण्डोपाधिरूपसमवायत्वावच्छिन्नसम्बन्धेन शब्दत्वज्ञानस्य नित्यत्वादिसंशायकतापातादित्याद्यूहनीयम् ।

( दी० ) इत्थं च साधनाव्यापकत्वसंशये साध्यव्यापकव्यभिचारसंशयात्साध्यव्यभिचारसन्देहो हेतौ स्फुट एव । साध्यव्यापकत्वसन्देहे तु साधनाव्यापकव्याप्यत्वसंशयात्साध्ये साधनाव्यापकत्वसन्देहो बोध्यः । उपाधेस्साध्यव्यापकत्वसन्देहेनाऽऽहितात्साधने साध्यव्यापकव्यभिचारसन्देहात् साध्यव्यभिचारसन्देह इत्थमेव च दलद्वये संशयस्थले व्यभिचारसंशयस्योक्तिसम्भव इत्यपि वदन्ति ।

(गा०) उपाधित्वघटकसाधनाव्यापकत्वादिसंशयस्य साध्यव्यभिचारव्याप्यसंशयपर्यवसानं दर्शयति । इत्थं चेति । साधनाव्यापकत्वसंशय इति । साध्यव्यापकतावच्छेदकतया निश्चिते शाकपाकजत्वादौ साधनाव्यापकतावच्छेदकत्वसंशये सतीत्यर्थः । साध्यव्यापकव्यभिचारसंशयात् । स्वस्मिन् । तदव्यापकत्वस्य तस्मिन् स्वाभाववद्वृत्तित्वेन तुल्यवित्तिवेद्यतया साधने साध्यव्यापकतावच्छेदकावच्छिन्नाभाववद्वृत्तित्वसंशयपर्यवसानात् । स्फुट एवे-

ति । व्यापकव्यभिचारस्य व्याप्यव्यभिचारव्याप्यत्वादिति भावः । साध्यव्यापकत्वसन्देहे इतीति । साधनाव्यापकतावच्छेदकत्वनिश्चयविषयधर्मे साध्यव्यापकतावच्छेदकत्वसंशये इत्यर्थः । साधनाव्यापकव्याप्यत्वसंशयादिति । व्यापकत्वव्याप्यत्वयोस्तुल्यवित्तिवेद्यतया साध्यतावच्छेदके साधनाव्यापकतावच्छेदकावच्छिन्नव्याप्यतावच्छेदकत्वरूपसाधनाव्यापकतावच्छेदकत्वव्याप्यधर्मसंशयादित्यर्थः । साध्ये । साध्यतावच्छेदके । साधनाव्यापकत्वसन्देहः । साधनाव्यापकतावच्छेदकत्वरूपव्यभिचारसंशयः । अत्र साधने उपाधिव्यभिचारस्य निश्चितत्वेन, संशयायोगात् तत्र तत्संशयाधीनसाध्याभाववद्वृत्तित्वसंशयानवकाश इत्याशयः । तत्रापि हेतुधर्मिकसाध्याभाववद्वृत्तित्वरूपव्यभिचारसंशयमुपपादयतां मत आह । उपाधेरिति । उपाधेः । उपाधितावच्छेदकस्य । साध्यव्यापकत्वसन्देहेन । विशेषणीभवत्साध्यव्यापकत्वसंशयेन । आहितात् । साधने साध्यव्यापकतावच्छेदकत्वविशेषितोपाधितावच्छेदकत्वावच्छिन्नाभाववद्वृत्तित्वसंशयादित्यर्थः । अत्र च संशये साध्यव्यापकतावच्छेदकत्वस्य उपलक्षणतयैवाभावप्रतियोगितावच्छेदकतया भासमानोपाधितावच्छेदके भानम्, उपाधितावच्छेदकतया भानासम्भवात्, तादृशभाने तन्निश्चयस्यापेक्षितत्वात् ।

न च व्यापकतावच्छेदकत्वमात्रेणैवोपाधितावच्छेदकभानं, न तु तद्गतासाधारणरूपेणापीति तादृशसंशयस्य व्यापकतावच्छेदकत्वांशे निर्धर्मितावच्छेदकतयाऽवच्छेदकतया भानेऽपि न तन्निश्चयोऽपेक्षित इति वाच्यम् । व्यापकतावच्छेदकमेयत्वादिविशिष्टस्य केवलान्वयितया व्यापकतावच्छेदकत्वविशिष्टावच्छिन्नाभावस्याप्रसिद्ध्या संशयेनास्पर्शात् ।

न च व्यापकतावच्छेदकत्वोपलक्षिततद्धर्मावच्छिन्नाभाववद्वृत्तित्वप्रसंशयोऽपि दुर्घटः, तद्धर्मावच्छिन्नाभाववद्वृत्तित्वनिश्चयस्य तद्विरोधित्वादिति वाच्यम् । उपलक्षणीभूतव्यापकतावच्छेदकत्वमात्रपुरस्कारेणोपाधितावच्छेदकभानोपगमात् तत्तद्धर्मावच्छिन्नाभाववद्वृत्तित्वनिश्चयस्य च विशेषतत्तद्धर्मावगाहितत्तद्धर्मावच्छिन्नाभाववद्वृत्तित्वसंशयं प्रत्येव विरोधितया व्यापकतावच्छेदकत्वमात्रेण तदवगाहिसंशयस्याप्रत्यूहत्वात् ।

शाकाद्याहारपरिणतिजत्वम् । न च तेनैव हेतुना शाकपाकजत्वमपि साध्यम्, तत्र श्यामत्वस्योपाधित्वादुभयस्यापि साधने ऽर्थान्तरम्। श्यामत्वमात्रे विवादो न तूभयत्र। न चैवं धूमाद्वह्न्यनुमानेऽपि वह्निसामग्र्युपाधिस्स्यात्। तत्र वह्निवत् तत्सामग्र्याऽपि समं धूमस्यानौपाधिकत्वनिश्चयात्, अत्र तु मित्रातनयत्वव्याप्यश्यामसामग्र्या स्यातव्यमित्यत्र कार्यकारणभावादीनां व्याप्तिग्राहकाणामभावात् । अत एव साध्यसामग्र्या सह हेतोरपि यत्र व्याप्तिग्राहकमस्ति तत्र सामग्री नोपाधिः, यत्र तु तन्नास्ति तत्र साऽप्युपाधिरित्यभिसन्धाय सामग्री च क्वचिन्नोपाधिर्न तु सर्वत्र इत्युक्तम्। यथा तुल्ययोगक्षेमयोरुपाधेर्व्यापकतासन्देह ईश्वरानुमाने शरीरजन्यत्वाणुत्वादिः, यथा च शाकपाकजत्वस्य साध्यव्यापकतासन्देहे मित्रातनयत्वे ।

(दी०) उभयेति । एकांशेऽपरस्यैकविशिष्टापरसाध्यतायान्तु एकैकस्योपाधित्वमिति तु तत्त्वम् । ईश्वरेति । वस्तुतः सद्धेतावपि तत्त्वाग्रहदशायामुपाधिसन्देहेन व्यभिचारसन्देह इति भावः ।

(गा०) परार्थस्थले सन्दिग्धोपाधितया उद्भावितस्य शाकपाकजत्वस्य साधनाव्यापकत्वसंशयनिरासाय श्यामत्वसंशयविषयमित्रातनये शाकपाकजत्वसाधने श्यामत्वस्योपाधित्वं मणिकारेणोक्तम्, युगपदुभयसाधने साध्यतया न कस्याप्युपाधित्वसम्भव इत्यभिमानेन युगपदुभयसाधनमाशङ्क्य चार्थान्तरेण तद् दूषितम्। तत्र च श्यामत्व इव शाकपाकजत्वेऽपि विवादसम्भवादर्थान्तरमित्यालोच्य एकदा उभयानुमानमुपार्जिनेन स्वयं दूषयति ।

एकांशेऽपरस्येति । उपाधित्वमित्यग्रिमेणान्वयः । साध्यं च नापोधिरिति प्रवादस्य तद्रूपावच्छिन्नसाधने तद्रूपावच्छिन्नस्य नोपाधितयोद्भावनमित्यर्थकत्वादिति भावः ।

नन्वस्तु विभिन्नरूपेणोभयसाधने एकांशे ऽपरस्योपाधित्वम्, उभयत्वेनैकविशिष्टापरत्वेन वोभयं साधनीयमित्यत आह । एकविशिष्टापरेति । उभयत्वावच्छिन्नस्याप्युपलक्षणमेतत् । एकैकस्येति । प्रत्येकरूपावच्छिन्नस्य उभयस्यैवेत्यर्थः । साध्यस्य भिन्नरूपेणोपाधितायामविवादादिति भावः ।

मूले न चैवमिति । एवम् । साध्योत्पादप्रयोजकशाकपाकजत्वस्य साधनाव्यापकत्वसंशयेन सन्दिग्धोपाधित्वे । वह्निसामग्री । वह्न्युत्पादप्रयोजिका सामग्री । उपाधिः । सन्दिग्धोपाधिः । स्यात् । अनौपाधिकत्वनिश्चयात् । व्याप्तिग्राहकतर्कसम्भवेन तन्निश्चयात् । तथा च साधनाव्यापकत्वसंशयायोगेन न तत्सामग्र्याः सन्दिग्धोपाधित्वमपीति भावः । श्यामसामग्र्या । शाकपाकजत्वेन । व्याप्य स्थातव्यम् । व्यापनीयम् । इत्यत्र । इति निश्चयविषयतयाऽभिमतयोऽमित्रातनयत्वशाकपाकजत्वयोः । कार्यकारणभावादीनामभावात् । अभावेन तादृशनिश्चयासम्भवात् । अत्र हेतुगर्भविशेषणं व्याप्तिग्राहकाणामिति । साध्यव्यापकतासंशयेन सन्दिग्धोपाधिमुदाहरति । यथा तुल्ययोगक्षेमयोरिति । सतोरिति शेषः । योगक्षेमयोस्तुल्यत्वे सतोरित्यर्थः । साध्ये साधनस्य उपाधौ च साध्यस्य व्यापकताग्राहकसामग्रीसाम्य इति यावत् ।

नन्वीश्वरसाधकमदनुमाने कथं शरीरजन्यत्वादेरुपाधित्वमुक्तमित्यत आह । दीधितौ वस्तुत इति । वस्तुगत्येत्यर्थः । तत्त्वाग्रहदशायाम् । अनुकूलतर्कानवतारेण सद्धेतुत्वाग्रहदशायाम् । उपाधिसन्देहेन शरीरजन्यत्वादावुपाधित्वसंशयेन । व्यभिचारसन्देह इति । अतोऽनुपाधेरपि तस्य उपाधित्वसंशयविषयतया दूषकत्वमिति शेषः ।

उभयसंशयस्थलमुदाहरति मूले । यथा चेति । सन्दिग्धानैकान्तिकवदिति दूषकत्वमात्रांशे दृष्टान्तः । तथा च व्यभिचारसन्देहस्येव उपाधिसन्देहस्याप्युद्भावनं युज्यत एवेति भावः ।

(चि० ) यत्तु उपाधिसन्देहो नोपाधिर्न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानुयोग इति । तन्न, सन्दिग्धानैकान्तिकव्यभिचारसंशयाधायकत्वेन दूषकत्वात् ।

(दी० ) सन्दिग्धेति । न चानैकान्तिकत्वसन्देहः प्रतिबन्धको न तु तज्ज्ञानमिति तदर्थं तदुद्भावनमफलमिति वाच्यम् । अनैकान्तिकत्वसंशयान्मम व्याप्तिग्रहो मा भूदित्यभिप्रायेण प्राचां हेतुदोषत्वेनासाधकतासाधकतया जिज्ञासादिद्वारा परम्परया सन्देहोपयोगित्वेन च तदुद्भावनस्य साम्प्रदायिकत्वात् । उपाधित्वस्य संशये निश्चये च जायमानं यज्ज्ञानमनुमितिं विरुणद्धि तदेवास्य दूषकताबीजमित्यभिप्रायेणाह । सन्दिग्धेति । तद्व्यतिरेकस्य क्वचिद्व्यापकत्वेन क्वचिच्च पक्षधर्मत्वेन सन्दिग्धत्वाद् बाधोन्नीतेति ।

(गा० ) व्यभिचारसंशयोद्भावनमेव न घटत इत्याशङ्कते दीधितौ । न चेति । न तु तज्ज्ञानमिति । न व्यभिचारसंशयस्य विषयो हेतुरिति संशयज्ञानं प्रतिबन्धकमित्यर्थः । तदर्थम् । सन्देहज्ञानफलकम् । अफलम् । अनुपयुक्तफलम् । तथा च सन्दिग्धोपाधेर्व्यभिचारसंशयाधायकतया दूषकत्वेऽपि तत्सन्देहोद्भावनं सुतरामफलमिति भावः । मा भूत् । न भवति । इत्यभिप्रायेण । एतदर्थबोधनेच्छया । तथाच व्याप्तिरनुमता नवेति प्रतिवादिनं प्रति मध्यस्थानुयोग उक्ताभिप्रायेण व्यभिचारसंशयोद्भावनसङ्गतावपि, तादृशानुयोगं विना तदुद्भावनमसङ्गतम्, अतस्तदपि प्रकारान्तरेण सङ्गमयति । प्राचामिति । दोषेणैवासाधकत्वसाधनं साम्प्रदायिकमतं उक्तं प्राचां हेतुदोषत्वेनेति । ज्ञायमानं सद्यदनुमितिविरोधाति तस्यैव स्वमते हेतुदोषतया व्यभिचारसन्देहस्य च स्वरूपसत एव तथात्वेन न तथात्वसम्भव इत्यत उक्तं प्राचामिति । एतदनुशयेनैव प्रकारान्तरमाह । जिज्ञासादिद्वारेति । प्रतिवादिना स्वसंशयो-

द्भावने संशयप्रयोजकजिज्ञासोदयेन तत्प्रयोजकरूपप्रतिसन्धाने स-ति सामग्रीवशान्मध्यस्थस्यापि संशयो भवतीति संशयोद्भावनस्य संशयोपयोगित्वेन तस्य सम्प्रदायसिद्धत्वादित्यर्थः। परम्परया यदुद्भावनं संशयोपयोगि तस्याप्युद्भावने ऽन्येषामपि तथाविधाना;मुद्भावनप्रसङ्ग, इत्याशङ्कावारणाय, साम्प्रदायिकत्वादित्युक्तम्। तथा चान्येषां तथाविधानामुद्भावनमसाम्प्रदायिकत्वान्न क्रियत इति भावः।

(चि० ) उपाधेरिव व्यभिचारनिश्चयाधायकतया इदानीमुपाधेर्दूषकताबीजं निरूप्यते। नाप्यस्य व्यतिरेकद्वारा सत्प्रतिपक्षत्वेन दूषकत्वम, तदा हि सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवदुपाधेरुद्भावनं न स्यात्। न च प्रतिपक्षबाहुल्येनाधिकबलार्थमुद्भावनम्, शतमप्यन्धानां न पश्यतीति न्यायात्, एकेनापि बहूनां प्रतिबन्धाच्च। व्याप्तिपक्षधर्मते हि बलम्, तच्च तुल्यमेव, न तु भूयस्त्वमपि, एकस्मादप्यनुमितिदर्शनात्। सन्दिग्धोपाधेरदूषकतापत्तेश्च, तद्व्यतिरेकस्य पक्षे सन्दिग्धत्वात्। अपि चैवं बाधोन्नीतपक्षेतरस्योपाधित्वं न स्यात्, व्यतिरेकेऽसाधारण्यात्।

(गा०) मूले प्रतिपक्षबाहुल्येनाधिकबलार्थमिति। प्रतिपक्षः। प्रतिसाध्यसिद्धेर्विरोधी प्रकृतसाध्यसाधको हेतुः, तस्य बाहुल्यमनेकता, तदभिन्न यदधिकफलं तदर्थमित्यर्थः। उद्भावनमित्यत्र न चेत्यस्य सम्बन्धः। अत्र हेतुः व्याप्तिपक्षधर्मते हीत्यादि। हि। यस्मात्। व्याप्तिपक्षधर्मते। तयोर्ज्ञानम्। बलम्। शतमपीति। व्याप्तिपक्षधर्मताज्ञानासत्त्व इत्यादिः। कार्यप्रयोजकस्य कस्यचिदभावे एकजातीयानेककारणान्तरसत्त्वेऽपि फलानुत्पत्तिरिति न्यायेन भूयोभिरपि प्रतिहेतुभिरनुमितिप्रतिबन्धरूपफलानिर्वाहादित्यर्थः। एकेनापीति। व्याप्तिपक्षधर्मताभ्यां ज्ञायमानेनेत्यादिः। प्रतिबन्धात्। कार्यस्य। व्याप्तिपक्षधर्मताभ्यां एकमात्रहेतुज्ञानस्यापरानुमितिप्रतिबन्धकताप्रयो-

जकं विरोध्यनुमितिसामग्रीत्वं दर्शयति । पक्षस्मादपीति ।

ननु सन्दिग्धोपाधेर्दूषकतापत्तेरिति मूलमसङ्गतम्, तस्य सत्प्रतिपक्षोन्नायकत्वासम्भवेऽपि व्यभिचारसंशयाधायकत्वेन दूषकत्वसम्भवादित्याशङ्कायाह दीधितौ । उपाधित्वस्येति । उपाधित्वस्य संशयो निश्चयश्चानुमितिविरोधिग्रहविषयकज्ञानजनकस्तद्विषयकज्ञानजनकत्वमेवास्य सन्दिग्धोपाधेर्दूषकताबीजमिति नियमाभिप्रायेणेत्यर्थः । तथा च सत्प्रतिपक्षोत्थापकत्वेन निश्चितोपाधेर्दूषकत्वमते, उपाधित्वनिश्चयस्य नानुमितिविरोधिव्यभिचारज्ञानजनकत्वमिति न तत्संशायकतया सन्दिग्धोपाधेर्दूषकतासम्भवः । अस्येत्यत्रेदंशब्दस्य नोपाधिसामान्यपरत्वम्, तथा सत्युपाधित्वसंशयस्य साध्यव्यापकाभावज्ञानजनकतया दूषकत्वान्निश्चितोपाधेरपि तद्द्वारा दूषकत्वानुपपत्त्या उपाधिमात्रस्यैवादूषकतापत्त्या सन्दिग्धेत्यभिधानासङ्गतेः । सन्दिग्धोपाधेः सत्प्रतिपक्षानुत्थापकत्वे तद्व्यतिरेकस्य पक्षे सन्दिग्धत्वादिति मूलोक्तहेतुर्न साधकः, साधनाव्यापकत्वेन निश्चितस्य साध्यव्यापकत्वेन च सन्दिग्धस्योपाधेर्व्यतिरेकस्य पक्षे सन्दिग्धत्वादिति पूरयन् व्याचष्टे तद्व्यतिरेकस्येति । क्वचिदिति । साध्यव्यापकतासंशयस्थल इत्यर्थः । क्वचिच्चेति । साधनाव्यापकत्वसंशयस्थले चेत्यर्थः ।

( दी० ) पक्षवृत्तिश्चोपाधिर्न स्यात्, यथा घटोऽनित्यो द्रव्यत्वादित्यत्र कार्यत्वम्, अन्धकारो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्राश्रावणत्वम्, तद्व्यतिरेकस्य पक्षावृत्तित्वात्, न च नायमुपाधिः, तल्लक्षणसत्त्वात्, अन्यथाऽपि दूषकत्वसम्भवाच्च, किञ्च साध्यव्यापकव्याप्यत्वेनोपाधेस्साध्याव्यापकत्वे तद्व्यतिरेकेण कथं सत्प्रतिपक्षः ? न ह्यव्यापकव्यतिरेकादव्याप्यव्यतिरेकः । नापि व्याप्तिविरहरूपतया, असिद्धत्वेनानौपाधिकत्वस्य व्याप्तित्वनिरासात् । नाप्यनौपाधिकत्वज्ञानस्य, व्याप्तिधीहेतुत्वस्य तत्त्वेन

व्याप्तिज्ञानकारणविघटकतया व्याप्यत्वासिद्धावन्तर्भावः । न ह्यन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यव्याप्तिज्ञानं प्रति प्रतिबन्धकमित्युक्तम् ।

(दी० ) ननु बाधे ऽवतीर्णे तत एव हेतोरसाधकत्वात्कृतमुपाधिना, न वाऽसाधारण्यम्, पक्षस्यैव सपक्षत्वात्, अवतीर्णे तु नोपाधित्वम्, पक्षेतरान्तरवत्साध्यव्यापकताया एवाग्रहात् अनुकूलतर्कादिना कथञ्चित्तद्ग्रहे च नासाधारण्यम् व्यतिरेकितयाऽन्वयव्याप्त्यग्रहस्य सत्प्रतिपक्षतया च सत्प्रतिपक्षान्तरस्याकिञ्चित्करत्वात्, इत्यरुचेराह । पक्षइत्विश्चति । पक्षे तद्ग्रहदशायां तदभावग्रहासम्भवादिति भावः । व्याप्तिविरहरूपतां निरस्य व्याप्तिज्ञानाभावद्वारकतां निरस्यति । नापीति । अनौपाधिकत्वज्ञानस्य । औपाधिकत्वज्ञानाभावस्य । कारणविघटकतया । कारणाभावरूपतादृशज्ञानविषयतया । अनौपाधिकत्वज्ञानस्य कारणत्वं नान्वयव्यतिरेकासिद्धम्, परन्तु सोपाधित्वज्ञानस्य प्रतिबन्धकताया विना कारणीभूतज्ञानविघटनमसम्भवित्वेन कल्पनीयम्, सैव त्वसिद्धेति दूषणतात्पर्यायथाश्रुतमेव साधीय इत्यपि वदन्ति । व्याप्यत्वासिद्धेर्व्याप्यत्वज्ञाने । अन्तर्भावः तद्द्वारा दूषकत्वम् ।

(गा०) बाधेऽवतीर्णेत्यादि दूषणमुद्धृत्य दूषणान्तरमवतारयति नन्वित्यादिना । बाधे वह्न्यादावनुष्णत्वादौ । निश्चित इत्यर्थः । तत एव । बाधावतारादेव । हेतोः । कृतकत्वादेः । असाधकत्वात् । अनुष्णत्वादेरसाधकत्वात् । कृतमुपाधिनेति । तथा च तत्र पक्षेतरस्यादूषकत्वेऽपि क्षतिविरहादिति भावः । सपक्षत्वात् । साध्याभावरूपसाध्यवत्त्वेन निश्चितत्वात् । हेतोश्च तदव्यावृत्तत्वादिति शेषः । अनवतीर्णे त्विति । बाध इत्यनुषज्यते । नोपाधित्वम् । नैव दूषकत्वम् ।

पक्षेतरान्तरत्वादिति । पर्वतो वह्निमानित्यादिस्थलीयपक्षेतरत्व इवेत्यर्थः । साध्यव्यापकताया एवाग्रहादिति । पक्षे साध्यसन्देहस्य व्यभिचारसंशयतया साध्यव्यापकतानिश्चयप्रतिबन्धकत्वादिति भावः । व्यापकताग्राहकानुकूलतर्कसत्त्वे व्यभिचारसंशयोऽकिञ्चित्कर इत्यत आह । अनुकूलेति । आदिपदात् स्वतःसिद्धव्यभिचाराग्रहपरिग्रहः । नासाधारण्यम् । तदभावस्य दोष इति शेषः । व्यतिरेकितया । साध्याभावगमकतौपयिकसाध्यव्यापकतानिश्चयविषयप्रतियोगिरूपव्यतिरेकप्रतियोगितया । अन्वयव्याप्त्यग्रहस्य । असाधारण्यप्रयुक्तस्य । अकिञ्चित्करत्वादित्यग्रिमेणान्वयः । सत्प्रतिपक्षतया । प्रतिरोधमानफलकतया । सत्प्रतिपक्षान्तरस्य । असाधारणतया विरोधिसाध्यसिद्ध्यौपयिकव्यापकतान्तरग्रहविषयप्रतियोगित्वकस्य । पक्षवृत्तिश्चेति मूले पक्षवृत्तितया गृह्यमाणपरमित्याशयेन तस्य दूषकत्वानुपपत्तिबीजमाह । पक्ष इति ।

मूले तल्लक्षणसत्त्वादिति । साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपलक्षणसत्त्वादित्यर्थः । साधनाव्यापकत्वस्थले पक्षावृत्तित्वप्रवेशे उक्तधर्मेषु लक्षणासत्त्वनिर्वाहमालोक्य अन्यथाऽपीति । व्यभिचाराद्युन्नायकतयाऽपीत्यर्थः । दूषकत्वसम्भवादिति । तथा च नोपाधित्वानभ्युपगमसम्भव इति भावः । साध्याव्यापकत्वे । साध्याव्यापकत्वग्रहे । अव्यापकेति । अव्यापकत्वेन गृहीतेत्यर्थः । अव्याप्येति । अव्याप्यतया गृहीतेत्यर्थः ।

नापि व्याप्तिविरहरूपतयेत्यादिना व्याप्यत्वासिद्ध्यन्तर्भावशङ्काया निराकृतत्वात् । नाप्यनौपाधिकत्वेत्यादिना पुनस्तदन्तर्भावशङ्कानिराकरणस्यासङ्गतिरित्याशङ्कां निराकरोति दीधितौ । व्याप्तिविरहेति । अत्रानौपाधिकत्वज्ञानरूपव्याप्तिज्ञानकारणविघटकतयोपाधित्वज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकत्वं यथाश्रुतार्थः, तदर्थपरत्वे भिन्नधर्मकतया उपाधित्वप्रकारकज्ञानस्य स्वतो व्याप्तिज्ञानप्रतिबन्धकताखण्डनमनाशङ्कितनिराकरणमित्याशङ्क्य तद्ग्रन्थं व्याप्तेरनौपाधिकत्वरूपताविरहेऽपि व्याप्तिग्रहे स्वत उपाधिज्ञानं प्रतिबन्धकमित्यर्थकतया व्याचष्टे । अनौपाधिकत्वेति । औपाधिकत्वज्ञानं साध्यव्यापकत्वसाधनाव्यापकत्वाभ्यां कस्यचिद्धर्मिणो ज्ञानम्, न तु साधनधर्मिकं स्वाव्यापकसाध्यव्यापकत्वज्ञानम्, असमानधर्मिकतया

प्रतिबन्धकताखण्डनपराग्रिममूलग्रन्थासङ्गतेः । अभावरूपकारणप्रतिबन्धकासम्भवाद्विघटकपदस्य प्रतिबन्धप्रयोजकार्थकता न सम्भवतीत्यन्यथा व्याचष्टे । कारणेति । तादृशज्ञानेति । औपाधिकत्वज्ञानेत्यर्थः । असिद्धयन्तर्भावनायोपाधिनिष्ठतासम्पत्तये ज्ञानविषयतापर्यन्तानिवेशनम् । यथाश्रुतेऽप्यग्रिमदूषणग्रन्थ सङ्गमयतां मतमाह । अनौपाधिकत्वज्ञानस्येति । विनाकारणीभूतज्ञानविघटनं सोपाधित्वज्ञानस्य प्रतिबन्धकताया असम्भवित्वेनेति योजना । सोपाधित्वज्ञानस्येति । भिन्नधर्मितासम्पत्तये पूर्वव्याख्येयम् । असम्भवित्वेनेति । जनकज्ञान विघटयत एवेत्यादिनियमादिति भावः । सेव । तस्य प्रतिबन्धकतैव । असिद्धा । भिन्नधर्मिकत्वात् । सोपाधित्वज्ञानप्रतिबन्धकताया अनौपाधिकत्वज्ञानहेतुत्वसाधकतया शङ्कितुरभिमतत्वे उपाधिज्ञानस्य साक्षात्प्रतिबन्धकस्य कारणाविघटकत्वकथनासङ्गतिरिति तत्प्रतिबन्धकतायाः शङ्कितुरनभिप्रेततया तन्निराकरणानौचित्यमप्रास्तरसबीजम् । व्याप्तयाद्यभावानात्मकत्वे व्याप्यत्वासिद्धहेत्वाभासेऽन्तर्भावासम्भवात् व्याप्यत्वासिद्ध इत्यादिकं कथितव्याप्तिज्ञानाभावद्वारकत्वार्थकतया व्याचष्टे । व्याप्यत्वासिद्ध इति ।

(चि०) न च साध्यव्यापकाव्याप्यत्वज्ञाने विद्यमाने साधनस्य साध्यव्याप्यत्वज्ञानं नोत्पत्तुमर्हतीति वाच्यम् । न हि साध्यव्यापकव्याप्यत्वज्ञानं व्याप्तिज्ञानकारणम्, येन तत्प्रतिबन्धकं स्यात्, किन्तु साध्यव्यापकव्यभिचारित्वेन साध्यव्यभिचारित्वज्ञानद्वारा । नापि व्यभिचारोन्नायकत्वेन, यथा हि साध्यव्यापकव्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमनुमेयं तथा साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमुपाधेरप्यनुमेयम्, - व्याप्तिग्राहकसाम्यात् । नापि साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया, साध्यव्याप्याव्यापकत्वेनोपाधे-

रेव साध्याव्यापकत्वसाधनात् । तस्मादुपाधिर्हेत्वाभासान्तरमिति ।

( दी० ) भिन्नधर्मिकत्वं परिहरन्नाह । न चेति । न हीति । विरोधिविषयकत्वाभावेन साक्षात्प्रतिबन्धकत्वासम्भवादिति भावः । साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमित्युभयत्रैव बहुव्रीहिः । तस्मादित्यादेरदूषणं चेति शेषः ।

( गा० ) भिन्नधर्मिकत्वापरिहारेण न चेत्यादिना उपाधिज्ञानदशायां व्याप्तिज्ञानोत्पत्त्यसम्भवकथनेन तस्य प्रतिबन्धकत्वव्यवस्थापन न सङ्गच्छते, तद्दशायामन्यत्र व्याप्तिज्ञानानुत्पादस्य परासिद्धत्वादिति भिन्नधर्मिकत्वपरिहारेण सोपाधित्वग्रहस्य व्याप्तिग्रहानुत्पादप्रयोजकत्वप्रदर्शनपरता तद्ग्रन्थस्याह । भिन्नेति । बाधादिबुद्धिर्विशिष्टबुद्धाविव जनकज्ञानाविरोधित्वेऽपि सोपाधित्वज्ञानस्य समानधर्मिकव्याप्तिज्ञाने प्रतिबन्धकत्वं सम्भवतीति कथं न हीत्यादिना जनकज्ञानाविरोधित्वेन तत्प्रतिबन्धकताखण्डनमित्याशङ्कानिराकरणाय प्रकृते बाधादिबुद्धिवैधर्म्यं दर्शयति । विरोधीति । ग्राह्याभावादीत्यर्थः । असम्भवादिति । ग्राह्याभावाद्यविषयकज्ञानस्य साक्षात्प्रतिबन्धकत्वनियमादिति भावः ।

मूले येनेत्यस्य कारणविघटनद्वारेति शेषः । तर्हि किम्द्वारेत्याकाङ्क्षायामाह । किन्त्विति ।

तथा साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमिति मूलस्य यथाश्रुतासङ्गति, उपाधौ साध्यव्यभिचारज्ञानस्य उपाधित्वघटकसाध्यव्यापकताज्ञानाविरोधितया प्रसक्तत्वात् साध्यव्याप्यव्यभिचारस्य साध्य एव साध्यव्यभिचारव्यभिचारितया तदननुमापकत्वात्, इत्यतो व्याचष्टे । उभयत्रैव बहुव्रीहिरिति । साध्यव्याप्यव्यभिचारि यस्येति बहुव्रीहिणा तृतीयान्तस्य व्याप्याव्यापकत्वेनेत्यर्थे, साध्य व्यभिचारि यस्येति बहुव्रीहिणा चरमपदस्य साध्याव्यापकत्वमित्यर्थः । इति नोक्तदूषणद्वयावकाश इति भावः । फलतदोषान्तर्भावे उपाधेरदूषकत्वमपि सम्भवतीति उपाधिर्हेत्वा-

भासान्तरमिति निर्भरो नोपपद्यत इत्यतः पूरयति । अदूषण वेति(१) ।

( चिं० ) उच्यते । आर्द्रेन्धनवत्त्वादेस्तर्कादिना साध्यव्यापकत्वसाधनाव्यापकत्वे, निश्चिते दूषकताबीजचिन्तनम्, यदि हि साध्यसाधनसहचारदर्शने नोपाधौ साध्यव्यापकतानिश्चय एव नास्ति, तदोपाधित्वनिश्चयाभावाद् दूषकतैव नास्तीति क बहिर्भावान्तर्भावचिन्ता । किञ्च सत्प्रतिपक्षतया व्याप्यत्वासिद्धतया स्वातन्त्र्येण वा यदि दोषत्वं सर्वथा साध्यव्यापकतानिश्चयो वाच्यः, तेन विना तेषामभावात् । तस्मादुपाधिनिश्चयाद्व्यभिचारनिश्चयः तत्संशयात्तत्संशय इति व्यभिचारज्ञानद्वारा । साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया वोपाधेर्दूषकत्वम् । यद्वा साध्यव्यापकाभाववद्वृत्तित्वं साध्यव्यभिचारित्वमुन्नेयम् । न च साधनाभाववद्वृत्तित्वमुपाधिरिति वाच्यम् । उपाधिमात्रोच्छेदप्रसङ्गात् । सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकवत् । अवृत्तिगगनादौ साध्याव्यापकत्वात् संयोगादौ हेतौ साधनव्यापकत्वाच्च ।

( दी० ) दूषकताबीजचिन्तनमिति निश्चयदशामधिकृत्य । यन्निश्चयद्वारोपाधित्वनिश्चयस्य दूषकत्वं तत्संशयद्वारा तत्संशयस्यापि तथात्वमिति भावः । व्यभिचारज्ञानद्वारेति । मानसे व्यभिचारनिश्चये उपाधिज्ञानं विशेषदर्शनरूपत्वेनोपयुज्यते, व्यभिचारानुमानं पुनरग्रे वक्ष्यति ।

(१) इतः परं समाप्तिपर्यन्त पुस्तकान्तरे पाठो न दृश्यते ।

(गा०) साध्यव्यापकतायास्साधनाव्यापकताया वा निश्चयविरहेऽपि सन्दिग्धोपाधेर्दूषकतया तन्निश्चयस्थले एव दूषकताबीजविचार इति मूलोक्तासङ्गतिमाशङ्कयाह । दूषकनेति । निश्चयदशामिति । उपाधिना दूषकत्वदशाभिप्रायेणेत्यर्थः । उपाधित्वसंशयदशायां कथं दूषकत्वमित्याकाङ्क्षापूरणाय भावं व्याचष्टे । यन्निश्चयेति । तत्संशयस्यापीति । उपाधित्वसंशयस्यापीत्यर्थः । इदानीं व्यभिचारसंशयद्वारकत्वमुपाधिसंशयस्य सामान्यतोऽभिप्रेतम्, तत्संशयात्तु तत्संशय इत्यग्रिमग्रन्थेन च विशेषतस्तदभिधास्यत इति न पौनरुक्त्यम् । व्यभिचारज्ञानद्वारेति मूले ज्ञानपदस्यानुमितिसंशयोभयपरत्वे यद्वेत्यादिना वक्ष्यमाणस्य व्यभिचारोन्नायकतापेक्षस्यानेन सह पौनरुक्त्यमित्यत आह । मानस इति । उपयुज्यत इत्यत्रोक्तम्, न तु तदनुमापकत्वमिति शेषः । व्यभिचारानुमानम् । उपाधिव्यभिचारानुमापकम् ।

(दी०) व्याप्तीति । साध्यसम्बन्धितावच्छेदकरूपविरहः साधनतावच्छेदके साध्यसम्बन्धितानवच्छेदकत्वपर्यवसन्नः साध्यवदन्यावृत्तित्वविशिष्टसाध्यवद्वृत्तित्वविरहो वोध्येयः, न तु स्वसमानाधिकरणात्यन्ताभावप्रतियोगिसाध्यकत्वम्, स्वत्वस्याननुगतस्याभावेन तत्तत्साधनपर्यवसाने साध्यप्रसिद्धिमात्रेणैव कृतार्थत्वात् । साध्यव्यापकोपाधिव्यभिचारित्वेन हेतौ साध्यव्यभिचारित्वं साधनाव्यापकोपाधिव्याप्यत्वेन साध्ये साधनाव्यापकत्वमनुमेयमिति तु नव्याः । व्यतिरेकिणि साधने व्याप्तिविरहस्य व्यभिचारस्य चोन्नयने उपाधिः साधनाभाववद्वृत्तित्वम् । व्यभिचारास्फुटतादशायामुपाध्यनुसरणाद्यत्राधिकरणे हेतोः साध्यव्यभिचारित्वं तदीयधर्मे नास्य साध्याव्यापकत्वग्रहः । उपाधिमात्रेति । तेनापि व्यभिचारानुमाने तत्रापि तथाविधोपाधिसम्भवादिति भावः । वस्तुतस्तु व्यापकव्यभिचारिणो व्याप्याव्यभिचारित्वे व्याप्यव्यापकभावव्याघातापत्त्या हेतोः सा-

धूमव्याप्यत्वेन साधनाभाववद्वृत्तित्वस्य साध्याव्यापकत्वान्नोपाधित्वमिति तत्त्वम् । अवृत्तीति व्याप्यत्वाभावसाधनाभिप्रायेण । साधनाव्याप्यस्योपाधित्वे च नैष दोषः ।

(गा०) व्याप्तिविरहोऽव्यापकतया वेत्यत्र स्वव्यापकसामानाधिकरण्यरूपव्याप्तेर्विवक्षितत्वेऽसङ्गतिः, तादृशव्याप्तेः सोपाधिसाधनघटिताया अप्रसिद्ध्या तदभावाप्रसिद्धेः, साधनान्तरघटिततादृशव्याप्तिविरहग्रहस्य च प्रकृतव्याप्तिग्रहाविरोधित्वात्, तद्वदन्यावृत्तित्वरूपव्याप्तेर्विवक्षितत्वे तदभावो व्यभिचार एवेति कल्पभेदानुपपत्तिः, अतो व्याप्त्यन्तरपरतामाह । साध्येत्यादि । तथा च धूमादावेव धूमादिरूपसाध्यसम्बन्धितावच्छेदकरूपव्याप्तेः प्रसिद्ध्या आर्द्रेन्धनादिव्यभिचारेण वह्न्यादौ तदभावसाधने न दोष इति भावः । अवच्छेदकत्वं च स्वरूपसम्बन्धविशेषः, स्वात्मघटिततयाऽननुगमेन विशिष्य साधनतावच्छेदकानां निवेशनीयतया व्यभिचारिणि प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धेर्दुर्वारत्वात् ।

ननु द्रव्यं सत्त्वादित्यादौ सत्तादिहेतोः साध्यसम्बन्धितावच्छेदकविशिष्टसत्तात्वादिमत्त्वाद्युपाधिव्यभिचारेण तत्रापि तदभावसाधने बाध इत्यत आह । साधनेति । साध्यसम्बन्धितानवच्छेदकस्येति । तथा च शुद्धसत्तात्वादिरूपसाधनतावच्छेदके उपाध्यभाववद्वृत्तितावच्छेदकत्वेन द्रव्यत्वादिसामानाधिकरण्यानवच्छेदकत्वं साधनीयम्, तत्र च न बाधावसरः, तत्तत्साधनतावच्छेदके तदवच्छेदकत्वावगाहिनोऽनुमितिजनकज्ञानस्य विरोधितयोपपत्तेरिति भावः । स्वरूपसम्बन्धरूपावच्छेदकत्वघटितोक्तव्याप्तेर्व्याप्तिवादे स्वयं दूषितत्वाद्व्यभिचरितसामानाधिकरण्यरूपव्याप्यभावस्याव्यापकतामाह । साध्यवदिति । विरहो वेति । एतादृशव्याप्तिविरहो न व्यभिचाररूपः, अपि तु तदतिरिक्तोऽवृत्तिवृत्तिः साधनाभावरूपव्याप्यप्रसिद्ध्यप्रतियोगिकश्चेति सामञ्जस्यम् ।

यदि च लाघवात्साध्यवदन्यावृत्तित्वविशिष्टवृत्तिमत्त्वमेव व्याप्तिरुच्यते, तदा तदभाव एवात्र विवक्षितः । ननु स्वव्यापकसाध्यसामानाधिकरण्याभावस्याप्रसिद्ध्या साधनासम्भवेऽपि स्वाव्यापकसाध्यकत्वस्य प्रसिद्धस्य साधनं कथमुपेक्षितम्, तज्ज्ञानस्यापि

स्वहेतुकानुमितिजनकज्ञाने साध्यांशे स्वव्यापकत्वभानविरोधित्व-
स्योपयुक्तत्वादित्यत आह । न त्विति । स्वसमानेति । स्वसमानाधि-
करणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदककत्वमित्यर्थः । उ-
भयमिति विपरिणतेन सम्बन्धः । तत्तत्साधनपर्यवसाने । विशिष्य
तत्तत्साधनानां साध्यविशेषणाव्यापकत्वघटकतया निवेशने ।
कृतार्थत्वादिति । उक्तसाध्यप्रसिद्धावेव प्रकृतसाध्यविशेषणतया
प्रकृतसाधनाव्यापकत्वभानेन तस्या एव प्रकृतसाध्यसाधनव्याप्ति-
ग्रहप्रतिबन्धकतया समीहिते सिद्धे साधने उपाधिव्यभिचारेण स्वा-
व्यापकसाध्यकत्वानुमानवैयर्थ्यात् । साध्यवदन्यावृत्तित्वविशिष्ट-
साध्यसामानाधिकरण्याभावसाधनेऽपि साधने विशेष्यविशेषण-
भावापन्नव्यभिचारसाध्यसामानाधिकरण्योभयप्रकारकानुमिति-
जनकज्ञानस्य विशिष्टाभावप्रकारकज्ञानाप्रतिबध्यस्य सम्भवाद्व्य-
भिचारिमात्रसाधनेनैव चानुमितिजनकज्ञानप्रतिबन्धकमसम्भवाद्वि-
शिष्टाभावानुमानमफलमित्यालोच्याव्यभिचाररूपव्याप्तिग्रहविघटः
नायं व्यभिचारः साधने साधनीयः व्यापकसामानाधिकरण्यरूप-
व्याप्तिज्ञानप्रतिबन्धाय परसाध्ये साधनाव्यापकत्वमेव साधनीयम्,
न तु साधने स्वाव्यापकसाध्यसामानाधिकरण्यं स्वाव्यापकसाध्य-
कत्वं वा, येन साध्याप्रसिद्धिरिति निष्कृष्टमतमाह । साध्येति ।
केवलान्वयिनि साधने व्यभिचाराद्यनुमानेऽप्रसिद्ध्या साधनाभाव-
वद्वृत्तित्वोपाधिशङ्कानवकाशाद्व्यतिरेकिसाधनपक्षकव्यभिचाराद्य-
नुमानपरतां शङ्काग्रन्थस्याह । व्यतिरेकिणीति । व्यभिचारानुमाने
तादृशोपाधेः साध्यशून्ये ऽवृत्तौ वक्ष्यमाणसाध्याव्यापकत्वासङ्गतेर्व्य-
भिचारानुमानं एव च तस्य सम्भवदुक्तिकोपाधिताकतया च श-
ङ्काया उभयानुमानपरतामाह । व्याप्तीति । ननु व्यभिचारनिरूपका-
धिकरणमात्रवृत्तिधर्मे साध्यव्यभिचारिणि साधनाभाववद्वृत्तित्वा-
सत्त्वात्कथं तस्य साध्यव्यभिचाररूपसाध्यव्यापकत्वघटितोपाधि-
त्वं ग्राह्यमित्यत आह । व्यभिचारास्फुटतादशायामिति । साधना-
धिकरणे साध्याभावानिश्चयदशायामित्यर्थः । उपाध्यनुसरणात् ।
उपाधित्वेन व्यभिचारानुमानात् । तन्निश्चयदशायां तदनुमानवै-
यर्थ्यादिति भावः । अस्य । साधनाभाववद्वृत्तित्वस्य । साध्याव्या-
पकत्वग्रहः । साध्याव्यभिचाररूपसाध्याव्यापकत्वनिश्चयः । तादृश-

धर्मे साध्यव्यभिचाररूपसाध्यानिश्चयादिति भावः ।

मूले उपाधिमात्रोच्छेदप्रसङ्गादिति । उपाधिमात्रस्यैव व्यभिचारानुमापकत्वे उच्छेदप्रसङ्गादित्यर्थः ।

साधनाभाववद्वृत्तित्वरूपोपाधिव्यभिचारहेतुकव्यभिचारानुमानमेवास्ति कथमुपाधिमात्रोच्छेद इत्याशङ्कापरिहारायात्र हेतुमाह बाधितेति । तेनापीति । साधनाभाववद्वृत्तित्वोपाधिनापीत्यर्थः । साधनाभाववद्वृत्तित्वरूपोपाधिव्यभिचारेणेति यावत् । व्यभिचारानुमाने । स्वव्यभिचारद्वारा कर्त्तव्ये । तत्रापि । तादृशव्यभिचारानुमानेऽपि । तथाविधेति । उपाधिव्यभिचाररूपसाधनाभाववद्वृत्तित्वरूपेत्यर्थः ।

व्यभिचारानुमानासम्भवेऽपि तत्संशायकतया उक्तोपाधिदूषणं स्यादेवेत्यतस्तदनुपाधित्वनिश्चयं स्वयमुपपादयति । वस्तुतस्त्विति । व्यापकव्यभिचारिण इति । साध्यव्यापकत्वेन निश्चितस्य व्यभिचाराज्ञायकोपाधेर्व्यभिचारितया निश्चितस्य प्रकृतहेतोः । व्याप्यव्यभिचारित्वे । प्रकृतसाध्याव्यभिचारित्वे । व्याप्यव्यापकभावव्याघातापत्त्या । साध्योपाध्योर्व्याप्यव्यापकभावभङ्गापत्त्या । उपाधिव्यभिचारि साधनं यदि साध्यव्यभिचारशून्यं स्यात्, उपाधिव्यभिचारशून्यवृत्ति स्यात् इति यावत्, तदा साध्यव्यापकव्यभिचारो न स्यादित्याकारा उपाधिव्यभिचारे साध्यव्यभिचारव्यभिचारशङ्कानिवर्त्तकापत्तिर्बोध्या । हेतोः । उपाधिव्यभिचारस्य । साध्यव्याप्यत्वेन । साध्यव्यभिचाररूपसाध्यव्याप्यतया निश्चयेन । साधनाभाववद्वृत्तित्वस्येति । उपाधिव्यभिचाररूपहेतुव्यापकतया निश्चितस्येत्यादिः । साध्याव्यापकत्वात् । साध्याव्यभिचाररूपसाध्याव्यापकत्वनिश्चयात् । नोपाधित्वम् । नोपाधित्वग्रहः । नैष दोषः । नावृत्तौ साध्यव्याप्यत्वरूपसाध्याव्यापकत्वम्, उपाधेरपि तत्र सत्त्वादिति शेषः ।

( दी० ) साधनेति यथाश्रुताभिप्रायेण, प्रतियोगिव्यधिकरणसाधनाभाववद्वृत्तित्वस्य साधनवदन्यवृत्तित्वस्य, चोक्तौ तथात्वासम्भवात् । एवञ्च सत्प्रतिपक्षे निश्चितोपाधिवत्सन्दिग्धोपाधिरुद्भाव्यः । न च तत्कर्त्तव्यस्य व्यभिचारसन्देहस्य प्रति-

हेतुसमाजादेव सिद्धेः किं तेनेति वाच्यम् । परस्परसंवलनेनैवानुमित्यनुत्पादे तत्र व्यभिचारसन्देहस्यावश्यमुत्पत्तौ मानाभावात् उपाधिसन्देहाद्विशिष्यैकत्र व्यभिचारसन्देहेन तुल्यबलत्वाभावात् । न चातुल्यबलेन सत्प्रतिपक्षो व्यभिचारादिशङ्काधानं वा, स्वरसतः सन्दिग्धव्यभिचारादिनापि तथात्वप्रसङ्गादिति । अत्र च क्वचिदुपाधेस्तुल्यबलत्वे सत्प्रतिपक्षोन्नायकतया तर्कादिसाचिव्यादधिकबलत्वे च बाधोन्नायकतयापि दूषकत्वम्, व्याप्यादिप्रतिसन्धाने तदुन्नयनस्य ततोऽनुमितिप्रतिरोधस्य च दुर्वारत्वात् । परन्तु सार्वत्रिकत्वं न तस्येति ध्येयम् ।

( गा० ) संयोगादिहेतुकव्यभिचारानुमानेऽप्युपाधेः साधनाव्यापकत्वमुपपादयिष्यन्नाह । यथाश्रुतेति । उक्तौ उपाधितयोक्तौ । तथात्वम् । साधनाव्यापकत्वम् । सत्प्रतिपक्षोत्थापकतया दूषकतापक्षे सन्दिग्धोपाध्युद्भावनप्रसङ्गस्य पूर्वपक्षे उक्तत्वात् प्रसङ्गमुद्धरति । एवं चेति । व्यभिचारज्ञानद्वारोपाधेर्दूषकत्वे चेत्यर्थः । तत्कर्तव्यस्य । सन्दिग्धोपाधिफलस्य । प्रतिहेतुसमाजादेव सिद्धेरिति । एकधर्मिगते विरुद्धभावाभावसाध्यकतयोपन्यस्तहेतुद्वये तत्तत्साध्यसाधनौपयिकव्याप्तिद्वयसत्त्वं साध्यतदभावव्याप्ययोरविरोधप्रसङ्गेनासम्भवीति प्रतिसन्धानेन सत्प्रतिपक्षसंवलनादुभयत्र हेतौ स्वसाध्यव्यभिचारसंशयस्य सिद्धेरित्यर्थः । किं तेनेति । किमुपाधिसन्देहेनेत्यर्थः । तथा च सत्प्रतिपक्षे सन्दिग्धोपाध्युद्भावनमफलमिति भावः । परस्परसंवलनेनेति । विरोध्यनुमितिसामग्र्योर्मिथो मेलनेनैवेत्यर्थः । अनुमित्यनुत्पादे । साध्यतदभावयोरनुमित्यनुत्पादोपपत्तौ । तस्य व्यभिचारसंशयाकल्पकत्वेनेति शेषः । तत्र । सत्प्रतिपक्षसंवलनस्थले । अवश्यमुत्पत्तौ । उक्तप्रतिसन्धानात्तदुत्पत्तेरावश्यकत्वे । मानाभावादिति । तथा च प्रतिहेतौ व्यभिचारसंशयार्थं सन्दिग्धोपाध्युद्भावनमुपयुक्तमेवेति भावः ।

ननु तथापि सन्दिग्धोपाधिरकिञ्चित्करः, प्रतिहेतोरनुमित्यनुत्पादकतायाः सत्प्रतिपक्षसंवलनादेव सिद्धेरित्याशङ्कानिवृत्त्यर्थं प्र-

तिहेतोर्दुर्बलत्वे प्रकृते साध्यसिद्धिनिर्वाह इति तस्य हीनबलतार्थं सन्दिग्धोपाध्युद्भावनमित्याह उपाधिसन्देहादिति । एकत्रेति । उपाध्युद्भावनविषयहेतावित्यर्थः । तुल्यबलत्वाभावादिति । तस्य हेतोर्हेत्वन्तरापेक्षया हीनबलत्वादित्यर्थः । तदर्थं सन्दिग्धोपाध्युद्भावनौचित्यमिति शेषः ।

प्रतिहेतौ हीनबलत्वेन किमुपक्रियत इत्याकाङ्क्षायामाह । न चेति । न हीत्यर्थः । अतुल्यबलेन । हीनबलेन । प्रतिहेतुना । सत्प्रतिपक्षः । अनुमितिप्रतिबन्धः । तुल्यबलविरोध्यनुमितिसामग्र्या एवानुमितिप्रतिबन्धकत्वादित्यर्थः । तथा च स्वाभिमतसाध्यसिद्ध्यर्थमेव प्रतिहेतौ सन्दिग्धोपाध्युद्भावनादिति भावः । हीनबलप्रतिहेतुज्ञानस्य स्वतोऽनुमित्यप्रतिबन्धकत्वेऽपि प्रकृतहेतौ व्यभिचारशङ्कासम्पादनेनानुमितिविरोधित्वमेवेत्याशङ्कां परिहरति । व्यभिचारशङ्काधानं चेति । विनिगमकबलेन हीनबले व्याप्तिभङ्गावधारणे ऽधिकबले व्याप्तिनिश्चयादिति भावः । स्वरसत इति । उपाधिसन्देहाद्यघटितसामग्रीतोऽपीत्यर्थः । तथात्वप्रसङ्गात् । सत्प्रतिपक्षादिप्रसङ्गात् । व्यभिचारोन्नायकतया ऽव्याप्यत्वोन्नायकतया च दूषकत्वमुपाधेर्मूलकृतोक्तम्, न तु सत्प्रतिपक्षोन्नायकतया, क्वचित्तु तदुन्नायकतयाऽपि दूषकत्वसम्भवान्मूले न्यूनतेति स्वयं तदाह । अत्र चेति । ध्येयमित्यग्रिमेण सम्बध्यते । तुल्यबलत्वे इति । साध्यधर्मिकप्रकृतहेतुव्यापकताग्राहकसामग्रीतुल्यबलस्वधर्मिकसाध्यव्यापकताग्राहकतायामित्यर्थः । सत्प्रतिपक्षोन्नायकतयेति । दूषकत्वमित्यग्रिमेण सम्बध्यते । सत्प्रतिपक्षोन्नायकत्वम् । साध्यानुमितिसामग्रीतुल्यबलसाध्याभावानुमितिसामग्रीसम्पादकत्वम् । अधिकबलत्वे इति । निश्चितप्रामाण्यकसाध्यव्यापकताग्रहविषयत्वे इत्यर्थः । तथा सति प्रकृतहेतौ साध्यव्याप्तिग्रहे ऽप्रामाण्यग्रहेण साध्यानुमितिसामग्र्याः साध्याभावानुमित्यप्रतिबन्धकत्वेन साध्याभावानुमापकतया । दूषकत्वम् । साध्यानुमितिविरोधित्वम् । साध्यानुमितिसामग्र्या अपूर्णतयाऽपि तदनुमित्यनुत्पादसम्भवात् सम्भवे नान्यतरस्यैवव्यमिति न्यायेन बाधानिश्चयस्याप्यनुमितिविरोधित्वं दुर्वारम् । व्याप्त्यादिप्रतिसन्धान इति । उपाधेः निश्चितप्रामाण्यकसाध्यव्यापकत्वज्ञाने तदभावस्य च पक्षधर्मतानिश्चये । तदुन्नयनस्य । बाधोन्नयन-

स्य । तत इति । तुल्यव्यापकत्वाद्यग्रहविषयोपाधित इत्यर्थः । अनुमितिप्रतिरोधस्य । प्रतिरोधरूपसत्प्रतिपक्षोत्थापनस्य । सार्वत्रिकत्व न तस्येति । यथा साधनाव्यापकत्वघटितोक्तलक्षणाक्रान्तस्योपाधेर्व्यभिचारस्याव्याप्यत्वस्य चोन्नायकत्वं सार्वत्रिकं तथा न बाधाद्युन्नायकत्वम्, पक्षे साध्यवति तदसम्भवादिति भावः ।

( चि० ) अथोपाध्याभासाः । असाधारणविपर्ययो यथा अन्वयव्यतिरेकिणि साध्ये वार्थान्नीतान्यपक्षेतरत्वम् । अप्रसिद्धसाध्यविपर्ययो यथा केवलान्वयिनि साध्ये पक्षेतरत्वादिः । बाधितसाध्यविपर्ययो यथा वह्निरनुष्णस्तैजसत्वादित्यत्राकृतकत्वम् । पक्षाव्यापकविपर्ययो(१) यथा क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्राणुव्यतिरिक्तत्वम् । अत्राणुव्यतिरेकस्य क्षित्यादेरेकदेशवृत्त्या भागासिद्धेः । पूर्वसाधनव्यतिरेको यथा शर्करारसोऽनित्योऽनित्यवृत्तिगुणत्वात्, रसो नित्यो रसनेन्द्रियजन्यनिर्विकल्पकाविषयत्वात् रसत्ववदित्यादौ, पूर्वसाधनतायाः प्रयोगानुरोधित्वेनाव्यवस्थितत्वात् कदाचिन्नित्यत्वसाधनव्यतिरेकस्योपाधित्वं कदाचिदनित्यत्वसाधनव्यतिरेकित्वस्येति वस्तुव्यवस्था न स्यात्, उपाधेर्नित्यदोषत्वाच्च । न हि येन सोपाधिसम्बद्धं तत्तेनानुपाधित्वसम्बद्धं सम्भवति, न तु सत्प्रतिपक्षोच्छेदः पूर्वसाधनव्यतिरेकस्यानुपाधित्वे बीजम् । स्थापनाया यत्राभासत्वं तत्र पूर्वसाधनव्यतिरेकस्य साध्यव्यापकत्वेनानुपाधित्वात् । न च पूर्वहेतोस्तत एवासाधकत्वात् सत्प्रतिपक्षवैयर्थ्यं

(१) पक्षाविपर्यय इति पु० पा० ।

तत्रेति वाच्यम् । अगृह्यमाणविशेषदशायां सत्प्रतिपक्षसम्भवात् । पूर्वसाधनव्याप्यव्यतिरेको यथा अकर्तृकत्वानुमाने नित्यत्वादिः । पक्षविपक्षान्यतरान्यो यथा प्रसिद्धानुमाने पर्वतजलह्रदान्यतरान्यत्वम् । पक्षेतरसाध्याभावो यथा अत्रैव पर्वतेतराग्निमत्त्वम् । न चात्र व्यर्थविशेषणत्वं दूषणम्, तत्त्वेऽप्युपाधेराभासत्वात् । तत्तुल्यश्च यथा अत्रैव पर्वतेतरेन्धनवत्त्वम् । एवं वह्निसामग्र्यादिकमूह्यम् ॥

इति तत्त्वचिन्तामणावुपाधिप्रकरणम् ॥

( दी० ) असाधारणविपर्यय इति । इदं च सत्प्रतिपक्षोन्नायकत्वमभिप्रेत्य । यद्यपि व्यतिरेकेण सत्प्रतिपक्षत्वे सत्प्रतिपक्षान्तरस्यादोषत्वान्नासाधारण्यं दोषाय, तथापि सत्प्रतिपक्षोन्नयनौपयिकसाध्यव्यापकत्वग्राहकप्रमाणाभावे तात्पर्यम् ।

( गा० ) ननूपाधेरसाधारणविपर्ययत्वं कथमाभासताप्रयोजकम्, तद्व्यतिरेकस्यासाधारण्येन पक्षे साध्याभावासाधकत्वेऽपि तद्व्यभिचारेण हेतौ साध्यव्यभिचारसाधने असाधारण्यानवकाशेन तत्साधकतया दूषकत्वसम्भवात्, दूषकत्वे सदुपाधितापा दुर्वारत्वादित्यत आह । इदं चेति । असाधारणविपर्ययस्याऽऽभासताधानं चेत्यर्थः । सत्प्रतिपक्षोन्नायकत्वमभिप्रेत्येति । यत्र सत्प्रतिपक्षोन्नयनार्थमुपाध्युद्भावनं तादृशस्थलाभिप्रायेणेत्यर्थः । व्यतिरेकेणेति । उपाधिव्यतिरेकहेतुनेति शेषः । सत्प्रतिपक्षत्वे । साध्याभावसाधने । असाधारण्यम्, न दोषायेत्यनेन सम्बध्यते ।

ननु व्यतिरेकिणि असाधारणफलस्यान्वयव्याप्तिग्रहस्याकिञ्चित्करत्वेऽपि सत्प्रतिपक्षप्रयोजकतया असाधारण्यं दोष एवेत्यत आह ।

सत्प्रतिपक्षे इति । पक्षोऽज्ञापकतयेत्यर्थः । अदोषत्वात् । अदोषतया व्यवस्थापितत्वात् । प्रमाणाभावे तात्पर्यमिति । असाधारणाविपर्ययस्य प्रसिद्धानुमानीयपर्वतेतरत्वादेस्तादृशप्रमाणाभावेनादूषकत्वादुपाध्याभासत्वे तात्पर्यम् । यद्यप्येवं व्यभिचारोऽज्ञायकत्वे व्याप्तयनवकाशः, तत्रातिव्यापकतानिश्चयस्यापेक्षितत्वात्, तथापि असाधारणविपर्ययतयैवोपाध्याभासतेति यथाश्रुताभिप्रायेण सत्प्रतिपक्षोऽज्ञायकत्वाभिप्रायेणेति प्रथममुक्तम् ।

( दी० ) तदयं निष्कर्षः, यत्र यद्दोषोऽज्ञायकतया दूषणत्वमुपाधेस्तत्र तदुभयनौपयिकरूपवैकल्यमेवाभासत्वे प्रयोजकम्, एवं च यत्र स्थापनायां पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या तत्र पक्षाव्यापकविपर्ययस्याभासत्वम्, तद्विरहेण पक्षैकदेशे सत्प्रतिपक्षेऽप्येकदेशान्तरे साध्यसिद्धेरमत्यूहत्वात्, यत्र तु पक्षतावच्छेदकावच्छेदेन तथा तत्र तादृशस्योपाधित्वमेव, एकदेशे प्रतिपक्षस्यापि तादृशसिद्धिविरोधित्वात् साध्यविपर्ययस्यासत्त्वमनुपाधित्वे प्रयोजकम्, न त्वज्ञातम्, अज्ञातस्यापि तस्य व्यापकव्यतिरेकेण सिद्धिसम्भवात् ।

( गा० ) उपाधेराभासताबीजं सर्वसाधारणं निर्वक्ति । तदयमित्यादिना । दूषणत्वमुपाधेरिति । उपाधिमुद्भावयतोऽभिमतमिति शेषः । एवं सति पक्षाव्यापकविपर्ययस्य यत् उपाध्याभासत्वमुक्तं तदपि न सार्वत्रिकमित्याह । एवं चेति । सामानाधिकरण्येन । सामानाधिकरण्यमात्रेण । आभासत्वमिति । अदूषकत्वादिति शेषः । अदूषकत्वमेव विवृणोति । पक्षैकदेशे इति । सत्प्रतिपक्षेऽपि पक्षतावच्छेदकसामानाधिकरण्यमात्रेण साध्याभावव्याप्यवत्ताज्ञानसम्पादनेऽपि । तादृशोपाधिव्यतिरेकस्य पक्षतावच्छेदकावच्छेदेनावर्तमानतया तदवच्छेदेन साध्याभावव्याप्यवत्ताज्ञानासम्पादकत्वादिति भावः । एकदेशान्तरे इति । पक्षतावच्छेदकसामानाधिकरण्यमात्रेणेत्यर्थः । उपाधित्वमेव । न तु तदाभासत्वम् । दूषक-

त्वादिति शेषः । तदेव दर्शयति । एकदेश इति । तादृशसिद्धिविरोधित्वात् । अवच्छेदकावच्छेदेनानुमितौ विरोधित्वात् । अप्रसिद्धसाध्यविपर्यय इत्यत्राप्रसिद्धपदस्य तदानीमज्ञायमानत्वार्थकताभ्रमनिराकरणाय साध्यविपर्ययस्याज्ञातत्वरूपमप्रसिद्धत्वं नोपाधेराभासताप्रयोजकम्, बीजाभावात्, किन्तु अत्यन्तासत्त्वरूपम्, केवलान्वयिसाध्यक एव उपाधेरसत्साध्यविपर्ययकत्वेनाभासत्वात्, तत्र विपर्ययस्यात्यन्तासत्त्वेन साधयितुमशक्यत्वादित्याह साध्यविपर्ययस्येति । साध्यविपर्ययस्यासत्त्वम् । विपर्ययत्वावच्छेदेन साध्यप्रतियोगिकत्वम्, साध्यतावच्छेदकविपर्ययप्रतियोगितानवच्छेदकत्वमिति यावत् । तस्य । साध्यविपर्ययस्य । व्यापकव्यतिरेकेणेति । साध्यव्यापकतया गृहीतस्योपाधेर्व्यतिरेकेणेत्यर्थः । सिद्धिसम्भवादिति । पृथवीत्वादिना पृथिवीतरभेदादेरिवेत्यादिः ।

(दी० ) अथ सिद्धसाध्यविपर्ययत्वेन चाभासत्वम्, व्यभिचारोन्नायकतया दूषकत्वपक्षे विनापि साध्यप्रसिद्धिं प्रत्येकपदार्थप्रसिद्ध्यैव घटो नाभिधेय इत्यादिप्रतिज्ञापत्तेः, व्युत्पादयिष्यते च तत्र प्रतिज्ञाविरहः, व्यापकाभावेनाप्रसिद्ध्यैव व्याप्याभावस्य सिद्ध्यभ्युपगमात्, पूर्वसाधनव्यतिरेकत्वन्तु नोपाधित्वेन नाप्यनुपाधित्वेन नियतम्, वह्निना धूमस्य स्थापनायां प्रतिहेतावार्द्रेन्धनाभावे वह्न्यभावस्योपधितया धूमाभावस्य चार्द्रेन्धनाभावेन स्थापनायां प्रतिहेतौ वह्न्यावार्द्रेन्धनस्यानुपाधितापत्तेश्च प्रसङ्गात् । परन्तु पूर्वसाधनव्यतिरेकस्य प्रतिहेतावुपाधित्वेनोद्भावने सत्प्रतिपक्षमात्रमुच्छिद्येत, सर्वत्रैव तत्सम्भवात् । आभासत्वेऽपि स्थापनया विशेषाग्रहदशायामेव सत्प्रतिपक्षोपन्यासात्, वस्तुतः साध्याव्यापकस्यापि पूर्वसाधनव्यतिरेकस्य तदानीं तत्त्वेनाग्रहादुपन्याससम्भवात् । अतो बलवत्तरानुकूलतर्कं विना पूर्वसाधनव्यतिरेको नोपाधित्वेनोद्भाव्य इति कथकसमयवशाद्वासावुपाधित्वेन नोपन्यस्यत इति । यथा अकर्तृकत्वेनि ।

कादाचित्कत्वेन सकर्तृकत्वस्थापनायामजन्यत्वे प्रतिहेतावित्यर्थः।

इति तत्त्वचिन्तामणिदीधितावुपाधिप्रकरणम् ॥

( गा० ) पूर्वसाधनव्यतिरेकत्वं नोपाध्याभासताप्रयोजकम्, क्वचित्तस्यापि सदुपाधित्वात्, परं तु सत्प्रतिपक्षस्थले कथकसम्प्रदायवशात्तस्योपाधित्वेन नोद्भावनमित्यत्रैव मूलतात्पर्यमित्याह । पूर्वेति । नोपाधित्वेन नियतमिति दृष्टान्तविधयोक्तम् । एतन्नियमेति प्रसङ्गमाह । वह्निनेति । हेतुनेति शेषः । स्थापनायाम् । वादिना प्रथमसाधने । प्रतिहेतौ । धूमाभावसाध्यके । वह्न्यभावस्येति । धूमाभावरूपसाध्याव्यापकतया अनुपाधेरित्यादिः । पूर्वसाधनव्यतिरेकस्येति शेषः । उपाधितायाः प्रसङ्गादित्यन्वयः। द्वितीयनियमेऽतिप्रसङ्गमाह । धूमाभावस्येति । प्रतिहेतौ। धूमस्य साधके । आर्द्रेन्धनस्येति । प्रसिद्धोपाधेरिति शेषः । परन्त्विति । अस्य नोपाधित्वेनोद्भाव्य इत्यग्रिमेणान्वयः । असौ । पूर्वसाधनव्यतिरेकः । उपाधित्वेनानुद्भावने हेतुं वक्ष्यति कथकसमयवशादिति । तत्समयबीजमाह पूर्वसाधनव्यतिरेकस्येत्यादिना । सर्वत्रैव । प्रतिहेतुमात्र एव। तत्सम्भवात् । पूर्वसाधनव्यतिरेकस्योपाधितयोद्भावनसम्भवात् ।

नन्वयोगोलक धूमघटहे, तत्र धूमवदार्द्रेन्धनाभावादित्यादौ सत्प्रतिपक्षे वह्न्यभावस्य पूर्वसाधनव्यतिरेकस्य नोत्तरसाधने उपाधितयोद्भावनसम्भवः, वह्नेर्धूमाव्याप्यत्वेन तदभावत्वस्य धूमाभावाव्यापकत्वग्रहादित्यत आह। आभासत्वेऽपि स्थापनाया इति । पूर्वसाधनस्य वस्तुगत्या तत्साध्याव्याप्यत्वेऽपीत्यर्थः । विशेषाग्रहदशायामेव। तस्य तदव्याप्यत्वाग्रहदशायामेव। सत्प्रतिपक्षोपन्यासात्। साध्याभावसाधकहेतूपन्यासात् । तदग्रहदशायां तत एव हेतोरसाधकतया प्रतिहेतूपन्यासवैयर्थ्यादिति भावः। वस्तुतः। वस्तुगत्या । तदानीम्। विशेषाग्रहदशायाम् । तत्त्वेन । साध्याव्यापकत्वेन । उपन्याससम्भवादिति । उपाधितया पूर्वसाधनव्यतिरेकोद्भावनसम्भवादित्यर्थः। अत. । उक्तरीत्या सत्प्रतिपक्षोच्छेदप्रसङ्गात्। बलवत्तरत्यादिर्नोद्भाव्य इत्यन्तः कथकसमयाकार । इति कथकसमयेति । इ-

त्याकारकसमवेतत्यर्थः । वशादेवेति । न त्वाभासत्वादित्येवकारार्थः । असौ । पूर्वसाधनव्यतिरेकः ।

ननु क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र स्थापनायां अनित्यत्वस्य प्रागभाववृत्तेः कार्यत्वाव्याप्यत्वेन नित्यत्वं पूर्वसाधनव्याप्यव्यतिरेकं न भवति, एवं क्षित्यादिकमकर्तृकं शरीराजन्यत्वात् व्योमवदित्यादौ क्षित्यादिव्योमान्यतरत्वावच्छिन्नसाध्यव्यापकत्वे सति तदन्यतरत्वावच्छिन्नसाधनाव्यापकं नित्यत्वञ्चोपाधिरेवेति कथमाभास इत्यत आह । कादाचित्कत्वेनेति । तथा च क्षित्यादिकं सकर्तृकं कादाचित्कत्वादित्यत्रानित्यत्वं कादाचित्कत्वव्याप्यम्, तद्व्यतिरेकश्च नित्यत्वमिति न पूर्वोक्तो दोषः, क्षित्यादिकमकर्तृकमजन्यत्वादिति प्रतिहेतौ क्षित्यादिव्योमान्यतरत्वावच्छिन्नाकर्तृकत्वव्यापकं यथा नित्यत्वम्, तथा तदवच्छिन्नाजन्यत्वरूपसाधनाव्यापकमपीति न स उपाधिरिति न द्वितीयोऽपि दोष इति दिक् ॥

इति श्रीमन्महामहोपाध्यायश्रीगदाधरभट्टाचार्यचक्रवर्तिकृतौ तत्त्वचिन्तामणिदीधितिव्याख्याने

उपाधिप्रकरणम् ॥



# पक्षताप्रकरणम् ।

( चि० ) व्याप्त्यनन्तरं पक्षधर्मता निरूप्यते। तत्र न तावत् सन्दिग्धसाध्यधर्मत्वं पक्षत्वम् । सन्देहो हि न विशेषणं, परामर्शपूर्वं लिङ्गदर्शनव्याप्तिस्मरणादिना तस्य नाशात् । नोपलक्षणम्, अव्यावर्त्तकतापत्तेः ।

( दी० ) अनुमितिलक्षणैककार्यानुकूलतासङ्गत्या पक्षधर्मतां निरूपयितुमाह । व्याप्तीति । सन्दिग्धेति । यत्र साध्यस्य यादृशसम्बन्धावगाहिनिर्णयनिवर्त्यो यः संशयस्तत्र स तादृशसम्बन्धेन साध्यानुमितौ पक्षतेत्यर्थः । तेन न पक्षसाध्यविशेष्यकसंशयाननुगमो न वा सम्बन्धान्तरेण सन्देहेऽपि निर्णीतसम्बन्धेन पक्षत्वम्, न वा तमःप्रभृतिषु समवायेन आकाशादिसाधने तद्वैकल्यम् ।

( गा० ) मूले व्याप्तिपक्षधर्मतयोः सङ्गत्यप्रदर्शनेन न्यूनतां परिजिहीर्षुस्तयोरेककार्यकारित्वरूपसङ्गतिं दर्शयन् व्याप्त्यनन्तरमित्यादिमूलमवतारयति । अनुमितीति । अनुमितिलक्षणं अनुमितिस्वरूपं यदेककार्यं तदनुकूलत्वसङ्गत्या तत्प्रयोजकत्वरूपसङ्गत्या, प्रयोजकत्वञ्च कारणतावच्छेदकस्यापीति व्याप्तिपक्षधर्मतयोः परामर्शनिष्ठकारणतायामवच्छेदकत्वेन अनुमित्यजनकत्वेऽपि न क्षतिः । यद्यपि पक्षताया न कारणतावच्छेदकघटकत्वं तामनन्तर्भाव्य पर्वतादिवृत्तित्वप्रकारत्वेनैवानुमितिजनकत्वात् तथाऽपि पक्षताया अनुमितौ स्वातन्त्र्येण कारणतया तदुपलक्षितधर्मिवृत्तितायाश्च कारणतावच्छेदकतया तद्घटितविशिष्टस्यैककार्यानुकूलत्वमक्षतमेवेति ध्येयम् ।

निरूपयितुमिति । निरूपणं प्रतिपत्त्यनुकूलो व्यापारः । एवञ्च पक्षधर्मताघटकपक्षतानिरूपणस्यापि पक्षधर्मताप्रतिपत्त्यनुकूलत्वेन तन्निरूपणत्वमक्षतमिति मूले पक्षतानिरूपणेऽपि पक्षधर्मता निरूपयितुमित्यस्य नासङ्गतिः । पक्षे धर्मत्वं यस्या इति व्युत्पत्त्या पक्षधर्मतापदं पक्षीयधर्मविशेषरूपपक्षतापरमिति केचित् । तच्चिन्त्यम् । तथात्वे लिपिनसङ्क्षेपनिर्बन्धिनो दीधितिकारस्य पक्षतां निरूपयितुमित्यस्य उपेक्षाया बीजाभावात् ।

व्याप्तीतीति । व्याप्तिनिरूपणानन्तरमिति मूलपाठाभिप्रायेण । व्याप्त्यनन्तरमिति पाठे च तत्प्रकाराभावात् प्रत्यक्षेत्यादीत्युपेक्ष्य प्रत्यक्षचिरत्वादि इति रीत्या प्रत्यक्षोपजीवकत्वादित्यादिग्रन्थधारकस्य तथाविधलिपनासङ्गतेः ।

तत्रेति मूले तत्पदं पक्षधर्मतापरं सप्तम्यर्थश्च घटकत्व अन्वयश्चास्य पक्षत्वमित्यत्रेत्यर्थेयम् । सन्दिग्धेत्यादिमूलग्रन्थस्य सन्दिग्धः साध्यरूपो धर्मो यत्रेति व्युत्पत्त्या विषयतया साध्यीभूतधर्मसन्देहयत्त्व, तादृशसन्देहपर्यवसित पक्षतेत्यर्थः । तत्र साध्य धर्मत्वानिवेशनमफलं धर्मपदसार्थक्याय, स्वस्मिन् सन्दिग्धं साध्यवत्त्व साध्य धर्मो यस्य इति बहुव्रीहिबलात् साध्यनिरूपितधर्मित्वपर्यवसितं पक्षत्वमित्युक्तौ, साध्ये सन्दिग्ध स्वधर्मत्व पक्षत्वमित्युक्तौ च साध्यनिरूपितधर्मित्वस्य पक्षनिरूपितधर्मत्वस्य चाप्रसिद्धिस्थले वक्ष्यमाणानुपपत्तिप्रयोजकं तत् । एवं साध्यकोटिकसंशयस्य निवेशे साध्य पक्षवृत्ति न वा, साध्य पक्षनिष्ठाभावप्रतियोगि न वेति संशयासङ्ग्रह, तादृशसंशयोपादाने च पक्षः साध्यवान्न वेति संशयादनुमित्यनुपपत्तिरतो धर्मत्वांश परित्यज्य केवलान्वयिग्रन्थे मणिकृतैव वक्ष्यमाणतथाविधसकलसंशयानुगमप्रकारं दर्शयति । यत्रेति । यत्र इति यद्धर्मावच्छिन्ने, सप्तम्यर्थश्च निर्णयान्वयि विशेष्यत्वम्, साध्यस्य । साध्यतावच्छेदकावच्छिन्नस्य । षष्ठ्यर्थः प्रकारत्वं, तस्यापि निर्णयेऽन्वयः । तत्र । तद्धर्मावच्छिन्ने, सप्तम्यर्थोऽनुमित्यन्वयि विशेष्यत्वम् । तादृशसम्बन्धेन साध्यानुमितौ । तादृशसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितौ जनकीभूतेत्यर्थः । पक्षविशेष्यकसाध्याभावविशिष्टबुद्धाविव साध्यधर्मिकपक्षावृत्तित्वपक्षनिष्ठाभावप्रतियोगित्वविशिष्टबुद्धावपि पक्षः

साध्यवानिति निश्चयस्य प्राचीनमते प्रतिबन्धकत्वात् साध्यं पक्षवृत्ति न वेत्यादिसंशयसंग्रहः । एवञ्च शुद्धपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितशुद्धसंयोगावच्छिन्नशुद्धवह्नित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यतानिरूपितसंयोगसंसर्गावच्छिन्नवह्नित्वाद्यवच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकताकसंशयो हेतुरिति पर्यवसितम् । तादृशनिश्चयप्रतिबध्यत्वस्य यथाश्रुतस्य घटादिविषयकसमूहालम्बनात्मकवह्निमत्त्वादिनिश्चयप्रतिबध्यघटादिसंशयसाधारणत्वात् तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकताप्रवेशः ।

अवच्छिन्नत्वञ्चान्यूनवृत्तित्वं न तु स्वरूपसम्बन्धविशेषः । तेन वह्निसामान्याभावविशिष्टबुद्धौ महानसीयत्वादिविषयतामनन्तर्भाव्य वह्निमान् महानसीयवह्निमानित्यादिसकलज्ञानसाधारणवह्नित्वावच्छिन्नवत्तानिश्चयत्वेनैव प्रतिबन्धकताकल्पनान्महानसीयवह्निमान् वह्निसामान्याभाववान् वा पक्ष इत्याकारकसंशयं प्रति महानसीयवह्नित्वावच्छिन्नप्रकारकनिश्चयत्वेनाप्रतिबन्धकत्वेऽपि न तथाविधसंशयस्य महानसीयवह्नित्वावच्छिन्नसाध्यकानुमितौ पक्षतात्वानुपपत्तिः । न वा महानसीयवह्न्यभावादिविशिष्टबुद्धिप्रतिबन्धकतावच्छेदककोटौ वह्नित्वावच्छिन्नप्रकारताकत्वादेर्निविष्टत्वेऽपि वह्निमानित्याद्यनुमितौ महानसीयवह्निमान्न वा पक्ष इत्यादिसंशयस्य पक्षतात्वापत्तिः । इत्थञ्चाहार्यस्य भ्रमत्वज्ञानास्कन्दितस्य च निश्चयस्याप्रतिबन्धकतया अनाहार्यत्वं भ्रमत्वज्ञानानास्कन्दितत्वञ्च निश्चयविशेषणं देयमतो न तथाविधनिश्चयत्वान्यूनवृत्तिप्रतिबन्धकत्वाप्रसिद्धिः । पर्वतो वह्निमान्न वेत्यादेः कस्यापि संशयस्य धर्मान्तरावच्छिन्नविशेष्यताकान्यसंसर्गकान्यधर्मावच्छिन्नप्रकारकनिश्चयसाधारणसंयोगसंसर्गकवह्नित्वाद्यवच्छिन्नप्रकारकनिश्चयत्वाद्यन्यूनवृत्तिप्रतिबन्धकताकत्वं न सम्भवतीति प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वादेः प्रकारताविशेषणत्वम् । उपनीतभानात्मकबाधनिश्चयस्यापि साध्यवत्तानिश्चयसामान्यनिवर्त्तनीयतया भ्रमत्वज्ञानास्कन्दितस्य च तस्यानुमित्यविरोधितया तथाविधबाधदशायामनुमित्यापत्तिरतः संशयत्वनिवेशनम् ।

न च पक्षसाध्यविशेष्यकसंशयसाधारण्यस्यानतिप्रसक्तस्य सं-

शयत्वस्य दुर्वचतया पुनरननुगमतादवस्थ्यमिति वाच्यम् । बाधनिश्चयनिवर्त्तनीयस्यैवात्र संशयपदेन विवक्षितत्वात् केवलान्वयिनि च साध्ये पक्षनिष्ठाभावप्रतियोगित्वनिश्चय एव सुलभो बाधः, एकविधबाधोपादानेनैव विविधसंशयानुगमसम्भवाच्चदननुगमो न दोषाय, अनुगमस्यापि कथञ्चित् सम्भवात् ।

यत्तु साध्यपक्षवैशिष्ट्यावगाहित्वमेव संशयपदेन विवक्षितमिति नाननुगमः । साध्यं पक्षवृत्ति न वेति साध्यविशेष्यकसंशयस्यापि तथात्वादिति, तदसत् । तथा सति साध्यपक्षवैशिष्ट्यानवगाहिनः साध्य पक्षनिष्ठाभावप्रतियोगि न वेति संशयस्यासंग्रहात् ।

न च केवलान्वयिस्थले साध्यं पक्षवृत्ति न वेत्येतादृशसंशयादेवानुमित्युपपत्त्या तथाविधसंशयासंग्रहो न दोषाय इति वाच्यम् । प्रमेयत्वं घटनिष्ठाभावप्रतियोगि न वेति संशयस्य केवलान्वयिग्रन्थे मणिकृतैव संगृहीततया तद्विरोधात् ।

वस्तुतस्तु तादात्म्यसम्बन्धेन वाच्यसाध्यकप्रमेयपक्षकस्थले च तादृशसंशयाप्रसिद्धिः तादात्म्यसम्बन्धेन पक्षसम्बन्धत्याभावरूपकोट्यप्रसिद्धेः । न च साध्यं पक्षनिष्ठाभावप्रतियोगित्वसंशयस्य पक्षतात्वेऽपि उक्तस्थले पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितेरुद्देश्यत्वे पक्षतावच्छेदकावच्छेदेन वर्त्तमानभेदप्रतियोगित्वकोटिकसंशयस्यैव सामानाधिकरण्येन साध्यवत्तानिश्चयप्रतिबध्यतया पक्षतात्वमङ्गीकर्त्तव्यं तच्च न सम्भवति प्रमेयत्वाद्यवच्छेदेन वर्त्तमानभेदाप्रसिद्ध्या कोट्यप्रसिद्धेरिति वाच्यम् । प्रमेयत्वाद्यवच्छेदेन वर्त्तमानस्य द्वित्वावच्छिन्नभेदस्यैव प्रसिद्ध्या साध्यतावच्छेदकावच्छिन्नतादृशभेदप्रतियोगित्वकोटिकसंशयस्यैव तत्र पक्षतात्वसम्भवात् । तत्र पक्षतावच्छेदकावच्छिन्नवृत्तिकाभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वोभयत्वावच्छिन्नतदभावकोटिकसंशयस्य पक्षतात्वोपगमसम्भवाच्च । एवमप्रसिद्धसाध्यकव्यतिरेक्यनुमानस्थले पक्षसाध्यवैशिष्ट्यावगाहिसंशयानुपपत्तेस्तत्र साध्यात्मकाभावप्रतियोगिनि पक्षसम्बन्धित्वसंशयस्य पृथिवीतरत् पक्षसम्बन्धि न वेत्याकारकस्यैव पक्षतात्वेनोपगन्तव्यतया पक्षसाध्यवैशिष्ट्यावगाहित्वनिवेशासम्भवात् ।

अथ वह्निव्याप्यसाध्यकस्थले महानसीयवह्नित्वावच्छिन्नसाध्यकस्थले च वह्निमान्न वा पक्ष इत्यादिसंशयस्य पक्षतात्वप्रसङ्गः साध्यवत्तानिश्चयनिवर्त्तनीयत्वात्। न च सिद्धिकाले ऽनुमितिवारणमेव पक्षताहेतुत्वकल्पनफलं एवञ्च उक्तसंशयस्यानुमितिहेतुत्वोपगमेऽपि सिद्धिदशायमनुमित्यापत्त्यसम्भवात् तस्य पक्षतात्वमिष्टमेव इति वाच्यम्। साध्यतावच्छेदकावच्छिन्नसाध्यतदभावान्यतरस्मिन् पक्षसम्बन्धावगाहिसन्देहस्यैव प्राचीनैः पक्षतात्वोपगमात् अन्यथा बाधसाधारणरूपेण पक्षतात्वोपगमेऽपि सिद्धिकाले ऽनुमितिवारणसम्भवात् बाधवारकसंशयत्वनिवेशनस्यापि निष्प्रयोजनकतापत्तेः।

न च तादृशसंशयस्य वह्निव्याप्याद्यभाववत्तानिश्चयरूपबाधाप्रतिबध्यतया नातिप्रसङ्ग इति वाच्यम्। वह्निव्याप्याभावाभाववान् पर्वतः पर्वतो वह्निमान्न वा इति संशयस्य तादृशबाधनिश्चयप्रतिबध्यतया तावताऽपि तद्वारणासम्भवात्।

यत्तु प्रकृतसाध्यतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नप्रतिबध्यतानिवेशान्नोक्तातिप्रसङ्गः, वह्न्यभावविशिष्टज्ञानत्वावच्छिन्नाया वह्निव्याप्यवत्तानिश्चयप्रतिबध्यताया अवच्छेदककोटौ वह्निव्याप्यत्वावच्छिन्नविषयताया अनन्तर्भावादिति तन्न। वह्न्यभावादिसाध्यकस्थले वह्निमान्न वेत्यादिसंशयासंग्रहप्रसङ्गात्,वह्निविशिष्टबुद्धित्वावच्छिन्नाया वह्न्यभावादिनिश्चयप्रतिबध्यताया अवच्छेदकगर्भे वह्न्यभावत्वावच्छिन्नविषयताया अनिवेशात् यत्र च वह्निव्याप्यत्वावच्छिन्नस्यैव पक्षत्वं साध्यत्वञ्च तत्र वह्निव्याप्यो वह्निमान्न वेति संशयवारणस्याप्यशक्यत्वात्।

यत्तु साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयताघटितधर्मावच्छिन्नत्वेन प्रतिबध्यताया निवेशनीयतया वह्निव्याप्यवत्ताज्ञानं प्रति वह्न्यभावादिनिश्चयत्वेनाप्रतिबन्धकतया तद्विषयतायाः साध्यवत्त्वज्ञानप्रतिबन्धकतावच्छेदकत्वविरहेण नातिप्रसङ्गः। तदपि न। तावताऽपि महानसीयवह्नित्वावच्छिन्नसाध्यकस्थले महानसीयवह्न्यभावाभाववान् पर्वतः स वह्निमान्न वेति संशयवारणासम्भवात्।

अत्रोच्यते, संशयत्वं स्वनिष्ठविषयताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वं ज्ञानभेदेन विषयताभेदानभ्युप-

शयत्वस्य दुर्वचतया पुनरननुगमतादवस्थ्यमिति वाच्यम् । बाधनिश्चयनिवर्त्तनीयस्यैवात्र संशयपदेन विवक्षितत्वात् केवलान्वयिनि च साध्ये पक्षनिष्ठाभावप्रतियोगित्वनिश्चय एव सुलभो बाधः, एकविधबाधोपादानेनैव विविधसंशयानुगमसम्भवात्तदननुगमो न दोषाय, अनुगमस्यापि कथञ्चित् सम्भवात् ।

यत्तु साध्यपक्षवैशिष्ट्यावगाहित्वमेव संशयपदेन विवक्षितमिति नाननुगमः । साध्यं पक्षवृत्ति न वेति साध्यविशेष्यकसंशयस्यापि तथात्वादिति, तदसत् । तथा सति साध्यपक्षवैशिष्ट्यानवगाहिनः साध्यं पक्षनिष्ठाभावप्रतियोगि न वेति संशयस्यासंग्रहात् ।

न च केवलान्वयिस्थले साध्यं पक्षवृत्ति न वेत्येतादृशसंशयादेवानुमित्युपपत्त्या तथाविधसंशयासंग्रहो न दोषाय इति वाच्यम् । प्रमेयत्वं घटनिष्ठाभावप्रतियोगि न वेति संशयस्य केवलान्वयिग्रन्थे मणिकृतैव संगृहीततया तद्विरोधात् ।

वस्तुतस्तु तादात्म्यसम्बन्धेन वाच्यसाध्यकप्रमेयपक्षकस्थले च तादृशसंशयाप्रसिद्धिः तादात्म्यसम्बन्धेन पक्षसम्बन्धत्वाभावरूपकोट्यप्रसिद्धेः । न च साध्यं पक्षनिष्ठाभावप्रतियोगित्वसंशयस्य पक्षतात्वेऽपि उक्तस्थले पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितेरुद्देश्यत्वे पक्षतावच्छेदकावच्छेदेन वर्त्तमानभेदप्रतियोगित्वकोटिकसंशयस्यैव सामानाधिकरण्येन साध्यवत्तानिश्चयप्रतिबध्यतया पक्षतात्वमङ्गीकर्त्तव्यं तच्च न सम्भवति प्रमेयत्वाद्यवच्छेदेन वर्त्तमानभेदाप्रसिद्ध्या कोट्यप्रसिद्धेरिति वाच्यम् । प्रमेयत्वाद्यवच्छेदेन वर्त्तमानस्य द्वित्वावच्छिन्नभेदस्यैव प्रसिद्ध्या साध्यतावच्छेदकावच्छिन्नतादृशभेदप्रतियोगित्वकोटिकसंशयस्यैव तत्र पक्षतात्वसम्भवात् । तत्र पक्षतावच्छेदकावच्छिन्नवृत्तिकाभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वोभयत्वावच्छिन्नतदभावकोटिकसंशयस्य पक्षतात्वोपगमसम्भवाच्च । एवमप्रसिद्धसाध्यकव्यतिरेक्यनुमानस्थले पक्षसाध्यवैशिष्ट्यावगाहिसंशयानुपपत्तेस्तत्र साध्यात्मकाभावप्रतियोगिनि पक्षसम्बन्धित्वसंशयस्य पृथिवीतरत् पक्षसम्बन्धि न वेत्याकारकस्यैव पक्षतात्वेनोपगन्तव्यतया पक्षसाध्यवैशिष्ट्यावगाहित्वनिवेशासम्भवात् ।

अथ वह्निव्याप्यसाध्यकस्थले महानसीयवह्नित्वावच्छिन्नसाध्यकस्थले च वह्निमान्न वा पक्ष इत्यादिसंशयस्य पक्षतात्वप्रसङ्गः साध्यवत्तानिश्चयनिवर्त्तनीयत्वात्। न च सिद्धिकालेऽनुमितिवारणमेव पक्षताहेतुत्वकल्पनफलं एवञ्च उक्तसंशयस्यानुमितिहेतुत्वोपगमेऽपि सिद्धिदशायमनुमित्यापत्त्यसम्भवात् तस्य पक्षतात्वमिष्टमेव इति वाच्यम्। साध्यतावच्छेदकावच्छिन्नसाध्यतदभावान्यतरस्मिन् पक्षसम्बन्धावगाहिसन्देहस्यैव प्राचीनैः पक्षतात्वोपगमात् अन्यथा बाधसाधारणरूपेण पक्षतात्वोपगमेऽपि सिद्धिकालेऽनुमितिवारणसम्भवात् बाधवारकसंशयत्वनिवेशनस्यापि निष्प्रयोजनकतापत्तेः।

न च तादृशसंशयस्य वह्निव्याप्याद्यभाववत्तानिश्चयरूपबाधाप्रतिबध्यतया नातिप्रसङ्ग इति वाच्यम्। वह्निव्याप्याभावाभाववान् पर्वतः पर्वतो वह्निमान्न वा इति संशयस्य तादृशबाधनिश्चयप्रतिबध्यतया तावताऽपि तद्वारणासम्भवात्।

यत्तु प्रकृतसाध्यतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नप्रतिबध्यतानिवेशान्नोक्तातिप्रसङ्गः, वह्न्यभावविशिष्टज्ञानत्वावच्छिन्नाया वह्निव्याप्यवत्तानिश्चयप्रतिबध्यताया अवच्छेदककोटौ वह्निव्याप्यत्वावच्छिन्नविषयताया अनन्तर्भावादिति तन्न। वह्न्यभावादिसाध्यकस्थले वह्निमान्न वेत्यादिसंशयासंग्रहप्रसङ्गात्, वह्निविशिष्टबुद्धित्वावच्छिन्नाया वह्न्यभावादिनिश्चयप्रतिबध्यताया अवच्छेदकगर्भे वह्न्यभावत्वावच्छिन्नविषयताया अनिवेशात् यत्र च वह्निव्याप्यत्वावच्छिन्नस्यैव पक्षत्वं साध्यत्वञ्च तत्र वह्निव्याप्यो वह्निमान्न वेति संशयवारणस्याप्यशक्यत्वात्।

यत्तु साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयताघटितधर्मावच्छिन्नत्वेन प्रतिबध्यताया निवेशनीयतया वह्निव्याप्यवत्ताज्ञानं प्रति वह्न्यभावादिनिश्चयत्वेनाप्रतिबन्धकतया तद्विषयतायाः साध्यवत्त्वज्ञानप्रतिबन्धकतावच्छेदकत्वविरहेण नातिप्रसङ्गः। तदपि न। तावताऽपि महानसीयवह्नित्वावच्छिन्नसाध्यकस्थले महानसीयवह्न्यभावाभाववान् पर्वतः स वह्निमान्न वेति संशयवारणासम्भवात्।

अत्रोच्यते, संशयत्वं स्वनिष्ठविषयताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वं ज्ञानभेदेन विषयताभेदानभ्युप-

गमात् संशयनिष्ठवह्निमत्पर्वतादिविषयताया अपि प्रत्येकं निश्चयवृत्तित्वात् प्रतिबन्धकतावच्छेदकघटकत्वोपपत्तिः वह्न्यभाववान् पर्वतो घटवान्न वेत्याकारकसंशयस्य नाद्यधर्माक्रान्तस्य साध्यवत्त्वनिश्चयप्रतिबध्यस्य च वारणाय साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नत्वेन निरुक्तसंशयत्वघटकप्रतिबध्यता विशेषणीया, घटादिमत्ताज्ञानत्वावच्छिन्नप्रतिबध्यताया अतथात्वात् नातिप्रसङ्गः । तन्न पक्षे वह्न्यभाववान्न वेति संशयस्य पक्षतात्वमिष्टमेव तस्य वह्निः पक्षनिष्ठाभावप्रतियोगी न वेति संशयसमशीलत्वात् । स्वनिष्ठविषयतायाञ्च यावत्प्रतिबध्यतावच्छेदकत्वं निवेशनीयन्तेन वह्निव्याप्यसाध्यकस्थले वह्निमान्न वा पक्ष इत्येतादृशसंशयस्य व्युदासः तत्र वह्निव्याप्याभावाभावत्वेन व्याप्यस्य पृथग्भाने ऽपि संशयत्वघटकीभूतस्वनिष्ठवह्निमत्पक्षविषयिताया वह्निव्याप्याभावनिश्चयप्रतिबध्यतावच्छेदकत्वविरहात् । एवञ्च शुद्धवह्नित्वावच्छिन्नसाध्यकस्थले वह्न्यभाववान् पक्ष इत्येतादृशबाधनिश्चयप्रतिबध्यस्य महानसीयवह्निमान्न वा पक्ष इत्येतादृशसंशयस्य पक्षतात्ववारणाय साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वनिवेशनमित्यवधेयम् ।

एतेनावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकसामानाधिकरण्यमात्रेण कोटिद्वयावगाहिनो निश्चयस्यावच्छेदकावच्छेदेन साध्यादिमत्तानिश्चयप्रतिबध्यत्वेऽपि निरुक्तसंशयत्वाभावेन न पक्षतात्वमिति संक्षेपः ।

अथावच्छेदकावच्छेदेन कोटिमवगाहमानस्य कोटिद्वयावगाहिनः समुच्चयस्य पक्षतात्वापत्तिः तस्याप्युक्तरूपाक्रान्तत्वात् ।

न च विरोधावगाहित्वनिवेशात्तद्वारणसम्भवः । कुत्रचित् किञ्चित्प्रतियोगिकविरोधभानस्य समुच्चयेऽप्यक्षतत्वात् साध्यतदभावादिविरोधावगाहित्वस्य प्रत्येकं सकलसंशयसाधारण्यासम्भवादिति चेन्न । संयोगादेरव्याप्यवृत्तित्वज्ञानदशायान्तद्वत्त्वग्रहविषयीभूतधर्मिणि तदभावादिग्रहोत्पत्त्या तद्वत्ताग्रहस्य तदभावग्रहप्रतिबन्धकतायामव्याप्यवृत्तित्वज्ञानस्योत्तेजकतामपेक्ष्य व्याप्यवृत्तितावगाहित्वेनैव प्रतिबन्धकतोपेयते । व्याप्यवृत्तित्वज्ञानघटिताधारताकत्वं सर्वत्र प्रतिबन्धकज्ञाने तादृशाधारताया अन्ततः संसर्गतये-

धभानमुपेयते एवञ्च समुच्चयनिष्ठकोटिविषयिता न विपरीतधी-प्रतिबन्धकतावच्छेदिका, व्याप्यवृत्तित्वविषयित्वानिरूपितत्वात् अत उक्तसंशयत्वनिरुक्तौ स्वपदेन समुच्चयोपादानासम्भवेन तस्य पक्षतात्वापत्तिविरहात् ।

अथवा स्वघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्य-तावच्छेदकीभूता या स्वावच्छेदकधर्मावच्छिन्ननिरूपितविरोधवि-षयितानिरूपिता प्रकारिता सामानाधिकरण्यसम्बन्धेन तद्विशिष्ट-प्रकारितैव संशयत्वं तच्च समुच्चयव्यावृत्तं समुच्चये विरोधाभा-नेन कोटिद्वयविषयितयोर्विरोधविषयित्वानिरूपितत्वात् संशये चा-न्ततः कोट्योः संसर्गतयापि परस्परविरोधभानोपगमेन सकलसं-शयसंग्रहः । यद्वंशे संशयत्वं तत्कोटिविरोधस्यैव उक्तरूपेण उपा-दानसम्भवात् न वस्त्वन्तराविरोधभानमादायातिप्रसङ्गः ।

केचित्तु साध्यनिश्चयसाध्याभावनिश्चयप्रतिबध्यतावच्छेदकवि-शेष्यताशालित्वं समुदितार्थः संशये च धर्मिणि उभयप्रकारतानि-रूपितैकविलक्षणविषयता समुच्चयवैलक्षण्यायोपगम्यते इति ता-दृशविषयताया विभिन्नरूपेण उभयनिश्चयप्रतिबध्यतावच्छेदकतया नासम्भव इत्याहुः । तच्चिन्त्यम् ।

प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतदभावकोटि-कज्ञानत्वादिकमुपेक्ष्य निरुक्तरूपेण संशयनिवेशस्य प्रयोजनं दर्शयति । तेनेति । न पक्षेति । पक्षविशेष्यकस्य । पक्षः साध्यवान्न वेत्यस्य । साध्यविशेष्यकस्य । साध्यं पक्षवृत्ति न वेत्याकारकस्य संशयस्य, नानुगमः तथा सति फलस्याविलक्षणतया व्यभिचारे-ण कारणता भज्येतेति भावः ।

इदमुपलक्षणम्, साध्यवच्छेदकोटिकसंशयाननुगमोऽपि बो-ध्यः । विशिष्य सम्बन्धनिवेशनप्रयोजनं दर्शयति । न वेति । सम्ब-न्धान्तरेण । तत्सम्बन्धातिरिक्तसम्बन्धेन । सन्देहे । सन्देहदशाया-म् । निर्णीतसम्बन्धेन । पक्षांशे साध्यीयसम्बन्धविधया तत्कालीन-निर्णयविषयीभूततत्सम्बन्धेन । एतदनन्तरमनुमितावपीति पूर्णीयम् । तत्सम्बन्धेन संशयासत्त्वेऽपि तत्सम्बन्धेन सिद्धिशून्यकाले इष्टाप-त्तिसम्भवान्निर्णीतेत्युक्तं, सम्बन्धमनिवेश्य साध्यनिर्णयसामान्यनि-वर्त्यत्वनिवेशेऽप्रसिद्धिप्रसङ्गात् यत्किञ्चिन्निश्चयनिवर्त्यत्वं यत्किञ्चि-

त्संसर्गकनिर्णयसामान्यनिवर्त्यत्वं वा यदि निवेद्यते तदाऽयमति-प्रसङ्गो बोध्यः । धर्मत्वांशपरित्यागप्रयोजनमाह । न वा तमःप्रभृति-ष्विति । स्वधर्मत्वसंशयविषयसाध्यकत्वं पक्षत्वमित्युक्तौ धर्मत्वानि-वेशोऽव्यवृत्तिसाध्यकघटादिपक्षकस्थले न पक्षतावैकल्यम्, घटादि-समवेतत्वस्य प्रसिद्ध्या गगनादौ तत्संशयसम्भवादिति तमःप्रभृति-पर्यन्तस्य पक्षत्वानुसरणम्, तथा च साध्ये सम्बन्धान्तरेण पक्ष-वृत्तित्वसन्देहदशायां निर्णीतसम्बन्धेनानुमितिवारणाय प्रकृतसा-ध्यतावच्छेदकसम्बन्धेन स्ववृत्तित्वसंशयस्यावश्यं निवेशनीयतया तमःप्रभृतिसमवेतत्वस्याप्रसिद्ध्या साध्ये पक्षवृत्तित्वसंशयमादाया-पि न तत्र पक्षतोपपत्तिरिति भावः । स्वरूपसम्बन्धेन तमोवृत्ति-त्वस्य प्रसिद्ध्या तेन सम्बन्धेनानुमितौ नानुपपत्तिरतः समवायेने-ति । पक्षे साध्यीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नधर्मितासंश-यस्य पक्षतात्वे तमःप्रभृतिषु वृत्तिमत्साध्यसाधने नानुपपत्तिरत आकाशादीति । तद्वैकल्यम् । पक्षतावैकल्यम् ।

सन्देहोऽनुमितौ हेतुः । विशेषणतया । पक्षधर्मताज्ञाननिष्ठानुमि-तिजनकतायामवच्छेदको वा । अथ वा उपलक्षणतया तादृशजनक-तायामवच्छेदकस्तत्राद्यं पक्षद्वयं दूषयति मूले सन्देह इति । विशेष-णम् । अपेक्षणीयानुमित्यव्यवहितप्राक्क्षणसत् अनुमितिकारणं विशेषणविधया कारणतावच्छेदकं वेति यावत् । परामर्शपूर्वं तस्य संशयस्य नाशादित्यन्वयः । यत्रादौ लिङ्गदर्शनं ततो व्या-प्तिस्मरणं तदभिप्रायेण लिङ्गदर्शनस्य, यत्र तयोर्विपरीतक्रम-स्तदभिप्रायेण व्याप्तिस्मरणस्य नाशकत्वमभिहितं, अत एकत्र उभयोर्नाशकत्वासम्भवेऽपि न क्षतिः । आदिपदेन यत्र संशया-नन्तरक्षणे व्याप्तिस्मरणाद्यनुगुणज्ञानोत्पादस्तदनन्तरमेव व्याप्ति-स्मरणादिः तत्रत्यतादृशज्ञानसंग्रहः । द्वितीयं दूषयति । नोपल-क्षणमिति । अव्यावर्त्तकतापत्तेः । सिद्धिस्थलेऽनुमित्यवारकतापत्तेः । तत्कालीनपरामर्शस्यापि कालान्तरीयसंशयविषयधर्मिवृत्तित्वाव-गाहितया सामग्र्यां अक्षतत्वादिति भावः ।

अथ साध्यसन्देहोऽनुमितौ हेतुरेव लिङ्गदर्शनादेः पूर्वोत्पन्नस्य संशयस्य तेन विनाशेऽपि तदनन्तरं परामर्शाव्यवहितप्राक्क्षण-जातसंशयान्तरादेवानुमितिरिति कल्प्यते ।

न चानुत्पन्न एव संशये यत्र स्वसामग्रीबलात् परामर्शोत्पत्तिस्तत्रानुमित्यनुदयप्रसङ्गः परामर्शकाले तदुत्तरञ्च विशेषदर्शनरूपप्रतिबन्धकवशेन संशयोत्पादासम्भवादिति वाच्यम् । फलानुरोधेन सर्वत्रैवानुमित्युपधायकपरामर्शाव्यवहितप्राक्क्षणे संशयोत्पादकल्पनात् । यत्र संशयोत्पादद्वितीयक्षण एव परामर्शसामग्री प्रमाणसिद्धा यत्र वा परामर्शसामग्रीपूर्वक्षणे संशयजनकधर्मिज्ञानाद्यभावः प्रामाणिकस्तत्र परामर्शानन्तरं साध्यस्य प्रत्यक्षनिश्चय एव उपगम्यते तत एव प्रवृत्त्याद्युपपत्तेः तत्रानुमिनोमीत्यनुव्यवसायस्यापि गत्या भ्रमत्वमेव कल्प्यते अनुगताननुगतसिषाधयिषाभावकूटविशिष्टसिद्ध्यभावस्यानुमितिहेतुत्वापेक्षया संशयहेतुतायां लाघवात् । संशयहेतुत्वोपगमे बाधनिश्चयदशायां संशयाभावादेवानुमितिनिवारणसम्भवात् नानाविधबाधाभावस्यानुमितिहेतुत्वाकल्पनेनानुमितिसामग्रीप्रतिबन्धकतायां तदनिवेशेन च लाघवात् । जनकज्ञानविरोधितयैव च बाधादीनां हेत्वाभासतोपपत्तेः । संशयस्य च कार्यतावच्छेदककोटौ कारणवैशिष्ट्य निवेश्य तादृशसंशयत्वेनैव हेतुता वाच्या, अतो दीधितिकारोक्तप्रकारस्य स्वत्वघटिततया स्वाद्यननुगमेन प्रतिबध्यतादीनां स्वस्वावच्छेदकभेदेन भिन्नानामननुगमेन च शब्दानुगममात्रपर्यवसानेऽपि न क्षतिः । संशयस्य बाधसाधारणतदभाववत्ताज्ञानत्वेन कारणत्वं न तु पक्षधर्मिकसाध्यतदभावोभयज्ञानस्वरूपसंशयत्वेन गौरवात् । बाधनिश्चयदशायाञ्च नानुमित्यापत्तिसम्भवः । प्रत्यक्षादिसाधारणालौकिकविशिष्टबुद्धित्वावच्छिन्नं प्रति बाधनिश्चयस्य प्रतिबन्धकताया आवश्यकत्वादिति तु न श्रद्धेयम् । बाधनिश्चयेऽप्रामाण्यग्रहसत्त्वेऽनुमित्यापत्तेः, अप्रामाण्यग्रहाभावस्य संशयजनकतायां प्रयोजनविरहेणानिवेशात्, साध्यसन्देहेऽप्रामाण्यग्रहसत्त्वेऽप्यनुमित्युपगमे क्षतिविरहात्, संशयेऽप्रामाण्यनिश्चयेऽनुमित्युत्पादेऽपि संशये विषयसंशयस्याकिञ्चित्करत्वात्, तत्राप्रामाण्यनिश्चयत्वावच्छिन्नाभावस्यैव निवेशनीयतयाऽप्रामाण्यशङ्कास्कन्दितबाधनिश्चयादनुमित्यापत्तेर्दुर्वारतापत्तेरिति चेन्न । प्रत्यक्षादिना निर्णीतस्यापि साध्यस्यानुमित्सया अनुमितेरानुभविकत्वात् संशयस्य पक्षतात्वे तदनुपपत्तेरनुभवापलापे विशेषदर्शनमूलकप्रत्यक्षादेव सर्वत्र प्रवृत्त्यादिसम्भवे

अनुमानप्रामाण्यस्यैव विलयापत्तेः संशयानन्तरजातसिद्ध्यात्मकपरामर्शादनुमित्यापत्तेश्च इति संक्षेपः ।

( चि० ) नापि साधकबाधकप्रमाणाभावः, उभयाभावस्य प्रत्येकसत्त्वेऽपि सत्त्वात् । नापि अभावद्वयं तथा, बाधकप्रमाणाभावस्य व्यर्थत्वात्, ह्रदादेः पक्षत्वेऽपि बाधहेत्वसिद्ध्यादेरावश्यकत्वेन अनुमित्यनुत्पादात् । नापि साधकप्रमाणाभावः श्रोतव्यो मन्तव्य इति श्रुत्या समानविषयकश्रवणानन्तरं मननबोधनात् । प्रत्यक्षदृष्टेऽप्यनुमानदर्शनात् । एकलिङ्गावगतेऽपि लिङ्गान्तरेण तदनुमानाच्च, मन्तव्यश्चोपपत्तिभिरिति स्मरणात् ।

( दी० ) संशययोग्यतां निरस्यति । नापीति । साधकबाधकमाने सिद्धिबाधौ । केवलान्वयिनि च पक्षनिष्ठाभावप्रतियोगित्वधीरेव सुलभो बाधः ।

(गा०) संशयनाशेऽपि यावन्न निर्णयस्तावत्पर्यन्तं संशययोग्यताया अनपायात् तस्या एव पक्षतात्व सम्भवतीति तन्निराकरणे मूलस्य न्यूनता, अतो नापीति मूलमेव संशययोग्यतानिराकरणपरतया व्याचष्टे । संशययोग्यतामिति । साधकबाधकमानपदस्य सिद्धिबाधहेतुरूपयथाश्रुतार्थपरत्वे सर्वदैवानुमित्यनुपपत्तिः अनुमितिपूर्वं सिद्धिबाधहेतुचक्षुरादेः सिद्धिहेतुपरामर्शस्य च सर्वत्रैव सत्त्वादतः तत्पद सिद्धिबाधपरतया व्याचष्टे । साधकेति । यद्यपि बाधकमानपदस्य बाधजनकतत्सामग्रीपरत्वेऽपि न क्षतिः बाधसामग्र्यनन्तरक्षणे कदाप्यनुमितेरनुत्पादात् । तथाऽपि बाधजनकत्वमात्रेण तत्सामग्रीपरत्वं तदवच्छिन्नाभावस्य हेतुता लभ्येत तत्र चोक्तैवानुपपत्तिः बाधसामग्रीत्वेन तत्परत्वञ्च विना लक्षणां न निर्वहति लक्षणाया आवश्यकत्वे बाध एव लक्षणोचिता इत्यभिप्रायेण इदम् ।

ननु पक्षे साध्याभावनिश्चयस्य बाधतया केवलान्वयिनि सा-

ध्याभावाप्रसिद्ध्या बाधाप्रसिद्धिरतस्तदभावघटितपक्षतावैकल्यम् अत आह । केवलान्वयिनि चेति । पक्षनिष्ठेति । साध्य इत्यादिः । धीः । निर्णयः । सुलभो बाध इति । तथा च तादृशबाधाभावस्यैव पक्षताघटकत्वान्नानुपपत्तिरिति भावः ॥ सुलभ इत्यनेन तत्राभावांशे साध्यीयत्वभ्रमात्मकबाधस्यापि कदाचित् कस्यचित् पुरुषस्य प्रसिद्ध्या तदभावघटितत्वमपि पक्षतायाः सम्भवतीति सूचितम् ।

( चि० ) अथ सिषाधयिषितसाध्यधर्मा धर्मी पक्षः । तथा हि मुमुक्षोः शब्दादात्मावगमेऽपि मननस्य मोक्षोपायत्वेन सिद्धिविशेषानुमितीच्छया आत्मानुमानम् । अत एव 'प्रत्यक्षपरिकलितमपि अर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः । न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः' इति वाचस्पतिवचनयोर्विरोधः अनुमित्सातद्विरहाभ्यां तदुपपत्तेरिति चेन्न । सन्देहवत्परामर्शपूर्वं सिषाधयिषाया अपि अभावात् योग्यतायाश्च अनिरूपणात्, सिषाधयिषाविरहेऽपि घनगर्जितेन मेघानुमानात् स्वकारणाधीनतृतीयलिङ्गपरामर्शबलेन अनपेक्षितानुमानदर्शनाच्चेति ।

( दी० ) ननु तत्रापि पुनरनुमित्सा, ततः परामर्शान्तरं, स्मरणात्मकाद्वा परामर्शादनुमितीष्टसाधनताविषयकादनुमित्सा, ततोऽनुमितिरिति फलबलात् कल्पनीयमित्यत आह । सिषाधयिषेति । न च अनुमितिजनिकेच्छैव पक्षता । सा च क्वचित् स्वनिष्ठेव सर्वत्र ईश्वरनिष्ठैव सुलभेति वाच्यम् । तस्या नित्यत्वेन सिद्धौ सत्यामपि पक्षताप्रसङ्गात् । न च तस्यास्तदानीं न तज्जनकत्वम् । तद्धि न तद्योग्यता, अनपायात् । न च तदुपधानम् । अनुमितेः पूर्वं तदभावात् । न च तत्सामग्रीसमवधानम् ।

कारणमात्रस्य पक्षताकुक्षिनिक्षेपप्रसङ्गाच्छेपत्रैयर्थ्यात् । 'इ-दानीं सामग्रीविरहप्रयोजकव्यतिरेकप्रतियोगिनः कारणस्य वक्तव्यत्वापाताच्च ।

( गा० ) व्याप्तिस्मरणादिना पूर्वानुमितिस्मानाधारस्थलेऽनुमिति-मुपपाद्य सिषाधयिषाविरहेत्यादिग्रन्थमवतारयति । नन्विति । त-त्रापि । परामर्शपूर्वमनुमित्सानाधारस्थलेऽपि । पुनरनुमित्सा । परा-मर्शानन्तरमनुमित्सान्तरम् ।

ननु परामर्शानन्तरोत्पन्नेन इच्छाजनकज्ञानेन इच्छाजननसमका-लं परामर्शस्य विनाशात्तादृशेच्छातः कथमनुमितिरित्यत आह । ततः परामर्शान्तरामिति । विनश्यदवस्थानुमित्सया ऽनुमितिमुप-पाद्याविनश्यदवस्थयाप्युपपादयति । स्मरणात्मकाद्विति । चाक्षुषादि-परामर्शस्यानुमित्संशे इष्टसाधनताप्रकारकसमूहालम्बनत्वं नोपप-द्यते स्वायोग्यमुख्यविशेष्यकज्ञाने बहिरिन्द्रियस्यासामर्थ्यादतस्त-स्य तथात्वमुपेक्ष्य तन्मूलकव्याप्त्यनत्पक्षगोचरसंस्कारात् पूर्वानु-मित्साजनकेष्टसाधनताज्ञानाहितसंस्कारसहकृतात्समूहालम्बनस्म-रणात्मकपरामर्शान्तरस्यानुसरणम् । स्मरणेत्युपलक्षणम्, तथाऽवि-धमानसपरामर्शोऽपि बोध्यः ।

ननु फलपकाभावान्नितादृशीकल्पनासम्भव इत्याशङ्कां परिहरति । फलबलादिति । सिषाधयिषाकृपकारणं विना अनुमित्यात्मककार्यानु-पपत्तिबलादित्यर्थः । सिषाधयिषाविरहेऽपीति मूलस्यानुमातुरि-त्यादिः, तेन ईश्वरस्य सिषाधयिषायास्तत्राक्षतत्वेऽपि' न क्षतिः । इच्छारूपपक्षताया आत्मनिष्ठप्रत्यासत्त्यैव हेतुता इत्यभिप्रायेणेदम् ।

न च तत्रापि पूर्ववत् फलबलादनुमित्सां कल्पयित्वा अनुमितिः शक्योपपादिका । तत्र तदभावस्यानुभवसिद्धतया कल्पनासम्भवात्, पूर्वं कदापि यस्य मेघानुमितिर्नासीत् तेन तत्रेष्टसाधनताया अगृ-हीतत्वेन तद्गोचरस्मरणस्य तदनुभावकस्य तदानीमभावेन त-द्गोचरानुमत्स्य चासम्भवेन तदनुमित्सासामग्र्या एव दुर्घटत्वा-च्च विषयनिष्ठप्रत्यासत्त्यैवानुमित्साया हेतुता वाच्या इत्यभिप्रायेण उक्तस्थले पक्षतोपपत्तिं दीधितिकृदाशङ्कते । न चानुमितीति । इ-च्छैव । समानाधिकरणव्यधिकरणसाधारणमिच्छामात्रमेव । स्व-

निष्ठेव। अनुमातृमम तेनैव। तस्याः। ईश्वरेच्छायाः। पक्षताप्रसङ्गादिति। तथा च सिद्ध्यनन्तरमनुमित्यापत्तिरित्यर्थः। तदानीम्। सिद्धिदशायाम्। न तज्जनकत्वमिति। तथा चानुमितिजनकत्वविशिष्टेच्छात्वेनैव हेतुना, कारणतावच्छेदकविशिष्टस्य प्राक्सत्त्वमेव फलोपधाने तन्त्रमिति नातिप्रसङ्ग इति भावः। जनकत्वेन जनकत्वे आत्माश्रयसत्त्वेऽपि स्फुटत्वात्तमुपेक्ष्य दूषणान्तरमाह। तद्धीति। योग्यता। स्वरूपयोग्यता। अनपायादिति। कारणतावच्छेदकधर्मरूपयोग्यतायाः सर्वदैव सत्त्वादित्यर्थः। तदुपधानम्। तद्वैशिष्ट्यम्। तदभावात्। अनुमितिवैशिष्ट्याभावात्। तथा चानुमित्युत्पादनियामिकाया अनुमितिविशिष्टेच्छायाः प्रागसत्त्वादनुमितेरेवानुपपत्तिः। इदमुपलक्षणम्, अनुमित्यनन्तरमनुमित्यापत्तिरपि द्रष्टव्या।

नन्वनुमितिजनकतावच्छेदका यावन्तो धर्माः प्रत्येकं तदवच्छिन्नकूटविशिष्टत्वरूपतत्सामग्रीसमवधानमेव इच्छाविशेषणं देयं तच्च कार्याव्यवहितप्राक्क्षण एव इति नातिप्रसङ्ग इति शङ्कां परिहरति। न तत्सामग्रीति। कारणमात्रस्येति। तथा च परामर्शाद्यसत्त्वदशायामीदृशपक्षताविरहादेवानुमितिवारणसम्भवात् परामर्शादीनां हेतुताविलयप्रसङ्ग इति भावः।

नन्तु सामग्रीसमवहितेच्छात्वेन न पक्षताया हेतुत्वमुपेयते सामग्रीघटकहेतूनां विशेष्यविशेषणभावे विनिगमनाविरहात् तेषां स्वतन्त्रकारणतयैवातिप्रसङ्गस्य वारितत्वात् किन्तु ईश्वरेच्छामादाय सिद्धिकाले पक्षताव्यवहारवारणाय पक्षपदप्रवृत्तिनिमित्तत्वमेव तादृप्येण उपेयते अतो नायं दोष इति दूषणान्तरमाह। शेषेति। अनुमितिसामग्र्या एव पक्षतात्वसम्भवेन इच्छारूपविशेष्यभागनिवेशस्य निष्प्रयोजनकत्वादित्यर्थः। अवशिष्टापत्तौ दूषणान्तरमाह। तदानीमिति। तदानीम्। परामर्शादिसमवहितासिद्धिदशायाम्, अन्यपक्षस्य सामग्रीविरहेत्यनेन। पक्षत्वतापातात्। सामग्रीमध्यनिवेशापातात्। तथा च तादृशकारणं सिषाधयिषाविरहविशिष्टसिद्ध्यभाव एव। एवञ्च तस्यैव पक्षतात्वमस्तु अलङ्कारणान्तरस्य पक्षताकुक्षिनिवेशनेनेति सिद्धान्तलक्षण एव पर्यवसानमिति भावः।

( चि० ) उच्यते-सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो यत्रास्ति स पक्षः । तेन सिषाधयिषाविरहसहकृतं साधकप्रमाणं यत्रास्ति स न पक्षः । यत्र साधकप्रमाणे सति असति वा सिषाधयिषा, यत्र वा उभयाभावस्तत्र विशिष्टाभावात् पक्षत्वम् । यद्यपि पक्षत्वस्य केवलान्वयित्वात् नास्य भेदकत्वं तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम् ।

इति चिन्तामणौ पक्षताप्रकरणम् ।

( दी० ) सिषाधयिषेति । यत्र अनुमित्सानन्तरं साध्यव्याप्यवत्त्वविशिष्टपक्षस्मरणम्, अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वा अनुमित्सा, अनुमित्सापूर्वकालोत्पन्नविशेषणस्मरणाद्वा अनुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहितात् साध्यव्याप्यविशिष्टपक्षप्रत्यक्षं तदनन्तरं च अनुमितिस्तत्र पक्षतासम्पत्तये सहकृतान्तं साधकमानविशेषणम् ।

( गा० ) सिद्धान्तलक्षणे निवृष्युत्तरक्षणे सिषाधयिषाधीनानुमितेरुपपादनाय सहकृतान्तविशेषणमुपात्तम्, तच्च तदैवोपपद्यते यदि सिद्धिसिषाधयिषापरामर्शानां त्रयाणां अनुमित्यव्यवहितप्राक्क्षणेऽवस्थितिः सम्भवति, न चैवमुपपद्यते, आत्मसमवेतयोग्यविशेषगुणानां द्विक्षणस्थायितया त्रयाणां युगपदनवस्थानात् ।

न च यत्रापेक्षाबुद्ध्यात्मकपरामर्शस्य साध्यनिश्चयस्य वा प्रथममुत्पादस्तत्रैव तृतीयक्षणे त्रयाणामेवावस्थानं सम्भवति इति, वाच्यम् । अपेक्षाबुद्धेः क्षणत्रयावस्थायित्वमङ्गीकुर्वाणैस्तदव्यवहितोत्तरक्षणे तदधिकरणे, विशेषगुणोत्पादानभ्युपगमात् । अन्यथा स्वसमानाधिकरणस्वानन्तरोत्पन्नविशेषगुणात्मकनाशकबलात् तस्या अपि तृतीयक्षणे विनाशापत्तेरित्याशङ्कापरिजिहीर्षया सिद्ध्यात्मकसमूहालम्बनपरामर्शस्थले तादृशविशेषणप्रयोजनं दर्शयति । यत्रेत्यादिना । अनुमित्साव्यवहितोत्तरक्षणे विशिष्टपक्षप्रत्यक्षं, न सम्भवति,

इच्छोत्पत्तिकाले ज्ञानानुत्पत्त्या विशेषणज्ञानघटितसामग्रीविरहात्, इच्छापूर्वक्षणे तादृशसामग्रीसमवधाने इच्छासामग्र्यपेक्षया प्रत्यक्षसामग्र्या बलवत्त्वेन तस्या एवोत्पादासम्भव इत्यतो विशिष्टस्मरणानुधावनम्। न्यूनताभङ्गाय परामर्शपूर्वोत्पन्नेच्छास्थले प्रयोजनमुक्त्वा तदनन्तरोत्पन्नेच्छास्थलं तद्दर्शयति। अनुमितीति। यत्रेत्यनुपज्यते। इच्छासामग्रीसम्पत्तयेऽनुमितीष्टसाधनताविषयकेति। तादृशस्मरणात्। साध्यतद्व्याप्यविशिष्टपक्षस्मरणात्। पूर्वोक्तयुक्त्या चाक्षुषादिपरामर्शस्यानुमितीष्टसाधनतावगाहित्वासम्भवात्, यत्र परामर्शाव्यवहितपूर्वक्षणे इष्टसाधनताज्ञानं तत्र तत्पूर्वक्षण एव फलेच्छासम्भवेन तस्याः परामर्शोत्पत्तिसमये नाशात् तदुत्तरमनुमित्सायाः असम्भवेनेष्टसाधनताविषयकपरामर्शस्याऽऽवश्यकत्वात् स्मरणानुधावनम्। न्यूनतापरीहाराय प्रत्यक्षात्मकपरामर्शस्थले प्रयोजनमाह। अनुमित्सापूर्वेति। अत्रापि यत्रेत्यनुपज्यते। प्रत्यक्षात्मकधूमत्वादिविशेषणज्ञानस्थले तज्जनकसन्निकर्षादितस्तदुत्तरक्षणे विशिष्टप्रत्यक्षमेव भविष्यति न त्विच्छा। विनश्यदवस्थसन्निकर्षाद्विशेषणप्रत्यक्षानुधावने च प्रयासगौरवमतो विशेषणस्मरणपर्यन्तानुधावनम्। अनुमित्सापूर्वकाले परामर्शजनकसन्निकर्षसत्त्वे तस्या एव अनुपपत्तिरतोऽनुमित्साकालोत्पन्नेन्द्रियसन्निकर्षसहिताऽपीति। सहकृतान्तम्। सहकृतान्तभागोपस्थाप्यसिषाधयिषाविरहवैशिष्ट्यम्। तस्य अभावविशेषणत्वे सिषाधयिषादशायां तदभावविशिष्टस्य सिद्ध्यभावस्यासम्भवात् सिद्धौ सत्यामसत्याञ्चानुमित्यनुपपत्तिरतः साधकमानविशेषणमिति।

(टी०) सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारिका अनुमितिविषयिणीच्छा। यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वे अनुमित्यनुत्पादात् अनुमितित्वाप्रकारिकायामपि प्रत्यक्षातिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छायां प्रत्यक्षाद्यनन्तरमनुमित्युत्पादाच्च।

(गा०) सिषाधयिषापदस्य सिद्धीच्छासामान्यपरत्वे प्रत्यक्षत्वादिप्रकारकेच्छाबलादसत्यां प्रत्यक्षादिसामग्र्यां सिद्धिदशाया-

मनुमित्यापत्तिः, अनुमितिगोचरेच्छासत्त्वे यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छाबलात् सिद्धिकालेऽनुमित्यापत्तिः । न चानुमित्युत्पत्त्यापि तादृशेच्छाविषयसिद्धेस्तत्रानुमितिरिष्टैवेति वाच्यम् । प्रकृतानुमित्युत्पत्त्यैव यादृशेच्छाया विषयसिद्धिस्तादृशेच्छासत्त्वे एव सिद्धिकालेऽनुमितेरानुभविकत्वात् उक्तेच्छायाश्चान्तत उपस्थितपदार्थगोचरमानसज्ञानेनापि विषयसिद्ध्या अकिञ्चित्करत्वादित्यतः सिषाधयिषापदार्थं व्याचष्टे । सिषाधयिषा चेति ।

घटविशिष्टपर्वतविषयकानुमितिर्जायतामित्येतादृशेच्छासत्त्वे सिद्धिसत्त्वे वह्न्यनुमित्यनुत्पादात्तत्साध्यविशिष्टेति । तत्सम्बन्धेन तत्साध्यतावच्छेदकावच्छिन्नविशिष्टेत्यर्थः । तेन कालिकसम्बन्धेन वह्निविशिष्टपर्वतविषयकानुमितिर्जायतां द्रव्यत्वावच्छिन्नविशिष्टपर्वतविषयकानुमितिर्जायतामित्येतादृशेच्छासत्त्वेऽपि सिद्धिकाले संयोगादिना न वह्नित्वावच्छिन्नस्यानुमितिः । वह्निविशिष्टमहानसविषयकानुमितिर्जायतां वह्निविशिष्टद्रव्यत्वावच्छिन्नविषयकानुमितिर्जायतामितीच्छाबलात् सिद्धिसत्त्व पर्वतो वह्निमानित्यनुमित्यनुत्पादात् तत्पक्षेति । तत्पक्षतावच्छेदकावच्छिन्नेत्यर्थः ।

न च यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छाबलादिव आलोकवान् पर्वत इत्याद्यनुमितिसामग्रीदशायां वह्निमत्पर्वतविषयकानुमितिर्जायतामितीच्छाबलादपि सिद्धिसत्त्वे वह्निविधेयकानुमितिर्न जायते तत्कालीनसिद्धप्रतिबध्यालोकाद्यनुमित्युत्पत्त्यैव तादृशेच्छाविषयवास्तववह्निमत्पर्वतविषयकानुमितिसिद्धेरित्युक्तरूपेणापि इच्छाया उत्तेजकत्वं न सम्भवतीति वाच्यम् । साध्यविशिष्टपक्षनिरूपितविलक्षणविषयिताप्रकारकत्वेनैवेच्छाया उत्तेजकत्वोपगमात् । आलोकवान् पर्वत इत्याद्यनुमितेर्वह्निविशिष्टपक्षनिरूपितविलक्षणविषयिताशून्यत्वेन तदुत्पत्त्या तादृशविषयिताप्रकारकेच्छाविषयसिद्ध्यसम्भवात् । साध्यविशिष्टपक्षनिरूपितत्वञ्च साध्यावच्छिन्नपक्षनिष्ठनिरूपकताकत्वमतो ह्रदो वह्निमानित्यादौ साध्यविशिष्टपक्षाप्रसिद्धावपि न तादृशविषयितायास्तत्प्रकारकानुमित्सायाश्चाप्रसिद्धिः । ह्रदादिनिष्ठस्य तादृशभ्रमवृत्तिविषयितानिरूपकत्वस्यापि ह्रदांशे प्रकारीभूतवह्न्याद्यवच्छिन्नत्वात् ।

वस्तुतस्तु तत्साध्यविशिष्टतत्पक्षविषयकत्वेत्यनेन तत्साध्यता-

यच्छेदकावच्छिन्नतत्संसर्गावच्छिन्नविधेयतानिरूपितनत्पक्षतावच्छेदकावच्छिन्नोद्देश्यताकत्वं विवक्षितं अतो वह्निमान् पर्वतो घटवानित्याद्यनुमितिसामग्रीदशायां पूर्वोक्तयुक्त्या वह्निमत्पर्वतविषयकानुमितिर्जायतामित्याकारकेच्छाबलात् पर्वतादिपक्षकवन्ह्यादिविधेयकानुमित्यनुत्पादेऽपि न क्षतिः । तादृशोद्देश्यतात्वेन च तादृशोद्देश्यताकत्वप्रकारकत्वं विवक्षणीयं तेन केवलपर्वतत्वावच्छिन्नोद्देश्यतात्वेन तादृशोद्देश्यताकत्वप्रकारकानुमितिसादृशायां पर्वते अन्यानुमितिसामग्रीसत्त्वे वह्नेः सिद्धिसत्त्वे न वन्ह्यनुमित्यापत्तिः(१) । साध्यविशिष्टपक्षविषयकत्वप्रकारकत्वनिवेशप्रयोजनं दर्शयति । यत्किञ्चिदिति । यत्किञ्चिद्विषयकत्वप्रकारकत्वं निवेश्यापि यत्किञ्चिज्ज्ञानं जायतामित्यादीच्छावारणं सम्भवतीति यत्किञ्चिद्गोचरत्वप्रकारकेच्छानुधावनम् ।

न चेच्छापूर्वं यत्किञ्चिद्गोचरज्ञानस्यावश्यं सिद्धत्वात् तादृशेच्छैव न सम्भवति ज्ञानगोचरेच्छायां स्वरूपसत्याः स्वविषयसिद्धेरेव विरोधित्वात् । तदुक्तं न हि ज्ञाने जाते ज्ञानेच्छा भवतीति वाच्यम् । एतदुत्तरवर्त्ति यत्किञ्चिद्गोचरं ज्ञानं जायतामित्याद्याकारकेच्छाया विवक्षितत्वात् ।

नन्वनुमितित्वप्रकारकत्वं निवेश्यैव तथाविधेच्छावारणसम्भवे किं गुरुतरसाध्यविशिष्टपक्षविषयकत्वप्रकारकत्वनिवेशनेनेत्यत आह । अनुमितित्वाप्रकारिकायामपीति । प्रत्यक्षाद्यात्मकसिद्धिदशायां पर्वते वह्निज्ञानं जायतामित्याकारकेच्छा न सम्भवतीति तद्विषयीभूतप्रत्यक्षादिरूपसिद्धेरेव सत्वात्, अतः प्रत्यक्षाद्यतिरिक्तेति । शाब्दादिरूपसिद्धौ सत्यां प्रत्यक्षव्यतिरिक्तं ज्ञानं जायतां इत्या·

---

(१) एवं पक्षतावच्छेदकादिनिष्ठानवच्छिन्नत्वावगाहित्वमपि निवेशनीयं अन्यथा जातिमान् वह्निव्याप्यवानिति परामर्शकाले पर्वतो वह्निमानिति सिद्धिसत्त्वेऽनवच्छिन्नत्वानवगाहीच्छाकाले पर्वतः वह्निमानित्यनुमित्यापत्तिः, पर्वतो वह्निव्याप्यवानिति परामर्शकालीनजातिमान् वह्निव्याप्यवानिति परामर्शशून्यकालीनानवच्छिन्नत्वानवगाहीच्छानाञ्च तत्तद्व्यक्तित्वेनोत्तेजकत्वं इति बोध्यमिति पाठः क्वचित् पुस्तके दृश्यते ।

दीच्छाया उत्पादासम्भवात्। प्रत्यक्षाद्यनन्तरमिति। प्रत्यक्षादिरूपसिद्ध्यनन्तरमित्यर्थः। अनुमित्युत्पादाद्येति। तथा चानुमितित्वप्रकारकत्वं निवेशयितुमशक्यमेव तादृशेच्छानामसंग्रहप्रसङ्गादिति भावः।

इदमुपलक्षणम्। अनुमितित्वप्रकारकत्वनिवेशेऽपि घटाद्यनुमितिर्जायतामित्यादीच्छाकाले सिद्धिसत्त्वे वह्न्याद्यनुमितिवारणाय प्रकृतसाध्यादिविषयकत्वप्रकारकत्वनिवेशनमावश्यकम्।

न च प्रकृतसाध्यादिविषयिणी या अनुमितिस्तद्विषयकत्वनिवेशेनापि दर्शितेच्छावारणसम्भव इति वाच्यम्। दर्शितच्छाया अपि घटाद्यनुमितित्वेन वह्न्यादिगोचरसमूहालम्बनानुमितिविषयकत्वात्।

न चानुमितित्वप्रकारकत्वानिवेशेऽपि अनुमितिरेव यत्र प्रत्यक्षत्वादिना इच्छाविषयस्तत्रानुमित्यापत्तिरिष्टत्वात्। अनुमितौ प्रत्यक्षत्वभ्रमदशायामेव तादृशेच्छाया उत्पादात् तस्या अनुमितित्वप्रकारकेच्छासमशीलत्वादिति हृदयम्।

न चानुमितित्वप्रकारकत्वस्यानिवेशे पर्वते वह्नेः प्रत्यक्षतः सिद्धौ शाब्दसामग्र्याञ्च सत्यां पर्वते प्रत्यक्षाद्यतिरिक्तं वह्निज्ञानं जायतामितीच्छासत्त्वेऽनुमित्यापत्तिरिति वाच्यम्। तत्र पक्षतासत्त्वेऽप्यनुमितित्वप्रकारकेच्छाविरहविशिष्टसमानविषयकशाब्दसामग्र्याः प्रतिबन्धकत्वादेवानुमितिवारणसम्भवात्।

अथ सिद्धिदशायां पर्वते वह्नेरन्यत् ज्ञानं जायतामितीच्छासत्त्वेऽनुमित्यापत्तिस्तस्या अप्यनुमितिविषयकत्वात्। न चेष्टापत्तिः, तदुत्तरं पर्वतो वह्निमान् इत्यादिमानसानुत्पत्त्याऽपीच्छाविषयासिद्धेस्तादृशच्छाया यत्किञ्चिद्गोचरं ज्ञानं जायतामित्येतादृशेच्छातुल्यत्वात्।

न च प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्रीरूपप्रतिबन्धकसत्त्वान्नापत्तिरिति वाच्यम्। प्रत्यक्षत्वादिप्रकारकेच्छाविशिष्टाया एव मानसादिसामग्र्या अनुमितिप्रतिबन्धकत्वात्। अन्यथा सिद्धिशून्यकालेऽपि तादृशेच्छासत्त्वेऽनुमित्यनु-त्पादप्रसङ्गात्।

न चोक्तयुक्त्या वह्निविधेयकत्वावगाहित्वनिवेशस्यावश्यकत्वात् वह्निप्रकारकत्वावगाहिदर्शितेच्छाबलात् नानुमितिप्रसङ्गः, तद्विधेयकत्वावगाहीच्छादशायाञ्च जायत एवानुमितिः विधेयतायाः प्रत्य-

क्षेऽप्रामाणिकतया तत्प्रकारकेच्छाया अनुमित्युत्पत्त्यैव विषयसिद्धेरिति वाच्यम् । विधेयतायाः प्रत्यक्षव्यावृत्तत्वे तत्प्रकारिकायाः प्रत्यक्षान्यत्वाप्रकारिकाया अपीच्छायाः प्रत्यक्षसिद्धिकाले सम्भवात् प्रत्यक्षान्यत्वप्रकारकेच्छापर्यन्तानुसरणस्य निर्बीजत्वात् ।

न च विधेयता प्रत्यक्षव्यावृत्तैव तदवगाहित्वसूचनायैवोपदर्शितेच्छाकारे प्रत्यक्षान्यत्वोल्लेख इति वाच्यम् । एवमपि वक्ष्यमाणस्य शाब्दसिद्धिकालेऽशाब्दं ज्ञानं जायतामितीच्छाबलेनानुमितिर्जायते न तु प्रत्यक्षसामग्रीकाले इत्यस्य सङ्गमयितुमशक्यत्वात् । तादृशेच्छायाः प्रत्यक्षव्यावृत्तविधेयतावगाहित्वे प्रत्यक्षसामग्रीकालेऽपि तद्बलादनुमित्युत्पत्त्यौचित्यात् । तदनवगाहित्वे सिद्ध्यवच्छेदकत्वात् ।

अत्रोच्यते । अनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामनुमितिविषयकेच्छात्वेनैवानुगमः । पर्वते वह्नेरन्यज् ज्ञानं जायतामित्याद्याकारकेच्छाकाले सत्यां सिद्धौ तथाविधोपनीतभानसामग्र्यास्त्वनुमितेर्वारणाय तथाविधेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकता कल्प्यते इति न दोषः ।

न च तासां तत्तद्व्यक्तित्वेनानन्तप्रतिबन्धकताकल्पनामपेक्ष्यानुमितित्वादिरूपप्रकाराविशेषमन्तर्भाव्यैवानुमित्सानामुत्तेजकत्वमुचितमिति वाच्यम् । तथा सति पर्वते वह्नेरन्यज् ज्ञानं जायतामितीच्छाकाले तथाविधोपनीतभानविरोधिघटाद्यनुमितीच्छाविशिष्टतत्सामग्रीसत्त्वे सिद्धौ सत्यां वह्न्याद्यनुमित्युपपत्तये तादृशतादृशेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन सिद्ध्युत्तेजकत्वापत्त्या तदभावसहस्रस्य मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण सिद्धिप्रतिबन्धकतानन्त्यप्रसङ्गात् ।

( दी० ) यादृशयादृशेच्छासत्त्वे सिद्धौ सत्यामनुमितिस्तत्तदिच्छाभावसमुदायस्य विशेषणत्वादिच्छाया अननुगमेऽपि न क्षतिः ।

( गा० ) ननु साध्यविधेयकत्वावच्छिन्नपक्षोद्देश्यकत्वप्रकारकेच्छाया उपादाने पक्षोद्देश्यकत्वावच्छिन्नसाध्यविधेयकत्वप्रकारकेच्छाया असङ्ग्रहः । एवं विषयानुपरक्तानुमितिविषयिण्या अनु-

दीच्छाया उत्पादासम्भवात्। प्रत्यक्षाद्यनन्तरमिति। प्रत्यक्षादिरूपसिद्ध्यनन्तरमित्यर्थः। अनुमित्युत्पादाच्चेति। तथा चानुमितित्वप्रकारकत्वं निवेशयितुमशक्यमेव तादृशेच्छानामसंग्रहप्रसङ्गादिति भावः।

इदमुपलक्षणम्। अनुमितित्वप्रकारकत्वनिवेशेऽपि घटाद्यनुमितिर्जायतामित्यादीच्छाकाले सिद्धिसत्त्वे वह्न्याद्यनुमितिवारणाय प्रकृतसाध्यादिविषयकत्वप्रकारकत्वनिवेशनमावश्यकम्।

न च प्रकृतसाध्यादिविषयिणी या अनुमितिस्तद्विषयकत्वनिवेशेनापि दर्शितेच्छावारणसम्भव इति वाच्यम्। दर्शितच्छाया अपि घटाद्यनुमितित्वेन वह्न्यादिगोचरसमूहालम्बनानुमितिविषयकत्वात्।

न चानुमितित्वप्रकारकत्वानिवेशेऽपि अनुमितिरेव यत्र प्रत्यक्षत्वादिना इच्छाविषयस्तत्रानुमित्यापत्तिरिष्टत्वात्। अनुमितौ प्रत्यक्षत्वभ्रमदशायामेव तादृशेच्छाया उत्पादात् तस्या अनुमितित्वप्रकारकेच्छासमशीलत्वादिति हृदयम्।

न चानुमितित्वप्रकारकत्वस्यानिवेशे पर्वते वह्नेः प्रत्यक्षतः सिद्धौ शाब्दसामग्र्याञ्च सत्यां पर्वते प्रत्यक्षाद्यतिरिक्तं वह्निज्ञानं जायतामितीच्छासत्त्वेऽनुमित्यापत्तिरिति वाच्यम्। तत्र पक्षतासत्त्वेऽप्यनुमितित्वप्रकारकेच्छाविरहविशिष्टसमानविषयकशाब्दसामग्र्याः प्रतिबन्धकत्वादेवानुमितिवारणसम्भवात्।

अथ सिद्धिदशायां पर्वते वह्नेरन्यज् ज्ञानं जायतामितीच्छासत्त्वेऽनुमित्यापत्तिस्तस्या अप्यनुमितिविषयकत्वात्। न चेष्टापत्तिः, तदुत्तर पर्वतो वह्निमान् इत्यादिमानसाद्युत्पत्त्याऽपीच्छाविषयासिद्धेस्तादृशेच्छाया यत्किञ्चिद्गोचर ज्ञानं जायतामित्येतादृशेच्छातुल्यत्वात्।

न च प्रत्यक्षेच्छाविशिष्टप्रत्यक्षसामग्रीरूपप्रतिबन्धकसत्त्वान्नापत्तिरिति वाच्यम्। प्रत्यक्षत्वादिप्रकारकेच्छाविशिष्टाया एव मानसादिसामग्र्या अनुमितिप्रतिबन्धकत्वात्। अन्यथा सिद्धिशून्यकालेऽपि तादृशेच्छासत्त्वेऽनुमित्यनुत्पादप्रसङ्गात्।

न चोक्तयुक्त्या वह्निविधेयकत्वावगाहित्वनिवेशस्यावश्यकत्वात् वह्निप्रकारकत्वावगाहिदर्शितेच्छाबलात् नानुमितिप्रसङ्ग, तद्विधेयकत्वावगाहीच्छादशायाञ्च जायत एवानुमितिः विधेयतायाः प्रत्य-

वेशनीयतया तत्तद्भावत्वेन तत्तद्भाववैशिष्ट्यनिवेशापेक्षया महागौरवात् । तादृश्या यत्किञ्चिद्विषयतात्वव्यक्तित्वेन निवेशे तथाविधधीसहत्वस्य विनिगमनाविरहेण निवेशप्रसङ्गात् ।

यदि च मिथो विशेष्यविशेषणभावापन्नेषु नानाविशेषणेषु व्यासज्यवृत्तिकमवच्छेदकत्वं सिद्धान्तविरुद्धमिति मन्यते तदा एकाभावविशेषितापराभावस्यावच्छेदकत्वमुपेयम् । तत्र च विशेष्यविशेषणभावे विनिगमनाविरहेऽपि न क्षतिः गत्यन्तराभावात् । तत्तद्भावनाश्रविषयकधीविषयत्वेन निवेशेऽपि ज्ञाने तत्तद्भावविषयितानां एकविशिष्टापरत्वेनैव निवेशनीयतया विशेष्यविशेषणभावे विनिगमनाविरहस्याऽऽपद्यकत्वादिति । इच्छाया अननुगमेऽपि एकरूपेण सर्वासामिच्छानामुपादानासम्भवेऽपि । न क्षतिः । न सिषाधयिषाविरहविशिष्टलिङ्गज्ञानत्वस्यानुमितिहेतुत्वानुपपत्तिः । तावद्भावविशिष्टलिङ्गभावस्यानुगतत्वादिति भावः ।

इदं पुनरत्रावलोकनीयम् । वह्निविशिष्टपर्वतमहानसोभयानुमितिर्जायतामित्याकारकेच्छानामपि तत्साध्यविशिष्टतत्पक्षावगाहित्वप्रकारकतया पर्वते वह्नेः सिद्धिकाले महानसपक्षकानुमित्यादिसामग्र्यामसत्यां तादृशेच्छाबलात् पर्वते वह्न्यनुमित्यापत्तिः, अनुमित्यंशे तत्साध्यविशिष्टतत्पक्षविषयकत्वान्यांकिञ्चिद्विषयकत्वाप्रकारकत्वविशेषणस्य इच्छायां निवेशे वह्निविशिष्टं पर्वतं महानसं चानुमिनुयामित्यादिसमूहालम्बनेच्छाया असंग्रहप्रसङ्गः । वह्निविशिष्टपर्वतविषयिणी महानसाविषयकानुमितिभिन्नानुमितिर्जायतामित्याकारकेच्छाबलात् उपदर्शितस्थलेऽतिप्रसङ्गस्याशक्यवारणता चेतीच्छाविषयतावच्छेदकतायाः पर्याप्तिनिवेशनमावश्यकम् । तथा च वह्निविशिष्टपर्वतानुमितिर्भवत्वित्यादीच्छायास्तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वपर्याप्तविषयतावच्छेदकताकेच्छात्वेनैव उत्तेजकत्वं पर्यवसितम्, अनुमितित्वानन्तर्भावे तादृशेच्छायास्तत्साध्यविशिष्टतत्पक्षविषयकत्वपरिसमाप्तविषयतावच्छेदकत्वाभावेनाशक्यसङ्ग्रहत्वात् । एवञ्चानुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामनुमितिविषयकत्वरूपेण सङ्ग्रहाभिधानमसङ्गतम् ।

न च तत्कल्पं परित्यज्यैव यादृशयादृश इत्याद्यभिधानम्, इदानीमनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानां पृथक् पृथगना-

मितिर्जायतामितीच्छाया अपि निरुक्तरूपेणासङ्ग्रहः। न च सा असङ्ग्राह्यैव, असिद्धसाध्यान्तरानुमितिसामग्रयामसत्यां तद्बलादपि सिद्धस्य प्रकृतसाध्यस्यानुमितेः तदिच्छाविषयसिद्ध्यनुरोधेनावश्यकत्वादित्यत आह। यादृशयादृशेति। असत्यां सिद्धौ यत्किञ्चिद्गोचरं ज्ञानं जायतामित्याद्यीच्छासत्त्वेऽनुमित्युत्पादात् तासाञ्चानुत्तेजकत्वात् सिद्धौ सत्यामिति। तत्तदिच्छाभावसमुदायस्येति। साध्यविशेषविशिष्टपक्षविशेषाद्यवगाहित्वप्रकारकेच्छानां तत्तदवगाहित्वप्रकारकानुमितिगोचरेच्छात्वेनानुगमय्य एकैकाभावा निवेश्यन्ते, अतथाविधानाम् अनुमितिर्जायतां प्रत्यक्षान्यज्ञानं जायतामित्याकारकेच्छानान्तु यद्यद्व्यक्तिसत्त्वे सिद्धिदशायां अनुमितिस्तत्तद्व्यक्तित्वावच्छिन्नाभावा एव निवेशनीया अन्यथा अतिप्रसङ्गात् सिद्धौ तत्कालीनसिद्धिभेदा एव वा।

एतेन तत्कालीनसंयोगविभागादिव्यक्तिविशेषाभावनिवेशमादाय विनिगमनाविरहोऽपि निरस्तः। सामानाधिकरण्यसम्बन्धेन तदत्यन्ताभाववैशिष्ट्यनिवेशापेक्षया तत्तत्सिद्धिभेदानां विशेषणताविशेषसम्बन्धेन वैशिष्ट्यनिवेशे प्रतियोगितावच्छेदकसम्बन्धानिवेशे च लाघवम्। सिषाधयिषुत्तरं तथाविधेच्छोत्पत्तिकालेऽनुमित्यापत्तिस्तु इच्छासामग्रया अनुमितिविरोधित्वादेव न सम्भवतीति ध्येयम्।

इदमत्रावधेयम्। तादृशेच्छाभावसमुदायस्य न तत्समुदायत्वेन सिद्धौ विशेषणत्वं(१) किन्तु तत्तदभावत्वेनैव युगपत्तावदभावानां तथात्वं तावदभावमात्रविषयकधीविषयत्वरूपस्य तावदभावसमुदायत्वस्य तादृूप्येण निवेशे तावदभावानां तत्तदभावत्वेन नि-

(१) तादृशेच्छाभावसमुदायत्वस्य दुर्वचत्वात्, न च तावदभावमात्रविषयकधीविषयत्वं तत, तावत्त्वस्य दुर्वचत्वात्, तावदभावविषयकबुद्धेस्तत्तदभावविषयकत्वेन निवेशे तु तत्तदभावविशिष्टसिद्धेरेव निवेशयितुमुचितत्वात् तत्तदभावानां मिथो विशेष्यविशेषणभावानापन्नानां निवेशे च प्रत्येकाभाववैशिष्ट्यस्यातिप्रसक्तत्वेनावच्छेदकत्वायोगादिति चेदेकविशिष्टापराभावत्वेनाभावानां निवेशनीयत्वात्। इति क्वाचित्कः पाठः।

वेशनीयतया तत्तदभावत्वेन तत्तदभाववैशिष्ट्यनिवेशापेक्षया महागौरवात् । तादृश्या यत्किञ्चिद्व्यक्तित्वेन निवेशे तथाविधधीसहस्रस्य विनिगमनाविरहेण निवेशप्रसङ्गात् ।

यदि च मिथो विशेष्यविशेषणभावानापन्नेषु नानाविशेषणेषु व्यासज्यवृत्तिकमवच्छेदकत्वं सिद्धान्तविरुद्धमिति मन्यते तदा एकाभावविशेषितापराभावस्यावच्छेदकत्वमुपेयम् । तत्र च, विशेष्यविशेषणभावे विनिगमनाविरहेऽपि न क्षतिः गत्यन्तराभावात् । तत्तदभावमात्रविषयकधीविषयत्वेन निवेशेऽपि ज्ञाने तत्तदभावविषयितानां एकविशिष्टापरत्वेनैव निवेशनीयतया विशेष्यविशेषणभावे विनिगमनाविरहस्याऽऽवश्यकत्वादिति । इच्छाया अननुगमेऽपि । एकरूपेण सर्वासामिच्छानामुपादानासम्भवेऽपि । न क्षतिः । न सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यानुमितिहेतुत्वानुपपत्तिः । तावदभावविशिष्टसिद्ध्यभावस्यानुगतत्वादिति भावः ।

इदं पुनरत्रावलोकनीयम् । वह्निविशिष्टपर्वतमहानसोभयानुमितिर्जायतामित्याकारकेच्छानामपि तत्साध्यविशिष्टतत्पक्षावगाहित्वप्रकारकतया पर्वते वह्नेः सिद्धिकाले महानसपक्षकानुमित्यादिसामग्र्यामसत्यां तादृशेच्छाबलात् पर्वते वह्न्यनुमित्यापत्तिः, अनुमित्यशे तत्साध्यविशिष्टतत्पक्षविषयकत्वान्यार्किञ्चिद्विषयकत्वाप्रकारकत्वविशेषणस्य इच्छायां निवेशे वह्निविशिष्टं पर्वतं महानसञ्चानुमिनुयामित्यादिसमूहालम्बनेच्छाया असग्रहप्रसङ्गः । वह्निविशिष्टपर्वतविषयिणी 'महानसाविषयकानुमितिभिन्नानुमितिर्जायतामित्याकारकेच्छाबलात् उपदर्शितस्थलेऽतिप्रसङ्गस्याशक्यवारणतया चेतीच्छाविषयतावच्छेदकतायाः पर्याप्तिनिवेशनमावश्यकम् । तथा च वह्निविशिष्टपर्वतानुमितिर्भवत्वित्यादीच्छायास्तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वपर्याप्तविषयतावच्छेदकताकेच्छात्वेनैव उत्तेजकत्वं पर्यवसितम्, अनुमितित्वानन्तर्भावे तादृशेच्छायास्तत्साध्यविशिष्टतत्पक्षविषयकत्वपरिसमाप्तविषयतावच्छेदकत्वाभावेनाशक्यसङ्ग्रहत्वात् । एवञ्चानुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामनुमितिविषयकत्वरूपेण सङ्ग्रहाभिधानमसङ्गतम् ।

न च तत्कल्पं परित्यज्यैव यादृशयादृश इत्याद्यभिधानम्, इदानीमनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छाना पृथक् पृथगभा-

यनिवेशनमेवाभिप्रेतमिति वाच्यम् । पक्षान्तरसूचकवाक्याद्यभावात् ।

अथ अनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामनुगम एव सम्भवति, तथा हि तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वपर्याप्तावच्छेदकताकत्वं तादृशधर्मघटकपरिसमाप्तावच्छेदकताकस्य तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकत्वमेव पर्यवसितम्, एवञ्च तत्साध्यविशिष्टतत्पक्षविषयकप्रत्यक्षान्यज्ञानत्वादिनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयताकेच्छात्वादिना प्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानां पृथगुत्तेजकत्वापेक्षया निरुक्तधर्मघटकानुमितित्वनिष्ठावच्छेदकताभिन्नावच्छेदकतायामेव प्रत्यक्षान्यज्ञानत्वादिनिष्ठावच्छेदकताभिन्नत्वनिवेशनमुचितं लाघवात्, इत्थञ्च तादृशरूपेणैव प्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छानामपि सङ्ग्रहः सम्भवति ।

न च वह्निविशिष्टपर्वतविषयकं जायतामित्याकारकेच्छायाः सिद्ध्यधीनसंस्कारोत्पत्त्यैव चरितार्थतया वारणाय विषयतायामनुमितित्वावच्छिन्नत्वनिवेशनस्याऽऽवश्यकतया न तत्सङ्ग्रह इति वाच्यम् । समवायेन किञ्चिदवच्छिन्नत्वनिवेशेनैव तादृशेच्छावारणसम्भवादिति चेत् ? तर्हि पक्षांशे साध्यावगाहित्वेनानुमितिविषयकेच्छानामुक्तरूपसमशीलरूपान्तरेण उत्तेजकत्वापेक्षया तादृशावच्छेदकतायामेव पक्षांशे साध्यावगाहित्वीयावच्छेदकताभिन्नत्वमपि निवेश्यतां तावतैव तत्सङ्ग्रहस्यापि सम्भवात् इच्छाया अननुगमाभिधानासङ्गतिः ।

न च विषयतायां साध्यविशिष्टपक्षावगाहित्वाद्यवच्छिन्नत्वनिवेशनमावश्यकम्, अन्यथा अन्यानुमितिसामग्रीसमवहितानामनुमितिर्जायतामित्याकारकविषयविशेषानुपरकानुमितीच्छानां वारणासम्भवादिति, अन्यानुमितिसामग्र्यसमवहिततादृशेच्छानां तत्तद्व्यक्तित्वेनैवोत्तेजकत्वस्योपगन्तव्यतया उत्तेजकानामननुगमाभिधानसङ्गतिरिति वाच्यम् । तादृशेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकतयैवातिप्रसङ्गवारणसम्भवेन तासां वारणानौचित्यात् । साध्यविशिष्टपक्षावगाहित्वाद्यवच्छिन्नत्वमधिकमनुमितिनिष्ठविषयतायां निवेश्य

दर्शितसामग्र्यसमवहिततथाविधेच्छानां तत्तद्व्यक्तित्वेन उत्तेजकता-कल्पने तत्तादृच्छाभावानां विशेष्यविशेषणभावे विनिगमनाविरहेण गौरवप्रसङ्गात्। अन्यानुमितिसामग्रीकालीनतादृशेच्छानां प्रतिबन्धकत्वे तत्कालीनवायुसंयोगादिव्यक्तीनां विनिगमनाविरहेण प्रतिबन्धकताप्रसङ्गात्, तादृशसामग्र्यभावकालीनतथाविधेच्छानां उत्तेजकतामतेऽपि विनिगमनाविरहेऽपि तत्तदिच्छाकालीनसंयोगविशेषाणामुत्तेजकताप्रसङ्गस्य दुर्वारत्वात्। अथ वोक्तानुगतरूपेणोत्तेजकीभूतायामिच्छायामनुमितिर्जायतामित्याकारकान्यानुमितिसामग्रीसमवहितेच्छाव्यक्तीनां भेदा एव निवेशनीया न तु तासामनुमितिप्रतिबन्धकत्वमिति, तत्तदिच्छाभेदनिवेशस्थले तत्कालीनवायुसंयोगादिभेदनिवेशनेन नोपपत्तिः, इच्छायां तत्तद्भेदस्यान्यापर्वत्वकत्वात्तत्संयोगाभावानां वैशिष्ट्यनियमे च तादृशवैशिष्ट्यस्य सामानाधिकरण्यरूपतया साक्षात्सम्बन्धेन इच्छाभेदनिवेशलाघवस्यैव विनिगमकत्वात्।

अत्राहुः। उक्तसकलेच्छानां निरुक्तरूपेणानुगमेऽपि एतत्क्षणानन्तरक्षणेऽनुमितिर्भवत्वित्याकारकेच्छानामेव निरुक्तरूपेणासङ्ग्रहात्तत्तद्व्यक्तित्वेन पृथगभावा निवेशनीयाः तादृशक्षणवृत्तित्वाद्यवच्छेदकताभेदे उक्तावच्छेदकतायां निवेश्य सङ्ग्रहे कालान्तरेऽपि तथाविधेच्छासत्त्वात् अनुमित्यापत्तेः, कालान्तरे अनुमित्युत्पत्त्या च तादृशानुमित्सा विरहासिद्धिरिष्टापत्त्ययोगादित्यननुगमाभिधानसङ्गतिः।

न च कालान्तरीणतादृशेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकतया तादृशेच्छाबलादनुमित्यापत्तिवारणसम्भव इति वाच्यम्। उपदर्शितैकरूपधर्मप्रकारकानुमित्साव्यक्तीनां तत्तद्व्यक्तित्वेनोत्तेजकत्वापेक्षया तत्समानप्रकारककालान्तरीणबहुतरेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वे गौरवात्।

न चैवमपि प्राथमिकस्य साध्यविशिष्टपक्षविषयित्वप्रकारकान्यविशेषणस्याभिधानासङ्गतिर्दुर्वारैवेति वाच्यम्। अनुमितिनिष्ठविषयतायां साध्यविशिष्ट। प्रविषयकत्वाद्यन्यप्रकारकत्वानवच्छिन्नत्वनिवेश एव तत्तात्पर्यात्।

वस्तुतः साध्यविशिष्टपक्षविषयकत्वप्रकारकत्वनिवेशनमप्यावश्यकम्, अन्यथा किञ्चिज्ज्ञानं जायतां यत्किञ्चिद्गोचरं ज्ञानं जा

यतामितीच्छावारणासम्भवात् तत्सत्त्वे तादृशीनां सर्वासामिच्छानां तत्तद्व्यक्तित्वेनैव प्रतिबन्धकत्वे गौरवात् । अनुमितिर्जायतामित्यादीच्छानाञ्च पृथगनुमितित्वादिपर्याप्तविषयतावच्छेदकतावच्छात्वेनैवोत्तेजकता अन्यानुमितिसामग्रीसमवहिततादृशेच्छानाञ्च तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वमेवेति सर्वं समञ्जसम् ।

( दी० ) धूमेन अनुमिनुयामितीच्छायामालोकपरामर्शादसत्त्वपि सिद्धौ यदि नानुमितिस्तदा अन्यमात्रलिङ्गकानुमितीच्छा कामिनीजिज्ञासादिवत् पृथक् प्रतिबन्धिका । यदि च तत्र अनुमितिस्तदा सिद्धिसत्त्वे तत्र अनुमितेर्वारणाय तल्लिङ्गकानुमितीच्छा तदन्यमात्रलिङ्गकानुमितीच्छातिरिक्तानुमितीच्छा वा वाच्या ।

( गा० ) ननु धूमेन पर्वते वह्निमनुमिनुयामित्याकारकेच्छाबलाद् धूमादिलिङ्गकानुमित्युत्पत्त्या तत्साधारणरूपेणैव सिषाधयिषाणां सिद्ध्युत्तेजकताया आवश्यकत्वात् तत्सत्त्वे सिद्धिकालेऽसत्त्वपि धूमपरामर्शे आलोकादिपरामर्शादनुमित्यापत्तिः पक्षताया अक्षतत्वादित्यत आह । धूमेनेति । भिन्नलिङ्गकेच्छासत्त्वेऽपि सिद्धिदशायामेव यदि नानुमितिस्तदा तादृशेच्छायाः प्रतिबन्धकत्वं न सम्भवतीत्यतोऽसत्त्यामपि सिद्धाविति, तत्रानुमितेः सन्दिग्धतया यदीति । तदेति । तल्लिङ्गकानुमिताविति शेषः ।

अन्यमात्रेति । तदन्यमात्रलिङ्गकत्वप्रकारकसिद्धीत्यर्थः । धूमलिङ्गकानुमितिरालोकलिङ्गकानुमितिश्च जायतामित्याद्याकारकसमूहालम्बनेच्छाकाले आलोकादिपरामर्शादनुमित्युपपत्तये मात्रेति । तदन्यमात्रलिङ्गकत्वप्रकारकत्वञ्च तल्लिङ्गकत्वाप्रकारकत्वे सति किञ्चिल्लिङ्गकत्वप्रकारकत्वम् । अतः प्रमेयसामान्यलिङ्गकस्थले तदन्याप्रसिद्धावपि न दोषः । तल्लिङ्गकत्वाप्रकारकत्वञ्च तल्लिङ्गकत्वप्रकारतानिरूपिततत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नानुमितिनिष्ठविशेष्यताकान्यत्वम् । अत आलोकेनेन्धनं धूमेन तु वह्निमनुमिनुयामित्यादीच्छादशायामालोकादिलिङ्गकवह्न्याद्यनुमितेर्नापत्तिः । आ-

लोकलिङ्गकत्वप्रकारताशरीरे च वास्तवालोकादिप्रकारता न निवेशनीया किन्तु आलोकत्वाद्यवच्छिन्नप्रकारतैव, अन्यथा ह्यालोकत्वादिना धूमत्वादिना च धूमादिकमालोकादिकमवगाहमानयोरिच्छयोरालोकलिङ्गकानुमित्यादौ प्रतिबन्धकत्वतदभावयोरापत्तेः । द्रव्येणानुमिनुयामित्यादीच्छाया आलोकादिलिङ्गकानुमित्यविरोधित्वोपपत्तये चालोकत्वाद्यवच्छिन्नत्वस्थले आलोकाद्यवृत्तित्वेनाज्ञायमानधर्मावच्छिन्नत्वमेव निवेश्यं द्रव्यत्वादेरालोकत्वादिविरुद्धत्वभ्रमदशायां तादृशेच्छाया विरोधित्वोपपादनायालोकत्वादेरालोकादिवृत्तित्वज्ञानशून्यकालीनाया आलोकेनानुमिनुयामित्यादीच्छाया अविरोधित्वोपपत्तये च वास्तवालोकादिवृत्तित्वस्य तेन रूपेण ज्ञायमानत्वस्य चोपेक्षणम् । धूमत्वादेरालोकादिवृत्तित्वग्रहदशायां धूमेनानुमिनुयामित्यादीच्छाया आलोकादिलिङ्गकानुमित्यविरोधित्वमिष्टमेव । विरोधित्वञ्च तादृशेच्छाया धूमत्वादेरालोकत्वादिविरुद्धत्वग्रहदशायामेव ।

वस्तुतस्तु द्रव्यं नालोक इत्यादिज्ञानशून्यकालीनानां आलोको द्रव्यमित्यादिज्ञानकालीनानां वा इच्छानां तत्तद्व्यक्तित्वेन भेदकूट एव स्वातन्त्र्येण प्रतिबन्धकतावच्छेदकेऽनुप्रवेशनीयः तेन उक्तकल्पे कालान्तरीणपुरुषान्तरीयज्ञानवारणाय स्वसमानकालीनत्वस्वसमानाधिकरणत्वयोर्ज्ञानविशेषणतया धौव्ये स्वपदेन फलीभूतानुमित्युपादाने यादृशानुमितिदशायां क्वचिदपि धर्मे नालोकाद्यवृत्तित्वज्ञानं प्रसिद्ध्यति तत्र स्वसमानाधिकरणस्वसमानकालीनालोकत्वादिविरुद्धत्वज्ञानाविषयधर्मवल्लिङ्गकत्वप्रकारकानुमित्साभिन्नानुमित्साभावरूपकारणाप्रसिद्धिः स्वत्वाननुगमेन कार्यकारणभावस्य तत्तदनुमितिव्यक्तिविश्रामश्च । भेदप्रतियोग्यनुमित्सोपादाने चालोकेन द्रव्येण वाऽनुमिनुयामित्याद्याकारकयादृशेच्छासमानाधिकरणसमानकालीनतादृशज्ञानाप्रसिद्धिस्तादृशेच्छायास्तथाविधत्वभिन्नत्वेनालोकादिलिङ्गकानुमितिप्रतिबन्धकत्वापत्तिरिति परास्तम् ।

यद्वा आलोको द्रव्यमित्यादिज्ञानविशिष्टत्वेनालोको न द्रव्यमित्यादिज्ञानविरहविशिष्टत्वेनैव वा द्रव्यत्वादिमल्लिङ्गकत्वप्रकारकेच्छा अनुगमय्य तद्भेदा एव प्रतिबन्धकतावच्छेदककोटौ निवेशनीयाः । भेदस्य कालिकाव्याप्यवृत्तित्वोपगमात्तादृशज्ञानशून्यकाली-

नानां द्रव्येणानुमिनुयामित्यादीच्छानां विशिष्टभिन्नतया प्रतिबन्धकत्वोपपत्तिः । सामानाधिकरण्यसम्बन्धेन वैशिष्ट्यनिवेशे तु पुरुषान्तरीणज्ञानादिकमादाय दोषः । द्रव्यत्वावच्छिन्नेनानुमिनुयामित्याद्याकारिकाणां द्रव्यत्वांशे लिङ्गतावच्छेदकत्वावगाहिनीनामिच्छानान्तु न द्रव्यत्वादिमद्विषयकपरामर्शजन्यत्वरूपद्रव्यत्वादिमल्लिङ्गकत्वप्रकारकत्वं विषयितायामेव तत्र द्रव्यत्वावच्छिन्नत्वाभानात् लिङ्गांशे द्रव्यत्वाद्यनवगाहनादतस्तथाविधेच्छानामालोकत्वाद्यवच्छिन्नलिङ्गकानुमितिविरोधित्वमक्षतमेव । आलोकत्वावच्छिन्नेनानुमिनुयामित्यादीच्छानां तादृशानुमित्यविरोधित्वोपपत्तये चालोकलिङ्गकत्वाद्यप्रकारकत्ववदालोकत्वाद्यवच्छिन्नलिङ्गकत्वाद्यप्रकारकत्वमप्यालोकत्वाद्यवच्छिन्नलिङ्गकानुमितिप्रतिबन्धकतायां निवेशनीयम् । पर्यंते वह्निमनुमिनुयामित्याद्याकारकलिङ्गविशेषजन्यत्वानवगाहिनीनामिच्छानामविरोधित्वोपपत्तये किञ्चिल्लिङ्गकत्वनिवेशः । तदर्थञ्च किञ्चिल्लिङ्गकत्वप्रकारतानिरूपिततत्तत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नविशेष्यताकत्वम् । अतो धूमेन इन्धनमनुमिनुयाम् इत्याद्याकारकेच्छानां नालोकादिलिङ्गकवह्न्याद्यनुमितिविरोधित्वम् ।

इदमत्रावधेयम् । आलोकलिङ्गकधूमलिङ्गकानुमितिर्जायतामित्याद्याकारकेच्छाकाले केवलालोकलिङ्गकपरामर्शादनुमितिर्न जायते तथाविधानुमितेस्तादृशेच्छाया अविषयत्वात्, उभयादिलिङ्गकानुमितेरेव तद्विषयत्वात् । एवं धूमलिङ्गकवह्न्यनुमितिरालोकलिङ्गकवह्निघटोभयानुमितिश्च जायतामित्याद्याकारकेच्छाकाले घटाद्यनुमितिसामग्र्यामसत्यां आलोकपरामर्शाद्वह्न्यनुमितिर्न जायते घटाद्यविषयकानुमितेस्तस्या तादृशेच्छाविषयासिद्धेरतस्तथाविधेच्छानां तत्र तत्र प्रतिबन्धकतानिर्वाहाय तत्तल्लिङ्गकत्वतत्तत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वादिप्रकारताभिन्नप्रकारतानिरूपितविशेष्यताशून्यत्वमेव तल्लिङ्गकत्वाप्रकारकत्वेत्यनेन विवक्षणीयम् । उक्तस्थले चालोकलिङ्गकवह्न्यनुमितित्वादिप्रकारतानिरूपितविशेष्यता तादृशप्रकारतातिरिक्तधूमलिङ्गकत्वादिप्रकारतानिरूपितैव, समूहालम्बन एव प्रकारताभेदेन विशेष्यताभेदात् । अन्यथा समूहालम्बनेच्छातस्तादृशेच्छावैलक्षण्यानुपपत्तेः, तथा च तादृशेच्छानां तथाविधप्रकारतान्यानिरूपितविशेष्यताशून्यत्वेन प्रतिबन्धकत्वनिर्वा-

हः, आलोकेनानुमितिर्जायतां धूमेन च पर्वते वह्निमनुमिनुयामित्याकारकसमूहालम्बनेच्छानां तादृशविशेष्यताशून्यत्वविरहेऽपि आलोकलिङ्गकान्यानुमितिसामग्रीकालीनतथाविधेच्छानां तत्तद्व्यक्तित्वेन पृथक् प्रतिबन्धकत्वोपगमेन न तदानीमालोकलिङ्गकानुमित्यापत्तिः। पर्वते वह्निमनुमिनुयां धूमेन च वह्निमनुमिनुयामित्याद्याकारकसमूहालम्बनेच्छायाः प्रामाणिकत्वे तत्रालोकपरामर्शादनुमितिर्भवत्येव एवञ्च लिङ्गविशेषजन्यत्वाद्यविषयकेच्छाया विशेषणदलेनैव प्रतिबन्धकत्ववारणे धूमेन घटमनुमिनुयामित्यादीच्छावारणमेव विशेष्यदलप्रयोजनम्, तदर्थञ्च न किञ्चिल्लिङ्गकत्वप्रकारतानिरूपिततत्साध्यविशिष्टतत्पक्षविषयकत्वावच्छिन्नविशेष्यताकत्वं तथा सति धूमेनानुमिनुयामित्याद्याकारकविषयविशेषानुमितीच्छानामसंग्रहापत्तेः, किन्तु किञ्चिल्लिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकत्वानुमितित्वादिप्रकारताभिन्नप्रकारत्वानिरूपितविशेष्यताकत्वमेव विशेष्यदलेन विवक्षणीयम्। धूमेन घटमनुमिनुयामितीच्छावत् धूमेन वह्निघटोभयमनुमिनुयामित्यादीच्छाया अपि आलोकलिङ्गकवह्न्याद्यनुमित्यविरोधित्वमिष्टमेव, सिद्धौ तादृशेच्छाया अनुत्तेजकतया सिद्धिकाले तादृशेच्छाबलादसत्यामालोकलिङ्गकानुमितीच्छायां ■ तादृशानुमितिरिति दिक्।

एकलिङ्गकेच्छाकालीनोभयलिङ्गकपरामर्शजन्यानुमितौ व्यभिचारवारणप्रकारः पुनरग्रे प्रदर्शयिष्यते।

ननु स्वविषयसजातीयज्ञाने इच्छाया विरोधित्वमदृष्टचरमित्यत आह। कामिनीजिज्ञासादिवदिति। यथा कामिनीदिदृक्षा घटादिविषयकचाक्षुषादिप्रतिबन्धिका तथेत्यर्थः। पृथक् प्रतिबन्धिकेति। पक्षतासमवधानदशायामनुमित्यनुत्पादप्रयोजिकेत्यर्थः, तथा चोक्तस्थले पक्षतासत्त्वे क्षतिविरहात्तदिष्टमेवेति भावः।

ननु कामिनीजिज्ञासास्थले कामिनीभिन्नविषयकज्ञानानुत्पादस्य सर्वानुभवसिद्धतया तत्र तस्याः प्रतिबन्धकत्वमस्तु, सिद्धसत्त्वे धूमादिलिङ्गकानुमित्सादशायां आलोकलिङ्गकवह्न्यनुमित्यनुत्पादस्तु नानुभविकः। तथा सति तुल्ययुक्त्या घटाद्यनुमित्साप्रत्यक्षादिगोचरेच्छादशायामपि तदनुत्पादस्य तथात्वप्रसक्तेः। न होकमपि विशेषमीक्षामहे इत्यभिसन्धाय उक्तापत्तिवारककल्पान्तरमनुसर-

नि । यदि चेति । तथा चान्यलिङ्गकानुमित्सया: प्रतिबन्धकत्वमसम्भावितमेवेति भाव: । तत्रेति । अन्यलिङ्गकानुमित्सास्थले इत्यर्थः । तल्लिङ्गकानुमितीच्छा । तल्लिङ्गकत्वप्रकारतानिरूपिततत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वाद्यवच्छिन्नविशेष्यताकेच्छा सिषाधयिषापदेन विवक्षणीयेत्यर्थः ।

नन्वेवं लिङ्गविशेषानुपरक्तानुमित्साकाले सिद्धौ सत्यामनुमित्यनुपपत्तिरत आह । तदन्यमात्रलिङ्गकेति । धूमेनालोकेन चानुमिनुयामित्यादिसमूहालम्बनेच्छाकाले आलोकादिलिङ्गकानुमित्युपपत्तये मात्रेति । तथा च तल्लिङ्गकतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वाप्रकारिका सती या किञ्चिल्लिङ्गकतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वप्रकारिकेच्छा तदन्यतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वादिप्रकारिकेत्यर्थः ।

लिङ्गविशेषोपरक्तानुमितीच्छासंग्रहाय सत्यन्तम् । आलोकेनेन्धनमनुमिनुयां धूमेन च वह्निमनुमिनुयामित्याद्याकारकेच्छाबलादालोकलिङ्गकवह्न्याद्यनुमित्यापत्तिवारणाय तत्र साध्यादिनिवेशः । लिङ्गविशेषानुपरक्तानुमितीच्छाकाले पर्वते वह्निमनुमिनुयां धूमेनेन्धनमनुमिनुयामित्याद्याकारकसमूहालम्बनेच्छाकाले चालोकालिङ्गकानुमित्युपपत्तये तद्विशेष्यदलम् । यत्किञ्चिल्लिङ्गकं ज्ञानं जायतामित्याद्यच्छावारणाय चरमदलम् ।

यद्यपि आलोकधूमोभयलिङ्गकवह्निविशिष्टपर्वतविषयकानुमितिर्जायतामालोकेन वह्निघटोभयविशिष्टपक्षविषयकानुमितिर्धूमेन वह्निविशिष्टपर्वतमहानसोभयविषयकानुमितिश्च जायतामित्यादीच्छावारणाय तल्लिङ्गकत्वतत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वादिप्रकारतानिरूपकत्वानिरूपितविशेष्यताकान्यत्वमेव सत्यन्तदलेन विवक्षणीयम् । तथा च लिङ्गविशेषानुपरक्तानुमितीच्छानां तादृशविशेष्यताकान्यत्वविरहात्किञ्चिल्लिङ्गकत्वादिप्रकारतानिवेशनमफलमेवेति तथाविधविशेष्यताशालित्वेनैवेच्छाया उत्तेजकत्वमुचितं, तथापि तादृशविशेष्यताशालीच्छायामेव तदन्यमात्रेत्यादिग्रन्थतात्पर्यमिति । शेषं पूर्वोक्तदिशाऽवसेयम् ।

( दी० ) लिङ्गविशेषेणापि च नियन्त्रितं पक्षत्वम् । तल्लि-

ङ्गकानुमितीच्छाविरहविशिष्टान्यलिङ्गकानुमितीच्छा एव वा प्रतिबन्धिका ।

( गा० ) नन्वेवं धूमालोकादिलिङ्गकानुमितिसाधारणैकपक्षत्वासम्भव इत्यत इष्टापत्तमाह । लिङ्गविशेषेणापीति । लिङ्गभेदेनापि पक्षत्वं भिन्नमेवेत्यर्थः । अपिः साध्यादिभेदसमुच्चायकः । तत्प्रदर्शनञ्च दृष्टान्तार्थम् । तथा च साध्यादिभेदेनेव लिङ्गभेदेनापि पक्षताभेदो न क्षतिकर इति भावः ।

नन्वेवं लिङ्गभेदेन पक्षताया अननुगमात् तस्या व्यभिचारेणानुमितिरूपानुगतकार्ये हेतुत्वासम्भवः । न च तत्तत्साध्यकत्वादिवत्तत्तल्लिङ्गकत्वस्यापि कार्यतावच्छेदके निवेशान्न व्यभिचार इति वाच्यम् । तावताप्यालोकादिलिङ्गकानुमितीच्छाधीनधूमालोकोभयाविषयकसमूहालम्बनपरामर्शजन्यानुमितौ धूमादिलिङ्गकानुमितीच्छाविरहविशिष्टसिद्ध्यभावव्यभिचारस्य दुर्वारत्वात्ताद्दशानुमितावपि धूमादिलिङ्गकपरामर्शजन्यत्वरूपधूमलिङ्गकत्वस्याक्षतत्वात् ।

न च यत्र धूमलिङ्गकानुमितीच्छाया उत्तेजकता तत्रालोकलिङ्गकानुमितीच्छानामपि तत्तल्लिङ्गकपरामर्शविशिष्टानामुत्तेजकत्वोपगमान्नोक्तस्थले व्यभिचार इति वाच्यम् । तथा सति तत्र धूमलिङ्गकेच्छाया अपि धूमलिङ्गकपरामर्शविशिष्टाया एवोत्तेजकत्वौचित्यात्, सर्वसाधारणैकपक्षताया एव सुवचतया लिङ्गविशेषेणापीति ग्रन्थासङ्गतिरिति चेन्न । धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टान्यानुमितित्वमेव ताद्दशसिद्ध्यभावजन्यतावच्छेदकम् । ताद्दशसिद्धिविशिष्टत्वञ्च,स्वसामानाधिकरण्यावच्छिन्नस्वाव्यवहितोत्तरोत्पत्तिकत्वसम्बन्धेन, उक्तसमूहालम्बनस्थलीयानुमितिस्तथाविधसिद्धिविशिष्टैवेति तत्र न व्यभिचारः । सिद्धिकालेऽलत्यां तल्लिङ्गकसिषाधयिषायामुक्तस्थल इव न धूमपरामर्शादनुमित्यापत्तिः, धूमादिलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावादिघटितस्यैव धूमादिपरामर्शघटितकारणस्तोमस्य कार्योत्पत्तिप्रयोजकत्वोपगमात् । समूहालम्बनस्थले आलोकपरामर्शादिघटितसामग्रीत एव कार्योत्पत्तिनिर्वाहात् ।

अथात्राव्यवहितोत्तरत्वमपदस्यं तृतीयक्षणसाधारणं, स्वध्वंसा-

धिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वरूपं वाच्यम् । अन्यथा यत्र क्रमेण सिद्ध्यात्मकधूमालोकाभयलिङ्गकपरामर्शालोकलिङ्गकेच्छानुमितयस्तत्रानुमित्युत्पत्त्यधिकरणक्षणस्य धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वेन तदुत्पत्तिकानुमितित्वकसम्बन्धेन तादृशसिद्धिविशिष्टान्यत्वात् तादृशसिद्ध्यभावस्य व्यभिचारतादवस्थ्यात् । एवञ्च यत्र क्रमेण सिद्ध्यात्मकधूमपरामर्शधूमलिङ्गकेच्छानुमितयस्तत्रत्यानुमितेर्धूमलिङ्गकेच्छाविरहविशिष्टसिद्धिविशिष्टत्वेन पक्षताकार्यत्वानुपपत्तिरिति चेन्न । तादृशसिद्धिविशिष्टत्वं स्वाधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वसम्बन्धेन वाच्यम् । उक्तसमूहालम्बनस्थले अनुमित्यव्यवहितपूर्वक्षणस्यापि धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणत्वात्तादृशक्षणध्वंसोत्पत्त्यधिकरणोत्पत्तिकत्वमनुमितेरिति न व्यभिचारः । एवं सिद्ध्यात्मकधूममात्रपरामर्शजन्यानुमितेर्धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणप्रथमक्षणध्वंसोत्पत्त्यधिकरणक्षणोत्पत्तिकत्वाभावात् पक्षताकार्यत्वनिर्वाहः ।

अथ वा स्वाव्यवहितपूर्वकालावच्छिन्नतल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावाधिकरणताविशिष्टसमवाय एव तादृशसिद्ध्यभावकार्यतावच्छेदकसम्बन्ध इति न कोऽपि दोषः ।

अथ वा स्ववृत्तिवृत्तिमत्त्वस्ववृत्तिप्रागभावप्रतियोगित्वस्वसामानाधिकरण्यैतत्त्रितयसम्बन्धेन तादृशसिद्धिविशिष्टान्यत्वं तादृशसिद्ध्यभावजन्यतावच्छेदकमिति न कोऽपि दोषः ।

अथ वा तादृशसिद्धिविशिष्टत्वं तादृशस्वाधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरणध्वंसानधिकरणं यस्तादृशस्वाधिकरणक्षणध्वंसाधिकरणक्षणस्तदुत्पत्तिकत्वसम्बन्धेन वाच्यम् । उक्तसमूहालम्बनस्थले च तादृशसिद्ध्यधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरणमनुमित्युत्पत्तिक्षण एवेति तद्ध्वंसानधिकरणक्षणोत्पत्तिकत्वमनुमितेरिति न व्यभिचारः । सिद्ध्यात्मकधूममात्रपरामर्शजन्यानुमितेर्धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यधिकरणक्षणत्वावच्छिन्नध्वंसाधिकरणद्वितीयक्षणध्वंसानधिकरणक्षणोत्पत्तिकत्वविरहात्, विशिष्टसिद्धिविशिष्टान्यत्वमव्याहतमिति । एवं यत्र धूमपरामर्शस्तदुत्तरं त-

द्प्रामाण्यग्रहादौ आलोकपरामर्शस्तदुत्तरमनुमितिस्तत्रानुमितेरप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शविशिष्टत्वरूपाप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शजन्यतावच्छेदकाक्रान्तत्वात्, अव्यवहितपूर्वक्षणे चाप्रामाण्यज्ञानाभावविशिष्टधूमपरामर्शासत्त्वेन प्रसक्तस्य व्यभिचारस्य एतादृशैर्बहुभिः प्रकारैरेव वारणमवसेयम् । लिङ्गोपधानमते च न काचिदनुपपत्तिः । तन्मते धूमविशिष्टपर्वतत्वाद्यवच्छिन्नविशेष्यताकवह्न्यनुमितिं प्रत्येव धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावादिजन्यतावच्छेदकत्वादुक्तसमूहालम्बनस्थले चालोकवान् पर्वतो वह्निमानित्याद्याकारकानुमितेरेवोपगमेन व्यभिचारानवकाशादिति । धूमेनानुमिनुयामालोकेनानुमिनुयामित्यादिसकलेच्छासाधारणरूपेणैव सिषाधयिषाणां सिद्धयुत्तेजकत्वम् । तथा च धूमालोकादिलिङ्गकनिखिलानुमितिसाधारणी एकैव पक्षता । उक्तस्थलेऽतिप्रसङ्गभङ्गाय च प्रतिबन्धकान्तरमेव कल्प्यत इत्याशयेनाह । तल्लिङ्गकेति । असत्यां सिद्धावन्यलिङ्गकानुमितीच्छासत्त्वेऽनुमित्युपपत्तये, सिद्धिकालीनेति । सामानाधिकरण्यसम्बन्धेन सिद्धिविशिष्टेत्यर्थः । समूहालम्बनेच्छाकाले सिद्धिसत्त्वेऽनुमत्युपपत्तये तल्लिङ्गकानुमितीच्छाविरहविशिष्टेति । धूमलिङ्गकत्वादिप्रकारतान्यप्रकारत्वानिरूपितविशेष्यताकेच्छाविरहविशिष्टत्यर्थकम् । तेन न धूमालोकोभयलिङ्गकवह्न्यनुमितिर्जायतामित्याकारकेच्छाबलात् सिद्धिकाले केवलालोकलिङ्गकानुमितिप्रसङ्गः । न चाऽऽलोकेन वह्निघटोभयानुमितिर्धूमेन वह्न्यनुमितिर्जायतामित्येतादृशेच्छाकाले सिद्धिसत्त्वे केवलालोकादिपरामर्शात् केवलवह्न्याद्यनुमित्यापत्तिः ।

यद्यपि तादृशप्रकारत्वानिरूपितविशेष्यताकान्यत्वस्य इच्छाविशेषणत्वोपगम एव समूहालम्बनेच्छास्थलेऽनुमितिरुपपादयितुं शक्यते, तथापि ज्ञानेच्छयोर्युगपदुत्पादमङ्गीकुर्वतां नवीनानां मते यत्र सिद्ध्युत्पत्तिकाले धूमादिलिङ्गकानुमितीच्छा तस्तद्वितीयक्षणे चालोकलिङ्गकानुमितीच्छाया उत्पादस्तत्रालोकलिङ्गकानुमित्युपपत्तये तादृशविशेष्यताशालीच्छाविरहवैशिष्ट्यपर्यन्तानुसरणम् । लिङ्गविशेषानुपरकानुमितीच्छानामपि निरुक्तोत्तेजकतावच्छेदकाक्रान्ततया तादृशेच्छायाः प्रतिबन्धकत्वाप्रसक्तेरन्यलिङ्गकेति सम्पातायातम् । सिद्धिविशिष्टेच्छामात्रस्य प्रतिबन्धकत्वे सि-

द्धिविशिष्टघटतदनुमित्यादिगोचरेच्छाकालीनाननुगतेच्छाव्यक्तीनां तत्तद्व्यक्तित्वेनाभावानां निवेशनीयतया महागौरवमिति तत्साध्य-विशिष्टतत्पक्षविषयकत्वप्रकारकानुमितीच्छात्वेनैव विशेष्यीभूते-च्छानिवेशो बोध्यः।

वस्तुतस्तु तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारकत्वमप्यन्य-लिङ्गकानुमित्सायां न निवेश्यं घटादीच्छाकालीनाननुगतेच्छानां भवन्मतेऽपि सिद्धावुत्तेजकताया वक्तव्यतया तन्मते तत्र घटादीच्छा-साधारणरूपेणैवानुमित्साया उत्तेजकत्वोपगमादुक्तस्थले पक्षता-निर्वाहेण तादृशाननुगतेच्छानामन्यलिङ्गकेच्छायामेवोत्तेजकत्वात्।

अत्र चैतादृशगुरुधर्मावच्छिन्नाभावस्य लिङ्गभेदेनानन्तकार-णतानां पक्षताकारणतान्तरस्य च कल्पनामपेक्ष्य लिङ्गभेदेन तत्त-ल्लिङ्गकानुमितीच्छाविरहविशिष्टसिद्धित्वरूपलघुधर्मावच्छिन्नाभा-वहेतुताकल्पनस्यैव साधुत्वेन पूर्वमतस्यैव सम्यक्तया चाकारो-ऽनिर्भरसूचनायेति वदन्ति।

परे तु अन्यलिङ्गकत्वप्रकारकानुगतानुमित्सासमवहित-सिद्धिदशायामननुगतानुमित्साबलात्तल्लिङ्गकानुमित्युपपत्तये सिद्धौ तादृशेच्छाभावकूटवैशिष्ट्यनिवेशेन पूर्वमते गौरवमेतन्मते चान्य-लिङ्गकानुगतानुमित्सारूपोत्तेजकबलादेव तत्रानुमित्युपपत्तेः सिद्धौ तासामभावानिवेशात्।

न चैतन्मतेऽप्यन्यलिङ्गकानुमित्साप्रतिबन्धकतायामेव तासामु-त्तेजकत्वस्यावश्यकतया साम्यमिति वाच्यम्। यतो यथाननुग-तसाध्यानुमित्सात्मकसमूहालम्बनरूपा एवान्यलिङ्गकानुमितीच्छा-स्तत्रान्यलिङ्गकानुमितीच्छायां तादृशेच्छाव्यक्तिभेदा एव निवेश-नीयाः। सिद्धौ तु सामानाधिकरण्यसम्बन्धेन तत्तदत्यन्ताभावास्तत्र च तत्कालीनसंयोगाद्यभावानां निवेशमादाय विनिगमनाविर-हेण गौरवम्। न च पूर्वमतेऽपि तत्तत्सिद्धिव्यक्तिभेदा एव सिद्धौ नि-वेशनीया न तु तत्तदिच्छाभावा इति न विनिगमनाविरहावकाश इति वाच्यम्। सिद्धेरनन्तरं यत्र तादृशसमूहालम्बनेच्छाव्यक्तीना-मुत्पत्तिस्तत्र तादृशसिद्धिभेदानां सिद्धौ निवेशे, इच्छोत्पत्तिकाले-ऽनुमित्यापत्तेः। ज्ञानेच्छयोर्युगपदुत्पादमते इच्छासामग्र्या ज्ञाना-विरोधित्वात्। यादृशस्थले च सिद्धिजननकाले प्रतिबन्धकोत्तेज-

केच्छाया एकस्या अपरस्याः केच्छाया नत्पूर्वमुत्पत्तिः तत्र द्वितीयक्षणेऽनुमित्युपपत्तये एतन्मतेऽपि तत्तत्सिद्धिभेदा अन्यलिङ्गकेच्छाविशेषणीभूतसिद्ध्यंशे निवेश्या न त्वन्यलिङ्गकेच्छायां तद्विशेषणीभूतसिद्धौ वा तदिच्छात्यन्ताभावा अतो न तत्कालीनसंयोगादिव्यक्त्यभावनिवेशमादाय विनिगमनाविरहप्रसङ्ग इत्याहुः ।

( दी० ) साधकमानं, साध्यवत्त्वनिश्चयः । पाषाणमयत्वादिना पर्वते तेजस्त्वादिना च वह्नेः सिद्धावपि पर्वतत्वेन तत्र वह्नित्वेन च तस्य अनुमितेर्धर्मित्वसाध्यत्वयोरवच्छेदकावनुप्रवेशनीयौ ।

( गा० ) साधकमानपदस्य सिद्धिकारणपरत्वे पूर्वोक्तदोषप्रसङ्गात् तद्व्याचष्टे । साधकेति । साध्यवत्त्वनिश्चयः । प्रकृतसाध्यपक्षविशिष्टवह्निनिश्चयः । पाषाणमयो वह्निमान् पर्वतस्तेजस्वीत्याद्याकारकासमानप्रकारकनिश्चयदशायां पर्वतो वह्निमानित्याद्याकारकानुमितेरानुभविकतया यथाश्रुते तदनुपपत्तेः प्रकारविशेषं निवेशयति । पाषाणमयत्वादिनेति । तत्र । पर्वते । तस्य । वह्नेः । धर्मित्वसाध्यत्वयोः । उद्देश्यत्वविधेयत्वयोः । अनुप्रवेशनीयावित्यस्य पक्षताशरीर इत्यादिः । तथा च पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगादिसंसर्गावच्छिन्नवह्नित्वावच्छिन्नविधेयताकानुमितिं प्रति तद्रूपावच्छिन्नविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नस्य सिषाधयिषाविरहविशिष्टस्याभावो हेतुरिति पर्यवसितम् ।

पर्वतो वह्निमानित्यादिसिद्धिदशायां वह्निमान् पर्वतो घटवानित्याद्यनुमित्युदयात् तत्प्रतिबध्यतावच्छेदककोटौ प्रकारतामुपेक्ष्य विधेयतानिवेशनम् । विधेयता च वह्निमनुमिनोमीत्यनुव्यवसायनियामकः पक्षतावच्छेदकव्यावृत्तो विषयताविशेषः । स्वरूपतः पर्वतत्ववह्नित्वादिप्रकारकसिद्धिदशायां जातिमान् वह्निमान् पर्वतो जातिमत्त्वानित्याद्यनुमित्युत्पत्तेः शुद्धपर्वतत्ववह्नित्वादिप्रकारकासिद्धिदशायां अधिकविषयिण्याः सुन्दरः पर्वतः सुन्दरवह्निमानित्याद्यनुमितेरुत्पत्त्या च प्रतिबध्यतायां पर्वतत्वाद्यवच्छिन्नेत्यादिना

किञ्चिद्विशेषितपर्वतत्वाद्यवच्छिन्नविषयतावच्छेदकताकत्वमेव विवक्षणीयम् । तदर्थश्च पर्वतत्वादिनिष्ठानिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वम् । पर्वतो वह्निमानित्याद्यनुमितौ जातिमान् पर्वतो जातिमत्त्वानित्यादिसिद्धेरप्रतिबन्धकतया प्रतिबन्धकादिद्यपि पर्वतत्वावच्छिन्नेत्यादिना किञ्चिद्विशेषिततदवच्छिन्नत्वमेव विवक्षणीयम् । तदर्थश्च निरवच्छिन्नतद्वृत्त्यवच्छेदकताकत्वमिति ध्येयम् ।

(दी०) यदि च पर्वतत्वसामानाधिकरण्येनैकत्र साध्यसिद्धावपि विनाप्यनुमित्सामन्यत्र तादृशानुमितिरानुभविकी तदा धर्मिविशेषोऽपि निवेश्यो नान्यथा ।

(गा०) ननु पर्वतत्वाद्यवच्छिन्नविशेष्यताकानुमितौ पर्वतत्वावच्छिन्नविशेष्यताकसिद्धेः प्रतिबन्धकत्वे पर्वतत्वेनैकपर्वतविशेष्यकसिद्धिदशायां तेन रूपेणान्यपर्वतेऽपि साध्यानुमित्यनुदयापत्तिरत आह । यदि चेति । पर्वतत्वांशेऽवच्छेदकत्वावगाहिन्याः किञ्चिद्व्यक्तिविशेष्यकसिद्धिदशायां तेन रूपेण धर्म्यन्तरेऽनुमित्यनुत्पादस्य निर्विवादतया सामानाधिकरण्येनेति । एकत्र । एकधर्मिणि, अनुमित्सासत्त्वे विशेषणाभावादेव विशिष्टाभावनिर्वाहात् धर्मिविशेषनिवेशनमफलं अतो विनाप्यनुमित्सामिति । अन्यत्र । अन्यधर्मिणि, धर्मिविशेषानन्तर्भावेऽपि वक्ष्यमाणरीत्या सामानाधिकरण्येन सिद्धिदशायां अवच्छेदकावच्छेदेनानुमितौ बाधकाभावात् तादृशेति । सामानाधिकरण्यमात्रावगाहीत्यर्थः । धर्मिविशेषोऽपीति । तथा च पर्वतत्वाद्यवच्छिन्नतत्पर्वतादिनिष्ठोद्देश्यताकानुमितौ पर्वतत्वाद्यवच्छिन्नतत्पर्वतादिविशेष्यकसाध्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वं कल्प्यमिति भावः । अन्यथा । तदानीं तादृशानुमितेरानुभविकत्वविरहे । न धर्मिविशेषो निवेश्य इत्यनुषज्यते । अनुमितिर्द्विविधा पक्षतावच्छेदकसाध्ययोः सामानाधिकरण्यमात्रावगाहिनी, तयोरवच्छेद्यावच्छेदकभावावगाहिनी च, अवच्छेद्यावच्छेदकभावोऽपि कश्चित् स्वरूपसम्बन्धविशेषः, यथा मूलावच्छिन्नो वृक्षः संयोगीत्यादौ मूलादिसंयोगयोः । अत्र अन्यादृशस्य तस्य दुर्वचत्वात् ।

(१)क्वचिच्च व्याप्यव्यापकभावः यथा पृथिवी रूपवतीत्यादौ पृथिवीत्वरूपाद्योः । तत्र साध्यांशे पक्षविशेषणतापन्नस्य पक्षतावच्छेदकस्यावच्छेद्यतासम्बन्धेन प्रकारत्वं पक्षतावच्छेदकावच्छिन्नत्वेन तद्विशिष्टसाध्येन वा विशेषितस्य संयोगादेः पक्षांशे साध्यसंसर्गत्वमित्यन्यदेतत् । तादृशी चानुमितिः पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिसिद्धिदशायां जायते, न्यूनविषयकसिद्धिदशायां अनुमितेः सर्वानुभवसिद्धत्वात् । अत एव यत्रावच्छेदकावच्छेदेनानुमितिरुद्देश्या तत्र नांशतः सिद्धसाधन दोष इत्यतस्तदेवोपपादयति ।

( दी० ) पक्षतावच्छेदकस्य सामानाधिकरण्येनैकत्र साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति तदवच्छेदेन सिद्धेस्तत्सामानाधिकरण्यमात्रेणानुमितिं प्रति तु सिद्धिमात्रस्य विरोधित्वम् ।

( गा० ) पक्षतावच्छेदकस्येति । सामानाधिकरण्येन । सामानाधिकरण्यमात्रेण । तदवच्छेदेन । पक्षतावच्छेदकावच्छेदेन । सिद्धेः । सिद्धेरेव । सामानाधिकरण्यमात्रावगाहिसिद्धेः प्रतिबन्धकत्वमेवकार्यव्यवच्छेद्यम् ।

अयम्भावः । पर्वतो वह्निमानित्यादिसिद्धिदशायां पर्वतः सुन्दरवह्निमानित्याकारकानुमित्युत्पत्त्या विधेयतावच्छेदकतायाः पर्याप्तिः प्रतिबध्यतावच्छेदककोटौ निवेशनीया । एवं संयोगादिना साध्यस्य दण्डोपलक्षितपुरुषादेः सिद्धावपि विशिष्टनिरूपितसंयोगादिना दण्डिपुरुषाद्यनुमित्युत्पत्त्या संसर्गतावच्छेदकताया अपि पर्याप्तिर्निवेशनीया । एवञ्चावच्छेदकावच्छेदेनानुमितौ शुद्धवह्नित्वादौ शुद्धसंयोगत्वादौ वा विधेयतावच्छेदकतायाः संसर्गतावच्छेदकताया वा अपर्याप्ततया तादृशानुमितेर्न सामानाधिकरण्यमात्रावगाहिसिद्धिप्रतिबध्यत्वमिति ।

प्राञ्चस्तु व्यापकतायाः संसर्गतया भाने मानाभावात् पक्षता-

---

( १ ) तदवगाहिन्यामेव चानुमितौ पक्षतावच्छेदकदेशकालावच्छेदेन बाधग्रहस्य विरोधितया बाधस्यासिद्धिव्यभिचारासङ्करं मणिकृद्वक्ष्यमाणत्वयापयिष्यति इति क्वचित्कोऽयं पाठः ।

वच्छेदकाक्रान्तयावद्व्यक्तिविषयकानुमितिरेव पक्षतावच्छेदकावच्छेदेनानुमितिरिति । (१)तत्र सामानाधिकरण्यमात्रावगाहिन्याः सिद्धेरविरोधितया पक्षतावच्छेदकव्यापकोद्देश्यताकान्यत्वमेव सिद्धिसामान्यप्रतिबध्यतावच्छेदककोटौ निवेशनीयम् ।

न च विषयभेदेन विषयताभेदात्पक्षतावच्छेदकावच्छेदेनानुमितेर्विषयतानामपि नानाव्यक्तिपक्षकस्थले प्रत्येकं पक्षतावच्छेदकाव्यापकत्वमेवेति तत्र पक्षतावच्छेदकव्यापकोद्देश्यताया अप्रसिद्धिरिति वाच्यम् । उद्देश्यतासम्बन्धेन पक्षतावच्छेदकव्यापकान्यत्वस्यैवानुमितिविशेषणत्वोपगमेन निर्वाहादिति वदन्ति ।

दीधितिकारस्य तु अवच्छेदकावच्छेदेनानुमितौ अवच्छेद्यावच्छेदकभावस्य स्वरूपसम्बन्धात्मकस्यैव व्याप्यव्यापकभावरूपस्यापि तस्य भानमनुमतम्भागासिद्धेर्दोषत्वनिर्वाहार्थं पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकावच्छेदेन हेतुमत्ताज्ञानकारणताया आवश्यकत्वात् । शिखरविशिष्टः पर्वतो वह्निमान् धूमादित्यादौ शिखरे हेतोस्तत्सम्बन्धस्य चावच्छेदकताविरहेण दूषणासिद्धेरावश्यकतेत्याशङ्क्य पक्षतावच्छेदके अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाहिन्यामनुमितौ तदवच्छेदेन हेतुमत्ताज्ञानस्य हेतुताया भागासिद्धेर्दोषत्वार्थमुपगमेऽपि स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिन्यामनुमितौ पक्षतावच्छेदकावच्छेदेन हेतुमत्ताज्ञानापेक्षा नोपेयत इति समाधानस्य स्वयं अवच्छेदकत्वयोर्वस्तुनो भेदादित्यनेनाग्रे वक्ष्यमाणत्वात् । एवं व्यापकत्वभानस्य तदननुमतत्वे पर्वतत्वसामानाधिकरण्येनैकत्रान्यत्र एकत्र साध्यसिद्धावित्यनेनैवावच्छेदकावच्छेदेन या सिद्धिस्तदभावलाभे तल्लाभप्रयोजनकस्य सामानाधिकरण्येनेत्युपादानस्यासार्थक्याच्च ।

युज्यते चैतदेव मतम् । प्राचीनमतेऽपि उक्तयुक्त्या विधेयतावच्छेदकत्वादिपर्याप्तिनिवेशस्याऽऽवश्यकत्वात्, तादृशोद्देश्यताकान्यत्वस्याधिकस्य निवेशनीयतया गौरवात् । एवं सिद्धिसामान्यशून्यतादशायामवच्छेदकावच्छेदेनानुमितावुत्पद्यमानायां सिद्धभा-

(१) तन्मते मणिकारोक्तन्यायेनांशतः सिद्धसाधनस्यानुगतरूपावच्छिन्ननानाव्यक्तिपक्षकानुमितावदोषत्वे, इति तु पाठान्तरम् ।

वबलात् तत्तत्कार्यतावच्छेदकीभूतपक्षतावच्छेदकव्यापकान्यानुमितित्वावच्छिन्नस्यापत्तेः ।

अस्मन्मये च सिद्धिसामान्याभावकालीनायामवच्छेदकावच्छेदेनानुमितौ विशिष्टवह्नित्वे विशिष्टसंयोगे वा पर्याप्तविषयताविशेषे इव शुद्धवह्नित्वे शुद्धसंयोगे वा पर्याप्तो विषयताविशेषः स्वीक्रियते । एकज्ञानस्यैकत्र विषये विषयताद्वयोपगमे क्षतिविरहादिति सिद्धिसामान्याभावकार्यतावच्छेदकावच्छिन्नोत्पत्तिरिष्टैव ।

न चावच्छेदकावच्छेदेनानुमितौ व्यापकतायाः संसर्गतया भानोपगमे तादृशानुमितौ अवच्छेदकावच्छेदेन हेतुमत्ताज्ञानस्य पृथक्कारणताकल्पने गौरवम् । एतन्मते तत्तत्पर्वतोद्देश्यकानुमितौ तत्तत्पर्वतविशेष्यकपरामर्शस्य हेतुतयाऽर्थवशादेव यावत्पर्वतविशेष्यकपरामर्शात्तथाविधानुमितेरुत्पादात्, तादृशानुमितौ परामर्शस्य स्वतन्त्रहेतुत्वाकल्पनात्, व्यापकतायाश्च संसर्गविधया भानस्य क्वचिदप्यनभ्युपगमादिति वाच्यम् । यत्रैकः परामर्शः कतिपयपर्वतविषयकः, अन्यश्च तदितरयावत्पर्वतविषयकस्तत्रापि अवच्छेदकावच्छेदेनानुमितेरुत्पादापत्तेः । न चेष्टापत्तिः, अवच्छेदकावच्छेदेन हेतुमत्ताज्ञानं विनाऽवच्छेदकावच्छेदेनानुमित्यनुत्पादस्य सर्वसम्मतत्वात् । तत्र च कस्यापि परामर्शस्य भवन्मतसिद्धाया अवच्छेदकावच्छेदेन हेतुमत्तावगाहिताया असम्भवः । एवं यत्र पक्षतावच्छेदकताघटकसम्बन्धेन पक्षतावच्छेदकमवृत्ति तत्र तेन सम्बन्धेन पक्षतावच्छेदकाक्रान्ताप्रसिद्धा अनुमितिद्वैविध्यानुपपत्तिश्च । तन्मतेऽपि चावच्छेदकावच्छेदेनानुमितौ अवच्छेद्यावच्छेदकभावरूपाधिकविषयानवगाहने सामानाधिकरण्यमात्रेण सिद्धिदशायां तादृशानुमित्युत्पत्तौ बीजाभावः । सिद्धविपर्यभूतधर्मिविषयकत्वस्य तद्बीजत्वे तथाविधसिद्धिदशायां सिद्धविपर्यभूतकतिपयपर्वतादिविषयकानुमितेरप्युत्पादौचित्यात् ।

अथ मणिकृता पक्षतावच्छेदकस्यैकदेशतः सिद्धसाधनस्यादोषत्वोपगमेऽपि तदितरप्राचीनैरनुमितिमात्र एवांशतः सिद्धसाधनस्यापि दोषत्वमुपेयते, अत एव चैतेषां मतमालम्ब्य मणिकृताऽपि शब्दानित्यत्वाद्यनुमाने ध्वन्यादावंशतः सिद्धसाधनवारणाय वर्णात्मकत्वादिविशेषणं पक्षे निवेशितम् । अत एव गन्धादिपक्षताव-

च्छेदकस्य पृथिवीतरभेदादौ साध्ये हेतुता नाचार्यैरनुमन्यते। व्याप्तिग्रह एव हेतुरूपपक्षतावच्छेदकसाध्ययोः सामानाधिकरण्यभानेन सिद्धसाधनात्। सकलपृथिवीविषयकानुमितेरप्ययोगात्। न चांशे साध्यसिद्धावपि अधिकधर्मिविषयतया यावत्पर्वतादिविषयकानुमित्युत्पाद उचितः। अधिकधर्मिविषयकानुमितेः सिद्धिदशायां उत्पादे वाङ्मनोऽनित्या इत्यादिसिद्धिदशायां अनित्ये वाङ्मनसीत्यादिसमूहालम्बनानुमित्युत्पादस्याप्यौचित्यात्। न हि तत्र कस्याप्यनुमितिः, नवीनैरपि पक्षतावच्छेदकैक्य एवांशतः सिद्धसाधनस्यादोषत्वस्योपगमात्। एवञ्च नवीनमत एव अवच्छेदकावच्छिन्नस्यावगाहितदनवगाह्यनुमितिभेदेन पक्षताभेदस्य स्वीकरणीयतया गौरवम्।

न च विशिष्टबुद्धौ धर्मितावच्छेदकव्यापकत्वभानानुपगमे पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिबाधदशायां तत्सामानाधिकरण्येन तादृशबाधविषयधर्मिविषयिण्याः कतिपयधर्मिविशेष्यकानुमितेरिव सकलधर्मिविशेष्यकानुमितेरप्युत्पादौचित्यादवच्छेदकावच्छेदेनानुमितावुद्देश्यायामप्यंशतो बाधस्यादोषतापत्तिरिति वाच्यम्। सामानाधिकरण्यमात्रावगाहिन्यां विशिष्टबुद्धौ समानविषयकतथाविधविपरीतनिश्चयप्रतिबन्धकतायाः प्राचामनुमततयांऽशतो बाधस्य दोषतोपपत्तेः। एवञ्च यावत्पक्षविषयकानुमितौ यावत्पक्षविषयकहेतुमत्ताज्ञानापेक्षया तद्विरोधितया भागासिद्धेरपि दोषतानिर्वाहः। यत्र सकलपर्वतानां नैकपरामर्शविषयता अपि तु परामर्शद्वयविषयता तत्र यावत्पर्वतविषयकानुमितिरूपावच्छेदकावच्छेदेनानुमितिः प्राचीनमते इष्टैव। नवीनमतेऽपि तत्र तादृशानुमितेरावश्यकत्वादित्यवच्छेदकावच्छेदेनानुमितौ तादृशपरामर्शस्य हेतुत्वाकल्पनेनापि तन्मते लाघवम्। मैवम्। अवच्छेदकावच्छेदेन विशिष्टबुद्धौ व्यापकत्वभानानुपगमे व्यापकत्वभानस्य विपरीतज्ञानप्रतिबन्धकत्वप्रयोजकत्वासम्भवेन तत्प्रयोजकत्वस्य दुर्निर्वचतापत्तेः।

न चैकरूपेण समानधर्मिविषयकत्वमेव विपरीतज्ञानाविरोधित्वे बीजम्। तथा सति पार्थिवगन्धत्वावच्छेदेन जलावृत्तित्वादिनिश्चयस्यापि शुद्धगन्धत्वावच्छेदेन तन्निश्चयस्येव गन्धो जलवृत्तिर्न वे-

स्यादौ गन्धत्वादिसामानाधिकरण्यमात्रेण जलवृत्तित्वादिसंशये विरोधिताप्रसङ्गात् । उभयोरेव निश्चययोर्गन्धत्वाश्रयत्वावच्छिन्नधर्मिणि ग्राह्याभावावगाहितयाऽविशेषात् । विरोधिविषयकत्वाविशेषे धर्मितावच्छेदककोटावधिकभानस्याविरोधिताबीजत्वाभावात् ।

नव्यमते उभयनिश्चयविषयव्यापकतयोर्भेदाद्विशेषसम्भवात् । एतेनावच्छेदकावच्छेदेनानुमितौ व्यापकत्वभानापेक्षया लाघवाद्धावद्धर्मिवृत्त्यखण्डैकविषयत्वाभ्युपगम एवोचितः । तदन्यविषयतैव सिद्धिसामान्यप्रतिबध्यतावच्छेदिका, सिद्धिसामान्याभावकालीनानुमितावेतादृश्यैकैकधर्मिविषयता अपीष्यन इति परास्तम् ।

पक्षतावच्छेदकसामानाधिकरण्येन तदवच्छेदेन च सिद्धिदशायां सामानाधिकरण्यमात्रावगाहिन्यनुमितिर्न जायते, उभयोरेव सिद्ध्योः पक्षतावच्छेदकघटितसाध्यसम्बन्धरूपतदुभयसामानाधिकरण्यावगाहितया तादृशानुमितेस्तदतिरिक्तानवगाहित्वात्, अतस्तथाविधानुमितौ उभयविधसिद्ध्योरेव प्रतिबन्धकत्वं दर्शयति। तत्सामानाधिकरण्येनेति । तत्सामानाधिकरण्यमात्रेण । पक्षतावच्छेदकसामानाधिकरण्यमात्रेण । अवच्छेदकावच्छेदेनानुमितावपि सामानाधिकरण्यावगाहितया तद्व्यावर्तनाय अवच्छेद्यावच्छेदकभावावगाहित्वव्यवच्छेदार्थं मात्रपदम् । अवच्छेद्यावच्छेदकभावानवगाहित्वञ्च न सिद्ध्यभावजन्यतावच्छेदककोटौ निवेशनीयम् । उक्तदिशा आपत्तिसम्भवात्, पर्याप्तिनिवेशादेवोपपत्तेर्वैयर्थ्याच्चेत्यवधेयम्। ,

सिद्धिमात्रस्येति । मात्रपदं कृत्स्नार्थकम् । तथा च पक्षतावच्छेदकसामानाधिकरण्येन तदवच्छेदेन च सिद्धेरित्यर्थः । प्रतिबन्धकता चोभयविधसिद्ध्योः संसर्गादीनां पर्याप्तिमनिवेश्यैकरूपेणैव यदुभयसाधारणं निश्चयत्वं शक्यते निर्वक्तुं, अन्यथा पुनः पृथक् पृथगेवेति ध्येयम् ।

यत्तु सामानाधिकरण्येनानुमितौ तथाविधसिद्धेरवच्छेदकावच्छेदेन सिद्धिव्यावृत्तरूपेण प्रतिबन्धकत्वेऽपि तत्रावच्छेदकावच्छेदेन सिद्धेर्न प्रतिबन्धकताधिक्यं अवच्छेदकावच्छेदेनानुमितौ तस्याः प्रतिबन्धकत्वे कल्पनीये अवच्छिन्नसंयोगादिपर्याप्तसंसर्गताकत्वस्य प्रतिबध्यतावच्छेदकेऽवश्यं निवेशनीयतया अवच्छिन्नत्वातिरिक्तधर्मानवच्छिन्नसंयोगादिनिष्ठसंसर्गताकत्वस्यैव च तदर्थतया तस्य

शुद्धसंयोगादिसंसर्गकानुमितिसाधारण्येन तादृशप्रतिबन्धकतयैवोपपत्तेरिति। तदसत्, सामानाधिकरण्येनानुमिनुयामवच्छेदकावच्छेदेनानुमिनुयामित्याद्याकारकेच्छानां पृथक् पृथगुत्तेजकताया वक्ष्यमाणतया पृथक् पृथक् प्रतिबन्धकताकल्पनस्याऽऽवश्यकत्वात् ॥

( दी० ) इत्थञ्च लिङ्गभेदन्यायो ऽनुसरणीयः । साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे तां प्रति पक्षविशेष्यिकैव सिद्धिर्विरोधिनी ।

(गा०) ननु तादृशसिद्धिदशायां पक्षतावच्छेदकावच्छेदेनानुमिनुयामित्याकारकसिषाधयिषासत्त्वेऽसति चावच्छेदकावच्छेदेन हेतुमत्तापरामर्शे सामानाधिकरण्यमात्रावगाहिपरामर्शात्तादृशानुमितेरापत्तिः, तथाविधसिषाधयिषासत्त्वेन पक्षताया अक्षतत्वादित्यत आह । इत्थञ्चेति । इत्थञ्च । तुल्ययुक्त्या पक्षतावच्छेदकावच्छिन्नत्वतत्सामानाधिकरण्यमात्रावगाह्यनुमित्योः सिद्धेः पृथक् पृथक् प्रतिबन्धकत्वे च । लिङ्गभेदन्याय इति । यथा तत्तल्लिङ्गकानुमितौ सिद्धः प्रतिबन्धकतायां तत्तल्लिङ्गकानुमितीच्छैवोत्तेजिका, न त्वन्यलिङ्गकानुमितीच्छापि, तथा पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिनीमनुमितिं प्रति सिद्धेः प्रतिबन्धकतायां तादृशानुमितीच्छैवोत्तेजिका न त्वन्यविधानुमितीच्छेति स्वीकरणीयमिति नातिप्रसङ्ग इत्यर्थः । यदि पर्वते वह्निरित्याद्याकारकसाध्यनिश्चयानन्तरं पर्वतो वह्निमानित्याद्याकारकानुमितिर्जायते तदा साध्यविशेष्यकानुमितौ साध्यविशेष्यकसिद्धेरेव प्रतिबन्धकत्वेन सामान्यतः साध्यपक्षवैशिष्ट्यावगाह्यनुमितौ तादृशसिद्धित्वेन नैकं प्रतिबन्धकत्वं कल्पनीयम्, अपि तु विशिष्यैव प्रतिबन्धकताद्वयम्, अगत्या गौरवस्यादोषत्वादित्याशयवानाह । साध्यविशेष्यकेति । द्वयोः समानविषयकत्वे विशेष्यविशेषणभाववैपरीत्यमकिञ्चित्करमित्यभिप्रायेण निर्भरसूचनाय प्रामाणिकत्वे इत्युक्तम् । पक्षविशेष्यकैवेति । तथा च प्रकारताविशेष्यते निवेश्यैव प्रतिबध्यप्रतिबन्धकभावः कल्पनीय इति भावः । तत्र तादृशानुमित्यभावस्य प्रामाणिकत्वे तु उभयविधज्ञानसाधारणपक्षसाध्यवैशिष्ट्यावगाहिनिश्चयत्वस्यानतिप्रसक्तस्य सुवचत्वे उ-

भयविधसिद्ध्योरनुगतरूपेणैव प्रतिबन्धकता, प्रतिबध्यतावच्छेदकन्तु पक्षविशेष्यकसाध्यप्रकारकानुमितित्वादिकमेव न त्वनुगतम् । पक्षविशेष्यकसाध्यप्रकारकानुमितिर्जायतां साध्यविशेष्यकपक्षप्रकारकानुमितिर्जायतामित्याकारिकयोरिच्छयोः पृथक् पृथगुत्तेजकत्वानुरोधात् ।

( दी० ) एवञ्च पक्षविशेष्यकसिद्ध्यनन्तरमपि साध्यविशेष्यकानुमितिर्जायते तुल्यन्यायात्, समानाकारायाः सिद्धेः प्रतिबन्धकत्वे पर्यवसानात् । तादृशानुमितिं प्रति सिद्धिमात्रं विरोधि साध्यप्रसिद्धिरेव वा । अत एव प्रसिद्धसाध्यकस्थले पक्षविशेष्यकैवानुमितिरनुभूयते इति ।

( गा० ) एवञ्च । साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमित्युत्पत्तेः प्रामाणिकत्वे च । तुल्यन्यायादिति । पर्यवसानादित्यन्तस्य हेतुः । समानाकारायाः सिद्धेरिति । अन्यूनाकारसिद्धेरित्यर्थः । पर्वतः सुन्दरवह्निमानित्यादिसिद्धिदशायामपि न्यूनविषयिण्याः पर्वतो वह्निमानित्याद्यनुमितेरनुत्पादात् । अधिकविषयकसिद्धेरविरोधित्वेऽवच्छेदकावच्छेदेन सिद्धेः सामानाधिकरण्येनानुमितौ प्रतिबन्धकतापत्तनस्यासङ्गतेः । एवं जातिशक्तिवादे गोत्वत्वेन गोवृत्तित्वानुमानं सिद्धसाधनान्न सम्भवतीति अविशिष्टहेतुना विशिष्टसाध्यसाधन एव सिद्धसाधनानवकाशो न तु विशिष्टेनाविशिष्टसाधनेऽपीति जात्या व्यक्त्यनुमानपक्षमाश्रित्य मिश्रा अर्थापत्त्या वा तत्सिद्धिरिति मूलमवतारयामासुः ।

ननु साध्यविशेष्यकानुमितिस्तावन्न सर्वानुभवसिद्धा पर्वतो वह्निमानित्याद्याकारिकाया एवानुमितेरनुभवात् किन्त्वप्रसिद्धसाध्यकस्थले विशेषणज्ञानादिविरहेण साध्यविशेषणकानुमितेरनुपपत्त्या साध्यविशेष्यकानुमितिः कल्प्यते एवञ्च पक्षविशेष्यकसिद्धिदशायामपि तादृशानुमितेरप्रामाणिकतया तदनभ्युपगमे ऽपि क्षतिविरहात् । तां प्रति साध्यपक्षविशिष्टावगाहिज्ञानत्वेनोभयविधसिद्धिसाधारणेनापि प्रतिबन्धकत्वं सम्भवतीत्यभिप्रेत्य मतान्तरमाह । तादृशानुमितिमिति । साध्यविशेष्यकानुमितिमित्यर्थः ।

सिद्धिमात्रम् । पक्षविशेष्यिका साध्यविशेषिका च सिद्धिरित्यर्थः ।

ननूक्तस्थले साध्यज्ञानदशायामपि साध्यविशेष्यिकाऽनुमितिरप्रामाणिकी, तत्र साध्यविशेषणकानुमितेरेव सम्भवादिति, तादृशानुमितिप्रतिबन्धकतायां पक्षादिविषयतायाः सिषाधयिषाविरहस्य निश्चयत्वस्य च निवेशनं गौरवायेत्यभिसन्धायाऽऽह । साध्यप्रसिद्धिरिति । साध्यतावच्छेदकप्रकारकज्ञानमित्यर्थः । तेनेतरत्वापक्षीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्यादिपरामर्शादितरत्वादिना साध्यज्ञानसत्त्वेऽपि पृथिव्यामितरभेद इत्याद्याकारकानुमितेर्नानुपपत्तिः । न च तत्र पृथिवी इतरभिन्ना इत्येतादृशानुमितेः सम्भवः, विशेषणतावच्छेदकीभूतेतरभेदत्वादिप्रकारकज्ञानविरहात् ।

अथेतरभेदत्वादिप्रकारकज्ञानस्य यत्रेतरभेदत्वाद्यवच्छिन्नमुख्यविशेष्यकज्ञानत्वं प्रतिबध्यतावच्छेदकं तदा तथाविधज्ञानदशायां इतरभेदादिपक्षकप्रमेयत्वाद्यनुमितेरनुपपत्तिः । तद्धर्मावच्छिन्नविधेयकत्वस्याधिकस्य निवेशेऽपि इतरभेदः प्रमेयः पृथिवी इतरभिन्नेत्यादिसमूहालम्बनानुमितेर्गोत्वाभावो गोत्वाभाववानित्याद्यनुमितेश्चानुपपत्तिः ।

अत्र केचित् । पृथिवी इतरभिन्नेत्यादिसाध्यविशेषणकानुमितौ तथाविधप्रत्यक्षादिसाधारणी विशेष्यत्वाद्यवच्छेदकताभिन्ना प्रकारतैव विधेयता, साध्यविशेष्यकानुमितौ च ततोऽन्या, तथा च प्रकारताभिन्नविधेयतैव साध्यप्रसिद्धिप्रतिबध्यतावच्छेदिकेति नानुपपत्तिरित्याहुः । तन्न । प्रकारताविशेषस्य विधेयतात्वोपगमे जलभेदे तेजोभेदः इत्याद्याकारकतेजोभेदादिसाध्यविशेष्यकानुमितेर्जलभेदादिविधेयकत्वापातात् । न चाधेयतासम्बन्धावच्छिन्नप्रकारताव्यावृत्तं तदिति वाच्यम् । तथा सत्याधेयतासम्बन्धेन जलभेदादिसाध्यकतादृशानुमितेरपि तद्विधेयकत्वानुपपत्तेः । यदि च यत्राधेयत्वं साध्यतावच्छेदकसम्बन्धस्तत्र विधेयत्वमतिरिक्तमित्युच्यते, तदा तत्सम्बन्धेन जलभेदसाध्यकानुमितौ प्रकारताभिन्नविधेयताशालिन्यां साध्यप्रसिद्ध्यभावव्यभिचारो दुर्वारः ।

वस्तुतस्तु तद्धर्मावच्छिन्नाप्रकारकत्वे सति तद्धर्मावच्छिन्नविधेयकानुमितित्वमेव तद्धर्मप्रकारकज्ञानप्रतिबध्यतावच्छेदकं, साध्य-

प्रसिद्धिस्थले च साध्यप्रकारिका एवानुमितिर्जायते न तु तद्प्रकारिकेति न तत्र व्यभिचारः । अत एव । साध्यविशेष्यकानुमितौ साध्यप्रसिद्धेः प्रतिबन्धकत्वादेव । प्रसिद्धसाध्यकस्थले । अभावरूपसाध्यप्रसिद्धिस्थले न तु भावसाध्यकस्थले इत्यर्थः । तत्र परामर्शस्य नियमतः साध्यघटितव्याप्तिविषयकतया साध्यविशेष्यकानुमितेरप्रसिद्ध्या साध्यप्रसिद्धिप्रतिबन्धकतायाः कल्पयितुमशक्यत्वात् उपष्टम्भकत्वासङ्गतेः, स्वनिरूपितप्रकारतानवच्छेदकत्वविशिष्टविधेयतावच्छेदकतापर्याप्त्याश्रयत्वसम्बन्धेनानुमितिं प्रति विषयतावच्छेदकतारूपविषयनिष्ठप्रत्यासत्त्या ज्ञानस्य सर्वसाधारण्येन प्रतिबन्धकताया आपातत उक्तिसम्भवेऽपि साध्यघटितव्यतिरेकव्याप्तिविषयकपरामर्शघटितसामग्र्या एव साध्यविशेष्यकानुमित्युत्पादप्रयोजकतायाः फलत्वाद्भावसाध्यकस्थले साध्यविशेष्यकानुमितेरप्रसक्त्या अनुमितेः साध्यविशेष्यकत्वे तादृशप्रतिबन्धकताया अप्रयोजकत्वात् उपष्टम्भासङ्गतितादवस्थ्यात् ।

यत्तु यत्र महानसीयवह्निमात्रविषयकः परामर्शः तत्र पक्षधर्मताबलात् पर्वते पर्वतीयवह्निर्भासमानः विशेषणज्ञानविरहेण विशेष्यतयैव भासत इति भावसाध्यकस्थलेऽपि साध्यविशेष्यकानुमितिसम्भव इति तत्तुच्छम् । सामान्यलक्षणायाः प्रत्यासत्तित्वमते महानसीयवह्निविषयकपरामर्शे पर्वतीयवह्न्यभानप्रयोजकस्य दुर्लभत्वात् । न च स्मरणात्मकपरामर्शे कदाचिदुद्बोधकविरहात्तदभानसम्भव इति वाच्यम् । उद्बोधकस्य फलबलकल्प्यत्वाद्विशिष्टविशेषणकबुद्धौ विशेषणज्ञानहेतुताया निर्युक्तिकत्वात्, विशेष्यतावच्छेदकप्रकारकज्ञानस्य चाक्षतत्वात्, पर्वतीयवह्न्यविषयकपरामर्शादपि वह्नित्वेन तद्वह्निविशेषणकानुमितिसम्भवाच्च ।

इदमत्रावधेयम्, साध्यप्रसिद्धिप्रतिबन्धकतायामपि साध्यविशेष्यकानुमितित्वप्रकारकेच्छाया उत्तेजकत्वमावश्यकम्, अन्यथा पक्षविशेष्यकसिद्धिदशायां तादृशेच्छासत्त्वे साध्यविशेष्यकानुमित्यपलापापत्तेः । सिद्धसमवहितसाध्यप्रसिद्धिदशायां साध्यविशेषणकानुमितेः सम्भवेन तत एव उद्देश्यसंशयनिवृत्त्यादिसम्भवे साध्यविशेष्यकानुमित्यनभ्युपगमोऽपि न क्षतिकर इत्यभिप्रेत्यैव साध्यप्रसिद्धेस्तद्विरोधित्वमुररीकृतं ग्रन्थकृता । प्रकृते च साध्य-

विशेषणकानुमित्यपलापानौचित्यात् । तथा च यत्र सिद्ध्यसमवहिता साध्यप्रसिद्धिरथ चानुमित्सा तत्र व्यतिरेकिपरामर्शात् साध्यविशेष्यिका तद्विशेषणिका चानुमितिरापद्येत । न ह्येकविधादेव परामर्शादेकदा द्विविधाऽनुमितिरानुभविकी तस्माद्व्यतिरेकिपरामर्शात् साध्यप्रसिद्धिदशायामपि साध्यविशेष्यकाया एवानुमितेः स्वीकारः समुचितः । सिद्धिप्रतिबन्धकतापेक्षया साध्यप्रसिद्धिप्रतिबन्धकतायामवच्छेदकलाघवमप्यकिञ्चित्करमेव, व्यतिरेकिपरामर्शात् क्वचित्साध्यविशेषणकानुमितिस्वीकारे तादृशानुमितिं प्रति व्यतिरेकिलिङ्गकत्वान्वयिलिङ्गकत्वप्रकारकानुमित्सां पृथगुत्तेजकीकृत्य सिद्धेः प्रतिबन्धकताद्वयेनैव गौरवात् ।

परे तु अप्रसिद्धसाध्यकस्थलेऽपि साध्यविशेषणिकैवानुमितिर्जायते इतरभेदत्वादिरूपविशेषणतावच्छेदकप्रकारकज्ञानविरहेऽपि विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेनैव पृथिवीतरभिन्नेत्याद्यनुमितिसम्भवात् ।

न च लाघवानवकाशः तादृशानुमितिं प्रत्येव साध्यप्रसिद्धिप्रतिबन्धकताया अवश्यकल्पनीयत्वादिति वाच्यम् । तथाविधानुमितौ यादृशी विषयता तस्याः साध्यप्रसिद्धिकालीनविशिष्टवैशिष्ट्यावगाह्यनुमितिसाधारण्योपगमात्, साध्यविशेष्यकानुमित्यनुपगमेन साध्यप्रसिद्धिप्रतिबन्धकताया एव कल्पनात् ।

न च सिद्धिकाले तथाविधानुमितेर्वारणाय तत्र सिद्धेः प्रतिबन्धकताकल्पनाधिक्यमावश्यकमिति वाच्यम् । विशिष्टवैशिष्ट्यावगाह्यनुमितिस्थलीयसिद्धिप्रतिबन्धकतयैवोपपत्तेः । इतरभेदत्वादिना इतरभेदादिविधेयकानुमितित्वस्य तत्स्थलीयप्रतिबध्यतावच्छेदकस्योभयसाधारणत्वादिति ।

यत्तु विशिष्टवैशिष्ट्यावगाह्यनुमितौ विशिष्टवैशिष्ट्यावगाहिनी सिद्धिरेव विरोधिनी न तु केवलं विशेष्ये विशेषणम् तत्र च विशेषणान्तरमिति रीत्या जायमानापि सा तथा तस्याः संसर्गांशे विशिष्टनिरूपितत्वानवगाहितया न्यूनविषयकत्वात् । एवञ्च केवलं विशेष्ये विशेषणमिति न्यायेनानुमितेरुपगमे तादृशसिद्धिदशायां तस्या वारणाय तत्र तादृशसिद्धेर्विरोधित्वकल्पनाधिक्यमावश्यकमेवेति किमपराद्धं साध्यविशेष्यकानुमितिस्वीकारेण । विशिष्टवैशिष्ट्यान-

वगाहिसाध्यविशेषणकानुमितेरभ्युपगमेन प्रतिवध्यप्रतिबन्धकभावसाम्यादिति । तदपि तुच्छम् । विशिष्टवैशिष्ट्यभानमात्रविरोधिबाधादिकाले केवलं विशेष्ये विशेषणमित्यादिन्यायेनानुमितेः सर्वसंमततया तत्र तादृशासिद्धेः प्रतिबन्धकताया आवश्यकत्वेन साध्यविशेष्यकानुमितिस्वीकर्तुराधिकप्रतिबन्धकताकल्पनस्य दुर्वारत्वादिति । यदि च विशिष्टप्रतियोगिकविलक्षणवैशिष्ट्यानवगाहिन्यपि विशिष्टविशेषणज्ञानमपेक्षितं तदा तुल्ययुक्त्या विशिष्टविशेष्यकज्ञानेऽपि विशिष्टविशेष्यज्ञानहेतुतया साध्यतावच्छेदकविशिष्टविशेष्यकानुमितिरप्रसिद्धसाध्यकस्थले न सम्भवति ।

न च विशेष्यज्ञानस्य विशिष्टबुद्धावहेतुतया तद्विशेषस्यापि न तद्विशेषहेतुतेति वाच्यम् । सामान्यप्रत्यासत्तिजन्यज्ञाने विशेष्यज्ञानस्य व्यभिचारेण सामान्यहेतुत्वासम्भवेऽपि तुल्यरूपोभयविशेषणावगाहिज्ञानस्यान्यैकविशिष्टापरविशेषणकत्ववारणाय विशेषहेतुताया आवश्यकत्वात्, अन्यथा विशेषणज्ञानस्यापि विशेषहेतुताया उच्छेदात् । अत एव विशिष्टवाक्यार्थविशेष्यकशाब्दबोधे अवान्तरवाक्यार्थज्ञानापेक्षा । न च साध्यविशेष्यकानुमितौ तुल्यरूपयोरेव पक्षविधेयतावच्छेदकयोः साध्यांशे प्रकारता न त्वेकविशिष्टांशेऽपरस्येति न विशिष्टसाध्यज्ञानापेक्षेति वाच्यम् । निर्विशेष्यतावच्छेदकानुमितेरनुभवविरुद्धत्वात् प्रत्यक्षस्य च निर्धर्मितावच्छेदककस्याभ्युपगमात् प्राथमिकाभावप्रत्यक्षे प्रतियोग्यधिकरणयोरभावविशेषणतया नानोपपत्तिः । तथा च साध्यविशेष्यकानुमितिर्निर्युक्तिकैवेति वदन्ति ।

अथ जलव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीत्यादिपरामर्शाद्भेदत्वरूपविशेषणज्ञानं विना स्वरूपतस्तत्प्रकारिका पृथिव्यां जलभेद इत्याद्याकारिका अनुमितिरेव कथमुत्पद्यते इति चेन्न । कथञ्चित्तत्र जलीयत्वादिमात्रपुरस्कारेणैवाभावानुमित्युपगमादिति कृतं पल्लवितेन ।

( दी० ) अत्र च व्याप्तिस्मरणादिना पूर्वानुमित्सानाशे परामर्शकाले च सिद्धिसत्त्वेऽनुमित्सान्तरोत्पत्त्यैव अनुमितिस्तथैव कारणीभूतस्य विशिष्टाभावस्य सम्पत्तेरित्युपाध्यायाः ।

(गा०) ननु सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वेऽपि सन्देहवत्परामर्शपूर्वमित्यादिग्रन्थेन सिषाधयिषापक्षतापक्षोक्तस्य व्यभिचारस्य सिद्धिकालीनानुमितिस्थले तादवस्थ्यम्। सिषाधयिषानाशे विशिष्टप्रतिबन्धकस्यानुमित्यव्यवहितप्राक्कालेऽक्षतत्वादित्याक्षेपे यथामतिसमाधानमाह। अत्र चेति। व्याप्तिस्मरणादीत्यादिनाऽनुमित्साद्वितीयक्षणे यत्र पक्षधर्मताज्ञानं तत्स्थलीयतादृशज्ञानपरिग्रहः। पूर्वेति। व्याप्तिस्मरणादिपूर्वकालीनेत्यर्थः। परामर्शदशायामसत्यां सिद्धौ विशेष्याभावादेव विशिष्टाभावनिर्वाहेण नानुमित्यनुपपत्तिरतः परामर्शकाले च सिद्धिसत्त्वे इति। अनुमित्सान्तरेति। परामर्शद्वितीयक्षणे तदव्यवहितप्राक्क्षणे चेत्यादिः, तदुत्पत्तिप्रकारश्चाधस्ताद्दर्शितः। एवञ्च सिषाधयिषापक्षतापक्षः सिषाधयिषाविरहेऽपीत्यादिदोषादेव हेय इति भावः।

ननु सर्वत्र पुनरनुमित्सोत्पत्तौ मानाभाव इत्यत आह। तथैवेति। अनुमित्सान्तरोत्पत्त्यैवेत्यर्थः। कारणीभूतस्येति। तथा च तादृशविशिष्टाभावात्मककारणं विनानुपपत्तिरेव सिद्धिस्थलीयविशिष्टाभावनिर्वाहकानुमित्सान्तरोत्पत्तौ मानमिति भावः। एतन्मते एव दीधितिकृतोऽपि निर्भरः मिश्रादिमतस्य गौरवकवलितत्वादिति ध्येयम्।

(दी०) अन्ये तु द्वित्रिक्षणान्तरितायामपि अनुमित्सायामनुमितिदर्शनात् अनुमित्सायोग्यता वाच्या। सा च न स्वोत्पत्त्यनन्तरं स्वविषयसिद्ध्यनुत्पादः। अनुमित्सानन्तरमन्तराऽनुमित्यनुत्पादे दिवसादिविलम्बेनेन्द्रियादिना निर्णीतेऽपि साध्ये लिङ्गपरामर्शादनुमितिप्रसङ्गात्। किन्तु अनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण यावता कालेन उत्सर्गतः परामर्शो जायते तावानेव कालः, फलबलेन तथा कल्पनात्।

(गा०) मिश्रमतमाह। अन्ये त्विति। द्वित्रिक्षणान्तरितायामपीति। द्विक्षणव्यवहितायां क्षणत्रयव्यवहितायाञ्चेत्यर्थः। अनुमित्सायाम्। अनुमित्सोत्पत्तौ। तेन एकक्षणान्तरितायामप्यनुमित्सायां यथानुमितिस्तत्राप्यनुपपत्तिसत्त्वेन तदनभिधाने न्यूनता। एवं प्रथमकल्पे सिषाधयिषोत्पत्तिक्षणमारभ्य क्षणचतुष्टयात्मककालस्यैव

विवक्षणीयतया त्रिक्षणान्तरानुमित्सास्थलेऽनुमित्यनिर्वाहश्चेति दू-षणद्वयानवकाशः । एवश्चानुमितिदर्शनादित्यस्यानुमित्सोत्पत्तेश्चतुर्थक्षणे पञ्चमक्षणे वा अनुमितिदर्शनादित्यर्थः । वाच्या । सिषाधयिषापदेन विवक्षणीया । सा च । योग्यता च । स्वोत्पत्त्यनन्तरमिति । स्वप्रागभावोत्तरमित्यर्थः । स्वस्योत्पत्तिर्यस्मादिति व्युत्पत्त्या स्वोत्पत्तिपदस्य प्रागभावपरत्वात्, अन्यथा सिषाधयिषोत्पत्तिकाले योग्यतानुपपत्त्या तद्द्वितीयक्षणे अनुमितेरनिर्वाहात् । सिद्ध्यनुत्पादः । सिद्धिप्रागभावः । तथा च स्वप्रागभावध्वंसविशिष्टस्वविषयसिद्धिप्रागभाव एवानुमित्सायोग्यतेति पर्यवसितम् । अनुमित्सापूर्वं तद्विषयीभूतसिद्ध्यनन्तरञ्चानुमितिवारणाय दलद्वयोपादानम् ।

न चानागतानां यावदनुमितीनामेवानुमित्साविषयत्वसम्भवात् स्वविषयीभूतैकानुमितावुत्पन्नायामपि भाविन्यस्त्वन्तरप्रागभावमादाय योग्यताप्रसङ्ग इति वाच्यम् । स्वविषयसिद्धित्वावच्छिन्नप्रागभावस्य विवक्षितत्वात् । अत एव स्वविषयेत्युक्तम्, यत्किञ्चिद्विशेषध्वंसवति काले सामान्यधर्मावच्छिन्नप्रागभावासम्भवेन सिद्धित्वावच्छिन्नप्रागभावस्य कदाऽप्यसत्त्वात् । सामान्यधर्मस्य प्रागभावप्रतियोगितावच्छेदकत्वानङ्गीकारे पुनः स्वविषयसिद्ध्यसमानकालीनत्वमेव प्रागभावे विशेषणं देयम् । वह्न्यनुमितिर्घटानुमितिश्च जायतामित्यादीच्छानन्तरं घटानुमित्यादिरूपविषयसिद्धावपि वह्न्याद्यनुमित्युत्पत्त्या सिद्धीति, प्रकृतसाध्यपक्षवैशिष्ट्यावगाहिनिश्चयार्थकम् । अनुमित्सोत्तरं दिवसादिविलम्बेनाप्यनुमितिप्रसङ्गादित्यन्वयः । अन्तराऽनुमित्युत्पादे स्वविषयसिद्धित्वावच्छिन्नप्रागभावासत्त्वेन योग्यताक्षतेर्नापत्तिसम्भव इत्यतोऽन्तराऽनुमित्यनुत्पाद इति । द्वित्रिक्षणादिविलम्बेनानुमितेरिष्टत्वात्, दिवसादिविलम्बेनेति । सिद्ध्यसत्त्वे अनुमितेरिष्टत्वादिन्द्रियादिना निर्णीत इति । लिङ्गेन निर्णीते साध्येऽन्तराऽनुमित्यनुत्पाद एव न सम्भवतीत्यत इन्द्रियादिनेति । आदिना शब्दादिपरिग्रहः । अनुमित्सेति । अनुमित्साधिकरणक्षणाव्यवहितोत्तरक्षणे क्रमेण पक्षविषयकलिङ्गज्ञानव्याप्तिस्मरणयोरुत्पत्तौ सत्यामुत्सर्गतो यावता कालेन परामर्शोत्पत्तिः अनुमित्सोत्पत्तिक्षणमारभ्य तत्क्षणपर्यन्तं यावन्तः क्षणा यो वा तावदधिकक्षणानवस्थायी

स्थूलकालः तत्समुदाय एव सेत्यर्थः। एवञ्च क्षणचतुष्टयं तदधिकक्षणानवस्थायिनः स्थूलसमयाश्च योग्यतेति पर्यवसितम्। तदनुगमश्च स्वप्रागभावानधिकरणत्वस्वनाशाधिकरणसमयध्वंसानधिकरणत्वोभयसम्बन्धेन सिषाधयिषावत्कालत्वेन न तु अननुगतेन तत्तत्कालत्वेन गौरवात्, तत्तत्कालोत्तेजकत्वापेक्षया तत्तत्सिद्धिव्यक्तिभेदानामेव निवेशनौचित्यात्। योग्यताया उत्तेजकत्वकल्पनेऽपि वक्ष्यमाणायाः पूर्वानुमित्साबलादनुमित्युत्तरमनुमित्यापत्तेरसङ्गत्यापाताच्च तत्रानुमितिक्षणस्योत्तेजकताकल्पकाभावादिति विभावनीयम्। अनुमित्सोत्तरं यत्र विलम्बेन लिङ्गदर्शनादिकं ततश्च परामर्शः तत्रानुमित्सोत्पत्तिक्षणमारभ्य परामर्शोत्पत्तिक्षणपर्यन्तस्थायी दण्डादिरपीति तद्वारणाय लिङ्गदर्शनादेरनुमित्साक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्वमनुसृतम्। यत्रानुमित्सोत्पत्तिद्वितीयक्षणे पक्षलिङ्गव्याप्तिविषयकमेकं स्मरणम्, तदनन्तरक्षणे परामर्शोत्पत्तिस्तत्र क्षणत्रयमध्ये एव परामर्शोत्पत्त्या तदतिरिक्तकालमात्रस्य तथात्वभ्रमवारणाय क्रमेणेति। अनुमित्सोत्पत्तिद्वितीयक्षणतृतीयक्षणयोर्लिङ्गदर्शनव्याप्तिस्मरणयोः क्रमेणोत्पत्तावपि कुतश्चित्प्रतिबन्धकात् यत्र विलम्बेन परामर्शोत्पत्तिस्तत्राधिकक्षणानामपि तथाविधतया तद्वारणाय उत्सर्गत इति। तादृशव्याप्तिस्मरणानन्तरक्षणे परामर्शोत्पत्त्यावसति विरोधिनीत्यर्थः। अनुमित्यननुगुणक्षणव्यवधानविरहेण पञ्चमक्षणेऽनुमितिरुत्पद्यते न तु तदग्रेऽपि तथाविधक्षणव्यवधानादित्येतत्सूचनाय भङ्ग्या तादृशकालविशेषोपादानमित्यवधेयम्। ननु तथाविधकालस्योत्तेजकत्वे गौरवमित्यत आह। फलबलेनेति। अनुमित्सानाशे अनुमित्यात्मककार्योत्पत्त्यनुरोधेनेत्यर्थः। तथा कल्पात्। तादृशकालस्योत्तेजकत्वकल्पनात्।

(दी०) अथ वा अनुमित्सोत्पत्त्यनन्तरमनुमित्सानाशेऽपि सिद्धौ सत्यां यावत्कालमध्ये ऽनुमितिर्जायते तावानेव कालोऽनुमित्सया उपलक्षितः। यदि च सिद्ध्यनन्तरं तन्नाशेऽपि द्वित्रिक्षणमध्ये विना अनुमित्सामनुमित्यनुत्पादोऽनुभवसिद्धस्तदा सिद्ध्याऽपि तावानेव समय उपलक्षणीयः।

विशिष्य क्षणनियमस्त्ववहितैः करणीय इति वदन्ति ।

( गा० ) यत्र तथाविधपरामर्शोत्पत्तिक्षणे अनुमितिप्रतिबन्धकबाधादिसमवधानमासीत् , तदपगमश्च तद्द्वितीयक्षणे तत्र सिद्धौ सत्यां तदनन्तरञ्चेदनुमितिः प्रामाणिकी । एवं यत्रानुमित्सा॒द्वितीयक्षणे लिङ्गदर्शनसामग्रीसमवधानं, तदनन्तरं लिङ्गदर्शनादिक्रमेण परामर्शोत्पत्तिस्तत्र सिद्धौ सत्यामनन्तरक्षणे अनुमितिर्वा, तदा उक्तापेक्षया अधिकस्य कालस्योत्तेजकत्वमावश्यकमित्याशयेनाह । अनुमित्सोत्पत्त्यनन्तरमिति । अनुमित्सोत्पत्तिक्षणमारभ्य तदुत्तरमित्यर्थः । यावत्कालमध्ये अनुमितिर्जायते इत्यग्रेतनेनान्वयः । अनुमित्सोत्तरमनुमित्सान्तरोत्पत्त्या दिवसादिविलम्बेनापि सिद्ध्यनन्तरमनुमित्युत्पत्त्या तावत्कालस्य चानुत्तेजकत्वादनुमित्सानाशेऽपीति । प्रागनुमित्सायामसत्यामपीत्यर्थः । असत्यां सिद्धौ अनुमित्सोत्तरं दिवसादिविलम्बेनाप्यनुमित्युदयात् , सिद्धौ सत्यामिति । प्रागित्यादिः । यावत्कालमध्ये । यावत्क्षणानन्तरक्षणे । तावानेव कालः । तावत्क्षणाधिकक्षणानवस्थायी स्थूलकालः । अनुमित्सया । अनुमित्सार्थकसिषाधयिषापदेन । उपलक्षितः । विवक्षितः ।

अनुमित्साया॒स्यताया उत्तेजकत्ववत् तुल्ययुक्त्या सिद्धियोग्यताया अपि प्रतिबन्धकत्वमुचितमित्याशयेनाह । यदि चेति । सिद्ध्यनन्तरमित्यनि शेषः । तेन नास्य वैयर्थ्यम् । द्वित्रिक्षणमध्ये इति । द्विक्षणमध्ये त्रिक्षणमध्ये वेत्यर्थः । सिद्धेश्चतुर्थक्षणे पञ्चमक्षणे चेति फलितम् । सिद्धाऽपि । सिद्धिपदेन । तावान् । तन्नाशानन्तरमपि द्विक्षणस्थायी त्रिक्षणस्थायी वा । उपलक्षणीयः । विवक्षणीयः ।

ननु सिद्ध्युत्तरं कियत्क्षणमध्य अनुमितिर्न जायते कियत्क्षणानन्तरं वा जायत इत्यस्य विशिष्य निर्णेतुमशक्यतया कालस्य प्रतिबन्धकत्वकल्पनमसम्भवि । एवमुत्तेजककालस्यापि विशिष्य निर्णेतुमशक्यतया तदुत्तेजकत्वमपि तथेत्यत आह । विशिष्येति । अवहितैः । सावधानैः । नियमः । निर्णयः । तथा च येषां विशिष्य तावत्कालनिर्णयो भवति तेषामेव तत्र विशिष्य प्रतिबन्धकत्वावगमो भविष्यति अन्येषां तु सामान्यत एवेति भावः ।

केचित्तु ननु कालविशेषाणां सिद्धिसिषाधयिषाधिकरण-

कालत्वेन चेत्प्रतिबन्धकोत्तेजकभावः तदा अधिकाधिककालस्यापि तथात्वप्रसङ्गः, अनतिप्रसक्तानुगतधर्मान्तरञ्च दुर्वचमेवेत्यत आह । विशिष्येति । अनतिप्रसक्तानुगतविशेषणविशेषं निवेश्येत्यर्थः । क्षणनियमः । कतिपयक्षणानामेव तथात्वं न त्वधिकाधिकक्षणानामिति नियमनिर्वाहः । अवहितैः । निरुक्तिकुशलैः । सिद्ध्युत्पत्तिक्षणमारभ्य क्षणचतुष्टयादेः स्वप्रागभावानधिकरणत्वस्वनाशाधिकरणसमयनाशाधिकरणसमयनाशानधिकरणत्वोभयसम्बन्धेन सिद्ध्यादिमत्त्वमेवानुगमकमनतिप्रसक्तञ्चेति भावः । इति व्याचक्षते ।

वदन्तीत्यस्वरससूचनाय । स च उक्तपरम्परायाः सम्बन्धत्वे मानाभावात् तत्तद्व्यक्तित्वेन उत्तेजकत्वाभ्युपगमे च उक्तदोषापातादिति ।

( दी० ) अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्वोक्तन्यायेन साध्यतद्व्याप्यविशिष्टपक्षस्य प्रत्यक्षं स्मरणं वा । यत्र वा साध्यतद्व्याप्यधर्मतादृशव्याप्यधर्मान्तरविशिष्टपक्षस्य तत्पक्षकसाध्यतद्व्याप्यवत्त्वानुमित्योरिष्टसाधनतायाश्चैकं स्मरणं, ततस्तयोरनुमित्या, ततः साध्यतद्व्याप्यवत्त्वानुमितिस्तत्र तदनन्तरमनुमितिप्रसङ्गः । योग्यताविवक्षणे तु सुतरामेवेति तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशेषणम् ।

( गा० ) इच्छाया विषयसिद्धौ सत्यां चरितार्थतया नोत्तरकालमनुमितिर्जन्यत इति तद्वारणाय स्वविषयसिद्ध्यनुपहितत्वेनेच्छा विशेषणीया । तत्र तद्विषयसिद्धिदशायाम् परामर्शानुमित्सासमवधानसम्भव एव तद्विशेषणमर्थवद्भवति, तच्चापाततो न घटते इच्छापरामर्शयोर्युगपदुत्पादासम्भवेनानुमितिकाले एकतरविनाशावश्यकत्वादित्यतस्तद्घटयति । अत्र चेति । सिद्धिप्रतिबन्धकतावच्छेदककोटौ चेत्यर्थः । तदिच्छाविषयसिद्ध्यनुपहितत्वं तद्विशेषणमित्यग्रिमेणान्वयः । निर्णयेच्छा । निर्णयत्वप्रकारकेच्छा । अनुमितित्वप्रकारकेच्छायाः प्रत्यक्षाद्यात्मकसिद्ध्या अचरितार्थतया तद्बलात्तादृशसिद्ध्युत्तरमप्यनुमित्युत्पत्तेः सा नोपात्ता । अनुमित्सोत्पत्तिकाले विशेषणज्ञानोत्पत्त्यसम्भ-

घेन तत्पूर्वमेव तद्घटितविशिष्टपक्षप्रत्यक्षसामग्रीसमवधानस्य बाध्यतया प्रत्यक्षसामग्र्या बलवत्त्वेनेच्छोत्पत्तिरेव न सम्भवतीत्यतः पूर्वोक्तन्यायेनेति । अनुमित्सापूर्वकालोत्पन्नेत्यादिप्रकारेणेत्यर्थः । स्मरणे विशेषणज्ञानापेक्षाविरहादुक्तप्रयासं विनैवेच्छाद्वितीयक्षणे विशिष्टपक्षस्य स्मरणं निर्वहतीत्यभिसन्धायाऽऽह । स्मरणं वेति । अनुमितित्वप्रकारकेच्छायामपि तद्विशेषणदानस्य सप्रयोजनकत्वादाह । यत्र वेति । साध्यव्याप्यविशिष्टपक्षस्य स्मरणानन्तरमनुमितिरेव भविष्यति न त्विच्छेत्यतोऽनुमितिसामग्रीविघटनाय तथाविधस्मरणस्य साध्यविशिष्टपक्षविषयकत्वानुसरणम् । तृतीयक्षणे साध्यस्य तद्व्याप्यस्य च अनुमितेर्द्वितीयक्षणे साध्यतद्व्याप्ययोरनुमित्सायाश्च निर्वाहाय साध्यतद्व्याप्यतदुभयानुमितिनिष्ठप्रकारतानिरूपितत्वानुसरणम् । साध्यानुमितेस्तदनन्तरं पुनस्तदनुमित्यापत्तेश्च सम्पादनाय साध्यानुमित्सायाः, साध्यव्याप्यस्यापि निश्चिततया तदनुमितेः सम्पादनाय च साध्यव्याप्यानुमित्सायास्ततस्तयोरित्यादिनाऽनुसरणम् । अनुमित्साद्वितीयक्षणे साध्यस्याननुमितौ तदनन्तरं तदनुमितिरिष्टैवेति, साध्यव्याप्यस्याननुमितौ च परामर्शाभावान्नापत्तिसम्भव इत्यतस्तदनन्तरमुभयानुमित्यनुसरणम् ।

अनुमित्सोत्पत्तिक्षणावधिकक्षणचतुष्टयादिरूपयोग्यतायाः उत्तेजकत्वमते यत्र पर्वते वह्निमनुमिनुयामितीच्छा ततो वह्निव्याप्यवान् पर्वत इति परामर्शस्तदनन्तरञ्च पर्वतो वह्निमानित्यनुमितिस्तत्रापि तादृशानुमित्यापत्तिः सम्भवतीत्याह । योग्यतेति । तदिच्छाविषयसिद्ध्यनुपहितत्व तदिच्छायां विशेषणं देयमिति शेषः । प्रत्यक्षात्मकसिद्धिसमनुपहितानुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छाबलादेवानुमित्युत्पत्त्या तदिच्छाविषयेति सिद्धिविशेषणम्, विशेष्यतयाऽभिमता या इच्छा तद्विषयेत्यर्थः ।

अथ तादृशेच्छाया उत्तेजकीभूतसकलेच्छासाधारणेनानुमितिगोचरेच्छात्वेन निवेशे प्रत्यक्षात्मकसिद्धेरपि निर्णयत्वादिप्रकारकानुमित्साविषयतया विषयान्तरव्यावर्त्तकतापत्तिः । तत्तद्व्यक्तित्वेन निवेशे च उत्तेजकीभूतेच्छाव्यक्तिसमसंख्याकाभावानां सिद्धौ विशेषणतया गौरवम् । तत्तादिच्छाविषयसिद्ध्यनुपहिततत्तदिच्छात्वेनोत्तेजकतामपेक्ष्य लाघवात् तत्तत्क्षणावच्छिन्नेच्छात्वेन तथात्व-

कल्पनाप्रसङ्गश्चेति चेन्न । प्रागुक्तयुक्त्या इच्छाविषयतावच्छेदकतायाः प्रकृतसाध्यविशिष्टप्रकृतपक्षविषयकानुमितित्वादिपर्याप्तिनिवेशनस्याऽऽवश्यकतया इच्छाविषयतावच्छेदकतापर्याप्त्यधिकरणरूपभेदेनेच्छायाः पृथक् पृथगुत्तेजकताया आवश्यकत्वात् । तत्तद्धर्मावच्छिन्नानुपहितत्वं तत्तद्धर्मप्रकारकेच्छायां निवेशनीयमित्यत्रैव तात्पर्यात् । अत एव चानुमितिद्वयं जायतामित्येतादृशेच्छावलात् क्रमिकानुमितिद्वयमुत्पद्यते, एकानुमित्युपधानदशायामपि द्वित्वावच्छिन्नानुपहितत्वस्याक्षतत्वात् ।

अथ वा स्वविषयकत्वस्वसामानाधिकरण्योभयसम्बन्धेन प्रकृतपक्षधर्मिकप्रकृतसाध्यनिश्चयविशिष्टान्यत्वमेवानुपहितत्वान्तार्थः । भेदस्याव्याप्यवृत्तितया अनुमितिदशायामिच्छायाः सिद्धिविशिष्टत्वेऽपि तत्पूर्वं विशिष्टान्यत्वमप्यव्याहतं प्रकृतपक्षकप्रकृतसाध्यकानुमितिविषयकसमूहालम्बनेच्छायां यत्रान्यपक्षकानुमितेरन्यसाध्यकानुमितेर्वा विषयता तत्र तद्बलादन्यानुमित्यनन्तरं प्रकृतानुमितिनिर्वाहाय प्रकृतपक्षप्रकृतसाध्यावगाहित्वं निश्चयविशेषणम् । एतद्विशेषणमनन्तर्भाव्य द्वित्वादिप्रकारकेच्छायाः पृथगुत्तेजकत्वाङ्गीकाराच्च नादृशेच्छावलादनुमित्यनन्तरमनुमित्यनुपपत्तिः । द्वित्वप्रकारकेच्छावलाच्च नानुमितिद्वयानन्तरमनुमित्यन्तरं तावत्पर्यन्तमिच्छाया एवानवस्थानात् । योग्यताया उत्तेजकतामते च द्वित्वादिप्रकारकेच्छायोग्यताया द्वित्वाद्यवच्छिन्नानुपहितत्वेन एव पृथगुत्तेजकता वाच्या इति कृतं विस्तरेण ।

( दी० ) पक्षसाध्यभेदेन च पक्षताया भेदात् पृथक् पृथगेव कार्यकारणभावः । तथा च यत्र सिद्ध्यनन्तरं कदाऽप्यनुमितिर्न जाता तत्र सिद्ध्यभावमात्रं कारणं न तु तत्र इच्छानिवेशोऽपि गौरवात् प्रयोजनाभावाच्च । तेन यत्पक्षयत्साध्यकानुमितौ कस्यापि इच्छा न जाता तत्र उक्तिसाधारण्यमात्रसम्पादनाय ईश्वरेच्छानिवेशनायासो नोपादेयः ।

( गा० ) नन्विच्छाया इच्छाघटितनिरुक्तयोग्यताया वा अभावेन विशिष्टायाः सिद्धरभावस्य पक्षतात्वे यत्साध्यकयत्पक्षकस्थले कदाचिदपि कस्यचिदिच्छा न जाता तत्र पक्षत्वाप्रसिद्धिरित्याश-

ङ्गायां विश्वविषयिणीं भगवदिच्छामादाय केषाञ्चित् समाधानमाक्षेप्तुं तादृशस्थले इच्छाविरहाविशेषितः सिद्ध्यभाव एव पक्षतेति समाधत्ते । पक्षसाध्येति । पक्षतावच्छेदकसाध्यतावच्छेदकादिभेदेनेत्यर्थः । पक्षताभेदादिति । सिद्धिपदार्थस्य प्रकृतपक्षतावच्छेदकादिघटितत्वादिति भावः । यत्रेति । यादृशपक्षकयादृशसाध्यकस्थले इत्यर्थः । सिद्ध्यनन्तरं कदाप्यनुमितिर्न जातेति । सिद्धिकाले परामर्शादिसत्त्वेऽनुमितेस्तथा असमवधानादिति भावः । सिद्ध्यभावमात्रमिति । इच्छाभावाविशेषिताया एव सिद्धेरभाव इत्यर्थः । सिद्धिकालीनानुमित्यनुरोधेनैव विशिष्टसिद्ध्यभावस्य पक्षतात्वोपगमादिति भावः । तेनेति । यत्रानुमितेरुत्पत्तिरप्रसिद्धा प्रसिद्धाऽपि वा नानुमित्युत्पादोपयोगिनी तत्र विशिष्टाभावस्य पक्षतात्वस्वीकारप्रयोजनविरहेणेत्यर्थः । उक्तसाधारण्येति । सर्वत्रैव पक्षतायाः सिषाधयिषाविरहविशिष्टसिद्ध्यभावपदार्थत्वसम्पादनायेत्यर्थः । नोपादेय इति । शब्दैक्यस्यानुपादेयतया कारणतावच्छेदकगौरवसहिष्णुताया अन्याय्यत्वादिति भावः ।

(दी० ) यत्तु सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः सिषाधयिषाविरहविशिष्टावास्तस्या अभावः पक्षता ।

( गा० ) परामर्शपूर्वकालोत्पन्नानुमितेस्तन्नाशेऽनुमितेस्तान्तरमकलयिषया योग्यतायाश्चोत्तेजकत्वमनादृत्यानुमितिमुपपादयतः सार्वभौमस्य मतमाह । यत्त्विति । सिषाधयिषानाशे सति यादृशसिद्ध्यनन्तरमनुमितिस्तस्याः सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकतया भिन्नान्तर्निवेशात्तदप्रतिबन्धकत्वोपपत्तेः । सिषाधयिषाविरहविशिष्टत्वं स्वक्षणस्य स्वाधिकरणदेशावच्छेदेन बोध्यम् । तेन सिषाधयिषावतोऽपि कालस्य सिषाधयिषानधिकरणदेशावच्छेदेन सिषाधयिषाविरहविशिष्टतया यत्र क्रमेण सिषाधयिषासिद्धिपरामर्शानुमितयस्तत्र सिषाधयिषाविरहविशिष्टत्वविशेषणेनोपपाद्यस्यानुमित्युत्पत्तिक्षणाव्यवधानस्यैवानुपपत्तितादवस्थ्यं निरस्तम् । स्वपदेनापि भेदप्रतियोगिनी सिद्धिरेवोपादेया । प्रतियोगिवैयधिकरण्यस्याभावविशेषणतामादृत्य सिषा-

यः । घटेच्छोत्पत्तिर्यत्र क्षणे दर्शिता तत्पूर्वमनुमितिसामग्रीसत्त्वे तदानीमनुमित्यनुत्पादबीजस्य दुर्घटत्वात् । न चानुमित्सापूर्वकालोत्पन्नापेक्षाबुद्ध्यात्मकबाधादिवशात्तदानीमनुमित्यनुत्पादसम्भवः । अपेक्षाबुद्ध्यनन्तरक्षणे विशेषगुणानुत्पत्तावेव तस्याः क्षणत्रयावस्थानसम्भवात् ।

यत्तु यत्रानुमित्सानन्तरं घटेच्छा तदनन्तरं सिद्ध्यात्मकपरामर्शस्तदनन्तरञ्चानुमितिस्तत्रानुमित्युत्पादक्षणो नेच्छाविरहविशिष्टसिद्ध्यधिकरणक्षणाव्यवहितोत्तर इति तादृशसिद्धेस्तदनुमित्यप्रतिबन्धकत्वाय सिषाधयिषापर्यन्तानुसरणमिति । तदप्यसत् । इच्छाविरहविशिष्टस्वक्षणाव्यवहितोत्तरत्वशरीरेऽव्यवधानप्रतियोगिस्वक्षण एवेच्छाविरहविशिष्टत्वनिवेशस्य प्रयोजनवत्तया तदुत्तरत्वप्रतियोगिनि स्वक्षणे तद्विशिष्टत्वस्यानिवेशनीयतया उक्तानुमित्युत्पत्तिक्षणस्य इच्छाविरहविशिष्टतत्सिद्ध्यधिकरणक्षणाव्यवहिततया तादृशसिद्ध्युत्पादक्षणोत्तरतया च तादृशसिद्धेरिच्छाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पन्नानुमितिकतया अनुमित्यनिर्वाहविरहात् ।

प्रथमविशिष्टान्तव्यावृत्तिस्थले सिषाधयिषापूर्वस्थायिनः कस्यचित् स्थूलकालस्य परामर्शोत्पत्तिकाल विनाशे पूर्वकालावच्छेदेन सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणतादृशकालध्वंसाधिकरणपरामर्शोत्पत्तिक्षणध्वंसाधिकरणस्यानुमित्युत्पत्तिक्षणस्य सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणकालाव्यवहितोत्तरत्वानुपपत्तिरतः कालपदमुपेक्ष्य क्षणपदोपादानम् ।

न च सिषाधयिषाविरहविशिष्टस्वनिरूपिताधिकरणत्वनिवेशेऽपि उक्तस्थूलकालस्य विभिन्नक्षणावच्छेदेन सिषाधयिषाविरहसिद्ध्युभयाधिकरणत्वेऽपि सर्वदैव विशेष्याभावविशेषणाभावान्यतरप्रयुक्तविशिष्टाभाववत्तया विशिष्टाधिकरणत्वासम्भवात् क्षणत्वनिवेशमन्तरेणैव व्यावृत्ति सम्भवतीति वाच्यम् । सिषाधयिषापूर्वक्षणादेः सिद्धिक्षणादेश्च प्रत्येकं विशिष्टाभावावच्छेदकत्वेऽपि तदुभयानुगमकान्यतरत्वावच्छिन्नस्य एकक्षणावच्छिन्नत्वाविशेषितसामानाधिकरण्यसम्बन्धेन सिषाधयिषाविरहविशिष्टायाः सिद्धेरधिकरणतावच्छेदकत्वे बाधकाभावात् । एकरूपावच्छिन्नस्यैव

विरुद्धद्वयावच्छेदकत्वविरहात्।

न च सिद्ध्यनधिकरणस्य स्थूलकाले सिद्धिवृत्तौ तावच्छेदकतासम्भवः। देशे वृत्तौ कालस्येव काले वृत्ताववान्तरकालस्याप्यधिकरणीभूतस्यैवावच्छेदकत्वात्। तथा च विशेष्यीभूतसिद्ध्यनवच्छेदकस्य विशिष्टसिद्ध्यनवच्छेदकतया तत्साधारणरूपावच्छिन्नावच्छेदेन स्थूलकालस्य विशिष्टाधिकरणत्वं न सम्भवतीति वाच्यम्। एवं सति विभिन्नावच्छेदेन उभयवति काले उभयत्वविशिष्टवत्ताया अपि दुर्घटत्वापत्तेः। प्रत्येकाधिकरणक्षणस्य उभयत्वविशिष्टानधिकरणत्वेन उभयत्वविशिष्टावच्छेदकत्वासम्भवात्, प्रत्येकाधिकरणक्षणयोरनुगतरूपेणाप्यवच्छेदकत्वानुपपत्तेः। न हि एकरूपावच्छिन्नस्य तस्याधिकरण रूपान्तरावच्छिन्नस्य तस्यानधिकरणमप्यवच्छेदकं भवितुमर्हति, दण्डाद्यनधिकरणपुरुषाद्यधिकरणदिवसाद्यवच्छेदेन मासादौ दण्डविशिष्टपुरुषत्वाद्यवच्छिन्नस्यावृत्तित्वात्। यदि चागत्या उभयत्वविशिष्टानधिकरणयोरपि प्रत्येकाधिकरणयोरनुगतरूपेण उभयत्वविशिष्टावच्छेदकत्वमुपेयते तदा उक्तस्थले सिषाधयिषाविरहक्षणसिद्धक्षणोभयान्यतरावच्छेदेन सिषाधयिषाविरहसिद्ध्युभयाधिकरणतावतः स्थूलकालस्य तदवच्छेदेन सिषाधयिषाविरहविशिष्टसिद्ध्यधिकरणत्वमनपवादमेव, उभयाधिकरणत्वस्यैव लाघवेन एकविशिष्टापराधिकरणतारूपत्वोपगमात्। अत्र विभिन्नकालावच्छेदेन उभयाधिकरणे विशेष्यमात्रसत्त्व एव न केवलसामानाधिकरण्यसम्बन्धेन एकविशिष्टापराभावोऽपि तु एकक्षणावच्छिन्नसामानाधिकरण्यसम्बन्धेन, एकविशिष्टापराभावः, अत एकक्षणावच्छिन्नैकात्मवृत्तित्वं सिषाधयिषाभावस्य सिद्धौ विशिष्टत्वमित्यग्रिमदीधितिकारोक्तिरपि सङ्गच्छते। एकक्षणावच्छिन्नत्वनिवेशेनैव सिषाधयिषाकाले सिद्धिसत्त्वे सिषाधयिषाभावविशिष्टसिद्ध्यभावनिर्वाहात्।

न चैवं विशिष्टाभावस्यानतिरिक्ततामते केवलसामानाधिकरण्यसम्बन्धेन एकविशिष्टापराभावस्य विशेषणाभावसत्त्वेऽप्यसत्त्वादसौ विशेष्याभावरूप एव वाच्यः। तथा च तादृशसम्बन्धेन रूपादिविशिष्टद्रव्यत्वाद्यभावः, पवनादौ मा वर्तिष्ट विशेष्याभावासत्त्वादिति वाच्यम्। तादृशद्रव्यत्वाभावस्यानतिरिक्तत्वमतेऽपि तस्य क-

पादिमन्निष्ठद्रव्यत्वाद्यधिकरणत्वाभावरूपताया एवोपगमेन नीरूपद्रव्यादौ तत्सत्त्वनिर्वाहात् । एवञ्च उक्तस्थूलकाले केवलसामानाधिकरण्यसम्बन्धेन सिषाधयिषाविरहविशिष्टसिद्ध्यभावसत्त्वात्, विशिष्टसिद्धिसत्त्वमव्याहतमेव । एकक्षणावच्छिन्नसामानाधिकरण्यसम्बन्धेन विशिष्टस्याधिकरणत्वनिवेशापेक्षया च सिषाधयिषाविरहविशिष्टे सिद्ध्यधिकरणकाले क्षणत्वनिवेशनमेव सम्यगित्यपि प्रतिभाति ।

यद्यपि सिषाधयिषाविरहवैशिष्ट्यावच्छेदेन स्वाधिकरणत्वनिवेशेऽपि तादृशकाले कालान्तरीणसिषाधयिषाविरहवैशिष्ट्यस्य तन्निष्ठसिद्ध्यधिकरणतानवच्छेदकत्वादितादृशकालमादाय उक्तदूषणस्यानवकाशस्तथाऽपि सिषाधयिषाविरहवैशिष्ट्योपलक्षिते सिद्ध्यधिकरणत्वनिवेशाभिप्रायेण क्षणत्वोपादानम् ।

यद्यपि क्रियादिरूपतादृशस्थूलकालस्याप्यन्त्यक्षणावच्छिन्नस्य क्षणतया क्षणत्वनिवेशेऽपि तद्दोषनादवस्थ्यम् । तथाऽपि स्ववृत्तियावद्धर्मविशिष्टत्वरूपक्षणत्वावच्छेदेन सिषाधयिषाविरहविशिष्टत्वनिवेशनान्न दोषः । सिषाधयिषाविरहविशिष्टक्षणे स्वाधिकरणत्वमवश्यं सिषाधयिषाविरहवशिष्ट्यावच्छिन्नम्, स्थूलकाले स्वाधिकरणत्वस्य च न तदवच्छिन्नत्वनियम इति सिषाविरहवैशिष्ट्यावच्छेदेन स्वाधिकरणत्वलाभायैव क्षणपदोपादानं न तु क्षणत्वमपि निविष्टमिति तु नव्यम् ।

अव्यवहितोत्तरक्षणोत्पत्तिः स्वाधिकरणावच्छेदेन बोध्या । अनुमितिपदं वा स्वसमानाधिकरणानुमितिपरम् । तेन महाप्रलयानभ्युपगमे सकलसिद्धीनामुत्तरमेवासंख्यानामात्मनां कस्मिंश्चिदवश्यमनुमित्युत्पत्त्या सिषाधयिषाविरहविशिष्टतादृशक्षणानन्तरक्षणोत्पन्नानुमितिकभिन्ना सिषाधयिषाद्वयोत्पत्तिमध्यमक्षणोत्पन्ना ईश्वरीया च सिद्धिरेव, सिषाधयिषाविरहविशिष्टतदधिकरणक्षणाप्रसिद्ध्या स्वपदेन तस्या एवोपादातुमशक्यतयाऽस्याश्च सिषाधयिषाविरहविशिष्टत्वाभावात्, सिषाधयिषाविरहविशिष्टनिरुक्तसिद्धिभिन्नसिद्धेरप्रसिद्धेः महाप्रलयस्य प्रामाणिकत्वे तु यदुत्तरमनुमितिः क्वचिदपि नोत्पत्स्यते । तादृश्याश्चरमसिद्धेरेव प्रतिबन्धकत्वं न त्वन्यस्या इत्यनुपपत्तेर्नावकाशः ।

अव्यवधानांशानिवेशात् प्रतिबन्धकसिद्धिनाशोत्तरं तदधिकरणे अनुमित्युत्पत्तावपि न तस्याः प्रतिबन्धकत्वानुपपत्तिः। स्वपूर्वसकलक्षणानामेव स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वरूपस्वक्षणाव्यवहितत्वाक्रान्ततया अनादौ संसारे सर्वासामेव सिद्धीनां पूर्वं कदाचित् स्वाधिकरणेऽनुमित्युत्पत्त्या सिषाधयिषयोस्तत्तदात्मसिद्धिरियं सिषाधयिषाविरहविशिष्टस्वक्षणाव्यवहितक्षणोत्पन्नानुमितिकाभिन्ना, तस्याश्च सिषाधयिषाविरहविशिष्टाभावादप्रसिद्धिरत उत्तरेति, स्वाधिकरणक्षणध्वंसाधिकरणार्थकम्।

सकलसिद्धीनामेव स्वक्षणाव्यवहितोत्तरत्वाक्रान्तस्य तृतीयक्षणविनष्टानुमित्युत्पत्तिक्षणपर्यन्तस्य पूर्वस्थायिस्थूलकालोत्पन्नानुमितिकतया पूर्ववदप्रसिद्धिरिति द्वितीयक्षणपदम्। अनुमित्यात्मकसिद्धीनां स्वाव्यवहितोत्तरक्षणवृत्तिस्वात्मकानुमितिकतया अप्रतिबन्धकत्वापत्तिरत उत्पत्तिनिवेशः।

यद्यपि स्वान्यावस्थानुमितिविशेषणत्वेऽप्येतद्दोषवारणसम्भवः। तथाऽप्यपेक्षाबुद्धेः क्षणत्रयावस्थायित्वस्य तदुत्तरं समानाधिकरणविशेषगुणान्तरोत्पादस्य चोपगमे यथापेक्षाबुद्ध्यात्मकानुमितिद्वितीयक्षणे तादृशी प्रत्यक्षादिरूपसिद्धिस्तस्याश्चतुर्थक्षणेऽनुमित्युत्पादवारकं तत्प्रतिबन्धकत्वं नोपपद्येतेति गुरुशरीराया अप्युत्पत्तेर्निवेशनम्।

अथानुमित्यव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नत्वं निरुक्तक्षणोत्पत्तिकानुमितिकसिद्धिभिन्नत्वापेक्षया लघीयः कथमुपेक्षितमिति चेत्? तथा सति यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र इच्छाजनकसामग्र्या अनुमितिप्रतिबन्धकत्वेनैव इच्छोत्पत्तिक्षणेऽनुमितिवारणसम्भवादव्यवहितपूर्वत्वघटकानुमित्युत्पत्तिक्षणे तदव्यवहितप्राक्क्षणे वा सिषाधयिषाविरहविशिष्टत्वस्य तद्वारणानुरोधेन निवेशवैयर्थ्यात्। तादृशस्थलीयसिद्धेस्तृतीयक्षणेऽनुमित्युत्पत्तिविरोधितायाः सिद्धौ सिषाधयिषाविरहवैशिष्ट्यानिवेशनमन्तरेणैवोपपत्तेः मूलोपात्तं सिद्धिविशेषणं सहकृतान्तं निष्प्रयोजनकं स्यादिति मूलविरोधः। तथा चेच्छाजनकसामग्र्या अनुमितिप्रतिबन्धकत्वमतेऽपि मूलाविरोधोपपादनायोक्तगुरुरीतेरादरः। अत्र क-

स्थले वक्ष्यमाणानुपपत्तिं तृतीयक्षणसाधारणाव्यवहितोत्तरत्वं विनिवेशयोर्द्वयोर्नु क्रमस्त्वगत्या इच्छासामग्र्या अनुमित्यप्रतिबन्धकत्वमतमाश्रित्यैव मूलोपात्त सहकृतान्तं सार्थकमविष्यतीत्यवधेयम् ।

अनुमितेरव्यवहितपूर्वा-पक्षस्याव्यवहितपूर्वस्थायिनो घटज्ञानादेरविरोधित्वोपपत्तये सिद्धिपदम्॥

( दी० ) अथ तृतीयक्षणव्यवधायकाद्द्वितीयक्षण एव अव्यवहितत्वपर्यवसानाद् यत्र अविरलक्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयः सिषाधयिषाविरहो विशेषणमस्तु सिद्धेः, प्राथमिकस्तु स्वक्षणस्य किमर्थमिति चेत् ? यत्र क्रमेण सिषाधयिषाप्रात्यक्षिकसिद्धिपरामर्शानुमितयस्तत्र तृतीयक्षणे पक्षतासम्पत्त्यर्थमिति । तन्न । यत्र अनुमित्सानाशकाले प्रात्यक्षिकी सिद्धिरथ च परामर्शानुमिती तत्र पक्षताविरहप्रसङ्गात् ।

( गा० ) अवगतद्वितीयसिषाधयिषाविरहविशेषणप्रयोजनं तत्र सम्प्रतिपत्तिं प्रदर्शयन् प्रथमसिषाधयिषाविरहविशेषणप्रयोजनं पृच्छति । अथेति । तृतीयक्षणे स्वाधिकरणकालध्वंसाधिकरणकालध्वंसाधिकरणत्वसामान्याभावरूपाव्यवधानाभावस्फुटीकरणाय तृतीयक्षणव्यवधायकत्वं द्वितीयक्षणस्याभिहितम् । तृतीयक्षणव्यवधायकत्वम् । तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वम् । सिद्धिनाशक्षणे सिषाधयिषोत्पत्तौ सिद्ध्युत्तरसिषाधयिषानाशक्षणेऽनुमित्युत्पत्तौ वा विशेष्याभावादेवानुमितेः पूर्वं पक्षता निर्वहति अतोऽविरलेति । पक्षतासम्पत्तये इति । सिद्धौ सिषाधयिषाविरहस्याविशेषणत्वे उक्तस्थले सिद्धेर्द्वितीयक्षणेऽनुमित्यनुत्पत्त्या तृतीयः स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नत्वेन सिषाधयिषोत्पत्तिक्षणेऽपि च तादृशसिद्धिमत्त्वेन तदभावरूपपक्षताया अनिर्वाहादिति भावः । प्राथमिकस्त्विति । सिषाधयिषाविरह इत्यनुषज्यते । स्वक्षणस्येति । विशेषणमित्यनुषज्यते । उत्तरयति । यत्रेति । ज्ञानेच्छयोर्युगपदुत्पा॰

दमते सिषाधयिषोत्पत्तिकाले सिद्ध्युत्पादे सिद्धेर्वा परामर्शरूपत्वे परामर्शोत्पत्तिकाले सिषाधयिषासत्त्वादेव विशिष्टाभावो निर्वहतीति क्रमेणेति। अविरलक्रमेणेत्यर्थः। सिषाधयिषासिद्ध्योरन्तरा क्षणैकविलम्बे सिषाधयिषाविरहेण क्षणं विशिष्यापि पक्षतानिर्वाहस्य वक्ष्यमाणत्वात्। सिद्धिपरामर्शयोः परामर्शानुमित्योर्वा कालव्यवधानेनोत्पत्तौ विशेष्याभावादेव विशिष्टाभावसम्पत्तेश्च। सिषाधयिषा। अनुमितित्वप्रकारिकेच्छा। अनुमित्यात्मकसिद्धाविच्छायाः स्वविषयसिद्ध्युपहितत्वात् तदुत्तरमनुमित्यन्तरोत्पत्तिरेव न सम्भवतीति प्रात्यक्षिकेति। पक्षतासम्परयर्थमिति। सिषाधयिषाविरहस्य क्षणविशेषणस्यानुपादाने तत्रानुमित्युत्पादक्षणस्य सिद्धिक्षणध्वंसाधिकरणपरामर्शोत्पत्तिक्षणध्वंसाधिकरणत्वेन सिद्धिक्षणाव्यवहितत्वविरहात्तादृशसिद्धेरपि प्रतिबन्धकतापत्त्या पक्षतानुपपत्तिः। तद्विशेषणोपादाने च सिद्ध्युत्पत्तिक्षणस्य सिषाधयिषाविरहविशिष्टस्वक्षणः परामर्शोत्पत्तिक्षण एव, तद्ध्वंसाधिकरणकालध्वंसानधिकरणत्वरूपमव्यवधानमनुमित्युत्पादक्षणस्याक्षतमेवेति पक्षतोपपत्तिरिति भावः। यत्र परामर्शात्मकसिद्ध्यनन्तरं घटेच्छा तत्रानुमितिवारणाय इच्छासामान्यमुपेक्ष्य द्वितीयसिषाधयिषाया उपादानम्। पक्षताविरहेति। सिद्ध्युत्पादक्षणस्यापि सिषाधयिषाविरहविशिष्टतयाऽनुमित्युत्पादक्षणस्य तादृशक्षणध्वंसाधिकरणकालध्वंसाधिकरणतया तत्सामान्याभावात्मकतादृशक्षणाव्यवधानविरहादिति भावः।

यद्यपि सिषाधयिषाविरहविशिष्टानुमित्यव्यवहितपूर्वक्षणवृत्तिसिद्धिभिन्नत्वविशिष्टसिद्ध्यभावस्य पक्षतात्वमङ्गीकृत्याप्युक्तानुपपत्तिः शक्यते वारयितुं तथाऽपि अव्यवहितोत्तरक्षणोत्पत्तिघटितपक्षतापक्षस्याक्षिप्तत्वात्तत्रैव दोषोद्धारः।

( दी० ) अथ प्रथमक्षणमपेक्ष्य द्वितीयस्येव द्वितीयमपेक्ष्य तृतीयस्यापि अव्यवहितोत्तरत्वम्। स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वं वा तादृशाव्यवहितोत्तरत्वं वाच्यम्। तथा च यत्र क्रमेण सिद्धिसि-

पाधयिषानुमितयस्तत्र प्रथमक्षणे पक्षतावारणाय उत्तरक्षणस्य विशेषणं प्रथमं विशिष्टान्तं। द्वितीयन्तु सिद्धेस्तत्रैव द्वितीयक्षणे पक्षतासम्पत्तये। यदि पुनरिच्छाजनिका सामग्री प्रतिबध्नात्यनुमितिं तदाऽनुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नासिद्ध्यभावमात्रं पक्षतेति चेत् १।

(गा०) तृतीयक्षणसाधारणमव्यवधानं निवेश्य शङ्कते। अथेति। तृतीयस्यापि क्षणस्याव्यवहितोत्तरत्वमिति क्षणद्वयानुगमकस्वक्षणत्वेन स्वक्षणमनन्तर्भाव्य प्रातिस्विकरूपेण स्वक्षणस्याव्यवधानशरीरे निवेशनीयत्वात्। तृतीयक्षणे च स्वोत्पत्तिक्षणध्वंसाधिकरणद्वितीयक्षणध्वंसाधिकरणत्वेऽपि स्वाधिकरणद्वितीयक्षणध्वंसाधिकरणकालध्वंसानधिकरणत्वेन स्वक्षणाव्यवधानस्याक्षतत्वमिति भावः। द्वितीयतृतीयक्षणसाधारणस्वक्षणध्वंसाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वरूपानुगताव्यवधाननिवेशनं न सम्भवति। अपेक्षाबुद्ध्यात्मकसिद्धिचतुर्थक्षणसिषाधयिषापञ्चमक्षणोत्पन्नानुमितौ (१)व्यभिचारतादवस्थ्यात्। चतुर्थक्षणसाधारणानुगताव्यवहितोत्तरत्वस्य कथञ्चिन्निवेशे चतुर्थक्षणोत्पन्नानुमितिकापेक्षाबुद्ध्यात्मकसिद्धेरप्रतिबन्धकत्वापत्तेरिति ध्येयम्।

अपेक्षाबुद्धिद्वितीयक्षणाद्यधिकक्षणत्रयतदितरबुद्धिद्वितीयतृतीयक्षणसाधारणमनुगताव्यवहितोत्तरत्वं प्रकारान्तरेण निर्वक्ति। स्वध्वंसेति। उभयत्र कालपदं कालिकसम्बन्धेन स्वध्वंसवत्त्वलाभाय। तेन सर्वस्यैव क्षणस्य स्वनाशाधिपयकपूर्वपूर्वज्ञाननाशवत्त्वेऽपि न सत्यन्ताप्रसिद्धिः। न वा स्वपूर्वकालस्य तत्पूर्वकालीनस्वाविषयकज्ञाननाशवत्त्वेऽप्युत्तरत्वस्य तत्साधारण्यप्रसङ्गः। एवं सति यत्र सिषाधयिषासिद्धिपरामर्शानुमितीनां क्रमेणोत्पादस्तत्रत्यसिद्धेस्तत्क्षणे सिषाधयिषाविरहविशेषणमन्तरेणापि अव्यवहितोत्तरक्षणोत्पन्नानुमितिकत्वनिर्वाहादुक्तप्रथमविशिष्टान्तव्यावृत्त्यसङ्गतेः स्थलान्तरे तद्व्यावृत्तिमाह। तथा चेति। प्रथमक्षणे पक्षतावारणायेति। ता-

---

(१) तृतीयक्षणसाधारणाव्यवहितोत्तरत्वकल्पे सिषाधयिषाविरह उत्तरक्षणस्यैव विशेषणमिति ध्येयम्।

दृशसिद्धेस्तृतीयक्षणोत्पन्नानुमितिकतया निरुक्तसिद्धिभिन्नत्वविरहेण पक्षताप्रसक्तेरिति भावः। प्रथमक्षण पूर्ववत् सिषाधयिषाविरहविशेषणसत्त्वेऽपि स्वनाशाधिकरणकालध्वंसानधिकरणत्वघटिताव्यवहितोत्तरत्वनिवेशकल्पे नोक्तातिप्रसङ्गवारणसम्भवः। अनुमित्युत्पत्तिक्षणे तादृशसिद्धिनाशाधिकरणकालध्वंसानधिकरणत्वस्य सिषाधयिषाविरहविशिष्टतत्सिद्ध्यधिकरणप्रथमक्षणध्वंसाधिकरणत्वस्य च सत्त्वात्तत्तोऽव्यवहितोत्तरक्षणे तस्य विशेषणतामाह। उत्तरेति। तथा च उक्तस्थले सिद्ध्यव्यवहितोत्तरतृतीयक्षणेऽपि सिषाधयिषासत्त्वात् सिषाधयिषाविरहविशिष्टतादृशक्षणोत्पत्तिकत्वं नानुमितेरिति तादृशसिद्धेरनुमितिप्रतिबन्धकत्वनिर्वाहः।

द्वितीयविशिष्टान्तस्य यद्विशेषणत्वं यत्प्रयोजनकत्वं वा प्रागभिहितम् इदानीमपि तस्य तद्विशेषणत्वं तत्प्रयोजनकत्वं न तु प्रथमविशिष्टान्तवदन्यादृशमिति दर्शयितुं पूर्वोक्तमप्यनुवदति। द्वितीयन्त्विति। सिद्धेर्विशेषणमित्यनुषज्यते। तत्रैवेति। यत्र क्रमेण सिद्धिसिषाधयिषानुमितयः तत्रैवेत्यर्थः। द्वितीयक्षण इति। तृतीयक्षणेऽनुमितिनिर्वाहार्थमित्यादिः। पक्षतासम्पत्तय इति। विशेषणाभावेन विशिष्टाभावरूपपक्षतानिर्वाहायेत्यर्थः। अन्यथा उक्तक्रमेण तादृशसिद्धेर्निरुक्तसिद्धिभिन्नतया विशेष्यसत्त्वेन पक्षतानुपपत्तेरिति भावः।

ननु दर्शितस्थले प्रथमक्षणे पक्षतासत्त्वेऽपि न क्षतिः। सिषाधयिषाकालेऽनुमित्युत्पादस्य इच्छासामग्र्या प्रतिबन्धेनाप्यसम्भवात्। इत्थञ्च निष्प्रयोजनकतया प्रथमविशिष्टान्तानुपादाने द्वितीयमपि निष्प्रयोजनकं, तादृशसिद्धेः स्वाव्यवहितोत्तरतृतीयक्षणोत्पन्नानुमितिकतयैवाप्रतिबन्धकत्वेन तृतीयक्षणोत्पन्नानुमितिनिर्वाहादित्याशयेन इच्छासामग्र्या अनुमितिप्रतिबन्धकत्वमते तदुभयं परित्यजति। यदि चेति। इच्छासामग्र्यपेक्षयाऽनुमितिसामग्र्या हीनबलत्वेऽपि अनुमित्साविशिष्टाया अनुमितिसामग्र्या इच्छां प्रति प्रतिबन्धकताकल्पनस्याऽऽवश्यकतया तस्या एव बलवत्त्वकल्पनमुचितम्, अन्यथा इच्छासामग्र्यपेक्षया बाधादिरूपानेकप्रतिबन्धकाभावघटिततया गुरुशरीराया अपि अनुमितिसामग्र्याः प्रतिबन्धकतायामिच्छानिवेशेन गौरवादिति युक्त्या ज्ञानेच्छयोर्योगप-

द्यस्वीकारसम्भवेन च इच्छासामान्याभावेनानुमितिविरोधिताव्यवस्थापनं न सम्भवतीत्याशयेन यदि चेत्युक्तम् । सिषाधयिषाविरहविशेषणसार्थक्यस्याशक्यत्वेऽनुमित्यव्यवहितपूर्ववर्त्तित्वं परित्यज्याव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकत्वरूपगुरुविशेषणोपादानमनुचितमित्याशयेनाह । अनुमित्यव्यवहितेति । अनुमितिपदं स्वसमानाधिकरणानुमितिपरमतो व्यधिकरणानुमित्यव्यवहितपूर्ववर्त्तिसिद्धेराश्रयेऽनुमित्यनुत्पादोपपादकतानिर्वाहः । यत्नाशानन्तरमनुमित्सितपक्षस्यते तादृशसिद्धेरप्रतिबन्धकतावारणाय अव्यवहितत्वोपादानम् । तच्चानुमितिपूर्वकालीनध्वंसाप्रतियोगित्वरूपं पूर्वक्षणे सिद्धावेव वा विशेषणम् । पूर्वकालीनत्वञ्च कालिकसम्बन्धेन प्रागभाववत्त्वमेव । ध्वंसस्य कालोपाधितया तदुपपत्तिः । सर्वासामेव सिद्धीनां पूर्वजातकिञ्चिदनुमितिनिरूपितनिरुक्ताव्यवधानवत्तयाऽनुमित्यव्यवहितसिद्धिभिन्नासिद्ध्यप्रसिद्धिरतः पूर्वक्षणवृत्तित्वं विशेषणम् । पूर्वत्वं प्रागभाववत्त्वम् । अनुमित्यादिपर्यन्तावस्थायिस्थूलकालमहाकालसाधारणमित्युक्तदोषतादवस्थ्यमतः क्षणत्वपर्यन्तनिवेशः । प्रागभावानवच्छिन्नवृत्तित्वनिवेशे च क्षणत्वमनुपादेयमेव । जन्यमात्रस्य कालोपाधित्वे तु कालिकसम्बन्धेन प्रागभाववत्त्वं सिद्धेरेव विशेषणं देयम् । प्रागभावानभ्युपगमे वक्ष्यमाणं तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपमव्यवहितपूर्वत्वमेव, क्षणविशेषणम्, तदुक्तकल्पना व्यावृत्तिरग्रे व्यक्तीभविष्यति । अनुमित्यव्यवहितपूर्ववर्त्तिनो मनोयोगादेस्तादृशसिद्धिभिन्नतया प्रसक्तप्रतिबन्धकतावारकद्वितीयसिद्धिपदसार्थक्याय प्रथमसिद्धिपदम् ।

न च प्रक्षालनाद्धीत्यादिन्यायेन उभयपरित्याग उचित इति वाच्यम् । तथा सति बाधबुद्ध्यादेरपि निरुक्तरूपेणैव प्रतिबन्धकतया स्वतन्त्रप्रतिबन्धकताव्याघातात् ।

न च व्यावृत्यता प्रतिबन्धकत्वान्तरं न हि तत् क्षतिमावहति, किन्तु लाघवमेवेति वैयर्थ्यदोषो दुर्वार एवेति वाच्यम् । एतद्दोषस्य वैयर्थ्याच्च सिद्धेरित्यनेन स्वयं दर्शनीयत्वात् ।

यद्यप्येवं प्रथमसिद्ध्यनुपादानेऽपि बाधादेश्च स्वतन्त्रप्रतिबन्धकताविलोपभीरूणां द्वितीयसिद्धिपदोपादानं न विरुध्यते, अयमुद्भावसम्पादकत्वेन लक्षणदोषासंस्पर्शादिति प्रथमतदुपादानमनु-

चितम्। तथाऽपि अनुमित्यव्यवहितपूर्ववर्त्तिनां स्वत्वघटितत्वेन निरुक्तरूपेणानुगमासम्भवेन तत्तद्व्यक्तित्वेन भेदकूटस्य निवेशनीय-तया सिद्धौ सिद्ध्यतिरिक्तनानापदार्थभेदानामव्यावर्त्तकानां निवेशे गौरवात्। सिद्धिव्यक्तीनामेव भेदा निवेशनीया इत्येतत्सूचनाय प्रथमसिद्धिपदोपादानम्। अत एव तत्तद्व्यक्तित्वेन सिद्धिव्यक्तीनां भेदनिवेशे च भेदानां विशेष्यविशेषणभावे विनिगमनाविरहेण म-हागौरवात् फलानुत्पादनियतसिद्धिव्यक्तीनां तत्तद्व्यक्तित्वेन प्र-तिबन्धकतापक्ष एव साधीयान्, सिषाधयिषाविरहविशेषणपरि-त्यागश्चानुचितः। सिषाधयिषाकालीनसिद्धिव्यक्तीनां अनन्तानां तत्तद्व्यक्तित्वावच्छिन्नभेदकूटनिवेशापेक्षया तद्विशेषणदानस्यैव यु-क्तत्वादिति कथञ्चिदनुगमप्रकारः परिचिन्तनीय इति।

( दी० ) तादृशसिद्धीनां तत्तद्व्यक्तित्वेनाभावः कारणम्, निरुक्तरूपविशिष्टत्वेन वा ? नाद्यः, अनन्तकार्यकारणभावप्रस-ङ्गात्। तादृशसकलसिद्धौ अनुमित्साविरहविशेषणदानस्य वैय-र्थ्यात्। तत्तत्समयसम्बन्धव्यक्तीनां तत्तत्समयावच्छिन्नतत्स-म्मनोयोगादीनां वा प्रतिबन्धकत्वप्रसङ्गाच्च।

(गा०) सिद्धेर्वैयर्थ्यमित्याशयेन वैयर्थ्याच्च सिद्धेरिति वक्ष्यति। तादृशसिद्धीनाम्। भिन्नान्तपरिचेयसिद्धिव्यक्तीनाम्। निरुक्तरूपे-ति। निरुक्तसिद्धिभिन्नत्वविशिष्टसिद्धित्वेनेत्यर्थः। अगत्या कार्य-कारणभावानन्त्यमदोषायेत्यत आह। तादृशेति। तत्तद्व्यक्तित्वेन क-ल्प्यमानप्रतिबन्धकताकेत्यर्थः। यादृशसिद्ध्युत्तरं सिषाधयिषोत्प-त्त्यानुमितिः सिषाधयिषोत्पत्तिक्षणेऽनुमितिवारणाय कल्पनीयप्रति-बन्धकताकतादृशव्यक्तौ सिषाधयिषाविरहवैशिष्ट्यानिवेशस्याऽऽव-श्यकतया सकलेति।

ननु क्वचित् सिषाधयिषाविरहविशेषणस्याऽऽवश्यकतया तदभि-प्रायेणैव मूलोक्ततदुपादानसङ्गतिरतो दूषणान्तरमाह। तत्तत्समयेति। तत्तदात्मनिष्ठा याः सिद्ध्यभावातिरिक्तसकलकारणसमवधानाधिक-रणीभूतक्षणसम्बन्धव्यक्तयः तासां विनिगमनाविरहेण क्रमिकसि-द्धिसिषाधयिषानुमित्युत्पत्तिस्थले सिषाधयिषोत्पत्तिक्षणेऽनुमिति-

वारणाय सिद्धेः सिषाधयिषाविरहविशिष्टतद्व्यक्तित्वेन प्रतिबन्धकत्वापेक्षया लाघवेन च प्रतिबन्धकतापत्तेरित्यर्थः। तथा च मूलोक्तस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वव्याघात इति भावः।

ननु तत्तत्समयैः समं तत्तदात्मनां सम्बन्धाः स्वरूपानतिरिक्ताः तथा च तत्तदात्मस्वरूपस्य तत्तत्समयस्वरूपस्य वा सम्बन्धस्य प्रतिबन्धकत्वे तत्तदात्मन्यन्यदा तत्तत्समये चान्यत्रात्मनि अनुमित्यनुपपत्तिरतोऽन्यस्य प्रतिबन्धकतां प्रसञ्जयति। तत्तत्समयेति। सिद्ध्यनन्तरं सिषाधयिषाद्वितीयक्षणेऽनुमितिस्थले इत्यादिः। सिषाधयिषाविरहविशिष्टसिद्ध्यभावेतरसकलकारणाधिकरणतत्तत्क्षणावच्छिन्नानां तत्तदात्मनिष्ठतत्तन्मनोयोगादिव्यक्तीनामित्यर्थः। सामानाधिकरण्यसम्बन्धेन सिषाधयिषाविरहावच्छिन्नायास्तत्तत्सिद्धिव्यक्तेः प्रतिबन्धकत्वापेक्षया लाघवादिति भावः।

( दी० ) नान्त्यः, सत्यपि परामर्शादौ कस्याश्चित्सिद्धेरनन्तरमनुमितिः कस्याश्चिन्नेत्यत्र नियामकाभावात् । न वा कारणतावच्छेदकावच्छिन्नसमाजाधीनकार्योत्पादादिकं कारणतावच्छेदककोटौ निविशते । तथा सति उत्पत्तिकालावच्छिन्नत्वविशेषितेन स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमितिकसविषयकत्वेन, स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नसविषयकत्वेन, स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयकत्वेन वा। किं वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टज्ञानत्वादिना कारणत्वं स्यात् । अव्यवहितोत्तरश्च तृतीयक्षण एवेति नातिप्रसङ्गः ।

( गा० ) नियामकाभावात् । नियामकाभावप्रसङ्गात् । सिषाधयिषाविरहविशिष्टसिद्धिसत्त्वे द्वितीयक्षणेऽनुमित्युत्पत्तिनिर्वाहाय निरुक्तसिद्धिभिन्नसिद्ध्यभावरूपपक्षताया अनुमित्यनुत्पादनिर्वाहतदभावस्य चान्योन्याश्रयभियाऽनुमित्युत्पादानुत्पादप्रयोजकत्वासम्भवादिति भावः । ईदृशान्योन्याश्रयस्यादोषतावादिनं प्रतिव-

न्धया निरस्यति । न चेत्यादिना । एवार्थे वा । कार्योत्पत्तेः कारणतावच्छेदकावच्छिन्नसमवधानाधीनत्वकथनेन तस्याः कारणतावच्छेदककुक्षिनिवेशेऽन्योन्याश्रयः सूचितः । तथा सति प्रायशः कारणतावच्छेदकावच्छिन्नसमवधानस्याप्यग्रे न कार्योत्पत्त्यधीनत्वापातात् । निविशते । निविशमानमदूषणावहम् ।

अथ वा उक्तपक्षतायाः कार्योत्पत्तिनियामकत्वमेव न चेत्यादिना निराकृतम् । कारणतावच्छेदककोटावित्यादेः कार्योत्पत्तिनियामकतावच्छेदकघटकमित्यर्थः ।

यद्यपि स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकत्वं स्वत्वघटितत्वेन तत्तद्व्यक्तिविश्रान्तमिति भेदप्रतियोगितावच्छेदकगर्भे तन्निवेशानर्थक्यात्, तत्परिचेयव्यक्तीनां तत्तद्व्यक्तित्वेनैव भेदाः सिद्धौ निवेशनीयाः । तथा च कारणतावच्छेदकस्य नोत्पत्तिघटितत्वम् । तथाऽपि भेदकूटनिवेशे विशेष्यविशेषणभावे विनिगमनाविरहेण कारणतानन्त्यं दुष्परिहरमेवेति भावः । कार्योत्पादादिकमित्यादिपदेन ईदृशगौरवप्रयोजकभेदकूटस्यापि सङ्ग्रहः । तस्य कारणतावच्छेदकत्व एव तृतीयप्रतिबन्धं सङ्गतेः । अत्रान्योन्याश्रयदोषं प्रतिबन्ध्या स्वीकारयति । तथा सतीति । अनुमित्यव्यवहितपूर्वोत्पन्नपरामर्शादितोऽनुमित्युत्तरमनुमित्यापत्तेर्वारणाय उत्पत्तिकालावच्छिन्नत्वविशेषितेनेति । स्वाधिकरणसमयध्वंसवदन्यकालसम्बन्धविशेषितेनेत्यर्थः । तादृशध्वंसवत्त्वं कालिकसम्बन्धेन । तेन उत्पत्तिक्षणस्यापि प्रतियोगित्वादिसम्बन्धेन स्वाधिकरणकालध्वंसावच्छिन्नत्वेऽपि न क्षतिः । एवञ्च कालिकसम्बन्धेन तादृशध्वंसवदन्यात्मसम्बन्धाविशिष्टस्य ज्ञानादेर्द्वितीयादिक्षणे सत्त्वानुकातिप्रसक्तत्वादवश्यमतः कालपदम् । ईदृशकालसम्बन्धस्य उपलक्षणविधयाऽवच्छेदकत्वे स एव दोष इत्यतो विशेषणविधया तथात्वलाभाय उत्तरत्रानुषङ्गाय चावच्छिन्नान्तस्य कर्मधारयमध्ये प्रक्षेपमुपेक्ष्यावच्छिन्नत्वविशेषितेनेत्युक्तम् । विशेषणत्वञ्चास्य सामानाधिकरण्यसम्बन्धेन बोध्यम् । धर्मिणा विशेष्यत्वात् । कालान्तरीणानुमितिसमानाधिकरणघटज्ञानादितोऽनुमित्यापत्तिवारणाय स्वक्षणाव्यवहितोत्तरक्षणोत्पन्नत्वमनुमितिविशेषणम् । तदर्थश्च स्वाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाधि-

करणकालध्वंसाधिकरणं यः क्षणस्तदुत्पन्नत्वम् । सत्यन्तनिवेशात् स्वोत्तरादिघसायन्तरितक्षणोत्पन्नानुमितिकज्ञानादितस्तद्द्वितीयक्षणे नातिप्रसङ्गः। तादृशानुमितिकसंस्कारद्वितीयक्षणेऽनुमितिवारणाय स्वाधिकरणत्वे सतीत्युपेक्षितं तृतीयादिक्षणस्य ज्ञानायनधिकरणत्वेऽपि संस्काराद्यधिकरणत्वाक्षतेः। तादृशापेक्षाबुद्धिद्वितीयक्षणेऽनुमितिवारणानुरोधस्तु न तदुपेक्षाबीजम्। तदानीं समानाधिकरणविशेषगुणान्तरस्याप्यनुत्पत्त्या तत्प्रयोजकादेवानुमित्यनुत्पादोपपत्तेः। अपेक्षाबुद्धिद्वितीयक्षणे समानाधिकरणविशेषगुणोत्पादोपगमे त्वपेक्षाबुद्धेस्तृतीयक्षणावस्थायिताया एवानुपपत्तेः। वस्तुतस्त्वपेक्षाबुद्धेर्द्वितीयक्षणावस्थायितामत एवैतत्प्रतिवन्दिप्रदर्शनम्। अन्यथा सिद्ध्यादिद्वितीयक्षणोत्पन्नापेक्षाबुद्ध्यात्मकपरामर्शात्तृतीयक्षणेऽनुमित्यनुपपत्तेः। तस्यास्तृतीयक्षणपर्यन्तावस्थानमते तद्द्वितीयक्षणे विशेषगुणानुत्पत्त्या तदानीमुत्पत्तिकालावच्छिन्नसविषयकत्वस्य दुर्घटत्वादित्यवधेयम्।

अनुमितेः स्वसमानाधिकरणानुमित्युत्तरोत्पन्नज्ञानान्तराद्यऽनुमितिप्रसङ्गवारणायाधिकरणान्तं क्षणविशेषणम्। स्वपूर्वकालोत्पन्नानुमितेरपि स्वाव्यवहितोत्तरत्वाक्रान्तस्वद्वितीयक्षणपर्यन्तस्थायिस्थूलकालोत्पन्नतया तद्दोषतादवस्थ्यमतः क्षणत्वनिवेशः। अनुमितेः स्वक्षणाव्यवहितोत्तरक्षणवृत्तिस्वसमानाधिकरणस्वात्मकानुमितिकतया तद्वारणायोत्पत्तिनिवेशः।

वस्तुतस्त्वपेक्षाबुद्धिद्वितीयक्षणे विशेषगुणानुत्पादेन अनुमितौ स्वान्यत्वस्य निवेशादपि उत्पत्तिनिवेशप्रयोजननिर्वाहो बोध्यः। तथा सति अपेक्षाबुद्ध्यात्मकानुमित्यनन्तरोत्पन्नज्ञानादनुमित्यापत्तेरसम्भवात्। पुरुषान्तरीयानुमित्यव्यवहितपूर्वोत्पन्नज्ञानात्तद्वतः पुंसोऽनुमितेर्वारणाय स्वसामानाधिकरण्यमनुमितिविशेषणम्, एकपुरुषीयानुमित्यव्यवहितपूर्वोत्पन्नेच्छादितस्तद्वतः पुरुषान्तरस्यानुमितेर्वारणाय सविषयकत्वनिवेशनम्। अनुमित्यव्यवहितपूर्वक्षणे ज्ञानोत्पत्त्यनियमाशङ्कया ज्ञानत्वमुपेक्षितम्। व्यक्तीभविष्यति चेदमुपरिष्टात्।

वस्तुमोहिप्रतिपाद्यसम्बन्धांशस्याधिकस्यात्र निवेशाद्वस्तुमोहि परित्यज्य लघुरूपान्तरमाह। स्वसमानाधिकरणेति। अत्राप्युत्पत्ति-

कालावच्छिन्नत्वविशेषितेनेत्यनुपज्यते । अन्यथाऽनुमित्यव्यवहितपूर्वोत्पन्नज्ञानादेरनुमित्युत्पत्त्यधिकरणक्षणेऽपि सत्त्वात् तदनन्तरमप्यनुमित्यन्तरापत्तेः ।

न चानुमित्यव्यवहितपूर्वक्षणोत्पत्तेर्विशेषणतयैव सामञ्जस्ये उत्पत्तिकालावच्छिन्नत्वस्य पृथग्विशेषणत्वमनुपयुक्तमिति वाच्यम् । अव्यवहितपूर्वक्षणोत्पत्तेर्विशेषणत्वे तद्घटकवृत्त्यंशस्य विशेषणतयैव सामञ्जस्ये लक्षणे स्वाधिकरणकालध्वंसानधिकरणरूपस्य उत्पत्तिघटकांशस्य वैयर्थ्यापातात्प्रक्षालनाद्धीति न्यायेन तदंशमपि परित्यज्य स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टज्ञानत्वेन कारणताप्रसङ्गोऽग्रे प्रदर्शयिष्यत एव । तदनुमितौ सामानाधिकरण्यविशेषणप्रयोजनं पूर्ववत् । अनुमित्यव्यवहितपूर्वत्वं प्रागभावसत्त्वे तत्प्रागभावाधिकरणकालप्रागभावानधिकरणत्वे सति तत्प्रागभाववत्त्वम् । अनुमितिपूर्वविनष्टस्य तदुत्तरोत्पन्नस्य च घटज्ञानादेर्वारणाय दलद्वयम् । अव्यवहितोत्तरत्वघटकस्वाधिकरणकालध्वंसाधिकरणकालध्वंसानधिकरणत्वरूपसत्यन्तादेतदीयसत्यन्तस्य लघुत्वादप्येतत्कल्पे लाघवं बोध्यम् ।

प्रागभावानङ्गीकारे तदघटितवक्ष्यमाणाव्यवहितपूर्वत्वमेव निवेश्यम्, अनुमित्यव्यवहितपूर्वोत्पन्नतदुत्तरस्थायिस्थूलकाले अनुमित्युत्तरमुत्पन्नस्य घटादिज्ञानस्य वारणाय क्षणत्वनिवेशनम् । अनुमितिप्रागभावविशिष्टोत्पत्तिकत्वविवक्षणे क्षणपदं कालपरमेव । अनुमित्यव्यवहितपूर्वक्षणपर्यन्तस्थायिनस्तत्पूर्वजातघटज्ञानादितो ऽनुमितिपूर्वमनुमितेर्वारणाय उत्पन्नत्वनिवेशनम् । पूर्ववद् द्वित्वादिवारणाय सविषयकत्वनिवेशनम् । ज्ञानत्वोपेक्षाबीजमपि पूर्ववद्बोध्यम् ।

अत्रोभयत्र स्वत्वघटितत्वेन तत्तद्व्यक्तिविश्रामादननुगम इति प्रतियोगिनि स्वत्वमन्तर्भाव्यानुगतभेदकूटघटितधर्मेण कारणतां प्रसञ्जयति । स्वक्षणेति । स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकं स्वं अनुमितिसामग्र्यसमवधानक्षणोत्पन्नघटादिज्ञानादिकमेव तदन्यसविषयकोऽनुमित्यव्यवहितपूर्वोत्पन्नतत्समानाधिकरणपरामर्शादिस्ततोऽनुमित्युपपत्तिः । तादृशादेव परामर्शादनुमित्यनन्तरमनुमित्यन्तरवारणायात्राप्युत्पत्तिकालावच्छिन्नत्वविशेषितेनेत्यनुषज्यते ।

न चैवं स्वोत्पत्तिक्षणावच्छिन्नत्वस्यानुयोगिनि निवेशेनाननुगमस्याऽऽवश्यकतया प्रयासोऽयमफल इति वाच्यम् । तत्तद्वस्तुनिष्ठतत्तदधिकरणसमयध्वंसाधिकरणसमयसम्बन्धानामभावकूटविशिष्टत्वस्यैवात्र उत्पत्तिकालावच्छिन्नत्वार्थकत्वात्, तादृशस्य चानुगतत्वात् । स्वसमानाधिकरणानुमितित्वावच्छेदेन स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकत्वं विवक्षणीयमतोऽनुमित्युत्पादकपरामर्शाद्यधिकरणक्षणानुत्पत्तिकत्वस्य तत्परामर्शसमानाधिकरणकालान्तरीणानुमितौ सत्वेऽपि न अन्यसविषयके भेदकूटाप्रसिद्धिः । स्वक्षणाव्यवहितोत्तरत्वं पूर्वनिरुक्तं ग्राह्यम् । तत्पुरुषीययादृशघटज्ञानाद्युत्तरं तदीयानुमितावनुत्पन्नायामेव तस्य पुंसो मुक्तिस्तादृशघटज्ञानादिकं स्वाधिकरणसमयोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिसामान्यकमिति परामर्शाद्यसमवहितात्तदन्यघटज्ञानादितोऽनुमित्यापत्तिः, तस्य स्वपदेनोपादानासम्भवादतोऽव्यवधाननिवेशः । निरुक्ताव्यवधानस्यानुमित्यनुत्पादकघटज्ञानादेः पूर्वं कदाचिदुत्पन्नाया अप्यनुमितेरुत्पत्त्यधिकरणक्षणे अव्यवहितोत्तरत्वस्य च तादृशानुमित्युत्पत्तिमति तादृशघटज्ञानादिद्वितीयक्षणपर्यन्तस्थायिस्थूलकाले सत्वात् तादृशं स्वमप्रसिद्धमेव स्यादत उत्तरत्वक्षणत्वयोर्निवेशनम् । अनुमितेः स्वाव्यवहितोत्तरक्षणवृत्तित्वात्मकानुमितिकतया स्वपदेन उपादानासम्भवात् ततोऽनुमित्यन्तरापत्तिरत उत्पत्तिनिवेशः । व्यधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नघटज्ञानादिवारणाय सामानाधिकरण्यमनुमितिविशेषणम् । द्वितीयकल्पेऽनुमित्यव्यवहितपूर्वक्षणोत्पत्तिमुपलक्षणीकृत्य पृथगुत्पत्तिकालस्य विशेषणतया निवेशापेक्षया तादृशक्षणोत्पत्तिघटकतादृशक्षणवृत्तित्वस्य विशेषणतया निवेशनमेवोचितम्, तावतैवातिप्रसङ्गभङ्गादित्याशयेनाह । किं वेति । पदव्यावृत्तिः स्फुटैव । यादृशपरामर्शद्वितीयक्षणे किमपि ज्ञानं नोत्पन्नं तृतीयक्षणेऽप्यनुमितिर्जाता तत्र परामर्शरूपज्ञानस्यैवानुमित्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टस्यानुमित्यव्यवहितपूर्वक्षणे सत्त्वात् ज्ञानत्वमुपेक्ष्य सविषयकत्वनिवेशनमफलमित्यतो ज्ञानत्वमेवात्र निवेशितम् । तत्रानुयोगिनि स्वत्वान्तर्भावेनाननुगमस्तु नाशङ्कनीयः । पूर्वकल्पद्वयेऽपि तत्सत्त्वात् गौरवस्य चाधिक्यात् । अननुगमासहिष्णुतायाञ्च तत्तद्वस्तुनिष्ठतत्तद्वस्तुसमानाधिकरणानुमित्यव्यवहि-

त्पूर्वत्वानधिकरणक्षणसम्बन्धाभावकूटविशिष्टज्ञानत्वेन कारणत्वप्रसक्तिर्दुर्वारा ।

न चापदर्शितसकलरूपापेक्षया लिङ्गपरामर्शत्वस्य लघुतया तेनैव रूपेण परामर्शहेतुत्वमुचितमिति न प्रतिबन्धावकाश इति वाच्यम् । उक्तरूपेण हेतुत्वे कारणान्तरविरहदशायाम् उक्तरूपावच्छिन्नत्वविरहेणानुमितिवारणसम्भवात् कारणान्तरस्याकल्पनीयतया लिङ्गपरामर्शत्वापेक्षया तत्तच्छरीरगौरवस्याकिञ्चित्करत्वात् ।

ननु यत्र घटज्ञानादिद्वितीयक्षणे लिङ्गपरामर्शस्तदुत्तरमनुमितिस्तत्र परामर्शोत्पत्तिक्षणेऽप्यनुमितिप्रसङ्गः । प्रथमक्षणमपेक्ष्य द्वितीयस्येव द्वितीयक्षणमपेक्ष्य तृतीयस्यापि क्षणस्याव्यवहितोत्तरत्वेन तादृशघटज्ञानादेः स्वक्षणाव्यवहितोत्तरक्षणोत्पन्नानुमितिकत्वादित्यत आह । अव्यवहितोत्तरश्चेति । द्वितीयक्षण एवेति । अव्यवहितोत्तरत्वमध्ये स्वक्षणस्य न प्रातिस्विकरूपेण निवेशः किन्तु स्वाधिकरणकालत्वेन, तथा च स्वाधिकरणकालध्वंसाधिकरणत्वसामान्याभावस्य स्वतृतीयक्षणेऽसत्त्वान्न तस्याव्यवहितोत्तरत्वमिति भावः ।

( दी० ) न च आदिमेषु परामर्शस्थितिक्षणे यत्र विरोधिसिद्ध्यादिविनाशस्तत्र उत्तरक्षणेऽनुमितिर्न स्यात् परामर्शस्य अतथात्वादिति वाच्यम् । अनुमितिसामग्र्या विरोधिन्या विरहेण तदानीमुत्पन्नादनुव्यवसायादेरन्ततः संस्काराद्वा तत्सम्भवात् । संस्कारजन्यत्वेन स्मृतित्वस्य प्रागेव निरासात् ।

( गा० ) पूर्वकल्पत्रये ज्ञानत्वमुपेक्ष्य सविषयकत्वनिवेशनप्रयोजनं स्फुटयितुमाशङ्कते । न चादिमेष्विति । शेषकल्पे विनश्यदवस्थपरामर्शजन्यानुमितिस्थलेऽप्यव्यवहितपूर्वक्षणवृत्तित्वविशिष्टपरामर्शस्यैवानुमित्यव्यवहितपूर्वक्षणे सत्त्वान्नानुपपत्तिरित्यत आदिमेष्वित्युक्तम् । अतथात्वादिति । द्वितीयक्षणेऽनुमित्यनुत्पत्त्या तत्कारणतावच्छेदकानाक्रान्तत्वादुत्पत्तिक्षणावच्छिन्नस्यानुमित्यव्यवहितप्राक्क्षणेऽसत्त्वाच्चेत्यर्थः । अनुमित्युत्पत्तिक्षण इव दर्शितस्थलेऽनुमितिपूर्वमपि परामर्शेन प्रतिबन्धादनुव्यवसायादिर्नोत्पत्तुमर्हतीति

शङ्कानिरासायानुमितिसामग्र्या विरोधिन्या विरहेणेति । परामर्शमात्रं न प्रतिबन्धकम् अपि त्वनुमितिसामग्र्येव, तदानीन्तु न तत्सामग्री तस्याः फलाव्यवहितप्राक्क्षण एव सत्त्वादिति । तदानीम् । तादृशपरामर्शद्वितीयक्षणे । अनुव्यवसायादेरित्यादिना सन्निकृष्टवस्त्वन्तरज्ञानपरिग्रहः ।

ननु यत्र परामर्शोत्पत्तिकाले समानविषये लौकिकचाक्षुषादिप्रत्यक्षस्य भिन्नविषये च शाब्दबोधस्य सामग्र्यासीत्तत्र द्वितीयक्षणे विनिगमनाविरहेण किमपि ज्ञानं न जायते सकलज्ञानसामग्रीषु प्रतिबन्धकसमवधानस्य तुल्यत्वादतस्तद्द्वितीयक्षणे प्रत्यक्षादिसामग्रीविगमेऽपि तृतीयक्षणे नानुमितिः स्यात् । उक्तकारणतावच्छेदकाक्रान्तज्ञानाभावादित्यत आह । अन्तत इति । कथञ्चिज् ज्ञानानुत्पादेऽपीत्यर्थः । संस्कारादिति । तस्यापि सविषयकत्वघटिततत्कारणतावच्छेदकाक्रान्तत्वादिति भावः ।

न च यत्र परामर्शादिरुपेक्षात्मकस्तत्र का गतिरिति वाच्यम् । फलानुरोधेन तत्र संस्कारकल्पनाया आवश्यकत्वेन परामर्शादेरुपेक्षात्वस्यैवासिद्धेः ।

नन्वनुमितेः संस्कारजन्यत्वोपगमे तस्याः स्मृतित्वापत्तिः, संस्कारजन्यज्ञानत्वस्य स्मृतित्वप्रयोजकत्वादत आह । संस्कारजन्यत्वेनेति । निरासादिति । संस्कारत्वेन संस्कारजन्यत्वस्यैव स्मृतित्वप्रयोजकत्वात्, अन्यथा कालोपाधिविधया ज्ञानान्तरेऽपि, ज्ञायमानलिङ्गकरणतामते संस्कारलिङ्गकानुमितौ च संस्कारस्य जनकत्वेनातिप्रसङ्गादिति भावः ।

( दी० ) स्याद्वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नत्वेन, स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणक्षणवृत्तित्वविशिष्टत्वेन वा स्वसमानाधिकरणानुमित्युत्पत्त्यनधिकरणसमयाव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वेन वा प्रतिबन्धकत्वम् । तदव्यवहितपूर्वत्वञ्च तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम् ।

( गा० ) प्रकृतसाध्याय - कार्यानुत्पत्तिनिर्वाह्यतावच्छेदकरूप-

ण प्रतिबन्धकत्वमेव प्रसज्यते । स्वसमानाधिकरणेति । पद्व्यावृत्तिरनुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसिद्ध्यभावपक्षताबद्धोध्या ।

सिद्ध्यात्मकपरामर्शानन्तरसिषाधयिषोत्पत्तिकाले सर्वत्र तत्तदात्मसमवेतधर्मनाशस्याप्रामाणिकत्वं यत्र न तन्नाशस्तत्र प्रथमक्षणेऽप्युक्तप्रतिबन्धकतावच्छेदकावच्छिन्नस्यासत्त्वेनातिप्रसङ्गसम्भवात् कल्पान्तरमाह । स्वसमानाधिकरणेति । उक्तस्थले परामर्शादेरनुमित्यव्यवहितपूर्वक्षणवृत्तित्वेऽपि तदुत्पादक्षणस्यानुमित्यव्यवहितपूर्वत्वानधिकरणतया तद्वृत्तित्वविशिष्टत्वेन परामर्शादेरेव प्रतिबन्धकत्वादत्र कल्पे तादृशस्थले सिषाधयिषोत्पादकालेऽनुमितिप्रसङ्ग इति भावः ।

अत्रानुमितेरव्यवहितपूर्वत्वं वक्ष्यमाणतदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम् । तत्र क्षणत्वानिवेशेऽनुमित्युत्पत्त्यधिकरणमहाकालाद्युत्पत्तिकध्वंसमादायातिप्रसक्तमिति क्षणत्वनिवेशनमावश्यकम् । एवञ्च एतदपेक्षया तादृशानुमित्युत्पत्त्यनधिकरणसमयोत्पत्तिकध्वंसप्रतियोगिक्षणवृत्तित्वविशिष्टत्वेन प्रतिबन्धकत्वमेवोचितम्, अनुमित्युत्पत्त्यनधिकरणसमयस्य क्षणत्वेनानिवेशेऽपि क्षतिविरहात् । अनुमित्युत्पत्त्यनधिकरणस्थूलकालोत्पन्नध्वंसप्रतियोगित्वस्यानुमित्यव्यवहितपूर्वक्षणभिन्नक्षण एव सत्त्वात् । चरमक्षणत्वनिवेशनञ्च उभयत्रैवावश्यकम् ।

अनुमित्यव्यवहितप्राक्क्षणेऽपि तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वानधिकरणमहाकालादिवृत्तित्वविशिष्टस्त्वेनानुमित्युत्पत्त्यनधिकरणसमयोत्पन्नध्वंसप्रतियोगिस्थूलकालविशेषवृत्तित्वविशिष्टसत्त्वेन चानुमितिमात्रानुत्पत्तेरित्याशयेनाह । स्वसमानाधिकरणेति । यदि च पूर्वकल्पे क्षणत्वानिवेशेऽनुमित्युत्पत्त्युपलक्षितकालोत्पत्तिकत्वनिवेशन एवान्यकालावच्छेदेनानुमित्युत्पत्त्यधिकरणमहाकालाद्युत्पत्तिकध्वंसमादायातिप्रसङ्गः, न, तु तदुत्पत्तिविशिष्टसमयोत्पत्तिकत्वनिवेशे, तथा च क्षणत्वमुत्पत्त्यधिकरणकाले न निवेश्यमेवेत्युच्यते तथाऽपि उपलक्षितोत्पत्तिकत्वापेक्षया तदुत्पत्तिकत्वविशिष्टोत्पत्तिकत्वस्य गुरुशरीरतयैव कल्पान्तरानुसरणसङ्गतिः ।

न चैतत्कल्पेऽप्यनुमित्युत्पत्त्यभावविशिष्टसमयोत्पत्तिकत्वमेव ध्वंसे निवेश्यम्, अनुमित्युत्पत्त्यधिकरणभिन्नोत्पत्तिकत्वनिवेशे यत्रानु-

मित्यात्मकपरामर्शानन्तरजातानुमित्यन्तरेच्छावलात् पुनरनुमितिः तत्रानुमित्सोत्पादकालस्य तत्पूर्वं परतो वाऽवस्थानावश्यकतयाऽनुमित्युत्पत्त्यधिकरणत्वनियमेन प्रथमानुमित्युत्पत्तिक्षणस्यानुमित्युत्पत्त्यनधिकरणसमयोत्पन्नध्वंसप्रतियोगितया दुर्घटतयाऽनुमित्सोत्पत्तिकालेऽनुमित्यापत्तेः । अनुमित्युत्पत्त्यभावोपलक्षितसमयोत्पत्तिकत्वनिवेशेऽनुमित्यव्यवहितप्राक्क्षणस्यापि तदुत्पत्त्यभावाधिकरणस्थूलकालोत्पत्तिकध्वंसप्रतियोगितया तद्वृत्तिपरामर्शादेरनुमितिविरोधितापत्तेः, तथा च साम्यमिति वाच्यम् । क्षणिकक्षणाभ्युपगमेऽनुमित्युत्पत्त्यनधिकरणस्योपलक्षितसमयोत्पत्तिकत्वनिवेशेऽपि दर्शितस्थलेऽनुमित्सोत्पत्तिक्षणस्यानुमित्युत्पादानधिकरणतयोक्तदोषानवकाशेन तत्कल्पे लाघवसम्भवात् । अनुमित्यनधिकरणत्वस्य समयविशेषणत्वेऽनुमित्युत्पत्तिक्षणस्याप्यनुमित्यधिकरणसमयविशेषं प्रत्येवाव्यवहितपूर्वतया तदुत्तरमनुमित्यापत्तिरतस्तदुत्पत्त्यनधिकरणत्वपर्यन्तनिवेशः ।

समयाव्यवहितपूर्वत्व समयोत्पत्तिध्वंसप्रतियोगित्वमेव न तु वक्ष्यमाणतदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्, तदुत्पत्तिक्षणनिवेशे प्रयोजनाभावात् । प्रागभावानभ्युपगन्तृनये तदुत्पत्तिकालीनध्वंसप्रतियोगित्वं तत्पूर्वत्वम् । तथा च तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तिध्वंसाप्रतियोगित्वरूपाव्यवहितत्वस्य स्वातन्त्र्येण निवेशनमफलम्, तदुत्पत्तिकालीनत्वस्थले तदुत्पत्तिकालोत्पत्तिकत्वनिवेशन एव व्यवहितपूर्वकालवारणसम्भवादित्याशयेनानुमित्यव्यवहितपूर्वत्वमनुमित्युत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपमेव वाच्यमित्याह । तदव्यवहितेति । अनुमितिस्थितिकालोत्पन्नध्वंसप्रतियोगित्वमनुमित्युत्पत्तिक्षणसाधारणमतस्तद्वृत्तित्वविशिष्टस्य विरोधित्वोपपत्तये प्रथमोत्पत्तिनिवेशः । उत्पत्तिविशिष्टोत्पत्तिकत्वनिवेशे तल्लाभायैव क्षणपदम् ।

( दी० ) न चात्र प्रथमे यत्र सिद्ध्यात्मकपरामर्शानन्तरं सिषाधयिषाया उत्पत्तिकाले तत्पुरुषीयस्य कस्यापि धर्मस्य न विनाशोऽनन्तरं पुनरनुमितिः, तत्र तदुत्पत्तिसमयेऽपि सा स्यात्, तत्पूर्वकालीनानां सर्वेषां तादृशपूर्ववर्तित्वेन अविरोधि-

त्वादिति वाच्यम् । अनवरतपरिस्पन्दमानापरिमितपवनादिपरमाणुचेतनसंयोगसन्तानान्तःपातिव्यक्तीनामविरतमेवोत्पादात्, फलानुत्पादबलेनापि तादृशकल्पनासम्भवात्, कारणान्तरकल्पने गौरवाच्च अन्वयव्यभिचारसन्देहस्य च कारणत्वग्रहविरोधित्वात् ।

(गा०) द्वितीयकल्पानुसरणबीजीभूतप्रथमकल्पदोषं कथञ्चिदुद्धर्तुमाशङ्कते । न चाथेति । सिषाधयिषोत्पत्तिकाले कस्यचिदात्मधर्मस्य नाशे तस्यैवानुमितिपूर्ववर्त्तिताभिमतत्वेन विरोधितया न सिषाधयिषोत्पादकालेऽनुमित्यापत्तिसम्भव इति तद्विनाशस्थलानुधावनम् । अन्यदीयधर्मनाशोऽपि तेन धर्मेणाप्रत्यासन्नतया अन्यदीयानुमितिप्रतिबन्धासम्भवात्तत्पुरुषीयस्येत्युक्तम् ।

यद्यपि परामर्शानन्तरं सिषाधयिषोत्पादस्थले परामर्शाव्यवहितक्षणे फलेच्छा अवश्यमेव स्वीकार्या, तथा च तस्या एव सिषाधयिषोत्पत्तिकाले अवश्य विनाशस्तथाप्यपेक्षाबुद्ध्यात्मकफलज्ञानात् यदि परामर्शोत्पत्तिकाले फलेच्छा स्वीक्रियते, तदा परामर्शोत्पत्तिद्वितीयक्षणे न आत्मधर्मविनाश सम्भवतीत्यभिप्रायेणेदम् । अनुमितौ सुखत्वभ्रमदशायां फलान्तरेच्छामन्तरेणैव सुखत्वप्रकारेणानुमित्सा सम्भवतीत्यभिप्रायेण वा ।

सिषाधयिषानन्तरमनुमित्यनुत्पादे तत्पूर्वोत्पन्नपरामर्शादेरेवानुमित्यव्यवहितपूर्ववर्त्तिभिन्नतया विरोधित्वेनापत्त्यसम्भव इत्यतोऽनन्तरमनुमितिरित्युक्तम् । अनवरतेति । अनवरतपरिस्पन्दमानानामपरिमितपवनादिपरमाणूनां चेतनेनात्मना सह यः संयोगसन्तानः संयोगधारा, तदन्तर्गतव्यक्तीनां प्रतिक्षणमेव नाशादित्यर्थः । अपरिमितानामपि घटादीनामिव स्थिरत्वे, सदागतिस्वभावानामपि पवनादिरूपत्वे प्रतिक्षणं न संयोगोत्पादविनाशसम्भव इत्यपरिमितान्तम् । प्रतिक्षणमात्मसमवेतसंयोगादिनाशस्य सम्भवेऽपि न प्रामाणिकतेत्याशङ्क्याह । फलानुत्पादेति । कल्पनासम्भवादिति । अनुमित्युत्पत्तेरुक्तकारणसत्त्वस्यावश्यकतया तदनुत्पादस्य तादृशसंयोगादिनाशमन्तरेणानुपपद्यमानत्वादिति भावः ।

ननु तत्रानुमित्यनुत्पादनिर्वाहाय सिद्ध्यभावादिरूपकारणान्तरमेव कल्प्यतां तद्विरहेणापि तत्र तदुपपत्तेरित्यत आह । कारणान्तरेति ।

ननु अनुमितिपूर्ववर्त्तिभिन्नत्वावच्छिन्नाभावस्य कारणतासिद्धौ उक्तस्थलेऽनुमित्यनुत्पादनिर्वाहाय तादृशकारणाभावोपपादकसंयोगादिविनाशः कल्पनीयः । प्रथमञ्च तादृशग्रह एव न सम्भवति उक्तस्थले तदानीं तादृशाभावरूपकारणसत्त्वस्य सन्दिग्धतया अन्वयव्यभिचारसन्देहादित्यत आह । अन्वयव्यभिचारेति । कारणत्वग्रहाविरोधित्वादिति । कारणतायाः कार्यव्यापकतागर्भाया ग्रहे प्रागभावावगाहितया व्यतिरेकव्यभिचारग्रहस्यैव विरोधित्वात्, सामग्रीनिष्ठकार्यव्याप्तेश्च कार्यकारणभावाघटकतया तादृशव्याप्तिविरोध्यन्वयव्यभिचारग्रहस्य कार्यकारणभावग्रहविरोधित्वे मानाभावादिति भावः ।

( दी० ) उपादीयन्तां वा तत्तदात्मसमयविशेषसम्बन्धा एव तादृशपूर्ववर्त्तिभिन्नाः । भवेद्वा तत्तत्पुरुषीयानुमितिं प्रति तत्तदीयानुमित्यव्यवहितपूर्वक्षणत्वादिना तादृशक्षणवर्त्तित्वविशिष्टत्वादिना वा कारणत्वम् । तथा च उपमानादेः प्रमाणान्तरत्वं भज्येत सर्वत्र अनुमितिसामग्रीसम्भवात् । विलीयेत च परामर्शत्वादिना कारणत्वम् बाधत्वादिना च प्रतिबन्धकत्वम् । अनयैव रीत्या कार्यान्तरेष्वपि क्लृप्तानां कारणानां प्रतिबन्धकानाञ्च अतथात्वमक्लृप्तानाञ्च तथात्वं प्रसज्येत । अत एव न न द्वितीयोऽपि प्रकारः वैयर्थ्याच्च सिद्धेः ।

( गा० ) ननु प्रतिक्षणमात्मनि संयोगादिविनाशोऽपि यत्र द्वारीतस्थले सिद्धिरनुमितिरूपा तत्र तद्वितीयक्षणविनष्टसंयोगादेरनुमितिपूर्वमपि सत्त्वेनाविरोधितया उक्तापत्तिस्तदवस्थैवेत्यत आह । उपादीयन्तामिति । प्रतिबन्धकतया स्वीक्रियन्तामित्यर्थः । समयविशेषः । यत्र तत्रात्मनि अनुमितिर्नोत्पद्यते तत्क्षणाव्यवहितपूर्वक्षणरूपः । तत्सम्बन्धस्यानुमित्यव्यवहितपूर्वमभावात् । एवं सति प्र-

तिबन्धकता स्वरूपसम्बन्धेनैव वाच्या । सर्वत्र क्षणविशेषसम्बन्धस्यैव प्रतिबन्धकतासम्भवेन सिद्ध्यादिसाधारण्यविरहेऽपि क्षतिविरहात्। क्षणसम्बन्धस्य स्वरूपातिरिक्तत्वमभ्युपेत्येदम्। अनतिरिक्तत्वाभिप्रायेणानुगतेन भेदकूटाघटितलघुरूपान्तरेण कारणतां प्रसञ्जयति। भवेद्वेति। एकपुरुषीयानुमित्युत्पादक्षणे सर्वात्मन्यनुमित्यापत्तेर्वारणाय तत्तत्पुरुषीयत्वनिवेशः। क्षणस्य कारणता च यदा तादृशक्षणः तदुत्तरं कार्यमिति कालिकप्रत्यासत्त्या बोध्या। परामर्शसाधारण्यानुरोधेनाह। तादृशेति। तदीयानुमित्यव्यवहितपूर्ववर्तीत्यर्थः।

यद्यप्यत्र पूर्वोपदर्शितस्वसामानाधिकरण्यस्यानुमितिविशेषणतयाप्यतिप्रसङ्गः शक्यवारणस्तथापि तत्र स्वस्वान्तर्भावेनाननुगममाशङ्क्य तत्पुरुषीयत्वघटितैतत्कल्पानुसरणं बोध्यम्।

न चैवं पुरुषभेदेन कारणताभेदात् सामानाधिकरण्यप्रत्यासत्त्या लिङ्गपरामर्शत्वासिद्ध्यभावत्वादिना कारणताकल्पनमेवोचितमिति वाच्यम्। लिङ्गपरामर्शादेरपि लिङ्गादिभेदेन कारणताभेदस्यावश्यकत्वात् पुरुषापेक्षया लिङ्गादीनामेव भूयस्त्वात्।

उक्तरूपेण कारणतास्वीकारे अनिष्टं प्रदर्शयति। तथा चेति। उपमानादेरित्यादिना शब्दपरिग्रहः। प्रमाणान्तरत्वम्। अनुमितिबहिर्भूतप्रमाणत्वम्। सर्वत्रैवेति। उपमानादिस्थले लिङ्गपरामर्शादिघटितानुमितिसामग्र्यनियमात् तत्र प्रमित्यन्तरमुपेयते अत उपमानादेः प्रमाणान्तरता अनुमित्युत्पत्तिमात्रनिर्वाह्यस्य उक्तकारणस्यानुमितिसामग्रीत्वे तु तस्याः सर्वत्रैव सम्भवेनोपमित्यादिरूपविलक्षणप्रमितेरेवासिद्ध्यापत्तेरिति भावः।

ननु सर्वत्रैकजातीयप्रमितिसामग्रीसम्भवेऽपि उपमिनोमि शाब्दयामि अनुमिनोमीत्यनुभवसाक्षिकं प्रमितिवैलक्षण्यं दुरपह्नवमेवेति नोपमानादेः प्रमाणान्तरताभङ्ग इत्यतोऽन्यदोषमाह। विलीयेतेति। उक्तरूपेण परामर्शादेरपि कारणत्वात् परामर्शत्वादिनेति। अनुमित्यव्यवहितपूर्ववर्तिभिन्नत्वादिना बाधादेरपि प्रतिबन्धकत्वात् बाधत्वादिनेति। कार्यान्तरेषु। प्रत्यक्षादिषु। कारणानाम्। सर्ववादिसिद्धकारणतावच्छेदकेन्द्रियसन्निकर्षत्वाद्यवच्छिन्नानाम्। प्रतिबन्धकानाम्। सर्वसम्मतप्रतिबन्धकतावच्छेदकदोषविशेषत्वाद्यवच्छि-

ज्ञानाम् । अतथात्वम् । अकारणत्वमप्रतिबन्धकत्वञ्च । अक्लृप्तानाम् । अकारणत्वादिना सर्वानुमतानां कार्याव्यवहितपूर्ववर्त्तितद्भिन्नाना-मुदासीनवस्तूनाम् । तथात्वम् । कारणत्वादिकम् । प्रसज्येत । तेषामप्युक्तकारणतावच्छेदकादिरूपाक्रान्तत्वादिति भावः ।

अत एवेति । अनुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसिद्धीनां तत्तद्व्यक्तित्वावच्छिन्नाभावस्य हेतुत्वेऽनन्तकारणताप्रसङ्गात्,तादृशसिद्धिभिन्नसिद्धित्वावच्छिन्नाभावहेतुत्वे तस्यानुमित्युत्पत्त्यधीनतया अन्योन्याश्रयात्, तत्तत्सिद्धिभेदकूटवत्सिद्धित्वावच्छिन्नाभावहेतुत्वे भेदानां विशेष्यविशेषणभावे विनिगमनाविरहादेवेत्यर्थः । एतन्मते अधिकदूषणमाह । वैयर्थ्याच्चेति । अनुमित्यव्यवहितपूर्ववर्त्तिभिन्नत्वावच्छिन्नाभावस्यैव कारणत्वसम्भवात्, बाधबुद्ध्यादेरभावस्य परामर्शादेश्च कारणतान्तरतावित्वप्रसङ्गस्येष्टत्वादिति भावः । एतन्मते इव दर्शितद्वितीयक्षणसाधारणाव्यवहितोत्तरत्वघटितस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नसिद्ध्यभावरूपपक्षतापक्षेऽपि पूर्वोक्तसिद्धिपदव्यावृत्त्यसङ्गतस्तद्वैयर्थ्यं बोध्यम् ।

न च ज्ञानेच्छयोर्यौगपद्ये सिषाधयिषाकालोत्पन्नानुमितिपूर्ववर्त्तिपरामर्शादेः सिषाधयिषाविरहविशिष्टाव्यवहितोत्तरक्षणोत्पन्नानुमितिकभिन्नतया पूर्वं सिषाधयिषाविरहविशिष्टतया चानुमितिविरोधिता स्यादिति तत्सार्थकता इति वाच्यम् । ज्ञानेच्छयोर्यौगपद्ये सिद्ध्युपादानेऽपि यत्र पूर्वोत्पन्नसिषाधयिषाचतुर्थक्षणे सिद्ध्यनन्तरं पुनः सिषाधयिषा अनुमितिश्च युगपत्तत्र सिद्धिविरोधितापत्तेर्दुर्वारत्वात् ।

न च तत्र सिद्ध्यनुपादाने सिषाधयिषाविरहविशेषणस्यापि वैयर्थ्यमापतितं यत्र क्रमेण सिद्धिसिषाधयिषानुमितयस्तत्र सिद्धेरनुमित्यविरोधित्वेऽपि सिषाधयिषोत्पत्तिकालीनवष्टफलेच्छादीनां विरोधितयैव सिषाधयिषोत्पत्तिक्षणेऽनुमितिवारणसम्भवादिति वाच्यम् । सिद्धेरनुमितिरूपत्वे इच्छाकालीनवष्टफलेच्छादेरनुमित्यव्यवहितपूर्ववर्त्तितया विरोधित्वासम्भवादिति ।

(दी०) सिषाधयिषाविरहविशिष्टस्य सिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याभावः कारणमिति तु केचित्तन्न ।

साधकं हि मानं सिद्धिस्वरूपयोग्यं तदुपहितं तत्सामग्री वा ? नाद्यः, चक्षुरादिसत्त्वे विनाऽनुमित्सामनुमित्यभावप्रसङ्गात् । न द्वितीयः, सिद्धेः पूर्वं तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वेऽनुमित्यापत्तेः, अनुमानातिरिक्तेत्यस्य वैयर्थ्याच्च । न तृतीयः, अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वम् अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यभावत्वेन चानुमितिकारणत्वमित्यन्योन्याश्रयात् । स्थाणुत्वाभावव्याप्यदर्शनक्षणे प्रातियोग्यारोपविरहेणाभावप्रत्यक्षसामग्रीविरहात् पक्षतासत्त्वे स्थाणुत्वारोपक्षणे तदभावानुमित्यापत्तेरित्यपि कश्चित् ।

( गा० ) समानविषयकप्रत्यक्षसामग्रीकाले पक्षताविरहेणानुमितिं वारयतो मूलस्थसाधकमानपदं सिद्धिसाधकमानविशेषान्यतरपरतया वर्णयत उपाध्यायस्य मतमाह । सिषाधयिषेति ।

सिद्धाविव साधकमानेऽपि अनुमित्साया उत्तेजकत्वात् प्रत्येकं तदभावविशेषणत्वे गौरवमित्यन्यतरत्वावच्छिन्ने सकृद्विशेषणतालाभाय समास उपेक्षितः । अनुमितिपूर्वमनुमानरूपस्यैव साधकमानस्य नियमेन सत्त्वात् सिषाधयिषां विना कदाऽप्यनुमितिर्न स्यादित्यनुमानातिरिक्तत्वं साधकमानविशेषणम्, साधकमानपदार्थघटकसिद्धावनुमित्यन्यत्वविशेषण पर्यवसितम्, इदञ्च लाघवमाशङ्क्यापि निराकार्यम् । साधकमानपदार्थं वितर्क्य दूषयति । साधकं हीति । तदुपहितम् । स्वजन्यसिद्धिविशिष्टम् । तत्सामग्री । सिद्धेः कारणसमुदायः । अनुमित्सासत्त्वे तदभावविशिष्टसाधकमानाभावस्याक्षतत्वाद्विनाऽनुमित्सामिति । अनुमित्यभावप्रसङ्गादिति । कालिकप्रत्यासत्त्या प्रतिबन्धकत्वाभिप्रायेण । समवायेन प्रतिबन्धकत्वे आत्मनि सर्वदैव चक्षुरादिप्रमाणाभावादतिप्रसङ्गो बोध्यः । प्रत्यक्षसामग्रीसत्त्वे अनुत्पन्ने प्रत्यक्ष इति शेषः ।

ननु तत्रानुमितिवारणायान्यदेव प्रतिबन्धकमास्थेयं सिद्ध्यभावपक्षतामतेऽपि तदावश्यकत्वादित्यत आह । अनुमानातिरिक्तेति । तथा सति पक्षताशरीरेऽनुमानातिरिक्तसाधकमानान्तर्भावस्य निष्फल-

त्यादित्यर्थः । सिद्ध्यसमवहितप्रत्यक्षादिसामग्रीदशायां अनुमितिवारणस्यैव तत्फलत्वात्, साधकमानपदेन सिद्ध्युपहितविवक्षणे च तदनिर्वाहादिति भावः ।

केचित्तु यथाश्रुतानुरोधेनानुमानातिरिक्तेति तन्मात्रपरमेव ।

न च सामग्र्याः पृथक् प्रतिबन्धकत्वे साधकमानपदार्थस्य सिद्ध्युपहितस्यापि निवेशनमफलमेवेति वाच्यम् । यत्र विषये प्रत्यक्षाद्युपहितसन्निकर्षादिघटितप्रत्यक्षादिसामग्रीदशायामेव परामर्शादिसमवधानं तत्रानुमितिवारणाय तादृशसाधकमानस्यैव पक्षतायां निवेशयितुमुचितत्वात् ।

न च तत्रापि सिद्धिप्रतिबन्धकतयैव उपपत्तौ सिद्ध्युपहितनिवेशनमफलमिति वाच्यम् । शाब्दसिद्धिकाले अशाब्दं ज्ञानं जायतामितीच्छाबलादनुमित्युपपत्तये सिद्धौ तादृशेच्छाया अवश्यमुत्तेजकत्वोपगमात् । तथाविधेच्छाबलादुपदर्शितप्रत्यक्षसामग्र्यनन्तरमनुमितेर्वारणाय साधकमानान्तर्भावसार्थक्यात् ।

न च सिद्ध्युपहितचक्षुःसंयोगादिसत्त्वे आलोकसमवधानासत्त्वे तादृशेच्छाबलात् अनुमित्युत्पत्त्या साधकमानेऽपि तादृशेच्छाया उत्तेजकताया आवश्यकत्वात् पक्षतायां तदन्तर्भावेऽपि उक्तापत्तिवारणासम्भव इति वाच्यम् । यत्र प्रत्यक्षोपहितचक्षुःसंयोगादिसत्त्वे इतरकारणसमुदायसत्त्वे प्रत्याशाब्दं ज्ञानं जायतामितीच्छा न तु इतरकारणाभावविशिष्टचक्षुःसंयोगादिसत्त्वे तत्र तादृशेच्छाभावस्य प्रत्यक्षोपहितचक्षुःसंयोगादिरूपसाधकमानविशेषणत्वानुपगमात् तादृशविषयविशेषीयपक्षतायामेव तथाविधसाधकमानान्तर्भावस्य सार्थकत्वादित्याहुः ।

अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वमिति । अन्यथा अनुमित्साधीनानुमित्युत्पत्तिकाले प्रत्यक्षापत्तेरिति भावः । प्रत्यक्षसामग्र्यभावत्वेन । सिद्धिप्रत्यक्षसामग्र्यन्यतराभावत्वेन । अन्योन्याश्रयादिति । अनुमितिसामग्र्यभावं प्रत्यक्षकारणकलापान्तर्गतमज्ञात्वा प्रत्यक्षसामग्र्या अज्ञानात् तदज्ञाने च तदभावघटितानुमितिसामग्र्या अज्ञानात् तदभावादिज्ञानाभावादिति भावः ।

अथ वा कारणसमुदायत्वेन सामग्र्या निवेशे समुदायभेदस्य प्रत्येकं सकलकारणेष्वेव सत्त्वात् व्यासज्यवृत्तिधर्मा[illegible]च्छिन्नानुयो-

गिताकाभावानुपगमे सामग्र्यां(१) सामग्रीमिन्नभिन्नत्वं दुर्घटमिति कार्याव्यवहितप्राक्क्षणावच्छिन्नत्वेनैव सा निवेश्या, अव्याप्यवृत्तिधर्मावच्छिन्नभेदस्याव्याप्यवृत्तितामभ्युपेत्य अन्यदा कार्याव्यवहितपूर्वक्षणावच्छिन्नभेदवत्त्व, कार्याव्यवहितप्राक्क्षणे च नादृशभेदावच्छिन्नभेदवत्त्वं फलेऽपि ग्राहकस्योपपादनीयम्। तथा च परामर्शसत्त्वे प्रत्यक्षोत्पत्तिकालेऽनुमित्यनुत्पादः प्रत्यक्षानुत्पादनिर्वाह्यः उक्तानुमितिप्रतिबन्धकत्वस्य प्रत्यक्षोत्पत्तिमन्तरेणानिर्वाहात् प्रत्यक्षोत्पत्तिरपि अनुमित्यनुत्पादमपेक्षते, तदुत्पादे अनुमित्यव्यवहितप्राक्क्षणावच्छिन्नस्य प्रत्यक्षप्रतिबन्धकस्यावश्यं सत्त्वादित्यन्योन्याश्रय इति भावः।

अत्रैव फलत्वे अन्यथा दूषणमुपन्यस्यति स्थाणुत्वाभावेति।

स्वोक्तदोषस्याप्येतदनुमततया चकारसङ्गतिः (२) यत्र विशेषदर्शनानन्तरक्षणजातप्रतियोग्यारोपात् स्थाणुत्वाद्यभावप्रत्यक्षसत्त्वेत्यादिः। तदभावानुमित्यापत्तेः। स्थाणुत्वाभावानुमित्यापत्तेः। तथा चानुमित्यन्यासिद्धिसामग्र्यभावस्य कार्यकालवृत्तितया पृथगेव कारणत्वमावश्यकमिति भावः।

न च प्रतियोग्यारोपस्याभावप्रत्यक्षकारणतामते यत्र विशेषदर्शनकाले तत्पूर्वं वा प्रतियोग्यारोपस्तत्रैव विशेषदर्शनाधीनमभावप्रत्यक्षं न तु विशेषदर्शनोत्तरप्रतियोग्यारोपानन्तरमिति वाच्यम्। प्रतियोग्यारोपस्याहेतुतामते विशेषदर्शनपर्यन्तं प्रतियोग्यारोपानुत्पादस्थले विशेषदर्शनोत्तरमभावप्रत्यक्षोत्पत्त्या फलसाम्यात् तद्धेतुतामतेऽपि क्षणैकव्याजेनाभावप्रत्यक्षस्वीकारस्याऽऽवश्यकत्वेत्याशयात्।

न च विशेषदर्शनानन्तरमाहार्य एव प्रतियोग्यारोपो भविष्यति तत्सामग्र्याश्चेच्छाघटिताया बलवत्त्वात्रोक्तस्थलेऽनुमित्यापत्तिरिति वाच्यम्। धर्मितावच्छेदकसामानाधिकरण्यमात्रावगाहिविशेषदर्शनोत्तरमिच्छां विनैव प्रतियोग्यारोपसम्भवात्(३)। प्रतियो-

(१) "सामग्र्या" मिति पाठोऽन्यस्मिन् पुस्तके नास्ति।

(२) दीधितौ "इत्यपि" इत्यत्र "इति च" इति पाठः क्वचित् पुस्तके स्यादिति भाति।

(३) "न च प्रतियोग्यारोपस्ये" इत्यादिः "प्रतियोग्यारोपसम्भवा" दित्यन्तः पाठस्तु सर्वस्मिन् पुस्तके न दृश्यते।

ग्यारोपकारणतायाः स्वासम्मततया "केचिदिति" (१)।

( दी० ) वस्तुतस्तु स्वतन्त्रान्वयव्यतिरेकशालित्वान्नियमे-न प्रथमोपस्थितत्वाल्लाघवाच्च प्रत्येकमेव तथात्वमन्यथा बाधा-देरपि अत्रैवान्तर्भावप्रसङ्गात्, न चानुमित्साविरहस्य प्रत्येक-विशेषणत्वे गौरवं शाब्दसिद्धौ सत्यामशाब्दं ज्ञानं जायतामि-तीच्छायामनुमितेरुत्पादात् सिद्धावनुमितिविषयकेच्छाविरहस्य, प्रत्यक्षसामग्रीसत्त्वे च तादृशेच्छायामप्यनुमित्यनुत्पादात् सा-धकमाने अनुमितित्वादिप्रकारकेच्छाविरहस्य पृथगेव विशेषण-तायास्त्वयाऽपि वाच्यत्वात् ।

( गा० ) ननु पक्षताघटकप्रत्यक्षसामग्री नानुमितिसामग्र्यभा-वघटितकारणसमुदायरूपा, अपि तु तदतिरिक्ता प्रत्यक्षासाधारण-कारणसमुदायरूपैव वाच्या, अनुमित्साविशिष्टसमानविषयकानु-मितिसामग्रीदशायां सिषाधयिषारूपोत्तेजकबलादेवानुमित्युपपत्तेः। एवं प्रत्यक्षं प्रत्यनुमितिसामग्रीप्रतिबन्धकतायामपि निरुक्तपक्षता न निवेश्यते, अपि तु लाघवादनुमित्साविशिष्टमेव, असत्यामनुमि-त्सायां समानविषये प्रत्यक्षोत्पत्तेरावश्यकत्वाच्चत्सत्त्वे च पक्षताया अपि आवश्यकत्वात् । तथा च न प्रथमोक्तान्योन्याश्रयावकाशः, एवं सामग्र्याः कार्याव्यवहितप्राक्क्षणावच्छिन्नत्वेन प्रतिबन्धक-त्वेऽपि समानविषयकप्रत्यक्षं प्रति प्रतिबन्धकतायामनुमित्सावै-शिष्ट्य निवेश्यते। तथा चोक्तस्थले प्रत्यक्षोत्पत्तिर्नानुमित्यनुत्पाद-मुपजीवति अनुमित्युत्पादेऽप्यनुमित्साविरहेण प्रत्यक्षप्रतिबन्ध-कासत्त्वात् अपि तु अनुमित्साविरहमेवेति नापरोऽप्यन्योन्याश्र-यः। अन्यथा सामग्र्याः पक्षतायामनन्तर्भावेऽपि पृथक् प्रतिबन्ध-कताया आवश्यकत्वेनानिस्तारादित्यत आह। वस्तुतस्त्विति।

स्वतन्त्रान्वयव्यतिरेकशालित्वं सिद्धित्वादिरूपप्रत्येकवृत्तिधर्मा-वच्छेदेन कार्यानुत्पाद प्रत्यन्वयव्यतिरेकानुविधायित्वम्।

ननु अन्यतरत्वेन प्रतिबन्धकत्वेऽपि तन्नियतसिद्ध्यवाधवाच्छि-

---

(१) दीधितौ "कश्चित्," इत्यस्य स्थाने केचिदित्येव पाठो भ-ट्टाचार्यसम्मत इत्यतः केचिदितीत्युक्तम्।

अस्य कार्यानुत्पादान्वयनियतत्वं तदवच्छिन्नव्यतिरेकस्य च धर्मान्तरपरामर्शादिसहितस्य कार्योत्पादनियतत्वं च सम्भवति तावता सिद्धित्वादिना प्रतिबन्धकतासिद्धिरित्यतो नियमेनेति । प्रथमोपस्थितत्वात् । प्रत्येकरूपावच्छिन्नस्य च्छिन्नान्यतरत्वापेक्षया प्रथममुपस्थितत्वात् । कृत्वा शरीरलाघवमाह । लाघवादिति । उक्तरूपद्वयमपेक्ष्य नञ्घटितस्याधिकभेदादिघटिततया गुरुत्वादिति भावः । सिद्धित्वादिना । तथात्वम् । प्रतिबन्धकत्वम् । अन्यथा । प्रतिबन्धकत्वैक्यानुरोधेन नानाधर्मावच्छिन्नानां तत्तदवच्छिन्नाभावत्वेन प्रतिबन्धकत्वे । बाधादेरित्यादिना सत्प्रतिपक्षादिपरिग्रह । (१) अत्रैव । पक्षतायामेव । अन्तर्भावप्रसङ्गात् । घटकताप्रसङ्गात् । सिद्धिबाधसामग्रीविशेषाद्यन्यतमत्वावच्छिन्नाभावस्यत्वप्रसङ्गादिति समुदायार्थः । अन्यथा बाधबुद्ध्याद्यभावस्य कारणतान्तरकल्पनापत्तेरिति भावः ।

न च वह्न्यादिनिश्चयाप्रतिबध्यायामपि वह्निमान् पर्वतो घटवानित्याद्यनुमितौ वह्न्यभावादिनिश्चयस्य प्रतिबन्धकतया वह्न्यादिप्रकारताघटितरूपावच्छिन्नं प्रति वह्न्यभावादिनिश्चयस्य प्रतिबन्धकतान्तरकल्पनमावश्यकमिति कथं साध्यतदभावादिनिश्चयानामेकरूपेण प्रतिबन्धकताप्रसक्तिरिति वाच्यम् । वह्न्यादिप्रकारकानुमितौ वह्न्यभावादिनिश्चयस्य पृथक् प्रतिबन्धकत्वेऽपि वह्निमान् पर्वतो घटवान् इत्याद्यनुमितिहेतुपक्षतायामाश्रयासिद्ध्यादिनिश्चयान्तर्भावेणैव तादृशनिश्चयदशायां तथाविधानुमितिवारणसम्भवात्, अवच्छेदकगौरवस्य तावतैवाप्रयोजकीकृतत्वात् ।

न च तथाऽपि बाधकाले प्रत्यक्षादेरप्यनुत्पत्त्या विशिष्टबुद्धिसामान्यं प्रति बाधबुद्धेः प्रतिबन्धकतान्तरकल्पनमावश्यकमिति पक्षताया तदन्तर्भावो निरर्थक इति वाच्यम् । तत्रापि भिन्नविषयकानुमितिसामग्र्यादीनामवश्यकल्पनीयप्रतिबन्धकताया बाधसाधारणान्यतरत्वादेरवच्छेदकतयैवोपपत्तेर्बाधबुद्धेः सामान्यप्रतिबन्धकत्वासिद्धेः, प्रत्यक्षस्थले इच्छानामुत्तेजकतयापि तदसिद्धेः

(१) सप्रतिपक्षादिपरिग्रह इत्यपि क्वचित्क पाठः ।

केचित्तु । अत्रैव । ईदृशप्रतिबन्धकतायामेव । प्रतिबन्धकान्तरसाधारणान्यतरत्वावच्छिन्नप्रतिबन्धकतायामेवेति यावत् । अन्तर्भावप्रसङ्गात् । अवच्छेदकघटकताप्रसङ्गात् । तदभावव्याप्यवत्ताज्ञानादिसाधारणान्यतरत्वेनैव बाधादेः प्रतिबन्धकताप्रसङ्गादिति समुदायार्थः । तथा च पक्षतायां बाधान्तर्भावपरत्वाभावाच्छोकासङ्गतिरिति व्याचक्रुः ।

केचित्तु तदभावनिश्चयदशायां यादृशाङ्कुरविशेषधर्मितावच्छेदककाद्यनुमितेः कारणान्तरविरहादेव नियमतोऽनुत्पादस्तत्साध्यकस्थलाभिप्रायकोऽयं ग्रन्थ इत्याहुः ।

ननु सिद्धिसामग्रीविशेषयोरुभयोरेवानुमित्सायाः उत्तेजकतया तयोरनुगतरूपेण प्रतिबन्धकत्वे अनुमित्साविरहस्यान्यतरत्वावच्छिन्नं सकृद्विशेषणतया लाघवम्, अनुमित्साविरहविशिष्टसिद्धिसामग्र्यन्यतरत्वापेक्षया तद्विशिष्टसिद्धित्वतद्विशिष्टसामग्रीत्वयोरेकस्यापि विशेषणस्य द्विधा निवेशने गौरवात्, अन्यतरत्वघटकांशापेक्षया सिषाधयिषाविरहांशस्य गुरुतायाः स्फुटत्वात् । अत एव बाधाद्यन्तर्भावप्रतिबन्धेऽपि नावकाशः । बाधसिद्धितद्विशेषसामग्र्यन्यतमत्वेन प्रतिबन्धकत्वे अनुगतरूपावच्छिन्नांशे सिषाधयिषाविरहविशेषणतायां सिद्ध्यादिकाल इव बाधकालेऽपि अनुमित्साबलादनुमित्यापत्तेः, सिद्धित्वाद्यवच्छिन्न एव पृथक् तद्विशेषणतया उक्तलाघवानवकाशात् । विशिष्टबुद्धिसामान्ये बाधतदभावव्याप्यवत्ताज्ञानादीनामेकरूपेण प्रतिबन्धकत्वे उक्तदिशा लाघवासम्भवेनावच्छेदकगौरवस्य दुष्परिहरत्वात् ।

न च प्रत्यक्षस्थले बाधबुद्धौ तदभावव्याप्यवत्ताबुद्धौ च इच्छाया उत्तेजकतया तत्रानुगतरूपेण तयोः प्रतिबन्धकत्वे इच्छाविरहस्य सकृद्विशेषणतया लाघवमक्षुण्णमेवेति वाच्यम् । बाधादौ प्रत्यक्षेच्छाया उत्तेजकत्वे नानाप्रतिबन्धकताप्रसङ्गेन तदनभ्युपगमात्, अनाहार्यत्वस्य प्रतिबध्यतावच्छेदकत्वमङ्गीकृत्यैव बाधादिसमये आहार्यप्रत्यक्षस्योपपादनीयत्वादित्याशङ्कां निरस्यति । न चेत्यादिना । गौरवमित्यन्तेनाशङ्का । अनुमितेरुत्पादादिति । प्रत्यक्षसामग्र्यसत्त्वेऽनुमित्युत्पत्त्यैव तादृशेच्छाविषयासिद्धेरिति भावः । अनुमितिविषयकेच्छाविरहस्य । अनुमितित्वाप्रकारकतादृशेच्छा-

साधारणानुगतरूपावच्छिन्नविरहस्य । तादृशञ्च रूपं प्रागेवावेदितम् । अनुमित्यनुत्पादादिति । प्रत्यक्षोत्पत्त्या तादृशेच्छाधिपर्यासः द्धेरिति भावः । अनुमितित्वादिप्रकारकेच्छाविरहस्य । अनुमितित्वप्रत्यक्षान्यज्ञानत्वादिप्रकारकेच्छाविरहस्य । पृथगेव । यथायोगं सिद्धित्वप्रत्यक्षसामग्रीत्वाद्यवच्छिन्न एव ।

( दी० ) स्वनिवर्त्तकप्रत्यक्षादिसामग्रीसमवहितान्यत्वादिना च तादृशेच्छयोरनुगमेऽतीव गौरवम्, अन्यतरत्वघटकयोरन्योन्याभावयोर्मिथोविशेषणविशेष्यभावे विनिगमकाभावश्च । आत्मनिष्ठश्च समवायेन सिद्धेरभावः कारणम्, भिन्नभिन्नेन च सम्बन्धेन तत्तदसाधारणकारणरूपायास्तत्तत्सामग्र्याः, मणिविशिष्टस्य वह्नेरिव इतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात् । तथा च कथमनुगतरूपेण तयोरभावः कारणम् ।

( गा० ) ननु अनुमितित्वादिप्रकारकेच्छातद्प्रकारकेच्छानामनुगतरूपावच्छिन्नाभाव यथान्यतरत्वावच्छिन्ने विशेषणं वाच्यम्, प्रत्यक्षादिसामग्रीदशायामुक्तेच्छाबलादनुमितेर्वारणाय चानुमितिभिन्नालौकिकप्रत्यक्षान्यस्वविषयतावच्छेदकावच्छिन्नसामग्रीसमवहितान्यत्वेनेच्छा विशेषणीया । अनुमितिसामग्र्या, उपनीतभानसामग्र्या च समवहितायाः इच्छायाः सङ्ग्रहाय भेदद्वयमवच्छिन्नान्तविशेषणम् । अनुमितित्वादिप्रकारिकायाः प्रत्यक्षादिसामग्रीसमवहितेच्छायाः सम्प्रदायावच्छिन्नान्तम् , एवञ्चोक्तलाघवमक्षुण्णमेवेत्यत आह । स्वनिवर्त्तकेति ।

निवर्त्तकत्वं विषयतया बोध्यम् । अतीव गौरवमिति । अतिगुरुशरीरतादृशेच्छाविशेषणस्याधिकस्य निवेशादिति भावः ।

नन्वेवमपि प्रतिबन्धकतैक्यनिबन्धनं लाघवं दुर्वारमेव, प्रतिबन्धकतान्तरकल्पने एकमवच्छेदकगौरवस्याकिञ्चित्करत्वात् । अनेकत्र पक्षताहेतुतायाम् एकैकविपक्षद्वयमावादिनिश्चयानामन्तर्भावेऽनन्तरस्थले अवच्छेदकगौरवात् स्वातन्त्र्येण एवैकप्रतिबन्धकताकल्पनस्यौचित्ततया बाधादेः पक्षतान्तर्भावप्रतिबन्ध्यनवकाशात् । प्रतिबन्धेरुत्तरत्वावेरप्याश्रयेनान्यतरत्वेन प्रतिबन्धकत्वमनेऽपि

विनिगमनाविरहेण प्रतिबन्धताद्वयमापादयति । अन्यतरत्वेति । अन्योन्याभावयोः । सिद्धिभेदसामग्रीभेदयोः । तथा च सिद्धिभेदविशिष्टसामग्रीभेदावच्छिन्नभेदः सामग्रीभेदविशिष्टसिद्धिभेदावच्छिन्नभेदश्च विनिगमनाविरहात् प्रतिबन्धकतावच्छेदक इत्यवच्छेदकभेदात् प्रतिबन्धकताभेद आवश्यकः ।

न च तादृशभेदयोः समनियतयोरभेदान्नावच्छेदकभेद इति वाच्यम् । तादृशभेदाभेदेऽपि तस्य सिद्धिभेदविशिष्टसामग्रीभेदावच्छिन्नभेदत्वेन सामग्रीभेदविशिष्टसिद्धिभेदावच्छिन्नभेदत्वेन च विनिगमनाविरहेणावच्छेदकतायाः स्वीकरणीयतया विशिष्टस्यावच्छेदकस्यावश्यं भेदात् ।

न चाखण्डस्य तस्य स्वरूपत एवावच्छेदकतासम्भवादुक्तविशेषणपुरस्कारेण नावच्छेदकत्वमिति कथं विनिगमनाविरह इति वाच्यम् । अभावस्याखण्डत्वेऽपि स्वरूपतोऽवच्छेदकतायाः सिद्धान्तविरुद्धत्वात्, यस्य स्वरूपतो भानं तस्यैव तथाऽवच्छेदकतायाः सिद्धान्तसिद्धत्वात्, विशेषणपुरस्कारेणोपस्थितेऽवच्छेदकत्वग्रहस्य विशेषणावच्छिन्ने अवच्छेदकतावगाहित्वनियमात् स्वरूपतो (१)ऽभासमाने स्वरूपतोऽवच्छेदकत्वस्य प्रमाणेनासिद्धेश्च ।

न च तद्व्यक्तित्वेनैव भेदस्यावच्छेदकत्वं स्वीकरणीयं न तु स्वरूपतः, तथा च नोपदर्शितविनिगमनाविरहावकाश इति वाच्यम् । भेदनिष्ठतद्व्यक्तित्वस्य भेदस्वरूपातिरिक्तस्य दुर्वचत्वात्, भेदरूपस्य च तस्य स्वरूपतो विशेषणत्वासम्भवात् ।

एतेनाखण्डस्यान्यतरत्वावच्छिन्नाभावस्य तद्व्यक्तित्वेनैव हेतुत्वमित्यपि परास्तम् ।

यत्तु सिद्धिभेदसामग्रीभेदयोः सामानाधिकरण्येन मिथो विशेष्यविशेषणभावापन्नयोर्न भेदप्रतियोगितावच्छेदकत्वं येन विनिगमनाविरहः स्यात्, अपि तु धर्मिविशेषणतापन्नयोरेव व्यासज्यवृत्त्यवच्छेदकत्वं तथाविधयोरप्यवच्छेदकतापर्याप्तेर्महानसीयवह्निर्नास्तीति प्रतीत्याऽवगाहनादिति, तदपि न । महानसीयवह्निर्नास्तीत्यादिबुद्धौ वह्नित्वाद्येकधर्मितावच्छेदकावच्छिन्न एव महानसीयत्वाद्यपरविशेषणभाननियम इत्येकत्रानेकगमवच्छेदकत्वे ग्राह्ये ध-

(१) किञ्चिद्रूपेण भासमान इत्यपि पुस्तकान्तरे पाठः ।

र्मितावच्छेदकावच्छिन्नविशेषणताप्रत्यस्यैवावच्छेदकत्वग्रहो न तु धर्मितावच्छेदकावच्छिन्नविशेषणताभावप्रत्यस्यावच्छेदकताग्रह इति नियमेन प्रकृते कस्य धर्मितावच्छेदकताप्रत्यस्य कस्य वा तदवच्छिन्नविशेषणताप्रत्यस्यावच्छेदकत्वमित्यत्र विनिगमनाविरहेणावच्छेदकताभेदस्याऽऽवश्यकत्वादवच्छेदकविषयतावैलक्षण्यस्यावच्छेदकतावैलक्षण्यनियतत्वादित्यन्यत्र विस्तरः। अन्यतरत्वेन उभयोरनुगमेऽपि प्रतियोगितावच्छेदकसम्बन्धाननुगमान्न तयोरेकाभावस्य कारणतासम्भव इत्याह। आत्मनिष्ठेति। समवायसम्बन्धावच्छिन्नप्रतियोगिताकःसच्चाभाव आत्मप्रत्यासन्नतया कारणम्, प्रत्यक्षासाधारणकारणचक्षुःसंयोगादिरूपसामग्र्यास्तु स्वाश्रयसंयुक्तमनःसंयोगादिरूपपरम्परात्मकभिन्नभिन्नसम्बन्धावच्छिन्नाभाव आत्मप्रत्यासन्नतया कारणं वाच्यमित्यर्थः। विषयचक्षुःसंयोगादेः समवायेनाभावस्य सर्वदैवात्मनि सत्त्वात्। तादृशाभावकारणताया अतिप्रसङ्गावारकत्वादिति(१) भावः।

ननु विषयचक्षुःसंयोगादेर्न प्रतिबन्धकत्वं स्वीक्रियते येन सम्बन्धाननुगमः स्यात्, किन्तु चक्षुःसंयोगादिविशिष्टस्य मनोयोगस्यैव समवायेन प्रतिबन्धकत्वं वाच्यमित्यत आह। मणीति। वह्निरित्यनन्तरं प्रकृते इति, पूरणीयम्। प्रतिबन्धकत्वायोगादिति। मनोयोगस्यानुमितावपि हेतुत्वात् कारणस्य प्रतिबन्धकत्वायोगादिति भावः।

यद्यपि कारणस्याऽपि रूपान्तरेण प्रतिबन्धकत्वे क्षतिविरहः, दाहप्रतिबन्धकत्वे वह्नेः प्रयोजनाविरहादेवानिवेशः, प्रकृते तु सम्बन्धैक्यानुरोधादेव मनोयोगादेरनुप्रवेश इत्यकिञ्चित्करमेतत्, तथाऽपि मनोयोगस्याधिकस्य निवेशनीयतया गौरवमेव बाधकं बोध्यम्।

न च सामग्र्याः स्वतन्त्रप्रतिबन्धकतामतेऽप्यात्मनिष्ठतासम्पत्तये चक्षुःसंयोगादेः सम्बन्धतया मनोयोगादिप्रवेशस्याऽऽवश्यकत्वान्नाधिक्यमेतन्मतेऽपि, कालनिष्ठतया सामग्र्यभावहेतुत्वे तत्तत्पुरुषीयत्वनिवेशस्यावश्यकतया गौरवादिति वाच्यम्। तथाऽपि मनोयोगादिसम्बन्धस्याधिकस्य निवेशनीयतया गौरवस्य दुर्वारत्वात्, विषयभेदेन प्रतिबन्धकताभेदाविरहानुरोधेन विषयप्रत्या-

(१) अतिप्रसङ्गबोधकत्वादित्यपि पुस्तकान्तरे पाठः।

सन्नतया चक्षुःसंयोगादिप्रतिबन्धकतापक्षस्यैव स्वतन्त्रसामग्रीप्रतिबन्धकतावादिभिराश्रयणीयतया तत्र मनोयोगादेर्निवेशाभावाच्च । तथा चेति । एवं रीत्या प्रतिबन्धकतावच्छेदकसम्बन्धभेदस्याऽऽवश्यकत्वे च इत्यर्थः ।

( दी० ) एवं सिद्धेः सिषाधयिषाविरहेण वैशिष्ट्यमेककालावच्छेदेनैकात्मवृत्तित्वं प्रत्यक्षादिकारणचक्षुःसंयोगादेस्त्वन्याहशमिति सामग्रीविशेषाभावस्य हेतुत्वेऽपि लाघवात् सिद्ध्यभाव एव पक्षव्यवहारनिमित्तम् , एतदेवाभिसन्धाय प्रवृत्तिनिमित्तमुक्तमिति वक्ष्यति ।

( गा० ) पूर्वं प्रतियोगितावच्छेदकभेदेन सिद्धिसामग्रीविशेषणयोः सिषाधयिषाविरहपदार्थयोर्भेदात्तद्विशेषणप्रवेशसार्थक्यं व्यवस्थापितं इदानीं सम्बन्धभेदेन तद्विशेषणताभेदं व्यवस्थापयति । एककालेति । एकक्षणावच्छिन्नमेकात्मसमवेतत्वमित्यर्थः ।

यद्यपि सम्बन्धमध्ये एकक्षणावच्छिन्नत्वानन्तर्भावेऽपि सिषाधयिषाकाले तद्विरहरूपविशेषणाभावाद्विशिष्टाभावोऽक्षत एव ।

न च तत्र कालानन्तर्भावे सिषाधयिषाकालेऽपि सिद्धौ कालान्तरावच्छिन्नतद्विरहवत्यात्मनि वृत्तित्वरूपवैशिष्ट्यं वर्त्तते, अन्यात्मनि घटादौ च तादृशविशेषणञ्चेति विशिष्टसिद्धिसत्त्वमव्याहतमिति कथं विशिष्टाभावेन वर्त्तितव्यं कालान्तर्भावे तु तादृशकालाभावान्न तदानीं तद्घटितवैशिष्ट्यमिति विशिष्टाभावोऽक्षत इति वाच्यम् । सिषाधयिषाकालस्य तदधिकरणनिष्ठतदभावाधिकरणतानवच्छेदकतया तादृशाधिकरणताघटितसामानाधिकरण्यरूपतदिच्छासमानाधिकरणसिद्धिनिष्ठवैशिष्ट्येऽप्यनवच्छेदकत्वात् तत्तत्कालावच्छेदेन सिद्धिमत्यपि तदिच्छाधिकरणे इच्छाविरहविशिष्टसिद्धिसत्त्वानुपपत्तेः । अन्यथा स्वाधिकरणकालावच्छिन्नत्वस्य स्वाधिकरणवृत्तिताविशेषणत्वेऽपि तत्कालस्याप्यन्याधिकरणावच्छिन्नस्वाधिकरणतया कालविरहप्रयुक्तवैशिष्ट्यविरहस्यानिर्वाहात् । विशेष्यीभूततत्सिद्ध्यधिकरणावच्छिन्नस्वाधिकरणकालत्वेन कालस्य सम्बन्धघटकत्वे चाननुगमादिति । तथापि विभिन्नकाले विशे-

पणविशेष्ययोः सामानाधिकरण्यसत्त्वेऽपि एकक्षणावच्छेदेन नाधिकरणस्यैव विशिष्टसत्त्वनिर्वाहकत्वमित्येतत्सूचनायैव एककालावच्छिन्नत्वकथनम् ।

केचित्तु कालस्य विशिष्टाभावप्रतियोगितावच्छेदकत्वे घटकसम्बन्धाघटकत्वे तदुपलक्षिताभावात्तद्विशिष्टाभाववैलक्षण्यानिर्वाहः, प्रतियोगितावच्छेदकवैलक्षण्यात् सर्वदा दण्डरहितपुरुषाधिकरणक्षणे दण्डोपलक्षितपुरुषाभावस्य सत्त्वेन पुरुषत्वादिमात्रस्य तत्प्रतियोगितावच्छेदकत्वासम्भवात् तादृशपुरुषान्तरव्यावर्तकानुगतधर्मान्तरविरहेण, सत्त्वे वा प्रतियोगिकोटौ तस्याभानेन, प्रतियोगितावच्छेदके तदन्तर्भावासम्भवादित्याहुः । तच्चिन्त्यम् ।

अन्यादृशमिति । स्वाश्रयीभूतात्मन्युक्तपरम्परासम्बन्धेन सम्बद्धत्वरूपमित्यर्थः ।

ननु पक्षताशरीरे प्रत्यक्षादिसामग्र्यनन्तर्भावे तदभावस्यानुमितौ स्वतन्त्रहेतुताकल्पनमावश्यकं, तथा च तस्यैव पक्षपदप्रवृत्तिनिमित्तता स्वीक्रियतां न तु सिद्ध्यभावस्य, तथा च पक्षपदप्रवृत्तिनिमित्तमिदमिति मूलविरोध इत्यत आह । सामग्रीति । हेतुत्वेऽपि । अनुमित्यसाधारणकारणत्वेऽपि । लाघवात् । लघुशरीरत्वात् ।

( दी० ) फलानुपहितसिद्धीच्छाविरहविशिष्टसिद्ध्यभावापेक्षया बाधाभावस्य लघुत्वेऽपि सिद्धसाधनस्थले पक्षव्यवहारविरहेण तादृशसिद्ध्यभावस्याऽऽवश्यकत्वे बाधाभावो न निविशते गौरवात् । विशिष्टसिद्ध्यभावस्य चाऽऽत्मनिष्ठस्यैवानुमितिहेतुत्वेऽपि तस्य परम्परासम्बन्धादेव पर्वतादौ पक्षव्यवहार इति ध्येयम् ।

(गा०) ननु लाघवस्य पक्षपदप्रवृत्तिनिमित्ततोपष्टम्भकत्वे बाधाभावस्यैव तथात्वमुचितं तत्र सिषाधयिषाविरहाप्रवेशात्, यदि च सिद्धसाधनस्थले पक्षव्यवहारो नास्तीति सिद्ध्यभावस्य तथात्वमुच्यते, तदा बाधदशायामपि तद्विरहात् सोऽपि निविशतामित्यत आह । फलानुपहितेति । स्वविषयसिद्ध्यनुपहितेत्यर्थः । एतच्चाति-

गौरवसूचनाय। सिद्धसाधनस्थल । साध्यनिश्चयदशायाम्। पक्ष-व्यवहारविरहण । पक्षव्यवहारविरहस्य सर्ववादिसिद्धत्वेन(१) । गौरवादिति । वाग्स्थले पक्षव्यवहारस्य सविवादतया गौरवसहिष्णुताया अन्यायत्वादिति भावः।

ननु समवायसम्बन्धावच्छिन्नसिद्ध्यभावस्यात्मप्रत्यासन्नतयैवानुमितिहेतुतया तस्य पक्षपदप्रवृत्तिनिमित्तत्वे आत्मन्येव पक्षव्यवहारप्रसङ्ग इत्यत आह। विशिष्टेति । सिषाधयिषाविरहविशिष्टेत्यर्थः। एतदभिधानञ्च सिद्धेः पक्षनिष्ठाया उद्देश्यतासम्बन्धेनानुमितिं प्रति प्रतिबन्धकत्वासम्भवप्रदर्शनाय, पर्वत वह्निमनुमिनुयां महानसे वह्निमनुमिनुयामित्याकारिकाणामनुमितीनामेकत्रोत्तेजकत्वेऽतिप्रसङ्गेन पृथगवोत्तजकतया पक्षभेदेन कारणताभेदस्याऽऽवश्यकतया आत्मनिष्ठप्रत्यासत्तेरेवोचितत्वात् । अन्यथा पुरुषविशेषाणामन्तर्भावनीयतापत्त्या गौरवात् समानप्रकारिकाया असमानविशेष्यकसिद्धेरनुमितिप्रतिबन्धकतयाऽपि पक्षनिष्ठप्रत्यासत्त्यसम्भवो बोध्यः (२) । परम्परासम्बन्धादिति। स्वप्रतियोगितावच्छेदककोटिप्रविष्टविशेष्यतावच्छेदकवत्त्वरूपादित्यादिः।

न च सिद्धिकालेऽपि एतादृशसम्बन्धेन पक्षे सिद्ध्यभावो वर्ततेऽत्यन्ताभावस्य नित्यत्वादित्यतिप्रसङ्ग इति वाच्यम्। तत्तदात्मवृत्तित्वविशिष्टस्यैव सिद्ध्यभावस्य तादृशसम्बन्धेन तत्पुरुषं प्रति पक्षव्यवहारनियामकत्वात्।

(दी०) एकस्य पुंसोऽनुमित्सासत्त्वेऽपि अन्यस्य तद्विरहिणः प्रत्यक्षादिसामग्रीसत्त्वेऽनुमित्यनुत्पादात् तत्पुरुषीयानुमितिं प्रति तत्पुरुषीयानुमित्साविरहकालीनतत्पुरुषीयसिद्धिसामग्रीविशेषविरहोऽनन्यगतिकत्वेन हेतुरुपेतव्य इति वदन्ति।

(गा०) ननु विषयचक्षुःसंयोगादिरूपायाः प्रत्यक्षसामग्र्या आत्मनिष्ठप्रत्यासत्त्या न प्रतिबन्धकतासम्भव उक्तपरम्परया अति-

(१) पक्षव्यवहारस्य सर्ववाद्यसिद्धत्वेनेत्यपि पुस्तकान्तरे पाठः।
(२) सामानाधिकरण्येनानुमितौ धर्म्यन्तरविशेष्यकसिद्धेरपि प्रतिबन्धकत्वादिति भावः।

प्रसक्तत्वात् सम्बन्धत्वे मानाभावाच्च, तथा च यदा तादृशसामग्री तदुत्तरक्षणं नानुमितिरिति कालिकप्रत्यासत्त्यैव प्रतिबन्धकत्वं कल्पनीयम्, तथा च पुरुषान्तरीयप्रत्यक्षसामग्र्यामपि पुरुषान्तरीयानुमितिप्रतिबन्धः स्यात्, एवं कालिकसम्बन्धावच्छिन्नानुमित्सा विरहस्यैव दैशिकसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन सामग्र्यां विशेषणत्वं स्वीकार्यम्, तथा च पुरुषान्तरीयानुमित्साकालीनाया अपि पुरुषान्तरीयप्रत्यक्षसामग्र्यास्तदीयानुमित्यप्रतिबन्धकत्वापत्तिरित्याशङ्कां चक्षुःसंयोगादौ तत्पुरुषीयत्वमन्तर्भाव्य निराकरोति । एकस्येति ।

अनुमित्यनुत्पादादित्यन्तमुपलक्षणम्, अन्यस्य प्रत्यक्षसामग्रीसत्त्वेऽन्यस्य तद्विरहिणोऽनुमित्युत्पादाच्चेत्यपि द्रष्टव्यम् (१)। तत्पुरुषीयानुमित्सायाः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य दैशिकसम्बन्धेनाधिकरणं यः कालस्तत्र कालिकसम्बन्धेन वर्तमानत्वं कालीनान्तार्थः सामग्रीविशेषणम्।

अथ वा समवायसम्बन्धावच्छिन्नप्रतियोगिताकतदात्मवृत्तित्वविशिष्टाभावावच्छेदकक्षणे कालिकसम्बन्धेन वृत्तित्वमेव तदर्थः । तेन तत्पुरुषीयानुमित्साक्षणस्यापि अन्यदेशावच्छेदेन दैशिकसम्बन्धेन कालिकसम्बन्धावच्छिन्नतदिच्छाभाववत्त्वेऽपि न क्षतिः । तत्पुरुषीयसिद्धिसामग्रीविशेषविरहेति । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकः पक्षनिष्ठतदीयेन्द्रियसन्निकर्षादिविशिष्टसाध्यनिष्ठतदीयेन्द्रियसन्निकर्षादिविरह इत्यर्थः । वैशिष्ट्यमेककालीनत्वमेव । विशेष्यविशेषणभावे विनिगमनाविरहान्नानाकारणताकल्पनमगत्या न दोषाय । यावत्त्वेन तदसाधारणकारणसमुदायस्य प्रतिबन्धकत्वं पुनरनुपादेयमेव यावत्त्वस्य दुर्वचत्वात् । पर्वतो वह्निमानित्याद्यनुमितिसमानविषयचाक्षुषादिसामग्र्याः प्रतिबन्धकतायां रूपादिकं नान्तर्भावनीयं तत्र साध्यपक्षयो रूपादिमत्त्वानियमेन तन्निवेशे प्रयोजनाभावात्, किन्तु पर्वतो द्रव्यवान्, द्रव्यं वह्निमत्, द्रव्यं द्रव्यवदित्याद्यनुमितौ वाय्वादीन्द्रियसन्निकर्षस्यावि-

(१) "अन्यथा प्रत्यक्षसामग्रीसत्त्वे अन्यस्य तद्विरहेणानुमित्युत्पादाच्चेत्यपि द्रष्टव्य"मिति पुस्तकान्तरे पाठः।

रोधितोपपत्तये यथायोग्यं साध्यपक्षादौ रूपादिसत्त्व निवेशनीयम् ।

अथ प्रतिबन्धकसामग्रीमत्यपि काले तदनधिकरणदेशावच्छेदेन तदभावस्य सौलभ्यादनुमित्यापत्तिः ? न च प्रतिबन्धकसत्तायाः कार्यानुत्पादप्रयोजकत्वात् तत्सत्त्वे कथं कार्यापत्ति(१)रिति वाच्यम् । सामग्र्याः कार्योत्पत्तिप्रयोजिकायाः प्रतिबन्धकसत्त्वेऽपि तदभावसत्त्वेनाक्षतत्वे कार्योत्पत्तदुर्वारत्वादिति चेन्न । यादृशकारणताघटकनियमे देशान्तरावच्छेदेन कार्यसमानाधिकरणकारणाभावव्यावर्त्तकं देशभेदानवच्छिन्नत्वमन्यद्वा विशेषणमभावे निविशते यथा समवायादिसम्बन्धावच्छिन्नसंयोगज्ञानादिनिष्ठकारणताघटकनियमे तदन्यकारणतावच्छेदकावच्छिन्नस्य देशभेदानवच्छिन्नवृत्तिरेवाधिकरणे कार्योत्पत्तिप्रयोजिका उक्तप्रतिबन्धकाभावस्य च कारणता न तादृशी, किञ्चिदवच्छेदेन तत्प्रतिबन्धकसत्त्व एव तत्र कार्यानुत्पत्त्या तादृशाभावे विशेषणप्रवेशे प्रयोजनाभावात्, तथा च देशभेदावच्छिन्नप्रतिबन्धकाभावबलान्नानुमित्यापत्तिः ।

एतेनात्मनि शरीरविशेषावच्छेदेन सिद्ध्यादिरूपप्रतिबन्धकसत्त्वे घटाद्यवच्छिन्नतदभावबलादनुमित्यापत्तिरपि निरस्ता ।

न च सिद्ध्यादिमत्यात्मनि तत्काले घटाद्यवच्छिन्ना या तदभाववृत्तिस्तदन्यदेशभेदानवच्छिन्नतद्वृत्तेरप्रामाणिकतया सिद्ध्यादिसत्त्वेऽप्यनुमित्यनुपपत्तिरिति वाच्यम् । तादृशवृत्त्यनभ्युपगमे सिद्ध्याद्यसत्त्वदशायां तदभावस्यात्मनि दैशिकाव्याप्यवृत्तितायाः सर्वानुभवसिद्धाया अनुपपत्तेः ।

यदि च कायव्यूहस्थले एकत्रात्मनि शरीरान्तरावच्छेदेन सिद्ध्यभावाद्यभावस्य सिद्ध्यादेः सत्त्वेऽपि अन्यशरीरावच्छेदेनानुमित्यादृयुत्पत्तिः प्रामाणिकी तदा सिद्ध्याद्यभावनिष्ठकारणताघटकनियमशरीरेऽभावांशे उक्तविशेषणप्रवेशस्याऽऽवश्यकत्वात् घटाद्यवच्छिन्नसिद्ध्यभावबलात् सिद्ध्यादिदशायामनुमित्यापत्तेर्वारणाय गत्यन्तरमेवानुसरणीयमिति दिक् ।

( दी० ) अथ सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुरस्तु ? न चैवं मण्यादिस्थलीयदाहं प्रति उत्तेजकस्य हेतुत्वापत्तिः, उत्ते-

( १ ) कार्योत्पत्तिरित्यपि पुस्तकान्तरे पाठः ।

जकानामननुगतत्वात्, तावदभावविशिष्टमण्याद्यभावस्य चाननुगतत्वादिति चेत् ! इहापि दर्शितोऽननुगमः सिषाधयिषायाः ।

( गा० ) उत्तेजकत्वा(१)भिमतसिषाधयिषाकारणतां स्वीकृत्य सिद्ध्यभावस्य कारणतामाक्षिपति अथेत्यादिना, चेदित्यन्तेन ।

एतावतैव विना सिषाधयिषां सिद्ध्यनन्तरमनुमितिवारणसम्भवादिति भावः । प्रतिबन्धिमाशङ्कते । न चैवमिति । उत्तेजकस्य । मन्त्रौषधिविशेषादेः । प्रतिबन्धिमुद्धरति । उत्तेजकानामिति । मण्यादिस्थलीयोत्तेजकमन्त्रौषधिविशेषादीनामित्यर्थः । अननुगतत्वादिति । तथा चाननुगतकार्यं प्रति व्यभिचारेण कारणत्वासम्भवादिति भावः । इहापि । सिद्धिस्थलेऽपि । दर्शित इति । यादृशयादृशेच्छासत्त्व इत्यादिनेत्यादिः । सिषाधयिषाया इति । उत्तेजकीभूताया इत्यादिः । तथा च तुल्ययुक्त्या उत्तेजकाभावकूटविशिष्टायाः सिद्धेरभाव एव दाहादौ मण्याद्यभाववद्धेतुर्भविष्यतीति भावः ।

( टी० ) सिद्ध्युत्तरानुमितित्वञ्च अनुगतानतिप्रसक्तं दुर्वचम्, सिद्धिस्थितिकालीनां स्वेतरसिद्धिकालीनां वाऽनुमितिं प्रति हेतुत्वकल्पने च विनाऽपि सिषाधयिषां सिद्धिनाशकालेऽनुमित्युत्पादो दुर्वारः, एकस्य च पुंसः सिद्धिसत्त्वेऽन्यस्य सिषाधयिषाशून्यस्यानुमित्यनुत्पादप्रसङ्गः, तत्तत्पुरुषीयतादृशानुमितिं प्रति तत्तत्पुरुषीयासिषाधयिषाया हेतुत्वेऽनन्तकार्यकारणभावप्रसङ्गः । अपि च सिद्धौ सत्यां विनाऽपि सिषाधयिषां सामान्यसामग्रीतोऽनुमितिसामान्योत्पत्तिप्रसङ्गात् ।

( गा० ) ननु तावदभावकूटाविशिष्टसाध्यनिश्चयाभावत्वापेक्षया लघीयसा अन्ततस्तावदन्यतमत्वेनैवा(२)नुगमः सम्भवति, सिषाधयिषाणामित्यत आह । सिद्ध्युत्तरानुमितित्वञ्चेति ।

अनुगतस्य तस्य सिद्धिसमानकालीनप्रागभावप्रतियोगित्वरूप-

---

( १ ) प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वम् उत्तेजकत्वम् ।

( २ ) तावदन्यतमत्वेनैवेत्यपि क्वचित् पाठः ।

स्यानतिप्रसक्तस्य च तत्तत्सिद्धिनाशकालीनप्रागभावाप्रतियोगित्वे सति तत्तत्सिद्धिसमानकालीनप्रागभावप्रतियोगित्वात्मकस्यैव सम्भवादनुगतानातिप्रसक्तेर्युभयमुपात्तम्' तथा च प्रथमधर्मस्य कार्यतावच्छेदकत्वे सिषाधयिषामन्तरेण सिद्धिनाशोत्तरकाले जायमानायामनुमितौ सिषाधयिषाव्यभिचारः, उत्तरस्य तथात्वे चानन्तकार्यकारणभावप्रसङ्ग इति भावः। सिद्धिस्थितिकालीनामिति। स्वक्षणवृत्तिप्रागभावप्रतियोगित्वस्वक्षणवृत्तित्वोभयसम्बन्धेन सिद्ध्यवच्छिन्नामित्यर्थः। लाघवादाह। स्वेतरेति। स्वभिन्नत्वस्वक्षणवृत्तित्वोभयसम्बन्धेन सिद्ध्यवच्छिन्नामित्यर्थः। दलद्वयव्यावृत्तिस्तु स्फुटैव। सम्बन्धविधया स्वक्षणवृत्तित्वादीनां निवेशान्न स्वाननुगमनिबन्धनो दोषः, सम्बन्धमध्ये स्वपदार्थानिवेशोऽव्यन्याधिकरणवृत्तित्वादेरन्यसम्बन्धत्वाभावेनातिप्रसङ्गविरहात्(१)। यदि च उत्पत्तिमध्ये स्वपदार्थविशेषणान्तर्भावस्याप्रसिद्धिवारणायावश्यकतया अननुगमः शङ्क्यते, तदा स्ववृत्तिप्रागभावप्रतियोगित्वस्वक्षणवृत्तित्वोभयसम्बन्धेन सिद्धिविशिष्टत्वम् अनुमितौ प्रवेश्यम्(२)। नाशकाले। नाशोत्पत्तिक्षणे। अनुमित्युत्पादो दुर्वार इति। सिद्धिनाशसमयोत्पन्नाया अनुमितेः उक्तसिषाधयिषाकार्यतावच्छेदकानाक्रान्तत्वादिति भावः।

ननु स्वक्षणवृत्तिप्रागभावप्रतियोगित्वस्वनाशक्षणवृत्तिप्रागभावाप्रतियोगित्वोभयसम्बन्धेन सिद्ध्यवच्छिन्नानुमितित्वमेव सिषाधयिषाजन्यतावच्छेदकं वाच्यम्? एतच्च सिद्धिनाशकालोत्पन्नानुमितिसाधारणमेवेति नातिप्रसङ्गः।

न च सामान्यतो नाशक्षणवृत्तिप्रागभावाप्रतियोगित्वं जन्यमात्रस्यैव न सम्भवतीति यदधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वं तद्यक्तिनाश एव विशिष्य निवेश्य इत्यननुगमतादवस्थ्यमिति वाच्यम्। सम्बन्धाननुगमस्यादोषत्वात्, स्ववृत्तिप्रागभावप्रतियोगि-

(१) अन्यसम्बन्धत्वाभावेनातिप्रसङ्गविरहादित्यपि पुस्तकान्तरे पाठः।

(२) यदि चेत्यादिः प्रवेश्यमित्यन्तः पाठस्तु सर्वेषु पुस्तकेषु न दृश्यते।

स्वस्वप्रवृत्तिकृतिमत्त्वोभयसम्बन्धेन सिद्धिविशिष्टत्वेन कथञ्चिदनुगमस्यापि सम्भवाच्चेत्यतो दोषान्तरमाह । एकस्येति । सिद्धिसत्त्व इति । अव्यवहितपूर्वकाले इत्यादिः । अनुमित्यनुत्पादप्रसङ्ग इति । पुरुषान्तरीयसिद्ध्यव्यवहितोत्तरोत्पन्नपुरुषान्तरीयानुमितेरप्युक्तसिषाधयिषाजन्यतावच्छेदकधर्माक्रान्तत्वादिति भावः । सामानाधिकरण्यस्याधिकस्य दर्शितकार्यतावच्छेदकतावटकसम्बन्धमध्ये निवेशेन पुरुषान्तरीयसिद्ध्यनन्तरोत्पन्नानुमितौ सिषाधयिषाया व्यभिचारवारणसम्भवात् दोषान्तरमाह । अपि चेति । सामान्यसामग्रीतः । अनुमितिसामान्यहेतुभूतपरामर्शादितः ।

( दी० ) न हि ईदृशविशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति, न चान्यत्रापि विशेषसामग्र्यन्तरमस्ति तत्कल्पने चातिगौरवम् । इह जायमाना सा सिषाधयिषोत्तरैव स्यात्, सा च न जायते कारणाभावादिति चेत् ? सा मा जनिष्ट अनुमितिसामान्यन्तु स्यादेव, कार्यानुत्पादस्य विना कारणविरहमसम्भवात् ।

( गा० ) ननु विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्योत्पादकत्वात्रापत्तिसम्भव इत्याशङ्कायामाह । न हीति । ईदृशेति । सिषाधयिषारूपेत्यर्थः । जनकत्वम् । उपधायकत्वम् । नास्तीति । न हीत्यन्वयः । सिद्धसत्त्वे सिषाधयिषां विनापि परामर्शादेरनुमित्युत्पादकत्वादिति भाव । तथा च तत्रैव सिद्धिदशायामपि परामर्शादिसत्त्वे सिषाधयिषाविरहो नानुमित्यनुत्पादप्रयोजको भवेदिति पर्यवसितम् ।

ननु विशेषसामग्रीविरहकूट एव सामान्यसामग्रीदशायां सामान्यकार्यानुत्पादप्रयोजकः, सिद्ध्यसत्त्वस्थलीयविशेषसामग्रीविरहघटितस्य कूटस्य च सिषाधयिषाविरहसहकृतसिद्धिस्थल एव सत्त्व न तु सिद्ध्यसत्त्वस्थले इति न दोष इत्यत आह । न चेति । अन्यत्रापि । सिद्ध्यसत्त्वस्थलेऽपि । विशेषसामग्र्यन्तरमिति । सिद्ध्यभावस्यैतन्मतेऽहेतुत्वादिति भावः । तत्तदनुमितिव्यक्त्युत्पादकतत्तत्परामर्शव्यक्तीना विशेषसामग्रीत्वेऽपि अनुमित्युत्पत्तिकालेऽपि

सत्त्वेन तदनन्तरमनुमित्यनुत्पादे प्रयोजकाविरहः, तत्तद्व्यक्तिविरहाणामनन्तानां सामान्यकार्यानुत्पादप्रयोजकत्वे गौरवञ्च, अन्यथा बहुतरसामान्यकारणताया उच्छेदप्रसङ्ग इत्याशयः।

अत्राहुः, सिद्ध्युत्तरानुमितौ सिद्ध्यभावस्य हेतुत्वान्तरकल्पनयैव ईदृशातिप्रसङ्गवारणसम्भवात् विशिष्टसिद्ध्यभावहेतुत्वमयुक्तम्, सिद्धिसिषाधयिषाविरहयोर्विशेषणविशेष्यभाव विनिगमनाविरहेण प्रतिबन्धकताद्वयस्य तन्मतेऽप्यावश्यकत्वात्, प्रतिबन्धकतावच्छेदकगौरवस्याऽऽधिक्यात्।

न च सिषाधयिषाहेतुतापक्षेऽपि कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वादिनिवेशाधिक्येन गौरवमित्याशङ्क्यम्। तल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावस्य पूर्वोपदर्शितसमूहालम्बनजन्यानुमितौ व्यभिचारवारणायाव्यवहितोत्तरत्वसम्बन्धेन तादृशसिद्ध्यनवच्छिन्नानुमितिं प्रत्येव हेतुताया भवताऽपि वाच्यत्वादिति सिद्धिस्थले विनापि सिषाधयिषां सामान्यकार्योत्पत्तावपि तद्दशकार्यस्योक्तविशेषसामग्रीकार्यतावच्छेदकाक्रान्तता स्यात् तथा च विशेषसामग्रीं विना तदुत्पत्तौ तस्याव्यभिचारात् कारणतैव व्याहन्यत इति न तत्र तदुत्पत्त्यापत्तिरिति शङ्कते। इहेति। कार्योत्पादप्रयोजकसामग्रीसत्त्वे प्रयोजनक्षतिर्न कार्योत्पत्ति विरुणद्धि, तथा च प्रकृते सिषाधयिषाऽघटितायाः सामान्यकार्यप्रयोजकसामग्र्याः सिद्धिकालेऽपि सत्त्वं विशेषसामग्रीविरहेण तत्कार्यतावच्छेदकावच्छिन्नापत्त्यसम्भवेऽपि सामान्यधर्मावच्छिन्नापत्तिर्दुर्वारैवेत्यत आह। सा मा जनिष्टेति। सा। सिद्ध्युत्तरानुमितिः। कार्यानुत्पादस्य। तद्धर्मावच्छिन्नानुत्पादस्य। विना कारणविरहम्। तद्धर्मावच्छिन्नोत्पादप्रयोजकसामग्रीविरहं विना।

(दी०) करणव्यापारत्वेनावश्यककारणभावस्य परामर्शस्य कारणतावच्छेदिका पक्षता न कारणमिति तु भ्रमः, प्रतिबन्धकान्तराभाववदन्वयव्यतिरेकशालित्वेन हेतुत्वात्। अन्यथा यथासम्भवं निमित्तकारणस्य समवायिकारणत्वाद्यवच्छेदकत्वप्रसङ्गात्।

(गा०) अनुमितिं प्रति पक्षतासाहित्यपरामर्शत्वेन हेतुता, न तु पक्षतापरामर्शयोः पृथक्कारणताद्वयं गौरवात् ।

न च विशेषणविशेष्यभाव विनिगमनाविरहः । परामर्शस्याहेतुत्वे तस्य व्याप्तिज्ञानरूपकरणव्यापारत्वासम्भवात्, व्यापारतायाः फलजनकतागर्भत्वात् इत्यस्यैव विनिगमकस्य सम्भवादिति केषाञ्चिन्मतं दूषयति । करणेत्यादिना ।

परामर्शस्येति षष्ठ्यर्थो वृत्तित्वमस्याः कारणतायामन्वयः । निमित्तकारणस्य दण्डादेः । समवायिकारणत्वात् । कपालादिनिष्ठघटत्वाद्यवच्छिन्नकारणतेत्यर्थः । समवायनियमाय तत्कारणताया आवश्यकत्वादिति भावः । जन्यसत्त्वाद्यवच्छिन्ननिरूपितायाञ्च समवायिकारणतायां दण्डादेर्व्यभिचारेण प्रवेशासम्भवाद्यथाऽसम्भवमित्युक्तम् । कारणतावच्छेदकत्वयोरुक्तविनिगमकत्वेन नियतत्वेऽपि सिद्ध्यभावसाहित्यपरामर्शत्वयोरेकविशिष्टस्यैव एकविशेष्यतावच्छेदकतापन्नस्यैव वाऽपरस्यावच्छेदकत्वं वाच्यम्, तत्र विनिगमनाविरहो दुर्वार इति तु तत्त्वम् ।

(दी०) अथानुमितिसाधारणसिद्धेः प्रतिबन्धकत्वे तदभावस्य मण्याद्यभाववत् प्रतिबन्धकाभावत्वेन कार्यकालवृत्तेरेव हेतुत्वात् अनुमितिकाले च तदसम्भवात् सा नोत्पद्येतेति चेत् ? न, यस्य मण्याद्यभावादेः कार्यसमकालतया अन्वयव्यतिरेकित्वं तस्यैव तथात्वेन हेतुत्वं न तु सर्वस्य गौरवात् । अन्यथा समवायिकारणस्य कार्यसहभूतस्यैव हेतुत्वात् कारणतामात्रस्य तथात्वप्रसक्तौ प्राभाकरा एव विजयेरन्निति ।

(गा०) ननु सिद्ध्यभावस्यानुमितिहेतुत्वेऽनुमितेस्तं विना कदाप्यनुमितिर्नोपपद्येत मणिसमवधानोत्पत्तिकाले दाहानुत्पत्त्या प्रतिबन्धकाभावस्य कार्यकालसत्तायाः फलोपधानप्रयोजकत्वात्, अनुमितिकाले च सिद्ध्यभावासत्त्वादित्यगत्या तस्य कारणतावच्छेदकत्वमेव, न तु कारणत्वमिति शङ्कते । अथेति ।

कार्योत्पत्तिक्षणावच्छेदेनापि कार्याधिकरणे नियतसत्त्व यत्कारणताघटकं तत्कारणताश्रयस्यैव कार्योत्पत्तिक्षणसत्त्वं कार्योत्पत्ति-

प्रयोजकं यथा मण्यभावादेः सिद्ध्यभावस्य च प्रतिबन्धकाभावरूपत्वेऽपि नियतप्राक्सत्त्वमेव कारणताघटकं न तूक्तमपीति तस्य स्वप्राक्सत्त्वमात्रं फलोत्पत्तौ तन्त्रमिति नानुपपत्तिरिति समाधत्ते । यस्येति । अन्यथेति । सहचारदर्शनमात्रेणैव प्रतिबन्धकाभावे कार्यसहभावेन हेतुतासिद्धौ इत्यर्थः । प्राभाकरा इति । सहवर्त्तिन एव कारणतावादिन इत्यादि ।

यत्तु अनुमितौ प्रत्यक्षसामग्र्याः प्रतिबन्धकान्तरकल्पने गौरवात् तत्सामग्रीदशायाम् अनुमित्यापत्तिवारणायानुमित्यन्यासिद्ध्यभावस्य कार्यकालवृत्तितया हेतुत्वमेव युक्तम् अनुमित्यभावस्य प्राक्सत्त्वमात्रेण हेतुत्वान्तरं कल्प्यताम् इति, तदसत्, सिषाधयिषानन्तरजातसिद्धिद्वितीयक्षणेऽनुमित्यनुत्पादप्रसङ्गात्, कार्यकालेऽनुमित्सानाशेन तदभावविशिष्टासिद्धिमत्त्वात् । प्रत्यक्षादिसिद्धिसत्त्वेऽसत्याश्च तत्सामग्र्यां वह्निज्ञानान्तरं जायतामितीच्छाबलादनुमित्युत्पत्त्या अनुमित्यन्यासिद्धौ तादृशेच्छाया उत्तेजकत्वात् तादृशेच्छाबलात् प्रत्यक्षसामग्र्यनन्तरं प्रत्यक्षाद्युत्पादसमयेऽप्यनुमित्यापत्तेः, सिद्धावप्रामाण्यग्रहसत्त्वे प्रत्यक्षाद्युत्पादसमयेऽनुमित्यापत्तेश्च इति ।

( दी० ) प्राभाकरास्तु विनाप्यनुमित्सां क्वचित् परामर्शानुमितिप्रवाहस्याविरलग्नस्याऽऽनुभविकत्वात् कालभेदकल्पनायाश्च मानाभावात् मानाभावाच्च पक्षता नानुमितिहेतुः । परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषणमित्याहुः ॥

इत्यनुमानचिन्तामणिदीधितौ पक्षतानिरूपणं समाप्तम् ॥

( गा० ) पक्षताया अनुमितिहेतुतामनङ्गीकुर्वतां गुरूणां मतमाह । प्राभाकरास्त्विति । •

अनुमित्साया योग्यताया उत्तेजकत्वे द्वित्वत्रित्वादिप्रकारकेच्छाबलात् अनुमितिद्वितीयक्षणोत्पन्नपरामर्शात् तृतीयक्षणेऽनुमित्यन्तरोत्पादस्य पक्षतामतेऽप्युपपत्तेर्विनाऽनुमित्सामिति । क्वचित् । प्रतिबन्धकान्तरासत्त्वस्थले । परामर्शानुमितिप्रवाहस्य । क्रमोत्पन्नपरामर्शानुमितिप्रवाहस्य । अपलापनिराकरणाय समूहपर्यन्तानुसर-

यम् । पूर्वपूर्वानुमितिनाशे द्वितीयादिपरामर्शादनुमित्यन्तरोत्पत्तौ बाधकाभावादाह । अविरलेति ।

,, ननु तत्रागत्या एकैकक्षणविलम्बेनैवानुमितिः स्वीकार्या इत्यत आह । कालभेदेति । मानाभावात् । पक्षताया हेतुत्वस्यासिद्ध्या मत्यन्तरविरहस्यैवासिद्धेरिति भावः ।

नन्वेवं सिद्धसाधनस्यादूषणतया परार्थस्थले तदुद्भावनानुपपत्तिरित्यत आह । परार्थेति । अर्थान्तरेति० । सिद्धेऽर्थे आकाङ्क्षाविरहादिति भावः ।

न च पक्षताया अनुमित्यहेतुत्वेऽनुमित्यनन्तरं जातव्यक्तिरेव कथं नोत्पद्यते ? तद्वारणाय तत्तद्व्यक्तेः तत्तत्प्रागभावव्यक्तीनां विशिष्यानन्तहेतुताकल्पने गौरवमिति वाच्यम् । तत्तदनुमितिव्यक्तेः पूर्वं तन्नाशात् परतो वा कदाचित् तत्समानविषयकानुमित्यन्तरोत्पादसमये तद्व्यक्त्यापत्तिवारणाय तत्र परामर्शव्यक्तीनां विशिष्य हेतुताया आवश्यकत्वात्, तत एव तद्व्यक्तीनां पुनरुत्पादवारणसम्भवात् ।

न च परामर्शानां तत्तद्व्यक्तित्वेन तत्तदनुमितिव्यक्तिहेतुत्वेऽपि विनश्यदवस्थात्तदनुमित्यव्यवहितपूर्वोत्पन्नपरामर्शात् पुनस्तदनुमितिप्रसङ्ग इति वाच्यम् । एतन्मते कार्यासहवर्तिनः फलाजनकत्वात् अनुमितित्वावच्छिन्नाभावहेतुतयाऽपि तादृशापत्तिवारणसम्भवात् तदनुरोधेन गुरुणा प्रत्यक्षादिसाधारणनिश्चयत्वेन प्रतिबन्धकत्वासिद्धेः ।

अत्र केचित् पक्षताया अनुमित्यहेतुत्वमते विनापि वह्न्यादिलिङ्गकवह्न्याद्यनुमित्सां तादृशानुमित्युत्पत्त्या तादृशानुमितौ तादृशानुमित्साविरहविशिष्टप्रत्यक्षादिसामग्र्यभावस्य कारणताधिक्यात् गौरवं पक्षताहेतुत्वमते तादृशानुमितेरिच्छानियततया तत्रेच्छाया लघीयस्या हेतुतयैवोपपत्ते पक्षतापि तत्रेच्छैवेत्याहुः ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचितायामनुमानचिन्तामणिदीधितिगादाधर्यां पक्षता-

निरूपणं समाप्तम् ॥

अनुमानगादाधर्याम्

# परामर्शप्रकरणम् ।

( चि० ) पक्षधर्मस्य व्याप्तिविशिष्टज्ञानमनुमितिहेतुः । ननु व्याप्यतावच्छेदकप्रकारेण व्याप्तिस्मरणं पक्षधर्मताज्ञानं तथा, लाघवात्, परामर्शहेतुत्वेनावश्यकत्वाच्च ।

( दी० ) लक्षणोपोद्घातेन विशिष्टज्ञानस्य कारणत्वं व्यवस्थापयति । पक्षेत्यादि । व्याप्तिस्मरणमिति । स्मरणत्वमविवक्षितमव्यापकत्वात् । लाघवात् । प्रथमोपस्थितत्वलाघवात् । कल्पनालाघवमाह । परामर्शेति । परामर्शहेतुत्ववादिनाऽप्यनुमितेः पूर्वं तादृशज्ञानमवश्यं मन्तव्यम् । तथा चातिरिक्तधर्मिणस्तत्रानन्यथासिद्धत्वनियतपूर्ववर्त्तित्वयोः कल्पनामपेक्ष्य उभयवादिसिद्धनियतपूर्ववर्त्तिनोऽनन्यथासिद्धत्वमात्रकल्पना लघीयसीति भावः ।

( गा० ) पक्षतां निरूप्य विशिष्टपरामर्शत्वेन हेतुतां ज्ञानद्वयकारणतावादिमीमांसकविप्रतिपत्तिं निरस्य मणिकारेण व्यवस्थापिता तत्र सङ्गतिं दर्शयति । लक्षणोपोद्घातेनेति । विशिष्टपरामर्शत्वावच्छिन्नकारणताघटितानुमितिलक्षणोपपादकतयेत्यर्थः । विशिष्टज्ञानस्य । विशिष्टपरामर्शत्वावच्छिन्नस्य । कारणत्वं व्यवस्थापयति । अनुमितिकारणत्वे युक्तिमभिधातुं प्रतिजानीते । तादृशयुक्तेरनुमितिलक्षणघटककारणतानिष्ठविशिष्टपरामर्शत्वावच्छिन्नत्वसाधकतया लक्षणोपपादकत्वं बोध्यम् । इदानीमपि विशिष्टपरामर्शत्वस्यानुमितिकारणतावच्छेदकत्वे मीमांसकविप्रतिपत्त्यवतारणनाप्रामाणिकत्वशङ्कया(१) तदुपपादकप्रमाणाकाङ्क्षासम्भवेन तदुपपा-

( १ ) अवतारवशेनाप्रामाणिकत्वशङ्कया इति पाठोऽप्यत्रास्ति ।

दकत्वस्य लक्षणनिरूपितसङ्गतित्वम् ।

मूले । पक्षधर्मस्येति । हेतुतावच्छेदकसम्बन्धेन पक्षविशेषणतापन्नस्येत्यर्थः । व्याप्यविशेष्यकपरामर्शस्य सङ्ग्राह्यत्वे विशेषणतेत्यत्र विशेष्यताऽप्यन्तर्भाव्या । व्याप्तिविशिष्टज्ञानं व्याप्तिप्रकारकज्ञानम् । तथा च पक्षविशेषणतापन्नहेतुविषयकत्वावच्छेदेन व्याप्तिप्रकारकत्ववज्ज्ञानत्वस्य पक्षतावच्छेदकत्वलाभः, उद्देश्यतावच्छेदकविधेयभावमहिम्ना तादृशहेतुविषयकत्वव्याप्तिप्रकारकत्वयोरवच्छेद्यावच्छेदकभावलाभात् । पक्षतावच्छेदकतादृशज्ञानत्वांशे कारणत्वरूपसाध्यस्य स्वरूपसम्बन्धरूपावच्छेदकतासिद्धिरप्युद्देश्या, अतो व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वादिना विशिष्टपरामर्शस्याप्यनुमितिहेतुताया मीमांसकसंमतत्वेऽपि न सिद्धसाधनावकाशः ।

व्याप्तिस्मरणमित्यत्र स्मृतित्वस्य हेतुतावच्छेदकत्वाभिमानं निराकरोति । स्मरणत्वमिति । अविवक्षितमिति । हेतुतावच्छेदकत्वेनेत्यादिः । अविवक्षाबीजमाह । अव्यापकत्वादिति । हेतुत्वाव्यापकत्वादित्यर्थः । व्याप्त्यनुभवस्यापि हेतुत्वादिति भावः । अवच्छेदकलाघवस्य नैयायिकमत एव सत्त्वात् कल्पनालाघवस्याग्रे वाच्यत्वाल्लाघवादिति ग्रन्थस्य तत्परत्वायोगाच्चमन्यथा व्याचष्टे । लाघवादिति । प्रथमोपस्थितत्वेति । ज्ञानद्वयस्य विशिष्टपरामर्शापेक्षया प्रथममुत्पन्नतया स्वप्रकाशवादिनां गुरूणां ज्ञानद्वयस्यैव ज्ञानद्वयोपस्थितिरूपतया तस्य प्रथमोपस्थितत्वमिति भावः ।

ननु परामर्शहेतुतया ज्ञानद्वयस्याऽऽवश्यकत्वमनुमितिहेतुताकल्पनेऽनुपयुक्तमित्याशङ्कां निराचिकीर्षुराह । कल्पनालाघवमिति । परामर्शहेतुत्वेनाऽऽवश्यकत्वाच्चेति मूले परामर्शहेतुत्वेनेत्यनन्तरं तथापीति पूरणीयमित्याशयेन तदर्थमाह । परामर्शहेतुत्वेति । तादृशज्ञानम् । व्याप्यतावच्छेदकप्रकारकव्याप्त्यादिज्ञानम् । मन्तव्यमिति । अन्यथा कारणविरहेण परामर्शस्यैवानुदयापत्तेरिति शेषः ।

यद्यपि धूमवान् पर्वत इति ज्ञानं विनापि धूमो वह्निव्याप्य इति ज्ञानेन पर्वतत्वरूपविशेषणज्ञानसहकृतेन वह्निव्याप्यधूमवान् पर्वत इति विशिष्टवैशिष्ट्यबोधजननसम्भवात् परामर्शहेतुतया पक्षधर्मताज्ञानस्य नाऽऽवश्यकता, तथाऽपि पर्वते धूमदर्शनात्मकोद्बोधकाद्

धूमो वह्निव्याप्य इति स्मरणं ततः परामर्श इति क्रमस्यौत्सर्गिकतया इदानीं तादृशरीत्यैव परामर्शोत्पत्तिः सर्वत्रेत्यभिमानेन ज्ञानद्वयस्य परामर्शहेतुताया आवश्यकत्वं मूलकृताभिहितम्, एतदभिमानेनैवानुमितिपूर्वं विशिष्टपरामर्शस्यासिद्धिः । परामर्शार्थं ज्ञानद्वयोपगमे अनुमितिसामग्रीसत्त्वेन परामर्शोत्पत्त्यसम्भवादित्यभिप्रायाग्रे परामर्शहेतुतायामवच्छेदकलाघवमप्रयोजकीकरिष्यते । एतादृशाभिमानश्च नैयायिकमतमालम्ब्य । अथ वह्निव्याप्यो धूम इत्यादिना निराकृत्यानुमितिपूर्वं विशिष्टपरामर्शसिद्धिरुपपादनीया, तावता च परामर्शहेतुतया ज्ञानद्वयस्यावश्यकत्वनिराकरणेऽपि वह्निव्याप्यधूमवान् पर्वत इति परामर्शस्यैव व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वतत्प्रकारकपक्षधर्मताज्ञानत्वाक्रान्ततया तत्तद्रूपावच्छिन्नस्य नियतपूर्ववर्त्तिताया उभयसिद्धत्वेन कल्पनालाघवमक्षुण्णमेव । अत एव तदुत्तरं व्याप्यतावच्छेदकानवगाहिशाब्दपरामर्शादनुमित्युत्पादाभिधानमेव दीधितिकृता एतादृशकल्पनालाघवनिराकरणपरतया व्याख्यास्यते ।

केचित्तु परामर्शहेतुतयेति मूलस्य परामर्शस्यानुमितिहेतुतयाऽपि व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वाद्यवच्छिन्नस्य न्यायमतसिद्धनियतपूर्ववर्त्तितावत्त्वादित्यर्थः । परामर्शेन स्वार्थे व्याप्यतावच्छेदकप्रकारकव्याप्त्यादिविषयकज्ञानान्तरमपेक्ष्यतां मा वा परामर्श एव तादृशज्ञानात्मक इत्यतोऽपि परामर्शस्य नियतपूर्ववर्त्तितायादिनाऽपि तत्तद्रूपावच्छिन्नस्य नियतपूर्ववर्त्तित्वमनुमतमेवेति भाव इत्यप्याहुः ।

तदसत् । यत्र धूमत्वसामानाधिकरण्येन वह्निव्याप्यत्वावगाहिविशिष्टपरामर्शस्तत्र व्यभिचारेण मीमांसकमतसिद्धकारणतावच्छेदकद्वयस्य विशिष्टपरामर्शत्वव्यापकत्वाभावात्, द्रव्यत्वादिसामानाधिकरण्यमात्रेण वह्न्यादिव्याप्तिज्ञानात् द्रव्यत्वादिना च जलादेर्ह्रदवृत्तिताज्ञानादन्यथाख्यात्यापत्तिभयेन धूमत्वावच्छेदेन व्याप्तिप्रकारकज्ञानस्यैव तन्मते हेतुत्वादिति ।

न चैतत्समशीलदोषस्य व्याप्यतावच्छेदकानवगाहिशाब्दपरामर्शस्थले मणिकृतैव दास्यमानत्वात्र दोष इति वाच्यम् । एवं सत्येतद्वाक्यापक्षेऽपि मीमांसकमतसिद्धकारणतावच्छेदकद्वयस्य वि-

शिष्टपरामर्शत्वव्यापकत्वमित्यभिमानस्यानुसरणीयतया तादृशाकानुदयस्य विशिष्टपरामर्शहेतुत्वमित्यभिमानमूलकत्वमेव सम्यक् ।

केचित्तु निश्चयत्वानिवेशप्रयुक्तलाघवानुरोधेन वह्निव्याप्यधूमवत्पर्वतवानित्यादिविशिष्टवैशिष्ट्यावगाहिज्ञानमेव नैयायिकमतेऽनुमितिकारणम्, तत्र च धूमवान् पर्वत इति ज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानविधया हेतुत्वम् । पक्षमुख्यविशेष्यकज्ञानस्यैव हेतुत्वे वह्निव्याप्यधूमवत्पर्वताभिन्नः पर्वत इत्याकारज्ञानस्यैव हेतुत्वमित्यभिप्रायकतया परामर्शहेतुत्वेनावश्यकत्वादिति मूलं वर्णयन्ति ।

परे तु मानसत्वव्याप्यपरामर्शत्वमते उपनीतभानात्मकपरामर्श एवानुमितिहेतुः, यो यत्र पूर्वमवगत इति नियमोऽप्यस्ति तादृशनियमबलात् वह्निव्याप्यधूमवान् पर्वत इति ज्ञाने धूमवान् पर्वत इति ज्ञानस्यापि हेतुत्वमित्यभिप्रायकतया परामर्शहेतुत्वेनेत्यादिकं वर्णयन्ति ।

तदसत्, तादृशनियमवादिमते धूमवान् पर्वत इति ज्ञानस्य यदा कदाचिदपेक्षितत्वेऽप्यव्यवहितप्राक्कालेऽनपेक्षणात् ।

न च तादृशनियमनिर्वाहाय तत्प्रकारकतद्विशेष्यकज्ञानस्य संस्कारद्वारा हेतुत्वं तादृशसंस्कारस्य वा हेतुत्वं कल्पनीय, तत्प्रकारकोपनीतभाने तद्विषयकज्ञानस्य साक्षाद्धेतुत्वं कल्पनीयमिति गौरवम्, तथा च लाघवात्तत्प्रकारकतद्विशेष्यकोपनीतभाने तत्प्रकारकज्ञानस्य साक्षादेव हेतुत्वं तादृशनियमनिर्वाहाय कल्पयितुमुचितमिति वाच्यम् । तादृशनियमवादिमते यदा कदाचित् तत्प्रकारकतद्विशेष्यकज्ञानसत्त्वैव तत्प्रकारकतद्विशेष्यकोपनीतभाननिर्वाह इत्यनुभवमपलप्य लाघवानुसरणे गत तादृशनियमेन, तत्प्रकारकोपनीतभाने तद्विषयकज्ञानत्वेनैव हेतुत्वस्यौचित्यात्, तादृशनियमस्यापूर्वधर्मिकल्पनायान्यथानुपपत्त्या दीधितिकृता दूषितत्वाच्चेति । कारणतायाः स्वरूपसम्बन्धादिरूपत्वे कल्पनालाघवासम्भवादनन्यथासिद्धनियतपूर्ववर्त्तित्वं कारणत्वम् इत्यभिप्रायकतया कल्पनालाघवमुपपादयितुं भावमाह । तथा चेति । अतिरिक्तधर्मिण. ज्ञानद्वयानन्तरमुभयवाद्यसिद्धविशिष्टपरामर्शस्य कल्पनामित्यनेनान्वय. । तत्र । विशिष्टपरामर्शत्वावच्छिन्ने ।

( चि० ) एवं धूमो वह्निव्याप्यो धूमवांश्चायमिति ज्ञानद्वयादेवानुमितिरस्तु ? न चानुमितिं प्रति व्याप्यत्वज्ञानमेव हेतुर्लाघवादावश्यकत्वाच्चेति वाच्यम् । तस्यानुमितेः पूर्वमसिद्धौ युगपदुपस्थित्यभावात् ।

( दी० ) ननु धूमत्वावच्छेदेन व्याप्तेरालोकत्वेन च पक्षधर्मताया ग्रहेऽप्यनुमितिः स्यादित्यत आह । एवमिति । यद्धर्मावच्छेदेन व्याप्तिज्ञानं तेन रूपेण पक्षधर्मताज्ञानं हेतुरिति नातिप्रसङ्गः । ज्ञानद्वयादिति । द्वित्वमविवक्षितम् । लाघवात् । अवच्छेदकलाघवात् । आवश्यकत्वात् । व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानस्य हेतुत्वे व्याप्तिज्ञानहेतुताया आवश्यकत्वात् । क्वचिदुपजीव्यत्वादिति पाठः । उपजीव्यत्वञ्च व्याप्तिज्ञानं विना यद्धर्मावच्छेदेन व्याप्तिज्ञानं तत्प्रकारकपक्षधर्मताज्ञानस्यासम्भवात् । एवञ्च सिद्धे व्याप्तिज्ञाने हेतावतिप्रसङ्गभङ्गाय पक्षधर्मताविषयकत्वमवच्छेदकं कल्प्यते लाघवात् न तु करणान्तरं गौरवादिति भावः । सिद्धस्य व्याप्तिज्ञानस्य न पक्षधर्मताविषयकत्वमित्याशयेनाह । तस्येति ।

( गा० ) व्याप्यतावच्छेदकप्रकारकज्ञानत्वेन सामान्यतो हेतुत्वे विभिन्नव्याप्यतावच्छेदकप्रकारकव्याप्तिपक्षधर्मताज्ञानाभ्यामनुमितिप्रसङ्ग इत्याशङ्कानुद्धारे मूलस्य न्यूनतेति तन्निराकरणपरतया एवमित्यादिमूलमुत्थापयति । नन्विति । अनुमितिः स्यादिति । तत्रापि ज्ञानद्वयघटितसामग्रीसत्त्वादिति भावः । एवञ्चेवमित्यादिमूलस्य धूमत्वाद्यवच्छेदेन व्याप्तिज्ञानं तत्प्रकारकपक्षधर्मताज्ञानञ्च मिलितमनुमित्युत्पादप्रयोजकसामग्री, न तूक्तं ज्ञानद्वयं तथेत्यर्थः । सामान्यरूपेण हेतुत्वे विशेषरूपेण सामग्रीप्रवेशो न सम्भवति कारणतावच्छेदकावच्छिन्नस्तोमस्यैव सामग्रीत्वादित्याशङ्क्य विशेषरूपेण हेतुतामाह । यद्धर्मावच्छेदेनेति । व्याप्तिज्ञानं यत्रानुमितौ हेतुस्तत्रेति, विषयत इति वा, पूरणीयम् । द्रव्यत्वादिसामानाधिकरण्येन

वह्न्यादिव्याप्तिज्ञानात् द्रव्यत्वादिना च जलादिह्रदादिवृत्तिताज्ञानादन्यथाख्यात्यात्मकानुमित्यापत्तेर्वारणाय यद्धर्मप्रकारेणेत्युपेक्ष्य यद्धर्मावच्छेदेनेत्यभिहितम्। अन्यथाख्यातिमनङ्गीकुर्वतां वच्छेदेन व्याप्तिज्ञानाप्रसिद्ध्या नोक्तापत्तिसम्भवः। द्वित्वस्य फलोपधायकतावच्छेदकत्वे उभयविषयकैकज्ञानादनुमित्यनिर्वाहः, सर्वत्र भेदाभेदसाधारणं कारणस्य मेलनमेव कार्योत्पत्तिप्रयोजकं तु भेदनियतं तद्द्वित्वमपि क्वचित्तथेति, द्वित्वस्य तथात्वप्रसञ्जकयुक्तिकञ्च, (१)इत्यभिसन्धाय ज्ञानद्वयादित्यत्र द्वयपदं व्याप्तिपक्षधर्मताज्ञानयोरभेदानपेक्षामात्रसूचकतया व्याचष्टे। ज्ञानद्वयादितीति। कल्पनालाघवस्याऽऽवश्यकत्वादित्यनेन वाच्यतया पौनरुक्त्यं निराचिकीर्षुर्व्याचष्टे। लाघवादिति। अवच्छेदकलाघवादिति। व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वापेक्षया व्याप्तिप्रकारकज्ञानत्वरूपावच्छेदकस्य लघुशरीरत्वादिति भावः। व्याप्तिज्ञानस्येति धर्मपरम्। हेतुत्वे। कारणतावच्छेदकत्वे। व्याप्तिज्ञानहेतुतायाः। व्याप्तिज्ञानत्वस्य कारणतावच्छेदकतायाः। आवश्यकत्वादिति। उभयसिद्धत्वादित्यर्थः। तस्य तदन्तर्गतत्वादिति भावः। व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानादेर्व्याप्तिप्रकारकज्ञानानुपजीवकत्वात्।

क्वचित्के उपजीव्यत्वादिति पाठे असङ्गतिरिति उपजीव्यपदं विशिष्टसत्तानिर्वाहकपरमित्याशयेन विशिष्टसत्तानिर्वाहकत्वमुपपादयति। उपजीव्यत्वञ्चेति। असम्भवात्। सत्त्वानुपपत्तेः। विशिष्टसत्ताया विशेषणव्याप्तिज्ञानसत्त्वनियतत्वादिति भावः। एतावतापि कल्पनालाघवमित्यवधेयम्।

ननु व्याप्तिप्रकारकज्ञानत्वेन हेतुत्वे सिद्धेऽपि व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वरूपपरामर्शत्वस्य हेतुतावच्छेदकत्वासिद्ध्या नैयायिकानां नाभिमतसिद्धिरित्यत आशयं पूरयति। एवञ्चेति। व्याप्तिज्ञाने। व्याप्तिज्ञानत्वावच्छिन्ने। अतिप्रसङ्गभङ्गाय। पक्षधर्मताधीशून्यकाले अनुमितिवारणाय। व्याप्तिज्ञानकारणतायामेव पक्षधर्मताविषयकत्वमवच्छेदकम् अन्यथानुपपत्त्या कल्प्यते।

यद्यपि व्याप्तिज्ञानत्वावच्छिन्नहेतुतायां पक्षधर्मताविषयकत्व

(१) व्यासज्यवृत्तिधर्मस्य कारणतानवच्छेदकत्वादिति भावः।

स्यावच्छेदकत्वोपगमे प्रस्थितमवच्छेदकाघवादिना, तथाऽतिप्रसङ्गानवतारदशायां व्याप्तिज्ञानत्वस्य लाघवात् प्रथमतोऽवच्छेदकत्वासिद्धिरुत्तरकालमवच्छेदकाभिवृद्धिश्च निष्प्रत्यूहैवेति भावः ।

ननु पक्षधर्मताधीत्वेन कारणत्वान्तरकल्पनयाऽतिप्रसङ्गभङ्गनान्यथानुपपत्त्या अवच्छेदकाभिवृद्धिकल्पनं कथमित्यत आह । लाघवादिति । कारणतान्तरकल्पनमपेक्ष्य लाघवादित्यर्थः । अनतिप्रसङ्गोपपादकत्वाविशेषेऽपि गौरवादेव न कारणत्वान्तरसिद्धिरित्याह । न त्विति । व्याप्तिज्ञानत्वावच्छिन्नमनुमितेः पूर्वमुभयवादिसिद्धमेवेति तस्यानुमितेः पूर्वमसिद्धावितिग्रन्थमूलासङ्गतिरतस्तदाशयं व्याचष्टे । सिद्धस्येति । न पक्षधर्मताविषयकत्वमिति । तथा च कल्पतद्धेतुतायां तदवृत्तेः पक्षधर्मताविषयकत्वस्यावच्छेदकत्वमपि कल्पयितुमशक्यमिति भावः ।

( दी० ) यद्वा व्याप्यत्वज्ञानं व्याप्यत्वप्रकारकं पक्षधर्मताज्ञानमित्यर्थः । ननु विशिष्टज्ञानान्यथानुपपत्त्या ज्ञानद्वयस्यावश्यं वाच्यतया तस्यैव हेतुत्वं युक्तं तदिदमुक्तमावश्यकत्वादित्यत आह । उपजीव्यत्वादिति । विशिष्टज्ञानस्यान्यथानुपपत्त्या तत्कल्पने विशिष्टज्ञानस्योपजीव्यत्वादित्यर्थः । स्वसंवेदनासिद्धमेव ज्ञानद्वयम् आवश्यकत्वञ्च तस्योभयवादिसिद्धत्वमित्याशयेनाह । तस्येति ।

( गा० ) आशयमपूरयित्वाऽपि व्याप्यत्वज्ञानमित्यादिमूलं व्याकरोति । यद्वेति । एतन्मतेऽपि लाघवादित्यस्यावच्छेदकलाघवादित्यर्थः । धूमत्वादेः व्याप्तेरनतिरिक्तवृत्तित्वरूपावच्छेदकत्वाचगाहितया मीमांसकैः कारणतावच्छेदके निवेशनीयतया तन्मते ऽवच्छेदकगौरवादिति भावः ।

अवच्छेदकगौरवेऽपि मीमांसकमते दर्शितकल्पनालाघवमभ्युपगमिति शङ्कायामुपजीव्यत्वादिति मूलमवतारयति । नन्विति । विशिष्टज्ञानान्यथानुपपत्त्येति । तथा च ज्ञानद्वयकल्पकतया विशिष्टज्ञानमप्यनुमितेः पूर्वं मीमांसकमतसिद्धमिति न नैयायिकमते कल्पनागौरवमिति भावः ।

ननु मूलकृता अनुमितिपूर्वं विशिष्टज्ञानस्यासिद्धिमुद्भाव्य यद-वच्छेदकलाघवमप्रयोजकीकृतं तन्न सङ्गच्छते विशिष्ट ... कल्पकविरहेण ज्ञानद्वयस्याप्यसिद्धिप्रसङ्गादतस्तदाशयं प्रकाशयति। स्वेति। स्वात्मकं यत् संवेदनं प्रत्यक्षं (१)तत्सिद्धमित्यर्थः, तथा च न तत्कल्पकतया विशिष्टपरामर्शस्य तदभ्युपगतत्वमिति भावः।

नन्वेवं तेषां ज्ञानद्वयस्यावश्यकत्वाभिधानविरोधः ? विशिष्टज्ञानान्यथानुपपत्त्या अवश्यकल्पनीयत्वस्यैवावश्यकत्वार्थत्वादित्यत आह। आवश्यकत्वञ्चेति। उभयवादिसिद्धत्वमिति। तथा च नोक्तरूपमावश्यकत्वमिति न तदभिधानविरोध इति भावः।

(चि०) अथ यथा तत्ताविशिष्टस्मरणे सतीन्द्रियसन्निकृष्टे स एवायमित्यभेदप्रत्ययो भवति तथेन्द्रियसन्निकृष्टे धूमे वह्निव्याप्यधूमस्मरणे धूमत्वसाधारणधर्मदर्शनात् व्याप्योऽयमित्यभेदप्रत्ययः स्यात् सामग्र्या वृत्तत्वादिति स एवानुमितिहेतुरिति चेन्न। प्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वादनुमितिरेवोत्पद्यते न तु व्याप्याभेदप्रत्यक्षम्, (२)अन्यथा तत्रापि परामर्शानन्तरं तदनुव्यवसायो वा भवेन्न त्वनुमितिरेव।

(दी०) असिद्धिं परिजिहीर्षुराशङ्कते अथेति। अयम्। पक्षधर्मः। हेतुरिति। लाघवादिति शेषः। अनुमितिसामग्र्या इति। स्मृतिहेतुतावादिनां नये दूषणमिदं, न तु संस्कारकारणतावादिनां प्राचामिति।

(गा०) अथ यथेत्यादिना मूलकृतो विशिष्टपरामर्शसामग्रीप्रदर्शनस्य प्रकृतोपयोगितां दर्शयति। असिद्धिमिति। मीमांसकोद्भावितां विशिष्टपरामर्शस्यासिद्धिमित्यर्थः। व्याप्योऽयमित्यभेदप्रत्यय-

(१) प्रत्यक्षमिति पाठः क्वचिन्न दृश्यते।

(२) व्याप्याभेदप्रत्ययमिति मथुरानाथसम्मतपाठोऽप्यत्रास्ति।

स्य विशिष्टपरामर्शत्वं स्फुटीचिकीर्षुरयमित्यस्यार्थं व्याचक्षाणः प-क्षवृत्तिताविगाहितां स्पष्टयति । अयमिति । स एवानुमितिहेतुरित्यत्र न्यूनताभङ्गाय हेतुं पूरयति । लाघवादितीति । संस्कारसाधारणेन सविषयकत्वेनोपनायकतामते व्याप्त्युपनये तत्स्मरणपर्यन्तस्यान-पेक्षिततया न विशिष्टपरामर्शपूर्वमनुमितिसामग्रीनियत्यं संस्कार-स्यानुमितावहेतुत्वादिति ज्ञानत्वेनोपनायकत्ववादिनयेऽनुमितिसा-मग्रीनिबन्धनपरामर्शासम्भवरूपदूषणं सङ्गमयति । स्मृतीति । स्मृति-हेतुतावादिनाम् । संस्कारस्यानुपनायकतया उपनयानुरोधेन स्मृ-तिं कल्पयताम्(१) ।

( चि० ) अथ वह्निव्याप्यो धूम इति स्मरतः पर्व-तीयधूमेन्द्रियसन्निकर्षेण प्रथमत एव व्याप्तिधूमत्व-योर्वैशिष्ट्यं यत्र भासते विशेषणज्ञानस्य पूर्वं वृत्त-त्वात् तत्र, यत्र वाऽऽप्तवाक्याद्वह्निव्याप्यवानयमिति ज्ञानं तत्रोभयत्रापि लाघवात् पक्षधर्मव्याप्यत्वज्ञा-नस्य हेतुत्वकल्पनादन्यत्रापि तथेति चेन्न । इन्द्रिया-सन्निकृष्टेऽतीन्द्रिये च लिङ्गे प्रत्यक्षविशिष्टज्ञानसाम-ग्रीविरहात्, तेन विना अनुमित्यनुत्पादापत्तेः, अ-स्मदुक्तसामग्र्याश्च तत्रापि सत्त्वात् । न चानुमाना-दिना तत्र परामर्शः, अनवस्थानात् ।

( दी० ) अथेत्यादि । अत्र यत्र प्रथमं पक्षाग्रहे गृहीतधूमे स्मृतव्याप्तिवैशिष्ट्यभानमनन्तरञ्च गृहीते पक्षे तादृशविशिष्ट-धीस्तत्रेत्यपि द्रष्टव्यम् । प्रथमत इति । विशिष्टज्ञानात् पूर्वमनुमि-तिसामग्रीविरहदर्शनाय । एवञ्च सिद्धे पूर्ववर्तिनि विशिष्टज्ञाने तत्त्वेन हेतुत्वं गुरुधर्मद्वयावच्छेदेनानन्यथासिद्धत्वकल्पनामपे-

( १ ) तद्धेतुतया कल्पयतामित्यपि क्वचित्कः पाठः । उपनयहे-तुतया कल्पयतामिति तदर्थः ।

क्ष्य लघ्वेकरूपावच्छेदेन नियमानन्यथासिद्धत्वकल्पनाया एव न्याय्यत्वात्, गृह्यमाणव्याप्त्यवच्छेदकताकधर्मप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताग्रहप्रकारीभवद्धर्मावच्छिन्नव्याप्तिज्ञानत्वेन वा एकरूपेण कारणत्वे चातिगौरवात्, विनिगमकाभावाच्च। तथापि च नियतपूर्ववर्त्तित्वं कल्प्यमित्याह। यत्र वेति। तेन विनेति। तथा च व्यभिचारात् कारणत्वं बाधितमिति भावः। स्वतो व्यभिचारं निरस्यति। अस्मदुक्तेति। अनवस्थानादिति। न च धूमान्तरसन्निकर्षे तत्तद्व्यक्तिवृत्तिधूमत्वं वह्निव्याप्तिव्याप्यमिति लिङ्गविशेष्यकपरामर्शाद्व्याप्त्यनुमितिसम्भवः, धूममात्रासन्निकर्षेऽपि तत्र वह्न्यनुमानात् तद्व्यक्तिवृत्तित्वधूमत्वत्ववैशिष्ट्यग्राहकविरहाच्च।

( गा० ) यत्र पक्षीयधूमदर्शनात् प्रागेव उद्बोधकान्तराद्व्याप्तिस्मरण तत्र तदुत्तर पक्षधर्मताग्रहस्यैव विशिष्टपरामर्शरूपता मूलकृतोक्ता, तत्र न्यूनताभङ्गाय पक्षधर्मत्वाविषयकपक्षीयहेतुदर्शनोद्बोधितव्याप्तिस्मृतिस्थलेऽपि विशिष्टपरामर्शमुपपादयति। अत्रेति। तत्रेत्यपि द्रष्टव्यमित्यन्वयः। प्रथम पक्षग्रहे पक्षधर्मताग्रहोत्पत्त्या विशिष्टपरामर्शपूर्वमनुमितिसामग्री सम्भवतीति पक्षाग्रह इत्युक्तम्। सामान्यलक्षणानुपगम व्याप्तिस्मरणस्य पक्षीयधूमाविषयकतया विशेषणतावच्छेदकविशिष्टविशेषणज्ञानविरहेण विशेषणतावच्छेदकविशिष्टधूमवैशिष्ट्यज्ञान पक्षे न सम्भवतीति अन्तरास्मृतव्याप्ते पक्षीयधूमे विशिष्टज्ञानस्वीकारः। पक्षविशेष्यकेऽपि परामर्शे पक्षग्रहस्य पक्षतावच्छेदकरूपविशेषणाविषयतया विशिष्टविशेष्यकज्ञाने विशेष्यतावच्छेदकप्रकारकधीर्हेतुत्वे तत्त्वेन वा उपयोगात् गृहीते पक्ष इत्युक्तम्। तादृशविशिष्टधीरिति। तादृशस्य व्याप्तिविशिष्टस्य हेतोर्विशिष्टधीरित्यर्थः। मूले प्रथमत इत्यनन्तरं पक्षधर्मतया भासमान इति पूरणीयम्।

ननु उक्तरीत्या जायमानस्य विशिष्टपरामर्शस्य व्याप्तिस्मरणपक्षधर्मताज्ञानापेक्षया प्राथम्याभावात् प्रथमत एवेत्युक्तमसङ्गतम्

त आह । प्रथमत इतीति । विशिष्टज्ञानात् पूर्वमिति । तथा च प्रथमत एवेत्यस्यानुमितिसामग्र्यामसम्पन्नायामेवेत्यर्थ इति भावः ।

नन्वेवं क्वचिद्विशिष्टपरामर्शासिद्धावपि विशिष्टपरामर्शत्वरूपावच्छेदकस्य लघुत्वेऽपि च तेन रूपेण हेतुतामते तद्रूपावच्छिन्नस्य नियमकल्पनाया आधिक्येन गौरवं दुर्वारमेवेत्यत आह । एवञ्चेति । गुरुधर्मद्वयावच्छेदेनेति ।

यद्यपि व्याप्तिविशिष्टवैशिष्ट्यज्ञानत्वापेक्षया धूमत्वाद्यंशे अवच्छेदकत्वावगाहिव्याप्तिनिश्चयत्वस्य गुरुत्वेऽपि धूमत्वादिप्रकारकपक्षधर्मताज्ञानत्वस्यानथात्वाद्धर्मद्वयस्य गौरवाभिधानमसङ्गतम्, तथापि गुरुधर्मद्वयेत्यस्य गुरुधर्मघटितद्वयेत्यर्थकत्वान्न दोषः ।

न्यायत्वादिति । न्यायमते कल्पनीयस्य द्वित्वं परमते कल्पनाधर्मिणो द्वित्वमिति कल्पनासाम्येऽपि न्यायमतेऽवच्छेदकलाघवादिति भावः । परमते एकमेव ज्ञानं कारणमन्यदवच्छेदकमिति न धर्मद्वयावच्छेदेन कारणताकल्पनमिति शङ्कां निराकरोति । गृह्यमाणेति । गृह्यमाणव्याप्यवच्छेदकताकत्वञ्च वर्त्तमानव्याप्यवच्छेदकत्वग्रहविषयत्वम् । पक्षधर्मताग्रहप्रकारीभवदिति विद्यमानपक्षधर्मताग्रहप्रकारार्थकम् । अतिगौरवादिति । तत्तत्कालविद्यमानत्वप्रवेशेन कालभेदेनानन्तकार्यकारणभावप्रसङ्गादिति भावः ।

ननु कारणतावच्छेदकविशिष्टकारणस्य प्राक्सत्तायाः प्रकृते फलोपधानप्रयोजकत्वोपगमे विद्यमानत्वनिवेशं विनाऽप्यतिप्रसङ्गः शक्यवारणः ।

न चैवमपि समानप्रकारकपुरुषान्तरीयव्याप्तिज्ञानकालीनपक्षधर्मताज्ञानादितोऽनुमित्यापत्तिवारणाय तत्तत्पुरुषीयानुमितिजनकतायां तत्तत्पुरुषीयज्ञानमेवावच्छेदकं वाच्यमिति पुरुषभेदेन कारणताभेदो दुर्वार एवेति वाच्यम् । स्वसामानाधिकरण्यस्वविषयधर्मप्रकारकत्वोभयसम्बन्धेन व्याप्यवच्छेदकताग्रहविशिष्टपक्षधर्मताज्ञानत्वेन, स्वसामानाधिकरण्यस्वप्रकारधर्मविषयकत्वोभयसम्बन्धेन पक्षधर्मताग्रहविशिष्टव्याप्यवच्छेदकत्वग्रहत्वेन वा हेतुत्वोपगमे व्यधिकरणज्ञानद्वयादनुमितिवारणस्य तत्तत्पुरुषीयत्वनिवेशमन्तरेणैव सम्भवादित्यत आह । विनिगमकाभावाद्येति । दर्शितरूपयोरेकतरस्य हेतुतावच्छेदकत्व इत्यादिः । तथा च वि-

निगमनाविरहाद्यमेतद्यावच्छेदेनानन्यथासिद्धत्वकल्पनमावश्यकमे-
वेति भाव । वह्निव्याप्यवानयमिति शाब्दपरामर्शस्थले व्याप्यता-
वच्छेदकप्रकारकपक्षधर्मतादिग्रहविरहेण परमतेऽनुमित्यनुत्पादाशङ्का-
नुमितिपूर्वे विशिष्टपरामर्शस्योभयवादिसिद्धतास्थलमिति व्या-
प्यतावच्छेदकप्रकारकव्याप्तिपक्षधर्मताग्रहस्यानुमितिनियतपूर्ववर्ति-
तायाः कथितोभयसिद्धत्वासम्भवप्रदर्शनपरतया यत्र चेत्यादि-
मूलं सङ्गमयति । तथापि चेति । तव । मीमांसकस्य । मूले तेन
विनेति । विशिष्टपरामर्शाभावेनेत्यर्थः । विशिष्टपरामर्शशून्यकाल-
ऽनुमित्यनुत्पादापत्तिर्विशिष्टपरामर्शहेतुतायां किंविधया बाधिके-
त्याकाङ्क्षायामाह दीधितौ । तथा चेति । अनुमित्यनुत्पादापत्तौ चे-
त्यर्थः । व्यभिचारादिति । अनुमित्यनुत्पादापत्तिकथनाद्यर्थतो ऽनु-
मित्युत्पादलाभेन मूलग्रन्थाद्व्यतिरेकव्यभिचारलाभः । स्वमतसि-
द्धानुमितिसामग्रीसत्त्वकथनप्रयोजनं स्फुटयति । स्वत इति । स्वत-
स्वमते । यदा चातीन्द्रियादिहेतुके शब्दादिजन्यज्ञानद्वयघटितसाम-
ग्र्यपि नास्ति तदाऽनुमितिर्न केनाप्यनुमन्यते इति न मीमांसक-
मते व्यभिचारावकाश इत्यवधेयम् ।

मूले अनवस्थानादिति । अनुमित्यात्मकपरामर्शार्थमपि प्रत्यक्षसा-
मग्रीविरहेणानुमानादेव परामर्शान्तरस्याभ्युपगन्तव्यत्वादिति भावः ।

पक्षतद्वृत्तिहेतोरसन्निकर्षेऽपि तद्वृत्तिधूमो वह्निव्याप्य इति व्याप्ति
साध्यकानुमित्यात्मकविशिष्टपरामर्शे प्रत्यक्षात्मकपरामर्शानुपपाद्य
अनवस्थापरीहारशङ्कां निरस्यति दीधितौ । न चेति । विशेष्यसन्नि-
कर्षविरहेण पक्षीयधूमरूपपक्षविशेष्यकव्याप्तिव्याप्यवत्तापरामर्शा-
सम्भवाद्व्याप्यविशेष्यकपरामर्शानुधावनम् । धूममात्रासन्निकर्षेऽपी-
ति । तथा च तदानीं धूमत्वासन्निकर्षेण वह्निरोष्यकोकपरामर्श-
स्याप्यसम्भव इति भावः । विशेष्यसन्निकर्षवद्विशेषणसन्निकर्षोऽपि
विशिष्टप्रत्यक्षे हेतुरित्याशयेन धूमान्तरसन्निकर्षस्थलेऽपि पर्वती-
यधूमरूपविशेषणसन्निकर्षविरहेण धूमत्वे तद्वृत्तित्वावगाहिदर्शित-
परामर्शासम्भवमाह । तद्व्यकीति ।

यद्यपि विशेषणसन्निकर्षस्य प्रत्यक्षहेतुत्वेऽपि पक्षीयधूमादिस-
न्निकर्षस्थलेऽपि साध्यासन्निकर्षे ज्ञानप्रत्यासत्तिं विना विशिष्टपरा-
मर्शासम्भवादसन्निकृष्टहेतुकस्थलानुधावनमफलं ज्ञानप्रत्यासत्ति-

सत्त्वे च तत्रापि विशिष्टपरामर्शसम्भवस्तथापि चाक्षुषादिज्ञाने उपनीतस्य भानोपगमे मनोभिन्नप्रमाणासहकारित्वघटितापादककवक्ष्यमाणप्रमाणान्तरतापत्तेः । प्रत्यक्षप्रमासामग्रीविरहकालीनप्रमोत्पादकत्वापादककप्रत्यक्षविजातीयप्रमोपधायकतापत्तेश्चानवकाशात् । यत्र मानसान्योपनीतभानासम्भवस्तादृशस्थलानुधावनमित्यवधेयम् ।

( चि० ) अथ यथा स देवदत्तो गौरो न वा परमाणुर्गुरुत्वाधिकरणं(१) न वेति संशयो बहिरस्वातन्त्र्येणापि मनसा कोटिस्मरणाविशेषादर्शनादिसहकारिवशाज्जन्यते, यथा वा निद्रासहकारेण बाह्यस्वप्नानुभवस्तथेहापि ज्ञानान्तरोपनीतविशेष्ये व्याप्तिस्मरणसहकृतेन मनसा परामर्शो जन्यते, तदनन्तरमनुमितिदर्शनादिति चेन्न । व्याप्तिस्मरणादेः प्रमाणान्तरतापत्तेः । तदेव हि प्रमाणान्तरं यदसाधारणं सहकार्यासाद्य मनोबहिर्गोचरप्रमां जनयति, यथेन्द्रियादि ।

( दी० ) असाधारणमिति शरीरादिव्युदासाय । आलोकादिवारणाय प्रमाणान्तरासहकारीति वाच्यम् । तदपि प्रमाणान्तरं भवत्येव प्रत्यक्षादिप्रमाकरणत्वेन विभागान्न तद्व्याघात इत्यपि कश्चित् । यद्वा असाधारणमसमवहितं, तथा च यज्जातीयप्रमाया मनोन्यकरणेनासमवहितं सत् यद्बहिर्विषयकप्रमोत्पादकं, यज्जातीयप्रमासामग्रीविरहे वा यत्प्रमोत्पादकं, तद्विजातीयप्रमाहेतुरित्येव व्याप्तिस्ततः सिद्धायां विलक्षणप्रमायां विलक्षणे च तत्करणे कल्पनीये आवश्यकत्वात् बाधकाभावाच्च तस्यैव तथात्वं पर्यवस्यतीति ।

( गा० ) मूले यदसाधारणमिति । मनसा बहिर्गोचरप्रमाजनने

(१) परमाणू रूपाधिकरणमिति पाठोऽप्यत्रास्ति ।

यदसाधारणं सहकारि भवतीत्यर्थः। तेन वह्निगोच
धारणकारणत्वमापदकामिति फलितम्। सुराादिगोचरप्रमाजनकं
सुराादिनिष्ठमनःसन्निकर्षे व्यभिचारवारणाय वह्निगोचरेति।
हिष्ठञ्च लौकिकमानसाविषयत्वम्। स्मृतिजनकसंस्कारादौ
चारवारणायानुभवार्थकं प्रमापदम्। असाधारणपदप्रयोजनमाह
दीधितावसाधारणमितीति।

शरीरादीत्यादिपदात् आत्ममनोयोगादिपरिग्रहः।
ह्निगोचरप्रमाजनकत्वेऽपि जन्यज्ञानसामान्यं प्रत्येव तेषां
तादृशप्रमां प्रत्यसाधारणकारणत्वविरहादिति भावः। अत्र तादृश-
प्रमाऽसाधारणकारणत्वं यदि स्मरणावृत्तितादृशप्रमावृत्तिकार्यता
निरूपकत्वं तदा स्मृतिजनकसंस्कारादिवारकप्रमात्वनिवेशवैफल्यम्,
विशिष्टवैशिष्ट्यानुभवत्वावच्छिन्नहेतुभूतविशेषणतावच्छेदकप्रकार
कज्ञानादौ व्यभिचारश्च। अत एव
मावृत्तिकार्यतानिरूपकत्वं तदित्यपि निरस्तम्।

यदि चानुभवत्वव्यापकजातिघटितधर्मावच्छिन्नकार्यत्वानिरू
पकत्वे सति तादृशप्रमाजनकत्वं तत्,
व्यापकतया तदवच्छिन्नजनकविशेषणतावच्छेदकप्रकारकज्ञाने व्य-
भिचारवारणसम्भवेऽपि जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन हेतौ
चक्षुरादावव्यापादकासत्त्वेन इन्द्रियादिचदिति दृष्टान्तासङ्गतिः। रूपा-
वृत्तित्वेन सत्त्वान्यत्वेन वा तादृशजातिं विशिष्यैतद्दोषोद्धारेऽपि
व्याप्तिविशिष्टवैशिष्ट्यानुभवत्वावच्छिन्नं प्रति विशेषणतावच्छेद-
कप्रकारकज्ञानमुद्रया व्याप्तिस्मरणादेर्हेतुतायाः सर्वमतसिद्धतया
तन्नापादकासिद्धिर्दुर्वारैवेति अनुभवत्वव्याप्यजातिघटितधर्मावच्छि-
न्ना या तादृशप्रमावृत्तिकार्यता तन्निरूपकत्वमेव तादृशप्रमाऽसाधा-
रणकारणत्वं वाच्यम्। अनुभवत्वव्याप्यत्वञ्च अनुभववृत्तिभेदप्रति-
योगितावच्छेदकत्वं, तच्च ज्ञानत्वादेरिवानुभवत्वादेरपि व्यावृत्तम-
तो न विशेषणतावच्छेदकप्रकारकज्ञाने व्यभिचारः। एवं तादृशध-
र्मस्य स्मृतित्वेऽव्यापकतया तदवच्छिन्नहेतुभूतसंस्कारादौ व्यभिचा-
रवारणाय प्रमात्वनिवेशस्याप्यावश्यकता। व्याप्तिस्मरणादेर्विशिष्ट-
वैशिष्ट्यानुभवत्वावच्छिन्नजनकत्वेऽपि नैयायिकैः सन्निकर्षविधया
अलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति तस्य कारणतान्तरोपगमात्तत्रा-

पादकासिद्धिः, तन्निरूपिताया अलौकिकप्रत्यक्षत्वावच्छिन्नकार्यताया एवानुभवत्वव्याप्यजातिघटितधर्मावच्छिन्नत्वात्तामादायैवापादकसत्तायास्तत्रोपपादनीयत्वात् । अलौकिकप्रत्यक्षत्वस्योपाधितया तदवच्छिन्नजन्यताया जात्यवच्छिन्नत्वविरहादापादकासिद्धिः स्यादतो जातिघटितेत्युक्तम् । तादृशजातावच्छेदकतापर्याप्त्यनिवेशस्फोरकमेवात्र घटितपदं न तु विवक्षितार्थकमित्यवधेयम् ।

आलोकादेरपि अनुभवत्वव्याप्यचाक्षुषत्वादिजातिघटितधर्मावच्छिन्नजनकतया निर्वाच्यप्रमाणान्तरस्वरूपापाद्यविरहेण च व्यभिचार इति तद्वारणायापादककोटौ विशेषणान्तरं पूरयति । आलोकादीति । आदिना सन्निकर्षादिपरिग्रहः । प्रमाणान्तरासहकारित्वमिति । मनोभिन्नप्रमाणासहकारित्वमित्यर्थः । स्वभिन्नतज्जन्यजनकत्वमेव तत्सहकारितापदार्थ इति चक्षुरादेः स्वात्मकप्रमाणजन्यजनकत्वसत्त्वेऽपि न दृष्टान्तासिद्धिः ।

न च चक्षुरादेः स्वाभिन्नचक्षुरादिव्यक्त्यन्तरजन्यतावच्छेदकचाक्षुषत्वाद्यवच्छिन्नजनकत्वसत्त्वात् स्वभिन्नत्वविशेषणदानेऽप्यनिस्तार इति वाच्यम्। स्वभिन्न-स्वरूपप्रमाणविशेषणं परित्यज्य प्रमाणजन्यतायां स्वानिरूपितत्वस्य विशेषणेनैव तद्दोषानवकाशात् । उपनायकज्ञानस्य मनोरूपप्रमाणसहकारितया आपादकासिद्धिरतो मनोभिन्नेति ।

अथ सहकारित्वमत्र न तज्जन्यजनकत्वं, तथा सति चक्षुरादेरपि त्वगादिजन्यचक्षुस्त्वगाद्युभयवृत्तिद्वित्वादिजनकतया दृष्टान्तासिद्धेः । नापि तज्जन्यज्ञानजनकत्वम्, चक्षुरादेरपि इन्द्रियत्वेन त्वगादिजन्यप्रत्यक्षादिस्वरूपयोग्यतया तद्दोपनादवस्थ्यात् । फलोपहितजनकत्वादीनां तद्गर्भनिवेशनेनैतद्दोषोद्धारेऽपि शरीरादेरपि निरुक्तप्रमाणान्तरसहकारित्वसत्त्वेन तद्वारकमूलोक्तासाधारणपदवैयर्थ्यमतस्तज्जन्यतावच्छेदकजातिघटितधर्मावच्छिन्नजन्यतानिरूपकत्वमेव तत्सहकारित्वं वाच्यम् । तथा च मनोभिन्नत्वरूपप्रमाणविशेषणवैयर्थ्यम्, उपनायकज्ञानजन्यताया मनोजन्यतावच्छेदकमानसत्वघटितधर्मानवच्छिन्नत्वात्, नैयायिकैर्बहिरिन्द्रियजन्योपनीतमानससाधारणालौकिकप्रत्यक्षत्वावच्छिन्नं प्रत्येव उपनायकज्ञानहेतुत्वोपगमात् ।

न च प्रत्यक्षत्वजातिरपि मनोजन्यतावच्छेदिका प्रत्यक्षत्वावच्छिन्नं प्रति इन्द्रियत्वेन सामान्यकारणतासत्त्वादिति वाच्यम्। तादृशसामान्यकार्यकारणभावस्य प्रामाणिकत्वे (१)मनोभिन्नत्वविशेषणोपादानेऽपि तथाविधचक्षुरादिप्रमाणजन्यतावच्छेदकप्रत्यक्षत्वाभावादेतद्दोषप्रसङ्ग इति निरुक्तसहकारिताघटकजातौ प्रत्यक्षानिष्ठभेदप्रतियोगितावच्छेदकत्वनिवेशनस्याऽऽवश्यकतया मनोभिन्नत्वानिवेशेऽप्युक्तदोषाभावात्।

न च न देयमेव मनोभिन्नत्वरूपं प्रमाणविशेषणं दीधितिस्थान्तरपदस्य स्वभिन्नपरतयैव सार्थकत्वादिति वाच्यम्। मनोभिन्नत्वानुपादाने मनःसहकारिसुखादिमनःसन्निकर्षे व्यभिचारप्रसक्तेः मूलस्थबहिःपदवैयर्थ्यापत्तेरिति।

मैवम्, उपनायकज्ञानस्य जन्यतावच्छेदकं मानसत्वमेव बहिरिन्द्रियजन्यज्ञाने उपनीतस्य विशेषणतया तत्र विशेषणज्ञानविधयैवोपनायकज्ञानस्य हेतुत्वात्तत्साधारणधर्मस्य तज्जन्यतानवच्छेदकत्वेऽपि क्षतिविरहात्, तथा च निरुक्तमनःसहकारित्वमुपनायकज्ञानस्याक्षतमेवेति मनोभिन्नत्वरूपप्रमाणविशेषणमावश्यकम्।

अथ वा मनोभिन्नत्वेन न प्रमाणं विशेषणीयमपि तु इन्द्रियत्वावच्छिन्ननिरूपिततज्जन्यतामादायोक्तदोषस्य वारणाय निरुक्तजातिविशेषणं परित्यज्य प्रमाणजन्यतायां मनोऽनिरूपितत्वमेव निवेश्यम्, तावतैव बहिःपदसार्थक्यादिति। आलोकादिसहकारितया चक्षुरादावसिद्धिरतः प्रमाणेति। प्रमाणत्वञ्चात्रानुभववृत्तिजातिपर्याप्तकार्यतावच्छेदकताकत्वम्। चक्षुरादेश्चक्षुष्ट्वादिना शुद्धचाक्षुषत्वावच्छिन्नं प्रत्येव सामान्यतो हेतुतासत्त्वात्तत्रेदमक्षतमेवेति। आलोकस्य च भावचाक्षुषत्व 'द्रव्यचाक्षुषत्वादिकं वा जन्यतावच्छेदकम्, चक्षुःसंयोगादिरूपविषयेन्द्रियसन्निकर्षस्यापि द्रव्यचाक्षुषत्वादिकमेव तथा, न तु शुद्धचाक्षुषत्वादिकमिति न तत्सहकारितामादाय चक्षुरादावसिद्धिः। न चैवमपि चक्षुर्मनोयोगादिजन्यतावच्छेदककोटौ विषयादिनिवेशे प्रयोजनविरहेण शुद्धचाक्षुषत्वादिकमेव तज्जन्यतावच्छेदकमुपेयते एवञ्च तेषामपि निरुक्तप्रमाणत्वशालित्वेन तत्सहकारितामादाय इन्द्रियेष्वसिद्धिरिति वाच्यम्। संयोगा-

(१) प्रमापकत्वे इत्यपि क्वचित् पाठः।

स्यत्वस्यापि प्रमाणत्वशरीरेऽन्तर्भावनीयत्वात् ।

न चोक्तप्रमाणान्तरासहकारित्वनिवेशेऽपि उद्भूतरूपे व्यभिचारस्तस्य मूर्त्तप्रत्यक्षत्वावच्छिन्नं प्रत्येव जनकतया चक्षुरादिजन्यतावच्छेदकावच्छिन्नजन्यताकत्वरूपतत्सहकारित्वाभावादिति वाच्यम्। मीमांसकैर्वायोः प्रत्यक्षत्वाभ्युपगमेन मूर्त्तचाक्षुषत्वस्यैव तज्जन्यतावच्छेदकत्वोपगमे तस्य चक्षुःसहकारितया अक्षतत्वात् । एवं महत्त्वस्यापि द्रव्यचाक्षुषत्वमेव जन्यतावच्छेदकं न तु द्रव्यप्रत्यक्षत्वमतो न व्यभिचारः । त्रुटेरस्पार्शनत्वोपपत्तये द्रव्यस्पार्शनं प्रति त्रुटिमहत्त्वव्यावृत्तविजातीयमहत्त्वत्वेन हेतुत्वान्तरस्याऽऽवश्यकतया चाक्षुषत्वस्य महत्त्वजन्यतावच्छेदकत्वेऽपि न परमाणुद्व्यणुकस्पार्शनापत्तिः, विषयस्य च हेतुत्वमप्रामाणिकमेवेति न तत्र व्यभिचारः ।

अथ व्याप्तिस्मरणस्यापि योग्यताज्ञानविधया शब्दप्रमाणसहकारितया तत्रापादकासिद्धिरिति चेन्न । सहकारिताशरीरे चरमजन्यतायाः फलोपधानरूपाया एव विवक्षणीयत्वात्, शाब्दफलानुपधायकव्याप्तिज्ञानस्यैव पक्षत्वेन आपादकासिद्ध्यनवकाशात् ।

इदन्त्ववधेयम् । प्रमाणान्तरासहकारित्वस्य निरुक्तस्य स्यातन्त्र्येणापादककोटौ न निवेशो गौरवात् अपि त्वनुभवत्वव्याप्यजातिघटितधर्मावच्छिन्नबहिर्गोचरप्रमानिष्ठकार्यतानिरूपकत्वात्मकतादृशप्रमासाधारणकारणताघटकजातावेव प्रमाणान्तरजन्यतानवच्छेदकत्वं निवेशनीयं, तच्च स्वानिरूपिता मनोऽनिरूपिता च या जन्यता तदवच्छेदकतापर्याप्त्यनधिकरणत्वम् । पर्याप्तिनिवेशात् चाक्षुषत्वादेरालोकादिजन्यतावच्छेदकघटकत्वेऽपि न स्वरूपासिद्धिः । मनोऽनिरूपितेत्यस्य मनस्त्वघटितधर्मावच्छिन्नानिरूपितार्थकतया मनस्त्वघटितचक्षुर्मनोयोगत्वाद्यवच्छिन्नजन्यतामादायोक्तदोषस्यानवकाशः । एवञ्च स्वानिरूपिता मनस्त्वघटितधर्मावच्छिन्नानिरूपिता च या जन्यता तदवच्छेदकतापर्याप्त्यनधिकरणं या अनुभवनिष्ठभेदप्रतियोगितावच्छेदकजातिस्तद्घटितधर्मावच्छिन्ना या बहिर्विषयकानुभवनिष्ठकार्यता तन्निरूपकत्वमापादकदलसमुदायार्थः । आपाद्यं प्रमाणत्वं प्रमाया असाधारणकरणत्वम् । असाधारणकरणत्वञ्च व्यापारवदसाधारणफलोपहितकारणत्वम् । व्यापारनिवेशात् प्रतीकान्तरवस्तुपनायकज्ञाने

आपाद्यविरहनिर्वाहः । असाधारण्यप्रवेशादापादके शरीरादिवारकासाधारण्यविशेषणसार्थक्यम् । फलोपधाननिवेशाद्व्याप्तिज्ञानस्यानुमित्यात्मकप्रमास्वरूपयोग्यतामादाय नेष्टापत्तिः अनुमित्यनुपधायकस्य तस्य पक्षत्वात् ।

वस्तुतः प्रमाणव्यवहारविषयत्वमेवापाद्यं दीधितिकृतोऽभिप्रेतम्, अन्यथा आलोकेऽप्युक्तापाद्यसत्त्वेन आलोकादिवारणायेत्यादितद्ग्रन्थासङ्गतिः । प्रमाणव्यवहारविषयतावच्छेदकश्च प्रमाणान्तरासहकारित्वगर्भम्, आलोकादौ व्यापारवत्यपि प्रमाणव्यवहारविरहात्, अतो व्यवहारापादनपक्षे आलोकस्य वारणीयत्वाभिधानसङ्गतिः । वह्निव्याप्यधूमवान् पर्वत इत्यादिविशिष्टपरामर्शात्मकवह्निविषयकप्रमायां व्याप्तिज्ञानस्य कारणत्वे तत्पञ्चममेव प्रमाणं स्यात्, तादृशप्रमायां साक्षात्त्वाग्रहेण तदसिद्ध्या तत्करणस्य प्रत्यक्षप्रमाणान्तर्भावाद् अत इष्टापत्तिर्न सम्भवतीति सूचनाय अन्तपदं न तु तदर्थस्यापाद्यकोटिप्रवेशः ।

एतेन प्रमाणान्तरत्वं यदि क्लृप्तप्रमाणभिन्नप्रमाणत्वं तदा आपाद्याप्रसिद्धिः, यदि प्रत्यक्षप्रमाणभिन्नप्रमाणत्वं तदापि चक्षुरादिदृष्टान्ततयोपन्यासविरोधः, यदि च मानसान्यप्रमाकरणत्वं तदापि मानसान्यत्वस्य वैयर्थ्यम् इति परास्तम् । प्रमाणव्यवहारविषयत्वस्यैवानिष्टतया तन्मात्रापादनेनैवोद्देश्यसिद्धेः ।

न च मानसजनके उपनायकज्ञाने मानसप्रमाकरणत्वं तत्करणव्यवहारश्चेष्ट इति इष्टापत्तिवारकतया तत्सार्थक्यम्, करणत्वस्य व्यापारगर्भतया इष्टापत्तेरनवकाशात् ।

न चास्तु करणत्वं व्यापारगर्भं तथापि प्रकृते समनन्तर्भाव्य मानसान्यप्रमाऽसाधारणफलोपहितकरणत्वस्यापादनसम्भवेन तदेव मूलाभिप्रेतमस्त्विति वाच्यम् । तथा सति सिद्धान्ते व्यापाराभावेन प्रमाया करणत्वाभिधानस्य मूलकृतोऽलग्नकतापत्तेः । आलोकादौ व्यवहारमभ्युपगम्य प्रमाणान्तरासहकारित्वविशेषणमन्तरेणैव तत्र व्यभिचारं वारयतः कस्यचिन्मतमाह । तदपीति ।

नन्तु प्रमाणव्यवहारविषयस्यालोकादेः प्रत्यक्षानुमानेत्यादिसूत्रेऽपरिगणनात्तद्विरोध इत्यत आह । प्रत्यक्षेति । विभागात् । आलोकादीनामपि विभक्तत्वात् । तद्व्याघातः । विभाजकसूत्रविरोधः ।

अत्रेदमरुचिवीजम्, आलोकस्य सव्यापारस्य प्रमाकरणत्वोपगमसम्भवेऽपि निर्व्यापारस्य तत्संयोगादेस्तदुपगमासम्भवेन उक्तविशेषणप्रक्षेप आवश्यकः, अन्यथा शरीरादेरपि प्रमाणत्वोपगमसम्भवेनासाधारण्यविशेषणस्यापि परित्यागापत्तेः । तान्त्रिकाणां प्रमाणव्यवहारश्च तुल्य एवेति प्रमाणान्तरासहकारित्वविशेषणपूरणं विनैव निर्वाहाय प्रकारान्तरेण व्याप्तिं व्याचष्टे । यद्वेत्यादि । यज्जातीयेति । यज्जात्यवच्छिन्नेत्यर्थः । तद्विजातीयेति । तज्जातिमदवृत्तिजातिमदित्यर्थः । इदञ्चाव्याप्तिवलाच्चानुमित्याद्यनुपधायकव्याप्तिज्ञानादौ प्रत्यक्षत्वविरुद्धजातिमत्प्रमाहेतुत्वमापादनीयम् । यत्प्रमाया मनोन्यकरणेनासमवहितं सत् यद्वहिर्विषयप्रमोत्पादकं तत्तदवृत्तिजातिमत्प्रमाहेतुरित्युक्तौ मानसप्रमाया मनोन्यकरणाप्रसिद्ध्या यत्पदेन चाक्षुषादिप्रमाया एवोपादेयतया मानसप्रमाहेतावुपनये तदवृत्तिजातिमद्धेतुत्वमेवापाद्यम्, मानसप्रमायाः तदवृत्तिजातिमत्त्वात्तत्रेष्टापत्तिरिति यत्त्वतत्त्वेन जातरूपादानम्, तथा च सति यत्पदेन प्रत्यक्षत्वजातिमादाय तद्विरुद्धजातिमत्प्रमाहेतुत्वापादनेन नेष्टापत्त्यवसरः । प्रकृते प्रमानिष्ठजातिमादायैवापादनमित्येतत्सूचनाय प्रमाया इति । तज्जातीयप्रमाविजातीयप्रमाहेतुत्वमेवापाद्य, एवञ्च यज्जातीयेत्यनेन स्मृतित्वादुपादाने तत्तत्प्रमाया असिद्ध्या सामान्यव्याप्तिभङ्ग इत्यत प्रमाया इति इति केचित् ।

प्रत्यक्षकरणमनःसहकारेणैवोपनयस्य प्रमोत्पादकत्वोपगमादापादकासिद्धिवारणाय मनोन्येति । मनोभिन्नप्रत्यक्षकारणमनोयोगादिसमवधानस्यावश्यकत्वादसिद्धिरिति करणेनेति । तदसमवहितं सत्प्रमोत्पादकम्, । तदजन्यप्रमोत्पादकम् । वहिर्विषयकत्वनिवेशव्यावृत्तिः पूर्ववत्, मनोन्यकरणेनासमवहितस्याप्युपनयस्य मनःसहकारेण बाह्यविषयकप्रत्यक्षजनकत्वे बाधकाभावादप्रयोजकत्वशङ्का स्यादित्याशङ्क्या कल्पान्तरमाह । यज्जातीयेति । तज्जातीयसामग्रीविरहे तज्जातीयोत्पत्तेरप्रसक्त्या प्रमायां जन्यमानायां विजातीयैव सा जनयितु शक्येति नाप्रयोजकत्वशङ्का ।

न च नैयायिकैरुपनीतभानस्थले उपनयघटितायाः प्रत्यक्षसामग्र्या उपगमादापादकासिद्धिरिति वाच्यम् । उपनीतविषयोपरा-

गेण (१)साक्षात्त्वस्याग्रहात्तदभावग्रहात् तादृशविषये द्रव्यादिप्रत्यक्षहेतुभूतेन्द्रियसंयोगादिविरहाद्योपनयजन्यज्ञाने प्रत्यक्षत्वासम्भवेनापादकस्य प्रसाध्यत्वात्।

अत्र च बाह्याभ्यन्तरप्रत्यभिज्ञायां (२)लौकिकसन्निकर्षविषयोपरागेण साक्षात्त्वस्य उपनीतविषयोपरागेण च तदभावस्य ग्रहात् साक्षात्त्वं विषयताविशेष एव न तु प्रत्यक्षत्वजातिः, स एव लौकिकसन्निकर्षजन्यतावच्छेदकः, एवञ्चोपनीतभानस्य प्रत्यक्षत्वे न किञ्चिद्बाधकं बाधकविरहेऽपि साधकविरहान्न सर्वांशोपनीतज्ञाने प्रत्यक्षत्वजातिरिति नाशङ्कनीयम्। लौकिकान्यप्रत्यक्षत्वस्यैवोपनायकज्ञानजन्यतावच्छेदकतया तत्र तत्सिद्धेः, लौकिकान्यज्ञानत्वस्य तथात्वे अप्रसिद्धसाध्यकानुमितौ स्मृतौ च व्यभिचारप्रसङ्गात्।

न च प्रत्यक्षत्वविरुद्धं जात्यन्तरमेव तथाऽस्त्विति वाच्यम्। आंशिकोपनीतभानासङ्ग्रहात्, तत्र तादृशजातिस्वीकारे तस्याः प्रत्यक्षत्वसामानाधिकरण्येन व्याप्यव्यापकभावस्यावश्यकत्वात्, आंशिकोपनीतभाने च चाक्षुषत्वमानसत्वादीनां प्रत्यक्षत्वसाधकत्वात्, इत्यादयो नैयायिकसिद्धान्तप्रकाराः अग्रे ग्रन्थकारेणैव स्फुटीकरणीयाः॥

नन्वायातृकव्याप्तिबलात् विजातीयप्रमा, तत्करणमन्यदेवास्तां कुतो व्याप्तिस्मरणादेः प्रमाणान्तरतेत्यत आह। तत इति। ततः। उक्तव्याप्त्यनुरोधतः। सिद्धायाम्। स्वीकृतायाम्। आवश्यकत्वात्। अवश्योपेयकारणताकत्वात्। बाधकाभावादिति। अकरणत्व इत्यादिः। तस्यैव। व्याप्तिस्मरणादेरेव। तथात्वम्। तादृशप्रमाकरणत्वम्।

(चि०) संशयस्वप्नौ तु न प्रमे इति न निद्रादेः प्रमाणान्तरत्वम्। न च कथं तथापि स धूमो वह्नि-

(१) उपनीतविषयोपधानेन– इति पाठान्तरमप्यत्रास्ति।

(२)सोऽयं चैत्र इति बाह्यप्रत्यभिज्ञा, आभ्यन्तरप्रत्यभिज्ञा तु सुखी सोऽहमधुना दुःखीत्याकारिका।

व्याप्य इति व्यवहारस्तदानीं तद्व्याप्यत्वानुभावकाभावादिति वाच्यम् । तत्र स्मृतधूमे धूमत्वेन वह्निव्याप्यत्वानुमानात् । न च त्वन्मते धूमत्वेन व्याप्यत्वानुभवः सम्भवति । अत एव यो वह्निव्याप्यवान् सोऽवश्यं वह्निमानिति व्याप्तिज्ञानवतोऽनुमितिर्नान्यथा ।

( दी० ) संशयस्वप्नौ च न विशिष्टानुभवरूपौ येनोपनयादिवशाद्वह्निविषयानुभवजनने क्लृप्तशक्तिकेन मनसा दोषवशाद्भ्रमेण तदभावादिवशात् भ्रमाऽपि जनयितव्येत्याशङ्क्येत, किन्तु धर्मिज्ञानकोटिस्मरणादिरूपौ, धर्मिज्ञानं पुनरनुभवरूपं यथासम्भवमक्ष्यादेः, स्मरणञ्च संस्कारादित्याशयेनाह संशयेति । व्याप्यत्वानुमानादिति । धूमत्वादौ वह्निव्याप्तिव्याप्यत्वं जानतो धूमवत्त्वादिना तद्वत्तानिश्चयदशायां अन्यदा त्वसंसर्गाग्रहादेवेति अतीन्द्रियादौ लिङ्गे व्याप्यत्वप्रकारकज्ञानस्य सम्भवेऽप्यनुमितेः सर्वानुभवासिद्धतया तस्य कारणत्वे बाधिते परिशेषाद् गुरोरपि व्याप्यतावच्छेदकप्रकारकज्ञानस्य हेतुत्वे सिद्धे शाब्दव्याप्यवत्ताबोधस्थलेऽपि कल्प्यते, कारणं विना कार्योत्पत्तेरसम्भवात् । तेन विना तत्रानुमितेरप्रसिद्धत्वात् न तस्यापि हेतुताबाधः । तथातीन्द्रियलिङ्गादौ सर्वानुभवसिद्धाया अप्यनुमितेः सर्वथैवापलापः, मम क्वचित् कालविलम्बादिमात्रकल्पनमित्याशयेनाह । अत एवेति ।

( गा० ) ननु संशयस्वप्नौ तु न भ्रमे इति मूलमसङ्गतम् ? तयोरप्यबाधितविषये प्रमात्वात् । अथ सर्वांशे प्रमात्वमत्र विवक्षितम्, स्वप्नस्य किञ्चिदंशे भ्रमत्वं नियमतः स्वीक्रियत इति चेत् ? मा भूत् सर्वांशे तयोः प्रमात्वं, तथाऽपि तत्र इन्द्रियसंयोगादिरूपप्रत्या-

( दी० ) तुल्यमित्यभ्युपगमवादः । यत्र । यदवच्छिन्ने । यथा हि तदभावेन तदभावव्याप्यतया गृहीतेन वा विशिष्टे न तत्संशयः, तथा, यदवच्छेदेन तद्व्यावर्त्तकधर्मदर्शनं तद्विशिष्टेऽपि अनुभवबलात् । व्यावर्त्तकश्च तदभावो यदवच्छेदेन वा तदभावोऽवगतः, यो वा तदभावव्याप्यत्वेन गृहीतः । यथा स्थाणुत्वाभावस्य पुरुषत्वावच्छेदेन ग्रहे पुरुषत्वस्य स्थाणुत्वाभावव्याप्यत्वेन गृहीतस्य करादेर्वा इदन्त्वावच्छेदेन ग्रहे पुरुषोऽयं स्थाणुर्न वेति न संशयः । तदभावादिवच्च तद्वदन्योन्याभावादिः, तादात्म्येन तत्संशये च तदन्योन्याभावादिरपि द्रष्टव्यः । एवं तद्भ्रमोऽपि न, विशेषदर्शनस्य विपरीतज्ञानमात्रविरोधित्वादित्यग्रे स्फुटीभविष्यति ।

( शा० ) तुल्यमित्यनेन मूले पक्षधर्मे व्याप्तिसंशयस्य प्रतिबन्धकत्वमुक्त(१), तन्न युक्तं, विशेषदर्शनेन ज्ञानद्वयानन्तरं संशयानुत्पादेन तत्प्रतिबन्धकतायां मानाभावादित्यत आह । तुल्यमितीति ।

अभ्युपगमवादः । ज्ञानद्वयानन्तरं संशयोत्पादाभ्युपगमेनोक्तिः तथा च संशयस्यानुमितिप्रतिबन्धकतायां न निर्भरः किन्तु विशेषदर्शनात् संशयानुत्पत्तावेव । अत एवाग्रे संशयोत्पत्त्या शङ्कापि ▪ इच्छत इति भावः ।

मूले सामान्यनिश्चयस्येति । सामान्यधर्मपुरस्कारेण विरोधिनिश्चयस्येत्यर्थः । धूमसामान्ये संशयः, शुद्धधूमत्वपुरस्कारेण व्याप्यत्वसंशयः । मा भूदिति । तत्प्रकारेण व्याप्तिनिश्चयसत्त्वादिति भावः । विशेषसंशयः । विशेषधर्मावच्छेदेन तद्वत्तासंशयः । विशेषनिश्चयनिवर्त्तनीयः । विशेषधर्मपुरस्कारेण विरोधिनिश्चयमात्रनिवर्त्तनीयः । धूमविशेषे संशयनिरासार्थम्, पर्वतीयधूमत्वपुरस्कारेणाव्याप्यत्वसंशयस्थलेऽनुमितिनिरासार्थम् ।

---

(१) अनुमितिं प्रतीत्यादि ।

पृथग् व्याप्तिनिश्चयः । पर्वतीयधूमत्वपुरस्कारेण व्याप्तिनिश्चयः । वाच्यः । अनुमितिहेतुतया स्वीकार्यः ।

यद्यपि पूर्वं धूमत्वदर्शनस्यैव व्यावर्त्तकधर्मदर्शनविधया संशयविरोधित्वमुक्तं न तु व्याप्तिनिश्चयस्येति धूमसामान्ये व्याप्तिनिश्चयात्तत्सामान्ये संशयानुत्पादोपगमेन विशेषसंशयोपपादनं न युज्यते, तथाऽपि पर्वतवृत्तित्वसामानाधिकरण्येन धूमत्वदर्शनात्तदवच्छेदेन व्याप्त्यभावसंशयनिवृत्तावपि पर्वतीयधूमत्वावच्छेदेन व्याप्त्यभावसंशयो दुर्वारः पर्वतीयत्वावच्छेदेन धूमत्वनिश्चयासम्भवादिति शङ्काया धूमत्वज्ञानस्य विशेषदर्शनत्वेनेत्यादिसिद्धान्तोपरिसम्भवाद् धूमत्वपुरस्कारेण व्याप्तिनिश्चयस्य पर्वतीयधूमत्वावच्छेदेन तदभावसंशयनिवर्त्तकत्वमपि तादृशग्रन्थतात्पर्यविषयस्तत्रैवेयं शङ्का ।

अथ पर्वतवृत्तित्वावच्छेदेन तत्सहितधूमत्वावच्छेदेन वा व्याप्तिविरहशङ्का नैयायिकसिद्धानुमितिहेतुताकस्य व्याप्तिविशिष्टे धूमे पक्षधर्मतावैशिष्ट्यावगाहिनिश्चयस्याप्यनिवर्त्या, असमानधर्मितावच्छेदकत्वात्पक्षधर्मताविशिष्टे व्याप्तिनिश्चयश्च तच्छङ्कानिवर्त्तकोऽपि नानुमितिहेतुः, व्याप्तिविशिष्टवैशिष्ट्यबोधस्यैवानुमितिहेतुतायां वक्ष्यमाणत्वात् । उभयविधपरामर्शस्य तथात्वेऽपि व्याप्तिविशिष्टवैशिष्ट्यबोधघटितानुमितिसामग्रीदशायां तादृशशङ्काया दुरुच्छेदतया तत्सत्त्वे नैयायिकैरनुमितिस्वीकारे मीमांसकानामपि ज्ञानद्वयसत्त्वे तच्छङ्कासत्त्वेऽप्यनुमितावित्यापत्तिसम्भवेन तादृशशङ्कोच्छेदोपायानुसरणप्रयासवैयर्थ्यात् ।

यत्तु व्याप्तिविशिष्टधूमे पर्वतवृत्तित्वशङ्कादशायां मीमांसकमतेऽनुमित्यापत्तिपरतया मूलशङ्कावर्णनेनोक्तापत्तिसमाधनं 'पृथग्व्याप्तिनिश्चयो वाच्य' इत्यस्यापि व्याप्तिविशिष्टधूमे पक्षधर्मतानिश्चयस्यानुमितिहेतुत्वस्वीकारपरतया वर्णनम्, तदशुद्धम्, मीमांसकमते धूमत्वावच्छेदेन पक्षधर्मत्वासत्त्वेनान्यथाव्याप्तिस्वीकारप्रसङ्गभयेन धूमत्वसामानाधिकरण्येनैव पक्षधर्मतानिश्चयहेतुताया वाच्यतया विशिष्टधूमत्वावच्छेदेन पक्षावृत्तित्वशङ्कायाः शुद्धधूमत्वसामानाधिकरण्येन पक्षधर्मतानिश्चयाप्रतिबध्यतया मीमांसकानामनुमितिजनकपक्षधर्मतानिश्चयस्य तादृशशङ्कोच्छेदकत्वाभिधाने-

न समाधानासङ्गतिरिति चेन्न। पक्षवृत्तिधूमत्वविशिष्टे व्याप्तिज्ञानमात्रस्यानुमितिहेतुत्वेऽपि नैयायिकानामुद्देश्यसिद्धेस्तदभ्युपगमे नैव तादृशपरामर्शप्रतिबध्यतायाः पक्षवृत्तित्वावच्छेदेनाव्याप्यत्वशङ्काया ज्ञानद्वयसम्भवशङ्कनसङ्गतेः।

वस्तुतः पक्षवृत्तिधूमत्वावच्छेदेन व्याप्तिविरहशङ्कायां व्याप्तिविशिष्टे पक्षधर्मतानिश्चयो विरोधी, यज्ज्ञानं यदुभयधर्मसामानाधिकरण्यमवगाहते तस्य तदेकतरावच्छेदेनापरधर्माभावशङ्काविघटकताया अनुभवसिद्धत्वात्, पक्षवृत्तिधूमत्वस्य उक्तपरामर्शधर्मितानवच्छेदकत्वेऽपि तदवच्छेदेनाव्याप्यत्वशङ्कायाः पक्षवृत्तिधूमत्वव्याप्यत्वसामानाधिकरण्यावगाहिकथितपरामर्शोत्तरं उत्पत्तिसम्भवादित्यभिप्रायकतया यथाश्रुतप्रकृतमूलसङ्गतिः। सामान्यघटितविशेषधर्मपुरस्कारेण संशये सामान्यधर्मसामानाधिकरण्यमात्रावगाहिनिश्चयस्याविरोधित्वेऽपि सामान्यधर्मावच्छेदेन विरोधिनिश्चयस्य विरोधित्वमावश्यकमवच्छेदकावच्छेदेन विपरीतानवतिबध्यतावच्छेदककोटौ तद्धर्मितावच्छेदकपर्याप्तधर्मितावच्छेदकावपर्यन्तानिवेशादित्यभिप्रायेण समाधत्ते। यत्र हीति। व्यावर्तकधर्मदर्शनस्य धर्मितावच्छेदकावच्छिन्नत्वावगाहितां स्फुटयितु व्याचष्टे दीधितौ। यत्र यद्यच्छिन्ने इति।

परे तु धूमसामान्य सदाये मा भूदिति। व्यावर्तकधूमत्वेन निश्चिते पर्वतीयत्वसामान्यधर्मविशिष्टे तदवच्छेदेनाव्याप्यत्वसंशयो मा भूदित्यर्थः। द्वितीयसदाद्यपरित्यागादेः पूर्व एवार्थः। समानविषयकत्वमेव विरोधितायां तन्त्रं न तु समानप्रकारकत्वमपीत्याशयेन समाधत्ते। यत्र हीति। यथाश्रुतार्थं क्रमेणेति। तत्र। समानधर्मिकव्यावर्तकधर्मदर्शनं। सामान्य। सामान्यधर्मविशिष्टविशेष्यकम्। विशेषे वा। विशेषधर्मविशिष्टविशेष्यकं वा। तथा च पर्वतीयधूमे पर्वतीयत्वमात्रेण धूमत्वनिश्चयेऽपि पर्वतीयधूमत्वपुरस्कारेण सदायसम्भव इति भाव।

यद्यपि धूमस्य व्याप्यत्वच्छेदकत्वावगाहिनिश्चयस्य धूमत्वप्रतिबन्धकताविच्छिन्नविशेष्यताकसदायनियन्धकतायानादरनिश्चयाशिप्रकृत सदायानिवृत्ति सम्भवति तथापि नुक्षपर्वतीयत्वावच्छेदेनाव्याप्यत्वशङ्कानिरासार्थम् धूमत्वनिश्चयस्यावश्यकतया तत एव

पर्वतीयधूमत्वावच्छिन्नविशेष्यकसंशयनिवृत्तिरुपपादिता, समानविषयकत्वेन विरोधितावादिनां धर्मितावच्छेदकेऽवच्छेदकत्वावगाहिनोऽपि भिन्नधर्मिकज्ञानस्याविरोधित्वाभिप्रायेण वेति स्वातन्त्र्येण मूलं वर्णयन्ति ।

सामान्यप्रत्यासत्तिमनङ्गीकुर्वतां व्याप्तिनिश्चयस्य पर्वतीयधूमाविषयकतया धूमत्वे व्याप्यतावच्छेदकत्वावगाहित्वेऽपि धूमत्वघटितधर्मावच्छिन्नपर्वतीयधूमधर्मिकसंशयविरोधित्वे विवादः सम्भवतीति दृष्टान्तेनानुभवं द्रढयंस्तं निराकुरुते । यथा हीति । तदभावेन विशिष्टे न तत्संशय इति योजना । धर्मिविशेषणत्वञ्च तदभावादीनां धर्मितावच्छेदकताख्यं विषयत्वम् । स्थाणुत्वाभावव्याप्य करादीति स्वतन्त्रज्ञानदशायामपि शुद्धकरत्वाद्यवच्छिन्नं धर्मितावच्छेदकीकृत्य स्थाणुत्वादिसंशयानुदयात् व्याप्तिविशिष्टेनेत्युपेक्ष्य 'व्याप्यतया गृहीतेन' इत्युक्तम् । तदव्यवहितप्राक्क्षणे तत्क्षणे वा तस्य पुंसो व्याप्यतया निश्चयविषयेणेत्यर्थः । तदभावेन तदभावव्याप्तिविशिष्टेन च विशिष्टे तद्वत्ताज्ञानमाहार्यमेव प्रसिद्धमिति तादृशज्ञान इच्छाया एव हेतुत्वात्तदभावादेव नाहार्यतादृशसंशयप्रसङ्गः । करादिमान् स्थाणुर्न वेति संशयश्च करत्वाद्यवच्छिन्ने स्थाणुत्वाद्यभावव्याप्तिनिश्चयशून्यकाले इच्छां विनापि प्रसिद्ध इत्यनाहार्यतादृशज्ञाने तथाविधव्याप्तिनिश्चयत्वेन प्रतिबन्धकतां कल्पयित्वा तादृशनिश्चयदशायामसौ निरसनीयः । तथेत्यादि । तद्विशिष्टेऽपि न तत्संशय इत्यनुषङ्गेणान्वयः । यदवच्छेदेन तदभावादिनिश्चयस्तस्यापि तदभावादितुल्यत्वादिति भावः । अनुभवबलादित्यग्रिमहेत्वन्वयानुरोधेन 'इत्यविवाद' इति पूरणीयम् ।

ननु धूमत्वाद्यवच्छेदेन व्याप्यभावव्यावर्त्तकधर्मः प्रकृते न गृहीतः अपि तु तदभावो व्याप्तिरेवेति व्यावर्त्तकपदस्य तदभावावच्छेदकमात्रपरत्वाभिमानिनामाशङ्कां निराकरोति । "व्यावर्त्तकश्चेति" । स्थाणुत्वाभावव्याप्यः करः करवांश्चायमिति ज्ञानद्वयस्यापि अयं स्थाणुर्न वेति संशयविरोधितया व्याप्तिविशिष्ट इत्युपेक्ष्य व्याप्यतया गृहीत इत्युक्तम् ।

अथ यदवच्छेदेन तदभावोऽवगत इत्यस्य यत्तदभावावच्छेदकत्वेनावगत इत्यर्थः अवच्छेदकत्वज्ञानातिरिक्तवृत्तित्वमेव न तु

स्वरूपसम्बन्धविशेषः, पुरुषत्वादौ स्थाणुत्वाभावादेस्तादृशावच्छेदकतायाः अप्रामाणिकत्वात् मीमांसकानामपि धूमत्वादौ व्याप्यवृत्तित्वज्ञानमेवानुमितिहेतुत्वेनोपगतमित्यभिप्रायेण मूले लक्षणमेतादृशं, एवज्ञानतिरिक्तवृत्तित्वस्य व्याप्तिरूपतया व्याप्यतया गृहीत इत्यनेन पौनरुक्त्यम्।

न च यदवच्छेदेनेत्यादेर्यत्र यदभावस्य व्याप्तिः संसर्गतयाऽवगतेति व्याप्यतयेत्यस्य व्याप्तिप्रकारेणेत्यर्थ इति भेदः। पुरुषो न स्थाणुरित्याकारके पुरुषत्वावच्छेदेन स्थाणुत्वाभावग्रहे च पुरुषत्वांशे व्याप्तिः संसर्गतयैव भासते न तु प्रकारतया तद्विशिष्टवाचकपदानुल्लेखात् संसर्गतया प्रकारतया च भानस्य पृथक्त्वेन प्रतिबन्धकतायां भेदसूचनाय तत्प्रकारकज्ञानस्य तदीयसंसर्गविशेषावगाहित्वेनैव प्रतिबन्धकतायां अनतिप्रसङ्गाय कल्पनीयतया तत्संसर्गकज्ञानस्य च तदीयसंसर्गानवगाहितया तेन रूपेणासङ्ग्रहादिति वाच्यम्। संसर्गतासंसर्गविशेषावच्छिन्नप्रकारतयोः संसर्गविशेषानवच्छिन्नप्रकारतान्यविषयतात्वेनानुगमेनातिप्रसङ्गविरहादिति चेत्।

अवच्छेदकावच्छेदेन स्थाणुत्वाभावादिज्ञाने अवच्छेदकांशे व्याप्तिः संसर्गतयाऽपि न भासते, पुरुषो न स्थाणुरित्यादिज्ञानस्य पुरुषत्वाद्यंशे निष्प्रकारकतया अनुभवसिद्धत्वात्, किन्तु धर्मितावच्छेदकपुरुषत्वादिव्यापकताविशिष्टविशेषणतैव स्थाणुत्वाभावादेः पुरुषादौ संसर्गतया भासते, एवञ्च यद्व्यापकताविशेषणतासंसर्गेण तदभावो धर्मिण्यवगत इत्येव यदित्यादेरर्थ इति न पौनरुक्त्यम्।

यदि च विशेषणतात्वादिना व्यापकतायाः संसर्गघटकत्वे प्रमेयत्वाद्यवच्छेदेन स्थाणुत्वाभावादिज्ञानमपि प्रमा स्यादिति स्थाणुत्वाभावीयविशेषणतात्वेन व्यापकत्वमेव तथा वाच्यम् तथा च स्थाणुत्वाद्यभावस्यापि संसर्गान्तःपातित्वे तदंश एव व्यापकत्वभानमुचितम्। तथा सति स्थाणुत्वाभावः पुरुषनिष्ठाभावाप्रतियोगी अयञ्च पुरुष इत्यादिज्ञानस्य स्थाणुत्वाभावादिधर्मिकपुरुषत्वव्यापकताग्रहसहितपुरुषत्वादिप्रकारकनिश्चयत्वेन प्रतिबन्धकतायाः अयं स्थाणुर्न वेति संशयं प्रति फलसत्वात् पुरुषो न स्थाणुरयञ्च पुरुष इत्यादिज्ञानस्य तद्रूपाक्रान्ततया न पृथक् प्रतिबन्धकत्वं, उक्त-

ज्ञानप्रतिबन्धकतायां व्यापकत्वीयसंसर्गविशेषावगाहित्वनिवेशेऽपि न क्षतिः, व्यापकताविशिष्टघटितसंसर्गकज्ञानेऽपि व्यापकघटकस्य वैशिष्ट्यस्यावश्य भानादिति मन्यते तदा यदित्यादेरपि यद्व्यापकतया तदभावोऽवगत इत्येवार्थः।

न च व्याप्तिघटकसामानाधिकरण्यांशभानस्याप्रयोजकतया यो वेत्यादेरपि उक्त एवार्थ इति पौनरुक्त्यं दुर्वारमेवेति वाच्यम् । व्याप्तिपदेन तद्वदन्यावृत्तित्वस्यैवाभिहितत्वात्, व्यापकसामानाधिकरण्यज्ञानस्य यदवच्छेदेनेत्याद्यन्तभावेऽपि क्षतिविरहात् ।

वस्तुतस्तु ग्राह्याभावांशे तद्धर्मव्यापकतायाः संसर्गघटकविशेषणविधया भानमात्रं न विरोधितायां प्रयोजकम्, तथा सति यत्र पुरुषो न स्थाणुरित्यादिज्ञाने करादिव्यापकताविशिष्टस्थाणुत्वाद्यभावीयविशेषणताद्यैः संसर्गतया भानम्, तादृशज्ञानसहितस्य करादिमानयमित्यादिज्ञानस्याप्ययं स्थाणुर्न वेत्यादिज्ञानविरोधिताप्रसङ्गात् । अतस्तद्धर्मविशिष्टे ग्राह्याभावावगाहित्वसहितमेव तद्धर्मव्यापकतायास्तथा भानं विरोधिताप्रयोजकमित्युपेयम्, तथा च ग्राह्याभावांशे तद्धर्मव्यापकताप्रकारकस्य तद्धर्मविशिष्टे ग्राह्याभावाप्रकारकस्यापि ज्ञानस्य तद्धर्मवत्ताज्ञानधर्मितावच्छेदकविशिष्टविशेष्यकज्ञानविरोधितया न तदभावव्याप्यतद्भावावच्छेदकधर्मदर्शनयोरेकरूपेण प्रतिबन्धकतासम्भवः ।

न च ग्राह्याभावांशे तद्धर्मव्यापकताप्रकारकस्यैव संसर्गघटकतया तद्विषयकस्यापि तद्धर्मविशिष्टे ग्राह्याभावानवगाहिनो विरोधित्वमिष्टमेव संसर्गघटकविशेषणविषयतायाः प्रकारतातुल्यत्वादिति वाच्यम् । तथा सति पुरुषत्वाद्यवच्छेदेन स्थाणुत्वाद्यभावावगाहिनः पुरुषः स्थाणुर्न वेत्यादिसंशयस्यापि स्थाणुत्वाद्यभावांशे पुरुषत्वादिव्यापकत्वविषयकतया तत्सहितपुरुषत्वादिप्रकारकज्ञानस्य स्वसमानधर्मितावच्छेदककस्थाणुत्वादिविशिष्टज्ञानाविरोधिताया निर्वाजितापातात् । न हि त्वन्मते तादृशसंशयस्य संशयत्वमेवाविरोधिताबीजमिति सम्भवति, पुरुषत्वादिविशिष्टे स्थाणुत्वाभावावगाहिताया विरोधितायामप्रयोजकत्वेन स्थाणुत्वाभावांशे संशयत्वस्य घटादिरूपोदासीनविषयांशे संशयत्ववदुपयत्वात् ।

एतेन पुरुषत्वादिसामानाधिकरण्येन स्थाणुत्वादिविशिष्टबुद्धौ पुरुषत्वाद्यवच्छेदेन तद्विपरीतनिश्चयस्य विरोधितायामभावांशे पुरुषत्वादिव्यापकतावगाहित्वमेव बीजं न तु पुरुषत्वादिविशिष्टे अभावावगाहित्वमपि, तत्र तदनवगाहिनोऽपि [illegible] पुरुषत्वं पुरुषत्वव्यापकः स्थाणुत्वाभाव इत्यादिव्यापकताप्रकारकज्ञानस्य पुरुषः स्थाणुरित्यादिधीविरोधित्वात् । तथा च तादृशव्यापकताप्रकारकज्ञानस्य तादृशव्यापकताविषयकत्वेनैव प्रतिबन्धकतासम्भवादवच्छेदकावच्छेदेन बाधबुद्धेः पृथक् प्रतिबन्धकतायां मानाभावः तस्या अपि उक्तरूपाक्रान्तत्वात् । एवं धर्मितावच्छेदकसामानाधिकरण्येनाभावविशिष्टबुद्धं धर्मितावच्छेदके प्रतियोगिव्यभिचारधीरूपतया अवच्छेदकावच्छेदेन प्रतियोगिविशिष्टज्ञानस्य तत्प्रतिबध्यत्वे प्रतियोगिन्यवच्छेदकव्यापकतावगाहित्वमेव बीजम्, तथा च व्यापकताप्रकारकतत्संसर्गकज्ञानसाधारणानुगतरूपेणैव तत्प्रतिबध्यताकल्पनसम्भवादवच्छेदकावच्छेदेन विशिष्टबुद्धावच्छेदकसामानाधिकरण्यावगाहिबाधबुद्धेरपि पृथक् प्रतिबन्धकत्वे मानाभावः । न च तादृशव्यभिचारज्ञानस्य व्यापकताज्ञानविरोधित्वमेव नास्तीति वाच्यम् । लाघवेनैव तद्विरोधितास्वीकारौचित्यात् प्राचीनसिद्धान्तासिद्धत्वाच्च इति परास्तम् ।

संसर्गतया व्यापकतामात्रावगाहित्वस्य विरोधिताबीजत्वे अवच्छेदकावच्छेदेनाभावावगाहिनः पुरुषः स्थाणुर्न वेत्यादिसंशयस्य पुरुषः स्थाणुर्न वेति ज्ञानाविरोधिताया निर्बीजत्वापातात् । तादृशव्यापकतावगाहित्वस्य व्यापकतानिरूपकधर्मविशिष्टे प्रा[illegible]भावावगाहित्वस्यैव विरोधिताबीजतया करादिव्यापकताविशिष्टस्थाणुत्वाद्यभावं संसर्गघटकतयाऽवगाहमानस्य पुरुषो न स्थाणुरित्यादिज्ञानस्य करादिमान् स्थाणुरित्यादिज्ञानाप्रतिबन्धकत्वनिर्वाहाय तद्धर्मावच्छिन्नविशेष्यकग्राह्याभावावगाहिज्ञानत्वेन बाधबुद्धेर्ग्राह्याभावांशे व्यापकताप्रकारकबुद्धेश्च व्याप्यधर्मधर्मितावच्छेदकबुद्धौ तादृशव्यापकताप्रकारकत्वेन पृथक् प्रतिबन्धकताया आवश्यकत्वात् व्यभिचारधियो व्यापकताग्रहविरोधित्ववादिनां प्राचां तत्संशयस्यापि तद्विरोधिताया अनुमततया संसर्गविधया

व्यापकतावगाहित्वस्य तत्प्रतिबध्यताबीजत्वे पुरुषः स्थाणुर्न वे-त्यादिसंशयेऽवच्छेदकावच्छेदेन स्थाणुत्वाद्यभावावगाहिताया एवानुपपत्तेश्चेति।

यदि चावच्छेदकसामानाधिकरण्यमात्रेण तदवच्छेदेन विशेष-णमयगाहमानयोर्बुद्ध्योर्वैलक्षण्यनिर्वाहायावच्छेदकावच्छेदेन बुद्धौ व्यापकतायाः संसर्गघटकतया भानमुपेयते पुरुषत्वादिधर्मिता-वच्छेदककबुद्धौ च करादिव्यापकतायाः संसर्गघटकतया भानमप्रा-माणिकं तदा पुरुषो न स्थाणुरित्यादिधीसहितस्य करादिमत्त्वा-ज्ञानस्य स्थाणुत्वादिविशिष्टधीविरोधित्वाप्रसक्तेरनुगतरूपेणैव ग्राह्याभावांशे तद्धर्मव्यापकताप्रकारकज्ञानस्य तद्धर्मावच्छे-देन ग्राह्याभावज्ञानस्य च तद्धर्मदर्शनप्रतिबन्धकतायां निवेशः पुरुषः स्थाणुर्न वेत्यादिसंशयकालीनपुरुषत्वादिग्रहस्य चाविरो-धितोपपत्तये व्यापकताज्ञाने पुरुषत्वाद्यवच्छिन्नविशेष्यकस्थाणु-त्वादिसंशयभेदो निवेशनीयः। स्थाणुत्वाद्यभावांशे व्यापकताप्र-कारकनिश्चयश्च तादृशस्थाणुत्वादिसंशयरूपो नास्त्येव तादृशनि-श्चयस्य स्वकालेऽपि तादृशसंशयविरोधित्वादतो न तादृशसंशय-रूपव्यापकताप्रकारकनिश्चयासङ्ग्रहभयेन तादृशसंशयभेदस्य प्रतिब-न्धकतावच्छेदकत्वासम्भवस्यावकाशः। एवं तादृशसंशयभेदं नि-वेश्य पुरुषत्वाद्यवच्छेदेन स्थाणुत्वाद्यभावनिश्चयसाधारणेन रूपे-ण स्थाणुत्वाद्यभावः पुरुषत्वादिव्यापक इति बुद्धेः पुरुषः स्था-णुरित्यादिधीप्रतिबन्धकतासम्भव इति ध्येयम्।

अत्रापि ज्ञानजन्यतमुपेक्ष्य अवगतो गृहीत इति क्तान्तप्रयोगो यथा संशयानुत्पादो निर्वाह्यः तदव्यवहितप्राक्क्षणे तज्ज्ञानस-त्त्वमपेक्षितं न तु तदेव इति लाभाय।

एतेन *चिरविनष्टज्ञानजोद्बुद्धसंस्कारसत्त्वेऽपि* संशयानुत्पाद-लाभाय तथाऽभिधानमिति हेयम्। उद्बुद्धसंस्कारज्ञानयोरनुग-मासम्भवेन पृथक् पृथक् प्रतिबन्धकतया वाच्यतया गौरवात्, उद्बुद्धसंस्कारात् स्मरणस्याऽऽवश्यकतया तेनैव कार्यकालवर्त्ति-ना संशयप्रतिबन्धसम्भवाच्च।

यदवच्छेदेन व्यावर्त्तकधर्मदर्शनं तद्धर्मविशिष्टे न संशय इत्यु-क्तमेव विशेष्य दर्शयति। यथेति। स्थाणुत्वाभावस्य पुरुषत्वाद्य-

च्छेदेन ग्रहे पुरुषोऽयं स्थाणुर्न वेति न संशय इत्येकोऽन्वयः। स्थाणुत्वाभावस्य पुरुषत्वावच्छेदेन पुरुषत्वस्य ग्रहे अय स्थाणुर्न वेति न संशय इत्यपरः। चरमः स्फुट एव। दन्योन्याभावादिरित्यस्य व्यावर्त्तकतया योऽन्य मेण ग्रहव्य इत्यनेन सम्बन्धः। सर्वत्राविना तदवच्छेदकतद्व्याव र्त्तकयोः परिग्रहः। तत्पदं सर्वत्र ग्राह्यम्। संशयत्वस्य व्यावर्त्त कदर्शनप्रतिबध्यतावच्छेदकत्वभ्रम निराकरोति । एवमिति। तद् भ्रमोऽपीत्यस्य व्यावर्त्तकधर्मदर्शनदशायामित्यादिः। तथा च सं शयानिश्चयसाधारणज्ञानत्वमेव तत्प्रतिबध्यतावच्छेदकमिति भा वः। विशेषदर्शनस्य। तद्व्यावर्त्तकदर्शनस्य। विपरीतज्ञानमात्रेति। तज्ज्ञानसामान्येत्यर्थः। अग्रे। धूमत्वपुरस्कारेणेत्यादौ।

(चि०) ननु भावोऽभावो वा उभयथाऽपि प्र मेयम् इत्यत्र भावत्वाभावत्वयोर्व्याप्यतावच्छेदक योरग्रहादनुमानं न स्यात् तदन्यान्यत्वरूपस्यान्यतर त्वस्य लिङ्गत्वाभावादिति चेन्न। भावत्वाभावत्वा न्यान्यधर्मवत्त्वस्य लिङ्गत्वात्। एवं धूमालोकान्यतर त्वमपि लिङ्गम्।

(दी०)नन्वित्यादि। इदं नीलत्वेन प्रतीयमानं भावोऽभावो वा। भावत्वाभावत्वयोः। तत्त्वयोरित्यर्थः। लिङ्गत्वाभावात्। अप्रसिद्धत्वेन तत्त्वासम्भवात्। भावत्वाभावत्वेत्यादिकं केव लान्वय्यनुमानमतिरिक्ताभावमभ्युपेत्य। केवलान्वयिनः सा ध्यस्य धर्ममात्रमेव व्याप्यमिति तु मन्तव्यम्। एवमिति। लि ङ्गं व्याप्यत्वे, लिङ्गतावच्छेदकं वा वह्नौ।

(गा०) प्रमेयमित्यस्य समानलिङ्ग पक्षरूपविशेष्यवाचकपदं पूरयति। इदमिति। इदन्त्वस्य तेजोऽभावत्वात्मकत्वे तदवच्छिन्ने भावत्वसंशयायोगात्तद्विवृणोति। नीलत्वेनेति। मूलेऽनुमानम्। अ नुमिति। उभयथाऽपीत्यनेनेदं प्रमेयमिति ज्ञानस्यावधारणत्वला

भावात्मकशज्ञानस्यानुमितिहेतुत्वावश्यकत्वं लभ्यते, तथा च इदं भावोऽभावो वेति संशयस्थले जायमानमिदमुभयथाऽपि प्रमेयमित्यनुमितिस्तव नये न स्यादित्यर्थः । अनुमित्यनुपपत्तौ हेतुरग्रहादित्यन्तम् । अग्रहादित्यस्य पक्षधर्मतानिश्चयप्रकारत-येत्यादिः । अग्रे तादात्म्यसम्बन्धेनान्यतरवतो लिङ्गत्व-मुपेक्ष्यान्यतरस्य धर्मस्य लिङ्गतायां सिद्धान्तयिष्यमाणतया अत्रापि भावत्वादिधर्मवृत्तेरेव लिङ्गतावच्छेदकस्याग्रहे मूल-तात्पर्यमवगम्यते इत्यभिसन्धाय भावत्वादिपदं भावत्वत्वादिप-रतया व्याचष्टे दीधितौ । भावत्वेति । अप्रसिद्धानुयोगिकाभावस्य दुर्निरूपतया लिङ्गत्वाभावादित्यसम्भवपरतया हेतुं पूरयन् व्याचष्टे । अप्रसिद्धत्वेनेति । भावभेदवैशिष्ट्यस्याभावभेदावृत्तितया तद्विशे-षणतया लिङ्गतावच्छेदकबाधकत्वासम्भवादिति पर्यवसितोऽर्थः ।

ननु मीमांसकैः केवलान्वय्यनुमानानङ्गीकाराद्भावभिन्नपदा-र्थानङ्गीकाराच्च भावभिन्नत्वरूपाभावत्वघटितान्यतरत्वावच्छिन्न-लिङ्गकप्रमेयत्वानुमानोपपादनं विरुद्धमित्यत आह । भावत्वाभावत्वे-त्यादिकमिति । अतिरिक्तञ्चेति ।

यद्यप्यभावस्याधिकरणरूपत्वेऽपि स्वरूपसम्बन्धादिरूपाभा-वत्वघटितान्यतरस्य हेतुत्वसम्भवस्तथापि दर्शितसंशये भाव-भेदस्य कोटितया तद्घटितान्यतरस्य हेतुत्वं मूलाभिप्रेतमित्या-शयेनेदम् । साध्यस्य केवलान्वयित्वज्ञानकाले यत्किञ्चिद्रूपावच्छि-न्नस्यैव वृत्तिमतो लिङ्गता सम्भवतीति मूले तदकथनात् न्यूनता-भङ्गायाह । केवलान्वयिन इति । अयमालोको धूमो वेति सन्देहे धूमालोकान्यतरत्वस्यानुमापकत्वरूपं लिङ्गत्वमुक्तं वह्नौ साध्ये व्याधि-करणतया न सम्भवतीति साध्यं पूरयति । व्याप्यत्व इति । वह्न्या-दिव्याप्यत्वे साध्य इत्यर्थः । लिङ्गपदस्यात्रैव लिङ्गतावच्छेदकपरत्वे वह्न्यादिसाध्यपरतया मूलसङ्गतिरित्याह । लिङ्गतावच्छेदकं वेति ।

(चि०) अथ यद्व्यतिरेकज्ञानं यदुत्पत्तिप्रतिब-न्धकं तत् तन्निश्चयसाध्यम्, तथा च पक्षधर्मस्य व्याप्यभेदज्ञानमनुमितिप्रतिबन्धकम्, अतो व्याप्या-भेदज्ञानं तद्धेतुः सिध्यतीति चेन्न । धूमत्वपुरस्कारेण

व्याप्तिस्मरणपक्षधर्मताज्ञाने सति विशेषदर्शनान्न व्याप्यभेदज्ञानम्, किन्त्वनुमितेरेव तत्रोत्पत्तिसामग्रीसत्त्वात्। अतो न व्याप्यभेदज्ञानम् अनुमितिप्रतिबन्धकं येन व्याप्याभेदज्ञानं तद्धेतुः स्यात्। न च धूमत्वपुरस्कारेण ... ५

इयं धूमव्यक्तिर्वह्निव्याप्या नेति भ्राम्यतोऽनुमित्यापत्तितो विशिष्टज्ञानं तद्धेतुरिति वाच्यम्। धूमत्वस्य विशेषस्य दर्शनेन तादृशभ्रमानुत्पत्तेः तत्रानुमितिसद्भावादेव। अन्यथा निश्चयसामग्र्यां सत्यां भ्रमानन्तरं परामर्श एव कुतो न भवति।

(दी०) यद्व्यतिरेकेति। यत्संशयव्यतिरेकानिश्चयावित्यत्र व्याख्याततत्त्वमेतत्। यद्वा यद्व्यतिरेकनिश्चये कार्यानुत्पत्तौ तद्व्यतिरेकानिश्चयाभावस्य कारणतामपेक्ष्य तन्निश्चयस्यैव कारणत्वं युक्तं लाघवादित्यभिप्रायकमिदम्। अत एव क्लृप्तनियतपूर्वभावतया भेदग्रहाभाव एवानुमितिहेतुरित्यभिप्रेत्य अस्तु वेत्यादि वक्ष्यति। सामान्यतो विशेषदर्शनात् सामान्यतो भ्रमो न स्यात् विशेषतस्तु स्यादेवेत्यभिप्रायिकीमाशङ्कां निरस्यति। न चेति।

(गा०) ननु यद्धर्मिकयद्व्यतिरेकज्ञानप्रतिबध्यं तद्धर्मिकतन्निश्चयत्वावच्छिन्नजन्यमित्येतादृश्यां पक्षीयधूमधर्मिकसाध्यव्याप्तिनिश्चयत्वेनानुमितिहेतुत्वसाधिकायां मूलोक्तव्याप्तौ ग्राह्यव्यतिरेकनिश्चयप्रतिबध्ये घटज्ञानादौ व्यभिचारज्ञानसामान्यप्रतिबध्ये व्यभिचारज्ञाने च व्यभिचार इत्याशङ्क्याह। यत्संशयेति।

व्याख्याततत्त्वमिति। तच्च तत्त्वं संशयसाधारणव्यतिरेकज्ञानत्वेन प्रतिबन्धकत्व व्याप्तिघटकम्, ग्राह्यसंशयस्य सर्वत्रैवाप्रतिबन्धकत्वोपगमात्। अव्यभिचारग्रहेऽपि व्यभिचारनिश्चयत्वेनैव प्रतिबन्धकत्वमिति। अथेत्यादिशङ्काया व्याप्तिपरत्वे स्वयमनुप

पत्तेर्न्रैःप्रमाणतया फलानुत्पत्तिनियतत्वरूपप्रतिबन्धकत्वनिवेशनेन मूले वक्ष्यमाणस्वरूपासिद्धेः परिहारसम्भवेन समाधानासङ्गतेः लाघवेन विशिष्टपरामर्शकारणताव्यवस्थापनपरतया तां व्याचष्टे । यद्वेति । व्यतिरेकसंशये कार्यानुत्पत्त्यनुरोधेन निश्चयत्वेन हेतुतायाः पूर्वमाशङ्कितत्वात् पौनरुक्त्याशङ्कायाः परिहाराय मूलस्थव्याप्यभेदज्ञानपदस्य निश्चयपरतां स्फुटयितुं व्यतिरेकज्ञानसामान्यमुपेक्ष्य तन्निश्चयकथनम् । कार्यानुत्पत्तौ । कार्यानुत्पत्तिनियमे । इत्थञ्च मूले यदुत्पत्तिप्रतिबन्धकम् इत्यत्र प्रतिबन्धकत्वं गुरुधर्मावच्छिन्नभेदाग्रहकारणताप्रसञ्जकं कार्यानुत्पत्तिनियतत्वरूपमेवेति बोध्यम् । लाघवात् । अवच्छेदकलाघवात् । संशयसाधारणज्ञानत्वावच्छिन्नाभावहेतुत्वेऽप्यप्रामाण्यनिश्चयत्वावच्छिन्नाभावस्य विशेषणत्वाद्गौरवं बोध्यम् । अत एव । उक्तग्रन्थस्य लाघवप्रदर्शनपरत्वादेव । अनुमितिहेतुः । कल्पनालाघवादिति शेषः । वक्ष्यतीति । उक्तग्रन्थस्य व्याप्तिपरत्वे भेदग्रहाभावस्य हेतुत्वेऽपि व्याप्तिपक्षधर्मताविशिष्टपरामर्शकारणतासिद्धेरावश्यकत्वात् तामनिराकृत्य भेदाग्रहकारणत्वोपगमस्यासङ्गत्यापत्तेरिति भावः । एवञ्च समाधाने अनुमितिप्रतिबन्धकमित्यस्य मयोच्यत इति शेषः । येन । यदपेक्षया लाघवेनेत्यर्थः । विशेषदर्शनाद् भ्रमोत्पत्त्यभावस्य प्रागुक्तत्वान्न चेत्याद्याशङ्कानुत्थितेस्तदाशयं प्रकाशयति । सामान्यत इति ।

धूमत्वस्य विशेषस्य दर्शनेनेति मूलस्य उक्तभ्रमे ग्राह्याभावावच्छेदकतया भातस्य धूमत्वस्य धर्मितावच्छेदकतया स्फुरणेनेत्यर्थो दीधित्यनुसारेण बोध्यः ।

( चि० ) अस्तु वा व्याप्यतया पक्षधर्मतया चावगतस्य भेदाग्रह एवानुमितिहेतुः, परामर्शहेतुतया तस्याऽऽवश्यकत्वात् । अत एवासन्निकृष्टधूमज्ञानादप्यनुमितिः । न चैवं गौरवम्, तदा विशिष्टज्ञानानुपस्थितेः । न च जनकज्ञानाविरोधिनो ज्ञानस्याप्रतिबन्धकत्वात् भेदग्रहो न प्रतिबन्धक इति वाच्यम् । अभेदज्ञान-

स्याजनकत्वात् त्वयाऽपि लिङ्गपरामर्शे तादृशस्य प्रतिबन्धकत्वस्वीकाराच्च। अथ गोत्वं मधुरत्वावान्तरजातिर्वा लिङ्गं न स्यात् तद्भिन्नधर्मान्तरस्याभावात्, अत एव तस्य विलक्षणत्वात् इति चेन्न। व्यक्तेरेव तत्र प्रकारत्वात्, न हि गौर्गोत्वमिति ज्ञानयोरविशेषः, अन्यथा गोत्वमिति ज्ञानस्य निर्विकल्पकत्वापत्त्या व्याप्यत्वग्रहे परामर्शे चानुपयोगात् गवेतरावृत्तित्वे सति सकलगोवृत्तित्वं गोत्वत्वमित्यनुभवाच्च। न चैवमनवस्था, तदितरावृत्तित्वे सति तद्वृत्तित्वस्यानुभवेनापलापासम्भवात्।

इति परामर्शपूर्वपक्षचिन्तामणिः।

(दी०) अस्तु वेत्यभ्युपगमवादः। न चेत्यादि.। अभेदज्ञानस्याहेतुत्वे भेदग्रहो न प्रतिबन्धको भवितुमर्हतीत्यर्थः। अभेदेति। तथा चातथाभूतस्यापि प्रतिबन्धकत्वमनायत्या वक्तव्यमिति भावः। अतथाभूतत्वस्य सान्दिग्धत्वे व्यभिचारमाह। त्वयापीति। विशेषणान्तरदाने चाप्रयोजकत्वमिति भावः। गोत्वे गोपदशक्यतावच्छेदकत्वमविशेषितं विशेषितं वा तदस्तीत्यतः मधुरत्वेति। मधुरत्वव्याप्यो धर्मो जातिरखण्डोपाधिर्वेति फलतो न विशेषः। गौरिति ज्ञाने गोत्वप्रकारकत्वं विशेषमाशङ्क्याह। अन्यथेति। व्यक्तेः प्रकारत्वेऽपि लिङ्गतावच्छेदकत्वासम्भवादाह। गवेतरेति। गोत्वत्वस्याव्याप्यवृत्तित्वाद्याश्रयः, अत्र च यथासाध्यं गवेतरसमवेतत्वादिकमेवोपादेयं कालादौ व्यभिचारवारणाय समवायेन सम्बन्धेन हेतुत्वस्यावश्यवाच्यत्वेनाभावादिसाधारण्येऽप्यदोषात्, व्यतिरेकेऽपि रूपान्तरेण सम्ब-

न्धान्तरेण च गोत्वाभावस्यापि व्यभिचारितया गवेतरासम-...... वेतस्य तत्त्वेन समवायसम्बन्धेनाभावस्यैव गमकत्वात् ।

इति परामर्शपूर्वपक्षदीधितिः ।

(गा०) विशेषदर्शने संशयवद् भ्रमस्यापि न सम्भव इति भेदाग्रहहेतुत्वाभिधानासङ्गतिरत आह । अस्तु वेति । ननु व्याप्यपक्षधर्मयोर्भेदाग्रहस्यानुमितिहेतुत्वे तेषां कारणबाधेनानुमित्यात्मकान्यथाख्यातिनिराकरणं विरुध्यते ह्रदवृत्ति-बाष्पादौ वह्निव्याप्यधूमादेर्भेदाग्रहेण ह्रदादौ वह्न्याद्यनुमितेर्दुर्वारत्वात् । न च फलासिद्ध्या ह्रदादिपक्षे वह्न्यादिरूपसाध्यभ्रान्तर्भाव्य कारणत्वाकल्पनान्नापत्तिरिति वाच्यम् । पक्षमनन्तर्भाव्य पक्षनिष्ठप्रत्यासत्त्या कारणत्वकल्पनेनापत्तिसम्भवादिति चेन्न । एतन्मतानिर्भरे-णैतद्दोषस्याकिञ्चित्करत्वात् । व्याप्यतावच्छेदकप्रकारकस्यैव पक्षधर्मताज्ञानस्य भेदाग्रहहेतुतावच्छेदकत्वोपगमेनान्यथाख्यातिवारणसम्भवाच्च[१] इतरसकलकारणसत्त्वे यत्सत्त्वे कार्यानुत्पादस्तस्यैव प्रतिबन्धकताया आवश्यकत्वादिति भाव । न च जनकज्ञानेत्यादिमूलशङ्काया भेदग्रहे नैयायिकानामनुमित्यप्रतिबन्धकत्वसाधनपरत्वेऽसङ्गतिः जनकज्ञानाप्रतिबन्धकस्यैव हेतुतायाः स्वीकरणीयत्वात् तस्य च स्वमतेऽसिद्धत्वात् इत्यतस्तस्या आपत्तिपरत्वं स्फुटीकरोति । अभेदज्ञानस्येति । मूले 'अभेदज्ञानस्याजनकत्वात्' अतीन्द्रियहेतुकानुमितावुक्तक्रमेण व्यभिचारेण जनकत्वासम्भवात् तथा च विपर्ययानुमाने बाध इति भावः । नन्वेवमप्युक्तख्यातिविरोधाद्भेदग्रहस्य प्रतिबन्धकत्वानुपपत्तिर्दुर्वारैवेत्यत आह दीधितौ । तथा चेति । अतथाभूतस्यापि । जनकज्ञानाविरोधिनोऽपि । भेदग्रहस्येति शेषः । अनायत्या वक्तव्यमिति । अन्यथा भेदग्रहदशायां अनुमित्यापत्तेरिति शेषः । तथा च तादृशव्याप्तिरेव

[१] पक्षमनन्तर्भाव्य पक्षनिष्ठप्रत्यासत्त्या कारणत्वकल्पनेनापत्तिसम्भवादित्यभिसन्धायास्तु वेत्यादिकल्पे अनिर्भरमाह अस्तु वेत्यादि—इति पु० पा० ।

बाधितेति भावः । सन्दिग्धत्व इति ।
स्थले मानसविशिष्टज्ञानोपगमेन व्यभिचारानिर्णयादिति भावः

ननु लिङ्गपरामर्शे भेदग्रहस्य जनकज्ञानाविरोधिनः
फत्वेऽपि न व्यभिचारः ग्राह्याभावानवगाहित्वविशिष्टस्य
नाविरोधित्वस्याप्रनिबन्धकत्वव्याप्यत्वोपगमादित्यत आह ।
क्षेपणान्तरदाने चेति ।

ननु गोपदवाच्यत्वे साध्ये गोपदशक्यतावच्छेदकत्वस्य
तावच्छेदकत्वसम्भवेऽपि सास्नादिसाध्यकस्थले न
वः गोपदस्य नानार्थतया अन्यत्रापि
इत्यत आह । विशेषित वेति । सास्नादिमद्वृत्तित्वादिविशेषितं
स्यर्थः । वाकारो व्यवस्थितविकल्पे ।

ननु गुणगतजातिमनङ्गीकुर्वतां
भावाच्चलिङ्गतानुपपत्तिरित्यत आह । मधुरत्वेति । फलत इति ।
तराधर्मस्य क्षीररसत्वाद्यनुमापकतायाः सर्वसम्मतत्वादिति
वः । गोत्वप्रकारकत्व विशेषमिति । गोत्वमिति ज्ञाने तद्
भावः । मूले अन्यथेति । गोत्वमिति ज्ञाने व्यक्तेरप्रकारत्वे अनुपयो
गात् । उपयोगानुपपत्ते. । अवच्छेदकप्रकारकज्ञानविधयैव तदवच्
च्छेद्यव्याप्तिग्रहे सम्बन्धितावच्छेदकप्रकारकज्ञानविधया
कत्वेनैव च तस्य परामर्शे उपयोगादिति भाव.। दीधितौ लिङ्गतावच्छे
दकत्वासम्भवादित्यस्य गोपदप्रवृत्तिनिमित्तत्वादिसाध्यके तादात्म्ये
न गोत्वादिहेतावित्यादि. । आश्रयतया गोविशिष्टस्य गवाधेयत्व
विशिष्टस्य च द्रव्यत्वादेरपि गोमात्रवृत्तितया सास्नादिसाध्यकस्थले ।
व्यक्तेर्लिङ्गतावच्छेदकत्वं सम्भवत्येव इत्यवगन्तव्यम् ।

ननु उक्तगोत्वत्वशरीरेऽपि भेदप्रतियोगितावच्छेदकमुद्रया गो
त्वस्यानतिप्रसक्तगोत्वत्वेनैव निवेशनीयतया आत्माश्रय इत्यत
आह । गोत्वत्वस्येति । अप्रवेशादिति । स्वरूपत एव
शिति भावः । मूले न चैवमिति । स्वतो व्यावृत्ते गोत्वादावपि धर्मा
न्तरस्वीकारे । अनवस्था । अविश्रान्तधर्मधाराप्रसङ्ग ।
वनवस्था न दोषायेति समाधत्ते । तद्भिन्नेति । सत्त्वादौ साध्ये
स्वघटकसकलगोसमवेतत्वांशस्य वैयर्थ्यात् तत्र त

दीधितौ । अभावेति । अत्र एतद्धटकं यथासाध्यमिति । सास्नादौ साध्ये गवेतरासमवेतत्व विशेषणीभूतं गोसमवेतत्वञ्च, सास्नाव्यापकजातित्वादौ साध्ये तादात्म्येन हेतुतायां सकलगोसमवेतत्वं केवलं व्याप्यतावच्छेदकं वाच्यं न तु विशिष्टं, विशिष्टन्तु(१) गोपदप्रवृत्तिनिमित्तत्वादिसाध्यके तादात्म्येन गोत्वे हेतावित्यर्थः ।

ननु गवेतरासमवेतत्वस्याभावमेयत्वादावपि सत्त्वात् सास्नादिव्यभिचारितया सास्नादिसाध्यक एव कथं तद्व्याप्यतावच्छेदकं इत्यत आह । कालादाविति । सम्बन्धसामान्येन हेतुत्वे सकलगोसमवेतत्वांशनिवेशेऽपि गोत्ववति सास्नादिशून्ये कालादौ व्यभिचारस्याऽऽवश्यकतया समवायेन हेतुत्वस्यावश्यं स्वीकरणीयत्वात् गवेतरासमवेतत्वस्याभावादिसाधारणस्यापि समवायेन व्यभिचारितायामनवच्छेदकत्वादित्यर्थः(१) । एतच्च साध्याभाववद्वृत्तित्वमेव व्याप्तिरित्यभिप्रायेण । यदि च हेतुतावच्छेदकसम्बन्धेनावृत्तित्वमुक्तं तेन सम्बन्धेन वृत्तिमत्त्वमपि तत्र निवेश्यते तदा अवच्छेदकस्यानतिप्रसक्तत्वनियमेन गवेतरासमवेतत्वमात्रस्य समवायसम्बन्धेन वृत्तिमत्त्वमात्रघटितव्याप्तेरतिप्रसक्ततयाऽनवच्छेदकत्वात् समवेतत्वांशोऽपि तद्विशेष्यविधया हेतुतावच्छेदककोटौ निवेश्य इति ध्येयम् । सास्नाभावसाध्यकगोत्वाभावादिहेतुकस्थलेऽपि समवायसम्बन्धावच्छिन्नगवेतरासमवेतत्वावच्छिन्नप्रतियोगिताकाभावत्वमेव व्याप्यतावच्छेदकं न तु सकलगोसमवेतत्वमपि हेतुभूताभावप्रतियोगितावच्छेदके निवेश्यं वैयर्थ्यात् (२)।

न च गवेतरासमवेतत्वस्य प्रतियोगितावच्छेदकतया निवेशे तद्वैयर्थ्येऽपि प्रतियोगित्वसमानाधिकरणतया निवेशे न तथात्वं गवेतरासमवेतत्वरूपाद्यभावस्य गोसाधारणत्वेन व्यभिचारित्वादिति शङ्क्यम् । सकलगोसमवेतगोत्वस्यापि द्वित्वादिना अभावस्य गोसाधारणत्वात् सकलगोसमवेतत्वनिवेशेऽपि तादृशरूपावच्छिन्नाभावस्यैव हेतुतायां वाच्यतया तदंशवैयर्थ्यस्य दुर्वारत्वात् । विशिष्टस्य गौरवेणाभावप्रतियोगितायामप्यनवच्छेदकतया तदव-

(१) गवेतरावृत्तित्वविशिष्टं सकलगोवृत्तित्वमित्यर्थः ।

(२)समवायेनाव्यभिचारितायामवच्छेदकत्वादित्यर्थ इति पु०पा०।

च्छिन्नाभावाप्रसिद्धेश्चेत्यत आह । व्यतिरेकेऽपीति । गोत्वाभावस्य व्यभिचारितया समवायेति दृष्टान्तविधयोक्तम् ।

यत्तु गवेतरासमवेतस्य मेयत्वादेः केवलान्वयितया सामान्येन तत्त्वावच्छिन्नाभावाप्रसिद्धिरतः समवेतत्व-घेत्याशङ्कानिराकरणाय तदिति तत्तुच्छम् । सम्बन्धसामान्येन तरासमवेतसमवेताभावस्याव्यभिचारितयाकग्रन्थस्य स्वन्धावच्छिन्नाभावेहतुतायामेव व्यभिचारप्रदर्शनपरतया तायाञ्चाप्रसिद्धिविरहेण तामादाय . . . क तारेण तत्र व्यभिचारप्रदर्शनस्यानौचित्येनासङ्गतेः सम्बन्धसामान्येन गोत्वाभावस्यापि व्यभिचारितया पक्षत्वे स्वरूपासिद्धतयेति व्याख्यायामुदक्षरत्वात् ।

इति परामर्शपूर्वपक्षविवृतिः समाप्ता ।

(चि०) अत्रोच्यते, अगमालोको धूमो वा भयथापि वह्निव्याप्य इति ज्ञानं ततोऽनुमितिः । न च धूमत्वेनाऽऽलोकत्वेन वा तत्र निश्चयः। अथ तद-न्यान्यत्वमेव तत्र लिङ्गम् । न च तदज्ञानदशाया-मनुमितिदर्शनात् न तथेति वाच्यम् । धूमालोका-न्यान्यत्वज्ञानं विना तत्रापि तत्र व्याप्यत्वानिश्चयेन तदर्थं तद्बोधावश्यकत्वादिति चेन्न। न हि धूमालोका-न्यान्यत्वं धूमान्यान्यत्वं वा व्याप्यतावच्छेदकं गौर-वात् व्यभिचारावारकाविशेषणत्वाच्च किन्तु धूम-त्वादिकं तच्च तत्र सान्दिग्धमेव । ननु तदन्यान्य-

(१) तदा अवच्छेदकस्यानतिप्रसक्तत्वानियमेन गवेतरासमवेतत्वे सति समवेतत्वमेव साक्षाद्व्याप्यतावच्छेदकं वाच्यं गोत्वाभावे साक्षाभावादिसाध्यकेऽपि प्रतियोगिविशेषणतया गवेतरासमवेतत्वस्यैव निवेशो न तु सकलगोसमवेतत्वस्यापि वैयर्थ्यात् इति पु०पा० ।

वह्निव्याप्यमेव व्यभिचाराभावेन व्याप्तिविरहसाधनस्य बाधितत्वात् पुरुषस्तु तत्र नीलधूमवत्त्वादिरूपत्रैवाधिकेन निगृह्यते न तु व्याप्यत्वासिद्ध्येति चेन्न। तदन्यान्यद् धूमालोकस्वरूपमेव तच्च व्याप्यमिति सत्यम्, न च वस्तुगत्या व्याप्यज्ञानादनुमितिः अतिप्रसङ्गात् किन्तु व्याप्यतावच्छेदकप्रकारकज्ञानात् । न च तदन्यान्यत्वं वह्निव्याप्यतावच्छेदकमित्युक्तम् ।

(दी० )लिङ्गम्। लिङ्गतावच्छेदकम्, तथा च न व्यभिचारः। न तथा। न तेन व्यभिचारवारणम्। न हीति। धूमान्यान्यत्वमिति· दृष्टान्तार्थम् । न चैकधर्मस्यावच्छेदकत्वापेक्षया धर्मद्वयस्य तत्त्व एव गौरवमिति वाच्यम् । तादृशैकधर्मघटकानेकभेदादिघटकतया धर्मद्वयस्यैव प्रथमोपस्थितत्वेन चावच्छेदकत्वौचित्यात् । अन्यथा वह्न्यादीनामपि व्याप्यतया तावदन्यतमत्वस्यैवावच्छेदकत्वं स्यात् ।

(गा० ) मूले अयमिति। पर्वतवृत्तिरित्यर्थः। आलोको धूमो वेति। स्वरूपतो धूमत्वालोकत्वयोरत्र कोटिता न तु धूमत्वालोकत्वत्वाद्यवच्छिन्नयोः, तथा सत्युक्तसंशयस्य स्वरूपतो धूमत्वादिप्रकारेण पक्षधर्मतानिश्चयाविरोधितया असङ्गतेः। न च संशयस्य भावद्वयमात्रकोटिकस्यानभ्युपगमे धूमत्वाभावालोकत्वाभावयोरत्र कोटितायाः स्वीकरणीयत्वात् तत्प्रतियोगितावच्छेदकधूमत्वत्वादेरपि भानमावश्यकं इति वाच्यम् । धूमत्वाद्यभावस्येव धूमादिभेदस्यापि कोटितया धूमत्वादिसंशयनिर्वाहात् धूमादिभेदज्ञाने च धूमत्वत्वादिभानानावश्यकत्वात् । न च धूमत्वादौ धूमादिभेदविरोधभाने तद्धर्मितावच्छेदकतया धूमत्वत्वादिभानमावश्यकमिति धूमत्वधूमादिभेदकोटिकसंशयेऽपि धूमत्वत्वादिनेव धूमत्वादेः कोटित्वमावश्यकं संशये कोटिविषयताया विरोधमद्भ-

कारावच्छिन्नत्वनियमादिति वाच्यम् । संशयस्थले कोट्योः स्परविरोधभानानियमात् धूमभेदादौ विविरोधभानेन स्वरूपतो धूमत्वादिकोटिकसंशयनिर्वाहात्, स्वरूपतो भासमानधूमत्वाद्यवच्छेदेन धूमादिभेदाभावज्ञानस्यापि धूमत्वादौ धूमादिभेदविरोधज्ञानतया तादृशविरोधज्ञानेऽपि धूमत्वाद्यभानानियमाच्च ।

अथैवमपि पर्वतवृत्तित्वविशिष्टे धूमत्वादिसन्देहः त्वविशिष्टे धूमत्वादिनिश्चयस्यैव विरोधी न त्वनुमितिजनकतया अभिमतस्य धूमत्वादिविशिष्टे पर्वतवृत्तित्वनिश्चयस्यासमानधर्मितावच्छेदकत्वात् ग्राह्याभावानवगाहित्वाच्चेति न तादृशसंशयदशायामनुमित्यनुपपत्तिः, एवं न्यायमतसिद्धपरामर्शनिर्वाहाय 'उभयथापि वह्निव्याप्यं' इति इवम्पदार्थे व्याप्तिनिश्चयाभिधानमसङ्गतं पक्षवृत्तित्वविशिष्टे व्याप्तिनिश्चयस्यानुमितिहेतुत्वे व्याप्तिविशिष्टवैशिष्ट्यज्ञानस्य व्याप्तिप्रकारकज्ञानरूपकरणव्यापारस्य उपसंहारग्रन्थेऽनुमितिहेतुत्वाभिधानविरोधादिति चेन्न । पक्षवृत्तित्वावच्छिन्ने धूमत्वादिरूपविशेषणसन्देहे पक्षे धूमत्वादिविशिष्टकोटिकसंशयस्यौचित्यावर्जिततया पक्षे व्याप्यतावच्छेदकविशिष्टप्रकारकनिश्चयो न सम्भवति पक्षविशेष्यकनिश्चय एव पक्षविशेष्यकायामनुमितौ हेतुरित्याशयेन धूमत्वादिसंशयाभिधानस्य पक्षवृत्तित्वावच्छिन्ने व्याप्यत्वाभावावगाहिविशेषणसन्देहे च पक्षे व्याप्तिविशिष्टकोटिकसंशयस्यैवौचित्यावर्जिततया पक्षविशेष्यकव्याप्तिविशिष्टप्रकारकानुमितिहेतुनिश्चयासम्भवेन तादृशविशेषणसंशयविरोधिपक्षवृत्तित्वविशिष्टविशेष्यकव्याप्तिनिश्चयाभिधानस्य च सङ्गतेः ।

वस्तुतः पक्षवृत्तिर्धूमो न वेति संशयस्य पक्षवृत्तिर्धूम इति निश्चय इव धूमत्वविशिष्टधर्मिकपक्षवृत्तितानिश्चयेऽपि विरोधित्वं दुरपह्नवं धूमत्वावच्छेदेन पक्षावृत्तित्वस्य पक्षवृत्तित्वावच्छेदेन धूमभेदनिर्वाह्यतया तदवच्छेदेन धूमभेदसंशयाद् धूमत्वावच्छेदेन पक्षावृत्तित्वसंशयस्यौचित्यावर्जितत्वात् । एवं पक्षवृत्तित्वविशिष्टे व्याप्यत्वनिश्चयो व्याप्तिविशिष्टे पक्षवृत्तित्वनिश्चये व्याप्तिविशिष्टे पक्षवृत्तित्वसंशायकपक्षवृत्तित्वावच्छिन्नधर्मिकव्याप्त्यभावसंशय—

विरोधितयोपयुज्यते इति पक्षवृत्तिधर्मिकधूमत्वादिसंशये व्याप्तिनिश्चयाभिधानसङ्गतिः ।

केचित्तु व्याप्तिसम्बन्धेन वह्निसाध्यकपुरोवर्तिधूमादिपक्षकस्थले तादात्म्यसम्बन्धेन धूमादेर्हेतुत्वे तादात्म्यसम्बन्धेन धूमत्वादिरूपव्याप्यतावच्छेदकावच्छिन्नस्य यत्र पक्षे संशयस्तत्र व्याप्यत्वेन धूमादेः पक्षे तादात्म्यसम्बन्धेन निश्चयादनुमित्युत्पत्त्या व्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिश्चयस्य व्यभिचारप्रदर्शनपरतया एतन्मूलमुक्तानुपपत्तिशङ्काव्याकुलचेतसो वर्णयन्ति ते पुनः प्रसिद्धस्थले पर्वते धूमत्वाद्यवच्छिन्नवत्तासंशयस्थलीयव्याप्तिविशिष्टवत्तानिश्चयजन्यानुमितौ व्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिश्चयव्यभिचारोपेक्षाबीजं सम्यगपश्यन्तः कथं निर्वृतिभाजो भवन्तीति चिन्त्यम् ।

मूले 'उभयथापि वह्निव्याप्य' इति निश्चयकथनं स्वमते हेतुरक्षणाय । अत्र वह्नेः साध्यस्योपादानात् धूमालोकान्यतरत्वं लिङ्गमित्यत्र लिङ्गपदस्य यथाश्रुतार्थकत्वानुपपत्तेस्तद्व्याचष्टे । लिङ्गमिति । व्यभिचारवारणस्याप्रक्रान्तत्वे 'न तथे' त्यत्र तथापदस्य वक्ष्यमाणतदर्थकत्वानुपपत्तेः पूरयति । तथा च न व्यभिचार इति । 'न तथेत्यस्य न लिङ्गतावच्छेदकमिति नार्थो युज्यते धूमत्वादेरज्ञाने आलोकत्वाद्यवच्छिन्नेनानुमितावपि तस्य लिङ्गतावच्छेदकताया इव तदन्यान्यत्वस्य लिङ्गतावच्छेदकत्वसम्भवेन हेत्वसङ्गतेः अतो व्याचष्टे । न तेनेति । तेन । तस्य लिङ्गतावच्छेदकत्वेन । प्रकृते धूमत्वस्येव धूमान्यान्यत्वस्यापि सन्दिग्धतया तस्य व्याप्यतावच्छेदकत्वखण्डनमनुपयुक्तमित्यत आह । धूमान्यान्यत्वमितीति । एकधर्मस्य । अन्यतरत्वरूपस्य । धर्मद्वयस्य । धूमत्वालोकत्वरूपस्य । तत्त्वे । व्याप्यतावच्छेदकत्वे । तथा च गौरवस्य व्याप्यतावच्छेदकताबाधकत्वे वैपरीत्यमेव स्यादिति भावः । एकस्यातिगुरुशरीरत्वेन लघुशरीरावच्छेदकयोर्द्वित्वमबाधकमित्याशयेनाह । तादृशेति । धर्मद्वयस्यैवावच्छेदकतौचित्यादित्यन्वयः । शरीरलाघवमुक्त्वा उपस्थितिलाघवमप्याह । प्रथमोपस्थितत्वेन चेति । तावदन्यतमत्वस्य । वह्निधूमालोकान्यतमत्वस्य । अवच्छेदकत्वं स्यात् । न तु धूमालोकान्यतरत्वस्य, तथा च कुतो वैपरीत्या-

पादनमिति भावः ।

अन्यतरत्वाश्रये व्याप्तिरेव नास्ति अत एव तेन रूपेण हेतुप्रयोगे व्याप्यत्वासिद्ध्यादिना वादिनो निग्रह इत्येवान्यतरत्वस्य व्याप्यतानवच्छेदकत्वर्थाञं तदाश्रयस्य व्याप्यत्वे तस्यावच्छेदकतया आवश्यकत्वादित्यभिप्रायोऽन्यतरत्वस्य व्याप्यतावच्छेदकतानिराकर्तुरिति भ्रमेण शङ्कते मूले । न त्विति । भ्रमं निराकरोति । तदन्यान्यदिति । न च तदन्यान्यत्वं वह्निव्याप्यतावच्छेदकं इत्युक्तमिति, अन्यतरनिष्ठयोर्विभिन्नव्याप्त्योर्धूमत्वालोकत्वाभ्यामेवावच्छेदात् प्रत्येकानवच्छेद्यान्यतरत्वावच्छेद्यतया साधारणातिरिक्तव्याप्त्यनभ्युपगमात् इति भावः ।

( चि० ) न चैवं तदन्यान्यत्वाद्वह्निव्याप्यत्वमपि तत्र नानुमेयं व्यर्थविशेषणत्वादिति वाच्यम् । प्रत्यक्षं हि तदन्यान्यत्वविशेषदर्शनाद्व्याप्यत्वज्ञानं जनयति, विशेषणज्ञानविशेषणविशेष्यसम्बन्धविशेषणविशेष्येन्द्रियसन्निकर्षतदसंसर्गाग्रहविशेष— दर्शनानां सत्त्वेन वह्निव्याप्यत्वप्रत्यक्षसत्त्वात् । नचैवं न प्रत्यक्षेऽपि तदन्यान्यत्वज्ञानं सहकारीति वाच्यम् । अन्वयव्यतिरेकाभ्यां गुरोरपि तस्य विशेषदर्शनत्वेन प्रत्यक्षसहकारित्वात् तस्मात्तदन्यान्यत्वज्ञानं तत्र व्याप्यताज्ञानोपक्षीणं न तु साक्षादनुमितिहेतुरिति ।

( दी० ) अन्वयेति । विशेषदर्शनं हि विपरीतज्ञानविरोधितया प्रत्यक्ष उपयुज्यते तत्त्वञ्चान्यतरत्वदर्शनस्यापि व्यावर्तकधर्मदर्शनत्वेनाक्षतम्, अत्र च तदन्यान्यत्वस्यातिरिक्तत्वे धूमत्वत्वादेस्तद्घटितत्वात् धूमत्वादिरूपत्वेऽपि च धूमत्वत्वादेरमवेद्याछिन्नत्वेऽपि न वैयर्थ्यमित्यपि द्रष्टव्यम् । एवञ्चान्यतरत्वस्य व्याप्त्यनवच्छेदकत्वे स्थिते तदवच्छेदेन तद्ग्रहोपगमे

तत्राप्यन्यथाख्यातिस्वीकारप्रसङ्गः ।

( गा० )व्यर्थविशेषणघटितधर्मस्य व्याप्यतानवच्छेदकत्वे धूमालोकाभिन्नभेदवत् तत्त्वमपि न व्याप्यतावच्छेदकं तथा च व्याप्यत्वच्छिन्नत्वनियमात् तादृशभेदे वह्निव्याप्तिनिरूपिता व्याप्तिरेव न सम्भवतीति तेन वह्निव्याप्यत्वमपि नानुमातुं शक्यते वह्निव्याप्तिव्याप्यत्वेन पक्षधर्मतानिश्चयस्याप्ययोगात् इति भवन्मते वह्निव्याप्तिप्रकारकपक्षधर्मतानिश्चयोऽपि तत्र दुर्घट इत्याशङ्कते ।

न चैवमिति ।

ननु विशेषदर्शनसहकृतं प्रत्यक्षं तत्र व्याप्तिनिश्चायकं इत्ययुक्तं तदन्यान्यत्वस्याप्यव्याप्यतया तज्ज्ञानस्य विशेषदर्शनत्वासम्भवादिति पुनः शङ्कते। न चैवमिति। विशेषदर्शनत्वेन प्रत्यक्षसहकारित्वादिति समाधौ विशेषदर्शनत्वेनेत्यस्य व्याप्यदर्शनत्वेनेत्यर्थकतोक्तक्रमेण न सम्भवतीति व्याप्यदर्शनसाधारणविपरीतज्ञानविरोधित्वेनेत्यर्थकतां तस्याह दीधितौ। विशेषदर्शनमिति । व्यावर्त्तकधर्मदर्शनत्वेनेति । ग्राह्यविरोधिधर्मदर्शनत्वेनेत्यर्थः । स्वसमानाधिकरणव्याप्यतावच्छेदकान्तरघटितमेव न व्याप्यतावच्छेदकमित्याशयेनान्यतरत्वस्य व्याप्तिव्याप्यतावच्छेदकत्वं स्वयं व्यवस्थापयति। अत्र चेति। अन्यतरत्वस्य धूमत्वादिरूपत्वे तत्त्वस्यानवच्छेदकत्वेऽपि धूमत्वत्वादिना व्याप्यतया व्याप्तिप्रकारकपक्षधर्मताधीहेतुतावादिनां व्याप्त्यनुमानं निराबाधमित्यपि बोध्यम् । अन्यतरत्वस्य व्याप्त्यनवच्छेदकत्वेऽपि तदवच्छेदेन तद्भ्रमादनुमितिर्भविष्यतीति शङ्कां निराकुरुते। एवञ्चेति ।

ननु गौरवमात्रं न व्याप्त्यवच्छेदकत्वे बाधकं तथा सति सास्नादिना गवादेर्हेतुताविलयप्रसङ्गः किन्तु व्यर्थविशेषणघटितत्वमेव धूमत्वादेश्च प्रत्येकमुभयासंग्राहकत्वात् उभयसंग्रहप्रयोजकस्य धर्मस्य न वैयर्थ्यम् । वस्तुतस्तु अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाहिज्ञानमेव कारणं अत एवानुमितिजनकतया तन्मतसिद्धज्ञानद्वयकाले धूमत्वदर्शनस्यावच्छेदकदर्शनतया अयं धूमो वह्निव्याप्यो न वेति शङ्काविरोधित्वमप्युपपद्यते गुरोरपि च तादृशावच्छेदकत्वमक्षतमेवेति ।

( चि० ) किञ्च वह्निव्याप्यवानयमिति शाब्दज्ञाने व्याप्यत्वज्ञानं कारणमित्यन्यत्रापि तथा। अथ वह्निव्याप्यत्वमपि वह्निव्याप्यतावच्छेदकं तथा हि वह्निनिरूपिता धूमादिप्रत्येकवृत्तिरेव व्याप्तिर्व्याप्तित्वेन सकलधूमादिवृत्तिव्याप्त्यवच्छेदिका आश्रयभेदेनावच्छेदकभेदेन च व्याप्तिभेदादिति चेन्न। सकलधूमादिवृत्तिव्याप्तौ मानाभावात् यत्र वह्निव्याप्यस्तत्र वह्निरिति व्याप्तिबुद्धौ शाब्दव्याप्यत्वबुद्धौ च प्रत्येकवृत्तिव्याप्त्याश्रयत्वस्यैव विषयत्वात् प्रत्येकवृत्तिव्याप्तिज्ञानं विना तद्बोधाभावात्।

( दी० ) अस्तु वा गुरुरपि धर्मोऽवच्छेदकस्तथापि शुद्धव्याप्तिप्रकारकज्ञानस्थले व्यभिचारान्न तस्य हेतुत्वमित्याह। किञ्चेति। वह्नीत्यादि। व्याप्तेर्व्याप्त्यनवच्छेदकत्वादिति भावः। मानाभावादिति। वस्तुतो विशेषव्याप्यत्वावच्छिन्ना महाव्याप्तिरतिरिच्यतां किं तेन? न हि वस्तुतो व्याप्त्यवच्छेदकप्रकारकं पक्षधर्मताज्ञानं हेतुरतिप्रसङ्गात् परन्तु यदवच्छेदेन व्याप्तिर्गृह्यते तत्प्रकारकम्। न च तदानीं व्याप्त्यवच्छेदेन व्याप्तिर्गृह्यते। न च तदग्रहेऽनुमितिरपलपनीया, मानाभावात् कल्प्यत्वाविशेषे लघुरूपावच्छिन्नस्यैव नियतपूर्ववर्तितायाः कल्पयितुं युक्तत्वात्।

( गा० ) अयमालोको धूमो वेत्यादिसन्देहदशायां नानुमित्यनुपपत्तिरित्याशङ्कायाः प्रथमकल्पे सत्त्वात् तदेव 'किञ्चे'त्यादिदूषणान्तरानुसरणे बीजमिति सूचयितुं प्रथमदोषाभावाभ्युपगमं प्रकाशयन् 'किञ्चे'त्यादेर्व्याप्यतावच्छेदकप्रकारकज्ञानहेतुत्वासम्भवपरतां स्फुटयति। अस्तु वेत्यादिना। यपञ्च मूले 'व्याप्यत्वज्ञानमित्यस्यावधारणपरतया व्याप्तिप्रकारकपक्षधर्मताज्ञानमवेत्यर्थः। कारणम्। फलोपधायकम्, तथा च व्याप्यतावच्छेदकप्रकारकज्ञानव-

वच्छेदात् तद्धेतुतायां व्यभिचार इत्यर्थो लभ्यते व्याप्तेर्व्याप्यत्वावच्छेदकत्वोपगमेनैतद्दोषस्य प्राक् समाहितत्वात् तस्यास्तथात्वमनिराकृत्य प्रथमत एव तद्दोषदानमयुक्त इत्यत आशयं प्रकटयति । व्याप्तेरिति । आत्माश्रयेणेत्यादिः, एतच्च स्वरूपसम्बन्धरूपावच्छेदकत्वाभिप्रायेण, तदभिप्रायेणैव सामान्यविशेषव्याप्त्योर्भेदं व्यवस्थाप्य अथेत्यादिमूले तयोरवच्छेद्यावच्छेदकभावशङ्का । मूले सकलधूमादिवृत्तिव्याप्तौ मानाभावादिति । विशेषव्याप्तीनां धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादीनां अनुगमकस्य व्याप्तित्वस्य दुर्निर्वचतया तासां व्याप्त्यन्तरावच्छेदकत्वासम्भवादिति भावः ।

ननु व्यभिचारधीविरोधित्वमेव सकलविशेषव्याप्तीनामनुगमकं व्याप्तित्वं वह्निव्याप्यवानयमित्यादिशब्देनापि तादृशव्याप्तित्वेन व्याप्तयः पक्षधर्मांशे प्रकारतया प्रत्याय्यन्ते, एवं साध्याभाववदवृत्तित्वमपि स्वविशिष्टव्यापकताघटितव्याप्तेरवच्छेदकमिति तेन रूपेण यत्र शब्दाद्व्याप्यवगतिस्तत्राप्यनुमितिरुपपद्यत एव । एवं अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य स्वसाधारणतया तदनुसरणे न काचिदप्यनुपपत्तिरित्याशङ्क्य व्याप्तेर्व्याप्यतावच्छेदकत्वमभ्युपेत्यापि शाब्दपरामर्शजानुमितौ व्यभिचारमुपपादयति । वस्तुत इति । अतिरिच्यतामित्यस्य स्वसाधारणमनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वमाश्रीयतामिति शेषः । अतिप्रसङ्गात् । धूमत्वावच्छेदेन व्याप्तिज्ञानरहितस्यापि धूमवानयमिति ज्ञानादनुमितिप्रसङ्गात् । गृह्यते । तत्कालीनग्रहविषयः । न च तदानीमिति । यदा वह्निव्याप्यवानयमिति शब्दः श्रूयते इत्यर्थः, गृह्यत इत्यस्य पक्षधर्मताग्रहकाले व्याप्तौ व्याप्यतावच्छेदकत्वग्राहकशब्दाभावादिति शेषः । अनुमितिरपलपनीयेति । अनुमित्यभावः कल्पनीय इत्यर्थः । मानाभावात् । तत्कल्पकाभावात्, उक्तरूपेण कारणताया अप्रसिद्ध्या कारणाभावासिद्धेरिति ।

ननु तत्रापि स्मरणादिरूपतादृशव्याप्तिज्ञानसम्भवात् न व्यभिचारनिश्चय इत्यत आह । कल्पयत्वेति । 'लघुरूप' व्याप्तिप्रकारकपक्षधर्मताज्ञानस्य, अयञ्च अपि चेत्यादिमूलस्यैवार्थः, इति तत्फल एव निर्भरो दर्शितः ।

(वि०) किञ्च वह्निव्याप्यवानयमिति शाब्दज्ञाने व्याप्यत्वज्ञानं कारणमित्यन्यत्रापि तथा। अथ वह्निव्याप्यत्वमपि वह्निव्याप्यतावच्छेदकं तथा हि वह्निनिरूपिता धूमादिप्रत्येकवृत्तिरेव व्याप्तिर्व्याप्तित्वेन सकलधूमादिवृत्तिव्याप्त्यवच्छेदिका आश्रयभेदेनावच्छेदकभेदेन च व्याप्तिभेदादिति चेन्न। सकलधूमादिवृत्तिव्याप्तौ मानाभावात् यत्र वह्निव्याप्यस्तत्र वह्निरिति व्याप्तिबुद्धौ शाब्दव्याप्यत्वबुद्धौ च प्रत्येकवृत्तिव्याप्त्याश्रयस्यैव विषयत्वात् प्रत्येकवृत्तिव्याप्तिज्ञानं विना तद्बोधाभावात्।

(टी०) अस्तु वा गुरुरपि धर्मोऽवच्छेदकस्तथापि शुद्धव्याप्तिप्रकारकज्ञानस्थले व्यभिचारान्न तस्य हेतुत्वमित्याह। किञ्चेति। वह्नीत्यादि। व्याप्तेर्व्याप्त्यनवच्छेदकत्वादिति भावः। मानाभावादिति। वस्तुतो विशेषव्याप्त्यवच्छिन्ना महाव्याप्तिरतिरिच्यतां किं तेन? न हि वस्तुतो व्याप्त्यवच्छेदकप्रकारकं पक्षधर्मताज्ञानं हेतुरितिमसङ्गात् परन्तु यदवच्छेदेन व्याप्तिर्गृह्यते तत्प्रकारकम्। न च तदानीं व्याप्त्यवच्छेदेन व्याप्तिर्गृह्यते। न च तद्ग्रहेऽनुमितिरपलपनीया, मानाभावात् कल्पकत्वाविशेषे लघुरूपावच्छिन्नस्यैव नियतपूर्ववर्तितायाः कल्पयितुं युक्तत्वात्।

(गा०) अयमालोको धूमो वेत्यादिसन्देहदशायां नानुमित्यनुपपत्तिरित्याशङ्कायाः प्रथमकल्पे सत्त्वात् तदेव 'किञ्चेत्यादि'दूषणान्तरानुसरणबीजमिति सूचयितु प्रथमदोषाभावाभ्युपगमप्रकाशयन् 'किञ्चेत्यादि'व्याप्यतावच्छेदकप्रकारकज्ञानहेतुत्वासम्भवपरतां स्फुटयति। अस्तु वेत्यादिना। एवञ्च मूले 'व्याप्यत्वज्ञानमित्यस्यावधारणतया व्याप्तिप्रकारकपक्षधर्मताज्ञानमेवेत्यर्थः। कारणम्। फलोपधायकम्, तथा च व्याप्यतावच्छेदकप्रकारकज्ञानस्य·

वच्छेदात् तद्धेतुतायां व्यभिचार इत्यर्थो लभ्यते व्याप्तेर्व्याप्यत्वावच्छेदकत्वोपगमेनैतद्दोषस्य प्राक् समाहितत्वात् तस्यास्तथात्वमनिराकृत्य प्रथमत एव तद्दोषदानमयुक्त इत्यत आशयं पूरयति । व्याप्तेरिति । आत्माश्रयेणेत्यादि, एतच्च स्वरूपसम्बन्धरूपावच्छेदकत्वाभिप्रायेण, तदभिप्रायेणैव सामान्यविशेषव्याप्त्योर्भेदं व्यवस्थाप्य अथेत्यादिमूले तयोरवच्छेद्यावच्छेदकभावशङ्का । मूले सकलधूमादिवृत्तिव्याप्तौ मानाभावादिति । विशेषव्याप्तीनां धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादीनां अनुगमकस्य व्याप्तित्वस्य दुर्निर्वचतया तासां व्याप्त्यन्तरावच्छेदकत्वासम्भवादिति भावः ।

ननु व्यभिचारधीविरोधित्वमेव सकलविशेषव्याप्तीनामनुगमकं व्याप्तित्वं वह्निव्याप्यवानयमित्यादिशब्देनापि तादृशव्याप्तित्वेन व्याप्तयः पक्षधर्मांशे प्रकारतया प्रत्याय्यन्ते, एवं साध्याभाववदवृत्तित्वमपि स्वविशिष्टव्यापकताघटितव्याप्तेरवच्छेदकमिति तेन रूपेण यत्र शब्दाद्व्याप्त्यवगतिस्तत्राप्यनुमितिरुपपद्यत एव । एवं अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य स्वसाधारणतया तदनुसरणे न काचिदप्यनुपपत्तिरित्याशङ्क्य व्याप्तेर्व्याप्यतावच्छेदकत्वमभ्युपेत्यापि शाब्दपरामर्शजानुमितौ व्यभिचारमुपपादयति । वस्तुत इति । अतिरिच्यतामित्यस्य स्वसाधारणमनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वमाश्रीयतामिति शेषः । अतिप्रसङ्गात् । धूमत्वावच्छेदेन व्याप्तिज्ञानरहितस्यापि धूमवानयमिति ज्ञानादनुमितिप्रसङ्गात् । गृह्यते । तत्कालीनग्रहविषयः । न च तदानीमिति । यदा वह्निव्याप्यवानयमिति शब्दः श्रूयते इत्यर्थः, गृह्यत इत्यस्य पक्षधर्मताग्रहकाले व्याप्तौ व्याप्यतावच्छेदकत्वग्राहकशब्दाभावादिति शेषः । अनुमितिरपलपनीयेति । अनुमित्यभावः कल्पनीय इत्यर्थः । मानाभावात् । तत्कल्पकाभावात्, उक्तरूपेण कारणताया अप्रसिद्ध्या कारणाभावासिद्धेरिति ।

ननु तत्रापि स्मरणादिरूपतादृशव्याप्तिज्ञानसम्भवात् न व्यभिचारनिश्चय इत्यत आह । कल्पयत्वेति । 'लघुरूप' व्याप्तिप्रकारकपक्षधर्मताज्ञानस्य, अयञ्च अपि चेत्यादिमूलस्यैवार्थः, इति तत्फल एव निर्भरो दर्शितः ।

(दी०) एतेन व्याप्तिग्रहविषयधर्ममात्रवृत्तिधर्मप्रकारकं पक्षधर्मताज्ञानं हेतुरित्यपास्तम्। सामान्यलक्षणानङ्गीकारे धूमत्वादेरपि तथात्वायोगात् वह्निव्याप्यं सर्वं प्रमेयं धूमवान् पर्वत इति ज्ञानादप्यनुमितिप्रसङ्गाच्च। व्याप्तिसमानाधिकरणत्वेन तादृशधर्मभानोक्तौ च सा धूमव्यक्तिर्वह्निव्याप्येति ज्ञानसहितादुक्तज्ञानात्प्रसङ्गो वह्निव्याप्यवानिति शाब्दज्ञानासंग्रहः।

(गा०) एतेन। कारणीभूतसकलपक्षधर्मताज्ञानासंग्राहकत्वेनातिप्रसक्तत्वेन च। व्याप्तिग्रहेति। एतादृशश्च धर्मो व्याप्यतावच्छेदकधूमत्वादिरिव व्याप्तिरपीति न शाब्दपरामर्शासंग्रह इति भावः। धूमो वह्निव्याप्य इति निश्चयसहितात् द्रव्यवानिति ज्ञानादनुमितिवारणाय मात्रेति। प्रमेयसामान्यहेतुकवाच्यत्वाद्यनुमितिस्वीकारे स्वव्यापकतद्ग्रहविषयताकत्वमेव तद्विषयमात्रवृत्तित्वं, केवलान्वय्यनुमानानभ्युपगमे तु तद्विषयान्यावृत्तित्वमेव, यादृशरूपेण व्याप्तिग्रहविषयतानियतत्वं तादृशनिष्ठावच्छेदकत्वान्यावच्छेदकतानिरूपकत्वं प्रकारतायां निवेश्य अतो न धूमो वह्निव्याप्य इति ज्ञानदशायां जातित्वादिना धूमत्वादिप्रकारकज्ञानान्नातिप्रसङ्गः। स्वरूपतो धूमत्वादिप्रकारकज्ञानसंग्रहाय तादृशरूपाघटितत्वमुपेक्षितम्। तथात्वायोगात्। वह्न्यादिव्याप्तिग्रहविषयमात्रवृत्तित्वासम्भवात्, सामान्यप्रत्यासत्तिं विना सकलधूमादीनां व्याप्तिग्रहे भानासम्भवादिति भावः। आदिपदेन सकलधूमादिवृत्तिव्याप्तेरपि परिग्रहः, एतावता धूमत्वादिप्रकारकस्य व्याप्तिप्रकारकस्य च पक्षधर्मताग्रहस्यासंग्रहो दर्शितः।
अतिप्रसङ्गं दर्शयति। वह्निव्याप्यमिति। धूमत्वे व्याप्तिग्रहविषयतानियतत्वनिर्वाहकस्य व्याप्तिग्रहे सकलवह्निव्याप्याविषयकत्वस्य लाभाय सर्वमिति। एतच्च ज्ञानमनुमित्यादिरूपं, सामान्यप्रत्यासत्तिमनङ्गीकुर्वतां तेषां प्रत्यक्षे सकलवह्निव्याप्यभानासम्भवात्।

सामान्यप्रत्यासत्त्यभ्युपगमपक्षे वा दूषणमिदं, अन्यथाख्यातिमनङ्गीकुर्वतां सर्वस्मिन् वह्निव्याप्तिविषयकज्ञानासम्भवात्।

अन्यथाख्यातिस्वीकारे च तादृशान्यथाख्यातिकाले धूमवान् पर्वत इत्यादिज्ञानादनुमितेरिष्टत्वात् । वह्निव्याप्यत्वस्य स्वसमनियत-सर्वस्वधर्मितावच्छेदकतापन्नस्य उद्देश्यतावच्छेदकत्वं सूचयितुं प्रमेयमिति विधेयवाचकपदान्तरानिर्देशः, धूमत्वावच्छेदेन व्याप्तिज्ञानदशायां तज्ज्ञानादनुमितेरिष्टत्वात् धूमत्वांशे व्याप्तेः सामानाधिकरण्यमात्रावगाहित्वं सूचयितुं धूम इत्यनभिधाय सा धूमव्यक्तिरिति । शाब्दज्ञानासंग्रह इति । वह्निव्याप्यवानित्यादिशब्दस्य व्याप्तौ व्याप्तेरवच्छेदकताया इव सामानाधिकरण्यस्याप्यबोधकत्वादिति भावः ।

( दी० ) अत एवं व्याप्तिभानांशे प्रकारतया यस्तादृशो धर्मो भासते तत्प्रकारकं पक्षधर्मताज्ञानं हेतुः वह्निव्याप्यवानित्यत्र च वह्निव्याप्यत्वमेव तथा, धूमवानित्यादौ च धूमत्वादिकं धूमसमानाधिकरणेत्यादिव्याप्तिज्ञाने तस्यापि प्रकारत्वादिति परास्तम् । धूमसमानाधिकरणवह्निव्याप्यं सर्वं प्रमेयं धूमवानयं प्रमेयत्वव्याप्यं सर्वमभिधेयं समानाधिकरणत्वांश्चायमित्यादिज्ञानादप्यनुमित्यापत्तिः । न च धूमत्वादेरतिरिक्तवृत्तित्वग्रहे स एव प्रतिबन्धकस्तदग्रहे त्वनुमितावेष्टापत्तिरिति वाच्यम् । एवंविधेष्टापत्त्यैव सर्वत्र प्रतीकारे विशेषणानुसरणवैयर्थ्यात् व्यभिचाराग्रहपक्षधर्मताज्ञानयोरेव हेतुत्वस्य सुवचत्वात् ।

( गा० ) अत एव । अतिप्रसङ्गस्य दुर्वारत्वादेव । व्याप्तिभानांशे इत्यादेर्व्याप्तिप्रकारतान्तर्गतप्रकारताश्रयो यो व्याप्तिग्रहविषयतानियतो धर्म इत्यर्थः । वह्निव्याप्यं सर्वं प्रमेयं धूमवान् पर्वत इत्युक्तज्ञानवारणाय निरुक्तप्रकारताश्रयत्वं धर्मविशेषणम्, धूमो वह्निव्याप्यः अभाववानयमित्यादिज्ञानवारणाय च व्याप्तिग्रहविषयतानियतत्वं उपात्तम् । तथा । तादृशो धर्मः, व्याप्तिप्रकारतान्तर्गतत्वस्य भेदाभेदसाधारणत्वादिति भावः । 'धूमत्वादिकं' 'तथेत्यनुषङ्गेणान्वयः । धूमसमानाधिकरणेत्यादीति । साध्याभाववदवृत्तित्वरूपव्याप्तिग्रह-

स्थले च ज्ञानद्वयादनुमितिर्मयापि न स्वीक्रियते इति भावः। वह्नि-व्याप्यं सर्वमित्यत्र तदभाववदवृत्तित्वरूपव्याप्तिज्ञानमेव विवक्षितं धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादिरूपव्याप्तिभाने धूमत्वादिप्रकारकपक्षधर्मताज्ञानादनुमितेरिष्टत्वात्, तथा च वह्नित्वमात्रस्य साध्यतावच्छेदकत्वे धूमत्वादेर्न व्याप्तिप्रकारतान्तःपातिप्रकारताश्रयत्वमतो धूमसमानाधिकरणवह्नित्वावच्छिन्नस्य साध्यत्वानुधावनम्।

साध्यतावच्छेदकप्रकारतान्तःपातित्वेन व्याप्तिप्रकारताविशेषणे उक्तस्थले दोषाभावादाह। प्रमेयत्वव्याप्यमिति। अत्र चाभिधेयत्वाद्यवच्छिन्नव्यापकप्रमेयत्वसमानाधिकरणाभिधेयत्वरूपव्याप्तिरभिप्रेता न तु साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरण्यरूपा साध्याभावस्याप्रसिद्धेर्मीमांसकैरन्यथाख्यात्यनभ्युपगमात् च-मात्मकतादृशव्याप्तिज्ञानमादाय तन्मतेऽतिप्रसङ्गाभावात् न वा समानाधिकरणत्वावच्छिन्नव्यापकसाध्यसामानाधिकरण्यरूपा तादृशव्यापकताग्रहदशायां(१) समानाधिकरणत्वप्रकारकज्ञानादनुमितेस्तेषामिष्टत्वात्। अतिरिक्तवृत्तित्वग्रहे। व्याप्तिशून्यवृत्तित्वग्रहे। अनुमितावपीति। वह्निव्याप्यं सर्वं प्रमेयं धूमवान् पर्वत इत्यादिज्ञानादित्यादिः। एवंविधेष्टापत्त्यैवेति। व्याप्तिग्रहविषयधर्मिवृत्तिधर्मप्रकारकपक्षधर्मताज्ञानत्वेनैवानुमितिहेतुता वह्निव्याप्यो धूमो द्रव्यवान् पर्वत इत्यादौ द्रव्यत्वाद्यतिरिक्तवृत्तित्वग्रह स एव प्रतिबन्धकः तदग्रहेऽनुमिताविष्टापत्तिरित्यपि वक्तुं शक्यतया व्याप्तिग्रहविषयधर्मिमात्रवृत्तिधर्मप्रकारकत्वादिविशेषणवैयर्थ्यापातादित्यर्थः।

अत्रेष्टापत्तौ प्रतिबन्ध्यन्तरमाह। व्यभिचाराग्रहेति। एवकारेण व्याप्तिज्ञानहेतुताव्यवच्छेदः। व्याप्तिज्ञानशून्यतादशायां व्यभिचाराग्रहे तद्दशानुमितावेष्टापत्तिसम्भवात्। यदि च व्यभिचाराव्यभिचारयोर्द्वयोरेव यत्राग्रहस्तत्रानुमितेरनुभवविरुद्धत्वान्न तत्रेष्टापत्तिः सम्भवतीत्युच्यते तदा प्रमेयत्वव्याप्यं सर्वमित्यादिज्ञानादप्यनुमितेरनुभवविरुद्धत्वात् प्रकृते ऽपीष्टापत्तिर्न सम्भवतीति भावः।

(१) तादृशव्याप्तिग्रहदशायामिति पु० पा०।

( दी० ) किञ्च पुरुषान्तरस्य तस्यैव वा कालान्तरे वर्त्तमाने व्याप्तिग्रहमादायातिप्रसङ्गस्य भङ्गाय स्वसमानकालीनस्वसमानाधिकरणव्याप्तिग्रहविषयधर्ममात्रवृत्तिधर्मप्रकारकं पक्षधर्मताज्ञानं वाच्यं तथा च स्वत्वस्याननुगतत्वात्कारणतावच्छेदकस्य तत्तद्व्यक्तिमात्रपर्यवसायित्वे मिथो व्यभिचारः तत्तत्पक्षधर्मताज्ञानत्वेनैव हेतुत्वसम्भवेऽधिकवैयर्थ्यञ्च ।

( गा० ) ननु व्याप्तिप्रकारतानिरूपिता या संसर्गता तन्निरूपिता या विशेष्यवृत्तिविषयता तन्निरूपिता या विषयता तन्निरूपकीभूतो यो व्याप्तिग्रहविषयमात्रवृत्तिधर्मस्तत्प्रकारकपक्षधर्मताज्ञानत्वेन हेतुता वाच्या तादृशधर्मो व्याप्तिः धूमव्यापकवह्निसमानाधिकरणधूमत्वादिरूपव्याप्तौ हेतुतावच्छेदकीभूतधूमत्वादिश्च न तु तद्धटकसामानाधिकरण्यादिकम्, साध्याभाववदवृत्तित्वादिरूपव्याप्तिघटकाभावमादायातिप्रसङ्गभङ्गाय व्याप्तिग्रहविषयमात्रवृत्तित्वोपादानमिति नोक्तापत्तीनामवकाश इत्यतो दूषणान्तरमाह । किञ्चेति । कालान्तर इति । कारणतावच्छेदककोटिप्रविष्टलिङ्गादीनां अतीतत्वदशायामपि अनुमितेरुत्पत्त्या प्रकृते कारणतावच्छेदकविशिष्टप्राक्सत्तायाः कार्यजनने नियामकत्वासम्भवादतिप्रसङ्गो बोध्यः । स्वसमानकालीनेति । स्वक्षणवृत्तीत्यर्थः । स्वपदफलोपधायकत्वेनाभिमततत्तत्पक्षधर्मताज्ञानव्यक्तिपरम् । वाच्यमिति । हेतुतया स्वीकार्यमित्यर्थः । तादृशपक्षधर्मताज्ञानत्वेनेत्यादिः व्याप्तिज्ञानोत्पत्तिद्वितीयक्षणोत्पन्नपक्षधर्मताज्ञानात् व्याप्तिज्ञाननाशेऽपि अनुमितिरेतन्मते स्वीक्रियते इति बोध्यम् । तत्तत्पक्षधर्मताज्ञानत्वेन हेतुत्वसम्भव इति । फलोपधायकीभूतपक्षधर्मताज्ञाननिष्ठानां तत्तद्व्यक्तित्वानां किञ्चिदविशेषितानामेव हेतुतावच्छेदकत्वसम्भव इत्यर्थः । यथाश्रुते तत्तद्व्यक्तित्वनिवेशस्याऽऽवश्यकत्वे पक्षधर्मताज्ञानत्वनिवेशो प्रयोजनविरहादसङ्गतेः । अधिकवैयर्थ्यञ्चेति । तादृशधर्मप्रकारकत्वादिविशेषणवैयर्थ्यञ्चेत्यर्थं । इदमुपलक्षणम्, तादृशरूपेण हेतुत्वेऽनन्तकार्यकारणभावप्रसङ्गेन महागौरवमपि बोध्यम् ।

( दी० ) एतेन गृह्यमाणव्याप्यत्वच्छेदकताकेत्याद्युपदर्शितप्रकारद्वयमपि प्रत्युक्तं वेदितव्यम् । एवं यद्धर्मावच्छेदेन व्याप्तिज्ञानं तद्धर्मप्रकारकं पक्षधर्मताज्ञानं हेतुरित्यपि परास्तम् । तत्तद्धर्मविश्रान्तमूर्तिकत्वेनाप्यननुगतत्वाच्च ।

( गा० ) एतेन । उक्तरीत्या कारणतावच्छेदकस्य तत्तद्व्यक्तिमात्रपर्यवसायितापातेन । एवमिति । स्वसमानकालीनत्वस्वसमानाधिकरणत्वयोरन्यतरप्रवेशस्यावश्यकतया अननुगमेनेत्यर्थः । यद्धर्माव- च्छेदेनेति । तद्धर्मावच्छिन्नव्याप्तिज्ञानसहिततद्धर्मप्रकारकपक्षधर्मताज्ञानत्वावच्छिन्नमित्यर्थः । परास्तमिति । साहित्यस्य समानकालीनत्वात्मकत्वे स्वसमानाधिकरणत्वस्य सामानाधिकरण्यरूपत्वे स्वसमानकालीनत्वस्य व्याप्तिज्ञानेऽवश्यं निवेशनीयत्वादिति भावः । एकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन तद्वत्त्वं यदि तत्साहित्यं तदा नैतादृशाननुगम इत्यतः प्रकारान्तरेणाननुगममाह । तत्तद्धर्मेति । विशिष्य तत्तद्धर्मघटितत्वेनेत्यर्थः । अननुगतत्वादिति । तथा च धूमत्वादिप्रकारकपक्षधर्मताज्ञानस्यालोकत्वाद्यवच्छिन्नलिङ्गकानुमितौ व्यभिचारः तत्तद्धर्मावच्छिन्नलिङ्गकानुमितित्वस्य कार्यतावच्छेदकत्वोपगमेऽपि हेतुतावच्छेदकभेदेन कारणताबाहुल्यमिति भावः ।

यद्यपि हेतुतावच्छेदकघटितव्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्यैव हेतुतायाः केवलान्वयिसाधारण्यानुरोधेन वक्तव्यतया तस्य च *हेतुतावच्छेदकमनन्तर्भाव्य कारणतायाः दुष्कल्पयतया* नैयायिकमतेऽपि हेतुतावच्छेदकभेदेन परामर्शकारणताभेद आवश्यकः व्याप्यतावच्छेदकानवगाहिशाब्दपरामर्शादनुमित्यनुत्पादश्च समानः, तथाऽपि निरुक्तधर्मापेक्षया व्याप्तिप्रकारकपक्षधर्मतानिश्चयत्वस्य लघुतया तेन रूपेण कारणताकल्पनमेवोचितमित्यत्र तात्पर्यम् ।

( चि० ) अपि च यत्र धूमत्वव्याप्त्योर्वैशिष्ट्यं प्रथममेव प्रत्यक्षेण युगपत्पक्षधर्मे भासते तत्र लाघ-

वात् व्याप्यत्वज्ञानत्वेनैव कारणतावच्छेदकम् । न चैवमतिरिक्तविशिष्टज्ञानकारणत्वे गौरवं दोषाय, सप्रमाणकत्वात्, कारणताग्रहदशायां फलमुखगौरवस्य सिद्ध्यसिद्धिभ्यामदोषत्वात् ।

( दी० ) यत्रेच्छा तत्साधनताज्ञानस्येच्छाहेतुत्वेऽपि समानमिति चेत्? सत्यम्, प्रतिवक्ष्यते हि तत्र लघुगुरुरूपाभ्यां युगपदुपस्थितौ लघुरूपावच्छेदेनैव कारणत्वं कल्प्यते लाघवात् नियमादेकतररूपावच्छेदेनाप्यक्लृप्तत्वात् इत्याशयवानाह । अपि चेति । ननु स्वसमानाधिकरणाभावेत्यादिव्याप्तौ स्वपदार्थस्यैकस्याभावेन धूमादिकमेव विशिष्य उपादेयं तत्र च धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नवह्निसमानाधिकरणेन्धनवानयमिति ज्ञानादप्यनुमितिप्रसङ्गेन तादृशवह्निसमानाधिकरणधूमत्वं व्याप्तिस्तत्प्रकारकमेव च पक्षधर्मताज्ञानमननुगतमपि हेतुरिति वक्तव्यं तथा च यद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके गृह्यते तत्प्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम् अयं वह्निव्याप्यवान् धूमो वह्निव्याप्योऽयं धूमवान्, वह्निर्धूमव्यापकोऽयं धूमवानित्यादिसकलविशिष्टव्यापकत्वात् न तूपदर्शितव्याप्तिप्रकारकज्ञानत्वेनाव्यापकत्वात् ।

( गा० ) ननु तत्त्वतस्त्वाननुगमस्य दोषत्वे इष्टत्वेन फलसाधनताज्ञानस्य उपायेच्छाद्यहेतुत्वेन यत्रेच्छा तत्साधनताज्ञानं हेतुरितीष्टसाधनताज्ञानहेतुतापरिष्कारो मणिकृता विरुध्येत इत्याशङ्कते । यत्रेच्छेति । प्रतिवक्ष्यत इति । तत्र गत्यन्तरविरहेण सुखदुःखाभावत्वादिप्रकारकफलगोचरेच्छायास्तत्तद्वच्छिन्नसाधनताज्ञानस्य चाननुगमेनापि तादृशेच्छात्वेन तादृशज्ञानत्वेन च हेतुता स्वीक्रियते कार्यतावच्छेदककोटौ चान्यवहितोत्तरत्वसम्बन्धेन तत्तत्कारण-

तावच्छेदकावच्छिन्नवैशिष्ट्यं निवेश्य व्यभिचारो वारणीयः, कृता गता जातिविशेषा एव वा तत्तत्फलेच्छाजन्यतावच्छेदकतया स्वीक्रियन्ते नानाफलगोचरेच्छास्थले च नानैवेच्छाव्यक्तयः स्वीक्रियन्ते प्रयत्नादिच्छायोगपद्यस्वीकारेऽपि क्षतिविरहात् इति भावः।

ननु पर्वतवृत्तिधूमत्ववह्निव्याप्त्योर्वैशिष्ट्य यत्र युगपदेव पक्षधर्मं भासते तत्र विशिष्टपरामर्शत्वावच्छिन्नस्यैव व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वावच्छिन्नस्याप्युपस्थितिरस्ति तथा च तेन रूपेणैव किन्न हेतुत्वमुपेयते, एतन्मतेऽवच्छेदकलाघववत् तन्मतेऽपि नियमांशाकल्पनेन लाघवसत्त्वात् इत्याशङ्कां परिजिहीर्षुः अपिचेत्यादिमूलाशयमाह। लघिष्ठेति। नियमादेरिति। आदिना अनन्यथासिद्धत्वपरिग्रहः। एकतररूपेति। उक्तशाब्दपरामर्शस्थले यद्धर्मावच्छेदेन व्याप्तिज्ञानं तद्धर्मप्रकारकपक्षधर्मताज्ञानस्य नैयायिकमतासिद्धत्वादिति भावः। हेतुतावच्छेदकभेदेन कारणताभेदं नैयायिकमतेऽप्याशङ्क्य मीमांसकमते लाघवमाशङ्कते। नन्वित्यादिना। विशिष्य। धूमत्वादिना।

ननु धूमत्वादीनां विशिष्य व्याप्तिघटकत्वेऽपि किञ्चिद्धर्मावच्छिन्नविषयतात्वेनैव सामान्यतस्तद्विषयता कारणतावच्छेदककोटौ निवेशनीयेति न कारणतावच्छेदकाननुगम इत्यत आह। तत्र चेति। धूमादिविषयतानां विशिष्य कारणतावच्छेदकेऽनिवेशे चेति शेषः। धूमादिविषयतानां विशिष्य निवेशेऽपि व्याप्तिशरीरे सामानाधिकरण्यानुयोगितावच्छेदकतया धूमत्वादीनामनिवेशे उक्तज्ञानादनुमितिप्रसङ्गो दुर्वार एवेति तत्र धूमत्वादिक तथा निवेश्य विशिष्य तत्प्रकारकत्वेन हेतुतां दर्शयति। तादृशेति। यद्धर्मविशिष्टेत्यादि। तद्धर्मावच्छिन्नलिङ्गकानुमितौ तद्धर्मविशिष्ट-व्यापकतावच्छेदकताविशिष्टसाध्यतावच्छेदकविषयताशालिग्रहविशिष्टतद्धर्मप्रकारकपक्षधर्मताज्ञानत्वेनैवेत्यर्थः। सकलविच्छिव्यापकत्वादिति। तथा च तद्धर्मावच्छिन्नस्य नियतपूर्ववर्तित्वमुभयमतसिद्धमेवेति एतन्मते कल्पनालाघवमक्षुण्णमेव, व्याप्यतावच्छेदकानवगाहिव्याप्तिज्ञानादनुमितिश्च नैयायिकानामप्यसिद्धैवानुमितिप्रयोजिकाया उक्तव्याप्तेर्व्याप्यतावच्छेदकघटितत्वादित्यभिप्रायः।

( दी० ) किञ्चान्यथाख्यातिवादिभिर्धूमादिसमानाधिकरणात्यन्ताभावाप्रतियोगिगगनसमानाधिकरणधूमादिमानयमिति ज्ञानादनुमित्यङ्गीकारादखण्डव्याप्तेश्चाप्रसिद्धतया प्रकारत्वासम्भवात् साध्ये साधनव्यापकत्वग्राहकमधिकरणादौ च साध्यीयत्वाद्यवगाहि पक्षे च तादृशसाधनवत्त्वावगाहि यज्ज्ञानं तत्त्वेन कारणत्वं वाच्यम् तथा च लाघवात्तादृशव्यापकत्वपक्षधर्मत्वावगाहितयोरेव कारणतावच्छेदकत्वमवृत्तिहेत्वनुरोधेन व्यापकत्वस्यापि खण्डशो निरुक्तिस्तेषां परमतिरिच्यते, यथा च सामानाधिकरण्यज्ञानस्य हेतुत्वेऽपि न क्षतिस्तथा वक्ष्यते इति चेन्न । गृह्यमाणव्याप्यतावच्छेदकताकेत्यादिप्रकारद्वयोक्तदूषणग्रस्तत्वात् वह्न्यत्यन्ताभाववद्वृत्तिधर्मवानयमित्यादिज्ञानादप्यनुमित्युदयाच्च व्यभिचारज्ञानाविरोधिज्ञानविषयत्वेनैव व्याप्तीनामननुगमात् ।

( गा० )अत्र च कारणतावच्छेदकावच्छिन्नाव्यवहितोत्तरत्वघटितधर्मस्यैव जन्यतावच्छेदकत्वोपगमात्, तदवच्छिन्ननियतपूर्ववर्त्तिताविशिष्टपरामर्शत्वावच्छेदेनाप्युभयवादिसिद्धैव ज्ञानद्वयस्थलेऽतिरिक्तविशिष्टपरामर्शकल्पनागौरवस्य फलमुखत्वेनादोषत्वं मूलकृतैव वाच्यमित्याशङ्क्य मीमांसकमते कारणतावच्छेदकलाघवप्रणालीमाह। किञ्चेति। अखण्डव्याप्तेरिति। उक्तविशिष्टपदार्थरूपाया व्याप्तेरित्यर्थः।प्रकारत्वासम्भवादिति।तथा च विशिष्टव्याप्तिप्रकारकत्वेन कारणतापि न सम्भवतीति भावः। साध्ये। साध्यतावच्छेदके।व्यापकत्वग्राहकम्। व्यापकतावच्छेदकत्वावगाहि। तादृशव्यापकत्वपक्षधर्मत्वावगाहितयोरेवेति। हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वविशिष्टसाध्यतावच्छेदकरूपव्यापकत्वावगाहित्वहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टपक्षावगाहित्वयोरेवेत्यर्थः।एवकारेणाधिकरणाद्यंशे साध्याद्यवगाहित्वव्यवच्छेदः, कारणतावच्छेदकत्वम्। उचितमिति शेषः।

यद्यपि वह्न्यादिसाध्यकधूमादिहेतुकस्थलेऽखण्डव्याप्तेः प्रसिद्ध्या व्याप्तिविशिष्टहेतुमत्ताज्ञानत्वेन कारणत्वं सुवचमेव साध्यसाधनभेदेन कारणभेदस्यावश्यकत्वात्। न चैवमपि साध्यसामानाधिकरण्यांशस्य व्याप्तिघटकतया कारणतावच्छेदककोटौ निवेशाधिक्येन गौरवं दुष्परिहरमेवेति वाच्यम्। भवन्मतेऽपि पक्षधर्मतावच्छिन्नसामानाधिकरण्यसम्बन्धेन पक्षज्ञानवैशिष्ट्यस्य परामर्शांशे निवेशाधिक्यात् अन्यथा अखण्डव्याप्तिप्रकारकत्वेन हेतुत्वेऽपि गौरवात् तत्प्रतिक्षेपस्य अनुचितत्वात्। तथापि अन्यथाख्यातिवादिनां वह्न्याद्यधिकरणत्वादिना तदनधिकरणादिमात्रविषयकज्ञानादप्यनुमित्युत्पत्त्या अखण्डव्याप्तिविषयकत्वेन वह्न्यादिसाध्यकानुमितावपि हेतुता असम्भवतीत्यभिप्रायः। व्यापकत्वस्यापीति। व्यापकतावच्छेदकत्वावगाहित्वस्यापीत्यर्थः। खण्डशो निरुक्तिरिति। अधिकरणांशे साधनावगाहि आधेयत्वांशेऽधिकरणीयत्वावगाहीत्यादिक्रमेण कारणतावच्छेदकगर्भे निवेशनमित्यर्थः। अखण्डव्यापकत्वाप्रसिद्ध्या तदवगाहित्वस्य यथाश्रुतस्य निवेशासम्भवादिति भावः। तेषाम्। अन्यथाख्यातिवादिनां नैयायिकानामित्यर्थः। मीमांसकानां तत्र व्यापकताज्ञानासम्भवेनानुमितेरसिद्धेरिति भावः।

न च केवलाभावत्वादिना साधनसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वादिज्ञानादनुमितिवारणायाधिकरणांशे धूमादिप्रकारकमाधेयत्वांशेऽधिकरणप्रकारकमित्यादिक्रमेण व्यापकताज्ञाननिवेशनं मीमांसकानामप्यावश्यकमिति वाच्यम्। हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकविशिष्टपदार्थस्य विषयतासम्बन्धेन कारणतावच्छेदकत्वोपगमात् विशेष्यविशेषणभावापन्नतावत्पदार्थानवगाहिज्ञाने विशिष्टनिरूपितविषयताविरहेण विषयतासम्बन्धेन तादृशविशिष्टवत्त्वाभावादुक्तातिप्रसङ्गासङ्गतेः, यादृशविशिष्टपदार्थस्य कारणतावच्छेदकत्वं तादृशविशिष्टाधिकरणस्यैव कार्योत्पादकत्वात्।

नन्वत्र तन्मते साध्यसामानाधिकरण्यज्ञानस्यानुमित्यहेतुतया विरोधस्य हेत्वाभासतानुपपत्तिः अनुमितिजनकज्ञानाविरोधित्वादित्यत आह। यथा चेति। नश्यत इति। व्यापकतापरामर्शविचार इति शेषः। गृह्यमाणेति। व्यापकताज्ञानविशिष्टपक्षधर्मताज्ञानत्वेन

पक्षधर्मताज्ञानविशिष्टव्यापकताज्ञानत्वेन वा हेतुत्वम् इत्यत्र विनिगमनाविरहरूपदूषणग्रस्तत्वादित्यर्थः।

नन्वनुमितिं प्रति तद्धर्मावच्छिन्ननिरूपितव्यापकताज्ञानत्वेन तद्धर्मावच्छिन्नहेतुमत्पक्षज्ञानत्वेन च कारणता स्वीक्रियते दण्डचक्रादिवत् परस्परसहकारेण फलजननान्नातिप्रसङ्गः। न च विशिष्टपरामर्शत्वेनैककारणत्वकल्पनापेक्षया कारणत्वद्वयकल्पने गौरवमिति वाच्यम्। विशिष्टपरामर्शत्वेन हेतुतामते कारणतावच्छेदककोटिप्रविष्टस्याधिकरणांशे साध्याद्यवगाहित्वतदंशीयाप्रामाण्यज्ञानविशेषानास्कन्दितत्वरूपाधिकविशेषणस्य तथाविधविशेषणान्तरैः समं मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यस्य दुर्वारत्वादित्यतो दूषणान्तरमाह। वह्न्यत्यन्ताभाववद्वृत्तीति। अनुमित्युदयादिति। तथा च तदसंग्राहकतया नोक्तरूपेण हेतुतासम्भव इति भावः।

ननु तादृशज्ञानान्न जायत एवानुमितिर्नैयायिकमतेऽपि केवलान्वयिसाधारण्यानुरोधेन व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्यैव हेतुताया वक्तव्यत्वात् तत्रानुमित्यनुत्पादस्य तुल्यत्वादित्याशङ्कां परिहरति। व्यभिचारेति। अन्वयव्यभिचारज्ञानप्रतिबन्धकतावच्छेदकत्वेन नानाविधव्याप्तिप्रकारता अनुगमय्य कारणतावच्छेदकगर्भे प्रवेशनीया इत्यर्थः। तथा चास्माकं तत्रानुमितिर्भवत्येव इति भाव.। इदन्त्वापाततः, तन्मतेऽपि तद्धर्मावच्छिन्नविशेष्यकव्यभिचारज्ञानप्रतिबन्धकत्वेन व्यापकताज्ञानस्य हेतुताया वक्तुं शक्यतया साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानस्य संग्रहसम्भवात् तादृशव्याप्त्यंशे निर्धर्मितावच्छेदककज्ञानन्तु नैयायिकानामपि दुःसंग्रहं तादृशज्ञानीयव्याप्तिप्रकारतायां व्यभिचारज्ञानप्रतिबन्धकतावच्छेदकताविरहात् तादृशप्रतिबन्धतावच्छेदकप्रकारितानिरूपकधर्मप्रकारतात्वेन व्याप्तिप्रकारितायाः कारणतावच्छेदकत्वे प्रमेयत्वादिना व्याप्तिप्रकारताकज्ञानादप्यनुमितिप्रसङ्गः। एवं व्यापकताज्ञानस्य साध्याभाववदवृत्तित्वरूपव्यभिचारज्ञानं प्रति साध्याभाववद्वृत्तित्वज्ञानस्य साधनव्यापकताज्ञानं प्रति विरोधित्वे मानाभावादनुगम एवासम्भवः। साध्यसामानाधिकरण्यविषयतया व्यापकताग्रहनिष्ठप्रतिबन्धकतावच्छेदककोटावनिवेशेन व्यापकसामानाधिकरण्यरूपव्याप्तिप्रकारि-

ताया व्यभिचारज्ञानप्रतिबन्धकतावच्छेदकत्वञ्च दुर्घटम्। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वानिवेशेऽपि च धूमव्यापकवह्निसमानाधिकरणेन्धनकालीनधूमवान् पर्वत इत्यादिज्ञानादनुमित्यापत्तेः।

यत्तु व्यापकत्वज्ञानं व्यापकत्वनिरूपकतावच्छेदकधर्मावच्छिन्नविशेष्यकव्यभिचारज्ञानं प्रत्येव प्रतिबन्धकं तत्प्रतिबन्धकतया च धूमादिव्यापकसाध्यसमानाधिकरणवृत्तिधूमत्वादिरूपव्याप्तिज्ञानधर्मितावच्छेदकधर्मान्तराद्यवच्छिन्नविशेष्यताकव्यभिचारज्ञानस्य तादृशव्याप्तिज्ञानदशायां दुर्वारतया समानधर्मितावच्छेदकत्वप्रत्यासत्त्या व्यभिचारधियं प्रति तादृशव्याप्तिप्रकारकज्ञानत्वेन पृथक् प्रतिबन्धकत्वं कल्प्यते इति तादृशव्याप्तिप्रकारतायाः साध्याभाववदवृत्तित्वरूपव्याप्तिप्रकारतायाश्च व्यभिचारधीप्रतिबन्धकतावच्छेदकप्रकारतात्वेनानुगमय्यानुमितिकारणतावच्छेदकत्वं सम्भवति एवञ्च व्याप्त्यंशे निर्धर्मितावच्छेदकताकज्ञानीयप्रकारताया अपि तादृशरूपेण सङ्ग्रहः सम्भवति, धर्मितावच्छेदकतायाः प्रत्यासत्तित्वे धर्मितावच्छेदकतानिरूपकत्वस्य व्याप्तिप्रकारतायामनिवेशादिति। तदपि न सम्यक्। धूमादिव्यापकसाध्यसमानाधिकरणवृत्तिधूमत्वादिज्ञानदशायां तद्विशेष्यतावच्छेदकावच्छिन्ने साध्याभाववद्वृत्तित्वज्ञानोपगमे क्षतिविरहादिति।

वस्तुतस्तु यदि ज्ञानद्वयहेतुतावादिना व्यापकताधीर्हेतुरुपेयते तदा व्यापकत्वमपेक्ष्यापि लघुशरीरा साध्याभाववदवृत्तित्वरूपा व्याप्तिरेवानुमितिप्रयोजिका न्यायमते स्वीकार्या तत्प्रकारकपक्षधर्मताज्ञानत्वेन हेतुतावच्छेदकधर्माननिवेशेनैव हेतुतोपगन्तव्या तथा च हेतुतावच्छेदकभेदेन तेषां न कारणताभेदः, ज्ञानद्वयहेतुतावादिना तादृशव्याप्तेरनुमितिप्रयोजकत्वोपगमेऽपि साध्यव्याप्यो धूमः आलोकवान् पर्वत इत्यादिज्ञानद्वयादनुमितिप्रसङ्गवारणाय हेतुतावच्छेदकानां विशिष्य निवेशनीयतया तद्भेदेन कारणताबाहुल्यमिति विशिष्टपरामर्शत्वेन हेतुत्वमेव सम्यक्।

यदि च केवलान्वय्यनुमानं नैयायिकानामनुपेक्षणीयमिति व्यापकसामानाधिकरण्यज्ञानमप्यनुमितिकारणं वाच्यमित्युच्यते तदा केवलान्वय्यनुमानपदार्पणभीरुभिर्मीमांसकैः कथं तादृशव्या-

सिमुपेक्ष्य व्यापकतया लाघवेन तज्ज्ञानपक्षधर्मताज्ञानयोः पृथक्कारणत्वं व्यवस्थापयिष्यते इत्यादिरीत्या परमतं निराकार्यम्। अधिकमन्यत्रानुसन्धेयम ।

( दी० )नन्वत्र कारणे कार्यमेव प्रमाणं तच्च कार्यकारणभावग्रहे सति स्यात् स एव तु न सम्भवति गौरवज्ञानेन प्रतिबन्धादित्यत आह । कारणताग्रहेति । कारणतानिर्णयं विना तत्फलस्य धर्मान्तरानिर्णयस्याभावेन तद्घटितगौरवस्यानिर्णयादित्यर्थः । सम्भाव्यते तावदिदं धर्मान्तरकल्पनं विना कारणत्वस्यैवाशक्यनिर्वाहत्वादिति चेत् ? सम्भाव्यतां न तु तत् प्रतिबन्धकम् , सामान्यतः कार्यकारणभावग्रहस्य प्रायशो विलयप्रसङ्गात् । तत्र तत्र क्लृप्तनियतपूर्ववर्तितावच्छेदकरूपान्तरविरहेणागत्या गौरवमप्यास्थीयते इति चेदिहापि तद्विरहस्यासकृदावेदितत्वादिति कृतं पल्लवितेनेति ।

( गा० ) विशिष्टपरामर्शरूपधर्मिणः सप्रमाणकत्वात् न तत्कल्पनं गौरवायेति यदुक्तं सप्रमाणकत्वादिति मूले तत्राशङ्क्य युक्त्यन्तरमवतारयति । नन्विति । तच्च । कार्यस्य प्रमाणत्वञ्च । कार्यकारणभावग्रहे सतीति। अन्यथानुकूलतर्कानवतारेण व्यभिचारशङ्कया स क्षणो विशिष्टपरामर्शवान् अव्यवहितपूर्वत्वसम्बन्धेनानुमितिमत्त्वादिति रीत्या अनुमित्या ज्ञानद्वयस्थले विशिष्टपरामर्शानुमानासम्भवादिति भावः । तत्फलस्य । कारणतानिर्णयाधीनस्य । तद्घटितेति । धर्मान्तरघटितेत्यर्थः । विशिष्टपरामर्शत्वावच्छेदेन कारणताग्रहे विशिष्टपरामर्शत्वधर्मिकगौरवज्ञानं विरोधि तच्च गौरवं प्रमाणान्तराप्रसिद्धतत्तदनुमित्यव्यवहितपूर्वकालीनस्वाश्रयकत्वाद्न्यत् दुर्वचमेवेति गौरवस्य तादृशधर्मिघटितत्वमित्यभिप्रायः(१) । गौरवनिर्णयासम्भवेऽपि गौरवसन्देहेन प्रतिबन्धात् न कारणताग्रहः सम्भवतीति आशङ्कते। सम्भाव्यत इति । सन्दिह्यत इत्यर्थः । इदम् ।

---

( १ ) तादृशधर्मान्तरघटितत्वमित्यभिप्राय इति पु० पा० ।

गौरवम । संशयप्रयोजकमाह । धर्म्यन्तरेति । अशक्यनिर्वाहत्वादिति । तथा च कारणतासंशयात्तदुपपादकधर्मिणोऽपि संशयो भविष्यति, तत्संशयाहितगौरवसंशयेन प्रतिबन्धाच्च न कारणतानिर्णयः सम्भवतीति भावः । तत् । सम्भावनम् । सामान्यतः । घटत्वदण्डत्वादिसामान्यरूपेण । कार्यकारणभावग्रहस्येति । तन्निर्णयस्येत्यर्थः । प्रायशो विलयप्रसङ्गादिति । यत्र दण्डादिरूपकारणं कार्यान्वयं तत्स्थलीयधर्मिघटितगौरवसंशयेन प्रतिबन्धसम्भवादिति भावः । यत्र च कार्याव्यवहितपूर्वकाले कारणतावच्छेदकावच्छिन्नसत्त्वं प्रमाणान्तरसिद्धं तत्र तादृशगौरवाभावात् प्रायश इत्युक्तम् । तत्र तत्रेति । घटत्वदण्डत्वादिना कार्यकारणभावस्थल इत्यर्थः । गौरवमप्यास्थीयते । गौरवसन्देहोऽविरोधितया स्वीक्रियते ।

( चि० ) न चासन्निकृष्टे धूमे तदभावः, भवन्मतानुमितिहेतुव्याप्तिस्मरणधूमत्वज्ञानसहितेन मनसा तदुत्पादात्, यथा परमाणुर्निरवयवद्रव्यं नित्यपरिमाणवत्त्वात् आकाशवदित्यादौ प्रत्येकानुमानोपनीतातीन्द्रियसाध्यसाधनयोराकाशवृत्तितया स्मरणे व्यभिचाराज्ञाने मनसा व्याप्त्यनुभवः, अनुमानयोः प्रत्येकतदुभयसहचाराविषयत्वेन व्याप्त्यग्राहकत्वात् । न चातीन्द्रियव्याप्यत्वमतीन्द्रियेऽनुमेयम् । तत्रापि व्याप्तिग्राहकाभावात् । न च तदुपनयसहितस्य मनसो बहिरर्थप्रमाहेतुत्वे उपनयस्य प्रमाणान्तरत्वम्, इन्द्रियादेः सन्निकर्षवदुपनयस्य नियतव्यापाराभावेन प्रमायामकरणत्वात् सहकारिता च तदभावेऽपि भवति बहिरिन्द्रियलिङ्गसादृश्यादिव्यापारं विनापि चिन्तोपनीतपदार्थानां बाधकानवतारे मनसा संसर्गानुभवस्य सकलजनसिद्धत्वात् कथमन्यथा कविकाव्यादिकमिति ।

( दी० ) व्यभिचारनिर्णयेन कारणत्वग्रहासम्भवो ऽनिरस्यति । न चेति । अनुमानयोरिति । अनुमितैकसाध्यविशिष्ट साध्यान्तरानुमित्या सहचारग्रहोपगमेऽपि नियमांशग्रहासम्भवादिति भावः । नियतव्यापारेति । एकसम्बन्धिज्ञानाधीनसम्बन्ध्यन्तरस्मरणादितः क्वचिद्विशिष्टज्ञानोत्पत्तावपि नियतत्वेन न तस्य व्यापारत्वं, यं जनयित्वैव यस्य यज्जनकत्वं तस्यैव तत्र तद्व्यापारत्वादित्यर्थः । वस्तुतस्तु तदुपनयव्यक्त्यादेस्तत्प्रमाव्यक्तिं प्रति कारणत्वेऽपि न क्षतिः प्रमावैजात्यस्यैवात्र प्रमाणान्तरनिमित्तत्वात् ।

( गा० ) विशिष्टपरामर्शत्वेन हेतुत्वसिद्धये न चेत्यादिना असन्निकृष्टधूमादौ विशिष्टपरामर्शासम्भवशङ्कानिराकरणस्य(१) तत्सिद्ध्युपयोगितामाविष्करोति । (२)व्यभिचारनिर्णयेनेति । सति लाघवे व्यभिचारसंशयस्याकिञ्चित्करत्वान्निर्णयोपादानम् ।

ननु निरवयवद्रव्यत्वानित्यपरिमाणयोरेकतरं दृष्टान्ते प्रसाध्य तद्विशिष्टेऽपरानुमित्या तदुभयसामानाधिकरण्यावगाहनं सुघटमेव, अनुमितेः पक्षतावच्छेदकसामानाधिकरण्यावगाहित्वस्य नियमादित्यनुमानयोरित्यादिमूलासङ्गतिरित्यत आह । अनुमितैकेति । उपगमेऽपीत्यनेन व्याप्तिप्रकारकधियोऽनुमितिहेतुतया संसर्गमर्यादया तादृशसामानाधिकरण्यावगाहिग्रहस्यानुमित्यनुपयोगित्वं सूचितम् ।

एतेन पक्षतावच्छेदकसाध्ययोरवच्छेद्यावच्छेदकभावस्यानुमितौ संसर्गतया भानोपगमेऽपि न निर्वाहः, व्यापाराभावेन उपना-

---

( १ )विशिष्टपरामर्शाभावशङ्काया निराकरणस्येति पु० पा० ।

( २ ) विशिष्टपरामर्शत्वेन हेतुतामते लाघवेन व्यवस्थापिताया मूलोपदर्शितायाः असन्निकृष्टधूमादौ विशिष्टपरामर्शाभावशङ्काया अकिञ्चित्करत्वं परिजिहीर्षुराहेति पु० पा० ।

यक्षज्ञाने प्रमाणत्वतद्व्यवहारयोर्विरहेऽपि उक्तापादकसत्त्वाद्यविरोधाद्यभिचारेण व्याप्त्यसिद्धिरित्याशयेन पूर्वग्रन्थोपदर्शितापत्तिमुद्धरति मूले नचैवमित्यादिना । नियतव्यापारमात्रेणेति मूलमसङ्गतं नियतव्यापारत्वपर्यन्तस्य करणलक्षणेऽप्रवेशात्तो व्यापाराभाव एवात्र विवक्षितः । व्यापारत्वन्तु नियतत्वनिर्वाहाभित्यान्तरालिकस्य कुत्रचित्सम्भवेऽपि न तस्योपनीतप्रमात्वावच्छिन्ने उपनयेन जननीये व्यापारतेत्येतत्सूचनाय मूले नियतपदमिति सूचयितुं व्याचष्टे । एकसम्बन्धीति । हस्त्यादिज्ञानतज्जन्यहस्तिपकस्मरणाभ्यां हस्तिपकादिविशिष्टहस्त्यादिविषयकोपनीतज्ञानजननेऽपीत्यर्थः । तस्य मध्यवर्त्तिनः स्मरणस्य अनियतत्वेऽपि कथं न व्यापारतेत्यत आह । यमिति । य यद्रूपावच्छिन्नम् । यस्य । यद्रूपावच्छिन्नस्य । यज्जनकत्वम् । यद्रूपावच्छिन्नजनकत्वम् । तस्यैव । तद्रूपावच्छिन्नस्यैव । तद्व्यापारत्वात् । तद्रूपावच्छिन्नजनने तद्रूपावच्छिन्नव्यापारत्वात् । एतावतापि तत्तदुपनयव्यक्तेस्तत्तदुपनीतभानव्यक्तित्वावच्छिन्नजनने तन्नियततत्तत्स्मरणादिव्यक्तिव्यापारकत्वं दुर्वारमेवेत्याशयो पनयस्य प्रमाकरणत्वमभ्युपेत्य प्रमाणान्तरत्वं निराकरोति । वस्तुतस्त्विति । न क्षतिरिति । प्रत्यक्षप्रमाण एव तदन्तर्भावेण प्रमाणचातुर्विध्याव्याघातादिति भावः ।

नन्विन्द्रियात्मकप्रत्यक्षप्रमाणे तदनन्तर्भावात् प्रमाणान्तरत्वं तस्य दुर्वारमेवेत्यत आह । प्रमावैजात्यस्यैवेति । एवकारेण प्रमाकरणतावच्छेदकभेदव्यवच्छेदः । प्रमाणान्तरत्वानिमित्तत्वात् । विभिन्नप्रमाणव्यवहारप्रयोजकत्वात् ।

( दी० )न चात्र(१)प्रमावैजात्यम् , अनुपलम्भबाधितत्वात् मानाभावाच्च, उपनयस्य च विशिष्टज्ञाने विशेषणज्ञानत्वेन प्रत्यक्षे च सन्निकर्षविधयोपयोगितया जात्यव्यवस्थापकत्वात् । अत एव बाह्याभ्यन्तरप्रत्यभिज्ञासादृश्यभावादिप्रत्यक्षाणां तत्तत्प्रतियोग्यादिविषयत्वमन्यथा जातिसङ्करप्रसङ्गात् , ज्ञानद्वयकल्पने

[ १ ] न चात्रापीति पाठान्तरं तत्तु न भट्टाचार्यसम्मतमिति अत्र प्रमावैजात्यमितीति पाठधारणेनानुमितम् ।

च स्थैर्यमात्रमुच्छिद्येत, व्यवस्थापितञ्च विशिष्टज्ञानस्य व्यवहारहेतुत्वम् । न च प्रमाणान्तरासहकृतोपनयजन्यतावच्छेदकतया वैजात्यसिद्धिः, इतरासहकृतत्वेनाजनकत्वात् असिद्धेश्च, उपनयात्मकसन्निकर्षवशेन मनसा प्रत्यक्षजननस्यैवोपगमात् ।

( गा० ) ननु उपनयहेतुनाख्यादिना तज्जन्यज्ञाने तज्जन्यतावच्छेदकधर्मस्वीकार आवश्यकः स च लाघवाज्जातिविशेषरूप एवेति प्रमावैजात्यं दुर्वारमित्यत आह । न चेति । अत्र प्रमावैजात्यमिति । उपनीतज्ञाने प्रत्यक्षव्यावृत्ता जातिरित्यर्थः । सम्भवतीति शेषः । युक्तिसत्त्वे योग्यायामपि व्यक्तौ व्यञ्जकविरहेण उपपद्यमानो जात्यनुपलम्भो न जातिबाधकः, अन्यथा संयोगादौ क्रियादिजन्यतावच्छेदकजातेरपि विलयप्रसङ्गादित्याशङ्क्य उपनयस्य जात्यन्तराव्यवस्थापकत्वं व्यवस्थापयन् युक्त्यभावमेव बाधकं दर्शयति । माऽऽभावादित्यादिना । विशेषणज्ञानस्येति । उपयोगितयेत्यग्रिमेणान्वयः । तथा च विशिष्टज्ञानत्वं तज्जन्यतावच्छेदकं न तु जात्यन्तरमिति भावः । उपनेयविशेष्यकमानसानुरोधेन फलान्यकारणत्वान्तरानिरूपितकार्यतावच्छेदकतया जात्यन्तरसिद्धेरावश्यकतेत्याशङ्क्याह । सन्निकर्षविधयेति । तथा च प्रत्यक्षत्वमेतज्जन्यतावच्छेदकमिति भावः ।

ननु संयोगज्ञानादिसाधारणं सन्निकर्षत्वमनुगतानातिप्रसक्तं दुर्वचमिति विशिष्येव हेतुता वाच्या तथा च ज्ञानजन्यतावच्छेदकं यदि प्रत्यक्षत्वमात्रमुच्यते तदा लौकिकप्रत्यक्षे व्यभिचार इति संयोगाद्यजन्यप्रत्यक्षत्वमेव तथा वाच्यम् एवञ्च संयोगाद्यजन्यत्वानिवेशप्रयुक्तलाघवेन वैजात्यसिद्धिर्दुर्वारैवेत्यत आह । अत एवेति । उपनयस्य जातिविशेषावच्छिन्नाजनकत्वादेवेत्यर्थः । बाह्यप्रत्यभिज्ञा । स एवाय चैत्र इत्यादिका । आभ्यन्तरप्रत्यभिज्ञा । स एवाहमित्यादिरूपा । आदिपदाभ्यां ज्ञानादिविषयादिपरिग्रहः, यथायोगमन्वयः । अन्यथा । उपनयस्य जातिविशेषावच्छिन्नजनकत्वे । जातिसङ्करेति । किञ्चिद्विषये चक्षुःसंयोगादिजन्यतया तत्र चाक्षुषत्वादेरावश्यकत्वात्तेन च समं उपनयजन्यतावच्छेदकजातेर्व्या-

ष्यव्यापकस्याभावासम्भवादिति भावः। जातेरनादिकतया विशे-
ष्यीभूततद्विषयकज्ञानस्य प्रत्यभिज्ञादौ व्यभिचारप्रसङ्गश्चेत्यपि
बोध्यम्। तत्तेदन्त्वादिविशिष्टविषयकं तत्र ज्ञानद्वयमेव भेदाग्रह-
सहकृतं विशिष्टव्यवहारादिनिमित्तं न त्वेकं ज्ञानं अतो न जातिस-
ङ्करादिप्रसङ्ग इत्यत आह। ज्ञानद्वयेति। स्थैर्यमात्रमिति। तस्य पूर्व-
गृहीतानुभूयमानयोरभेदप्रत्यभिज्ञैकप्रमाणकत्वादिति भावः। अनु-
मानादपि कुतश्चित् स्थैर्यसिद्धिसम्भवादाह। व्यवस्थापितश्चेति।
अन्यथाख्याताविति शेषः। प्रत्यक्षसामग्र्यसमवहितज्ञानजन्यताव-
च्छेदकं चेज्जातिस्तु न प्रत्यभिज्ञानात्त्वादिति न सङ्कर इत्याशङ्कते।
न चेति। अजनकत्वादिति। प्रत्यभिज्ञायां तत्तादिभानार्थं चक्षुःसं-
योगादिजन्यप्रत्यक्षे ज्ञानस्य स्वतन्त्रहेतुताया आवश्यकत्वात् तत
एव सर्वांशोपनीतभानस्योपपत्तेरुक्तरूपेण हेतुत्वे मानाभावादि-
ति भावः।

ननु तदानीमिन्द्रियसंयोगादिघटितप्रत्यक्षसामग्र्या अभावात्
सर्वांशोपनीतभाने प्रत्यक्षत्वं न सम्भवतीति यज्जातीयप्रमासामग्रीवि-
रहे इत्यादिव्याप्तिबलात् प्रमाचेत्यस्यापत्तिर्दुर्वारैव। न च तादृशस्थले
मानाभावः, तादृशोपनीतभाने प्रत्यक्षत्वासम्भवात् तत्रोपनायकज्ञानस्य
स्वतन्त्रहेतुताया आवश्यकत्वाज्जन्यतावच्छेदकधर्मं विना तदनुपपत्ते-
रेव मानत्वात् ज्ञानस्य जनकतायामेव प्रत्यक्षादिसामग्र्यसमवहितत्व-
मवच्छेदकं भवतु तत्सहकारि वेत्यन्यदेतदित्यत आह। असिद्धेश्चे-
ति। उपनीतभानस्थले प्रत्यक्षादिसामग्र्यभावस्यैवेत्यादिः। असिद्धि-
मेव विवृणोति। उपनयेति। लौकिकसन्निकर्षस्य विषयिताविशेषाव-
च्छिन्नं प्रत्येव जनकतया उपनीतभाने तादृशविषयिताविरहस्याभ्यु-
पगमेन न व्यभिचार इति भावः। न चांशिकोपनीतभाने उपनीत-
स्य प्रकारतयैव भानोपगमाद्विशेषणज्ञानविधयैव तत्रोपनयज्ञानस्य
हेतुत्वात् सर्वांशोपनीतभाने ज्ञानविशेषस्यैव तज्जन्यतावच्छेद-
कतया कल्पनमुचितम् अलौकिकप्रत्यक्षत्वस्य गुरुत्वात् तथा च प्र-
त्यक्षत्वं तत्र निर्युक्तिकमिति वाच्यम्। सुरभि चन्दनमित्यादौ मान-
ससर्वांशोपनीतभाने विशेष्यचन्दनादेस्तादात्म्यसम्बन्धेन स्वांशे
प्रकारतया अभ्युपगमेन विशिष्टबुद्धौ विशेषणज्ञानहेतुतयैव नि-
र्वाहादुपनीतभाने उपनायकज्ञानस्य स्वातन्त्र्येण हेतुताया अक-

रुपनात् । सिध्यतु वा सर्वांशोपनीतभाने जातिविशेषः सोऽपि प्रत्यक्षत्वव्याप्य एव न तु तद्विरुद्ध इति नोपनयस्य प्रमाणान्तरता । न च तादृशज्ञाने प्रत्यक्षत्वमप्रामाणिकम् । प्रत्यक्षत्वादन्यस्या अनुभवत्वजातेरप्रामाणिकतया तत्प्रकारकज्ञानत्वस्य स्मृतिसाधारण्येन व्यभिचारात् प्रत्यक्षत्वस्यैव विशेषणज्ञानजन्यतावच्छेदकतया तत्र प्रत्यक्षत्वानुपगमे तस्य विशेषणज्ञानजन्यत्वानुपपत्तेः । न चोपनयविधयैव तत्र विशेषणज्ञानस्यापेक्षणीयतया विशिष्टप्रत्यक्षत्वावच्छिन्नाया विशेषणधीजन्यताया स्तत्रासत्त्वेऽपि न क्षतिरिति वाच्यम् । स्वरूपतो घटत्वादिप्रकारकोपनीतभाने घटत्वादिविषयकज्ञानस्य उपनायकविधयाऽपेक्षायामपि स्वरूपतस्तत्प्रकारकज्ञानपर्यन्तानपेक्षायां जातित्वादिना घटत्वादिज्ञानात् घट इत्येतादृशोपनीतभानापत्तेः स्वरूपतस्तद्विषयकज्ञानजन्यतावच्छेदकस्य स्वरूपतस्तत्प्रकारकप्रत्यक्षत्वस्य (१)स्वरूपतस्तत्प्रकारकोपनीतभानसाधारणताया आवश्यकत्वात् ।

अथ स्वरूपतो घटत्वादिविषयकं यत्र निर्विकल्पकं जातित्वादिना घटत्वज्ञानञ्च तत्र स्वरूपतो घटत्वादिप्रकारकोपनीतभानवारणाय तादृशोपनीतभाने स्वरूपतस्तत्प्रकारकज्ञानहेतुत्वमावश्यकं तथा च तस्य प्रत्यक्षसाधारणविशेषणज्ञानजन्यतावच्छेदकानाक्रान्तत्वेऽपि न क्षतिः । न च तादृशस्थले तथाविधोपनीतभानमिष्टमेवेति वाच्यम् । येन रूपेण यस्य ज्ञानं तेन रूपेणैव तस्योपनयः न तु तदविशेषितस्येति नियमादिति चेत्तर्हि, स्वरूपतस्तत्प्रकारकोपनयस्यापि स्वरूपतस्तत्प्रकारकालौकिकप्रत्यक्षत्वमेव जन्यतावच्छेदकं वाच्यं न तु सर्वांशोपनीतभानवृत्तिवैजात्यं तथासत्युक्तस्थले घट इत्याद्याकारकचाक्षुषाद्युपनीतभानापत्तेः तथा च सर्वांशोपनीतभानस्यापि तादृशोपनयजन्यतावच्छेदकाक्रान्तत्वनिर्वाहायैव तत्र प्रत्यक्षत्वस्वीकार आवश्यकः । वस्तुतो येन रूपेणेत्यादिनियमो निर्विकल्पकस्य अनुपनायकतामते, निर्विकल्पकस्य उपनायकतामङ्गीकुर्वतान्तु न तादृशनियम इत्युक्तस्थले दर्शितोपनीतभानमिष्टमेवेति

(१) स्वरूपतो घटत्वादिप्रकारक-घट-इत्येतादृशोपनीतभानापत्तेरिति पु० पा० ।

छतं पल्लवितेन ।

(चि०)स्यादेतत् पक्षधर्मस्य व्याप्यताज्ञानं नेन्द्रियेण वह्नेरसान्निकर्षे तन्नियतसामानाधिकरण्यस्य व्याप्यत्वस्यायोग्यत्वात् । न च धूमत्वेन सकलधूमव्याप्यतावगमात् धूमविशेषे संस्कारात् स्मरणाद्वोपनीतव्याप्याभेदग्रहः प्रत्यभिज्ञाने तत्ताविशिष्टस्येवेति वाच्यम् । एवं हि धूमवत्त्वेन वह्निमत्त्वज्ञानात् धूमवद्विशेषे पर्वते संस्कारवशात् प्रत्यक्षेण व्याप्तिज्ञानापेक्षेण वह्निमदभेदग्रहो वह्निमत्त्वसंसर्गग्रहो वाऽस्तु किमनुमानेन । पृथक् वह्निमत्त्वस्मरणं तत्र नास्ति किन्तु व्याप्त्यवच्छेदकतयेति चेन्न। वह्निमान्न वेति संशयानुरोधेन स्वतन्त्रवह्निमत्त्वस्मरणात् । न च विशिष्टज्ञाने स्वतन्त्रविशेषणज्ञानत्वेन हेतुत्वम्, गौरवात् ।

( दी० ) पृथगिति । न चैवं धारावाहिकोच्छेदः, इतरमात्रविशेषणत्वेनोपस्थितेरेव तन्त्रत्वात्, कोटिस्मरणस्य संशयेन तस्य च व्याप्तिस्मरणादिना नाशात् विशेषदर्शनकाले च संशयायोगादाह। न चेति। गौरवादिति । न चैवमभावविशेषणत्वेनोपस्थितस्यापि भावस्य ग्रहापत्तिः, अभावग्राहकसामग्र्या बलवत्या प्रतिबन्धात्, अभावाविशेषणत्वेनोपस्थितिस्तन्त्रमित्यपि कश्चित् । वस्तुतस्तु स्वतन्त्रविशेषणज्ञानस्य विशिष्टधीहेतुत्वेऽनुमित्यर्थमेव त्वयाऽपि तत्स्वीकरणीयं, न हि विशिष्टप्रत्यक्षं प्रत्येव तथात्वम्, मानाभावात् ।

( गा० ) किञ्चिद्दशो तदप्रकारकं विशेषणज्ञानमेव पृथग्विशेषणज्ञानमित्याशयेन शङ्कते । न चैवमिति । धारावाहिकोच्छेद इति। विशिष्टबुद्धिधारान्तःपातितृतीयादिविशिष्टबुद्ध्यनुपपत्तिरित्यर्थः। तत्पू-

षे निर्विकल्पकात्मकस्य विशेषणज्ञानस्य विनाशाद्विशिष्टबुद्धिरूपस्य तस्य विशेषणप्रकारकतया स्वातन्त्र्यविरहादिति भावः । समाधत्ते । इतरमात्रेति । तत्तदितरोभयांशे तत्प्रकारकज्ञानात्तदंशे तद्विशिष्टज्ञानोपपत्तये मात्रपदम्, तेन यद्धर्मेणापि विशिष्टज्ञानं फलं तद्धर्मवदंशे तत्प्रकारकं यत् तत्प्रकारकं तदन्यतद्विषयकोपस्थितेरित्यर्थः ।

यत्तु तादितरविशेष्यतानिरूपिततत्प्रकारतान्यतद्विषयताकोपस्थितेरित्येवार्थः, विशेष्यताभेदेन प्रकारताभेदादुभयविशेष्यकविशिष्टबुद्धिसंग्रहात् । तथा घटौ पटावित्यादिसमूहालम्बनविलक्षणे घटपटौ द्वावित्यादिज्ञाने उभयांशे एकस्यैव द्वित्वादिविशेषणमवगाहमाने विशेष्यभेदेऽपि द्वित्वादिप्रकारताया अभिन्नतया घटादीतरपटादिविशेष्यतानिरूपितत्वसत्त्वेन तज्ज्ञानस्य घटपटौ द्वावित्यादिज्ञानान्तराजनकत्वप्रसङ्गात् (१) ।

स्वतन्त्रविशेषणज्ञानस्य विशिष्टधीहेतुत्वमभ्युपेत्य संशयार्थं स्वीकार्येण स्वतन्त्रवह्निस्मरणेन परामर्शोत्तर पक्षे तदुपनीतभाननिर्वाहे अपरितोषबीजं दर्शयन् विशेषणज्ञानहेतुतायां स्वातन्त्र्यप्रवेशे युक्तिविरहप्रदर्शकं न चेत्यादिमूलमवतारयति । कोटीति । संशयेन नाशादित्यग्रिमेणान्वयः । स्मरणनाशेऽपि संशयात्मकतादृशविशेषणज्ञानादेव निश्चयो भविष्यतीत्याशङ्क्याह । तस्य चेति । व्याप्तिस्मरणादिना इत्यस्य परामर्शार्थमुपगन्तव्येनेत्यादिः व्याप्तिस्मरणानन्तरं पक्षधर्मताज्ञानकाले विशिष्टज्ञानकाले वा पुनः संशयो भविष्यति ततो निश्चय इत्याशङ्क्याह । विशेषदर्शनेति । विशेषदर्शनम् व्याप्यतया गृहीतस्य पक्षे निश्चयः । संशयायोगादिति । तदभावस्य कार्यसहभावेन हेतुत्वादिति भावः ।

यद्यपि परामर्शानन्तरं वह्निरित्याकारकस्मरणं कल्पयित्वा पक्षे उपनीतवह्निनिश्चयः शक्योपपादनस्तथापि तादृशकारणतायाः प्रामाणिकत्व एव तत्कल्पनमुचितं तदेव नेति वस्तुगतिम-

---

(१) 'तदन्यतद्विषयकोपस्थितेरित्यर्थः इति पाठादनन्तरं तदितरविशेष्यतानिरूपितप्रकारतान्यतद्विषयताकोपस्थितेरिति वा, विशेष्यताभेदेन प्रकारताभेदादुभयविशेष्यकविशिष्टबुद्धिसंग्रहात् इति पाठः कस्मिंश्चिदादर्शपुस्तके वर्त्तत इति ।

छतं पल्लवितेन ।

(चि०) स्यादेतत् पक्षधर्मस्य व्याप्यताज्ञानं नेन्द्रियेण वह्नेरसान्निकर्षे तन्नियतसामानाधिकरण्यस्य व्याप्यत्वस्यायोग्यत्वात् । न च धूमत्वेन सकलधूमव्याप्यतावगमात् धूमविशेषे संस्कारात् स्मरणाद्युपनीतव्याप्याभेदग्रहः प्रत्यभिज्ञाने तत्ताविशिष्टस्येवेति वाच्यम् । एवं हि धूमवत्त्वेन वह्निमत्त्वज्ञानात् धूमवद्विशेषे पर्वते संस्कारवशात् प्रत्यक्षेण व्याप्तिज्ञानापेक्षेण वह्निमदभेदग्रहो वह्निमत्त्वसंसर्गग्रहो वाऽस्तु किमनुमानेन । पृथक् वह्निमत्त्वस्मरणं तत्र नास्ति किन्तु व्याप्यत्वच्छेदकतयेति चेन्न। वह्निमान् वेति संशयानुरोधेन स्वतन्त्रवह्निमत्त्वस्मरणात् । न च विशिष्टज्ञाने स्वतन्त्रविशेषणज्ञानत्वेन हेतुत्वम्, गौरवात् ।

( दी० ) पृथगिति । न चैवं धारावाहिकोच्छेदः, इतरमात्राविशेषणत्वेनोपस्थितेरेव तन्त्रत्वात्, कोटिस्मरणस्य संशयेन तस्य च व्याप्तिस्मरणादिना नाशात् विशेषदर्शनकाले च संशयायोगादाह । न चेति । गौरवादिति । न चैवमभावविशेषणत्वेनोपस्थितस्यापि भावस्य ग्रहापत्तिः, अभावग्राहकसामग्र्या बलवत्या प्रतिबन्धात्, अभावाविशेषणत्वेनोपस्थितिस्तन्त्रमित्यपि कश्चित् । वस्तुतस्तु स्वतन्त्रविशेषणज्ञानस्य विशिष्टधीहेतुत्वेऽनुमित्यर्थमेव त्वयाऽपि तत्स्वीकरणीयं, न हि विशिष्टप्रत्यक्षं प्रस्येव तथात्वम्, मानाभावात् ।

( गा० ) किञ्चिदशे तदप्रकारकं विशेषणज्ञानमेव पृथग्विशेषणज्ञानमित्याशयेन शङ्कते । न चैवमिति । धारावाहिकोच्छेद इति । विशिष्टबुद्धिधारान्तःपातितृतीयादिविशिष्टबुद्ध्यनुपपत्तिरित्यर्थः । तत्पु-

र्घ निर्विकल्पकात्मकस्य विशेषणज्ञानस्य विनाशाद्विशिष्टबुद्धिरूपस्य तस्य विशेषणप्रकारकतया स्वातन्त्र्यविरहादिति भावः । समाधत्ते । इतरमात्रेति । तत्तदितरांशांशे तत्प्रकारकज्ञानाद्यदंशे तद्विशिष्टज्ञानोपपत्तये मात्रपदम्, तेन यद्धर्मिणि विशिष्टज्ञानं फलं तद्धर्मियंशे तत्प्रकारकं यत् तत्प्रकारकं तदन्यतद्विषयकोपस्थितेरित्यर्थः ।

यत्तु तदितरविशेष्यतानिरूपिततत्प्रकारतान्यतद्विषयताकोपस्थितेरित्येवार्थः, विशेष्यताभेदेन प्रकारताभेदादुभयविशेष्यकविशिष्टबुद्धिसंग्रहात् । तथा घटौ पटावित्यादिसमूहालम्बनविलक्षणे घटपटौ द्वावित्यादिज्ञाने उभयांशे एकत्रैव द्वित्वादिविशेषणमवगाहमाने विशेष्यभेदेऽपि द्वित्वादिप्रकारताया अभिन्नतया घटादीतरपटादिविशेष्यतानिरूपितत्वसत्त्वेन तज्ज्ञानस्य घटपटौ द्वावित्यादिज्ञानान्तराजनकत्वप्रसङ्गात् (१)।

स्वतन्त्रविशेषणज्ञानस्य विशिष्टधीहेतुत्वमभ्युपेत्य संशयार्थे स्वीकार्येण स्वतन्त्रवह्निस्मरणेन परामर्शोत्तर पक्षे तदुपनीतभाननिर्वाहे अपरितोषबीजं दर्शयन् विशेषणज्ञानहेतुतायां स्वातन्त्र्यप्रवेशे युक्तिविरहप्रदर्शकं त चेत्यादिमूलमवतारयति । कोटीति । संशयेन नाशादित्यग्रिमेणान्वयः। स्मरणनाशेऽपि संशयात्मकतादृशविशेषणज्ञानादेव निश्चयो भविष्यतीत्याशङ्क्याह । तस्य चेति । व्याप्तिस्मरणादिना इत्यस्य परामर्शार्थमुपगन्तव्येनेत्यादिः व्याप्तिस्मरणानन्तरं पक्षधर्मताज्ञानकाले विशिष्टज्ञानकाले वा पुनः संशयो भविष्यति ततो निश्चय इत्याशङ्क्याह । विशेषदर्शनेति । विशेषदर्शनम् व्याप्यतया गृहीतस्य पक्षे निश्चयः । संशयायोगादिति । तदभावस्य कार्यसहभावेन हेतुत्वादिति भावः ।

यद्यपि परामर्शानन्तरं वह्निरित्याकारकस्मरणं कल्पयित्वा पक्षे उपनीतवह्निनिश्चयः शक्योपपादनस्तथापि तादृशकारणतायाः प्रामाणिकत्व एव तत्कल्पनमुचितं तदेव नेति वस्तुगतिम-

(१) 'तदन्यतद्विषयकोपस्थितेरित्यर्थः इति पाठादनन्तरं तदितरविशेष्यतानिरूपितप्रकारतान्यतद्विषयताकोपस्थितेरिति वा, विशेष्यताभेदेन प्रकारताभेदादुभयविशेष्यकविशिष्टबुद्धिसंग्रहात् इति पाठः कस्मिंश्चिदादर्शपुस्तके वर्त्तत इति ।

तुल्य तादृशकारणत्वं मूलकृता निराकृतमिति भावः । मूले न चेति । न चेत्यर्थः । युक्तिसत्त्वे उक्तकारणतायाः स्वातन्त्र्यस्याधिकस्यावच्छेदकत्वं गौरवेण दुरुपपादमिति युक्तिं दीधितौ शङ्कते । न चैवमिति । एवम् । विशेषणज्ञानहेतुतावच्छेदकतायां स्वातन्त्र्यानिवेशे । भावस्य । घटादेः । ग्रहापत्तिः । भूतलं घटाभाववदित्यादिनिश्चयकाले भूतलादौ ग्रहापत्तिः । तादृशापत्तिं परिहरति । अभावग्राहकेति । बलवत्त्वेति । तुल्यबलसामग्रीदशायां सशयोत्पत्त्या इष्टापत्तिरेवेति भावः । न च तादृशसामग्र्याः प्रतिबन्धकत्वमप्रामाणिकमिति वाच्यम् । स्वातन्त्र्यविशेषणज्ञानसत्त्वे कदाचित् (१) तथाविधनिश्चयकाले घटादिग्रहापत्तेः ।

कस्यचित् समाधानमुपन्यस्यति । अभावेति । उक्तक्रमेणैव (२) उपपत्तावभावविशेषणत्वप्रवेशे गौरवमन्याय्य तथा सति (३) वह्न्यभाववद्वृत्तित्वरूपव्याप्तिघटकतया वह्निविषयकज्ञानाद्युपनीतभानानिर्वाहश्चात्रास्वरसबीजम् । विशिष्टबुद्धिसामान्यहेतुतायां स्वातन्त्र्यानिवेशेन स्वतन्त्रविशेषणज्ञानं विनाऽनुमितिमङ्गीकुर्वाणस्य शङ्कास्पदमपि नेति प्रत्यक्षे तन्निवेशेन कारणत्वान्तरक्लृप्तिर्निर्युक्तिकमित्याह । वस्तुतस्त्वित्यादि । मानाभावादिति ।

अथ ज्ञानत्वस्य स्मरणेश्वरज्ञानवृत्तितया अनुभवत्वस्य चेश्वरज्ञानवृत्तितया जन्यतावच्छेदकत्वासम्भवात् तद्व्यावृत्त विशिष्टविषयकविजातीयप्रत्यक्षत्वमेव विशेषणज्ञानजन्यतावच्छेदकं वाच्यमिति कथं मानाभाव इति चेत् ? अनुभवत्वजातेरीश्वरज्ञानवृत्तित्वे मानाभावादनुमितिसाधारणविशिष्टानुभवत्वेनैव विशेषणधीजन्यत्वोपगमात् अन्यथा अनुमितौ कारणत्वान्तरकल्पनापत्तेः प्रत्यक्षत्वस्यापि ईश्वरज्ञानवृत्तित्वे मानाभावाच्च न सङ्करप्रसङ्गः । न चेश्वरज्ञाने प्रत्यक्षत्वानङ्गीकारे तस्य जन्यमात्रं प्रति उपादानगोचरलौकिकप्रत्यक्षत्वेन हेतुत्वानुपपत्तिरिति वाच्यम् । उपादानप्रत्यक्षहेतुतायां लौकिकविषयतायाः प्रत्यासत्तित्वावश्यकत्वेन

---

( १ ) विशेषादर्शनकाल इत्यर्थः ।
( २ ) सामग्रीप्रतिबन्धकतयैवेत्यर्थः ।
( ३ ) गौरवस्य न्याय्यत्वे ।

ज्ञानत्वस्यावच्छेदकत्वसम्भवात् भ्रमवज्ज्ञाने प्रत्यक्षत्वानङ्गीकारेऽपि क्षतिविरहात् लौकिकाविषयतायाः प्रत्यक्षत्वव्याप्यमात्रनिरूपितत्वे मानाभावादीश्वरज्ञाने प्रत्यक्षत्वव्यवहारस्य लौकिकविषयतावत्त्वनियन्धनत्वेनौपचारिकत्वादिति ।

**( चि० ) अथ यो यत्र विशिष्य पूर्वमवगतः स तत्र संस्कारवशाद्यथार्थप्रत्यक्षे भासते यथा तत्ता प्रत्यभिज्ञाने । न च पर्वते विशिष्य पुरा वह्निरवगतः । यत्र चन्दने सौरभमुपलब्धं तत्र संस्कारवशाच्चक्षुषा सुरभि चन्दनमिति ज्ञानमन्यथानुमितिरिति चेत्तर्हि, पक्षधर्मधूमेऽपि न पुरा विशिष्य व्याप्तिरवगतेति कथं संस्कारवशात्तद्गतव्याप्तिबोधः प्रत्यक्षेण ।**

( दी० )तर्हीत्यादि । वस्तुतो यत्र क्वचिदपि गृहीतस्य धर्मिणि साधारणधर्मदर्शनात् स्मृतस्य संशयादिसाधारणी विशिष्टधीः । इयांस्तु विशेषो यत्कोटिद्वयसहचरितधर्मदर्शनात् कोटिद्वयस्मरणे संशयोऽन्यथा त्वेककोटिनिश्चय इति । एतेन धूमत्वादिना पक्षधर्मे व्याप्तिमनुमाय वह्न्याद्यनुमितिरिति परास्तम् । धूमत्वाद्यनुपस्थित्या धूमत्वादेर्वह्निव्याप्तिव्याप्यत्वाग्रहे वह्न्यनुमितिप्रसङ्गाच्च । एतेन यद्धर्मावच्छेदेन यद्वत्त्वं गृहीतमुपनयवशात् तद्धर्मविशिष्ट एव तद्भासते धूमवत्त्वावच्छेदेन च वह्निमत्त्वग्रहाद्धूमवानेव वह्निमानिति बुद्धिः स्यात् न तु पर्वतो वह्निमानित्यपि परास्तम् । मानाभावात्, चन्दनत्वाद्यवच्छेदेन गृहीतस्य सौरभादेः पुरोवर्तिनि चन्दनत्वादिदर्शनादिदं सुरभि इत्यादिबुद्धौ व्यभिचाराच्च । यदि चावच्छेदकधर्मवैशिष्ट्यमपि तत्र भासत इति नियमोऽपि तत्र प्रामाणिकस्तदा धूमवानयं पर्वतो वह्निमानित्येव धीरस्तु, न हि लिङ्गोपधानमाने बाधक-

मन्यत्, साधकविरहात् ।

( गा० ) ननु तर्हीत्यादिमूलमयुक्तं तथा हि यो यत्र विशिष्ये-त्यादिनियमे विशिष्यत्वस्य तन्मात्रवृत्तिधर्मप्रकारेणेति नार्थः, प-रन्तु फलीभूतग्रहधर्मितावच्छेदकप्रकारेणेत्येव,एवञ्च पर्वतीयधूम-त्वादिना व्याप्यग्रहेऽपि धूमत्वेन पर्वतीयधूमे सामान्यलक्षणया व्या-प्तिग्रहात् वह्निव्याप्यधूमवान् पर्वत इति परामर्शो नानुपपन्न इत्याश-ङ्कय उक्तनियमे बाधकान्तरमाह । वस्तुत इति । यत्र क्वचिदपीति । फलीभूतज्ञानाविषये धर्ममात्रे इत्यर्थः । धर्मिणि । फलीभूतग्रहवि-षयधर्मिणीत्यर्थः । संशयादीत्यादिना निश्चयपरिग्रहः ।

नन्वपूर्वे धर्मिणि संशय एव स्वीक्रियते न तूपनीतधर्मनिश्च-यः, यश्च संशय इव तत्रैव सति व्याप्यदर्शने निश्चयोऽनुभूयते स तु आनुमानिक एव व्याप्यदर्शनस्यास्माकमनुमितिहेतुत्वादिति निश्च-यात्मकोपनीतभाने कथितनियमो निराबाध एवेति कदाचित् ब्रूया-दिति शङ्कया यादृशसामग्र्या कोट्यन्तरभासकसामग्रीकाले संश-यात्मकतत्कोटिविशिष्टधीर्जन्यते तादृशसामग्रीतः असत्यां विपरीत-कोटिभानसामग्र्यां तत्कोटिनिश्चयोऽनुभवसिद्धतया दुरपह्नवः विप-रीतकोटिभानसामग्रीविगमश्च विशेषदर्शनादिव तत्कोट्यस्मरणादपी-ति एककोटिमात्रस्मरणे व्याप्यदर्शनं , विनाप्येककोटिनिश्चयोत्पत्त्या नोक्तनियमो निश्चयदशायां (१)सम्भवतीत्याह । इयांस्त्विति। तुर-वधारणे । तथा चैतावानेव संशयनिश्चययोरुत्पत्तौ विशेष इत्यर्थः । एतेन । अपूर्वधर्मिविषयकसंशयादौ व्यभिचारस्य दुर्वारत्वेन । व्या-प्तिमनुमायेति। तथा च पर्वतीयधूमे विशिष्य प्रागगृहीताया व्याप्तेस्त-त्रोपनीतभानानभ्युपगमादुक्तनियमो दुर्वार एवेति भावः । सर्वत्र व्याप्त्यनुमितिरपि न सम्भवतीति मूलोक्तदूषणं दर्शितरीत्या दुरु-द्धरमित्याह । धूमत्वत्वेति । व्याप्तिव्याप्यत्वाग्रह इति । व्याप्तिव्याप्य-त्वेनानिश्चयस्थले इत्यर्थः व्याप्यतावच्छेदकानिर्णयं विना व्याप्तेर्दुर्नि-श्चयत्वादिति भावः । वह्न्यनुमितीति । व्याप्त्यनुमानासम्भवादिति भावः । एतेन । दर्शितसंशयाद्यनुपपत्त्योक्तनियमस्यैव (२)तत्समर्थी-

(१) निश्चयमात्रायापीति पु० पा० ।
(२) दर्शितसंशयाद्यनुरोधेन उक्तनियमस्यैवेति पु० पा० ।

लस्य नियमान्तरस्याप्यनभ्युपगमेन । यद्यद्धर्म्मावच्छेदेनेति पर्वतीयधूमे विशिष्य व्याप्त्यग्रहेऽपि धूमत्वावच्छेदेन व्याप्तेर्ग्रहान्न विशिष्टपरामर्शानुपपत्तिरिति भावः । अवच्छेदकधर्मदर्शनाधीनोपनीतभानमादाय नियमोपगमाद्दर्शितसंशयादावपि व्यभिचारोऽपि शक्यते वारयितुमित्याशङ्क्य अप्रयोजकतामप्याह । मानाभावादिति । अवच्छेदकधर्म्मदर्शनाधीने अपूर्वधर्मितावच्छेदकविशिष्टविषयकनिश्चये व्यभिचाररूपं बाधकमप्याह । चन्दनत्वेति । सौरभादेः । बुद्धाविरयग्रिमेणान्वयः । व्याप्तिप्रकारेण चन्दनत्वादेरग्रहान्न तत्र सौरभानुमितिसम्भव इति भावः ।

ननु तद्धर्मविशिष्टे एव तद्भासते इत्यस्य तदन्यधर्मविशिष्टे न भासते इति नार्थः, किन्तु तद्धर्म्माविशिष्टे न भासत इत्येवार्थः, एवञ्चोक्तस्थले इदं चन्दनं सुरभीत्येवोपनीतभानमुपेयते इत्यतो न व्यभिचार इत्यत आह । यदि चेति । इत्येव धीरस्त्विति । उपनीतप्रत्यक्षरूपा एतादृशी धीरेवानुमितिकार्यकारिणी भवत्वित्यर्थः ।

ननु लिङ्गोपधानमतस्य बाधकाभावान्न तादृशोपनीतभानस्वीकारसम्भव इत्यत आह । न हीति । साधकविरहादिति । उपनीतभानोपगन्तॄणां दर्शितनियम एव लिङ्गोपधाने साधक इति भावः ।

( चि० ) न च सहचारदर्शनजन्यसंस्कारसहितेनेन्द्रियेण व्यभिचारज्ञानाभावे सति महानसीयधूमवत् पर्वतीयधूमे व्याप्त्यवगमो वह्नेस्तु न प्रत्यक्षसामग्री सन्निकर्षाभावादिति वाच्यम् । हेतुसाध्यसाक्षात्कारं विना प्रत्यक्षेण व्याप्त्यग्रहात् । न च पर्वते वह्निसाक्षात्कारः । न च पक्षधर्मस्य साध्यसामानाधिकरण्यविशेषो व्याप्तिः पक्षे साध्यग्रहं विनेत्युक्तम् ।

उच्यते । विशेषणज्ञानं तस्य विशेष्ये सम्बन्धस्तयोरसंसर्गाग्रहो विशेषदर्शने विशेषणविशेष्येन्द्रिय-

मन्यत्, साधकविरहात् ।

( मा० ) ननु तद्धर्म्यादिमूलमयुक्तं तथा हि यो यत्र विशिष्टे इत्यादिनियमे विशिष्यत्वस्य तन्मात्रवृत्तिधर्मप्रकारेणेति नार्थः, परन्तु फलीभूतग्रहधर्मितावच्छेदकप्रकारेणेत्येव, एवञ्च पर्वतीयधूमत्वादिना व्याप्यग्रहेऽपि धूमत्वेन पर्वतीयधूमे सामान्यलक्षणया व्याप्तिग्रहात् वह्निव्याप्यधूमवान् पर्वत इति परामर्शो नानुपपन्न इत्याशङ्क्य उक्तनियमे बाधकान्तरमाह । वस्तुत इति । यत्र कचिदपीति फलीभूतज्ञानाविषये धर्ममात्रे इत्यर्थः । धर्मिणि । फलीभूतग्रहविषयधर्मिणीत्यर्थः । संशयादीत्यादिना निश्चयपरिग्रहः ।

नन्वपूर्वे धर्मिणि संशय एव स्वीक्रियते न तूपनीतधर्मनिश्चयः, यत्र संशय इव तत्रैव सति व्याप्यदर्शने निश्चयोऽनुभूयते स तु आनुमानिक एव व्याप्यदर्शनस्यास्माकमनुमितिहेतुत्वादिति निश्चयात्मकोपनीतभाने कथितनियमो निराबाध एवेति कदाचित् ब्रूयादिति शङ्कया यादृशसामग्र्या कोट्यन्तरमात्रकसामग्रीकाले संशयात्मकतत्कोटिविशिष्टधीर्जन्यते तादृशसामग्रीतः असत्यां विपरीतकोटिभानसामग्र्यां तत्कोटिनिश्चयोऽनुभवसिद्धतया दुरपह्नवः विपरीतकोटिभानसामग्रीविगमश्च विशेषदर्शनादिव तत्कोट्यस्मरणादपीति एककोटिमात्रस्मरणे व्याप्यदर्शनं विनाऽप्येककोटिनिश्चयोत्पत्त्या नोक्तनियमो निश्चयदशायां (१)सम्भवतीत्याह । इयांस्त्विति । तुरवधारणे । तथा चैतावानेव संशयनिश्चययोरुत्पत्तौ विशेष इत्यर्थः । एतेन । अपूर्वधर्मिविषयकसंशयादौ व्यभिचारस्य दुर्वारत्वेन । व्याप्तिमनुमायेति । तथा च पर्वतीयधूमे विशिष्य प्रागगृहीताया व्याप्तेस्तत्रोपनीतभानानभ्युपगमादुक्तनियमो दुर्वार एवेति भावः । सर्वत्र व्याप्त्यनुमितिरपि न सम्भवतीति मूलोक्तदूषणं दर्शितरीत्या दुरुद्धरमित्याह । धूमत्वत्वेति । व्याप्तिव्याप्यत्वाग्रह इति । व्याप्तिव्याप्यत्वेनानिश्चयस्थले इत्यर्थः व्याप्यतावच्छेदकानिर्णयं विना व्याप्तेर्दुर्निश्चयत्वादिति भावः । बह्वनुमितीति । व्याप्त्यनुमानासम्भवादिति भावः । एतेन । दर्शितसंशयाद्युपपत्त्योक्तनियमस्यैव (२)तत्समर्थी·

(१) निश्चयमात्रायामपीति पु० पा० ।

(२) दर्शितसंशयाद्यनुरोधेन उक्तनियमस्यैवेति पु० पा० ।

लस्य नियमान्तरस्याप्यनभ्युपगमेन । यद्धर्म्मावच्छेदेनेति पर्वतीयधूमे विशिष्य व्याप्त्यग्रहेऽपि धूमत्वावच्छेदेन व्याप्तिग्रहान्न विशिष्टपरामर्शानुपपत्तिरिति भावः । अवच्छेदकधर्मदर्शनाधीनोपनीतभानमादाय नियमोपगमाद्दर्शितसंशयादावपि व्यभिचारोऽपि शक्यते धारयितुमित्याशङ्क्य अप्रयोजकतामप्याह । मानाभावादिति । अवच्छेदकधर्मदर्शनाधीने अपूर्वधर्मितावच्छेदकविशिष्टविषयकनिश्चये व्यभिचाररूपं बाधकमप्याह । चन्दनत्वेति । सौरभादेः । बुद्धावित्यग्रिमेणान्वयः । व्याप्तिप्रकारेण चन्दनत्वादेरग्रहान्न तत्र सौरभानुमितिसम्भव इति भावः ।

ननु तद्धर्मविशिष्टे एव तद्भासते इत्यस्य तदन्यधर्मविशिष्टे न भासते इति नार्थः, किन्तु तद्धर्म्माविशिष्टे न भासत इत्येवार्थः, एवञ्चोक्तस्थले इदं चन्दनं सुरभीत्येवोपनीतभानमुपेयते इत्यतो न व्यभिचार इत्यत आह । यदि चेति । इत्येव धीरस्त्विति । उपनीतप्रत्यक्षरूपा एतादृशी धीरेवानुमितिकार्यकारिणी भवत्वित्यर्थः ।

ननु लिङ्गोपधानमत्रस्य बाधकस्यासान्न तादृशोपनीतभानस्वीकारसम्भव इत्यत आह । न हीति । साधकविरहादिति । उपनीतभानोपगन्तॄणां दर्शितनियम एव लिङ्गोपधाने साधक इति भावः ।

( चि० ) न च सहचारदर्शनजन्यसंस्कारसहितेनेन्द्रियेण व्यभिचारज्ञानाभावे सति महानसीयधूमवत् पर्वतीयधूमे व्याप्त्यवगमो वह्नेस्तु न प्रत्यक्षसामग्री सन्निकर्षाभावादिति वाच्यम् । हेतुसाध्यसाक्षात्कारं विना प्रत्यक्षेण व्याप्त्यग्रहात् । न च पर्वते वह्निसाक्षात्कारः । न च पक्षधर्मस्य साध्यसामानाधिकरण्यविशेषो व्याप्तिः पक्षे साध्यग्रहं विनेत्युक्तम् ।

उच्यते । विशेषणज्ञानं तस्य विशेष्ये सम्बन्धस्तयोरसंसर्गाग्रहो विशेषदर्शने विशेषणविशेष्येन्द्रिय-

सन्निकर्षो गौरयमित्यादियथार्थविशिष्टप्रत्यक्षकारणम्, अस्ति चात्रापि व्याप्तिस्मरणं स्मृतव्याप्तेः पक्षवृत्तिधूमे सत्त्वात्।

(दी०) हेतुसाध्येति। सम्बन्धिद्वयानिरूप्यपदार्थप्रत्यक्षं प्रति सम्बधिद्वयप्रत्यक्षस्य हेतुतायाः संयोगादिस्थले त्वयैव क्लृप्तत्वात् तदनादरेऽपि साध्यघटितमूर्त्तिकव्याप्तिप्रत्यक्षस्य साध्यप्रत्यक्षसामग्रीं विना असम्भवादिति भावः। विशेषणेत्यादि विशेषणविशेष्यसम्बन्धस्तदंशे प्रमात्वे लौकिकत्वे वा विशेषदर्शनस्य विपरीतज्ञानप्रतिबन्धकतया क्वचित् क्वचित्सहचरितधर्मदर्शनत्वेन विशेषणस्मारकतया विशेषणस्य च ज्ञानसत्त्वेऽप्यतिरिक्तसन्निकर्षस्तदंशे लौकिकतायामुपयुज्यते।

(गा०) व्यभिचारादर्शनसहकृतसहचारदर्शनरूपव्याप्तिग्राहकसद्भावान्महानसीयधूम इव पक्षीयधूमेऽपि सन्निकृष्टे व्याप्तेर्लौकिकप्रत्यक्षमेव स्वीक्रियते न तूपनीतभानमिति कथं यो यत्रेत्यादिनियमे सत्येव विशिष्टपरामर्शानुपपत्तिरित्याशङ्कां निरस्यति मूले, न चेत्यादिना। हेतुसाध्योभयसाक्षात्कारस्य व्याप्तिप्रत्यक्षापेक्षणीयतां मूलोक्तामुपपादयति दीधितौ सम्बन्धीति। मीमांसकमते संसर्गावि[illegible]कवस्तुव्यवहार एव सम्बन्धिप्रत्यक्षस्य हेतुता न [illegible] तत्प्रत्यक्षेऽतः त्वयैवेति। नैयायिकेनैवेत्यर्थः। क्लृप्तत्वादित्यस्य यत्किञ्चिदेकसम्बन्धिग्रहाविरोधीन्द्रियसन्निकर्षदोषसमवधानादिदशायां प्रत्यक्षवारणायेत्यादिः।

ननु सम्बन्धिद्वयप्रत्यक्षस्य हेतुत्वेऽपि यत्र सम्बन्धिप्रत्यक्षोत्पत्तिक्षणे तत्सामग्रीविरहस्तत्र तद्द्वितीयक्षणतृतीयक्षणयोः संयोगादिप्रत्यक्षापत्तिः सम्बन्धांशे लौकिकप्रत्यक्षात्मकस्य संयोगादिलौकिकप्रत्यक्षस्यानुभवविरुद्धतया इष्टापत्तेरयोगादिति सम्बन्धिग्राहकसामग्र्या हेतुताया आवश्यकत्वे सम्बन्धिसाक्षात्कारहेतुतायां मानाभाव इत्यपरितोषात्सम्बन्धिप्रत्यक्षसामग्र्यभावस्यैव प्रकृते व्याप्तिप्रत्यक्षाविरोधितामाह। तदनादरेऽपीति। साध्यघटितमूर्त्तिके-

त्यनेन व्याप्तिप्रत्यक्षे साध्यमानानुरोधेनापि साध्यसन्निकर्षाद्यपेक्षे-
ति सूचितम् । भ्रमात्मकविशिष्टज्ञाने विशेष्ये विशेषणसम्बन्धस्या-
नपेक्षणात् प्रमात्वोपयोगितया तत्परिगणनं सङ्गमयति । विशेषणेति ।
तदंशे । विशेषणविशेष्यसम्बन्धांशे, न तु विशेषणांशे, संयोगेन द्र-
व्यविशेषणकस्थले विशेष्ये विशेषणसंयोगस्य संयोगसम्बन्धेन
विशेषणप्रमात्वनिर्वाहकत्वेऽपि इन्द्रियासंयुक्तविशेषणसंयोगस्य
लौकिकसन्निकर्षानात्मकतया विशेषणांशे लौकिकत्वानुपयोगित्वेन
लौकिकत्वे वा इन्यत्रैतदन्वयानुपपत्तेः । सम्बन्धांशे प्रमात्वञ्च
सम्बन्धघटितं प्रमात्वम्, अत्र च विशेष्यविशेषणसम्बन्धस्य त-
दानीमविद्यमानत्वेऽपि दण्डवयमासीदित्यादिप्रमोत्पत्तेः प्रमात्वे
यदा कदाचित् सम्बन्धस्य उपयोगितापरमिदम् । विद्यमानसम्ब-
न्धस्य उपयोगितापरत्वाभिप्रायेण कल्पान्तरमाह । [१]लौकिकत्वे
चेति । उपयुज्यते इत्यग्रिमेणान्वयः । लौकिकत्वमपि सम्बन्धांशे बो-
ध्यम् । विशेष्ये विशेषणसम्बन्धस्य सम्बन्धे विशेष्यघटितलौ-
किकसन्निकर्षसम्पादकतया लौकिकत्वेऽपयोगिता । अथ वा तदंश
इत्यस्य विशेषणांश इत्येवार्थः । विशेष्ये विशेषणसम्बन्धस्य
विशेषणांशे लौकिकत्वोपयोगिता तु समवायेन गुणादिविशिष्ट-
बुद्ध्यभिप्रायेण । द्वितीयकल्पे विशेष्यपदञ्च सन्निकृष्टधर्मिमात्रपरं,
अतो अनुभूयमानांशे विशेष्यविशेषणसम्बन्धासत्त्वेऽपि विशेष-
णांशे लौकिकत्वादसङ्गतेर्नावकाशः । लौकिकपदस्य प्रमात्वघट-
कलौकिकविषयतापरतया यथाश्रुतमेव वा समर्थनीयम् । वि-
शेषदर्शनस्य स्वमते निश्चयविशेषस्याहेतुतया उपयोगिताप्रकार-
माह । विशेषदर्शनञ्चेति । क्वचिदिति । विपरीतकोटिभासकतदुपस्थि-
त्यादिकालीननिश्चय इत्यर्थः । अत्राप्युपयुज्यत इति सम्बध्यते ।
क्वचिदिति । प्रकारान्तरेण यत्र न विशेषणज्ञानं तत्रत्यविशिष्टज्ञा-
ने इत्यर्थः । दर्शनत्वेनेत्यन्तं स्मारकतायां हेतुः-स्मारकतया उ-
पयुज्यते इति सम्बन्धः । एवञ्च विशिष्टप्रत्यक्षनिर्वाहकाणामेव
कीर्तनमिदं न तु तत्कारणमात्रस्यैवेति भावः विशेषणज्ञानस्यै-

(१) दण्डवयमासीदित्यादिप्रमोत्पत्तिरित्यपरितोषाद कल्पा-
न्तरमाहेति पु० पा० ।

य विशेषणभासकसन्निकर्षत्वात् सन्निकर्षान्तरकथनं किमर्थमित्यत आह। विशेषणस्य चेति। तदंशे। विशेषणांशे। लौकिकतायामिति। इत्थञ्च मूले सन्निकर्षपदं लौकिकसन्निकर्षपरमित्यपि बोध्यम्। व्याप्तिप्रविष्टचरमांशस्य व्याप्यत्वैक्यमते धूमत्वरूपस्य सन्निकर्षोऽवेष भानात्मकत्वे व्याप्तिविशिष्टप्रत्यक्षसामग्रीघटकत्वमपि विशेषणलौकिकसन्निकर्षस्येत्यविरोधः।

( चि० ) एकैव हि सा व्याप्तिः तयोरसंसर्गाग्रहो धूमत्वविशेषदर्शनं व्याप्तिविशिष्टधूमेन्द्रियसन्निकर्षश्च व्याप्तिविशिष्टज्ञानकारणम्। न च वह्निविशिष्टज्ञानसामग्री, वह्नेरसन्निकर्षात्। कश्चित्तु धूमत्वे परम्परासम्बन्धेन वह्निव्याप्यत्वं पूर्वं गृहीतं तथा च संस्कारोपनीतं वह्निव्याप्यत्वं परम्परासम्बन्धेन पक्षवृत्तिधूमत्वे प्रत्यभिज्ञायते तद्वृत्तित्वेन पूर्वमननुभवात् एवञ्च धूमत्वव्याप्यधूमवत्त्वादेवानुमितिरिति प्राह।

( टी० ) एकैव हीति। वस्तुतो व्याप्तिभेदेऽपि न क्षतिः। सामान्यतो व्याप्तित्वेन गृहीतानां सकलव्याप्तीनां तथैव स्मरणसम्भवात्। वह्नेरसन्निकर्षादिति। नन्वेतयात्मकसन्निकर्षेणैव नयनेन निरूप्यतां हुताशनः, न हि वह्निरिन्द्रियेण द्रव्यस्याधेयतया तद्वत्त्वस्य वा ग्रहे तत्संयोगो हेतुः दण्डी पुरुषो नास्तीत्यादौ व्यभिचारात्, कथमन्यथा पक्षधर्मे वह्निमत्त्वगर्भिता व्याप्तिरेव गृह्यते। न चाधेयतया मुख्यविशेष्यं साक्षात् द्रव्यग्रहे तत्संयोगो हेतुः अभेदारोपे च नाधेयतया रजतादिकं प्रकारो दण्डाद्यात्मकतत्तावगाहिप्रत्यभिज्ञायाञ्च तथावदभेदो भासत इति दण्डादेः साक्षात्प्रकारतेति वाच्यम्। मानाभावात्, धूमवान् वह्निमानिति सामान्यलक्षणया ग्रहे व्यभिचारात् तत्रासंसर्गस्या-

पि प्रत्यभिज्ञायां भानसम्भवात् प्रकृतेऽपि वह्निपदभेदग्रहेणैव कृतार्थत्वाच्च । एतेन तत्ताकारानुपनीततादृशद्रव्यग्रहे स हेतुरिति निरस्तम् । चैत्रपदवाच्योऽयमित्यादिवत् दण्ड्ययमासीदयं दण्डीत्यादिग्रहस्यानुभविकत्वात् तत्तात्वस्यातिरिक्तस्याभावात् तच्छब्दप्रयोगजननाभावस्य च निमित्तान्तरविरहप्रयुक्तस्य जन्यतानवच्छेदकत्वात् तज्जननयोग्यतायाः प्रकृतेऽपीष्टत्वात् । अत एव तदिन्द्रियग्राह्यविद्यमानद्रव्यस्य तेन ग्रहे तत्संयोगो हेतुरिति निरस्तम् । नयनादिना रजतादेरभावग्रहाभेदारोपादौ व्यभिचाराच्च ।

(गा०) एकैव हीत्यादिमूल परमतसिद्धसामान्यप्रत्यासत्त्यभावमभ्युपेत्य, सामान्यलक्षणासत्त्वे व्याप्त्यैक्यस्यानुपयोगितां दीधितिकृदाह । वस्तुत इति । परमार्थत इत्यर्थः । एतेन यदि सामान्यप्रत्यासत्त्यभावोऽभ्युपगम्यते तदा क्षतिरेवेति सूचितम् । न च यो यत्रेत्यादिनियमोपगमेनैव पर्वतीयधूमे वह्निव्याप्तिविशिष्टप्रत्यक्षसामग्री सम्भवति न तु पर्वते वह्निविशिष्टप्रत्यक्षसामग्रीति विशेषव्युत्पादनं मूलकृत उपपद्यते नियमानभ्युपगमे ज्ञानसन्निकर्षघटितसामग्र्या उभयत्राविशेषेण विशेषोक्तेरत्यन्तासम्भवात् तथा च व्याप्तेर्धूमत्वादिरूपत्व एव पक्षीयधूमे तदंशस्य लौकिकसन्निकर्षादेव भानात् धूमत्वांशे वह्निसमानाधिकरणधूमवृत्तित्वस्यैव ज्ञानसन्निकर्षग्राह्यतया तत्र च तथाविधमहानसीयधूमवृत्तित्वस्य तन्मात्रवृत्तिधूमत्वत्वप्रकारेण पूर्वं गृहीतत्वादुक्तनियमो निर्वहति, न तु व्याप्तेः सामानाधिकरण्यरूपत्वे तथा च व्याप्तेरैक्ये मूलकृतो निर्भर एवेति दीधितिकृतां व्याप्तिभेदपक्षे क्षत्यभावाभिधानविरोध इति वाच्यम् । मूलकृता स्मृतव्याप्तेः पक्षधर्मधूमसत्त्वहेतुतया व्याप्तेरैक्याभिधानात् न क्षतिरिति ग्रन्थे क्षतिपदस्य पक्षीयधूमे स्मृतव्याप्यत्वरूपक्षतिपरतया व्याप्तेर्नानात्वे उक्तनियमभङ्गरूपक्षतिसत्त्वेऽपि तद्ग्रन्थाविरोधात् ।

केचित्तु ननु व्याप्तिभेदेऽपि सामान्यप्रत्यासत्त्या सकलव्या-

त्यनुभवात् स्मृतव्याप्तेः पक्षवृत्तिधूमे सत्त्वमुपपद्यत इति किमर्थम् एकैव हीत्युक्तमित्यनुशयस्य स्वयमेव वक्ष्यमाणत्वादाह । वस्तुत इति । वस्तुगत्येत्यर्थः । भेदेऽपीत्यनेनान्वयः । सामान्यतः । सामान्यप्रत्यासत्तिबलात् । तथैव । व्याप्तित्वेनैव । तथा च धूमनिष्ठस्वव्यापकवह्निसामानाधिकरण्यरूपैव व्याप्तिरिहाभिप्रेता, प्रतियोगितावच्छेदकादीनामैक्याच्च उपचारादेकपदप्रयोग इति व्याप्तिवादोक्तमेवानुसरणीयम् । न च प्रतियोगितावच्छेदकानामैक्यस्याकिञ्चित्करतया तत्प्रतिपादनमात्रफलस्योपचारस्य वैयर्थ्यमिति वाच्यम् । सखण्डे परम्परासम्बन्धेन अखण्डस्यैव प्रत्यासत्तितया तादृशवह्निमत्त्वादिरूपसामान्यप्रत्यासत्त्या निखिलवह्निमदादिभानेन व्याप्तित्वेन व्याप्तिप्रत्यक्षस्य सकलव्याप्तिविषयकत्वलाभार्थं उपचारानुसरणात् अन्यथा जातिलिङ्गतावादिमतोक्तसामान्यलक्षणानुपयोगरूपदोषस्य स्वमतेऽपि सत्त्वात्सङ्गत्यापत्तेः । एवञ्च सिद्धान्तलक्षणे एतन्मूलग्रन्थसङ्गतार्थतया वस्तुत इत्यादिफक्किकावर्णनं भ्रमविजृम्भितमेवेत्याहुः (१) ।

उक्तनियमसत्त्वे पक्षवृत्तिधूमासन्निकर्षदशायां धूमत्वरूपव्याप्तेरपि तत्रोपनयेनैव ग्रहस्य स्वीकरणीयतया तत्स्थलीयमानसविधिविषयपरामर्शानुरोधेन उक्तनियमो ऽनुमानप्रामाण्यवादिनापि न स्वीकरणीय एवेत्याशयेन सामान्यप्रत्यासत्तिपक्षमालम्ब्य पूर्वपक्षयति । नन्विति । निरूप्यताम् । निश्चीयताम् ।

मिश्रमतं निराकरोति । न हीति । बहिरिन्द्रियेण द्रव्यस्याधेयतया ग्रहे । आधेयत्वविषयितावच्छिन्नद्रव्यविषयिताशालिबहिरिन्द्रियजन्यज्ञानसामान्ये । प्रतियोगितया उपनीतघटादिविषयके घटो नास्तीति चाक्षुषादौ व्यभिचारवारणाय आधेयतयेति । मानसे ह्रदादिस्वपदत्वादिविषयकस्वप्रज्ञाने व्यभिचारवारणाय बहिरिन्द्रियेणेति । गुणादिगोचरचाक्षुषादौ तद्वारणाय द्रव्यस्येति । आधारत्वाधेयत्वयोस्तुल्यवित्तिवेद्यत्वाभावे पर्वतो वह्निमानित्यादिज्ञानसंग्रहाय तद्द्वत्त्वस्य चेति । द्रव्याधारत्वस्येत्यर्थः । अत्रापि बहिरिन्द्रियेण इत्यनुषज्यते । तथा चैतन्मते आधारत्वविषयिता-

(१) केचिदित्यादिराहुरित्यन्तः पाठः केषुचिदादर्शपुस्तकेषु नास्ति ।

निरूपितद्रव्यविषयिताशालिबहिरिन्द्रियजन्यज्ञानत्वं कार्यतावच्छेदकम् । वस्तुतस्तु त्वगिन्द्रियादिसंयोगाच्चाक्षुषाद्यनुत्पत्त्या चक्षुःसंयोगत्वादिनैव हेतुता वाच्या, तथा च चाक्षुषत्वादिकमेव कार्यतावच्छेदके निवेशनीयं न तु बहिरिन्द्रियजन्यज्ञानत्वम् । इत्यादाविति । इत्याद्युपनीतदण्डादिमत्त्वावगाहिनि तद्विशिष्टविशेषणकाभावचाक्षुषादावित्यर्थः । फलापलापमाशङ्क्य निराकरोति । कथमिति । अन्यथा । असन्निकृष्टद्रव्यवत्त्वस्य विशेषणांशेऽप्यभाने । मुख्यविशेष्ये वृत्तिनियामकसम्बन्धेन साक्षात् द्रव्यप्रकारकत्वं कार्यतावच्छेदकं वक्तव्यमतो विशेषणांशे द्रव्यवत्त्वावगाहिन्युक्तस्थले न व्यभिचार इत्याशङ्कां निराकरोति । न चेति । पक्षधर्मे व्याप्तेः प्रकारत्वे परम्परया व्याप्तिघटकवह्नेरपि प्रकारत्वात् तत्र व्यभिचारवारणाय साक्षादिति । आधेयतयेत्यस्य व्यावृत्तिमाह । अभेदारोप इति । स्मर्यमाणरजतस्याभेदेनारोप इत्यर्थः । आधेयतया । वृत्तिनियामकसम्बन्धेन । भूतले घटाभाव इत्याद्यभावचाक्षुषेऽपि व्यावृत्तिर्बोध्या ।

नन्वेवमपि इदन्त्वविशिष्टमुख्यविशेष्यकदण्डाद्यात्मकतत्ताप्रत्यभिज्ञाने व्यभिचार इत्यत आह । दण्डेति । तत्तावदभेदो भासते न तु तत्तादिसंसर्ग इति शेषः । तावतापि सोऽयमित्याकारकतानिर्वाहादिति भावः । मानाभावादिति । तादृशकारणतायामित्यादिः । सामान्यप्रत्यासत्त्यजन्यत्वस्य कार्यतावच्छेदके निवेशान सामान्यप्रत्यासत्तिजन्यप्रत्यक्षे न व्यभिचार इत्यत आह । तच्चेति । भानसम्भवात् । भाने युक्तिसम्भवात् । तदनुपगमे तत्तासंसर्गाभावसंशयनिवृत्त्यनुपपत्तेरिति भावः । यदि तत्तावदभेदग्रहोऽपि तादृशसंशयादिविरोध्युपेयते तदाह । प्रकृते ऽपीति । अनुमितिस्थलेऽपीत्यर्थः । अभेदग्रहेण । अभेदोपनीतभानेन । कृतार्थत्वात् । वह्न्यभावसंशयनिवृत्त्याद्युपपत्तेः । प्रकारान्तरेण प्रत्यभिज्ञायां व्यभिचारोद्धारं निरस्यति । एतेनेति । व्यभिचारस्य दुर्वारत्वेन । तत्ताकारानुपनीतत्वं तत्तात्वेनाभासमानत्वं, तच्छब्देनाव्यवह्रियमाणत्वं वा, आद्ये तत्तात्वाद्यनवच्छिन्नवृत्तिनियामकसम्बन्धावच्छिन्नद्रव्यविषयिताविशिष्टं चाक्षुषत्वादिकं कार्यतावच्छेदकं द्वितीये तच्छब्दप्रयोगाजनकत्वसहिततादृशसंसर्गावच्छिन्नद्रव्यवि-

पयितावैशिष्ट्यमिति बोध्यम् । अयोग्यस्यैवासन्निकृष्टस्याप्युपनी-
तस्य चाक्षुषादौ भानमविशेषेण दुरपह्नवमिति सूचयितुं चैत्रपदे-
त्यादिदृष्टान्ताभिधानम् । दण्डवयमासीदिति ज्ञाने व्यभिचार-
स्यातीतत्वानवगाहित्वविशेषणेन शक्यवारणतया तदनवगाहिनि व-
स्तुतोऽतीतदण्डादिज्ञाने व्यभिचारमाह । अयं दण्डीति । निरुक्त-
कार्यतावच्छेदकयोराद्यं दूषयति । तत्तात्वस्येति । अतिरिक्तस्येति ।
दण्डत्ववह्नित्वाद्यतिरिक्तस्येत्यर्थः । तथा च तदनवच्छिन्नद्रव्यप्र-
कारतैवासिद्धेति भावः । न च तत्पदप्रतिपाद्यतावच्छेदकत्वम-
न्यद्वा किञ्चिदीदृशं वह्न्यादिनिष्ठतत्तात्वं न तु वह्नित्वादिकमिति
वाच्यम् । तदग्रहेऽपि वह्नित्वादिना वह्न्यादिमत्त्वग्रहे सोऽयमिति
व्यवहारात् ।

द्वितीयपक्षे ऽजनकत्वं फलानुपधायकत्वं स्वरूपायोग्यत्वं वा ? तत्राद्यं दूषयति । तच्छब्देति । निमित्तान्तरविरहेति । प्रयोगेच्छा-
विरहेत्यर्थः । तथा च तादृशधर्मस्य कार्यतावच्छेदकत्वे यत्र
जातेऽपि प्रत्यभिज्ञाने निमित्तान्तरविरहान्न तच्छब्दप्रयोगः तत्र
व्यभिचार इति भावः । द्वितीयं दूषयति । तज्जननेति । प्रकृतेऽपि । व-
ह्निमानित्यादिज्ञानेऽपि । इष्टत्वादिति । तच्छब्दस्य वह्नित्वाद्यवच्छिन्न-
वर्धकतया व्यवहर्त्तव्यज्ञानविधया तत्प्रयोगे वह्नित्वादिप्रकारकज्ञान-
मात्रस्यैव स्वरूपयोग्यत्वादिति भाव । तथा च तद्योग्यप्रकारकज्ञानमे-
वाप्रसिद्धमिति भावः । अत एव । विद्यमानदण्डाद्यात्मकतत्ताव-
गाहिप्रत्यभिज्ञायां व्यभिचारादेव । चाक्षुषाद्युपनीतप्रमाविगोचरा-
दिस्पार्शनादौ मानसे बाह्यविषयकस्वप्रत्यनुभवे च व्यभिचारवा-
रणाय तदिन्द्रियग्राह्येति । तदिन्द्रियासाधारणकारणकलौकिकप्र-
त्यक्षयोग्यार्थकम्, घटस्पार्शनादौ चक्षुरादिसंयोगस्य व्यभिचार-
वारणाय तेनेति । त्वगादिसंयोगाद् घटादेश्चाक्षुषादेर्वारणाय त-
त्संयोग इति । एतन्मते आधेयतयेति कार्यद्वयनिवेशादन्यत्रा-
पि व्यभिचारं दर्शयति । नयनादिनेति ।

(दी०) अथैवं व्यवहितदण्डे पुंसि न कथं नायनो द-
ण्डीति निश्चय इति चेत् ? क्वचित्तत्सहचरितधर्मादर्शनात् तद-
स्मरणात् क्वचिच्च साधारणधर्मदर्शनादिना संशयस्यैव जननात्

सति च विशेषदर्शनादाविष्टत्वात् । युक्तञ्चैतत् कथमन्यथा दण्डी न वेत्यादिकः संशयः । न हि नासौ तद्विशिष्टबुद्धिः, न तन्निश्चय इति चेत्, किं तेन? उक्तं हि संशयत्वं निश्चयत्वञ्च न जन्यतावच्छेदकमिति । अस्तु वा तथा, तथापि विशेषस्यादर्शनात् संशयस्यैव दर्शनात् निश्चयस्यापि सम्भवात् । मा भूद्वा नायनादिरयं हुताशनादिनिर्णयो मानसस्तु स्यात् तत्र तादृशानियमस्यात्यन्त बाधितत्वादिति ।

( गा० ) उक्तकार्यकारणभावानभ्युपगमेऽनिष्टमाशङ्कते । अथेति । मानसनिश्चयस्य इष्टत्वात् अन्यथा उक्तकार्यकारणभावेनापि तद्वारणासम्भवात् नायन इति । संशयस्यानुभवसिद्धतया निश्चय इति । निश्चयानुत्पत्तिप्रयोजकाभिधानेनोत्तरयति । क्वचिदित्यादि । तत्सहचरितेति । दण्डसहचरितेत्यर्थः, अदर्शनादित्यन्तं तदस्मरणे हेतु । तदस्मरणादिति । तथा च विशेषणज्ञानाभावादेव तत्प्रकारकनिश्चयाभाव इत्यर्थः । साधारणधर्मदर्शनादिना । कोटिद्वयसहचरितधर्मदर्शनादिना । कोटिद्वयस्मरण इति शेषः । संशयस्यैव जननादिति । तथा च निश्चयत्वप्रयोजकविपरीतकोटिभानसामग्रीविरहस्यासत्त्वान्न निश्चयापत्तिरिति भावः ।

ननु कोटिद्वयोपस्थितावपि यत्र विशेषदर्शनवशात् विपरीतकोटिभानसामग्रीविरहः, यत्र च तत्कोटिमात्रसहचारितधर्मदर्शनात् तत्कोटेरेवोपस्थितिः तत्र तन्निश्चयः स्यादित्यत आह । सति च विशेषदर्शनादाविति । आदिना कोट्यन्तरोपस्थित्यभावस्य विकल्पेन परिग्रहः, संशयनिश्चयसाधारणद्रव्यविशिष्टबुद्धिविशेषे इन्द्रियसंयोगहेतुतायाः संशयानुपपत्त्या उक्तिसम्भवोऽपि नेत्याह । युक्तञ्चैतदिति । एतत् । व्यवहितस्याऽपि दण्डादेः सति विशेषदर्शनादावुपनयात् निश्चयजननम्, कथमन्यथेत्यनन्तरं विशेषादर्शन इति पूरणीयम् । असौ । संशयः । तद्विशिष्टबुद्धिः । बहिरिन्द्रियजन्यद्रव्यविशिष्टबुद्धिः । निश्चयत्वं जन्यतावच्छेदके निवेदयामित्याशयेन शङ्कते । न तन्निश्चय इति । निश्चयत्वस्याखण्डसमाजप्रासेन जन्यतावच्छेदके प्रवेशासम्भव इति कथयिष्यन् निश्चयत्वाभावस्य व्यभिचाराभावेऽकिञ्चित्करतामाह । किन्तेनेति ।

ननु व्यभिचारवारणान्यथानुपपत्त्या अर्थसमाजग्रस्तस्यापि कार्यतावच्छेदकत्वमुपेतव्यमित्यत आह । अस्तु वेति । तथा च निश्चयत्वस्यापि जन्यतावच्छेदकत्वस्वीकारः । दर्शनादित्यत्रासम- स्ततया विशेषस्येत्यनुषज्यते । सम्भवात् ।उत्पत्तेः । उक्तकार्यकारण- भावस्य नियुक्तिकत्वादिति भावः । यद्यपि प्रागेव निश्चयत्वस्येष्ट- त्वमुक्तं तथापि तदा युक्त्यनभिधानादनुभवकलहानिवृत्तेरिदानीं यादृशसामग्रीतो विशेषादर्शनदशायां संशयः तत एव विशेषद- र्शनकाले निश्चय इत्यनुभवसिद्ध नियममवलम्ब्य निश्चयोत्पत्तिर्दृ ढीकृता । अभ्युपेत्याह । मा भूदिति । तत्र । मानसे । तादृशनियमस्य वह्न्यादीन्द्रियसंयोगापेक्षानियमस्य ।

( दी० ] उच्यते । अस्ति तावदनुमिनोमीत्यनुव्यवसाय- साक्षिको ज्ञानविशेषो यत्र कारणमन्वयव्यतिरेकाभ्यां व्याप्यप- रामर्शः, मानसमप्यक्षविशेषाऽसाविति चेत् ? कुतोऽस्य प्रत्य- क्षत्वम्?अनुभवत्वादिति चेत्? किमेवमनुभवत्वमन्यत्,प्रत्यक्षत्वात्? स्मृत्यन्यज्ञानत्वमिति चेन्न। अप्रयोजकत्वात् अनुमितौ साक्षात्का- रकारित्वग्रहणसङ्गाच्च । तद्व्यञ्जकलौकिकसन्निकर्षादिजन्यत्वविर- हान्न तथेति चेत् ? आत्मानुमितौ तस्यापि सम्भवात् वह्निमनु- मिनोमि न तु साक्षात्करोमीत्यबाधितसाक्षात्कारत्वाभावग्रहाच्च, अगत्या तु सौरभं न पश्यामीत्यादावन्यथात्वकल्पनम् ,सामान्य- लक्षणानङ्गीकर्त्तृनये चाप्रसिद्धवह्न्यादिव्यक्तिकानुमितौ न प्र- त्यक्षत्वसम्भावनाऽपि, सन्निकर्षासम्भवात् । एतेन शाब्दादिकं व्याख्यातम् , व्यवस्थापयिष्यते तावदप्रसिद्धाभावसाध्यकानुमि- तिः । न च साक्षात्कारिणी , तत्रोपनयस्यासम्भवात् । एवञ्च प्रसिद्धसाध्यकानुमितेरपि न साक्षात्त्वम्,जातिसङ्करप्रसङ्गादित्यपि केचित् । तत्र भेदत्वादिनोपस्थिते जलादिप्रतियोगिकत्वग्रह इ- त्यपरे । मानाभावादिति । वन्निष्ठावच्छेदकान्तरग्रहमन्तरेणास- म्भवाच्चेत्यपि द्रष्टव्यम् ।

(गा० )ज्ञानविशेषः। प्रत्यक्षविजातीयज्ञानम्। तथा च तत्करणतया अनुमानस्य प्रमाणतेति भावः। न च व्याप्यदर्शनानन्तरजातालौकिकप्रत्यक्षत्वं तादृशानुव्यवसायविषय इति वाच्यम्। साध्यनिश्चयादुत्तरकालं तादृशानुव्यवसायानुदयात्। न च साध्यनिश्चयाद्यनुत्तरत्वमपि निवेशनीयमिति वाच्यम्। तदनुपस्थितावपि तथाविधानुव्यवसायोदयात्। अस्त्वनुव्यवसायबलादनुमितित्वं जातिः सा प्रत्यक्षत्वव्याप्यैवेति न तत्करणस्य प्रमाणान्तरतेति शङ्कते। मानसेति। अनुमितौ प्रत्यक्षत्वस्याप्रामाणिकतया अनुमितिः प्रत्यक्षविजातीयैवेति तत्करणं मानान्तरमिति समाधित्सुः प्रत्यक्षत्वे मानं पृच्छति। कुत इति। पूर्वपक्षी शाब्दोपमित्योरपि प्रत्यक्षत्वमङ्गीकुर्वाणो अनुभवत्वमेव प्रत्यक्षत्वे साधकं इत्युत्तरयति। अनुभवत्वादिति। अनुभवत्वप्रत्यक्षत्वयोः समनियतत्वे समनियतजातिद्वयानङ्गीकारेण अनुभवत्वं यदि जातिस्तदा प्रत्यक्षत्वमेव तदिति साध्याविशेष इति दूषयति। किमेवमिति। स्मृत्यन्यज्ञानत्वरूपोपाधिरेवानुभवत्वं प्रत्यक्षत्वसाधकमतो न साध्याविशेषः इत्याशङ्कते। स्मृत्यन्येति।

ननु विशेषणज्ञानजन्यतावच्छेदिका अनुभवचतुष्टयसाधारणी जातिरेव साक्षात्करोमीत्यनुव्यवसायसाक्षिकं प्रत्यक्षत्वं न त्वनुमित्यादित्रयव्यावृत्ता अन्यापि जातिश्च प्रामाणिकी तथा च प्रत्यक्षानुमानयोर्न पृथक् प्रमाणता। न च विशेषणज्ञानजन्यतावच्छेदकजातेरनुमित्यादिसाधारण्ये मानाभावः विशेषणज्ञानासत्त्वे परामर्शादिविरहेणैवानुमित्याद्यापत्त्ययोगादिति वाच्यम्। पृथिव्यामितरभेद इत्याकारकाप्रसिद्धसाध्यकानुमित्युत्पादकाले साध्यविशेषणकानुमितिवारणाय विशेषणधीजन्यतावच्छेदकस्य तत्साधारणताया आवश्यकत्वात्।

यदि च पृथिवीतराभिन्नेत्यनुमितिः विशिष्टे वैशिष्ट्यविषयिणीति विशेषणतावच्छेदकप्रकारकधीविरहान्न तस्याः साध्यविशेष्यकानुमित्युत्पत्तिदशायामापत्तिरित्युच्यते तदापि अनुमितेर्विशेषणतावच्छेदकप्रकारकधीजन्यतावच्छेदकाक्रान्ततयैव प्रत्यक्षानुमित्योः स्मृतिव्यावृत्तैकजातीयत्वमावश्यकं स्मृतिव्यावृत्तजातेरेव तज्जन्यतायामप्यवच्छेदकत्वात् यदि चान्वयिपरामर्शरूपकारणवि-

रहादेव नाप्रसिद्धसाध्यकस्थले साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयकानुमितिः स्वतन्त्रसाध्यतावच्छेदकप्रकारकज्ञानदशायामप्यप्रसिद्धसाध्यकव्यतिरेकिपरामर्शात् साध्यविशेष्यकैवानुमितिरुत्पद्यते साध्याप्रसिद्धेस्तत्र प्रतिबन्धकत्वानुपगमात् ।

यदि वा अप्रसिद्धसाध्यकस्थलेऽपि साध्यविशेष्यकानुमित्यनुपगमे क्षतिविरहात् तादृशव्यतिरेकिपरामर्शात् सर्वत्र विशेष्ये विशेषणमित्यादिरीत्या साध्यविशेषणिकैवानुमितिरुत्पद्यते, इत्युच्यते तदापि समानविषयकशाब्दबोधचाक्षुषादिसामग्रीकाले अनुमितिवारणायानुमितित्वावच्छिन्नं प्रति तादृशसामग्र्याः पृथक् प्रतिबन्धकत्वं सिद्धान्तिना वाच्यम् अनुमितौ प्रत्यक्षविशेषत्वमते(१) मानसत्वावच्छिन्नं प्रति तादृशसामग्र्याः क्लृप्तप्रतिबन्धकतयैवोपपत्तौ न तत्कल्पनमिति लाघवादनुमितौ प्रत्यक्षत्वसिद्धिर्निर्व्यूढैव । न च कथितशाब्दादिसामग्रीकाले(२) भिन्नविषयकानुमित्युत्पत्त्या अनुमितेर्मानसत्वनये समानविषयकमानसत्वमेव तादृशसामग्रीप्रतिबध्यतावच्छेदकं वाच्यं तथा च भिन्नविषयकानुमित्यन्यमानसासंग्रह इति वाच्यम् । भिन्नविषयकमानसेच्छामुत्तेजकीकृत्य भिन्नविषयकमानसस्थले पृथक् प्रतिबन्धकताया भवतोऽप्यावश्यकतया समानविषयकमानससाधारणप्रतिबध्यतया तत्संग्रहे क्षतिविरहात् ।

न चानुमित्यन्यमानसस्थलीयप्रतिबन्धकतायामनुमितित्वप्रकारकेच्छाया अतिप्रसङ्गभयेनानुत्तेजकतया अनुमितित्वप्रकारकेच्छामुत्तेजकीकृत्यानुमितिस्थले पृथक् प्रतिबन्धकत्वमुभयोरावश्यकमिति नोक्तलाघवावकाश इति वाच्यम् । यद्विषयकशाब्दादिसामग्रीकाले अनुमितित्वप्रकारेच्छया न कदाप्यनुमितिर्जाता तत्रैव दर्शितलाघवसम्भवात् ।

न च तत्र लाघवेऽपि यत्रानुमितित्वप्रकारकेच्छाबलादनुमितिर्जाता तत्स्थलीयानुमित्यन्यमानसानिष्ठप्रतिबध्यतायामनुमित्य-

(१) पृथक्प्रतिबन्धकत्वकल्पने गौरवमनुमितौ मानसत्वस्वीकारे इति पु० पा० ।

(२) तत्र शाब्दादिसामग्रीकाल इति पु० पा० ।

ग्यमानसत्वमेवावच्छेदकं वाच्यम् अन्यथा असत्यां मानसत्वप्रकारकेच्छायां सत्याञ्च कथितशाब्दादिसामग्र्यां अनुमितित्वप्रकारकेच्छासत्त्वेऽप्यनुमित्यनुपपत्तेरिति गौरवमिति वाच्यम्। अनुमित्यन्यमानसे सर्वत्र लौकिकसन्निकर्षबलादात्मत्वभानोपगमेन लौकिकविषयितासम्बन्धेनात्मत्वस्यैवानुमित्यन्यमानसस्थलीयस्य (१)तादृशप्रतिबध्यतावच्छेदकत्वोपगमेनानुमितेरुपपादनादिति नोक्ताप्रयोजकत्वशङ्केत्यतोऽनुमितौ प्रत्यक्षत्वस्य बाधकमाह। अनुमिताविति। साक्षात्कारित्वप्रसङ्गवारणप्रकारमाशङ्कते। तद्व्यञ्जकेति। सुरभि चन्दनमित्यादिचाक्षुषादेः सौरभादिसाक्षात्कारित्वेनानुव्यवसायवारणाय विशेष्यतासम्बन्धेन तत्तद्विषयधर्मितावच्छेदकतापन्नसाक्षात्कारित्वप्रकारकप्रत्यक्षं प्रति स्वरूपसम्बन्धेन तत्तद्विषयनिष्ठलौकिकसन्निकर्षादिजन्यत्वस्य हेतुत्वात्तद्विरहादनुमित्यनन्तरं न वह्निं साक्षात्करोमीत्यनुव्यवसायापत्तिरित्यर्थः। लौकिकसन्निकर्षादीत्यादिना दोषविशेषपरिग्रहः।

आत्मानुमिताविति। तस्य। आत्मनिष्ठमनःसंयोगरूपलौकिकसन्निकर्षजन्यत्वस्य। न चैवमात्मोपनीतभाने भवतामपि न कथं साक्षात्कारित्वग्रहः अनुमितेरिव तस्यापि आत्ममनोयोगासमवायिकारणकत्वादिति वाच्यम। मानसत्वावच्छिन्नाया एव मनोयोगजन्यतायास्तद्व्यञ्जकत्वोपगमात् मानसज्ञाने आत्मनो लौकिकसन्निकर्षादेव भानात् चाक्षुषादावेव तस्योपनीतस्य भानात् तत्र च मानसत्वावच्छिन्नजन्यताया अभावात् अनुमितौ मानसत्ववादिनाञ्च आत्मानुमितौ तादृश्या अपि जन्यताया अनपायादिति भावः।

ननूक्तलाघवेनानुमितेर्मानसत्वसिद्धौ उक्तातिप्रसङ्गवारणाय साक्षात्कारित्वग्रह प्रत्यनुमितिभेदस्य कारणत्वमेकं कल्पनीयमित्यतः प्रत्यक्षप्रमाणेनानुमितौ प्रत्यक्षत्वाभावं व्यवस्थापयति। वह्निमिति।

यद्यपि वह्निं न साक्षात्करोमीति प्रतीतेरात्मनिष्ठो वर्त्तमानकालावच्छिन्नो वह्निसाक्षात्काराभाव एव विषयः न त्वात्मनिष्ठवर्त्तमानवह्निज्ञाने साक्षात्कारत्वाभावः स्वरूपतो भासमानसाक्षात्त्वजातेः पदार्थतावच्छेदिकाया अभावस्य तादृशशब्देनाप्रत्यायनात्,

---

(१) अनुमित्यन्यमानसत्वप्रकारकेच्छास्थलीयस्येति पु० पा०।

तथाप्येकविशेषणविशिष्टाधिकरणे विशेषणद्वयविशिष्टाभावप्रतीतेः तद्विशेषणवति विशेषणान्तराभावपर्यवसन्नत्वमिति वह्निविषयकत्ववति ज्ञाने साक्षात्कारित्वरूपविशेषणाभावः प्रकृते पर्यवस्यतीत्याशयेनोक्तं साक्षात्कारित्वाभाववति ।

ननु सुरभि चन्दनमित्यादिचाक्षुषदशायां जातस्य सौरभं न पश्यामीति प्रत्ययस्येवोक्तप्रत्ययस्यापि भ्रमत्वमस्त्वित्यत आह । अगत्येति । चन्दनं पश्यामीत्यादिप्रतीत्या सुरभि चन्दनमित्यादिज्ञाने चाक्षुषत्वादेरावश्यकतया तत्र गत्यन्तरविरहणेव सौरभं न पश्यामीत्यादौ चाक्षुषत्वाद्यभावांशे भ्रमत्वकल्पनमित्यर्थः । अनुमितौ च साक्षात्त्वानभ्युपगमेन न साक्षात्करोमीति प्रतीतेः प्रमात्वसम्भवात् न तत्परित्यागः धियां प्रमात्वस्यौत्सर्गिकत्वादिति भावः ।

अत्र तत्त्वम्--सौरभं न पश्यामि न साक्षात्करोमीत्यादिप्रतीतेः प्रमात्वानुरोधेन लौकिकत्वाख्यो विषयताविशेषः कल्प्यते, तद्विशिष्टचाक्षुषत्वाद्यभावो न पश्यामीत्यस्य, तदभाव एव न साक्षात्करोमीत्यस्य विषयः । न च तथापि सौरभनिरूपितताद्दशविषयिताविशिष्टचाक्षुषाप्रसिद्ध्या सौरभं न पश्यामीत्यप्रमागतिरेवेति वाच्यम् । चाक्षुषनिष्ठविषयितायां सौरभनिरूपितत्वाभावस्यैव ताद्दशप्रत्ययविषयत्वोपगमात्, अन्ध आकाशं न पश्यतीत्यादावपि कथञ्चित्प्रमात्वमुपपादनीयम् । न चातिरिक्तविषयिताऽपसिद्धान्ततया न स्वीकरणीयेति वाच्यम् । प्रतीत्यनुरोधेन तत्कल्पनेऽपसिद्धान्तभयस्याविरोधित्वात् । अत एवाभावत्वप्रतियोगित्वादीनामतिरिक्तपदार्थत्वं ग्रन्थकृतामनुमतम् । न चैव प्रत्यक्षत्वजातिरेव प्रामाणिकी स्यात् तत्कार्यस्य लौकिकत्वेनैवोपपादनसम्भवादिति वाच्यम् । विशेषणज्ञानादिजन्यतावच्छेदकतयैव तत्सिद्धेः, विषयिताविशेषापेक्षया जातेस्तथात्वे लाघवात् सर्वांशोपनीतज्ञानस्य प्रामाणिकत्वे तदसंग्राहकतयापि लौकिकत्वस्य विशेषणतावच्छेदकप्रकारकज्ञानादिजन्यतावच्छेदकत्वासम्भवाच्च । एवञ्चानुमितेः प्रत्यक्षतामतेऽपि न तत्र साक्षात्त्वाभावग्रहानुपपत्तिरिति तस्या प्रत्यक्षत्वाभावे युक्त्यन्तरमेवानुसन्धेयम् ।

सन्निकर्षविरहादित्यनुमानप्रामाण्यव्यवस्थापिकां मूलयुक्तिं सामान्यलक्षणानभ्युपगमपक्षे सङ्गमयति। सामान्येति। अप्रसिद्धवह्न्यादी-

ति । पूर्वोक्षातपर्वतीयवह्न्यादीत्यर्थः । व्याख्यातम् । प्रत्यक्षविजातीयतया व्यवस्थापितम् । अन्येषां युक्तिमुपन्यस्यति । व्यवस्थापयिष्यत इति । केचिदित्यस्वरसोद्भावनम्, तद्बीजन्तु असन्निकृष्टस्याभावस्य साध्यतया अनुमितौ भानेऽपि तस्याः प्रत्यक्षत्वं निराबाधमेव यत्किञ्चिद्विषयसन्निकर्षजन्यतयैव प्रत्यक्षत्वनिर्वाहात्, साध्यांशे प्रकारतया भासमानस्याभावत्वादेः सामान्यस्यापि सन्निकर्षतया अज्ञातत्वमात्रेणाप्यसन्निकृष्टत्वानिर्वाहाच्च । न चाज्ञातस्य साध्यस्यानुमितौ ज्ञाने तादृशाभावविषयकोपनायकस्य तत्र व्यभिचारप्रसक्तेरेव तस्याः प्रत्यक्षत्वबाधिकेति वाच्यम् । प्रकारताया एव उपनायकज्ञानजन्यतावच्छेदकत्वोपगमेन व्यभिचारानवकाशात् । तन्मुख्यविशेष्यकमानसोपनीतभानेऽपि तस्य स्वांशे अभेदसम्बन्धेन प्रकारतोपगमेन तत्सङ्ग्रहात् । अन्यथा सामान्यप्रत्यासत्तिजन्याज्ञातविशेष्यकबोधे व्यभिचारस्य दुर्वारत्वात् ।

वस्तुतः साध्यतावच्छेदकप्रकारेणाज्ञानेऽपि अभावत्वादिना साध्यस्य सामान्यप्रत्यासत्त्यैव ज्ञानं प्राक् सम्भवतीति नोपनयस्य व्यभिचार इत्यनुसरणीयम् (१)अप्रसिद्धसाध्यकानुमितिमनभ्युपगम्य तादृशयुक्तिं दूषयतां परेषां मतमाह । तत्रेति । भेदत्वादिना । पृथिवीनिष्ठभेदत्वादिना । आदिना ह्रदे धूमात्यन्ताभाव इत्याद्यनुमितिप्रकारस्यात्यन्ताभावत्वस्य परिग्रहः । जलादिप्रतियोगिकत्वग्रहः । जलादिप्रतियोगिकत्वानुमितिः । जलादिप्रतियोगिकत्वं साध्यतया अनुमितेर्विषय इति यावत् । वृत्त्यनियामकसंसर्गस्य व्यापकताघटकत्वे तु जलादिरूपसाध्यस्य संसर्गतयाऽपि तत्प्रतियोगिकत्वं विषयः सम्भवतीति द्रष्टव्यम् । एतावतैव जलादिभेदस्य तादात्म्येनाज्ञानदशायां पृथिव्यादिनिष्ठजलादिभेदसिद्ध्या कृतमप्रसिद्धसाध्यकानुमितिस्वीकारेण इति भावः । जलादिप्रतियोगिकत्वानुमापकान्वयिनोऽनुपस्थितिदशायामपि व्यतिरेकिणा तद्वयक्तित्वादिनाऽपि तदनुमानसम्भवो बोध्यः ।

अत्राप्यपर इत्यस्वरससूचनाय, तद्बीजन्तु पृथिवीनिष्ठभेदत्वादिना भेदमात्रानुपस्थितावपि जलादिव्यापकाभावप्रतियोगित्वादिना भावेन पृथिव्यादौ जलादिभेदसिद्धेरप्रसिद्धसाध्यकानुमिति-

(१) इत्यनुसन्धेयमिति पु० पा० ।

मनभ्युगम्य दुरुपपादता, तदपलापे पक्षैकदेशे जलादिभेदस्य प्रसिद्धयैव कदाचित् तत्तत्साध्यकानुमितेरप्युपपादनसम्भवात् तादृशानुमित्यैवाप्रसिद्धसाध्यकानुमानखण्डनौचित्यादिति।

अनुमितिकारणविशिष्टपरामर्शानुपपत्तिरूपपूर्वपक्षमध्यकथितबाधकमुद्धृत्य यो यत्र विशिष्य पूर्वमित्यादिनियमं स्थापयित्वा अनुमितिस्थले पक्षे साध्योपनीतज्ञानं सामान्यप्रत्यासत्तिमतेऽपि निराकुर्वाणस्य कस्यचिन्मतं निरसितुमुपन्यस्यति मूले कश्चिदिति। परम्परासम्बन्धेन व्याप्यत्वम्। परम्परासम्बन्धघटितव्याप्यत्वम्।

(चि०) भवतु तावदेवं तथापि जातिरेव लिङ्गं स्यात् न तु व्यक्तिः तथा च सर्वोपसंहारेण व्यक्तौ व्याप्तिग्रहार्थं सामान्यलक्षणप्रत्यासत्त्युत्पादनमफलं (१)स्यात्, दृश्यते च परम्परासम्बन्धज्ञानं विना जातिव्याप्तिमविदुषोऽपि धूमाद्वह्न्यनुमानम्, न हि व्याप्यतावच्छेदकस्यापि परम्परयैव व्याप्यताग्रहः,मानाभावात्,तस्मात् पक्षधर्मे व्याप्तिविशिष्टज्ञानं तदनन्तरविशिष्टवैशिष्ट्यज्ञानं पक्षे वा तृतीयलिङ्गपरामर्शः।अन्ये तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं व्यापकत्वं तत्सामानाधिकरण्यञ्च व्याप्यत्वं तथा च लाघवात् व्यापकताज्ञानमनुमितिहेतुः, साध्यस्य पक्षधर्मव्यापकताज्ञानञ्च परामर्शः, न तु साध्यव्याप्तस्य पक्षधर्मताज्ञानं साध्यव्याप्यवत्पक्षधर्मताज्ञानं वा गौरवात्।

(दी०)उपसंहरति। तस्मादिति। वाशब्दोऽनास्थायाम् उभयथापि प्रकृतासत्तेः। वस्तुतो व्याप्यपक्षयोर्वैशिष्ट्यावगाहिज्ञानत्वेन हेतुत्वम्,निगमनाविरहेणान्यतरविशेषणविशेष्यभावस्यानन्त-

(१) सामान्यलक्षणप्रत्यासत्त्युपादानमफलमिति पु० पा०।

त्वात् । लाघवादिति । अथाव्याप्यवृत्तेर्व्यापकत्वसम्पत्तयेऽभाव-स्य प्रतियोग्यसामानाधिकरण्यं वाच्यं तच्च स्वप्रतियोग्यनाधिकरणवृत्तित्वम् एवञ्चावृत्तिगगनादेर्धर्ममात्रव्यापकत्वं स्यात् तादृशघटत्वाद्यभावाप्रतियोगित्वात् तदधिकरणाप्रसिद्ध्या च तदभावस्य स्वप्रतियोग्यनधिकरणवृत्तित्वासम्भवात् तथा च तद्व्यावृत्तये व्यापके हेतुसामानाधिकरण्यं वाच्यम् । न चैवं हेतोर्व्यापकसामानाधिकरण्यापेक्षया लाघवमिति चेत्‌ अस्तु तावदेवमापाततस्तथापि वृत्तिमत्त्वमात्रमुपादेयम् । न चैवं हेतोः साध्यसामानाधिकरण्यस्य संशये व्यतिरेकनिश्चये वा अनुमित्यापत्तिरिति वाच्यम् । संशये इष्टत्वात्, व्यतिरेकनिश्चये च पक्षधर्मत्वाग्रहे परामर्शविरहात्, तद्ग्रहे च साध्यासमानाधिकरणधर्मान्तरैर्ग्रहस्येव तस्यापि विरोधित्वात् अन्यथा त्विष्टत्वात्, पर्वतो वह्निव्याप्यधूमवान् पाषाणमयः पाषाणमयावृत्तिश्च वह्निरिति ज्ञानेन च तुल्ययोगक्षेमं पर्वतवृत्तिधूमव्यापको वह्निर्धूमवदवृत्तिश्चेति ज्ञानम् । न च साध्याप्रतियोगिकस्वसमानाधिकरणयावदत्यन्ताभावकत्वं साध्याप्रतियोगिकत्वावच्छेदकस्वसमानाधिकरणात्यन्ताभावत्वकत्वं वा व्याप्तिः साध्यप्रतियोगिकत्वञ्च केवलान्वयिनि साध्यस्यान्योन्याभावे सम्बन्धविशेषावच्छिन्नात्यन्ताभावे वा प्रसिद्धमिति वाच्यम् । गौरवात्, व्यापकत्वाद्यनन्तर्भावेन यावत्त्वस्य दुर्वचत्वात्, प्रमाणाभावेन स्वरूपसम्बन्धविशेषरूपत्वासम्भवेनावच्छेदकत्वस्यानतिरिक्तवृत्तित्वपर्यवसायित्वाच्च । व्यापकतायाञ्च प्रतियोगित्वादेः सामान्याभावस्योक्तत्वात् सम्बन्धादिनिष्ठसाध्यप्रतियोगित्वव्यक्तेरभावस्य व्यभिचारिसाधनसमानाधिकरणयावदत्यन्ताभाववृत्तितया त्वयापि तस्यावश्यं वाच्यत्वात् साधनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्स्वरूपव्याप-

फलज्ञानपेक्षया साध्यवदन्यावृत्तित्वज्ञानस्य लघुत्वात् ।

( मा० ) सामान्यप्रत्यासत्तिव्युत्पादनम् । सामान्यप्रत्यासत्तिस्वीकारः । जातिमात्रस्य लिङ्गत्वोपगमेऽनुभवविरोधमप्याह । इष्यते चेति ।

ननु धूमत्वेन धूमे व्याप्तिग्रहदशायां धूमत्वोपस्थितेरावश्यकतया तत्रापि परम्परासम्बन्धघटिता व्याप्तिः शक्यग्रहा, अधिकरणे धूमत्वावच्छिन्नस्वघटितधूमव्यापकताग्रहे धूमघटितसम्बन्धेन धूमत्वस्याप्यधिकरणत्वांशे भानसम्भवेन धूमत्वव्यापकताया अपि वह्नौ भानसम्भवात् । धूमत्ववति संयोगेन वह्निमद्वृत्तित्वे भासमाने धूमत्वेऽपि वह्निमत्त्वः स्वसंयोगिसमवायरूपपरम्परासम्बन्धभानसम्भवादेव व्यक्तिव्याप्तिज्ञानदशायां जातिव्याप्त्यग्रह एवाप्रसिद्ध इत्यत आह । न हीति । मानाभावादिति । धर्मिणः साक्षात् सम्बन्धभाने धर्मस्य परम्परासम्बन्धभाननियमासिद्धेरिति भावः ।

अनुमित्यन्यथानुपपत्तेर्मानत्वसम्भवेनापरितोषात् तादृशनियमे बाधकं पूरयति दीधितौ । तन्निष्ठेति । अवच्छेदकधूमत्वादिनिष्ठम् । अवच्छेदकान्तरम् । धूमत्वत्वादि । असम्भवात् । अवच्छेदकधूमत्वादौ अनुमित्यौपयिकव्याप्तिग्रहासम्भवात् । अभावे हेतुतावच्छेदकाविशिष्टहेतुसामानाधिकरण्यस्य व्यापकताघटकतया हेतुतावच्छेदकस्यापि तथात्वात् प्रकृत अविशेषितधूमत्वादिविशेषिताधिकरणस्य व्यापकताघटकत्वोपगमेऽपि धूमत्वत्वादिप्रकारेण व्यापकसामानाधिकरण्यप्रकारकज्ञानमेवानुमितिहेतुर्वाच्य, सामानाधिकरण्यांशे निर्धर्मितावच्छेदककज्ञानस्यानुमित्यहेतुत्वात् तथा सति परम्परासम्बन्धेन धूमत्वादिशून्यतया निश्चीयमान ह्रदादावपि वह्न्याद्यनुमानापत्तेः, वह्निसामानाधिकरण्यसामान्याभावस्य तत्राग्रहे केवलेन वह्निसमानाधिकरणत्वेन धूमत्वादेस्तदा तत्र ग्रहसम्भवात् धूमत्वत्वाद्यवच्छिन्ने सामानाधिकरण्यग्रहः कथं धूमत्वत्वाद्युपस्थितिं विना सम्भवति, साध्याभाववदवृत्तित्वरूपा व्याप्तिरपि पक्षवृत्तौ व्याप्यतावच्छेदकनिश्चयं विना प्रायशो दुर्निश्चयतया उपनीततद्विपरीतकोटेरपि भानसम्भवेन संशयसम्भवात्, निर्धर्मितावच्छेदककसंशयासम्भवेन(१) सा-

(१) संशयानुपगमेनेति पु० पा० ।

ध्यामाववद्वृत्तिमानिति निश्चयसम्भवेऽपि पक्षवृत्तित्वावच्छेदेन व्यभिचारसंशये च पक्षः साध्याभाववद्वृत्तिमानिति निश्चयोऽपि दुर्घट इति भावः । मानाभावादित्यस्य मानस्यावच्छेदके व्याप्तिप्रमितिजनकस्य तन्निष्ठावच्छेदकान्तरग्रहस्याभावात् नियमेनासत्त्वादित्यर्थसम्भवेन पूरणं विनापि निर्वाह इति द्रष्टव्यम् । तस्मादित्यादेरव्यवधानव्यवस्थापितानुमानप्रामाण्योपनयप्रत्यासत्तित्वयोरुपसंहारत्वासम्भवात् प्रागव्यवस्थापितविशिष्टपरामर्शहेतुत्वोपसंहारत्वमाविष्कर्त्तुमाह । उपसंहरतीति । मूले पक्षधर्मे व्याप्तिविशिष्टज्ञानमिति । विशेष्यतायां विशेषणतायां वा अवच्छेदिकया व्याप्त्या प्रकारेण विशेष्यस्य विशेषणस्य वा पक्षीयहेतोर्ज्ञानं प्रथमत इत्यर्थः, एतज्ज्ञानं सामान्यलक्षणाप्रत्यासत्तिस्वमते स्मरणमेव अन्यथा तु महानसीयधूमादिविशेष्यकव्याप्तिस्मरणाधीनं प्रत्यक्षं तत्र च व्याप्तिपक्षधर्मतयोरेकत्र द्वयमित्यादिरीत्या भानेऽपि न तस्य व्याप्तिविशिष्टधूमे पक्षधर्मतायाः पक्षे वा तादृशधूमस्य वैशिष्ट्यावगाहित्वं सम्भवति तादृशबुद्धौ व्याप्तिविशिष्टधूमज्ञानस्य विशेष्यतावच्छेदकविशिष्टविशेष्यादिज्ञानविधया हेतुत्वात् । अत एव न तस्यानुमितिहेतुताऽपि, तत्साधारणेन एकत्र व्याप्तिपक्षधर्मतोभयावगाहिज्ञानत्वेनानुमितिहेतुत्वाप्त्यंशे संशयादनुमितिवारणाय तदन्यत्वस्यानुमितिजनकतावच्छेदके निवेशापातात विशिष्टवैशिष्ट्यावगाहित्वेनैवानुमितिजनकत्वोपगमादिति । तदनन्तरमिति । तदनन्तरजातमित्यर्थः । विशिष्टवैशिष्ट्यज्ञानम् । व्याप्तिविशिष्टे पक्षवैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नम् । पक्षे वा तृतीयलिङ्गपरामर्शः । पक्षे व्याप्तिविशिष्टप्रतियोगिकवैशिष्ट्यज्ञानत्वावच्छिन्नं वा । अनुमितिहेतुरिति शेषः । उभयोः पक्षयोस्तुल्यतया पूर्वत्रापरितोषाभावाद्वाकारः एकत्रानिर्भरसूचकतया व्याचष्टे दीधितौ । वेति ।

ननु पूर्वमेकविधस्यैव परामर्शस्यानुमितिहेतुतायाः प्रतिज्ञातत्वादत्र विकल्पेनोभयविधस्य तद्धेतुत्वोपसंहारविरोध इत्यत आह । उभयथेति । प्रकृतानुमितेरिति । अनुमितिलक्षणनिर्वाहादित्यर्थः, यादृशस्य हेतुता तादृशपरामर्शजन्यताया एवानुमितिलक्षणे निवेश्यत्वादिति भावः । एवञ्च पक्षधर्मस्य व्याप्तिविशिष्टज्ञानम् अनुमितिहेतुरित्यस्यापि पक्षतावच्छेदकावच्छिन्नविशेष्यक व्याप्य-

प्रकारकं व्याप्यवच्छिन्नविशेष्यकं पक्षप्रकारकं वा ज्ञानमनुमितिहेतुरित्येवार्थ इति नोपक्रमविरोध इत्याशयः। उक्तपरामर्शयोरेकस्मादेवानुमितिर्नान्यस्मादित्यत्र युक्तिविरहेण प्रत्येकरूपावच्छिन्नस्य न जनकत्वम् उभयासंग्राहकत्वादिति मूलोपर्यस्वरसं प्रकाशयन् उभयानुगमकं कारणतावच्छेदकमाह। वस्तुत इति। अथवा मूलस्थवाकारः समुच्चये, तथा च प्रत्येकरूपेण हेतुत्वं न विवक्षितम् अपि तूभयोरनुगतरूपेणैवेत्याह। वस्तुत इति। विनिगमनाविरहेण। विनिगमनाभावात्, हेतुभूतयोरुभयोरसङ्ग्राहकत्वेन। असन्नत्वात्। विशिष्य जनकतानवच्छेदकत्वात्।

इदमत्र बोध्यम्, व्याप्यपक्षयोर्वैशिष्ट्यावगाहित्वं न वास्तवं पक्षानुयोगिकं व्याप्यप्रतियोगिकं यद्वैशिष्ट्यं हेतुतावच्छेदकसम्बन्धः तदवगाहित्वं भ्रमस्थलासङ्ग्रहात् व्याप्त्याद्यनवगाहिज्ञानसाधारण्याच्च। नापि व्याप्यप्रतियोगिकत्वपक्षानुयोगिकत्वोभयोपरागेण तादृशसंसर्गावगाहित्वं सम्बन्धसंसर्गकज्ञानासङ्ग्रहात् संसर्गानुयोगित्वप्रतियोगित्वयोर्वैशिष्ट्यबुद्ध्यविषयत्वात्, समूहालम्बनवैलक्षण्यस्य विषयतावैलक्षण्येनैवोपपत्तेः। नापि व्याप्यपक्षोभयोपरागेण तादृशसंसर्गावगाहित्वं तत्, तच्च तदुभयनिरूपितहेतुतावच्छेदकसम्बन्धीयसंसर्गताकत्वं, भ्रमस्थले उभयांशे संसर्गासिद्धावपि संसर्गताया विशेष्यविशेषणोभयनिरूपितत्वान्नानुपपत्तिरिति, एवं सति पर्वतवान् व्याप्य इत्यादिज्ञानादप्यनुमित्यापत्तेः। न च तत्र संयोगरूपहेतुतावच्छेदकसम्बन्धावच्छिन्नाधारत्वं सम्बन्धः न तु संयोगस्तस्य उभयनिष्ठत्वात् तादृशबुद्धेरपि प्रमात्वप्रसङ्गात्, यत्र संयोगो व्याप्यताघटकसम्बन्धस्तत्र पक्षे संयोगावच्छिन्नाधारतया व्याप्यप्रकारकाद्व्याप्ये च संयोगावच्छिन्नाधेयतया पक्षप्रकारकाज्ज्ञानादिष्यते एवानुमितिरपि तु संयोगमात्रेण तदेकतरांशेऽपरप्रकारकज्ञानादेवेति वाच्यम्। एवमपि यत्राधारत्वादिरेव व्याप्यताघटकसम्बन्धस्तत्रोक्तज्ञानादनुमित्यापत्तेर्दुर्वारत्वात्।

अथ संयोगो यत्र हेतुतावच्छेदकसम्बन्धस्तत्रैव व्याप्यपक्षोभयवैशिष्ट्यावगाहित्वेन हेतुना स्वीक्रियते न तु संयोगावच्छिन्नाधारतादिर्यत्र हेतुतावच्छेदकसम्बन्धस्तत्रापि तत्र तेन सम्बन्धेन हेतुप्रकारकपक्षविशेष्यकपरामर्शस्यैवानुमितिहेतुतया तादृशपरा-

वस्तुतः सम्बन्धानुयोगिनि सम्बन्धप्रतियोगिनस्तेन सम्बन्धेन विशिष्टबुद्धिः प्रमा धूमपर्वतसंयोगस्य धूमपर्वतयोः प्रतियोग्यनुयोगिभावो न विपरीतयोरिति पर्वतवान् धूम इति ज्ञानस्याधारतानवगाहित्वेऽपि न प्रमात्वप्रसङ्ग इति संयोगमात्रस्यैव सम्बन्धत्वे न त्वाधारत्वस्याधिकस्य, तस्यापि सम्बन्धत्वानुपपत्त्या द्विष्ठतायाः स्वीकरणीयतया विशेषणविशेष्ययोः तदीयप्रतियोगित्वानुयोगित्वयोः प्रमात्वनियामकतां विना भवतोऽप्यतिप्रसङ्गस्य दुर्वारत्वात्। सम्बन्धविशेषानुयोगित्वमेवाधारत्वमिति चेद्भवतु तथापि स्वरूपसत एव तस्य प्रमात्वनियामकतया न तस्य सम्बन्धिसम्बन्धतेति।

अथ वदन्ति, संयोगमात्रस्य सम्बन्धत्वे पर्वतवान् धूमः पर्वते धूम इत्यनयोः को विशेषः? आद्ये धूमांशे पक्षस्य संयोगः सम्बन्धः परत्र च पक्षसंयोगस्य प्रतियोगित्व तथेति चेत्? आद्ये संयोगानुयोगित्वं सम्बन्धः परत्र च संयोग एव पक्षस्य तथात्वेव किं न स्यात्? अनुयोगित्वान्यसम्बन्धस्थले विशेष्ये प्रतियोगित्वस्यापि प्रमात्वनियामकताया वक्तुं शक्यत्वात् शब्दानुगमस्यानपेक्षणीयत्वात्, तस्माद् यत्र संयोग एव सम्बन्धस्तत्र प्रतियोग्यनुयोगिभावो धर्मधर्मिणोस्तत्सम्बन्धतया भासत इत्युपगम्यैव उक्तप्रत्यययोर्वैलक्षण्यमुपेयम् आधाराधेयभावस्य तुल्यवित्तिवेद्यताप्रवादोऽप्येवं सङ्गच्छते (१)। तथा च व्याप्यांशे सम्बन्धस्य प्रतियोगित्वं पक्षांशे चानुयोगित्वमवगाहमानैव व्याप्यपक्षवैशिष्ट्यावगाहितेति न कश्चिदतिप्रसङ्गः।

इदन्तु तत्त्वम्, तद्वानयमित्यत्र विशेष्ये विशेषणस्य संयोग एव सम्बन्धः, तत्रेदम् इत्यत्र च संयोगावच्छिन्नाधेयत्वमित्येव विशेषः, प्रथमे संयोगावच्छिन्नाधारत्वं परत्र च संयोगमात्रं सम्बन्ध इति वैपरीत्यस्य न प्रसक्तिः। विशेष्ये सम्बन्धानुयोगितायाः प्रमात्वनियामकतया धूमे पर्वत इत्यादिबुद्धेः प्रमात्वापातात्, एवञ्च सम्बन्धविधया भासमानसंयोगादेः प्रतियोगित्वानुयो-

(१) अथेत्यादिः सङ्गच्छते इत्यन्तः पाठः केषुचिदादर्शपुस्तकेषु नास्ति।

गित्वभानमप्रामाणिकम्। एवञ्च पक्षविशेष्यकपरामर्श एवानुमितिं हेतुर्न पर इत्यत्र विनिगमकमपि सुलभं व्याप्यविशेष्यकपरामर्शस्य संयोगावच्छिन्नाधेयतासंसर्गकत्वेनैव हेतुतया वाच्यतया तदपेक्षया पक्षविशेष्यकाधेय- संयोगसंसर्गकत्वेन (१)हेतुत्वे लाघवादिति। हेतुसाध्यसामानाधिकरण्याघटितत्वेन मूलोक्तव्याप्त्यपेक्षया व्यापकत्वस्य लाघवं निराकर्त्तुं व्यापकत्वे तन्निवेशयितुमाशङ्कते। अथेति। तच्च स्वप्रतियोग्यनधिकरणवृत्तित्वमिति। स्वम्। वृत्तित्वान्तविशेष्यतया विवक्षितोऽभावः। स्वप्रतियोग्यधिकरणवृत्तिर्यो यस्तदन्यत्वनिवेशे संयोगि सत्त्वादित्यादावतिव्याप्तिरिति भावः। धर्ममात्रस्य व्यापकत्वं येन येन सम्बन्धेन यद्यत् क्वचिदपि सम्बद्धं तेन तेन सम्बन्धेन तत्तत् प्रति येन येन सम्बन्धेन स्वमवृत्ति तेन तेन सम्बन्धेन व्यापकत्वम्। तादृशेति। प्रतियोग्यनधिकरणवृत्तीत्यर्थः। गगनादेर्हेतुमन्निष्ठस्याभावप्रतियोगित्वमकिञ्चित्करमित्याह। तदधिकरणेति। तदधिकरणम्। गगनाद्यधिकरणम्। तदभावस्य। गगनाभावस्य। तद्व्यावृत्तये। उक्तापत्तिवारणाय। हेतुसामानाधिकरण्यं व्यापकताघटकं वाच्यम्। न चैवम्। एवञ्च न। समाधत्ते। अस्तु तावदिति। एवम्। गगनाद्यभावस्य प्रतियोग्यसामानाधिकरण्यविशेषणेन व्यावृत्तिः, वस्तुगत्या उभयाभावघटितस्य प्रतियोग्यसामानाधिकरण्यस्य गगनाद्यभावसाधारणतया व्याप्तिवादे दर्शितत्वात् तद्व्यावृत्तिरित्यभिप्रेत्य उक्तम्। आपातत इति। वृत्तिमत्त्वम्। व्यापकताघटकसम्बन्धेन सम्बन्धित्वं, न तु तेन सम्बन्धेन हेतुसामानाधिकरण्यपर्यन्तमिति शेषः। हेतुसाध्ययोरसामानाधिकरण्यज्ञानं जनकज्ञानाघटकत्वेनैवानुमितिविरोधि तच्च तदैवोपपद्यते यदि तयोः सामानाधिकरण्यज्ञानम् अनुमितिजनकं भवतीति शङ्कते। न चैवमिति। एवम्। हेतुसाध्यसामानाधिकरण्यज्ञानस्याहेतुत्वे। पक्षधर्मत्वाग्रहे। तदग्रहदशायाम्। परामर्शविरहात्। पक्षधर्मतया हेत्ववगाहितद्व्यापकताज्ञानरूपानुमितिकारणविरहेण तदापत्त्ययोगात्। तद्ग्रहे। तद्ग्रहदशायाम्। साध्यसमानाधिकरणधर्मान्तरग्रहस्यैवेति। साध्यासमानाधिकरणतया निश्चितजलत्वादौ पक्षधर्मताग्रहस्यैवेत्यर्थः त-

---

(१) संयोगविषयकत्वेनैवेति पु० पा०।

स्यापि । प्रकृतहेतौ पक्षधर्मताग्रहस्यापि । विरोधित्वात् । तद्वद्वृत्तित्वस्य तदभावव्याप्तिपर्यवसिततया साक्षादेवानुमितिविरोधित्वात्,

साध्यवद्वृत्तितया धर्मान्तरस्य ग्रहो न साध्याभावव्याप्तित्वेन तद्व्याप्तिविषयक इति तद्विषयधर्मान्तरस्य पक्षे ग्रहेऽप्यनुमितिरिष्यत एवेति यदि तदा प्रकृतेऽपि तुल्यमित्याह । अन्यथेति । एतन्मते च विरोधः साध्याभावव्याप्यत्वम्, असाधारण्यञ्चावृत्तित्वं, गगनादेरेव अनुकूलतर्कविरहेणासाधारण्यसन्देहादेव शब्दत्वादिकं शब्दादौ नित्यत्वाद्यसाधकमित्यवधेयम् ।

अस्तु हेतौ साध्यवद्वृत्तित्वग्रहसहितः पक्षधर्मताग्रहो विरोधिधर्मवत्ताज्ञानविधया साक्षादनुमितिविरोधी तथापि साध्ये हेतुत्वसामानाधिकरण्याग्रहकाले अनुमित्यापत्तेर्दुर्वारतया साध्ये हेतुसामानाधिकरण्यधीरनुमितिहेतुरवश्यमेव वाच्येत्यत आह । एवंत इति । ज्ञानेन तुल्ययोगक्षेममिति । ज्ञानमिति । प्रथमज्ञानकाले अनुमित्यनुत्पादे ग्राह्याविरोधितया गृह्यमाणधर्मग्रहस्येव ग्राह्यविरोधितया गृहीते तद्धर्मग्रहस्याप्यनुमितौ साक्षाद्विरोधितया द्वयोरेव तथात्वं, तदा अनुमित्युपगमे च प्रकृतेऽप्यनुमितिरिष्यत एवेत्यर्थः साध्यहेत्वोरसामानाधिकरण्यग्रहात् कदाचिदनुमित्यनुत्पादानुभवश्चासामानाधिकरण्यस्याव्यापकत्वव्याप्यतया तद्ग्रहदशायामसामानाधिकरण्यग्रहस्य व्यापकताधीविरोधित्वादिति भावः ।

व्याप्तिव्यापकतयोः साम्याय व्याप्तावपि न साध्यहेत्वोः सामानाधिकरण्यान्तर्भाव इति शङ्कते । न चेत्यादिना । साध्येति । साध्यतावच्छेदकावच्छिन्नप्रतियोगिकस्वावच्छिन्नसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकयावदभावकधर्मवत्त्वमित्यर्थः । साध्यतावच्छेदकानवच्छिन्नस्वावच्छिन्नसमानाधिकरणाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नयावत्प्रतियोगिताकधर्मवत्त्वमिति तु परमार्थः (१) अतो वह्निमान् धूमादित्यादौ हेतुमन्निष्ठस्य संयोगेन गुणाद्यभावस्य स्वरूपसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नाभावसमनियततया तदभावाभिन्नत्वेऽपि न क्षतिः, अभावैक्येऽपि प्रतियोगिताभेदात् । यावदर्थस्य लघोर्दुर्ग्रहत्वमाशङ्क्याह । साध्यप्रतियोगिकत्वेति । अत्रापि साध्यतावच्छेदकानवच्छिन्नत्वावच्छेदकत्व-

(१) इति तु फलितार्थ इति पु० पा०।

विशिष्टसमानाधिकरणाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितात्वकत्वमिति पर्यवसितोऽर्थः (१) अवच्छेदकत्वञ्चेद् स्वरूपसम्बन्धात्मकमनतिप्रसक्तत्वनियतम् इत्यभिमानः।बहुव्रीह्यर्थः सम्बन्धः उभयत्रेव यः कश्चन सम्बन्धत्वेन सम्बन्ध विधया प्रविष्ट, प्रमेयसामान्यसाध्यकस्थले अन्योन्याभावेऽपि न साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वप्रसिद्धिरतः सम्बन्धविशेषावच्छिन्नात्यन्ताभावे वेति । संयोगादिसम्बन्धावच्छिन्नाभाव वेत्यर्थः । प्रथमे गौरवं प्रकाशयति ।व्यापकत्वाद्यनन्तर्भावेनेति । तथा च तदन्तर्भाव आवश्यक इति भावः । द्वितीये गौरवं प्रकाशयति ।प्रमाणाभावेनेति । प्रतियोगित्वादिभिरेव समं अनतिप्रसक्तधर्मस्य स्वरूपसम्बन्धात्मकावच्छेद्यावच्छेदकभावस्यानुभविकत्वादिति भावः । अनतिरिक्तवृत्तित्वपर्यवसायित्वात् । अनतिरिक्तवृत्तित्वरूपत्वात् । ननु व्यापकतायामपि स्वसमानाधिकरणाभावीययत्किञ्चित्प्रतियोगिकत्वाद्यभावमादाय अतिप्रसङ्गवारणाय यावत्तदभावकूटो निवेश्य इति यावत्त्वनिवेशस्तुल्य इत्यत आह ।व्यापकताशरीरेति । प्रतियोगित्वादेरित्यादिना निरुक्तलक्षणघटकतदवच्छेदकत्वपरिग्रहः । सामान्याभावस्य। तादृशप्रतियोगितात्वाद्यवच्छिन्नाभावस्य । इदञ्चावच्छिन्नत्वं प्रतियोगित्वे सर्वमत एव स्वरूपसम्बन्धः न । व्यापकस्य,अन्यथा दर्शितव्याप्तिलक्षणप्रविष्टसाध्यप्रतियोगिकत्वसामान्याभावस्यापि व्यापकतान्तरघटिततया महागौरवापत्तेरित्याह । सम्बन्धादिनिष्ठेति । आदिपदं सम्बन्धान्तरावच्छिन्नाभावपरिग्राहकम् ।सम्बन्धप्रतियोगित्वाभावप्रतियोगित्वयोर्वैलक्षण्यऽप्यतिप्रसङ्गस्य दुर्वारताद्योतकम्। तस्य। सामान्याभावस्य। स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकत्वाभिधानेऽपि तादृशसाध्यतावच्छेदकीयसम्बन्धस्याधिकस्य हेतोर्द्विधा विषयतायाश्च कारणतावच्छेदक निवेशनीयतया व्याप्यवत्तापरामर्शहेतुतागौरवं दुष्परिहरमेवेति भावः । व्यापकसामानाधिकरण्यरूपव्याप्तिधीहेतुतामतेऽपि व्यापकताप्रदर्शकोदाहरणप्रयोगसङ्गतेरत एवेत्याद्युपष्टम्भासङ्गतिरत आह । साधनेति ।

(चि०) अत एव यो यो धूमवान् स सोऽग्निमानि-

---

(१) इति फलितार्थं इति पु० पा० ।

न्युदाहरणवाक्ये साध्यायोगव्यवच्छेदेन धूमव्यापकता वह्नेरुपदर्श्यते, अन्यथा वह्निमानेव धूमवानित्यन्ययोगव्यवच्छेदेनोदाहरणशरीरं स्यात् दोषोऽपि व्यभिचारादिर्न पक्षधर्मव्यापकं साध्यमित्येवोद्भाव्यः ।

(दी०) तद्धेतुतावादिनं निरस्यति । अत एवेत्यादिना । वीप्सासमभिव्याहारादिवशादुद्देश्यधर्मवद्वृत्तेरत्यन्ताभावस्यान्योन्याभावस्य वा प्रतियोगित्वाभावो विधेयधर्मे तद्वति वा भासते, न तु विधेयधर्मतद्वतोरत्यन्तान्योन्याभावानधिकरणत्वमुद्देश्यधर्मवतीति, यद्यदभिधेयं तत्प्रमेयमित्यादावसम्भवादिति भावः । साध्येति । अयोगः । अभावप्रतियोगित्वम्, तथा च साध्ये साधनवन्निष्ठाभावप्रतियोगित्वव्यवच्छेदेनेत्यर्थः । स्यादिति । न स्याच्च केवलान्वय्यनुमानमित्यपि द्रष्टव्यम् । न पक्षेति । एतच्च विरोधस्यातिस्फुटत्वमभिमन्धाय, साध्याभाववद्वृत्तित्वबुद्धेरपि व्यापकताधीविरोधित्वादिति वदन्ति ।

(गा०) ननु वीप्सावशात् उद्देश्यधर्मधूमादौ विधेयवह्निमदन्यावृत्तित्वमेव प्रतीयते, न तु विधेयधर्मे उद्देश्यगतधर्मव्यापकत्वं इत्युपेयमतो न साध्यवदन्यावृत्तित्वज्ञानहेतुतामतेऽप्युक्तोदाहरणासङ्गतिरित्यत आह । वीप्सेति । वीप्सासमभिव्याहारः । वीप्सितपदसमभिव्याहार । उद्देश्यधर्म । उद्देश्यगतधर्मः, स च वीप्सितयत्पदेतरोद्देश्यवाचकपदघटितवाक्ये ग्रामो ग्रामो रमणीय इत्यादौ तत्पदोपस्थाप्यो ग्रामत्वादिरूपोद्देश्यतावच्छेदकधर्म एव यत्पदवीप्सास्थले यो यो धूम-

घानित्यादौ तु यत्पदार्थाविधेयतया विवक्षितो धूमादिः तस्यापि यत्तद्घटितवाक्यद्वयोद्देश्यधर्मसम्बद्धतया विवक्षितत्वात् । अन्योन्याभावघटितव्यापकतायां लघुत्वादन्योन्याभावस्य चरममुपादानम् । प्रतियोगित्वाभावः । प्रतियोगितानवच्छेदकावच्छिन्नत्वम् । विधेयधर्मे । विधेयकोटिनिविष्टधर्मे । स च धर्मो ग्रामो ग्रामो रमणीय इत्यादौ यथायोगं द्विरुक्तोद्देश्यवाचकपदसमभिव्याहृतपदोपस्थाप्यो विधेयतावच्छेदकरमणीयत्वादिः विधेयो रमणीयाभेदादिश्च, यो यो धूमवान् स वह्निमान् स न ह्रद इत्यादौ च वीप्सितपदघटितवाक्यान्तरस्थपदोपस्थाप्यो वह्न्यादिरूपविधेयतावच्छेदको ह्रदभेदादिरूपो विधेयश्च विधेयधर्मतद्वतोरत्यन्तान्योन्याभावप्रतियोगित्वाभ्यां यथासंख्यमन्वयः । उद्देश्यविधेयधर्मौ वीप्सितपदघटितवाक्योपस्थाप्योद्देश्यतावच्छेदकविधेयाविरयपव्याख्यानम्, यो यो धूमवान् स वह्निमानित्यादौ धूमवह्न्योर्विभिन्नवाक्योपस्थाप्ययोर्यत्तत्पदार्थांशे विधेयत्वात्, धूमादेर्वह्न्याद्युद्देश्यतावच्छेदकत्वविरहात् ।

यत्तु यत्तत्पदयोस्तात्पर्यग्राहकत्वमेव, धूमवान् वह्निमानित्यनयोरेवोद्देश्यविधेयभावेनान्वय इति, तदनुदम्, यो य इच्छति स जानाति इत्यादावाख्यातार्थस्य व्युत्पत्तिविरोधेन धर्मानुपस्थित्या च उद्देश्यतावच्छेदकत्वासम्भवात् । यत्पदाभ्यां विरूपेणोपस्थितयोरपि तत्पदेन परामर्शादिति मणिकारलिपिविरोधाच्च ।

एतेन पूर्ववाक्यमेव निरर्थकं उत्तरवाक्यस्थतत्पदं धूमाद्यवच्छिन्नपरमित्यपि निरस्तम् । अप्रक्रान्तस्य तत्पदेन परामर्शायोगाच्च । विधेयधर्मतद्वतोरत्यन्तान्योन्याभावाभ्यां यथासंख्यमन्वयः । उद्देश्यधर्मवतीति । न तु भासते इत्यनेनान्वयः । धूमवति वह्नितद्वतोरत्यन्तान्योन्याभावानधिकरणत्वमान अर्थाद् धूमे वह्निमदन्याधिकरणत्वाभावरूपव्याप्तिलाभः सम्भवतीति न परानभिमतप्रतिक्षेपशङ्का । अत एव वह्निमानेव धूमवानित्यादिमूलस्यापि सङ्गतिः, वह्निमदन्यतादात्म्यव्यवच्छेदपरत्वेन धूमवत एव तादृशवाक्यात् प्रतीतिः । असम्भवादिति । विधेयधर्मधर्माप्रसिद्धेरित्यर्थः । इदमत्राधेयम्, ग्रामो ग्रामो रमणीय इत्यादौ ग्रामत्वव्यापकत्वविशिष्टभेदादेरुद्देश्ये रमणीयादिसम्बन्धरोपणमात्व्यापकता-

बोधनिर्वाहः, व्यापकत्वस्यापदार्थत्वेन प्रकारत्वायोगात् ।

न च द्विरुक्तग्रामपदं ग्रामत्वव्यापकताविशिष्टार्थकं तस्य चाभेदसम्बन्धेन विधेयान्वयः शक्तिग्राहकन्तु द्विरुक्तानुशासनमेवेति वाच्यम् । तथा सति उद्देश्यतया ग्रामादीनामन्वयानुपपत्तेः स्वातन्त्र्येणानुपस्थितत्वात् ।

न चैकग्रामपदं उद्देश्यवाचकमपरञ्चोक्तार्थकमिति वाच्यम् । एकपदस्थाने उभयात्मकपदद्वयादेशात् (१)पदद्वयस्यैवाभावात्, द्वितीयाद्यर्थकर्मत्वादौ प्रकृत्यर्थस्याधेयतयैवान्वयस्य व्युत्पन्नतया, ग्रामं ग्रामं ददातीत्यादौ वीप्सितपदस्य व्यापकतार्थकत्वे व्यापकावि-कर्मकदानादेः प्रत्ययापत्तेश्च । न च उद्देश्यविधेयभावस्थले वीप्सां विनापि उद्देश्यतावच्छेदकावच्छेदेन विधेयभानाद्व्यापकताबोधार्थं द्विरुक्तप्रयोगो व्यर्थ एव यदि व्यापकताया न प्रकारतेति वाच्यम् । उद्देश्यतावच्छेदकसामानाधिकरण्यमात्रेणापि क्वचिद्विधेयबोधाद्व्यापकतापरत्वस्फुटीकरणाय द्विरुक्त्यादरात् ।

अस्तु [illegible]लक्षणया ग्रामादिपदस्यैव ग्रामत्वव्यापकरमणीयत्वादिना निरूढलक्षणा निरूढलक्षणाया द्विरुक्तोद्देश्यवाचकपदसमभिव्याहारनियतत्वाच्च तन्निर्वचनवैयर्थ्यम्, ग्रामं ग्रामं ददातीत्यादौ कर्मत्वादिरूपविधेयवाचकविभक्तेस्तु न लक्षणा सम्भवति सुविभक्त्यादेस्तत्र व्यापकत्वं सम्बन्ध एव, दानकर्मतात्वादिना कर्मत्वादेरनुपस्थितावपि तद्रूपावच्छिन्नव्यापकत्वं कर्मत्वादौ ग्रामादेः सम्बन्धः न तु शुद्धकर्मतात्वावच्छिन्नमतिप्रसङ्गात् । यो यो धूमवान् स वह्निमान् इत्यादौ तु द्विरुक्तयत्पदस्य व्यापकत्वमर्थः, तत्र प्रतियोगित्वेन धूमस्यानुयोगित्वेन वह्नेरन्वय इति प्रलपितमपि तुच्छम्, नामार्थयोर्भेदान्वयायोगात् यत्पदस्य धूमपदसामानाधिकरण्याभावेन सामान्यतया नपुंसकतापत्तेः, यत्र यत्र धूम इत्यादौ आधारत्वकयार्थानन्वयेन सप्तम्यनुपपत्तेश्च । यो यो धूमवानित्यादौ तु वह्न्यादिपदस्य धूमव्यापकवह्नित्वादिना निरूढलक्षणैव उद्देश्यतावच्छेदकस्य व्यापकतया एव विधेयसंसर्गघटकतया भानस्य प्रामाणिकतया पूर्वोक्तयुक्त्या च तत्र धूमादेरुद्देश्य-

(१) समुदायादेशादिति पु० पा० ।

तावच्छेदकतायिरहेण सद्यापकतायाः संसर्गघटकत्वासम्भवात् ।

प्राञ्चस्तु वीप्सास्थले व्यापकताया न शाब्दबोधः किन्तु द्विरुक्तग्रामादिपदाद् ग्रामत्वादिनोपस्थितेषु सकलग्रामादिषु, द्विरुक्तयत्पदाच्च महानसत्वमहानसान्यत्वादिना उपस्थितेषु, तत्पदेन च तेन तेन रूपेण परामृष्टेषु सकलधूमादिमत्सु विधेयसम्बन्धः शब्दात् प्रतीयते, तावता क्वचिदपि व्याप्यधिकरणे व्यापकाभावशङ्काया अभावात् (१)व्यभिचारज्ञानाभावसहकृतसहचारदर्शनसत्वात्, तदुत्तरकालं मानस एव व्यापकताबोधः । सकृदुच्चरितेत्यादिनियमस्य प्रामाणिकत्वेऽगत्या तस्य सङ्कोचः ।

अथ तादृशनियमासत्वे द्विरुक्तवैयर्थ्यमिति चेन्न । सकलव्यक्तिपरत्वग्राहकतया तदुपयोगात् यो य इत्यस्य पदद्वयभ्रमेण महानसत्वत्वादिरूपधर्मिद्वयमात्रपरत्वभ्रमसम्भवादतिस्फुटत्वाय व्याप्यातिरिक्तस्थले तत्पदेऽपि वीप्सा दृश्यते एकतत्पदेनापि धर्मिद्वयपरामर्शसम्भवात्तन्मात्रपरत्वे तत्पदान्तरवैयर्थ्यमिति प्रतिसन्धानेन तादृशभ्रमनिवृत्तिसम्भवात्, एकदा यावद्व्यक्तिप्रत्यायनेच्छैव वीप्सापदार्थः, युगपद्व्याप्तुमिच्छा वाप्सा इत्यभियुक्तैर्वारणात्, न तु व्यापकत्वप्रत्यायनेच्छा युगपदित्यस्य वैयर्थ्यापत्तेः । यो यो धूमवानित्यादौ यत्पदार्थव्यापकत्वबोधात् यत्पदं द्विर्वचनानुपपत्तेश्चेत्याहुः । अत्र व्यापकतायाः शाब्दबोधानुपगमे यत्पदेन महानसत्वादिना सकलव्यक्तिषु वह्न्यादिमत्ताबोधेऽपि धूमादिमत्त्वेन तेष्वेव वह्न्याद्यभाववत्त्वशङ्कासम्भवान्न मनसा व्यापकतानिश्चयसम्भवतीत्यनुपपत्तिः समानविषयकत्वमात्रेण विरोधितात्पर्यवस्थापनमन्तरेण दुर्वारैवेति चिन्त्यम् ।

साध्यायोगव्यवच्छेदपदेन व्यापकतालाभार्थं व्याचष्टे । अयोग इति । अभावप्रतियोगित्वम् । हेतुमन्निष्ठाभावप्रतियोगित्वम्, विरोध्यर्थकनञा तदधिकरणयोगविरोधिनोऽयोगपदार्थत्वं बोध्यत इत्यभिप्रायः । साध्यस्यायोगान्वये तन्निष्ठव्यापकत्वालाभादयवच्छेदान्वयितया व्याचष्टे । तथा चेति । व्यवच्छेदेनेति । व्यापकतान्वयी अभेदस्तृतीयार्थः, न्यूनताभङ्गाय साध्यवदन्यावृत्तित्वघीहेतुतायां (२)केवलान्वय्यनुमा-

( १ ) असम्भवात् इति पु० पा० ।

( २ ) साध्यवदन्यावृत्तित्वधीहेतुतामत इति पु० पा० ।

नानुपपत्तिदोषमपि दर्शयति । न स्याच्चेति । हेतौ साध्यप्रतियोगिकाभावसामानाधिकरण्यरूपव्यभिचारधियः साध्ये हेतुमन्निष्ठाभावप्रतियोगित्वाविषयकतया समानविषयकत्वेन विरोधितामते व्यापकताधीविरोधित्वमावश्यकमिति हेतु' साध्यव्यभिचारीत्युद्भावनस्यापि युक्तत्वाद्दोषोऽपीत्यादिमूलासङ्गतिरत आह । एतच्चेति । विरोधस्य । व्यापकताधीप्रतिबन्धकत्वस्य । (१)अतिस्फुटत्वम् । सर्वथादिसिद्धत्व, अभिसन्धाय न तु हेतुधर्मिकव्यभिचारधियोऽविरोधित्वम् । अत्रैव हेतुमाह । साध्याभावेति । समानविषयत्वेन विरोधितामतमवलम्ब्येति भावः । स्वय समानप्रकारकधिय एव विरोधित्वोपगमाद् वदन्तीति ।

( चि० ) अथ पर्वतवृत्तिधूमव्यापको वह्निरिति परामर्शो यदि तदा पर्वतीयधूमं प्रति व्यापकतायाः पर्वतधूमसामानाधिकरण्यनैयत्यात् पर्वतवह्निः परामर्शविषय एवेति किमनुमेयमिति चेत् ? तर्हि पर्वतीयधूमे नियतसाध्यसामानाधिकरण्यस्य व्याप्यत्वस्य भानं साध्यसामानाधिकरण्यभाननियतामिति व्याप्यत्वभानेऽपि तुल्यम् । यदि च स्मृता व्याप्तिर्धूमेऽवगम्यते तदा व्यापकत्वेऽपि समानम् । वस्तुतस्तु व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं न तु धूमसामानाधिकरण्यं, व्याप्यत्वन्तु सामानाधिकरण्यविशेष इति तत्रैवानुमितिरफला स्यात् । न चैवं परामर्शस्य चाक्षुषत्वं न स्याद्व्यापकस्य विशेष्यस्येन्द्रियासन्निकर्षादिति वाच्यम् । इष्टत्वात्, असन्निकृष्टधूमादाविव मानस एव हि सर्वत्र परामर्शः, चक्षुरन्वयव्यतिरेकानुविधानञ्च पक्षवृत्तिधूमोपनयोपक्षीणम् ।

(१) 'विरोधस्य' अव्यापकताधियो व्यापकताधीप्रतिरोधस्य इति पु० पा० ।

( दी० ) मानस एवेति । प्रायिकत्वाभिप्रायेण, तेन क्वचिच्छब्दादिना क्वचिच्च साध्येन्द्रियसन्निकर्षात् परामर्शोऽपि न क्षतिः, पक्षे साध्यसम्बन्धस्याग्रहात् ग्रहेऽप्यनुमित्सया अनुमितिसम्भवात् ।

( गा० ) मूले किमनुमेयमिति सर्वत्र वास्तवपक्षीयसाध्यभानमेवानुमानफलमित्यभिमानेन, स्मृता व्याप्तिः पक्षतावच्छेदकविशिष्टे साध्यसम्बन्धमगृहीत्वैव धूमेऽवगम्यते पक्षतावच्छेदकानवच्छिन्नेऽपि पक्षे साध्यसम्बन्धग्रहादनुमानवैफल्ये वैपरीत्यमेव इत्याह । वस्तुतस्त्विति । न तु धूमसामानाधिकरण्यमिति । येन पर्वतीयधूमसामानाधिकरण्यस्य वह्नौ भाने तादृशधूमाधिकरणपक्षसम्बन्धस्य तत्र भानमावश्यकमिति शङ्क्येतेति शेषः । मानस एव परामर्श इति योजना, सर्वत्र हेतुरिति शेषः । अत्र सर्वपदस्यानुमितिसामान्यार्थकत्वेऽसङ्गतिः साध्यविशेष्यकस्यापि परोक्षरूपस्य कदाचिच्चाक्षुषादिरूपस्य च परामर्शस्यानुमितिजनकत्वसम्भवादत आह दीधितौ । प्रायिकत्वाभिप्रायेणेति । इन्द्रियासन्निकृष्टसाध्यकप्रत्यक्षपरामर्शजन्यानुमितिसामान्याभिप्रायेण इत्यर्थः, साध्येन्द्रियसन्निकर्षसत्त्वे प्रत्यक्षतः साध्यसिद्धेः कथं परामर्शेनानुमितिर्जननीयेत्याकाङ्क्षायां तदुपपादकं हेतुमाह । पक्ष इति ।

( चि० ) अथ जनकज्ञाने उपसर्जनतया भातस्य पक्षस्य पर्वतादेरनुमितौ प्राधान्येन भानं न स्यात्, न हि जनकज्ञाने उपसर्जनतयाऽवगतं जन्यज्ञाने प्राधान्येन भासते, तथा दर्शनात् । न चानुमितेस्तथात्वमसिद्धम्, पर्वतोऽयं वह्निमानित्यनुमितेर्लोकसिद्धत्वादिति चेन्न । पुरुषस्य दण्ड इति ज्ञानानन्तरं दण्डी पुरुष इति ज्ञानजन्यज्ञानदर्शनात् अन्यथा तवापि कथं पक्षविशेष्यकत्वनियमः, न हि कारणीभूतज्ञाने यद् विशेषणतया भासते तत्कार्यीभूतेऽपि तथा, इह भूतले घ-

टो नास्तीति ज्ञानजन्ये घटाभाववद् भूतलमिति ज्ञाने तत्र च व्यभिचारात् तस्मात् पक्षवृत्तिलिङ्गपरामर्शस्यायं स्वभावो यत्स्वाश्रयविशेष्यकामनुमितिं जनयति नातथाभूतामेवं ममापि तुल्यमिति ।

( दी० ) व्यभिचारादिति । नच यत्र यदुभयवैशिष्ट्यावगाहि ज्ञानं कारणं तत्र तदेकतरोपसर्जनस्यान्यतरस्य जन्यज्ञाने प्राधान्येन न भानमिति वाच्यम् *१ मानाभावात् । अत्र चेदमस्वरसबीजम्, पक्षधर्मसमानाधिकरणाभावप्रतियोगित्वत्वेनाभावज्ञानं वह्न्यादावभ्रान्तमसम्भवि तादृशप्रतियोगित्वप्रतियोगिताकाभावावगाहि चातिप्रसक्तं पक्षधर्मधूमसमानाधिकरणाभावप्रतियोगित्वत्वेन च तज्ज्ञानं न व्यापकं येन रूपेण पक्षधर्मताग्रहः तद्रूपावच्छिन्ने व्यापकताज्ञानं च मीमांसकमतनिरासेनैव निरस्तमिति । स्वर्गकामो यजेतेत्यादावन्वयबोधं शब्दमणिदीधितौ विवेचयिष्यामः ।

* ( गा० ) जनकज्ञान इत्यादिनियमे विशेषणपूरणेन व्यभिचारोद्धारमाशङ्कते । यदुभयेति । यदुभयनिरूपितवैशिष्ट्यविषयतावच्छिन्नस्यजनकताश्रयज्ञाने तयोरेकतरांशे उपसर्जनतया भातस्य तदुभयान्यतरस्य न प्राधान्येन स्वविषयतेत्यर्थः । दण्डी पुरुष इति ज्ञाननिरूपितायां पुरुषे दण्ड इति ज्ञाननिष्ठजनकतायां च दण्डपुरुषोभयवैशिष्ट्यविषयिता नावच्छेदिका अपि तु दण्डदण्डत्ववैशिष्ट्यविषयतैवेति पुरुषे दण्ड इति ज्ञाने दण्डोपसर्जनतया भातस्यापि पुरुषस्य फलीभूत दण्डी पुरुष इति ज्ञाने प्राधान्येन भानेऽपि न क्षतिरिति भावः ।

चैत्रानुयोगिकदण्डवैशिष्ट्यज्ञानत्वेन दण्डविशिष्टचैत्रानुयोगिककुण्डलवैशिष्ट्यज्ञानजनके दण्डिचैत्रे कुण्डलमिति ज्ञाने कुण्डलांशे उपसर्जनतया भातस्य चैत्रस्य फलीभूतज्ञाने प्राधान्येन भानात् तयोरेकतरांशे इति दण्डानुयोगिकत्वचैशिष्ट्यज्ञानत्वे-

न रक्तदण्डवान् पुरुष इति विशिष्टवैशिष्ट्यधीजनके पुरुषे रक्तदण्ड इति ज्ञाने दण्डोपसर्जनतया भातस्य पुरुषस्य फलीभूतज्ञाने प्राधान्येन भानात्तदुभयान्यतरस्येति ।

अथैवमपि व्याप्यविशेष्यकपक्षविशेषणकपरामर्शात्पक्षविशेष्यकानुमितेरुत्पत्त्या व्यभिचारः ।

यदि चानुभवे विवदमानस्तत्र साध्यविशेष्यकानुमितिमेव स्वीकरोति तथाऽपि व्याप्त्यंशे उपसर्जनतया जनकज्ञाने भातसाध्यस्यानुमितौ प्राधान्येन भानाद्व्यभिचारो दुर्वार एव यदि चानुमितेः पक्षविशेष्यकत्वनियमानुभवस्य उक्तनियमस्य चानुरोधात्पक्षविशेष्यक एव परामर्शोऽनुमितिहेतुरुच्यते तदाऽपि यत्र पक्षस्यैव हेतुता तत्र पक्षांशे उपसर्जनतया भातस्य हेतुरूपपक्षस्यानुमितौ प्राधान्येन भानाद्व्यभिचारः । अभावादिपक्षकानुमितौ प्राधान्येन भासमानस्याप्यभावादेर्जनकीभूतव्याप्तिज्ञाने प्रतियोगितांशे उपसर्जनतया भानाच्च व्यभिचारः । एवं च दण्डिचैत्रे दण्ड इति ज्ञाने दण्डांशे प्रकारीभूतस्य चैत्रस्य तज्जन्ये दण्डी चैत्रः कुंडलीति ज्ञाने प्राधान्येन भानादपि व्यभिचार इति चेत् ? नैवम् । उपसर्जनतयेति सावधारणं तथा च तदेकतरांशे उपसर्जनतया भातस्येत्यस्य तदेकतरविशेष्यतया भातस्येत्यर्थः । विशेष्यत्वं च साक्षात्परंपरासाधारणमतोऽभावादिपक्षकानुमितिजनकपरामर्शेऽभावादिरूपपक्षस्य व्याप्त्यन्तर्गतप्रतियोगितांशे प्रकारतयैव परंपरया विशेष्यतयाऽपि ज्ञानान्न तद्विशेष्यतयाऽभातत्वरूपहेतुसत्त्वमिति न व्यभिचारः ।

न च परामर्शे तादृशपक्षस्य परम्परया विशेष्यत्वेऽपि कारणीभूतव्याप्तिज्ञाने उपसर्जनतयैव भानात् व्यभिचारस्य दुर्वारता, जनकज्ञानसामान्ये तद्विशेष्यत्वनिवेशे च व्यापकतापरामर्शहेतुतामतेऽपि क्वचित्समूहालम्बनरूपज्ञाने पक्षस्य विशेष्यतया तत्र हेतुसत्त्वदुर्भिक्षमिति वाच्यम् । फलोपधायकज्ञानसामान्ये ,साक्षाज्जनकयत्किञ्चिज्ज्ञाने वाऽविशेष्यकत्वस्य विवक्षणात् व्याप्यविशेष्यकपरामर्शश्च नानुमितौ हेतुरित्याशयः पक्षस्य व्यापकतापरामर्शे पक्षतावच्छेदकांशे विशेष्यत्वेऽपि तदुभयेत्यनेन पक्षहेतूभयमुपादाय तदेकतराविशेष्यतया तस्य हेतुमत्त्व सुघटम् ।

न चैवमपि रक्तो दण्ड इति ज्ञाने विशेषणतयैव भातस्य रक्तत्वस्य तज्जन्ये रक्तदण्डवान् पुरुषः रक्तत्वं प्रमेयमित्यादौ प्राधान्येन भानाद्व्यभिचार इति वाच्यम् । न प्राधान्येन भानमित्यस्य च तज्ज्ञानीयप्रकारतावच्छिन्नत्वे सति तद्विषयत्वमित्यर्थकत्वात् ।

यत्तु यदुभयवैशिष्ट्यावगाहि धर्मितावच्छेदकावच्छिन्नविषयतानिरूपितप्रकारतात्वेन यज्जनकतायामवच्छेदिका या स्वनिरूपितविशेष्यताव्यधिकरणप्रकारता तदाश्रयस्तज्जनकताप्रतियोगिकजन्यतावच्छेदकीभूता या विशेष्यता तदनाश्रय इत्यर्थः । सास्नाभाववद्व्याप्यगोत्वाभाववान् गोत्वाभाव इति ज्ञानजन्ये गोत्वाभावः सास्नाभाववानिति ज्ञाने विशेष्यतया भासमाने गोत्वाभावे गोत्वाभावत्वावच्छिन्नविषयतानिरूपितप्रकारतात्वेन जनकतावच्छेदिका या प्रकारता तदाश्रये व्यभिचारवारणाय स्वनिरूपितविशेष्यताव्यधिकरणत्वं हेतुघटकप्रकारतायां निवेशितम् । वह्निव्याप्यं पर्वत इत्याकारकज्ञानजन्यानुमितिविशेष्ये व्याप्यत्वावच्छिन्नविषयतानिरूपितविषयतात्वेन जनकतावच्छेदिका या प्रकारता तदाश्रये व्यभिचारवारणाय प्रकारतात्वेन 'जनकतावच्छेदकत्वं विवक्षणम् । व्याप्यपक्षविशेष्यकपरामर्शयोरनुगमरक्षार्थं उक्तपरामर्शीयपक्षविषयतायाः प्रकारतात्वेन जनकतावच्छेदकत्वानुपगमात् तथा विवक्षणे तादृशव्यभिचारानवकाशात् गोत्वाभावव्याप्यसास्नाभाववान् गोत्वाभाव इति पक्षविशेष्यकतादृशज्ञानजन्यानुमितिविशेष्ये गोत्वाभावे व्याप्तिविशिष्टसामानाधिकरण्यान्तर्गताधिकरणांशे प्रकारतायाः स्वाधिकरणविषयतानिरूपितप्रकारतात्वेन जनकतावच्छेदिकाया आश्रये व्यभिचारवारणाय धर्मितावच्छेदकावच्छिन्नविषयतानिरूपितत्वेनावच्छेदकसाध्यमानस्यानुमित्यनुपयोगितया धर्मितावच्छेदकावच्छिन्नत्वेनाधिकरणविषयताया अनुमितिजनकतानवच्छेदकत्वाच्च तत्र व्यभिचारः । साध्ये जन्यज्ञानीयविशेष्यतामुपेक्ष्य जन्यतावच्छेदकीभूतविशेष्यतानिवेशात् दण्डी पुरुष इति ज्ञानप्रकारताश्रये दण्डपुरुषे दण्ड इति तज्जन्यज्ञानविशेष्यताश्रये दण्डे न व्यभिचारः । तादृशविशेष्यतायाः दण्डी पुरुष इति विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकत्वाभावादिति । तच्चिन्त्यम् । पर्यंतविशेष्य-

कपरामर्शजन्यपक्षीयधूमत्वावच्छिन्नलिङ्गकपर्वतपक्षकानुमितौ विशे-ष्यपर्वते स्वनिरूपितविशेष्यतासमानाधिकरणविशेष्यतावच्छेदकी-भूतधूमत्वावच्छिन्नविषयतानिरूपितप्रकारताश्रये व्यभिचारादिति।

अत्र । व्यापकतापरामर्शस्यानुमितिहेतुत्वे । पक्षधर्मेति । प-क्षधर्मसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नाभावस्य ज्ञानं पक्षधर्मरासभादिसमानाधिकरणाभावप्रतियोगित्वमिति वह्न्यादौ प्रमात्मकं न सम्भवतीत्यर्थः । तथा च तस्यानुमितिहेतुत्वेऽभ्रान्त-स्याऽनुमितिः स्यादिति भावः । तादृशप्रतियोगित्वप्रतियोगिकत्वे-न धूमादिसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नाभावज्ञानस्य हेतुतायामुक्तदोषाभावात्तत्र दोषान्तरमाह । तादृशेति । अवगाहिते-त्यत्र ज्ञानमित्यनुषञ्जनीयम् । अतिप्रसक्तमिति । व्यभिचारात् साधा-रणमित्यर्थः । पक्षधर्मधूमसमानाधिकरणाभावप्रतियोगित्वत्वावच्छि-न्नप्रतियोगिताकत्वावगाह्यभावज्ञानहेतुतां दूषयति । पक्षधर्मेति । त-ज्ज्ञानम् । अभावावगाहित्वम् । अव्यापकम् । विशुद्धधूमत्वादिरूपहे-तुतावच्छेदकावच्छिन्नव्यापकताज्ञानासङ्ग्राहकम् । पक्षधर्मधूमत्वा-वच्छिन्नव्यापकतात्मकाद्भावाद् धूमत्वावच्छिन्ननिरूपितव्यापक-तात्मकस्य सामान्याभावस्यान्यत्वादिति भावः ।

न च तादृशज्ञानासङ्ग्रहो न दोषाय सर्वत्र पक्षीयधूमादि-समानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नाभावज्ञानादेवानुमिति-रुपेगन्तव्येति वाच्यम् । ईदृशव्यापकताया ग्रहे यत्र पर्व-तीयधूमस्तत्र वह्निरिति सहचारग्रहस्यापेक्षिततया महानसादौ सहचारदर्शनेनास्याग्रहीतत्वेन पक्षीयधूमदर्शनदशायामुपनयासम्भ-वात् । कथञ्चित् उपनयसम्भवेऽपि पूर्वगृहीतव्यापकताया अनुप-योगितापत्त्या तज्ज्ञानादनुमितिस्वीकारेऽनुभवविरोधात् ।

न च पक्षीयधूमत्वावच्छिन्नव्यापकताज्ञानाद्बहूनामपि कश्चिदनु-मित्युत्पत्त्या तद्धेतुत्वे कथमनुभवविरोध इति वाच्यम् । पक्षीयधूम-त्वेन पक्षधर्मतावगाहिन एतादृशव्यापकताघटितव्याप्तिविषयकप-रामर्शस्य मयाऽनुमितिहेतुत्वोपगमात् । तेन रूपेण पक्षधर्मताज्ञानं विना तादृशव्यापकताज्ञानादनुमितेरनुभवविरुद्धोत्पादकत्वात् ।

यत्तु धूमसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नप्रतियोगि-ताकत्वसम्बन्धेन पक्षधर्मधूमसमानाधिकरणाभावप्रतियोगित्वत्वेन

तादृशाभावप्रतियोगित्वप्रकारकमभावज्ञानमनुमितिहेतुरिति । तदसत् । यादृशधर्मप्रकारेण प्रतियोगिनोऽभावांशे प्रकारता तादृशस्यैव प्रतियोगितावच्छेदकत्वभानं न न्यूनेऽधिके चेत्यनुभवेन पक्षीयत्वघटितधर्मप्रकारेण प्रतियोगिनि भासमाने पक्षीयत्वांशं परित्यज्य प्रतियोगितावच्छेदकत्वस्य विरुद्धत्वात् । न हि नीलो, घटो नास्तीत्याद्याकारिका कदाचिदपि घटादिसामान्याभावबुद्धिः । मा वा तादृशं प्रतियोगितावच्छेदकत्वभानमनुभवोऽविरोधात् । तथाप्युक्तज्ञानस्य तादृशज्ञानत्वरूपेणानुमितिहेतुत्वे धूमसमानाधिकरणाभावांशस्य सम्बन्धविधया विषयतायाः प्रकारत्वेन विषयतायाश्चावच्छेदकतयाऽनुप्रवेशाद्गौरवम् । व्याप्यत्वधीहेतुतामते च प्रतियोगितासम्बन्धेन धूमसमानाधिकरणाभावप्रतियोगित्वस्याघच्छिन्नप्रकारकस्यैव लघोरवच्छेदकत्वात् ।

न चोभयत्वाद्यवच्छिन्नप्रतियोगिताकत्व सम्बन्धविधया धूमसमानाधिकरणाभावप्रतियोगित्वस्य च प्रतियोगित्वांशे प्रकारतयाऽवगाहमानां बुद्धिं वारयितुं व्याप्यपरामर्शहेतुतावादिनाऽपि धूमसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नप्रतियोगितासंसर्गकत्वपर्यन्तं निवेश्यमिति न लाघवमिति वाच्यम् । प्रतियोगिप्रकारतावच्छेदकधर्मावच्छिन्नत्वोपरागेणैव प्रतियोगितायाः संसर्गत्वोपगमेनोक्तज्ञानस्यैवासिद्धेः ।

अथ व्यापकताधीहेतुतामतेऽपि प्रतियोगितासंसर्गकत्वमात्रं निवेश्यम्, शुद्धप्रतियोगित्वत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गकज्ञानादनुमितिरिष्यत एव, उभयत्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन पक्षीयधूमसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नप्रकारकं ज्ञानं तेनापि नेष्यते प्रतियोगिनि प्रकारीभूतो यादृशो धर्मस्तदवच्छिन्नत्वतद्घटकधर्मावच्छिन्नत्वान्यतररूपेणैव प्रतियोगितायाः संसर्गतोपगमात् इति चेत् ? माभूदेव गौरवम्, तथाऽपि किञ्चिदंशपरित्यागेन प्रतियोगिप्रकारीभूतधर्मे प्रतियोगितावच्छेदकत्वपर्यन्तावगाहनोपगमे बाधादिबुद्धेः प्रतिबन्धकतायां गौरवेण तस्य हेतुतया उक्तपरामर्शहेतुत्वासम्भवस्तथा हि घटत्वाद्यवच्छिन्नविशिष्टबुद्धिं प्रति घटादिसामान्याभावज्ञानस्य तादृशज्ञानत्वेन न प्रतिबन्धकता घटादिसामान्याभावत्वेनाऽभावान्तरावगाहि-

प्रमासंग्रहात् । नाऽपि प्रतियोगितासम्बन्धेनाभावांशे शुद्धघटत्वाद्यवच्छिन्नप्रकारकज्ञानत्वेन शुद्धघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वसंसर्गकनीलघटत्वाद्यवच्छिन्नप्रकारकमवन्मतसिद्धज्ञानासङ्ग्रहाद्यापि शुद्धघटत्वाद्यवच्छिन्नप्रतियोगितासंसर्गेण प्रतियोगिप्रकारकाभावज्ञानत्वेन, शुद्धघटत्वाद्यवच्छिन्नतया तदनवच्छिन्नप्रतियोगित्वावगाहिभ्रमासङ्ग्रहाच्च । किन्तु संसर्गघटकतया घटत्वाद्यंशे प्रतियोगित्वावच्छेदकत्वपर्याप्त्यवगाहिज्ञानत्वेनैव अस्मन्मते च प्रतियोगितासंसर्गकघटत्वादिपर्याप्तप्रकारतावच्छेदकताकज्ञानत्वेन स्वरूपसत्पर्याप्तिनिवेशापेक्षया च पर्याप्त्यवगाहितानिवेशमते ऽनेकवियत्ताद्यनिवेशाधिक्याद्गौरवमिति सर्वत्र पक्षीयत्वविशिष्टतत्तद्धेतुनिरूपितव्यापकतापरामर्शादेवानुमितिः, तादृशव्यापकतायाः माग्ग्रहेऽपि तद्घटकप्रत्येकपदार्थज्ञानाहितविशिष्टवैशिष्ट्यावगाहिपरामर्शस्य त्वन्मते पक्षीयधूमाद्यव्यापकत्वशङ्कानिरासद्वारा उक्तपरामर्शो उपयुज्यत इति तु समीचीनतया प्रतिभाति ।

ननूक्तव्यापकताज्ञानवत् स्वर्गकामो यजेतेत्यादिविधिवाक्यजन्यस्वर्गजनकताघटकव्यापकताबोधोऽपि वितर्कग्रस्त इति भवतामपि का गतिस्तथा हि तत्र स्वर्गव्यापकत्वं स्वर्गसमानाधिकरणाभावप्रतियोगितावच्छिन्नाभावः तदा यागत्वावच्छिन्ने तद्बाधो गङ्गास्नानादिजन्यस्वर्गस्य यागव्यभिचारात् । नापि स्वर्गसमानाधिकरणाभावप्रतियोगित्वप्रतियोगिकोऽभावः अतिप्रसक्तस्य द्वित्वाद्यवच्छिन्नतदभावस्यापि तथात्वात् । नापि विजातीयस्वर्गसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नाऽभावः । कार्यकारणभावे गृहीत एव तदन्यथाऽनुपपत्त्या कार्यतावच्छेदकजातिकल्पनात् प्रथमं मानाभावेन तादृशजात्यनुपस्थित्या तद्घटितरूपावच्छिन्नाभावस्य विधिना बोधयितुमशक्यत्वादित्यत आह । स्वर्गेति । अयमभावः, स्वावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नत्वस्वानुयोग्यनुयोगिकत्वोभयसम्बन्धेन तद्रूपावच्छिन्नाभावाधिकरणताविशिष्टस्वक्षणावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकतद्रूपावच्छिन्ननिष्ठाऽन्यथासिद्धिनिरूपकतानवच्छेदकधर्मवत्त्वमेव तद्रूपावच्छिन्नस्य तज्जनकत्वं ईदृशं तु यागत्वाद्यवच्छिन्नं स्वर्गादिजनकत्वं

तादृशाभावप्रतियोगित्वप्रकारकमभावज्ञानमनुमितिहेतुरिति । तदसत् । यादृशधर्मप्रकारेण प्रतियोगिनोऽभावांशे प्रकारता तादृशस्यैव प्रतियोगितावच्छेदकत्वभानं न न्यूनेऽधिके चेत्यनुभवेन पक्षीयत्वघटितधर्मप्रकारेण प्रतियोगिनि भासमाने पक्षीयत्वांशं परित्यज्य प्रतियोगितावच्छेदकत्वस्य विरुद्धत्वात् । न हि नीलो घटो नास्तीत्याद्याकारिका कदाचिदपि घटादिसामान्याभावबुद्धिः । मा वा तादृशं प्रतियोगितावच्छेदकत्वभानमनुभवोऽविरोधात् । तथाप्युक्तज्ञानस्य तादृशज्ञानत्वरूपेणानुमितिहेतुत्वे धूमसमानाधिकरणाभावावगाहस्य सम्बन्धविधया विषयतायाः प्रकारत्वेन विषयतायाश्चावच्छेदकतयाऽनुप्रवेशाद्गौरवम् । व्याप्यवत्ताधीहेतुतामते च प्रतियोगितासम्बन्धेन धूमसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नप्रकारकस्यैव लघोरवच्छेदकत्वात् ।

न चोभयत्वाद्यवच्छिन्नप्रतियोगिताकत्व सम्बन्धविधया धूमसमानाधिकरणाभावप्रतियोगित्वस्य च प्रतियोगित्वांशे प्रकारतयाऽवगाहमानां बुद्धिं वारयितुं व्याप्यपरामर्शहेतुतावादिनाऽपि धूमसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नप्रतियोगितासंसर्गकत्वपर्यन्तं निवेश्यमिति क्व लाघवमिति वाच्यम् । प्रतियोगिप्रकारतावच्छेदकधर्मावच्छिन्नत्वोपरागेणैव प्रतियोगितायाः संसर्गत्वोपगमेनोक्तज्ञानस्यैवासिद्धेः ।

अथ व्यापकताधीहेतुतामतेऽपि प्रतियोगितासंसर्गकत्वमात्रं निवेश्यम्, शुद्धप्रतियोगित्वत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गकज्ञानादनुमितिरिष्यत एव, उभयत्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन पक्षीयधूमसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नप्रकारकं ज्ञानं तेनापि नेष्यते प्रतियोगिनि प्रकारीभूतो यादृशो धर्मस्तदवच्छिन्नत्वतद्घटकधर्मावच्छिन्नत्वान्यतररूपेणैव प्रतियोगितायाः संसर्गतोपगमात् इति चेत् ? माभूदेव गौरवम्, तथाऽपि किञ्चिदंशपरित्यागेन प्रतियोगिप्रकारीभूतधर्मे प्रतियोगितावच्छेदकत्वपर्याप्त्यवगाहनोपगमे बाधादिबुद्धेः प्रतिबन्धकतायां गौरवेण तस्य हेतुतया उक्तपरामर्शहेतुत्वासम्भवस्तथा हि घटत्वाद्यवच्छिन्नाभावविशिष्टबुद्धिं प्रति घटादिसामान्याभावज्ञानस्य तादृशज्ञानत्वेन न प्रतिबन्धकता घटादिसामान्याभावत्वेनाऽभावान्तरावगाहि-

प्रमासंग्रहात् । नाऽपि प्रतियोगितासम्बन्धेनाभावांशे शुद्धघटत्वाद्यवच्छिन्नप्रकारकज्ञानत्वेन शुद्धघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वसंसर्गकनीलघटत्वाद्यवच्छिन्नप्रकारकभवन्मतसिद्धज्ञानासङ्ग्रहाच्चापि शुद्धघटत्वाद्यवच्छिन्नप्रतियोगितासंसर्गेण प्रतियोगिप्रकारकाभावज्ञानत्वेन, शुद्धघटत्वाद्यवच्छिन्नतया तदनवच्छिन्नप्रतियोगित्वावगाहिप्रमासङ्ग्रहात् । किन्तु संसर्गघटकतया घटत्वाद्यंशे प्रतियोगित्वावच्छेदकत्वपर्याप्त्यवगाहिज्ञानत्वेनैव अस्मन्मते च प्रतियोगितासंसर्गकघटत्वादिपर्याप्तप्रकारतावच्छेदकताकज्ञानत्वेन स्वरूपसत्पर्याप्तिनिवेशापेक्षया च पर्याप्त्यवगाहितानिवेशमते ऽनेकपियतावनिवेशाधिक्याद्गौरवमिति सर्वत्र पक्षीयत्वविशिष्टतत्तद्धेतुनिरूपितव्यापकतापरामर्शादेवानुमितिः, तादृशव्यापकतायाः प्रागग्रहेऽपि तद्घटकप्रत्येकपदार्थज्ञानाद्विशिष्टाविषयकोपनीतभानात्मकस्तद्विषयकपरामर्शः सुघटः । धूमादिसामान्यव्यापकताग्रहः पक्षीयधूमाद्यव्यापकत्वशङ्कानिरासद्वारा उक्तपरामर्शे उपयुज्यत इति तु समीचीनतया प्रतिभाति ।

ननूक्तव्यापकताज्ञानवत् स्वर्गकामो यजेतेत्यादिविधिवाक्यजन्यस्वर्गजनकताघटकव्यापकताबोधोऽपि वितर्कग्रस्त इति भवतामपि का गतिस्तथा हि तत्र स्वर्गव्यापकत्वं स्वर्गसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नाभावः तदा यागत्वावच्छिन्ने तद्बाधो गङ्गास्नानादिजन्यस्वर्गस्य यागव्यभिचारात् । नापि स्वर्गसमानाधिकरणाभावप्रतियोगित्वप्रतियोगिकोऽभावः अतिप्रसक्तस्य द्वित्वाद्यवच्छिन्नतदभावस्यापि तथात्वात् । नापि विजातीयस्वर्गसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नाऽभावः । कार्यकारणभावे गृहीत एव तदन्यथाऽनुपपत्त्या कार्यतावच्छेदकजातिकल्पनात् प्रथमं मानाभावेन तादृशजात्यनुपस्थित्या तद्घटितरूपावच्छिन्नाभावस्य विधिना बोधयितुमशक्यत्वादित्यत आह । स्वर्गेति । अयमभावः, स्वावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नत्वस्वानुयोग्यनुयोगिकत्वोभयसम्बन्धेन तद्रूपावच्छिन्नाभावाधिकरणताविशिष्टस्वक्षणावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकतद्रूपावच्छिन्ननिष्ठाऽन्यथासिद्धिनिरूपकतानवच्छेदकधर्मवत्त्वकत्वमेव तद्रूपावच्छिन्नस्य तज्जनकत्वं ईदृशं तु यागत्वाद्यवच्छिन्नं स्वर्गादिजनकत्वं

जन्यतावच्छेदकजातेर्विशिष्यापरिचयेऽपि सुग्रहम्, केवलान्वयिनीश्वरज्ञानादावेतादृशकारणतासम्भवेऽपि न क्षतिः। प्रत्युपयोगिकारणताया एव निरुक्तरूपत्वात्।

अथ वा स्वरूपसम्बन्धविशेष एव कारणत्वं तच्चानन्यथासिद्धनियतपूर्ववर्तित्वम्, अन्यथासिद्ध्यभावकूटस्य दुर्ज्ञेयत्वात्। एवं च प्रमाणान्तरावेद्यजातिविशेषस्य यागादिनिष्ठजनकतावच्छेदकघटितस्य निरुक्तरूपस्य दुर्ग्रहत्वेऽपि न क्षतिरिति दिक्।

(चि०) एवं लिङ्गपरामर्शः कारणं न तु परामृश्यमाणं लिङ्गम्। अथ परामर्शमात्रं न हेतुरपि तु लिङ्गपरामर्शः। तथा च लिङ्गमपि हेतुः विशिष्टकारणताग्राहकमानेन बाधकं विना विशेषणस्यापि हेतुत्वग्रहात्। न च लिङ्गं परामर्शपरिचायकत्वेनान्यथासिद्धम्, परिचये विशेषणान्तराभावेन लिङ्गमेव विशेषकं तथा चानन्यथासिद्धत्वात् तदपि हेतुः अन्यथा परिचायकतया संयोगेनान्यथासिद्धेरिन्द्रियमपि कारणं न स्यात्। अपि च धूमवान् वह्निमानिति धूमसमानकालवह्निविषया धूमविशेषणिकाऽनुमितिः ज्ञायमानविशेषणजन्या विशेषणसमानकालतया विशेष्यविषयेऽशाब्दविशिष्टभानत्वात् दण्डी पुरुष इति विशिष्टप्रत्ययवत्। अत एव ज्ञायमानविशेषणजन्यत्वेन विशेषणकालवृत्तितया विशेष्यभाननैयत्यं यथा दण्डी पुरुष इति प्रत्यक्षे तेन धूमसमानकालीनवह्निसिद्धिः। अन्यथा तत्तद्धूमकालवृत्तिवह्न्यनुमानं न स्यात् समयविशेषमन्तर्भाव्य व्याप्त्यग्रहात्। किं च लिङ्गकरणत्वपक्षे परामर्श एव तद्व्यापारः परामर्शस्य तु न व्यापारान्तरमस्ति चरमकारणत्वा-

दिति न तत् करणम् ।

( दी० ) परिचायकत्वं परिचेयव्यावर्त्तकत्वं तच्च नोपलक्षणतयेत्याह । परिचेय इति । विशेषणतया तत्त्वं पुनराह । तथा चेति । अवच्छेदकतामात्रेण चान्यथासिद्धावाह । अन्यथासिद्धावाह । अन्यथेति । अपि चेत्यादि । या यद्विशेषणसमानकालीनत्वेन तादृशी बुद्धिः सा ज्ञायमानतद्विशेषणजन्येति सामान्यव्याप्तौ पक्षधर्मतासम्पत्तये धूमविशेषणिकेत्यादि । तादृश्यस्यानुभविकत्वप्रदर्शनाय धूमवानित्यादि । ज्ञायमानेति च तज्ज्ञानस्यापि जनकत्वलाभाय । साध्यविशिष्टानुमितेः साऽध्याजन्यत्वात् विशेषणसमानकालतयेति । धूमकालीनवह्निमान् धूमध्वंसादित्यनुमितेर्धूमाजन्यत्वाद्विशेष्येति । विशेष्ये विशेषणभावापन्नं यत्समानकालीनत्वेन धर्मान्तरवैशिष्ट्यावगाहीत्यर्थः ।

( गा० ) उपलक्षणस्येव परिचायकत्वेन प्रसिद्धतया परिचायकत्वाप्रतिक्षेपेण लिङ्गमेव विशेषणमिति विशेषणत्वोपगमो मूलेऽसङ्गतः ।

न च परिचायकत्वप्रतिक्षेपक एवायं ग्रन्थः । अग्रिमस्येन्द्रियसंयोगपरिचायकत्वाभिधानस्याऽसङ्गतेः, अत एवोपलक्षणविशेषणसाधारणपरिचायकत्वपरतां प्रकृते दर्शयति । परिचायकत्वमिति । परिचायकत्वमन्यथासिद्धिप्रयोजकत्वेनाभिहितमिति तन्निराकरणमाकाङ्क्षितमिति परिचय इत्यादेरुपलक्षणतया परिचायकत्वनिराकरणपरतामाह । तत्रेति ।

विशेषणमपि परिचायकत्वेनान्यथासिद्धमेवेत्याशङ्कायां अन्यथासिद्धिप्रयोजकं उपलक्षणतया परिचायकत्वमेवेति भावं स्फुटीकर्तुं तथा चेति मूलमवतारयति । विशेषणतयेति । तत्त्वे । परिचायकत्वे । अवच्छेदकतयाऽन्यथासिद्धिरुपलक्षणतयेव विशेषणतयाऽपि परिचायकस्याविशिष्टेत्याशङ्कायामन्यथेत्यादिप्रतीकमवतारयति । अवच्छेदकतेति । मात्रपदेन विशेषणत्वस्याप्रयोजकत्व-

मुक्तम् । ज्ञायमानलिङ्गजन्यत्वसाध्यकानुमाने विशेषणजन्यत्वेन सामान्यतः साध्यत्वे पक्षतावच्छेदकादिजन्यतयाऽर्थान्तरम् । अनुमितौ च व्यभिचारवारकान्यहेतुविशेषणानां च वैयर्थ्यं सर्वैवानुमितौ किञ्चिद्विशेषणजन्यत्वेन साध्यसत्त्वात् धूमजन्यत्वत्वेन साध्यत्वे दृष्टान्ताभिधानविरोध इत्यतः सामान्यव्याप्त्या पक्षधर्मताबलात् धूमजन्यत्वसिद्धिरिति प्रदर्शयन् पदप्रयोजनान्याह । या यदिति । समानकालीनतयेति । विषयतारूपवैशिष्ट्य तृतीयार्थः, तस्य च बुद्धावन्वयः । तादृशी । अशाब्दी । पक्षधर्मतासम्पत्तये । धूमजन्यत्वसिद्ध्योपयिकविशेषणीभवद्धूमकालीनत्वावगाहित्वघटितहेतोः पक्षवृत्तित्वलाभाय । अनुमितौ धूमस्याविशेषणत्वे, तत्कालीनतया वह्न्याद्यवगमाने च तत्र तादृशहेतुसत्त्वानिर्वाहादिति
८ भावः । धूमविशेषणिकेत्यादीति । आदिपदात् धूमसमानकालवह्निविषयेत्यस्य परिग्रहः । एवञ्च धूमविशेषणिकेत्यस्य यथाहेतुव्याख्यान विशेष्ये धूमविशेषणिकेत्यर्थकत्वमवसेयम् । तद्रूपस्य । यथाव्याप्यधूमविशेषणकत्वस्य । आनुभविकत्वप्रदर्शनायेति । अन्यथा तत्र प्रमाणानुयोगानिवृत्तेरिति भावः ।

धूमवानित्यादीति । धूमवान् वह्निमान् इत्याकारकज्ञानमित्यर्थः ।

ननु साध्ये विशेषणस्य ज्ञायमानत्वकथनम् न तेन रूपेण जनकतासिद्धये प्रत्यक्षविशिष्टवैशिष्ट्यबुद्धौ विशेष्यतावच्छेदकस्य विषयविधयैव हेतुत्वस्य सर्वमतसिद्धतया ज्ञायमानत्वेन हेतुताया असिद्ध्या दृष्टान्तविरोधेन तद्रूपावच्छिन्नजन्यत्वस्य साध्यत्वासम्भवादिति तद्वैयर्थ्यमित्यत आह । ज्ञायमानेतीति । तज्ज्ञानस्य । लिङ्गज्ञानस्य । जनकत्वलाभाय । जनकत्वे एतदनुमतत्वलाभाय, न तु तद्विशिष्टजन्यत्वस्य सिद्ध्या तस्य जनकत्वसिद्धौ इत्यर्थस्तत्र विवादात् । साध्यविशिष्टानुमितेरिति ।

यद्यपि यद्विशेषणकत्वमात्रस्याशाब्दबुद्धिविशेषणत्वे पक्षतावच्छेदकादिविशिष्टविषयकानुमितिः पक्षतावच्छेदकाद्यजन्यतयाऽपि व्यभिचारः प्रसज्यते तथाऽप्युद्देश्यतावच्छेदकविशिष्टे यद्विशेष्यकेत्युक्तौ न तथा व्यभिचार इति साध्यमात्रोपादानम् । धूमेति । धूमस्यातीततयाऽनुमित्यजनकत्वं सूचयितुं धूमध्वंसस्य हेतुत्वानुसरणम् ।

विशेष्यविषयकत्वस्य बुद्धिविशेषणत्वेऽपि दर्शितव्यभिचारस्य दुर्वारतया विशेष्यविषये यद्विशेषणं तत्समानकालतयेति योजनामादृत्य व्याचष्टे । विशेष्य इति । मुख्यविशेष्यतानिरूपितविशेषणतयाऽवच्छिन्ना या विशेषणान्तरांशे भासमानसमानकालीनत्वविषयतानिरूपिता यदीयविशेषणता तत्प्रतियोगीत्यर्थः । धूमवान् पर्वतो वह्निमानित्याद्यनुमितौ वन्ह्यंशे भासमानसमानकालीनत्वसम्बन्धेन विधेयांशे विलक्षणप्रकारत्वमेवासिद्धमिति कथं तस्य प्रतियोगितया हेतुभानं धर्मिपारतन्त्र्येणैव न तु स्वातन्त्र्येण धूमसमानकालीनवह्निमानित्याकारकतापत्तेः । तत्पारतन्त्र्येण भानं च तन्निष्ठविशेष्यतानिरूपितविशेषणतावच्छिन्नं विशेषणत्वमिति । तादृशानुमितेर्यत्पदोपादेयधूमघटितहेतुमत्त्वमव्याहतम् ।

यत्तु एकधर्मिपारतन्त्र्येणाऽन्यांशे विशेषणत्वं तद्धर्मिनिरूपितविशेषणत्वाभिन्नविशेषणत्वमेव, तथा चावच्छिन्नत्वस्थलेऽभेद एव निवेशनीय इति, तदसत् ।

तथा सति तुल्ययुक्त्या विशिष्टप्रतियोगिकवैशिष्ट्यबुद्धावपि विशेषणपारतन्त्र्येण विशेष्यांशे परंपरासम्बन्धेन विशेषणतावच्छेदकभानस्य विशेषणनिरूपितविशेषणत्वाभिन्नविशेष्यतानिरूपितविशेषणत्वात्मकतया पर्वतो धूमकालीनवह्निमान् धूमध्वंसादित्यादिस्थलीयधूमाजन्यानुमितेः पर्वतनिरूपितप्रकारत्वाभिन्नसमानकालीनत्वविषयतानिरूपितधूमनिष्ठप्रकारताप्रतियोगित्वेन व्यभिचारस्य दुर्वारत्वापत्तेः । अस्मन्मते च तत्र मुख्यविशेष्यांशे या धूमीयप्रकारता सा विशेषणांशे धूमीयप्रकारतयाऽवच्छिन्ना न तु वैपरीत्यमिति व्यभिचारानवकाशः ।

(दी०) तदानीं धूमवान् धूमकालीनवह्निमान् धूमध्वंसादिमादौ च विशेषणे विशेषणतापन्नस्य धूमस्य समानकालत्वं वह्नौ भासते न तु विशेष्ये तथात्वापन्नस्य, अनुभवसिद्धो ह्ययं विशिष्टबुद्धीनां विशेषणताविशेषः, विशेषणं धर्मितावच्छेदकं विशेष्यं च विधेयम् । तथा च विधेयतावच्छेदकावच्छिन्नं यद्धर्मिविशिष्टे तत्समानकालीनत्वेनावगाहते या अशाब्दी बुद्धिः

सा तद्धर्मजन्येति पर्यवसितोऽर्थः । धूमकालीनवह्निमानित्यादौ च विधेयतावच्छेदकधूमकालीनवह्नित्वावच्छिन्नं न धूमकालीनत्वेन भासते परं तु वह्नित्वावच्छिन्नम् । धूमवानयं धूमकालीनवह्निमान् पर्वतो वह्निमानालोकादिसादौ च न धूमवत्त्वविशिष्टधूमकालीनवह्निमत्त्वं भासते किं तु तादृशविशिष्टपक्षतावच्छेदकवति वह्निमत्त्वं सम्बन्धमर्यादया तत्समानकालीनत्वमवगाहते इत्यपि वदंति ।

( गा० ) मुख्यविशेष्यांशे या विशेषणता तत्सामानाधिकरण्यमुपेक्ष्य तदवच्छिन्नत्वानिवेशनस्य मुख्यविशेष्यतानिवेशनस्य च प्रयोजनमाह । तदानीमिति । धूमस्य मुख्यविशेष्यांशे विशेषणतामाविष्कर्तुं धूमवानित्यन्तं पक्षविशेषणम् । वर्तमानवैशिष्ट्यस्य मतुपा प्रायशो बोधनात्तदानीमित्यनुक्तौ धूमस्यानुमितिसमये विद्यमानतालाभसंभवात्तस्य तत्र जनकत्वमपि संभाव्येतेति तदुक्तिः । विशेषण इति । वह्निविषयतानिरूपितसमानकालीनत्वसंसर्गावच्छिन्ना धूमविशेषणता विशेषणीभूतकालनिरूपितविशेषणतावच्छिन्नैव न तु मुख्यविशेष्यतानिरूपितविशेषणतावच्छिन्नेत्यर्थः । इदं च विशेषणविशेषणघटितपरंपरासम्बन्धेन तद्विशेष्यांशे विशेषणत्वमित्याशयेनोक्तम् । ननु पर्वतविशेषणतापन्नस्य धूमस्य कालीनत्वसम्बन्धेन विधेयांशे विलक्षणप्रकारत्वमेवासिद्धमिति कथं तस्य हेतुघटकत्वमित्यत आह । अनुभवेति ।

अयमाशयः एकत्र द्वयमितिरीत्या दण्डकुंडलवैशिष्ट्यावगाहिज्ञानविलक्षणे तयोरेकविशिष्टेऽपरवैशिष्ट्यज्ञाने विशेष्यतावच्छेदकधर्माधिकरणतावच्छिन्नतदवच्छेदककालावच्छिन्नाधिकरणताकत्वं विधेये भासते । अत एवासमानकालीनयोरेकविशिष्टेऽपरवैशिष्ट्यज्ञानस्य भ्रमत्वम् निरुक्तरूपमेव च समानकालीनत्वमित्युच्यते यथाश्रुतस्य धर्म्यन्तर एव समानकाले वर्तमानयोरतिप्रसक्ततया तादृशयोस्तथाविधज्ञाने भ्रमत्वानिर्वाहकत्वात् निरुक्तसमानकालीनत्वभानोपगमे च तद्रूपविशिष्टविधेयवैशिष्ट्यस्य च धर्म्यन्तरे एव स-

त्वेनान्यधर्मिकज्ञानस्य तदवगाहित्वेन प्रमात्वोपपत्तेः । समानकालीनत्वस्य नियतोपस्थितिविरहेण संसर्गतयैव भानमुपेयम् । अनुपस्थितस्य विशेषणत्वायोगात् एवं च दण्डी कुण्डलीत्यादिविशिष्टवैशिष्ट्यबोधस्य दण्डकालीनकुण्डलीत्याकारकनावारणाय प्रकारताविलक्षण्यमावश्यकम । यदि च लाघवाद्विशिष्टवैशिष्ट्यबोधे विशेष्यतावच्छेदकाधिकरणकालावच्छिन्नाधिकरणतैव विधेयस्य सम्बन्ध इत्युच्यते तदा तदनुसारेणान्यथैव हेतुर्निर्वाच्य इति पक्षतावच्छेदकसाध्ययोः सामानाधिकरण्यमात्रमनुमितिविषयः न त्वेकविशिष्टऽपरवैशिष्ट्यमिति प्राचीनमतानुसारेण पक्षतावच्छेदकावच्छिन्नाधिकरणत्वमेतद्विशिष्टानुयोगिकवैशिष्ट्य भासते न तु निरुक्तरूपमित्यभिप्रायेणैवेदमनुमानं नातः पक्षतावच्छेदकमादाय क्वापि व्यभिचार इत्यग्रे व्यक्तीभविष्यति ।

विशेष्याविषय इत्यस्य व्यत्यासमसहमानः प्रकारान्तरेण हेतुमुपक्रमते । विशेषणमिति । धर्मितावच्छेदकम् । स्वधर्मितावच्छेदकम । विधेयम् । विधेयतावच्छेदकावच्छिन्नम् । विशेष्याविषय इति सप्तम्याश्च बुध्यन्वयिविषयित्वार्थकतया विधेयतावच्छेदकावच्छिन्नं स्वधर्मितावच्छेदकयद्धर्मसमानकालीनतयाऽवगाहने या बुद्धिरित्यर्थो लभ्यते तत्र च धूमकालीनवह्निमान् पर्वतो वह्निमान् धूमध्वसादिस्यादौ व्यभिचारवारणायोपात्त स्वधर्मितावच्छेदकत्वं धर्मविशेषणमव्यावर्तकं धूमादेर्ज्ञानान्तर एव तस्य वह्नित्वावच्छिन्नधर्मितावच्छेदकत्वात् स्वनिरूपितत्तज्ज्ञानीयधर्मितावच्छेदकतानिवेशेऽपि तत्रैव धूमस्याधिकस्य पक्षताच्छेदकप्रवेशेन व्यभिचारो दर्शयिष्यत इति स्वसमानकालीनतया विधेयतावच्छेदकावच्छिन्नभानांशे धर्मितावच्छेदकत्वं निवेशयति । तथा चेति । यद्धर्मविशिष्टे यद्धर्मं धर्मितावच्छेदकीकृत्य तत्समानकालीनत्वेन विधेयतावच्छेदकावच्छिन्नमवगाहते विधेयतावच्छेदकतापर्याप्त्यधिकरणं यद्रूपं यत्समानकालीनत्वधर्मितावच्छेदकतापन्न तद्रूपावच्छिन्नावगाहिनी या बुद्धिरित्यर्थः । विधेयतावच्छेदकतापर्याप्त्यधिकरणे समानकालीनत्वधर्मितावच्छेकतापन्नत्वपर्यन्तनिवेशप्रयोजनमाह । धूमकालीनेति । धूम धर्मितावच्छेदकीकृत्य साध्यतावच्छेदकधूमकालीनत्वेन विधेयमवगाहमानायामपि धूमवानयं धूमकालीनवह्निमानित्यन्य-

लिङ्गकानुमितौ विधेयतावच्छेदकतापर्याप्त्यधिकरणधूमकालीनत्वसहितं वह्नित्वं न धूमकालीनत्वधर्मितावच्छेदकतया भासते अपि तु शुद्धवह्नित्वमेवेति न तत्र व्यभिचार इत्यर्थः।

यद्यपि शुद्धवह्नित्वमप्यनुमित्यन्तरस्य समूहालम्बनरूपधूमविशिष्टपक्षकशुद्धवह्नित्वावच्छिन्नधूमकालीनवह्नित्वावच्छिन्नोभयसाध्यकमहानुमितेश्च विधेयताया अवच्छेदकत्वपर्याप्त्यधिकरणं भवतीति व्यभिचारो दुर्वारः।

अथ तत्कालीनत्वधर्मितावच्छेदकतापन्नपर्याप्तविधेयतावच्छेदकताकत्वनिवेशात् नायं व्यभिचारः समूहालम्बनानुमितौ धूमकालीनत्वधर्मितावच्छेदकत्वेन विधेयान्तरावच्छेदकत्वेन च शुद्धवह्नित्वस्य भाने ऽपि धूमकालीनत्वधर्मितावच्छेदकतानापन्नस्यैव तस्य विधेयत्वान्तरावच्छेदकत्वादिति चेत्? एवं सति यद्धर्मविशिष्ट इत्यस्य वैयर्थ्यं वक्ष्यमाणधूमकालीनवह्न्यवच्छिन्नपक्षकानुमितौ उद्देश्यतावच्छेदकमध्य एव धूमकालीनत्वधर्मितावच्छेदकतया वह्नित्वभानात् विधेयतावच्छेदकतया तस्मिन् भासमाने तदवच्छिन्ने समानकालीनत्वाभानेन तादृशविषयत्वस्येतरधर्मितावच्छेदकतानवच्छिन्न एव तत्र पर्याप्तेर्व्यभिचाराप्रसक्तेः।

यत्तु विधेयत्वसमानकालीनत्वधर्मितावच्छेदकतापन्नतदवच्छेदकावच्छिन्नविषयतयोरेकविषयतानिरूपितत्वनिवेशान्नोक्तसमूहालम्बनानुमितौ व्यभिचारः। तत्र शुद्धवह्नित्वावच्छिन्नविधेयत्वधूमसमानकालीनत्वधर्मितावच्छेदकतापन्नवह्नित्वावच्छिन्नविधेयत्वनिरूपकधर्मिविषयत्वयोः परस्परपरिहारेण प्रत्यकसाध्यकानुमितिसम्बन्धयोर्भेदादिति। तदपि न साधु। धूमवान् धूमकालीनवह्निमान्पर्वतो वह्निमानिति वक्ष्यमाणानुमितावपि धूमसमानकालीनत्वधर्मितावच्छेदकतापन्नवह्नित्वावच्छिन्नविषयतानिरूपकशुद्धपर्वतत्वावच्छिन्नधर्मिविषयतातो विशेषणद्वयविशिष्टपर्वतत्वावच्छिन्नाया विधेयतानिरूपकधर्मिविषयताया भेदेन वह्निविशिष्ट इत्यस्य वैयर्थ्यापरिहारात्तथापि स्वानिरूपकज्ञानानिरूपितविधेयतावच्छेदकतापर्याप्त्यधिकरणं यद्रूपं समानकालीनत्वधर्मितावच्छेदकतापन्नतदवच्छिन्नविषयतानिवेशान्नोक्तो व्यभिचारो न वा वह्निविशिष्ट इत्यस्य वैयर्थ्यं समूहालम्बनरूपोक्तानुमितौ समानकालीनत्वधर्मितावच्छेदकतापन्नं

यत्र वह्नित्वं यादृशविषयतायामवच्छेदकं तादृशविषयत्वानिरूपकशुद्ध-वह्नित्वावच्छिन्नमात्रसाध्यकानुमितिनिरूपितविधेयताया एवावच्छेदकत्वपर्याप्तिस्तत्र न तु स्वनिरूपकज्ञानमात्रीयविधेयताया इति निरुक्तहेत्वसत्त्वात् धूमतत्समानकालीनवह्निधर्मितावच्छेदकतापन्नपर्वतत्वावच्छिन्नपक्षकशुद्धवह्नित्वावच्छिन्नविधेयताकानुमितौ च शुद्धवह्नित्वावच्छिन्नविधेयतायाः स्वनिरूपितोद्देश्यतावच्छेदकतारूपधूमकालीनत्वावच्छिन्नवह्निविषयतानिरूपकमात्रनिरूपितत्वेन हेतुसत्त्वात् ।

वह्निविशिष्ट इत्यस्य प्रयोजनमाह । धूमवानयमिति । अत्र च धूमधूमकालीनवह्न्योः परस्परविशेषणविशेष्यतावच्छेदकभावानापन्नयोर्विधेयधर्मितावच्छेदकत्वमिति सूचयितुं मध्येऽप्ययमिति विशेष्यवाचकपदनिर्देशः । विशिष्टपक्षतावच्छेदकवतीति । तदुभयधर्मितावच्छेदकतापन्नपर्वतत्वावच्छिन्न इत्यर्थः । वह्निमत्त्वमिति । भासत इत्यनुषज्यते । एकधर्मावच्छिन्नविशेषणतापन्नयोर्विधेयधर्मितावच्छेदकयोरेव तथात्वं न तु क्वापि विशेषणविशेष्यतावच्छेदकभावापन्नयोरिति हृदयम् ।

अथ स्नेहगन्धविशिष्टस्य द्रव्यत्वस्य यत्र पक्षतावच्छेदकता तत्राश्रयासिद्धिदोषत्वानुरोधेनान्यतरविशिष्टद्रव्यत्वस्यान्यतरधर्मितावच्छेदकत्वमावश्यकम्, अन्यथा शुद्धद्रव्यत्वावच्छेदेनान्यतराभावस्याप्रसिद्ध्या तत्सामानाधिकरण्येनान्यतराभावस्याविरोधितया तत्र दोष एव दुर्लभः स्यादिति एकधर्मावच्छिन्नविशेषणतापन्नस्य विधेयधर्मितावच्छेदकत्वे एव विशेषणधर्मितावच्छेदकभाव इति नियमासम्भव इति चेत् ? तादृशनियमाभावेऽपि तादृशधर्मद्वये धर्मितावच्छेदकविशेषणभावस्याप्यनियमात् यत्रातथाभूतयोरेव गन्धस्नेहयोः द्रव्यत्वावच्छिन्नविशेषणविशेषणतया पक्षतावच्छेदके प्रवेशस्तत्रासिद्धेर्दुर्घटतयाऽनुभवानुरोधेन उभयत्वावच्छिन्नमपि द्रव्यत्वं धर्मितावच्छेदकीकृत्य एकत्र द्वयमिति न्यायेन गन्धस्नेहप्रकारकज्ञानं प्रति उभयाभावप्रकारकज्ञानस्य विरोधित्वेनुपपन्नस्य द्रव्यत्वावच्छेदेन तदुभयाभावप्रत्यक्षस्यैव तत्र दोषत्वनुरोधायान्मुक्तनियमेऽपि सामञ्जस्यात् ।

न चैवमपि यत्र पर्वतत्वस्यैव धूमस्यैव धूमसमानकालीनवह्निधर्मितावच्छेदकतापन्नस्य शुद्धवह्नित्वावच्छिन्नविधेयताकानुमिति-

कानुमितौ पक्षतावच्छेदकता धूमाजन्यायां तत्र निरुक्तहेतुसत्त्वेन व्यभिचारो दुर्वार एवेति वाच्यम्। यद्धर्मविशिष्ट इत्यस्य किञ्चिद्धर्मावच्छिन्नविशेषणतापन्नयद्धर्मविशिष्ट इत्यर्थकत्वोपगमात्।

विशेषणसमानकालतया विधेयत्वविषयकत्वं समानकालीनत्वसम्बन्धेन वह्निविशेषणविशिष्टविषयकत्वरूपं विवक्षितं धूमकालीनवह्नित्वावच्छिन्नस्य यत्र साध्यता पक्षतावच्छेदकतावत्, तत्र समानकालीनत्वं प्रकारो न तु संसर्गः अगत्या वह्निगतानुमितावेव तत्समानकालीनत्वस्य साध्यांशे संसर्गतोपगमात्, अन्यत्र तत्संसर्गतायाः अप्रामाणिकत्वादिति केचिदाहुस्तन्मतमुपन्यस्यति । संसर्गेति। अन्यत्र समानकालीनत्वस्य न संसर्गतेत्यत्र विवादादस्वरसः उक्तकल्पे पर्वतत्वावच्छिन्नविशेषणतापन्नधूमस्य धूमसमानकालीनवह्निधर्मितावच्छेदकतापन्नस्य यत्र पक्षतावच्छेदकघटकता तत्र व्यभिचारो दुर्वारः। सुन्दरनीलपर्वतो वह्निमानित्यादौ नीलादेः सौन्दर्यादिधर्मितावच्छेदकताया आनुभविकत्वेन उक्तनियमासिद्धेः। भवतु वा तथाविधस्थानान्तरे नीलसौन्दर्यादेर्विशेषणविशेष्यतावच्छेदकभावापन्नस्यैव पर्वतत्वाद्यवच्छिन्ने प्रकारता तादृशवाक्यजन्यशाब्दबोधे तु प्रथमकर्मधारयलभ्यनीलपदार्थविशिष्टपर्वतादौ सुन्दरपदार्थस्य कर्मधारयान्तरबलादन्वये नीलादेः सुन्दरादिपदार्थधर्मितावच्छेदकतापन्नस्यैव विधेयधर्मितावच्छेदकतया भानान्न तादृशनियमः।

न चानुमितावेव किञ्चिद्विशिष्टविशेषणतापन्नैकोद्देश्यतावच्छेदकस्यापरोद्देश्यतावच्छेदकधर्मितानवच्छेदकत्वनियम इति वाच्यम्। व्याप्तिवत्तापरामर्शे हेतुधर्मितावच्छेदकतया पक्षतावच्छेदकस्य यादृशं भानमनुमितावपि तस्य साध्यधर्मितावच्छेदकतया च तादृशभानमित्यनुभवस्य दुरपह्नवतया यत्र परामर्शे धूमकालीनवह्निधर्मितावच्छेदकतापन्नधूमस्य पर्वतत्वविशिष्टविशेषणतापन्नस्यालोकादिरूपहेतुधर्मितावच्छेदकता तत्रानुमितावपि धूमस्य तादृशस्यैव साध्यधर्मितावच्छेदकताया अवर्जनीयत्वात्।

न चोक्तनियमाभावेऽपि न व्यभिचारः इतरधर्मितावच्छेदकतानापन्न यद्धर्म धर्मितावच्छेदकीकृत्येति विवक्षणीयत्वात्। धूमस्येव धूमकालीनवह्निधर्मितावच्छेदकतापन्नधूमावच्छिन्नपक्षकस्थले विधेयधर्मितावच्छेदकतापन्नधूमस्यैव धूमकालीनत्वेन भासमानवह्नि-

धर्मितावच्छेदकतया विवक्षणीयहेतोस्तत्रासत्त्वादिति वाच्यम् । एवं सति धूमवान् पर्वतो धूमकालीनवह्निमानालोकादित्यादौ पक्षतावच्छेदकधूमस्य हेतुधर्मिताऽवच्छेदकतापन्नस्यैव साध्यधर्मितावच्छेदकतया व्यभिचाराभावेन विधेयतावच्छेदकावच्छिन्नत्वनिवेशस्य कथितव्यावृत्त्यसङ्गतेः ।

न चोक्तव्याख्यायामपि धूमकालीनवह्निधर्मितावच्छेदकतापन्नधूमवत्पर्वतादिवृत्तित्वादिना वह्न्यादेर्यत्र साध्यता तादृशानुमितावितरधर्मितावच्छेदकत्वेन धूमाभानात् तत्र व्यभिचारवारणाय विधेयतावच्छेदकावच्छिन्नत्वनिवेशनमावश्यकमिति वाच्यम् । एवमपि यत्समानकालीनत्वेत्यस्यावैयर्थ्यस्य दुर्वारत्वात् । धूमघटितपक्षतावच्छेदकावच्छिन्ने विधेयतावच्छेदकावच्छिन्नावगाहिन्यामन्यलिङ्गकानुमितौ धूमस्य हेतुधर्मितावच्छेदकतापन्नस्यैव विधेयधर्मितावच्छेदकतया साध्यतावच्छेदकघटकधूमस्यान्यधर्मितानवच्छेदकत्वेऽपि तस्य विधेयतावच्छेदकावच्छिन्नधर्मितावच्छेदकत्वासम्भवेन व्यभिचारानवकाशादित्यनुशयेन प्रकारान्तरेण हेतुं व्याख्यातुमुपक्रमते । अथ वेति ।

( दी० ) अथ वा विशिष्टत्वं व्याप्यत्वं तच्च तत्समानकालीनत्वग्रहाजन्यत्वं विशेषणविशेष्यपदे च धर्मद्वयमात्रोपदर्शके । तथा चैकस्मिन् धर्मे यद्धर्मसमानकालत्वग्रहाजन्या या अशाब्दी तद्धर्मसमानकालीनत्वबुद्धिः सा ज्ञायमानतद्धर्मजन्येत्यर्थः । एवं न क्वापि व्यभिचारशङ्का । साध्यस्य पक्षतावच्छेदकसमानकालीनत्वं न क्वाप्यनुमितिविषयो मानाभावात् । नवीननये तु कालादेः पक्षतावच्छेदकत्वे तदवच्छिन्नत्वं साध्यस्य भासत इत्यन्यदेतत् । दण्डी पुरुषो गच्छतीत्यादिशाब्दधीवारणाय अशाब्देति । तुल्यन्यायतयोपनीतभानवारणाय तदन्यत्वमपि वाच्यमित्यपि वदन्ति । एतन्नये चातीतत्वाग्रहेऽप्यतीतादिलिङ्गज्ञानान्नानुमितिरिति नातीतलिङ्गकालीनत्वावगाह्यनुमितौ व्यभिचारः । कालोऽत्र वर्तमानो विवक्षितः तद्वैशिष्ट्यांशे च प्र-

मात्वं वाच्यं वर्त्तमानत्वं वा तादृशधर्मविशेषणमित्यपि कश्चित्। केचित्तु विशेषणं विशेष्यतावच्छेदकं तथा च वर्त्तमानविशेष्यतावच्छेदकसमानकालीनतया धर्मान्तरवैशिष्ट्यावगाह्यशाब्दज्ञानत्वादित्यर्थः। सतश्च पक्षतावच्छेदकस्य हेतुत्वमिष्टमेव। समानकालीनत्वानुसरणं तु ताद्रूप्यविषयत्वे प्रतिज्ञायमानविशेष्यतावच्छेदकजन्यत्वस्य प्रयोजकत्वसूचनायेत्याहुः। परामर्श एवेति। न च कारणतावच्छेदकस्य तस्य न व्यापारता परामृश्यमाणत्वेन परामर्शाजननादिति वाच्यम्। व्यापारं प्रति रूपान्तरेण हेतुत्वेऽपि फलं प्रति ताद्रूप्येण हेतुतायां विरोधाभावात्। लिङ्गत्वेनैवानुमितिहेतुता परामर्शस्तु व्यापारमात्रमित्यपि केचित्।

(गा०) व्यावृत्तस्य विलक्षणत्वं धूमकालीनवह्नित्वाद्यवच्छिन्नसाध्यकान्यलिङ्गकानुमितेरपि केनचिद्रूपेण कुतश्चिद्विलक्षणतया न व्यावृत्तिसम्भव इति समानकालीनत्वग्रहजन्यानुमितित्वाद्युपधर्मवत्स्वरूपतया तद्व्याकुरुते। तथेति। समानकालीनत्वेति। किञ्चिद्धर्मविशिष्टे किञ्चिद्धर्मसमानकालीनत्वग्रहाजन्यत्वमित्यर्थः। विशेषणत्वविशेष्यत्वयोर्वैयर्थ्यमाशङ्क्याह। विशेषणेति। धर्मद्वयोपदर्शक इति। विशिष्टपदार्थघटकधर्मयोस्तद्धर्मत्वेन बोधक इत्यर्थः।

समुदितार्थमाह। तथा चेति। एकस्मिन् धर्म इति। यद्धर्मसमानकालीनत्वग्रहाजन्या या अशाब्दी तद्धर्मे तद्धर्मसमानकालीनत्वबुद्धिरित्यर्थः। आलोककालीनवह्निमानयं वह्निमान् धूमाद् धूमकालीनालोकवानयं वह्निमान् धूमादित्यादेः सङ्ग्रहाय समानकालीनत्वप्रतियोग्यनुयोगिधर्मयोर्विशिष्योपादानम्। रूपान्तरेण धूमवद्वयोर्यत्र समानकालीनतानिरूपकतया पक्षतावच्छेदकप्रवेशः धूमत्वावच्छिन्नलिङ्गकवह्नित्वावच्छिन्नसाध्यकतादृशानुमितिसङ्ग्रहाय यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नसमानकालीनताग्रहाजन्येत्यादि विवक्षणीयम्। एवं चायं धूमकालीनवह्निमान् धूमादित्यादेरपि सङ्ग्रहः धूमकालीनवह्नित्वावच्छिन्ने धूमकालीनत्वावगाहिन्यास्तादृशानुमितेस्तादृशवह्नित्वावच्छिन्ने धूमकालीनत्वग्रहाजन्यत्वात्। धूमकाली-

नवह्निमानयं पर्वतो वह्निमान् धूमादित्याद्यनुमितिस्त्वगत्या पक्षाद्वह्नि-र्भावनीया । समानकालीनत्वविषयत्वाप्रयोज्यसमानकालीनत्ववि-षयतां निवेश्य तादृशानुमितिसंग्रहे एकस्मिन्धर्मे इत्यादेर्वैयर्थ्यात् ।

वस्तुतस्तु समानकालीनत्वविषयत्वाप्रयोज्यत्वं न समानका-लीनत्वविषयकज्ञानजन्यतानवच्छेदकत्वं धूमकालीनवह्निमान् धू-मादित्यादौ धूमकालीनवह्नित्वावच्छिन्नांशे धूमकालीनविषय-ताया अपि धूमकालीनत्वविषयकपरामर्शजन्यतावच्छेदकत्वात्तदसं-ग्रहापत्तेः । नापि समानकालीनत्वविषयताघटितधर्मावच्छिन्नका-रणतानिरूपितविशिष्टानुभवत्वावच्छिन्नकार्यतानवच्छेदकत्वं कालीन-त्वसम्बन्धेन धूमविशिष्टवह्निसाध्यकान्यलिङ्गकानुमितौ संसर्ग-विधया समानकालीनत्वविषयतायाः विशेषणज्ञानजन्यतानवच्छे-दिकायास्तादृशत्वात्तत्र व्यभिचारापत्तेः ।

न च तादृशविषयताया अपि वह्निविशेष्यकसमानकालीनत्व-संसर्गकधूमरूपविशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकत्वा-न्न तादृशानुमितौ व्यभिचार इति वाच्यम् । विशिष्टे विशेषण-मिति रीत्या तथाविधज्ञाने तादृशविशेषणतावच्छेदकप्रकारकधियो हेतुत्वाद्व्यभिचारस्य दुर्वारत्वात् ।

न च प्रयोज्यत्वं स्वरूपसम्बन्धविशेषः धूमकालीनवह्नित्वाव-च्छिन्ने हेतुभूतधूमकालीनत्वविषयतायास्तद्विषयकपरामर्शजन्यता-वच्छेदकत्वेऽपि न परामर्शीयसमानकालीनत्वविषयतायाः स्वरूप-सम्बन्धरूपं प्रयोजकत्वं परामर्शस्य व्यापकतावच्छेदकतया धूम-कालीनत्वविषयकत्वेऽपि लिङ्गतया धूमानवगाहने साध्यतावच्छे-दकावच्छिन्ने धूमकालीनत्वाभानाल्लिङ्गतया धूमविषयताया एव तादृशभानप्रयोजकत्वादिति वाच्यम । साध्यतावच्छेदकावच्छि-न्ननिरूपितव्याप्त्यादिमत्स्वरूपलिङ्गत्वविशिष्टविषयतायाः प्रयोज-कत्वे तदन्तःपातिसाध्यतावच्छेदकघटकसमानकालीनत्वविषयताया अपि प्रयोजकताया दुर्वारत्वात् ।

न च वह्न्यादिपक्षकधूमादिकालीनत्वसाध्यकान्यलिङ्गकानुमितौ वह्न्याद्यंशे धूमादिसमानकालीनत्वग्रहाजन्यायां तदंशे धूमसमान-कालत्वावगाहिन्यां धूमजन्यायां व्यभिचार इति वाच्यम् । इतरविशे-षणतापन्नधर्मांशे समानकालतावगाहितया विवक्षणेन सामंजस्यात् ।

ननु गंधप्रागभावादिपक्षतावच्छेदकविशिष्टे पृथिवीत्वादिहेतुकगन्धाद्यनुमितिः कदाचित्तद्विशिष्टानुयोगिकसाध्यवैशिष्ट्यावगाहिनी कदाचित्तदुपलक्षितानुयोगिकसाध्यवैशिष्ट्यावगाहिनी जायते तयोर्वैलक्षण्यायाद्यायां विधेये पक्षतावच्छेदकसमानकालीनत्वभानोपगम आवश्यकः तथा च साध्यांशे पक्षतावच्छेदककालीनत्वावगाहित्वानाऽन्यायां तद्देशे तत्कालीनत्वावगाहिन्यां तदन्यत्वाभावेन व्यभिचारः।

अथ पक्षतावच्छेदकविशिष्टानुयोगिकवैशिष्ट्यावगाहिन्यामनुमितौ विशिष्टानुयोगिकवैशिष्ट्यं साध्यस्य सम्बन्धतया भासते तद्विशिष्टानुयोगिकत्वं च तदवच्छिन्नानुयोगिताकत्वं एकक्षणावच्छेदेन एकदेशवृत्तिकयोरेव परस्परावच्छिन्नाधिकरणताकत्वमिति गंधप्रागभावविशिष्टाधिकरणतानवच्छेदकतया गन्धादिसम्बन्धानुयोगितायां गन्धप्रागभावाद्यवच्छिन्नत्वबाधेन तत्र तदवगाहिन्याः सल्लिङ्गजाया अप्यनुमितेर्भ्रमत्वानिर्वाहः तथा च तस्याः साध्यांशे तत्सम्बन्धांशे वा पक्षतावच्छेदकसमानकालीनत्वानवगाहितया हेतुसत्त्वान्न व्यभिचारः।

यदि चैकधर्मस्य तदधिकरणत्वस्य वाऽपरनिरूपिताधिकरणत्वे स्वरूपसम्बन्धरूपमवच्छेदकत्वं न कुत्रापि अत एव हेत्वधिकरणत्वस्य स्वाधिकरणतावच्छेदकतापरतया साध्यसम्बन्धितावच्छेदकरूपवत्त्वं व्याप्तिरिति व्याप्तिलक्षणं व्याकुर्वता मते न्यूनाधिकवृत्तिधर्मद्वयाधिकरणतयोर्न्यूनाधिकवृत्तित्वे तुल्यवृत्तिधर्मद्वयाधिकरणतयोश्चावच्छेद्यावच्छेदकभावे विनिगमनाविरहेण स्वरूपसम्बन्धरूपावच्छेदकभावासम्भव दीधितिकृदाहेति मन्यते तदा पक्षतावच्छेदकविशिष्टानुयोगिकवैशिष्ट्यविषयकानुमितौ स्वसमानानुयोगिकपक्षतावच्छेदकधर्माधिकरणतावच्छेदकक्षणावच्छिन्नाधिकरणतैव साध्यसम्बन्धतया भासत इत्युपगन्तव्यम्। तादृशाधिकरणतैव विशिष्टानुयोगिकवैशिष्ट्यमिति चेत्? एवं सति लिङ्गोपधानमतेऽपि धूमाद्यवच्छिन्नं स्वसमानाधिकरणधूमाधिकरणतावच्छेदकक्षणावच्छिन्नं चाऽधिकरणत्वं वह्न्यादेः सम्बन्धः। दण्डी चैत्रो गच्छतीति प्रत्यक्षेऽपि तादृशदण्डादिविशिष्टानुयोगिक वैशिष्ट्यं विधेयसम्बन्ध इत्येव स्यात् तदनुसारेणैव प्रकृते हेतुर्व्याख्येयः युक्तं चैतत् विधेये अनुयोगितावच्छेदकसमानकालीनत्वभानेनैवैकत्र द्वयमिति रीत्या-बोधात् वि-

शिष्टानुयोगिकवैशिष्ट्यबोधवैलक्षण्यानिर्वाहोपगमे यस्मिन्धर्मिणि दण्डकुण्डलयोर्विभिन्नकालावच्छेदेनैव सत्त्वमन्यत्र वा एककालावच्छेदेन सत्त्वं तदेकतरविशिष्टतद्धर्म्यनुयोगिकापरवैशिष्ट्यबोधस्य प्रमात्वापत्तेः । तयोरेव दण्डकुण्डलयोरेककालीनतया एकावच्छेदेनैकदेशवृत्तितायाश्चाबाधितत्वात् । तथा च तद्धर्मावच्छिन्नपक्षकानुमितौ तद्धर्मघटितहेतोर्व्यभिचारो दुर्वार इत्याशंक्य धूमगधप्रागभावादिविशिष्टे वह्निगंधादिसाध्यकानुमितौ पक्षतावच्छेदकसमानकालीनत्वं साध्यांशे पक्षतावच्छेदकाधिकरणत्वावच्छेदककालावच्छिन्नत्वं वा साध्यसंबंधांशे कदाचिदपि न भासते अतो नानुमितौ पक्षधर्मघटितहेतुसत्त्वम्

न चानुमितौ साध्यपक्षतावच्छेदकयोरेकत्र द्वयमिति रीत्यैव भाने तादृशानुमितेः पक्षतावच्छेदकावच्छेदेन साध्याभावज्ञानाप्रतिबध्यतया गंधप्रागभावादिविशिष्टे गंधादिसाधनेऽसिद्धिव्यभिचाराभ्यां बाधस्यासंकरो मूलदर्शितो विरुद्ध इति वाच्यम् । गंधप्रागभावकालरूपपक्षतावच्छेदकविशिष्टे गंधादिसाधने तादृशकालावच्छिन्नत्वस्य गंधाद्यंशे तत्संबंधांशे वा भानोपगमेन तत्र तदवच्छेदेन साध्याभावबुद्धेर्विरोधितया तत्रैव बाधासंकरस्य निष्प्रत्यूहत्वात् । मणिकृतापि गंधप्रागभावादिपक्षतावच्छेदकस्थले एकधर्मस्य तदधिकरणतायाश्चापरधर्माधिकरणतावच्छेदकत्वेऽविवादेन एकधर्मविशिष्टेऽपरसाधने तद्धर्मस्य तदधिकरणतायाश्चावच्छेदकत्वभानानियमाफलस्य कालावच्छिन्नपक्षकस्थले एव बाधासंकरे निर्भरः कृतः तथा च न व्यभिचारप्रसक्तिरित्याशयेन समाधत्ते । साध्यस्येति ।

नन्वेवमपि धूमकालावच्छिन्नपर्वतपक्षकान्यलिंगकानुमितौ धूमकालावच्छिन्नत्वमानेन व्यभिचारो दुर्वार एवेत्यत आह । नवीननये इति । अन्यदेतादिति । हेतुसमानकालवृत्तित्वस्यानुमित्या ऽनवगाहने तदवगाहित्वघटितहेतोः न तत्कालावच्छिन्नत्वावगाहिन्यामनुमितौ व्यभिचारः आधेयत्वाधारत्वेच्छेद्यत्वयोराधारत्वावच्छेदकत्वयभेदात् यदि विशिष्टानुयोगिकवैशिष्ट्यबोधमात्र एव कालावच्छिन्नत्वं भासते तदा तल्लिंगकानुमितौ तल्लिंगकालावच्छिन्नत्वमानेऽवच्छिन्नत्वांशे तद्विशेषणकालस्य संबंधांतरं भासते धूमादिकालस्य पक्षतावच्छेदकाद्येचावच्छिन्नत्वस्य कालसंबंधतया भानात् तत्र कालसंबंधभानेन

वैलक्षण्यान्न व्यभिचारः ।

यदि च धूमादिलिङ्गकानुमितौ धूमाधिकरणतावच्छेदककालावच्छिन्नाधिकरणता विधेयस्य संबन्धस्तदापि तत्रोत्तराधिकरणतायां प्रथमाधिकरणतासमानदेशस्याप्यधिकस्य भानात् धूमाधिकरणतावच्छेदककालावच्छिन्नपक्षकस्थले तादृशकालावच्छिन्नाधिकरणतायाः साध्यसंबन्धरूपत्वे स्वाधिकरणतायां समानदेशत्वाभावेन वैलक्षण्यात् सामंजस्यमिति भावः ।

ननु धूमरूपपक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहिन्यामन्यलिङ्गकानुमितौ व्यभिचारः पक्षतावच्छेदकोपलक्षिते साध्यवैशिष्ट्यावगाह्यनुमितितो वैलक्षण्याय तस्यास्साध्यांशे पक्षतावच्छेदकसमानकालीनत्वभानस्यावश्योपेयत्वात् । तज्जनकज्ञाने च तदभानादित्यत आह । साध्यस्येति । मानाभावादिति । पक्षतावच्छेदकसाध्ययोरेकत्र द्वयमिति रीत्येव भानं न तु क्वापि विशिष्टे वैशिष्ट्यमिति रीत्या तथा भानेऽपि पक्षतावच्छेदकावच्छिन्नत्वमेव तत्र भासते न तु तत्समानकालीनत्वम् । अवच्छिन्नत्वं तु समानकालीनत्वादिनियतं स्वरूपसम्बन्धविशेषः अतो विभिन्नकालीनपक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाह्यनुमितेर्न प्रमात्वप्रसङ्गोऽनुभवबलेन चानुमितेः साध्यांशे लिङ्गसमानकालीनत्वावगाहितासिद्धिरिति भावः ।

ननु धूमकालस्य यत्र पक्षतावच्छेदकता तत्रत्यायामवच्छेदकावच्छेदेन साध्यवत्त्वावगाह्यन्यलिङ्गकानुमितौ व्यभिचारः साध्यांशे धूमकालावच्छिन्नत्वात्मकतत्कालीनत्वावगाहिन्यास्तादृशानुमितेस्तद्दृशो तद्दृशाजन्यत्वादित्यत आह । नवीननये इति । अन्यदेतदिति । एतत्कालावच्छिन्नत्वभानं तत्कालीनत्वभानादन्यदित्यर्थः । तत्कालीनत्वघटकाधेयतातोऽवच्छिन्नाधेयस्य भेदादिति भावः ।

शाब्दधीवारणायेति । अन्यथा दण्डादिसमानकालीनत्वावगाहिन्या अपि तादृशशाब्दबुद्धेस्तदजन्यतया व्यभिचारापत्तेरिति भावः । यद्यपि पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यविषयकानुमिताविव तादृशशाब्दबुद्धावपि संसर्गतया विशेष्यतावच्छेदकसमानकालीनत्वभाने मानाभावः । मतुपा गमनादिरूपविधेयसमानकालीनत्वस्य दण्डादौ बोधनेऽपि तादृशबुद्धेस्तदंशे समानकालीनत्वावगाहियोग्यताज्ञानजन्यतया न निरुक्तहेतुमत्त्वं तथाऽपि एकपदार्थेऽपर-

त्वमेव धूमादिजन्यतावच्छेदकमिति । तदवच्छिन्नविशेष्यकतत्कालीनत्वावच्छिन्नसाध्यकान्यलिङ्गकानुमित्यामपि तज्जन्यत्वस्याव्याहततया तत्र व्यभिचारवारणाय विशेषणान्तरप्रवेशो व्यर्थ इति वदतां मिश्राणां मतमाह । केचित्त्विति विशेषणपदस्य यथाश्रुतपरत्वे । धूमानवच्छिन्नविशेष्यकान्यलिङ्गकधूमकालीनवह्न्यनुमितेर्धूमजन्यतावच्छेदकोक्तरूपानाक्रान्ततया व्यभिचार इति तद्व्याचष्टे । विशेषणमिति । अतीतादिधूमाद्यवच्छिन्नविशेष्यकतत्कालीनत्वावच्छिन्नसाध्यकानुमितौ व्यभिचारवारणाय विशेष्यतावच्छेदके स्वाव्यवहितप्राक्क्षणसत्त्वमधिकं प्रवेश्य समुदितार्थमाह । तथा चेति । सतः । स्वाव्यवहितप्राक्काले सतः ।

नन्वेवं वर्तमानतद्विशेष्यतावच्छेदकावगाहित्वमेव हेतुरस्तु धूमकालीनत्वानवगाहिन्या अपि वर्तमानधूमाद्यवच्छिन्नविशेष्यकानुमितेः दर्शितधूमजन्यतावच्छेदकरूपाक्रान्ततया व्यभिचारानवकाशात् किं समानकालीनत्वावगाहित्वानुसरणेनेत्यत आह । समानेति । तादृशविषयकत्वे । तत्समानकालीनत्वग्रहाजन्यानुमितेस्तदवगाहित्वे । विशेष्यतावच्छेदकेति । विशेष्यतावच्छेदकतद्धर्मेत्यर्थः । प्रयोजकत्वसूचनायेति । तथा च तल्लिङ्गकानुमितेस्तदजन्यत्वे तत्कालीनत्वावगाहितानियामकाभावेन तदवगाहितानियमो न स्यादिति विषयपरिशोधकतर्कस्फोरणायैव तदुक्तिर्न तु हेतौ तत्प्रवेश इति भावः ।

न च समानकालीनत्वविषयताया लिङ्गजन्यतानवच्छेदकत्वे तज्जन्यताया न तत्प्रयोजकत्वसम्भव इति तस्यास्तथात्वमावश्यकं तथा प्रतिबन्धकवशेन विद्यमानविशेष्यतावच्छेदककालीनत्वमनवगाहमानाया अनुमितेस्तज्जन्यतावच्छेदकानाक्रान्ततया व्यभिचारवारणाय समानकालीनत्वावगाहिताया हेतुघटकत्वमावश्यकमिति वाच्यम् । समानकालीनत्वविषयताया लिङ्गजन्यतानवच्छेदकत्वेऽपि तद्घटितसामग्रीघटकविरोधिज्ञानाद्यभावजन्यतावच्छेदिकायां तस्यां तद्घटितसामग्रीघटकविरोधिज्ञानाद्यभावजन्यसामग्र्याः प्रयोजकत्वसम्भवात् । एतन्मते चासति विरोधिनि अविद्यमानपक्षतावच्छेदकसमानकालीनत्वमपि नियमेनानुमितिविषयः । प्रयोजकसत्त्वात्प्रमात्मकादपि परामर्शात्क्वचिद् भ्रान्तानुमितिरिष्टैव ।

अत्र चैवं विशेषणपदस्य विद्यमानविशेषणमात्रपरत्वेनाप्युपपत्ते-

विशेष्यतावच्छेदकपरतयोपवर्णनमकिञ्चित्करं विद्यमानधूमादिविषयकानुमितित्वस्यैव धूमादिजन्यतावच्छेदकत्वसम्भवात् विद्यमानधूमादिसाध्यकानुमितेरपि धूमादिजन्यत्वसम्भवेन व्यभिचारानवकाशात् ।

न चैवं तत्साध्यकाद्यनुमितेरपि तत्कालीनत्वावगाहिता स्यात्प्रयोजकतज्जन्यत्वसत्त्वादिति वाच्यम् । तदवच्छिन्नविशेष्यकत्वप्रयोजकतल्लिङ्गरूपरामर्शतदवच्छिन्नविशेष्यकपरामर्शान्यतरघटितसामग्रीजन्यत्वसहितस्यैव तज्जन्यत्वस्य तत्कालीनत्वभानप्रयोजकतयाऽतिप्रसङ्गवारणसम्भवात् । एवं पक्षतावच्छेदकसमानकालीनत्वस्यानुमितिविषयत्वे धूमादेः पक्षतावच्छेदकत्वेनैव धूमकालीनवह्निसिद्धिनिर्वाहात् लिङ्गोपहितभानस्य निर्युक्तिकत्वापत्तिरित्यस्वरसबीजम् ।

करणतावच्छेदकरूपावच्छिन्नजन्यस्यैव व्यापारतेति नियमाभिप्रायेण शङ्कते । न चेति । परामृश्यमानत्वेनेति । विषयनिष्ठयावद्धर्मस्य ज्ञानकरणतावच्छेदकत्वे मानाभावादिति भावः । नियमं निराकुर्वन् समाधत्ते । व्यापारमिति । रूपान्तरेण । विषयत्वादिना । ताद्रूप्येण । परामृश्यमाणत्वेन । विरोधाभावात् । बाधकाभावात् ।

मतान्तरमाह । लिङ्गत्वेनेवेति । एवकारेण परामर्शस्यावच्छेदकान्तरव्यवच्छेदः । तर्ह्यपरामृश्यमानात्कुतो नानुमितिरित्यत आह । परामर्शस्त्विति । तथा च व्यापाराभावान्नातिप्रसङ्ग इति भावः । अत्र उक्तनियमसत्त्वे लिङ्गत्वेनापि न कारणतासम्भवः तेन रूपेणापि परामर्शहेतुताया अप्रामाणिकत्वादित्यस्वरसः ।

( चि० ) अत्रोच्यते अतीतानागतधूमादिज्ञानेऽप्यनुमितिदर्शनान्न लिङ्गं तद्धेतुः व्यापारपूर्ववर्त्तितयोरभावात् । न च विद्यमानं लिङ्गान्तरमेव तद्धेतुः । तदा तस्यापरामर्शात् । परामर्शाविषयस्य कारणताग्राहकाभावात् । भाविनि पक्षे व्यक्त्यैक्यमेव वा यत्र लिङ्गं तत्र लिङ्गान्तराभावाच्च । यदि च वर्त्तमानमेव तत्र लिङ्गं तदा वर्त्तमानवह्न्यनुमानोपपत्तिः । अथ भावि भूतं वा धूमादि न लिङ्गं किन्तु तत्प्राग-

भावस्तद्ध्वंसश्च वर्त्तमान एव तयोरपि वह्निसमानदेश-
त्वादिति चेन्न। अतीतभाविदिनवृत्तितया निश्चिता-
वर्त्तमानतया सन्दिग्धाद् धूमादनुमितौ हि न प्राग-
भावध्वंसौ लिङ्गे, तयोः सन्दिग्धत्वात्। नापि धूम-
स्तस्यावर्त्तमानत्वात्। किञ्च भूतभाविवर्त्तमानत्वा-
विषयात् पर्वते धूम इति ज्ञानाद्यत्रानुमानं तत्र का
गतिः? सर्वत्र प्रागभावाद्यन्यतमवत्त्वं धूमाद्यत्यन्ता-
भावाभाववत्त्वं वा लिङ्गमिति चेन्न। व्यर्थविशेषणत्वेन
तेषामलिङ्गत्वात्। अन्यतमत्वाज्ञानेऽपि धूमज्ञानाद-
नुमितिसत्त्वाच्च।

( दी० ) परामर्शविषयस्येति। विनिगमनाविरहो विशेष-
णत्वं वा तस्य हेतुत्वे बीजं न चेदमज्ञायमानेऽस्तीति भावः।
न च विशिष्टस्य कारणत्वं गृह्णत् प्रमाणं विशेषणतावच्छेदका-
वच्छेदेनापि तत्परिच्छिनत्ति तथा चापरामृश्यमाणस्यापि लि-
ङ्गत्वेन हेतुत्वमविरुद्धमिति वाच्यम्। यतो हि लिङ्गत्वं न सा-
ध्यव्याप्यत्वादिकं तदप्रसिद्धावपि गगनाद्यनुमानात्। ना-
पि परामर्शविषयतावच्छेदकत्वमात्रं तथा सति वस्तुमात्रस्यै-
वानुमितिहेतुतापत्तेः। न चेदं प्रामाणिकम्, तथाऽन्वयव्य-
तिरेकादिविरहात्। अन्यथेच्छाशाब्दबोधादिकं प्रतीष्टसाधनत्वा-
काङ्क्षादिकुक्षिनिक्षिप्तस्य जगत एव हेतुतापत्तेः। न वा वास्तवो
विनिगमनाविरहोऽपि, प्रमेयत्वादिना ज्ञातादपि लिङ्गादनुमित्याप-
त्तेः। व्याप्तिपक्षधर्मत्वेन ज्ञायमानत्वोक्तौ च लाघवात्तादृशज्ञा-
नत्वेनैव हेतुत्वात्।

( गा० ) मूले न लिङ्गं तद्धेतुरिति। व्यभिचारेण नानुमितिहेतुरि-
त्यर्थः। व्यापारेति। व्यापारपदं स्वव्यापारपूर्ववर्त्तितापरं पूर्ववर्त्ति-

ता च स्वस्य पूर्वकालवर्त्तिता तथा च स्वस्य स्वव्यापारस्य च नियताव्यवहितपूर्ववर्त्तिताविरहादित्यर्थः । तद्धेतुरिति । अतीतादिलिङ्गज्ञानजन्यानुमित्यव्यवहितपूर्ववर्तीत्यर्थः । तदा । उक्तानुमित्यव्यवहितपूर्वकाले । तस्य । विद्यमानलिङ्गान्तरस्य । कारणताग्राहकाभावादिति । अनुमितेरज्ञायमानलिङ्गान्तरसमानकालीनतानवगाहित्वेन हेत्वसिद्ध्या उक्तानुमानस्य तत्कारणत्वाग्राहकत्वादिति भावः ।

ननु दर्शितानुमानात्परामृश्यमानलिङ्गस्य हेतुतासिद्धौ अपरामृश्यमानसाधारणलिङ्गत्वस्यैव तत्कारणतावच्छेदकत्वोपगमादपरामृश्यमानस्यापि लिङ्गस्य कारणत्वं दुर्वारमेवेत्याशङ्क्य दीधितिकृत्स्याकारणत्वं व्यवस्थापयति । विनिगमनाविरह इति । लिङ्गतत्परामर्शयोः कस्य वा कारणत्वं कस्य वा तदवच्छेदकत्वमित्यत्रेत्यादिः । विशेषणत्वम् । परामर्शकारणताग्रहे विषयितया विशेषणत्वेन भासमानत्वम् । अस्य । लिङ्गस्य । इदम् । एतद्बीजद्वयम् । अज्ञायमान इति । तस्य विषयतया परामर्शकारणहेतुतावच्छेदकानाक्रान्ततया विशेषणत्वस्यासम्भवादिति भावः ।

यद्यपि तदा तस्यापरामर्शेऽपि विनिगमनाविरहेण परामर्शस्य हेतुतावच्छेदकत्वे कालान्तरीणपरामर्शीयविषयतयैव कारणत्वसम्भवः विशिष्टकारणप्राक्सत्त्वायाः फलोपधानप्रयोजकत्वेनातिप्रसङ्गवारणसंभवात् तत्कालीनपरामृश्यमानत्वेनाहेतुत्वात् । एवं तत्कालीनानुमित्युपधायकपरामर्शे विद्यमानताग्राहकप्रमाणविषयकालांतरीणपरामर्शे विद्यमानलिङ्गस्याविशेषणत्वेऽपि लिङ्गपरामर्शसामान्येऽनुमितिसामान्यकारणताग्राहकप्रमाणविषयकालान्तरीणपरामर्शे विद्यमानलिंगस्य विशेषणतया द्वितीययुक्त्यापि तस्य कारणत्वमावश्यकमिति तदा तस्यापरामर्शादित्यादिमूलमसङ्गतं तथापि विशिष्टस्य नियतप्राक्सत्त्वं कारणताघटकं तत्रैव विशिष्टसत्त्वं फलोत्पादप्रयोजकं अत्र च न तादृशस्य प्राक्सत्त्वनियम इति न विशेष्यापेक्षणीयताप्रयोजककारणतासम्भवो लिंगस्येति तत्कालपरामृश्यमानत्वेन हेतुत्वं वाच्यम् । एवं विशिष्टकारणताग्राहकप्रमाणेन विशेष्यविशिष्टस्यैव विशेषणस्य नियतपूर्ववर्त्तितावगाहिना कारणत्वं प्रत्याय्यते तथा च कालान्तरीयपरामर्शविषयतामादाय न विद्यमानलिङ्गस्य तादृशकारणतानिर्वाह इत्यत्र मूलतात्पर्यम् ।

न चैवं सति परामर्शविषयमात्रस्य कारणताग्राहकाभावकथनविरोधः, लिङ्गमात्रकारणताबाधकव्यभिचारस्यैव सत्त्वादिति वाच्यम् । कारणताग्राहकपदेनाव्यभिचारनिर्वाहकस्य तत्कारणतावच्छेदकवैशिष्ट्यस्यैव विवक्षितत्वात् । विशेषणतावच्छेदकावच्छेदेनापीति । विशेष्यवैशिष्ट्यमनन्तर्भाव्य केवलविशेषणतावच्छेदकतावच्छेदेनापीत्यर्थः । साध्यव्याप्यत्वादिकमिति । साध्यव्याप्यत्वविशिष्टपक्षधर्मतावत्त्वमित्यर्थः । तदप्रसिद्धाविति । साध्यव्याप्यत्वाप्रसिद्धावित्यर्थः । इदमुपलक्षणम् । व्याप्त्यादिभ्रमविषयादप्यनुमित्युत्पत्त्या व्याप्त्यादिविशिष्टत्वविशेषणस्य कारणत्वासम्भवेन व्याप्तेर्विषयनिष्ठविशेषणतायामवच्छेदकत्वासम्भवोऽपि द्रष्टव्यः ।

वक्ष्यतीति । वस्तुमात्रस्यैव परामर्शविषयतावच्छेदकाधिकरणत्वाभावत्वादिमत्त्वादिति भावः । इदमुपलक्षणम् । परामर्शविषयतावच्छेदकरूपवत्त्वेनाहेतुत्वात्तदवच्छेदकत्वस्यापि विशेषणतावच्छेदकत्वाभावो बोध्यः । एवम् । उक्तलिङ्गत्वेन हेतुत्वम् । तथा । तेन रूपेण । अन्यथा । तेन रूपेणान्वयव्यतिरेकविरहेऽपि जनकज्ञानविषयतावच्छेदकत्वेन हेतुत्वे । अतीतादिलिङ्गज्ञानादनुमित्यपलापे परामृश्यमानत्वेन हेतुता सम्भवतीत्यत आह । न चेति । परामृश्यमानत्वं ज्ञायमानत्वमात्रं व्याप्तिपक्षधर्मताभ्यां ज्ञायमानत्वं वा । आद्यं दूषयति । व्याप्तीति । लाघवात् । अवच्छेदकलाघवात् । व्याप्तिपक्षधर्मताज्ञानस्य हेतुतावच्छेदकत्वे धर्मिणोऽधिकस्य निवेशेन गौरवादिति भावः ।

( दी० ) किं च कालान्तरीयतादृशज्ञानविषयादपि लिङ्गादनुमितिप्रसङ्गः । कारणतावच्छेदकावच्छिन्नकारणसत्त्वस्यैव कार्योत्पत्तिनियामकत्वान्न तु तद्विशिष्टसत्त्वस्यैव गौरवात् । इतोऽपि च प्रतिबन्धकाभावादीनां न कारणतावच्छेदकत्वं परामर्शविशिष्टत्वस्य चात्र प्रयोजकत्वाभिधाने लाघवादावश्यकत्वाच्च परामर्शस्यैव तथात्वं तत्र च नातिप्रसङ्गशङ्काऽपि । अथैवं संयुक्तेन्द्रियादीन्द्रियसंयोगाद्योः कारणतायामपीदमेव विनिगमकं स्यादिति चेत् ? स्यादेव यदि न स्याता-






मिन्द्रियादेः स्वतन्त्रान्वयव्यतिरेकौ । स्याच्च व्यापारेण व्यापारिणोऽन्यथासिद्धम् । न चानुमितिमात्रे तौ लिङ्गस्य, न चातीन्द्रियस्यापि तस्य परामर्शो व्यापार इति । अपि च चैत्रेण परामृश्यमानाल्लिङ्गादपरामृशतोऽपि मैत्रस्यानुमितिप्रसङ्गः । तत्तत्पुरुषीयानुमितिं प्रति तत्तत्पुरुषपरामृश्यमाणलिङ्गत्वेन हेतुत्वे चानन्तकार्यकारणभावप्रसङ्गः । इच्छाकृतिसुखदुःखस्मरणविशिष्टज्ञानशाब्दबोधादिषु ज्ञानेच्छाधर्माधर्मनिर्णयविशेषणभानपदार्थज्ञानादीनामिवानुमितौ परामर्शस्याप्येकार्थप्रत्यासत्त्या हेतुत्वान्नातिप्रसङ्गशङ्कापीति कृतं पल्लवितेन ।

(गा०) ननु व्याप्तिपक्षधर्मत्वविषयतानिरूपितविषयताविशिष्टज्ञानत्वेन हेतुत्वे विशेष्यविशेषणभावे विनिगमनाविरह इति तादृशविषयतासम्बन्धेन ज्ञानस्य कारणतावच्छेदकत्वमेवोचितमित्याशङ्कायां लिङ्गकरणतापक्षे दोषान्तरमाह । किञ्चेति । गौरवादिति । विशिष्टसत्त्वस्य विशेषणविशेष्योभयसत्त्वगर्भत्वादिति हृदयम् । इतोऽपि । कालान्तरे प्रतिबन्धकाभावविशिष्टात्प्रतिबन्धकसमवहितात्कार्यापत्तितोऽपि । न कारणतावच्छेदकत्वम् । अपि तु सहकारित्वमत्र । अपिकारेण विनिगमनाविरहोऽपि सूचितः । अत्रापत्तिवारणाय विशिष्टसत्त्वमेव प्रयोजकमन्यथानुपपत्त्या वाच्य तथाह । परामर्शेति । तत्र च । परामर्शसत्त्वस्य प्रयोजकत्वे च । नातिप्रसङ्गशङ्कापीति । परामर्शशून्यकाले नानुमितिप्रसङ्गशङ्कापीत्यर्थः ।

एवं सति विषयेन्द्रियसंयोगस्य हेतुत्वकल्पे विषयसंयुक्तेन्द्रियस्यापि विनिगमनाविरहाद्धेतुत्वमित्यपि न स्यात्तत्रापि संयोगस्य कारणतावच्छेदकत्वे कालान्तरे संयुक्तादिन्द्रियात्संयोगविरहदशायां प्रत्यक्षापत्तिः । संयोगविशिष्टसत्त्वस्य प्रयोजकत्वाभिधाने च लाघवादावश्यकत्वाच्च संयोगसत्त्वस्यैव तथात्वमुचितमिति विनिगमकसम्भवादिन्द्रियं हेतुरेव न स्यादित्याशङ्कते । अथेति । यदि न स्यातामिति । तथा चेन्द्रियनाशे संयोगसत्त्वेऽपि प्रत्यक्षानुत्पादानुरोधेन तस्य हेतुत्वमिति भावः । इन्द्रियनाशे ततो द्वितीं·

पक्षणे तत्संयोगोऽपि नश्यति अधिकैकक्षणे प्रत्यक्षोत्पाद इत्यत एवेत्याशङ्कयाह । स्यादेवेति । व्यवधानम् । अन्यथासिद्धिः । तादृशीं हेतुताव्यवस्थापकयुक्तिं प्रकृते निराकरोति । न चेति । लिङ्गशून्ये धर्मिणि भ्रमात्मकपरामर्शसत्त्वेऽपि लिङ्गव्यतिरेकात् भ्रमानुमितिव्यतिरेक इत्यनुमितिविशेषे लिङ्गस्यान्वयव्यतिरेकौ सम्भवत इति अनुमितिमात्र इत्यत्र मात्रपदोपादानम् । तौ । अन्वयव्यतिरेकौ । अतीन्द्रियस्येति । तत्परामर्शजनकेन्द्रियसंयोगरहितस्येत्यर्थः । तेनातीतादिपरिग्रहः । परामर्शो व्यापार इति । तादृशस्य परामर्शविषयीभूतस्यापि तदजनकत्वात् परामर्शस्य तदंशे लौकिकत्वाभावादिति भावः ।

ननु विशिष्टसत्त्वं विशेषणावच्छिन्नविशेष्यनिरूपित विलक्षणाधिकरणत्वं न विशेषणसत्त्वमभेमपि तु विशेषणसत्त्वनियतमेव तथा च विशिष्टसत्त्वस्य प्रयोजकत्वे क्वचिद्विशेषणसत्त्वस्य तदावश्यकत्वं तथा च पूर्वोक्तयुक्त्या ज्ञानस्य जनकतावच्छेदकत्वमेवोचितमित्याशङ्क्य दोषान्तरमाह । चैत्रेणेति । परामर्शहेतुतामते तत्पुरुषीयत्वानिवेशेऽपि अतिप्रसङ्गमुद्धरति । इच्छेति । इच्छादिकार्यसत्त्वे यथासत्त्वं ज्ञानादिकारणसत्त्वकस्यान्वयो बोध्य । एकार्थप्रत्यासत्त्या । सामानाधिकरण्यप्रत्यासत्त्या । नातिप्रसङ्गशङ्कापीति । कारणतावच्छेदकसम्बन्धेन स्वाधिकरण एव कारणस्य कार्यतावच्छेदकसम्बन्धेन कार्योत्पत्तिप्रयोजकत्वादिति भावः । मूले व्यक्त्यैक्यमिति । विद्यमानान्यव्यक्तिरित्यर्थः । तथा च विद्यमानपक्षे तन्मात्रवृत्तिरूपादिव्यक्तेरेव लिङ्गत्वावच्छिन्नस्य विद्यमानतासम्भवात् पक्षस्य विद्यमानतालाभेनातीतपक्षपरिग्रहः ।

( टी० ) एकान्योन्याभावविशिष्टापरान्योन्याभावादिर्वर्तमान एव सर्वत्र हेतुः सम्भवतीत्यत आह । यदि चेति । किं तु तत्प्रागभाव इति । तस्य च विरोधिकालावच्छेदेन व्याप्यत्वग्रहात्र तत्कालीनसाध्यसिद्धिरिति भावः ।

( गा० ) भाविनीत्यादिना यत्र पक्षस्य भावित्वमतीतत्वं वा तत्र तत्पक्षवृत्तित्वघटितलिङ्गत्वावच्छिन्नस्य विद्यमानत्वासम्भवोक्तेस्तत्र

विद्यमानस्य लिङ्गत्वाप्रसक्तेर्यदि चेत्यसङ्गतमतः लिङ्गत्वशरीरे न पक्षवृत्तित्वं विशेषणविधया निविष्टं किं तूपलक्षणतयेत्याशयेन उक्तविद्यमानलिङ्गासम्भवं दूषयन् यदि चेत्यादिकमवतारयति दीधितौ । एकेति । ह्रदादिभेदविशिष्टह्रदान्यनिर्वह्निभेदादिरित्यर्थः । निर्वह्न्यादिसामान्यभेदस्य वह्न्याद्यनतिरिक्ततया विशिष्टविशेषभेदानुधावनं मूले वर्तमानवह्न्यनुमित्यापत्तिरिति अपरामृश्यमानस्याहेतुत्वेन विद्यमानलिङ्गस्यापरामर्शदशायामनुमितिमपलप्य तत्परामर्शदशायामेवानुमितेः स्वीकरणीयतया तद्विशिष्टपक्षानुयोगिकसाध्यवैशिष्ट्यस्यानुमितौ भानेन तत्समानकालीनो विद्यमानो वह्निरनुमितौ भासेतेत्यर्थः । वस्तुगत्याऽतीतानागतहेतुकानुमितौ अतीतानागतलिङ्गज्ञानस्यैव जनकत्वादतीतानागतवह्निरेव सिद्धयति तत्र यदि व्यभिचारवारणार्थमुक्तस्य वर्तमानलिंगस्य हेतुत्वमादृतं तदा ज्ञायमानस्यैव तस्य हेतुत्वं स्वीकरणीयमिति तत्कालीनो वर्तमानोऽपि वह्निर्भासतामिति भाव । वर्तमानस्य प्रागभावादेर्लिङ्गत्वेऽपि कथितवर्त्तमानवन्ह्याद्यनुमानापत्तितादवस्थ्यादधेत्यादिशंकाया असङ्गतिरतस्तादृशापत्तिमुद्धरति दीधितौ । तस्य चेति । विरोधिकालावच्छेदेनेति । यदा यत्र धूमप्रागभावस्तदुत्तरं तत्र वह्निरिति विभिन्नकालमन्तर्भाव्य व्याप्तिग्रहादित्यर्थः । न तत्कालीनसाध्यसिद्धिः । न वर्त्तमानप्रागभावादिकालीनसाध्यस्यानुमितिरित्यर्थः । विभिन्नकालावटितव्याप्तिविषयकपरामर्शस्यैव हेतुसमानकालतया साध्यभासकत्वादिति भावः ।

(चि० ) अपि च न धूमप्रागभावादि लिङ्गं न वा तद्धीरनुमितिकारणम्, प्रागभावादीनां व्यर्थत्वात् आवश्यकधूमादिज्ञानादेवानुमितिसम्भवाच्च । किञ्च लिङ्गं नानुमितिमात्रे हेतुः, लिङ्गं विनाऽपि धूलीपटलाल्लिङ्गभ्रमेणानुमित्युत्पत्तेः । नापि लिङ्गं प्रमानुमितौ, परामर्शोऽनुमितिमात्रे हेतुः, तद्विशेषप्रमात्वाप्रमात्वाभ्यामेवानुमितितथात्वात् । यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषे तद्विशेषस्य प्रयोजकत्वा-

त् । अथ परामर्शस्य प्रमात्वं विद्यमानलिङ्गविषयत्वं तथा चायातं लिङ्गस्य प्रमानुमितिहेतुत्वमिति चेन्न । भाविना भूतेन वा यदा कदाचिद्विद्यमानेनापि लिङ्गेन परामर्शप्रमात्वसम्भवान्नानुमितिपूर्वसमये तत्प्रमात्वानुरोधेन लिङ्गस्य सत्त्वं कारणत्वं वा । धूमकालीनवह्न्यनुमानं च यदा यत्र धूमस्तदा तत्र वह्निरिति व्याप्तिज्ञानादेव । अथ वा धूमकालः पक्षतावच्छेदकः पक्षतावच्छेदकधर्मसमानाधिकरणं च पक्षधर्मबलात् साध्यं सिध्यतीति धूमकालीनवह्निसिद्धिः ॥

( दी० ) अपि चेत्याद्यभ्युपगमवादः । नियतसामानाधिकरण्यरूपाया व्याप्तेः प्रागभावादौ दुरपवादत्वात् । धूमप्रागभावत्वादिकं नावच्छेदकमिति चेत् ? किं चातः? न चैतदपि, व्याप्तेरवच्छिन्नत्वनियमात् परिशेषेण तस्यैव तथात्वात् अन्यथा धूमादिवृत्तिव्याप्तीनामपि धूमत्वादिकमवच्छेदकं न स्यात् । अथ स्वव्यापकसमानाधिकरणं व्याप्यं व्यापकत्वं च तद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगित्वत्वावच्छिन्नप्रतियोगिताकाभाववत्त्वादिकं स च विशेषणं धर्मो व्याप्त्यवच्छेदकः ।

(गा०) धूमनिश्चयं विनाऽनुमितेरसिद्धिरतो मूले ऽतीतभाविदिनवृत्तितया निश्चितादिति । अतीतदिनावच्छेदेन भाविदिनावच्छेदेन वा पक्षवृत्तितया निश्चितादित्यर्थः । धूमस्य वर्तमानतया निश्चये प्रागभावध्वंसयोर्निश्चयसम्भवेन लिंगत्वसंभवाद्वर्त्तमानतया संदिग्धादिति । पक्षवृत्तितयाऽनिश्चितत्वेन प्रागभावादेरलिङ्गत्वमुक्त्वा पक्षवृत्तितयाऽज्ञातत्वेनालिङ्गत्वस्थलमाह । किं चेति । भूतभाविवर्त्तमानत्वाविषयात् । पर्वते वर्त्तमानध्वंसप्रागभावप्रतियोगित्वाविषयकात् तत्कालावच्छिन्नपर्वतवृत्तित्वाविषयकाच्चेत्यर्थः । धूमस्यावर्त्तमानत्वलाभाय वर्त्तमानत्वाविषयकत्वाभिधानम् । तस्य वर्तमानत्वे वर्त-

मानत्वाभानस्य अनुमित्यविरोधित्वात् ।

धूमप्रागभावादेर्लिंगत्वस्य विचारासहत्वात् अपि चेत्यादि-दूषणे मूलकृतोऽनिर्भरं दर्शयति । अपि चेत्यादीति । अभ्युपगमवादः । धर्मिभेदेऽपि वैयर्थ्याभ्युपगमेनोक्तिः । साध्यसामानाधिकरण्याघच्छेदकरूपायाः व्याप्तेः धूमप्रागभावत्वादेः सामानाधिकरण्यानवच्छेदकत्वे धूमप्रागभावाद्यावसत्त्वसम्भवेनाह । नियतसामानाधिकरण्यरूपाया इति । शंकते । धूमप्रागभावत्वादिकमिति । नावच्छेदकमिति । गौरवेण व्याप्यतानवच्छेदकमित्यर्थः । तथा च न तदवच्छिन्नं लिंगमिति भावः । किं चेति । धूमप्रागभावत्वादेर्लिङ्गतानवच्छेदत्वेऽपि व्याप्तिपक्षधर्मताद्यस्वरूपालिंगत्वेन प्रागभावादेरनुमितिहेतुताया दुर्वारत्वादिति भावः । प्रौढ्याः तत्त्वस्यापि लिंगतावच्छेदकत्वं व्यवस्थापयति । न चैतदपीति । परिशेषेण । धूमप्रागभावाद्यवृत्तिधूमत्वावच्छिन्नत्वबाधसहितावच्छिन्नत्वहेतुना प्रागभावादिनिष्ठव्याप्तौ धूमप्रागभावत्वाद्यवच्छिन्नत्वासिद्धा । तस्यैव । धूमप्रागभावत्वादेरेव । तथात्वात् । तथात्वसिद्धेर्व्याप्यतावच्छेदकत्वसिद्धेरिति यावत् । अन्यथा । व्याप्तेरवच्छिन्नत्वानियमे ।

व्याप्तिर्नाव्यभिचारितसामानाधिकरण्यं किं तु स्वव्यापकसाध्यसामानाधिकरण्यं तथा च धूमप्रागभावादिनिरूपिता व्यापकता न प्रसिद्ध्यतीति न तस्य व्याप्यतेति शंकते । अथेति । अभावत्वादिकमित्यादिना स्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावपरिग्रहः । विशेषणमिति । व्यापकताघटकसामानाधिकरण्यप्रतियोगिनि विशेषणमित्यर्थः । व्याप्त्यवच्छेदक इति । व्यवह्रियत इति शेषः । एवं च व्याप्तेः स्वरूपसंबंधात्मककिंचिदवच्छिन्नताया अप्रामाणिकत्वेऽपि न धूमत्वादीनां व्याप्यतावच्छेदकत्वानुपपत्तिः ।

(दी०) न च धूमप्रागभावसमानाधिकरणाभावप्रतियोगितात्वादिकं प्रतियोगितावच्छेदकं, गौरवादपि तु धूमसमानाधिकरणाभावप्रतियोगितात्वादिकमेव लाघवात् । एवं च न धूमप्रागभावो व्याप्यो न वा तत्त्वं व्याप्यतावच्छेदकम् । अत एव प्रमेयधूमत्वादिकमपि नावच्छेदकमिति चेदेवं गतं तर्हि जातिसमनि-

यतोपाधिगुणादीनां व्याप्यत्वेन, लाघवेन गोजलादिनिष्ठाभावप्रतियोगितात्वादेरवच्छेदकत्वात् न तु सास्नास्नेहादिनिष्ठाभावप्रतियोगितात्वादेर्गौरवात्। प्रसिद्धं च गोत्वादिवृत्तिधर्माणामवच्छेदकत्वेन, आपादितं च ते नीलधूमत्वादेर्व्याप्यत्वावच्छेदकत्वेन नीलधूमसमानाधिकरणाभावप्रतियोगित्वाद्यभावस्यातिरिक्तत्वात् प्रमेयधूमत्वादिना वह्न्याद्यव्यापकत्वार्थमिव स्नेहत्वादिना व्याप्यत्वार्थमपि लघुगुरुसाधारणस्यावच्छेदकत्वस्योपादाने कुतस्तद्व्युदास इति। तथा चेति। तत्रैव फलप्रसामान्यकारणस्य विशेषरूपेण हेतुत्वं यत्र कल्प्यकारणतावच्छेदकमपेक्ष्य न गौरवम् अन्यथा विशेषकारणकलापविलयप्रसङ्गादिति भावः। धूमकालीनेत्यादि। सामानाधिकरण्ये कालविशेषस्यापि सम्बन्धघटकतया प्रविष्टत्वादित्यर्थः। यदा यत्रेति। कालिकदैशिकव्याप्तिद्वयज्ञानात्कालदेशयोः साध्यं सिध्यदसति बाधके लाघवादेकमेव सिध्यतीत्यपि वदन्ति। पक्षतावच्छेदकेति। पक्षतावच्छेदककालावच्छिन्नमित्यर्थः।

( गा० ) न चेति। धूमप्रागभावसमानाधिकरणाभावप्रतियोगितात्वादिकं च न प्रतियोगितावच्छेदकमित्यन्वयः। तथा च तादृशप्रतियोगितात्वावच्छिन्नाभावरूपव्यापकत्वस्याप्रसिद्धिरिति भावः। गौरवावधिं दर्शयति। अपि त्विति। अत एव। प्रमेयत्वविशिष्टसमानाधिकरणाभावप्रतियोगितात्वादेर्गौरवेण प्रतियोगितानवच्छेदकत्वादेव। तर्हीति। स्वसमानाधिकरणाभावप्रतियोगितात्वस्य गुरुतयाऽनवच्छेदकत्वेन स्वस्वनिष्ठधर्मयोर्व्याप्यत्वतदवच्छेदकत्वाभाव इत्यर्थः। जातिसमनियतोपाधिगुणानाम्। गोत्वजलत्वादिसमनियतानां सास्नास्नेहादीनाम्। व्याप्यत्वेन। गोत्वजलत्वादिव्याप्यत्वेन गतमित्यनेनान्वयः। गोत्वादिवृत्तिधर्माणाम्। गोत्वत्वादीनाम्। अवच्छेदकत्वेन। व्याप्यतावच्छेदकत्वेन। स्वरूपत एव गोत्वादीनां प्रतियोगितावच्छेदकशरीरनिवेशसम्भवेन गोत्वत्वादीनामनिवेशात्। आ-

पतितं चेति । नीलधूमत्वाद्यवच्छिन्नेऽपि स्वयं व्याप्त्युपगमाद्राधि-कयेनैव नीलधूमादिति प्रयोक्तुर्निग्रहस्य वक्ष्यमाणत्वान्नेत्युक्तम् । अस्य च वैयर्थ्यस्थल व्याप्तिमनङ्गीकर्त्तुरित्यादिः । अतिरिक्तत्वात् । धूमादिसमानाधिकरणाभावप्रतियोगितात्वावच्छिन्नाभावान्यत्वात् । तस्य न्यूनवृत्तित्वादिति भावः ।

ननु तादृशप्रतियोगितात्वादौ पारिभाषिकमभावप्रतियोगिता-वच्छेदकत्वं निवेशनीयं तच्च गुरुधर्मसाधारणं तथा च तादृशप्र-तियोगितात्वविशिष्टसंबधिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छि-न्नाभाववत्त्वादिरेव पर्यवसित व्यापकत्वमिति साम्नास्नेहादीनां व्या-प्यतोपपत्तिरित्यत आह । प्रमेयति । यथा प्रमेयधूमत्वाद्यवच्छिन्नस्य वह्न्याद्यव्यापकतार्थं प्रतियोगितानवच्छेदकेत्यत्र पारिभाषिकमवच्छे-दकत्वं निवेशितं तथा प्रतियोगितात्वे तदवच्छेदकत्वे वा उक्तपारि-भाषिकावच्छेदकत्वविवक्षणे इत्यर्थः । तद्व्युदास । धूमप्रागभावा-देर्व्याप्यत्वव्युदासः ।

मूले लिंगं विनापि पक्षे वह्निव्याप्यमात्रासत्त्वेऽपि । लिंगभ्रमेण । व्याप्तिभ्रमेण । परामर्शस्य प्रमात्वे विद्यमानलिङ्गविषयत्वमिति पा-करक्ते श्यामोऽयमिति धियः श्यामत्वांशे भ्रमत्वमित्यभिमानेन आयातं लिंगस्य प्रमानुमितिहेतुत्वमिति लिङ्गप्रमाया नियतपूर्व-वर्त्तित्वे लिङ्गस्यापि तथात्वादिति भावः ।

ननु लिङ्गस्य नियतपूर्ववर्तित्वेऽपि यत्सामान्य इत्याद्युक्तनि-यमात्प्रमापरामर्श एव प्रमानुमितौ हेतुरावश्यक इति कथमेषा श-ङ्केति शङ्कां निरसितुं भाव पूरयति दीधितौ । तत्रैवेति ।

न च यत्सामान्ये इत्याद्युक्तनियमात्प्रमानुमितौ परामर्शस्य हेतुतासत्त्वेऽपि तस्य कारणतावच्छेदकं विद्यमानलिङ्गविषयक-त्वमेवेति विशिष्टकारणताग्राहकमानेन लिङ्गस्यापि कारणत्वं ग्र-हीतव्यं तथा चायातं लिङ्गस्य हेतुत्वमिति मूलस्य नासङ्गतिरिति वाच्यम् । यतो विद्यमानलिङ्गविषयकपरामर्शत्वेन न हेतुत्वं गौर-वात् अपि तु लिङ्गपरामर्शत्वेन लाघवादिति मूलाभिप्रायेण दीधितिकृता भावो वर्णित इति । अन्यथा विशेषलघुरूपावच्छिन्ने कारणान्तरसम्भवेऽपि, गुरुविशेषरूपेण सामान्यकारणस्यैव हेतु-त्वे विशेषकारणविलयप्रसङ्गात् ध्यानादिविशेषप्रत्यक्षानुमित्यादौ स-

न्निकर्षपरामर्शादिविशिष्टमनोयोगत्वादिनैव हेतुत्वापत्त्या सन्निकर्षपरामर्शादीनामहेतुत्वप्रसङ्गात् । तथा च लिङ्गत्वापेक्षया विद्यमानलिङ्गज्ञानत्वेनैव कारणतोचितेति भावः ।

मूले पक्षीयधूमकालीनत्वपर्यन्तस्य साध्यांशे भाननिर्वाहाय यदा यत्रेत्यादिसामान्यव्याप्तिरादृता तत्र यत्तत्पदार्थस्याननुगततया पर्वते यदा धूमस्तदा तत्कालावच्छिन्नो वह्निरिति सहचारस्यागृहीतत्वेन तादृशवह्निसिद्धिर्न सम्भवतीत्यालोच्याह । सामानाधिकरण्य इति । कालविशेषस्य स्वसमानाधिकरणधूमकालस्य । सम्बन्धघटकतया । साध्यसम्बन्धघटकतया । तादृशकालावच्छिन्नसंयोगः । साध्यतावच्छेदकसम्बन्ध इति भावः ।

एतादृशसम्बन्धेन पर्वते वह्निसिद्धावेव फलतः पर्वतीयधूमकालीनवह्निसिद्धिः । एतावताऽपि अतीतानागतपक्षीयधूमकालीनावभानमादायार्थान्तरनिरासासम्भवात् तत्तद्धूमकालस्य पक्षतावच्छेदकत्वं मूलकारोऽङ्गीकरिष्यति ।

मतान्तरमाह । यदा यत्रेति । व्याप्तिग्रहस्थानादिति । एवं च यदा धूमस्तदा वह्निर्यत्र धूमस्तत्र वह्निरिति मूलस्य योजना । कालदेशयोः पक्षीकृतयोरेतद्धूमकालपर्वतयोः कालिकदैशिकसंबन्धाभ्यामिति शेषः । एकमेव । एकत्वविशिष्टमेव । अत्र कल्पे एतत्काले वह्निसिद्धेः पूर्वं एतत्कालीनवह्निमत्त्वावच्छिन्नस्यासिद्ध्या तदभेदरूपमेकत्वं लाघवज्ञानादप्यनुमितिः कथं विषयीकरिष्यतीत्यस्वरससूचनाय वदतीत्युक्तम् । पक्षतावच्छेदकसमानाधिकरणसाध्यसिद्ध्या नोद्देश्यासिद्धिः तदसमानकालीनस्यापि तत्समानकालसंबन्धिपक्षसंबन्धितया तत्कालसामानाधिकरण्यसिद्धावपि साध्ये तत्कालीनत्वासिद्धेरतः समानाधिकरणपदमवच्छिन्नार्थकतया व्याख्येयम् । पक्षतावच्छेदकेति । कालादीत्यादिना नितबादिरूपदेशपरिग्रहः ।

( चिं० ) यत्तु व्यापाराभावान्न परामर्शः करणमिति तथैव किं तु व्याप्तिज्ञानं करणं परामर्शो व्यापारः । न च परामर्शस्य संस्कारो व्यापारः, परामर्शस्य चरमकारणत्वेन संस्कारोत्पादनसमये

ऽनुमित्युत्पादनात् । नापि तर्कः, व्याप्तिग्राहकस्य विषयपरिशोधकस्य वा तस्य तदजन्यत्वादिति ॥

इति परामर्शचिन्तामणिः ।

( दी० ) किं तु व्याप्तीति । न च स्मरणात्मकपरामर्शस्थले तदसम्भवः । तत्र व्याप्तिविशिष्टानुभवस्य संस्कारद्वारा परामर्शहेतुत्वात्, फलाजनकव्यापारस्य फलजनकव्यापारजनकत्वे विरोधाभावात् । न च विशिष्टपरामर्शत्वेन न कारणत्वं व्याप्तिज्ञानत्वेन च न तद्विशिष्टस्मृतिहेतुत्वं न वा विशिष्टस्मृतित्वेनानुमितिहेतुत्वमिति वाच्यम् । व्याप्तिविषयकज्ञानत्वस्मृतित्वाभ्यां विशिष्टविषयकतत्त्वाभ्यां वा हेतुहेतुमद्भावेऽपि व्यापारव्यापारिभावाविरोधात् । न हि द्वारद्वारिणोः फलजनकत्वं येन रूपेण तेन रूपेण तयोर्मिथो हेतुहेतुमद्भावेऽपि नियमो मानाभावात् । इन्द्रियतत्संयोगपदज्ञानपदार्थोपस्थित्यादिषु प्रत्यक्षशाब्दादिकरणव्यापारेषु व्यभिचाराच्च । न चैवं धारावहनस्थले पूर्वपूर्वेषां विशेषणज्ञानानामुत्तरोत्तरतद्द्वारा विशिष्टप्रत्यक्षं प्रति करणत्वापत्तिः । यं जनयित्वैव यस्य यज्जनकत्वं तस्यैव तत्र व्यापारत्वात् ।

(गा०)तदसंभवः । व्याप्तिज्ञानस्य कारणत्वासंभवः । अनुभवात्मकपरामर्शे प्रत्येव विशेषणतावच्छेदकप्रकारकज्ञानविधया व्याप्तिप्रकारकज्ञानस्य हेतुत्वादिति भावः । स्मरणे विशेषणतावच्छेदकविधया व्याप्तिधियोऽहेतुत्वेऽपि स्मरणस्य समानविषयकानुभवजन्यत्वात् प्राचीनानुभवात्मकपरामर्शस्य व्याप्तिज्ञानत्वेन कारणत्वमक्षतमेवेति समाधत्ते । तत्रेति ।

ननु तत्फलजनकव्यापारे तत्फलकरणव्यापारविधया तत्फलाजनकस्य न हेतुतेति नियमः । आचार्यमतेऽपि लिंगव्यापारतयाऽनुमितिजनके परामर्शेऽनुमित्यजनकस्येन्द्रियादिव्यापारस्य हेतुतया व्यभिचार इति तत्फलकरणव्यापारविधयेति । एवं चानुमित्यजनकस्य संस्कारस्यानुमितिजनकपरामर्शे कथमनुमितिकरणस्य व्या-

परितया हेतुतत्त्याशंकानियमं प्रतिक्षिपन्निरस्यति । फलाजनकेति ।

ननु स्मरणात्मकपरामर्शद्वारा प्राचीनपरामर्शस्य कारणत्वं तदा संभवति यदि तयोर्मिथः कार्यकारणभावावच्छेदकाभ्यां विशिष्ट व्याप्तिविशिष्टपक्षज्ञानत्वतत्स्मृतित्वाभ्यां करणव्यापारभावः स्यात् । स्याद्वा कारणतावच्छेदकव्याप्तिज्ञानत्वाद्यवच्छिन्ननिरूपितजन्यतायामनुमितिजनकतायां च विशिष्टस्मृतित्वमवच्छेदकं यद्वारा यस्य यत्कारणं तन्निष्ठतत्फलजनकतावच्छेदकावच्छिन्नतत्फलकारणताकमिति नियमस्य तावतैव निर्वाहात् तदेव नैयायिकंत । न चेति । न कारणत्वमिति । अपि तु व्याप्तिज्ञानत्वेनैवेति शेषः । विशिष्टस्मृतिहेतुत्वम् । विशिष्टस्मृतित्वावच्छिन्नहेतुत्वम् अपि तु व्याप्तिस्मृतित्वावच्छिन्नहेतुत्वमेवेति शेषः । नानुमितिहेतुत्वमिति । व्यभिचारादिति शेषः । व्याप्तिविषयकस्मृतिज्ञानत्वाभ्याम् । व्याप्तिविषयकस्मृतित्वव्याप्तिविषयकज्ञानत्वाभ्याम् । विशिष्टविषयकतत्त्वाभ्याम् । विशिष्टविषयकज्ञानत्वविशिष्टविषयकस्मृतित्वाभ्याम् । वाशब्दोऽनास्थायाम् ।

उक्तनियमस्य प्रामाणिकत्वे विरोधोऽस्त्येवेति तं प्रतिक्षिपति । न हीति । साधकाभावमुक्त्वा नियमे बाधकमप्याह । इंद्रियेति । इंद्रियं इंद्रियत्वेन चक्षुरादिना वा प्रत्यक्षे कारणं व्यापारीभूततत्संयोगः तत्तत्संयोगत्वेन तद्धेतुः तेन तेन च रूपेण न तयोर्मिथः कार्यकारणभावः अपि तु संयोगत्वेन द्रव्यत्वेनैव । एवं शाब्दबोधे पदज्ञानं तत्त्वेन करणं व्यापारभूता पदार्थोपस्थितिः पदज्ञानजन्यार्थोपस्थितित्वेन हेतुः तयोस्तत्सम्बन्धिज्ञानत्वेन तत्तत्स्मृतित्वेन परस्परं हेतुहेतुमद्भाव इति व्यभिचारादित्यर्थः ।

न चैवमिति । एवम् । यद्यद्रूपेण मिथो न हेतुहेतुमद्भावः तत्तद्रूपेणापि करणव्यापारभावे । धारावहनस्थले । विशिष्टबुद्ध्यनन्तरं विशिष्टबुध्यन्तरोत्पादस्थले । पूर्वपूर्वेषाम् । प्रथमविशिष्टज्ञानजनकानाम् । उत्तरोत्तरद्वारा । स्वस्वजन्यविशिष्टबुद्ध्यात्मकविशेषणज्ञानान्तरद्वारा । विशिष्टप्रत्यक्षं प्रति । विशिष्टबुद्धित्वेन तदुत्तरविशिष्टप्रत्यक्षं प्रति । करणत्वापत्तिः । विशेषणज्ञानत्वेन करणत्वापत्तिः ।

समाधत्ते । यमिति । यम् । यद्रूपावच्छिन्नम् । यस्य । यद्रूपावच्छिन्नस्य । यज्जनकत्वम् । यद्रूपावच्छिन्नजनकत्वम् । तस्यैव । तद्रूपावच्छिन्नस्यैव । तत्र । तद्रूपावच्छिन्ने । व्यापारत्वादिति । त-

था च विशिष्टज्ञानजनकतावच्छेदकविशेषणज्ञानत्वस्य कारणत्वाभिमततद्रूपावच्छिन्नविशेषणज्ञानजन्यतावच्छेदकत्वाभावो न तद्रूपेण व्यापारताविरहप्रयोजकः अपि तु तद्रूपावच्छिन्नमजनयित्वाऽपि तद्रूपावच्छिन्नस्य विशिष्टधीजनकत्वमेव उत्तरोत्तरविशिष्टबुद्धिव्यक्तिं प्रति पूर्वपूर्वविशिष्टबुद्ध्यात्मकविशेषणज्ञानव्यक्तिद्वारा तज्जनकविशेषणज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेन कारणत्वस्य च नापत्तिः व्यवहितव्यक्तीनां तत्तद्व्यक्तित्वेन कारणताया अप्रामाणिकत्वात् अन्यथा उक्तनियमोपगमेऽप्यप्रतीकारादिति भावः ।

( दी० ) यत्तु तथा नियमेऽपि न क्षतिः विशिष्टस्मृतेरपि व्याप्तिविशिष्टज्ञानतया विशेषणव्याप्तिविषयकेण पूर्वानुभवेन संस्कारेण वा जननाद्व्याप्तिविषयकत्वेनैव करणत्वादिति । तन्न । जन्यत्वविशेषितेन संशयसाधारणेन व्याप्तिविशिष्टज्ञानत्वेन तज्जन्यत्वात् निश्चयसाधारणेन च व्याप्तिविशिष्टवैशिष्ट्यावगाहिपक्षनिश्चयत्वेनानुमितिहेतुत्वात् । यदि च विशिष्टव्याप्तेःप्रथममनुपस्थितावपि विशेष्ये विशेषणं तत्रापि विशेषणमिति रीत्या परामर्शादनुमितिस्तदा नियतपूर्वोपस्थितिकपदार्थोपस्थितेरेव कारणत्वं वाच्यम् । यत्तु परामर्शजनकत्वेन तत्तद्विशेषणज्ञानानां कारणत्वमिति तन्न । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव तथात्वग्रहेणान्यथासिद्धत्वात् । न च तत्र फलाननुगुणमन्यं प्रतीति वाच्यम्, गौरवात् । नचैवं भ्रमिजनकत्वलक्षणं दृढत्वमपि दण्डे घटजनकतावच्छेदकं न स्यादिष्टत्वात् । दण्डत्वेनैव तथात्वात् । क्वचिद्घटानुत्पादो भ्रमिरूपद्वारविरहात् । क्षुद्रचक्रभ्रमिजननसमर्थान्महाचक्रसमवहिताद्दण्डाद्घटानुत्पत्तौ तत्प्रयोजकताया आवश्यकत्वात् । भ्रमिविशिष्टत्वेन च जनकत्वे चक्रादीनामपि पृथक्कारणत्वं न स्यात् । न स्याच्च घटार्थितया दण्डे निष्कम्पा प्रवृत्तिः, प्रथमं भ्रमेरुपधानानिर्णयात् ।

परितया हेतुतत्त्याशंकानियमं प्रतिक्षिपन्निरस्यति । फलाजनकेति ।

ननु स्मरणात्मकपरामर्शद्वारा प्राचीनपरामर्शस्य कारणत्वं तदा संभवति यदि तयोर्मिथः कार्यकारणभावावच्छेदकाभ्यां विशिष्य व्याप्तिविशिष्टपक्षज्ञानत्वतत्स्मृतित्वाभ्यां करणव्यापारभावः स्यात् । स्याद्वा कारणतावच्छेदकव्याप्तिज्ञानत्वाद्यवच्छिन्ननिरूपितजन्यतायामनुमितिजनकतायां च विशिष्टस्मृतित्वमवच्छेदकं यद्द्वारा यस्य यत्कारणं तन्निष्ठतत्फलजनकतावच्छेदकावच्छिन्ननरफलकारणताकमिति नियमस्य तावतैव निर्वाहात् तदेव नेत्याशंकते । न चेति । न कारणत्वमिति । अपि तु व्याप्तिज्ञानत्वेनैवेति शेषः । विशिष्टस्मृतिहेतुत्वम् । विशिष्टस्मृतित्वावच्छिन्नहेतुत्वम् अपि तु व्याप्तिस्मृतित्वावच्छिन्नहेतुत्वमेवेति शेषः । नानुमितिहेतुत्वमिति । व्यभिचारादिति शेषः । व्याप्तिविषयकस्मृतिज्ञानत्वाभ्याम् । व्याप्तिविषयकस्मृतित्वव्याप्तिविषयकज्ञानत्वाभ्याम् । विशिष्टविषयकतत्त्वाभ्याम् । विशिष्टविषयकज्ञानत्वविशिष्टविषयकस्मृतित्वाभ्याम् । वाशब्दोऽनास्थायाम् ।

उक्तनियमस्य प्रामाणिकत्वे विरोधोऽस्त्येवेति तं प्रतिक्षिपति । न हीति । साधकाभावमुक्त्वा नियमे बाधकमप्याह । इंद्रियेति । इंद्रियं इंद्रियत्वेन चक्षुष्ट्वादिना वा प्रत्यक्षे कारणं व्यापारीभूततत्संयोगः तत्तत्संयोगत्वेन तद्धेतुः तेन तेन च रूपेण न तयोर्मिथः कार्यकारणभावः अपि तु संयोगत्वेन द्रव्यत्वेनैव । एवं शाब्दबोधे पदज्ञानं तत्त्वेन करणं व्यापारभूता पदार्थोपस्थितिः पदज्ञानजन्यार्थोपस्थितित्वेन हेतुः तयोस्तत्सम्बन्धिज्ञानत्वेन तत्तत्स्मृतित्वेन परस्परं हेतुहेतुमद्भाव इति व्यभिचारादित्यर्थः ।

न चैवमिति । एवम् । यद्रूपेण मिथो न हेतुहेतुमद्भावः तत्तद्रूपेणापि करणव्यापारभावे । धारावहनस्थले । विशिष्टबुद्ध्यनन्तरं विशिष्टबुध्यन्तरोत्पादस्थले । पूर्वपूर्वेषाम् । प्रथमविशिष्टज्ञानजनकानाम् । उत्तरोत्तरद्वारा । स्वस्वजन्यविशिष्टबुद्ध्यात्मकविशेषणज्ञानान्तरद्वारा । विशिष्टप्रत्यक्षं प्रति । विशिष्टबुद्धित्वेन तदुत्तरविशिष्टप्रत्यक्षं प्रति । करणत्वापत्ति । विशेषणज्ञानत्वेन करणत्वापत्तिः ।

समाधत्ते । यमिति । यम् । यद्रूपावच्छिन्नम् । यस्य । यद्रूपावच्छिन्नस्य । यज्जनकत्वम् । यद्रूपावच्छिन्नजनकत्वम् । तस्यैव । तद्रूपावच्छिन्नस्यैव । तत्र । तद्रूपावच्छिन्ने । व्यापारत्वादिति । त-

था च विशिष्टज्ञानजनकतावच्छेदकविशेषणज्ञानत्वस्य कारणत्वाभिमततद्रूपावच्छिन्नविशेषणज्ञानजन्यतावच्छेदकत्वाभावो न तद्रूपेण व्यापारताविरहप्रयोजकः अपि तु तद्रूपावच्छिन्नमजनयित्वाऽपि तद्रूपावच्छिन्नस्य विशिष्टधीजनकत्वमेव उत्तरोत्तरविशिष्टबुद्धिव्यक्तिं प्रति पूर्वपूर्वविशिष्टबुद्ध्यात्मकविशेषणज्ञानव्यक्तिद्वारा तज्जनकविशेषणज्ञानव्यक्तीनां तत्तद्व्यक्तित्वेन कारणत्वस्य च नापत्तिः व्यवहितव्यक्तीनां तत्तद्व्यक्तित्वेन कारणताया अप्रामाणिकत्वात् अन्यथा उक्तनियमोपगमेऽप्यप्रतीकारादिति भावः ।

(दी०) यत्तु तथा नियमेऽपि न क्षतिः विशिष्टस्मृतेरपि व्याप्तिविशिष्टज्ञानतया विशेषणव्याप्तिविषयकेण पूर्वानुभवेन संस्कारेण वा जननाद्व्याप्तिविषयकत्वेनैव करणत्वादिति । तन्न । जन्यत्वविशेषितेन संशयसाधारणेन व्याप्तिविशिष्टज्ञानत्वेन तज्जन्यत्वात् निश्चयसाधारणेन च व्याप्तिविशिष्टवैशिष्ट्यावगाहिपक्षनिश्चयत्वेनानुमितिहेतुत्वात् । यदि च विशिष्टव्याप्तेःप्रथममनुपस्थितावपि विशेष्ये विशेषणं तत्रापि विशेषणमिति रीत्या परामर्शादनुमितिस्तदा नियतपूर्वोपस्थितिकपदार्थोपस्थितेरेव कारणत्वं वाच्यम् । यत्तु परामर्शजनकत्वेन तत्तद्विशेषणज्ञानानां कारणत्वमिति तन्न । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव तथात्वग्रहेणान्यथासिद्धत्वात् । न च तत्र फलानुगुणमन्यं प्रतीति वाच्यम्, गौरवात् । नचैवं भ्रमिजनकत्वलक्षणं दण्डत्वमपि दण्डे घटजनकतावच्छेदकं न स्यादिष्टत्वात् । दण्डत्वेनैव तथात्वात् । क्वचिद्घटानुत्पादो भ्रमिरूपद्वारविरहात् । क्षुद्रचक्रभ्रमिजननसमर्थान्मृद्वाचक्रसमरहिताद्दण्डाद्घटानुत्पत्तौ तत्प्रयोजकताया आवश्यकत्वात् । भ्रमिविशिष्टत्वेन च जनकत्वे चक्रादीनामपि पृथक्कारणत्वं न स्यात् । न स्याच्च घटार्थितया दण्डे निष्कम्पा प्रवृत्तिः, प्रथमं भ्रमेरुपस्थानानिर्णयात् ।

(गा०)तथा नियमाभ्युपगमेऽपि व्याप्तिज्ञानपरामर्शयोः करणव्यापारभावमुपपादयतां परामर्शस्य व्याप्तिविशिष्टज्ञानत्वेन व्यापारताभिमानिनां मतमुपन्यस्यति । यद्वेति । न क्षतिः । न प्रकृते क्षतिः । व्याप्तिविशिष्टज्ञानतयाऽनुभवेन संस्कारेण वा जननादित्यन्वयः । विशिष्टज्ञानतयेति । तृतीयार्थोऽवच्छिन्नत्वम् । अनुभवेनेत्यादौ तृतीयार्थो निरूपितत्वं जननं जन्यता तथा चानुभवादिनिरूपितविशिष्टज्ञानत्वावच्छिन्नजन्यताश्रयत्वादित्यर्थः । स्मृतिं प्रति संस्कारद्वारा अनुभवं प्रति साक्षाद्विशेषणधियः पूर्ववर्तितया स्मृतिसाधारणविशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानहेतुत्वमिति मते पूर्वानुभवेनेति । तद्रूपावच्छिन्नं प्रति विशेषणविषयकत्वेन संस्कारादिसाधारणेन हेतुतेति मतमनुसृत्य संस्कारेण वेति । विशिष्टबुद्धिं प्रति विशेषणविषयकत्वेन हेतुत्वे प्रकृते व्याप्तिज्ञानत्वेन करणत्वमुक्तनियमसत्त्वे न निर्वहतीत्युक्तन्मते करणतावच्छेदके ज्ञानत्वं परित्यजति । व्याप्तिविषयकत्वेनेति । व्यापारनिष्ठकरणजन्यतावच्छेदकेऽधिकनिवेशं दर्शयति । जन्यत्वविशेषितेनेति । जन्यनित्यसाधारणधर्मस्य जन्यतानवच्छेदकत्वादिति भावः ।

तत्र न्यूनतां दर्शयति । संशयसाधारणेनेति । तथा च निश्चयत्वानिवेशान्न्यूनता । व्याप्तिविशिष्टज्ञानत्वेनेत्यतोऽपि विशिष्टवैशिष्ट्यानिवेशान्न्यूनता लभ्यते । तन्निष्ठानुमितिजनकतावच्छेदके न्यूनताधिक्ये दर्शयति । नित्यसाधारणेनेतिनित्यसाधारेणेनेत्यनेन जन्यत्वाप्रवेशो दर्शितः । नित्यस्यापि स्वरूपयोग्यस्य सहकारिविरहात्फलानुपधायकत्वमिति भावः । व्याप्तिप्रकारकत्वेन करणत्वोपगमे विशिष्टवैशिष्ट्यावगाहितायाः परामर्शनिष्ठानुमितिजनकतावच्छेदककोटिनिवेशनेनाधिक्यं विशिष्टवैशिष्ट्यावगाहितायाः विशेषणतावच्छेदकप्रकारकत्वावच्छिन्ननिरूपितजन्यतावच्छेदकत्वादिति संशयान्यत्वनिवेशादेवाधिक्यम् । समवायघटितसामानाधिकरण्यप्रत्यासत्त्या हेतुहेतुमद्भावे पक्षविषयकत्वनिवेशाधिक्यं चेत्यवधातव्यम् ।

प्रथमम् । परामर्शपूर्वम् । विशेषणतावच्छेदकविशिष्टविशेषणज्ञानं विना विशिष्टवैशिष्ट्यबोधासंभवादाह । विशेष्ये विशेषणमिति । तादृशबोधे विशेषणज्ञानविधया प्रत्येकपदार्थोपस्थितेरेव हेतुतया विश-

कलितानां व्याप्तिघटकपदार्थानामुपस्थित्या परामर्शासंभवादिति भावः । व्याप्तिघटकपदार्थांशे निश्चयत्वपर्यन्तानिवेशेन लाघवाद् व्याप्तिविशिष्टवैशिष्ट्यबोधत्वेनैवानुमितिहेतुता व्याप्त्यंशे संशयाकारबुद्धेश्च न तद्विशिष्टवैशिष्ट्यावगाहिता तत्पूर्वं तद्विशिष्टवैशिष्ट्यबोधजनकतन्निश्चयासत्त्वानियमात् । यत्र च विशेष्ये विशेषणमित्यादिरीत्या परामर्शस्तत्र तदनंतरोत्पन्नविशिष्टवैशिष्ट्यावगाहिपरामर्शादेवानुमितिरित्युक्तिसंभवाद्यदि तदेत्युक्तम् ।

इदमापाततः । विशिष्टवैशिष्ट्यविषयितायाः कारणतावच्छेदके निवेशेऽपि व्याप्यत्वभावप्रकारकं ज्ञानं जायतामितीच्छाधीनव्याप्यंशेऽनाहार्यसंशयात्मकविशिष्टवैशिष्ट्यावगाहिबोधस्य दुर्वारत्वात् तदंशे निश्चयत्वनिवेश आवश्यकः

न च तादृशेच्छासत्त्वे तद्घटितसामग्र्या बलवत्त्वात् व्याप्तेरेव भानासंभवात्कथं संशयः, व्याप्तिव्याप्त्यभावोभयप्रकारकं भानं जायतामितीच्छायां व्याप्तेरपि भानसंभवादिति ।

नियतपूर्वोपस्थितिकेति । तादृशपदार्थाः । व्याप्तिघटकाभावत्वादयः । करणत्वम् । तत्तत्पदार्थज्ञानत्वेन वाच्यम् । परामर्शजनकत्वेनेति । अभावत्वज्ञानत्वादिना हेतुत्वे नानाकारणताप्रसंगात् विनिगमनाविरहेण एकमात्ररूपेण हेतुत्वासंभवात् । परामर्शजनकत्वस्य सर्वसंग्राहकतया विनिगमनाविरहानवकाशादिति भावः ।

अन्यं प्रति पूर्ववर्तित्वं गृहीत्वैवेति । परामर्शजनकत्वरूपावच्छेदकग्रहस्य परामर्शपूर्ववर्तित्वग्रहात्मकतया तं विना तेन रूपेणानुमितिपूर्ववर्तित्वग्रहासंभवादिति भावः । फलानुगुणमिति । तथा च परामर्शस्यानुमित्यनुगुणतया तत्पूर्ववर्तित्वग्रहं विना परामर्शजनकत्वेनानुमितिपूर्ववर्तित्वाग्रहेऽपि न तेन रूपेणान्यथासिद्धिरिति भावः । एवम् । अन्यथासिद्धिशरीरे सामान्यत एवान्यं प्रतीत्युक्तौ । न स्यादिति । उक्तान्यथासिद्धिनिरूपकत्वादिति भावः । इष्टापत्त्या समाधत्ते । इष्टत्वादिति । तदा केन रूपेण घटजनकतेत्याकांक्षायामाह । दण्डत्वेनेति ।

नन्वेवं भ्रमिजननायोग्यात्कोमलादपि दंडाद्घट उत्पद्येतात आह । क्वचिदिति । कोमलदंडे घटार्थिनोऽप्रवृत्तिश्च फलानुपधाननिश्चयादिति भावः । भ्रमियोग्यत्वेन हेतुत्वेऽपि भ्रमिविरहस्य घटानु-

त्पादप्रयोजकतां दर्शयति । क्षुद्रेति । दंडात् । क्षुद्रदंडात् । तत्प्रयोजकतायाः । भ्रमिविरहस्य घटानुत्पादप्रयोजकतायाः । आवश्यकत्वात् । भवतापि स्वीकारात् ।

ननु भ्रम्युपहितत्वेन हेतुतोच्यते तथा च भ्रमिविरहस्य न घटानुत्पत्तिप्रयोजकत्वमुपेयते उक्तस्थले भ्रम्युपहितदण्डव्यतिरेकेणैव घटानुत्पादसंभवादित्यत आह । भ्रमिविशिष्टत्वेनेति । पृथक् । चक्रत्वादिना । भ्रम्युपधानसंदेहेन सकंपप्रवृत्तिसंभवादाह । निष्कंपेति । तादृशप्रवृत्तौ स्वरूपयोग्यतानिश्चयस्य हेतुत्वादिति भावः । प्रथमम् । प्रवृत्तिपूर्वम् ।

( दी० ) अस्तु वा भ्रमिप्रयोजकोऽवयवविशेषादिरेव तथा, प्रथमोपस्थितत्वादावश्यकत्वाच्च । अन्यथा घटजनकत्वेनैव भ्रमिजनकतां किमिति न रोचयेः । अत एव सौवर्णवैणवादिदण्डेष्वनुगतदण्डत्वविरहेऽपि न क्षतिः । किं चैवं प्रवृत्तिं प्रति इष्टसाधनताज्ञानजनकत्वेन शब्दादीनां शाब्दबोधं प्रति च तज्जनकाकाङ्क्षादिज्ञानजनकत्वेनानुमानसंस्कारतत्तद्विशेषणज्ञानादीनां कार्यान्तरं प्रति च तज्जनकतत्तत्पदार्थकारणानां तत्तत्पदार्थकारणत्वेन हेतुत्वप्रसङ्गः । तज्जनकत्वेन हेतुत्वे तत्त्वेनैव हेतुत्वं प्रथमोपस्थितत्वादावश्यकत्वाल्लाघवाच्चेति चेत् ? किमिदं प्रकृते पाणिपिहितम् ? इदं पुनरिहावधेयम्—विशिष्टविषयकत्वेन कारणत्वे केवलविशेषणादिविषयकत्वेन न हेतुत्वं तदवच्छिन्नकार्यजनकतावच्छेदकान्तराव्यापकरूपेणैव तदवच्छिन्नं प्रति जनकत्वात् । दर्शयिष्यते हि तथाऽन्यथासिद्धत्वम्, अन्यथा घटत्वाद्यवच्छिन्नं प्रति कपालतत्संयोगादीनां जन्यत्वविरोधितेन शुद्धेन वा द्रव्यत्वगुणत्वादिना विशिष्टवैशिष्ट्यबोधं प्रति च विशेषणतावच्छेदकविषयत्वेन हेतुत्वप्रसङ्गात् । अनुमितिशाब्दबोधचिकीर्षादिकं प्रति च परामर्शाकाङ्क्षाकृतिसाध्यत्वादिज्ञानविषयविशिष्टाविशिष्टतत्तत्पदार्थविषयत्वेन हेतुत्वेऽन-

न्तकार्यकारणभावप्रसङ्गाच्च ।

(गा०) ननु सौवर्णादिदंडसाधारणं दंडत्वंऽन जातिः जातिसंकरादिति भ्रमिजनकत्वमेव तादित्यत आह। अस्तु वेति। भ्रमिप्रयोजकः। भ्रमिजनकतावच्छेदकः। अवयवसंयोगविशेषादिरिति। दार्व्याद्यवयवजातीयावयवसंयोगादिरित्यर्थः। तथा। घटजनकतावच्छेदकः। तस्य स्ववच्छेदकत्वमुभयथैव स्वसमवायिसमवेतत्वसंबंधेन समवायेनैव वा दंडावयवानामेव तेन रूपेण हेतुत्वोपगमात् । दंडावयविनोऽहेतुत्वेऽपि क्षतिविरहात् । यत्र च परस्परसंबद्धैर्बहुभिः कोमलदंडैर्नूत्नं चक्रं भ्राम्यति तत्र तेषामेव संयोगे तादृशी जातिरिति । तत्र तेषां तेन रूपेण हेतुता तत्र तदवयवानामपि तादृशसंयोगस्याऽऽवश्यकत्वात् । परंपरासंबंधेन तेषां दंडादावपि सत्वेन तेन संबंधेन हेतुतावच्छेदकत्वपक्षेऽप्यदोषः ।

अथैवं तादृशजातेर्द्रव्यानारंभकसंयोगसाधारणतया तदारंभकतावच्छेदकजात्या संकरप्रसङ्गः । तत्र तावद्दंडे दंडांतरारंभोपगमेऽनुभवविरोधात् । दारुवेण्वाद्यारब्धस्य दारुवेण्वादित्वनियमेन दारुत्ववेणुत्वादिजातीनां संकरभिया कोमलदारुवेण्वादिसंवलनस्थलेऽवयव्यंतरोत्पादोपगमासंभवाच्च । अत एव गृहादीनां नैकावयवत्वमिति सिद्धांतः ।

एतेन कोमलदंडैकत्वव्याप्यवृत्तिकत्वगतजातिभेद एव भ्रम्यादिप्रयोजक इत्यपि निरस्तम्। न चानारंभकसंयोगेष्वेव भ्रमिजनकघटप्रयोजिका जातिरुपेयते एकैकदण्डाद्युत्पादस्थले च तदेकावयवापरावयवयोः संयोगस्य द्रव्यानारंभकतया तस्यैव घटाद्युत्पादप्रयोजकत्वोपगमादिति नारंभकतावच्छेदकजात्या संकरप्रसंग इति वाच्यम् । एवमपि यत्र यादृशकोमलदंडद्वयसंवलनादेव घटाद्युत्पत्तिर्न तु तदुभयमात्रसंवलनाच्चत्र तदुभयसंवलनाऽपि तदुत्पादप्रसंगो दुर्वारः । व्यक्त्यंतरसंयोगसहकारेण तदुभयसंयोगाद्युत्पादनिर्वाहाय तादृशसंयोगे जातिभेदोपगमस्यावश्यकत्वात् ।

एतेन दंडचक्रसंयोग एव तादृशी जातिस्तद्वत्त्वेन घटादिजनकतेति निरस्तम् । दंडांतरसंयोगसापेक्षयादृशचक्रदंडसंयोगाच्चक्रं भ्राम्यति तन्निरपेक्षतत्संयोगव्यक्तितो घटाद्यापत्तेर्दुर्वारत्वात् । प्रथम-

तद्यकसंयोगादिमत्त्वनिश्चयाभावेन प्रवृत्त्यनुपपत्तेश्चेति चेत् ? तर्हि कोमलदंडादिसाधारणेन पृथिवीत्वेनैव भ्रम्यादिजनकता स्वीक्रियते अतिप्रसंगभंजकः सहकारिविरह एव प्रवृत्त्यतिप्रसंगमपि फलानुपधाननिश्चय एव निराकरोति। यदि च बलवता मारुतेनाभिहतमपि चक्रं भ्रांत्वा घटं जनयति तदा स्पर्शवत्त्वेन द्रव्यत्वेन वा तथात्वं मूर्तत्वजातिपक्षे तु तथैव,तत्परिग्रहायैवादिपदमुपात्तमिति बोध्यम्। एव कारेण भ्रमिजनकस्य व्यवच्छिद्यते। प्रथमोपस्थितत्वादिति। जनकताग्रहे तदवच्छेदकग्रहस्यापेक्षणीयतया भ्रमिजनकतामपेक्ष्य तदवच्छेदकस्य प्रथममुपस्थितत्वादित्यर्थः। आवश्यकत्वादिति। नियतपूर्ववर्तितावच्छेदकधर्मस्यैव जनकतात्मकतया भ्रमिजनकतया घटजनकतावच्छेदकत्वे भ्रमिजनकतावच्छेदकस्य तथात्वावश्यकत्वादित्यर्थः। तथा च जनकतात्वेन तादृशधर्मस्य तथात्वापेक्षया विशिष्य तथात्वे लाघवमिति भावः।

अथागत्या भ्रमिं प्रति अत्यंताजनकसाधारणेन स्पर्शवत्त्वादिना हेतुत्वेऽपि घटं प्रति न तेन रूपेण हेतुत्वमुपेयते अत्यंताजनकव्यावृत्तेन भ्रम्युपधायकत्वेनैव हेतुतासंभवात् कथंचिद्भ्रम्युपधायकनिश्चयदशायामेव घटार्थिनो निष्कंपाया अन्यदा तदर्थिनां सकंपाया प्रवृत्तेरुपपत्तेरित्यत आह। अन्यथेति। अन्यथा। अत्यंताजनकव्यावृत्तेन एकजनकत्वेनापरजनकत्वोपगमे। घटजनकत्वेनैवेति। विनिगमनाविरहादिति भावः। अन्योन्याश्रयेण च परस्परजनकत्वेन उभयजनकता न संभवतीति बोध्यम्।

दण्डत्वेन कथितहेतुतामते निर्भरबीजं स्वयमेवाह। अत एवेति। अनुगतदंडत्वविरहेऽपि सुवर्णत्ववेणुत्वादिजातिसंकीर्णतया साधारणदंडत्वजातिविरहेऽपीत्यर्थः। ननु अन्ये प्रतीत्याद्यन्यथासिद्धिकवलिततया घटजनकत्वेन भ्रमिजनकता न संभवति तत्र चान्यस्मिन्फलाननुगुणत्वविशेषणाददृष्टं प्रति भ्रमिजनकत्वेन हेतुत्वमविरुद्धमित्याशंक्य फलाननुगुणत्वविशेषणप्रतिक्षेपाय प्रतिबंदिं दर्शयति। किं चेति। एवम्। फलाननुगुणकार्यजनकत्वेनानन्यथासिद्धत्वे। कार्यांतरम्। घटादिकम्। तत्तत्पदार्थकारणानाम्। दंडचक्रकुलालादिकारणानाम्। तज्जनकत्वेन। इष्टसाधनताज्ञानादिजनकत्वेन। हेतुत्वे।

प्रसक्ते । तत्त्वेनैव । इष्टसाधनताज्ञानत्वादिनैव । लाघवाच्चेति । न तु तज्जनकत्वेन गुरुतया अन्यथासिद्धिनिरूपकत्वादिति शेषः । प्रकृते । दण्डघटयोर्हेतुहेतुमद्भावस्थल ।

मनसोऽनुमितिकरणतां व्यवस्थापयिष्यन्मूलोकव्याप्तेस्तद्घटकपदार्थानां च धियोऽनुमितिकरणत्वं निराकरोति । इदं पुनरित्यादिना । तत्तद्व्यक्त्यादिजनकतावच्छेदकतत्तद्व्यक्तित्वादिव्यापकसामान्यधर्मेण सामान्यधर्मावच्छिन्नतत्तद्व्यक्त्यादिहेतुत्वात्तदवच्छिन्नत्वद्वयं फलतः कार्यताविशेषणम् । स्वस्यापि स्वव्यापकत्वादवच्छेदकान्तरेति ।

न च व्याप्तिज्ञानकारणतायां विभिन्नपक्षसाधारणधूमनिष्ठतादृशव्याप्तिज्ञानाव्यवहितोत्तरवह्न्यनुमितित्वं परामर्शकारणतायां तु तत्पक्षकतत्साध्यकपरामर्शाव्यवहितोत्तरानुमितित्वं कार्यतावच्छेदकमिति कथमेककार्यतावच्छेदकावच्छिन्नं प्रति द्वयोर्जनकत्वमिति वाच्यम् । धूमनिष्ठव्याप्तिज्ञानस्य पर्वतपक्षकानुमितिं प्रत्येव नियतव्यापाराभावेनाकरणत्वात् ।

(१)न च धूमव्याप्तिज्ञानाव्यवहितोत्तरं तत्पक्षकतदनुमितित्वं तथाऽस्तु तथाऽपि नैकमुभयजन्यतावच्छेदकमिति वाच्यम् । वह्निव्याप्यो धूमो वह्निव्याप्यालोकवान् पर्वत इति समूहालंबनपरामर्शजन्यानुमितौ धूमव्याप्तिज्ञानकरणिकायां व्यभिचारात् व्यापारसंबंधेन तद्भावात् तस्मात् धूमपरामर्शाव्यवहितोत्तरपर्वतपक्षकवह्न्यनुमितित्वं परामर्शस्येव तस्यापि जन्यतावच्छेदकं वाच्यं तथा सतीदमिति भावः।

ननु जनकतावच्छेदकांतरव्यापकस्यापि नियतपूर्ववर्तितावच्छेदकत्वान्न कथं तस्य जनकतावच्छेदकत्वमित्यत आह । दर्शयिष्यते हीति । तथा । व्यापकरूपेण । अन्यथासिद्धत्वमिति । तथा चान्यथासिद्धिनिरूपकत्वान्न तस्य तथात्वमिति भावः । व्यापकरूपेणान्यथासिद्धत्वे युक्तिमाह । अन्यथेति । नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियमपक्षमवलंब्याह । जन्यत्वविशेषितेनेति । तादृशनियमानभ्युपगमपक्षमवलंब्याह । गुरुणेन वेति । हेतुत्वप्रसंगादिति । नियतपूर्ववर्तितायाः अन्यथासिद्ध्यन्तराविद्धस्य च तद्रूपावच्छिन्नेऽपि सत्त्वादिति भावः ।

---

(१) 'न चेत्यादिर्भाव' इत्यन्तः पाठः पुस्तकान्तरे नास्ति ।

तच्चक्रसंयोगादिमत्त्वानिश्चयाभावेन प्रवृत्त्यनुपपत्तेश्चेति चेत् ? तर्हि कोमलदंडादिसाधारणेन पृथिवीत्वेनैव भ्रम्यादिजनकता स्वीक्रियते अतिप्रसंगभंजकः सहकारिविरह एव प्रवृत्त्यतिप्रसंगमपि फलानुपधाननिश्चय एव निराकरोति । यदि च बलवता मारुतेनाभिहतमपि चक्रं भ्रांत्वा घटं जनयति तदा स्पर्शवत्त्वेन द्रव्यत्वेन वा तथात्वं मूर्तत्वजातिपक्षे तु तयैव,तत्परिग्रहायैवादिपदमुपात्तमिति बोध्यम् । एवकारेण भ्रमिजनकत्वं व्यवच्छिद्यते । प्रथमोपस्थितत्वादिति । जनकताग्रहे तदवच्छेदकग्रहस्यापेक्षणीयतया भ्रमिजनकतामपेक्ष्य तदवच्छेदकस्य प्रथममुपस्थितत्वादित्यर्थः । आवश्यकत्वादिति । नियतपूर्ववर्तितावच्छेदकधर्मस्यैव जनकतात्मकतया भ्रमिजनकताया घटजनकतावच्छेदकत्वे भ्रमिजनकतावच्छेदकस्य तथात्वावश्यकत्वादित्यर्थः । तथा च जनकतात्वेन तादृशधर्मस्य तथात्वापेक्षया विशिष्य तथात्वे लाघवमिति भावः ।

अथागत्या भ्रमिं प्रति अत्यंताजनकसाधारणेन स्पर्शवत्त्वादिना हेतुत्वेऽपि घटं प्रति न तेन रूपेण हेतुत्वमुपेयते अत्यंताजनकव्यावृत्तेन भ्रम्युपधायकत्वेनैव हेतुतासंभवात् कथंचिद्भ्रम्युपधायकनिश्चयदशायामेव घटार्थिनां निष्कंपाया अन्यदा तदर्थिनां सकंपाया प्रवृत्तेरुपगंतव्यत्वादित्यत आह । अन्यथेति । अन्यथा । अत्यंताजनकव्यावृत्तत्वे एकजनकत्वेनापरजनकत्वोपगमे । घटजनकत्वेनैवेति । विनिगमनाविरहादिति भावः । अन्योन्याश्रयेण च परस्परजनकत्वेन उभयजनकता न संभवतीति बोध्यम् ।

दण्डत्वेन कथितहेतुतामतेऽनिर्भरबीजं स्वयमेवाह । अत एवेति । अनुगतदंडत्वविरहेऽपि सुवर्णत्वधेनुत्वादिजातिसंकीर्णतया साधारणदंडत्वजातिविरहेऽपीत्यर्थः । ननु अन्यं प्रतीत्याद्यन्यथासिद्धिकवलिततया घटजनकत्वेन भ्रमिजनकता न संभवति तत्र चान्यस्मिन्फलानुगुणत्वविशेषणाद्घटं प्रति भ्रमिजनकत्वेन हेतुत्वमविरुद्धमित्याशंक्य फलानुगुणत्वविशेषणप्रतिक्षेपाय प्रतिबंदिं दर्शयति । किं चेति । एवम् । फलानुगुणकार्यजनकत्वेनानन्यथासिद्धत्वे कार्यांतरम् । घटादिकम् । तत्तत्पदार्थकारणानाम् । दंडचक्रकुलालादिकारणानाम् । तज्जनकत्वेन । इष्टसाधनताज्ञानादिजनकत्वेन । हेतुत्वे

प्रसक्ते । तत्त्वेनैव । इष्टसाधनताज्ञानत्वादिनैव । लाघवाच्चेति । न तु तज्जनकत्वेन गुरुतया अन्यथासिद्धिनिरूपकत्वादिति शेषः । प्रकृते । दण्डघटयोर्हेतुहेतुमद्भावस्थलं ।

मनसोऽनुमितिकरणतां व्यवस्थापयिष्यन्मूलोक्तव्याप्तेस्तद्घटकपदार्थानां च धियोऽनुमितिकरणत्वं निराकरोति । इदं पुनरित्यादिना । तत्तद्व्यक्त्यादिजनकतावच्छेदकतत्तद्व्यक्तित्वादिव्यापकसामान्यधर्मेण सामान्यधर्मावच्छिन्नतत्तद्व्यक्त्यादिहेतुत्वात्तदवच्छिन्नत्वद्वयं फलतः कार्यताविशेषणम् । स्वस्यापि स्वव्यापकत्वादयच्छेदकान्तरेति ।

न च व्याप्तिज्ञानकारणतायां विभिन्नपक्षसाधारणधूमनिष्ठतादृशव्याप्तिज्ञानाव्यवहितोत्तरवह्न्यनुमितित्वं परामर्शकारणतायां तु तत्पक्षकतत्साध्यकपरामर्शाव्यवहितोत्तरानुमितित्वं कार्यतावच्छेदकमिति कथमेककार्यतावच्छेदकावच्छिन्नं प्रति द्वयोर्जनकत्वमिति वाच्यम् । धूमनिष्ठव्याप्तिज्ञानस्य पर्वतपक्षकानुमितिं प्रत्येव नियतव्यापाराभावेनाकारणत्वात् ।

(१)न च धूमव्याप्तिज्ञानाव्यवहितोत्तरं तत्पक्षकतदनुमितित्वं तथाऽस्तु तथाऽपि नैकमुभयजन्यतावच्छेदकमिति वाच्यम् । वह्निव्याप्यो धूमो वह्निव्याप्यालोकवान् पर्वत इति समूहालंबनपरामर्शजन्यानुमितौ धूमव्याप्तिज्ञानकारणिकायां व्यभिचारात् व्यापारसंबंधेन तदभावात् तस्माद् धूमपरामर्शाव्यवहितोत्तरपर्वतपक्षकवह्न्यनुमितित्वं परामर्शस्येव तस्यापि जन्यतावच्छेदकं वाच्यं तथा सतीदमिति भावः ।

ननु जनकतावच्छेदकान्तरव्यापकस्यापि नियतपूर्ववर्तितावच्छेदकत्वात् कथं तस्य जनकतावच्छेदकत्वमित्यत आह । दर्शयिष्यते हीति । तथा । व्यापकरूपेण । अन्यथासिद्धत्वमिति । तथा चान्यथासिद्धिनिरूपकत्वान्न तस्य तथात्वमिति भावः । व्यापकरूपेणान्यथासिद्धत्वे युक्तिमाह । अन्यथेति । नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियमपक्षमवलंब्याह । जन्यत्वविशेषिवेनेति । तादृशनियमानभ्युपगमपक्षमवलंब्याह । शुद्धेन वेति । हेतुत्वप्रसंगादिति । नियतपूर्ववर्तितया अन्यथासिद्धन्तररहितस्य च तद्रूपावच्छिन्नेऽपि सत्त्वादिति भावः ।

(१) 'न चेत्यादिर्भावः' इत्यन्तः पाठः पुस्तकान्तरे नास्ति ।

विशिष्टविशिष्टेति । विशिष्टपदार्थोऽभावादिः अविशिष्टपदार्थोऽभावत्वादिः ।

( दी० ) न चात्र करणान्तरासम्भवादगत्या परामर्शजनकज्ञानस्य तथात्वं कल्प्यते । चिकीर्षा प्रत्यपि कृतिसाध्यताज्ञानजनकज्ञानस्य तथात्वापत्तेः । तत्र मन एव करणमिति चेत् ? इहापि तदेवास्तु । मनोऽसाधारणकरणकज्ञानत्वेन मानसत्वापत्तिरिति चेत् ? चिकीर्षादिसाधारणतत्करणकत्वस्यैव ज्ञानत्वविशेषितस्यापि तस्याप्रयोजकत्वात् । किं तर्हि मानसत्वे प्रयोजकमिति चेत् ? किं नाम प्रयोजकम् ? कारणं चेत् ? न किञ्चित्, कार्यं चेत् ? तत्प्रत्यक्षम् । व्यापकं चेत् ? प्रमेयत्वादि । व्याप्यं चेत् ? तत्सामग्रीजन्यत्वादि । तदवच्छिन्नोत्पत्तिनियामकं चेत् ? तत्सामग्री । करणाभेदे कथं कार्यवैजात्यमिति चेत् ? सामग्रीवैलक्षण्यात् । यथा मनःकरणकानामेव चिकीर्षासुखादीनाम्, यथा वा अग्निकरणकानां पाकजानाम् । कथं तर्हि प्रमाणविभाग इति चेत् ? करणे विशेषकक्रियावैजात्यविशेषादिति विभाव्यताम् ।

( गा० ) परामर्शजनकज्ञानस्य । व्याप्त्यादिज्ञानस्य । तथात्वम् । करणत्वम् । चिकीर्षा प्रत्यपीति । तथापि करणान्तरासम्भवादित्याशयः । चिकीर्षायां करणान्तरसम्भवमाशङ्कते । तत्रेति । इहापि । अनुमितावपि । तदेवास्तु । मन एव करणमस्तु । शङ्कते मनोऽसाधारणेति । चाक्षुषादेरपि इन्द्रियत्वेन मनःकरणकत्वात्तद्वारणायासाधारणपदम् । मनोऽसाधारणकरणकत्वं च मनस्त्वावच्छिन्नकरणताकत्वं ज्ञानत्वविशेषाच्चिकीर्षासुखादिव्यावृत्तिः । अप्रयोजकत्वात् । निष्प्रमाणकमानसत्वव्याप्तिकत्वात् । न किञ्चिदिति । मानसत्वस्य जातित्वेनाजन्यत्वादिति भावः । करणभेद एव कार्यवैचित्र्यमिति नियमाभिमानेन शङ्कते । करणाभेद इति । कार्यवैचित्र्यम् । अनुमितिमानसचिकीर्षादिवैजात्यम् । सामग्रीभेद एव कार्यवैजात्यप्रयोजको न तु करणभेदमात्रमिति समाधत्ते । सामग्रीति । एतदेव दृष्टान्तेन

द्रढयति । यथेति । पाकजानां रूपरसादीनां करणाभेदेऽपि साम-ग्रीवैजात्यात् कार्यवैजात्यमित्यनुषङ्गेणान्वयः । तर्हि । मनसोऽनुमिति-करणत्वे । कथं प्रमाणविभागः । प्रत्यक्षप्रमाणतः पार्थक्येनानुमान-प्रमाणस्य परिगणनं मनस इन्द्रियत्वेन प्रत्यक्ष एवांतर्भावादिति भावः । विशेषकेति करणताभेदकेत्यर्थः । एतच्च क्रियावैजात्यवि-शेषणम् । क्रियावैजात्यात् । प्रत्यक्षप्रमितितोऽनुमितिवैजात्यात् । क-रणताभेदस्यैव प्रमाणपार्थक्यप्रयोजकत्वादिति भावः ।

अथ वा करणविशेषकेति । करणविशेषणीभूतायाः क्रियायाः पा-र्थक्यादित्यर्थः । तथा च क्रियारूपविशेषणभेदेनैव विशिष्टभेदव्यप-देश इति भावः ।

( दी० ) अपरे तु व्याप्तिज्ञानत्वेन विशिष्टपरामर्शत्वेन वा नानुमितिमात्रं प्रति हेतुता साध्यादिभेदेन व्याप्तेर्भेदात् किं तु पक्षज्ञानत्वेनाभावज्ञानत्वेन ज्ञानत्वेन वा । पक्षोऽपि धर्मिमात्रं प-क्षताया अप्यननुगमात् । तत्तत्पक्षतावच्छेदकविशिष्टे वह्न्यनुमितिं प्रति तत्तद्विशिष्टे वह्निव्याप्यवत्तापरामर्शत्वेन हेतुताया आवश्य-कत्वे वह्न्यनुमितिमात्रं प्रत्यपि न तादृशपरामर्शत्वेन हेतुता गौ-रवात्, किं तु वह्निव्याप्तिज्ञानत्वेन लाघवात् । वस्तुतो वह्निज्ञा-नत्वेनैव तथा अतिलाघवात् । एवं वह्न्यभावानुमितिं प्रत्यपि । एतेनानुमित्यन्तरं व्याख्यातमिति वदन्ति । कृतं पल्लवितेनेति ॥

इति परामर्शदीधितिः ।

( गा० ) अनुमितिमात्रं प्रति । अनुमितित्वावच्छिन्नं प्रति । व्या-प्तेर्भेदादिति । कारणाननुगमेन व्यभिचारादिति शेषः । अभावज्ञान-त्वेनेति । अभावत्वज्ञानत्वेनेत्यर्थः । तेन व्याप्तिशरीरे सर्वत्राभाव-त्वेन पदार्थान्तरभानस्थलेऽपि नानुपपत्तिः । न वा धर्मिनिवेशाधि-क्याद्गौरवं विशेषसामग्र्या अतिप्रसङ्गवारणस्यावश्यकत्वे विषयनि-वेशो विफल इत्याशयेनाह । ज्ञानत्वेन वेति ।

ननु पक्षज्ञानत्वस्य पक्षताघटितत्वात्तच्छरीरे च साध्यादिविशे-षांतर्भावात्कथमनुगम इत्यत आह । पक्षोऽपीति । पक्षपदार्थोऽपीत्यर्थः ।

धर्मिमात्रमिति । तथा च पक्षतानन्तर्भावाद्याननुगम इति भावः । न चैवं धर्मित्वस्य केवलान्वयितया धर्मिविषयकत्वमव्यावर्तकं तथा च कारणतावच्छेदककोटौ निवेशानर्हमिति वाच्यम् । एतदालोकस्यैव कल्पांतरानुसरणात् । ज्ञानत्वादेरनुमितिकारणतावच्छेदकपरामर्शत्वव्यापकत्वेऽपि न तेन रूपेणान्यथासिद्धिः परामर्शत्वस्याननुगततया विशेषरूपावच्छिन्नं प्रत्येव जनकतावच्छेदकतया ज्ञानत्वाद्यवच्छिन्नजन्यतावच्छेदकत्वाभिमतशुद्धानुमितित्वावच्छिन्नजनकतानवच्छेदकत्वात् एतदभिप्रायेणैव परामर्शत्वादेरनुमितिसामान्यजनकतावच्छेदकत्वनिराकरणात् ।

अथ ज्ञानत्वेनानुमितिहेतुत्वे संयोगत्वविभागत्वादिनैव कथं न हेतुता विशेषसामग्रीतोऽतिप्रसङ्गवारणस्याऽऽवश्यकतया विनिगमकस्य दुर्लभत्वादिति चेदगत्या विनिगमनाविरहेण नानाकारणताया उपगमात् ।

यत्तु विनिगमनाविरहेण नानाकारणत्वकल्पनापेक्षया परामर्शत्वाख्यजातिविशेषं कल्पयित्वा तेनैव रूपेणानुमितिहेतुत्वकल्पनमुचितम् । तेन रूपेण हेतुत्वे च न विनिगमनाविरहावकाशः कारणतावच्छेदकतयैव तत्सिद्धेः । न च तादृशजातेश्चाक्षुषत्वादिना सङ्करप्रसङ्गः । मानसज्ञान एव तदभ्युपगमात् । चाक्षुषादिपरामर्शस्थलेऽपि तदुपनीततत्तत्पदार्थविषयकमानसपरामर्शकल्पनया क्षणैकव्याजेनानुमित्युपपादनसम्भवात् । पक्षादिना समं चक्षुरादिसन्निकर्षसत्त्वेऽपि चक्षुर्मनोयोगाद्यभावस्य फलबलेन कल्पनात् चाक्षुषादिसामग्रीविरहोपपत्तेः । चाक्षुषादिपरामर्शानन्तरं तज्जन्यसंस्काराधीनस्मरणात्मकपरामर्शकल्पनेनाऽनुमित्युत्पादनासम्भवेन स्मृतित्वव्याप्यैव कथं न सा जातिरिति तु न वाच्यम् । लाघवाऽभावेऽधिकैकक्षणविलम्बस्याऽव्याप्यत्वात्, अनुमितिपूर्वं स्मृतिकल्पने उभयथासिद्धतत्तत्स्थलीयस्मृतिसामग्र्या उभयथासिद्धाया मानसं प्रति प्रतिबन्धकत्वकल्पनाधिक्येन गौरवाच्च । उद्बोधकानामननुगमेन स्मृतिसामग्र्यननुगमात् उभयासिद्धस्मृतिसामग्रीस्थलीयप्रतिबन्धकतयाऽनिर्वाहाच्च ।

न च परामर्शत्वस्य स्मृतित्वव्याप्यत्वे विशेषकारणतायामपि तज्जातेरवच्छेदकघटकतया तत्र सजातीयान्यत्वानिवेशेन लाघवं संशयरूपस्मृतेरभावेन तदनिवेशेऽप्यतिप्रसङ्गविरहादिति वाच्यम् । परामर्श-

त्वस्य मानसत्वव्याप्यतामतेऽपि संशये तदनभ्युपगमादेव ततोऽनुमितिप्रसङ्गविरहात्। तन्मतेऽपि विशेषकारणतावच्छेदकगर्भे संशयान्यत्वानिवेशादिति। तदसत्।

ज्ञान इव संयोगादावपि अनुमितिजनकतावच्छेदकतया जातिविशेषकल्पनसम्भवेन विनिगमनाविरहाऽनुद्धारात्। परामर्शत्वावच्छिन्नस्य व्यापारविरहेण करणत्वासम्भवात्। ज्ञानत्वेन कारणताया आवश्यकत्वाच्च। अत एव विभागत्वादिकमादाय विनिगमनाविरहस्यापि नावकाशः। विभागादीनां परामर्शाजनकतया कारणत्वासम्भवात्।

एतेन विशेषकार्यकारणतावच्छेदकेऽनुमितित्वनिवेशस्यावश्यकत्वेन तत एव तदवच्छिन्नोत्पत्तेराकस्मिकतावारणादनुमितित्वावच्छिन्नं प्रति सामान्यतो ज्ञानत्वेन हेतुत्वं निर्युक्तिकमित्यपि परास्तम्। विशेषकारणस्य परामर्शादेरनुमित्यकारणतया ज्ञानत्वेन तत्कारणताकल्पनस्याऽऽवश्यकत्वादिति कृतं पल्लवितेन।

विशिष्य पक्षतावच्छेदकमनिवेश्य वह्न्याद्यनुमितिं प्रति वह्निव्याप्यवत्तानिश्चयत्वेन किञ्चिद्धर्मावच्छिन्नविशेष्यकतन्निश्चयत्वेन वा सामान्यतो हेतुत्वं कस्यचिदभिमतं तद् दूषयति। तत्तत्पक्षतावच्छेदकेति। तर्हि केन रूपेण वन्ह्यनुमितित्वावच्छिन्नं प्रति हेतुतेत्याकांक्षायामाह। किन्त्विति। विशेषसामग्र्या अतिप्रसङ्गस्य वारणस्याऽऽवश्यकत्वे व्याप्तिविषयकत्वनिवेशनमफलमित्याशयेनाह। वस्तुत इति। वन्हिज्ञानत्वेनैवेति।

न चैवं ज्ञानत्वेनैव न कथं हेतुतोपेयत इति वाच्यम्। सामान्यविशेषयोरेकरूपावच्छिन्नजन्यतावच्छेदकत्वाभावनियमात्। वह्न्यभावानुमितिं प्रत्यपि वन्हिज्ञानत्वेनैव हेतुतेत्यनुषङ्गेणान्वयः। तत्पूर्वं वह्न्यभावज्ञानस्याऽऽवश्यकत्वे वन्हिज्ञानस्याप्यावश्यकत्वादिति भावः। अयं चाभ्युपगमवादः तत्तत्पक्षतावच्छेदकावच्छिन्नविशेष्यकवह्न्याद्यनुमितित्वरूपविशेषकारणकार्यतावच्छेदकगर्भे वह्न्यनुमितित्वादिनिवेशादेवोपपत्तेस्तदवच्छिन्नं प्रति हेतुत्वान्तरस्य निर्युक्तिकत्वात्, सुखादिसाधारणजन्यात्मविशेषगुणत्वावच्छिन्नं प्रति मनस्त्वेन कारणताकल्पनात एवानुमितेः सकरणकत्वनिर्वाहेणाऽनुमितित्वावच्छिन्नं प्रति ज्ञानत्वादिना हेतुत्वमपि निर्युक्तिकमित्याद्यस्वरसबीजमत्र बोध्यमिति।

इति गादाधर्यां परामर्शप्रकरणम्॥

# अथ केवलान्वयिग्रन्थः ।

(चि०) तच्चानुमानं त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्रासद्विपक्षं केवलान्वयि, तथा हि केवलान्वयिनोऽभिधेयत्वस्य न विपक्षः, अभिधानेऽनभिधाने च विपक्षत्वव्याघातात् ।

(दी०) केवलान्वयीत्यादि । केवलान्वयिसाध्यकादीत्यर्थः । तत्र । तेषु मध्ये । असद्विपक्षम् अत्यन्ताभावाप्रतियोगिसाध्यकं केवलान्वयि, एवमगृहीतान्वयव्यतिरेकिसाध्यकं केवलव्यतिरेकि, गृहीतान्वयव्यतिरेकिसाध्यकमन्वयव्यतिरेकि ।

(गा०) अनुमानविभागपरमूलग्रन्थे केवलान्वयिपदस्य प्रसिद्धार्थकत्वे ज्ञानकरणतापक्षे ज्ञानस्य केवलान्वयित्वाभावादसंगतिः । लिंगकरणतापक्षेऽपि केवलान्वयिसाध्यकव्यतिरेकिहेतोरसंग्रह इति तस्य तुरीयतापत्तेः ।

अथाऽन्वयव्यतिरेकिलक्षणे व्यतिरेकिपदस्य यथाश्रुतार्थकतया गृहीतसाध्यसहचारव्यतिरेकप्रतियोगित्वमेवाऽन्वयव्यतिरेकित्वमस्तु तथा चोक्तहेतुरपि अन्वयव्यतिरेकिष्वेवाऽन्तर्भवतु । न चैवमसद्विपक्षं केवलान्वयीति मूलोक्तलक्षणविरोध । विपक्षपदस्य साध्याभाववदर्थकतया प्रसिद्धत्वेन साध्ये केवलान्वयित्वस्यैव ततो लाभादिति वाच्यम् । तथा हि केवलान्वयिनोऽभिधेयत्वस्य न विपक्ष इति लक्षणसंगमने विपक्षपदस्य साध्याभाववदर्थकत्वेऽभिधेयत्वस्यानन्वयेन तस्याऽभाववन्मात्रार्थकताया आवश्यकत्वात् लक्षणस्थतत्पदस्याऽपि तदर्थकतौचित्यात् । न च साध्यस्य केवलान्वयितायाः केवलान्वय्यनुमानान्तर्भावे तत्र साध्यसंदेहरूपपक्षतायाः साध्याभावाप्रसिद्ध्याऽसंभवादनुमित्यनिर्वाहादापा अभिमाया असंगतिरिति वाच्यम् । हेतोः केवलान्वयित्वे साध्यस्याऽपि तथात्वमावश्यकमन्यथा सद्धेतुत्वानिर्वाहादिति तुदा-

शङ्कासङ्गतेरिति चेन्न। तादृशहेतोरन्वयव्यतिरेकित्वे तादृशहेतुकानुमानस्य मीमांसकैरभ्युपगन्तव्यतया तेषां साध्याभाववद्वृत्तित्वस्य व्याप्तित्वाभ्युपगमे विरोधादतो व्याचष्टे । केवलान्वयीति । साध्यकार्यीत्यादिपदात्केवलव्यतिरेक्यन्वयव्यतिरेकिसाध्ययोः संग्रहः । तत्र व्यतिरेकित्वविशेष्यतया साध्यानन्तर्भावे केवलान्वयिलक्षणे साध्यान्तर्भावेण केवलान्वयिसाध्यकव्यतिरेकिहेतोः केवलान्वय्यनुमानतया तत्र साध्यसहचाराग्रहदशायां केवलव्यतिरेकिलक्षणं तद्ग्रहदशायाञ्चाऽन्वयव्यतिरेकिलक्षणमतिव्याप्तं स्यादिति तदुभयलक्षणेऽपि साध्यनिवेशः ।

यद्यपि केवलान्वयिपदं केवलान्वयिसाध्यकार्थतया मूलकृतैव विचक्षणीयं मूलस्थाऽसद्विपक्षपदस्य तदर्थकतया असद्विपक्षं अत्यन्ताभावाप्रतियोगिसाध्यकमित्यनेन स्वयं व्याख्येयत्वात् । अत्यन्ताभावाप्रतियोगिसाध्यकत्वस्यैव केवलान्वयिसाध्यकत्वरूपत्वादित्येतद्व्याख्यानमनुपयुक्तम् । न च मूलकृतोऽव्याप्यवृत्त्यत्यन्ताभावादेरभावप्रतियोगितया केवलान्वयित्वासम्भव इत्याक्षिप्य वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमिति साध्यनिष्ठकेवलान्वयित्वनिरुक्त्या सिद्धान्तप्रणयनं केवलान्वयिपदेन साध्यविशेषणप्रतिपादने एव सङ्गच्छते इति तदर्थमेव तादृशव्याख्यानमुचितमिति वाच्यम् । केवलान्वयिपदेन साध्यविशेषणप्रतिपादनस्य मूलेऽभावादीधितिस्थतत्पदार्थनिर्वचनस्य मूलकृतोऽसम्भवाचाशङ्कासङ्गतेर्दुष्परिहारतया तादृशासंगतिपरिहाराय च पूर्वपक्षे न केवलान्वयीत्यस्य न केवलान्वय्यनुमाने साध्यमित्यर्थकतया वृत्तिमदत्यन्ताभावाऽप्रतियोगित्वं केवलान्वयित्वमिति सिद्धान्तग्रन्थस्य च वृत्तिमदत्यन्ताभावाप्रतियोगित्वं साध्यविशेषणतया केवलान्वयिलक्षणघटकमित्यर्थपरतया व्याख्येयत्वादिति । तथापि केवलान्वयिपदस्य मुख्यार्थपरं किन्तु लाक्षणिकमेवेति सूचयितुं केवलान्वयिसाध्यकेतिशब्देन तदर्थो व्याख्यातः ।

सप्तम्या आधारार्थकत्वासम्भवान्निर्धारणार्थकत्वमाह । तेषु मध्य इति । तन्मेत्यस्य सप्तम्येकवचनान्तत्वे एकानुमानपरामर्शकत्वभ्रमेण वर्णनीयनिर्धारणार्थकत्वानुपपत्तिशङ्का स्यान्निर्धारणस्य समुदायगर्भत्वादित्यतो व्याचष्टे । तेष्विति ।

यद्यपि तदेतत्त्रयस्य तस्मिन्नित्येकवचनान्तत्वेन वर्णनमपि संगच्छते केवलान्वय्यादित्रयस्य तत्पदपरामर्शनीयस्यैकवचनार्थैकत्वविरहेऽपि तदविवक्षया सामंजस्यात् । अत एव घटादेरामद्रव्यस्य परमाणौ पाक इति भाष्ये षष्ठ्येकवचनस्य निर्धारणार्थकतया आचार्यव्याख्यानमपि संगच्छते । तथाऽनुमानमिति प्रकृतमूलेऽपि एकत्वाविवक्षया एकवचनसंगतिः । तथापि तथाऽनुमानमित्यपेक्षया सन्निहितकेवलान्वय्यादिपदेन प्रत्येकमुपस्थापितस्याऽनुमानत्रयस्योपस्थापकं तत्पदमित्याशयेन बहुवचनादरः । उद्देश्यतावच्छेदकशून्ये सामान्यधर्मात्मकत्रितयत्वावच्छिन्ने केवलान्वयित्वव्यवच्छेदबोधकतयैव निर्धारणत्वसम्भवात् । त्रित्वार्थकबहुवचनं विना तादृशसामान्यधर्मानुपस्थितेः प्रत्येकपर्याप्तधर्मस्य सामान्यत्वाभावेन एकवचनासङ्गतेः । अत एव घटपटयोर्मध्ये घटो दण्डजन्य इत्यादौ निर्धारणानुरोधेन नियमतो द्विवचनापेक्षेति ।

असद्विपक्षमित्यत्र विपक्षेऽसत्त्वस्याऽप्रसिद्ध्या दुर्घटत्वमाशङ्क्य व्याचष्टे । अत्यन्तेति । अत्यन्ताभावाप्रतियोगितत्तत्साध्यकानुमितिकरणं तत्तत्साध्यककेवलान्वय्यनुमानमित्यर्थः ।

यद्यपि विपक्षपदस्य साध्याभाववदर्थकतया तत्राऽभावाधिकरणत्वप्रवेशेन वृत्तिमदभावाप्रतियोगित्वमेव केवलान्वयित्वमिति लभ्यते । तथाऽप्याकाशरूपाभावप्रतियोगितयाऽऽकाशाभावस्य केवलान्वयित्वानुपपत्तेः पूर्वपक्षे शङ्कनीयतया तच्छंकाया विपक्षपदस्य साध्याभावमात्रपरत्वाभिमानमूलकतयैव संगमनीयतया तदाशयेनैव वृत्तिमत्त्वानन्तर्भावः । वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वमिति च सिद्धान्तग्रन्थे मूलकृता तादृशाभिमानो निराकरिष्यते ।

असत्सपक्षं केवलव्यतिरेकीति व्यतिरेकिग्रन्थे वक्ष्यमाणकेवलव्यतिरेकिलक्षणस्याऽसन्सपक्षो निश्चितसाध्यवान् यस्येति यथाश्रुतार्थेऽपि अप्रसिद्धिमाशङ्क्य प्रसंगादधृत्वैव तद्विवृणोति । एवमगृहीतेति । अगृहीतस्तदाऽनिश्चितः, अन्वयो हेतुसहचारो यत्र एवंभूत व्यतिरेकप्रतियोगि प्रकृतं साध्यं यत्र तत्कालावच्छिन्नप्रकृतहेतुसहचारनिश्चयाविषयत्वाभाववद्व्यति-

रेकप्रतियोगिप्रकृतसाध्यकानुमितिकरणमिति तु फलितार्थः। अयोगोलकमात्रे वह्निप्रसिद्धिदशायां धूमहेतुकतदनुमानस्य संग्रहाय निश्चये प्रकृतहेतुसहचाराविषयकत्वनिवेशनम्। अन्वयसहचारनिश्चयदशायामपि कालान्तरीणतन्निश्चयाविषयत्वाभावमादायाऽतिप्रसङ्गवारणायाऽभावे तत्कालावच्छिन्नत्वविशेषणम्। तत्कालीनहेतुसहचारनिश्चयस्य यो विषयस्तदन्यत्वस्य च न साध्यविशेषणत्वसम्भवः। यत्र कुत्राऽपि प्रकृतहेतुसहचारनिश्चयो नास्ति तत्राऽप्रसङ्गात्। निश्चये तत्पुरुषीयत्वमपि निवेशनीयम् अतो व्यतिरेकितादशायामप्यन्ततो भगवतः सहचारनिश्चयस्य सत्त्वेऽपि नाऽसम्भवः। कालविशेषसाध्यविशेषैरिव पुरुषविशेषैरपि नियन्त्रितं व्यतिरेकित्वमिष्यत एव। न चैवं यस्य पुंसः प्रकृतहेतुसहचारनिश्चयः क्वचिदपि कदाऽपि न प्रसिध्यति तं प्रति तद्धेतुकं किमप्यनुमानं व्यतिरेकि न स्यादिति वाच्यम्। एवं सति तत्कालावच्छिन्नस्वविषयकतद्धेतुसहचारनिश्चयाभाववत्त्वपुरुषकत्वस्य साध्यविशेषणत्वोपगमात्। तादृशे च सदनुमाने साध्यमप्रसिद्धं यद्विषयकप्रकृतहेतुसहचारनिश्चयो न प्रसिध्यति, सर्वेषामेव साध्यानामन्ततो भगवतः प्रकृतहेतुसहचारनिश्चयस्याविषयकत्वात्। एतत्कल्पे तत्कालीनतादृशनिश्चयवदन्यत्वेनापि पुरुषविशेषणं सम्भवति तत्कालीनतादृशनिश्चयस्याऽन्ततो भगवत्येव प्रसिद्धेः।

साध्ये व्यतिरेकप्रतियोगित्वनिवेशश्चाऽन्वयसहचाराग्रहदशायामपि फलान्वयिसाध्यकस्योक्तकेवलान्वय्यनुमानलक्षणाक्रान्ततयाऽत्राऽलक्ष्यत्वात्तद्वारणाय। न च यत्र व्यतिरेकसहचारमात्रेण व्याप्तिग्रहस्तत्र केवलव्यतिरेक्यनुमानं तदुक्तं मणिकृता यत्र व्यतिरेकसहचारेण व्याप्तिग्रह इति। एवञ्च यत्राऽन्वयव्यतिरेकसहचारयोर्द्वयोरेवाऽग्रहः तत्राऽपि हेतोस्तदनुमानस्य वा केवलव्यतिरेकितापत्तिरुक्तलक्षणसत्त्वादिति वाच्यम्। अगृहीतान्वयव्यतिरेकिसाध्यकेत्यनेनाऽन्वयसहचारग्रहानधीनव्यतिरेकिसाध्यकानुमितिफलोपहितकरणत्वस्य विवक्षणीयत्वात्। उक्तस्थले चाऽनुमित्यनुत्पत्त्या फलोपधायकताविरहेणाऽनतिप्रसङ्गात्। अनुमितेस्तद्ग्रहानधीनत्वं तद्ग्रहाधीनव्यापकताग्रहानधीनत्वम्। तेन केवलव्यतिरेकितादशोत्पन्नाया अप्यनुमितेः प्रकृतसाध्यसाधनसहचाररूपाऽन्वयसहचारगर्भव्याप्तिज्ञानप्रयोज्यत्वेऽपि न

क्षतिः। अन्वयसहचारनिश्चयः सर्वत्र सर्वेषस्यैव प्रसिद्धः। तदनधीनत्वं सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नजन्यतानिरूपितजन्यत्वम् अतोऽनुमितिमात्रस्येश्वरीयान्वयसहचारग्रहाधीनत्वेऽपि न क्षतिः। यत्साध्यसाधनसहचारो नास्मदादिज्ञानविषयस्तत्र परमेश्वरीयतत्सहचारज्ञाननिरूपितनिरुक्तजन्यत्वाप्रसिद्धावपि योगिज्ञानीयनिरुक्तताहशजन्यतायास्तदीयज्ञानांतरे प्रसिद्ध्या सामंजस्यात्। एवं च सहचारज्ञाने तत्कालीनत्वं न निवेशनीयं कालान्तरीयान्वयसहचारज्ञानस्य केवलव्यतिरेकितादशाप्रमवानुमितावप्रयोजकत्वात्। ताहशानुमितिमादाय लक्षणसमन्वयस्य कालानिवेशेऽपि सम्भवात्। अन्वयव्यतिरेकसहचारज्ञानयोरनुगतरूपेण व्याप्तिग्रहहेतुत्वसम्भवे केवलव्यतिरेकसहचारज्ञानं यद्व्याप्तिग्रहोपधायकं तत्र कालान्तरीणान्वयसहचारग्रहस्य स्वरूपयोग्यत्वेऽपि न क्षतिः, फलोपधानरूपप्रयोजकतायाः निवेशनीयत्वात्। ज्ञायमानलिङ्गकरणतामते तत्पुरुषीयत्वमप्यनुमितौ निवेश्यमन्यथा एकस्य पुंसोऽन्वयसहचाराद्न्यस्य च व्यतिरेकसहचारमात्रायत्तैकलिङ्गकानुमितिस्तत्र तल्लिङ्गस्य व्यतिरेकसहचारमात्राधीनानुमितिमादाय अविव पुरुषं प्रति केवलव्यतिरेकितापत्तेः। हेतुज्ञानस्यानुमानतामते तत्पुरुषीयत्वमपि न निवेश्यते। तत्साध्यकत्वेन तद्धेतुकत्वेन चानुमितिर्विशेषणीया अतो वह्निधूमसहचारज्ञानानधीनान्यसाध्यकान्यहेतुकानुमितिकरणेऽन्वय्यनुमाने नातिव्याप्तिः। फलोपधानस्य विशेषणत्वोपगमाद् लिङ्गकरणतापक्षे कालान्तरीणानुमितिफलोपधानमादायान्वयितादशायां तस्य हेतोर्न व्यतिरेकितापत्तिः। एवं च साध्ये व्यतिरेकित्वविशेषणं यदा केवलान्वयिसाध्यकस्थलेऽभावांशे साध्यीयत्वावगाहिभ्रमात्मकव्यतिरेकसहचारग्रहादनुमित्युपधानं तदाऽतिप्रसङ्गवारणायेति बोध्यम्।

अन्वयव्यतिरेकिलक्षणस्य मूलानुक्तत्वात्स्वयं तदाह। गृहीतेति। पूर्ववद्विग्रहेण तत्कालीनतत्पुरुषीयप्रकृतहेतुसहचारनिश्चयविषयव्यतिरेकप्रतियोगिप्रकृतसाध्यकानुमितिकरणत्वमिति फलितार्थः। प्रकृतहेतुसाध्यसहचारनिश्चयाधीनव्यापकताग्रहप्रयोज्यव्यतिरेकप्रतियोगिप्रकृतसाध्यकानुमितिकरणत्वमिति तु निष्कर्षः। अत्रापि केवलान्वय्यनुमानेऽतिव्याप्तिवारणाय व्यतिरेकप्रतियोगित्वं साध्ये

विशेषणम् ।

ननु व्यतिरेकसहचारमात्रेण यत्र व्याप्तिग्रहस्तस्य केवलव्यतिरेकित्वे तुल्ययुक्त्या यत्रान्वयसहचारमात्रेण व्याप्तिग्रहस्तस्यैव केवलान्वयिसाध्यकस्य व्यतिरेकिसाध्यकस्य च केवलान्वय्यनुमानत्वमुचितमिति मूलोपदर्शितकेवलान्वयिलक्षणं तथाविधकेवलव्यतिरेकिसाध्यकाव्यापकमेव । (१)[एवं साध्ये व्यतिरेकित्वघटितं केवलव्यतिरेकिलक्षणमपि प्रमाग्मकव्यतिरेकसहचारग्रहदशायां केवलान्वयिसाध्यककेवलव्यतिरेक्यावव्यापकम् ।] एवमन्वयव्यतिरेकिलक्षणमपि व्यतिरेकिसाध्यकेऽन्वयसहचारमात्रग्रहदशायां केवलान्वयिन्यतिव्यापकमित्यन्यथैव केवलान्वयित्वादिकं निर्वक्तुमुपक्रमते । व्याप्तिग्राहकेति ।

(दी०) व्याप्तिग्राहकसहचारभेदाद्भेदे त्वन्वयसहचारमात्रगृहीतव्याप्तिकत्वं केवलान्वयित्वम् । तच्च प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकान्वयसहचारत्वकत्वं तादृशसहचारत्वव्यापकप्रकृतव्याप्तिघटकसहचारत्वकत्वं वा । गृहीतव्याप्तिभेदाद्भेदे तु प्रकृतहेतुकप्रकृतसाध्यानुमितिहेतुज्ञानविषयव्याप्तित्वव्यापकप्रकृतसाध्यान्वयव्याप्तित्वकत्वं तत्त्वम् । जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वादित्यादौ हेतुतावच्छेदिका च व्याप्तिर्न प्रकृतसाध्यानुमित्यौपयिकी, तद्विशिष्टपक्षधर्मताज्ञानेऽपि व्याप्त्यन्तरबोधं विना निर्गन्धत्वानुमित्यनुदयादिति नाव्याप्तिः ।

(गा०) सहचारभेदात् । सहचारस्यान्वयव्यतिरेकनिरूप्यत्वरूपवैलक्षण्यात् । भेदे । अनुमानस्यान्वयित्वव्यतिरेकित्वरूपवैलक्षण्ये । केवलान्वयितायां व्याप्तिग्राहकसहचारस्य व्याप्तेर्वाऽन्वयनिरूपितत्वाधीनत्वं मणिकारानभिमतं साध्यस्य केवलान्वयित्वनिर्वचनविरोधादिति तस्य तथात्वाभिधानं स्वातन्त्र्येणेत्यवधेयम् ।

अन्वयसहचारमात्रेति । लिङ्गकरणतापक्षेऽन्वयसहचारमात्रज्ञानजन्यव्याप्तिग्रहाधीनतदातनतत्पुरुषीयानुमितिकरणत्वं तदा तु पु-

(१) कुण्डलित० पाठः पुस्तकान्तरे नास्ति ।

रूपं प्रति केवलान्वयित्वमित्यर्थः । अन्वयव्यतिरेकिण्यतिव्याप्तिवारणाय मात्रपदम् । यत्र च पदार्थान्तरीयसहचारविषयकसमूहालम्बनरूपप्रकृतसाध्यसाधनसहचारग्रहादन्यदीयव्याप्तिविषयकः प्रकृतव्याप्तिग्रहो व्यतिरेकसहचारग्रहं विनैव तत्राव्याप्तिर्नाशंकनीया प्रकृतसाध्यसाधनसहचारमात्रविषयताधीनव्याप्त्यवगाहिताप्रयोज्यतत्साध्यविषयकत्वावच्छिन्नतत्पुरुषीयानुमितिकरणत्वं तत्साध्यककेवलान्वय्यनुमानत्वमित्यस्य विवक्षितत्वात् । तत्साध्यतदितरसाध्यविषयकसमूहालम्बनानुमितिकरणत्वं यथा तत्साध्यककेवलान्वयिहेतोस्तथाऽन्यसाध्यकस्य व्यतिरेकिणः केवलान्वयिनो वा हेतोरिति तस्य तत्साध्यककेवलान्वय्यनुमानतावारणाय तत्साध्यविषयकत्वस्य करणत्वनिरूपकतावच्छेदकतया प्रवेशः ।

वस्तुतस्तु तत्साध्यीयत्वमिव तत्साधनीयत्वमपि सहचारे निवेश्यम्, तथा च तत्साधनघटितलक्षणे करणत्वविशेष्यतयाऽपि तत्साधनत्वप्रवेशादुक्तातिप्रसङ्गवारणसम्भवेन तत्साध्यकानुमानलक्षणे तत्साध्यविषयतावदनुमितिकरणमेव निवेशनीयम् । करणत्वविशेष्यतया सहचारनिरूपकतावच्छेदकतया च तत्साधनत्वनिवेश आवश्यकः । अन्यथाऽन्वयसहचारमात्रगृहीतव्याप्तिकेन हेतुना व्यतिरेकसहचारगृहीतव्याप्तिकेन हेत्वंतरेण च यत्रैकसाध्यानुमितिर्जनिता तत्र तत्साध्यविषयकत्वावच्छिन्नतदनुमितिकरणत्वमादाय व्यतिरेकिहेतावतिव्याप्त्यापत्तेः । व्याप्त्यवगाहिताप्रयोज्यविषयतायां तत्साध्यीयत्वनिवेशाद्यथाऽन्वयसहचारमात्रग्रहाधीनवह्निधूमव्याप्तिग्रहात् धूमेन वह्निव्याप्तिविशिष्टधूमस्यानुमितिर्न तु वह्नेस्तदनुमितौ व्याप्तिविशिष्टधूमविषयतायाः साध्यतावच्छेदकवह्निव्याप्तिविषयताप्रयोज्यत्वेऽपि च न तत्करणतामात्राय तदानीं धूमस्य वह्निसाध्यककेवलान्वय्यनुमानता ।

व्याप्तिज्ञानस्यानुमानतापक्षे तत्साध्यसाधनसहचारमात्रविषयताप्रयोज्या या व्याप्तिविषयता तद्वत्त्वे सति तत्साध्यानुमितिकरणत्वं तत्साध्यकतद्धेतुककेवलान्वय्यनुमानत्वमित्यर्थः । फलानुपहितव्याप्तिज्ञानवारणाय विशेष्यदलम् । धूमधर्मिकवह्निव्याप्तिविषयकं वह्न्यात्मकपक्षहेतुकान्यसाध्यकव्याप्तिविषयकसमूहालम्बनरूपं कारणान्तरासत्त्वेन न वह्न्यनुमितिमजीजनदपि तु अन्यानुमितिमेव तत्र

तस्य वह्निसाध्यककेवलान्वय्यनुमानतावारणाय तत्साधकत्वमनुमितिविशेषणम् ।

न चैवं धूमालोकयोर्वह्निव्याप्तिविषयकेण यज्ज्ञानेन सहकारिविशेषविरहाद् धूमपरामर्शो न जनितोऽपि त्वालोकलिङ्गकपरामर्श एव तस्यालोकलिङ्गकवह्न्यनुमितिकरणत्वमादाय धूमलिङ्गकानुमानत्वप्रसङ्गः। धूमलिङ्गकपरामर्शरूपव्यापारोपधायकस्यैव धूमलिङ्गकानुमानव्यवहारविषयतयेष्टापत्तेरयोगादिति वाच्यम् । स्वकरणकानुमितिनिष्ठतत्साध्यविषयकत्वप्रयोजकप्रकृतहेतुनिष्ठताद्दशव्याप्त्यवगाहिताया एव निवेशनीयत्वात् । स्वमनुमानत्वेनाभिमतं ज्ञानम् । अनुमित्युपधानप्रयोजकव्याप्त्यवगाहिताकतृतीयलिङ्गपरामर्शवारणाय स्वकरणकत्वमनुमितिविशेषणम् ।

ननु मात्रपदेन व्यतिरेकसहचारत्वावच्छिन्नो यदि व्यवच्छिद्यते तदा केवलान्वयिवाच्यत्वादिसाध्यकानुमानासंग्रहः व्यतिरेकाप्रसिद्धेः । साध्यसाधनसहचारातिरिक्तसहचारत्वावच्छिन्नस्य व्यवच्छेदेऽपि प्रमेयवानभिधेयादित्याद्यनुमानाव्याप्तिर्दुर्वारैव । वस्तुमात्रसहचारस्यैव साध्यसाधनसहचारत्वात् ।

न च साध्यसाधनतावच्छेदकसम्बन्धघटितसाध्यसाधनसहचारातिरिक्तसहचारानधीनव्याप्तिग्राहकत्वविवक्षया न दोषः स्वरूपादिसम्बन्धेन प्रमेयादेः साध्यसाधनभावस्थले समवायादिना तत्सहचारस्यैव निरुक्तसहचारातिरिक्तस्य प्रसिद्धेरिति वाच्यम् । एवमपि सम्बन्धसामान्येन प्रमेयादेः साध्यतास्थले ऽतिरिक्तसहचाराप्रसिद्धेर्दुर्वारत्वात् ।

अथ यावत्सम्बन्धसाधारणं सम्बन्धतावच्छेदकं दुर्लभम्, अस्तु वा तावदन्यान्यत्वादिकं तथा, तथाऽपि व्यतिरेकसहचारघटकताव-स्पदार्थानां परस्परोपरागेण या सहचारविषयता तदनधीनत्वस्य, यत्र प्रमेयाभावस्तत्राभिधेयत्वाभाव इति भ्रमासिद्धौ च साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नोपरागेण या सहचारविषयता तदन्यसहचारविषयतानधीनत्वस्यैव तदनुरोधेन विवक्षणीयतया नानुपपत्तिः । प्रमेयवानभिधेयादित्यादौ यत्र धूमस्तत्र वह्निरित्यादिसहचारज्ञानीयसहचारविषयताया एव निरुक्तसहचारविषयतातिरिक्तायाः प्रसिद्धेरिति चेत् ? एवमपि यत्र प्रथममन्वयस-

हचारधीजन्यैका व्याप्तिधीरनन्तरं च सहचारान्तरविषयकज्ञानाधीनाऽपरा व्याप्तिधीस्ततोऽनुमितिस्तत्रान्वयसहचारमात्रज्ञानाधीनव्याप्तिधियमादायानुमानस्य केवलान्वयित्वप्रसंगः। स्वप्रयोजकव्याप्यवगाहितात्वव्यापकतादृशसहचारविषयतातिरिक्तसहचारविषयत्वाप्रयोज्यतानानुमितिकरणत्वं विवक्षणेन तत्स्थलीयानुमितिप्रयोजकद्वितीयज्ञाननिष्ठव्याप्यवगाहितायां व्यतिरेकसहचारविषयत्वाप्रयोज्यताविरहेण तस्याः स्वपदेनोपादानासम्भवादिति व्याप्तिवारणेऽपि गौरवमिति मात्रपदस्य तदतिरिक्तानधीनतार्थकतां परित्यज्य व्यापकत्वान्तर्भावेण समुदितमन्यथा व्याचष्टे। तत्रेति।

प्रकृतेति। स्वनिष्ठसाध्यविधेयकत्वप्रयोजक(१) प्रकृतव्याप्यवगाहिताप्रयोजकसहचारविषयतात्वव्यापकान्वयसहचारविषयतात्वकानुमितिकरणत्वमित्यर्थः, स्वमनुमितिः। प्रकृतसाध्यसाधनसहचारत्वेनान्वयस्तुज्ञानस्यापि व्याप्तिग्राहकत्वात्प्रमेयत्वादिना सहचारविषयकज्ञानस्य चातथात्वादन्वयसहचारत्वविषयस्य न व्याप्तिभानप्रयोजकतेति सहचारस्थले तद्विषयतानिवेशः। साऽपि सहचारत्वावच्छिन्नविषयतात्वेन प्रवेश्या अन्यथा सहचारत्वेन वस्त्वंतरावगाहिभ्रमाधीनव्याप्तिग्रहस्थले वास्तवसहचारविषयतायाः व्याप्तिभानाप्रयोजकतयाऽव्याप्त्यापत्तेः। अन्वयसहचारविषयतात्वमपि साध्यसाधनतावच्छेदकावच्छिन्नविषयतानिरूपितविषयतात्वरूपं बोध्यमन्यथा उक्तभ्रमस्थलस्यैवासंग्रहात्। यत्र च साध्यतावच्छेदकरूपेण साध्यादिभिन्नमेवावगाहमानात्सहचारग्रहाद्व्याप्तिधीस्तत्संग्रहानुरोधेन वास्तवसाध्यसाधनसहचारविषयतामुपेक्ष्य साध्यतावच्छेदकावच्छिन्नविषयतापर्यन्तानिवेशः। अत एव सहचारघटकसम्बन्धविशेषानिवेशोऽपि समवायविषयित्वादिना प्रमेयाभिधेययोः साध्यहेतुभावस्थले व्यतिरेकसहचारे साध्यसाधनसहचारत्वसत्त्वेऽपि व्यतिरेकिणि नातिप्रसङ्गसम्भवः।

पर तु भावाभावसाधारणेनाभावत्वेन यत्र संयोगसमवायाभ्यां हेतुसाध्यभावस्तत्र व्यतिरेकिणि व्यतिरेकसहचारविषयतायामुक्तान्वयसहचारविषयतात्वसत्त्वेनातिव्याप्तिवारणाय साध्यतावच्छे-

(१) स्वप्रयोजकेति पु० पा०।

दकसम्बन्धसाधनतावच्छेदकसम्बन्धयोरन्यतरः प्रवेशनीयः ।

अत्र साध्यतावच्छेदकावच्छिन्नसाधनतावच्छेदकावच्छिन्नयोरेकतरोपरागेण सहचारविषयतया निवेशादेव व्यतिरेकसहचारविषयतायाः प्रायशो वारणसम्भवेऽपि जन्यज्ञानाविषयत्ववान् जन्यज्ञानविषयत्वाभावादित्यत्र यत्र जन्यज्ञानाविषयत्वाभावस्तत्र जन्यज्ञानविषयत्वाभावाभाव इति स्वाभावरूपहेत्वभावत्वेन सहचारप्रतियोगिसाध्यविषयकव्यतिरेकसहचारग्रहात् गृहीतव्याप्तिके कपिसंयोगाभाववान् कपिसंयोगादित्यत्र यत्र कपिसंयोगाभावाभावस्तत्र कपिसंयोगाभाव इति स्वाभावरूपसाध्याभावत्वेन सहचारप्रतियोगिहेतुविषयकव्यतिरेकसहचारग्रहात् गृहीतव्याप्तिके व्यतिरेकिण्यतिव्याप्तिवारणायोभयोपरकसहचारविषयता निवेश्या । उक्तातिव्याप्तिवारणमपि विषयतापर्यन्तनिवेशनफलम् । सहचारस्य निरूपकतावच्छेदकभेदेऽपि अभेदाज्जन्यज्ञानत्वावच्छिन्नविषयत्वाभावाभावत्वाद्यवच्छिन्ननिरूपितसहचारस्यापि जन्यज्ञानविषयतात्वाद्यवच्छिन्ननिरूपिततया यथाश्रुते सहचारनिवेशेनोक्तातिव्याप्तेर्दुर्वारत्वात् ।

अथ प्रतियोगिवैयधिकरण्यावच्छिन्नयोरेव व्यतिरेकयोस्सहचारस्य व्यतिरेकव्याप्तेरिवान्वयव्याप्तेरपि ग्राहकत्वादुक्तस्थले च तादृशविशेषणावच्छिन्नव्यतिरेकसहचाराप्रसिद्धेर्न व्यतिरेकितासम्भवः । न च प्रतियोगिवैयधिकरण्यावच्छिन्नव्यतिरेकयोरनुमित्यौपयिकव्यतिरेकव्याप्तिघटकतया तादृशयोस्सहचारस्तद्ग्राहकोऽस्तु व्यतिरेकसहचारादन्वयव्याप्तिग्रहमते तु तादृशविशेषणावच्छिन्नयोरेव व्यतिरेकयोस्सहचारग्रहस्य तद्ग्राहकत्वे निर्युक्तिकमिति वाच्यम् । व्यतिरेकव्याप्तेर्गमकतापक्षे यादृशसहचारग्रहस्यानुमितावपेक्षणीयता व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते इति मतेऽपि फलसाम्यानुरोधेन तादृशसहचारज्ञानापेक्षाया आवश्यकत्वात्।अधिकरणविशेषे व्यभिचारज्ञानविरोधिन एव सहचारज्ञानस्य व्याप्तिग्राहकतया प्रतियोग्यधिकरणे व्यतिरेकसहचारस्यातथाभूतस्य व्याप्तिग्राहकत्वासम्भवाच्चेति चेन्न । प्रतियोगिव्यधिकरणव्यतिरेकाप्रसिद्धावपि भ्रमात्मकतादृशव्यतिरेकसहचारग्रहाधीनज्ञानविषयव्याप्तिकतया व्यतिरेकित्वसम्भवात् ।

अत्र च साधननिष्ठसाध्यसहचारसाध्यनिष्ठसाधनसहचारान्य-

तरत्वस्य तदन्यतरविषयतात्वस्य वा व्यापकत्वं विवक्षणीयमन्यथा एकविधसहचारमात्रोपादाने ऽन्यविधसहचारगृहीतव्याप्तिकेऽव्याप्तेः।

यत्तु अन्वयव्याप्तिघटकसाधननिष्ठसाध्यसहचारस्यैवान्वयव्याप्तिग्राहकतोपेयते न तु साध्यनिष्ठसाधनसहचारस्येति साधननिष्ठसाध्यसहचारत्वस्यैव व्यापकता विवक्षणीया । न च सहचारग्रहस्य व्यापकताग्रहे स्वातन्त्र्येण हेतुतामते एवेदं लक्षणमन्यथा व्यतिरेकसहचारस्यान्वयव्याप्त्यघटकतया तद्ग्रहस्य तद्ग्राहकत्वानुपपत्त्या ऽतिप्रसङ्गापातात् । तथा च साधने साध्यसहचारज्ञानमिव साध्ये साधनसहचारज्ञानमप्यविशेषेण व्यापकतां ग्राहयेदिति साध्यप्रतियोगिकसाधनप्रतियोगिकसहचारद्वयान्यतरत्वेनानुगमस्यैवावश्यं निवेशनीयमिति वाच्यम् । उक्तसहचारयोरनुगमकरूपस्यातिगुरोर्दुर्वचतया लाघवात्साध्यप्रतियोगिकसहचारज्ञानत्वेनैव व्यापकताबुद्धेर्हेतुत्वोपगमात् । साध्यधर्मिकसहचारग्रहस्य व्यापकत्वाग्राहकत्वात् अव्याप्त्यनवकाशात् । न च विनिगमनाविरहात्प्रत्येकमेव सहचारग्रहयोर्हेतुत्वं दुर्वारमिति वाच्यम् । व्याप्तिग्रहे तद्घटकसाध्यप्रतियोगिकसहचारग्रहस्यावश्यापेक्षणीयत्वेन साधनप्रतियोगिकसहचारबुद्धेर्व्यापकताग्राहकत्वेऽनुमितिपूर्वं नियमतो द्विविधसहचारज्ञानकल्पने गौरवाल्लाघवस्यैव साध्यप्रतियोगिकसहचारबुद्धेर्व्यापकताग्राहकत्वे विनिगमकत्वादिति । तन्न । व्यापकताग्रहे साधनधर्मिकसाध्यसहचारग्रहस्यैव हेतुत्वेऽपि यत्र साधनसामानाधिकरण्यविशिष्टसाध्यस्य कश्चिद्वैशिष्ट्यावगाही व्यापकताग्रहस्तत्र साधनधर्मिकसाध्यसहचारग्रहस्य कल्पनीयतया विनिगमनाविरहस्य दुर्वारत्वात् ।

नन्वन्वयव्याप्तिघटकाभावनिष्ठहेतुसहचारग्रहस्य तद्विशिष्टवैशिष्ट्यावगाहिव्याप्तिबुद्धौ हेतुतया तादृशसहचारस्यापि व्याप्तिग्राहकतया तत्र च प्रकृतसाधनसहचारत्वासत्त्वेन न तस्य व्याप्तिग्राहकसहचारत्वव्यापकत्वम् । एवं यत्र साध्यतावच्छेदकं साधनतावच्छेदकं वा पदार्थान्तरसहचारघटितं तत्र पदार्थान्तरसहचारस्यापि व्याप्तिग्राहकतया तत्साधारणव्याप्तिग्राहकसहचारत्वव्यापकत्वं नान्वयसहचारस्येत्यतो ऽभावनिष्ठसाधनसहचारसाधारणव्याप्तिघटकसहचारत्वेनान्वयसहचारं निवेश्य लक्षणान्तरमाह । तादृशेति।

यद्यपि पदार्थान्तरीयव्यापकताविषयकप्रकृतव्यापकताज्ञानजनकग्रहविषयपदार्थान्तरीयसहचारवारणाय प्रकृतव्यापकत्वभानप्रयोजकसहचारोऽयमयं विवक्षणीयः। तत्त्वं च प्रकृतव्यापकताविषयकत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकविषयताकत्वम्। एवं चाभावादिनिष्ठहेतुसहचारमादायोक्तकल्पेऽपि न दोषावकाशस्तादृशसहचारविशिष्टवैशिष्ट्यबुद्धित्वस्यैव तादृशसहचारज्ञानजन्यतावच्छेदकत्वात् प्रकृतव्यापकत्वावगाहितायां अतथात्वात्। प्रकृतव्यापकत्वविशिष्टसाध्यवैशिष्ट्यावगाहिबोधादिनिष्ठप्रकृतव्यापकताविषयकत्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणतायां प्रकृतव्यापकताविषयकत्वावच्छिन्नायां तद्घटकाभावादिनिष्ठहेतुसहचारादिविषयताया अवच्छेदकत्वेऽपि जन्यतायां प्रत्यक्षत्वावच्छिन्नत्वं निवेश्य विशिष्टवैशिष्ट्यबोधत्वावच्छिन्ननिरूपितजनकतावच्छेदकविषयताकोक्तसहचारवारणं सुकरमेव। तथाऽपि कालान्तरीणप्रकृतव्याप्तिग्रहजनकज्ञानीयव्यतिरेकसहचारविषयताया अपि इदानींतनानुमितिप्रयोजकप्रकृतव्यापकत्वविषयताशालिप्रत्यक्षत्वावच्छिन्ननिरूपितजनकतावच्छेदकत्वं दुर्वारमेव कालान्तरीणव्याप्तिज्ञानविषयताया इदानींतनव्याप्तिज्ञानविषयतातो भेदविरहात्।

न च तदनुमितिव्यक्त्युपधायकग्रहनिष्ठा या व्यापकत्वविषयताशालिप्रत्यक्षत्वावच्छिन्नकार्यता तत्प्रतियोगिककारणतावच्छेदकत्वविवक्षया नायं दोषः। इदानींतनानुमित्युपधायकेदानींतनव्यापकताग्रहेऽन्वयसहचारमात्रग्रहाधीने कालान्तरीणव्यतिरेकसहचारग्रहकार्यताया असत्त्वादिति वाच्यम्। अन्वयव्यतिरेकसहचारज्ञानयोः प्रत्येकमुक्ततत्तत्सहचारज्ञानाव्यवहितोत्तरत्वं कार्यतावच्छेदककोटौ निवेश्य हेतुताकल्पन एव व्यतिरेकसहचारज्ञानकार्यताया अन्वयसहचारमात्रग्रहाधीनव्याप्तिग्रहावृत्तित्वोपपत्तेः। अव्यवहितोत्तरत्वानिवेशे च व्यभिचारावारकव्यापकत्वविषयकत्वादीनां कार्यतावच्छेदके निवेशस्याप्रामाणिकतया व्यापकत्वविषयकप्रत्यक्षत्वावच्छिन्नकार्यताघटितलक्षणेऽसम्भवात्। कार्यतावच्छेदकेऽव्यवहितोत्तरत्वमनिवेश्य व्यभिचारवारणायान्वयव्यतिरेकसहचारविषयत्वान्यतरवत्त्वेन सहचारज्ञानस्य व्यापकताग्राहकत्वे व्यतिरेकसहचारविषयताया

अन्वयसहचारमात्रग्रहाधीनव्याप्तिग्रहनिष्ठकार्यताप्रतियोगिककारण-
तावच्छेदकताया दुरपह्नवत्वात् अतः स्वोपधानप्रयोजकस्य व्याप-
कत्वविषयतासम्बन्धस्य प्रयोजकं यादृशसहचारविषयकत्वं तादृश-
सहचारविषयतात्वव्यापकान्वयसहचारविषयतात्वकत्वमनुमितौ वि-
शेषणम्, प्रयोजकत्वं च स्वरूपसम्बन्धविशेषः न तु पूर्वोक्तमित्यु-
पगन्तव्यम् । एवं च कालान्तरीयज्ञाननिष्ठो व्यतिरेकसहचारविषय-
ताप्रयोज्यो व्यापकत्वविषयतासम्बन्धो नेदानींतनानुमित्युपधानप्र-
योजक इति सकलकेवलान्वय्यनुमानेऽप्युक्तलक्षणनिर्वाहः, स च
न सम्भवति, व्यापकत्वविषयतान्तर्गतसाधनसहचारविशिष्टाभाव-
विशिष्टविषयतासम्बन्धप्रयोजकाभावनिष्ठसाधनसहचारादिविष-
यताया अपि अनुमित्युपधानप्रयोजकव्यापकत्वविषयतासम्बन्ध-
प्रयोजकत्वादित्याशयेनान्वयसहचारत्वघटितलक्षणेऽनिर्भरः ।

तादृशसहचारः । प्रकृतव्याप्तिग्राहकज्ञानीयविषयसहचारः । यद्रू-
पावच्छिन्नप्रतियोग्यनुयोगिविषयतानिरूपितसहचारविषयता प्रकृ-
तव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नविषयतान्तःपातिनी तद्रूपा-
वच्छिन्नप्रतियोग्यनुयोगिविषयतानिरूपितविषयतात्वस्य प्रकृतव्या-
प्तिग्राहकसहचारत्वावच्छिन्नविषयतात्वव्यापकत्वं विवक्षणीयमतो
न पूर्वलक्षणोक्तदोषः । केवलान्वयिन्यपि व्याप्तिग्राहकसहचार-
विजातीयसाध्यविषयतायां निरुक्तविषयतात्वाभावस्यादसम्भव इति
व्याप्यदिशि सहचारत्वांशानिवेशः ।

यद्रूपावच्छिन्नसहचारविषयता व्याप्तिविषयतान्तःपातिनी त-
द्रूपावच्छिन्नविषयतात्वस्य व्यापकत्वोक्तौ व्याप्तिघटकतावच्छेदकस-
हचारत्वस्य व्यतिरेकसहचारसाधारणीयसहचारविषयतावच्छेदकत्वा-
दतिप्रसङ्ग इति व्यापकत्वदिशि प्रतियोग्यनुयोगिनोर्विषयताविशेष-
निवेशः । प्रतियोग्यनुयोगिनोरेकतरमात्रनिवेशे जन्यज्ञानविषयत्व-
वान् जन्यज्ञानविषयत्वाभाववानित्याद्युक्तव्यतिरेकिणि व्यतिरेकस-
हचारविषयतायाः साधनतावच्छेदकैकतररूपावच्छिन्नविषयता-
निरूपितत्वेनातिप्रसङ्गः स्यादिति उभयरूपावच्छिन्नविषयतानिवेशः ।
(१) हेतुतावच्छेदकावच्छिन्नविषयतानिरूपितसहचारविषय

(१) पुस्तकान्तरे नास्त्येष पाठः ।

प्तिग्राहकताप्रयोजकत्वोभयाभाववत्त्वनिष्ठावच्छेद्यतासामान्यकप्रतियोग्यनुयोगिविषयताया व्यापकदिशि निवेशेन सामंजस्यात्। प्रकृतव्याप्तिग्रहसामान्यनिष्ठप्रतिबंधकतावच्छेदकविषयतात्वस्य वा विवक्षणीयत्वात्। तादृशप्रतिबन्धकता च प्रतियोग्यनुयोग्यनुपरागेण सहचारविषयकज्ञानावृत्तित्वेनापि विशेषणीया, तेन धूमाभाववान् वह्न्यभावादित्यादौ यत्र धूमाभावाभावस्तत्र वह्न्यभावाभाव इत्यादिसहचारज्ञानीयसहचारविषयताया आधेयत्वं नाभावाधिकरणीयमित्यादिज्ञाननिरूपितव्याप्तिज्ञानसामान्यनिष्ठप्रतिबन्धकतावच्छेदकत्वेऽपि नातिव्याप्तिः। अभावाधिकरणावृत्तिरभाव इति ज्ञानस्य चाहार्यतया तत्प्रतिबन्धकतावच्छेदकत्वं व्यतिरेकसहचारविषयतायां असम्भावितमेव।

ननु व्यतिरेकिणि व्यतिरेकसहचारादेवान्वयव्याप्तिर्गृह्यते सैव च व्यतिरेकित्वप्रयोजकमिति मत तन्न युक्तम्। व्यतिरेकसहचारस्य स्वातन्त्र्येण व्याप्तिग्राहकत्वे मानाभावादधिकरणविशेषे व्यभिचारशंकानिवर्तनद्वारैव क्वचित्तदुपयोगादन्वयसहचारग्रहं विना तद्घटिताया अन्वयव्याप्तेर्दुर्ग्रहतया केवलव्यतिरेकिविलोपापत्तेश्च।

न च विशिष्टसहचारानुपस्थितावपि तद्घटकपदार्थानां विशृङ्खलानामुपस्थित्याऽन्वयव्याप्तिधीर्विशेष्ये विशेषणमित्यादिन्यायेन सम्भवत्येवेति वाच्यम्। एवं सति व्यतिरेकसहचारान्वयसहचारयोरुभयोरप्यग्रहे उक्तरीत्या व्याप्तिग्रहसम्भवेन तदनुमानस्य तुरीयतापत्तेः।

अस्तु वा ऽन्यतरसहचारस्य स्वातन्त्र्येणैव व्यापकताग्राहकत्वं तथाऽपि तत्प्रत्यक्ष एव तद्धेतुतया शब्दादिना व्याप्तिग्रहे तदपेक्षाविरहात् शब्दादिजन्यप्रत्येकपदार्थोपस्थितिमूलकग्रहविषयव्याप्तिकानुमानस्य तुरीयतापत्तिर्दुर्वारैवेति व्यतिरेकिणि व्यतिरेकव्याप्तेरेव गमकता व्याप्तेरन्वयादिनिरूप्यत्वमेवान्वयित्वादिप्रयोजकमिति मणिकारीयमतमेव साधीयः तन्मतमेवावलम्बमानः केवलान्वयित्वं निर्वक्ति। गृहीतव्याप्तिभेदाच्च। तत्कालीनतत्पुरुषीयानुमित्यौपयिकव्याप्तेरन्वयादिनिरूप्यस्वरूपवैलक्षण्यात्। प्रकृतहेतुकेति। प्रकृतसाध्यतावच्छेदकावच्छिन्नव्याप्तिविषयकत्वघटितधर्मावच्छिन्नतत्कालीनतत्पुरुषी-

यादृशरूपावच्छिन्नप्र-

वच्छेदकत्वासंभवात् किं त्वनतिरिक्तवृत्तित्वम् । एवं च निर्गन्धत्वव्याप्यपत्वगादिज्ञानसाधारणस्य दर्शितहेतुतावच्छेदकविशिष्टपक्षतानिश्चयत्वस्य निर्गन्धत्वानुमितिजनकतातिरिक्तवृत्तित्वात् तत्र च न निरुक्तव्याप्तित्वमिति ।

यद्यपि धूमत्वावच्छिन्नवत्तानिश्चयत्वस्य स्वरूपसम्बन्धरूपावच्छेदकत्वाश्रयत्वमादाय धूमत्वावच्छिन्नहेतुकान्वयिन्यपि लक्षणानुपपत्तेः व्यतिरेकव्याप्त्यवच्छिन्नहेतुकान्वयिपर्यन्तानुसरणमनुचितम् । तथाऽपि यत्किञ्चिद्व्यापकताघटितस्वरूपमन्वयव्यतिरेकव्याप्त्यन्यतरत्वरूपं वा व्याप्तित्वं यदि जनकज्ञानविषये निवेश्यते तदा धूमत्वादौ तद्विरहेण न तदवच्छिन्नहेतुकेऽनुपपत्तिरिति व्यतिरेकव्याप्त्यवच्छिन्नहेतुकस्थले दर्शितरीत्याऽनुपपत्त्युद्धारः ।

इदमुपलक्षणम् । प्रकृतसाध्यीयव्यतिरेकव्याप्त्यवच्छिन्नहेतुके तु केवलान्वयिन्यव्याप्तिवारणाय वक्ष्यमाणयाऽपि रीत्या एतद्दोषोद्धारो बोध्यः ।

ननूक्तरीत्या साध्यान्तरीयव्यतिरेकव्याप्तिहेतुतावच्छेदकककेवलान्वयिन्यव्याप्तिपरिहारेऽपि वन्ह्यभाववान् वह्निव्यापकीभूताभावप्रतियोगिन इत्यादौ केवलान्वयिन्यव्याप्तिर्दुर्वारैव । तत्र हेतुतावच्छेदकरूपाया व्यतिरेकव्याप्तेरपि प्रकृतसाध्यकानुमित्यौपयिकत्वात् । तद्विशिष्टपक्षज्ञानसत्त्वे व्याप्त्यन्तरबोधं विनाऽपि प्रकृतसाध्यकानुमित्युत्पादादत आह । वन्ह्यभाववानिति ।

( दी० ) वन्ह्यभाववान् वह्निव्यापकीभूताभावप्रतियोगिमत्त्वादित्यादावन्वयव्याप्तेरवच्छेदिका व्यतिरेकव्याप्तिर्न तु सैवेति नाप्रसङ्गः । अत एवेतरव्यापकाभावप्रतियोगित्वेनाभावप्रतियोगित्वेन वा पक्षलिङ्गज्ञानं न प्रकृतसाध्यानुमितिहेतुस्तत् केवलान्वयीत्यपि वदन्ति । एवं केवलव्यतिरेकित्वादिकमपि निर्वाच्यम् । अभिधेयत्वं शब्दशक्यत्वम् । विपक्षत्वव्याघातो विपक्षत्वासिद्धेः ।

न च धूमव्यापकवह्निसमानाधिकरणत्वाभाववानित्यादिज्ञानाद्नुमितिवारणाय हेतुतावच्छेदकसाहित्यस्यैव व्यापकसामानाधिकरण्यस्य हेत्वंशे भानमनुमितावुपयुज्यतां साध्याभावव्यापकाभावप्रतियोगित्वस्य च केवलस्यैव भानमुपयुज्यतामिति वाच्यम् । तथा सति द्रव्यत्वाभावव्यापकविशिष्टसत्तात्वावच्छिन्नाभावप्रतियोगिसत्ताद्रिमत्त्वज्ञानाद् गुणादौ बाधानवतारदशायां द्रव्यत्वाद्यनुमानापत्तेः । हेतुतावच्छेदकस्य च व्याप्तिधर्मितावच्छेदकतया भानं यदि नोपयुज्यते तदा नोपयुज्यतामिति ।

एतेन केषांचिद्व्यतिरेकव्याप्तिरनुमित्यौपयिकी । न तु सैव । अन्वयव्याप्तिरेव । एवकारोऽन्यर्थे । एवं च तत्र केवलान्वयिता नाभ्युपयते एवान्वयव्याप्तिमानस्याकिञ्चित्करत्वादि(१)(त्वत्रालक्ष्यतया नाव्याप्तिरिति भावः) ति व्याकारोऽव्याकार एव । तन्मते उक्तानुमानस्य वह्निव्यापकाभावप्रतियोगित्वावच्छिन्नहेतुककेवलान्वय्यनुमानत्ववत्तद्वच्छिन्नहेतुकव्यतिरेक्यनुमानत्वमपि न सम्भवति तद्रूपावच्छिन्ने व्यतिरेकव्याप्तेरग्रहेण तस्य हेतुतानवच्छेदकत्वात् ।

न च तादृशानुमानस्य वह्निव्यापकाभावप्रतियोगित्वावच्छिन्नलिङ्गकव्यतिरेकित्वासम्भवेऽपि तद्रूपशरीरे यद्रूपावच्छिन्नाभावत्वावच्छिन्नव्यापकत्वं निविष्टं तद्रूपावच्छिन्नहेतुकव्यतिरेकित्वमव्याहतमिति तदेवोपगन्तव्यमिति वाच्यम् । तथा सति ग्रन्थकृतो वह्निव्यापकाभावप्रतियोगिमत्त्वादिति हेतुनिर्देशासङ्गतेरिति चिन्तनीयम् ।

सांप्रदायिकास्तु, जलं निर्गन्धमित्यादिकं प्रकृतसाध्यकेत्यस्य व्यावृत्तिप्रदर्शनपरम् वन्ह्यभाववानित्यादिकं तु प्रकृतहेतुकेत्यस्य व्यावृत्तिप्रदर्शनपरमिति वदन्ति । तदसत् । जलं निर्गन्धमित्यादौ हेतुतावच्छेदकीभूतपृथिवीत्वाभावानुमित्यौपयिकव्याप्तेर्न्हव्यभावसाध्यके हेतुतावच्छेदकीभूतवह्निव्यापकाभावप्रतियोगित्वरूपव्याप्तेरिव प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकव्याप्तित्वाभावादेव वारणे तत्र प्रकृतसाध्यकत्वनिवेशव्यावृत्त्यसङ्गतेः ।

यदवच्छिन्नाभावत्वेन हेत्वभावनिष्ठा साध्याभावव्या-
प्र तद्धर्मावच्छिन्नहेतुका व्या-

प्तेः । एवं जलत्ववत्त्वावच्छिन्नाभावत्वावच्छिन्नव्यापकताघटितव्याप्तेः पृथिवीत्वव्यापकाभावप्रतियोगित्वावच्छिन्नहेतुकत्वविरहेऽपि पृथिवीत्वव्यापकाभावप्रतियोगित्वावच्छिन्नाभावत्वावच्छिन्नव्यापकताघटितव्याप्तेस्तादृशाभावप्रतियोगित्वावच्छिन्नहेतुकतया तादृश्याः पृथिवीत्वव्यापकताघटितव्याप्तेरेव प्रकृते विवक्षणाच्च प्रकृतहेतुकेत्यनेन तद्व्यावृत्तिरिति वाच्यम् । एवं सति पृथिवीत्वव्यापकाभावप्रतियोगित्वावच्छिन्नाभावत्वरूपपृथिवीत्वव्यापकतावच्छेदकस्य पृथिवीत्वव्यापकताघटितत्वेनात्माश्रयादवच्छेद्यावच्छेदकभावानुपपत्तेः ।

अवच्छेदकप्रविष्टा पृथिवीत्वव्यापकता जलत्ववत्त्वावच्छिन्नाभावत्वावच्छिन्ना अवच्छेदीभूतपृथिवीत्वव्यापकाभावप्रतियोगित्वावच्छिन्नाभावत्वावच्छिन्नपृथिवीत्वव्यापकतातो भिन्नैवेति नात्माश्रय इति चेत्तर्हि हेतुतावच्छेदकीभूतपृथिवीत्वव्यापकाभावप्रतियोगित्वात्तादृशाभावप्रतियोगित्वावच्छिन्नाभावत्वावच्छिन्नव्यापकताघटितात्तद्व्यापकतावच्छेदककोटिप्रविष्टजलत्ववत्त्वावच्छिन्नाभावत्वावच्छिन्नव्यापकताघटितं पृथिवीत्वव्यापकाभावप्रतियोगित्वमन्यदेवेति कथं हेतुतावच्छेदकीभूतव्याप्तेः प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकव्याप्तित्वम् । तथा च प्रकृतहेतुतावच्छेदकगर्भे तदवच्छिन्नाभावत्वावच्छिन्नव्यापकतायास्तद्रूपघटितत्वेन कथंचिदपि निवेशासम्भवात् । प्रकृतहेतुतावच्छेदकरूपव्याप्तेः प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकव्याप्तित्वं दुर्घटमेव ।

अन्ये तु यत्नुपभाववान् वह्निव्यापकीभूताभावप्रतियोगिमत्त्वादित्यादिका प्रकृतहेतुकत्वव्यावृत्तिप्रदर्शनपरा फक्किकैव प्राथमिकी तदुपरि जलं निर्गन्ध पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वादित्यादिकं प्रकृतहेतुकेत्यस्य व्यावृत्तिस्थलं किमर्थमुपेक्षितमित्याकांक्षायां चरमा, जलं निर्गन्धमित्यादिफक्किका जलं निर्गन्धमित्यादौ हेतुतावच्छेदकव्यतिरेकव्याप्तेः प्रकृतसाध्यकानुमित्यौपयिकत्वाभावादेव वारणे प्रकृतहेतुतावच्छेदकेत्यस्य न तद्वारणप्रयोजनकत्वमिति तदर्थं इत्याहुः । तदपि न सम्यक् । वह्निमान् धूमादित्यादेः केवलान्वय्यनुमानस्यैव तद्व्याकित्वादिना धूमादेर्व्यतिरेकितादशायां सद्भावाय प्रकृतहेतुकेत्यस्यावश्योपादेयतया तद्व्यावृत्तिस्थलान्तरानुसरणानौचित्यात् ।

गृहीतव्याप्तिमेवाह्निदे प्राचीनसंवादमाह । अत एवेति । यल्लिङ्गज्ञानम् । यद्रूपावच्छिन्नलिङ्गविषयता । न प्रकृतसाध्यानुमितिहेतुः । न प्रकृतसाध्यानुमितिजनकतावच्छेदकीभूता तथा चेतरव्यापकाभावप्रतियोगित्वप्रकारतानिरूपितयद्रूपावच्छिन्नलिङ्गविषयतासामान्यमभावप्रतियोगित्वप्रकारतानिरूपितयद्रूपावच्छिन्नलिङ्गविषयतासामान्यं वा तत्कालीनतत्पुरुषीयप्रकृतसाध्यानुमितिजनकतावच्छेदकत्वशून्यं तादृशानुमितिकरणं तद्रूपावच्छिन्नतत्पुरुषीयतत्कालीनप्रकृतसाध्यककेवलान्वय्यनुमानमित्यर्थः ।

इतरत्वमुपलक्षणमतो वन्ह्यभावव्यापकाभावप्रतियोगित्वरूपव्याप्तिग्रहेणेतरत्वानवगाहनेऽपि न क्षतिः ।

यद्यपि यत्र साध्याभावातिरिक्तयत्किञ्चिद्व्यापकाभावप्रतियोगित्वस्यान्वयव्याप्तेश्च विशेष्यविधया लिङ्गतावच्छेदकावच्छिन्नस्यैकधैव समूहालम्बनवैलक्षण्येन भानं तत्र केवलान्वयिन्यव्याप्तिस्तत्र तादृशाभावप्रतियोगित्वप्रकारतानिरूपितविशेष्यतायाः एव अन्वयव्याप्तिप्रकारतानिरूपिततया प्रकृतानुमित्यौपयिकत्वात् । केवलान्वयिसाध्यके साध्याभावाप्रसिद्ध्या प्रकृतसाध्याभावव्यापकीभूताभावप्रतियोगित्वपर्यन्तानिवेशासम्भवात् । तथाऽपि तादृशप्रतियोगित्वप्रकारतानिरूपितलिङ्गविषयतास्थले लिङ्गविषयतानिरूपिततादृशप्रतियोगित्वप्रकारताया विवक्षणान्न दोषः । एवं चाभावप्रतियोगित्वप्रकारतामात्रनिवेशेनाप्युपपत्तेरभावविशेषणव्यापकताप्रवेशनमनर्थकमित्याशयेनाभावप्रतियोगित्वेन वेत्युक्तम् । 'साध्यसामानाधिकरण्यरूपाया अन्वयव्याप्तेरपि साध्यसम्बन्धिनिष्ठसम्बन्धप्रतियोगित्वरूपतयाऽसम्भव इत्यतोऽभावोपादानम् । केवलान्वयिमेयत्वादिहेतुकस्थले चाभावप्रतियोगित्वेन लिङ्गतावच्छेदकावच्छिन्नविषयताभ्रम एव प्रसिद्ध इति नाव्याप्तिरिति सर्वत्र भ्रमस्याप्रामाणिकतया स्वयमन्यथा केवलान्वयित्वं निरुक्तमिति बोध्यम् ।

एवं केवलव्यतिरेकित्वादिकमिति । यथायथमन्वयसहचारान्वयव्याप्तिस्थले व्यतिरेकसहचारव्यतिरेकव्याप्ती निवेश्य केवलव्यतिरेकित्वमुभयव्याप्तिं निवेश्य चान्वयव्यतिरेकित्वं निर्वाच्यमित्यर्थः ।

केवलान्वयिनोऽभिधेयत्वस्य न विपक्ष इत्यभिधेयत्वसाध्यककेवलान्वय्यनुमानलक्षणसंगमनपरे मूलग्रन्थे ऽभिधेयत्वं यदि ग्रा-

न्दवोध्यत्वरूपं विवक्षितं तदा यथा आकाशशब्दाच्छब्दाश्रयत्वमनभिधेयमप्युपतिष्ठत इत्यग्रिमग्रंथविरोधः। प्राचीनमते शब्दाश्रयत्वस्याकाशपदाशक्यत्वेऽपि शब्दवोध्यत्वरूपाभिधेयत्वेऽविधादात् । अन्यथा शब्दादुपतिष्ठते इत्यस्यैव व्याघातादित्यतो व्याचष्टे। अभिधेयत्वमिति । अनभिधाने । अभिधेयत्वशून्यत्वात्मकेऽभिधेयत्वशून्यत्वरूपाभिधेयत्वविपक्षताविरहप्रसंजकत्वरूपं तद्व्याघातकत्वं न सम्भवतीति व्याघातपदमन्यथा व्याचष्टे । विपक्षत्वासिद्धिरिति । विपक्षादिपदेन विपक्षत्वयाऽभिमतस्यानभिधाने तत्र शब्दप्रमाणाप्रवृत्तेस्तदप्रवृत्तौ च न्यायसाध्यपरार्थानुमानस्यानवकाशात् परं प्रति तस्य विपक्षत्वसिद्धेरसम्भव इति भावः ।

( चि० ) अथ यथा आकाशशब्दाच्छब्दाश्रयत्वमनभिधेयमप्युपतिष्ठते तथाऽभिधेयत्वाविपक्षस्यानभिधेयत्वेऽपि पदादुपस्थितिः स्यात् । एवं चाभिधेयत्वं कुतोऽपि व्यावृत्तं धर्मत्वात् गोत्ववदिति चेन्न । व्यावृत्तत्वस्याव्यावृत्तत्वे व्यावृत्तत्वमेव केवलान्वयि, व्यावृत्तत्वे यत एव व्यावृत्तं व्यावृत्तत्वं तदेव केवलान्वयीति धर्मत्वस्यानैकान्तिकत्वात् । एवमत्यन्ताभावप्रतियोगित्वस्यात्यन्ताभावाप्रतियोगित्वेऽत्यन्ताभावप्रतियोगित्वमेव केवलान्वयि, अत्यन्ताभावप्रतियोगित्वे यन्निष्ठात्यन्ताभावप्रतियोगि अत्यन्ताभावप्रतियोगित्वं तदेव केवलान्वयि । न चात्यन्ताभावप्रतियोगित्वं व्यावृत्तत्वं च नानेति वाच्यम् । अनुगतप्रतीतिबलेन गोत्ववत्तयोः सिद्धेः ।

( दी० ) ननु व्यावृत्तत्वमन्योन्याभावप्रतियोगितावच्छेदकत्वं तच्च लघुगुरुसाधारणं गगनादिनिष्ठान्योन्याभावप्रतियोगितावच्छेदकं चेति न व्यभिचार इत्यत आह । एवमिति ।

(गा०) मूलेऽनभिधेयमिति। तच्छब्दानभिधेयमित्यर्थः। उपतिष्ठत

इति । संबन्धिस्मृतौ प्रकारांशे संबन्धग्रहस्यानपेक्षिततया शब्दाश्रयत्वस्याशक्यत्वेऽपि तत्प्रकारेण धर्मिणि शक्तिग्रहादेव तत्प्रकारेण धर्मिस्मरणस्य तद्धर्मांशे द्रव्यत्वादिव्यावर्तकानतिप्रसक्तत्वरूपशक्यतावच्छेदकत्वग्रहादेव तत्प्रकारकशाब्दबोधस्य च सम्भवादिति भावः ।

एतच्चोपलक्षणम्, लक्षणयाऽनभिधेयस्योपस्थितावपि दृष्टान्तत्वसम्भावात् शब्दादनभिधेयस्य विपक्षस्योपस्थितावपि तत्र विपक्षत्वे मानाभावः, शब्दस्य परं प्रति आप्तोक्तत्वासिद्धेः, अनुमानं च साध्याप्रसिद्ध्या न सम्भवतीत्याशंक्याभिधेयत्वविपक्षसिद्धिपर्यवसायिसाध्याप्रसिद्ध्याद्यनास्कन्दितमभिधेयत्वपक्षकमनुमानमाह । एवं चेति । अनभिधेयत्वेऽपि । शब्दादुपस्थितिसम्भवे चेत्यर्थः ।

एतेन विपक्षस्योक्तानुमानेऽपि सामान्यतः साध्यघटकतया शब्दादनुपस्थितौ शब्देन साध्यादेः प्रतिपादनासम्भवात्परार्थानुमानासम्भवो निराकृतः ।

प्रकृतानुमानेनैव विपक्षत्वधर्मिपर्यन्तस्य सिद्धये धर्मिणमन्तर्भावयति । कुतोऽपीति । इत्यनुमानात् । विपक्षसिद्धिरिति शेषः । अव्यावृत्तत्वे । सार्वत्रिकत्वे । केवलान्वयि । व्यावृत्तस्वरूपसाध्यविरहि । एवममेऽपि ।

ननु व्यावृत्तत्वस्यात्यन्ताभावप्रतियोगित्वरूपत्वे "एवमत्यन्ताभावप्रतियोगित्वस्ये"त्यादिना सह व्यावृत्तत्वस्येत्यादेः पौनरुक्त्यमतो व्यावृत्तत्वमन्यथा व्याचक्षाण एव व्यावृत्तत्वस्येत्यादिना दर्शितं व्यभिचारमुद्धृत्यात्यन्ताभावप्रतियोगित्वे व्यभिचारप्रदर्शनपरमेवमित्यादिग्रंथमवतारयति दीधितौ । नन्विति । अन्योन्याभावेति । अन्योन्याभावप्रतियोगितानवच्छेदकत्वं केवलान्वयित्वमित्याशयेन निरुक्तव्यावृत्तत्वसाधनमित्याशयः ।

लघुरूपसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वेऽन्योन्याभावप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वसाध्यकानुमाने कंबुग्रीवादिमत्त्वादावेव धर्मत्वहेतोर्व्यभिचार इत्यतस्तन्निराकरणाय गुरोरप्यवच्छेदकत्वमंगीकरोति । लघ्विति ।

व्यावृत्तत्व यतो व्यावृत्तं तस्य केवलान्वयित्वनिबंधनमुक्तव्यभिचारं निरस्यति । गगनेति । इति न व्यभिचार इत्यन्तेन । अत-

इत्यर्थकेनोक्तोभयमेव परामृश्यते प्रथमे साध्यसत्त्वात् । गगनादौ च धर्मत्वरूपहेतुविरहाद्व्यभिचारनिरासो बोध्यः ।

मूले केवलान्वयीति । अत्यंताभावाप्रतियोगिनोऽन्योन्याभावप्रतियोगितावच्छेदकत्वरूपव्यावृत्तत्वाप्रसक्तेरिति भावः ।

नानेति । तथाचैकधर्मनिष्ठं व्यावृत्तत्वादिकं तद्रूपवद्धर्मांतराद्यावृत्तं तस्य च न केवलान्वयित्वसम्भव इत्यतो न व्यभिचार इति भावः । तयोः । अनुगतयोः । सिद्धिः ।

( चि० ) तत्र न तावदव्याप्यवृत्त्यत्यन्ताभावः केवलान्वयी, तस्य प्रतियोग्यवच्छिन्नेऽप्यत्यन्ताभावात्, अत्यन्ताभावाप्रतियोगिनश्च केवलान्वयित्वात्, नापि आश्रयनाशजन्यगुणनाशात्यन्ताभावः तस्य नाशस्य सर्वत्रात्यन्ताभावादिति वाच्यम् । यत्र हि प्रतियोगिप्रागभावो वर्त्तते तत्र न तदत्यन्ताभावो वर्त्तते, तथा च नाशस्य प्रागभावो यत्र नाशप्रतियोगिसमानदेशे वर्त्तते तत्र कथं नाशात्यन्ताभावो वर्त्तताम् । तर्हि नाशस्य तत्र वृत्तिः स्यादिति चेन्न । पूर्वं तत्र नाशप्रागभावस्यैव सत्त्वादुत्तरकाले आश्रयस्यैवाभावात् । नाप्याकाशात्यन्ताभावः केवलान्वयी, तस्यापि प्रतियोगिरूपात्यन्ताभावप्रतियोगित्वात् । अभावात्यन्ताभावस्य भावत्वात् ।

( दि० ) नन्वभावप्रतियोगित्वादिकमभावादिव्यक्तिभेदान्नानैव, अनुगतव्यवहारस्तु कथं चिद्विशेषणतावच्छेदकधर्मानुगमादेवं च लक्ष्याप्रसिद्ध्या लक्षणासम्भव इत्याशंकते । तत्रेत्यादि । यत्र हीत्यादिरभ्युपगमवादः । वस्तुतस्तु भूतलादिदेशे समये च तस्य वर्त्तमानत्वादाकाशाभावतुल्यत्वाच ।

(गा०) ननु अव्याप्यवृत्त्यभावादेः केवलान्वयित्वाकथनात्तन्निरा-

करणं मूलेऽप्युक्तम् । यदि च लक्ष्याप्रसिद्ध्या लक्षणासम्भवं दर्शयितुं यस्य यस्य केवलान्वयित्वं सम्भावितं तस्यैव तथात्वं निराकर्तुमयमुद्यमस्तथाऽपि अभावप्रतियोगित्वादेस्तथात्वस्य प्रदर्शितत्वात्तदनिराकरणेन न्यूनतेत्यत आह दीधितौ । नन्विति । प्रतियोगित्वादिकमित्यादिनाऽन्योन्याभावप्रतियोगितावच्छेदकत्वपरिग्रह । अभावादीत्यादिनाऽवच्छेदकपरिग्रहः । विशेषणतावच्छेदकेति । स च धर्मोऽभावत्वादिकः । एवं चोक्तरीत्याऽभावप्रतियोगित्वादेर्यत्किञ्चिदत्यन्ताभावप्रतियोगित्वं तस्य च न केवलान्वयित्वमिति भावः । एवं चेति । अत्यन्ताभावप्रतियोगित्वादेः केवलान्वयित्वासम्भवे चेत्यर्थः । अभ्युपगमवादः । ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वाभ्युपगमेनोक्तिः ।

तादृशविरोधस्य स्वयमनभ्युपगमात्प्रकारान्तरेणाश्रयनाशजन्यगुणनाशात्यन्ताभावस्य केवलान्वयित्वं निराकरोति । वस्तुत इति । मुख्यत्वाच्चैतदनन्तरं नोक्ताभावः केवलान्वयीति पूरणीम् । देशः । स्वप्रतियोगिसमवायिघटादावाश्रयो बोध्यः । स्वप्रतियोग्याश्रयसत्त्वदशायामुत्पन्नस्य नाशस्य स्वप्रतियोगिसमवायिनो वाऽऽश्रयनाशाधीनगुणनाशस्य स्वप्रतियोगिसमवायिनोऽधिकरणे प्रत्ययस्यानुभविकतया तत्र वर्तमानतेति भावः ।

तादृशप्रत्यये विवादसंभवात्समये च कालिकविशेषणतया एव सम्बन्धतया दैशिकविशेषणतासंबंधेन तादृशनाशाभावस्य केवलान्वयित्वाक्षतेराह । आकाशाभावतुल्यत्वाच्चेति । यथा आकाशाभावस्यावृत्तिप्रतियोगिकत्वेऽपि प्रतियोगिस्वरूपाभावप्रतियोगितया न केवलान्वयित्वं तथा तन्नाशस्यावृत्तित्वेऽपि तदभावस्य तदात्मकाभावप्रतियोगित्वान्न केवलान्वयित्वमित्यर्थः ।

( दी० ) अथाभावात्यन्ताभावो न प्रतियोगिरूपस्तथा सत्यन्योन्याभावात्यन्ताभावः प्रतियोगिरूप इति प्रतियोगिसमानदेशोऽन्योन्याभावो न स्यादिति चेन्न । अत्यन्ताभावात्यन्ताभावः प्रतियोग्येव, अन्योन्याभावात्यन्ताभावस्तु प्रतियोगिवृत्तिरसाधारणो धर्म इति ।

( दी० ) अभावाभावस्येति सावधारणम् । भावत्वात्, यदाहुराचार्याः 'स्वाभावविरहात्मत्वं वस्तुनः प्रतियोगिता'इति । प्रतियोग्येवेति । प्रागभावादेरत्यन्ताभावाभावरूपत्वनयेऽपि न क्षतिः, तन्मतेऽत्यन्ताभावस्यापि तदभावरूपतया तस्यापि प्रतियोगित्वात् । असाधारण इति । प्रतियोगितावच्छेदक इति तु तत्त्वम् ।

( गा० ) प्रतियोगिनोऽभावाभावत्वनियममंतरेणाकाशस्य प्रतियोगितया स्वाभावाभावत्वव्यवस्थापनं न संभवतीति अभावाभावस्येति मूलमभावाभावस्येवेत्यर्थकतया वर्णयति ।अभावेति-। घटत्वादेः किंचिद्विशिष्टस्वाभावाभावत्वेऽपि भावत्वस्याभावाभावत्वव्याप्यत्वं निर्युक्तिकमतो भावपदं प्रतियोगिपरतया व्याचष्टे। भावत्वादिति। प्रतियोगित्वस्याभावाभावत्वानियतत्वं निष्पत्त्यूहमेवाभावाभावत्वस्यैव प्रतियोगिताकृत्वात्। अत्राऽऽचार्यसंवादमाह । यदाहुरिति ।

ननु ध्वंसप्रागभावयोरत्यंताभावविरोधितामते प्रागभावदशायामपि तदधिकरणेऽत्यंताभावविरहसत्त्वात्तस्य च प्रतियोगिरूपत्वासंभवात्प्रागभावादेरेव तद्रूपता तथा चात्यन्ताभावाभावः प्रतियोग्येवेति मूलासंगतिरत आह । प्रागभावादेरिति । तदभावरूपतया । प्रागभावाद्यभावरूपतया । तस्यापि । प्रागभावादेरपि । प्रतियोगित्वात् । अत्यंताभावप्रतियोगित्वात् । घटाद्यसाधारणधर्मरूपादिविशेषकंबुग्रीवादिमत्त्वादेर्भेदाभावत्वाविरहादसाधारणो धर्म इति मूलस्य यथाश्रुतार्थासंगतेराह । प्रतियोगितावच्छेदक इति ।

( दी० ) अथान्योन्याभावात्यन्ताभावसाधारणः प्रतियोगितावच्छेदकसम्बन्ध एवाभावाभावः, स च क्वचित्तादात्म्यं क्वचिच्च संयोगादिरिति चेत् ? यद्वत्त्वे हि ज्ञाते यद्वत्त्वं न प्रतीयते तदभाववत्त्वं च व्यवह्रियते तस्यैव तदभावात्मकत्वमुपेयते, प्रतियोगितदभाववत्त्वबुद्ध्योश्च मिथस्तथात्वमानुभविकम् । न च तत्सम्बन्धवत्त्वं च तद्विपयः सम्बन्धासम्बन्धवत्त्वबुद्धिवत्

क्वचित् सम्बन्धत्वबुद्धिर्विशेषदर्शनतयोपयुज्यते न च स्वतो मानाभावात् । अथ सम्बन्धान्तरावच्छिन्नाभाववति सम्बन्धान्तरेण प्रतियोगिनो वृत्तेर्न तदभावविरोधित्वमिति चेत् ? प्रतियोगितावच्छेदकसम्बन्धस्याभाववति सम्बन्धान्तरेण वृत्तेर्न तथात्वम् सम्बन्धविशेषेण च विरोधित्वं तुल्यमेव । अनतिप्रसक्तये च स्वप्रतियोगितावच्छेदकसम्बन्धत्वेनाभावत्वकल्पने त्वननुगमसम्भावनाऽपीति । व्यधिकरणसम्बन्धस्यापि प्रतियोगितावच्छेदकत्वात् तद्वृत्त्यभावविलयप्रसङ्गो भवतां तदभावविलोपप्रसङ्गो वेति ।"

( गा० ) प्रतियोगितावच्छेदकसंबंध एवात्यंताभावान्योन्याभावसाधारणोऽभावाभाव इति योजना । अन्योन्यात्यंताभावसाधारणः । अन्योन्यात्यंताभावयोः साधारणः । स च संबंधविधयाऽवच्छेदकः । क्वचित् । भेदप्रतियोगितायाम् । क्वचित् । संसर्गाभावप्रतियोगितायाम् । प्रतियोगिसंबंधवत्ताज्ञानस्याभाववत्ताज्ञानाप्रतिबंधकतया न प्रतियोगिसंबंधस्याभावाभावत्वमिति समाधत्ते । यद्वत्वे हीति । ज्ञाते इत्यतं न प्रतीयत इति व्यवह्रियत इत्युभयान्वयि । तथा च यद्भावस्याप्यत्वादिनाऽगृहीतयद्धर्मवत्ताज्ञानं यत्प्रतीत्यनुत्पादे यदभाववत्ताव्यवहारे वा प्रयोजकमित्यर्थः । यत्राधिकरणे कदापि कस्यापि तदभावभ्रमो न जातस्तत्राभावप्रतीतेः प्रतियोगिमत्ताप्रतीत्यनुत्पादे अप्रयोजकत्वात्तस्यैव तदभावात्मकत्वमिति नियमासम्भवः अतोऽभावव्यवहारस्यापि निवेशः । व्यवहारश्च सामान्यतः सर्वत्र संभवतीति न व्यवहाराविषयत्वाभावे नियमभंग इति शंकापि ।

मिथस्तथात्वमिति । परस्परप्रतीत्यनुत्पादप्रयोजकत्वं परस्पराभाववत्ताव्यवहारप्रयोजकत्वं चेत्यर्थः । तथा च न प्रतियोग्यभावयोः परस्पराभावत्वानुपपत्तिरिति भावः । तत्संबंधवत्त्वम् । प्रतियोगिसंबंधवत्त्वम् । तद्विषयः । अभावप्रतीत्यनुत्पादादिप्रयोजकधीविषयः । ननु प्रतियोगिसंबंधप्रकारकसिद्धित्वेऽपि अभावप्रत्ययानुत्पादस्यानुभाविकत्वेत्यत आह । क्वचिच्चेति । विशेषदर्शनतया व्यावर्तकधर्मदर्शनतया । न स्वतः । न व्यावर्तकधर्मदर्शनमपुरस्कृत्य । न तस्याभा-






घविरोधित्वम् । किं तु तत्संबन्धस्यैवेति शेषः । तत्संबंध एव तदभावाभावः विरोधिन एवाभावाभावत्वादिति भावः । प्रतियोगितावच्छेदकसंबंधस्य । घटसंयोगादेः । अभाववति । घटाद्यभाववति कर्मादौ । संबंधान्तरेण । कालिकादिना । न तथात्वम् । न संबंधसामान्येन विरोधित्वम् । तुल्यमेव । प्रतियोगिसाधारणमेव ।

क्वचित्प्रतियोगिनः क्वचित्तत्तावच्छेदकस्याभावाभावत्वकल्पने कल्पनाभेद इति कल्पनैक्यानुरोधात्संबंधस्याभावाभावत्वमित्युक्तं दूषयति । अनतिप्रसक्तये चेति । अनतिप्रसक्तये । घटसंयोगादेः पटाद्यभावाभावत्ववारणाय । अनुगमसंभावनाऽपि । अनुगमस्यैककल्पनापि । स्वान्तर्भावादिति शेषः । तद्वति । गुणाद्यभावप्रतियोगितावच्छेदकसंयोगादिसम्बन्धवति । अभावविलयप्रसङ्गः । स्वाभावसत्त्वेन तदभावासत्त्वप्रसङ्गः । प्रतियोगिनिरूपिततादृशसम्बन्ध एवाभावाभाव इति यदुच्यते तदाह । भवतामिति । भवताम् । प्रतियोगिरूपाभावप्रतियोगितया व्यधिकरणसम्बन्धावच्छिन्नाभावस्य केवलान्वयित्वं खण्डयताम् । तदभावेति । व्यधिकरणसम्बन्धावच्छिन्नगुणाद्यभावाभावेत्यर्थः । विलोपप्रसङ्ग इति । प्रतियोगिनिरूपिततादृशसम्बन्धाप्रसिद्धेरिति भावः । तादृशगगनाद्यभावस्याभावाप्रतियोगित्वं स्वमते इष्टमेवेति भवतामित्युक्तम् ।

( चिं० ) उच्यते—वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्, आकाशात्यन्ताभावो यद्यपि प्रतियोगिरूपात्यन्ताभावप्रतियोगी तथाऽपि न स वृत्तिमान् इत्याकाशात्यन्ताभाव एव केवलान्वयी तथा प्रमेयत्वाभिधेयत्वादि केवलान्वयि वृत्तिमतोऽत्यन्ताभावस्याप्रतियोगित्वात् ।

( दी० ) लक्षणं परिष्करोति । वृत्तिमदित्यादि । आकाशस्य तदभावाभावत्वमित्यभ्युपगममात्रम्, भाववति तदभावासत्त्वप्रतीत्या हि भावस्य स्वाभावाभावत्वं कल्प्यते न चेह तथा, अभावप्रतियोगित्वं स्वरूपसम्बन्ध एवेत्युक्तमधस्तात् । अभावप्रतियोगित्वं

धाभयोजकम् । एवं च यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्वं यस्य तस्य तेन सम्बन्धेन केवलान्वयित्वमिति सूचयितुं वृत्तिमदिति । अत एव ज्ञानस्य ज्ञानत्वस्य च समवायेन ज्ञानाविषयत्वादेश्च व्यधिकरणसमवायादिना सम्बन्धेनाभावप्रतियोगित्वेऽपि विषयतया परम्परासम्बन्धेन स्वरूपसम्बन्धेन च केवलान्वयित्वम् । संयोगाद्यभावोपसङ्ग्रहाय च प्रतियोग्यसमानाधिकरणत्वेनाभावो विशेष्यः । आकाशाभावोऽपि च यथा प्रतियोग्यसमानाधिकरणस्तथोक्तमधस्तात् । वृत्तिमतस्तादृशाभावाप्रतियोगित्वमिति वाऽर्थः । व्याप्यवृत्तित्वार्थकं वृत्तिमत्पदमभावविशेषणमित्यपि कश्चित् । तादात्म्येनाभिधेयस्य केवलान्वयित्वसम्पत्तये व्याप्तिवादखिलमालोकनीयम् ।

( गा० ) पूर्वपक्षिणा लक्ष्याप्रसिद्ध्या लक्षणासम्भवस्योक्तत्वात् लक्ष्यप्रदर्शनमेवोचितं न तु लक्षणाभिधानं लक्षणस्य प्रागेवोक्तत्वादत आह । लक्षणमिति । गगनाभावादिसाध्यकानुमानानां लक्ष्यतानिर्वाहाय लक्षणे विशेषणांतरं प्रक्षिपतीत्यर्थः । आकाशादेः स्वाभावाभावत्वस्य निर्युक्तिकतया आकाशाभावादिसंग्रहायाभावे वृत्तिमत्त्वविशेषणदानमयुक्तमित्यालोच्य तत्र मूलकृतोऽनिर्भरमाह । आकाशस्येति । घटादेरिवाकाशस्यापि स्वाभावाभावत्वमविशेषात्स्यादित्याशङ्क्य तद्विशेषं दर्शयति । भाववतीति । भावो घटादिरूपः प्रतियोगी । तदभावासत्त्वप्रतीत्या । तदभावाभावत्वप्रतीत्या । इह । अवृत्तिस्थले । न तथा । न प्रतियोगिमत्यत्यन्ताभावाभावत्वप्रत्ययः सम्भवतीति शेषः । प्रतियोगिमत एवाप्रसिद्धेरिति भावः । अधिकरणविनिर्मोकेण च नञुल्लेखी प्रत्ययो न सम्भवति अभावान्तिपदोल्लेखी सम्भवन्नपि प्रकृतेऽसिद्ध इति नाधिकरणानुपरक्तगगनाभावाभावप्रत्ययबलाद्गगनस्य तथात्वमिति शंकावसरः ।

ननु गगनस्य स्वाभावाभावत्वानुपगमे तस्य स्वाभावप्रतियोगित्वानुपपत्तिरित्याशंकायामाह । अभावप्रतियोगित्वं च स्वरूपसम्बन्ध एव न तु काभावाभावत्वम् । अधस्तात् । व्याप्तिवादे ।

ननु प्रतियोगित्वमभावाभावत्वानात्मकमपि तद्व्याप्यतया तत्साधयेदेवेत्यत आह । अभावप्रतियोगित्वं चेति । आकाशादेः स्वाभावाभावत्वविरहेऽपि प्राचां केवलान्वयिलक्षणे वृत्तिमत्पदोपादानं सम्बन्धविशेषनिवेशसूचकतया सङ्गमयति । एवं चेति । सम्बन्धविशेषनिवेशप्रयोजनमाह । अत एवेति । ज्ञानस्य । सर्वगोचरज्ञानस्य । समवायेनेति । सम्बन्धेनाभावप्रतियोगित्वेऽपीत्यग्रिमेणान्वयः । अवच्छेदकत्वघटितलक्षणमनुसृत्याह । ज्ञानविषयत्वादेश्चेति । विषयतया ज्ञानस्य । परंपरासम्बन्धेन । स्वसमवायिविषयत्वरूपेण ज्ञानत्वस्य, स्वरूपसम्बन्धेन च ज्ञानविषयत्वादेः । केवलान्वयित्वम् । तेषां केवलान्वयिताघटकतत्तत्सम्बन्धावच्छिन्नाभावाप्रतियोगित्वादिति भावः । प्रतियोगितायां केवलान्वयिताघटकसम्बन्धावच्छिन्नत्वनिवेशनं च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यस्य निवेशाभिप्रायेण । तत्र प्रकृतसम्बन्धनिवेशने च प्रतियोगितायां सम्बन्धावच्छिन्नत्वं न निवेश्यम् ।

ननु प्रतियोग्यसामानाधिकरण्यं यदि स्वप्रतियोगिसमानाधिकरणो यस्तदन्यत्वं तदा संयोगादेरपि केवलान्वयित्वापत्तिः संयोगाभावस्य द्रव्ये प्रतियोगिसमानाधिकरणतया तदन्यत्वाभावात् । नापि तत्तदभावनिष्ठं यत्तत्तदभावप्रतियोगिसामानाधिकरण्यं तद्ध्वंसान्ताभाववत्त्वम्, तत्सामानाधिकरण्यस्याव्याप्यवृत्तित्वानुपगमे तद्दोषस्यैव दुर्वारत्वात् । किं तु स्वप्रतियोग्यनधिकरणवृत्तित्वमेव एवं च तद्विशेषणकस्याभावस्यैव स्वपदार्थतया गगनाद्यभावप्रतियोग्यधिकरणाप्रसिद्ध्या ॥ तदभावस्य तत्त्वमिति तथाविधाभावान्तराप्रतियोगित्वमादाय गगनादेः केवलान्वयित्वापत्तिरत आह । आकाशेति । अधस्तात् । व्याप्तिवादे । केवलान्वयितावच्छेदकसम्बन्धसामान्ये यदभावप्रतियोगिप्रतियोगिकत्वयोः किंचिदधिकरणानुयोगिकत्वोभयाभावस्तत्त्वम्, यत्किञ्चिदधिकरणवृत्तितानवच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपप्रतियोगिवैयधिकरण्यं वा विवक्षणीयं तच्चाकाशाभावादिसाधारणमिति भावः ।

मूलोक्तविशेषणस्याप्रतियोगिविशेषणतयैव गगनादिवारणे उभयाभावघटितप्रतियोगिवैयधिकरण्यप्रवेशो गौरवादयुक्त इत्याशयेनाह । वृत्तिमत इति । वृत्तिमत्त्वं प्रकृतसम्बन्धेन बोध्यं तेन संयो-

गादिना संयोगादेर्न केवलान्वयित्वम्। तादृशाभावेति। प्रतियोग्यनधिकरणवृत्त्यभावेत्यर्थः। यादृशप्रतियोगिताश्रयानधिकरणं किंचिद् वृत्तिमत्त्वे सति तच्छून्यत्वमिति फलितार्थः। अतो जगत एव किंचिद्देशकालादिवृत्तित्वविशिष्टतदभावात्मकप्रतियोगिमत्तया स्वरूपसम्बन्धस्य केवलान्वयिताघटकत्वस्थले प्रतियोगिवैयधिकरण्याप्रसिद्धिरिति दोषानवकाशः।

प्रकारांतरेण संयोगाद्यभावस्य केवलान्वयित्वमुपपादयत आकाशादिकं च वारयतो वृत्तिमत्पदमपि सार्थकं कुर्वतोऽन्यस्य मतमाह। व्याप्यवृत्तित्वार्थकमिति। अभावविशेषणम्। अभावविशेषणबोधकम्। व्याप्यवृत्तित्वं चेद यत्रावच्छिन्नवृत्तिकान्यत्व तदा संयोगाद्यभावस्यातथात्वात्संयोगादावतिप्रसंगः यद्यनवच्छिन्नवृत्तिकत्वं तदा कालिकसंबधावच्छिन्नप्रतियोगिताकघटत्वाद्यभावस्य तद्वृति कालेऽपि तदनधिकरणदेशावच्छेदेन वर्तमानतया केवलान्वयिनोऽसंग्रहप्रसंगः। तदभावस्य घटत्वादेः समवायेन व्याप्यवृत्तित्वात्। येन सम्बन्धेनाभाववत्ताज्ञानं यत्प्रतियोगिमत्ताज्ञानविरोधि तेन सम्बन्धेन व्याप्यवृत्त्यभावीयतत्प्रतियोग्यन्यत्वनिवेशे च गौरवमित्यस्वरसः।

ननु तादात्म्यसम्बन्धेन प्रतियोग्यधिकरणतायाः वृत्तिमत्त्वस्य चाप्रसिद्धया तेन सम्बन्धेनाभिधेयत्वाद्यवच्छिन्नस्य केवलान्वयित्वानुपपत्तिरत आह। तादात्म्येनेति। अभिधेयस्य अभिधेयत्वावच्छिन्नस्य। व्याप्तिवदिति। यथा व्याप्तिशरीरेऽधिकरणत्वादिस्थले सम्बन्धित्वमात्र निवेशितं तथाऽत्रापि तन्निवेशनीयमित्यर्थः।

(चि०) ननु प्रमेयत्वं प्रमाविषयत्वं तच्च न केवलान्वयि प्रमाया विषयत्वस्य चाननुगमादिति वाच्यम्। प्रमात्वमेव हि परम्परासम्बन्धाद्धटादौ प्रमेयत्वमनुगतं प्रमाजातीयविषयत्वं वा। तथापि केवलान्वयिनि संशयाभावात् कथमनुमितिः? प्रमेयत्वमत्र वर्तते न वेति संशयश्च न प्रमेयपक्षकः किं तु प्रमेयत्वपक्षको भिन्नविषयकः। प्रमेयत्वपक्षके चास्ति-

त्वसाध्यस्यान्वयव्यतिरेकित्वम् । तथा च घटः प्रमेयो न वेति संशयो मृग्यते स च नास्त्येव ।

( दी० ) प्रमाजातीयेति । तथा च तादृशाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमर्थः । इत्थं च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यमेवाभावविशेषणं तेन द्रव्यगुणभेदयोर्द्वित्वादिना न केवलान्वयित्वम् । न चैवं विरुद्धयोर्धर्मयोर्द्वित्वेन केवलान्वयित्वापत्तिः, तदवच्छिन्नाधिकरणाप्रसिद्ध्या तदवच्छिन्नाभावे प्रतियोग्यसामानाधिकरण्यस्यासम्भवादिति वाच्यम् । तादृशधर्मावच्छिन्नस्य यत्किञ्चिदधिकरणवृत्तिताया विवक्षितत्वात् क्वचिदपि तादृशोभयवत्त्वाप्रतीतेस्तस्यातथात्वात् । सन्दिग्धसाध्यवत्त्वं पक्षत्वमित्याशयेनाशङ्कते । तथाऽपीति । अस्तित्वसाध्यस्य । घटवृत्तित्वसाध्यस्य ।

( गा० ) ननु प्रमाजातीयविषयत्वरूपत्वेऽपि प्रमेयत्वस्य केवलान्वयितानुपपत्तिर्दुर्वारैव अनुगतधर्मस्याभावप्रतियोगितानवच्छेदकत्वेऽपि तदवच्छिन्नव्यक्तीनां विशेषरूपेणाभावप्रतियोगित्वापत्तेरतोऽनवच्छेदकत्वघटिततया लक्षणं परिष्कार्यमिति मूलाशयं प्रकाशयति । तथा चेति । अनवच्छेदकं यद्रूपं तेन रूपेण केवलान्वयीति विवक्षणीयं तेन घटादेर्न घटत्वादिना केवलान्वयित्वं किं तु मेयत्वादिनैवेति नियमोपपत्तिः । इत्थं च । अप्रतियोगित्वस्थाने प्रतियोगितानवच्छेदकत्वनिवेशने च । अप्रतियोगित्वघटितलक्षणे द्रव्यगुणभेदयोः प्रतियोगिव्यधिकरणद्रव्यभेदत्वाद्यवच्छिन्नाभावप्रतियोगित्वेन केवलान्वयित्वापत्तिविरहात् प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यपर्यन्तनिवेशवैयर्थ्यमित्युपष्टम्भसङ्गतिः।

द्वित्वादिना न केवलान्वयित्वमिति । उभयत्वाद्यवच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि तदवच्छिन्नासामानाधिकरण्येन लक्षणघटकत्वादिति भावः । अन्यतरत्वेन केवलान्वयित्वस्येष्टत्वाद्द्वित्वादिनेत्युक्तम् । आदिना धर्मान्तरसाधारणत्रित्वादिपरिग्रहः । इदमुपलक्षणम् । गगनाभावान्वेषटादिवृत्तित्वविशिष्टघे-

गादिना संयोगादेर्न केवलान्वयित्वम्। तादृशाभावेति। प्रतियोग्यनधिकरणवृत्त्यभावेत्यर्थः। यादृशप्रतियोगितावच्छेदकाश्रयानधिकरणं किञ्चिद् वृत्तिमत्त्वे सति तच्छून्यत्वमिति फलितार्थः। अतो जगत एव किञ्चिद्देशकालादिवृत्तित्वविशिष्टतदभावात्मकप्रतियोगिमत्त्वया स्वरूपसम्बन्धस्य केवलान्वयितावारकत्वस्थले प्रतियोगिवैयधिकरण्याप्रसिद्धिरिति दोषानवकाशः।

प्रकारान्तरेण संयोगाद्यभावस्य केवलान्वयित्वमुपपादयत आकाशादिकं च वारयतो वृत्तिमत्पदमपि सार्थकं कुर्वतोऽन्यस्य मतमाह। व्याप्यवृत्तित्वार्थकामिति। अभावविशेषणम्। अभावविशेषणबोधकम्। व्याप्यवृत्तित्वं चेद् यत्किञ्चिदवच्छिन्नवृत्तिकान्यत्वं तदा संयोगाद्यभावस्यातथात्वात्संयोगादावतिप्रसंगः यद्यनवच्छिन्नवृत्तिकत्वं तदा कालिकसंबन्धावच्छिन्नप्रतियोगिताकघटत्वाद्यभावस्य तद्वति कालेऽपि तदनधिकरणक्षेत्रावच्छेदेन वर्तमानतया केवलान्वयिनोऽसंग्रहप्रसंगः। तदभावस्य घटत्वादेः समवायेन व्याप्यवृत्तित्वात्। येन सम्बन्धेनाभाववत्ताज्ञानं यत्प्रतियोगिमत्ताज्ञानविरोधि तेन सम्बन्धेन व्याप्यवृत्त्यभावीयतत्प्रतियोग्यन्यत्वनिवेशो च गौरवमित्यस्वरसः।

ननु तादात्म्यसम्बन्धेन प्रतियोग्यधिकरणतायाः वृत्तिमत्त्वस्य चाप्रसिद्धया तेन सम्बन्धेनाभिधेयत्वावच्छिन्नस्य केवलान्वयित्वानुपपत्तिरत आह। तादात्म्येनेति। अभिधेयस्य अभिधेयत्वावच्छिन्नस्य। व्याप्तिवदिति। यथा व्याप्तिशरीरेऽधिकरणत्वादिस्थले सम्बन्धित्वमात्रं निवेशितं तथाऽत्रापि तन्निवेशनीयमित्यर्थः।

( दी० ) ननु प्रमेयत्वं प्रमाविषयत्वं तच्च न केवलान्वयि प्रमाया विषयत्वस्य चाननुगमादिति वाच्यम्। प्रमात्वमेव हि परम्परासम्बन्धाद्घटादौ प्रमेयत्वमनुगतं प्रमाजातीयविषयत्वं वा। तथापि केवलान्वयिनि संशयाभावात् कथमनुमितिः? प्रमेयत्वमत्र वर्त्तते न वेति संशयश्च न प्रमेयपक्षकः किं तु प्रमेयत्वपक्षको भिन्नविषयकः। प्रमेयत्वपक्षके चास्ति-

**त्वसाध्यस्यान्वयव्यतिरेकित्वम् । तथा च घटः प्रमेयो न वेति संशयो मृग्यते स च नास्त्येव ।**

( दी० ) प्रमाजातीयेति । तथा च तादृशाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमर्थः । इत्थं च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यमेवाभावविशेषणं तेन द्रव्यगुणभेदयोर्द्वित्वादिना न केवलान्वयित्वम् । न चैवं विरुद्धयोर्धर्मयोर्द्वित्वेन केवलान्वयित्वापत्तिः, तदवच्छिन्नाधिकरणाप्रसिद्धया तदवच्छिन्नाभावे प्रतियोग्यसामानाधिकरण्यस्यासम्भवादिति वाच्यम् । तादृशधर्मावच्छिन्नस्य यत्किञ्चिदधिकरणवृत्तिताया विवक्षितत्वात् क्वचिदपि तादृशोभयवत्त्वाप्रतीतेस्तस्यातथात्वात् । सन्दिग्धसाध्यवत्त्वं पक्षत्वमित्याशयेनाशङ्कते । तथाऽपीति । अस्तित्वसाध्यस्य । घटवृत्तित्वसाध्यस्य ।

( गा० ) ननु प्रमाजातीयविषयत्वरूपत्वेऽपि प्रमेयत्वस्य केवलान्वयितानुपपत्तिर्दुर्वारैव अनुगतधर्मस्याभावप्रतियोगितानवच्छेदकत्वेऽपि तदवच्छिन्नव्यक्तीनां विशेषरूपेणाभावप्रतियोगित्वापत्तेरतोऽनवच्छेदकत्वघटिततया लक्षणं परिष्कार्यमिति मूलाशयं प्रकाशयति । तथा चेति । अनवच्छेदकं यद्रूपं तेन रूपेण केवलान्वयीति विवक्षणीयं तेन घटादेर्न घटत्वादिना केवलान्वयित्वं किं तु मेयत्वादिनैवेति नियमोपपत्तिः । इत्थं च । अप्रतियोगित्वस्थाने प्रतियोगितानवच्छेदकत्वनिवेशने च । अप्रतियोगित्वघटितलक्षणे द्रव्यगुणभेदयोः प्रतियोगिव्यधिकरणद्रव्यभेदत्वावच्छिन्नाभावप्रतियोगित्वेन केवलान्वयित्वापत्तिविरहात् प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यपर्यन्तनिवेशवैयर्थ्यमित्युपप्रमसङ्गतिः।

द्वित्वादिना न केवलान्वयित्वमिति । उभयत्वाद्यवच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि तदवच्छिन्नासामानाधिकरण्येन लक्षणघटकत्वादिति भावः । अन्यतरत्वेन केवलान्वयित्वस्येष्टत्वाद्द्वित्वादिनेत्युक्तम् । आदिना धर्मान्तरसाधारणत्रित्वादिपरिग्रहः । इदमुपलक्षणम् । गगनाभावादेर्घटाद्यवृत्तित्वविशिष्टत्वे-

न न केवलान्वयित्वमित्यपि द्रष्टव्यम् ।

तादृशधर्मावच्छिन्नस्य । प्रतियोगितानवच्छेदकधर्मावच्छिन्नस्य । अधिकरणवृत्तितायाः । अधिकरणसम्बन्धितायाः । विवक्षितत्वादिति । तथा च तादृशाभावप्रतियोगितानवच्छेदक यत्किंचिदधिकरणनिष्ठकेवलान्वयिताघटकसम्बन्धप्रतियोगितावच्छेदकं तद्रूपवत्वं तेन रूपेण केवलान्वयित्वमिति लक्षणं करणीयमिति भावः । तादृशोभयेति । विरुद्धोभयेत्यर्थः । तस्यासत्वात् । विरुद्धयोरुभयत्वस्य सम्बन्धप्रतियोगितानवच्छेदकत्वात् । सिद्ध्यभावरूपपक्षतामते साध्यसंदेहस्यानपेक्षणात् तथापीत्याक्षेपासंगतेराह । संदिग्धेति । मूले-न प्रमेयपक्षकः । न प्रमेयधर्मिकः । तर्हि किंधर्मिक इत्याशंकायामाह । किंत्विति । भिन्नविषयकः । प्रकृतानुमितिविलक्षणविषयताकात् । तथा- च विलक्षणविषयताशालिसाध्यसंदेहस्यैवानुमितिहेतुतया सोऽनुपयुक्त इत्यभिमानः । प्रमेयत्वसाध्यकानुमानासम्भवेऽपि प्रमेयत्वपक्षकास्तित्वसाध्यकानुमानमेव केवलान्वय्यनुमानं निष्प्रत्यूहमेवेति शंकां निरस्यति । प्रमेयत्वपक्षकेति । अस्तित्वस्य पदार्थसाधर्म्यरूपस्य केवलान्वयितया तत्साध्यकानुमानस्यान्वयव्यतिरेकित्वाभिधानं न घटत इत्यत आह दीधितौ वस्तित्वेति । घटास्तित्वम् । घटवृत्तित्वम् । केवलान्वयिनोऽस्तित्वस्य यत्र साध्यता तत्र सद्व्यभिचारानुपपत्त्याऽनुमित्यनिर्वाहतादवस्थ्यादिति भावः ।

( दी० ) अथ पक्षः साध्यवान्न वा पक्षे साध्यमस्ति न वेति संशयौ समानविषयकावेव तदस्यास्त्यस्मिन्निति मतुपो विधानादिति चेन्न । विशेषणविशेष्यभावभेदेनार्थभेदात् । मैवम् । य एव हि संशयः पक्षे साध्यसिद्धिविरोधी स एवानुमानाङ्गमावश्यकत्वात् लाघवाच्च, न तु समानविषयकत्वमपि तत्र तन्त्रं गौरवात् । प्रमेयत्वं घटनिष्ठाभावप्रतियोगि न वेति संशयश्च घटः प्रमेय इति साध्यसिद्धिविरोधी भवत्येव । यथा संशययोग्यतैवानुमानाङ्गं सं-

शयस्य तदानीं विनाशात् । न च साऽपि साधकबाधकप्रमाणाभावः, प्रमेयत्वाभावासिद्धौ तत्प्रमाणासिद्धेस्तदभावासिद्धिरिति वाच्यम् । पक्षनिष्ठात्यन्ताभावाप्रतियोगित्वज्ञानस्यैव साध्यसाधकत्वेन तदभावस्यैव योग्यतात्वात् । प्रमेयत्वमत्यन्ताभावप्रतियोगीति भ्राम्यतः संशय इत्यन्ये । नन्वेकरूपविकलमिदं कथं गमकं तत्त्वे वा व्यतिरेकविकलवद्रूपान्तराविकलमपि गमकं स्यादिति चेन्न । अन्वयव्यतिरेकव्याप्त्योरन्यतरनिश्चयेनानुमित्यनुभवात् । युगपदुभयव्याप्त्युपस्थितौ विनिगमनाभावेनोभयोरपि प्रयोजकत्वे व्यतिरेकोपासना । व्यतिरेकश्च विपक्षवृत्तित्वशङ्कानिवृत्तिद्वारा व्यतिरेकव्याप्तावुपयुज्यते, अत्र तु विपक्षाभावेन शङ्कैव नोदेति ।

इति केवलान्वयिचिन्तामणिः ।

( दि० )साध्यसिद्धिविरोधी । साध्यसिद्धिनिवर्त्यः । विशेषणविशेष्यभावभेदेऽपि विरोधिविषयतामात्रेण प्रतिबन्धकत्वमनुभवबलादास्थीयते, न हीदं साध्यवदत्र वा साध्यमित्येकतरनिश्चयेऽत्र साध्यं न वेदं साध्यवन्न वेति अन्यतरः सन्देह इति । पक्षनिष्ठेत्यादि । पक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधिज्ञानस्य साध्यसाधकत्वेन । कथंचित् साध्यसिद्ध्यनुगुणत्वेन पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावस्य वा साध्यस्य साधकत्वेन । तदभावस्य । तस्य साध्ये पक्षनिष्ठाभावप्रतियोगित्वज्ञानस्य साध्ये पक्षनिष्ठाभावप्रतियोगित्वावगाहिज्ञानत्वेन साध्यविशिष्टपक्षज्ञानविरोधित्वेन वा रूपेणाभावस्य योग्यतात्वात् । व्यतिरेकः । वि-

पक्षे हेतोरभावः । व्यतिरेकव्याप्तौ । साध्याभावहेत्वभावयोर्यौ व्यतिरेकौ साध्यहेतू तयोर्व्याप्तौ ।

(गा०) विषयावैलक्षण्ये विषयत्वावैलक्षण्यमित्याशयेनाशंकते । मूलेऽथेति । समानविषयकत्वेवेति । तथा चैकस्यानुमित्यविलक्षणविषयताकत्वेऽन्यस्यापि तथात्वमावश्यकमिति प्रमेयत्वधर्मिकसंशयादपि तत्साध्यकानुमितिर्निष्प्रत्यूहैवेति भावः । अर्थभेदात् । विषयतावैलक्षण्यात् । ग्राह्यसंदेहस्याप्रतिबंधकतया विरोधिपदं प्रतिबध्यपरतया व्याचष्टे दीधितौ । साध्यसिद्धीति । साध्यं पक्षनिष्ठाभावप्रतियोगि न वेत्यसमानविशेष्यकः संशयः कथं साध्यवत्तानिश्चयप्रतिबध्य इति शङ्कायामाह । विशेष्येति । विरोधिविषयतामात्रेणेति । ग्राह्यविरोधिधर्मे प्रकृतधर्मिसम्बन्धविषयतामात्रपुरस्कारेणानुभवं द्रढयति । न हीति । तदभावस्येत्यत्र तत्पदेन पक्षनिष्ठाभावप्रतियोगित्वज्ञानस्य परामर्शार्थमप्रतियोगित्वज्ञानान्तं प्रतियोगित्वज्ञानान्तर्भावेण व्याचष्टे । पक्षेति । तज्ज्ञानप्रतिबन्धकत्वरूपं तद्विरोधित्वमेवात्रप्रतियोगित्वमित्यत्र नञर्थ इति भावः । अथ वा प्रतियोगित्वपदमेव प्रतियोगित्वज्ञानपरं प्रतिबन्धकत्वमेव नञर्थ इत्याशयः । अतस्तत्पदस्य नञर्थविरोधिप्रविष्टज्ञानपरामर्शकत्वासम्भवेऽपि न दोषः ।

अबाधितत्वज्ञानस्यानुमित्यहेतुतया साधकपदस्य सिद्धिकारणपरता न सम्भवतीत्यतस्तद्व्याचष्टे । साध्येति । कथंचित् । तादृशविरोधिनिश्चयाभावसंपादनेन । साधकपदस्य सिद्धिकारणपरत्वमुपपादयितुमन्यथा व्याचष्टे । पक्षनिष्ठेत्यादि । तत्पदस्य विशेष्यीभूताभावपरतया कर्मधारयोपगमेऽभावपदवैयर्थ्यमतः षष्ठीतत्पुरुषाभिप्रायेण व्याचष्टे । तदभावस्येति ।

केचित्तु तस्येत्यग्रिमेऽभावस्येत्यत्र सामानाधिकरण्येनान्वयि । तथा च स्वकल्पाभिप्रायेण कर्मधारय एवावलम्बनीयस्तच्छब्दस्य विशेषणपरामर्शकताया अपि बहुशो दर्शनात्तच्छङ्कानिरासायाभावपदमित्याहुः ।

अभावप्रतियोगित्वप्रकारकज्ञानत्वेन तज्ज्ञानाभावस्य पक्षताघटकत्वे साध्याभाववान्पक्ष इति निश्चयदशायां पक्षताव्यवहारप्रसङ्ग

इत्यतस्तत्साधारणप्रतियोगितावच्छेदकं दर्शयति । साध्येति । साध्यविषयतानिरूपितताहशप्रतियोगित्वविषयताशालिनिश्चयत्वेनेत्यर्थः ।

प्रतियोगित्वानुयोगित्वयोस्तुल्यवित्तिवेद्यत्वानुपगमे साध्याभाववान्पक्ष इति ज्ञानस्य न साध्यांशे प्रतियोगितावगाहित्वं किं त्वभावांश एव तदनुयोगितावगाहित्वमतो नोक्तरूपेण तत्सङ्ग्रहः । एवं साध्यांशे कालिकादिसम्बन्धेन प्रतियोगित्वप्रकारकधीवारणाय साध्यांशे प्रतियोगित्वप्रकारकधियः सम्बन्धविशेषावगाहित्वेनैव निवेशनीयतया प्रतियोगितासंसर्गकबुद्धौ च तदीयससर्गाभानादपि न तयोरुक्तरूपेणानुगमसम्भवः । एवमभावसाध्यके प्रतियोगिमत्त्वावगाहिबाधबुद्धेरसङ्ग्रहश्चेत्यतः प्रकृतपक्षधर्मिकप्रकृतसाध्यविशिष्टबुद्धिप्रतिबन्धकत्वेन तदुभयमनुगमयति । साध्यविशिष्टेति । तत्प्रतिबन्धकतावच्छेदकं चागत्याऽननुगतमेव वाच्यमिति ध्येयम् ।

सपक्षसत्त्वादिरूपगमकतौपयिकगणने व्यतिरेकपदेन विपक्षासत्त्वस्यागणनाद्व्यतिरेकाधिकत्वादित्यत्र व्यतिरेकोपासनेत्यत्र व्यतिरेकश्चेत्यत्र च व्यतिरेकपदस्य तद्रूपार्थकतां स्फुटयति । व्यतिरेक इति । व्यतिरेकव्याप्तेरनुमितिप्रयोजकतां व्यवस्थाप्य व्यतिरेकस्य सहचारविधया तादृशव्याप्तिग्राहकत्वेनानुमित्युपयोगित्वं व्यतिरेकोपासनेत्यतेनाभिहितमतः पुनर्विपक्षवृत्तित्वशंकानिरासमात्रद्वारा व्यतिरेकव्याप्तिग्रहोपयोगिताभिधानं विरुध्यते व्यतिरेकव्याप्तेर्विशिष्योपादानेनैवान्वयव्याप्तिग्रहे तदनपेक्षालाभात् केवलान्वयिन्युक्तशंकानुदयेन तदनपेक्षाभिधानमप्यसंगतमतो व्यतिरेकव्याप्तावेति मूलस्यान्वयव्याप्त्यर्थकतामाह । व्यतिरेकेति ।

( दी० ) अत्र वदन्ति—साध्याभाववदवृत्तित्वमेव व्याप्तिर्लाघवात् प्रायशः साधनभेदेऽप्यभेदाच्च । यत्सम्बन्धावच्छिन्नसाध्याभाववति हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन साध्यसिद्धिः फलम् । साध्याभाववति येन सम्बन्धेन हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन पक्षधर्मताधीः कारणमिति नातिप्रसङ्गः । आकाशादेस्तथात्वेऽपि पक्षधर्मताज्ञानविरहान्नानुमितिः । निविशतां वा तत्र सा-

ध्यसामानाधिकरण्यं वृत्तिमत्त्वं वा । अथ साध्याभाववदवृत्तित्वं तद्वृत्तिभिन्नत्वादिरूपं व्यभिचारज्ञानविरोधिज्ञानविषयत्वेनानुगमनीयं तच्च व्यापकसामानाधिकरण्यमसाधारणमिति चेत् ? स्यादेवं यदि व्यापकताज्ञानं व्यभिचारबुद्धिं विरुन्ध्यात् । न चैवम्, वह्न्यभाववद्वृत्तिर्धूम इति ज्ञाने हि वह्नित्वं स्वरूपेण प्रतियोगित्वं तदवच्छेदकत्वं च सम्बन्धमर्यादया भासते । धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यत्र च वह्नित्वत्वेन वह्नित्वे प्रतियोगितात्वविशिष्टतदवच्छेदकत्वत्वविशिष्टाभाव इति विषयविरोधविरहात् । विशिष्टस्य वह्नित्वस्यावच्छेदकत्वेन प्रकारान्तरानुसरणे च सुतराम् । मणिमन्त्रादिन्यायेन च प्रतिबन्धकतायां मानाभावात् ।

(गा०)केवलान्वय्यनुमान स्वातन्त्र्येण खण्डयितुमुपक्रमते । अत्र चदंवीति । व्याप्तिः । अनुमित्यौपयिकीत्यर्थः । एवकारेण केवलान्वयिसाध्यकसाधारणव्यापकसामानाधिकरण्यस्यानुमित्यौपयिकत्वव्यवच्छेदः । लाघवादिति । व्यापकसामानाधिकरण्यापेक्षया लघुशरीरत्वादित्यर्थः । व्यापकतागर्भव्याप्तौ वह्नित्वादिरूपसाध्यतावच्छेदकविशेषणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावस्य हेतुविशेषणसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववदवृत्तित्वाभावतुल्यशरीरत्वेऽपि अनवच्छेदकत्वधर्मितावच्छेदकवह्नित्वत्वादेः साध्यसामानाधिकरण्यस्य चाधिकस्य निवेशेन गौरवं बोध्यम् । एवं च तादृशव्याप्तिविशिष्टहेतुमत्ताज्ञानहेतुतामतेऽधिकविषयविषयताकां द्विधा हेतुविषयतायाश्च निवेशात्कारणतावच्छेदकगौरवाच्च विनिगमनाविरहेणोभयव्याप्त्योरनुमितिप्रयोजकत्वेति भावः

एतन्मतेऽवच्छेदकलाघवमुक्त्वा कल्पनालाघवमाह । प्रायश इति । साधनभेदेऽपीति । साधनतावच्छेदकभेदादिनि भाव. । तथा च धूमत्वालोकत्वाद्यवच्छिन्नलिंगकबहुविधपरामर्शानां वह्न्यभाववदवृत्तित्वावच्छिन्नप्रकारकपक्षनिश्चयत्वेन एकमेव हेतुत्वं कल्प्यते व्यापकसामानाधिकरण्यरूपव्याप्तौ हेतुतावच्छेदकविशेषघटिततया तद्-

वच्छिन्नप्रकारकज्ञानहेतुतायाश्च हेतुतावच्छेदकधूमत्वादिभेदेन भेद इति गौरवम् ।

न च व्यापकताया हेतुतावच्छेदकधूमत्वाद्यवच्छिन्नघटितत्वेऽपि व्यापकताघटकपदार्थानां विषयताकूटे निवेश्यमाने हेतुतावच्छेदकावच्छिन्नविषयतायाः सामान्यतः किंचिद्धर्मावच्छिन्नविषयतात्वेनैव कारणतावच्छेदककोटौ निवेशनीयतया व्यापकताज्ञानहेतुतामतेऽपि न धूमत्वालोकत्वादिभेदेन तद्भेद इति वाच्यम् । धूमव्यापकवह्निसमानाधिकरणद्रव्यवानित्यादिज्ञानवारणाय तद्धर्मावच्छिन्नव्यापकसामानाधिकरण्येन तद्धर्मेण चावच्छिन्ना या प्रकारता तद्वत्त्वेन हेतुतायाः कल्प्यतया ऽनुगमासम्भवात् ।

स्वावच्छिन्नव्यापकसाध्यसामानाधिकरण्यावच्छिन्नत्वस्वावच्छिन्नत्वोभयसम्बन्धेन सामान्यतो धर्मविशिष्टत्वेन निविष्टपरामर्शप्रकारतानामनुगमः संभवतीति तु न सम्यक् । तादृशपरंपरायाः सम्बन्धत्वे मानाभावात् जातिविशेषत्वादिना धूमत्वावगाहिनो जातिविशेषवद्व्यापकवह्निसमानाधिकरणधूमवानित्यादिज्ञानादनुमित्यापत्तिश्चेति भावः ।

वह्न्यभाववति धूमादेः समवायादिना वृत्तेः साध्याभाववदवृत्तित्वरूपव्याप्तावपि हेतुतावच्छेदकीभूतसंयोगादिना ऽवृत्तित्वस्य प्रवेशनीयतया एकसम्बन्धेन साध्याभाववदवृत्तित्वमपरसम्बन्धेन पक्षधर्मत्वमवगाहमानज्ञानादनुमित्यापत्तेर्वारणाय विशिष्य सम्बन्धौ निवेश्य एकसम्बन्धघटितव्याप्तिपक्षधर्मताविषयकज्ञानस्य हेतुतायाः कल्पनीयतया विभिन्नसम्बन्धेन व्याप्येषु धूमरूपविशेषादिषु व्याप्तेर्भेदस्तद्विषयकपरामर्शकारणताभेदश्चावश्यक इति प्रायश इत्युक्तम् ।

अथ हेतुतावच्छेदकमनिवेश्यं व्याप्तिप्रकारकज्ञानत्वेन हेतुत्वे व्यभिचारज्ञानकालेऽपि निर्धर्मितावच्छेदकव्याप्तिज्ञानोत्पत्त्याऽनुमित्युत्पत्तेरावश्यकतया व्यभिचारस्य हेतुदोषतानुपपत्तिरिति चेन्न । किंचिद्धर्मावच्छिन्नहेतुप्रकारक (१)निश्चयत्वेन हेतुत्वात् । वस्तुतः पक्षवृत्तित्वेन निश्चीयमानधूमत्वाद्यवच्छेदेनाव्यभिचारनिश्चयं विना

---

(१) किञ्चिद्धर्मावच्छिन्नधर्मिताक-इति पु० पा० ।

ध्यसामानाधिकरण्यं वृत्तिमत्त्वं वा । अथ साध्याभाववद्वृत्तित्वं तद्वृत्तिभिन्नत्वादिरूपं व्यभिचारज्ञानविरोधिज्ञानविषयत्वेनानुगमनीयं तच्च व्यापकसामानाधिकरण्यसाधारणमिति चेत् ? स्यादेवं यदि व्यापकताज्ञानं व्यभिचारबुद्धिं विरुन्ध्यात् । न चैवम्, वह्न्यभाववद्वृत्तिर्धूम इति ज्ञाने हि वह्नित्वं स्वरूपेण प्रतियोगित्वं तदवच्छेदकत्वं च सम्बन्धमर्यादया भासते । धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यत्र च वह्नित्वत्वेन वह्नित्वे प्रतियोगितात्वविशिष्टतदवच्छेदकत्वत्वविशिष्टाभाव इति विषयविरोधविरहात् । विशिष्टस्य वह्नित्वस्यावच्छेदकत्वेन प्रकारान्तरानुसरणे च सुतराम् । मणिमन्त्रादिन्यायेन च प्रतिबन्धकतायां मानाभावात् ।

(गा०)केवलान्वय्यनुमानं स्वातन्त्र्येण खंडयितुमुपक्रमते। अत्र वदन्तीति । व्याप्तिः । अनुमित्यौपयिकीत्यर्थः । एवकारेण केवलान्वयिसाध्यकसाधारणव्यापकसामानाधिकरण्यस्यानुमित्यौपयिकत्वव्यवच्छेदः । लाघवादिति । व्यापकसामानाधिकरण्यापेक्षया लघुशरीरत्वादित्यर्थः । व्यापकतागर्भव्याप्तौ वह्नित्वादिरूपसाध्यतावच्छेदकविशेषणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावस्य हेतुविशेषणसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वाभावतुल्यशरीरत्वेऽपि अनवच्छेदकत्वधर्मितावच्छेदकवह्नित्वत्वादेः साध्यसामानाधिकरण्यस्य चाधिकस्य निवेशेन गौरवं बोध्यम् । एवं च तादृशव्याप्तिविशिष्टहेतुमत्ताज्ञानहेतुतामतेऽधिकविषयविषयतानां द्विधा हेतुविषयतायाश्च निवेशात्कारणतावच्छेदकगौरवान्न विनिगमनाविरहेणोभयव्याप्त्योरनुमितिप्रयोजकतेति भावः

एतन्मतेऽवच्छेदकलाघवमुक्त्वा कल्पनालाघवमाह । प्रायश इति। साधनभेदेऽपीति। साधनतावच्छेदकभेदादिति भावः। तथा च धूमत्वालोकत्वाद्यवच्छिन्नलिंगकवह्निविधपरामर्शानां वह्न्यभाववद्वृत्तित्वावच्छिन्नप्रकारकपक्षनिश्चयत्वेन एकमेव हेतुत्वं कल्प्यते व्यापकसामानाधिकरण्यरूपव्याप्तेर्हेतुतावच्छेदकविशेषघटिततया तद्-

वच्छिन्नप्रकारकज्ञानहेतुतायाश्च हेतुतावच्छेदकधूमत्वादिभेदेन भेद इति गौरवम् ।

न च व्यापकताया हेतुतावच्छेदकधूमत्वाद्यवच्छिन्नघटितत्वेऽपि व्यापकताघटकपदार्थानां विषयताकूटे निवेश्यमाने हेतुतावच्छेदकावच्छिन्नविषयतायाः सामान्यतः किंचिद्धर्मावच्छिन्नविषयतात्वेनैव कारणतावच्छेदककोटौ निवेशनीयतया व्यापकताज्ञानहेतुतामतेऽपि न धूमत्वालोकत्वादिभेदेन तद्भेद इति वाच्यम् । धूमव्यापकवह्निसमानाधिकरणद्रव्यवानित्यादिज्ञानवारणाय तद्धर्मावच्छिन्नव्यापकसामानाधिकरण्येन तद्धर्मेण चावच्छिन्ना या प्रकारता तद्वत्त्वेन हेतुतायाः कल्प्यतया ऽनुगमासम्भवात् ।

स्वावच्छिन्नव्यापकसाध्यसामानाधिकरण्यावच्छिन्नत्वस्वावच्छिन्नत्वोभयसम्बन्धेन सामान्यतो धर्मविशिष्टत्वेन निविष्टपरामर्शप्रकारतानामनुगमः संभवतीति तु न सम्यक् । तादृशपरंपरायाः सम्बन्धत्वे मानाभावात् जातिविशेषपत्वादिना धूमत्वावगाहिनो जातिविशेषवद्व्यापकवह्निसमानाधिकरणधूमवानित्यादिज्ञानादनुमित्यापत्तिश्चेति भावः ।

वह्न्यभाववति धूमादेः समवायादिना वृत्तेः साध्याभाववदवृत्तित्वरूपव्याप्तावपि हेतुतावच्छेदकीभूतसंयोगादिना ऽवृत्तित्वस्य प्रवेशनीयतया एकसम्बन्धेन साध्याभाववदवृत्तित्वमपरसम्बन्धेन पक्षधर्मत्वमवगाहमानज्ञानादनुमित्यापत्तेर्वारणाय विशिष्य सम्बन्धौ निवेश्य एकसम्बन्धघटितव्याप्तिपक्षधर्मताविषयकज्ञानस्य हेतुतायाः कल्पनीयतया विभिन्नसम्बन्धेन व्याप्येषु धूमरूपविशेषादिषु व्याप्तेर्भेदस्तद्विषयकपरामर्शकारणताभेदश्चावश्यक इति प्रायश इत्युक्तम् ।

अथ हेतुतावच्छेदकमनिवेश्य व्याप्तिप्रकारकज्ञानत्वेन हेतुत्वे व्यभिचारज्ञानकालेऽपि निर्धर्मितावच्छेदकव्याप्तिज्ञानोत्पत्तयाऽनुमित्युत्पत्तेरावश्यकतया व्यभिचारस्य हेतुदोषतानुपपत्तिरिति चेन्न । किंचिद्धर्मावच्छिन्नहेतुप्रकारक (१)निश्चयत्वेन हेतुत्वात् । वस्तुतः पक्षवृत्तित्वेन निश्चीयमानधूमत्वाद्यवच्छेदेनाव्याप्तिप्रत्यनिश्चयं विना

(१) किंचिद्धर्मावच्छिन्नधर्मिताक—इति पु० पा०।

पक्षवृत्तित्वावच्छेदेन व्यभिचारसंशयस्यानिवृत्तेः पक्षेऽप्यव्यभिचारिसामान्याभावकोटिकसंशयस्यौचित्यावर्जितस्य सम्भवेनाव्यभिचारांशे निर्धर्मितावच्छेदककस्यापि पक्षेऽव्यभिचारिनिश्चयस्यासम्भवेन धूमत्वादिविशिष्टे व्यभिचारग्रहस्यानुमित्युत्पत्तिविरोधित्वात्

अथ धूमालोकादिपरामर्शानामेकरूपेण हेतुत्वे धूमलिंगकेच्छाविरहविशिष्टसिद्ध्यभावरूपपक्षता धूमलिंगकपरामर्शस्यैव सहकारिणी नालोकलिंगकपरामर्शस्येति नियमानुपपत्तिः । तथा च सिद्धिकाले धूमलिंगकानुमितीच्छासत्त्वे धूमपरामर्शसत्त्वे च यद्यत्कारणतावच्छेदकावच्छिन्नस्तोमात्मिका सामग्री फलं जनयति तस्या इदानीमसति धूमपरामर्शे सति चालोकपरामर्शेऽप्यावश्यकतया ऽनुमितेर्दुर्वारत्वादिति चेन्न । एतन्मते हि पक्षता लिंगविशेषनियन्त्रिता नोपेयते अपि तु तत्तल्लिंगकपरामर्शविशिष्टतत्तल्लिंगकानुमितीच्छाविरहकूटविशिष्टसिद्ध्यभावरूपा एकैव पक्षता नानालिंगकपरामर्शसहकारिणी तत्र च नातिप्रसङ्गशंकापि । न चैवमेकत्रानंतानां परामर्शविशिष्टेच्छाभावानां निवेशे तेषां मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण बहुतरकारणताधिक्यप्रसङ्ग इति वाच्यम् । सिद्धिकाले विनाऽपि धूमलिंगकेच्छामालोकलिंगकेच्छाबलाद् धूमालोकोभयलिंगकसमूहालंबनपरामर्शाद् धूमलिंगकानुमित्युत्पत्त्या व्यभिचारेण तत्तल्लिंगकानुमितौ तत्तल्लिंगकानुमितीच्छाविरहविशिष्टसिद्ध्यभावत्वेन हेतुत्वासम्भवादुक्तरीतेः सर्वैरेवादरणीयत्वात् ।

तत्तल्लिङ्गकपरामर्शविशिष्टतत्तल्लिङ्गकानुमितीच्छानां , स्वीयव्याप्तिपक्षधर्मत्वविषयतानिरूपितविषयतावच्छेदकधर्मावच्छिन्नलिङ्गकत्वप्रकारकत्वसम्बन्धेन परामर्शविशिष्टानुमितीच्छात्वेनानुगमय्यैक एवाभावः सिद्धौ विशेषणतया निवेश्य इत्यप्याहुः ।

वस्तुतस्तु यत्पक्षकयत्साध्यकस्थले सिद्धिकाले कदाऽप्यनुमितिर्न जाता तत्रेच्छाविरहाविशेषितसिद्ध्यभावस्यैव पक्षतात्वम् । यत्र वा सिद्धिकाले एकलिङ्गकपरामर्शमात्रसत्त्वेऽन्यलिङ्गकानुमित्सासाधारणरूपेणैवेच्छा जाता तत्र तत्त्वेनैवेच्छाया उत्तेजकत्वसम्भवाल्लिङ्गभेदेन न पक्षताभेद इति तत्रैव परामर्शस्य साधनभेदेन कारणताभेद इत्यभिप्रायेण भाष्य इत्याद्यभिहितम् । अत एव लिङ्गविशेषेणा-

पीत्यादिपूर्वग्रन्थाविरोधः । (१)

ननु धूमालोकादिपरामर्शानामेकरूपेण हेतुत्वे तदवच्छेदकनिश्चयत्वशरीरे धूमत्वालोकत्वाद्यवच्छिन्नकोटिकसकलसंशयानामनुगतेनाननुगतेनैव वा भेदस्य एकत्र निवेशनीयतया वह्निव्याप्यधूमवानयं वह्निव्याप्यालोकवांश्च वेत्यांशिकसंशयादनुमित्यनुदयापत्तिः । न च संशयत्वघटकव्याप्यविषयताभिन्नत्वमनुमितिजनकतावच्छेदकव्याप्यविषयतायां निवेशनीयमित्युक्तज्ञानीयधूमादिविषयतायाः संशयत्वाघटकतया तत्संग्रह इति वाच्यम् । प्रत्येककोटिनिश्चयीयविषयतातिरिक्तविषयतायाः संशयेऽप्रामाणिकतया निश्चयीयव्याप्तिविषयताया एव विपरीतकोटिविषयतासहितायाः संशयत्वघटकत्वात् । स्वनिष्ठसंशयत्वघटकीभूतविषयतान्यव्याप्यविषयताशून्यं यद्यत्तदन्यव्याप्यवत्त्वज्ञानत्वेन हेतुत्वोपगमे तत्तत्संशयव्यक्तीनां प्रातिस्विकरूपेण भेदकूटपर्यवसानात्तावतां भेदानां विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताया बाहुल्यप्रसङ्गादिति चेन्न । व्याप्यत्वावच्छिन्नाभावकोटिकसंशयभेद एव निवेशनीयो न तु धूमत्वालोकत्वाद्यवच्छिन्नाभावकोटिकसंशयानां तत्तद्रूपेण भेदकूटं धूमत्वाद्यवच्छिन्नाभावकोटिकव्याप्यान्तरनिश्चयानात्मकव्याप्यवत्तासंशये उपस्थितव्याप्यत्वावच्छिन्नाभावविषयकत्वमपि कल्प्यते तादृशाभावभानविरोधिनो व्याप्यवत्तानिश्चयस्य व्याप्यव्याप्यवत्तानिश्चयस्य वा प्राक् सत्त्वे तदुत्तरं जायमानो धूमत्वाद्यवच्छिन्नाभावकोटिकोऽपि संशयो व्याप्यत्वपर्याप्तप्रकारतावच्छेदकताकनिश्चयरूप एवेति तादृशनिश्चयसामग्र्याः सत्त्वाक्षतत्वादिति ततो जायत एवानुमितिरिति न कश्चिद्दोष इति ।

केचित्तु विरोधानुपस्थितिकालीनभावाभावसंशयस्य, तदुभयसमुच्चयवैलक्षण्यनिर्वाहो न विरोधिविषयकतया सम्भवति अनुपस्थितविरोधस्य प्रकारत्वासम्भवात् तत्संसर्गतायाश्चाप्रामाणिकत्वात् । एतदनुरोधेन तदुपगमे संशये कोटिविषयताया एव विलक्षणाया उपगन्तुमुचितत्वात् । तथा च संशयत्वघटकाविलक्षणकोटिविषयताभिन्नत्वमेवानुमितिजनकतावच्छेदकव्याप्यविषयतायां

(१) वस्तुतस्त्वित्यादिः पाठः पुस्तकान्तरे न दृश्यते ।

निवेशनीयम्। वैलक्षण्यं च तस्याः पदार्थान्तरत्वं फलसान्तर्गतं वेत्यन्यदेतत्। न च विरोधानुपस्थितिदशायां न भावाभावयोः संशयोऽपि तु तदुभयसमुच्चय एवेति विरोधस्य निखिलसंशये प्रकारतयैव भानमिति वाच्यम्। भावाभावयोरविरोधज्ञानमन्तरेण तदुभयसमुच्चयस्यानुभवविरुद्धत्वात्। न च तदानीं संशयसमुच्चयौ द्वावेव नाभ्युपगन्तव्याविति वाच्यम्। प्रत्येकं स्वकार्यजनने बाधकाभावात् तुल्यबलसामग्र्योः परस्परफलाप्रतिबन्धकत्वात्। अन्यथा संशयोच्छेदात् इत्याहुः।

अन्ये तु संशये भावाभावोभयप्रकारतानिरूपिता एका विशेष्यता समुच्चये तु प्रकारताभेदेन तद्भेद इत्युभयोर्वैलक्षण्यमेवं चाभावत्वावच्छिन्नप्रकारतानिरूपितव्याप्यप्रकारतानिरूपितविशेष्यताकत्वमेव सर्वसाधारणव्याप्यवत्तानिश्चयत्वम्। भावद्वयकोटिकः संशयो न प्रामाणिकः धूमवान् जलत्ववान्वा ऽयमित्यत्राभावद्वयस्यापि भानोपगमात् अभावभासकसामग्र्यसत्त्व विरोधाग्रहे समुच्चयस्यैवोपगमात्। विरोधग्रहदशायां तस्यैव विरोधिप्रकारकनिश्चयसामग्रीसहितस्य तत्प्रकारकालौकिकविषयताशालिज्ञानप्रतिबन्धकतयोभयप्रकारकज्ञानस्यैवासम्भवात्। निश्चयसामग्री च तदभावप्रकारकज्ञानसामग्र्यसमवहिततत्प्रकारकज्ञानसामग्री न तु निश्चयत्वावच्छिन्नसामग्री निश्चयत्वस्य जन्यतानवच्छेदकत्वात्तदसिद्धेः पीतत्वशङ्खत्वयोर्विरोधित्वेन ज्ञायमानयोर्दोषविशेषलौकिकसामग्रीवशादेकधर्मिण्येकनिश्चयविषयतया ऽभावद्वयकोटिकज्ञाने संशयत्वासम्भवात्। असति दोषविशेषे लौकिकसन्निकर्षादौ च उपनयवशात् एकधर्मिणि तादृशयोर्निश्चयासम्भवेन च तादृशप्रतिबध्यप्रतिबन्धकभावस्य प्रामाणिकत्वादिति वदन्ति। तदसत्। अभावत्वघटितधर्मावच्छिन्नहेतुमत्तापरामर्शस्य व्याप्यप्रकारतानिरूपितविशेष्यतायामभावत्वावच्छिन्नप्रकारतानिरूपितत्वसत्त्वेन तादृशपरामर्शस्य निश्चयत्वानुपपत्तेः। न च व्याप्यत्वावच्छिन्नप्रकारताभिन्नप्रकारतात्वेन विरोधिप्रकारतानिवेशान्नायं दोष इति वाच्यम्। यत्र विरोधिकोटेरपि साध्यव्याप्यतया भानं तादृशसंशयस्य दुर्वारत्वात्।

एवं शुद्धपर्वतत्वावच्छेदेनाभावप्रकारकस्य नीलपर्वतत्वावि-

शिष्टे व्याप्यवत्तावगाहिनस्संशयस्य न्यूनाधिकधर्मावच्छिन्नयोर्भावा-भावोभयप्रकारतानिरूपितविशेष्यतयोरैक्यासम्भवात् । नीलरूपवत्त्वावच्छेदेन वह्निव्याप्यवत्तानिश्चयदशायामपि तादृशसंशयोत्पत्त्या तत्र नीलपर्वतत्वावच्छिन्नविशेष्यताया वह्निव्याप्याभावप्रकारतानिरूपितत्वाभ्युपगमासम्भवात् । न च तादृशसंशय एवासिद्धः । एकधर्मपर्याप्तकोटिद्वयधर्मितावच्छेदकताकबुद्धेरेव संशयत्वादिति वाच्यम् । यद्देशभानप्रयुक्तं संशयत्वं तज्ज्ञानेऽधिकस्य एकतरकोटिधर्मितावच्छेदककोटौ भानेऽप्यधिकं त्विति न्यायेन संशयत्वस्यावश्यकतया तुल्यबलसामग्रीभ्यां तादृशज्ञानजनने बाधकाविरहेण तथाविधज्ञानमेव न जायत इत्युक्त्यसम्भवात् ।

संशये कोटिद्वयप्रकारतानिरूपितविशेष्यतयोरवच्छेद्यावच्छेदकभावः समुच्चये तु न तथा एवं चाभावप्रकारतानिरूपितविशेष्यतानवच्छिन्नतत्प्रकारकविशेष्यताकत्वं निश्चयत्वमित्यपि न युक्तम् । अविरुद्धतया ज्ञायमानद्वन्द्वोपस्थितभावाभावोभयविशिष्टधर्मिविषयकज्ञाने विशृङ्खलधर्मिविषयताद्वयोपगमे ज्ञानस्य समूहालंबनतया एकवाक्यताविरहेण समासानुपपत्त्या धर्मिविषयताद्वयस्यावच्छेद्यावच्छेदकभावध्रौव्येण तादृशज्ञानस्य निश्चयत्वानुपपत्तेरिति दिक् ।

भावद्वयमात्रकोटिकोऽपि संशयोऽभावमात्रसामान्यसत्त्वेऽनुभवसिद्धः समानबलसामग्रीसंवलनसिद्धेश्च उक्तसामग्रीप्रतिबन्धकताया अप्रामाणिकत्वात् । संशयत्वे च कोट्यंशे लौकिकविषयताविरहस्य प्रयोजकतया कथितदोषविशेषजनितनिश्चये तदभावानर्वाहात् । लौकिकविषयता च साक्षात्त्वजातिव्यंजकविषयता सा च दोषविशेषजन्यज्ञानेऽप्यस्ति, शङ्खः पीत इत्यादिभ्रमानन्तरं पीतिमानं साक्षात्करोमीत्यनुव्यवसायोदयात् । एवं चाभावप्रकारत्वानिरूपितत्वादिना व्याप्यप्रकारकविषयताया निश्चयत्वघटकत्वेऽतिप्रसङ्गो दुर्वार एवेत्यपि वदन्ति ।

इदं तु बोध्यम् । संशयसमुच्चययोर्वैलक्षण्याय संशये कोटिद्वयप्रकारितयोरवच्छेद्यावच्छेदकभावः स्वीक्रियते एवं च किञ्चित्प्रकारकत्वानवच्छिन्नव्याप्यप्रकारकज्ञानत्वमेव व्याप्यवत्तानिश्चयत्वं धूमालोकादिपरामर्शसाधारणमनुमितिजनकतावच्छेदकम् तत्र च न काचिदनुपपत्तिः । अभेदेऽवच्छेद्यावच्छेदकभावविरहात्र तत्प्रकारक-

त्वस्य तत्प्रकारित्वावच्छिन्नत्वशंकाऽपि । संशयत्वं वा मानसत्वव्याप्यजातिरव्याप्यवृत्तिः सर्वत्र संशयस्य मानसताया एवोपगमात् । चक्षुःसन्निकर्षादिमद्धर्मिकसंशयदशायां पर्वतं पश्यामीत्यनुव्यवसायश्च संशयस्य पूर्वं परतो वा जायमानतद्विषयकचाक्षुषादिज्ञानस्य कल्पने तद्विषयकतयैवोपपादनीयः । संशयत्वस्य चावच्छेदकं तत्तद्धर्मिविषयकत्वावच्छिन्नतत्कोटिविषयकत्वमेव । एवं च पक्षविशेष्यकत्वावच्छिन्नव्याप्यत्वावच्छिन्नप्रकारकत्वावच्छेदेन(१) संशयत्वाभाववत्त्वमेव पक्षे व्याप्यवत्तानिश्चयत्वं वाच्यम् । वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यालोकवांश्च वा पर्वतो वह्निव्याप्यधूमवान् भूतलं वह्निव्याप्यधूमवच्च वेत्यादिसंशये च पर्वतविशेष्यकत्वावच्छिन्नधूमप्रकारकत्वावच्छेदेन संशयत्वाभावोऽनुभवसिद्ध एव, पर्वते धूमं न सन्देह्मीति प्रतीतेस्तत्र सर्वानुभवसिद्धत्वादिति नानुपपत्तिः । चाक्षुषादिज्ञानस्यापि संशये सङ्करभयेन नानैव संशयत्वानि स्वीक्रियंते तदभावकूटवत्त्वमेव निश्चयत्वघटकमनंतहेतुतावच्छेदकभेदेनानंतकारणत्वकल्पनापेक्षया कतिपयसंशयत्वजात्यभावघटितनिश्चयत्वेन सर्वसाधारणकारणताकल्पने लाघवात् । जातेरव्याप्यवृत्तिता च मिश्रादिभिरपि स्वीकृतेति नापसिद्धांतभीतिः ।

भवतु वा संशयत्वजातिर्व्याप्यवृत्तिरेव तद्विशिष्टनिरूपितत्वं संशये कोटिविषयताया एवोपेयते । भवतु वा संशयनिश्चययोर्विषयताभेदः तं विना संशयसमुच्चययोर्वैलक्षण्यानुपपत्तेरुक्तत्वात् । एवं च संशयत्वविशिष्टानिरूपितत्वस्य पक्षविषयतानिरूपितव्याप्यविषयतायां निवेशात्सर्वसामञ्जस्यमित्यादिकमालोचनीयम् ।

धूमत्वालोकत्वाद्यवच्छिन्नाभावघटितभ्रमत्वज्ञानाभावादीनां पृथक् पृथक् परामर्शविशेषणतायाः सहकारिताया वा अनुरोधात् साधनतावच्छेदकभेदेन परामर्शकारणताभेद आवश्यक इति केचिद्दीधितिकारानाक्षिपन्ति । तत्र विषयतासम्बन्धेन तत्तदप्रामाण्यग्रहाविशिष्टधूमादिप्रकारताभेदकूटविशिष्टत्वेन व्याप्यविषयतानां कारणतावच्छेदकत्वम् । आलोकादिविषयताया धूमाभावादिघटि-

(१) पक्षविशेष्यकत्वावच्छिन्नव्याप्यप्रकारकत्वावच्छेदेन—इति क्वचित्पाठः ।

तद्भ्रमत्वग्रहे स्वातन्त्र्येण भानेऽपि तादृशभ्रमत्वग्रहविशिष्टधूमादिविषयताभेदसत्त्वात्तदानीमालोकादिपरामर्शादनुमितिः । अप्रामाण्यग्रहासत्त्वे च कालान्तरीणतद्ग्रहविषये तद्विशिष्टभेदोपगमान्नानुपपत्तिः ।

यस्तुतस्तु कारणतावच्छेदकव्याप्यप्रकारतायां किञ्चिद्धर्मविशिष्टविषयताविशिष्टान्यत्वं निवेशनीयम् । विषयतायां धर्मवैशिष्ट्यं च स्वावच्छिन्नत्वप्रकारतानिरूपितत्वस्वावच्छिन्नाभावघटितविशेष्यतानिरूपितत्वप्रकारतानिरूपितत्वोभयसम्बन्धेन । विषयतावैशिष्ट्यं च स्वनिरूपकज्ञानसमानाधिकरणज्ञाननिरूपितत्व–स्वनिरूपकज्ञानविशेष्यीभूतज्ञाननिरूपितत्व–स्वाश्रयप्रकारतावच्छेदकावच्छिन्नत्वेतन्त्रितयसम्बन्धेन वाच्यम् । तादृशी च विषयता धूमाद्यप्रामाण्यज्ञानीयधूमादिप्रकारतानिष्ठेति ज्ञानभेदेन विषयताभेदमते न कश्चिद्दोष इति केचित्समादधति ।

परे तु जनकतावच्छेदकप्रकारतायां यद्धर्मावच्छिन्नत्वं फलोत्पादाप्रयोजकं तदवच्छिन्नाभावघटितभ्रमत्वज्ञानमकिञ्चित्करम्, एवं च हेतुतावच्छेदकानवगाहिज्ञानहेतुतावादिनां व्याप्यप्रकारतायामवच्छेदकतया धूमत्वाद्यभानेऽपि व्याप्यवानयमिति ज्ञानादनुमित्युत्पत्त्या वह्निव्याप्यधूमवानयमित्यादिज्ञानाद् धूमाभाववति धूमप्रकारकमिदं ज्ञानमित्यप्रामाण्यग्रहदशायां वह्निव्याप्यत्वावच्छिन्नाभावघटितभ्रमत्वाग्रहे जायत एवानुमितिः, यत्र नानुमितिस्तत्र तादृशभ्रमत्वग्रह एव कल्प्यते व्याप्यधर्मान्तरानिश्चयस्थले व्याप्यधूमादिनिश्चयेऽप्रामाण्यग्रहसत्त्वे व्याप्यत्वावच्छिन्नाभावस्य धर्मिणि संशयसंभवेन तद्धर्मिविशेष्यकज्ञाने तादृशाभावघटितभ्रमत्वसंशयस्यौचित्यायर्जिततया प्रायशः संभवात् । एवं च व्याप्यत्वावच्छिन्नाभावघटितभ्रमत्वज्ञानाभाव इति परामर्शस्य विशेषणं सहकारी वा न तूदासीनधूमत्वाद्यवच्छिन्नाभावघटितभ्रमत्वज्ञानाभाव इति न किञ्चिदनुपपन्नम् । यत्साध्यपक्षकस्थले व्याप्यतावच्छेदकधर्मविशेषावच्छिन्नाभावघटितभ्रमत्वग्रहदशायामितरानुमितिकारणसमुदायसत्त्वे व्याप्यत्वावच्छिन्नाभावघटितभ्रमत्वग्रहनियमस्तत्साध्यपक्षकस्थलाभिप्रायकमेवैतल्लाघवाभिधानमिति वदन्ति ।

ननु सामानाधिकरण्यघटितव्याप्तिपक्षे सामानाधिकरण्यप्रविष्टसाध्यसम्बन्धत्वमेवानुमितौ विधेयतावच्छेदकसम्बन्धताप्रयोजकं

तद्घटितोक्तव्याप्तेरनुमितिहेतुत्वे च सम्बन्धभाननियामकस्य दुर्वच-तेत्याशंकां निरस्यति यत्सम्बन्धेति । उक्तव्याप्तिघटकसाध्याभावप्र-तियोगितायामवच्छेदकतया भानमेव विधेयतावच्छेदकतया सम्ब-न्धभाननियामकमित्यर्थः ।

ननु व्याप्तेः साध्यसाधनसामानाधिकरण्याघटितत्वे पक्षे कदा-चित्संयोगेन हेतुमत्ताज्ञानादेवानुमितिः कदाचित्समवायादिनेत्यत्र किं नियामकम्? व्याप्तेस्तद्घटितत्वे च तादृशसामानाधिकरण्यघटक साधनीयसम्बन्धेन पक्षे साधनवत्ताज्ञानस्यानुमितिहेतुतया तन्नियम इत्यत आह साध्याभाववति येन सम्बन्धेनावृत्तित्वमिति । यत्सम्ब-न्धावच्छिन्नवृत्तेरभाव इत्यर्थः । नातिप्रसङ्गः-नाभ्रान्तस्य समवायेन धूमादिमति वह्न्याद्यनुमितिप्रसंगः ।

ननूक्तव्याप्तेरवृत्तिसाधारणतया तद्धेतुकाऽप्यनुमितिरभ्रान्त-स्य स्यादित्यत आह आकाशादेरिति । तथात्वेपि-साध्याभाववदवृ-त्तित्वेपि । अभ्रान्तस्य तत्र पक्षधर्मताज्ञानविरहान्नानुमितिः ।

नन्वेवमपि व्याप्तिभ्रमं विना नावृत्तिहेतुकानुमितिरित्यनुभवो व्याहन्येतैवेत्यत आह निविशतां वेति । वाशब्दोऽनास्थायाम्, उक्ता-नुभवस्य सविवादत्वात् । तत्र-तादृशव्याप्तावपि । साध्यसामानाधि-करण्यमिति । तथापि दर्शितलाघवाक्षतेरिति भावः ।

वृत्तिमत्त्वनिवेशेनैवोक्तानुमितिवारणसंभवे साध्याधिकरणांश-निवेशो निरर्थकः, हेतोः साध्यसामानाधिकरण्यनिश्चयदशायामनु-मित्यापत्तेर्व्यापकतापरामर्शहेतुताविचारोपदर्शितरीत्या निरासंसंभ-वादित्याशयेनाह वृत्तिमत्त्व चेति । वृत्तिमत्त्वं-व्याप्यताघटकसम्ब-न्धेन संबंधित्वम्, अतस्तादात्म्यसंबंधेनाकाशादेरपि द्रव्यत्वादिव्या-प्यतोपपत्तिः ।

साध्याभाववद्वृत्तित्वात्यन्ताभावसाध्याभाववद्वृत्तिभेदरूप-सा-ध्याभाववदवृत्तित्वस्य प्रत्येकं हेतुत्वेऽननुगमः । एकतरस्यैव हेतुत्वं विनिगमनाविरहात् दुर्वचम् । साध्याभाववद्वृत्तिभिन्नत्वशरीरेऽधिक-स्याधिकरणस्य निवेशेन गौरवेऽपि तद्धेतुत्वेऽनुभयविरोधः, अनु-मितिहेतुनाप्रयोजकस्य व्यभिचारज्ञानविरोधित्वस्याविशेषादिति, तादृशव्याप्त्योस्तद्विषयधियोर्वाऽनुगमे व्यापकसामानाधिकरण्य-स्य तद्धियो वाऽनुगतरूपाक्रान्ततया व्यापकसामानाधिकरण्यधीर-

नुमितिहेतुः स्यादित्याशंकते अथेति । व्यभिचारधीरिति । साध्याभाववद्वृत्तित्वधीरित्यर्थः । विरोधिधीविषयत्वेनेति । उक्तरूपेण व्याप्तिद्वयमनुगमय्य तद्विषयकत्वेन ज्ञानानुगमः शिरोवेष्टनेन नासिकास्पर्शतुल्य इति व्यभिचारज्ञानविरोधित्वेन ज्ञानानुगमकरूपेण हेतुतायामेव तात्पर्यम् । व्यभिचारबुद्धिम्–साध्याभाववद्वृत्तित्वबुद्धिम् । नचैवमिति । व्यापकताधियः साध्याभाववद्वृत्तित्वधीप्रतिबन्धकत्वमेव नेत्यर्थः, मानाभावादिति भावः ।

ननु वन्ह्यभाववद्वृत्तिर्धूम इति ज्ञाने तुल्यवित्तिवेद्यतया वह्नित्वे धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वभानाद्वह्नित्वधर्मिकताद्दशावच्छेदकत्वाभावरूपव्यापकतावच्छेदकत्वावगाहिनो ज्ञानस्य ग्राह्याभावावगाहितया विरोधित्वमविवादमेवेत्याशंक्य ग्राह्याभावावगाहिनोऽपि ज्ञानस्य विशेष्यांशे समानप्रकारकस्यैव विरोधिता, जातित्वादिना भासमानवह्नित्वादौ अवच्छेदकत्वावगाहिबुद्धिं प्रति वह्नित्वत्वाद्यवच्छिन्नं तत्रानवच्छेदकत्वधियोऽप्रतिबन्धकत्वात्, एवं प्रतियोगितावच्छेदकसम्बन्धावगाहिप्रतियोगिज्ञानं,प्रत्येवाभावज्ञानं विरोधि अन्यथाऽतिप्रसंगादित्याशयेन प्रतिबध्यप्रतिबंधकभावाभिमतज्ञानयोरसमानप्रकारकत्वं व्यभिचारज्ञाने ग्राह्यस्यावच्छेदकत्वस्य सम्बन्धताप्रदर्शनेन तत्संबंधानवगाहित्वं च दर्शयति वह्न्यभाववद्वृत्तिरिति । वह्नित्वं स्वरूपेणेति । भासते इत्यग्रिमेणान्वयः । स्वरूपेण भानं निष्प्रकारकभानं न तु सप्रकारकभानं वह्नित्ववदभाववृत्तिर्धूम इति वह्नित्वत्वावच्छिन्नविषयकधीविरोधित्वेनानुगमे च स्वरूपतो वह्नित्वावगाहिनो वह्न्यभाववद्वृत्तिर्धूम इति ज्ञानस्यासंग्रहो बोध्यः । सम्बन्धमर्यादयेत्यनेन तदंशे निष्प्रकारकत्वमपि दर्शितम् ।

विषयविरोधिविरहादिति । विरोधिताप्रयोजकविषयताविरहादित्यर्थः । अवच्छेदकत्वतदभावरूपविषययोर्विरोधस्य निर्विवादतया यथाश्रुतासंगतेः । विशिष्टस्य-महानसीयत्वादिरूपविशेषणान्तरधर्मितावच्छेदकतापन्नस्य । अवच्छेदकत्वेन–धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेन, तादृशप्रतियोगितानवच्छेदकत्वानुपपत्त्या । प्रकारान्तरानुसरणे–अवच्छेदकतापर्याप्त्यवच्छेदकानवच्छिन्नकिञ्चिद्धर्मपर्याप्तिमत्त्वविवक्षणे । महानसीयत्वादिसहितवह्नित्वादिपर्याप्तावच्छेदकतायाः पर्याप्त्यवच्छेदको न शुद्धवह्नित्वादिमात्रवृत्तिधर्मः न्यूनवृ-

तित्वात्। तथा च तादृशधर्मानवच्छिन्नबुद्धिविशेषविषयत्वावच्छेदकत्वादिधर्ममादाय वह्नित्वादेर्धूमादिव्यापकतावच्छेदकत्वमिति भावः। वह्नित्वादिरूपसाध्यतावच्छेदकादितरानवच्छिन्नप्रतियोगितानिवेशो वा।

न च विशिष्टपर्याप्त्यवच्छेदकतायाः वह्नित्वे प्रत्येकं द्वित्वादिवदभावसौलभ्येन यथाश्रुतमेव साध्विति वाच्यम्। एवं सति महानसीयवह्निभिन्नवह्निमान् धूमादित्यादावतिव्याप्तेः।

साध्यतावच्छेदकघटकयोर्महानसीयवह्निभिन्नत्ववह्नित्वयोः प्रत्येकमवच्छेदकत्वपर्याप्तिविरहेण तदनतिरिक्तस्य विशिष्टस्याप्यनवच्छेदकताया दुर्वारत्वात्। सुतरामिति। विषयविशेषविरहादित्यनुपपद्यते। उक्तव्यभिचारज्ञाने दर्शितरीत्या परिष्करणेऽपि व्यापकताप्रविष्टाभावस्य धर्मितत्प्रतियोगितानवच्छेदकावच्छिन्नत्वस्याभानादिति भावः।

ननु व्यभिचारव्यापकताज्ञानयोर्मणिमन्त्रादिन्यायेन परस्परविरोधिता न तु ग्राह्याभावावगाहित्वेनेति समानप्रकारकत्वमनपेक्षितमत आह मणीति। इदमुपलक्षणम्—व्यापकताज्ञानस्य व्यभिचारधीविरोधित्वेऽपि सामानाधिकरण्यविषयतायास्तन्निरूपितहेतुविषयतायाश्च प्रतिबंधकतानवच्छेदकतया पक्षविषयतानिरूपितहेतुविषयतायाः तादृशधीप्रतिबन्धकतावच्छेदकत्वेन परामर्शकारणतावच्छेदके निवेशासम्भवाद्वह्निव्याप्यो धूमो धूमवान् पर्वत इत्यादिसमूहालम्बनरूपाद्व्यभिचारधीविरोधिज्ञानादनुमित्यापत्तिर्दुर्वारेत्यपि बोध्यम्।

(दी०) व्यापकताज्ञानादेवानुमितिरिति च नानुभविकं न वा यौक्तिकम्। ज्ञानत्वत्वादिना ज्ञानत्वादेर्व्यापकतावच्छेदकत्वग्रहे ज्ञानादिमानित्यनुमितेरयोगात्। अन्यथा जातित्वेनाऽनुभवत्वव्यापकगुणत्वव्याप्यजातित्वादिना वा तथात्वग्रहेऽपि तत्प्रसङ्गात्। एतेन केवलान्वयिसाध्यकत्वज्ञानमेवानुमितिहेतुरित्यपि परास्तम्। सर्वजनानुभवसिद्धानुमितिभावे धूमादिदर्शनानन्तरं जायमाने गृह्यमाणव्यतिरेकवद्घटादिज्ञानेऽसम्भवाच्च।

प्रमेयत्वादेश्च घटादिवृत्तित्वं केवलान्वयित्वेन कथञ्चित्तद्वृत्तिधर्मव्यापकत्वेन वाऽनुमेयम्, न तु ज्ञेयत्वादिहेतुका तदनुमितिरानुभविकी ।

( गा० ) ननु केवलान्वयिसाध्यकानुमितेर्भ्रमं विनोपपादनाय गुरुशरीरापि व्यापकसामानाधिकरण्यरूपा व्याप्तिरेवानुमितिप्रयोजिका वाच्येत्यत आह व्यापकतेति । ज्ञानादिमानित्यनुमितेरिति । स्वरूपतो ज्ञानत्वादिविधेयतावच्छेदकावगाह्यनुमितेरित्यर्थः । अयोगादिति । यद्धर्मावच्छिन्ने साध्यतावच्छेदके व्यापकतावच्छेदकत्वग्रहस्तेन रूपेण साध्यतावच्छेदकमनुमितिविषय इति नियमस्य भवताऽभ्युपगन्तव्यत्वादिति भावः । व्यतिरेकिसाध्यकस्थले साध्याभाववदवृत्तित्वज्ञानम् केवलान्वयिसाध्यकस्थले तु व्यापकसामानाधिकरण्यज्ञानं हेतुरित्युक्तौ वह्न्यभाववदवृत्तित्वाज्ञानात्स्वरूपतो वह्नित्वादिविषयिण्या वह्निमानयमित्याद्यनुमितेर्निर्वाहात् विषयतया केवलान्वयिनो ज्ञानस्य साध्यतानुसरणम् । वाच्यत्वत्वादेरखण्डधर्मत्वाभावेन स्वरूपतोऽभानात्तदवच्छिन्नसाध्यकोपेक्षा । निर्धर्मितावच्छेदकव्यापकतावच्छेदकत्वग्रहस्य व्यभिचारग्रहाप्रतिबध्यतया सधर्मितावच्छेदकस्य स्वरूपतो ज्ञानत्वानवगाहितया च न तस्य ज्ञानवानित्यनुमितिहेतुतासंभव इति ध्येयम् ।

रूपान्तरेण व्यापकतावच्छेदकत्वावगाहिपरामर्शस्य स्वरूपतो विधेयतावच्छेदकभासकत्वोपगमे बाधकमाह अन्यथेति । तन्मात्रवृत्तिधर्मपुरस्कारेण तत्र व्यापकतावच्छेदकत्वग्रहस्य स्वरूपतस्तद्धर्मभासकत्वोपगमे । जातित्वेन–जात्यन्तरसाधारणेन, व्यापकतावच्छेदकतावच्छेदकत्वग्रहादतिप्रसंग इत्याशयेनाह अनुभवत्वव्यापकेति । प्रत्यक्षत्वानुभवत्वसाधारण्यवारणायानुभवत्वव्यापकेति अनुभवतदन्यवृत्तीत्यर्थकम् । स्मृतित्वव्यावर्तनायानुभववृत्तित्वनिवेशः । सत्तागुणत्वव्यावर्तनाय गुणत्वव्याप्येति किञ्चिद्गुणावृत्त्यर्थकम् । तथात्वग्रहेऽपि–व्यापकतावच्छेदकत्वग्रहेऽपि । तत्प्रसंगात्–स्वरूपतो ज्ञानत्वविषयकानुमितिप्रसंगात् । न चोक्तरूपेण व्यापकतावच्छेदकत्वग्रहस्य स्वरूपतो ज्ञानत्वप्रकारकज्ञानानुमित्यजनकत्वेऽपि ज्ञानत्वत्वेन तद्ग्रहस्य तादृशानुमितिजनकत्वमविरुद्धमिति

वाच्यम्, तथा सत्यसति सिद्धिविशेषादिरूपतादृशानुमितिप्रतिबन्धके ज्ञानत्ववज्ज्ञानवानयमित्येतावन्मात्राकारिकाया अनुमितेर्विलोपप्रसंगात्।

यत्तु—स्वरूपतो यत्र ज्ञानत्वादिकं सामानाधिकरण्यनिरूपकतावच्छेदकतया भासते तादृशव्यापकतावच्छेदकत्ववज्ज्ञानसमानाधिकरणहेतुमानयमित्यादिपरामर्शाज्ज्ञानवानयमित्याद्यनुमितिः, यत्र च ज्ञानत्वत्वादिनैव तत्तथा भासते तादृशव्यापकतावच्छेदकज्ञानत्ववत्समानाधिकरणहेतुमानयमिति परामर्शाज्ज्ञानत्ववज्ज्ञानवानयमित्याकारानुमितिरिति—कैश्चिदुच्यते। तदसत्—व्यापकतावच्छेदकजातिविशेषवज्ज्ञानसमानाधिकरणहेतुमानयमित्यत इव तादृशज्ञानत्ववज्ज्ञानसमानाधिकरणहेतुमानयमित्यतोऽपि ज्ञानवानयमित्यनुमितेरयोगात्। तादृशपरामर्शयोरविशेषेणैकस्मादेव तादृशानुमितिर्नान्यस्मादिति फलवैषम्यस्यानुभवविरुद्धत्वात्, अन्यथा वैपरीत्यस्यापि सुवचत्वात्। ज्ञानत्ववज्ज्ञानवानयमित्याकारानुमितिर्ज्ञानत्वविषयिणी कदाचित् कदाचिज्ज्ञानवानयमित्यनुमितिरिति नियमस्य तावताप्यनिर्वाहाच्च।

तद्धर्मावच्छिन्नेतरावृत्तित्वेन व्यापकतावच्छेदकत्वज्ञानात्तद्धर्मप्रकारेण साध्यानुमितिस्तत्रेतरत्वप्रतियोगितावच्छेदकतया तद्धर्मस्य यादृशं भानमनुमितावपि तस्य तादृशं भानमिति नियमः। अतो व्यापकतावच्छेदकज्ञानत्ववदितरावृत्तिधर्मवत्समानाधिकरणहेतुमानयमित्यादिज्ञानात् ज्ञानत्ववानयमित्यनुमितिः, व्यापकतावच्छेदकज्ञानेतरावृत्तिधर्मवत्समानाधिकरणहेतुमानयमित्यादिपरामर्शाच्च ज्ञानवानयमित्याद्यनुमितिरिति तु सूक्ष्मदर्शिनः।

प्रतियोगिताधर्मिकसाध्यतावच्छेदकावच्छिन्नत्वघटितोभयाभावज्ञानमनुमितिहेतुः, तत्र साध्यतावच्छेदकस्य स्वरूपतोऽपि भानसंभवात्तदीयसाध्यतावच्छेदकतुल्यानुमितौ तद्विषयतेति नियमान्न किञ्चिदनुपपन्नमित्यपि वदन्ति।

तद्वह्नित्वरूपेण प्रतियोगित्वेऽपि वह्नित्वरूपेण प्रतियोगित्वाभावमभ्युपगच्छतः प्रगल्भस्य मते साध्यतावच्छेदकावच्छिन्नप्रतियोगित्वज्ञानमेवानुमितिहेतुः तत्र स्वरूपतोऽपि साध्यतावच्छेदकभानसम्भवात्सर्वसामञ्जस्यमिति ध्येयम्।

ननु साध्याभाववदवृत्तित्वज्ञानमात्रस्यानुमितिहेतुत्वे भ्रमं विना केवलान्वयिसाध्यकमनुमानं नोपेयम्, तथा च केवलान्वयिसाध्यकहेतुमत्तापरामर्श एवानुमितिहेतुरास्ताम् व्यतिरेकिसाध्यके केवलान्वयित्वभ्रमादेवानुमितिरिति विपरीतं कुतो न स्यादित्यत आह—अत एवेति । ज्ञानत्वत्वावच्छिन्ने केवलान्वयित्वावच्छेदकत्वज्ञानात् स्वरूपतो ज्ञानत्वादिप्रकारकज्ञानाद्यनुमित्तेरनुपपद्यमानत्वादेवेत्यर्थः । उक्तरीत्या तदुपपत्तिमाशंक्य दूषणान्तरमाह—सर्वेति । गृह्यमाणव्यतिरेकवह्न्यादीनां न मानसमेवेति शंकानिरासाय सर्वजनानुभवसिद्धानुमितित्वकथनम् । केवलान्वयित्वभ्रमासंभवाय गृह्यमाणव्यतिरेकेति ।

नन्वेवं केवलान्वयितया गृह्यमाणवाच्यत्वादेरनुमितिनिर्वाहाय व्यापकज्ञानहेतुताकल्पनमपि दुर्वारमेव। न च वाच्यत्वत्वघमभावप्रतियोगितानवच्छेदकमिति ज्ञानकालेऽपि सम्बन्धविधयाऽभावे वाच्यत्वत्वावच्छिन्नप्रतियोगिताकत्वावगाहि असमानप्रकारकं व्याप्तिज्ञानं संभवत्येवेति न व्यापकताधीहेतुतेति वाच्यम् । अभावत्वावच्छेदेनानुयोगितात्वावच्छेदेन वा स्वरूपसम्बन्धावच्छिन्नवाच्यत्वत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गावच्छिन्नप्रतियोगिताकाभावज्ञानदशायां साध्याभाववदवृत्तित्वरूपव्याप्तिग्रहस्य दुरुपपादत्वात् समानप्रकारविरोधिज्ञानसत्त्वात् । स्वरूपसंबंधावच्छिन्नवाच्यत्वत्वावच्छिन्नप्रतियोगिताकत्वाप्रसिद्धावपि भ्रमात्मकतधज्ञानसंभवात् । अभावबुद्धौ प्रतियोगितावच्छेदकस्य स्वावच्छिन्नप्रतियोगिताकत्वसंबंधेन प्रकारत्वे तादृशव्यधिकरणसंबंधावच्छिन्नवाच्यत्वाभावविषयकप्रमात्मकविरोधिज्ञानस्यापि सुलभत्वात् ।

वस्तुतस्तु स्वरूपसंबन्धेन वाच्यत्वत्वावच्छिन्नप्रकारकज्ञानादिनिष्ठवाच्यत्वविषयतायामेव तादृशप्रतियोगिताकत्वं प्रसिद्धमपि तान च विषयतानिष्ठं सप्रतियोगिकत्वमभावादिनिष्ठन्ततोऽन्यजातीयमेव न त्वेकजातीयमिति वाच्यम्, मिथो वैलक्षण्यस्याप्रामाणिकतया एकजातीयताया आवश्यकत्वात्। अत एव संयोगसाधारण्यात्सप्रतियोगिकत्वमेवाभावत्वमित्यस्यासंभवं वक्ष्यति विरोधग्रन्थे ।

यत्तु—अभावत्वाविषयकं साध्यरूपप्रकारांशे नियमितावच्छेदककं दर्शितविपरीतज्ञानाप्रतिबध्यं साध्यीयवदवृत्तिमानित्याकारकं व्याप्ति-

ज्ञानं तदापि संभवतीति-कस्यचिन्मतम्। तदशुद्धम्-तावताप्यभ्रान्तस्य केवलान्वयिसाध्यकानुमितिर्दुरुपपादेन व्यापकताधीहेतुत्वमन्तरेण। एवं तद्वत्ताज्ञानं प्रति तदीयत्वसहिताभावत्वेनाभावविषयकमनतिप्रसक्तेन तदीयत्वसहितानुयोगिताविशेषत्वेनानुयोगिताविशेषरूपाभावत्वविषयकं वा तन्नास्तीत्याकारकज्ञानमेव यथा विरोधि न तु विषयितादिसाधारणतयाऽतिप्रसक्तेन तदीयत्वादिनाऽभावमनुयोगिताविशेषं वावगाहमानं तथा हेतुमति साध्यं नास्तीत्याकारकं साध्यीयत्वाभावत्वाभ्यामभावविषयकं तदीयत्वानुयोगिताविशेषत्वाभ्यामनुयोगिताविषयकं वा व्यभिचारज्ञानमेवानुमितिजनकज्ञानविरोधि न त्वतिप्रसक्ततदीयत्वमात्रेणाभावादिविषयकम्। एवं-चाभावत्वानवच्छिन्नेऽनुयोगिताविशेषत्वानवच्छिन्नानुयोगितायां वा तदीयत्वावगाहि-अभावत्वावच्छिन्नेऽनुयोगिताविशेषत्वरूपेणानुयोगितायां वाऽतदीयत्वज्ञानाप्रतिबध्यं ज्ञानं नानुमितिहेतुः संभवति तदीयत्वमात्रेणाभावविषयकसाध्याभावधर्मिकहेतुसामानाधिकरण्यज्ञानदशायामनुमित्यनुपपत्तेरिति उपदर्शितकेवलान्वयित्वग्रहेऽनुमितिर्दुरुपपादेत्याशयः। तत्र केवलान्वयित्वग्रहदशायां तत्साध्यकानुमित्यसंभवेऽपि तत्र पक्षवृत्तित्वानुमित्यैव तत्कार्यस्य पक्षे साध्यसंशयनिवृत्त्यादेः संभव इत्याशयेनाह प्रमेयत्वादेरिति।

ननु केवलान्वयित्वस्य प्रमेयत्वादावग्रहदशायां घटादौ तत्संशयनिवर्तिकाऽनुमितिः कथमभ्रान्तस्योपपाद्यतामित्यत आह कथञ्चिद्वृत्तिधर्मव्यापकत्वेनेति। लिङ्गेनेति शेषः। व्यापकताज्ञानाद्घटादौ मेयत्वादिसाध्यकानुमितिवादिमते प्रमेयत्वादौ घटादिवृत्तित्वानुमापकलिङ्गज्ञानस्यावश्यकत्वादिति भावः।

ननु यत्र स्थले यत्र घटवृत्तिमेयत्वादिर्हेतुस्तत्र प्रमेयत्वमित्यादिसहचारज्ञानाभावात् घटवृत्तित्वाद्यवच्छिन्नव्यापकता मेयत्वादौ न पूर्वं गृहीताऽपि तु यत्र मेयत्वादिर्हेतुस्तत्र प्रमेयत्वमित्यादिसहचारज्ञानात् मेयत्वमेयत्वाद्यवच्छिन्ननिरूपितव्यापकतामात्रं तत्र सिद्धान्तिमते घटादौ प्रमेयत्वानुमितिः संभवति न तु प्रमेयत्वादौ घटादिवृत्तित्वानुमितिप्रयोजकलिङ्गग्रहादित्यत उक्तं कथञ्चिदिति। व्यापकत्वनिरूपकतया भासमाने मेयत्वत्वाद्यवच्छिन्ने उपलक्षणविधया घटादिवृत्तित्वग्रह इति रीत्याऽभावप्रतियोगिकोटावुपलक्षणतया भानस्याप्रामा-

णिकत्वे तु विशिष्टव्यापकताघटकप्रत्येकयावत्पदार्थोपस्थितौ विशिष्टव्यापकताव्यावर्तकविशेष्यव्यापकत्वे निश्चीयमाने विशिष्टस्य सहचारग्रहमनपेक्ष्यैव विशिष्टव्यापकतानिश्चयस्य संभवेन तद्वृत्तिधर्मव्यापकत्वरूपालिङ्गस्य प्रमेयत्वादौ निश्चयोपपत्तेरित्यर्थः ।

(१)व्यापकताज्ञानाद्घटादौ प्रमेयत्वसाध्यकानुमितिवादिमते मेयत्वादौ घटादिवृत्तित्वानुमापकोक्तलिङ्गज्ञानस्यावश्यकत्वादिति भावः । ननु प्रमेयत्वादावुक्तलिङ्गसम्भवेऽपि तादृशलिङ्गे घटादिवृत्तित्वसहचारग्रहासत्त्वे तद्व्याप्तिग्रहात्तदनुमित्यसम्भवेन केवलान्वयिसाध्यकानुमितेरावश्यकत्वेत्यतः कथंचिदिति । उक्तलिङ्गे विशिष्य घटवृत्तित्वादिव्याप्तिग्रहासम्भवेऽपि यद्वृत्तितावच्छेदकावच्छिन्नव्यापकं तत्तद्वृत्तीति सामान्यमुखव्याप्तिग्रहः सुलभ एव । घटवृत्तितावच्छेदकावच्छिन्नव्यापकमपि घटावृत्ति स्यादित्यप्रयोजकत्वशङ्कया च नोक्तलिङ्गे घटवृत्तित्वव्याप्तिग्रह इति तु न शंक्यम् । घटवृत्त्यधिकरणघटनिष्ठाभावप्रतियोगित्वसत्त्वेन निरुक्तलिङ्गस्यैव व्याघातादिति भावः ।

इदमत्रावधेयम् । केवलान्वयिसाधारणव्याप्तेः साध्यसामानाधिकरण्यरूपाधिकांशघटिततया गौरवेण तत्साध्यकानुमानाभ्युपगमोऽनुचितः । पक्षवृत्तिहेतुव्यापकं साध्यमिति ज्ञानादेवानुमितेः स्वीकरणीयत्वात् । यदि च व्यापकताज्ञाने प्रतियोगित्वादिकं प्रकारः साध्याभाववदवृत्तित्वज्ञाने तु संसर्ग इत्यतः किमपि लाघवं स्यादिति मन्यते, तदा पक्षीयहेतुमत्तावच्छेदेन साध्यवत्तावगाहिनः साध्यांशे व्यापकतारूपसंसर्गावगाहित्वेन हेतुता किं नोपेयते ? व्यापकताज्ञाने वह्नित्वत्वादिविषयतानिवेशेन गौरवाशेङ्किमपि, तदा प्रमादिरूपसाध्यतावच्छेदकांशे प्रमात्वादिरूपविशेषणावच्छिन्नव्यापकतावच्छेदकत्वावगाहिज्ञानस्य प्रमेयत्वादिसाध्यकानुमितिहेतुतां किमुपेक्षसे प्रमात्वादिविषयतानिवेशस्योभयमते तुल्यत्वात् । एकरूपेणावच्छेदकत्वेऽप्यन्यरूपावच्छिन्नेऽवच्छेदकत्वाभावस्य सुवचत्वात् । असर्वविषयकप्रमाव्यक्तीनां तत्तद्व्यक्तित्वेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि प्रमा-

(१) इत आरभ्य भाव इत्यन्त- पाठः पुस्तकान्तरे नास्ति ।

स्यावच्छिन्ने व्यापकतावच्छेदकतायाः सुघटत्वात् । केवलान्वयिहेतुकस्थलेऽपि सर्वविषयकेश्वरीयप्रमायाः, व्यतिरेकिहेतुकस्थले तु हेतुमद्यावद्विषयकान्यतमप्रमायाश्च केनाऽपि रूपेण हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वासम्भवाच्च प्रमात्वसामानाधिकरण्येन व्यापकतावच्छेदकत्वस्याक्षतेः । विशिष्य हेतुविषयतामनन्तर्भाव्य कारणताकल्पनं व्यापकतापरामर्शहेतुतावादिनाऽपि शक्यमिति केवलान्वयिव्याप्तेरुक्तव्याप्तेः साधनभेदेऽप्यभेदोऽकिञ्चित्करः । व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताकाभावस्य प्रामाणिकत्वे साध्याभाववद्वृत्तित्वघटितहेतुत्वमतेऽपि केवलान्वय्यनुमानं निराबाधमेव । साध्यतावच्छेदकविशिष्टसाध्याभावस्याप्रामाणिकत्वेऽपि [१] व्यधिकरणसमवायित्वाद्यवच्छिन्नवाच्यत्वादिमद्भेदवत् व्यधिकरणवाच्यत्वत्वविशिष्टावच्छिन्नाभावनिष्ठप्रतियोगितावच्छेदकताकाभावरूपव्याप्तेः प्रसिद्धिसम्भवात् । न च व्यधिकरणसाध्यावच्छिन्नाभाववद्वृत्तित्वाभावस्य व्याप्तित्वे व्यभिचारिहेतावपि साध्यावच्छिन्नान्यदीयाभाववद्वृत्तित्वाभावमादाय सद्धेतुकपरामर्शसम्भव इति वाच्यम् । साध्यतावच्छेदकविशिष्टसहिताभावत्वमात्रावच्छिन्नाभावनिष्ठावच्छेदकताया एव व्याप्तिघटकत्वात्, धूमीयत्वादिना घटाभावादिमद्वृत्तित्वाभावीयप्रतियोगितायां अभावनिष्ठावच्छेदकतायां व्यधिकरणतया धूमादेरिव समानाधिकरणतया घटादेरप्यवच्छेदकत्वात् व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकतावत् तदभावप्रतियोगितावच्छेदकतावच्छेदकताया व्यधिकरण इव समानाधिकरणेऽपि स्वीकारादिति नवीनः पन्थाः ।

अथ समवायित्वेन वाच्यत्वाभावमिति प्रतीतिबलादेव एव व्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताको न त्वत्यन्ताभावोऽपि तथा, अतएव दीधितिकृता प्रमेयत्वादिकेवलान्वयिधर्मावच्छिन्नहेतुकस्थले तद्रूपस्य व्यधिकरणतया प्रतियोगिताया अवच्छेदकत्वासम्भवेन साध्याभावसजातीयतद्व्यापकाभावप्रतियोगि-

[१] व्यधिकरणसमवायित्वाद्यवच्छिन्नवाच्यत्वादिविशिष्टावच्छिन्नाभावनिष्ठप्रतियोगितावच्छेदकताकाभावरूपव्याप्तेः—इतिपुस्तकान्तरे पाठः ।

स्वनिष्ठं यत्साध्यवद्वृत्तित्वं तद्भेदनिवेशनेन सामञ्जस्यात्। यद्वा यत्र हेतुव्यक्तौ लक्षणं संगमनीयं तद्वा स्वपदेन तस्यैवोपादेयतया तत्प्रमेयत्वव्यक्तौ साध्यवन्निरूपिततत्तन्निष्ठवृत्तिभिन्नप्रमेयान्तरनिष्ठवृत्तिशून्यत्वमादाय लक्षणसमन्वयात्। अवच्छेदकभेदेनाधेयताभेदे हेतुनिष्ठत्वस्थाने हेतुतावच्छेदकावच्छिन्नत्वं निवेशनीयम्, एवं चोक्तस्थले रूपान्तरावच्छिन्नसाध्यवद्वृत्तित्व एव विशिष्टान्यत्वप्रसिद्धिः। हेतौ हेतुतावच्छेदकावच्छिन्नसाध्यवद्वृत्तित्वान्यरूपान्तरावच्छिन्नसाध्यवन्निरूपितवृत्तित्वसत्त्वेऽपि न क्षतिः तादृशसाध्यवद्वृत्तित्वान्या या वृत्तिस्तदनवच्छेदकहेतुतावच्छेदकत्वस्य विवक्षणीयत्वात्। अवच्छेदकभेदेऽप्याधेयताया अभेदे हेतुतावच्छेदकनिष्ठं यत्साध्यवद्वृत्तितावच्छेदकत्वं तदन्यवृत्तितावच्छेदकताशून्यत्वं हेतुतावच्छेदके निवेशनीयमित्याहुः।

केचित्तु साध्यतावच्छेदकत्वशून्यत्वं हेतौ निवेश्यम्। स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकाभाववत्त्वमेव स्वावच्छिन्ननिरूपिता व्याप्तिः। साध्यत्वत्वस्यैव तादृशसम्बन्धावच्छिन्नाभावस्तु व्यधिकरणसम्बन्धावच्छिन्नाभाव इति वदन्ति।

(दी०) एवं साध्याभावव्यापकाभावप्रतियोगित्वमपि नानुमित्यौपयिकं गौरवात्, व्यभिचारज्ञानाविरोधित्वाच्च। वह्न्यभावसमानाधिकरणाभावप्रतियोगी धूमाभाव इति ज्ञानं धूमाभावाभावत्वेन तत्र वह्न्यभावसामानाधिकरण्यबुद्धिं कदाचिद्विरुन्ध्यात्, न तु धूमत्वेन भिन्नप्रकारकत्वात्। व्यतिरेकव्याप्तिग्रहाधीना च धीर्नानुमितिस्तत्त्वेनाननुभवात्, क्लृप्तकारणाभावात्, सामग्रीभेदकल्पनायाश्चानुभवैकाधीनत्वात्, किन्तु विजातीया। तत्करणमपि प्रमाणान्तरमर्थापत्तिरेव। क्लृप्तप्रमाणद्वयसमाहारसपत्नीकं च युगपदन्वयव्यतिरेकिप्रमाद्वयप्रतिसन्धानम्।

(प्र०)अर्थापत्तेः प्रमाणान्तरत्वं व्यवस्थापयिष्यन् व्यतिरेकव्याप-

फताया अप्यनुमित्युपयोगितां खण्डयति एवमिति । गौरवादिति । अस्य साध्याभाववद्वृत्तित्वापेक्षयेत्यादिः तादृशप्रतियोगित्वज्ञानस्य विजातीयप्रमितिहेतुताया भवतोऽप्यावश्यकत्वाच्छरीरगौरवमकिञ्चित्करमत आह व्यभिचारज्ञानेति। व्यभिचारज्ञानघटितसामग्र्या अनुमितिप्रयोजकत्वे आकांक्षादिज्ञानघटितसामग्र्या अपि तथात्वापातेन शब्दादीनामपि स्वतन्त्रप्रमाणताभङ्गप्रसङ्ग इति भावः।

ननु हेत्वाभावाभावे हेतौ साध्याभावसामानाधिकरण्यग्रहरूपव्यभिचारज्ञाने हेत्वभावे साध्याभावव्यापकताधीर्विरोधिन्येव व्यापकाभिमतस्याभावे व्याप्याभिमतसामानाधिकरण्यग्रहं व्यापकताज्ञानस्य प्रतिबन्धकत्वादित्यत आह वन्ह्यभावेति। तत्र-धूमे। कदाचिद्धिरुध्यादिति। धूमाभावाभावत्वेन वन्ह्यभावसामानाधिकरण्यग्रहे तुल्यवित्तिवेद्यतया वन्ह्यभावसमानाधिकरणाभावप्रतियोगिताया धूमाभावे भानात्तत्र तादृशाभावाप्रतियोगित्वज्ञानस्य प्राह्याभावावगाहित्वादिति भावः। प्रतियोगित्वस्य संसर्गविधया ज्ञाने प्रतियोगित्वाभावज्ञानस्य प्रतिबन्धकत्वं न वास्तवमित्याशयेन कदाचिदित्युक्तम्। न तु धूमत्वेनेति। तत्र वह्न्यभावसामानाधिकरण्यबुद्धिं विरुणद्धीति विपरिणतमनुपज्यते। भिन्नप्रकारकत्वादिति। धूमाभावाभावत्वप्रकारकत्वेन तुल्यवित्तिवेद्यतयाऽपि धूमाभावे प्रतियोगित्वानवगाहनादित्यर्थः।

ननु व्यतिरेकव्याप्तिज्ञानादपि पक्षे साध्यनिर्णयो भवति, तस्य च प्रत्यक्षादिरूपत्वासम्भवेनानुमितित्वमावश्यकमित्यत आह व्यतिरेकेति। तत्त्वेन—अनुमितित्वेन। अननुभवादिति। अर्थापयामीत्यनुव्यवसायस्यैव तत्रोत्पत्तेरिति भावः।

ननु तत्रानुमितित्वानुभवस्य सविवादत्वेऽपि अनुमितिसामग्रीजन्यतयाऽनुमितित्वमावश्यकमित्यत आह फलेति। साध्याभाववद्वृत्तित्वज्ञानस्यैव लाघवेनानुमितिहेतुतायाः फलत्वादिति भावः। ननु व्यतिरेकव्याप्तिज्ञानघटितसामग्रीजन्यत्वमपि पृथगनुमितित्वप्रयोजकं वाच्यमित्यत आह सामग्रीभेदेति। एतस्या अपि अनुमितिसामग्र्यन्तरत्वकल्पनायाश्चेत्यर्थः। अनुभवेति। अनुमितित्वानुभवेत्यर्थः। न तु तद्वद्वृत्तित्वज्ञानाजन्यस्यानुमितित्वमित्येवा-

स्वनिष्ठं यत्साध्यवद्वृत्तित्वं तद्भेदनिवेशनेन सामंजस्यात् । यदा यत्र हेतुव्यक्तौ लक्षणं सगमनीयं तदा स्वपदेन तस्यैवोपादेयतया तत्प्रमेयव्यक्तौ साध्यवन्निरूपिततत्तन्निष्ठवृत्तिभिन्नप्रमेयान्तरनिष्ठवृत्तिशून्यत्वमादाय लक्षणसमन्वयात् । अवच्छेदकभेदेनाधेयताभेदे हेतुनिष्ठत्वस्थाने हेतुतावच्छेदकावच्छिन्नत्वं निवेशनीयम्, एवं चोक्तस्थले रूपान्तरावच्छिन्नसाध्यवद्वृत्तित्व एव विशिष्टान्यत्वप्रसिद्धिः । हेतौ हेतुतावच्छेदकावच्छिन्नसाध्यवद्वृत्तित्वान्यरूपान्तरावच्छिन्नसाध्यवन्निरूपितवृत्तित्वसत्त्वेऽपि न क्षतिः तादृशसाध्यवद्वृत्तित्वान्या या वृत्तिस्तदनवच्छेदकहेतुतावच्छेदकत्वस्य विवक्षणीयत्वात् । अवच्छेदकभेदेऽप्याधेयताया अभेदे हेतुतावच्छेदकनिष्ठं यत्साध्यवद्वृत्तितावच्छेदकत्वं तदन्यवृत्तितावच्छेदकताशून्यत्वं हेतुतावच्छेदके निवेशनीयमित्याहुः ।

केचित्तु साध्यतावच्छेदकस्वशून्यत्वं हेतौ निवेश्यम् । स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्यसम्बन्धानवच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकाभाववत्त्वमेव स्वावच्छिन्ननिरूपिता व्याप्तिः । वाच्यत्वस्यैव तादृशसम्बन्धावच्छिन्नाभावस्तु व्यधिकरणसम्बन्धावच्छिन्नाभाव इति वदन्ति ।

(दी०) एवं साध्याभावव्यापकाभावप्रतियोगित्वमपि नानुमित्यौपयिकं गौरवात्, व्यभिचारज्ञानाविरोधित्वाच्च । वह्न्यभावसमानाधिकरणाभावप्रतियोगी धूमाभाव इति ज्ञाने धूमाभावाभावत्वेन तत्र वह्न्यभावसामानाधिकरण्यबुद्धि कदाचिद्विरुद्धत्वात्, न तु धूमत्वेन भिन्नप्रकारकत्वात् । व्यतिरेकव्याप्तिग्रहाधीना च धीर्नानुमितिस्तत्त्वेनाननुभवात्, क्लृप्तकारणाभावात्, सामग्रीभेदकल्पनायाश्चानुभवैकाधीनत्वात्, किन्तु विजातीया । तत्करणमपि प्रमाणान्तरमर्थापत्तिरेव । क्लृप्तप्रमाणद्वयसमाहारसमशीलं च युगपदन्वयव्यतिरेकिधर्मद्वयप्रतिसन्धानम् ।

(गा०) अर्थापत्तेः प्रमाणान्तरत्वं व्यवस्थापयिष्यन् व्यतिरेकव्याप-

कताया अप्यनुमित्युपयोगितां खण्डयति एवमिति । गौरवा-दिति । अस्य साध्याभाववद्वृत्तित्वापेक्षयेत्यादिः तादृशप्रतियोगित्व-ज्ञानस्य विजातीयप्रमितिहेतुताया भवतोऽप्यावश्यकत्वाच्छरीर-गौरवमकिञ्चित्करमत आह व्यभिचारज्ञानेति । व्यभिचारज्ञानघ-टितसामग्र्या अनुमितिप्रयोजकत्वे आकांक्षादिज्ञानघटितसामग्र्या अपि तथात्वापातेन शब्दादीनामपि स्वतन्त्रप्रमाणतामङ्गप्रसङ्ग इति भावः ।

ननु हेत्वाभावाभावे हेतौ साध्याभावसामानाधिकरण्यग्रहरूप-व्यभिचारज्ञाने हेत्वभावे साध्याभावव्यापकताधीविरोधिन्येव व्याप-काभिमतस्याभावे व्याप्याभिमतसामानाधिकरण्यग्रहं व्यापकता-ज्ञानस्य प्रतिबन्धकत्वादित्यत आह वन्ह्यभावेति । तत्र-धूमे । कदा-चिदित्यन्ताविति । धूमाभावाभावत्वेन वन्ह्यभावसामानाधिकरण्यग्रहे तुल्यवित्तिवेद्यतया वन्ह्यभावसमानाधिकरणाभावप्रतियोगिताया धू-माभावे भानात्तत्र तादृशाभावाप्रतियोगित्वज्ञानस्य ग्राह्याभावावगा-हित्वादिति भावः । प्रतियोगित्वस्य संसर्गविधया ज्ञाने प्रतियोगि-त्वाभावज्ञानस्य प्रतिबन्धकत्वं न वास्तवमित्याशयेन कदाचिदित्यु-क्तम् । न तु धूमत्वेनेति । तत्र वह्न्यभावसामानाधिकरण्यबुद्धिं विरु-णद्धीति विपरिणतमनुपज्यते । भिन्नप्रकारकत्वादिति । धूमाभावा-भावत्वप्रकारकत्वेन तुल्यवित्तिवेद्यतयाऽपि धूमाभावे प्रतियोगि-त्वानवगाहनादित्यर्थः ।

ननु व्यतिरेकव्याप्तिज्ञानादपि पक्षे साध्यनिर्णयो भवति, तस्य च प्रत्यक्षादिरूपत्वासम्भवेनानुमितित्वमावश्यकमित्यत आह व्य-तिरेकेति । तत्त्वेन—अनुमितित्वेन । अननुभवादिति । अर्थापत्त्या-मीत्यनुव्यवसायस्यैव तत्रोत्पत्तेरिति भावः ।

ननु तत्रानुमितित्वानुभवस्य सविवादत्वेऽपि अनुमितिसाम-ग्रीजन्यतयाऽनुमितित्वमावश्यकमित्यत आह फलेति । साध्याभा-ववदवृत्तित्वज्ञानस्यैव लाघवेनानुमितिहेतुतायाः फलत्वादिति भा-वः । ननु व्यतिरेकव्याप्तिज्ञानघटितसामग्रीजन्यत्वमपि पृथगनुमि-तित्वप्रयोजकं वाच्यमित्यत आह सामग्रीमेदेति । एतस्या अपि अ-नुमितिसामग्र्यन्तरत्वकल्पनायाश्चेत्यर्थः । अनुभवेति । अनुमिति-त्वानुभवेत्यर्थः । न तु तद्वद्वृत्तित्वज्ञानाजन्यस्यानुमितित्वमित्येवा-

द किन्त्वित्यादिना । विजातीयेति । अनुमितित्वविरुद्धजातिमतीत्यर्थः । अनुमिनोमीत्यनुव्यवसायात्प्रत्यक्षविजातीयाऽनुमितिप्रमावत् शाब्दयामीत्यादिप्रतीतिबलात् शाब्दाख्यप्रमित्यन्तरवच्चार्थापद्यामीत्यनुव्यवसायबलादपि विजातीयप्रमासिद्धेर्दुर्वारत्वात् । तस्या अनुमितित्वाननुभवेऽपि अनुमितित्वे शाब्दादिबुद्धेरपि तथात्वप्रसङ्गाद्व्यतिरेकव्याप्तिज्ञानघटिताया इवाकांक्षाविज्ञानादिघटिताया अपि सामग्र्या अनुमितिप्रयोजकतासम्भवादिति भावः ।

नन्वेवं तत्करणस्य प्रमाणान्तरत्वप्रसङ्ग इत्यत इष्टापत्तिमाह तत्करणमपीति । अर्थापत्तिः प्रमाणान्तरमेवेति योजना । अर्थापत्तिः–अनुपपद्यमानो योऽर्थस्तज्ज्ञानम् ।

नन्वेवमन्वयव्याप्तिप्रकारेण साध्याभावव्यापकाभावप्रतियोगित्वप्रकारेण च पक्षे हेतुमत्ताज्ञाने ज्ञानयौगपद्यानुगमे उभयजातीयमेकज्ञानमेव स्वीकरणीयमिति जातिसंकरप्रसङ्ग इत्यत आह फलेति। फलप्रमाणद्वयसमाहारः–शाब्दानुमानादिरूपप्रमाणद्वयसम्वलनम् तत्समशालि, युगपदन्वयव्यतिरेकिधर्मद्वयप्रतिसन्धानम्–अर्थापत्त्यनुमानयोः संवलनम् तथा च यथा तत्रैकसामग्र्या बलवत्त्वाद्वैकदा मिथो विजातीयद्वयसामग्रीसमावेश इति न फलस्यानुमितित्वशाब्दत्वादीनां सङ्करस्तथा प्रकृतेऽपि सामग्र्या बलवत्त्वकल्पने चानुभवानुरोध एव विनिगमकः । फलसन्देहे च या सामग्री गुरुशरीरा तस्या एव बलवत्त्वं कल्प्यते, तस्या दुर्बलत्वे स्वीयफलेच्छाविशिष्टत्वेन तत्प्रतिबन्धकतायाः कल्पनीयतया इच्छया समं तत्प्रविष्टकारणानां विशेष्यभावे विनिगमनाविरहेण गुरुसामग्र्याः प्रतिबन्धकतायामुल्येन गौरवात् । न चोभयेच्छासत्त्वे स्वभावतो बलवत्सामग्र्यैव फलजननात्तदानीमुत्तेजकबलेन स्वभावदुर्बलसामग्रीफलवारणाय स्वफलेच्छाविरहविशिष्टाया दुर्बलसामग्रीफलेच्छाया एव बलवत्सामग्र्यामुत्तेजकत्वं वाच्यं, दुर्बलसामग्र्यां च बलवत्सामग्रीफलेच्छाविरहविशिष्टा स्वफलेच्छा विशेषणं वाच्यम्, तथाच दुर्बलसामग्र्यां नाधिकप्रवेश इति किं तस्या गौरवेणेति वाच्यम् । इच्छाविरहविशिष्टाया इच्छाया यत्र विशेषणत्वं तत्रेच्छातद्विरहयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्धकताविषयम्, यत्र चेच्छाविशेषविरहविशिष्टेच्छाया उत्तेजकत्वं

न तु विशेषणत्वं तत्र तयोरेव मिथस्तथात्वे विनिगमनाविरह इति प्रतिबन्धकत्वस्याल्पतात्वमिति गुरुसामग्र्या एव बलवत्त्वौचित्यात् ।

वस्तुतो बलवत्याः सामग्र्याः प्रतिबन्धकतायामिच्छाविरहविशिष्टाया इच्छाया नोत्तेजकत्वं किन्तु विनिगमनाविरहभयेनेच्छामुत्तेजकीकृत्य एकप्रतिबन्धकत्वं स्वफलेच्छावैशिष्ट्यं निवेश्य चान्यप्रतिबन्धकत्वं कल्प्यते तावतैव उभयदिशीच्छादशायां दुर्बलसामग्रीफलप्रतिबन्धोपपत्तिरिति दुर्बलसामग्र्यामिच्छातद्विरहयोरेकत्र निवेशेन प्रतिबन्धकतावाहुल्यमतिस्फुटमेव । प्रकृते च व्यतिरेकव्याप्तिज्ञानघटिता सामग्री गुरुशरीरा एतादृशव्याप्तेरधिकपदार्थघटितत्वात् अधिकपदार्थांशे भ्रमत्वज्ञानाभावादिनिवेशश्चेति दिक् ।

( दी० ) अथ निर्णीते विना सिद्धीच्छामप्यर्थापत्तेरनुत्पादात् पक्षताजन्यत्वात् साऽप्यनुमितिलाघवेन पक्षताजन्यत्वस्यैवानुमितित्वे प्रयोजकत्वात् । न चैवं पक्षतामत्यक्षस्यापि तथात्वापत्तिः । इच्छासत्त्वेऽपि कालान्तरे वा तद्विरहसत्त्वेनैककालीनत्वाद्यतीन्द्रियघटितप्रतियोगित्वेन तस्या अतीन्द्रियत्वादिति चेन्न । अनुमितावेव पक्षताया हेतुत्वस्य निरस्तत्वात् साध्यादिभेदेनाननुगतत्वात् तज्जन्यत्वस्याप्रयोजकत्वाच्च । प्रयोजकत्वं च न जनकत्वमसम्भवात्, न व्याप्यत्वं मानाभावादित्यादेरसकृदावेदितत्वाच्च । एतेन व्याप्तिज्ञानादिजन्यत्वमनुमितित्वे प्रयोजकमित्यपि परास्तम् ।

साध्याभावव्यापकाभावप्रतियोगिधर्मत्वेन व्याप्यत्वानुमानात् प्रसिद्धसाध्यकैवानुमितिरित्यपि केचित् ।

(गा०) साऽपि—अन्यथानुपपत्तिज्ञानजन्यधीरपि । अनुमितिरिति । तथाच न तत्करणं प्रमाणान्तरमित्यर्थः ।

नन्वन्वयव्याप्तिज्ञानाजन्यतया पक्षताजन्याऽपि सा न प्रकृतानुमितिसामग्रीजन्येति न तत्रानुमितित्वप्रयोजकरूपसत्त्वमित्यत आह लाघवेनेति । सामग्रीजन्यत्वापेक्षयेत्यादिः । परामर्शजन्यतावस्य व्या-

द्द किञ्चित्यादिना । विजातीयेति । अनुमितित्वाविरुद्धजातिमती-त्यर्थः । अनुमिनोमीत्यनुव्यवसायात्प्रत्यक्षविजातीयाऽनुमितिप्रमा-वत् शाब्दयामीत्यादिप्रतीतिबलात् शाब्दाख्यप्रमित्यन्तरवद्वार्थापया-मीत्यनुव्यवसायबलादपि विजातीयप्रमासिद्धेर्दुर्वारत्वात् । तस्या अनुमितित्वानुभवेऽपि अनुमितित्वे शाब्दादित्वुद्धेरपि तथात्वप्र-सङ्गाद्व्यतिरेकव्याप्तिज्ञानघटिताया इवाकांक्षादिज्ञानादिघटिताया अ-पि सामग्र्या अनुमितिप्रयोजकतासम्भवादिति भावः ।

नन्वेवं तत्करणस्य प्रमाणान्तरत्वप्रसङ्ग इत्यत्रेष्टापत्तिमाह त-त्करणमपीति । अर्थापत्तिः प्रमाणान्तरमेवेति योजना । अर्थाप-त्तिः-अनुपपद्यमानो योऽर्थस्तज्ज्ञानम् ।

नन्वेवमन्वयव्याप्तिप्रकारेण साध्याभावव्यापकाभावप्रतियोगि-त्वप्रकारेण च पक्षे हेतुमत्ताज्ञाने ज्ञानयौगपद्यानुगमे उभयजातीय-मेकज्ञानमेव स्वीकरणीयमिति जातिसंकरप्रसङ्ग इत्यत आह फल-मेति। फलतप्रमाणद्वयसमाहारः-शाब्दानुमानादिरूपप्रमाणद्वयसम्वल-नम् तत्समशीलं, युगपदन्वयव्यतिरेकिधर्मद्वयप्रतिसन्धानम्-अर्था-पत्त्यनुमानयोः सबलनम् तथा च यथा तत्रैकसामग्र्या बलवत्त्वा-दैकदा मिथो विजातीयद्वयसामग्रीसमावेश इति न फलतानुमिति-त्वशाब्दत्वादीनां सङ्करस्तथा प्रकृतेऽपि सामग्र्या बलवत्त्वकल्पने चानुभवानुरोध एव विनिगमकः । फलसन्देहे च या सामग्री गुरु-शरीरा तस्या एव बलवत्त्वं कल्प्यते, तस्या दुर्बलत्वे स्वीयफले-च्छाविशिष्टत्वेन तत्प्रतिबन्धकतायाः कल्पनीयतया इच्छया समं तत्प्रविष्टकारणानां विशेष्यभावे विनिगमनाविरहेण गुरुसामग्र्याः प्रतिबन्धकतावाहुल्येन गौरवात् । न चोभयेच्छासत्त्वे स्वभावतो बलवत्सामग्र्यैव फलजननात्तदानीमुत्तेजकबलेन स्वभावदुर्बलसा-मग्रीफलवारणाय स्वफलेच्छाविरहविशिष्टाया दुर्बलसामग्रीफले-च्छाया एव बलवत्सामग्र्यामुत्तेजकत्वं वाच्यं, दुर्बलसामग्र्यां च बलवत्सामग्रीफलेच्छाविरहविशिष्टा स्वफलेच्छा विशेषण वाच्यम्, तथाच दुर्बलसामग्र्यां नाधिकप्रवेश इति किं तस्या गौरवेणेति वाच्यम् । इच्छाविरहविशिष्टाया इच्छाया यत्र विशेषणत्वं तत्रेच्छा-तद्विरहयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिब-न्धकताधिक्यम्, यत्र चेच्छाविशेषविरहविशिष्टेच्छाया उत्तेजकत्वं

न तु विशेषणत्वं तत्र तयोरेव मिथस्तथात्वे विनिगमनाविरह इति प्रतिबन्धकत्वस्याल्पतात्वमिति गुरुसामग्र्या एव बलवत्त्वौचित्यात् ।

वस्तुतो बलवत्याः सामग्र्याः प्रतिबन्धकतायामिच्छाविरहविशिष्टाया इच्छाया नोत्तेजकत्वं किन्तु विनिगमनाविरहभयेनेच्छामुत्तेजकीकृत्य एकप्रतिबन्धकत्वं स्वफलेच्छावैशिष्ट्यं निवेश्य चान्यप्रतिबन्धकत्वं कल्प्यते तावतैव उभयदिशीच्छादशायां दुर्बलसामग्रीफलप्रतिबन्धोपपत्तिरिति दुर्बलसामग्र्यामिच्छातद्विरहयोरेकत्र निवेशेन प्रतिबन्धकतावाहुल्यमतिस्फुटमेव । प्रकृते च व्यतिरेकव्याप्तिज्ञानघटिता सामग्री गुरुशरीरा एतादृशव्याप्तेरधिकपदार्थघटितत्वात् अधिकपदार्थांशे भ्रमत्वज्ञानाभावादिनिवेशाच्चेति दिक् ।

( दी० ) अथ निर्णीते विना सिद्धीच्छामर्थापत्तेरनुत्पादात् पक्षताजन्यत्वात् साऽप्यनुमितिर्लाघवेन पक्षताजन्यतरस्यैवानुमितित्वे प्रयोजकत्वात् । न चैवं पक्षतामात्रस्यापि तथात्वापत्तिः । इच्छासत्त्वेऽपि कालान्तरे वा तद्विरहसत्त्वेनैककालीनत्वाद्यतीन्द्रियघटितप्रतियोगित्वेन तस्या अतीन्द्रियत्वादिति चेन्न । अनुमिताविव पक्षताया हेतुत्वस्य निरस्तत्वात् साध्यादिभेदेनाननुगतत्वात् तज्जन्यत्वस्याप्रयोजकत्वाच्च । प्रयोजकत्वं च न जनकत्वमसम्भवात्, न व्याप्यत्वं मानाभावादित्यादेरसकृदावेदितत्वाच्च । एतेन व्याप्तिज्ञानादिजन्यत्वमनुमितित्वे प्रयोजकमित्यपि परास्तम् ।

साध्याभावव्यापकाभावप्रतियोगिधर्मत्वेन व्याप्यत्वानुमानात् प्रसिद्धसाध्यकेनानुमितिरपि क्वचित् ।

(गा०) साऽपि–अन्यथानुपपत्तिज्ञानजन्यधीरपि । अनुमितिरिति । तथाच न तत्करणं प्रमाणान्तरमित्यर्थः ।

नन्वन्वयव्यतिरेकिज्ञानाजन्यतया पक्षताजन्यापि सा न प्रकृतानुमितिसामग्रीजन्येति न तथानुमितित्वप्रयोजकरूपवत्त्वमित्यत आह लाघवेनेति । सामग्रीजन्यत्वापेक्षयेत्यादिः । परामर्शजन्यत्वस्य व्या-

ण्यघटपक्षतावैशिष्ट्यप्रत्यक्षादिसाधारणतयाऽनुमितित्वप्रयोजकत्वासम्भवात् पक्षताजन्यत्वनिवेशस्यावश्यकत्वादिति भावः। एवम्-पक्षताजन्यत्वमात्रस्य तथात्वे। 'तथात्वापत्ति —अनुमितित्वापत्तिः। तथापि विषयतया पक्षताया हेतुत्वादिति भावः।

पक्षताया प्रत्यक्षमेव न सम्भवतीत्याह इच्छेति। एककालीनत्वादिति। एकक्षणावच्छिन्नसामानाधिकरण्यरूपातीन्द्रियानुमित्साविरहसम्बन्धघटितप्रतियोगितावच्छेदकत्वेनेत्यर्थः। तस्याः-पक्षतायाः। अनुमितिहेतुत्वमभ्युपेत्यापि संनियतस्यैव प्रयोजकत्वमित्याशयेन दूषयति साध्यादीति। व्याप्यत्वमेव प्रयोजकत्वे तन्त्रम्, अन्यथा सामग्र्या अत्यननुगमेन तज्जन्यत्वस्यापि प्रयोजकत्वासम्भवादित्याशयः प्रयोजकत्वस्य दुर्वचतां परामर्शग्रन्थोक्तां स्मारयति प्रयोजकत्वं चेति।

एतेन-प्रयोजकताया दुर्वचत्वेन। व्याप्तिज्ञानजन्यत्वम् अनुभवत्वन्यूनवृत्तिधर्मावच्छिन्नव्यापकताज्ञानजन्यत्वम्। अनुभवत्वन्यूनवृत्तिधर्मावच्छिन्नत्वविशेषणाद्विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादिव्युदासः। अन्वयव्यतिरेकव्यापकतयोरनुगमासम्भवादाह-आदीति। तेनाभावज्ञानजन्यतालाभः। न चैवमप्यभावादिज्ञानानुव्यवसाये तद्विषयकत्वघटितधर्मावच्छिन्नजनकतानिरूपितजन्यताविवक्षणेऽप्यभावादिघटिताकाङ्क्षादिज्ञानजन्यशाब्दबोधेऽतिप्रसङ्गो दुर्वार इति वाच्यम्। तज्जन्यत्वपदेन तत्करणकत्वविवक्षणात्। शाब्दबोधे च पदज्ञानत्वेनैव करणतयाऽतिप्रसङ्गविरहात्।

व्यतिरेकिस्थलेऽपि अन्वयव्याप्तिज्ञानादेव साध्यनिश्चयो न तु व्यतिरेकव्याप्तिज्ञानात्, अन्वयसहचाराभावेनान्वयव्याप्तिप्रत्यक्षानुपपत्तावपि व्यतिरेकव्याप्त्या तदनुमानसम्भवात् इति, फलमानुमितिरेवेति न प्रमाणाधिक्यमिति सिद्धान्तं समर्थयतां मतमुपन्यस्यति साध्याभावेति।

ननु साध्याप्रसिद्धिस्थले हेतौ साध्यव्याप्यत्वानुमानसम्भवेऽपि अप्रसिद्धाभावसाध्यकस्थले साध्यव्याप्यत्वस्यापि प्रसिद्ध्यभावेन नानुमितिः सम्भवतीत्यत आह प्रसिद्धसाध्यकेति। साध्याप्रसिद्धिस्थले तन्निश्चयस्यैवानभ्युपगमात्तन्निश्चयस्थले प्रतियोग्यादीनां खण्डशः प्रसिद्ध्यधीनसाध्यप्रसिद्ध्यादेः कल्पनादिति भावः। न चा-

न्वयव्यतिरेकव्याप्त्योः व्याप्यव्यापकभावाज्ञानदशायामपि व्यतिरेकिहेतुना साध्यनिश्चयस्यानुभविकत्वादनुपपत्तेः प्रमाणान्तरत्वमावश्यकमिति वाच्यम्। तद्व्याप्यव्यापकभावघटकसकलपदार्थोपस्थितिसत्त्वेन मानसतज्ज्ञानस्य प्रकृतहेतुनिष्ठप्रकृतसाध्यान्वयव्याप्तिमानसस्यापि व्यतिरेकव्याप्तिज्ञानदशायां सर्वत्र सम्भव इत्याशयात्। अनुमितिस्थले साध्यस्य मानसनिश्चयसंभवेऽप्यनुमिनोमीत्यनुव्यवसायबलादनुमानस्येव साध्याभावव्यापकाभावप्रतियोगित्वरूपान्यथानुपपत्तिज्ञानकालीननिश्चयेऽर्थापयामीत्यनुभवबलादर्थापत्तेः प्रमाणान्तरत्वं दुर्वारमित्यस्वरसः केचिदित्यनेन सूचितः।

(दी०) अथ वह्न्याद्यभाववति धूमादेः समवायेन तन्त्वाद्यभाववति च पटादेः संयोगेन वर्त्तमानत्वात् साध्याभाववति च संयोगेन समवायादिना वर्त्तमानस्य विशिष्यैवाभावो वाच्यः, तथा च जले जातिमद्गुणवत्त्वात्, गुणवच्च घटादेरित्यादिकं विलीयेत—जातिगुणाभाववतोः समवेतत्वसंयोगित्वयोरप्रसिद्धेरिति चेत्। उपदर्शयैनमपि केवलान्वयिनः सरणिम्, स्वीकुरु वा स्वाधिकरणावृत्तिसाध्याभाववादिकत्वमेव व्याप्तिम्, स्वत्वानुगमस्य प्रागेव स्वहस्तितत्वादिति।

(गा०) ननु साध्याभाववद्वृत्तित्वस्य व्याप्तित्वे व्यतिरेकिसाध्यकस्थलेऽपि यत्र हेतुतावच्छेदकसम्बन्धशून्य यदधिकरणे साध्याव्यतिरेकप्रसिद्धिस्तत्र साध्याभाववति हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या भ्रमं विना तत्रानुमितिर्विलीयेतेत्याशङ्कां प्रथमतो हेतुतावच्छेदकसम्बन्धमुक्त्वा व्याप्तौ निवेशयति अथेति। विशिष्यैवाभावः—तत्तत्सम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन रूपेणाभावः। वाच्यः—तत्सम्बन्धावच्छिन्नव्याप्तिरूपतया स्वीकार्यः। इत्यादिकम्—समवायसंयोगादिना गुणघटादिहेतुकानुमानम्। अप्रसिद्धेरिति। न च साध्याभाववदनुयोगिकत्वाभावस्य तत्सम्बन्धप्रतियोगित्वविवक्षया नायं दोष इति वाच्यम्। वह्निमद्भिन्नसंयुक्तघटादीनामपि संयोगादिना वह्न्यादिव्याप्यतापत्तेः—वह्न्यादिमदनुयोगिकतत्संयोगादौ वह्न्याद्यभाववदनुयोगिकत्वाभावसत्त्वात्। तादृशाभाववदनुयोगिकत्वाभाव-

घटत्वप्रतियोगिकसंयोगादिसामान्यकत्वनिवेशे च सामान्यपदार्थस्य व्यापकताघटिततया व्यापकसामानाधिकरण्यापेक्षयाऽपि गौरवात्।

सामानाधिकरण्यसम्बन्धेन साध्याभावाभाव एव व्याप्तिः जात्यभावादेः समवायघटितसामानाधिकरण्याप्रसिद्धावपि तादृशव्यधिकरणसम्बन्धावच्छिन्नतदभावः सुलभ एवेति तु वृत्त्यनियामकतया सामानाधिकरण्यस्याभावप्रतियोगितावच्छेदकसम्बन्धतानुपपत्त्या हेयम्।

एवमपि—उक्तानुमानमपि। केवलान्वयिनः सद्धेतोरिति। तथाच विशेषदर्शिनां तत्र जात्याद्यनुमितिर्नोपपद्यत एव किन्तु जात्यादावेव समवायसम्बन्धावच्छिन्नाभावरूपकत्वादिना तत्र गुणादिसमवेतत्वानुमितिः, साध्याभाववत्समवेतत्वग्रहविरोधिनः साध्याभाववति समवायादिविरहग्रहस्य सत्त्वे उक्तहेतोः सुग्रहत्वादिति भावः।

स्वाधिकरणावृत्तिसाध्याभावकत्वमिति। तथाच साध्याभाववति समवायाद्यसत्त्वग्रहेऽपि साध्याभावे हेतुसमवायवृत्तित्वग्रहसत्त्वालोकानुमानानुपपत्तिरिति भावः। न चात्रापि सत्ताभाववान् जातित्वादित्यादौ हेतुमति विरोधिताघटकसम्बन्धेन वृत्तेरप्रसिद्धिप्रदर्शनायामनुपपत्तिर्दुर्वारैवेति वाच्यम्। तत्र साध्याभाववद्वृत्तिसमवेतत्वादिज्ञानादेवानुमित्युपगमात्। व्यापकताज्ञानहेतुताया विनाऽपि भेदावच्छेदेन हेतुमद्वृत्तित्वग्रहदशायां तादृशव्याप्तिज्ञानादेवानुमितेरुपगन्तव्यत्वात्। प्रतियोग्यधिकरणाभिन्नत्वविशेषितहेत्वधिकरणघटितव्यापकतायास्तदा दुर्ग्रहत्वात्।

न च संयोगसम्बन्धावच्छिन्नघटाभावे साध्ये विषयितया घटादिहेतुकानुमाने का गतिः? तत्र हेतुमति ज्ञानादौ साध्यरूपाभावप्रतियोगितावच्छेदकसंयोगेन वृत्तेरप्रसिद्धेः, साध्याभाववति च संयोगिनि विषयितारूपहेतुतावच्छेदकसम्बन्धाप्रसिद्धेः, उपदर्शितव्याप्तिद्वयस्यासम्भवादिति वाच्यम्। वृत्त्यनियामकसम्बन्धेन व्याप्तेः प्राचीनैरप्यनभ्युपगमेन तत्र विषयितादिहेतुकानुमानस्यैवानुपगमात्।

नन्वयं स्वव्यापकानुगमात्साधनतावच्छेदकभेदेन व्याप्तेर्भेदप्रसङ्ग इत्यत्रैवोपपत्तिमाह स्वरेति। स्वघटितत्वादिति। स्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिवादिनाऽपीत्यादिः। तथाऽप्येतन्मते प्रतियोगितावच्छेदकत्वाख्यस्य सम्बन्धतया निवेशेन लाघवस्यानपायादिति भावः।

(दी०) एतेन नीलेतररूपवान् नीलासमवेतत्वे सति गोत्वादित्यादिकं विलीयेत—विशेष्यस्य व्यभिचारित्वात्, विशिष्टस्य चानतिरिक्तत्वाचित्वादित्यपि परास्तम्। साध्याभावस्य विशिष्टहेत्वधिकरणावृत्तित्वात् परम्परासम्बन्धेन विशेषणविशेष्यसम्बन्धस्यैव वा तत्र हेतुत्वादिति ॥

इति केवलान्वयिदीधितिः ॥

(गा०) साध्याभाववदवृत्तित्वरूपव्याप्तिपक्षेऽप्यनुपपद्यमानायाः साध्यव्यभिचारिण्या विशेष्यव्यक्तेर्विशेषणान्तरविशिष्टत्वेन व्याप्यताया निर्वाहरूपमेतत्कल्पावलम्बनप्रयोजनं दर्शयति एतेनेति । नीलरूपवान् व्यक्तित्वव्यभिचारत्वेन विपरीतविशेषणविशेष्यनीलरूपवदसमवेतत्वे सति द्रव्यत्वादित्यादिकं नीलरूपाभाववति चित्ररूपवति व्यभिचारेणासदनुमानमतो नीलेतररूपसाध्यकनीलरूपवदसमवेतत्वविशिष्टगोत्वहेत्वनुधावनम् । गोत्वरूपविशेष्यप्रवेशाद्गुणकर्मविशेषादौ गगनादौ च न व्यभिचारः । नीलान्यसमवेतत्वविशिष्टगोत्वे शुद्धगोत्वानतिरेकिणि नीलेतररूपव्यभिचारविरहस्यादुर्घटत्वेऽपि समवेतत्वस्य समवेतभेदेन भिन्नत्वे गोत्वविशिष्टत्वेन गुणादिव्यावृत्तनीलान्यसमवेतत्वव्यक्तित्वव्यभिचारत्वेन विपरीतविशेषणविशेष्यभावापन्नहेतुकानुमानमेव सुघटं वह्निविशिष्टगोत्वज्ञानदशायां गोत्वविशिष्टतज्ज्ञानस्यापि सम्भवादिति विशिष्टगोत्वहेतुकानुमानविलोपे क्षतिविरह इत्यालोच्याखण्डं नीलसमवेतत्वाभावं विशेषणतयोपात्तवान् । न च साध्याभाववद्वृत्तितानवच्छेदकधर्म एव व्याप्तिर्वाच्या, नीलासमवेतत्वविशिष्टगोत्वत्वेन च गोत्वस्य न नीलरूपवद्वृत्तित्वमतो विशिष्टगोत्वस्य तदनवच्छेदकमेवेति वाच्यम् । विशिष्टस्यानतिरिक्ततया साध्याभाववद्वृत्तितावच्छेदकविशेष्यीभूतगोत्वत्वे विशेषणान्तरविशिष्टेऽपि तदनवच्छेदकत्वासम्भवात् । एतदभिसंधायैव द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्राव्याप्तिर्नोपदर्शिता । तत्र स्वाश्रयसमवेतत्वसम्बन्धेन गुणकर्मान्यत्ववैशिष्ट्यमात्रस्य साध्याभाववद्वृत्तितानवच्छेदकतया तदादायैव विशिष्टसत्त्वस्य व्याप्यतोपपत्तेः । नीलासमवेतत्वस्य तादृशसम्बन्धेन वैशिष्ट्ये च द्रव्यत्वादिनिष्ठसाध्याभाववद्वृत्तितावच्छेदकवि-

ति, न तन्मात्रमादायापि विशिष्टगोत्वादेर्व्याप्यत्वोपपत्तिः ।

अथैतत्कल्पेऽपि द्रव्यान्यत्वविशिष्टसत्ताभाववान् द्रव्यत्वादित्यादावव्याप्तिः साध्याभावस्य विशिष्टसत्तायाः शुद्धसत्तानतिरिक्ततया हेत्वधिकरणवृत्तित्वादिति चेन्न । अनुयोगिताविशेषरूपसाध्याभावत्वे स्वाधिकरणवृत्तितानवच्छेदकत्वस्य विवक्षितत्वात् । अनुयोगितायाः प्रतियोगितावच्छेदकादिभेदेन भिन्नतया शुद्धसत्ताभावादिनिरूपिताभावत्वस्य द्रव्यादिवृत्तितावच्छेदकत्वे विशिष्टाभावनिरूपिताभावत्वे तदभावसौलभ्यात् ।

एतेन जात्यभाववान् गुणत्वादित्यादौ साध्याभावस्य द्रव्यत्वादेर्हेत्वधिकरणगुणाद्यवृत्तित्वेऽपि साध्याभावसामान्यमनिवेश्यापि तदुपपत्तिः । प्रतियोगितावच्छेदकाद्यैक्येऽभावव्यक्तिभेदेनानुयोगिताभेदानभ्युपगमात्, गुणत्वादिसाधारणतया साध्यनिरूपिताभावत्वे स्वाधिकरणवृत्तितानवच्छेदकत्वस्य दुर्घटत्वात् ।

अथैवमपि सत्ताभाववान् गुणकर्मान्यत्वे सति द्रव्यान्यत्वादित्यादावनतिरेव विशिष्टहेतुमति साध्याभावप्रतियोगितावच्छेदकसमवायेन वृत्त्यप्रसिद्धेः । साध्याभाववति गुणादौ हेतुघटकविशेष्यवृत्तेर्व्याप्तिद्वयस्यैवानिर्वाहादिति चेत् । एतदभिसन्धायैव विशिष्टहेतुकस्थले विशेष्यविशेषणसम्बन्धस्य हेतुत्वमनुसृतं परैरित्यादना ।

केचित्तु अभावस्यैव भावाभावस्याप्यभावत्वेन वृत्तिविशेषणताविशेषणैव नास्तीति प्रत्यये सर्वत्रैकजातीयसम्बन्धावगाहितया अनुभविकत्वादिति स्वाधिकरणे विशेषणताविशेषेणैवावृत्तित्वमभावस्य विवक्षणीयम् । आकाशाभावादेरात्मादौ आकाशाभावत्वेनैव दैशिकविशेषणतया वृत्तिः न तु कालिकसम्बन्धावच्छिन्नस्याभावाभावत्वेन काल एवाकाशाभावस्य कालिकसम्बन्धावच्छिन्नाभावो नास्तीति प्रत्ययात् । कालिकसम्बन्धावच्छिन्नस्याभावस्याभावरूपाकाशाभाव आत्मनीत्याद्याधाराधेयभावे प्रत्यये तादृशाभावाभावत्वस्योपलक्षणतयैव भानोपगमादित्याकाशाभावादेः कालिकसम्बन्धावच्छिन्नाभावे साध्य आत्मत्वादिहेतौ नाव्याप्तिरिति तच्च विशिष्टहेतुकस्थले स्वाधिकरणेत्यादिव्याप्तिरेव निर्वहतीत्याहुः ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्त्तिविरचितानुमानगादाधर्यां
केवलान्वयिप्रकरणम् ॥

अनुमानगादाधर्याम् ।

# केवलव्यतिरेकिप्रकरणम् ।

( चि० ) केवलव्यतिरेकी स्वसत्सपक्षः । यत्र व्यतिरेकसहचारेण व्याप्तिग्रहः ।

( दी० ) व्याप्तिग्रह इति साधारणोक्तिः । तत्र केवलान्वयिन्यभावाच्च । साध्यव्याप्यत्वं तद्वदन्यावृत्तित्वादिरूपमन्ततः साध्य एव प्रसिद्धम् ।

( गा० ) केवलव्यतिरेकी स्वसत्सपक्ष इति मूलम् । यथाश्रुतैतल्लक्षणं साध्यसाधनोभयवत्तया निश्चीयमानधर्मिरूपसपक्षपदार्थस्य सिद्ध्यसिद्धिभ्यां पराहतमिति तदर्थमाह यत्र व्यतिरेकसहचारेणेति । व्यतिरेकसहचारेणैवेत्यर्थः । तथाचागृहीतव्याप्तिक केवलव्यतिरेक्यनुमानलक्षणमिति पर्यवसितम् ।

तत्र व्याप्तिपदस्यान्वयव्याप्तिपरत्वे गृहीतव्याप्तिभेदाद्भेदः व्यतिरेकिणि व्यतिरेकव्याप्तेरेव गमकत्वेति स्वमतसाधारण्यानुपपत्तेरत आह दीधितौ व्याप्तिग्रह इतीति । साधारणोक्तिरिति-मतभेदेनान्वयव्याप्तिव्यतिरेकव्याप्त्युभयपरमित्यर्थः । मतभेदेन लक्षणभेदात् अनुगतरूपेण व्याप्त्योरुपादानमनुचितमिति शब्दस्यैव साधारण्यमुक्तम् । स्वमते व्यतिरेकव्याप्तेरेव व्यतिरेकसहचारग्राह्यतया व्यतिरेकसहचारेण व्याप्तिग्रह इत्यस्य व्यतिरेकव्याप्तिग्रह यत्रानुमित्यङ्गमित्यर्थे पर्यवसानात्तत्कृतानुमित्यौपयिकव्याप्तित्वव्यापकव्यतिरेकव्याप्तित्वकत्वमित्यत्र एव केवलव्यतिरेकित्वादिकमपि निर्वाच्यमित्यनेन सूचिते लक्षणे पर्यवसानमित्यवधेयम् । पूर्वपक्षिणा मीमांसकेन केवलान्वय्यनुमानानभ्युपगमादेव केवलान्वयिन्यभावाच्चेत्यनेन केवलान्वय्यनुमानानुपपत्तिप्रदर्शनमसङ्गतमतस्तदर्थं पूरयति तथेति । नैयायिकस्येत्यर्थः । तथाच नैयायिकस्य स्वमतसिद्धकेवलान्वय्यनुमानानुपपत्त्या व्यतिरेकव्याप्तिधियोऽनुमितिहेतुत्वोपगमो न युक्त इति मूलाभिप्रायः । पृथिवीतराद्भेदाश्रितत्वमेदरूपसाध्यनिरू-

पितस्वव्यापकसाध्यकरूपान्वयव्याप्तेः स्वत्वघटितायाः पक्षातिरिक्तेऽसत्त्वात् अप्रसिद्ध्या नानुमानसम्भव इति व्यतिरेकव्याप्त्यान्वयव्याप्त्यनुमानाशङ्कया असङ्गतिरतो व्याचष्टे साध्यव्याप्यत्वमिति। तद्वदन्यावृत्तित्वमिति। अस्यापि साध्यधर्मिकान्योन्याभावगर्भहेतुव्यापकताग्रहप्रतिबध्यव्यभिचारग्रहविरोधित्वेनान्वयव्याप्तिरूपता व्यतिरेकव्याप्तिवृत्तेश्च हेत्वभावे साध्याभाववन्निष्ठाभावप्रतियोगित्ववृत्त्यैव विरोधितेत्याशयः।

वस्तुतो यद्धर्मावच्छिन्नाभावव्यापकाभावप्रतियोगितावच्छेदकयद्रूपवान् यः स तद्रूपावच्छिन्नव्यापकतावच्छेदकतद्धर्मावच्छिन्नसमानाधिकरणवृत्तितद्रूपवानिति सामान्यतो व्याप्त्या पक्षधर्मताबलादप्रसिद्धाया अपि पृथिवीत्वत्वावच्छिन्नव्यापकतावच्छेदकेतरभेदत्वावच्छिन्नसमानाधिकरणवृत्तिपृथिवीत्वत्वरूपान्वयव्याप्तेः पृथिवीत्वे ग्रहसम्भव इति मूलाशयः।

ननु पृथिवीतराभिन्नावृत्तित्वरूपसाध्यस्य पृथिवीमात्रवृत्तिधर्मान्तरे प्रसिद्धिरुपगन्तव्या। तथापि चेद्व्यतिरेकव्याप्तिहेतुकानुमाना तत्प्रसिद्धिरित्युच्यते तत्राऽनवस्था। मानान्तराच्चेत्तत्प्रसिद्धिस्तदा पृथिवीत्वेऽपि सा समाना। मानान्तरं च नानुमानान्तरं तत्रापि साध्यप्रसिद्ध्यपेक्षणात्। न प्रत्यक्षं तत्र विपरीतकोटेरप्युपनीतभानसम्भवेन तन्निश्चयासम्भवादित्यत आह अंततः साध्य एवेति। साध्ये साध्यवदन्यवृत्तित्वस्य विरोधेन भानासम्भवादुपनयसहकृतेन तेन न तत्र साध्यवदन्यमात्रवृत्तित्वनिश्चयः सम्भवतीति भावः। उपस्थिताभावानामन्यत्रापि कदाचिन्मानसात्तन्निश्चयसम्भवेनोक्तत इत्युक्तम्।

(चि०) ननु व्यतिरेकि नानुमानं व्याप्तिपक्षधर्मताज्ञानस्य तद्धेतुत्वात्। अत्र च व्यतिरेकिसहचारात् व्याप्तिरन्वयस्य न पक्षधर्मता। न च व्याप्तिपक्षधर्मत्वं साध्याभावव्यापकाभावप्रतियोगित्वं द्वयमनुमितिप्रयोजकमिति वाच्यम्। अननुगमात्। न चान्यतरवत्त्वं तथा, एकप्रमाणपरिशेषापत्तेः। न

च तृणारणिमणिन्यायेनानुमितिविशेषे तत्कारणत्वमिति वाच्यम् । व्यतिरेकिसाध्येऽनुमितित्वासिद्धेः—उभयसिद्धक्लृप्ततत्कारणस्याभावात् । न च साध्याभावव्यापकाभावप्रतियोगित्वमेवानुमितिप्रयोजकमिति वाच्यम् । गौरवात्, केवलान्वयिन्यभावाच्च । अथ साध्याभावव्यापकाभावप्रतियोगित्वेन साध्यव्याप्यत्वमेवानुमीयते, एवं व्यतिरेकव्याप्त्याऽन्वयव्याप्तिमनुमाय यत्रानुमितिः स एव व्यतिरेकीत्युच्यते इति । तत्रान्वयव्याप्तेर्गमकत्वे व्यतिरेकव्याप्त्युपन्यासस्यार्थान्तरतापत्तेः । अन्वयव्याप्त्यनुकूलतया च तदुपन्यासेऽन्वयव्याप्तिमनुपन्यस्य तदुपन्यासस्याप्राप्तकालत्वादिति ।

उच्यते निरुपाधिव्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते प्रतियोग्यनुयोगिभावस्य नियामकत्वात् । न चैवं व्याप्तिग्रह एव पृथिवीतरभिन्नेति भासितं, नियतसामानाधिकरण्यरूपत्वाद्व्याप्तेरिति चेत् । सत्यम् । गन्धवत्त्वावच्छेदेनेतरभेदस्य साध्यत्वात् । अत एवाचार्यैः पक्षतावच्छेदके न हेतुत्वमनुमेने । पृथिवीत्वमितरभेदव्याप्यमिति प्रतीतावपि सर्वा पृथिवी इतरभिन्नेति पृथिवीविशेष्यकबुद्धेर्व्यतिरेकिसाध्यत्वाच्च ।

(दी०) निरुपाधीति । उपाधिज्ञानाहितव्यभिचारज्ञाननिरासाय पृथिवीत्वमिति । पृथिवीत्वमितरभेदव्याप्यमित्यत्र हि पृथिवीत्वत्वविशिष्टे पृथिवीत्वे इतरभेदसामानाधिकरण्यं भासते । पृथिवीतरभिन्नेत्यत्र शुद्धपृथिवीत्वविशिष्टे तदवच्छेदेनेतरभेद

इति न सिद्धसाधनमित्यर्थः। सर्वेति च पृथिवीत्वस्यावच्छेदकत्वस्फोरणाय। अत्र च पृथिवीत्वत्वं पृथिवीतरासमवेतत्वमात्रं न तु पृथिवीवृत्तित्वघटितमित्यतोपि नोपनयवैयर्थ्यम्।

(गा० ) निरुपाधीति मूलं उपाधिज्ञानाभावसहितेत्यर्थकं तदभावस्य व्याप्तिज्ञानकरणतया तत्सत्त्वप्रदर्शनस्य व्यभिचारज्ञानाभावरूपकारणसमवधानप्रदर्शनपरतया सङ्गमयति निरुपाधीति। व्यभिचारज्ञाननिरासाय—व्यभिचारज्ञानाभावमादायेत्यलाभाय। पृथिवीत्वरूपपक्षतावच्छेदके साध्यसामानाधिकरण्यविषयकस्य तद्धेतुकव्याप्तिग्रहस्यानुमित्यप्रतिबन्धकत्वं— तदुभयविषयतावैलक्षण्याप्रयुक्तमिति पृथिवीत्वमितरभेदव्याप्यमित्यादिमूलाभिप्रेतम्। तत्रानुमितेः पृथिवीविशेष्यकत्वकथनात् व्याप्तिग्रहे पृथिवीत्वस्य विशेष्यता अनुमितौ तद्विशिष्टस्यैत्येतावदेव तदभिप्रेतमिति भ्रमनिरासाय दर्शिताकारसूचितमन्यदपि वैलक्षण्यं स्पष्टयति शुद्धेति। स्वरूपतो भासमानेत्यर्थः। हेतुभिन्नसर्वत्वस्य पक्षतावच्छेदकत्वे हेतुपक्षतावच्छेदकभेदेन सिद्धसाधनपरीहारकत्वाशास्य कल्पान्तरतासम्भव इति सूचनाय सर्वत्वस्य पक्षतावच्छेदकत्वाभिप्रायेण न सर्वपदोल्लेख इत्याह सर्वेति चेति। अवच्छेदकत्वस्फोरणायेति। अवच्छेदकत्वेन विषयतासूचनायेत्यर्थः।

ननु पृथिवीत्वावच्छिन्नपक्षकस्थले पृथिवीत्वत्वावच्छिन्नस्य हेतुत्वे पृथिवीवृत्तित्वरूपपक्षधर्मताया हेतौ लाभात्परार्थस्थले उपनयवैयर्थ्यम्। न च हेतुतावच्छेदकपृथिवीवृत्तित्वघटितधर्मविशिष्टे पृथिवीवृत्तित्वस्योपनयादेव भानान्न तद्वैयर्थ्यमिति वाच्यम्, तथाप्युद्देश्यतावच्छेदकविधेययोरैक्येनोपनयाधीनशाब्दबुद्धेरसम्भवादित्यत आह अत्र चेति। नोपनयवैयर्थ्यं—पृथिवीवृत्तित्वघटितधर्मविशिष्टे पृथिवीवृत्तित्वस्य निराकांक्षतयाऽन्वयासम्भवेन उपनयस्यार्थाबोधकत्वेनेत्यर्थः। पृथिवीत्वत्व पृथिवीनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपसकलपृथिवीवृत्तित्वघटितमेवेत्यतोपि नोपनयवैयर्थ्यमिति सूचयितुमतोऽपीत्युक्तम्।

वस्तुतो व्यभिचारावारकतया हेतुतावच्छेदकगर्भसकलपृथिवीवृत्तित्वांशस्य वैयर्थ्येन तदनिवेश एव निर्भरः।

( चि० ) यद्वा व्यतिरेकव्याप्तेरेवान्वयेन गम्यगमकभावः । साध्याभावव्यापकसाधनाभावाभावेन साधनेन पक्षे साध्याभावाभावस्य साध्यस्य साधनात् । व्यापकाभावेन व्याप्याभावावश्यंभावात् ।

( दी० ) अथान्वयव्याप्तिवदकृतात्रस्पदार्थोपस्थित्यादिकं विना न तद्ग्रहसम्भवः, तत्सत्त्वे च तत एव व्याप्तिग्रहसम्भवे व्यतिरेकसहचारज्ञानस्य हेतुत्वे मानाभावः । न च व्यभिचारशङ्कानिवर्तकत्वेनैवान्वयव्यतिरेकसहचारग्रहयोरुपयोगित्वं, तद्ग्रहेऽपि शङ्कातादवस्थ्यात् । अधिकरणविशेषे च तन्निवृत्तौ साध्यवत्त्वसाधनाभाववत्त्वयोरन्यतरग्रहस्यैव तन्त्रत्वात्, व्यतिरेकव्याप्त्युपन्यासेऽर्थान्तरादितादवस्थ्याच्च । यत्तु सहचारमात्रलाभायैव सर्वत्रोदाहरणोपन्यास इति । तन्न । अर्थान्तराद्यापत्तेर्दुर्वारत्वात्, यच्छब्दादिवैयर्थ्याच्च । व्युत्पादयिष्यते च तस्य व्याप्तिबोधकत्वम् । न चान्वयिन इव व्यतिरेकिणोऽप्युदाहरणात् स्वरससिद्धान्वयव्याप्तिधीरानुभविकी येन तदर्थमपि। प्रकारान्तरमास्थेयमत आह यद्वेति ।

साध्याभावेति । नन्विच्छादिसाध्ये आत्मत्वादेर्व्यतिरेकित्वं न स्यात्, स्याच्च संयोगादेरात्मत्वे तथात्वमिति चेन्नासाध्यतावच्छेदकावच्छिन्नासमानाधिकरणत्वेन साध्याभावस्य साधनतावच्छेदकावच्छिन्नसाधनासमानाधिकरणत्वेन च साधनाभावस्य विशेषितत्वात् । संयोगाभावे साध्ये विभागाभावः केवलान्वयी । प्रतियोगिवैयधिकरण्यावच्छिन्ने च तत्र स तादृशो व्यतिरेक्यपि । व्याप्यव्यापकभावश्च साध्याभावत्वसाधनाभावत्वाभ्यां बोध्यः, तेन न व्यभिचारिण्यतिप्रसङ्गः । साध्याभावत्वादिकं च वैशा-

निकं न तु वास्तवं तेन मेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिज्ञानादनुमानम् ।

व्यापकीयत्वेनाभावस्य ज्ञानाद्व्याप्यीयत्वेनाभावस्य सिद्धिं पुनरप्रसिद्धसाध्यकसाधारणीमाह व्यापकाभावेनेत्यादि । अभावौ—अभाववत्त्वनिश्चयौ, अवश्यंभावश्चासति प्रतिबन्धके । अत्र च यद्रूपावच्छिन्नं प्रति व्यापकता गृह्यते तद्रूपावच्छिन्नीयत्वेनाभावसिद्धिः फलम् । येन रूपेण व्यापकता गृह्यते तद्रूपावच्छिन्नीयत्वेन व्यापकत्वविशिष्टतद्रूपावच्छिन्नीयत्वेन चाभाववत्ताज्ञानं हेतुरिति मन्तव्यम् ।

( गा० ) पक्षेत्यादिकल्पमवतारयितुं पूर्वकल्पेऽस्वरसबीजं दर्शयति अथेत्यादिना । न तद्ग्रहसम्भवः—नान्वयव्याप्तिग्रहसम्भवः, विशेषणज्ञानाभावादिति भावः । तत्सत्त्वे—तावत्पदार्थोपस्थित्यादिसत्त्वे । तत एवेति । व्यतिरेकसहचारज्ञानसहकृतत्वव्यवच्छेदक एवकारः । मानाभाव इति । अन्वयव्यतिरेकानुविधानासिद्धेरिति भावः । व्यतिरेकसहचारेणान्वयव्याप्तिरित्यत्र व्यतिरेकसहचारज्ञानस्य प्रयोजकत्वमेव विवक्षितं न तु कारणत्वमित्यभिप्रायिकामाशंकां निरस्यति न चेत्यादिना । अन्वयव्यतिरेकसहचारग्रहयोरिति । हेतुमत्त्वेन गृह्यमाणधर्मिणि साध्यवत्त्वग्रहोऽन्वयसहचारग्रहः तत्सत्त्वे तादृशे धर्मिणि साध्याभावग्रहासम्भवान्न तदात्मकव्यभिचारग्रहो भवति । एवं साध्याभाववत्त्वेन गृह्यमाणे धर्मिणि साधनाभावावगाहिनो व्यतिरेकग्रहस्य सत्त्वे तादृशधर्मिणि साधनवत्त्वावगाहिनो व्यभिचारज्ञानस्यैव न सम्भव इत्युभयोरेव व्यभिचारशङ्कानिवर्तकत्वम् । अत्रान्वयसहचारग्रहस्य तन्निवर्तकत्वं दृष्टान्तविधया दर्शितम् । अन्वयसहचारज्ञानस्यापि न स्वातन्त्र्येण व्याप्तिग्राहकता न वा विशेषणज्ञानविधया—तद्घटकपदार्थानां विशृङ्खलोपस्थिततोऽपि विशेष्ये विशेषणमित्यादिरीत्या तद्ग्रहसम्भवादिति, यथा तस्यापि व्यभिचारशङ्कानिवर्तकतयैव व्यापकताग्रहोपयोगिता तथा व्यतिरेकसहचारग्रहस्यापि इति पर्यवसितार्थः । उपयोगित्वमित्यत्रैव न चेत्यस्य सम्बन्धः । तद्ग्रहेऽपि—किञ्चिदधिकरणान्तर्भावे·

ण सहचारग्रहेपि, शङ्कातादवस्थ्यात्—अन्याधिकरणान्तर्भावेण व्यभिचारशङ्कासम्भवात् ।

नन्वेकाधिकरणे सहचारग्रहस्याधिकरणान्तरे व्यभिचारशङ्कानिवर्त्तकत्वाभावेपि तदधिकरणान्तर्भावेन व्यभिचारशङ्कानिवर्त्तकता तिष्ठत्येव तावतापि व्याप्तिग्रहोपयोगित्वमक्षतं तादृशशङ्काया अपि तद्ग्रहपरपन्थित्वादित्यत आह अधिकरणविशेष इति । साध्यवत्त्वसाधनाभाववत्त्वयोरिति । अन्वयसहचारघटकसाध्यवत्त्वांशभानस्यैव व्यतिरेकसहचारघटकसाधनाभाववत्त्वांशमानस्यैव व्यभिचारशङ्कानिवृत्त्युपयोगित्वादित्यर्थः । तथा चांशान्तरघटिततत्सहचारग्रहपर्यन्तस्य नोपयोगित्वसिद्धिरिति भावः ।

न च साधनवदिदं साध्याभाववदिति व्यभिचारग्रहप्रतिबन्धकतायां साध्यवत्त्वांशस्येव तद्धर्मितावच्छेदकतया साधनवत्त्वांशस्यापि भानमुपयुज्यते, निर्धर्मितावच्छेदकमानस्य विपरीतज्ञानाविरोधित्वादेव साधनवदिति व्यभिचारग्रहप्रतिबन्धकतायां साधनाभावांशस्येव तद्धर्मितावच्छेदकतया साध्याभाववत्त्वांशग्रहोप्युपयुज्यत इति वाच्यम् । समानविषयकत्वेन विरोधित्वमते धर्मितावच्छेदकभानस्यानुपयोगित्वात्, समानधर्मितावच्छेदकत्वेन विरोधितामते साधनादिमत्त्वसमानाधिकरणत्वमात्रेण साध्यादिमत्त्वग्रहस्य तत्सामानाधिकरण्यमात्रेण साध्याभावादिमानाविरोधितया सहचारदर्शनस्यैकाधिकरणान्तर्भावेनापि व्यभिचारग्रहविरोधित्वायोगात् । अयमेव योऽनुशयो दूषणान्तरानुसरणाबीजम् ।

एवं व्यभिचारशङ्कानिवर्त्तकत्वेन सहचारज्ञानस्य व्यापकताग्रहोपयोगित्वेऽपि कदाचित्स्वतःसिद्धव्यभिचाराग्रहाद्व्यापकताग्रहेण व्याप्तिग्राहकसहचारभेदादनुमानभेदो नोपपद्यत इत्यपि द्रष्टव्यम् ।

व्यतिरेकव्याप्तिज्ञानस्यानुमित्यजनकत्वे पूर्वपक्षोक्ता व्यतिरेकव्याप्तिबोधकोदाहरणप्रयोगानुपपत्तिरपि दुर्वारैवेत्यत आह व्यतिरेकेति । अर्थान्तरादीत्यादिना उक्ताप्रासकालत्वादिपरिग्रहः ।

यत्र न साध्यं तत्र न साधनमित्युदाहरणं न व्याप्तिप्रदर्शनपरं अपि तु सहचारमात्रप्रदर्शनायैव तावता व्यभिचारशङ्कानिवृत्तौ स्वत एव मानसो व्याप्तिग्रह इति नानाकांक्षितव्यतिरेकव्याप्तिप्रदर्शनेनार्थान्तरापत्त्यवकाश इति कस्यचित्समाधानमुपन्यस्यति य-

रिति। अर्थान्तराद्यापत्तेरिति। हेतुप्रयोगानन्तरं गमकतौपयिकव्याप्तेरेवाकांक्षितत्वादिति भावः। यच्छब्दादीति। आदिना वीप्सादिग्रहः। वैयर्थ्यादिति। तदसत्त्वेपि साध्याभाववति न साधनमित्यन्वित एव सहचारलाभसंभवादिति भावः। उदाहरणस्य व्याप्तिप्रदर्शनपरत्वे तद्बोधार्थमेव तदुपयोग इत्याहुः। व्युत्पादयिष्यत इति। तस्य-यच्छब्दादेः, व्याप्तिबोधकत्वं-व्याप्तिबोधोपयोगित्वं, यत्पदार्थांशे यद्विधेयं तद्व्यापकतायास्तत्पदोपस्थापितांशे यद्विधेयं तत्र भानस्य व्युत्पत्तिसिद्धत्वादिति भावः।

नन्वेतादृशव्याप्तिज्ञानस्य व्युत्पत्तिसिद्धत्वेऽपि तस्यापदार्थत्वे शाब्दबुद्धौ भानासम्भवात् साध्यवाचकपदस्य समनियतव्यापकताविशिष्टस्वार्थलक्षणयैव व्याप्तिबोध उपपादनीयः, तथाच व्यतिरेक्युदाहरणावपि लक्षणया कथंचिदन्वयव्याप्तिलाभो भविष्यतीत्याशङ्क्याह न चेति। तदन्वयव्याप्तिबोधार्थं प्रकारान्तरं-तदन्तर्गतयच्छब्दादिपदे हेतुव्यापकत्वादिविशिष्टे स्वार्थे निरूढलक्षणा।

व्यतिरेकव्याप्तिप्रविष्टसाध्याभावसाधनाभावयोः प्रतियोगिवैयधिकरण्यं निवेशयितु शङ्कते नन्विति। आत्मत्वादेर्हेतोर्व्यतिरेकित्वं न स्यादिति। व्यतिरेकिलिङ्गतयाऽभ्रान्तपुरुषीयानुमितिप्रयोजकत्वं न स्यादित्यर्थः। अन्येच्छादेरव्याप्यवृत्तितया आत्मादावपि तदभावसत्त्वेन तं प्रति व्याप्यवृत्त्यात्मत्वादिहेत्वभावस्याव्यापकत्वेन व्यतिरेकव्याप्तिप्रमाया अयोगादिति भावः। संयोगादेः-व्यभिचारिहेतोः, आत्मत्वे-साध्ये, तथात्वं-व्यतिरेकित्वं, अव्याप्यवृत्तेः संयोगादेरभावस्यात्मत्वाभावव्यापकत्वादिति भावः।

यद्यप्यात्मत्वाभाववति वृक्षादौ संयोगाद्यभावस्याप्यभावसत्त्वान्न तस्यात्मत्वाद्यभावव्यापकत्वं व्यापकताव्याप्तिलक्षणप्रविष्टतद्वृत्त्यभावे प्रतियोगिवैयधिकरण्यविशेषणस्यात्र प्रयोजनविरहेणानिवेशात्। न च तत्र तदनिवेशे द्रव्यभिन्नं संयोगिभेदादित्यत्राव्याप्तिः संयोगिभेदाभावस्य संयोगस्य साध्याभाववति द्रव्येऽभावसत्त्वेन साध्याभावव्यापकत्वासम्भवादिति वाच्यम्। संयोगादिभेदाभावस्य संयोगरूपत्वेपि संयोगिभेदाभावत्वेन व्याप्यवृत्तितया आपद्यकत्वात्, अन्यथोत्पत्तिकाले घटादौ संयोगो नास्तीतिवत् संयोगिभेदाभावो नास्तीति प्रतीत्यापत्तिरिति, हेत्वभावत्वेन साध्याभा-

व्यापकतायाः आवश्यकत्वात् । तथापि तद्भिन्नाभावप्रतियोगितानवच्छेदकहेत्वभावत्वरूपव्यापकतानिवेशे घटाभावादिरूपे व्यभिचारिण्यतिप्रसङ्गः घटाभावाद्यभावत्वस्य समनियतघटत्वाद्यपेक्षया गुरुत्वेनाभावप्रतियोगितानवच्छेदकत्वात्, अतस्तद्वद्यत्किञ्चिद्व्यक्त्यवृत्तित्वविशिष्टसामान्यकं यद्यत्तदन्यप्रकृतहेत्वभावत्वमेव तद्व्यापकत्वं प्रकृते विवक्षणीयम् तथाच संयोगाभावादेः साध्याभाववद्यत्किञ्चिद्व्यक्त्यवृत्तित्वविशिष्टसामान्यकत्वासम्भवात्तेन रूपेण व्यापकत्वमक्षुण्णमेवेति अतिव्याप्तिसङ्गतिः ।

साध्यतासाधनतावच्छेदकयोः साध्यतासाधनतावच्छेदकावच्छिन्नाभावप्रतियोगितावच्छेदकत्वेन निवेशः शिरोवेष्टनेनेत्यादिन्यायेनानुचित इत्याशयेन ताद्रूप्येणैव तन्निवेशयन् तदवच्छिन्नवैयधिकरण्यमभावरूपे निवेशयति साध्यतेति । तदवच्छिन्नासामानाधिकरण्यं—तदवच्छिन्नानधिकरणवृत्तित्वविशिष्टत्वम्, एवञ्च साध्याभावत्वादिनिवेशवैयर्थ्यात् साध्यतावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टव्यापकतावच्छेदकसाधनतावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टत्वाश्रयप्रतियोगित्वमिति पर्यवसितार्थः । विशिष्टसत्त्ववान् जातेर्द्रव्यं विशिष्टसत्त्वादित्यत्रातिव्याप्त्यव्याप्त्योर्वारणाय साध्यतावच्छेदकावच्छिन्नसाधनतावच्छेदकावच्छिन्नयोर्निवेशः ।

नन्वेवं संयोगाभाववान् विभागाभावात् एतत्संयोगाभाववान् एतद्विभागाभावादित्यादौ प्रतियोगिरूपसाध्यहेतुव्यतिरेकयोर्व्याप्तिग्रहाद्भ्रान्तस्यानुमितिर्न स्यात्—साध्याद्यसामानाधिकरण्यरूपविशेषणावच्छिन्नव्यतिरेकाप्रसिद्धेरित्याशङ्कामिष्टापत्त्या निराकुरुते संयोगाभाव इति । अत्र संयोगाद्यव्याप्यवृत्तिमात्रप्रतियोगिकाभावो विवक्षितः, न तु संयोगत्वाद्यवच्छिन्नाभावः—तत्संयोगाद्यभावस्य साध्यत्वे व्यतिरेकित्वानुपपत्तेर्न्यूनताप्रसङ्गात्, द्विक्षणमात्रस्थायिद्रव्यस्य सत्त्वे संयोगवति तत्र विभागस्य संयोगाधीनस्यासत्त्वेन प्रतियोगिवैयधिकरण्यानवच्छिन्नयोरपि—व्यतिरेकयोर्व्याप्यव्यापकभावासत्त्वेन व्यतिरेकिताया अप्रसक्त्याऽव्याप्तिशङ्काया एवानुदयाच्च । केवलान्वयीति । भ्रान्तपुरुषं प्रति अन्वयव्याप्त्या गमक इत्यर्थः । विशेषणान्तरानवच्छिन्नयोरेव संयोगविभागाभावयोः

साध्यहेत्वभावो व्यतिरेकव्याप्त्यसम्भवनियतः न तु विशेषणान्तरविशिष्टयोरपि तथाभाव इत्याह प्रतियोगीति । तत्र-संयोगाभावे साध्ये, सः-विभागाभावः,तादृशः-प्रतियोगिवैयधिकरण्यावच्छिन्नः । व्यतिरेक्यपीति । व्यतिरेकव्याप्त्यापि गमक इत्यर्थः । तत्र साध्याभावहेत्वभावयोः साध्याद्यसामानाधिकरण्यासम्भवेऽपि साध्यतावच्छेदकावच्छिन्नाद्यसामानाधिकरण्यस्य द्रव्ये सम्भवात्, तत्र साध्यतावच्छेदकप्रतियोगिवैयधिकरण्यावच्छिन्नयोस्तयोरसत्त्वात्, द्विक्षणमात्रस्थायिद्रव्यस्य प्रामाणिकत्वे अत्रापि संयोगविशेषाभावस्य साध्यता बोध्या ।

यद्यपि यत्रैककपालक्रियया कपालयोरारम्भकसंयोगकाले कपालान्तरे क्रिया तदनन्तरं कपालयोर्विभागस्तदनन्तरं कपालद्वयसंयोगनाशस्तत्र घटोत्पत्तेः प्रामाणिकत्वे घटो द्विक्षणावस्थायी स्यात्, सैवाप्रामाणिकी उत्पत्तिक्षणे इन्द्रियसंयोगासम्भवेन द्वितीयक्षणे घटप्रत्यक्षासम्भवात् । तृतीयक्षणे तस्यैवासत्त्वात् विषयनाशकाले प्रत्यक्षस्य सविवादत्वात् । फलसन्देहे सामग्र्या अप्यप्रामाणिकत्वेन तल्लिङ्गकानुमानस्याप्यसम्भवात् । न च कपालतत्संयोगादिघटितसामग्र्या अप्रत्यक्षेणापि ग्रहात् फलैकप्रमाणकत्वमिति वाच्यम्, विजातीयसंयोगस्यैव द्रव्यजनकतया तादृशवैजात्यस्य फलाभावेनानभ्युपगमसम्भवेन फलानिश्चये सामग्र्यासिद्धेरिति । तथापि यत्र महाघटनाशकाले तदारम्भककतिपयसंयोगा वर्त्तन्ते तत्र द्रव्यारम्भकतावच्छेदकजातेरावश्यकता, अन्यथा तद्वत्सु कपालेषु महाघट एव नोत्पद्येत, एवञ्च तत्र घटोत्पत्तिः सामग्रीबलसिद्धा । तत्र खण्डघटोत्पत्तिपूर्वकालीनैककपालक्रियया तदुत्पत्तिकाले कपालद्वयविभागो द्वितीयक्षणे च तत्संयोगनाशे तद्घटस्य तृतीयक्षणे नाश आवश्यक इति द्विक्षणमात्रस्थायिद्रव्यं प्रामाणिकं भवति । साध्याभावत्वसाधनाभावत्वाभ्यामिति । साध्यानधिकरणवृत्तित्वविशिष्टसाधनानधिकरणवृत्तित्वविशिष्टत्वाभ्यां इत्यर्थः । व्यभिचारिण्यतिप्रसङ्ग इति । धूमाद्यभावस्यापि ह्रदवृत्तित्वादिविशिष्टत्वेन वह्न्याद्यभावव्याप्यत्वाद्वह्न्याद्यभावत्वादिना धूमाद्यभावत्वावच्छिन्नव्यापकत्वादिति भावः ।

नन्वभावे प्रमेयत्वादिप्रतियोगिकत्वभ्रमदशायां प्रमेयत्वाभावो·

ऽभिधेयत्वाभावव्यापक इत्यादि प्रमात्वप्रमेयत्वादिनाऽभिधेयत्वाद्यनुमितेरनुपपत्तिः साध्याभावहेत्वभावयोरप्रसिद्ध्या तत्त्वेन व्याप्यव्यापकभावग्रहरूपकारणासम्भवादित्यत आह साध्याभावत्वादिकं चेति । वैज्ञानिकमिति । साध्यीयत्वाभावत्वादिना भासमानत्वरूपतया ज्ञानघटितमित्यर्थः । तथाच साधनीयत्वधर्मितावच्छेदकतया भासमानेऽभावत्वे साध्यधर्मितावच्छेदकतया भासमानाभावत्वावच्छिन्ननिरूपितव्यापकतावच्छेदकत्वज्ञानं हेतुर्न तु वास्तवसाध्याभावत्वावच्छिन्ननिरूपितव्यापकताज्ञानमित्यर्थः ।

मूले साध्याभावव्यापकसाधनाभावाभावेनेति । साध्याभावव्यापकतया भासमानो यः साधनाभावस्तदभावतया तत्प्रतियोगितया वा पक्षे ज्ञायमानेनेत्यर्थः । साध्यसाधनाभावस्य—साध्याभावविरोधितावच्छेदकरूपावच्छिन्नस्य, साध्यस्य साधनात्—सिद्धेरानुभविकत्वात् । व्यापकाभावेन व्याप्याभावावश्यंभावादिति नोक्तार्थे हेतुः—यद्रूपावच्छिन्नसत्त्वे यद्रूपावच्छिन्नसत्त्वावश्यंभावस्तद्रूपावच्छिन्नज्ञानात्तद्रूपावच्छिन्नसिद्धेरनियमात् । केवलधूमत्वावच्छिन्नज्ञानाद्वह्नित्वावच्छिन्नासिद्धेः । व्यापकाभावत्वेन निश्चितात् व्याप्याभावनिश्चयावश्यंभावादित्यस्य तदर्थत्वेऽपि तत्सिद्धौ तत्सिद्ध्यवश्यंभावस्य हेतुत्वासम्भवादुक्तहेतुत्वेन तदभिधानासङ्गतिः । अन्वयेन व्यतिरेकव्याप्तेर्गम्यगमकभावेऽपि नास्य हेत्वन्तरता अस्यैवार्थस्य साधनादित्यन्तेनोक्तत्वादित्यतः पूर्वं साध्याभावत्वसाधनाभावत्वाभ्यां व्याप्यव्यापकाभावज्ञानाद्धेतुमत्त्वेन ज्ञातपक्षे साध्यसिद्धेरनुभाविकत्वम् व्यतिरेकव्याप्तेर्गमकताहेतुत्वेनोक्तम् ।

इदानीमप्रसिद्धस्याप्यभावरूपसाध्यस्य प्रतियोगितावच्छेदको यो धर्मस्तदवच्छिन्नव्यापकतावच्छेदकावच्छिन्नीयत्वेनाभावरूपव्येनाभावरूपहेतुमत्ताज्ञानात्तद्धर्मावच्छिन्नीयत्वेनाभावसिद्धेस्तथात्वमित्याह व्यापकीयत्वेनेति । अप्रसिद्धसाध्यकसाधारणीमिति । तेन पृथिवीतरभेदादिरूपसाध्यस्य पक्षमात्रवृत्तितया प्रसिध्यसम्भवात् साध्याभावत्वेन हेत्वभावव्याप्यताग्रहो न सम्भवतीति सामान्यन्तरकल्पनमापद्यकमिति सूचितम् ।

यद्यप्येकदेश्यनुमताप्रसिद्धसाध्यकानुमितिप्रकारस्यापीय मूलकाराभिमततये—ननु पृथिवीतरेभ्यो भिद्यते पृथिवी।चा-

द्विति व्यतिरेकिणि साध्यमप्रसिद्धमित्यादि-पूर्वपक्षानवतारः पक्षैकदेशे साध्यमसिद्धिमालेच्य समाधानासंगतिश्च । तथापि साध्याभावत्वपर्याप्त्यमाधत्वाभ्यां व्याप्तिग्रहरूपा प्रथमोक्तसामग्री तत्र न सम्भवति प्रतियोगिज्ञानं विना व्यतिरेकव्याप्तिनिरूपणासम्भवात् । द्वितीयसामग्रीतोऽपि न तत्रानुमितिसम्भवः साध्यसन्देहरूपपक्षताविरहात् । अप्रसिद्धस्य विशेषणस्य ज्ञानविरहेण प्रकारतया भानासम्भवेनानुमितेः साध्यविशेषणकत्वानुभवविरोधश्चेति पूर्वपक्षाशयेन सन्दर्भशुद्धिनिर्वाहः ।

साध्यसन्देहो न पक्षता अपि तु सिद्ध्यभावः अनुमितेः साध्यविशेष्यकत्वं नानुभवविरुद्धम् । यदि चान्वयव्याप्तिविरोधमन्तरेणापि पृथिवीतरभिन्नेत्याद्यनुमितिरानुभविकी, तदाऽभावविशेष्यकानुमित्यनन्तरमेव तादृशानुमितिरुपगन्तव्या पूर्वानुमितेरेव विशेषणज्ञानत्वात् । यथा प्रतियोग्यधिकरणकालसत्त्वेऽज्ञातोऽभावः प्रत्यक्षे विशेष्यतयैव भासते अनन्तरं च विशेषणतया विशेषणज्ञानस्य सत्त्वादित्येकदेशिमतस्याप्यन्ये त्वित्यादिना उपन्यासः सङ्गच्छत इति । व्यापकाभावेनेत्यादिमूले व्यापकाभावनिश्चयाद्व्याप्याभावसिद्धिलाभायाभावपदद्वयमभावनिश्चयार्थकतया व्याचष्टे अभावेति । व्यापकाभावनिश्चयेऽपि प्रतिबन्धकबाधबुद्ध्यादिसत्त्वे व्याप्याभावानिश्चयात्तन्निश्चयावश्यभावकथनासङ्गतिरत पूरयति अवश्यभावश्चेति । व्यापकतावच्छिन्नप्रतियोगिताकोऽभावो व्यापकाभावनिश्चयात्सिध्यतीति मूलाशयभ्रमनिरासायाह यद्रूपावच्छिन्नं प्रतीति । यद्रूपावच्छिन्नप्रतियोगिताकत्वविषयिणीत्यर्थः । फलमिति । व्यापकाभावनिश्चयफलमित्यर्थः । प्रतियोगितायां व्याप्यताघटकसम्बन्धावच्छिन्नत्वमाननियमश्च व्याप्तिवादे सिद्धान्तलक्षणव्याख्यावसरे प्रपञ्चित इति नात्र तत्कथनम् । व्यापकस्य द्वित्वावच्छिन्नाभावनिश्चयात् व्याप्याभावासिद्धेराह येन रूपेणेति । यद्रूपे व्यापकतावच्छेदकत्वं गृहीत इत्यर्थः । तद्रूपावच्छिन्नीयत्वेनाभावत्वावगाहिज्ञानमिति योजना । सम्बन्धविधया तद्रूपावच्छिन्नप्रतियोगिताकत्वावगाहिज्ञानसम्बन्धोपादानमित्यर्थः । एवं सति तद्धर्मावच्छिन्नप्रतियोगिधर्मिकव्याप्तेर्ज्ञानं पृथक् तद्धर्मावच्छिन्नाभावत्वावगाहिज्ञानमप्यनुमितिजनकम् । विशिष्टपरामर्शस्यैवानुमितिहेतुत्वमिति नैयायिकाभिमतनियमश्चान्यत्रस्थले द्रष्टव्यः ।



सर्वथैव तादृशनियममुपपादयितुं प्रकृतेपि विशिष्टपरामर्शे इत्थं वह्निव्यापकताविशिष्टतद्रूपावच्छिन्नीयत्वेन वेति । व्यापकतावच्छेदकत्वविशिष्टवह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रतियोगिविशेषिताभाववत्ताज्ञानं वेत्यर्थः। व्यापकत्वसहितवह्नित्वावच्छिन्नप्रतियोगिताज्ञानं हेतुरिति—यथाश्रुतार्थो न साधुः—वह्नित्वव्यापकतानवच्छेदकत्वग्रहदशायामपि द्रव्यत्वादिना वह्न्यादेर्धूमादिव्यापकताग्रहाद्धूमव्यापकवह्न्यभाववानिति ज्ञानसम्भवेन धूमाद्यभावसिद्धिप्रसङ्गात्, महानसीयवह्निवादौ धूमादिव्यापकतानवच्छेदकत्वग्रहे धूमादिव्यापकतावच्छेदकद्रव्यत्ववन्महानसीयवह्न्यभाववान् पर्वत इत्यादिज्ञानादेव तत्र धूमाभावानुमितेरनुभवविरोधेनापत्तेरयोगात्। परामर्शोपपादनप्रकारश्च—गुरुधर्मस्य प्रतियोगितावच्छेदकत्वोपगमेन प्रदर्शितः, अन्यथा स्वरूपतो वह्नित्वादेः प्रतियोगितावच्छेदकत्वसम्भवेन व्यापकतावच्छेदकत्वविशिष्टत्वत्वादिना वह्नित्वादेः प्रतियोगितावच्छेदकत्वानुपपत्तेः। न च व्यापकतावच्छेदकत्वादिकमुपलक्षणतया प्रतियोगितावच्छेदकवह्निःवांशेऽवगाहमानमेव ज्ञानमनुमितिहेतुः सम्भवतीति गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाभावेपि निस्तार इति वाच्यम्। प्रतियोगिनि तद्विशेषणे चोपलक्षणतया प्रकारभावानुपगमात्। एतन्मते च कारणतावच्छेदके वह्नित्वादेर्विषयिता न विशिष्य निवेश्यते किन्तु व्यापकतावच्छेदकत्वसहिततद्धर्मितावच्छेदकतावच्छिन्नविषयितात्वेनैव, अतो धूमव्यापकतावच्छेदकेन्धनत्ववदभाववानित्यादिज्ञानवारणाय व्यापकतावच्छेदकत्वसहिततद्धर्मितावच्छेदकतापन्नधर्मावच्छिन्ने प्रतियोगिविषयतावच्छेदकतापर्यासिर्निवेश्या। यत्र व्यापकतावच्छेदकत्वधर्मितावच्छेदकतया वह्न्यंशे पूर्वक्षणवृत्तित्वादिवैशिष्ट्यं भासते तत्रानुमितिरिष्यत एव, तत्र विशिष्टवह्नित्वादेरेव व्यापकतावच्छेदकतया भानेन वह्नित्वाद्यविशेषात्।

(दी०) व्यापकप्रतियोगिकस्याभावस्यातिप्रसक्तत्वात्। व्यापकतावच्छिन्नप्रतियोगिताकस्य च सम्बन्धविशेषावच्छिन्नस्य सम्भवतोऽप्यसार्वत्रिकत्वात्। कारणानुगमः परं परिचिन्तनीयः। एवञ्च वह्निर्धूमव्यापको वह्न्यभाववांश्चायमिति ज्ञाना-

द्धूमव्यापकवन्ह्यभाववानयमिति ज्ञानाद्वा निर्धूमोऽयमिति धीरिति । धूमव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववानयमिति ज्ञानादित्यपि कश्चित् ॥

(गा०) यथाश्रुतव्यापकाभाववत्ताज्ञानहेतुतां दूषयति व्यापकप्रतियोगिकस्येति । व्यापकत्वघटितधर्मावच्छिन्नप्रतियोगिविशेषितस्येत्यर्थः । अतिप्रसक्तत्वात्—अजनकविशिष्टव्यापकाभावादिज्ञानविषयत्वात् ।

ननु व्यापकत्वपर्याप्तप्रतियोगितावच्छेदकत्वाव्यवगाहिज्ञानहेतुतया विशिष्टव्यापकाभावज्ञानादनुमितिर्वारणीयेत्यत आह व्यापकत्वावच्छिन्नेति । धूमादिव्यापकत्वावच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः । असार्वत्रिकत्वादिति । धूमादिसमानाधिकरणाभावप्रतियोगितानवच्छेदकद्रव्यत्वाद्यवच्छिन्नाधिकरणे ह्रदादावसत्त्वादित्यर्थः । तथाचाभ्रान्तानां ह्रदादौ वन्ह्यभावेन धूमाभावाद्यसिद्ध्या तादृशाभावज्ञानस्य न हेतुतासम्भव इति भावः । ननु सर्वत्र व्यापकतावच्छेदकधर्मवत्त्वाद्यवच्छिन्नसत्त्वेन व्यापकत्वावच्छिन्नाभावः प्रसिद्ध्यत्येव ॥ कथ तस्यासार्वत्रिकत्वाभिधानमित्यत आह सम्बन्धविशेषेति । व्यापकतावच्छेदकीभूतसयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकस्येत्यर्थः । सम्भवतोपि–गुणादौ प्रसिद्ध्यतोऽपि ।

ननु प्रथमकल्पे व्यापकतावच्छेदकधर्माणां यत्नतत्त्वेन निवेशात्तदननुगमेन द्वितीयकल्पेऽपि व्यापकताघटकसम्बन्धानां विशिष्य निवेशनीयतया तदननुगमेन कारणाननुगमाद्व्यभिचार इत्यत आह कारणाननुगम इति । कारणाननुगमप्रयुक्तदोषोद्धार इत्यर्थः । चिन्तनीयः—प्रयासेन कर्त्तव्यः । तथाच कारणस्यानुगमासम्भवे विशेषधर्माणां कार्यतावच्छेदकतामुपगम्य व्यभिचारो वारणीयः । विशेषधर्मश्च जातिविशेषरूप- स्तत्कारणानन्तर्यरूपो वेति भावः । प्रथमकल्पानुसारेण जनकज्ञानाकार दर्शयति वह्निर्धूमव्यापक इति । इति ज्ञानात्—इत्याकारकात् समूहालम्बनात् ज्ञानद्वयाद्वेत्यर्थः । द्वितीयकल्पानुसारेणाह धूमव्यापकेति । धूमव्यापकतावच्छेदकवह्नित्ववदभाववानित्याविज्ञानादित्यर्थः । निर्धूमोयमिति । यद्यपि निर्धूमोऽयमिति बुद्धेः धूमाभावविशिष्टबुद्धितयाऽप्रसिद्धसाध्यक-

परामर्शाच्च तादृशानुमितिः प्रथमं सम्भवति । तथापि अत्र धूमाभाव इति साध्यविशेष्यकानुमित्यनन्तरोत्पन्नानुमितेरेवाकारप्रदर्शनपरमिदम्, आनुभविकसाध्यविशेषणकानुमित्यनुरोधेनैव साध्यविशेष्यकानुमितिरुपेयते न त्वनुभवसिद्धा सेति न तदाकारप्रदर्शनम् ।

अथवा विशिष्टविशेषणकेऽपि विशिष्टप्रतियोगिकविलक्षणवैशिष्ट्यानवगाहिज्ञाने न विशिष्टविशेषणज्ञानापेक्षा ज्ञानत्वादिनिर्विकल्पकानन्तरं जानामीत्याकारकज्ञानत्वादिविशिष्टप्रकारकानुव्यवसायं स्वीकुर्वतो मणिकारस्याप्यनुमतमिदम् । काञ्चनमयत्वादिविशिष्टवह्नेः प्रागप्रतीत्या उपनीतकाञ्चनमयत्वविशिष्टवह्निप्रकारकानुमित्यसम्भवकथनं च तस्य विशिष्टविशेषणकज्ञानमात्र एव विशिष्टविशेषणज्ञानं हेतुरिति प्राचीनमतानुसारेण । अत एव तत्र दीधितिकृता विशिष्टप्रसिद्धिमन्तरेणापि विशेष्ये विशेषणमिति न्यायेन विशिष्टप्रकारकानुमितेः सम्भवो दर्शितः । तथाच धूमव्यापकवह्न्यभाववानित्यादिज्ञानाद्धूमाभावविशिष्टविषयकज्ञानमन्तरेणापि धूमाभाववानयमिति ज्ञानं विशेष्ये विशेषणमिति रीत्या सम्भवति अभावत्वादिसामान्यलक्षणया अभावत्वादिना कदाचिद्धूमाभावस्य ज्ञानात्तन्मूलकतत्स्मरणेन विशेषणज्ञानघटिततत्सामग्रीसम्भवात्, अनुमितिसाधारण्यात्स्वरूपतस्तद्विशेषणकतद्विशिष्टबुद्धौ तज्ज्ञानहेतुताया अप्रामाणिकत्वाच्च । तथाच तन्मतानुसारेणैव निर्धूमोयमित्याकारप्रदर्शनम् ।

वह्नित्वेन्धनत्वद्रव्यत्वादिनानाधर्मावच्छिन्नाभावानामुपलक्षणीभूतव्यापकतावच्छेदकत्वेन भासमानं वह्नित्वेन्धनत्वादि तत्पर्याप्तप्रतियोगितावच्छेदकताकत्वरूपानुगतधर्मप्रकारेण ज्ञानं व्याप्याभावानुमितौ हेतुः, प्रतियोगितासंसर्गक एव ज्ञाने प्रतियोगितावच्छेदकतावुपलक्षणधर्मभानानुपगमात्, अतो जात्यवच्छिन्नप्रतियोगिताकाभावो भूतल इति वाक्यं प्रमाणं अप्रमाणं तु जातिमान्नास्तीत्यादेरित्युपपद्यत इति गुरूणां मतमाह धूमव्यापकेति ।

अत्रेदमस्वरसबीजम्–गुरुधर्मस्य प्रतियोगितावच्छेदकताया व्यवस्थापितत्वात्तिरूककरूपेण धूमव्यापकतावच्छेदकवह्नित्वपदभावप्रानित्यादिप्रतियोगितासंसर्गकज्ञानकारणत्वमेवोचितं, न तूक्तप्रतियोगिताप्रकारकज्ञानहेतुत्वं तद्धेतुतावच्छेदकगर्भे प्रतियोगितावच्छेदकता-

पर्याप्त्यवगाहित्वानिवेशेन गौरवात्, अन्यथा महानसीयवह्नित्वावच्छिन्नाभावस्यापि धूमव्यापकतावच्छेदकवह्नित्वघटितधर्मावच्छिन्नप्रतियोगिताकतया व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन तादृशाभावविषयकज्ञानावस्थान्तस्य पर्वतादौ निर्धूमत्वासिद्धिप्रसङ्गात्। प्रतियोगितासंसर्गकज्ञानहेतुतामते व्यापकतावच्छेदकत्वतद्धर्मितावच्छेदकताकधर्मोभयावच्छिन्ने प्रतियोगिनिष्ठप्रकारतावच्छेदकतायाः स्वरूपतः पर्याप्तिनिवेशेनैव प्रतियोगितावच्छेदकगर्भे प्रतियोगितावच्छेदकप्रविष्टस्य वैशिष्ट्यादेरधिकस्य विशिष्टाभावाविरुद्धौ भानेन प्रतियोगिविषयतावच्छेदकतायाः उक्तोभयधर्मविशिष्टेऽपर्याप्तत्वादतिप्रसङ्गेन प्रतियोगितावच्छेदकत्वपर्याप्त्यवगाहित्वानिवेशात्।

यत्तु महानसीयवह्नित्वावच्छिन्नाभावस्यापि धूमादिव्यापकतावच्छेदकपर्याप्तप्रतियोगितावच्छेदकताकत्वं दुरुपह्नवं-तत्प्रतियोगितावच्छेदकप्रविष्टयोर्वह्नित्वमहानसीयवह्निभिन्नत्वयोरेव धूमव्यापकतावच्छेदकत्वात्, तथा चोक्तरूपेण महानसादौ तादृशाभावज्ञानान्निर्धूमत्वसिद्धिप्रसङ्गः तद्वारणाय धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणप्रकारकज्ञानभिन्नं यत्प्रकारकज्ञानं तत्त्वमेव व्यापकतावच्छेदकत्वं तदाश्रयपर्याप्तप्रतियोगितावच्छेदकताकत्वप्रकारेणाभावज्ञानमेव हेतुरुपेयते। तादृशव्यापकतावच्छेदकत्वं च यत्तत्त्वगर्भतया न विशिष्टैकार्थरूपमिति न विशिष्टपरामर्शसम्भव इत्यस्वरसबीजम्।

तदसत्-एवं सति व्यापकत्वविशिष्टवह्नित्वावच्छिन्नविषयकज्ञानस्यापि विशिष्टपरामर्शत्वासम्भवात्, एवमन्वयिस्थले विशिष्टपरामर्शनिर्वाहो न स्यात्-तत्रापि धूमादिहेतुना महानसीयवह्निभिन्नवह्नित्वाद्यवच्छिन्नस्य महानसादौ सिद्धिवारणाय निरुक्तयत्त्वघटितव्यापकतावच्छेदकत्वप्रकारकसाध्यतावच्छेदकज्ञानस्यैवानुमितिहेतुताया उपगन्तव्यत्वात्। यदि च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणापर्याप्तधर्मपर्याप्त्यधिकरणत्वमेव व्यापकतावच्छेदकत्वं मिलितयोर्महानसीयवह्निभिन्नत्ववह्नित्वयोस्तादृशप्रतियोगितावच्छेदकत्वपर्याप्त्यधिकरणयोरपर्याप्तो यो धर्मस्तत्पर्याप्त्यधिकरणतायास्तादृशयोरसत्त्वात् तादृशयोस्तदवगाहिज्ञान भ्रम

एवं तथाभ्रान्तस्य महानसादौ तादृशसाध्यतावच्छेदकावच्छिन्नसिद्धिप्रसङ्गो यत्त्वतत्त्वाघटितोक्तव्यापकत्वावगाहिविशिष्टपरामर्शहेतुतयापि शक्यवारण इत्युच्यते । तदा व्याप्याभावानुमितौ निरुक्तव्यापकतावच्छेदकताश्रयपर्याप्तप्रतियोगितावच्छेदकताकत्वेनाभावावगाहिनो विशिष्टपरामर्शस्य हेतुत्वोपगमेन महानसीयवह्निभिन्नवह्नित्वाद्यवच्छिन्नाभावेन धूमत्वाद्यवच्छिन्नाभावसिद्धिर्वारयितुं शक्यत इति ।

( चि० ) अथैवं न साऽनुमितिः क्लृप्तहेतुलिङ्गपरामर्शाभावात्, अन्यथाऽननुगम इति चेन्न । अनुमितिमात्रे व्याप्तिज्ञानस्य प्रयोजकत्वात् । न चैवमतिप्रसङ्गः, अनुमितिसामान्यसामग्र्यां सत्यामप्यनुमितिविरहादनुमित्यनुत्पत्तेः, विशेषसामग्रीसापेक्षाया एव सामान्यसामग्र्या जनकत्वात् ।

( दी० ) व्याप्तिज्ञानस्येति । अत्र व्याप्तिपदेनान्वयव्यतिरेकव्यापकताग्रहानियतविषयताकोऽर्थोऽभिमतः । पक्षस्य पक्षतावच्छेदकस्य वा ज्ञानमनुमितिमात्रे हेतुरित्यपि वदन्ति ।

(गा०) नन्वन्वयव्यतिरेकव्यापकतासाधारणव्यापकत्वाकत्वस्याननुगतस्य दुर्वचतयाऽनुमितिसामान्ये व्याप्तिज्ञानत्वेन हेतुताभिधानं न सङ्गच्छते इत्याशङ्क्याह अथेति । अन्वयेति । अन्वयव्यापकत्वे व्यतिरेकव्यापकत्वे च भासमानेऽप्ययं भासते योऽर्थोऽभावत्वादिः स विवक्षित इत्यर्थः । अन्वयव्याप्तिज्ञानेऽप्यभासमानस्य साध्यतावच्छेदकस्याप्रसिद्धसाध्यकव्यतिरेकपरामर्शासङ्ग्राहकतया व्यतिरेकव्यापकत्वोपादानम्, साध्याभावव्यापकतात्मकप्रतियोगित्वाभावस्य व्यतिरेकव्याप्तिज्ञानेऽप्ययं भानेऽपि तद्विषयकस्यान्वयव्याप्तिज्ञानासंग्राहकतयाऽन्वयव्याप्त्युपादानम् ।

वस्तुतस्तु यथाचन्यादिविषयकत्वं उभयव्याप्तिज्ञानानुगमकमित्येतत्स्फोरणाय उभयव्यापकताघटकरूपेण तादृशपर्यायोपादानम् ।

मतान्तरमाह पक्षस्येति । स्वविशेष्यस्येत्यर्थः । स्वं फलीभूता-

नुमितिः। समानविशेष्यकत्वस्यातन्त्रत्वेऽनुमितिपूर्वं तद्विशेष्यकज्ञाना-नियमात्, पक्षतावच्छेदकस्येति। स्वविशेष्यतावच्छेदकधर्मस्येत्यर्थः। अनवच्छिन्नप्रकारताश्रयस्येति परमार्थः।

अत्र चास्वरसः स्वपदार्थान्तर्भावे तदननुगमात्। तदनन्तर्भावे च पक्षादिविषयकत्वस्याऽव्यावर्त्तकत्वात् वस्तुमात्रस्यैव पक्षत्वात्।

(चिं०) अन्वयिव्यतिरेकिविशेषवद्वयसामग्री च नास्त्येव।

(दी०) अन्वयीति। अन्वयिनि ताद्रूप्येण वह्नित्वादिना, व्यतिरेकिणि तु इतरप्रतियोगिकत्वेन वह्न्यभावादिनिषेधतया सिद्धिरित्यनुभवसिद्धः कार्यगतो विशेषः कारणविशेषजन्यतावच्छेदकम्। अत एव तत्र तत्र सर्वत्र व्यतिरेकिणि तस्माच्च तथेत्येव निगमनशरीरम्।

अन्वयिना वह्न्यभावेन धूमाभावसिद्धौ धूमाभावत्वं प्रकारः व्यतिरेकिणि तु तत्सिद्धौ प्रसक्ष इव प्रतियोगितया धूमः प्रकार इति वदन्ति।

इत्थं च ह्रदो धूमाभाववान् वा पर्वतो वह्निमान् वेत्यादिजिज्ञासायां विप्रतिपत्त्याद्युद्देश्यायाः साध्यतावच्छेदकरूपेण साध्यवत्त्वप्रतीतेरनुपयोगिनो व्यतिरेक्युदाहरणादेः कथमवतार इति विभावनीयम्॥

केचित्तु, अन्वयव्याप्तिज्ञानानन्तरत्वादिकमेवानन्यथासिद्धतया जन्यतावच्छेदकमित्याहुः।

अन्यतरत्वेन तादृशपरामर्शयोः कारणत्वमित्यपि कश्चित्।

इति केवलव्यतिरेकिदीधितिः॥

(गा०) पक्षतावच्छेदकत्वाच्च विशेषसामग्रीरूपयोरन्वयव्यतिरेकव्याप्तिज्ञानयोः परस्परव्यभिचारः कार्यवैचित्र्यादेव निरसनीयः। अनुमित्योर्वैचित्र्यं च जातिविशेषाभ्यामन्वयव्यतिरेकपरामर्शज-

यज्जन्यानुमितौ सङ्करेण तत्तत्परामर्शजन्यतावच्छेदकतया जातिद्वयकल्पनासम्भवात्, अतस्तादृशानुमित्योर्विधेयाविषयतावैलक्षण्येन वैचित्र्यमुपपादयति अन्वयिनीत्यादिना। तादृप्येण वह्नित्वादिना सिद्धिरित्यग्रिमेणान्वयः। व्यतिरेकिणि त्वितरप्रतियोगिकत्वेनेति। इतरभेदसाध्यकेऽनुयोगितासम्बन्धेनेतरप्रकारेणेत्यर्थः। न च तेन सम्बन्धेनेतरावच्छिन्नस्य हेतुव्यापकताज्ञानादपि तादृशरूपेणानुमित्युत्पत्त्या तत्र व्यतिरेकव्याप्तिज्ञानव्यभिचार इति वाच्यम्। तादृशहेतुव्यापकताज्ञानादनुयोगितयेतरविशिष्टस्य वैशिष्ट्यभानाद्व्यतिरेकिपरामर्शात्साध्यप्रसिद्ध्यनन्तरं केवल विशेष्ये विशेषणमित्यादिरीत्यैवेतराविशेषितभेदानुमितेः, साध्याप्रसिद्धिदशायां चेतरप्रकारेण भेदविशेष्यकपक्षप्रकारकानुमितेरुपगमेन वैलक्षण्यात्। न चेतरव्यापकीभूताभावप्रतियोगिमत्त्वाज्ञानजन्येतरभेदानुमितेरन्वयिहेतुकानुमितित उक्तरीत्या वैलक्षण्योपपादनेऽपि इतरभेदाभावव्यापकीभूताभावप्रतियोगिमान्पक्ष इति ज्ञानजन्येतरभेदत्वविशिष्टवैशिष्ट्यावगाहिन्या अनुमितेरितरभेदत्वावच्छिन्नव्यापकताज्ञानजन्यानुमितितो वैलक्षण्यं दुर्वचमिति वाच्यम्। तत्रानुपदवक्ष्यमाणरीत्या व्याप्यतावच्छेदकतया गृहीतेतरभेदाभावत्वावच्छिन्नाभावत्वेनैवानुमित्युपगमात्। वह्न्यभावाद्यभावसाध्यकव्यतिरेकिलिङ्गकानुमितेर्वैलक्षण्यमाह वह्न्यभावादीत्यादिना। वह्न्यभावादिनिषेधतया-वह्न्यभावाभावत्वेनेत्यर्थः। तेन रूपेण व्यापकताज्ञानजन्यानुमितेस्तद्विशिष्टवैशिष्ट्यबोधरूपतया व्यतिरेकिणि च तद्रूपेणानुमितेस्तद्विशिष्टवैशिष्ट्यानवगाहितया विशेषो बोध्यः।

इति श्रीमद्गदाधरभट्टाचार्यचक्रवर्तिविरचितानुमानगादाधर्यां
केवलव्यतिरेकिप्रकरणम्॥

---

( वि० ) ननु पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादिति व्यतिरेकिणि साध्यमप्रसिद्धं, तथा च न व्यतिरेकिनिरूपणं न वा पक्षत्वं न वा लिङ्गजन्यसाध्यविशिष्टतज्ज्ञानं—तेषां साध्यज्ञानजन्यत्वात्। अथ साध्यं प्रसिद्धं, तदा यत्र प्रसिद्धं तत्र हेतोरवगमेऽन्वयित्वं, अनवगमे असाधारण्यम्। किञ्च इतरभेदो न स्वरूपं अधिकरणप्रतियोगिनोः पृथिवीजलाद्योरनुमानात् प्रागेव सिद्धेः। नापि वैधर्म्यं जलादिनिष्ठात्यन्ताभावप्रतियोगित्वं, तद्धि पृथिवीत्वादिकं तच्च सिद्धमेव। न च जलादिनिष्ठात्यन्ताभावप्रतियोगित्वेन पृथिवीत्वं न सिद्धमिति वाच्यम्। जलादौ पृथिवीत्वात्यन्ताभावग्रहदशायां पृथिवीत्वेऽपि तत्प्रतियोगित्वग्रहात्। अन्योन्याभावस्तु भेदो यद्यपि साध्यं सम्भवति—वैधर्म्यज्ञानसाध्यत्वादन्योन्याभावग्रहस्य, तथापि जलादिप्रतियोगिकान्योन्याभावस्य प्रसिद्धिः। न च जलादिप्रत्येकान्योन्याभावः साध्यः, असाधारण्यप्रसङ्गात्।

## बटुकनाथशास्त्रिकृतं व्यतिरेकिविवेचनम्।

यत्कृपालेशतो मूको जायते वाग्विदांवरः।
तं नत्वा श्रीगुरुं कुर्वे व्यतिरेकिविवेचनम्॥

नन्विति। यद्यपीतरप्रतियोगिकभेदाभावे साध्ये विशेष्यवति विशिष्टाभावस्य विशेषणाभावपर्यवसायित्वेनेतरप्रतियोगिकभेदानुमितिर्विशेष्ये विशेषणमित्यादिन्यायेनापि विशिष्टवैशिष्ट्यनिर्वाहेण साध्यविशिष्टज्ञानस्य पक्षताघटकसन्देहस्य च सम्भवात् व्यतिरेकिनिरूपणस्य च यादितरप्रतियोगिकभेदावच्छिन्न तत्र पृथिवीत्वावच्छि-

कमित्याकारकस्य सम्भवात् इतराप्रतियोगिकभेदावच्छिन्नयोर्जला-दिघटयोः पृथिवीत्वानवच्छिन्नत्वात् एकत्र तस्यावृत्तेरन्यत्र वृत्ता-वप्यसमाप्तेः, तादृशावच्छिन्नत्वस्य च हेतुत्वात् । तथापि विशिष्टा-भावप्रकारिकैव धीः स्यात्, न त्वितरभेदप्रकारिका । विशिष्टाभाव-स्य विशेषणाद्यभावरूपत्वेऽपि विशिष्टाभावत्वप्रकारिका धीः स्यात् । भावे वा इतराप्रतियोगिकाभावत्वं प्रकारः स्यात्, न त्वित-रप्रतियोगिकत्वमतश्चैतादृशप्रतीतिरीदृशसाध्यप्रसिद्धावेवेति अवसे-यम् । अन्वयित्वमिति । तथाच अन्वयसहचारज्ञानादेव तत्र निर्वा-हे गुरुतरव्यतिरेकसहचारज्ञानस्य हेतुत्वकल्पने किं प्रयोज-नमिति भावः । नन्वनवगमे कथमसाधारण्यं ? किन्तु तद्ग्रह एवे-त्याशंकायामाह किञ्चेति । नन्वन्योन्याभावरूपो भेदः साध्य इत्यत आह अन्योन्याभावस्येति । असाधारण्येति । जलभेदवत्तया नि-श्चिते वाय्वादौ पृथिवीत्वस्यासत्त्वादिति भावः ।

(चि०)अथ पृथिवी तेजोभिन्ना न वेति संशयेन ते-जोभिन्नत्वेऽवगते पृथिवी तेजोभिन्ना सती जला-दित्रयोदशभिन्ना न वेति संशये तेजोभिन्नत्वे सति जलादित्रयोदशभिन्नत्वं प्रसिद्धं तदेव साध्यम्, एक-विशेषणविशिष्टे विशेषणान्तरबुद्धेरेव विशिष्टवैशि-ष्ट्यज्ञानात्, एवञ्च संशयप्रसिद्धं साध्यमादाय व्य-तिरेकादिनिरूपणम् । यद्वा पृथिवी जलादिभिन्ना न वे-ति प्रत्येकं त्रयोदशसंशयविषयाणां त्रयोदशान्यो-न्याभावानां समुदायः पृथिव्यामवगतो व्यतिरेका-दिनिरूपकः । न चैवं पृथिव्यामेव साध्यप्रसिद्धेर्व्यति-रेकिवैयर्थ्यम्, साध्यनिश्चयार्थं व्यतिरेकिप्रवृत्तेः । न चा-साधारण्यम्, समुदितान्योन्याभावानां साध्यत्वे सपक्षाभावादिति चेन्न ।

साध्यनिश्चये हि साध्यव्यतिरेकनिश्चयो भवत्येव

साध्यसन्देहे तद्व्यतिरेकसंशयस्य वज्रलेपत्वात्, तथा च संशयरूपा साध्यसिद्धिरिति निष्प्रयोजनम्। एतेन पृथिवी जलादिभ्यो भिन्नेति विप्रतिपत्तिरूपवादिवाक्याद्वाकाङ्क्षादिमतोऽपूर्वार्थप्रतिपादकत्वात् साध्यप्रसिद्धिरिति परास्तम्। वाक्यादेव पृथिव्यां साध्यसिद्धेर्व्यतिरेकिवैयर्थ्यात्। न च तद्बुद्धौ वादिवाक्यजन्यत्वेनाप्रामाण्यसंशयात् निश्चयेऽपि संशय इति, तन्निश्चयार्थं व्यतिरेकीति वाच्यम्। तर्हि संशयप्रसिद्धं साध्यं, तस्य च न व्यतिरेकिनिश्चायकत्वमित्युक्तत्वात्, स्वार्थानुमाने तदभावाच्च।

(वि०) ननु तेजोभेदविशिष्टं जलादिभिन्नत्वमुक्तसंशये न कथं प्रसिद्धं तेजोभिन्नत्वस्य जलादिप्रतियोगिकभिन्नत्वस्य च पृथग्भूतयोरुक्तसंशयेनाग्रहणेऽपि विशिष्टस्य पूर्वमप्रसिद्धेरत आह एतेनेति।

यद्वेति। पूर्वमेकसंशयविषये संशयान्तरोत्पत्तिरित्युक्तम्, अधुना समूहालम्बनवदेकदैव संशये तावद्भेदावगाहोऽस्य इति भेदः। साध्यनिश्चयार्थमिति। उक्तसाध्यप्रसिद्धेः संशयरूपत्वादिति भावः। असाधारण्यमिति। अनुमितिविषयतावच्छेदकावच्छिन्नसाध्यवतः सपक्षत्वेन विवक्षितत्वान्न्यायमसाधारण इत्यग्रे वक्ष्यमाणत्वादिति भावः। साध्यनिश्चय इति। यद्यपि यत्र सन्देहः तत्र व्यतिरेकसन्देह उपपद्यते, न ह्यन्यत्र सन्देहेनान्यत्र तत्सन्देहः अनुच्छेदतापत्तेः, तथा च पक्षे संशयेऽप्युपपद्यतां व्यतिरेकनिरूपणम्, तथापि निश्चायकाभावेन संशयस्य वज्रलेपत्वमुक्तम्। न च तदभावः, कस्यचिदपि निश्चयाभावेन निश्चायकाप्रसिद्ध्या तदुभयोरप्यनुपलम्भाभावात्। न च यावदुपलम्भकाभावोऽस्तु प्रतियोगिसत्त्वविरोधित्वमभावस्येति वाच्यम्। तत्रापि प्रतियोगिसत्त्वप्रसञ्जितोपलम्भप्रतियोगिकत्वमित्यग्रे वक्ष्यमाणत्वात्। न च निश्चयाप्रसिद्ध्या निश्चयापादनं भवतीति। योग्यानुपलम्भस्यापर एव स्फुटत्वात्। न च जलं जलादिभ्यो वान्योन्याभाववत् तथासाधकम् तदेकदेशाभाववत्त्वादिति सामान्यतो दृष्टानुमानाद्विषय इति वाच्यम्। पृथग्भूयोर्मनुगतधर्मस्य व्या-

प्यतावच्छेदकस्याभावे तादृशसामान्यतोदृष्टस्य दुष्टत्वात् । अन्यथा यद्धर्मेण तत्तद्भिन्नमिति सामान्यतो दृष्टादर्थसिद्धेः सर्वत्र व्यतिरेकिविलयापत्त्योक्तसमर्थनस्याप्यनौचित्यात्, प्राक् नास्तितानुमानमपि तद्वृत्तयाऽसमर्थ्यमाणत्वे सति समर्थ्यमाणत्वहेतोरन्वयाप्रतीतौ व्यतिरेकेऽपि तदुभयानवतारे प्राक्नास्तीतिबुद्धेरसिद्धेः । किञ्चोक्तसाध्यप्रसिद्धस्यासदर्थस्यापि सिद्धिप्रसङ्गः । न च यद्व्यतिरेकेऽनिष्टप्रसङ्गः साध्योपस्थितस्यापि तस्यैव हेतौ व्याप्तिग्रहः, साध्योपस्थितस्य व्याप्तिग्रहेण तन्मूलकानिष्टप्रसञ्जनाभावात् । यत्तु अनुव्यवसायोपनयेन निश्चयरूपाप्रसिद्धिरिति । तन्न । यादृशो निश्चयो व्याप्तिग्राहको अनुव्यवसायस्य तथात्वाभावादिति अलं विस्तरेण ॥

## ( केवलव्यतिरेकिसिद्धान्तः )

(चि०) उच्यते घटादावितरसकलभेदस्य प्रत्यक्षतः प्रसिद्धिः घटो न जलादिरिति प्रतीतेः । नन्वयमन्योन्याभावो न प्रत्यक्षः अतीन्द्रियप्रतियोगिकाभावत्वात् परमाणुसंसर्गाभाववत् योग्यानुपलब्धेरभावग्राहकत्वात् नयनोन्मीलनानन्तरं स्तम्भः पिशाचो न भवतीति प्रतीतेर्वायुकम्पलेन वायुर्नास्तीतिवल्लिङ्गग्रहोपक्षीणत्वादितिचेत् । न । यो ह्यनुपलम्भोऽधिकरणे प्रतियोगिसत्त्वविरोधी सोऽभावग्राहकः न तु योग्यानुपलब्धिमात्रम्, अन्यथा वायौ रूपाभाववतीतिवत् जलपरमाणौ पृथिवीत्वाभावग्रहप्रसङ्गात् । अधिकरणे प्रतियोगिसत्त्वञ्च तर्कितं—यदि हि स्तम्भः पिशाचः स्यात् स्तम्भवदुपलभ्येत न पिशाचानुपलम्भः स्यात् । न च पृथिवी जलादिभ्यो भिद्यते जलावृत्तिधर्मवत्त्वात् तेजोवत्, एवमन्येभ्योऽपि भेदसिद्धौ यादृशभिदेति विशेषणं दत्त्वा समस्तभेदसाधनादन्वयित्वमेव

पृथिव्यां त्रयोदशभेदासिद्धिरिति किं व्यतिरेकिणेति वाच्यम् । जलादिभिन्ना सती समवायिभिन्नेति बुद्धावपि त्रयोदशभिन्नेति बुद्धेर्व्यतिरेकिसाध्यत्वात् । न च घटस्यापि पक्षत्वादंशतः सिद्धसाधनम्, सर्वा पृथिवीतरभिन्नेत्युद्देश्यप्रतीतेरभावात्, पक्षतावच्छेदकनानात्वे हि तत्, अत एवानित्ये वाङ्मनसे इत्यत्रानित्या वागिति बुद्धेरुद्देश्याया असिद्धत्वादंशतः सिद्धसाधनम्, अन्यथानुमानमात्रोच्छेदात् पक्षस्य सिद्धस्यैव साध्यत्वात् । न च घटः कथं पक्षः साध्यनिश्चयेन संशयसिषाधयिषयोरभावादिति वाच्यम् । सर्वा पृथिवी इतरभिन्ना न वेति संशयस्य तत्प्रकारकसिषाधयिषायाश्च सामान्यतो घटविषयत्वात् घटत्वेन विशेषदर्शनं सिद्धिर्वा, अतस्तेन रूपेण संशयसिषाधयिषे न स्तः, पृथिवीत्वेन ते भवत एव धूमवान् वह्निमानिति धूमवत्त्वेन वह्निनिश्चयेऽपि पर्वते वह्निसंशयवत् ।

(वि०) अयोग्यधर्मानवच्छिन्नयोग्यमात्रवृत्तिप्रतियोगिताकत्वमभावप्रत्यक्षे तन्त्रमित्यादावनाशङ्कते नन्विति । योग्यानुपलब्धेरिति । प्रतियोगिनो योग्यस्यानुपलब्धेरित्यर्थः । तथा चाधिकरणेषु मध्ये निरुक्तनिश्चयाभावविशिष्टो यो देशः प्रतियोगिमत्त्वाविरोधी-प्रतियोगितावच्छेदकसंबन्धसंसर्गकाधिकरणत्वसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिमत्तया आपादितसाक्षात्कारकः स देशोऽभावग्राहक इति अतीन्द्रियप्रतियोगिकस्याप्यभावस्य लौकिकप्रत्यक्षविषयत्वाद् इत्यर्थः । नन्विति । तुशब्दः तत्र इत्यर्थे । नातो निरुक्तयोग्यतासहितैव निरुक्तानुपलब्धिरभावलौकिकप्रत्यक्षे कारणं व्यतिरेकव्यभिचारादित्यर्थः । अन्यथा—योग्यप्रतियोग्यनुपलब्धिरूपयोग्यताया अभावलौकिकप्रत्यक्षहेतुत्वे । प्रसङ्गादिति । उक्तयोग्यताया

स्तत्र सत्त्वादिति भावः ।

ननु अत्यन्ताभावादिग्रहे अधिकरणे प्रतियोगिसत्त्वमप्रसिद्धम्, तथाच कथं तद्विरुद्धगर्भानुपलब्धिः प्रसिद्धेत्यत आह अधिकरण इति । तर्कितं-प्रसञ्जकीकृतम् । तथाचाधिकरणे यत्र प्रतियोगिसत्त्वेनापादकेन प्रतियोग्युपलम्भ आपाद्यते तत्र तदभावः प्रत्यक्षः; तेन योग्यप्रतियोगिको योग्याधिकरणको वाऽन्योन्याभावः संसर्गाभावो वा यत्रैव यादृशप्रतियोगितावच्छेदकावच्छिन्नसत्त्वेनापादितेन तथोपलम्भ आपाद्यते तत्र तथाऽनुपलम्भस्तदवच्छिन्नाभावं गमयति वायौ रूपाभाववत् रूपवदन्योन्याभावस्य घटे मनोन्योन्याभाववत् मनस्त्वात्यन्ताभावस्यापि तुल्यवदाभासमानत्वात् प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकोपलम्भाभावाविषयत्वेनैवाभावस्य योग्यत्वात् । न तु योग्यप्रतियोगिकत्वेन संसर्गाभावे योग्याधिकरणत्वेनान्योन्याभावे योग्यता गौरवात् उक्ततुल्यानुभवव्याघाताच्चेति तात्पर्यम् । यदि हीति । स्तम्भः पिशाचः स्यात्-चक्षुःसंयुक्तः कश्चित् पिशाचः स्तम्भः स्यात् । उपलभ्येतेति । सोऽपि पिशाचः पिशाचस्तम्भान्तरवच्चाक्षुषः स्यादित्यर्थः । स्तम्भत्वस्य महत्त्वोद्भूतरूपवत्त्वनियतत्वादिति भावः । न पिशाचानुपलम्भः स्यात्-न सर्वः पिशाचो लौकिकसाक्षात्काराविषयः स्यादिति यावत् । तथाच स्तम्भत्वं न पिशाचवृत्तीति नियमोऽनिर्बाध एवेति भावः ॥ जलादिभिन्ना सतीति । विशिष्टाधिकरणकवैशिष्ट्यबुद्धौ सामानाधिकरण्यसम्बन्धेन विशेष्यतावच्छेदकस्य विधेये प्रकारत्वादित्याशयः । व्यतिरेकिसाध्यत्वादिति । यद्यपि जलावृत्तिधर्मवत्त्वादिभ्यो युगपत्समूहालम्बनरीत्या अन्वयिभ्यो तथाऽनुमितिः सम्भवत्येव, तथापि पक्षहेतुपर्यावच्छेदसाध्यकानुमितिर्न व्यतिरेकिणं विनेति द्रष्टव्यम् ॥ घटस्यापीति । प्रयोगे दोषोऽयम्-परसिद्धांशस्यापि पक्षत्वेनोपादानादंशतः सिद्धसाधनमर्थान्तरमिति यावदनाकाङ्क्षिताभिधानात् अन्यथाऽसङ्गतेः । स्वार्थानुमितौ हि घटस्यापि पक्षत्वमित्येवासङ्गतं निश्चितस्यापि पक्षत्वेऽनुमित्युत्पत्तेः, अपक्षत्वे उदासीन इव सिद्धसाधनानवकाशात्-इति ॥ इतरेति । साध्यनिश्चयस्य न साक्षादनुमितिविरोधित्वं किन्तु पक्षताविघटनद्वारा । सा चेदस्ति किमनेन । न च सा नास्ति सिषाधयिषाविरहसहकृता यादृशी सिद्धिस्तदभावस्तत्सिद्धौ पक्ष-

तेति सामान्यतस्सिद्धौ तत्संशयादिति भावः । अन्यथेति । यद्यनुमितिविषयैकदेशासिद्ध्या सिद्धसाधनं तदेत्यर्थः । सिद्धस्यैव-सहचारघटकतया निश्चितस्यैव, साध्यत्वात्-तादृशानुमितौ विधेयत्वात् । न च घट इति । एतच्च यथाश्रुतस्य सन्दिग्धसाध्यवत्त्वस्य सिषाधयिषितसाध्यवत्त्वस्य च पक्षत्वमभिप्रेत्य बोध्यम् ।

ननु घटे विशेषदर्शनासिद्धिसत्त्वेन कथं संशयसिषाधयिषयोस्तद्विषयत्वं ज्ञानादेः स्वरूपसत एव स्वविषयकेच्छाविरोधित्वादित्यत आह घटत्वेनेति । धूमवान् वह्निमानिति । यद्यप्येवं सामान्यतो निश्चिते विशेषतः संशय उपपादितः इह तु विशेषतो निश्चये सामान्यतः संशयः, स च दुरुपपादः इदंपर्वतत्वेन वह्निनिश्चये पर्वतत्वेन तत्संशयादर्शनात्, तथापि भिन्नप्रकारकनिश्चयस्यापि यत्संशयप्रतिबन्धकत्वं वाच्यम्, तत्र किमवच्छेदक ? न तावत्समानविषयत्वं तत्रातिप्रसंग प्रतिपादयति-धूमवानित्यादि । न तु दृष्टान्तार्थं येनोक्तवैपरीत्यमाद्रियेत । अन्यच्च समानप्रकारकत्वमपहाय न । अत एवेदंपर्वतत्वेनापि वह्निनिश्चयेऽग्निसंशयः पर्वते भवत्येव । यदि च नास्ति तदा तदर्थं समानप्रकारकनिश्चयत्व विशेषप्रकारकनिश्चयत्वं चोभय प्रतिबन्धकतावच्छेदक कल्प्यमिति गौरवम्, समानप्रकारकतामात्रं च लघिष्ठमिति तदेव कल्प्यते नान्यदिति भावः ॥

(चि०) यद्वा सर्वत्वेन रूपेण न पक्षता सर्वत्राविप्रतिपत्तेः-घटाद्येकदेशे इतरभेदस्य प्रत्यक्षसिद्धत्वात्, तथाचैकदेशे विप्रतिपत्तौ सामान्ये इतरभेदसाधने अर्थान्तरम्, किन्तु सामान्येन पृथिवीत्वेन यावदेव विप्रतिपत्तिविषयस्तावतामेव पक्षता विशेष्यानुगमात् । तर्हि पृथिवी इतरभिन्ना पृथिवीत्वाद्घटवदित्यन्वयिनैवेतरभेदस्य सिद्धत्वात् किं व्यतिरेकिणा, घटसाधारणपक्षत्वेऽप्य भेदानुमानवत् पक्षस्यापि दृष्टान्तत्वाविरोधात्, पक्षान्यत्वं हि तत्रातन्त्रं किन्तु साध्यवत्तया निश्चितत्वं प्रयोजकम् । न च पृथिवीत्वाग्रहे पूर्वं गृहीतं यत्र

साध्यं पश्चात् स्मर्यते तत्र हेतुसाध्यसामानाधिकरण्यग्रहादतिरेकव्यवतार इति वाच्यम्। हेतोरेव पक्षतावच्छेदकत्वेन घटे पृथिवीत्वग्रहदशायामितरभेदसामानाधिकरण्यग्रहावश्यम्भावादिति चेत्। सत्यम्, अन्वयितुल्यतया व्यतिरेकिणोऽपि सामर्थ्यादन्वयाप्रतिसन्धानदशायां व्यतिरेक्युपन्यासस्यापर्यनुयोज्यत्वात्, तदुक्तम्—'आस्तां तावदयं सुहृदुपदेशः केवलव्यतिरेकिलक्षणं तावन्निर्व्यूढम्।

(वि०)ननु यदवच्छेदेन यत्र यत्कोटिनिश्चयस्तदवच्छिन्नतज्ज्ञानं तत्कोटिकसंशयविरोधि, न तु तत्प्रकारकतत्कोटिकसंशयविरोधि—गौरवात्। अत एव धूमत्वेन व्याप्तिनिश्चये धूमत्वेनानुपस्थितायां धूमव्यक्तौ विशेषणेऽपि न व्याप्तिसंशयः, अन्यथा विशेषप्रकारकसंशयापत्तेः। धूमवत्त्वेन वह्निनिश्चयेऽपि पर्वते तावदेव वह्निसंशयो यावन्न धूमवत्त्वेनोपस्थितिः। तदिह घटत्वेनेतरभेदनिश्चयदशायां पृथिवीत्वेनापि नेतरभेदसंशय इत्यस्वरसादाह यद्वेति। पृथिवीत्वेन—घटादिभिन्नपृथिवीत्वेन। शङ्कते तर्हीत्यादिना चेत् इत्यन्तेन। अभेदानुमानवत्—अयं घटः तद्घटाभिन्नः तद्घटवृत्तिविलक्षणसंस्थानवत्त्वादित्याद्यरूपेऽभेदानुमानवत्। साध्यवत्तया निश्चितत्वं—साध्यवत्त्वनिश्चयावच्छेदकधर्मवत्त्वम्। अन्यथा पक्षतावच्छेदकावच्छिन्नस्यापि दृष्टान्तत्वापातात् अभेदानुमानेऽपि भिन्नभिन्नावच्छेदेन पक्षदृष्टान्तत्वव्यवस्थितेरिति भावः। न चेति। यत्र स्थले पूर्वं गृहीतं साध्यमुद्बोधकवशात् पृथिवीत्वग्रहे पश्चात् स्मर्यत इत्यर्थः। अन्वयेनेति। ननु व्यभिचारज्ञाने साध्यसाधनोभयसहचारग्रहेऽन्वयव्याप्तिग्रहावश्यकत्वेन कथमन्वयाप्रतिसन्धानमिति चेन्न, तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वादिपदार्थानुपस्थित्याऽन्वयाप्रतिसन्धानसम्भवात्। अपर्यनुयोज्यत्वादिति। अन्वयोपन्यासदशायां आधिक्येन निग्रहात् पर्यनुयोगः स्यादिति भावः॥ निर्व्यूढमिति। अन्वयाप्रतिसन्धानकाले

व्यतिरेकिव्याप्तिज्ञानादनुमितेरनुभवसिद्धतया तस्यापि हेतुत्वं निर्बाधमेवेति भावः ॥

(चि०)अथ वा जलादीनां त्रयोदशान्योन्याभावाः त्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते, अत एवाकाशे व्यतिरेकिणा जलादिमिलितप्रतियोगिकान्योन्याभावाप्रतीतावपि त्रयोदशान्योन्याभावाः साध्या इति नान्वयित्वासाधारण्ये ।

यथा जलं तेजःप्रभृतिद्वादशभिन्नप्रतियोगिकान्योन्याभाववत् द्रव्यत्वात्तेजोवदित्यनुमानात्त्रयोदशभिन्नस्य सामान्यतः सिद्धौ पृथिव्या त्रयोदशभिन्नत्वं साध्यम् । न चान्वयित्वमसाधारण्यं वा, पक्षादन्यत्र साध्याप्रसिद्धेः । वस्तुगत्या पृथिव्यामेव साध्यसिद्धेः किं व्यतिरेकिणेति चेत् । न । पृथिवी त्रयोदशभिन्नेति व्यतिरेकिणं विना अप्रतीतेः । नन्वेवं पृथिवी जलादित्रयोदशभिन्नप्रतियोगिकान्यान्योभाववती द्रव्यत्वादिति पृथिवीभिन्नत्रिज्ञादिसिद्धिः स्यादिति चेत् । न अप्रयोजकत्वात्, प्रकृते चानुभूयमानजलादिवैधर्म्यस्य पृथिवीत्वाश्रयशब्दाश्रयत्वादेरतिरिक्तं विनानुपपत्तेः । नन्वितरभेदो यद्यन्योन्याभावस्तदा भावाद्भेदो न । सिद्ध्येत अभावस्य भावान्तराभावात् । यदि च तेन समं स्वरूपभेद एव साध्यः, तदाऽननुगमादनुमानाप्रवृत्तिः। भावोऽभावो न भवतीत्यबाधितप्रतीतिबलादभावस्यापि अन्योन्याभावोऽस्तीति केचित् । तन्न, अपसिद्धान्तात् । अनतिप्रसक्ताधिकरणस्वरूपमादायैवाभावप्रतीत्युपपत्तौ चाधिकाभावे मानाभावाच्च

इति चेत् । न । इतरभावान्योन्याभावस्य साध्यत्वात् । न चैवमभावादविवेकतादवस्थ्यम्, तेन समं स्वरूपभेदस्यान्वयिना व्यतिरेकिणा वा साध्यत्वात् ।

(वि०)अत्राप्यथवेति न पूर्वास्वरसात् किन्तूपस्थित्यनियमेन कदाचिद्द्वयमपि कल्प इति व्यवस्थितविकल्पः । तथा चान्यत्र कल्पद्वयेऽपि यथोपस्थिति, आकाशादौ त्वेष एवेति व्यवस्थितविकल्पार्थो बोध्यः ॥ जलादिमिलितेति । आकाशेतरत्वावच्छिन्नप्रतियोगिताकान्योन्याभावानुमित्यसम्भवादित्यर्थः । आकाशस्यैकव्यक्तित्वेन तत्रैकदेशे साध्यप्रसिद्ध्यसम्भवादिति भावः ॥

त्रयोदशभेदानां त्रयोदशप्रत्येकं प्रसिद्धिमुक्त्वा एकत्रैव तत्प्रसिद्धिमाह यद्वेति । अत्र तेजःप्रभृतिद्वादशभिन्ननिष्ठभेदप्रतियोगीति साध्यार्थो विवक्षित, यथाश्रुते पृथिव्यां साधनीयस्य त्रयोदशभेदस्यास्मादसिद्धेः जलभेदस्यैवासिद्धत्वात् । शङ्कते वस्तुगत्येति । त्रयोदशाभिन्नेति । जलादित्रयोदशभिन्नेत्यर्थः । प्रकृते-यद्वा जलमित्यत्र । अनुभूयमानेति । तेजःप्रभृतिद्वादशभिन्नपृथिव्यादौ अनुभूयमानस्येत्यर्थः । पृथिवीत्वेति-तेजःप्रभृतिद्वादशभिन्नपृथिवीवृत्त्यन्योन्याभावानुमानाभिप्रायेण, शब्दाश्रयत्वेति च आकाशेतरभेदानुमानस्थले तेजःप्रभृतिद्वादशभिन्नगगनवृत्त्यन्योन्याभावानुमानाभिप्रायेण बोध्यम् । अतिरिक्तं विना-पृथिव्यादेर्जलाद्यतिरिक्तत्वं विना । अथवेति द्वितीयकल्पे शङ्कते नन्विति । अभावान्तरेति । अधिकरणातिरिक्तभेदेत्यर्थः । स्वरूपभेद इति । अधिकरणस्वरूपभेद इत्यर्थः । अननुगमादिति । अधिकरणानामनन्तत्वेन चतुर्दशत्वरूपेण साध्यस्यासम्भवादिति भावः । कस्यचिदत्र समाधानं पूर्वपक्षयति भावो न भवतीत्यादि । उपरयति तन्नेति । नाप्यमेकदेशिनं प्रत्यपसिद्धान्त इत्यत आह अनतिप्रसक्तेति । समाधत्ते इतरभावेति । पूर्वोक्तयुक्त्येतरत्वेन भावस्यैव भेदसाधनादित्यर्थः । अन्वयिना व्यतिरेकिणा चेति । ननूभयमप्यसम्बद्धम्-अभावस्वरूपभेदस्य पृथिवीजलस्वरूपस्यानानुगमतादवस्थ्यादन्वयासम्भवात् । न चाभावभेदत्वमनुगतो धर्म इति वाच्यम् । तस्य तद्धर्मिकान्यस्य दुर्वचत्वात् । पृथिव्यामभावभेद-

स्य पृथिवीत्वरूपत्वेन यत्र, नाभावभेदः तत्र पृथिवीत्वाभाव इति
व्यतिरेकस्याभावेन व्यतिरेकिणोऽप्यसंभवात्, अभावभेदाभावस्य
पृथिवीविरहपर्यवसानेऽन्त्यावयव्यादौ व्यभिचारादिति चेन्न। उभ-
यत्राप्यदोषात्-अभावभिन्नत्वबुद्धिजननयोग्यत्वस्यानुगतस्य भावात्
भावत्वादेश्च योग्यतावच्छेदकस्य सत्त्वेन तद्योग्यतावच्छेदकधर्म-
घत्वस्यानुगतत्वादन्वयिनः सम्यक्त्वात्। व्यतिरेकिण्यपि व्यभिचा-
राभावात्, तथाहि—पृथिव्यभावभिन्नेति भेदधीर्न पृथिव्यन्तरत्व
त्वेन त्वदुक्तान्त्यादौ व्यभिचारात्। स्वयमेव भेदत्वेन स्वस्मिन्
वर्तते न तु स्वत्वेनेति प्रतीतिवैचित्र्यादवश्य मन्तव्यम्। तथा
चान्त्यावयव्यादेरपि स्वात्मना पृथिवीरूपाभावभेदेन तदभावाभा-
वात्र व्यभिचार इति लक्षणस्य व्यतिरेकिणो न केवलमितरभेद
एव साध्यः किं नाम पृथिवीत्वव्यधिकरणधर्मात्यन्ताभावादिरपि
अविशेषादिति तत्त्वम्।

(चिं०) अन्ये तु पृथिवीत्वभिन्नधर्मात्यन्ताभाव
एव साध्यः जलत्वादिप्रतियोगिकास्तावन्तोऽत्य-
न्ताभावा वा, तत्तदसाधारणतत्तद्धर्मात्यन्ताभावयो-
गो वा, एते चाभावा जलत्वं न घटादौ घटादि जला-
त्यन्ताभाववदिति प्रत्यक्षादेः क्वचित्तद्वैधर्म्यादेव
प्रसिद्धा इति नाप्रसिद्धिः। तावतामभावानां वैशि-
ष्ट्यं न प्रसिद्धमिति चेत्। किमेतावता, न हि ताव-
द्वैशिष्ट्यमत्र साध्यते, किन्तु जलत्वादीनां यावन्तोऽ-
भावा इह साध्यास्ते च तत्र तत्र प्रसिद्धा एव, ताव-
द्वैशिष्ट्यधीस्तु फलम्, अन्यथा सिद्धसाधनात्। मिलि-
तानामपि साध्यत्वे नाप्रसिद्धिः किञ्चिदेकधर्मावच्छेदो
हि बलादिवन्मेलकार्थः, स च नासिद्धः। न च हेतो-
रसाधारण्यम्, तावदभावयोगी ह्यत्र सपक्षो भवति,
न तु तदेकदेशकतिपयाभाववान्-साध्यतापस्ताव-
त्पर्यासेः॥

यद्वा जलत्वात्यन्ताभावस्तेजस्त्वात्यन्ताभावाधिकरणवृत्तिः अत्यन्ताभावत्वात् घटत्वात्यन्ताभाववत्, एवमत्यन्ताभावान्तरसामानाधिकरण्यमपि तत्र साध्यमिति क्वाप्रसिद्धिः ॥

किञ्चेतरे तावत् प्रसिद्धा एव, ते च भेदप्रतियोगिनो मेयत्वात्, इतीतरभेदोऽपि सुग्रह एव। ननु पृथिवी नेतरभेदवती गुरुत्वादिभ्यो जलवदिति प्रतिरोध इति चेन्न। इतरभेदनिषेधो हीतराभेदः न तु तेजःप्रभृत्यभेदो जल इति दृष्टान्तस्य साध्यवैकल्यात्। चतुर्दशाभेदानां चैकत्र विरोधेनासम्भवात्। चतुर्दशभेदानां चैकत्र वृत्तौ न विरोधः। यत्तु साध्याप्रसिद्धौ पृथिवीतरभिन्ना तत्साध्याधिकरणपृथिव्यन्यतरत्वात्तदधिकरणवत् पृथिव्यां तत् साध्यमन्वयिन एव सेत्स्यतीति। तन्न। अन्यतरत्वस्यालिङ्गत्वादित्युक्तत्वात्, लिङ्गत्वे वा जलादावपि तत्सिद्धिप्रसङ्गात्। एवं तर्हि पृथिवी जलं पृथिवीत्वात् यन्न जलं तन्न पृथिवी यथा तेज इति सत्प्रतिपक्षोऽस्त्विति चेत्। न। अजलस्य घटादेः प्रत्यक्षत एव पृथिवीत्वनिश्चये व्यतिरेकव्यभिचारादस्य न्यूनत्वात्, तदनवधारणे तु सत्प्रतिपक्षत्वमिष्टमेव ॥

( वि० ) ये त्वत्यन्ताभाव एव व्यतिरेकिणः साध्य इति वदन्ति तन्मतमाह अन्ये त्विति। पृथिवीत्वमित्येति। पृथिवीत्वव्यधिकरणेत्यर्थः। आकाशादौ उक्तप्रकाराभावादाह जलत्वादीति। तत्तदत्यन्ताभावयोगरूपयोर्द्वयाभावरूपतत्त्वत्यन्ताभावमेलनमित्यर्थः। प्रत्येकप्रसिद्ध्या समुदायप्रसिद्धेस्साध्यप्रसिद्धिमाह यत इति। शङ्कते तावतामिति। प्रत्येकसाध्यतावच्छेदकावच्छिन्नानां युगपत्तावद्व्याप्तिग्रहे तावांद्वयकैकानुमित्युत्पादे तावतामेकाधिकरण्यरूपमेलकस्यानु-

मितिविषयतया मेलकधीः फलम्, न च मेलकेन व्याप्तिग्रह इति निर्गलितार्थः। अन्यथा—प्रत्येकमेवानुमितौ। प्रत्यक्षादिना प्रत्येकसाध्यप्रसिद्ध्यर्थमपि सिद्ध्युपगमेन सिद्धसाधनं स्यादिति भावः। ननु संख्यारूपं तत्तदपेक्षाबुद्धिविषयत्वं वा मेलकत्वं तथाच प्रत्येकं प्रसिद्धानां तेषां एते त्रयोदशभेदा इति बुद्धिसम्भवेन मिलिततत्प्रसिद्धिरपि सुलभेति तृतीयकल्पमाह मिलितानामिति। तावदभावप्रयोगीति। तावदभावत्वतया निर्णीत इत्यर्थः। अपयोगेरिति साध्यतावच्छेदकावच्छिन्नवत्तया निश्चितः सपक्ष इति भावः॥

अत्यन्ताभावत्वात्—अभावागर्भप्रतियोगिकात्यन्ताभावत्वात् तेन तेजस्त्वव्यधिकरणधर्मात्यन्ताभावादौ न व्यभिचारः। तत्र—जलत्वात्यन्ताभावे। अप्रसिद्धिरिति।, तेजस्त्वात्यन्ताभाववायुत्वात्यन्ताभावादिसमानाधिकरणजलत्वात्यन्ताभावस्य साध्यत्वादिति भावः।

अन्योन्याभावेऽप्यत्यन्ताभाववन्मेलकाप्रसिद्ध्या कल्पान्तरमाह किञ्चेति। भेदप्रतियोगिन—पक्षव्यधिकरणभेदप्रतियोगिनः। शङ्कते नन्विति। गुरुत्वाश्रयत्वादिना तत्र दृष्टान्तपक्षसाधारणधर्मेकधर्मेण तेन तत्तद्भेदसाधनाच्चतुर्दशाभेदः समूहालम्बनाविषयः। प्रतिरोधः—सत्प्रतिपक्षः।

अत्र चतुर्दशाभेदत्वेन साध्यता बोध्या। न चात्र सर्वत्र सपक्षत्वाविना सत्प्रतिपक्ष इत्यनेन पौनरुक्त्यं, दोषान्तरदानाय व्यतिरेकिमात्रदानाय च तदाक्षेपादिति। साध्यवैकल्यं दृष्टान्ते दत्वा बाधमप्याह चतुर्दशाभेदानामिति। अभावमादाय चतुर्दशत्वं बोध्यम्। स्वमते बाधाभावं दर्शयति चतुर्दशभेदानामिति। तत्सिद्धिप्रसङ्गात्—इतरभेदसिद्धिप्रसङ्गात्, जलादावपि तत्साध्याधिकरणजलाद्यन्यतरत्वस्य लिङ्गस्य सत्त्वादिति भावः। एवं—व्यतिरेकव्याप्तिज्ञानस्य कारणत्वे। व्यभिचारादिति। असाधारण्यादित्यपि द्रष्टव्यम्। तदनवधारणे त्विति। पृथिवीत्वस्यानवधारणे त्वित्यर्थः। इदं न प्रकृतमात्रे साधनं, प्रागुक्तसत्प्रतिपक्षत्वमात्रेणेदं समाधानं द्रष्टव्यम्॥

(चि०) ननु जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् इच्छादिकार्यवत्त्वाद्वेति व्यतिरेकिणि साध्याप्रसिद्धौ

कथं व्यतिरेकादिनिरूपणम् । नैरात्म्यञ्च घटस्य न प्रत्यक्षवेद्यं तस्य तत्रासामर्थ्यात् । नानुमानगम्यं, नैरात्म्याप्रतीतावन्वयिनोऽभावात्, सात्मकत्वप्रतीतिं विना व्यतिरेकिणोऽनुपपत्तिः । अथेच्छा समवायिकारणजन्या कार्यत्वात्, तच्च समवायिकारणं पृथिव्याद्यष्टद्रव्यभिन्नं पृथिव्यादित्वे बाधकसत्त्वात् इति पृथिव्यादिभिन्नात्मसिद्धौ तद्वत्त्वं जीवच्छरीरे साध्यत इति चेत् । यदि सात्मकत्वमात्मसंयोगवत्त्वं तदा घटादौ तदस्तीति ततो हेतुव्यावृत्तावसाधारण्यम् । ज्ञानसमानाधिकरणज्ञानकारणीभूतसंयोगाश्रयकार्यत्वं सात्मकत्वं शरीरात्मसंयोगस्य ज्ञानकारणत्वात्, आत्ममनसोस्तथात्वेऽपि अकार्यत्वात् इति चेत् । न । शरीरादन्यत्रासिद्धेः । तत्र प्रसिद्धौ सिद्धसाधनात् । इच्छाया असमवायिकारणसंयोगावच्छेदकत्वस्याभावो घटादौ दृष्टः तद्व्यतिरेकः शरीरे साध्यत इति चेत् । न । इच्छाया असमवायिकारणसंयोगावच्छेदकत्वस्य शरीर एव प्रसिद्धेः सिद्धसाधनात्, अन्यथा असिद्धिव्यतिरेकाद्यनिरूपणात् । अप्रसिद्धसाध्यसंसर्गमिव साध्यमप्रसिद्धं साधयति व्यतिरेकीति चेत् । न । व्यतिरेकाद्यनिरूपणात् असाधारणधर्मेणाप्रतीतपदार्थानुमाने घटत्वादिनापि स्वेच्छाकल्पितडित्थाद्यनुमानप्रसङ्ग इति ॥

उच्यते इच्छाऽसमवायिकारणसिद्धावित्थंच्छात्वं संयोगासमवायिकारणवृत्ति नित्येन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातित्वात् शब्दत्ववत्,

**स चासमवायिकारणं संयोगः किञ्चिदवच्छिन्नः संयोगत्वात्, आत्मसंयोगमात्रस्येच्छाजनकत्वे सात्मकत्वं शरीरे साध्यते ॥**

( वि० ) साध्याप्रसिद्धाविति । सात्मकत्वस्य पक्षमात्रवृत्तित्वादित्यर्थः । तचेति । प्रत्यक्षविषयाभ्यां प्रतियोग्यधिकरणाभ्यामभावग्रहः प्रत्यक्षतो भवति । न च तदुभयग्राहीन्द्रियमस्ति मनसो घटाद्यग्राहकत्वात् इन्द्रियान्तरस्यात्माग्राहकत्वात् । न चोभाभ्यामुभयग्रहोऽभावग्रहो उभयेन्द्रियप्रवृत्तेरयौगपद्यात् इति भावः । कार्यत्वादिति । भावकार्यत्वादित्यर्थः । ज्ञानेत्यादिपूर्वपक्षः । तत्र ज्ञानकारणं चक्षुर्घटसंयोगोऽपीति ज्ञानसमानाधिकरणत्वेन संयोगो विवक्षितः । तादृशश्चात्मसंयोग एव सोऽपि घटादिसाधारण एवेति ज्ञानकारणत्वं विशेषणम् । आत्मप्राणसंयोगस्तु शरीरावच्छिन्नात्मप्राणसंयोगो वाच्यः अन्यथाऽतिप्रसङ्गादित्यावश्यकतया शरीरप्राणसंयोगेनान्यथासिद्धो न हेतुरिति द्रष्टव्यम् । कार्यत्वपदस्य व्यावृत्तिं स्वयमेवाह आत्ममनसोरिति । नेत्यादि समाधानम् । शङ्कते इच्छाया इति । अप्रसिद्धेति । कुतोऽयं व्यतिरेकिनियम इति चेत् । अन्वयिनि साध्यसाधनसहचारभूते व्याप्त्यज्ञानात् । व्यतिरेकिणि साध्याभावप्रसिद्ध्यैव साध्याभावसाधनाभावयोर्व्याप्तिग्रहेण साध्यसंसर्गस्यानुमित्येकविषयत्वात् इति विद्धि ॥

इच्छात्वमिति । व्यक्तिपक्षे विभागजशब्दे व्यभिचारः स्यादिति जातेः पक्षत्वमुक्तम् । नित्येन्द्रियेति । नित्येन्द्रियग्राह्यत्वं च तन्मात्रग्राह्यत्वम्, अन्यथा स्नेहवत्त्वस्यापि मनोग्राह्यत्वेन तद्व्यभिचारवारणार्थोपादानविरोधात् । तदपि गुणविशेषणं न जातिविशेषणम्, तथा सत्यात्मैकत्वे तादृशजात्यभावेन व्यभिचाराभावेन-विशेषगुणोपादानविरोधात् । साक्षात्पदं शब्दमात्रवृत्तिशब्दत्वावान्तरजातौ व्यभिचारनिरासाय । जातिपदं च रूपादिभिन्नगुणत्वाद्युपाधौ व्यभिचारवारणाय स हि मनोमात्रग्राह्ये ज्ञानादावस्ति गुणत्वसाक्षाद्व्याप्यश्च गुणत्वन्यूनवृत्तिजात्यन्यूनवृत्तित्वात् । न च साध्यसत्त्वान्न व्यभिचार इति वाच्यम् । वृत्तिपदेन समवेतत्वस्योक्तत्वादिति । स चेति । अत्र किञ्चिदवच्छिन्नः संयोगोऽसमवायि

कारणमिति उद्देश्यविधेयव्यत्यासेन व्याख्येयम्, तेन संयोगे पक्षे विशिष्टस्य जनकत्वं साध्यं लभ्यते अत एव तादृशं साध्याभावेऽनिष्टप्रसंजनमाह आत्मसंयोगमात्रस्येति । किञ्चिदवच्छिन्नसंयोगस्येत्यर्थः । अन्यथेच्छाजनकपर्यन्तस्य तर्के उपन्यासविरोधात् । न चैवं हेत्वसङ्गतिः, असमवायिकारणसंयोगत्वादिति हेत्वर्थात् । स चेत्यनेनासमवायिकारणसंयोगस्यैव परामर्शे तथिधसंयोगस्यैव हेतुत्वात् । इति भावः ।

(वि०) यद्वा आत्मनीच्छाधारता महत्संयोगावच्छेद्या जन्यविभुविशेषगुणाधारतात्वात् वाय्वादिसंयोगाद्यवच्छेद्यशब्दाधारत्ववदिति सामान्यतः सिद्धमिच्छाधारताघटकेच्छासमवायिकारणद्रव्यसंयोगवत्वं सात्मकत्वम् । अत एव ज्ञानसमानाधिकरणज्ञानकारणीभूतसंयोगाश्रयकार्यत्वं वा सात्मकत्वम्, स्वशरीरे प्राणादिमत्त्वस्य इच्छादिमत्त्वस्य च चेष्टावयवोपचयादिव्याप्यत्वग्रहात्, घटादौ चेष्टादिविरहेण प्राणादिमत्त्वेच्छादिमत्त्वाविरहानुमानम्, इच्छादिविरहात् इच्छादिप्रयोजकेच्छाद्याधारताघटकेच्छाद्यसमवायिकारणसंयोगविरहानुमानं कार्याभाववति कारणाभावनियमात् । न च सात्मकत्वं शरीरवृत्ति शरीरे बाधकाभावात् शरीरत्ववदिति अन्वयिनैव साध्यसिद्धेः किं व्यतिरेकिणेति वाच्यम् । शरीरं सात्मकमिति शरीरविशेष्यकबुद्धेर्व्यतिरेकिणं विनाऽनुपपत्तेः । उपायान्तरस्योपायान्तरादूषकत्वाच ॥१२॥

यद्वा चेष्टा संयोगासमवायिकारणिका संस्काराजन्यक्रियात्वादिति चेष्टाया असमवायिकारणसंयोगसिद्धौ प्रयत्नवदात्मसंयोग एव पर्यवस्यति प्र-

यत्नान्वयव्यतिरेकानुविधायित्वात्। एवं चेष्टाया असमवायिकारणसंयोगाश्रयत्वे सति शरीरत्वं सात्मकत्वं जीवच्छरीरे साध्यं चेष्टावत्त्वादिति हेतुः। चेष्टाविरहश्च घटादौ प्रत्यक्षसिद्धः। चेष्टाविरहात्तदसमवायिकारणसंयोगविरहोऽपि सुग्रहः॥

यद्वा जीवच्छरीरं तदवयवो वा आत्मभिन्नत्वे सति आत्मविशेषगुणकारणभोगानधिकरणावृत्तिसंयोगवत् प्राणान्यत्वे सति ज्ञानकारणीभूतप्राणसंयोगवत्त्वात् यन्नैवं तन्नैवं यथा घटः, आत्मप्राणसंयोगः प्राणमनःसंयोगो वा शरीरप्राणसंयोगेनैवान्यथासिद्धो न कारणं, भोगाधारत्वं भोगसमवायिकारणातिरिक्तवृत्ति सकलभोगाधिकरणवृत्तित्वात् प्रमेयत्वादिवदिति तार्किकी रीतिः॥

(वि०) अत्राप्युपस्थितिनियमाभावात् व्यवस्थितो विकल्पः न पूर्वास्वरसेनेति न विस्मर्तव्यम्। महदिति। मनोयोगाद्यवच्छेदकत्वेनार्थान्तरनिरासार्थं महत्पदम्। ईश्वरज्ञानादित्याद्यपि चेच्छाधारताया वारणाय अन्येति, रूपाद्याधारतावारणाय हेतौ विशिष्टातिपदं च बोध्यम्। आत्मवृत्तिद्वित्वाद्याधारतावारणाय विशेषेति। इच्छाधारताघटकेति। इच्छाधारतावच्छेदकः य इच्छासमवायिद्रव्यनिरूपितसंयोगस्तद्वत्त्वमित्यर्थः। अत एव-उक्तानुमानपक्षतावच्छेदकसामान्यसंयोगाश्रयस्य महतो द्रव्यस्य प्रसिद्धिसम्भवादेव। ननु कर्तास्या सात्मकत्वसाध्यस्य प्रसिद्धावपि नैरात्म्यस्य साध्याभावस्य घटादावप्रसिद्ध्या कथं व्यतिरेकव्याप्तिग्रह इत्यत आह स्वशरीर इति। शङ्कते नचेति। शरीरे बाधक इति। शरीरस्याचित्त्वाभावस्तथा अप्रमितत्वादित्यर्थः। ननु सात्मत्व शरीरस्यैवेत्यनुमानानन्तरं शरीरं सात्मकमित्यनुमानं सुकरमित्यरुचेराह उपायेति। अवधृतसामर्थ्ययोरप्यन्यतरास्फुरणदशायामन्यतरोपायानुसरणस्यापर्यनुयोज्यत्वादित्यर्थः॥

(वि०)यद्वेति पूर्ववत् । वेगजक्रियायां व्यभिचारनिरासाय अजन्यान्तं हेतुविशेषणम् । न च गुरुत्वद्रवत्वजन्यक्रियायां व्यभिचारः, क्रियापदेन कर्मत्वव्याप्यपतनस्पन्दनव्यावृत्तगमनत्वरूपजातिविशेषस्य विवक्षितत्वात् । एवञ्चेति । 'आत्मधारणाय शरीरत्वमिति विशेष्यम् । अन्यत्स्पष्टम् ॥

आत्मभिन्नत्वे इति । सत्यन्तमिदमात्मनोऽपि सविषयत्वेनासाधारण्यनिरासाय । आत्मविशेषगुणकारणपदं च मृतदेहस्यापि भोगार्थयत्नतया तत्राप्युक्तसंयोगसत्त्वेन सपक्षतया तत्र चेष्टाश्रयत्वस्य व्यावृत्ततया चासाधारण्यवारणाय बोध्यम् । न च कदाचिद्भोगाश्रयत्ववत्कदाचिच्चेष्टावत्त्वमपि तत्रास्तीति वाच्यम् ॥ मृतशरीरव्यावृत्तस्यैव वर्तमानचेष्टावत्त्वस्य सात्मकत्वे लिङ्गत्वात् । न चात्मगुणपदेनैव तन्निर्वाहाद्विशेषपदानर्थक्यं, मृतशरीरात्मसंयोगजनकतदवयवात्मसंयोगमादाय मृतशरीरावयवे साध्यसत्त्वेनासाधारण्यप्रसङ्गवारकत्वात् । भेरीदण्डसंयोगवच्छब्दजनकं मृतशरीरे शरीरान्तरसंयोगमादाय मृतशरीरे सात्मकत्वनिरासायात्मेति । मनसः सात्मकत्ववारणाय भोगानधिकरणावृत्तीति साध्यघटकपदानां व्यावृत्तिः ॥ हेतौ प्राणे व्यभिचारवारणाय सत्यन्तम् । नाड्यादौ तद्वारणाय ज्ञानकारणीभूतेति । चक्षुरादिसंयोगमादाय सद्दोषतादवस्थ्यादाह प्राणेति । नन्वात्ममनसोरपि हेतुत्वेन व्यभिचार इत्यत आह आत्मेति । अतिप्रसङ्गेनानवच्छिन्नात्ममनसोः प्राणसंयोगस्य ज्ञानाहेतुत्वे शरीरावच्छिन्नतदुभयप्राणसंयोगो वाच्य इत्यावश्यकत्वात् तत्र यथान्यथासिद्धौ न तद्धेतुः इत्यर्थः । नन्वेवमात्मवत् शरीरस्यापि भोगानधिकरणतया तद्वृत्तिसंयोगवत्त्वं तत्र बाधितमतोऽनात्मनोऽपि भोगाधिकरणत्वं साधयति भोगाधारत्वमिति । न च व्यर्थविशेषणत्वम् । व्याप्यतावच्छेदकविकासकविशेषणे तदभावात् सङ्कोचकविशेषणे तथात्वादिति वक्ष्यमाणत्वात् । नन्वत्र भोगानधिकरणत्वमुपाधिः, अन्यथा रूपाधारघटादीनामप्येवं रूपसमवायिभिन्नत्वानुमानं स्यादत आह तार्किकेति । तथा चात्र शरीरे सुखमित्यादि-तदाधारत्वानुभवो न स्यात् इत्यनिष्टप्रसञ्जनात्मकतर्केण व्याप्तिग्रहसत्त्वादुपाधेः साध्याव्यापकत्वम् रूपाधारत्वे तु न तादृशतर्क इति भावः ।

(चि०) अथेच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता अ-
ष्टद्रव्यानाश्रितत्वे सति गुणत्वात् यन्नैवं तन्नैवं यथाऽ-
ष्टद्रव्यानाश्रितमष्टद्रव्याश्रितं वेति कथं व्यतिरेकी ? अष्टद्र-
व्यातिरिक्तद्रव्यस्य तद्वृत्तित्वस्य चाप्रतीतेर्व्यतिरेका-
प्रनिरूपणात् ।

स्यादेतत् । इच्छाया द्रव्याश्रितत्वेऽनुमिते
पृथिव्यादौ बाधानवतारदशायां विप्रतिपत्तेर्वा
पृथिव्याद्याश्रितत्वादिसाधारणधर्मदर्शनाद्वा तद्द्रव्य-
मष्टद्रव्यातिरिक्तं न वेति सन्देहेनाष्टद्रव्यातिरिक्तद्र-
व्योपस्थितिः । यद्वा इच्छाऽष्टद्रव्यातिरिक्ताश्रिता न
वेति संशयात् इच्छाया अष्टद्रव्यातिरिक्ताश्रयोप-
स्थितौ पश्चादिच्छाश्रयोऽष्टद्रव्यातिरिक्तद्रव्यं न वे-
ति संशयादष्टद्रव्यातिरिक्तद्रव्योपस्थितिः । अथवा द्र-
व्याश्रिता इच्छा अष्टद्रव्यातिरिक्तद्रव्यवृत्तिर्न वेति
संशयादष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं प्रसिद्धम्
पूर्ववत् इच्छायां साध्यते, संशयप्रसिद्धमपि साध्यं व्यति-
रेकादिनिरूपकं साध्यज्ञानमात्रस्य कारणत्वात् । न
चैवं संशयादेव पक्षे साध्यसिद्धेर्व्यतिरेकिवैयर्थ्यम्, नि-
श्चयार्थं तत्प्रवृत्तेरिति ॥

नैवम्, संशयेन साध्यप्रसिद्धावपि तद्व्यति-
रेकनिश्चयासम्भवात् साध्यव्यतिरेकतद्व्याप्तिनिश्च-
यस्य साध्यनिश्चयसाध्यत्वात् साध्यसन्देहे तद्व्य-
तिरेकादिसंशयावश्यम्भावात् । किञ्च संशयोप-
स्थितसाध्यस्य व्यतिरेकिनिरूपणं न योग्यानुप-
लम्भात्, साध्यनिश्चयं विना योग्यानुपलम्भास-

म्भवात्। नापि व्यापकाभावात्, साध्यनिश्चयं विना तद्व्यापकत्वनिश्चयाभावात्। न च यदीच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता न स्यादष्टानाश्रिता सती द्रव्याश्रिता न स्यात्, रूपवदिति साध्यविपर्ययकोटौ प्रतिकूलतर्कसहकृतः साध्यसंशय एव निश्चयकार्यं करोति, अत एवैतादृशसंशयोपस्थितकल्पितडित्थादिसाधनमप्यपास्तम्, तद्विपर्यये प्रतिकूलतर्काभावादिति वाच्यम्। साध्यनिश्चयं विना साध्यव्यतिरेकनिश्चयतन्मूलतर्कानवतारात्, अन्यथा अष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वनिरूपणे तर्कोदयस्तर्कोदये च तत्सहकृतसाध्यसंशयस्य साध्यव्यतिरेकनिश्चायकत्वमिति।

(वि०) पूर्वपक्षी शङ्कतेऽथेति। सिद्धान्त्याह स्यादेतदिति। अनुमितेरिति। गुणत्वेनेति शेषः। आश्रितत्वादीति। आश्रयत्वादीत्यर्थः। यद्वेति। पूर्वमेकांशे निश्चयादपरांशे संशयाद्विशिष्टस्यैकज्ञानविषयतया साध्यप्रसिद्धिरत्र तु एकसंशयानन्तरमपरसंशयेनैव विशिष्टोपस्थितिरिति बोध्यम्। तृतीयेऽथवेत्यादिकल्पे विशिष्टस्य प्रथमत एव संशयविषयत्वादेकसंशयरूपैव प्रसिद्धिः कोटिप्रसिद्धिश्च केवलाद्वादिवाक्यादित्यवधेयम्। पूर्वपक्षमाह मैवमिति। नन्वेकत्र सन्देहेऽपरत्र सन्देहाभावात् इच्छायां साध्यसंशयेऽपि रूपादौ तद्व्यतिरेकनिश्चयः सम्भवति वायौ पार्थिवादिरूपसन्देहेऽपि तदभावनिश्चयस्यानुभविकत्वात् इत्यत आह किञ्चेति। व्यापकाभावात्—साध्यव्यापकाभावात्। साध्यव्यतिरेकिनिरूपणमिति शेषः। शङ्कते न चेति। साध्यविपर्ययकोटौ—अष्टद्रव्यानाश्रितत्वपक्षे। अत एव—साध्यसंशयेन निश्चयोत्पादे तद्विपर्यये प्रतिकूलतर्कस्य सहकारित्वादेव। साध्यव्यतिरेकनिश्चयेति। आपादकनिर्णयस्य तर्ककारणत्वादिति भावः। अन्यथेति। तथा च अन्योन्याश्रय इति पर्यवसितमिति पूर्वपक्षाशयः।

(चि०) उच्यते—इच्छाश्रयद्रव्यसिद्धौ पृथिव्यादाविच्छाधारताऽभावे तद्द्रव्यं पृथिव्याद्यष्टद्रव्य-

भिन्नम् अष्टद्रव्यावृत्तिधर्मवत्त्वात् पृथिव्यादित्वे बाधकसत्त्वादष्टद्रव्यातिरिक्तद्रव्यासिद्धाविच्छायामष्टद्रव्यातिरिक्तद्रव्यवत्त्वमष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं वा साध्यते, साध्यप्रसिद्धिर्द्रव्यत्वे, इच्छाविशेष्यकाष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वप्रतीतेर्व्यतिरेकिसाध्यत्वात्। तथापीच्छाऽष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् अष्टद्रव्यातिरिक्तद्रव्यत्ववदिति साध्यप्रसिद्ध्यैव दृष्टान्तप्रसिद्धेरन्वयी हेतुः स्यादिति चेत्। न। अन्वयव्याप्त्यप्रतिसन्धाने व्यतिरेकव्याप्तिप्रतिसन्धानदशायां व्यतिरेकिसम्भवात्। न च द्रव्यत्वादेः सपक्षात् व्यावृत्तत्वादसाधारण्यम्, तद्धि साध्यतदभावोभयसाधकत्वेन सत्प्रतिपक्षोत्थापकतया दोषावहं प्रकृते च न हेतोः साध्याभावसाधकत्वं विपक्षे बाधकाभावात् साध्यसाधकत्वे तत्सत्त्वाच्च। अत एव यावदेकत्रानुकूलतर्को नावतरति तावदेव दशाविशेषेऽसाधारण्यं दोष इत्युक्तम्। सुवर्णतैजसत्वसाधकव्यतिरेकिणि शब्दोऽनित्यः शब्दत्वादित्यादावपि तथा ॥

(दि०)सिद्धान्त्याह उच्यत इति। सिद्धाविति। इच्छा द्रव्याश्रिता गुणत्वाद्रूपवदित्यनुमितेरिति शेषः। प्रसिद्धिरिति। यतश्च सर्वमिच्छा द्रव्याश्रयाश्रितेति यदि सामान्यतोदृष्टानन्तर इच्छाश्रयो द्रव्यत्वाश्रयो न पृथिवीति बाधावतारस्तदेति द्रष्टव्यम्। द्रव्याश्रितेच्छेत्यनुमाने तु द्रव्यत्वस्य प्रकारतया तदाश्रितत्वस्य वैशिष्ट्यभानेनाश्रितत्वत्वरूपसाध्यतावच्छेदकावच्छिन्नसाध्यस्य द्रव्यत्वेऽप्रसिद्धतया तत्र सिद्ध्युपदर्शनेन विरोधात्। एवं चान्वयित्वापादनमसाधारण्यापादनं चापेतन विरुध्येत तयोः सपक्षत्वाभावात्। यदा तु द्रव्याश्रितेत्येवानुमानं तदा प्रसिद्धिरिच्छायां द्रष्टव्या इति

रेकिण, इच्छाविशेष्यकानुमित्यर्थत्वमित्याकरेणैव स्फुटत्वात् । मथुरानाथस्तु–उक्तानुमानान्तरं मनसैव तादृशद्रव्यवृत्तित्वत्वेन सा-ध्यतावच्छेदकप्रकारेण साध्यप्रसिद्धिर्द्रव्यत्वे इत्यर्थः—इत्याह । ननु तथापीच्छायां द्रव्यवृत्तित्वात् साध्यसिद्धिर्जातेति किं व्यतिरेकिणा? तत्राह इच्छेति । दृष्टान्तसिद्धेरिति । दृष्टान्ते द्रव्यत्वे साध्यप्रसिद्धेरन्वयव्यं हेतुरित्यर्थः । तथापीत्यत्रोत्तरयति नेति । व्यावृत्ताविति । द्रव्यानाश्रितत्वे सति गुणत्वस्य हेतोर्व्यावृत्तावित्यर्थः । असाधारण्याभावे युक्तिमाह तद्धीति । असाधारण्यं हीत्यर्थः । विपक्षे–साध्याभावसाधकत्वाभावे । तत्तत्त्वादिति । अष्टद्रव्यानाश्रितस्य द्रव्याश्रितत्व तदतिरिक्तद्रव्यवृत्तित्वं विनाऽनुपपन्नमिति साध्यसाधकतर्कस्याप्रतिहतत्वाद्योभयसाधकत्वेन सत्प्रतिपक्षोत्थापकतयाऽसाधारण्यमिति तात्पर्यम् । इत्युक्तमिति । आचार्येणेत्यर्थः । सुवर्णेति । सुवर्णं तैजसमसति प्रतिबन्धकेऽत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वादिति व्यतिरेक्यनुमितावित्यर्थः । तथा–नासाधारण्यमित्यर्थः ॥

(चि०) अथाष्टद्रव्याधारत्वबाधानन्तरमिच्छादौ गुणत्वादेवाष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं सिद्ध्यति पक्षधर्मताबलात् प्रसिद्धविशेषबाधे सामान्यज्ञानस्य तदितरविशेषविषयत्वनियमात् ,अत एवाऽसर्वविषयानित्यज्ञानबाधानन्तरं क्षित्यादौ कार्यत्वेन ज्ञानजन्यत्वं सिद्ध्यन्नित्यसर्वविषयत्वं ज्ञानस्यादायैव सिद्ध्यतीति चेन्न । बाधानन्तरमष्टद्रव्यातिरिक्तद्रव्याविषयाप्यनुमितिर्द्रव्याश्रितत्वप्रकारिका स्यात्–अनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वनियमात्, न त्वष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वप्रकारिका–तस्य पूर्वमप्रतीतत्वेन प्रकारत्वासम्भवादिति तत्प्रकारिकाऽनुमितिर्व्यतिरेकिणैव । अनाद्यनन्तद्व्यणुकादियावत्पक्षीकरणेऽनाद्यनन्ततावदुपादानगोचरापरोक्षज्ञानस्यमेव नित्यसर्ववि-

पयकत्वमेतदन्यनित्यसर्वविषयत्वं व्यतिरेकिण एव सिध्यति, पक्षधर्मताबलेनापि व्यापकतावच्छेदकप्रकारेण साध्यसिद्धिर्भवति न तु साध्यगतविशेषप्रकारिका अतिप्रसङ्गात् ।

नन्वष्टद्रव्यानाश्रितेच्छा द्रव्याश्रितेति यदि साध्यते, तदाऽष्टद्रव्यातिरिक्तद्रव्याश्रितत्वमन्तरेण प्रतिज्ञार्थ एव नोपपद्यते ।

सत्यम्, एवमप्यष्टद्रव्यानाश्रितेच्छायां द्रव्याश्रितत्वं सिद्ध्यतु तस्याष्टद्रव्यातिरेकः कुतः सिद्ध्येत् ॥

(वि०) शङ्कते अथेति । गुणत्वादेवेति । तथा चेच्छायां पृथिव्याद्यष्टद्रव्यवृत्तित्वबाधसहकारेण इच्छा द्रव्याश्रिता गुणत्वादित्यन्वयिनैवाष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वसिद्धौ किं व्यतिरेकिणेति शङ्कार्थः । तत्र दृष्टान्तमाह अत एवेति । क्षितिः कर्तृजन्या कार्यत्वादित्यनुमितौ जीवानां तदुपादानगोचरापरोक्षज्ञानाद्यसम्भवात्तद्बाधे नित्यसर्वविषयज्ञानवदीश्वरस्यैव तत्कर्तृत्वसिद्धिरन्वयिनैव यथेत्यभिप्रायः । उत्तरयति नेति । बाधान्तरमिति । बाधावतारात्पूर्वं सामान्यतोदृष्टपर्यवसाने व्यतिरेकिणं विना गत्यन्तरं नास्तीति हृदयम् । द्रव्याश्रितत्वप्रकारकत्वे हेतुमाह अनुमितेरिति । येन रूपेण व्यापकत्वग्रहं तेनैवानुमितौ भाननियमादित्यर्थः । पूर्वमप्रतीतत्वेनेति । व्यापकतावच्छेदकतयेति शेषः । ननु तर्हि ईश्वरानुमाने नित्यत्वं सर्वविषयकत्वं च ज्ञाने कथं सिद्ध्येदत आह अनाद्यनन्तेति । एतदन्येति । ईश्वरज्ञानस्य आकाशादिनित्यसर्वविषयत्वमन्वयदृष्टान्ताभावात् व्यतिरेकिविषयोऽन्यथेश्वरस्य सर्वज्ञत्वहानिरित्यभिप्रायः । अतिप्रसङ्गादिति । तथा चेच्छायामष्टद्रव्यातिरिक्तात्मवृत्तित्वं न सिद्ध्येत् द्रव्याश्रितत्वमात्रं गुणत्वेन सिद्ध्येत्तदर्थं व्यतिरेकिस्वीकार इति भावः ।

इदमेवाशङ्क्योत्तरयति । नन्विति ।

(चि०) अथ सामान्यव्यभिचारमादाय मानान्तरोपनीतं तत्तदन्यत्वमुपजीव्याष्टद्रव्यान्यद्रव्यवृत्तित्वेनेच्छादेः परिच्छिद्यते, ज्ञानान्तरोपस्थापितविशेषणविशिष्टज्ञानस्य सुरभिचन्दनमित्यादौ दर्शनादिति चेत्। न। मानान्तरान्नियमेनानुपस्थितेः।

ये चेच्छाश्रये पृथिव्यादिभिन्नत्वं न जानन्ति इच्छायाश्च पृथिव्याद्यनाश्रितत्वं न जानन्ति, तेषामप्यनुमानादित्यप्याहुः।

अथ व्यतिरेकी नानुमानं सर्वत्र असत्त्वादिना सत्प्रतिपक्षग्रस्तत्वादिति चेन्न। विपक्षबाधकेन व्यतिरेकिणो बलवत्त्वात्॥

(वि०) पुनरन्वयेनैवेच्छानुमानवादी शङ्कते अथेति। सामान्यव्यभिचारो गुणत्वादिष्टद्रव्याश्रितत्वसामान्यव्याप्तिज्ञानम्। मानान्तरोपनीतं तत्तदन्यत्वम्-इच्छा, न पृथिवीवृत्तिरित्यादिबाधकानुमानान्तरम्। उपजीव्य-विशेषणत्वेन विभाव्य। तथा चेच्छा द्रव्याश्रिता गुणत्वात्, इत्यादिप्राथमिकसामान्यतोदृष्टानुमानेनैवाष्टद्रव्यातिरिक्तात्मवृत्तित्वमिच्छायामन्वयिनैव स्यादिति शङ्कार्थः। ज्ञानान्तरोपनीतविशेषणविशिष्टज्ञाने दृष्टान्तमाह सुरभि चन्दनमिति। समाधत्ते मानान्तरादिति। उक्तबाधकानुमाने उक्तसामान्यतोदृष्टानुमानपूर्वकत्वस्यानियतत्वादुपनीतभानस्यासम्भवान्नेदं युक्तमिति समाधानार्थः। मानान्तरादित्यापाततश्च वाच्यम्। वस्तुतो बाधकानुमानैस्तदुपस्थापननियमेनापि नानुमितौ स विशेषणं स्यात्प्रतिपक्षतामापन्नस्यैवोपस्थितेस्तत्र सत्त्वात् न तु प्रकारान्तरोपस्थितस्याप्यनुमितौ भानमिति बाधे वक्ष्यमाणत्वात्।

अत्रैव समाधानान्तरं केषाञ्चिदाह ये चेत्यादिना। इत्यपीत्यस्वरसोद्भावनम्। तद्बीजं तु यदीच्छाश्रयस्याष्टद्रव्यभिन्नत्वाज्ञानं तदा साध्याप्रसिद्ध्यैव व्यतिरेक्यनवकाश इति तत्समर्थनपरत्वदुष्टत्वमेव प्राप्तमिति मदुक्तदीपशिखायामिति द्रष्टव्यम्।

(चि०)अन्ये तु व्यतिरेकिण्यभाव एव साध्यः सर्वाप्रसिद्ध एव सिद्ध्यति, यस्याभावस्य व्यापको हेत्वभावो गृहीतस्तस्याभावः पक्षे व्यापकाभावाभावरूपेण हेतुना सिद्ध्यति, व्यापकाभाववत्तया ज्ञाते व्याप्याभावज्ञानावश्यम्भावात्। तथा हि-पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यत्र इतरस्य जलादेर्व्यापकः पृथिवीत्वाभावो गृहीत इति पृथिवीत्वाभावाभावरूपेण पृथिवीत्वेन पृथिव्यामितरान्योन्याभावोऽप्रसिद्ध एव सिद्ध्यति प्रतियोगिज्ञानस्याहेतुत्वात् प्रत्यक्षेण भूतले घटाभाववत् । एवमन्यत्राप्यव्याप्यवृत्तीच्छायाः स्वाश्रयत्वे सिद्धे स्वाश्रये योऽत्यन्ताभावस्तदवच्छेदकं घटादि सर्वं–तदवच्छेदेनेच्छानुपलम्भात्, जीवच्छरीरन्तु न तथा–तदवच्छेदेन तदाश्रये इच्छोपलम्भात्, तथा चेच्छात्यन्ताभावाश्रयतावच्छेदकत्वरूपस्य नैरात्म्यस्य घटादौ प्राणादिमत्त्वाभावो व्यापको गृहीत इति जीवच्छरीरे प्राणादिमत्त्वेन इच्छात्यन्ताभावाश्रयत्वावच्छेदकत्वस्याभावः सात्मकत्वं साध्यते । एवं प्रामाण्यसाधकव्यतिरेकिण्यपि व्यधिकरणप्रकारावच्छिन्नत्वस्य व्यापकः समर्थप्रवृत्तिजनकत्वाभावोऽप्रमायां गृहीतोऽतो विवादाध्यासितानुभवे समर्थप्रवृत्तिजनकत्वेन व्यधिकरणप्रकारावच्छिन्नत्वस्याभावः सिद्ध्यति, व्यधिकरणप्रकारानवच्छिन्नत्वमेव–प्रमात्वम् । ननु साध्याप्रसिद्धौ कथं साध्यविशिष्टज्ञानं विशेषणज्ञानजन्यत्वाद्विशिष्टज्ञानस्येति चेत्। न। पक्षे साध्यानुमि

(चि०)तिसामग्रीसत्त्वात्पक्षविशेषणकः साध्यविशेष्यक एव प्रत्ययो जायते भूतले घटो नास्तीत्यभावविशेष्यकप्रत्ययवत् ।

तथापि साध्याभावव्यापकाभावाभावरूपहेतुमत्तया पक्षज्ञानं व्यतिरेकिणि गमकतौपयिकम्, न च साध्यप्रसिद्धिं विनैतादृशप्रतिसन्धानं सम्भवति । न च वस्तुगत्या यः साध्याभावस्तद्व्यापकाभावप्रतियोगिमत्तया ज्ञानं मृग्यत इति वाच्यम्, व्यतिरेक्यवभासानुपपत्तेरिति चेत् । न । योऽभावो यस्य भावस्य व्यापकत्वेन गृहीतः तदभावाभावेन तस्य व्याप्यस्याभावः पक्षे साध्यत इत्यनुगतानतिप्रसक्तस्य गमकतौपयिकत्वात् । अयञ्च व्यतिरेकिप्रकारः स्वार्थ एव–परं प्रति साध्याप्रसिद्ध्या प्रतिज्ञाद्यसम्भवादिति सर्वं समञ्जसम् ॥

## चिन्तामणेरर्थापत्तिप्रकरणम् ।

(वि०)साध्याभावत्वेनोपस्थितसाध्याभावप्रतियोगित्वापेक्षया वास्तवसाध्याभावव्यापकाभावप्रतियोगित्वस्य लघुत्वेन प्रयोजकत्वमङ्गीकुर्वतां मतान्तरमाहान्ये त्विति । नन्वभावस्याप्रसिद्धत्वे हेत्वभावे तदभावव्यापकत्वग्रहासम्भवात्कथमनुमितिरत आह यस्येति । गृहीत इति । तथा च तत्र हेत्वभावे प्रतियोगिव्यापकताज्ञानं हेतुरित्यर्थः । अत्र दृष्टान्तमाह तथाहीत्यादिना । एवमन्यत्रापीति । प्रकृतेच्छानुमाने इत्यर्थः । तदेवाहाव्याप्यवृत्तीत्यादिना । स्वाश्रयत्वे सिद्धे–गुणत्वे द्रव्याश्रितत्वे सिद्धे । स्वाश्रये–द्रव्यत्वाश्रये घटादौ । योऽत्यन्ताभावः–इच्छात्यन्ताभावः । तदाश्रये–द्रव्यत्वाश्रये जीवच्छरीरे । साध्यत इति । तथा च व्यतिरेकिसिद्धिरिति भावः । प्रामाण्यसाध्यकव्यतिरेकिणि–विवादास्पदं इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमा इति व्यतिरेकिणि । सिध्यतीति ।

ततः किमत आह व्यधिकरणप्रकारेति । पक्षविशेष्यक इति । अत्र च परामर्शोऽपि पक्षविशेषणक एवेति ध्येयम् । अत एव च विश्वनाथेन मुक्तावल्यामपि त्रिविधपरामर्शस्वीकारः प्रदर्शितः, अनुमितिश्च पक्षविशेषणकापि स्वीकृतेत्यवधेयम् ॥

अत्रास्वरसमाह चिन्तामणिकारः स्वयमेव तथापीत्यादिना । तद्व्याचष्टे—अस्तु लाघवादुक्तप्रकारेण प्रयोजकता, तथापि यत्र वस्तुतः साध्याभावं जलतादात्म्येनोपस्थितं यत्र चेतरभेदाभावत्वेनोपस्थितं प्रति साधनाभावो व्यापको गृहीत उभयथापि उक्तप्रकारस्यात्र व्यापकत्वेन सर्वत्राभाव एव साध्य इत्यवधारणविरोधं यावता वह्न्यादेरपि व्यतिरेकिगम्यत्वात् । इयांस्तु विशेषः—तत्र साध्यप्रसिद्धिरत्र नान्यत्र । न चोदाहृतव्यतिरेकिण्यभाव एव साध्य इत्यवधारणार्थं—सात्मकत्वादेर्भावरूपस्याप्युक्तक्रमेण सिद्ध्यविरोधादिति । अस्मिन्नस्वरसे शङ्कते न च वस्तुगत्येति । व्यतिरेक्यभावानुपपत्तेरिति । आधेयत्वादेः अभावाप्रसिद्धेरिति शेषः । अप्रसिद्धसाध्यवादी आह योऽभाव इति । पुनरपि तत्र व्यतिरेकिण्यभाव एवेत्यवधारणेऽनास्थयोत्तरमाह अथ चेति । अयमपि कश्चित्, अतो भिन्नस्य प्रकारस्य भावाभावसाधारणस्य सार्वत्रिकस्य सत्त्वादवधारणमनुपपन्नमेवेति भावः । प्रतिज्ञादीति । आदिपदेन निगमनपरिग्रहो बोध्यः ॥

इति श्रीवटुकनाथतर्कतीर्थविरचिते तत्त्वचिन्तामणिविवचने
केवलव्यतिरेकिप्रकरणम् ॥

(चि०) व्यतिरेक्यनुमानसिद्धावर्थापत्तिर्न मानान्तरं–तेनैव तदर्थसिद्धेः । ... . .

स्यादेतत्, ज्योतिःशास्त्रात्तत्कथितलिङ्गाद्वा देवदत्तस्य शतवर्षजीवित्वमवगतं चरमं शतवर्षजीवी गृह एवेति नियमे प्रत्यक्षेणावगते पश्चाद्योग्यानुपलब्ध्या निश्चितो गृहाभावो जीवननियमग्राहकप्रमाणयोर्बलाबलानिरूपणाद्बहिःसत्त्वकल्पनं विना नियमद्वयविषयकं संशयं जनयित्वा जीवति न वेति संशयमापाद्य जीवनसंशयापनुत्तये जीवनोपपादकं बहिःसत्त्वं कल्पयतीति–यथोक्तसामग्र्यनन्तरं बहिरस्तीति प्रतीतेः, तत्रान्वयव्यतिरेकाभ्यां संशयद्वारा गृहाभावः तदुत्पादितनियमद्वयविषयकसंशयो वा करणं जीवनसंशय एव वा, करणे सव्यापारकत्वानियमात् । प्रमाणयोर्विरोधज्ञानं तदाहितसंशयद्वारा करणमिति कश्चित् । तदा जीवित्वस्य लिङ्गविशेषणस्य सन्दिग्धत्वेनानुमानासम्भवादर्थापत्तिर्मानान्तरम् ।

ननु संशयस्य कल्पकत्वे स्थाणुपुरुषसंशयादपि तदेककोटिनिर्वाहकल्पनापत्तिः । न च प्रमितसंशयः कल्पनाङ्गम्, जीवनस्य तदानीं प्रमितत्वे संशयाभावप्रसङ्गात्, जीवित्वनिश्चयेऽनुमानादेव बहिःसत्त्वनिश्चयाच्च । कदाचित् प्रमितत्वे च प्राक्प्रमितपुरुषत्वस्यान्तरा तत्संशये कल्पना स्यात् । किञ्च जीवनसंशयस्य मृतेऽपि दृष्टत्वाद्व्यभिचारेण बहिःसत्त्वगमकत्वमिति चेत् । न । यथोक्तसामग्रीप्रभवसंशयस्य

कल्पनाङ्गत्वात्। अत एव मृतजानिष्यमाणयोर्गृहाभावनिश्चयो न यथोक्तसंशयमापादयतीति न बहिःसत्त्वकल्पकः। गृहाभावश्च योग्यानुपलब्धिनिश्चितो न संशय इति। अथ जीवननियमग्राहकप्रमाणयोर्यदि च तुल्यबलत्वमवगतम्, क्व तर्हि बहिःसत्त्वकल्पना ? विशेषदर्शनविरहात्, कल्पने वा प्रमितजीवननिर्वाहकबहिःसत्त्ववद्गृहनियमनिर्वाहकमरणस्याप्युचितत्वेन तत्कल्पनापि स्यात्-जीवनमरणयोः संशयाविशेषात् । अथ तयोरेकं बलीयोऽपरमबलम्, तदैकेनापरस्य बाध एवेति न संशयः। तस्माद्यत्र शतवर्षजीवित्वमवधारितं गृहाभावश्च निश्चितः तत्र बहिःसत्त्वकल्पनं, न तु जीवनसंशये। एवञ्च देवदत्तो बहिः सन् जीवित्वे सति गृहनिष्ठात्यन्ताभावप्रतियोगित्वादिति व्यतिरेकिणा बहिःसत्त्वज्ञानेनार्थापत्त्या लिङ्गविशेषणजीवित्वसंशये बहिःसत्त्वकल्पना च नास्त्येव। किञ्च गृहाभावनिश्चयः प्रमाणद्वयविषयसंशयं जनयित्वा जीवनसंशयमापाद्य बहिःसत्त्वं कल्पयतीति न युक्तम्, न हि यत एव यत्संशयः स एव तन्निश्चयाय प्रभवति-अतिप्रसङ्गात् ।

(चि०) अथार्थापत्तिविवेचनम् ।

व्यतिरेकव्याप्तिज्ञानस्यानुमितिहेतुत्वं प्रतिपाद्य तेनैव चारितार्थ्येऽर्थापत्तिर्मीमांसकाभिमता नाङ्गीकार्येत्याभिप्रायेण प्रसङ्गसङ्गत्यार्थापत्तिनिराकरणमारभते व्यतिरेक्यनुमानसिद्धावित्यादिना। व्यतिरेक्यनुमानसिद्धौ-व्यतिरेकव्याप्तिज्ञानस्यानुमितिजनकत्वसिद्धौ। अर्थापत्तिः-अर्थापत्तिशब्दवाच्यं ज्ञानम्। न मानान्तरम्-नानुमितिभिन्नम्। तत्र हेतुमाह तेनैवेति। तथा चानुमितिसामग्रीभिन्नसामग्र्य-

जन्यत्वे सति जन्यत्वादिति हेतुरित्यर्थः। तथा चात्र—अर्थापत्तिशब्दवाच्यं ज्ञानमनुमितिभिन्नं न वेति विप्रतिपत्तिः। तत्र विधिकोटिर्मीमांसकानां निषेधकोटिर्नैयायिकानां बोध्या॥

हेतौ स्वरूपासिद्धिमाशंकते मीमांसकमतेन स्यादेतदिति। ज्योतिःशास्त्रस्य व्याप्तिग्राहकमात्रतया न देवदत्तीयशतवर्षजीवित्वनिश्चायकत्वमत आह तत्कथितेति। गृह एवेति। गृहान्यावृत्तिरित्यर्थः। निश्चितो गृहाभावो—गृहाभावनिश्चय इत्यर्थः। जीवननियमग्राहकप्रमाणयोः—जीवित्वनिश्चयगृहान्यावृत्तित्वनिश्चययोः। बलाबलानिरूपणात्—प्रामाण्याप्रामाण्यान्यतरानिश्चयात्। बहिःसत्त्वकल्पनमिति। बहिःसत्त्वनिश्चयाभावेन चेत्यर्थः। नियमद्वयविषयकमिति। नियमद्वयविषयकनिश्चयद्वयविषयकं प्रामाण्यसंशयं जनयित्वेत्यर्थः। जीवनोपपादकं—शतवर्षमध्ये गृहे सतः शतवर्षजीवित्वस्य व्यापकम्। कल्पयतीत्यत्र मानमाह यथोक्तेति। गृहाभावः—गृहवृत्तिदेवदत्ताभावनिश्चयः। ईदृशनिश्चयस्य प्रामाण्यसंशयेऽहेतुत्वेन द्वारत्वासंभवादाह तदुत्पादितेति। तत्प्रयोज्यनिश्चयद्वयविषयकप्रामाण्यसंशय इत्यर्थः। सोऽपि न जीवने हेतुः जीवनसंशयेनान्यथासिद्धत्वात्तस्य तद्व्यापारत्वे मानाभावादत आह जीवनसंशय एवेति। ननु जीवनसंशयस्य व्यापाराभावात्कथं करणत्वमित्याशंक्याह करण इति। तथाच फलायोगव्यवच्छिन्नत्वमेवात्र करणत्वं न तु व्यापारवत्कारणत्वमित्यर्थः। प्रमाणयोः—शतवर्षजीवित्वगृहान्यावृत्तित्वनिश्चययोः। तदाहितसंशयद्वारा—तादृशविरोधज्ञानाहितप्रामाण्यसंशयद्वारा। विरोधज्ञानं विना प्रामाण्यसंशयासंभवेनोपजीव्यत्वादिति भावः। मध्यवर्तिप्रामाण्यसंशये व्यापारत्वमप्रामाणिकमिति कश्चिदित्यनेनास्वरससूचनम्। अर्थापत्तिमुपसंहरति तदेति। जीवित्वे सति गृहासत्त्वस्यैव नैयायिकैर्हेतूकरणीयत्वादिति भावः॥

तत्र नैयायिक आक्षिपति ननु संशयस्येति। कदाचित् प्रमितत्वे—यत्र कदाचित् निश्चितविषयकसंदेहस्यैव कल्पनाङ्गत्वे। कल्पना स्यात्—जीवनतदुपपादककल्पना स्यात्। व्यभिचारेण—अन्वयव्यभिचारेण। मीमांसकः समाधत्ते न यथोक्तेति। किञ्चिदनुकूलमुद्भावयति अत एवेति। यथोक्तसामग्रीजन्यसंशयस्य कल्पनाङ्गत्वादित्यर्थः। यथो-

केति । यथोक्तरूपेण जीवित्वसंशयं न जनयतीति न मृतत्वेन जनिष्यमाणत्वेन निश्चितयोः गृहासत्त्वनिश्चयः वहिःसत्त्वापादक इति भावः ॥ ननु योग्यानुपलब्धिजनितगृहाभावनिश्चये प्रामाण्यसंशयात् भविष्यति गृहाभावसंशय इत्यत आह गृहाभावश्चेति । तथाच योग्यानुपलब्धिजन्यज्ञानस्य विशेषदर्शनतया प्रामाण्यसंशयाभाव इति भावः ॥ तुल्यबलत्वमिति । सन्दिग्धाप्रामाण्यकत्वमित्यर्थः । विशेषदर्शनेति । वहिःसत्त्वव्याप्यस्य शतवर्षेषु गृहासत्त्वे सति शतवर्षजीवित्वनिश्चयस्य विरहात् कथं वहिःसत्त्वनिश्चय इति भावः ॥ यदि च-संशयहेतुकार्थापत्तिस्थले व्याप्यनिश्चयो न हेतुः किन्तु व्याप्यसंशय एवेति मन्यते तत्राप्याह कल्पने चेति । तत्कल्पनादीति । भवदभिमतसंशयरूपसामग्रीसत्त्वात् मरणकल्पनापि स्यादिति भावः । एकं-गृहाभ्यावृत्तिस्वज्ञानम् । बलीयः-निश्चितप्रामाण्यकम् । अपर-शतवर्षजीवित्वज्ञानम् । अबलं-गृहीताप्रामाण्यकम् । तदेति । तदा न शतवर्षजीवित्वसंशय इत्यर्थः । नन्वेवमेवोपपत्तावत आह एवञ्चेति । व्यतिरेकेत्युपलक्षणम् । विपमाततरे विशेषणेऽन्वयपि द्रष्टव्यः ॥ तथा चोक्तव्यतिरेकिणैव वहिःसत्त्वज्ञानं न तु लिङ्गविशेषणजीवनसंशयेऽर्थापत्त्या वहिःसत्त्वकल्पनमिति नैयायिकाशयः । दूषणान्तरमाह किञ्चेति । अतिप्रसङ्गादिति । सर्वत्रैव तत्संशयोत्तर तन्निश्चयापत्तेरिति भावः ॥

(चि०)नैवम् । यथोक्तसामग्रीजनितसंशयवानेवं तर्कयति योग्यानुपलब्धिगृहीतो गृहाभाव इति तन्निश्चयः सुदृढ इति जीवननियमग्राहकयोरेकं बाध्यं विरुद्धयोरप्रमाणत्वात् । तदिह मरणं कल्पयित्वा जीवनग्राहकं बाध्यतां नो वा, बहिःसत्त्वं कल्पयित्वा गृहनियमग्राहकम्, तत्र बहिःसत्त्वकल्पने गृहनियमग्राहकमाचबाधा मरणकल्पने तु शतवर्षजीवी गृह एवेति नियमद्वयस्यापि बाधा स्यात्, तदाह-जीवनबाधे तन्नियमबाधस्यावश्यकत्वात्-इति । किञ्च अद्य जीवति इयो

जीविष्यतीत्यादिबहुतरक्षणलवमुहूर्त्तादिसमयोपाधिनियतं जीवनमुपलब्धमिति तद्बाधे बहुतरव्याप्तिबाधः, देवदत्ततदवयवगृहसत्त्वव्याप्तिश्चाल्पा, तथाऽभावस्वरूपमरणापेक्षया बहिःसत्त्वस्य भावस्य लघुत्वम् । यदि च गृहाऽन्योन्याभावाश्रयबहिःपदार्थवृत्तिसंयोगाश्रयत्वं बहिःसत्त्वमिति तदपेक्षया मरणमेव लघु, तथापि मरणापेक्षया जीवनमात्रं लघ्विति तदेव कल्पयितुमर्हम् । ततोऽर्थापत्तिकल्पितं जीवित्वमुपजीव्यानुमानादपि बहिःसत्त्वज्ञानं भविष्यतीत्यतो व्यावर्त्तकसहकृतो यथोक्तसामग्रीप्रभवः संशयो बहिःसत्त्वं कल्पयति । न च वाच्यं—तर्काणां विपर्ययापर्यवसायित्वे आभासत्वम्, तत्पर्यवसाने च तदेवानुमानमेतत्तर्कसहायं बहिःसत्त्वमनुमापयिष्यति इति, यतो लाघवगौरवतर्काणां विपर्ययापर्यवसायिनामेव प्रमाणसहकारित्वमत एव प्रत्यक्षशब्दादावपि सहकारी सः । न च तस्यां दशायामेव प्रमाणान्तरमस्ति ततोऽर्थापत्तिसहकारित्वं तर्कस्य ।

ननु स्वकारणाधीनस्वभावविशेषात्तर्कानुगृहीतयथोक्तसंशयस्य यदि बहिःसत्त्वप्रमापकत्वं तदा मृते गृहास्थिते वा तादृशसंशयाद्यत्र बहिःसत्त्वकल्पना सापि प्रमा स्यादिति चेत् । न । यथाहि प्रमाणकस्येन्द्रियस्य दोषेण प्रमाशक्तितिरोधानादैन्द्रियकभ्रमः तथा यथोक्तसंशयस्यापि दोषेण प्रमाशक्तितिरोधानादप्रहत्वभ्रमसम्भवात् । परोक्षज्ञानानां जनकज्ञानाविभ्रमत्वे यथार्थत्व-

नियम इति चेत्। सत्यम्, प्रकृतेऽपि जीवनगृहाभावनियमग्राहकप्रमाणयोरन्यतराभासत्वेनाभासत्वसम्भवात्। यद्वा दोषाभावसहकृतस्य यथोक्तसंशयस्य बहिःसत्त्वप्रमापकत्वमिति ॥

(वि०) उक्तमेवाधिकाक्षेपे समाधत्ते मीमांसको मैवमित्यादिना। एवं तर्कयति-एवं लाघवगौरवतर्कमवतारयतीत्यर्थः। विरुद्धयोः-याववर्षंजीवित्वगृहान्यावृत्तित्वयोः। एतेन किमत आह तदिहेति। बाध्यतामिति। तथा च मरणसत्त्वेन जीवनज्ञानमप्रमा स्याद् बहिःसत्त्वसत्त्वेन गृहान्यावृत्तित्वनिश्चयो वाऽप्रमा स्यादित्यर्थः। बाधा-अप्रमात्वम्। नियमद्वयस्यापीति। जीवित्वगृहान्यावृत्तित्वद्वयनिश्चयस्येत्यर्थः। अत्रोक्तार्थे वृद्धसंमतिं प्रदर्शयति तदाहेति। देवदत्तेति। देवदत्तस्तदवयवादि यावत् तावत्पयश्यः प्रभृतिनियमसंभवेन जीवनग्राहकस्य बहुत्व गृहनियमग्राहकस्याल्पत्वं द्रष्टव्यम्। अभावरूपेति। तत्पुरुषीयशरीरसंयोगाधिकरणक्षणावृत्तितत्पुरुषीयशरीरप्राणसंयोगध्वंसरूपेत्यर्थः। गृहान्योन्याभावाश्रयेति। गृहतदभावान्योन्याभावकूटघटितत्वेन च बहिःसत्त्व गुर्विति भावः। तथापीति। मरणापेक्षया जीवनं लघु इति तत्कल्पयित्वाऽर्थापत्तिकल्पितजीवित्वलिङ्गकानुमित्या बहिःसत्त्वं साध्यमित्यावश्यकतया गुर्वपि तदेवार्थापत्त्या कल्प्यते न मरणमिति तर्कशरीरमेवेदं द्रष्टव्यम्। तेन एतावत्तर्कसहकाराद्बहिःसत्त्वं कल्पयतीति नोपसंहारविरोधोऽन्यथाऽस्य ग्रन्थस्यार्थापत्त्या जीवित्वं कल्प्यते इत्यर्थे उपसंसंहारविरोधादित्यवधेयम्। बहिःसत्त्वं कल्पयतीति। मरणे च लाघवज्ञानाभावान्न तन्निश्चयं जनयतीति भावः। 'एतेन किञ्चेत्याद्युक्तं प्रत्युक्तं तत्संशायकमात्रस्य तन्निश्चायकत्वे पक्षातिप्रसङ्गात् सहकारिविशेषेण तस्य तथात्वे चातिप्रसङ्गाभावादिति भावः। शङ्कते न चेत्यारभ्य इतीत्यन्तेन। विपर्यय-गुर्वर्थविपरीतो लाघवार्थः। तदपर्यवसायित्वे-तदनुमितिजनकसामग्र्यसहकृतत्वे। आभासत्वं-लघ्वर्थनिश्चयाजनकत्वम्। ईश्वरानुमानादौ तद्दर्शनादिति भावः। ततः किमत आह-तत्पर्यवसाने चेति। समाधत्ते यत इत्यनेन। ननु लाघवज्ञानस्य प्रमाणान्तरसहकारित्वे तेनैव बहिःसत्त्वज्ञानं भवि-

ष्यति किमर्थापत्त्येत्यत आह न चेति । तस्यां दशायां—लाघवज्ञानदशायाम् ॥

नैयायिकः शंकते नन्विति ।

उत्तरयति न यथाहीति । ऐन्द्रियकभ्रम इति । नेत्रे कामलादिरोगग्रस्ते पीतः शंख इति भ्रमदर्शनादित्यर्थः । अग्रहरूपेति । धर्मधर्मिणोर्भेदाग्रहरूपेत्यर्थः । सत्यमिति । जीवनगृहाभावनियमग्राहकप्रमाणयोः—शतवर्षजीवित्वनिश्चययोग्यानुपलब्धिजनितगृहाभावनिश्चययोः । मृतस्थले जीवननिश्चयस्याभावसत्त्वादिति भावः । प्रमापकत्वमितीति । यथा दोषेण प्रमाशक्तिनाशस्तथा दोषाभावस्य प्रमाजनकत्वमिति यद्वेत्यादिसमाधानतात्पर्यम् ॥

इति संशयकारणकार्यापत्तिपूर्वपक्षविवेचनम् ॥

(चि०) उच्यते । अनयोरेकं बाध्यं विरुद्धार्थग्राहकत्वादिति सामान्यतो दृष्टादेव तर्कसहकृताद्गृहनियमग्राहकबाधे लिङ्गविशेषेण जीवित्वनिश्चयेऽनुमानाद्बहिःसत्त्वसिद्धिः । तथाहि—जीवनप्रमाणबाधे गृहनियमप्रमाणोत्थापितलिङ्गेन मरणानुमानात् प्रमाणत्वाभिमतयोर्द्वयोरपि बाधा स्यात् । गृहनियमग्राहकबाधे च निष्परिपन्थिजीवनप्रमाणाल्लिङ्गविशेषणजीवित्वनिश्चये बहिःसत्त्वानुमानादेकप्रमाणबाधेत्यादितर्कसहकृतात् सामान्यतोदृष्टादेवानयोरेकं बाध्यमिति जायमानानुमितिः परस्परामरणज्ञापकं विषयीकरोति, न तु बहिःसत्त्वपरम्परासाधकं जीवनप्रमाणम् । तथा च सामान्यतोदृष्टादेव गृहनियमग्राहकबाधे जीवनप्रमाणाल्लिङ्गविशेषणजीवित्वनिश्चयेऽनुमानादेव बहिःसत्त्वज्ञानमिति किमर्थापत्त्या ।

(वि०) अथ संशयकारणकार्यापत्तिसिद्धान्तविवेचनम् ॥

एवं बाध्यमिति । देवदत्ते शतवर्षजीवित्वगृहान्यावृत्तित्वनिश्चययोरन्यतरस्य उक्तप्रमाणद्वयान्यतरवृत्तिशतवर्षजीवित्वगृहान्यावृत्तित्वयोरुभयविरोधनिरूपकाधिकरणविशेष्यकशतवर्षजीवित्वप्रकारकज्ञानवृत्तित्वे सति तद्विशेष्यकगृहान्यावृत्तित्वप्रकारकज्ञानवृत्तित्वादित्यर्थः । गृहनियमग्राहकबाधे—गृहान्यावृत्तित्वनिश्चयस्याप्रमात्वनिश्चये । अनुमानप्रकारमेवाह तथाहीत्यादिना । गृहनियमप्रमाणोपस्थापितेन लिङ्गेन—गृहान्यवृत्तित्वविशिष्टगृहासत्त्वेन हेतुना । बाधः स्यादिति । मरणस्योक्तरीत्याऽनुमानासिद्धत्वात् देवदत्ते शतवर्षजीवित्वगृहसत्त्वनिश्चययोरप्रमात्वं स्यादित्यर्थः । निष्प्रतिपक्षीति । प्रतिबन्धकाभावविशिष्टेत्यर्थः । जीवनप्रमाणात्—ज्योतिःशास्त्रगृहीतजीवित्वव्याप्तिनिश्चयात् । बहिःसत्त्वानुमानात्—बहिःसत्त्वानुमानप्रमाणसिद्धत्वात् । एकप्रमाणबाधेनेति । गृहान्यावृत्तित्वनिश्चयस्याप्रमात्वमित्यर्थः । मरणज्ञापकमिति । गृहान्यावृत्तित्वनिश्चयमित्यर्थः । एतावता - किमायातं प्रकृते इत्यत आह तथा चेति । बाधे—अप्रमात्वे ।

(चि०) ननु बहिःसत्त्वज्ञानं विना जीवी गृह एवेत्यस्य प्रमाणेनापि बाधितुमशक्यत्वात् प्रथमं बहिःसत्त्वज्ञानं न तु गृहनियमग्राहकबाधानन्तरं तत्, येन निष्प्रतिपन्थिजीवनग्राहकाज्जीवित्वनिश्चयेऽनुमानं स्यात्, न प्राथमिकबहिःसत्त्वज्ञानमर्थापत्तिं विना । न च गृहनियमग्राहिणि तुल्यबले जागरूके कथमर्थापत्त्यापि बहिःसत्त्वज्ञानमिति वाच्यम् । तर्कसहकारेणार्थापत्तेर्बलवत्त्वाद्बहिःसत्त्वज्ञानमुत्पाद्य गृहनियमग्राहकमानबाधादिति चेत् ।

न । तर्कसहकारेण सामान्यतोदृष्टस्य बलवत्त्वेन गृहनियमग्राहकबाधसम्भवात्, तस्माद्यथोक्तसंशयदशायां जीवनबाधे तन्नियमबाधस्याव-

हायकत्वादिति तर्कानन्तरमेव वह्निःसत्त्वज्ञानमित्य-विवादम्। तत्र कल्पनीयप्रमाणबाधे यथोक्तसंशये तर्कस्य न सहकारित्वं गौरवात्, किन्तु नियमग्राह-कबाधद्वारा वह्निःसत्त्वपरम्परासाधके सामान्यतोदृष्टे लाघवात्। न च सामान्यतो दृष्टावतार एवात्र नास्तीति वाच्यम्। अनिर्द्धारितैकबाधप्राप्तौ ह्येकबा-धानुकूलकल्पनायां विनिगमकस्तर्को भवति, न चैकबाधप्राप्तिः सामान्यतोदृष्टं विना। किञ्च विरोधज्ञानानन्तरमेकमप्रमाणमिति यदि धीर्नास्ति, तदा प्रामाण्यसंशयो न स्यात्, न स्याच्च जीवनसं-शयः द्वयोरपि जीवनमरणानिश्चायकत्वात्।

(वि०) अथ मीमांसकः शङ्कते नन्विति। नच—देवदत्ते वह्निःस-त्त्वज्ञानम्। अत्र नैयायिकाक्षेपं प्रदर्श्य निरासितुमाह न चेत्यादिना। जीवित्वसंशयकालिकप्रामाण्यसंशयाहितगृहान्यावृत्तित्वसंशयात्म-ककोटिद्वयोपस्थितिसत्त्वात्कथमर्थापत्त्यापि वह्निःसत्त्वज्ञानमिति आ-क्षेपाशय। अर्थापत्तेर्बलवत्त्वादिति। अर्थापत्तिजनकजीवित्वसं-शयस्य गृहान्यावृत्तित्वसंशयप्रतिरोधकत्वात् गृहनियमग्राहकमान-बाधसंभवादिति भाव।

नैयायिकः समाधत्ते नेति। जीवनबाधे—जीवित्वनिश्चयाप्रा-माण्ये। तन्नियमेति। शतवर्षजीविनि देवदत्ते गृहमात्रवृत्तित्वनिश्च-याप्रामाण्यस्यानुपपादकत्वादित्यर्थः। किन्त्विति। नियमग्राहकबाध-द्वारा—गृहान्यावृत्तित्वनिश्चयप्रामाण्यद्वारा। सामान्यतोदृष्ट इति। पूर्वोक्त इत्यर्थः। अनिर्द्धारितैकेति। सामान्यतोऽन्यतरनिश्चयस्या-प्रामाण्यनिर्णयेत्यर्थः। कल्पनायामिति। गृहान्यावृत्तित्वनिश्चयस्या-प्रामाण्योत्पादकवह्निःसत्त्वकल्पनायामित्यर्थः। एकबाधप्राप्तिः—सामान्यतोऽन्यतरनिश्चयस्याप्रामाण्यनिश्चयः। नन्विदमप्रमाणमिति संशयः सामान्यतोऽन्यतरनिश्चय विनैवोक्ततर्कसहकारात् वह्निः-सत्त्वज्ञानमुत्पादयिष्यतीति किं सामान्यतोदृष्टेनेत्याशंक्याह किं-

श्चेति । ननु माभूत् प्रामाण्यसंशयो जीवनसंशयादेव बहिःसत्त्वकल्पना स्यादत आह न स्याश्चेति । द्वयो –जीवनग्राहकप्रमाणगृहास्यायुःसत्त्वग्राहकप्रमाणयोः । जीवनमरणनिश्चायकत्वात्–जीवित्वगृहान्यायुःसत्त्वनिश्चयोपस्थितत्वात् । तथा चागृहीताप्रामाण्यक जीवित्वनिश्चयस्य वर्तमानत्वात् कथं तत्संशय इति भावः ।

( चि० ) अथैकमनयोरप्रमाणमिति ज्ञानं जनयित्वा सामान्यतोदृष्टस्य पर्यवसितत्वात्तज्जनितनियमद्वयसंशयाहितजीवनसंशयानन्तरं तर्कावतारे बहिरस्तीति ज्ञानं जायमानं संशयस्य कारणत्वं व्यवस्थापयतीति चेत् ।

न । यदेव हि विरुद्धार्थग्राहकत्वं तर्कविनाकृतमनिश्चितैकाप्रामाण्यानुमितिमजीजनत्तदेव तर्कसहकृतं पुनरनुसन्धीयमानं गृहनियमग्राहकप्रमाणमित्यनुमितिं बहिःसत्त्वज्ञानानुकूलां जनयति सहकारिवैचित्र्येणैकस्यापि विभिन्नफलजनकत्वात् । न च जीवनसंशयानन्तरं तदनुसन्धानमसिद्धम्, गृहनियमग्राहकस्य जीवनग्राहकविरुद्धार्थग्राहकत्वानुसन्धानं विना बहिःसत्त्वकल्पनेऽन्यथाप्रसङ्गात् ।

(वि०) आक्षिपति अथेति । पर्यवसितत्वात्–विनाशात् । व्यवस्थापयतीति । तथा चाप्रामाण्यसंशयात्पूर्वं सामान्यतोदृष्टाभावेऽपि बहिःसत्त्वज्ञाने संशयकारणत्वं निर्विवादमेवेत्याक्षेपार्थः । समाधत्ते नेति । अनिर्धारितेति । सामान्यतोऽन्यतरनिश्चयस्याप्रामाण्यानुमितिमित्यर्थः । पुनरिति । जीवनसंशयानन्तरमित्यादिः । एकस्य विलक्षणोभयजनकत्वे हेतुमाह सहकारीति । अन्यथाप्रसङ्गादिति । इदमत्राकूतम् । तर्कावतारकाले पूर्वोत्पन्नसंशयोऽपि तुल्यः तावत्पर्यन्तमनवस्थानात्, तथा च पुनः संशयासज्जनमपि । एवं च तस्य कल्प्यप्रमाणभावतया प्राप्तप्रमाणभावस्य सामान्यतोदृष्टस्यैवावतारे लाघवात्कल्प्यत इति ।

(चि०) अथ यदि पर्यवसन्नमपि प्रमाणं पुनरनुसन्धीयमानं सहकारिविशेषात् फलान्तरजनकम्, तदेच्छा द्रव्याश्रिता कार्यत्वादिति सामान्यतोदृष्टद्रव्याश्रितत्वानुमितौ पश्चादष्टद्रव्यवृत्तित्वबाधे व्यतिरेकिणात्मसिद्धिरिति भज्येत, अष्टद्रव्यवृत्तित्वबाधसहकृतात् सामान्यतोदृष्टादेव पुनरनुसन्धीयमानात् तत्सिद्धेरिति चेत् ।

न । अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन तत्प्रकारकबुद्धेर्व्यतिरेकिसाध्यत्वात्, व्यतिरेकिणोऽप्यन्यत्र सामर्थ्यावधारणेनोपायान्तरस्यादोषाच्च । अपि च देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वान्मद्वदिति सामान्यतोदृष्टं लाघवसहकारेण जीवनप्रतियोगित्वं विषयीकरोति, तथा च लिङ्गविशेषणनिश्चयादनुमानादेव बहिःसत्त्वसिद्धिः ।

(वि०) आक्षिपति अथेति । अष्टद्रव्यवृत्तित्वबाधे—अष्टद्रव्यवृत्तित्वाभावनिश्चये । व्यतिरेकिणेति । इच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिताऽष्टद्रव्यानाश्रितत्वविशिष्टगुणत्वादित्युक्तव्यतिरेकिणेत्यर्थः ।

समाधत्ते नानुमितेरिति । तत्प्रकारकेति । अष्टद्रव्यातिरिक्तद्रव्यत्वप्रकारकेत्यर्थः । नन्वीश्वरानुमानादौ लाघवाद्यवसहकारेण व्यापकतानवच्छेदकमपि प्रकारीभूतं दृश्यते इत्यतो हेत्वन्तरमाह व्यतिरेकिणोपीति । अदोषायेति । एतद्धेतुद्वयमुपलक्षणम् । सामान्यतो दृष्टस्य पुनरनवतारे व्यतिरेकिणं विना प्रकारान्तराभावादित्यपि द्रष्टव्यम् । न चैतदसिद्धम्—इच्छाया गुणत्वेन द्रव्याश्रितत्वानुमितेः प्रसिद्धयाधेऽष्टद्रव्यानाश्रितत्वे आश्रितत्वस्यापि तदनाश्रितत्वे सति गुणत्वादितिव्यतिरेकिलिङ्गत्वात् । न च गुणत्वपदाश्रितत्वमपि सामान्यतोदृष्टं पूर्वमुपस्थितं येन पुनरवतारे व्यतिरेकिणोऽन्यथासिद्धिः स्यात् । तद्धि सामान्यतोदृष्टस्य गुणत्वस्य साध्यं न साधनतयोपस्थितं प्राप्तमित्यलम् ॥ ननु विरुद्धार्थग्राहकत्वप्रतिसन्धानं विना

वह्निःसत्त्वनिश्चयस्यासत्त्वमसिद्धम् पुनरनुसन्धानाभावेऽपि यथोक्तसामग्रीजन्यसंशयानन्तरं लाघवाद्वह्निःसत्त्वनिश्चयस्यानुभवसिद्धत्वादित्यस्वरसेनाहाऽपि चेति ।

( चि० ) अथ लाघवसाचिव्यात् सामान्यतोदृष्टस्यापि विशेषविषयत्वात् नियमग्राहकप्रमाणोपस्थापितलिङ्गकमरणानुमानेन जीवनग्राहकस्येवास्यापि सत्प्रतिपक्षत्वम् एकेनापि भूयसामपि प्रतिबन्धसम्भवात् । न च तर्कात्सामान्यतोदृष्टस्य बलवत्त्वम्, व्याप्तिपक्षधर्मते हि बलम्, तच्च तुल्यमेव ज्ञातं लाघवाख्यतर्कस्य विशेषमात्रपर्यवसायकत्वेन व्याप्तिग्राहकत्वस्य तुल्यत्वादिति चेत् ।

तर्हि पक्षतावलाद्विशेषसिद्धिः क्वापि न स्यात्, सर्वत्र सामान्यमुखप्रवृत्तप्रमाणस्य विशेषपर्यवसानेऽन्यसाधर्म्येण सत्प्रतिपक्षसम्भवात् । अप्रयोजकत्वाच्च विपरीतसाधनमिति तुल्यं नियमग्राहकस्याप्रयोजकत्वात् । जीवनग्राहकस्य तु सामान्यतोदृष्टस्य ज्योतिःशास्त्राप्रामाण्यमेव विपक्षबाधकं व्याप्तिग्राहकमस्ति । तस्मात् सामान्यमुखप्रवृत्तस्य सहकारिविशेषाद्विशेषपरस्यानुमानस्य तद्विशेषविलक्षणग्राहकप्रमाणेन सत्प्रतिपक्षत्वम् । न च प्रमाणाविरोधेनास्य तर्को न सहकारीति वाच्यम् । तर्कानवतारे विशेषपरत्वाभावेनाविरोधात्, तदवतारे तदधिकबलत्वादेव, अन्यथा तर्कानवतारे सत्प्रतिपक्षस्य तदवतारेऽपि तत्त्वं न निवर्तेत । किञ्चैवमर्थापत्तावपि तद्विरोधेन न सहकारी स्यात् । यदुक्तं-मरणकल्पने शतवर्षावच्छिन्नजीवी गृह एवेत्यस्यापि बाध-इति, तत्र विशि-

ष्टबाधो न विशेष्यबाधात्—मरणेऽपि जीवी गृह एवेत्यस्य विशेष्यस्याबाधात्। किन्तु विशेषणबाधात्। स च शतवर्षजीवित्वबाध एव। विशेषणाभावापत्तौ विशिष्टाभावोऽप्यस्तीति चेत् न। विशेष्यवति विशिष्टाभावस्य केवलविशेषणाभावात्मकत्वात् विशिष्टस्यातिरिक्तस्यानभ्युपगमात्।

(वि०) पुनराक्षिपति मयेति। विशेषविषयत्वात्—जीवनविषयत्वात्। अनुमानेनेति। देवदत्तो मरणधर्मी गृहान्यावृत्तित्वे सति, गृहवृत्तित्वस्याप्रामाणिकत्वादित्यनुमानेनेत्यर्थः। जीवनग्राहकस्य—देवदत्तः शतवर्षजीवी ज्योतिःशास्त्रगृहीतव्याप्तिकत्वादित्यादेः। ननु जीवनग्राहकस्य केवलप्राणित्वादिरूपतया भूयस्त्वेन बलवत्त्वान्न सत्प्रतिपक्षितत्वमत आहैकेनेति।

विशेषपर्यवसाने—इति। लाघवादिसहकारेण विशेषप्रकारेणानुमित्युत्पाद इत्यर्थः। सत्प्रतिपक्षसम्भवादिति। पर्वतो वह्निमानित्यत्रापि पर्वतो न पर्वतीयवह्निमान् पर्वतीयवह्निमदन्यत्वात् इति सत्प्रतिपक्षसम्भवादित्यर्थः। अप्रयोजकत्वात्—अनुमितिप्रयोजकरूपशून्यत्वात्। न विपरीतसाधने—न पक्षधर्मताबललभ्यविशेषविरहव्याप्यवत्तानिश्चयः। तुल्यमिति। गृहान्यावृत्तित्वस्य देवदत्ते सन्दिग्धत्वादिति भावः। अप्रयोजकत्वादिति। पूर्वोक्तगृहान्यावृत्तित्वनिश्चयस्य प्रामाण्यसन्देहादनुमित्यजनकत्वादित्यर्थः। ननु नैयायिकस्यापि जीवित्वसहकृतगृहासत्त्वेन बहिःसत्त्वानुमितिरप्यनुपपन्ना जीवित्वविषयकानुमितेरपि गृहान्यावृत्तित्वानिश्चयवत् प्रामाण्यसंशयेन लिङ्गविशेषणजीवित्वसन्देहात् परामर्शासम्भवादित्याशङ्कायामाह जीवनग्राहकस्येति। जीवनग्राहकस्य सामान्यतोदृष्टस्य विपक्षबाधकज्योतिःशास्त्रायथार्थत्वमेव व्याप्तिग्राहकमित्यन्वयः। व्याप्तिग्राहकमस्तीति। जीवित्वलिङ्गकबहिःसत्त्वानुमाने परामर्शनिश्चायकमस्तीति भावः। ननु गृहान्यावृत्तित्वनिश्चयासत्त्वेऽपि मरणव्याप्यत्वेन धर्मान्तरनिश्चय एव प्रतिबन्धकः स्यादित्यभिप्रायेणाक्षिपति न चेति। प्रमाणान्तरविरोधेन—मरणव्याप्यमेयत्वादिरूपधर्मान्तरनिश्चयेन। त-

र्थ । चैतादृशधर्मान्तरनिश्चयसत्त्वेऽर्थापत्तिरिति मीमांसकाशयः । अ-
विरोधादिति । विशेषप्रकारकानुमितिजनकत्वाभावेन मरणव्याप्य-
वत्तानिश्चयस्याप्रतिबन्धकत्वादित्यर्थः । तदधिकबलवत्त्वादेव-तद-
पेक्षया सामान्यतोदृष्टस्याधिकबलवत्त्वात् । तद्विरोधिनेति । बहिःस-
त्त्वाभावव्याप्यत्वेन यत्किञ्चिद्धर्मस्य प्रतिबन्धकत्वेनेत्यर्थः । बाध
इति । अप्रामाण्यमित्यर्थः । न विशेष्यबाधादिति । न गृहान्यावृत्ति-
त्वाभाववति गृहान्यावृत्तित्वप्रकारकत्वादिति भावः । अबाधादि-
गृहान्यावृत्तित्वांशे बाधाभावात् । किन्त्विति । शतवर्षजीवित्वाभा-
ववति शतवर्षजीवित्वप्रकारकत्वादित्यर्थः । शतवर्षजीवित्वबाध ए-
वेति । तथा च निश्चयद्वयस्याप्रमात्वद्वयकल्पनानवकाश इति भावः ।
विशेषणांशे बाधस्त इति । तथा च विशिष्टाभाववति विशिष्टप्रकारक-
त्वरूपाप्रमात्वद्वयकल्पनापत्तिरिति भावः । विशेष्यवत्तीति । एतच्च
परमतेऽस्मन्मते विशिष्टाभावस्यातिरिक्तत्वात् । वस्तुतो लाघवं
विनिगमकमेव न किन्तु ज्योतिःशास्त्रस्य प्रामाण्यमिति हृदयम् ।

( चिं० ) अन्ये तु शतवर्षजीवी देवदत्तो जीवी गृह एव नास्तीति ; प्रमाणयोः द्वयोरविरोधेऽपि तृतीयमादाय विरोधज्ञानमस्ति, तत्र जीवी गृह एवेत्यप्रमाणघटितप्रमाणद्वयविरोधज्ञानजनिताप्रामाण्यसंशयाहितजीवनसंशयात् प्रमाणयोरविरोधोपपादकप्रमाणाविरोधि बहिःसत्त्वं कल्प्यते । यथोक्तसंशयस्यायमेव स्वभावो यद्वस्तुगत्या अप्रमाणं तद्विरोधि कल्पयति, विरोधघटकस्य वस्तुगत्या अप्रमाणत्वमेव विनिगमकत्वमिति ।

तत्तुच्छम् । अप्रमाणस्यापि प्रमाणत्वेन ज्ञानात् । तर्कादिभिर्विशेषदर्शनं विना यथोक्तसंशयानन्तरं बहिरस्तीति ज्ञानमसिद्धमतो न फलबलेन तथाऽर्थापत्तिकल्पनम् । किञ्च मृते गृहास्थिते बहिःस्थिते तादृशसं-

शयादेव बहिःसत्त्वं गृहसत्त्वं मरणञ्च कल्पयेत्, कस्यचित् क्वचिद्वस्तुगत्या अप्रमाणत्वात्, अथापत्त्याभासश्चैवं न स्यात् ।

( वि० ) मीमांसकमतान्तरमुत्थाप्य दूषयितुमाह—अन्ये त्वित्यादिना । प्रमाणेषु—निश्चयद्वयेषु मध्ये । द्वयोः—शतवर्षजीवित्वशतवर्षमध्यगृहासत्त्वनिश्चययोः । तत्र—तस्मिन् ( गृहे नास्तीति ) तृतीयज्ञाने सति । अप्रामाण्यसंशयेति । देवदत्तकर्तृकशतवर्षजीवित्वगृहाभावानुमितित्वनिश्चयद्वयनिष्ठाप्रामाण्यसंशयेत्यर्थः ।

१ एतन्मतं दूषयति तन्तुच्छमिति । फलबलेनेति । तर्कं विनापि बहिःसत्त्वज्ञानोपपत्तिबलेनेत्यर्थः । किञ्चेत्यादेरर्थापत्त्याभासश्चैवं न स्यादित्येको ग्रन्थः । अप्रमाणत्वादित्यस्यानन्तरं इति पूरणीयः, तेन हेतुत्वं लभ्यते । यद्वा कल्पयेतेति पूर्वापादने यदीष्टापत्तिः क्रियते तदा दोषान्तरमाहाऽथेति ॥

इति संशयकारणकार्थापत्तिसिद्धान्तविवेचनम् ।

( वि० ) स्यादेतत्, मा भूत् संशयः करणमर्थापत्तावनुपपत्तिस्तु स्यात्, तथाहि जीवी देवदत्तो गृहे नास्तीति ज्ञाने सति बहिःसत्त्वं विना जीवतो गृहासत्त्वमनुपपन्नमिति ज्ञानानन्तरं बहिरस्तीति धीरस्ति तत्रान्वयव्यतिरेकाभ्यामनुपपत्तिज्ञानं करणम् । न च देवदत्तो बहिरस्ति विद्यमानत्वे सति गृहासत्त्वात् घटवदित्यनुमानाद्विद्यमानत्वे सति यत्र यन्नास्ति तदन्यदेशे तदस्ति, यथा गृह एव कोणेऽसन्नहं मध्ये तिष्ठामीति व्याप्तिग्रहवदनुमानाद्वा बहिःसत्त्वसिद्धेः किमर्थापत्त्येति वाच्यम् । हेतुसाध्ययोः सहचाराज्ञानदशायामनुपपत्तिज्ञानेऽपि बहिःसत्त्वज्ञानात् । सामान्यतो व्याप्तिश्चानुमाने उपसंहर्तुमशक्येति तदन्यदेशसिद्धिरर्थापत्त्यैव ।

अथानुपपत्तिकारणकार्थापत्तिपूर्वपक्षविवेचनम् ॥

(दी०) संशयहेतुकार्थापत्तिं निराकृत्यानुपपत्तिकरणकामर्थापत्तिमाशङ्कते स्यादेतदिति । प्रमयेति । पूर्वानुमाने सत्त्वे सति यद्गृहासत्त्वं तद्बहिःसदित्येव हेतुः, इह तु सामान्यतो व्याप्तिरिति भेदाद्विकल्प इति भावः । विशेषव्याप्तिमूलकमनुमानं दूषयति हेतुसाध्ययोरिति । सामान्यतोव्याप्तिमूलकानुमानं दूषयति सामान्यत इति । अशक्येति । सामान्यमुखी व्याप्तिरनुमितिकरणमित्यर्थः ॥

(चि०) ननु जीवी विना गृहासत्त्वमनुपपन्नं किं देवदत्तबहिःसत्त्वं विना उत बहिःसत्त्वमात्रं विना ? नाद्यः—प्रथमं देवदत्तबहिःसत्त्वाप्रतीतौ तेन विनेदमनुपपन्नमिति ज्ञानाभावात्; प्रतीतौ वा किमर्थापत्त्या, अर्थापत्तिरेव तत्प्रतीतावन्योन्याश्रयः, तदुक्तं—यतोऽन्यत्वं न तत्सिद्धेरभे तदसिद्धेः—इति। नान्त्यः—अन्यदीयबहिःसत्त्वज्ञानं विनाऽनुपपत्त्यभावात्, बहिःसत्त्वमात्रसिद्धावपि देवदत्तबहिःसत्त्वासिद्धेरिति चेत् । न ।

सामान्येन हि विनाऽनुपपत्तिज्ञानं कारणं सामान्याकारेण विशेषज्ञानं फलम्, तथाहि जीवतो बहिःसत्त्वं विना गृहासत्त्वमनुपपन्नमिति ज्ञाने यस्य गृहासत्त्वमनुपपन्नं तत्र बहिःसत्त्वं कल्पयति नान्यत्र, देवदत्तस्य तथेति सिद्धे देवदत्ते बहिःसत्त्वं कल्प्यत इति देवदत्तबहिःसत्त्वं पर्यवस्यति, न तु तेन रूपेण कल्पना, न वा तेन विनाऽनुपपत्तिज्ञानं कारणम्, यथा वह्निमात्रव्याप्याद्धूमात् पर्वते वह्निसिद्धिरेव पर्वतीयवह्निसिद्धिर्न तु पर्वतीयत्वेनैव धूमात्तत्सिद्धिः—तेन रूपेण व्यापकत्वाग्रहात् ।

१, ( वि० ) नैयायिकः शङ्कते नन्विति । ज्ञानाभावादिति । प्रतियोगिज्ञानं विना व्यतिरेकज्ञानासंभवात् इति भावः । अन्योन्याश्रय इति । अर्थापत्तितस्तत्प्रतीतौ तेन विना नानुपपत्तिज्ञानमनुपपत्तिज्ञानेऽर्थापत्तिरित्यन्योन्याश्रय इत्यर्थः । स्वीकरोऽपि श्रीहर्षसंमतिमाह तदुक्तमिति । यतोऽन्यत्वमिति । अनुपपत्तिः-अन्यथानुपपत्तिः देवदत्तबहिःसत्त्वादन्येन प्रकारेण जीविगृहासत्त्वानुपपत्तिरिति यावत् । तथाच यतो देवदत्तबहिःसत्त्वादन्यत्वं तद्बुद्धेरग्रे देवदत्तबहिःसत्त्वसिद्धेः पूर्वं तदसिद्धेस्तत्कानुपपत्तिज्ञानासिद्धेः । बहिःसत्त्वमात्रपदेन यावद्बहिःसत्त्वं बहिःसत्त्वत्वावच्छिन्नत्वं वा ग्राह्यम् । नाथ इत्याह अन्यदीयेति । नान्यस्य इत्याह बहिःसत्त्वमात्रेति ।

मीमांसकः समाधत्ते नेति । पर्यवस्यतीति । पक्षधर्मताबलादिति शेषः । तेन रूपेण-देवदत्तबहिःसत्त्वरूपेण । कल्पनाज्ञानम् ॥

(चि०)अर्थोपपादकाभाववत्युपपाद्याभावानियमोऽनुपपत्तिर्न त्वभावमात्रमतिप्रसङ्गात् । एवञ्च व्यतिरेकव्याप्तिमत उपपाद्याद्व्यतिरेक्यनुमानमुदयत्येव सा-ध्यसिद्धेः किमर्थापत्त्या ? तथाहि-देवदत्तो बहिः सन् जीवित्वे सति गृहासत्त्वात्, यन्नैवं तन्नैवं, यथा मृतो गृहस्थितो वा । न चान्यव्याप्त्याऽन्यस्य गमकत्वेऽतिप्रसङ्गः-साध्याभावव्यापकाभावप्रतियोगित्वस्य नियामकत्वात् । न चार्थापत्तौ स्वरूपसती व्याप्तिर्लिङ्गं नानुमान इति वाच्यम् । अनुपपत्तेर्ज्ञानं विना कल्पनानुदयात्, अर्थापत्त्याभासानवकाशाच्च ।

मैवम्-अत्र हि व्यतिरेकव्याप्तिरत्त्वप्रत्यपक्षधर्मत्वमिति. व्याप्तिबीजन्यमपि बहिःसत्त्वज्ञानं नानुमितिः तस्या व्याप्तपक्षधर्मताज्ञानजन्यतानियमात् । न च साध्याभावव्यापकाभावप्रतियोगित्वेन प-

क्षधर्मस्य ज्ञानमनुमितिप्रयोजकमिहाप्यस्तीति वा-
च्यम्। केवलान्वयिनि तदसम्भवात्, तदपेक्षया सा-
ध्यव्याप्यत्वज्ञानस्य लघुत्वाच्च।

(वि०) नैयायिकः पुनराक्षिपति अथेति। उपपादकाभाववतीति। उपपादकाभावव्यापकीभूताभावप्रतियोगित्वमापाद्यस्यार्थः। अभावमात्रम्–उपपाद्याभावमात्रम्। अतिप्रसङ्गादिति। केवलधूमाभावज्ञानादपि धूमस्यार्थापत्त्यापत्तिरिति भावः। अर्थापत्त्याभासेति। कथं व्यभिचारिणाऽर्थापत्तिरिति भावः।

मीमांसकः समाधत्ते मैवमिति। व्याप्तेति। अन्वयव्याप्तिप्रकारकपक्षधर्मताज्ञानेत्यर्थः। केवलान्वयिनि तदसम्भवादिति। साध्याभावस्यैवाप्रसिद्धेरिति भावः। साध्यव्याप्यत्वेति। साध्यस्यान्वयव्याप्तिज्ञानस्येत्यर्थः॥

(चि०) अथ व्यतिरेकसहचाराद्धेतोरेव व्याप्ति-
र्दृश्यते, एवञ्चान्वयस्य व्यतिरेकस्य उभयस्य वा सह-
चाराद्व्याप्तिग्रहस्त्रैविध्येऽनुमानत्रैविध्यम्, अत एव धू-
मो दशाविशेषेऽन्वयी व्यतिरेकी अन्वयव्यतिरेकी
चेति।

अस्तु तावदेवं तथापि जीविदेवदत्ताभावो गृहे
वर्त्तमानो न बहिःसत्त्वे लिङ्गं देवदत्तावृत्तित्वात्, ब-
हिःसत्त्वगृहनिष्ठाभावयोर्व्यधिकरणत्वेन नियतसा-
मानाधिकरण्यरूपव्याप्त्यभावाच्च। उपरि सविता
भूमेरालोकवत्त्वादित्यत्र भूमेरुपरिसन्निहितसवितृक-
त्वेनानुमानात्। नापि गृहनिष्ठाभावप्रतियोगित्वम्,
तत्प्रतियोगित्वस्य देवदत्तधर्मतया तदसन्निकर्षे प्रत्य-
क्षेण ज्ञातुमशक्यत्वात्। अत एव विशेष्यासन्निकर्षा-
न्नृतीयलिङ्गपरामर्शोऽपि न प्रत्यक्षेण। न च व्यतिरे-
कव्याप्तिगृहनिष्ठाभावयोर्ज्ञानं सहकार्यासाद्य मनसैव

स जन्यत इति वाच्यम् । सहकारिण एव मानान्तरत्वप्रसङ्गात् ।

अथ व्याप्तिज्ञानानन्तरं स्मर्यमाणधूमात् कथमनुमितिः? उक्तन्यायेन तत्रापि लिङ्गपरामर्शाभावादिति चेत् । न कथञ्चित् । कथं तर्हि वह्निज्ञानम्? पक्षधर्मधूमस्मृतिसहितात् धूमो वह्निं विना नास्तीत्यनुपपत्तिज्ञानादिति गृहाण । अत एव दृश्यमानो धूमो वह्निं विनाऽनुपपन्न इति यदा ज्ञायते तदाऽर्थापत्तिरेव, यदा त्वनुपपत्तिज्ञानं विना व्याप्यत्वेन प्रतिसन्धीयते तदाऽनुमानम्, त्वयापि त्रिविधानुमानस्वीकारात् । तस्माद्व्यतिरेकव्याप्तिमुपजीव्य जीविदेवदत्तगृहाभावो बहिःसत्त्वं कल्पयति ।

(वि०) पुनराह नैयायिकः अथेति । मीमांसक आहाऽस्तु तावदेवमिति । देवदत्तावृत्तित्वादिति । पक्षीभूतदेवदत्तस्य तदनधिकरणत्वादित्यर्थः । बहिःसत्त्वगृहनिष्ठाभावयोः बहिःसत्त्वगृहवृत्तित्वविशिष्टाभावयोः । व्यधिकरणत्वेनेति । गृहाधिकरणदेशभेदस्यापि बहिःपदार्थघटकत्वादिति भावः । निपतेति । अत एव गृहवृत्तित्वदेवदत्ताभावोपि न लिङ्गं गृहमात्रवृत्तिपदार्थे तस्य सत्त्वेनाव्याप्यत्वादिति भावः । ननु भूमिनिष्ठालोकसंयोगस्योपरिदेशसंयोगसम्बन्धेन सवित्रनुमापकत्वे न सम्भवति पक्षावृत्तित्वादत आहोपरीति । तथाच तत्र भूमेः पक्षत्वम् सवितृसंयुक्तोपरिदेशकत्वस्य साध्यत्वम् उभयवच्छेदेनालोकसंयोगस्य हेतुत्वमिति नोक्तदोषः । नैयायिकस्य हेत्वन्तरमाशंक्य निराकरोति तथापीति । अनुगतस्यत्यादिवित । तथाच लिङ्गज्ञानाभावात् न व्याप्तिग्रह इति भावः । ननु गृहनिष्ठाभावप्रतियोगित्वं न हेतुः किन्तु प्रतियोगितासम्बन्धेन गृहनिष्ठाभाव एव, स च देवदत्तस्यासंनिकृष्टत्वेऽपि गृहस्य संनिकृष्टतया ग्रहीतुं शक्य एवेत्यतो व्याप्तिग्रहाभावेऽपि देवदत्तस्यासंनिकृष्टतया न पक्षविशेष्यकपरामर्शसंभव इत्याहाऽत एवेति । मीमांसकमते च व्यतिरेकव्या-

तिस्मरणं, ज्ञायिनो देवदत्तस्याभावनिश्चयस्यार्थापत्तिहेतुत्वम् इति पौर्वस्यम् ॥ जन्यत इति । परामर्श इति शेषः ।

स्मर्यमाणधूमात्–पक्षवृत्तिधूमस्मरणात् । उक्तन्यायेनेति । विशेष्यस्यासंनिकृष्टत्वेनेत्यर्थः । धूमो वह्निं विनेति । वह्न्यभावव्यापकीभूताभावप्रतियोगी धूम इति व्यतिरेकव्याप्तिज्ञानादित्यर्थः । त्वयापीति । नैयायिकेनापीत्यर्थः । तत्र–वह्निमान्धूमादित्यत्र । त्रिविधेति । व्याप्तिभेदेनेत्यर्थः । यद्व्यतिरेक्यनुमितित्वेन नैयायिकानामभिमतं तदेव मीमांसकानामस्माकमर्थापत्तिरिति भावः । व्यतिरेकव्याप्तिमिति । व्यतिरेकव्याप्तिज्ञानं सहकार्यासाद्येत्यर्थः । कल्पयतीति । निश्चाययतीत्यर्थः, न तु व्यतिरेकपरामर्शः–विशेष्यीभूतदेवदत्तासंनिकर्षेण परामर्शासम्भवादिति भावः ॥

(वि०) उच्यते । देवदत्तासन्निकर्षेऽपि तस्य गृहनिष्ठाभावप्रतियोगित्वं प्रत्यक्षेण गृह्यते । तथाहि-गृहे देवदत्तस्याभाव इति प्रत्यक्षं देवदत्तं षष्ठ्यर्थं चाभावसम्बन्धं प्रतियोगित्वलक्षणं गोचरयति–सम्बन्धज्ञानस्य सम्बन्धिद्वयविषयत्वात्, प्रतियोगिना सममभावस्य सम्बन्धान्तराभावात् । गृहनिष्ठाभावप्रतियोगित्वे च प्रत्यक्षोपस्थिते स्मृतव्याप्तिवैशिष्ट्यमपि प्रत्यक्षेण सुग्रहम् । न च देवदत्तविशेष्यकं बहिःसत्त्वव्याप्यगृहनिष्ठाभावप्रतियोगित्वज्ञानं नास्तीति वाच्यम् । पक्षवृत्तिलिङ्गपरामर्शमात्रस्यानुमितिजनकत्वात् अधिकस्य गौरवपराहतत्वात् ।

अनुपपत्तिकारणकार्थापत्तिसिद्धान्तविवेचनम् ॥

(वि०) गृहे देवदत्तस्याभाव इति । अत्र देवदत्तस्येति प्रतियोगित्वं षष्ठ्यर्थः प्रकारो, न तु नेह देवदत्त इतिवत् संसर्गमर्यादया । प्रतियोगित्वज्ञानं तेन प्रतियोगित्वत्वरूपव्याप्यतावच्छेदकावच्छिन्नप्रतियोगित्वरूपलिङ्गलाभादनुमानावतारोऽन्यथा वैशिष्ट्यविधया प्रतियोगित्वलाभेऽपि व्याप्यतावच्छेदकावच्छिन्नलिङ्गानुपस्थितौ, कथमनुमानं भवेत् । न चैवं यत्रैव नेह देवदत्त इत्याकारकोऽनुभवस्तत्रै-

नानुमानावतारेऽर्थापत्तिः साऽवकाशेति ध्येयम् । अर्थापत्तावपि वह्निसत्त्वं विना गृहनिष्ठाभावप्रतियोगित्वस्यैवानुपपन्नत्वबुद्धिर्गमिकेति प्रतियोगित्वस्य तदवच्छिन्नोपस्थितिं विना तेनार्थापत्त्यनवतारानभ्युपगमात् ॥ नन्वनुपपत्तिर्न व्यतिरेकव्याप्तिः किन्तूपपादकाभावे उपपाद्याभावावश्यम्भावः, स च व्यधिकरणयोरपि सुकरः । यदि देवदत्तस्य न बहिःसत्त्वं तदा गृहे सत्त्वावश्यम्भावः, यदा वा गृहे देवदत्ताभावस्तदा देवदत्तबहिःसत्त्वावश्यम्भाव इत्यनुपपत्तिज्ञानस्य वैयधिकरण्येऽपि सम्भवात् अतो न प्रतियोगित्वेऽनुपपत्तिज्ञानं कारणं येन प्रतियोगित्वधीरपेक्ष्येतेति । मैवम् । अवश्यम्भावज्ञानस्य गमकत्वे धूमादावपि तथात्वोपपत्तेः धूमे सत्यवश्यं वह्निरिति ज्ञानात्, तथापि नार्थापत्तिर्मानान्तरम् अवश्यभावेनैव गमकत्वेऽनुमानविलक्षणप्रकाराभावात् । इयांस्तु विशेषः—यदेकत्र व्यधिकरणे ज्ञानुपपत्तिरपरत्र सामानाधिकरण्येन यदधिकरणेन यदधिकरणान्तर्भावेनावश्यम्भावधीस्तदधिकरणे ततः साध्यसिद्धिरित्यनुगतस्यैव गमकत्वप्रयोजकत्वात्, तस्मादवश्यम्भावज्ञानं न गमकं धूमाद्वह्न्यवश्यम्भाव इत्यस्य फलपर्यवसायितयाऽनुमितित्वात्तन्नानुमानत्वमिति सामानाधिकरण्यधीरेव गमिका वाच्या, सा च व्याप्यतावच्छेदकावच्छिन्नप्रतियोगित्वेन सम्भवतीति सुष्ठूक्तं त्वयापि तत्प्रकारिकैव धीरपेया इति ॥ ननु प्रत्यक्षस्य देवदत्तविषयकत्वे प्रमाणाभावः—देवदत्तं साक्षात्करोमीत्यनुव्यवसायाभावात् अभावं साक्षात्करोमीत्यनुव्यवसायात्, किन्तु तदव्यवहितपूर्ववर्तिस्मरणस्यैव देवदत्तो विषय इत्यत आह सम्बन्धज्ञानस्येति । ननु संबन्धप्रत्यक्ष एव सम्बन्धित्वं विषयः प्रतियोगित्व तु न प्रतियोग्यभावयोः सम्बन्ध इत्यत आह प्रतियोगिनेति । तथा चान्यसम्बन्धेन इदमिह नास्तीति प्रतीत्यसम्भवात् प्रतियोगित्वस्य सम्बन्धत्वमावश्यकमिति भावः । एककालीनत्वादिश्च न तन्नियामक इति निभाल्यम् । अधिकस्य—पक्षविशेष्यकत्वस्य ॥

( चि० ) अथवा अनतिप्रसक्तसहकारिवशान्मनसैव स्मृतदेवदत्ताविशेष्यकस्मृतौ परिलिङ्गपरामर्शः । यथा च न सहकारि मानान्तरं तथोपपादितमधस्तात् ।

ननु मयूरः पर्वतेतरे न नृत्यति नृत्यति चेति ज्ञा-

(वि०) यद्वेति । नृत्याभावबोधानन्तरमिति । पर्वतेतरनृत्याभावबोधानन्तरमित्यर्थः । इतरबाधसहकारेण पदानुपस्थितमपि शाब्दबोधे प्रकारीभूय भासत इति गुरुमतेनेदम्, अन्यथा मयूरो नृत्यतीति शब्दात् पर्वतेतराधिकरणकनृत्यबाधसहकारेण नृत्यविशेषसिद्धावपि नृत्यस्य पर्वतवृत्तित्वे तदुपस्थापकपदाभावादनुपपन्नमेव स्यादिति ध्येयम् ॥

स्वमते त्वाह यद्वेति । अन्वयव्यतिरेकौ पर्वतनृत्यं गोचरयतीत्यनुपपन्नीयम् ।

(चि०) अथ वा यः सम्भावितत्तदितरावृत्तिः सन् तदतिरिक्तवृत्तिर्न भवति न तद्वृत्तिर्भवतीति सामान्येन पक्षतदर्थान्तर्भावेन व्याप्त्या नृत्यस्य पर्वतवृत्तित्वं सिद्ध्यति । एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्रापि अप्रसिद्धरात्रिभोजनसाध्यपीनत्वज्ञानं रात्रिभोजनमादाय सिद्ध्यति ।

(वि०) अथवेति । ननु पीनो देवदत्तो दिवा न भुंक्ते इति ज्ञानानन्तरं पीनत्वं भोजनं विना ऽनुपपन्नमिति ज्ञानात् दिवाभोजनबाधसहकाराद् देवदत्तो रात्रौ भुङ्क्ते इति ज्ञानं जायते तत्रानुमानाद्यसंभवादर्थापत्तिरित्यत आह एवमिति । देवदत्त इति । अप्रसिद्धरात्रिभोजनदेवदत्त इत्यर्थः । रात्रिभोजनमिति । रात्रिभोजनानुमितिं जनयतीत्यर्थः ॥

(चि०) अथ यथा अभोजी पीन इत्यत्रायोग्यताज्ञानं तथा पीनो दिवा न भुङ्क्ते इत्यत्रापि दिवाभोजनस्य बाधाद्योग्यताघटकरात्रिभोजनस्याप्रतीतेः, अतो योग्यताघटकोपस्थितिं विना अन्वयमलभमानमिदं वाक्यं योग्यताघटकरात्रिभोजनोपपादकं रात्रौ भुङ्क्ते इति वाक्यं कल्पयित्वा तेन सहान्वयबोधं जनयति । न चैवं लाघवाद्रात्रिभोजनमेव कल्पयितुं युक्तम् । 'शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते' इति न्यायेन शब्दो-

पस्थापितमादाय शब्दस्यान्वयबोधजनकत्वात्। एवं-च श्रूयमाणशब्दस्यान्वयबोधकत्वं योग्यताघटकोप-स्थापकेन शब्देन विनाऽनुपपद्यमानं तं कल्पयित्वा य-थान्वयबोधं जनयति तत्र श्रुतार्थापत्तिः। द्वारमित्या-दौ पिधेहीतिशब्दकल्पनं श्रुतार्थापत्तिरेव। शब्दश्च यद्यपि श्रूयमाणो बाधितस्तथाप्यभिप्रायस्थः कल्प्यते। यथा गुरुमते 'स्वर्गकामो यजेत' इत्यत्र साक्षात्साधनता-बाधे परम्पराघटकस्यानुपस्थित्या परम्परासाधनताज्ञा-नविरहे योग्यताज्ञानाभावात् प्रसिद्धपदसामान्याधि-करण्यानुपपत्तिरिति योग्यताज्ञानाय परम्परासाधन-ताघटकमपूर्वं लिङादिवाच्यं कल्पयति, ततः स्वर्ग-साधनं याग इति ज्ञानं जायते, अन्यथा अपूर्वमपि वाच्यं न स्यादिति।

(वि०) भट्टाभिमता यथाश्रुतशब्देन शब्दकल्पनारूपां श्रुतार्था-पत्तिमाशङ्कते अथेति। दिवाभोजनस्य बाधादिति योग्यताघटके-त्यत्र हेतुः। योग्यताघटकोपस्थितिं विना—योग्यतात्मकरात्रिभोजि-त्वोपस्थितिं विना। इद वाक्य—पीनो देवदत्तो दिवा न भुङ्क्त इति वाक्यम्। उपपादक—उपस्थापकम्। तेन सहेति। अनुपस्थापित रात्रिभोजित्वेन सहेत्यर्थः। अन्वयबोधं—पीनो देवदत्तो दिवा न भुङ्क्ते किन्तु रात्रौ भुङ्क्त इत्यन्वयबोधम्। तन्मते योग्यतायाः शा-ब्दबोधे भानादिति भावः। आशङ्कते न चेति। शब्दकल्पनेऽपि अर्थोपस्थितेरावश्यकत्वादिति भावः। उत्तरयति शाब्दीति। तथा च केवलार्थकल्पनया योग्यताज्ञाननिर्वाहेऽपि शब्दजन्योपस्थितिं विना रात्रिभोजित्वरूपयोग्यताया शाब्दबोधे भानासम्भवाच्छब्दः कल्प्यते, तन्मते शाब्दयोग्यताविषयकस्यैव शाब्दबोधहेतुत्वनिय-मादिति भावः। द्वारमित्यादावपीति। एवमित्यादिः। तथा चात्रा-पि पिधानविशेष्यकद्वारकर्मकान्वयबोधजनकत्वं पिधेहीतिशब्दा-ध्याहारं विनाऽनुपपन्नमिति ज्ञानात् पिधेहिशब्दकल्पनं श्रुतार्थापत्तिः

रित्यर्थः । ननु पिधेहीतिशब्दस्य बाधितत्वादर्थापत्त्या द्वारमिति वाक्य पिधेहीतिशब्दवदिति ज्ञानं कथं स्यादत आह शब्दश्चेति । बाधितः—नास्ति । अभिप्रायस्य इति । द्वारमिति वाक्य पिधेहीति शब्देन सहान्वयबोधं जनयत्विति एतादृशाभिप्रायविषयः कल्प्यत इत्यर्थः । तथा च तादृशाभिप्रायविषयत्वसम्बन्धेन, तद्वत्ताज्ञानमर्था॰पत्त्या जननीयमिति भावः । योग्यतावच्छेदकरूपेणोपस्थितिं विना शब्दान्वयबोध इत्यत्र प्राभाकरसम्मतिमाह यथा गुरुमत इति । साक्षात्साधनताबाध इति । यागस्याशुतरविनाशित्वादिति भावः । परंपराघटकस्येति । अपूर्वस्येत्यर्थः । योग्यताज्ञानाभावादिति । यागे विध्यर्थस्येष्टसाधनत्वस्यान्वये योग्यताज्ञानाभावादित्यर्थः । साक्षादसाधने साधनत्वान्वये परम्परासाधनत्वस्य योग्यतात्वा॰दिति भावः । प्रसिद्धेति । प्रसिद्धपदस्य विधेरर्थेन इष्टसाधनत्वे॰नान्वयबोधानुपपत्तिरित्यर्थः । योग्यताज्ञानाय—परम्परासाधनता॰ज्ञानाय । अन्यथेति । योग्यताप्रकारकोपस्थितेरपि हेतुत्व इत्यर्थः ॥

( वि० ) उच्यते । बाधकप्रमाणाभावोऽन्वयवि॰रोधिरूपविरहो वा योग्यता । अतो दिवा अभोजने रात्रिभोजनाप्रतीतावपि भोजनसाध्यपीनत्वाद्दिवा न भुङ्क्ते इति शब्दादूधीरुत्पद्यते न प्रतीत्यनुपपत्तिः, किन्तु प्रतीतानुपपत्त्या रात्रिभोजनं कल्प्यते अत एवापूर्वमपि न वाच्यमिति वक्ष्यते । तस्मान्नार्थापत्तिरनुमानादति॰रिच्यत इति ।

( वि० ) वस्तुतो योग्यतावच्छेदकधर्मिणि योग्यताज्ञाने शाब्द॰धीर्न तु तद्धर्मवत्त्वधीस्तत्र तन्मतमित्यभिसंधाय सिद्धान्तयति बाध॰केति । बाधकप्रमाणाभावः—ग्राह्याभावनिश्चयाभाव इत्यर्थः । अन्वय–विरोधीति । ग्राह्याभावव्याप्यधर्मेत्यर्थः । प्रतीतानुपपत्त्येति । प्रतीतस्य दिवाऽभोजित्वे सति पीनत्वस्य रात्रिभोजित्वं विनाऽनुपपत्त्या रात्रिभोजित्वमनुमीयते इत्यर्थः ॥

इति श्रीतर्कतीर्थोपाधि समलङ्कृत बटुकनाथशास्त्रिविरचितं मर्थापत्तिविवेचनम् ॥

एव समाहितवान् ।

तत्रेदं चिन्त्यते । यदि व्याप्तिविशिष्टपक्षधर्मत्वमाकाङ्क्षितं, तदा व्याप्तिविशिष्टविषयक एव बोधस्तादृशाकाङ्क्षां निवर्तयिष्यतीति तथाविधबोधे एवोपनयतात्पर्यमावश्यकम् । न चैवमप्याकाङ्क्षानिवृत्तये अवान्तरवाक्यार्थबोधस्य विशिष्टवैशिष्ट्यावगाहित्वोपगमेऽपि न्यायजन्यमहावाक्यार्थबोधे उपनयाद्व्याप्तिभानं नोपेयते, उदाहरणादेव तज्ज्ञानादवान्तरवाक्यार्थधियः परामर्शरूपत्वेऽपि निगमनजन्याबाधितत्वादिप्रतिपत्तेरनुमितावपेक्षितत्वात्तावत्पर्यन्तं तदसत्त्वेन परामर्शान्तरस्यापेक्षेति वाच्यम् । अवान्तरवाक्यार्थबोधे व्याप्तिभानानुरोधेन तवैतदुपनयतात्पर्यकल्पनाया आवश्यकत्वे महावाक्यार्थबोधे तज्ज्ञानेऽपि बाधकाभावादिति ।

न्यायजन्यज्ञानस्य वादिवाक्यजन्यत्वेनाप्रामाण्यशङ्काकवलिततया अनुमितिजननायोग्यतया परामर्शान्तरस्वीकार इति मिश्राः ।

नव्यास्तु पक्षांशे व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिज्ञानमेवानुमितिहेतुः । ननु व्याप्याभिन्नहेतुमदभिन्नत्वं तादृशवैशिष्ट्यावगाहिता च न न्यायजन्यशाब्दबुद्धेः नामार्थयोः भेदेनान्वयबोधस्याव्युत्पन्नत्वात्, अतो व्याप्यत्वावच्छिन्नवाक्यसमुदायत्वस्य तादृशयत्किञ्चिज्ज्ञानबोधनिरूपितशाब्दज्ञाननिष्ठा या या कारणता तत्तदवच्छेदककोटिप्रविष्टयत्किञ्चिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकहेतुनिष्ठप्रकारताबोधहेतुहेतुविशेष्यकव्याप्तिरूपविशेषणतावच्छेदकप्रकारकमानसज्ञानान्मनोऽनु एव तादृशपरामर्शोऽवश्यमङ्गीकर्तव्य इत्यभिप्रायेण तेन चेत्याद्यभिहितम् । विशिष्टवैशिष्ट्यावगाहिमानान्तरं विशिष्टवैशिष्ट्यबोधजनकं विशेषणतावच्छेदकीभूतव्याप्तिप्रकारकबुद्धित्वावच्छिन्नविशेष्यकज्ञानं, उत्पाद्यते-जन्यते, तेन-तादृशविशेषणतावच्छेदकप्रकारकज्ञानेन परामर्शो जन्यते इत्यर्थः । न चैवं तेन परामर्शस्य जननादिति ग्रन्थासङ्गतिः, अत्र परामर्शपदस्य व्याप्याभिन्नहेतुमदभेदबोधपरत्वादित्याहुः ।

गुरुहेतुतावच्छेदकावच्छिन्ने पक्षधर्मत्वाकाङ्क्षया तत्र पक्षधर्मत्वबोधमात्रतात्पर्यकं व्याप्त्यर्थपदाघटितमेवोपनयवाक्यं प्रयुज्यत इति प्राचीनमताभिप्रायकमिदम्, अत एव च दीधितिकृता तन्मताभिप्रायेणैवोदाहरणोपनययोरेव तात्पर्यस्यवोक्त्यत्रोदाहरणान्तर्भावे-

नैव परामर्शप्रयोजकत्वपर्यवसानमुक्तं न तूपनयमात्रस्येत्यपि दन्ति ।

अत्र परामर्शप्रयोजकत्वेन शाब्दज्ञानस्य लक्षणघटकत्वे स्वयमनुपपत्तेर्वक्ष्यमाणतया शाब्दज्ञानपदं प्रतिज्ञादिप्रतिपाद्यतत्तद्विषयज्ञानपञ्चकपरम्, जनकवाक्यपदं च प्रत्येकं तत्तद्बोधजनकवाक्यपञ्चकपरम्, अतः प्रतिज्ञादिवाक्यपञ्चकलाभः प्रयोजकान्तं च बोधविशेषाणां परिचायकमात्रम् । यद्यप्येवं प्रतिज्ञादिपञ्चवाक्यैरेकज्ञानाजननेऽपि एतादृशलक्षणनिर्वाहः, तथापि प्रतिज्ञादिजन्यबोधानां परामर्शप्रयोजकत्वलाभायैव सम्भवाभिप्रायेण तावदर्थविषयकमेकं ज्ञानं परामर्शप्रयोजकत्वेनाभिहितमित्यभिप्रेत्य दीधितिकृत्पर्यवसितन्यायलक्षणमाह उचितेति । उचितानुपूर्वीकानि प्रतिज्ञादीनि पञ्च यत्र समुदाये तत्त्वम्, तादृशपञ्चपर्याप्तसमुदायत्वमिति यावत् । पञ्चपदं निगमनान्तानां विशिष्य निवेशलाभाय न तु पञ्चत्वेनापि तेषां निवेशः प्रयोजनाभावात् । व्युत्क्रमप्रतिज्ञादिपञ्चकेऽतिव्याप्तिवारणाय उचितानुपूर्वीकेति । उचितानुपूर्वी-प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपा ।

ननु किमिदमुचितानुपूर्वीकत्वं ? न तावत्तादृशानुपूर्वीघटकत्वं घटकताया दुर्निर्वचत्वात् । तद्धि न स्वाविषयकप्रतीत्यविषयतादृशानुपूर्वीकत्वम्; प्रतिज्ञाद्यविषयकप्रतीत्या शुद्धनिगमनत्वस्य विषयीकरणात्, विशिष्टनिगमनत्वे तादृशप्रतीत्यविषयत्वानुपपत्तेः, विशेष्यवृत्तेर्विशिष्टानुयोगिकाभावानभ्युपगमात् । नापि तादृशानुपूर्वीविषयिताव्यापकविषयिताकत्वम्, शब्दव्यक्तिभेदेन प्रतिज्ञादेर्भिन्नतया कस्याश्चिदपि प्रतिज्ञादिव्यक्तेर्विषयितायास्तादृशानुपूर्वीविषयिताया व्यापकत्वासम्भवात् । प्रतिज्ञादिव्यक्त्यन्तरघटितन्यायविषयकज्ञानेऽपि तादृशानुपूर्वीविषयितासत्त्वात् । यत्किञ्चित्तादृशानुपूर्वीविषयिताव्यापकत्वस्य व्युत्क्रमप्रयुक्तप्रतिज्ञादिविषयितासाधारण्यात् तादृशप्रतिज्ञादिविषयकन्यायज्ञानीयतथाविधानुपूर्वीविशेषविषयितायाश्च तादृशविषयिताव्याप्यत्वात् । न च ज्ञानभेदेन विषयिताभेदानभ्युपगमान्नैवमिति वाच्यम् । तादृशप्रतिज्ञादिव्यक्तिसमानाधिकरणत्वादिना आनुपूर्वीविशेषावच्छिन्नन्यायविषयकज्ञानीयानुपूर्वीविशेषविषयितायास्तादृशप्रतिज्ञादिव्यक्तिविषयिताशून्यानुवृत्तित्वाच्च

व्याप्यत्वानपायात्। अथ निगमनपूर्वोपनयपूर्वोदाहरणपूर्वहेतुपूर्वत्वरूपानुपूर्व्याश्रयत्वेन प्रतिज्ञायास्तादृशोदाहरणपूर्वत्वे सति प्रतिज्ञोत्तरत्वादिरूपानुपूर्व्याश्रयत्वेन च हेत्ववयवादीनां विवेशान्नानुपपत्तिः। अथवा तादृशैकविधानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वमेव तादृशानुपूर्वीघटकत्वमिति चेत्। एवमप्येकैकन्यायघटकं यत्प्रतिज्ञाद्येकैकवाक्यं तत्समुदायेऽतिप्रसङ्गो दुर्वार एवेति चेत्।

नैवम्-स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादिवृत्ति यद्यत्समुदायत्वं तत्तदन्यत्वस्य समुदायत्वविशेषणत्वे तात्पर्यात्। व्युत्क्रमप्रयुक्तप्रतिज्ञादिमिश्रस्य नानान्यायान्तर्गतप्रतिज्ञादिपञ्चमिश्रस्य च समुदायत्वस्य तत्तदन्यत्वविरहान्नातिप्रसङ्गः। एवञ्च घटमानयेत्यादिवाक्यवृत्तिसमुदायत्ववारणाय प्रतिज्ञादिवृत्तित्वरूपं समुदायत्वविशेषणमपि सार्थकमित्यवधेयम्।

प्रतिज्ञादिवृत्तित्वं च प्रतिज्ञादिपर्याप्त्यवच्छेदकयत्किञ्चिद्धर्मपञ्चकव्यापकत्वमतः प्रतिज्ञादिपञ्चकैकदेशसमुदाये नातिप्रसङ्गः। प्रतिज्ञात्वादेर्व्यासज्यवृत्तित्वात्तदाश्रयैकदेशमात्रवृत्तेस्तत्पर्याप्त्यनवच्छेदकत्वात्। समुदायत्वं चानेकपर्याप्तधर्मस्तस्य च पर्याप्तिसम्बन्धेन न्यायपदप्रवृत्तिनिमित्तत्वादेकदेशे न्यायव्यवहारप्रसङ्ग इति तु विभावनीयम्॥

ननु प्रतिज्ञादिलक्षणे न्यायान्तर्गतत्वविशेषणस्य प्रवेशनीयतयाऽन्योन्याश्रयप्रसङ्ग इत्यत आह प्रतिज्ञात्वादिकं त्विति। उदासीनवाक्यवारकेति। न्यायान्तर्गतवाक्यवारणमात्रप्रयोजनकेत्यर्थः। एतेन न्यायान्तर्गतप्रतिज्ञादिशरीरे तादृशविशेषणानुपादाने न क्षतिरिति सूचितम्। क्रमप्रयुक्तविभिन्नपक्षसाध्यहेतुकप्रतिज्ञादिपञ्चकेऽतिव्याप्तिशङ्कां निराकरोति साध्यादीति। तत्तत्साध्यपक्षहेतुकन्यायलक्षणे तत्साध्यपक्षकप्रतिज्ञातत्साधनकहेतुतत्साध्यसाधनकोदाहरणतत्साध्यपक्षसाधनकोपनयतत्साध्यसाधनकनिगमनानि निवेशनीयानीत्यर्थः। नन्वेव न्यायपदार्थस्याननुगततया न्यायपदस्य नानार्थकतापत्तिरित्यत्रेष्टापत्तिमाह व्याप्त्यादेरिवेति। व्याप्त्यादिपदार्थस्येवेत्यर्थः। साध्याद्यननुगमात्-स्वघटकसाध्यादीनां भिन्नभिन्नरूपेण निवेशनीयत्वात्। अननुगमः-अनुगतप्रवृत्तिनिमित्तविरहः। न्यायादेः-न्यायादिपदार्थस्य। आदिपदादवयवपरिग्रहः। इष्यत एवेति। गत्यन्तराभावा-

दिति भावः। यथाश्रुतमूलस्वरससिद्धवाक्यपञ्चकजन्यमहावाक्यार्थ-बोधमादाय लक्षणसमन्वयं निराचिकीर्षुः वाक्यपञ्चकस्यैकविशिष्टार्थबोधकतां खण्डयति, प्रतिज्ञानिगमनयोरिति। न सम्भूयैकार्थप्रतिपादकत्वमित्यग्रेतनेनान्वयः। प्रतिज्ञार्थे वह्निमति पर्वते निगमनार्थस्य विशिष्टज्ञानज्ञाप्यसाध्यवत्त्वस्यान्वयबोधोपगमे, साध्यवत्त्वांशमादाय पौनरुक्त्यप्रसङ्गात्। दण्डवान् रक्तदण्डवानित्यादाविव विधेयांशेऽधिकावगाहिनस्तादृशबोधस्य सम्भवेऽपि शुद्धपक्षतावच्छेदकविशिष्टेऽबाधितत्वादिविशिष्टसाध्यवत्तावगाहिन्याः प्रतीतेरेवोपयोगित्वेन साध्यविशिष्टपक्षे तादृशसाध्यवत्त्वान्वयबोधस्यानाकाङ्क्षिततया वादितात्पर्याविषयत्वाच्च।

यत्तु, वह्निविशिष्टपर्वतोद्देश्यकबोधे वह्निमत्पदोत्तरपर्वतपदोपस्थितिरपेक्षिता नीलो घटः सुन्दर इत्यादाविव घटो नीलः सुन्दर इत्यादौ नीलान्वितघटांशे विधेयाभानादुद्देश्यतावच्छेदकवाचकपदस्योद्देश्यवाचकपदपूर्ववर्तितायाः अपेक्षणीयत्वादतो नैतादृशान्वयबोधसम्भव इति। न च शुद्धपर्वतत्वावच्छिन्न एव शुद्धवह्निमत्त्वनिगमनोपस्थाप्यविशिष्टवह्निमत्त्वयोर्युगपद्विधेयतयाऽन्वयोपगमे नैकवाक्यत्वं निर्वहतीति वाच्यम्। "गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादिति" न्यायेन विधेयतया भासमानयोः शुद्धवह्निमत्त्वविशिष्टवह्निमत्त्वयोरवच्छेद्यावच्छेदकभावापन्नविषयिताकस्वरूपसम्बन्धाभावेनैकवाक्यत्वानिर्वाहात्, अतएव विधेयभेदेन सर्वत्र वाक्यभेदः केवलोपनयजन्यबोधे पक्षे साध्यव्याप्यहेतुमत्त्वविधेयत्वेऽप्युपनयनिगमनाधीनबोधे उद्देश्यपदपूर्वनिर्दिष्टस्य व्याप्यवत्पदार्थस्योद्देश्यतावच्छेदकतयैव भानेन तद्विषयकत्वनिगमनार्थविषयकत्वयोरवच्छेद्यावच्छेदकभावात्तदुभयैकवाक्यतेति।

तन्न, तात्पर्यसत्त्वे योजनयापि तादृशबोधसम्भवात्। उद्देश्यवाचकपदस्य, विधेयवाचकपदपूर्वत्वेन प्रतिसन्धानस्यापेक्षणीयतया योजनयैवोपनयेन पक्षेऽर्थपदार्थे साध्यव्याप्यवत्त्वबोधनात् तात्पर्यसत्त्वे वादिवाक्ये योजनाया दूषणानर्हत्वात्तात्पर्यविरहस्यैव तत्र बीजत्वात्। इदमुपलक्षणम्। उपनयेनापि समं प्रतिज्ञाया न विशिष्टैकार्थप्रतिपादकत्वं वह्निमति पर्वते उपनयार्थस्य साध्यव्याप्यहेतुमत्पक्षस्याप्रासतादृशहेतुमत्त्वांशघटिततया विधेयत्वसम्भवेऽप्यनुमित्युपयोगि-

नः पक्षतावच्छेदकाविशिष्टे हेतुमत्त्वस्याकाङ्क्षयैवोपनयप्रतिपादनादना-
काङ्क्षितस्य पर्वते पर्वताभेदबोधस्य तात्पर्याविषयत्वात् । उदाहरणा-
वयवान्तरयोरिति । उदाहरणघटकयोर्यत्तत्पदघटितभागयोरपि नै-
काविशिष्टार्थबोधकत्वं तत्र द्विरुक्तयत्पदेन महानसत्वमहानसान्यत्वा-
दिनोद्देश्योपस्थापनात् तत्पदेनापि तद्रूपावच्छिन्नपरामर्शान्महानसं
धूमवद्वह्निमच्च महानसान्यद्धूमवद्वह्निमच्चेति वाक्यार्थचतुष्टयविषय-
कसमूहालम्बनबोधस्यैवोदयात् । न च वीप्सया व्यापकत्वबोधना-
द्धूमव्यापकवह्निमानित्याकारक एकविशिष्टार्थबोध एव तत्रोत्पद्यत इति
वाच्यम् । यो य इत्यादेरनन्वितार्थकत्वप्रसङ्गात् । न च द्विरुक्तयत्पद-
स्यैव व्यापकत्वमर्थः स च साध्यांशेऽन्वेतीति वाच्यम् । नामार्थ-
योर्भेदान्वयबोधस्याव्युत्पन्नत्वात् । व्यापकत्वावच्छिन्नस्य तदर्थस्या-
भेदेनान्वय इत्यपि न सम्भवति, सुन्दरो दण्डीत्यादौ सुन्दराद्यभेदा-
नन्वयवत्समानविभक्तिकत्वाभावेन मत्वर्थीयप्रकृत्युपस्थाप्येऽर्थेऽस-
मस्तनामार्थाभेदान्वयस्यासंभवात्, अभेदान्वयप्रतियोगिसापेक्षत-
याऽसामर्थ्येन साध्यवाचकपदोत्तरं तद्धितासम्भवाच्च, तत्पदस्य
तावतापि सार्थक्यासम्भवाच्च । तस्माद्यत्पदार्थे हेतौस्तत्पदार्थे च
तस्मिन्साध्यस्य विधेयतया भानमेव समूहालम्बनरूपं तत्र जायते
तदुत्तरं व्यापकताबोधो मानसः स एव वा शाब्दबोधः साध्यवाच-
कपदस्य प्रकृतसाधनव्यापकताविशिष्टसाध्ये लाक्षणिकतया तत्पदा-
र्थे व्यापकताविशिष्टसाध्यवत्तामवगाहत इत्युपेयम् । वीप्सासमभिव्या-
हारस्थले व्यापकत्वतात्पर्यस्यानादितया तादृशलक्षणाया निरूढल-
क्षणात्वेन वादिवाक्ये तत्स्वीकारे क्षतिविरहात । न च व्यापकता-
बोधस्यावश्यकत्वे नानाहेत्वधिकरणे वह्न्यादिमत्त्वबोधनस्य प्रयोज-
कतया धूमादिकमुद्देश्यतावच्छेदकीकृत्य समूहालम्बनानात्मक एव
व्यापकताविशिष्टशाब्दबोध उपेयताम्, यत्तत्पदं तु तादृशलक्ष्यार्थता-
त्पर्यग्राहकमेवास्त्विति वाच्यम् । अर्थबोधकत्वसम्भवेन तत्परित्या-
गायोगात् यो यो न वह्निमान्स न धूमवानित्यादौ व्यतिरेक्युदाहरणे
वह्निमद्भेदादिसाधनके तादृशान्वय्युदाहरणे वा यत्तत्पदार्थाविव-
क्षायां प्रतियोगिवाचकपदसमानविभक्तिकपदोपस्थाप्यस्यानुयोगि-
नोऽप्रवेशेन नञाऽन्योन्याभावबोधनासम्भवाच्च । एवं चैत्रो जाना-
ति कर्तृत्वादित्यादिन्यायान्तर्गते यो यः करोति स जानातीत्युदा-

हरणे पक्षपदार्थाविवक्षायां धर्मिणोऽलाभेन साध्याधारविकलत्व-योदाहरणाभासताप्रसङ्गाच्चेति । एवं चोदाहरणसमुदायस्यावयवा-न्तरेण सम विशिष्टार्थप्रतिपादकत्वं सुतरामेव न सम्भवतीति भावः । एतेन हेतूदाहरणयोर्धूमवान् धूमाद्वह्निमानित्येतादृशवि-शिष्टार्थबोधजनकत्वसम्भवादुदाहरणावयवान्तरयोरित्यनुपपन्नमित्य-पि परास्तम् ॥

प्राचेव—सुतरामेव न सम्भूयैकार्थप्रतिपादकत्वमित्यनुपपद्यते । प्रतिज्ञाहेत्वोरित्यत्रापि नकार विलाय तयोर्वा पर्वतो धूमाद्व-ह्निमानित्येतादृशविशिष्टज्ञानजनकत्वादिति भावः । अथ प्रतिज्ञाजन्य-बोधानन्तरं कुत इति साध्यज्ञापककाङ्क्षायां तन्निवर्तकं हेतुवाक्यं प्रयुज्यते तन्निवर्तकता च पक्षविशेषणतानापन्नस्याप्यंशे हेतुज्ञान-ज्ञापकत्वप्रयोगेनापि निर्वहतीति पक्षांशे हेतुज्ञानज्ञाप्यत्वविशिष्टता-ऽवधेर्विपक्षबाधकाहितबोधस्यानुपयोगित्वेन न तात्पर्यविषयत्वमिति चेन्न । पर्वते वह्निबोधानन्तरं पर्वते वह्निज्ञापकं संशयाकाङ्क्षा जायते तन्निवृत्तिश्च साध्ये धूमादिज्ञानजन्यपर्वतविशेष्यकज्ञानविषयत्वप्रति-पादनेनैव धूमाद्वह्निमन्महानसमित्यादिवाक्यस्य पर्वते वह्निमत्त्वं कुत इत्याकाङ्क्षानिवर्तकत्वाभावात् पञ्चमीतस्तादृशपर्वतविशेष्यकज्ञानवि-षयत्वमात्रं तु तद्विशेषणतापन्नसाध्यांशे एव उक्तवाक्यान्महानसा-दिविशेषणतयोपस्थित्वे तदप्रतीतेः पक्षधर्मिविशेषणतापन्नेऽन्यविशे-ष्यकहेतुविशेषणज्ञानाधीनज्ञानविषयत्वबोधकतायाः पञ्चम्या अव्युत्प-न्नत्वादिति धूमाद्वह्निमान् पर्वत इत्यादिविशिष्टवैशिष्ट्यबोधस्यावश्य-कत्वात् । कथञ्चिदिति । निगमनेऽप्यत्रानुषङ्गपक्षे वह्निव्याप्यधूमव-त्पर्वतादिरूपोपनयार्थे निगमनार्थधूमज्ञानज्ञाप्यवह्निमत्त्वाद्यन्वयसम्भ-वादिति भावः । अनुषङ्गपक्षे तु तादृशान्वयादिमत्पक्षरूपनिगमनार्थ-मात्रबोधेनैवाकाङ्क्षानिवृत्तेरुपनयार्थे विशिष्टपक्षे निगमनार्थीभूतवि-शिष्टपक्षबोधस्यानुपयुक्तस्य न तात्पर्यविषयतेति कथञ्चिदित्युक्तम् । इदं त्ववधेयम् । अनुषङ्गपक्षेऽप्युपनयैकदेशार्थपदार्थपक्षमात्रे निगमना-र्थान्वयमात्रेणैव कृतकृत्यतया तत्समुदायार्थविशिष्टपक्षे निगमना-र्थविषयकबोधेऽपि तात्पर्यमप्रामाणिकमिति ॥

नन्वेवं प्रतिज्ञादीनां पञ्चानां कथमेकवाक्यताव्यवहार इत्यत आ-ह एकेति । विशिष्टैकार्थप्रतीतीच्छाप्रयोज्यत्वमात्रेणेत्यर्थः । मात्रपदेन

तादृशप्रतीतिजनकत्वस्यवच्छेदः । तादृशी च, प्रतिपत्तिर्निगमनरूपचरमवाक्यार्थबुद्धिरूढीव्यो वा मानसः, परामर्शः तत्परता च ताम्, जनयतोऽपि उत्तरोत्तरवाक्यप्रयोजिकामाकांक्षामुत्थापयतः प्रतिज्ञादेरिह धूम इत्यादिवचसामानुमानिकवह्न्यादिधीपरतावधिवहत्येव तत्प्रयोजकतयेव । ननु तावद्भिरवयवैः सम्भूयैकमहावाक्यार्थबोधाजननेऽपि परामर्शप्रयोजकीभूतस्वीयतत्तद्विशिष्टार्थधीजनकतायाः सर्वावयवेष्वेव सत्त्वेन निरुक्तलक्षणसमन्वयो नानुपपन्न इत्यत आह परामर्शप्रयोजकत्वं चेति । परामर्शप्रयोजकज्ञानजनकत्वं चेत्यर्थः। तद्विषयेति । परामर्शविषयेत्यर्थः। तत्तत्पदार्थमात्रोपस्थापकतयेति अभेदे तृतीया, तथाच तदुपस्थापकत्वरूपमित्यर्थः । विवक्षितमिति शेषः । तथाच यादृशयादृशवाक्यैः परामर्शविषयसकलपदार्था उपस्थाप्यन्ते तावत्समुदायत्व विवक्षितमिति पर्यवसितोऽर्थः । उदाहरणोपनययोरेवेति । उपनयस्य व्याप्त्यबोधकत्वमताभिप्रायेणोदाहरणान्तर्भावः। तत्-समुदायत्वं । पर्यवस्यतीति । ताभ्यामेव परामर्शविषयसकलपदार्थोपस्थापनादिति भावः। अथ यथाकथञ्चित्परामर्शानुकूलत्वं यादृशयादृशवाक्यानां तादृशवाक्यसमुदायत्वं विवक्षितमतो नोदाहरणोपनयमात्रेऽतिव्याप्तिरित्याशङ्कते अथेति । तदानुकूल्यमात्रेणेति पूर्ववदभेदे तृतीया । परामर्शप्रयोजकत्वमित्यनुषज्यते । इत्यादेः-इत्यादिसमुदायस्य, तथात्व-न्यायत्वं, स्यादिति शेषः। को वह्निमानित्यादिवाक्यानामपि जिज्ञासाज्ञानद्वारा अवयवप्रयोजकत्वेन यथाकथञ्चित्परामर्शानुकूलत्वसंभवादिति भावः। इत्यादीत्यादिपदात् व्युत्क्रमप्रयुक्तप्रतिज्ञादावतिव्याप्त्यादेः परिग्रहः॥

(चि०) अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यत्वमवयवत्वम् । अत एव वह्निव्याप्यधूमवानयमिति वाक्ये तदवयवे च न न्याय-तदवयवलक्षणातिव्याप्तिः-तेन परामर्शस्य तदवयवेन परामर्शजनकस्य जननात् ।

यत्तु संक्षेपतः परामर्शप्रयोजकवाक्यत्वेन विशेषाभावात् सोऽपि न्याय एवेति ।

तत्र, कथायामाकाङ्क्षाक्रमेणाभिधानमिति प्रथमं विशिष्टवैशिष्ट्य आकाङ्क्षा नास्तीति तदभिधाने निग्रहादिति वक्ष्यते। अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्तिः आकाङ्क्षाविरहस्तुल्य एव।

अन्ये तु पञ्चावयववाक्याद्विजातीयमेव शाब्दज्ञानमुत्पद्यत इति तद्बीजनकवाक्यत्वं न्यायत्वम्। एवं प्रतिज्ञाद्यवयवादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्बीजनकशाब्दत्वमेव तत्तल्लक्षणमिति।

तत्र, ज्ञानविशेषजनकत्वं तत्तज्ज्ञानजनकत्वं वा न्याये प्रतिज्ञादौ चानतिप्रसक्तमनुगतरूपमन्तरेण दुर्निरूपमिति तत्स्वीकारे तस्यैव लक्षणत्वात्, अन्यथ, जातिसङ्करप्रसङ्गः।

(दी०) अवयवत्वन्तु न्यायान्तर्गतत्वे सति प्रतिज्ञान्यतमत्वम्, प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वं वा वक्तव्यम्। उभयञ्च प्रतिज्ञाहेतुहेतूदाहरणे उदाहरणोपनयानुपनयनिगमने इति विविच्य वक्तव्यमिति। प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकवाक्यत्वं तत्त्वमित्यपि केचित्।

तस्यैवेति। तथाच तादृशजातौ साधकाभाव इति भावः। बाधकमप्याह अन्यथेति। न्यायजन्यज्ञाने पञ्चावयवजन्यत्वात् पञ्चद्व्यादिजन्ये द्व्याद्या एकैकजन्ये चैकैका जातय इति सङ्कर इत्यर्थः। तत्र तत्र भिन्नभिन्नजातिकल्पने सुतरां मानाभावादिति भावः।

केचित्तु यदि चानुगतं कारणमन्तरेणापि तादृशजातिसत्त्वसम्भवस्तदा कदाचित् प्रतिज्ञादिजन्येऽपि, हेत्वादिजन्यप्रवृत्तिहे-

त्वादिजन्ये च प्रतिज्ञादिजन्यत्वविजातिः स्यादिति सङ्कर इत्यर्थः । एवं सर्वेषां सर्वजातीयत्वमेकजातीयत्वं वा स्यादित्यपि द्रष्टव्यमित्याहुः ।

(गा०) मूलोक्तावयवलक्षणे शाब्दज्ञानस्यानुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वाभिधानं पञ्चवाक्यानामेकमहावाक्यार्थधीजनकत्वाभिमानेन प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थगोचरशाब्दधीविशेषाणां परिचयायैव । तेषां निवेशस्तु विशिष्य तत्तदर्थविषयकशाब्दबुद्धित्वेन ननु तादृशशाब्दबोधजनकत्वेन, तथा सत्येकैकावयवजन्यशाब्दबुद्धेरपि परामर्शप्रयोजकतया तज्जनकाधात्तरवाक्यार्थज्ञानजनकेऽवयवावयवेऽतिप्रसङ्गस्य दुर्वारत्वात् । न च साध्यविशिष्टपक्षादिविषयकशाब्दबुद्धित्वेन बोधपञ्चकनिवेशेऽननुगमः जनकान्तस्य तत्तद्बोधजनकान्यतमत्वादिरूपानुगतधर्मावच्छिन्नपरत्वात् । न चैवं सति न्यायान्तर्गते पर्वतो वह्निमानित्यादिवाक्येऽतिव्याप्तिः–वाक्यपदस्य न्यायान्तर्गतार्थकत्वादित्याभिप्रायपर्यवसितं तल्लक्षणार्थमाह न्यायेति ।

अथ किमिदं न्यायान्तर्गतत्वम् ? न तावत्स्वविषयकप्रतीत्यविषयन्यायकत्वम्–प्रतिज्ञाद्यविषयकप्रतीत्यापि हेत्वादिरूपन्यायैकदेशस्य विषयीकरणात्तद्घटितसमुदायात्मकन्याये प्रतिज्ञाद्यविषयकप्रतीत्यविषयत्वस्य दुर्घटत्वात्, एकदेशवृत्तेर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानङ्गीकारात् । नापि न्यायविषयताव्यापकविषयिताकत्वम्–उच्चारणभेदेनैकानुपूर्व्यवच्छिन्नवाक्यानामपि भेदात्कस्याश्चिदपि प्रतिज्ञादिव्यक्तेर्विषयिताया एकविधमपि न्यायमवगाहमानेषु सर्वेषु ज्ञानेषु वृत्त्यसम्भवात् ।

मैवम् । स्वाविषयकप्रतीत्यविषयन्यायकत्वमेव तत्, न्यायत्वसामानाधिकरण्यमात्रेण तादृशप्रतीत्यविषयत्वं विवक्षणीयम् । एकैकप्रतिज्ञादिव्यक्त्यविषयकप्रतीत्या व्यक्त्यन्तरघटितन्यायस्य तन्न्यायैकदेशहेत्वादेश्चावगाहनेऽपि न्यायत्वाधिकरणे तत्प्रतिज्ञाव्यक्तौ तत्प्रतिज्ञादिव्यक्त्यविषयकप्रतीत्यविषयत्वसत्त्वेन तासां तथात्वमव्याहतमेव । अथवा न्यायत्वाश्रयत्वमेव तथा पर्याप्त्यविवक्षया एकदेशस्यापि तथात्वोपपत्तेः । वस्तुतो न्यायत्वघटकस्य समु-

तत्र, कथायामाकाङ्क्षाक्रमेणाभिधानमिति प्रथमं विशिष्टवैशिष्ट्य आकाङ्क्षा नास्तीति तदभिधाने निग्रहादिति वक्ष्यते। अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्तिः आकाङ्क्षाविरहस्तुल्य एव।

अन्ये तु पञ्चावयववाक्याद्विजातीयमेव शाब्दज्ञानमुत्पद्यत इति तद्धीजनकवाक्यत्वं न्यायत्वम्। एवं प्रतिज्ञाद्यवयवादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्धीजनकशब्दत्वमेव तत्तल्लक्षणमिति।

तत्र, ज्ञानविशेषजनकत्वं तत्तज्ज्ञानजनकत्वं वा न्याये प्रतिज्ञादौ वानातिप्रसक्तमनुगतरूपमन्तरेण दुर्निरूपमिति तत्स्वीकारे तस्यैव लक्षणत्वात्, अन्यथा जातिसङ्करप्रसङ्गः।

(टी०) अवयवत्वन्तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम्; प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वं वा वक्तव्यम्। उभयञ्च प्रतिज्ञाहेतुहेतूदाहरणे उदाहरणोपनयावुपनयनिगमने इति विशिष्य वक्तव्यमिति। प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकवाक्यत्वं तत्त्वमित्यपि केचित्।

तस्यैवेति। तथाच तादृशजातौ साधकाभाव इति भावः। साधकमप्याह अन्यथेति। न्यायजन्यज्ञाने पञ्चावयवजन्यत्वात् पञ्चद्वित्र्यादिजन्ये द्वित्र्याद्या एकैकजन्ये चैकैका जातय इति सङ्कर इत्यर्थः। तत्र तत्र भिन्नभिन्नजातिकल्पने सुतरां मानाभावादिति भावः।

केचित्तु यदि चानुगतं कारणमन्तरेणापि तादृशजातिपञ्चकसम्भवस्तदा कदाचित् प्रतिज्ञादिजन्येऽपि हेत्वादिजन्यवृत्तिहे-

त्वादिजन्ये च प्रतिज्ञादिजन्यवृत्तिर्जातिः स्यादिति सङ्कर इत्यर्थः । एवं सर्वेषां सर्वजातीयत्वमेकजातीयत्वं वा स्यादित्यपि द्रष्टव्यमित्याहुः ।

( गा० ) मूलोक्तावयवलक्षणे शाब्दज्ञानस्यानुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वाभिधानं पञ्चवाक्यानामेकमहावाक्यार्थधीजनकत्वाभिमानेन प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थगोचरशाब्दधीविशेषाणां परिचयायैव । तेषां निवेशस्तु विशिष्य तत्तदर्थविषयकशाब्दबुद्धित्वेन न तु तादृशशाब्दबोधजनकत्वेन, तथा सत्येकैकावयवजन्यशाब्दबुद्धेरपि परामर्शप्रयोजकतया तज्जनकावान्तरवाक्यार्थज्ञानजनकेऽवयवावयवेऽतिप्रसङ्गस्य दुर्वारत्वात् । न च साध्यविशिष्टपक्षादिविषयकशाब्दबुद्धित्वेन बोधपञ्चकनिवेशेऽननुगमः जनकान्तस्य तत्तद्बोधजनकान्यतमत्वादिरूपानुगतधर्मावच्छिन्नपरत्वात् । न चैवं सति न्यायान्तर्गते पर्वतो वह्निमानित्यादिवाक्येऽतिव्याप्तिः—वाक्यपदस्य न्यायान्तर्गतार्थकत्वादित्यभिप्रेत्य पर्यवसितं तल्लक्षणार्थमाह न्यायेति ।

अथ किमिदं न्यायान्तर्गतत्वम् ? न तावत्स्वाविषयकप्रतीत्यविषयन्यायकत्वम्—प्रतिज्ञाद्यविषयकप्रतीत्यापि हेत्वादिरूपन्यायैकदेशस्य विषयीकरणात्तद्घटितसमुदायात्मकन्याये प्रतिज्ञाद्यविषयकप्रतीत्यविषयत्वस्य दुर्घटत्वात्, एकदेशवृत्तेर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानङ्गीकारात् । नापि न्यायविषयताव्यापकविषयिताकत्वम्—उच्चारणभेदेनैकानुपूर्व्यवच्छिन्नवाक्यानामपि भेदात्कस्याश्चिदपि प्रतिज्ञादिव्यक्तेर्विषयिताया एकविधमपि न्यायमवगाहमानेषु सर्वेषु ज्ञानेषु वृत्त्यसम्भवात् ।

मैवम् । स्वाविषयकप्रतीत्यविषयन्यायकत्वमेव तत्, न्यायत्वसामानाधिकरण्यमात्रेण तादृशप्रतीत्यविषयत्व विवक्षणीयम् । एकैकप्रतिज्ञादिव्यक्त्यविषयकप्रतीत्या व्यक्त्यन्तरघटितन्यायस्य तन्न्यायैकदेशहेत्वादेश्चावगाहनेऽपि न्यायत्वाधिकरणे तत्प्रतिज्ञाव्यक्तौ तत्प्रतिज्ञादिव्यक्त्यविषयकप्रतीत्यविषयत्वसत्त्वेन तासां तथात्वमव्याहतमेव । अथवा न्यायत्वाश्रयत्वमेव तथा पर्याप्त्यविवक्षया एकदेशस्यापि तथात्वोपपत्तेः । वस्तुतो न्यायत्वघटकस्य समु-

दायत्वांशस्यात्र निष्प्रयोजनकत्वेनानिवेशादुचितानुपूर्वीकत्वमात्र विवक्षितम्। तदेव च न्यायान्तर्गतस्य एकदेशसाधारणम्। उचितानुपूर्वीकत्वं च प्रतिज्ञोत्तरहेत्वादिघटितवाक्यपञ्चकानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वं विशिष्टधर्मावच्छिन्नप्रतियोगितावच्छेदकतायास्तद्घटकसमुदायपर्याप्ततया एकदेशस्यापि तदाश्रयत्वात्प्रतिज्ञादेस्तथात्वमक्षतम्। उपनयविशेषोत्तरत्वविशिष्टनिगमनत्वशरीरे च वैशिष्ट्यघटकतया निगमनस्याप्यन्तर्भावात्साधारण्यमक्षतमेवोक्तधर्मस्य। विशिष्टस्यावच्छेदकतास्थले एकमवच्छेदकं अपरं च तद्विशेषणं तद्विशिष्टावच्छेदकस्यावच्छेदकं न तु समुदायेऽवच्छेदकत्वं पर्याप्तमित्युपगमे च तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकाविषयिताकत्वं विवक्षणीयम्। तादृशी च तादृशानुपूर्वीविशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणता तदवच्छेदकस्य च हेत्वादिनिष्ठानन्तर्यप्रकारतावत्प्रतिज्ञादिविषयितानामप्यवगाहक विनिगमनाविरहादितरविषयितानिरूपितत्वेन निश्चयत्वविशिष्टत्वेन च कारणीभूतज्ञानविषयताफलानिरूपितविषयितानां कारणतावच्छेदकत्वात्। प्रतिज्ञोत्तरहेत्वादिविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितप्रतिज्ञोत्तरो हेतुरित्यादिज्ञानसाधारणकारणतां तादृशानुपूर्व्यवच्छिन्नभिन्नवाक्यत्वावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपिततादृशवाक्यत्वादिप्रकारकज्ञानकारणतां चादायोदासीनातिप्रसङ्गवारणाय कारणतायां तादृशधर्मव्याप्यत्वव्यापकत्वयोर्निवेशनम्। न च तादृशानुपूर्वीविशेषावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणताया अपि न तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनैयत्यसम्भवः-प्रतिज्ञात्वादिना पदार्थान्तरावगाहितादृशानुपूर्वीप्रकारकज्ञानसमानाकारकज्ञानसाधारण्यात्, तादृशज्ञानस्य वास्तवप्रतिज्ञाद्यविषयकत्वेन तद्घटितानुपूर्व्यप्रकारकत्वादिति वाच्यम्। प्रतिज्ञात्वाद्यवच्छिन्नप्रकारतानिरूपितहेतुत्वाद्यवच्छिन्नप्रकारतेति क्रमेण निगमनत्वावच्छिन्नविषयतापर्यन्तं निवेश्य तच्छालिनिश्चयत्वसमनैयत्यस्यैव विवक्षितत्वात्, तादृशनिश्चयत्वस्योक्तज्ञानसाधारण्येन क्षतिविरहात्। न चैवमुदासीनप्रतिज्ञाद्यानन्तर्यं हेत्वादावगाहते यो भ्रमस्तद्विषयतादृशप्रतिज्ञादिविष-

घताया अपि निरुक्तकारणतावच्छेदकतयाऽतिप्रसङ्गो दुर्वार इति वाच्यम्। भ्रमावृत्तिविषयिताया एव निवेशनीयत्वादिति कृतं विस्तरेण।

अन्वयैकदेशस्यावयवद्वयात्मकसमुदायस्य च वारणाय प्रतिज्ञाद्यन्यतमत्वमिति। अथ धूमादालोकवान्पर्वतो वह्निमान्धूमादित्यादिन्यायान्तर्गतप्रतिज्ञैकदेशे धूमादित्यादिभागेऽतिव्याप्तिः तस्यापि हेतुप्रतिपाद्यो यादृशविशिष्टार्थस्तन्मात्रबोधकत्वेन हेतुलक्षणाक्रान्ततया प्रतिज्ञाद्यन्यतमत्वाक्रान्तत्वात्। न च तद्घटकपञ्चम्याः प्रकृतसाध्यान्वितस्वार्थबोधकत्वाभावान्न वक्ष्यमाणहेतुलक्षणाक्रान्तत्वं तस्येति वाच्यम्। एवमपि धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमानित्यादिप्रतिज्ञाघटकतादृशभागेऽतिप्रसङ्गस्य दुर्वारत्वादिति चेन्न। प्रकृतपक्षतावच्छेदकावच्छिन्नविशेषणतापन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नान्वितस्वार्थबोधजनकवाक्यत्वरूपहेतुत्वस्यैव निवेशनीयतयाऽनतिप्रसङ्गात्। निगमनघटकस्य तस्मादितिभागस्य वारणाय विशेष्यदलं तज्जन्यबोधे तादृशविशिष्टविषयितावच्छिन्नव्याप्त्यादिविषयितासत्त्वेन तद्वारणात्।

ननु प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञादिभिन्नभिन्नत्वरूपं प्रतिज्ञाद्येकदेशसाधारणम् भेदस्याव्यासज्यवृत्तितया समुदायवृत्तित्वे एकदेशवृत्तिताया अपि दुर्वारत्वात्। अथ प्रतिज्ञादिभिन्नभेदानुयोगितावच्छेदकरूपवत्त्वं तत् तादृशं च रूपं प्रतिज्ञात्वादिकमेव न तु तदेकदेशपर्याप्तपर्वतपदत्वादिकं तदवच्छिन्ने व्यासज्यवृत्तिप्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वादिति चेन्न। प्रतिज्ञाद्येकदेशे प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वे तादृशभेदावच्छिन्नभेदस्य प्रतिज्ञात्वाद्यवच्छिन्नेऽपि सत्त्वासम्भवात् प्रतिज्ञात्वपर्याप्त्यधिकरणसमुदायस्यैकदेशानतिरिक्तत्वात्। न हि व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकएकदेशभेदः प्रामाणिकः–घटपटौ न घट इत्यादिप्रतीतेरसिद्धेः। प्रतिज्ञादिभेदपञ्चकानुयोगितावच्छेदकं यद्रूपं तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकधर्मवत्त्वाद्यविवक्षणे च प्रतिज्ञाहेत्वादिसमुदायेऽतिव्याप्तिः–तादृशसमुदायत्वाद्यवच्छिन्ने प्रतिज्ञात्वाद्यवच्छिन्नभेदासत्त्वात्तादृशसमुदायत्वस्य निरुक्तरूपानन्तर्गतत्वेन तादृशसकलधर्मावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वात्। प्रतिज्ञात्वाद्य-

दायत्वांशस्याञ्च निष्प्रयोजनकत्वेनानिवेशादुचितानुपूर्वीकत्वमात्रं विवक्षितम्। तदेव च न्यायान्तर्गतत्वं एकदेशसाधारणम्। उचितानुपूर्वीकत्वं च प्रतिज्ञोत्तरहेत्वादिघटितवाक्यघटकानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वं विशिष्टधर्मावच्छिन्नप्रतियोगितावच्छेदकतायास्तद्घटकसमुदायपर्याप्ततया एकदेशस्यापि तदाश्रयत्वात्प्रतिज्ञादेस्तद्रूपस्याक्षतम्। उपनयविशेषोत्तरत्वविशिष्टनिगमनत्वशरीरे च वैशिष्ट्यघटकतया निगमनस्याप्यन्तर्भावात्साधारण्यमक्षतमेवोक्तधर्मस्य। विशिष्टस्यावच्छेदकतास्थले एकमवच्छेदकं अपरं च तद्विशेषणं तद्विशिष्टावच्छेदकत्वावच्छेदकं न तु समुदायेऽवच्छेदकत्वं पर्याप्तमित्युपगमे च तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकार्यतावच्छेदकविषयिताकत्वं विवक्षणीयम्। तादृशी च तादृशानुपूर्वीविशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणता तदवच्छेदकत्वं च हेत्वादिनिष्ठानन्तर्यप्रकारताप्रतिज्ञादिविषयितानामप्यव्याहत विनिगमनाविरहादितरविषयितानिरूपितत्वेन निश्चयत्वविशिष्टत्वेन च कारणीभूतज्ञानविषयसकलनिरूपितविषयितानां कारणतावच्छेदकत्वात्। प्रतिज्ञोत्तरहेत्वादिविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितप्रतिज्ञोत्तरो हेतुरित्यादिज्ञानसाधारणकारणतां तादृशानुपूर्व्यवच्छिन्नविषयतानिरूपितविषयतावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितताद्दशवाक्यत्वादिप्रकारकज्ञानकारणतां चादायोदासीनातिप्रसङ्गवारणाय कारणतायां तादृशधर्मव्याप्यत्वव्यापकत्वयोर्निवेशनम्। न च तादृशानुपूर्वीविशेषावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नकार्यतानिरूपितकारणताया अपि न तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनैयत्यसम्भवः प्रतिज्ञात्वादिना पदार्थान्तरावगाहितादृशानुपूर्वीप्रकारकज्ञानसमानाकारकज्ञानसाधारण्यात्, तादृशज्ञानस्य वास्तवप्रतिज्ञाद्यविषयकत्वेन तदवच्छिन्नानुपूर्व्यप्रकारकत्वादिति वाच्यम्। प्रतिज्ञात्वाद्यवच्छिन्नप्रकारतानिरूपितहेतुत्वाद्यवच्छिन्नप्रकारतेति क्रमेण निगमनत्वावच्छिन्नविषयतापर्यन्तं निवेश्य तच्छालिनिश्चयत्वसमनैयत्यस्यैव विवक्षितत्वात्, तादृशनिश्चयत्वस्योक्तभ्रमसाधारण्येन क्षतिविरहात्। न चैवमुदासीनप्रतिज्ञाद्यानन्तर्ये हेत्वाद्यंशेऽवगाहते योऽभ्रमस्तद्भिन्नतादृशप्रतिज्ञादिविष-

यताया अपि निरुक्तकारणतावच्छेदकतयाऽतिप्रसङ्गो दुर्वार इति वाच्यम् । भ्रमावृत्तिविषयिताया एव निवेशनीयत्वादित्ति कृतं विस्तरेण ।

अवयवैकदेशस्यावयवद्वयात्मकसमुदायस्य च वारणाय प्रतिज्ञाद्यन्यतमत्वमिति । अथ धूमादालोकवान्पर्वतो वह्निमान्धूमादित्यादिन्यायान्तर्गतप्रतिज्ञैकदेशे धूमादित्यादिभागेऽतिव्याप्तिः तस्यापि हेतुप्रतिपाद्यो यादृशविशिष्टार्थस्तन्मात्रबोधकत्वेन हेतुलक्षणाक्रान्ततया प्रतिज्ञाद्यन्यतमत्वाक्रान्तत्वात् । न च तद्घटकपञ्चम्याः प्रकृतसाध्यान्वितस्वार्थबोधकत्वाभावान्न वक्ष्यमाणहेतुलक्षणाक्रान्तत्व तस्येति वाच्यम् । एवमपि धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमानित्यादिप्रतिज्ञाघटकतादृशभागेऽतिप्रसक्तस्य दुर्वारत्वादिति चेन्न । प्रकृतपक्षतावच्छेदकावच्छिन्नाविशेषणतापन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नान्वितस्वार्थबोधजनकवाक्यत्वरूपहेतुत्वस्यैव निवेशनीयतयाऽनतिप्रसङ्गात् । निगमनघटकस्य तस्मादितिभागस्य वारणाय विशेष्यदलं तज्जन्यबोधे तादृशविशिष्टविषयितावद्भिर्भूतव्याप्त्यादिविषयितासत्त्वेन तद्वारणात् ।

ननु प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञादिभिन्नभिन्नत्वरूपं प्रतिज्ञाद्येकदेशासाधारणम् भेदस्याऽव्यासज्यवृत्तितया समुदायवृत्तित्वे एकदेशवृत्तिताया अपि दुर्वारत्वात् । अथ प्रतिज्ञादिभिन्नभेदानुयोगितावच्छेदकरूपवत्त्वं तत् तादृशं च रूपं प्रतिज्ञात्वादिकमेव न तु तदेकदेशपर्याप्तपर्वतपदत्वादिक तदवच्छिन्ने व्यासज्यवृत्तिप्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वादिति चेन्न । प्रतिज्ञाद्येकदेशे प्रतिज्ञात्वाद्यवच्छिन्नभेदसत्त्वे तादृशभेदावच्छिन्नभेदस्य प्रतिज्ञात्वाद्यवच्छिन्नेऽपि सत्त्वासम्भवात् प्रतिज्ञात्वपर्याप्त्यधिकरणसमुदायस्यैकदेशानतिरिक्तत्वात् । न हि व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताक एकदेशभेदः प्रामाणिकः-घटपटौ न घट इत्यादिप्रतीतेरसिद्धेः । प्रतिज्ञाद्विभेदपञ्चकानुयोगितावच्छेदकं यद्यद्रूपं तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकधर्मवत्त्वविवक्षणे च प्रतिज्ञाहेत्वादिसमुदायेऽतिव्याप्तिः-तादृशसमुदायत्वाद्यवच्छिन्ने प्रतिज्ञात्वाद्यवच्छिन्नभेदासत्त्वात्तादृशसमुदायत्वस्य निरुक्तरूपानन्तर्गतत्वेन तादृशसकलधर्मावच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकत्वात् । प्रतिज्ञात्वाद्य-

धात् । न चैकदेशमात्रविषयिकाया अपि प्रतीतेः प्रतिज्ञात्वाद्याश्रया-विषयत्वासम्भवेन तदाश्रयसमुदायाविषयकत्वाविवक्षणे एकैकप्र-तिज्ञादिविषयिकाया अपि प्रतीतेः प्रतिज्ञात्वाद्याश्रयापरव्यक्त्यविष-यकत्वेन तदाश्रयसमुदायाविषयकतया एकैकप्रतिज्ञादिव्यापकपर्या-प्तप्रतिज्ञात्वादिकं तादृशप्रतीतिविषयतावच्छेदकमेव तदनतिप्रसक्त-त्वादिति वाच्यम् । स्वाश्रयाविषयकप्रतीत्यविषयत्वं यादृशप्रति-ज्ञात्वाद्याश्रये तादृशप्रतिज्ञात्वाद्याश्रयवर्णसमुदायाविषयकप्रतीति-विषयतावच्छेदकत्वविवक्षया प्रतिज्ञादिविषयकसकलप्रत्ययानामेव तादृशसमुदायविषयकत्वेनादोषात् । अवच्छेदकत्वं चेहानतिरिक्त-वृत्तित्वमेव न तु स्वरूपसम्बन्धविशेषः, तेन प्रतिज्ञात्वादिना तदे-कदेशमात्रविषयकज्ञानविषयतायां प्रतिज्ञात्वादेस्तथाविधावच्छेद-कत्वसत्त्वेऽपि न क्षतिः । तथाविधयत्किञ्चिदेकज्ञानविषयतात्वाव-च्छिन्नानतिरिक्तवृत्तित्वमिह निवेशनीयम्, तेन प्रतिज्ञादिघटकेषु सकलवर्णेष्वेव प्रतिज्ञाद्यविषयकप्रतीतिविषयत्वसत्त्वेन तादृशविषय-तासामान्यशून्यत्वासत्त्वेऽपि स्वव्यापकतादृशविषयतात्वावच्छिन्न-कत्वस्य प्रतिज्ञात्वादिसाधारणत्वेऽपि न क्षतिरिति वदन्ति ।

तदसत् । एतदपेक्षया उक्तप्रतिज्ञाद्यन्यतमत्वस्यैव लघुत्वा-त्तन्निर्भरस्य निर्युक्तिकतापातात् । एतेन प्रतिज्ञादिघटकतावच्छेद-कत्वं स्वसमानाधिकरणस्वानधिकरणवृत्तिप्रतिज्ञात्वादिकत्वमित्यपि हेयम्–स्वत्वाननुगमेन तादृशं स्वं यत्किञ्चिदेकीकृत्य तावतामनन्तभेदानां निवेशनीयतया महागौरवात् ।

प्रतिज्ञाहेत्वादिसमुदायवारणाय उभयेत्यादि उभयघटकभाग-द्वयावृत्तिधर्मवत्त्वार्थकम्, तथा च प्रतिज्ञादिघटकतानवच्छेदकत्वे स-ति उभयघटकभागद्वयावृत्तिर्यो धर्मस्तद्वत्त्वं दलद्वयार्थः । प्रतिज्ञाद्ये-कैकावयवघटकभागद्वयस्यापि यत्किञ्चिदुभयघटकत्वादसम्भव इत्य-त: प्रतिज्ञाहेत्वाद्युभयचतुष्टयस्य विशिष्योभयपदार्थतामाह उभयं चेति । इति विशिष्य वक्तव्यमित्यग्रिमेणान्वयः । इति–इतिरीत्या, प्रति-ज्ञाहेत्वाद्योरपि प्रतिज्ञाहेतूभयत्वादिना न घटकत्वांशे विशेषणता तादृशोभयघटकभागाप्रसिद्धेः, किन्तु प्रत्येकं प्रतिज्ञात्वहेतुत्वादिना, तथा च प्रतिज्ञाघटको यो भागः यश्च हेतुघटकस्तदुभयाघटितत्वमि-ति क्रमेणाघटितत्वचतुष्टयं निवेशनीयम् । प्रतिज्ञाहेत्वाद्येकदेशाघटित-

समुदायवारणाय घटकभागनिवेशनम् । प्रतिज्ञादिघटकत्वं चैकदेशासाधारण प्रतिज्ञात्वाद्याश्रयत्वं नान्यत् गौरवात्, तथाच प्रतिज्ञात्वाद्याश्रयहेतुत्वाद्याश्रयोभयावृत्तित्वादिरूपविशेषणचतुष्टयं धर्मविशेषणं पर्यवसितम् । न चैवं धूमाद्वह्निमतः सधर्मा पर्वतो वह्निमान् धूमादित्यादिन्यायघटकप्रतिज्ञायामव्याप्तिः तस्याः हेतुलक्षणाक्रान्तभागघटितत्वेनोभयघटकभागद्वयघटितत्वात्तद्यावृत्तत्वस्य, पूर्वोपदर्शितहेतुत्वस्य निवेशेऽपि निगमनेऽर्थपदानुषङ्गपक्षे तत्रोपनये चाव्याप्तिर्दुर्वारैव तस्योपनयघटकेनार्थपदेनोपनयस्य च तद्घटकेन तेन घटितत्वादिति वाच्यम् । अनुषङ्गपक्षे उपनयघटकभागनिगमनघटकभागद्वयाघटितत्वशरीरे उपनयाघटकत्वेन निगमनघटकस्य निगमनाघटकत्वेन चोपनयघटकस्य भागस्य विशेष्यवाचकपदातिरिक्तत्वेन वा भागद्वयस्य विशेषणीयत्वात् । अयं तस्माद्वित्यादिभागस्य च सत्यन्तेनैव वारणात् । स्वानाश्रयान्तरितभागद्वयवृत्त्यन्यत्वेन च धर्मो विशेषणीयः, तेन हेत्वाद्यंशपरित्यागेन प्रतिज्ञोदाहरणादिसमुदाये नातिप्रसङ्गः ।

वस्तुतस्तु प्रतिज्ञा हेतुः इत्यादौ हेत्वादिपदं प्रतिज्ञाद्यतिरिक्तपरम् तथाचोदाहरणादेः प्रतिज्ञाद्यतिरिक्तत्वान्न दोषः । प्रतिज्ञाद्यतिरिक्तत्वं च प्रतिज्ञाद्येकदेशाव्यावृत्तं प्रतिज्ञात्वाद्यनाश्रयत्वमेव पर्यवसितं बोध्यमिति दिक् ।

मूलस्थं शाब्दज्ञानजनकशाब्दज्ञानान्तमन्यतमत्वेनानुगतरूपेणावयवप्रतिपाद्यतत्तद्विशिष्टार्थविषयकशाब्दबोधपरमतो नाननुगमः, तादृशबोधजनकानां वाक्यानामन्यतमत्वेनानुगमे व्यासज्यवृत्तिधर्मावच्छेदेनैकदेशवृत्तिधर्मावच्छिन्नानुयोगिताकान्योन्याभावानभ्युपगमे पूर्वोक्तानुपपत्तिप्रसङ्गात् शाब्दबोधानामेवान्यतमत्वेनोपात्तं युक्तत्वादित्यभिप्रायेण मूलोक्तावयवलक्षणमन्यथा व्याचक्षाणानां केषांचिन्मतमाह प्रतिज्ञादिप्रतिपाद्येति । विशिष्य निवेश्यानां विशिष्टार्थविशेषाणां साध्यविशिष्टपक्षादीनां परिचायकमात्रमेतत्, न तु प्रतिज्ञादिप्रतिपाद्यत्वेन तेषां निवेशः विशिष्टार्थविशेषमनन्तर्भाव्य प्रतिज्ञात्वादीनां दुर्निर्वचतया तेषां विशिष्य निवेशनस्यावश्यकत्वे तत्तद्विशिष्टार्थविषयकबोधजनकवाक्यप्रतिपाद्यत्वेन तत्तद्विशिष्टार्थनिवेशनस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात् एतत्सूचनायैव तत्तदित्युक्तम् । न

चात्र नानावयवजन्यसमूहालम्बनबोधं प्रतिज्ञाहेत्वादिजन्यविशिष्टार्थबोधं चादाय तज्जनकसमुदायेऽतिव्याप्तिः तत्तद्विशिष्टार्थबोधनिष्ठतत्तदेकदेशबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकताश्रयावयवैकदेशे चातिव्याप्तिरिति वाच्यम्। तत्तद्विशिष्टार्थविषयकशाब्दबुद्धित्वावच्छिन्नजन्यता अन्यतमत्वेनोपादाय तत्तन्निरूपितजनकतावच्छेदकधर्मपर्याप्त्यधिकरणताया निवेशनीयत्वात्, तादृशो धर्मः पर्वतो वह्निमानित्यादिवाक्यत्वमेव तादृशवाक्यत्वस्य व्यासज्यवृत्तितया नैकदेशेऽतिव्याप्तिः। तादृशशाब्दबुद्धित्वावच्छिन्नत्वं च तादृशशाब्दबुद्धित्वपर्याप्तावच्छेदकताकत्वम्, अतः प्रतिज्ञाहेतुसमुदायादेः साध्यविशिष्टपक्षावगाहिशाब्दत्वघटितधर्मावच्छिन्नजनकत्वेऽपि नातिप्रसङ्गः। वाक्यज्ञानस्य जनकतामते तु तादृशजनकतायां विषयितासम्बन्धेन यादृशधर्मावच्छिन्नं यादृशधर्मावच्छिन्नविषयकत्वं वा अवच्छेदकं तादृशधर्मपर्याप्त्याश्रयत्वं विवक्षणीयमिति नासम्भवः। तादृशोऽपि धर्मः पर्वतो वह्निमानित्यादिवाक्यत्वमेव।

अथाकांक्षादिमत्पदसमूहत्वरूपमेव वाक्यत्वं व्यासज्यवृत्तितदवच्छिन्नविषयकज्ञानत्वेन च न शाब्दबुद्धिजनकत्वं समूहत्वज्ञानस्यानुपयुक्तत्वात्, किन्त्वानुपूर्वीविशेषात्मकाकांक्षावच्छिन्नविषयकज्ञानत्वेनैव तथात्वम्। आनुपूर्वीविशेषश्चैकवर्णनिष्ठापरवर्णानन्तर्यरूपो न व्यासज्यवृत्तिरित्येकदेशेऽतिप्रसङ्गो दुर्वारः। न च तादृशजनकतावच्छेदकीभूतविषयितानिरूपकवर्णसमुदायत्वमेव विवक्षणीयमतो नाऽतिप्रसङ्ग इति वाच्यम्। तत्तत्प्रतिज्ञादिव्यक्तिभिन्नप्रतिज्ञादिघटकवर्णानामपि तादृशसमुदायघटकतया क्वचिदप्यवयवव्यक्तौ तादृशसमुदायत्वापर्याप्तेः प्रत्येकमवयवव्यवहारानुपपत्तेः।

मैवम्। तादृशबोधजनकतावच्छेदकीभूतयत्किञ्चिज्ज्ञानीयविषयितानिरूपकवर्णसमुदायत्वस्य विवक्षणीयत्वात्। तादृशं च ज्ञानं तथाविधजनकताद्वयशून्यत्वेन विशेषणीयं, तेन प्रतिज्ञाहेत्वादिसमुदाये नाऽतिव्याप्तिः। न चैवं हेत्वर्थप्रतिपादकभागघटितप्रतिज्ञाविशेषेऽव्याप्तिः वह्निव्यापकज्ञाने हेत्वर्थबोधकतानियमादिति वाच्यम्। व्याप्यव्यापकभावापन्नजनकताद्वयशून्यताया निवेशनीयत्वात्।

वस्तुतस्तु स्वानवच्छेदकविषयिताविशिष्टतादृशजनकतानाश्रयत्वं ज्ञाने विशेषणं देयम्। स्वं—जनकता। प्रतिज्ञाहेतूभयादिविषयक-

ज्ञानं च प्रतिज्ञार्थबोधजनकतानवच्छेदकीभूतहेत्वादिविषयिताविशिष्टतादृशजनकताश्रय एव, धूमादालोकवान् पर्वतो वह्निमानित्यादिप्रतिज्ञामात्रविषयकज्ञानं च न तादृशविशिष्टजनकताश्रयस्तद्भिन्नहेत्वर्थबोधजनकतावच्छेदकविषयितायाः अपि विशिष्टप्रतिज्ञार्थबोधजनकतायामवच्छेदकत्वात् ।

एतेन व्याप्यव्यापकभावानापन्नतथाविधजनकताद्वयशून्यत्वप्रवेशे धूमादालोकवान्पर्वतो वह्निमान्धूमादित्यादिसमुदायेऽतिव्याप्तिः—तादृशसमुदायविषयकज्ञाननिष्ठप्रतिज्ञार्थबोधजनकत्वहेत्वर्थबोधजनकत्वयोर्व्याप्यव्यापकभावसत्त्वात् व्याप्यव्यापकभावानापन्नतथाविधजनकताद्वयशून्यत्वादिति निरस्तम् । तादृशवाक्यविषयकज्ञानीयप्रतिज्ञाघटकहेतुसमानाकारकवाक्यविषयिताया विशिष्टप्रतिज्ञार्थबोधजनकतावच्छेदकत्वेऽपि प्रतिज्ञावाक्यविषयितानन्तःपातिन्या हेतुविषयितायास्तादृशजनकतानवच्छेदकत्वात् । यदि चोदासीनपदार्थविषयितानियतविषयिताकावयवव्यक्तिः प्रामाणिकी तदा स्वानवच्छेदकविषयिता तथाविधजनकतावच्छेदकत्वेन विशेषणीया । तादृशावयवव्यक्तिविषयकज्ञानेऽवयवान्तरविषयितानैयत्यस्य प्रामाणिकत्वे स्वगतिरेवेति ध्येयम् । समानाकारकप्रतिज्ञाद्वयाद्यात्मकसमुदायत्वस्यावयवत्वपर्याप्त्याश्रयत्वमिष्टमेव तस्यातथात्वे तद्वारणप्रकारोऽपि चिन्तनीयः । न्यायान्तर्गतत्वस्यापि निवेशनीयतया नोदासीनवाक्यसाधारण्यमिति बोध्यम् ।

अत्र च यत्किञ्चित्त्वनिवेशादननुगमो दुर्वारः । एवं प्रतिज्ञाघटकहेत्वर्थप्रतिपादकभागेऽतिव्याप्तिः । एवमुदाहरणस्य वाक्यद्वयात्मकस्य सग्रहाय तत्प्रतिपाद्यसाध्यविशिष्टधर्मिविषयकशाब्दत्वावच्छिन्नजन्यता तथाविधहेतुविशिष्टधर्मिकशाब्दत्वावच्छिन्नजन्यता च अन्यतमजन्यतागर्भे निवेशनीया, तथाच तद्घटकप्रत्येकवाक्येऽतिव्याप्तिः । तादृशार्थद्वयविषयकबुद्धित्वं च समुदायस्यापि जन्यतावच्छेदकमिति तदवच्छिन्नैकजन्यतानिवेशासम्भवात् । न, च जनकता एवान्यतमत्वेन निवेशनीयाः तच्छरीरे चोदाहरणप्रतिपाद्यतत्तद्विशिष्टार्थबुद्धित्वावच्छिन्ननिरूपितजनकताद्वय द्वित्वेन निवेशनीयं अतः एकैकजनकताश्रयप्रत्येकभागविषयकज्ञानमादाय न प्रत्येकभा-

गेऽतिव्याप्तिरिति वाच्यम् । उभयभिन्नत्वस्य प्रत्येकमुभयत्र सत्त्वात् उभयभिन्नभिन्नत्वस्योभयत्रासम्भवात् अन्यतमत्वेनोभयोपादानास-म्भवात् । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदोपगमे तु ताद-शान्यतमत्वाश्रयप्रत्येकजनकतामादायातिप्रसङ्गस्य दुर्वारत्वात् । पूर्वकल्पे तु प्रतिज्ञाघटकत्वविशेषणेनैव नातिप्रसङ्गावकाशः यो यो धूमवानित्यादिप्रत्येकवाक्यस्य, वाक्यद्वयात्मकोदाहरणघटकत्वात् । न च वाक्यद्वयपर्याप्तमुदाहरणत्वं दुर्वचं स्वघटकयत्पदोपस्थाप्यध-र्मिणि हेतुमत्त्वबोधकं यद्वाक्यं यच्च तदनन्तरप्रयुक्तं स्वघटकत-त्पदोपस्थाप्यताद्दशधर्मिणि साध्यवत्त्वावोधकं वाक्यं तदुभयाव-त्त्वैव तथात्वात् । यथापि प्रतिज्ञाघटकत्वं निवेशनीयमिति चे-त्तर्हि गुरुशरीरस्य तादृशाविषयतानिरूपकवर्णसमुदायत्वस्य निवे-शापेक्षया निरुक्तोभयघटकमागद्वयाघटितत्वनिवेशनमेवोचितमित्य-रुचिर्बीजमत्रबोध्यम् ।

ननु न्यायजन्यज्ञानस्याप्युपनयार्थसाध्यव्याप्यवत्पक्षावगाहित-या परामर्शरूपत्वात्परामर्शजनकवाक्यत्वमेव न्यायत्वं कुतो नोच्य-ते, एवं तादृशवाक्यघटकवाक्यमेवावयवत्वमस्तु किमुक्तगुरुतरन्या-यतदवयवलक्षणानुसरणेनेति प्रतिज्ञादिपञ्चकस्य विशिष्टैकार्थप्रति-पादकत्वाभिमानिनां शङ्कां मूलकृन्निराकरोति अत एवेति । तादृशल-क्षणमुपेक्ष्य यथोक्तलक्षणकरणादेवेत्यर्थः । परामर्शस्य–परामर्शमा-त्रस्य । परामर्शजनकस्य–परामर्शजनकमात्रस्य । मात्रपदात्पूर्वोक्त-विलक्षणन्यायतदवयवलक्षणघटकशाब्दबोधविशेषौ क्रमेणव्यवच्छेद्यौ ।

वाक्यपञ्चकसमुदायस्येव प्रत्येकवाक्यस्यापि न्यायत्वमिष्टमेव प-रामर्शप्रयोजकवाक्य एव न्यायव्यवहारात्तस्य समुदायवत्प्रत्येक-मात्रेऽपि सत्त्वात् । एवञ्च परामर्शप्रयोजकवाक्यत्वमेव न्यायलक्षण-मिति केचित् । तन्मतमुपन्यस्यति यत्त्विति । सङ्क्षेपतः–लाघवतः । सोपि न्याय एवेत्यनेनान्वयः । परामर्शप्रयोजकेति । वह्निव्याप्यधूम-वानयमित्यादिवाक्यस्यापीत्यादि- । विशेषेति । वाक्यपञ्चकात्मक-समुदायादित्यादि- ।

यादृशवाक्यप्रयोगो नार्थान्तरादिनिबन्धननिग्रहप्रयोजकस्त-स्यैव न्यायव्यवहारविषय इति नियमाभिप्रायेण दूषयति तन्नेति । कथायां–विचारसमये । आकांक्षाक्रमेणैवाभिधाने निग्रहाप्रयोजक-

मिति शेषः । इति-अतः, तदभिधाने निग्रहादित्यग्रिमेणान्वयः । विशिष्टवैशिष्ट्ये-पक्षस्य व्याप्तिविशिष्टहेतुमत्त्वे । आकांक्षा-जिज्ञासा, नास्तीति । विप्रतिपत्तितः साध्यतदभावसंशयवतस्तदेकतरकोटिजिज्ञासा प्रथममुदेति ततः प्रतिज्ञावाक्याच्चानिश्चये तद्धेतौ तत्प्रतीतौ च तद्गमकतौपयिकव्याप्तौ तदनन्तरमेव च पक्षस्य तादृशहेतुमत्त्व इति भावः । तदभिधाने-विशिष्टवैशिष्ट्यप्रतिपादकवाक्योच्चारणे । अत्रापि प्रथममित्यनुपज्यते । अन्यथा-लाघवमात्रमादृत्य तस्य लक्षणत्वोपगमे । परामर्शजनकतयेति । लाघवाद्वाक्यत्वमप्यनन्तर्भाव्य परामर्शजनकत्वमात्रस्य लक्षणत्वौचित्यादिति भावः । ननु मध्यस्थाकाङ्क्षा यतो निवर्त्तते स एव न्यायः सा च शाब्दस्वप्रकारिका विषयसिद्धिनिर्वाहकशब्दादेव निवर्त्तते न तु प्रमाणान्तरादिति न चक्षुरादेर्न्यायत्वमत आह आकांक्षेति । आकांक्षानिवृत्तिविरह इत्यर्थः । तुल्य एवेति । व्याप्यवत्तावोधकवाक्यस्य प्रथमप्रयोगेऽपि साध्यसन्देहाद्यधीनानां मध्यस्थाकांक्षानामानिवृत्तेरिति भावः । दुर्निरूपं-असम्भवि । जनकताया अवच्छेदकानियतत्वात्तज्ज्ञानस्यावच्छेदकज्ञानाधीनत्वादिति भावः ॥ लक्षणान्तरसम्भवस्य लक्षणेऽदोषतया तस्यैव लक्षणत्वादितिमूलमसङ्गतमतो दीधितिकृद्भावं व्याचष्टे तथाचेति । तादृशानुगतरूपस्वीकारे चेत्यर्थः । साधकाभाव इति । तादृशधर्मस्यैव न्यायादिपदप्रवृत्तिनिमित्तत्वसम्भवेन तत्प्रवृत्तिनिमित्ततया ज्ञाननिष्ठजातिविशेषसिद्धसम्भवाद्युक्त्यन्तरस्य चासत्त्वादिति भावः । बाधकमित्यस्य प्रतिज्ञादिजन्यतावच्छेदकजातावित्यादिः । तेन वक्ष्यमाणसंकरस्य न्यायजन्यतावच्छेदकजातावसम्भवेऽपि न क्षतिः । अन्यथेति मूलस्य प्रतिज्ञादिजन्यतावच्छेदकजातिस्वीकारे सकीर्णजातिस्वीकारप्रसङ्ग इत्यर्थकत्वमभिप्रेत्य संकरं विवृणोति न्यायेति । न्यायजन्यं च ज्ञानं विशिष्टैकार्थविषयकं तावद्वाक्यार्थविषयकसमूहालम्बनरूपं वेत्यन्यदेतत् । पञ्चेति । जातय इत्यग्रिमेणान्वयः । तथाच तत्रैव प्रतिज्ञादिजन्यतावच्छेदकपञ्चजातीनां समावेश इति भावः । अन्यत्रापि सामानाधिकरण्यमाह द्वित्रादीति । मिथो व्यभिचारितामाह एकैकेति । नन्वेकैकजन्यनानावयवजन्यबोधगततत्तदवयवजन्यतावच्छेदकजातीनां नानात्वोपगमाच संकरावकाश इत्यत आह तत्र तत्रेति । सुतरां मानाभाव इति । प्रतिज्ञाहेत्वादिनानावयवजन्य-

बोधनिष्ठप्रतिज्ञादिजन्यतावच्छेदकजातेर्हेत्वादिजन्यतावच्छेदकतया हेत्वादावपि प्रतिज्ञादिलक्षणातिव्याप्त्यापत्त्या तादृशजातिघटितलक्षणकरणासम्भवेन तादृशजातौ लक्षणानुरोधरूपयुक्तेरनवकाशात्। एकैकावयवजन्यबोधवृत्तिजातीरुपादाय स्वरूपयोग्यताघटितलक्षणस्य निर्दोषत्वेऽपि तत्तदुपनयादिजन्यबोधे तत्तज्जात्यभावनिर्वाहकप्रतिबध्यप्रतिबन्धकभावकल्पने महागौरवात्। तत्तज्जात्यवच्छिन्नजनकतावच्छेदकत्वेनाभिमतानां गुरुशरीराणामपि यथोक्तधर्माणां प्रतिज्ञादिपदप्रवृत्तिनिमित्तत्वौचित्येन तत्तज्जातिकल्पने प्रतिज्ञादिपदप्रवृत्तिनिमित्तताघटकतया अपि युक्तेरनवकाशादिति भावः। अननुगमेन तत्तज्जातिघटितलक्षणासम्भवाल्लक्षणानुपपत्तिरूपयुक्तेः सुदूरपराहतत्वादिति भाववर्णनमनुपादेयम्। एकैकजन्यबोधवृत्तिजातिमादायैव स्वरूपयोग्यताघटितलक्षणकरणसम्भवात्।

अन्यथेत्यादिमूलमन्यथा व्याचक्षाणानां मतमाह केचित्त्विति। तदेवान्यतमस्यैवेत्यस्यार्थः। कदाचिदिति हेत्वादिजन्य इत्यत्रापि अनुषज्यते, तेन व्यभिचारितादिलाभः। स्यादिति। एतेनैतदर्थः नियामकाभावादिति भावः। ननु नियमेन सर्वत्रैव प्रतिज्ञाजन्यबोधे हेत्वादिजन्यव्यक्तिवृत्तिजातिमत्त्वसम्भवेन परस्परव्यभिचारिताया दुर्घटत्वात्, न सङ्करावकाश इत्यतो बाधकान्तरं पूरयति सर्वेषामिति। सर्वत्र सर्वजातिसत्त्वे सर्वजातीनां समनियतत्वाद्भेद एव दुर्लभ इति सर्वजातीयत्वप्रसङ्गोऽभङ्गुर इत्यत आह एकेति। इत्थं च विजातीयशाब्दबोधजनकत्वघटितप्रतिज्ञादिलक्षणमसम्भवदुक्तिकमेवेति भावः। अथ चानुगतकारणाभावेऽप्यननुगतकारणघटितसामग्रीणां जातिविशेषनियामकत्वं सम्भवतीति मोक्तरीत्या जातिसङ्करावकाशः, अन्यथाऽनुमितित्वादिजातेरप्यनियमेन प्रत्यक्षादिसाधारण्यापत्तेः, तत्रापि वह्निव्याप्यवत्तापरामर्शादीनामननुगतत्वादननुगतस्य कस्यचित्कारणस्य सम्भवेऽपि तस्यातिप्रसक्तत्वात् तादृशस्य प्रकृतेऽपि सम्भवात्। न च व्यभिचारेण तादृशजात्यवच्छिन्नशाब्दबोधं प्रत्यननुगतस्य कारणत्वासम्भवात्तादृशजातीनां कारणनियत्यं न सम्भवतीत्येकस्यान्यजातीयत्वप्रसङ्गो दुर्वार इति वाच्यम्। अनुमितौ परामर्शस्येव प्रकृतेऽननुगतकारणस्य कार्यतावच्छेदकसाङ्कर्येण व्यभिचारवारणसम्भवादित्यस्वरससबीजमवसेयम्। न चानुगतनियाम

काभावस्याकिंचित्करत्वेऽनुगतानतिप्रसक्तरूपं दुर्निरूपमिति मूलासङ्गतिरिति वाच्यम्। स्वमतेऽनुगतनियामकाभावे न निर्भरः, अपि तु न्यायजन्यबोधादौ सङ्कररूपबाधक एवेति वक्तुं शक्यतया तादृशबाधकस्य विचारासहत्वेऽपि क्षतिविरहात्।

इदं पुनरिहावधेयम् प्रतिज्ञाद्यवयवादित्यादिमूलं न जातिविशेषघटितप्रतिज्ञालक्षणाभिप्रायकं तथासति तादृशप्रतिज्ञादिलक्षणस्यात्रैव निराकृतत्वेन प्रतिज्ञाग्रन्थे प्रतिज्ञाजन्यविज्ञानीयज्ञातमित्यादिना जातिघटितलक्षणमाशङ्क्यानेनैव दोषेण तन्निराकरणस्य पौनरुक्त्यापत्तेः, किन्त्ववयवसामान्यलक्षणपरं प्रत्येकमित्यस्यावयवान्तरासहकारेणेत्यर्थः। तेन न्यायजन्यबोधतो वाक्यैकवाक्यत्वाधीनप्रतिज्ञाहेत्वादिजन्यबोधतश्च वैलक्षण्यलाभेन तदात्मकसमुदायेऽतिव्याप्तिशङ्कानिरासः। विजातीयत्वं च प्रतिज्ञाद्येकदेशजन्यबोधावृत्तिजातिमत्त्वं, तेनावयवैकदेशातिव्याप्तिशङ्कानिरासः। मूले तज्जनकशब्दत्वं तल्लक्षणमित्येव पाठः। तल्लक्षणमित्यस्यावयवलक्षणमित्यर्थः। एवं चान्यथेत्यादिमूलस्य प्रतिज्ञाहेत्वादिजन्यतावच्छेदकजातीनां परस्परसङ्करपरत्वं न घटत इति। यदि लक्षणानुरोधमात्रेण जातिस्वीकारस्तदा तत्साध्यपक्षहेतुकन्यायादिलक्षणानुरोधेनापि विभिन्नसाध्यकन्यायजन्यशाब्दबोधेषु विभिन्नानां प्रतिज्ञाद्येकदेशजन्यबोधावृत्तिनानाजातीनां स्वीकरणीयतया तासां च तथाविधद्वित्र्यादिन्यायजन्यबोधे समावेशेन सङ्कीर्णजातिस्वीकारप्रसङ्ग इति तादृशमूलार्थः। यदि च सङ्कररूपबाधकभयेन जातिकल्पनासम्भवाज्जातिघटितन्यायविशेषादिलक्षणं न सम्भवतीत्यन्यथैव तत्साध्यपक्षहेतुकन्यायादयो निर्वचनीया इत्युच्यते, तदा व्याप्त्यादिपदस्येव न्यायादिपदस्यापि नानार्थत्वे क्षतिविरहात्, सर्वसाधारणन्यायत्वादिनिर्वचनानुरोधेन जातिस्वीकारोऽप्यनुचित इति भावः। दीधितिकारस्तु तत्तज्जनकशब्दत्वं तत्तल्लक्षणमिति मूलपाठाभिप्रायेण प्रतिज्ञाहेत्वादिजन्यतावच्छेदकजातीनां न्यायजन्यबोधादौ सङ्करपरतया जातिसंकरप्रसङ्ग इति मूलं व्याख्यातवान्। तादृशपाठे तद्ग्रन्थस्यावयवसामान्यलक्षणपरत्वानुपपत्तेः। एवं च सत्यगत्या भिन्नप्रस्तावे जातिघटितप्रतिज्ञालक्षणदूषणं विस्मृत्य प्रतिज्ञाग्रन्थे पुनस्तदाशङ्केति यथाकथञ्चिदग्रिमग्रन्थावतारो बोध्यः।

( चि० ) तत्र प्रतिज्ञा न साध्यनिर्देशः–साध्यप्रदेशोऽतिव्याप्तेः, किन्तूद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सत्युद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं वाक्यम् ।

( दी० ) साध्यनिर्देशः प्रतिज्ञेति सूत्रम् । साध्यो–विधेयधर्मविशिष्टो धर्मी, तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे साध्यतावच्छेदकवह्नित्वादिविशिष्टवैशिष्ट्यज्ञानजनको न्यायावयव इति पर्यवसितोऽर्थः । उदाहरणाच्च साध्यतावच्छेदकविशिष्टज्ञानं न पक्षतावच्छेदकविशिष्टे उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति तयोर्व्युदासः ।

किन्त्वित्यादि । प्रकृतन्यायबहिर्भूतवाक्यवारणाय सत्यन्तं प्रकृतन्यायावयवत्वपर्यवसितार्थकम् । उद्देश्येति । प्रकृतेत्यर्थः । वह्निसाध्यकन्यायोपनयस्य वह्निव्याप्यधूमसाध्यकानुमित्यन्यूनानतिरिक्तविषयकज्ञानजनकस्य वारणाय प्रकृतद्वयम्, तथाच यादृशसाध्यपक्षकन्यायावयवत्वं तादृशसाध्यपक्षकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वं पर्यवसितार्थः । धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादावनतिरिक्तविषयकज्ञानजनकस्य हेतोर्वारणाय अन्यूनेति । निगमनवारणाय अनतिरिक्तेति ।

यद्यपि निगमने साक्षात्पक्षवाचकं पदं न श्रूयते, तथापि न्यूनताभङ्गायोपनयस्थायपादिपदस्यानुषङ्गाचथा बोध्यम् । इत्थमेव च प्रसक्तामतिप्रसक्तिं निगमनश्चेत्यादिना निराकरिष्यति । तदर्थश्च निगमनमन्यूनानतिरिक्तविषयकज्ञानजनकं सत्र परामर्शहेतुर्येन निरुक्तन्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि

व्याप्तुयात् अबाधितत्वादेस्तद्बोधौपयिकविशिष्टहेतुसम्बन्धस्य वा बोधकतया तदतिरिक्तविषयकज्ञानजनकत्वादिति ।

— (गा०)साध्यपदमनुमितिविधेयवाचकपरमित्यभिप्रायेण मणिकारदूषितं सूत्रकारीयप्रतिज्ञालक्षणं साध्यपदस्य प्रकृतानुमितिविधेयविशिष्टार्थपरतां स्वीकृत्य परिष्कर्तुमारभते साध्येति । सामान्यतो विधेयत्वस्य धर्मित्वस्य च केवलान्वयितयाऽवयवान्तरे विधेयविशिष्टधर्मिबोधकत्वमतिप्रसक्तम्, एवं च प्रतिज्ञासमानाकारे न्यायबहिर्भूतवाक्येऽपीत्यतः साध्यपदस्य तद्विशेषपरत्वं निर्देशपदस्य च बोधजनकन्यायावयवरूपवाक्यविशेषपरत्वमनुस्मृत्य पर्यवसितार्थमाह, तथा चेति । पक्षतावच्छेदकसाध्यतावच्छेदकयोर्न तत्त्वेन निवेशः, अपि तु विशिष्यैवेति सूचनाय पर्वतत्वादीति वह्नित्वादीति च । तादृशविशिष्टवैशिष्ट्यावगाहिशाब्दबोधत्वावच्छिन्नजनकयत्किञ्चिज्ज्ञानविषयवर्णसमुदायत्वमिह विवक्षणीयमतो हेत्वर्थादिविषयकप्रतिज्ञार्थबोधजनकतया हेत्ववयवादिमात्रविषयकबोधसाधारण्येऽपि न हेत्ववयवादावतिव्याप्तिः । न्यायान्तर्गतत्वमुपेक्ष्य न्यायावयवत्वनिवेशात्प्रतिज्ञार्थबोधजनकप्रतिज्ञाहेत्वादिविषयकज्ञानमादाय प्रतिज्ञाहेत्वादिसमुदाये नातिव्याप्तिः । पक्षतावच्छेदकविशिष्टत्वादिनिवेशनप्रयोजनमाह उदाहरणादावेति । यद्यपि साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानजनकत्वमात्रस्यैव निवेशे उपनयनिगमनयोरप्यतिव्याप्तिः, तथापि यत्किञ्चिद्धर्मविशिष्टे शुद्धसाध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधजनकत्वनिवेशने न तत्रातिप्रसङ्गः । उपनयजन्यबोधे उपनयार्थव्याप्तिशरीरघटकसाध्यस्य धर्मितावच्छेदकाप्रवेशात्, निगमनजन्यबोधे च साध्यांशे हेतुज्ञानव्याप्यत्वस्याधिकस्य भानात्, अन्यथा पक्षतावच्छेदकान्तर्भावेऽपि अनुपक्षपक्षेऽप्यनिस्तारादिति उदाहरणमात्रानुसरणम् । तदप्युदाहरणजन्यबोधे व्यापकत्वं न विधेयतावच्छेदकतया भासते अपि तु शुद्धवह्नित्वावच्छिन्नवत्त्वमेव सकलहेत्वधिकरणे भासत इति प्राचीनमतमनुसृत्य । निगमनेऽयंपदाननुषङ्गपक्षे तु शुद्धसाध्यतावच्छेदकविशिष्टत्वं न निषिद्धम् । विशेषणान्तरावच्छिन्नवह्न्यादिसाध्यकन्यायान्तर्गतप्रतिज्ञायां शुद्धवह्नित्वावच्छिन्नसाध्यकप्रतिज्ञालक्षणातिप्रसक्तेः प्रकृतन्यायान्तर्गतत्वाभावेनैव वारणादित्यभिप्रायकमिदम् अतो व्यापकत्वस्याधिकस्यो-

दाहरणबोधे मानेऽपि न क्षतिरिति केचित् । तन्मते निगमनोपेक्षाबीजं चिन्तनीयम् ॥(१)

यत्तत्पदस्योदाहरणस्थस्य न पक्षतावच्छेदकावच्छिन्नपरत्वम्, अपि तु पक्षान्यसाध्यवत्साधारणरूपावच्छिन्नपरत्वमेव पक्षतावच्छेदकावच्छिन्ने हेतुमत्त्वस्य तता लाभेन उपनयानुत्थानात्तदवच्छिन्ने साध्यवत्त्वस्य च प्रतिज्ञात एव लाभेनाऽनाकाङ्क्षितत्वाद्यत्र पक्षतावच्छेदकप्रवेशो नोदाहरणातिप्रसङ्गः । अथ यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजनकत्वमुदाहरणैकदेशे स वह्निमानित्यादिवाक्य एव न तु तस्य न्यायावयवत्वम्, तथा समुदाय एव ॥ तत्र तादृशजनकत्वमिति विशिष्य पक्षतावच्छेदकाप्रवेशेऽपि नोदाहरणातिप्रसङ्ग इति चेन्न । जनकत्वस्य जनकयत्किञ्चिज्ज्ञानविषयवर्णसमुदायत्वरूपस्य विवक्षितत्वात्, उदाहरणविषयकज्ञानविषयत्वमादाय समुदाय एवाऽतिप्रसक्तेः । एवमुक्तलक्षणप्रविष्टन्यायावयवत्वशरीरे प्रतिज्ञाहेत्वादिसमुदायातिप्रसङ्गवारणायोभयघटकभागद्वयाघटितत्वमेव निवेशनीयं न तु प्रतिज्ञाद्यघटकत्वमपि प्रयोजनान्तरविरहादुदाहरणैकदेशे तादृशवाक्ये

(१) न च पर्वतो आर्द्रेन्धनवद्वह्निमान् धूमवान् स वह्निमानित्यादिवाक्यपञ्चकान्तर्गतप्रथमवाक्ये तादृशातिव्याप्तिवारणाय यद्रूपावच्छिन्नसाध्यकोदाहरणाद्यघटितन्यायान्तर्गतत्वं पक्षे शुद्धतद्धर्मावच्छिन्नवैशिष्ट्यावगाहित्वमवश्यं निवेशनीयमिति वाच्यम् । तद्धर्मावच्छिन्नसाध्यकोदाहरणादिघटितन्यायलक्षणे शुद्धतद्धर्मावच्छिन्नवैशिष्ट्यावगाहिबोधजनकप्रकृतवाक्यरूपप्रतिज्ञानिवेशात् तादृशन्यायान्तर्गतत्वाभ्युपगमेऽप्युक्तातिप्रसङ्गविरहात्, दृष्टान्तरे शुद्धवह्नित्वादिविशिष्टवैशिष्ट्यबोधस्य प्रयोजनविरहात् । तथा च व्यापकत्वाधिकस्योदाहरणजन्यबोधे भानेऽपि न क्षतिः । न चैवं निगमनेऽपि व्यावृत्तिसम्भवेन तदुपेक्षाया बीजविरह इति वाच्यम् । पर्वतो वह्निमानित्यादिवाक्यस्य पर्वते वह्निवैशिष्ट्यावगाहिबोधजनकत्वमतुप्प्रकृतितात्पर्यस्य नामार्थे भेदान्वय एव मतुप्प्रत्ययो निरर्थक एव भेदान्वयाकाङ्क्षानिर्वाहक इत्यभ्युपगमे एव निर्वहतीति तथाभ्युपगमे केवलनिगमनात्साध्यविशिष्टबोधानुदयेन तत्र व्याप्तेरप्रसक्तिरिति ध्येयमिति पाठान्तरम् ॥

तिप्रसङ्गस्य लघुतरपक्षतावच्छेदकवैशिष्ट्यनिवेशेनैव वारयितुमुचितत्वात् । यद्यप्येवं नीलपर्वतो वह्निमानित्यादिभागेऽपि व्याप्तिः सम्भवति, तथापि सकलप्रतिज्ञैकदेशो न तथेति विशिष्योपादाने प्रयासाधिक्येनोदाहरणानुधावनमिति ध्येयम् ।

साध्यतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशनप्रयोजनमाह उपनयाश्चेति । साध्यवैशिष्ट्यमात्रनिवेशेऽपि पर्वतो द्रव्यवान् धूमादित्यादिन्यायान्तर्गते उपनये तत्स्थलीयप्रतिज्ञालक्षणातिव्याप्तिरिति साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वनिवेश इत्यवधेयम् ॥

यथाश्रुतसत्यन्तार्थस्योदासीनवाक्यसाधारण्यमक्षतमेव न्यायान्तर्गतवाक्य(जन्य)स्येव तदनन्तर्गततादृशवाक्यजन्यस्यापि शाब्दबोधस्योपनायकज्ञानादिविषया परामर्शप्रयोजकत्वादतस्तदर्थमाह प्रकृतन्यायावयवत्वेति ।

वह्निव्याप्यधूमसाध्यकानुमितेरपि कदाचिदुद्देश्यतया वक्ष्यमाणातिप्रसङ्गवारणासम्भवादुद्देश्यपदं प्रकृतार्थकतया व्याचष्टे उद्देश्येतीति । वह्निसाध्यकोपनयस्य—तत्साध्यकन्यायान्तर्गतोपनयस्य, एतेन(अन्यसाधकन्यायमादाय)सत्यन्तदलसत्त्वमाविष्कृतम्,वह्निव्याप्यधूमसाध्यकत्वादिना(अन्यसाध्यकानुमितिमादाय)विशेष्यदलसत्त्वं स्फुटीकृतम्। वारणाय-प्रतिज्ञाव्यवहारविषयतावारणाय । प्रकृतद्वयं—प्रतिज्ञापदार्थप्रविष्टन्यायानुमित्योरेकसाध्यादिकत्वप्रापकं प्रकृत(पद)द्वयम् प्रकृतन्यायावयवत्वपर्यन्तानिवेशे वह्निव्याप्यधूमसाध्यकप्रतिज्ञानुरोधेन। तत्साध्यकानुमितेरपि प्रकृतानुमितिपदेन विवक्षणीयतया तामादाय दर्शितोपनये प्रकृतानुमितिपर्यन्तानिवेशे वह्निसाध्यकन्यायस्यापि प्रकृतन्यायेत्यनेन विवक्षणीयतया तदवयवत्वमादाय तत्र प्रतिज्ञाव्यवहारस्य दुर्वारत्वादत उभयत्र प्रकृतत्वनिवेशः । तथाच सति तत्साध्यपक्षकन्यायान्तर्गतत्वघटितप्रतिज्ञापदार्थगर्भे तत्साध्यपक्षकानुमितेरेवान्तर्भावान्नातिप्रसङ्गस्तदेवाह तथाचेति(१) । यत्तु तादृशोपनये वह्निसाध्यकप्रतिज्ञाव्यवहारवारणाय न्याये वह्निसाध्यकप्रतिज्ञाव्यवहारवारणायानुमितौ प्रकृतत्वनिवेशनमिति प्रकृतद्वयमित्यन्तार्थ इति । तच्चिन्त्यम् । तत्साध्यपक्षकप्रतिज्ञाव्यवहारविषय-

---

(१) तथा सत्यभिन्नसाध्यपक्षकानुमित्यन्तर्भावे यादृशो लक्षणार्थस्तं स्फुटयति तथाचेति । इति पाठान्तरम् ।

चेत्यतः पूरयति तद्धेत्वौपयिकेति । अबाधितत्वादिघटौपयिकेत्यर्थः । विशिष्टहेतुसम्बन्धस्य-व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानज्ञाप्यत्वस्य । अस्य चाबाधितत्वादिव्याप्यतया तद्धेत्वौपयिकत्वं बोध्यम् ।

(दी०) यत्तु पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ यत्र पृथिवीतरेभ्यो भिद्यते न तत् ,पृथिवीत्युदाहरणवारणाय तदिति ।

तत्तुच्छम्—तेन पृथिव्यामितरभेदस्याविषयीकरणात् तात्पर्य्य-भ्रमेण तादृशबोधजनकत्वस्यातिप्रसक्तत्वात् । न च तावतान्यु-दाहरणस्य तथात्वसम्भवो, यन्नेत्यादेरनन्वयात् । यदि च निग-मनेनायमादिपदं निविशते वाक्यैकवाक्यतयैव विशिष्टलाभादि-ति विभाव्यते, तदा हेतौ साध्यसामानाधिकरण्यभाने सामान्य-तः पक्षेऽपि साध्यवत्त्वभानात् पक्षे हेतुव्यापकसाध्यसामानाधि-करण्यविशिष्टहेतुमत्त्वबोधकस्योपनयस्य यत्र च पक्ष-साध्ययोस्तादृप्येण दृष्टान्तत्वहेतुत्वाभ्यामुपन्यासस्तादृशसिषाध-यिषया च न्यायप्रयोगस्तत्रोदाहरणोपनययोर्यत्र वा पर्वतत्वा-द्यवच्छेदेन साध्यसिद्धेरुद्देश्यतायामेतत्पर्वतत्वादिना दृष्टान्तस्यो-पन्यासस्तत्रोदाहरणस्य सत्यन्तस्य चावयवघटकन्यायान्तर्गत-त्वपरतया हेत्वन्तस्यायमादिनिगमनान्तभागस्य वारणाय तत् ।

यद्यपि सर्वमभिधेयं प्रमेयमित्यादावतिरिक्ताप्रसिद्धिः । न च कोऽप्यप्रसिद्ध्या प्रमेयं न वेति विप्रतिपत्तेः संशयस्य चायोगान्न तादृशी प्रतिज्ञा प्रकृतानुमितिविषयतासमव्याप्तविषयताकत्वं प्र-कृतानुमितिप्रकारतासमव्याप्तप्रकारताकत्वं वा वक्तव्यमिति वाच्यम् । सकलाभिधेयवृत्तिधर्मत्वस्य सकलाभिधेयनिष्ठात्यन्ता-भावाप्रतियोगित्वाकाशाभाववद्वा इदं द्रव्यमित्यादौ विशिष्टपक्षतो-

धके उपनयेऽतिव्याप्तेः।-

तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्याविषयत्वं तदन्यून-विषयत्वम् ।

मिश्रमतमुपन्यस्यति यत्त्विति । पृथिवी इतरेभ्यो भिद्यते इत्यसमस्तमितरपदं पृथिवीतरपरम् इतरादिसम्बन्धिकार्थबोधकपदानां समभिव्याहृततत्तत्पदोपस्थाप्यतत्तदर्थेतरत्वादिना निरूढलक्षणाश्रतो वाक्यवाक्ये स्वारसिकलक्षणाविरहेऽपि न क्षतिः । प्रतिज्ञापदादौ सर्वत्रैकेनैव पदेन साध्यादिनिर्देश इति न नियमः, तेन नाग्रे यत्र पृथिवीतरेभ्यो भिद्यत इत्युदाहरणप्रयोगविरोधः । विशेष्यवाचक पृथिवीतिपदान्तरं पूरणीयम् । श्रुतपदं समस्तमित्येव वा । उदाहरणवारणायेति । तज्जन्यबोधेऽपि पक्षसाध्याश्रयत्वात्मकतत्सम्बन्धरूपानुमितिविषयसकलपदार्थभानेनान्यूनविषयकत्वसत्त्वादित्यभिमानः । तत्-अनतिरिक्तेतिपदम् ।

अन्यूनविषयकत्वं हि न प्रकृतानुमितिविषयताव्यापकविषयताकत्वम्-सर्वस्मात्कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेत्ववयवेऽतिव्याप्तेः, नापि पक्षतावच्छेदकविशिष्टपक्षविषयकत्वम्-हेतुत्वं प्रमेयत्वाभाववत्त्वाभावप्रमेयत्वादित्यादौ हेत्ववयवेऽतिव्याप्तेः । नापि पक्षतावच्छेदकविशिष्टविषयकत्वे सति साध्यतावच्छेदकविशिष्टसाध्यविषयकत्वं तद्वैशिष्ट्यविषयकत्वं वा-प्रमेयनिष्ठं हेतुत्वं प्रमेयं प्रमेयादित्यत्र हेतावतिव्याप्तेः-तज्जन्यबोधे प्रमेयत्वत्वरूपसाध्यतावच्छेदकविशिष्टस्य प्रमेयपदार्थतावच्छेदकस्य धर्मिणि वैशिष्ट्यभानादिति, पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वं तत् वाच्यम्, तथा च नोक्तोदाहरणातिव्याप्तिरित्याशयेन दूषयति तत्तुच्छमिति । ननु भ्रान्तः पृथिवीपदस्य विशेष्यपरत्वमितरपदस्य पृथिवीतरपरत्वमवगम्य तादृशोदाहरणात् पृथिवीत्वविशिष्टे साध्यवत्त्वं प्रत्येतीति तत्रातिव्याप्तिप्रसक्तिरित्यत आह तात्पर्यभ्रमेणेति । तादृशेति । अन्यूनविषयकेत्यर्थः । अतिप्रसक्तत्वात्-तथा चायमित्याद्याकारकसाध्यवत्त्वपरत्वभ्रमाविषयसर्वनामपदघटितोपनयेऽविव्याप्तत्वाच्च । तात्पर्यभ्रमदशायामपि नातिव्याप्तिप्रसी-

धके उपनयेऽतिव्याप्तेः।

तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्याविषयत्वं तदन्यूनविषयत्वम् ।

मिश्रमतमुपन्यस्यति यत्त्विति । पृथिवी इतरेभ्यो भिद्यते इत्यसमस्तमितरपदं पृथिवीतरपरम् इतरादिसम्बन्धिकार्थबोधकपदानां समभिव्याहृततत्पदोपस्थाप्यतत्तदर्थेतरत्वादिना निरूढलक्षणातो वाविचाक्ये स्वारसिकलक्षणाविरहेऽपि न क्षतिः । प्रतिज्ञापदादौ सर्वत्रैकेनैव पदेन साध्यादिनिर्देश इति न नियमः, तेन नात्र यत्र पृथिवीतरेभ्यो भिद्यत इत्युदाहरणप्रयोगविरोधः । विशेष्यवाचकं पृथिवीतिपदान्तरं पूरणीयम् । श्रुतपदं समस्तमित्येव वा । उदाहरणवारणायेति । तज्जन्यबोधेऽपि पक्षसाध्याश्रयस्वात्मकतत्सम्बन्धरूपानुमितिविषयसकलपदार्थभानेनान्यूनविषयकत्वसत्त्वादित्यभिमानः । तत्–अनतिरिक्तेतिपदम् ।

अन्यूनविषयकत्वं हि न प्रकृतानुमितिविषयताव्यापकविषयताकत्वम्–सर्वस्मात्कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेत्ववयवेऽतिव्याप्तेः, नापि पक्षतावच्छेदकविशिष्टपक्षविषयकत्वम्–हेतुश्च प्रमेयत्ववाचाच्यत्ववान् प्रमेयत्वादित्यादौ हेत्ववयवेऽतिव्याप्तेः । नापि पक्षतावच्छेदकविशिष्टविषयकत्वे सति साध्यतावच्छेदकविशिष्टसाध्यविषयकत्वं तद्वैशिष्ट्यविषयकत्वं वा–प्रमेयनिष्ठ हेतुश्च प्रमेय प्रमेयादित्यत्र हेतावतिव्याप्तेः–तज्जन्यबोधे प्रमेयत्वत्वरूपसाध्यतावच्छेदकविशिष्टस्य प्रमेयपदार्थतावच्छेदकस्य धर्मिणि वैशिष्ट्यभानादिति, पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वं तत् वाच्यम्, तथाच नोक्तोदाहरणातिव्याप्तिरित्याशयेन दूषयति तत्तुच्छमिति । ननु भ्रान्तः पृथिवीपदस्य विशेष्यपरत्वमितरपदस्य पृथिवीतरपरत्वमवगम्य तादृशोदाहरणात् पृथिवीत्वविशिष्टे साध्यवत्त्व प्रत्येतीति तत्रातिव्याप्तिप्रसक्तिरित्यत आह तात्पर्यभ्रमेणेति । तादृशेति । अन्यूनविषयकेत्यर्थः । अतिप्रसक्त्वात्–तथाचायमित्याद्याकारकसाध्यवत्त्वपरत्वभ्रमाविषयसर्वनामपदघटितोपनयेऽव्याप्तत्वात् । तात्पर्यभ्रमदशायामपि नातिव्याप्तिप्रसी-

न विरोधः अनुमेयोपस्थितिनत्वार्थज्ञानद्वयबोधस्याप्युत्पन्नतया तन्मात्रस्यावबोधकत्वेन, वाक्यत्वाभावादिति वाच्यम्। एतन्मते तादृशनियमतानभ्युपगमात्। यद्वा न्यूनातिरिक्तविषयकत्वानिवेशे अन्यूनविषयकबोधजनकत्वं तज्ज्ञानकज्ञानविषयत्वं वा न्यायावयवत्वनिवेशे प्रतिज्ञाहेत्वादिजन्यबोधमादाय हेत्वादावतिप्रसक्तम्, तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किञ्चिज्ज्ञानविषयतावद्वर्णसमुदायत्वनिवेशे नायं दोष इति स्थलान्तरे व्यावृत्तिमाह तद्धेत्वादिना। भाने-ज्ञाने, सामान्यतः-अधिकरणत्वरूपसामान्यधर्मावच्छिन्ने विशेषरूपानवच्छिन्ने इति वा। साध्यवत्त्वभानात्-साध्यवत्त्वविषयकत्वात्, उपनयस्य वारणाय तदिति योजना। पक्षे साध्यावगाहित्वावगाहिधर्मेणान्यूनविषयकत्वं न तु पक्षतावच्छेदकवैशिष्ट्यान्तर्भाव-इत्यभिप्रायेणेदम्। प्रमेयाद्व्यापकत्ववानयं प्रमेयः प्रमेयादित्यादिहेतुवारणाय पक्षतावच्छेदकवैशिष्ट्यान्तर्भाव आवश्यक इति तदन्तर्भावाभिप्रायेण स्थलान्तरव्यावृत्तिमाह यत्र चेति। पक्षेति पक्षस्य ताद्रूप्येण पक्षतावच्छेदकप्रकारेण दृष्टान्ततया यत्रोपन्यासः तथोदाहरणस्य साध्यस्य ताद्रूप्येण साध्यतावच्छेदकप्रकारेण हेतुतया यत्रोपन्यासः तत्रोपनयस्य वारणाय तदित्यर्थः। रूपान्तरेण पक्षसाध्ययोर्दृष्टान्तहेतुत्वाभ्युपन्यासे दर्शितान्यूनविषयकत्वासम्भव इति ताद्रूप्येणेति। ननु पक्षे साध्यनिश्चयदशायामेव तादृशदृष्टान्तहेतुसम्भव इति तत्र संशयाभावान्न्याय एव न सम्भवतीत्यत आह तादृशसिषाधयिषयेति। अन्यदपक्षे संशयस्यावश्यकत्वेऽपि वादस्थले न तथेति संशयमन्तरेणापि अनुमित्साधीनानुमितिनिर्वाहाय न्यायप्रयोगसम्भवादिति भावः।

ननु सिषाधयिषया न्यायप्रयोगोपगमे पक्षस्यार्थहेतुत्वे यादृशसंशयेन प्रकृतपर्वतस्यान्वयव्यतिरेकरूपेण वह्निसाध्यकहेतुत्वपक्षकवह्निहेतुकन्यायप्रयोगानहेत्वयथार्थत्वनिश्चायकपौर्वापर्येति सिषाधयिषया न्यायप्रयोगो नाङ्गीकर्तव्य इत्यत उक्तव्यावृत्तिर्न सङ्गच्छत इत्यतः स्थलान्तरमनुसरति यत्र चेति। पर्वतपक्षसामानाधिकरण्येन साध्यसिद्धौ इष्टता तथाऽप्यसत्त्वविशिष्टस्य दृष्टान्ततया न सम्भवति एतत्पक्षत्वेन

साध्यवत्तानिश्चयस्यापि तादृशानुमितिविरोधित्वादतः पर्वतत्वाव-च्छेदेनेति । तत्रोदाहरणस्येति । यद्यपि पर्वतत्वावच्छेदेन वह्निमत्ताव-गाहिन्यामनुमितौ पर्वतत्वव्यापकत्वस्य वह्न्यंशे भानात्तादृशदृष्टान्त-घटितोदाहरणजन्यबोधे च तद्भानात्तुद्दृशानुमितिन्यूनविषयकत्वमे-व, तथापि पक्षतावच्छेदकविशिष्टसाध्यतावच्छेदकविशिष्टवैशिष्ट्या-वगाहित्वरूपं निर्वाच्यमन्यूनविषयकत्वमक्षतमेवेति भावः । यद्यपि पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नवैशिष्ट्या-वगाहित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयतानिवेशे उदाहरणैकदेशे एव तादृशविषयता न तु समुदाय इति न्यायावय-वत्वनिवेशान्नातिव्याप्तिप्रसङ्गः, तथापि प्रतिज्ञामात्राघटकत्वगर्भे न्या-यावयवत्वं प्रकृतलक्षणे प्रविष्टम्, तच्च यथायं पर्वत इत्युदाहरणैकदे-शेपीत्याशयः । अवच्छेदकावच्छेदेन अनुमितिस्थलीयन्यायनिवि-ष्टप्रतिज्ञालक्षणेऽवच्छेदकावच्छेदेन साध्यवैशिष्ट्यावगाहित्वरूपान्यू-नविषयकत्वनिवेशाने नैतद्याबृत्तिसङ्गतिरित्यपरितोषेण व्याचष्टयन्त-रमाह सत्यन्तस्येति । अयमाशयः । एतल्लक्षणघटकन्यायावयवत्वश-रीरे उभयघटकभागद्वयाघटितत्वं न निवेशनीयम्—अनतिरिक्तविषय-कत्वविशेषणेनैव तादृशभागद्वयघटितसमुदायेऽतिप्रसङ्गवारणात् । न च शाब्दज्ञानस्यैव शाब्दबोधजनकतया जनकत्वमत्र जनकज्ञानविषय-त्वमेव वाच्यम्, एवञ्च तादृशसमुदायविषयकज्ञानमप्येकदेशप्रतिज्ञा-विषयकत्वेन तथाविधबोधजनकमिति समुदायेऽतिप्रसङ्ग इति वाच्यम् तादृशबोधजनकतावच्छेदकीभूतयत्किञ्चिदेकज्ञानविषयितानिरूपक-वर्णसमुदायत्वस्यैव विवक्षणीयत्वात् । न च तादृशवर्णसमुदायत्वं तादृशवर्णत्वव्यापकसमुदायत्वम्, तादृशं च प्रतिज्ञाहेतुसमुदायत्वम-पीति तत्समुदायेऽतिप्रसङ्ग एवेति तादृशभागद्वयाघटितत्वमवश्यमेव निवेश्यमिति वाच्यम् । अनतिरिक्तपदसार्थक्याय तादृशयत्किञ्चिज्ज्ञा-नविषयताशालिवर्णत्वसमनैयत्यमेव निवेश्य प्रतिज्ञाहेत्वादिसमुदाय-त्वस्य वारणीयत्वात् । समानार्थकप्रतिज्ञाद्वयादिविषयकयत्किञ्चि-ज्ज्ञानविषयताश्रयवर्णत्वसमनैयत्यस्य तादृशप्रतिज्ञाद्वयादिपर्याप्तस-मुदायत्वे सत्त्वेपि न क्षतिः—तदुभयादावपि प्रतिज्ञाव्यवहारात् । अ-पि तु प्रतिज्ञैकदेशस्यापि तादृशबोधनिष्ठवह्निसम्बन्धिबुद्धित्वावच्-छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतयत्किञ्चिदेकज्ञानविषय-

साध्यवर्णसमुदायत्वमादायैव प्रतिज्ञात्वप्रसङ्ग इति प्रतिज्ञाघटकत्वं प्रतिज्ञामात्राघटकत्वं वा निवेशनीयम् । अन्यूनानतिरिक्तविषयकज्ञानप्रयुक्तिविषयस्य किञ्चिज्जन्यतानवच्छेदकतया तदवच्छिन्ननिरूपितजनकतानिवेशासम्भवात् । इत्थं चानुषङ्गपक्षेऽप्ययं तस्माद्वह्निमान् इति भागे प्रतिज्ञादिहेत्वन्तभागे च व्यावृत्तिः सम्भवतीति अवयवाघटकेति । न च तदुपादानेऽपि धूमादालोकवान् पर्वतो वह्निमानित्यादिप्रतिज्ञार्थमात्रविषयकबोधजनकधूमविशेषितहेतुत्वविषयकशाब्दत्वावच्छिन्नकारणधूमादित्यादिहेतुविषयकज्ञानविषयतामादायावयवाघटके तादृशहेत्वावलिव्याप्तिवारणायानतिरिक्तविषयकबोधजनकतावच्छेदकावच्छिन्नविषयकसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वावच्छिन्नजनकतावच्छेदकयत्किञ्चिज्ज्ञानीयविषयतानिरूपकवर्णसमुदायत्वनिवेशस्यावश्यकतयाऽवयवाघटकत्वनिवेशनं निष्प्रयोजनमिति वाच्यम् । तादृशहेतुवारणायावयवाघटक इत्यनेनावयवैकदेशमात्रविषयकज्ञाननिष्ठजनकतावच्छेदकावृत्तावयवत्वपर्याप्त्यवच्छेदकयत्किञ्चिद्धर्मव्यापकविषयताकान्यज्ञानवृत्तित्वावच्छिन्नभेदस्यैवान्यूनानतिरिक्तविषयकबोधजनकतायां विवक्षणीयत्वात् । अवयवत्वं चेह न्यायान्तर्गतत्वविशेषणशून्यम्, तेन प्रतिज्ञासमानाकारोदासीनवाक्यज्ञाने प्रतिज्ञाज्ञानीयकारणतायाः सत्त्वेऽपि तत्सङ्ग्रहः तादृशोदासीनवाक्येऽपि तथाविधावयवत्वपर्याप्तेरिति ।

वस्तुतस्तु अवयवत्वघटकविशेष्यपरित्यागमात्रेणैव व्यावृत्तिसङ्गच्छत इति तादृशजनकतापर्यन्तनिवेशने प्रतिज्ञाघटकत्वदलपरित्यागसम्भवेऽपि तत्परित्यागस्य प्रकृतानुपयुक्तत्वमित्येतल्लाभायैवावयवाघटकेत्यभिहितमिति ।

केचित्तु यत्र प्रतिज्ञैकदेशस्यापि कथञ्चित्प्रतिज्ञासमानार्थकत्वं सम्भवति तत्रैकदेशेऽतिप्रसङ्गवारणायावयवाघटकत्वनिवेशनमावश्यकमित्याहुः । तदसत् । प्रतिज्ञाप्रतिपाद्यविशिष्टार्थप्रतिपादकताया एकदेशे सम्भवेऽपि तन्मात्रस्य तथाविधबोधपरत्वाभावात् तथात्वे समुदायप्रयोगानुपपत्तेः, कथंचित्तत्प्रयोगेऽपि समुदायमन्तर्भाव्य न्यायत्वानङ्गीकारात् । अप्रकृतार्थपरवाक्यवारणाय च वास्तवतथा-

विधतात्पर्यपरतायास्तल्लक्षणेऽवश्यं निवेशनीयतया एकदेशमात्रस्य तादृशार्थपरत्वाभावेनाऽतिप्रसङ्गानवकाशादिति ।

इत्यन्तस्यार्थः । क्वचित्तान्यूनविषयकत्वावच्छिन्नजन्यतानिरूपितजनकतानिवेशने तत्तद्भागप्रतिपाद्यविशिष्टार्थबोधजनकत्वमादाय केवलहेत्वादावतिव्याप्तिर्न सम्भवति तादृशजनकताश्रययत्किञ्चिज्ज्ञानविषयवर्णसमुदायत्वस्य तत्पर्याप्तेरतो हेतुमात्रनिगमनमात्रे उपेक्षिते ॥

अन्यूनानतिरिक्तविषयकत्वस्य प्रकृतानुमितिविषयस्यान्यूनः सन्ननतिरिक्तो विषयो यस्येति व्युत्पत्तेरनुमितिविषयनिष्ठभेदप्रतियोगितानवच्छेदकत्वे सत्यनुमितिविषयातिरिक्तावृत्ति यद्विषयत्वं तत्त्वमिति यथाश्रुतार्थमाक्षिपति यद्यपीति । यद्यपि प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकयत्किञ्चिदनुमित्यविषयविषयकत्वं पर्वतो वह्निमानित्यादिप्रतिज्ञाजन्यानेखिलबोधानामेवेति तादृशानुमितिविषयत्वसामान्याभावो विवक्षणीयः तथाच केवलाभिधेयत्वाद्यवच्छिन्नपक्षकस्थलेऽप्यतिरिक्ताप्रसिद्धिरस्त्येव, तथाप्यप्रसिद्धिं स्फुटीकर्त्तुमभिधेयत्वाद्यवच्छिन्नपक्षकप्रमेयत्वत्वाद्यवच्छिन्नसाध्यकस्थले विश्वमेवानुमितिविषय इत्येतल्लाभाय सर्वमित्युक्तम् । 'सर्वेभ्यो दर्शपूर्णमासा'वित्यत्रैव प्रक्रान्तकतिपयपदार्थमात्रवृत्तिसर्वत्वावच्छिन्नतात्पर्येणापि विशेष्यवाचकपदान्तरासमभिव्याहृतसर्वपदप्रयोगसम्भवात् सर्वं प्रमेयमित्युक्तावनुमितिविषयतायाः केवलान्वयित्वालाभादभिधेयमित्युक्तम् । एवञ्च किञ्चिद्धर्मावच्छिन्नांशेऽभेदेन स्वार्थविशेषणकबाधपरसर्वशब्दस्य तद्धर्मव्यापकाविधेयव्याप्यसर्वत्वबोधकताव्युत्पत्तेरभिधेयत्वव्यापकसर्वत्वलाभान्नानुमितेः कतिपयवस्तुमात्रविषयकत्वशङ्केति भावः । अतिरिक्ताप्रसिद्धेः-प्रकृतानुमितिविषयतातिरिक्ताप्रसिद्धेः । प्रमेयत्वं पक्षनिष्ठाभावप्रतियोगि न वेति संशयसम्भवेन तादृशप्रतिज्ञासम्भव इत्यतस्तत्सम्प्रहायान्यूनानतिरिक्तविषयकत्वमन्यथा निर्वक्ति प्रकृतेति । स्वविषयताव्यापकप्रकृतानुमितिविषयताव्यापकविषयताकत्वमर्थ:—स्वविषये अनुमितिविषयान्यूनत्वस्य स्वविषयत्वे तद्विषयताव्यापकत्वपर्यवसितत्वात् । स्वविषयेऽनुमितिविषयानतिरिक्तत्वस्य च तद्विषयत्वे स्वविषयताव्यापक-

स्वपर्यवसितत्वादिति भावः । यद्यपि समूहालम्बनरूपपर्वतपक्षकवह्निविधेयकानुमितिविषयितायाः विरहवृत्तितया पर्वतो वह्निमानिति प्रतिज्ञामात्रजन्यबोधो न तादृशानुमितिविषयतासमनियतविषयताकः वाक्यान्तरसहितजन्यसमूहालम्बनबोधजनकयत्किञ्चिज्ज्ञानविषयवर्णसमुदायत्वं च न तन्मात्रपर्याप्तम्, यत्किञ्चित्प्रकृतानुमितिव्यक्तिविषयतासमनैयत्यस्य विवक्षणेऽपि च निगमनादावतिव्याप्तेर्दुर्वारैव—तज्जन्यबोधस्यापि पर्वतो वह्निमान् धूमज्ञानव्याप्यवह्निमांश्चेत्याकारकसमूहालम्बनानुमितिसमनियतविषयताकत्वात्, तथापि प्रकृतपक्षकप्रकृतसाध्यव्याप्यवत्तापरामर्शत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकविषयताशालित्वेन यद्विषयतासमनैयत्यं तस्यैव विवक्षितत्वान्न दोषः । नन्वेवमप्युक्तस्थलीयोपनयेऽतिव्याप्तिः तज्जन्यबोधस्यापि विरुद्धविषयकत्वेन तथाविधानुमितिविषयतासमनियतविषयताकत्वादित्यतो विषयपदस्य प्रकारत्वाभिप्रायेणाऽन्यथा तदर्थं निर्वक्ति प्रकृतेति । तादृशोपनयजन्यबोधे प्रकारीभवतोऽभावत्वादेस्तादृशानुमितावप्रकारत्वान्न तत्प्रकारतायाः समनैयत्यमिति नातिव्याप्तिरिति भावः । सकलेति । सकलाभिधेयवृत्तिधर्मवदिदं द्रव्यमिति योजना । तादृशानुमिताविव एतत्स्थलीयोपनयजन्यबोधे विरुद्धस्यैवाभिधेयत्वेन प्रकारतया तत्प्रकारतायाः समनैयत्यमक्षतमेवेति भवत्यतिव्याप्तिरिति भावः । ननु विशेषणानवच्छिन्नप्रकारतानां समनैयत्यं विवक्षणीयमतो नातिव्याप्तिः उपनयजन्यबोधेऽभावत्वादेः तादृशप्रकारतासत्त्वादुक्तानुमितेस्तादृशप्रकारताया अप्रसिद्ध्या चोक्तानुमितावपि तेषां तथाविधप्रकारतावत्त्वाय स्थलान्तरेऽतिव्याप्तिमाह सकलाभिधेयेति । तत्राभावत्वप्रतियोगित्ववत्त्वादीनां स्वरूपतः पक्षतावच्छेदकघटकत्वात्प्रकृतिप्रकारत्वमिति भावः । द्रव्यमिति विपरीतकोटिप्रसिद्ध्यर्थं । विशिष्टपक्षबोधक इति । उपनयस्थलपदेन विशेष्यमात्रपरामर्शोऽन्यूनविषयकत्वं न सम्भवतीति भ्रमनिराकरणाय व्याप्तिशरीरे साधनसाध्यप्रकारेणैव तदधिकरणान्तर्भावः, न त्वधिकरणत्वेनापीत्यनुमितौ तस्य तत्त्वस्य वा स्वरूपतः प्रकारत्वविरहेऽपि नासङ्गतिः । हेतुरत्र द्रव्यं समवायेन द्रव्यत्वेन वा बोध्यम् । गुणादेस्तथात्वे हेतुतावच्छेदकगुणत्वादेः स्वरूपत उपनयजन्यबोधे भाने कथितप्रकारता-

समनैयत्यानुपपत्तेः। न चाभेदेन विषयतासमनैयत्योक्तौ अनुमितिविषयतात्वसमनियतस्वाविषयतात्वकत्वोक्तौ वा नायं दोष इति वाच्यम्, हेत्वर्थघटितार्थकप्रतिज्ञाघटितन्यायान्तर्गतहेतुजन्यबोधविषयताया अनुमितिनिरूपितविषयतात्वाभावात् अनुमितिविषयतात्वव्यापकस्वविषयतात्वकत्वाभावादेव तादृशबाधवारणसम्भवेनान्यूनविषयकत्वांशवैयर्थ्यापत्तेः, न हि साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नविषयताबहिर्भूतविषयता अनुमितिनिरूपिता। समूहालम्बनानुमितिनिरूपितविषयत्वमादाय तु नातिप्रसङ्गावकाशः—प्रकृतपरामर्शजन्यतावच्छेदकविषयतात्वस्यैव निवेशनीयत्वात्, अन्यथाऽसम्भवापातादिति। उपनयविशेषातिव्याप्त्यभिधानं चोपलक्षणपरम्। अन्यूनविषयकत्वस्य निरुक्तार्थकत्वे सर्वस्मात्कालत्ववानयं कालपरिमाणवान् सर्वस्मादित्यत्र हेत्ववयवेऽतिव्याप्तिर्बोध्या—तज्जन्यबोधविषयतायाः विश्ववृत्तित्वेनानुमितिविषयताव्यापकत्वात्। एवं तादृशान्यूनविषयकत्वस्य किञ्चिज्जन्यतानवच्छेदकत्वेन तदवच्छिन्नजन्यताविवक्षणाऽसम्भवेन प्रतिज्ञाहेतुजन्यसमूहालम्बनबोधमादाय तन्निष्ठहेत्वर्थविषयकत्वावच्छिन्नजन्यतानिरूपकजनकताश्रये धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ हेत्ववयवेऽतिव्याप्तिर्दुर्वारा। तथा अनवच्छिन्नप्रकारताव्यापकतादृशप्रकारताकत्वविवक्षयापि वारणासम्भवादित्यपि बोध्यम्।

एतद्दोषवारणाय प्रथमतोऽनुमित्यन्यूनविषयकत्वमन्यथा निर्वक्ति तथापि प्रकृतेति। एतच्च पक्षतावच्छेदकविशिष्टार्थकम्, तदनुपादाने प्रमेयाद्यन्यत्ववानयं प्रमेयः प्रमेयादित्यादौ हेत्ववयवे यत्किञ्चिद्धर्मावच्छिन्नत्वोपादानेऽपि घटान्यत्ववद्रूपघटान्यतरस्माद् घटान्यत्ववत्सधर्म्मा घटो घटान्यत्ववानित्याकारिका या सामानाधिकरण्यसम्बन्धेन घटान्यत्वसाध्यकप्रतिज्ञा तद्घटितन्यायान्तर्गते रूपघटान्यतरत्वावच्छिन्नांशे सामानाधिकरण्यसम्बन्धेन विशेषणतापन्नघटान्यत्वघटिततादृशसम्बन्धावच्छिन्नहेतुके विशिष्टान्यतररूपहेतुप्रतिपादकहेत्ववयवेऽतिव्याप्तिः। घटत्वादौ सामानाधिकरण्यसम्बन्धेन रूपवति व्यभिचारवारकतया घटान्यत्वात्मकविशेषणस्य चाभेदेन च विशेष्यस्य घटान्यतरसमानाधिकरणसत्त्वसमा-

माधिकरणे घटरूपादौ व्यभिचारवारकतया तत्र विशेष्यतावच्छेदकस्य सार्थक्यमित्यवधेयम् । सामानाधिकरण्यसम्बन्धस्य वृत्त्यनियामकतया व्यापकत्वाघटकत्वेऽपि नित्यद्रव्यावृत्तिधर्मशून्यत्वाभिरवयवं गगनं नित्यद्रव्यावृत्तिधर्मशून्यत्वात् वह्निमत्पर्वतावृत्तिधर्मशून्यत्वादालोकवान् पर्वतो वह्निमान् वह्निमत्पर्वतावृत्तिधर्मशून्यत्वादित्यादौ हेत्ववयवेऽतिव्याप्तिवारणाय पक्षतावच्छेदकांशप्रवेशनमावश्यकम् अखण्डाभावघटकतया हेतुघटकद्रव्यत्वपर्वतत्वादीनामवैयर्थ्यम् ॥

(दी०) प्रकृतपञ्चम्यर्थपक्षकप्रतिज्ञादिस्थले तु पक्षे प्रकृतपक्षस्य वैशिष्ट्यबोधको हेतुर्न तु प्रकृतसाध्यस्य, तादृशविषयताविलक्षणविषयताशून्यत्वं प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिकवाक्यार्थविषयकत्वं वा तदनातिरिक्तविषयत्वम् । वह्निव्याप्यालोकवत्सधर्मा पर्वतो वह्निमान् धूमादिन्धनव्याप्यधूमवान् पर्वतो वह्निमान् धूमादित्यादौ तस्याः सङ्ग्रहाय प्रकृतहेतुसाध्ययोरुपादानम् । वह्निव्याप्यधूमवान् पर्वतो वह्निमान् धूमात् सत्त्वादिव्याप्यद्रव्यत्ववदिदं सत्तावद्द्रव्यत्वादित्यादिस्तु न प्रयोगः—विशिष्टपक्षोपस्थापकादेव तादृशव्याप्तिप्रतीतावाकाङ्क्षाविरहेणोदाहरणाद्युत्थानात्, अन्यथातिप्रसङ्गात् । अत एव नैकदोभयव्याप्त्युपन्यासोऽपि ।

यदि च मैत्रः पचति अयं गौरित्यादेरेव प्रतिज्ञाया यथोपवर्णितविशिष्टज्ञानजनकत्वं तादात्म्येन गोः साध्यत्वात् गोत्वस्वाद्यनुपस्थित्या गोत्वादेः साध्यत्वानुपपत्तेः पदार्थतावच्छेदकजातौ हेत्वर्थान्वयायोगाच्च, वह्निमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य वह्नेः संयोगात्मकः सम्बन्धो भासते तथैव वह्निव्याप्यधूमवानित्याद्युपनयसङ्गमात् शाब्दभाने तु वह्निमतोऽभेद एवं भेदे साध्ये भिद्यते भिन्नमित्यादावपि वैलक्षण्यमिति सूक्ष्म-

मंस्यते, तदा यादृशपक्षसाध्यकाः पक्षे यादृशयादृशविशिष्टार्थबोधिकाः प्रतिज्ञाः सम्प्रदायप्रसिद्धाः तादृशानां बोधानामन्यतमेनाप्यनिवर्त्यस्य संशयस्यानिवर्त्तको यस्तादृग्बोधानामन्यतमो बोधस्तज्जनकत्वं वक्तव्यम्। एवञ्च तादात्म्येन गवि साध्ये पक्षे, गवाभेदस्य संयोगेन समवायेन वा वह्नौ वह्न्यभेदस्य समवायेन पाकस्य कृतौ पाककृतिमत्त्वस्य पाककर्त्रभेदस्य विशेषणतयेतरेभ्यो भेदे इतरभेदवत्त्वत्वस्येतरान्याभेदस्येतरभेदवत्त्वस्येतरभिन्नाभेदस्य च बोधा विशिष्य वक्तव्या इति दिक्।

तादृग्बोधानिवर्त्यसंशयानिवर्त्तकतादृग्बोधनिवर्त्यमात्रसंशयनिवर्त्तकबोधजनकत्वं वाच्यमित्यपि कश्चित्॥

(गा०) साध्यतावच्छेदकविशिष्टसाध्यनिर्देशप्रयोजनमाह पञ्चम्यर्थेति। हेतुत्वं प्रमेयाद्याकारत्ववत्प्रमेयादित्यादौ हेतुजन्यबोधस्य विभक्त्यर्थहेतुत्वे प्रमेयाद्यात्मकप्रकृत्यर्थवैशिष्ट्यावगाहित्वेऽपि प्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यानवगाहित्वादतिव्याप्तिरित्यर्थः। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वमेव पर्यवसितार्थः। सम्बन्धविशेषघटितदले न प्रवेश्यः प्रयोजनविरहादतः पञ्चम्यर्थे प्रकृत्यर्थस्य यादृशसम्बन्धेनान्वयस्तस्य वृत्त्यनियामकतया व्यापकत्वाघटकत्वेऽपि नैतद्व्याप्त्यसङ्गतिः। यदि च जन्यग्रहविषयत्वरूपपञ्चम्यर्थैकदेशजन्यत्वे प्रकृत्यर्थस्य हेतुज्ञानस्यान्वयः न तु परम्परासम्बन्धेन तादृशविषयत्वे, तदा जन्यत्वपक्षकोक्तसाध्यहेतुकस्थले व्यावृत्तिर्बोध्या-पक्षमुख्यविशेष्यकत्वपर्यन्तानिवेशात्, न तु तादृशविषयत्वत्वावच्छिन्नपक्षकस्थले हेतुजन्यबोधस्य तादृशविशिष्टपक्षे इतरवैशिष्ट्यानवगाहित्वात्। तादृशविषयताविलक्षणेति। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताविलक्षणत्वमर्थकम्। तद्विलक्षणत्वं च न तद्भिन्नत्वं प्रतिज्ञाजन्यबोधीयसाध्यादिविषयतायास्तद्भिन्नत्वेनासम्भवापातात्। तादृशविषयताभिन्नमुख्यविशेष्यताशून्यत्वनिवेशेनासम्भवापा-

रणेऽपि निगमनानिष्पाप्तिरादेवस्यात् अन्यूनविषयकत्वदलवैयर्थ्यं च । धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ हेत्ववयवजन्यबोधीयहेतुत्वनिष्ठमुख्यविशेष्यतायास्तादृशविषयताभिन्नत्वात् । एतेन तादृशविशिष्टविषयतानन्तःपातित्वं, प्रकृतपरामर्शजन्यतानवच्छेदकत्वं वा तदित्यपि निरस्तम्—उक्तस्थले, आलोकांशे हेतुत्वप्रकारताया एव तादृशविषयतानन्तःपातित्वात्प्रकृतपरामर्शजन्यतावच्छेदकत्वाच्च हेतुजन्यबोधीयतद्विषयतायाः, अतथात्वात् । न च तथाविधविषयतावच्छेदककोटिप्रविष्टधर्मावच्छिन्नविषयताशून्यत्वविवेशान्न दोष, इत्यपि न साधु—यत्र प्रमेयसामान्यस्य पक्षतावच्छेदकादिघटकता तत्र तादृशविषयतावच्छेदककोटिप्रविष्टाप्रसिद्धेः । विलक्षणावच्छेदकताविवक्षेऽपि द्रव्यत्वाद्धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादिन्यायघटकनिगमनादावतिव्याप्तिरुक्तजन्यबोधीयविषयतावच्छेदकधूमत्वादेस्तादृशविषयतावच्छेदककोटिप्रविष्टत्वनियमात् । अपि तु तादृशविषयताशालिनिश्चयत्वावच्छिन्नानिवर्त्यसंशयनिवर्तकतावच्छेदकत्वमेव तत् निगमनादिजन्यबोधीयज्ञानज्ञाप्यत्वादिविषयतायास्तादृशनिश्चयत्वावच्छिन्नानिवर्त्यज्ञानज्ञाप्यत्वादिसंशयनिवर्तकतावच्छेदकतया तद्वारणम् । उक्तहेत्ववयवजन्यबोधनिवर्त्यस्य हेतुत्वं धूमीयं न वेत्यादिसंशयस्य धूमादिज्ञानज्ञाप्यत्वादिघटितपक्षतावच्छेदकावच्छिन्नपक्षकसाध्यतावच्छेदकावच्छिन्नप्रकारकनिश्चयनिवर्त्यतया तादृशबोधविषयतायां न तथाविधविषयताविलक्षणत्वेऽप्यन्यूनपदस्य व्यावृत्तिसङ्गतिः । सर्वेषामेव संशयानां स्वविरोधिविषयकत्वव्याविधविषयताशालिसमूहालम्बननिश्चयनिवर्तनीयतया तादृशनिश्चयानिवर्त्यसंशयाप्रसिद्धिरतस्तादृशनिश्चयत्वावच्छिन्नेति । इत्थं च अधिकमवगाहमानेऽपि निगमनजन्यबोधे साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षविषयकत्वस्याक्षतया धूमज्ञानज्ञाप्यत्वादिसंशयस्य तादृशविषयताशालिनिश्चयानिवर्त्यत्वानुपपत्तिरित्यपि समाहितम् । अवच्छिन्नत्वं चान्यूनवृत्तित्वं व्यापकत्वपर्यवसितम्, अतो ज्ञानज्ञाप्यत्वं, धूमीय न वेति संशयनिरूपितप्रतिबन्धकतायां धूमज्ञानज्ञाप्यत्वातिरिक्तप्रतिज्ञाप्रतिपाद्यमानविषयताघटितधर्मस्य स्वरूपसम्बन्धरूपावच्छेदकत्वविरहेऽपि वान्यूनपदव्यावृत्त्यसङ्गतिः अप्रामाण्यज्ञानास्कन्दितस्य

निगमनादिजन्यबोधस्य संशयाप्रतिबन्धकतया तज्जनकत्वमादाया-तिप्रसक्तस्य वारणाय तादृशसंशयानिवर्त्तकत्वमुपेक्ष्य तन्निवर्त्तकता-वच्छेदकविषयताशून्यत्वेन बोधो विशेषितः । पक्षतावच्छेदकाद्य-निवेशे तदनवच्छिन्नपक्षादिविषयताशालिनिश्चयसमुदायस्य कमपि संशयं प्रत्यप्रतिबन्धकतया तादृशनिवर्त्त्याप्रसिद्धिरतस्तन्निवेश इति । इत्थं चानतिरिक्तविषयकत्वघटकसाध्यतावच्छेदकावच्छिन्नसाध्य-विशिष्टपक्षतावच्छेदकावच्छिन्नविषयतायां स्वनिष्ठत्वनिवेशेनैव न्यूनविषयकदर्शितहेतुजन्यबोधवारणसम्भवे पृथगन्यूनविषयकत्व-विशेषणमनर्थकमित्यपि समाहितम्—तादृशविषयतायां स्वनिष्ठत्व-विशेषणे निगमनादिजन्यबोधस्य ज्ञानव्याप्यत्वविशेषितसाध्यविशिष्ट-पक्षविषयताशालित्वनियमात्स्वनिष्ठनिरुक्तविषयताशालिनिश्चयत्व-व्यापकप्रतिबन्धकताकज्ञानव्याप्यत्वादिसंशयान्यसंशयाप्रतिबन्धकत-याऽनतिरिक्तविषयकत्वापत्तेर्दुर्वारत्वात् । सत्यन्तस्य न्यायावय-वत्वमर्थः । निगमने च पक्षवाचकं पदमनुपयुक्तम् इति तद्वारणमनति-रिक्तपदप्रयोजनमिति मतमनुसृत्य लघुशरीरमनतिरिक्तविषयकत्वं निर्वक्ति प्रकृतेति । प्रकृतहेतुका या प्रकृतसाध्यसिद्ध्यौपयिकी व्याप्ति-स्तत्तद्विषयकत्वमित्यर्थः । यद्रूपावच्छिन्नविशेषितप्रकृतहेतुताव-च्छेदकावच्छिन्नहेतुविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नविषयकनि-श्चयत्वं प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानुमितिजनकता-नतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयकत्वमिति तु पर्यवसितम् । तादृशं रूपं तद्धेतुतावच्छेदकावच्छिन्नतद्धेतुव्यापकप्रकृतसाध्यस-मानाधिकरण्यत्वं तत्तत्साध्यतावच्छेदकावच्छिन्नसाध्याभावव्याप-काभावप्रतियोगितात्वं च । निगमनस्थतत्पदस्य च व्याप्तिपक्ष-धर्मताविशिष्टहेतुपरतया तज्जन्यबोधस्य तादृशरूपावच्छिन्न-विषयकत्वान्नातिव्याप्तिः । अन्वयव्यतिरेकव्याप्त्योर्विशिष्यैकतर-निवेशेऽन्वयिनि व्यतिरेकिणि वा निगमनेऽतिव्याप्तिरिति नि-रुक्तरूपावच्छिन्नत्वेन द्वयोरनुगमः । यदि च यत्पदतत्पदयो-र्विशेषाननुगमसम्भव इति विभाव्यते, तदाऽभावद्वयमेव बोधे निवेशनीयम् । एतल्लाभायैव चौपयिकान्तमिति ध्येयम् । यद्य-प्युदाहरणजन्यबोधस्य न निरुक्तरूपावच्छिन्नविषयकत्वं तथापि सिषाधयिषाधीनन्यायप्रयोगानुपगमेन तत्र पक्षतावच्छेदकविशिष्टे

साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वरूपान्यूनविषयकत्वविरहादेव नातिप्रसङ्गः। हेत्वंशभागे च सत्यतामात्रान्नातिव्याप्तिरित्यवधेयम्। वह्निव्याप्तिविशिष्टस्यालोकस्य पर्वतत्वावच्छिन्नविशेषणत्वे तद्विशिष्टेऽपि पर्वते तद्वृत्तेरर्थतो लाभेऽप्यर्थतस्तत्र प्रकृतसाध्यगमकतालाभाय हेत्ववयवाभिधानप्रयोजकाकांक्षाविरह इत्यतः सधर्मेति। तस्याः–प्रतिज्ञायाः।

नन्वेवमपि यत्र प्रकृतहेतुकप्रकृतसाध्यकव्याप्तिरेवाप्रतर्भवति पक्षधर्मे तत्रत्यप्रतिज्ञाया, असम्भव इत्याशङ्कां परिहरति यद्वीति। विशिष्टपक्षेति। पक्षतावच्छेदकविशिष्टपक्षेऽर्थः। तादृशव्याप्तीति। प्रकृतहेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्तीत्यर्थः। उदाहरणेति। यद्यपि दर्शितस्थले, विशिष्टपक्षोपस्थापकपदात्मकहेतौ, विशिष्टपक्षवृत्तित्वस्यार्थतः प्रतीत्योपनयादिप्रयोजकाकांक्षाया असम्भवः, तथापि, धूमवत्त्वस्थाने धूमवत्साधर्म्यनिवेशे तस्याः सम्भव इति उदाहरणमात्रोपादानम्। अन्यथा–ऽऽकांक्षाविरहेणाभिधाने। अतिप्रसङ्गात्–हेत्वपादेरप्यभिधानप्रसङ्गात्। अत एव आकांक्षितानभिधानादेव। एकदा–एकन्यायप्रयोगदशायाम्। उभयव्याप्तीति। अन्वयव्याप्तिव्यतिरेकव्याप्तिद्वयेत्यर्थः। व्याप्तिद्वयस्य क्रमेणैवाभिधातुं शक्यतया प्रथमोपन्यस्तव्याप्तिप्रतीत्यैव समीहितनिर्वाहेण व्याप्त्यन्तराकांक्षानुदयादिति भावः। एतेनान्वयव्यतिरेक्युदाहरणाकांक्षाघटितान्वयव्यतिरेकिहेतुलक्षणानन्तरमपरतल्लक्षणमभिधास्यतो मणिकारस्य प्रथमलक्षणानिर्भरबीजमाविष्कृतम्। अत एव तादृशातिप्रसङ्गस्य पृथगभिधानम्।

वह्न्यादिसाध्यकप्रतिज्ञायामव्याप्त्या यथोपवर्णितलक्षणमाक्षिपति यदि चेति। अत्र चासम्भवाभावमाविष्कर्तुं कतिपयप्रतिज्ञाजन्यबोधस्य यथोपवर्णितानुमित्यन्यूनानतिरिक्तविषयकत्वं व्यवस्थापयति मैवमित्यादिना। अथ गौरित्यत्र गोत्वस्य साध्यत्वे पक्षे साध्यतावच्छेदकगोत्वत्वविशिष्टप्रकारकज्ञानजनकत्वासम्भवादाह तादात्म्येन गौरिति। ननु भवतु गोसाध्यकप्रतिज्ञा तादृशी तथापि यदि समवायेन गोत्वस्य साध्यत्वेऽपि तथाविधप्रतिज्ञा सम्प्रदायानुमता तदा तत्साध्यकतादृशप्रतिज्ञाया दर्शितबोधजनकत्वासम्भवात्सामान्यतस्तदाकारप्रतिज्ञायास्तथात्वाभिधानमसङ्गतमि

त्याशङ्कायां तस्या गोत्वादिसाध्यकत्वं निराकरोति गोत्वत्वाद्यनुपस्थित्येति । तादृशप्रतिज्ञावाक्यादित्यादिः । अत्रेति शेषः । अनुपपत्तेरिति । प्रतिज्ञायाः साध्यतावच्छेदकोपस्थापकत्वनियमादन्यथा सुन्दरवह्नित्वावच्छिन्नसाध्यकस्थलेऽपि वह्निमानित्याकारकप्रतिज्ञाप्रसङ्गादिति भावः । यद्यपि समवायेन रक्तत्वविशिष्टदण्डावच्छिन्नसाध्यककदण्डिमानित्यादिप्रतिज्ञाया न समवायेन रक्तत्वविशिष्टसाध्यतावच्छेदकबोधकत्वसम्भवः, तथापि तत्र साध्यतावच्छेदकघटकसकलपदार्थानामेव विशकलितानां तादृशप्रतिज्ञावाक्यादुपस्थितेस्तदधीनसाध्यतावच्छेदकविशिष्टसाध्यविषयकमानसबोधेनापि तत्र विशिष्टसाध्यसंशयप्रयोज्यजिज्ञासाविषयसिद्धिसम्भवः, प्रकृते तु विशकलितानामपि गोत्वत्वादिघटकपदार्थानां नोपस्थितिरिति विशेषः । गोत्वादेः साध्यत्वे दोषान्तरमाह पदार्थेति । जातेः पदार्थतावच्छेदकत्वं पदार्थान्तरान्वयित्वासम्भवप्रयोजकत्वेनाभिहितम् । इदमुपलक्षणम् । अन्वयितावच्छेदकरूपेणानुपस्थितत्वमपि तथा बोध्यम् ।

ननु पर्वतो वह्निमानित्याद्याकारकप्रतिज्ञा न वह्निसाध्यिका अपि त्वभेदेन वह्निमत्साध्यकैव, तथाच तज्जन्यबोधविषयितायाः अभेदेन वह्निमत्साध्यकानुमितिविषयितातो न वैलक्षण्यमतो न तत्राऽव्याप्त्यवकाश इत्यत आह तथैवेति । तादृशप्रतिज्ञाया वह्निसाध्यकत्वेनैवेत्यर्थः । इत्युपनयसङ्गमात्–इत्याकारस्योपनयस्य तादृशप्रतिज्ञाघटितन्यायान्तर्गतत्वोपपत्तेः । वह्निमतः साध्यत्वे वह्निमद्व्याप्यवानित्याकारस्यैवोपनयस्य सम्भवादिति भावः । शाब्दभाने–वह्निमानित्येतादृशवाक्यजन्यज्ञाने । अभेद इति । भासत इत्यनुषज्यते । न तु वह्नेः संयोग इति शेषः । नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वादिति हृदयम् । तथाच तादृशप्रतिज्ञाजन्यबोधे निरुक्तमन्यूनविषयकत्वमनतिरिक्तविषयकत्वं च न सम्भवतीति भावः । भेदे–शुद्धे प्रतियोगिविशेषिते वा साध्ये, इत्यादौ–इत्यादिप्रतिज्ञायाम्, आदिपदादितरेभ्यो भिद्यते इतरभिन्नमित्यादिपरिग्रहः । वैलक्षण्यम्–अनुमितिविलक्षणबोधजनकत्वम् । भेदसाध्यकानुमितौ भेदस्यानुयोगितया इतरावच्छिन्नभेदसाध्यकानुमितावनुयोगितया इतरविशेषितस्य तस्य विधेयेण भिद्यते इति प्रतिज्ञाजन्ये च बोधे आख्यातान्तोपस्थाप्यस्य भेदाश्रयस्य इतरेभ्यो भिद्यत इत्यादिजन्ये बोधे च पञ्चम्यन्तार्थेतरप्र-

तियोगिकत्वविशेषितभेदाश्रयत्वस्य स्वरूपसम्बन्धेन भिन्नमित्यादिजन्ये च निरुक्तोपस्थाप्यस्य भेदाश्रयत्वावच्छिन्नस्य इतरेभ्यो भिन्नमित्यादिजन्ये च इतरप्रतियोगिकत्वविशेषितभेदाश्रयत्वावच्छिन्नस्येतरभिन्नमित्यादिजन्ये चाभेदेनेतरप्रतियोगिकविशेषितभेदाश्रयत्वावच्छिन्नस्येतरेभ्योऽन्यदित्यादिजन्ये चेतरप्रतियोगिकत्वविशेषितभेदावच्छिन्नस्येतरान्यदित्यादिजन्ये चाभेदेनेतरप्रतियोगिकविशेषितभेदावच्छिन्नस्य भेदेन पक्षांशे विशेषणत्वादिति अनुमितेस्तादृशबोधवैलक्षण्यादिति भावः । इदमुपलक्षणम् । ईदृशदिशा प्रकृते विधेयांशे भान इवोद्देश्यतावच्छेदकांशे भानेऽपि वैलक्षण्यमवसेयम् । गन्धाद्यवच्छिन्नपक्षकानुमितौ गन्धादेः साक्षाद्विधेयधर्मितावच्छेदकत्वात्, गन्धवती इतरेभ्यो भिद्यत इत्याकारकन्यायप्रतिज्ञाजन्यबोधे च गन्धादिसम्बन्धस्यैव तथात्वादिति ॥

उद्देश्यानुमितिपदस्य यादृशविशिष्टार्थबोधः प्रतिज्ञया जन्यते तादृशविशिष्टार्थबोधपरत्वमभिप्रेत्य समाधत्ते यादृशेति । यादृशरूपावच्छिन्नपक्षकयादृशरूपावच्छिन्नसाध्यकसम्प्रदायसिद्धप्रतिज्ञा यादृशरूपावच्छिन्नपक्षे यादृशयादृशरूपावच्छिन्नप्रकारकबोधजनिका तादृशरूपावच्छिन्ने तादृशरूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्तकतादृशबोधान्यतमबोधजनकत्वे सति तादृशरूपावच्छिन्नपक्षकतादृशरूपावच्छिन्नसाध्यकन्यायान्तर्गतत्वं प्रतिज्ञात्वमित्यर्थः । अत्र च अनिवर्त्यत्वान्तं बोधविशेषपरिचायकमात्रं न तु तदर्थस्य लक्षणे निवेशः । बोधाश्च विषयविशेषाद्विशेष्य विशिष्यैवोपादेयाः न तु प्रतिज्ञाप्रतिपाद्यत्वेन अतो नात्माश्रयशङ्कावकाशः । एवञ्च प्रतिज्ञाप्रतिपाद्यविशिष्टार्थानामननुगमेऽप्येकधर्मावच्छिन्नपक्षसाध्यकाखिलप्रतिज्ञासाधारणमपि प्रतिज्ञात्वं नैकं सम्भवतीति बोधानामन्यतमत्वेनानुगमस्तेन रूपेण जनकतांश एव बोधानां विशेषणता न तु निवर्त्यत्वांशेऽपीति बोधानामननुगमेऽपि तादृशतादृशबोधानिवर्त्यस्याभावकूटघटितधर्मस्यानुगतत्वात् तादृशबोधभेदकूटवत्त्वाभावरूपान्यतमत्वव्याप्यत्वसामान्यभावस्थले तादृशतादृशबोधानिवर्त्यत्वाभावकूटस्यैव लाघवेन निवेशयितुमुचितत्वात् । एवञ्च तादृशाभावकूटनिवेशसूचनायैवान्यतमेनापीत्युक्तम् । एतेन सामान्याभावनिवेशसूचनायापिकार इति व्याख्यानमनादेयम् । विशेष्यदलेऽ—

मत्वनिवेशनमपि यत्र प्रतिज्ञार्थानां नानाविधत्वं तत्रैव पर्वतादिपक्षकवह्न्यादिसाध्यकस्थले पर्वतादौ वह्न्यादिमदभेदरूपेणैकविधबोधस्यैव प्रतिज्ञया जननान्न तत्र तन्निवेशः । एतेनैकमादायान्यतमत्वस्यासम्भवेऽपि न क्षतिः—शब्दाभेदस्याप्यप्रयोजकत्वात् । वह्नित्वावच्छिन्नसाध्यकप्रतिज्ञया घटवद्भूतलादिघटितधर्मावच्छिन्नविशेष्यकः पर्वतत्वावच्छिन्नपक्षकप्रतिज्ञया च तादृशधर्मावच्छिन्नप्रकारकोऽपि बोधो जन्यते, तन्निवर्त्यश्च भूतलं घटवन्नवेत्यादिसंशयोऽपीति प्रतिज्ञायां प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकत्वस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वस्य वाऽनुपादाने उक्तबोधानिवर्त्यसंशयाप्रसिद्धिरतस्तदुपादानम् । यत्किञ्चिद्रूपावच्छिन्नपक्षसाध्यकप्रतिज्ञाप्रतिपाद्यतत्तद्विशिष्टार्थबोधानिवर्त्यसंशयानिवर्तकबोधजनकत्वस्य यत्किञ्चिद्रूपावच्छिन्नपक्षसाध्यकन्यायान्तर्गतत्वस्य निवेशनेऽतिप्रसङ्गः प्रागुपदर्शित एवेति यादृशरूपावच्छिन्नपक्षसाध्यकप्रतिज्ञाप्रतिपाद्यविशिष्टार्थबोधानिवर्त्यसंशयानिवर्त्तकबोधजनकत्वं तादृशरूपावच्छिन्नपक्षसाध्यकन्यायान्तर्गतत्वं निवेशितम् । अधिकं त्वित्यादिन्यायेन साध्यांशे हेतुज्ञानज्ञाप्यत्वमवगाहमानेऽपि निगमनादिजन्यबोधे प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकत्वस्याक्षततया निगमनाद्यतिव्याप्तिवारणाय तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्त्तकत्वरूपतादृशबोधानतिरिक्तविषयकत्वं बोधविशेषणम् । इत्थं च प्रतिज्ञाजन्यबोधानिवर्त्यस्य वह्निर्धूमज्ञानज्ञाप्यो न वेत्यादिसंशयस्य निवर्त्तकतया तादृशबोधवारणम् ।

न च प्रतिज्ञाजन्यबोधस्य पर्वतत्वावच्छिन्नविशेष्यकवह्निमत्त्वावच्छिन्नप्रकारकबोधत्वेनैवोपादेयतया निगमनादिजन्यबोधस्यापि तथात्वात्तन्निवर्त्यत्वमुक्तसंशयस्याक्षतमेवेति वाच्यम् । अप्रामाण्यज्ञानानास्कन्दिततादृशविशिष्टार्थविषयकनिश्चयत्वावच्छिन्नानिवर्त्यत्वस्यैव निवेशनीयत्वादुक्तसंशयस्य धूमज्ञानज्ञाप्यत्वाविषयकवह्निमत्पर्वतनिश्चयानिवर्त्यत्वेन तथाविधनिश्चयत्वावच्छिन्नानिवर्त्यत्वाक्षतेः । एतेन सर्वेषामेव संशयानां वह्निमत्पर्वतादिविषयकसमूहालम्बनात्मकस्वविरोधिनिश्चयनिवर्त्तनीयतया तादृशबोधानिवर्त्यसंशयाप्रसिद्धिरित्यपि निरस्तम् । तादृशनिश्चयत्वनिष्ठं निवर्त-

कतावच्छेदकत्वं च न स्वरूपसम्बन्धविशेषः किन्त्वनतिरिक्तवृत्तित्वम्। तेन सम्बन्धी वह्निमान्न वेत्याकारकैकदेशसंशयं प्रति वह्निसम्बन्ध्यभिन्नपर्वतादिनिश्चयत्वेनाप्रतिबन्धकत्वेऽपि तादृशसंशयनिवर्त्तकप्रतिज्ञाजन्यबोधस्य नासङ्ग्रहः। अत एव धूमादालोकवान् पर्वतो वह्निमान्धूमादित्यादौ हेतुजन्यबोधनिवर्त्त्य-हेतुत्व धूमीय न वेति-संशयं प्रति प्रतिज्ञाप्रतिपाद्यविशिष्टार्थविशेषविषयकनिश्चयत्वेनाप्रतिबन्धकत्वेऽपि न विशेष्यदलवैयर्थ्यम्। वह्निमत्त्वप्रकारकनिश्चयत्वावच्छिन्ननिवर्त्त्यस्य पर्वतत्वाद्यवच्छिन्नविशेष्यकनिश्चयत्वावच्छिन्ननिवर्त्त्यस्य चाप्रसिद्धिरतो विशेष्य प्रकारोभयनिवेशनम्।

यद्यप्यत्र प्रतिज्ञाप्रतिपाद्यस्य विधेयविशिष्टधर्मिण एव यादृशविशिष्टार्थपदेनोपादानसम्भव इति यादृशविशिष्टार्थबोधिका इत्युपेक्ष्य विशेष्यप्रकारयोः खण्डश उपादानसूचनाय वक्ष्ये यादृशविशिष्टार्थवत्त्वबोधिका इत्यभिधानमनुचितम्, तथापि धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ प्रतिज्ञार्थहेत्वर्थविषयकसमूहालम्बनबोधजनके हेत्वन्ते हेतौ वा न्यायावयवत्वं परित्यज्य न्यायान्तर्गतत्वनिवेशपक्षे प्रतिज्ञाजन्यबोधनिष्ठैकदेशविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतामादायैकदेशे चातिप्रसङ्गवारणाय विशिष्टार्थविषयकबुद्धित्वावच्छिन्नजन्यताप्रतियोगिकजनकत्वनिवेशे पर्वतो वह्निमानित्यादिप्रतिज्ञाया असङ्ग्रहः, वह्न्यादिशून्यपर्वतादौ वह्निमत्त्वाद्यवगाहिभ्रमात्मकशाब्दबोधसाधारण्यानुरोधेन तत्तत्पदार्थानां परस्परमुपश्लेषावगाहित्वस्यैव तादृशप्रतिज्ञाजन्यतावच्छेदकत्वोपगमात् तस्य विशिष्टार्थविषयकत्वस्य तथात्वादिति अनतिरिक्तविषयकबोधनिष्ठतादृशपरस्परोपश्लेषावगाहित्वावच्छिन्नजन्यताप्रतियोगिकजनकताया निवेशसूचनाय तथाभिधानम्। तादृशपरस्परोपश्लेषावगाहिशाब्दत्वे अन्यतावच्छेदकतापर्याप्त्यनिवेशादनतिरिक्तविषयकत्वदलवैयर्थ्यमित्यवधेयम्। भेदादिसाध्यकस्थले पृथिवी इतरेभ्यो भिद्यत इत्यादिप्रतिज्ञाप्रतिपाद्यभेदाश्रयत्वादिरूपयत्किञ्चिद्वेकार्थनिश्चयाप्रतिबध्यभेदादिकोटिकसंशयं प्रति पृथिवी नेतराणीत्यादिप्रतिज्ञाजन्यभेदादिप्रकारकनिश्चयस्य प्रतिबन्धकतया न कस्याश्चिदपि प्रतिज्ञायास्तादृशसंशयानिवर्त्तकबोधजनकत्वमतस्तद्विशिष्टार्थविषयकनिश्चयनिवर्त्त्यत्वाभावकूटनिवेशनम्। प्रतिज्ञाजन्य-

बोधस्य स्वसमानाकारानुमितौ सिद्धिविधया प्रतिबन्धकत्वात्तादृशानुमितेश्च सिषाधयिषाकालीनतादृशबोधाप्रतिबध्यतया तादृशाप्रामाण्यज्ञानानास्कन्दितप्रतिज्ञाप्रतिपाद्यविशिष्टार्थविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यत्वादसम्भव इत्यतो ज्ञानसामान्यमुपेक्ष्य संशयपर्यन्तानुधावनम् । न चानुमितेस्तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यत्वेऽपि तदप्रतिबन्धकसिषाधयिषाकालीनबोधजनकत्वमादाय प्रतिज्ञायां लक्षणसमन्वयः सम्भवतीति संशयपदमनर्थकं स्वरूपयोग्यतारूपजनकताया एव निवेशनीयतयाऽव्याप्तेरप्यनवकाशादिति वाच्यम् । अनिवर्त्तकत्वं हि प्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वं न तु प्रतिबन्धकत्वाभावः तथासत्यप्रामाण्यज्ञानास्कन्दिततादृशबोधमादाय निगमनातिव्याप्तिनादवस्थ्यात्, तथाच सिषाधयिषाकालीनसिद्धेरप्रतिबन्धकत्वेऽपि प्रतिबन्धकतावच्छेदकीभूतविषयिताशालित्वेनानुमित्यनिवर्त्तकत्वासम्भवात् । न च सिद्धेः पूर्वं परतो वा सिषाधयिषाया उत्पादस्थले द्वितीयक्षणे प्रथमक्षणे वा सिषाधयिषाविरहविशिष्टत्वमक्षतमेवेति सिषाधयिषाविशिष्टाया अपि सिद्धेरनुमितिप्रतिबन्धकत्वमक्षतमेवेति कथं तस्या अप्रामाण्यज्ञानानास्कन्दिततादृशविशिष्टार्थनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यत्वमिति वाच्यम् । यादृशसिद्धेः पूर्वं परतश्च सिषाधयिषाया उत्पादस्तादृशसिद्धेरेवाप्रतिबन्धकत्वात् । प्रत्यक्षनिश्चये विशेषदर्शनकालीनविपरीतनिश्चयस्याप्रतिबन्धकतामते तस्यापि प्रतिज्ञार्थनिश्चयत्वावच्छिन्नप्रतिबध्यतयोक्तदिशाऽसम्भव इति प्रत्यक्षसामान्यमुपेक्ष्य संशयपर्यन्तानुधावनम् । अत्र च तत्तद्विशिष्टार्थविषयकनिश्चयत्वानवच्छिन्नसंशयप्रतिबन्धकत्वशून्यत्वस्य ज्ञानविशेषणत्वोपगमेनैवातिरिक्तविषयकस्य हेत्वन्तादिभागजन्यबोधस्य तथाविधधूमज्ञानव्याप्यत्वादिसंशयप्रतिबन्धकताश्रयस्य वारणसम्भवात्तादृशप्रतिबन्धकतात्वेनैव तथाविधनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यसंशयप्रतिबन्धकतानिवेशः न तु तथाविधनिश्चयत्वावच्छिन्नप्रतिबन्धकताकान्यसंशयप्रतिबन्धकतात्वेन गौरवादित्यवधेयम् । उक्तहेतुवारणाय तादृशबोधान्यतमेति । प्रकृतप्रतिज्ञाजन्यतावच्छेदकीभूतं यादृशयादृशबुद्धित्वं तादृशतादृशबुद्धित्वावच्छिन्नान्यतमजन्यतानिरूपितजनकतापर्यन्तस्य विवक्षणीयतयोक्तसमूहालम्बनबो-

धर्मादाय न तत्रातिप्रसङ्ग इत्युक्तप्रायम् ॥

गवाभेदस्येत्यादि सकलपञ्चम्यन्तैः समं बोधा विशिष्य धर्त्तव्या इत्यग्रिमस्यान्वयः। यद्यपि तादात्म्येन गोःसाध्यकस्थलेऽनुमित्यन्यूनानतिरिक्तविषयकबोधजनकत्व प्रतिज्ञायाः सम्भवतीति प्रागभिहितं तावतैव च गवाभेदः प्रतिज्ञाप्रतिपाद्य इत्यस्य लाभाच्चन्न तादृशबोधमादाय लक्षणं कर्त्तव्यमिति स्फुटमेव, तथापि तत्र तादृश एव बोधो लक्षणघटको न त्वन्यविधो बोध इति स्फुटीकर्त्तुं तदुपादानम्। तादात्म्येन वह्नौ साध्येऽयं वह्निरित्येव प्रतिज्ञा जायते तत्र च न वह्निमद्भेदबोधो लक्षणघटक इत्यतः संयोगेन समवायेन वेति। तादात्म्यातिरिक्तसम्बन्धेनेत्यर्थः। वह्नौ इत्यादि सप्तम्यन्तत्रय साध्य इति प्राकृतेनान्वितम्। वह्निमद्भेदस्येति।अत्राप्येतादृशबोधस्य तादृशप्रतिज्ञाजन्यतायाः प्रागुपदर्शितत्वेऽप्यन्याविधयेधासम्भवमाविष्कर्त्तुमेतदुपादानम्। पाककृतिमत्त्वस्येति। पाककृतिसमवायस्येत्यर्थः। पचतीति प्रतिज्ञातस्तद्बोधादिति भावः। पाककर्त्रभेदस्येति। पाककृत्यवच्छिन्नाभेदस्य पाककृतिमत्त्वावच्छिन्नाभेदस्य चेत्यर्थः। पक्ता पाककृतिमानित्यादिप्रतिज्ञातस्तद्बोधादिति भावः। इतरभेदवत्त्वस्येति। इतरभेदाश्रयतासम्बन्धस्येत्यर्थः। इतरेभ्यो भिद्यत इत्यादितस्तादृशबोधादिति भावः। इतरान्याभेदस्येति। इतरभेदावच्छिन्नाभेदस्येत्यर्थः। इतरान्येति प्रतिज्ञातस्तद्बोधादिति भावः। इतरभेदवत्त्वस्येति। इतरभेदसंसर्गस्येत्यर्थः। नेतराणीत्यतस्तद्बोधादिति भावः। इतरभिन्नाभेदस्येति। इतरभेदाश्रयत्वावच्छिन्नाभेदस्येत्यर्थः। इतरभिन्नेति प्रतिज्ञातस्तद्बोधादिति भावः ॥

अनतिरिक्तविषयकत्वार्थः पूर्ववदेव। अन्यूनविषयकत्वं तु तावद्बोधनियत्यैयावत्संशयानिवर्त्तकत्वम्, दर्शितहेतुजन्यबोधस्य चानन्वयत्वं धूमीयं नवेत्यादिप्रतिज्ञाजन्यबोधनिवर्त्तनीयसंशयप्रतिबन्धकत्वेऽपि तादृशयावत्संशयान्तर्गतपर्वतो वह्निमान्न वेत्यादिसंशयानिवर्त्तकत्वेन वारणसम्भवादिति यतो गतमाह तावदिति। सर्वांशविशिष्टार्थविषयकेत्यर्थः। तावद्बोधनिवर्त्यैयावत्संशयेति। तत्तद्विशिष्टार्थबोधान्यतमयत्किञ्चिद्बोधनिवर्त्यैयावत्संशयेत्यर्थः। तेन भेदादिसाध्यकस्थले भेदतदाश्रयत्वादिकोटिकनानाविधसंशयानामेव प्रकृतसाध्यपक्षकप्रतिज्ञार्थबोधनिवर्त्यतया यावत्संशयान्तर्गततयातावत्संशयनिवर्त्त-

क(१)(तायाः पृथिवी नेतराणि पृथिवीतरेभ्यो भिद्यत इत्यादिप्रतिज्ञा-जन्यबोधेऽसत्त्वेऽपि तादृशसकलवाक्यजन्यसमूहालम्बनबोधस्य तावत्संशयनिवर्त्तकत्वात्तत्र च निरुक्तानतिरिक्तविषयकत्वसत्त्वात् तज्जनकत्वमादायैव प्रत्येकप्रतिज्ञासु लक्षणसमन्वयो बोध्यः।) अत्र च स्वमतापेक्षया गौरवमेवास्वरसबीजं बोध्यम् ॥

(दी०) चैत्रः पचति घटो नेतराणीति प्रतिज्ञायां साध्ये विषयित्वानुयोगित्वयोः सम्बन्धविधयैवानुप्रवेशाद्यथोपदर्शित-साध्यगमकतौपयिकव्याप्तिविशिष्टहेतुमत्त्वस्य च पक्षे उपनेयत्वात् तथा चायमित्याकारः सुवच एव प्राचामुपनयः । नव्यानां पुन-रनन्यगतिकतया तद्व्याप्यहेतुमांस्तद्वान् वेत्याकारः, योग्यतावशाच्च तदा साध्यस्य तद्व्याप्यस्य वा परामर्शः ।

केचित्तु वह्निमान्नेति विप्रतिपत्तौ तदधीनसंशये च वह्नि-मत्तदन्योन्याभावयोस्तादात्म्यविशेषणत्वाभ्यां कोटित्वेन जिज्ञा-सितत्वात्तादात्म्येन वह्निमानेव साधयितुमुचितो न तु वह्निः-अजि-ज्ञासितत्वात्, तथा च तथा चायमित्याकारो वह्निमद्व्याप्यो धूम-वांश्चायमित्याकारो वा उपनयो, न तु वह्निव्याप्यधूमवांश्चायमि-त्याकारोऽर्थान्तरत्वादिति प्राहुः ।

यत्र चान्तरा तादृशबोधो न जातस्तत्रापि तादृशाकाङ्क्षायो-ग्यतादिशालित्वरूपं तज्जननयोग्यत्वमक्षतम् । तल्लाभश्च जातिविशे-षोपस्थापकशाब्दत्वावयवशब्दयोरुपसन्दानादेवेति ।

(गा०)ननु विषयितादिसम्बन्धेन पाकाद्यवच्छिन्नकृत्यादेः यत्र सा-ध्यता तत्र कीदृश उपनयः? नतावत्पाककृतिव्याप्यवानित्याकारकः-तत्र तत्पुरुषघटकपाकादिपदस्य पाकविषयकादिलाक्षणिकतया पाकविष-यकाभिन्नकृतित्वाद्यवच्छिन्ननिरूपितव्याप्तेरेव लाभात्, प्रकृतसाध्यता-वच्छेदकावच्छिन्ननिरूपिताया व्याप्तेरलाभेनार्थान्तरप्रसङ्गादित्यत

(१) त्वं न कस्यापि बोधस्येत्यतिव्याप्तिरिति निरस्तम्—अत्रचेति पाठान्तरम् ।

आह चैव इति। साध्ये-विशिष्टसाध्यशरीरे। विषयितानुयोगित्वयोरिति। कृतिभेदांश इत्यादिः। सम्बन्धविधयैवेत्यवकारेण विशेषणत्वव्यवच्छेदः विषयित्वाद्युपस्थापकपदाभावेन तयोर्विशेषणत्वासंभवादिति भावः। निपातार्थेन नामार्थस्य भेदान्वयधियो व्युत्पत्तिविरुद्धतया नेतराणीत्यादौ प्रथमाया अनुयोगितार्थकत्वमसिद्धमिति हृदयम्। यथोपदर्शितेति। प्रतिज्ञोपस्थापितेत्यर्थः। उपनेयत्वात्-उपनयबोधनीयत्वात्। तादृशव्याप्तस्यैवाकांक्षितत्वेन यः पाककृतिसामग्रीमान् स पचतीत्युदाहरणेन प्रतिपादनात्तादृशव्याप्तिविशिष्टस्य पक्षधर्मताकाङ्क्षयैवोपनयप्रयोगादिति भावः। सुवच यथेति। तथाशब्देन तादृशव्याप्तिविशिष्टहेतुमत एवोपस्थापनादिति भावः।

ननु मणिकृता थाल्प्रत्ययार्थं वितर्क्य तस्मात्तथेति निगमनस्य निराकरणीयतया तथापदघटितोपनयेऽपि तद्दोषप्रसङ्ग इत्यस्यानुमतस्तादृशोपनय इत्येतन्मतमनुसृत्याह नव्यानामिति। तत्पदेन यथोपदर्शितसाध्यस्यैव तादृशसाध्यव्याप्तिविशिष्टहेतोरपि परामर्शसम्भव इति व्याप्त्यादिपदप्रयोगवैयर्थ्यमित्याशयवानाह तद्व्याप्येति। ननु पक्षादेरपि प्रक्रान्तत्वात्तस्यैव कथं नोपनयस्थतच्छब्देन परामर्श इत्यत आह योग्यतेति। तात्पर्यवशादित्यर्थः। व्याप्तिविशिष्टहेतुमत्त्वस्यैवाकांक्षितत्वेन तत्परताया एव तत्र ग्रहादिति भावः। तदा-तच्छब्देन। साध्यस्येति प्रथमकल्प तद्व्याप्यस्येति द्वितीयकल्पमभिप्रेत्य।

पर्वतो वह्निमानित्यादिन्यायस्य वह्निसाध्यकत्वं निराकृत्य वह्निव्याप्यधूमवांश्चायमित्याकारकोपनय निराकुर्वतां मतमाह केचिदिति। विप्रतिपत्तौ कोटित्व तज्जन्यस्मृतिविषयत्व तज्जन्यप्रत्येकशाब्दबोधप्रकारत्व वा न तु तदधीनसंशयप्रकारत्वमतो न संशये तस्य वैयर्थ्यम्, तत्प्रदर्शन च संशयकोटितावबोधकत्वेन तस्य स्वतो जिज्ञासायामतन्त्रत्वादित्यवधेयम्। यद्यपि वह्निमत उपस्थितिदशायां वह्नेरप्युपस्थिततया तादृशविप्रतिपत्तिवाक्याद्वह्निकोटिकोऽपि संशयो भवितुमर्हति तथापि स्वातन्त्र्येण कोट्युपस्थितिः संशयप्रयोजकेत्यभिप्रायेणेदमित्यवधेयम्। अथवा विप्रतिपत्तिवाक्याच्छाब्द एव संशय इति मतानुसारेणेदम्।

वस्तुतो वह्न्यभावस्य कोटितायामेव वह्निकोटिकसंशयतोपपद्यते न तु वह्निमत्त्वस्य स्वस्वाभावप्रकारस्यैव स्वसंशयत्वात्प्रकृते च

वह्न्यभावो नोपस्थितः, अपि तु तद्भेदं एवेति वह्न्यभावस्य कोटित्वासम्भवाद्वह्निसंशयो न सम्भवतीत्यभिप्रायः। एतत्सूचनायैव च वह्निमद्भेदस्य कोटित्वमभिहितं तदभिधानस्य प्रयोजनान्तराभावात्।

यद्वा धर्मिणि तत्प्रकारबोधौपयिकाकाङ्क्षावत्पदजन्यतदुपस्थितिरेव धर्मिणि तत्कोटिकसंशयजनिका पर्वतो वह्न्यभाव इत्यादितो वाक्याद्वह्न्याद्युपस्थितौ पर्वतादौ वह्निसंशयानुदयात्। तथाच पर्वतो वह्निमानित्यादिवाक्यस्थवह्न्यादिपदमपि न पर्वतादौ वन्ह्यादिभेदान्वयौपयिकाकाङ्क्षावदिति न तादृशविप्रतिपत्तिवाक्याद्वह्न्यादिकोटिकसंशय इति परमार्थः।

तदीनमनमनुसृत्याह वह्निमद्यावेति। प्राहुरिति प्रशब्देनात्रास्वरसभाव सूचितः।

फलोपधायकतारूपजनकतारूपनिवेशशङ्कया प्रसक्ता तादृशशाब्दबोधानुपधायकप्रतिज्ञायामव्याप्तिं योग्यताविवक्षया निराकरोति यत्र चेति। अन्तरेति। हेत्वर्थादिविषयकशाब्दबोधसामग्र्यनुत्तरमित्यर्थः। एतेन फलोपधानविवक्षणे अवयवान्तरार्थविषयकशाब्दबोधमात्रोपधायकप्रतिज्ञायामव्यव्याप्तिः प्रसज्यते अनतिरिक्तविषयशाब्दबोधानुपधायकत्वादिति सूचितम्। तादृशेति। तादृशशाब्दबोधजनकज्ञानविषयेत्यर्थः। आकांक्षानिवेशात्पर्वतो वह्निसम्बन्धीत्यादिनिराकांक्षवाक्यव्युदासः। न च पर्वतो वह्निमानित्यादिशाब्दबोधं प्रति निराकाङ्क्षतादृशवाक्यविषयकज्ञानस्यैवानाजनकत्वात्तादृशशाब्दबोधजनकतावच्छेदकविषयिताकस्य निवेशनेनैवापत्त्यायाकाङ्क्षानिवेशनमफलमिति वाच्यम्। पर्वतो वह्निमानित्यादिनानुपूर्वीप्रकारकभ्रमात्मकतादृशनिराकांक्षविषयकज्ञानस्यापि तथाविधशाब्दबोधजनकतया तदीयविषयिताया अपि तज्जनकतावच्छेदकत्वेन तज्जनकतावच्छेदकप्रकारताश्रयानुपूर्वीरूपाकाङ्क्षाशालित्वनिवेशस्यावश्यकत्वात्। तच्छालित्वं च तद्घटकवर्णसमुदायत्वम्। तज्जनकतावच्छेदकीभूतभ्रमान्यघटितकिञ्चिज्ज्ञानवृत्तिविषयतानिरूपकवर्णसमुदायत्वमिति तु पर्यवसितोऽर्थः। इदं वह्निमानित्यादिभ्रमानुमितिसमानविषयकतादृशबोधजनकवाक्यस्य वारणाय योग्यतानिवेशनम्। योग्यत्वं चाबाधितार्थकत्वम्। प्रकृतसाध्यवाचिपदप्रकृतपद-

बोधरूपमिति यावत् । वैशिष्ट्यं च वास्तवं न तु वैज्ञानिकम् । यद्यपि स्वातन्त्र्येण योग्यतानिवेशो निरर्थकः—अन्यूनाविषयकत्वावच्छिन्नजन्यताप्रतियोगिकजनकतायाः अवश्यं विवक्षणीयतया वास्तववैशिष्ट्यघटितसाध्याविशिष्टपक्षविषयकत्वरूपान्यूनाविषयकत्वनिवेशासम्भवेऽप्ययोग्यवाक्यप्रतिपाद्यविशिष्टार्थाप्रसिद्ध्या सम्प्रदायसिद्धप्रविभागप्रतिपाद्यविशिष्टार्थबोधानिवर्त्यसंशयानिवर्त्तकत्वरूपानतिरिक्तविषयकत्वघटितलक्षणस्य तथाऽतिव्याप्त्यप्रसक्तेः, तथापि वास्तववैशिष्ट्यघटितानतिरिक्तविषयकत्वसूचनाय योग्यतोपादानम् । आदिपदात्तात्पर्यविशेषपरिग्रहः । तेन निस्तात्पर्यकस्य शुकाद्युच्चारितप्रतिज्ञासमानाकारवाक्यस्यार्थान्तरपरत्वोद्भाववाक्यस्य च व्युदासः ।

अन्याकांक्षादिनिवेशो शाब्दवाक्यपदयोर्वैयर्थ्यम्—आकांक्षादिज्ञानान्वयोपयिकायविरहाद्वाक्यातिरिक्तेऽसत्त्वात्त्वानुमितिजनकपरामर्शादौ शाब्दधीजनकयोग्यताज्ञानादावतिप्रसङ्गानवकाशादित्यत आकांक्षादिमत्त्वलाभार्थकतया तादृशपदोपादानं सार्थकयति तल्लाभश्चेति । तल्लाभः—शाब्दबोधं प्रति आकांक्षादिमत एव वाक्यस्य जनकतया आकांक्षादिमत्त्वलाभः । तादृशपदद्वयोपादानादित्यर्थः । शाब्दपदस्य योगेन शब्दजन्यार्थकत्वेन तल्लाभः आकांक्षादिरहितस्यापि शब्दस्य शब्दजन्यस्मृतिहेतुत्वादतो जातिविशेषोपस्थापकेति । रूढ्यानुभवनिष्ठशाब्दत्वरूपजात्यवच्छिन्नोपस्थापकार्थकम् । शाब्दबोधं प्रति आकांक्षादिरहितस्यापि योग्यताज्ञानादेर्हेतुतया वाक्यपदानुपादाने केवलशाब्दपदान्न तल्लाभ इति वाक्यपदोपादानापेक्षेति भावः ।

यत्तु—तल्लाभश्चेति अन्यूनविषयकशाब्दत्वावच्छिन्नौपयिकाकांक्षादिमत्त्वलाभश्चेत्यर्थः । शाब्दपदस्यावयवशक्त्या शब्दजन्यज्ञानत्वावच्छिन्नार्थकत्वे शब्दजन्यतावच्छेदकजातिविशेषानुपस्थित्या तदवच्छिन्नजन्यताप्रतियोगिकजनकतालाभो न भवतीत्यत उक्तं जातिविशेषोपस्थापकेति । तथाच कार्यांशे शाब्दपदेन शाब्दत्वजातेः कारणांशे च वाक्यपदेनाकाङ्क्षादिमत्त्वस्य लाभात्तादृशशाब्दत्वावच्छिन्नौपयिकाकाङ्क्षादिमत्त्वलाभ इति—व्याख्यानम्, तदसत्—अवच्छेदकतापर्याप्त्यनिवेशादिरुक्तान्यूनाविषयकत्वावच्छिन्न-

जन्यतानिवेशमात्रेणोपपत्त्या शाब्दत्वनिवेशने प्रयोजनाभावात्तदु-पस्थितेरप्रयोजकत्वात्।

न च तदर्थविषयकत्वस्य शाब्दत्वनिष्ठजन्यतावच्छेदकतायामे-षावच्छेदकतया जन्यतायां तदवच्छिन्नत्वविरहात् अन्यूनविषयक-शाब्दत्वावच्छिन्नत्वेनैव जन्यता निवेशनीयेति वाच्यम्। विनिगम-नाविरहेण शाब्दत्वविशिष्टतत्तदर्थविषयकत्वस्यापि जन्यतावच्छे-दकत्वात्॥

(चिं०) अन्यूनानतिरिक्तपदं विहाय लिङ्गाविषयक-त्वं वा ज्ञानविशेषणम्, तेनोदाहरणादिव्युदासः। निग-मनञ्च न परामर्शहेतुः—अबाधितासत्प्रतिपक्षत्वज्ञानज-नकत्वात्।

(दी०) अन्यूनेत्यादि। तथा चोद्देश्यानुमितिसमानवि-षयकशाब्दज्ञानजनकन्यायावयवत्वमर्थः। व्यतिरेकिणि ह्रदो निर्धूम इत्यादौ निर्वह्नित्वहेतुके यथा ह्रदभिन्नमित्यादिदृष्टान्त-वतो ह्रदादिवृत्तिधर्मशून्यत्वादिहेतुके वोदाहरणस्य वारणाय स-मानविषयकान्तं पक्षविशेष्यकार्थकम्। उपनयवारणाय लिङ्गा-विषयकेति।

यद्यपि प्रकृतलिङ्गाविषयत्वं पृथिवीतरेभ्यो भिद्यते पृथिवी-त्वात् गन्धवती तथा गन्धादित्याद्यव्यापकम्। न चात्रोपनया-सम्भवः इदमा गन्धवत्त्वेन परामृष्टे हेतुभूतगन्धवत्त्वान्वयायोगा-दिति वाच्यम्। साध्याभावव्यापकगन्धाभावाभावत्वेनान्व-यात्। अत एव व्यतिरेकिणि न च नेयं पृथिवीत्यादिकः प्रा-चां प्रयोगः। यदि च दण्डवान् रक्तदण्डवानित्यस्यान्वयो नानु-पपन्नस्तद्विशिष्टे शुद्धतद्विशिष्टान्वयस्यैवाव्युत्पन्नत्वादित्युच्यते, तदा नानुपपत्तिगन्धोऽपि। पक्षाविशेषणत्वेन तदविषयत्वञ्चायं वह्निसामग्रीमान् वह्नेरित्यादौ पक्षाविशेषणत्वेन साध्याविशेषण-

त्वेन च तदविषयत्वम् इति द्रव्यं द्रव्यः प्रमेयत्वमभिधेयं प्रमेयत्वात् गोत्वभावो न सास्नादिमान् गोत्वाभावादित्यादावव्यापकमतिव्यापकञ्चोपनयस्य । तथापि पक्षतावच्छेदकविशिष्टाङ्गे यत्साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वं तद्धर्मिभावेन लिङ्गविषयत्वस्याभावो वाच्यः ॥

(गा०) नन्वन्यूनानतिरिक्तपञ्चपदस्थाने अनुमितिविषयकशाब्दधीजनकमित्यवशिष्यते, तथाच पर्वतो वह्निमानित्यादिप्रतिज्ञावाक्यस्यानुमित्यबाधकतयाऽव्याप्तिरिति शङ्कां परिजिहीर्षुरनुमितिविषयो विषयो यस्येति-मध्यमपदलोपिसमासाभिप्रायेण समुदितलक्षणपर्यवसितार्थं व्याचष्टे तथाचेति । 'दृष्टान्तवत्' इति । अस्यापि निगमनोदाहरणस्य चादिनाऽन्वय । अन्यत्युदाहरणस्य लिङ्गबोधकत्वाद्व्यतिरेकिपर्यन्तानुधावनम् । यो यो धूमवान् स स वह्निमानिति व्याप्तिरप्युदाहरणस्य पञ्चम्यादिरूपलिङ्गबोधकत्वात्पक्षाविषयकत्वमात्रनिवेशनेनैव तादृशोदाहरणवारणसम्भवेन 'पक्षमुख्यविशेष्यकत्वपर्यन्तस्य विवक्षणीयस्य व्यावृत्तिदानाय यथा' इदमित्यादिदृष्टान्तघटितवदनुसरणम् । दृष्टान्तायदीत्युदाहरणे व्यावृत्तिमाह इदावृत्तीति । उपनयवारणायेति । पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेशस्य प्रयोजनान्तरविरहेऽप्येतदर्थमेव तन्निवेशोऽनुपपन्नपक्षे निगमनादिव्याप्तिसम्भवतीत्यभिप्रायेण निगमनोपेक्षा । तस्मादसत्वो भिषत इत्यादिनिगमनस्य पक्षविशेष्यकबोधजनकत्वाभावान्निगमनसामान्ये नातिव्याप्तिसम्भव इत्यभिप्रायेण वा । वस्तुतः पक्षमुख्यविशेष्यकत्वनिवेशेऽपि गोत्वं सास्नाभावबद्वात्वाभावादित्यत्र यत्र सास्ना तत्र गोत्वमित्युदाहरणे पक्षमुख्यविशेष्यकबोधजनकेऽतिव्याप्तिर्दुर्वारैव पक्षमात्रमुख्यविशेष्यकत्वनिवेशे च विरुद्धपक्षकस्थले मात्राप्रसिद्ध्याऽव्याप्तिरिति पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यत्वानिरूपकत्वमेव विवक्षणीयम् । तथा च निगमनेऽनुपपन्नपक्षेऽतिव्याप्तिर्न सम्भवत्येवेति ध्येयम् ।

+ लिङ्गत्वस्य केवलान्वयित्वया सामान्यतो लिङ्गाविषयकत्व प्रानेऽप्रसिद्धमिति प्रकृतलिङ्गाविषयकत्वं विवक्षणीयम्, तथापि न निस्तार इत्याशयेनाह यद्यपि प्रकृतेति । लिङ्गतावच्छेदकावच्छिन्नाविषयक-

त्वविवक्षणे पृथिवीतरेभ्यो भिद्यत इत्यादिप्रतिज्ञाया नासङ्गतिः तदन्वयबोधे स्वरूपत एव पृथिवीत्वादिलिङ्गभानादित्याशयेन स्थलान्तरे दोषमाह गन्धवती तथेति। तथा—इतरेभ्यो भिद्यते॥ न चात्र उपनयासम्भव इति। तथाच तादृशप्रतिज्ञाघटितन्याय एव न सम्भवतीति काव्यासिशङ्केति भावः। इदमा—इदम्शब्देन। गन्धवत्त्वेनेति। उपनयस्थेदंशब्दस्य प्रतिज्ञोपदर्शितपक्षतावच्छेदकावच्छिन्नपरत्वादिति भावः। गन्धवत्त्वान्वयेति। गन्धवद्भेदान्वयस्येत्यर्थः। अयोगादिति। उद्देश्यत्वविधेयत्वयोरवच्छेदकयोरैक्येऽभेदान्वयबोधप्रसङ्गादिति भावः। साध्याभावेति। साध्याभावव्यापको यो गन्धाभावस्तदभावत्वेनेत्यर्थः। तथाच भिन्नरूपेण गन्धादेरुद्देश्यत्वविधेयत्वावच्छेदकगर्भान्तर्भावान्नान्वयबोधानुपपत्तिरिति भावः।

ननु हेत्वभावाभावत्वेन हेतूपस्थापकपदाभावात्कथमुपनयवाक्यात्तेन रूपेण पक्षे हेतुभानमत आह अत एवेति। साध्याभावव्यापकतावच्छेदकहेत्वभावत्वावच्छिन्नाभावत्वेन हेत्वन्वयानुरोधादेवेत्यर्थः। न च तथा पृथिवीति। नञ्द्वयेनाभावाभावत्वेन हेतुबोधनादिति भावः।

यद्यपि पृथिवीत्वहेतुकस्थले तादृशोपनयप्रयोगो न युज्यते पृथिवीपदार्थतावच्छेदकस्य नञर्थाभावेऽन्वयासम्भवेन हेत्वभावाभावत्वेन हेत्वलाभात्। न च हेतुमद्भेदाभावोऽपि हेतुरेवान्योन्याभावाभावस्य प्रतियोगितावच्छेदकरूपत्वात्, एवं हेतुमद्भेद एव साध्याभावव्यापकता यत्र नेतरभेदस्तत्र पृथिवीत्युदाहरणेन बोध्यत इति पृथिवीभेदाभावत्वेन पृथिवीत्वबोधकस्तादृशोपनयो युज्यत इति वाच्यम्। एवमपि पृथिवीत्वादिति हेतुवाक्योपस्थितपृथिवीत्वत्वविशिष्टहेतुकानुमित्यौपयिकतद्रूपविशिष्टवद्भेदत्वावच्छिन्ने साध्याभावव्यापकताया एवाकांक्षिततया तस्या एव यत्रेतरभेदाभावस्तत्र पृथिवीत्ववदिति उदाहरणेनोपदर्शनीयतया तद्रूपविशिष्टवद्भेदत्वावच्छिन्नाभावत्वेन हेतुमत्ताया एव उपनेयत्वात्तादृशोपनयासङ्गतेः, अन्यथा पृथिवीतरेभ्यो भिद्यते गन्धसमवायिकारणतावच्छेदकरूपवत्त्वादित्यादावपि तथोपनयप्रयोगापत्तेरिति। तथापि वादाम्येन पृथिवीहेतुकस्थलाभिप्रायेणेदम्। आदिपदाच्च नेयं ग-

सम्बन्धसङ्गमनम्। अन्वयव्युत्पत्तेः तज्जन्यबोधे व्याप्तिघटकतया लिङ्ग-विषयकत्वसत्त्वेनातिव्याप्तिर्न सम्भवतीत्यभिमानेन केषांचिन्मतं-त-देवेनाश्रद्धेयम्।

पक्षाविशेषणत्वेन साध्याविशेषणत्वेन चेति। पक्षतावच्छेदकप्र-कारतानिरूपकविशेष्यतानिरूपितप्रकारताभिन्नत्वे सति। साध्य-तावच्छेदकप्रकारतानिरूपितविशेष्यतानिरूपितप्रकारताभिन्न य-लिङ्गविषयकत्व तच्छून्यत्वमर्थः। साध्याविशेषणतयेत्यस्य य-थाश्रुतार्थकत्वे निगमने परम्परया साध्यविशेषणतयैव लिङ्गभाना-दसिद्ध्यापत्तेः। न चैवमपि ज्ञानविषयत्वान् धूमादित्यादिन्या-यान्तर्गतनिगमनातिव्याप्तिस्तदवस्थैव - ज्ञानविषयत्वरूपसाध्यताव-च्छेदकप्रकारतानिरूपकविशेष्यतानिरूपितत्वरूपसाध्यतावच्छेदक-स्य हेतुप्रकारतायां सत्त्वादिति(१) वाच्यम्। शुद्धसाध्यतावच्छे-दकप्रकारतानिरूपकविशेष्यताया एव विवक्षणीयत्वात्।

ननु पक्षधर्मलिङ्गविषयकत्वाविवक्षणे दधि द्रव्यं दध्न इत्यादौ न्यायान्तर्गताः दधि द्रव्यमित्याकारकबोधस्य दधिनिष्ठगुणविष-यकस्य दधिसमवेतद्रव्यविषयकत्वसम्भवात्। अतः स्थलान्तर-माह प्रमेयत्वमिति। ननु प्रमेयत्वं प्रमाविषयत्वं, तच्च विषयभेदा-द्भिन्नम्, एवञ्च घटादिनिष्ठप्रमेयत्वाविषयकस्य प्रमेयत्वमभिधेयमिति बोधस्य प्रमेयत्वरूपपक्षनिष्ठप्रमेयत्वाविषयकस्य सम्भवाभावाद्व्या-प्तितः स्थलान्तरमनुसरति गोत्वाभाव इति। ननु पक्षतावच्छेद-कविशिष्टपक्षविषयतान्यव्याप्तिलिङ्गविषयताशून्यत्वविशेषेणोपदर्शि-तहेतुपक्षकप्रतिज्ञाया असङ्ग्रह। तदव्याप्तित्वं च पक्षतावच्छे-दकप्रकारतानिरूपितसंसर्गतानिरूपकत्वं पक्षतावच्छेदकप्रकारता-पक्षविशेष्यतासाधारणमित्यालोच्यातिव्याप्तिमाह अतिव्यापक चेति॥

पक्षतावच्छेदकांशेऽपीति। पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यता-

---

(१) तन्न वह्निसाध्यकनिगमनजन्यबोधीयहेतुज्ञानसाध्यत्ववि-शिष्टवह्न्यादिप्रकारघटकविषयतायाः साध्यतावच्छेदकावच्छिन्ना-दिनिरूपितप्रकारतात्वस्याधिकरणविरहादिन्यायेनाक्षततया तादृशप्र-कारघटकविषयतायाः निरुक्तविशेष्यतानिरूपितप्रकारतान्यत्वविर-हेन्नत्राव्याप्तिनादवस्थ्यमिति पाठोऽधिकः पुस्तकान्तरे।

निरूपिता या साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारतानिरूपितवैशिष्ट्यविषयता तद्बहिर्भूतलिङ्गविषयताशून्यत्वमित्यर्थः ।

अथ तद्बहिर्भूतत्वं न साक्षात्परंपरासाधारणतन्निरूपकत्वशून्यत्वं-पक्षतावच्छेदकप्रकारताया उक्तयुक्त्या तदनिरूपकत्वात् । कथंचित्तन्निरूपकत्वोपपादनेऽपि यत्र संयोगेन वह्नेः साध्यत्वं वह्निसंयोगत्वेन हेतुता तत्रत्यप्रतिज्ञायामव्याप्तिः-हेतुभूतवैशिष्ट्यविषयतायाः स्वनिरूपकत्वविरहात् । एवं साक्षात्परंपरासाधारणानुगतनिरूप्यनिरूपकभावोऽपि दुर्वचः-परंपरया निरूपितत्वस्य तन्निरूपितनिरूपितत्वाद्यात्मकत्वात् । एतेन तादृशवैशिष्ट्यविषयतानिरूपकविषयत्वानिरूपितत्वं तादृशविषयताबहिर्भूतत्वम्, तच्च वैशिष्ट्यविषयतासाधारणं तन्निरूपकप्रकारताविशेष्यतानिरूपितत्वमादाय तन्निरूपकप्रकारतासाधारणं चेत्युक्तावपि न निस्तार इति चेत् । न ।

तथाविधवैशिष्ट्यविषयताशालिनिश्चयत्वसमनियत(व्यापक)प्रतिबन्धकतानवच्छेदकत्वमेव तद्बहिर्भूतत्वम् । निगमनजन्यबोधीयहेतुविषयता च यादृशप्रतिबन्धकतावच्छेदककोटौ निवेश्यते न तादृशी कापि प्रतिबन्धकता तादृशनिश्चयत्वव्यापिका हेतुविषयकतादृशवैशिष्ट्यविषयताशालिज्ञानासाधारण्यात्, अतस्तथाविधहेतुविषयतायास्तद्बहिर्भूतत्वोपपत्तिरित्यनुपक्षपक्षेऽपि न निगमनातिव्याप्तिः । तादृशनिश्चयत्वव्यापकत्वमात्रस्य प्रतिबन्धकताविशेषणत्वे धूमादालोकवान् पर्वतो वह्निमान्धूमादित्यत्र हेत्ववयवेऽतिव्याप्तिः तादृशहेतुनिष्ठाया हेतुरयं धूमोऽयं न वेति संशयप्रतिबन्धकतावच्छेदकतादृशबोधविषयताया निरुक्तविषयताबहिर्भूतत्वानुपपत्तेरतस्तादृशनिश्चयत्वव्याप्यत्वमपि प्रतिबन्धकताविशेषणम् । न च पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिवेशस्यावश्यकतया नैतादृशातिव्याप्तिसंभावनेति व्यर्थं व्याप्यत्वनिवेशनमिति वाच्यम् । तथाप्यनुपक्षपक्षे धूमाद्वह्निमत्सधर्मा पर्वतो वह्निमान्धूमादित्यादिस्थलीयनिगमने हेतुत्वं प्रमेयाद्वाच्यत्ववत्प्रमेयादित्यादिस्थलीयहेत्ववयवे चातिव्याप्तेर्दुर्वारत्वात्तन्निवेशस्यावश्यकत्वादिति । न च धर्मितावच्छेदकनिष्ठं प्रकारत्वं न प्रतिबन्धकतावच्छेदकमपि तु तन्निष्ठविशेष्यतावच्छेदकत्वमेव तथाच गन्धवतीतरेभ्यो भिद्यत इत्यादिप्रतिज्ञाजन्यबोधीयहेतुप्रकारतायास्तद्बहिर्भूतत्वादव्याप्तिरिति वाच्यम् ।

विशेष्यतावच्छेदकताया एव प्रकारतात्वोपगमेन तादृशबोधे तदन्यप्रकारतानभ्युपगमात्। एवं चातिप्रसक्तस्य भूतल घटवदित्यादिज्ञानस्य भूतलत्वादौ तद्धर्मितावच्छेदकत्वस्य प्रकारान्तरेण वारणसम्भवात्। अस्तु वा विशेष्यतावच्छेदकताख्यविषयता प्रकारतातोऽन्यैव तथापि न क्षतिः। तादृशविषयताबहिर्भूतविषयताशून्यत्व ज्ञानविशेषणमुपेक्ष्य तादृशविषयताबहिर्भूतविषयतानवच्छिन्नजन्यतानिरूपितजनकताया वाक्यविशेषणत्वोपगमेन विशेष्यतावच्छेदकताभिन्नगन्धादिविषयतायाः प्रतिज्ञाजन्यबोधे सत्त्वेऽपि तस्याः प्रतिज्ञाजन्यतावच्छेदककोटिनिवेशे प्रयोजनाभावेन तन्निष्ठधर्मितावच्छेदकताया एव तत्र निवेशनीयतयाऽव्याप्त्यनवकाशात्। तादृशबहिर्भूतविषयतासामान्यशून्यत्वनिवेशोऽनुमितिसमानविषयकत्वनिवेशनस्य मूलोपात्तस्य वैयर्थ्यप्रसङ्ग इति तादृशलिङ्गविषयतासामान्यशून्यत्वनिवेशनमिति अखण्डाभावघटकतया न लिङ्गांशवैयर्थ्यम्॥

(दी०) वस्तुतो लिङ्गं-लिङ्गत्वं, तथाच प्रकृतहेतुतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नव्यापकतौपयिकं व्याप्तिविषयत्वं तच्छून्यत्वमर्थः। तच्च हेतौ साध्यव्याप्यतावगाहित्वम्' हेतुमत्ताभावप्रतियोगितावच्छेदकावच्छिन्ने साध्याभावव्यापकतावगाहित्वञ्च। द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयं द्रव्यत्ववान् गुणात् गुणव्याप्यरूपवानयं स्पर्शवान् रूपादित्यादौ प्रतिज्ञासंग्रहायावच्छेदकद्वयोपादानम्।

अन्यूनानतिरिक्तपदमिति च मूलमुद्देश्यानुमित्यन्यूनानतिरिक्तविषयभागपरम्। हेतुत्वमभिधेयं मेयत्वादित्यादौ पञ्चम्यर्थपक्षकहेतुवारणाय पञ्चम्यन्तान्यत्वस्य हेत्वन्यत्वस्य वाऽवश्यं वाच्यत्वात्। संख्यातिरिक्तसुबर्थस्य प्रातिपदिकार्थे विशेष्यत्वेनैवान्वयात्। प्रातिपदिकार्थयोः क्रियाप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयस्याव्युत्पत्तेर्वक्ष्यमाणत्वात्। चैत्रस्येदं न मैत्रस्य मैत्रस्येदं न चैत्रस्य द्वयोरिदं नैकस्यापीत्यादौ चैत्रादिसम्बन्धाभावबोधस्य

विना विभक्त्यर्थविशेष्यतामनुपपत्तेः चैत्रो न पचतीत्यादौ तिङर्थस्येव विनाप्यनुयोगिनि सप्तमीं सुब्रर्थस्याप्यभावान्वयात् ।

हेतुविषयकज्ञानजनकत्वव्याप्यावयवावच्छेदकरूपशून्यत्वे सत्युदाहरणान्यन्यायावयवत्वं तत्त्वम्, तादृशश्चावच्छेदकं हेतुत्वादिकमिति केचित् ।

(गा०) उक्तरीत्या वहिर्भूतत्वनिर्वचनायासविक्लेवात्कल्पान्तरमाश्रयते वस्तुतस्त्विति । लिङ्गत्वमिति । व्याप्तिरित्यर्थः । नन्वत्रानुगमयोरन्वयव्यतिरेकव्याप्त्योस्तद्घटकव्यापकत्वयोर्वा एकतरमात्रविषयतायाः उपादानेऽन्यतरबोधकोपनयादावतिव्याप्तिरित्याशङ्कया तादृशव्याप्तिघटकव्यापकताद्वयविषयतयोरनुगमरूपेणाभाव निर्वहयति तथाचेति । प्रकृतहेतुतावच्छेदकावच्छिन्नस्येति गमकत्वान्वितम् । व्याप्तिविषयकन्त्वमित्यत्र व्याप्तिपदं व्यापकत्वविषयतानिष्ठसाध्यतावच्छेदकादिविषयताव्यावृत्तविलक्षणौपयिकतानिवेशसूचनाय ॥

अथ किमिदं तादृशगमकतौपयिकत्वं ? न तावत्प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यकानुमितित्वावच्छिन्नजनकतावच्छेदकत्वम्-पक्षधर्मत्वाविषयकोदाहरणजन्यबोधीयव्यापकत्वादिविषयताया अनुमितिजनकतावच्छेदककोट्यप्रविष्टतया तत्रातिव्याप्तेः । न च हेतुव्यापकत्वादिविषयतात्वेनैव तद्विषयताया जनकतावच्छेदककोटौ निवेशादनुमित्यजनकस्यापि तादृशज्ञानस्य विषयतानां तादृशरूपाक्रान्तानां तथात्वमक्षतमेवेति वाच्यम् । तादृशविषयतात्वेन पक्षविशेषणतापन्नहेतुविशेषणतापन्नसामानाधिकरण्यविशेषणतापन्नसाध्यादिविषयतानिरूपितव्यापकत्वविषयताया एव कारणतावच्छेदकघटकत्वादतादृश्या तदवच्छेदकत्वाभावात् । यद्रूपावच्छिन्नविषयता जनकतावच्छेदिका तद्रूपावच्छिन्नविषयताशून्यत्वनिवेशे च साध्यतावच्छेदकाद्यवच्छिन्नविषयताया अप्यनुमितिजनकतावच्छेदककोटिप्रविष्टतया तादृशविषयताशून्यत्वस्य प्रतिज्ञाजन्यबोधेऽप्यसत्त्वादसम्भवः । यद्रूपावच्छिन्ननिरूपितव्यापकत्वविषयता जनकतावच्छेदिका तद्रूपावच्छिन्नव्यापकतानयगाहित्वनिवेशे च किञ्चिद्रूपावच्छिन्नव्यापकत्वं साध्यस्य पक्ष-

स्य वा यदंशे यत्र तत्स्थलीयप्रतिज्ञाया असद्धेतुः, यत्तत्त्वनिवेशादननुगमानवकाश इति चेन्न। पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितविषयतानिरूपिता या विषयता तन्निरूपितविषयतानिरूपितविषयतायां विशेषणविधया प्रकृतानुमितिजनकतावच्छेदकतावच्छेदकतायाः पर्याप्त्यधिकरणधर्मघटत्वेन हेतुव्यापकताविशिष्टसाध्यविषयत्वघसाध्याभावव्यापकताविशिष्टहेतुत्वमात्रविषयत्वे अनुगमस्य तादृशधर्मावच्छिन्नतदभावस्य निवेशनेनानुपपत्त्यभावात्। तथाहि-प्रकृतानुमितिजनकतावच्छेदिकाया अन्वयिपरामर्शीयहेतुव्यापकतावच्छिन्नसाध्यविषयताया पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुविषयतानिरूपिताधेयत्वविषयतानिरूपिताधिकरणविषयतानिरूपितत्वात्, व्यतिरेकिपरामर्शीयसाध्याभावव्यापकत्वावच्छिन्नहेत्वभावविषयताया अपि तादृशविशेष्यतानिरूपितसांसर्गिकविषयतानिरूपितहेतुविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितत्वेन साध्याभावव्यापकताविशिष्टहेत्वभावविषयतात्वस्यापि हेतुव्यापकताविशिष्टसाध्यविषयतात्वघटितवक्ताविषयत्वविशेषणविधया अनुमितिजनकतावच्छेदकतायाः पर्याप्त्यधिकरणत्वात्।

यद्यपि यथा परम्परया पक्षविशेष्यतानिरूपितोदाहरणजन्यबोधीयहेतुव्यापकताविशिष्टसाध्यादिविषयता नानुमितिजनकतावच्छेदिका तथा तन्निरूपितव्यापकत्वादिविषयतापि न तथेति तदीयसाध्यादिविषयताविशेषणतया व्यापकत्वादिविषयतानिरूपितत्वस्यानुमितिजनकतावच्छेदकतावच्छेदके प्रवेशो न सम्भवति जनकतावच्छेदकविषयतावृत्तेरेव धर्मस्य तादृशविषयताविशेषणतया जनकतावच्छेदकतावच्छेदकत्वसम्भवादिति निरुक्तपक्षविषयतापक्षविषयतांशे विशेषणविधया अवच्छेदकतावच्छेदकत्वपर्याप्त्यधिकरणे यत्साधनादिव्यापकत्वविषयतानिरूपितत्वसहित साध्यादिविषयतात्व तन्नोदाहरणजन्यबोधीयसाध्यादिविषयतासाधारणं तथाप्योदाहरणेऽतिव्याप्तिर्दुर्वारैव, तथापि निरुक्तजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविषयतावच्छिन्ना या प्रतिबन्धकता तदवच्छेदकविषयतात्वेनोदाहरणबोधीयहेतुव्यापकसाध्यादिविषयतायाः सङ्ग्रहो बोध्यः। अनुमितिजनकतावच्छेदकपरामर्शीयसाध्यादिविषयतायाः हेतुव्यापकत्वादिविषयतानिरूपित-

साध्यादिविषयतात्वेन साध्यं हेतुव्यापकं न वेत्यादिसंशयप्रतिबन्धकतावच्छेदकत्वात्, तादृशप्रतिबन्धकतायां तादृशरूपेणोदाहरणजन्यबोधीयसाध्यादिविषयताया अनवच्छेदकत्वात्। मुख्यविशेष्यतानिवेशाद् गोत्वाभावः प्रमेयत्वव्यापकवाच्यत्ववत्सास्नाभाववान्, गोत्वाभावादित्यत्र तादृशविशिष्टसाध्यकप्रकृतानुमितिजनकपरामर्शीयस्वात्मकपक्षविशेषणतापन्नगोत्वाभावविषयतानिरूपिताधेयत्वविषयतानिरूपिताधिकरणविषयतानिरूपितसास्नाभावविषयतानिरूपितवाच्यत्वविषयतांशे विशेषणविधया ऽवच्छेदकतावच्छेदकतायाः पर्याप्त्यधिकरणधर्मवत्प्रमेयत्वव्यापकवाच्यत्वविषयतात्ववद्विषयतायाः प्रतिज्ञाजन्यबोधे सत्त्वेऽपि न क्षतिः। जनकता च साध्यव्याप्यत्वावच्छिन्नधर्मिताकान्यपरामर्शीया ग्राह्या तेन तद्धर्मिकपरामर्शादायापि नोक्तप्रतिज्ञायामव्याप्तिः। न च साध्याभावव्यापकहेत्वभावप्रतियोगिहेतुमानितिपरामर्शीयपक्षविशेष्यतानिरूपितहेतुविषयतानिरूपितप्रतियोगित्वविषयतानिरूपिताभावविषयतानिरूपितव्यापकत्वविषयताया अपि निरुक्तविषयतात्वात्तादृशविषयत्वविशेषणतयाऽवच्छेदकीभूतं साध्याभावव्यापकताविषयतात्वमपीति वह्न्यभावव्यापकमेयत्ववान् पर्वतो वह्निमानित्यादिप्रतिज्ञायामव्याप्तिरिति वाच्यम्। किंचित्व्यापकत्वविशिष्टविषयतांशे विशेषणतया अवच्छेदकतावच्छेदकत्वस्यैव निवेशनीयत्वात्, व्यतिरेकिपरामर्शीयपक्षविषयतापन्नमव्यापकत्वविषयतायाश्चातथात्वात्।

वस्तुतस्तु चतुर्थविषयतायामभावनिष्ठप्रकारताभिन्नत्वस्य निवेशनीयत्वान्न कोऽपि दोषः। अन्वयव्यतिरेकव्याप्तिघटकव्यापकताद्वयविषयताया विशिष्टाभावद्वयनिवेशपरोऽयं ग्रन्थः। तथासति हेतुतावच्छेदकेत्याद्यनुगतशब्देनोभयोत्कीर्तनवैयर्थ्यापातात्। विशिष्यापि तदुभयावगाहित्वस्य तच्चेत्यादिना दर्शनीयतया प्रथमत एव विशिष्य तदुभयानवगाहित्वार्थकत्वोपवर्णनानौचित्यात्।

तच्चेति। तादृशगमकत्वौपयिकत्वं चेत्यर्थः। हेताविति। हेतुव्यापकताविशिष्टसाध्याविषयकत्वमर्थः। अतो नोक्तानुगमविरोधः। हेतुभूताभावप्रतियोगितावच्छेदकेति। तादृशप्रतियोगितावच्छेदकं च धूमादिभावहेतुकस्थले धूमाभावत्वादिकं वह्न्यभावादिहेतुकस्थले च वह्नित्वादिकम्। एतदसंग्रहभयेनैव हेत्वभावत्वावच्छिन्न इति नोक्तम्,

तथासति अयं निर्धूमो निर्वह्नित्वादित्यादौ यत्र धूमस्तत्र वह्निः धूमव्यापकवह्न्यभाववानयमित्याद्याकारकयोरेवोदाहरणोपनययोः प्रयोगाद्वह्नित्वाद्यवच्छिन्न एव साध्याभावव्यापकतायास्ततः प्रतीतिर्न तु वह्न्यभावाद्यभावत्वावच्छिन्न इति तत्रातिव्याप्त्यभावात् प्रतिपादनेन न्यूनतापत्तेः । हेतुतावच्छेदकसाध्यतावच्छेदकनिवेशप्रयोजनमाह द्रव्यत्वेति । प्रतिज्ञासंग्रहायेति । प्रथमोपदर्शितप्रतिज्ञाविषयसंयोगत्वावच्छिन्ननिरूपितव्यापकताया अपि संयोगत्वेन गुणहेतुकद्रव्यत्वत्वावच्छिन्नानुमितेः द्वितीयप्रतिज्ञाविषयगुणत्वावच्छिन्नव्यापकतायाः गुणत्वेन स्पर्शसाध्यकरूपत्वावच्छिन्नहेतुकानुमितेः प्रयोजकतयाऽवच्छेदकद्वयानुपादाने तत्रतत्राव्याप्तेरिति भावः ।

ननु एवं लिङ्गत्वाविषयकत्वविशेषणेनैवोदाहरणस्यापि वारणे पूर्वोक्तानुमितिसमानविषयकत्वविशेषणस्य व्यावृत्तिर्न सङ्गच्छते इति सत्यं तोऽसरविषयान्तभागपरित्यागस्यैवावश्यकत्वेनान्यूनानतिरिक्तपदमात्रपरित्यागस्य मूलविरोध इत्यालोच्य तादृशमूलस्य तथाविधसमुदायपरित्यागपरत्वमेवाह अन्यूनेति । नन्वेतत्कल्पे हेतुवारणायैव पक्षविशेष्यकत्वपर्यवसिततादृशविशेषणोपादानमावश्यकम्-तज्जन्यबोधस्य व्यापकत्वाविषयकत्वेन लिङ्गत्वाविषयकत्वदलेनावारणादिति कथं समुदायपरित्याग इष्यत आह हेतुत्वमिति । पञ्चम्यर्थेऽपक्षक इति । तथाच पक्षमुख्यविशेष्यकत्वमपि तादृशहेतुजन्यबोधेऽक्षतमिति न तेन तद्वारणसम्भव इति भावः । पञ्चम्यन्तान्यत्वस्य निवेशे घटो दण्डात्पटो न दण्डादित्यादिपञ्चम्यन्तप्रतिज्ञानामसंग्रहमालोच्य कल्पान्तरमाह हेत्वन्यत्वस्येति । अखण्डं वाक्यत्वादिति । तथाच तत एव सकलहेतुवारणे उक्तसमुदायदलपरित्यागे न क्षतिमावहतीति भावः ।

ननु ज्ञापकत्वं पञ्चम्यर्थः, स च प्रकृत्यर्थस्य विशेषणतयैव भासते न तु विशेष्यतया, तथाच कथं पञ्चम्यर्थपक्षकन्यायान्तर्गतहेतोः पक्षमुख्यविशेष्यकबोधजनकत्वमत आह संख्येति । विभक्त्यर्थस्यैकत्वादेः प्रकृत्यर्थविशेषणतया बोध अनुभाविकः तस्य विशेष्यत्वे घटमित्यादितः एकत्वं कर्मत्वं च घटीयमित्याकारकसर्वानुभवविरुद्धसमूहालम्बनबोधस्यापत्तेरतः संख्यातिरिक्तेति सुबर्थविशेषणम् । लिङ्पदस्येष्टसाधनत्वादेः प्रकृत्यर्थविशेषण-

तया भानात्प्रत्ययार्थसामान्योपेक्षा । विशेष्यत्वेनैवेत्यत्र युक्तिमाह प्रातिपदिकार्थयोरिति । समानविभक्तिकनामार्थयोः क्रियाविशेषणीभूतद्वितीयान्तनामार्थधात्वर्थयोश्चाभेदान्वयबोधोत्पत्त्या भेदेनेति । तयोरपि विभक्त्यर्थमन्तराकृत्य परंपरया भेदान्वयबोधात्साक्षादिति । अव्युत्पत्तेर्वक्ष्यमाणत्वादिति । भूतलं घट इत्यादावाधाराधेयभावादिसम्बन्धेन घटभूतलयोः तण्डुलः पचतीत्यादौ च क्रियाकर्मादिभावसम्बन्धेन तण्डुलपाकादोरन्वयबोधानुदयादिति भावः । तथा च सुबर्थस्य प्रातिपदिकार्थविशेषणत्वे विभक्त्यर्थस्यान्तराभावेन प्रातिपदिकार्थस्य भूतलतण्डुलादेः घटपाकादौ आधाराधेयत्वकर्मत्वादिसम्बन्धेन साक्षादेवान्वयबोधस्य भूतले घटः तण्डुलं पचतीत्यादितः स्वीकरणीयतया तादृशाव्युत्पत्तिविरोध इत्याशयः । न च भूतले घट,इत्यादौ घटाधिकरणं भूतलमित्याद्याकारक एवान्वयबोध उपेयते नातो दर्शितव्युत्पत्तिविरोध इति वाच्यम् । तथासति शाब्दबोधे अनुभवसिद्धस्य प्रथमान्तार्थमुख्यविशेष्यकत्वस्य भङ्गप्रसङ्गात् ।

ननु विभक्त्यर्थः संसर्गतयैव भासते न तु विशेष्यतया घटाद्याधेयत्वादिसम्बन्धेन भूतलादिप्रकारकबोधे च सप्तम्यादिविभक्त्यन्तभूतलादिवाचकपदसमभिव्याहारस्य नियामकत्वान्नोक्तातिप्रसङ्गः । न चैवं भूतले धूमादित्यादिभागमात्रस्याननुभावकत्वप्रसङ्गः, इष्टत्वात् । अस्तु वा विभक्त्यर्थाधिकरणत्वव्यापकत्वादिविशेषितस्यैव प्रकृत्यर्थस्य तुल्यवित्तिवेद्याधेयत्वव्याप्यत्वादिसम्बन्धेनान्वय इत्यतो विभक्त्यर्थस्याविशेष्यत्वे नेदं मैत्रस्येत्यादौ मैत्रादिविशेषितस्वत्वादिरूपस्याभावप्रतियोगिनोऽवान्तरवाक्यादनुपस्थित्या नञर्थान्वयबोधानुपपत्तिमाह चैत्रस्येदमिति । मैत्रादेरेवाभावो नञा बोध्यते न तु स्वत्वस्येत्याशङ्कां निराचिकीर्षुणा तदुपगमे चैत्रीयधनेऽपि संयोगसमवायादिना चैत्राद्यभावसत्त्वेन यत्र चैत्रस्येदमिति व्यवहारः तत्र न चैत्रस्येदमित्यपि व्यवहारः स्यादिति सूचयितुं चैत्रस्येत्युक्तम् । न च स्वत्वादिसम्बन्धेनैव प्रकृत्यर्थस्याभावो दर्शितस्थले नञा बोध्यते, तथा च नोक्तातिप्रसङ्ग इति वाच्यम् । वृत्त्यनियामकतया स्वत्वादेरभावप्रतियोगितावच्छेदकसम्बन्धत्वाभावात् नामार्थप्रतियोगिकाभावस्यानुयोगिनि सप्तमीं विना नञा बोधयितुमशक्य-

त्याच्च । वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वेऽपि स्वत्वादिसम्बन्धावच्छिन्नाभावस्य षष्ठ्याद्यन्तचैत्रादिपदसमभिव्याहृतनञा बोधनेऽनुयोगिनि सप्तम्या अनपेक्षणेऽपि च द्वयोरिदं नेदमेकस्येत्याद्यसंगतिः । तथाहि—स्वत्वस्य विशेष्यत्वे स्वनिरूपकनिष्ठभेदाप्रतियोगिनिरूपितं यत्स्वत्वं तदभावो धननिष्ठस्तत्र प्रतीयते । अप्रतियोग्यन्तमेकपदार्थः सर्वत्र स्वसमभिव्याहृतपदार्थसंसर्गिनिष्ठभेदाप्रतियोगित्वरूपस्य सजातीयद्वितीयरहितत्वस्य एकपदार्थत्वात् । स्वत्वं षष्ठ्यर्थः । तथाविधं च स्वमेकमात्रनिरूपितं स्वत्वं न तूभयनिरूपितं तन्निरूपकस्यैकपुरुषस्य तन्निरूपकपुरुषान्तरनिष्ठभेदप्रतियोगितया तथाविधभेदाप्रतियोग्यप्रसिद्धेरिति तादृशस्वत्वाभाव उभयधनेऽबाधितः । स्वत्वसंबन्धेन एकपदार्थस्याभावो यदि नञा बोध्यते तदा स्वस्वामिनिष्ठभेदाप्रतियोग्येकपदार्थो बाध्यः । तत्र यदि स्वमभावस्यानुयोगि धनं तदाऽप्रसिद्धिः प्रमेयमात्रस्यैवोभयस्वामिकं यद्धनं तत्स्वामिनिष्ठभेदप्रतियोगित्वात् । यदि धनान्तरमेकमात्रनिरूपितस्वत्ववत् तदा तस्य समभिव्याहृतपदार्थत्वाभावादेकपदस्य तादृशार्थसम्बन्धिनिष्ठभेदाप्रतियोगिबोधकत्वव्युत्पत्तिभङ्गः. एकमात्रस्वत्ववद्धनान्तरस्वामिचैत्रमैत्रोभयधने नेदमेकस्येति व्यवहारानुपपत्तिश्च । एतदभिप्रायेणैव द्वयोरित्याद्युक्तम् ।

इदमत्रावधेयम् । नेदमेकस्येत्यतः स्वनिरूपकानिष्ठभेदाप्रतियोगिनिरूपितयत्किञ्चित्स्वत्वस्याभावबोधे एकमात्रधनेऽपि तथाविधधनान्तरनिष्ठस्वत्वाभावसत्त्वात्तादृशप्रयोगप्रसङ्गः । तादृशस्वत्वसामान्यस्य चैकाभावो न सम्भवति प्रतियोगितावच्छेदकस्य स्वत्वघटितत्वेनाननुगमात् । अभावकूटस्य चासर्वज्ञदुर्ज्ञेयत्वमित्येकत्वलक्षणावच्छिन्न एवैकपदार्थस्तदन्वितस्वत्वस्य उभयस्वत्वानिरूपितविशेषणताविशेषेण स्वत्वस्य समवेतत्वे तादृशसमवायेन वाऽभावः प्रतीयत इत्युपगन्तव्यम् । तथा चोभयानिरूपितस्वत्वसम्बन्धेन प्रकृत्यर्थस्याभावबोधोऽपि सम्भवति । उभयानिरूपितत्वं च स्वनिरूपितत्वस्वभिन्ननिरूपितत्वोभयसम्बन्धेन किञ्चिद्विशिष्टं यत्तदन्यत्वमिति ।

ननु स्वत्वस्य विशेष्यत्वेऽपि नेदं मैत्रस्येत्यादितः कथं स्वत्वसंसर्गाभावबोधः संसर्गाभावबोधमात्र एव नञा अनुयोगिनि सप्तम्यपेक्षणादित्यत आह चैत्रो न पचतीति । नामार्थप्रतियोगिकाभा-

षबोधे एवानुयोगित्वसम्प्यपेक्षणादिति भावः ।

यथाश्रुतलिङ्गाविषयकत्वनिवेशे गन्धवत्त्वीतरेभ्यो भिद्यत इत्यादावव्याप्तिं प्रकारान्तरेण वारयतां मतमाह हेतुविषयकेति । कस्याश्चित् प्रतिज्ञाया हेतुविषयकज्ञानजनकत्वेऽपि प्रतिज्ञात्वस्य हेतुविषयकज्ञानजनकत्वानियतत्वात्तन्नियतान्यवयवतावच्छेदकानि हेतुत्वोपनयत्वनिगमनत्वान्येव न तु प्रतिज्ञात्वमिति नाव्याप्तिः । हेतुबोधकप्रतिज्ञानिष्ठप्रतिज्ञात्वादेः तादृशज्ञानजनकत्वनियतत्वादव्याप्तितादवस्थ्यमतोऽवयवतावच्छेदकेति । अभावहेतुकव्यतिरेक्युदाहरणस्य लिङ्गाविषयकज्ञानजनकस्य सम्भवादुदाहरणत्वस्य तादृशज्ञानजनकत्वानियतत्वादुदाहरणेऽतिव्याप्तिरत उदाहरणान्येति । प्रतिज्ञात्वादेः हेतुसाध्यपक्षभेदेन भिन्नत्वाद्गन्धवत्त्वीतरेभ्यो भिद्यते गन्धादित्यादावव्याप्तिः तदवस्थैव-तादृशप्रतिज्ञानिष्ठस्य प्रतिज्ञात्वस्य हेतुविषयकज्ञानजनकत्वनियतत्वात्, हेत्वादिभेदेपि प्रतिज्ञात्वाद्यभेदे तु प्रकृतहेतुविषयकज्ञानजनकत्वानियतावयवतावच्छेदकस्यैवाप्रसिद्धिः नानाहेतुहेत्ववयवादिसाधारणहेतुत्वादेरप्यतथात्वादित्यस्वरससूचनाय केचिदिति ॥

( चि० ) हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वं वा लिङ्गाविषयकालिङ्गिविषयकज्ञानजनकन्यायावयववाक्यत्वं वा इतरावयवानां लिङ्गविषयकज्ञानजनकत्वात् ॥

प्रतिज्ञात्वं जातिः अनुगतानतिप्रसक्तान्त्रिकव्यवहारादिति केचित् । तन्न । देवदत्तप्रभवत्वादिना जातिसङ्करप्रसङ्गात् । प्रतिज्ञाजन्यं विजातीयं ज्ञानं व्यवहारादिति तज्जनकं वाक्यं प्रतिज्ञेत्यपि न, तज्जनकत्वं जनकत्वज्ञानं वा नानुगतरूपमन्तरेण सम्भवतीत्युक्तस्यानुसरणीयत्वात् । एतेन शब्दोऽनित्य इति लिङ्गिधीपरवाक्यजन्यज्ञानवृत्तिकृतकत्वादित्यादिवाक्यजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यं प्रतिज्ञेति

निरस्तम् ।

ननु प्रतिज्ञा न साधनाङ्गं विप्रतिपत्तेः पक्षपरिग्रहे तत्र प्रमाणाकाङ्क्षायां हेत्वभिधानस्य प्राथम्यादिति चेन्न । विप्रतिपत्त्यग्रे समयबन्धानन्तरं शब्दानित्यत्वं साधयेति मध्यस्थस्य वादिनो वाऽऽकाङ्क्षायां शब्दानित्यत्वं साध्यम् । न च साध्यनिर्देशं विना हेतुवाक्यं निष्प्रतियोगिकमन्वयं बोधयितुमीष्टे । न च वादिवाक्येऽनुपस्थितमपि योग्यतया अन्वेति—अतिप्रसङ्गात् । न च विप्रतिपत्तितः साध्योपस्थितिः तस्याः प्रतिवादिविप्रतिपत्त्या प्रमाणाद्यव्यवस्थया चान्तरितत्वात्, परविप्रतिपत्तिं समयबन्धञ्च विना स्थापनाया अभावात्, विप्रतिपत्तिवाक्यस्य पक्षग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च । आवृत्तौ तु सैव प्रतिज्ञा । न चावयवान्तराद्धेत्वन्वययोग्या साध्योपस्थितिः । नाप्यवयवान्तरेणाक्षेपात् साध्यान्वये तदभिधाने च साध्यान्वय इत्यन्योन्याश्रयात् । तस्मात् प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या वा नेहाक्षेपः ।

अन्ये तु शब्दानित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्यानुयोगः, तथापि प्रमाणमात्रे नाकाङ्क्षा, किन्तु विशिष्टे । विशिष्टन्तु विशेषणं साध्यमनभिधाय न शक्याभिधानम् । न च वस्तुतो यत्साध्यम् तत्र प्रमाणं वदेति मध्यस्थानुयोगः वादिद्वयमध्ये तदसम्भवात् । तस्मात्साध्याभिधानं विना न हेतोराकाङ्क्षा न वान्वयबोधकत्वमिति प्रतिज्ञा साधनाङ्गमिति ॥

(दी० ) हेत्वभिधानेति। जिज्ञासाजनकत्वं—तद्योग्यता, वाक्यत्वं—न्यायावयवत्वम् ।

लिङ्गेत्यादि । लिङ्गाविषयकेति पूर्वोपदर्शितार्थकम् । अभावहेतुकव्यतिरेक्युदाहरणवारणाय लिङ्गीति। लिङ्गि—साध्यं, तद्विषयकं—तद्वद्विशेष्यकम्, तेनेदं जलं निःस्नेहत्वप्रकारकप्रमाविषयत्वशून्यत्वात् इदं द्रव्यं जलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वादित्यादौ यन्न जलं तन्निःस्नेहत्वप्रकारकप्रमाविषय इत्याद्युदाहरणे नातिप्रसङ्गः ।

लिङ्गाविषयेत्यस्य पूर्वोक्तव्याप्यर्त्वाविषयार्थकत्वे हेतुवारणाय लिङ्गीति । लिङ्गिविषयत्वञ्च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेत्वविषयतावहिर्भावेन वाच्यम्, तेन वह्निमान् वह्निमामग्रीमत्त्वात् अयं हेतुरिदं वा हेतुत्वं तत्त्वेन प्रतीयमानत्वादित्यादौ हेतौ नातिप्रसङ्गः । लिङ्गविषयकज्ञानजनकत्वानियतलिङ्गिविषयकज्ञानजनकत्वनियतावयवतावच्छेदकरूपवत्त्वं तत्त्वमित्यादिकं तादृशावच्छेदकरूपान्तरापरिचये दुर्ग्रहत्वादनुपादेयम् ॥

(गा० ) जिज्ञासाफलोपधायकत्वस्याव्याप्तिमाशङ्क्याह जिज्ञासेति। उदासीनेऽतिव्याप्तिवारणाय न्यायावयवत्वस्यावश्य निवेशनीयतया वाक्यभिन्नातिव्याप्त्यप्रसक्तेर्वाक्यपदोपादानमनर्थकमित्याशङ्कया वाक्यपदस्यैव न्यायावयवत्वार्थकतामाह वाक्यत्वमिति।

यन्नेत्यादित्यादावव्याप्तिवारणाय लिङ्गाविषयकेतीति । पूर्वोपदर्शितार्थकमिति । साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षविषयतावहिर्भूतलिङ्गविषयताशून्यार्थकमित्यर्थः। अभावहेतुकेति । वन्ह्यभावादिहेतुकेत्यर्थः । तत्र यो यो धूमवान् स स वह्निमानित्याकारकोदाहरणस्य लिङ्गाविषयकत्वादिति भावः । भावहेतुकस्य व्यतिरेकिणोप्युदाहरणस्य हेत्वभावत्वेनैव व्यतिरेकबोधकतया न लिङ्गाविषयकत्वसम्भवः, एवमभावहेतुकस्याप्यन्वय्युदा

हरणस्य न तथात्वसम्भव इत्यभावहेतुकव्यतिरेकित्वानुधावनम् ।

लिङ्गि साध्यमिति । लिङ्गमस्यास्तीति व्युत्पत्त्या लिङ्गिपदस्य लिङ्गतानिरूपकत्वार्थकत्वादिति भावः । वक्ष्यमाणोदाहरणे साध्यविषयकत्वसत्त्वादतिव्याप्तेराह तद्वद्विशेष्यकमिति । तद्वद्विशेष्यकं तद्वन्मुख्यविशेष्यकम् । निःस्नेहत्वं—स्नेहत्वशून्यत्वम्, स्नेह एव तद्धेतुत्वे उदाहरणस्य न लिङ्गाविषयकत्वसम्भव इति तत्प्रकारकप्रमाविषयत्वशून्यत्वानुधावनम् । तच्च भावप्रतियोगिकतयाऽतिरिक्तमिति हृदयम् । जलत्वसन्देहदशायां जलान्यत्वस्य सन्दिग्धतया तत्प्रकारकप्रमाविषयत्वमपि सान्दिग्धमिति तच्छून्यत्वस्य हेतुतयोपन्यासो न सम्भवतीति प्रथमसाध्ये तदुपेक्षितम् । उत्पत्तिकाले जलस्यापि निःस्नेहतया द्रव्यत्वसाध्यकजलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वहेतुकस्थलान्तरमनुसृतम् । अत्रोक्तयुक्त्या जलत्वसाध्योपेक्षा ।

यत्तु जलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वमपि लाघवाज्जलत्वस्वरूपमेवेति जलत्वस्य साध्यत्वे उदाहरणअन्वयबोधस्य साध्यविषयकस्य न लिङ्गाविषयकत्वसम्भव इति द्रव्यत्वसाध्यकानुधावनमिति । तन्न । जलान्यत्वप्रकारकप्रमाविषयत्वशून्यत्वस्य जलत्वस्वरूपत्वे यत्र द्रव्यं तज्जलान्यत्वप्रकारकप्रमाविषय इत्युदाहरणस्याप्यन्यत्वप्रतियोगितावच्छेदकतया लिङ्गविषयकत्वेनासङ्गतेः ।

पूर्ववद्व्याप्त्यविषयकस्य लिङ्गाविषयकत्वपदार्थत्वे उदाहरणस्य व्याप्तिबोधकतया तत्र लिङ्गिविषयकत्वविशेषणव्यावृत्तिर्न सम्भवतीत्याशयेन स्थलान्तरे व्यावृत्तिमाह लिङ्गेति । पूर्वोक्तेति । उक्तानुगतरूपावच्छिन्नेत्यर्थः । हेतुवारणायेति । इतरेषां त्रयाणां व्याप्तिविषयकत्वेनैव वारणादिति भावः । प्रकृतेति । हेतुतावच्छेदकहेतुहेतुस्वविषयतानां भेदनिवेशे साध्यस्य हेतुतावच्छेदकादिरूपत्वे हेतुतावच्छेदकादिविषयताभिन्नसाध्यविषयत्वाप्रसिद्ध्याऽव्याप्तिरिति विशिष्टविषयताबहिर्भावनिवेशः । तादृशविषयताबहिर्भावः पूर्ववन्निर्वाच्यः । न च तादृशविषयताबहिर्भूतविषयतामात्रनिवेशेनैव हेतुवारणसम्भवे साध्यांशवैयर्थ्यमिति वाच्यम् । तादृशविषयतान्तर्भूतसाध्यविषयताभिन्नत्वस्यैवात्र बहिर्भावेनेत्यन्तेन विवक्षिततया दर्शितवृत्तौ तादृशसाध्यविषयताभिन्नहेतुत्वादिविषयतामादायातिप्रसङ्गस्य वारकतया तत्सार्थक्यात् भेदप्रतियोगिकोटौ निविष्टस्य साध्यांशस्य चाव्यवहा-

भावघटतया ऽवैयर्थ्यात्। यत्र च प्रकृतहेतुतावच्छेदकाविशिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्भूतसाध्यविषयतायां अप्रसिद्धिस्तत्र बहिर्भूतान्तमनुपादेयमेव शाब्दैक्यस्यानपेक्षितत्वादिति नाव्याप्तिः। तादृशविषयतान्तर्भूतत्वसाध्यीयत्वोभयाभाव एव वा बहिर्भावेनेत्यन्तार्थः। हेतुतावच्छेदकहेतुहेतुत्वानां निवेशस्य प्रयोजनं क्रमेण दर्शयति तेनेति तत्त्वेनेति। हेतुत्वेन हेतुत्वत्वेन चेत्यर्थः। हेतुहेतुत्वयोस्तादात्म्येन साध्यत्वं बोध्यम्। हेतुत्वावच्छिन्नसाध्यकस्थले हेतुत्वेन प्रमीयमाणत्वरूपप्रकृतहेतोरपि साध्यतावच्छेदकाक्रान्ततया हेतुजन्यबोधस्य साध्यविषयकत्वमक्षतमेव साध्यतावच्छेदकविशिष्टनिरूपितविषयतापर्यन्तस्याविवक्षितत्वादिति हेतुविशेष्यताबहिर्भावनिवेशाव्याप्तिसङ्गतिः। न च हेतुविषयताबहिर्भावनिवेशापेक्षया साध्यतावच्छेदकविशिष्टविषयकत्वनिवेशनमेव लाघवेनोचितमिति वाच्यम्। विशिष्टविषयताबहिर्भावे निवेशनीये हेतुविषयताबहिर्भावस्य स्वातन्त्र्येण निवेशनीयतया गौरवानवकाशात्। हेत्वंशानिवेश एव हेतुतावच्छेदकविषयित्वहेतुत्वविषयतयोर्बहिर्भावस्य पृथक् निवेशनीयतया गौरवात्, हेतुतावच्छेदकादिप्रविष्टसाध्यकप्रतिज्ञायामव्याप्तेश्च। हेत्वंशमनिवेश्य विशिष्टस्य दुर्निवेश्यतया विशिष्टनिवेशेनैव तन्निवेशात्। एवं च प्रमेयत्वाद्यवच्छिन्नसाध्यकस्थलेऽपि हेत्वंशनिवेशप्रयोजनसम्भवादयं हेतुरित्युपलक्षणपरं बोध्यम्।

लिङ्गिविषयकेत्यस्य पूर्ववत्साध्यवद्विशेष्यकार्थकत्वोपगमे वह्निमान् वह्निसामग्रीमत्त्वात् अयं हेतुः तत्त्वेन प्रमीयमाणत्वादित्यनयोः अतिप्रसङ्गवारणसंभवेऽपि इदं हेतुत्वमित्यादौ पञ्चम्यर्थस्य तादात्म्यसम्बन्धेन साध्यतायां साध्यप्रकारतानिरूपितविशेष्यतार्थकत्वेऽपि स्वरूपसम्बन्धेन हेतुत्वत्वसाध्यकस्थले निरूपितत्वसम्बन्धेन ज्ञानत्वावच्छिन्नसाध्यकजनकतात्वावच्छिन्नपक्षकस्थले च हेताावतिव्याप्तिवारणं न सम्भवतीति गुरुतरारम्भः। लिङ्गविषयतायां पूर्वोपदर्शितविषयताबहिर्भावनिवेशनं लिङ्गपदस्य धर्मपरतां विनैव लिङ्गबोधकप्रतिज्ञाविशेषेऽव्याप्तिं लिङ्गिपदविषयपदयोः साध्यवद्विशेष्यपरतां विनैव दर्शितव्यतिरेक्युदाहरणातिव्याप्तिं प्रकारान्तरेण वारयतां मतमुपन्यस्य दूषयति लिङ्गेति। निगमनस्योदाहरणस्य च वारणाय नियतान्तद्वयमवयवतावच्छेदकविशेषणम्, प्रतिज्ञात्वोदाह-

रणत्वयोरपि लिङ्गलिङ्गिविषयकज्ञानजनकत्वसमानाधिकरणतया असम्भवातिप्रसङ्गासम्भवात् सामानाधिकरण्यमुपेक्ष्योऽयत्र नियतत्वप्रवेशनम् । तदाहरणाविशेषत्वमादायातिप्रसङ्गवारणायावच्छेदकत्वान्तम् । आदिपदात्पञ्चमीविभक्तिमत्त्वानियतलिङ्गिविषयकज्ञानजनकत्वनियतावच्छेदकरूपवत्त्वादिपरिग्रहः । रूपान्तरेति । यद्यपि निरुक्तस्यापि रूपस्यापरिचयादन्तरपदमनर्थकम्, तथाप्यात्माश्रयभयेन तथाविधरूपान्तरपरिचयोऽपेक्षणीयः । तच्च रूपमनुमित्यन्यूनानतिरिक्तविषयकशाब्दधीजनकवाक्यस्याक्तिकमेव, तथाच तस्यैव तद्घटकस्य लक्षणत्वसम्भवाद्व्यर्थविशेषणता । न च तस्य विशेषणघटकत्वान्न व्यर्थविशेषणतेति वाच्यम् । प्रतिज्ञात्वहेतुत्वसाधारणस्यावयवत्वावच्छेदकत्वस्य दुर्वचतया विशिष्य तन्निवेशस्यावश्यकत्वादित्येतल्लाभायान्तरपदम् । अत्र च साध्यादिभेदेनाभिन्नं प्रतिज्ञात्वं यद्यवच्छेदकत्वेन निविश्यते तदा तस्य प्रकृतसाध्यविषयकत्वनियतत्वासम्भवादप्रसिद्धिः । यदि च साध्यादिभेदेन भिन्नं तत्तदा यादृशसाध्यप्रक्षकप्रतिज्ञायां प्रकृतलिङ्गबोधकत्व नियतं तत्राव्याप्तिरित्यपि दूषणं बोध्यम् ॥

इति गादाधर्यामवयवग्रन्थे प्रतिज्ञालक्षणम् ।



साध्यनिर्देशानन्तरं कुत इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितम्, अन्यथाऽनाकाङ्क्षाभिधाने निग्रहापत्तेः लोके तथैवाकाङ्क्षानिवृत्तिरिति व्युत्पत्तेरिति प्रतिज्ञानन्तरं हेतूपन्यासः। हेतुत्वञ्चानुमितिकरणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम्।

( दी० ) अनुमितीत्यादि । जनकान्तं न्यायावयवार्थकम् । निगमनवारणाय साध्याविषयकेत्यादि । साध्याविषयत्वञ्च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयतावहिर्भावेन पूर्वोपदर्शितसाक्षात्परम्परासाधारणप्रकृतसाध्यविशेषणत्वेन वा तेन पूर्वोपदर्शितहेतौ नाव्याप्तिः। इदं न दण्डाज्जातं दण्डसंयोगाजन्यद्रव्यत्वात् अयं न धूमादालोकवान् आर्द्रेन्धनशून्यत्वादित्यादौ व्यतिरेक्युदाहरणस्य हेतुत्वप्रसकसाध्यान्वितस्वार्थबोधकेदम्पदशालिन उपनयस्य च वारणाय हेतुविभक्तिमदिति। तदर्थश्च प्रकृतसाध्यान्वयबोधनसमर्थोपस्थितिजनकहेतुविभक्तिमत्त्वम्। हेत्विति सम्पातायातम्।

यदि च पर्वते पर्वतभिन्नत्वप्रकारकज्ञानस्य विशेष्यतया अभावस्य साध्यत्वं हेतुत्वञ्च सिषाधयिषया च न्यायप्रयोगस्तत्र यथा तादृशज्ञानाभावादुत्पन्नं ज्ञानमिति दृष्टान्तशालिनि व्यतिरेक्युदाहरणेऽतिव्याप्तिरित्युच्यते, तदावयवान्तरोपस्थितार्थान्वितस्वार्थबोधकविभक्तिमत्त्वं वक्तव्यम्। उदाहरणान्यत्वेन वा विशेषणीयम्।

केचित्तु साध्यविषयकधीजनकत्वानियतहेतुविभक्तिमत्त्वनियतावयवतावच्छेदकरूपत्वं समुदितलक्षणार्थं इत्याहुः। तच्चिन्त्यम्।

(गा०) नियमनवारणायेति । प्रतिज्ञोदाहरणोपनयनविशेषाणां विचक्षणीयहेतुविभक्तिमत्त्वविशेषणेन वारणसम्भवान्न तदुक्तम् । न तु साध्याविषयकबोधजनकत्वनिवेशे वह्निमान्वह्निसामग्रीमत्त्वादित्याद्युक्तहेतावव्याप्तिरत आह साध्याविषयकत्वं चेति । वह्निर्भावेति । विचक्षणीयमिति शेषः । साध्यांशोपादानं हेतुविभक्तिमत्त्वदलसार्थक्याय । एतत्कल्पे तादृशसाध्याविषयकत्वप्रतियोगिकोटौ साध्यांशमनुपादाय दलान्तरोपादानं 'प्रक्षालनाद्धी'त्यादिन्यायेन सन्दर्भविरुद्धमतः कल्पान्तरमाश्रयते पूर्वेति । तस्माद्वह्निमानित्यादिनिगमने मत्वर्थांश एव साध्यांशस्य विशेषणतयाऽतिव्याप्तिरतः साक्षात्परम्परासाधारणेति । तथाच तत्रापि परम्परया साध्यस्य पक्षविशेषणत्वान्न दोषः ।

हेतुत्व प्रमेयं प्रमेयादित्यादौ प्रमेयत्वात्त्रिसाध्यके हेत्वंशपदेऽव्याप्तिः हेतुतावच्छेदकीभूतसाध्यस्य परम्परया पक्षविशेषणत्वाद्यत पूर्वोपदर्शितेति । प्रकृतपक्षसाध्यकप्रतिज्ञाजन्यबोधे यादृशं पक्षांशे साध्यस्य विशेषणत्वं तादृशेत्यर्थः । तच्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाक्षात्पक्षनिरूपितपक्षांशेऽभेदादिसम्बन्धेन विशेषणतापन्नसम्बन्ध्यादिनिरूपितं च, तादृशविशेषणतात्मकसाध्यविषयताशून्यत्वं समुदितार्थः । अथ वह्निमान् वह्निमद्वृत्तिधर्मशून्यत्वादित्यादौ हेतावव्याप्तिवारणाय प्रकृतेति पक्षतावच्छेदकावच्छिन्नार्थकम्, न चैवमनुपपन्नपक्षे निगमनजन्यबोधे साध्यस्य पक्षतावच्छेदकावच्छिन्नाविशेषणत्वादतिव्याप्तितादवस्थ्यमिति वाच्यम् । अनुपपन्नपक्षे पक्षमुख्यविशेष्यतानिरूपितप्रकारतापन्नस्वरूपपक्षविशेषणतापन्नत्व यदि निवेश्यते तदा पक्षतावच्छेदकावच्छिन्नत्वाविवक्षणेऽपि तस्माद्वितरेभ्यो भिद्यत इत्यादिनिगमनादावतिव्याप्तेरप्रसक्त्यपरिहारतयैतत्कल्पस्यानुपपन्नपक्षाभिप्रायकत्वात् ।

अयं धूमाभाववान् वह्न्यभावादित्यादौ यो धूमवान्स वह्निमानित्यादिव्यतिरेक्युदाहरणस्य यथाश्रुतहेतुविभक्तिमत्त्वनिवेशेनापि वारणासम्भवाद्विचक्षणीयस्य प्रकृतसाध्यान्वयबोधनक्षमार्थोपस्थितिजनकहेतुविभक्तिमत्त्वस्य व्यावृत्तिस्थलमाह इदमिति । उद-
णस्य साध्याविषयकत्वरक्षणायाभावसाध्यकानुधावनम् । हेतुविभक्तिपदस्य ज्ञापकत्वरूपहेतुत्वबोधकविभक्त्यर्थकत्वे प्रथमोदाहरणे नाति-

व्याप्तिः-तत्र 'जनिर्भ्रात्वर्थोत्पत्त्यन्वितप्रयोज्यत्वस्यैव पञ्चम्यर्थत्वात्। अतः स्थलान्तरमाह अयमिति। व्यतिरेक्युदाहरणस्येति। यद्दण्डाजातं तद्दण्डसंयोगाजन्यद्रव्यत्वाभाववत् यो धूमादालोकवान् स आर्द्रेन्धनवानित्याकारकस्येति शेषः। साध्याविषयकत्वरक्षायै व्यतिरेकिपर्यन्तानुधावनम्। यद्यप्यन्वय्युदाहरणस्य साध्यविषयकत्वेऽपि पक्षतावच्छेदकविशिष्टे साध्याविशेषणकत्वादतिव्याप्तिस्तदवस्थैव द्वितीयकल्पे तथापि प्रथमकल्पेऽपि व्यावृत्तिघटनायाबाधसाध्यकव्यतिरेक्यनुसरणम्। तत्र तादृशोदाहरणस्य साध्यान्वितस्वार्थबोधकपदशालित्वनिवेशनेनैव वारणसम्भवात्। तादृशविभक्तिपर्यन्तस्य व्यावृत्तिस्थलमाह हेतुत्वपक्षकेति॥ साध्यान्वितेति। निगमनोपस्थाप्यसाध्यान्वितेत्यर्थः। विशेषणतया साध्यान्वितस्याविवक्षणादिति भावः। न चोपनये व्याप्तिघटकतया साध्यविषयकत्वसत्त्वात्तत्रातिव्याप्तिः प्रसज्यते, अनुपक्तपक्षे निगमनोपस्थाप्यसाध्येन सममिदंपदार्थस्य हेतुत्वस्यानन्वयाद्व्यावृत्तिदानस्यानुपङ्गपक्षाभिप्रायकतयाऽननुपङ्गपक्ष च निरुक्तविषयतावहिर्भूतसाध्यविषयताशून्यत्वस्यैव साध्याविषयकत्वपदार्थतया पक्षविशेषणतया साध्याविषयकत्वस्याप्रयोजकत्वादिति वाच्यम्। उपनयपदस्य इतरत्वव्यापकीभूताभावप्रतियोगिमत्त्वेत्याकारकाबाधसाध्यकव्यतिरेक्युपनयपरत्वात्।

प्रकृतसाध्येति। प्रकृतसाध्यान्वितस्वार्थभानप्रयोजकाकांक्षादिमद्धेतुविभक्तिमत्त्वमित्यर्थः। उपदर्शितस्थले धूमज्ञानज्ञाप्यालोकाभावादिरूपसाध्यांशे पञ्चम्यर्थान्वयात्तत्रातिव्याप्तिरिति भावः।

नन्वेवं हेतुपदमनर्थकं साध्यान्वितस्वार्थबोधकविभक्तिशालिनो हेत्वतिरिक्तावयवस्य साध्यविषयकतानियमेनातिप्रसङ्गानवकाशात्। न च पक्षविशेषणतया साध्याविषयकत्वनिवेशपक्षे ज्ञानादिसाध्यके य इच्छति स जानातीत्युदाहरणे ज्ञानादिरूपसाध्यान्वितस्वार्थबोधकाख्यातविभक्तिशालिनि विशेषणविभक्तेरभेदार्थकत्वमते प्रमेयत्वादिपक्षकप्रमेयत्वादिसाध्यकोपनये पक्षीभूतसाध्यान्विताभेदबोधकप्रथमाविभक्तिशालिनि चातिव्याप्तिवारणाय हेतुपदोपादानमावश्यकमिति वाच्यम्। पक्षविशेषणतया साध्याविषयकत्वनिवेशपक्षे हेतुपदोपादानेऽपि (यो यो धूमवान् स स वह्निमान् यथा धूमाद्वह्निमन्महानस-

( गा० ) निगमनवारणायेति । प्रतिज्ञोदाहरणोपनयनाविशेषाणां विवक्षणीयहेतुविभक्तिमत्त्वविशेषणेन वारणसम्भवान्न तदुक्तम् । ननु साध्याविषयकबोधजनकत्वनिवेशे वह्निमान्वह्निसामग्रीमत्त्वादित्याद्युक्तहेतावव्याप्तिरत आह साध्याविषयकत्वं चेति । वह्निमाविषेति । विवक्षणीयमिति शेषः । साध्यांशोपादानं हेतुविभक्तिमत्त्वदलसार्थक्याय । एतत्कल्पे तादृशसाध्याविषयकत्वप्रतियोगिकोटौ साध्यांशमुपादाय दलान्तरोपादान 'प्रक्षालनाद्धी'त्यादिन्यायेन सन्दर्भविरुद्धमतः कल्पान्तरमाश्रयते पूर्वेति । तस्माद्वह्निमानित्यादिनिगमने मत्त्वर्थांश एव साध्यांशस्य विशेषणतयाऽतिव्याप्तिरतः साक्षात्परम्परासाधारणेति । तथा च तथापि परम्परया साध्यस्य पक्षविशेषणत्वान्न दोषः ।

हेतुस्त्व प्रमेयं प्रमेयादित्यादौ प्रमेयत्वादिसाध्यके हेत्ववयवेऽव्याप्तिः हेतुतावच्छेदकीभूतसाध्यस्य परम्परया पक्षविशेषणत्वादत पूर्वोपदर्शितेति । प्रकृतपक्षसाध्यकप्रतिज्ञाजन्यबोधे यादृशं पक्षांशे साध्यस्य विशेषणत्वं तादृशेत्यर्थः । तच्च साध्यतावच्छेदकसम्बन्धावच्छिन्नं साक्षात्पक्षनिरूपितं पक्षांशेऽभेदादिसम्बन्धेन विशेषणतापन्नसम्बन्ध्यादिनिरूपितं च, तादृशविशेषणतात्मकसाध्यविषयताशून्यत्वं समुदितार्थः । अयं वह्निमान् वह्निमद्वृत्तिधर्मशून्यत्वादित्यादौ हेतावव्याप्तिवारणाय प्रकृतेति पक्षतावच्छेदकावच्छिन्नार्थकम् । न चैवमनुपङ्गपक्षे निगमनजन्यबोधे साध्यस्य पक्षतावच्छेदकावच्छिन्नविशेषणतयाऽतिव्याप्तितादवस्थ्यमिति वाच्यम् । अननुपङ्गपक्षे पक्षमुख्यविशेष्यतानिरूपितप्रकारतापन्नस्वरूपं पक्षविशेषणतापन्नत्वं यदि निवेश्यते तदा पक्षतावच्छेदकावच्छिन्नत्वाविवक्षणेऽपि तस्मादितरेभ्यो भिद्यत इत्यादिनिगमनादावतिव्याप्तेरशक्यपरिहारतया एतत्कल्पस्यानुपङ्गपक्षाभिप्रायकत्वात् ।

अयं धूमाभाववान् वह्न्यभावादित्यादौ यो धूमवान्स वह्निमानित्यादेर्व्यतिरेक्युदाहरणस्य यथाश्रुतहेतुविभक्तिमत्त्वनिवेशेनापि वारणसम्भवाद्विवक्षणीयस्य प्रकृतसाध्यान्वयबोधक्षमार्थोपस्थितिजनकहेतुविभक्तिमत्त्वस्य व्यावृत्तिस्थलमाह इदमिति । -
णस्य साध्याविषयकत्वरक्षणायाभावसाध्यकानुधावनम् । हेतुविभक्तिपदस्य ज्ञापकत्वरूपहेतुत्वबोधकविभक्त्यर्थकत्वे प्रथमोदाहरणे नाति

व्याप्तिः-तत्र जानिभ्रात्वर्थोत्पत्त्यन्वितप्रयोज्यत्वस्यैव पञ्चम्यर्थत्वात्। अतः स्थलान्तरमाह अयमिति। व्यतिरेक्युदाहरणस्येति। यद्-ण्डाज्ञातं तद्दण्डसंयोगाजन्यद्रव्यत्वाभाववत् यो धूमादालोकवान् स आर्द्रेन्धनवानित्याकारकस्येति शेषः। साध्याविषयकत्वरक्षायै व्यतिरेकिपर्यन्तानुधावनम्। यद्यप्यन्वय्युदाहरणस्य साध्यविषयकत्वेऽपि पक्षतावच्छेदकविशिष्टे साध्याविशेषणकत्वादतिव्याप्तिस्तदवस्थैव द्वितीयकल्पे तथापि प्रथमकल्पेऽपि व्यावृत्तिघटनायाभाव-साध्यकव्यतिरेक्यनुसरणम्। तत्र तादृशादाहरणस्य साध्यान्वित-स्वार्थबोधकपदशालित्वनिवेशनेनैव वारणसम्भवात्। तादृशा-विभक्तिपर्यन्तस्य व्यावृत्तिस्थलमाह हेतुस्वपक्षकेति॥ साध्या-न्वितेति। निगमनोपस्थाप्यसाध्यान्वितेत्यर्थः। विशेषणतया साध्यान्वितस्याविवक्षणादिति भावः। न चोपनये व्याप्तिघटक-तया साध्यविषयकत्वसत्त्वान्नातिव्याप्तिः प्रसज्यते, अनुपङ्गपक्षे निगमनोपस्थाप्यसाध्येन सममिदंपदार्थस्य हेतुत्वस्यानन्वयाद्व्यावृत्तिदानस्यानुपङ्गपक्षाभिप्रायकतयाऽननुपङ्गपक्ष च निरुक्तविषयताबहिर्भूतसाध्यविषयताशून्यत्वस्यैव साध्याविषयकत्वपदार्थतया पक्षविशेषणतया साध्याविषयकत्वस्याप्रयोजकत्वादिति वाच्यम्। उपनयपदस्य इतरत्वव्यापकीभूताभावप्रतियोगिमत्त्वेत्याकारकाभाव-साध्यकव्यतिरेक्युपनयपरत्वात्।

प्रकृतसाध्येति। प्रकृतसाध्यान्वितस्वार्थभानप्रयोजकाकांक्षादिमद्धेतुविभक्तिमत्त्वमित्यर्थः। उपदर्शितस्थले धूमज्ञानज्ञाप्यालोकाभावादिरूपसाध्यांशे पञ्चम्यर्थान्वयान्नातिव्याप्तिरिति भावः।

ननु एवं हेतुपदमनर्थकं साध्यान्वितस्वार्थबोधकविभक्तिशालिनो हेत्वतिरिक्तावयवस्य साध्यविषयकतानियमेनातिप्रसङ्गानवकाशात्। न च पक्षविशेषणतया साध्याविषयकत्वनिवेशपक्षे ज्ञानादिसाध्यके य इच्छति स जानातीत्युदाहरणे ज्ञानादिरूपसाध्यान्वितस्वार्थबोधकाख्यातविभक्तिशालिनि विशेषणविभक्तेरभेदार्थकत्वमते प्रमेयत्वादिपक्षकप्रमेयत्वादिसाध्यकोपनये पक्षीभूतसाध्यान्विताभेदबोधकप्रथमाविभक्तिशालिनि चातिव्याप्तिवारणाय हेतुपदोपादानमावश्यकमिति वाच्यम्। पक्षविशेषणतया साध्याविषयकत्वनिवेशपक्षे हेतुपदोपादानेऽपि, (यो यो धूमवान् स स वह्निमान् यथा धूमाद्वह्निमन्महानस-

मिति) दर्शितसदृष्टान्तोदाहरणातिव्याप्तिवारणायोपदर्शितसाक्षात्पर-म्परासाधारणप्रकृतपक्षविशेषणतापन्नसाध्यान्वितस्वार्थबोधकत्वस्या-वश्यं निवेशनीयतया तादृशोदाहरणोपनययोस्तथाविधसा-ध्यान्वितस्वार्थबोधकविभक्तिमत्त्वविरहेणातिप्रसङ्गानवकाशादित्यत आह हेत्वितीति । इदमुपलक्षणम् । पक्षविशेषणतया सा-ध्याविषयकत्वानिवेशकल्पे विभक्तिमत्त्वमपि नोपादेयम्—तत्कल्पस्या-नुषङ्गपक्षपरतया तत्पक्षे उपनयस्य निगमनैकवाक्यताविरहेण साध्यान्वितस्वार्थबोधजनकपदशालित्वाभावादुपदर्शितविभक्तिपदव्या-वृत्तेरनुषङ्गपक्षेऽसङ्गतेस्तत्कल्पे व्यावृत्त्यभावादिति केचित् ।

वस्तुतोऽनुषङ्गपक्षेऽपि उपनयस्थस्यैव पक्षबोधकेदंपदस्य निग-मनघटकीभूतसाध्यान्वितस्वार्थबोधकतया तादृशबोधे च प्रयोजना-न्तरविरहेण स्वजन्यबोधानिवेशादुपनये विभक्तिपदव्यावृत्तिः सम्भ-वतीत्यवधेयम् ।

ननु प्रथमसाध्याविषयकत्वानिर्वचनपक्षे पर्वतः पर्वतभिन्नत्वप्र-कारकज्ञानाभाववान् तादृशज्ञानाभावात् यः पर्वतभिन्नत्वेन ज्ञायते स पर्वतभिन्नत्वेन ज्ञायते यथा पर्वतभिन्नत्वप्रकारकज्ञानाभाववदुत्प-न्नं ज्ञानमित्यादौ विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभाव-साध्यकहेतुकव्यतिरेक्युदाहरणेऽतिव्याप्तिः । तत्र हेतुतावच्छेदकवि-शिष्टहेतुविशिष्टहेतुत्वविषयतान्तर्भूताया एव साध्यविषयतायाः सत्त्वात् साध्यीभूततादृशाभावान्वितस्वार्थबोधकपञ्चमीविभक्तिमत्त्वा-च्च, प्रथमकल्पे साध्ये पक्षविशेषणतापन्नत्वानिवेशात् दृष्टान्तो-पदधाप्यस्य तादृशसाध्यस्य पक्षानन्वितस्याकिञ्चित्करत्वादित्यत आह यदि चेति । सिषाधयिषया न्यायप्रयोगस्य सविवादतया यदि चेत्युक्तम्, तस्य च इत्युच्यत इत्यनेनान्वयः । समवायसम्बन्धा-वच्छिन्नाभावस्य साध्यत्वे ज्ञानस्य समवायेन ज्ञानरूपप्रतियोग्यनधि-करणतया न व्यतिरेकदृष्टान्तत्वसम्भव इति विशेष्यतयेत्युक्तम् । अ-त एव महानसत्वप्रकारकज्ञानाभाव उपेक्षितः विशेष्यतयापि ज्ञान-स्य तादृशज्ञानवत्त्वाभावात् । साध्यस्य हेतुतायामेव हेतुत्वविशेष-णतापन्नतथाविधसाध्यविषयतायाः हेतुतावच्छेदकविशिष्टहेतुवि-षयितान्तर्भावः सम्भवतीति तदादरः । ज्ञानाभावानुत्पन्नमिति । अ-संसर्गाग्रहविषया तादृशज्ञानाभावस्य पर्वतत्वप्रकारकज्ञानोत्पाद-

कत्वं बोध्यम् । व्यतिरेकिपर्वतानुधावनं विशिष्टविषयताबहिर्भूतसाध्यविषयत्वाभावनिर्वाहाय । प्रकृतसाध्ये विशेषणतयाऽन्वितो यः स्वार्थस्तद्बोधकत्वं च दर्शितहेतुत्वपक्षकोपनयस्थेदम्पदस्य नास्तीति तद्विवक्षणे विभक्तिपदवैयर्थ्यमिति विशेष्यविशेषणसाधारणमेवान्वितत्वं निवेशनीयमित्युक्तोदाहरणबोधे पञ्चम्यर्थस्य साध्यविशेष्यत्वेऽप्यतिप्रसङ्ग एवेत्यभिप्रायः ।

अवयवान्तरेति । स्वाभिन्नावयवघटकपदजन्योपस्थितिसहकारेण वा तत्पदार्थान्वितस्वार्थबोधकविभक्तिमत्त्वमित्यर्थः । तेन तादृशसाध्यस्य प्रतिज्ञाद्यवयवघटकपदोपस्थापितत्वेऽपि नातिव्याप्तिः । न चैवमनुषङ्गपक्षे साध्याविषयकत्वविशेषणमनर्थकं निगमनस्य तत्पक्षे उपनयेनैकवाक्यताविरहेण स्वाघटकपदोपस्थापितार्थान्वितार्थबोधकविभक्तिमत्त्वाभावात् व्यावृत्त्यसङ्गतेरिति वाच्यम् । चैत्रः पचति पाककृतिसामग्रीमत्त्वादित्यादौ पाककृत्यादिसाध्यकप्रतिज्ञायां हेत्ववयवस्थपञ्चम्युपस्थाप्यहेतुत्वान्वितस्वार्थबोधकाख्यातविभक्तिमत्त्वादतिव्याप्तिवारणाय साध्याविषयकत्वोपादानस्यावश्यकत्वात्, प्रथमरीत्या साध्याविषयकत्वनिर्वचनस्याननुषङ्गपक्ष इवानुषङ्गपक्षेऽपि सम्भवात्, अननुषङ्गपक्षे एवेयं विवक्षा, अनुषङ्गपक्षे तूदाहरणान्यविशेषणेनानुपदमुक्तोदाहरणं वारणीयमित्यपि वदन्ति ।

साध्यघटितार्थबोधकोक्तहेतावव्याप्तिं हेतुविभक्तिमदुक्तोदाहरणेऽतिव्याप्तिं च प्रकारान्तरेण वारयतां मतमाह केचित्त्विति । निगमने हेतुविभक्तिनैयत्याभावात्तत्रातिव्याप्तिवारणाय नियतान्तम् । हेतुत्वस्यापि साध्यबोधकोक्तहेतुवृत्तितयाऽसम्भव इति असामानाधिकरण्यमुपेक्ष्यानियतत्वानुधावनम् । उदाहरणोपनययोः साध्याविषयकबोधजनकयोरपि सम्भवादुदाहरणोपनयसामान्यवारणाय नियतान्तम् । हेतुविभक्तिमद्दर्शितोदाहरणवृत्त्युदाहरणत्वमादायातिप्रसङ्गवारणाय सामानाधिकरण्यमुपेक्ष्य नियतत्वनिवेशनम् । विभक्तिमत्त्वमनुपादेयं हेतुत्वप्रतिपादकपदवत्त्वनिवेशनेनैवानतिप्रसङ्गात् । हेतुत्वप्रतिपादकपदवत्त्वनैयत्यार्थप्रतिपादकविभक्तिमत्त्वनैयत्ययोर्वैकल्पिकमुपादानम् वा । तत्र च द्वितीयकल्पे विशेषणविभक्तेर्निरर्थकत्वाभिप्रायेण उदाहरणविशेषत्वमादाय उक्तोदाहरणेऽतिव्याप्तिवारणायावयवतावच्छेदकेति । तच्चिन्त्यमिति । चिन्ताबीजं पूर्ववत् ।

(चि० ) हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वं वा उदाहरणप्रयोजकाकाङ्क्षाजनकशाब्दज्ञानजनकन्यायावयवत्वं वा साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वं वा प्रतिज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्त्तकज्ञानजनकहेतुविभक्तिमदवयवत्वं वा ।

(दी० ) हेतुत्वप्रतिपादकेति । विभक्त्यर्थहेतुत्वविशेष्यकान्वयबोधजनकन्यायावयवत्वमित्यर्थः । हेतुत्वं प्रमेयमित्यादिप्रतिज्ञावारणाय विभक्त्यर्थेति । तस्मादितरेभ्यो भिद्यते इत्यादिनिगमनवारणाय हेतुत्वेति निशेष्येति च । घटो दण्डाद्वह्निधूमादित्यादिका तु न प्रतिज्ञा तदहेत्तेरतदात्मनश्च तद्धर्मव्यापकत्वायोगात् सम्प्रदायविरोधाच्च तेन तत्रत्यनिगमने नातिव्याप्तिरिति भावः ।

उदाहरणेति । क्वचिज्जिज्ञासानुत्पादेऽपि तद्योग्यतासत्त्वान्नाव्याप्तिः । अनुक्तोदाहरणस्थलेऽपि तादृशयोग्यतासत्त्वान्न्यायावयवेति । उदाहरणत्वञ्चेह न न्यायगर्भं वैयर्थ्यात् ।

साध्याविषयेत्यादि । अयं न दण्डाद्दण्डसंयोगाजन्यद्रव्यत्वादित्यादौ प्रतिज्ञानिगमनयोर्वारणाय साध्याविषयेत्यादिव्याख्यातार्थकम् । उपनयविशेषणवारणाय हेतुपञ्चम्यन्तेति ।

हेत्विति हेतुत्वबोधकार्थकं हेतुपञ्चम्योर्वैकल्पिकमुपादेयम् । उपनयस्य चान्तेऽनुसन्धीयमाना प्रथमैवान्तः । एवं दण्डादित्यादेः स्वपरस्यापि दृष्टान्तस्य पञ्चम्यन्तत्वेऽन्वयायोगात् । कस्यचिद्व्यतिरेकिण उदाहरणस्य पञ्चम्यन्तत्वसम्भवे तु तद्वारणं पूर्ववत् । अत्र चार्थवज्ज्ञानस्य हेतुपञ्चम्यन्तत्वं बोध्यम्, तेन निर-

र्थकतसिलन्तवह्निमात इत्यादौ नाव्याप्तिः । पञ्चम्यादेस्तसिला-द्यादेशवादिनां नये तु नानुपपत्तिगन्धोऽपि ।

केचित्तु हेतुपञ्चम्यन्तत्वं हेतुत्वप्रतिपादकपदशालित्वम्, पूर्ववत्साध्यविषयकज्ञानजनकत्वञ्च इतरनैरपेक्ष्येण प्रकृतहेतुत्व-विशिष्टसाध्यविषयकज्ञानाजनकत्वम्, साध्यञ्चेह न विवक्षितं वैय-र्थ्यादित्याहुः ।

( गा० ) यथाश्रुतप्रकृतद्वितीयलक्षणार्थस्य निगमनसाधारणतया-ऽन्यथा व्याचष्टे विभक्त्यर्थेति । विभक्तिजन्यहेतुत्वोपस्थितिद्वारा हेतु-त्वमुख्यविशेष्यकशाब्दधीजनकन्यायावयवत्वमित्यर्थः. तेन हेतुत्वे विभक्त्यर्थहेतुत्वविशेषणस्याव्यावर्त्तकत्वेऽपि न क्षतिः । निगमनवा-रणायेति । तत्र तिङर्थस्य विशेष्यत्वादिति भावः । विशेष्यत्वेति । हेतुत्वविशेष्यकत्वस्य तत्रापि सत्त्वेन मुख्यविशेष्यतापर्यन्तानिवेशने तत्रातिव्याप्तिरिति भावः ।

ननु घटो दण्डादित्यादिप्रतिज्ञाघटितघटादिपक्षकनिरूपकतासंस-र्गकदण्डादिनिष्ठहेतुतासाध्यकन्यायान्तर्गते तस्माद्दण्डादित्याकारक-निगमनेऽननुषङ्गपक्षे विभक्त्यर्थहेतुत्वविशेष्यकबोधजनकेऽतिव्याप्तिरत आह घटो दण्डादिति । ज्ञापकत्वरूपहेतुत्वस्यैव प्रकृते निवेशनीय-तया जनकत्वरूपहेतुत्वसाध्यकप्रथमस्थले नातिव्याप्तिप्रसङ्ग इत्यतो वह्निपक्षकधूमनिष्ठज्ञापकतासाध्यकस्थलान्तरानुसरणम् । तदवृत्तेरि-ति । तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धेन व्यापकत्वानभ्युपगमा-दिति भावः ।,तादात्म्येन स्वस्य स्वधर्मव्यापकत्वसत्त्वादाह अतदा-त्मन इति । ज्ञाप्यताया एव नवीनमते पञ्चम्यर्थतया ज्ञाप्यत्वसाध्य-कतादृशप्रतिज्ञा सम्भवत्येव, तथा चासम्भववारणाय लक्षणस्थहे तुत्वपदेनापि तादृशस्य हेतुत्वरूपार्थस्यैव विवक्षणीयतया तत्रत्य-निगमनेऽतिव्याप्तितादवस्थ्यमित्याशङ्क्याह सन्दर्भविरोधाच्चेति ।

न्यायान्तर्गतस्य धूमादित्यादिभागस्य उदाहरणप्रयोजक-जिज्ञासोपधायकत्वविरहेऽपि तत्स्वरूपयोग्यतामादायातिव्याप्तिं प्र-सज्य न्यायावयवत्वदल सार्थकीचिकीर्षुर्जनकतापदस्य स्वरूपयो-ग्यतापरत्व स्फुटयति क्वचिदिति । अभ्युपेत्य फलोपधाननिवेशेऽपि

न्यायावयवत्वनिवेशनमावश्यकमित्याह उदाहरणत्वं चेति। वैयर्थ्याद्-प्रयोजनान्तराभावात्। तथाच यत्रोदाहरणान्तमेव प्रयुक्तं तत्राप्युदाहरणप्रयोजकजिज्ञासाफलोपधानसम्भवेनातिव्याप्तिवारणाय न्यायावयवत्वनिवेशनं जनकपदस्य फलोपधानपरत्वेऽप्यावश्यकमिति भावः।

चतुर्थलक्षणे प्रसिद्धप्रतिज्ञानिगमनयोः साध्याविषयकत्वविशेषणव्यावृत्तिर्न घटते पञ्चम्यन्तत्वाभावादिति पञ्चम्यन्तभिन्नविशेषे व्यावृत्तिमाह अथ न दण्डादिति। अयं दण्डादित्यादिप्रतिज्ञायाः संप्रदायविरुद्धत्वं प्रागभिहितमित्यभावसाध्यकानुधावनम्। वह्निमान् वह्निसामग्रीमत्त्वादित्यादौ यथाश्रुतव्याप्तेराह व्याख्यातार्थकमिति हेतुतावच्छेदकविशिष्टेत्याहिनेत्यादिः। उपनयविशेषणेति। साध्याविषयकबोधजनकाभावसाध्यकव्यतिरेक्युपनयेत्यर्थः। उदाहरणस्य पञ्चम्यन्तस्यापि सम्भवात्तद्वारणाय उदाहरणान्यत्वस्य निवेशनीयतया तत्र यथोदाहरणसामान्यवारणसम्भवादुपनयपर्यन्तानुधावनम्। धूमाद्यालोकाभावादिसाध्यके धूमाद्यालोकव्यापकाभावप्रतियोगिमानयमित्याद्युपनयेऽतिव्याप्तिवारकतया तत्पदसार्थक्यं बोध्यम्।

उपनयस्य कस्यचिदपि पञ्चम्यन्तत्वासम्भवाद्धेतुपदवैयर्थ्यमाशङ्क्याह हेतुत्वबोधकार्थकमिति। तादृशार्थकहेतुपदस्य पञ्चमीपदस्य च वैकल्पिकमुपादानमित्यर्थः। तथाच हेतुत्वबोधकान्तस्य पञ्चम्यन्तत्वं पृथक् निवेश्य लक्षणद्वयं करणीयमित्यर्थः।

नन्वेवं प्रथमलक्षणे हेतुत्वपक्षके तद्बोधकेदंपदान्तोपनयेऽतिव्याप्तिरित्यत आह उपनयस्य चेति। श्रूयमाणविभक्त्यन्तत्वाभावादनुसन्धीयमानेति। तथाच तस्या हेतुत्वबोधकत्वाभावादेव नातिव्याप्तिरिति भावः।

ननु द्वितीयलक्षणे इदं द्रव्यसमवेतं गुणत्वादित्यादौ यथा दण्डादित्यादिस्वपरपञ्चम्यन्तपदघटितदृष्टान्तशालिनि उदाहरणे द्वितीयरीत्या साध्याविषयकत्वनिर्वचनपक्षे गुणत्वाभावसाध्यके तादृशव्यतिरेकदृष्टान्तशालिन्युदाहरणेऽतिव्याप्तिरित्यत आह प्रथमेति। दृष्टान्तस्येत्यत्रानुसन्धीयमाना प्रथमैवान्त इत्यनुपज्यते। अन्वयायोगादिति। प्रथमान्तत्वं विना समानविभक्तिकत्वाभावेन तादृशशब्दे प्रथमान्तपदोपस्थाप्यसाध्याभावसाधनाभाववद्भेदान्वयानुपपत्तेरित्यर्थः।

नन्वेवमपि अयं घटो न दण्डाजन्यत्वात् यो घटः स दण्डादि-त्याद्यावुदाहरणे लक्षणद्वयातिव्याप्तिर्दुर्वारैव साध्याविषयकबोधजन-कत्वात्पञ्चम्यन्तत्वाच्चेत्यत आह कस्यचिदिति । पूर्ववदिति । अव-यवान्तरोपस्थापितार्थान्वितस्वार्थबोधकत्वोदाहरणान्यत्वयोरन्यतर-विशेषणेत्यर्थः । ननु पञ्चम्यास्तसिलित्यत्र पञ्चम्या इत्यस्य पञ्चम्य-न्ततापक्षे पर्वतो वह्निमान् वह्निप्रमात इत्यादिहेत्ववयवस्य तसिलन्तस्य हेतुपञ्चम्यन्ततावाविरहादव्याप्तिरित्यत आह अत्र चेति । हेतुपञ्च-म्यन्तत्वमिति । हेतुत्वबोधकान्तत्वं पञ्चम्यन्तत्वं चेत्यर्थः । अर्थवद्भाग-स्येति । स्वघटकार्थवद्भागपूर्वत्वाभाववद्धेतुत्वबोधकादिघटितत्वमेव तदन्तत्वमिह विवक्षितमिति भावः । अर्थवत्त्वं आकांक्षानिर्वाहकत्वम् । तसिलं विनापि तत्पूर्वपञ्चम्यैव प्रकृतान्वयबोधौपयिकाकांक्षानिर्वा-हान्न तसिलादेराकांक्षानिर्वाहकत्वं, न तु किञ्चिदर्थवाचकत्वं तत् त-सिलादेरवाचकत्वेऽपि तद्घटकप्रत्येकवर्णानां वाचकत्वात् पकाक्ष-रकोशेन समस्तवर्णानां वाचकताबोधनात् । उक्तसूत्रे पञ्चमीपदस्य षष्ठ्यन्तत्वमपि सम्भवतीत्यभिप्रायेण यथाश्रुतस्यैव साधुतां समर्थ-यति पञ्चम्यादेरिति । नानुपपत्तीति । तथासति तसिल एव हेतुत्व-प्रतिपादकत्वात् पञ्चमीत्वाच्चेति भावः ।

तसिलादेः पञ्चम्यनादेशतापक्षे उक्तहेतावव्याप्तिवारणाय पञ्च-म्या अन्तत्वमविवक्षतां मतमाह केचित्त्विति । हेतुत्वप्रतिपादकपद-शालित्वमिति । तथाच पञ्चम्यन्तत्वानिवेशात्तसिलः पञ्चम्यनादेशता-पक्षेऽपि न तदन्तहेतावव्याप्तिरिति भावः । ननु हेतुत्वप्रतिपादकपद-स्यान्तत्वाविवक्षणे दर्शितव्यतिरेक्युपनयेऽतिव्याप्तितादवस्थ्यमि-त्यत आह पूर्ववदिति । प्रकृतसाध्यान्वितस्वार्थबोधकतादृशपदशा-लित्वरूपमित्यर्थः । एवञ्च प्रथमलक्षणे तादृशस्वार्थबोधकविभक्ति-शालित्वं साध्याविषयकधीजनकत्वं च निरुक्तविशिष्टविषयतावहि-र्भूतसाध्यविषयताशून्यधीजनकत्वरूपं निविष्टम् । अत्र च तादृशहेतु-त्वप्रतिपादकशालित्वं साध्याविषयकज्ञानजनकत्वं च निर्वक्ष्यमाण-मन्यविधं प्रविष्टमिति भेद इत्यवधेयम् । पर्वतो वह्निमानित्यादिन्यायान्त-र्गतप्रतिज्ञादेः निर्वाच्यसाध्याविषयकज्ञानजनकताशालिनो वारणाय हेतुत्वप्रतिपादकपदोपादानम् वह्नेर्द्रव्यत्ववान् वह्निमान् हेतुत्वं प्रमेयमि-त्यादिप्रतिज्ञाद्यतिव्याप्तिवारणाय विशेषणतया साध्यान्वितत्व-

निवेशेनेऽपि सुन्दरवह्निमत्सधर्मा पर्वतो वह्निमानित्यादावतिव्याप्तिवारणाय तदावश्यकत्वम्। न चैवमप्यालोकाद्वह्निमतः सधर्मा पर्वतो वह्निमान् धूमादित्यादावतिव्याप्तिर्दुर्वारैव तत्रापि विवक्षणीयप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविशिष्टसाध्यविषयकज्ञानजनकत्वस्याक्षतत्वादिति वाच्यम्। हेतुत्वप्रतिपादकेत्यस्य प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वप्रतिपादकार्थकत्वात्।

यथाश्रुतं साध्याविषयकज्ञानजनकत्वम् अयं वह्निमान् वह्निसामग्रीमत्त्वादित्यादिन्यायस्थलेहेत्ववयवेऽव्यापकं पूर्वनिरुक्तनिवेशे च साध्यान्वितस्वार्थबोधकहेतुत्वप्रतिपादकपदशालित्वे विशेषणे हेतुत्वप्रतिपादकेत्यस्य वैयर्थ्यम् प्रतिज्ञायां निरुक्तसाध्याविषयकज्ञानजनकत्वाभावादेव वारणादतः साध्याविषयकज्ञानजनकत्वमन्यथा निर्वक्ति साध्येति। एवञ्च पर्वतो वह्निमानित्यादिप्रतिज्ञायाः साध्यविषयकधीजनकत्वेऽपि इतरनैरपेक्ष्येण हेतुत्वविशिष्टसाध्यविषयकज्ञानाजनकतया साध्याविषयकेत्यादिनाऽवारणात् हेतुत्वप्रतिपादकत्वं पदविशेषणमर्थवन्नयति हेत्ववयवस्यापि प्रतिज्ञासहकारेण हेतुत्वविशिष्टसाध्यविषयकज्ञानजनकतयाऽसम्भववारणाय इतरनैरपेक्ष्येणेति। स्वाघटकपदासहकारेणेत्यर्थकम् अजनकेत्यस्य प्रतियोगिनि विशेषणम्, तथा च स्वेतराऽघटिताजन्यहेतुत्वविशिष्टसाध्यविषयकज्ञानजनकं यत्तद्वत्त्वमिति समुदितार्थः। अथ जनकपदस्य जनकतावच्छेदकधर्मपर्याप्त्याश्रयपरत्वेनैव हेत्ववयवस्य प्रतिज्ञासहकारेण तादृशबोधजनकत्वेऽपि तादृशधर्मपर्याप्त्याश्रयसमुदायभेदस्याक्षततया इतरनैरपेक्ष्यप्रवेशोऽपि लक्षणसमन्वय इति चेत्, तर्हि तादृशपर्याप्तिनिवेशलाभायैव तदभिधानम्। अथ धूमाद्वह्निमान् धूमाद्वह्निमतोऽन्यथावर्तमानधर्मादित्यादिहेतौ धूमनिष्ठहेतुविशिष्टसाध्यविषयकज्ञानजनकस्य सत्त्वात् प्रकृतेति। प्रकृतहेतुतावच्छेदकावच्छिन्नविशिष्टेत्यर्थकम्। प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वमितरविशेषणतयाऽवगाहिन एव ज्ञानस्य इतरनैरपेक्ष्यहेतुघटकत्वेन जननात् तादृशहेतुत्वप्रकारकज्ञानसामान्याजनकत्वस्यैव सकलहेत्ववयवसाधारण्यात् साध्यांशोपादानमनर्थकमिति तत्परित्यज्य साध्यं चेति। अत्र च साध्यान्वितस्वार्थबोधकत्वनिवेशेऽपि हेत्वन्यपदस्य कथाति रेकयुपनये साध्याविषयस्वार्थबोधस्वजन्यत्वानिवेशेऽनुपपन्नपदे सा

ध्यान्वितपक्षबोधस्योपनयाजन्यतया तद्वारणेऽप्यनुपङ्गपक्षे निगमनोपस्थापितसाध्यान्वितहेतुत्वबोधकेदंपदशालिन्यतिव्याप्तिः । न च हेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वप्रतिपादकपदशालित्वनिवेशान्न तत्रातिव्याप्तिरिति वाच्यम् । गोत्वाभावनिष्ठं हेतुत्वं सास्नाभाववत् गोत्वाभावादित्यादिन्यायान्तर्गतोपनये तथाप्यतिव्याप्तिवारणासम्भवादनुपङ्गपक्षेऽप्युक्तन्यायान्तर्गतप्रतिज्ञायामतिव्याप्तेश्च । विशेषणतया साध्यान्वितस्वार्थबोधकत्व निवेश्य तद्वारणे साध्यान्वितत्वत्र साध्यांशवैयर्थ्यम् । अनुपङ्गपक्षेऽप्युपनयस्थेदंपदार्थस्य कुत्रापि विशेषणताविरहात् ( पदान्तरोपस्थापितन प्रकृतहेतुना साक्षाद्विशेषितहेतुत्वप्रतिपादकपदशालित्वं निवेश्योक्तविशिष्टहेतुत्वपक्षप्रतिज्ञोपनययोर्वारणेऽपि ) प्रकृतहेतुत्वविशिष्टसाध्याविषयकज्ञानजनकत्वनिवेशेनेवोपपत्तौ तदभ्यासस्य इतरनैरपेक्ष्येणेत्यभिधानस्य चाकिञ्चित्करत्वमित्यस्वरसः ॥

(दि०) पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा, हेतुपदेन ज्ञानलक्षणात् । अन्यथा लिङ्गस्याहेतुत्वेन हेतुविभक्त्यर्थानन्वयात् तथैवाकाङ्क्षानिवृत्तेः ।

अनुमितिहेतुज्ञानकारणधूमवत्त्वादितिशब्दजन्यज्ञानवृत्तिप्रतिज्ञादिजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यत्वं हेतुत्वमित्यन्ये । जातिं विना केन रूपेण ज्ञानस्यानुमितिजनकत्वं वाक्यविशेषजन्यत्वस्यापि जन्यतावच्छेदकरूपापरिचये दुर्ग्रहत्वादित्यपरे । अन्वयव्याप्त्यभिधायकावयवाभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वमन्वयिहेतुत्वम् । एतदेव व्यतिरेकव्याप्त्यभिधायकपदप्रक्षेपाद् व्यतिरेकिहेतुत्वम् । अन्वयव्यतिरेकोदाहरणाकाङ्क्षाप्रयोजकतथाभूतावयवत्वमन्वयव्यतिरेकिहेतुत्वम् ।

यद्वा पक्षसपक्षसतो विपक्षासतो हेतुवचनमन्व-

व्यतिरेकि । अत्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरणपक्षसद्धेतुवचनं केवलान्वयि ।

यद्वा अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयकशाब्दधीजनकप्रतीतान्वयसाध्यसाधनवाचकहेतुविभक्तिमच्छब्दत्वमन्वयिहेतुत्वम् । एतदेवाप्रतीतान्वयसाध्यसाधनेतिविशेषणाद्व्यतिरेकिहेतुलक्षणम् । कथायां धूमादित्येव प्रयोक्तव्यं न तु धूमवत्त्वादिति मतुपो व्यर्थत्वात् ।

(टी०) पञ्चम्यन्तेति । अनुमितिपरवाक्यत्वं–अवयवत्वम् । हेतुत्वादौ पञ्चमी लाक्षणिकी । वृक्षाद्विभजत इत्यादौ लाघवेनावधित्वे अवधिमत्त्वे वा शक्तत्वात् । द्रव्यनिष्ठपतनावधित्वमिव विभागानिष्ठप्रावधिमत्त्वमपि सम्बन्धविशेषः । स चातिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत् । तत्सम्बन्धाग्रहे च व्यवहारः शक्तिभ्रमात् ।

वृक्षात्पतति पतति इत्यादौ लाघवाद्विभागे शक्तिस्तज्जनकत्वञ्च क्रियायाः सम्बन्धमर्यादया भासत इत्यपि वदन्ति । अतो निगमनेऽतिव्याप्तिरतः पञ्चम्यन्तेति । तस्मादित्यत्र च तत्पदे न लक्षणा शक्त्यैव तादृशज्ञानोपस्थितिसम्भवात् । पर्वतो वह्निमान् वह्निसामग्रीमान् वा तस्मादित्यादिकन्तु न न्यायप्रयोगः सम्प्रदायविरोधात् इति वदन्ति ।

( गा० ) पञ्चम्या लाक्षणिकत्वं व्यवस्थाप्य तद्बलेन निगमनेऽतिव्याप्तिं प्रसञ्जयन् पञ्चम्यन्तपदं सार्थकयति हेतुत्वादाविति । हेतुत्वं–जनकत्वम्, आदिना ज्ञापकत्वपरिग्रहः । जनकत्वोपादानं दृष्टान्तविधया । गुरुशरीरं तत्क्रियानाश्रयत्वे सति तज्जन्यविभागाश्रयावधिरूपमपादानत्वं वा दृष्टान्तविधया आदिपदग्राह्यम् । हेतुत्वं ज्ञापकत्वमेव । तर्हि कुत्र तच्छक्तिरित्यपेक्षायामाह वृक्षादिति । इत्यादाविस्यादिवाक्यस्थपञ्चमीमित्यर्थः । विनिगमनाविरहं निराकरोति

लाघवेनेति । वृक्षादिनिष्ठावधित्वस्य निरूपकतासम्बन्धेन विभागेऽन्वयसम्भवेऽपि न वृक्षादित्यादौ वृक्षादिनिष्ठाया अवधितायाः आश्रयतासम्बन्धावच्छिन्नाभावस्य वृक्षाद्यवधिकविभागेऽपि सत्त्वेनातिप्रसङ्गभिया बोधोपगमासम्भवात् वृत्त्यनियामकनिरूपकतासम्बन्धस्य वाऽभावप्रतियोगितानवच्छेदकत्वाद्विभागनिष्ठं वृक्षादिनिरूपितमवधिमत्त्वमेव पञ्चम्या प्रतिपाद्यत इति नव्यमतानुसारेणाह अवधिमत्त्वे वेति । नन्ववधिमत्त्वमवधितानिरूपकत्वमेव तत्र वृक्षादेरवधितायामेवान्वयस्योपगन्तव्यतया एकदेशान्वयः, निरूपकत्वं च तज्ज्ञानजनकज्ञानविषयत्वमिति ज्ञापकत्वापेक्षया गौरवं चेत्यत आह द्रव्यानिष्ठमिति । सम्बन्धविशेषः—अवधिमन्निष्ठो अवधिनिरूपितः सम्बन्धविशेषः । अवधिमत्त्वमेव स्वरूपसम्बन्धविशेषः तन्निरूपकत्वमेवावधित्वमिति वैपरीत्यस्यापि सम्भवेन विनिगमनाविरहादिति भावः । अन्यदेतदिति । अनतिरिक्तत्वेऽपि अवधित्वादेरनुगमकधर्मस्यानुगतप्रतीत्यनुरोधेनावश्यकत्वात्तस्य प्रवृत्तिनिमित्तत्वे लाघवादिति भावः । नन्ववधित्वादावेव पञ्चम्याः शक्तौ ज्ञापकत्वादावधित्वादिसम्बन्धरूपवृत्त्यग्रहे पञ्चम्या ज्ञापकत्वग्रहासम्भवात्तत्प्रत्यायनेच्छया पञ्चमीप्रयोगो न स्यादित्यत आह तदिति । ज्ञापकत्वादाववधित्वादिसम्बन्धाग्रहे चेत्यर्थः । व्यवहारः—ज्ञापकत्वादिपरपञ्चमीप्रयोगः । शक्तिभ्रमात्—ज्ञापकत्वादौ शक्तिभ्रमात् । अपादानताघटकविभागत्वजात्यवच्छिन्ने शक्तिवादिनां मतमुपन्यस्यति वृक्षादिति । अपैतीति । अपैत्यर्थोऽपगमः स्पन्दमात्रं न तु विभागावच्छिन्नस्पन्दः, तर्हि त्यजितुल्यतया धात्वर्थतावच्छेदकविभागाश्रयतया वृक्षाद्यपादानस्य कर्मताप्रसङ्गात् । नाप्युत्तरसंयोगावच्छिन्नस्पन्दः वृक्षाद्भूमिं प्रयातीतिवद्वृक्षाद्भूमिमपैतीति प्रयोगप्रसङ्गात् । पततीत्यत्राधःसंयोगावच्छिन्नस्पन्दः स्पन्दत्वावान्तरजात्यवच्छिन्नो वा पतत्यर्थः । उभयत्र वृक्षादिनिष्ठविभागजनकत्वं पञ्चमीलभ्यमेवेति प्रवृत्तिनिमित्तलाघवाद्विभागे एव तस्याः शक्तिरित्यर्थः । नन्वेवं जनकत्वं कुतो लब्धव्यम् ? तदन्तर्भावेण शक्तौ च न ज्ञापकत्वाद्यपेक्षया लाघवमित्यत आह जनकत्वं चेति ।

अथ पतादेः स्वनिष्ठविभागानुकूलक्रियाश्रयत्वाद्विभागमात्रस्य

पञ्चम्यर्थत्वे एवं स्वस्मात्पततीत्यादिप्रयोगः स्यादिति भेदप्रतियोगितावच्छेदकत्वसहित एव विभागः पञ्चम्यर्थो वाच्यः स्वनिष्ठक्रियायाः स्वनिष्ठविभागजनकत्वेऽपि स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वविरहान्नोक्तातिप्रसङ्ग इति च लाघवमिति चेन्न । भेदप्रतियोगितावच्छेदकत्वे लक्षणयैवोपपत्तौ तदन्तर्भावेण शक्तेरकल्पनात्, तत्त्वेवं शक्यलक्ष्ययोरपि युगपदन्वयोपगमात् । लक्ष्यार्थभेदप्रतियोगितावच्छेदकत्वाविनिर्मोकेण पञ्चम्या विभागबोधकत्वव्युत्पत्तेर्न विभागमात्रतात्पर्येण स्व स्वस्मात्पततीति प्रयोगप्रसङ्गः । अथवा केवलविभागे पूर्वपूर्वप्रयोगाभावादेवाप्रयोगः ।

वस्तुतो भेदप्रतियोगितावच्छेदकत्वस्य पञ्चम्यर्थत्वेऽपि वृक्षात्पत्रं पततीत्यत्र पत्रात्पत्रं पततीति प्रयोगो दुर्वारः पत्रान्तरनिष्ठभेदमादाय ततः प्रत्येतव्यस्य पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति पत्रनिष्ठविभागजनकत्वस्य पत्रक्रियायामबाधात् । न च भेद एव पञ्चम्यर्थः तस्य स्वप्रतियोगितावच्छेदकत्वस्वाश्रयनिष्ठविभागजनकत्वोभयसम्बन्धेन क्रियान्वयो वाच्य इति नोक्तातिप्रसङ्गः, तत्पत्रनिष्ठक्रियावच्छिन्नप्रतियोगिताकभेदाश्रयपत्रान्तरनिष्ठविभागजनकताया तत्पत्रक्रियायामसत्त्वेन तस्या उभयसम्बन्धेन पत्रान्तरान्वितभेदान्वयायोग्यत्वादिति वाच्यम् । पत्रान्तरनिष्ठतत्क्रियावच्छिन्नभेदस्य वृक्षेऽपि सत्त्वेन तद्भेदाश्रयवृक्षनिष्ठविभागजनकतायाः तत्क्रियायां सत्त्वेन पत्रान्तरनिष्ठभेदस्योक्तोभयसम्बन्धेन तत्क्रियान्वययोग्यताया अक्षतत्वात् अधिकरणभेदेनाभावभेदाभावात् ।

अथ पत्रादित्यत्राधेयतासम्बन्धेन पत्रविशिष्टो भेद उपतिष्ठते विशिष्टस्यैव च स्वाश्रयनिष्ठविभागजनकत्वघटितोभयसम्बन्धेनान्वयः, विशिष्टस्याधिकरणमेव विशेषणनिरूपितपरंपरासम्बन्धघटकं पत्राधेयत्वविशिष्टस्येव चाधेयतासम्बन्धेन पत्रविशिष्टस्याप्यधिकरणं विशेषणीभूतं पत्रमेव न तु वृक्षः, अतो नोक्तोभयसम्बन्धेन पत्रविशिष्टभेदस्य तत्क्रियान्वययोग्यता भेदप्रतियोगितावच्छेदकत्वदलरक्षार्थं स्वपदेन पत्रान्तरविशिष्टभेदस्यैवोपादेयत्वात्, तदुपादाने तदाश्रयपत्रान्तरनिष्ठविभागजनकत्वस्य तत्क्रियायां घटयितुमशक्यत्वादिति चेत् । तर्हि विभाग एव शक्तिरस्तु, तस्यैवाधेयतासम्बन्धेन प्रकृत्यर्थविशिष्टस्य स्वाश्रयावधिभेदप्रतियोगितावच्छेदकत्वसहितजनकतास-

म्यन्धेन क्रियायामन्वय उपेयतां तावताप्युक्तस्थले पत्रात्पत्रं पततीति प्रयोगप्रसङ्गस्य वारणसम्भवात्, आधेयतया यत्पत्रविशिष्टविभागजनकत्वं तत्क्रियायास्तादृशविशिष्टाश्रयतत्पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य तत्क्रियायामभावादित्यलमधिकेन ।

अत्र जनकतासम्बन्धस्य वृत्त्यनियामकतया पूर्ववदाकाशात्पतति न वृक्षादित्यत्रानुपपत्तिरिति विभागजनकत्वमेवार्थो वाच्य इति क लाघवमित्यस्वरसः ।

अत इति । निगमनस्थायंतस्मादितिपञ्चम्या लाक्षणिकत्वात् । निगमनवारणायेति शेषः । पञ्चम्यन्तेति । तथाच पञ्चमीपदस्य पञ्चम्यन्तत्वाभावान्नातिव्याप्तिरिति भावः । नन्वेवमपि पञ्चम्यन्ततत्पदस्य तादृशधूमादिपदवद्धूमादिज्ञाने लाक्षणिकत्वाद्दुर्वारैव निगमनातिव्याप्तिरत आह तस्मादित्यत्रेति । तत्पदे न लक्षणेति । न धूमादिज्ञाने शक्तिविरह इत्यर्थः । तेन तत्पदशक्यधूमादिना तज्ज्ञानस्य सम्बन्धसत्त्वाच्छक्तिज्ञानशून्यकाले शक्यसम्बन्धग्रहात् पदान्तरस्येव तत्पदस्यापि तादृशार्थबोधकतायां अशक्यापलापत्वाच्च तत्पदे लक्षणायास्तथा बोधकत्वस्य च दुरपवादत्वेऽपि न क्षतिः । लक्षणे च लाक्षणिकत्वं वाक्यार्थतात्पर्यराहित्यमतो निगमने तत्पदस्य तात्पर्यविषयीभूतधूमज्ञानलाक्षणिकत्वेऽपि नातिव्याप्तिरित्यवधेयम् । शक्त्यैवेति । तत्पदस्य वक्तृबुद्धिस्थवाचकत्वात् धूमादिज्ञानतात्पर्येण च प्रकृते तत्पदप्रयोगेण ज्ञानस्य वक्तृबुद्धिस्थताया आवश्यकत्वात् विशिष्टहेतुज्ञानस्याप्रक्रान्तत्वेऽपि न क्षतिरिति भावः।

नन्वेवं तत्पदेन यत्र हेतुनिर्देशस्तत्र पञ्चम्यन्तलाक्षणिकपदाभावादव्याप्तिरित्यत आह वह्नेत इति । वह्निमान् तस्मादित्यत्र हेतुभूतधूमादेरप्रक्रान्तत्वाद्धेतोः प्रक्रान्ततारक्षायै वह्निसामग्रीमानिति । अत्र वह्निरूपहेतोः प्रकान्तत्वेन तत्पदेन स्फुटतरतत्परामर्शादिति भावः । न च वह्निसामग्रीघटकतया हेतोर्वह्नेः प्रक्रान्तत्वेऽपि ज्ञानस्याप्रक्रान्तत्वात्तत्पदेन बोधनासम्भवः वह्नौ चायोग्यतया न हेत्वर्थान्वयसम्भव इति वाच्यम् । प्रमितवह्निसामग्रीमत्त्वादेः साध्यत्वेन वह्निज्ञानादेरपि प्रकान्तत्वेन पञ्चम्यर्थहेतुत्वान्वयोपपत्तेः । सम्प्रदायानुरोधिनां तथा प्रयोगो दुर्वार एवेत्यत्र लक्षणे वदन्तीत्यनेनास्वरसः सूचितः ।

पञ्चम्यर्थत्वे स्वं स्वस्मात्पततीत्यादिप्रयोगः स्यादिति भेदप्रतियोगितावच्छेदकत्वसहित एव विभागः पञ्चम्यर्थो वाच्यः स्वनिष्ठक्रियायाः स्वनिष्ठविभागजनकत्वेऽपि स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वविरहान्नोक्तातिप्रसङ्ग इति न लाघवमिति चेन्न । भेदप्रतियोगितावच्छेदकत्वे लक्षणयैवोपपत्तौ तदन्तर्भावेण शक्तिकल्पनात्, तात्पर्यवशाच्छक्यलक्ष्ययोरपि युगपदन्वयोपगमात् । लक्ष्यार्थभेदप्रतियोगितावच्छेदकत्वविनिर्मोकेण पञ्चम्या विभागबोधकत्वव्युत्पत्तेर्न विभागमात्रतात्पर्येण स्वं स्वस्मात्पततीति प्रयोगप्रसङ्गः । अथवा केवलविभागे पूर्वं पूर्वंप्रयोगाभावादेवाप्रयोगः ।

वस्तुतो भेदप्रतियोगितावच्छेदकत्वस्य पञ्चम्यर्थत्वेऽपि वृक्षात्पर्णं पततीत्यत्र पत्रात्पत्रं पततीति प्रयोगो दुर्वारः पत्रान्तरनिष्ठभेदमादाय ततः प्रत्येतव्यस्य पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति पत्रनिष्ठविभागजनकत्वस्य पत्रक्रियायामबाधात् । न च भेद एव पञ्चम्यर्थः तस्य स्वप्रतियोगितावच्छेदकत्वस्वाश्रयनिष्ठविभागजनकत्वोभयसम्बन्धेन क्रियान्वयो वाच्य इति नोक्तातिप्रसङ्गः, तत्पत्रनिष्ठक्रियावच्छिन्नप्रतियोगिताकभेदाश्रयपत्रान्तरनिष्ठविभागजनकतायाः तत्पत्रक्रियायामसत्त्वेन तस्या उभयसम्बन्धेन पत्रान्तरान्वितभेदान्वयायोग्यत्वादिति वाच्यम् । पत्रान्तरनिष्ठतत्क्रियावच्छिन्नभेदस्य वृक्षेऽपि सत्त्वेन तद्भेदाश्रयवृक्षनिष्ठविभागजनकतायाः तत्क्रियायां सत्त्वेन पत्रान्तरनिष्ठभेदस्योक्तोभयसम्बन्धेन तत्क्रियान्वययोग्यताया अक्षतत्वात् अधिकरणभेदेनाभावभेदाभावात् ।

अथ पत्रादित्यत्राधेयतासम्बन्धेन पत्रविशिष्टो भेद उपतिष्ठते विशिष्टस्यैव च स्वाश्रयनिष्ठविभागजनकत्वघटितोभयसम्बन्धेनान्वयः, विशिष्टस्याधिकरणमेव विशिष्टानिरूपितपरंपरासम्बन्धघटकं पत्राधेयत्वविशिष्टस्यैव चाधेयतासम्बन्धेन पत्रविशिष्टस्याप्यधिकरण विशेषणीभूतं पत्रमेव न तु वृक्षः, अतो नोक्तोभयसम्बन्धेन पत्रविशिष्टभेदस्य तत्क्रियान्वययोग्यता भेदप्रतियोगितावच्छेदकत्वदलरक्षार्थे व्यपदेन पत्रान्तरविशिष्टभेदस्यैवोपादेयत्वात्, तदुपादाने तदाश्रयपत्रान्तरनिष्ठविभागजनकत्वस्य, तत्क्रियायां घटयितुमशक्यत्वादिति चेत् । तर्हि विभाग एव शक्तिरस्तु, तस्यैवाधेयतासम्बन्धेन प्रकृत्यर्थविशिष्टस्य स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वसहितजनकतास-

यन्धेन क्रियायामन्वय उपेयतां तावताप्युक्तस्थले पत्रात्पत्रं पततीति प्रयोगप्रसङ्गस्य वारणसम्भवात, आधेयतया यत्पत्रविशिष्टविभागजनकत्वं तत्क्रियायास्तादृशविशिष्टाश्रयतत्पत्रनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य तत्क्रियायामभावादित्यलमधिकेन ।

अत्र जनकतासम्बन्धस्य वृत्त्यनियामकतया पूर्ववदाकाशात्पततीति न वृक्षादित्यत्रानुपपत्तिरिति विभागजनकत्वमेवार्थो वाच्य इति कृ लाघवमित्यस्वरसः ।

अत इति । निगमनस्थायंतस्मादितिपञ्चम्या लाक्षणिकत्वात् । निगमनवारणायेति शेषः । पञ्चम्यन्तेति । तथाच पञ्चमीपदस्य पञ्चम्यन्तत्वाभावान्नातिव्याप्तिरिति भावः । नन्वेवमपि पञ्चम्यन्ततत्पदस्य तादृशधूमादिपदवद्धूमादिज्ञाने लाक्षणिकत्वाद्दुर्वारैव निगमनातिव्याप्तिरत आह तस्मादित्यत्रेति । तत्पदे न लक्षणेति । न धूमादिज्ञाने शक्तिविरह इत्यर्थः । तेन तत्पदशक्यधूमादिना तज्ज्ञानस्य सम्बन्धसत्त्वाच्छक्तिज्ञानशून्यकाले शक्यसम्बन्धग्रहात् पदान्तरस्येव तत्पदस्यापि तादृशार्थबोधकतया अशक्यापलापत्वाच्च तत्पदे लक्षणायास्तथा बोधकत्वस्य च दुरपवादत्वेऽपि न क्षतिः । लक्षणे च लाक्षणिकत्वं वाच्यार्थतात्पर्यराहित्यमतो निगमने तत्पदस्य तात्पर्यविषयीभूतधूमज्ञानलाक्षणिकत्वेऽपि नातिव्याप्तिरित्यवधेयम् । शक्त्यैवेति । तत्पदस्य वक्तृबुद्धिस्थवाचकत्वात् धूमादिज्ञानतात्पर्येण च प्रकृते तत्पदप्रयोगेण ज्ञानस्य वक्तृबुद्धिस्थताया आवश्यकत्वात् विशिष्टहेतुज्ञानस्याप्रक्रान्तत्वेऽपि न क्षतिरिति भावः।

नन्वेवं तत्पदेन यत्र हेतुनिर्देशस्तत्र पञ्चम्यन्तलाक्षणिकपदाभावादव्याप्तिरित्यत आह पर्वत इति । वह्निमान् तस्मादित्यत्र हेतुभूतधूमादेरप्रक्रान्तत्वाद्धेतोः प्रकान्ततारक्षायै वह्निसामग्रीमानिति । अत्र वह्निरूपहेतोः प्रकान्तत्वेन तत्पदेन स्फुटतरतत्परामर्शादिति भावः । न च वह्निसामग्रीघटकतया हेतोर्वह्नेः प्रकान्तत्वेऽपि ज्ञानस्याप्रक्रान्तत्वात्तत्पदेन बोधनासम्भवः वह्नौ चायोग्यतया न हेत्वर्थान्वयसम्भव इति वाच्यम् । प्रमितवह्निसामग्रीमत्त्वादेः साध्यत्वेन वह्निज्ञानादेरपि प्रकान्तत्वेन पञ्चम्यर्थहेतुत्वान्वयोपपत्तेः । संप्रदायानुरोधिनां तथा प्रयोगो दुर्वार एवेत्यत्र लक्षणे वदन्तीत्यनेनास्वरसः सूचितः ।

(दी०)यत्तु हेत्वन्वयानुरोधात् वह्निमानित्यादावपि ज्ञाप्यत्वा-णेति। तन्न-पञ्चम्या ज्ञापकत्वे ज्ञाप्यत्वे वा लक्षणयैवोपपत्तौ तत्र च लक्षणाया मानाभावात्, अतएवोक्तम्-'आवृत्तौ सैव प्रतिज्ञेति'। अतएव व्याचक्षते-'यतो द्रव्य गुणाः कर्मेत्यत्र हेतुत्वं यथासम्भवमुत्पादकत्वं ज्ञापकत्वञ्चे'ति। अतएव लोके किं वह्निमदिति प्रश्ने तद्गृहं वह्निमदित्युत्तरिते कुत इति जिज्ञासा धूमवत्त्वादित्युत्तरञ्च। नहि तत्र ज्ञाने प्रश्नः येन लक्षणया ज्ञानेनोत्तरयेत्। न वा परकीयभाविप्रश्नानुरोधात् अजिज्ञासिताभिधानम्। न वा कुत इति प्रश्ने ज्ञातमेतदित्यध्याहार्यं-मानाभावात्। दाहो दहनात् न जलात् जलं स्पर्शात् रूपात् न गन्धान्नापि शब्दादित्यादौ नञ् अन्वयानुरोधात् जन्यत्वरूपं हेतुमत्त्व जन्यज्ञानविषयत्वरूपञ्च ज्ञाप्यत्वमर्थः। एवञ्च हेतुमत्त्वे शक्तावपि ज्ञाप्यत्वे लक्षणैव। न च धूमादालोकवान् पर्वतो वह्निमान् धूमाद्वह्निमतः सधर्मात्पर्वतो वह्निमानित्यादौ प्रतिज्ञाया पर्वतो धूमाद्वह्निमानित्यादौ च तत्रत्यनिगमने चातिव्याप्तिः, प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितप्रकृतसाध्यान्वितस्वार्थबोधकपञ्चम्यन्तलाक्षणिकपदवदवयवत्वस्य विवक्षितत्वात्।

(गा०)प्रतिज्ञास्थसाध्यवाचकपदस्य ज्ञानलाक्षणिकत्वात्प्रतिज्ञायामपि पञ्चम्यन्तपदव्यावृत्ति सम्भवतीति मतमुपन्यस्य दूषयति यत्त्विति

अथ वा निगमनस्थवह्न्यादिपदस्य वह्न्यादिज्ञाने लाक्षणिकतया। तस्मादिति पञ्चम्या जनकत्व जन्यत्व वाऽर्थ, तथाच पञ्चमीमादाय न निगमने व्यावृत्तिसङ्गति-अवधित्वादेरिव जनकत्वादेरपि स्वरूपसम्बन्धरूपतया विनिगमकाभावेन जन्यत्वस्यापि वाच्यत्वेन पञ्चम्या अलाक्षणिकत्वादिति वादिनो मत दूषयति यत्त्विति। एवञ्चाप्रि जन्यत्वे शक्तावपि ज्ञाप्यत्वे लक्षणेत्युपसंहारः सङ्गच्छते। हेत्वन्वयानुरोधादिति। हेत्वर्थानुशिष्टपञ्चम्या जन्यजनकभाव प्रवार्थ न - ज्ञाप्यज्ञापकभाव 'हेतुर्ना करणं बीज'मिति कोशाद्धेतुकारणपदयो प

यीयतास्थितौ ज्ञापकतार्थकताया-हेतुपदस्य कोशादावदर्शनात्, तथा प्रतिज्ञास्थवह्न्यादिपदस्य मुख्यार्थपरत्वे मुख्यार्थस्य वह्न्यादे: धूमजन्यत्वेन ज्ञाने लक्षणां विना पञ्चम्यन्तार्थान्वयानुपपत्तिः स्यादिति भावः । ज्ञानलक्षणा-वह्न्यादिज्ञानलक्षणा । एतत्पक्षे तस्य विषयतासम्बन्ध एव मतुवर्थः । ज्ञानविषयतापर्यन्तमेव वा वह्न्यादिपदार्थ इति भावः । ज्ञापकत्व इति प्रकृत्यर्थवृत्तिकर्मत्वादीनां सुवर्थताया-द्रिप्राचीनमतेन । ज्ञाप्यत्वे वेति नव्यमतेन । तत्र-वह्न्यादिपदे । लक्षणायां-लक्षणानिर्वाहकतात्पर्ये । मानाभावादिति । जन्यजनकभावस्य पञ्चम्यर्थत्वेऽपि तल्लाक्षणिकताया आवश्यकत्वात्तेनैव ज्ञानान्तर्भावेणोपपत्तौ उभयत्र लक्षणाया अयुक्तत्वादिति भावः । न च सुब्विभक्त्यनुशासनिकातिरिक्ते न लक्षणानुशासनं विनापि तत्तल्लक्ष्यार्थे विभक्तेः साधुत्वे कर्मत्वादिरूपलक्ष्यार्थे पष्ठ्याद्यनुशासनवैयर्थ्यादिति कथमेतदिति वाच्यम् । हेताविति तृतीयाबोधकसूत्रस्थहेतुपदस्य कारणज्ञापकोभयपरतया तदनुवृत्तिमता 'विभाषागुणेस्त्रिया'मिति सूत्रेण ज्ञापकत्वेऽपि पञ्चम्या अनुशिष्टत्वात् । यद्यपि तत्र गुणपदं न वैशेषिकसिद्धगुणपरं पुण्याभावाद्र सुखी इत्यादौ पञ्चम्यनुपपत्तेरिति पराश्रितपरं तत्, पराश्रितत्वं च साध्यवदधिकरणाश्रितत्वं, तथासति उक्तस्थले पुण्याभावादेः स्वप्रयोज्यसुखाद्यभावाश्रयवृत्तितया तत्प्रयोजकत्वात् पञ्चम्युपपत्तेः, तथाच ज्ञानकारणतावादिमते धूमादिपदार्थज्ञानरूपहेतुः साध्यवति समवायादिना वर्त्तते । तथापि विषयतयैव तत्र वृत्तिरिति नानुपपत्तिः । एवं सति धूमज्ञानाद्वह्निमानिति प्रयोगः स्यादिति तु न देश्यम्-ज्ञापकताबोधकपञ्चम्यन्ततत्तदर्थवाचकपदस्य तत्तदर्थज्ञान एवानादितात्पर्यात् धूमज्ञानपदस्य धूमज्ञानज्ञान एव तथा तात्पर्यात् । ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थतामते च ज्ञानविषयधूमादिरूपहेतोः संयोगादिनैव साध्यवदाश्रितत्वान्नानुपपत्तिगन्धोऽपि । प्रतिज्ञास्थवह्न्यादिपदस्य मुख्यार्थपरत्वे मणिकृतापि स्वरसं दर्शयति अत एवोक्तमिति । आवृत्ताविति । तेन ग्रन्थेन पुनरनुसन्धीयमानस्य प्रतिज्ञादिवाक्यसहकारेण मध्यस्थसंशयजनकस्य पूर्वोक्तसाध्यवद्धर्मिकबोधजनकवादिवाक्यस्य प्रतिज्ञात्वमभ्युपगतम् । तत्र च वह्न्यादिपदं न तज्ज्ञानादिपरं तथासति विषयसंशायकत्वासम्भवात् विप्रतिपत्तिवाक्याभ्यां कोट्यु-

परस्थितिद्वारा मानसः संशयो जन्यत इति सिद्धान्तिभिरपि वह्निः पर्वतो अभाव इत्यादिना आकाङ्क्षारहिताच्छब्दात्संशयानुदयेन तद्धर्मिणि तत्तदभावकोट्योः प्रत्येकं शाब्दधीजनकसामग्रीभ्यामेव परस्परविरोधेन शाब्दबोधमनुत्पाद्य मानसः संशयो जन्यत इत्यभ्युपगमात्। प्रतिवादिनिवृत्तये पर्वते वह्निः साधनीय इत्यभिसन्धेः प्रथमतोऽनियमात् शब्दादेव पर्वते वह्निनिश्चयो भविष्यतीत्यभिप्रायेणापि प्रथमं पर्वतो वह्निमानित्यादिप्रयोगात् पूर्वमयुक्तवह्निपदस्य सर्वत्र ज्ञानपरत्वासंभवाच्चेति भावः।

वर्धमानोपाध्यायानामपि पञ्चम्या ज्ञापकत्वार्थकत्वे सम्वादमाह अत एवेति। यथासम्भवमिति। समभिव्याहृतद्रव्यादिपदार्थे जन्यत्वरूपेऽन्वययोग्यतानुसारेणेत्यर्थः।

नन्वाकृतौ सैव प्रतिज्ञेति मणिकृतोऽभ्युपगमवादः न तु तत्र निर्भरः मध्यस्थसंशयात् परतोऽपि हेतुवाक्यसमभिव्याहृतसाध्यनिर्देशस्य सांप्रदायिकत्वात्। हेतुत्वं यथासम्भवमित्युपाध्यायग्रन्थोऽपि पञ्चमीप्रतिपाद्यं हेतुत्वं क्वचित्समभिव्याहृतपदमुख्यार्थनिरूपितं क्वचिच्च लक्ष्यार्थतज्ज्ञाननिरूपितं कारणत्वमित्यर्थकतयोपपद्यते। यदप्युक्तम्-उभयपदे लक्षणानौचित्यमिति-तदपि शिथिलम्-ज्ञापकतायाः पञ्चम्यर्थत्वे सत्यत्रहेतुपदस्य उभयपरतया वाक्यभेदापत्तेस्तदनुरोधेनोभयत्र लक्षणाया एव उचितत्वादित्यतो युक्त्यन्तरमाह अत एवेति। जिज्ञासा-प्रश्नः धूमवत्त्वादित्युत्तरं चेति। प्रयुज्यत इति शेषः। उपष्टम्भं विवृणोति नहीति। ज्ञाने प्रश्न इति। प्रश्नस्थवह्निपदं वह्निज्ञानपरमित्यर्थः। वह्नेरेव जिज्ञासितत्वादिति शेषः। लक्षणया ज्ञानेनोत्तरयेदिति लक्ष्यार्थज्ञानपरमुत्तरवाक्यमित्यर्थः। अपि तु प्रश्नसमानविषयकत्वानुरोधेन मुख्यार्थवह्निपरमेव तादृशोत्तरं प्रयुक्तमिति शेषः। तथा च तत्र वह्नौ कुत इति धूमादिति च प्रश्नोत्तरवाक्ययोर्ये पञ्चम्यौ तदर्थान्वयानुरोधेन ज्ञापकत्वं ज्ञाप्यत्वं वा पञ्चम्यर्थो वाच्य इति भावः।

ननु प्रथमप्रश्नानुरोधाद्वह्निपदस्य वह्निपरत्वमस्तु कुत इति प्रश्नस्थपञ्चम्यर्थान्वयानुरोधात्तदुत्तरधूमादिति पञ्चम्यर्थान्वयानुरोधाच्च ज्ञानत्वपरत्वमप्यविरोधात् एकदा वाक्यलक्ष्यार्थान्वयेऽपि वह्निं बोधयित्वा ज्ञानं बोधयिष्यतीत्यभिप्रायेणैव एकपदप्रयोगे

फाभावात् । अत एव तथाविधतात्पर्यानुरोधेन नानार्थस्थले व्या-वृत्तिरित्यत आह न चेति । परकीयभाविप्रश्नानुरोधादिति । तादृशप्रश्नस्थीयतदुत्तरवाक्यस्थपञ्चम्यर्थान्वयानुरोधादित्यर्थः । अजिज्ञासिताभिधानम् । प्रथमजिज्ञासाविषयज्ञानप्रत्यायनेच्छया वह्निपद-प्रयोगः । परकीयत्वेन भावित्वेन च प्रथमं कुत इति प्रश्नस्याज्ञानात् परकीयवह्निज्ञानहेतुजिज्ञासायाः अज्ञानेन ' वह्निज्ञानप्रत्यायनेच्छयाः प्रथममसम्भवादिति हेतुसूचनाय परकीयत्वभावित्वाभिधानम् ।

' ननु तत्र ज्ञानमित्यध्याहारात्कुत इति पञ्चम्यर्थस्य ज्ञानेन्वयो न तु वह्नावित्यत आह नचेति । ' प्रश्नस्थपदस्योत्तरवाक्येऽनुषङ्गस्य व्युत्पत्तिसिद्धत्वात्कुत इत्यत्र ज्ञानमित्याध्याहारेणैव धूमादित्यत्रापि ज्ञानान्वयसम्भवात्तत्राध्याहारान्तरविरहेऽपि न क्षतिरित्यत' कुत इत्य-त्रैवाध्याहारः ' शङ्कितः । मानाभावादिति । पदार्थान्तरान्वयस्य वक्तु-रनभिप्रेतत्वनिश्चयेऽपि बोधस्यानुभाविकत्वात् सर्वत्राश्रुतकल्पना-सम्भवादित्यर्थः ।

इद त्ववधेयम् । गृहं वह्निमदिति प्रयोक्तु' वह्निपदे ज्ञानतात्पर्यं कुत इति वाक्यजन्ये ज्ञानहेतुजिज्ञासाबोधेऽनुपयुक्त स्याभिप्रायस्य स्वबोधाहेतुत्वात् कुत इति पृच्छकपुरुषतात्पर्यस्यैव तत्रोप-योगात् । तथाच स्वजिज्ञासां बोधयितुकामस्य कुत इति प्रयोक्तुः परप्रयुक्तवह्निपदलक्षणया वह्निपदोपस्थापित ज्ञानमादाय कुत इति पञ्चम्यर्थान्वयो भवत्वित्यभिप्राय ज्ञात्वैव प्रतिवक्ता प्रष्टुर्वह्निज्ञानहेतु-जिज्ञासां कुत इति शब्दादनुपज्यमानस्वोक्तवह्निपदसहितात् ज्ञास्यति। एवं गृह वह्निमदिति प्रयोक्तु प्रथम वह्निपदे ज्ञानतात्पर्य-विरहेऽपि कुत इति प्रश्नानन्तर प्रष्टुर्वह्निज्ञानहेतुजिज्ञासाया ज्ञाने किमर्थमन्यत वह्निपद प्रयोक्तव्य पूर्ववह्निपदात्लक्षणयापस्थितं ज्ञा-नमादायैव धूमादिति वाक्य धूमज्ञाने वह्निज्ञापकतां बोधयत्वि-त्यभिप्रायसम्भवात् तज्ज्ञानेन धूमादिति पञ्चम्यर्थस्य ज्ञानान्वयो भविष्यतीति किमनुपपन्नम्, न हि प्रयोक्तुः पुरुषस्यैकार्थतात्पर्य पुरुषान्तरीयान्यार्थतात्पर्यविरोधि अन्यैरन्यतात्पर्येण प्रयुक्तान्यपि प-दान्यादायान्यार्थपरश्लोकस्य मौनिना निरन्वनात् । न वा स्वीय प्राथमिकमन्यतात्पर्यमुदीच्यापरतात्पर्य विरुणद्धि बीजाभावात् । गुज्यते च यद्वयादिपदस्य यद्वयादिप्रकारकज्ञानविषयत्वे लक्षणा

पञ्चम्या जनकत्वज्ञापकत्वार्थकत्वं नञर्थान्वयस्थलेऽनुपपत्तिप्रदर्शनेन निराकुर्वन् जन्यत्वज्ञाप्यत्वार्थकतां व्यवस्थापयति दाहो दहनादित्यादिना । गन्धस्याज्ञापकत्वं पक्षधर्मताविरहेण शब्दस्यातथात्वं व्याप्तेरपि विरहेणेति प्रदर्शनार्थमुभयोपादानम् । नञर्थान्वयानुरोधादिति । जनकत्वज्ञापकत्वयोः पञ्चम्यर्थत्वेऽपि निरूपकतासम्बन्धावच्छिन्नाभावाप्रसिद्ध्या आश्रयतासम्बन्धावच्छिन्नाभावप्रत्यय एव दाहस्पर्शौ स्वीकार्यः, तथाच तत्र जलगन्धादिनिष्ठजनकत्वज्ञापकत्वयोरिव दहनरूपादिनिष्ठयोरपि तयोरभावसत्त्वेन दाहो न दहनात् जलं स्पर्शवन्न रूपादित्यपि प्रयोगः स्यादिति भावः । न च दाहादिविशेषित जनकत्वादेरेवाभावस्तत्र जलगन्धादिरूपप्रकृत्यर्थे प्रतीयत इति वाच्यम् । प्रथमान्तार्थस्य पञ्चम्यर्थविशेष्यतयैव शब्दात्प्रतीतेर्दाहादिविशेषितजनकत्वादिरूपप्रतियोगिनः शब्दादनुपस्थितस्य नञाऽभावबोधनासम्भवात् । पञ्चम्यर्थस्य प्रकृत्यन्यपदार्थविशेषितस्यापि नञ्समभिव्याहारस्थले भानोपगमे व्युत्पत्तिभेदाद्गौरवम् । सर्वत्रैव प्रकृत्यर्थे विभक्त्यर्थो विशेषणं तत्र च निरूपकतया समभिव्याहृतपदार्थान्तरमिति चानुभवसिद्धप्रथमान्तपदार्थविशेष्यताभङ्गेनासम्भवदुक्तिकम् । इन्धनस्य दाहो दहनादित्यादौ तु तुल्ययुक्त्या दहनादेर्दाहजनकत्वादिविशेष्यत्ववदिन्धनादेरपि दाहसम्बन्धादिविशेष्यतया इन्धनं दाहसम्बन्धि वह्निर्दाहजनक इत्यादिसमूहालम्बनबोधस्य स्वीकारेण वाक्यभेदप्रसङ्गात् । यत्रान्यस्य दाहो दहनान्नैतादिन्धनस्य तत्रैतदिन्धनस्य दाहो न दहनादिति प्रयोगानुपपत्तिश्चेति ।

अत्र वदन्ति । जन्यतायाः पञ्चम्यर्थत्वेऽपि दाहो दहनात् न परमाणुपरिमाणादित्यादिप्रयोगानुपपत्तिः पारिमाण्डल्यस्य कार्यसामान्येऽजनकतया परमाणुपरिमाणादिजन्यत्वाप्रसिद्धेर्नञर्थप्रतियोगितयाऽन्वयासम्भवात् । दाहाद्यन्वयिनि जन्यत्वे प्रकृत्यर्थस्य निरूपितत्वसम्बन्धेनाभावबोधोपगमे च वृत्त्यनियामकसम्बन्धावच्छिन्नाभावाभ्युपगमः, लक्षणया प्रकृत्यर्थनिरूपितत्वस्याभावान्वयोपगमेऽपि गगनं न परमाणुपरिमाणादित्यादौ गगनादौ जन्यत्वान्वयायोग्यत्वादनुपपत्तिः, पारिमाण्डल्यानिरूपितत्वाभाववज्जन्यत्वाभाववद्गगनमित्याकारिकायाः द्विधा नञर्थावगाहिन्याः प्रतीतेरुपगमे च घटो न घटजनकादित्यत्रापि स्यात्—घटजनकाद्यनिरूपितजन्यत्वाभावस्य घटादावबाधात्,

दण्डाद्यनिरूपितजन्यत्वत्वावच्छिन्नाभावस्य पटांशे बाधेन पटो न दण्डादित्यादेरप्यनुपपत्तेश्च । गगनादौ जन्यत्वभ्रमदशायां गगनं न पारिमाण्डल्यादित्यादिवाक्यस्याबोधकतापत्तेः। पञ्चम्यर्थे जन्यतासामान्ये लक्षणया प्रकृत्युपस्थाप्यस्य पारिमाण्डल्यनिरूपितत्वगगनवृत्तित्वोभयत्वावच्छिन्नस्याभावबोधोपगमे च जनकतायाः पञ्चम्यर्थत्वेऽपि तत्सामान्ये लक्षणया प्रकृत्युपस्थाप्यस्य पारिमाण्डल्यवृत्तित्वगगननिरूपितत्वोभयत्वावच्छिन्नस्याभावबोधोपगमेन सामञ्जस्यम् । न च तत्र लक्षणाया आवश्यकत्वेऽपि बाधो न जलादित्यादौ लक्षणां विनैवोपपत्तये जन्यत्वस्य पञ्चम्यर्थत्वमुचितमिति वाच्यम् । जलादेरपि कार्याजनकत्वभ्रमदशायां बाधो न पारिमाण्डल्यादित्यादिवाक्यबोधस्यानुभाविकतया तदनुरोधेन तत्रापि जन्यतायां जलादिनिरूपितत्वाभावबोधस्यावश्योपेयत्वादिति ।

अत्रेदं तत्त्वम् । शशविषाणं नास्तीति वाक्यवद् बाधो न पारिमाण्डल्यादित्यादिवाक्यमप्रमाणमेव । तद्वाक्यस्य प्रामाण्यानुरोधेन लक्षणया पारिमाण्डल्यादिनिरूपितत्वाभावबोधस्य क्वचिदभ्युपगमेऽपि बाधो न जलादित्यादिवाक्यतो लक्षणाज्ञानशून्यकालेऽपि अन्वयबोधस्यानुभविकतया जन्यत्वाभावबोधकतापि तादृशवाक्यस्योपगन्तव्येति जन्यत्वं पञ्चम्यर्थ इति ।

जन्यज्ञानविषयत्वमिति । अन्यत्वान्वयि प्रकृत्यर्थज्ञानं भ्रमभिन्नं ग्राह्यम् अतो व्याप्तिपक्षधर्मतावगाहिभ्रमरूपह्रदत्वादिज्ञानस्य पर्वतादौ वह्न्याद्यनुमापकत्वेऽपि पर्वतो वह्निमान् ह्रदत्वादित्यादिप्रयोगस्य नापत्तिः, न वा पर्वतो वह्निमान् धूमात् न ह्रदत्वादित्यादिप्रयोगानुपपत्तिः । यद्यपि यत्किञ्चिद्विषयकप्रमान्यत्वं भ्रमसाधारणं भ्रमसामान्यान्यत्वं च तदभाववति तत्प्रकारकत्वरूपभ्रमत्वस्य तत्तत्प्रकारविशेष्यघटितत्वेनाननुगततया जगतीगतयावद्वस्तुप्रमाणां तत्तद्वस्तुप्रमात्वावच्छिन्नभेदकूटरूपाणामतिदुर्ज्ञेयम्, तथापि प्रकृतसाध्यहेतुपक्षकपरामर्शे प्रकारीभूता ये ये तत्तत्प्रकारकभ्रमभिन्नत्वमेव विशेषणं ज्ञेयम् । यद्यपि धूमादिमत्यपि पर्वतादौ समवायादिसम्बन्धावच्छिन्नधूमाद्यभावसत्त्वात् पर्वतादौ धूमादिप्रमायाः सङ्ग्रहाय यत्सम्बन्धेन हेतु प्रकारकं ज्ञानं यत्र हेतुवाचकपदेन विवक्षितं तत्र तत्सम्बन्धावच्छि तत्प्रकारकभ्रमान्यत्वं प्रतीयत इत्युपेयम्, तथा च स्वरूपादिसम्बन्धेन

प्रमेयत्वादेर्यत्र हेतुत्वं तत्र तत्सम्बन्धेन तद्भ्रमाप्रसिद्ध्या तदन्यत्वं दुर्ग्रहम्, तथापि तत्र तादृशभ्रमान्यत्वप्रतीतिरेव न स्वीक्रियते अतो न दोषः ।

वस्तुतस्तु स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्वैतत्त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारताशालित्वमेवानुगतं भ्रमत्वं सुवचम्, अतो भ्रमविषयतयैव प्रमेयत्ववाच्यत्वादिज्ञापकमिति भ्रमदशायां वाच्य प्रमेयत्वादित्यादिप्रयोगस्य तादृशप्रयोगाधीनबोधस्य च वारणाय प्रमेयत्वादिज्ञानस्यापि तद्भ्रमान्यत्वेनैव पञ्चमीप्रकृत्यर्थता वाच्या सा चाप्रसिद्ध्या न सम्भवतीति दूषणमनवकाशम् ।

निगमनस्थपञ्चम्या लाक्षणिकत्वमुपसंहरति एवञ्चेति । एवञ्च-पञ्चम्या जन्यज्ञाप्यभावार्थकत्वस्थितौ च । हेतुमत्त्वे-जन्यत्वे । ज्ञाप्यत्वे लक्षणैवेति । जन्यत्वापेक्षया तस्य शरीरगौरवादिति भावः । न चेति । धूमादालोकवान् पर्वतो वह्निमानित्यादिप्रतिज्ञाघटितन्याये आलोकादेर्हेतुत्वे प्रकृतहेत्वन्वितार्थकपञ्चमीनिवेशेनाप्यतिव्याप्तिवारणसम्भवात् धूमादिति हेत्वभिधानम्। अत्र पञ्चम्याः प्रकृतसाध्यान्वितस्वार्थबोधकत्वविशेषणमात्रेणातिव्याप्तिवारणसम्भवात्तादृशसाध्ये विवक्षणीयोपस्थापितान्तविशेषणव्यावृत्तये स्थलान्तरेऽतिव्याप्तिं दर्शयति धूमाद्वह्निमत इति । अत्र वह्निमत्त्वेन पक्षस्यापि भानाद्विवक्षणीयविशेषणे पक्षतावच्छेदकपर्यन्तनिवेशनस्याप्यात्रैव व्यावृत्तिः । साध्यतावच्छेदकावच्छिन्नत्वांशनिवेशनाय स्थलान्तरेऽतिव्याप्तिं दर्शयति पर्वतो धूमाद्भ्रमानिति । तत्रत्यनिगमने-तस्मात् धूमाद्वह्निमानित्याकारके। अत्र पञ्चम्यन्तार्थविशिष्टवह्नित्वमेव साध्यतावच्छेदकमिति तदवच्छिन्ने साध्ये पञ्चम्यर्थानन्वयात्साध्यतावच्छेदकविशिष्टान्वितस्वार्थबोधकत्वनिवेशेने नातिव्याप्तिः । धूमाद्वह्निमतः सधर्मत्वादौ प्रकृतपक्षतावच्छेदकावच्छिन्ने यस्य साध्यस्य द्वितीयवह्निपदजन्योपस्थितिवशादन्वय प्रथमवह्निपदोपस्थापिते तत्रैव प्रतिज्ञाघटकपञ्चम्यर्थस्यान्वयात्पक्षान्वितस्वार्थबोधकत्वविशेषणेन तद्वारणासम्भवात्साध्ये प्रकृतपक्षान्वितत्वं विहाय प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितत्वं निवेशितम् । यद्यप्युभयत्र वह्निपदेन एकमेव साध्यमुपस्थाप्यते अतो नैव तावताप्युक्तातिव्याप्तिवारणसम्भवः, तथापि प्र

फलपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या विशेषणता त-
दवच्छिन्नसाध्यतावच्छेदकविशिष्टसाध्यीयविशेष्यतानिरूपितस्वार्थ-
विषयताप्रयोजकशाब्दबोधकान्वयार्थं पञ्चमीत्वमनिवेश्य प्रयोजनाभावात्।
उपनयोपस्थापितपक्षविशेषणतापन्नसाध्यान्वितार्थबोधकपञ्चम्यन्तत-
त्पदमादायानुपङ्गपक्षेऽपि निगमनेऽव्याप्तिव्यासेधार्थेन लाक्षणिकपद-
प्रयोजनम्।

( दी० ) यत्तु अयमात्मा ज्ञानादित्यादावव्याप्तिः प्रकृतेन
ज्ञानोपस्थितिसम्भवेन लक्षणाविरहादिति।

तन्न। यद्विषयकज्ञानस्य हेतुत्वादिकमवगतं तस्य व्या-
प्त्यादिजिज्ञासायामुदाहरणादिप्रयोगः, न चेह ज्ञानविषयत्वेनोप-
स्थितिर्विना लक्षणाम्, अन्यथा सुखादेरपि व्याप्त्याद्युपदर्शन-
प्रसङ्गात्।

केचित्तु पञ्चम्यन्तलाक्षणिकपदवत्त्वनियतावच्छेदकरूपवत्त्वं
तादृशपदवत्त्वव्यभिचार्यवयवतावच्छेदकशून्यावयवत्वं वा विव-
क्षितमित्याहुः।

नव्यास्तु पञ्चम्या ज्ञानज्ञाप्यत्वलक्षणमेवोपपत्तौ, न प्रातिप-
दिकेऽपि लक्षणा। आकाङ्क्षावैचित्र्याच्च पदार्थैकदेशेऽपि ज्ञाने
प्रातिपदिकार्थो विषयत्वेनान्वेति कर्तृकृतीव कृतौ धात्वर्थः।
यद्धर्मविशिष्टश्च हेतुः प्रयुज्यते आकाङ्क्षाबलात् तद्धर्मविशिष्ट-
स्यैव व्याप्यत्वमुपदर्श्यते, अन्यथा यथार्थधूपज्ञानादित्यादिप्र-
योगेऽपि धूमादेर्व्याप्यत्वोपदर्शनप्रसङ्ग इति प्राहुः।

अयमात्मा ज्ञानादित्यादौ ज्ञानपदं मुख्यार्थपरमेव पञ्चम्यर्थान्वय-
स्य तत्रैव सम्भवेन लक्षणाबीजभूतान्वयानुपपत्तिविरहादित्यभिप्रा-
येनाशुक लक्षणाव्याप्तिशङ्कामुद्धर्तुमुपन्यस्यति यत्त्विति। शुद्धज्ञा-
नत्वावच्छिन्नेन सम पञ्चम्यर्थान्वयसम्भवेऽपि अनुमितिजनकज्ञान-
विषयतया ज्ञानोपस्थितावेव ज्ञानरूपहेतौ ग्रन्थः।६.५
आकाङ्क्षा यो ज्ञानवान् स आत्मा इत्युदाहरणादिप्रयोगसम्भव

ज्ञानविषयकज्ञानत्वावच्छिन्ने तात्पर्यानुपपत्त्या लक्षणाया आवश्यकत्वमिति समाधत्ते तन्नेत्यादिना । यद्विषयकज्ञानस्य यद्विषयकज्ञानत्वावच्छिन्नस्य । हेतुत्वमनुमितिजनकत्वम् । तस्य व्याप्त्यादिजिज्ञासायां तुल्यवित्तिवेद्यतयाऽर्थतो वा तत्र प्रतीतानुमापकज्ञानविषयताया निर्वाहकाकांक्षायामित्यर्थः । उदाहरणादिप्रयोगः—उदाहरणोपनयाभ्यां तन्निष्ठव्याप्तिपक्षधर्मताप्रदर्शनम् । यद्यपि ज्ञानविषयकज्ञानत्वावच्छिन्ने ज्ञानपदस्य तात्पर्येऽपि मुख्यार्थज्ञानत्वावच्छिन्नपरत्वमक्षतमेवेति पूर्वोपदर्शितमुख्यार्थतात्पर्यराहित्यरूपं लाक्षणिकत्वं नोपपद्यते, तथापि शक्यतावच्छेदकाविलक्षणरूपावच्छिन्नतात्पर्यकत्वमेव लाक्षणिकत्वमतो न दोषः । ननु शुद्धज्ञानत्वावच्छिन्नेऽनुमापकताबोधेऽपि तत्र तन्निर्वाहकव्याप्त्यादिमद्विषयकत्वलाभाय वस्तुगत्या तादृशज्ञानविषयीभूते ज्ञाने व्याप्त्यादिप्रदर्शनसङ्गतिरित्यत आह अन्यथेति । जनकज्ञानविषयतयाऽप्रतीते ज्ञाने वास्तवतादृशविषयतां पुरस्कृत्य व्याप्त्युपदर्शने सुखादेरपि आत्मत्वानुमापकज्ञानविषयतया अयमात्मा ज्ञानादित्यत्र यः सुखी स आत्मेत्युदाहरणादिप्रयोगप्रसङ्ग इत्यर्थः । तथाच सुखादौ व्याप्त्यादिप्रदर्शनेऽपि ज्ञानेऽनुमापकत्वनिर्वाहकव्याप्त्यादिमद्विषयकत्वपर्यन्तालाभादाकाङ्क्षाया अपूरणात् यथा सुखादौ न तत्प्रदर्शनं तथा एतन्मते ज्ञानेऽपि तत्प्रदर्शनं नोपपद्यत इति भावः ।

उक्तप्रतिज्ञादावतिव्याप्तिवारणाय प्रकारान्तरेण लक्षणं परिष्कुर्वतां मतमाह केचित्त्विति । पञ्चम्यन्तेति । कस्याश्चित् प्रतिज्ञायाः पञ्चम्यन्तलाक्षणिकपदत्वेऽपि धूमज्ञानप्राप्यालोकवान् पर्वतो वह्निमानित्यादिप्रतिज्ञायां व्यभिचारेणावयवतावच्छेदकं प्रतिज्ञात्वं पक्षात्रिभेदेन भिन्नमपि न तादृशावयवतापदत्वनियतमिति नातिप्रसङ्ग इति भावः । तादृशावच्छेदकहेतुत्वं दुर्वचं सुवचत्वे तदेव लक्षणमित्यतोऽन्यथा परिष्कुरुते तादृशेति । तादृशपदं पञ्चम्यन्तलाक्षणिकपदम् । प्रतिज्ञात्वादिकं च तादृशपदाघटितस्यापि प्रतिज्ञादेः सत्वेन तादृशपदत्वव्यभिचारीति तच्छून्यत्वाभावान्न प्रतिज्ञादावतिव्याप्तिः । तादृशपदत्वव्यभिचारिमेयत्वादिशून्यत्वाप्रसिद्ध्याऽवयवतावच्छेदकेति । अत्र प्रतिज्ञात्वहेतुत्वादिसाधारणस्यावयवतावच्छेदकत्वस्यैकस्याभावात् प्रतिज्ञात्वादिकं विशिष्योपादाय तच्छून्यत्वं निवेश्यम् तथाच हेतु-

ध्यवस्थापकत्वेनावश्योपादेयं तादृशपदवत्त्वव्यभिचारित्वविशेषणमनर्थकम्। यदि च प्रतिज्ञात्वहेतुत्वादिसाधारणं प्रतिज्ञात्वादिपञ्चान्यतमत्वमवयवतावच्छेदकत्वम्, तदा तत्र हेतुत्वप्रवेशे तस्यान्यादृशस्य दुर्वचत्वात्। सुवचत्वे तदेवास्तु लक्षणमन्यतममध्ये हेतुत्वमन्तर्भाव्य तद्घटकत्वे विशेषणान्तरदानं प्रक्षालनाद्धीति न्यायेनायुक्तमित्यस्वरसः।

पञ्चम्यन्तेत्यादिलक्षणकर्तुरनुमतौ धूमादित्यादिवाक्यस्थधूमादिपदस्य ज्ञानलक्षणां स्वातन्त्र्येण दूषयति नव्यास्त्विति। ज्ञानज्ञाप्यत्वलक्षणयेति। ज्ञाप्यत्वलक्षणाया आवश्यकत्वात्। तत्र च ज्ञानांशस्यापि अधिकस्य प्रवेशेनैव धूमादिपदस्य मुख्यार्थपरत्वेऽपि धूमादिज्ञानज्ञाप्यत्वलाभसम्भव इत्यर्थः। न प्रातिपदिकेति। न पञ्चमीप्रकृतिधूमादिपदे।

नन्वेवं ज्ञानस्य पञ्चम्यर्थैकदेशतया तत्र धूमादिपदार्थस्यान्वयायोगात् धूमादिज्ञानालाभः। न च ज्ञाप्यत्वस्य पञ्चम्यर्थत्वेऽपि ज्ञानस्य रूपतदेकदेशे कथं धूमादिपदार्थतज्ज्ञानान्वय इति वाच्यम्। चैत्रस्य पुत्र घटादन्य इत्यादौ ससम्बन्धिकपदार्थैकदेशे अन्यत्वादौ पदार्थान्तरस्यान्वयदर्शनात् निष्प्रतियोगिक एव पदार्थैकदेशे इतरान्वयस्याव्युत्पन्नत्वात्। न च स्वतन्त्रोपस्थित एव पदार्थे इतरान्वयजिज्ञासा जायते न तु इतरविशेषणतयोपस्थिते अत एव गौर्नित्येत्यादौ स्वतन्त्रगोत्वाद्युपस्थितये लक्षणा इत्यत आकांक्षाविरह एव पदार्थान्तरस्य पदार्थैकदेशेनान्वये बीजं स च सप्रतियोगिकनिष्प्रतियोगिकैकदेशसाधारण इति वाच्यम्। फलानुरोधेन सप्रतियोगिकपदार्थे विशेषणतयोपस्थितेऽपि प्रतियोगिजिज्ञासा जायते इति कल्पनात्। न च ज्ञानादिसविषयकपदार्थेऽपि तथोपस्थिते विषयजिज्ञासा जायत इति युज्यते कल्पकाभावादित्याशङ्क्य सविषयकृतिदृष्टान्तेन पदार्थैकदेशे ज्ञानेऽपि विषयाकांक्षां व्यवस्थापयति आकांक्षावैचित्र्यादेवेति। कुत्रचित्स्वतन्त्रोपस्थित एव इतराकांक्षा कुत्रचिद्विशेषणतयाप्युपस्थिते कस्यचिदाकांक्षेति विषयस्वभावाधीनतया आकांक्षावैचित्र्यादित्यर्थः। कर्तृकृतौ चेति। पचेत्याद्याख्यातार्थैकदेशे कृतौ यथा विषयत्वेन पाकादिक्रियान्वेतीत्यर्थः।

इदं तु बोध्यम्। जिज्ञासारूपाकांक्षायाः शाब्दधीहेतुत्वमजिज्ञासेऽपि शाब्दबोधोदयात्, मणिकृता निराकृतम्, तथा चाकांक्षाविरहे

पदार्थैकदेशे पदार्थान्तरानन्वये बीजम्, गौर्नित्येत्यादौ गवादिपदार्थैकदेशे गोत्वे नित्यादिपदार्थभेदान्वयबोधप्रयोजिकायाः समानविभक्तिकतत्तत्पदसमभिव्याहाररूपाया आकांक्षाया अक्षतत्वात्, अतः पदाधीनायाः स्वतन्त्रतदुपस्थितेः पदार्थान्तरस्य तत्रान्वयबोधे हेतुता वाच्या। एवञ्च ज्ञानविशिष्टार्थकात्मादिपदघटितात्मा न द्रव्यमित्यादि वाक्यात्पदार्थैकदेशे ज्ञाने इतरान्वयवारणाय दण्डजन्यो न दण्डजन्य इत्यादिवाक्यात् पदार्थैकदेशे दण्डजन्यत्वादौ दण्डजन्यभेदान्वयबोधवारणाय कल्पनीये ज्ञानांशे इतरान्वयबोधे स्वतन्त्रज्ञानाद्युपस्थितेर्हेतुत्वे कार्यतावच्छेदककोटिप्रविष्टतराविषयतायां विषयित्वादिसम्बन्धावच्छिन्नप्रकारतान्यत्वं विशेषणं देयम्।

वस्तुतो ज्ञानादिविषयकशाब्दबोधे स्वतन्त्रज्ञानाद्युपस्थितेर्हेतुत्वेऽपि पञ्चम्यादिजन्यज्ञानज्ञाप्यत्वोपस्थितिप्रकृतिजन्यधूमाद्युपस्थितियोग्यताज्ञानघटितशाब्दसामग्र्याः पदार्थैकदेशे ज्ञानादौ विषयितादिसम्बन्धेन धूमादिप्रकारकशाब्दबोधजनने बाधकाभावः—तादृशसामग्र्यां स्वतन्त्रज्ञानाद्युपस्थितेरन्तर्भावात् तादृशोपस्थितेर्ज्ञानादौ द्रव्यभेदाद्यन्वयबोधप्रयोजकसामग्र्यन्तरेऽप्येव निवेशात्। न चैवं स्वतन्त्रज्ञानाद्युपस्थितेर्व्यभिचारेण हेतुत्वमेव न सम्भवतीति वाच्यम्। यतो यत्रैकरूपावच्छिन्ने पदे पदान्तराकांक्षा गृहीता अन्यरूपेण च वृत्तिर्गृहीता तत्रातिप्रसङ्गवारणाय तत्तदानुपूर्वीविशेषरूपपदविशेषत्वप्रकारेण गृहीतवृत्तिकपदजन्यतत्तदर्थोपस्थितित्वेनैव पदार्थोपस्थितेर्हेतुता वाच्या, तथासति तत्तद्धर्मप्रकारेणाकांक्षादिग्रहस्य तत्तद्धर्मप्रकारेण गृहीतवृत्तिकपदाधीनोपस्थितेः परस्परसहकारेणैव फलजनकत्वोपगमेनोक्तातिप्रसङ्गवारणसम्भवात्। तथाच नानानुपूर्वीप्रकारकपदज्ञानजन्योपस्थितीनामेकविधशाब्दबोधे विभिन्नरूपेण हेतुतया व्यभिचार आवश्यक इति तद्वारणप्रकारेणैव दर्शितव्यभिचारस्यापि वारणमिति।

एतेन जन्यत्वांशे इतरान्वयबोधे स्वतन्त्रजन्यत्वोपस्थितेः कार्यकारणभावे कार्यतावच्छेदककोटिप्रविष्टतराविषयतायां निरूपितत्वसम्बन्धावच्छिन्नप्रकारताभेदनिवेशनमुभयासिद्धम्, अन्यथा ऽऽपणव इत्यादौ वह्नितापापत्यैकदेशे जन्यत्वे निरूपकत्वेन प्रकृत्य-

र्थान्वयानुपपत्तेः, ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थत्वमते च स्वतन्त्रज्ञानीय-स्थितिजन्यतावच्छेदकज्ञानविषयतानिरूपितेतरविषयतायां विषयितासम्बन्धावच्छिन्नप्रकारताभेदनिवेशनमाधिकमिति प्रत्युक्तम्। तदनिवेशेऽपि दर्शितरीत्या सामंजस्यात्। वैयाकरण इत्यादौ 'तदधीते तद्वेद' इत्यनेन विहिततद्धितार्थस्य, चतुरेकदेशे ज्ञाने विषयतया प्रकृत्यर्थस्यान्वयोपपत्तये उक्तस्थले विषयितासम्बन्धावच्छिन्नप्रकारताभेदनिवेशस्य सर्वमत एवावश्यकत्वाच्चेति।

प्रकृतेर्मुख्यार्थपरत्वे युक्त्यन्तरमाह यद्धर्मविशिष्टश्चेति। यद्धर्मविशिष्टः पञ्चमीप्रकृत्यर्थ इत्यर्थः। तद्धर्मविशिष्टस्यैव व्याप्यत्वमुपदर्श्यत इति ज्ञानज्ञाप्यत्वस्य पञ्चम्यर्थतामते तद्धर्मविशिष्टस्यैव पञ्चम्या जनकज्ञानविषयत्वबोधनादिति भावः। अन्यथा-पञ्चम्या ज्ञानजनकत्वेन बोधितप्रकृत्यर्थे ज्ञाने विषयत्वेन विशेषणतामवलम्ब्य विषये व्याप्त्युपदर्शनसंगमने। यथार्थधूमज्ञानादित्यादिप्रयोगेपीति। तत्रापि शब्दस्तुपस्थितज्ञाने पञ्चम्यर्थज्ञापकत्वान्वयेन धूमादेर्ज्ञापकज्ञानविषयत्वलाभेन धूमादेर्व्याप्यत्वप्रदर्शनं स्यात्। अस्मन्मते तु ज्ञानज्ञाप्यत्वस्यैव पञ्चम्यर्थतया धूमज्ञानज्ञानस्यैव तत्र ज्ञापकत्वं प्रतीयते न धूमज्ञानस्येति नातिप्रसङ्ग इति। न च पञ्चम्याः केवलज्ञाप्यत्वार्थकत्वमतेऽपि उक्तस्थले ज्ञानपदस्य लक्ष्यार्थे ज्ञानविषयकज्ञाने एव तात्पर्याच्च धूमादिज्ञाने मुख्येऽप्यर्थे ज्ञापकत्वालाभ इति न धूमादौ व्याप्यत्वोपदर्शनप्रसङ्ग इति वाच्यम्। मुख्यार्थपरत्वे बाधकविरहे तत्तात्पर्येणापि प्रयोगसम्भवात्। न हि यत्र पदे अर्थान्तरे निरूढलक्षणा शक्त्युपस्थापितोऽर्थस्तेन न बोध्यते तद्बोधौपयिकाकांक्षादिसत्त्वे सामग्रीबलेन तद्बोधस्य दुर्वारत्वात्।

अथ तत्र शक्यार्थबोधस्यापि सम्भवेन तत्रापि कस्यचित्कदाचित्तात्पर्यसम्भवेऽपि तत्रानादितात्पर्यविरहात्र तत्तात्पर्येण न्यायान्तर्गतपदप्रयोगासम्भव इति चेत्। माभून्मुख्यार्थतात्पर्यकज्ञानपदघटितयथार्थधूमज्ञानादित्यादिवाक्यसमुदायस्य न्यायत्वम्, तथापि ज्ञाप्यत्वमात्रस्य पञ्चम्यर्थत्वे न्यायान्तर्गतमुख्यार्थपरज्ञानपदघटितयथार्थधूमज्ञानादिति वाक्यस्य धूमादौ व्याप्त्याकांक्षाप्रयोजकधीजनकत्वं दुर्वारमेव तच्चानुभवविरुद्धम्। न च ज्ञानज्ञाप्यत्वे पञ्चम्या लक्षणापक्षेऽपि केवलज्ञाप्यत्वे, स्वारसिकलक्षणयोपस्थिते

धूमज्ञाने ज्ञानजनकताबोधसम्भवात् उक्तातिप्रसङ्गो दुर्वारः, तत्र प्राप्तौ च प्रकृतेर्पीरापत्तिसम्भव इति वाच्यम् । स्वारसिकलक्षणया पञ्चम्युपस्थापितविषयत्वादिरूपार्थान्तर इव तादृशज्ञाप्येऽपि प्रकृत्यर्थान्वये आकांक्षाया मयाप्यनभ्युपगमात् धूमज्ञानादित्यतो धूमज्ञानस्य ज्ञापकत्वाबोधनादिति भावः ।

यत्तु धूमज्ञानादित्यतो लक्षणयोपस्थितधूमरूपविषयविशिष्टज्ञानज्ञाने ज्ञापकताभाने ज्ञापकज्ञानविषयत्वं धूमज्ञान इव तद्विषये धूमेऽपि भासते इति प्रकृतेर्लाक्षणिकतामते तत्र धूमे व्याप्याकांक्षया तदुपदर्शनप्रसङ्गो दुर्वार इति आशयवर्णनम् ।

तदसत् । तथापि स्वमतेऽपि तद्दोषस्य दुर्वारत्वात्–पञ्चम्यर्थैकदेशे ज्ञाने मुख्यार्थधूमरूपविषयविशिष्टज्ञानान्वयेऽपि धूमे ज्ञापकज्ञानविषयताबोधस्य दुर्वारत्वात् । न च तथापि पञ्चमीप्रकृत्यर्थीनोपस्थितिविशेष्यत्वं यस्य तस्यैव व्याप्यत्वादिकं प्रदर्श्यत इति नियमस्य स्वयमुपगमान्न स्वमते दर्शितातिप्रसङ्ग इति वाच्यम् । तत्र धूमादौ ज्ञापकज्ञानविषयताबोधादाकांक्षासम्भवे तादृशनियममननुरुध्य व्याप्याद्युपदर्शनस्यानपवादात् ।

वस्तुतो लिङ्गज्ञानं प्रकृत्यर्थे पञ्चम्यर्थेऽवान्तरभवतु, उभयथापि धूमज्ञानादित्यत्र धूमज्ञान एव साध्यज्ञापकतावच्छेदकपक्षत्वावच्छेदकावच्छिन्नविषयतानिरूपितप्रकारता लभ्यते सैव तस्य व्याप्तिपक्षधर्मतानिर्वाहिति तदाकांक्षया तत्रैव व्याप्याद्युपदर्शनम् । ज्ञानविशेषणधूमे च तादृशविषयतावच्छेदकत्वरूपविषयतैव सा च न तद्गतव्याप्त्यादिनिर्वाहीत्यतो न तत्र तदाकांक्षेति धूमादित्यादिप्रयोगे धूमत्वादाविव धूमज्ञानादित्यत्र धूमादौ व्याप्यादेर्नोपदर्शनमिति ॥

( दी० ) इतरान्वितस्वार्थबोधकत्वे सति स्वीयं पदन्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति अन्त्यपदत्वे सति स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधाजनकान्त्यत्वे च सति वा न्यायावयवत्वं प्रतिज्ञात्वम् । प्रतिज्ञाहेत्वोरुपनयनिगमनयोश्चार्थौ परस्परमन्वितौ न तूदाहरणस्य केनापि वि-

भक्त्यन्तं पदम् तेन निगमने नातिव्याप्तिः ।

प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितस्वार्थबोधकन्यायावयवत्वं हेतुत्वम् । निगमनवारणाय उपस्थापितान्तम् । प्रमेयत्वमभिधेयं प्रमेयत्वात् इत्यादौ प्रकृतपक्षान्वितस्वार्थबोधकपञ्चम्यर्थान्वितो न प्रतिज्ञार्थः अपि तु तदेकदेशार्थ इति । स्वार्थविशिष्टवैशिष्ट्यबोधजनकन्यायावयवत्वं विशिष्टवैशिष्ट्यबोधजनकस्वार्थोपस्थितिजनकन्यायावयवत्वं विशिष्टबोधजनकस्वार्थविशिष्टबोधजनकन्यायावयवत्वं वा तत्त्वम् । एकवाक्यतया हेत्वर्थविशिष्टसाध्यस्य वैशिष्ट्यं भासते न पुनरवयवान्तरार्थविशिष्टस्य कस्यचिदिति ॥

(गा०) मूलोक्तलक्षणापेक्षया लघूनि प्रतिज्ञावयवलक्षणानि स्वयमाह इतरान्वितेति । प्रथमसत्यन्तस्य हेतूपनयनिगमनवारणस्य उदाहरणव्यावर्त्तनं स्वयमेव दर्शयिष्यते प्रतिज्ञाहेत्वोरित्यादिना"। इतरान्वितत्वं स्वभिन्नावयवार्थान्वितत्वं स्वाघटकपदोपस्थापितार्थान्वितत्वं वा । एवञ्च स्वेतरावयवसहकारेण स्वाघटकपदसहकारेण वा बोधकत्वं समुदायार्थः । तेनोदाहरणबोध्यार्थप्रविष्टसाध्यादेः प्रतिज्ञाजन्यबोधे इतरान्वितत्वेऽपि न क्षतिः । द्वितीयसत्यन्तानन्तरमग्रिम न्यायावयवत्वमिति सम्बध्यते । द्वितीयसत्यन्तं च हेतूपनयनिगमनवारकम्, हेतुजन्ये तस्मादितरेभ्यो भिद्यत इत्यादिनिगमनजन्ये च बोधे विभक्त्यर्थस्य विशेष्यतया विवक्षणीयविभक्त्यन्तपदार्थविशेष्यकत्वाविरहात् । वह्निव्याप्यधूमवांश्चायं तस्माद्वह्निमानित्याद्युपनयनिगमनजन्यबोधे च विभक्त्यन्तपदमध्ये अन्त्यभूतेदंपदमतुबाद्यन्तपदार्थयोरेव विशेष्यतया अन्त्यपदभिन्नस्वीयपदार्थविशेष्यकत्वविरहात् । अन्त्यत्वं च स्वघटकपदेषु चरमत्वम् उपनयादिस्थेदमादिपदानामपि न पदसामान्यमध्ये चरमत्वं तदुत्तरमप्यन्यवाक्यघटकपदसत्त्वादित्यतः स्वघटकत्वं पदविशेषणम् । एवं च निगमनघटकेषु यच्चरमं तदन्योपनयस्थेदंपदार्थविशेष्यकबोधं प्रत्युपनयसहकारेण जनके निगमने तादात्म्येन द्रव्यादिसाध्यके इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वा-

दित्यादौ स्वघटकविभक्त्यन्तपदेषु यदन्त्यं सत्त्वादिपदं तदन्यविभक्त्यन्तप्रतिज्ञास्थद्रव्यादिपदार्थविशेष्यकान्वयबोधजनके हेत्ववयवे चातिव्याप्तिवारणाय स्वीयत्वमभिन्नपदविशेषणम् । अत्र स्वत्वपुरस्कारेण लक्ष्यव्यक्तीनां निवेशादननुगम इति प्रतियोगिनि स्वत्वं निवेश्य लक्षणान्तरमाह अन्त्यपदवत्त्वे सतीति । अत्राप्युदाहरणवारकं प्रथमसत्यन्तमनुपज्यते । द्वितीयसत्यन्तवैकल्पिकं सत्यन्तद्वयम् । धूमादित्यादिहेतौ विभक्त्यन्तान्त्यपदाप्रसिद्ध्या प्रकृतपदमात्रघटिततत्पदसाधारणस्यान्त्यत्वस्य निर्वचनेऽप्यन्त्याभिन्नविभक्त्यन्तस्वीयपदाप्रसिद्ध्या स्वपदेनान्यस्यैवोपादेयतया स्वीयानन्त्यपदार्थविशेष्यकशाब्दबोधाजनकं यत्तदन्यत्वसत्त्वादतिव्याप्तिरतोऽन्त्यपदवत्त्वे सतीति । अन्त्यपदवत्त्वं च स्वघटकपदोत्तरपदाघटितं यत्स्वं तदन्यत्वं न तु स्वघटकपदोत्तरपदवत्त्वम् । लक्ष्यभूतप्रतिज्ञाव्यक्तीनां स्वत्वेनोपादेयतयाऽननुगमतादवस्थ्यात् । अन्त्यपदवतो हेतुविशेषस्य उपनयनिगमनयोस्तद्वतोः स्वीयानन्त्यपदार्थविशेष्यकबोधाजनकयोस्तदन्यत्वासत्त्वान्नातिव्याप्तिः । न चोपनयघटकानन्त्यपदार्थहेतुमदादिविशेष्यकबोधजनकतदेकदेशमनुवन्त्यादेर्भेदस्य तद्घटितसमुदायात्मकोपनयादावसत्त्वात् तादृशबोधाजनकं स्वं नोपनयादिकमित्यतिव्याप्तिरिति वाच्यम् । तादृशबोधजनकत्वं यादृशसमुदायावृत्तितादृशसमुदायरूपस्वभिन्नत्वनिवेशेनातिप्रसङ्गात् । उपनयैकदेशावृत्तितादृशबोधजनकताया इदमाद्यन्तपदघटितसमुदायात्मकोपनयावृत्तितया तदन्त्यपदसमुदायात्मकोपनयादेस्तादृशसमुदायात्मकत्वेन तद्भिन्नत्वाभावात् । तादृशसमुदायभिन्नत्वं च तद्भेदानुयोगितावच्छेदकावयवतावच्छेदकरूपवत्त्वम्, अतः समुदायघटकप्रत्येकसकलभागेषु समुदायभेदसत्त्वेऽपि नातिप्रसङ्गः । ईदृश्येव रीतिरवयवान्तरघटितलक्षणान्तरेऽपि बोध्या, तस्मात् इतरेभ्यो भिद्यते इत्यादिनिगमने स्वघटकविभक्त्यन्तपदमध्ये यदन्त्यं धातुपदं तदन्याख्यातार्थविशेष्यकबोधजनकतयाऽतिव्याप्तिमन्त्याभिन्नपदस्य विभक्त्यन्तरूपताविवक्षणेन वारयति पदमिति । निगमन इति । निगमनपदं तस्मात्पृथिवीत्यादि निगमनविशेषपरम् । अन्त्यपदशरीरे विभक्तिमत्त्वरूपपदवत्त्वनिवेशे पुनरुपनयनिगमनयोरेवातिव्याप्तिः स्यात् उपनयघटकान्त्यपदनिगमनघटक-

मतुप्पदयोरन्ते तद्घटकविभक्तिसत्त्वेनान्त्यभिन्नत्वात्तत्र विभक्त्यन्तपदमेव निवेश्यमिति भाव इति केचिद्व्याचक्षते ।

तन्न मनोरमम् । तथाहि—स्वघटकविभक्त्यन्तपदमध्ये यदन्त्यमित्यस्य कोऽर्थः ? स्वघटकविभक्त्यन्तपदप्रागभावासमानकालीनविभक्त्यन्तपदमिति चेत् । उपनयादिस्थेदमादिपदस्य विभक्तिरूपपदप्रागभावसमानकालीनतया तत्रान्त्यत्वनिर्वाहाय प्रथमं विभक्त्यन्तत्वमस्तु चरमविभक्त्यन्तत्वविशेषणमनर्थकम् । तच्चेष्टमेवेति चेत् । तर्हि अनन्त्यस्य स्वीयविभक्त्यन्तपदप्रागभावसमानकालीनत्वपर्यवसितं भिन्नभिन्नत्वनिवेशस्य वैयर्थ्यात् । एवञ्च तस्मान्नियत इत्यादिनिगमनस्थाख्यातपदस्यानन्त्यत्वमेव नास्ति किमनन्त्यपदे विभक्त्यन्तत्वनिवेशनेनेति ।

वस्तुतस्तु तस्मान्नेतराणीत्यादौ निगमने विभक्त्यन्तेतरादिपदप्रागभावसमानकालीननञ्पदार्थविशेष्यकशाब्दबोधजनकेऽतिव्याप्तिरेव लक्षणस्थपदपदस्य विभक्त्यन्तपरतया वारिता ।

अथ नञ्पदस्यापि प्रातिपदिकत्वेन विभक्त्यन्ततया विभक्त्यन्तत्वविशेषणेन दुर्वारता । न च निपातस्य विभक्तिप्रकृतित्वं न स्वीक्रियते तदर्थेन विभक्त्यर्थानन्वयात्, स्वराद्यव्ययार्थे, चानुसन्धीयमानलुप्तविभक्त्यर्थान्वयेन तादृशान्वयोत्तरमेव, विभक्तिस्वीकारस्यावश्यकत्वात्, नञोऽसुबन्तत्वेऽपि नञितितत्पुरुषविधायकसूत्रसामर्थ्यादेव तेन सह समासो भविष्यतीति वाच्यम् । विभक्तेर्निपातार्थान्वितार्थाबोधकत्वेऽपि निर्विभक्तिकप्रातिपदिकस्यासाधुतया साधुत्वाय विभक्तेरावश्यकत्वात् । नञोऽसुबन्तत्वेऽपि नञितितत्पुरुषविधायकसूत्रसामर्थ्येन तेन सह पदान्तरस्य तत्पुरुषसमर्थनेऽपि बहुव्रीह्यव्ययीभावयोरनुपपत्तेश्च । सुबन्तत्वेऽपि समासाप्रयोज्यप्रतियोगिपदार्थानुपरागेण नञोऽभावाबोधकतया तत्सापेक्षत्वेनासामर्थ्याच्च तेन सह द्वन्द्व इति चेत् ।

सत्यम् । विभक्त्यन्तत्वमत्र शाब्दबोधौपयिकविभक्तिप्रकृतित्वम्, पर्वतो वह्निमानित्यादौ प्रतिज्ञास्थपर्वतादिपदोत्तरसुब्विभक्तेरर्थविशेषपरताविरहेऽपि अभेदान्वयबोधानुपयोग्याकाङ्क्षानिर्वाहकसमानविभक्तिकत्वसम्पादकत्वेन शाब्दबोधोपयोगिता, न तु निपातोत्तरविभक्तेरिति नातिव्याप्तिः । अथ घटादिद्वन्द्वेन यत्र प्रतिज्ञायां घट-

भिन्नादिरूपपक्षनिर्देशस्तत्र नञादेर्निरुक्तविभक्त्यन्ततावितरहेऽपि विशेष्यीभूतविशिष्टपक्षबोधकघटादिपदस्य तादृशविभक्त्यन्तत्वाल्लक्षणसमन्वयः।

यत्तु यादृशपदोत्तरं कदाचिद्द्विमक्तेः श्रवणं तदेव विभक्त्यन्तपदेन विवक्षितं दध्यादिपदोत्तरं प्रथमैकवचनाश्रुतावपि द्विवचनादिश्रुतेर्दधि द्रव्यमित्यादिप्रतिज्ञासङ्ग्रह इति । तन्न । पक्षवाचकस्वरादिपदघटितप्रतिज्ञायामव्याप्तेः ।

निगमनवारणायेति । इतरान्वितस्वार्थबोधकत्वमात्रनिवेशे उपनयार्थान्वितस्वार्थबोधकतया निगमनातिव्याप्तिः स्यात्तद्वारणायेत्यर्थः। यद्यपीतरान्वितस्वार्थबोधकत्वं निगमनवत्प्रतिज्ञोपनययोरपि, तथापि विशेषणतयाऽन्वितत्वनिवेशनेन तद्वारणसम्भवान्निगमनमात्रकथनम् । यद्यपि निगमनसमुदायार्थः 'पक्ष एवान्वेती'ति साध्यान्वितस्वार्थबोधकत्वं निवेश्यापि प्रायशो निगमनवारणसम्भवः, तथापि यत्र साध्यस्य प्रमेयत्वगोत्वाभावादेरेव पक्षता तत्रत्यनिगमनेऽतिव्याप्तिवारणाय पक्षान्वितस्वार्थबोधकपदोपस्थापितार्थान्वितत्वनिवेशनम् । पक्षान्वितस्वार्थबोधकत्वं पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितस्वार्थविषयताप्रयोजकत्वम् , यथाश्रुते उपनयस्थपक्षवाचकेदंपदस्य वस्तुगत्याऽभेदेन पक्षसंसृष्टे यः पक्षस्तद्बोधकत्वेन पाषाणमयः पर्वत इत्यादिवाक्यात्पाषाणमयत्वादिरूपेण पक्षतावच्छेदकावच्छिन्नसंसृष्टतया प्रतीयमानो यः पक्षतावच्छेदकावच्छिन्नस्तद्बोधकत्वेन च तदुपस्थापितार्थान्वितस्वार्थबोधके निगमनेऽतिव्याप्तेरवारणात् । तादृशपदोपस्थापितार्थान्वितस्वार्थबोधकत्वं च तादृशपदप्रयोज्यविषयतानिरूपितस्वप्रयोज्यस्वार्थविषयताकत्वम्, यथाश्रुते निगमनार्थान्वयिन एव पक्षतावच्छेदकावच्छिन्नस्य पर्वतो नीलपर्वत इत्यादिवाक्यस्थपक्षतावच्छेदकावच्छिन्नविषयतानिरूपितविषयताप्रयोजकपर्वतपदोपस्थाप्यत्वेन निगमनातिव्याप्तेर्दुर्वारत्वात् । पक्षतावच्छेदकावच्छिन्नविषयतानिरूपिता या विषयता तन्निरूपितविषयताप्रयोजकत्वं फलितार्थः । पक्षतावच्छेदकावच्छिन्नत्वानिवेशे व्याप्यवत्त्वावच्छिन्ना या पक्षविषयता तन्निरूपितोपनयस्थेदम्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वमादाय निगमन एवातिव्याप्तिः स्यादिति तन्निवेशः ।

अथ तन्निवेशेऽपि पक्षतावच्छेदकावच्छिन्ना या उपनयस्थेदंपदप्रयोज्यविषयता तन्निरूपितनिगमनार्थविषयतानिरूपितोपनयार्थविषयतैवेत्युपनयेऽतिव्याप्तिः । न च चरमविषयताप्रकारत्वरूपा विवक्षणीया अतो नायमतिप्रसङ्ग इति वाच्यम् । एवं सति प्रमेयत्वमभिधेयं प्रमेयत्वादित्यत्र पक्षान्वितपञ्चम्यर्थे विशेष्यतयाऽन्वितसाध्यरूपार्थमादाय प्रतिज्ञातिप्रसङ्गाप्रसक्तेः प्रमेयत्वमभिधेयमित्याद्यग्रिमग्रन्थानुत्थितेः । एवं प्रमेयत्वमभिधेयं प्रमेयत्वादित्यत्र प्रतिज्ञातिव्याप्तेरेकदेशार्थविषयताव्यावृत्तस्वार्थविषयतानिवेशेन वारणेऽपि तत्रत्यनिगमनेऽभिधेयत्वव्याप्यप्रमेयत्ववांश्चायमित्युपनयार्थप्रमेयत्वत्वरूपपक्षतावच्छेदकरूपहेतुतावच्छेदकावच्छिन्नान्वितताद्दशपक्षतावच्छेदकावच्छिन्ने स्वार्थान्वयबोधजनकेऽतिप्रसङ्गो दुर्वारः । पक्षतावच्छेदकावच्छिन्नेत्यत्र विशेषणतयान्वितत्वनिवेशे प्रमेयत्वमित्याद्यग्रिमग्रन्थानुत्थितेः पञ्चम्यर्थहेतुत्वस्य विशेष्यतयैव पक्षान्वयित्वेन प्रतिज्ञातिव्याप्त्यप्रसक्तेः, विशेषणतया किञ्चिदन्वितत्वनिवेशेनैवोपपत्तेः प्रकृतपक्षनिवेशवैयर्थ्यापाताच्च । निगमनार्थस्य विशेषणतया किञ्चिदन्वितेऽनन्वयेन तत्रातिव्याप्तेस्तन्निवेशस्यापि वारणसंभवात् ।

मैवम् । शुद्धपक्षतावच्छेदकावच्छिन्नान्वितत्वनिवेशस्य दर्शितातिप्रसङ्गद्वयवारणसम्भवात्, उपनयार्थव्याप्तिविशिष्टपक्षान्वयिनो निगमनार्थस्य शुद्धपक्षतावच्छेदकावच्छिन्नानन्वयित्वेन तदन्वितार्थकेऽप्युपनये शुद्धपक्षतावच्छेदकावच्छिन्नान्वितार्थकपदोपस्थापितार्थकत्वविरहात् । प्रमेयत्वमभिधेयं प्रमेयत्वादित्यत्र व्याप्तिविशिष्टप्रमेयत्वरूपपक्षतावच्छेदकावच्छिन्न एव इदमर्थान्वयेन तदन्वितार्थकेऽपि निगमने निरुक्तरूपविरहात् ।

एतेन पक्षसाध्ययोरभेदस्थले निगमनार्थघटकसाध्यरूपपक्षान्वितेदम्पदार्थान्वितार्थकतया निगमनातिव्याप्तेरपि नावकाशः ।

यत्तु एकविशेषणतापन्नस्य यत्रापरविशेष्यता तत्र विशेष्यत्वविशेषणत्वरूपविषयतयोर्भेदेन पक्षविषयतानिरूपितविषयतानिरूपितस्वार्थविषयतानिवेशे हेतुमात्र एव लक्षणानुपपत्तिः एवं चोक्तरीत्या उपनयातिव्याप्तेर्नावकाशः पक्षविषयतानिरूपितनिगमनार्थनिष्ठप्रकारतारूपविषयतया पक्षविषयतानिरूपकतन्निष्ठविषयताया अभेदेनावच्छेद्या-

वच्छेदकभावविरहात् । एवंक्रमेण पक्षसाध्ययोरभेदस्थले निगमना-तिव्याप्तेरनवकाशः । एवं हेतुपक्षयोरभेदस्थले निगमनातिव्याप्तिरपि समाहिता हेतुप्रकारतानिरूपितायाः निगमनार्थप्रकारतानिरूपितायाश्चेदमर्थनिष्ठविशेष्यतारूपविषयताया अभेदेनावच्छेद्यावच्छेदकभावविरहादिति ।

तत्र । एकविशेषणतापन्नस्य यत्रापरविशेष्यता तत्र विशेष्यता-प्रकारतयोरभेदे बाधकविरहेण लाघवेन तस्यैवोपगमात् , नत्ववच्छेद्यावच्छेदकभावापन्नविषयताद्वयस्य । यदि चैकविशेषणतापन्नस्यापरविशेष्यतास्थले प्रकारताविशेष्यतयोरभेदे दण्डी पुरुषवानित्यादिबुद्धेः पुरुषादिनिष्ठप्रकारतानिरूपितदण्डादिविशेष्यताशालित्वं दुर्वारमिति तस्याः पुरुषीयो न वा दण्ड इत्यादिसंशयविरोधिताप्रसङ्ग इति तद्भेदः समूहालम्बनवैलक्षण्याय तयोरवच्छेद्यावच्छेदकभाव एव च स्वीक्रियते इति मन्यते, तदा हेतुपक्षयोरभेदस्थले निगमनार्थधर्मितावच्छेदकताकहेतुप्रकारतानिरूपिताया निगमनार्थप्रकारतानिरूपितायाश्च विशिष्टहेत्ववच्छिन्ना या इदंपदार्थपक्षविशेष्यताया ऐक्ये हेतोर्हेतुधर्मितावच्छेदकतापत्तिरिति अवच्छेद्यावच्छेदकभावापन्नविषयताद्वयस्य स्वीकरणीयतया तत्रत्यनिगमनातिव्याप्तेर्दुर्वारत्वात् । स्वार्थैकदेशस्यापि स्वार्थत्वाभिमानमूलां प्रतिज्ञावाक्येऽतिव्याप्तिशङ्कां स्वार्थपदस्य स्वप्रतिपाद्यत्वपर्याप्त्यधिकरणविशिष्टार्थपरतां स्फुटयन्निराकरोति *प्रमेयत्वमिति* । न प्रतिज्ञार्थः-साध्यविशिष्टपक्षरूपः । एकदेशार्थः-साध्यमात्रम् । यद्यपि प्रमेयत्वमभिधेयं प्रमेयत्वादित्यादिन्यायान्तर्गतनिगमने हेतुभूतपक्षान्वितस्वार्थबोधकेदम्पदोपस्थापितपक्षान्वितस्वार्थबोधकत्वमक्षतमिति विशेषणतया पक्षान्वितत्वं विवक्षणीयमिति कथितस्थले पञ्चम्यर्थः पक्षे न विशेषणमित्यतोऽपि नोक्तप्रतिज्ञायामतिव्याप्तिसम्भवः, तथापि निगमनार्थैकदेशस्य ज्ञाप्यत्वान्तभागस्य तादृशार्थान्वितत्वतया निगमनेऽतिप्रसङ्गवारणाय स्वार्थपदस्य स्वप्रतिपाद्यविशिष्टार्थपरतया आवश्यकत्वात् । कथितस्थले पञ्चम्यर्थान्वितस्वार्थबोधकत्वाभावेनापि अतिव्याप्तिवारणासम्भवात्तत्कथनम् । केवलेन हेतुवाक्येन पञ्चम्यर्थविशेष्यकावान्तरवाक्यार्थबोधो जन्यते ततश्च प्रतिज्ञास्थवह्न्यादिपदसहकारेण

धूमज्ञानज्ञाप्यो वह्निरित्याकारकस्वार्थविशिष्टबोधो जन्यते, ततः समुदितप्रतिज्ञासहकारेण पक्षे स्वार्थविशिष्टसाध्यवैशिष्ट्यबोधश्च प्रत्येकमेतादृशबोधत्रयजनकताघटितलक्षणत्रयमाह स्वार्थेति । प्रथमलक्षणं तृतीयबोधघटितम् द्वितीयं प्रथमबोधघटितम् तृतीयं च द्वितीयबोधघटितं बोध्यम् । विशिष्टवैशिष्ट्येति । स्वतात्पर्यविषयबोधीयविशेषणतावच्छेदकस्वार्थबोधजनकन्यायावयवत्वमित्यर्थः । तेन निगमनार्थान्वितोपनयार्थबोधस्यापि निगमनार्थैकदेशविशिष्टवैशिष्ट्यबोधतया निगमनार्थबोधस्य तज्जनकत्वेन यथाश्रुतलक्षणस्य निगमनेऽतिव्याप्तिरिति दूषणं प्रत्युक्तम् । विशेषणतावच्छेदकताया अव्यावर्त्तकत्वात्स्वतात्पर्यविषयबोधीयत्वं तद्विशेषणम् । विशिष्टबोधेति । स्वतात्पर्यविषयबोधजनकतावच्छेदकस्वार्थप्रकारताशालिबोधजनकन्यायावयवत्वमित्यर्थः । तेन निगमनार्थविशिष्टोपनयार्थज्ञानस्य निगमनार्थविषयकत्वेन तादृशज्ञानस्वरूपयोग्यत्वेऽपि न निगमनेऽतिव्याप्तिः । लक्षणत्रयमेव हेतौ सङ्क्रमयन्नवयवान्तराद्व्यावर्तयति एकवाक्यतयेत्यादिना ॥

( दी० ) इतरान्वितस्वार्थबोधकन्यायावयवत्वमुदाहरणत्वम्, अन्वयव्याप्तिबोधकत्वञ्च व्यतिरेकव्याप्तिबोधकत्वञ्च विशेषलक्षणद्वयम् ।

इतरोपस्थापितार्थविशेषणकस्वार्थबोधकन्यायावयवत्वं स्वार्थविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वं वोपनयत्वम् ।

अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वं निगमनत्वम् । हेत्वर्थश्च प्रतिज्ञार्थे न विशेषणत्वेनान्वेति किन्तु तदेकदेशार्थ इत्युक्तप्रायम् ॥

इत्यवयवदीधितिः ॥

—:०:—

(गा०) इतरोपस्थापितेति । स्वाघटकपदोपस्थापितेत्यर्थः । स्वार्थत्व स्वस्वजन्यप्रतिपत्तिविशेष्यत्वम्, अतो निगमनजन्यप्रतिपत्तिविशेष्य मतुपाद्यर्थं तदघटकपदोपस्थापितसाध्यविशेषणकबोधजनकस्य

निगमनस्य वारणाय उपस्थापितान्वम । अत्र प्रथमलक्षणे इतरार्थप्रकारकस्वार्थविषयताकत्वेन द्वितीये च स्वार्थांशेतरप्रकारकत्वेन बोधस्य निवेशाद्भेदः ॥

अवयवार्थेति । अवयवजन्यप्रतिपत्तिविशेष्यविशेष्यकस्वार्थप्रकारकबोधजनकावयवत्वमर्थः । सर्वेषामेवावयवानां स्वार्थघटकविशेष्यांशे स्वार्थघटकोर्धान्तरप्रकारकबोधजनकतयाऽतिव्याप्तिवारणाय स्वार्थप्रकारकेति । प्रतिज्ञार्थघटकसाध्यरूपविशेषणे हेत्वर्थस्यान्वयेऽपि विशेष्ये पक्षे तदनन्वयात् प्रतिज्ञायां नोपनयलक्षणातिव्याप्तिर्न वा हेतौ निगमनलक्षणातिव्याप्तिः उपनयनलक्षणे स्वार्थपदस्य निगमनलक्षणे चावयवार्थपदस्य विशेष्यपरत्वादित्याह, हेत्वर्थश्चेत्यादिना । उक्तप्रायमिति । पूर्वं हेत्वर्थैकदेशपञ्चम्यर्थ एकदेशार्थमात्रान्वयित्वमुक्तम् अत्र च हेतुसमुदायार्थस्य तथात्वमिति विशेषात्प्रायमिति ।

( चि० ) केचित्तु सामान्यवत्त्वे सति बाह्यकरणप्रत्यक्षत्वादित्यपार्थकम्, विभक्त्युपस्थापितहेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्यानन्वयादिति केचित् । तन्न । सतिसप्तमीबलात् सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वस्य च सामानाधिकरण्योपस्थितौ विशिष्टे हेतुत्वान्वयात् तथैव व्युत्पत्तेः न ह्ययमर्थोऽस्मान्नावगम्यते ।

हेतावुक्ते कथमस्य गमकत्वमित्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणम् । तत्रानुमितिहेतुलिङ्गपरामर्शवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतनिष्ठनियतत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदाहरणत्वम् । सामान्यलक्षणे साध्यसाधनसम्बन्धबोधकत्वं साध्यसाधनाभावसम्बन्धबोधकत्वञ्च विशेषलक्षणद्वयम् । न्या-

धूमवानग्न्याप्यो वह्निरित्याकारकस्वार्थविशिष्टबोधो जन्यते, ततः समुदितप्रतिज्ञासहकारेण पक्षे स्वार्थविशिष्टसाध्यवैशिष्ट्यबोधश्च प्रत्येकमेतादृशबोधत्रयजनकताघटितलक्षणत्रयमाह स्वार्थेति । प्रथमलक्षणं तृतीयबोधघटितम् द्वितीयं प्रथमबोधघटितम् तृतीयं च द्वितीयबोधघटितं बोध्यम् । विशिष्टवैशिष्ट्येति । स्वतात्पर्यविषयबोधीयविशेषणतावच्छेदकस्वार्थबोधजनकन्यायावयवत्वमित्यर्थः । तेन, निगमनार्थान्वितोपनयार्थबोधस्यापि निगमनार्थैकदेशविशिष्टवैशिष्ट्यबोधतया निगमनार्थबोधस्य तज्जनकत्वेन यथाश्रुतलक्षणस्य निगमनेऽतिव्याप्तिरिति दूषणं प्रत्युक्तम् । विशेषणतावच्छेदकतया अध्याहर्तव्यत्वात्स्वतात्पर्यविषयबोधीयेत्यस्य तद्विशेषणम् । विशिष्टबोधेति । स्वतात्पर्यविषयबोधजनकतावच्छेदकस्वार्थप्रकारताशालिबोधजनकन्यायावयवत्वमित्यर्थः । तेन निगमनार्थविशिष्टोपनयार्थज्ञानस्य निगमनार्थविषयकत्वेन तादृशज्ञानस्वरूपयोग्यत्वेऽपि न निगमनेऽतिव्याप्तिः । लक्षणत्रयमेव हेतौ सङ्गमयन्नवयवान्तराद्व्यावर्तयति एकवाक्यतयेत्यादिना ॥

( टी० ) इतरान्वितस्वार्थबोधकन्यायावयवत्वमुदाहरणत्वम्, अन्वयव्याप्तिबोधकतत्त्वं व्यतिरेकव्याप्तिबोधकतत्त्वञ्च विशेषलक्षणद्वयम् ।

इतरोपस्थापितार्थविशेषणकस्वार्थबोधकन्यायावयवत्वं स्वार्थविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वं वोपनयत्वम् ।

अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वं निगमनत्वम् । हेत्वर्थश्च प्रतिज्ञार्थे न विशेषणत्वेनान्वेति किन्तु तदेकदेशार्थ इत्युक्तप्रायम् ॥

इत्यवयवदीधितिः ॥

—:०:—

(गा०) इतरोपस्थापितेति । स्वाघटकपदोपस्थापितेत्यर्थः । स्वार्थत्वं स्वस्वजन्यप्रतिपत्तिविशेष्यत्वम्, अतो निगमनजन्यप्रतिपत्तिविशेष्ये मतुबाद्यर्थे तद्घटकपदोपस्थापितसाध्यविशेषणकबोधजनकस्य

निगमनस्य वारणाय उपस्थापितान्तम् । अत्र प्रथमलक्षणे इतरार्थ-प्रकारकस्वार्थविषयताकत्वेन द्वितीये च स्वार्थेतरप्रकारकत्वेन बोधस्य निवेशान्द्वेद ॥

अवयवार्थेति । अवयवजन्यप्रतिपत्तिविशेष्यविशेष्यकस्वार्थप्रकारकबोधजनकावयवत्वमर्थः । सर्वेषामेवावयवानां स्वार्थघटकविशेष्यांशे स्वार्थघटकार्थान्तरप्रकारकबोधजनकतयाऽतिव्याप्तिवारणाय स्वार्थप्रकारकेति । प्रतिज्ञार्थघटकसाध्यरूपविशेषणे हेत्वर्थस्यान्वयेऽपि विशेष्ये पक्षे तदनन्वयात् प्रतिज्ञायां नोपनयलक्षणातिव्याप्तिर्न वा हेतौ निगमनलक्षणातिव्याप्तिः उपनयनलक्षणे स्वार्थपदस्य निगमनलक्षणे चावयवार्थपदस्य विशेष्यपरत्वादित्याह हेत्वर्थश्चेत्यादिना । उक्तप्रायमिति । पूर्वं हेत्वर्थैकदेशपञ्चम्यर्थ एकदेशार्थमात्रान्वयित्वमुक्तम् अत्र च हेतुसमुदायार्थस्य तथात्वमिति विशेषात्प्रायमिति ।

( चि० ) केचित्तु सामान्यवत्त्वे सति बाह्यकरणप्रत्यक्षत्वादित्यपार्थकम् विभक्त्युपस्थापितहेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्यानन्वयादिति केचित् । तन्न । सतिसप्तमीबलात् सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वस्य च सामानाधिकरण्योपस्थितौ विशिष्टे हेतुत्वान्वयात् तथैव व्युत्पत्तेः न ह्ययमर्थोऽस्माभिरवगम्यते ।

हेतावुक्ते कथमस्य गमकत्वमित्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणम् । तत्रानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठनिरूपितत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदाहरणत्वम् । सामान्यलक्षणे साध्यसाधनसम्बन्धबोधकत्वं साध्यसाधनाभावसम्बन्धबोधकत्वञ्च विशेषलक्षणद्वयम् । न्या-

यावयवदृष्टान्तवचनमुदाहरणमिति तु न—दृष्टान्तप्र-
योगस्य सामयिकत्वेनासार्वत्रिकत्वात्, यो यो धूम-
वान् सोऽग्निमानित्येव व्याप्तिप्रतीतेः । नापि प्रकृता-
नुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानविषयव्या-
प्त्युपस्थापकं वचनं तत्,—उपनयातिव्याप्तेः । अत उप-
नयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणम् ।
एतदेवान्वयव्यतिरेकिव्याप्तिविषयत्वविशेषितं विशे-
लक्षणद्वयमित्यन्ये । अत्र च व्यभिचारवारणाय वीप्सा-
माहुः । यत्र च सामानाधिकरण्यादेव व्याप्तिस्तत्र न
वीप्सा, केवलान्वयिन्यभेदानुमाने च वीप्सायामपि
व्यभिचारस्तादवस्थ्यमिति तु वयम् । वीप्सा च यत्पदे
न तत्पदेऽपि विरुद्धरूपोपस्थितयोरपि तत्पदेन परा-
मर्शाद्बुद्धिस्थवाचकत्वादिति न व्युत्पत्तिविरोधः, यथा
यद्यत् पापं प्रतिजहीत्यत्र । इदञ्च साध्यसाधनोभया-
श्रयाविकलानुपदर्शितान्वयं विपरीतोपदर्शितान्वया-
नुपदर्शितव्यतिरेकविपरीतोपदर्शितव्यतिरेकभेदादा-
भासरूपमिति ।

उदाहरणानन्तरमस्तु व्याप्तिस्तथापि व्याप्तं किं
पक्षे वर्त्तते न वेत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्वप्रद-
र्शनायोपनयः । तत्रानुमितिकारणतृतीयलिङ्गपराम-
र्शजनकावयवत्वमुपनयत्वमिति सामान्यलक्षणम् । सा-
ध्यव्याप्यविशिष्टपक्षबोधकावयवत्वं साध्याभावव्या-
पकाभावप्रतियोगिमत्पक्षबोधकावयवत्वञ्च विशेषल-
क्षणद्वयम् । उदाहरणान्त एव प्रयोग इति न वाच्यम् ।
तृतीयलिङ्गपरामर्शस्य व्याप्तिपक्षधर्मताग्राहिणोऽवय-

वान्तरादलाभात्, तदनभ्युपगमेऽपि पक्षधर्मताया अलाभात्। न च हेतुवचनादेव तदवगमः तस्य को हेतुरित्याकाङ्क्षायां प्रवृत्तत्वेन हेतुस्वरूपोपस्थापकस्यातत्परत्वात् । वादिवाक्यादेवाक्षेप इति चेन्न। तदर्थस्यासिद्धत्वेनानाक्षेपकत्वात्,अन्यथा प्रतिज्ञामात्रादेव सर्व्वाक्षेपेऽवयवान्तरविलयात् । प्रतिपाद्यानां स्वत एव तदवगम इति चेन्न । तेषां व्युत्पन्नाव्युत्पन्नतया सर्वत्र तदसम्भवात् प्रतिपादकेन स्वव्यापारस्य निर्वाहयितुमुचितत्वाच्च, अन्यथावयवान्तरेऽप्येवंप्रसङ्गात् ।

उपनयानन्तरं निगमनम् , तच्चानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षताधीप्रयुक्तसाध्यधीजनकं वाक्यम् । न च व्याप्तिपक्षधर्मतायाश्चतुर्भिरेवावयवैः पर्याप्तेः किं तेनेति वाच्यम् । अबाधितासत्प्रतिपक्षत्वयोरलाभे चतुर्णामप्यपर्यवसानात् ।

अथाभिधानाभिधेययोर्व्याप्तिपक्षधर्मतावल्लिङ्गप्रतिपादनादेव पर्यवसानेनावयवान्तराणां निराकाङ्क्षत्वं विपरीतशङ्कानिवृत्तेरपि तत एव लाभात्, अन्यथा निगमनेनापि तदवारणात् न हि तद्विशेषदर्शनमनाहत्यैव तन्निवर्त्तकम् । सिद्धनिर्देशतया वारयतीति चेत् । न स्वरूपमात्राभिधानात् । साध्यत्वानुपस्थितौ तस्मादिति हेतुविभक्त्यनन्वयप्रसङ्गाच्चेति चेन्न । व्याप्तिपक्षधर्मताज्ञानेऽपि बाधसत्प्रतिपक्षबुद्धेः साध्यज्ञानानुत्पत्तिदर्शनात् तदभावाबोधने समीहितानिर्व्वाहात् ।

अथ बाधादिविरहस्य प्रयोजकत्वं न तु तद्बोधस्य

मानाभावादसिद्धेश्च , इति किमर्थं बाधादिविरहो बोधनीय इति चेन्न । यदवगमे सति यत्र भवति तत्तदभावज्ञानसाध्यमिति व्याप्तेः । न चानन्वयः, तस्मादित्यन्वयबलादेव हेत्वनाकाङ्क्षितस्वलक्षणासिद्धत्वज्ञानात् न त्वन्वयात् पूर्ववत् ।

इह केचित्—यथा तस्मादिति सर्वनाम्ना हेतोः परामर्शः पूर्वोक्ताशेषरूपलाभाय तथा साध्यांशस्यापि तथा इति सर्वनाम्ना सिद्धस्थल इव विरोधादिवारणाय युक्त इत्याहुः । तन्न । तथेति स्वरूपे प्रकारे सादृश्ये वा ? आद्ये तथा चायमिति प्रकारतात् तथेति हेतुमानित्यर्थः स्यात्, तथा चानन्वयः न हि हेतुमत्त्वादेव हेतुमत्त्वमित्यन्वितम् । न द्वितीयः सामान्येन पक्षस्यापि अन्वयव्याप्तौ प्रवेशात् तत्प्रकारान्वयस्तत्रैवेत्यनन्वयात् । अत एव न तृतीयोऽपि अभेदानुमाने चान्वयिनि तस्मात्तथेति सादृश्याभावात्, बहुतरश्च प्रकमे विशेष्यानन्वयात्, वादिवाक्ये च योग्यतान्वयेऽतिप्रसङ्गात् तस्मादित्यत्र विभक्त्यर्थान्वयादेव नियमः । तस्मादनित्य इत्यभिधाने विशिष्य सिद्धतावगम्यते पूर्वं साध्यतयोक्तस्य समर्थहेतुसम्बन्धेन पुनरुत्कीर्त्तनात्, अन्यथा तद्वैयर्थ्यात् । संशयप्रयोजनादयस्त्ववयवलक्षणाभावादेव नावयवाः, किन्तु न्यायाङ्गतयोपयुज्यन्त इति नाधिक्यम्, कण्टकोद्धारस्य च न सार्वत्रिकत्वं समयविशेषोपयोगित्वादिति ॥

इत्यवयवचिन्तामणिः ।

शब्दो अनित्यः सामान्यवत्त्वे सति बाह्यकरणप्रत्यक्षत्वादिति हेतुप्रयोगे हेतुघटकदलयोः प्रत्येकं व्यभिचारितया भेदेन नामार्थयोस्तयोरेकांशेऽपरस्य विशेषणतयाऽनन्वयेन च विशिष्टहेतुत्वान्वयासम्भवेन विशेषणविशेष्यभावापन्नयोर्मिलितयोर्हेतुत्वान्वयो वाच्यः । सोऽपि न सम्भवति सामान्यवत्त्वादेः सप्तम्यन्तपदोपस्थाप्यहेतुत्वार्थकपञ्चमीप्रकृत्यर्थत्वाभावादिति केषांचित्पूर्वपक्षं समाधातुमुपन्यस्यति मूले हेतुग्रन्थे सामान्यवत्त्व इति । सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वे विशेषणत्वासम्भवेऽपि सप्तम्यन्तार्थस्य सामान्यवत्त्वसामानाधिकरण्यस्य तत्र विशेषणतया तादृशविशेषणावच्छिन्नबाह्यकरणप्रत्यक्षत्वे हेतुत्वान्वयसम्भवान्नापार्थकतेत्याह तथेति । सामान्यवत्त्वस्येति । सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वविशेषणीभवत्सामानाधिकरण्यप्रतियोगितयोपस्थितत्वादित्यर्थः ।

अथ समानाधिकरण्ये सप्तम्या अननुशासनात्कथमेतत् सतीत्यस्य रा कोऽर्थ इति चेन्न । 'यस्य च भावेन भावलक्षण'मिति सूत्रानुशिष्टसप्तम्या गोषु दुह्यमानासु गत इत्यादौ यथा गोदोहनादिसमानकालीनत्वं गमनादौ बोध्यते तथा प्रकृतेऽपि समानदेशत्वप्रत्यायनात् । न च तादृशसप्तम्या क्रियासमानकालीनत्ववत् क्रियासमानदेशत्वस्य कदाचित्क्रियायां प्रत्यायनसम्भवः यस्य क्रियया अन्यस्य क्रिया लक्ष्यते विशेष्यते तद्वाचकपदसमभिव्याहृतकृदन्तोपस्थापितक्रियासमानकालीनत्वादिसम्बन्धेन क्रियान्तरविशेषणमिति यावत् तद्वाचकपदात्सप्तमीत्यर्थकत्या तादृशसूत्रस्य क्रियासमानकालीनत्वादौ क्रियान्तरविशेषणतया विवक्षिते तादृशसूत्रेण सप्तमीविधानात् । सप्तमीप्रकृत्यर्थनिरूपितसामानाधिकरण्यादेरपरनामार्थविशेषणतया विवक्षणे सप्तम्यननुशासनात्सामान्यवत्त्वसामानाधिकरण्यस्य प्रत्यक्षत्वे कुतो लाभ इति वाच्यम् । यथा गोषु दुह्यमानास्वागत इत्यादौ गोपदोत्तरसप्तम्याः समभिव्याहृतक्रियागोदोहनरूपोऽर्थः, तत्र समभिव्याहृतकृदन्तार्थान्वितप्रकृत्यर्थस्य कर्मतानिरूपकत्वसम्बन्धेनान्वयः तस्याश्च समानकालीनत्वसम्बन्धेन क्रियान्तरेऽन्वय इति तत्र दुह्यमानगोकर्मकदोहनसमानकालीनत्वलाभस्तथा प्रकृतेऽपि । अत्रापि दातृप्रकृतेः असुधातोराधारत्वमर्थः यत्रास्ति घट इत्यादौ एतद्देशनिष्ठाधारताप्रतियोगी घट इत्यादिप्रतीतेः तत्र च सप्तम्यर्थसमभि-

स्याद्वाधारत्वरूपक्रियायां सामान्यवत्त्वस्य प्रकृत्यर्थस्य प्रतियोगितासम्बन्धेनान्वयः, आधारतायाः प्रत्यक्षत्वे समानदेशत्वसम्बन्धेनान्वय इति प्रत्यक्षत्वे सामान्यवत्त्वसामानाधिकरण्यलाभसम्भवात्। भावलक्षणामिति भावशब्दस्य धर्ममात्रपरत्वात् प्रत्यक्षत्वस्य क्रियात्वविरहेऽपि क्षतिविरहात्। अत्र द्रव्यस्याध्याहारेण वा प्रत्यक्षत्वसत्त्वे सामान्यवत्त्वसत्त्वस्य समानदेशतालाभेन सामञ्जस्यात्। कुत्रचित्समानकालीनत्वं क्रियायाः सम्बन्धः कुत्रचित्समानदेशत्वमित्यत्र किं नियामकमिति चेत्। यत्र समभिव्याहृतक्त्वाप्रत्ययस्य वर्त्तमानत्वे तात्पर्यं तत्र समानकालीनत्वं यत्र च न तद्विवक्षणं तत्र समानदेशत्वं सम्बन्ध इति नियमात्। प्रकृते च वर्त्तमानत्वविवक्षया समानदेशत्वलाभात् वर्त्तमानत्वाविवक्षायामपि विरोधिकालाविवक्षया लटः साधुत्वात्। यत्र चातीतत्वमनागतत्वं वा क्त्वा विवक्षितं दुग्ध्वा तु दोग्धव्यास्वित्यादौ तत्रोत्तरत्वं पूर्वत्वम्, पूर्वत्वं च सम्बन्ध इति दोहनोत्तरत्वादिकमेव प्रतीयते न तु समानकालीनत्वमित्यवधेयम्।

ननु उदाहरणे यत्पदद्विरुक्तिप्रयोजिकायाः महानसमहानसान्यतरस्यादिना यस्तु यावत्साधनाधिकरणप्रत्यायनेच्छारूपवीप्सायाः किं प्रयोजनम्, न हि साधनस्य यावदधिकरणे साध्यवत्त्वज्ञानमनुमितिहेतुः येन यत्पदे वीप्सां विना यावद्धूमाधिकरणानुपस्थापने तत्पदेन तावदधिकरणानां परामर्शासम्भवात्तत्फलसाधनाधिकरणे साध्यवत्त्वाप्रतीतेरनुमित्यनिर्वाहः स्यादिति यत्तत्पदाभ्यां यावदधिकरणबोधो वीप्साप्रयोजनं भवेत्। न च व्याप्तिप्रत्यायनेच्छा वीप्सा तस्याश्चानुमित्यौपयिकबोध एव प्रयोजनमिति वाच्यम्। व्याप्तेश्च पदार्थत्ववाच्यत्वविरहेण तत्प्रत्यायनेच्छायामपि शाब्दतत्प्रत्ययस्यायोगात् मानसबोधे च वक्त्रभिप्रायानुपयोगात्। यदि च यत्पदसमभिव्याहृतवह्न्यादिपदस्य धूमव्यापकताविशिष्टवह्न्यादिलाक्षणिकतया धूमादौ वह्निव्याप्तिलाभ इत्युच्यते तदा यत्पदस्य द्विरुक्तिं विनापि तल्लाभसम्भवाद्द्विरुक्तिवैयर्थ्यमित्याक्षेपे प्राचीनसमाधानमुपन्यस्यति अत्र चेति। उदाहरणस्य यत्पदे चेत्यर्थः। व्यभिचारवारणायेति। वीप्सामुद्दिश्य मानसव्याप्तिज्ञानविरोधिव्यभिचारधीवारणप्रयोजनिकामाहुरित्यर्थः। यावद्धेत्वधिकरणे साध्यवत्त्वनिश्चये ते-

न विपरीतनिश्चयात्मकेन साधनाधिकरणे साध्याभाववत्त्वरूपव्यभिचारग्रहस्य प्रतिबन्ध इति भावः ।

नन्वेवं वाच्यत्वादिसाध्यस्य यत्रोपायान्तरात्केवलान्वयित्वं गृहीतमयमेतदभिन्न एतद्वृत्तियावद्धर्मवत्त्वादित्यत्र च हेतावेकमात्रवृत्तित्वं गृहीतं तत्र हेतौ साध्यसामानाधिकरण्यग्रहादेव मानसी व्याप्तिधीः सम्भवति प्रथमेऽभावे साध्यीयत्वाग्रहेण द्वितीये साध्याभाववत्तया गृह्यमाणेऽधिकरणान्तरे हेतोरग्रहेण व्यभिचारग्रहासम्भवादित्युभयसिद्धव्याप्तिकासाधकतानुमाने यथा उदाहरणं न प्रयुज्यते तथात्र सामानाधिकरण्यलाभायोदाहरणप्रयोगेऽपि द्विर्यत्पदं न प्रयुज्यतेत्यत्रेष्टापत्तिमाह यत्र, चेति । सर्वत्रैव द्विरुक्तिरनपेक्षितेति स्वमतमाह वीप्सायामपीति । अयमाशयः । द्विर्यत्प्रयोगेऽपि सकलसाधनाधिकरणपरत्वाग्रहे व्यभिचारसंशयस्य व्यभिचारधियोऽनिवृत्तिः तत्परत्वग्रहापेक्षायां च यथोक्तप्राथम्यात्स्वं साधननिष्ठव्याप्तितात्पर्यमेव गृह्यतां तत एव च लक्षणया व्याप्तिशाब्दबोधसम्भवात् तत्र च व्यभिचारशङ्काया अविरोधित्वात् । यावत्साधनवति साध्यवत्त्वबोधाय द्विर्वचनमनर्थकमेव अत एव यत्रैव तत्रैवमिति भाष्यानुदाहरणोपदर्शनमपि सङ्गच्छते । आवश्यकश्च व्याप्तेः शाब्दबोधोऽन्यथा समानप्रकारतामपुरस्कृत्य विपरीतधियो विरोधितायाः दुःकल्प्यतया महानसत्वादिना सकलधूमाधिकरणे साध्यवत्त्वबोधेऽपि धूमवत्त्वप्रकारेण तत्रैव साध्याभावशंकाया अनुच्छेदेन मानसव्याप्तिग्रहासम्भवात् । एवमद्विरुक्तेनापि यत्पदेन एकरूपेण विभिन्नरूपेण वा सकलधूमाधिकरणोपस्थितिसम्भवात्तदर्थकतया द्विरुक्तिसार्थक्यमित्यपि दुर्वचम् । न च सकृदुच्चरितेत्यादिव्युत्पत्तिविरोधादेकस्माद्यत्पदादनेकाधिकरणबोधः सम्भवतीति वाच्यम् । सकृदुच्चरितस्य नानाशक्त्या बोधकतायामेवाव्युत्पत्तेः सर्वनाम्ना च बुद्धिस्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नत्वेन नानाधर्मिणामनुगमात् नानार्थेषु शक्त्यैक्येन व्युत्पत्तेरविरोधात्, अन्यथा द्विरुक्तिस्थले एकस्यैव पदद्वयरूपादेशस्थानितया पदभेदविरहेण द्विरुक्तादपि नानार्थबोधानुपपत्तेः कथञ्चिदर्थद्वयबोधकत्वनिर्वाहेऽपि भूयोऽर्थबोधस्य निर्वाहयितुमशक्यत्वाच्चेति ।

अथ द्विरुक्तस्थल एव व्याप्तौ निरुक्तलक्षणम्। अत एव यत्पदप्रयोगेऽपि वादिवाक्ये स्वारसिकलक्षणाविरहेण व्याप्तिबोधनिर्वाहः। वस्तुतो व्याप्तिगोचरशाब्दबोधानुरोधेन चेदुदाहरणप्रयोगस्तदा उपनयवद्व्याप्यपदेनैवोदाहरणेऽपि व्याप्तिबोधनं युज्यते इति सकलधूमाधिकरणे साध्यवत्त्वबोधनाय यो धूमवानित्युदाहरणम्। इत्थं च यत्पदस्य सकलधूमाधिकरणपरताया आवश्यकतया अद्विरुक्तयत्पदस्य तत्पदस्यानियमेन तत्परत्वग्रहार्थं द्विरुक्तेरावश्यकत्वात्। एवं 'नित्यवीप्सयो'रिति सूत्रेण द्विरुक्तिविधानस्य नित्यतया सकलधूमाद्यधिकरणपरत्वे यत्पदस्याद्विरुक्तस्य साधुत्वमेव न स्यादित्यतो द्विरुक्तेरावश्यकतेत्याशयेन यत्पदे द्विरुक्तिमभिमत्य तत्पदे द्विरुक्तिं खण्डयति वीप्सा चेति। द्विरुक्तिनियमोऽपि कदाचिद्यत्पद एव न तु तत्पदेपीत्यर्थः। सर्वत्रैव तत्पदे न द्विरुक्तिरिति नार्थः। विवर्णभावं स स भूमिपाल इत्यादौ छन्दोनुरोधादिना द्विरुक्तिदर्शनात्। न्याये तु प्रयुज्यमाने आधिक्यस्य न्यायेऽन्याय्यतया न तत्र द्विरुक्तिः। सकलधर्मिप्रत्यायनेच्छारूपवीप्सासत्त्वेऽपि अद्विरुक्ततत्पदस्य साधुतासम्भवः महाकविप्रयोगदर्शनादेतदपि स्पष्टयितुं भवभूतिनाद्यास्तथा प्रयोगो दर्शयिष्यते। द्विरुक्तयत्पदबोधितनानाधर्मिणामेकेन तत्पदेन परामर्शायोग इत्याशंकां निरस्यति विरूपेति। महानसमहानसान्यतरादिना विभिन्नप्रकारेणेत्यर्थः। तत्पदेन परामर्शात् तत्पदेन परामर्शासम्भवात्। तत्पदस्य परामर्शकतायां व्युत्पत्तिविरोधे द्विरुक्तयत्पदेनापि तावद्धर्मिबोधासम्भवात्। व्युत्पत्तिविरोध एव च कथमित्याकांक्षायामाह बुद्धिस्थवाचकत्वादिति। बुद्धिप्रकारविशिष्टसर्वेषु एकशक्तेरित्यर्थः। व्युत्पत्त्यविरोधं दृष्टान्तेन दृढयति यथेति ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचितगादाधर्यामवयवप्रकरणम् ॥

---

श्रीगणेशाय नमः

अथानुमानगादाधर्याम्

# सामान्यनिरुक्तिप्रकरणम् ।

(चि०) अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते ।

(दी०) एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथेति ।

(गा०) हेत्वाभासनिरूपणे प्रसङ्गस्यापि सङ्गतित्वं सम्भवति व्याप्तिपक्षधर्मताविशिष्टहेतुनिरूपणे सति व्याप्तिपक्षधर्मताविरोधितद्विरहवतो दुष्टहेतोः स्मरणात्, अतस्तदप्रदर्शनेन मूलस्य न्यूनतां परिजिहीर्षुः प्रसङ्गस्यापि तन्निरूपणप्रयोजकत्वमाह एतावतेति । परिकरो–व्याप्तिपक्षधर्मते । निरूप्येत्यन्तमुक्तक्रमेण दुष्टहेतोः स्मृतत्वस्य प्रसङ्गनिर्वाहकस्य लाभाय । तत्प्रसङ्गादिति । सपरिकरहेतुनिरूपितप्रसङ्गसङ्गतेरित्यर्थः । तज्ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः । अन्वयश्चास्य निरूपणमित्यनेन । तत्त्वनिर्णयविजयप्रयोजकत्वादिति मूलं यद्यपि हेत्वाभासनिष्ठतत्त्वनिर्णयादिजनकज्ञानविषयत्वार्थकतया शिष्यप्रवृत्त्युपयोगिनिरूपणघटकज्ञानप्रयोजनप्रदर्शनपरम्, तथापि तन्मात्रपरत्वे सङ्गत्यप्रदर्शनेन न्यूनता स्यादिति तस्यैककार्यकारित्वादिरूपसङ्गतिप्रदर्शनपरत्वमपि सम्भवतीति स्फुटीकर्तुमाह तत्त्वनिर्णयादिति । आदिपदाद्विजयपरिग्रहः । तत्कार्यकारित्वात्–सपरिकरहेतुप्रयोज्यकार्यप्रयोजकत्वात् । प्रयोजकत्वं च जनकतावच्छेदकादिसाधारणमतः स्वविषयकज्ञानकार्यं प्रति स्वस्य तत्त्वमक्षतमेव । तत्त्वनिर्णयः–प्रमितिकोटिनिश्चयः । तत्र व्याप्तिपक्षधर्मताविशिष्टप्रकृतहेतुज्ञानमिव तद्विपरीतकोटिसाधकस्य हेत्वाभासत्वज्ञानम-

प्युपयुज्यते प्रतिबन्धकीभूततद्विपरीतकोटिव्याप्यवत्ताज्ञानेऽप्रामाण्यग्राहकत्वादित्युभयोस्तत्त्वनिर्णयप्रयोजकत्वम् । अथवा तत्त्वनिर्णयः—*साध्यवत्ताज्ञाने प्रमात्वनिश्चयः । तथानुमापकहेतोर्व्याप्त्या*दिविशिष्टत्वरूपसद्धेतुत्वज्ञानमिव, विपरीतसाधकहेतोर्दुष्टत्वज्ञानमप्युपयुज्यते । प्रकृतसाध्यग्रहाप्रामाण्यग्राहकविपरीतसाधकहेत्वदुष्टत्वग्रहविघटकत्वात् । विजयप्रयोजकत्वं च हेत्वाभासस्य स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा व्याप्त्यादिविशिष्टहेतोः स्वज्ञानाधीनस्वन्यायप्रयोगद्वारा च बोध्यम् ।

( चि० ) तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिविरोधित्वं ज्ञायमानं सदनुमितिप्रतिबन्धकं यत्त्वं वा हेत्वाभासत्वम् ।

(दी०) *अनुमितीति ।* यथाश्रुतमिदं हेतुदोषाणां लक्षणम्, तद्वत्त्वञ्च दुष्टहेतूनाम्, तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति । तत्रानुमितिपदम् अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरम् साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारानुमितिपरं वा, तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्पादेन व्यभिचाराद्याप्त्यादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति ।

( गा० )मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेष्वव्याप्तिः, यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यवसन्नस्य *समूहालम्बनज्ञानविषयताश्रयोदासीनपदार्थवारणाय प्रथमलक्षणे* विधेयतया बाधादिज्ञाननिष्ठप्रतिबन्धकतायां प्रायशो हेतुविषयताया अनवच्छेदकत्वात् तत्रत्यहेत्वावव्याप्तिश्च, यद्विषयकत्वेनेत्यादिलक्षणे तृतीयाया अवच्छेदकत्वार्थकतया सुतरां तथात्वमत आह- यथाश्रुतमिति । इत्थमेतल्लक्षणत्रयम् । ननु हेतुवदवभासन्त इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वात् दुष्टहेतुनिरूपणस्यैव प्राप्ति-

ज्ञातत्वात् तल्लक्षणमप्याकांक्षितमतस्तदनुक्तौ मूलस्य न्यूनता, अन्य-विधऽयुत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वसम्भवेऽपि 'ते चे'त्या-दिना दुष्टहेतूनामेव विभजनाद्दुष्टहेतुनिरूपणस्याप्रतिज्ञातत्वेन तदसङ्गतेः, एवं दुष्टहेतुनिरूपणस्याप्रकृतत्वे दुष्टहेतूनां विभागानर्हतया तेषां सङ्करेण विभागव्याघातशङ्काया अनवतारात् उपधेयसङ्करेत्या-दिग्रन्थस्योपाध्यसङ्करेण विभागोपपादनपरस्यासङ्गतिरित्यत आह तद्वत्त्वं चेति । तादृशदोषवत्त्वं चेत्यर्थः । दुष्टहेतूनां लक्षणमि-त्यनुपज्यते । स्फुटमिति शेषः । तथाच दुष्टहेतुनिरूपणस्य प्रकृतत्वेऽ-पि दोषलक्षणे कृते दुष्टहेतुलक्षणस्य स्फुटतया लाभेन नोक्तानुपप-त्तिरिति भावः । तदभिप्रायेणेवेति । दुष्टहेतुलक्षणाभिप्रायेणैवेत्यर्थः ।

अनुमितिपदस्यानुमितिसामान्यपरत्वे असम्भवः यत्किञ्चिदनुमि-तिपरत्वेऽतिप्रसङ्गात् प्रकृतपक्षसाध्यहेतुकानुमितिपरत्वमावश्यकम्, तथाच व्यभिचारादावव्याप्तिः वह्निर्धूमव्यभिचारीत्यादिज्ञानाभावस्य पर्वतो धूमवानित्याद्यनुमित्यजनकत्वात्, लक्षणया तस्य तादृशानु-मितिकारणज्ञानमात्रपरत्वे बाधादावव्याप्तिः—बाधादिज्ञानस्य पराम-र्शाप्रतिबन्धकत्वात्, अतोऽनुमितिपदमजहत्स्वार्थलक्षणया तदुभय-परतया व्याचष्टे तथेति । तादृशलक्षणवाक्य इत्यर्थः । लक्षणघट-कतावच्छेदकमुभयसाधारणमनुगतरूपमाह अनुमितिनिष्ठकार्यता-निरूपकसम्बन्धित्वेनेति । अनुमितिपदस्य प्रकृतपक्षतावच्छेदकवि-शिष्टप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकप्रकृतहेतुतावच्छेदका-वच्छिन्नहेतुकानुमितिपरत्वं स्वयमेव दर्शयिष्यति अतो न वक्ष्य-माणातिप्रसङ्गः । निरूपकत्वं च यदि प्रतियोगित्वं तदा कार्यस्य कार्येनाप्रतियोगित्वाभावादनुमित्यसङ्ग्रहः । अतः सम्बन्धिपदं सं-बन्धिद्वयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मक-त्वस्य लाभाय ।

अत्र पर्वतो वह्निमान्ह्रदश्च तथेत्यादिसमूहालम्बनानुमित्यांशविवि-रोधिह्रदनिष्ठवह्न्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वह्न्यादि-साधने दोषताप्रसङ्गः, प्रकृतानुमितिनिष्ठकार्यतानिरूपकसम्बन्धि-ग्रहत्वस्य कस्यापि प्रतिबध्यतावच्छेदकतया तदवच्छिन्नप्रति-बध्यतानिरूपितप्रतिबन्धकतानिवेशानासम्भवात्, तथाविधग्रह-त्वव्यापकप्रतिबध्यतानिवेशे चानुमित्यविरोधिनि व्यभिचारादौ प-

ऽप्युपयुज्यते प्रतिबन्धकीभूततद्विपरीतकोटिव्याप्यवत्ताज्ञानेऽप्रामाण्यग्राहकाघातित्वमुभयोस्तत्त्वनिर्णयप्रयोजकत्वम्। अथवा तत्त्वनिर्णयः—साध्यवत्ताज्ञाने प्रमात्वनिश्चयः। तत्रानुमापकहेतोर्व्याप्त्यादिविशिष्टस्वरूपसद्धेतुत्वज्ञानमिव विपरीतसाधकहेतोर्दुष्टत्वज्ञानमप्युपयुज्यते। प्रकृतसाध्यग्रहाप्रामाण्यग्राहकविपरीतसाधकहेत्वदुष्टत्वग्रहविघटकत्वात्। विजयप्रयोजकत्वं च हेत्वाभासस्य स्वज्ञानाधीनपरोक्तहेतुदोषोद्भावनद्वारा व्याप्त्यादिविशिष्टहेतोः स्वज्ञानाधीनसन्न्यायप्रयोगद्वारा च बोध्यम्।

( चि० ) तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिविरोधित्वं ज्ञायमानं सदनुमितिप्रतिबन्धकं तत्त्वं वा हेत्वाभासत्वम्।

(दी०) अनुमितीति। यथाश्रुतमिदं हेतुदोषाणां लक्षणम्, तद्वत्त्वञ्च दुष्टहेतूनाम्, तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति। तत्रानुमितिपदम् अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानुमितितत्कारणज्ञानपरम् साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारानुमितिपरं वा, तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्पादेन व्यभिचाराद्याप्त्यादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति।

( मा० ) मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेऽप्यतिव्याप्तिः, यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदकविषयताश्रयत्वपर्यन्तस्य समूहालम्बनज्ञानविषयताश्रयोदासीनपदार्थवारणाय प्रथमलक्षणे विवक्षणीयतया बाधादिज्ञानप्रतिबन्धकतायाः आश्रये हेतुविषयताया अनवच्छेदकत्वात् तथात्यक्तत्वाव्याप्तिश्च, यद्विषयकत्वेनेत्यादिलक्षणे तृतीयाया अवच्छेदकत्वार्थकतया, सुतरां तथेत्यत आह यथाश्रुतमिति। इत्थमेतल्लक्षणत्रयम्। ननु हेतुवदवभासन्त इति व्युत्पत्त्या हेत्वाभासपदस्य दुष्टहेतुपरत्वात् दुष्टहेतुनिरूपणस्यैव प्रति·

ज्ञातत्वात् तल्लक्षणमप्याकांक्षितमतस्तदनुक्तौ मूलस्य न्यूनता, अन्यविधव्युत्पत्त्या हेत्वाभासपदस्य हेतुदोषपरत्वसम्भवेऽपि नैव स्यादिना दुष्टहेतूनामेव विभजनाद्दुष्टहेतुनिरूपणस्याप्रतिज्ञातत्वेन तदसङ्गतेः, एवं दुष्टहेतुनिरूपणस्याप्रकृतत्वे दुष्टहेतूनां विभागानर्हतया तेषां सङ्करेण विभागव्याघातशङ्काया अनवकाशात् उपाधेयसङ्करेऽप्यादिग्रन्थस्योपाध्यसङ्करेण विभागोपपादनपरस्यासङ्गतिरित्यत आह तद्रूपवत्त्वं चेति । तादृशरूपवत्त्वं चेत्यर्थः । दुष्टहेतूनां लक्षणमित्यनुषज्यते । स्फुटमिति शेषः । तथा च दुष्टहेतुनिरूपणस्याप्रकृतत्वेऽपि दोषलक्षणे कृते दुष्टहेतुलक्षणस्य स्फुटतया लाभेन नोक्तानुपपत्तिरिति भावः । तदभिप्रायेणैवेति । दुष्टहेतुलक्षणाभिप्रायेणैवेत्यर्थः ।

अनुमितिपदस्यानुमितिसामान्यपरत्वे असम्भवः यत्किञ्चिदनुमितिपरत्वेऽतिप्रसङ्गात् प्रकृतपक्षसाध्यहेतुकानुमितिपरत्वमावश्यकम्; तथा च व्यभिचारोपाधिव्याप्तिः वह्निर्धूमव्यभिचारीत्यादिज्ञानाभावस्य पर्वतो धूमवानित्याद्यनुमित्यजनकत्वात्, लक्षणया तस्य तादृशानुमितिकारणज्ञानमात्रपरत्वे बाधादावव्याप्तिः बाधादिज्ञानस्य परामर्शाप्रतिबन्धकत्वात्, अतोऽनुमितिपदमजहत्स्वार्थलक्षणया तदुभयपरतया व्याचष्टे तत्रेति । तादृशलक्षणवाक्य इत्यर्थः । लक्षणघटकतावच्छेदकमुभयसाधारणमनुगतरूपमाह अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनेति । अनुमितिपदस्य प्रकृतपक्षतावच्छेदकावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकानुमितिपरत्वं स्वयमेव दर्शयिष्यति अतो न वक्ष्यमाणातिप्रसङ्गः । निरूपकत्वं च यदि प्रतियोगित्वं तदा कार्यस्य कार्यताप्रतियोगित्वाभावादनुमित्यसङ्ग्रहः । अतः सम्बन्धिपदं सम्बन्धिद्वयसाधारणस्य तत्साक्षात्कारजनकसाक्षात्कारविषयतात्मकरूपस्य लाभाय ।

अत्र पर्वतो वह्निमान्ह्रदश्च तथेत्यादिसमूहालम्बनानुमित्या विधियोविह्रदनिष्ठवह्न्यभावादिरूपबाधादेः पर्वतादौ धूमादिना वह्न्यादिसाधने दोषताप्रसङ्गः, प्रकृतानुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वप्रकारवत्त्वस्य कस्यापि प्रतिबध्यतानवच्छेदकतया तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशनासम्भवात् । तथाविधग्रहत्वव्यापकप्रतिबध्यतानिवेशे चानुमित्यविरोधिनि व्यभिचारादौ प्र-

रामर्शाविरोधिनि बाधादौ चाव्याप्तिः—उभयविरोधिपक्षाप्रसिद्ध्यादावेव तादृशप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिज्ञानविषयत्वसत्त्वात्, कदाचिदत आह साध्यवत्त्वेति । प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यतावच्छेदकावच्छिन्नतद्धर्माश्रयविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताकानुमितिसामान्यमित्यर्थः । एवञ्च तादृशसमूहालम्बनानुमितेर्व्याप्त्यादिविषयकतया व्यभिचारज्ञानादिप्रतिबध्यत्वाभावात् न व्यभिचाराद्यसङ्ग्रहः । दर्शितसमूहालम्बनानुमितिप्रतिबन्धकतामादाय दर्शितातिप्रसङ्गवारणाय सामान्यपदम् । तथाच तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं पर्यवसितोऽर्थः । साध्यतावच्छेदकावच्छिन्नादिप्रकारकानुमितिसामान्यान्तर्गतायां पर्वतो वह्निमान्वह्निव्याप्यधूमवांश्चेत्याद्यनुमितौ ह्रदो न वह्निमानित्यादिनिश्चयस्याप्रतिबन्धकतयाऽव्याप्तिरिति भावः । बाधसत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धिष्वतिव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकत्वनिवेशः । द्रव्यत्वादिना ह्रदादिविधेयकानुमितौ तथाविधनिश्चयस्याप्रतिबन्धकत्वात्तद्दोषतावच्छेदकत्वमतः पक्षतावच्छेदकावच्छिन्नत्वोपादानम् । अवच्छेदकत्वं च तत्पर्याप्त्यधिकरणत्वम्, तेनातेजस्वी पर्वतो वह्निमानित्यादौ विशिष्टपर्वतत्वादिमति वह्न्यभावरूपबाधस्य काञ्चनमयः पर्वतो वह्निमानित्यादौ पक्षाप्रसिद्धेः शुद्धपर्वतत्वावच्छिन्नपक्षकानुमित्यविरोधित्वेपि नासङ्ग्रहः । एवमग्रेपि बोध्यम् । साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारकत्वानिवेशे परामर्शाविरोधितया बाधसत्प्रतिपक्षयोरव्याप्तिः । तत्र प्रकृतसाध्यतावच्छेदकावच्छिन्नत्वस्यानुपादानेपि सद्धेतावव्याप्तिः—वह्नित्वावच्छिन्नाभावादिनिश्चयस्य धूमजनकतेजस्वी वह्निव्याप्यधूमवांश्च ह्रद इत्याद्यनुमित्यविरोधित्वात् । साध्याप्रसिद्ध्यव्याप्तिवारणप्रयोजकत्वं तदुपादानस्येति तु न सत्—वह्निर्न काञ्चनमय इत्यादिनिर्णयस्य शुद्धवह्नित्वादिना वह्न्याद्यनुमित्यविरोधित्वेपि द्वितीयदले प्रकृतसाध्यतावच्छेदकावच्छिन्नान्तर्भावसत्त्वात्, तस्य काञ्चनमयवह्निव्याप्यधूमवानयं पर्वत इत्यनुमितिविरोधितया तत्र लक्षणगमनात् । द्वितीयदलप्रवेशात् व्यभिचारविरोधसाधनाप्रसिद्धिस्वरूपासिद्धिषु नाव्याप्तिः तथापि साध्यतावच्छेदकावच्छिन्नप्रतिरूपितव्याप्तिविशिष्ट-

त्वनिवेशाद्व्यभिचारविरोधयोर्व्याप्तिः । वह्निर्धूमव्यभिचारीत्यादि-ज्ञानदशायामपि द्रव्यत्वादिना धूमादिनिरूपितव्याप्तेर्भानसम्भवात्त-द्दोषतादवस्थ्यमतो व्याप्तौ साध्यतावच्छेदकावच्छिन्नीयत्वनिवे-शः । अन्वयव्याप्तिव्यतिरेकव्याप्ती विशिष्योपादाय तदुभयवि-शिष्टहेतुप्रकारकत्वमेव निवेश्यम् । एकतरमात्रव्याप्त्युपादाने सा-धारण्यानुपसंहारित्वयोरेकतरासङ्ग्रहप्रसङ्गादित्यग्रे व्यक्तीभविष्य-ति । तादृशव्याप्तिद्वयप्रकारतानिरूपितहेतुप्रकारतायास्तत्साध्यकत-द्धेतुकानुमितिजनकतावच्छेदकप्रकारतात्वेनानुगमय्य निवेशस्तु न संभवति-साध्याभाववद्वृत्तित्वज्ञानदशायां केवलव्यतिरेकव्याप्त्या-दिप्रकारकहेतुमत्ताज्ञानोत्पत्त्या साधारण्यादेस्तादृशप्रकारताशाल्यनु-मितिसामान्यविरोधित्वाभावात् । तादृशव्याप्तिविशिष्टविषयकत्व-मात्रस्य तद्विशिष्टहेतुतावच्छेदकावच्छिन्नविषयकत्वमात्रस्य वा निवेशे, स्वरूपासिद्धावव्याप्तिः, अतः पक्षांशे तादृशव्याप्तिविशिष्टहेतुता-वच्छेदकावच्छिन्नत्वनिवेशः । पक्षांशे व्याप्तिविशिष्टहेतुप्रकारकत्व-मात्रस्य निवेशेपि तद्दोषतादवस्थ्यम्, धूमाभाववान् ह्रद इत्यादि-ज्ञानस्य द्रव्यत्वादिना हेतुमत्ताज्ञानाविरोधित्वात्साधारण्याद्यव्या-प्तिश्च वह्नित्वावच्छिन्ने धूमाभाववद्वृत्तित्वग्रहस्य धूमादिव्याप्ति-विशिष्टतद्व्यक्तित्वावच्छिन्नप्रकारकज्ञानाविरोधादतो हेतुतावच्छे-दकावच्छिन्नत्वानिवेशः । पक्षांशे साध्यादिप्रकारकस्य सं-स्कारादेराहार्यज्ञानस्य च बाधादिज्ञानाप्रतिबध्यत्वात् असम्भव इत्यतस्तादृशानुमितित्वनिवेशः । साध्यव्याप्यहेतुधर्मितावच्छेदक-कलाप्यवत्ताज्ञानस्यैव साध्यव्याप्यहेतुमान्पक्षः साध्यवानित्याका-रकतया तादृशाकारालिङ्गनस्वरसात्तादृशहेतुविशिष्टपक्षतावच्छेद-कावच्छिन्नविशेष्यकसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्व-व्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य लक्षणघटकत्वोपगमे तु पर्वतत्वाद्यवच्छेदेन वह्नेः साध्यत्वे तत्सामानाधिकरण्येन साध्याभा-वादेर्दोषत्वप्रसङ्गः सामानाधिकरण्यमात्रावगाहिबाधादिज्ञानस्य शुद्धपर्वतत्वाद्यवच्छेदेन वन्ह्यादिज्ञानं प्रत्येव प्रतिबन्धकतया धूमवि-शिष्टपर्वतत्वाद्यवच्छिन्नधर्मिकवह्न्यादिज्ञानाप्रतिबन्धकत्वादिति त-दुपेक्षितम् । न च विशेष्यतावच्छेदककोटौ धूमादेरधिकस्य भानेपि शुद्धपर्वतत्वाद्यवच्छिन्नसंयोगादेर्यत्र संसर्गता तत्र पर्वतत्वसामा-

धिकरण्येन वह्न्यभावादिज्ञानस्य प्रतिबन्धकत्वमावश्यकम् तादृशा-
नुमितेरपि शुद्धपर्वतत्वावच्छेदेन वह्न्याद्यवगाहित्वादिति वा-
च्यम् । धर्मितावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मितावच्छेदकतापर्या-
प्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते न तु तदेकदेशाव-
च्छिन्नत्वमपि तद्धर्मावच्छिन्नविशेष्यतानिरूपिततदेकदेशव्यापकत्वा-
वच्छिन्नसंसर्गताया अप्रामाणिकत्वात् ॥

अथ लिङ्गोपधानमते हेतोः सर्वत्रैव धर्मितावच्छेदकतया भाना-
त्तादृशसंसर्गताऽभ्युपगम आवश्यकः, अन्यथा शुद्धपर्वतत्वावच्छेदेन
हेतुमत्ताज्ञानस्थलेऽपि विशिष्टपर्वतत्वावच्छिन्नसंयोगादिसंसर्गकानु-
मितेरेव मानत्वाभ्युपगमे पर्वतत्वादिसामानाधिकरण्यमात्रावगाहिबा-
धादिग्रहकालेऽपि तथाविधसाध्यनिश्चयवतो अनुमित्यापत्तेः, न हि
सामानाधिकरण्येन बाधसिद्ध्योरनुमितिं कश्चिदुपैति तादृशबाधा-
दिग्रहस्य क्वचिदप्यनुमितिप्रतिबन्धकत्वासंभवात् तेषां हेत्वाभास-
ताविलयापत्तिश्च इति चेत् । एवमपि लिङ्गानुपधानमते तादृशविष-
यतायां मानाभाव एव, प्रकृतग्रन्थस्तु न लिङ्गोपधानमताभिप्रायकः—
तन्मतेऽनुमितेः सर्वत्र तदाकारतया तादृशाकारत्वस्याव्यावर्तकत-
याऽनुमितिपदस्य तादृशाकारानुमितिपरत्वप्रदर्शनासंगतः ।

कश्चित्तु लिङ्गानुपधानमतेऽनुमितिपदस्य तदुभयपरत्व व्या-
ख्याय यथाश्रुतार्थपरतानिर्वाहाय लिङ्गोपधानमतमाश्रयते—सा-
ध्यव्याप्येत्यादिना । इत्याकारकानुमितिपरम्-अनुमितेरित्याका-
रकतामताभिप्रायकमिति व्याचक्षते । एतादृशव्याख्यानप्रयोजन स्फु-
टयति—तेनेति । एकत्र-वह्नित्वाद्यकधर्मावच्छिन्ने । व्यभिचारादित्या-
दिना स्वरूपासिद्धिपरिग्रहः । अन्यस्य परामर्शात्-तद्व्याप्यादि-
रूपापरधर्मावच्छिन्ने व्याप्तिपक्षधर्मतावगाहिज्ञानात् । व्यभिचारा-
दित्यादिहेतोरनुमितिजनकत्वेऽपीत्यनेन सम्बन्धः । यत्र यद्रूपावच्छिन्ने
व्यभिचारज्ञानोत्पत्तिद्वितीयक्षणे कथंचित्तद्रूपावच्छिन्नलिङ्गकपरा-
मर्शस्ततस्तत्क्षणविलम्बनानुमित्युपगमे व्यभिचारासम्भवात् तत्र व्य-
भिचारो दर्शित ।

ननु तद्धर्मावच्छिन्नलिङ्गकानुमितौ तद्धर्मावच्छिन्नधर्मिकव्यभि-
चारज्ञानाभावस्य हेतुत्वोपगमात् व्यभिचार । तद्धर्मावच्छिन्नलि-
ङ्गकत्व चाभ्यपाहितोवत्वसम्बन्धेन तद्रूपावच्छिन्नधर्मिकव्याप्त्या-

दिज्ञानविशिष्टत्वेन नादृशसम्बन्धेन व्यभिचारज्ञानविशिष्टं यत्तदन्यत्व-मेव वा जन्यतावच्छेदकं वाच्यम्, तेन धूमव्याप्यवह्निमानयमित्याकारकशाब्दादिपरामर्शोत्पत्तिद्वितीयक्षणे यत्र लौकिकसन्निकर्षजन्यो धूमव्यभिचारी वह्निः धूमव्याप्येन्धनवानित्याकारकसमूहालम्बनग्रहस्तत्र तज्जन्यानुमितेरुक्तसम्बन्धेन वह्नित्वावच्छिन्नधर्मिकव्याप्यादिज्ञानविशिष्टत्वेऽपि न क्षतिरित्यत आह व्याप्त्यादीति । फलसकारणताकव्याप्त्यादिज्ञानसत्त्वे व्यभिचारज्ञानाद्यभावव्यतिरेकेणानुमितिव्यतिरेकस्यासिद्धत्वादिति भावः । व्याप्तिज्ञानादेर्व्यभिचारज्ञानाभावेनान्यथासिद्धत्वशङ्का प्रागेव निराकृता । न क्षतिः-व्यभिचारादौ नाव्याप्तिः । यत्रासद्धेतुविशेषेऽनुमितिरप्रसिद्धा तत्रत्यदोषेऽव्याप्तेर्वक्ष्यमाणतया एतादृशयथाश्रुतव्याख्यायामनिर्भरसूचनाय वदन्तीति ॥

( दी० ) पर्वतो निर्वह्निर्धूमो वह्नेरभिधेयत्वं वा मेयत्वस्य व्यभिचारीत्यादि भ्रमादनुमितिप्रतिबन्धादाह यथार्थेति । ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासतापत्तिः । अथ विशिष्टविषयकं ज्ञानं प्रतिबन्धकम् तद्घटकञ्च न विशिष्टमिति चेत्तर्हि यथार्थेति व्यर्थं भ्रमविषयविशिष्टस्याप्रसिद्धत्वादित्यनुशयेनाह यदिति ।

(गा० पर्वतो वह्निमान् धूमादित्यादिसद्धेतुस्थले बाधादिभ्रमविषयेऽतिव्याप्तिवारकतया यथाश्रुतयथार्थपदं सार्थकयति पर्वतो निर्वह्निरिति । अत्रेतिपदस्य त्रितयस्थले सम्बन्धाद्भ्रमत्रितयलाभः । प्रत्येकं भ्रमप्रदर्शनेनैवातिप्रसङ्गसम्भवात्तादृशसमूहालम्बनभ्रमपर्यन्तानुधावनं त्वेकल्याऽपरस्यासङ्गतेरिति ध्येयम् । प्रथमभ्रमोऽनुमितौ विरोधी, अन्यौ च जनकज्ञाने, तथाच तयोरपि प्रथमे अन्यत्र प्रसिद्धस्य साध्याभाववद्वृत्तित्वस्य धूमादौ भ्रमत्वम् । अन्त्ये प्रमेयत्वाभाववद्वृत्तित्वस्याप्रसिद्ध्या न ... द्भ्रमत्वं किन्त्वभावांशेऽनुयोगिताविशेषसम्बन्धेन साध्यस्य भ्रमत्वमित्येतादृशविशेषमादृत्य शिष्यव्युत्पादनायानेकविधभ्रमकथनम् ।

... इदं त्वपूर्वम् । अभिधेयत्वं प्रमेयत्वस्य व्यभिचारी-

धिकरण्येन वह्न्यभावादिज्ञानस्य प्रतिबन्धकत्वमावश्यकम्, तादृशानुमितेरपि शुद्धपर्वतत्वावच्छेदेन वह्न्याद्यवगाहित्वादिति वाच्यम्। धर्मितावच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वमेव संसर्गांशे भासते न तु तदेकदेशावच्छिन्नत्वमपि तद्धर्मावच्छिन्नविशेष्यतानिरूपिततदेकदेशव्यापकत्वावच्छिन्नसंसर्गताया अप्रामाणिकत्वात्॥

अथ लिङ्गोपधानमते हेतोः सर्वत्रैव धर्मितावच्छेदकतया भानात् तादृशसंसर्गताऽभ्युपगम आवश्यकः, अन्यथा शुद्धपर्वतत्वावच्छेदेन हेतुमत्ताज्ञानस्थलेऽपि विशिष्टपर्वतत्वाद्यवच्छिन्नसंयोगादिसंसर्गकानुमितेरेव मानत्वाऽभ्युपगमे पर्वतत्वादिसामानाधिकरण्यमात्रावगाहिबाधादिग्रहकालेऽपि तथाविधसाध्यनिश्चयवतो अनुमित्यापत्तेः, न हि सामानाधिकरण्येन बाधासिद्ध्योरनुमितिं कश्चिदुपैति तादृशबाधादिग्रहस्य क्वचिदप्यनुमितिप्रतिबन्धकत्वासंभवात् तेषां हेत्वाभासताविलयापत्तिश्च इति चेत्। एवमपि लिङ्गानुपधानमते तादृशविषयतायां मानाभाव एव, प्रकृतग्रन्थस्तु न लिङ्गोपधानमताभिप्रायकः— तन्मतेऽनुमितेः सर्वत्रैव तदाकारतया तादृशाकारत्वस्याऽव्यावर्तकतयाऽनुमितिपदस्य तादृशाकारानुमितिपरत्वप्रदर्शनासंगतेः।

केचित्तु लिङ्गानुपधानमतेऽनुमितिपदस्य तदुभयपरत्वं व्याख्याय यथाश्रुतार्थपरतानिर्वाहाय लिङ्गोपधानमतमाश्रयते—साध्यव्याप्येत्यादिना। इत्याकारकानुमितिपरम्—अनुमितेरित्याकारकतामताभिप्रायकमिति व्याचक्षते। एतादृशव्याख्यानप्रयोजनं स्फुटयति—तेनेति। एकत्र—वह्नित्वादिरूपधर्मावच्छिन्ने। व्यभिचारादित्यादिना स्वरूपासिद्धिपरिग्रहः। अन्यस्य परामर्शात्—तद्वह्नित्वादिरूपापरधर्मावच्छिन्ने व्याप्तिपक्षधर्मताद्यवगाहिज्ञानात्। व्यभिचारादित्यादिहेतोरनुमितिजनकत्वेऽपीत्यनेन सम्बन्धः। यत्र यद्रूपावच्छिन्ने व्यभिचारज्ञानोत्पत्तिर्द्वितीयक्षणे कथंचित्तद्रूपावच्छिन्नलिङ्गकपरामर्शस्तत्र तत्क्षणविलम्बेनानुमित्युपगमे व्यभिचारासंभवान्न तत्र व्यभिचारो दर्शितः।

ननु तद्धर्मावच्छिन्नलिङ्गकानुमितौ तद्धर्मावच्छिन्नधर्मिकव्यभिचारज्ञानाभावस्य हेतुत्वोपगमान्न व्यभिचारः। तद्धर्मावच्छिन्नलिङ्गकत्वं चाव्यवहितोत्तरत्वसम्बन्धेन तद्रूपावच्छिन्नधर्मिकव्याप्या-

द्विज्ञानविशिष्टत्वेन तादृशसम्बन्धेन व्यभिचारज्ञानविशिष्टं यत्तदन्यत्व-मेव वा जन्यतावच्छेदकं वाच्यम्, तेन धूमव्याप्यवह्निमानयमित्याका-रकशाब्दादिपरामर्शोत्पत्तिद्वितीयक्षणे यत्र लौकिकसन्निकर्षजन्यो धूमव्यभिचारी वह्निः धूमव्याप्येन्धनवानित्याकारकसमूहालम्ब-नग्रहस्तत्र तज्जन्यानुमितेरुक्तसम्बन्धेन वह्नित्वावच्छिन्नधर्मिकव्या-प्यादिज्ञानविशिष्टत्वेऽपि न क्षतिरित्यत आह व्याप्त्यादीति । फल-स्कारणताकव्याप्त्यादिज्ञानसत्त्वे व्यभिचारज्ञानाद्यभावव्यतिरेकेणा-नुमितिव्यतिरेकस्यासिद्धत्वादिति भावः । व्याप्तिज्ञानादेर्व्यभिचा-रज्ञानाभावेनान्यथासिद्धत्वशङ्का प्रागेव निराकृता । न क्षतिः-व्यभि-चारादौ नाव्याप्तिः । यत्रासद्धेतुविशेषेऽनुमितिरप्रसिद्धा तत्राप्यदो-षेऽवव्याप्तेर्वक्ष्यमाणतया एतादृशयथाश्रुतव्याख्यायामनिर्भरसूच-नाय वदन्तीति ॥

( दी० ) पर्वतो निर्वह्निर्धूपो वह्नेरभिधेयत्वं वा मेयत्वस्य व्य-भिचारीत्यादि भ्रमादनुमितिमात्रस्यादाह यथार्थेति । ननु प्रतिब-न्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वा-भासतापत्तिः । अथ विशिष्टविषयकं ज्ञानं प्रतिबन्धकम् तद्घटकञ्च न विशिष्टमिति चेत्तर्हि यथार्थेति व्यर्थं भ्रमविषयविशिष्टस्याप्र-सिद्धत्वादित्यनुशयेनाह यदिति ।

(गा० पर्वतो वह्निमान् धूमादित्यादिसद्धेतुस्थले बाधादिभ्रमविषये-ऽवतिव्याप्तिवारकतया यथाश्रुतं यथार्थपदं सार्थं करोति पर्वतो निर्वह्नि-रिति । अत्रेतिपदस्य त्रितयस्थले सम्बन्धाद्भ्रमात्रितयलाभः । प्रत्येकं भ्रमभावेऽवैवातिप्रसङ्गसम्भवात्तादृशसमूहालम्बनभ्रमपर्यन्तानुधाव-नमैकल्यात्तात्पर्यत्वालङ्कारीति ध्येयम् । प्रथमभ्रमोऽनुमितौ विरोधी, अन्त्यौ च जनकज्ञाने, तथाच तयोरपि प्रथमे अन्यत्र प्रसिद्धस्य सद्-ध्याभाववद्वृत्तित्वस्य धूमांशे भ्रमत्वम् । अन्त्ये प्रमेयत्वाभाववद्वृ-त्तित्वस्याप्रसिद्ध्या न भ्रमत्वं किन्त्वभावांशेऽनुयोगिताविशेषसम्ब-न्धेन साध्यस्य भ्रमत्वमित्येतादृशविशेषमादाय शिष्यव्युत्पादनाया-नेकविधभ्रमकथनम् ।

इदं त्वधेयम् । अभिधेयत्वं प्रमेयत्वस्य व्यभिचारि-

स्वत्र स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमेयत्वस्य भ्रमो वाच्यः प्रतियोगित्वांशे साध्यतावच्छेदकधर्मसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वयोः साध्याभाववद्वृत्तिस्वरूपव्याप्तिघटकतया सर्वांशे तदुभयावगाहिव्यभिचारज्ञानस्यैव व्याप्तिज्ञानविरोधित्वात्। एवं च सद्धेतौ प्रमेयत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धावपि स्वरूपसम्बन्धावच्छिन्नतादृशप्रतियोगित्वाप्रसिद्ध्या तादृशभ्रमानुपपत्तिः। प्रतियोगित्वांशे सम्बन्धविशेषावच्छिन्नत्वस्य भ्रम इत्यपि न युक्तम्—तस्य सम्बन्धघटकतया तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तेः। न च येन रूपेण प्रतियोगिताप्रकारक एवात्र भ्रमो विवक्षितः, न तु तत्तद्धर्मावच्छिन्नप्रतियोगिताकत्वसंसर्गक इति वाच्यम्। लाघवात् प्रतियोगितासंसर्गकव्याप्तिज्ञानस्यैवानुमितिहेतुतया तत्प्रकारकव्यभिचारज्ञानस्याकिञ्चित्करत्वात्॥

अत्राहुः—स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिकत्वसम्बन्धेन साध्यतावच्छेदकवत्त्वमेवाभावस्य साध्याभाववद्वृत्तिस्वरूपव्याप्तिघटकं लाघवात्। एवं च तादृशसम्बन्धेनाभावांशे साध्यतावच्छेदकप्रकारकव्यभिचारज्ञानस्य व्याप्तिग्रहविरोधितया घटत्वादेः प्रसिद्धेन तादृशसम्बन्धेन प्रमेयत्वत्वादेरेवाभावांशे भ्रमात्मक एव तथाविधग्रहो विवक्षित इति न किञ्चिदनुपपन्नम्।

अन्ये तु प्रथमे साध्याभाववद्वृत्तित्वज्ञानविरोधी हेतौ साध्याभाववद्वृत्तित्वरूपव्यभिचारस्य भ्रमः। द्वितीये च तदप्रसिद्ध्या व्यापकसामानाधिकरण्यग्रहविरोधि साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य भ्रमो अभिमतः। समानप्रकारकज्ञानस्यैव विरोधितया द्विविधव्यभिचारसङ्ग्रहाय द्विविधव्याप्तिविषयकसमूहालम्बनस्यैव लक्षणे निवेश्यत्वात्। न च हेतुः साध्यस्य व्यभिचारीत्यत्र साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्य दुर्लभतया तदवगाहिज्ञानस्याभिधेयत्वं प्रमेयत्वस्य व्यभिचारीत्याकारकता नोपयुज्यते इति वाच्यम्। यतः अभाववद्वृत्तित्वं समानाधिकरणाभावप्रतियोगितावच्छेदकत्वं चेति द्वयमेव हेतुः साध्यस्य व्यभिचारीत्यत्र व्यभिचारपदार्थः। तत्रादिमव्यभिचारतात्पर्यकस्थले व्यभिचारपदार्थैकदेशे अभावेऽनुयोगितारूप-

षष्ठ्यर्थस्य तत्र च प्रकृत्यर्थतावच्छेदकवह्नित्वाद्यवच्छिन्ननिरूपितत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः। मत्वर्थीयार्थः स्वरूपसम्बन्धवान्तस्य चाभेदेन प्रथमान्तार्थेऽन्वयः। द्वितीयतत्पदार्थपरवाक्यस्थले च तदेकदेशसामानाधिकरण्ये हेतुपदार्थान्वितप्रथमार्थस्य निरूपितत्वस्यान्वयः षष्ठीप्रकृतेस्तद्धर्मपरतया षष्ठ्यन्तार्थस्य साध्यतावच्छेदकनिष्ठत्वस्य तादृशान्वयबललभ्यहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वे तस्य तद्धितार्थीभूतसम्बन्धिनः एकदेशघटकत्वरूपसम्बन्धे सम्बन्धिनश्चाभेदेन प्रथमार्थे अन्वयः। एवं चोक्तवाक्यात्तत्र साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्यापि लाभात्तत्र तदग्रहादिभ्रमस्य दर्शिताकारतासम्भव इत्यपि वदन्ति ॥

भ्रमादिति पञ्चम्यर्थः प्रयुक्तत्वं तस्य प्रतिबन्धपदार्थे अनुत्पादेऽन्वयः। यथार्थेतीति। यथार्थपददानेन स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तदनिरूपकत्वरूपस्य सर्वांशे प्रमात्वस्य विवक्षणीयतया दर्शितभ्रमाणां किञ्चिदंशे प्रमात्वेऽपि न तानादाय दोष इति भावः ॥

अत्र यथार्थपदेन सद्धेतुस्थलेऽनुमितिविरोधिभ्रमविषयसाध्याभावादौ अतिप्रसङ्गवारणेऽप्यसद्धेतुस्थले तादृशप्रमाविषयदोषघटकसाध्यतदभावादेः प्रत्येकं दोषत्वापत्तिर्दुर्वारैवेति तदर्थं प्रकारान्तरानुसरणे च तत एव पूर्वदोषस्यापि वारणसम्भवे यथार्थपदं व्यर्थमिति दोषस्य दुरुद्धरतया तस्यैव यथार्थपदाघटितलक्षणान्तरानुसरणे बीजत्वमाह नन्विति। एकदेशस्यापि विशिष्टघटकतया हेत्वाभासपदार्थत्वस्येष्टत्वादाह प्रत्येकमिति। प्रत्येकपदार्थपर्याप्तसाध्यतावच्छेदकावच्छिन्नेत्यर्थः। हेत्वाभासतापत्तिः-हेत्वाभासपदार्थत्वापत्तिः। यद्रूपावच्छिन्नज्ञानस्यानुमित्यविरोधित्वं तद्रूपावच्छिन्ने हेत्वाभासत्वव्यवहारस्य तद्रूपावच्छिन्नमात्रज्ञानाद्धेतोर्दुष्टत्वव्यवहारस्यानुदयेन चेष्टापत्तिर्न सम्भवतीति भावः ॥

यादृशविशिष्टविषयकत्व तादृशानुमितिविरोधित्वानतिरिक्तवृत्ति तत्त्वमिति विवक्षया न साध्यादावतिव्याप्तिरित्याशयेनाशङ्कते अथेति। विशिष्टविषयकं-साध्याभाववद्वृत्तित्वविशिष्टसाधनादिविषयकमेव, तद्घटकं-तादृशविशिष्टघटकप्रत्येकपदार्थविषयकं, न.

विशिष्टं—न तादृशविशिष्टनिरूपितत्वं, तथाच प्रत्येकपदार्थविषयकत्वस्य प्रतिबन्धकतया अतिरिक्तवृत्तित्वादव्याप्तिरिति भावः। व्यर्थमिति। यथार्थपदादानेऽपि सद्धेतुस्थलेऽतिव्याप्तिवारणसम्भवात्। ननु तत्र भ्रमविषयप्रत्येकपदार्थस्योक्तरीत्या वारणेऽपि तद्विशिष्टेऽतिव्याप्तिरत आह भ्रमविषयेति। अप्रसिद्धत्वादिति। तथाच क्वातिव्याप्तिरिति भावः॥

(दी०) केचित्तु दुष्टानामेव हेतूनामेतानि लक्षणानि तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य। तदर्थश्च तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञानविषयत्वमग्रे च तत्त्वविशिष्टस्य तद्वत्त्वमित्यर्थः। आद्यस्यैव वा दुष्टहेतुलक्षणत्वमिति प्राहुः।

(गा०) केचित्त्विति। नन्वस्य दुष्टहेतुलक्षणत्वे दोषविशेषेऽव्याप्तिः—तेषामपि अनुमितिविरोधियथार्थज्ञानविषयत्वात्। न च ह्रदत्वावच्छिन्नपक्षकवन्ह्यादिसाध्यकस्थले वन्ह्यभाववद्ध्रदादिरूपदोषाणामपि दुष्टहेतुत्वमिष्टमेवेति वाच्यम्। तद्रूपावच्छिन्नपक्षकतद्रूपावच्छिन्नसाध्यकतद्रूपावच्छिन्नहेतुकस्थले तेन रूपेण दुष्टस्य लक्षणं यदि तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिविरोधियथार्थज्ञानविषयत्वमात्रम् तदा ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकप्रमाविषयवन्ह्यभाववद्ध्रदादीनां धूमत्वादिना दुष्टहेतुत्वाभावादतिव्याप्तिरित्याशङ्कां परिजिहीर्षुस्तादृशाभावप्रतियोगिनां यथार्थज्ञानमिति षष्ठीसमासमाश्रित्य तादृशाभावप्रतियोगिप्रकारकयथार्थज्ञानविषयत्वमर्थं व्याख्यास्यति। तच्च ज्ञायमानदोषस्य प्रतिबन्धकतामत एव सङ्गच्छतेऽतस्तन्मतमेवालम्ब्याह तत्रेति। तेषु लक्षणेषु मध्ये इत्यर्थः। तृतीयलक्षणस्य सर्वमत एव ज्ञायमानदोषप्रतिबन्धकत्वाभिप्रायकतया दृष्टान्ततयोपन्यासः। तदर्थश्चेति। प्रतियोग्यन्तेन दोषानादाय लक्षणं सङ्गमनीयमिति दर्शयितु व्यभिचारादय इति न तु तेन रूपेण घटकत्वमित्यवधेयम्॥

यद्यपि पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नसाधने धूमत्वावच्छिन्नो दुष्ट इत्यादेः सद्धेतौ दुष्टत्वव्यवहारस्य नापत्तिः तत्र तत्साध्य-

पक्षहेतुकानुमितिप्रतिबन्धकरूपदोषप्रकारकज्ञानविषयत्वस्यैव प्रत्येतव्यत्वात्, तादृशानुमितिप्रतिबन्धकबाधव्यभिचारादेश्चाप्रसिद्धत्वात् ह्रदादौ वह्न्यादिसाधनमादाय सर्वत्रैव दुष्टव्यवहार इष्टः। तथापि धूमसाधने वह्नित्वेनायं दुष्ट इत्यादौ वह्नित्वावच्छिन्नहेतुकधूमाद्यनुमितिप्रतिबन्धकदोषप्रकारकज्ञानविषयत्वस्य प्रत्येतव्यत्वात्। वक्ष्यमाणसम्बन्धावच्छिन्नतादृशानुमितिप्रतिबन्धकधूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपप्रसिद्धदोषप्रकारताशालिभ्रममादाय रासभादितात्पर्येणापि तथा व्यवहारः स्यात्। न च तत्र विशेष्ये तृतीयान्तार्थवह्निवैशिष्ट्यभानाद्रासभे तदभावेन नायमतिप्रसङ्ग इति वाच्यम्। तथासति दोषपदार्थघटकानुमितौ वह्नित्वावच्छिन्नहेतुकत्वालाभात्, तल्लाभानुरोधेन हेतुप्रकारकज्ञानजन्यानुमितिप्रतिबन्धकरूपदोषपदार्थघटकहेतौ वह्नित्ववैशिष्ट्यरूपतृतीयान्तार्थस्य तत्प्रकारतायां वाऽवच्छिन्नत्वार्थकतृतीयान्तलभ्यवह्नित्वावच्छिन्नत्वस्याप्यन्वय इत्येवोपगन्तव्यत्वात्। न च विशेष्ये वह्नित्वादिधर्मवैशिष्ट्यबोधकसमभिव्याहारस्थले दोषार्थकधातोरेव वह्नित्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकोऽर्थः।

अथवाऽनुमित्यर्थकसाधनशब्दस्यैव वह्नित्वावच्छिन्नहेतुकानुमितिरूपविशेषे लाक्षणिकत्वं दुषधात्वर्थे अनुमित्यर्थान्तर्भावे साधनपदार्थानन्वयप्रसङ्गात्। तथाच विशेष्ये एव तृतीयार्थवैशिष्ट्यान्वयोपगमात् नोक्तातिप्रसङ्ग इति वाच्यम्। एवमपि वह्निना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारस्य भ्रममादायातिप्रसङ्गादिति॥

अथवा इतरभेदानुमापकमेवेदम् लक्षणम्। तथाच पर्वतपक्षकधूमसाध्यकवह्निहेतुकदुष्टलक्षणस्य तथाविधानुमितिविरोधिज्ञानविषयव्यभिचारादिभ्रममादाय सद्धेतावितरभेदव्यभिचारित्वाय यथार्थपदं सार्थकम्। ज्ञानं चात्र स्वज्ञानविषयप्रकृतहेतुतावच्छेदकधर्मवत्त्वसम्बन्धावगाहि ग्राह्यम्, तेन प्रकृतहेतुभिन्नस्यापि सम्बन्धान्तरेण दोषप्रमाविषयत्वेऽपि नातिप्रसङ्गः। अग्रेऽपीदृशसम्बन्धेनैव तद्वत्त्वं बोध्यम्।

अथ ज्ञायमानपक्षादिनिष्ठसाध्याभावत्वादिना बाधादिदोषाणां प्रतिबन्धकता न सम्भवति साध्याभावत्वादिना पदार्थान्तरस्यैव यत्र ज्ञानं तत्र दोषाणामज्ञायमानतयाऽविरोधत्वेनाऽनुमित्यापत्तेः, कि-

न्तु ज्ञानीयपक्षतावच्छेदकावच्छिन्नविषयतानिरूपितसाध्याभाववत्ता-
वच्छिन्नविषयतावत्त्वेन तादृशविषयताशालिविशिष्टत्वेन वा, तच्च रू-
पं तादृशभ्रमविषयपदार्थान्तरसाधारणमेवेति तेषामेव भ्रमदशायां
विरोधित्वापत्तिः । एवं च सद्धेतूनामपि प्रतिबन्धकतावच्छेद-
कतादृशविषयताश्रयत्वस्य भ्रमप्रमाविशेषस्याव्यावृत्तित्वादिति चेन्न
यद्रूपावच्छिन्नविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तद्रू-
पावच्छिन्नप्रकारकप्रमाविशेष्यत्वमेव विवक्षणीयम् । ह्रदो वह्निमान् धूमा-
दित्यादौ च तादृशरूपं ह्रदविशिष्टवह्न्यभाववत्त्वादिकं ह्रदे वह्निर्नास्ती-
त्यादिज्ञाननिरूपिततद्रूपावच्छिन्नविषयतासामान्यस्यैव ह्रदत्वावच्छि-
न्नविषयतानिरूपितवह्न्यभावत्वावच्छिन्नविषयतात्वेन दोषनिष्ठानु-
मितिप्रतिबन्धकतायामवच्छेदकत्वात् । सद्धेतुस्थले च केवलवह्न्य-
भावत्वादिकं न तथा तदवच्छिन्नविषयतासामान्यान्तर्गतपर्वतविषय-
कज्ञाननिरूपिततादृशविषयताया अनुमितिप्रतिबन्धकतानवच्छेदक-
त्वात् । पर्वतविशिष्टवह्न्यभावत्वादिविशिष्टं न किञ्चिद्वस्तुप्रसिद्ध-
मिति नातिप्रसङ्गः । तृतीयमपि लक्षणमनयैव रीत्या परिष्कार्यम् ।
यद्यप्यस्य दुष्टहेतुलक्षणत्वे ज्ञायमानदोषप्रतिबन्धकतामतानाश्रयणेऽपि
तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकप्रमाविषयतद्धेतुताव-
च्छेदकत्वस्य तद्रूपावच्छिन्नपक्षसाध्यहेतुकस्थले तेनैव रूपेण दुष्टत्व-
मित्यर्थकतामुपगम्य यथार्थपदसार्थक्यमुपपादयितुं शक्यते, तथापि
दुष्टलक्षणस्य दोषघटितत्वानुरोधेन तन्मतमवलम्ब्य षष्ठीसमास आश्रि-
त इति ॥

ननु द्वितीयतृतीयलक्षणयोर्दोषेऽतिव्याप्तिरव्याप्तिश्च कथञ्चिदेतौ यत्पदेन
दोषस्यैवोपादेयतया तत्त्वस्य तन्मात्रवृत्तित्वादत आह तत्त्वमित्य-
स्येति । प्रथममात्रस्य दुष्टहेतुलक्षणत्वेनैवोपपत्तौ चरमयोर्दोषलक्षण-
त्वमेवोचितं तत्त्वमित्यस्य यथाश्रुतार्थानुरोधकत्वादतस्तथैवाह दो-
षस्यैवेति । ईदृशव्याख्यया निर्दोषत्वात्प्राहुरित्युक्तम् ।

(दी०)लिङ्गमविवक्षितम्, यद्विषयत्वेन—यादृशविशिष्टविषय-
त्वेन, तेनानुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभा-
वादौ सद्धेत्वादिनिष्ठ नातिप्रसङ्गः । अवच्छेदकत्वञ्चेहानतिरिक्त-
वृत्तित्वं, तेन विशिष्टस्यासत्त्वेऽपि भ्रमात् प्रतिबन्धेऽपि न क्षः;

तिः । विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेन, तेन प्रमेयत्वादिविशिष्टे सव्यभिचारादौ नातिप्रसङ्गः । एवञ्च पक्षतावच्छेदकादिविरहविशिष्टः पक्षः पक्षनिष्ठस्तद्विरहो वा साध्याभाववद्वृत्ति साधनं साधनवद्वृत्तिसाध्याभावो वा हेतुदोषः, येन केनापि सम्बन्धेन तद्वांश्च प्रकृतो हेतुर्दुष्टः ।

(गा०) लिङ्गज्ञानस्येति मूले लिङ्गांशनिवेशस्य निष्प्रयोजनकतया तस्या विवक्षितत्वमाह लिङ्गमिति । यद्विषयकत्वेनेति तृतीयार्थो अवच्छेदकत्वम् । तच्चेदमनतिरिक्तवृत्तित्वमिदानीं निवेश्यते तदाऽसम्भवः विशिष्टस्यानतिरिक्ततया वन्ह्यभावविशिष्टह्रदादिरूपदोषविषयकत्वस्य शुद्धह्रदत्वाद्यवच्छिन्नविषयकज्ञानेऽपि सत्त्वेनानुमितिप्रतिबन्धकत्वातिरिक्तत्वादतः स्वरूपसम्बन्धरूपमेव तद्वाच्यम्—तथाच पर्वतो वह्निमानित्याद्यनुमितिप्रतिबन्धकभ्रमाविषयवन्ह्यभावादावतिव्याप्तिः तद्विषयकत्वस्यापि प्रतिबन्धकतावच्छेदकघटकत्वादसंभवभयेन चावच्छेदकतापर्याप्तिनिवेशासंभवादतो यद्विषयकत्वेनेति पदं व्याचष्टे यादृशविशिष्टविषयकत्वेनेति । यादृशविशिष्टविषयकत्वेन—यद्रूपावच्छिन्नविशिष्टविषयकत्वेन । एवञ्च तत्त्वमित्यस्य तद्रूपावच्छिन्नत्वमर्थः ।

व्याख्याबीजं प्रकाशयति तेनेति । यत्प्रकारकत्वेनानुमितिप्रतिबन्धकत्वमित्युक्तौ पक्षविशेषणकभ्रममादाय वह्न्यभावादौ नातिप्रसङ्गः । पर्वतादावतिप्रसङ्गस्तस्यैव यत्सम्बन्धावच्छिन्नयन्निष्ठप्रकारताकत्वेनानुमितिप्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे पर्वतविशेषणकवह्न्यभावज्ञानस्य विशेषणताविशेषावच्छिन्नाधेयतासंसर्गावच्छिन्नपर्वतादिनिष्ठप्रकारताकत्वेन प्रतिबन्धकत्वात् । तेन सम्बन्धेन पर्वतादिमत्तायां पर्वतमहानसान्यतरत्वादिरूपसद्धेतौ सत्त्वेऽपि प्रसिद्धधूमादिरूपहेतावसत्त्वात्तत्र दुष्टताव्यवहारापत्तेरयोग इति तदनुरोधेन पक्षविशेष्यकेत्युक्तम् । भ्रमपदं निश्चयसामान्यपरम्, तेन सन्देहादिव्यावृत्तिपदग्राह्यसाध्यशून्यपक्षकदुष्टहेतावनुमितिप्रतिबन्धकभ्रमाविषयसाध्याभावादेरेव सत्त्वेऽपि नासङ्गतिः । नातिप्रसङ्ग इति । उक्तव्याख्यानेऽनतिरिक्तवृत्तित्वमेव

अवच्छेदकत्वं विवक्षणीयम्, विशेषणीभूतवह्न्यभावाद्यविषयके शुद्धह्रदत्वादिना वह्न्यभावविशिष्टह्रदादिविषयकज्ञाने वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविलक्षणविषयतानिरूपकत्वस्यासत्त्वेनोक्तासम्भवानवकाशात्। तथा केवलवह्न्यभावत्वाद्यवच्छिन्नविषयकत्वस्य प्रतिबन्धकत्वातिरिक्तत्वाच्चातिप्रसङ्ग इत्यर्थः।

ननु स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽयमेवातिप्रसङ्गो दुर्वारः। अप्रामाण्यज्ञानाभावविशिष्टवह्न्यभावावच्छिन्नविषयकत्वं प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणमित्येतादृशविवक्षया तादृशातिप्रसङ्गवारणे पुनरसम्भवः। वह्न्यभावत्वादिना घटाद्यवगाहिनो वह्न्यभाववान् ह्रद इत्यादिज्ञानस्यापि प्रतिबन्धकतया तत्साधारण्यानुरोधेन वह्नित्वाद्यवच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकनिश्चयत्वेनैव प्रतिबन्धकताया वक्तव्यतया वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयतायास्तादृशप्रकारतानिरूपितह्रदत्वाद्यवच्छिन्नविषयतात्वेनैवावच्छेदकत्वेऽप्यप्रामाण्यज्ञानाभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयताकनिश्चयत्वस्यावच्छेदकतापर्याप्त्यनधिकरणत्वादित्यनस्तुनीयाया अतिरिक्तवृत्तित्वलक्षणावच्छेदकतार्थकत्वं स्फुटयति अवच्छेदकस्य चेति। इह लक्षणे घटकत्वं सप्तम्यर्थः। न च विशिष्टशेषविषयकत्वस्याप्रतिबन्धकसत्त्वादौ सत्त्वात्पुनरसम्भव इति वाच्यम्। ज्ञानस्येत्यत्र ज्ञानपदमनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरं षष्ठ्यर्थश्चाधेयत्वं तस्य वह्निपदार्थेनान्वयः, एवं च तादृशनिश्चयवृत्तित्वविशिष्टं यादृशविशिष्टविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशत्वस्य विवक्षणीयतया असम्भवानवकाशात्। अनतिरिक्तवृत्तित्वं च स्वव्यापकतत्त्वकत्वं न तु तद्भिन्नावृत्तित्वं विशिष्टस्य विशेष्यीभूतविशिष्टविषयकत्वानतिरिक्ततया तस्यातिप्रसक्तत्वेन विशिष्टे तस्मिन्ननतिप्रसक्तत्वस्य दुर्घटत्वात्।

यत्तु प्रतिबन्धकताशून्यतादृशनिश्चयवृत्तित्वमेवानतिरिक्तवृत्तित्वमतो नोक्तदोषाऽसम्भव इति। तदसत्। तथा सति मूलोपात्तज्ञानस्येत्यस्य वैयर्थ्यप्रसङ्गात्। ह्रदत्वाद्यवच्छिन्ना या वह्न्यभावविशिष्टह्रदत्वाद्यवच्छिन्नविषयकयत्किञ्चिज्ज्ञानविषयता तन्निरूपकत्वस्य प्रतिबन्धकताशून्यतादृशनिश्चयावृत्तित्वेन शुद्धह्रदत्वावच्छिन्न

अतिप्रसङ्गाच्च । अस्मन्मतेऽनुमितिप्रतिबन्धकतायास्तादृशनिश्चयवृत्तित्वविशिष्टह्रदत्वाद्यवच्छिन्नविषयकत्वत्वावच्छिन्नव्यापकताविरहादतिप्रसङ्गानवकाशात् ।

अथैवमपि जातित्वादिना ह्रदत्वादिविषयकस्य जातिमान्वह्न्यभाववानित्यादिज्ञानस्यापि वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकतया तस्य च ह्रदो वह्निमानित्यनुमित्यविरोधितयाऽसंभवः, जलवान्वह्निमानित्यादिस्थलीयदोषासंग्रहेण विशेषितधर्मावच्छिन्नपक्षकस्थलीयस्यापि किंचिद्विशिष्टतद्घटितदोषस्यासंग्रहणं च पक्षतावच्छेदकांशेऽन्यप्रकारकत्वानिवेशस्याशक्यत्वात् तादृशविशिष्टघटकपदार्थविषयकत्वस्य ज्ञानविशेषणत्वे सर्वमाकाशवदित्यादिस्थलीयबाधादौ तद्घटकाप्रसिद्ध्याऽव्याप्तिः । यद्यद्रूपावच्छिन्नस्य यस्य यस्य यादृशविशिष्टघटकता तत्तद्रूपावच्छिन्नतन्निष्ठविषयताभिन्नकिंचिदवच्छिन्नविषयताभिन्नकिंचिदवच्छिन्नविषयताशून्यत्वं ज्ञाने निवेश्यम् । जातित्वाद्यवच्छिन्नस्य च ह्रदत्वादेर्न वह्न्यभाववद्ह्रदत्वावच्छिन्नात्मकदोषघटकतेति जातित्वाद्यवच्छिन्नविषयता तादृशविषयताभिन्नैव तच्छून्यत्वं च नाकस्येति इत्यपि न सत्-तथा सति ह्रदो जातिमान्वह्न्यभाववानित्यादिस्थलीयबाधादेरेव दुःसंग्रहत्वात्, जातित्वादिना ह्रदत्वादिरूपधर्मितावच्छेदकावगाहिनो जातिमान् जातिमानित्यादिज्ञानस्य जातित्वाद्यवच्छिन्नह्रदत्वादिनिष्ठधर्मितावच्छेदकतारूपविषयताया निरुक्तविषयताभिन्नत्वविरहेण तादृशज्ञानस्यानुमित्यप्रतिबन्धकस्य शून्यत्वात्तेनावारणात् ।

मैवम् । यद्रूपावच्छिन्नविषयताया तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदक तद्रूपावच्छिन्नविषयताशून्यत्वस्य ज्ञानविशेषणतया सामञ्जस्यात् । अप्रतिबन्धकज्ञानविषयतावच्छेदकजातित्वादिविशेषितह्रदत्वादिघटिततद्रूपावच्छिन्नविषयतात्वावच्छिन्नाभावस्य दोषात्मकविशिष्टविषयतासमानाधिकरणत्वात् तज्ज्ञानव्यावृत्तिरिति । विशिष्टस्य-विशिष्टविषयताकत्वस्य, असत्त्वेऽपि-वह्न्यभावत्वादिना घटाघटगादिभ्रमेऽसत्त्वेऽपि, तथा च विशिष्टविषयकत्वेन प्रतिबन्धकता न सम्भवतीति भावः । भ्रमात्प्रतिबन्धेऽपि तादृशभ्रमस्यानुमित्यनुत्पादप्रयोजकत्वेऽपि । न क्षति – नोक्तयुक्त्या पर्याप्तनिवेशोऽसम्भवः, तदनिवेशे पूर्वोक्तातिप्रसङ्गो वा ॥

ननु विशिष्टदोषघटकीभूततदेकदेशविषयतायां स्वरूपसम्बन्धरूपावच्छेदकत्वसत्त्वेऽपि विशिष्टविषयतासामान्यस्य तादृशावच्छेदकत्वविवक्षयाऽतिप्रसङ्गवारणसम्भवात्तदेव कथं न विवक्षितमिति । न च सामान्यपदस्य व्यापकत्वार्थकतया प्रतिबन्धकतावच्छेदकतायां विशिष्टविषयतात्वव्यापकत्वं निवेश्यं तदपेक्षया प्रतिबन्धकतायां विशिष्टविषयताव्यापकत्वनिवेशनमेवोचितमिति वाच्यम् । यतो वह्न्यभावविशिष्टह्रदादिनिरूपितविषयिताया अनुमित्यप्रतिबन्धकसंशयाहार्याप्रामाण्यज्ञानास्कन्दितज्ञानसाधारणतया नानुमितिप्रतिबन्धकतायास्तद्व्यापकत्वमित्यनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टा या विषयता तद्व्यापकत्वं प्रतिबन्धकतायां सुवचतया विवक्षणीयम् । तदपेक्षया लाघवेन च स्वरूपसम्बन्धरूपावच्छेदकतायां विशिष्टविषयतात्वव्यापकत्वमेव विवक्षितुमुचितम् । तथा सति निश्चयत्वाद्यनिवेशात्समानाकारकज्ञानेषु विषयताभेदस्याप्रामाणिकतया संशयादिज्ञानीयविषयताया अपि निश्चयत्वादिविशिष्टीयतया प्रतिबन्धकतावच्छेदकतया प्रतिबन्धकतावच्छेदकतायां बाधादिरूपदोषनिरूपितविषयतात्वव्यापकताया अक्षतत्वात् । न च वह्न्यभाववान्ह्रदो वह्निमानित्याहार्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयता नानाहार्यज्ञानसाधारणी तादृशाहार्यज्ञानसमानाकारकानाहार्यज्ञानाप्रसिद्धेः, ह्रदो वह्न्यभाववानित्याद्यनाहार्यज्ञानीयवह्न्यभावविशिष्टह्रदादिविषयतातो वह्न्यादिप्रकारतानिरूपिततादृशाहार्यज्ञानीयह्रदादिविषयताया भिन्नत्वात्, तथा चानाहार्यत्वविशिष्टविषयताया एव प्रतिबन्धकतावच्छेदकतया न दर्शिताहार्यज्ञानीयविषयितासाधारण्यविशिष्टविषयितात्वव्यापकत्वमिति वाच्यम् । एव सत्यनाहार्यज्ञानीयविशिष्टविषयितात्वव्यापकताया एव विवक्षणीयत्वापत्तावपि संशयान्यत्वाप्रामाण्यज्ञानानास्कन्दितत्वयोरप्रवेशेन लाघवानपायात् ।

मैवम् । स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे पाषाणमयत्वाद्यवच्छेदेन वह्न्यभाववत्तानिश्चयविशिष्टस्य पाषाणमयत्वादिविशिष्टपक्षादेर्ज्ञानस्य वह्न्याद्यनुमितिप्रतिबन्धकतया तदवच्छेदकविषयताकपाषाणमयत्वादिविशिष्टपक्षादावतिव्याप्तेः । अन्तर्निविष्टकवृत्तित्वरूपावच्छेदकत्वानिवेशमते तादृशविशिष्टविषयता-

यः पाषाणमयत्वाद्यवच्छेदेन वह्न्यभाववत्तानिश्चयाविशिष्टज्ञानसाधारणतया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेनातिप्रसङ्गानवकाशात् । न चानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेऽपि जलाद्यवच्छेदेन वह्न्यभाववत्ताघटितस्य वह्न्याद्यभाववज्जलान्यवृत्तिजलादिविशिष्टस्य ह्रदादिरूपपक्षस्य जलवान्वह्न्यभाववानित्यादिज्ञानसहितस्य जलवांश्च ह्रद इत्यादिज्ञानस्य तादृशज्ञानाविशिष्टतादृशज्ञानत्वेनैव प्रतिबन्धकतया तादृशप्रतिबन्धकताशून्यस्य नाविषयस्य सत्प्रतिपक्षात्मकस्य वारणाय ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकतायामवश्यं निवेशनीयतया मन्मतेऽपि तत्रानतिप्रसङ्गादिति वाच्यम् । ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य प्रतिबन्धकताविशेषणत्वे प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणतद्धेतुमत्पक्षरूपसत्प्रतिपक्षाव्याप्तेः—साध्याभावांशे तद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानत्वेन स्वतन्त्रसाध्याभावधर्मिकतद्व्यापकताग्रहविशिष्टतद्वत्ताज्ञानसाधारण्यानुरोधेनावश्यकल्प्यप्रतिबन्धकतयैवोपपत्ते । तादृशविशिष्टज्ञानस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतान्तरे मानाभावात् । उक्तविशिष्टेऽतिप्रसङ्गस्तु विवक्षणीयविशिष्टान्तराघटितत्वविशेषणेनैव वारणीयः । न च ज्ञानद्वयसाधारणप्रतिबन्धकताया प्रत्येकज्ञानविषयविशिष्टविषयकत्वं नानतिरिक्तवृत्तित्वरूपावच्छेदकतावत्, तथा च दर्शितविशिष्टघटकस्य प्रत्येकज्ञानाविषयस्य न निरुक्तविशिष्टात्मकतेति निरुक्तविशिष्टान्तराघटितत्वमुक्तविशिष्टस्याक्षतमेवेति वाच्यम् । वक्ष्यमाणविशिष्टान्तराघटितत्वस्यैव यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्व प्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टद्वयाघटित(त्वे सति यादृशविशिष्टविषयकनिश्चयत्व प्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टान्तराघटितत्व )स्यापि विवक्षणीयतया उक्तविशिष्टवारणसम्भवात् । न चैवमुक्तसत्प्रतिपक्षाव्याप्तिः—तस्य प्रतिहेतुव्यापकताविशिष्टसाध्याभावप्रतिहेतुविशिष्टपक्षात्मकनिरुक्तविशिष्टद्वयघटितत्वादिति वाच्यम् । सत्प्रतिपक्षघटकतादृशदलद्वयविषयताभिन्ननिरुक्तविशिष्टद्वयाविषयिताशून्यप्रतीतिविषयत्वस्य विशिष्टद्वयाघटितार्थकत्वात् । यत्र सत्प्रतिपक्षाप्रसिद्धिस्तत्र भिन्नान्तमनुपादेयमेव । साध्यादिभेदेन लक्षणभेदात् प्रमात्मकविषयतासाधारणरूपेणैव वा प्रतिहेतुव्यापकताविशिष्टसा-

व्यभिचारादिविषयितोपादेया । न च दर्शितविशिष्टस्य सत्प्रतिपक्षता न स्वीक्रियते, अपि तु हेतुतावच्छेदकाघटितसाध्याभावाभाववद्वृत्तिमत्पक्षात्मकविशिष्टस्यैव व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्पक्षस्योक्तरीत्या सङ्ग्रहे तद्धर्मव्यापकसाध्याभावकालीनतद्धर्मविशिष्टपक्षादिव्यावृत्तिरव्यवहार्या स्यात् इत्यविशेषण व्यापकताघटितविशिष्टमात्रस्य लक्ष्यतायाः एव युक्तत्वात्, तथा चोक्तप्रयासमपेक्ष्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानिवेशनमेवोचितमिति वाच्यम् । एवमपि प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वघटितस्य मतभेदेन साधारण्यविरोधरूपस्य विषयितायाः पक्षधर्मकप्रकृतहेतुमत्ताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायामेवावच्छेदकत्वात्, प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशासम्भवात् । दर्शितातिप्रसङ्गवारणाय च निरुक्तविशिष्टद्वयाघटितत्वस्यैव निवेशनीयत्वात् । न च पक्षविशेष्यक प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यादिरूपं वाच्यम् । पक्षवृत्तित्वघटितविशिष्टविषयितायाः अप्रतिबन्धकज्ञानसाधारणतया प्रतिबन्धकतानवच्छेदकत्वात्तादृशस्य चासाधारण्यादेः पक्षवृत्तित्वविशिष्टप्रकृतहेतुसाध्यव्यापकाभावप्रतियोगित्वविशिष्टप्रकृतरूपनिरुक्तविशिष्टद्वयघटितत्वया निरुक्तविशिष्टद्वयाघटितत्वनिवेशोऽपि न सम्भवतीति वाच्यम् । पक्षवृत्तित्वाघटितविशिष्टस्यैवासाधारण्यरूपतायाः 'विरोधोपि फलतः प्रतिरोध एव तदन्यत्वेन वा विरोधि विशेषणीय'मिति पङ्क्तिव्याख्यानावसरे सम्पादनीयत्वात् ॥

नन्वनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशे व्यभिचारादिघटितपदार्थान्तरेऽतिव्याप्तिः ग्राहकत्वस्यापि प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह विशेषणीय चेति । तादृशलक्षणमिति शेषः । तादृशविशिष्टेति । अनुमितिप्रतिबन्धकताया यद्रूपावच्छिन्नविषयकत्वमवच्छेदकं तद्रूपावच्छिन्नेत्यर्थः । व्यभिचारत्वाद्यवच्छिन्नस्य व्यभिचारत्वादिरूपतादृशरूपावच्छिन्नाघटितत्वादसम्भव इत्यतो अन्तरेति । स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकावच्छिन्नार्थकम् । अतः शुद्धव्यभिचारादेर्मेयत्वविशिष्टव्यभिचाराभिन्नत्वेऽपि न क्षतिः । तदघटितत्वं तदविषयकप्रतीतिविषयत्वम् । एवं च अनुमितिप्रतिबन्धकताया यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकं ताद-

शं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविष-
यकप्रतीतिविषयतावच्छेदकं यत्तदवच्छिन्नत्वं समुदितार्थः । यद्रू-
पावच्छिन्ने लक्षणं सङ्गमनीयं तदेव स्वपदार्थः । भवति हि व्यभि-
चारत्वाद्यवच्छिन्नाविषयप्रतीतिविषयतावच्छेदकीभूतबाधत्वाद्य-
स्तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं व्यभिचारत्वादी-
ति तदवच्छिन्ने लक्षणसमन्वयः । प्रमेयत्वविशिष्टव्यभिचारत्वा-
देः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकव्यभिचारत्वाद्यव-
च्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावान्न तदवच्छिन्ने अ-
तिव्याप्तिः । प्रमेयत्वविशिष्टव्यभिचारादेरपि मेयत्वादिना व्य-
भिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयत्वात्तद्दोषः स्यादतस्ताद-
शरूपाश्रयधर्मिणं तदवच्छिन्नाविषयकप्रतीतिविषयत्वेनाविशिष्य
स्वमेव ताहशविषयतावच्छेदकत्वेन विशेषितम् । मेय-
त्वविशिष्टव्यभिचारत्वाश्रयाविषयकत्वस्य व्यभिचारत्वाद्यवच्छि-
न्नाविषयकप्रतीतौ दुर्घटत्वाद्दोषः, अतः स्वाश्रयाविषयकत्वमुपेक्ष्य
स्वावच्छिन्नाविषयकत्वनिवेशः । स्वावच्छिन्नाविषयकप्रतीतिविष-
यवृत्तित्वस्य ताहशधर्मविशेषणत्वे व्यभिचारादेरपि प्रमेयत्वादिना
व्यभिचारत्वाद्यवच्छिन्नविषयकप्रतीतिविषये व्यभिचारादौ वर्तमा-
नत्वादसम्भव इत्यतस्ताहशविषयतावच्छेदकत्वेन धर्मो विशेषितः ।
प्रमेयं गगनवद्वाच्यत्वादित्यादौ व्यभिचारत्वाद्यवच्छिन्नाविषयकप्र-
तीतिविषयतावच्छेदकं यद्गगनाभाववन्मेयत्वादि तदाश्रयाविषयक-
प्रतीत्यप्रसिद्ध्या अव्याप्तिरतस्तदवच्छिन्नाविषयकत्वनिवेशः । अत्र
च ताहशविशिष्टान्तराविषयकप्रतीतिविषयतावच्छेदकत्वस्य दोष-
तावच्छेदकधर्मे विशेषणतापेक्षया ज्ञानस्येत्यत्र ज्ञानपदार्थे ताहशवि-
शिष्टान्तराविषयकत्वनिवेश एवोचितः । एवं च निष्कृष्टवक्ष्यमाणक-
ल्पे यद्विषयकनिश्चयस्येत्यत्र निश्चये एव तन्निवेशः लाघवादित्यव-
धेयम् ॥

अथ धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यादौ बाधादेर्व्यभिचा-
रादिघटिततया तत्राव्याप्तिः । न च यद्रूपावच्छिन्नविषयकत्व स्वा-
वच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकं ताहश-
रूपान्तराघटितत्वस्य विवक्षितत्वान्न दोषः । व्यभिचारस्योक्तबा-
धविषयकत्वान्न्यूनवृत्तिव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकविषयिता-

कत्वेऽपि तादृशप्रतिबन्धकतासामान्यान्तर्गतानुमितिप्रतिबन्धकतावच्छेदकविषयकत्वविरहेण तद्घटितत्वस्य अकिञ्चित्करत्वादिति वाच्यम्। व्यभिचारत्वादिरूपस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपितावच्छेदकस्य तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकस्याप्रसिद्ध्या असम्भवात् व्यभिचारत्वमेयत्वविशिष्टव्यभिचारत्वादेरेव तथाविधविषयितानिरूपकताकत्वात् तस्य च व्यभिचारत्वाद्यवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावात्। न च स्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयतानिरूपकतावच्छेदकः कश्चित्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यस्य एवंभूतं यत्स्वं प्रमेयत्वविशिष्टव्यभिचारत्वादि तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य विवक्षणीयतया न दोष इति वाच्यम्। तथासति धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यादौ बाधत्वाद्यवच्छिन्नघटकतावच्छेदकस्य धूमव्यभिचारिवह्निमत्त्वादेः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकीभूतस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकविषयितानिरूपकतावच्छेदकव्यभिचारत्वकत्वादतिव्याप्तेर्दुर्वारत्वात्। न च स्वावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतया किञ्चिद्विषयितया यादृशधर्मावच्छिन्ननिरूपितं तादृशतादृशधर्मावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तद्रूपावच्छिन्नत्वमेव समुदितलक्षणार्थः। मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतायाः शुद्धव्यभिचारत्वाद्यवच्छिन्ननिरूपितविषयिताया मेयत्वविशिष्टव्यभिचारत्वाद्यवच्छिन्नानिरूपितत्वेन स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य च स्वस्मिन्नसत्त्वेन मेयत्वविशिष्टव्यभिचारत्वादेः स्वपदेनोपादातुमशक्यत्वात् (व्यभिचारत्वादिविशिष्टविषयकत्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदिकायाः कस्या अपि विषयिताया व्यभिचारत्वादिविशिष्टानिरूपितत्वासम्भवात्तादृशविषयिताया यादृशधर्मविशिष्टानिरूपितत्वं घटत्वमेयत्वविशिष्टव्यभिचारत्वादेरेव तादृशत्वात् तदविषयकप्रतीतिविषयतावच्छेदकस्य व्यभिचारत्वादेः स्वपदेनोपादातुमशक्यत्वाच्च न कश्चिद्दोषः)।

अथवा यद्धर्मावच्छिन्नविषयित्वावच्छिन्नप्रतिबन्धकतासामान्यावच्छेदकीभूतविषयितात्वं यद्धर्मावच्छिन्ननिरूपितत्वव्याप्यं तद्धर्मवत्त्वमेव समुदितार्थ इति वाच्यम्, बाधविशिष्टव्यभिचारत्वावच्छिन्ने अतिप्रसङ्गात् तादृशधर्मावच्छिन्नविषयकत्वावच्छिन्नबाधज्ञानप्रतिबन्धकतायां केवलव्यभिचारविषयताया अनवच्छेदकत्वेन बाधविशिष्टव्यभिचारत्वावच्छिन्नविषयताया एव तथाविधप्रतिबन्धकतासामान्यावच्छेदकत्व तस्यास्तादृशविशिष्टनिरूपितत्वस्य व्याप्यकत्वात् प्रथमकल्पे स्वपदेन चरमकल्पे च यत्पदेन तस्योपादानसम्भवात्।

यत्तु वह्न्यभावादिधर्मिनावच्छेदककवह्न्यादिप्रकारकबुद्धेरिव धूमव्यभिचारविशिष्टवह्न्यादिधर्मितावच्छेदकस्य धूमव्याप्यतया वह्न्यादिप्रकारकमहस्यानाहार्यस्यासंभवेन तादृशपक्षतावच्छेदकावच्छिन्नपक्षकसमूहालम्बनानुमितेरप्रसिद्ध्या तादृशानुमितिप्रतिबन्धकताघटितयथाश्रुतलक्षणस्य तद्रूपावच्छिन्नपक्षकवह्न्यादिहेतुकदोषाव्याप्तिः स्वयमेव वक्ष्यते इति तद्वारणायासौ वृथेति भवतु तावदेवम्। तथापि विशेषगुणवद्भिन्नो घटो गुणसामान्यवद्भिन्नश्च इत्यादौ दर्शितसमूहालम्बनानुमितिप्रसिद्ध्या विशेषगुणवद्घटादिरूपाश्रयासिद्धेर्गुणवद्घटादिरूपबाधघटितायाः सङ्ग्रह आवश्यकः।

यदि च तत्र घटत्वावच्छेदेन गुणवत्त्वबाधः आश्रयसिद्धिस्तु घटत्वसामानाधिकरण्येन घटत्वावच्छेदेन वा विशेषगुणवत्त्वं तस्यां च गुणत्वरूपसामान्यधर्मावच्छिन्नघटत्वव्यापकताघटितोक्तबाधस्य न प्रवेशः, विशेषगुणत्वेन घटत्वव्यापकतायास्तत्र प्रवेशेऽपि सामान्यरूपेण व्यापकतायास्तदनन्तर्भावादिति न तादृशासिद्ध्यसङ्ग्रह इत्युच्यते। तथापि विशेषगुणाभाववान्द्वितीयादिक्षणावच्छिन्नो घटो गुणसामान्याभाववानित्यादौ द्वितीयादिक्षणावच्छिन्न घटे विशेषगुणवत्त्वरूपाश्रयासिद्धौ तदवच्छिन्ने घटे गुणवत्त्वरूपबाधप्रवेशावश्यकत्वात् यथाश्रुतलक्षणे च तत्सङ्ग्रहस्यावश्यकतया उक्तविशेषणानुपपत्तिः।

वस्तुतस्त्वत्र वदन्तीत्यादिनिष्कृष्टकल्पेऽपि प्रमेयत्वविशिष्टव्यभिचारादिवारणाय विशिष्टान्तराघटितत्वस्य निवेशनीयतया तन्मते दर्शितबाधाद्यसङ्ग्रहो दोष एव।

एतेन स्वावच्छिन्ननिरूपितविषयकत्वावच्छिन्नयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयताकविशिष्टनिरूपितविषयितात्वव्यापकस्वावच्छिन्ननिरूप्यताकधर्मवत्त्वं समुदितलक्षणार्थः । मेयत्वविशिष्टव्यभिचारत्वादिकं नैतादृशं स्वं-तदवच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयताकशुद्धव्यभिचारादिविषयितात्वस्य तदवच्छिन्ननिरूप्यत्वाव्याप्यत्वात् । उक्तस्थले विशेषगुणविशिष्टघटादिरूपाश्रयासिद्ध्यादिविषयकत्वावच्छिन्नविशिष्टपक्षग्रहादिनिरूपितयत्किञ्चित्प्रतिबन्धकतावच्छेदकविषयिताकविशिष्टनिरूपितविषयितात्वस्य तादृशाश्रयासिद्ध्यादिनिरूपितत्वव्याप्यत्वात्तत्र लक्षणसमन्वयः । प्रतिबन्धकतायां यावत्त्वानिवेशाशीकारीत्या बाधविशिष्टव्यभिचारादावतिप्रसङ्गः । स्वावच्छिन्ननिरूपितविशिष्टविषयितानवच्छिन्नप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताको यो धर्मस्तत्त्वं वा समुदितलक्षणार्थः । मेयत्वविशिष्टव्यभिचारत्वं नैतादृशं स्वतदवच्छिन्ननिरूपितशुद्धव्यभिचारत्वाद्यवच्छिन्नविषयितावच्छिन्नायामेव प्रतिबन्धकतायां तदवच्छिन्नविषयिताया अवच्छेदकत्वात् । उक्तस्थले च आश्रयासिद्धिविषयकत्वस्य तन्निरूपितबाधविषयितानवच्छिन्ना या विशिष्टपक्षग्रहप्रतिबन्धकता तदवच्छेदकत्वाल्लक्षणसमन्वय इति परास्तम् । यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्त इत्यादिनिष्कृष्टे कल्पे अनुमितिप्रतिबन्धकतायाः अघटकत्वात् । प्रतिबन्धकतायां विशिष्टान्तर्विषयकत्वानवच्छिन्नत्वविशेषणदानस्यासंभवेन यत्पदार्थस्यैव तादृशपदार्थान्तराघटितत्वेन विशेषणीयतया उक्तबाधाद्यव्याप्तेरशक्यपरिहारत्वात् ।

अथ केचित्—सजातीयावशिष्टान्तराघटितत्वमेव यत्पदार्थे विशेषणं देयम् । साजात्यं च हेत्वाभासविभाजकरूपेण । तथा च रूपं बाधत्वव्यभिचारत्वादि तेन रूपेण व्यभिचारादेर्न बाधादिसाजात्यमिति व्यभिचारघटितबाधादौ नाव्याप्तिः । न चैवं यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्त उभयाभाववत्त्वमित्यत्र विरोधिविषयताप्रयुक्तदलस्य वैयर्थ्यं घटादेस्तादृशरूपेण सजातीयत्वाप्रसिद्ध्यैव नातिप्रसङ्ग इति वाच्यम् । स्वसजातीयविशिष्टान्तरघटिते यत्स्वे तदविषयकत्वादिविषयत्वस्य विवक्षया अनुयोगिनि स्वत्वानन्तर्भावेन पदार्थान्तरेऽप्यतिप्रसङ्गवारकतया तद्दलसार्थक्यात् । न

च-व्यभिचारविशिष्टमेयत्वादेर्हेत्वाभासत्वविरहाद्धेत्वाभासविभाजकरूपेण सजातीयाप्रसिद्ध्या तस्य स्वपदेनोपादातुमशक्यतया मेयत्वविशिष्टव्यभिचारत्वादिकमेव स्वपदेनोपादेयं तस्य शुद्धव्यभिचाराद्यभिन्नतया व्यभिचारत्वादिरूपहेत्वाभासविभाजकरूपेण तत्सजातीयप्रसिद्धेरिति तदविषयकप्रतीतिविषयत्वस्य व्यभिचारविशिष्टमेयत्वादौ सत्त्वात्तत्रातिप्रसङ्ग इति वाच्यम् । विशिष्टान्तराघटितत्वेनाघटितस्य साध्यसाधनग्रहविरोधिज्ञाननिष्ठविषयतासम्बन्धेन व्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तित्वादिरूपव्यभिचारादिविभाजकस्यात्र निवेशात्तादृशरूपस्य व्यभिचारविशिष्टमेयत्वादिसाधारणत्वादित्याहुः ॥

तन्न-व्यभिचारादिघटितबाधादावपि विशिष्टान्तराघटितत्वाद्यघटितव्यभिचारत्वादिसत्त्वेन तद्घटकव्यभिचारादेर्व्यभिचारादिना तत्सजातीयतया तत्सङ्ग्रहानुपपत्तेः ॥

(इदमत्रावधेयम् । प्रतियोगिनि स्वत्वान्तर्भावेण तादृशलक्षणकरणेऽपि व्यभिचारघटितबाधादावव्याप्तिवारणमशक्यमेव । तत्र सजातीयविशिष्टान्तरघटितं यत्त्वं धूमव्यभिचारि वह्निमत्त्वं तद्घटितत्वस्य तद्घटितबाधादावसत्त्वात् । यदि च तद्घटितत्वं तदपर्याप्तविषयतापर्याप्त्यधिकरणत्वम्, तच्च सुघटमेव-एकदेशापर्याप्तविषयतायाः समुदायपर्याप्तेरित्युच्यते तदाऽव्याप्तिर्दुर्वारैव । निरुक्तव्यभिचारत्वेन सजातीयविशिष्टान्तरघटितं यत्त्वं तादृशबाध एव, तदपर्याप्तविषयतायास्तत्राभावात् ।) न च स्ववृत्तियावद्धेत्वाभासविभाजकरूपेण साजात्यं विवक्षणीयम्, तथा च बाधादिघटकव्यभिचारादौ बाधत्वाद्यसत्त्वान्न तादृशबाधादिसजातीयत्वमतस्तत्सङ्ग्रहसम्भव इति वाच्यम् । एवं सति बाधादिविशिष्टव्यभिचारादौ स्ववृत्तिबाधत्वव्यभिचारत्वादियावद्धर्मेण सजातीयविशिष्टान्तरस्य व्यभिचारविशिष्टबाधादेः प्रसिद्धावपि तद्घटितत्वासत्त्वेनातिव्याप्तिस्तस्माद्व्यभिचारादिघटितबाधादेस्सङ्ग्रहप्रकारोऽग्रे दर्शनीय एवादरणीयः । मेयत्वविशिष्टव्यभिचारादौ-तादृशव्यभिचारत्वाद्यवच्छिन्ने, नातिप्रसङ्गो-न दोषताप्रसङ्गः । अत्र मेयत्वविशिष्टव्यभिचारो दोष इत्यादिव्यवहाराभावात्तेष्टापत्तिः सम्भवति । न च विशिष्टव्यभिचारादेः शुद्धव्यभिचारत्वादिना दोषत्वस्याक्षततयो-

कविशेषणज्ञानेपि तादृशव्यवहारापत्तिर्दुर्वारैवेति तत्रेष्टापत्तौ व्यर्थं विशेषणमिति वाच्यम् । दोषादिपदस्य निरुक्तविशेषणावच्छिन्नानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकत्वेनान्वयितावच्छेदकधर्मबोधकतया व्युत्पन्नतया प्रकृते च मेयत्वादिविशिष्टव्यभिचारत्वादिरूपान्वयितावच्छेदकस्योक्तविशेषणविरहेणातिप्रसङ्गाभावादिति हृदयम् ॥

न च आश्रयासिद्ध्यादिस्थले पक्षतावच्छेदकाभाववत्पक्षकत्वादिकमेव दोषस्तस्यैव हेतुनिष्ठतया हेतोर्दुष्टत्वव्यवहारनिर्वाहकत्वात्, तादृशधर्मस्य च तादृशाभाववत्पक्षादिरूपतादृशविशिष्टान्तराघटिततया नाव्याप्तिरित्यत आह एवं चेति । तादृशविशेषणज्ञाने चेत्यर्थः । पक्षतावच्छेदकादीति । आदिपदात्साध्यादिपरिग्रहः । पर्वतादिधर्मिककाञ्चनमयत्वादिविशिष्टबुद्धौ पर्वतः काञ्चनमयत्वाभाववानित्यादिधर्मिविशेष्यकनिश्चयस्येव पर्वते काञ्चनमयत्वं नास्तीत्यादिधर्मिविशेषणकनिश्चयस्यापि विरोधित्वमानुभविकमतस्ताद्रूप्यस्यापि दोषत्वमाह पक्षनिष्ठ इति । आधेयतासम्बन्धेन पक्षविशिष्ट इत्यर्थः । वाकारः समुच्चये । साधनवद्वृत्तिसाध्याभाव इति । साधनधर्मिकसाध्याभाववद्वृत्तित्वप्रकारकज्ञानं साधनधर्मिकव्याप्तिज्ञानप्रतिबन्धकम्, साधनवद्वृत्तिसाध्याभाव इति ज्ञानेपि साधने साध्याभाववद्वृत्तित्वं तुल्यवित्तिवेद्यतया नियमतः भासत इति तदपि व्याप्तिज्ञानप्रतिबन्धकमिति मताभिप्रायेण, तादृशज्ञाने नियमतस्तद्भानेपि मणिमन्त्रादिन्यायेन तस्य व्याप्तिज्ञानप्रतिबन्धकत्वमिति प्राचीनमताभिप्रायेण वा दोष इति, न तु पक्षतावच्छेदकाभाववत्पक्षकत्वादिरिति शेषः । तथा चालक्ष्यत्वान्न तत्राव्याप्तिरिति भावः ॥

ननु पक्षतावच्छेदकाभाववत्पक्षादीनां हेत्ववृत्तित्वात्कथं हेतौ दुष्टताव्यवहार इत्यत आह येन केनापीति । एकज्ञानविषयत्वेनेत्यादिः । तद्वान्–तदवच्छिन्नो, दुष्ट–दुष्टपदप्रतिपाद्यः । तथा च हेतोः तादृशानधिकरणत्वेपि न क्षतिः । दुष्ट इत्यादौ सामान्यतः सम्बन्धिन एव दुष्टार्थत्वात् । एवं चैकज्ञानविषयत्वाविना वह्न्यभाववद्ध्रदादिरूपदोषस्य धूमादौ सत्त्वेपि पर्वतादौ च वह्न्यादिसाधने तस्य दुष्टव्यवहारविषयतायास्तद्रूपावच्छिन्नपक्षसाध्यहेतुवाचकपदसमभिव्याहारस्थले दुष्टपदस्य तद्रूपावच्छिन्नपक्षसाध्यहेतुकानुमितिप्रतिबन्धकतावच्छे-

कस्यावच्छिन्ननिरूपितविषयिताकधर्मावच्छिन्नसम्बन्धिबोधकव्युत्पत्त्या पूर्ववद्वारणेऽपि पूर्ववदेव वन्हिना धूमसाधने रासभो दुष्ट इत्यादिव्यवहारो निरुक्तदोषमात्रस्य दुष्टव्यवहारविषयत्वे दुर्वार इति प्रकृते हेतुतावच्छेदकविशिष्टसम्बन्धो निष्ठार्थतावच्छेदको वाच्यः। एतत्सूचनायैव प्रकृते हेतुरित्युक्तम्। ह्रदे वह्निसाधने धूमो दुष्ट इत्यत्र ह्रदत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मावच्छिन्नसम्बन्धी धूम इत्यन्वयबोधः। तत्र प्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्म एव दुषधातोरर्थः। साधनपदं लक्षणया धूमत्वावच्छिन्नहेतुकानुमितिपरम्। तत्र ह्रद इति सप्तम्यन्तार्थह्रदत्वावच्छिन्नपक्षकत्वस्य वह्नेरितिषष्ठ्यन्तार्थस्य वह्नित्वावच्छिन्नसाध्यकत्वस्य चान्वयः। तादृशानुमित्यन्वितसप्तम्यर्थनिरूपितत्वस्य दुषधात्वर्थैकदेशे प्रतिबन्धकत्वे अन्वयः। एवं च पर्वते वन्हेः साधने धूमो दुष्ट इत्यत्र पर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकधूमत्वावच्छिन्नहेतुकानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्ननिरूपितविषयिताकधर्मविशिष्टसम्बन्धी धूम इत्येव प्रतीयते, तादृशधर्मश्च अप्रसिद्ध एवेति न तथा व्यवहारः। पक्षविशेष्यादिकमनन्तर्भाव्य धूमो दुष्ट इत्यादिव्यवहारस्तु इष्यत एवेति दिक् ॥

(दी०) यादृशधर्मिणि यादृशधर्मवत्ताज्ञानं अनुमितिप्रतिबन्धकं तस्य धर्मिणस्तादृशधर्मवत्त्वं हेतुदोष इत्यपि कश्चित्।

(गा०) साधननिष्ठसाध्याभाववद्वृत्तित्वादेरेव व्यभिचारतया प्रसिद्धिर्न तु तद्विशिष्टसाधनादेः अतो न तस्य दोषत्वमिति कश्चिदाह व्याचष्टेऽपि लक्षणमन्यथैवान्यथातिप्रसङ्गात् तादृशव्याख्यामुपन्यस्यति यादृशेति। यद्रूपावच्छिन्नेत्यर्थकम् ज्ञानं-ज्ञानत्वावच्छिन्नं, तस्य धर्मिणः-तद्धर्मावच्छिन्नस्य तेन सम्बन्धेनेति शेषः। तादृशधर्मवत्त्वं-तद्रूपावच्छिन्नवत्त्वम्, साधनादिविशेषणकसाध्याभाववद्वृत्तित्वादिविशेष्यकज्ञानस्य व्याप्त्यादिज्ञानप्रतिबन्धकत्वेऽपि साध्याभाववद्वृत्तित्वादेराधेयतासम्बन्धेन साधनीयत्वादिक न दोषः-साधनादेः साध्याभाववद्वृत्तित्वादिधर्मताविरहात। अत्राप्यवच्छेदकत्वं पूर्ववदेव, न तु स्वरूपसम्बन्धविशेषः। पक्षतावच्छेदकावच्छिन्ननिष्ठकेवलाभा-

धर्मत्वावच्छिन्नवत्त्वेऽव्याप्त्यतिप्रसङ्गात्; तदवच्छिन्नधर्मिकतद्रूपावच्छिन्न-वत्त्वाज्ञानस्यापि प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात्। अवच्छेद-कतापर्याप्तिविवक्षणे च ह्रदत्वाद्यवच्छिन्ननिष्ठवह्न्यभाववत्त्वाद्यवच्छिन्न-वत्त्वे अव्याप्तिः, यतो वह्नित्वादिना घटाद्यवगाहिनोऽपि ह्रदो न वह्निमा-नित्यादिनिश्चयस्य ह्रदो वह्निमानित्याद्यनुमितिप्रतिबन्धकतया ह्रद-त्वाद्यवच्छिन्नविशेष्यकवास्तववह्न्यभाववत्त्वावच्छिन्नप्रकारकत्वेन न प्रतिबन्धकता अपि तु तद्विशेष्यकवह्नित्वावच्छिन्नप्रकारतानिरूपिता-भाववत्त्वावच्छिन्नप्रकारताकनिश्चयत्वेनैव, अतस्तादृशमेव रूपं प्रति-बन्धकतावच्छेदकतापर्याप्त्यधिकरणं न तु ह्रदत्वाद्यवच्छिन्नधर्मि(ता-वच्छेद)कवह्न्यभाववत्त्वावच्छिन्नप्रकारकनिश्चयत्वमिति। यद्रूपपदेन वह्न्यभाववत्त्वाद्युपादानं न संभवतीति (पर्वतो वह्न्यभाववानित्यादौ पर्व-तत्वाद्यवच्छिन्ननिष्ठवह्नित्वावच्छिन्नवत्त्वरूपबाधात्वावच्छेदकतापर्या-प्तिघटितलक्षणस्यापि सत्त्वान्नासंभवोऽभिहितः। पर्वतत्वाद्यवच्छिन्नवि-शेष्यकवह्नित्वावच्छिन्नप्रकारकनिश्चयत्वे पर्वतो वह्न्यभाववानित्यनु-मितिप्रतिबन्धकतावच्छेदकतापर्याप्तेः) पर्वतो वह्न्यभाववानित्यादौ पर्वतत्वाद्यवच्छिन्ननिष्ठवह्नित्वाद्यवच्छिन्नवत्त्वरूपबाधादेरसङ्ग्रहभयेन यद्रूपावच्छिन्ने धर्मिणि यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपाव-च्छिन्नप्रकारताकनिश्चयत्वेन प्रतिबन्धकता तद्रूपविशिष्टे तद्रूपावच्छि-न्नविशेषिततद्रूपावच्छिन्नवत्त्वं दोष इति विवक्षाया असंभवात्। अत्र साधननिष्ठसाध्याभाववद्वृत्तित्वादेरिव साध्याभाववद्वृत्तिसाधनादे-रपि दोषत्वे क्षतिविरहात् एतावान्प्रयासो निरर्थक इत्यस्वरसः कश्चिदित्यनेन सूचितः॥

(दी०) अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्ट-धूमत्वेन च हेतुत्वे पर्वतादेः काञ्चनमयत्वविरहो ह्रदस्य वह्नि-धूमशून्यत्वं पर्वतस्य महानसीयवह्निधूमविरहित्वं मेयत्वस्य के-वलधूमस्य वा वह्निव्यभिचारो विशिष्टस्य धूमस्य वा पर्वतीय-वह्निव्यभिचारो न दोषः, न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दु-ष्टत्वम्, अतस्तद्धर्मावच्छिन्नतत्पक्षकतद्धर्मावच्छिन्नतत्साध्यक-तद्धर्मावच्छिन्नतद्धेतुकानुमितिप्रतिबन्धकत्वं वाच्यम्, तथाच नि-

वह्निः पर्वतो वह्निमान् पर्वतावृत्तिवह्निमान् वा तद्व्यभिचारिणः पर्वतावृत्तेर्वा धर्मादित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशानुमितेरप्रसिद्धत्वादिति ।

(गा०) यथाव्याख्याततथाश्रुतार्थे निर्वह्निः पर्वतो वह्निमानित्यादौ –प्रकृतपक्षतावच्छेदकविशिष्टविशेष्यकप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितेरप्रसिद्ध्याऽव्याप्तिर्दर्शयिष्यते, तत्र विशिष्य पक्षतावच्छेदकाद्यप्रवेशे नाप्रसिद्धिरतस्तन्निवेशनप्रयोजनमाह अथेति । पर्वतादेः काञ्चनमयत्वविरह इत्यादौ सर्वत्र न दोष इति सम्बध्यते। तथाच, पक्षतावच्छेदकाद्यप्रवेशे पूर्वोक्तयुक्त्याऽसम्भववारणाय यत्किञ्चिद्धर्मावच्छिन्नपक्षसाध्यहेतुकानुमितिसामान्यप्रतिबन्धकत्वमेव निवेश्यमिति पर्वतो वह्निमान्धूमादित्यादौ पर्वतनिष्ठकाञ्चनमयत्वाभावादावतिव्याप्ति –तस्यापि काञ्चनमयत्वादिसहितपर्वतत्वाविरूपयत्किञ्चिद्धर्मावच्छिन्नपक्षसाध्यहेतुकानुमितिसामान्यप्रतिबन्धकज्ञानविषयत्वादिति भावः। आदिपदं वस्त्वन्तरसंग्राहकम्, प्रकृतानुमित्यविषयपदार्थाभावेऽतिव्याप्तिं सूचयित्वा तद्विषयसाध्याद्यभावे तां सूचयति ह्रदस्येति। ह्रदनिष्ठवह्निशून्यत्वं धूमशून्यत्वं चेत्यर्थः। ह्रदादिनिष्ठसाध्याभावे अतिव्याप्तिसूचनं च प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतपक्षकत्वरूपसमुदायदलस्यैवानिवेशे बोध्यम्। महानसीयेति। महानसीयवह्न्यभावो महानसीयधूमाभावश्चेत्यर्थः। अत्रातिव्याप्तिसूचनं च प्रकृतसाध्यतावच्छेदकप्रकृतहेतुतावच्छेदकयोरनिवेशे बोध्यम्॥ इदमुपलक्षणम्। साध्यहेत्वोरनिवेशेपि जलत्वाभावादावव्यतिव्याप्तिर्बोध्या । प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुकत्वानिवेशे पक्षधर्मताज्ञानप्रतिबन्धकतामादायातिप्रसङ्गं सूचयित्वा; व्याप्तिज्ञानप्रतिबन्धकतामादायातिव्याप्तिं सूचयति मेयत्वस्येति ।' वह्निव्यभिचार इत्यनेनान्वयः। अत्रातिव्याप्तिस्तादृशदलस्यैवानिवेशे बोध्या । प्रकृतहेतुकत्वं निवेश्याप्येतद्दोषस्य शक्यवारणतया हेतुतावच्छेदकनिवेशायाह केवलधूमस्येति । वह्निशून्यदेशान्तरवृत्तिधूमव्यक्तिव्यावर्तकविशेषणावच्छिन्नस्येत्यर्थः। साध्यतावच्छेदकानिवेशे पूर्वं साध्यवत्ताज्ञानविरोधिविषयेऽतिव्याप्तिर्दर्शितेदानीं व्याप्तिज्ञानविरोधिविषयेऽतिव्याप्तिं दर्शयति। विशिष्टधूमस्य वा पर्वतीयवह्निव्यभि-

चार इति। दोषलक्षण इव दुष्टलक्षणेऽपि पक्षतावच्छेदकादिनिवेशस्याऽऽवश्यकतां दर्शयति न वा तत्सम्बन्धेनेति। तत्र-पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नवह्निसाधने, तस्य-विशिष्टधूमत्वावच्छिन्नस्य, पक्षादौ पक्षतावच्छेदकादेर्यादृशसम्बन्धेन विशेषणत्वं यत्राभिमतं तत्र तत्सम्बन्धेन तदवच्छिन्नत्वं निवेश्यमिति सूचयितुं तत्पक्षकेत्युक्तम्, पक्षतावच्छेदकादिनिवेशो पक्षादिनिवेशस्याप्रयोजकत्वादिति। वाच्यम्-तद्रूपावच्छिन्नपक्षसाध्यहेतुकदोषलक्षणे निवेशनीयम्। तथाचेति। निर्वह्निः पर्वतो वह्निमानित्यत्र च पक्षतावच्छेदकनिर्वह्नित्वविशिष्टपर्वते वह्निवैशिष्ट्यावगाहित्वमनुमितेर्न सम्भवति—स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकानाहार्यज्ञानस्यानभ्युपगमात्, पर्वतः पर्वतावृत्तिधर्मवानित्यत्र पर्वते पर्वतावृत्तित्वरूपसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वमनुमितेर्न सम्भवति स्वस्मिन्स्वावृत्तित्वावच्छिन्नप्रकारकानाहार्यज्ञानस्याननुभविकत्वात्, एवं पर्वतो वह्निमान्वह्निव्यभिचारिण इत्यत्र वह्निव्यभिचारस्वरूपहेतुतावच्छेदकावच्छिन्ने वह्निव्याप्यत्ववैशिष्ट्यावगाहित्वमनुमितौ न सम्भवति पूर्वोक्तयुक्तेः, पर्वतो वह्निमान्पर्वतावृत्तेरित्यत्र पर्वते पर्वतावृत्तित्वरूपहेतुतावच्छेदकावच्छिन्नवैशिष्ट्यावगाहित्वं नानुमितेः सम्भवति उक्तयुक्तेरिति; यथाविधानुमित्यप्रसिद्धिप्रयोजकभेदेन नानास्थले अव्याप्तिकथनम्। न कोऽपि हेत्वाभासः स्यादिति। तथा चापार्थकावरूपनिग्रहस्थानसत्त्वेन प्रयोक्तुर्निग्रहोपपत्तावपि निर्वह्नित्वेन पर्वते वह्नेः साधने धूमो दुष्ट इत्यादिव्यवहारो दुरुपपाद इति भावः। तादृशानुमितेः-तथाविधपक्षतानुमितेः। अप्रसिद्धत्वादिति। आहार्यपरोक्षज्ञानानुपगमादिति भावः॥

(दी०)-अत्र वदन्ति-वह्निव्यापकनिश्चयस्य विरोधित्वपक्षताप्रयुक्तस्तदुत्तरम् अनुमितौ अनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्वरूपं हेतुदोषत्वम्। पक्षतावच्छेदकवैशिष्ट्यादिकञ्च वैज्ञानिकं न तु

वास्तवं ग्राह्यं व्याप्तिश्चान्वयतो व्यतिरेकतश्च वाच्या तादृशाव-गाहित्वमसिद्धिराहार्य्यज्ञान एवाभ्युपेतव्याऽनन्यगतिकत्वात् । एवञ्च वस्तुमात्रनिश्चयादनन्तरं निर्वह्नित्वविशिष्टे वह्नेरग्रहेऽपि न क्षतिस्तस्य विरोध्यविषयकत्वात् । एवं साध्यनिश्चयोत्तरं त-स्यानुमितावपि मानसज्ञानाविरोधित्वाच्च तादृशि पक्षे तादृश-साध्यवैशिष्ट्यस्य तादृशसाध्यविरूपितव्याप्तिविशिष्टतादृशहेतुवै-शिष्ट्यस्य चावगाहिनो ज्ञानस्य यद्विषयं ज्ञानं विरोधिविषयकं तत्त्वं तादृशज्ञानाविरोधित्वं वा हेतुदोषत्वम् । ज्ञानविरोधित्वञ्च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वम् । एवंविधैव रीति-रुत्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि केचित् ।

( गा० ) यद्विषयकनिश्चयस्येति । यद्रूपावच्छिन्नविषयकनि-श्चयस्येत्यर्थः । उत्तरपदस्य उत्तरकालीनार्थकतया तदुत्तरमितिधा-तूपस्थाप्यानुमितिरूपक्रियाविशेषणमतो द्वितीया । अग्रिमकल्पे तादृशज्ञानरूपक्रियाविशेषणम् , अतो ज्ञानपदमपि सार्थकम् । तत्पदं च तादृशनिश्चयपरामर्शकम्, उत्तरपदं चाव्यवहितोत्तरार्थ-कम् । 'कालाध्वनोरत्यन्तसंयोगे' इत्यनेन द्वितीयाधिकरणे उत्तर-पदस्योत्तरकालपरत्वादिति तु न युक्तम् । व्यापकतार्थकस्यात्यन्त-संयोगस्य प्रकृतेऽविवक्षितत्वात् । अनुमितौ—अनुमितिसामान्ये, द्वयोर्व्यतिरेक इति सम्बन्धः । तत्त्वं—तद्रूपावच्छिन्नत्वम् । अत्र च तज्ज्ञानानन्तरज्ञाननिष्ठतादृशोभयाभावे तज्ज्ञानीयाया एव विरोधि-विषयितायाः प्रयोजकत्वात् । विरोधिविषयितायां तादृशनिश्चयी-यत्वकथनं स्वरूपकीर्त्तनमात्रं न तु लक्षणघटकम् , तथाच यद्रूपाव-च्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिवि-विषयताप्रयुक्तोभयाभाववत्त्वं तादृशरूपावच्छिन्नत्वं दोष इति स-मुदितलक्षणार्थः । वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्च-यानन्तरं ह्रदो वह्निमान्वह्निव्याप्यधूमवांश्च इत्याकारकानुमितेः क-दाचिदप्यनुपपत्त्या घटाद्यनुमितय एव तादृशनिश्चयाव्यवहितोत्तरानु-मितिसामान्यान्तर्गताः, तासु च ह्रदत्वादिविशिष्टे यद्वह्न्याद्यव-

च्छिन्नवैशिष्ट्यावगाहित्वं, वह्नित्वावच्छिन्नवह्निनिरूपितव्याप्तिविशिष्टधूमत्वावच्छिन्नवैशिष्ट्यावगाहित्वं च तदुभयाभाववत्त्वमक्षतमेव। तत्र तादृशनिश्चयीयविरोधिविषयिताप्रयुक्तत्वमपि—स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभावप्रयोजकत्वात्। ह्रदत्वादिविशिष्टविशेष्यकत्वावच्छिन्नवह्नित्वविशिष्टप्रकारतात्वाघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूताया ह्रदत्वावच्छिन्नविशेष्यकत्वावच्छिन्नाभावीयप्रकारितायास्तादृशवह्नित्वविशिष्टप्रकारकज्ञानाभावे तथात्वात्। न च तादृशविशिष्टप्रकारकत्वमात्रं न विपरीतनिश्चयप्रतिबध्यतावच्छेदकम्, अपि तु तद्विशेषिताहार्यज्ञानत्वं तत्कथं तत्प्रकारकत्वाभावस्य तथाविधविरोधिविषयिताप्रयुक्तत्वमिति वाच्यम्। विशिष्टाभावप्रयोजकस्य विशेष्यवन्निष्ठविशेषणाभावप्रयोजकत्वादनाहार्यज्ञानत्वाश्रयानुमित्यादिनिष्ठतादृशविशिष्टप्रकारकत्वाभावस्य विरोधिविषयिताप्रयुक्तत्वाक्षतेरिति—ह्रदो वह्निमान्धूमादित्यादौ पक्षान्यभावादिविशिष्टह्रदत्वावच्छिन्ने लक्षणसमन्वयः। (वह्निव्याप्यकनिश्चयाव्यवहितोत्तरानुमितिव्यापको विरोधिविषयिताप्रयुक्तो व्यापकत्वविशिष्टसंयोगसंसर्गकवह्नित्वप्रकारकत्वघटितोभयाभावत्वव्यापकत्वावच्छेदकावच्छेदेन साध्यसिद्धिस्थलीयहेत्वाभासलक्षणम्। व्यापकत्वाविशेषितसंयोगसंसर्गकवह्निप्रकारकत्वघटितोभयाभावघटितं सामानाधिकरण्येन साध्यसिद्धिस्थलीयं लक्षणम्। उभयसाधारणमेकलक्षणं न सम्भवति—अवच्छेदकावच्छेदेन साध्यसिद्धौ सामानाधिकरण्येन बाधाव्याप्तेः। सामानाधिकरण्येन साध्यसिद्धौ सामानाधिकरण्येन बाधाविव्याप्तेरप्रसङ्गात्।) निर्वह्निः पर्वतो वह्निमानित्यादौ तादृशानुमितेरप्रसिद्धावपि वह्निमत्पर्वतादिरूपाश्रयासिद्ध्यादिविषयकनिश्चयानन्तरप्रसिद्धपर्वताद्यनुमितिषु अन्यत्र प्रसिद्धपक्षतावच्छेदकविशिष्टविषयकत्वावच्छिन्नसाध्यतावच्छेदकविशिष्टप्रकारकत्वघटितोभयाभाववत्त्वमक्षतमेवेति तत्र लक्षणसमन्वयः। न चाहार्यज्ञानमात्रप्रसिद्धस्य निर्वह्निपर्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकज्ञानत्वस्य विरोधिविषयकज्ञानप्रतिबध्यतावच्छेदकतया तादृशधर्मावच्छिन्ने वह्न्यादिप्रकारकत्वस्याभावे विरोधिविषयताप्रयुक्तत्वमप्रामाणिकमिति वाच्यम्। तादृशज्ञानत्वस्य

प्रतिबध्यतानवच्छेदकत्वेऽपि तद्व्यापकस्य पर्वतत्वावच्छिन्ने वह्नित्वावच्छिन्नाभावप्रकारकज्ञानत्वस्यैव वह्निविशिष्टपर्वतविषयकनिश्चयप्रतिबध्यतावच्छेदकतया व्यापकाभावप्रयोजकस्य सुतरां व्याप्याभावप्रयोजकतया तादृशविशिष्टविशेष्यकत्वावच्छिन्नवह्न्यादिप्रकारकत्वाभावस्य तादृशबुद्धिविषयिताप्रयुक्तत्वस्यावश्यकत्वात्। न च विरोधिज्ञानासत्त्वेऽपि निर्वह्निः पर्वतो वह्निमानित्यादिज्ञानस्यानाहार्यस्यानुत्पत्त्या इच्छादिघटिततादृशाहार्यज्ञानसामग्र्यभावस्यैव निर्वह्निविशिष्टवह्न्यादिवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वं न तु विरोधिविषयत्वस्य क्वचिदप्यक्लृप्तत्वादिति वाच्यम्। अभावाधिकरणतायामेव विरोधिविषयिताप्रयुक्तत्वस्य निवेश्यतया अधिकरणतानां स्वाभावाभेदेऽप्यधिकरणभेदेन भिन्नतया विरोधिज्ञानानन्तरोत्पन्नज्ञाने तादृशवैशिष्ट्यावगाहित्वाभावाधिकरणतायां विनिगमनाविरहेण पूर्वज्ञानीयविरोधिविषयताया अपि प्रयोजकत्वात्। वह्निपदमप्युक्तादृशोभयाभावकूटत्वमित्यतावन्मात्रे कृते ह्रदो वह्न्यभाववानित्यादिज्ञानीयवह्न्यभावादिविशिष्टह्रदादिविषयिताया इव तदन्तःपातिवह्न्यभावत्वादिविशिष्टविषयताया अपि प्रतिबन्धकतावच्छेदककोटिप्रविष्टतया प्रतिबध्यतावच्छेदकस्य ह्रदत्वादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वस्य विरहप्रयोजकतया बाधादेकदेशे वह्न्यभावादिरूपविशिष्टेऽतिव्याप्तिरिति वह्निविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयताप्रयुक्तोभयाभाववत्त्वं निवेशितम्। न च यादृशविशिष्टविषयितासामान्यप्रयुक्तस्तादृशोभयाभावस्तत्त्वमित्येव सम्यक्, ह्रदत्वादिविशिष्टविषयतासामान्यान्तर्गतायां ह्रदत्वादिज्ञानीयविषयितायामुभयाभावप्रयोजकत्वासत्त्वादतिव्याप्तेरनवकाशादिति वाच्यम्। पाषाणमयो न वह्निमानित्यादिज्ञानविशिष्टस्य पर्वतः पाषाणमय इति ज्ञानस्य पर्वतो वह्निमानित्यादिज्ञानप्रतिबन्धकतया ज्ञानभेदेन विषयतानां भेदाभावात्, पाषाणमयत्वविशिष्टपर्वतादिविषयितासामान्यस्यैव उभयाभावप्रयोजकत्वात् पाषाणमयत्वविशिष्टपर्वतादावतिव्याप्तेर्दुर्वारत्वात्। ह्रदो वह्न्यभाववानित्यादिह्रदादिविषयकनिश्चयोत्तरोत्पन्नघटानुमितौ विरोधिविषयताप्रयुक्तोभयाभावसत्त्वात् केवलह्रदादावतिव्याप्तिरतः सामान्यपदं परिपूरितम्, तथा सति ह्रदादिनिश्चयानन्तरोत्पन्नानुमितिसामान्या-

स्वर्गतायां ह्रद इत्यादिनिश्चयानन्तरजात-ह्रदो वह्निमान् वह्निव्याप्य-
धूमवांश्च-इत्याद्यनुमितौ विरोधिविषयिताप्रयुक्तताद्दशोभयाभावा-
सत्त्वादव्याप्तिः । द्रव्यत्वादिना वह्न्यभावविशिष्टह्रदादिविषय-
कनिश्चयानन्तरमुक्तसमूहालम्बनानुमित्युत्पत्त्या तादृशविशिष्टस्यापि
दोषत्वानुपपत्तेरतो यत्पदं यद्रूपावच्छिन्नपरतयोपवर्णितम् । व-
ह्न्यभावविशिष्टह्रदादिविषयकस्य ह्रदो वह्निमान्नवेति ज्ञानस्या-
नन्तरं तादृशसमूहालम्बनानुमित्युत्पत्त्या तद्व्यापत्तावश्यमतो नि-
श्चयेति । अनाहार्याप्रामाण्यज्ञानानास्कन्दितसंशयान्यज्ञानपरम्, ते-
नाहार्यस्याप्रामाण्यज्ञानास्कन्दितस्यापि दोषविषयकनिश्चयस्यान-
न्तरं तादृशानुमितावपि न क्षतिः । दोषविषयकनिश्चयनाशे सति
तादृशानुमितेरुत्पत्त्या तद्दोषापत्तिरतो अव्यवधाननिवेशः । एव
दोषविषयकलौकिकनिश्चयाव्यवहितपूर्वमनुमित्युत्पत्त्या तद्दोष स्या-
दिति मतो उत्तरेति ।[1] तत्सामानाधिकरण्यमनुमितौ निवेश्यमतः
एकस्य बाधनिश्चयानन्तरमन्यस्यानुमित्युत्पत्तावपि न क्षतिः । बाध-
निश्चयानन्तरं पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्न-
साध्याद्यप्रकारकस्याहार्यस्य लौकिकस्य च प्रत्यक्षस्योत्पत्त्या
तादृशज्ञानसामान्यमुपेक्ष्यानुमितिसामान्यनिवेशः ।

1. यत्साध्यकयत्पक्षकयद्धेतुकस्थले यादृशदोषविषयकनिश्चयानन्त-
र कस्याप्यनुमितिर्न जाता तत्र तादृशानुमितेरप्रसिद्ध्याऽव्याप्ति-
तोऽनुमितिस्थलेऽनाहार्यदोषविशेषाजन्यज्ञानं निवेश्य कल्पान्तर-
माह अनाहार्येति । तथा च तादृशानुमित्यप्रसिद्धिर्यत्र तत्र तथा-
विधमानसोपनीतभानात्मकमादायैव लक्षणं सङ्गमनीयमिति भावः ।
बाधादिनिश्चयानन्तरमाहार्यसाध्यादिप्रकारकस्योत्पत्त्या असम्भवोऽ-
व्याप्तिर्वेत्यतो अनाहार्येति । शङ्खो न पीत इत्यादिनिश्चयानन्तरं शङ्खा-
दौ पीतत्वादिप्रकारकस्य दोषविशेषजन्यचाक्षुषादेरुत्पत्त्या शङ्खः पीतः
शङ्खत्वादित्यादिस्थलीयबाधादावव्याप्तिरतो मानसेति । मानसपदं
दोषविशेषाजन्यज्ञानपरम् । तेन नाहं गौर इत्यादिनिश्चयानन्तरं मि-
थ्याज्ञानजन्यवासनादिरूपदोषजन्यस्यात्मविशेष्यकगौरत्वादिप्रकार-
कमानसस्योत्पत्तावपि अहं गौरः आत्मत्वादित्यादिस्थलीयबाधादौ
नाव्याप्तिः । एतेन यादृशसाध्यपक्षहेतुकस्थले दोषविषयकनिश्चया-
नन्तरं विरोधिसामग्र्यादिवशेन मानसज्ञानं कदापि न जातं तत्रा-

व्याप्तिरित्यपि निरस्तम् । तत्राप्यनुमितिशाब्दबोधादिकमादाय लक्षणगमनसम्भवात् । पक्षतावच्छेदकेत्यादिदलद्वयनिवेशव्यावृत्तिः पूर्वोक्तरीत्या बोध्या । विरोधिविषयताप्रयुक्तत्वनिवेशनप्रयोजनं स्वयमेव वक्ष्यति । यत्र विषयविशेषे समूहालम्बनज्ञानं न कस्यापि जातं तत्र पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहित्वविशिष्टसाध्यव्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहित्वाभावरूपविशिष्टाभावमुपेक्ष्योभयाभावः स्वीकृतः । तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपविशिष्टविषयिताव्यापकं तद्रूपावच्छिन्नस्य दोषत्वमित्यस्य समत्वेपि यथासन्निवेशं न वैयर्थ्यम् ।

ननु काञ्चनमयः पर्वतो वह्निमान्धूमादित्यादौ पक्षतावच्छेदकविशिष्टपक्षाद्यप्रसिद्ध्या विशिष्टपक्षे विशिष्टसाध्यादिवैशिष्ट्यावगाहित्वाद्यप्रसिद्धिरित्याश्रयासिद्ध्यादावव्याप्तिरित्यत आह पक्षतावच्छेदकेति । आदिपदात्साध्यतावच्छेदकवैशिष्ट्यादिपरिग्रहः । वैशिष्ट्यमिति । तत्प्रकारेण ज्ञायमानत्वमित्यर्थः । तथाच पर्वतादेः काञ्चनमयत्वादिवैशिष्ट्यस्य वास्तविकस्य विरहेऽपि तेन रूपेण ज्ञायमानत्वमादाय लक्षणसमन्वय इति भावः । न च ह्रदो न वह्निमानित्यादिनिश्चयानन्तरं जायमाने ह्रदो द्रव्यं जलमयं वह्निमदित्याकारकसमूहालम्बने ह्रदत्वादिना ज्ञायमाने वह्न्यादिवैशिष्ट्यावगाहित्वसत्त्वादसम्भव इति वाच्यम् । पक्षतावच्छेदकावच्छिन्ना या पक्षनिष्ठविशेष्यता तन्निरूपिता या साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारता या च साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारता तन्निरूपितव्याप्यत्वप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नहेतुप्रकारता तत्प्रतियोगितयोरवगाहितात्वद्वयेन विवक्षणात् । विशिष्टविषयताऽप्रसिद्धावपि पर्वतादौ काञ्चनमयत्वाद्यवगाहिभ्रमविषयतया व्यधिकरणकाञ्चनमयत्वाद्यवच्छिन्नायाः प्रसिद्धा लक्षणसमन्वयात् । व्याप्तिप्रकारतास्थाने च निरूप्यनिरूपकभावापन्नव्याप्तिघटकतत्तत्पदार्थप्रकारता निवेशनीया, तेन धूमवान्वह्नेरित्यादौ वह्निव्यापकधूमसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धावपि न क्षतिः ।

नन्वत्र व्याप्तिपदेनान्वयव्याप्तिश्चेदुच्यते तदा व्यतिरेकव्याप्तिज्ञानविरोधिनि साध्यादिनिष्ठाभावप्रतियोगित्वादिरूपानुपसंहारित्वेऽव्याप्तिस्तादृशज्ञानस्यान्वयज्ञानाविरोधित्वात् । व्यतिरेकव्याप्ति-

विवक्षणे च हेतुनिष्ठसाध्याभाववद्वृत्तित्वसाध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादावव्याप्तिरूपज्ञानस्य ग्राह्याभावावगाहितया व्यतिरेकव्याप्तिज्ञानविरोधित्वं मानाभावात आह व्याप्तिश्चेति । अन्वयतः—अन्वयनिरूपिता प्रकृतहेतुनिष्ठा प्रकृतसाध्यनिरूपितेति यावत् । सा चात्यन्तान्योन्याभावभेदेन भिन्ना अव्यभिचरितसामानाधिकरण्यरूपेण नानाविधैव ग्राह्या । अतोऽत्यन्ताभावादिगर्भव्याप्तिज्ञाने अन्योन्याभावादिगर्भव्यभिचारज्ञानस्य व्यापकताज्ञाने साध्याभाववद्वृत्तित्वादिज्ञानस्य ग्राह्याभावानवगाहितयाऽविरोधित्वेऽपि न क्षतिः । व्यतिरेकतः—व्यतिरेकनिरूपिता साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा । ग्राह्या—व्याप्तिपदेन विवक्षणीया, तथा च तत्र व्याप्तिप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताप्रतियोगित्वकूटाभावो निवेशनीय इति भावः ।

ननु निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वमेवाप्रसिद्धमिति कथं लक्षणसमन्वय इत्यत आह तादृशावगाहित्वप्रसिद्धिरिति । आहार्यज्ञान एवेति । निर्वह्नित्वविशिष्टे वह्निप्रत्यक्षं जायतामित्याकारकेच्छाजन्यप्रत्यक्ष एवेत्यर्थः ।

विरोधिविषयताप्रयुक्तत्वनिवेशप्रयोजनमाह एवञ्चेति । विरोधिविषयताप्रयुक्तत्वनिवेशने चेत्यर्थः । न क्षतिः—न निर्वह्निः पर्वतो वह्निमानित्यादौ घटादावतिव्याप्तिः, तस्य—घटादिनिश्चयस्य—विरोध्यविषयत्वात्—स्वानन्तरानुमितिसामान्यनिष्ठतादृशोभयाभावप्रयोजकविरोधिविषयताकत्वविरहात् । वह्निमत्पर्वताविधेयकसमूहालम्बनात्मकघटादिनिश्चयानन्तरजातज्ञाननिष्ठतादृशोभयाभाववत्त्वस्य तज्ज्ञानीयविरोधिविषयताप्रयुक्तत्वेऽपि घटादिनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गतसमूहालम्बनात्मकघटादिनिश्चयाव्यवहितोत्तरानुमितौ विरोधिविषयताप्रयुक्तोभयाभाववत्त्वविरहादतिव्याप्तिरिति भावः । प्रयोज्यप्रयोजकभावश्चानुभवसिद्धः स्वरूपसम्बन्धविशेषः ।

विरोधिपदप्रयोजनमाह एवमिति । अनुमितावपीति । न क्षति, तस्य विरोध्यविषयकत्वादित्यनुषज्यते । न क्षतिः—न साध्यवत्पक्षेऽतिव्याप्तिः । विरोधिविषयतापदेन तादृशोभयाभावप्रतियोगिताव-

च्छेदककोटौ यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टं तद्रूपावच्छिन्नविषयितानिरूपिततद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयितायाः साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयितान्यविषयितायाः वा विवक्षितत्वादिति भावः । न च सिषाधयिषाधीनायां साध्यनिश्चयानन्तरसमूहालम्बनानुमितौ तादृशोभयाभावासत्त्वात् सिद्धिविषयेऽतिप्रसङ्ग एव नास्ति, एवं पक्षे साध्यनिश्चयोत्तरं तदतिरिक्ताविषयकसाध्यविधेयकानुमितेरनुत्पादेऽपि पक्षांशे साध्यांशे वा अधिकावगाहिन्या अनुमितेस्साध्यधर्मितावच्छेदकतापर्याप्तत्वावच्छिन्नधर्मिताकान्यविधेयकानुमितेः साध्यावच्छिन्नपक्षविधेयकानुमितेश्चोत्पत्त्या तत्रोभयाभावासत्त्वादपि नातिप्रसङ्गप्रसक्तिरिति वाच्यम् । यत्र सिषाधयिषाबलात् सिध्युत्तरं तादृशानुमितिः कदापि न जाता तत्रैवातिव्याप्तिसम्भवात् ।

द्वितीयकल्पे विषयितामात्रं निवेश्यं न तु विरोधिविषयतापर्यन्तमित्याशयेनाह मानसत्वेनेति । साध्यनिश्चयस्येत्यादिः । मेयत्वविशिष्टव्यभिचारादिवारणाय यथाश्रुतविशिष्टान्तराघटितत्वनिवेशे उपदर्शितव्यभिचारघटितबाधाद्यव्याप्त्या विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यतादृशोभयाभावप्रयोजकाभावाधिकरणताकत्वरूपं तादृशविशेषणं निवेश्यम् । मेयत्वविशिष्टव्यभिचारादिविषयिताप्रयोज्याया उक्तोभयाभावप्रयोजकव्याप्यावगाहित्वाभाववत्तायाः शुद्धव्यभिचारादिविषयिताप्रयोज्यत्वनियमेन न मेयत्वविशिष्टव्यभिचारादौ विशिष्टान्तरविषयित्वाप्रयोज्यस्वविषयिताप्रयोज्यनिरुक्तोभयाभावप्रयोजकभावाधिकरणताकत्वमिति नातिप्रसङ्गः । उपदर्शितव्यभिचारघटितबाधादिविषयिताप्रयोज्यायाः पक्षे साध्यावगाहित्वाद्यभावाधिकरणतायास्तद्घटकव्यभिचारादिविषयित्वाप्रयोज्यत्वेन तत्संग्रहः । न च विशिष्टपक्षे विशिष्टसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदिकायास्तादृशबाधादिविषयतान्तःपातिव्यभिचारादिविषयितायाः अपि तादृशबाधादिविषयताप्रयोज्यायां विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यावगाहित्वाद्यभावाधिकरणतायां प्रयोजकतया तादृशबाधादेर्दुःसङ्ग्रह इति वाच्यम् । यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वनिवेशेन तत्र तत्सङ्ग्रहसम्भवात् ।

व्यभिचारादिविषयितायाः बाधविषयतान्तर्भावितविषयतामात्रघटितरूपेणैवोपदर्शितसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकतया तेनैव रूपेण तादृशसाध्यवत्ताद्विरहप्रयोजकत्वात्, तादृशस्य च रूपस्य बाधादिविषयतान्तर्भावितव्यभिचारादिविषयतासाधारण(स्य) व्यभिचारादिरूपविशिष्टविषयताव्यापकत्वात्, तद्व्यापकरूपावच्छिन्नाप्रयोज्यत्वस्योक्तबाधादिविषयताप्रयोज्यउक्तसाध्यवत्ताद्विरहाभाववत्तायामक्षतत्वात्। मेयत्वविशिष्टव्यभिचारादिविषयताया येन रूपेण व्याप्त्यादिग्रहप्रतिबन्धकतावच्छेदकता तद्रूपेण निरुक्तविषयताव्यापकेन मेयत्वविशिष्टव्यभिचारादिविषयतान्तर्भावितव्यभिचारादिविषयतायाः मेयत्वविशिष्टव्यभिचारादिविषयताप्रयोज्यव्याप्त्यवत्ताद्विरहाभाववत्तायां नियमतः प्रयोजकत्वादतिप्रसङ्गाशङ्कायाः बाधसत्प्रतिपक्षादिविषयकज्ञानस्य नानाविधबाधादिविषयकज्ञानस्य वाऽनन्तरं जातायां घटाद्यनुमितौ बाधादिविषयताप्रयोज्याया अभावाधिकरणता तस्याः विशिष्टान्तरविषयताप्रयोज्यत्वेऽपि (२४)पूर्ववृत्तिबाधादिविरोधिविषयताया एव स्वनिष्ठप्रतिबध्यतावच्छेदकाभावाधिकरणताप्रयोजकत्वात्। एकैकविधबाधादिमात्रज्ञानानन्तरजातज्ञाने, या तत्तद्बाधादिविषयताप्रयोज्याविरहाभावाधिकरणता तस्या विशिष्टान्तरविषयित्वाप्रयोज्यतया बाधादौ लक्षणसमन्वयः। व्यभिचारघटितबाधादिविषयिताप्रयोज्याया दीधितिकारोक्तोभयाभावाधिकरणताया व्याप्त्यवत्ताद्विरहप्रयोज्यत्वेन यत्किञ्चिद्विशिष्टान्तरविषयिताव्यापकरूपावच्छिन्नतादृशविषयतान्तर्भावितव्यभिचारादिविषयताप्रयोज्यत्वनियमात्तत्सङ्ग्रहाय तादृशोभयाभावप्रयोजकाभावाधिकरणतापर्यन्तनिवेशः। तथासति दर्शितोभयाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयताप्रयोज्यत्वनियमेऽपि तादृशोभयाभावप्रयोजकसाध्यादिमत्ताद्विरहाभावाधिकरणताया उक्तरूपावच्छिन्नव्यभिचारादिविषयित्वाप्रयोज्यत्वेन तादृशबाधादेः सङ्ग्रहाद्बाधादिविषयताप्रयोज्यस्य साध्यादिमत्ताद्विताविरहस्य सत्प्रतिपक्षादिरूपविशिष्टान्तरविषयताप्रयोज्यत्वनियमादसम्भवः स्यादित्युभयाभावप्रयोजकाभावे विशिष्टान्तराविषयत्वाप्रयोज्यत्वमनिवेश्य तादृशाभावाधिकरणतायां तन्निवेशः। तथा सत्यधिकरणताया अधिकरणभेदेन भिन्नतया पूर्ववर्तिनिष्ठप्रतिबन्धकता-

वच्छेदकधर्मस्यैव तदुत्तरोत्पन्ननिष्ठप्रतिबध्यतावच्छेदकधर्माभावाधिकरणताप्रयोजकत्वेनैव बाधादिनिश्चयोत्तरोत्पन्नानुमितिनिष्ठसाध्यादिमत्त्वावगाहित्वाभावाधिकरणतायां सत्प्रतिपक्षान्यादृशबाधादिविषयताया अप्रयोजकत्वेन सामञ्जस्यात् ।)

अथैतादृशोभयाभावघटितलक्षणकरणेऽपि केवलनिर्वह्नित्वादिपक्षकवह्न्यादिसाध्यकस्थलीयनिर्वह्निनिष्ठवह्न्यभावादिरूपबाधादिदोषेऽव्याप्तिः–तादृशबाधादिस्थलीयवह्न्यभावरूपबाधज्ञानस्याप्रतिबन्धकतया तदीयविषयताया प्रतिबन्धकतानवच्छेदकतया तथाविधोभयाभावाप्रयोजकत्वात् । तस्य दोषत्वानुपगमे च तादृशहेतौ दुष्टत्वव्यवहारानुपपत्तेः । इष्टापत्तौ च निर्वह्निः पर्वतो वह्निमानित्यादावपि तत्सम्भवेनैतादृशप्रयासवैफल्याच्च । न च तत्राभाववान्वह्निमानित्यनाहार्यज्ञानस्य प्रसिद्ध्या तत्प्रतिबन्धकीभूतस्याभाववान्निर्वह्निरित्यादिज्ञानस्य विषय एव दोष इति वाच्यम् । अभाववत्त्वसामानाधिकरण्येन निर्वह्नित्वग्रहस्य तादृशवह्निमत्त्वग्रहाविरोधित्वात् । अभाववत्त्वावच्छेदेन वह्न्यादिमत्ताग्रहाविरोधित्वेऽपि तादृशवह्न्यादिमत्त्वावगाहित्वस्य वह्न्यभावादिमत्त्वरूपपक्षतावच्छेदकविशिष्ट साध्यवैशिष्ट्यावगाहित्वाव्यापकतया तदवच्छिन्नप्रतिबन्धकतावच्छेदकविषयितायास्तथाविधोभयाभावाप्रयोजकत्वात् तद्विषयस्य दोषत्वानुपपत्तेः अभाववत्त्वावच्छेदेन निर्वह्नित्वग्रहस्य भ्रमरूपतया तद्विषयकविशिष्टस्यैवाप्रसिद्धेः । एवं वह्निमान्निर्वह्निरित्यादिस्थलीयदोषे निरुक्ताव्याप्तिः । वह्निमन्निष्ठवह्निमत्त्वादेरेव तत्र ज्ञापकसम्भवात्तद्विषयकज्ञानस्य च क्वचिदपि प्रतिबन्धकत्वायोगात् । एव यत्र निर्वह्निः पर्वतो वह्निमानित्यादौ पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादिमत्त्वस्य पक्षतावच्छेदकघटकता तत्र पर्वतत्वादिसामानाधिकरण्येन वह्न्यादिमत्त्वं न दोषः । विशिष्टपक्षग्रहाद्यविरोधित्वेनाश्रयासिद्ध्यादिरूपतानुपपत्तेः, उक्तरीत्यतल्लक्षणानाक्रान्तत्वाच्च । पर्वतत्वावच्छेदेन वह्न्यादिमत्त्वमप्रसिद्धं वह्निशून्यपर्वतादेरपि सत्त्वात् । नापि पर्वतत्वादिसामानाधिकरण्येन पर्वतत्वावच्छेदेन वा वह्न्यभावादिमत्त्वरूपबाधादिर्दोषः–तज्ज्ञानस्य पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यवगाहित्वव्यापकविषयिताघटितधर्मावच्छिन्नाप्रतिबन्धकतया तत्र लक्षणगमनायोगात् । नापि प-

पर्वतत्वावच्छेदेन वह्न्यभावाद्वह्निमत्त्वम् असिद्धत्वादिति तत्र न कोपि दोषः स्यात् ।

यत्तु प्रयुक्तत्वं व्यापकत्वं । यद्विषयकनिश्चयनिष्ठविरोधिविषयतायाः उभयाभावव्याप्यत्वं च स्वाश्रयतादृशनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन, तादृशसम्बन्धलाभार्थं तदुत्तरमनुमितावित्युक्तम् । एवं च विरोधिविषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितिव्यापकत्वं तादृशाभाव इति पर्यवसितम् । एवं च निर्वह्निर्वह्निमानित्यादिस्थलीयबाधादेर्विषयितायां स्वरूपसम्बन्धरूपोभयाभावप्रयोजकत्वासंभवेपि निरुक्तोभयाभावप्रतियोगितावच्छेदककोटौ वह्न्याद्यविशेष्यकत्वरूपावच्छिन्नप्रकारकत्व निविष्ट तद्रूपावच्छिन्नविशेष्यकत्वतद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरकत्वस्यैव विरोधिविषयितार्थकतया तत्र लक्षण सुसमन्वयमेव तादृशप्रयोजकत्वस्यानिवेशात् । न चैवं तत्र वस्तुगत्याऽतिरिक्तायास्तुर्यांशे तादृशोभयाभावस्य विरोधिविषयकसमूहालम्बनरूपघटादिविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकताया अक्षतत्वादिति वाच्यम् । विरोधिविषयतातिरिक्तवृत्तियद्विषयताशालिनिश्चयस्य निश्चयान्तरेण विवक्षितत्वात् । घटादिविषयतायास्तत्र निरुक्तविरोधिविषयतातिरिक्तत्वविरहात् । न चैव विरोधिविषयतातिरिक्तवृत्तिर्यदीयविषयिता तत्त्वमित्येतावतैव सामञ्जस्ये दोषवैयर्थ्यमिति वाच्यम् । यत्र पर्वतादिसामानाधिकरण्येन वह्न्यादेः साध्यता तत्र पर्वतत्वादिसामानाधिकरण्येन वह्न्याद्यभावादिसत्त्वस्य विषयिताया निरुक्तविरोधिविषयितातिरिक्ततया तत्रातिव्याप्तिवारकतयाऽस्य सार्थक्यात् । तदुपादाने तादृशवह्न्यभावादिसत्त्वविषयनिश्चयानन्तरं पर्वतत्वादिसामानाधिकरण्येन वह्न्याद्यनुमित्युत्पत्त्या तादृशानुमितौ तथाविधोभयसत्त्वेनाविव्याप्यकत्व-काशादिति ।

तत्तुच्छम् । निर्वह्निः पर्वतो वह्निमानित्यादौ यत्र पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादेः पक्षतावच्छेदकघटकता । पर्वतत्वसामानाधिकरण्येन वह्न्यादिमत्तस्य विशिष्टपक्षप्रत्यक्षविरोधित्वेनाश्रयासिद्ध्यन्तर्भावकस्य हेत्वाभासान्तरत्वासंभवेनासम्भवदोषप्रसङ्गस्य निरुक्तविरोधिविषयतातिरिक्तवृत्तिविषयिताकतयाऽतिव्याप्तेः ।

तादृशोभयाभावप्रतियोगितावच्छेदकगर्भे यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निवेश्यते तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकानुमितित्वावच्छिन्ननिरूपितप्रतिबन्धकतावच्छेदकत्वरूपविरोधित्वस्य विषयितायां निवेशे तु शेषवैयर्थ्यम्। उक्तरीत्या निर्वह्निर्वह्निमानित्यादिस्थलीयदोषेऽव्याप्तेश्च।

यत्तु पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयतैव विरोधिविषयतापदार्थः। तथा च यन्निरूपिततादृशविषयताशालिनिश्चयोत्तरानुमितित्वव्यापकः उभयाभावस्तत्त्वमिति समुदायार्थः। निश्चयत्वं च विशेषणविशेष्यतावच्छेदकभावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानत्वम्। कोटिद्वये विशेषणविशेष्यतावच्छेदकभावानापन्नत्वानिवेशान्निर्वह्निः पर्वतो वह्निमानित्यादौ पक्षतावच्छेदकविशिष्टसाध्यादिवैशिष्ट्यग्रहस्य एकत्र विरोधिद्वयप्रकारकत्वनियमेऽपि न तादृशवैशिष्ट्यावगाहिनिश्चयाप्रसिद्धिः। यदीयविषयिता तादृशनिश्चयावृत्तिस्तत्त्वमित्येतावत्युक्ते ह्रदो वह्निव्याप्यधूमवानित्यादौ ह्रदनिष्ठवह्न्यभावादिमत्त्वेऽतिव्याप्तिः। वह्न्यादिव्याप्यवत्तानिश्चयस्यापि वह्न्यादिनिश्चयवत् कार्यसहभावेन वह्न्यभावादिग्रहविरोधित्वाद्वह्न्यभावादिमत्त्वविषयितायास्तादृशनिश्चयावृत्तित्वादिति न शेषवैयर्थ्यमिति।

तदपि न। वह्निव्याप्यवान्वह्निव्याप्यव्याप्यवांश्च ह्रदो वह्न्यभाववानित्येतादृशाहार्यज्ञानोपगमे च वह्न्यभावादिमत्त्वविषयिताया वह्निव्याप्यादिमत्त्वनिश्चयवृत्तितया उक्तातिव्याप्त्यनवकाशेन शेषसार्थक्यानुपपत्तेः। वह्निमान्वह्निव्याप्यवांश्च ह्रदो वह्न्यभाववानित्येतादृशाहार्यसाध्यादिवैशिष्ट्यनिश्चये ह्रदो वह्निमानित्यादिस्थलीयबाधादिविषयितासत्त्वेनासम्भवप्रसङ्गाच्च। वह्न्यादिरूपधर्मितावच्छेदकानवच्छिन्नवह्न्यभावादिविशेषितह्रदादिनिरूपितविषयितायाः साध्यादिनिश्चयावृत्तित्वेऽपि घटादिनिरूपितविषयिताया अपि दोषविषयितावच्छिन्नाया विषयितायाः साध्यादिनिश्चयावृत्तितया घटाद्युदासीने अतिव्याप्तेर्वारणाय यादृशविशिष्टविषयितासामान्यं तादृशनिश्चयावृत्ति तादृशविशिष्टनिरूपितविषयिताया एव विरोधिविषयितेत्यनेन विवक्षणीयतयाऽप्रतीकारात्। अमान्यवृत्तिव-

द्वीयविषयितासामान्यं तादृशनिश्चयावृत्ति तदीयविषयिताया एव विपक्षत्वेन निवेशेऽपि विरोधिव्याप्तिपक्षताशालिनिश्चयोत्तरानुमितिसामान्ये द्वयोर्व्यतिरेक इत्यभिधाय यद्विषयकनिश्चयस्येत्यादिकमाभिधानस्य ग्रन्थकाररीतिविरुद्धत्वात् ।

एतेन विषयिताया उभयाभावप्रयोजकत्वं तादृशोभयाभावप्रतियोगितावच्छेदकाय यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वघटित तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकत्वविशेषितैतदनुमितित्वेनानाहार्यलौकिकसन्निकर्षाजन्यज्ञानत्वेन वाऽवच्छिन्ना या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकत्वम् । एवं च यादृशविशिष्टविषयिता निरुक्तयावदुभयाभावप्रयोजकताश्रयत्वं तादृशत्वमेव लक्षणम् । विषयितायां विरोधित्वादिकथनं तु स्वरूपाख्यानमात्रमिति प्रलपितमप्यनादेयम् । निर्वह्निर्वह्निमानित्यादिस्थलीयदोषस्यैकयुक्त्या तु संग्रहत्वात् ।

अत्र केचित् कश्चिदित्यन्तादिमकल्पे दीधितिकृतां न निर्भरः । निर्वह्निर्वह्निमानित्यादिस्थलीयदोषासंग्रहादपरस्यादिमकल्पे कश्चिदित्यनेनैव,अत्रापि कल्पे वदन्तीत्यनेन सूचितत्वात् । निर्भरस्तु केचिदित्यादिकल्प एव, अत एव तत्र प्रकर्षबोधनाय प्राहुरित्युक्तमिति ।

परे तु घटाद्यभावादिधर्मितावच्छेदककवह्न्यादिज्ञानं प्रति तद्धर्मितावच्छेदककवह्न्यभावादिमत्ताज्ञानप्रतिबन्धकत्वे कल्पनीये धर्मितावच्छेदकभेदेन तत्कल्पनाप्रयुक्तलाघवानुरोधेन धर्मितावच्छेदकधर्मानिवेशेन अनाहार्यवह्न्यादिविशिष्टबुद्धित्ववह्न्यभावादिनिश्चयत्वाभ्यां समानधर्मितावच्छेदकत्वप्रत्यासत्त्यैव प्रतिबन्धकभावः कल्प्यते । एवं च तद्देशनिष्ठस्य पूर्ववर्तिप्रतिबन्धकनिरूपितप्रतिबन्धकतावच्छेदकसम्बन्धस्य उत्तरवर्तिनिष्ठप्रतिबध्यतावच्छेदकसम्बन्धेन तद्देशसम्बन्धित्वं प्रति प्रयोजकतया वह्न्यभावादिप्रकारकज्ञानीयधर्मितावच्छेदकतावद्विषयतायास्तदुत्तरोत्पन्नाहार्यवह्न्यादिप्रकारकज्ञानस्य घटाभावादिधर्मितावच्छेदककत्वविरहप्रयोजकत्वात् घटाभावादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वविरहस्य,घटाभावादिधर्मितावच्छेदककवह्न्यभावादिप्रकारकनिश्चयीयविषयताप्रयुक्तत्वमक्षतमेवेति । तादृशनिश्चयविषयस्य दोषत्वमव्याहतमेव । न च धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या विपरीत-

ज्ञानस्य प्रतिबन्धकत्वे निर्वह्निविशेष्यकवह्निमत्त्वज्ञं मे जायतामित्याकारकेच्छाजन्यस्य निर्वह्निर्वह्निमान्घटाभाववांश्च वह्निमानित्याद्याहार्यज्ञानस्य विपरीतज्ञानप्रतिबध्यतावच्छेदकानाक्रान्ततया घटाभाववान्वह्न्यभाववानित्यादिनिश्चयकाले तथाविधेच्छासत्त्वे घटाभावविशिष्टविशेष्यकवह्निज्ञानं मे जायतामित्याकारकेच्छां विनैव तादृशज्ञानापत्तिरिति वाच्यम्। यतः सामान्यतो वह्न्यादिज्ञानेच्छाविशिष्टान्यत्वरूपमनाहार्यत्वं न प्रतिबध्यतावच्छेदककोटौ निवेशनीयम्, किन्त्वाहार्यज्ञानोपपत्त्यर्थं विशेष्यतानिष्ठं यत्स्वविशेष्यतावच्छेदकत्वं — तदवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यादिज्ञानेच्छाविरहस्य या स्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणता तद्विशिष्टधर्मितावच्छेदकताया एव प्रतिबध्यतावच्छेदकसम्बन्धत्वमुपेयते तादृशेच्छाविरहस्य प्रतिबन्धकविशेषणत्वमेव वा विशेषणताविशेषधर्मितावच्छेदकताघटितसामानाधिकरण्यसम्बन्धेनोपगन्तव्यम्, उक्तस्थले च घटाभावादौ तादृशेच्छाविरहस्य सत्त्वान्नोक्तापत्तिः । अन्यत्राधिकमनुसन्धेयमिति वदन्ति।।

निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषसाधारण्याय प्रकारान्तरेण वर्णयतां केषाञ्चिन्मतमाह तादृशपक्ष इति । पक्षतावच्छेदकाविशिष्टपक्ष इत्यर्थः। तादृशसाध्य इति । साध्यतावच्छेदकविशिष्टसाध्येत्यर्थः। तादृशहेत्विति । हेतुतावच्छेदकविशिष्टहेत्वित्यर्थः। ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानमिति योजना । ज्ञानं ज्ञानसामान्यम्, तेन घटादिविषयकस्य कस्यचित्समूहालम्बनस्य तादृशज्ञानविरोधिवाधादिविषयकत्वेपि नातिप्रसङ्गः। स्वावच्छिन्नविषयकत्वव्यापकतादृशज्ञानविरोधिविषयिताकधर्मवत्त्वमिति फलितार्थः।

अत्र च विषयितानिष्ठं स्वरूपसम्बन्धरूपतादृशज्ञानविषयविषयकग्रहप्रतिबन्धकतावच्छेदकत्वात्मकतादृशज्ञानविरोधित्वमेव निवेशनीयं न तु विषयनिष्ठं निर्वाच्यतादृशज्ञानविरोधित्वं तस्यैव लक्षणत्वसम्भवेन शेषवैयर्थ्यप्रसङ्गात्। अत्र च विषयनिष्ठस्य निर्वाच्यतादृशज्ञानविरोधित्वस्यैतदपेक्षया लघुतया तदेवाह , तादृशज्ञानविरोधित्वं चेति । तादृशज्ञानविरोधित्वं यदि तादृशज्ञानप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मवत्त्वं तदा पूर्वंजि-

दीयविषयितासामान्यं तादृशनिश्चयावृत्ति, तदीयविषयिताया एव विवक्षणेन निर्वाहेऽपि विरोधिवद्विषयताशालिनिश्चयोत्तरानुमितिसामान्ये द्वयोर्व्यतिरेक इत्यभिधाय वह्निविषयकनिश्चयस्येत्यादिवाक्याभिधानस्य ग्रन्थकाररीतिविरुद्धत्वात् ।

एतेन विषयिताया उभयाभावप्रयोजकत्वं तादृशोभयाभावप्रतियोगितावच्छेदकत्वं यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वघटितं तद्रूपावच्छिन्नविशेष्यकतत्संसर्गकतद्रूपावच्छिन्नप्रकारकत्वविशेषितेनानुमितित्वेनानाहार्यलौकिकसन्निकर्षाजन्यज्ञानत्वेन वाऽवच्छिन्ना या प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकत्वम् । एवं च यादृशविशिष्टविषयिता निरुक्ततथाविधोभयाभावप्रयोजकताश्रयस्तादृशत्वमेव लक्षणम् । विषयितायां विरोधित्वादिकथनं तु स्वरूपाख्यानमात्रमिति प्रलपितमप्यनादेयम् । निर्वह्निर्वह्निमानित्यादिस्थलीयदोषस्योक्तयुक्त्या दुःसंग्रहत्वात् ।

अत्र केचित् कश्चिदित्यन्ताग्रिमकल्पे दीधितिकृतां न निर्भरः । निर्वह्निर्वह्निमानित्यादिस्थलीयदोषासंग्रहणास्वरसस्याग्रिमकल्पे कश्चिदित्यनेनैव, अत्रापि कल्पे वदन्तीत्यनेन सूचितत्वात् । निर्भरस्तु केचिदित्यादिकल्प एव, अत एव तत्र प्रकर्षबोधनाय प्राहुरित्युक्तमिति ।

परे तु घटाद्यभावादिधर्मितावच्छेदककवह्न्यादिज्ञानं प्रति तद्धर्मितावच्छेदककवह्न्यभावादिमत्ताज्ञानप्रतिबन्धकत्वे कल्पनीये धर्मितावच्छेदकभेदेन तत्कल्पनाप्रयुक्तलाघवानुरोधेन धर्मितावच्छेदकधर्मानिवेशेन अनाहार्यवह्न्यादिविशिष्टबुद्धित्ववह्न्यभावादिनिश्चयत्वाभ्यां समानधर्मितावच्छेदकत्वप्रत्यासत्त्यैव प्रतिबन्धकभावः कल्प्यते । एवं च तद्देशनिष्ठस्य पूर्ववर्तिप्रतिबन्धकनिरूपितप्रतिबन्धकतावच्छेदकसम्बन्धस्य, उत्तरवर्तिनिष्ठप्रतिबध्यतावच्छेदकसम्बन्धेन तद्देशासम्बन्धित्वं प्रति प्रयोजकतया वह्न्यभावादिप्रकारकज्ञानीयधर्मितावच्छेदकताख्यविषयतायास्तदुत्तरोत्पन्नाहार्यवह्न्यादिप्रकारकज्ञानस्य वह्न्यभावादिधर्मितावच्छेदकत्वविरहप्रयोजकत्वात् वह्न्यभावादिविशिष्टे वह्न्यादिवैशिष्ट्यावगाहित्वविरहस्य वह्न्यभावादिधर्मितावच्छेदककवह्न्यभावादिप्रकारकनिश्चयीयविषयताप्रयुक्तत्वमक्षतमेवेति, तादृशनिश्चयविषयस्य दोषत्वमप्याहतमेव । न च, धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या विपरीत-

ज्ञानस्य प्रतिबन्धकत्वे निर्वह्निविशेष्यकवह्निमत्पक्षं मे जायतामित्याकारकेच्छाजन्यस्य निर्वह्निर्वह्निमान्घटाभाववांश्च वह्निमानित्याद्याहार्यज्ञानस्य विपरीतज्ञानप्रतिबध्यतावच्छेदकानाक्रान्ततया घटाभाववान्वह्न्यभाववानित्यादिनिश्चयकाले तथाविधेच्छासत्त्वे घटाभावविशिष्टविशेष्यकवह्निज्ञानं मे जायतामित्याकारकेच्छां विनैव तादृशज्ञानापत्तिरिति वाच्यम् । यतः सामान्यतो वह्न्यादिज्ञानेच्छाविशिष्टान्यत्वरूपमनाहार्यत्वं न प्रतिबध्यतावच्छेदककोटौ निवेशनीयम्, किन्त्वाहार्यज्ञानोपपत्त्यर्थं विशेष्यतानिष्ठं यत्स्वविशेष्यतावच्छेदकत्व-तदवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यादिज्ञानेच्छाविरहस्य वा स्वाव्यवहितप्राक्क्षणावच्छिन्नाधिकरणता वह्निविशिष्टधर्मितावच्छेदकताया एव प्रतिबध्यतावच्छेदकसम्बन्धत्वमुपेयते तादृशेच्छाविरहस्य प्रतिबन्धकविशेषणत्वमेव वा विशेषणताविशेषधर्मितावच्छेदकताघटितसामानाधिकरण्यसम्बन्धेनोपगन्तव्यम्, उक्तस्थले च घटाभावादौ तादृशेच्छाविरहस्य सत्त्वान्नोक्तापत्तिः । अन्यत्राधिकमनुसन्धेयमिति वदन्ति ।

निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषसाधारण्याय प्रकारान्तरेण वर्णयतां केषाञ्चिन्मतमाह तादृशपक्ष इति । पक्षतावच्छेदकविशिष्टपक्ष इत्यर्थः । तादृशसाध्य इति । साध्यतावच्छेदकविशिष्टसाध्येत्यर्थः । तादृशहेत्विति । हेतुतावच्छेदकविशिष्टहेत्वित्यर्थः । ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानमिति योजना । ज्ञानंज्ञानसामान्यम्, तेन घटादिविषयकस्य कस्यचित्समूहालम्बनस्य तादृशज्ञानविरोधिबाधादिविषयकत्वेऽपि नातिप्रसङ्गः । स्वावच्छिन्नविषयकत्वव्यापकतादृशज्ञानविरोधिविषयिताकधर्मवत्त्वमिति फलितार्थः ।

स्फुटयिष्यतार्थे । एवं पर्वतसमानाधिकरणनिर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयश्रोपात्रयासिभाष्वस्यमिति तन्निर्वह्नि तज्ज्ञानविरोधित्वं चेति। तद्विषयविषयकेति। तथा च निर्वह्निः पर्वतो वह्निमानित्यादौ तादृशज्ञानविरोधित्वासिद्धावपि तद्विषयविषयकस्य निर्वह्निः पर्वतो वह्निमानित्यादिज्ञानस्य प्रतिबन्धकं यद्वह्निमानित्यादिज्ञानं तद्विषयतामादायैव वह्निमत्पर्वतादिरूपतस्यलीयाऽऽसिद्धादौ लक्षणसमन्वयः।

अथ घटवद्भूतलादिरूपोदासीनपदार्थविषयकसमूहालम्बनात्मकपक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतद्व्याप्यहेतुप्रकारकज्ञानविषयकघटवद्भूतलादिज्ञानप्रतिबन्धकज्ञानविषयघटाभाववद्भूतलादावतिव्याप्तिः। न च पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यतावच्छेदकविशिष्टसाध्यतानिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारकग्रहत्वव्यापकविषयितावघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वावच्छिन्नविषयताकधर्मवत्त्वनिवेशान्न दोषः—घटवद्भूतलादिविषयितायास्तादृशग्रहत्वाव्यापकत्वादिति वाच्यम्। यतः पर्वतांशे वह्निमत्त्वावगाहिनो निर्वह्निः पर्वत इत्यादिज्ञानस्य या वह्निप्रकारकत्वाद्यनिरूपिता निर्वह्नित्वादिप्रकारतानिरूपितपर्वतादिविषयिता सैवाऽऽहार्यत्वविशिष्टतया वह्निमत्पर्वत इत्यादिज्ञानप्रतिबध्यतावच्छेदिका-तस्याश्च निर्वह्निः पर्वतो वह्निमानित्याद्याहार्यज्ञानसाधारण्ये मानाभावः—आहार्यज्ञानसामान्यस्तादृशविषयिताप्रयोजकत्वासिद्धेः, विपरीतज्ञानाभावघटितायास्तादृशविषयिताप्रयोजकत्वानाहार्यज्ञानसामान्याभावाहार्यज्ञानजनकत्वात्। तादृशग्रहत्वव्यापिका च वह्निमत्त्वादिप्रकारतानिरूपिता तादृशपर्वतादिविषयिता सा च न प्रतिबध्यतावच्छेदिकेति, निर्वह्नित्वादिप्रकारतानिरूपितपर्वतत्वादिविषयितात्वेन निर्वह्निः पर्वत इत्यादिज्ञानीयविषयितापि तथाविधग्रहत्वव्यापिकेति चेत्तर्हि विषयितात्वाविनापि तद्व्यापकतयोदासीनपदार्थवारणमशक्यम्।

1 मैवम्। यद्रूपावच्छिन्ने यद्रूपावच्छिन्नप्रकारकत्वस्यावच्छिन्ने ग्राह्यग्रहत्वव्यापकं तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नप्रकारकग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वावच्छिन्ननिरूपितविषयिताकधर्मवत्त्वस्य विवक्षणीयतया सर्वेषामप्रयादिरिति दिक्।

अत्र चास्वरससूचनाय केचिदिति । स चोक्तयुक्त्या निर्वह्निर्वह्निमानित्यादिस्थलीयदोषासङ्ग्रहेण । न च धर्मितावच्छेदकतात्प्रत्यासत्त्या वह्निप्रकारकज्ञानं प्रति वह्न्यभावप्रकारकज्ञानस्य प्रतिबन्धकतामते निर्वह्निर्वह्निमानित्येतादृशज्ञानसमानविषयक-पर्वतो वह्निमानित्याकारकानाहार्य-ज्ञानप्रतिबन्धकतामादाय लक्षणसमन्वयस्तत्रापि सम्भवतीति वाच्यम् । तादृशमताश्रयणे पर्वतो वह्निमानित्यादौ वह्न्यभाववद्वृत्तित्वादेर्दोषताप्रसङ्गात् ॥

(दी०) केचित्तु यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वमेकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वम् । स चातिरिक्त एवाऽन्योन्याभाव इति न वैयर्थ्यम् । पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण, व्यभिचारादेः साध्यादिभेदनियन्त्रितत्वात्, शब्दाभेद(मात्र)स्य चाकिञ्चित्करत्वादिति प्राहुः ।

(गा०) यादृशेति । सर्वत्र यद्रूपावच्छिन्नार्थकम् । तावदन्यान्यत्वमिति । अत्र च यादृशपक्षसाध्यहेतुस्थले यादृशदोषज्ञानस्य प्रतिबन्धकत्वं प्रसिद्ध्यति, यथा निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ वह्निविशिष्टपर्वतरूपाश्रयासिद्धिधूमाभावविशिष्टनिर्वह्निरूपस्वरूपासिद्ध्यादीनां तत्र तादृशदोषाणां ग्राह्याभावतद्व्याप्यघटकभेदेन विशेष्यविशेषणभावभेदेन च विभिन्नानामननुगतेन विशिष्टपक्षे विशिष्टसाधनवैशिष्ट्यग्रहविरोधित्वरूपासिद्धित्वादिनैव तावदन्यान्यत्वघटकभेदप्रतियोगिविधया निवेशः, न तु वह्निविशिष्टपर्वतत्वनिर्धूमत्वविशिष्टनिर्वह्निपर्वतत्वादिना प्रयोजनविरहात् । यादृशदोषविषयकज्ञानस्य प्रतिबन्धकत्वमप्रसिद्धम् यथा तत्स्थलीयस्य निर्वह्निर्वह्निमानित्यादिस्थलीयस्य च बाधादेर्ज्ञानस्य तादृशदोषाणामगत्या वह्न्यभावविशिष्टनिर्वह्नित्ववह्न्यभावव्याप्यविशिष्टनिर्वह्नित्वनिर्वह्निनिष्ठवह्न्यभावव्याप्यत्वादिनाऽननुगतरूपेणैव निवेशः । अत्र च विशिष्टभिन्नाभिन्नत्वस्य शुद्धविशेष्यसाधारणतया सर्वप्रकाशवदित्यादौ आकाशाभावविशिष्टसर्वादिरूपबाधादिभिन्नत्वस्याप्रसिद्धतया च तत्तद्विशिष्टनिरूपितविषयितान्यतमाविषयिता-

च्छिन्नप्रतियोगिताकश्च, अतिरिक्तः तत्तद्धर्मातिरिक्तः तथाच धर्मिभेदान्न वैयर्थ्यम् । तत्तद्धर्मावच्छिन्नभेदमात्रावच्छिन्नप्रतियोगिताकान्योन्याभावस्य स्वप्रतियोगितावच्छेदकीभूतभेदप्रतियोगितावच्छेदकतत्तद्धर्मस्वरूपत्वेपि तादृशभेदकूटावच्छिन्नप्रतियोगिताकभेदत्वस्य नानाधर्मेषु कल्पनापेक्षया तद्विशिष्टस्यैकस्यैव भेदस्य लाघवेन कल्पयितुं युक्तत्वादित्यभिप्रायः । एतच्च यथाश्रुताभिप्रायेण । तत्तद्धर्मावच्छिन्ननिरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वस्य लक्षणत्वेऽधिकरणविकासकतया विशेषणसार्थक्यमित्यवधेयम् ।

ननु साध्यादिभेदेन लक्षणभेदे ह्रदो वह्निमानित्यादिस्थलीयलक्षणस्य पञ्चहेत्वाभाससाधारण्यासम्भवात् तादृशलक्षणाक्रान्तानां पञ्चविधत्वोक्त्यसङ्गतिरित्यत आह पञ्चविधभेदोक्तिरिति । पञ्चविधत्वोक्तिरित्यर्थः । तत्सम्भवस्थलेति । यत्र पञ्चानामेव हेत्वाभासानां सम्भवो गौरश्वो घटादित्यादौ तत्तत्स्थलीयलक्षणाक्रान्तस्य पञ्चविधत्वाभिप्रायेणेत्यर्थः । नन्वेवं लक्षणाननुगमात् इतरभेदानुमाने भागासिद्धिरित्यत आह व्यभिचारादेरिति । साध्यादिभेदेन नियन्त्रितत्वात्—साध्यादिभेदनियन्त्रितलक्ष्यतावच्छेदकत्वकत्वात्तथाच लक्षणस्येव लक्ष्यतावच्छेदकस्याप्यननुगमान्न भागासिद्धिरिति भावः ।

नन्वेवमप्यनुगतोक्त्यसम्भवात् नायं प्रकारः साधीयानित्यत आह शब्दाभेदं(मात्र)स्येति । इदं पुनरिहावधेयम् । तावद्न्यान्यत्वम् इतरभेदानुमापकमेव न तु दोषपदप्रवृत्तिनिमित्तम्, तथासति निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इत्यादौ दुष्टपदस्य वह्न्यभावविशिष्टनिर्वह्नित्वाद्यवच्छिन्नान्यतमघटितार्थकतया निर्वह्नित्वविशिष्टे निर्वह्निः साधने इत्यादेरनन्वितार्थकत्वप्रसङ्गात् । अप्रसिध्या तस्य दृष्टचन्द्रादिनि निर्वह्नित्वविशिष्टविशेष्यकवह्न्यनुमितिप्रयोजकत्वार्थकत्वासम्भवात् किन्तु अभावप्रयोजकसमान्यवृत्तिविषयितानिरूपकत्वमेव तथा । उक्तस्थले च प्रकारताप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता चोभयमेव साधनपदार्थः । प्रकारतारूपसाधनपदार्थेऽपरपदार्थैकदेशे व्याप्तिप्रकारतानिरूपकप्रकारतायां च षष्ठ्यन्तवह्निपदप्रतिपाद्यस्य वह्निनिष्ठत्वस्य स्वरूपसम्बन्धेन साधनपदार्थो·

कप्रकारताद्वये च सप्तम्यन्तार्थस्य निर्वह्नित्वादिविशिष्टविशेष्यतायाश्च निरूपितत्वसम्बन्धेनान्वयः । साधनपदोत्तरसप्तम्या निरूपकत्वं द्वित्वं चार्थः । निरूपकत्वे च निरुक्तसाधनपदार्थयोः पृथगन्वयः । तदन्वितनिरूपकत्वे च द्वित्वान्वयः द्वित्वान्वयितादृशनिरूपकत्वयोर्दोषपदार्थघटकाभावेऽन्वयः । तथा च निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निनिष्ठप्रकारतानिरूपकत्वस्य तादृशविशेष्यतानिरूपिता या वह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजकभ्रमान्यवृत्तिविषयतानिरूपकत्वानित्येवान्वयबोधः । प्रतिबन्धकीभूतभ्रमविषयितानिरूपकाभावमादाय पर्वते वह्निसाधने धूमो दुष्ट इत्यादिप्रयोगवारणाय विषयितायां भ्रमान्यवृत्तित्वं निवेशितम् । दोषघटककेवलसाध्यादौ दोषव्यवहाराभावाच्च दोष इत्यादौ स्वविषयकनिश्चयाव्यवहितोत्तरानुमितिनिष्ठजन्यत्वाभावाधिकरणत्वावच्छिन्नस्वप्रतिबन्धकविरोधिविषयताप्रयोज्यताकधर्म एव दोषपदार्थ इति दिक् ॥

(चिं०) दशाविशेषे हेत्वोरेवाऽसाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वम् ।

(दी०) स्यादेतत् शब्दोऽनित्यः शब्दत्वात् इत्यत्रासाधारणेऽव्याप्तिः—सर्वसाध्यवद्व्यावृत्तेस्तत्रासत्त्वात्, एवं शब्दोऽनित्यः कृतकत्वात् इत्यस्य सत्प्रतिपक्षे नित्यत्वव्याप्याद्रव्यद्रव्यत्वादावपि पक्षस्य तद्वत्ताविरहादित्याशङ्कां तयोरलक्ष्यत्वेन निराकुरुते दशाविशेष इति । हेत्वोः—सद्धेत्वोः, असाधारणः पक्षमात्रवृत्तिः, सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा, तयोर्दशाविशेषे हेतौ सर्वसाध्यवद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्यवत्त्वस्य च भ्रमदशायामाभासत्वात् अनुमित्यजनकत्वात् तद्बुद्धेर्हेत्वादौ साध्यवद्व्यावृत्तत्वादिबुद्धेः प्रतिबन्धकत्वं परमायाति, न तु तद्विषयस्य दोषत्वम् असत्त्वात् । अन्यथा बाधभ्रमेणानुमित्यनुदयात् तस्यापि दोषत्वं स्यात् । को हि साध्याभाववत्त्वतद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः । निर्युक्तिकस्तु प्रवादो न श्रद्धेयः ॥

(गा०) असाधारण्यस्य पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वात्मकस्य सत्प्रतिपक्षस्य च पक्षनिष्ठसाध्याभावव्याप्यवत्त्वरूपस्य बुद्धेर्विरोधिविषयकतया साध्यवत्ताज्ञानप्रतिबन्धकत्वं निर्विवादमेव, एवं च तज्ज्ञानदशायां हेतोरनुमित्यजनकत्वात्तद्बुद्धेः प्रतिबन्धकत्वमावश्यकमित्येतादृशयथाश्रुतार्थपरस्य दशाविशेष इत्यादिमूलस्यानुत्थितिः, अन्यथा साधारण्यादिज्ञानप्रतिबन्धकताया अपि व्यवस्थापयितुमुचितत्वात् अतस्तादृशमूलमन्यथा व्याख्यातुमवतरणिकामाह स्यादेतदिति । इत्यत्रासाधारण्ये—एतत्स्थलीयासाधारण्यरूपदोषप्रकारकहेतुविशेष्यकभ्रमविषये सर्वसाध्यवद्व्यावृत्तत्वात्मके । अव्याप्तेरिति । तद्विषयकत्वस्य निरुक्तानुमित्यप्रतिबन्धकहेत्वविषयकज्ञानसाधारणतया तादृशप्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः । ननु केवलं सर्वसाध्यवद्व्यावृत्तत्वं न दोषः अपि तु साधनवृत्तित्वविशिष्टम्, तादृशविशिष्टविषयकत्वं तु न प्रतिबन्धकतातिरिक्तवृत्तीत्यत आह सर्वेति । तत्र–हेतौ, असत्त्वात्—अवृत्तेः, साध्यवति पक्षे हेतोर्वृत्तेरिति शेषः । तथाच तादृशविशिष्टस्याप्रसिद्ध्या तस्य दोषत्वासम्भवेन प्रसिद्धस्य विशिष्टसाध्यवद्व्यावृत्तत्वस्यैव तत्र दोषतायाः आवश्यकत्वादिति भावः । अद्रव्यद्रव्यत्वादाविति । असमवेतद्रव्यत्वादावित्यर्थः । असमवेतत्वस्य ध्वंससाधारणतया नित्यत्वव्याप्यत्वासम्भवात् विशेष्यांशानिवेशः । अस्यानन्तरमव्याप्तेरित्यनुषज्यते । तद्विषयकत्वस्य पक्षविषयकज्ञानसाधारणतया प्रतिबन्धकतातिरिक्तवृत्तित्वादिति भावः । ननु केवलं नित्यत्वव्याप्याद्रव्यद्रव्यत्वादिकं न तत्र दोषः अपि तु पक्षनिष्ठतद्रूपमेव, तादृशविशिष्टविषयकत्वं च प्रतिबन्धकतानतिरिक्तवृत्त्येवेत्यत आह पक्षस्येति । तथाच पक्षघटितविशिष्टाप्रसिद्ध्या पक्षाघटितस्यैव दोषत्वमावश्यकमिति भावः । तयोः–तादृशस्थलीयदोषत्वेनाभिमतयोरुक्तधर्मयोः ।

शब्दो नित्यः शब्दत्वादित्यादौ शब्दत्वादिविशेष्यकानित्यव्यावृत्तत्वादिज्ञानविषयेऽव्याप्तेः यज्ज्ञानास्पदत्वादलक्ष्यताभ्युपगमेन तत्परिहारस्य चात्यन्तासम्भवदुक्तिकत्वाद्धेतुपदं सद्धेतुपरतया व्याचष्टे हेत्वोरिति । सद्धेत्वोः साध्यवद्व्यावृत्तत्वरूपासाधारण्यसाध्याभावव्याप्यवत्पक्षकत्वरूपसत्प्रतिपक्षत्वासम्भवादसाधार-

पसत्प्रतिपक्षपदे अन्यथा व्याचष्टे असाधारण इति। यस्येति षष्ठ्यर्थः प्रकारता। तथा—प्रकृतसत्प्रतिपक्षपदार्थः। प्रकृतसद्धेत्वोर्दुष्टतारूपाभासत्वायोगादाभासपदमन्यथा व्याचष्टे आभासत्वादिति। तद्बुद्धेरित्यत्र तत्पदस्य हेतुमात्रपरत्वं न संभवति सत्प्रतिपक्षस्थले प्रतिबन्धकज्ञानस्य हेतुविषयकत्वानियमाद्धेतुविषयकत्वकथनस्याप्रयोजकत्वात्, बुद्धिपदस्यापि बुद्धिसामान्यपरत्वं न सम्भवति धूमेऽव्यभिचारित्वविषयकज्ञानस्याप्रतिबन्धकत्वादतस्तत्पदस्य हेतुपक्षोभयपरतया बुद्धिपदस्य साध्यवदवृत्तित्वसाध्याभाववद्व्याप्यत्वाद्युभयबुद्धिपरतया तद्बुद्धिपदं हेतुविषयकसाध्यवदव्यावृत्तत्वबुद्धिपक्षविषयकसाध्याभावव्याप्यवत्ताबुद्धिपरत्वेन व्याचष्टे तद्बुद्धेरिति। तयोरलक्ष्यत्वसाम्याय हेत्वोरित्यनन्तरं ध्रुव एवकारो योजनीयः। तदर्थमन्तर्भाव्य व्याचष्टे प्रतिबन्धकत्वं परमायातीति। परं—केवलम्। एवकारेण व्यवच्छेद्यं स्पष्टयति नत्विति। तद्विषयस्य—तादृशबुद्धिविषयस्य, दोषत्व—दोषलक्षणलक्ष्यत्वम्, अलक्ष्यत्वात्—लक्ष्यताप्रयोजकरूपस्यासत्त्वात्, प्रतिबन्धकीभूतज्ञानप्रमात्वस्यैव तद्विषयस्य लक्ष्यताप्रयोजकत्वादिति भावः। असत्त्वात् विशिष्टस्याप्रसिद्धत्वादिति तु नार्थः—एकदेश एवाव्याप्तेराशङ्कितत्वया विशिष्टाप्रसिद्धेस्तदलक्ष्यतानिर्वाहकत्वाविरहेणानुपयोगात्। अन्यथा—प्रतिबन्धकीभूतभ्रमविषयस्यापि दोषत्वे, बाधभ्रमेण—पक्षे साध्याभावभ्रमेण। तस्य—तद्विषयसाध्याभावादेः। नन्वेवमुक्तस्थले प्राचां दशाविशेषे हेतोर्दुष्टताप्रवादो नोपपद्यते इत्यत आह निर्युक्तिकमिति॥

(टी०) यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकं तद्वत्त्वं तत्प्रकारकप्रमाविषयत्वञ्च लक्षणार्थः। तच्च द्विविधं—विषयरूपं साधारण्यादि, बाधे च प्रमितसाध्याभाववान् पक्षः, तद्विषयत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात्। अविषयरूपञ्च विरोधिसामग्रीकालीनत्वादिकम् तद्वत्त्वञ्च ज्ञानस्यैव तद्विषयस्य हेतोरपीति। तन्न। तद्वत्त्वं हि हेत्वोरभेदेन—बाधे तदभावात्, अत एव नाश्रयतया—वह्निव्यभिचारित्वादिमति धूमेऽतिप्रसङ्गाच्च।

साध्याभाववत्पक्षस्यैव साध्याभाववद्वृत्तिहेतोर्ज्ञानस्य प्रतिबन्धकत्वात्, साधारण्यादिविषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात् सत्त्वादिसाध्यके ज्ञानेऽतिप्रसङ्गाच्च । यथाकथञ्चित्तद्वत्त्वस्य चातिप्रसञ्जकत्वात् । विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरामर्शो न स्वसाध्यकानुमितेः प्रतिबन्धको मणिसमवहितो वह्निरिव दाहस्य ।

( गा० ) उपदर्शितस्थलेऽपि दशाविशेषे हेतोर्दुष्टतामङ्गीकुर्वन्तस्तत्साधारण्याय लक्षणमन्यथा व्याचक्षते तेषां मतमाह ज्ञानस्येति । पञ्चम्यन्तार्थस्य यत्पदार्थेऽन्वयः, तथा च ज्ञानसम्बन्धित्वविशिष्टं यद्रूपावच्छिन्नं यत्किञ्चित्तत्सम्बन्धेनानुमितिप्रतिबन्धकतावच्छेदकमित्यर्थः । अत्राप्यवच्छेदकत्वमनतिरिक्तवृत्तित्वमुक्तयुक्तेस्तत्पदमुभयत्र तद्रूपावच्छिन्नपरम् । लक्षणार्थः—व्युत्क्रमेण लक्षणयोरर्थः । नन्वेतावतैव कथं दर्शितसत्प्रतिपक्षादौ लक्षणसमन्वयः तत्र प्रतिबन्धकतावच्छेदकीभूतविशिष्टविषयकत्वस्याप्रसिद्धेः, कथं वा व्यभिचारादिकमादाय सव्यभिचारादावेव लक्षणगमनम् व्यभिचारादिविषयकत्वस्यैव प्रतिबन्धकतावच्छेदकतया व्यभिचारादेरतथात्वादित्यत आह तच्चेति । तादृशप्रतिबन्धकतावच्छेदकं चेत्यर्थः । भ्रमात्मकबाधनिश्चयप्रतिबन्धकतामादायापादितायाः सद्धेतोर्दुष्टताया असम्भवं स्फुटीकर्तुमाह बाधेति । बाधज्ञाननिष्ठप्रतिबन्धकतायां चेत्यर्थः । अवच्छेदक इति शेषः । पक्षस्य वास्तवं साध्यभाववत्त्वं निविश्यते न तु वैज्ञानिकमिति सूचयितुं प्रमितेति । विषयस्यावच्छेदकत्वे युक्तिमाह तद्विषयकत्वेनेति । तथा च विषयविषयकत्वस्यैव विषयस्यापि विषयितयाऽवच्छेदकत्वमक्षतमिति भावः । विरोधिसामग्रीकालीनत्वादीति । विरोधिकोट्यनुमितिसामग्रीकालीनत्वेन परामर्शादेः प्रतिबन्धकत्वमित्यभिमानः । तथा च तदादायैव सत्प्रतिपक्षितेऽसाधारणे च सद्धेतौ दशाविशेषे दुष्टत्वमिति भावः ।

ननु ज्ञाननिष्ठविरोधिसामग्रीकालीनत्वमादाय कथं हेतोर्दुष्टत्वं ज्ञान एव सत्त्वादित्याशङ्कां परिहरति तद्वत्त्वं चेति । तद्विषय-

इदयम् । विभिन्नरूपेण तदुभयस्यैकत्रोपगमे प्रतिबन्दीसूचनायाह मणीति । न प्रतिबन्धक इत्यनुपपद्यते । तथाच विरोधिकोट्यनुमिति-सामग्रीकालीनत्वेन परामर्शादीनामनुमितिप्रतिबन्धकत्वे मणिसमव-हितत्वेन वह्न्यादीनामपि दाहप्रतिबन्धकत्वापत्तेः । मणिसमाहित-त्वापेक्षया लाघवान्मणित्वेनैव प्रतिबन्धकत्वापत्तिः कल्प्यत इति चेत्, तर्हि विरोधिसामग्रीकालीनत्वापेक्षया लाघवात्तादृशसामग्रीत्वेन विरोधिपरामर्शत्वेनैव वा प्रतिबन्धकत्वं प्रकृते कल्पयितुमुचितमिति कथं विरोधिसामग्रीकालीनत्वमादाय लक्षणं सङ्गमनीयं तस्य प्रति-बन्धकतातिरिक्तवृत्तित्वादिति भावः ।

( दी० ) अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिब-न्धः तदेवात्र प्रतिबन्धकतावच्छेदकमुक्तम्, भवति च प्रतिबन्ध-कीभूतविरोधिसामग्रीकालीनत्वादिविशिष्टे परामर्शे तथा इति चेत् । न वै कालादिसाधारणकारणघटिता सामग्री क्वापि प्रति-बन्धिका, विशेषतस्तत्र तत्सत्त्वे कार्योत्पादस्य दुर्वारत्वात्, किन्तु विरोधिपरामर्शस्तथा । यदि च तत्सत्त्वेऽपि तत्साध्ये बा-धावताराननुमितिप्रतिबन्धः प्रामाणिकस्तदा अप्रामाण्यग्रहाभा-वस्येव तदभावस्यापि वैशिष्ट्यन्तत्र निवेश्यताम्, यथा च भ्रमप्र-मासाधारणविरोधिपरामर्शसत्त्वे नानुमितिस्तथा तथाविधबाधा-दिग्रहेपीत्यतिप्रसङ्गः । न चानौपादौ लिङ्गे विरोधिपरामर्शका-लीनत्वमपि ।

धिकोट्यनुमितिसामग्र्याः प्रतिबन्धकत्वकथनं प्रतिबन्धकसमवहितोत्तरक्षणे कार्यानुत्पादस्यावश्यकतया विरोधिसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकताया आवश्यकत्वप्रदर्शनाय। तथा–अवश्यमनुमित्यनुत्पादः ।– विरोधिसामग्र्याः प्रतिबन्धकत्वमुक्तं तदेवादौ दूषयति न वै इति । नहीत्यर्थः। कालादीति घटितान्तं हेतुगर्भविशेषणम्, तथाच कारणसमुदायः सामग्री, सा च क्वचिदपि न प्रतिबन्धिका कालादिसाधारणकारणानामपि तदन्तर्निविष्टत्वात् तेषां च प्रतिबन्धकतावच्छेदककोटिनिवेशस्य निष्फलत्वात्प्रतिबन्ध्यकार्येऽपि तेषामनुगुणत्वादित्यर्थः। सत्प्रतिपक्षस्थले विरोधिकोट्यनुमितिसामग्र्यास्तत्कोट्यनुमितिप्रतिबन्धकत्वमत्यन्तासम्भवदुक्तिकमेव तत्र फलानुत्पादेन सामग्र्या एवासत्त्वादित्याह विशेषतस्त्वित्यादिना। अत्र–सत्प्रतिपक्षस्थले। सामग्री ■ प्रतिबन्धिकेत्यनुपपद्यते । तत्सत्त्वे–सामग्रीसत्त्वे, कार्योत्पादस्य दुर्वारत्वात्—सामग्र्याः कार्योत्पत्तिनियतत्वादिति भावः। ननु तर्हि तत्र परामर्शादिरूपानुमितिहेतुसत्त्वादनुमितिः कथं नोत्पद्यत इत्यत आह किन्त्विति। विरोधिपरामर्शः–साध्याभावव्याप्यवत्तानिश्चयः, तथा–ऽनुमितिप्रतिबन्धकः।

ननु यत्र वह्न्यभावव्याप्यवत्तापरामर्शो वह्न्यभावाभाववान्पक्ष इति बाधनिश्चयो वर्तते तत्र वह्निव्याप्यवत्ताज्ञानेन वह्न्यनुमितिर्जन्यते इत्यनुभवसिद्धं विरोधिपरामर्शमात्रस्य प्रतिबन्धकत्वे च तन्नोपपद्यते इत्यत आह यदि चेति । तत्सत्त्वेऽपि–विरोधिपरामर्शसत्त्वेऽपि, तत्साध्यवत्ताधारणे–तादृशपरामर्शानुमेयविरोधिकोटेः पक्षेऽभावनिश्चयदशायां, नानुमितिप्रतिबन्धः–न प्रकृतसाध्यानुमित्यनुत्पादः। अप्रामाण्यग्रहाभावस्येत्यनन्तरं वैशिष्ट्यमित्यनुषज्यते। तदभावस्य–विरुद्धकोटिविरहनिश्चयाभावस्य, तत्र–विरोधिपरामर्शप्रतिबन्धकतावच्छेदकगर्भे । निवेश्यतामिति । अत्र विपरीतकोटिव्याप्यवत्तापरामर्शदशायां तत्कोटिविरहनिश्चयसत्त्वे तत्परामर्शभ्रमत्वग्रहानन्तरमेवानुमितिः स्वीक्रियते न तु अन्यथेति भ्रमत्वग्रहाभाववैशिष्ट्यनिवेशेनैवोपपत्तौ तादृशबाधग्रहाभाववैशिष्ट्यनिवेशो व्यर्थ इत्यनिर्भरसूचनाय यदि चेत्युक्तम्। अप्रामाण्यग्रहाभावस्य दृष्टान्तविधया प्रतिबन्धकतावच्छेदकत्वं च दर्शि[illegible]।

नन्वेवं सत्यनुमितिविरोधिपरामर्शमात्रं प्रतिबन्धकं तथापि तद्घटितविरोधिसामग्रीकालीनस्य फलानुत्पादनियतत्वात् तादृशसामग्रीकालीनत्वस्य निरुक्तप्रतिबन्धकतावच्छेदकत्वं दुरपवादमेव, एवं च, तथाविधविरोधिपरामर्शकालीनत्वमादायापि दशाविशेषे सत्प्रतिपक्षितस्य हेतोर्दुष्टत्वमुपपद्यत एवेत्यतो विरोधिपरामर्शादिकालीनत्वसमशीलबाधादिग्रहकालीनत्वमादाय सद्धेतावतिप्रसङ्गमाह यथा चेति। तथाविधेति। भ्रमप्रमासाधारणेत्यर्थः। अपीत्यन्तरं नानुमितिरित्यनुपज्यते। तथाच तादृशबाधादिग्रहकालीनत्वमपि निरुक्तप्रतिबन्धकतावच्छेदकत्वमङ्गीकर्तव्यमेवेति भावः। अतिप्रसङ्ग इति। बाधादेरनित्यदोषतायाः केनाप्यनभ्युपगमेनेष्टापत्त्यनवकाशादिति भावः। विरोधिपरामर्शकालीनत्वमादाय सर्वत्र सत्प्रतिपक्षिते दुष्टत्वं नोपपादयितुं शक्यत इत्याह न चेति। नहीत्यर्थः। अतीतादेरिति। तथा चातीतादिसद्धेतौ विरोधिपरामर्शदशायां भवन्मनसिद्धं सत्प्रतिपक्षितत्वं नोपपद्यत इति भावः।

( दी० ) यदपि तद्विषयत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वं तद्दुष्टत्वमेव वाच्यम् सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा, तद्दुष्टत्वमपि हेतौ स्वज्ञानरूपसम्बन्धेन, तस्य समूहालम्बनरूपतया हेतुद्वयविषयत्वादिति। तदपि तुच्छम्। साध्याभाववत्पक्षविषयत्वेन तादृशपक्षज्ञानप्रमात्वविषयत्वेन वा ज्ञानस्य प्रतिबन्धकत्वं तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः।

विशिष्टविषयत्वेन प्रतिबन्धकत्वं विशिष्टश्च तत्राप्रसिद्धमिति चेत्तर्हि किं सर्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान् पक्षः प्रसिद्धः, यथाकथञ्चित्सम्बन्धेन तद्दुष्टत्वञ्चातिप्रसक्तं धूमादेरपि ज्ञानरूपेण तदाश्रयाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादिसत्त्वात्। यादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन तद्दुष्टत्वञ्च न सर्वत्र सत्प्रतिपक्षिते हेतावस्ति च क्वचित् सद्धेताविति कृतं पल्लवितेन।

( गा० ) सत्प्रतिपक्षिते सद्धेतौ विरोधिव्याप्यवत्पक्षाप्रसिद्धा-

वपि प्रतिबन्धकीभूतभ्रमविषयप्रसिद्धविरोधिव्याप्त्यादिरेव दोष
इति मतं दूषयति यद्यपीति । विषयकत्वेनेति तृतीयार्थः स्वरूप-
सम्बन्धरूपमवच्छेदकत्वं न त्वनतिरिक्तवृत्तित्वरूपम् तथासति वि-
रोधिव्याप्त्यादेर्दोषत्वानुपपत्तेः । प्रतिबन्धकतायां ज्ञाननिष्ठत्व वि-
शेषणं कामिनीजिज्ञासादिनिष्ठप्रतिबन्धकतावच्छेदकधर्मेऽतिप्रसं-
गवारणाय । ननु विरोधिकोटिव्याप्यत्वस्य पर्वतो वह्निमान्धूमात्
पर्वतो न वह्निमान् जलत्वादित्यादौ प्रतिबन्धकीभूतज्ञानविषयसम-
वायादिसम्बन्धावच्छिन्नपक्षधर्मतायाः प्रकृते हेतावभावात्कथं
तस्य दुष्टत्वमत आह तद्वत्त्वमपीति । विरोधिव्याप्त्यादिमत्त्वमपी-
त्यर्थः । तज्ज्ञानरूपेति । स्वविषयकज्ञानविषयत्वेत्यर्थः । सम्बन्ध-
विशेषस्याविवक्षितत्वादिति भावः । तादृशसम्बन्धघटकं प्रकृतहे-
तावुपपादयति तस्येति । विरोधिव्याप्त्यादिज्ञानस्येत्यर्थः । समूहा-
लम्बनतयेति । न चैवं क्रमिकपरामर्शद्वयस्थले सत्प्रतिपक्षितानुपपत्ति-
रिति वाच्यम् । तत्रापि तादृशव्याप्त्यादिप्रकारकप्रकृतहेतुविषयके-
श्वरज्ञानादिकमादाय तद्वत्त्वोपपत्तेः । साध्याभाववत्पक्षविषयकत्वेन–
साध्याभावप्रकारेण पक्षावगाहित्वेन । साध्याभाववत्पक्षज्ञानेति ।
साध्याभावप्रकारकपक्षज्ञानांशे प्रमात्वविषयकत्वेनेत्यर्थः । मतभेदेन
विकल्पः । तस्य–तादृशज्ञानस्य । अतिव्याप्तेरिति । साध्यवत्यपि
पक्षे–साध्यवत्यपि सति पक्षस्य साध्यवत्त्वे सत्यपीति यावत् ।
पर्वतो वह्निमान्धूमादित्यादौ भ्रमात्मकबाधादिज्ञाननिष्ठप्रतिबन्ध-
कतावच्छेदकविषयतानिरूपकवह्न्यभावादेः स्वविषयकज्ञानविषय-
त्वादिसम्बन्धेन वैशिष्ट्यस्य हेतौ सत्त्वादिति भावः ।

इदमुपलक्षणम् । वह्निमान्धूमादित्यादौ विरोधिपरामर्शद्वयका-
लेऽपि तद्विषयविरोधिव्याप्त्यादिकमादायापि हेतोर्दुष्टत्वप्रसङ्गो बो-
ध्यः । तत्रापि पक्षादौ तद्विशिष्टविषयकसमूहालम्बनज्ञानसम्बन्धेन
हेतौ तद्वैशिष्ट्यसम्भवात् अनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं वि-
वक्षणीयमित्यभिप्रायेण बाधभ्रमप्रतिबन्धकतामादायातिप्रसङ्गस्यो-
द्धारमाशङ्कते विशिष्टेति । साध्याभावविशिष्टपक्षविषयकत्वमेव
प्रतिबन्धकतानतिरिक्तवृत्ति न तु साध्याभावविषयकत्वमात्रमि-
त्यर्थः । विशिष्टं च साध्याभावविशिष्टपक्षः । तत्र–बाधस्थले सत्प्र-
तिपक्षस्थले, सर्वत्र तादृशविशिष्टं प्रसिद्धमेवेत्यभिमानः । भ्रम

निराकरोति तत्किमिति । पक्षवृत्तिसाध्यकसत्प्रतिपक्षे साध्याभावव्याप्यविशिष्टपक्षस्य प्रसिद्धत्वात् । सर्वत्रेति । सत्प्रतिपक्षे-सत्प्रतिपक्षतया सम्मतसिद्धे । प्रसिद्ध इति । तथा चानतिरिक्तवृत्तित्वरूपावच्छेदकत्वं विवक्षितुमशक्यमिति दर्शितातिव्याप्तिर्दुर्वारैवेति भावः । तद्धत्वघटकसम्बन्ध वितर्क्यापि दूषयति यथाकथचिदिति । अतिप्रसक्त-सद्धेतुसाधारणम्, तथाच पर्वतादेः वह्न्यादिमत्त्वे साध्ये धूमादौ दुष्टताव्यवहारापत्तिरिति भाव । तादृशसम्बन्धेन तद्धत्वस्य, धूमादिरूपसद्धेतुसाधारणत्व स्फुटयति धूमादेरिति । ज्ञानरूपेण—स्वविषयकज्ञानविषयत्वेन तदाश्रयाश्रयत्वादिना, आदिना एककालीनत्वपरिग्रहः ।, व्यभिचारादिसत्त्वात्-वह्न्यभावव्याप्तित्वादिसत्त्वात् ।

ननु यादृशसम्बन्धावच्छिन्नयत्प्रकारतानिरूपितधर्मिविशेष्यताशालित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्वमेव दुष्टत्वमिति वाच्यम्, एव च स्वरूपादिसम्बन्धावच्छिन्नसाध्याभावव्याप्तिरत्वादिप्रकारतानिरूपितहेतुविशेष्यताशालित्वेनैव व्यभिचारादिज्ञानस्य प्रतिबन्धकता तेन सम्बन्धेन तद्वत्त्वस्य च हेतोरभावान्न तत्रातिव्याप्तिरित्याशङ्कां निराकुरुते यादृशेति । सर्वत्र सत्प्रतिपक्षित इति । हृदो वह्निमान्धूमवत् इत्यादिस्थले धूमत्वादिरूपहेतोर्व्याप्यताघटकसम्बन्धेन वह्न्याद्यभावव्याप्यधूमवत्त्वादेः सत्तायाः सत्त्वात् सर्वत्रेत्युक्तम्। क्वचित्सद्धेतावपि । सद्धेतुतादशायामपि कश्चिदित्यर्थः। पर्वतो वह्निमान्धूमादित्यादौ-विरोधिपरामर्शासमवधानदशायामपि , प्रतिबन्धकतावच्छेदकप्रकारताश्रयवह्न्याद्यभाववन्निष्ठमवन्यत्वतद्व्याप्यादेस्ताद्दृशप्रकारतावच्छेदकस्वरूपादिसम्बन्धेन धूमादिवृत्तित्वादिति भाव ।

यत्तु-ज्ञानसम्बन्धेन तद्वत्त्वमेव दुष्टत्व ज्ञान च विशिष्टव्यवहारानुरोधात् कश्चिदेव कस्यचित्सम्बन्ध । एव च विरोधिव्याप्यादेर्ज्ञान विरोधिपरामर्शदशायामेव प्रकृते हेतौ तत्सम्बन्धस्तदैव तत्र दुष्टताव्यवहारात्साध्याभावादेर्ज्ञान तु तत्र न कदाचिदपि तथा परमेश्वरादिसाधारण साध्याभावविशिष्टपक्षादेर्ज्ञान तु तत्र सर्वदैवे-ति ॥

तत्तु ह्यस्याप्यनुमेय-सकलाभियुक्तपुरुषसाधारणस्य नियतव्यवहारस्यासिद्धत्वात् । वासनाविशेषवशात् तादृशव्यवहारस्य निर्विवादसम्भवात् ज्ञानस्य नियततत्सम्बन्धत्वादिति ।

( चि० ) यद्यपि बाधसत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वम्, तथापि ज्ञायमानस्याभासरूपात्र लक्षणम् । यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते, अनुमितौ तूत्पत्तिरेव प्रतिबध्यते ।

ते [redacted] सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च ॥

इति सामान्यनिरुक्तिचिन्तामणिः ।

( दी० ) यद्यपीति । स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात् । न चैवं नरशिरःकपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोधः स्यात्, तत्रानुकूलतर्काभावेन बलवत्तरागमविरोधेन च व्याप्तिनिश्चयस्यानुत्पत्तेरिति भावः । यद्वेत्यभ्युच्चयमात्रम् प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात् । योग्यताज्ञानेनान्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेत्, एवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ।

इति सामान्यनिरुक्तिदीधितिः ॥

( गा० ) बाधसत्प्रतिपक्षज्ञानयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वमभिधाय बाधसत्प्रतिपक्षयोर्लिङ्गज्ञानजन्यज्ञानमात्रवृत्तिधर्मावच्छिन्नवत्तानिरूपितप्रयोजकताश्रयाभावप्रतियोगिज्ञानविषयत्वरूपं लिङ्गसाधारणरूपत्व [redacted] सम्भवतीत्यपि प्रसिद्धता, तादृशप्रतिबन्धकताया च युक्तिर्लोकेति न्यूनतापरिहाराय तत्र युक्तिमाह स्थाणुत्वाभावस्येति । स्थाणुत्वप्रत्यक्षशाब्दयोरिति । समानधर्मितावच्छेदकस्य स्थाणुत्वप्रकार

कस्य लौकिकसन्निकर्षाजन्यप्रत्यक्षस्येव शाब्दस्य चेत्यर्थः । एवं शाब्दबुद्धौ बाधतदभावव्याप्यवत्ताज्ञानयोः प्रतिबन्धकत्वे । नरशिरःकपालमिति । नरशिरःकपाले शुचित्वानुमापकेन तद्धर्मिकप्राण्यङ्गत्वपरामर्शेन स्वतः फलद्वारा वाऽऽगमजन्याशौचबोधविरोधः स्यादित्यर्थः । स चानुभवविरुद्धः । तत्र प्राण्यङ्गत्वज्ञानदशायामपि शाब्दाशौचज्ञानस्यानुभवसिद्धत्वादिति भावः । समाधत्ते तत्रेति । तादृशाशौचज्ञानप्राक्काले इत्यर्थः । अनुकूलतर्काभावेन व्याप्तिनिश्चयस्य बलवत्तरागमविरोधेनानुमितेश्चानुत्पत्तेरिति भावः । एवं च बाधतद्व्याप्यधर्मस्य येन केनापि रूपेण ज्ञानमेव न विरोधि, अपि तु व्याप्यत्वरूपेण, अत्र च प्राण्यङ्गत्वस्य ज्ञानेपि व्याप्तिग्राहकतर्कविरहेण व्यभिचारशङ्कयाशौचव्याप्यत्वेन तज्ज्ञानं न सम्भवति कारणान्तरविरहेण यत्र व्यभिचारशङ्काविरहः तत्र कथंचित् व्याप्तिग्रहेपि गृहीतप्रामाण्यकागमतात्पर्यविषयविपरीतविषयकत्वेन तत्राप्रामाण्यं गृह्यते, तथाच तादृशाप्रामाण्यज्ञानं न शौचानुमितिजनने शाब्दाशौचज्ञानप्रतिबन्धे वा प्रभवतीति समुदायार्थः । आगमे प्रामाण्यग्रहश्च शिष्टपरिग्रहादिनैव भवति । यादृशं च तादृशपरामर्शेनाप्रामाण्यं गृह्यते तावता भवत्येवागमप्रवृत्तिरिति भावः ।

एतेनेत्यादिग्रन्थेन बाधादिज्ञानस्यानुमित्यतिरिक्तज्ञानाप्रतिबन्धकत्वं व्यवस्थाप्य बाधादेर्लिङ्गासाधारणदोषत्वमेवोपपादितम् तन्न सङ्गच्छते—बाधितार्थस्य शाब्दाभ्युपगमेऽनुमितेरप्यनवबाधात् तत्राप्यप्रामाण्यग्राहकतया बाधादिग्रहस्य प्रवृत्त्यादिविरोधितोपपत्तेरित्यत्र कल्पे ग्रन्थकृतोऽनिर्भरमाह—एतेनेत्यादीति । ननु आनुमानिकबाधादिनिश्चयदशायामपि लौकिकसंनिकर्षादितः—प्रत्यक्षनिश्चयोत्पत्त्या बाधनिश्चयसामान्यस्य प्रत्यक्षप्रतिबन्धकत्वं न सम्भवतीत्यनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयत्वावच्छिन्नस्याक्षतमतो यद्विषयकनिश्चयत्वेन अनुमित्यसाधारणप्रतिबन्धकत्वम् तत्र लक्ष्यताप्रयोजकत्वाभिप्रायेण एतेनेत्यादिग्रन्थस्य बाधलक्षणतोपपादकत्वं सुसङ्गच्छत इत्यत आह प्रत्यक्षं प्रतीति । समानेन्द्रियजन्यबाधनिश्चयसत्त्वे लौकिकप्रत्यक्षस्यानुत्पत्तेरानुमानिकेति बाधनिश्चयविशेषणम् । शाब्दं प्रतीति । तथाच तावतैव लिङ्गासाधारणदोषत्वं बाध्यत इति भावः । तथापि तदप्रतिबन्धकत्वमाशङ्कते-

योग्यतेति । अन्यथासिद्धत्वादिति । बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव शाब्दज्ञानानुत्पादादिति भावः । तदभाव-बाधादिनिश्चयाभावः । तत्र शाब्दबुद्धौ यद्यपि योग्यतासंशयद्वितीयक्षणे स्मरणात्मकयोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्यावश्यकत्वम्, तथापि बाधादिज्ञानस्य शाब्दप्रतिबन्धकत्वेपि निर्विवादोपनीतभानविशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिराकरणस्यासंभवात्, तन्नैव निराकरोति यद्यपीति । उपनीतभानविशेष-दोषविशेषाजन्योपनीतभानं, तत्त्वेन-बाधनिश्चयाद्यभावत्वेनैव । दुर्वारत्वादिति । बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्वानुभवसिद्धत्वादिति भावः ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचितायां गादाधर्यां
हेत्वाभाससामान्यनिरुक्तिनिरूपणम् ।

श्रीगणेशायनमः।

अथानुमानगादाधर्यां

# सव्यभिचारप्रकरणम्।

(चि०) सव्यभिचारोऽपि त्रिविधः—साधारणासाधारणानुपसंहारिभेदात्। तत्र सव्यभिचारः साध्यतदभावप्रसञ्जक इति न त्रितयसाधारणं लक्षणम्-एकस्योभयं प्रत्यसाधकत्वात्, अनापादकत्वाच्च। नाप्युभयपक्षवृत्तित्वं उभयव्याप्तत्वं वा तत्त्वम्—अननुगमात्।

(दी०) यद्यपि लक्षणतः सामान्यमप्रतीतवतो विशेषजिज्ञासानुदयात् सामान्यलक्षणानन्तरमेव विशेषविभागो युक्तस्तथापि सव्यभिचारपदस्य साधारणमात्रे प्रसिद्धतया तन्मात्रस्य लक्ष्यभावं बुध्यमानैरन्तेवासिभिरसाधारणादिसाधारणस्य लक्षणस्याव्याप्तिस्तद्व्यावृत्तस्यैव च साधुता प्रतीयेत अतस्तद्वारणाय लक्ष्यान्तरमपि दर्शयति सव्यभिचार इति।

कश्चित्तु सामान्यज्ञानाधीनो विभागो न तल्लक्षण(तः)प्रत्ययमपेक्षतेऽतः प्रथमं विभागकरणेऽपि न दोष इत्याह। प्रसक्तिरनुमितिरापत्तिर्वा, तदुपधानमव्यापकमतिव्यापकञ्च तथाविधव्याप्तिभ्रमेण सद्धेतावतस्तद्योग्यता वाच्या, सा च तादृशव्याप्त्यादिरूपा, न च विरुद्धोभयव्याप्यत्वमेकस्य सम्भवतीत्याह एकस्येति।

(गा०) सव्यभिचारसामान्यलक्षणमुक्त्वा मणिकृतस्तद्विभजनमाक्षिपति यद्यपीति । लक्षणतः—लक्षणवाक्यतः । सामान्यं—साधारणासाधारणानुपसंहारित्रितयसाधारणधर्मम् । अप्रतीतवतोऽस्तेयासिन इति शेषः । विशेषजिज्ञासानुदयात्—अवान्तरधर्मप्रकारकज्ञानेच्छोत्पत्त्यसम्भवात् । सामान्यज्ञानस्य विशेषजिज्ञासायां स्वातन्त्र्येणेष्टसाधनताज्ञाने धर्मितावच्छेदकज्ञानसम्पादकतया वा हेतुत्वादिति भावः । सामान्यलक्षणानन्तरं—सव्यभिचारसामान्यलक्षणानन्तरम् । विभागः—सव्यभिचारविभागः । सव्यभिचारत्वावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनमिति यावत् । नायं ग्रन्थो विभागपरः, अपि त्वसाधारणानुपसंहारिणोः लक्ष्यताभ्रमनिबन्धनवक्ष्यमाणसामान्यलक्षणातिव्याप्तिभ्रमनिराकरणाय त्रयाणां लक्ष्यतापर इति, समाधत्ते, तथापीति । साधारणमात्रे प्रसिद्धतया—भूरिप्रयोगविषयसाधारणमात्रकतयाऽतिव्याप्तिः प्रतीयतेति सम्भाव्यते । तद्व्युदस्य—असाधारणादिव्यावृत्तस्य । साधुना—निर्दोषेण । लक्ष्यान्तरमिति । तथा च सव्यभिचार इति सूत्रस्य वक्ष्यमाणसव्यभिचारसामान्यलक्षणलक्ष्य इत्यर्थः ।

एतद्ग्रन्थस्य विभागपरत्वमुपपादयतो मतमाह—कश्चिदिति । सामान्यज्ञानाधीनः—सामान्यज्ञानसामान्याधीनः । (तल्लक्षणप्रत्ययलक्षणवाक्याधीनसामान्यज्ञानमात्रम् । अत्र च विभागोपयुक्तसामान्यज्ञानस्योपायान्तरतोऽभ्युपगमे पश्चादपि सामान्यलक्षणाभिधानमसङ्गतमनाकाङ्क्षितत्वादित्यस्वरससूचनाय कश्चिदित्युक्तम् । अथवा सामान्यज्ञानाधीनः—त्रितयसाधारणकिञ्चिद्धर्मावच्छिन्नज्ञानाधीनः, तल्लक्षणप्रत्ययं—सव्यभिचारपदार्थतावच्छेदकवक्ष्यमाणलक्षणज्ञानमपेक्षते । अत इति । तादृशलक्षणज्ञानेऽपि सव्यभिचारपदार्थस्वरूपसामान्यज्ञानस्य शिष्याणां स्वत एव सम्भवेन विशेषजिज्ञासासम्भवादिति भावः । अत्र च सव्यभिचारपदार्थत्वेन त्रयाणां ज्ञानेऽपि प्रथमं सव्यभिचार एव कीदृश इत्येवं जिज्ञासोदेति न तु सव्यभिचारपदार्थः कतीति प्रथमं विभागोऽनुचित इत्यस्वरसबीजम् ।

प्रसक्तपदस्यानुमापकापादकयोरेकतरमात्रपरत्वे साधकत्वादिस्याविरोधद्वयसङ्गतेस्तत्समन्वयाय प्रसक्तिपदार्थं वितर्कयति—प्रस-

क्तिरिति । प्रपूर्वकसञ्जःत्यर्थ इत्यर्थः । तत्कोटिव्याप्यस्यापि व्याप्ति-भ्रमण तद्विरुद्धकोटेरापादकत्वमनुमापकत्वञ्च सम्भवतीत्येकस्यो-भय प्रति असाधकत्वादित्यादिदोषासङ्गतिरित्यत आशय पूरयति–त-दुपधानेमिति । प्रसक्त्युपधायकत्वमित्यर्थः । अव्यापकमिति । येन हेतुना कदाचिदपि साध्यस्य तदभावस्य वानुमितिरापत्तिर्वा न ज-निता प्रत्येकमपि तदसङ्ग्राहकमित्यर्थः । तथाविधेति । साध्याभाव-निरूपितेत्यर्थः । तद्योग्यता–प्रसक्तियोग्यता, वाच्या–प्रसञ्जकपदेन विवक्षणीया । योग्यतायास्तत्स्वरूपयोग्यत्वानतिरिक्ततारूपत्वे व्या-प्तिभ्रमविषयतामादाय पुनरुक्तदोषप्रसङ्ग इत्यतो योग्यतामाचष्टे–सा चेति । तत्कोटिप्रसक्तियोग्यता चेत्यर्थः । व्याप्त्यादिरूपा–तत्कोटि-निरूपितव्याप्त्यादिरूपा ॥ ।

[1]( चि० )अथ साध्यसंशयजनककोटिद्वयोपस्थाप-कपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतः सः ।

( दी० )साध्येति । कोटिद्वयोपस्थापकं सत् साध्यसन्देहजन-कं साध्यसन्देहजनककोटिद्वयोपस्थितिजनकमिति यावत् । आश्रय-तया विषयितया वा नित्यत्वानित्यत्वोपस्थापकस्य नित्यत्वे सा-ध्ये ज्ञानस्यानुवृत्तत्वव्यावृत्तत्वाभ्या वह्नितदभावोपस्थापकस्य वह्नौ साध्ये धूमस्य वारणाय जनकान्तम् । तदोपस्थितेः साध्य-सन्देहाजनकत्वात् । धर्मितावच्छेदकपुरोवर्तित्वादिविशिष्टधर्मि-ज्ञानस्य संशयजनकतया तद्वारणाय कोटिद्वयोपस्थापकेति ।

( गा० )साध्यसन्देहेति यथाश्रुतग्रन्थात्पक्षधर्मताज्ञानस्य सा-ध्यसन्देहजनकत्वं कोटिद्वयोपस्थितिजनकत्वञ्च लभ्यते । तत्र च नित्यत्वादिसाध्यकज्ञानादिहेतौ वक्ष्यमाणातिव्याप्तिर्वारयितुमशक्यै-व–नित्यत्वतदभावविषयकज्ञानवानयमिति ज्ञानस्य नित्यत्वतदभा-वोपस्थापकत्वात्, धर्मितावच्छेदकप्रकारकज्ञानमुद्रया तादृ-शज्ञानवदिदन्त्वावच्छिन्नधर्मिकनित्यत्वसंशयहेतुत्वाच्च । न च फलीभूतसंशयधर्मितावच्छेदकता यादृशधर्मे पर्याप्ता तादृशधर्मा-वच्छिन्नविशेष्यकपक्षप्रकारकज्ञानत्वेन संशयं प्रति हेतुतेति विवं-

क्षणे नाय दोषः, तादृशज्ञानस्य धर्मितावच्छेदकप्रकारकज्ञानमुद्रया नित्यत्वतदभावविषयकज्ञानत्वादिरूपत्वपर्याप्तधर्मितावच्छेदकताकसंशय प्रत्येव हेतुत्वात्, तादृशधर्मं धर्मितावच्छेदकीकृत्य तज्ज्ञानत्वत्वानवगाहित्वात्, शुद्धत्वस्य धर्मितावच्छेदकीकृत्यैव तदवगाहित्वादिति वाच्यम्। तथासति वक्ष्यमाणधर्मितावच्छेदकातिव्याप्तेरप्रसक्त्या कोटिद्वयोपस्थापकत्वनिवेशवैयर्थ्यप्रसङ्गादित्यतो मूलमन्यथा व्याचष्टे साध्येतीति। कोटिद्वयोपस्थापक सदिति। एतेन कोटिद्वयोपस्थापकत्वे साध्यसन्देहजननोद्देश्यतावच्छेदकता लभ्यते। एवञ्च धनवान् सुखी स्यादिति धनादेः सुखादिप्रयोजकताबाधस्यानुमतिकतया उद्देश्यविधेयभावस्थलेऽसति बाधके उद्देश्यविधेययोः प्रयोज्यप्रयोजकभावबोधस्य व्युत्पत्तिसिद्धत्वात्, कोटिद्वयोपस्थितिजनकतायाः साध्यसन्देहजननिर्वाहकतालाभेन व्यापारजनकतायाश्च फलजननिर्वाहकत्वात् कोटिद्वयोपस्थितिद्वारता लाभ इति कोटिद्वयोपस्थितिद्वारा साध्यसन्देहजनकत्वं लभ्यते धर्मितज्ञानत्वाज्ञानस्य धर्मितावच्छेदकप्रकारकज्ञानमुद्रया साक्षादेव साध्यसन्देहजनकतया नातिप्रसङ्गः। कोटिद्वयोपस्थितिद्वारा साध्यसन्देहजनकत्वञ्च साध्यसन्देहजनककोटिद्वयोपस्थितिजनकत्वे सति साध्यसन्देहजनकत्वम्। अत्र च विशेष्यांशनिवेशो निष्फल इत्यन्तदलमात्रनिवेशेनैव सामञ्जस्यादतस्तं परित्यज्य निष्कृष्टार्थमाह–साध्यसन्देहजनकेति ॥ जनकान्तनिवेशनप्रयोजनमाह–आश्रयतयेत्यादिना। आश्रयतया विषयतया वा नित्यत्वानित्यत्वोपस्थापकस्य––नित्यत्वानित्यत्वोपस्थितिजनकीभूताश्रयत्वादिरूपसम्बन्धज्ञानविषयस्य ज्ञानस्य, नित्यत्वे साध्ये, वारणाय–नित्यत्वसाध्यकस्थले सव्यभिचारत्वाभावसम्पादनायेत्यर्थः। एकज्ञानस्य नित्यत्वतदभावोभयाश्रयत्वविरहादाश्रयतासम्बन्धमादाय यथाश्रुत नातिव्याप्तिसम्भव इति आश्रयवृत्तिज्ञानत्वसम्बन्धोऽनुसरणीयोऽतस्तदपेक्षया लघुसम्बन्धं धर्मादाय व्याप्तिमाह–विषयतया वेति। एकज्ञानस्य तदुभयविषयकत्वं निष्प्रत्यूहमेवेति ध्येयम्। समवायेन हेतावतिव्याप्तिमुक्त्वा संयोगेन हेतावपि तामाह अनुवृत्तित्वेति। अनुवृत्तित्व सामानाधिकरण्य व्यावृत्तत्व विधायकताभ्यां, वह्नितदभावोपस्थापकस्य-वह्नितदभावोपस्थितिजनकीभूतवाह्यसम्बन्धघटकज्ञानविषयस्य, वह्नौ

साध्ये-वह्निसाध्यकस्थले, वारणाय-सव्यभिचारत्वाभावसंपादनाये-त्यर्थः । जनकान्तस्य वारकत्वे हेतुमाह तथोपस्थितेरिति । तादृशसम्बन्धज्ञानजन्योपस्थितेरित्यर्थः । सन्देहाजनकत्वादिति । सन्देहं प्रति साधारणासाधारणधर्मवद्धर्मिविप्रतिपत्तिज्ञानजन्याया एव कोट्युपस्थितेर्हेतुत्वादिति भावः । जनकता च साध्यसंशयत्वावच्छिन्नजन्यतानिरूपिता ग्राह्या, अतः सम्बन्धान्तरज्ञानजन्यकोट्युपस्थितेर्विशेषणज्ञानादिमुद्रया संशयाहेतुत्वेऽपि न क्षतिः । यद्यसाधारणधर्मज्ञानादिजन्यसंशये व्यभिचारवारणाय साधारणधर्मज्ञानादिजन्योपस्थितिजन्यतावच्छेदककोटौ तादृशाव्यवहितोत्तरत्वनिवेशावश्यकतया साध्यसंशयत्वं तत्र प्रयोजनविरहेण न निवेश्यत इत्युच्यते, तदा संशयत्वावच्छिन्नत्वं परित्यज्य साध्यसंशयत्वन्यूनवृत्तित्वमेव निवेशनीयं विशेषणज्ञानादिजन्यता च न तन्न्यूनवृत्तिरिति नातिप्रसङ्गः । न चैवमपि यत्र नित्यत्वानित्यत्वाभावसहचरितप्रमेयत्ववानयं नित्यत्वतदभाववान्वायमित्याकारकज्ञानस्य नित्यत्वतदभावविषयिणी एकैवोपस्थितिर्जनिता तत्र तादृशोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वमादाय ज्ञानेऽतिव्याप्तिर्दुर्वारा तादृशोपस्थितिव्यक्तेः साधारणधर्मवत्ताज्ञानजन्यतया साध्यसंशयत्वावच्छिन्नं प्रति जनकत्वादिति वाच्यम् । साध्यसंशयत्वावच्छिन्ननिरूपितजनकतानियतजन्यतानिरूपकीभूतजनकताया एव पक्षधर्मताज्ञाने विशेषणत्वोपगमात् नित्यत्वानित्यत्वविषयज्ञानवत्ताज्ञानजन्यतायाः संशयाजनकसाधारणधर्मवत्ताज्ञानाजन्यतदुभयोपस्थितिसाधारणतया संशयत्वावच्छिन्ननिरूपितजनकताव्यभिचारित्वेनातिप्रसङ्गविरहात् । साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यतदुभयोपस्थितीनां सर्वासां तादृशोपस्थितित्वेन संशयत्वावच्छिन्नं प्रति हेतुतया तादृशज्ञाननिरूपितकोट्युपस्थितिनिष्ठजन्यतायाः संशयत्वावच्छिन्ननिरूपितजनकतानियतत्वमक्षतमेव ।

अथवा उक्तातिप्रसङ्गवारणाय तादृशजनकतावच्छेदकावच्छिन्नत्वमेव जन्यतायां निवेशनीयम् । अव्यवहितोत्तरत्वसम्बन्धेन साधारण्यादिविशिष्टपक्षधर्मवत्ताज्ञानविशिष्टतत्तत्कोट्युपस्थितित्वरूपतादृशज्ञानजन्यतावच्छेदकधर्म एव च संशयजनकतावच्छेदकः न तु तादृशज्ञानजन्यतत्कोट्युपस्थितित्वं जन्यतापेक्षया तद्-

घटकस्याव्यवहितोत्तरत्वस्य लघुत्वात् । अत आत्माश्रयेन साधारणा-
दिधर्मवत्ताज्ञानजन्यत्वस्य तादृशज्ञानजन्यतावच्छेदकत्वे न क्षतिः ।
जनकतावच्छेदकावच्छिन्नत्वञ्च जनकतावच्छेदकपर्याप्त्यवच्छेदक-
ताकत्वं तेन साध्यसन्देहजनकतावच्छेदकघटकज्ञानत्वादेर्नित्यत्वत-
दभावविषयकज्ञानवत्ताज्ञानादिजन्यतावच्छेदकताघटकत्वेऽपि न
क्षतिः । जनकतावच्छेदकतापर्याप्तिर्न निवेश्यते, प्रयोजनविरहात् ।
तेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यतावच्छेदककोटौ तद्विशि-
ष्टत्वनिवेशे गौरवेऽपि प्रयोजनविरहेण संशयजनकतावच्छेदकघटक-
स्य साध्योपस्थित्यादेरनिवेशेऽपि न क्षतिः । न चैवं साध्यसंशयत्वा-
द्यनिवेशेन व्यर्थं प्रतिबध्यजनकतावच्छेदकावच्छिन्नजन्यतानिवेशनै-
वोपपत्तेः, नित्यत्वतदभावविषयकज्ञानवत्ताज्ञानजन्यतावच्छेदकस्या-
व्यवहितोत्तरत्वसम्बन्धेन तादृशज्ञानविशिष्टनित्यत्वादिविषयकोप-
स्थितित्वस्य किञ्चिदपि कार्यं प्रति जनकतावच्छेदकत्वाभावेना-
तिप्रसङ्गविरहादिति वाच्यम् । तथा सति वह्न्यादौ साध्ये तत्स्वत-
दभावसाहचर्यादिप्रकारकज्ञानमादाय धूमादावतिप्रसङ्गापातात्, प्र-
कृतसाध्यसन्देहजनकतायाः अवश्यं निवेशनीयत्वात् । तत्र कोटि-
द्वयपदस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नतदभावपरतया प्रकृत-
साध्यतावच्छेदकावच्छिन्नविषयकोपस्थितित्वघटितधर्मावच्छिन्नज-
न्यतानिवेशेनैवातिव्याप्तिरिति वाच्यम् । एवमपि प्रकृतसाध्यैव
संशयपदोपादानात् ।

ननु साध्यसन्देहजनकपक्षधर्मताज्ञानविषयत्वेनैव सामञ्जस्ये
कोटिद्वयोपस्थापकत्वांशनिवेशोऽनतिप्रयोजक इत्याशङ्कामपनेतुं त-
त्प्रयोजनमाह धर्मितावच्छेदकेति । तद्धारणाय-वह्न्यादिव्याप्ये त-
द्विरुद्धे वा पुरोवर्तिन्यादौ वह्न्यादिव्यभिचारित्ववारणाय । कोटि-
द्वयेति । न च साध्यसन्देहजनकोपस्थितिजनकत्वमेव निवेश्यतां
किमुपस्थितौ कोटिद्वयविषयकत्वनिवेशनेनेति वाच्यम् । तथा सति
व्याप्यविरुद्धयोरतिव्याप्तेः । तथाहि-संशयं प्रति तत्कोटिसहचरि-
तधर्मवत्ताज्ञानजन्यतदुपस्थितित्वेन तदभावकोटिसहचरितधर्म-
वत्ताज्ञानजन्यतदभावोपस्थितित्वेन पृथगेव तत्तत्साहचर्यविषय-
ज्ञानमन्तर्भाव्य हेतुता कल्प्यते । एवं तत्तत्कोट्युपस्थितिं प्रत्यपि
तथैव तत्तत्कोटिसहचरितधर्मवत्ताज्ञानत्वेन हेतुता । इत्थञ्च प्रकृत

भावसहचरितधूमवानिति ज्ञानजन्यवह्न्यभावोपस्थितिसहकारेण वह्निसंशयजनकवह्न्युपस्थितिजनकीभूतं वह्निसहचरितधूमवानिति ज्ञानमादाय धूमे वह्निसहचरितजलत्ववानिति ज्ञानजन्यवह्न्युपस्थितिसहकारेण वह्निसंशयजनकवह्न्यभावोपस्थितिजनकीभूतं वह्न्यभावसहचारितजलत्ववानिति ज्ञानमादाय च जलत्वेऽतिव्याप्तिः । कोटिद्वयोपस्थितिनिवेशे च तथाविधज्ञानयोः प्रत्येकं कोटिद्वयोपस्थापकत्वाभावान्नातिप्रसङ्गः । न च वह्निसहचरितधूमवान्वह्न्यभावसहचारितधूमवांश्च पर्वत इत्येतादृशसमूहालम्बनज्ञानस्य कोटिद्वयोपस्थापकत्वेनैतद्दोषतादवस्थ्यमिति वाच्यम् । साध्योपस्थितिजनकतावच्छेदकीभूता या साध्याभावोपस्थितिजनकतावच्छेदकीभूतप्रकारता तदाश्रयत्वनिवेशात्तादृशसमूहालम्बनज्ञाननिरूपितयोः वह्नितदभावसाहचर्यावच्छिन्नप्रकारतयोः प्रत्येकं तादृशजनकताद्वयावच्छेदकत्वविरहेणातिप्रसङ्गविरहात् । धूमसहचरितवह्निमान् धूमाभावसहचरितवह्निमांश्च पर्वत इत्यादिसमूहालम्बनज्ञाने प्रकारतावच्छेदकभेदेन वह्न्यादिप्रकारताभेदात्प्रत्येकं कस्याश्चिदपि प्रकारतायास्तादृशजनकताद्वयावच्छेदकत्वासम्भवेऽपि धूमधूमाभावसहचरितवह्निमान्पर्वत इत्याद्याकारकोभयसाहचर्यावच्छिन्नलक्षणैकप्रकारतायास्तथात्वेन वह्न्यादौ लक्षणसमन्वयः । वह्नितदभावसहचरितधूमवान्पर्वत इत्याद्याकारकोभयसाहचर्यावच्छिन्नप्रकारताशालिज्ञानमादायातिप्रसङ्गस्तु तादृशप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वविवक्षया स्वयमेव निराकरिष्यते ।

अथ वह्निसाहचर्येण वह्न्यभावसाहचर्यमात्रेण वाऽर्थाच्च उक्ता या व्याप्यस्य विरुद्धस्य वा प्रकारता तस्याः उद्बोधकान्तरवशात्साध्यतदभावोभयविषयकसमूहालम्बनोपस्थितिजनकज्ञानीयतया प्रत्येकं साध्योपस्थितिजनकतायां साध्याभावोपस्थितिजनकतायाञ्चावच्छेदकत्वेनातिप्रसङ्गः । यदि च साध्यविशेषणकोपस्थितिवृत्तिसाध्यसन्देहजनकतानियतं यज्जन्यत्वं तन्निरूपितायां साध्यविशेषणकोपस्थितत्ववृत्तिसाध्यसन्देहजनकतानियतञ्च यज्जन्यत्वं तन्निरूपितायाञ्च जनकतायामवच्छेदिका या प्रकारता तस्याः साध्याभावविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानि-

टकस्याप्युपस्थितेश्चावश्यकत्वस्य लघुत्वात् । अत आत्माश्रयेण साधारण्यादिधर्मवत्त्वाज्ञानजन्यत्वस्य तादृशज्ञानजन्यतानवच्छेदकत्वे न क्षतिः । जनकतावच्छेदकावच्छिन्नत्वञ्च जनकतावच्छेदकपर्याप्त्यवच्छेदकताकत्वं तेन साध्यसन्देहजनकतावच्छेदकघटकज्ञानत्वादेर्निश्चयत्वतदभावविषयकज्ञानवत्त्वाज्ञानादिजन्यतावच्छेदकताघटकत्वेऽपि न क्षतिः । जनकतावच्छेदकतापर्याप्तिर्न निवेश्यते । प्रयोजनविरहात् । तेन साधारण्यादिविशिष्टधर्मवत्त्वाज्ञानजन्यतावच्छेदककोटौ तद्विशिष्टस्य निवेशसम्भवोपपत्तौ प्रयोजनविरहेण संशयजनकतावच्छेदकघटकस्य साध्योपस्थितत्वादेरनिवेशेऽपि न क्षतिः । न चैव साध्यसंशयत्वादेर्निवेशनं व्यर्थं यत्किञ्चिज्जनकतावच्छेदकावच्छिन्नजन्यतानिवेशेनैवोपपत्तेः, निश्चयत्वतदभावविषयकज्ञानवत्त्वाज्ञानजन्यतावच्छेदकस्याप्युपस्थितेश्चावश्यकत्वसम्भवेन तादृशज्ञानविशिष्टनिश्चयत्वादिविषयकोपस्थितित्वस्य किञ्चिदपि । कथं प्रति जनकतावच्छेदकत्वाभावेनातिप्रसङ्गविरहादिति वाच्यम् । तथासति वह्न्यादौ साध्ये रासभत्वभाववत्साधारण्यादिप्रकारकज्ञानमादाय धूमाद्यव्याप्तिप्रसङ्गापातात्, प्रकृतसाध्यसन्देहजनकतायाः अवश्यं निवेशनीयत्वात् । न च कोटिद्वयपदस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नतदभावपरतया प्रकृतसाध्यतावच्छेदकावच्छिन्नविषयकोपस्थितित्वघटितधर्मावच्छिन्नजन्यतानिवेशादेवातिव्याप्तिविरहादिति वाच्यम् । एवंसति प्रकृताभावेऽपि वृथापदोपादानात् ।

ननु साध्यसन्देहजनकपक्षधर्मताज्ञानविषयत्वेनैव सामञ्जस्ये कोटिद्वयोपस्थापकत्वांशनिवेशोऽनतिप्रयोजक इत्याशङ्कामपनेतुं तत्प्रयोजनमाह धर्मितावच्छेदकेति । तद्वारणाय—वह्न्यादिव्याप्ये, तद्विरहे वा पुरोवर्तित्वादौ वह्न्यादिव्यभिचारित्ववारणाय । कोटिद्वयेति । न च साध्यसन्देहजनकोपस्थितिजनकत्वमेव निवेश्यतां किमुपस्थितौ कोटिद्वयविषयकत्वनिवेशनेनेति वाच्यम् । तथासति स्यादप्यविरुद्धयोरतिव्याप्तिः । तथाहि—संशयं प्रति तत्कोटिसहचरितधर्मवत्त्वाज्ञानजन्यतदुपस्थितित्वेन तदभावकोटिसहचरितधर्मवत्त्वाज्ञानजन्यतदभावोपस्थितित्वेन पृथगेव तत्तत्साहचर्यविषयतामन्तर्भाव्य हेतुता कल्प्यते । एवं तत्तत्कोट्युपस्थितौ प्रत्यपि तत्तत्कोटिसहचरितधर्मवत्त्वाज्ञानत्वेन हेतुता । इत्थञ्च वह्न्य-

भावसहचरितधूमवानिति, ज्ञानजन्यवह्न्यभावोपस्थितिसहकारेण, वह्निसंशयजनकवह्न्युपस्थितिजनकीभूतं वह्निसहचरितधूमवा-निति ज्ञानमादाय धूमे वह्निसहचरितजलत्ववानिति ज्ञानजन्यव-ह्न्युपस्थितिसहकारेण, वह्निसंशयजनकवह्न्यभावोपस्थितिजन-कीभूतं, वह्न्यभावसहचरितजलत्ववानितिज्ञानमादाय, च: जलत्वे-ऽतिव्याप्तिः। कोटिद्वयोपस्थितिनिवेशे च तथाविधज्ञानयोः प्रत्येकं कोटिद्वयोपस्थापकत्वाभावान्नातिप्रसङ्गः। न च वह्निस-हचरितधूमवान्वह्न्यभावसहचारितधूमवांश्च पर्वत इत्येतादृशसमू-हालम्बनज्ञानस्य कोटिद्वयोपस्थापकत्वेनैतद्दोषतादवस्थ्यमिति, वा-च्यम्। साध्योपस्थितिजनकतावच्छेदकीभूता या साध्याभावोप-स्थितिजनकतावच्छेदकीभूतप्रकारता तदाश्रयत्वनिवेशाच्चादृशसमू-हालम्बनज्ञाननिरूपितयोः वह्नितदभावसाहचर्यावच्छिन्नप्रकारतयोः प्रत्येकन्तादृशजनकताद्वयावच्छेदकत्वविरहेणातिप्रसङ्गविरहात्। धू-मसहचरितवह्निमान् धूमाभावसहचरितवह्निमांश्च पर्वत, इत्यादिस-मूहालम्बनज्ञाने प्रकारतावच्छेदकभेदेन वह्न्यादिप्रकारताभेदात्प्र-त्येकं कस्याश्चिदपि प्रकारतायास्तादृशजनकताद्वयावच्छेदकत्वा-सम्भवेऽपि धूमधूमाभावसहचरितवह्निमान्पर्वत इत्याद्याकारकोभ-यसाहचर्यावच्छिन्नलक्षणैकप्रकारतायास्तथात्वेन वह्न्यादौ लक्षणस-मन्वयः। वह्नितदभावसहचरितधूमवान्पर्वत इत्याद्याकारकोभयसा-हचर्यावच्छिन्नप्रकारताशालिज्ञानमादायातिप्रसङ्गस्तु तादृशप्रकार-तावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वविवक्षया स्वयमेव निरा-करिष्यते।

अथ वह्निसाहचर्येण वह्न्यभावसाहचर्यमात्रेण वाऽवाच्ज्ञा या ध्याप्यस्य विरुद्धस्य वा प्रकारता तस्याः उद्बोधकान्तरवशात्सा-ध्यतदभावोभयविषयकसमूहालम्बनोपस्थितिजनकज्ञानीयतया प्र-त्येकं साध्योपस्थितिजनकतायां साध्याभावोपस्थितिजनकताया-श्चावच्छेदकत्वेनातिप्रसङ्गः। यदि च साध्यविशेषणकोपस्थितिवृत्ति-साध्यसन्देहजनकतानियतं यज्जन्यत्वं तन्निरूपितायां साध्यविशेष-णकोपस्थित्यवृत्तिसाध्यसन्देहजनकतानियतञ्च यज्जन्यत्वं तन्निरू-पितायाञ्च जनकतायामवच्छेदिका या प्रकारता तस्याः साध्याभा-वविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानि-

रूपितायां तादृशधर्मानवच्छिन्नसाध्यविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायाञ्च जनकतायामवच्छेदिका या प्रकारता तस्या वा निवेशान्नोक्तदोष । साध्याभावोपस्थित्यवच्छिन्नाया अपि जनकतायाः साध्यविषयकत्वघटितधर्मावच्छिन्नतया विरुद्धातिव्याप्तेर्दुर्वारतया साध्यविषयकत्वघटितधर्मावच्छिन्नजनकताया साध्याभावविषयकत्वानवच्छिन्नत्वप्रवेशे । साध्यमुख्यविशेष्यताघटितधर्मावच्छिन्नस्य निवेशेनैव वा तादृशातिव्याप्तिर्वारणीयेत्युच्यते, तथापि वह्निमद्वृत्तिवह्न्यभाववद्व्यावृत्तधूमवानयं वह्निमद्व्यावृत्तवह्न्यभाववद्वृत्तिजलत्ववानिति ज्ञानीयधूमादिप्रकारतामादायातिप्रसङ्गो दुर्वार एव । वह्निमद्वृत्तिधूमवत्ताज्ञानजन्यवह्न्युपस्थितेर्वह्न्यभाववद्वृत्तिधर्मवत्ताज्ञानजन्यवह्न्यभावोपस्थितिसहकारेण संशयजनकतावद्वह्न्यभाववद्व्यावृत्तधर्मवत्ताज्ञानजन्यवह्न्यभावोपस्थितेरपि वह्निमद्व्यावृत्तधर्मवत्ताज्ञानजन्यवह्न्युपस्थितिसहकारेण संशयजनकत्वात्, तादृशज्ञानीयधूमप्रकारताया वह्निसाहचर्यावच्छिन्नत्वेन संशयजनकवह्न्युपस्थितिजनकताया वह्न्यभाववद्व्यावृत्तत्वावच्छिन्नत्वेन च तथाविधवह्न्यभावोपस्थितिजनकताया तादृशज्ञानीयजलत्वप्रकारतायाश्च वह्निमद्व्यावृत्तत्वावच्छिन्नत्वेन तथाविधवह्न्युपस्थितिजनकतायां वह्न्यभाववद्वृत्तित्वावच्छिन्नत्वेन च तथाविधवह्न्यभावोपस्थितिजनकतायामवच्छेदकत्वात् ।

मैवम् । साध्यविषयत्वघटितधर्मावच्छिन्नजनकतावच्छेदको यो धर्मस्तदवच्छिन्नजन्यतानिरूपितायां तदवच्छिन्नसहकारितावच्छेदकसाध्याभावविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायाञ्च जनकतायामवच्छेदकीभूतप्रकारतानिवेशे नातिप्रसङ्गः । तदवच्छिन्नसहकारितावच्छेदकत्वञ्च तदवच्छिन्नसमवधानप्रयुक्तफलोपधायकताभाववत्त्वावच्छिन्नकत्वमित्यलं पल्लवितेन ॥

(दी०) न च तदसाधारणतया सग्राह्यमेवेति वाच्यम् । तच्छत्वेऽपि तदुत्तीर्णतादशाया विशेषदर्शनात् संशयानुपधायकत्वेऽपि तज्जननयोग्यताया अनिवृत्तेः । अन्यथा यथायथ पक्षे

साध्यतदभावनिश्चयदशायां साधारणाव्याप्तिसत्त्वात् । प्रतिपक्ष-
सम्वलनदशायां हेतुमत्ताज्ञानस्य साध्यसन्देहजनकत्वपक्षे हेतु-
वारणाय कोटीत्यादि । हेतुना साध्यस्य प्रतिहेतुना तदभावस्य
उपस्थापनादुभयोपस्थापकत्वं न कस्यापीत्यपि कश्चित् ।

(गा०) तत्-संशयधर्मितावच्छेदकेदन्त्वादिकम् । असाधारण-
तयेति । संशयविषयमात्रवृत्तित्वेन सपक्षविपक्षव्यावृत्तत्वादिति
भावः । सङ्ग्राह्यमेव-संशयदशायां सव्यभिचारसामान्यलक्षणलक्ष्य-
मेव । तथाच संशयदशाया लक्ष्यतयैव नातिव्याप्तिसम्भवः । तदव-
च्छिन्ने साध्यादिनिश्चयदशायाञ्च तत्प्रकारकज्ञानस्य संशयजनक-
तया संशयजनकताघटितस्य लक्षणस्यैतत्साधारण्यञ्च सम्भवती-
ति हृदयम् ।

तादृशनिश्चयदशायामेवातिव्याप्तिं सङ्गमयति तथात्वेपीति । तथा-
त्वेपि-तदवच्छिन्नविशेष्यकसंशयदशायान्तस्य लक्ष्यत्वेऽपि, तदुत्तीर्ण-
तादृशायाम्-असाधारण्योत्तीर्णतादृश्याम्, तादृशधर्मवति-साध्यस्य
तदभावस्य वा निश्चयदशायामिति यावत्, विशेषदर्शनात् विपरी-
तनिश्चयात् । तज्जननयोग्यतायाः इति । तत्प्रकारकज्ञानस्येत्यादिः ।
अनिवृत्तेरिति । अतिव्याप्तिरिति शेषः । वक्ष्यमाणदोषेण संशयफ-
लोपधायकतानिवेशासम्भवादिति भावः । इदमुपलक्षणम् । फलो-
पधायकतानिवेशेऽपि संशयजनकज्ञानशून्यतादशायां साधारणाव्या-
प्तिभयेन तादृशज्ञानस्योपलक्षणविधयैव लक्षणे निवेशनीयतया सं-
शयोपधायककालान्तरीणज्ञानविषयतामादायातिव्याप्तिः सम्भवती-
ति बोध्यम् । अन्यथा-फलोपधायकज्ञानस्य विशेषणविधया लक्षण-
घटकत्वे । पक्षादाविति । पक्षे साध्यादिनिश्चयसत्त्वेऽपि धर्म्यन्तर-
विशेष्यकसाध्यसन्देहजनकतामादाय लक्षणगमनसम्भवादादिपदं
हेतुमत्ताज्ञानविषयीभूतपक्षेतरयावद्धर्मिपरम् । इदमुपलक्षणम् । सा-
धारण्यादिविशिष्टस्वप्रकारकधर्मिज्ञानशून्यतादशायामव्याप्तिर्बोध्या ।
साधारणाव्याप्तीति । साधारणस्य नित्यदोषतया तदा तस्यालक्ष्य-
त्वोपगमासम्भवादिति भावः ।

कोटिद्वयोपस्थापकत्वांशस्य प्रयोजनान्तरं वर्णयतो मतमाह

सत्प्रतिपक्षेति । एतन्मते व्याप्यवत्तानिश्चयस्य संशयप्रतिबन्धकत्वमेव न तु कारणत्वम् । विरोधिपरामर्शयोरप्रामाण्यग्रहे तु साधारणधर्मादिज्ञानादेव संशय इत्यत्रो जनकत्वपक्ष इति । हेतुधारणाय-व्याप्यधारणाय, तस्यापि परामर्शात्मकसंशयजनकपक्षधर्मताज्ञानविषयत्वादिति भावः । ननु साधारण्यादिविशिष्टत्वज्ञानस्यैव परामर्शयोरपि साध्यतदभावोपस्थितिद्वारैव संशयजनकत्वात्कोट्युपस्थितिनिवेशेऽपि न प्रतीकार इत्यत आह हेतुनेति । उभयोपस्थापकत्वं-साध्योपस्थितिजनकतावच्छेदिका सति तदभावोपस्थितिजनकतावच्छेदकीभूता या प्रकारता तदाश्रयत्वम् ॥

( दी० ) इदं द्व्यणुकं नित्यमणुत्वादित्यादौ साधारणधर्मवद्धर्मिज्ञानस्य कोट्युपस्थितिं संशयञ्च प्रति हेतुतया, तद्विषये धर्मिणि सद्धेतौ अतिप्रसङ्गः स्यादतः पक्षधर्मतेति । पक्षपदं धर्मिमात्रपरम् । न चैवं नित्यो घटः शब्दत्वादित्यत्र बाधाद्यवतारेऽसाधारण्यापत्तिः, इष्टत्वात्, अन्यथा बाधासिद्ध्योरन्यतरावतारदशायां साधारणासंग्रहापत्तेः । असिद्धिसङ्कीर्णत्वे सव्यभिचारव्यामवेशे सव्यभिचारसङ्कीर्णतया असिद्धेऽप्यनन्तभावापत्तौ तदतिरिक्तहेत्वाभासत्वापत्तेः । न च व्याप्यत्वासिद्धयोः साधारण्यभ्रमदशाया(१)मतिप्रसङ्गः, धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्यसन्देहजनकं तद्रूपावच्छिन्नत्वस्योक्तत्वात् । तच्च रूपं साधारण्यादीति, सिद्धान्ते स्फुटीभविष्यति ॥

(गा०) निश्चितसाध्याभाववद्वृत्तित्वस्य साधारणघटकतामते केषुचिद्व्यणुकेषु साध्याभावनिश्चयसत्त्व एव अणुत्वस्य तथात्व सम्भवतीत्यभिप्रेत्य तादृशनिश्चयसत्त्वं सूचयितुं यत्किञ्चिद्व्यणुकस्य पक्षतालाभाय इदमिति । साधारणधर्मवद्धर्मिज्ञानस्य-नित्यत्वानित्यत्वसहचरिताणुत्ववद्व्यणुकधर्मिज्ञानस्य, धर्मिणि-द्व्यणुके । नित्यत्वसाध्यकस्थले

(१) अत्र गादाधर्यनुसारेण-साधारण्यभ्रमदशायामतिप्रसङ्ग-इति पाठस्समुचितः किन्तु सर्वत्रैव एव पाठस्योपलम्भात्स एव धृत इति बोध्यम् ।

तस्यालक्ष्यत्वसूचनाय सद्धेतावितिः। अतिप्रसङ्गोऽ-तिव्याप्तिः । न च समूहालम्बनविषयतामादायातिप्रसङ्गवारणाय कोटिद्वयोपस्थितिजनकतावच्छेदकीभूतविषयताश्रयत्वनिवेशनमावश्यकम्, तथा च कथं धर्मिण्यतिव्याप्तिः यतस्तत्कोटिस्मृतौ तत्तत्साहचर्यादिविशिष्टविषयकज्ञानत्वेनैव हेतुता, न तु तद्विशिष्टवद्धर्मिज्ञानत्वेन सम्बन्धिविशेष्यकज्ञानादपि सम्बन्ध्यन्तरस्मरणादेन्यदाप्ययं हस्तिसम्बन्धी घटपदं घटे शक्तमित्याद्याकारकज्ञानाद्धस्तिघटादिस्मरणानुदयप्रसङ्गात्, तथा च धर्मिविषयतायाः कोटिद्वयोपस्थापकतावच्छेदकत्वमेव नास्तीति वाच्यम् । सम्बन्धिविशिष्टधर्मिज्ञानस्यैवाऽपरसम्बन्धिस्मारकतेति मतानुसारेणैवैतल्लक्षणप्रणयनात् । एतन्मतस्य निर्युक्तिकतया पक्षधर्मतापदस्य निष्प्रयोजनकत्वमाकलय्यैतत्परित्यागेन सिद्धान्तलक्षणस्य वक्ष्यमाणत्वात् ।

वस्तुतस्तु साध्यसन्देहजनककोटिद्वयोपस्थितिजनकज्ञानविषयत्वमित्यस्य कोटिद्वयोपस्थितिनिष्ठा या साध्यसन्देहजनकता जन्यतासम्बन्धेनाव्यवहितोत्तरत्वसम्बन्धेन वाऽवच्छिन्नायास्तदवच्छेदकतायामवच्छेदिका या विषयता तदाश्रयत्वमर्थः । एवञ्च साधारणधर्मादिविशेष्यकज्ञानस्य कोटिद्वयस्मरणजनकत्वेऽपि संशये धर्मिज्ञाननियमाय तत्तद्धर्मिकसंशयं प्रति साधारण्यादिविशिष्टधर्मवद्धर्मिज्ञानविशिष्टकोट्युपस्थितित्वेन हेतुतेति धर्मिविषयताया अपि साध्यसन्देहजनकतावच्छेदकतावच्छेदकत्वादतिव्याप्तिरतः पक्षधर्मतापदोपादानमावश्यकमिति पक्षधर्मेतेति । न च पक्षधर्मतापदोपादानेऽपि तद्दोषतादवस्थ्यं धर्मिणोऽपि पक्षधर्मताज्ञानविषयत्वादिति वाच्यम् । तदुपादानफलेन निरुक्तायां जनकतायां परम्परया जनकतावच्छेदकतायां याऽवच्छेदकीभूता या धर्मिविषयता तन्निरूपितविषयता प्रकारतापर्यवसिता तदाश्रयत्वस्य लाभेनातिप्रसङ्गविरहात् । प्रकारतायाः प्रकारतात्वेनावच्छेदकत्वं विलक्षणीयम् । तेन साधारणधर्मादेर्धर्मितावच्छेदकीभूतसद्धेतौ नातिप्रसङ्गः । धर्मितावच्छेदकीयविषयताया प्रकारतात्वव्याप्यत्वेन धर्मितावच्छेदकतात्वेनैव निवेशात् । प्रकृतपक्षस्य प्रकृतपक्षतायाश्च निवेशे प्रयोजनाभावात् पक्षपदं धर्मिमात्रपरतयाऽव्याचष्टे पक्षपदमिति । धर्मिमात्रेति । मात्रपदेन पक्षतानिवेशव्यवच्छेदः ।

सत्प्रतिपक्षेति । स्वमते व्याप्यवत्तानिश्चयस्य संशयप्रतिबन्धकत्वमेव न तु कारणत्वम् । विरोधिपरामर्शयोरप्रामाण्यग्रहे तु साधारणधर्मादिदर्शनादेव संशय इत्यतो जनकत्वपक्ष इति । हेतुधारणाय-व्याप्यधारणाय, तस्यापि परामर्शात्मकसंशयजनकपक्षधर्मताज्ञानविषयत्वादिति भावः । ननु साधारण्यादिविशिष्टवत्ताज्ञानस्यैव परामर्शयोरपि साध्यतदभावोपस्थितिद्वारैव संशयजनकत्वात्कोट्युपस्थितिनिवेशेऽपि न प्रतीकार इत्यत आह हेतुनेति । उभयोपस्थापकत्वं-साध्योपस्थितिजनकतावच्छेदिका सती तदभावोपस्थितिजनकतावच्छेदकीभूता या प्रकारता तदाश्रयत्वम् ॥

(दी०) इदं द्व्यणुकं नित्यमणुत्वादित्यादौ साधारणधर्मवद्धर्मिज्ञानस्य कोट्युपस्थितिं संशयञ्च प्रति हेतुतया तद्विषये धर्मिणि सद्धेतौ अतिप्रसङ्गः स्यादतः पक्षधर्मेति । पक्षपदं धर्मिमात्रपरम् । न चैवं नित्यो घटः शब्दत्वादित्यत्र बाधाद्यवतारेऽसाधारण्यापत्तिः, इष्टत्वात्, अन्यथा बाधासिद्ध्योरन्यतरावतारदशायां साधारणासंग्रहापत्तेः । असिद्धिसङ्कीर्णत्वे सव्यभिचारमध्यप्रवेशे सव्यभिचारसङ्कीर्णतया असिद्धेऽप्यनन्तर्भावापत्तौ तदतिरिक्तहेत्वाभासत्वापत्तेः । न च व्याप्यविरुद्धयोः साधारण्यभ्रमदशाया(१)मतिप्रसङ्गः, धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्यसन्देहजनकं तद्रूपावच्छिन्नत्वस्योक्तत्वात् । तच्च रूपं साधारणत्वादीति सिद्धान्ते स्फुटीभविष्यति ॥

(गा०)निश्चितसाध्याभाववद्वृत्तित्वस्य साधारणघटकतामते केषुचिद्द्व्यणुकेषु साध्याभावनिश्चयसत्त्व एव अणुत्वस्य तथात्वसम्भवतीत्यभिप्रेत्य तादृशनिश्चयसत्त्वं सूचयितुं यत्किञ्चिद्द्व्यणुकस्य पक्षतालाभाय इदमिति । साधारणधर्मवद्धर्मिज्ञानस्य-नित्यत्वानित्यत्वसहचरिताणुत्ववद्द्व्यणुकधर्मिज्ञानस्य, धर्मिणि-द्व्यणुके । नित्यत्वसाध्यकस्थले

(१) अत्र गादाधर्यनुसारेण-साधारण्यभ्रमदशायामतिप्रसङ्ग-इति पाठस्समुचितः किन्तु सर्वत्रेदृश एव पाठस्योपलम्भात्स एव धृत इति बोध्यम् ।

तस्यालक्ष्यत्वसूचनाय सद्धेताविति । अतिप्रसङ्गोऽतिव्याप्तिः । न च समूहालम्बनविषयतामादायातिप्रसङ्गवारणाय कोटिद्वयोपस्थितिजनकतावच्छेदकीभूतविषयताश्रयत्वनिवेशनमावश्यकम्, तथात्वे कथं धर्मिण्यतिव्याप्तिः, यतस्तत्कोटिस्मृतौ तत्तत्साहचर्यादिविशिष्टविषयकज्ञानत्वेनैव हेतुता, न तु तद्विशिष्टवद्धर्मिज्ञानत्वेन, सम्बन्धिविशेष्यकज्ञानादपि सम्बन्ध्यन्तरस्मरणादन्यदाप्ययं हस्तिसम्बन्धी घटपदं घटे शक्तमित्याद्याकारकज्ञानाद्धस्तिघटादिस्मरणानुदयप्रसङ्गात्, तथा च धर्मिविषयतायाः कोटिद्वयोपस्थापकतावच्छेदकत्वमेव नास्तीति वाच्यम्, सम्बन्धिविशिष्टधर्मिज्ञानत्वेनैवापरसम्बन्धिस्मारकतेति मतानुसारेणैवैतल्लक्षणप्रणयनात् । एतन्मतस्य निर्युक्तिकतया पक्षधर्मतापदस्य निष्प्रयोजनकत्वमाकलय्यैव तत्परित्यागेन सिद्धान्तलक्षणस्य वक्ष्यमाणत्वात् ।

वस्तुतस्तु साध्यसन्देहजनककोटिद्वयोपस्थितिजनकज्ञानविषयत्वमित्यस्य कोटिद्वयोपस्थितिनिष्ठा या साध्यसन्देहजनकता अन्यथासम्बन्धेन अव्यवहितोत्तरत्वसम्बन्धेन वाऽवच्छिन्नायास्तदवच्छेदकतायामवच्छेदिका या विषयता तदाश्रयत्वमर्थः । एवञ्च साधारणधर्मादिविशेष्यकज्ञानस्य कोटिद्वयस्मरणजनकत्वेऽपि संशये धर्मिज्ञाननियमाय तत्तद्धर्मिकसंशयं प्रति साधारण्यादिविशिष्टधर्मवद्धर्मिज्ञानविशिष्टकोट्युपस्थितित्वेन हेतुतेति धर्मिविषयताया अपि तादृशसन्देहजनकतावच्छेदकतावच्छेदकत्वादतिव्याप्तिरतः पक्षधर्मतापदोपादानमावश्यकमिति पक्षधर्मतेति । न च पक्षधर्मतापदोपादानेऽपि तद्दोषतादवस्थ्यं धर्मिणोऽपि पक्षधर्मताज्ञानविषयत्वादिति वाच्यम् । तदुपादानबलेन निरुक्तायां जनकतायां परम्परया जनकतावच्छेदकतायां याऽवच्छेदकीभूता या धर्मिविषयता तन्निरूपितविषयता प्रकारतापर्यवसिता तदाश्रयत्वस्य लाभेनातिप्रसङ्गविरहात् । प्रकारतायाः प्रकारतात्वेनावच्छेदकत्वं विवक्षणीयम् । तेन साधारणधर्मादेर्धर्मितावच्छेदकीभूतसद्धेतौ नातिप्रसङ्गः । धर्मितावच्छेदकीयविषयतायाः प्रकारतात्वाभावेन धर्मितावच्छेदकतात्वेनैव निवेशात् । प्रकृतपक्षस्य प्रकृतपक्षतायाश्च निवेशे प्रयोजनाभावात् पक्षपदं धर्मिमात्रपरतया व्याचष्टे पक्षपदमिति । धर्मिमात्रेति । मात्रपदेन पक्षतानिवेशव्यवच्छेदः ।

यत्तु धर्मिपदमत्र मुख्यविशेष्यपरम्। तेन वह्निव्याप्यधूमवत्सहच-रितधूमवद्वृत्तिप्रमेयत्ववान्पक्ष इत्यादिज्ञानीयधूमादिविषयतामादाय नातिप्रसङ्ग इति। तन्न। साहचर्यधर्मितावच्छेदकीयविषयताया अन-कृतावच्छेदककोटौ प्रयोजनविरहेणानिवेशान्निवेशेऽपि वा धर्मि-तावच्छेदकत्वेनैव तस्या निवेशनीयतया प्रकारतात्वेनानिवेशा-त्साहचर्यस्य धर्मितावच्छेदकविषयतान्तःपातिधूमादिविषयतामादा-यातिप्रसङ्गाभावात्।

पक्षपदस्य पक्षताविशिष्टप्रकृतपक्षपरत्वमावश्यकम्। अन्यथा घटादिरूपपक्षे शब्दत्वादिना नित्यत्वसाधने बाधस्यासिद्धेर्वाऽव-तारदशायामपि सपक्षविपक्षव्यावृत्तशब्दत्ववान् शब्द इत्यादिज्ञान-विषयतामादाय सव्यभिचारत्वापत्तिः। न चेष्टापत्तिः दोषान्तरसङ्कर-प्रसङ्गात्। अस्मन्मते च पक्षताविशिष्टप्रकृतपक्षवृत्तिताज्ञानस्य विशे-षणविधया लक्षणघटकत्वान्नातिप्रसङ्गः। बाधग्रहस्थले पक्षताया असिद्धेरवतारे हेतौ प्रकृतपक्षधर्मताज्ञानस्याभावादित्याशङ्कते न चैवमिति। एव-पक्षपदस्य धर्मिमात्रपरत्वे, बाधसम्पादनायानि-त्यत्वमुपेक्ष्य नित्यत्वसाध्यतानुसरणम्। एवञ्च घटो नित्य इत्युक्तौ नव्यप्रत्यक्षशङ्कया नित्यत्वसाधकत्वस्य स्फुटीभवतीति नित्यो घट इत्युक्तम्। बाधादित्यादिना स्वरूपासिद्धिपरिग्रहः। असाधारण्या-पत्तिः-असाधारण्यज्ञानमादाय सव्यभिचारत्वापत्तिः। एतेनास्य सव्यभिचारसामान्यलक्षणतया एतद्विभक्तकेरसाधारण्यानापाद-कत्वादसङ्गतिरित्यपास्तम्। सपक्षावृत्तित्वेन साधारण्यस्य केव-लान्वयिधर्मस्य। पक्षतानवच्छेदकत्वादनुपसंहारित्वस्य चाऽसम्भ-वात्परिशेषेणासाधारण्यापत्तिरिति भावः। तदानीं सपक्षविपक्ष-व्यावृत्तत्वसत्त्वे दोषान्तरावतारेऽपि सव्यभिचारत्वमसाधारण्यये-एमेव क्षतिविरहादित्याशयेनाह एवमादिति। अन्यथा-पक्षतायाः प्रकृतपक्षधर्मताज्ञानस्य वा विशेषणत्वे। बाधासिद्ध्योरिति। बाधस्या-सिद्धेर्वाऽवतारदशायां हृदादौ धूमादिसाधने वह्न्यादेरसङ्ग्रहापत्तेरि-त्यर्थः। साधारण्यस्य नित्यदोषतया तदेष्टापत्तिर्न सम्भवतीति भावः॥

ननु दोषान्तरावतारदशायां सव्यभिचारत्वं क्वापि नेष्यत एव भवतु साधारण्यमप्यनित्यदोष इत्यत आह असिद्धाविति। साधार-

ण्यभ्रममादायेति । यथायथं साध्याभाववद्वृत्तित्वसाध्यवद्वृत्तित्वांशे भ्रमात्मकं साधारण्यज्ञानमादायेत्यर्थः । धर्मिणि—फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्ने, यद्रूपावच्छिन्नवत्ताज्ञानं—यद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नम् । साध्यसन्देहजनकमिति । एतच्च संशयं प्रति कोट्युपस्थितिविशेषणज्ञानादिमुद्रयैव हेतुः साधारणधर्मवद्धर्मिज्ञानञ्च साक्षादेव तथेति निष्कृष्टमते कोट्युपस्थितिजनकत्वाघटितमेव लक्षणमुक्तमित्यभिप्रायेण । यथाश्रुतमूलानुरोधे तु संशयजनककोटिद्वयोपस्थितिजनकत्वमेव निवेशनीयम् । साध्यसंशयजनककोटिद्वयोपस्थितिजनकमित्यपि व्याचक्षते । तन्मते धर्मिणीति प्रकारतात्वेन अवच्छेदकतालाभायेति ध्येयम् ।

अथैवं साधारण्यादिघटककेवलसाध्यवद्वृत्तित्वत्वाद्यवच्छिन्नत्वमादायातिप्रसङ्गो दुर्वारः । न च धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वं संशयजनकतानतिरिक्तवृत्ति तद्रूपवत्त्वस्य साध्यसंशयजनकतावच्छेदकीभूता या धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वस्य वा निवेशान्नातिप्रसङ्गः, संशयं प्रति कोटिद्वयसाहचर्यावच्छिन्नप्रकारताशालिज्ञानत्वेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानस्यैवैकहेतुताकल्पनादेककोटिसाहचर्यावच्छिन्नप्रकारताशालिज्ञानस्य संशयाजनकतया उभयकोटिसाहचर्यादेरेव तादृशधर्मत्वादिति वाच्यम् । उक्तरीत्यैकहेतुताकल्पनस्यैककोटिसाहचर्याद्यवच्छिन्नत्वविशिष्टापरकोटिसाहचर्याद्यवच्छिन्नत्वेनैव प्रकारताया निवेशनीयतया अवच्छिन्नतयोर्विशेष्यविशेषणभावे विनिगमनाविरहात्, व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानान्तर्भावानुपपत्तेश्च । तत्र व्याप्यतदभावयोः प्रत्येकमुभयकोटिसहचरितत्वाभावात् । न च व्याप्यसंशयस्य पृथक्कारणतामत एवेदं लक्षणमिति वाच्यम् । व्याप्यसंशयस्येत्यादिग्रन्थविरोधात् । न च यद्यद्रूपावच्छिन्नप्रकारकज्ञानत्वेन संशयजनकता तत्तद्रूपवत्त्वस्य संशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्याप्तिमन्तो ये ये धर्मास्तत्तद्धर्मवत्त्वस्य वा विवक्षया नातिप्रसङ्ग इति वाच्यम् । सत्तावत्समवेतजातिमान्सत्ताभाववत्समवेतजातिमानयमित्यादिग्र-

रणसमवधाने तादृशनिश्चयेऽप्रामाण्यसंशय एव न जातस्तत्र उक्ता-
तिप्रसङ्गासम्भवेन निश्चयसाधारणव्याप्यवत्ताज्ञानत्वेन हेतुताया
निष्प्रत्यूहत्वात्तादृशस्थलीयातिव्याप्त्यभिप्रायकतयैव तद्ग्रन्थस्य
व्याख्येयत्वात् ।

अथवा व्याप्यवत्ताज्ञानत्वेन या व्यापकसंशयहेतुता तदवच्छे-
दककोटिप्रविष्टाप्रामाण्यनिश्चयानास्कन्दितत्वघटकनिश्चयत्वं सा-
ध्यव्याप्यत्वावच्छिन्नाभावज्ञानविशिष्टाप्रामाण्यसंशयान्याप्रामाण्य-
ज्ञानत्वम् । तथा च व्याप्याभाववत्ताज्ञानशून्यकालीनाप्रामाण्यसंश-
यस्यापि यथोक्तनिश्चयहेतुत्वात् तद्विशिष्टव्याप्यवत्ताज्ञानकाले चा-
पत्तेरभावात् । न च तथापि व्याप्यवत्ताज्ञानत्वेन व्यापकसंशय-
हेतुता न सम्भवति, तथा सति धर्मितावच्छेदकसामानाधिकरण्य-
मात्रावगाहिव्याप्यवत्तानिश्चयात्तदवच्छेदेन व्यापकवत्तान्तत्सा-
मानाधिकरण्यमात्रेण व्यापकाभावमवगाहमानस्य संशयस्यापत्ते-
स्तादृशसंशये तादृशनिश्चयस्याविरोधित्वादिति वाच्यम् । धर्मिता-
वच्छेदकावच्छेदेन व्याप्यवत्तावगाहिनः संशयादेव तदवच्छेदेन
व्यापकवत्तावगाहिसंशयोदयात्तादृशव्यापकवत्तासंशये तादृशव्या-
प्यवत्त्वावगाहिज्ञानत्वेनैव हेतुत्वोपगमादुक्तापत्तेरप्रसक्तेः ।

अथवा संशयजनकतावच्छेदकप्रकारतायां सव्यभिचारताघट-
कसम्बन्धावच्छिन्नत्वस्यावश्यकतया वह्निव्याप्यवानयमिति संश-
यीयाभावप्रकारतायाः संयोगादिसम्बन्धानवच्छिन्नतया तत्सम्बन्धा-
वच्छिन्नव्याप्यप्रकारताया संशयजनकतावच्छेदिकत्वेऽतिव्याप्तिप्रस-
क्त्या न व्याप्यसंशयस्येत्यादेरसङ्गतिः ।

अथ साधारणधर्मवत्ताज्ञानस्य संशयजनकत्वे धर्मैक्यस्याप्रयो-
जकतामते तत्सम्बन्धस्याप्यप्रयोजकतया तादृशजनकतावच्छेद-
कयावत्प्रकारतासु प्रत्येकमवच्छेदकीभूतानि यानि रूपाणि तद्वत्त्व-
निवेशे अयमात्मा ज्ञानादित्यादौ विषयतया आत्मत्वाभावसमाना-
धिकरणज्ञानवत्ताज्ञानसहकारेण साध्यसन्देहजनक यत्समवायेन
साध्यसहचरितज्ञानादिमत्ताज्ञानन्तदीयप्रकारतामादाय समवायेन
ज्ञानादेर्व्यभिचारितापत्तेः । विषयितासम्बन्धेनाभावकोटिसहचरित-
तद्वत्ताज्ञानीयप्रकारताया समवायसम्बन्धावच्छिन्नतया सव्यभिचा-
रिताघटकसम्बन्धावच्छिन्नप्रकारतानन्तर्गतत्वात् इति चेत् ।

सत्यम्। यत्किञ्चित्साध्यसंशयनिरूपितजनकतावच्छेदकीभूतधर्मितावच्छेदकावच्छिन्ना या या विशेष्यता तन्निरूपितसव्यभिचारताघटकसम्बन्धावच्छिन्ना या प्रकारता तदवच्छेदकधर्मवत्त्वमेव विवक्षणीयम्। तथासत्युक्तस्थले विषयतासम्बन्धावच्छिन्नज्ञानप्रकारतानिरूपितविशेष्यताया अपि निरुक्तयावद्विशेष्यतान्तर्गतत्वात्तन्निरूपितसव्यभिचारताघटकसम्बन्धावच्छिन्नप्रकारत्वाप्रसिद्ध्या नातिव्याप्तिः। एवं संशये समुच्चयवैलक्षण्याय उभयप्रकारतानिरूपितैकविशेष्यतास्वीकर्तृमते व्याप्यसंशयीयकोटिद्वयप्रकारतानिरूपितविशेष्यतानिरूपितव्याप्यताघटकसम्बन्धावच्छिन्नप्रकारतावच्छेदकव्याप्यत्वमादायाप्यतिव्याप्तिः सम्भवतीत्याशङ्क्य व्याप्यसंशयेत्यादिकमभिहितम्।

यत्तु तत्तु जनकतावच्छेदकयावत्प्रकारतावच्छेदकवत्त्वादिनिवेशे धूमतद्भावसहचरितकाञ्चनमयवह्निमानित्यादिज्ञानीयप्रकारताया अपि निरुक्तयावत्प्रकारतान्तर्गततया तदवच्छेदकतापर्याप्त्यधिकरणकाञ्चनमयत्वादिघटितधर्मवत्ताया वह्न्यादौ दुरुपपादतया असम्भव इति यत्किञ्चित्संशयनिरूपिता धर्मितावच्छेदकावच्छिन्नविशेष्यताघटितधर्मावच्छिन्ना या या जनकता तदवच्छेदकीभूततादृशविशेष्यतानिरूपितप्रकारतावच्छेदकतापर्याप्तिमद्धर्मवत्त्वमेव विवक्षणीयम्। एवञ्च काञ्चनमयत्वादिघटितवह्न्यादिज्ञानसाधारणकारणताया ऐक्यात्तदवच्छेदकीभूतकाञ्चनमयत्वादिघटितवह्न्यादिज्ञानीयप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वमादायैव धूमादिसाध्यकवह्न्यादौ लक्षणसमन्वयः। संशयं प्रति तत्तत्कोटिसाहचर्यावच्छिन्नप्रकारताशालिज्ञानत्वेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानस्य कारणताद्वयीति व्याप्यविरुद्धयोरतिव्याप्तिनिरासः। एवञ्च व्याप्यसंशयत्वावच्छिन्नाया उभयकोटिप्रकारत्वावच्छिन्नाया जनकताया ऐक्यात्तदवच्छेदकीभूतव्याप्यप्रकारतावच्छेदकव्याप्यत्वमादाय व्याप्येऽतिप्रसङ्गात् तुर्योर एवेत्याशङ्क्य व्याप्यसंशयस्य पृथक्कारणतामते ज्ञानपदस्य निश्चयपरत्वमुपदर्शितम्। न च व्याप्यसंशयस्य उभयप्रकारत्वेन नैकहेतुता विशेष्यविशेषणभावे विनिगमनाविरहादपि तु प्रत्येकप्रकारतां निवेश्य हेतुताद्वयमेव कल्पनीयम् इति नातिव्याप्तिप्रसक्तिरिति वाच्यम्। हेतुताद्वयकल्पने यत्र व्याप्यवत्तानिश्चयस्य

स्यांशेऽप्रामाण्यसंशयात्मकस्यानन्तरक्षणे व्याप्याभाववत्तानिश्चयस्तदुत्तरक्षणे व्यापकसंशयापत्तेः । एतेन यावत्प्रकारतानिवेशपक्षेऽपि सव्यभिचारताघटकसम्बन्धावच्छिन्ननिरुक्तजनकतावच्छेदकप्रकारतानां न यावत्त्वेन निवेशः अपितु निरुक्तजनकतावच्छेदकीभूता यावत्यः प्रकारताः सव्यभिचारताघटकसम्बन्धावच्छिन्नानां तासां प्रत्येकावच्छेदकरूपवत्त्वं निवेश्यम् । एवं च अयमात्मा ज्ञानादित्यादौ नोक्तक्रमेणातिव्याप्तिसम्भवः विषयतासम्बन्धावच्छिन्नज्ञानादिप्रकारतानामपि निरुक्तयावत्प्रकारतान्तर्गततया सव्यभिचारताघटकसम्बन्धावच्छिन्नत्वस्य तत्रासत्त्वेन तेन रूपेण तदुपादानासम्भवात् । तथाच तावता व्याप्यसंशयहेतुतामादायाप्यतिव्याप्तिवारणासम्भवेन विशेष्यतया यावत्त्वेन निवेशनं ज्ञानपदस्य निश्चयपरत्वं च न युक्तमिति पूर्वव्याख्यानासम्यक्त्वेऽपि न क्षतिः ।

अथवा व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानान्तर्भावमते एकैककोटिसामानाधिकरण्यमादाय सद्धेतावतिप्रसङ्गवारणाय यत्किञ्चित्संशयजनकतावच्छेदकयावत्प्रकारतापर्यन्तं निवेशनीयम् । व्याप्यसंशयस्य पृथक्कारणतामते नोक्तक्रमेण सद्धेतावतिप्रसङ्गशङ्कावकाशः—तन्मते कोटिद्वयसामानाधिकरण्यावच्छिन्नत्वेनैव प्रकारताया जनकतावच्छेदकत्वोपगमात् । एकैककोटिसाहचर्यावच्छिन्नत्वप्रकारतायाः संशयजनकतानवच्छेदकत्वात् । अतो यावत्प्रकारतानिवेशनं संशये यत्किञ्चित्त्वनिवेशनं च न कर्तव्यम्, अपि तु व्याप्यसंशयहेतुतामादायातिप्रसङ्गवारणाय ज्ञानपदमेव निश्चयपरमुपगन्तव्यम् इत्येव व्याप्यसंशयेत्यादिनाऽभिहितम् । न च धर्म्यैक्यस्य संशयजनकतायां तन्त्रतामते कोटिद्वयसामानाधिकरण्यावच्छिन्नत्वं नैकत्र निवेश्यते विशेष्यविशेषणभावे विनिगमनाविरहादपि तु प्रत्येकसामानाधिकरण्यावच्छेदकत्वं प्रत्येकं निवेश्य कारणताद्वयमेव कल्प्यते । धूमसहचरितवह्निमत्ताज्ञानधूमाभावसहचरितवह्निमत्ताज्ञानयोः परस्परसहकारित्वाच्च कोटिद्वयसहचरितविभिन्नधर्मवत्ताज्ञानात् संशयप्रसङ्गः । धूमसहचरितवह्निमान् तदभावसहचरितवह्निमानिति ज्ञानद्वयादितोऽपि संशय-स्वीक्रियते, तथाच सद्धेतावतिप्रसङ्गवारणाय यावत्प्रकारतानिवेशनं संशये यत्किञ्चित्त्वनिवेशनं चावश्यकमिति वाच्यम् । विभिन्नहेतुत्वे साहचर्यधर्मितावच्छेदकयावत्त्वव्याप्यादिध-

र्माणां विशिष्यानिवेशे कोटिद्वयसहचरितधर्मवत्ताज्ञानयोः परस्परसंपृक्तविषये विभिन्नधर्मवत्ताज्ञानात्संशयापत्तेर्दुर्वारतया तादृशधर्माणां विशिष्य निवेशनीयतया कारणतानन्त्यापत्तेरिति संक्षेपः ॥

अथ द्रव्य विशिष्टसत्त्वादित्यादेः सव्यभिचारत्वापत्तिः—विशिष्टसत्त्वस्यानतिरिक्ततया विशिष्टसत्त्वादौ साध्यतदभावसहचरितत्वग्रहवृत्तित्वयोः सत्त्वादिति चेन्न । गुणकर्मान्यत्वस्य सामानाधिकरण्यरूपं विशिष्टवैशिष्ट्यं च क्वचिदुपलक्षणतया हेतुतावच्छेदकं क्वचिद्विशेषणतया । आद्यं यथाऽनुमितित्वादिलक्षणप्रविष्टमितत्वमेवानुमापकतावच्छेदकं यत्त्वाक्तसमवेतत्वादिकं तद्विशिष्टानुमितित्वादिजातेः व्यपायश्रतेऽसंदेहेन भागासिद्धस्तस्य विशेषणत्वायोगात् । अत एव तादृशजात्यनुमयत्वान्यत्वादिविशेषणं व्यभिचारवारकतया सार्थकम् । द्वितीयं च यथा शब्दोऽनित्यो बाह्यकरणप्रत्यक्षविषयत्वे सति सत्त्वादित्यादौ सत्यन्तार्थः । तस्य तद्विशेषणत्वे एव सद्धेतुतानिर्वाहात् । तथा च दर्शितस्य वैशिष्ट्यस्योपलक्षणतया हेतुतावच्छेदकत्वे सव्यभिचारत्वमिष्टमेव, विशेषणत्वे च विशिष्टनिरूपितसमवायादिरेव हेतुतावच्छेदकसम्बन्धो वाच्यः, अन्यथा यद्धर्मविशिष्टनिरूपितत्वानवच्छिन्नसमवायादिर्हेतुतावच्छेदकसम्बन्धस्तस्य हेतुप्रकारस्योपलक्षणविधया हेतुतावच्छेदकत्वात् विशेषणानुपपत्तेः । न च विशिष्टनिरूपितसमवायादेर्हेतुतावच्छेदकसम्बन्धत्वे तेन सम्बन्धेन शुद्धसत्त्वादेरव्यभिचारतया तद्विशेषणवैयर्थ्यमिति 'गुणकर्मान्यत्वे सति सत्त्वादिति हेतुप्रयोगे निग्रहस्थानापत्तिरिति वाच्यम् । विशिष्टविशेषणकबुद्धावेव 'विशिष्टनिरूपितत्वस्य सम्बन्धतावच्छेदकतया तद्रूपविशिष्टनिरूपितसमवायादिना तद्रूपानवच्छिन्नस्य हेतुत्वासम्भवात् । एवं च विशिष्टनिरूपितसमवायादिना सम्बन्धेन सद्धेतोर्विशिष्टसत्त्वादेर्न तेन सम्बन्धेन सव्यभिचारताप्रसङ्गः । यादृशेन सम्बन्धेन पक्षधर्मताविषयकं यज्ज्ञानं तस्य तादृशेन सम्बन्धेन कोटिद्वयसहचरितावगाहितायाः संशायकताप्रयोजकत्वात्समवायसामान्यसम्बन्धेन द्रव्यत्वाद्यभावसाहचर्यावगाहिनो दर्शितविशेषसम्बन्धेन पक्षधर्मताज्ञानस्य संशायकताविरहात् । तादृशविशेषसम्बन्धेन च द्रव्यत्वाद्यभावसाहचर्यस्य सत्त्वादावभावात् तादृशसाहचर्यावगाहिभ्रममादायातिप्रसङ्गानवकाशात् ।

अथ यथा हेतुतावच्छेदकोपलक्षिते व्याप्तिज्ञानस्थलेऽपि पक्षे त-

द्विशिष्टवैशिष्ट्यज्ञानादनुमिति'रधिकं त्वि'त्यादिन्यायात्, तथा विशिष्टसत्त्वोपलक्षिते सहचारो यत्र गृह्यते तत्र तद्विशिष्टवैशिष्ट्यस्य धर्मिणि ज्ञानादपि संशयोत्पत्तिरुचितेति, चेन्न। उभयोः स्थलयोर्विशेषात्। तथाहि—सामान्यरूपेण सामान्यसम्बन्धेन वा व्याप्तिग्रहे सामान्यघटितेन विशेषरूपेण विशेषसम्बन्धेन वा पक्षधर्मताज्ञानादनुमितिर्युज्यते हेतोः सम्बन्धस्य वा सद्भावे व्याप्तेरव्याघातात्। सामान्यरूपेण सामान्यसम्बन्धेन वा सहचारग्रहे विशेषरूपेण विशेषसम्बन्धेन वा पक्षधर्मताज्ञाने तु न संशयः—सद्भावस्य साधारण्यव्याघातकत्वात्। अत एव वह्नित्वादिना धूमतदभावसाहचर्यग्रहे आर्द्रेन्धनप्रभववह्नित्वादिना धर्मिवृत्तित्वज्ञानान्न संशयः, न वा संयोगसामान्येन धूमतदभावसहचरितवह्न्यादेर्महानसाद्यनुयोगिकसंयोगेन धर्मिणि ज्ञानात्संशयः, न वा तत्र साधारण्यप्रसङ्ग इति ॥

अथ द्रव्यगुणकर्मान्यत्वे सति सत्त्वादित्यत्र सद्धेतौ द्रव्यं गुणत्वे सति सत्त्वादित्यत्र विरुद्धे चातिव्याप्तिः—विशेष्येऽपि साध्यतदभावोभयसामानाधिकरण्यसत्त्वेन विशिष्टेऽपि तत्सत्त्वादिति चेन्न। साध्यतदभावोभयवृत्तितावच्छेदकविशिष्टवत्ताज्ञानस्यैव साधारणधर्मदर्शनविधया साध्यसन्देहजनकत्वात्। यत्किञ्चित्साध्यसन्देहजनकतावच्छेदकीभूता या या प्रकारतावच्छेदकता तदवच्छेदकतापर्याप्त्यधिकरणधर्मविशिष्टप्रकृतहेतुतावच्छेदकत्वस्य विवक्षणेनातिप्रसङ्गविरहात्—विशिष्टसत्तात्वरूपप्रकृतहेतुतावच्छेदकरूपोभयवृत्तितावच्छेदकत्वविरहात्। उभयसहचरितवृत्तित्वावच्छिन्नप्रकारतावच्छेदकताकज्ञानस्य संशायकत्वेऽपि नोक्तातिप्रसङ्गः, तथा सति यादृशयादृशधर्मावच्छिन्नप्रकृतहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानत्वेन यत्किञ्चित्संशयजनकता तादृशतादृशरूपविशिष्टतद्धर्मस्य विवक्षणीयत्वात्। उभयसहचरितवृत्तित्वं प्रकारतावच्छेदके भासते यत्र तत्र तदुपलक्षितवत्ताज्ञानस्य हेतुतया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानत्वेनाजनकत्वादुभयवृत्तितावच्छेदकत्वेन प्रकारतावच्छेदकस्य यत्र भानं तत्रोभयसहचारघटकतदवच्छिन्ननिरूपिताधिकरणतावगाहिज्ञानस्यैव हेतुतया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानत्वेन हेतुत्वमावश्यकमिति। तादृशहेतुतामादा-

साधारणे उभयवृत्तितानवच्छेदकविशिष्टवैशिष्ट्यावगाहिबोधत्वेन हेतुतामाश्रित्य चासाधारणे लक्षणं सङ्गमनीयम्। प्रकृतपक्षधर्मताज्ञाननिवेशे घटज्ञानं सविषयकं आत्मवृत्ति वा ज्ञानत्वादित्यादावतिव्याप्तिः। तथाहि—घटज्ञानं सविषयकमित्याद्यनिश्चयकालीनघटज्ञाने सविषयकं न वेत्यादिसंशयं प्रति घटधर्मिकसविषयकत्वज्ञानं प्रमा न वेत्याद्याकारकसंशयो हेतुः अर्थनिश्चयोत्तरार्थसंशये तद्धर्मिकप्रामाण्यसंशयस्य हेतुत्वात्। स च प्रामाण्यसंशयः सविषयकत्वतदभावादिरूपकोटिद्वयोपस्थित्यात्मकः सविषयकत्ववति सविषयकत्वरूपप्रामाण्यस्य सविषयकत्वेन तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यस्य च तदभावेन घटितत्वात् तादृशप्रामाण्यसंशये च सविषयकत्वादिज्ञानधर्मिकप्रामाण्याप्रामाण्यसहचरितज्ञानत्वादिमत्ताज्ञानं हेतुरिति सविषयकत्वादिरूपसाध्यसन्देहजनककोटिद्वयोपस्थितिजनकधर्मवृत्तिताज्ञानविषयत्वं ज्ञानत्वादावक्षतमेवेति प्रकृतपक्षधर्मताज्ञाननिवेश आवश्यकः, तन्निवेशे च सविषयकत्वादिज्ञानधर्मिकज्ञानत्ववत्ताज्ञानस्य तादृशज्ञानविषयघटज्ञानादिरूपप्रकृतपक्षधर्मत्वाभावान्नातिव्याप्तिरिति॥

(दी०) इदं सविषयकमात्मवृत्ति वा ज्ञानत्वात् इत्यादौ प्रामाण्याप्रामाण्यसंशयस्य तद्घटकीभूतसाध्यतदभावविषयकतया कोट्युपस्थितिरूपस्य जनकीभूतज्ञानविषये ज्ञानत्वे तु नातिप्रसङ्गशङ्कापि, साधारणधर्मवत्ताज्ञानस्य तज्जन्यकोट्युपस्थितेर्वा संशयजनकतया तज्ज्ञानस्य तादृशसंशयाहेतुत्वात्। प्रामाण्यसंशयस्थले तु ज्ञानत्वलक्षणसाधारणधर्मदर्शनात् ज्ञाने प्रामाण्यस्य ज्ञानविषयतात्मकसाधारणधर्मदर्शनाच्च विषये तद्वत्त्वस्य सन्देहः। अप्रामाण्यशङ्काद्यन्वयानुविधानन्तु भ्रमत्वज्ञानशून्यविरोधिज्ञानस्य प्रतिबन्धकतया तदपसारणमुपयुक्तमित्यस्याकरे व्यक्तत्वात्। व्याप्यवत्तासंशयस्य पृथग्व्यापकवत्तासंशयहेतुत्वपक्षे ज्ञानपदं निश्चयपरम्। हेतुत्वाभिमतविशेषणन्तु येन सम्बन्धेन तदुभयसाहचर्यं तेन सम्बन्धेन तद्वत्ताज्ञानस्य संशयादिजनकतासूचनार्थम्, तेना-

रूमत्वकपालत्वादिसाध्यके समवाय (सम्बन्धे)न हेतौ ज्ञानघटादौ विषयत्वसंयोगादिना तत्सन्देहजनके नातिप्रसङ्ग इति ॥

(गा०) मिश्रमतं दूषयति इदं सविषयकमिति। सविषयकत्वस्य स्वरूपसम्बन्धात्मकत्वेनाननुगततया, तस्मिन्साध्ये ज्ञानत्वादिकं व्यभिचार्येवेत्याह, आत्मवृत्ति वेति। अप्रामाण्यं भ्रमत्वं न तु प्रमात्वाभावः—तस्य, साध्याभावघटितत्वात्। तज्जन्यकोटीति प्रमात्वभेदेन। तज्ज्ञानस्य—प्रामाण्याप्रामाण्यसहचरितज्ञानत्ववत्ताज्ञानस्य। तादृशसंशयाहेतुत्वात्—प्रामाण्यसंशयात्मककोटिद्वयोपस्थितिजनकत्वेपि प्रामाण्यसंशयस्य कथितार्थसंशयहेतुतया अप्रामाणिकतया तादृशकोट्युपस्थितेः साध्यसंशयाहेतुत्वादिति भावः। ननु विनापि साधारणधर्मज्ञानं प्रामाण्यसंशयस्थले विषयसंशयोदयात् साधारणधर्मज्ञानवत्प्रामाण्यसंशयस्यापि संशयजनकत्वमावश्यकमित्यत आह प्रामाण्यसंशयेति। ज्ञानत्वलक्षणसमानधर्मदर्शनात्—प्रामाण्याप्रामाण्यसहचरितज्ञानत्ववत्ताज्ञानात्, प्रामाण्यस्य सन्देह इति योजना। एतच्च दृष्टान्तविधयोक्तम्। ज्ञानविषयतात्मकसाधारणधर्मदर्शनात्—तत्प्रकारकज्ञानविशेष्यत्वरूपतत्तदभावसहचरितधर्मवत्ताज्ञानात्, विषये—घटघ्राणादौ, तद्वत्त्वस्य—सविषयकत्वादेः सन्देहः, तादृशधर्मवत्ताज्ञानासत्त्वे च संशयोऽसिद्ध एवेति भावः। नन्वेवमपि अर्थनिश्चयदशायां सत्यपि साधारणादिधर्मवत्ताज्ञाने प्रामाण्यसन्देहे सत्यर्थसन्देहः असति तु तस्मिन्नेत्यन्वयव्यतिरेकानुविधानं नोपपद्यत इत्यत आहाप्रामाण्यशङ्केति। तदपसारणप्रयुक्तं—तादृशविशिष्टप्रतिबन्धकाभावसंपादकत्वनिबन्धनम्। तथा च प्रयोजकत्वेनैवान्वयविधानोपपत्तेर्न तत्कारणतासाधकमिति भावः। व्याप्यवत्तासंशयस्येति। व्याप्यतदभावयोर्व्यापकतदभावसहचरिततया, साधारणधर्मदर्शनविधयैव व्याप्यसंशयो व्यापकसंशये हेतुः, धर्मस्यैकतायाः ज्ञानस्य निश्चयपरतायाश्चाप्रयोजकत्वात्। यदि च व्याप्याभावस्य व्यापकाभावसाहचर्यं न प्रतिसन्धत्ते तदा धर्मिणि तद्व्याप्यधर्मं संशयानोपि न तं सन्दिग्धे इति। स्वीयमते साध्यसंशयजनकतावच्छेदकप्रकारतावच्छेदकसाध्याभावप्रवृत्तित्वस्य व्याप्ये असत्त्वेनातिव्याप्त्यनवकाशात् पृथगिति हे-

तुत्वे विशेषणम् । पृथक्कारणतामते, व्याप्तिमात्रघटितव्याप्तिः प्रागेवोपपादिता । ज्ञानपदं निश्चयपरमिति । तादृशजनकतायां निश्चयत्वावच्छिन्नत्वं निश्चयत्वव्यापकवृत्तित्वं वा विशेषणं देयमित्यर्थः । एवं तादृशव्याप्तेरसाधारण्यादिमत्त्वाभावेनाप्रसक्तेर्हेतुत्वाभिमतपदोपादानमनर्थकमित्याशङ्कायामाह इतीति । तेन सम्बन्धेन—सव्यभिचारत्वघटकतयाऽभिमतसम्बन्धेन । जनकतासूचनार्थं—जनकताया लक्षणघटकतालाभार्थम् । तथा च तादृशपदोपादानस्य साधारण्यादिरूपावच्छिन्नं यत्सम्बन्धावच्छिन्नप्रकारताशालिज्ञानं साध्यसन्देहजनकं तादृशरूपवान्तेन सम्बन्धेन सव्यभिचार इत्येवं लक्षणं कर्तव्यमिति भावः । समवायेन हेतौ—समवायेन व्याप्ये । एतेनालक्ष्यत्वं सूचितम् । ज्ञानघटादौ नातिप्रसङ्ग इति योजना । समवायेन सव्यभिचारत्वप्रसङ्ग इत्यर्थः । अतिप्रसङ्गप्रसञ्जकं विशेषणमाह विषयत्वसंयोगान्यतमादिना । तत्सन्देहजनक इति । विषयत्वसंयोगान्यतरघटितसाध्यतदभावसाहचर्यादिप्रकारेण तादृशसम्बन्धेन स्वप्रकारक संशयजनकं यज्ज्ञानं तद्विषय इत्यर्थः । न च तेन सम्बन्धेन तद्वत्ताज्ञानस्य लक्षणघटकत्वेऽपि समवायेन विषयतासंयोगादिघटितकोटिद्वयसामानाधिकरण्यावच्छिन्नज्ञानघटादिप्रकारकज्ञानमादायातिप्रसङ्ग इति वाच्यम् । तेन सम्बन्धेन तद्वत्ताज्ञानस्य तत्संबन्धघटितसहचारविषयकस्यैव संशयजनकतया समवायसम्बन्धावच्छिन्नायां संशयजनकतावच्छेदकप्रकारतायां समवायसम्बन्धघटितसाध्यतदभावसाहचर्यस्यैवावच्छेदकतया तद्वत्तायाः ज्ञानघटादावसत्त्वेनातिव्याप्त्यनवकाशात् ।

(चि०) विप्रतिपत्तिस्तु प्रत्येकं न तथा, न वा पक्षवृत्तिः, साधारणमन्वयेन असाधारणं व्यतिरेकेण अनुपसंहारी पक्ष एवोभयसाहचर्येण कोटिद्वयोपस्थापकः ।

(दी०) विप्रतिपत्तौ प्रत्येकं कोटिद्वयोपस्थापकत्वाभावात् लक्षणस्थद्वयपदेन तद्वारणात्, मिलितस्य तदुपस्थापकत्वेऽपि तद्वत्ताज्ञानं न तथा, न वा मिलित्वा द्वयोर्जनकत्वं, तथात्वेऽपि वा येन सम्बन्धेन तद्वत्ताज्ञानमुभयकोट्युपस्थापकं तेन सम्बन्धेन हेतुत्वे-

ऽवश्यं सव्यभिचारत्वमिति ।

अनुपसंहारी पक्ष एवेति । अनुपसंहारितादशायां साध्यतद्भावसहितत्वनिर्णयाभावेऽप्युक्तक्रमेण वास्तवतत्सहचरितत्वमादायैव लक्षणसमन्वय इति भावः ॥

केचित्तु व्याप्यादिधर्मेऽपि साधारण्यज्ञानात् संशयस्योदयात् तदज्ञाने च वस्तुतः साधारण्यज्ञानेऽप्यनुदयात् साधारण्यज्ञानं हेतुस्तत्र निश्चयत्वमकिञ्चित्करं गौरवात्, तथाच पक्ष एव तत्संशयात्मकतदुभयसाहचर्यज्ञानाद्भवति तथात्वमिति भाव इत्याहुः । तच्चिन्त्यम् ।

( गा० ) विप्रतिपत्तिस्त्वित्यादिमूले तथापदस्य कोट्युपस्थापकपरत्वेऽसङ्गतिः—तत्घटकसाध्यतदभावोपस्थापकपदयोः प्रत्येकं कोट्युपस्थापकत्वात्, प्रत्येकमतथात्वेपि वा कथं तत्र लक्षणासत्त्वमित्यपि न स्फुटमिति तद्ग्रन्थमधृत्वैव तदर्थं पूरयित्वा व्याचष्टे विप्रतिपत्तेरिति । विप्रतिपत्तिघटकतत्तत्पदस्येत्यर्थः । तत्तत्पदविषयकप्रत्येकज्ञानयोः कोटिद्वयोपस्थापकत्वविरहेपि समूहालंबनज्ञानस्य तथात्वाच्चदादायैवातिव्याप्तिर्भविष्यतीति आशङ्कायां न वा पक्षवृत्तिरिति मूलावतार इति सूचयितुं पूरणसम्वलितं तदर्थमाह मिलितस्येति । मिलितविषयकस्येत्यर्थः । तदुपस्थापकत्वेपि-कोटिद्वयोपस्थापकत्वेपि । तद्वत्ताज्ञानं-तादृशवाक्यप्रकारताशालिज्ञानत्वावच्छिन्नम् । तथा-कोटिद्वयोपस्थापकम्, तथाच पक्षधर्मतापदोपादानादेव न तत्रातिव्याप्तिरिति भावः । पक्षधर्मतापदानुपादानेपि न तत्रातिव्याप्तिः सम्भवति पदद्वयविषयकज्ञानस्य कोटिद्वयोपस्थितिजनकत्वेपि विषयभेदेन विषयताभेदाश्रित्यानित्यपदविषयतयोः प्रत्येकं कोटिद्वयोपस्थितिजनकतावच्छेदकत्वविरहात्, लक्षणे च कोटिद्वयोपस्थितिजनकतावच्छेदकैकविषयताया एव निवेशादित्याह नचेति । मिलित्वा-एकविषयताश्रयीभूय, द्वयोः-पदयोः, जनकत्वं-जनकतावच्छेदकघटकत्वम् । कोटिद्वयोपस्थितिजनकतावच्छेदकीभूता या विषयता तदाश्रयत्वमिति पर्यवसितो-

र्थः । ननु विप्रतिपत्तिघटकपदानां प्रतिपाद्यत्वादिसंबन्धेन कोटिद्वयासहचरिततया तेन सम्बन्धेन तद्वत्ताज्ञानस्य संशयहेतुत्वात्तेषां प्रत्येकं सन्देहजनककोटिद्वयोपस्थितिजनकतावच्छेदकविषयताश्रयत्वमक्षतमेवेत्याह तथात्वेपीति । विप्रतिपत्तिघटकपदानां प्रत्येकं तादृशविषयताश्रयत्वेपीत्यर्थः । अवश्यं सव्यभिचारत्वमिति । तथा च लक्ष्यतया न तत्रातिव्याप्तिरिति भावः ।

नन्वनुपसंहारी पक्ष एवेति मूलमसङ्गतं सम्बन्धनिश्चयस्यैव स्मारकतया पक्षे साध्यस्य तदभावस्य च सन्दिग्धतया तदन्तर्भावेन हेतौ तत्सामानाधिकरण्यस्य निश्चेतुमशक्यत्वेन हेतोः कोटिद्वयोपस्थापकत्वासम्भवादतोऽभिप्रायं व्याचष्टे अनुपसंहारीति । अनुपसंहारितादशायाम्-पक्षे साध्यसन्देहदशायाम् । उक्तक्रमेण लक्षणसमन्वय इति योजना । यद्रूपविशिष्टवत्ताज्ञानं साध्यसन्देहजनकं तादृशतद्रूपवत्त्वस्यैव लक्षणघटकतयोपस्थितत्वात् । सर्वमनित्यं प्रमेयत्वादित्यादौ पक्षे एव क्वचित्साध्यस्य क्वचित्साध्याभावस्य निश्चयदशायां नित्यत्वतदभावसहचरितप्रमेयत्ववत्त्वमित्याकारकज्ञानस्य सम्भवेन तद्विषयतावच्छेदकोभयसाहचर्यमादाय साध्यसन्देहदशायामपि लक्षणसमन्वयः । अनुपसंहारितोपाधितादशायां तदुभयसाहचर्यस्यैव तदानीं तादृशहेतोः साधारणतया न सामान्यलक्षणातिव्याप्तिरिति भावः ।

साधारणविषयकज्ञानत्वावच्छिन्नस्यैव संशयान्वयव्यतिरेकानुविधायित्वेन रूपेण संशयहेतुता न तु तद्विषयकनिश्चयत्वेन तदवच्छिन्नस्यान्वयव्यतिरेकानुविधायितया असिद्धत्वात्, तथा च साध्यसंशयकाले साहचर्यनिश्चयस्यासम्भवेपि तद्देशे संशयात्मकसंशयजनकज्ञानमादाय लक्षणसमन्वयः सम्भवतीति केचिदाहुः, तन्मन्दमुपन्यस्यति केचित्त्विति । वस्तुतः-वस्तुगत्या यस्य साधारण्यं तज्ज्ञानेपि, तत्र-उद्देश्यतायाम् । अधिकावच्छेदकत्वम्-अनवच्छेदकत्वम् । पक्ष एव-पक्षान्तर्भावेनैव । नासंशयेति । साहचर्यांशे संशयेत्यर्थः । साहचर्यांशाभावात्-साहचर्यविशिष्टप्रकारकज्ञानात् । तथात्वं-सव्यभिचारत्वम् ।

तच्चिन्त्यमिति । सम्बन्धांशे निश्चयात्मकं साहचर्यज्ञानं संशयान्यन्तरस्मारकतया कोट्यादिसंशयपदार्थस्मरणाद्यनुत्पत्तेरिति साधारण्यसंशये कोटिद्वयोपस्थापकत्वं न सम्भवति, एवं च संशयसाधारणसहचा-

रज्ञानस्य हेतुत्वे अप्रामाण्यनिश्चयानास्कन्दितत्वमेवावच्छेदककोटौ निवेशनीयं तन्निश्चयत्वेन हेतुत्वे तु अप्रामाण्यज्ञानानास्कन्दितत्वमेव लाघवात्, संशयात्मकसहचारज्ञानं न हेतुः । एवमनुपसंहारितादशायां संशयजनकज्ञानसंपादनप्रयासो विफलः, तादृशज्ञानासत्त्वदशायां साधारणाद्व्याप्तिभयेन, तादृशज्ञानस्योपलक्षणविधयैव लक्षणाघटकत्वादित्यादि चिन्ताबीजमूहनीयम् ॥

( चि० ) केवलान्वयिसाध्यकानुपसंहारी अयं घट एतत्त्वादित्यसाधारणश्च सद्धेतुरेव, तद्ज्ञानं दोषः पुरुषस्य । अत एवासाधारणप्रकरणसमयोरनित्यदोषत्वम्, अन्यथा सद्धेतौ बाधादिज्ञाने हेत्वाभासाधिक्यापत्तिः ।

( दी० ) ननु केवलान्वयिसाध्यकानुपसंहारिणि साध्याभावाप्रसिद्ध्या तत्संशयाद्यभावाददोषाप्तिः एवं यत्र स्थिरे धर्मिणि पूर्वं घटत्वं गृहीतमुत्तरदशायां तत्रैव दोषात् घटत्वाग्रहे तद्घटभिन्नोऽयमिति भ्रमे च घटत्वनिश्चयविषयीभवद्धर्मिव्यावृत्तत्वेन गृह्यमाणतया असाधारणे इदन्त्वेऽपि वस्तुतस्तद्व्यावृत्तत्वाभावेन तत्र लक्षणायोगादितस्तयोर्दोषत्वाभावेन परिहरति केवलान्वयीति । अतएवेति । यत एव पुरुषदोषाधीनं तद्दोषत्वम् अतएव तस्यानित्यदोषत्वम्, स्वाभाविक(दोष)त्वे कादाचित्कत्वानुपपत्तेः, एवञ्च यत्र दोषताप्रयोजकं वस्तुतो हेतौ तत्रानित्यदोषत्वमपि, यत्र पुरुषस्य तद्भ्रमो न तत्र तदापि भ्रमप्रमात्वादुष्टत्वेऽतिप्रसङ्गमाह अन्यथेति केचित् ॥

( गा० ) केवलान्वयि इत्यादि मूलमवतारयति नन्वित्यादिना । अय घट एतत्त्वात् इत्यादिस्थले पक्षतादशायां संशयप्रयोजकनिश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य सत्त्वादव्याप्त्यप्रसक्तेरव्याप्तस्य तथाऽव्याप्तिपरिहारोपि न सम्भवत इत्यत्रस्तत्र निश्चितसाध्यवद्व्यावृत्तत्व सम्पादयति एवमिति । हेतुभूतेदंत्वयति पूर्वं घटत्वमह एव त०मू०

ल्ंकात् स घट इत्याकारकस्मरणात् यद्धटत्वेनैव तद्धटभेदो गृहीतुं शक्यते नान्यथा प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानविरहादिति धर्मिणि पूर्वं घटत्वग्रहत्वस्यानुसरणम्। तद्घटभिन्नोऽयमिति भ्रमपर्यन्तं तद्धटानवस्थाने तादृशो भ्रम एव न सम्भवति विशेष्यविरहादतः स्थिर इत्युक्तम्। 'तद्धटभिन्नोऽयमिति भ्रमदशायां इदंत्वावच्छिन्ने घटत्वग्रहे इदंत्वस्य साध्यसहचरितत्वेन निश्चिततयाऽसाधारण्यं न शङ्कास्पदमपीत्याह तत्रैव दोषाद्घटत्वाग्रह इति। तत्र—इदंत्वावच्छिन्ने। तद्घटभिन्नोऽयमिति भ्रमानुधावनं इदंत्वस्य निश्चितसाध्यवद्धर्मिंवृत्तित्वज्ञानसंपादनाय। तत्र धर्मिणि घटत्वनिश्चयसत्त्वे एव संशयप्रयोजकस्य तत्कालीनतत्पुरुषीयसाध्यनिश्चयविषयव्यावृत्तत्वस्येदंत्वेऽसत्त्वमतः केवलतद्व्यक्तित्वेन प्रतियोगिविषया तद्घटभानमुपेक्ष्य तद्घटत्वेन तद्घटभानानुसरणम्। तथासति तादृशभ्रम एव तद्व्यक्तित्वाविशिष्टे धर्मिणि घटत्वस्य निश्चयादिति सन्निहितेदंत्वे दर्शितसंशयप्रयोजकरूपाभावाद्व्याप्तिप्रसक्तिः। इदंत्वविशिष्टे घटसामान्यभेदभ्रमे इदंत्वे विपक्षवृत्तित्वनिश्चयसम्भवाद्साधारण्यं न शङ्कास्पदमपीति प्रतियोगिकोटौ तद्घटभानानुधावनम्। इदंत्वेपीति। अव्याप्तिरित्यनुषज्यते। वस्तुतस्तद्व्यावृत्तत्वाभावेन—वास्तविकस्य साध्यनिश्चयविषयीभूतधर्मिव्यावृत्तत्वस्याभावेन। लक्षणायोगादिति। वास्तवसंशयप्रयोजकरूपवत्त्वस्य लक्षणघटकत्वादिति भावः। अत एवास्यभेदपदेन पूर्वाभिहितायाः सव्येतुत्वज्ञानस्य 'पुरुषदोषतायाः परामर्शे सङ्गतिस्तस्याः' असाधारण्यादेरनित्यदोषतायामनुपपत्तिकत्वात् अतस्तत्परामर्शे . व्याचष्टे अत एवेति। पुरुषदोषाधीनं—पुरुषस्य हेतुमति पक्षे च साध्यतदभावानिश्चयसाध्याभावव्याप्यवत्ताभ्रमाधीनम्। तद्दोषत्वं—तादृशहेतोरसाधारण्यसत्प्रतिपक्षरूपदोषत्वं, तस्य—असाधारण्यस्य सत्प्रतिपक्षस्य च, अनित्यदोषत्वं—दशाविशेष एव हेतोर्दुष्टतासम्पादकत्वम्। साहजिकदोषत्वे—तादृशदोषविरहदशायामपि हेतोर्दुष्टतासम्पादकत्वे। कादाचित्कोति। कदाचिदेव हेतोर्दुष्टतासम्पादकत्वम्। एतावताय घट एवत्वादित्यादौ पुरुषदोषाधीनदुष्टत्वशङ्कायाऽनिवृत्तेस्तन्निवृत्तये अन्ययेत्यादिग्रन्थसङ्गमनाय चाभिप्रायं पूरयति एवंचेति। दोषताप्रयोजकं—निश्चितसाध्यवद्धा-

वृत्तत्वादिकं, हेतौ तिष्ठन्तीति शेषः। तत्रानित्यदोषत्वमपि–तत्रैवानित्यदोषत्वम्। तच्च भ्रमा दोषताप्रयोजकरूपस्येति शेषः। अन्यथापदार्थं व्याचष्टे भ्रममात्रादिति। तादृशरूपभ्रमादित्यर्थः। केचिदित्यस्वरससूचनाय। स च, निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य संशयप्रयोजकतायाः अग्रे खण्डनीयत्वात्, असाधारण्यादेः पुरुषदोषाधीनदोषतायाः प्रकृतानुपयोगितया मूलानुक्ततया चात एवेत्यत्रैदंपदेन तत्परामर्शे सदर्भविरोधाच्च॥

(दी०) परे तु अयं घट एतत्त्वादित्यादावव्याप्तिः-साध्यसन्देहप्रयोजकं हि तस्य साध्यतदभाववद्व्यावृत्तत्वं न ह्येकस्य धर्मस्य तदुभयव्यावृत्तत्वं सम्भवति, असाधारण्यन्तु तस्य पक्षमात्रवृत्तितया अतस्तस्यालक्ष्यतयोत्तरयति अयं घट इत्यादि। एवञ्चावृत्तिगगनादिकमेवासाधारणम्। पक्षवृत्तित्वभ्रमदशायाञ्चासाधारण्यस्यासङ्करः। न चोभयव्यावृत्तत्ववृत्तिमत्त्वयोः स्वरूपतो विरोधः, निश्चितसाध्यतदभाववद्व्यावृत्तत्वञ्च न सन्देहप्रयोजकम्, तथा सति तुल्यन्यायतया निश्चितसाध्यतदभाववद्वृत्तित्वस्यापि तथात्वे सद्धेतावपि साध्याभाववत्त्वभ्रमविषयवृत्तित्वग्रहदशायामतिप्रसङ्गात्। न च तादृशनिश्चयविषयस्य धर्मिणो वास्तव साध्याभावादिमत्त्वमपि तन्त्रम्। मानाभावात्। किञ्च सन्देहजनकतावच्छेदकरूपस्य विशेषणत्वे व्यभिचारिणि रासभादौ महानसादिवृत्तितादशायामव्याप्तिः, उपलक्षणत्वे असाधारण्योत्तीर्णतादशायामतिव्याप्तिः, असाधारणप्रकरणसमयोस्तत्त्वेन भ्रमविषययोरनित्यदोषत्वं विशेषादर्शनदशायामनुमित्यनुत्पादप्रयोजकत्वं न तु वास्तवं हेतुदोषत्वम्, अन्यथानुमित्यनुत्पादप्रयोजकज्ञानविषयतामात्रेण वास्तवहेतुदोषत्वे इत्याहुः।

(गा०) तस्य—असाधारणस्य, धर्मस्य—वृत्तिमतः। ननु तादृशहेतोः संशयप्रयोजकरूपशून्यत्वऽसाधारण्यमेव कथं बीजाभावादित्यत आह असाधारण्यं त्विति। अतः–इत्यादग्र-

तः । ननु अयं घटः एतत्वात् इत्यादेरिव तुल्ययुक्त्या शब्दोऽनित्यः शब्दत्वादित्यादेरपि, सद्धेतुत्वमेव शब्दो नित्यः शब्दत्वादित्यादिकमपि विरुद्धमेव न तु असाधारणं, साध्यतदभाववद्व्यावृत्तत्वाभावादसाधारणहेत्वाभासस्यैवाप्रसिद्धिरत आह एवेति । अवृत्तीति । वृत्तिमतः साध्यतदभाववद्व्यावृत्तत्वासम्भवादिति भावः । ननु पक्षधर्मताज्ञानविरहादेव गगनादिहेतुकस्थले अनुमित्यनुत्पादनिर्वाहादसाधारण्यज्ञानस्यानुमित्यनुत्पादप्रयोजकत्वमेव नास्तीति कथं तस्य हेत्वाभासत्वमित्यत आह पक्षवृत्तित्वेति । प्रसङ्ग—इतरानधीनानुमित्यनुत्पादप्रयोजकज्ञानविषयत्वम् । ननु, उभयव्यावृत्तत्वस्य वृत्तिमत्त्वविरुद्धतया तदुभयज्ञानस्य नैकदा सम्भवः मिथः प्रतिबन्धकत्वात्, न चैवं पक्षधर्मताज्ञानाभावसंपादकतयैव तस्य हेत्वाभासत्वं निर्व्यूढम्, तथा सत्यसिद्धावन्तर्भावेन सव्यभिचारप्रभेदत्वानुपपत्तेरत आह तथोभयेति । स्वरूपतो विरोध—परस्पराभावव्याप्यत्वविशेषितयोः परस्परज्ञानप्रतिबन्धकीभूतज्ञानविषयत्व, तस्य वास्तवविरुद्धविषयकस्यापि ज्ञानस्य, विरोधाविषयकस्याप्रतिबन्धकत्वादिति भावः ॥

ननु निश्चितसाध्यतदभाववद्व्यावृत्तत्वरूपसंशयप्रयोजकधर्मस्योक्तहेतौ सत्त्वात्कथं तत्राव्याप्तिशङ्का कथं वा ऽलक्ष्यताभ्युपगमेन तत्परिहार इत्यत आह निश्चितेति । साध्यतदभावनिश्चयविषयीभूतधर्मिव्यावृत्तत्व न साध्यसन्देहजनकतावच्छेदकप्रकारतावच्छेदकमित्यर्थः । निश्चितसाध्यतदभाववद्वृत्तित्वस्य—साध्यतदभावनिश्चयविषयवृत्तित्वस्य, तथात्वे—संशयप्रयोजकत्वे, सद्धेतौ—वह्न्याद्यधिकरणवृत्तितया निश्चिते धूमादौ, धर्मिवृत्तित्वप्रकारकज्ञानपर्यन्तानुधावनं संशयजनकज्ञानस्य विशेषणविधया लक्षणघटकत्वे ऽतिव्याप्तिः, सम्भवतीत्यभिप्रायेण । वस्तुतो यदा हेतुमति साध्याभावभ्रमो वर्तते तदा हेतौ तदधिकरणवृत्तित्वाग्रहेऽप्यतिव्याप्तिः सम्भवति तादृशज्ञानस्योपलक्षणत्वादिति ध्येयम् । तादृशेति । साध्यतदभावविषयकेत्यर्थः । तन्त्र—संशयप्रयोजकरूपघटकम् । जनकतावच्छेदकरूपस्य—जनकतावच्छेदकप्रकारतावच्छेदकरूपस्य, विशेषणत्वे—धर्मिविशेषणतया सव्यभिचारप्रतिपादत्वे, महानसादिवृत्तितादशायामव्याप्ति—तत्कालान्तर्भावेनाव्यभिचारादिव्यवहारापत्तेः तदानीं साध्याभाववद्वृत्तित्वाभावस्य तत्रा-

क्षतत्वात्, तादृशव्यवहारविषयस्याव्याधितत्वादिति भावः । न च द्रव्यं विशिष्टसत्त्वादित्यादावतिव्याप्तिवारणाय साध्यसन्देहजनकतावच्छेदकप्रकारतावच्छेदकतावच्छेदकधर्मवत्प्रकृतहेतुतावच्छेदकत्वमेव व्यभिचारपदार्थो वाच्यः, साधारणस्थले च तादृशो धर्मः साध्यतदभाववद्वृत्तितावच्छेदकत्वमेव तद्विशिष्टहेतुतावच्छेदकावच्छिन्नहेतुमत्ताज्ञानस्यापि सन्देहजनकत्वोपगमात्, एवं च तादृशमहानसादिवृत्तितादशायां साध्याभाववद्वृत्तित्वविरहेऽपि तदवच्छेदकासम्भवत्वादिसत्त्वेन तादृशव्यभिचाराभावो नास्तीति कथमुक्तव्यवहारापत्तिरिति वाच्यम् । एवमपि अनित्यधर्मस्य हेतुतावच्छेदकत्वे तदसत्त्वदशायामापत्तितादवस्थ्यात् । विशेषणत्वे कालविशेषावच्छिन्नतया तदानीं व्यभिचारीत्यादिव्यवहारविषयत्वे, अव्याप्तिः तत्कालान्तर्भावेण तादृशव्यवहारानुपपत्तिरिति तु नार्थः साधारणस्य नित्यदोषतया कालविशेषान्तर्भावेण व्यभिचारिव्यवहाराजनकतायास्तन्त्रेष्टत्वात् । उपलक्षणत्वे—अत्यन्तायोगव्यवच्छेदपरिचायकतया व्यभिचारपदप्रतिपाद्यत्वे । तादृशरूपात्यन्तायोगव्यवच्छेदस्य तत्पदार्थत्वापगम इति यावत् । असाधारण्योत्तीर्णतादशायां—हेतुमति साध्यतदभावयोरन्यतरनिश्चयदशायाम् । तत्कालान्तर्भावेणातिव्याप्तिः—कालान्तरीणासाधारण्यमादाय सव्यभिचारव्यवहारापत्तिः ।

इदं पुनरिहावधेयम् । शब्दोऽनित्यः शब्दत्वादित्यादौ पक्षतादशायां सव्यभिचारव्यवहारनियामकं यत् पक्षमात्रादिव्यावृत्तत्वरूपमसाधारण्यं तच्छब्दादौ साध्यादिनिश्चयदशायामप्यक्षतमेवेति विशेषणत्वेऽप्येतद्दोषतादवस्थ्यम् । संशयप्रयोजकरूपस्य तथात्वेन न व्यभिचारपदप्रतिपाद्यता किन्तु साध्यतदभाववद्वृत्तित्वयानिश्चितसाध्यतदभाववद्व्यावृत्तत्वस्वरूपेणैव विभाजकमुक्तानुगतरूपम्, एवं च साधारण्यमुपलक्षणमसाधारण्यं च विशेषणमित्यत्राविरोधः । निश्चयघटितरूपावच्छिन्नपरवाक्याच्च कालविशेषो निश्चयांश एवान्वेति साध्यतदभावनिश्चयावौ खण्डशक्तिस्वीकारेण अन्वयबलात्साध्यतदभावनिश्चयविषयवृत्तित्वसामान्याभावभिन्नस्यापि तत्कालीनतान्निश्चयवृत्तित्वत्वावच्छिन्नाभावस्य लाभः । सव्यभिचारपदस्य नानार्थत्वमिष्टमेवेति चेदुच्यते तदा, उपलक्षणत्वेऽपि नोक्तदोषावसर इति ।

एवं च निश्चयाघटितं साध्यतदभाववद्वृत्तित्वमेव संशयप्रयोजकं तदवच्छिन्नप्रकारकज्ञानस्य विशेषदर्शनतया संशयप्रतिबन्धकत्वेऽपि तत्कोटिविशिष्टबुद्धौ तत्कोटिमद्वृत्तित्वावच्छिन्नप्रकारकज्ञानप्रतिबन्धकतायां विपरीतकोटिमद्वृत्तित्वावच्छिन्नप्रकारकज्ञानस्योत्तेजकतया सत्प्रतिपक्षस्थलमिव संशयनिर्वाहः, तथा चायं घट एतत्त्वादित्यादौ साध्यतदभाववद्वृत्तित्वस्यासत्त्वेनाव्याप्यशङ्काया अलक्ष्यत्वाभ्युपगमेन तत्परिहारस्य च नासङ्गतिरिति समुदिततात्पर्यार्थः। संशयप्रयोजकरूपं चेदानीमुपलक्षणविधयैव दुष्टताव्यवहारनियामकम् अतो रासभादौ महानसादिवृत्तितादशायां नाव्याप्तिः साधारणश्च हेतुः सर्वदैव भवति नातिप्रसंगोऽपीति ध्येयम्।

अदुष्टहेतौ धारत्वासाधारणप्रकरणसमत्याभावादसाधारणप्रकरणसमोऽपीति व्याचष्टे असाधारणेति। भ्रमविषयस्य नव्यमते दोषत्वाभावादनित्यदोषत्वमिति व्याचष्टे विशेषेति। प्रयोजकत्वं-प्रयोजकज्ञानविषयत्वम्, अत एवेत्यग्रेतनपदार्थस्य सद्धेतोः सर्वदाऽदुष्टत्वस्य भ्रमविषयस्यानुमित्यनुत्पादप्रयोजकतायामनुपष्टम्भकतया तदुपष्टम्भपूरयति नान्वियति। तथाच एत एव सद्धेतुः सर्वदैव तथा न तु कदाचिदपि दुष्टलक्षणलक्ष्यः अत एव तत्स्थलीयानुमितिविरोधी यो भ्रमरूपो भ्रमस्तस्यानुमित्यनुत्पादप्रयोजकत्वेऽपि न हेतुदोषः भ्रमयथार्थे सद्धेतोर्दुष्टत्वे भ्रमविषयस्य दोषत्वमावश्यकं स्यादिति अत एवेत्यादिमूलस्य पर्यवसितोऽर्थः।

ननु भ्रमस्यानुमित्यनुत्पादप्रयोजकत्वे तद्विषयस्य दोषत्वमित्यत एवेति भ्रमविषयो न दोष इत्ययमसिद्धमित्याशङ्कायामन्यथेति मूलावतारासादृशाशङ्कोद्धारं स्फुटीकर्तुं चिकीर्षुरन्यथा एवं व्याचष्टे अन्यथेति॥

मूले बाधादिज्ञान इति। पक्षविशेष्यकसाध्याभावादिभ्रमदशायामित्यर्थः। हेत्वाभासाधिक्यापत्तेः—अतिरिक्तहेत्वाभासतापत्तेः, बाधादेर्निरुक्तदोषतायाः सर्ववादिसिद्धतया भ्रमविषयस्य तदन्तर्भावासम्भवादिति भावः।

(दी०) न च प्रमेयत्वेनाभेदानुमाने शब्दोऽनित्यः शब्दाकाशान्यतरत्वादित्यत्र च साधारणेऽव्या-

सिः तयोः साध्यवदवृत्तित्वेन विरुद्धत्वादिति चेन्न । एतदज्ञानेऽपि साधारण्यादिप्रत्येकस्य ज्ञानादुद्भावनाच्च स्वपरानुमितिप्रतिबन्धात् उद्भावितैतन्निर्वाहार्थं साधारणादेरवश्योद्भाव्यत्वेन तस्यैव दोषत्वाच्च ।

( दी० ) अनवगतसाध्यसहचारत्वे सति अवगतसाध्याभावसहचारतया विरुद्धत्वमेव । तयोरिति । इदञ्चाभ्युपगमवादेन । वस्तुतो यथोपवर्णितलक्षणस्य न तत्राव्याप्तिरिति ध्येयम् ।

यद्रूपज्ञानमनुमितिप्रतिबन्धकं तदेव विभाजकम् अन्यथा अतिप्रसङ्ग इत्यभिप्रेत्य दूषयति नैतदिति ।

वस्तुतस्तु उपस्थापकत्वादिज्ञानमनुमितेस्तज्जनकस्य वा न प्रतिबन्धकं विरोधिविषयकत्वाभावात् एवमुत्तरत्रापि ।

( गा० ) अभेदे साध्ये प्रमेयत्वस्यानित्यत्वे साध्ये शब्दाकाशान्यतरत्वस्य च वास्तवसाध्यवदवृत्तित्वविरहेण विरुद्धत्वासम्भवात्प्राचीनमताभिप्रायकतया तयोर्विरुद्धोक्तिमुपपादयति दीधितौ अनवगतेति । एवं च साध्यवदवृत्तित्वेनेति मूलस्य साध्यवद्वृत्तितया अनवगतत्वेनेत्यर्थः । तादृशस्थले पक्षतादशायां हेतोः साध्यतदभावोभयसहचारस्याशक्यनिर्णयत्वेऽपि कालान्तरीयतन्निर्णयाविषयत्वस्तवत्तदुभयसहचारमादाय लक्षणगमनसम्भवादलक्ष्यतयाऽव्याप्तिपरिहारो न घटत इत्यत आह अभ्युपगमेति । संशयजनकपक्षधर्मताज्ञानस्य विशेषणविधया लक्षणघटकत्वमभ्युपगम्येत्यर्थः । यथाश्रुतलक्षणे व्याप्त्यादिग्रहदशायां सद्धेतावतिव्याप्तिवारणाय तादृशज्ञानं विशेषणविधयैव निवेशनीयम्, तादृशज्ञानदशायामतिप्रसङ्गश्चास्त्येव तत्र तादृशज्ञानविरहदशायां चागत्या साधारणस्यापि सव्यभिचारत्वं नोपगन्तव्यमित्यत उपवर्णितेति । यथाव्याख्यातेत्यर्थकम्, अनुमित्यविरोधिज्ञानविषयस्यापि हेत्वाभासविभाजकत्वे क्षतिविरहात् एतदज्ञानेपीत्यादिनोक्तविभाजकधर्मज्ञानस्यानुमित्यविरोधित्वकथनमकिञ्चित्करमित्याशङ्कायामभिप्रायोपवर्णनेन निराकुरुते यद्रूपज्ञानमिति । यद्रूपावच्छिन्नविषयकज्ञानमित्यर्थः । तदेव-तद्रूपावच्छिन्नमेव ।

एवं च निश्चयाघटितं साध्यतदभावव्द्यावृत्तत्वमेव संशयप्रयोजकं तदवच्छिन्नप्रकारकज्ञानस्य विशेषदर्शनतया संशयप्रतिबन्धकत्वेऽपि तत्कोटिविशिष्टबुद्धौ तत्कोटिमद्व्यावृत्तत्वावच्छिन्नप्रकारकज्ञानप्रतिबन्धकतायां विपरीतकोटिमद्व्यावृत्तत्वावच्छिन्नप्रकारकज्ञानस्योत्तेजकतया सत्प्रतिपक्षस्थलमिव संशयनिर्वाहः, तथा चायं घट एतत्त्वावित्यादौ साध्यतदभाववद्व्यावृत्तत्वस्यासत्त्वेनाव्याप्यशङ्कायां अलक्ष्यत्वाभ्युपगमेन तत्परिहारस्य च नासङ्गतिरिति समुदितलात्पर्यार्थः । संशयप्रयोजकरूपं चेदानीमुपलक्षणविधयैव दुष्टत्वव्यवहारनियामकम् अतो रासभादौ महानसादिवृत्तित्वादशायां नाव्याप्तिः साधारणश्च हेतुः सर्वदैव तथेति नातिप्रसङ्गोऽपीति ध्येयम् ।

अदुष्टहेतौ वास्तवासाधारणप्रकरणसमत्वाभावादसाधारणप्रकरणसमोऽपीति व्याचष्टे असाधारणेति । भ्रमविषयस्य नव्यमते दोषत्वाभावादित्यदोषत्वमिति व्याचष्टे विशेषेति । प्रयोजकत्वं—प्रयोजकज्ञानविषयत्वम्, अत एवेत्यग्रपदार्थस्य सद्धेतोः सर्वदाऽदुष्टत्वस्य भ्रमविषयस्यानुमित्यनुत्पादप्रयोजकतायामनुपष्टम्भकतया तदुपष्टम्भं पूरयति नन्विति । तथाच यत एव सद्धेतुः सर्वदैव तथा न तु कदाचिदपि दुष्टलक्षणलक्ष्यः अत एव तत्स्थलीयानुमितिविरोधी यो भ्रमरूपो ग्रहस्तस्यानुमित्यनुत्पादप्रयोजकत्वेऽपि न हेतुदोषः भ्रमदशायां सद्धेतोर्दुष्टत्वे भ्रमविषयस्य दोषत्वमावश्यकं स्यादिति अत एवेत्यादिमूलस्य पर्यवसितोऽर्थः ।

ननु भ्रमस्यानुमित्यनुत्पादप्रयोजकत्वे तद्विषयस्य दोषत्वमिष्यत एवेति भ्रमविषयो न दोष इत्येवासिद्धमित्याशङ्कायामन्यथेति मूलावतारिकाशङ्कोद्धारं स्फुटीकर्तुं चिकीर्षुरन्यथापदं व्याचष्टे अन्यथेति ॥

मूले बाधादिज्ञाने इति । पक्षविशेष्यकसाध्याभावादिभ्रमदशायामित्यर्थः । हेत्वाभासाधिक्यापत्तिः—अतिरिक्तहेत्वाभासतापत्तिः, बाधादेर्नित्यदोषतायाः सर्ववादिसिद्धतया भ्रमविषयस्य तदन्तर्भावासम्भवादिति भावः ।

( चिं० ) न च प्रमेयत्वेनाभेदानुमाने शब्दोऽनित्यः शब्दाकाशान्यतरत्वादित्यत्र च साधारणेऽव्या-

स्तिः तयोः साध्यवदवृत्तित्वेन विरुद्धत्वादिति चेन्न । एतद्ज्ञानेऽपि साधारण्यादिप्रत्येकस्य ज्ञानादुद्भावनाच्च स्वपरानुमितिप्रतिबन्धात् उद्भावितैतन्निर्वाहार्थं साधारणादेरवश्योद्भाव्यत्वेन तस्यैव दोषत्वाच्च ।

( दी० ) अनवगतसाध्यसहचारत्वे सति अवगतसाध्याभावसहचारतया विरुद्धत्वमेव । तयोरिति । इदञ्चाभ्युपगमवादेन । वस्तुतो यथोपवर्णितलक्षणस्य न तत्राव्याप्तिरिति ध्येयम् ।

यद्रूपज्ञानमनुमितिप्रतिबन्धकं तदेव विभाजकम्, अन्यथा अतिप्रसङ्ग इत्यभिप्रेत्य दूषयति नैतदिति ।

वस्तुतस्तु उपस्थापकत्वादिज्ञानमनुमितेस्तज्जनकस्य वा न प्रतिबन्धकं विरोधिविषयकत्वाभावात् एवमुत्तरत्रापि ।

( गा० ) अभेदे साध्ये प्रमेयत्वस्यानित्यत्वे साध्ये शब्दाकाशान्यतरत्वस्य च वास्तवसाध्यवदवृत्तित्वविरहेण विरुद्धत्वासम्भवात् प्राचीनमताभिप्रायकतया तयोर्विरुद्धोक्तिमुपपादयति, दीधितौ अनवगतेति । एवं च साध्यवदवृत्तित्वेनेति मूलस्य साध्यवद्वृत्तितया अनवगतत्वेनेत्यर्थः । तादृशस्थले पक्षतादशायां हेतोः साध्यतदभावोभयसहचारस्याशक्यनिर्णयत्वेऽपि कालान्तरीयतन्निर्णयविषयवास्तवतदुभयसहचारमादाय लक्षणगमनसम्भवादलक्ष्यतयाऽव्याप्तिपरिहारो न घटत इत्यत आह अभ्युपगमेति । संशयजनकपक्षधर्मताज्ञानस्य विशेषणविधया लक्षणघटकत्वमभ्युपगम्येत्यर्थः । यथाश्रुतलक्षणे व्याप्त्यादिग्रहदशायां सद्धेतावतिव्याप्तिवारणाय तादृशज्ञानं विशेषणविधयैव निवेशनीयम्, तादृशज्ञानदशायामतिप्रसङ्गश्चास्त्येव तत्र तादृशज्ञानविरहदशायां चागत्या साधारणस्यापि सव्यभिचारत्वं नोपगन्तव्यमित्यत उपवर्णितेति । यथाव्याख्यातेत्यर्थकम्, अनुमित्यविरोधिज्ञानविषयस्यापि हेत्वाभासविभाजकत्वे क्षतिविरहात् एतद्ज्ञानेपीत्यादिनोक्तविभाजकधर्मज्ञानस्यानुमित्यविरोधित्वकथनमकिञ्चित्करमित्याशङ्कायामभिप्रायोपवर्णनेन निराकुरुते यद्रूपज्ञानमिति । यद्रूपावच्छिन्नविषयकज्ञानमित्यर्थः । तदेव-तद्रूपावच्छिन्नमेव ।

एतेन निरुक्तपक्षधर्मताज्ञानविषयतावच्छेदकधर्मवत्त्वस्यैव विभाजकतया साधारण्यादिरूपतादृशधर्मविषयकज्ञानस्य चानुमितिविरोधितया तादृशनियमोपगमेऽपि तथाविधधर्मस्य न विभाजकत्वानुपपत्तिरिति परास्तम् । साधारणत्वादिनैव साधारण्यादिज्ञानस्य विरोधितया तादृशपक्षधर्मताज्ञानविषयतावच्छेदकत्वेन तस्य विभाजकतानुपपत्तेः, एवं च एतज्ज्ञानस्येति मूलस्य निरुक्तविभाजकतावच्छेदकावच्छिन्नज्ञानस्यापीत्यर्थः । साधारण्यादिप्रत्येकस्येत्यस्य साधारण्यत्वादिरूपप्रत्येकधर्मावच्छिन्नस्येत्यर्थः । अन्यथा—अतादृशरूपावच्छिन्नस्यापि विभाजकत्वे । अतिप्रसङ्ग—अनुमितिकारणीभूतज्ञानविरोधिधर्मवत्त्वादिना अन्यतरधर्मवत्त्वादिना वा सव्यभिचारविरुद्धादीनामैक्यप्रसङ्ग ॥

मूले प्रतिबन्धादित्यस्य निरुक्तसामान्यधर्मज्ञानस्याप्रतिबन्धकत्वादिति शेषः । तस्यैव दोषत्वादित्यस्य प्रत्येकधर्मस्यैव विरोधित्वादित्यर्थः । तत्रैवान्य हेतुरिति न सत्, दोषस्याप्येतेति चकारात्सङ्गते । तस्यैव दोषतया उद्भावयितुमुचितत्वात् न तु अनुगतधर्मस्येत्यर्थः । एवं च दोषविधया यादृशो धर्म उद्भाव्यते स एव विभाजक उक्तानुगतधर्मस्य च दोषविधयाऽनुद्भावनीयतया न तथात्वमिति हृदयम् ।

ननु तत्ज्ञानदशायामन्यज्ञानादनुमितिप्रतिबन्धस्य तज्ज्ञानीयानुमित्यविरोधितावीजत्व मणिकृताभिहितं न घटते तथासति सत्प्रतिपक्षादिज्ञानस्यानुमितिविरोधितया बाधादिज्ञानस्यातथात्वापत्ते, अतः स्वयं तद्बीजमाह—वस्तुतस्त्विति । उपस्थापकं यादीति । कोटिद्वयोपस्थापकज्ञानविषयत्वादीत्यर्थः । आदिपदात्स्वय निरुक्तधर्मितादृशज्ञानविषयतावच्छेदकरूपवत्त्वपरिग्रहः । विरोधिविषयकत्वाभावात्—साध्यानिरूपितप्रतियोगितावच्छेदकावच्छिन्नतद्व्याप्यान्यतमाद्यवच्छिन्नाविषयकत्वात् ॥

इदं त्ववधेयम् । मूले प्रतिबन्धादित्यनन्तरं मानाभावेन निरुक्तधर्मस्यानुमित्यप्रतिबन्धकत्वादिति शेषः, एवं च प्रत्येकज्ञानस्यानुमितिप्रतिबन्धकत्वे नानुगतधर्मस्यानुमित्यप्रतिबन्धकतासम्पादकतया मूलेऽभिहितं किन्तु तथात्वेन प्रमाणाभावं कथिते अनन्तरं—ननु प्रत्येकं नानाधर्मज्ञानस्यानुमितिविरोधित्वकल्पनापेक्षया विरोध्यविषयकत्वस्यापि अनुगतधर्मज्ञानस्यैकस्य तथात्वे विशेषणादीनां साधार

ण्यादिहेतुकानुमितिवारणाय कल्पितुमुचितमित्याशङ्कावतारात्तत्परिजिहीर्षया प्रत्येकज्ञानस्यावश्यकल्पनीयप्रतिबन्धकताकत्वं दोषत्वाद्विरयन्तेनाभिहितमिति ॥ एवं-तादृशयुक्तेः उत्तरत्रापि-निर्वक्ष्यमाणानुगतधर्मान्तरेऽपि, अनुमितिविरोधिज्ञानाविषयत्वं बोध्यमिति शेषः ।

( चिं० ) एतेन पक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाव्याप्तिरनैकान्तिकः सपक्षविपक्षवृत्तित्वमुभयव्यावृत्तत्वमनुपसंहारित्वञ्चानुमितिविरोधि, तत्सम्बन्धः प्रत्येकमस्ति, विरुद्धोऽप्यनेन रूपेण सव्यभिचार एव उपाधेश्च न सङ्कर इति वक्ष्यत इति निरस्तम् । एतदज्ञाने ज्ञानेऽपि वावश्यकप्रत्येकज्ञानस्य दोषत्वात् असाधकतानुमितौ व्यर्थविशेषणत्वाच्च ।

( दी० ) पक्षवृत्तित्वे सतीति । विरोधित्वं-विरोधिज्ञानविषयत्वम् । अव्याप्तिपदमसन्तार्थ्यागव्यवच्छेदार्थकम्, तेन संयोगसम्बन्धेन व्यभिचारिणि द्रव्ये हेतौ व्यभिचाराभावदशायां नातिप्रसङ्गः। साध्यवद्वृत्तिस्तु नासाधारण इति हृदयम् । अगत्यधर्मधूमादिवारणाय सत्यन्तम् । पक्षः सन्दिग्धसाध्यो धर्मी निशिष्टहेतौ तद्वृत्तित्वग्रहाविरोधित्वञ्च तदर्थः। तथाच पक्षतावच्छेदकरूपेण पक्षे साध्यतावच्छेदकरूपेण साध्यस्य हेतुतावच्छेदकरूपेण हेतोर्वा यज्ज्ञानं तदविरोधित्वस्य लाभात् पक्षसाध्यसाधनाप्रसिद्धिस्वरूपासिद्धिवाधप्रतिरोधानां निरासोऽसिद्धिसङ्कीर्णसंग्रहः। विरोधोऽपि फलतः प्रतिरोध एव। तदन्यत्वेन वा विरोधि विशेषणीयम् । वक्ष्यते च सिद्धान्ते विरुद्धान्येति हेतुसाध्यसामानाधिकरण्यग्रहाविरोध्यर्थकम् । सम्बन्धपदबलेन प्रकृतहेतुसम्बन्धितया विरोधित्वे, तात्पर्योपवर्णनेन प्रायशो बाधादिवारणेपि घटत्वमनित्यं घटत्वादित्यादौ प्रपन्नसाध्यमिव तत् प्रतिभाति ।

वस्तुतस्त्वनुमितिपदं तत्कारणज्ञानपरम्। आश्रयासिद्ध्यादिवारणाय सत्यन्तं तादृशपक्षकतादृशहेतुकग्रहाविरोधित्वार्थकम्। अनया च वाचोभङ्ग्या व्याप्तिग्रहविरोधित्वमेवाभिधित्सितम्, तेन वह्निमान् वह्निमान् ह्रदत्वादित्यादौ हेतोः साध्यवद्वृत्तित्वादेर्नासंग्रहः। विवेचयिष्यते चेदमुपरिष्टात्। सपक्षेति सम्पातायातम्, अत एवानुपदं विरुद्धोऽपीत्यादिकम्। व्यर्थेति। विशेषण-पक्षवृत्तित्वम्।

(गा०) विरोधिपदस्य प्रतिबन्धकत्वार्थकत्वे असङ्गतिः साधारण्यादेस्तथात्वादतो व्याचष्टे विरोधित्वमिति। विरोधिज्ञानेति,-प्रतिबन्धकीभूतज्ञानेत्यर्थकम्। अनुमितिविरोधिसम्बन्धनिवेशेनैवोपपत्तावव्यावृत्तिपदमनर्थकमित्याशङ्कां निराचिकीर्षुस्तस्य व्यभिचारिणि साध्याभाववद्वृत्तित्वाभावदशायामव्यावृत्तिधारकतया, सार्थकतामुपपादनाय तद्व्याचष्टे अव्यावृत्तीति। अत्यन्तायोग —प्रतियोगिवैयधिकरण्यावच्छिन्नोऽभाव। नासङ्ग इति। तत्सम्बद्धो महानसादिवृत्तितादशायां वह्न्यभाववद्वृत्तित्वासत्त्वेऽपि प्रतियोगिवैयधिकरण्यावच्छिन्नतदभावस्य तथात्वेन तदवच्छेदस्य तदानीमपि सत्त्वादिति भाव॥

नन्वव्यावृत्तिपदस्यात्यन्तायोगव्यवच्छेदार्थकत्वे शब्दोऽनित्यः शब्दत्वादित्यादावसाधारण्योत्तीर्णतादशायामतिप्रसङ्ग इत्यत आह साध्यवद्वृत्तिस्त्विति। नासाधारण इति। निश्चयगर्भितस्य साध्यतदभाववदवृत्तित्वस्यैवासाधारण्यपदार्थत्वादिति शेष। तथाच तत्रोक्तस्थले कदाचिदपि असाधारण्यस्यासत्त्वान्नातिप्रसङ्ग इति भावः। बाधादिवारणाय विवक्षणीयस्य पक्षे साध्यग्रहाविरोधित्वस्य लाभाय पक्षपदं व्याचष्टे पक्ष इति। सन्दिग्धसाध्य -सन्दिग्धसाध्यविशिष्ट। धर्मी-पक्षतावच्छेदकावच्छिन्न। विशिष्टहेतो-हेतुतावच्छेदकावच्छिन्ने। तद्वृत्तित्वेति,-तादृशसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षवृत्तित्वेत्यर्थकम्। वैशिष्ट्यं च वैज्ञानिकम्, तेन बाधादिसङ्करस्थले साध्यविशिष्टपक्षाप्रसिद्धत्वेऽपि न क्षतिः। बाधादिज्ञानस्य साध्यविशिष्टपक्षतावच्छेदकावच्छिन्नविषयकज्ञानाविरोधित्वाच्च बाधादिकमादाय ह्रदो वह्निमान् धूमादित्यादावतिव्याप्तिरिति भाव। अत्र च साध्यवद्वृत्तित्वरूपासाधारण्यस्यासङ्ग्रहः तज्ज्ञानदशायां हेतौ साध्यविशिष्ट

ह्रदादौ धूमादिसाधने वह्न्यादिर्हेतुः । तदसङ्ग्रहः—तत्र यथाश्रुतप-
क्षवृत्तित्वेऽपि यथोक्तज्ञानाप्रतिबन्धकत्वाविशिष्टानुमितिविरोधिसा-
ध्याभाववद्वृत्तित्वमादाय लक्षणगमनसम्भवादिति भावः ।

ननु विरोधोऽपि यथोक्तज्ञानाविरोधी अनुमितिविरोधी चेदति-
प्रसङ्गः । न च विरुद्धो हेतुः साध्यवद्व्यावृत्ततया असाधारण एवेति
न तत्र सव्यभिचारलक्षणातिव्याप्तिप्रसक्तिरिति वाच्यम् । यथोक्त-
ज्ञानाविरोधित्वविशिष्टानुमितिविरोधित्वस्य विरोधिसाधारण्ये तस्य
सव्यभिचारपदप्रवृत्तिनिमित्तत्वासम्भवात् तदवच्छिन्नवतः सव्यभिचार-
पदार्थत्वे, तत्पदस्य पारिभाषिकत्वापत्तेः व्यभिचारलक्षणातिव्याप्तेरवा-
रणीयपरिहारत्वादत आह विरोधोऽपीति । फलतः—तदभावव्याप्यवत्ता-
ज्ञानाविधया अनुमितिप्रतिबन्धरूपफलप्रयोजकज्ञानविषयत्वेन, प्रति-
रोधः—प्रतिरोधतुल्य एव । तथा च पक्षे साध्यवत्ताज्ञानप्रतिबन्धक-
त्वान्न तत्रातिप्रसङ्ग इति भावः । पक्षवृत्तित्वे सति, साध्यव्यापकी-
भूताभावप्रतियोगित्वं विरोधः, तादृशाभावप्रतियोगित्वं च साध्या-
भावस्य व्यतिरेकव्याप्तिरिति तज्ज्ञानं तदभावव्याप्यवत्ताज्ञानविधया
पक्षे साध्यवत्ताज्ञानं विरुणद्धीति हृदयम् ।

साध्यासामानाधिकरण्यस्यैव चिन्तामणिकारमते विरोधतया
तस्य पक्षे साध्यवत्ताज्ञानाविरोधितयाऽतिव्याप्तिर्दुर्वारैवेति, अतस्त-
न्मताभिप्रायेण तद्वारणाय प्रकारान्तरमनुसरति तदन्यत्वेन, चेति ।
विरोधान्यत्वेन चेत्यर्थः । विरोधि—अनुमितिविरोधि ।

अथैतन्मते किमसाधारण्यम् ? न तावत्पक्षवृत्तित्वे सति साध्य-
व्यापकीभूताभावप्रतियोगित्वम्—तज्ज्ञानस्य पक्षे साध्यवत्ताज्ञानं प्रति
साध्याभावव्याप्यवत्ताज्ञानमुद्रया विरोधित्वेन सत्यन्तार्थविरहात् ।
नापि निश्चितसाध्यवद्व्यावृत्तत्व—तज्ज्ञानस्यानुमितौ तत्कारणीभूतज्ञाने
वा प्रतिबन्धकताविरहेण हेत्वाभाससामान्यलक्षणस्यैतल्लक्षणस्य
च तत्साधारण्यविरहात्, अनुमितिकारणीभूतसाध्यसामानाधिक-
रण्यज्ञानं प्रति, साध्यवद्व्यक्तिविशेषावृत्तित्वज्ञानस्याप्रतिबन्धकत्वात्,
कथंचित्प्रतिबन्धकत्वे, साध्यासामानाधिकरण्यग्रहाविरोधित्वरूप-
विरोधान्यत्वरूपस्य तत्रासत्त्वेन प्रकृतलक्षणस्य तत्साधारण्यासम्भ-
वात् । नापि पक्षवृत्तित्वविशेषितं साध्यव्यापकीभूताभावप्रतियो-
गित्वं तज्ज्ञानस्यापि अनुमितौ तज्जनकज्ञाने वाऽविरोधित्वात् । यदि

धर्मिणि प्रकृतहेतुमत्ताज्ञानसहकृतं प्रकृतहेतौ साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानमनुमितिं प्रतिबध्नाति स्थाणुत्वाभावव्याप्यकरादिमांश्चायमित्यादिज्ञानदशायामपि अयं स्थाणुरिति ज्ञानानुदयात्, धर्मिविशेष्यकतद्वत्ताज्ञानविशिष्टतद्धर्मिकग्राह्याभावव्याप्तिनिश्चयत्वेनैव तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वादित्युच्यते, तदा तादृशधर्मस्य पक्षे साध्यवत्ताज्ञानाविरोधित्वात् सत्यन्ताधिविरहादिति ॥

अत्र केचित्तु पक्षवृत्तित्वविशेषितं साध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यम्, सत्यन्तदले च विरोधिताघटकप्रतिबन्धकतायास्तादृशासाधारण्यविषयकत्वानवच्छिन्नत्वविशेषणं प्रक्षिप्य तत्साधारण्य प्रकृतलक्षणस्योपपादनीयमित्याहुः ।

परे तु हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यं तद्विषयकत्वस्य पक्षधर्मिकहेतुमत्ताज्ञानाविरहकालीनानुमित्यप्रतिबन्धकज्ञानसाधारणतया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेऽपि पक्षधर्मिकहेतुमत्तानिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशत्वस्य सामान्यलक्षणेऽत्र च लक्षणे विवक्षणीयतया सामान्यलक्षणस्य प्रकृतलक्षणविशेषदलस्य च तत्साधारण्यनिर्वाहः । पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकावच्छिन्नसाध्यवत्तादिज्ञानाविरोधित्वस्य च तादृशं यत्किञ्चिज्ज्ञानं यादृशधर्मावच्छिन्नविषयकनिश्चयसामान्याप्रतिबध्य तादृशधर्मवत्त्वरूपस्य शरीरे निश्चयांशे पक्षधर्मिकहेतुमत्तानिश्चयवैशिष्ट्यानिवेशात्तादृशनिश्चयाविरहकालीनहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वविषयकनिश्चयस्यापि तद्विषयकनिश्चयसामान्यान्तर्गतत्वेन पक्षे साध्यवत्ताज्ञानस्य च तदप्रतिबध्यतया तद्दलस्याप्येतत्साधारण्योपपत्तिरित्याहुः ॥

वस्तुतो यादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकताशून्यपक्षधर्मताज्ञानकालीनज्ञानावृत्ति तादृशत्वस्य स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तित्वनियमे, यादृशविशिष्टविषयकनिश्चयत्वव्यापकः पक्षधर्मताज्ञानकालीनत्वानुमित्यप्रतिबन्धकत्वोभयाभाव तादृशत्वस्य वा निवेशान्न दोषः, अन्यथा स्वरूपासिद्धिवारकस्य हेतुमत्ताग्रहाविरोधित्वदलस्य वैयर्थ्यापत्तेः पक्षधर्मिकहेतुमत्तानिश्चय

कालीनतद्विषयकनिश्चयस्याप्रसिद्धेः यादृशविशिष्टविषयकत्वेन त-स्योपादानासम्भवात् । एवं सामान्यलक्षणस्याप्यव्याप्तिः । यथाविव-क्षिते तु तद्विषयकनिश्चयत्वस्यानुमितिप्रतिबन्धकताशून्यपक्षधर्मिकहेतुमत्तानिश्चयकालीनप्रमानावृत्तित्वेन तत्राव्यभिचारकतया तत्सा-धकत्वात् सामान्यलक्षणस्यापि सङ्गमाच्च । 'अत्र वदन्ती'त्यादिनि-ष्कृष्टकल्पे च, पक्षवृत्तित्वसाहितोक्तरूपस्य स्वविषयकनिश्चयाव्यव-हितोत्तरानुमितिसामान्ये उभयाभावसत्त्वात् सामान्यलक्षणाक्रान्त-त्वं विशेषलक्षणाक्रान्तत्वं च निर्वहति इत्थं 'साध्यव्यापकीभूताभाव-प्रतियोगित्वज्ञानानन्तरं हेतुमान् साध्यवानित्यनाहार्यज्ञानस्य कदा-प्यनुदयात्' । एतादृशविशेषणप्रक्षेपे मूलकृतः सम्मतिमाह यद्व-क्ष्यतीति ॥

ननु हेतुनिष्ठसाध्यसामानाधिकरण्यात्यन्ताभावग्रहदशायां साध्य-निष्ठहेतुसामानाधिकरण्याभावावगाहिसाध्यासामानाधिकरण्यविशिष्टसा-धनादिरूपविषयावगाहिज्ञानानामेकस्यैव भेदनिवेशेऽप्यव्याप्तिर्दुर्वा-रैव । एवं साध्यासामानाधिकरण्यादिविशिष्टसाधनादिरूपविरोधिभे-दानवगाही साध्याभाववद्वृत्तित्वविशिष्टसाधनादिरूपस्य विरुद्धस्थली-यव्यभिचारस्यासंग्रहः—साध्यवद्वृत्तित्वविशिष्टाभावत्वादिना साध्या-भाववद्वृत्तित्वविशिष्टाभावत्वादिना तदतिरिक्तत्वादित्यत आह हेत्विति । हे-तुतावच्छेदकावच्छिन्नधर्मिकसाध्यतावच्छेदकावच्छिन्नसामानाधिक-रण्यप्रकारकज्ञानविरोध्यर्थकमित्यर्थः । तेन विरोधग्रहदशायामपि रूपान्तरेण साध्ये हेतुविषयकसामानाधिकरण्यग्रहोत्पत्तावपि न क्ष-तिः । न वा अवृत्तिहेतुकस्थले तदुभयसामानाधिकरण्याप्रसिद्ध्या तत्स्थलीयासाधारण्यासङ्ग्रहः । सामानाधिकरण्येऽपि साध्यतावच्छे-दकावच्छिन्नीयत्वं ज्ञानिकमेव न तु वास्तवम्, तेन नावृत्तिसाध्यक-साधारण्यासंग्रहः । अवृत्तिहेतुकस्थलीयव्यभिचारलक्षणे च एत-द्विशेषणमनुपादेयमेव, तेन तत्र हेतुसाध्यसामानाधिकरण्यग्रहाविरो-ध्यप्रसिद्धावपि न क्षतिः ॥

वस्तुतस्तु एतादृशसामानाधिकरण्यग्रहत्वन्यूनवृत्तित्वस्यैवानुमि-तिविरोधितावच्छेदकानुमितिनिष्ठप्रतिबध्यतायां निवेशनीयतया धूमवा-न्वह्निरित्यादौ सामानाधिकरण्यग्रहविरोधिनोऽप्रसिद्धावपि न क्षतिः ।

केचित्तु सत्यन्तस्य व्यावृत्तिद्वयं 'विशिष्टपक्षवृत्तित्वमर्थाविरोधि-

त्वमेवार्थं वर्णयन्तो बाधादिवारणाय पन्थानमन्यमेवाश्रयन्ते तन्मतमाक्षिपति सम्बन्धपदेनेति। प्रकृतहेतुसम्बन्धितया विरोधित्वे इति। प्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिनिश्चयत्वमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नत्वे इत्यर्थः। यत्किञ्चिद्रूपावच्छिन्नहेतुविशेष्यतानिवेशे द्रव्यं वह्निमद्धूमादित्यादौ पक्षतावच्छेदकावच्छेदेन साध्यासिद्धावुद्देश्यायां द्रव्यत्वावच्छिन्नधूमादिविशेष्यतानिरूपितसाध्याभावादिप्रकारताशालिनिश्चयत्वस्यानुमितिप्रतिबन्धकतावच्छेदकत्वात् साध्याभावादिवारणासम्भव इत्यतः प्रकृतेति,–प्रकृतहेतुतावच्छेदकावच्छिन्नेत्यर्थकम्॥

अथैवं हेत्वघटितसाध्याभाववद्वृत्तित्वादिकमेव व्यभिचारः स्यात्। न चेष्टापत्तिः, तस्य सामान्यलक्षणानाक्रान्तत्वात्। हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठत्वस्य विरोधिविशेषणत्वोपगमेन तादृशातिप्रसङ्गवारणेऽपि साध्याभाववद्वृत्तित्वादिविशिष्टसाधनादेः साध्याभावनिष्ठसाधनसामानाधिकरण्यादेश्चासङ्ग्रहः। न च हेतुतावच्छेदकावच्छिन्नघटितत्वे सति विरोधित्वमेव प्रकृतहेतुसम्बन्धितया विरोधित्वम्, तच्च विशेष्यविशेषणभावभेदभिन्नसकलव्यभिचारसाधारणमेवेति वाच्यम्। तथा सति ह्रदो वह्निमान् भावादित्यादौ वह्न्यभाववद्वृत्त्यादिरूपबाधादौ गगनवान् अभावादित्यादौ अवृत्तित्ववत् गगनादिरूपव्याप्यत्वासिद्धौ चातिव्याप्त्यापत्तेः।

मैवम्। व्यभिचारलक्षणस्य नैतादृशरीत्या परिष्कारः, अपि तु व्यभिचारिलक्षणस्यैवेति न साध्याभावनिष्ठप्रकृतसाधनसामानाधिकरण्याद्यसङ्ग्रहे हेत्वघटितसाध्याभाववद्वृत्तित्वादेः सङ्ग्रहे वा क्षतिः।

अथवा हेतुनिष्ठत्वविशेषिततादृशविरोध्येव व्यभिचारपदार्थः, अन्याविधोपदर्शितव्यभिचारस्तु तन्मते व्याप्यत्वासिद्ध्याद्यन्तर्भवतु तावता क्षतिविरहात्। प्रायश इत्यस्य प्रयोजनं स्वयमेव प्रकाशयिष्यते। बाधादीत्यादिना सत्प्रतिपक्षपरिग्रहः। तत्साध्यकतद्धेतुकानुमितिसामान्यं प्रति हेतुसम्बन्धितया विरोधित्वविवक्षणे तादृशबाधादिवारणसम्भवात्साध्यत्वमुपेक्ष्य अयत्नसाध्यत्वकथनम्। न चैवं हेतुसम्बन्धितयेत्यस्य वैयर्थ्यमिति वाच्यम्। तदनुपादाने साध्यनिष्ठावृत्तित्वरूपव्याप्यत्वासिद्धावतिप्रसङ्गापातात्, तस्य तत्साध्य-

कानुमितिमात्र एव विरोधित्वात् । न च तदुपादानेऽपि हेतुनिष्ठाव्यभिचारानिश्चयसङ्गो दुर्वार इति वाच्यम् । सत्यन्तदलेनैव तद्वारणात् । अत एव हेतुनिष्ठपक्षावृत्तित्वादिरूपस्यादृशानुमितिसामान्यविरोधित्वादेव वारणे सत्यन्तवैयर्थ्यमित्यपि परास्तम् ॥ काञ्चनमयपर्वतवह्निमान् धूमादित्यादौ साध्याप्रसिद्धिवारणं तु विशिष्टसाध्यग्रहाविरोधित्वविशेषणप्रक्षेपेणैव सम्भवतीति ध्येयम् । तदन्याघात्रिधारणम् ॥

अत्र च व्यभिचारज्ञानस्य प्रकृतपक्षे प्रकृतसाध्यानुमित्यविरोधितयाऽनुमितिपदस्य प्रकृतपक्षे प्रकृतसाध्यतद्व्याप्यप्रकृतहेतुवैशिष्ट्यावगाह्यनुमितिपरत्वमावश्यकम् । तत्र निश्चयोजनक साध्यवैशिष्ट्यावगाहित्वं निवेश्य तन्निबन्धनबाधादिव्यभिचारकविशेषणान्तरप्रक्षेपः "प्रक्षालनाद्धि" इत्यादिन्यायेनायुक्त इत्यतो ज्ञाने साध्यवैशिष्ट्यावगाहित्व विरोधिनि बाधादिवारकविशेषणं च परित्यजति यद्वृत्तमित्यादि । आश्रयासिद्ध्यादीत्यादिना स्वरूपासिद्धिसाधनाप्रसिद्धिपरिग्रहः । यथाश्रुते "आश्रयासिद्ध्यादिवारणासम्भवादसिद्धसङ्कीर्णव्यभिचारासङ्ग्रहाच्च सत्यन्तार्थं स्वावच्छेदकादृशेति । प्रथम तादृशेति पक्षतावच्छेदकविशिष्टेत्यर्थकम् । द्वितीयम् तद्धेतुतावच्छेदकविशिष्टार्थकम् । ननु वह्निमान् द्रव्यत्वादित्यादौ हेतुनिष्ठसाध्यासामानाधिकरण्यादिरूपासाधारण्यासङ्ग्रहः तज्ज्ञानस्य साध्यात्मकपक्षसाधवच्छेदकविशिष्टे हेतुमत्ताग्रहाविरोधित्वादत आह ज्ञानेनेति । अनुमितिकारणीभूत व्याप्तेः पक्षधर्मतायाश्च ज्ञानम् । तथा च पक्षधर्मताज्ञानाविरोधित्वकथनेन परिशेषाद्व्याप्तिग्रहविरोधित्वमेव लभ्यत इति भावः । ननु एतत्साध्यसाधनयोरप्रसिद्धार्थतद्व्यापकमन्योन्यात्यन्ताभावगर्भव्याप्त्योरेकतरोपादानेऽन्यतरासङ्ग्राहकं साध्याव्यभिचरितत्वविशिष्टसामानाधिकरण्याभावरूपव्याप्त्यत्वासिद्धावतिव्यापक चेत्यत आह विवेचयिष्यत इति । विशिष्टसाध्यसाधनग्रहाविरोधित्वं निवेश्य साध्याप्रसिद्ध्यादिकं वारयिष्यते ।' विशिष्टसाधनग्रहविरोधी व्यभिचारोऽसिद्धावेवान्तर्भावनीयः । समूहालम्बनात्मकनानाविधव्याप्तिज्ञानमादायात्यन्तान्योन्याभावगर्भा विविधा व्यभिचाराः सङ्ग्रहीष्यन्ते । व्याप्त्यभावो व्यभिचार एवान्तर्भावयिष्यते । तस्य बहिर्भावनीयत्वे विशकलितयोरेवाव्यभिचारसामानाधिकरण्ययोर्ज्ञानमुपादेयमिति ॥ कस्यचिदपि दोषस्यावकाश इति भावः ।

ननु सपक्षवृत्तित्वज्ञानस्यानुमित्याद्यविरोधितया, सपक्षविपक्षवृत्तित्वस्यानुमितिविरोधित्वाकिर्न सङ्गच्छते। न च विपक्षवृत्तित्वज्ञानस्यानुमितिप्रतिबन्धकतया तद्घटितविशिष्टस्यानुमितिविरोधित्वमक्षतमेवेति वाच्यम्। तथासत्यपि विपक्षवृत्तित्वमात्रस्यापि तथात्वात्तमादायैव लक्षणगमनसम्भवे विशिष्टमादाय लक्षणसङ्गमनस्यानुचितत्वात् विपक्षवृत्तित्वमात्रस्य तथात्वे तदादाय विरुद्धेऽतिव्याप्तेःप्रसक्ते विरुद्धेत्यग्रिमग्रन्थासङ्गतिश्चेत्यत आह सपक्षेतीति। तथाच विपक्षवृत्तित्वमात्रं विवक्षितमिति भावः। अतएव—सपक्षवृत्तित्वस्याविवक्षितत्वादेव। मूले एतदज्ञानेऽपीति दृष्टान्तविषयकम्। तथासति-एतादृशानुगतधर्माज्ञानदशायामिव तज्ज्ञानदशायामपि, अवश्यकल्प्यप्रतिबन्धकताकप्रत्येकज्ञानस्यैव दोषत्वात्-अनुमित्यनुत्पादप्रयोजकत्वादित्यर्थः। तथा चानुगतधर्मज्ञानदशायां प्रत्येकज्ञानस्यासत्त्वेऽनुमितिरिष्टैव तत्सत्त्वे तत एवानुमित्यनुत्पाद इति तज्ज्ञानस्य प्रतिबन्धकताया अप्रामाणिकत्वान्न तस्य विभाजकत्वमिति भावः।

व्यर्थविशेषणत्वादिति मूले विशेषणपदस्यानुमितिविरोधित्वरूपविशेषणपरत्वं न सम्भवति तदनुपादाने सद्धेतौ व्यभिचारादतो व्याचष्टे विशेषणमिति। स्वरूपासिद्ध्यादिहेतोरप्यसाधकतया तत्र व्यभिचाराप्रसक्तेस्तद्वारकं विशेषणं व्यर्थमेवेति भावः॥

(चि०) अतएव साध्याव्याप्यत्वे सति साध्याभावाव्याप्यहेत्वाभासत्वं साधनवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं वेति परास्तम्। व्यर्थविशेषणत्वात् प्रथमं हेत्वाभासत्वाज्ञानाच्च।

गगनमनित्यं शब्दाश्रयत्वादित्यादिबाधविरुद्धसङ्कीर्णासाधारणाव्याप्तिरिति कश्चित्॥

(दी०) साध्याव्याप्यत्व इति। हेत्वाभासत्वं हेतुवदाभासमानत्वं वस्यर्थश्च दूषितमपम्, एवञ्च साध्यतद्भावव्याप्यत्वग्रहविरोधिवृत्तिमत्त्वग्रहाविरोधिरूपवत्त्वमर्थः। साध्यतदभाववद्वृत्तित्वं साधारण्यम् निश्चितसाध्यतदभाववद्व्यावृत्तत्वमसाधारण्यम् तच्च

विरहस्य शब्दादौ साध्यादिनिश्चयदशायामपि तत्र सत्त्वात् प्रकृतहेतुनिष्ठासाधारण्याभावस्याप्रसिद्ध्याऽव्याप्तिः । न च तत्कालीनसाध्यादिनिश्चयविषयीभूतधर्मिव्यावृत्तत्वरूपासाधारण्यघटकतत्कालादिविरहात् तदानीं तद्घटितासाधारण्यविरहोऽक्षत एवेति वाच्यम् । प्रतियोगिकोटिप्रविष्टविशेषणासत्त्वस्याभावीयविशिष्टाभावाप्रयोजकत्वात् अन्यथा दण्डाद्यसत्त्वे दण्डविशिष्टपुरुषाभावादेरिव दण्डविशिष्टपुरुषाभावाद्यभावस्यापि सत्त्वप्रसङ्गात् । यदि च प्रकृतहेतुमद्विशेष्यकसाध्यतदभावान्यतरनिश्चयक्षण एवासाधारण्याभावकालेत्यनेन विवक्षितमित्युच्यते, तदा शब्दोऽनित्यः शब्दत्वादित्यादौ यदा क्वचिदपि साध्यस्य साध्याभावस्य वा निश्चयो नास्ति तदा सव्यभिचारत्वप्रसङ्गः तादृशक्षणस्य प्रकृतहेतुमद्विशेष्यकसाध्यादिनिश्चयस्याप्यनधिकरणत्वेन तदा तादृशनिश्चयक्षणावच्छिन्नसाध्यादिव्याप्यभावस्य हेतौ सत्त्वात् तदा चासाधारण्यघटकसाध्यादिनिश्चयासत्त्वेनासाधारण्यस्य साधारण्यस्य च विरहेणोपपत्तेरयोगात् । प्रकृतहेतुनिष्ठासाधारण्यघटको यो यस्तादृशक्षणस्य विवक्षणे तु यादृशसाध्यकस्थले यादृशासाधारणस्य हेतोः कदापि नासाधारण्यं तत्राव्याप्तिः प्रकृतहेतुनिष्ठस्यासाधारण्यस्याप्रसिद्धेः ।

मेवम् । तत्तत्कालावच्छिन्नत्वविशिष्टस्य तत्तत्कालीनसाध्यादिनिश्चयविषयव्यावृत्तत्वरूपासाधारण्यस्य प्रकृतहेतुनिष्ठाभावावच्छेदककाल एवासाधारण्याभावकालः हेतुमति साध्यादिनिश्चयदशायां कालीनत्वावच्छिन्नस्य कालान्तरघटितासाधारण्यस्याभावकूटो हेतौ सुलभ एव । यादृशासाधारणहेतोः कदापि नासाधारण्यं तत्रापि ततो गगनादिनिष्ठप्रकृतसाध्यकासाधारण्यस्याभावकालः प्रसिद्ध एवेति न दोषः ।

अथवा प्रकृतहेतुमद्विशेष्यकसाध्यतदभावान्यतरनिश्चयानधिकरणत्वाकिञ्चिद्विशेष्यकसाध्यतदभावनिश्चयवत्त्वोभयाभाववान् क्षण एवासाधारण्याभावकालेत्यनेन विवक्षितः । शब्दोऽनित्यः शब्दत्वादित्यादौ यदा क्वचिदपि साध्यस्य तदभावस्य वा न निश्चयः तत्क्षणे प्रकृतहेतुमद्विशेष्यकसाध्यतदभावान्यतरनिश्चयानधिकरणत्वसत्त्वेऽपि साध्यतदभावनिश्चयवत्त्वाभावेनोभयाभावोऽक्षत एवेति तदा न सव्यभिचारितासङ्गः ।

प्रकृतहेतुनिष्ठासाधारण्यघटको यो यस्तदन्यक्षण एव विघक्षणीयः यत्साध्यकस्थले यस्य साधारणहेतोः कदापि नासाधारण्यं तत्साध्यके तत्स्थलीयलक्षणेऽसाधारण्याभावकालावच्छिन्नत्वं नोपादेयमेव साध्यसाधनभेदेन लक्षणभेदादित्यपि कश्चित् ।

विशेषणाभावात्-असाधारण्याभावकालावच्छिन्नत्वरूपं यद्व्याप्तिद्वयस्य विशेषणं तदभावात् । समग्रहः—तादृशविशेषणविशिष्टव्याप्तिद्वयस्याभाववत्त्वम् । एतन्मते च पूर्वलक्षणे साध्याभाववद्वृत्तित्वघटितायां उत्तरत्र च तद्वदन्यावृत्तित्वघटितायां व्याप्तेरनुप्रवेशाञ्च लक्षणयोरभेदः । स्वव्यापकसामानाधिकरण्यरूपव्याप्तेरभावश्च निवेशयितुमशक्यः तादृशव्याप्तेः स्वस्वघटिततया हेतुभेदेन भेदात् साधारणहेतुकस्थले तदप्रसिद्ध्याऽसंभवात् । शिरोमणिव्याख्यायां च तादृशव्याप्तेरप्रसिद्धत्वेपि तद्घटकपदार्थानां परस्परोपश्लेषावगाहिज्ञानविरोधितया एव निवेशेनानुपपत्त्यभावात् व्यापकसामानाधिकरण्यमिह व्याप्यत्वमित्युक्तत्वात् । एवमेतन्मते तुष्टलक्षणपर एवायं ग्रन्थो न तु वोपलक्षणपरोपि तादृशव्याप्तिद्वयशून्यत्वस्य व्यभिचारपदार्थत्वाभावादित्यवधेयम् ।

तच्चिन्त्यमिति । चिन्ताबीजं चासाधारण्यशरीरे तत्पुरुषीयनिश्चयनिवेशस्यावश्यकतया सामान्यलक्षणस्य तत्पुरुषविशेषनियन्त्रित्वापत्तिः । न चेष्टापत्तिः । तथासति साधारणहेतावप्यसाधारणहेताविवामुकं प्रत्ययं व्यभिचारीति व्यवहारप्रसङ्गात् । एवं सव्यभिचारपदस्य पारिभाषिकत्वमपि ।

इतरभेदानुमाने वैय्यर्थ्यसंभवे असाधकतानुमाने वैय्यर्थ्यपरतया व्यर्थविशेषणत्वादिति मूलव्याख्यानमनुचितमित्याशयेन इतरभेदानुमानवैय्यर्थ्यपरतयैव मूलं व्याचष्टे व्यर्थेतीति । विरोधादेरित्यादिना अवृत्तित्वपरिग्रहः । साध्याभावेत्यादीति । साध्याभावव्याप्तिग्रहविरोधित्वं वृत्तिमत्त्वग्रहाविरोधित्वं चेत्यर्थः । तस्य-विरोधादेः । पार्थक्ये-व्यभिचारपदार्थबहिर्भूतत्वे । प्रमाणाभावादिति । तथा च विरोधादावपि व्यभिचारपदार्थरूपपक्षे इतरभेदसत्त्वेन तद्व्यावर्तकविशेषणानवच्छिन्नस्यैवेतरभेदानुमापकत्वसंभवादिति भावः । हेत्वाभासपदस्यान्यथा व्याख्यानाद्दुष्टहेतुत्वरूपहेत्वाभासत्वस्य लक्षणाघटकत्वात् प्रथममित्यादिदूषणस्यासङ्गतिः । एवं गगनमनित्यं द्रा-

द्रव्यत्वादित्यादौ हेतोः साध्याभावव्याप्यत्वेऽपि साध्याभावव्याप्ति-ग्रहाविरोधिदर्शितधर्मवत्त्वं तत्राक्षतमेवेति तथाव्याप्तिज्ञानमप्यसङ्गत-मित्यतो यथाश्रुतार्थे तादृशदोषद्वयं सङ्क्रमयति प्रथममिति ॥

(चि०) नापि सपक्षविपक्षगतसर्वसपक्षविपक्षव्यावृत्तान्यतरत्वम्, व्यर्थविशेषणत्वात् अनुपसंहार्यव्याप्तेश्च । किञ्च पक्षातिरिक्तसाध्यवतः सपक्षत्वे प्रमेयत्वेनाभेदसाधनेऽनुपसंहार्येऽव्याप्तिः-पक्षातिरिक्तसाध्यवतोऽप्रसिद्धेः । साध्यवतः सपक्षत्वे क्वचिदप्रसिद्धिः-वृत्तिमतो धर्मस्य साध्यवद्विपक्षान्यतरवृत्तित्वनियमात् । नापि पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्तिभिन्नत्वम्, अनुपसंहार्यव्याप्तेः धूमादावतिव्याप्तेश्च तस्य पक्षे साध्यवति वृत्तेः । नापि पक्षवृत्तित्वे विरुद्धान्यत्वे च सत्यनुमित्यौपाधिकसम्बन्धशून्यत्वम् । व्यर्थविशेषणत्वात् । एतेनानुगतं सर्वमेव लक्षणं प्रत्युक्तम् । प्रत्येकमेव दूषणत्वात् उद्भावने वादिनिवृत्तेश्च ॥

(दी०) नापीत्यादि । सपक्षविपक्षत्वावच्छिन्नव्यावृत्तत्वं सर्वतद्व्यावृत्तत्वम् । व्यर्थेति । सपक्षवृत्तित्वविपक्षव्यावृत्तत्वयोर्दूषकतायामनुपयोगादिति भावः । पक्षातिरिक्तेत्यादि । व्याप्यत्वविरुद्धयोरसाधारणयोः सङ्ग्रहाय पक्षातिरिक्तपदे । पक्षत्वं सन्दिग्धसाध्यकत्वम् । धूमेत्यादिदूषणं यथाश्रुते न तु सप्तमीसमासात् पक्षातिरिक्ते वर्त्तते यत्साध्यवन्मात्रवृत्ति साध्याभाववन्मात्रवृत्ति च तद्भिन्नत्वमित्यर्थे इति ध्येयम् । पक्षवृत्तीत्यादि । विरोधः साध्यासामानाधिकरण्यम् । पक्षवृत्तित्वसामानाधिकरण्यग्रहाविरोधी योऽनुमित्यौपाधिकस्य जनकज्ञानविषयस्य सम्बन्धस्य सपक्षसत्त्वादे-

रभावस्तद्वत्त्वमित्यर्थः । सपक्षविपक्षव्यावृत्तत्वस्य चासाधारण्यस्य असाधारण्यनिश्चये पक्षे साध्यसामानाधिकरण्यसन्देहान्न तस्य तज्ज्ञानविरोधित्वम् ।

पक्षवृत्तौ विरुद्धभिन्ने च वर्त्तते यस्तादृशोऽभावस्तद्वत्त्वमर्थ इति केचित् ॥

( गा० ) एकमात्रसपक्षविपक्षस्थले सर्वसपक्षाद्यप्रसिद्धिरित्याशंकां व्याचष्टे सपक्षेति । सपक्षवृत्तित्वत्वावच्छिन्नाभावो विपक्षवृत्तित्वत्वावच्छिन्नाभावश्चेत्यर्थः । सर्वतद्व्यावृत्तत्वं सर्वसपक्षविपक्षव्यावृत्तत्वपदार्थः । तावतैव यत्किंचित्सपक्षविपक्षव्यावृत्तयोर्व्याप्यविरुद्धयोर्नातिव्याप्त्यवकाश इति भावः । सपक्षगतत्वविपक्षव्यावृत्तत्वयोर्विशेषणयोर्विरुद्धातिव्याप्तिवारकतया सार्थक्यं संभवत्येवेत्याशङ्क्य दूषकतानुपयोगित्वरूपवैयर्थ्यपरतां व्यर्थविशेषणत्वादिति मूलस्याह सपक्षेति । व्याप्यविरुद्धयोरिति । शब्दोऽनित्यः शब्दत्वादित्यादौ व्याप्यस्य हेतोः साध्यवन्मात्रवृत्तित्वेपि पक्षेपि वृत्तेः पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वमक्षतमेव । एवं शब्दो नित्यः शब्दत्वादित्यत्र विरुद्धस्य हेतोः साध्याभाववन्मात्रवृत्तित्वेपि पक्षेपि वृत्तेः पक्षातिरिक्तसाध्याभाववन्मात्रवृत्त्यन्यत्वमक्षतमेवेति द्वयोः संग्रह एवेति भावः । पक्षातिरिक्तेत्यत्र पक्षपदस्य तद्धर्मिमात्रपरत्वे पक्षे साध्यतदभावान्यतरनिश्चयदशायां शब्दोऽनित्यः शब्दत्वादित्यादावतिव्याप्तिः, सिद्ध्यभावरूपपक्षताविशिष्टपरत्वे पक्षे सिद्धिदशायां तत्र विशिष्टातिरिक्तत्वस्वरूपोपगमात् अतिरिक्तान्तस्य पक्षताशून्यपरत्वोपगमाद्वा अतिप्रसङ्गवारणसंभवेपि शब्दोऽनित्यः शब्दत्वादित्यादौ बाधनिश्चयदशायामतिप्रसङ्गो दुर्वार एव, सिद्धिबाधान्यतराभावरूपपक्षताविवक्षणे च गौरवमतः संशयरूपपक्षतापरतया व्याचष्टे पक्षत्वमिति । सन्दिग्धसाध्यकत्वं विषयतासम्बन्धेन साध्यसन्देहविशिष्टत्वम् । कालान्तरीणसंशयविषयेपि संशयरूपविशेषणासत्त्वदशायां तद्विशिष्टभेद उपगम्यते । अतिरिक्तान्त वा पक्षताशून्यपरमतः साध्यादिनिश्चयदशायां नातिप्रसङ्गः । यदा पक्षे साध्यतदभावयोर्न निश्चयो नापि संशयस्तदा शब्दोऽनित्यः शब्दत्वादित्यादेर्नासाधारणता किन्तु यथायथं सद्धेतुत्वं विरुद्धत्वं चेति नाव्याप्तिप्रसङ्ग इति भावः ।

पक्षातिरिक्तवृत्ति यत्साध्यतदभाववन्मात्रवृत्ति तदन्यत्वार्थकत्वे वह्निमान्धूमादित्यादौ नातिव्याप्तिसंभवः भेदप्रतियोगितावच्छेदकघटकदलद्वयस्यैव तत्र सत्त्वेन विशिष्टभेदासत्त्वादतः पक्षातिरिक्तत्वस्य साध्यादिमद्विशेषणत्वाभिप्रायकतया मूलं सङ्गमयति धूमेत्यादीति । यथाश्रुते–पक्षातिरिक्तो यः साध्यादिमांस्तन्मात्रवृत्तिभिन्नत्वमित्यर्थे, सप्तमीसमासादित्यर्थे न तु दूषणमिति योजना । सप्तमीसमासलभ्ये तादृशार्थे न दूषणमित्यर्थः ।

ह्रदो धूमवान् वह्नेरित्यादिसाधारणे शब्दो नित्यः शब्दत्वादित्यसाधारणे च यथाश्रुतलक्षणस्याव्याप्तिरतो व्याचष्टे पक्षवृत्तीत्यादीति । पक्षवृत्तित्वस्य साध्यसामानाधिकरण्यस्य च यो ग्रहस्तद्विरोधीत्यर्थः । अनुमित्यौपयिकस्येति समासेन लिखनं जनकज्ञानविषयेत्यस्य समुदायव्याख्यानतायामेव संभवतीत्यतो व्यासेन लिखनम् । सपक्षसत्त्वादेर्नानुमितिजनकत्वमपि तु तज्ज्ञानस्यैवेत्यौपयिकपदस्य जनकतार्थत्वं न संभवतीति व्याचष्टे जनकज्ञानविषयस्येति । नन्वत्रासाधारण्येऽव्याप्तिः तस्य सपक्षव्यावृत्तत्वघटिततया साध्यवद्वृत्तित्वग्रहविरोधित्वादित्यत आह सपक्षविपक्षव्यावृत्तत्वस्य चेति । चस्त्वर्थे । सपक्षत्वं–निश्चितसाध्यवत्त्वम् । पक्षे–पक्षान्तर्भावेण । तस्य–असाधारण्यस्य । तज्ज्ञानविरोधित्वं–साध्यसामानाधिकरण्यज्ञानविरोधित्वम् । साध्यवद्वृत्तित्वसामान्याभावज्ञानमेव साध्यसामानाधिकरण्यसामान्यज्ञानविरोधि न तु तद्विशेषाभावात्मकसपक्षव्यावृत्तत्वज्ञानमपीति भावः ।

अथात्र विरुद्धहेतवो यद्यलक्ष्याः तदा सपक्षवृत्तित्वाद्यभावादिकमादाय सर्वेषु तेष्वतिव्याप्तिः, तेषां लक्ष्यत्वे साध्यसामानाधिकरण्यग्रहाविरोधित्वोपादानमनर्थकमेवेति चेन्न ।

दुष्टहेतुलक्षणे विरुद्धा लक्ष्या एव, उक्तविशेषणोपादानं च वोपलक्षणे विरोधातिव्याप्तिवारणायैव । सपक्षविपक्षव्यावृत्तत्वस्यासाधारण्यस्येत्यत्र विपक्षपदं संपातायातमेवेत्यवधेयम् ।

अत्र च यद्रूपविशिष्टविषयकत्वेनानुमितिजनकता तद्रूपावच्छिन्नाभावोऽवश्यं विवक्षणीयः, अन्यथा सपक्षसत्त्वादेर्द्वित्वाद्यवच्छिन्नाभावमादायातिप्रसङ्गापातात् । एवं च निश्चितसाध्यवद्वृत्तित्वावच्छिन्नाभावासंग्रहः । निश्चयांशज्ञानस्यानुमित्यहेतुतया तद्घटितवा-

दशाधर्मविशिष्टविषयतावत्त्वेनानुमितिजनकत्वाभावात् । येन केनापि रूपेण यद्रूपाश्रयानिरूपितविषयतावत्त्वेन जनकता तद्रूपावच्छिन्नाभावविवक्षणे च द्वित्वावच्छिन्नाभाववारणमशक्यमेवेति दूषणमशक्यसमाधानमित्यवधेयम् ।

उपदर्शितसाधारणासाधारणयोः संग्रहाय मिथ्या अन्यथैवैतल्लक्षणं व्याचख्युः तदुपन्यस्यति पक्षवृत्ताविति । पक्षावृत्तित्वं न पक्षवृत्तौ विरोधश्च न विरुद्धभिन्ने वर्तते इति न पर्वतो वह्निमान्महानसत्वात् ह्रदो वह्निमान् ह्रदत्वाच्च इत्याद्योः स्वरूपासिद्धविरुद्धयोरतिव्याप्तिः । सपक्षविपक्षवृत्तित्वं तद्व्यावृत्तत्वं च पक्षवृत्तौ विरुद्धभिन्ने च वर्तेत इति तदादाय उपदर्शितसाधारणासाधारणयोः संग्रहः । एतत्कल्पेपि पूर्ववद्विरुद्धा लक्ष्या एव विरोधस्य व्यभिचारतावारणायैव विरुद्धान्यवृत्तित्वोपादानमित्यवधेयम् ।

अत्र च हेतुतावच्छेदकसम्बन्धेन पक्षवृत्तित्वविवक्षणमावश्यकम् । अन्यथा हेतुतावच्छेदकसम्बन्धेन पक्षावृत्तेरपि येन केनापि सम्बन्धेन पक्षवृत्तितया स्वरूपासिद्धेरपि पक्षवृत्तितया तद्वारणासंभवात् । एवं च हेतुतावच्छेदकसंबन्धेन पक्षवृत्तित्वं यथाप्रसिद्धं तादृशव्यभिचारिण्यव्याप्तिः । एवं गगने साध्यनिश्चयदशायां घटः शब्दवान् घटत्वादित्यादावसाधारणेऽव्याप्तिः । सपक्षव्यावृत्तत्वस्य विरुद्ध एव वर्तमानत्वादित्यस्वरसः केचिदित्यनेन सूचितः ॥

इति गादाधर्यां सव्यभिचारलक्षणपूर्वपक्षग्रन्थः ॥

---

( चि० ) उच्यते । उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं तत्त्वम् । तच्च साधारणत्वादि ।

( दी० ) पूर्वोक्तलक्षणानां यथोक्तरीत्या यथामतं नाव्याप्त्यादिसम्भावना परन्तु तज्ज्ञानस्यानुमित्यप्रतिबन्धकतया तेषां हेत्वाभासताच्छेदकत्वं न घटते, न घटतां किन्तेन, तेषां हेत्वाभासविभागमात्रोपयोगित्वादित्याशयेनाह उच्यत इति । सन्देहं प्रत्येव साधारण्यादिविशिष्टधर्मवद्धर्मिज्ञानत्वेन हेतुता तज्जनककोटिद्वयोपस्थितिं प्रति तु तादृशधर्मज्ञानत्वमात्रेणेत्यभिप्रेत्याह उभये·

ति । साध्यसन्देहजनकेति प्रकृतम् ॥

( गा० ) ननु पूर्वपक्षग्रन्थोक्तलक्षणावलम्बनेन सिद्धान्त प्रणयनमसङ्गतं तत्तद्दोषाणां जागरूकत्वादित्याशङ्का निराकरोति पूर्वोक्तेति । यथामतमिति । यद्यन्मतमालम्ब्य यद्यल्लक्षणमभिहितं तत्तन्मते तत्र नाव्याप्तिसम्भावनेत्यर्थः । तत्र साधारण्यस्यासाधारण्यस्य च संशायकतामते प्रथमलक्षण व्याप्तिग्रहादिविरोधितामते च तादृशविरोधिताघटितलक्षणम् । तेन विरोधित्वघटितलक्षणलक्ष्ये विरुद्धे संशयप्रयोजकस्य सपक्षवृत्तित्वघटितसाधारण्यस्य विपक्षव्यावृत्तत्वघटितासाधारण्यस्य च विरहेऽपि प्रथमलक्षणस्य नाव्याप्तिः प्रथमलक्षणालक्ष्ये तत्र च विरोधिताघटितलक्षणस्य वा नातिव्याप्तिरिति भावः । तेषां-कोटिद्वयोपस्थापकतावच्छेदकत्वादिरूपानुगतधर्मावच्छिन्नानां तादृशरूपाद्यात्मकलक्षणानाम्, हेत्वाभासतावच्छेदकत्वम्-अनुमितिप्रतिबन्धकतायामवच्छेदकत्वम् । विभागमेवेति । मात्रपदेन दुष्टव्यवहारव्यवच्छेदः, दुष्टव्यवहारनियामकोऽनुमितिप्रतिबन्धकतावच्छेदकधर्म एव विभाजक इति नियमे मानाभावादिति भावः ।

नन्वत्र लक्षणे पक्षधर्मतापदानुपादानान्नित्यत्वादिसाध्यकस्थले कोटिद्वयोपस्थापकसाधारणधर्मवत्ताज्ञानविषयीभूते द्व्यणुकादौ अतिव्याप्तिरित्याशङ्कां निराचिकीर्षुरभिप्राय वर्णयति सन्देहमित्यादिना । एवकारेण कोट्युपस्थितौ तादृशरूपेण हेतुताव्यवच्छेदः । तादृशधर्मेति । साधारण्यादिविशिष्टधर्मेत्यर्थः । मात्रपदेन धर्मिविषयकत्वस्य कोटिद्वयोपस्थितिजनकतावच्छेदकत्वव्यवच्छेदः । तथाच कोटिद्वयोपस्थितिजनकतावच्छेदकीभूता या विषयता तदवच्छेदकधर्मवत्त्व नोक्तस्थले द्व्यणुकादौ अणुत्वादिविषयताया एव तथात्वादिति न तत्रातिव्याप्तिरिति भाव. ।

अथतन्मते संशयं प्रति साधारणधर्मवद्धर्मिज्ञानत्वेन हेतुताया आधिक्याद्गौरवमिति चेन्न । भवन्मतेऽपि कोटिद्वयोपस्थितिं प्रति तेन रूपेण हेतुताया आधिक्यात् । सम्बन्धिहस्त्यादिविशेष्यकज्ञानाद्धस्तिपकादिस्मृतेरिव तत्कोटिसहचरितधर्मविशेष्यकज्ञानादपि तत्कोटिस्मृतेर्निर्विवादतया साधारणधर्मविषयकज्ञानत्वेन कोट्युपस्थितिहे

तुताया उभयवादिसिद्धत्वात्तस्मात्कोट्युपस्थितौ साधारणधर्मवद्धर्मिज्ञानत्वेन संशयं प्रति च साधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन हेतुत्वमिति पूर्वपक्षलक्षणोपष्टंभकमतापेक्षया संशयं प्रति साधारणधर्मवद्धर्मिज्ञानत्वेन साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन च हेतुत्वमतमेव सयुक्तिकम् ।

अथास्तु कोट्युपस्थितौ साधारणधर्मज्ञानत्वेनैव हेतुता तथापि संशये धर्मिभाननियमाय तत्र साधारणधर्मवद्धर्मिज्ञानत्वेन हेतुत्वमफलं कोट्युपस्थितेः संशयहेतुतायां साधारणधर्मज्ञानजन्यत्वनिवेशस्थाने साधारणधर्मवद्धर्मिज्ञानजन्यत्वनिवेशनादेव तन्नियमोपपत्तेः स्वतन्त्रकारणताकल्पनापेक्षया क्लृप्तकारणतायामवच्छेदकगौरवस्यैवोचितत्वात् । न च धर्मिज्ञानस्य संशये साक्षाद्धेतुताया अपि फलत्वात्तत्र साधारणधर्मप्रकारकत्वमात्रं निवेद्यत इति नास्माकमपि स्वतन्त्रकारणताकल्पनम् , मानसेपि च विप्रतिपत्तिवाक्याधीनसंशये कोट्योरिव धर्मिणोपि पदजन्यैवोपस्थितिः कारणमिति पदजन्यत्वेन धर्मिज्ञानस्य विप्रतिपत्तिवाक्याधीनसंशये पृथक् कारणताया आवश्यकत्वात्तदन्यसंशयकारणतायां साधारणधर्मादिविषयकत्वान्तर्भावे बाधकाभावादिति वाच्यम् । संशयं साधारणासाधारणधर्मवद्धर्मिज्ञानत्वेन हेतुताद्वयस्य तादृशतादृशधर्मज्ञानजन्यकोट्युपस्थितित्वेन हेतुताद्वयस्य च कल्पनापेक्षया तादृशतादृशधर्मविषयकत्वमनन्तर्भाव्य धर्मिज्ञानत्वेन हेतुतायास्तादृशतादृशधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन च हेतुताद्वयस्य च कल्पने स्फुटतरं लाघवात् ।

नैवम् । कोट्युपस्थितिकारणतायां तत्तत्कोटिसहचरितधर्मवद्धर्मिविशेषविषयकज्ञानजन्यत्वनिवेशे धर्मिभेदेन गुरुधर्मावच्छिन्नकारणताया आनन्त्यापत्तेस्तदपेक्षया धर्मिविशेषमनन्तर्भाव्य तत्तत्कोटिसहचरितधर्मज्ञानजन्यकोट्युपस्थितित्वेन धर्मिविशेषमन्तर्भाव्य साधारणधर्मवद्धर्मिविशेषज्ञानत्वेन लघुशरीरेण हेतुत्वस्य च कल्पयितुं युक्तत्वात् । न चोपस्थितिकारणतावच्छेदकशरीरे धर्मिणोऽनन्तर्भावेपि कार्यतावच्छेदकीभूतसंशयत्वस्य धर्मिविषयताघटितत्वात् कोट्युपस्थितर्धर्मिभेदेन कारणताभेद आवश्यक इति वाच्यम् । संशयत्वशरीरे धर्मिविशेषविषयताया विशेष्यतात्वेन किञ्चिद्धर्मावच्छिन्नविशेष्यतात्वेनय वा सामान्यतो निवेशनीयतया धर्मिभेदेन कार-

णताभेदानावश्यकत्वादिति दिक् ।

पूर्वलक्षणोक्तातिप्रसङ्गवारणाय साध्यसन्देहजनकत्वस्य कोट्युपस्थितिविशेषणताया आवश्यकत्वादत्र तदुपस्थापकपदानुपादाननिबन्धनं तदनिवेशभ्रमं निराकुरुते साध्यसन्देहेति । प्रकृतं-प्रकरणवशात्सामान्यशब्दस्य विशेषपरतया प्राप्तम् । तथा च साध्यसन्देहजनिका या साध्योपस्थितिस्तज्जनकतावच्छेदिका सती तथाविधसाध्याभावोपस्थितिजनकतावच्छेदकीभूता या विषयता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वं तत्त्वमिति पूर्वोक्तदिशा लक्षणार्थो निष्कर्षयितव्यः । वह्निसाहचर्यवह्न्यभाववद्व्यावृत्तत्वावच्छिन्नधूमादिविषयतायाः पूर्वोपदर्शितरीत्या तथाविधसाध्याभावोपस्थितिजनकतावच्छेदकत्वेऽपि तामादायातिप्रसङ्गः पूर्ववदेव वारणीयः । समवायादिघटितसाधारण्यमादाय संयोगादिना धूमादेर्वह्न्यादिसाध्यकसव्यभिचारतावारणाय प्रकृतसम्बन्धेन यत्साध्यवद्वृत्तित्वं साध्याभाववद्वृत्तित्वं च तद्घटितत्वेन विषयतावच्छेदकधर्मो विवक्षणीयः असाधारण्यशरीरेऽपि अभावप्रतियोगितया साध्यादिमद्वृत्तित्वनिवेशाच्च तदसंग्रहः ॥

( दी० ) यथाकथञ्चित् कोटिद्वयोपस्थितिः स्मृत्यनुभवसाधारणी सन्देहजननी नियामकन्तु साधारण्यादिविशिष्टधर्मवत्ताज्ञानम्, अत एव धारावाही सन्देह इति मते तु धर्मितावच्छेदकविशिष्टे धर्मिणि यद्रूपविशिष्टज्ञानं साध्यसन्देहजनकं तद्रूपवत्त्वमेव वक्तव्यम् । कोटिद्वयसहचरितत्वादिना ज्ञातस्य ऊर्द्ध्वत्वादेरूर्द्ध्वत्वत्वादिना धर्मिणि ज्ञानमेव संशयजनकं न तु तदानीं साहचर्यज्ञानमपेक्षत इति नये तु यद्रूपविशिष्टत्वेन गृहीतस्य धर्मस्य धर्मिवृत्तिताज्ञानं तथा तद्रूपवत्त्वमेव वाच्यम् । तथेति ॥

(गा०) साधारणधर्मवद्धर्मिज्ञानसत्त्वे उद्बोधकान्तराधीनकोटिस्मरणादनुभवात्मककोट्युपस्थितेर्वा संशयोपगमे क्षतिविरहात् । विशेषणज्ञानादिमुद्रया कोट्युपस्थितेर्हेतुतयैवोपपत्तेः साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वे स्वतन्त्रहेतुताकल्पनमनर्थकमिति व्याख्यातकल्पे साध्यसन्देहजनकत्वरूपकोट्युपस्थितिविशेषणस्याव्यावर्त्तकतया विलक्षणजनकत्वाश्रयत्वेन निवेशनासम्भवादुक्तातिप्रसङ्गो दुर्वार

एवेत्यभिप्रेत्य तादृशनिष्कृष्टमते प्रकारान्तरेण व्याचष्टे यथाकथंचिदिति । साधारणधर्मज्ञानजन्या तदजन्या चेत्यर्थः । विशेषणज्ञानादिमुद्रया फलसकारणतात एव निर्वाहो न तु स्वातन्त्र्येण तद्धेतुत्वमिति सूचयितुं स्मृत्यनुभवसाधारणीति । नन्वेवं साधारण्यादिविशिष्टधर्मवत्ताज्ञानशून्यकाले कथं न संशय इत्यत आह नियामकमिति । नियामकं—तादृशधर्मदर्शनदशायामेव संशय इति नियमनिर्वाहकम् । साधारण्यादीत्यस्य साक्षात्संशयहेतुभूतमित्यादिः । आदिपदादसाधारण्यपरिग्रहः । अत एव—अनुभवसाधारण्यादेः कोट्युपस्थितेर्हेतुत्वादेव । धारावाही सन्देहः—अविरलक्रमोत्पन्नसन्देहत्रितयादिकम् । साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन संशयहेतुत्वे स्मरणात्मककोट्युपस्थितेरेव तथात्वात् । साधारणधर्मविषयकतथाविधएककोट्युपस्थित्या संशयद्वयजननसम्भवेपि संशयान्तरोत्पत्तौ तथाविधस्मृत्यात्मकोपस्थित्यन्तरस्यापेक्षणीयतापत्त्या अविरलक्षणसंशयत्रितयादिकं नोपपद्यते एतन्मते तु संशयात्मककोट्युपस्थितेरपि संशयान्तरोत्पादसम्भवेनान्तरा कोटिस्मरणानपेक्षणात्साधारणधर्मवद्धर्मिविषयकद्वितीयादिसंशयाव्यवहितक्षणेषु संशयान्तरोत्पादे बाधकाभावः । न चास्मन्मतेपि संशयात्मककोटिज्ञानस्यापि साधारणधर्मज्ञानजन्यतयान्तरा कोटिस्मृतिं विनैव संशयान्तरोत्पादः सम्भवतीति वाच्यम् । अवच्छेदकभेदभिन्नयोः स्मृतिसंशयनिष्ठतादृशज्ञानजन्यतयोरननुगततया स्मृतिनिष्ठजन्यताया एव निवेशनीयतया स्मरणापेक्षाया आवश्यकत्वादिति भावः । स्वसामानाधिकरण्यावच्छिन्नस्वाव्यवहितोत्तरत्वसम्बन्धेन साधारणधर्मज्ञानविशिष्टोपस्थितित्वेन हेतुत्वोपगमे तु संशयादपि संशयः सम्भवतीति गौरवमेवोपस्थितेः स्वतन्त्रहेतुतायां बाधकमित्यवधेयम् ॥

धर्मितावच्छेदकेति । धूमवान्पर्वतो वह्निमान्न वेति संशये धर्मितावच्छेदकप्रकारकज्ञानमुद्रया पर्वतत्वाद्यवच्छिन्नविशेष्यकधूमत्वादिविशिष्टवज्ज्ञानस्य जनकतया धूमादिमत्त्वमात्रादतिप्रसङ्गवारणाय धर्मितावच्छेदकविशिष्टेति । धर्मितावच्छेदकपदं फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मपरम् । अन्यथा पर्वतत्वादिरूपदर्शितसंशयधर्मितावच्छेदकघटकतया उक्तातिप्रसङ्गवारणासम्भवात् । एवं च तद्धर्मपर्याप्तधर्मितावच्छेदकताकपरिक-

पताभेदानावश्यकत्वादिति दिक् ।

पूर्वलक्षणोक्तातिप्रसङ्गवारणाय साध्यसन्देहजनकत्वस्य कोट्युपस्थितिविशेषणताया आवश्यकत्वादत्र तदुपस्थापकपदानुपादाननिबन्धनं तदनिवेशभ्रमं निराकुरुते साध्यसन्देहेति । प्रकृत-प्रकरणवशात्सामान्यशब्दस्य विशेषपरतया प्राप्तम । तथा च साध्यसन्देहजनिका या साध्योपस्थितिस्तज्जनकतावच्छेदिका सती तथाविधसाध्याभावोपस्थितिजनकतावच्छेदकीभूता या विषयता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वं तत्त्वमिति पूर्वोक्तदिशा लक्षणार्थो निष्कर्षयितव्यः । वह्निसाहचर्यवह्न्यभाववद्वृत्तित्वावच्छिन्नधूमादिविषयतायाः पूर्वोपदर्शितरीत्या तथाविधसाध्याभावोपस्थितिजनकतावच्छेदकत्वेऽपि तामादायातिप्रसङ्गः पूर्ववदेव वारणीयः । समवायादिघटितसाधारण्यमादाय संयोगादिना धूमादेर्वह्न्यादिसाध्यकसव्यभिचारतावारणाय प्रकृतसम्बन्धेन यत्साध्यवद्वृत्तित्वं साध्याभाववद्वृत्तित्वं च तद्घटितत्वेन विषयतावच्छेदकधर्मो विवक्षणीयः असाधारण्यशरीरेऽपि अभावप्रतियोगितया साध्यादिमद्वृत्तित्वनिवेशाच्च तदसङ्ग्रहः ॥

( टी० ) यथाकथञ्चित् कोटिद्वयोपस्थितिः स्मृत्यनुभवसाधारणी सन्देहजननी नियामकन्तु साधारण्यादिविशिष्टधर्मवत्ताज्ञानम्, अत एव धारावाही सन्देह इति मते तु धर्मितावच्छेदकविशिष्टे धर्मिणि यद्रूपविशिष्टज्ञानं साध्यसन्देहजनकं तद्रूपवत्त्वमेव वक्तव्यम् । कोटिद्वयसहचरितत्वादिना ज्ञातस्य ऊर्ध्वत्वादेरूर्ध्वत्वत्वादिना धर्मिणि ज्ञानमेव संशयजनकं न तु तदानीं साहचर्यज्ञानमपेक्षत इति नये तु यद्रूपविशिष्टत्वेन गृहीतस्य धर्मस्य धर्मिवृत्तिताज्ञानं तथा तद्रूपवत्त्वमेव वाच्यम् । तथेति ॥

(गा०) साधारणधर्मतद्धर्मिज्ञानसत्त्वे उद्बोधकान्तराधीनकोटिस्मरणाद्वनुभवात्मककोट्युपस्थितेर्वा संशयोपगमे क्षतिविरहात् । विशेषणज्ञानाद्विमुद्रया कोट्युपस्थितिहेतुतयैवोपपत्तेः साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन स्वतन्त्रहेतुताकल्पनमनर्थकमिति व्याख्यातकल्पे साध्यसन्देहजनकत्वरूपकोट्युपस्थितिविशेषणस्याव्याघर्तकतया विलक्षणजनकताश्रयत्वेन निवेशनासमचातुक्तातिप्रसङ्गो दुर्वार

एवेत्यभिप्रेत्य तादृशनिष्कृष्टमते प्रकारान्तरेण व्याचष्टे यथाकथंचिदिति। साधारणधर्मज्ञानजन्या तदजन्या चेत्यर्थः। विशेषणज्ञानादिमुद्रया फलप्रकारणताल एव निर्वाहो न तु स्वातन्त्र्येण तद्धेतुत्वमिति सूचयितुं स्मृत्यनुभवसाधारणीति। नन्वेवं साधारण्यादिविशिष्टधर्मवत्ताज्ञानशून्यकाले कथं न संशय इत्यत आह नियामकमिति। नियामकं–तादृशधर्मदर्शनदशायामेव संशय इति नियमनिर्वाहकम्। साधारण्यादीत्यस्य साक्षात्संशयहेतुभूतमित्यादिः। आदिपदादसाधारण्यपरिग्रहः। अत एव–अनुभवसाधारण्यादेः कोट्युपस्थितेर्हेतुत्वादेव। धारावाही सन्देहः–अविरलक्रमोत्पन्नसन्देहद्वित्रितयादिकम्। साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन संशयहेतुत्वे स्मरणात्मककोट्युपस्थितेरेव तथात्वात्। साधारणधर्मविषयकतथाविधएककोट्युपस्थित्या संशयद्वयजननसम्भवेपि संशयान्तरोत्पत्तौ तथाविधस्मृत्यात्मकोपस्थित्यन्तरस्यापेक्षणीयतापत्त्या अविरलसंशयत्रितयादिकं नोपपद्यते एतन्मते तु संशयात्मककोट्युपस्थितेरपि संशयान्तरोत्पादसम्भवेनान्तरा कोटिस्मरणानपेक्षणात्साधारणधर्मवद्धर्मिविषयकद्वितीयादिसंशयात्तदग्रिमक्षणेषु संशयान्तरोत्पादे बाधकाभावः। न चास्मन्मतेपि संशयात्मककोटिज्ञानस्यापि साधारणधर्मज्ञानजन्यतयान्तरा कोटिस्मृतिं विनैव संशयान्तरोत्पादः सम्भवतीति वाच्यम्। अवच्छेदकभेदभिन्नयोः स्मृतिसंशयनिष्ठतादृशज्ञानजन्यतयोरननुगततया स्मृतिनिष्ठजन्यतांशे एव निवेशनीयतया स्मरणापेक्षाया आवश्यकत्वादिति भावः। स्वसामानाधिकरण्यावच्छिन्नस्वाव्यवहितोत्तरत्वसम्बन्धेन साधारणधर्मज्ञानविशिष्टोपस्थितित्वेन हेतुत्वोपगमे तु संशयादपि संशयः सम्भवतीति गौरवमेवोपस्थितेः स्वतन्त्रहेतुताया बाधकमित्यवधेयम्॥

धर्मितावच्छेदकेति। धूमवान्पर्वतो वह्निमान्न वेति संशये धर्मितावच्छेदकप्रकारकज्ञानमुद्रया पर्वतत्वावच्छिन्नविशेष्यकधूमत्वादिविशिष्टवैशिष्ट्यावगाहिज्ञानस्य जनकतया धूमादिमदंशेऽव्याप्तिप्रसङ्गवारणाय धर्मितावच्छेदकविशिष्टेति। धर्मितावच्छेदकपदं फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मपरम्। अन्यथा पर्वतत्वादिरूपदर्शितसंशयधर्मितावच्छेदकघटकतया उक्तातिप्रसङ्गवारणासम्भवात्। एवं च तत्पर्याप्तधर्मितावच्छेदकताकयत्कि-

द्रूपवत्त्वमित्यर्थः। यत्किञ्चित्संशयजनकतावच्छेदकतावच्छेदकत्वनिरूपिता या निरूपकत्वसंसर्गावच्छिन्नावच्छेदकता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वम्, यत्किञ्चित्संशयजनकतावच्छेदकवैशिष्ट्यघटकविशेष्यतानिरूपितप्रकारतापर्याप्त्यधिकरणधर्मवत्त्वमिति वा पर्यवसितार्थः॥

(चि०) विरुद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाव्यावृत्तिर्वा। तेनैव रूपेण ज्ञातस्य प्रतिबन्धकत्वात् परस्य तथैवोद्भावनाच्च लक्षणानुरोधेन प्रत्येकमेव हेत्वाभासत्वम्॥

(दी०) ननु असाधारण्यं न साध्यतदभाववद्व्यावृत्तत्वम् वृत्तिमतस्तथात्वासम्भवात् एककोटिव्याप्यस्यैव एककोटिमद्व्यावृत्तस्यापि धर्मस्य बुद्धेर्विशेषदर्शनतया संशयविरोधित्वाच्च। सत्प्रतिपक्षे च परामर्शाप्रामाण्यसंशयोत्तरमेव साध्यसन्देहात्। नापि निश्चितसाध्यतदभाववद्व्यावृत्तत्वम्। तद्धि यत्र यत्र साध्यादिमत्तानिश्चयस्तद्व्यावृत्तत्वम्, येन येन रूपेण यत्र यत्र तन्निश्चयस्तेन तेन तद्व्यावृत्तत्वं वा। आद्ये सर्व्वाणि साध्यव्याप्यवन्ति सर्व्वाणि वा साध्यवन्ति प्रमेयाणीत्यादिनिश्चये सामान्यतः पक्षेऽपि साध्यादिनिश्चयादतथात्वप्रसङ्गः। द्वितीये तु विशिष्य पक्षे साध्यानिश्चयं विनैव शब्दादिना साध्यव्याप्यत्वनिर्णयेऽपि तथात्वापत्तिः। नैष दोषो यादृशव्याप्तिग्रहे सति नासाधारण्यं तद्ग्रहाभावेन विशेषलक्षणस्य साधारण्याभावविशिष्टस्य तद्ग्रहस्य चाभावेन सामान्यलक्षणस्य विशेषणादतिव्याप्तिनिरासात्। विशिष्टाभावादेव च साधारण्ये व्याप्तिभ्रमदशायां नाव्याप्तिरिति चेत्। एवं सत्येकेन व्याप्तौ गृहीतायामसाधारणस्यान्न कञ्चिदपि प्रति सव्यभिचारित्वं स्यात्, स्याद्वा तदपि तत्पुरुषघटितमसाधारण्यवत्, साध्यादिव्याप्यवत्त्वेन रूपेण साध्यादिमत्त्वानिश्चयेऽव्याप्तिप्रसङ्गाच्च। न हि-

घटोऽनित्यो घटाद्व्यावृत्तं शब्दत्वमितिवत् अनित्यत्वव्याप्यत्वतो व्यावृत्तं शब्दत्वमिति तदानीं निश्चयः। अभिहितञ्च निश्चितसाध्यतदभाववद्व्यावृत्तत्वं न संशयप्रयोजकं किन्तु साध्यतदभावाभ्यां सहचरितत्वमिव तत्सहचरिताभावप्रतियोगित्वम्, व्याप्यविरुद्धयोस्तु तत्त्वेन निश्चितयोर्दर्शने विशेषदर्शनवशादेव न संशय इति विभाव्य लक्षणान्तरमाह विरुद्धान्येति। विशिष्टसाध्यहेतुःसामानाधिकरण्यग्रहाविरोध्यर्थकमर्थतो विरोधिविशेषणम्, तेन साध्यसाधनयोरप्रसिद्धेरवृत्तित्वस्य परम्परासामानाधिकरण्यादीनाञ्च निरासः। पक्षपदञ्च धर्मिमात्रपरम्, तथाच यद्धर्म्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तन्नैवानुमितिविरोधि यद्रूपं तद्वत्त्वमित्यर्थः। साध्यव्यापकीभूताभावप्रतियोगित्वन्तु तथा, बाधप्रतिरोधौ तु धर्म्मिविशेषितत्वात् न तादृशौ। सर्वं साध्याभाववत् तद्व्याप्यवद्वेत्यादिकञ्च साध्यवत्त्वग्रहविरोधित्वेन सामानाधिकरण्यग्रहाविरोधि। साध्यानुमितिसामान्यविरोधित्वं वा विशेषणम्। तेनैवेति। तेनानुमितिविरोधिना विपक्षवृत्तित्वादिना। एवकारेणानुगमकं रूपं व्यवच्छेद्यं तस्य हेत्वाभासतावच्छेदकत्वं निरस्यति (हेत्वाभास)लक्षणानुरोधेनेति।

(गा०) तृतीयादिमूलग्रन्थः साधारण्यासाधारण्यरूपसंशयप्रयोजकरूपमादाय लक्षणसङ्गमनपरः। तत्र यादृशासाधारण्यस्य संशयप्रयोजकत्वं विचारसहं तत्सङ्कतुसाधारण्यमिति बोधेन लक्षणान्तरमुत्थापयितुं षोडशग्रन्थं धारयति तथेत्यादीति। असाधारण्यं-संशयप्रयोजकीभूतासाधारण्यपदार्थः। वृत्तिमत इति। तथाच शब्दोऽनित्यः शब्दत्वादित्यादावसाधारणेऽव्याप्तिरिति भावः। ननु वृत्तिमतो नासाधारण्यमुपगन्तव्यं किन्त्ववृत्तेरेवेति नैतद्दोषावकाश इत्यत आह एककोटीति। व्याप्यस्य-व्याप्यतया गृहीतस्य, व्यावृत्तस्य-तदवृत्तित्वेन गृहीतस्य। एतेन एककोटिमव्यावृत्तस्यैककोटिव्याप्यताया आवश्यकत्वेऽपि न भेदघटितत्वार्थासङ्गतिः।

तद्वद्वृत्तित्वं च न तदभावव्याप्यत्वं तच्छरीरे तदभावाभावत्वेन तस्यानिवेशादित्यवधेयम् ।

विशेषदर्शनतया विरोधिधर्मदर्शनतया । संशयविरोधित्वादिति । पुरुषत्वाभावाभाववदवृत्तिशाखादिमानयमित्याकारकदशायामिव पु-
रुषावृत्तिशाखादिमानित्यादिनिश्चयदशायामपि पुरुषत्वादिविशिष्टबु-
द्ध्यनुत्पादस्य सर्वानुभवसिद्धत्वात्तद्विशिष्टबुद्धौ तद्वदवृत्तित्वेन गृही-
तधर्मवत्ताज्ञानस्य प्रतिबन्धकताया आवश्यकत्वादिति भावः । तथा
च निरुक्तासाधारण्यविशिष्टधर्मवत्ताज्ञानस्य संशयप्रतिबन्धकतया
संशयजनकत्वासम्भवात् कथं तादृशासाधारण्यस्य संशयप्रयोजक-
ता । न च तादृशज्ञानस्य संशयप्रतिबन्धकत्वेऽपि तज्जन्यकोट्युपस्थि-
तेः संशयजनकत्वं सम्भवत्येतज्ज्ञानानन्तरं तज्जन्यकोट्युपस्थित्या
संशयजननसम्भवादसाधारणधर्मवद्धर्मिज्ञानस्यात एव बाधकात्सा-
क्षाद्धेतुत्वासम्भवेन तज्जन्यकोट्युपस्थितित्वेन हेतुतायां गौरवस्या-
किञ्चित्करत्वादिति तादृशकार्यकारणभावघटितलक्षणपरतयैव मूलं
व्याख्येयमिति वाच्यम् । किन्त्वादिनाऽग्रे निर्वाच्यस्यासाधा-
रण्यस्य बुद्धेः संशयाविरोधितया तज्ज्ञानस्यैव साक्षात्संशयजनक-
त्वसम्भवेन गौरवाद्गुरुरूपेण कोट्युपस्थितेरहेतुत्वात् कोटिस्मृति-
जनकताघटितलक्षणस्यासम्भवात्संशयजनकताघटितलक्षणकरणे च
तादृशासाधारण्यमादाय व्याप्यविरुद्धयोरतिव्याप्तेश्च ।

ननु सत्प्रतिपक्षसंवलनदशायामिव कोटिद्वयव्याप्यवृत्तधर्मव-
त्ताज्ञानदशायामपि संशयोत्पत्तिरनुभवसिद्धैवेति तदभावव्याप्यव-
त्ताज्ञानप्रतिबन्धकतायां तद्व्याप्यवत्ताज्ञानस्येव तत्कोटिमदवृत्तिध-
र्मवत्ताज्ञानप्रतिबन्धकतायामपि तदभाववदवृत्तिधर्मवत्ताज्ञानस्यो-
त्तेजकत्वमगत्या कल्पनीयमिति कोटिद्वयव्याप्यवृत्तधर्मवत्ता-
ज्ञानस्य संशायकत्वमभ्याहतमेव येन रूपेण प्रतिबन्धकता तेनैव
रूपेण जनकत्वानभ्युपगमादित्यत आह सत्प्रतिपक्षे चेति । विरोधि-
कोटिद्वयव्याप्यवत्ताज्ञानसमय इत्यर्थः । परामर्शाप्रामाण्यसंशयेति ।
तथा च तुल्ययुक्त्या प्रकृतेऽपि तत्तत्कोटिमदवृत्तित्वविशिष्टवत्ता-
ज्ञाने प्रामाण्यसंशयादेव संशयः स्वीक्रियत इति नैककोटिमद्व्यावृत्त-
धर्मवत्ताज्ञानप्रतिबन्धकतायामपरकोटिमद्व्यावृत्तधर्मवत्ताज्ञानस्योत्ते-
जकत्वं प्रामाणिकमप्रामाण्यज्ञानोत्तेजकतयैवोपपत्तेः । अप्रामाण्य-

ज्ञानानास्कन्दितस्थैर्ये च, ज्ञानस्य जनकतया निरुक्तासाधारण्यस्य दुष्टेर्जनकत्वोपगमे प्रतिबन्धकतावच्छेदकरूपेणैव जनकताप्रसङ्ग इति भावः। निश्चितसाध्यतदभाववद्व्यावृत्तत्वमिति। असाधारण्यमित्यनुषज्यते। येन येन रूपेणेति। यद्यद्रूपं धर्मितावच्छेदकमित्यर्थः। तेन तेन रूपेण व्यावृत्तत्वं—तत्तद्धर्मविशिष्टतद्धर्मिव्यावृत्तत्वम्। प्रमेयत्वादिसामानाधिकरण्येन घटादौ साध्यादिनिश्चयदशायामपि शब्दोऽनित्यः शब्दत्वादित्यादावसाधारण्यसत्त्वाद्धर्मिविशेषनिवेशः। प्रथमपक्षे वक्ष्यमाणाया निर्धर्मितावच्छेदकसाध्यनिश्चयविषयवृत्तिहेतोरसाधारण्यानुपपत्तेर्वारणाय घटत्वादिना साध्यादिनिश्चयदशायां रूपान्तरावच्छिन्नघटादिव्यावृत्तत्वज्ञानादसाधारण्यापत्तिवारणाय च धर्मितावच्छेदकनिवेशः। साध्यवद्व्यावृत्तत्वेन पक्षातिरिक्तमात्रविषयकनिश्चयदशायामसाधारण्यानुपपत्त्यनवकाशात्पक्षस्यापि निश्चयविषयत्वमाविष्कर्तुं सर्वाणीति। सर्वपदेन सर्वत्वावच्छिन्नोद्देश्यताकबोधः केवलान्वयिसर्वत्वावच्छेदेन विधेयविधयक एव जन्यत इति तथाविधबोधस्यैव सर्वाणि साध्यवन्तीत्याकारकता, तथा च विशिष्य पक्षे साध्यनिश्चयदशायामिव साध्यसन्देहविरोधिनः सर्वाणि साध्यवन्तीति निश्चयस्य सत्त्वेऽप्यसाधारण्याभावस्येष्टत्वात्साध्याभाववन्तीति। तथा चैतादृशनिश्चयदशायां विशिष्य पक्षे साध्यसन्देहस्यानिवृत्तेस्तादृशनिश्चयस्य नासाधारण्यप्रतिकारकत्वमिति भावः। प्रथमपक्षे धर्मितावच्छेदकानिवेशात्सामान्यधर्मावच्छिन्नधर्मिकं विशिष्य संशयानिवर्तकं निर्णयमिव निर्धर्मितावच्छेदकतया अप्रसक्तसंशयनिवर्तकताकनिश्चयमादायापि दोषदानं सम्भवतीत्यभिप्रेत्याह सर्वाणि वेति। साध्यवत्त्वावच्छिन्ने सर्वत्वविधेयकस्य साध्यवन्ति सर्वाणीत्याकारकज्ञानस्य पक्षाविषयकस्यापि सम्भवात्सर्वं साध्यवदुद्देश्यकप्रमेयत्वविधेयकज्ञानानुधावनम्। तादृशज्ञानस्य वस्तुत्वव्यापकसर्वत्वावच्छेदेन साध्यवत्त्वानवगाहितया तत्सत्त्वे न पक्षे साध्यसन्देहनिवर्तकमिति तदानीमसाधारण्यमक्षतमेवेति भावः। आदिपदात् शब्दो नित्यः शब्दत्वादित्यादौ सर्वाणि साध्याभावव्याप्यवन्ति साध्याभाववन्तीत्यादिनिश्चयपरिग्रहः। साध्यादीत्यादिपदात्साध्याभावपरिग्रहः। अतथात्वं असाधारण्याभावः। द्वितीयपक्षे तत्तद्व्यक्तित्वरूपधर्मितावच्छेदक-

विवक्षणे प्रथमपक्षोक्तप्रथमदोषस्य द्वितीयदोषस्य च यथाश्रुतेप्यनवकाशात्तत्र दोषान्तरमाह द्वितीये त्विति । विशिष्य धर्मितावच्छेदकप्रकारेण सामान्यतः पक्षे साध्यवत्तानिश्चयं विना पक्षमात्रवृत्तिहेतौ साध्यवद्वृत्तित्वघटितव्याप्तिनिश्चय एव न सम्भवतीत्यभिप्रेत्य एतदभिहितम् ।

अथवा विशिष्य विशेषधर्मं धर्मितावच्छेदकीकृत्य उक्तविवक्षणे सामान्यधर्मधर्मितावच्छेदककनिश्चयदशायामप्येतद्दोषस्य सम्भवात्तादृशस्थलसंग्रहाय विशेषधर्मस्य धर्मितावच्छेदकत्वानुसरणम् । विशेषलक्षणस्येति । विशेषणादित्यग्रिमेणान्वयः । वैशिष्ट्यं च सामानाधिकरण्यप्रत्यासत्त्या बोध्यम् । तदविशेषितस्यैव तस्य संशयप्रयोजकतया सव्यभिचारसामान्यलक्षणस्यातिव्याप्तिं वारयितुमाह साधारण्येति । एतच्च व्याप्तिग्रहदशायां साधारणसंग्रहाय । वैशिष्ट्यं विशेषणताविशेषविशेष्यतोभयघटितसामानाधिकरण्येन बोध्यम् । कंचिदपीति । व्याप्तिग्रहशून्यपुरुषं प्रत्यपीत्यर्थः ।

ननु तत्पुरुषीयव्याप्तिग्रहाभावः तत्पुरुषीयासाधारण्यशरीरे निवेशनीय इति नायं दोष इत्यत आह स्याद्धेति । तदपि—सामान्यव्यभिचारत्वमपि । तत्तत्पुरुषघटितमिति । तथाचासाधारण इव साधारणेपि पुरुषविशेषनियन्त्रितसव्यभिचारव्यवहारापत्तिर्धूमादौ साध्ये वह्न्यादिरमुकं प्रति व्यभिचारीति व्यवहाराभावेनेष्टापत्तेरयोगादिति भावः । यथाश्रुतैतत्कल्पे प्रथमपक्षीयप्रथमदोषमप्याह साध्याद्यीति । आदिपदात्साध्याभावपरिग्रहः ।

ननु तदानीमसाधारण्याभावेपि तद्भ्रमादेवानुमितिप्रतिबन्ध इति शंकानिराचिकीर्षया तद्भ्रमाभावमप्युपपादयति नहीति । तदानीं—पक्षे साध्यसन्देहदशायां, तदानीं तत्र तद्व्याप्यवत्तासंशयस्यैवौचित्यावर्जितत्वात्तद्व्याप्यवद्वृत्तित्वस्यापि हेतौ संशयादिति भावः । एतेन उक्तस्थले लक्षणाव्याप्तिवत् असाधारण्यनिश्चयरूपकारणाभावेन संशयानुपपत्तिरपि द्रष्टव्या । उक्तविवक्षायामेतद्दोषानवकाशात्साधारणे पुरुषविशेषनियन्त्रितसव्यभिचारव्यवहारे कदाचिदिष्टापत्तेः सम्भवाद्दोषान्तरमाह अभिहितं चेति । पुरेत्यादिना अयं घट एतत्वादित्यादिपूर्वपक्षीयपंक्तिव्याख्यावसर इति शेषः । न संशयप्रयोजकमिति । तथाच तदाशयासाधारणे न लक्षण-

संगमनसम्भवः । ननु तर्हि कीदृशमसाधारण्यं संशयप्रयोजकमत आह किंचिदिति । तत्सहचरितेति । साध्यतदभावसहचरितेत्यर्थः । एतादृशासाधारण्यस्य च न हेतुदोषत्वसम्भवः सद्धेतुसाधारण्यात् अनुमितिप्रतिबन्धकज्ञानाविषयत्वेन दोषसामान्यलक्षणानाक्रान्तत्वाच्चेति भावः । ननु व्याप्यविरुद्धसाधारणस्यैतादृशधर्मस्य संशयप्रयोजकत्वे व्याप्यादिदर्शनादपि संशयापत्तिरित्यत आह व्याप्यविरुद्धयोरिति । व्याप्यादिग्रहशून्यकाले व्याप्यादिदर्शनस्य संशयाप्रतिबन्धकतया तत्त्वेन निश्चितयोरिति । व्याप्यत्वादिना अनिश्चितस्य व्याप्यादेर्निरुक्तरूपज्ञानात्संशय इष्ट एवेति भावः ।

विरुद्धान्यत्वस्य हेतुविशेषणत्वे असाधारण्यासंग्रहः, विरोधिपदार्थं साध्यासामानाधिकरण्यत्वादिना निवेश्य तदन्यत्वेनानुमितिविरोधिविशेषणेऽपि साध्याप्रसिद्ध्यादिवारणासम्भव इत्यत आह विशिष्टेति । साध्यतावच्छेदकादिविशिष्टेत्यर्थः । एतदर्थः पूर्वपक्ष एव विवृतः । यथाश्रुतमूलतो धर्मिविशेषणतया एव लाभादर्थत इति । तात्पर्यवत्त्वत इत्यर्थः । विरोधिविशेषणम्—अनुमितिविरोधिविशेषणम् । अवृत्तित्वे परस्परासामानाधिकरण्ये च साध्यसाधनयोरित्यनुषज्यते । पक्षतानिवेशे प्रयोजनाभावादाह पक्षपदमिति । पक्षवृत्तित्वस्य धर्मिविशेषणत्वे स्वरूपासिद्धस्य व्यभिचारिणोऽसंग्रहप्रसङ्गः, हेतौ पक्षवृत्तित्वग्रहाविरोधित्वेन विरोधिविशेषणेऽपि बाधसत्प्रतिपक्षाद्यतिप्रसङ्गवारणमशक्यमेवेति पूर्ववत्पक्षवृत्तित्वे सत्यनुमितिविरोधित्वस्य चाऽव्याप्तिरिति, दलद्वयेन व्याप्तिग्रहविरोधिधर्मवत्त्वस्य विवक्षणे च मणिकारमतसिद्धस्य साध्यव्यापकीभूताभावप्रतियोगिरूपासाधारण्यस्य संग्रहः, विशेषणान्तरं प्रक्षिप्य बाधादिवारणे च गौरवमित्यभिप्रेत्य पूर्वपक्षोक्तरीतिं परित्यज्य प्रकारान्तरेण बाधादिकं वारयितुमुक्तलक्षणनिरुक्त्यर्थमाह तथाचेति । यद्धर्मीति । यद्धर्मितावच्छेदकहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यप्रतिबन्धकं तादृशधर्मवत्त्वमित्यर्थः । समूहालम्बनात्मकस्योदासीनपदार्थविषयकनिश्चयस्याप्यनुमितिप्रतिबन्धकत्वादुदासीनपदार्थविषयकनिश्चयसामान्यस्यापि तद्विपरीतविषयकस-

मूहालम्बनात्मकप्रकृतानुमितिप्रतिबन्धकतया तत्रातिव्याप्तिवारणाय सामान्यपदद्वयम् । हेतुमत्ताज्ञानासमानकालीनस्य व्यभिचारनिर्णयस्य व्यभिचारनिश्चयसामान्यान्तर्गतस्य स्वसमानकालीनहेतुमत्ताज्ञानाप्रसिद्धौ असंभवः स्यादिति प्रथमं कालीनान्तं निश्चयविशेषणम् । निर्धर्मितावच्छेदककहेतुमत्तानिश्चयकालीनव्यभिचारनिश्चयकालीनहेतुमत्ताज्ञानधर्मितावच्छेदकाप्रसिद्ध्या तद्दोषतादवस्थ्यमतो हेतुमत्ताज्ञाने सधर्मितावच्छेदककत्वविशेषणम् । अनुमितिसामान्यान्तर्गतायां स्वसमानकालीनहेतुमत्ताज्ञानासमानधर्मितावच्छेदककसाध्यानुमितौ हेतुतावच्छेदकावच्छिन्नस्य साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानं, न प्रतिबन्धकं नित्यत्वव्यापकीभूताभावप्रतियोगि शब्दत्वमित्यादिज्ञानदशायामयं नित्य इत्यादिज्ञानोत्पत्त्याविवादादित्यसाधारण्याव्याप्तिरतः समानधर्मितावच्छेदककान्तमनुमितिविशेषणम् । तथा च इदन्त्वादिधर्मितावच्छेदककनित्यत्वादिविशिष्टबुद्धौ शब्दत्वादिधर्मिकनित्यत्वादिव्यापकीभूताभावप्रतियोगित्वरूपानित्यत्वीयव्यतिरेकव्याप्तिनिश्चयविशिष्टस्य तद्धर्मितावच्छेदककशब्दत्वादिमत्ताज्ञानस्येव तदभावव्याप्यवत्ताज्ञानमुद्रया प्रतिबन्धकत्ववद्विशेषणविशेष्यभावे विनिगमनाविरहेण तादृशशब्दत्वादिमत्ताज्ञानविशिष्टस्य तथाविधव्याप्तिनिश्चयस्यापि प्रतिबन्धकतया तादृशहेतुमत्ताज्ञानसमानधर्मितावच्छेदककानुमितिसामान्यप्रतिबन्धकत्वं तथाविधासाधारण्यनिश्चयस्याक्षतमेवेत्यसाधारण्यसङ्ग्रहः । अनुमितिपदं साध्यव्याप्यो हेतुः साध्यवांश्च पक्ष इत्येतादृशसमूहालम्बनानुमितिपरम्, तेन साधारण्यज्ञानस्य साध्यवत्ताज्ञानाप्रतिबन्धकत्वेऽपि न तदसंग्रहः ।

एतेनानुमितिविरोधित्वं यादृशविशिष्टविषयकनिश्चयत्वेनानुमितिप्रतिबन्धकत्वं, तादृशत्वम् तत्र चावच्छेदकत्वं प्रागुक्तयुक्त्या अनतिरिक्तवृत्तित्वरूपमेव विवक्षणीम्, एवं च साध्यव्यापकीभूताभावप्रतियोगी हेतुरिति ज्ञानस्य हेतुमत्ताज्ञानासमानकालीनस्य साध्यवत्ताज्ञानाप्रतिबन्धकतया तादृशज्ञानविषयस्य निरुक्तलक्षणाक्रान्तत्वेन नासाधारण्यस्वरूपतोपपद्यते पक्षवृत्तित्वाविशेषितस्य तस्य च बाधादिवत्पक्षधर्मिविशेषघटितमूर्तिकतया नियतपक्षधर्मिकानुमितिविरोधित्वमेव न तु यत्र यत्र हेतुमत्त्वं ज्ञायते तत्तद्धर्मिकानुमितिसामान्यविरोधित्वमिति न तस्यापि तथात्वसम्भव इति ध्येयम् ।

यत्तु–हेतुमत्ताज्ञानमनिवेश्य तत्तद्धेतुधर्मिकसाध्यव्यापकीभूताभावप्रतियोगित्वनिश्चयत्वेनैव प्रतिबन्धकता, प्रतिबध्यतावच्छेदकं तु धर्मिविशेषाविषयकत्वाघटितं तत्तद्धेतुमत्ताज्ञानजन्यानुमितित्वमतः शब्दादौ नित्यत्वव्यापकीभूताभावप्रतियोगितानिश्चयसत्त्वे समानधर्मितावच्छेदककशब्दत्वनिश्चयस्य चासत्त्वे नित्यत्वाद्यनुमितेर्नानुपपत्तिः तदानीं हेत्वन्तरज्ञानेनैवानुमितिजननात्तस्याश्च शब्दत्वधर्मिकतादृशाभावप्रतियोगित्वनिश्चयाप्रतिबध्यत्वात्, एवं च पक्षवृत्तित्वादिघटितं निरुक्तरूपमेवासाधारण्यम्, लक्षणे अनुमितिपदस्य प्रकृतहेतुकानुमितिपरतया प्रकृतहेतुकानुमितिसामान्यविरोधित्वस्यानतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितस्यापि तत्र लक्षणे तदसंग्रहप्रसक्तेरिति समाधानम्–तन्न मनोज्ञं विदुषाम्। शब्दत्वादिधर्मिकतादृशप्रतियोगित्वनिश्चयस्य शब्दत्वादिहेतुमत्ताधीजन्यानुमितित्वावच्छिन्नं प्रति प्रतिबन्धकत्वे तादृशनिश्चयसत्त्वकाले शब्दत्वादिनिश्चयदशायां तत्समानधर्मितावच्छेदककताकज्ञानबोधाद्यापत्तेरन्यहेतुकतादृशानुमित्यापत्तेश्च दुर्वारत्वात्। न चान्यहेतुकापि समानधर्मितावच्छेदककतद्धेतुमत्ताज्ञानकालीनानुमितिः तद्धेतुमत्ताज्ञानजन्यैवेति न तदापत्तिसम्भव इति वाच्यम्। व्याप्यत्वानवच्छिन्नहेतुप्रकारताशालिज्ञानस्यानुमितिजनकत्वे मानाभावात् अन्यलिङ्गकपरामर्शघटितसामग्र्या तत्तद्धर्मिकतादृशनिश्चयाभावस्यानन्तर्भावेन तद्बलादापत्तेः कथामात्रेण वारयितुमशक्यत्वात्। एतेन समानधर्मितावच्छेदककतद्धेतुमत्ताज्ञानानन्तरोत्पत्तिकत्वनिवेशेऽपि न निस्तार इत्यलमत्यावेशेन।

एतन्मते पक्षवृत्तित्वाविशेषितहेतुनिष्ठसाध्याभावीयान्वयव्यतिरेक्यसाधारण्यमेवेति न तत्रातिव्याप्तिरित्यवधेयम्। तथा–निरुक्तानुमितिसामान्यविरोधि, धर्मिविशेषितत्वात्–धर्मिविशेषघटितत्वात्। न तादृशौ–न तादृशानुमितिसामान्यविरोधिनौ।

नन्वेवमपि सर्वमाकाशवत्प्रमेयत्वादित्यादिस्थलीयबाधप्रतिरोधयोरतिव्याप्तिः सर्वमाकाशाभाववदित्यादिनिश्चये क्वचिदप्याकाशाद्यनुमितेरनुदयादनुभवानुरोधेन समानधर्मितावच्छेदककज्ञानेऽपि तत्प्रतिबन्धकत्वकल्पनात्तयोरनुमितिसामान्यविरोधित्वादिति अत आह सर्वमिति। इत्यादिकम्–इत्याकारकज्ञानाविषयबाधादिकम्।

संप्रमाविरोधिपदद्वयस्य प्रतिबन्धकत्वपरतया, इत्यादिकमित्यस्य इत्याकारकज्ञानमित्येवार्थः । सामानाधिकरण्यग्रहविरोधीति । साध्यसामानाधिकरण्यस्य साध्यवत्त्वघटितत्वादिति शेषः । तथा चाविरोध्यन्तेनैव तद्वारणमिति भावः । निर्द्धर्मितावच्छेदककस्य ज्ञानस्य बाधाद्यप्रतिबध्यत्वे साध्यसामानाधिकरण्यज्ञानस्य साध्यांशे निर्द्धर्मितावच्छेदकतया तदविरोधित्वमुक्तबाधादेरक्षतमेवेत्याशयेनाह अनुमितीति । व्यभिचारस्यापि प्रकृतसाध्यकप्रकृतहेतुकानुमितिविरोधित्वात् सामान्येति । तथा च तस्यान्यहेतुकानुमित्यविरोधित्वान्न तदसंग्रहः । उक्तबाधादेस्तु सर्वहेतुकानुमितिविरोधित्वात्तद्वारणमिति भावः । यद्यपि शब्दत्वादिनिष्ठनित्यत्वव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यज्ञानमन्यलिङ्गकानुमितावपि तत्समानधर्मिकशब्दत्वादिमत्ताज्ञानविशिष्टं सत्प्रतिबन्धकमिति प्रकृतसाध्यकानुमितिसामान्यविरोध्येवासाधारण्यम्, तथापि ज्ञानान्तरवैशिष्ट्याविशेषितज्ञानसामान्यप्रतिबन्धकत्वघटितविरोधितायाः एवात्र निवेशनीयतया तादृशविरोधिताशून्यत्वमसाधारण्यसाधारणमेव ।

इदं त्ववधेयम् । सर्वमाकाशाभाववदित्यादिज्ञानस्यासमानधर्मितावच्छेदकानुमितिविरोधित्वे मानाभावः तादृशज्ञानकाले इदमपि सर्वान्तर्गतमित्यादिज्ञानसत्त्व एव इदमाकाशवदित्याद्यनुमित्यनुदयात्तत्र च तादृशज्ञानस्यैव ग्राह्याभावावच्छेदकधर्मदर्शनविधया तादृशानुमित्यभावनिर्वाहकत्वात्तथा च तादृशबाधबुद्धेर्निरुक्तानुमितिसामान्यविरोधित्वाभावादेव नातिव्याप्तिशंकेति ।

वस्तुतस्तु तद्धर्मितावच्छेदककबुद्धौ तत्सामानाधिकरण्यमात्रेण ग्राह्याभावावगाहिबुद्धेरप्रतिबन्धकतया ग्राह्याभावांशे तद्धर्मितावच्छेदकव्यापकतावगाहित्वमेव तन्त्रम्, तथा च ग्राह्याभावे तत्तद्धर्मव्यापकतानिश्चयस्य तद्धर्मावच्छिन्नांशे ग्राह्याभावप्रकारकस्यापि तत्तद्धर्मधर्मितावच्छेदकताकग्रहप्रतिबन्धकत्वम्, तत्तद्धर्मव्यापकता च तत्तद्धर्मसमानाधिकरणाभावाप्रतियोगित्वम्, तज्ज्ञानस्य प्रतिबन्धकत्वे वृत्तिमदत्यन्ताभावाप्रतियोगित्वज्ञानमपि तथा, सामान्यघटितविशेषाभावग्रहस्य यत्र प्रतिबन्धकत्वं तत्र तत्सामान्याभावग्रहस्यापि तथात्वानुभवात् । सर्वमाकाशाभाववदिति बुद्धेश्चाकाशाभावे वृत्तिमदत्यन्ताभावाप्रतियोगित्वं विषयः स एव बाधः तादृशानुमिति-

अथानुमानगादाधर्याम्

# साधारणप्रकरणम् ।

(वि०) तत्र साधारणत्वं न साध्याभाववद्वृत्तित्वम् । सर्वमनित्यं मेयत्वादित्यनुपसंहार्ये भूर्नित्या गन्धवत्त्वादित्यसाधारणे संयोगादिसाध्यकद्रव्यत्वे चातिव्याप्तेः। अत एव न साध्यवत्तदन्यवृत्तित्वम्, नापि निश्चितसाध्यवत्तदन्यवृत्तित्वम् साध्यवदन्यवृत्तित्वस्य दूषकत्वेन शेषवैयर्थ्यात्। अत एवानुक्तेनायमनैकान्तिक इत्येवोद्भाव्यते तत एव वादिनिवृत्तेश्च, न तु सपक्षगतत्वमपि। अनुपसंहार्यो व्यावर्त्योऽन्यथा तस्यैतद्विशेषत्वापत्तिरिति चेत्, त्यज तर्हि तमधिकं क्लृप्तेऽन्तर्भावात्। नापि सपक्षविपक्षगतत्वम्, व्यर्थविशेषणत्वात्। विरुद्धो व्यावर्त्य इति चेन्न। विपक्षगामित्वस्यैव दूषकत्वे तस्याप्येतदन्तर्भावात्।

अथ पक्षान्यसाध्यवत्तदन्यवृत्तित्वं साधारणत्वम्, तेन सर्वमनित्यं मेयत्वादित्यनुपसंहार्ये नातिप्रसङ्गः, न च व्यर्थविशेषणता, घटोऽनित्यो घटाकाशोभयवृत्तिद्वित्वाश्रयत्वादित्यनुपसंहार्यस्य विरुद्धस्यानैकान्तिकभिन्नस्य व्यवच्छेद्यत्वादिति चेन्न। दूषकताप्रयोजकरूपभेदमन्तरेण भेदस्यैवानुपपत्तेः। साध्यवद्दृष्टान्तत्वे सति सर्वसाध्यवदन्यवृत्तित्वमित्यपि न, व्यर्थविशेषणत्वात् एकव्यक्तिकसाध्ये तदभावाच्च। एतेन हेत्वाभासान्तरव्यवच्छेदक लक्षणान्तरेऽपि विशेषण व्यर्थमिति ॥

( दी० ) सर्वमनित्यमित्यादि सम्प्रदायमनुरुध्योक्तम् । अत एव तावदग्रेऽन्तर्भावयिष्यति । नापीति । निश्चिते साध्यवति साध्यवद्भिन्ने च वर्त्तमानत्वमित्यर्थः । अनुपसंहार्य्य इति । साध्यवदन्यवृत्तित्वांशस्य तत्रापि सत्त्वादिति भावः । नापीति । इह सपक्षत्वं न निश्चयगर्भमतो नाभेदः । घट इत्यादि । इत्यस्य विरुद्धस्य–अनुपसंहार्यस्य–प्रसिद्धस्य च विरुद्धान्तरस्य व्यवच्छेद्यत्वादित्यर्थः ।

अन्वयतो व्यतिरेकतश्च सहचाराग्रहदशायामीदृशं – द्वित्वमनुपसंहारीति मतेनेदमित्यपि कश्चित् ॥

(गा०) सर्वमनित्यं प्रमेयत्वादित्यादेः । स्वमते साधारणत्वात्तत्रातिव्याप्तिप्रदर्शनासंगतेराह संप्रदायमिति । तन्मते निश्चितसाध्यतदभाववद्वृत्तेरेव साधारणतया उक्तहेत्वोरनुपसंहार्य्यत्वासाधारणत्वदशायामलक्ष्यत्वमेवेति भावः । ननु मणिकारमते वास्तवसाध्याभाववद्वृत्तिरेव साधारण इत्येव कुतोऽवधारितमित्यत आह तत एवेति । स्वमते तस्य लक्ष्यत्वाविधेरित्यर्थः । अग्रे–सिद्धान्तग्रन्थे । निश्चितसाध्यवत्सपक्षवदन्यवृत्तित्वमित्यत्र तत्पदस्य प्रकान्तनिश्चितसाध्यवत्परामर्शकत्वे साध्यसंशयविषयीभूतपक्षे सपक्षे च वर्त्तमाने सद्धेतावतिप्रसङ्ग इत्यतस्तस्य साध्यवन्मात्रपरतां स्पष्टयितुं व्याचष्टे निश्चित इति । साध्यादिमत्तया निश्चित इत्यर्थः । एतच्च साध्यवद्भिन्नेप्यन्वेति, अन्यथा निश्चितसाध्यवतीति समासेन लिखनस्य परित्यागे बीजाभावात् । न चानुपसंहार्य्यसाधारणयोरतिव्याप्तिः साध्यवति तद्विशेषणेनैव वारणात् साध्यवद्भिन्ने तस्य विशेषणत्वमप्रयोजकमिति वाच्यम् । साध्यवदन्यत्वसंशयविषयवृत्तित्वज्ञानस्याप्रतिबन्धकत्वात् स्वरूपसन्निश्चयघटितस्यैव दोषत्वमित्यभिप्रायेण तदुपादानात् साध्यवति तद्विशेषणोपादानं च–शब्दोऽनित्यः शब्दाकाशान्यतरत्वादित्यादेरनवगतसाध्यसहचरितत्वे सति अवगतसाध्याभावसहचरिततया विरुद्धत्वमेव न तु साधारणत्वमिति–मताभिप्रायेण तद्वारणाय । उभयत्र विकल्पेन तादृशविशेषण प्रक्षिप्य लक्षणद्वयं करणीयमित्यभिप्रायेण समासोपेक्षणमिति पुनरयुक्तम् । तथासति सपक्षविपक्षग-

त्रिरूपाभिमतलक्षणे सपक्षत्वविपक्षत्वोभयशरीरे निश्चयांशपरित्याग एव पौनरुक्त्यपरिहारसम्भवात्, सपक्षत्वमात्रस्य च तद्गर्भतया निराकरणासंगतेः ।

मूले इत्येवोद्भाव्यत इत्यत्र इतीत्यनन्तरं विपक्षवृत्तित्वमिति पूरणीयम् । अयोगोलकेनानैकान्तिको वह्निरित्यत्र साध्यवदन्याधेयत्वम् अनैकान्तिकपदार्थः । तत्रैव च तृतीयान्तार्थायोगोलकनिरूपितत्वादेरन्वयो बोध्यः । ननु तन्मात्रोद्भावनान्न वादिनिवृत्तिरिति न तन्मात्रं दोष इत्याशंकां निराकरोति तत एवेति । एवकारव्यवच्छेद्यं स्फुटयति न त्विति । सपक्षगतत्वमपीति । उद्भाव्यत इत्यनुषज्यते । अनुपसंहार्य्ये सर्वमनित्यं प्रमेयत्वादित्यादौ निश्चितसाध्यवदन्यवृत्तित्वदलासत्त्वात् सपक्षगतत्वमात्रस्य न तद्व्यावर्त्तकता अतः सपक्षगतत्वनिश्चितत्वरूपसाध्यवदन्यविशेषणयोरन्यतरसार्थक्यशङ्कापरत्वमनुपसंहार्य्य इति मूलस्य स्फुटयितुं निश्चयाघटितसाध्यवदन्यवृत्तित्वस्य तत्साधारण्यमाह दीधितौ साध्यवदन्येति । तथापि-अनुपसंहार्येपि । न निश्चयगर्भमिति । न निश्चितसाध्यवद्वृत्तित्वरूपमपि तु साध्यवद्वृत्तित्वरूपमेवेत्यर्थः । नाभेद इति । न निश्चितसाध्यवदित्याद्युक्तलक्षणाभेद इत्यर्थः । घटोऽनित्यो घटाकाशोभयवृत्तिद्वित्वादित्यस्य केवलान्वयिधर्मावच्छिन्नपक्षकत्वाभावेनानुपसंहारित्वाभावादित्यनुपसंहार्य्यस्येति मूलासङ्गतिमाशंक्यान्तरा पूरयति इत्यस्य विरुद्धस्येति । विरुद्धत्वं चास्थानवगतसाध्यसहचारकत्वे सति अवगतसाध्याभावसहचारो विरुद्ध इति मते अनुपसंहार्यस्य विशिष्यानभिधानात् कस्येत्याकाङ्क्षायामाह प्रसिद्धस्येति । सर्वमनित्यं प्रमेयत्वादित्यादेरित्यर्थः । विरुद्धस्येत्यस्य विरुद्धसामान्यपरत्वे दर्शितद्वित्वरूपविरुद्धहेतोः पृथगुपादानानुपपत्तिरतोऽय गौरवत्वादित्यादिसर्वपातिसिद्धविरुद्धपरतया व्याचष्टे विरुद्धान्तरस्येति । तादृशद्वित्वरूपविरुद्धस्य पक्षातिरिक्तसाध्यवद्वृत्तित्वरूपसमुदायविशेषणेन विरुद्धान्तरस्य च पक्षान्यत्वमनन्तर्भाव्यापि साध्यवद्वृत्तित्वविशेषणेन व्यावृत्तिरिति प्रदर्शनाय भेदेनोपादानमिति भावः ।

केवलान्वयिधर्मावच्छिन्नपक्षकत्वं नानुपसंहारित्वं किन्त्वप्रतीतव्यातिमदनुकूलसहचारत्वमिति मते कथितद्वित्वमनुपसंहार्य्यमेवेति तन्मतमादाय यथाश्रुतमूलमुपपादयति मतमादायेत्यत इति । साध्य-

पक्षवृत्तित्वांशव्यावर्त्यस्य विरुद्धस्यैव पक्षान्यवृत्तित्वांशव्यावर्त्यस्य सर्वमनित्यं प्रमेयत्वादित्याद्यनुपसंहार्यस्याप्युपादानौचित्याद्नुपसंहार्यविशेषस्योपादानं निर्बीजमित्यस्वरससूचनाय कश्चिदिति ॥

( चि० ) उच्यते विपक्षवृत्तित्वं साधारणत्वम्, तन्मात्रस्य दूषकत्वात् । विरुद्धस्यापि तत्त्वाज्ज्ञाने विपक्षवृत्तिताज्ञानदशायां साधारणत्वम्, अन्यथा तस्य हेत्वाभासान्तरतापत्तेः । उपाधेरसङ्कर एव । सर्वमनित्यं मेयत्वादित्यनुपसंहारी शब्दो नित्यः शब्दत्वात् भूर्नित्या गन्धवत्त्वादित्यसाधारणश्च वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारणोऽपि पक्षतादशायाम् उद्भावयितुं न शक्यत इत्युभयोर्भेदेनोपन्यासः ॥

इति साधारणचिन्तामणिः ॥

( दी० ) विपक्षेति । अत्र विपक्षत्वं साध्याभाववत्त्वम् । अनुपदमेव वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारण इति मूल एव स्फुटतरमभिधानात्, न तु निश्चयगर्भं तज्ज्ञानस्याप्रतिबन्धकत्वात् । न च वस्तुतो यत्र तन्निश्चयस्तद्वृत्तित्वज्ञानं प्रतिबन्धकम्, रूपान्तरेण साध्याभाववत्तया निश्चिते रूपान्तरेण हेतुज्ञानेऽप्यप्रतिबन्धात् । न चैकेन रूपेण तत्तथा, गौरवात्, हेतुसाध्याभावयोः सामानाधिकरण्यास्फुरणेनाविरोधात्, साध्याभाववद्वृत्तिर्हेतुरित्यादिशब्दज्ञानानामप्रतिबन्धकत्वापाताच्च ।

यत्तु साध्याभावांशे निश्चयरूपं शेषांशे संशयसाधारणं साध्याभाववद्वृत्तित्वज्ञानं प्रतिबन्धकमन्यथा पक्ष एव साध्यसन्देहेन सन्दिग्धानैकान्तिकत्वापत्तेरिति । यदाहुः—'नहि पक्षे पक्षसमे वा व्यभिचार' इति ।

तन्न । व्याप्तिनिश्चये हेतौ व्यभिचारसंशयायोगात्, तदनिश्चयदशायाम् अनुकूलतर्कास्फूर्त्तौ सन्दिग्धानैकान्तिकत्वस्येष्ट-

त्वात्–हेतुसाध्याभावसामानाधिकरण्यावगाहितयैव ज्ञानस्य व्याप्तिग्रहप्रतिबन्धकत्वात्, अत एव पक्षः साध्यातिरिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वादित्यादयोऽनुकूलतर्कविरहिणो बाधप्रतिरोधयोरनवतारेऽपि पक्ष एव सन्दिग्धानैकान्तिकतया अप्रयोजका गीयन्ते। एवं वह्निर्दाहानुकूलेत्यादयः शक्तिसाधका अपि। अन्यथा पक्षातिरिक्ते सर्वत्र साध्यवत्तानिर्णयाद्व्याप्तिग्रहस्य दुर्वारत्वात्, पक्षविपक्षान्यतरत्वादिना सर्वत्र सत्प्रतिपक्षप्रसङ्गाच्च।

(गा०) सिद्धान्तलक्षणेऽपि विपक्षपदस्य निश्चितसाध्याभाववदर्थकताभ्रमं निराकरोति अत्रेति। निश्चयांशानिवेशे मूलस्यापि संमतिमादर्शयति अनुपदमेवेति। स्फुटतरमभिधानात्–वास्तवसाध्याभाववद्वृत्तित्वस्य साधारण्यरूपतास्फुटीकरणात्। न तु निश्चयगर्भविपक्षस्य संभवदुक्तिकमपीति शेषः। तज्ज्ञानस्य–निश्चयांशाज्ञानस्य, अप्रतिबन्धकत्वात्–व्याप्तिज्ञानाप्रतिबन्धकत्वात्। व्याप्तेर्निश्चितसाध्याभाववद्वृत्तित्वाघटितत्वादिति भावः।

ननु निश्चयांशाज्ञानस्याप्रतिबन्धकत्वेऽपि स्वरूपसत्साध्याभावनिश्चयविषयधर्मिवृत्तित्वज्ञानत्वेन प्रतिबन्धकतया तादृशधर्मिवृत्तित्वं साधारण्यरूपहेत्वाभासो भवतु। न च निश्चयघटितस्य विशिष्टस्य प्रतिबन्धकज्ञानाविषयत्वेन सामान्यलक्षणानाक्रान्ततया न हेत्वाभासतेति वाच्यम्। मणिकारोक्तदोषसामान्यलक्षणस्य यथाश्रुतार्थपरताया अनेनैव परित्यागात्, तत्परित्यागे कथञ्चिदेतत्साधारण्यस्यापि सम्भवात्।

(वस्तुतस्तु साध्याभावनिश्चयविषयीभूतायोगोलकादिधर्मिवृत्तित्वस्यायोगोलकादिवृत्तितात्वेनैव रूपेण दोषता। तद्रूपविशिष्टविषयकज्ञानस्यायोगोलकादिधर्मिकसाध्याभावनिश्चयविशिष्टत्वेन प्रतिबन्धकत्वात्, तथा च साध्याभावनिश्चयविषयवृत्तित्वत्वेन ज्ञानस्याप्रतिबन्धकत्वेऽपि न क्षतिः, तेन रूपेण दोषत्वानुपगमात्। न चायोगोलकादिवृत्तित्वादृशज्ञानस्योक्तनिश्चयविशिष्टत्वेन प्रतिबन्धकत्वेऽपि तद्विषयकत्वस्य तादृशप्रतिबन्धकतावच्छेदकज्ञाननिश्चयविशिष्टत्वेन साधारण्यतया नातिरिक्तदोषरूपत्वं [illegible]मिति

न तत् हेत्वाभाससामान्यलक्षणाक्रान्तत्वमिति वाच्यम् । सामानाधिकरण्यसम्वन्धेन यस्य यस्य यादृशप्रतिवन्धकतायामवच्छेदकत्वं तत्तद्वच्छेदकविशिष्टस्य यादृशविषयकनिश्चयत्वस्य तत्प्रतिवन्धकतानतिरिक्तवृत्तित्वविवक्षया सामान्यलक्षणस्योक्तसाधारण्यसम्भवात् । वाधादिप्रतिवन्धकतायामप्रामाण्यग्रहाभाव एव सामानाधिकरण्यसम्वन्धेनावच्छेदकः प्रसिद्ध इति ।) न चैवं तुल्ययुक्त्या हेतुमत्ताज्ञानविषयधर्मिवृत्तिसाध्याभावादिकमपि तथा स्यादिति वाच्यम् । इष्टत्वात् ।

अथैव महानसादौ वह्न्यभावभ्रमदशायां ह्रदादौ धूमादिभ्रमदशायां च तादृशभ्रमविषये धूमवह्न्यभावादेर्वृत्तेर्वह्न्यादिसाधकधूमादेः साधारण्यं स्यादिति चेदेतदपीष्टमेव । न चैवं साधारण्यस्य नित्यदोषताप्रवादविरोधः, उक्तरूपेण साध्याभाववद्वृत्तित्वरूपविशिष्टविषयकज्ञानस्यापि प्रतिवन्धकतया तादृशविशिष्टविषयस्य । चाप्रतिवन्धकज्ञानाविषयत्वेन नित्यदोषतया तदविरोधात् । सद्धेतुनिष्ठसाध्याभावभ्रमविषयवृत्तित्वादिरूपस्य च तस्यानित्यदोषतया पयोपगमात् । न चैव सद्धेतौ पक्षतावच्छेदकादिभ्रमविषयवृत्तिसाध्याभावादिकमपि वाधः स्यादविशेषादिति वाच्यम् । प्रतिवन्धकप्रमाविषयस्यैव दोषत्वोपगमात् तादृशस्य साध्याभावादिविषयकप्रतिवंधकीभूतज्ञानस्य पक्षतावच्छेदकांशे भ्रमत्वनियमात्, प्रकृते च ज्ञानद्वयस्यापि मिलितस्य प्रतिवन्धकतया एकज्ञानस्य भ्रमत्वेपि प्रमात्मकापरज्ञानविषयस्यापि दोषतासम्भवात् । अत एव सद्धेतौ पक्षवृत्तिसाध्याभावव्याप्यस्याप्रसिद्धावपि पक्षवृत्तित्वेन भ्रमविषयनिष्ठसाध्याभावव्याप्यत्वादेः सत्प्रतिपक्षतया तस्यानित्यदोषत्वम्, मिलितयोः समानधर्मिकसाध्याभाववत्ताग्रहहेतुमत्ताग्रहयोर्व्याप्तिग्रहाविव मिलितयोरेकधर्मिकसाध्याभावव्याप्तिपक्षधर्मताग्रहयोरनुमितौ विरोधित्वात् तदुभयैकतरप्रमारूपैकज्ञानविषयस्य विशिष्टस्य दोषत्वे वाधकाभावात् । न चैवं विरोधिव्याप्त्यादेरज्ञायमानतादशायामपि सद्धेतौ दुष्टतापत्तिरिति वाच्यम् । ज्ञानद्वयस्य यत्र प्रतिवन्धकता तत्र प्रतिवन्धकीभूतज्ञानावच्छिन्नस्यैव विषयस्य दोषत्वादिति । न च ज्ञानान्तरविशिष्टस्य यादृशविशिष्टज्ञानस्य प्रतिवन्धकत्वं तादृशविशिष्टविषयकत्वस्य प्रतिवन्धकतानतिरिक्तवृत्तित्वात्र दोषसामान्यल-

क्षणावृत्तित्वमिति वाच्यम् । सामान्यलक्षणे स्वरूपसम्बन्धरूपावच्छेदकताया एव निवेशनीयत्वात् । एकदेशावच्छेदेन तादृशविशिष्टविषयितासामान्यं प्रतिबन्धकतावच्छेदकमिति विवक्षयैव वारणात् । न च नित्यदोषस्य बाधादेः सर्वदा दोषतया तदनिर्वाहप्रसङ्गेन प्रतिबन्धकज्ञानाधिकरणकालावच्छिन्नत्वस्य सामान्यलक्षणे दुर्निवेशतयाऽनित्यानामपि दोषाणां सर्वदा दोषतापत्तिर्दुर्वारैवेति वाच्यम् । यादृशज्ञानान्तराविशिष्टत्वेन यादृशविशिष्टविषयकज्ञानस्य प्रतिबन्धकता तादृशज्ञानसहिततादृशविशिष्टज्ञानानधिकरणक्षणवृत्तिर्यादृशएतादृशविशिष्टपर्याप्तविषयताविरहविशिष्टत्वे सति यादृशविशिष्टनिरूपितविषयतासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं तादृशविशिष्टत्वस्य सामान्यलक्षणतया नित्यदोषे च विशेष्यीभूतनिरुक्तविषयताविरहेण तादृशज्ञानानधिकरणक्षणवृत्तित्वविशिष्टतादृशविषयताविरहस्य सर्वदैव सत्त्वेन अनित्यदोषे च प्रतिबन्धकज्ञानदशायामेव तादृशक्षणरूपविशेषणविरहेण तादृशविरहस्य सत्त्वेन सामञ्जस्यात् । विशिष्टाभावप्रविष्टक्षणे निरुक्तज्ञानयोरेकतरानधिकरणत्वमात्रस्य निवेशे पर्वतो वह्निमान् धूमादित्यादौ महानसादौ वह्न्यभावाविषयकशून्यतादशायामपि धूमादौ महानसादिवृत्तित्वज्ञानमादाय व्यभिचारित्वापत्तिः, प्रतिहेतौ विरोधिव्याप्तपक्षधर्मताज्ञानयोरेकतरसत्त्वेऽपि सत्प्रतिपक्षतापत्तिश्चाते विशिष्टाभावप्रतियोगिकोटौ एकज्ञानसहितापरज्ञानाधिकरणक्षणनिवेशः । यत्र च हेतोरधिकरणे साध्याभावस्य भ्रमसत्त्वेऽपि हेतौ तदधिकरणवृत्तित्वाभावदशायां न तस्य सव्यभिचारत्वमपि तूभयज्ञानदशायामपीति । मिश्रानुयायिनामाशङ्कां निराकर्तुं साधारण्यस्थले ज्ञानद्वयप्रतिबन्धकतां वदति न चेति । न चेत्यर्थः । रूपान्तरेणेति । अस्य धूमाभाववत् अयोगोलकं वह्निमदित्यादिस्थानेऽपि वह्निर्धूमव्याप्य इति ज्ञानोत्पत्तिरित्यर्थः । तद्रूपावच्छिन्नसाध्याभावनिश्चयसहिततद्रूपावच्छिन्नविशेष्यकहेतुमत्ताज्ञानप्रतिबन्धकमित्युक्तौ नायं दोष इति शङ्कते न चैकेनेति । गौरवादिति विशिष्टज्ञानत्वेन प्रतिबन्धकत्वापेक्षयेत्यादिः । ननु ज्ञानद्वयकालेऽपि फलानुत्पत्त्या तन्निर्वाहाय दर्शितरूपेण प्रतिबन्धकताया आवश्यकत्वे गौरवमकिञ्चित्करमेवानन्यगतिकत्वादित्यत आह देशेति । ज्ञानद्वयस्थले, ग्राह्यसाध्याभाववद्वृत्तित्वाभावविरोधिता

वच्छेदकसाध्याभावसामानाधिकरण्यत्वावच्छिन्नस्य हेतावभानेऽ व्याप्तिज्ञानोत्पादे बाधकाभावादित्यर्थः । तथा च तदानीं व्याप्तिज्ञानानुत्पादस्यैवासिद्धतया गुरुरूपेण प्रतिबन्धकत्वमप्रामाणिकमेवेति भावः । दर्शितरूपेण प्रतिबन्धकत्वे सर्ववादिसिद्धप्रतिबन्धकताकस्य ग्राह्याविरोधितावच्छेदकप्रकारकज्ञानस्यासंग्रह इत्याह साध्याभावेति । अप्रतिबन्धकत्वापातादिति । साध्याभावग्रहस्य तदानीन्तनस्य निर्द्धर्मितावच्छेदकतया तादृशज्ञानस्योक्तप्रतिबन्धकतावच्छेदकानाक्रान्तत्वादिति भावः । प्रत्यक्षे सन्निकर्षादिबलात् साध्याभावधर्मितावच्छेदकतया अयोगोलकत्वादेरपि भानसम्भवात् शाब्दाद्युपाधानम् । न च साध्याभावप्रकारतानिरूपितविशेष्यतानिरूपिता या स्वसमानकालीनज्ञानीयप्रकारता तदाश्रयधर्मावच्छिन्नवृत्तित्वावगाहिज्ञानत्वेन प्रतिबन्धकत्वोपगमादुक्तज्ञानसंग्रहः, साध्याभावे धर्मितावच्छेदकस्येव साध्याभावस्यापि निरुक्तप्रकारताश्रयत्वादिति वाच्यम् । द्रव्यत्वादिसामानाधिकरण्येन साध्याभावग्रहकालीनस्य द्रव्यवृत्तिर्हेतुरित्यादिज्ञानस्य प्रतिबन्धकत्वापातात् । धर्मितावच्छेदकावच्छेदेन साध्याभावावगाहिज्ञानस्य निवेशे, न निस्तारः निर्द्धर्मितावच्छेदकसाध्याभावज्ञानकालीनज्ञानस्य दुःसंग्रहत्वात् । विपक्षत्वं निश्चितसाध्याभाववत्त्वमेव विशेष्यांशज्ञानस्याविरोधित्वेऽपि न क्षतिः । तद्घटितसाध्याभाववद्वृत्तित्वस्यैव दोषत्वोपगमात् । साध्याभावे निश्चितत्वाभिधानस्य व्यभिचारज्ञानप्रतिबन्धकतायां तदंश एव निश्चयत्वप्रवेश इत्येतत्प्रदर्शनमात्रार्थत्वादेवं च साधारण्यस्य नानित्यदोषताप्रसक्तिरपीति मिश्राणां द्वितीयं मतं दूषयितुमुपन्यस्यति यत्त्विति । साध्याभावांशे निश्चयरूपमिति ।

अथात्र किं निश्चयत्वम्? न सामान्यतः साध्याभावसंशयान्यसाध्याभावज्ञानत्वम्, महानसं धूमवत्तथा धूमाभाववदयोगोलकवृत्तिर्वह्निरित्येतादृशज्ञानासंग्रहात् । नापि—हेत्वधिकरणप्रकारीभूतयत्किंचिद्धर्मावच्छिन्नविशेष्यकसाध्याभावसंशयान्यतज्ज्ञानत्वम् । यत्किंचित्त्वनिवेशात् वह्निमान् पर्वतो धूमवांश्च वा धूमाभाववदयोगोलकवृत्तिर्वह्निरिति ज्ञानसंग्रहः, तस्य तादृशायोगोलकत्वरूपयत्किंचिद्धर्मावच्छिन्नविशेष्यकसंशयान्यत्वादिति—निर्दोषम् । साध्याभावांशे निर्द्धर्मितावच्छेदकस्य साध्याभाववद्वृत्तिर्हेतुरितिज्ञानस्यासंग्रहात्—तत्र हे-

त्वधिकरणांशे साध्याभावमात्रस्य प्रकारत्वात् तदवच्छिन्नविशेष्यताकसाध्याभावसंशयस्याप्रसिद्धेः, यत्किंचित्त्वनिवेशेनाननुगमाच्चेति ।

अत्राहुः—आधेयताविशेषणतापन्नस्य अधिकरणस्य या संशयत्वनिरूपकविशेष्यतान्यविशेष्यता तन्निरूपितसाध्याभावप्रकारताशालित्वं तन्निश्चयत्वम्, संशयत्वनिरूपिका च विपरीतकोटिधर्मितावच्छेदकतापन्नधर्मावच्छिन्ना विशेष्यता, तदन्यत्वं च साध्याभाववद्वृत्तिधूम इत्यादिज्ञानीयधर्मितावच्छेदकानवच्छिन्नविशेष्यताद्वावक्षतमेव, संशये च प्रत्येककोटिनिश्चयीयविशेष्यताभ्यामतिरिक्तैव विशेष्यता, अतो निश्चयीयधर्मितावच्छेदकावच्छिन्नविशेष्यतायां तदन्यत्वमेव । अधिकमन्यत्रानुसन्धेयम् ।

शेषांशे—आधेयत्वाद्यंशे, संशयसाधारणं—निश्चयत्वविशेषणानवच्छिन्नम्, अन्यथा—साध्याभावांशे निश्चयस्यानिवेशे, सन्दिग्धानैकान्तिकस्यापत्तेः—पक्षांशे साध्याभावसंशयात्मकपक्षवृत्तित्वग्राहिव्यभिचारज्ञानादनुमितिमात्रोच्छेदापत्तेः साध्याभावसंशयविषयहेतुमत्ताज्ञानस्याविरोधित्वे प्राचीनसंवादमाह न हि पक्ष इत्यादिना । पक्षे सन्दिग्धसाध्यकप्रकृतधर्मिणि, पक्षसमे—सन्दिग्धसाध्यकधर्म्यन्तरे, व्यभिचारो—व्यभिचारग्रहः । प्रतिबन्धक इति शेषः । व्याप्तिनिश्चये हेतुमति पक्षादौ साध्याभावसंशयानवतारदशायां निश्चिताया व्याप्तेः स्मरणे व्यभिचारसंशयायोगात् इति । पक्षः साध्यवान्न वा पक्षवृत्तिर्हेतुरिति विशृङ्खलविषयकज्ञानं न विरोधि विरोधितावच्छेदकरूपाप्रकारकत्वात्, किन्तु साध्याभाववद्वृत्तित्वत्वावच्छिन्नप्रकारकज्ञानमेव, तच्च व्याप्तिनिश्चयप्रतिबध्यमिति तस्योत्पत्त्यसंभवादित्यर्थः ।

यत्र व्याप्तिग्राहकसहचारदर्शनादिदशायामेव क्वचन हेतुमति साध्याभावसंशय आसीत्तत्र तन्मते पूर्वं व्याप्तेरनिश्चयेन पक्षे हेतुदर्शनदशायां व्याप्तिस्मरणासंभवात्पक्षान्तर्भावेण व्यभिचारसंशयसत्त्वात् प्रत्यक्षतन्निश्चयस्यासंभवादनुमितिर्न स्यादित्यत्रेष्टापत्तिमाह तदानिश्चयदशायां त्विति । पूर्वं व्याप्तेरनिश्चयेऽपि पक्षे साध्यसन्देहदशायामनुकूलतर्कावतारे तु व्याप्तिनिश्चयः संभवति अनुकूलतर्कस्य विशेषदर्शनवत् संशयप्रतिबन्धकतायामुत्तेजकत्वादेव आदौ

नुकूलतर्कास्फूर्ताविति । अस्फूर्तिरनवतारः । अवगाहितयैवेत्येवकारेण निश्चयत्वस्य प्रतिबन्धकतावच्छेदकघटकत्वव्यवच्छेदः । तथा च साध्याभावांशे संशयात्मकमपि व्यभिचारज्ञानं प्रतिबन्धकमिति भावः । संशयायोगादिष्टत्वादित्यन्तद्वयस्यात्रैव हेतुत्वं बोध्यम् । अत एव-साध्याभावांशे संशयसाधारणव्यभिचारज्ञानस्य प्रतिबन्धकत्वादेव । पक्ष इत्यादि । शब्दो नित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान्नित्यादन्य इत्यर्थः । बाधप्रतिरोधयोरनवतारेऽपि-विप्रतिपत्तिदशायां शब्दादौ अनित्यत्वतद्व्याप्तिविशिष्टयोरनिश्चयेऽपि, अप्रयोजका-नित्यत्वादिसाधका,गीयन्ते तान्त्रिकैरिति शेषः। दाहानुकूलेत्यादयः-दाहानुकूलाग्निष्ठातीन्द्रियधर्मसमवायी दाहजनकत्वाददृष्टविशेषवदित्यादय इत्यर्थः।भर्जनकपालस्थ वह्निनिष्ठानुद्भूतरूपमादाय सिद्धसाधनवारणाय दाहानुकूलेति। अदृष्टवदात्मसंयोगमादाय सिद्धसाधनवारणायाग्निष्ठेति ।उष्णस्पर्शमादाय सिद्धसाधनवारणायातीन्द्रियेति। अन्यथातादृशव्यभिचारज्ञानस्याप्रतिबन्धकत्वे, पक्षातिरिक्ते-साध्यसंशयाविषये, सर्वत्र-हेतुमति, साध्यवत्तानिर्णयात्-क्वापि हेतुमति साध्याभावानिश्चयेन व्याप्तिग्रहस्य दुर्वारत्वात् । एतेन द्वितीयानुमाने वह्निरूपपक्षातिरिक्ते करतलानलसंयोगादौ दण्डादौ च दाहानुकूलातीन्द्रियधर्मानिश्चयेपि न दोषः । पक्षविपक्षान्यतरत्वादिना-पर्वतह्रदान्यतरत्वतदुभयविशेष्यकप्रमाविषयत्वादिना, सर्वत्र-पर्वतो वह्निमान् धूमादित्यादिसद्धेतौ, सत्प्रतिपक्षप्रसंगात्-अनुमितिप्रतिरोधप्रसङ्गात् । तादृशस्यान्यतरत्वादेरधिकरणे क्वचिदपि वन्ह्यादेरनिश्चयेन प्रतिबन्धकतावच्छेदकवह्न्यभावादिव्याप्तिस्तत्र सुग्रहत्वादिति भावः । एतच्च सर्वं प्रत्यक्षानिश्चये ग्राह्यसंशयस्य प्रतिबन्धकत्वमतेनाभिहितम्, अन्यथा पुनर्ग्राह्यान्तरविशिष्टबुद्धौ ग्राह्याभावज्ञानस्येवाव्यभिचारबुद्धावपि व्यभिचारग्रहस्यापि निश्चयत्वेनैव प्रतिबन्धकता निश्चयत्वावच्छिन्नं प्रति ज्ञानत्वेन प्रतिबन्धकत्वे संशये निश्चयत्वावच्छिन्नस्यापरप्रतिबन्धकताया आवश्यकत्वात् संशयानन्तरं संशयोत्पादज्ञानत्वावच्छिन्नं प्रति ज्ञानत्वेन प्रतिबन्धकत्वासम्भवात् । निश्चयत्वं च वृत्त्यंश इव साध्याभावांशेऽपि निवेश्यम्,अधिकरणवृत्तित्वांशे निश्चयात्मकस्य अधिकरणांशे साध्याभावरूपविशेषणसंशयस्यापि विशिष्टसंशयसमानशीलतया विशिष्टाभावसंशयाविरो-

धित्वात् । एवमप्यनुकूलतर्कविरहिणामुक्तानुमानानामप्रयोजकत्वमुपपद्यत एव व्यभिचारसंशयसामग्रीसत्त्वेन व्याप्तिनिश्चयस्यासम्भवात् । निश्चयत्वघटकविपरीतकोट्यप्रकारकत्वे विपरीतकोटिभानप्रयोजकाभावस्य प्रयोजकत्वात् अनुकूलतर्कस्य च विपरीतज्ञानविरोधिनस्तत्प्रयोजकसामग्रीविघटनेनैव व्याप्तिनिश्चयोपयोगितेत्यवधेयम् ॥

(दी०) अथ साध्यतद्वदन्यान्योन्याभावगर्भव्यभिचारयोरेकोपादानेऽन्यतरव्याप्तिः । साध्यवत्त्वाज्ञानमविघटयज्ज्ञानविषयत्वेनाभावद्वयानुगमेऽपि हेतुमति तादृशाभाववत्त्वस्य तादृशाभाववति हेतुमत्त्वस्य तादृशाभावे हेतुसामानाधिकरण्यस्य साध्यवद्भेदादौ हेतुसमानाधिकरणतादृशाभावप्रतियोगित्वादेश्चासंग्रह इति चेत् ।

अत्र वदन्ति—प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरोधिनो ज्ञानस्य विषयतया अन्वयव्याप्तिग्रहविरोधितावच्छेदकत्वेन विभजनान्नासंग्रहः । अविरोधिन इत्यनेन साध्याप्रसिद्ध्यादीनां निरासः । यदि पुनरत्यन्तान्योन्याभावयोरेकतरगर्भव्यभिचारज्ञानस्य नान्यतरगर्भव्याप्तिग्रहविरोधित्वम् इत्यादिकं विभाव्यते, तदा साध्यसामानाधिकरण्यघटितत्वेनान्वयव्याप्त्योऽनुगमनीयाः । प्रातिस्विकरूपेणोपादाय वा तावद्व्याप्त्यन्यतमग्राहित्वं ग्रहस्य वक्तव्यम् । साध्यव्यभिचरितसामानाधिकरण्यस्य व्याप्येऽप्रसिद्धस्य हेतौ विरहोऽप्येतद्विशेष एव । विशिष्टसाधनवत्त्वग्रहाविरोधिनो ज्ञानस्य विषयतया व्यापकत्वग्रहाविरोधितावच्छेदकरूपत्वं वा विभाजकम् । शेषं पूर्ववत् ।

(दी०) साध्यतद्वतोरत्यन्तान्योन्याभावौ साध्याभावव्याप्यादिव्याप्तेन साध्यवत्ताज्ञानविरोधित्वेनानुगमय्य तत्र

हेतुसामानाधिकरण्याभावग्रहविरोधित्वं साध्यवत्ताज्ञानविरोधिनि तादृशाभावग्रहविरोधिहेत्वाभासतावच्छेदकरूपवत्त्वं वा तथ[illegible]क्तव्यम्। साध्याभावव्याप्यादौ तु हेतुसामानाधिकरण्यादिकमविरोधित्वान्नाभासः। विरोधित्वं पूर्वोक्तदिशावसेयम्। उपदर्शितविशिष्टव्याप्तिविरहो व्याप्यत्वासिद्धिरेवेति। व्याप्तिग्रहकारणसहचारग्रहसहचार्यभावप्रतियोगिग्रहविषयत्वेनानुगम इत्यपि कश्चित्॥

इति साधारणदीधितिः।

---

(गा०) एकोपादाने-एकमात्रवृत्तिसाध्यात्यन्ताभाववद्वृत्तित्वादेः साधारण्यलक्षणत्वे, अन्यतराव्याप्तिः-साध्यवदन्यवृत्तित्वाद्यव्याप्तिः। एतच्चान्योन्यात्यन्ताभावगर्भव्याप्तिद्वयस्यैवानुमितिप्रयोजकतामते अन्यथा। एकाभावघटितव्याप्तेरेव तथात्वे अपराभावघटितव्यभिचारस्य व्यभिचाराज्ञापकतयैव विरोधितया हेत्वाभासताविरहात्। साध्यवत्ताज्ञानेति। धर्मितावच्छेदकावच्छिन्ने यद्रूपावच्छिन्नप्रकारकनिश्चयस्य साध्यतावच्छेदकावच्छिन्नवत्ताज्ञानप्रतिबन्धकतावच्छेदक तद्रूपावच्छिन्नत्वेन साध्यवदत्यन्तान्योन्याभावयोरनुगमस्य तादृशविशिष्टवद्वृत्तित्व साधारण्यमित्युक्तावपीत्यर्थः। तादृशाभाववत्त्वस्य-साध्यवदत्यन्तान्योन्याभाववत्त्वस्य। एवञ्च सर्वमसमानप्रकारकज्ञानस्यापि प्रतिबन्धकतामते, अन्यथा साध्याभाववद्वृत्तिर्हेतुरित्यादिज्ञाने हेतुमति साध्याभाव इत्यादिज्ञानस्यासमानप्रकारकत्वेनाविरोधितया तद्विषयस्यानुमितौ तज्जनकज्ञाने च साक्षादविरोधितया हेत्वाभासत्वाभावेन साधारण्यरूपतानुपपत्तेः। साध्यतद्वदादौ-साध्यतावच्छेदकविशिष्टतदवच्छिन्नादौ। आदिपदात् साध्यतावच्छेदकतदवच्छिन्नपरिग्रहः। प्रतियोगित्वादेरित्यादिना तदवच्छेदकत्वपरिग्रहः।

प्रकृतेति। विशिष्टसाध्यविशिष्टसाधनसामानाधिकरण्यप्रत्याय्यवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताशून्यनिश्चयनिष्ठविधेयतया निरूपितत्वसम्बन्धेन विशेषणीभूतान्यव्या-

प्तिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वेनेत्यर्थः । तादृशप्रतिबन्धकतावच्छेदकीभूततया विधानिश्चयत्वविशिष्टस्वनिरूपितविषयिताकत्वमिति यावत् । अन्वयव्याप्तिनिवेशात् व्यतिरेकव्याप्तिग्रहाविरोधिन्यनुपसंहारित्वे नातिव्याप्तिः । अन्वयव्याप्तिश्च स्वव्यापकसामानाधिकरण्यम् । व्यभिचारिणि तदप्रसिद्धावपि तद्घटकपदार्थानां, परस्परोपश्लेषावगाहिज्ञाननिवेशात् नानुपपत्तिः । असमानप्रकारकहेत्वादिधर्मिकसाध्याभावसामानाधिकरण्यादिज्ञानमपि तादृशव्याप्तिधीविरोध्येवेति न तदसङ्ग्रहः । तस्य तदविरोधित्वे व्यापकसामानाधिकरण्यसाध्याभावासामानाधिकरण्याद्यवगाहिसमूहालम्बनज्ञानाविरोधित्वमेव निवेशनीयम् लाघवात् । व्याप्तिग्रहत्वस्य व्यभिचारधीप्रतिबध्यतायां स्वरूपसम्बन्धरूपावच्छेदकत्वविरहेऽपि न क्षतिः अनतिरिक्तवृत्तित्वरूपावच्छेदकताया एव विवक्षणीयत्वात् । साध्यसाधनसामानाधिकरण्यग्रहत्वावच्छिन्नप्रतिबन्धकताशरीरेऽपि तादृशमेवावच्छेदकत्वं निवेशनीयम् अतः साध्याप्रसिद्ध्यादेर्ग्रहस्य विशिष्टसाध्यग्रहत्वावच्छिन्नं प्रत्येव प्रतिबन्धकत्वेऽपि न तस्याविरोध्यन्तर्भावाभावाद्यतानुपपत्तिः । शेषं पूर्ववत् । साध्याप्रसिद्ध्यादीनामित्यादिना साध्यनिष्ठावृत्तित्वस्य व्याप्यत्वासिद्धिविशेषस्य साधनाप्रसिद्धेः साधननिष्ठावृत्तित्वस्य स्वरूपासिद्धिप्रभेदस्य साध्यसाधनयोः परस्परासामानाधिकरण्यस्य विरोधात्मकस्यासाधारण्यरूपस्य वा परिग्रहः । विशिष्टसाध्याद्युपादानस्य यथायथं साध्याप्रसिद्ध्यादिवारणप्रयोजनकत्वं बोध्यम् । धूमवान् धूमाभाववदवृत्तिवह्नेरित्यादौ धूमाभाववदवृत्तित्वादिकमसिद्धिरेव न तु साधारण्यमतो न तदसङ्ग्रहः क्षतिमावहति । साध्याभाववदवृत्तित्वाद्यवगाहिसमूहालम्बनव्याप्तिग्रहनिवेशपक्षे साध्यादेरत्यन्ताभावाप्रतियोगित्वादिकमनुपसंहारित्वं, साध्यादावत्यन्ताभावप्रतियोगित्वादिग्रहाविरोधित्वविशेषण प्रक्षिप्य, वारणीयम् । नान्यतरगर्भव्याप्तिग्रहाविरोधित्वमिति । ग्राह्यभावानवगाहित्वे मणिमन्त्रादिन्यायेन विरोधित्वमानाभावादिति भावः । सामानाधिकरण्यघटितत्वेन—अनुमितिजनकतावच्छेदकीभूतहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितसामानाधिकरण्यप्रकारतात्वरूपसाधारणधर्मेण । अन्वयव्याप्तयोः—ऽन्वयव्याप्तिप्रकारताऽन्योन्यात्यन्ताभावघटितव्यापकतावच्छेदकावच्छिन्नसाध्यसामाना-

धिकरण्यतत्तदभावघटितव्यभिचाराभावविशिष्टसाध्यसामानाधिकरण्यप्रकारता इति यावत्। अनुगमनीया –प्रतिबध्यग्रहविशेषणतया निवेशनीयाः। अतो नैकाभावघटितव्याप्त्युपादानेऽन्यघटितव्यभिचारसङ्ग्रहस्यावकाश इति शेषः। यथाश्रुतग्रन्थलभ्यो विषयानुगमो नोपादेयः गौरवाद्व्यभिचारिणि हेतुव्यापकसाध्यसामानाधिकरण्यरूपविशिष्टव्याप्त्यप्रसिद्धेश्च।

ननूक्तरूपेण नानाविधव्याप्तिविषयतानामनुगमेऽसम्भवः। एकाभावघटितव्यभिचारज्ञानप्रतिबध्यताया अन्याभावघटितव्याप्तिज्ञाने असत्त्वेन कस्या अपि व्यभिचारज्ञानप्रतिबध्यताया निरुक्तप्रकारताशालिग्रहत्वव्यापकत्वासम्भवात्। सामानाधिकरण्यानवगाहिव्यापकत्वादिज्ञानस्यापि व्यभिचारज्ञानप्रतिबध्यतया सामानाधिकरण्यविषयतायाः स्वरूपसम्बन्धरूपतदवच्छेदकतानाश्रयत्वेन तादृशप्रकारताशालिग्रहत्वे अनतिरिक्तवृत्तितारूपायाः प्रतिबध्यतावच्छेदकताया एव निवेशनीयत्वात्। यदि च स्वरूपसम्बन्धरूपप्रतिबध्यतावच्छेदकताघटितसाध्यसामानाधिकरण्यविषयताघटितधर्मावच्छिन्नानुमितिकारणतावच्छेदकत्वोपलक्षितविषयतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वविषयिताकत्वं विवक्ष्यते, तदा पक्षधर्मत्वविषयत्वावच्छिन्नधीविरोधिन्यां स्वरूपासिद्धावतिव्याप्तिः। हेतुपक्षोभयवैशिष्ट्यविषयताबहिर्भूतत्वस्य जनकतावच्छेदकविषयतायां निवेशे प्रयासाधिक्यमित्येतत्कल्पं परित्यज्य समूहालम्बनव्याप्तिधीविरोधित्वेन सकलव्यभिचारान् सङ्गृह्णाति प्रातिस्विकरूपेणेति। तत्तद्व्याप्तित्वेनेत्यर्थः। तथाच समूहालम्बनतापन्नव्याप्तिबुद्धौ सकलव्यभिचारधियो विरोधित्वात् सर्वलक्षणसमन्वय इति भावः। ( ननु साध्याप्रसिद्धिसाधनाप्रसिद्धिवारणानुरोधेन विशिष्टसाध्यसाधनग्रहाविरोधित्वमेवास्तु साध्यसाधनसामानाधिकरण्यग्रहाविरोधित्वपर्यन्तं व्यर्थम्। विरोधानतिप्रसङ्गस्य सामानाधिकरण्याविषयकतादृशव्यभिचारज्ञानादिज्ञानापादाने नैव सम्भवादित्यत आह साध्येति। तथा चाव्यभिचरितसामानाधिकरण्याभावस्य साधारण्यान्तर्गतस्य सङ्ग्रहाय सामानाधिकरण्यविषयकज्ञानमेवोपादेयम्। एवं च विरोधातिव्याप्तिवारणाय तत्पर्यन्तं सार्थकमिति भावः। व्याप्ये प्रसिद्धस्येत्यनेन वह्निव्यापकधूम-

सामानाधिकरण्यादिरूपव्याप्तेरप्रसिद्ध्या वह्न्यादिनिष्ठतदभावे प्रसिद्धतया नातिव्याप्तेः प्रसक्तिरिति सूचितम्। एतद्विशेषः—साधारण्यविशेषः। व्याप्यत्वासिद्धिस्तु साध्याप्रसिद्ध्यादिरेवेति भावः।

अथ व्याप्तिश्चेत् साध्याभाववद्वृत्तित्वविशिष्टसाध्यसामानाधिकरण्यरूपा तदा साध्याभाववद्वृत्तित्वेऽव्याप्तिस्तज्ज्ञानस्य हेतुतावच्छेदकावच्छिन्नांशेऽव्यभिचाराप्रकारकतादृशव्याप्तिज्ञानाविरोधित्वात्। साध्याभाववद्वृत्तित्वं साध्यसामानाधिकरण्यमुभयं वा व्याप्तिस्तदा विशिष्टाभावस्य कथं साधारण्यमुदाहृतम्। यदि च विनिगमनाविरहात्साध्याव्यभिचरितत्वविशिष्टसाध्यसामानाधिकरण्यमिव साध्यसामानाधिकरण्यविशिष्टसाध्याव्यभिचरितत्वमपि व्याप्तिरित्युभयसङ्ग्रह इत्युच्यते, तथाप्यनुमितिं प्रति विशिष्टप्रकारकज्ञानस्य गौरवेण हेतुत्वासम्भवादेकश द्वयमिति रीत्योभयप्रकारकज्ञानस्य हेतुत्वं वाच्यम्, तथाच विशिष्टाभावज्ञानस्य जनकज्ञानाविरोधितया तद्विषयविशिष्टाभावस्य कथं हेत्वाभाससामान्यलक्षणाक्रान्तत्वमिति चेन्न।

(यतो) विशिष्टाभावपदमुभयाभावपरम्, हेतुतावच्छेदकावच्छिन्नविशेषणतापन्नाव्यभिचारः सामानाधिकरण्यमुभयमेव व्याप्तिः। उभयाभावज्ञानस्य चोभयत्वप्रकारतानिवेश्य उभयप्रकारतानिरूपितैकविशेष्यताशालिज्ञानं प्रत्येव प्रतिबन्धकत्वं लाघवात् (इति) कल्प्यते। तादृशं च ज्ञानमुभयत्वप्रकारकमिव तदप्रकारकमपीति, अनुमितिहेतुभूतयुगपदुभयविशेषितहेतुविषयकज्ञानं प्रति विरोधितया, तदुभयाभावस्य हेत्वाभासत्वं साधारण्यरूपता चेति न काप्यनुपपत्तिः। विशिष्टव्याप्तेरुपादाने सामानाधिकरण्यांशनिवेशे प्रयोजनविरहः। व्यापकतांशमात्रोपादानेनैव सकलसाधारण्यसङ्ग्रहसम्भवात्, तथाप्यव्यभिचरितसामानाधिकरण्याभावे नातिव्याप्तिः। साध्यसाधनसामानाधिकरण्यग्रहाविरोधित्वपर्यन्तानिवेशेऽपि च न विरोधातिव्याप्तिरित्याशयेनाह विशिष्टेति। साध्यतावच्छेदकादिविशिष्टेत्यर्थः। आदिपदग्राह्यं साधनतावच्छेदकवैशिष्ट्यं साधनविशेषणं बोध्यम्। वस्तुतः साधनपदमेव साधनतावच्छेदकविशिष्टपरं साध्यपदपूर्वविशिष्टपदार्थस्य साध्यसाधनपदयोर्द्वन्द्वाश्रयण एव साधनान्वयसम्भवात्। तथाच सति द्वन्द्वात्परश्रूयमाणपदार्थस्य साध्येनापि सम्बन्ध-

यस्यावश्यकत्वापातात्। न च, साध्यवत्त्वमपि ग्रहविशेषणतया विवक्षितम्, साध्यवत्त्वस्य व्यापकत्वाघटकतया साध्यस्यावृत्तित्वेऽतिप्रसङ्गानवकाशेन निष्प्रयोजनकत्वात्। न चावृत्तिगगनादिवारकवृत्तिमत्त्वमपि व्यापकताघटकमिति मते तत्सार्थक्यमिति वाच्यम्। अनुमितौ वृत्तिमत्त्वघटितव्यापकतावगाहित्वेन हेतुत्वेपि प्रकृतलक्षणे तदंशाघटितव्यापकतां निवेश्य साध्यवत्त्वग्रहविरोधित्वनिवेशस्य 'प्रक्षालनाद्धि' इति न्यायेनायुक्तत्वात्। साध्याप्रसिद्धिसाधनाप्रसिद्ध्योर्वारणाय साध्यतावच्छेदकादिवैशिष्ट्यनिवेशनम्। व्यापकताघटकसाधनवत्त्वग्रहविरोधिनः साधननिष्ठावृत्तित्वस्य वारणाय साधनवत्त्वपर्यन्तानुधावनम्। साध्याभाववद्वृत्तित्वज्ञानस्य व्यापकताज्ञानाविरोधित्वे साध्याभाववदवृत्तित्वादिविषयकसमूहालंबनरूपव्यापकताग्रहो विचक्षणीयः। अथवा व्यापकताघटितव्याप्तिधीरेवानुमितिहेतुः न तु साध्याभाववदवृत्तित्वादिधीस्तथा च साध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादिकमेव व्यभिचारः, न तु हेतौ साध्याभाववद्वृत्तित्वादिकं साक्षादनुमितिजनकज्ञानाविरोधित्वादिति मतेनायं कल्पः।

ननु अत्यन्तान्योन्याभावगर्भव्यापकतयोरेकोपादानेऽन्यतरगर्भव्यभिचारासङ्ग्रहः एकाभावगर्भव्यापकताबुद्धौ अन्यतरगर्भव्यभिचारज्ञानस्य प्राह्याभावानवगाहितयाऽविरोधित्वादित्यत आह शेषं पूर्ववदिति। अनुमित्यौपयिकसाध्यविशेष्यतानिरूपितप्रकारतात्वेन द्विविधव्यापकत्वप्रकारते अनुगमनीये, प्रातिस्विकरूपेण वा तत्तव्यापकताप्रकारकत्वं ज्ञाने निवेशनीयमित्यर्थः। साध्याभाववद्वृत्तित्वसाध्यवदन्यावृत्तित्वरूपव्याप्तिद्वयमेवानुमित्यौपयिकं न तु व्यापकताघटितमिति मते हेतौ साध्याभाववद्वृत्तित्वादिकमेव दोषः। न तु साध्यतावच्छेदके हेत्वव्यापकतावच्छेदकत्वं परमुखनिरीक्षकत्वात्, तन्मते च उक्तलक्षणे लक्ष्यापरिग्रहोऽलक्ष्यपरिग्रहश्चेति तत्परित्यज्य साध्यात्यन्ताभाववद्वृत्तित्वसाध्यवद्भिन्नवृत्तित्वसंग्राहकं लक्षणमाह साध्यवद्धेतोरिति। साध्याभावव्याप्ये हेतुसामानाधिकरण्याग्रहवारणाय साध्यभावव्याप्यादिव्यावृत्तेनेति। आदिपदात् साध्याभाववच्छेदकपरिग्रहः। तत्र-तादृशाविरोधिताश्रये, यो हेतुसामानाधिकरण्याभावग्रहः तद्विरोधित्वम् तदभावव्याप्यादिव्यावृत्तत-

ज्ज्ञानविरोधित्वं च तद्वत्तानिश्चयप्रतिबध्यतावच्छेदिका सती तद्वत्ताज्ञानप्रतिबन्धकतावच्छेदिका या प्रकारता तदाश्रयत्वम्। तदभाववत्ताज्ञानस्य तद्वत्तानिश्चयाप्रतिबध्यतया तद्विषयव्युदासः। वह्निव्याप्यसाध्यकस्थले वह्न्यभावे हेतुसामानाधिकरण्यवारणाय प्रतिबन्धकतानिवेशः।

अथ घटाभावादेरपि वह्न्यभाववत्त्वादिना ज्ञानस्य वह्निमत्ताज्ञानविरोधित्वात् घटाभावादिसामानाधिकरण्येऽपि वह्न्यादिसाध्यके व्यभिचारः स्यात्, साध्यवत्ताज्ञानविरोधितावच्छेदकीभूतविषयतानिरूपितहेतुसामानाधिकरण्याभावविषयताशालिग्रहाविरोधितानिवेशे त्वसम्भवः—धर्मितावच्छेदकावच्छिन्नविषयतानिरूपितसाध्याभावप्रकारताया एव साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकतया साध्याभावो न हेतुसामानाधिकरण इति ज्ञानीयसाध्याभावविषयताया अतथात्वादिति चेन्न।

फलीभूतज्ञानधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिनिश्चयत्वेन तद्धर्मावच्छिन्नविशेष्यकसाध्यवत्ताज्ञानप्रतिबन्धकता तद्रूपावच्छिन्नाभावे हेतुसामानाधिकरण्यग्रहविरोधितानिवेशेनातिप्रसङ्गाभावात् साध्याभावत्वादेरेव तादृशरूपत्वात्। काञ्चनमयधूमवान् वह्नेरित्यादौ धूमो न काञ्चनमय इति ज्ञानस्यापि साध्यतावच्छेदकविशिष्टसाध्यवत्ताज्ञानविरोधित्वात् काञ्चनमयत्वाभावसामानाधिकरण्येऽतिप्रसङ्गः। साध्यतावच्छेदकविशिष्टसाध्यवत्ताज्ञानत्वेन यद्रूपावच्छिन्नप्रकारकनिश्चयप्रतिबध्यतेत्युक्तौ तत्र विशेष्य धूमाभावसामानाधिकरण्यासङ्ग्रहः—धूमत्वावच्छिन्नाभावनिश्चयप्रतिबध्यतावच्छेदककोटौ काञ्चनमयत्वविषयताया अनिवेशात्। यत्किञ्चिद्धर्मावच्छिन्नविशेष्यताकविशिष्टसाध्यवत्ताज्ञानत्वव्यापकप्रतिबध्यतानिवेशे च धूमो  काञ्चनमय इति ज्ञानप्रतिबध्यतायाः काञ्चनमयत्वविशिष्टधूमादिमत्ताज्ञानत्वव्यापकतया उक्तातिप्रसङ्गस्य दुर्वारतेत्यत फलीभूतज्ञानधर्मितावच्छेदकावच्छिन्नविशेष्यतानिवेशः। यद्यपि धूमत्वादेरपि काञ्चनमयत्वादिविशिष्टधूमादिमत्ताज्ञानधर्मितावच्छेदकत्वमक्षतमेव—काञ्चनमयधूमवान् धूम इत्येतादृशज्ञानस्यापि कदाचिदुत्पादात्, तथापि विशिष्टसाध्यवत्ताविज्ञानधर्मितावच्छेदको यो यो धर्मस्तत्तद्धर्मावच्छि-

न्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताः तद्धर्मावच्छिन्नविशेष्यकविशिष्टसाध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदिकाः तद्रूपावच्छिन्नस्यस्य विवक्षितत्वान्नातिप्रसङ्गः। हेत्वसामानाधिकरण्यविषयतानिरूपितसाध्यवत्ताधीविरोधितावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयतायाः स्वरूपसम्बन्धरूपं प्रतिबध्यतावच्छेदकत्वमेव निवेश्यम् न स्वनतिरिक्तवृत्तित्वम्, तेनान्योन्याभावघटितव्यभिचारधियोऽत्यन्ताभावघटितव्यभिचारधियश्च प्रत्येकप्रतिबध्यतायास्तादृशविषयितात्वावच्छिन्नव्यापकताविरहेऽपि न क्षतिः। अत एव साधनाप्रसिध्यादावपि नातिप्रसङ्गः—साध्याभावादिविषयतायास्तत्प्रतिबध्यतावच्छेदककोटावनिवेशात्। हेत्वसामानाधिकरण्यविषयतायां च धर्मितावच्छेदकताभिन्नत्वमुपलक्षणविधया निवेश्यम्, तेन धूमासमानाधिकरणवह्न्यभावो न घटसमानाधिकरण इति ज्ञानविरोधिनि धूमासमानाधिकरणवह्न्यभावादौ घटादिसामानाधिकरण्ये नातिप्रसङ्गः।

साध्याभावव्याप्यसाध्याभावावच्छेदकादिसामानाधिकरण्यवारणाय दर्शितप्रकारापेक्षया लघुप्रकारान्तरमाह साध्यवत्तेति। तादृशाभावेति। हेतुसामानाधिकरण्याभाववत्यर्थः। हेत्वाभासतेति। दोषतेत्यर्थः। विशेष्यदलप्रयोजनं स्फुटयति साध्याभावेति। अविरोधित्वात्—अनुमितिजनकज्ञानाविरोधित्वात्। अत्र च प्रकृतानुमितिजनकज्ञानविरोधित्वमेवाभासत्वम्, न तु बाधादिसाधारणगुरुशरीरानुमितिसाधारणैकानुगमकप्रकारघटितं तत्प्रयोजनाभावात्। अनुमितिजनकज्ञानस्यापि अनुमितिजनकतावच्छेदककोटिप्रविष्टविषयतावच्छिन्नत्वेन निवेशः, न तु विशिष्टपक्षे विशिष्टसाध्यव्याप्यविशिष्टहेतुवैशिष्ट्यावगाहिज्ञानत्वेन, तथा सत्यत्यन्तान्योन्याभावघटितनानाव्याप्तीनामननुगमेन तादृशनानाविधव्यभिचारसद्ग्रहासम्भवाच्चाबध्याप्यवगाहिसमूहालम्बनानुमितिनिवेशेन तत्सद्ग्रहसम्भवेपि पक्षधर्मत्वावगाहितायाः प्रयोजनाविरहेण निवेशाप्रसङ्गेन तादृशाभावग्रहविरोधित्वविशेषणवैयर्थ्याच्च॥

नन्वेतत्कल्पे धूमाभावव्याप्यासमानाधिकरणवह्निमान् वह्नेरित्यादौ वह्निनिष्ठधूमाभावव्याप्यसामानाधिकरण्यरूपाश्रयासिद्ध्यादावतिव्याप्तिरित्यत आह विरोधित्वमिति। पूर्वोक्तरीत्येति। विशि-

एपक्षग्रहाद्यविरोधिज्ञानस्य विषयतयेत्यर्थः ।

यत्तु धूमवान् धूमाभावसमानाधिकरणवन्हेरित्यादौ हेतुतावच्छेदकधूमाद्यभावसामानाधिकरण्यादिविशिष्टवन्हिसामानाधिकरण्यस्य धूमाद्यभावेऽनाहार्यज्ञानाप्रसिद्ध्या तत्स्थलीयसाधारण्येऽव्याप्तिरित्याशङ्कया विरोधित्वमित्यादिकमवतार्य निर्धूमो वह्निमानित्यादिस्थलीयदोषे सामान्यलक्षणाव्याप्तिवारकपूर्वोक्तप्रकारानुसरणपरतया तद्व्याख्यानम् ।

तदशोभनम्-पूर्वमपाविधैव रीतिः उत्तरत्र सर्वत्र सव्यभिचाराविलक्षणेऽनुसर्तव्या इत्यभिधानेनैव पौनरुक्त्यापातात्, न-वव्यभिचारित्वविशिष्टसामानाधिकरण्याभावस्याव्यभिचारज्ञानाविरोधित्वादव्याप्तिरित्याशङ्कां तस्यालक्ष्यतामङ्गीकृत्य परिहरति उपदर्शितेति । व्याप्तिग्रहे सव्यसाधारणव्यभिचारधियो विरोधित्वात् ज्ञानत्वेन प्रतिबन्धकत्वमेव लक्षणे प्रवेश्यम्, अतो न साधनाप्रसिद्ध्याद्यव्याप्तिः । तस्तपां निश्चयस्यैव विशिष्टसाधनादिग्रहे विरोधित्वादित्याशयेन विशिष्टसाधनवत्त्वादिग्रहाविरोधित्वमनिवेश्य लक्षणं कुर्वतां मतमाह व्याप्तिग्रहेति । अत्र व्याप्तिग्रहकारणत्वमेवाभावे निवेश्यम्, न तु तादृशसहचारदर्शनसहकारित्वमव्यावर्तकत्वात् । तदभिधानं च सहचारदर्शनस्य यथा व्यापकताप्रत्यक्षे स्वातन्त्र्येण कारणता तादृशी या सव्यसाधारणज्ञानाभावकारणता सैवात्र निवेश्या न तु ग्राह्याभाववनिश्चयाभावविधया कारणतेति प्रदर्शनाय । व्याप्तिश्च विशिष्यैकैवोपादेया । मणिमन्त्रादिन्यायेन प्रतिबन्धकतामते एकैकविधव्याप्तिज्ञानं प्रत्यपि नानाविधव्यभिचारधियो विरोधित्वादित्यवधेयम् । मणिमन्त्रादिन्यायेन विरोधितायामस्वरसात् केचिदित्युक्तम् ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचितायां गादाधर्यां साधारणप्रकरणम् ।

अथानुमानगादाधर्याम्

# असाधारणप्रकरणम् ।

( चि० ) सर्वसपक्षविपक्षव्यावृत्तोऽसाधारणः । ननु सपक्षत्वं न साध्यवन्मात्रत्वम्, विपक्षावृत्तेर्वृत्तिमतः साध्यवद्वृत्तित्वनियमात् । नापि पक्षातिरिक्तसाध्यवत्त्वम्, शब्दोऽनित्यः शब्दत्वादित्यादेर्व्याप्तिधीदशायामप्यसाधारणतापत्तेः । न चेष्टापत्तिः, बाधप्रतिरोधौ विना व्याप्तिपक्षधर्मतया ज्ञातादनुमितिनियमादिति चेन्न । सर्वनिश्चितसाध्यवद्विपक्षव्यावृत्तत्वस्य तत्त्वात्, शब्दत्वानित्यत्वव्याप्तिग्रहे सति शब्दे साध्यनिश्चयान्नातिव्याप्तिः । न च घटाऽप्रमेतत्वादिति सद्धेतावतिव्याप्तिः, साध्यसन्देहदशायां तस्य हेत्वाभासत्वात् । यद्यपि भूर्नित्या गन्धवत्त्वादित्यादिर्वस्तुतः साधारणः, शब्दो नित्यः शब्दत्वादिति विरुद्धः, शब्दोऽनित्यः शब्दत्वादित्यादिः सद्धेतुरेव, व्याप्त्यज्ञानस्य पुरुषदोषत्वादित्युदाहरणाभावादसाधारणो न पृथक् । तथापि पक्षतादशायां साध्यतदभावानिश्चयेन तस्य दोषत्वम्, अन्यथा पक्षत्वभङ्गप्रसङ्गात् ।

( दी० ) प्राचां मतेनोत्तरयति न सर्वेत्यादि । सर्वेति विपक्षेऽप्यन्वेति, तेन साध्याभावन्यूनवृत्तेर्व्युदासः । विपक्षत्वस्य निश्चयगर्भत्वात् भूरनित्या गन्धवत्त्वात् नित्यः शब्दः शब्दत्वादित्यादौ नाव्याप्तिः । पृथिवी रूपवती रसादित्यादौ जलादेर्नीरसत्वभ्रमे पुनरसाधारण्यभ्रम एवेति मन्तव्यम् । तथापीति । पक्षत्वं-सन्दिग्धसाध्यकत्वम् ।

(गा०) ननु चिन्तामणिकारमते सत्प्रतिपक्षस्योत्थापकतया असाधारण्यस्य दूषकत्वात् साध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यमिति न सर्वेत्यादिग्रन्थासङ्गतिरित्यत आह प्राञ्चामिति। साध्याभाववन्न्यूनवृत्तेरिति। पर्वतो वह्निमान् जलत्वादित्यादेरित्यर्थः। तथापि घटादिरूपस्य कस्यचिद्विपक्षव्यावृत्तत्वसत्त्वादिति भावः। ननु भूरनित्या गन्धवत्त्वादित्यादौ पार्थिवपरमाणुरूपविपक्षवृत्तित्वादव्याप्तिरिति विपक्षपदस्य वास्तवसाध्याभाववदर्थकत्वाभिमानमूलामाशङ्कां निराकरोति विपक्षत्वस्येति। ननु पृथिवी रूपवती रसादित्यादिक जलादेः नीरसत्वभ्रमदशायामसाधारणमेव, सपक्षजलादिव्यावृत्तत्वस्य तदानीं हेतौ ग्रहादिति तत्राव्याप्तिर्वास्तवसपक्षजलादिव्यावृत्तत्वासत्त्वादित्याशंकामलक्ष्यतया परिहरति पृथिवीति।

मूले तथापीति। तथापि शब्दे अनित्यत्वनित्यत्वयोः साध्यतायां शब्दत्वस्य सद्धेतुत्वविरुद्धत्वेऽपि। साध्यवदभावेति। हेतुमति पक्षे साध्यानिश्चयेन व्याप्तिग्रहाभावात्सद्धेतावपि तत्र साध्याभावानिर्णयेन साध्याभावव्याप्यत्वरूपविरोधस्याग्रहेण विरुद्धहेतावप्यसाधारण्यदोषत्वं युक्तमेवेत्यर्थः। अन्यथा—तदानीमपि साध्यतदभावान्यतरनिश्चये।

ननु सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतायाः साध्यनिश्चयदशायामपि सिषाधयिषासत्त्वे बाधनिश्चयदशायामपि चाक्षतत्वात् तत्र प्रसङ्ग इत्यत आह दीधितौ पक्षत्वमिति।

(चि०) अथ सर्वसपक्षव्यावृत्तिरेव दोषो न विपक्षव्यावृत्तिरपि, तस्या अनुगुणत्वात् प्रत्युत विपक्षव्यावृत्तत्वेन व्यतिरेकितया परसाध्यसाधकमेवापन्यस्तं स्यात्। न च संशायकतया दोषत्वं सपक्षोभयव्यावृत्तत्वज्ञानादिति वाच्यम्। व्याप्तिग्राहकं सहचारज्ञानं (१)तदभावद्वारेण सपक्षव्यावृत्तिमात्रस्य दोषत्वात्।

(दी०) एवं दूषयति अथेत्यादि। व्याप्तीति। तथाच स्वतो दूषणाक्षमत्वात्तत्राभासत्वम् उपाधित्वमिति भावः। एकध-

(१) तदभावद्वारेणेति गदाधरभट्टाचार्याभिमतः पाठः किन्तूपलब्धचिन्तामणिपुस्तकेषु सर्वत्रायमेवोपलभ्यत इति न धृतः॥

यिव्यावृत्तत्वञ्च न सामानाधिकरण्यग्रहविरोधि धर्म्यन्तरे तत्सम्भवात्, अन्यथा सतोरपि साध्यसाधनयोर्व्यतिरेकित्वं दोषाय स्यात् ।

अथायं शङ्कितुरभिप्रायः—पक्षे साध्याभावस्य संशयो निश्चयश्चानुमितिविरोधी विरोधिविषयकत्वात्, तत्सामग्री च विरोधिसामग्रीत्वेन, तत्रादिमस्य सामग्रीपक्षे सव्यभिचारस्य हेतोर्ग्रहः द्वितीयस्य तु प्रतिहेतोः परामर्शः अतस्तयोराभासत्वम् । अत एव सव्यभिचारलक्षणे पक्षवृत्तित्वं विशेषणम् साध्याभाववद्वृत्तित्वमात्रं पुनरसिद्धिरेवेति विरोधान्यस्य परामर्शविरोधिनो रूपस्य तत्त्वादिति ।

नैवम् । बाधसंशयस्य प्रतिबन्धकत्वानङ्गीकारात् साधारणधर्मवत्ताज्ञानस्य संशयसामग्रीत्वाभावात् सामग्रीत्वेन प्रतिबन्धकत्वे हेत्वाभासत्वायोगाच्च । अन्यथा पक्षस्य साध्यतदभाववद्वृत्तिप्रमेयत्वादिमत्त्वं सर्वत्र हेत्वाभासीभवेत्, तथा कामिनीजिज्ञासाप्रयोजकं तज्ज्ञानेष्टसाधनत्वादिकमपि ॥

( गा० ) मणिकारमते विपक्षव्यावृत्तेरसाधारण्याघटकतया तन्मते अथेत्यादिना तस्याद्दूषणोपयोगितानिराकरणमसंगतम् इति तद्घटितासाधारण्यवादिप्राचीनमतदूषणपरतया तत्सङ्गमयति प्राचामिति । प्राचामित्यादि ।

मूले दोष इति । दोषविधयोद्भाव्य इत्यर्थः । तस्या—विपक्षव्यावृत्तेः, अनुगुणत्वात्—प्रकृतसाध्यसिद्ध्यप्रतिकूलोद्भावनकत्वात्, प्रत्युत विपक्षव्यावृत्तत्वेनोपन्यस्त लिङ्ग व्यतिरेकिमुद्रया प्रकृतसाध्यसाधकमेव स्यात्, तथाच परार्थस्थलेऽपि विपक्षव्यावृत्त्यसहितं सपक्षव्यावृत्तत्वमनुद्भाव्यत्वेन नासाधारण्यदोष इति भाव. ।

केवलसपक्षव्यावृत्तत्वं कोटिद्वयानुपस्थापकत्वेन न साध्यसंशायकं किन्तु मिलितमेवेति दोषतया मिलितमेवोद्भाव्यमित्याशङ्कते नचेति । सशायकमसाधारण्य यद्यपि विपक्षव्यावृत्त्यघटितम्

तथापि तादृशस्य दोषत्वं नोपपद्यते विरोधिज्ञानविषयस्यैव दोष-
त्वात् विपक्षव्यावृत्तत्वाज्ञानस्य चाविरोधित्वादित्याशयेनाह
व्याप्तीत्यादि । तदभावद्वारेण—तदभावप्रयोजकज्ञानविषयतयैवान्यद्वा-
रेणानुमितितज्जनकज्ञाने साक्षाद्विरोधिविषयत्वं व्यवच्छिद्य । त-
द्व्यवच्छेदफलं दीधितिकृदेव स्फुटयति तथाचेति । स्वतो दूषणाक्षम-
त्वात्—अनुमितौ तत्कारणज्ञाने च साक्षादविरोधित्वात्, नाभासत्व-
सपक्षव्यावृत्तत्वस्यापि न हेत्वाभासत्वम् । एतेन विपक्षव्यावृत्तत्वस्य
दूषणानुपयोगित्वे तदंशापरित्यागेनैव हेत्वाभासता स्वीकार्येति नि-
राकृतम् । एवं च स्वार्थानुमानेऽपि सर्वं सपक्षव्यावृत्तिरेव दोष इत्युक्त-
मित्यपि समूलस्यापि स्वार्थानुमानेऽपि विपक्षव्यावृत्तदूषणतोपयि-
कत्व सपक्षव्यावृत्तत्वस्य सहचारधीविरोधितया तथात्वेऽपि न हे-
त्वाभासत्वमित्युक्तमित्यर्थो बोध्यः ।

नन्वु सहचारग्रहविरोधित्वे व्याप्ते सहचारघटिततया तद्ग्रहेऽपि
साक्षाद्विरोधित्वमेव तस्येति न कथं हेत्वाभासत्वमित्याशङ्कां परिह-
रति पक्षधर्मिव्यावृत्तत्व चेति । निश्चितसाध्यवद्वृत्तित्वाभाव-
श्चेत्यर्थः । सामानाधिकरण्येति । साध्यवद्वृत्तित्वसामान्येत्यर्थः । अ-
र्थान्तरे—साध्यवद्व्यक्त्यन्तरमन्तर्भाव्य, तत्सम्भवात्—साध्यसामा-
नाधिकरण्यग्रहोदयात् । इदमुपलक्षणम् । साध्यवत्स्वरूपसामान्यध-
र्मपुरस्कारेण तद्धर्मिणमन्तर्भाव्यापि तत्सम्भवो द्रष्टव्यः । तथा च त-
त्तद्धर्मिव्यावृत्तत्वरूपविशेषाभावग्रहस्य प्रत्येकं साध्यसामानाधिक-
रण्यसामान्यग्रहाविरोधित्वे तादृशविशेषाभावकूटात्मकासाधारण्य-
ग्रहस्यापि तदविरोधित्वात् तस्य सामानाधिकरण्यसामान्यघटित-
व्याप्तिज्ञाने साक्षाद्विरोधित्वमिति भावः । अन्यथा—यत्किञ्चिदधि-
करणान्तर्भावेन सामानाधिकरण्यग्रहविरोधिनोऽपि दोषत्वे, सतो—
समीचीनयोः साध्यसाधनयोः वह्निधूमयोः, व्यतिरेकित्व—ह्रदाद्य-
वृत्तित्वम् । दोषाय स्यादिति । तस्यापि ह्रदाद्यन्तर्भावेन सहचारग्रह-
विरोधित्वादिति भावः ।

सहायकतया विपक्षव्यावृत्तत्वघटितासाधारण्यस्य दोषत्वं श-
ङ्कितुः सहायकज्ञानस्यानुमितिं प्रति साक्षात्प्रतिबन्धकत्वमभिप्रेतम्,
अन्यथा शङ्काया अतितुच्छतापत्तेः, तादृशगूढाभिप्रायमनुक्त्वैव च
'व्याप्तिग्राहक'मित्यादिना तादृशस्य दोषतां मूलकारो निराकार्षीदतो

त्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशत्वमेव हेत्वाभासत्वम् प्रतिबन्धकसामग्रीघटकज्ञानविषयसाधारण्यादिश्च न तथा विशेषदर्शनादिकालीने अप्रतिबन्धकीभूतज्ञानेऽपि तद्विषयकनिश्चयत्वसत्त्वादिति भावः । अन्यथा—यथाकथंचिल्लक्षणं परिष्कृत्य प्रतिबन्धकसामग्रीघटकज्ञानविषयस्य हेत्वाभासत्वोपपादने, मेयत्वादिहेतौ साध्यतदभावसहचरितमेयत्ववान् पक्ष इत्यादिज्ञानविषयस्य दोषतया इष्टत्वात् । सधर्मेति । तथा च धूमादिहेतौ तस्यादोषत्वेन नेष्टापत्तिसम्भव इति भावः । आभासीभवेदिति । धूमादिहेतुकानुमितावपि तज्ज्ञानस्य संशयसामग्रीत्वेन प्रतिबन्धकत्वादिति भावः । विरोधिज्ञानसामग्रीविधया यज्ज्ञानं प्रतिबन्धकं तदाभासतामापाद्य विरोधिजिज्ञासासामग्रीविधया प्रतिबन्धकस्य विषये तामापादयति तथेति । प्रयोजकत्वं-जनकज्ञानविषयत्वम् ॥

(चि०) किञ्च शब्दोऽनित्यः शब्दत्वादित्युक्त्वा निवृत्ते तावन्नेदमुद्भाव्यं न्यूनत्वेनैव वादिनिग्रहात् तदुद्भावने वादिनिवृत्तेश्च । न च न्यूनत्वे तदुपजीव्यम्, असाधारण्यव्यतिरेकेणापि तदुद्भावनात् । न च व्यतिरेकिप्रयोगे तदुपन्यासः, व्याप्तिपक्षतयोरप्रतिक्षेपेऽकिञ्चित्करत्वात् स्वार्थानुमाने च सर्वसपक्षव्यावृत्तिरेव दोष इत्युक्तमिति ॥

(दी०) एवं विशिष्टस्यानुद्भाव्यत्वं व्युत्पाद्य केवलस्यापि सपक्षव्यावृत्तत्वस्य तथात्वं व्युत्पादयति, किञ्चेति । वाद्युपदर्शितदृष्टान्तस्य साधनवैकल्यन्तु नासाधारण्यम्, सपक्षान्तरवृत्तित्वेऽपि तत्सम्भवात् । तदुद्भावनन्तु तस्य निग्रहस्थानत्वात्, विभाजकसूत्रस्थानुक्तसमुच्चायकचकारेण तस्य समुच्चितत्वात् तदुदाहरणस्याभासतामदर्शनायैव वा, आवश्यकश्च प्राचां दृष्टान्तप्रयोग इति भावः । माभूत् परार्थानुमानेऽसाधारण्यं दोषः स्वार्थे तु स्यादत आह स्वार्थेति ।

(ग०) विपक्षव्यावृत्तत्वस्य व्याप्तिपक्षधर्मताग्रहाविरोधित्वेना- नुद्भावनीयतायाः प्रागेव व्यवस्थापितत्वात् किञ्चेत्यादिग्रन्थस्य त- त्परत्वं न घटते पौनरुक्त्यप्रसङ्गात् । न च पूर्वं अन्वयिनि दृष्टान्तास- म्भवेन न्यूनताया आवश्यकतया न तदुद्भावनं निराकृतमिति न पौनरुक्त्यप्रसङ्ग इति वाच्यम् । एवमपि व्यतिरेकिणि व्याप्तिपक्षधर्म- त्वाप्रतिक्षेपकतया तदुद्भावननिराकरणपौनरुक्त्यस्य दुर्वारत्वादि- त्यतः केवलसपक्षव्यावृत्त्युद्भावननिराकरणपरतया किञ्चेत्यादिमूल- मवतारयति एवमिति । एवं-उक्तप्रकारेण, विशिष्टस्य-विपक्षव्या- वृत्तत्वविशिष्टस्य । ननु साधनविकलस्यापि घटादेः विशेषादर्शन- दशायामिव विशेषदर्शनदशायामप्याहार्यसाधनवत्त्वभ्रमाद्विना दृ- ष्टान्तविधया उपन्यासः सम्भवत्येवेति तत्र न्यूनताविरहेणासाधा- रण्योद्भावनसार्थक्यम्, न च तत्र दृष्टान्तस्य साधनवैकल्योद्भावने- नैव वादिनिवृत्तिसम्भवादसाधारण्यस्य दोषत्वमनावश्यकमिति वाच्यम्, दृष्टान्तस्य निश्चितसाध्यवत्- साधनवैकल्यस्यैवासाधार- ण्यत्वादित्याशङ्कां निरस्यति वाद्युपदर्शितेति । यावन्निश्चितसाध्यव- ति साधनवैकल्यमसाधारण्यमेवेति वाद्युपदर्शितत्वाभिधान एक- देशे साधनवैकल्यस्य यावति साधनवैकल्यानतिरिक्ततया तस्यास- धारण्यत्वनिषेधासङ्गतेस्तदुद्भावनपर्यन्तमसाधारण्योद्भावनत्वप्रति- षेधः । सपक्षान्तरवृत्तित्वेपीति । हेतोरिति शेषः । तत्सम्भवत्-वाद्यु- पदर्शितस्य दृष्टान्तस्य, साधनवैकल्यसम्भवात् । नन्वेवं दृष्टान्तस्य साधनवैकल्यं हेत्वाभासबहिर्भूततया क्वापि नोद्भाव्येतेत्यत आह त- दुद्भावन इयति । ननु 'प्रतिज्ञाहानिः प्रतिज्ञान्तर'मित्यादिनिग्रह- स्थानविभाजकसूत्रेऽस्यागणनान्न निग्रहस्थानतेत्यत आह वि- भाजकेति । आभासताप्रदर्शनायैव तदुद्भावनमित्यनुषङ्गेनान्वयः । आभासता-प्राथितसाधनवत्त्वार्थकता, सा चापार्थकत्वरूपनिग्रह- स्थानमिति भावः ननु यथा घट इत्यादि दृष्टान्तप्रयोगस्य समयबन्धा- धीनत्वेनानियतत्वात् यत्र तद्भिन्नमेवोदाहरणं प्रयुक्तं तत्रासाधारण्य- मुद्भावनीयमित्यत आह आवश्यकञ्चेति । तथाच तदप्रयोगे न्यून- त्वमेवेति भावः ॥

इति गादाधर्यामसाधारणपूर्वपक्षग्रन्थः ॥



(चि०) उच्यते। शब्दत्वं साध्यवतस्तदभाववतश्च निवृत्तत्वेन ज्ञातमर्थाद्व्यतिरेकितया वा पक्षे साध्यं तदभावञ्च साधयेत्-अविशेषात्, अन्यथा पक्षवृत्तित्वानुपपत्तिरिति साध्यतदभावोत्थापकतया स्वार्थानुमानेऽसाधारणो दोषः। सत्प्रतिपक्षे द्वौ हेतू तथा, अत्र त्वेक एवेति तयोर्भेदः। असाधारणेन व्यतिरेकिप्रयोगे परस्य सर्वसपक्षव्यावृत्तत्वम्। तदुद्भाव्यं साध्याभावोत्थापकत्वात्, न विपक्षव्यावृत्तत्वमपि प्रतिकूलत्वात् व्यर्थत्वाच्च।

यद्वा विपक्षव्यावृत्ततया साध्यमिव सपक्षव्यावृत्ततया साध्याभावमपि साधयेदिति दृष्टान्ततया प्रतिपन्थितया वा तदुद्भावनमपि। लक्षणन्तु सर्वसपक्षव्यावृत्तत्वम् न तु विपक्षव्यावृत्तत्वमपि व्यर्थविशेषणत्वात्। विरुद्धमप्यनेनोपाधिनाऽसाधारणमेव। अन्यथैतदवगमे विरुद्धत्वाज्ञाने हेत्वाभासान्तरतापत्तेः॥

इत्यसाधारणचिन्तामणिः॥

---

(दी०) स्वमते सिद्धान्तमुपक्रमते उच्यत इति। अर्थादिति। व्यतिरेकिमुद्रया अर्थादुभयं साधयेत्, अर्थतश्शसम्बद्धमेवोभयसाधकत्वम् उभयसिद्ध्यनुकूलव्याप्त्यादिग्रहादित्यर्थः। व्यतिरेकितया वेति पाठे अर्थात् अर्थापत्तिविधयेति परमतेन। एवञ्च पक्षधर्मतया ज्ञायमानो हेतुः साध्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानात् साध्यस्य साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानाच्च

साध्याभावस्य साधनायोन्मुखो मिथो विरोधेन नैकमपि साधयति। न च शब्दे नित्यत्वानित्यत्वसन्देहे तदुभयव्यापकत्वं शब्दत्वाभावस्य ग्रहीतुमशक्यम्—व्यापकत्वाभिमतशब्दत्वाभावाभावच्छब्दवृत्तित्वस्य नित्यत्वानित्यत्वयोः सन्दिह्यमानत्वादिति वाच्यम्। तथात्वेऽपि तादृशसंशयाभावदशायां तथात्वनिश्चये तदुभयव्यापकीभूताभावप्रतियोगिशब्दत्ववत्त्वस्य शब्दे प्रतिसन्धातुं शक्यत्वात्। स्वाश्रयप्रतीत्यैव प्रतीतस्य सौरभादेरभावस्य पानीयपाषाणादौ पृथिवीत्वतदभावसहचारेण तदुभयव्यापकताग्रहे तादृशाभावप्रतियोगिसौरभस्य चन्दनादौ परामर्शे पृथिवीत्वादौ साध्ये तदसाधारण्यस्यातिसुलभत्वाच्च।

नन्वेष सत्प्रतिपक्ष एव व्याप्तरन्वयनिरूप्यत्वस्याव्यापकत्वेनाप्रयोजकत्वादित्यत आह सत्प्रतिपक्ष इति। न चैवंविधभेदेन पृथगभिधानेऽतिप्रसङ्गः, स्वतन्त्रेच्छाया इत्यादेर्ग्रन्थकृतैवाभिधानात् तदभावसाधके तत्साधकत्वभ्रमरूपाशक्तिविशेषसूचनार्थत्वाच्च।

सत्प्रतिपक्षसव्यभिचारोभयलक्षणाक्रान्ततया उभयान्तर्भावस्याविरुद्धत्वादित्यपि कश्चित्।

सर्वसपक्षेति। सपक्षः—साध्यवान्, पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वमित्यर्थः, इदञ्च साक्षादनुमितिविरोधि, विरोधश्च साध्यासामानाधिकरण्यादिरूपोऽन्वयव्याप्तिग्रहविरोधीति न साङ्कर्यशङ्कापि। साध्यसामानाधिकरण्यन्तु नासाधारणम्। दशाविशेषे तद्भ्रमस्तु पुरुषदोषो व्याप्य इव साधारण्यभ्रमः।

( गा० ) मूले ज्ञातमित्यस्य पक्ष इत्यादि। व्यतिरेकितयेत्यनन्तर घाकारासत्त्वे अर्थादित्यस्यार्थापत्तिविषयेत्यर्थो न सगच्छते अर्थापत्तिव्यतिरेक्यनुमानोभयविधया साधकत्वस्यैकमतेऽसम्भवादित्यत्र अन्यथा तत्राचष्टे अर्थादितीति। व्यतिरेकित्वे अर्थाधीनत्वान्वयत्वम

यस्वीकारे व्याप्तिज्ञानाविरोधित्वघटितत्वव्याख्यातृवृत्तसाधारण्यसङ्ग्राहकसव्यभिचारसामान्यलक्षणस्यैव सम्भवेन प्रयासेन समूहालम्बनानुमितिविरोधिताघटिततत्साधारणसव्यभिचारसामान्यलक्षणकरणस्य निर्युक्तिकतया तस्य सव्यभिचारान्तर्भावासम्भवात् ।

सपक्षपदस्य निश्चयगर्भत्वे काथे सत्प्रतिपक्षोत्थापकता न सम्भवति व्याप्तेर्ज्ञानागर्भत्वादित्यतस्तद्व्याचष्टे सपक्ष इति । पक्षवृत्तित्वाविशेषितस्य हेतौ केवलसाध्यव्यापकीभूताभावप्रतियोगित्वस्य पक्षधर्मिवृत्तित्वं हेतोश्चेत् इत्यादिरीत्या सव्यभिचारसामान्यलक्षणाक्रान्तत्वेऽपि अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकत्वाभावेन न हेत्वाभाससामान्यलक्षणाक्रान्तत्वम् । अनुमितिविरोधिताशून्यपक्षधर्मताज्ञानकालीनज्ञानावृत्तिविषयिताकत्वरूपं प्रतिबन्धकतानतिरिक्तवृत्तित्वं सामान्यलक्षणे निवेश्य हेत्वाभाससामान्यलक्षणाक्रान्तत्वसम्पादनसम्भवेऽपि तादृशमते गौरवमतोऽसाधारण्यशरीरे पक्षवृत्तित्वमन्तर्भावयति पक्षवृत्तित्वे सतीति । यद्यपि सव्यभिचारसामान्यलक्षणस्य पक्षधर्मिवृत्तित्वमित्यादिना बाधादिसाधारण्यवारणप्रकारो न सम्भवति पक्षवृत्तित्वघटितासाधारण्यस्यापि धर्मविशेषानियम्यत्वात्, तादृशरीत्यादरे निरुक्तासाधारण्यस्यैवासङ्ग्रहापत्तेः, तथापि प्रकृतपक्षतावच्छेदकविशिष्टे प्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिप्रकृतहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञाननिरूपिता या निरुक्तासाधारण्यविषयकत्वानवच्छिन्नप्रतिबन्धकता तच्छून्यत्वे सति समूहालम्बनानुमितिविरोधित्वस्य बाधप्रतिरोधव्यावृत्तस्य निरुक्तासाधारण्यसाधारणस्य सव्यभिचारसामान्यलक्षणत्वसम्भवात् ।

ननु साध्यवद्व्यावृत्तत्वं यदि तद्वदवृत्तित्वं तदा शब्दो नित्यः श्रोत्रग्राह्यत्वे सति गुणत्वादित्यादौ विशिष्टस्य गुणत्वादेः केवलानतिरिक्ततया नित्यत्ववद्वृत्तित्वं नोपपद्यते इत्यव्याप्तिः, एवं साध्यवद्वृत्तित्वं सामानाधिकरण्यग्रहविरोधितया व्याप्तिग्रहविरोध्येव इति न सत्प्रतिपक्षोत्थापकमतो व्याचष्टे साध्यव्यापकेति । विरोधरूपोपाधेः साध्याभावव्याप्यतारूपत्वे सोऽपि साध्यव्यापकीभूताभावप्रतियोगित्वमिति सङ्कर इत्याशङ्कां निराकरोति 'साध्यासामानाधिकरण्या'दीति । हेतुनिष्ठसाध्यासामानाधिकरण्यादीत्यर्थः । आदिना साध्यनि-

ष्टहेतुसामानाधिकरण्यपरिग्रहः। नन्वेवं विरोधस्य विरोधिविषयत्वेनानुमित्यविरोधितया न दोषता स्यादित्यत आहान्वयव्याप्तीति। साध्यहेतुसामानाधिकरण्यघटितव्याप्तीत्यर्थः। पक्षवृत्तित्वप्रवेशानिवेशाभ्यामपि भेदसम्भवात् शङ्कापीत्युक्तम्। शब्दोऽनित्यः शब्दत्वादित्यादौ वास्तवसाध्यव्याप्यवृत्तित्वाभावेनाव्याप्तिशङ्कामलक्ष्यतया परिहरति साध्यसामानाधिकरण्यं त्विति।

ननु दर्शितस्थलेऽपि दशाविशेषेऽसाधारण्यज्ञानेनानुमित्यनुत्पादाद्धेतोर्दुष्टताया आवश्यकत्वे कथमलक्ष्यत्वमित्यत आह दशाविशेष इति। तद्भ्रमः—असाधारण्यभ्रमः, पुरुषदोष एव न तु तत्र हेतोर्दुष्टतेत्यर्थः। प्रतिबन्दिसूचनाय दृष्टान्तमाह व्याप्य इवेति॥

(दी०) नवीनाः पुनरेवं वर्णयन्ति। सामग्रीद्वयविरोधेन हेत्वभावस्य साध्यतदभावव्यापकताग्रहविरोधोऽसाधारणस्य दूषकताबीजम् तथाहि—वृत्तिमता हेतुना क्वचिदपि वर्त्तितव्यम् तत्र चावश्यं साध्यतदभावयोरन्यतरेण भवितव्यम्। न च तत्र हेत्वभावः सम्भवति, अतोऽवश्यमन्यतराव्यापकत्वं तस्य, एवंविधविरोधिध्रौव्ये साध्येन तदभावेन च हेत्वभावस्य सहचारज्ञानं नैकतरनिरूपितमपि व्यापकतां ग्राहयति मिथो विरोधात्, विरोधिपरामर्शद्वयमिव साध्यतदभावौ, एवञ्च वृत्तिमत्त्वविशेषितं हेतोर्यावद्विपक्षसपक्षव्यावृत्तत्वं वृत्तिमत्प्रतियोगित्वविशेषितं वा हेत्वभावस्य यावत्सपक्षविपक्षवृत्तित्वमसाधारण्यमिति। योजयन्ति च ग्रन्थमित्थम् शब्दत्वं यदि साध्यतदभाववद्व्यावृत्तत्वेन तदुभयव्यापकीभूताभावप्रतियोगित्वेन ज्ञातं ज्ञानयोग्यं स्यात् तद्वत् स्यादिति यावत्, तदा व्यतिरेकितया तादृशव्यतिरेकप्रतियोगित्वेनार्थात् पक्षे तदुभयं ज्ञापयेत् तदुभयसहचरितं भवेत्, व्यापकाभाववति व्याप्याभावस्यावश्यम्भावात् अन्यथाभावे पक्षधर्मताया व्याप्तेर्वानुपपत्तिः। न च तथाभावः सम्भवति, न वा पक्षवृत्तित्वं बाधितम् अतः साध्यतदभावोभयव्यापकतया तदुभयसिद्धा-

नुकूलविरोधि व्याप्तिद्वयग्राहकव्यतिरेकसहचारद्वयग्रहविषयतया असाधारणो दोषो व्याप्तिद्वयग्रहप्रतिबन्धकः । ननु यदि विरोधिव्याप्तिद्वयं न गृह्यते तदा सत्प्रतिपक्षोच्छेदः गृहीतविरोधिव्याप्तिद्वयहेतुसमुत्थत्वात् तस्येत्यत आह सत्प्रतिपक्ष इति । तत्र हेत्वोर्भिन्नतयाधिकरणभेदेन तथा ग्रहः सम्भवति अत्र पुनरेकस्मिन् हेतौ तदुभयग्रहो विरुद्ध इत्यर्थः ।

( गा० ) मतव्याख्यानमुपन्यस्यति नवीना इति । सामग्रीद्वयविरोधेनेति । हेत्वभावे साध्यतदभावव्यापकताग्राहकसामग्र्योः परस्परजन्यफलप्रतिबन्धकत्वेनेत्यर्थः । ग्रहविरोधात्-ग्रहानुत्पादात्, असाधारणस्य-हेतोः दूषकतायां बीजम् अनुमित्यनुत्पादकतायां बीजम् । व्यापकतयाविरोध एव परस्परग्राहकसामग्र्योः परस्परग्रहप्रतिबन्धकत्वं सम्भवतीति विरोधमेवोपपादयति तथाहीति । क्वचिदधिकरणे वर्तितव्यमिति । वृत्तेरधिकरणनिरूपितत्वनियमादिति भावः । तत्र च-तदधिकरणे च, साध्यतदभावयोरन्यतरेण भवितव्य-स्थातव्यम्, प्रतियोग्यभावयोरेकत्रासत्त्वे अपरसत्त्वनियमादिति भावः । तत्र-अधिकरणे, न हेत्वभावः सम्भवति प्रतियोगिवृत्त्या विरोधादिति भावः । अतो-हेत्वभावस्य तथासत्त्वात्, अन्यतरव्यापकत्व-साध्यव्यापकत्वसाध्याभावव्यापकत्वयोरन्यतरवत्त्वम्, तस्य-हेत्वभावस्य, तयोर्मध्ये हेत्वधिकरणे यस्य स्थितिस्तद्व्यापकतायास्तदभावेऽसम्भवादिति भावः । एवंविधविरोधध्रौव्ये-एतद्रीत्या नित्यत्वतदभावव्यापकतया शब्दत्वाभावादावेकसत्त्वेऽपरासत्त्वनियमे । सहचारज्ञानमिति । व्यापकताग्रहकारणीभूत गगनघटादौ सामानाधिकरण्यज्ञानम् । विरोधिग्रहसामग्र्याः प्रतिबन्धकत्वम् दृष्टान्तेन द्रढयति विरोधीति । साध्यतदभावौ न ग्राहयतीति अनुषङ्गेणान्वयः । अवृत्तिवारणाय वृत्तिमत्त्वविशेषितमिति । सपक्षविपक्षव्यावृत्तेः यावत्सपक्षविपक्षनिष्ठाभावप्रतियोगित्वम्, नतु हेत्वभावत्वरूपेण सहचारज्ञानमेव तत्र रूपेण व्यापकताग्राहकतया व्यापकतान्तरग्रहविरोधीति तद्विषयस्यैव दोषत्वमुचितमित्याशयेनाह वृत्तिमदिति । उभयव्यापकीभूताभावप्रतियोगित्वज्ञानविषयस्य समभावोऽयासमयासहचरितसाधारणमिति नाभ-

यसाहचर्य्यरूपतया व्याख्यायोभयसाधकत्वापादकमतो व्याचष्टे ज्ञातं ज्ञानयोग्यमिति । उभयसाधकत्वे उभयसाहचर्य्यरूपे व्यतिरेक्यनुमानत्वमप्रयोजकमिति व्यतिरेकितयेत्यन्यथा व्याचष्टे व्यतिरेकितयेति । तादृशेति । साध्यतदभावव्यापकीभूतेत्यर्थः । यद्यपि तादृशव्यतिरेकिप्रतियोगित्ववत् स्यात्तदा उभयसहचरितं स्यादित्यत एव तादृशप्रतियोगितया उभयसाहचर्यप्रयोजकत्वं लभ्यते, तथापि आपत्तिमूलभूतव्याप्तिवाक्यप्रदर्शनाय व्यतिरेकितयेति पुनर्मूलेऽभिहितमित्यवधेयम् ।

प्रमेणोभयसाधकत्वस्येष्टत्वादुभयं साधयेदित्यस्यार्थमाह उभयसहचरितं भवेदिति । यद्यपि वृत्तिमत्त्वविशेषितैककोटिव्यापकाभावप्रतियोगित्वस्य वस्तुगत्याऽपरकोटिव्यापकाभावप्रतियोगित्वविरुद्धत्वेऽपि विरोधाप्रतिसन्धानदशायां नैकग्राहकसामग्र्या अपरग्रहविरोधितेति दर्शिततर्कावतारेणैव विरोधिप्रतिसन्धानमसाधारण्यदशायामङ्गीकार्य्यम्, तद्दूषयिष्यति दर्शितरीत्या तदवधारणे चेत्यादिना, तथा च शब्दे नित्यत्वानित्यत्वयोः सन्देहे शब्दत्वतदुभयसाहचर्य्यमपि सान्दिग्धमेवेतीष्टापत्तिदशायां नोक्ततर्कावतारसम्भवः । तदुभयैकाधिकरणवृत्तित्वस्य चाप्रसिद्ध्या नापत्तिसम्भव -अप्रसिद्धस्य व्याप्यवधारणासम्भवात् । एवमुभयव्यापकीभूताभावप्रतियोगित्वमवृत्तौ प्रसिद्धं तत्र नोभयसाहचर्य्यमिति विरोधे एवापाद्यापादकयोः कथमापत्तिः । वृत्तिमत्त्वे सत्युभयव्यापकीभूताभावप्रतियोगित्वं चाप्रसिद्धम् । वृत्तिमत्त्वे सति तत्तत्कोटिव्यापकीभूताभावप्रतियोगित्वेन प्रत्येकं तत्तत्कोट्यभावसाहचर्य्यापत्तौ चेष्टापत्तिशंकाया अनिवृत्तिरिति महदसमञ्जसम् । तथापि जलत्वादौ वृत्तिमत्त्वे सति घटत्वपटत्वाद्युभयव्यापकाभावप्रतियोगित्वतदुभयाभावद्वयसहचारमवधार्य्य सामान्यतः आपाद्यापादकयोर्यत् वृत्तिमत्त्वे सति यदुभयव्यापकाभावप्रतियोगि तत्प्रत्येकं तदुभयाभावद्वयैकाधिकरणवृत्तीति व्याप्तिरवधार्य्यमे ततश्च शब्दत्वादौ वृत्तिमत्त्वानित्यत्वतदभावव्यापकाभावप्रतियोगित्वानामाहार्य्यज्ञाना नित्यत्वतदभावद्वयैकाधिकरणवृत्ति स्यादित्यप्रसिद्धविशेषापत्तिः सुलभैव । सामान्यव्याप्त्यधीनाविशेषानुमिताविव तदधीनविशेषापत्तावपि विशेषप्रसिद्धेरनङ्गत्वात् । न च उक्तापाद्याप्रसिद्धौ प्रतियोग्यप्रसिद्ध्या आपाद्यव्यतिरेकानिश्चयात्स-

म्भवेन नापत्तेरवतारसम्भव इति वाच्यम्। विशिष्टविषयकापत्तौ विशेष्ये विशेषणाभावनिश्चयस्यापि विशिष्टशङ्कानिवर्तकत्वेन हेतुत्वादधिकरणे नित्यत्वानित्यत्वाभावोभयवत्तानिश्चयादेव तादृशापत्तिसम्भवात्। मूले। व्यतिरेकितयेति यद्यापत्तेर्दार्ढ्यं दर्शितं तदेव स्फुटीकरोति व्यापकाभाववतीति। प्रतियोगिनाऽभावाभावत्वात् प्रकृतत्वं बोध्यम्। अन्यथेत्यस्य विवरणं अन्यथाभाव इति। शब्दत्वस्य एकाधिकरणे उभयाभावे सत्त्वावृत्तित्वे वेत्यर्थः। ,उभयथैव उक्तापाद्यासत्त्वविघटनादवृत्तित्वपक्ष एव शब्दरूपपक्षधर्मताया अनुपपत्तिर्न तु शब्दत्वाधिकरणे तदुभयाभावसत्त्वपक्षे, तथासति तदुभयाभावस्य विपर्ययेण तदुभयरूपतया शब्दत्वाभावे तदुभयव्यापकताया एवानुपपत्तिरिति मूलन्यूनतामाशङ्क्य पूरयति व्याप्तेर्वेति। इष्टापत्तिशंकाविरहेण स्फुटयति न च तथाभाव इति। तथा चेष्टापत्तिशङ्काविरहेण शब्दत्वे नित्यत्वानित्यत्वोभयाभाववदधिकरणत्वेन मिलितापादकानां वृत्तिमत्त्वनित्यत्वतदभावव्यापकीभूताभावप्रतियोगित्वानामभावे साधनीये नित्यत्वतदभावव्यापकाभावप्रतियोगित्वयोर्द्वयोरभावः पक्षधर्मताबलात् शब्दत्वे सिद्ध्यति। अयमेव च विरोधग्रह इति भावः।

ननु वृत्तिमत्त्वाभावमादायैव न कथम्पर्यवसानमित्यत आह न वा पक्षवृत्तित्वं बाधितमिति। तथा च वृत्तिमत्त्वानिश्चयान्न तथा पर्यवसानमिति भावः। एतन्मते साध्यतदभावोभयव्यापकतयोरन्यस्य साध्यतदभावसिद्धिसामग्रीसमवहिततयोरप्यर्थो न सम्भवति व्याप्तिग्रहाभावेन तादृशसामग्र्यसम्भवादतोऽन्यथा व्याचष्टे साध्यतदभावेति। दोष इत्यस्य व्याख्या व्याप्तिग्रहप्रतिबन्धक इति। व्याप्तिग्रहविरोधिधर्मवानित्यर्थः।

एतन्मतेऽसाधारणे सत्प्रतिपक्षाविशेषशङ्कानवतारात् आशङ्कान्तरेण सत्प्रतिपक्ष इत्यादि मूलमवतारयति नन्विति। विरोधिव्याप्तिद्वय-साध्यतदभावनिरूपितव्याप्तिद्वयम्, न गृह्यते-ग्राहकसामग्रीद्वयविरोधेन एकदा न गृह्यते। सत्प्रतिपक्षोच्छेद इति। परस्परसामग्रीविरोधेन विरोधिकोट्योरनुमितिप्रतिबन्धोच्छेद इत्यर्थः। गृहीतेति। हेतुधर्मिकतदभावव्याप्तिग्रहाधीनत्वादित्यर्थः॥

(दी०)अत्र चेदं चिन्त्यम् । एवं सति सपक्षादेर्यावत्त्वविशेषणं व्यर्थम्, दूषकतायामनुपयोगात् व्यभिचाराग्रहमात्रोपक्षीणत्वात् । वृत्तिमत्त्वादिविशेषितस्यापि चासाधारण्यस्य ज्ञानं न व्याप्तिज्ञानविरोधि, विरोधिविषयकत्वाभावात् उपदर्शितविरोधस्य तच्छरीरेऽनन्तर्भावाच्च । व्यापकतयोरपि च न स्वतो विरोधः । उपदर्शितरीत्या तदवधारणे चावश्यं व्यभिचारज्ञानमेव प्रतिबन्धकम्, अत एव सत्यपि असाधारण्यज्ञाने एकत्रानुकूलतर्कावतारे भवति व्याप्तिधीरिति । एतेन तादृशसहचारज्ञानं तुल्यबलविरोधिव्याप्तिग्रहसामग्रीत्वेन प्रतिबन्धकं तर्कावतारे पुनस्तुल्यबलतैव नास्तीति परास्तम् । तर्कस्य व्यभिचारशङ्कानिवर्तकत्वेनैवोपयोगित्वात् सामग्री-त्वेन प्रतिबन्धकत्वे हेत्वाभासत्वायोगाच्च । सत्प्रतिपक्षे च विरोधिव्याप्यवत्तानिर्णयत्वेन प्रतिबन्धकत्वं न तु विरोधिसामग्रीत्वेन, बाधावतारे त्वापाततः सत्प्रतिपक्षितत्वेऽपि बाधेन प्रतिहेतोरव्याप्यत्वादिज्ञान एव साध्यानुमित्युदयादिति कृतं पल्लवितेन ॥

इत्यसाधारणदीधितिः ॥

(गा०) दूषकतायामनुपयोगादिति । यत्किञ्चिदधिकरणे साध्यहेतुसामानाधिकरण्यज्ञानस्यापि व्यापकताग्राहकत्वेन तादृशरीत्या दोषत्वेऽधिकरणे यावत्त्वस्याप्रयोजकत्वादित्यर्थः । ननु यत्किञ्चित्सपक्षादौ हेतोर्ग्रहे तादृशव्यभिचारग्रहेण प्रतिबन्धाद्धेत्वभावे साध्याव्यापकताग्रहो न सम्भवतीति यावत्सपक्षादौ हेत्वभावग्रहो व्यभिचारग्रहविरोधितया हेत्वभावे साध्याव्यापकताग्राहक इति कथं यावत्त्वानुपयोग इत्यत आह व्यभिचाराग्रहेति । सपक्षादौ हेत्वभावग्रहस्य व्यभिचाराग्रहमात्रसंपादकतया व्यापकताग्रहेऽन्यथासिद्धत्वादित्यर्थः । तथा च यावत्त्वघटितासाधारण्यज्ञानत्वेन प्रतिबन्धकज्ञानाजनकतया न तेन रूपेण प्रतिबन्धकत्वमपीति न तादृशासाधारण्यस्य दोषतासम्भवः सहचारज्ञानविधया व्यापकताग्राहकज्ञानविषयस्य यत्किञ्चित्सपक्षविपक्षयोर्हेत्वभावस्य दोषत्वे वह्निमान् धूमादित्यादौ अयःपिण्डजलह्रदादिनिष्ठधूमाभावादेरसाधारण्यता

प्रसङ्ग इति भावः। ननु वृत्तिमत्त्वे सति यावत्सपक्षविपक्षनिष्ठात्यन्ता-
भावप्रतियोगित्वस्य हेतौ ज्ञाने वृत्तिमत्प्रतियोगिकत्वे सति यावत्-
सपक्षविपक्षवृत्तित्वस्य हेत्वभावे ज्ञाने वा तद्रूपेण व्यापकताग्रहाज-
नकमपि व्यापकताग्रहप्रतिबन्धकमावश्यकं साधारण्यज्ञानदशायां
व्यापकताग्रहानुत्पादस्यानुभवसिद्धत्वादित्यत आह वृत्तिमत्त्वादीति।
विरोधिविषयकत्वाभावादिति। तादृशासाधारण्यज्ञानकाले व्याप्तिग्र-
हानुत्पाद एव नानुभविकः विरोधिविषयकज्ञानकाल एव ज्ञानानुत्पा-
दस्यानुभविकत्वादिति भावः। उपदर्शितविरोधस्य-एककोट्यव्यापक-
त्वे तदभावरूपापरकोटिव्यापकतानुपपत्तिरूपस्य(साध्याभावव्यापक-
प्रतियोगिकविरोधस्य)तच्छरीरे-ऽसाधारणघटकहेत्वभावनिष्ठयावत्-
सपक्षवृत्तित्वादौ, अनन्तर्भावात्-असत्त्वात्, तथा च व्याप्त्यसाधा-
रणयोर्मिथो विरोधिरूपत्वाभावात् इति पर्यवसितार्थः। ननु असाधा-
रण्यज्ञानं सम व्याप्तेरविरोधेऽपि वृत्तिमदभावनिष्ठयोर्भावाभावव्यापक-
तयोर्मिथो विरोधात्तयोरेकदा मिथोऽनुभवविरुद्धः, एवं चासाधा-
रण्यग्रहदशायां यदि व्यापकताग्रहः स्यात्तदाऽविशेषेण व्यापक-
ताद्वयग्रह एव स्यादित्यगत्याऽसाधारण्यग्रहस्य व्यापकताग्रहविरो-
धित्वमावश्यकमित्यत आह व्यापकतयोरपीति। न स्वतो विरोध इति।
न विरोधाग्रहदशायां भावाभावयोरिव युगपन्निश्चयाविषयत्वमित्य-
र्थः। ननूक्तरीत्या विरोधावधारणदशाया युगपन्निश्चयवारणायैव
तादृशप्रतिबन्धकताकल्पनमावश्यकमित्यत आह दर्शितरीत्येति। अ
वश्यम्-अवश्यकल्प्यप्रतिबन्धकताकम्, व्यभिचारज्ञान हेत्वभावाभा
वरूपहेतुमति नित्यत्वतदभावसंशयात्मकसाधारण्यज्ञानम्, प्रतिबन्ध-
क-हेत्वभावे नित्यत्वतदभावव्यापकताज्ञानानुत्पादनिर्वाहक, तस्या-
पि तत्र नियमेन कल्पनसंभवात्तथा च तदनुरोधेनाप्यसाधारण्यज्ञा-
नस्य न प्रतिबन्धकता कल्प्यते इति भावः। अत एव-तादृशस्थल
साधारण्यधीमात्रेण व्याप्तिग्रहप्रतिबन्धादेव। भवति व्याप्तिधीरिति।
साधारण्यज्ञाने तर्कस्योत्तेजकत्वादिति भावः। असाधारण्यज्ञानस्य
प्रतिबन्धत्वे तत्र तर्कस्याकिंचित्करतया व्याप्तिग्रहासंभवादुपष्टम्भ
संगतिः। एतेन-स्वप्रतिबन्धकतयैव निर्वाहेन, तुल्यबलवि-
रोधिव्याप्तिग्रहसामग्रीत्वेन-विरोधिव्याप्तिग्रहासाधारणतत्तत्कारण
समुदायत्वेन न त्वसाधारण्यज्ञानत्वमात्रेण, तर्कावतारे तु-एकदि-

श्येव तर्कावतारे तु, तुल्यबलतैव—सकलकारणसंमेलनमेव । नास्तीति । विरोधिव्याप्तिग्राहकस्य तर्कस्य अनुकूलतर्काभावसहितस्य प्रतिबन्धकतया तदभावस्यापि सामग्रीघटकत्वादिति भावः। अतो न तत्र व्याप्तिग्रहानुपपत्तिरिति शेषः । 'उपयोगित्वात्—उक्तस्थले व्याप्तिग्रहेऽपेक्षणीयतोपपत्तेः, तथाच कल्पनीयातिरिक्तप्रतिबन्धकतायां तदभावनिवेशनस्य निर्युक्तिकत्वादिति भावः ।

केचित्तु तुल्यबलविरोधिव्याप्तिग्रहसामग्रीत्वेनेति । स्वसमानकालीनप्रकृतव्याप्तिग्राहकसामग्री यावत्कारणघटिता तावत्कारणघटिता या विरोधिव्याप्तिग्राहकसामग्री तत्त्वेनेत्यर्थः। तुल्यबलतैव विरोधिव्याप्तिग्राहकसामग्र्या नास्ति तद्व्याप्तिग्राहकतर्कासत्त्वेन न्यूनत्वादिति भावः। तर्कस्येति। तथाच तर्कस्य व्याप्तिग्रहकारणत्वाभावात्तत्सत्त्वासत्त्वे न न्यूनाधिकबलभावमावहत इति भाव इति व्याचक्षुः।

हेत्वाभासत्वायोगाच्चेति । प्रागुपदर्शितातिप्रसङ्गादिति भावः। नन्वेवं सत्प्रतिपक्षस्य हेत्वाभासत्वानुपपत्तिरित्यत आह सत्प्रतिपक्षे चेति। विरोधीति। ग्राह्याभावादीत्यर्थः। नन्वेवमुभयव्याप्यवत्तानिश्चयदशायामेकसाध्यस्य बाधावतारेऽपि साध्यान्तरस्याननुमानप्रसङ्ग इत्यत आह बाधावतारे त्विति। अव्याप्यत्वादीत्यादिना अपक्षधर्मत्वपरिग्रहः। एतज्ज्ञानं च व्याप्तिविशिष्टवत्ताज्ञानविशेषणतापन्नविशेष्यताविशेषणधर्मिविशेषणतया बोध्यम्, तथाच प्रतिहेतुपरामर्शे व्याप्त्याद्यंशेऽप्रामाण्यज्ञानमिति पर्यवसितार्थः। (पक्षे तत्साध्याभावनिश्चये पक्षविशेषणतापन्नहेत्वंशे तत्साध्यव्याप्तिप्रकारकपरामर्शीयहेतुविषयतायाः साध्याभाववत्पक्षविषयतानिरूपितत्वग्रहेण तत्तत्साध्यव्याप्यभाववत्पक्षवृत्तित्वग्रहसाध्यत्वेन तद्विषयतायामनुमातुं शक्यत इति बाधनिश्चयस्य परामर्शेऽप्रामाण्यग्राहकता बोध्या)।

एतेनाव्याप्यत्वादिज्ञानस्यानुमितिविरोधिव्याप्यवत्ताज्ञानसत्त्वेनाकिञ्चित्करता व्याप्यवत्तापरामर्शेन प्रतिबन्धाद्दुर्घटता चेत्यसङ्गतिरिति परास्तम्। अप्रामाण्यज्ञानं व्याप्यत्वादेर्धर्मितावच्छेदकानवच्छिन्न एव हेतौ भानात्तस्य व्याप्त्यादिनिश्चयाप्रतिबन्धकतया विरोधिनिश्चयोत्तेजकीभूततत्समवधाने प्रकृतसाध्यानुमितिसंभवात् ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचितायां गादाधर्याम् असाधारणप्रकरणम् ।

---

अथानुमानगादाधर्याम्

# अनुपसंहारिप्रकरणम् ।

( चि० ) अनुपसंहार्य्यो नासत्सपक्षविपक्षः, सिद्ध्यसिद्धिविरोधात् । नापि केवलान्वयिधर्मावच्छिन्नपक्षकः, केवलान्वयिसाध्यकस्य सद्धेतुत्वात् व्यतिरेकिसाध्यकस्य तु साध्यतदभाववद्गामित्वेन साधारणत्वात् । अन्यथा संशयाहेतुत्वेनानैकान्तिकता न स्यात् । सर्वं क्षणिकं सत्त्वादिति साध्याप्रसिद्ध्या व्याप्यत्वासिद्धमपार्थकं वा, साध्यप्रसिद्धौ तु साधारणमेव । न च पक्षान्यसाध्यवत्तदन्यवृत्तित्वं पक्षातिरिक्तसाध्याभाववद्वृत्तित्वं वा साधारणत्वं व्यर्थविशेषणत्वात् । न च विरुद्धं विशेषणस्य व्यावर्त्यमित्युक्तम् । नाप्यत्यन्ताभावप्रतियोगिसाध्यकत्वे सति केवलान्वयिधर्मावच्छिन्नपक्षकत्वम्, सर्वमभिधेयं मेयत्वादित्यत्र विप्रतिपत्त्या पक्षतादशायां पक्षे साध्यानिश्चयेनानुपसंहारिण्यव्यापकत्वात् ।

( दी० ) केवलान्वयीत्यादि । सद्धेतुत्वं साधारणत्वञ्च केवलान्वयिनः साधनस्य, व्यतिरेकिणस्तु भागासिद्धत्वं साधारणत्व विरुद्धत्वञ्च यथासम्भव बोध्यम् । नापीति । केवलान्वयिसाध्यकवारणाय सत्यन्तम् । व्यतिरेकिसाध्यकसद्धेतुवारणाय केवलान्वयीत्यादि । पक्षत्वं साधकबाधकमानशून्यत्वम् । केवलान्वयिसाध्यकेऽपि बाधकमानाप्रसिद्धिरुक्तैवेति न सत्यन्तवैयर्थ्यम् । नि-

श्रितसाध्याभाववद्वृत्तिमात्रवृत्तित्वे त्वसाधारण्यं विरुद्ध इति साधारण्याद्यग्रहदशायामसाङ्कर्यमिति वा हृदयम् । अव्यापकत्वादिति । सद्धेतुत्वञ्च व्याप्तिनिश्चयदशायामेवेति भावः ॥

(गा०) सर्वमभिधेयं घटत्वादित्यादेः केवलान्वयिसाध्यकस्यापि न निर्दोषत्वरूपं सद्धेतुत्वम् सर्वमनित्यं घटत्वादित्यादेर्व्यतिरेकसाध्यकस्यापि न साधारणत्वमतो हेतुविशेषपरतया सद्धेतुत्वात् साधारणत्वादिति मूलं सङ्गमयति सद्धेतुत्वमिति । न्यूनताभङ्गाय व्यतिरेकिसाधनस्य लक्ष्यतां स्वयं निराकरोति व्यतिरेकिणस्त्विति । भागासिद्धत्वं सर्वपक्षकस्य सर्वस्यैव । व्यतिरेकिणः साधारणत्वविरुद्धत्वे यथासम्भवं सर्वमनित्यं द्रव्यत्वात् गगनत्वादित्यादेर्बोध्ये । केवलान्वयिसाध्यकवारणायेति । तस्य सद्धेतुत्वेनालक्ष्यतायाः प्रागभिहितत्वादिति भावः । व्यतिरेकिसाध्यकेति । पर्वतो वह्निमान् धूमादित्यादावित्यर्थः । सद्धेतुत्वं प्रकृतदोषराहित्यत्वम्, तेन पर्वतो धूमवान् वह्नेरित्यादेर्वारणीयत्वेपि न न्यूनता ।

पक्षत्वं यदि सन्दिग्धसाध्यकत्वं तदा केवलान्वयिनि साध्ये पक्षनिष्ठाभावप्रतियोगित्वसंशयमादाय पक्षतासंपादनसम्भवेपि सत्यन्तवैयर्थ्यं दुर्वारमेव–केवलान्वयिसाध्यकेपि संशयदशायामनुपसंहारित्वस्य इष्टत्वेन तद्व्यावर्तकविशेषणदानानौचित्यात्, अत एव सिद्धान्तलक्षणे सन्देहात्मकपक्षताघटिते तादृशविशेषणं परित्यक्तमेवेति पक्षत्वमन्यथा व्याचष्टे पक्षत्वमिति । साधकबाधकमानशून्यत्वं–साध्यनिश्चयबाधनिश्चयाभाववत्त्वमित्यर्थः । केवलव्यतिरेकिवारणाय बाधाभावनिवेशः । ईदृशी च पक्षता सर्वमभिधेयं प्रमेयत्वादित्यादौ यदा क्वचिदपि न संशयो नापि निश्चयस्तदाऽक्षतैवेति तदानीं तत्रानुपसंहारित्वस्य सिद्धान्तिनोप्यनिष्टस्य वारणाय सत्यन्तदलस्यैव सार्थक्यमिति भावः । (केवलान्वयिसाध्यकं साध्यसन्देहदशायामप्यलक्ष्यत्वमिदानीमभिप्रेतमिति भावः) । नन्वेवमपि सत्यन्तदलवैयर्थ्यं दुर्वारमेव केवलान्वयिसाध्यके साध्याभावाप्रसिद्ध्या बाधनिश्चयघटितपक्षत्वासिद्ध्या विशेष्यदलस्यैवासत्त्वादित्यत आह केवलान्वयिसाध्यकेपीति । बाधकमानप्रसिद्धिरुक्तैवेति । पक्षनिष्ठाभावप्रतियोगित्वधीरेव सुलभो बाध इत्यन्वेति शेषः । बाधकमान-

पदस्य साध्यवत्त्वज्ञानत्वावच्छिन्नविरोधिनिश्चयपरत्वादिति भावः।

नन्वत्रापि लक्षणे पूर्वलक्षणोक्तलक्ष्याप्रसिद्धिर्जागर्ति सर्वमनित्यं प्रमेयत्वादित्यादेः साधारण्यादिसंकरेण लक्ष्यत्वासंभवादिति कथमेतल्लक्षणावतार इत्यत आह निश्चितेति। निश्चितसाध्याभाववच्च तन्मात्रं चेति द्वन्द्वः, तथाच निश्चितसाध्याभाववद्वृत्तित्वं साधारणत्वं निश्चितसाध्याभाववन्मात्रवृत्तित्वं विरुद्धत्वमिति यथासंख्यमन्वयः। इतीति, दूषकमित्यग्रिमेणान्वयः। एवं च सर्वमनित्यं प्रमेयत्वात् गगनत्वादित्यादिकमेव पक्षतादशायामसंकीर्णोदाहरणमिति भावः। ननु साधारण्यशरीरे पक्षातिरिक्तत्वविशेषणस्य वैयर्थ्येन प्राक् निराकृतत्वात् निश्चयघटितसाधारण्याद्यभिप्रायेण लक्षणान्तरं न सङ्गच्छते निश्चयांशवैयर्थ्यस्याप्यतिस्फुटत्वादित्यतो दोषान्तरज्ञानशून्यकाले दोषान्तरवतोऽपि हेतोरनुपसंहारित्वेनैवानुमित्यनुत्पादकत्वमिति लक्ष्यत्वमित्याशयेनेदं तल्लक्षणमित्याह साधारण्यादीति। आदिना विरोधभागासिद्धिपरिग्रहः। सर्वमभिधेयं प्रमेयत्वादित्यादेः सद्धेतुतयाऽलक्ष्यत्वस्य प्रागभिहितत्वात् तत्राव्याप्त्यभिधानं सङ्गमयति सद्धेतुत्वं चेति। व्याप्तिनिश्चयदशायामेवेति। तथाच सर्वत्र साध्यसन्देहदशायां तस्य लक्ष्यत्वमेवाव्याप्तिरेव तत्र सत्त्वविरहादिति भावः॥

(चिं०) अथ पक्षातिरिक्ते व्याप्तिग्रहानुकूलाप्रतीतसहचारोऽनुपसंहार्यः, यदि च पक्षे व्याप्तिग्रहः कथञ्चित्तदा शब्दोपदर्शितव्याप्तिकानुमानवदभेदानुमानवच्च सद्धेतुरेवेति चेन्न।

तत्रैव सद्धेतावतिव्याप्तेः, सर्वस्य पक्षत्वे पक्षातिरिक्ताप्रसिद्धेः असाधारणविरुद्धयोरतिव्याप्तेश्च, दूषकतायां व्यर्थविशेषणत्वाच्च। न च दूषकतानैकान्तिकत्वेन न प्रत्येकमिति वाच्यम्। अर्थगत्या व्यर्थविशेषणत्वात्। नापि विप्रतिपत्तिविषयमात्रवृत्तित्वम्, केवलान्वयिसाध्ये अव्याप्तेः सर्वस्य पक्षत्वे मात्रार्थाभावादिति।

( दी० ) अथेत्यादि । पक्षातिरिक्ते न प्रतीतो निश्चितो व्याप्तिग्रहानुकूलोऽन्वयेन व्यतिरेकेण वा सहचारो यस्य स तथा । सद्धेतुरेवेति । तथाच लक्षणे पक्षातिरिक्तपदं सहचारग्रहस्थलमात्रोपदर्शकं न तु विशेषकमिति । विशेषकत्वाभिप्रायेण दूषणद्वयमाह तत्रैवेत्यादि । असाधारणे सपक्षव्यावृत्ते पक्षतादशायां शब्दोऽभिधेयः शब्दत्वादित्यादौ जलं निःस्नेहं शीतस्पर्शवत्त्वादित्यादौ च रूपं जलं वा द्रव्यभिन्नं गुणवत्त्वात् गुणकर्म्मान्यवृत्तिजातिमत्त्वादित्यादौ विरुद्धे चातिव्याप्तिरित्यर्थः । दूषकतायामिति । सहचाराभावस्यैव ज्ञानं विरोधि न तु तत्प्रत्ययांशस्यापीति । अर्थगत्येति । अनैकान्तिकशब्दार्थविवेचनेन प्रातिस्विकरूपेणैव प्रतिबन्धकत्वव्यवस्थितेरित्यर्थः ।

केचित्तु दूषकतायामसाधकतायाम् , अर्थेति, अनैकान्तिकशब्दार्थे उभयकोट्युपस्थापकत्वादौ साध्योपस्थापकत्वांशस्य व्यर्थत्वादित्यर्थ इत्याहुः ।

विप्रतिपत्तिः पक्षे साध्याभावप्रतीतिः साध्ये पक्षनिष्ठाभावप्रतियोगित्वप्रतिपत्तिर्वा ? आद्ये केवलान्वयीति । साध्याभावाप्रसिद्ध्या अव्याप्तिरित्यर्थः । उभयत्र सर्वस्येति । अतिव्याप्तेरिति पाठे तन्मात्रवृत्तित्वं तत्रव्याप्यवृत्तिकत्वं तदितरावृत्तित्वं वा ? आद्ये केवलेति । इदञ्च यथाकथञ्चिद्व्याप्तिग्रहदशायाम् । द्वितीये सर्वस्येति ।

(भा०) पक्षातिरिक्तेत्यादि यथाश्रुतमूलेऽप्रतीतपदस्य पक्षातिरिक्तपदव्यवहिततया पक्षातिरिक्ते सहचाराप्रत्ययो न लभ्यते, एवं व्याप्तिग्रहानुकूलपदसहचारपदयोरव्यवधानविरहेण व्याप्तिग्रहानुकूलसहचारत्वावच्छेदेनाप्रतीतत्वान्वयालाभ इति विपर्ययेण योजयित्वा व्याचष्टे पक्षातिरिक्त इत्यादि । सर्वत्र साध्यसन्देहदशायामपि हेतौ साध्यसहचारस्य संशयरूपप्रतीतिसम्भवात् प्रतीतिपदं निश्चिता-

र्थकतया व्याचष्टे न प्रतीत इति । व्याप्तिग्रहानुकूलत्वेनानुगमनीयं सहचारद्वयं विशिष्य दर्शयति अन्वयेन व्यतिरेकेण वेति । सहचारस्य साध्यसाधनसहचारत्वेन निवेशे व्यतिरेकिणि साध्याभावहेत्वभावसहचारत्वेन निवेशेऽन्वयिन्यतिव्याप्तिः, सहचारत्वेनोभयानुगमे उदासीनपदार्थसहचारग्रहदशायां अनुपसंहारित्वव्याप्तिरिति तद्वारणमुक्तरूपेणानुगमफलं बोध्यम् । पक्षेत्यस्य व्याप्तिग्रहेणान्वयः । पक्षधर्मसम्बन्धश्च तद्धेतुकानुमित्यनुकूलत्वम्, तथाच तद्धेतुकानुमित्यौपयिकव्याप्तिग्रहानुकूलसहचारनिश्चयाभाववत्त्वमनुपसंहारित्वमिति लक्षणं पर्यवसितम् । यदि च पक्षे व्याप्तिग्रहः कथंचिदिति ग्रन्थोऽसर्वपक्षकपर एव सर्वपक्षकपरत्वे तत्रैव सद्धेतावतिव्याप्तिरित्यग्रिमग्रन्थासंगतेः पक्षे, सहचारप्रत्ययेऽपि पक्षातिरिक्तेऽप्रतीतसहचारकत्वेनातिव्याप्तेः पक्षातिरिक्तप्रसिद्धावसंगतेः एवं सर्वस्य पक्षत्वे पक्षे व्याप्तिग्रह इति विशेषाभिधानमप्यसंगतं स्यात्, एवं च तत्र पक्षातिरिक्तत्वपदमहिम्ना लक्षणगमनात् सद्धेतुरेवेत्यभिधानमसंगतमित्यतः पक्षातिरिक्तत्वांशस्य लक्षणघटकत्वाभिप्रायेण तत् संगमयति तथाचेति । विशेषकं-सहचारग्रहस्थलव्यावर्त्तकम् । नन्वेवमग्रिमदूषणद्वयदानविरोध इत्यतोऽभिप्रायानवबोधमूलकत्वेन तत् संगमयति विशेषकत्वेति । दूषणद्वयमप्रसिद्धेरित्यन्तम् । शब्दोऽनित्यः शब्दत्वादित्यादौ प्रसिद्धासाधारणे गगनादौ व्यतिरेकसहचारस्यैव प्रतीतत्वादयं गौरश्वत्वादित्यादिविरुद्धे च घटादौ व्यतिरेकसहचारनिश्चयसंभवान्नातिव्याप्तिसंगतिरतोऽसाधारणविरुद्धयोरिति मूलं तद्विशेषपरतया व्याचष्टेऽसाधारण इति । वक्ष्यमाणकेवलान्वयिसाध्यकहेतोर्विपक्षाप्रसिद्ध्या जलं निःस्नेहं शीतस्पर्शवत्त्वादित्यादौ बाधावतारदशायां विपक्षप्रसिद्धावपि तद्व्यावृत्तत्वाभावात् सपक्षविपक्षव्यावृत्तत्वरूपमसाधारण्यं न संभवतीति असाधारण इत्यस्यार्थमाह सपक्षव्यावृत्त इति । शब्दोऽभिधेयः शब्दत्वादित्यादौ पक्षेऽन्वयसहचारस्य सत्त्वे दशाविशेषे निश्चयसंभवादाह पक्षतादशायामिति । अतिव्याप्तिरित्यग्रिमेण संबध्यते । यत्र सहचार एव नास्ति तादृशमुदाहरति जलमिति । निःस्नेहत्वं-स्नेहवदन्यत्वम्, अत्र च सर्वदैवातिव्याप्तेः पक्षतादशायामित्यस्य न सम्बन्ध इत्याविष्कर्तुमित्यादाविति मध्येप्युक्तम् । अस्य च विरुद्धत्वेऽपि बाधानवतार

दशायां तद्ग्रहासंभवादसाधारणतयोपपादनमविरुद्धम् । जलं चेति । प्रथमेऽसिद्धिसंकीर्णो, द्वितीये च बाधसंकीर्णो विरोध इति भेदः । घटादावुत्पत्तिकाले गुणरूपहेत्वभावसत्त्वेऽपि । प्रतियोगिवैयधिकरण्यावच्छेदेन तस्मिन् साध्याभावसहचारो न सम्भवति, स एव च व्यतिरेकव्याप्तिग्रहानुकूलः-प्रतियोगिवैयधिकरण्यावच्छिन्नाया एव व्यापकतायाः अव्याप्यवृत्तिव्यभिचारिण्यतिव्याप्तिवारणाय तादृशव्याप्तौ निवेशनीयत्वात् , प्रथमेऽतिव्याप्तिसंगतिः, प्रतियोगिवैयधिकरण्यानवच्छिन्नेऽपि यदभावे साध्याभावसहचारो न सम्भवति तत्रातिव्याप्तेरतिस्फुटतया तादृशमपि हेतुमाह गुणकर्मावृत्तीति । समवायेनावृत्तेरस्य हेतुताया लाभाय जातीति । अतिव्याप्तिरिति । यद्यपि प्रथमोक्तासाधारणमिश्रस्थलत्रये व्याप्तिग्रहानुकूलसहचाराप्रसिद्ध्या नातिव्याप्तिसम्भवः, तथापि प्रकृतसाध्यादिसहचारस्य प्रमेयत्वेन केवलसहचारत्वादिना वा निश्चयदशायामनुपसंहारिण्यव्याप्तिवारणाय व्याप्तिग्रहानुकूलो यः सहचारनिश्चयः पुरुषनिष्ठस्तदभाव एव विवक्षणीयः, तथा चोक्तस्थलेष्वपि कदाचित् कस्यचिदन्यदीयसहचारे साध्यादिसहचारत्वभ्रमेण व्याप्तिभ्रमोत्पत्त्या प्रसिद्धतादृशभ्रमरूपसहचारनिश्चयाभावमात्रायामतिव्याप्तिसम्भवान्नासंगतिः । पक्षातिरिक्तत्वविशेषणस्य दूषकतायामनुपयुक्तत्वेऽपि तस्य विशेषणत्वानभ्युपगमे न दोष इति प्रत्ययांशघटितस्य दोषत्वासम्भवपरतया दूषकतायामित्यादिमूलं व्याचष्टे दूषकतेति । न तु तत्प्रत्ययांशस्य प्रत्ययांशघटितस्य सहचारप्रत्ययाभावस्येति यावत् । ज्ञानं विरोधीति अनुषंगेणान्वयः । ग्राह्याभावाद्यविषयत्वादिति भावः । प्रत्ययांशापरित्यागे च विरोध एव पर्यवसानमित्याशयः ।

अनुपसंहारित्वज्ञानस्याविरोधित्वेऽपि अनैकान्तिकत्वरूपसामान्यधर्मस्य विरोधिधीविषयत्वेन दोषतयाऽनुपसंहारिणो दुष्टत्वमव्याहतमित्याशंकते, मूले न चेति । दीधितावनैकान्तिकशब्दार्थेति । अनैकान्तिकत्वं व्याप्तिग्रहविरोधिधर्मवत्त्वं साधारणादेः साधारण्यादिधर्ममादायैव उपपादनीयम् अनुगततादृशधर्मान्तरासम्भवात् , तथा च साधारण्याद्यन्यतमत्वेनैव प्रतिबन्धकत्वमावश्यकमित्यनुपसंहारित्वे दूषकताविरोधिप्रत्ययांशनिवेशानवधानदोषो दुर्वार एवेति भावः ।

मिश्रमतमाह केचित्त्विति । असाधकतासाधकतायामनुपसंहारितादोषस्येत्यादिः । एवं च साध्यसहचाराभावस्यैवासाधकताव्याप्यत्वेन व्यभिचाराधारकत्वेन प्रत्ययाशवैयर्थ्यं बोध्यम् । (मूले) न च दूषकतेत्यत्र च (प)तन्मते दूषकताऽसाधकतासाधनमनैकान्तिकत्वेन लिङ्गेन न तु प्रत्येकमनुपसंहारित्वादिना, तथाच तस्य व्यभिचाराधारकविशेषणत्वेपि न क्षतिरिति तादृशमूलाशयः । उभयकोटीति । साध्यतदभावेत्यर्थकम् । उपस्थापकत्वानीत्यादिना विरुद्धान्यपक्षवृत्तित्वे सतीत्यादिरूपपरिग्रहः । साध्योपस्थापकत्वादीत्यादिना द्वितीयानैकान्तिकत्वघटकसत्यन्तपरिग्रहः । व्यर्थत्वाविति । विरुद्धादेरपि असाधकत्वेन तथाघटकतादृशविशेषणस्य व्यभिचाराधारकत्वादिति भावः ।

अथ साध्योपस्थापकतावच्छेदकरूपमात्रस्यासाधकताहेतुत्वे यथा तादृश(साध्य)सहचारत्वघटित सन्देहो व्यभिचारः तथा साध्याभावोपस्थापकतावच्छेदकरूपमात्रस्य हेतुत्वेऽपि तादृशसाध्याभाववद्व्यावृत्तत्वघटित सन्देहो व्यभिचारो दुर्वार इति कोटिद्वयोपस्थापकतावच्छेदकरूपवत्तो वैयर्थ्याभिधानासङ्गतिः । साध्योपस्थापकतावच्छेदकसाध्यसहचारतदभावोपस्थापकतावच्छेदकतदभाववद्व्यावृत्तत्वयोः सन्देहसाधारण्येऽपि यद्रूपविशिष्टविषयकज्ञानजन्योपस्थितिः यद्रूपविशिष्टविषयकज्ञानजन्यसाध्याभावोपस्थितिसहकारेण सन्देहजनिका तदुभयरूपवत्त्वस्यैव उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वमित्यनेन विवक्षितत्वात्, तादृशसन्देहव्यावृत्तत्वेनासाधकतासाधकत्वसंभवादिति चेन्न ।

निष्कृष्टमते धर्मितावच्छेदकधर्मिणि यद्रूपवत्ताज्ञानं साध्यसन्देहजनकं तद्रूपवत्त्वस्यैव तदुभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वमित्यत्र विवक्षितत्वात् । तत्र धर्मितावच्छेदकविशिष्टसाध्यतदभावोभयप्रकारकज्ञानस्यैव साध्यसन्देहपदार्थतया तत्र प्रकारत्वांशेऽवच्छेदकतया प्रकृतग्रन्थसङ्गते । तादृशलक्षणं साध्याभावप्रकारकानुमानं प्रति धर्मितावच्छेदकविशिष्टधर्मिणि साध्याभावव्याप्तिविशिष्टज्ञानस्य हेतुतया यत्किञ्चिद्व्याप्तिशालित्वघटितत्वेन साध्यप्रकारकत्वविशिष्टादसाधकानुमाने च सन्देहो व्यभिचारप्रसङ्गात् तद्रूपत्वस्य दुर्वारत्वात् । साध्यप्रकारकत्वमात्रनिवेशे साध्यानुमितिज

नकसाध्यव्याप्यवत्ताज्ञानविषयतावच्छेदकव्याप्तिमादाय व्यभिचा-
रात्तद्वारकसाध्याभावप्रकारत्वांशवैयर्थ्यप्रसक्तेन तद्वैयर्थ्यमुक्तम्।
एवं चोभयकोट्युपस्थापकत्वादाद्येत्यादेः साध्यतदभावप्रकारकज्ञा-
नजनकत्वादावुपस्थितिविशेषणतया प्रविष्टं यत्साध्यप्रकारकत्वं तदादि-
विशेषणवैयर्थ्यादित्यर्थो द्रष्टव्यः। सहचारप्रत्ययाभावः सहचाराभा-
वादन्य एवेति धर्मिभेदाद्वैयर्थ्यमत्रास्वरसबीजं बोध्यम्।

सर्वस्य पक्षत्वे मात्रार्थाभावादिति केवलान्वयिसाध्यकाव्याप्तौ
न हेतुः साध्ये केवलान्वयित्वाभिधानानुपयोगापत्तेरिति साध्याभावा-
प्रसिद्धेरेव तद्धेतुत्वं मूलकृतोऽभिमतम्। सर्वस्येत्यादिकं च सर्वपक्ष-
कसामान्य एवाभिप्रेताव्याप्तेरौपान्तरस्य हेतुपरम्। एवं च साध्ये
पक्षनिष्ठाभावप्रतियोगित्वप्रतिपत्तौ विप्रतिपत्तिपदार्थत्वे प्रथमदोषासङ्ग-
तिरिति तं सङ्गमयितुं विप्रतिपत्तिपदार्थं वितर्कयति विप्रतिपत्तिरिति।
पक्षपदं विषयताविशेषलाभाय।

मूले पक्षत्व इति। विप्रतिपत्तिविषयत्व इत्यर्थः। केवलान्वयि-
साध्यकेऽतिव्याप्तेरिति पाठे मात्रार्थाप्रसिद्धेरतिव्याप्त्यसङ्गतेः तत्-
सङ्गमनाय वितर्कयति तन्मात्रवृत्तित्वमिति। तत्त्वव्याप्यवृत्तित्वं
विप्रतिपत्तिविषयत्वव्याप्याधिकरणताकत्वम्, विप्रतिपत्तिश्च साध्ये
पक्षनिष्ठाभावप्रतियोगित्वविप्रतिपत्तिरेव। तदितरेति। विप्रतिपत्ति-
विषयेतरेत्यर्थः। केवलान्वयिसाध्यकस्य विप्रतिपत्तिविषयत्वव्याप्य-
वृत्तेस्सर्वमभिधेयं प्रमेयत्वादित्यादिहेतोर्लक्ष्यतया नातिव्याप्तिः सङ्ग-
च्छत इत्यत आहेदं चेति। कथंचिदिति। सर्वत्र साध्यसन्देहसत्त्वेऽपि
शब्दादिना व्याप्तिग्रहदशायामित्यर्थः। व्याप्त्यनिश्चयदशायामेव च त-
स्य लक्ष्यत्वादिति भावः। असाधारणव्यतिरेकिणोरप्यतिव्याप्तिर्बोध्या॥

इत्यनुपसंहारिपूर्वपक्षः॥



(वि०) उच्यते व्याप्तिग्रहानुकूलैकधर्म्युपसंहा-
राभावो यत्र स हेत्वभिमतोऽनुपसंहारी। स चान्वयेन
व्यतिरेकेण वा सर्वस्य पक्षत्वे दृष्टान्ताभावात् घटोऽ-
नित्यो घटाकाशोभयवृत्तिद्वित्वाश्रयत्वादित्यादौ सा-

प्यसाधनसाहचर्याज्ञानात्तस्य विरुद्धत्वाज्ञानदशाया-मनुपसंहारित्वेनेष्टत्वात्।

केवलान्वयिधर्म्मावच्छिन्नपक्षको वा। सर्वमभिधेयं प्रमेयत्वादिति सद्धेतौ न केवलान्वयी पक्षतावच्छेदकः निश्चितसाध्यवद्वृत्तित्वात्। विप्रतिपत्त्या साध्यानिश्चयदशायां पक्षत्वे तदनुपसंहार्य्येव। व्यतिरेकिसाध्यके साध्याभाववद्वृत्तित्वाज्ञानदशायामिदं दूषणम्, तदवगमेऽपि साधारणसङ्कर एव। एवं व्याप्यत्वासिद्धेर्ज्ञाने। तदुद्भावने चायं व्यभिचारवदुपजीव्यत्वाददोषः। घटाकाशोभयवृत्तित्वाश्रयत्वञ्च विरुद्धमेव। एतेनानुपसंहारित्वप्रतिसन्धाने यदि व्याप्तिग्रहस्तदानुमितिरेव तदभावे व्याप्यत्वासिद्धिरेवेति निरस्तम्, उपजीव्यत्वादिति।

इत्यनुपसंहारिचिन्तामणिः॥

(टी०) व्याप्तीत्यादि। यत्र यस्येत्यर्थः। तथाच हेत्वभिमतशब्दोपसन्दानात् यद्धेतुकपक्षकसाध्यसिद्ध्यौपयिकव्याप्तिग्रहानुकूलोपसंहाराभावस्तस्यानुपसंहारित्वमित्यर्थलाभाद्व्यतिरेकिणि नातिव्याप्तिः।

नन्पसंहारः सहचारः तन्निश्चयो वा? आद्ये तादृशस्याभावो निखिलप्रसिद्धानुपसंहार्य्यव्यापकः अतिव्यापकश्च रूपं द्रव्यभिन्नं गुणवत्त्वाद्गुणकर्म्मान्यत्वविशिष्टसत्त्वादित्यादेः, द्वितीये पुनरज्ञानरूपासिद्धिपर्यवसायी कारणाभावतया स्वरूपमन्तेव दोषो न हेत्वाभास इयत आह केवलान्वयीति। पक्षः साध्यनिश्चयविरोधिनः साध्यवान्न वेत्यादेः सन्देहस्य विषयः। अवच्छे-

दकत्वञ्च स्वान्यूनवृत्तितत्कत्वं तच्च स्वरूपसतोऽप्यविरुद्धम् । तेन प्रातिस्विकद्रव्यत्वादिरूपेण सर्वत्र साध्यसन्देहदशाया नाव्याप्तिः । एवञ्च सर्वत्रैव हेत्वादिमति साध्यतदभावसन्देहाद्व्याप्त्यग्रहेणाभासत्वम् ।

परार्थस्थले बहिर्भावं व्युत्पादयति एवमित्यादिना । असिद्धिरनिश्चयः । ज्ञाने ज्ञापने । स्वार्थस्थलेऽन्तर्भावम्, एतेनेत्यादिनाशङ्क्य निरस्यति उपजीव्यत्वादिति ।

( गा० ) यत्रेत्यस्य सहचारग्रहाभावरूपैकधर्म्युपसंहाराभावेनान्वये व्यतिरेकिण्यतिव्याप्ति-व्यतिरेकसहचारप्रकारकग्रहस्य हेत्वभावे सत्त्वेऽपि विषयतया तदभावस्य हेतावक्षतत्वात्, तस्य व्याप्तावन्वयेऽपि व्यतिरेकसहचारग्रहस्याव्यवस्याप्यग्राहकत्वे सैवातिव्याप्ति-व्यतिरेकव्याप्तेः प्रकृतहेतुनिष्ठत्वाभावात्, सप्तम्यर्थविषयताया व्याप्तिग्रहेऽन्वयेऽपि स एव दोषः-प्रकृतहेतोर्व्यतिरेकसहचारग्रहाधीनव्यतिरेकव्याप्तिग्रहाविषयत्वात्, अतः षष्ठ्यर्थपरतया सप्तमीं व्याचष्टे यत्रेति । एवं च व्यतिरेकव्याप्तेः प्रकृतहेतुनिष्ठत्वविरहेऽपि तद्ग्रहस्य प्रकृतहेतुविषयकत्वविरहेऽपि वा तत्सम्बन्धितया तद्ग्रहानुकूलसहचारग्रहदशाया नातिव्याप्तिरिति भावः । ननु यथाकथंचित् सम्बन्धस्य उदासीनव्याप्यत्वादावपि सत्त्वेन व्याप्तेराधाराधेयभावरूपो विषयत्वरूपो वा सम्बन्ध एव विवक्षणीयः, तथा च तद्दोषतादवस्थ्यमित्यत आह तथाचेति । हेत्वभिमतेति । स्वहेतुकप्रकृतसाध्यसिद्ध्यौपयिकसम्बन्धतात्पर्यग्राहकहेत्वभिमतपदसमभिव्याहारादित्यर्थः । एतेन तत्रपदवैयर्थ्यशंकापि निराकृता । उपसंहाराभावस्तु तत्पुरुषनिष्ठस्तं प्रति तस्य हेतोरनुपसंहारित्वमित्यर्थलाभादित्यर्थः ।

सर्वं द्रव्यभिन्नं गुणवत्त्वादित्यादौ अन्वयसहचारस्य व्यतिरेकसहचारस्य च विरहाल्लक्षणसमन्वयसम्भवेन प्रसिद्धानुपसंहारिणि सर्वमभिधेयं नित्यं वा प्रमेयत्वात् द्रव्यत्वाद्वेत्यादावव्याप्तेरभिधानं नासम्भवस्य यद्यप्युक्तस्थलेऽपि प्रकृतव्याप्तिग्रहानुकूलसहचाराप्रसिद्ध्या न यथाश्रुतलक्षणसम्भवस्तथापि प्रकृतसाध्यसिद्ध्यौपयिको यो व्या-

सिद्धस्तदननुकूलसहचारसामान्यकत्वविवक्षणे पदार्थान्तरसहचारस्य प्रकृतसाध्यसिद्ध्यौपयिकव्याप्तिधर्मानुकूलत्वाभावमादाय लक्षणसमन्वयसम्भवः। न च गुणादिनिष्ठद्रव्यत्वादिसहचारस्य द्रव्यभेदादिसहचारभ्रमाविषयतया प्रकृतव्याप्तिग्रहानुकूलत्वसत्त्वात्तत्र सहचारसामान्ये तदननुकूलत्वमिति कथं लक्षणसङ्गमनमिति वाच्यम्। सहचारपदेन किञ्चित्प्रतियोगिकत्वकिञ्चिदनुयोगिकत्वविशिष्टसहचारत्वावच्छिन्नपर्याप्तिविषयताया विवक्षणीयत्वात्। भ्रमविषयविशिष्टसहचारप्रसिद्ध्या तद्विषयताया वास्तवसहचारत्वविशिष्टापर्याप्तत्वात् भ्रमात्मकज्ञानविषयतासामान्ये च प्रकृतव्याप्तिग्रहानुकूलत्वविरहस्याक्षतत्वात्। -रूपमिति। प्रतियोगितावच्छेदकव्यधिकरणधर्मावच्छिन्ने गुणाभावे द्रव्यान्यत्वाभावसहचारसम्भवात्, गुणकर्मावृत्तिजातिमत्त्वहेत्वनुसरणम्। अज्ञानरूपासिद्धिपर्यवसायी अज्ञानरूपासिद्ध्यात्मकः, कारणाभावतया व्याप्तिग्रहकारणाभावतया, स्वस्वरूपसदेव ज्ञानानपेक्ष एव, दोषः—परम्परयानुमित्यनुत्पादप्रयोजकः। न हेत्वाभास इति। यद्यपि वक्ष्यमाणसाध्यसन्देहविपर्ययरूपमनुपसंहारित्वमपि स्वरूपसदेव विरोधीति, न तस्य हेत्वाभासतासम्भव इति लक्षणद्वयेऽपि तुल्यानुयोगः, तथापि प्रथमस्य कारणाभावतया स्वरूपसद्दूषणत्वं स्फुटतरं न द्वितीयस्य तस्यातथात्वादिस्यापातत ईदृशानुयोगेन द्वितीयावतारसङ्गतिरित्यवधेयम्।

पक्षपदस्य साध्यवान्न वेति संशयविषयपरत्वे, केवलान्वयिसाध्यकेऽव्याप्तिस्तत्र कोट्यप्रसिद्ध्या तादृशसंशयासम्भवात्, स्वनिष्ठाभावप्रतियोगित्वसंशयविषयसाध्यकत्वार्थकत्वे पक्षविशेष्यकसंशयदशायामनित्यत्वादिसाध्यकेऽव्याप्तिरतः संशयद्वयमनुगमयति पक्ष इति। पक्षताग्रन्थे व्याख्यातमेतत्। यद्यपि घटः प्रमेयवान् इत्यादौ प्रमेयं घटनिष्ठाभावप्रतियोगि न वेत्यादिसंशयविषयतायाः केवलान्वयिधर्मव्यापकत्वात् यथाश्रुतेऽतिव्याप्तिः, विषयताविशेषनिवेशे उभयविधसंशये धर्मिविषयतायाः प्रकृतविधत्वाभावादननुगमः, प्रकृतानुमित्युद्देश्यनिष्ठसाध्यवत्त्वानिश्चयविरोधिसंशयविषयतानिवेशे विश्वस्मिन् साध्यसन्देहदशायां व्यतिरेकिधर्मावच्छिन्ने पक्षे साध्यसाधकस्याप्यनुपसंहारितया, दूषकताबीजसत्त्वेनोपगन्तव्यतया तत्राव्याप्तिः। तथापि स्वप्रतिबन्धकतावच्छेदकीभूतसाध्यव-

त्वानिश्चयविशेष्यतासमानाधिकरणसंशयविषयताविवक्षणान्न दोषः । प्रमेयं घटनिष्ठाभावप्रतियोगि न वेत्यादिसंशयस्य घटादिमात्रविषयताया एव तादृशसंशयप्रतिबन्धकतावच्छेदकप्रमेयादिप्रकारतानिरूपितविशेष्यतासमानाधिकरणत्वात् तादृश्याश्च केवलान्वयिधर्माव्यापकत्वात् । ननु यत्र केवलान्वयिसर्वत्वादिकं धर्मितावच्छेदकीकृत्य न साध्यसंशयोऽपि तु द्रव्यत्वगुणत्वादिविशेषधर्मं धर्मितावच्छेदकीकृत्यैव विश्वविषयकसंशयः तत्र संशयविषयतायां स्वरूपसम्बन्धरूपकेवलान्वयिधर्मावच्छिन्नत्वाभावाद् या सत्त्वेऽपि सहचारग्रहारूपदूषकताबीजसत्त्वेनालक्ष्यतास्वीकारासम्भवात् इत्यत आह अवच्छेदकत्वं चेति । स्वान्यूनवृत्तित्वकत्वमिति । तथा च केवलान्वयिधर्मव्यापक संशयविषयत्वं पर्यवसितम् । केवलान्वयिधर्मव्यापकत्वं चात्यन्ताभावाप्रतियोगित्वमेव न तु केवलान्वयिधर्मवन्निष्ठात्यन्ताभावाप्रतियोगित्वं निष्ठान्तनिवेशे प्रयोजनाभावात् । स्वरूपसतोऽपि-संशयधर्मिण्यप्रकारीभवतोऽपि । नाव्याप्तिरिति । तादृशसमूहालम्बनसंशयविषयतायास्तत्संशयविषयतात्वेन केवलान्वयिधर्मव्यापकत्वादिति भावः । यत्र विश्वेषां नैकसंशयविषयता अपि तु क्रमिकसंशयद्वयविषयतैव तादृशस्य संग्राह्यत्वे तत्कालीनसंशयविषयतात्वेन व्यापकत्वं विवक्षणीयम् ।

हेत्वादीत्यादिना हेत्वभावपरिग्रहः । व्याप्त्यग्रहेणेति । व्याप्त्यनिश्चयेनेत्यर्थः । सहचारानिश्चयासम्भवादिति भावः । न च धर्मिणि किञ्चिद्रूपेण साध्यादिसंशयेऽपि साध्याद्यंशे निर्धर्मितावच्छेदकसाध्यादिसहचारस्य हेतौ निश्चये बाधकाभाव इति वाच्यम् । तद्धत्वया गृह्यमाणे सर्वत्र तत्संशयदशायां तत्र सहचारसंशयसामग्र्याः अप्यौत्सर्गिकत्वात्, क्वचित् स्वाधिकरणे तन्निश्चयदशायामेव तादृशनिश्चयेन स्वाधिकरणवृत्तितत्कत्वनिश्चयेन वा तत्सामानाधिकरण्याभावनिवर्तनात्, स्वस्मिन् तत्सामानाधिकरण्यसंशयसामग्रीविघटनासम्भवात् । आभासत्वं हेतोर्दुष्टत्वम् ।

मूले सन्देहावधीति । क्वचिदधिकरणे साध्यनिश्चयदशावच्छिन्न इत्यर्थः । साध्यानिश्चयदशायां-सर्वत्र साध्यसन्देहदशायां, पक्षत्वे-केवलान्वयिधर्मस्य पक्षतावच्छेदकत्वे, तत्-अभिधेयत्वसाध्यकप्रमेयत्वम् व्यतिरेकिसाध्यके अनित्यत्वादिसाध्यकप्रमेयत्वादौ । अज्ञानद-

तदुपजीव्यतया साध्यसन्देहः सहचारानिश्चयो वा व्यभिचारवद्भासः स्यादेव असिद्ध्युपजीव्यत्वेऽज्ञायमानविरोधिताया आभासत्वाविरोधित्वादिति मूलानुसारिशंका निराकरोति उपजीव्योऽपि चेति । सत्तयैव विरोधित्वादिति । तथा चाज्ञायमानविरोधिनो ज्ञानरूपासिद्ध्युपजीव्यत्वं न हेत्वाभासताप्रयोजकं दृष्टान्तस्य साधारण्यस्य ज्ञायमानतयैव विरोधित्वादिति भावः ।

( दी० ) यत्तु व्याप्तीति, व्याप्तिग्रहानुकूलसहचारनिश्चयत्वावच्छिन्नविरोधिरूपवत्त्वमर्थः । विरोधस्तु संशयसाधारणमन्वयमात्रसहचारग्रहं विरुणद्धि, असाधारणे व्यतिरेकिणि च न व्यतिरेकसहचारग्रहविरोधः, तादृशरूपमन्तरेण लक्षणस्यासम्भवितया तदेव रूपं लक्षणमाह केवलेति । तादृशावच्छिन्नः पक्षः सन्दिग्धसाध्यको यस्याश्रयः स तथा । तथाच केवलान्वयिधर्म्मावच्छिन्नसाध्यसन्देहाविषयवृत्तित्वमनुपसंहारित्वम् । व्यतिरेक्यादौ केवलान्वयी न साध्यसन्देहविषयतावच्छेदकः साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वं वा वक्तव्यम् । धर्म्मिविशेषनियन्त्रितस्तु सन्देहो नान्यधर्म्मिकनिश्चयविरोधी । साध्यासन्देहविषयताव्याप्यसाध्यसिद्ध्यनुकूलव्याप्तिग्रहौपयिकसत्ताकत्वं वा, तादृशी च सत्ता अन्वये हेतोर्व्यतिरेके च तदभावस्येति न कश्चिद्विशेषः । स्वरूपसत्तादृशसंशयविषये च हेतुमत्ताज्ञानं हेतौ साध्यसामानाधिकरण्यं संशयसामग्रीत्वेन तन्निश्चयप्रतिबन्धकम्, सर्वत्र संशयसामग्र्या निश्चयप्रतिबन्धकत्वकल्पनात् । हेतुमति सर्वत्र साध्याभावसन्देहे हेतौ साध्यसामानाधिकरण्याभावसंशयस्यौचित्यावर्जितत्वात् साध्याभावेन साध्यसामानाधिकरण्याभावोपस्थापनादिति ।

(गा०) अत्रैव पूर्वपक्षेऽत्र ब्रूम इत्यादिभिश्चोक्तसमाधान दूषयितुमुपन्यस्यति यत्त्विति । व्याप्तीति । प्रथमलक्षणसाधारणव्याप्ति-

हेति। व्याप्तिग्रहानुकूलो यो यः सहचारस्तत्तत्सहचारनिश्चयत्वाव-
च्छिन्नविरोधिरूपवत्त्वमित्यर्थः। सहचारनिश्चयवृत्तित्वमुपेक्ष्य निश्च-
यत्वावच्छिन्नत्वस्य प्रतिबध्यताविशेषणत्वात् आकाशाभाववाना-
काशादित्यादौ हेत्वादेरवृत्तित्वस्य उभयसहचारग्रहविरोधित्वेपि
नातिव्याप्तिः। अवच्छिन्नत्वं स्वरूपसम्बन्धविशेषः विरोधस्य हेतौ
साध्यसामानाधिकरण्यात्मकस्य उभयथा वारणं दर्शयति विरोध-
स्त्विति। संशयेत्यनेन प्रतिबध्यतायां निश्चयत्वानवच्छिन्नत्वं दर्शि-
तम्। अन्वयमात्रेत्यनेन व्यतिरेकसहचारग्रहविरोधित्वदलव्यवच्छे-
दः। यद्यप्यनुपसंहारिण्यपि हेतुनिष्ठकेवलान्वयिधर्मव्यापक(साध्य)-
संशयविषयवृत्तित्वं न हेत्वभावे साध्याभावसहचारनिश्चयविरोधिहे-
त्वभावधर्मिकसाध्याभावसंशयविषयवृत्तित्वग्रहस्यैव तद्धर्मिकतत्स-
चारसंशयसामग्रीत्वेन तद्धर्मिकतन्निश्चयप्रतिबन्धकत्वात्तथापि त-
त्तत्सहचारनिश्चयत्वावच्छिन्नविरोधित्वं नैकधर्मविशेषणम्। तथाच
सर्वमनित्यं घटत्वादित्यादौ अन्वयसहचारनिश्चयविरोधि यद्धेतुनिष्ठ-
तादृशसंशयविषयवृत्तित्वं यच्च हेत्वभावनिष्ठं तादृशसाध्याभावसंश-
यविषयवृत्तित्वं तदुभयरूपवत्त्वमादाय लक्षणसमन्वयः। येन केनापि
सम्बन्धेन विरोधिरूपवत्त्वनिवेशात् हेत्वभावनिष्ठसंशयविषयवृत्ति-
त्वस्यापि एकज्ञानविषयत्वादिना हेतुनिष्ठत्वात् सर्वमभिधेयमनित्यं
वा प्रमेयत्वादित्यादौ व्याप्तिग्रहानुकूलव्यतिरेकसहचाराप्रसिद्ध्या
यो यः सहचार इत्यनेनाप्यन्वयसहचारमात्रस्योपादानात् तद्विरो-
ध्येकरूपमादाय लक्षणसमन्वयः। पर्वतो वह्निमान् धूमादित्यादौ
साधनवत्ताग्रहविषयकतिपयधर्मिविशेष्यकसाध्यादिसंशयविषये सा-
धनादेर्वृत्तित्वं साध्यादिसहचारनिश्चयविरोधिनी यावद्धर्मिणि
विशिष्य सम्बन्धो ज्ञायते तावद्धर्मिषु विशेषणसंशयस्यैव विशेष्य-
विशिष्टवृत्तित्वसंशयहेतुतया विशिष्टनिश्चयविरोधित्वात् नानाद-
ण्डपरत्वेन ज्ञाते पुरुषे एकस्यादिदण्डे रक्तत्वादिसन्देहेपि रक्तदण्डवा-
न्न वा पुरुष इत्यादिसंशयानुदयात्। न हि पर्वतवह्निसन्देहे महान-
सादिवृत्तितया गृहीतधूमे वह्निमद्वृत्तित्वसंशयः। तान्निर्वाहश्च विशे-
षणसंशयाभावाविशिष्टसम्बन्धज्ञानाभावस्य विशेष्यसम्बन्धज्ञान-
स्य च परस्परसहकारित्वेनैव हेतुत्वकल्पनयेति। अन्वयसहचार-
निश्चयत्वावच्छिन्नविरोधितामात्रनिवेशेऽतिप्रसङ्गं सूचयति, असा-

धारण इति । शब्दोऽनित्यः शब्दत्वादित्यादौ पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ चेत्यर्थः । अग्रहविरोधो-अग्रहानुत्पादः, तथाच तत्र साध्यसंशयविषयशब्दपृथिव्यादिवृत्तित्वे अन्वयसहचारनिश्चयविरोधित्वेऽपि व्यतिरेकसहचारनिश्चयविरोधित्वाभावान्नातिप्रसङ्ग इति भावः । व्यतिरेकसहचारनिश्चयत्वावच्छिन्नविरोधितामात्रनिवेशे, शब्दोऽनित्यः शब्दत्वाभावादित्यादौ व्यतिरेकसहचारनिश्चयत्वावच्छिन्नविरोधिनि हेत्वभावनिष्ठसाध्याभावसंशयविषयशब्दादिवृत्तित्वेऽतिप्रसङ्गो बोध्यः । तादृशरूपमिति । विरोधितावच्छेदकरूपमित्यर्थः । लक्षणस्य विरोधिरूपवत्त्वरूपानुपसंहारिलक्षणघटकस्य । यस्य पक्ष इत्यत्र विग्रहे साध्यसंशयविषयरूपपक्षपदार्थघटकसाध्ये यत्सम्बन्धिकतया षष्ठ्यर्थसम्बन्धान्वये केवलान्वयिधर्मावच्छिन्नविषयताकसंशयविषयकसाध्यकत्वं लभ्यते, तस्य च ज्ञानं न व्याप्तिज्ञानविरोधि किन्तु वक्ष्यमाणक्रमेण साध्यसंशयविषयवृत्तित्वज्ञानमेवातस्तल्लाभाय संशयविषयधर्म्यन्विताश्रयतासम्बन्धार्थकत्वं षष्ठ्याः प्रदर्शयितुमाह यस्याश्रय इति । केवलान्वयीति । अवच्छिन्नान्त विषयतान्वयि । तन्निवेशप्रयोजनमाह व्यतिरेक्यादाविति । आदिना असाधारणपरिग्रहः । पर्वतो वह्निमान्धूमादित्यादेः संशयविषयधर्मवृत्तित्वं निवेश्य धारणसम्भवाद्व्यतिरेक्याद्यनुधावनम् । साध्यवत्तानिश्चयविरोधित्वेन संशयानुगमस्यावश्यकतया प्रतिबन्धकतायां तादृशनिश्चयव्यापकत्वमेव निवेशयितुमुचितम् विषयतायां केवलान्वयिधर्मव्यापकत्वस्य निवेशापेक्षया लाघवादित्याशयेनाह साध्यवत्तेति । सामान्यपदेन व्यतिरेक्यादिवारणं स्फुटयति धर्मिविशेषेति । धर्मिविशेषनियन्त्रितः-कतिपयमात्रधर्मिकः । नान्यधर्मिकेति । समानधर्मिकविपरीतज्ञानस्यैव विरोधित्वादिति भावः ।

ननु यत्र यत्र हेतुस्तद्व्यतिरेकश्च ज्ञातस्तादृशधर्मिकसाध्यविषयकसंशयदशायामपि हेतोरप्यनुपसंहारिता सहचारनिश्चयानुत्पादस्य दूषकताबीजस्य सत्त्वादिति तत्रोक्तलक्षणाव्याप्तिरतस्तत्साधारण्याय प्रकारान्तरमनुसरति साध्यसन्देहेति । उक्तस्थले ज्ञायमानहेतुतद्व्यतिरेकसत्त्वाद्यधिकरणे सन्देहविषयत्वासत्त्वेऽपि न क्षतिः ज्ञायमानसत्ताया एव व्याप्तिग्रहानुकूलत्वात् । अथवा यत्र साध्यवति न हेतुर्यत्र वा साध्याभाववति न हेतुस्तत्र न साध्यसंशयः किन्तु यत्र यत्र धर्मिणि साध्य-

हेत्वोः साध्याभावहेत्वभावयोश्च सहचारस्तादृशो सर्वत्रैव साध्यसंशयस्तत्रापि हेतोरनुपसंहारित्वं व्याप्तिग्राहकसहचारनिश्चयाऽसंभवरूपदूषकताबीजस्याक्षतत्वादिति तत्साधारण्याय प्रकारान्तरमाह साध्यसन्देहेति। साध्यवन्निष्ठहेत्वभावसत्ताया साध्याभाववन्निष्ठहेतुसत्तायाश्च 'व्याप्तिग्राहकसहचाराघटकत्वेन व्याप्तिग्रहाननुकूलतया तदनुकूलसत्तायाः साध्यसंशयविषयताव्याप्यतयोक्तस्थले लक्षणसमन्वय इति भावः। साध्यसन्देहस्य चोक्तानुगतरूपेणैव निवेशो बोध्यः। असाधारणव्यतिरेकिहेतुसत्तायाः साध्यसंशयविषयत्वव्याप्यतयातिप्रसङ्गवारणाय साध्यसिद्ध्यनुकूलत्वेनान्वयव्यतिरेकव्याप्ती अनुगमय्य तद्ग्रहानुकूलत्वेन हेतुतदव्यतिरेकसत्त्वयोरनुगमः। एतदेव दर्शयति तादृशी चेति। तादृशी–तद्ग्रहौपयिकी। अन्वये अन्वयसहचारनिविष्टा व्यतिरेके व्यतिरेकसहचारनिविष्टा। इदानीमनुपसंहारित्वस्य ज्ञायमानतया हेत्वाभासतानिर्वाहाय विरोधित्वं व्यवस्थापयति स्वरूपसदिति। साध्येत्यादेर्हेतोरित्यादिः। तन्निश्चयेति। साध्यसामानाधिकरण्यनिश्चयेत्यर्थः।

ननु हेतुमति साध्यसंशयस्य हेतौ साध्यसामानाधिकरण्यसंशयसामग्रीत्वमेवासिद्धमित्याशंकायामाह हेतुमतीति। औचित्यावर्जितत्वादिति। हेतुमति साध्यसत्त्वं हेतौ सामानाधिकरण्यनियतं सर्वत्र तद्वति तदभावसत्त्वं तत्र तत्सामानाधिकरण्याभावनियतमिति तदुभयभाने तदुभयभानौचित्येनाप्रत्याख्येयत्वादित्यर्थः। ननु साध्यसन्देहस्याधिकरणे सत्त्वेपि साध्यसामानाधिकरण्याभावस्यानुपस्थितया न संशयः सम्भवति तदुपस्थापकसाधारणधर्मादिदर्शनसत्त्वे तदेव संशायकमस्त्वित्यत आह 'साध्याभावेनेति। साध्यसामानाधिकरण्याभावस्य साध्याभाववृत्तित्वेनाश्रयतया तत्सम्बन्धिसाध्याभावविषयकसाध्यसन्देहस्यैव तदुपस्थापकत्वादित्यर्थः। एवं च संशयज्ञानस्यानुपयोगित्वेपि तद्विषयवृत्तिताया ज्ञानस्य संशयसामग्रीविधया साध्यसामानाधिकरण्यघटितव्याप्तिनिश्चयविरोधितया तस्यानुपसंहारित्वरूपहेत्वाभासताऽक्षतैवेति समुदायभावः॥

(दी०) तन्न, सर्वत्र साध्यसन्देहदशायां क्वचिदपि सा-

ध्यसामानाधिकरण्यस्याग्रहीतत्वेन तदभावस्य ग्रहीतुमशक्यत्वात् । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिश्चयस्याभावधीहेतुताया असकृदावेदितत्वात् ।

अस्तु वा स यथाकथञ्चित् साध्ये हेतुसामानाधिकरण्याभावसंशयहेतुत्वेन वा तथात्वं, न तथापि सामग्रीत्वेन प्रतिबन्धकतया हेत्वाभासत्वम् । अन्यथा व्यभिचरिताव्यभिचरितसमानासमानाधिकरणव्याप्याव्याप्यपक्षधर्मापक्षधर्मादिसाधनवान्निःसाधनादिसाधारणद्रव्यत्वादिमत्त्वम् हेतोः पक्षस्य चाभासान्तरं स्यात्, तदुपदर्शितस्येव तस्यापि ज्ञानस्येतरसाचिव्येन तथानिश्चायकविरोधिसंशयसामग्रीत्वात् । एवमसिद्ध्यादिनिश्चायकमत्यक्षसामग्र्यपि । अपि च हेतोः साध्याभावसन्देहविषयमात्रवृत्तित्वं दूषणमिति मात्रं तच्च व्यतिरेकिणि हेतौ नियतविपयेणापि सन्देहेन सम्पद्यते, दूषकताबीजसत्त्वे चासाधारण्यादिसाधारण्यं न दोषाय, न वा अत्रैव निर्भरः कर्त्तव्यो हेत्वाभासत्वानुपपत्तेरुक्तत्वादित्यलं पल्लवितेन ॥

[1] ( गा० ) अनुपसंहारित्वदशायां साध्यसामानाधिकरण्यसंशय एव दुर्घटः कथं तज्ज्ञानस्य तत्संशयसामग्रीत्वमित्याह सर्वत्रेति । क्वचिदपीति । कमपि धर्मिणमन्तर्भाव्य साध्यांशे निश्चयरूपसाध्यवद्वृत्तित्वप्रकारकज्ञानस्याजातत्वेनेत्यर्थः । तदभावस्य-साध्यसामानाधिकरण्यत्वावच्छिन्नाभावस्य, गृहीतुमशक्यत्वात्-संशयेन कोटितया गृहीतुमशक्यत्वात् । ग्रहणस्याशक्यत्वे हेतुमाह प्रतियोगितावच्छेदकेति । सर्वांशे निश्चयरूपस्य प्रतियोगितावच्छेदकप्रकारकज्ञानस्येत्यर्थः । अभावधीहेतुताया इति । प्रतियोगिविशेषिताभावबुद्धौ विशेषणतावच्छेदकनिश्चयविधया हेतुताया इत्यर्थः । प्रतियोगिविशेषिताभावबुद्धेः प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वनियमादिति भावः ।

[1] यत्तु सिद्धसवाधिक्रस्वतन्त्रप्रतियोगिज्ञानहेतुताभिप्रायकोऽयं ग्रन्थ

इति । तदसत्–अभावलौकिकप्रत्यक्षं प्रत्येव स्वतन्त्रतद्धेतुतायास्तैः स्वीकारात् संशय उपनीताभावकोटिभाने तादृशकारणविरहस्याकिञ्चित्करत्वात् ।

अथ सर्वत्र साध्यसन्देहदशायां तादृशप्रत्यक्षनिश्चयासंभवेपि कालान्तरीणनिश्चयजन्यसंस्कारतः स्मरणात्मकतादृशनिश्चयः संभवत्येवेति चेन्न । यस्य पुंसः प्रागपि कुत्रचित् साध्यनिश्चयो न जातस्तस्य सहचारसंशयसामग्र्या एवमपि दुरुपपादत्वात् ।

ननु साध्यांशे निर्द्धर्मितावच्छेदकं तदंशे निश्चयरूपं साध्यसामानाधिकरण्यज्ञानं सर्वत्र साध्यसंशयदशायामपि सुलभमेव धर्मितावच्छेदकावच्छिन्नधर्मिविषयताया एव संशयत्वघटकतया धर्मितावच्छेदकावच्छिन्नतद्विषयताया निश्चयत्वसंपादकत्वात् । न च धर्मितावच्छेदकप्रकारेण सकलधर्मिणामेव तदा भानसंभवात् धर्मिविषयताया धर्मितावच्छेदकानवच्छिन्नत्वं दुर्घटमिति वाच्यम् । एकज्ञाने धर्मितावच्छेदकावच्छिन्नतदनवच्छिन्नविषयतयोः सत्त्वे बाधकाभावादित्याशयेनाहास्तुवेति । सः–प्रतियोगितावच्छेदकीभूतसाध्यसामानाधिकरण्यान्वयप्रकारकोनिश्चयः,सर्वत्र साध्यसंशयदशायामपि पक्षे हेतुमत्तानिश्चयसत्त्वे हेतुत्वांशे निश्चयात्मकहेतुसामानाधिकरण्यज्ञानसत्त्वेन साध्ये हेतुसामानाधिकरण्याभावसंशयः सुलभ एवेत्याशयेनाह साध्ये इति । न तथापि हेत्वाभासत्वमित्यन्वयः । उक्तानुपसंहारिताया इति शेषः । अत्र हेतुः सामग्रीत्वेन प्रतिबन्धकतयेति । तज्ज्ञानस्येति शेषः । अन्यथा–प्रतिबन्धकसामग्रयात्मकधीविषयस्यापि हेत्वाभासत्वे, व्यभिचरिताव्यभिचरितेत्यादिपंचकस्यैव साधारणान्वयः । तत्र च व्यभिचारिताऽव्यभिचारितादिचतुष्टयसाधारणद्रव्यत्वादिमत्त्वं हेतोः साधनबाधिःसाधनसाधारणद्वयत्वं पक्षस्य बोध्यम् । प्रथमद्वयं हेतौ व्याप्तिघटकदलयोः प्रत्येकाभावसंशायकम्, तृतीयं विशिष्टव्याप्त्यभावसंशायकम्, तुरीयं पक्षधर्मत्वसंशायकम्, पंचमं पक्षे साधनाभावसंशायकमिति भेदः । तस्यापि तादृशद्रव्यत्वादिमत्वस्यापि,इतरसाचिव्येन–विशेषादर्शनादिसहकारेण । तन्निश्चयेति । अव्यभिचारादिनिश्चयेत्यर्थः । प्रत्यक्षसामग्रीलौकिकप्रत्यक्षसामग्रीघटकाविशेषणज्ञानादिविषयः, तादृशसामग्र्या अपि यदुपद्विपरीतभानसामग्रीत्वेन पश्चादौ हेतुमत्ताज्ञानप्रतिबन्धक-

त्वादिति भावः। दूषणान्तरमाहापि चेति। साध्याभावसन्देहविषयमात्रप्रवृत्तित्वमिति। तन्मात्रस्य व्यतिरेकव्याप्तिग्रहाविरोधित्वेपि विरोधवदन्वयव्याप्तिग्रहाविरोधित्वेन हेत्वाभासताया दुर्वारत्वादिति भावः। व्यतिरेकिणि–पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ, नियतविषयेन–पृथिव्यादिमात्रविषयेण, संपद्यते–निर्वहति, तथा च तत्रा-ऽप्यनुपसंहारितापत्तिरिति भावः। इदमुपलक्षणम् असाधारण्येऽप्यतिप्रसङ्गो बोध्यः।

वस्तुतस्तु असाधारणेपि व्यतिरेकव्याप्तिग्रहेण व्यतिरेकिपदेना-साधारण्यस्य साक्षादेव लाभः। ननु साधारणादिव्यावर्तनायैव सन्देहविषयताव्याप्यव्यतिरेकसत्त्वाप्यनुपसंहारित्वे निवेश्यतेऽत आह दूषकतेति। अन्वयव्याप्तिग्रहप्रतिबन्धलक्षणहेत्वाभासताप्रयोजकत्वे, साध्यसन्देहविषयमात्रत्वांशमात्रस्यासाधारण्ये न हेत्वाभासताविरोधीत्यर्थः। नन्वस्तु तदेवानुपसंहारित्वं व्यतिरेकिणस्तथात्वेपि व्यतिरेकव्याप्त्युपादानान्नानुमितिविरोध इत्यत आह नवेति॥

(टी०) व्याप्तिग्रहप्रतिबन्धलक्षणैकप्रयोजनकत्वेन साधारण्यादीनामेकहेत्वाभासत्वम्। साधारणेन व्यापकत्वस्याव्यभिचारित्वस्य वा असाधारणेन सामानाधिकरण्यस्यानुपसंहारिणा च व्यतिरेकव्याप्तिग्रहस्य प्रतिरोधात्। लक्षणन्तु विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्याप्तिग्रहविरोधितावच्छेदकं रूपम्। व्याप्तीश्चान्वयतो व्यतिरेकतश्च नानारूपाः प्रातिस्विकरूपेण उपादाय तावदवगाही ग्रहो वाच्यः। साध्यसाधनयोरप्रसिद्धेरसिद्धिभेदस्य वारणायाविरोधिन इत्यन्तम्। साध्यसाधनभेदेन व्यभिचारभेदाद्यत्र विशिष्टं साध्यं साधनं वाऽप्रसिद्धं तत्र तद्ग्रहविरोधत्वं नोपादेयम्। एवमन्यत्रापि। शेषं हेत्वाभासलक्षणोक्तादिशावसेयम्। व्यर्थविशेषणत्वन्तु न व्याप्तिग्रहविरोधीति वक्ष्यते। साध्याव्यभिचारित्वसामानाधिकरण्यविरहस्य वह्निर्भावनीयत्वे पुनरन्वयव्याप्तिः व्यापकत्वमव्यभिचरित्वं वा सामानाधिकरण्यञ्च

विशकलितं युगपदुपादेयम् । तत्र साधारणत्वं वर्णितम् । असाधारणत्वन्तु सपक्षव्यावृत्तत्व, सपक्षश्च साध्यवान्, तद्व्यावृत्तत्वन्तद्वृत्तित्वग्रहविरोधित्वम् । प्रकृतसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयसामानाधिकरण्यग्रहविरोधितावच्छेदकमिति तु निष्कर्षः । संगृह्यते चेत्थं साध्यादेः साधनवदवृत्तित्वादिकम् ।-

( गा० ) व्यतिरेकव्याप्तिग्रहाविरोधिनो हेत्वाभासान्तरताविरहात्तस्य व्यभिचारमध्य एवान्तर्भावस्यौचित्यात्तस्यैवानुपसंहारित्वरूपतां स्वातन्त्र्येण व्यवस्थापयितु भूमिकामाह व्याप्तिग्रहेति । एकहेत्वाभासत्व-व्यभिचाररूपैकहेत्वाभासान्तर्गतत्वम् व्यापकताज्ञानस्यानुमितिहेतुताया निराकृतत्वादाह व्यभिचारत्वस्य वेति । सामानाधिकरण्यस्य-साध्यसामानाधिकरण्यस्य, साध्यासामानाधिकरण्यमेवासाधारण्य न तु मणिकारसंमत साध्यव्यापकीभूताभावप्रतियोगित्व तस्यानुमितौ साक्षादेव विरोधित्वेन सत्प्रतिपक्षादिवद्व्यभिचारान्यहेत्वाभासताया एव युक्तत्वादित्याशय. ।

असाधारण्यस्य साध्यासामानाधिकरण्यरूपत्वेऽनुमितिविरोधित्वाविघटितमूलोक्तसामान्यलक्षणस्याव्याप्त्यातिव्याप्तिकरम्बितत्वात् स्वय सामान्यलक्षणमाह लक्षण त्विति । ज्ञानस्य विषयतया-विषयीभूय, विरोधितावच्छेदक-प्रतिबन्धकतायामवच्छेदकं प्रतिबन्धकतावच्छेदकीभूतज्ञानवृत्तिविषयताकत्वमिति तु पर्यवसितम् । एवमग्रेऽपि सर्वत्र बोध्यम् । अनुपसंहारित्वसम्प्रदायाद् व्याप्तीश्चेति । केनापि रूपेण व्याप्तीनामननुगमे तज्ज्ञानसामान्यविरोधित्व न साधारण्यादेरित्यत आह प्रातिस्विकेति । असिद्धिभेदस्येत्यनेनालक्ष्यत्व दर्शितम् । असिद्धिभेदो व्याप्यत्वासिद्धि । साध्यसाधनयोर्वृत्तित्व साध्यसाधनसामानाधिकरण्यग्रहविरोधितया असाधारण्यमेवेति तद्व्यावृत्तेरनपेक्षिततया साध्यादिमत्त्वपर्यन्तानुधावनम् । ननु धूमवान् वह्नेरित्यादिस्थलीयसाधारण्यादावसम्भवप्रसङ्ग तत्र विशिष्टसाध्यादिग्रहविरोध्यप्रसिद्धे. । न च विशिष्टसाध्यादिग्रहविरोधिनी कामिनीजिज्ञासैव प्रसिद्धेति तदन्यज्ञाननिष्ठव्याप्तिग्रहाविरोधितावच्छेदकरूपवत्त्वमादाय लक्षणसमन्वय. संभवतीति वाच्यम् । एवमपि यत्र

कामिन्यादेरेव साध्यता हेतुता वा, तत्र साध्यादिग्रहविरोध्यप्रसिद्धेर्दुर्वारत्वादित्यत आह साध्यसाधनभेदेनेति। साध्यतावच्छेदकादिभेदेनेत्यर्थः। नोपादेयमिति। तत्र साध्याप्रसिद्ध्यादिदोषाप्रसिद्ध्या तदनुपादानेऽप्यतिप्रसङ्गानवकाशादिति भावः। तथाच दर्शितस्थले विशिष्टसाध्यादिग्रहविरोध्यप्रसिद्ध्याऽव्याप्तेर्नावकाश इत्याशयः। यदि स्वाप्रतियध्यविशिष्टसाध्यादिग्रहकत्वमाविरोध्यन्तार्थस्तदाऽविरोधिन इत्यन्तस्योपादानेऽपि नाव्याप्तिरित्यपि बोध्यम्। अन्यत्रापि वक्ष्यमाणासाधारणादिलक्षणेऽपि, शेषमवच्छेदकत्वनिर्वचनं विशिष्टान्तराघटितत्वानवेशनादिकम्।

ननु नीलधूमादित्यादौ हेतुतावच्छेदकस्य साध्यसामानाधिकरण्यानवच्छेदकत्वरूपव्यर्थविशेषणतायां व्याप्यत्वासिद्धिप्रभेदत्वेन व्याप्तिग्रहविरोधित्वाभावादव्याप्तिरित्यत आह व्यर्थविशेषणत्विति। वक्ष्यत इति। असिद्धिग्रन्थ इति शेषः। व्याप्त्यभावेतिव्याप्तिमाशङ्क्याह साध्याव्यभिचरितेति। स्वमते व्यापकताज्ञानस्यानुमितिहेतुत्वेन तद्विरोधिनोऽव्यापकतादेः साक्षाज्जनकज्ञानाविरोधित्वेन न हेत्वाभासत्वमिति स्वमताभिप्रायेणाव्यभिचरितस्य वेति। साध्याभाववदवृत्तित्व वेत्यर्थः। युगपदिति। एकज्ञानविशेषणतयेत्यर्थः। हेतौ साध्याव्यभिचारावगाहित्वे सति तत्र सामानाधिकरण्यावगाहि यज्ज्ञानं तद्विरोधित्व निवेश्यम्, न तु अव्यभिचारविशिष्टसामानाधिकरण्यावगाहित्वमिति समुदायार्थः। तथाच विशिष्टाभावस्य विशिष्टवत्ताज्ञानमात्रविरोधितया वत्सरेऽपि साध्याव्यभिचारी साध्यसमानाधिकरणश्च हेतुरिति विशकलितदलद्वयावगाहिज्ञानोदयात् विशिष्टाभावेऽतिव्याप्तिरिति भावः। साध्याप्रसिद्ध्यादिव्यभिचारानात्मकस्यापि व्याप्यत्वासिद्धेः सत्त्वाद्दर्शितविशिष्टाभावस्यासिद्धिव्यभिचारोभयरूपत्वेऽपि न क्षतिरित्यत्रानिर्भरसूचनाय यद्विभावनीयत्वे पुनरित्युक्तम्।

अथानुमितौ सामानाधिकरण्यसम्बन्धेनाव्यभिचारविशिष्टं यत् सामानाधिकरण्यं तत्प्रकारकहेतुज्ञानत्वेन न हेतुता सामानाधिकरण्यविशिष्टाव्यभिचारज्ञानत्वेनापि विनिगमनाविरहेण हेतुताप्रसङ्गात्, हेतोर्व्यभिचारज्ञानकालेऽपि हेतुविशेषणतापन्नसामानाधिकरण्ये विशेषणतयाऽव्यभिचारभाने बाधकाभावेनानुमित्यापत्तेश्च। न चो

भयविधविशिष्टज्ञानस्यानुमितिहेतुत्वोपगमाद्धेतौ व्यभिचारग्रहदशायां तत्र सामानाधिकरण्यविशिष्टाव्यभिचारग्रहाभावान्नानुमित्यापत्तिरिति वाच्यम् । उभयविधव्याप्तिज्ञानसत्त्व एवानुमितिरित्युपगमस्यानुभवविरोधेनासंभवात्, तृणारणिमणिन्यायेनैवोपदर्शितोभयविधविशिष्टज्ञानहेतुतायाः स्वीकरणीयत्वाद्व्यभिचारग्रहकाले तद्भावविशिष्टसामानाधिकरण्यग्रहाधीनानुमित्यापत्तेर्दुर्वारत्वात्, तथा चाव्यभिचारसामानाधिकरण्योभयावच्छिन्नहेतुविषयताशालिज्ञानत्वेनैवानुमितिहेतुता वाच्या तादृशज्ञाने प्रत्येकाभावज्ञानमेव विरोधि न त्वेकविशिष्टापराभावज्ञानं प्रतियोगितावच्छेदकविशिष्टप्रतियोगिमत्ताबुद्धेरेकाभावधीप्रतिबध्यत्वादिति विशिष्टाभावस्य हेत्वाभासत्वमेव दुर्घटं क्वान्तर्भाववहिर्भावविचार इति चेन्न । सामानाधिकरण्यसम्बन्धेनैकविशिष्टापरस्याभावग्रहो यथा तादृशविशिष्टप्रकारकग्रहविरोधी तथा युगपद्विशेषणविशेष्योभयधर्मावच्छिन्नतया एकधर्मिग्रहेऽप्युभयाभावग्रहयद्विरोध्युभयाभावसमशीलतादृशाभावग्रहदशायां सामानाधिकरण्येनैकविशिष्टापरग्रहसमशीलधर्मद्वयवत्ताग्रहानुत्पादस्यानुभवसिद्धतया प्रत्याख्यातुमशक्यत्वात् । अत एवासिद्धिग्रन्थे व्याप्तिविशिष्टपक्षधर्मताविरहस्य विशिष्टपरामर्शविरोधितया दोषत्वं स्वयं व्यवस्थापयिष्यते न हि विशिष्टपरामर्शस्य एकविशिष्टापरावगाहित्वं कारणतावच्छेदकं लाघवेनानुभवबलेन च हेतौ व्याप्तिपक्षधर्मत्वोभयावगाहिज्ञानस्यैवानुमितिहेतुत्वोपगमात् । न चैवं विशकलिताव्यभिचारसामानाधिकरण्योभयावगाहिधीविरोधित्वोपादानेनापि न विशिष्टाभाववारणसंभव इति वाच्यम् । विशकलितोभयावगाहित्वं हि न मिथो विशेष्यविशेषणभावानापन्नोभयावगाहित्वम्, अपि तु धर्मिनिष्ठविभिन्नविषयतानिरूपितोभयविषयताप्रतियोगित्वम् । तच्च साध्याव्यभिचारी हेतुः साध्यसमानाधिकरणो हेतुरिति समूहालंबनबुद्धौ, तस्याश्च न विशिष्टाभावधीप्रतिबध्यता अपि तु उभयविषयतानिरूपितैकविषयताशालिबुद्धेरेवेति वर्णितं साधारणग्रन्थे ।

असाधारण्यस्य सत्प्रतिपक्षोत्थापकतया दूषकतया मणिकारसम्मततया तदनुयायिना पूर्वं साध्यव्यापकीभूताभावप्रतियोगित्वमसाधारण्यमिति व्याख्यातम् तच्च स्यान्नुमतमित्यन्यथा वह्निर्वक्रि

तिपक्षतया स्वतन्त्रपरिगणनात्तादृशस्य साध्यवत्ताज्ञानविरोधिधीविषयत्वेन हेत्वाभासताविरहाच्चेत्यर्थः । व्यतिरेकव्याप्तिग्रहेति । हेत्वभावत्वावच्छिन्नधर्मिकसाध्याभावव्यापकताग्रहेत्यर्थः । साध्यादेरित्यादिना साधनस्य साधनाभावस्य च परिग्रहः । अत्यन्ताभावाप्रतियोगित्वेनादिपदग्राह्यसाधनस्याप्यन्वयः । अप्रतियोगित्वादिना साध्याभावाव्यापकत्वपरिग्रहः । तस्य च साधनाभावेन सम्बन्धः ।

अथाभावाप्रतियोगित्वधीरभावप्रतियोगित्वप्रकारकं ज्ञानं प्रत्येव विरोधिनी न तु तदप्रकारकं साध्याभावव्यापको हेत्वभाव इत्यादिज्ञानं प्रति ग्राह्याभावानवगाहित्वात् । न चैतादृशज्ञानेऽपि संसर्गतयाऽभावप्रतियोगित्वभानादभावाप्रतियोगित्वं ग्राह्याभाव एवेति वाच्यम् । अभावांशे विशेषणीभूतस्य साध्यादेरनुयोगितया एव संसर्गतया प्रतियोगितायास्तत्राभानात् । प्रतियोगितानिरूपकत्वावच्छिन्नैवानुयोगिता सम्बन्धो न तु केवला प्रतियोगित्वानुयोगित्वयोः समानवित्तिवेद्यतायाः सिद्धान्तसिद्धत्वादिति चेत् । एवमप्यभावप्रतियोगितात्वेन प्रतियोगिताया ग्राह्यताविरहात्तद्रूपावच्छिन्नाभावस्य विरोधितानुपपत्तिः ।

यत्तु—अभावे अनुयोगितासम्बन्धावच्छिन्नसाध्याद्यभावस्यैव दोषतया विवक्षणम्—तदपि न, वाच्यत्वादिसाध्यहेतुकेऽपि संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकस्य द्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य चाभावस्यानुयोगितासम्बन्धेन साध्यादिसम्बन्धित्वादभावत्वावच्छेदेन तत्सम्बन्धावच्छिन्नसाध्याद्यभाववत्त्वाप्रसिद्धेः । अभावत्वसामानाधिकरण्यमात्रेण तद्वत्ताधियश्च अभावत्वसामानाधिकरण्यमात्रेण साध्यादिप्रकारकव्यतिरेकव्याप्तिग्रहाविरोधितया तस्य दोषत्वायोगात् । स्वरूपादिसम्बन्धावच्छिन्नवाच्यत्वत्वाद्यवच्छिन्नप्रतियोगितानिरूपितानुयोगितासम्बन्धस्य चाप्रसिद्ध्या तादृशसम्बन्धावच्छिन्नाभावोऽप्यप्रसिद्ध इति न तादृशस्य दोषतोपगमसम्भवः । साध्यतावच्छेदकस्य स्वावच्छिन्नसम्बन्धविशेषावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽभावांशे तादृशसम्बन्धेन प्रतियोगिविशेषणतापन्नसाध्यतावच्छेदकादिप्रकारकव्यतिरेकव्याप्तिग्रहाविरोधितयाऽनुपसंहारित्वमित्यपि न सार्वत्रिकं विशेषणान्तरानवच्छिन्नज्ञानत्वादेर्यत्र साध्यता-

प्रतीतेः । अभावत्वञ्च न भावभिन्नत्वं प्रथमं दुर्ग्रहत्वात्, किन्त्वयमभावो न भाव इति प्रतीतिसाक्षिकं पदार्थान्तरम्, तच्चानुपस्थितं निर्विकल्पकोपस्थितं वा प्रकारः, अभावत्वञ्चासमवेतत्वान्न जातिः ।¹ अन्यथेति । अनतिप्रसक्ताधिकरणैस्तद्धर्मैर्वा अभावव्यवहारोपपत्तेरिति भावः । लाघवादबाधिताभावत्वविशिष्टप्रत्ययबलाच्चातिरिक्तैकाभावसिद्धिस्तुल्यैव । एतेनाभावत्वं सप्रतियोगिकत्वं ; तच्चाननुगतानामप्यावश्यकानां प्रतियोगिनां कल्प्यते इत्यपास्तम् । संयोगादिसाधारण्याच्च ॥

(गा०)साध्याभावत्वं साध्यविरोधित्वमात्रमत्यत्र मूले साध्यविरोधित्वं यदि साध्यासामानाधिकरण्यं तदा साध्यासमानाधिकरणपदोपादानवैयर्थ्यमिति तद्व्याचष्टे साध्येति । साध्यासमानाधिकरणत्वं साध्यानधिकरणवृत्तित्वं न तु साध्याधिकरणावृत्तित्वमतो न साध्याभावपदोपादानवैयर्थ्यम् । अधिकरणभेदेन संयोगाद्यभावभेदमते इदं लक्षणम्, अतो न संयोगी द्रव्यत्वादित्यादावव्याप्तिः । साध्यासमानाधिकरणपदं प्रतियोगिवैयधिकरण्यविशेषार्थकमित्यपि केचित् । तन्न, साध्याभावप्रतियोगित्वेन साध्योपादानस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात् । मूलस्थमात्रपदेन भावव्यावर्तकाभावत्वनिवेशव्यवच्छेदः ।

अभावाभावस्य अभावप्रतियोगिकस्य भावत्वेऽपि भावतयाऽभावत्वाविरहेऽपि अभावत्वानिवेशाभ्युपगमेनाभावाभाव इत्यादिकल्पान्तराभिधानस्य सिद्धान्तत्वभ्रमनिरासायाह दीधितौ एकदेशीति । ननु घटाभावो नास्तीत्यादिप्रतीत्या घटाभावाभावत्वविशिष्टधर्मो सिध्यति तस्यातिरिक्तत्वञ्च सैव विरुणद्धि तस्यापि घटादिरूपत्वे स्वरूपाभावत्वस्वरूपस्याभावप्रतियोगिकत्वाच्चाद्वित्वादित्याशंकते न चेति । सम्बन्धान्तरत्वात्–अभावत्वान्यसम्बन्धत्वात् । स च सम्बन्धः स्वरूपादतिरिक्तोऽनतिरिक्तो वाऽस्तुभयथैव न क्षतिरिति भावः । घाघादिस्यस्य भाव इत्यादि । अविरोधादिति । अभावाभावस्यातिरिक्तत्ववादिनापि प्रतियोगिमात्रज्ञानस्याभावग्रहप्रतिबन्धकत्वापगमादिति भावः । प्रत्यक्षेणेति ।

१ इदमतिरिक्तग्रहविषयत्वस्य ज्ञानघटितत्वेन चक्षुरयोग्यत्वादिति

मपेक्षितमित्याशयेनाह निर्विकल्पकोपस्थितमिति। तथा चाभावत्व-स्य निर्विकल्पकावेद्यत्वप्रवादो भावभिन्नत्वरूपाभावत्वमते एव, तस्य पदार्थान्तरत्ववादिनां तु निर्विकल्पकवेद्यत्वमिष्टमेवेति भावः। नन्वेवमभावत्वस्य नित्यत्वे सत्यनेकव्यक्तिवृत्तितया जातित्वापत्तिरित्यत आह अभावत्वेति।

इदं तु बोध्यम्। अभावत्वमनुयोगिताख्यः प्रतियोगिनिरूपितः सम्बन्धविशेषः, स च प्रतियोग्यादिभेदभिन्न एवेत्यनुगमकधर्मान्तरप्रकारेणैव तस्य नास्तीति बुद्धौ प्रकारता, सम्बन्धिकतया च तस्य प्रतियोग्युपरागेणैव भानं निर्विकल्पकवेद्यता चानुगमकधर्मस्यैव। प्रपंचितं चैतदधिकमधस्तात्।

अधिकरणस्याभावरूपत्वे अभावाधिकरणत्वानुपपत्तेरतस्तद्भिन्नमेवेति। अभावव्यवहारोपपत्तेरिति। भावेऽभावाभावत्वस्वीकारे भावाभावत्वस्यापि तत्र सम्भवादिति भावः। प्रतियोगिमात्रस्यानुत्तरतया युक्तिं दर्शयति लाघवादिति। अनन्तधर्मेष्वभावत्वकल्पनापेक्षया एकत्र तत्कल्पन इत्यादिः। घटत्वाद्यभावाभावस्यातिरिक्तत्वे इदमयुक्तत्वसम्भवाद्भावो नाभाव इति प्रतीतेर्दुरुपपन्नतया अभावत्वं भावव्यावृत्तमेवेति दर्शितयुक्त्यैव निर्भरं दर्शयति। अबाधितेति। प्रमात्मकेत्यर्थः। एतेन-फलधर्मिणां बहुत्वस्य धर्मकल्पनायामबाधकत्वेऽभावमात्रासिद्धिप्रसङ्गेन। संयोगादिसाधारण्याद्यत्वस्य सप्रतियोगिकत्वस्येत्यादिः। तथाच सप्रतियोगिकत्वस्य नास्तीति प्रतीतिविषयत्वे घटसंयोगादिमत्यपि घटो नास्तीति प्रतीतिः स्यादिति भावः।

अत्र सिद्धान्तानुसारिणः। अभावत्वं भावाभावसाधारणमेव नास्तीति प्रत्ययनियामकम्। यदि भावो नाभाव इति प्रत्ययः प्रामाणिकस्तदा भावव्यावृत्तमप्यभावत्वं तादृशप्रत्ययनियामकतया स्वीक्रियताम्, न तु तदेव नास्तीति प्रत्ययनियामकं तथासत्यनन्ताभावकल्पनया गौरवात् भावाभावसाधारणैकधर्मस्यैव लाघवेन नास्तीति प्रत्ययनियामकतया कल्पनौचित्यात्।

यत्तु-अनन्तघटादीनां घटाद्यभावाभावत्वकल्पने गौरवाल्लाघवेनातिरिक्तैकाभावे तत्कल्पनमुचितमिति। तत्रेदं प्रतिभाति-घटाभावाभावत्वं घटाभावनिरूपितोऽनुयोगिताविशेषः, स च घटनिष्ठ-

घटाभावीयप्रतियोगितातो नातिरिच्यते । सा चानन्तघटेषु क्लृप्तैव । न चैवमत्र घटाभावप्रतियोगी अत्र घटाभावाभाव इति प्रतीत्योरविशेषापत्तिः, प्रतियोगितानुयोगित्वस्वरूपविभिन्नधर्मावगाहनेनैव तद्विशेषात् । "अभावविरहात्मकत्वं वस्तुनः प्रतियोगित"ति प्रवादविरुद्धश्चायं पन्थाः । घटादेः संयोगादिसम्बन्धस्यैव संयोगादिसम्बन्धावच्छिन्नस्वाभावाभावत्वविशिष्टनिरूपितत्वं स्वीक्रियते न तु समवायादेरतो न कपालादौ संयोगादिसम्बन्धावच्छिन्नघटाभावो नास्तीत्यादिप्रत्ययप्रसङ्ग इत्यलं पल्लवेन ॥

( चिं० ) अथ साध्यहेत्वोर्विरोधे पक्षे साध्यसत्त्वे हेत्वसिद्धिः, हेतुसत्त्वे साध्याभावसिद्धौ बाधः । न च प्रमाणान्तरेण साध्याभावासिद्धौ बाधो न हेतुत्वेनैवेति वाच्यम् । विशेषणवैयर्थ्यादिति चेन्न ।

हेतोः पक्षे साध्याभावबाधानुपस्थापनेऽपि प्रथमोपस्थितविरोधस्यैव उपजीव्यत्वेन दोषत्वात् ।

ननु साध्याभावसम्बन्धो व्यभिचार एव दोषो न तु तन्नियतत्वमपि, गौरवात् असाधकत्वे व्यर्थत्वाच्च । न च साध्यासहचरितस्य साध्याभावसहचरितस्य वा गमकत्वभ्रमरूपायामशक्तौ विशेषोऽस्ति, येनाशक्तिविशेषोन्नायकतया न व्यर्थविशेषणता । न चानैकान्तिकसामान्यलक्षणे विपक्षगामित्वं न विशेषणम् असाधारणाव्याप्तेः, साधारणन्तु सपक्षवृत्तित्वसहितमिति वाच्यम् । विपक्षगामित्वस्यैव साधारणत्वात् अधिकस्य व्यर्थत्वात् । न च विरुद्धं व्यावर्त्त्यम्, विपक्षगामित्वेनात्रैव तदन्तर्भावात् ।

अथानैकान्तिके विपक्षसम्बन्धेनैव दूषकताबीजम्, असाधारणाव्याप्तेः, न च तत्रान्यदेव बीजम्,

म्बन्धबुद्धिं विना तदज्ञानात् । नापि साध्यवदन्यत्वव्याप्यत्वम्, व्याप्यत्वविवेचने व्यर्थविशेषणत्वात् । नापि स्वव्यापकाभावप्रतियोगिसाध्यकत्वम्, साध्याभावस्य हेतुव्यापकत्वप्रतीतौ हेतुसाध्याभावसम्बन्धभानस्यावश्यकत्वात् ॥

( दी० ) गमकत्वभ्रमेति । व्यभिचारिण्यव्यभिचारमात्रे विरुद्धे च समानाधिकरण्यांशेऽपि भ्रम इति । अशक्तौ विशेष इति । दूषकतायां तुल्यत्वेऽपि निग्रहस्थानत्वेन विशेषाद्भेदेनोपन्यासः । अत एवानैकान्तिकसामान्यलक्षणे साधारणलक्षणे च विरोधवारकं विशेषणम् छलजात्योर्निग्रहस्थानविशेषनिरनुयोज्यानुयोगविशेषत्ववदेतस्यानैकान्तिकविशेषसाधारणविशेषत्वेऽप्यदोषो वेति पुनराकरानुसारी पन्थाः ।

नापीत्यादि । व्यापकत्वं व्याप्यव्यापकसामानाधिकरण्यघटितं न वा ? आद्ये साध्याभावस्येति । द्वितीये तु नाभासत्वमविरोधात् ॥

(गा०) साधारणविरुद्धयोर्गमकत्वभ्रमरूपाशक्तौ न कश्चिद्विशेष इति मूलोक्तं दूषयति व्यभिचारिणीत्यादिना । अव्यभिचारमात्र इति भ्रम इत्यग्रिमेणान्वयः । मात्रपदेन साध्यसामानाधिकरण्यभ्रमव्यवच्छेदः । सामानाधिकरण्यांशेपि इत्यपिना अव्यभिचारसमुच्चयः । नन्वेवमप्यनुमितिविरोधिरूपमुभयोरपि साध्याभावसामानाधिकरण्यमेकमेवेति साधारणविरुद्धयोः पृथक्परिगणनमसङ्गतमित्यत आह दूषकतायामिति । अनुमित्यनुपधानप्रयोजकरूपभेदविरहेपीत्यर्थः । निग्रहस्थानत्वेन विशेषादिति । निग्रहविशेषप्रयोजकत्वेनानैकान्तिकराहित्यादित्यर्थः । भेदेनोपन्यासः—विरुद्धस्य स्वातन्त्र्येण परिगणनम् । अत एव—उक्तयुक्त्या विरुद्धस्यानैकान्तिकविशेषबहिर्भूतत्वादेव ।

विरुद्धस्यानैकान्तिकलक्षणाक्रान्तत्वेपि स्वातन्त्र्येण तद्विभजनं सम्प्रदायात छलजात्योरिति । छलजात्योः पदार्थविभाजकनिग्रहस्थान-

त्वाक्रान्तत्वेऽपि यथा पदार्थेषु स्वतन्त्रविभजनमविरुद्धं तथा विरुद्धस्यानैकान्तिकविशेषविशेषतया अनैकान्तिकत्वरूपहेत्वाभासविभाजकरूपाक्रान्तत्वेऽपि हेत्वाभासेषु स्वतन्त्रविभजनमविरुद्धमित्यर्थः।

मूले विरुद्धलक्षण इति। विरुद्धपक्षेतरभेदानुमान इत्यर्थः। व्यर्थत्वे न नियमांशस्य व्यर्थत्वम्।

हेतुमन्निष्ठाभावाप्रतियोगित्वरूपायाः साध्याभावनिष्ठहेतुव्यापकताया हेतुसाध्याभावसामानाधिकरण्याघटिततया तदघटितविरोधज्ञाने साधारण्यमानस्यावश्यकत्वाभिधानं मूलकृतो न सङ्गच्छत इति तत्सङ्गमनाय वितर्कयति व्यापकत्वमिति। अविरोधित्वादिति। ग्राह्याभावानवगाहित्वे तज्ज्ञानस्य व्याप्तिज्ञानाप्रतिबन्धकत्वादित्यर्थः।

इति विरुद्धपूर्वपक्षग्रन्थः॥

(चिं०) उच्यते। साध्यव्यापकाभावप्रतियोगित्वं विरुद्धत्वम्। न च प्रतियोगिनोरनन्वये भासमान एव तदभावयोर्व्याप्तिग्रहः, भिन्नग्राहकसामग्रीकत्वात्, अन्यथा व्यतिरेकिविलयापत्तेः।

यद्वा वृत्तिमतः साध्यवदवृत्तित्वं साध्यवद्वृत्तित्वानधिकरणत्वं साध्यासमानाधिकरणधर्मत्वं साध्यवद्वृत्तित्वानधिकरणधर्मत्वं वा तत्त्वम्। न च व्यतिरेकव्याप्तिर्व्याप्तिः। तत्र साध्याप्रसिद्ध्या तज्ज्ञानविरहात्। असाधारणे च सङ्कर एव, अनेनापि रूपेण तस्य दोषत्वात्। न च साध्यवदवृत्तित्वे सति वृत्तिमत्त्वज्ञानात् साध्याभाववद्गामित्वज्ञानमावश्यकं तेन विना साध्यवदवृत्तित्वाज्ञानादिति वाच्यम्। उपजीव्यत्वेन भिन्नत्वात्, उपजीव्यत्वेऽपि साध्यवति न वर्त्तत इति ज्ञा-

मं स्वतोदूषकमिति चेन्न। असहचारज्ञानस्य विरोधितया व्याप्तिग्रहप्रतिबन्धकत्वात्, व्यभिचाराज्ञानविरोधित्वेन व्यभिचारज्ञानवत् ।

(दी०) साध्येत्यादि। हेत्वभावस्य साध्यवन्निष्ठाभावप्रतियोगित्वज्ञानं वस्तुतस्तत्प्रतियोगिकाभावस्य हेतोः साध्यसामानाधिकरण्यग्रहं विरुणद्धीत्यभिप्रायेणेदम् ।

यदि च तदभावाभावत्वेनासामानाधिकरण्यग्रहेऽपि तत्त्वेन सामानाधिकरण्यग्रहो न विरुध्यत इति भाव्यते तदाह पक्षेत्यादि। वृत्तिमत इति धर्मेति च पक्षधर्मत्वाविरोधित्वप्रदर्शकं न तु विशेषकम्, दूषकतायामनुपयोगादव्याप्तिकरत्वाच्च। वृत्तिविशेषसूचनार्थं वा तत्, तेन समवायेन हेतुतया धूमे नाव्याप्तिः। आद्ययोः साध्यवद्वृत्तित्वतदधिकरणत्वाभावौ चरमयोश्च साध्यवद्वृत्तित्वाधिकरणभेदावथोविति भेदः। ज्ञानातिप्रसक्तिं निरस्यति न चेत्यादिना। तेनेत्यादि। साध्याभाववद्वृत्तित्वज्ञानं विना वृत्तिमत्त्वविशिष्टसाध्यवद्वृत्तित्वज्ञानापर्यवसानादित्यर्थः। असहचारेति। सहचारः सामानाधिकरण्यम्। व्यभिचारेति। व्यभिचारो न ज्ञायते यस्मात्तद्व्यभिचाराज्ञानमव्यभिचारज्ञानम्। तदयमर्थः-अव्यभिचरितसामानाधिकरण्यरूपाया व्याप्तेरव्यभिचारांशग्रहाविरोधिग्रहविषयतया यथा व्यभिचारी हेत्वाभासस्तथा सामानाधिकरण्यांशग्रहविरोधिग्रहविषयतया विरोधोऽपीति ।

(गा०) ननु हेतौ साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानस्य व्याप्तिज्ञानादौ प्राह्याभावावगाहितया प्रतिबन्धकत्वं न संभवतीति कथं हेतुनिष्ठतादृशप्रतियोगित्वस्य विरोधरूपतया सिद्धान्तप्रघट्टनमित्यत आह हेत्वभावस्येति। तत्प्रतियोगिकेति। हेत्वभावप्रतियोगिकेत्यर्थः। हेत्वभावाभावत्वेन भासमाने यत्र सामानाधिकरण्यग्रहस्तत्र्भावं तुदन्यविशिष्टविषयतया साध्यसमानाधिकरणाभावप्र

त्रियोगित्वमप्यगृहीत इति तत्र वाह्न्यप्रतियोगित्वाभावरूपव्यापकताग्रहप्रतिबन्धकता न तु हेतुतावच्छेदकरूपेण असमाने. साध्यसामानाधिकरण्यग्रह इत्यग्रचेरनुपदं वक्ष्यमाणतया अभिप्रायेणेति ।

यदि चेत्यनन्तरं हेत्वभावे साध्यव्यापकताग्रहदशायामिति पूरणीयम् । तदभावेति । हेत्वभाववत्यर्थः । असामानाधिकरण्यग्रहेऽपीति । सामानाधिकरण्यग्रहासंभवेऽपि, साध्यव्यापकत्वं साध्यसमानाधिकरणस्वभावकत्वरूपं यदि विवक्ष्यते तदा पूरणं विनैव असामानाधिकरण्यग्रहेऽपि इत्यस्यासामानाधिकरण्यग्रहदशायामिति यथाश्रुतार्थकतयैव च संगतिर्बोध्या । तत्त्वेन-हेतुतावच्छेदकरूपेण, अवृत्तिहेतोर्विरुद्धत्वस्याव्यवहितताया विरोधरूपतायाश्चेष्टत्वाद्वृत्तिमत इति धर्मेति च व्यर्थमत्यत आह वृत्तीति । पक्षधर्मत्वाविरोधित्वप्रदर्शकमिति । एतद्दाने च स्वरूपासिद्धिवैलक्षण्यस्य विरोधे लाभायेति ध्येयम् । विशेषकं-विरोधशरीरप्रविष्टार्थकं, दूषकतायां-प्रतिबन्धकतायाम् । अनुपयोगित्वात्-तदर्थविषयताया अनुपयोगित्वात्, अव्याप्तिकत्वात्-अवृत्तित्वविरुद्धासंग्रहप्रयोजकत्वात् । वृत्तिविशेषेति । येन सम्बन्धेन विरुद्धत्वमभिमतं तत्सम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वानिवेशलाभायेत्यर्थः । तन्निवेशनप्रयोजनमाह तेनेति । लक्षणचतुष्टयस्य भेदं स्फुटयति आद्ययोरिति । अभावाविति । अत्यन्ताभावावित्यर्थः । पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ व्यतिरेकिणि साध्यवद्वृत्तित्वस्य सत्त्वाद्वृत्तिव्याप्तिर्न संभवतीत्याशयेनाह ज्ञानातिप्रसक्तिमिति । हेतुमतीति साध्यवांश्चाग्रहेण तत्र साध्यवद्वृत्तित्वग्रहसंभवादिति भावः । असाधारणे, शब्दो नित्यः शब्दत्वादित्यादौ यस्त्वातिव्याप्तिशंकां लक्ष्यतां स्वीकृत्य निराकुरुते मूले असाधारणे चेति । संकर एवेति । विरोधस्य दोषान्तरसामानाधिकरण्यमिष्टमेवेत्यर्थः । अनेन-विरुद्धत्वेन, तस्य-असाधारणहेतोर्दोषत्वात्-दुष्टत्वे क्षतिविरहात् । साध्याभाववद्वृत्तित्वज्ञानाभावस्य साध्यवद्वृत्तित्वाज्ञानप्रयोजकत्वं न संभवति, कार्याभावस्य कारणव्यतिरेकाप्रयोजकत्वादिति तेन विनेत्यादिमूलासंगतिरिति तदन्यथा व्याख्यामुपादत्ते दीधितौ तेनेत्यादीति । वृत्तिमत्त्वेति । वृत्तिमत्त्वविशिष्टसाध्यवद्वृत्तित्वरूपहेतुज्ञानघटितसाध्याभाववद्गामित्वानुमितिसामान्याः फलोपहितत्वानिर्वाहादित्यर्थः । तथाच सामान्याः

सोपधाननियमानुरोधात् तज्ज्ञानस्यावश्यकत्वमिति भावः ।

मूले उपजीव्यत्वेन भिन्नत्वादिति । व्यभिचारज्ञानोपजीव्यत्वेन विरोधस्यापि पृथग्दोषताया आवश्यकत्वादित्यर्थः । न स्वतो दूषकमिनीति । उपाधिरिव न हेत्वाभास इति शेषः । व्याप्तिग्रहप्रतिबन्धकत्वादित्यस्य स्वतोपीत्यादिः । व्यभिचाराज्ञानविरोधित्वेनेति मूलस्य व्यभिचारज्ञानाभावविरुद्धत्वेनेत्यर्थो न सम्भवति—तावता व्याप्तिज्ञानप्रतिबन्धकत्वालाभादित्यन्यथा तद्व्याचष्टे दीधितौ व्यभिचारेणेति । व्याप्तेरव्यभिचारसामानाधिकरण्यघटितत्वमभिधाय तत्सद्भावानविरोधिनो ज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकतां स्फुटीकुर्वन् तद्विषयस्य हेत्वाभासताया निष्प्रत्यूहत्वं दर्शयति तदयमर्थ इत्यादिना ।

( चि० ) ननु विरुद्धस्य स्वार्थानुमानदोषत्वेऽपि परार्थानुमानेऽपार्थकत्वम् अयोग्यताज्ञानेन निश्चितानन्वयादिति चेन्न । अयोग्यताज्ञानस्य विरुद्धत्वज्ञानोपजीवकत्वेन तस्यैव दोषत्वात् बाधेऽप्येवम् । स चायं विधिसाधने त्रिविधः—साक्षात्साध्याभावव्याप्यत्वात् साध्यव्यापकाभावव्याप्यत्वात् साध्यव्यापकविरुद्धोपलम्भात् । यथा धूमवानयं योग्यधूमवत्तया अनुपलभ्यमानत्वात् निरग्निकत्वात् जलाशयत्वात् । न च सर्वत्र साध्यव्यापकविरुद्धोपलम्भ इति न त्रैविध्यम् । एतदज्ञानेऽपि साध्याभावतद्व्यापकाभावव्याप्यत्वेनापि ज्ञातस्य दोषत्वात् । न च धूमवानयं तदभाववत्त्वादिति त्रयाधिकम्, स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं हि व्यापकत्वम्, तच्चाभेदेऽपि धूमवानयं धूमाभाववत्तयोपलभ्यमानत्वात् तद्वत्तयानुपलभ्यमानत्वादित्यनैकान्तिकमेव ।

निषेधसाधनेऽपि त्रिविधः—प्रतियोग्युपलम्भात् साध्यव्यापकाभावोपलम्भात् साध्यव्यापकविरुद्धो-

( दी० ) इदं पुनरिहावधेयम् । कथितरूपाणि किं स्वरूपतो ज्ञातान्येव सामानाधिकरण्यग्रहविरोधीनि असामानाधिकरण्यव्याप्यत्वेन वा ? नाद्यः—व्यापकाभावव्याप्यत्वादेस्तदसम्भवात् । न द्वितीयः—साध्याभावव्याप्यत्वयोः स्वरूपेणैव ज्ञातयोस्तथात्वात् । तथात्वेऽपि तत्त्वमविरुद्धमिति चेत्, हन्तैवमसामानाधिकरण्यस्य समानाधिकरणावृत्तितद्धर्माणाञ्च तथात्वादाधिक्यम् । न चैतानि धर्मिविभाजकान्येव, सर्वेषामेव साध्याभावव्याप्यत्वेनैकविधत्वादिति ।

विरोधोन्नायकप्रकारत्रैविध्येन धर्मिणोऽपि त्रैविध्याभिधानमिति वदन्ति । अयन्त्वेसादि । बाधस्वरूपासिद्ध्यन्यतरसङ्करस्तु आवश्यकोऽन्यसङ्करस्तु क्वाचित्को ज्ञानासङ्कराच्च पाधिक्यम् ।

इति विरुद्धदीधितिः ॥



( गा० ) स्वरूपतो ज्ञातान्येवेति एवकारो मध्ये योज्यः, तथा च साध्याभावव्याप्यत्वादिना अज्ञातान्यपि विरोधीनीत्यर्थः । असामानाधिकरण्यव्याप्यत्वेनेति, सावधारणमतो न वक्ष्यमाणदूषणासङ्गतिः । व्यापकाभावव्याप्यत्वादेरित्यादिना व्यापकत्वस्याज्ञाने तदप्रग्रहः । स्वरूपेणैव ज्ञातयोरिति । तदभावव्याप्यत्वेनाज्ञातयोरपीत्यर्थः । साध्याभाव साध्यसमानाधिकरण इत्यनाहार्यज्ञानानुत्पत्त्या धर्मितावच्छेदकतासम्बन्धेन, तत्सामानाधिकरण्यप्रकारकानाहार्यबुद्धौ तदभावत्वादिपर्याप्तविषयतासम्बन्धेन ज्ञानस्यैव प्रतिबन्धकत्वादिति भावः । यथाकथञ्चिद्विरोधिरूपाणामेवाय विभाग इत्याशङ्कते तथात्वेऽपीति । स्वरूपतो विरुद्धत्वेऽपीत्यर्थः । तत्त्व–विरुद्धत्वम्, अविरुद्ध–अक्षतम् । असामानाधिकरण्यस्येति । अस्य स्वरूपत एव सामानाधिकरण्यधीविरोधित्वादिति भावः । समानाधिकरणानि । अयमर्थ

सास्नावत्त्वादित्यादौ सास्नात्वादीनामित्यर्थः । तेषामप्यद्रव्यत्वाद्यसामानाधिकरण्यव्याप्यत्वेन विरोधित्वादिति भावः ।

स चायमित्यादिग्रन्थो न सामानाधिकरण्यव्याप्यत्वेन विरोधिरूपपरिगणनपरः, किन्तु विरुद्धहेतुप्रभेदपरिगणनपर एव, एवं च साध्यासामानाधिकरण्यरूपवतां धर्मिणां साध्याभावव्याप्यत्वादिनैवोपग्रहान्नाधिक्यमिति शङ्कां निरस्यति न चैतानीति । सर्वथा–साध्यव्यापकाभावादीनाम् । साध्याभावव्याप्यत्वेनेति । तथा च तेषां पृथगुपादानानुपपत्तिरिति भावः । इदमुपलक्षणम् । एतदज्ञानेपीत्यादिमूलविरोधेपि द्रष्टव्यः ।

विभागं सङ्गमयतां केषांचिन्मतमाह विरोधोन्नायकेति । एवं च साध्याभावव्याप्यत्वादिना ज्ञानस्य यत् दूषकत्वमभिहितं तदपि विरोधिज्ञानद्वारा न तु साक्षादतो न विरोध इति ध्येयम् । विरोधानुमापकहेतूनामानन्त्यात्त्रैविध्यानुपपत्तेस्तदवस्थैवेत्यस्वरससूचनाय वदन्तीति ।

मूले सर्वथायं विशेषणद्वारापीति । उक्तनिखिलप्रकारो विरुद्धः विशेषणनिबन्धनोपीत्यर्थः । अत्र विशेषणनिबन्धनत्वस्य विरोधरूपविशेषणे सङ्क्रमो बोध्यः । कृष्णगुर्विति । अत्र विशेष्यधूमत्वावच्छिन्नस्य साध्यसमानाधिकरणत्वात् कटुत्वादिविशिष्टस्यैव विरुद्धत्वादिति भावः । अत्र प्रत्येकविशेषणावच्छिन्नस्यैव विरुद्धता बोध्या । बाधस्वरूपासिद्ध्यन्यतरसङ्करस्यावश्यकतया क्वाचित्कताभिधानं न सङ्गच्छत इत्याशङ्क्य तत्तदुभयानुगमकैकतररूपावच्छिन्नसङ्करस्य कादाचित्कत्वं विवक्षितमित्याह दीधितौ बाधेत्यादिना । ननु विरोधस्थले दोषान्तरस्यावश्यकत्वे किमस्य दोषताभ्युपगमेनेत्यत आह ज्ञानासङ्करादिति । दोषान्तराज्ञानदशायां विरोधज्ञानेनाप्यनुमितिप्रतिबन्धादस्य दोषान्तरत्वमावश्यकमिति भावः ॥

इति गदाधरभट्टाचार्यचक्रवर्तिविरचितायां
गादाधर्यां विरुद्धप्रकरणम् ।

श्रीगणेशाय नमः ।

अथानुमानगादाधर्यां

# सत्प्रतिपक्षप्रकरणम् ।

(चि०) सत्प्रतिपक्षत्वं न समानबलबोधितसाध्यविपर्ययलिङ्गत्वम्, परस्परप्रतिबन्धेनोभयोरबोधकत्वात् । बलञ्च न सपक्षसत्त्वादि, व्यतिरेकिण्यभावात् । नापि समानव्याप्तिपक्षधर्म्मतावत्त्वम्, विरोधेनैकत्र तद्भङ्गनियमात् । नापि व्याप्तिपक्षधर्म्मतया ज्ञातत्वम्, विरोधिव्याप्तिपक्षधर्म्मताविशिष्टज्ञानयोरन्यतरभ्रमत्वनियमेन नित्यत्वव्याप्तश्रावणत्वादिवैशिष्ट्यप्रसिद्ध्याऽऽरोपयितुमशक्यत्वात् । न च साध्यव्याप्यस्य पक्षधर्म्मता पक्षधर्म्मस्य वा साध्यव्याप्यतारोप्येति वाच्यम् । एकत्र तदुभयाभावात् विशिष्टस्याप्रसिद्ध्या तद्वैशिष्ट्यस्यारोपासम्भवात् । नाप्यनिर्द्धारितविशेषेण बोधितः साध्यविपर्ययकत्वम्, उभयोरबोधकत्वात् । विरोधश्च न व्याप्तिभङ्गाभङ्गरूपः एकत्र तद्भङ्गनियमात् ।

(दी०) एकत्र तदुभय इति । व्याप्ये पक्षधर्म्मतायाः पक्षधर्मे च व्याप्यत्वस्यारोपः प्रत्येकमव्यापकोऽतो विशिष्टस्यारोपो वाच्यः, स चैकधर्मिणि विरोधिव्याप्यद्वयविरहाद्विशिष्टस्याप्रसिद्ध्या न सम्भवतीत्यर्थः । विरुद्धादौ साधने स्वव्यापकसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धेश्चेत्यपि द्रष्टव्यम् । एकत्र भङ्गेति । तथा चान्यतरत्वेन तदवधारणमस्तीति भावः ।

सिद्धिविशिष्टशब्दवृत्तित्वाद्यप्रसिद्ध्या श्रावणत्वादौ तद्ग्रहाद्यप्रसिद्ध इति श्रावणत्वादेः- समानबलत्वासम्भवेन कृतकत्वादेस्सत्प्रतिपक्षतानुपपत्तिरिति भावः ।

व्याप्तिपक्षधर्मतोभयज्ञानविषयतया बलत्वे नैव दोष इत्यतो दोषान्तरं स्वयमाह विरुद्धादाविति । आदिना साधारणपरिग्रहः । साध्याभाववद्वृत्तित्वरूपाया व्याप्तेरन्यत्राप्रसिद्धाया विरुद्धादावप्यारोपसम्भवात् । स्वव्यापकेत्यादि । अप्रसिद्धश्चेति । तज्ज्ञानघटितसमानबलत्वासम्भवे इति शेषः । व्याप्तिप्रकारेण पक्षे स्वप्रकारकज्ञानविलक्षणे सामान्यादौ पक्षे समवायादिरूपहेतुतावच्छेदकसम्बन्धेन वृत्तेः प्रसिद्धिर्न क्षतिमावहतीति साऽप्रसिद्धिर्नोक्ता व्याप्तिघटकानां तादृशपदार्थानां खण्डशः प्रसिद्धानां परस्परोपश्लेषावगाहिज्ञानस्य बलतया विवक्षणेन तद्दोषोद्धारसम्भवेऽपि अन्वयव्यतिरेकव्याप्तिज्ञानयोरननुगमेनैकोपादानेऽन्यत्राव्याप्तिर्दुर्धरैवेति भावः । साध्यवत्ताज्ञानविरोध्यनुमितिसमर्थत्वेनानुगमे तु सिद्धान्त एव पर्यवसानम् ॥

१ व्याप्तिभङ्गाभङ्ग इति मूले व्याप्तिपक्षधर्मताप्रमितिविषयत्वतद्भ्रमविषयत्वान्यतररूप इत्यर्थकम्, एकतरविषयकव्याप्तिपक्षधर्मताज्ञानस्य भ्रमत्वनियमेऽपि तदनवधारणेनानिर्धारितविशेषत्वसम्भवादेकत्र तद्भङ्गनियमादिति दूषणमसङ्गतमित्यत आह तथा चेति । तादृशभङ्गनियमे चेत्यर्थः । तदवधारणं-भङ्गावधारणम् । अनयोरेकतरं बाध्यं विरुद्धार्थप्रतिपादकत्वादित्यनुमानात्सत्प्रतिपक्षदशायामप्यस्तीत्यर्थः । यद्यपि अनयोरेकतरमित्यादेः एकत्र पक्षे साध्यतदभावव्याप्यवत्ता हेतुद्वयज्ञानान्यतरद्भ्रमः एकत्र मिथो विरुद्धद्वयसाधकद्वयान्यतरत्वादित्यर्थो न साधु-सद्धेतुपरामर्शोऽप्यन्यतरत्वहेतुसत्त्वेन भ्रमत्वस्याभावेन व्यभिचारात् । न चैकपक्षकहेतुमत्तेहेतुपरामर्शान्यतरत्व पक्षीकृत्य विरोधिसाधकद्वयवृत्तित्वेन भ्रमवृत्तित्वमेवानुमेयं तादृशान्यतरत्वाश्रये एकत्र भ्रमत्वसत्त्वेनैव तत्र भ्रमवृत्तित्वसत्त्वेन न व्यभिचारप्रसक्तिरिति वाच्यम् । तथासत्यपि घटादिविषयकसमूहालम्बनरूपो यत्र परामर्शस्तत्र घटाद्यंशे भ्रमत्वमादायार्थान्तरवारणाय तत्तद्धेतौ, तत्तत्साध्यव्याप्तिपक्षधर्मतान्यतरभ्रमस्य निवेशनीयतया तत्तद्धेतुद्वयान्तर्गतसद्धेतौ तत्तत्साध्यादिव्याप्तिभ्रमाप्रसिद्ध्या साध्याप्रसिद्धेः । तत्तद्धेतुद्वयान्यतरांशे तत्तत्साध्यव्याप्तिपक्षधर्मता-

न्यतरभ्रमवृत्तित्वसाधने च विरुद्धार्थसाधकान्यहेतुकपरामर्शद्वया-न्यतरत्वे व्यभिचारः साध्यप्रसिद्धिमात्रेणैव कृतकृत्यता च । तथापि तत्तत्साध्यतदभावव्याप्यवच्छिन्नपक्षधर्मतानिरूपितहेतुविषयताद्वया-न्यतरत्वं पक्षीकृत्य भ्रमत्वानयनविषयतावृत्तित्वमेकधर्मिकविरुद्धा-नुमितिजनकतावच्छेदकविषयताद्वयवृत्तित्वेन साधनीयम् । भ्रमत्वं त्वननुगतं कथंचिन्निर्वचनीयम् ॥

इति सत्प्रतिपक्षपूर्वपक्षग्रन्थः ॥

(चि०) उच्यते । साध्यविरोध्युपस्थापनसमर्थ-समानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं तत्त्वम् । ब-लञ्च व्याप्तिपक्षधर्मते । विरोधिबोधकान्यगमकतौप-यिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वं वा तत्त्वम् ।

(दी०) सत्प्रतिपक्षितव्यवहारो हि सत्यसति वा साध-ने नापरामृश्यमाणे नाप्यविद्यमानविरोधिपरामर्शे, अत एव सन् प्रतिपक्षो विरोधिव्याप्त्यादिमत्तया परामृश्यमाणो हेतुः विरो-धिपरामर्शो वा यस्य परामृश्यमाणस्य हेतोरसौ सत्प्रतिपक्ष इति विग्रहमपि वर्णयन्ति, अतस्तदनुसारेणैव व्यवहारौपयिकं लक्षण-माह साध्येति । बाधाश्रयासिद्धिनिवारणाय समर्थान्तम् । न चासौ न व्याप्तिपक्षधर्मतात्मकबलोपस्थितिरिति वाच्यम् । व्या-प्तिपक्षधर्मताविरहस्य साध्यत्वे पक्षतावच्छेदकत्वे वा तत्सम्भ-वात् । पक्षः साध्याभावव्याप्यवान् साध्यं पक्षवृत्त्यभावव्याप्य-वदिति पक्षस्य, व्यापकभेदेन अन्वयव्यतिरेकभेदेन च व्या-प्तेश्च भिन्नत्वादेकोपादानेऽन्यसंग्रहेण बलस्याविवक्षितत्वाच्च । साध्यधीविरोध्यनुमितिजनकज्ञानाविषयत्वेन तदुपादाय तदुप-स्थितिमभिधानस्य विरोधिज्ञानेन नासिद्धिकास्पर्शमनुधावति । साध्यस्य साध्यसिद्धेर्विरोधिन्याः पक्षो न साध्यवानित्याद्युपस्थितेः, सा-

ध्यविरोधी साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयो बाधः साध्याभावादिस्तदुपस्थितेर्वा जननयोग्यया समानया 'बलोपस्थित्या तथाविधव्याप्त्यादिबुद्ध्या प्रतिरुद्धं कार्यं यस्य तादृशलिङ्गत्वमित्यर्थः। विरोधिव्याप्त्यादिविषयत्वलक्षणयोग्यताशालिन्या अप्युपस्थितेरप्रामाण्यग्रहे सत्प्रतिपक्षत्वासम्पादकत्वात् कार्यप्रतिरोधानुधावनम्। समानत्वञ्चागृहीताप्रामाण्यकसाध्यासिद्ध्यौपयिकपरामर्शकालीनत्वम्। असति गृहीताप्रामाण्यके वा परामर्शे सत्प्रतिपक्षितत्वव्यवहारविरहात्।

(गा०) उच्यते इत्यादि ग्रन्थस्य दोषनिर्वचनपरत्वं न सम्भवति साध्यविरोध्युपस्थानेत्यादेर्ज्ञानस्य ग्राह्यभावाद्यनवगाहितयाऽनुमित्यप्रतिबन्धकतया तस्य हेत्वाभासत्वासंभवादिति सत्प्रतिपक्षनिर्वचनपरतया व्याख्यातुकामो व्यवहारविषयमवधारयति सत्प्रतिपक्षितेति। सत्यसति वेति। समीचीने ऽसमीचीने वेत्यर्थः। तथाच सद्धेत्वाद्युक्तलक्षणस्यातिप्रसङ्गो दशाविशेषे न दूषणावह इति भावः। अपरामृश्यमाण इति। प्रकृतसाध्यासिद्ध्यौपयिकस्वविषयकपरामर्शदशानवच्छिन्न इत्यर्थः। एतेन साध्यसिद्ध्यौपयिकपरामर्शकालीनत्वरूपसमानत्वनिवेशसार्थक्यं दर्शितम्। असति गृहीताप्रामाण्यके च परामर्शे सत्प्रतिपक्षव्यवहारविरहादित्यग्रिमग्रन्थश्चासतीत्यस्य दृष्टान्तविधया प्रदर्शनेन गृहीताप्रामाण्यकत्वांशमात्रव्यावृत्तिप्रदर्शनपर इति न पौनरुक्त्यम्। अविद्यमाने विरोधिपरामर्श इति। विरोध्यनुमितियोग्यपरामर्शदशानवच्छिन्न इत्यर्थः। एतेन बलोपस्थितिप्रतिरुद्धकार्यकत्वांशनिवेशप्रयोजनं दर्शितम्। अतएवेति। प्रकृतपरामर्शस्य विरोधिपरामर्शस्य चासत्त्वदशायां सत्प्रतिपक्षव्यवहारविरहादेवेत्यर्थः। अतीतानागतप्रतिहेतुपरामर्शदशायामपि सत्प्रतिपक्षत्वात्प्रतिपक्षपदस्य हेतुपरतापक्षं परित्यज्य परामर्शपरतामाह विरोधिपरामर्शेति। परामृश्यमाणस्येति। यद्यप्यन्यपदार्थे परामृश्यमाणत्वं न शब्दतो लभ्यते तथापि प्रतिपक्षपदस्यैव फलोन्मुखस्वकार्यप्रतिरोधकपरतया परामृश्यमाणस्वकार्यानुमितिविरोधिपरामर्शपरत्वात् फलितार्थविवरणमिदम्। तदनुसारेण—तादृशव्यवहारानु-

सारेण । बाधाश्रयासिद्धिवारणायेति । तद्दशायामतिव्याप्तिवारणाये-त्यर्थः । तयोरपि साक्षादनुमितिप्रतिबन्धकत्वादिति भावः । न चा-श्रयासिद्ध्यादिनिर्णयस्यानुमितिप्रतिबन्धकत्वेपि तस्य परामर्शेनापि समं विरोधात्परामर्शकाले तत्समवधानं दुर्घटमिति वाच्यम् । लौ-किकसन्निकर्षादेव तत्सम्भवात् । आश्रयासिद्धिपदं साध्याप्रसिद्धे-रप्युपलक्षणम् । बलपदेनैव तद्वारणात् समर्थान्तवैयर्थ्यमित्याशङ्कां निराकरोति न चासावित्यादिना । असौ—बाधादिनिर्णयः । व्या-प्तीति । धूमो वह्निव्याप्तिविशिष्टपर्वतवृत्तित्वाभाववान् पर्वताव-वृत्तित्वात् तादृशाभाववान्धूमो गुणवान् द्रव्यत्वादित्यादौ धू-मादेर्वह्न्यादिव्याप्तिविशिष्टपक्षधर्म्मतानिश्चयरूपबाधाश्रयासिद्धिनिर्ण-यस्य व्याप्तिपक्षधर्मतात्मकबलोपस्थितित्वसम्भवादिति भावः । नन्वेवं बलपदं प्रकृतसाध्याभावव्याप्तिविशिष्टप्रकृतपक्षधर्मतापरमिति नायं दोषः प्रकृते वह्निव्याप्तिविशिष्टपर्वतवृत्तित्वव्याप्तिविशिष्टधूम-वृत्तिताया एव बलत्वादित्यत आह पक्ष इति । इतीत्यस्य प्रतिरोध-कज्ञानविषयस्येति शेषः । पक्षस्य व्याप्तेश्च भिन्नत्वादित्यर्थः । प्रथ-मे प्रकृतपक्षस्य द्वितीये प्रकृतसाध्यस्य पक्षतया पक्षभेदः । व्याप्तेर्भे-दकद्वयमाह व्यापकेत्यादि । व्यापकभेदेनेति । व्यापकयोः साध्याभा-वपक्षवृत्तित्वाभावयोर्भेदेनेत्यर्थः । अन्वयव्यतिरेकभेदेनेति । पक्ष-साध्यगमकव्याप्तेरप्यन्वयव्यतिरेकरूपनिरूपकभेदेनेत्यर्थः । अविव-क्षितत्वात्—विवक्षितुमशक्यत्वात् । नन्वनुगतरूपेण सकलव्याप्तिप-क्षधर्मतानिवेशे नायं दोष इत्यत आह साध्येति । विरोधेष्टनेनेति । तादृशानुमितिजनकज्ञानत्वेन प्रतिरोधकज्ञानस्यैव निवेशात्तद्विषय-कत्वेन पुनस्तन्निवेशोऽनुचित इत्यर्थः । तथाच विरोध्युपस्थापनस-मर्थत्वेनैवोपस्थितिनिवेशो युक्त इति भावः । उपस्थितेर्विरोधित्वं प्र-तिबन्धकत्वं तच्च न साध्यनिरूपितमिति साध्यपदं तदनुमितिपरतया व्याचष्टे साध्येत्यादि । इत्याद्युपस्थितेरित्यादिना साध्य पक्षावृत्तीत्या-दि उपस्थितिपरिग्रहः । उपस्थापनेत्यत्र धात्वर्थोपस्थितौ विरोध्य-न्तस्य स्तोकं नम्रेत्यादौ नमने स्तोकस्येवाभेदान्वयः प्रयत्नेनोपपा-द्यः, एतदस्वरसेन साध्यपदस्य मुख्यार्थपरत्वानुरोधेन च कल्पान्त-रमाह साध्यविरोधीति । तद्वत्ताज्ञानप्रतिबन्धकज्ञानविषयत्वस्यैव विषयविरोधिरूपत्वात्साध्यवत्ताज्ञानविषय इति विवरणसङ्गतिः ।

साध्याभाववत्पक्षादिरित्यादिना पक्षावृत्तित्वादिविशिष्टसाध्यादिपरिग्रहः। एतच्च फलितकथनम्। तदुपस्थितेरिति। तादृशपक्षादेः कर्मतया उपस्थितिक्रियायामन्वयो युक्त एवेति भावः।

अथैवं पक्षे साध्यवति साध्याभाववत्पक्षादेरप्रसिद्ध्या सत्प्रतिपक्षितसद्धेतावव्याप्तिरिति चेन्न। यद्रूपावच्छिन्ने धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नवत्ताज्ञानप्रतिबन्धकं तद्रूपावच्छिन्ने पक्षे तद्रूपावच्छिन्नसाध्यकानुमितिजननयोग्योपस्थितिप्रतिरुद्धकार्यकत्वविवक्षणात्। यत्र बाधो दोषस्तत्रैव सत्प्रतिपक्षो दोषः प्रतिहेतुपरामर्शसंवलनदशायां तत्रैव हेतौ सत्प्रतिपक्षव्यवहारो यथार्थ इत्याशयेनैवैतत्कल्पानुसरणम्। तथा च साध्यवत्पक्षकहेतोरलक्ष्यतया न तत्राव्याप्तिरित्याहुः।

वस्तुतस्साध्यवत्ताज्ञानप्रतिबन्धकज्ञानत्वेनोपस्थितेर्लक्षणे निवेशनीया तादृशज्ञानविषयविषयत्वेन तन्निवेशनस्य शिरोवेष्टनेनेत्यादिन्यायेन हेयत्वात्। साध्यादिपक्षकसाध्यतावच्छेदकाद्यभाववद्व्याप्यवत्तापरामर्शवारणाय विशिष्टसाध्यादिग्रहाविरोधित्वनाद्युपस्थितिर्विशेष्या। जननयोग्ययेति। जननं पयर्थः योग्यत्वं च समर्थपदार्थः फले समानत्वं न विवक्षणीयं तस्याविवक्षितत्वादपि तु उपस्थितावेवेति स्फुटीकर्तुं समानयत्यसमासालिखनम्। तथाविधव्याप्तिबुद्ध्या-साध्याभावादिव्याप्तिबुद्ध्या। एतदपि वस्तुकथनम्। तथा प्रतिरुद्धत्वं च तत्प्रयुक्तानुत्पादप्रतियोगित्वम्। वह्निव्याप्याभावादिसाध्यकस्थले वह्न्यादिमत्पक्षविषयकानुमितिजननयोग्यया वह्न्यादिव्याप्यवत्पक्षोपस्थित्या बाधनिश्चयरूपया कार्यप्रतिरोधदशायामतिव्याप्तिवारणाय साध्यवत्ताज्ञानप्रतिबन्धकत्व- प्रथमोपस्थितिविशेषणम्, वह्न्यादिव्याप्यवत्पक्षोपस्थितेरपि साध्यवत्ताज्ञानप्रतिबन्धिका वह्निव्याप्यादिमत्पक्षविषयकसमूहालम्बनरूपवह्न्यादिमत्पक्षविषयकानुमितिं प्रति स्वरूपयोग्यतया यथाश्रुते उक्तातिव्याप्तेर्दुर्वारत्वात् साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नानुमितिनिष्ठकार्यतानिरूपितकारणताश्रयत्वपर्यन्तं समर्थान्तेन विवक्षणीयम्। न च साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकीभूता साध्याभावादिप्रकारता तद्विधेयतैव प्रतिहेतुपरामर्शजन्यतावच्छेदिकेति तज्जन्यताया न प्रतिबन्धकतावच्छेदकविषयतावच्छिन्नत्वमित्युक्तविवक्षायामसम्भव

इति वाच्यम् । प्रकारताविशेषस्यैव विधेयतात्वात्, अन्यथा तु यदवच्छिन्नविशेष्यकयदवच्छिन्नप्रकारकत्वं प्रतिबन्धकतावच्छेदकं तदवच्छिन्नपक्षकतदवच्छिन्नविधेयकत्वावच्छिन्नकार्यतानिरूपितकारणत्वमेव निवेश्यम् ।

ननु तादृशोपस्थितिकालीनज्ञानविषयत्वमेव सम्यक् किं तत्प्रतिरुद्धकार्यकत्वनिवेशेनेत्यत आह विरोधीत्यादि । अप्रामाण्यग्रहविशिष्टाया व्याप्त्याद्युपस्थितेर्न विरोध्यनुमितिजननयोग्यत्वं तदग्रहविशिष्टत्वेनैव परामर्शस्यानुमितियोग्यत्वादिति न तादृशोपस्थितिमादायातिव्याप्तिप्रसक्तिरित्याशङ्कां निराकरोति विरोधिव्याप्त्यादिविषयत्वलक्षणयोग्यताशालिन्या इति । जनकतावच्छेदकतापर्याप्त्यधिकरणत्वरूपयोग्यता नात्र विवक्षिता, किन्तु जनकतावच्छेदककोटिप्रविष्टविषयतारूपैवेति भावः । अथवा अप्रामाण्यग्रहाभावो नानुमितिजनकतावच्छेदकोऽपि तु स्वातन्त्र्येण जनक एवेत्यभिप्रायेणेदम् । कार्यप्रतिरोधानुधावनमिति । तथा चाप्रामाण्यग्रहाभावविशिष्टविरोधिपरामर्शस्यैवानुमितिप्रतिबन्धकतयागृहीताप्रामाण्यकविरोधिपरामर्शस्य कार्यप्रतिरोधकत्वान्नोक्तस्थलेऽतिप्रसङ्गः । यद्यपि अप्रामाण्यज्ञानास्कन्दितपरामर्शस्यागृहीताप्रामाण्यबाधादिरूपत्वे तद्विरुद्धकार्यकत्वमपि दुर्वारमिति यथाश्रुतेऽतिव्याप्तिरस्त्येव, तथापि विरोध्यनुमितिजनकतावच्छेदकरूपस्य कार्यप्रतिरोधप्रयोजकत्वविवक्षणेनातिव्याप्तिर्वारणीया । न च यत्र विरोधिपरामर्शानन्तरक्षणे तद्विषयकाप्रामाण्यग्रहो जायते तत्र पूर्वक्षणेऽप्रामाण्यग्रहाभावविशिष्टतज्ज्ञानरूपप्रतिबन्धकसत्त्वेन तत्क्षणे कार्यानुत्पादात्तत्क्षणे सत्प्रतिपक्षत्वं दुर्वारमिति वाच्यम् । यत्कालीनोपस्थित्याग्रिमक्षणे यस्य कार्यानुत्पादस्स तदा सत्प्रतिपक्ष इति विवक्षया अतिप्रसङ्गवारणात् ।

उपाध्यायरीत्या समानपदं सार्थकयितुं तदर्थमाह समानत्वं चेति । अगृहीताप्रामाण्यकेति । स्वविषयकाप्रामाण्यग्रहाभावविशिष्टेत्यर्थः ।

अथागृहीताप्रामाण्यकत्वशरीरे अन्वयव्याप्त्यंशे व्यतिरेकव्याप्त्यंशे च यदप्रामाण्यं तद्ग्रहाभावविशिष्टत्वं निवेश्यं तद्व्याप्त्यंशेऽप्रामाण्यग्रहसत्वे तद्व्यापकत्वग्राहिपरामर्शस्य सत्प्रतिपक्षत्वाप्रयोजक-

त्वात्, तथा चान्वयव्यतिरेकव्याप्त्योरेकतरांशविषयकपरामर्शदशायामन्यव्याप्त्यंशेऽप्रामाण्यग्रहसत्त्वे सत्प्रतिपक्षता न स्यात्। न च स्वयोग्यानुमितिविरोधिग्रहत्वेनाप्रामाण्यग्रहद्वयमनुगमय्य तदभावविशिष्टत्वं निवेशनीयम्। विरोधित्वं च समानविशेष्यकत्वानवच्छिन्नं ग्राह्यम्। तेन विरोधिपरामर्शव्यावृत्तिरिति वाच्यम्। एवं सति तादृशव्याप्तिद्वयविषयकसमूहालम्बनपरामर्शे एकतरांशेऽप्रामाण्यग्रहसत्त्वे सत्प्रतिपक्षत्वानुपपत्तेरिति चेन्न।

स्वीययत्किञ्चिद्विषयताप्रयोज्यानुमितिप्रतिबन्धकज्ञानसामान्याभावस्य निवेशनीयत्वात्। विरोधित्वं च विरोधिपरामर्शव्यावृत्त ग्राह्यम्। समूहालम्बनपरामर्शस्थले यादृशव्याप्त्यंशे प्रामाण्यज्ञानं नास्ति तादृशव्याप्तिविषयताप्रयोज्यानुमितिविरोधिज्ञानसामान्याभावस्य सत्त्वान्न सत्प्रतिपक्षतानुपपत्तिः। साध्यसिद्ध्यौपयिकत्वं प्रकृतसाध्यानुमितिजननयोग्यत्वम्, योग्यत्वं चाप्रामाण्यग्रहास्कन्दितस्यापि परामर्शस्याप्रामाण्यग्रहाभावस्य तत्सहकारित्वादिति नागृहीताप्रामाण्यकत्ववैयर्थ्यम् असति अविद्यमाने परामर्शे स्वविषयकपरामर्शस्वस्य सत्प्रतिपक्षताविरहात्। न चासति गृहीताप्रामाण्यके वा प्रकृतसाध्यानुमापकपरामर्शेऽप्रामाण्यज्ञानाभावसहकृतपरामर्शरूपकारणाविरहादनुमितिविरहो न विरोधिपरामर्शप्रयुक्त इति समानत्वानिवेशेऽपि नातिप्रसङ्गावकाश इति वाच्यम्। तत्र उभयोरेव कारणाभावतया विनिगमनाविरहेण कार्याभावप्रयोजकताया दुर्वारत्वात्। विरोधिपरामर्शमात्रप्रयुक्तत्वस्य प्रयोजनविरहेणानिवेशात् यत्र प्रतिरोधको विरोधिपरामर्शो बाधनिश्चयश्च वर्तेते तत्रापि सत्प्रतिपक्षत्वस्येष्टत्वात्।

(दी०) यत्तु—प्रामाण्यनिर्णयेनाधिकबलतया बाधकस्य विरोधिपरामर्शस्य वारणाय समानेति—तदसत् व्यभिचारेण प्रामाण्यग्रहस्याबलत्वात्, अन्यत्राप्रामाण्यग्रहानुकूलत्वेनैव क्वचित्तदुपयोगात्। बलपदोपसन्दानाच्चोक्तरूपलाभान्न तद्वैयर्थ्यम्। लिङ्गपदोपादानाच्च स्वीयलिङ्गतौपयिकपरामर्शलाभादास्मादेर्व्युदासः। विरोधिपरामर्शप्रतिरुद्धकार्यकविशिष्टपरामर्शविषयत्वन्तु फलि-

तार्थः । अगृहीताप्रामाण्यकत्वसंवलितयोग्यतोपादाने तु बाधोपस्थितिसमर्थपरामर्शकालीनसाध्यसिद्धिसमर्थपरामर्शविषयत्वं वाच्यं तत्त्वम् ।

यदि चायं वह्निव्याप्यवान् वह्न्यभावव्याप्यवांश्चेति परामर्शादयं वह्निमान् वह्न्यभावव्याप्यवांश्चेत्यनुमितिः प्रामाणिकी न तु सत्प्रतिपक्षत्वम्, तदा कार्य्यप्रतिरोधोऽवश्यमुपादेयोऽजनितविरोधिबोधकत्वेन च विरोधिपरामर्शो विशेषणीयः। अत एवाग्रिमलक्षणे विरोधिबोधिकान्येति फलतो ज्ञानविशेषणम् । एकस्याप्रामाण्यग्रहेऽपरेणानुमितिजननात् तद्वारणाय वा तत् । प्रतिरुद्धकार्य्यत्वञ्च प्रतिरुद्धकार्य्यपरामर्शविषयत्वम् ।

(ग।०) मिश्रोक्तसमानपदव्यावृत्तिं दर्शयितुमुपन्यस्यति यद्वेति । प्रामाण्यनिर्णयेन-स्वविषयकप्रामाण्यनिश्चयेन । एतच्च बाधकताप्रयोजकाधिकबलतायां हेतुः । बाधकस्य-विरोध्यनुमापकस्य, निश्चितप्रामाण्यकपरामर्शजन्यानुमित्यनिश्चितप्रामाण्यकाविरोधिपरामर्शो न प्रतिबन्धकः तद्व्याप्यवत्ताज्ञानधर्मिकप्रामाण्यनिश्चयस्य विरोधिव्याप्यवत्ताज्ञानप्रतिबन्धकतायामुत्तेजकत्वात् । तादृशप्रामाण्यनिश्चये विरोधिव्याप्यवत्ताज्ञानधर्मिकप्रामाण्यनिश्चयाभावस्य विशेषणत्वेनोभयपरामर्शे प्रामाण्यनिश्चयदशायां उभयानुमितिप्रतिरोधनिर्वाह इत्यभिमानः । समानेतीति । समानत्वं च विरोधिबोधानुपधायकत्वं विरोधिबोधाव्यवहितप्राक्क्षणावच्छिन्नत्वाभाव इति यावत् । प्रतिरुद्धकार्यकत्वं च तदभावातिरिक्तसकलप्रकृतसाध्यकानुमितिकारणसमवधानकालावच्छिन्नतत्प्रयुक्तकार्यानुपधायकत्वम् । सकलकारणनिवेशादुभयपरामर्शसत्त्वे बाधेन हीनबलस्य हेतोर्न सत्प्रतिपक्षत्वम् । कार्यप्रतिरोधनिवेशाच्च परामर्शप्रामाण्यनिश्चयेनाधिकबलहेतावतिव्याप्तिवारणायेति बोध्यम् । प्रतिहेतोः स्वसाध्यबाधेन हीनबलतादशायां प्रकृतहेतोः सत्प्रतिपक्षतावारणाय विरोधिपरामर्शेऽपि प्रकृतहेतुपरामर्शाभावातिरिक्तसकलकारणसमवहितत्वं निवेश्यम् । वस्तुतो मिश्रमतेऽनुमितौ न विरोधिपरामर्शमात्रस्य विरोधित्वं किन्तु विरोध्यनुमितिसामग्र्या एव, तथाचेतरकारणासम-

घटितस्य परामर्शस्य कार्याप्रतिरोधकतया प्रतिरोधकविरोधिपरामर्शेनेतरकारणसमवहितत्वं विशेषणं देयम् ।

उभयपरामर्शे अप्रामाण्यग्रहासत्त्व एकत्र प्रामाण्यनिश्चयेऽपि तस्यानुमितिजनकत्वासिद्ध्या विरोधिपरामर्शस्य सामग्रीविधया स्वातन्त्र्येण वा विरोधितायां न प्रतिबध्यानुमितिजनकपरामर्शीयप्रामाण्यग्रहस्योत्तेजकत्वमित्याशयेनाह व्यभिचारेणेति । उक्तस्थले विरोध्यनुमित्युत्पत्तौ तत्र प्रकृतसाध्यानुमापकपरामर्शाभावरूपकारणस्य व्यभिचारप्रसङ्गेनेत्यर्थः । अबलत्वात्—प्रकृतपरामर्शेऽप्रामाण्यग्रहमन्तरेण उक्तस्थलेऽनुमित्यनुपधायकत्वात्, तथाच तत्र सत्प्रतिपक्षत्वमिष्टमेवेति भावः ।

अथवा व्यभिचारेण तज्जनकज्ञाने प्रामाण्यनिश्चयं विनाऽप्यनुमित्युत्पत्त्या जनकज्ञाने प्रामाण्यग्रहस्याबलत्वात् अनुमितिसामग्र्यघटकत्वात्, तथाच यत्र प्रकृतपरामर्शे न प्रामाण्यग्रहः किन्तु विरोधिपरामर्श एव तत्रापि प्रकृतपरामर्शे अप्रामाण्यग्रहासत्त्वे कोटिद्वयानुमितिसामग्र्या अक्षतत्वात् परस्परविरोधेन नैकस्यानुमितिरिति सत्प्रतिपक्षत्वमिष्टमेवेति भावः ।

नन्वेकत्र प्रामाण्यग्रहसत्त्वे एककोट्यनुमितेः प्रामाणिकत्वेन तस्य बलवत्त्वमावश्यकमित्यत आह अन्यत्रेति । परामर्शान्तर इत्यर्थः । तदुपयोगात्—प्रामाण्यग्रहस्यानुमित्युत्पादकत्वात् । बलपदस्याविवक्षितार्थत्वेऽपि समानपदस्य निरुक्तार्थतात्पर्यग्राहकतया बलपदोपादानं सार्थकयति बलपदे इति । लिङ्गपदोपादानवैयर्थ्यशंकां निरस्यति लिङ्गत्व इति । स्वौपलिङ्गत्वौपाधिक इति । स्वनिष्ठप्रकृतसाध्यानुमापकतावच्छेदकविषयताविशेषरूपगमकतानिर्वाहकेत्यर्थः ।

आत्मादेरिति । अन्यथा तस्यापि धूमलिङ्गकवह्न्यनुमित्यौपयिकपरामर्शकालीनवह्न्यभावाद्यनुमापकपरामर्शप्रतिरुद्धवह्न्यनुमित्यात्मककार्यकत्वसत्त्वेन धूमादेरिव सत्प्रतिपक्षितत्वापत्तिरिति भावः । न च प्रतिरुद्धकार्यकत्वं प्रतिरुद्धकार्यकपरामर्शविषयत्वं तच्च नात्मादाविति नातिप्रसङ्ग इति वाच्यम् । आत्मादेरपि प्रतिरुद्धकार्यकसमूहालम्बनादिरूपधूमादिपरामर्शविषयत्वसम्भवात् । प्रतिरुद्धकार्यकत्वमित्यनेन प्रतिरुद्धकार्यकपरामर्शविषयत्वमवश्यमेव विवक्षणीयमनुमितेर्हेतुकार्यत्वाभावेन हेतोस्तत्कार्यकत्वाभावात्, तथाच तादृश-

विषयतायां प्रकृतानुमितिजनकतावच्छेदकत्वानिवेशेनैवोपपत्तेः विरोधिपरामर्शे स्वनिष्ठप्रकृतानुमितिजनकतावच्छेदकविषयताकपरामर्शकालीनत्वनिवेशनमनुचितमित्याशयेन तथैव निष्कृष्टार्थमाह विरोधिपरामर्शेति । प्रकृतानुमितिविरोध्यनुमितियोग्यपरामर्शप्रयुक्ताग्रिमक्षणावच्छिन्नानुत्पादप्रतियोग्यनुमितिजनकतावच्छेदकीभूतपरामर्शीयविषयताविशेषविशिष्टत्वमित्यर्थः ।

अगृहीताप्रामाण्यकपरामर्शत्वेनानुमितिजनकतामते - जनकतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्स्वरूपयोग्यता न गृहीताप्रामाण्यकपरामर्शस्येति कार्यप्रतिरोधनिवेशमन्तरेणैवोपपत्त्या तं परित्यजति अगृहीताप्रामाण्यकेति । बाधोपस्थितिसमर्थेति । साध्यवत्ताज्ञानप्रतिबन्धकत्वे सति तत्प्रतिबध्या यानुमितिस्तद्योग्येत्यर्थः । साध्यवत्ताधीप्रतिबध्यत्वानिवेशात् साध्याभावव्याप्यानुमितिसमर्थपरामर्शकाले नातिप्रसङ्गः । तत्कालीनत्वं च एककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन तद्विशिष्टत्वम्, तेन व्यधिकरणपरामर्शमादाय नातिप्रसङ्गः ।

यदि चायमिति । अनुमितिः प्रामाणिकीत्यत्र नच सत्प्रतिपक्षत्वमित्यत्र च यदि चेत्यस्य सम्बन्धः । तदभावव्याप्यवत्तानिश्चयानन्तरमिव तादृशनिश्चयक्षणेऽपि नानुमितिर्जायते तादृशनिश्चयस्य बाधनिश्चयवत् स्वोत्पत्तिक्षणेऽपि कार्योत्पत्तिविरोधित्वात्, तत्रानुमितेः प्रामाणिकत्वे तादृशानुमित्युत्पत्तिक्षणेऽपि सत्प्रतिपक्षतायामपि नानुपपत्तिः तदग्रिमक्षणे विरोधिपरामर्शादनुमितिप्रतिरोधादित्युभयत्र विवादप्रदर्शनार्थं तदुपादानम् । कार्यप्रतिरोधोऽवश्यमुपादेय इति । स्वातन्त्र्येण प्रकृतसाध्यसिद्ध्यौपयिकपरामर्शे स्वजन्यकार्याभावविशिष्टत्वरूपप्रतिहतकार्यकत्वमगृहीताप्रामाण्यकत्वेनानुमितिहेतुतामतेऽपि निवेश्यमित्यर्थः । अजनितविरोधिबोधकत्वेनेति । स्वजन्यविरोध्यनुमित्यभावविशिष्टत्वेनेत्यर्थः । विशेषणीय इति । तेन तत्र विरोधिवन्हिसाध्यकपरामर्शेन वन्ह्यभावसाधकहेतोर्न सत्प्रतिपक्षितत्वमिति शेषः । अत एव-उक्तस्थले वन्ह्यभावसाधकहेतोः सत्प्रतिपक्षत्ववारणानुरोधादेव । विरोधिबोधकान्येति । निरुक्तार्थकमिति भावः । यथाश्रुतशब्दतो गमकतौपयिकरूपे विरोधिबोधकान्यत्वं लभ्यते न तु ज्ञायमानपक्षोपस्थाप्यज्ञाने, तथा विवक्षणे च यादृशव्याप्त्यादिमत्तया ज्ञानेन प्रकृतसाध्यकपरामर्शशून्यस्य पुरुषान्तरस्य विरोध्यनुमितिर्जनिता

प्रकृतसाध्यपरामर्शसहिततादृशव्याप्तिविषयकज्ञानान्तरस्यापि सत्प्रतिपक्षत्वप्रयोजकतानुपपत्तिरतः फलवो ज्ञानविशेषणमिति । उक्तानुमितेरप्रामाणिकत्वेपि तदानीं सत्प्रतिपक्षतोपगमेपि चाग्रिमक्षणे विरोधिपरामर्शे विरोधिबोधकान्यत्वस्य निरुक्तव्यावृत्तेरसंगतिः अतस्तन्मते व्यावृत्त्यन्तरमाह एकस्येति । तद्वारणाय-अनुमित्युपधायकपरामर्शस्य सत्प्रतिपक्षितत्वप्रयोजकतावारणाय । तत् विरोधिबोधकान्यत्वम्-स्वजन्यविरोधिबोधाव्यवहितप्राक्क्षणावच्छिन्नं यत्तदन्यत्वात्मकं, स्वनिष्ठतादृशक्षणवैशिष्ट्यशून्यत्वात्मकं वा । नन्वेवमपि यत्र प्रतिहेतुपरामर्श एव विद्यते न तु प्रकृतहेतुपरामर्शः अन्यत एव कुतश्चित्प्रतिबन्धकात् न तदग्रिमक्षणे विरोध्यनुमितिः तत्राग्रिमक्षणेऽतिप्रसंग एवेत्यत आह प्रतिरुद्धेति । तथाच तत्र प्रकृतहेतौ विशेषणीभूतपरामर्शविषयत्वाभावान्नातिप्रसंग इति भावः । न चैवमपि यत्र प्रकृतहेतुपरामर्शो गृहीताप्रामाण्यकः प्रतिहेतुपरामर्शश्चागृहीताप्रामाण्यको विद्यते प्रतिबन्धकान्तरवशाद्वाग्रिमक्षणे विरोध्यनुमित्यनुत्पादः तत्रातिप्रसंगो दुर्वार एव प्रकृतहेतुपरामर्शेऽगृहीताप्रामाण्यकत्वस्य तन्नियतसाध्यसिद्धियोग्यताया वा निवेशे प्रतिहेतुपरामर्शे विरोधिबोधकान्यत्वस्य वैयर्थ्यमिति वाच्यम् । एतद्विशेषलाभायैव विरोधिबोधकान्यत्वस्योपादानात् ।

१ वस्तुतस्तु विरोधिबोधकान्यत्वं प्रकृतहेतुपरामर्शप्रतिरुद्धकार्यकत्वरूपं प्रतिहेतुपरामर्शविशेषणं गृहीताप्रामाण्यकप्रकृतहेतुपरामर्शाच्च न प्रतिहेतुकार्यप्रतिरोध इति तादृशपरामर्शदशायां नातिप्रसङ्गः ॥

( चि० ) स्थापनाया व्याप्तिपक्षधर्मत्वमुभयवादिसिद्धम्, वादिना तदभावानुपन्यासात्, द्वितीयस्य तत्त्वमन्यतरासिद्धमिति प्रथमेन द्वितीयं बाधितमिति स्वार्थानुमान एवायं दोष इत्येके । तन्न । एकदा निरन्तरयोरुभयोर्व्याप्तिपक्षधर्मतया ज्ञातयोः प्रतिपक्षत्वात् । युगपदुपस्थितेः कारणवशेन स्वपरसाधारणत्वात् ।

( दी० ) एकदेत्यादि । न च द्वितीयस्य परामर्शस्योत्पादनसमये पूर्वेणानुमितिजननात् कथं नैरन्तर्यमिति वाच्यम् । साधकमानादिवशेन क्षणमनुमित्यनुत्पादसम्भवात् । स्वपरेति । अयं भावः । न खलु सम्भवन्तः सर्व एव हेत्वाभासाः समुद्भाव्याः- आधिक्यप्रसङ्गात्, परन्तु यथाकालमेकः, तथाच प्रतिपक्षोद्भावनेऽपि नाप्रतिषेधमात्रेण व्याप्त्याद्यभ्युपगम इति ।

( गा० ) मूले एकदेत्यस्य उत्पन्नयोरिति शेषः । अविरलक्रमेणोत्पन्नयोरित्यर्थकम् निरन्तरयोर्वेति मूलमाक्षिपति न चेत्यादि । साधकमानं-साध्यनिश्चयः । विरोधिपरामर्शानन्तरमपि यदि साधकमानादिवशेनानुमितिर्न जायेत तदा तदनुरोधेन सत्प्रतिपक्षस्य दोषता नायातीत्यतः क्षणमिति । क्षणैकमित्यर्थः ।

मूले ज्ञातयोर्ज्ञानयोः, प्रतिपक्षत्वात्-परस्परकार्यप्रतिरोधकत्वात् । युगपदिति । यौगपद्यमेककालवृत्तित्वं न तूत्पादिघटितं द्वितीयपक्षासंग्रहत्वात्, परामर्शद्वयसंवलनस्य स्वपरसाधारणत्वेपि परार्थस्थले व्याप्तिपक्षधर्मताभंगमुपेक्ष्य सत्प्रतिपक्षोद्भावनेनाप्रतिषिद्धत्वेन प्रकृतहेतौ व्याप्तिपक्षधर्मतयोः प्रतिवाद्यनुमतत्वग्रहात्र तयोस्तुल्यबलत्वमिति आक्षेपानुद्धाराद्भावं पूरयति दीधितावयं भाव इति । आधिक्यप्रसंगादिति । हेतुद्वयप्रयोग इव दोषद्वयोद्भावनेपि आधिक्यादिति भावः । यथाकाममित्यनेन तदुद्भावने विनिगमकशंका निराकृता । व्याप्त्याद्युपगमः-व्याप्त्यादेः प्रतिवाद्यनुमतत्वसिद्धिः । अप्रतिषिद्धस्याभावानुद्भावनरूपस्यान्यथासिद्धतया अनुमित्यनपेक्षकत्वादिति भावः ।

( चि० ) अथ वस्तुनोऽद्यात्मकत्वेन व्याप्तिपक्षधर्मताभङ्ग एकत्रावश्यक इति स एव दोषः । न च तयोर्विरोधभङ्गेऽप्युपपत्तेर्न व्याप्त्यादिभङ्गनियम इति वाच्यम् । अविरोधेऽप्यनुमित्यविरोधात्, विरोधे तु व्याप्तिभङ्गनियमादिति चेन्न ।

प्रतिरुद्धत्वज्ञानानन्तरं व्याप्त्यादिभङ्गज्ञानमित्यु-

पजीव्यत्वेन व्यभिचारवदस्यापि दोषत्वात् ।

ननु साध्यतदभावयोरिव तद्व्याप्यत्वेनावधारितयोर्विरोधादेकत्र न निश्चयः किन्तु संशयः, निश्चये वान्यतरव्याप्तिसंशय इति व्याप्यत्वासिद्धिरिति चेन्न ।

उभयोरेकत्र निश्चयानन्तरमन्यतरव्याप्तिसंशय इत्युपजीव्यत्वेनास्य भिन्नत्वात् । दूषकताबीजन्तु समबलविरोधिसामग्रीप्रतिबन्धेन निर्णयाजनकत्वं, न तु व्याप्तिपक्षधर्म्मताविरह एव-सद्धेतावपि सत्प्रतिपक्षत्वात् । एकत्र व्याप्तिभङ्गज्ञानद्वारा वास्य दूषकत्वम् । चक्षुरादेश्च नानुमानेन प्रतिरोधः, तदुपस्थितावपि फलदर्शनेन तस्याधिकबलत्वात् ।

( दी० ) प्रतिरुद्धत्वेति । प्रतिरोधप्रयोजकविरोधिव्याप्त्यादीत्यर्थः । उभयोरिति । परस्पराभावव्याप्यत्वं हि हेत्वोर्विरोधः, तद्ग्रहे च तयोरेकत्र निर्णयो न विरुध्यते इति भावः । दूषकतेति । विरोधिपरामर्शसत्त्वे नियमेन परामर्शान्तरादनुमित्यनुत्पादः तस्यानुमितिविरोधित्वं कल्पयति न तु तेन ज्ञाप्यमानस्य व्याप्त्यादिविरहस्य-सद्धेतावपि तस्यानुमितिविरोधित्वादित्यर्थः । व्याप्त्यादिविरहज्ञानद्वारा अस्य दूषकत्वमाह एकत्रेति । वाकारोऽनास्थायाम् । प्राथमिकावश्यकानुमितिप्रतिरोधेनैव तथात्वात् परमुखनिरीक्षकत्वेन तद्विषयस्याभासत्वायोगाच्चेति । ननु विरोधिपरामर्शो यदि विपरीतनिर्णयविरोधी कथं तर्हि सति विशेषदर्शने नयनादिजन्मा पीतत्वादिभ्रम इत्यत आह चक्षुरादेश्चेति । चस्त्वर्थः ।

( गा० ) मूलेऽव्याप्तमकतयेति । साध्यतदभावयोरेकतरवत्त्वेऽपयनाधिकरणत्वनियमेनेत्यर्थः । व्याप्तीति । एकत्र हेत्वोरन्यतरत्र स्व-

स्वसाध्यनिरूपितव्याप्तिपक्षधर्मताज्ञानयोः अन्यतरमंग आवश्यक इति स एवान्यतरत्वेनोभयत्रावधारितो विशेष्य सन्दिग्धो दोष आस्तां किं प्रकरणसमस्य दोषतयेत्यर्थः । साध्यतदभावयोर्यौ व्याप्तौ तयोरेकधर्मिणि सत्त्वमनुपपन्नम् धर्मिवृत्तौ एकतरव्याप्त्यभावं तदा कल्पयति यदि व्याप्त्यभाव विना तन्नोपपद्येत इत्यवधारितुं शक्यते तदेव नोभयत्र व्याप्तिसत्त्वेपि साध्यतदभावौ यद्यविरुद्धौ स्यातां तदोभयत्र पक्षधर्मता निर्वहतीति प्रतिसन्धानेन तद्विघटनादिति सामान्येपि न व्याप्त्यादिभंगावधारणमिति कथमज्ञायमानस्य दोषते॰त्याशंकते तयोरिति । साध्यतदभावयोरविरोधग्रहदशायामनुमित्य॰प्रतिरोधान्न सत्प्रतिपक्षता अपि तु विरोधावधारणदशायामेव, तथा चोक्तान्यथासिद्धसंभावनाविरहादनुपपत्त्यवधारणं न दुर्घटमित्याह विरोध इति ।

प्रतिरुद्धत्वस्य कार्यानुत्पादस्यादोषतया प्रतिरुद्धत्वेत्यादि यथाश्रुतमूलासंगतिरतो व्याचष्टे प्रतिरुद्धत्वेतीति ।

एकधर्मिणि विरुद्धयोर्मिथस्साध्यतदाभावव्याप्ययोर्व्याप्यत्वेन ज्ञानं यदि निश्चयरूपं स्यात्तदा परस्परप्रतिबन्धेन नोत्पद्यत एवातो व्याप्त्यंशे पक्षधर्मतांशे संशयरूपमेव तत्, तथा च कारणभूतनिश्चयाभावादेवानुमित्यनुत्पादो न तु सत्प्रतिपक्षभावात् इत्याक्षेपे उभयोरेकत्र निश्चयानन्तरमित्यादिना विरोधिद्वयव्याप्यवत्तानिश्चयस्य व्याप्तिसंशयोपजीव्यत्वाभिधानं न सङ्गच्छते तादृशनिश्चयस्यैवानुपपादितत्वादतो भावमाह परस्परेति । साध्यतदभावव्याप्यत्वं हि हेत्वोस्साध्यतदभावयोरेव विरोधः न तु परस्परं तयोः परस्परं विरुद्धत्वेन ज्ञातयोरेव नैकदा निश्चय इति तदग्रहणे परस्परव्यापकविरुद्धत्वेन ग्रहेपि हेत्वोरेकत्र निश्चयः सम्भवत्येवेत्यर्थः ।

दूषकताबीजमित्यादिग्रन्थस्य दूषकत्वं निग्रहप्रयोजकत्वं दुष्टत्वमिति यावत् इत्येतादृशार्थपर्यालोचनया विरोधिपरामर्शेनानुमित्यजनकत्वं सत्प्रतिपक्षस्थले हेतोर्दुष्टत्वप्रयोजकं न तु निर्णयाजनकत्वमात्रं विरोधिपरामर्शशून्यतादशायामपि कारणविरहेणानुमित्यजनकतया सद्धेतोर्दुष्टतापत्तेः, नापि विरोधिपरामर्शाप्यमानो व्याप्तिपक्षधर्मताविरहः सद्धेतौ तदसत्त्वे विरोधिपरामर्शसंवलनदशायामपि तस्य दुष्टतानुपपत्तेः, विरोधिपरामर्शप्रयु॰

व्याप्तिमज्ज्ञानं प्रमाप्रमासाधारणं वा सद्धेतुसाध्यकवृत्तिप्रतिबन्धकतावच्छे-दकविधया निवेशनीयमनुमितिजनकत्वे न सम्भवतीति तमन्यथा व्या-चष्टे विरोधिपरामर्शेत्यादिना । तत्तत्फलसामान्याप्रतिबन्धकं निर्णयाजनक-त्वमिति मूले सामग्रीवद् विरोधिपरामर्शपदं प्रतिबन्धपदं नियमपरम् विशेषणे तृतीया निर्णयाजनकत्वमनुमित्यनुत्पादः, तथा च विरोधि-परामर्शनियमतोऽनुमित्यनुत्पाद इति समुदितार्थः । नियमश्च व्यापक-त्वाविरहादायेन विरोधिपरामर्शसत्त्वे नियमेनानुमित्यनुत्पाद इति व्याख्यातम् । तस्य-विरोधिपरामर्शस्य । विरोधित्वं फलवत्त्वमिति । एवं च दूषकतापदं विरोधिपरामर्शानिष्टप्रतिबन्धकतापदं बीजपदं फलपरार्थकं बोध्यम् ।

मूले न तु व्याप्तिपक्षधर्मताविरह इति । अत्र दूषकताबीजमित्यस्या-नुषङ्गेण व्याप्तिपक्षधर्मताविरहो न दूषकताबीजमिति लभ्यते, स चासङ्गतः व्याप्तिपक्षधर्मताविरहस्य विरोधिपरामर्शानिष्टप्रतिबन्धक-ताफलककरणरूपदूषकताबीजत्वाप्रसक्तेः, अतो व्याप्तिपक्षधर्मताविरह इत्यनन्तरं विरोधिपरामर्शकालीनानुमित्यनुत्पादफलकप्रतिबन्धकता-क इति पूरणीयमित्याशयेन व्याचष्टे न त्विति । व्याप्त्यादिविरहस्य स्वरूपसतो दोषताप्रसक्तेः, अन्यथाप्यमानस्य तथात्वे च विरोधि-परामर्शानुपयोगितया तदसंवलनदशायामपि सत्प्रतिपक्षतापत्ति-तेः न त्वित्यनन्तरं तेन ज्ञाप्यमानस्य इति पूरणीयमित्याशयेन व्या-चष्टे तेनेति । सङ्गतावपि-व्याप्तिपक्षधर्मताविरहश्चेत्यपि, एतादृश-मूलप्रतीकानन्तरं पूरयति तस्येति । विरोधिपरामर्शस्येत्यर्थः ।

सत्प्रतिपक्षत्वादितिमूलस्य व्याख्या अनुमितिविरोधित्वादिति । दूषकत्वं-विरोधिपरामर्शस्यानुमितिविरोधित्वम् । एतन्मतस्य दूष-स्वाद्याकारमनिर्भरसूचकतया व्याचष्टे चाकार इति । अनुमितिविरो-धेन-अनुमित्यनुत्पादानुरोधेन । तथात्वात्-साक्षादनुमितिवि-रोधित्वात्, अन्यथा व्याप्तिमज्ज्ञानस्योदीच्यतया साक्षादनु-मित्यविरोधितया च विरोधिसंवलितपरामर्शात्प्रथममनुमितिजन्ये-त्यैषेति भावः । परंपरया व्याप्तिज्ञानविरोधित्वं न हेत्वाभासताया-मप्युपयुज्यत इत्याह परेति । प्रथमपक्षे विरोध्यनुमितिसामग्र्या अनु-मितिविरोधित्वे प्रत्यक्षप्रतिबन्धकत्वमपि तस्याः स्यात् विरोधिसा-मग्रीत्वाविशेषादित्याशङ्क्य चक्षुरादेश्चेत्यादिग्रन्थमवतार्य फलानु-

रोधेन प्रत्यक्षसामग्र्या बलवत्त्वमित्यर्थकतया व्याख्यानमयुक्तं भिन्नविषयेऽनुमितिसामग्र्याः बलवत्त्वादतो यत्रेत्यादि । पक्ष एव व्याप्तिभङ्गद्वारा व्याप्तिसापेक्षप्रमाण एव दूषकता सम्भवतीति, चक्षुरादेरतथाभूततया तत्प्रतिरोधकत्वं विरोधिपरामर्शस्य न स्यादित्याशङ्कया चक्षुरादेश्चेति फक्किकामवतार्य इष्टापत्तिपरतया मिश्रा व्याख्यातवन्तः, तत्र विरोधिपरामर्शस्य लौकिकचाक्षुषाप्रतिबन्धकत्वेऽप्युपनीतभाने जननीये चक्षुरादेरिति शब्दस्य च प्रतिरोधकतायां कथन्तायाः अनिवृत्तेः स्वयं विशिष्टबुद्धौ तदभावव्याप्यताबुद्धेः साक्षात्प्रतिबन्धकतया दूषकत्वे निर्भरस्य वर्णितत्वात् तादृशप्रतिबन्धकतानुपपत्तिशङ्कयैव तादृशमूलमवतारयति नान्वेति । विरोधिपरामर्शः तदभावव्याप्यवत्तानिर्णयः, विपरीतज्ञानविरोधी तद्विशिष्टज्ञानविरोधी, विशेषदर्शने पीतत्वाभावव्याप्यशङ्खत्वादिनिश्चयस्वेऽसति चानुमितिप्रतिबन्धकबाधादौ चक्षुरादेश्चेति चकारस्यानुक्तानुमानशब्दसमुच्चायकता न सम्भवति तस्यानुमानप्रतिरोध्यत्वादित्यत आह चस्त्वर्थ इति ।

नानुमानेन प्रतिरोध इति मूलस्य दोषविशेषाधीनज्ञाने जननीय इति भावः । तदुपस्थितावपीति । विरोधिपरामर्शसत्त्वेपीत्यर्थः । तस्य दोषादिसमवहितचक्षुरादेः, अधिकबलत्वात्–अधिकबलत्वोपगमात्, अप्रतिबध्यफलत्वोपगमादिति यावत् । तथाच दोषविशेषजन्यत्वं साक्षात्कारित्वव्यञ्जकदोषविशेषजन्यज्ञानसाधारणविषयताविशेषशून्यत्वं वा प्रतिबध्यतावच्छेदककोटौ अधिकफलबलेन निवेशनीयमिति भावः ॥

(चि० ) नन्वेवं वादिवाक्यमात्रस्य प्रतिरोधकत्वेनानुमानमात्रोच्छेदः । न च विरोधिवाक्यस्य न्यूनबलत्वे लक्षणायोगः, समानबलत्वे प्रतिरोध एव, अधिकबलत्वे नरशिरःशौचानुमानवत्तेन बाध एवेति वाच्यम् । अगृह्यमाणविशेषदशायां प्रतिवादिवाक्येन सर्वानुमानप्रतिरोधापत्तेः । अनुमानात् पूर्वं पश्चाद्वाऽनुमानान्तरेण तस्य न्यूनाधिकबलत्वानिरूपणात्, निरू-

न कथंचिदपि तादृशोपन्यासस्य प्रतिरोधकत्वमपि बोध्यम् ।

मूले एकैकमिति । प्रत्येकहेतुवृत्तित्वपर्याप्तिकतावच्छेदकावच्छिन्नं, सत्प्रतिपक्षं–सत्प्रतिपक्षतया दुष्टव्यवहारविषयः, न तु विशिष्टहेतुप्रतिहेतुसाधारणरूपावच्छिन्नम्; तादृशं च न संशायकमिति । संशायकतया दुष्टत्वे तादृशदुष्टव्यवहारानुपपत्तिरित्यर्थः ॥

( चि० ) रत्नकोषकारस्तु–सत्प्रतिपक्षाभ्यां प्रत्येकं स्वसाध्यानुमितिः संशयरूपा जन्यते, विरुद्धोभयज्ञानसामग्र्या संशयजनकत्वात्, संशयद्वारा ऽस्य दूषकत्वम् । न च संशयरूपा नानुमितिः बाधस्येव विरोध्युपस्थितेरनुमितिसामग्रीविघटकत्वेनाऽवधारणात्, अन्यथा बाधेऽप्यनुमित्यापत्तेरिति वाच्यम् । अधिकबलतया बाधेन प्रतिबन्धात् तुल्यबलादनुमितिः स्यादेव, सामग्रीसत्त्वात् । साध्याभावबोधस्य च तत्र प्रतिबन्धकत्वं न तु तद्बोधकस्य नयनादेः । प्रत्येकं निर्णायकत्वेनावधारितात् कथं संशय इति चेन्न । प्रत्येकाद्धि ज्ञानमुत्पद्यमानमर्थात् संशयो न तु प्रत्येकं संशयजनकत्वमिति–मेने ।

तन्न । साध्यतदभावयोर्विरोधेन यथैकज्ञानस्यापरधीप्रतिबन्धकत्वं तथा साध्याभावव्याप्यवत्त्वस्यापि साध्यविरोधित्वात्तद्बुद्धेरपि साध्यधीप्रतिबन्धकत्वात्, विरोधिज्ञानत्वस्य प्रतिबन्धकत्वे तन्त्रत्वात् ॥

( दी० ) –रत्नकोषकृतामभिप्रायः–एकधर्मिकाविरुद्धानेकप्रकारकनानाधर्मिकविरुद्धाविरुद्धनानाप्रकारकज्ञानत्वादिवदेकधर्मिकविरुद्धानेकप्रकारकज्ञानत्वरूपं संशयत्वं न जन्यतावच्छेदकम्, तत्तद्धर्मिकतत्तत्प्रकारकज्ञानत्वप्रयोजकसमाजप्रयोज्यत्वात् समाजस्य । क्वचिद्विरोधभानस्यापि तत्प्रयोजकाधीनत्वात् । नी-



लेतरघटत्वपटत्वाप्रकारज्ञानत्वैकधर्मिकाविरुद्धानेकप्रकारकान्यज्ञानत्वादिवच्च संशयान्यज्ञानत्वादिरूपं निश्चयत्वमपि न जन्यतावच्छेदकम्, तत्त्वप्रयोजकाविरहादेव तत्त्वाविरहाद्युपपत्तेः । एवञ्च तुल्यबलाभ्यां विरुद्धोभयसामग्रीभ्यां जायमानं ज्ञानमर्थात् संशयरूपं भवति । अत एवाहत्यैव विप्रतिपत्तिजन्यतां संशयमामनन्ति । फलबलकल्पनीयश्च न्यूनाधिकसमबलभावः। सत्यामपि पीतत्वशुक्लत्वस्मृतौ सविधवर्त्तिनि शङ्खे सति दोषविशेषे पीतत्वस्यैवासति च शुक्लत्वस्यैव दूरस्थे च धर्मिणि असति विशेषदर्शने स्मृतयोरेव कोट्योः सति च एकस्या एव नयनेन ग्रहात् । अथैवमुद्बुद्धाभ्यां विरोधिसंस्काराभ्यां स्मरणमपि संशयात्मकं स्यात्, किं न स्याद्यदि च नानुभवबाधः येन गुरुणापि निश्चयत्वेन संस्कारजनकत्वमुपेयते भवता ।

अथ विरोधिनो निर्णयोऽनुमितिप्रतिबन्धको विरोधित्वञ्च सहानवस्थायित्वं साध्याभावस्येव तद्व्याप्यस्यापीति चेत्। यदि वस्तुतो विरोधिनो निर्णयस्तथा, कथं तर्हि पक्षतावच्छेदकादेस्तादृशस्य निश्चये भ्रमानुमितिः । अथ विरोधित्वेन, तदा तदग्रहे नेह साध्यमित्यादिनिर्णयेऽप्यनुमितिप्रसङ्गः ।

अथ विशेषदर्शनं विरोधिबुद्धिप्रतिबन्धकं कथमन्यथा तदनन्तरं न भ्रमसंशयाविति चेन्न । सत्यपि शुक्लत्वादिव्याप्यदर्शने शङ्खादौ दुष्टेन नयनेन पीतत्वादेरदुष्टेन च पीतत्वादिव्याप्यवत्तानिश्चये सत्यपि शुक्लत्वादेर्ग्रहात्, सति च विशेषदर्शने क्वचिदुपनीतभानानुदयाद्दूरतः प्रमितस्य स्थाणुत्वादेःशाखादौ करादिभ्रमे णाग्रहात् तत्तत्स्थलविशेष एव तस्य प्रतिबन्धकत्वमिति ।

(गा०)विरोधिमानसामग्र्याः सशयविरोधित्वे संशयमात्रोच्छेदप्रसङ्ग इति प्रकरणसमो विरोधिमानसामग्रीविषया संशयरूपानुमितिं

मा प्रतिरोधासीत् विरोधिविषयत्वेन तु बाधतदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वं दुर्वारमिति शङ्कते मूले न च संशयरूपा नानुमितिरित्यादिना । बाधबुद्धेर्विरोधिविषयत्वमात्रं न प्रतिबन्धकत्वे तन्त्रं किन्तु निश्चयप्रामाण्यकत्वे सति विरोधिविषयत्वम्, सत्प्रतिपक्षस्थले चोभयव्याप्यवत्ताज्ञानयोरेव प्रामाण्यानिश्चयान्नानुमितिप्रतिरोध इति समाधत्ते अधिकबलत्वेति । ननु प्रत्यक्षे समानबलग्राह्याभावसामग्री संशयानुपपत्त्याऽविरोधिन्यास्तामनुमितौ तस्याः प्रतिबन्धकत्वे का क्षतिरित्यत आह साध्याभावबोधस्येति । साध्याभावनिश्चयस्यैवेत्यर्थः । तत्रा-ऽनुमितौ । नयनादेरित्यादिना विरोधिपरामर्शपरिग्रहः । नयनग्रहणं दृष्टान्तार्थम्, मानाभावादिति पूरणीयम् । प्रत्येकमिति । एकैककोटिनिश्चयजनकत्वेन अवधारितात्परामर्शादित्यर्थः । कथं संशय इति । संशयत्वावच्छिन्नं प्रति परामर्शस्य हेतुतायाः क्वाप्यक्लृप्तत्वादिति भावः । संशयत्वस्य जन्यतानवच्छेदकत्वेऽपि तत्तत्प्रकारकज्ञानत्वावच्छिन्नोत्पत्तिनियामकसामग्र्या एव सर्वत्र संशयः प्रत्येककोटिभानसामग्र्याः संशयत्वावच्छिन्नजनकत्वं तु प्रत्यक्षस्थलेऽपि नास्तीत्याह प्रत्यक्षादीत्यादि । तथा च तत्तत्साध्यकानुमितित्वस्य निश्चयसाधारणस्य तत्तत्साध्यव्याप्यवत्तापरामर्शजन्यतावच्छेदकत्वेऽपि तद्घटितसामग्रीसमाजात्संशयानुमित्युत्पत्तिर्निष्प्रत्यूहैवेति भावः ।

१ अगृहीताप्रामाण्यकत्वे सति विरोधिविषयकत्वमेव बाधप्रतिबन्धकत्वे प्रयोजकं न तु निश्चितप्रामाण्यकत्वसहितमित्याशयेन दूषयति तत्रेति ।

रत्नकोशकारमतं दीधितिकारः परिष्कर्तुमारभते रत्नकोशकृतामित्यादिना । संशयत्वं यदि यत्किञ्चिज्जन्यतावच्छेदकं तर्हि तद्घटितसामग्रीत एव संशयत्वावच्छिन्नोत्पत्तिरिति नियमेऽनुमितेः संशयत्वं न सम्भवति अनुमितिसामग्रीघटकस्य परामर्शादेः कस्यापि संशयाजनकत्वात्, अतः संशयत्वस्य जन्यतावच्छेदकत्वाभावं मूलकारोक्तं प्रतिबन्दिसूचनेन दृढयति एकधर्मिकेति । अविरुद्धानेकप्रकारकेत्यस्य द्वन्द्वात्परश्रूयमाणेन ज्ञानत्वेन सम्बन्धः । प्रकारांशे संशयत्वघटकविरुद्धत्वविपरीतविशेषणघटितधर्मस्य जन्यतावच्छेदकत्वप्रसक्तिं प्रदर्श्य धर्म्यंशे तद्घटकत्वविपरीतविशेषणघटितस्य

प्रकारांशे विशेषणानैकत्वविरुद्धैकत्वविरुद्धाविरुद्धनानात्वभेदेन भिन्नस्य धर्मद्वयस्य तथात्वापत्तिमपि सूचयति नानाधर्मिकेति । एकत्वस्य प्रकारांशे विरुद्धत्वाविरुद्धत्वयोः नानापदार्थे प्रत्येकमन्वयः । न जन्यतावच्छेदकस्यापीति शेषः । न चैवं क्वचिज्ज्ञाने संशयत्वं क्वचिन्नेत्यत्र किं नियामकमित्यत आह तत्तद्धर्मिकेति । पर्वतादिधर्मिकेत्यर्थः । तत्तत्प्रकारेति । वन्हिवन्ह्यभावप्रकारकेत्यर्थः । प्रयोजकसमाजेति । तदवच्छिन्नोत्पत्तिनियामकसामग्रीसंवलनेत्यर्थः । समाजस्य—पर्वतादिधर्मिकवन्ह्यादिप्रकारकत्वतद्धर्मिकवन्ह्यभावादिप्रकारत्वयोर्वैशिष्ट्यस्य, तथा चैकमात्रकोटिभानप्रयोजकसामग्रीदशायां यज्ज्ञानं जायते तत्र तत्कोटिप्रकारकत्वे विरुद्धकोट्यन्तरप्रकारकत्ववैशिष्ट्यप्रयोजकस्य तत्कोटिप्रकारकप्रयोजकसामग्र्यां कोट्यन्तरप्रकारकत्वप्रयोजकसामग्रीवैशिष्ट्यस्य विरहाद्विरुद्धकोट्यन्तरप्रकारकत्वविशिष्टतत्कोटिप्रकारकज्ञानत्वरूपसंशयत्वविरहः । कोटिद्वयभानसामग्र्युत्तरं च यज्ज्ञानं जायते तत्र तादृशवैशिष्ट्यप्रयोजकसत्वेन तादृशसंशयत्वसत्वमिति संशयत्वस्य जन्यतानवच्छेदकत्वेऽपि तन्नियमनिर्वाह इति भावः ।

ननु कोटिद्वयावगाहिज्ञानत्वमात्रं न संशयत्वं कोटिद्वयसमुच्चयसाधारणत्वात्, किन्तु एककोट्यवेऽपरकोटिविरोधावगाहित्वसहितं, तादृशस्य कोटिद्वयभानप्रयोजकसंवलनमात्रं न नियामकं तत्सत्वेऽपि समुच्चये संशयत्वाभावादिति संशये प्रयोजकमन्यदेव किञ्चिदुपगन्तव्यम्, यतः क्वचिदेवोभयावगाहिज्ञाने संशयत्वमिति नियम इति तदेव कार्यतावच्छेदकं संशयत्वमावश्यकमित्यत आह क्वचिदिति । उभयप्रकारक इति शेषः । तथा च विरोधिभानस्यासमप्रकोटिद्वयप्रकारकज्ञानवृत्तितया इत्यर्थः । तत्प्रयोजकाधीनत्वादिति । अव्याप्यवृत्तित्वज्ञानाभावादिघटितविरोधभानप्रयोजककलृप्तसामग्र्यन्तरस्य क्वाचित्कत्वप्रयोजकत्वादित्यर्थः । तथाच तत्संवलनस्यापि विरोधभानघटितसंशयत्वप्रयोजकतया समुच्चयस्थले तद्विरहादेव संशयत्वविरह इति भावः । उक्तयुक्तिभिः संशयत्वस्य कार्यतावच्छेदकत्वखण्डनं वस्तुगतिमनुरुध्य । वस्तुतः संशयत्वस्य कार्यतावच्छेदकत्वे तस्य धर्मितावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकताया एव स्वीकरणीयतया प्रत्यक्ष-

स्थले यथा तद्भावप्रकारकज्ञानसामग्रीद्वयसहितधर्मिज्ञानरूपसामग्री संशयं जनयति तथाऽनुमितिस्थलेऽपि तादृशधर्मिज्ञानात्मकसामग्र्या संशयजनने न किञ्चिद्बाधकम् ।

ननु माभूत्संशयत्वं तज्जन्यतावच्छेदकं तथापि निश्चयत्वावच्छिन्नहेतुभूतात्परामर्शादितः कथं संशयानुमितिरित्याशङ्कायां निश्चयत्वस्यापि जन्यतानवच्छेदकत्वं निराकरोति नीलेतरेति । यथा घटे नीलरूपध्वंसात्मकनीलेतरत्वप्रयोजको घटे नीलोत्पादकसामग्रीविरहः, घटत्वप्रयोजकं च घटत्वावच्छिन्नहेतुदण्डादिघटितसामग्रीजन्यत्वं, तत्संवलनाधीनं नीलेतरत्वघटत्वयोः संवलनमिति तदेव नीलेतरत्वविशिष्टघटत्वनियामकमिति तस्य किञ्चिज्जन्यतानवच्छेदकत्वेऽपि कस्यचिदेव घटस्य तथात्वमिति नियमः, एवं घटादिज्ञाने घटत्वप्रकारताविरहः तत्पूर्वकालीनघटत्वप्रकारकत्वावच्छिन्नजनकघटत्वज्ञानादिघटितसामग्रीरूपतथात्वप्रयोजकविरहप्रयोज्य इति, ज्ञानत्वप्रयोजिका तत्पूर्वकालीनसामान्यसामग्री, घटत्वप्रकारकत्वावच्छिन्नोत्पादकसामग्रीविरहश्च द्वयोः संवलनमेव घटत्वाप्रकारकत्वज्ञानत्वयोः संवलनप्रयोजकं तदेव जन्यतानवच्छेदकस्यापि एकविशिष्टापरस्य प्रयोजकम्, एवमेकधर्मिकाविरुद्धानेकप्रकारकत्वं संवलितनानासामग्रीप्रयोज्यं तद्विरहप्रयोज्यः तद्विरहः तत्संवलितज्ञानत्वप्रयोजकप्रयोज्यं, तद्विशिष्टज्ञानत्वमिति यथा तस्य जन्यतानवच्छेदकत्वेऽपि नानियमस्तथा निरुक्तनिश्चयत्वस्यापीत्यर्थः । यद्यपि तत्प्रयोजकसमाजनियम्यस्य जन्यतानवच्छेदकतायामेकधर्मिकाविरुद्धनानाप्रकारकज्ञानत्वादिकमेव पूर्वं दृष्टान्तीकृतम्, तथापि तत्र सामग्रीरूपप्रयोजकसमाजनियम्यत्वमेव न तु सामग्रीसमाजानियम्यत्वं निश्चयत्वे च तादृशमेवेति प्रकृतसाम्याय दृष्टान्तान्तरानुसरणम् । तत्र प्रथमे तज्जनकसामग्र्यभावसंवलनस्य तद्भिन्नत्वविशिष्टप्रयोजकता, द्वितीये तदवच्छिन्नजनकसामग्रीविरहसंवलनस्य, तृतीये तद्घटकतानाधर्मावच्छिन्नहेतुभूतसामग्रीसंवलनविरहसंवलनस्येति उत्तरोत्तरं निश्चयत्वसाम्यौत्कट्यमिति बोध्यम् ।

एवं चेति । संशयत्वनिश्चयत्वयोर्जन्यतानवच्छेदकत्वे चेत्यर्थः । तुल्यबलाभ्यां-परस्परकार्यविरोधिनीभ्याम् । संशयरूपं भवतीति ।

तथाच समबलसत्प्रतिपक्षसंवलनस्थले तुल्यबलकोटिद्वयानुमितिसामग्रीभ्यां संशयानुमितिर्जन्यत एवेति भावः ।

अथ एकत्रविरोधभासकाविरोधावगाहिपरामर्शघटितसामग्र्यभावाद्विरोधो, न भासितुमर्हति तथाच कथं संशय इति चेन्न । सत्प्रतिपक्षतादशायां कोटिद्वयनिश्चयानुत्पादस्योभयवादिसिद्धतया तन्निर्वाहाय, परस्परजन्यकार्ये विरोध्यनुमितिसामग्र्योः प्रतिबन्धकताकल्पनापेक्षया विरोधभानप्रतिबन्धकाभावसहकारेण विरोधाविषयकस्यापि परामर्शस्य विरोधभानप्रयोजकतया लाघवेन कल्पनादनुपस्थितस्य विरोधस्य प्रकारतया भानासम्भवेऽपि विरोधसम्बन्धेन एककोट्यंशेऽपरकोटेः प्रकारतया एककोटिसम्बन्धानिष्ठसंसर्गतायां कोट्यन्तरविरोधस्यावच्छेदकतया भानोपगमात्, अन्यथा यत्र कोट्योः नाविरोधग्रहः न वा विरोधस्योपस्थितिर्वर्तते तत्र सामग्रीसमाजात् प्रत्यक्षात्मककोटिद्वयनिश्चयस्य दुर्वारत्वापातात् ।

अथ यत्र कोट्योर्नाविरोधग्रहः अथ च धर्मिणि विरोधसम्बन्धेनैककोटिविशिष्टापरकोटेः विरोधविशिष्टसयोगसम्बन्धेन च कोट्योर्वा बाधग्रहः तत्र कथञ्चिदपि विरोधभानासम्भवेन एकदा प्रतियोगितदभावयोः निश्चयरूपानुमितिर्जायतामिति चेत्, प्रत्यक्षस्थलेऽप्येष नियोगस्तुल्यः ।

अथ धर्मिणि संशयान्यतद्वत्ताज्ञानं प्रति अव्याप्यवृत्तित्वज्ञानाभावविशिष्टतद्विरोधिधर्मवत्ताज्ञानसामग्री प्रतिबन्धिकेति नोपदर्शितस्थले परस्परविरोधेन तत्तदभावयोः प्रत्यक्षनिश्चयोऽपि प्रत्यक्षानुमित्यादिसामग्रीणां चानुगतरूपेण प्रतिबन्धकताकल्पनासम्भवात्, अनुमितिस्थले विरोध्यनुमितिसामग्र्याः प्रतिबन्धकत्वे कल्पनीये संशयान्यत्वं न प्रतिबध्यतावच्छेदकगर्भे निवेश्यत इति क संशयानुमितिवार्तेति ।

अत्रार्वाचीनाः । संशयस्य न विरोधावगाहितानियतं, तथाहि—यथा लौकिकसन्निकर्षजन्यं साक्षात्करोमीति प्रतीतिविषयताविशेषः अनुमिनोमि आपादयामीति प्रतीतेश्चानुमित्यापत्त्योस्साध्याधारयोर्विषयताविशेषो दुरपह्नवः तथा सन्देह्मीत्यनुव्यवसायबलात् संशयेऽपि कोटिद्वये विलक्षणविषयता निष्प्रत्यूहैवाति तत्प्रतियोगित्वमेव संशयत्वं तस्य विरोध्यानवगाहिज्ञानसाधारण्ये न किञ्चिद्बाधकम् ।

मग्र्या फलवत्त्वमाह सति चेति । सति च विशेषदर्शने, एकस्याः-गृहीतविशेषायाः, कोटेरेव नयनेन ग्रहणात् । अत्र च ह्यविपरीतविशेषदर्शनस्यैव प्रतिबन्धकत्वं न तु सामग्र्या इत्यवधेयम् ।

ननु कोटिद्वयभासकसामग्रीसमाजादेव चेत्संशयः तदा संस्कारं प्रति निर्णयत्वेन हेतुतयापि न संशयाकारस्मरणवारणसम्भवः प्रत्येकतत्तदभावगोचरानिश्चयजन्यसंस्कारद्वयसंवलनात्तदुत्पत्तौ बाधकाभावादित्याशङ्कते अथैवमिति । उद्बुद्धाभ्यामिति । न चोद्बोधकस्य फलैकोन्नेयतया एकदा विरुद्धकोटिद्वयोद्बोधकाकल्पनान्नापत्तिरिति वाच्यम् । नियतोद्बोधकसम्बन्धिवस्तुविशेषज्ञानादीनामनुगतरूपेणैव कारणतायाः फलसत्त्वात्तादृशोद्बोधकद्वयसमवधानसंभवेनैवापत्तिसम्भवात् । अनुभवविरोधविरहे इष्टापत्तिमाह किं न स्यादिति । अनुभवविरोधस्य सविवादतया यद्वीति । येन-अनुभवविरोधेन । भवतेत्यनेन परस्परसामग्रीप्रतिबन्धकताकल्पनमन्तरेण तावतापि संशयाकारस्मरणवारणं न सम्भवतीति सूचनम् ।

याथार्थ्येत्यन्तान्योन्याभावघटितधीसाधारणविरोधिप्रकारकत्वे नैव प्रतिबन्धकता तथात्वं च विरोधिपरामर्शस्यापीति मूलाकासिद्धान्तं दूषयितुमाशङ्कते अथेति । विरोधित्व-तदभावव्याप्यत्वं स्वव्यापकतदभावकत्वरूप स्वत्वघटितत्वेन न सर्वसाधारणमित्यत आह सहानवस्थायित्वमिति । विरोधस्य विषये उपलक्षणत्वं विशेषणत्वं वेति वितर्क्य दूषयति यद्वीत्यादिना । तथा-प्रतिबन्धः । पक्षतावच्छेदकादेरिति । इदन्त्वाद्यवच्छिन्नह्रदादिरूपपक्षविशेषणस्य हेतुत्वेनाभिमतस्य वा तादृशस्य वस्तुगत्या वन्ह्यादिविरोधिनो निर्णये भ्रमानुमितिनिर्णयाधीना भ्रमानुमितिर्भवतीत्यर्थः । तत्र जनकज्ञानस्यैवोक्तप्रतिबन्धकतावच्छेदकाक्रान्तत्वादिति भावः । यद्यपि जलमयत्वादेर्विरोधावगाहिज्ञानदशायां तदनवच्छिन्नपक्षावगाहिन्यास्तल्लिङ्गिकायाश्च वह्निमानित्याद्यनुमितेरपि पक्षतावच्छेदकावच्छिन्ने जलमयत्वभ्रमदशायामनुपपत्तिरस्ति, तथापि जलमयश्च वह्निमानित्याद्यनुमितिस्थले प्रतिबन्धकत्वेन तथाविधानुमितिमात्रोच्छेद इत्यभिप्रायेण तावद्दूरानुसरणम् ।

अथ विरोधाद्येनेति । निर्णयत्वेनेत्यनुषज्यते । तद्ग्रहे-वन्ह्यभावादौ वह्न्यादेर्विधाग्रहे । अनुमितिप्रसङ्ग इति । तथा च वह्न्यभा-

धर्मावच्छिन्नावगाहिनिश्चयत्वेनैव विशिष्य बाधबुद्धेः प्रतिबन्धकता वाच्या, तच्च न विरोधिपरामर्शसाधारणमिति भावः। इदमुपलक्षणम्। अनुगततत्तदधिकरणावृत्तित्वरूपविरोधावच्छिन्नप्रकारकनिश्चयत्वेन विरोधित्वे स्वव्यापकतत्सामानाधिकरण्यरूपव्याप्यत्वावगाहिविरोधिपरामर्शस्य तद्रूपानाक्रान्ततया तादृशपरामर्शाभ्यां संशयानुमितिजनने बाधकाभावः। एवं तत्सम्बन्धेन तदधिकरणावृत्तित्वरूपविरोधावच्छिन्नस्य तत्सम्बन्धावगाहिज्ञानमेव विरोधीति सम्बन्धविशेषनिवेशस्यावश्यकतया विशेषणताविशेषादिसंसर्गकाभावावगाहिज्ञानसम्बन्धान्तरावगाहिविरोधिपरामर्शयोर्नानुगतरूपेण प्रतिबन्धकतासम्भव इत्यपि बोध्यम्।

ननु मा भूद्बाधबुद्धिप्रतिबन्धकतावच्छेदकरूपाक्रान्तत्वं विरोधिपरामर्शस्य, तथापि संशयानुमित्यसम्भवः स्थाणुत्वाभावव्याप्यकरादिमानित्यादिनिश्चये स्थाणुत्वादिप्रत्यक्षभ्रमसंशयानुदयात्तद्विशिष्टबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकताया आवश्यकत्वादित्याशङ्कते अथेति। शुक्लत्वादीति। पीतत्वाभावादित्यर्थः। दुष्टम्-पित्तादिदूषितम्। पीतत्वादीति। शुक्लत्वाभावादीत्यर्थः। नन्वेवं संशयत्वं प्रतिबध्यविशेषणं देयमित्याशङ्कामुपनीतभानविशेषसंग्रहं प्रदर्श्य दूषयति सतीति चेति। विशेषदर्शने-विरोधिव्याप्यदर्शने, द्वितीयानुरोधेन च लौकिकसंनिकर्षाजन्यत्वं प्रथमानुरोधेन दोषविशेषाजन्यत्वं प्रतिबध्यत्वविशेषणं देयमित्यत आह दूरत इति। प्रमितस्य-करादिप्रमाप्राक्प्रमापकलौकिकसन्निकर्षाश्रयस्य। एतेन करादिप्रमदशायामपि दूरत्वादेव स्थाणुत्वग्रह इति शङ्का निराकृता। अग्रहादिति। तथाच लौकिकसंनिकर्षाजन्यत्वनिवेशे तत्र स्थाणुत्वादिप्रत्यक्षापत्तेस्तन्निवेशो न संभवतीति भावः। स्थलविशेष इति। यत्रालोकसत्त्वे विशिष्टबुद्धिर्न जायते तत्तद्व्यक्तेरेव विशिष्य विशिष्टबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकत्वं वाच्यमित्यर्थः। तथा च कोट्यन्तरविशेषदर्शनसहितविशेषदर्शनव्यक्तीनां प्रतिबन्धकत्वाकल्पनात्संशयानुमितिर्निःप्रत्यूहैवेति भावः।

(दी०) अत्राहुः—अनुगतकार्यकारणभावानुरोधात् दोषविशेषाजन्ये ज्ञाने कदाचिदनुभवे वा विशेषदर्शनं विरोधि

कल्प्यते । न च प्रत्यक्ष एव तथा, सामान्ये बाधकाभावात् बो-
ध्याभावव्याप्यवत्तानिश्चयेन शाब्दादिधीप्रतिबन्धाच्च । अथ विशे-
षान्तरदर्शनविरहविशिष्टमेव तत्तथा अन्यथा कोटिद्वयविशेषद-
र्शने संशयो न स्यादिति चेन्न । भवत्येव तादृशतदप्रामाण्यं न
गृह्यते, अगृहीताप्रामाण्यकस्यैव विशेषदर्शनस्य विरोधित्वादिति ।

( गा० ) क्वचिदलौकिकसन्निकर्षजन्यज्ञाने दूरत्वादिसहकृतत-
दभावव्याप्यभ्रमस्य विरोधित्वेऽपि लौकिकसन्निकर्षाद्यजन्यविशिष्ट-
बुद्धित्वाद्यवच्छिन्नं प्रति तदभावव्याप्यनिश्चयत्वेनानुगतैकप्रतिबन्ध-
कताकल्पनमुचितं तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वेऽनन्तप्रतिबन्धक-
ताप्रसङ्गात् दूरत्वादिदोषसहकृतविशेषदर्शनस्य च प्रतिबध्यताव-
च्छेदककोटौ लौकिकान्यत्वमनिवेश्य प्रतिबन्धकत्वान्तरं कल्पनीयमि-
ति समाधत्ते अनुगतेति । दोषविशेषादीत्यादिना लौकिकसन्नि-
कर्षपरिग्रहः । दोषविशेषजन्यज्ञानेऽपि साक्षात्कारित्वव्यञ्जकविषयता-
विशेषोपगमात्तच्छून्यत्वं निवेश्यैव दोषविशेषजन्यलौकिकसन्नि-
कर्षजन्यज्ञाने व्यावर्तनीये, एवं च परमेश्वरबुद्धावपि तादृशवि-
षयताया एव स्वीकारान्न नित्यसाधारण्यं, न वानुगतधर्मस्य प्र-
तिबध्यतावच्छेदकत्वे चक्षुःसन्निकर्षादिजन्यभेदानामेकत्र निवेश-
नीयतया मिथो विशेषणविशेष्यभावे विनिगमनाविरहप्रसङ्गाच्चक्षुः-
संयोगाद्यजन्यचाक्षुषत्वादीनां जन्यतावच्छेदकत्वापत्तिः अन्धकारे
चक्षुःसंयोगदशायां घटोपनीतभानस्य चक्षुःसन्निकर्षजन्यत्वेन प्रतिब-
ध्यतावच्छेदकानाक्रान्ततया विशेषदर्शनकालेऽपि तादृशोपनीतभानाप-
त्तिश्चेति । एवं अनाहार्यत्वस्यापि निवेशो वाच्यः । तेनाहार्यचाक्षुषा-
दीनां विरोधिनिर्णयाप्रतिबध्यत्वोपपत्तिः । आहार्यत्वं च स्वविषय-
केच्छाव्यवहितोत्तरक्षणोत्पन्नप्रत्यक्षत्वं विषयत्वस्वाव्यवहितोत्तरत्वो-
भयसम्बन्धेन इच्छावच्छिन्नप्रत्यक्षत्वं वा, आहार्यचाक्षुषादौ चाक्षुषादी-
च्छाया हेतुत्वोपगमान्नेच्छां विना विरोधिनिश्चयदशायां तदुत्पत्तिः ।
कदाचिदिति । यदि विशेषदर्शनं परिभूय ज्ञानमुत्पद्यते तदधीन-
स्मरणमपि विशेषदर्शनकाले अनुभूयेत तदेत्यर्थः । वस्तुतस्तु वि-
शेषदर्शनकाले पूर्वं जातविशिष्टज्ञानमेव स्मर्यते न तु तद्विषयीभूतं

विशिष्टं यावद्विशेषदर्शनेनाप्रामाण्यं गृह्यते, तथा च ज्ञानत्वमेव प्रतिबध्यतावच्छेदकं न त्वनुभवत्वमनुभवत्वजातेरप्रामाणिकत्वात्स्मृतिभिन्नज्ञानत्वस्य तथात्वे गौरवात्प्रत्यक्षस्य तथात्वमाशङ्कते नचेति । समाधत्ते । सामान्य इति । सामान्यधर्मज्ञानत्वस्य तथात्वे बाधकाभावादित्यर्थः । ननु संशयानुमितेः सन्दिग्धतया ज्ञानत्वस्य विरोधिपरामर्शाभावजन्यत्वकल्पना न सम्भवति व्यभिचारसंशयस्य विरोधित्वादित्यत आह बोध्याभावेति । शब्दादीत्यादिना उपमितिस्मृतिपरिग्रहः । तथाच ज्ञानस्य तथात्वे शब्दादिस्थले स्वतन्त्रप्रतिबन्धकत्वाकल्पने लाघवात् व्यभिचारसन्देहोऽकिंचित्कर इति भावः ।

ननु तद्व्याप्यवत्ताज्ञानस्य तदभावव्याप्यवत्ताज्ञाने उत्तेजकत्वमावश्यकम्, अन्यथा कोटिद्वयव्याप्यदर्शनदशायां प्रत्यक्षात्मकस्यापि संशयस्योत्पादासम्भवात् तदानीं संशयानुभवापलापप्रसङ्गादिति सत्प्रतिपक्षसंवलनदशायां उत्तेजकत्वेन संशयानुमितिर्निष्प्रत्यूहैवेत्याशङ्कते अथेति । यावदप्रामाण्यं न गृह्यत इति । तथा चानयोरेकतरमिति रीत्या सामान्यतस्तत्राप्रामाण्यग्रहे विशिष्योभयत्रैवाप्रामाण्यसंशयेन प्रत्यक्षसंशयो भवतीति भावः । एतदुपपादकमेवाह अगृहीताप्रामाण्यकस्यैवेति । अप्रामाण्यसंशयादनुमितिः संशयरूपा न सम्भवति अगृहीताप्रामाण्यकपरामर्शरूपफलवत्कारणविरहात् कारणान्तरस्य कल्पकाभावात् ।

मिश्रास्तु तद्व्याप्यदर्शनस्य तदभावव्याप्यदर्शनप्रतिबन्धकतायामुत्तेजकत्वेऽपि प्रत्यक्षसंशयवत् उभयव्याप्यकतादर्शनान्न संशयानुमितिरुत्पद्यते यतो व्याप्यदर्शनमवधारणात्मकज्ञान एव हेतुः अवधारणत्वं चानुमितौ व्याप्यदर्शनजन्यप्रत्यक्षे च स्वीक्रियते, अवधारणद्वयसामग्रीसमाजाच्च न संशयः अवधारणस्य संशयव्यावृत्तत्वात्, तत्कोट्यवधारणे तद्विरोधिकोट्यवधारणजनकविशेषदर्शनस्य प्रतिबन्धकतया विरोधिकोटिद्वयावधारणसामग्रीसंवलनस्यासम्भवात् तादृशप्रतिबध्यप्रतिबन्धकभावाकल्पने, उभयकोटिव्याप्यदर्शनकाले उभयकोट्यवधारणापत्तेः । न चेष्टापत्तिः, तत्र संशयस्यैवोत्पत्त्यावधारणामित्यननुभवात्कोटिद्वयविशेषदर्शनकाले च एकविशेषदर्शनस्यापरविशेषदर्शनेनाप्रयोजकत्वत्वाद्द्वयादर्शनस्या-

यां विरोधिज्ञानादिघटितप्रत्यक्षसामग्रीसमाजोऽप्रत्यक्षजनकः तादृशस्य तस्य तत्राप्यसत्त्वात् भवति संशयात्मकं प्रत्यक्षम्, अनुमितिस्थले चावधारणसामग्र्यतिरिक्तसामग्री न कल्प्यते प्रयोजनाभावादिति न संशयानुमितिरित्याहुः।

तेषां चायमाशयः। अवधारणत्वं न निर्णयत्वं विपरीतकोट्यनुपस्थितिकालीनविशेषदर्शनाधीननिश्चयानन्तरमवधारयामीति प्रतीत्यनुदयात्, किन्तूत्कटनिश्चयत्वम्, औत्कट्यं च विषयताविशेष एव अन्यस्य दुर्वचत्वात् स एव प्रत्यक्षानुमितिसाधारणो व्याप्यदर्शनप्रतिबध्यतावच्छेदकश्चेति। अत्र च निश्चिनोमि अवधारयामीति प्रतीत्योः समानविषयता निश्चयत्वमेवावधारणत्वम् अन्यथा संशयोपपक्षानाद्विरोधिदर्शनकालीनज्ञाने अप्रामाण्यशङ्कानास्कन्दनमेव विशेषः निश्चयत्वस्य चार्थसमाजग्रस्ततया व्यवस्थापितेति अत्र दीधितिकृतो निर्भरः।

इदं त्ववधेयम्। विरोधिज्ञानदशायामाहार्यज्ञानोपपत्तये यदि निरुक्तमनाहार्यत्वं प्रतिबध्यतावच्छेदककोटौ निवेश्यते तदा तस्याव्याहतोत्तरत्वघटिततयाऽव्यवहितोत्तरत्वस्य चाननुगततया दुर्वचतया इच्छाव्यक्तिसमसंख्यभेदानां निवेशनीयतया महागौरवम् इच्छायाः आहार्यज्ञानसामग्रीघटकतानिर्वाहाय तस्याः तद्धेतुताधिक्यं चेति इच्छाया उत्तेजकत्वपक्ष एव समुचितः। तथाच न प्रत्यक्षशाब्दादिसाधारणबुद्धौ प्रतिबन्धकत्वस्य सम्भवः विरोधिज्ञानदशायां चाक्षुषत्वादिप्रकारकेच्छाबलात् स्पार्शनाद्यनुत्पत्त्या च तत्तज्जातीयप्रत्यक्षेच्छानां विशिष्योत्तेजकतां स्वीकृत्य तत्तज्जातीयप्रत्यक्षे पृथक् पृथक् प्रतिबन्धकताया आवश्यकत्वात्तथा चानुमितिस्थले पृथक् प्रतिबन्धकताया अप्रामाणिकत्वात्संशयानुमितिर्दुर्वारैव। यदि कथञ्चिदव्यवहितोत्तरत्वमनुगतं शक्यते निर्वक्तुं चाक्षुषस्पार्शादिभेदेन प्रत्यक्षस्थले चाक्षुषादिगोचरेच्छाविरहविशिष्टविरोधिनिश्चयाभावत्वरूपगुरुधर्मावच्छेदेन कारणतापञ्चकस्य शाब्दोपमित्योः इच्छाविरहविशेषितविरोधिनिश्चयाभावकारणताद्वयस्य च कल्पनापेक्षया तदन्तरेण चाक्षुषेच्छात्वादिरूपलघुधर्मपुरस्कारेण कारणतापञ्चकस्य इच्छाविशिष्टान्यबुद्धिसामान्ये विरोधिनिश्चयाभावस्यैकहेतुतायाश्च कल्पने लाघवमीक्ष्यते, तदाऽव्यवहितोत्तरत्वसम्बन्धेन

विरोधिनिश्चयानवच्छिन्नत्वमेव तत्प्रतिबध्यतावच्छेदकमङ्गीक्रियताम्, तथासति दोषविशेषाजन्यत्वादेरप्यनिवेशनीयतया लाघवात्, तथा चोभयव्याप्यवत्तानिश्चयदशायां संशयानुमितेरुपगमेऽपि तादृशप्रतिबन्धकाभावव्यभिचारानवकाशाद्विरोधिपरामर्शाभावाघटिताया संशयानुमितिसामग्र्या अनुमित्युत्पादप्रयोजकत्वोपगमात्संशयानुमितिर्निष्प्रत्यूहैवेति ।

एतेन वह्न्यभाववद्व्याप्यवान्पर्वत इत्याकारकाथवासिद्ध्यादिनिश्चयदशायां वह्निमान्पर्वतो घटवानित्याद्यनुमितिवारणाय वह्न्यादिप्रकारकानुमितावपि तदभावव्याप्यवत्ताबुद्धेः प्रतिबन्धकत्वमावश्यकमिति न संशयानुमितिप्रसङ्ग इति निरस्तम् । तदभावव्याप्यवत्तानिश्चयानवच्छिन्नबुद्धिप्रतिबन्धकत्वे फलानुरोधेन तद्विशिष्टपक्षकाद्यनुमितिसामग्र्यां तदभावव्याप्यवत्तानिश्चयाभावान्तर्भावेऽपि प्रयोजनविरहेण वह्न्यघटकानुमितिसामग्र्यां तदन्तर्भावानुपगमात् ।

अत्राहुः—अस्तु प्रत्यक्षस्थले विरोधिज्ञानप्रतिबन्धकतायामिच्छामनुत्तेजकतैव, तथापि परोक्षशाब्दादिबोधस्थले प्रत्यक्षान्यत्वसहितस्य ज्ञानत्वस्य प्रतिबध्यतावच्छेदकत्वमङ्गीक्रियतां न तु शाब्दत्वादिनानाधर्माणामिति न संशयानुमितित्वप्रसङ्गः । न च प्रत्यक्षान्यत्वज्ञानत्वयोरेकविशिष्टापरस्यैवानतिप्रसक्तस्यावच्छेदकस्यमंगीकार्यं तत्र च विशेष्यविशेषणभावे विनिगमनाविरह इति वाच्यम् । प्रत्यक्षान्यत्ववैशिष्ट्यस्य गुणत्वादिसाधारणतया तन्मात्रेण ज्ञानत्वस्य निवेशे इतरव्यावृत्त्यसम्भवाज्ज्ञानत्वस्य विशेष्यत्वे विशेष्यतावच्छेदकतया ज्ञानत्वस्य विनिवेशनीयतया गौरवेण स्वतो व्यावृत्तज्ञानत्वविशिष्टप्रत्यक्षान्यत्वस्यैवावच्छेदकत्वादिति ।

अन्ये तु महानसीयत्वविशिष्टतया वह्नित्वाद्युपस्थितिदशायामपि प्रतीयमानस्य महानसीयवह्न्यभावादेः प्रतियोगितायां यथा धर्मिविशेषणतापन्नेषु महानसीयवह्नित्वादिनानाधर्मेषु मिथो विशेष्यविशेषणभावानापन्नेषु वाऽवच्छेदकत्वं प्रत्येकं तादृशधर्माणामतिप्रसक्तत्वेऽपि यथैकस्मिन्नवच्छेद्ये नानाधर्माणामवच्छेदकता तत्रावच्छेदकसमुदायस्यानतिप्रसक्तस्यैवावच्छेदकत्वान्निर्वाहः । अवच्छेदकस्य विशेषणसम्बन्धादिभेदेनावच्छेदकताया भेदेऽपि नावच्छेद्यभेदः अवच्छेद्यप्रतीतौ अवच्छेदकप्रकारकविषयताभेदेनैव तद्भेदात्, महा-

नसीयवह्निर्नास्तीति प्रतीतौ च नानाधर्मप्रकारकसमूहालम्बनव्यावृत्तवह्न्यादिविषयतायाः ऐक्यात्तथा प्रकृतेऽपि धर्मिविशेषणतापन्नमिथोविशेष्यविशेषणभावानापन्नप्रत्यक्षान्यत्वज्ञानत्वयोः प्रतिबध्यतावच्छेदकत्वादिकमतो न विनिगमनाविरहात्प्रतिबध्यतादिभेद इत्याहुः ।

तन्न । प्रत्यक्षान्यत्वसहितज्ञानत्वेन धर्मिणा युगपदुद्भावने एकतरस्यापरधर्मितावच्छेदकत्वभानमावश्यकं समूहालम्बनाविलक्षणनिर्धर्मितावच्छेदकोभयभानस्याप्रामाणिकत्वादिति प्रत्यक्षान्यत्वधर्मितावच्छेदकतापन्नज्ञानत्वप्रकारिकाया ज्ञानत्वधर्मितावच्छेदकतापन्नप्रत्यक्षान्यत्वप्रकारिकायाश्च धर्मिविषयतायाः भेदेन प्रतिबध्यताभेदस्यावश्यकत्वात् ।

केचित्तु वह्नित्वाभावत्वाभ्यां व्यापकताग्रहकाले महानसीयवह्नित्वतादृशवह्न्यभावत्वप्रकारेणानुमितिप्रयोजकलाघवज्ञानवशाद्यत्र सत्प्रतिपक्षभावः तत्र संशयानुमितिः न तदभावव्याप्यवत्ताबुद्धेर्विरोधित्वेन शक्यते वारयितुं शुद्धवह्नित्वावच्छिन्नशुद्धाभावत्वावच्छिन्नव्याप्यविषयोर्महानसीयवह्न्यभावमहानसीयवह्निविशिष्टबुद्ध्यविरोधित्वात् । न च लाघवज्ञानघटिततद्विरोध्यनुमितिसामग्रीकाले तत्प्रत्यक्षशाब्दादिवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकत्वे कल्पनीये अनुमितिसाधारणस्य तद्विशिष्टजिज्ञासानवच्छिन्नतद्विशिष्टधीत्वस्यैव प्रतिबध्यतावच्छेदकत्वोपगमान्न संशयानुमितिप्रसङ्ग इति वाच्यम् । लाघवज्ञानाघटितशुद्धाभावत्वादिप्रकारकानुमितिसामग्र्याः व्यापिकायाः प्रतिबन्धकतयैवोपपत्तेः, प्रत्यक्षादौ लाघवादिज्ञानमन्तर्भाव्य सामग्री प्रतिबन्धकत्वान्तरस्यैवासिद्धेः, तथा चोक्तानुमितिवारणासम्भवः तत्प्रतिबध्यतावच्छेदककोटौ महानसीयवह्नित्वावच्छिन्नविषयकानुमित्यन्यतादृशज्ञानस्यैव निवेशनीयत्वात् । यदि च लाघवज्ञानजन्यमहानसीयवह्न्यभावादिप्रकारकानुमितौ महानसीयवह्न्यभावत्वादिकमपि विधेयतावच्छेदकम्, तथा च शुद्धाभावादिप्रकारकासिद्धिदशायां शुद्धाभावत्वाद्यवच्छिन्नविधेयकानुमितिसामग्र्या असत्त्वात्तदानीमेव लाघवादिज्ञानसत्त्वे प्रत्यक्षादिवारणाय लाघवज्ञानघटितसामग्र्या प्रतिबन्धकत्वान्तरकल्पनमावश्यकमित्युच्यते, तदापि लाघवज्ञानघटितविरोधिकोटिद्वयानुमितिसामग्रीसवलनदशायां भवन्मते प्रत्यक्षशाब्दबोधाद्युत्पत्त्य

एककोटिसामग्र्यामपरकोटिसामग्र्यभावप्रवेशस्यावश्यकतया कथं तत्प्रतिबन्धकतया संशयानुमितिवारणसम्भवः । एतेन विरोधिविषयकनिश्चयानन्तरमिव तत्सामग्र्यनन्तरमपि इच्छाबलात्परोक्षज्ञानं नोत्पद्यते, एवं च लाघवज्ञानघटितविरोधिकोट्यनुमितिसामग्रीदशायामिच्छासत्त्वेऽपि न शाब्दबोधादिकमुत्पद्यते किन्तु विरोधिकोट्यनुमितिरेवेति फलानुरोधेन इच्छाभावं प्रतिबन्धकेच्छानवच्छिन्नत्वं च प्रतिबध्यविशेषणमनिवेश्य लाघवज्ञानघटितसामग्र्याः परोक्षतद्भिन्नशाब्दज्ञाने प्रतिबन्धकत्वान्तरकल्पनमावश्यकमिति तत्प्रतिबध्यतावच्छेदकत्वस्य परोक्षत्वस्यानुमितिसाधारण्यान्नोक्तस्थले संशयानुमितिप्रसङ्ग इत्यपि निरस्तम् । विरोधिविषयकनिश्चयसामग्रीबलात्परोक्षज्ञानानुत्पादस्याप्रामाणिकत्वादित्याहुः ॥

अत्राहुः—संशयसमुच्चययोर्विरोधमानाभानप्रयुक्तवैलक्षण्यस्य दूषितत्वात्संशयत्वस्य विषयताविशेषरूपत्वमावश्यकम्, तादृशविषयिता च कोटिनिरूपिता कोट्युपरागेणैव सन्देह्मीति प्रतीतेः तत्कोटिनिरूपितविषयताविशेषभिन्नतत्कोटिविषयताविशेषशालित्वं तत्कोटिनिश्चयत्वं, तथाच निश्चयत्वघटकविषयितायाः संशयसाधारणत्वे तत्रापि निश्चिनोमीति प्रतीत्यापत्तिरिति तद्वैलक्षण्यादृष्टत्वमावश्यकम्, तन्निर्वाहश्च संशयसामग्र्या तादृशविषयताशालिज्ञानप्रतिबन्धकतयैवेत्युक्तलाघवज्ञानघटितसामग्रीद्वयात्संशयस्वीकर्तॄणामपि निश्चयत्वघटकनिरुक्तविषयितायाः तादृशसंशयत्वावृत्त्यर्थं लाघवज्ञानघटितविपरीतकोट्यनुमितिसामग्र्यास्तत्कोटिनिरूपिततादृशविषयताशालिज्ञानप्रतिबन्धकत्वमावश्यकम्, तथाच लाघवात्संशयत्वघटकविषयताभेदमनिवेश्यैव तत्कोटिप्रकारित्वस्यैव तादृशसामग्रीप्रतिबध्यतावच्छेदकत्वोपगमान्नोक्तसामग्रीद्वयात्संशयानुमितिः । न च संशयत्वघटककोटिप्रकारताभिन्नतत्कोटिप्रकारिताकज्ञानत्वं न तत्कोटिनिश्चयत्वम्, अपि तु तादृशप्रकारताशून्यतत्कोटिप्रकारकज्ञानत्वम्, तथाच संशये निश्चयवृत्तिविषयतास्वीकारेऽपि न क्षतिरिति वाच्यम् । एकधर्मावच्छिन्ने तत्कोटिसंशयरूपस्यान्यधर्मावच्छिन्नांशे तत्कोटिनिश्चयस्य सद्भावे तत्तद्धर्मावच्छिन्नविशेष्यतानिरूपिताया लक्षणाविषयताशून्यत्वस्य तत्तद्धर्मावच्छिन्नविशेष्यकनिश्चयत्वशरीरे निवेशनीयतया धर्मितावच्छेद-

कनिष्ठप्रत्यासत्त्या कारणत्वप्रतिबन्धकत्वपक्षीयलाघवस्य विलयप्रसङ्गात्। अत्र ग्राह्याभावे अव्याप्यवृत्तित्वग्रहदशायां ग्राह्याभावनिश्चयविषये धर्मिणि ग्राह्यज्ञानोत्पत्त्या यथा तादृशाव्याप्यवृत्तित्वग्रहस्य तत्प्रतिबन्धकतायामुत्तेजकत्वं तथा तद्धर्मिकाव्याप्यवृत्तित्वग्रहदशायां तद्व्याप्यवत्तानिश्चयस्यापि तद्विपरीतज्ञानाप्रतिबन्धकतया तत्रापि तद्धर्मिकाव्याप्यवृत्तित्वग्रहस्योत्तेजकत्वमुपेयम्। एवं च कपिसंयोगतदभावयोर्दैशिकाव्याप्यवृत्तित्वग्रहदशायां पक्षतावच्छेदकशाखाद्विरूपकावच्छेदेन तदुभयकोट्यवगाहिनी, गन्धतदभावयोः कालिकाव्याप्यवृत्तित्वग्रहदशायां पक्षतावच्छेदकतत्क्षणावच्छेदेन तदुभयकोटिमवगाहमाना च संशयानुमितिः ग्राह्याभावव्याप्यवत्ताज्ञानप्रतिबन्धकतया न शक्यते वारयितुम्। न चाव्याप्यवृत्तित्वज्ञानस्य संशयविरोधितया अव्याप्यवृत्तित्वज्ञानकाले समुच्चय एव भवति न संशय इति वाच्यम्। यतो विरोधग्रह एवाव्याप्यवृत्तित्वग्रहस्य विरोधितया कोट्योर्विरोधावगाहिसंशय एव तयोरव्याप्यवृत्तित्वग्रहदशायां न सम्भवति विरोधानवगाहिन एकदेशावच्छेदेनैककालावच्छेदेन वा कोटिद्वयमवगाहमानस्य संशयस्य तदानीमुत्पत्तौ बाधकाभावः, नहि तादृशज्ञाने कोटिद्वयनिश्चयरूप सम्भवति समानकालदेशावच्छेदेन तत्तदभावनिश्चययोरव्याप्यवृत्तित्वग्रहकालीनयोरपि मिथो विरोधित्वात् अव्याप्यवृत्तित्वेऽपि भावाभावयोरेकावच्छेदेन वृत्तेरसम्भवात् अव्याप्यवृत्तितया तादृशनिश्चययोर्विषयविरोधापरिहारात्। न च यदि तादृशदेशावच्छेदेन तदभावनिश्चयः तदवच्छेदेन विशिष्टबुद्धिं ग्राह्याभावधर्मिकाव्याप्यवृत्तित्वग्रहदशायामपि प्रतिबध्नाति तदा तादृशाव्याप्यवृत्तित्वग्रहदशायामेवावच्छेदकावच्छेदेन ग्राह्याभावव्याप्यवत्ताज्ञानमपि तादृशीमनुमितिं विरुन्ध्यात्, तथा चावच्छेदकावच्छेदेनानुमिताववच्छेदकावच्छेदेन परामर्शस्यैव हेतुतया तादृशयोश्च परामर्शयोरवच्छेदकावच्छेदेन विपरीतसाध्यवत्ताज्ञानप्रतिबन्धकतया नोक्तसंशयानुमितिसम्भव इति वाच्यम्। अवच्छेदकसामानाधिकरण्येन हेतुमत्ताज्ञानादपि देशकालरूपपक्षतावच्छेदके बाधाभावदलास्वरूपसम्बन्धरूपावच्छेदकत्वमवगाहमानाया अनुमितेर्मणिकारादिभिरुपगमात्।

वस्तुतो ग्राह्याभावस्याव्याप्यवृत्तित्वेऽपि तदवच्छेदकावच्छेदेन ग्राह्यवत्त्वासम्भवात् विषयविरोधितावच्छेदकावच्छेदेन विशिष्टबुद्धौ तदवच्छेदेन ग्राह्याभावज्ञानप्रतिबन्धकतायामेव तद्धर्मिकाव्याप्यवृत्तित्वग्रहाभावो नापेक्षितः, तादृशतद्व्याप्यवत्ताज्ञानस्य तादृशविशिष्टबुद्धिं प्रत्यपि विरोधित्वे तु तादृशाव्याप्यवृत्तित्वग्रहाभावोऽपेक्षित एव ग्राह्याभावस्याव्याप्यवृत्तित्वे ग्राह्यावच्छेदकावच्छेदेन ग्राह्याभाववति वर्त्तमानस्यापि तद्व्याप्यतया विषयविरोधविरहात् । साध्यानवच्छेदकावच्छेदेन साध्यवति वर्त्तमाने यादृशदेशकालावच्छेदेन यत्र हेतुस्तत्र तादृशकालावच्छेदेन तत्र साध्यमिति व्याप्तिर्न सम्भवतीति चेत् का क्षतिः । न हि पक्षतावच्छेदकदेशकालावच्छेदेन साध्यानुमितौ तदवच्छेदेन गृहीततादृशव्याप्तिकहेतुमत्तापरामर्श एव हेतुरित्यवच्छेदकावच्छेदेनानुमितिस्थलेऽसिद्धिव्यभिचारासङ्कीर्णबाधस्य हेत्वाभासत्वं व्यवस्थापितवतो मणिकारस्यानुमतम्, तथासति सङ्कीर्णपरामर्शाज्जन्यानुमित्यसम्भवेन बाधे दोषान्तरासंकारस्य दुर्घटत्वात् । तथा चावच्छेदकदेशकालाघटितप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावघटिता व्याप्तिरपि तन्मतेऽवच्छेदकावच्छेदेनानुमितिप्रयोजिका, तादृशव्याप्त्यवगाहिनोऽवच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्यापि विपरीतकोट्यनुमितिप्रतिबन्धकत्वे ग्राह्याभावधर्मिकाव्याप्यवृत्तित्वज्ञानाभावोऽपि अपेक्षित इत्यवच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्य तदनवच्छेदेन साध्यानुमितावपेक्षितत्वेऽपि न दर्शितरीत्या संशयानुमित्यनुपपत्तिरिति ॥

(चि०) निबन्धे तु हेत्वाभासानां फलद्वारकं लक्षणम्। अनैकान्तिकानामन्वयाद्व्यतिरेकाद्वा कोट्युपस्थापकतया संशयः फलं, विरुद्धस्य साध्यविपरीतज्ञानम्। अपक्षधर्मोऽपि विरुद्धोऽन्यत्र विपरीतज्ञानसमर्थ एव बाधेऽन्यतो विपरीतज्ञानं न तु हेत्वभिमतादेः। नित्यो घटः कार्य्यत्वादिति विरुद्धे चाप्रसङ्गेऽप्यदोषः। असिद्धे अनैकान्तिकादिचतुष्टयज्ञानान्यलिङ्गत्वज्ञानं, बाधे पक्षधर्महेतौ व्याप्तिबाधः प्रकरणसमे तु न व्याप्तिपक्षधर्म-

नाधाधः फलं, नाप्यलिङ्गत्वज्ञानं–व्याप्त्यादिबुद्धिसत्वात्। नापि विपरीतबुद्धिः–स्वसाध्यविपरीतेनानियमात्। नापि संशयः–प्रत्येकं कोटिद्वयानुपनयात्। किन्तु कथमत्र तत्त्वनिर्णय इति जिज्ञासा फलम्। तथाच प्रकृतसाध्यहेत्वोः किं तत्त्वमिति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः प्रकरणसमः। न ह्यनुपस्थिते प्रतिपक्षे एकस्माज्जिज्ञासा किन्तु निर्णय एव ॥

(दी०) विरुद्धस्येति। साध्याभावव्याप्यस्येत्यर्थः। बाध इति। हेतौ प्रकृतेऽन्यत्र वा। अपक्षधर्मे च पक्षधर्मताबाध इति शेषो वा। तथाच हेतौ व्याप्तिपक्षधर्मतान्यतरभङ्ग इत्यर्थः। प्रकृतेति। प्रकृतसाध्यपक्षयोर्यो हेतू तयोरित्यर्थः।

(गा०) मूले अन्वयव्यतिरेकाभ्यामिति। कोटिद्वयसहचरितत्वज्ञानात्तद्भिन्नकोटिद्वयव्यावृत्तत्वज्ञानाच्चेत्यर्थः। व्यवस्थितविकल्पोऽयं साधारणासाधारणभेदेन। विरुद्धस्येत्यत्र साध्यसामानाधिकरण्यरूपविरोधविवक्षणेऽदूषणेऽपि विरोधतया, तस्य चापक्षधर्मस्य न साध्यविपरीतानुमितिः फलमित्यसङ्गतिरतोऽन्यादृशविरोधं दीधितिकृदाह साध्याभावव्याप्यस्येति।

अपक्षधर्मविरुद्धस्य प्रकृतपक्षे साध्यविपरीतानुमापकत्वासंभवेऽपि न क्षतिः। साध्यविपरीतानुमितौ प्रकृतपक्षकत्वाविवक्षणादित्याह मूले अपक्षधर्मोऽपीति। अन्यत्र–प्रकृतपक्षाभिन्ने स्वाधिकरणे, ह्रदो वह्निमान्धूमादित्यादौ ह्रदत्वादिहेतोः पक्षे साध्यविपरीतज्ञानसंभवेऽपि अविरुद्धधूमादेर्न तत्फलमिति नातिप्रसङ्गः। यस्य तत्फल स विरुद्ध एवेत्याह बाध इति। साध्याभावसाधकबाधितहेत्वोर्लक्ष्यतयोक्तफलघटितविरुद्धलक्षणातिव्याप्तिशङ्कां निराकरोति नित्य इति। घटो नित्य इति अभिधाने अकारप्रश्लेषेणानित्यत्वसाध्यकत्वभ्रमः स्यादिति प्रथमं नित्यत्वसाध्यकत्वोत्कीर्तनम्। असिद्ध इत्यादि। व्यभिचारादिदोषचतुष्टय ज्ञानान्यमात्राधीन फलतः तज्ज्ञानानधीन, अलिङ्गत्वज्ञान-असाधकत्वज्ञान असिद्धदोषस्य ज्ञातस्य फलमित्यर्थः।

तथा च तादृशदोषवत्त्वमसिद्धहेत्वाभासलक्षणमिति भावः ।

पक्षधर्मे हेताविस्यत्र हेतुपदस्य प्रकृतहेतुपरत्वेऽपक्षधर्मव्याप्यप्रकृतहेतुकबाधस्थले व्याप्त्यभावसिद्धिरूपतत्फलासंभवात् फलघटितलक्षणाव्याप्तिरतो हेतुपदस्य प्रकृताप्रकृतसाधारणहेतुमात्रपरतां दीधितिकृदाह हेतौ प्रकृते अन्यत्र वेति । तथा च ह्रदो वह्निमान्धूमादित्यादावपि साध्याभाववत्पक्षरूपबाधघटितेन तद्वृत्तित्वहेतुना द्रव्यत्वादिरूपहेत्वन्तरे व्याप्त्यभावानुमितिसंभवाल्लक्षणसमन्वय इति भावः । यद्यपि प्रकृतहेतोर्न तत्फलमिति तत्फलकत्वं न बाधितहेतोर्लक्षणम्, तथापि तत्फलकदोषवत्त्वं तल्लक्षणमिति नानुपपत्तिः । हेतुपदस्य प्रकृतसाधारणहेतुपरत्वे तदुपादानमफलमव्यावर्तकत्वादिति पक्षधर्मे व्याप्तिबाध इत्येवोच्येत अतः प्रकृतहेतुपरमेव तद्वाच्यमित्याशयेनापक्षधर्मप्रकृतहेतुकबाधस्य फलान्तरं पूरयति अपक्षधर्मेति । अत्र प्रकृतहेत्वर्थक हेताविति पूर्वोक्तमनुषज्जनीयम् । एतत्कल्पे फलाननुगमात्तद्घटितलक्षणाव्याप्तिमाशङ्क्यान्यतरत्वेन फलानुगमे मूलाभिप्राय इति दर्शयति तथा चेति । हेताविति । प्रकृत इत्यादि । व्याप्तिभङ्गे साध्ये साध्याभाववत्पक्षवृत्तित्वं हेतुः पक्षस्य साध्याभाववत्त्वेनैव निवेशः न तु पक्षतावच्छेदकस्यापि तत्र प्रवेश इति न व्यर्थविशेषणता । पक्षधर्मताभङ्गे साध्ये पक्षनिष्ठाभावप्रतियोगिसाध्यव्याप्यत्वं हेतुः, अत्रापि साध्यस्य तादृशाभावप्रतियोगित्वेनैव निवेशः हेतुद्वयमेव बाधघटितमिति बाधस्यान्यतरफलकत्वमुभयत्र ।

मूले व्याप्यादिबुद्धिसत्त्वादिति । सद्धेतावपि विरोधिपरामर्शदशायां सत्प्रतिपक्षत्वात्, तत्र तद्व्याप्तिपक्षधर्मताप्रतिपत्तिसत्त्वादित्यर्थः। तथा च प्रकरणसमदोषस्य व्याप्त्यादिविरहोपायकत्वासंभवादिति भावः । विपरीतबुद्धिः-स्वसाध्याभावानुमिति, सत्प्रतिपक्षहेतोः फलमिति शेषः । स्वसाध्यविपरीतेनानियमादिति । धूमादिहेतोर्वह्न्याद्यभावव्याप्यत्वाभावादित्यर्थः । संशय इति । कोटिद्वयोपस्थितिद्वारकसाध्यसंशय इत्यर्थः । कोटिद्वयानुपनयादिति । स्वेन स्वसाध्यस्यैवोपस्थापनादिति भावः । इति जिज्ञासेति । एतादृशतत्त्वनिर्णयोपायेच्छाफलिका जिज्ञासेत्यर्थः । अनयोः किं तत्त्वमिति जिज्ञासेति यावत्, अतो नाग्रिमग्रन्थविरोधः ।

ननु स्वस्वव्याप्यादिमत्तयोपस्थितयोर्हेत्वोरन्यतरसमीचीनत्व

यत्र जिज्ञासा, तद्वक्ष्यति—'अत्र हेतुः समीचीनत्व' इति। तथात्र प्रकृतसाध्यहेत्वोरिति यथाश्रुतमसंगतमित्यतो दीधितिकृद्धेतुद्वयार्थकतया तद्व्याचष्टे प्रकृतसाध्ययोरिति ।

किं तत्त्वमिति मूलस्य क समीचीन इत्यर्थः । एतादृशजिज्ञासाप्रयोजकत्वं समीचीनत्वसंशयादिसाधारणमतस्तद्वारणाय पक्षधर्मतोपस्थितिरिति । उदासीनव्याप्त्याद्युपस्थितिवारणाय विशेषणद्वयम् । न च व्याप्त्यादेरननुगमात् सर्वसाधारणरूपेण तदुपस्थितिनिवेशासंभवात् विशिष्य प्रकृतसाध्यतदभावव्याप्त्याद्युपस्थितिनिवेशस्यावश्यकत्वे जनकान्तवैयर्थ्यमिति वाच्यम् । अनुमितिचरमकारणत्वेन व्याप्त्याद्यन्तरोपस्थितिसाधारणेन तन्निवेशसम्भवात् यादृशपरामर्शसहकारेण यादृशपरामर्शस्यैकाजिज्ञासाजनकत्वं तादृशपरामर्शसहिततादृशपरामर्शनिवेशात् जिज्ञासास्वरूपयोग्यैकतरपरामर्शदशायां नातिप्रसङ्गः । प्रकरणसम इति । दोष इति शेषः । प्रकृतसाध्यवत्तापरामर्शतदभावव्याप्यवत्तापरामर्शयोर्जिज्ञासाजनने मिथः सहकारितां व्यवस्थापयति न ह्यनुपस्थित इति । असतीत्यर्थः । प्रतिपक्षे—विरोधिपरामर्शान्तरे, एकस्मात्—परामर्शात्, निर्णयः—एकतरसाध्यस्य एकतरसमीचीनत्वस्य वा निर्णयः, फलोपधानगर्भलक्षणमेकपरामर्शदशायां नातिप्रसक्तमित्येतत्परता न नहीत्यादेः जिज्ञासोपधानस्यानियमेन तद्घटितलक्षणस्याव्याप्त्या विपक्षणासम्भवात् ॥

( चि० ) अथ ज्ञातुमिच्छा जिज्ञासा सा च ज्ञानेष्टसाधनताज्ञानात् संशयाद्वेति कथं तेन विना विरोधिसाधनज्ञानमात्रादिति चेन्न ।

असति प्रतिपक्षे न जिज्ञासा सति सेत्यन्वयव्यतिरेकाभ्यां प्रकरणसमस्यापि जिज्ञासाकारणत्वात् । न चानैकान्तिकातिव्याप्तिः । तत्र हि संशयद्वारा साध्ये जिज्ञासा, अत्र तु हेतुसमीचीनत्व इति । ननु परामर्शयोरेकदानुत्पादात् कथं प्रतिरोधः ? क्रमोत्पन्नयोरेकदाऽसत्त्वादिति चेन्न । एकानन्तरमपरहेतुव्याप्तिपक्षध-

मैताज्ञानाभ्यामग्रिमव्याप्तिविशिष्टज्ञानोत्पत्तिकाले पूर्वपरामर्शनाशात् । न चोभयहेतुव्याप्तिपक्षधर्मताज्ञानानां परस्पराप्रतिबन्धात् परामर्शोत्पाद इति वाच्यम्। व्याप्त्यादिज्ञानचतुष्टययौगपद्याभावात् ।

यत्तु व्याप्तिद्वयसंस्कारोद्बोधकहेतुद्वयज्ञानयोः परस्परप्रतिबन्धात् नोभयव्याप्तिस्मृतिरिति दूषकताबीजम्। तन्न। व्याप्तिस्मृतिं विना सत्प्रतिपक्षाभावात् वादिभ्यां व्याप्त्युद्भावनाच्चेति। मैवम्। हेतुद्वयसमूहालम्बनाद्युगपदुभयव्याप्तिस्मृतावुभयपरामर्शरूपं ज्ञानमुत्पद्यते अत एकदा विरुद्धकार्यद्वयकारणान्नैकमपि कार्यमुत्पद्यते । तादृशपरामर्शश्च स्वार्थानुमाने प्रत्यक्षादितः, परस्य तु वाद्युपन्यस्तन्यायोत्थापितप्रमाणात् । अस्य केवलान्वयिन्यपि सम्भवः घटोऽभिधेयः प्रमेयत्वादित्यत्राभिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि जात्यन्यत्वे सति घटमात्रवृत्त्यन्यधर्मत्वात् घटान्योन्याभाववत् पटरूपवच्च, घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिकः घटवृत्तिनित्याभावत्वात् घटनिष्ठान्योन्याभाववदिति विशेषादर्शनदशायाम्। न च पक्षैकपमपि तन्त्रम्, विरोधस्यैव दूषकत्वेऽधिकस्य व्यर्थत्वात्॥

इति सत्प्रतिपक्षचिन्तामणिः ॥

---

( दी० ) संशयादिति । तज्जन्यदुःखोत्सारणरूपेष्टसाधनताज्ञानात् अन्यत्र चेष्टान्तरसाधनताज्ञानाज्ज्ञानेच्छेति भेदेन त्रिकल्पोपन्यासः । असत्त्वीत्यादि । हेतुसमीचीनत्वासमीची-

न्त्वसंशयजन्यदुःखामात्ररूपेष्टसाधनताज्ञानद्वारेण * जिज्ञासोपयोगित्वादित्यर्थः। उत्पत्तिकाले-उत्पत्तिपूर्वकाले। व्याप्तिपक्षधर्म्मताज्ञानयोरुत्पादक्रमानियमादुभयोर्नाशकत्वमुक्तम्। उत्पत्तावेव वा तयोरन्वयः। यत्र च व्याप्तिपक्षधर्म्मतयोः समूहालम्बनं तत्र द्वितीयपरामर्शोत्पत्तिकाल एव प्रथमपरामर्शनाशः। अस्य निरुक्तसत्प्रतिपक्षितत्वस्य। जात्यन्येति। सत्ताकम्बुग्रीवादिमत्त्वादावेकैकस्य व्यभिचाराद्विशिष्टोपादानम्। घटनिष्ठेति। घटनिष्ठात्यन्ताभावत्वेन सामान्यतः पक्षत्वान्न बाधाश्रयासिद्धी।

नन्वाद्यस्य समवेतत्वादौ द्वितीयस्य घटाभावादौ व्यभिचार इत्यत आह विशेषादर्शनेति।

(गा०)नन्विष्टसाधनताज्ञानासंशयाद्वेति विकल्पोऽसङ्गत ज्ञानगोचरेच्छादशायां तादृशेष्टसाधनताज्ञानस्य सर्वत्रैव हेतुतया संशयकल्पे तत्कल्पव्यवच्छेदायोगात् इत्यत इष्टमेवाभिप्रायकतया विकल्पं सङ्गमयति संशयजन्य इति। संशयजन्यदुःखस्य तत्सारणं कारणीभूतसंशयविघटनेनानुत्पादः तद्रूपं यदिष्टं तत्साधनताज्ञानादित्यर्थः। एव च मूलोक्तसंशयस्य जिज्ञासाहेतुत्वं दुःखं जनयित्वा तदभावोपस्थानेन तदभावेच्छासम्पादनद्वारेति स्फुटीकृतम्। अन्यत्र संशयाभावदशायाम्। दृष्टान्तरेति। व्यवहारश्रपेत्यादि। तथाच मूल इष्टपदं तद्विशेषपरमित्यर्थः। ज्ञानेच्छा-एकतरकोटिनिश्चयेच्छा।

प्रतिपक्षस्खलनस्य जिज्ञासायामतिव्यवहितस्यान्यथासिद्धाकारणत्वात् जिज्ञासाहेतुत्वादिति मूले तत्प्रयोजकत्वार्थकतया द्वारं प्रदर्शयन् व्याचष्टे हेत्विति। समीचीनत्वं प्रमितव्याप्तिपक्षधर्मताकत्व इत्याद्यनुमित्यौपयिकप्रमात्मकपरामर्शविषयत्वमिति यावत्। तत्संशयश्च परामर्शप्रामाण्यसंशयपर्यवसित इति बोध्यम्। अनैकान्तिकातिव्याप्तिरिति मूले यद्यप्यनैकान्तिकत्वोपस्थितेर्व्याप्तिपक्षधर्मतोपस्थितित्वाभावान्नैतादृशाशङ्कावसरस्तथापि तदुपस्थितरपि उदासीनव्याप्त्यादिविषयकत्वसम्भवात् तत्सङ्गतिः। संशयद्वारा साध्यसंशयद्वारा।

* युगपत्परामर्शद्वयानुत्पादेऽपि क्रमिकपरामर्शद्वयस्खलनात्प्रतिरोध

इति शंकते क्रमेति। एकपरामर्शानन्तरमपरपरामर्शजनकव्याप्तिपक्षधर्मताज्ञानयोः क्रमेणैवोत्पत्तेः, तथाच प्रथमपरामर्शचतुर्थक्षण एव परामर्शान्तरोत्पत्तिः तदानीं च पूर्वपरामर्शनाशो नोत्पद्यते अपि तु स्वद्वितीयक्षणोत्पन्नाविशेषगुणात्तृतीयक्षण एवेति उत्पत्तिकालपद तत्पूर्वकालपरतया व्याचष्टे उत्पत्ताविति। तदा नाशादित्यतस्तदा नाशोत्पत्तिरौत्सर्गिकीत्याशयेनेदं व्याख्यानम्, तदा नाशस्वार्थकत्वे यथाश्रुतमेव सङ्गच्छते अनन्तरोत्पन्नस्यैव गुणस्य नाशकतयोभयोर्व्याप्तिपक्षधर्मताज्ञानयोरेकत्र पूर्वज्ञान नाशकत्वासम्भवात्पृथक्स्थलीयनाशकत्वाभिप्रायकतया ज्ञानाभ्यां विनाशादिति मूलं सङ्गमयति व्याप्तीति। उत्पादक्रमानियमादिति। व्याप्तिज्ञानान्तरमेव पक्षधर्मताज्ञान पक्षधर्मताज्ञानानन्तरमेव व्याप्तिज्ञानमुत्पद्यत इति नियमाभावादित्यर्थः। उभयोर्नाशकत्वमुक्तमिति। उक्तज्ञानयोर्यज्ज्ञानं प्रथमतो यत्रोत्पद्यते तत्र तस्य नाशकत्वादिति भावः। विशिष्टज्ञानोत्पत्तिकाल इत्यत्रोत्पत्तौ। तादृशज्ञानयोर्हेतुत्वेनान्वये एकत्रैव उभयहेत्वन्वययोग्यता निर्वहतीति किं स्थलभेदानुसरणेनेत्याशयेनाह उत्पत्तावेवेति। व्याप्तिपक्षधर्मताविषयकैकज्ञानस्थले परामर्शयोर्यौगपद्य न सम्भवतीति स्वयमाह यत्र चेति।

उभयहेतुव्याप्तिज्ञानपक्षधर्मताज्ञानानामिति। परामर्शद्वयहेतुव्याप्तिपक्षधर्मताज्ञानचतुष्टयस्येत्यर्थः। परस्पराप्रतिबन्धात्-एकसत्त्वस्यापरसत्त्वाविघटकत्वात्। परामर्शोत्पाद इति। व्याप्त्यादिज्ञानचतुष्टयाधीनस्यैकदा समूहालम्बनरूपस्याविरलक्रमेण वोभयव्याप्यवत्ताज्ञानस्योत्पाद इत्यर्थः। विशिष्टपरामर्शयोरेवैकदानुत्पादस्तृतीयक्षणे च विनाशः नेतरज्ञानस्य तन्नियम इत्यभिमतनियमाशङ्का। अभिमान निराकरोति व्याप्त्यादीति। यौगपद्याभावात्-युगपदवस्थानासंभवात्, ज्ञानमात्र एव उक्तानियमादिति भावः। परस्परप्रतिबन्धात्-परस्परजन्यव्याप्तिज्ञानप्रतिबन्धकत्वात्।

समूहालम्बनपक्षधर्मताद्वयज्ञानात्समूहालम्बनरूपं व्याप्तिद्वयस्मरणं ततः समूहालम्बनमुभयव्याप्यवत्ताज्ञानं प्रतिरोधप्रयोजकमिति समाधत्ते मैवमिति। स्वयं निर्वक्ष्यमाणस्य नित्यसत्प्रतिपक्षदोषस्य साध्याभावव्याप्यवत्पक्षादिरूपस्य केवलान्वयिसाध्यक साध्याभावाऽप्रसिद्ध्याऽसम्भवात्।

अस्येति मूलं निरुक्तव्यवहारविषयविरुद्धगत्यन्तराभावकसाध्यनिरूपकत्वपरतया व्याख्येयं अस्येति । अभिधेयत्वे नित्यावच्छिन्नाभावप्रतियोगित्वमाश्रयत्वरूपेण घटनिष्ठाभावप्रतियोगित्वज्ञानस्य विरोध्यविषयत्वेन घटेऽभिधेयत्वज्ञानप्रतिबन्धकतया तत्सामान्या नाभिधेयत्वानुमानप्रतिरोध इत्यभिधेयत्वाभावादिग्रन्थस्याभिधेयत्वपक्षकघटनिष्ठाभावप्रतियोगितानवच्छेदकत्वसाध्यकज्ञानत्वगुणिभिन्नाधिष्ठानप्रसाध्यतावृत्तिसाध्यावच्छेदकत्वलिङ्गकानुमाने तात्पर्यम् । दृष्टान्तोऽपि घटान्योन्याभावत्वं घटरूपत्वं च ।

दीधितौ 'सत्ता कम्बुग्रीवादिमत्त्वादीनि' यथाश्रुतमूलानुसारेण यथाविवक्षिते तु सत्ताविपदे सत्तात्वादिकम् । एकैकस्येति । केवलविशेष्यकेवलविशेषणयोरित्यर्थः । ननु घटनिष्ठात्यन्ताभाव इत्यनेन प्रसिद्धघटत्वाद्यभावविवक्षणे तत्राभिधेयत्वप्रतियोगिकत्वबाधात् साधनसम्भवः अभिधेयत्वाभावस्य चाप्रसिद्ध्या न पक्षत्वसम्भव इत्याशङ्कां निरसितुमाह घटनिष्ठेति । उभयमनप्रसिद्धेनेत्यादिः । सामान्यतः–सामान्यरूपेण । बाधेति । सामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यत्वात्तो बाधो द्वावः, अभावस्य कस्यचिदभिधेयत्वप्रतियोगिकत्वमपीति विवादे पक्षतावच्छेदकावच्छेदेन बाधो दुर्निवारः पक्षतावच्छेदकप्रसिद्ध्यैव साध्यासिद्धिरित्यर्थः ।

ननु स्वरूपसम्बन्धेनाभिधेयत्वत्वावच्छिन्नसाध्यकानुमिती पक्षेनिष्ठाभावे तत्सम्बन्धावच्छिन्नविशेषिताभिधेयत्वत्वावच्छिन्नप्रतियोगिताकत्वानुमितिरेव विरोधिनी तादृशं च साध्यमप्रसिद्धम्, न च घटनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वेन पक्षत्वादुद्देश्यसिद्धिरिति स्वरूपसम्बन्धावच्छिन्नगगनाभावस्य संयोगसम्बन्धावच्छिन्नाभिधेयत्वत्वावच्छिन्नाभावसमनैयत्येनाभिन्नतया विरुद्धसाधनस्य दुर्वारत्वादिति चेन्न । सत्यम्, स्वरूपसम्बन्धावच्छिन्नायां घटनिष्ठाभावप्रतियोगितायां घटनिष्ठात्यन्ताभावप्रतियोगितात्वेन हेतुना घटनिष्ठाभिधेयत्वभेदप्रतियोगिताद्दृष्टान्तेनाभिधेयत्वत्वावच्छिन्नत्वानुमाने तात्पर्येण सामञ्जस्यम् ।

मूले विशेषादर्शनदशायामिति । व्यभिचारिण्यपि एतादृशहेतौ व्यभिचाराग्रहदशायामित्यर्थः । केवलान्वयिन्यपि सम्भव इत्यनेनान्वयः ।

व्यभिचारस्थलं दर्शयन्नेतत्कथनप्रयोजनमाह दीधितौ नन्वित्यादि। आद्यस्य-जात्यन्यत्व इत्यादि प्रथमानुमानहेतोः, द्वितीयस्य-प्रवृत्तीत्यादि द्वितीयानुमानहेतोः ॥

( दी० ) वस्तुतो घटो नाभिधेयः कम्बुग्रीवादिमत्त्वादित्यादिव्यतिरेकिणा सत्प्रतिपक्षः सम्भवत्येव, व्यापकाभावेनाप्रसिद्धस्यापि व्याप्याभावस्य सिद्ध्यभ्युपगमात्, प्रत्येकपदार्थप्रसिद्धौ तादृशप्रतिज्ञाद्युपपत्तेर्विशिष्टस्य वाक्यार्थत्वात्। सत्प्रतिपक्षस्तु साध्याभावव्याप्यवान् साध्यवदन्यत्वव्याप्यवांश्च पक्षः पक्षनिष्ठौ साध्याभावसाध्यवद्भेदव्याप्यौ इत्येवमादिः प्रत्येकमेव ।

विभाजकन्तु प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति प्रकृतपक्षसाध्यग्रहाविरोधिप्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधिरूपोन्नायकत्वम्। तदुन्नायकत्वञ्च यादृशविशिष्टविषयत्वेन परामर्शस्यानुमितिजनकत्वं तत्त्वम्। तच्च साध्याभावव्याप्यवत्पक्षादिकम्। असाधारणविरोधयोरन्यतरस्य प्रतिपक्षविधया दोषत्वपक्षे प्रकृतसाधने प्रकृतसाध्यव्यापकाभावप्रतियोगित्वाधनवगाही परामर्शो ग्राह्यः। अत्र सत्यन्तेन सत्प्रतिपक्षोन्नायकस्य अविरोध्यन्तेनाश्रयासिद्ध्याद्युन्नायकस्य, विरोध्यन्तेन वह्निव्याप्याभावे, साध्ये वह्निव्याप्यवत्पक्षात्मकस्य बाधस्य व्युदासः। संगृह्यते चानेन काञ्चनमयवह्निमानित्यादौ वह्न्याद्यभावव्याप्यह्रदत्वादिमान् पक्ष इति। सत्प्रतिपक्षे च यथासिद्धान्तं पञ्चावयवादिप्रयोगमिच्छन्ति। अयं हेतुः साध्यव्यभिचारवानित्यादिवदय पक्षः साध्याभावव्याप्यवानित्यादिकमुद्भावनं पुनरुचितं प्रतिभाति ॥

इति सत्प्रतिपक्षदीधितिः ॥

---

(गा०) प्रतियोगित्वादिप्रकारकाद्यनुद्देश्यविशिष्टबुद्धिविरोधिता-

या नव्यैरनभ्युपगमात्, तथा सति तत्सम्बन्धसम्बन्धादिप्रकारकबुद्धे-
रपि विरोधापातात् नोक्तानुमानेन घटोऽभिधेयः प्रमेयत्वादित्यनु-
मानप्रतिरोधसम्भव इति स्वयमभिधेयत्वरूपप्रतियोगिप्रकारेणाभा-
वानुमानमेव मूलकृता साध्याप्रसिद्ध्या उपेक्षितमपि प्रतिरोधकतया
व्यवस्थापयति वस्तुत इति । साध्याऽप्रसिद्ध्याऽन्वय्यनुमानात्पटा-
दिसाधारणद्रव्यत्वादेः पटादौ व्यभिचारग्रहसम्भवेन व्यतिरेकितया-
पि साधकतायाः सुघटत्वाभावेन पक्षमात्रवृत्तिकम्बुग्रीवादिव्यतिरे-
कयादर । अभावसाध्यकव्यतिरेकितया साध्यप्रसिद्धेरनपेक्षां दर्श-
यति व्यापकाभावेनेति । पटादावभिधेयत्वादिव्यापकतया गृहीतस्य
कम्बुग्रीवादिमत्त्वाभावस्याभावेन कम्बुग्रीवादिमत्त्वादिनेत्यर्थः । अप्र-
सिद्धस्यापि प्रतियोगितया अभिधेयत्वादिकं प्रकारीकृत्य अज्ञातस्या-
पि व्याप्याभावस्य व्याप्यतया गृहीतमभिधेयत्वादिकं प्रकारी-
कृत्य वस्तुभूतस्याभावान्तरस्यापि सिद्ध्युपगमादप्रसिद्धसाध्यस्या-
नुमानस्यैकदेशिनामेवानुमततया अभ्युपगमोक्तिः कम्बुग्रीवादिमत्त्वा-
भावस्य वास्तवाभिधेयत्वव्यापकताविरहात् अवस्तुभूताभिधेयत्वा-
भावस्यानुमित्याऽवगाहनासम्भवात् प्रसिद्धघटत्वाद्यभावस्य व्या-
प्यतया गृहीताभिधेयत्वप्रतियोगिकत्वाभावाद्यापकाभावेनेत्यादेर्यथा-
श्रुतस्यासङ्गतिर्बोध्या । व्यवहर्त्तव्यत्वविशिष्टाप्रसिद्धावपि, न विशिष्टा-
र्थपरप्रतिज्ञाद्यसम्भव इत्याह प्रत्येकपदार्थप्रसिद्धैवेति । तावतैव
भ्रमात्मकस्य व्यवहारोपयोगिविशिष्टज्ञानस्य सम्भवात् विशिष्टज्ञानं
विनापि तत्तद्विशेष्यांशे तत्तद्विशेषणावगाहित्वेन तात्पर्यघटकप्रतीति-
ज्ञानेन विशिष्टबोधकवाक्यप्रयोगसम्भवाच्चेति भावः । मूलकृता
सत्प्रतिपक्षहेतुदोषानभिधानात्स्वयं तान्दर्शयति सत्प्रतिपक्षस्त्विति ।
सत्प्रतिपक्षहेतावुपस्थित इत्यर्थः । तुकारेण मूलनिरुक्तसत्प्रतिपक्षव्य-
वहारविषयतावच्छेदकरूपस्य दोषत्वव्यवच्छेदः । व्याप्यवान्-व्या-
प्यविशिष्ट, पक्षनिष्ठौ-आधेयतया पक्षविशिष्टौ । एवमादिरिति ।
आदिपदादाधेयतासम्बन्धेन प्रकृतपक्षसाध्यकप्रकृतसाध्याभावादि-
मितिजनकपरामर्शविषयप्रकृतपक्षव्याप्यविशिष्टप्रकृतसाध्या-
ग्रहः । पक्षे साध्याभाव इत्यादि बाधबुद्धेरपि पक्षे साध्या-
वरोधितया तादृशबाधोन्नायकस्यापि परामर्शस्यानुमिति-
त्वेन तद्विषयस्यापि सत्प्रतिपक्षतौचित्यात् । अत एव सा-

ध्यतदभावयोराधेयतया पक्षव्याप्यवत्ताज्ञानसंवलनदशायां पक्षे साध्यं साध्याभावो वेति कोटिद्विशेष्यकसंशयरूपानुमितिः प्रत्येकमेवेत्यनेन तावत्समुदायस्य सत्प्रतिपक्षविभाजकत्वासम्भवो दर्शितः ।

नन्वेवं प्रत्येकरूपस्याव्याप्त्या विभाजकत्वासम्भवात्सर्वसाधारणं किमेतद्विभाजकमित्याकांक्षायां तादृशं विभाजकं रूपमाह विभाजकं त्विति । सर्वत्र प्रकृतेति पक्षसाध्ययोर्द्वयोरेवास्वेति । प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती विशिष्टपक्षविशिष्टसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकनिरुक्तपक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकविषयतावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यादृशीविशिष्टज्ञाननिरूपितविषयिता तादृशत्वमित्यर्थः । तादृशी च वह्न्यभावव्याप्यविशिष्टह्रदनिरूपितविषयतेति तत्र लक्षणसमन्वयः । साध्याभावव्याप्यविशिष्टपक्षविषयतायाः साध्यानुमितिप्रतिबन्धकतावच्छेदकतया तद्वदनुमितिजनकतावच्छेदकविषयताकसाध्याभावव्याप्यवत्पक्षादावतिव्याप्तिवारकतया सत्यन्तं सार्थकयिष्यते । तत्र निरुक्तवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदकविषयताकत्वरूपविरोधित्वान्तार्थस्य उन्नायकविषयविशेषणत्वे विषयताभागस्य द्विधा निवेशे गौरवात् उन्नायकताघटकविषयतायामेव प्रतिबन्धकतावच्छेदकत्वं विशेषणं दत्तम् । पक्षतावच्छेदकवैशिष्ट्यनिवेशव्यावृत्तिः पूर्ववत् । उक्तप्रकारताशालिग्रहनिरूपितप्रतिबन्धकतामात्रनिवेशे साध्याभावव्याप्यवत्ताज्ञानस्यापि समूहालम्बनसाध्यग्रहरूपसाध्याभावव्याप्यव्याप्याभावादिमत्त्वप्रतिबन्धकतया नोपदर्शितसत्प्रतिपक्षोन्नायकव्यावृत्तिरिति तादृशप्रकारताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशः । तादृशप्रकारताशालिदोषजन्यज्ञानमाहार्यज्ञानं प्रति च साध्याभावव्याप्यवत्ताज्ञानस्याप्रतिबन्धकतया सत्प्रतिपक्षस्यैवासंग्रह इति ज्ञानत्वमुपेक्ष्यानुमितित्वनिवेशः । ह्रद० काञ्चनमयवह्निमान्काञ्चनमयह्रदो वह्निमानित्यादौ सद्ग्रहस्य वह्न्यभावव्याप्यविशिष्टह्रदादेः ज्ञानस्य प्रतिबन्धकतावच्छेदककोटौ साध्यतावच्छेदकादिघटककाञ्चनमयत्वादिविषयताया अनिवेशात्तद्घटितपक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशि-

एवं वैशिष्ट्यग्रहत्वं नोक्तज्ञानप्रतिबध्यतावच्छेदकमित्यव्याप्तिः स्यादतः स्वरूपसम्बन्धरूपमवच्छेदकत्वं परित्यज्य व्यापकत्वं प्रतिबध्यताविशेषणम्। अत एवोक्तस्थले आश्रयासिद्ध्युन्नायके विशिष्टपक्षमात्रग्रहत्वावच्छिन्नविरोधिन्यपि विशिष्टपक्षाविशिष्टसाध्यवैशिष्ट्यविषयकानुमितित्वव्यापकप्रतिबध्यताघटितविरोधिताशालिनि काञ्चनमयत्वाभावव्याप्यविशिष्टह्रदादौ सत्यन्तदलस्य निरुक्तसाध्यवैशिष्ट्यप्रतिबन्धकतावदनुमितिजनकतावच्छेदकविषयताकत्वरूपविरोध्युन्नायकत्वस्य च सत्त्वेनातिव्याप्तिः स्यादिति अविरोध्यन्तविशेषणम्। एतच्च सगृह्णाते इत्यादिना स्वयमेव वक्ष्यते। उभयतया विशिष्टविषयेऽविरोधित्वविशेषणं यथाश्रुतशब्दलभ्यं तदर्थस्वाश्रयविषयताकान्यत्वं तन्निवेशोऽधिकविषयतादिनिवेशाद्गौरवं, काञ्चनमयो ह्रदो वह्निमानित्यादौ काञ्चनमयत्वाभाववद्ह्रदादिरूपाश्रयासिद्धिभेदस्य सत्प्रतिपक्षदोषोन्नेयवह्न्यभावविशिष्टह्रदादिरूपबाधेऽसत्त्वेनाव्याप्तिश्चेति उभयतावच्छेदकविशिष्टबाधविषयतायां विशिष्टपक्षादिग्रहप्रतिबन्धकतानवच्छेदकत्वनिवेशः। उक्तस्थले बाधग्रहस्यापि अनुमितिरूपविशिष्टपक्षादिग्रहविरोधितया अव्याप्तितादवस्थ्यमिति विशिष्टपक्षग्रहत्वव्यापकत्वनिवेशः। विशिष्टपक्षग्रहत्वपर्याप्तावच्छेदकताकत्वस्य प्रतिबध्यतायां निवेशे काञ्चनमयरजतमयह्रदो वह्निमानित्यादौ आश्रयासिद्ध्युन्नायके काञ्चनमयत्वाभावव्याप्यह्रदादावतिव्याप्तिः रजतमयत्वघटितपक्षतावच्छेदकविशिष्टग्रहत्वस्य तज्ज्ञानप्रतिबध्यतानवच्छेदकत्वादतः तदुपेक्ष्य तादृशग्रहत्वव्यापकतायाः तत्र निवेशः। अत एव ह्रदो वह्निमानित्यादौ ह्रदत्वादिपक्षतावच्छेदकत्वविशिष्टविषयकग्रहत्वस्य केवलस्य कस्यापि प्रतिबध्यतानवच्छेदकत्वेऽपि नाप्रसिद्धिः। न च तादृशग्रहत्वव्यापकप्रतिबध्यतानवच्छेदकत्वविशिष्टविषयतानिवेशेऽपि कस्या अपि विरोधिज्ञानप्रतिबध्यतायाः ह्रद इति निर्धर्मितावच्छेदकज्ञानसाधारणतादृशग्रहत्वव्यापकत्वासम्भवात्तथाविधप्रतिबध्यत्वाप्रसिद्धिः विशिष्टविषयकानुमितित्वव्यापकतानिवेशे तादृशानुमितित्वस्य निर्धर्मितावच्छेदकज्ञानावृत्तित्वेऽपि ह्रदो वह्निमान्ह्रदो घटवानित्यादिनानाप्रकारकानुमितिष्वेव ह्रदत्वादिविशिष्टविषयकानुमितित्वसत्त्वात् तादृशसकलानुमितीनां कस्यचिज्ज्ञानस्य प्रतिबध्यत्वासंभवेन तादृशानुमितित्वव्यापकप्रतिब-

ध्यता न प्रसिद्ध्यतीति वाच्यम्। कामिनीजिज्ञासादिप्रतिबध्यताया एव तथाविधानुमितित्वादिव्यापिकायाः प्रसिद्धेः।

वस्तुतस्तु विरोधित्वघटकप्रतिबध्यतायामेव पक्षतावच्छेदकादिविशिष्टविषयकानुमितित्वाव्यापकत्वनिवेशान्न प्रसिद्धिरिति पूर्वमेवावेदितम्। एतेन यत्र कामिनीत्वस्य पक्षतावच्छेदकता तत्र तद्विशिष्टविषयकानुमितित्वादेः कामिनीजिज्ञासाप्रतिबध्यत्वाव्याप्यत्वेपि न क्षतिः।

अथोन्नेये विशिष्टपक्षादिग्रहाविरोधित्वनिवेशेपि वन्ह्यभावव्याप्यव्याप्याभाववान् ह्रदो वन्हिमानित्यत्र वन्ह्यभावव्याप्यव्याप्यविशिष्टे ह्रदे आश्रयासिद्ध्यात्मकेऽतिव्याप्तिर्दुर्वारैव तस्य वन्ह्यभावव्याप्यविशिष्टह्रदात्मकसत्प्रतिपक्षस्य विशिष्टपक्षग्रहाविरोधिनः उन्नायकत्वात् आश्रयासिद्धित्वेन अनुमितिविरोधित्वेन सत्यन्तदलाक्रान्तत्वाच्च। न चोन्नायक एव विरोध्यन्तं विशेषणं विवक्षितम्, उक्ताश्रयासिद्धेश्च विशिष्टपक्षग्रहविरोधितया नातिव्याप्तिरिति वाच्यम्। तथा सति वह्निमान्ह्रदो वन्ह्यभावव्याप्यव्याप्याभाववानित्यत्र वन्ह्यभावव्याप्यव्याप्यविशिष्टह्रदात्मके बाधेऽनुमितिविरोधिवन्ह्यभावव्याप्यविशिष्टह्रदरूपाश्रयासिद्ध्युन्नायकेतिव्याप्तेः तस्य वह्निविशिष्टपक्षात्मकविशिष्टपक्षग्रहाविरोधित्वादिति चेन्न। उन्नेये उन्नायके चाविरोध्यन्तस्य विशेषणतोपगमेनातिप्रसङ्गस्य वारणीयत्वात्।

अथवा उन्नेयविशेषणमेवाविरोध्यन्तम् यद्धर्मावच्छिन्नप्रतिबध्यताघटितं विरोधित्वं सत्यन्तार्थः, तद्धर्मावच्छिन्नप्रतिबध्यताघटितविरोधितायाः उन्नेयविशेषणतया विवक्षितत्वात् पूर्वोक्तस्थले वन्ह्यभावव्याप्यव्याप्यविशिष्टह्रदात्मकाश्रयासिद्धेः विशिष्टपक्षग्रहविरोधितावच्छेदकावच्छिन्नत्वेन सत्यन्तदलाक्रान्तायास्तद्रूपावच्छिन्नाविरोधिनः सत्प्रतिपक्षस्यैवोन्नायकत्वेन नातिव्याप्तिः, उन्नेयबाधस्योन्नायकसत्प्रतिपक्षस्य च विशिष्टपक्षसाध्यवैशिष्ट्यग्रहत्वरूपैकधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताकत्वेन सत्प्रतिपक्षस्थले लक्षणसमन्वय इति उन्नेयेऽविरोध्यन्तविशेषणं वह्निव्याप्याभावसाध्यके वह्निव्याप्यवत्पक्षात्मकबाधस्य विशिष्टपक्षादिग्रहाविरोधिवह्निमत्पक्षस्योन्नायकस्य वारकमिति वक्ष्यते। तत्र यथाश्रुतविरोध्युन्नायकत्वं प्रतिबन्धकतावच्छेदकविषयताविशिष्टविषयतावच्छिन्नानुमितिप्रयोजकत्वं तत्र प्रतिबन्धकतावच्छेदकविषयतानिरूपकविषयतात्वेन निवेशनं विरोधेऽनेन

नासिकास्पर्शमनुकरोतीति प्रतिबन्धकतावच्छेदकविषयतावच्छिन्नानुमितिप्रयोजकत्वं निवेशितम् । उक्तस्थले वह्निव्याप्यवत्पर्वतरूपबाधस्य वह्निमत्पर्वतविषयकसमूहालम्बनरूपवह्निव्याप्यवत्पर्वतरूपविरोधिविषयकानुमितिप्रयोजकतया अतिप्रसङ्गः स्यादिति विरोधिविषयतावच्छिन्ननिरूपितप्रयोजकत्वं निवेशितम् । अनुमितिजनकत्वरूपमुपायकत्वं न विषयस्येति अनुमितिजनकतावच्छेदकविषयिताकत्वरूपमनुमितिप्रयोजकत्वं चात्र तदित्याह उपायकत्वं चेति । यादृशविशिष्टविषयकत्वेनेति तृतीयार्थोऽनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वम् । तन्निवेशाद्वह्निव्याप्यवत्पर्वतरूपोक्तस्थलीयबाधे सत्प्रतिपक्षविषयकसमूहालम्बनविषये सत्प्रतिपक्षैकदेशे केवलपक्षादौ च नातिव्याप्तिः स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे सत्प्रतिपक्षैकदेशे केवलपक्षादावनतिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितसत्यन्तार्थाभावेनातिव्याप्तिविरहेऽपि ह्रदो वह्निमानित्यादौ वन्ह्यभावव्याप्यव्याप्योभयविशिष्टह्रदादिविषयकज्ञानीयवन्ह्यभावविशिष्टह्रदादिविषयताया अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तेर्वन्ह्यभावव्याप्यव्याप्यत्वावच्छिन्नविषयतानिरूपितह्रदत्वावच्छिन्ननिरूपितविषयतात्वेन विरोध्युपायकतावच्छेदकतया वन्ह्यभावविशिष्टह्रदादावतिव्याप्तेर्दुर्वारतयोपायकताशरीरेऽनतिरिक्तवृत्तित्वमवच्छेदकत्वं तत्र निवेश्यम् । अथेदृशावच्छेदकतानिवेशेऽपि सत्यन्तविरोधित्वशरीरे ईदृशावच्छेदकत्वं प्रवेश्यं न तु स्वरूपसम्बन्धरूपं, तथा सति उक्तस्थले वन्ह्यभावव्याप्यव्याप्यविशिष्टह्रदादौ अतिव्याप्तिः तादृशविशिष्टविषयताया वन्ह्यभावविशिष्टह्रदादिविषयत्वाभिन्नतया वन्ह्यभावत्वावच्छिन्नविषयतानिरूपितह्रदत्वत्वावच्छिन्नविषयतात्वेन पक्षसाध्यविशिष्टप्रत्यक्षप्रतिबन्धकतावच्छेदकत्वात् ।

तद्वेति । तादृशविशिष्टं चेत्यर्थः । साध्यव्यापकाभावप्रतियोगिप्रकृतहेतुमत्पक्षादौ मतभेदेन विरोधासाधारण्येऽतिव्याप्तिं वारयति असाधारणेति । प्रतिपक्षविषयेति । अनुमितिप्रतिबन्धकसाध्याभावव्याप्यवत्ताज्ञानविषयेत्यर्थः । सपक्षविपक्षव्यावृत्तत्वमसाधारण्यं साध्यासामानाधिकरण्यं विरोध इति मते अनुमित्यविरोधिनि तत्र नोक्तलक्षणातिव्याप्तिप्रसक्तिरतः पक्ष इत्युक्तम् । प्रतियोगित्वादित्यादिना पक्षधर्मतापरिग्रहः । तथाच प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षे प्रकृतसाध्यतावच्छेदकविशिष्टव्यापकाभावप्रतियोगित्वविशिष्टप्रकृतसाधनतावच्छेदकावच्छिन्नवैशिष्ट्यानवगाहिप-

रामर्शनिष्ठानुमितिजनकतावच्छेदकविषयताकत्वरूपमुन्नायकत्वं विवक्षणीयमित्यर्थः । रूपान्तरेण यत्र प्रकृतहेतोर्व्यतिरेकिप्रतिहेतुता तत्स्थलीयप्रतिपक्षस्य सङ्ग्रहाय प्रकृतसाधनतावच्छेदकनिवेशः। रूपान्तरावच्छिन्नप्रकृतसाध्यव्यापकीभूताभावप्रतियोगिताविशिष्टप्रकृतहेतुमत्पक्षकालीनत्वस्य यत्र साध्यतावच्छेदकघटकत्वं तत्स्थलीयतादृशसाध्यतावच्छेदकविशिष्टसाध्याभावव्याप्यवत्पक्षात्मकप्रतिपक्षसङ्ग्रहाय प्रकृतसाध्यतावच्छेदकनिवेशः । यत्र प्रकृतसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रकृतसाधनवत्त्वेन रूपान्तरावच्छिन्नपक्षस्य प्रकृतपक्षतावच्छेदके प्रवेशः तत्रत्यसत्प्रतिपक्षस्य तादृशपक्षतावच्छेदकताविशिष्टे साध्याभावव्याप्यवत्तारूपस्य सङ्ग्रहाय प्रकृतपक्षतावच्छेदकनिवेशः । साध्याभावनिरूपितान्वयव्याप्तिविशिष्टप्रकृतहेतुमत्पक्षस्य लक्ष्यतोपगमान्न तत्रातिव्याप्तिः । तस्यासाधारण्यात्मकत्वे तदनवगाहित्वमपि परामर्शविशेषणं देयम् । तत्सङ्ग्राहकमन्यादिपदम् । सत्प्रतिपक्षोन्नायकस्येति । साध्याभावव्याप्यव्याप्यवत्पक्षादेरविरोधितयाऽनाभासरूपस्येत्यर्थः । आश्रयासिद्ध्याद्युन्नायकस्येति । आश्रयासिद्ध्याद्यन्तर्गतस्य पक्षविशेषणाद्यभावव्याप्यवत्पक्षादेरित्यर्थः । आश्रयासिद्ध्यादीत्यादिपदात् साध्याप्रसिद्ध्यादिपरिग्रहः । वन्ह्यादिसाध्यके बाधस्य किञ्चिदनुन्नायकतया उन्नेये विरोध्यन्तविशेषणस्य तद्वारकता न सम्भवतीति बाधविशेषे तद्व्यावृत्तिं दर्शयति विरोध्यन्तेनेति । वह्निव्याप्यवत्पक्षात्मकस्येत्यनेन वह्निमत्पक्षोन्नायकत्वं सूचितम् । अविरोध्यन्तसार्थक्याय प्रतिबध्यतायां स्वरूपसम्बन्धरूपपक्षसाध्यवैशिष्ट्यावगाहित्वावच्छिन्नत्वनिवेशासम्भवं दर्शयति संगृह्णन् इति । अनेन लक्षणेन प्रतिस्थापनात्मकन्यायप्रयोगानौचित्यं दर्शयिष्यन् तस्यैव साम्प्रदायिकतामाह सत्प्रतिपक्षे चेति । यथासिद्धान्तमिति । नैयायिकादिप्रतिवादिनामित्यादिस्वसिद्धान्तानुसारेणेत्यर्थः । पञ्चावयवादीति । इतरत्वात् इत्यादिरूपेत्यादिः । आदिना मीमांसकसौगतसिद्धावयवन्यायपरिग्रहः । इच्छन्तीति । नैय्यायिकसांप्रदायिका इति शेषः । उचितं प्रतिभातीति । चादिना न्याये प्रयुक्ते हेतुदोषमात्रस्यैवाकांक्षितत्वात्प्रथमतस्तमनुद्भाव्य विपरीतप्रतिज्ञादिप्रयोगेऽर्थान्तरस्य दुर्वारत्वादिति भावः ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिकृतगादाधर्यां सत्प्रतिपक्षप्रकरणम् ।

अथ श्रीमथुरानाथतर्कवागीशविरचितरहस्यसमन्वितं

# असिद्धिप्रकरणम् ।

(चि०) असिद्धिस्तु न व्याप्तिपक्षधर्मताविरहः, प्रत्येकमननुगमात् । अथ प्रत्येकाभावेऽनुगतो व्याप्तिपक्षधर्मताविशिष्टाभावोऽसिद्धिः, यद्यपि विशिष्टस्यान्यत्वे प्रत्येकाभावाव्याप्तिरपसिद्धान्तश्च अनन्यत्वे प्रत्येकाभाव एव स इत्यननुगमः, तथापि विशेषणावच्छिन्नप्रतियोगिको विशेष्याभावो विशेषणविशेष्यसम्बन्धाभावो वा विशिष्टाभावोऽनुगत इति चेत्, न । विशिष्टाभावाज्ञानेऽपि व्याप्त्यादिप्रत्येकाभावज्ञाने उद्भावने चानुमितिप्रतिबन्धो वादिनिग्रहश्चेति तत्प्रत्येकाभावाव्याप्तिः, अन्यथा तेषां हेत्वाभासान्तरतापत्तेः । न च विशिष्टाभावधीद्वारा प्रत्येकाभावो दोषो(१)न तु स्वत इति वाच्यम् । प्रत्येकाभावस्य स्वत एव दोषत्वसम्भवात् ।

## अथ असिद्धिपूर्वपक्षरहस्यम् ।

(मा०) (२)व्याप्तीति । तथाच व्याप्तिपक्षधर्मत्वाभावयोर्न् हेतुर-

(१) लभ्यत इति पाठान्तरम् ।

(२) अत्र श्रीमद्गदाधरभट्टाचार्यकृतव्याख्यानम् आदितः सम्पूर्णं काशीस्थराजकीयभवनस्थांदर्शभूते मूलपुस्तके न दृश्यते । काशीस्थराजकीयसंस्कृतपुस्तकालये मद्रासंस्कृतपुस्तकालये तथा वङ्गदेशीयानां प्राचीननैयायिकानामपि पुस्तकेषु गादाधर्यां असिद्धिप्रकरणमस्माभिर्महता प्रयत्नेन गवेषणायां कृतायामपि नोपलब्धम् । अतो मूलार्थं तावदपि पाठार्थावगतये कलिकातास्थ एशियाटिकसोसाइटीयशालये मुद्रितापि माथुरी दत्ता । अत परमपि कैश्चिद्विद्वद्भिरस्या गादाधरी दीयते चेन्मुद्रापयिष्यत इति निवेदयामः ॥ स० ॥

सिद्ध इति भावः। अत्र घटो द्रव्यं सत्त्वादित्यादौ व्याप्यत्वासिद्धेः संग्रहाय व्याप्यत्वस्य जलह्रदो वह्निमान् धूमादित्यादौ(१) स्वरूपासिद्धेः संग्रहाय च पक्षधर्मत्वस्य प्रवेशः। व्याप्तिश्च साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यरूपा ग्राह्या न तु हेतुव्यापकसाध्यसामानाधिकरण्यरूपा द्रव्यं सत्त्वादित्यादिव्याप्यत्वासिद्धिस्थले तदप्रसिद्ध्याऽसम्भवापत्तेः। पक्षधर्मत्वं च हेतुतावच्छेदकसम्बन्धेन पक्षवृत्तित्वम्, तेन ह्रदो वह्निमान् धूमादित्यादौ स्वरूपासिद्धे कालिकादिसम्बन्धेन हेतोः पक्षवृत्तित्वेऽपि न क्षतिः। व्याप्तिपक्षधर्मतयोः प्रत्येकाभावद्वयमसिद्धिः व्याप्तिविशिष्टपक्षधर्मत्वाभावो वा ? आद्ये इह प्रत्येकमिति। प्रत्येकाभावस्येत्यर्थः। अननुगमात्–सर्वासिद्ध्यसाधारणत्वात्। ह्रदो वह्निमान् धूमादित्यादिस्वरूपासिद्धे व्याप्यत्वाभावस्य घटो द्रव्यं सत्त्वादित्यादिव्याप्यत्वासिद्धे च पक्षधर्मत्वाभावस्यासत्त्वादित्यभिप्रायः। अस्याभिप्रायेणाशङ्कते अथेति। प्रत्येकाभावे अनुगतः प्रत्येकाभावमात्रवृत्त्यपि वर्त्तमानः। प्रत्येकाभावाव्याप्तिरिति। प्रत्येकाभावमात्रवृत्त्यव्याप्तिरित्यर्थः। ननु विशिष्टस्यातिरिक्तत्वेऽपि तदभावः प्रत्येकाभावस्थलेऽपि वर्त्तत एवेति नाव्याप्तिरित्यत आह अपसिद्धान्तश्चेति। अननुगम इति तदवस्थ इति शेषः। अनुगत इति। प्रत्येकाभावमात्रवृत्त्यपि वर्तमान इत्यर्थः। विशिष्टेति। व्याप्यत्वादिप्रत्येकाभावद्वयस्याव्याप्यसिद्धितयेति शेषः। तत्प्रत्येकाभावाव्याप्तिरिति। व्याप्यत्वादिप्रत्येकाभावद्वयेऽसिद्धिलक्षणाऽव्याप्तिरित्यर्थः। विशिष्टाभावत्वस्याऽसिद्धिरूपत्वाच्चस्य च प्रत्येकाभावयोरसत्त्वादिति शेषः।

एवमुपलक्षणम्। अयोगोलकं धूमवद्वह्नेः ह्रदो वह्निमान् धूमादित्यादौ बाधसङ्कीर्णोऽसिद्धेरसिद्धिलक्षणस्याप्यव्याप्तिः तत्र विशिष्टस्याप्रसिद्धतया तदभावस्याप्यसिद्धेरित्यपि बोध्यम्।

ननु प्रत्येकाभावज्ञानस्यानुमितिप्रतिबन्धकत्वेऽपि न तस्यासिद्धित्वमतो नाव्याप्तिरित्यत आह अन्यथेति। तेषां–प्रत्येकाभावानां, हेत्वाभाससामान्यलक्षणाक्रान्तानामिति शेषः। साध्यादिभेदेन व्याप्त्यादीनां नानात्वाद्बहुवचनम्। प्रत्येकाभाव–प्रत्येकाभावज्ञानं, न तु स्वतः–न तु साक्षात्, तथा च हेत्वाभाससामान्यलक्षणमेव तत्र नास्ति अ-

(१) [illegible] पाठान्तरम्।

नुमितितत्कारणपरामर्शयोः साक्षात्प्रतिबन्धकत्वस्य तल्लक्षणाघटकत्वादिति भावः। स्वत एव-साक्षादेव, ग्राह्याभावागाहित्वादिति भावः। इदमुपलक्षणम् आश्रयासिद्धि-साध्याविशेषणासिद्धि-साधनाविशेषणासिद्धि-हेत्वसिद्धिषु चाव्याप्तिरित्यपि बोध्यम्।

(चि०) वस्तुतो विशिष्टाभावो दोष एव न प्रत्येकस्य समर्थत्वे, तेनैवान्यथासिद्धेर्व्यर्थविशेषणत्वात् प्रत्येकाभावमज्ञात्वा न विशिष्टाभावज्ञानमित्युपजीव्यत्वाद्विशिष्टाभावानुद्भावनेऽपि प्रत्येकोद्भावने वादिनिवृत्तेश्च। अत एव व्याप्तिपक्षधर्मताविशिष्टज्ञानविषयाभावत्वं प्रत्येकाभावानुगतमसिद्धत्वम्, व्यभिचारादावसिद्धत्वेऽप्युपजीव्यत्वेन प्राथम्यात्तदुद्भावने वादिनिवृत्तेश्च स स्वत एव दूषकः, तत्र व्याप्त्यसिद्ध्यर्थमुपाधौ तूद्भाविते विप्रतिपद्यतेऽपि, तस्य दुर्ग्रहत्वात् व्यभिचारेणैव तदन्वयाच, यदि च व्यभिचारादिकमज्ञात्वाप्यसिद्धिबुद्धिः, तथाऽप्युपधेयसङ्करेऽप्युपाधेरसङ्कर एवेति निरस्तम्। व्यर्थविशेषणत्वादेव। एतेन व्याप्तिपक्षधर्मतान्यतराभावोऽसिद्धिरिति प्रत्युक्तम्, अन्यतरत्वाज्ञानेऽपि प्रत्येकाभावस्य दोषत्वात् व्यर्थविशेषणत्वाच्च।

(दी०) वस्तुत इत्याद्यभ्युच्चयमात्रम् विशिष्टपरामर्शविरोधित्वेन विशिष्टाभावस्य दोषताया दुर्वारत्वात्। प्रत्येकाभावमज्ञात्वापि 'शब्दादिना शक्यग्रहत्वात्। व्यर्थविशेषणत्वस्य चासाधकतासाधन एव सम्भाव्यत्वात्। न वा तदपि, तादृशाभावनिष्ठव्याप्तेर्द्धर्मान्तरेणावच्छेत्तुमशक्यत्वात् विशेष्यादिप्रतियोगिकत्वमात्रस्य व्यभिचारिसाधारणत्वादिति।

(मा०) दोष एव नेति। हेत्वाभास एव नेत्यर्थः। कुतस्ताद्विशेषोऽसि-

द्धिरिति शेषः। प्रत्येकस्य—प्रत्येकाभावस्य, समर्थत्वे—दूषणसमर्थत्वे, आभासत्वेति यावत्। अन्यथासिद्धेरिति। विशिष्टाभावस्य हेत्वाभासत्वं विनापि विशिष्टाभाववत्साधनस्य दुष्टत्वव्यवहारोपपत्तेरित्यर्थः। विशिष्टाभाववति प्रत्येकाभावस्याप्यावश्यकत्वादिति भावः। ननु साध्यव्याप्यो हेतुः पक्षवृत्तिरित्याकारकविशकलितव्याप्तिपक्षधर्मतोभयविषयकपरामर्शस्यानुमितिहेतुत्ववादिनां प्राचां नये साध्यव्याप्यत्वे सति पक्षवृत्तित्ववान् हेतुरिति व्याप्तिविशिष्टपक्षधर्मताप्रकारकपरामर्शस्याप्यनुमितिहेतुतया तद्विरोधित्वेन विशिष्टाभावस्यापि हेत्वाभासत्वं दुर्वारं विनिगमकाभावेन तादृशविशिष्टप्रकारकपरामर्शप्रतिबन्धकत्वस्यापि सामान्यलक्षणघटकत्वात्, साध्यव्याप्यहेतुमान् पक्ष इति पक्षविशेष्यकपरामर्शस्यैवानुमितिहेतुत्वमिति नव्यमतानुयायित्वे व्याप्तिविशिष्टपक्षधर्मत्वयोर्द्वयोः प्रत्येकाभावस्यापि दोषत्वाभ्युपगमासङ्गतेः पक्षवृत्तित्वाभावज्ञानस्य तादृशपक्षविशेष्यकपरामर्शाप्रतिबन्धकत्वादित्यरुचेराह व्यर्थविशेषणत्वादिति। इदमसाधकं व्याप्तिविशिष्टपक्षधर्मत्वाभावादित्यसाधकत्वानुमाने पक्षधर्मत्वाभावादित्यस्यैव सम्यक्त्वेन व्यर्थविशेषणत्वादित्यर्थः। तथा च हेत्वाभासत्वस्यासाधकताव्याप्यत्वनियमात् व्यर्थविशेषणतया च विशिष्टाभावे तदभावान्न तस्य हेत्वाभासत्वम्। न चैवं तत्र सामान्यलक्षणातिव्याप्तिरिति वाच्यम्। तस्य हेत्वाभासत्वाभावेनाऽनायत्या विशकलितव्याप्तिपक्षधर्मतोभयविषयिताशालिपरामर्शप्रतिबन्धकत्वस्यैव सामान्यलक्षणे निवेशनीयत्वादिति भावः। नन्विदमप्ययुक्तं व्यर्थविशेषणत्वेऽपि व्याप्तिसत्त्वाद्विशिष्टाभावत्वस्य प्रत्येकाभावत्वाघटिततया विशिष्टाभावस्यातिरिक्तत्वेन धूमप्रागभाववद्वह्निमद्धर्मिकतया च वैयर्थ्यशङ्कानवकाशादित्यरुचेराह प्रत्येकाभावमिति। उपजीव्यत्वादिति। प्रत्येकाभावज्ञानस्योपजीव्यत्वादित्यर्थः। तथा च प्रत्येकाभावज्ञानस्योपजीव्यतया प्रत्येकाभाव एव हेत्वाभासो न तु विशिष्टाभावस्तज्ज्ञानस्य प्रत्येकाभावज्ञानोपजीवकत्वात्, सामान्यलक्षणे चानायत्या विशकलितव्याप्तिपक्षधर्मतोभयविषयताशालिपरामर्शप्रतिबन्धकत्वस्यैव निवेशान्नातिव्याप्तिरिति भावः। नन्विदमप्ययुक्तं प्रत्येकाभावमन्तरापि(१)प्रत्यक्षशब्दाभ्यां लि-

(१) मन्तरापीति पाठान्तरम्।

ज्ञान्तरजन्यानुमानेन च विशिष्टाभावज्ञानसम्भवात्। न च तथापि प्रत्येकाभावलिङ्गकानुमानेन विशिष्टाभावज्ञानं प्रति प्रत्येकाभावज्ञानस्योपजीव्यत्वमस्त्येवेति वाच्यम्। विशिष्टाभावलिङ्गकानुमानेन प्रत्येकाभावज्ञानं प्रति विशिष्टाभावज्ञानस्याप्युपजीव्यत्वेन क्वाचित्कोपजीव्योपजीवकभावस्याविशेषादित्यरुचेराह विशिष्टाभावानुद्भावनेऽपीति। एतदप्यापाततः, एवं सति विरुद्धत्वादेरपि हेत्वाभासत्वं न स्यात् तदनुद्भावनेऽपि बाधस्वरूपासिद्ध्यादेरुद्भावने वादिनिवृत्तेः। न च तत्र बाधादेरनुद्भावनेऽपि विरुद्धत्वमात्रोद्भावने वादी निवर्त्ततेऽतो विरुद्धत्वस्यापि हेत्वाभासत्वम्, अत्र तु प्रत्येकाभावानुद्भावने विशिष्टाभावमात्रोद्भावनेऽपि न वादिनिवृत्तिरिति न विशिष्टाभावस्य दोषत्वमिति वाच्यम्। विशिष्टाभावमात्रोद्भावनेऽपि वादिनिवृत्तेः तस्मात्साध्यव्याप्यत्वे सति पक्षवृत्तित्ववान् हेतुरिति परामर्शस्यानुमितिहेतुत्ववादिनां प्राचां नये व्याप्तिविशिष्टपक्षधर्मताभाववद्धेतुरपि हेत्वाभासः, स च व्याप्यत्वासिद्धावेवान्तर्भूत इति तत्त्वम्। अत एवेति। निरस्तमित्यनेनान्वयः। व्याप्तीति। व्याप्तिपक्षधर्मतोभयमात्रमुख्यविशेष्यकबुद्धिमुख्यविशेष्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वमित्यर्थः। नातो विशेषाभावसामान्याभावविषयकयोरथामसिद्ध्याप्यसम्भवशङ्कावकाशः। अधिकं तु सिद्धान्ते वक्ष्यामः। प्रत्येकाभावानुगतमिति। व्याप्तिपक्षधर्मतयोः प्रत्येकाभावद्वये वर्त्तमानत्वमित्यर्थः। असिद्धत्वं—असिद्धित्वम्। नन्वेवं व्यभिचारादेः कथं दोषत्वं तद्वति हेतौ असिद्धेरावश्यकत्वेन तस्यैव दोषत्वसम्भवादित्यत आह व्यभिचारादाविति। व्यभिचारादिमति हेतावित्यर्थः। आदिना विरोधपरिग्रहः। उपजीव्यत्वेनेति। असिद्धत्वज्ञानं प्रति लिङ्गज्ञानविधया व्यभिचारादिज्ञानस्योपजीव्यत्वेनेत्यर्थः। प्राथम्यात्—प्रथमोपस्थितत्वात् तदुद्भावने—व्यभिचारादिमात्रोद्भावने, विरोधित्वाविशेषाच्चेत्यपि द्रष्टव्यम्। सः सोऽपि व्यभिचारादिरपीति यावत्। नन्वेवमसिद्धिज्ञानोपजीव्यग्राहकत्वेनोपाधिरपि हेत्वाभासान्तरं स्यात् इत्यत आह तत्रेति। व्यभिचारादिमति हेतावित्यर्थः। व्याप्त्यसिद्ध्यर्थे—व्याप्त्यज्ञानार्थम्। उपाधौ स्थिते। तुशब्दो भिन्नक्रमेऽउद्भावित इत्यनन्तरं योज्यः। विप्रतिपद्यतेऽपीति। व्याप्तौ विप्रतिपद्यतेऽपीत्यर्थः। विप्रतिपत्तिर्भ्रमः, तथाचोपाध्युद्भावनेऽपि व्याप्तिभ्रमोदया' इव सा-

क्षाद्विरोधित्वाभावेन हेत्वाभासान्तरत्वमिति भावः । किञ्चोपाधिज्ञानं नासिद्धिज्ञानोपजीव्यं, किन्तु तद्व्यभिचारज्ञानमेवेत्याह त-स्येति । असिद्धत्वस्येत्यर्थः । दुरूहत्वात्-उपाधितो दुर्ज्ञेयत्वात्, व्यभिचारेणैव-उपाधिव्यभिचारेणैव, तदुन्नयनादसिद्ध्युन्नयनात् । एतच्चापाततः व्यभिचारितासम्बन्धेन उपाधेरप्युन्नायकत्वसम्भवात् तथाप्युपाधिव्यभिचारस्यैव हेत्वाभासान्तरताया दुर्वारत्वाच्च, किन्तु पूर्वोक्तयुक्तिरेव समीचीनेति द्रष्टव्यम् । असिद्धिबुद्धिरिति । प्रत्यक्षशब्दाभ्यां लिङ्गान्तरजन्यानुमानेन चासिद्धबुद्धिरित्यर्थः । उपधेयेति । उपधेययोः-असिद्धव्यभिचारिणोर्धर्मिणोः । सङ्करेपि-अभेदेपि, उपाधेः-असिद्धत्वव्यभिचारत्वादेर्धर्मस्य, असंकरः एवज्ञानासंकर एव, परस्परसहकालीनग्रहाविषयत्वमेवेति यावत् । तथा चासिद्धत्वाग्रहदशायामपि व्यभिचारादिमात्रज्ञानात् व्याप्तिज्ञानानुदयेन तस्यापि स्वतःप्रतिबन्धकत्वमावश्यकमेवेति भावः । अत एवेति विवृणोति व्यर्थेति । तथाविधबुद्धिमुख्यविशेष्यतावच्छेदकत्वरूपस्य विशेषणस्य दूषकतायामप्रयोजकत्वात् तथाविधबुद्धिमुख्यविशेष्यतावच्छेदकप्रकारकज्ञानस्यानुमितितत्करणपरामर्शविरोधित्वादिति यावत् । येन रूपेण ज्ञानमनुमितितत्करणपरामर्शान्यतरप्रतिबन्धकं तदेव च विभाजकतावच्छेदकमित्यभिमानः ।

यद्वा 'व्यर्थविशेषणत्वात्' अयं हेतुरसाधकः निरुक्तबुद्धिमुख्यविशेष्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वादित्यसाधकतानुमाने निरुक्तबुद्धिमुख्यविशेष्यतावच्छेदकरूपस्य विशेषणस्य व्यर्थत्वात् व्याप्तित्वावच्छिन्नप्रतियोगिताकाभावत्वेनैव व्याप्यत्वाभावस्य पक्षधर्मतात्वावच्छिन्नप्रतियोगिताकाभावत्वेनैव पक्षधर्मत्वाभावस्य हेतुत्वसम्भवादित्यर्थः । असाधकतानुमापकतावच्छेदकरूपमेव च विभाजकतावच्छेदकमित्यभिमानः । एतच्चापाततः विरोधितावच्छेदकरूपमेव विभाजकतावच्छेदकमिति नियमे मानाभावात् विरोधितावच्छेदकरूपेणापि पूर्वव्यभिचारादेर्विभजनात् । एवमसाधकतानुमापकतावच्छेदकरूपमेव विभाजकतावच्छेदकमिति नियमेऽपि मानाभावात् व्यर्थविशेषणत्वस्य व्याप्त्यविघटकतया तत्सत्वेऽपि असाधकतानुमापकत्वसम्भवाच्च । तथाविधबुद्धिमुख्यविशेष्यतावच्छेदकावच्छिन्नप्रतियोगित्वस्य व्याप्तित्वावच्छिन्नप्रतियोगिताका-

भावत्वाघटिततया व्यर्थविशेषणताशङ्काया अप्यनवकाशात् ।

वस्तुतस्तु (१ तथापि आश्रयासिद्धि-साध्यविशेषणासिद्धि-हेतुविशेषणासिद्धि-हेत्वसिद्धिष्वव्याप्तिरेव दोषो बोध्यः । एवमग्रेऽपि । व्याप्तीति । व्याप्तित्वपक्षधर्मतात्वान्यतरधर्मावच्छिन्नप्रतियोगिताकाभावोऽसिद्धिरित्यर्थः । यद्वाऽन्यतरपदव्यत्यासेन व्याप्तिसामान्याभावपक्षधर्मतासामान्याभावयोरन्यतरोऽसिद्धिरित्यर्थः । यथाश्रुते सामान्याभावविशेषाभावविकल्पाभ्यामव्याप्त्यतिव्याप्तिप्रसङ्गस्य दुर्वारत्वादिति ध्येयम् । प्रत्येकाभावस्येति । प्रत्येकाभावत्वप्रकारेण प्रत्येकाभावज्ञानस्येत्यर्थः । दोषत्वात्-प्रतिबन्धकत्वात्, प्रत्येकाभावाद्यज्ञाने चान्यतरत्वप्रकारकज्ञानस्याप्रतिबन्धकत्वादिति शेषः । तथा च विरोधितानवच्छेदकतया कथमस्य विभाजकतावच्छेदकत्वमित्यभिमानः । व्यर्थेति । असाधकतानुमानेऽन्यतरत्वरूपस्य विशेषणस्य व्यर्थत्वादित्यर्थः । प्रत्येक व्याप्तित्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वेनैव बाधकत्वसम्भवादिति भावः ॥

(चि०) यत्तु व्याप्तिपक्षधर्मताप्रमितिविरह आश्रयासिद्ध्याद्यनुगतोऽसिद्धिः, तत्प्रमितिसत्त्वे तत्रानुमित्यापत्तेरिति । तदपि व्यर्थविशेषणत्वात् तदज्ञानेऽपि प्रत्येकज्ञानस्य दोषत्वाच्च निरस्तम् ।

वस्तुतस्तु प्रकृतहेतुव्याप्तिपक्षधर्मतावैशिष्ट्यस्य तत्प्रमितेश्चाप्रसिद्ध्या तदभावो ज्ञातुमुद्भावयितुं चाशक्य एव । यत्किञ्चिद्व्याप्तिपक्षधर्मताविशिष्टप्रमितिविरहः सद्धेतुसाधारणः स्वप्रमितिविरहो यत्किञ्चित्प्रमितिविरहो वा सद्धेतावपि सकलतत्प्रमितिविरहो दुर्निरूपः व्याप्त्यभावादेव तद्ग्रहे स एव दोष उपजीव्यत्वात् । यदि च प्रमितिविरहः स्वरूपसन्नेव दोषः कारणाभावत्वात् तदा व्याप्त्यादिभ्रमादनुमितिर्न स्यात् न स्याच्च हेत्वाभासताज्ञानगर्भलक्षणाभावात् । एतेन व्याप्ति-

(१) अयमपीति मु० पु० पाठः ।

समासे बहुवचनापत्तिः समाहारद्वन्द्वस्य नियतविषयतयाऽत्र तदसम्भ-
वादिति वाच्यम्। 'सर्वत्र द्वन्द्वे(१) विभाषयैकवचनं भवतीति' पाणिनीया-
नुशासनादितरेतरद्वन्द्वेऽप्येकवचनसम्भवात्। न चैवं धवखदिरमि-
त्यपि प्रयोगापत्तिरिति वाच्यम्। 'द्वन्द्वैकत्व'मिति सूत्रेण द्वन्द्वस्यैकव-
चनत्वे नपुंसकलिङ्गत्वावश्यकत्वबोधनात्। न चैवं समाहारेतरेतरयोः
को भेद इति वाच्यम्। समाहारद्वन्द्वस्य समाहारत्वप्रकारकबो-
धजनकत्वेनैव भेदात्, तस्यैव(२) च नियतविषयत्वादित्यलमधि-
केन। नन्वत्र हेतुतावच्छेदकादिवैशिष्ट्यं वैज्ञानिकं न तु वास्तविकं ग्राह्यं
येन साधनविशेषणासिद्ध्यादिस्थलेऽप्रसिद्धिः स्यात्, तथा च हेतु-
तावच्छेदकरूपेण हेतौ साध्यतावच्छेदकरूपेण साध्यव्याप्यत्वं पक्षता-
वच्छेदकरूपेण पक्षधर्मत्वं चावगाहते या साध्यव्याप्यो हेतुः पक्षवृत्ति-
रित्याकारिका प्रमाभिन्ना प्रतीतिस्तद्विरहवत्त्वमसिद्धत्वमिति फलि-
तार्थं इत्यत आह तत्प्रमितेश्चेति। असिद्धिस्थले प्रमाभिन्नतादृश-
प्रतीतेश्चेत्यर्थः। ननु व्याप्तिपक्षधर्मताप्रमितिपदेन प्रकृतहेतुविशेष्य-
कप्रकृतसाध्यनिरूपितव्याप्त्यादिप्रमितिर्न विवक्षिता, किन्तु यत्कि-
ञ्चित्साध्यनिरूपितव्याप्तिविशिष्टयत्किञ्चित्पक्षधर्मत्वप्रकारकयत्कि-
ञ्चिद्धेतुविशेष्यकप्रमितिरेव विवक्षिता तद्विरहश्च न तत्सामान्याभा-
वः, किन्तु तत्प्रतियोगिकाभावमात्रं तेन हेत्वन्तरे साध्यान्तरीयव्या-
प्त्यादिप्रमितिसत्त्वदशायां नाव्याप्तिरित्यत आह- यत्किञ्चिद्व्याप्तीति।
यत्किञ्चिदिति, पक्षेऽपि सम्बध्यते। यत्किञ्चिन्निरूपितव्याप्तिविशिष्ट-
यत्किञ्चित्पक्षधर्मत्वप्रकारकयत्किञ्चिद्धेतुविशेष्यकप्रमितिप्रतियोगि-
काभाव इत्यर्थः। ननु हेतुतावच्छेदकरूपेण हेतौ साध्यतावच्छेदक-
रूपेण साध्यनिरूपितव्याप्यत्वं, पक्षतावच्छेदकरूपेण पक्षधर्मत्वं चा-
वगाहते या प्रतीतिर्भ्रमानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन हेतु-
तावच्छेदके तदभावोऽसिद्धिः भ्रमानिरूपितविशेष्यतावच्छेदकतासं-
बन्धावच्छिन्नतादृशप्रतीत्यभाववद्धेतुतावच्छेदकवान् हेतुरसिद्ध इति
न कोऽपि दोष इत्यत आह स्वप्रमितीति। भ्रमानिरूपितविशेष्यताव-
च्छेदकतासम्बन्धेन स्वीयतादृशप्रतीतिविरहो वा विवक्षितः तेन स-
म्बन्धेन यस्यकस्यचित्पुरुषस्य तादृशप्रतीतिविरहो वा तेन सम्ब-

(१) सर्वो द्वन्द्वो इति मु० पु० पाठ।
(२) तथैवेति मु० पु० पाठ।

न्धेन तादृशप्रतीतिसामान्याभावो वा ? नाद्यौ सन्देहतावपि सत्त्वात् । नान्त्यौ दुर्ज्ञेयत्वात् । परकीयप्रतीतेरयोग्यत्वादित्यर्थः । ननु व्याप्त्यभावादिहेतुना स्वपरसाधारणतादृशप्रतीत्यभावो ज्ञेय इत्यत आह व्याप्त्यभावादिति । ननु स्वरूपसत्त्वेनाय प्रतिबन्धकोऽतो दुर्ज्ञेयत्वेऽपि न क्षतिरित्यत आह यदि चेति । प्रमितिविरहः—प्रमानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन तादृशप्रतीतिसामान्याभाव, । तदेति । असिद्धे हेताविति शेषः । तादृशाभावस्य प्रतिबन्धकस्य सत्त्वादिति भावः । तल्लक्षणाभावादिति । हेत्वाभाससामान्यलक्षणाभावादित्यर्थः । अन्यतरत्वमिति । अन्यतरवत्त्वमित्यर्थः । यथाश्रुते अन्यतरत्वस्यासिद्धिधर्मतयाऽसिद्धिरित्यस्यानन्वयापत्तेः ॥ नन्वन्यतरवत्त्वं प्रत्येकमात्रगत्वं तथा च प्रमितिद्वयाभावस्थलेऽव्याप्तिरित्यत आहान्यतरत्वमिति । एतेनेति विवृणोति व्यर्थविशेषणत्वादेवेति पूर्ववत् ॥

(दी०) स्यादेतत् व्याप्तिपक्षधर्मताभ्यां निश्चयः सिद्धिस्तदभावोऽसिद्धिः, अत एवाव्याप्तेऽपक्षधर्मे च तदारोपरूपासिद्धिरित्यनुमितिः, न तु व्याप्तपक्षधर्मादपि तदनिश्चये । न चैवं हेतोरप्याभासत्वं तदाभासस्यापि हेतुत्वं स्यात्, दशाविशेष इष्टत्वात् । सेयं स्वरूपसती दूषिका कारणाभावत्वात् । न च व्याप्त्यादिमत्पेक्षनिश्चयाभाव एव दूषक आवश्यकत्वादिति वाच्यम् । विशिष्टनिश्चयस्य हेतुत्वे तदभावस्य कार्यानुत्पादकत्वादिति ।

मैवम् । एवं सव्यभिचारादेरप्यत्रैवान्तर्भावप्रसङ्गात् । असिद्धेः स्वरूपसत एव दोषत्वे स्वज्ञानार्थं व्यभिचाराद्यनुद्भावनात् । यदि च तस्मात् सिद्धिर्नोपपद्यत इति तस्योपजीव्यत्वं तदाश्रयासिद्ध्यादिज्ञानात् सिद्धिर्नेति स एव पृथग्दोषः स्यात् । असिद्धिश्च ज्ञा-

ता परस्योद्भाव्येति स्वज्ञानार्थमुद्भाविता सिद्धिर्निर्वाहार्थश्चाश्रयासिद्ध्यादिज्ञानमावश्यकम्। कथञ्च हेतुतदाभासविवेकः? सिद्धौ द्वयोरपि, हेतुत्वात् असिद्धौ तदाभासत्वात्, व्यभिचारादेः सद्धेतौ सिद्धिमखण्डयतश्च हेत्वाभासत्वाभावात्॥

(दी०) व्यभिचारादेरिति। सद्धेतौ—सद्धेतुत्वेन ज्ञायमाने, तदानीं सिद्धेरप्रतिबन्धेऽपि कालान्तरगृहीतेन व्यभिचारादिना तदानीन्तनाभासत्वं सुग्रहमिति ध्येयम्॥

(भा०) व्याप्तीति। स्वीयव्याप्तिपक्षधर्मतोभयप्रकारकनिर्णय इत्यर्थः। तदभावः—विषयतासम्बन्धेन प्रकृतहेतौ तदभावः। व्याप्त्यादिभ्रमादनुमितिर्न स्यादिति पूर्वोक्तबाधकमुद्धरति अत एवेति। यत एव विषयतासामान्येन भ्रमप्रमासाधारणस्वीयतदुभयप्रकारकनिर्णयसामान्याभावोऽसिद्धिर्न तु प्रमानिरूपितविषयतासम्बन्धेन स्वपरसाधारणतादृशनिर्णयाभावोऽत एवेत्यर्थः। तदा—व्याप्त्यादिभ्रमदशायां, सिद्धिः—व्याप्तिपक्षधर्मतोभयप्रकारकनिर्णयः। तन्निश्चय इति। स्वीयतदुभयप्रकारकनिर्णयाभाव इत्यर्थः। पुरुषान्तरीयतदुभयनिर्णयादनुमितिरिति शेषः। न चैवमिति। एवं—स्वीयतदुभयनिर्णयाभावस्यासिद्धित्वे, हेतोरपि—पर्वतो वह्निमान् धूमादित्यादौ सद्धेतोरपि, स्वीयतदुभयनिर्णयाभावदशायामिति शेषः। तदाभासस्यापि—पर्वतो वह्निमान् आकाशादित्याद्यसिद्धहेतोरपि, स्वीयभ्रमात्मकतदुभयनिर्णयदशायामिति शेषः। हेतुत्व—सद्धेतुत्वम्। न च भ्रमात्मकतदुभयनिर्णयदशायामपि असाधारण्यविरोधान्यतरस्य हेत्वाभासत्वप्रयोजकस्यावश्यं सत्त्वेन सद्धेतुत्वासम्भव इति वाच्यम्। पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वरूपस्यासाधारण्यस्य वृत्तिमत्त्वे सति साध्यवदवृत्तित्वरूपस्य पूर्वोक्तविरोधस्य च तत्रासत्त्वादिति भावः।

केचित्तु हेतुत्वस्यासिद्धिशून्यहेतुत्वमित्यर्थ इत्याहुः। सेयमिति। पूर्वोक्तं च न हेत्वाभासलक्षणमिति भावः। नचेति। न तूभयप्रकारकनिर्णयाभाव इति भावः। आवश्यकत्वात्—कारणाभावत्वेन तस्य

दोषतया आवश्यकत्वात् । विशिष्टेति तदुभयप्रकारकनिर्णयस्येत्यर्थः । तदभावस्य-तदभावस्यापि । कार्य्यानुत्पादकत्वादिति । कार्य्यानुत्पत्तिप्रयोजकत्वादित्यर्थः ।

अत्रैवेति । असिद्धावेवेत्यर्थः । व्याप्तिपक्षधर्मतानिर्णयाभावेनैवानुमित्यभावसम्भवादिति भावः । ननु प्रतिबन्धकीभूताऽसिद्धिज्ञानोपजीव्यतया व्यभिचारादिर्दोष इत्यत आह असिद्धेरिति । स्वज्ञानार्थे-प्रतिबन्धकीभूतासिद्धिज्ञानार्थम्, अनुद्भावनात्-अनपेक्षणात् । ननु प्रतिबन्धकीभूतासिद्धिज्ञानं प्रति व्यभिचारादेरनुपजीव्यत्वेपि असिद्धिस्वरूपं तस्योपजीव्यत्वमस्त्येव व्याप्तिपक्षधर्मतानिर्णयरूपसिद्धिप्रतिबन्धकत्वेनैवासिद्धिस्वरूपोपजीव्यत्वादतः पृथग् दोषत्वमित्यत आह यदि चेति । तस्मात्-व्यभिचारादिज्ञानात् । सिद्धि -व्याप्तिपक्षधर्मतानिर्णय । तस्य-व्यभिचारादेः, उपजीव्यत्व-असिद्धिस्वरूपे उपजीव्यत्वम्, स एवेति एवकारो भिन्नक्रमे दोष इत्यनन्तरं योज्यः, स पृथक् दोष एव स्यादित्यर्थः । असिद्धिस्वरूपे उपजीव्यत्वात् तथाच हेत्वाभासाधिक्यापत्तिरिति भावः । नन्वसिद्धिपूर्वमाश्रयासिद्ध्यादिज्ञानाभावात्तस्य नोपजीव्यत्वं, न च व्यभिचारादावपि तुल्यं, तज्ज्ञानार्थं तत्स्वरूपनिर्वाहार्थं च तत्पूर्वं तज्ज्ञानस्यावश्यकत्वादित्यत आह असिद्धिश्चेति । आश्रयासिद्ध्यादिज्ञानम्-आश्रयासिद्ध्यादिज्ञानमपि । दूषणान्तरमाह कथञ्चेति । कथं वेत्यर्थः । हेतुतदाभासविवेक इति । पर्वतो वह्निमान् धूमादित्यादेरसद्धेतुभिन्नत्वेन पर्वतो वह्निमान् आकाशादित्यादेश्च सद्धेतुभिन्नत्वेन व्यवहार इत्यर्थः । सिद्धाविति । व्याप्तिपक्षधर्मतानिर्णयस्वरूपसिद्धिसत्त्व इत्यर्थः । हेतुत्वात्-सद्धेतुत्वात्, आभासत्वात्-द्वयोरप्यसद्धेतुत्वात् । अन्योन्याभावस्तु नाव्याप्यवृत्तिरिति भावः । किञ्च यदि व्यभिचारादेरसिद्धिस्वरूपं प्रत्युपजीव्यतयैव हेत्वाभासत्वं तदा व्यभिचार्य्यादिहेतौ सद्धेतुताग्रहदशायां व्यभिचारादेः सिद्धिविघटकत्वाभावेनासिद्धिस्वरूपोपजीव्यत्वाभावात्तस्य तदानीन्तनहेतुदोषत्वाभावप्रसङ्गः, तस्य तदानीन्तनहेत्वाभासत्वाभावे तत्सम्बन्धेन तद्वतो हेतोरपि तदानीन्तनहेत्वाभासत्वं न स्यात्, तथा च व्यभिचार्य्यादिहेतोर्नित्यदुष्टत्वभङ्गप्रसङ्ग इति दूषणान्तरमाह व्यभिचारादेरिति । सद्धेतौ-व्यभिचार्य्यादिहेतोः सद्धेतुत्वग्रहदशाया व्यभिचार्य्यादिहेतावर्थः

प्तिपक्षधर्मतानिर्णयदशायामिति यावत् । सिद्धिमघटयतः—व्याप्ति-पक्षधर्मतानिर्णयरूपां सिद्धिमविघटयतः, हेत्वाभासत्वाभावात्तदानीन्तनहेतुदोषत्वाभावप्रसङ्गात्, भिन्नक्रमश्चकारोऽत्रैव योज्यः । न चेष्टापत्तिः, तथासति तत्सम्बन्धेन तद्वतो हेतोरपि तदानीन्तनहेत्वाभासत्वासम्भवात् व्यभिचार्यादिहेतोर्नित्यदुष्टत्वभङ्गापत्तिरिति भावः । एतच्चापाततः व्यभिचारादेस्तदानीं सिद्धिप्रतिबन्धकफलानुपहितत्वेऽपि सिद्धिप्रतिबन्धस्वरूपयोग्यत्वस्य तदानीमपि सत्त्वादेव तदानीन्तनहेतुदोषत्वसम्भवात् तत्सम्बन्धेन तद्वतो हेतोरपि तदानीन्तनहेत्वाभासत्वस्य सुग्रहत्वात्, अन्यथा सिद्धान्तिनयेऽपि व्याप्तिपक्षधर्मतानिर्णयात्मकसिद्धिविघटकत्वेन व्यभिचारादेर्हेतुदोषत्वे तदनुयोगस्य तुल्यत्वात् ।

केचित्तु—हेतुतदाभासाविवेक इति । पर्वतो वह्निमान् धूमादित्यादेरसद्धेतुभिन्नत्वेन, द्रव्यं सत्त्वात्, गोत्ववानश्वत्वात् इत्यादेश्च सद्धेतुभिन्नत्वेन व्यवहार इत्यर्थः । सिद्धावित्यादिग्रन्थस्तु पूर्ववत् । ननु सिद्धिसत्त्वे द्वयोरपि सद्धेतुत्वादिदमयुक्तं सिद्ध्यसत्त्वेऽपि द्रव्यं सत्त्वादित्यादेर्व्यभिचारादिहेतुदोषवत्त्वेन तुल्यत्वादित्यत आह व्यभिचारादेरिति । अप्यर्थकोऽयमचकारोऽत्रैव योज्यः । व्यभिचारादेरपीत्यर्थः । सद्धेतौ—सद्धेतुत्वग्रहसत्त्वे व्याप्तिपक्षधर्मतानिर्णयरूपसिद्धिसत्त्वे इति यावत् । सिद्धिमखण्डयतः—व्याप्तिपक्षधर्मतानिर्णयरूपां सिद्धिमविघटयतः, हेत्वाभासत्वाभावात्—हेत्वाभासत्वप्रयोजकत्वासम्भवात् तथापि सिद्धिविघटकत्वरूपस्यासद्धेतूपजीव्यत्वस्यैव व्यभिचारादेर्हेतुदोषत्वप्रयोजकत्वादिति । आद्य—इति व्याचक्षुः ।

(चिं०) अथ सुषुप्तौ जागरेऽपि व्याप्तिपक्षधर्मताः सत्त्वे तदनिश्चयेऽनुमित्यनुत्पादो हेत्वाभासप्रयोज्यो सव्यभिचारादौ तथाऽवधारणादित्यसिद्धिरज्ञातापि हेत्वाभासः । न चैवं हेत्वाभासाधिक्यं फलसान्तर्भावो वा, तेन रूपेण व्याप्त्यासिद्ध्यादेरेव सङ्ग्रहादिति चेन्न ।

एवं सव्यभिचारादिरप्यसिद्धिः स्यादित्युक्तत्वात्, उपजीवनाद्भेदे आश्रयासिद्ध्यादिरपि पृथक् स्यात्। सुषुप्त्यादावनुमित्यभावः कारणाभावात् कार्यानुत्पादो हि न प्रतिबन्धकमात्रात्, किन्तु कारणाभावादपि असत्यपि प्रतिबन्धके वह्न्यभावेन दाहानुत्पत्तेः।

अथानुमित्यनुत्पादो हेत्वाभासप्रयुक्त एवेति चेत्, तर्ह्यनुमितौ मनोयोगादिरपि न हेतुः, हेत्वाभासादेवानुमित्यनुत्पादे तद्व्यतिरेकेणानुमित्यनुत्पादाभावात्, सिद्धेरेव तद्धेतुत्वे चरमकारणमेव हेतुः स्यात्॥

(दी०) तेन रूपेण—सत्साधारणरूपेण। वह्न्यभावेनेति। वह्न्यभावस्तु न प्रतिबन्धकः कारणीभूतो योऽभावस्तत्प्रतियोगिन एव तथात्वात्। यदभावत्वेन कारणत्वं तदेव तथेत्यपि कश्चित्॥

(मा०) व्याप्तिपक्षधर्मतासत्त्व इति। व्याप्तिपक्षधर्मतासत्त्वेऽपीत्यर्थः। तथावधारणादिति। अनुमित्यनुत्पादस्य हेत्वाभासप्रयोज्यत्वावधारणादित्यर्थः। अज्ञातापीति। तत्रानुमित्यनुत्पादस्य हेत्वाभासप्रयोज्यत्वान्यथानुपपत्तिरिति(१) भावः। हेत्वाभासाधिक्यमिति। आश्रयासिद्ध्यादेरतिरिक्तहेत्वाभासत्वमित्यर्थः। फलतोऽन्तर्भाव इति। फलतः व्यभिचारादीनामसिद्ध्यन्तर्भाव इत्यर्थः। तेन रूपेण-सत्साधनाश्रयासिद्ध्याद्यन्यतमत्वरूपेण। व्याप्त्यसिद्ध्यादेरेवेति। व्याप्तिनिर्णयाभावादेरित्यर्थः। संग्रहात्-विभागस्थासिद्धिपदेन संग्रहात्, एवकाराद्व्यभिचारादिव्यवच्छेदः।

असिद्धिः स्यादिति। असिद्धित्वेनैव सूत्रकृता विभक्तः स्यादित्यर्थः। उपजीवनादिति। असिद्धिस्वरूपं प्रत्युपजीव्यत्वादित्यर्थः। भेदे-पृथग्विभजने, पृथक् स्यात्-पृथग् विभक्तः स्यात्। नन्वेवं व्याप्तिपक्षधर्मतासत्त्वेऽपि सुषुप्त्यादौ कथमनुमित्यभावः हेत्वाभासाभावादित्यत आह सुषुप्त्यादाविति। कारणाभावात्-परामर्शात्मक-

(१) न्यथानुपपत्त्येति मु० पु० पाठः।

कारणाभावात् । कारणाभावादपि–भावरूपकारणाभावादपि । न हेतुरिति । स्यादिति शेषः, अनुमित्यनुत्पादे–अनुमित्यनुत्पादाभ्युपगमे । तद्व्यतिरेकेणेति । आत्ममनोयोगादिव्यतिरेकेणेत्यर्थः । तद्व्यतिरेकेण कार्य्यानुत्पादस्तस्यैव च कारणत्वादिति भावः । नन्विदमिष्टमेवेत्यत आह सिद्धेरेवेति । व्याप्तिपक्षधर्मतानिर्णयस्यैवेत्यर्थः । हेतुः स्यादिति । सर्वत्र हेतुः स्यादित्यर्थः । तथा च कार्य्यं निष्कारणकं स्यादिति भावः । इदमापाततः अजन्यत्वेपि कथमात्ममनोयोगो हेतु इतरकारणसत्त्वे तद्व्यतिरेकेणानुमितिव्यतिरेकासिद्धेः । अथानुमित्यादिकमसमवायिकारणवज्ज्ञायकार्य्यत्वादित्यनुमानात् तत्सिद्धिस्तदा ममापि तुल्यम्, चरमे सत्यपि कार्य्यं सकरणमिति व्याप्तिबलात् व्याप्तिज्ञानादेः करणतासिद्धेः, अन्यथा तवापि व्याप्तिज्ञानादिकं करणं न स्यात्परामर्शादिचरमकारणे सति तद्व्यतिरेकेण कार्य्यव्यतिरेकाभावात्, परमार्थतस्तु तादृशव्याप्तिरप्रयोजिकेत्येव तत्त्वम् ॥

( चि० ) अन्ये तु गमकतौपयिकप्रतिद्वन्द्विव्याप्तिपक्षधर्मताविरहतन्नियतयोरन्यतरत्वं हेत्वाभासत्वम् । तत्राधिकसमानबलौ बाधप्रतिरोधौ प्रतिद्वन्द्विनौ, व्याप्तिपक्षधर्मताविरहश्चासिद्धिः तन्नियतौ च सव्यभिचारविरुद्धौ । न चानयोरप्यसिद्ध्यन्तर्भावः, व्याप्तिविरहनियतत्वेन ज्ञातयोः स्वातन्त्र्येणैव दूषकत्वात् अन्ये विशेषदर्शनस्येवेति ।

तन्न । अत्रापि व्याप्तिपक्षधर्मताविरह एवासिद्धिः पर्यवस्यति । तत्र चोक्तमेव । अन्यतरत्वञ्च न लक्षणं व्यर्थविशेषणत्वात्, हेत्वाभासान्तरबहिष्कृतस्य व्याप्तिपक्षधर्मतानिश्चयविरोधिनो रूपस्य विवक्षितत्वात्, तच्चाश्रयासिद्ध्यादिकमेवेति ॥

इत्यसिद्धिपूर्वपक्षचिन्तामणिः ।



(मा०) केचित्तु हेत्वाभाससामान्यलक्षणं तद्विशेषलक्षणानि च प्रकारान्तरेणाहुस्तन्मतमुपन्यस्यति अन्ये त्विति। अत्र गमकतौपयिकप्रतिद्वन्द्वी च व्याप्तिपक्षधर्मताविरहश्च गमकतौपयिकप्रतिद्वन्द्विव्याप्तिपक्षधर्मताविरहं तादृशपक्षधर्मताविरहं च तन्नियतश्च तादृशपक्षधर्मताविरहतन्नियतौ तयोरित्येकवचनान्तसमाहारद्वन्द्वगर्भ इतरेतरद्वन्द्व इति न बहुवचनापत्तिरिति द्रष्टव्यम्। तथा च गमकतौपयिकप्रतिद्वन्द्विव्याप्तिपक्षधर्मताविरहतद्व्याप्यानामन्यतमत्वं हेत्वाभाससामान्यलक्षणमित्यर्थः। गमकतौपयिकप्रतिद्वन्द्वित्वं च साक्षादनुमितिप्रतिबन्धकत्वम्। गमकतौपयिकस्याबाधितत्वासत्प्रतिपक्षितत्वस्य विरोधित्वमित्यपि कश्चित्।

तत्र—तेषु मध्ये। अधिकबलसमानबलाविति। अधिकबलसमानबलौ बाधप्रतिरोधाविति योजनया समानबलप्रतिद्वन्द्वी प्रतिरोधः अधिकबलप्रतिद्वन्द्वी बाध इत्यर्थः। समानबलप्रतिद्वन्द्वित्वं बाधनिर्णयत्वाद्यनवच्छिन्नसाक्षादनुमितिप्रतिबन्धकतावच्छेदकत्वम्, असाधारणत्वमप्येतन्मते प्रतिरोधान्तर्गतमेव। तन्निर्णयत्वाद्यनवच्छिन्नत्वेनापि वा प्रतिबन्धकता विशेषणीया। अधिकबलप्रतिद्वन्द्वित्वं च साध्याभावव्याप्यवत्तानिर्णयत्वाद्यनवच्छिन्नसाक्षादनुमितिप्रतिबन्धकतावच्छेदकत्वमिति भावः। तन्नियतौ—व्याप्तिपक्षधर्मताव्याप्यौ। सव्यभिचारेति, धर्मप्रधानो निर्देशः। ननु यदि तौ तन्नियतौ तदा तदुन्नयनद्वारैव दोषत्वसम्भवेन कथं तयोः पृथक् दोषत्वमुपेयत इत्याशङ्क्य निराकरोति न चेति। असिद्ध्यन्तर्भावः असिद्ध्युन्नयनद्वारा दूषकत्वम्, अनयोर्व्यभिचारविरुद्धयोः। स्वातन्त्र्येणैवेति। व्याप्त्यादिविरहनिर्णयं विनैवेत्यर्थः। व्याप्तिविरहव्याप्यत्वेनेत्युपलक्षणम् व्यभिचारित्वादिनेत्यपि बोध्यम्।

नन्वेवं व्याप्तिपक्षधर्मताविरहत्वमेवासिद्धिलक्षणं पर्यवसितं तच्च दूषितमेवेत्यत आह अत्रापीति। अस्मिन्मतेऽपीत्यर्थः। उक्तमिति। अननुगतरूपं दूषणमित्यर्थः(१)। नन्वन्यतरत्वेनानुगमोऽस्त्वित्यत आह अन्यतरत्वं चेति। व्यर्थेति। असाधकतानुमाने अन्यतरत्वरूपविशेषणस्य व्यर्थत्वादित्यर्थः। प्रत्येकं व्याप्तित्वाद्यवच्छिन्नप्रतियो-

(१) मितिप्रत इति पु० पु० पाठः।

गिताकाभावत्वेनैव गमकत्वसम्भवादिति भावः। ननु विशिष्टा- भाव एव सामान्यलक्षणघटको न तु व्याप्यत्वादिप्रत्येकाभावः तथा च विशिष्टाभावस्यैवासिद्धित्वेन व्याप्यत्वादिप्रत्येकाभावस्यातथात्वा- दाननुगम इत्यत आह हेत्वाभासान्तरेति। यद्दिव्क्तस्य-भिन्नस्य, विवक्षितत्वात्-अत्र शास्त्रेऽसिद्धित्वेन विवक्षितत्वात्। आश्रयासि- द्ध्यादिकमेवेति। न तु विशिष्टाभाव इत्यर्थः। आदिपदात् व्याप्यत्वादि- प्रत्येकाभावपरिग्रहः॥

इति असिद्धिपूर्वपक्षरहस्यम्॥



(चि०) उच्यते—आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्य- त्वासिद्धिश्च प्रत्येकमेव दोषः—प्रत्येकस्य ज्ञानादुद्भावना- च्चानुमितिप्रतिबन्धात्, न तु विशिष्टाभावः परामर्शवि- षयाभावो वा व्यर्थविशेषणत्वात्, तस्य ज्ञानमुद्भावनं विनाऽप्यनुमितिप्रतिबन्धात्, अनुभवसिद्धे हि लक्षणं न तु लक्षणानुरोधेनानुभवकल्पना। परामर्शविषया- भावत्वेनानुगतेन त्रयाणामसिद्धत्वेन सङ्ग्रहो महर्षिणा कृत इति न विभागविरोधो हेत्वाभासाधिक्यं वा। अत एव—"ये व्याप्तिविरहपक्षधर्मताविरहरूपास्तेऽसि- द्धिभेदमध्यमध्यासते, तदन्ये च यथायथं व्यभिचा- रादयः" इति सिद्धान्तप्रवादोऽपि। न चैवं साक्षात्प्रति- बन्धकत्वेन बाधप्रतिरोधयोर्व्याप्तिविरहलिङ्गत्वेन स व्यभिचारविरुद्धयोरपि संग्रहे विभागव्याघातः, स्व- तन्त्राभिप्रायस्य निषेद्धुमशक्यत्वात्। अन्यथा शास्त्रे परिभाषोच्छेदापत्तेः। सव्यभिचारादेरप्येवंरूपसत्त्वे- ऽप्युपजीव्यत्वेन पृथक्त्वम् उपधेयसङ्करेऽप्युपाधेर- सङ्करात्॥

( दी० ) परामर्शेत्यादि । ननु परामर्शविषयाभावत्वमनाभासे आभासत्वविशेषितमपि बाधविशेषे परामर्शविरोधित्वविशेषितश्च हेतोः साध्यासामानाधिकरण्येऽतिप्रसक्तम्, अप्रसक्तञ्च साधनाद्यभाववत्पक्षादौ पक्षादेः साधनवदन्यत्वादौ साधनादेः पक्षादिवृत्त्यन्यत्वपक्षनिष्ठाभावप्रतियोगित्वादौ । अत एव यस्य यद्धर्म्मवत्त्वं परामर्शविषयस्तस्य तदभाववत्त्वं तदिति शब्दमात्रानुगतं प्रत्युक्तम् । परामर्शविरोधित्वमात्रञ्च सव्यभिचारेऽतिप्रसक्तम् । न च तदन्यत्वेन विशेषणीयम्, नित्यो घटो द्रव्यं प्रमेयो वा जलत्वादित्यादौ तदर्थाप्रसिद्धेः । अथ पक्षतावच्छेदकरूपेण पक्षे हेतुतावच्छेदकरूपेण हेतोर्यद्विशिष्टज्ञानं साध्यतावच्छेदकविशिष्टसाध्यावगाहि तद्विरोधित्वं तदिति चेन्न । पक्षवृत्तित्वविशिष्टसाध्याव्यभिचरितसामानाधिकरण्याद्यभावाव्याप्तेः । न च विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यग्रहाविरोधियद्व्याप्तिग्रहविरोधि तदन्यत्वे सति परामर्शविरोधित्वं तत्; विशिष्टपक्षवैशिष्ट्योपादानाद्वह्निमान् वह्निमान् जलह्रदत्वादित्यादौ व्याप्तिग्रहविरोधिन्या अपि स्वरूपासिद्धेर्नासंग्रह इति वाच्यम् । जलह्रदो वह्निमान् काञ्चनमयवह्निमान् वा धूमात् काञ्चनमयधूमाद्वेत्यादौ व्याप्तिग्रहविरोधिनस्तादृशग्रहाविरोधिनो रूपस्याप्रसिद्धेः । उच्यते (१) साधारण्यकथितासाधारण्यानुपसंहारित्वभिन्नं

(१) अयमत्र जागदीशसम्प्रदायिको दीधितिपाठः । भवानन्दादिसम्मतस्तु—

साधारण्यासाधारण्यभिन्नं तज्ज्ञानस्य विषयतापरामर्शविरोधितावतावच्छेदकरूपमसिद्धिः । अव्यभिचारिनेयत्ववान् वह्निसमानाधिकरणह्रदत्ववान् वा पर्वतो वह्निमान् मेयत्वात् ह्रदत्वादित्यादौ आश्रयासिद्धिविरहेऽपि न क्षतिः असिद्धित्रयस्यासार्वत्रिकत्वात्, आश्रयासिद्धिलक्षणस्य चासिद्धिघटितत्वान्नातिप्रसङ्गः । प्रकृतपक्षाद्यवृत्तिनिष्ठाभावकसाधारण्यादिभिन्नं वा वक्तव्यम् । परामर्शे चान्वयव्यतिरेकाभ्यामुपादेयता तेनानुपसंहारित्वव्युदासः । साध्यसाधनभेदेनासिद्धिभेदात् यत्र साधारण्यादिकमनभिन्नं तत्र तदन्यत्वं नोपादेयं यथा काञ्चनमयः पर्वतो ह्रदो वा वह्निमान् मेयो वा धूमात् मेयत्वेन वा पर्वतान्यपर्वतो दहनान्यदहनवान् धूमान्यधूमादित्यादौ सिद्धिसम्पादनाय इत्याभासल-

ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः। य-
त्र साधारण्यादिकमप्रसिद्धं यत्र च वह्न्यव्यभिचारिमेयत्ववान्
वह्निसमानाधिकरणह्रदत्ववान् वह्न्यभावव्यापकीभूताभावप्रतियो-
गिह्रदत्ववान् वा पर्वतो वह्निमान् मेयत्वात् ह्रदत्वादित्यादौ सा-
धारण्यादिकमप्रसिद्धं तत्र तदन्यत्वं नोपादेयम् शब्दानुगमस्या-
किञ्चित्करत्वात्। परामर्शे च व्याप्तिर्व्यतिरेकतोऽप्युपादेया, ना-
तो व्यतिरेकव्याप्तिविशिष्टपक्षधर्मत्वाभावादाव्याप्तिः। साधा-
रण्याद्यनिरूपितया ज्ञानस्य विषयितया परामर्शविरोधितावच्छे-
दकरूपं वा असिद्धिः। अत एव द्रव्यत्वाव्यभिचारिगुणद्रव्यो-
भयसमवेतवान् द्रव्यत्वसमानाधिकरणगुणसमवेतकर्मासमवेत-
वान् वा पटो द्रव्यं सत्त्वात् द्रव्यकर्मासमवेतसमवेतादित्यादौ
गुणद्रव्योभयसमवेतादिनिष्ठस्य द्रव्यत्वव्यभिचारित्वादेः सत्ता-
दिनिष्ठद्रव्यत्वव्यभिचारित्वाद्यात्मकसाधारण्यादितोऽनतिरि-
क्तत्वेऽपि न क्षतिः। पर्वतान्यः पर्वतो दहनान्यदहनवान् धू-
मान्यधूमादित्यादावसिद्धिसम्पादनाय हेत्वाभासोक्ता रीतिरनुस-
र्तव्या। तत्र ज्ञानस्य विषयतया विशिष्टपक्षग्रहविरोधितावच्छे-
दकं रूपमाश्रयासिद्धिः। विशिष्टपक्षविशिष्टसाधनग्रहाविरोधि-
नो ज्ञानस्य विषयतया तदुभयवैशिष्ट्यग्रहविरोधितावच्छेदकं
स्वरूपासिद्धिः। संमूहने चेत्थगनिसगगन रूपवत् चाक्षुषत्व-
र्थवत्त्वादित्यादौ गगनादेर्निस्पर्शत्वादिकम्। एवं शब्दो द्रव्यं

गुणान्यत्वे सति सत्त्वात्, गुणान्यत्वविशिष्टसत्त्वं द्रव्यत्वव्यभिचारि गुणवृत्तित्वादिसादावपि नाव्याप्तिः । तदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धिः । पक्षादिभेदेनासिद्धेर्भेदाद्यत्राश्रयासिद्ध्यादिकमप्रसिद्धं तत्र तदन्यत्वं न वक्तव्यमिति ।

सविषयवृत्तिप्रकृतसाध्यसाधनग्रहविरोधितानवच्छेदकप्रकृतपक्षप्रकृतसाधनवैशिष्ट्यग्रहविरोधितावच्छेदकरूपशून्यज्ञानस्य विषयोऽसिद्धिर्व्याप्यत्वासिद्धिः । साध्यपदोपादानात् पर्वतः पर्वतवृत्तिह्रदत्ववान् ह्रदत्वादित्यादौ साध्याप्रसिद्धेर्नासंग्रहः । तत्त्वयोः स्वरूपासिद्धौ निवेशादनुपादेयमेव वा साध्यमित्यपि कश्चित् । साध्यत्वे स्वप्रसिद्धिव्याप्तिविशिष्टपक्षधर्मतादिविरहादयश्चैतद्भेदाः ।

यत्तु हेतुतावच्छेदकस्य व्याप्यतानवच्छेदकत्वमपि व्याप्यत्वासिद्धिः, नीलधूमत्वादेश्च तथात्वं समानाधिकरणसम्भवदवच्छेदकान्तरमपेक्ष्य गुरुत्वादिति । अत्रावच्छेदकत्वं यद्यनतिरिक्तवृत्तित्वं तदा तस्याप्यस्ति । अथ तादृशेन समानाधिकरणेन तादृशेन वा धर्मान्तरेणाघटितत्वे सति तत्त्वम् । तन्न । सत्यन्तस्य गौरवेणानुपादेयत्वात् । नापि अन्यूनानतिरिक्तवृत्तित्वम् आलोकाद्यवृत्तेर्धूमत्वादेरप्यतथात्वापातात् । अथ स्वरूपसम्बन्धविशेषः, तर्हि द्रव्यं रूपादित्यादौ रूपत्वादेरपि तथात्वं न स्यात् रूपादिषु चतुर्विंशतौ सम्भवदवच्छेदकमेकं गुणत्वमपेक्ष्य रूपत्वादीनां चतुर्विंशतेः षड्विंशतेर्वा गुरुत्वात् । एवं पशुमान् सास्नादिमत्त्व इत्यादौ सास्नादिमत्त्वादेरपि गोत्वादिकां जातिमपेक्ष्य उपाधेर्गुरुत्वात् हेतुतावच्छेदकविशिष्टहेतुव्यापकसाध्यसमानाधिकरणतादृशहेतोः साध्याव्यभिचारितसम्बन्धितादृशहेतोर्वा ज्ञानस्यानुमितिकारणस्याविरोधिनो निरुक्तानवच्छेदकत्व-

स्य दोषत्वायोगाच्च । परार्थस्थले तु दृष्टान्तस्य साध्यादिवैक- ल्यवत् हेतोर्व्यर्थविशेषणत्वमपि निग्रहस्थानविभाजकसूत्रस्थानुक्त- समुच्चयपरेण चकारेण समुच्चितं पृथगेव निग्रहस्थानम् ॥

इत्यसिद्धिदीधितिः ॥

## अथासिद्धिसिद्धान्तरहस्यम् ॥

(मा०) ज्ञानादिति । प्रत्यक्षादितो ज्ञानादित्यर्थः । तेनोद्भावना- दिति संगच्छते । पक्षधर्मेऽपि । विशिष्टाभाव इति । व्याप्तिविशिष्टपक्ष- धर्मत्वाभाव इत्यर्थः । एतच्च साध्यव्याप्यहेतुमान् पक्ष इति पक्षविशे- ष्यकपरामर्शस्यैवानुमितिहेतुत्ववादिनां नव्यानां मतेन, साध्यव्याप्य- त्वे सति पक्षवृत्तिर्धूमवान् हेतुरिति परामर्शस्यापि हेतुत्वनये तु विशि- ष्टाभावघटकेतुरपि दोष इत्युक्तमधस्तात् । परामर्शविषयाभावो वेति । परामर्शविषयप्रतियोगिकाभावत्वरूपेण व्याप्त्याद्यन्यतमाभावो वे- त्यर्थः । दोष इत्यनुषज्यते, व्यर्थविशेषणत्वात्-विशिष्टाभावत्व- परामर्शविषयप्रतियोगिकाभावत्वरूपस्य - विशेषणस्य दूषकतायाम- प्रयोजकत्वात् । तेन रूपेण ज्ञानस्याप्रतिबन्धकत्वादिति यावत् । नन्वेवं तद्रूपेण ज्ञानादिसत्त्वेऽपि अनुमितिः स्यादित्यत आह तस्येति । प्रकारित्वं षष्ठ्यर्थः । तद्रूपेण ज्ञानमुद्भावनं चानुमितिप्रतिबन्धा- द्विनापीति योजना । यत्र नानुमितिप्रतिबन्धस्तत्रापि तत्प्रकार- कज्ञानमुद्भावनं च तिष्ठतीत्यर्थः । तथा च तद्रूपेण ज्ञानादिसत्त्वेऽपि अनुमित्याविरहापत्तिरिति भावः ।

केचित्तु तद्रूपेण ज्ञानस्यानुमितिप्रतिबन्धकत्वाभावे हेतुमा- ह तस्येति । तद्रूपेण ज्ञानमुद्भावनं च विनाप्यनुमितिप्रतिबन्धाद्येन- रूपेण ज्ञानमनुमित्यप्रतिबन्धकमित्याहुः ।

तदसत् । तथा सति व्यभिचारादिज्ञानं विनापि अनुमितिप्रति- बन्धकव्यभिचारादिज्ञानस्याप्यप्रतिबन्धकत्वापत्तेरिति ध्येयम् ॥

ननु परामर्शप्रतियोगिकाभावत्वस्य महर्षिप्रणीतासिद्धिलक्षणत- या तद्रूपेण ज्ञानादप्यनुमितिप्रतिबन्धो भवतीत्यनुभवः कल्प्यते इत्य- त आह । अनुभवसिद्ध इति । लक्षणप्रकारकज्ञानादनुमितिप्रतिबन्धेऽनु-

भवसिद्धे इत्यर्थः । लक्षण—लक्षणस्यानुमितिप्रतिबन्धकतावच्छेदक-
त्वम् । ननु त्रयाणां प्रत्येकमेव दोषत्वे त्रितयसाधारणैकरूपाभावेन
विभागस्य वा न्यूनत्वं त्रयाणां मध्ये कयोश्चिद्द्वयोर्हेत्वाभासव्यतिरिक्तत्वं
वा स्यादित्यत आह, परामर्शविषयेति । परामर्शविषयाभावस्वरूपेणानु-
गतेनासिद्धत्वेन त्रयाणां सङ्ग्रह इति योजना । विरोधो—न्यूनत्वम् । हे-
त्वाभासाधिक्यं चेति । त्रयाणां मध्ये कयोश्चिद्द्वयोर्हेत्वाभासव्यतिरि-
क्तत्वं चेत्यर्थः ।

ननु परामर्शविषयाभावत्वं परामर्शविषयत्वावच्छिन्नप्रतियो-
गिताकाभावत्वं तत्प्रतियोगिकाभावत्वमात्रं वा? नाद्य —व्याप्त्यादि-
प्रत्येकाभावेऽव्याप्तेः तादृशाभावस्याप्रसिद्धेश्च । न ह्येव पदार्थो यत्र
परामर्शविषयो नास्ति, अन्तत· परामर्शविषयस्याभावस्यैव सर्वत्र
वृत्तेः । न द्वितीयः—वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताक-
व्याप्त्यत्वाद्यभाव केवलसाध्याभावसाधनभावादौ चानाभासेऽतिव्याप्तेः ।
अथ हेत्वाभासत्वे सति परामर्शविषयप्रतियोगिकाभावत्वमसिद्धि-
त्वमतो नाभासभिन्नेऽतिव्याप्तिः । परामर्शपदं च साध्याव्यभिचरित-
सम्बन्धिहेतुमान् पक्ष(१)इत्याकारकातिरिक्ताविषयकान्वयव्याप्तिघटि-
तपरामर्शपरम्, अतो हेतुनिष्ठव्यतिरेकव्याप्त्यभावरूपेऽनुपसंहारित्वे
नातिव्याप्तिः । सप्तमपदार्थरूपाभावस्य घटकतया(२) च हेतुनिष्ठसा-
ध्याभाववद्वृत्तित्वरूपे साधारण्ये नातिव्याप्तिः तस्य भावत्वादिति
चेत् । न । गोत्ववान् अश्वत्वादित्यादौ हेतौ· साध्यसामानाधिक-
रण्याभावरूपे विरोधे ह्रदो वह्निमान् धूमादित्यादौ यत्र भावस्य
साध्यता तत्र पक्षवृत्तिसाध्याभावरूपे बाधे गोत्वाभाव सास्नादि-
मान् गोत्वाभावादित्यादौ यत्राभावस्य पक्षता हेतुता च तत्र साध्या-
भाववत्पक्षरूपे बाधे साध्याभावव्याप्यवत्पक्षरूपे सत्प्रतिपक्षे साध्या-
भाववद्वृत्तिहेतुरूपे साधारण्ये साध्यासमानाधिकरणहेतुरूपे विरोधे
चातिव्याप्तेः तेषां हेत्वाभासत्वात् परामर्शविषयप्रतियोगिकाभावत्वा-
च्च । यत्र च भावस्य पक्षता तत्र पक्षतावच्छेदकाभाववत्पक्षरूपा-
श्रयासिद्धौ साधनाभाववत्पक्षरूपासिद्धौ चाव्याप्तेः तस्याभावत्वा-
भावात् । एवं यत्र भावस्य साध्यता तत्र साध्यतावच्छेदकाभाव-

(१) साध्याभाववदवृत्तिसाध्यसामानाधिकरण्यहेतुमान् पक्ष इत्यर्थः ।
(२) षट्पदार्थभिन्नस्वरूपस्याभावस्य घटकतयेति भावः ।

तत्सत्त्वात् असम्भवापत्तेरिति निरस्तम्। माणिक्यमय एव पर्वतो वह्निमान् इत्यादौ पर्वतत्वविशिष्टपर्वतनिरूपितस्य माणिक्यमयत्वाभाववान् पर्वत इति निर्णयनिष्ठस्य माणिक्यमयत्वाभाववत्पर्वतत्वविशिष्टपर्वतनिरूपितविषयित्वस्य परामर्शप्रतिबन्धकतानतिरिक्तवृत्तितया केवलपर्व्वतत्वविशिष्टपर्व्वतादावतिव्याप्तिवारणाय सामान्यपदम्। यन्निरूपितविषयितासामान्यमित्युक्तौ माणिक्यमयत्वाभाववत्पर्वतादावसम्भवः—पर्वत इति निर्णयनिष्ठपर्वतविषयित्वस्यापि माणिक्यमयत्वाभाववत्पर्वतनिरूपितत्वेन सामान्यान्तर्गतत्वात् तस्य च प्रतिबन्धकतानवच्छेदकत्वात् अतो यादृशविशिष्टनिरूपितेति। पर्वत इति ज्ञाननिष्ठपर्वतविषयित्वं च न माणिक्यमयत्वाभाववत्पर्वतत्वविशिष्टपर्वतनिरूपितं विशिष्टसत्तानिरूपिताधारत्ववद्विशिष्टपर्वतनिरूपितविषयित्वस्य विलक्षणस्य माणिक्यमयत्वाभाववान् पर्वत इति ज्ञान एव सत्त्वात् पर्वतो माणिक्यमयो न वेति संशयनिष्ठस्य तादृशविषयित्वस्य सामान्यान्तर्गतस्य प्रतिबन्धकतातिरिक्तवृत्तित्वादसम्भववारणाय निर्णयनिष्ठमिति। निर्णयश्चागृहीताप्रामाण्यकत्वेन विशेषणीयः नातस्तद्दोषतादवस्थ्यम्। न च विशिष्टनिरूपितविषयित्वसामान्यप्रवेशे(१) प्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वमेव विवक्षितं किमनतिरिक्तवृत्तित्वपर्यन्तेनेति वाच्यम्। (२)माणिक्यमयत्वाभाववान् पर्वतो रूपवानिति निर्णयनिष्ठस्य रूपानिष्ठप्रकारित्वावच्छिन्नमाणिक्यमयत्वाभाववत्पर्वतविशिष्टपर्वतत्वनिरूपितविशेष्यकत्वस्य माणिक्यमयत्वाभावप्रकारित्वावच्छिन्नकेवलपर्वतत्वविशिष्टविशेष्यकत्वातिरिक्तस्य तादृशविषयितासामान्यान्तर्गतस्य स्वरूपसम्बन्धरूपतादृशपरामर्शप्रतिबन्धकतावच्छेदकत्वविरहात् असम्भवापत्तेः। न च तथापि साधारण्ये साध्यासमानाधिकरणहेत्वादिरूपविरोधे साध्याभावव्यापकीभूताभावप्रतियोगित्वाभाववद्धेतुरूपेऽनुपसंहारे चातिव्याप्तिर्दुर्वारैवेति वाच्यम्। साधारणत्वविरुद्धत्वानुपसंहारित्वाविषयकत्वेन यादृशविशिष्टनिरूपितविषयत्वस्य वा विशेषणात्। न चैवं वन्ह्यव्यभिचारिमेयत्ववान् पर्वतो वह्निमान् मेयत्वादित्यादौ वह्निव्यभिचारिमेयत्वादिरूपाश्रयासिद्धेः साधारण्यरूपत्वादव्याप्तिः, एवं वह्निसमानाधिकरणह्रदत्ववान् पर्वतो व-

वत्साध्यात्मकसाध्यविशेषणासिद्धौ यत्र भावस्य साधनता तत्र साधनतावच्छेदकाभाववत्साधनात्मकसाधनविशेषणासिद्धौ व्याप्यभाववत्साधनात्मकव्याप्तिविरहरूपासिद्धौ चाव्याप्तिः । अथ साध्याव्यभिचरितसम्बन्धेन हेतुमान् पक्ष इत्याद्याकारकाविशि- ष्टविषयकान्यविपरामर्शेन यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नवत्त्वं विषयीक्रियते तद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्तद्धर्मावच्छिन्नमसिद्धिरिति विवक्षितम् । न चैवं हेतुनिष्ठपक्षवृत्त्यभावप्रतियोगिहेतुनिष्ठपक्षवृत्त्यन्यत्वादिरूपे स्वरूपासिद्धावव्याप्तिरिति वाच्यम् । समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्ववादिनां नव्यानां मते साधनाभाववत्पक्षादेरेव स्वरूपासिद्ध्यादितया तस्य स्वरूपासिद्ध्यादिविरहादिति चेत् । न । साध्यसामानाधिकरण्याभाववद्धेतुरूपे विरोधे साध्याभाववद्वृत्तित्वाभाववद्धेतुरूपे साधारण्ये चातिव्याप्तेः, साधनात्यन्ताभाववत्पक्षादेरिव साधनात्यन्ताभाववद्व्याप्यवत्पक्ष—साधनवद्विपक्ष—साधनवद्भेदव्याप्यवत्पक्षादेरपि स्वरूपासिद्ध्यादितया तत्राव्याप्तिश्चेति(१) ।

मैवम् । परामर्शविषयाभाववत्त्वेन परामर्शविरोधितावच्छेदकरूपवत्त्वस्य विवक्षितत्वात्, परामर्शविरोधितावच्छेदकरूपत्वं तु निर्णयनिष्ठं यादृशविशिष्टनिरूपितविषयितासामान्यं परामर्शप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टत्वम् । हेत्वाभाससामान्यलक्षणोक्तदिशैवात्रापि तत्तद्दलप्रयोजनमवसेयम् ।

एतेनावच्छेदकत्वमत्र न स्वरूपसम्बन्धविशेषः माणिक्यमयः पर्वतो वह्निमान् धूमादित्यादौ माणिक्यमयत्वाभाववत्पर्वतादिरूपे आश्रयासिद्ध्यादावसम्भवापत्तेः पर्वतत्वादिरूपेण वस्त्वन्तरे माणिक्यमयत्वाभाववत्त्वरूपेण यत्किञ्चिद्वस्तुज्ञानस्यापि वह्निव्याप्यधूमवान् माणिक्यमयः पर्वत इत्यादिपरामर्शप्रतिबन्धकतया प्रतिबन्धकतावच्छेदकपर्वताद्यप्रवेशात् । अत एव विषयितासम्बन्धेनान्यूनवृत्तित्वमपि न, नापि विषयितासम्बन्धेनानतिरिक्तवृत्तित्वं-माणिक्यमयत्वाभाववत्पर्वतादिरूपाश्रयासिद्ध्यादेः केवलपर्वताद्यनतिरिक्ततया पर्वत इति केवलपर्वतादिविषयक(२)ज्ञानस्यापि विषयितासम्बन्धेन

(१) तत्राऽव्याप्त्यापत्तिश्चेति पाठान्तरम् ।

(२) निश्चयेपीति मु० पु० पा० ।

तत्सत्त्वात् असम्भवापत्तेरिति निरस्तम् । माणिक्यमय एव पर्वतो वह्निमान् इत्यादौ पर्वतत्वविशिष्टपर्वतनिरूपितस्य माणिक्यमयत्वाभाववान् पर्वत इति निर्णयनिष्ठस्य माणिक्यमयत्वाभाववत्पर्वतत्वविशिष्टपर्वतनिरूपितविषयित्वस्य परामर्शप्रतिबन्धकतानतिरिक्तवृत्तितया केवलपर्वतत्वविशिष्टपर्वतादावतिव्याप्तिवारणाय सामान्यपदम् । यन्निरूपितविषयितासामान्यमित्युक्तौ माणिक्यमयत्वाभाववत्पर्वतादावसम्भवः—पर्वत इति निर्णयनिष्ठपर्वतविषयित्वस्यापि माणिक्यमयत्वाभाववत्पर्वतनिरूपितत्वेन सामान्यान्तर्गतत्वात् तस्य च प्रतिबन्धकतानवच्छेदकत्वात् अतो यादृशविशिष्टनिरूपितेति । पर्वत इति ज्ञाननिष्ठपर्वतविषयित्वं च न माणिक्यमयत्वाभाववत्पर्वतत्वविशिष्टपर्वतनिरूपितं विशिष्टसत्तानिरूपिताधारत्ववद्विशिष्टपर्वतनिरूपितविषयित्वस्य विलक्षणस्य माणिक्यमयत्वाभाववान् पर्वत इति ज्ञान एव सत्त्वात् पर्वतो माणिक्यमयो न वेति संशयनिष्ठस्य तादृशविषयित्वस्य सामान्यान्तर्गतस्य प्रतिबन्धकतातिरिक्तवृत्तित्वादसम्भववारणाय निर्णयनिष्ठमिति । निर्णयश्चागृहीताप्रामाण्यकत्वेन विशेषणीयः नातस्तद्दोषतादवस्थ्यम् । न च विशिष्टनिरूपितविषयित्वसामान्यप्रवेशे(१) प्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वमेव विवक्षितं किमनतिरिक्तवृत्तित्वपर्यन्तेनेति वाच्यम् । (२)माणिक्यमयत्वाभाववान् पर्वतो रूपवानिति निर्णयनिष्ठस्य रूपनिष्ठप्रकारित्वावच्छिन्नमाणिक्यमयत्वाभाववत्पर्वतविशिष्टपर्वतत्वनिरूपितविशेष्यकत्वस्य माणिक्यमयत्वाभावप्रकारित्वावच्छिन्नकेवलपर्वतत्वविशिष्टविशेष्यकत्वातिरिक्तस्य तादृशविषयितासामान्यान्तर्गतस्य स्वरूपसम्बन्धरूपतादृशपरामर्शप्रतिबन्धकतावच्छेदकत्वविरहात् असम्भवापत्तेः । न च तथापि साधारण्ये साध्यासमानाधिकरणहेत्वादिरूपविरोधे साध्याभावव्यापकीभूताभावप्रतियोगित्वाभाववद्धेतुरूपेऽनुपसंहारे चातिव्याप्तिर्दुर्वारैवेति वाच्यम् । साधारणत्वविरुद्धत्वानुपसंहारित्वाविषयकत्वेन यादृशविशिष्टनिरूपितविषयत्वस्य वा विशेषणात् । न चैवं वन्ह्यव्यभिचारिमेयत्ववान् पर्वतो वह्निमान् मेयत्वादित्यादौ वह्न्यव्यभिचारिमेयत्वादिरूपाश्रयासिद्धेः साधारण्यरूपत्वादव्याप्तिः, एवं वह्निसमानाधिकरणहृदत्ववान् पर्वतो व-

ह्निमान् इत्यादिव्याप्तौ वन्ह्यसमानाधिकरणद्रव्यत्वादिरूपाश्रयासिद्धेर्विरोधरूपत्वाद्व्याप्तिः वन्ह्यभावव्यापकीभूताभावप्रतियोगिद्रव्यत्ववान् पर्वतो वह्निमान् इत्यादिव्याप्तौ वन्ह्यभावव्यापकीभूताभावप्रतियोगित्वाभाववद्द्रव्यत्वादिरूपाश्रयासिद्धेरनुगमादित्यरूपत्वाद्व्याप्तिरिति वाच्यम्। साध्यसाधनपक्षभेदेनासिद्धिलक्षणस्य विभिन्नतया वन्ह्यव्यभिचारिभेदस्वरूपानित्यत्वाद्याश्रयासिद्ध्यात्मकसाधारण्याद्यविषयकत्वादिविशेषणस्य लक्षणाघटकत्वात् साम्यानुगमस्याकिञ्चित्करत्वात्। अत एव माणिक्यमयः पर्वतो वन्हिमान् धूमादित्यादौ साधारण्याद्यप्रसिद्धावपि न क्षतिः तत्र तद्विषयकत्वादिविशेषणस्यानुपादेयत्वात्। परामर्शे व्यतिरेकव्याप्तेरप्युपादानाद्व्यतिरेकव्याप्तिविशिष्टहेत्वभाववत्पक्षरूपायां व्याप्यत्वासिद्धौ नाव्याप्तिः।

ननु तथापि पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्यादौ पर्वतान्यत्वाभाववत्पर्वतादिरूपाश्रयासिद्धौ अव्याप्तिः–तत्रानाहार्यपरामर्शाप्रसिद्ध्या तत्प्रतिबन्धकत्वाप्रसिद्धेः। न च तत्तदिच्छानामुत्तेजकत्वनये आहार्यज्ञानस्यापि प्रतिबन्धकत्वेनाहार्यपरामर्शाविरोधितामादायैव तल्लक्षणसमन्वय इति वाच्यम्। पर्वतान्यत्वाभाववान् पर्वत इत्यादिबाधनिर्णयविरहदशायां इच्छाविरहेऽपि पर्वतान्यः पर्वत इत्यादिप्रत्यक्षोत्पादवारणाय तादृशप्रत्यक्षं प्रति इच्छाया हेतुत्वावश्यकत्वे तत्र तादृशबाधनिर्णयस्य प्रतिबन्धकत्वे मानाभावात्। न च यादृशविशिष्टनिरूपितविषयताशाल्यगृहीताप्रामाण्यकनिर्णयाव्यवहितोत्तरवर्त्यनाहार्यज्ञानसामान्यं न प्रकृतपरामर्शात्मकं तादृशविशिष्टाप्रसिद्धिरिति विवक्षितं पर्वतान्यः पर्वत इत्यादौ आहार्यस्यैव तादृशपरामर्शप्रसिद्धेः तादृशपरामर्शप्रतिबन्धकत्वस्य लक्षणे प्रवेशात् तस्याप्रतिबन्धकत्वेऽपि न क्षतिरिति वाच्यम्। वस्तुमात्रविषयकनिर्णयाव्यवहितोत्तरवर्त्यनाहार्यज्ञानसामान्यस्यैव तादृशपरामर्शानात्मकतया वस्तुमात्रस्यैव तत्रासिद्धित्वापत्तेरिति चेत्। न। पर्वतान्यः पर्वत इत्यादेरसाधकतया तत्र पर्वतान्यत्वाभाववत्पर्वतादेराश्रयासिद्धित्वानभ्युपगमादित्यास्तां विस्तरः।

अतएवेति। यत एव एको विशिष्टाभावो नासिद्धिः किन्तु नानारूपा इत्यर्थः, अन्यथा य इत्यादौ बहुवचनमसङ्गतं स्यादिति भावः।

स्यादित्यर्थः। एतत्तु संभवप्राचुर्येणोक्तम्। वस्तुतो हेत्वाभासान्तरसङ्करेऽपि न दोषः इत्युक्तमेव।

इदमत्रावधानव्यम्। न केवलं पक्षे पक्षतावच्छेदकाभाव आश्रयासिद्धिः, किन्तु पक्षे पक्षतावच्छेदकविरह(१)व्याप्यः-पक्षे पक्षतावच्छेदकवदन्योन्याभावः-पक्षे तादृशान्योन्याभावव्याप्यः-पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावः-पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावव्याप्य-पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकवदन्योन्याभावः-पक्षतावच्छेदके तादृशान्योन्याभावव्याप्यः-पक्षतावच्छेदकाभाववान् पक्षः-तद्व्याप्यवान् पक्षः-पक्षतावच्छेदकवदन्योन्याभाववान् पक्षो-तद्व्याप्यवान् पक्षः-पक्षतावच्छेदकतावच्छेदकाभाववत्पक्षतावच्छेदकं-तद्व्याप्यवत्पक्षतावच्छेदक-पक्षतावच्छेदकतावच्छेदकवदन्योन्याभाववत्पक्षतावच्छेदकं-तद्व्याप्यवत्पक्षतावच्छेदकम् इत्यादावपि आश्रयासिद्धिः।

समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्वमिति वादिनां नव्यानां नये तु पक्षतावच्छेदकाभाववान् पक्षः-तद्व्याप्यवान् पक्षः-पक्षतावच्छेदकवदन्योन्याभाववान् पक्षः-तद्व्याप्यवान् पक्षः-इत्यादिरेवाश्रयासिद्धिर्न तु पक्षे पक्षतावच्छेदकाभावः तद्व्याप्यादिरपि (२)तज्ज्ञानस्यानुमितितत्करणपरामर्शाप्रतिबन्धकतया हेत्वाभासत्वस्यैव तत्राभावात् वक्ष्यमाणानुगताश्रयासिद्धिलक्षणस्य तत्रासत्त्वाच्च। सर्वसाधारणाश्रयासिद्ध्यनुगतलक्षणं तु-पक्षतावच्छेदकप्रकारकपक्षग्रहविरोधितावच्छेदकत्वम्, तादृशग्रहविरोधितावच्छेदकत्वं च ग्राह्यग्राहकसाधारणयकान्निर्णयनिष्ठं यादृशविशिष्टनिरूपितविषयितासामान्यं तादृशपक्षग्रहप्रतिबन्धकतानतिरिक्तवृत्ति तादृशवैशिष्ट्यं, तेन नासिद्धसामान्यलक्षणवदत्रावच्छेदकत्वविवक्षणे विकल्पानवकाशः। प्रत्येकमव्याप्तिरपि तत्रोक्तदिशावसेया। पक्षतावच्छेदकप्रकारकपक्षग्रहपदेन च पक्षतावच्छेदकवान् पक्ष इत्याकारकातिरिक्ताविषयकग्रहो ग्राह्य, तेन स्वरूपासिद्धिव्याप्यत्वासिद्ध्यादेरपि परामर्शात्मकपक्षतावच्छेदकप्रकारकग्रहविरोधितावच्छेदकत्वेऽपि नातिव्याप्तिः। पक्षतावच्छेदकांशे वा प्रतिबन्धकत्वं ग्राह्यम्।

(१) काभावव्याप्य इति मु० पु० पाठः।

(२) पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाभावतद्व्याप्यादि रपीति पाठान्तरम्।

एवं स्वरूपासिद्धिरपि नानाविधा—साधनतावच्छेदकावच्छिन्नसाधनाभाववत्पक्षः—तादृशसाधनाभावव्याप्यवत्पक्षः—साधनवदन्योन्याभाववान् पक्षः—तादृशान्योन्याभावव्याप्यवान् पक्षः—पक्षे साधनतावच्छेदकावच्छिन्नप्रतियोगिताकसाधनाभावः—पक्षे तादृशसाधनाभावव्याप्यः—पक्षे साधनतावच्छेदकावच्छिन्नसाधनवदन्योन्याभावः—पक्षे तादृशान्योन्याभावव्याप्यश्चेति क्रमेणाष्टविधत्वात्। समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्ववादिनां नव्यानां नये तु साधनतावच्छेदकावच्छिन्नसाधनाभाववत्पक्षादिरूपा चतुर्विधैव स्वरूपासिद्धिः, न तु पक्षे साधनतावच्छेदकावच्छिन्नसाधनाभावादिरूपापि तत्र परामर्शाप्रतिबन्धकतया हेत्वाभासत्वस्यैवाभावात् वक्ष्यमाणानुगतस्वरूपासिद्धिलक्षणस्य तत्रासत्त्वाच्च। पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकसाधनतावच्छेदकावच्छिन्नसाधनप्रकारकग्रहविरोधितावच्छेदकत्वं स्वरूपासिद्धित्वम्, भवति च ह्रदो वह्निमान् धूमादित्यादौ धूमाभाववद्ध्रदादिरूपा स्वरूपासिद्धिः धूमवान् ह्रद इत्यादिपक्षविशेष्यकसाधनग्रहविरोधितावच्छेदिकेति लक्षणसमन्वयः। ह्रदो वह्निमान् धूमादित्यादौ द्रव्यसामान्याभाववद्ध्रदधूमसामान्याभाववद्द्रव्यादिष्वतिव्याप्तिवारणाय पक्षतावच्छेदकसाधनतावच्छेदकयोः प्रवेशः। न चैव ह्रदो वह्निमान् धूमादित्यादौ ह्रदवृत्तित्वाभाववद्धूमादिरूपस्वरूपासिद्धौ वह्निमानाकाशादित्यादौ वृत्तित्वाभाववदाकाशादिरूपस्वरूपासिद्धौ चाव्याप्तिः। नव्यनये ग्राह्याभावावगाहिनिर्णयस्यैव प्रतिबन्धकतया तज्ज्ञानस्य पक्षतावच्छेदकावच्छिन्नविशेष्यकसाधनतावच्छेदकावच्छिन्नसाधनप्रकारकग्रहाविरोधित्वादिति वाच्यम्। नव्यनये तस्य स्वरूपासिद्धित्वविरहात्। न चैव तस्याधिक्यापत्तिरिति वाच्यम्। ह्रदो वह्निमान् धूमादित्यादौ ह्रदवृत्तित्वाभाववद्धूमादेर्हेत्वाभासत्वस्यैवाभावात्, वह्निमानाकाशादित्यादौ वृत्तिमत्त्वाभाववदाकाशादेश्च साध्यसामानाधिकरण्याभाववत्त्वेनासाधारणत्वे विरोधे वान्तर्भावात्। पक्षतावच्छेदकावच्छिन्नविशेष्यकसाधनतावच्छेदकावच्छिन्नप्रकारकग्रहविरोधितावच्छेदकत्वं चात्रापि अगृहीताप्रामाण्यनिर्णयनिष्ठयादृशविशिष्टनिरूपितविषयितासामान्यं तादृशग्रहविरोधितानतिरिक्तवृत्ति तादृशविशिष्टत्वम्, तेनासिद्धिसामान्यलक्षणघटकावच्छेदकत्वविकल्पावकाशः। प्रत्येकदल-

काभावः–साध्यतावच्छेदके तादृशाभावव्याप्यः–साध्यतावच्छेदके साध्यतावच्छेदकतावच्छेदकवदन्योन्याभावः–साध्यतावच्छेदके तादृशान्योन्याभावव्याप्य इत्यादिकं बोध्यम् । एतदसंकीर्णोदाहरणं च पर्वतः काञ्चनमयवह्निमान् धूमादित्यादि । साधनतावच्छेदकप्रकारकसाधनग्रहविरोधितावच्छेदकरूपं, साधनविशेषणासिद्धिः । विरोधितावच्छेदकत्वादिकं तु आश्रयासिद्धिलक्षणघटकमेव तादृशं च रूपं साधनतावच्छेदकाभाववत्साधनम् इत्यादिकमेवेत्युक्तप्रायम् । एतदसंकीर्णोदाहरणं च पर्वतो वह्निमान् काञ्चनमयधूमादित्यादि ।

साध्यविशेषणासिद्धिसाधनाविशेषणासिद्ध्याश्रयासिद्धिस्वरूपासिद्धिभिन्नासिद्धिर्व्याप्तिविरहरूपासिद्धिः । निष्कर्षस्तु व्याप्यत्वासिद्धिसामान्यलक्षणघटकमेव । तत्स्वरूपं च साध्याव्यभिचरितत्वाभिन्नत्वरूपान्वयव्याप्त्यभाववत्साधनं–तादृशव्याप्त्यभावव्याप्यवत्साधनं–तादृशव्याप्तिमदन्योन्याभाववत्साधनं–तादृशव्याप्तिमदन्योन्याभावव्याप्यवत्साधनं–तादृशव्याप्तिमत्साधनाभाववत्पक्षः–तादृशव्याप्तिमत्साधनाभावव्याप्यवत्पक्षः–तादृशव्याप्तिमत्साधनवदन्योन्याभाववान् पक्षः–तादृशव्याप्तिमत्साधनवदन्योन्याभावव्याप्यवत्पक्षः, एवं साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमत्साधनाभाववत्पक्षादि–साध्याभाववद्वृत्तिसाधनाभाववत्पक्षादि–साध्यसमानाधिकरणसाधनाभाववत्पक्षादि । भिन्नप्रकारकज्ञानस्यापि प्रतिबन्धकत्वनये साधने तादृशान्वयव्याप्यभावादिरपि बोध्यः ॥

(चि०) व्याप्तिविरहश्च व्यर्थविशेषणादौ, तदुक्तम्–'एकामसिद्धिं परिहरतो द्वितीयापत्ति'रिति । उपाधिस्तु न व्याप्तिविरहः वह्निव्यापकधूमाव्यापकधर्मस्याप्रसिद्ध्या धूमे तद्विरहासिद्धेः, किन्तु यावत्स्वव्यभिचारिव्यभिचारि साध्यसामानाधिकरण्यमनौपाधिकत्वं व्याप्तिः । साध्यव्यापकसाधनाव्यापकश्च धर्मान्तरं न तु तद्विरहः अपि तु तन्नियतः । न चैवमुपजीव्यत्वेन उपाधिर्हेत्वाभासान्तरम् उपजीव्यत्वेऽपि स्वतोऽदूषकत्वेन तदर्थं परमुखवीक्षकत्वात् । नहि साध्यव्यापकाव्या-

प्यत्वमनुमितिविरोधि, किन्तु व्यभिचारोन्नयनेन स्वव्यतिरेकेण सत्प्रतिपक्षतया वा, तदाह 'उपाधाववश्यं व्यभिचार उपाधेरेव व्यभिचारशङ्के'ति । अप्रयोजकान्यथासिद्धौ सोपाधी नासिद्धौ । प्रतिकूलतर्कानुकूलतर्काभावावुपजीव्यत्वे सति स्वतोदूषकावपि न हेत्वाभासौ—स्वरूपसतोरेव प्रतिबन्धकत्वादित्युक्तम् ॥

इत्यसिद्धिचिन्तामणिः ॥

(मा०) ननु साध्याविशेषणासिद्धिसाधनविशेषणासिद्धिरूपव्याप्यत्वासिद्धेरसङ्कीर्णोदाहरणसत्त्वेपि व्याप्तिविरहरूपव्याप्यत्वासिद्धेरसङ्कीर्णोदाहरणं दुर्लभमित्यत आह व्याप्तिविरहस्त्विति । व्यर्थविशेषणत्वादाविति । असङ्कीर्ण इति लिङ्गविपरिणामेनानुषज्यते—आदिपदाद्व्यर्थविशेष्यत्व परिगृहीतम् । तदुदाहरणं च द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादि, तत्र हेतुतावच्छेदके विशेष्यीभूतस्य सत्तात्वस्य व्यर्थत्वात्, न तु पर्वतो वह्निमान् धूमप्रागभावादित्यादि भिन्नधर्मिकत्वात् । व्यर्थविशेषणस्य व्याप्यत्वासिद्धित्वे आचार्य्यसंवादमाह तदुक्तमिति । क्षितिरकर्तृका शरीराजन्यत्वादितीश्वरानुमाने सत्प्रतिपक्षानुमान इति शेषः । एकाम् असिद्धिं—स्वरूपासिद्धिरूपामसिद्धिं, परिहरतः—शरीरविशेषणेन परिहरतः, द्वितीयापत्ते —शरीरविशेषणस्य व्यर्थतया व्याप्यत्वासिद्ध्यापत्तेः, एतच्च प्राचीनमतानुसारेण । वस्तुतो व्यर्थविशेषणत्वेपि स्वव्यापकसाध्यसामानाधिकरण्यरूपा साध्याव्यभिचरितसम्बन्धित्वरूपा वा व्याप्तिर्दुर्वारा । न चैव वह्निमान् नीलधूमादिति प्रयोगे कथं निग्रह इति वाच्यम् । उद्भावितदृष्टान्तस्य साध्यादिवैकल्यवत् अधिकप्रयोगस्यापि निग्रहस्थानविभाजकसूत्रस्थचकारेणानुक्तसमुच्चयपरेणोद्भावितदृष्टान्तस्य साध्यादिवैकल्यादिवत् तस्यापि समुच्चयात् । न चैव'मेकामसिद्धि'मित्याचार्याभिधानविरोध इति वाच्यम् । व्यर्थविशेषणतया व्याप्तिविरहस्याभ्युपगमेपि तदभिधानस्याशुद्धत्वात् शरीरजन्यत्वाभावस्याप्यखण्डतया व्यर्थविशेषणत्वस्यैव तत्राभावात् । न चैव व्याप्तिविरहस्यासङ्कीर्णोदाहर-

णाभाव इति वाच्यम् । तद्विरहेऽपि क्षतिविरहादित्यसकृदावेदितत्वा-दिति पुनर्नव्यमतानुयायिनी राद्धान्तसरणिः ।

केचित्तु उपाध्यभावस्य व्याप्तितया तदभावत्वेनोपाधिरपि व्या-प्यत्वासिद्धिरिति वदन्ति, प्रसङ्गात्तन्मतं निराकरोति उपाधिस्त्विति । उपाध्यभावस्य व्याप्तित्वे तथा स्यान्न चैतदित्याह वक्ष्यतीति । नन्वेवम-नौपाधिकत्व व्याप्तिरित्युच्छिद्येतेत्यत आह किन्त्विति । नन्वेवं तद्विर-हरूपत्वेनोपाधिर्व्याप्यत्वासिद्धिः स्यादित्यत आह साध्येति । उपजी-व्यत्वेन-व्याप्तिज्ञानाभावोपजीव्यत्वेन । हेत्वाभासान्तरमिति, स्यादि-ति शेषः । तदर्थे-व्याप्तिज्ञानप्रतिबन्धार्थम् । अनुमितिविरोधि-साक्षा-दनुमितितत्कारणयोर्विरोधि, सत्प्रतिपक्षतया-साध्याभावोन्नायकत-या । ननु साध्यव्यापकाव्याप्यत्वस्य स्वतोऽदूषकत्वे साध्यव्यापका-भाववद्वृत्तित्वरूपमप्रयोजकत्वं साध्यव्यापकविरहाव्यापकाभावकत्व-रूपमन्यथासिद्धत्वं च कुतोऽसिद्धिस्तयोरेव साध्यव्यापकाव्याप्यत्वरू-पत्वादित्यत आह अप्रयोजकान्यथासिद्धौ चेति, प्रथमाद्विवचनं ध-र्मप्रधानश्च निर्देशः । अप्रयोजकत्वे अन्यथासिद्धत्वे चेत्यर्थः । सोपा-धी-सोपाधी अपि, उपाधिसमानाधिकरणे अपीति यावत् । नासि-द्धौ-नासिद्धी, सर्वत्र प्रथमाद्विवचनम् ।

केचित्तु प्रतिकूलतर्कोऽनुकूलतर्काभावश्चाऽसिद्व्यन्तर्गत इत्या-हुस्तन्मतं निराकरोति प्रतिकूलेति । उपजीव्यत्वे सतीति । अनुमि-त्यनुत्पादप्रयोजकत्वे सतीत्यर्थः । स्वतोदूषकावपीति । व्याप्ति-ग्रहकारणाभावावपीत्यर्थः । स्वरूपसतोरेव-ज्ञायमानत्वावच्छिन्नयो-रेव । प्रतिबन्धकत्वादिति । व्याप्तिज्ञानकारणीभूताभावप्रतियोगिता-त्वादित्यर्थः । ज्ञायमानत्वावच्छिन्नानुमितितत्कारणज्ञानान्यतरकार-णीभूताभावप्रतियोगित्वाश्रयस्यैव च हेत्वाभासत्वादिति भावः ॥

इति श्रीमथुरानाथतर्कवागीशविरचिते तत्त्वचिन्तामणि रहस्ये
अनुमानखण्डे हेत्वाभासेऽसिद्धिग्रन्थरहस्यम् ॥ ० ॥

श्रीअथानुमानगादाधर्यां

# बाधप्रकरणम् ।

( चि० ) बाधो न साध्याभाववत्पक्षकत्वं पक्षवृत्त्यभावप्रतियोगिसाध्यकत्वं वा, पक्षे साध्याभावज्ञानमात्रस्य प्रमात्वज्ञानं विना अधिकबलत्वाज्ञा(ने)न बाधाभावादिति वक्ष्यते । अत एव साध्याभाववत्पक्षवृत्तित्वमपि न, असिद्धिसङ्कीर्णबाधाव्याप्तेश्च । किन्तु साध्याभाववत्त्वप्रमाविषयपक्षकत्वं, प्रमितसाध्याभाववत्पक्षकत्वं, पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं वेति। विवक्षितविवेकेन साध्याभावप्रमैव दोषः । सा च प्रमात्वेन ज्ञाता न स्वरूपसती हेत्वाभासत्वात् । प्रमात्वज्ञानं विना अधिकबलत्वाभावेनादोषत्वात् अप्रमायामपि प्रमात्वज्ञानेऽनुमितिप्रतिबन्धाच्च ।

( दी० ) अतिरिक्तविषयतावादिमतेनाह पक्षेति। पक्षः साध्याभाववानिति ज्ञाने पक्षनिष्ठविषयत्वस्य प्रकारः साध्याभाव इति लक्षणसमन्वयः। विवक्षितेति । हेत्वादिविषयत्वेनाप्रतिबन्धकत्वादिति भावः ।

( गा० ) मूले अधिकबलत्वाज्ञाने(ने)इति। अधिकबलत्वस्याज्ञानं यस्मादिति व्युत्पत्त्या अधिकबलत्वाभावे (न) इत्यर्थः । अधिकबलत्वं च तत्प्रतिरुद्धत्वौपयिकानिश्चितप्रामाण्यकत्वरूपविशेषणावच्छिन्नत्वम्। बाधाभावात्-प्रतिबन्धकत्वाभावात् इति यावत् । तथाच निरुक्तबाधविषयकत्वस्याप्रतिबन्धकसाधारणतया न तस्य दोषत्वमिति भाव- । साध्याभाववत्पक्षवृत्तित्वमिति । साध्याभाववत्पक्षकत्वं

साध्याभाववत्पक्षविषयकज्ञानविषयकज्ञानविषयत्वं न तु तादृशप्रवृत्तित्वमतस्ततोऽस्य भेदः। साध्याभाववत्त्वप्रमेति। एतादृशबाधज्ञानस्य प्रमात्वाविषयकतानियमेन प्रतिबन्धकताऽभावादिति भावः। प्रमात्वं च न साध्याभाववद्विशेष्यकत्वं पर्वतो ह्रदश्च न वह्निमानित्यादिज्ञानविषयसाध्याभावमादाय पर्वतादिपक्षके बाधप्रसङ्गात्, किन्तु साध्यवद्विशेष्यकत्वम्। पक्षतावच्छेदकावच्छिन्नांशे साध्याभाववत्त्वानवगाहि विशेष्यविषयकत्वेन प्रतिबन्धकत्वे विवादात् तदंशे साध्याभाववत्त्वघटितं लक्षणमाह प्रमितेति। प्रमितत्वं—स्वविशेष्यकप्रमाप्रकारत्वम्। स्वं—पक्षः, प्रमात्वं पूर्ववत्। सिद्धान्तिमते विषयिताया न सप्रकारकत्वम् अपि तु ज्ञानस्यैवातः पक्षनिष्ठप्रमाविषयत्वप्रकारत्वस्याभावविशेषणतया निवेशनं विरुद्धम्। न च विशेष्यतारूपविषयतायां प्रकारतानिरूपकत्वसत्त्वाद्विषयतानिरूपितप्रकारतारूपस्य विषयताप्रकारत्वस्याभाववृत्तित्वाविरोध इति वाच्यम्। कार्यत्वकारणत्वयोरिव विशेष्यविशेषणविषयत्वयोर्निरूप्यनिरूपकभावसम्बन्धसत्त्वेऽपि कार्यतायाः कारणमित्यादिव्यवहारेण तादृशनिरूप्यनिरूपकभावस्य षष्ठ्यर्थताविरहात् षष्ठीतत्पुरुषव्युत्पन्नविषयताप्रकारत्वशब्देन उक्तार्थाप्रतिपादनात्।

सविषयकज्ञानादौ विषयतारूपप्रकारताया यादृशसम्बन्धस्तादृशस्यैव षष्ठ्यर्थत्वात् प्रकारतायास्तादृशसम्बन्धस्य च विषयतायां सविषयत्वव्यवहारविरहेणासत्त्वात्तथा विवक्षितुमशक्यत्वादतः सप्रकारकत्वं विषयताया एव न तु ज्ञानस्य प्रकारताया विषयतानात्मकप्रतियोगित्वादिनिरूपितावच्छेदकतातुल्याऽवच्छेदकताविशेषरूपत्वादित्यतिरिक्तविषयतावादिकदेशमताभिप्रायकतया विषयताप्रकारत्वपर्यन्तनिवेशनं सङ्गमयति दीधितौ अतिरिक्तेति। 'पक्षे साध्याभावः पक्षनिष्ठाभावप्रतियोगि साध्य'मित्यादिप्रमायां साध्याभावप्रकारकप्रमाविषयतायाः पक्षेऽसत्त्वात् यादृशज्ञानमादाय लक्षणसङ्गमनं तद्दर्शयति पक्ष इति। ज्ञाने पक्षनिष्ठविषयत्वस्य प्रकार इति। ईदृशज्ञानीया या पक्षनिष्ठविषयता तन्निरूपितप्रकारताया आश्रय इत्यर्थः। एतेन पक्षनिष्ठत्वादिकं नाभावादेर्विशेषणं किन्तु विषयत्वादेः, प्रकाराभाव इति न षष्ठीतत्पुरुषः किन्तु कर्मधारय इत्यादिकमपि स्फुटीकृतम्। साध्याभावप्रमैवेत्येवकारस्य पक्षादेर्दोषघटकत्वव्य-

यच्छेदपरता न सम्भवति पक्षादिविषयकत्वस्य प्रतिबन्धकत्वोपयोगित्वादतो हेतुतत्सम्बन्धमात्रव्यवच्छेदकतामाविष्कर्त्तुं तद्विषयकत्वस्य प्रतिबन्धकत्वानुयोगित्वम्, तद्यच्छेदकहेतुमाह हेत्वादीति ॥ एवं च साध्याभावप्रमापदं साध्याभावप्रमाविषयत्वादिरूपविशेषणविशिष्टपक्षपरमित्यवधेयम् ।

( चि० ) अथ साध्याभाववति पक्षे हेतोः सत्त्वज्ञाने व्यभिचारः, तदज्ञानेऽसिद्धिः, संशययोग्यत्वाभावेन पक्षत्वाभावादाश्रयासिद्धिश्च । न च पक्षभिन्ने व्यभिचारो दोषः, व्यर्थविशेषणत्वात् सर्व्वोपसंहारप्रवृत्तव्याप्तेः साध्याभाववति साधनमित्यवगमादेव भङ्गात् । न चैवं सन्दिग्धसाध्यदृष्टान्ते सन्दिग्धानैकान्तिकवत्पक्षे व्यभिचारसंशयादनुमानमात्रोच्छेद इति पक्षे साध्यसंशयोऽनुमानाङ्गमिति । व्याप्तस्य पक्षधर्मताज्ञानादनुमित्युत्पादेन संशयनिवृत्तेः, अन्यथा विशेषदर्शनस्य संशयविरोधिता भज्येत । न च पक्षे साध्याभावं प्रतीत्य व्यभिचारज्ञानमित्युपजीव्यत्वाद्बाधः पृथक्, पक्षे साध्याभावप्रतीतिरेव हि साध्याभावहेत्वोः सम्बन्धोल्लेखिनीत्येकवित्तिवेद्यत्वेन नोपजीव्यत्वम् । अन्यथा बाधदशायां पक्षे हेतोरज्ञानादसिद्धिरेव । न चोद्भावितव्यभिचारनिर्व्वाहाय बाधोद्भावनमावश्यकमित्युपजीव्यत्वम्, व्यभिचारोद्भावने परं कथन्ताऽनावश्यकत्वात्, तत्त्वे वा तन्निर्व्वाह्यमेव दूषणं कल्प्यत्वात् । वह्निरुष्णः कृतक इत्युद्भावनाद्वह्निरुष्ण इत्युद्भावने लाघवमिति बाधः पृथगिति कश्चित् । तन्न । पक्षे साध्याभावप्रमा स्वार्थानुमाने यदि न

दोषः तदा परं प्रत्यपि न स्यादविशेषादिति तदुद्भावनस्य दूरनिरस्तत्वात् ।

अथोपनीतकाञ्चनमयत्वविशिष्टवह्न्यनुमितेः सल्लिङ्गजन्यायाः आभासत्वं हेत्वाभासाधीनम् । न चानुमितेः पूर्वं तत्र व्यभिचारज्ञानं, विशिष्टस्याप्रसिद्ध्या तदभावस्याज्ञानात् । अत एव पक्षासिद्धिरपि न अतः काञ्चनमयवह्न्यभावरूपाद्बाधादनुमानाभासत्वं व्यधिकरणप्रकारावच्छिन्नप्रतियोगिकश्चात्राऽभाव इति चेन्न ।

( दी० ) साध्याभावप्रमात्वग्रहे पक्षे साध्याभाववत्त्वग्रहस्यावश्यकत्वाभिप्रायेण साध्याभावस्य बाधत्ववादिमतेन वा शङ्कते अथेति । पक्ष इति । व्याप्तौ निश्चितायां पक्षतत्समयोः साध्याभावसंशयो न दोषायेत्यर्थः । अनुमित्युत्पादेनेति फलतोऽपि विरोधित्वप्रदर्शनाय । अत एव व्याप्यः स्वरूपतो विरोधित्वं द्रढयति अन्यथेति । हेत्वाभासाधीनमिति । न च हेत्वाभासस्यानुमित्याभासत्वाप्रयोजकत्वे साध्यवति पक्षे लिङ्गाभासजन्याया अनुमितेराभासत्वापत्तिः, लिङ्गोपधाने तथात्वस्येष्टत्वात् । पक्षासिद्धिरित्यस्य बाधकमाननिबन्धनेत्यादिः ॥

( गा० ) मूले साध्याभाववतीति पक्ष इति । साध्याभाववत्तया ज्ञायमानपक्ष इत्यर्थः ।

ननु साध्याभावप्रमाविषयपक्षकत्वादिरूपदर्शितबाधे पक्षांशे प्रमाविषयत्वमेव निविष्टं न तु साध्याभाववत्त्वमिति उक्तज्ञानदशायां हेतुसाध्याभावयोः सामानाधिकरण्यरूपव्यभिचारधियो नावश्यकतेति कथमयमाक्षेप इत्याशङ्कां निराकरोति दीधितौ साध्याभावेति । साध्याभाववत्त्वग्रहस्यावश्यकत्वाभिप्रायेणेति । तथाहि तत्प्रकारकत्वरूपस्य तत्प्रमात्वस्य धर्मिणि तद्वत्त्वघटितत्वादिति भावः । ननु प्रमात्वघटकतया साध्याभाववत्त्वेन धर्मिणो भानेऽपि न व्य-

भिचारबुद्धेरावश्यकता येन रूपेण हेतुमत्ताज्ञानं तेन प्रकारेण हेतुमत्त्वप्रकारेण वा धर्मिणि साध्याभावज्ञानस्यैव व्यभिचारज्ञानत्वात्; दर्शितसाध्याभाववदविशेष्यकत्वरूपप्रमात्वप्रवेशे च साध्याभाववत्त्वबुद्धेरेव नावश्यकत्वमित्यनुशयादाह साध्याभावस्येति । पक्षनिष्ठस्येत्यादि ।

मूले-असिद्धिः-पक्षधर्मताज्ञानरूपकारणविरहः, तथाच बाधबुद्धिदशायां अनुमितिविरोधिनो व्यभिचारज्ञानस्य पक्षधर्मताज्ञानरूपकारणविरहस्यवाऽवश्यं सत्त्वात्तत एवानुमित्यनुत्पादे कृतं बाधस्य हेत्वाभासत्वेनेति भावः । संशययोग्यता-साधकमानाभावः, तदभावेन-तद्विघटकबाधकमानसत्त्वेन । एतेन संशययोग्यताविरहापक्षताविरहयोरभेदाद्धेतुहेतुमद्भावेनाभिधानमसङ्गतमिति परास्तम् । आश्रयासिद्धिः पक्षधर्मताज्ञानविषयधर्मिविशेषणतया अनुमितिप्रयोजकस्यासत्त्वम्, सिषाधयिषाविरहसहकृतसिद्ध्यभावपक्षतामते एतद्दोषस्याकिञ्चित्करतया पूर्वदोषस्यैवोद्धारमाशङ्क्य निराकरोति न चेति । सर्वोपसंहारप्रवृत्तव्याप्तेरिति । सकलहेत्वधिकरणान्तर्भावेन साध्यसत्त्वे निर्वाह्यव्याप्तेरित्यर्थः । न चैवमिति । दृष्टान्ते-पक्षभिन्ने, सन्दिग्धानैकान्तिकवत्-व्यभिचारसंशयवत् । साध्याभावांशे संशयरूपत्वेपि प्रतिबन्धकादिति शेषः । एतेन साध्याभावांशे निश्चयरूपमेव व्यभिचारज्ञानं प्रतिबन्धकमिति पक्षभिन्नांशस्यानन्तर्भावेपि नानुमानमात्रोच्छेद इति शङ्का निराकृता । पक्षे-पक्षान्तर्भावेण, सर्वत्र व्यभिचारसंशयादनुमानमात्रोच्छेदः-सन्दिग्धसाध्यकपक्षेऽनुमितेरनुपपत्तिः । कथंचिदनुमितिसम्भवेपि दुष्टहेतुजन्यत्वसंशयात्तत्राप्रामाण्यसंशयात् तत्कार्यानुपपत्तिः ।

एतत्शङ्कायां च पक्ष इति यथा श्रुतमूले नोद्धारो सङ्गच्छते पक्षे साध्यसन्देहस्यानुमानाङ्गतया अपेक्षायां व्यभिचारज्ञानसत्त्वेनानुमित्यनुपपत्तितादवस्थ्यात्, परामर्शसत्त्वे व्यभिचारज्ञानस्य साक्षादनुमित्यविरोधितया अकिञ्चित्करत्वेन तत्सत्त्वे बाधनिश्चयदशायामनुमितिवारणाय बाधस्य हेत्वाभासतया आवश्यकत्वादतस्तद्व्याख्यायां दीधितौ पक्ष इति । व्याप्तौ निश्चितायामिति पूरणम् । पक्षेसाध्यसन्देहस्यादोषत्वे पक्षभिन्नेपि तस्यादोषत्वं स्यादिति प्रतिबन्धुद्धाराय पक्ष इत्यत्र तत्समममप्यन्तर्भावयति पक्षतत्समयोरिति । तथा-

च पक्षे तत्समे च व्यभिचारसंशयस्य यद्दोषत्वं तदपि पूर्वं व्याप्तेरनिश्चय एवेति भावः। अविरोधिमात्रार्थकस्याङ्गपदस्य व्याख्यानं दोषायेति। एवं च पक्षे व्यभिचारग्रहस्य दूषकत्वेपि व्यभिचारसंशयस्य व्याप्तिनिश्चयविघटनेनैवानुमितिविरोधिना पूर्वं व्याप्तिनिश्चये च व्यभिचारसंशयेपि व्याप्तिस्मृत्या विशिष्टपरामर्शसम्भवादनुमितिर्निष्प्रत्यूहैव, व्यभिचारनिश्चयस्य च साक्षादनुमितिविरोधितया साध्याभाववत्तया निश्चीयमाने पक्षे हेतुमत्तानिश्चये व्यभिचारनिश्चयादेव नानुमितिरिति न बाधस्य हेत्वाभासतेति मूलकाराशयः। अनुमित्युत्पादेनं संशयनिवृत्तिकथनञ्च शङ्किताया अप्रामाण्यशङ्काया निरासाय पक्षे साध्यसंशयो अनुमानाङ्गम्, अनुमितिपूर्वकाले विशेषदर्शनसाहित्येन प्रात्यक्षिकसिद्धिविघटकतया अनुमित्युपयोगि न तु कारणम्, तथा च पक्षे साध्याभावसंशयरूपव्यभिचारज्ञानस्यानुमितिविरोधित्वेपि तादृशसंशये विनष्टे एव परामर्शादनुमितिर्भविष्यतीति नानुमानोच्छेद इत्यपि मूलं व्याचक्षते।

अनुमित्युत्पादेनेति। व्याप्यवत्तापरामर्शस्याव्युत्तरकाले संशयनिवर्त्तकत्वसम्भवादनुमित्युत्पादस्य संशयनिवर्त्तकत्वाभिधानासङ्गतिमाशङ्क्याह फलतोपीति। तथाच फलद्वारापि संशयनिवर्तकत्वमस्तीति तत्प्रदर्शितम्। अपिकारपूरणेन च स्वतोऽपि निवर्तकत्व लभ्यत इति न न्यूनतेति भावः। अतएव-स्वतो विरोधित्वस्यापि तात्पर्यविषयत्वादेवेत्याशयः। फलद्वारा विरोधित्वमपेक्ष्य ज्यायः स्वरूपतो विरोधित्वम्। परामर्शस्य विशेषदर्शनविधया स्वतःसंशयविरोधित्वं युक्त्या द्रढयति अन्यथेति। एव चान्यथेति मूलस्य परामर्शस्य स्वतः साध्यसंशयानिवर्तकत्व इत्यर्थः।

साध्याभाववद्धर्मिवृत्तित्वरूपव्यभिचारज्ञाने धर्मिणि साध्याभावग्रहो विशेषणतावच्छेदकप्रकारकज्ञानविधया पूर्वमपेक्षित इत्यभिप्रायेण शङ्का मूले-पक्षे साध्याभावं प्रतीत्येति। ज्ञानद्वयरूपे-साध्याभाववान् पक्षः पक्षो हेतुमान् इत्याकारके। हेतुमान् पक्षः साध्याभाववानित्याकारकैकज्ञानरूपे च व्यभिचारग्रहेण साध्याभावग्रहस्य पूर्वमपेक्षित्याशयेन पक्ष इत्यादिनोद्धारः। साध्याभावहेत्वोः सम्बन्धोल्लेखिनीति। हेतुसम्बन्धितया ज्ञायमाने साध्याभावविषयिणीत्यर्थः। एतेन क्वचिद्बाधग्रहपरामर्शयोर्भेदेपि न क्षतिः।

दीधितौ हेत्वाभासस्येति। अनुमित्याभासता अनुमितेर्भ्रमत्वम्। मूले तत्र व्यभिचारज्ञानमिति। धूमादिरूपहेतौ काञ्चनमयत्वावच्छिन्नवह्न्यभाववद्वृत्तित्वज्ञानमित्यर्थः। एतादृशज्ञाननिराकरणं चानुमित्यौपयिकव्यापकतानवच्छेदकेनाप्युपनीततद्रूपेण साध्यानुमितौ तद्रूपावच्छिन्नसाध्याभाववद्वृत्तित्वमपि साक्षाद्विरोधितया दोष इत्यभ्युपेत्य, अनुमितेः पूर्वं तदज्ञान एव तस्य न हेत्वाभासता इत्यभिमानेन। अनुमितिपूर्वमज्ञानं बाधसाधारणतयाऽकिञ्चित्करमित्यभिसन्धायाभिमानं निराकृत्यैतन्मतं दूषयिष्यति विशिष्टस्याप्रसिद्धेति। अनुमितावेव यत्र काञ्चनमयत्वेन वह्निज्ञानं तत्र काञ्चनमयत्वविशिष्टवह्नेः पूर्वमभानेन प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानाभावेन व्यभिचारघटकाभावस्य प्राक्ज्ञानासम्भवादित्यर्थः। भ्रमात्मकप्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानादेव व्यधिकरणधर्मावच्छिन्नाभावबुद्धिः। स च भ्रमो विशेषदर्शिनामाहार्य्य एवेत्याशयः।

अत एव-तादृशाभावस्य पूर्वमज्ञानादेव, न पक्षासिद्धिः-पक्षताविरहोपि नेत्यर्थः।

सिद्ध्यभावरूपपक्षताविरहस्याप्रसक्तेः साध्याभावज्ञानस्य तादृशपक्षतानुपपादकत्वाच्च साधकबाधकमानाभावरूपपक्षताविरहस्य प्रसङ्गकं पूरयति दीधितौ पक्षासिद्धिरित्यस्येति।

विशिष्टप्रतियोग्यप्रसिद्धावपि नाभावाप्रसिद्धिरित्याह मूले व्यधिकरणेति।

(चि०) वस्तुतो व्यभिचारस्यापि तत्र सत्त्वात्, ज्ञानञ्च तस्य बाधस्येवानुमित्यनन्तरमेव। किञ्च वह्नौ काञ्चनमयत्वस्यानुमितावेव भाने काञ्चनमयवह्निमानित्यनुमितिर्न स्यात् विशिष्टस्य पूर्व्वमज्ञानात्। वह्नौ काञ्चनमयत्वांशेऽनुमितेराभासत्वं वह्नौ लिङ्गस्यासिद्धेः व्यभिचाराच्च। न चानुमितेर्विषयाभावाधीनमप्रमात्वं किन्तु हेत्वाभासाधीनं, यस्य हि ज्ञानमनुमितिप्रतिबन्धकं स हेत्वाभासः। न च साध्याभावो ज्ञातः प्रतिबन्धक इति न स हेत्वाभासः॥

(दी०) लिङ्गस्येत्याद्यभ्युच्चयमात्रं, वह्नेरपक्षसत्त्वात् काञ्चनमयत्वस्यासाध्यत्वाच्च। न च साध्याभाव इति। अनुमितेः पूर्वं विशिष्टस्याप्रसिद्ध्या तदभावस्याज्ञानादिति भवतैवोक्तत्वादिति भावः॥

(गा०) व्यभिचारस्य काञ्चनमयत्वावच्छिन्नवन्ह्यभाववद्वृत्तित्वरूपस्य कदाचिदप्यज्ञाने व्यभिचारस्य न वास्तवत्वमत आह ज्ञानं च तस्येति। अनुमितेः पूर्वमज्ञानाद्यदि न हेत्वाभासता तदा तादृशबाधस्यापि सा न स्यादिति प्रतिबन्दिसूचनाय बाधस्येवेति। काञ्चनमयत्वावच्छिन्नवन्ह्यभाववत्पक्षरूपस्य भवन्मतसिद्धभ्रमत्वप्रयोजकबाधस्येवेत्यर्थः। अनुमित्यनन्तरमेवेति। विशिष्टप्रतियोगिज्ञानात्मकानुमित्या तन्मूलकस्मरणादिना वा अभावग्रहसामग्रीसंपत्तेरिति भावः। अनुमितावेव भान इति। पूर्वं यत्र तज्ज्ञानं तत्र व्यभिचारग्रहस्यापि संभवेनानुमितेरेवानुदयादिति भावः। विशिष्टस्य पूर्वमज्ञानादिति। विशेषणान्तरविशेष्यतापन्नविशेषणकज्ञानमात्र एव विशिष्टविशेषणज्ञानं हेतुरित्यभिप्रायेण काञ्चनमयत्वादिना विशिष्टस्य वन्ह्यादेर्भानेपि तद्रूपावच्छिन्नतदभावज्ञानानियमान्न व्यभिचारग्रहनियम इत्यालोच्य उक्तानुमितेराभासताप्रयोजकमन्यदाह वन्ह्याविति। लिङ्गस्य-काञ्चनमयत्वव्याप्यस्य,वन्ह्यावप्रसिद्धेर्व्यभिचाराच्चेत्यस्य वन्हिवृत्तौ च काञ्चनमयत्वस्येत्यादिः। यद्यपि वन्हौ काञ्चनमयत्वभानस्य तत्र तद्व्याप्तिविशिष्टवत्ताज्ञानानधीनतया तत्र तद्वत्त्वांशे अनुमितेराभासत्वे उक्तासिद्धिव्यभिचारयोः प्रयोजकत्वमसंभवदुक्तिकम्, तथाप्यनुमितौ विधेयेतावच्छेदकताद्वयतावच्छेदकताविलक्षणाप्रकारता तद्व्याप्यवत्ताज्ञानप्रयोज्येति नियमानुरोधेन यदि काञ्चनमयत्वावगाहितायाः तद्व्याप्यवत्ताज्ञाना धीनत्वमंगीकरोति तदेतद्दूषणम्।

अनुमित्युपनीतभानवादिना तादृशानियमाङ्गीकारेऽनुमित्युपनीतभानमतविशेषस्यैवोच्छेदः सर्वैरेव तद्व्याप्यवत्ताज्ञानाच्चदनुमित्यभ्युपगमादिति तेन तादृशानियमो नाभ्युपेयत एवेत्यभिसंधाय दीधितिकार आह लिङ्गस्येत्याद्यभ्युच्चयमात्रमिति।

उक्तस्थले पक्षनिष्ठस्य काञ्चनमयत्वावच्छिन्नवन्ह्यभावस्यानुमित्याभासताप्रयोजकत्वेपि अनुमित्याभासताया हेत्वाभासाधीनत्वनि-

यमो न सिध्यतीति नोक्तयुक्त्या बाधस्य हेत्वाभासतासिद्धिरित्याह मूले न चेति। अप्रामात्वं भवतोच्यत इति शेषः। न च साध्याभाव इत्यनन्तरं प्रकृत इति पूरणीयं, प्रतिबन्धक इत्यनन्तरं भवितुमर्हतीति।

अत्र कुत इत्याकांक्षायामाह दीधितौ अनुमितेः पूर्वमिति। अनुमित्यात्मकविशिष्टसाध्यज्ञानानन्तरं तदभावज्ञानसंभवेपि तज्ज्ञानस्य पूर्वोत्पन्नायामनुमितावप्रतिबन्धकत्वादनुमित्यन्तरानुत्पादस्य च पक्षे हेतुमत्ताज्ञानसत्त्वे तदात्मकव्यभिचारज्ञानादेव निर्वाहान्न तदभावस्य हेत्वाभासतेति भावः। एतेनानुत्पन्नायामप्यनुमितौ विशिष्टविषयकमानसादिज्ञानसंभवेन विशिष्टसाध्याभावज्ञानोत्पत्तावपि न क्षतिः॥

( चि० ) वस्तुतस्तु उपनीतस्यानुमितौ भाने मानाभावः प्रत्यभिज्ञादौ च प्रतीतिबलेनैव तत्कल्पनम्, अन्यथा पूर्वोपस्थितसकलपदार्थभाने यथार्थानुमित्युच्छेदः। अपि चैवं परार्थानुमानेप्युपनीतभाने बाधितोऽर्थ उपनीतोऽयं मम भात इत्युद्भावनादेव विजयेत वादी उद्देश्यानुमितेरप्रतिबन्धान्न तत्र बाधो दोष इति चेत्, तुल्यं स्वार्थानुमानेऽपि। अत एव यत्र सामान्यतोदृष्टानुमानमेवेतरबाधसहायं विशेषानुमापकं तत्र बाधकानामाभासत्वे तत्प्रयुक्तं सामान्यतो दृष्टस्याप्याभासत्वमिति बाधस्यासङ्कर्यात्। न च यदि विशेषविप्रतिपत्तौ सामान्यस्य प्रतिज्ञा तदा अर्थान्तरं सामान्यविप्रतिपत्तौ तु नेतरत्र बाधकापेक्षेति वाच्यम्। स्वार्थानुमान एवैवं बाधासङ्करस्योक्तत्वादित्यपास्तम्। अनुमित्यप्रतिबन्धेन तत्र बाधस्यादोषत्वात्।

ननु पक्षे साध्याभावग्रहवत्साध्याभावव्याप्यग्रहोऽपि दूषको विरोधित्वाविशेषात्, तथाच साध्याभावसम्बन्धो व्यभिचारः साध्याभावव्याप्यसामानाधि-

करण्यं बाधः साध्याभावव्याप्यञ्च वह्नित्वादिकमेवेति चेत्। न। पक्षे हि साध्याभावे ज्ञायमाने ज्ञाते वा यदि साध्याभावव्याप्यसामानाधिकरण्यबुद्धिस्तदा व्यभिचार एव।

अथ पक्षे साध्याभावबुद्धिं विनैव सा, तर्हि हेतु-साध्याभावव्याप्ययोरगृह्यमाणविशेषयोः सत्प्रति-पक्षत्वम्।

अथ तुल्यबलेन सत्प्रतिपक्षोऽधिकबलेन बाध इति चेन्न। गमकतौपयिकरूपसाकल्यं हि बलं तच्च द्वयोर्ज्ञा-तमिति कथं न सत्प्रतिपक्षत्वं, गमकताग्राहिर्भूतश्च न बलम्।

अथ साध्याभावव्याप्यबुद्धेरनन्यथासिद्धत्वं बलं, तदा ततः साधनवति पक्षे साध्याभावानुमितावनै-कान्तिकत्वमेव। पक्षे साध्याभावग्रहवदिति यदुक्तं त-दप्यसिद्धम्। तस्य दोषत्वानभ्युपगमात्, अन्यथा हेत्वाभासान्तरतापत्तिः।

अथ हेतुतः साध्यसिद्धिसम्भावनायां व्यभिचा-रासिद्धेः बाधेन हेतोरसाधकत्वे सिद्धे व्यभिचार-सिद्धिरित्युपजीव्यत्वाद्बाधः पृथक्, अन्यथा हेतोरसा-धकत्वे सिद्धे साध्यसिद्धिसम्भावनाविरहाद्व्यभिचा-रबुद्धिः तस्याश्च सत्यां हेतोरसाधकत्वधीरित्यन्योऽ-न्याश्रय इति चेन्न। साध्यसिद्ध्युन्मुखहेतुज्ञानस्य प्र-मितसाध्याभावसहचरितहेतुविषयत्वेन व्यभिचार-ज्ञानतया दूषकत्वात्। तथापि व्यभिचारे साध्याभा-वप्रमा तन्त्रं तां विना तदभावादिति सैव दोष इति

चेत् । सत्यम् । किन्तु साध्याभावप्रमा व्यभिचारज्ञानत्वेन दूषिका क्लृप्तत्वात्, न स्वतन्त्रा । अत एव पक्षे साध्याभावज्ञानत्वेन प्रतिबन्धकत्वं न तु साध्याभावसमानाधिकरणसाधनज्ञानत्वेनेति प्रत्युक्तम् । तस्य लघुत्वेऽप्यक्लृप्तत्वात् । अथ प्रत्यक्षादौ प्रमामात्रं प्रति स्वातन्त्र्येण बाधो दोषत्वेन क्लृप्त इत्यनुमितावपि स एव दोष इति चेत् । न तर्हि हेत्वाभासः, अनुमित्यसाधारणदोषस्य तत्त्वात् मनोयोगाभाववत् स्वरूपसत एव प्रतिबन्धकत्वात् हेतुत्वाभिमतावृत्तित्वेनाऽसाधकतालिङ्गत्वाभावाच्च । बाधितपक्षकत्वं लिङ्गमिति चेन्न । अन्यत्र तथा दूषकत्वाकल्पनात् ।

इति बाधपूर्वपक्षचिन्तामणिः ॥

---

( गा० ) व्यभिचारधीसत्त्वादेवानुमित्यनुत्पादनिर्वाहे बाधे विरोधित्वान्तरकल्पनाया निर्युक्तिकत्वादिति भाव । तद्रूपावच्छिन्नव्यभिचारस्य तद्रूपावच्छिन्नव्यापकताग्रहाधीनानुमितावेव विरोधितया उपनीततद्धर्मविशिष्टसाध्यानुमितौ काञ्चनमयत्वावच्छिन्नवह्न्यभाववद्वृत्तित्वरूपव्यभिचारो अकिञ्चित्कर इति कथञ्चिद्विशिष्टसाध्यज्ञानाधीनबाधग्रहदशायामुक्तानुमितेर्वारणाय बाधस्य हेत्वाभासत्वमावश्यकमित्यनुशयादनुमितावुपनीतस्यैव भान दूषयति मूले वस्तुतस्त्विति । अनुमितावुपनीतभाने बाधकमप्याह अन्यथेति । यथार्थानुमित्युच्छेद इति । भ्रमभिन्नानुमित्युच्छेद इत्यर्थ । ननु उपनीतस्य सकलपदार्थस्य भाने तत्तत्पदार्थबाधनिश्चयाभावस्य सहकारितया तादृशसहकारिसत्त्वे भ्रमत्वमिष्टमेव तदसत्त्वे तादृशकारणविरहादेव भ्रमत्वमित्यतआहापि चेति । इत्युद्भावनादिति । मध्यस्थस्येत्यादि । अन्यथा बादिप्रतिवादिनोः परोक्तस्वसाध्यानुमित्यजननादसंगते । न च तत्र बाधो दोष इति । यत्र यत्सिद्धिरनुद्देश्या तत्र तद्ज्ञानविरोधी प्रकृते न दोष इति तदुद्भावनाच्च वादिविजय इत्यर्थ ।

तुल्यं स्वार्थानुमानेपीति। प्रकृतहेत्वधीनं यत्र यद्वगाहित्वं तत्र तदवगाहनाविरोधिनः काञ्चनमयत्वादिना वह्न्याद्यभावस्य न प्रकृतहेतुदोषत्वमिति प्रकृतहेतोरदुष्टतयाऽनुमितेर्प्रमात्वानुपपत्तिर्भवतामपीत्यर्थः। इतरबाधसहाय-मितरबाधग्रहसहितं, विशेषानुमापकं-अगृहीतबाधस्य विशेषस्यानुमापकम्, बाधकानां-इतरबाधकानां आभासत्वे-अप्रामाणिकत्वे, यस्य बाधो गृहीतस्तस्य च वस्तुतो अबाधितत्व इति यावत्। तदयुक्तमिति। परिशिष्य मानविशेषबाधप्रयुक्तमित्यर्थः। आभासत्वं-अप्रमाजनकत्वं। अनुमित्यप्रतिबन्धेनेति। स्वरूपसतो बाधस्याप्रतिबन्धकत्वात्तज्ज्ञाने च विशेषानुमापकताया एवानुपपत्तेरिति भावः। बाधस्य-विशेषबाधस्य। अदोषत्वादिति। तथा च न तत्र सामान्यतोदृष्टस्याप्रमाजनकत्वनिर्वाह इति भावः। यद्यपि तादृशबाधावतारस्य कदाचिद्विशेषानुमित्यनुत्पादप्रयोजकतया तस्य हेतुदोषत्वं यत्र तदनवतारस्तत्रत्याया विशेषानुमितेराभासताप्रयोजकत्वं चानपवादमेव, तथापि कदाचिदनुमित्यनुत्पादप्रयोजकज्ञानविषयत्वसंभवेनैव स्वतन्त्रहेत्वाभासतानिर्वाहे अनुमित्याभासताप्रयोजकत्वाभिधानमनुपयुक्तम्। विशेषानुमितिविरोधितया व्यभिचारासंकीर्णहेत्वाभासता च पक्षधर्मताबलेनेत्यादिना सिद्धान्तयिष्यत एवेति तात्पर्यम्।

दूषकः—अनुमितिप्रतिबन्धकः। विरोधित्वाविशेषादिति। साध्याभावस्येव तद्व्याप्यस्यापि साध्यविरोधित्वादित्यर्थः। साध्याभावसंबन्ध इति। हेतोरित्यादि, हेतुमत्तया ज्ञायमानपक्षे साध्याभाववत्त्वमित्यर्थः। व्यभिचारः-व्यभिचारग्रहविधया दूषणम्, भवतीति शेषः। साध्याभावव्याप्यसामानाधिकरण्यमिति। तस्येत्यादिः, हेतुमत्तया ज्ञायमानेपि पक्षे साध्याभावव्याप्यवत्त्वमित्यर्थः। बाधो बाधविधयैव दूषणम्। तस्य व्यभिचारानात्मकत्वादिति भावः। वन्हित्वादिकमेवेति। वन्हिरुष्ण इत्यादि बाधस्थल इति शेषः। व्यभिचार एव-व्यभिचारग्रह एव, अनुमितिविरोधीति शेषः।

तुल्यबलेनेति। उभयत्र बलपदं बलज्ञानपरं, तथाच यत्र उष्णत्वादिसाधकवन्हित्वादेरधिकबलज्ञानं तत्र सत्प्रतिपक्षताविरहेण बाधस्यासाङ्कर्यमिति भावः। तच्च—व्याप्तिपक्षधर्मतात्मकं गमकतौपयिकरूपं च। द्वयोर्ज्ञातमिति। साध्याभावसाधकवन्हित्वादे-

रिव प्रकृतहेतोरपि ज्ञातम्, अन्यथा कारणविरहादेवानुमित्यनुत्पाद-निर्वाहेण बाधस्य हेत्वाभासत्वासिद्धेरिति भावः । गमकताब-हिर्भूतं-गमकतानौपयिकं, साध्यव्याप्यवत्ताबुद्धेः प्रमात्वे गमक-तौनापयिकमपि सत्प्रतिपक्षविघटक बलं विरोधिव्याप्यवत्ताबुद्धौ तद्व्याप्यवत्ताबुद्धिप्रमात्वनिश्चयस्योत्तेजकत्वोपगमादिति ।

साध्याभावव्याप्यवत्ताज्ञाने प्रमात्वानिश्चयदशायां सत्प्रतिपक्षता-विरहेण बाधस्यैव दोषत्वं, बाधश्च प्रमितसाध्याभावव्याप्यवत्पक्ष-कत्वम्।न चोभयत्र प्रामाण्यग्रहदशायां यदनुमितिप्रतिबन्धकं तत एव तादृशबाधग्रहदशायामनुमित्यनुत्पादनिर्वाहे तादृशबाधबुद्धेः प्रति-बन्धकत्वान्तरमप्रामाणिकमिति वाच्यम् । तादृशप्रतिबन्धके प्रकृत-परामर्शप्रमात्वग्रहस्य उत्तेजकतया उभयत्र प्रामाण्यग्रहदशायामनुमि-तेर्वारणाय प्रतिबन्धकत्वान्तरकल्पनाया आवश्यकत्वादिति शंकते अ-थेति।अनन्यथासिद्धत्वं प्रमात्वनिश्चयः। ततः-साध्याभावव्याप्यबुद्धित साध्याभावानुमितावेति । बाधकविरहेणेति शेषः। अनैकान्तिकमेव-व्यभिचारज्ञानमेवानुमितिं विरुन्ध्यादिति(१)शेष । इदमापाततः ताद-शसाध्याभावानुमित्युत्पादकाले साध्यानुमितेर्व्यभिचारज्ञानेनावार-णात्, किन्तु एकत्र प्रामाण्यग्रहस्थले अन्यत्राप्रामाण्यग्रहोत्पत्त्यैवानु-मित्युपगमेनोक्तप्रामाण्यग्रहोत्तेजकताया अनुपयोगात् उभयत्र प्रामा-ण्यग्रहतद्ग्रहस्थलयोरप्रामाण्यग्रहानास्कन्दितविरोधिव्याप्यवत्ताज्ञा-नप्रतिबन्धकतयैवोपपत्तेः प्रतिबन्धकत्वान्तरं निर्युक्तिकमित्येव दूषण बोध्यम् । इति यदुक्तमिति ।इत्यनेन दृष्टान्तविधया यत्साध्याभावज्ञा-नस्य स्वातन्त्र्येण दूषणत्वमुक्तमित्यर्थः।हेत्वाभासान्तरतापत्तेरिति। प-क्षनिष्ठसाध्याभावमात्रस्य व्यभिचारानात्मकतया बाधत्वस्यापि तत्रा-नुपगमेन क्लृप्तेऽनन्तर्भावादिति भावः ।

हेतुत साध्यसिद्धिसंभावनायामिति । हेतोः साध्यसाधक-प्रमाविषयत्वसंभावनायामित्यर्थः । व्यभिचारासिद्धेरिति । तादृश-प्रमाविषयत्वस्याव्यभिचारनियतत्वादिति भावः । व्यभिचारादेर-साधकत्वसिद्ध्युपगमे दोषमाहान्यथेति । बाधसिद्धिरेव व्यभि-चारसिद्धिरिति नोपजीव्योपजीवकभाव इति दूषयति नेति । सैव दोष इति । सा प्रमात्वेनैव लाघवात् प्रतिबन्धिका न तु व्य-भिचारज्ञानतया व्यभिचारस्य गुरुशरीरत्वादित्यर्थः । पक्षातिरिक्ते

हेतुसाध्याभाववत्त्वग्रहदशायामनुमितिवारणाय व्यभिचारधियः प्रतिबन्धकतायाः आवश्यकत्वाद्दोषत्वमकिञ्चित्करं साध्याभावप्रमायाः प्रतिबन्धकत्वान्तरकल्पनमेव च गौरवमिति दूषयति सत्यमिति। साध्याभावप्रमाप्रतिबन्धिकेतीत्यादिः। अन्यत्र तथा दूषकत्वाकल्पनादिति। प्रत्यक्षादौ साध्याभाववत्पक्षकत्वपर्यन्तज्ञानस्य प्रतिबन्धकत्वाकल्पनादित्यर्थः। तथा चानुमितौ तज्ज्ञानप्रतिबन्धकतायामुक्तयुक्त्यनवकाशेन हेतुवृत्तित्वेऽपि तस्य हेत्वाभासत्वं नास्तीति भावः॥

( चि० ) उच्यते। पक्षे साध्याभावनिश्चयः साध्याभावज्ञानप्रमात्वनिश्चयात्, ज्ञानमात्रादर्थनिश्चये प्रामाण्यग्रहवैयर्थ्यं भ्रमत्वेन ज्ञातादर्थनिश्चयप्रसङ्गश्च, तथा चोपजीव्यत्वेनाधिकबलत्वेन वा पक्षे साध्याभावज्ञानस्य प्रमात्वनिश्चये सव्यभिचारो नान्यथा, उभयथापि साध्याभावनिश्चयाधीनव्यभिचारज्ञानात् पूर्वं ज्ञातं साध्याभावज्ञानप्रमात्वमेव दोष उपजीव्यत्वात्। यदि च पक्षे साध्याभावज्ञानस्य प्रमात्वनिश्चयो नानुमितिविरोधी, तदा व्याप्तिपक्षधर्मतया हेतुज्ञानं विशेषदर्शनत्वेन पक्षे साध्याभावज्ञानं परिभूय साध्यं साधयेदेव पर्वते धूम इव वह्निम्। न च साध्याभावबुद्धिरवाधृतप्रमाणविशेषा सत्प्रतिपक्षवत् प्रतिबन्धकेति वाच्यम्। रजते न इदं रजतमिति ज्ञानेऽपि विशेषदर्शनेन रजतत्वस्य शङ्खे पीतत्वज्ञाने शुक्लत्वस्य चानुमानात्, वादिवाक्येन पक्षे साध्याभावज्ञानादनुमानोच्छेदप्रसङ्गाच्च।

अथ पक्षे साध्याभावप्रमैव साध्याभावहेतुविषया व्यभिचारज्ञानत्वेन दोषो न तु तस्याः प्रमात्वज्ञानमपीति चेत्, तर्हि प्रमायाः अप्रमात्वज्ञाने भ्रान्ता·

नुमितिर्न स्यात्, न स्याच्च पक्षे साध्याभावज्ञानप्रमात्वभ्रमादनुमितिप्रतिबन्धः।

( दी० ) तथाचेत्यादि। अधिकबलत्वेनाधिकरणस्वरूपत्वेनापेक्षणीयो व्यभिचारनिश्चयः। साध्याभावनिश्चयेति। साध्याभावो निश्चीयते येन प्रामाण्यनिश्चयेन तदधीनेत्यर्थः।

( गा० ) पक्षे साध्याभावनिश्चय इति। साध्याभावज्ञाने प्रामाण्यसंशयोत्तरं तत्र प्रामाण्यनिश्चयं विना न साध्याभावनिश्चयस्तत्संशयस्य सामग्र्या अनिवृत्तेरिति स तत्प्रमात्वनिश्चयाधीनः। एवं प्रमात्वनिश्चयं विना अप्रामाण्यसंशययोग्यतया कथंचिदुत्पन्नोऽपि निश्चयो न निश्चयकार्य्यकारी अतस्तस्य निश्चयकार्यकारित्वमपि प्रमात्वनिश्चयाधीनमित्यर्थः। ज्ञानमात्रादर्थनिश्चय इति। प्रमात्वनिश्चयनिरपेक्षाज्ज्ञानहेतोः प्रामाण्यसंशयस्थले अर्थनिश्चये तादृशज्ञानस्य निश्चयकार्य्याभ्युपगमे प्रामाण्यग्रहवैयर्थ्ये तदुपायविचारवैयर्थ्यं, अर्थनिश्चयप्रसंगः—तत्कार्यनिष्कम्पप्रवृत्त्यादिप्रसङ्ग। द्वितीयाभ्युपगमे दूषणमिदमुपजीव्यत्वेनेति। क्वचित्साध्याभावनिश्चयात्मकव्यभिचारज्ञानस्वरूपे उपजीव्यत्वेनेत्यर्थः। अधिकबलत्वेनेत्यत्र बहुव्रीहिभ्रमं निराकर्त्तुं दीधितिकृत् व्याचष्टे अधिकरणस्वरूपत्वेनेति। अनुमितिप्रतिबन्धकरूपनिश्चयकार्यकारिताप्रयोजकत्वेनेत्यर्थः। एतदुभयस्य प्रामाण्यनिश्चयापेक्षायामेव हेतुतया तल्लाभाय प्रमात्वनिश्चयविशेषणं पूरयति अपेक्षणीय इति। निश्चयकार्य्यार्थमवश्यं स्वीकरणीय इत्यर्थः। प्रमात्वनिश्चयस्य स्वरूपसद्व्यभिचारानिर्वाहकतया व्यभिचारपदं तन्निश्चयपरतया व्याचष्टे व्यभिचार इति। व्यभिचारनिश्चयः—साध्याभावांशे निश्चयकार्यकारिताप्रयोजकरूपविशिष्टव्यभिचारज्ञाननिर्वाहः। तच्च रूपं निश्चयत्वमिव निश्चितप्रामाण्यकत्वमपीति पक्षद्वयसङ्गतिः। व्यभिचारज्ञानस्य साध्याभावनिश्चयात्मकतया तदधीनत्वकथनासङ्गतेः साध्याभावनिश्चयपदं करणव्युत्पत्त्या तत्प्रमात्वनिश्चयपरतया वर्णयति साध्याभाव इति। व्यधिकरणबहुव्रीहावसहिष्णुतया साध्याभावस्य निश्चयो यस्मादिति न व्याख्यातम्। तदधीनत्वं च तन्निर्वाह्यनिश्चयकार्यकारिताप्रयोजकरूपवत्त्वम्। एतच्चेदानीं ज्ञानयोः क्रमिकत्वे हेतुत्वेना-

भिहितम् । पूर्वं, ज्ञातमिति च मूल तज्ज्ञानभिन्नज्ञानविषयीभूतमित्यर्थकम् । उपजीव्यत्वादिति । स्वरूपे प्रतिबन्धकत्वे चेत्यादि. । एतच्चेदानीं दोषत्वहेतुतयोक्तम् ।

ननु वह्निरनुष्ण इत्यादौ साध्याभाववत्ताज्ञानादेवानुमित्युत्पादनिर्वाहात् तत्प्रमात्वधियः स्वतोऽविरोधित्वेन तत्प्रमात्वस्य हेत्वाभासता नोपपन्नेत्याशङ्क्य प्रमात्वज्ञानस्यानुमितौ स्वतः प्रतिबन्धकत्वं व्यवस्थापयति यदि चेति । साध्याभावत्त्ववबुद्धेरनुमितिसाधारणतद्विशिष्टधीप्रतिबन्धकतया तस्याः परामर्शेन विशेषदर्शनात्मकेनापि न परिभवसम्भवः प्रतिबन्धकसत्त्वे कस्यापि हेतोः कार्य्योत्पादकत्वायोगादित्याशङ्कां निराकरोति न चेत्यादिना । अगृह्यमाणविशेषा-अगृहीताप्रामाण्या, रजते नेदं रजतमिति । अप्रामाण्यज्ञानं विनैवेत्यादि. ।विशेषदर्शनेनेति । परामर्शरूपेणेत्यादिः। अनुमानादिति । तथाच विशेषदर्शनविशिष्टत्वेनैव ग्राह्याभावबुद्धेः प्रतिबन्धकत्वमुपगन्तव्यमित्यनुमितिमात्र एव प्रमात्वेनानिश्चितसाध्याभावधियोऽविरोधित्वादिति भावः । प्रमात्मकग्राह्याभावज्ञानमेवानुमितिप्रतिबन्धकम्, अतो न पीतत्वादिभ्रमदशायां पीतत्वाभावाद्यनुमित्यनुपपत्तिः, तत्प्रतिबन्धकतापि व्यभिचारज्ञानविधयैव न तु स्वातन्त्र्येणेति न तद्विषयस्य बाधहेत्वाभासता इति शङ्कते अथेति । तर्हीति । वस्तुगत्या प्रमाया एव प्रतिबन्धकत्व इत्यर्थः ॥

(चि०)ननूपजीव्यत्वेऽप्यत्र साध्याज्ञावप्रमेति ज्ञानं न स्वतोदूषकं कल्पत्वात् पक्षे साध्याभावनिश्चयं कुर्वत् व्यभिचारज्ञानद्वारेति चेन्न। अत्र साध्याभावप्रमेति ज्ञानान्नियमतः साध्यज्ञानानुदयात् तस्यैव प्रतिबन्धकत्वात्, शब्दादौ तथा दर्शनात्। साध्याभावप्रमाविषयवृत्तित्वस्य हेतुवृत्तित्वादसाधारणत्वेन साध्याभावप्रमाया हेत्वाभासत्वम्। साधारण्येऽपि ज्ञायमानं सत् यदनुमितिं प्रतिबध्नाति तस्यैव हेत्वाभासत्वम्। न च साध्याभावप्रमाऽत्रेति निश्चयदशायां पक्षे साध्याभा-

वह्नेत्वोर्ज्ञानाद्यभिचार इति वाच्यम् । प्रमात्वज्ञानस्य साध्याभावनिश्चयहेतुत्वेन तद्दशायां तदभावात् ।

अत्रेदं तत्त्वम् । साध्याभाववान् साध्यवदन्यो वा पक्षः-पक्षावृत्तिसाध्यं-पक्षे साध्याभावः-पक्षनिष्ठसाध्याभाववत्त्वादिकं-साध्यादेः पक्षावृत्तित्वादिकं-साध्यवत्सामान्यादेः पक्षान्यत्वादिकं-विशिष्टसाध्ये पक्षादेर्वैशिष्ट्याभाववत्त्वादिकं-यथामतं पक्षे साध्यवत्ताज्ञानस्य साक्षाद्विरोधि प्रत्येकमेव बाधः । तन्निश्चयश्च विरोधिनिश्चयत्वेन दोषविशेषाद्यजन्यज्ञानमात्र एव विरोधी । अत एव 'अनन्वयनिश्चयविरहो योग्यता' इत्याचार्याः ।

विभाजकन्तु प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुमापकत्वे प्रकृतपक्षप्रकृतसाध्यग्रहविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहाविरोधित्वम् । पक्षादेः साध्यासमानाधिकरणधर्म्मवत्त्वादिकमपि बाध एव । साध्याभाववत्पक्षादिज्ञानप्रमात्वन्तु न बाधः । तज्ज्ञानस्य पक्षादौ साध्याभावादेरनवगाहित्वे विरोधिविषयत्वाभावात्, अवगाहित्वे तु तद्विषयत्वेनैव प्रतिबन्धकत्वात् प्रमात्वानिश्चयस्यान्यत्र प्रतिबन्धकत्वाकल्पनाच्च । सर्वत्र निश्चयस्य हेतुत्वे प्रतिबन्धकत्वे च भ्रमत्वाग्रहः, संशयसाधारणज्ञानमात्रस्य तथात्वे तु भ्रमत्वानिश्चयः प्रयोजकोऽन्यथाऽऽकाङ्क्षाकृतिसाध्यत्वादिनिश्चयहेतुप्रतिहेतुपरामर्शादीनां प्रमात्वनिश्चयो योग्यता व्यभिचारज्ञानादीनाञ्च प्रमात्वज्ञानं प्रयोजकीभवेत् । शङ्खादौ शुक्लत्वाभावभ्रमे च शुक्लत्वाद्यनुमितिर्न विना तदप्रामाण्यग्रहं, नहि स्वरूपसत्यपि बाधनिश्चये शाब्दमानसादिज्ञानमुत्पद्यते ।

(गा०) माभूत् साध्याभावज्ञानमनुमितौ स्वतः प्रतिबन्धकं तथापि तत्प्रमात्वबुद्धेः प्रतिबन्धकत्वमफलं वह्निरनुष्ण इत्यादौ वन्ह्या-

दाघुष्णत्वादिनिश्चयासत्त्वे तत्प्रमात्वनिश्चयेऽप्यनुमित्युपगमात्तन्निश्चयदशायां व्यभिचारज्ञानादेवानुमित्यनुत्पादनिर्वाहाच्छङ्खः पीत इत्यादौ अपीतत्वाद्यनुमितेर्व्यभिचारधीसत्त्वेपि नानुपपत्तिः साध्याभावांशेऽगृहीताप्रामाण्यकत्वस्य व्यभिचारधीप्रतिबन्धकतायां निवेश्यत्वादिति शंकते नन्विति। साध्याभावानिश्चयं कुर्वन्निति। अनुमितिप्रतिबन्धकरूपनिश्चयकार्यकारिताप्रयोजकविशेषणवैशिष्ट्यं निर्वाहयदित्यर्थः। साध्याभावज्ञानासत्त्वेपि तद्विषयकप्रमात्वनिश्चयकाले न साध्यज्ञानमित्यनुभवमालंब्य समाधत्ते नेति। तस्यैवेति। तस्यापीत्यर्थः। प्रतिबन्धकत्वादिति। तादृशज्ञानकाले व्यभिचारज्ञानानियमोऽग्रे दर्शनीयः शाब्दादिसाधारणबुद्धौ ग्राह्याभावप्रमात्वज्ञानस्य प्रतिबन्धकत्वेऽपि बाधस्यासाधारणहेतुदोषत्वमुपपादयति हेतुवृत्तित्वादसाधारणत्वेनेति। हेतुवृत्तितया विरोधित्वस्यानुमितिमात्रनिरूपितत्वेनेत्यर्थः। हेतुनिष्ठसाध्याभावप्रमाविषयवृत्तित्वपर्यन्तस्य न दोषतेत्यभिसन्धायाह साधारण्येपीति। पक्षे साध्याभावप्रमा इति ज्ञाने प्रमात्वघटकतया पक्षे साध्याभाववत्त्वज्ञाने तदपि ज्ञानं व्यभिचारज्ञानरूपमेवेति दोषान्तरज्ञानात्मकं यज्ज्ञानमनुमितिप्रतिबन्धकं स एव दोष इति नियमात्। साध्याभावप्रमाज्ञानस्य शाब्दादिसाधारणविशिष्टज्ञानप्रतिबन्धकत्वेपि न तद्विषयस्य हेत्वाभासतानिर्वाह इति शङ्कते न च साध्याभावप्रमेति। हेतुमत्त्वग्रहविषयतावच्छेदकपक्षतावच्छेदकावच्छिन्ने साध्याभाववत्त्वमनवगाह्यापि पक्षनिष्ठविषयतायां साध्याभाववद्वृत्तित्वावगाहिनः पक्षे साध्याभावप्रमेति निश्चयस्य पक्षतावच्छेदकविशिष्टसाध्याभावनिश्चयोपजीव्यस्य संभवान्नोक्तबाधज्ञानस्य व्यभिचारज्ञानरूपतेति समाधत्ते प्रमात्वेति। पक्षनिष्ठग्राह्याभावस्य बाधत्वमभ्युपेत्यापि बाधस्य पार्थक्यं व्यवस्थापयति पक्षधर्मताबलेनेत्यादिना।

साध्याभावबुद्धेः प्रमात्वज्ञानस्य प्रतिबन्धकत्वं निराकृत्य तत्प्रमात्वस्य दोषताया अग्रे स्वयं दूषणीयतया दीधितिकारो वस्तुतो बाधस्वरूपान्याह अत्रेदमित्यादिना। साध्याभाववानिति। अत्र साध्याभाववत्त्वमनवच्छिन्नं ग्राह्यम्, अतो न कपिसंयोगवानयं वृक्ष इत्यादावतिप्रसङ्गः। न चानवच्छिन्नत्वानवगाहिनोपि तदभाववत्ताज्ञानस्याव्याप्यवृत्तित्वाग्रहदशायां तद्वत्ताग्रहप्रतिबन्धकतया अनव-

च्छिन्नत्वाविशेषितसाध्याभाववत्त्वस्यापि दोषत्वं दुर्वारमिति वा-
च्यम् । प्रतिबन्धकीभूताभाववत्ताज्ञाने नियमतोऽधिकरणत्वांशे
सम्बन्धघटकतयाऽनवच्छिन्नत्वभानोपगमात्, अन्यथा अव्याप्यवृत्ति-
त्वज्ञानकालीनतज्ज्ञानस्याविरोधित्वात्, तज्ज्ञानाभावविशिष्टत्वेन
प्रतिबन्धकत्वस्योपगन्तव्यतया गौरवात् तदपेक्षया अनवच्छिन्नत्वा-
वगाहितया तथात्वे लाघवात् । पूर्वोत्पन्नाव्याप्यवृत्तित्वज्ञानवशा-
दनवच्छिन्नवृत्तिकत्वानवगाहिनोऽभाववत्ताज्ञानस्याव्याप्यवृत्तित्वधी-
नाशेऽपि अप्रतिबन्धकत्वमिष्टमेव । एकदेशकालरूपधर्मिता-
वच्छेदकावच्छेदेन तदभाववत्ताज्ञानस्य तदवच्छेदेन तद्वत्ताज्ञा-
नप्रतिबन्धकत्वान्तरकल्पनमव्याप्यवृत्तित्वज्ञानोत्तेजकतापक्षेऽप्याव—
श्यकम्–अव्याप्यवृत्तित्वेन ज्ञातयोरपि भावाभावयोरेकावच्छे-
देन एकदाऽनिश्चयात् । न चानवच्छिन्नवृत्तिकत्वावगाहित्वेनाभाव-
ज्ञानस्य प्रतिबन्धकत्वे अयं संयोगवान् तदभाववांश्चेति समुच्चयस्या-
यं संयोगवान्न वेति संशयाविरोधित्वप्रसङ्गः तस्य अव्याप्यवृत्तित्वान-
वगाहित्वादिति वाच्यम् । समुच्चयस्य कोटिद्वयसामानाधिकरण्य-
विषयकतया विरोधमानानिवर्तकयैव संशयविरोधित्वात्, भवतु वा
ऽव्याप्यवृत्तित्वज्ञानाभावविशिष्टस्य अव्याप्यवृत्तित्वानवगाहिनोऽपि
ज्ञानस्य प्रतिबन्धकत्वम्, तथापि वृक्षनिष्ठसंयोगाभावादौ नातिप्रसङ्गः
तद्विषयकनिश्चयत्वस्यानुमितिप्रतिबन्धकताशून्याव्याप्यवृत्तित्वज्ञा—,
नकालीनज्ञानसाधारणत्वेन तदतिरिक्तवृत्तित्वादिति अव्याप्यवृत्तिसा-
ध्यकस्थले पक्षनिष्ठानवच्छिन्नसाध्याभाववत्त्वमेव बाधः । तद्विषय-
त्वञ्च प्रतिबन्धकतानियतमेवेति अनवच्छिन्नसाध्याभाववत्त्ववद्देश-
कालरूपपक्षतावच्छेदकावच्छेदेन साध्याभाववत्त्वमपि तदवच्छेदेन
साध्यसाधने बाधः । एवं पक्षतावच्छेदकधर्मे अनतिरिक्तवृत्तित्वरू-
पसाध्यावच्छेदकताभानं यत्रोद्देश्यं तत्र पक्षतावच्छेदकसामाना-
धिकरण्येन साध्याभाववत्त्वम् । यत्र च तादृशधर्मसामानाधिकरण्य-
मात्रेण साध्यसिद्धिरुद्देश्या तत्र तादृशधर्मावच्छिन्नं साध्याभाववत्त्वं
बाध इति विशेषो बोध्यः । पक्षे साध्यस्य यादृशसम्बन्धोऽनुमिति-
विषयः तत्संबन्धपर्याप्तप्रतियोगितावच्छेदकसम्बन्धताकोऽभावो वि-
वक्षणीयः । यत्र च संयोगादिना साध्यानुमितिरुद्देश्या तत्र संयुक्तसंयो-
गादिसम्बन्धावच्छिन्नाभावस्याविरोधितया बाधानात्मकत्वात् पर्या-

त्तिनिवेशः। यत्र संयुक्तसंयोगादिरूपपरम्परासम्बन्धो अनुमितिविषयस्तत्र शुद्धसंयोगादिसम्बन्धावच्छिन्नाभावो न बाधः पक्षविषयतानिरूपितसंयोगादिविषयतायाः साक्षात्साध्यविषयत्वानिरूपिततया संयोगादौ साध्यसम्बन्धताविरहात्। धर्मितावच्छेदकव्यापकतादिविशिष्टसंयोगादिना साक्षात्सम्बन्धेनानुमाने च तादृशाभावो बाध एव। उक्तरीतिरग्रेऽप्यनुसर्तव्या। साध्यवदन्यो वेति। तद्वत्ताबुद्धौ तदत्यन्ताभावस्येव तद्वदन्यस्यापि धियो विरोधित्वादिति भावः। एवं च वृत्त्यनियामकसम्बन्धेनानुमितिस्वीकारे तत्सम्बन्धस्य प्रतियोगितानवच्छेदकत्वे च तत्र साध्यवद्भेदस्यैव बाधत्वं बोध्यम्। वाकारः साध्याभावसाध्यवद्भेदयोः पृथक् पृथक् पक्षविशेषणतया दोषघटकता न तु मिलितयोरिति लाभाय। पक्षः—पक्षतावच्छेदकविशिष्टः। पक्षावृत्तिसाध्यमिति। पक्षावृत्तित्वविशिष्टसाध्यतावच्छेदकावच्छिन्नमित्यर्थः। यद्यपि पक्षः साध्यवानित्यनुमितौ पक्षे साध्यस्याधिकरणत्वमेव सम्बन्धतया भासते नतु साध्ये पक्षवृत्तित्वं तथासति पक्षे साध्यस्येव साध्येपि पक्षस्य प्रकारतापत्तेरिति तादृशानुमितौ साध्यं पक्षावृत्तीति ज्ञानस्य न ग्राह्याभावज्ञानविधया विरोधित्वम्, तथापि पक्षः साध्यवान् पक्षे साध्यमिति ज्ञानयोः समशीलयोरेकं यत्प्रतिबध्यत्वम् अन्यस्यापि तत्प्रतिबध्यत्वमनुभवसिद्धमित्याशयेनैतदुक्तिः। पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकानवच्छिन्नत्वविशिष्टसाध्यस्यापि तुल्ययुक्त्या बाधता बोध्या। एतच्च प्राचीनमतानुसारेण। वस्तुतस्तु तदीयतत्संसर्गावगाहिबुद्धौ तत्सम्बन्धावच्छिन्नतदभावबुद्धेः प्रतिबन्धकत्वमिति संसर्गविधया यत्र भासते तत्संसर्गस्य विशिष्टबुद्ध्यविषयतया आधाराधेयभावसंसर्गबुद्धौ वा आधाराधेयभावाभावज्ञानप्रतिबन्धकताया अप्रामाणिकतया पक्षावृत्तित्वाद्यभावघटितस्य न दोषता। अत एवाग्रे यथामतमित्यभिधास्यते। एतन्मते अवृत्तित्वविशिष्टसाध्यस्य सिद्धिविशेषात्मकस्यापि बाधरूपता बोध्या। वक्ष्यमाणलक्षणाक्रान्तत्वात् विशेषणविशेष्यभाववैपरीत्येपि प्रतिबन्धकत्वमक्षतमित्याशयेनाह पक्षे साध्याभाव इति। आधेयतया पक्षेण पक्षवृत्तित्वेन वा विशिष्टः साध्याभाव इत्यर्थः। तादृशसाध्यवद्भेदोपि बोध्यः। पक्षनिष्ठसाध्याभाववत्त्वादिकमिति। साध्याभावाधिकरणत्वं साध्यवद्भेदाधिकरणत्वं चे·

त्यर्थः । अधिकरणतावृत्त्या पूर्वस्माद्भेदः । एतदपि प्राचीनमतेन । साध्यादेरित्यादिना साध्यसम्बन्धपरिग्रहः । पक्षावृत्तित्वादिकमित्यादिना वृत्तित्वपरिग्रहः । आदिपदाभ्यां वा साध्यतावच्छेदकस्य पक्षनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वादिपरिग्रहः । एतदपि सर्वं प्राचीनमतेन । भेदप्रतियोगित्वभेदानुयोगित्वयोः समशीलयोरेकतरस्थाने यत्र विरोध्यपरस्थानमपि तत्र तथा इत्याशयेनाह साध्यवदिति । साध्यवत्त्वव्यापकानुयोगिताकत्वादिविशिष्टपक्षभेदादिकमित्यर्थः । आदिपदाभ्यां पक्षतावच्छेदकावच्छिन्नस्य साध्यवत्सामान्यनिष्ठभेदप्रतियोगित्वादेः परिग्रहः । वक्ष्यमाणलक्षणे विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यग्रहत्वे स्वरूपसम्बन्धरूपस्य प्रतिबध्यतावच्छेदकत्वस्याऽनिवेशात् विशिष्टपक्षसाध्यग्रहाविरोधित्वविशेषणसार्थक्यमिति सूचयितुमाह विशिष्ट इति । आदिपदाभ्यां विशेष्यस्य पक्षावृत्तित्वादिपरिग्रहः । विशिष्टस्य पक्षत्वे विशेष्यतावच्छेदकावच्छेदेन साध्याभाववत्त्वादिकमपि बोध्यम् । मूलकृता ग्राह्याभावबुद्धेः प्रतिबन्धकत्वमन्यत्र क्लृप्तमिति शाब्दादौ तथा दर्शनात् इत्यनेनाभिहितम् , अत एव उक्तबाधज्ञानप्रतिबन्धकत्वस्यैव तथात्वमित्याह तन्निश्चयश्चेति । विरोधिनिश्चयत्वेनेति विरोधीत्यत्र हेतुः । धर्मिणि ग्राह्याभावविषयकत्वेनेत्यर्थः । तथात्वे सति विरोधितायाः सर्वानुभवसिद्धत्वादिति भावः । मात्र एवेति । मात्रपदं कृत्स्नार्थकम् । ग्राह्याभावनिश्चयस्य शाब्दबोधप्रतिबन्धकत्वे आचार्यसम्मतिमाह अत एवेति । मणिकृता तु एकपदार्थसंसर्गे अपरपदार्थनिष्ठाभावप्रतियोगित्वप्रमाविषयत्वज्ञानस्य शाब्दधीविरोधित्वाशयेन तत्र तादृशप्रमाविषयत्वाभावरूपयोग्यतायाः ज्ञातोपयोगिता शब्दपरिच्छेदे स्वीकरिष्यते ।

प्रकृतपक्षेति । सत्प्रतिपक्षेऽतिव्याप्तिवारणाय प्रथमं सत्यन्तम् । पक्षाप्रसिद्धिसाध्याप्रसिद्ध्योर्वारणाय द्वितीयम् । उदासीनवारणाय विशेष्यम् । यद्यपि साध्याभावविशिष्टप्रकृतपक्षादिरूपबाधे विरोध्युत्थापकसाध्याभावव्याप्यविशिष्टपक्षाद्यन्यत्वं विशिष्टपक्षादिग्रहविरोधिपक्षतावच्छेदकाभावविशिष्टपक्षाद्यन्यत्वं चासिद्धम् , तथापि यादृशविशिष्टनिरूपितविषयिताविरोध्यनुमितिजनकतावच्छेदकत्वे सति विशिष्टपक्षग्रहत्वस्य विशिष्टसाध्यग्रहत्वस्य च न्यूनवृत्तिर्या विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यग्रहत्वान्यूनवृत्तिः प्रतिबध्यता-त-

विरूपितप्रतिबन्धकतावच्छेदिका तादृशत्वमित्यत्र तात्पर्य्यम्। शेषं पूर्वोपदर्शितदिशावसेयम्।

अथात्र लक्षणे वह्निमान्ह्रदो वह्निमानित्यादौ वह्न्यभावविशिष्टह्रदादिरूपे बाधेऽव्याप्तिः तद्विषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताया विशिष्टपक्षप्रह्रदत्वव्यापकत्वात्। न च पक्षतावच्छेदकादिभेदेन बाधलक्षणस्य भिन्नतया यत्र साध्यमेव पक्षतावच्छेदकं तत्र विशिष्टपक्षग्रहविरोधित्वस्यानिवेशनीयतया नाश्रयासिद्ध्यात्मकबाधासङ्कर इति वाच्यम्। वह्निमान् काञ्चनमयह्रदो वह्निमानित्यादौ काञ्चनमयत्वाभावविशिष्टह्रदादिरूपाश्रयासिद्ध्यात्मकबाधेऽतिव्याप्तिवारणाय तादृशपक्षकस्थलीयबाधलक्षणेऽविरोधित्वान्तस्यावश्यं निवेशनीयत्वात्तत्रत्याश्रयासिद्धिरूपबाधे अव्याप्तेर्दुर्वारत्वादिति चेन्न। आश्रयासिद्ध्यात्मकस्य तस्यालक्ष्यत्वाल्लक्ष्यत्वं तु उद्देश्यतावच्छेदकताविधेयतावच्छेदकतातिरिक्तविशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यबोधीयविषयतान्तःपातिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकाविषयितात्वस्याविरोधित्वान्तसहितविरोधित्वान्तेन विवक्षणात्। काञ्चनमयह्रदो वह्निमानित्यादावाश्रयासिद्धिज्ञानस्य प्रतिबध्यतावच्छेदिका न, उद्देश्यतावच्छेदकताभिन्ना विशिष्टपक्षविशिष्टसाध्यवैशिष्ट्यबोधीयविषयतान्तःपातिनी प्रकारता इति तद्व्युदासः। उक्तपक्षाप्रसिद्धिरूपबाधयुक्ते च तादृशप्रकारताभिन्ना या विधेयमुद्रया या उक्तविशिष्टवैशिष्ट्यविषयतान्तःपातिनी(साध्य)प्रकारता तस्या अपि ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्न्यादिप्रकारतात्वेन प्रतिबध्यतावच्छेदकत्वान्न तादृशबाधासङ्करः। प्रकारतायाः उक्तविशिष्टवैशिष्ट्यविषयताशालिज्ञानवृत्तित्वमुपेक्ष्य तादृशविषयतान्तःपातित्वनिवेशाच्च काञ्चनमयह्रदो वह्निमान् इत्यत्र काञ्चनमय इत्येतादृशज्ञानीया या विधेयमुद्रया प्रकारता तस्या ह्रदत्वावच्छिन्नविशेष्यतानिरूपितकाञ्चनमयत्वादिप्रकारतात्वेनाश्रयासिद्धिज्ञानप्रतिबध्यतावच्छेदकत्वेपि नातिप्रसङ्गः।

ननु तथापि पर्वतो वह्निव्याप्याभाववह्न्यभावोभयवानित्यादौ वह्निव्याप्यवत्पर्वतादिरूपबाधेऽव्याप्तिः तस्य वह्निमत्पर्वतरूपविरोध्युन्नायकत्वादिति चेन्न। विरोधितान्तघटकप्रतिबन्धकतावच्छेदकविषयतायां विरोध्युन्नायकतानवच्छेदकत्वमनिवेश्य तादृ-

-शप्रतिबन्धकतायां स्वनिरूपितप्रतिबध्यतावच्छेदकविषयत्वावच्छि-न्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नानुमि-तिनिष्ठजन्यतानिरूपितजनकतावच्छेदकविषयत्वावच्छिन्नत्वस्य प्र-तिबन्धकतायां निवेशनीयत्वात् । प्रकृते च वह्निव्याप्याभाववत्ता-ज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतामादायोक्तबाधे लक्षणसमन्वयसम्भवात् । तथाहि—तादृशप्रतिबन्धकतानिरूपितप्रति-बध्यतावच्छेदकं न वह्न्यभाववत्पर्वतज्ञानत्वं, किन्तु वह्निव्याप्याभाव-वत्पर्वतज्ञानत्वमेवातस्तादृशप्रतिबन्धकताया वह्न्यभाववत्पर्वतज्ञान-विरोधिवह्निमत्पर्वतोज्ञायकतावच्छेदकवह्निव्याप्यवत्पर्वतविषयिता-वच्छिन्नत्वेपि वह्निव्याप्याभाववत्पर्वतज्ञानविरोधिवह्निव्याप्यवत्पर्व-तोज्ञायकतावच्छेदकवह्निव्याप्यवत्पर्वतविषयतावच्छिन्नत्वस्याक्षतत्वा-दिति । तथाच उद्देश्यतावच्छेदकताविधेयतावच्छेदकतातिरिक्त-विशिष्टपक्षविशिष्टसाध्यविशिष्टवैशिष्ट्यबोधीयविषयतान्ताःपातिप्र-कारत्वावच्छिन्नप्रतिबध्यतानिरूपिता सती स्वनिरूपितप्रति-बध्यतावच्छेदकविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धक-तावच्छेदकीभूतविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजन-कतावच्छेदकीभूतविषयित्वानवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्ध-कतावच्छेदकविषयिताकत्वमिति निष्कर्षः ।

ननु पक्षादौ साध्यासमानाधिकरणधर्मवत्त्वादिज्ञानस्यानुमिति-विरोधितया साध्याभावाभावत्वेन साध्यानवगाहित्वेनस्तस्य साध्या-भावव्याप्यनवगाहित्वेन साध्याभावानुमापकतया च तद्विषये-ऽतिव्याप्तिरित्याशङ्कायामिष्टापत्त्या परिहरति पक्षादाविति । मूलो-क्तसिद्धान्तं दूषयति साध्याभाववदिति । पक्षादाविति । पक्षतावच्छे-दकावच्छिन्ने इत्यर्थः । अनवगाहित्व इति । तत्र तमनवगाह्यापि भ्रमभिन्नत्वस्य तद्वति तत्प्रकारकत्वस्य चावगाहनसम्भवादिति भावः । ननु साध्याभाववति पक्षे साध्याभावप्रकारकमिदं ज्ञानमि-त्याकारकविरोधिविषयकप्रमात्वज्ञानस्य प्रतिबन्धकताया निर्विवा-दतया तद्विषयस्य साध्याभाववत्पक्षघटितप्रमात्वस्य हेत्वाभासता निष्प्रत्यूहैव इत्यत आह अवगाहित्वे त्विति । तद्विषयत्वेनैवेति । पक्षतावच्छेदकादिविशिष्टसाध्याभावाद्यवगाहित्वेनैवेत्यर्थः । एवं-कारेण प्रतिबन्धकतावच्छेदके प्रमात्वघटकेतरांशविषयतानिवेश-

व्यवच्छेदः तद्विशेषे गौरवात् तद्विषयकज्ञानस्यापि प्रतिबन्धकता-प्रयोजकविरोधिविषयताश्रयत्वेन प्रतिबन्धकतया तदसङ्ग्रहाच्चेति भावः । साध्याभाववत्त्वपक्षघटितप्रमात्वविषयकत्वे, अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वसत्त्वेपि मेयत्वविशिष्टव्यभिचारादेरिव तादृशविशिष्टान्तरघटितत्वेन न दोषतासम्भव इति बोध्यम् ।

ननु विरोध्यविषयस्यापि धर्मिणि ग्राह्याभावप्रमात्वविषयकज्ञानस्य शाब्दादौ प्रतिबन्धकतादर्शनादनुमितावपि तत्प्रतिबन्धकत्वमप्याहृतमेव, तदुक्तं मूलकृता—शाब्दादौ तथा दर्शनादित्यत आह प्रमात्वनिश्चयस्येति । प्रतिबन्धकत्वाकल्पनादिति । शाब्दबोधादावपि तत्प्रतिबन्धकत्वानुभवस्य तुल्यन्यायेनासिद्धत्वादिति भावः । ननु साध्याभावज्ञानसत्त्वेपि तदप्रामाण्यग्रहे ऽनुमित्युत्पत्तेरनुमितौ साध्याभावज्ञानं न प्रतिबन्धकमपि तु तत्प्रमात्वग्रह एव इत्यत आह सर्वत्रेति । भ्रमत्वाग्रहः—संशयसाधारणभ्रमत्वज्ञानत्वावच्छिन्नाभावः प्रयोजक इत्यन्वयः । प्रयोजकत्वं चावच्छेदकत्वम् । अत्र हेतूपादानं दृष्टान्तत्वेन । तत्र ज्ञानसामान्यमनुपादाय निश्चयरूपविशेषोपादानव्यवच्छेद्यं स्पष्टयति संशयसाधारणेति । ननु साध्याभावनिश्चयस्य तद्धर्मिकभ्रमत्वग्रहाभावविशिष्टस्य प्रतिबन्धकत्वापेक्षया साध्याभावज्ञानप्रमात्वग्रहस्यैव प्रतिबन्धकत्वमुचितम् इत्याशङ्कां निराकर्तुं प्रतिबन्दिमाह अन्यथेति । प्रयोजकीभवेदिति । यथायोगं कार्य्यजनने कार्य्यप्रतिबन्धे वेति पूरणीयम्, तथाच ,यथाऽऽकांक्षाज्ञानाद्यसत्त्वे तत्प्रमात्वग्रहेपि न शाब्दबोधोत्पत्त्यादिरिति अगृहीताप्रामाण्यकस्यैवाकांक्षाविज्ञानस्य कारणत्वादिकं तथा साध्याभावनिश्चयासत्त्वे तत्प्रमात्वग्रहेपि न साध्यज्ञानप्रतिबन्ध इत्यप्रामाण्यग्रहाभावविशिष्टस्य साध्याभावनिश्चयस्यैव तज्ज्ञानप्रतिबन्धकत्वमिति भावः । ननु शङ्खादौ श्वैत्याभावादिभ्रमे ऽप्रमात्वज्ञानं विनापि श्वैत्याद्यनुमितेरुदयात्र साध्याभावज्ञानस्य साध्यग्रहप्रतिबन्धकतेत्यत आह शङ्खादाविति । विना तदप्रामाण्यग्रहमिति । फलानुरोधेन तत्र भ्रमत्वग्रहस्यैव कल्पनादिति भावः । प्रमात्वेनाज्ञायमानापि अप्रमात्वेनागृह्यमाणा ग्राह्याभावधीः शाब्दबोधादिप्रतिबन्धिकेति भवतामप्यनुमतं विशेषदर्शनत्वेन लिङ्गपरामर्शस्यैव साध्याभावज्ञानपरिभावकतया भवदभिमतत्वात्, तथा च शाब्दबोधा-

दौ तत्प्रतिबन्धकताप्रौव्ये अनुमितिसाधारणानुगतधर्मस्यैव तत्प्रतिबध्यतावच्छेदकत्वात् तत्र तत्र विपरीतज्ञाने भ्रमत्वज्ञानकल्पनया अनुमित्युपपादनमेवोचितम्, अन्यथा शाब्दादिसाधारणविपरीतज्ञानप्रतिबध्यतावच्छेदकगर्भे अनुमित्यन्यत्वस्य निवेशनीयतया अनुमितौ साध्याभावज्ञानप्रमात्वबुद्धेः प्रतिबन्धकत्वान्तरस्य कल्पनीयतया च गौरवात्, अनुमित्यन्यत्वस्य विपरीतज्ञानप्रतिबध्यतावच्छेदकत्वे आश्रयासिद्ध्यादिज्ञानकालेऽनुमित्यापत्तेश्च, पक्षतावच्छेदकादिवैयर्थ्यज्ञानस्य अनुमित्यजनकतया तद्विपरीतज्ञानदशायां तच्छाब्दबुद्ध्यादेरिव तदवच्छिन्नपक्षादिविषयकानुमितेर्भवतोऽप्यनिष्टत्वादित्याह न हीति ॥

(दी०)अथ लाघवेन संशयसाधारणं संसृष्टत्वज्ञानमेव शाब्दानुमित्योः कारणम्, आस्ताञ्च तस्यैव विरोधितया प्रकरणसमो बाधश्च हेत्वाभासोऽसिद्धिरिव परामर्शस्य, विलीयताञ्चाप्रसिद्धसाध्यकमनुमानमिति चेन्न ।

सशयासत्त्वसमये परामर्शोत्पादे सिद्धिसिषाधयिषे विना अनुमित्यनुत्पादप्रसङ्गात्, सति विशेषदर्शने संशयायोगादिति ।

एतेन लाघवात् प्रमात्वेन निर्णीयमानं बाधज्ञानं विरोधीति परास्तम् ।

विपरीतमेव लाघवं, स्फुटतरञ्च तद्भावसाध्ये । तत्र हि गोत्वाद्यप्रकारकं गोत्वाभावादिप्रकारकं ज्ञानं बाधनिश्चयः । तथाच गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वज्ञानाभावो भ्रमत्वग्रहविरहः । बाधग्रहश्च पक्षे गोत्वाद्यप्रकारकं ज्ञानं, तस्य च गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वाद्यप्रकारकं गोत्वाभाववद्विशेष्यकगोत्वाद्यभावप्रकारकत्वप्रकारकज्ञानं प्रमात्वनिश्चय इति । उक्तप्रायश्च तत्तत्कार्यं प्रति प्रतिबन्धकानां कारणानाञ्च प्रमात्वेन निश्चीयमानतया तथात्वापत्तिरिति । न च सति विशेषदर्शने विपरीतनिश्चयोऽकिञ्चित्करः तत्सत्त्वेऽपि विशेषदर्शनेन प्र-

त्यक्षोत्पादादिति वाच्यम् । विशेषदर्शनेन तन्नाशानन्तरमेव प्रत्य-क्षोदयात्, परैरपि क्वचित् प्रत्यक्षविशेष एव विपरीतनिश्चयविशेष-स्यैव तथात्वोपगमाच्च । नहि शाब्दादिबोधेऽपि विशेषादर्शनवि-शिष्टत्वेन स विरोधी, गौरवात् मानाभावाच्च । न वा चाक्षुषादि-प्रत्यक्षे मानसादिविपरीतनिश्चयो विरोधी । उपयुज्यते च क्वचिद्वि-शेषदर्शनमप्रामाण्यग्राहकत्वेन बाधबुद्धेः । नन्वेवं बाधावतारदशायां पक्षे हेतोरग्रहेऽज्ञानलक्षणासिद्धिः, ग्रहे च व्यभिचारधीरेवेति वा-च्यम् । बाधग्रहपरामर्शयोर्भेदात्, अभेदेऽपि पक्षः साध्यव्याप्यहेतु-मान् साध्याभाववांश्च इति ग्रहस्य परस्परोपरागानवगाहिनो व्यभि-चाराविषयत्वात् । एकत्र व्यभिचाराव्यभिचारयोरेकनिश्चयागोचर-त्वात्, पूर्णे च करणे साक्षादनुमित्याविरोधिनो व्यभिचारज्ञाना-देरकिञ्चित्करत्वात् । उक्तश्च साध्यादेः पक्षाद्यवृत्तित्वादिकमपि बाधः । न च, तद्ग्रहेऽपि, व्यभिचारबुद्धिरावश्यकी ।

( गा० ) अथ शाब्दबोधे विपरीतनिश्चयाभावो न हेतुः योग्यता-ज्ञानहेतुतयैवोपपत्तेः, एवं च अनुमितावपि न तस्य हेतुता शाब्दानु-मितिसाधारणपरोक्षानुभवत्वस्य जातिविशेषस्य वा विशेष्ये विशेष-णवत्स्वरूपयोग्यताज्ञानजन्यतावच्छेदकत्वोपगमात्तादृशकारणविरहे-णैवाबाधितार्थानुमित्यनुदयादिति बाधस्य साक्षादनुमितिविरोधि-तया हेत्वाभासताभिधानमसङ्गतमिति शङ्कते अथेति । लाघवेनेति । तदभावग्रहाभावत्वापेक्षया तद्वत्ताज्ञानत्वरूपजनकतावच्छेदकला-घवेन तद्व्द्वेदत्तदभावव्याप्यादिनिश्चयाभावानामपि हेतुत्वाकल्पन-लाघवेन चेत्यर्थः । वाक्यार्थस्य पक्षे साध्यस्य च निश्चयः शाब्दानु-मित्योः पूर्वं नियमतो न सम्भवतीत्यत उक्तं संशयसाधारणमिति । एवकारेण विपरीतनिश्चयाभावस्य व्यवच्छेदः । प्रत्यक्षस्थले अलौ-किकप्रत्यक्षत्वमेव बाधादिधीप्रतिबध्यतावच्छेदकमिति भावः । न च प्रत्यक्षस्थले अलौकिकज्ञानत्वस्य विपरीतज्ञानप्रतिबध्यतावच्छेदक-तयैवोपपत्तेः संसृष्टत्वज्ञानहेतुत्वान्तरकल्पनायामेव गौरवमिति वा-च्यम् । इच्छाया उत्तेजकत्वं प्रत्यक्षस्थले न तु परोक्षस्थले इति पू-

थक् प्रतिबन्धकताया भवतोप्यावश्यकत्वात्, बाधाभावस्य शाब्दयोधादिहेतुतामते शाब्दादिसामग्र्याः प्रत्यक्षादिप्रतिबन्धकतायां योग्यताज्ञानापेक्षया गुरोर्बाधाभावस्य तदभावव्याप्यवत्ताज्ञानाद्यभावस्य च निवेशनीयतया गौरवाच्च । न च शाब्दबोधादौ बाधादिधियोऽप्रतिबन्धकत्वे तद्वत्तासंशयस्य द्वितीयक्षणे स्मरणादिरूपतदभावनिश्चये तदनन्तरं शाब्दबाधापत्तिरिति वाच्यम् । यत्र विषये संशयद्वितीयक्षणे कथञ्चिद्विपरीतनिश्चयः शाब्दादिज्ञानकारणान्तरसमवधानं च तत्रापत्तिवारणाय बाधादिनिश्चयप्रतिबन्धकताया आवश्यकत्वेपि विषयविशेषे लाघवेन योग्यताज्ञानहेतुताया निष्प्रत्यूहता इत्याशयात् । नन्वेवं बाधप्रकरणसमयोर्हेत्वाभासता न स्यादित्यत आह आस्तां चेति । तस्यैव-कारणीभूतस्य सत्प्रत्यक्षज्ञानस्यैव, असिद्धिरिव-स्वरूपासिद्धिरिव, परामर्शस्य-अनुमितिजनकस्य, विरोधितया हेत्वाभास इत्यनुषङ्गेणान्वयः ।

नन्वेवं अप्रसिद्धसाध्यकानुमितिर्विलीयेत कोऽप्यप्रसिद्धा साध्यसंशयासम्भवादित्यत्रेष्टापत्तिमाह विलीयतां चेति । तादृशानुमितेरेकदेशिनामेवानुमतत्वादिति भावः ।

अथ पक्षसाध्ययोः संसर्गज्ञानस्यानुमितिहेतुत्वेऽपि अप्रसिद्धसाध्यविशेष्यकानुमितौ न तस्य हेतुत्वमुपेयम्, न वा बाधज्ञानस्य साक्षादनुमितिप्रतिबन्धकत्वं साध्यविशेष्यकानुमितौ साध्यसिद्धेः प्रतिबन्धकतयैव पक्षे बाधग्रहदशायां तादृशानुमित्यापत्तेरत्यकाशात् इति कथमप्रसिद्धसाध्यकानुमानानुपपत्तिरिति चेन्न ।

अभावसाध्यकस्थल एव साध्यप्रसिद्धिमनपेक्ष्यानुमित्युत्पत्त्या तत्र प्रतियोगिमत्ताज्ञानरूपबाधग्रहस्य साध्यप्रसिद्धिं विनापि सम्भवात् साध्यप्रसिद्धिप्रतिबन्धकतया तादृशबाधग्रहकालेऽनुमित्यापत्तेर्वारयितुमशक्यत्वात् तादृशानुमितिस्वीकारेऽनुमितौ बाधज्ञानस्य साक्षात्प्रतिबन्धकत्वस्यावश्यकत्वात् । एवमत्र पृथिवीतरभेद इत्यादि शाब्दबोधे पृथिवीतरभेदपक्षकधर्मिसाध्यकानुमितौ च रूक्षाद्बाधज्ञानस्य प्रतिबन्धकत्वमकल्पयित्वा बाधज्ञानकाले तादृशशाब्दबोधतादृशानुमित्योर्वारणाय धर्मिणि पृथिवीतरभेदसंसर्गज्ञानस्य तदुभयसंसर्गावगाहिपरोक्षज्ञानकारणताया आवश्य-

च वह्नौ महानसीयत्वस्य पर्वते च वह्नेः संशयात्मकसंसर्गज्ञानात्तादृशानुमितिर्भविष्यतीति वाच्यम्। तथासति विशिष्टविशेषणकानुमितौ विशिष्टसंसर्गज्ञानहेतुत्वे महानसीयवह्निर्नास्तीति बाधग्रहदशायां विशिष्टवन्ह्यादिविशेषणकानुमितिवारणाय बाधग्रहस्य साक्षात्प्रतिबन्धकतास्वीकारापत्तिरिति परास्तम्। यथा महानसीयवह्निमान् पर्वत इति वाक्यात् विशेष्ये विशेषणमिति रीत्या जायमानः शाब्दबोधो अवान्तरवाक्यार्थभूतमहानसीयत्वविशेषितवह्न्यादिबोधं विनापि वह्न्यंशे महानसीयत्वसंशयात्मकात्पर्वते महानसीयत्वविशेष्यतापन्नवह्निकोटिकसंशयरूपयोग्यताज्ञानान्निर्वहति, तथा तादृशसंशयादेवोक्तस्थले महानसीयवह्निमान् पर्वत इत्यनुमितिनिर्वाहात् महानसीयत्वविशिष्टवह्निनिर्णयं विना प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिश्चयरूपकारणाभावान्महानसीयवह्न्यभावभानासम्भवेन नोक्तसंशयसम्भव इति चेत्। शाब्दस्थलेऽप्येषोऽनुयोगः तुल्यः स्यात्।

संशयेति। साध्यसंशयद्वितीयक्षणे यत्र परामर्शोत्पादस्तत्र द्वितीयक्षणे विनश्यदवस्थात् संशयात् अनुमितेरेतन्मतेऽपि निर्वाहात्।

संशयासत्त्वसमय इति। सिद्ध्यात्मकपरामर्शद्वितीयक्षणे यत्रानुमित्सा तत्र सिद्ध्यात्मकसंसृष्टत्वनिश्चयादनुमितेरेतन्मतेऽपि च निर्वाहात्। सिद्धिसिषाधयिषे विनेति। सिद्धिरूपसंसृष्टत्वज्ञानं सिषाधयिषाविरहसहकृतं प्रतिबन्धकमिति तदुपगमनिर्वाहकसिषाधयिषोपादानम्। परामर्शानन्तरोत्पन्नसंशयादेव तत्रैतन्मते अनुमितिर्भविष्यतीति शङ्कां निराकरोति सतीति।

ननु भ्रमत्वाग्रहविशिष्टबाधनिश्चयत्वेन प्रतिबन्धकत्वापेक्षया प्रमात्वनिश्चयविशिष्टबाधज्ञानत्वेन प्रतिबन्धकत्वमेव युक्तं तदभाववति तत्प्रकारकत्वरूपभ्रमत्वापेक्षया तद्वति तत्प्रकारकत्वरूपप्रमात्वग्रहस्यैव लघुत्वात्, त्वन्मते प्रमात्वज्ञाने निश्चयत्वस्येव भवन्मते बाधज्ञाने निश्चयत्वस्य निवेशनीयतया साम्यात्। अबाधांशे प्रमात्वेन निश्चीयमानो बाधसंशयोऽपि बाधनिश्चयकार्यकारी। एवं च बाधग्रहासत्त्वे तत्प्रमात्वनिश्चयसत्त्वेऽनुभूयमानानुमितिरप्युपपद्यते, बाधधीप्रमात्वस्य हेत्वाभासतापि विशेष्यविशेषणभावे विनिगमनाविरहेण प्रमात्वनिश्चयस्यापि प्रतिबन्धकत्वात्। यदि बाधनिश्चया-

विशिष्टतत्प्रमात्वग्रहेऽनुमित्यप्रतिबन्धके तत्प्रमात्वविषयकत्वसत्त्वेनातिप्रसक्ततया तस्य न दोषता, तदा पक्षनिष्ठसाध्याभावादिविषयकत्वस्यापि अप्रामाण्यज्ञानास्कन्दितज्ञानसाधारण्येन तत्प्रतिबन्धकताप्रतिप्रसक्ततया तस्यापि दोषत्वासम्भवः । तत्सम्भवस्तु प्रमितसाध्याभाववत्पक्षादेरेवेति शङ्कां निराकरोति एतेनेत्यादिना । एतेन—अज्ञायमानेपि बाधग्रहे शाब्दमानसादिज्ञानानुत्पादानुभवेन ।

उक्तलाघवमपि नास्तीत्याह विपरीतमेवेति । तदभाववन्निश्चयत्वघटकतत्प्रकारकत्वापेक्षया प्रमात्वनिश्चयत्वघटकस्य तद्वति तत्प्रकारकत्वाभावाप्रकारकत्वस्यातिगुरुतया भ्रमत्वज्ञानाभावस्यावच्छेदकतामतेऽभावद्वयनिवेशाधिक्यस्याकिञ्चित्करत्वादिति भावः । भावसाध्यकस्थले बाधग्रहभ्रमत्वघटकसाध्याभावाभावस्य साध्यात्मकस्य ताद्रूप्येणैव निवेशात् तादृशभ्रमत्वस्य साध्याभाववति साध्याभावप्रकारत्वरूपप्रमात्वापेक्षया लघुत्वेनातिस्फुटं लाघवमित्याह स्फुटतर एवेति । गोत्वाद्यप्रकारकमिति । एतेन वक्ष्यमाणप्रमात्वज्ञानीयनिश्चयत्वापेक्षया बाधग्रहनिश्चयत्वस्य विशेषोऽपि दर्शितः । न च प्रमेयत्वादिना गोत्वप्रकारकनिश्चयमपहाय गोत्वत्वावच्छिन्नाप्रकारकत्वं निवेश्य तथाच अयं गोत्वाभाववान् गोत्वाभावाभाववान् वेति संशयस्य धर्मिणि गोत्वाभावाभाववत्त्वेनैव गोत्वप्रकारकस्याव्यावृत्तिरिति वाच्यम् । तादृशसंशये धर्मिणि गोत्वत्वेन गोत्वस्य नियमतो भानोपगमात्—तेन रूपेण तद्वत्त्वभाने बाधकाभावात् । गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वाद्यप्रकारकेति । आदिपदाद्गोत्वाद्यभाववद्विशेष्यकगोत्वाद्यभावप्रकारकत्वरूपप्रमात्वाभावपरिग्रहः । भ्रमत्वाप्रकारकत्वाभिधानं तु भावद्वयकोटिकसंशयाभ्युपगन्तृमतावलम्बेन । ननु भावरूपसाध्याभावज्ञानस्य प्रतिबन्धकतायां तदभाववति तत्प्रकारकत्वरूपभ्रमत्व—तद्वति तत्प्रकारकत्वरूपप्रमात्वाभावयोः समशरीरतया विनिगमनाविरहेण द्वयोरेव ग्रहो निवेशनीयौ तदपेक्षया च भ्रमत्वाभावरूपप्रामाण्यतो लघुशरीरतद्वति तत्प्रकारकत्वरूपप्रमात्वग्रहस्यावच्छेदकत्वे लाघवम्, भावद्वयकोटिकसंशयानभ्युपगमात्, निश्चयत्वशरीरे प्रमात्वाभावाप्रकारकत्वमेव निवेश्यते न तु प्रमात्वाप्रकारकत्वमिति न तदुभयनिवेशनिबन्धनगौरवमिति शङ्कायां प्रतिवन्दीमाह उक्तप्राये चेति । उक्तप्राये—उक्तकल्पम्, पूर्वमा-

कांक्षाज्ञानहेतुप्रतिहेतुपरामर्शधर्मिकप्रमात्वनिश्चयस्य कारणत्वप्रतिबन्धकत्वं आपादितं न तु प्रमात्वविशिष्टनिश्चयानां तेष मिति प्रायः पदम्। प्रतिबन्धकानां—प्रतिहेतुपरामर्शादीनां, कारणानामाकांक्षाज्ञानपरामर्शादीनाम्। तथात्वापत्तिरिति। यथायोगं प्रतिबन्धकत्वस्य कारणत्वस्य चापत्तिरित्यर्थः। तुल्ययुक्त्या प्रामाण्यनिश्चयेऽपि निश्चितप्रामाण्यकत्वस्य तत्रापि च तथात्वापेक्षया अनवच्छिन्नप्रामाण्यग्रहबाधयोः कार्यग्रहप्रतिबन्धावाधापेक्षिततया स एव न स्यात्, प्रतिबन्धकादिविशेषणपरम्परानवस्था चेति तत्र तत्र प्रामाण्यनिश्चयो यदि नापेक्ष्यते तदा तुल्यं प्रकृतेऽपीति भावः। अगृहीताप्रामाण्यकत्वेन प्रतिबन्धकतामतेऽपि तद्घटकाप्रामाण्यग्रहे अनिश्चिताप्रामाण्यकत्वं विशेषणं तत्र चागृहीताप्रामाण्यकत्वं विशेषणम् इत्येवंक्रमेण विशेषणपरम्परया अनवस्थितिरिति तु नाशंकनीयम्, प्रतिबन्धकीभूतनिश्चयविशेषणागृहीताप्रामाण्यकत्वघटकाप्रामाण्यग्रहेऽनिश्चिताप्रामाण्यकत्वानिवेशात्। तत्राप्रामाण्यनिश्चयदशायां कार्यवारणाय तदप्रामाण्यं निश्चयविशिष्टविपरीतनिश्चयादीनामगृहीताप्रामाण्यकत्वानवच्छिन्नानां प्रतिबन्धकत्वान्तरस्यैव कल्पनीयत्वात्। तादृशाप्रामाण्यनिश्चये च निश्चितप्रामाण्यकत्वाविशेषिताप्रामाण्यग्रहाभावस्य विशेषणत्वोपगमात् तद्विशिष्टनिवेशफलस्य प्रतिबन्धकत्वान्तरकल्पनयोपपादनात् दूरस्थे धर्मिणि अयं स्थाणुरित्यादिनिश्चयानन्तरं करादिरूपविशेषदर्शने सति नायं स्थाणुरित्यादिप्रत्यक्षोत्पत्त्या विशेषदर्शनविशिष्टस्यैव विपरीतनिश्चयस्य प्रतिबन्धकता वाच्या, तथा च परामर्शसत्त्वे विपरीतनिश्चयेनानुमित्यप्रतिबन्धात् तदसत्त्वे च कारणाभावादेवानुमित्यनुत्पत्त्या बाधस्य न हेत्वाभासतेति शंकां निरस्यति न चेत्यादिना। विशेषदर्शनेन तज्ज्ञानान्तरमेवेति। विपरीतनिश्चयानन्तरोत्पन्नविशेषदर्शनाधीनविपरीतनिश्चयनाश सत्येवेत्यर्थः। क्षणमात्रस्यातिसूक्ष्मकालतया तद्विलम्बेन फलोपगमेऽनुभवविरोधाभावात् पूर्वक्षणे भ्रमसत्त्वेऽपि विशेषदर्शनवशात् ये प्रत्यक्षमङ्गीकुर्वन्ति तेषामपि परोक्षज्ञानप्रतिबन्धकतायां विशेषादर्शनवैशिष्ट्यनिवेशो नानुमतः, विपरीतनिश्चये सति विशेषदर्शने शाब्दादिबोधानुपगमादिति बाधस्यानुमितिविरोधित्वं ध्रुवमित्याह परैरिति। प्रत्यक्षविशेष एव—तदिन्द्रियजन्यप्रत्यक्ष एव, विपरीतनिश्चयविशेषस्यैव—

मर्तेपि लौकिकसन्निकर्षादिदोषविशेषात् पक्षे साध्याभाववत्त्वभानं तथापि न व्यभिचारग्रह इत्याहाभेदेपीति। तयोरित्यादिः। इति ग्रहस्येति। इत्याकारकस्यैव तत्त्वबाधग्रहस्येत्यर्थः। परस्परोपरागानवगाहिन इति। हेतौ साध्याभावविशिष्टधर्मिवृत्तित्वस्य साध्याभावविशिष्टे धर्मिणि हेतुमत्त्वस्य चानवगाहिन इत्यर्थः। एतच्च व्यभिचाराविषयकत्वे हेतुगर्भं विशेषणं विशिष्टव्यभिचाराभाने च खण्डशस्तद्घटकनानापदार्थावगाहिनानाज्ञानस्यैव विशकलितसमूहालम्बनस्याप्यनुमित्यविरोधितया बाध. एवानुमितिविरोधीति. भावः। ननु तत्र विशिष्टव्यभिचारज्ञाने किं बाधकमित्यत आह एकत्रेति। एकतिश्चयागोचरत्वादिति। तदुभयमाने निश्चयत्वस्यैवानिर्वाहात्, तदनिर्वाहे च व्याप्तिनिश्चयाभावेनैवानुमित्यनुत्पाददिति भावः। ननु विशिष्टस्य साध्याभावचद्वृत्तित्वादेरिव.तद्धर्मिणि साध्याभाववत्त्वादिना सहितं तद्धर्मिणो हेतुमत्त्वादिकमपि व्यभिचारः विशकलिततदुभयज्ञानादप्यनुमितिप्रतिबन्धस्यानुभविकत्वादियुक्तस्थलेपि व्यभिचारनिबन्धन एवानुमित्यनुत्पाद इत्याशङ्क्याह पूर्वं चेति। तृतीयलिङ्गपरामर्शसमवधाने सति परामर्शाविघटकतयैवानुमितिविरोधिनो व्यभिचारस्वरूपासिद्ध्यादिग्रहस्यानुमित्यनुत्पादनिर्वाहकत्वादित्यर्थः। तथा च तृतीयलिङ्गपरामर्शसमवधाने सति पक्षे साध्याभावग्रहे बाधादेवानुमितिप्रतिबन्ध इति तस्य हेत्वाभासतेति भावः। यादृशबाधग्रहकाले व्यभिचारज्ञानानियमस्तज्ज्ञानस्य व्यभिचारज्ञानसङ्कीर्णतयापि बाधस्य पार्थक्यं निष्प्रत्यूहमित्याह उक्तञ्चेति। न च–नहि, तद्ग्रहे–तादृशबाधग्रहे। व्यभिचारबुद्धिरावश्यकीति। धर्मिणि साध्याभाववत्त्वस्यैव साध्यधर्मवृत्तित्वस्य व्यभिचारघटकत्वादिति भावः॥

( दी० ) यस्त्वनिश्चितप्रामाण्यस्य ज्ञानस्यार्थनिश्चयरूपत्वे प्रामाण्यनिश्चयवैयर्थ्यमतिप्रसङ्गश्च तथाच पक्षे साध्याभावज्ञानस्य निश्चयत्वसम्पत्तयेऽपेक्षणीयस्तत्प्रमात्वनिश्चय एव प्रतिबन्धकः, प्राथमिकत्वादुपजीव्यत्वाच्च, न तु चरमभावि तदधीनं व्यभिचारज्ञानमिति।

तत्तुच्छम् । तस्य प्रतिबन्धकत्वेनाक्लृप्तत्वादगृहीताप्रामाण्यकत्वेनैव निश्चयस्य स्वकार्यकारित्वात्, अन्यथानवस्थानात्, अप्रामाण्यशङ्कानिवर्त्तकत्वेन च क्वचित् प्रामाण्यग्रहोपयोगात् संशयसाधारणस्य व्यभिचारज्ञानस्य विरोधित्वाच्चेति । यत्तूपनीतकाञ्चनमयत्वविशिष्टवह्न्यनुमितिविरोधी व्यधिकरणकाञ्चनमयत्वावच्छिन्नप्रतियोगिताको वह्न्यभावो बाधः । न च विशिष्टसाध्याप्रसिद्ध्या कथं तद्विशिष्टानुमितिः,विशेष्ये विशेषणमित्यादिन्यायेन तत्सम्भवात् । शुद्धसाध्यव्याप्तिग्रहादेव चोपनयसहकारेणाप्रसिद्धविशिष्टसाध्यानुमितिसम्भवात् तदभावो बाधोऽस्तु । तेन रूपेण व्याप्तेरनुपादानाच्च तथाव्यभिचारो न दोषाय,उपनीतसकलभाने चाप्रामाण्यं प्रत्यक्षेऽपि तुल्यम् अनुद्देश्यांशे चानुमितेरप्रामाण्यं न वादिविजयप्रयोजकमिति । तन्न । प्रत्यक्षे हि विना सन्निकर्षप्रभानादुपनीतभानस्य प्रत्यभिज्ञादावानुभविकत्वादुपनयोऽपि सन्निकर्षः कल्प्यते, अनुमितौ च फलासिद्ध्या न सामग्र्यन्तरकल्पना । न खलु वह्निव्याप्यधूमपरामर्शादुपनीतरासभानुमितिरानुभाविकी कस्यापि, अन्यथा पर्वते वह्निसन्देहवतो निश्चितवह्निव्यभिचारकेण अभिधेयत्वादिना पर्वतादौ प्रमेयत्वादिकमनुमिमतोऽपि वह्न्यर्थिनो वह्निमत्त्वनिश्चयान्निष्कम्पप्रवृत्त्यापत्तेरिति ॥

( गा० ) साध्याभावबुद्धेः प्रमात्वस्य व्यभिचारज्ञानोपजीव्यज्ञानविषयतया हेत्वाभासत्वमिति यन्मूलोक्तं तद्दूषयितुमुपन्यस्यति यदिवति । निश्चयरूपत्वे-तत्कार्यकारित्वे, अतिप्रसङ्ग-गृहीताप्रामाण्यकज्ञानस्य तथात्वप्रसङ्गः । तत्प्रमात्वनिश्चय एवेति । विरोध्यविषयकोऽपीति शेषः । प्रतिबन्धक इति । अनुमितेरित्यादिः । प्राथमिकत्वं क्वाचित्कमित्यत आह उपजीव्यत्वादिति । नत्वित्यादिना व्यभिचारज्ञानस्य साक्षादनुमितिप्रतिबन्धकत्वमेव व्यवच्छिन्न व्याप्तिज्ञानप्रतिबन्धकतायामविवादात्, अन्यथा व्यभिचारस्य हेत्वाभासत्वानुपपत्तेः ।

तस्य—पक्षे साध्याभावबुद्धिप्रमात्वनिश्चयस्य । अफलत्वादिति । व्यभिचारज्ञानस्य पक्षातिरिक्ते साध्याभाववद्धेतुमत्तावगाहित्वज्ञानात् यत्रानुमित्यनुत्पादस्तत्र प्रतिबन्धकताऽफलत्वेति भावः । उपजीव्यत्वमपि दूषयति अगृहीतेति । अन्यथा—निश्चितप्रामाण्यकत्वेन तथात्वे । प्रामाण्यग्रहवैयर्थ्यमुद्धरति अप्रामाण्यशङ्केति । क्वचिदिति । यत्र कोट्युपस्थित्यादिरूपकारणसमवधानं तत्रेत्यर्थः । क्वचिदित्यनेन तादृशोपयोगितायामनवस्था नास्तीति सूचितम् । व्यभिचारज्ञानस्य साध्याभावांशे निश्चयत्वापेक्षायां प्रमात्वनिश्चयापेक्षा सैव नास्तीत्यतोऽपि न प्रमात्वनिश्चयोपजीव्यतेत्यत आह संशयेति । मूलोक्तानि कतिपयदूषणान्युद्धृत्य सौन्दडमतमपरिष्कृत्योपन्यस्यति यत्त्विति । बाध इति । असङ्कीर्ण इत्यादिः । किञ्चेत्यादि मूलेनोक्तं दूषणमुद्धरति न चेत्यादिना । विशिष्टसाध्याप्रसिद्ध्या—अनुमितेः पूर्वं काञ्चनमयत्वरूपविशेषणतावच्छेदकविशिष्टवह्निरूपविशेषणाज्ञानेन, कथं तद्विशिष्टानुमितिः—कथं तादृशविशिष्टसाध्यविशेषणकानुमितेः प्रसक्तिः, तथाच कारणबाधादेव तत्र विशिष्टानुमित्यनुत्पादसम्भवाद्बाधोऽकिञ्चित्कर इति भावः ।

, विशेष्ये विशेषणमितीति । अयं भावः । विशिष्टविशेषणकं ज्ञानं द्विविधं—तदुपलक्षितप्रतियोगिकवैशिष्ट्यावगाहि तद्विशिष्टप्रतियोगिकवैशिष्ट्यावगाहि च । आद्ये विशेषणज्ञानासंसर्गाग्रहयोरेवापेक्षा न तु विशेषणतावच्छेदकप्रकारकधियोऽपि, अत एव अवान्तरवाक्यार्थज्ञानं विनैव महावाक्यार्थज्ञानं स्वीकुर्वन्ति इति । न चैवमपि पूर्वं वैशिष्ट्याऽप्रसिद्धौ प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानाभावाद्बाधग्रहो न सम्भवतीति स्वरूपसतो बाधस्याकिञ्चित्करत्वेति वाच्यम् । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य विशिष्टविशेषणज्ञानविधयैव विशिष्टप्रतियोगिविशेषिताभावबुद्धौ हेतुत्वात्काञ्चनमयत्वेन वह्निर्नास्तीत्याकारिकायां स्वातन्त्र्येण प्रतियोगितावच्छेदकतया काञ्चनमयत्वाद्यवगाहिन्यामभावबुद्धौ तदपेक्षाविरहात्, प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वभानमिति नियमस्य व्यधिकरणधर्मावच्छिन्नाभाववादिनोऽननुमतत्वात् पूर्वं कथञ्चिद्विशिष्टसाध्यज्ञानेनापि .बाधग्रहः विशिष्टवैशिष्ट्यविषयकानुमितिकारणान्तरसमवधानं च सम्भवतीत्यपि बोध्यम् ।

ननु विशिष्टज्ञानानपेक्षया कथंचिद्विशिष्टज्ञानसम्पत्त्या बाधग्रहसम्भवे व्यभिचारोपि गृहीत इति तत एवानुमितिर्न भविष्यतीति किं बाधेनेति दूषणमुद्धर्तुं तत्र काञ्चनमयत्वावच्छिन्नवह्न्यभावरूपबाधनादृशाभाववद्वृत्तित्वरूपव्यभिचारग्रहयोः काञ्चनमयत्वविशिष्टवह्न्यनुमितिविरोधित्वाविरोधित्वे दर्शयति शुद्धसाध्येति । अप्रसिद्धविशिष्टसाध्यानुमितीति । पूर्वोज्ञातकाञ्चनमयत्वादिविशिष्टवह्न्यादेरनुमितिसम्भवादित्यर्थः । तदभावः—काञ्चनमयत्वावच्छिन्नवह्न्यभावः । बाधोऽस्तु-विशिष्टसाध्ये साधनीये बाधरूपः प्रकृतहेतुदोषोऽस्तु । विशिष्टसाध्यव्याप्तिग्रहविषयतयेव उपनयादिसहकृतशुद्धसाध्यव्याप्तिग्रहविषयतयापि प्रकृतहेतौ विशिष्टसाध्यवत्त्वभानप्रयोजकतया बाधग्रहदशायां तस्य च तदनुत्पादकतायाः बाधप्रयुक्तत्वात्तादृशबाधग्रहस्य शुद्धसाध्यानुमित्यविरोधित्वेऽपि शुद्धसाध्ये साधनीये तस्य दोषत्वानुपगमे क्षतिविरहादिति भावः। तेन रूपेण-काञ्चनमयत्वादिसहितवह्नित्वादिना, तथा व्यभिचारः काञ्चनमयत्वाद्यवच्छिन्नवह्न्यभाववद्वृत्तित्वम् । न दोषायेति । पक्षातिरिक्तहेत्वधिकरणमात्रे काञ्चनमयत्वाद्यवच्छिन्नवह्न्याद्यभाववत्ताज्ञानेपि पक्षे काञ्चनमयत्वाद्यवच्छिन्नवह्न्याद्यनुमित्युपगमेनानुमितौ साक्षाद्व्यभिचारज्ञानस्य विरोधित्वेपि काञ्चनमयत्वादिसहितवह्नित्वाद्यवच्छिन्नविधेयताकानुमितावेव तथा व्यभिचारधियो विरोधित्वात् काञ्चनमयत्वाद्यवच्छिन्ननिरूपितव्याप्तिज्ञानजन्यानुमितौ काञ्चनमयत्वाद्यंशे विधेयतावच्छेदकताख्यविलक्षणविषयताविरहेण, उक्तव्यभिचारधियोऽविरोधित्वादिति भावः ।

अथ व्यधिकरणकाञ्चनमयत्वाद्यवच्छिन्नवह्न्यभावप्रतीतौ काञ्चनमयत्वमेव प्रतियोगितावच्छेदकतया भासते समानाधिकरणं वह्नित्वादिकं तु प्रतियोगिन्युपलक्षणतयैव भासते तस्य प्रतियोगितानवच्छेदकत्वात् । एवं च काञ्चनमयवह्निमानित्यनुमितौ काञ्चनमयत्ववह्नित्वयोः प्रतियोगितावच्छेदकत्वपर्याप्त्यवगाहिबाधग्रहस्यैव प्रतिबन्धकतया नोक्तबाधज्ञानस्य विरोधितेति कथं स हेत्वाभासः । न चोभयधर्मप्रकारेण साध्यानुमितौ पक्षधर्मांशेऽवच्छेदकत्वमन्यत्र च प्रतियोगितायाः सामानाधिकरण्यावगाहित्वेनैव प्रतिबन्धकतेति वाच्यम् । तथासति काञ्चनमयत्वेन महानसीयवह्निनो-

र्नास्ति धियोऽपि काञ्चनमयवह्निमानित्यनुमितिविरोधित्वापत्तेः । अधिकं त्वित्यादिन्यायेन इतरसामानाधिकरण्यभानस्य प्रतिबन्धकताया-मनभ्युपगमात् । न च एकांशे स्वरूपसम्बन्धरूपस्यापरांशे चानति-रिक्तवृत्तित्वरूपस्यावगाहनं प्रतिबन्धकत्वे तन्त्रम् । ईदृशप्रति-बन्धकतायाः क्वाप्यक्लृप्तत्वात् । तावतापि काञ्चनमयत्वेन वह्नि-त्वाभावसामान्यं नास्तीति ज्ञानस्य काञ्चनमयवह्निमानित्यनुमि-तिविरोधिताया दुर्वारत्वाच्च ।

मैवम् । प्रतियोगिविशेषणतया भासमानधर्मस्यापि समानाधि-करणतया व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वो-पगमेन काञ्चनमयवह्निर्नास्तीत्यादिभ्रम इव काञ्चनमयत्वेन वह्नि-र्नास्तीत्यादिबुद्धावपि काञ्चनमयत्ववह्नित्वयोः प्रतियोगितावच्छे-दकतापर्याप्तिभानानङ्गीकारात् । न च मिलित्वा असमानयोः प्रतियोगिविशेषणतया स्वातन्त्र्येण च भासमानयोरुभयोर्मिलितयोः प्रतियोगितावच्छेदकतापर्याप्तिभानं दुर्घटं, काञ्चनमयो नास्ति व-ह्निर्नास्तीत्यादाविवेति वाच्यम् । एकस्यां प्रतियोगिविषयतायाम-वच्छेदकतया भासमानयोरिव यदुभयधर्मावच्छिन्नप्रतियोगिताक-त्वविषयतयोरभावनिष्ठैकविषयतानिरूपितत्वं तयोरपि मिलितयोः प्रतियोगितावच्छेदकतापर्याप्तिभानोपगमादित्यलं पल्लवितेन ॥

अन्यथा पूर्वोपस्थितसकलभान इत्यादिमूलोक्तमुपनीतभानदू-षणमुद्धरति उपनीतसकलभाने चेति । प्रत्यक्षेऽपि तुल्यमिति । तथा-त्र प्रत्यक्षमात्रस्येवानुमितिमात्रस्यापि किञ्चिदंशेऽप्रमात्वमिष्टमेवेति भावः । तावता च वादिनो न निग्रह इत्याहानुद्देश्यांश इति । वा-दिनो यद्विषयसिद्धिरुद्देश्या तदंशेत्यर्थः । अनुमितेरप्रामाण्यमिति । वादिसम्पादितानुमितेर्भ्रमत्वमित्यर्थः । न वादिविजयप्रयोजकमिति । न वादिकर्मप्रतिवादितया जयप्रयोजकमित्यर्थः । यत्सिद्धिर्वादिन उद्देश्या, तत्साधनपरिपन्थिहेत्वाभासस्यैव निग्रहस्थानत्वादुद्दे-श्यांशे अनुमितेर्भ्रमत्व एव तद्दोषसम्भवादिति भावः । एतत्समाधा-नमपि मूले शङ्काक्रमेणाभिहितमित्यवधेयम् ।

मूलस्थाया अनुमितावुपनीतभानस्याप्रामाणिकत्वोक्तेर्विवरणेन बाधकान्तरदर्शनेन च मतमेतन्निराकरोति तन्नेत्यादिना । प्रत्यक्षेऽपि ज्ञानं यदि विशेषणज्ञानादिमुद्रया स्वविषयभासकं तदानुमितावपि-

तस्य तथात्वे दुर्वारमेव विशिष्टानुभवत्वावच्छिन्नं प्रत्येव वि-शेषणज्ञानादिहेतुतया अनुभवसामान्ये एव तस्य विषयभासकतास-म्भवात्, अतस्तत्र ज्ञानस्य सन्निकर्षविधया तथात्वं व्यवस्थाप-यति प्रत्यक्षे हीति। अनुमित्यादौ यदि नोपनीतभानं तदा प्रत्यक्षेपि मास्तु अविशेषादिति किं ज्ञानस्य सन्निकर्षत्वेनेति प्रतिबन्द्युद्धाराया‍ह उपनीतभानस्येति । उपनीतत्वादिविषयकत्वस्येत्यर्थः । प्रत्यभिज्ञा-दावित्यादिना घटो नास्तीति सुरभि चन्दनमित्यादिप्रत्यक्षपरिग्रहः । उपनयोपीति। ज्ञानमपीत्यर्थः। सन्निकर्षः—स्वविषये मनसः सन्निकर्षः, कल्प्यते इत्यस्य विषयभासकत्वेनेत्यादिः। तद्बलाच्चनोपनीतस्यानु-मितौ भानं प्रत्यक्षत्वस्य सन्निकर्षजन्यतावच्छेदकत्वादिति भावः।

नन्वस्तु उपनायकज्ञानस्य प्रत्यक्षत्व कार्यतावच्छेदकं तथापि विशेषणज्ञानबाधाद्यभावबलादनुमितावनुपनीतं भासतामित्यत आह अनुमिताविति। न सामग्न्यन्तरकल्पनेति। अयं भावः। विशेषभा-सकसामग्रीनिरपेक्षं केवलं बाधाद्यभावसहितं विशेषणज्ञानविधया हेतुभूतं ज्ञानं न विषयभासकमतिप्रसङ्गात्। विशेषभासकसामग्री च प्रत्यक्षानुमित्योरननुगतेति प्रत्यक्षसामग्रीसहितमेव तत्तथा न तु अनुमितिसामग्रीसहितं तादृशस्य तथात्व कल्पकाभावात्। काञ्च-नमयत्वव्याप्यवान् वह्निः काञ्चनमयवह्निव्याप्यवान्पर्वत इत्यादि परामर्शघटितवह्न्यादिभासकानुमितिसामग्रीतोपि वह्न्यादौ काञ्चन-मयत्वादिवैशिष्ट्यबुद्धिरुत्पद्यते इति विशेष्यभासकानुमितिसामग्री-सहितमपि काञ्चनमयत्वादिरूपविशेषणज्ञानादिकं स्वविषयभासकं-मिति चेद्भवतु तादृशमपि तत्र विशेषणज्ञानादिकं तथा वह्निव्याप्यवा-न्पर्वत इत्यादिना काञ्चनमयत्वादिविषयकत्वावच्छिन्नाजनकपरा-मर्शादिसाहितकाञ्चनमयत्वादिज्ञानस्य विषयभासकत्वं तावतापि न सिद्ध्यति सर्वसाधारणं वह्न्यादिभासकसामग्रीत्वं चेत् दुर्वचं सुवचत्वेपि न तेन रूपेण हेतुतेति तेन रूपेण न सह-कारितासम्भव इति फलासिद्धिमेव विवृणोति न खल्विति । ननु काञ्चनमयवह्निमान्पर्वत इत्यादिमानसे तत्तद्विषयोपस्थितिबाध-विशेषाभावादिघटिता या सामग्री विशिष्टविषयकत्वप्रयोजिका सा काञ्चनमयत्वाद्युपस्थितिबाधविशेषाभावादिसहिता वह्न्यादिव्याप्य-वत्तापरामर्शसमवधानकालेप्यक्षतैव तादृशज्ञाने मानसत्वप्रयोजि-

फायामेव सामग्न्यामनुमितिसामग्रीरूपप्रतिबन्धकाभावनिवेशात्त-त्तद्विशिष्टविषयावगाहितावप्रयोजकशरीरे प्रयोजनविरहेण तदनन्तर्गत-त्वात्। न च तादृशसामग्रीविशिष्टविशेषणज्ञानस्य मानसानुमित्योर्नै-करूपेण हेतुतेति कथं तादृशसामग्न्या अनुगतरूपेणोभयत्र विशिष्टवि-षयकत्वप्रयोजकतेति वाच्यम्। प्रत्यक्षनिष्ठोपनायकज्ञानजन्यतायाम-पि अनुमितिसाधारणलौकिकज्ञानत्वस्यैव जन्यतावच्छेदकत्वोपगमेन मानसानुमित्योरेकरूपेण विशेषणज्ञानहेतुत्वानपायात्। न च प्रत्यक्ष-त्वापेक्षया अलघोर्ज्ञानत्वस्योपनायकज्ञानजन्यतावच्छेदकत्वं निर्युक्ति-कं तुल्यशरीरत्वेपि विनिगमनाविरहेण उभयोस्तथात्वस्याप्रत्यूहत्वा-दित्याशङ्क्याऽनुमिताद्युपनीतभान बाधकमाहान्यथेति। अभिधे-यत्वादिनेति। इदमापाततः प्रमेयत्वाद्यनुमितिपूर्वं वह्न्यादेरुपस्थिति-सत्त्वेऽनुमित्यनुव्यवसायदशायां पर्वतादौ मानसवह्न्याद्युपनीतभा-नस्य सर्वमत एव दुर्वारतया वह्न्यार्थिप्रवृत्तेः क्षणिकावलम्बेनाथस्य-कत्वात्। यदा च तदभावस्याप्युपस्थितिस्तदा तस्यापि प्रत्यक्षे नचद्ध-र्मिगततया भानसम्भवेन यथा तन्निश्चयरूपप्रत्यक्ष तथा अनुमिताव-पि तदभावस्य तथा भानेपि न तन्निश्चयरूपानुमितिरिति प्रवृत्तिप्रस-ङ्गे समाधानं तुल्यम्। एवं तद्याप्यवत्ताज्ञानाजन्ये उपस्थितियाधा-भावमात्राधीने तन्निश्चयेऽप्रामाण्यशङ्कासम्भवेन न तदर्थिप्रवृत्ति रित्यपि सममेव।

यत्तु असति अपि बाधाद्यवतारे उपस्थितानां सर्वेषां धर्माणां म, सकलोपस्थितधर्मिषु भानमिति यद्यज्ज्ञानव्यक्तितो यत्र यत्र धर्मिणि यद्यद्धर्मस्योपनीतभानं प्रामाणिकं तत्तज्ज्ञानव्यक्तेरननुगतरू-पेण तत्र तदुपनायकता स्वीकार्या,तथा च फलासाधारणकत्वस्यापि ज्ञा-नस्यानुमितौ साध्यांशे स्वविषयधर्मान्तरभासकत्वमुपेयते इत्य-नुपनीतभानखण्डनम्। तदपि न सम्यक्। एवं सत्युपनीतप्रत्यक्षे बाधा दिबुद्धेः प्रतिबन्धकताविलयप्रसङ्गात्। बाधादिकालीनस्य ज्ञानस्योप-नायकत्वाकल्पनेनैव तदानीमपि उपनीतभानवारणसम्भवात्। पुरुष-विशेषस्य उपनीतविषयविशेषभानेऽनुगतरूपेणोपनायकज्ञानहेतु-त्वसम्भवाच्चेति।

इदं तु बोध्यम्। अनुमित्युनीतभानस्वीकारे वह्न्याद्यवृत्तिकाश्व-नमयत्वादिनेव,तद्वृत्तिमद्दानसीयत्वादिनापि पर्वतादौ वह्न्याद्यनु-

मितेः शुद्धवह्निव्याप्यवत्तापरामर्शतः सम्भवेन तद्विरोधितया समानाधिकरणमहानसीयवह्नित्वाद्यवच्छिन्नाभावरूपबाधस्याप्यसङ्कीर्णदोषता दुर्वारेति वह्निव्याप्यधूमवान्पर्वत इत्यादिपरामर्शान्महानसीयवह्न्यादिबाधावतारादेव न पर्वतादौ भासते इति बाधस्य पृथग्दोषत्वमिति ॥

( चि० ) पक्षधर्म्मताबलेन प्रसिद्धं बाधान्न सिध्यतीति बाधः पृथक् । प्रसिद्धाभाववति पक्षे व्यभिचारान्न तत्सिद्धिरिति चेत्, तर्ह्यसत्प्रसिद्धाभाववति सपक्षे व्यभिचारात् तमपि न साधयेत्, तदज्ञानात्तत्साधनेऽनुमितिरप्रमा स्यात् । अथ पक्षवृत्तेरन्य एव धूमादिः सपक्षे, तर्हि गोत्वपृथिवीत्वद्रव्यत्वादेरप्रसिद्धसास्नाद्यनुमानं न स्यात् सास्नादिप्रत्येकव्यभिचारात् । यदि च साध्यत्वावच्छेदकसास्नात्वादिसामान्यावच्छिन्नप्रतियोगिकाभाववति न गोत्वादिकमिति न व्यभिचारः, तर्हि धूमेऽप्येवं व्यभिचाराभावात् साध्यतावच्छेदकेन प्रकारेणाप्रसिद्धमिव प्रसिद्धमपि साध्यं धूमगोत्वादिकं साधयेत् यदि बाधो न दोष इति वयम् ।

( दी० ) पक्षधर्म्मतावलेनेत्यादि । ननु विशेषतो व्याप्यग्रहान्न तथासिद्धिसम्भावना, सामान्यतः सिद्धौ न विशेषतो बाधो विरोधी भिन्नप्रकारकत्वात् । न च समानविषयत्वमेव विरोधित्वे तन्त्रम् पृथिव्यादिरूपबाधग्रहेऽपि वायू रूपवान्नवेति संशयात् रूपवानित्यनुमितेश्च । न चारूपमेव रूपत्वेन शङ्कितमारोपितं वा तद्विषयः, तादृशशङ्काविरहेऽपि तयोरानुभविकत्वात् । दोषवशाच्चेह श्वेतं द्रव्यमिति भ्रमेऽपि इह पीतः शङ्ख इति प्रत्ययात्, घटपटौ न स्तः दण्डी चैत्रो नास्तीति ग्रहेऽपि घटोऽस्ति चैत्रोऽस्तीत्यवग-

मात्। सलिलद्रव्यपरामर्शाद्बाधितविशेषभानप्रसङ्गश्च विशेषबाधावतारानवतारयोः समानः समानसमाधानश्च ।

(गा०) पक्षधर्मताबलेनेत्यादिमूलोपदर्शितसिद्धान्ते उपाध्यायोक्तदूषणं शङ्कते नन्विति । विशेषतो-महानसीयवह्नित्वादिना, तथासिद्धिः—तादृशविशेषधर्मप्रकारिका सिद्धिः, सामान्यतो-व्यापकतावच्छेदकवह्नित्वादिना, विशेषतो बाधः-महानसीयवह्नित्वावच्छिन्नाभावग्रहः, भिन्नप्रकारकत्वात्—अभावप्रतियोगितावच्छेदकतया ग्राह्यतानवच्छेदकरूपप्रकारावगाहित्वात्, समानप्रकारकत्वस्यैव प्रतिबन्धकतायां तन्त्रत्वात् इति भावः । समानविषयकत्वमेवेति । अभावप्रतियोगितावच्छेदकतया ग्राह्यवृत्तिधर्मावगाहित्वमेवेत्यर्थः । न त्वभावप्रतियोगितया ग्राह्यविषयकत्वमेवेत्यर्थः । वह्निर्नास्तीत्यादिसामान्याभावबुद्धौ महानसीयवह्न्यादेः प्रतियोगितयाऽभाने महानसीयवह्निज्ञानविरोधित्वानुपपत्तेः । न च सामान्यप्रत्यासत्तितः सामान्याभावबुद्धौ सकलप्रतियोगिभाननियतं सामान्यज्ञानसत्त्वेऽपि तत्प्रकारकलौकिकप्रत्यक्षसामग्र्यसत्त्वे सकलसामान्याश्रयभानासम्भवात्, अनुपस्थितव्यक्तीनां विशेषणज्ञानरूपकारणविरहेणाभावांशे प्रतियोगितया प्रकारत्वायोगाच्च । एतत्कारेण समानप्रकारकत्वतन्त्रताव्यवच्छेदः । अनुमितावेव चेत्समानविषयकत्वेन विरोधितोच्यते तत्राह रूपवानित्यनुमितेश्चेति । अरूपं—रूपाभिन्नं, शङ्कितमारोपितं वेति वाकारोऽनास्थायाम् । रूपत्वांशे निर्धर्मितावच्छेदककतदवच्छिन्नविशेषणताकबुद्धौ रूपत्वप्रकारकबुद्धित्वेन तत्संशयनिश्चययोर्द्वयोरेव हेतुत्वात्तयोः संशयानुमित्योरानुभविकत्वादिति । तथा चानयोरत्र रूपविषयत्वस्य स्वीकरणीयतया समानविषयकत्वेन विरोधितामते तदनुपपत्तिरिति भावः । ननु पूर्वं रूपत्वेनारूपज्ञानविरहेऽपि तादृशसंशयादौ विशेष्ये विशेषणमिति रीत्या धर्मिविशेषणतया भासमाने रूपे रूपत्वभानं सम्भवतीत्याशङ्क्य बाधकान्तरमाह—दोषवशादिति । श्वेतं द्रव्यमिति द्रव्यपदं च श्वेतपदस्य धर्मिपरतालाभाय । इह पीतः शङ्ख इति । यद्यपि ग्राह्यशङ्खवृत्तिशुक्लत्वावच्छिन्नाभावग्रहे इह शङ्ख इति पीतत्वादिविषयकज्ञानस्याप्यनुपपत्ति, तथापि

भ्रमस्य साक्षात्कारिज्ञानविरोधिताप्रयोजकपित्तादिदोषजन्यतायाः श्वेत्यप्रकारेण शङ्खग्रहस्य तत्रानुत्पत्त्या शङ्खत्वग्रहे श्वैत्याविषयकत्वलाभाय पीत इति प्रत्ययादिति साक्षात्कारित्वप्रत्ययादित्यर्थः। अत्र शङ्खत्वेनासन्निकृष्टस्योपनीतशङ्खस्य न भानोपगमसम्भवः शङ्खं साक्षात्करोमीत्यनुभवात्। नापि लौकिकसन्निकर्षाश्रयस्य कस्यचिदशङ्खस्य तदानीं तत्राशङ्खत्वसाक्षात्कारसामग्रीसत्त्वेन शङ्खत्वग्रहासम्भवात्। अतस्तत्र शङ्खत्वेन शङ्खस्यैव भानमङ्गीकार्यं तत्रच शुक्लाऽभावग्रहदशायां भवतो न सम्भवतीति भावः॥

ननु तत्रापि पित्तादिना प्रतिबन्धाच्छङ्खादौ श्वैत्याग्रहेणैव इह श्वेतः शङ्ख इत्यादिसाक्षात्कारविरहोपपादनीयनाशे च सति ताद्दशभ्रमसत्त्वेपि, क्षण तादृशसाक्षात्कारोपगमसम्भवाद्दोषविशेषजन्यभ्रमस्य लौकिकप्रत्यक्षप्रतिबन्धकत्व सर्वावादमित्याशङ्क्य बाधकान्तरमाह-घटेति। ग्राह्यपर्याप्तधर्मावच्छिन्नाभावग्रहस्य प्रतिबन्धकत्वोपगमे द्वौ न स्त इत्यत्र परम्परासम्बन्धेन द्वित्वाभावस्य विषयत्वोपगन्तृमते च घटपटौ न स्त इति ग्रहे घटोस्तीति ज्ञानस्य नानुपपत्तिरित्यतो विशिष्टाभावग्रहदशायां विशेष्यप्रतीतिपर्यन्तानुपपत्तिप्रदर्शनम्। यद्यपि विशेष्यवति विशिष्टाभावप्रत्ययस्य विशेषणाभावविषयकत्ववादिनां प्राचां नैयमप्यनुपपत्तिः। वस्तुतः समानप्रकारकत्वेन विरोधितामतेपि दण्डविशिष्टश्चैत्रो नास्तीति ग्रहदशायां दण्डोपलक्षितचैत्रवत्ताप्रत्ययस्य समानप्रकारकस्यानुपपत्तिरित्युपलक्षणीभवत्तद्धर्मप्रकारकप्रतियोगिमत्ताग्रहे तद्धर्मविशिष्टाभावीयप्रतियोगिताविलक्षणतद्वृत्तिधर्मावच्छिन्नप्रतियोगिताविशिष्टविषयकाभावग्रहस्य तद्विशिष्टप्रतियोगिमत्ताग्रहे विलक्षणप्रतियोगितावगाहिविशिष्टाभावग्रहस्य पृथक् प्रतिबन्धकता वाच्या, तथा च समानविषयत्वेन विरोधिनामतेपि तद्वत्ताग्रहसामान्यविरोधितायां विशिष्टाभावीयप्रतियोगिताविलक्षणतद्वृत्तिधर्मावच्छिन्नप्रतियोगित्वावगाहित्व विशिष्टवैशिष्ट्यावगाहिप्रत्ययाविरोधितायां च विशिष्टाभावीयविलक्षणप्रतियोगितावगाहित्व तन्त्रमित्युक्तौ नोक्तदोषावसरः। तथापि तन्मते तद्वत्ताग्रह प्रति वास्तवतद्वृत्तिधर्मावच्छिन्नप्रतियोगितावगाहित्वेन प्रतिबन्धकत्वे पीतो नास्तीति ग्रहे पीतः शङ्खो नास्तीत्यानुमानिकादिप्रतीत्यापत्तिः पीतत्वस्य वस्तुतश्शङ्खानु-

मात्। सलिलद्रव्यपरामर्शाद्बाधितविशेषभानप्रसङ्गश्च विशेषबाधावतारानवतारयोः समानः समानसमाधानश्च।

(गा०) पक्षधर्मताबलेनेत्यादिमूलोपदर्शितसिद्धान्ते उपाध्यायोक्तदूषणं शङ्कते नन्विति। विशेषतो—महानसीयवह्नित्वादिना, तथासिद्धिः—तादृशविशेषधर्मप्रकारिका सिद्धिः, सामान्यतो—व्यापकतावच्छेदकवह्नित्वादिना, विशेषतो बाधः—महानसीयवह्नित्वाद्यवच्छिन्नाभावग्रहः, भिन्नप्रकारकत्वात्—अभावप्रतियोगितावच्छेदकतया ग्राह्यतानवच्छेदकरूपप्रकारावगाहित्वात्, समानप्रकारकत्वस्यैव प्रतिबन्धकतायां तन्त्रत्वात् इति भावः। समानविषयकत्वमेवेति। अभावप्रतियोगितावच्छेदकतया ग्राह्यवृत्तिधर्मावगाहित्वमेवेत्यर्थः। न त्वभावप्रतियोगितया ग्राह्यविषयकत्वमेवेत्यर्थः। वह्निर्नास्तीत्यादिसामान्याभावबुद्धौ महानसीयवह्न्यादेः प्रतियोगितयाऽभाने महानसीयवह्निज्ञानविरोधित्वानुपपत्तेः। न च सामान्यप्रत्यासत्तिः सामान्याभावबुद्धौ सकलप्रतियोगिभाननियतं सामान्यज्ञानसत्त्वेऽपि तत्प्रकारकलौकिकप्रत्यक्षसामग्र्यसत्त्वे सकलसामान्याश्रयभानासम्भवात्, अनुपस्थितव्यक्तीनां विशेषणज्ञानरूपकारणविरहेणाभावांशे प्रतियोगितया प्रकारत्वायोगाच्च। एवकारेण समानप्रकारकत्वतन्त्रताव्यवच्छेदः। अनुमितावेव चेत्समानविषयकत्वेन विरोधितोच्यते तत्राह रूपवानित्यनुमितेश्चेति। अरूपं—रूपभिन्नं, शङ्कमारोपितं चेति वाकारोऽनास्थायाम्। रूपत्वांशे निर्द्धर्मितावच्छेदकतदवच्छिन्नविशेषणताकबुद्धा रूपत्वप्रकारकबुद्धित्वेन तत्संशयनिश्चययोर्द्वयोरेव हेतुत्वात्तयोः संशयानुमित्योरानुभविकत्वादिति। तथा चानाहार्यतया तत्र रूपाद्यविषयत्वस्य स्वीकरणीयतया समानविषयकत्वेन विरोधितामते तदनुपपत्तिरिति भावः। ननु पूर्वं रूपत्वेनारूपज्ञानविरहेऽपि तादृशसंशयादौ विशेष्ये विशेषणमिति रीत्या धर्मिविशेषणतया भासमाने रूपे रूपत्वभानं सम्भवतीत्याशङ्क्य बाधकान्तरमाह—दोषवशादिति। श्वेत द्रव्यमिति द्रव्यपदं च श्वेतपदस्य धर्मिपरतालाभाय। इह पीतः शङ्ख इति। यद्यपि ग्राह्यशङ्खवृत्तिशुक्लत्वावच्छिन्नाभावग्रहे इह शङ्ख इति पीतत्वादिविषयकज्ञानस्याप्यनुपपत्तिः, तथापि

भ्रमस्य साक्षात्कारिज्ञानविरोधिताप्रयोजकपित्तादिदोषजन्यतायाः श्वैत्यप्रकारेण शङ्खग्रहस्य तत्रानुत्पत्त्या शङ्खत्वग्रहे श्वैत्याविषयकत्वलाभाय पीत इति प्रत्ययादिति साक्षात्कारित्वप्रत्ययादित्यर्थः । अत्र शङ्खत्वेनासन्निकृष्टस्योपनीतशङ्खस्य न भानोपगमसम्भवः शङ्खं साक्षात्करोमीत्यनुभवात् । नापि लौकिकसन्निकर्षाश्रयस्य कस्यचिदशङ्खस्य तदानीं तत्राशङ्खत्वसाक्षात्कारसामग्रीसत्त्वेन शङ्खत्वग्रहासम्भवात् । अतस्तत्र शङ्खत्वेन शङ्खस्यैव भानमङ्गीकार्यं तत्रच शुक्लाऽभावग्रहदशायां भवतो न सम्भवतीति भावः ॥

ननु तत्रापि पित्तादिना प्रतिबन्धाच्छङ्खादौ श्वैत्याद्यग्रहेणैव इह श्वेतः शङ्ख इत्यादिसाक्षात्कारविरहोपपत्तौ दोषनाशे च सति तादृशभ्रमसत्त्वेपि, क्षण तादृशसाक्षात्कारोपगमसम्भवाद्दोषविशेषजन्यभ्रमस्य लौकिकप्रत्यक्षप्रतिबन्धकत्वं सविवादमित्याशङ्क्य बाधकान्तरमाह—घटेति । ग्राह्यपर्याप्तधर्मावच्छिन्नाभावग्रहस्य प्रतिबन्धकत्वोपगमे द्वौ न स्त इत्यत्र परम्परासम्बन्धेन द्वित्वाभावस्य विषयत्वोपगन्तृमते च घटपटौ न स्त इति ग्रहे घटोऽस्तीति ज्ञानस्य नानुपपत्तिरित्यतो विशिष्टाभावग्रहदशायां विशेष्यप्रतीतिपर्यन्तानुपपत्तिप्रदर्शनम् । यद्यपि विशेष्यवति विशिष्टाभावप्रत्ययस्य विशेषणाभावविषयकत्ववादिनां प्राचां नेयमप्यनुपपत्तिः । वस्तुतः समानप्रकारकत्वेन विरोधितामतेपि दण्डविशिष्टश्चैत्रो नास्तीति ग्रहदशायां दण्डोपलक्षितचैत्रवत्ताप्रत्ययस्य समानप्रकारकस्यानुपपत्तिरित्युपलक्षणीभवत्तद्धर्मप्रकारकप्रतियोगिमत्ताग्रहे तद्धर्मविशिष्टाभावीयप्रतियोगिताविलक्षणतद्वृत्तिधर्मावच्छिन्नप्रतियोगिताविशिष्टविषयकाभावग्रहस्य तद्विशिष्टप्रतियोगिमत्ताग्रहे विलक्षणप्रतियोगितावगाहिविशिष्टाभावग्रहस्य पृथक् प्रतिबन्धकता वाच्या, तथा च समानविषयत्वेन विरोधितामतेपि तद्वत्ताग्रहसामान्यविरोधितायां विशिष्टाभावीयप्रतियोगिताविलक्षणतद्वृत्तिधर्मावच्छिन्नप्रतियोगित्वावगाहित्व विशिष्टवैशिष्ट्यावगाहिप्रत्ययाविरोधितायां च विशिष्टाभावीयविलक्षणप्रतियोगितावगाहित्वं तन्त्रमित्युक्तौ नोक्तदोषावसरः । तथापि तन्मते तद्वत्ताग्रहं प्रति वास्तवतद्वृत्तिधर्मावच्छिन्नप्रतियोगितावगाहित्वेन प्रतिबन्धकत्वे पीतो नास्तीति ग्रहे पीतः शङ्खो नास्तीत्यानुमानिकादिप्रतीत्यापत्तिः पीतत्वस्य वस्तुतश्शङ्खावृ-

त्तित्वाच्छुक्लत्वस्य शङ्खावृत्तित्वभ्रमदशायां शुक्लो नास्तीति ग्रहेऽपि तादृशप्रतीत्यनुपपत्तिश्चेति तद्वृत्तित्वस्थाने तद्वृत्तितया गृह्यमाणत्वं धर्मविशेषणं देयम्। तथा च कालान्तरीणपुरुषान्तरीणज्ञानव्यावर्तनाय तत्तत्कालपुरुषनिवेशेन महागौरवं दूषणं बोध्यम्। न च समानप्रकारकत्वेन विरोधितामते तत्तद्व्यक्तित्वप्रकारकप्रतियोगिमत्ताग्रहे तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावज्ञानस्य यावत्यः प्रतिबन्धकताः तावत्य एव बाधबुद्धिप्रतिबन्धकाः समानविषयकत्वेन प्रतिबन्धकतामते समानप्रकारकत्वेन प्रतिबन्धकतामते च घटत्वपटत्वादिरूपप्रकारान्तर्भावेण विरोधिताधिक्यमिति गौरवमिति वाच्यम्। समानविषयत्वेन विरोधितामते उक्तक्रमेण ज्ञानव्यक्तिभेदेन प्रतिबन्धकताभेदादतीवगौरवात् वायौ रूपविशेषाभावकूटग्रहदशायां वायौ रूपान्यतत् किमपि समवायेन नास्तीति भ्रमसत्त्वे वायू रूपवान्न वेति संशयादेरनुपपत्तिरपि तन्मते द्रष्टव्या।

ननु समानप्रकारकत्वेन विरोधितामते पर्वते महानसीयवह्निर्नास्तीत्यादिविशेषबाधानवतारदशायां सल्लिङ्गपरामर्शाद्वह्नित्वादिसामान्यधर्मप्रकारेण पर्वतादौ महानसीयवह्न्यादिविषयकभ्रमानुमितिप्रसङ्गः, समानविषयकत्वेन विरोधित्वमते च तत्र तद्भासकेतरबाधादिसत्त्वेऽपि विशेषबाधादेव न तत्र तज्ज्ञानप्रसङ्ग इत्यत आह सदिति। विशेषबाधावतारानवतारयोः समान इति। समानप्रकारकत्वेन विरोधितामते यथा विशेषबाधावतारदशायां तत्प्रसङ्गस्तथा विशेषभासकेतरबाधासत्त्वे विशेषबाधानवतारदशायां तत्प्रसङ्गोऽस्तीत्यर्थः। समानसमाधानञ्चेति। यथा समानविषयकत्वेन विरोधितामते बाधितेतरबाधाद्यसत्त्वे विशेषबाधानवतारे तादृशेतरबाधादिरूपदोषविरहादेव न तादृशभ्रमानुमितिरिति समाधानं तथा समानप्रकारकत्वेन विरोधितामतेऽपि तदेव समानमित्यर्थः। समानप्रकारकत्वेन विरोधितामतेऽपि इतरबाधादितो विशेषरूपेणैव पक्षे बाधितविशेषभानमभ्युपगम्य बाधासङ्करस्य व्यवस्थाप्यतया तन्मते यद्यप्युक्तरीत्या नातिप्रसङ्गवारणसम्भवः तादृशबाधादिरूपदोषस्य सामान्यरूपेण बाधितव्यक्तिविषयकानुमितावहेतुतया तादृशविरहस्य तादृशभ्रमानुमितिवि-

रहप्रयोजकत्वात्; तथापि तन्मते सामान्यरूपेण पक्षे बाधितविशेषानुमित्यप्रसिद्ध्या तत्सामञ्जस्यकल्पनेन न तत्प्रसङ्गः सामान्यरूपेण बाधितविशेषभानस्यानुमितावभावस्तु तादृशप्रत्यक्षसामग्रीविरहप्रयोज्य एवेति॥

(दी०) अत्र वदन्ति—व्यापकतानवच्छेदकमपि रूपं लाघवज्ञानादिसहकारिवशादनुमितौ प्रकारीभवति, यथा जीवनमरणान्यतरप्रतियोगी प्राणित्वादित्यत्र जीवनप्रतियोगित्वम्। अन्यथा जीवित्वे सति गृहासत्त्वस्य हेतोरसिद्ध्या बहिःसत्त्वानुमानायोगात्। एवं क्षित्यादिकर्त्तुरेकत्वमपि। अन्यथा एकोऽनेको वा क्षित्यादिकर्त्तेति सन्देहप्रसङ्गात्, अनुमितेश्च तादृप्येण लघ्वर्थाविषयकत्वे तथाविधानुव्यवसायविरहात्, सति लाघवप्रतिसन्धाने लघ्वर्थपरिच्छेदकत्वमनुमानस्येत्यपि न सिद्ध्येत्। इत्थञ्च विशेषतो जायमानानुमितिं विरुणद्धि बाधः। प्रमितिबाधः पृथक्। सविलङ्गपरामर्शात् कथं भ्रान्तानुमितिर्जायतां न जायेत वा कथं यथार्थेति चेत्।

(गा०) यद्यपि साध्यतावच्छेदकप्रकारेणाप्रसिद्धमिव प्रसिद्धमपि साध्य धूमगोत्वादिकं साधयेदिति मूलालिखनात् साध्यतावच्छेदकवह्नित्वादिप्रकारकाबाधितविशेषसिद्धिविरोधितया बाधस्य हेत्वाभासत्वं मूलकाराभिमतं, तथापि समानविषयकत्वेन विरोधितायाः विचारासहत्वात्तामुपेक्ष्य सहकारिविशेषवशाद्व्यापकतानवच्छेदकप्रकारेणापि साध्यस्यानुमितौ भानमुपगम्य समाधत्ते अत्र वदन्तीति। लाघवज्ञानादीत्यादिना पक्षविशेषबाधपरिग्रहः। प्रकारीभवतीति। साध्यांश इत्यादि।

अत्र अपसिद्धान्तशङ्कामपनिनीषुर्मणिकारसम्मतिमादर्शयितुं यत्र तस्यापि व्यापकतानवच्छेदकप्रकारकत्वमनुमतं तथाविधं दृष्टान्तद्वयमाह यथेत्यादिना। इत्यत्रेति। व्यतिरेकिग्रन्थे मणिकारोपदर्शितबहिःसत्त्वसाधकलिङ्गविशेषणासिद्धिपरीहारफलकानुमान इति शेषः। जीवनप्रतियोगित्वमिति। भावप्रधान, व्यापकतानवच्छेदकमपि सा-

ध्यांशे लाघवज्ञानबलात् अन्यतरप्रतियोगित्वांशे प्रकारीभवतीत्यनुषङ्गादिनान्वयः। ननु तत्रान्यतरप्रतियोगितात्वरूपव्यापकतावच्छेदकप्रकारेणैव लाघवज्ञानबलाद्विशेषस्य जीवनप्रतियोगित्वस्य सिद्धिर्न तु तादृप्येण। न चैवं लाघवज्ञानस्यानुपयोगः, परामर्शस्यैव सामान्यरूपेणाबाधितविशेषानुमापकत्वसम्भवादिति वाच्यम्। अपरविशेषमाननिवृत्तौ लाघवज्ञानोपयोगात्। यदि च बाधितविशेषभासकलाघवज्ञानरूपदोषविरहादेवाऽबाधितविशेषधर्मिकलाघवज्ञानदशायां तादृशविशेषाभावसम्भवादबाधितविषयकलाघवज्ञानस्योपयोगिता न घटते भवतु तदा तदनुपयोग्येव बाधितधर्मिकलाघवज्ञानमेव तद्भाननियामकतया अबाधितभानप्रतिबन्धकतया च 'उपयुक्तमित्यत आह अन्यथेति। बहिःसत्त्वानुमानायोगादिति। यत्र ज्योतिःशास्त्रावधारितनियमात् समयविशेषजन्यत्वादिरूपाल्लिङ्गात् देवदत्तस्य शतवर्षजीविता प्रथममवधारिता अनन्तरं च भूयो भूयो गृहे एव दृष्ट्वा शतवर्षजीवी गृह एवेति नियमोऽप्यवधारितः ततश्च कदाचिद्योग्यानुपलब्ध्या गृहे तदभावं निश्चित्य प्रतिसन्धत्ते देवदत्तस्य शतवर्षजीवित्वे तदुपपादकं बहिःसत्त्वमावश्यकमिति गृह एवेति नियमो न सम्भवति तादृशनियमसत्त्वे च मरणस्यावश्यकतया तादृशजीवित्वनिश्चायकनियमो न सम्भवति इति तादृशनियमग्रहोऽप्रमा किं वा एतादृशनियमग्रह एवेति देवदत्तो जीवति मृतो वेति तत्र मरणापेक्षया भावरूपे जीवित्वे लाघवग्रहे सति जीवित्वोपपादकबहिःसत्त्वसिद्धेरनुमानताऽनिर्वाहादित्यर्थः। तथा सति संशयकरणकार्थापत्तेर्निराकरणं नोपपद्यते इति भावः। ननु तत्र सामान्यरूपेणैव जीवित्वसिद्ध्यैव विशेषसंशयनिवृत्त्या मानसी हेतुसिद्धिरित्यपि मणिकाराभिप्रायः सम्भवतीति समानविषयकत्वप्रयुक्तविरोधित्वाभिप्रायकतयापि तन्मूलव्याख्यासम्भवादनुमितेर्व्यापकतावच्छेदकप्रकारकत्वस्य मणिकाराभिमतत्वं न लभ्यत इत्यनुशयेन दृष्टान्तान्तरानुसरणा एवमिति। क्षितिकर्तुरेकत्वमपीति। ईश्वरानुमाने इति शेषः। प्रकारीभवतीत्यनुषङ्गादिना अन्वयः। तत्रैकत्वस्याप्रकारत्वेनेश्वरैकत्वानेकत्वयोर्नित्यं संशय इति पूर्वपक्षयित्वा लाघवस्य प्रमाणसहकारितया सिद्धान्तं प्रणयतो मणिकृतोऽनुमतां युक्तिमाहान्यथेति। क्षितिकर्तुरेकत्वं च न क्षितिकर्तृनिष्ठभेदाप्रति-

योगित्वं क्षितिकर्तृभिन्ने तदप्रसिद्धेः । क्षितिकर्त्तर्येव च लाघवज्ञानाद् विना तदसिद्धेः अनुपस्थिते तत्र लाघवज्ञानासम्भवात् । न च द्व्यणुकादिकर्त्तरि अङ्कुरादिकर्त्रभेद एव क्षित्यादिकर्तुरेकत्व स चाङ्कुरादिकर्त्तरि सिद्धे तत्रैव प्रसिद्ध्यतीत्युपस्थितेस्तत्र लाघवज्ञानसम्भवेन तत्सहकृतद्व्यणुकादिपक्षकसकर्तृकत्वाद्यनुमानात् द्व्यणुककर्त्रादावङ्कुरादिकर्त्रभेदरूप तत्कर्त्रैकत्वं सिद्ध्यतीति वाच्यम् । कार्यत्वादिलिङ्गेनाङ्कुरादौ विशिष्य सकर्तृकत्वस्य प्रथमतः सिद्धावपि प्रत्येकमङ्कुरादावुभयकर्तृकत्वसंशयसम्भवेन तत्कर्तृभिन्नभेदाप्रतियोगित्वप्रसिद्ध्यसम्भवात् । किन्तु आत्मानात्मोभयावृत्तिद्व्यसमानाधिकरणद्वित्वशून्यत्वमेव तत् , तादृशं च द्वित्वं आत्मेतरद्रव्यद्वये प्रसिद्धं तच्छून्यत्वं च गुणादावपीति । ननु लाघवज्ञानात् सामान्येनैव रूपेण लध्वर्थविषयिणी अनुमितिरस्तु न तु व्यापकतानवच्छेदकधर्मेण लध्वर्थविपरीतसंशयं च लाघवधीरेव निवर्तयिष्यतीत्याशङ्क्य युक्त्यन्तरमाह अनुमितेश्चेति । तादृश्येणेति । लाघवधीविषयतावच्छेदकमहानसीयवह्नित्वादिरूपेणेत्यर्थः । तथाविधानुव्यवसायविरहात्—महानसीयवह्निमनुमिनोमीत्यनुव्यवसायासम्भवात् । न सिद्ध्येदिति । वह्निमनुमिनोमीत्यादिप्रतीतेर्वह्निविषयत्वादिमात्रसाधकतया विशेषतो महानसीयवन्ह्यादिविषयकत्वसाधकप्रतीतिविरहादिति भावः । भवतु लाघवज्ञानादिवशाद्व्यापकतानवच्छेदकप्रकारेण साध्यानुमितिस्तावता किमायातमित्याकाङ्क्षायामाह इत्थं चेति । महानसीयवन्हौ लाघवमित्यादिलाघवज्ञानसहकृताद्वन्हिव्याप्यवान् पर्वत इत्यादिपरामर्शात् महानसीयवन्ह्यादिबाधग्रहदशायामिव तदग्रहदशायामपि पर्वतो महानसीयवह्निमानित्यनुमितिः स्याद्यदि नासौ प्रतिबन्धको भवेदिति भावः पृथग्दोष इत्यर्थः । शङ्कते सल्लिङ्गपरामर्शादिति । कथं भ्रमानुमितिरिति । दोषविरहादिति भावः । न जायेत वा कथं यथार्थेति । अनुमितिरित्यनुषज्यते । गुणरूपत्कारणसत्त्वादिति भावः ॥

( चिं० ) साध्याभाववन्मात्रसहचारो न व्यभिचारः साध्यप्रागभावध्वंसवद्वृत्तित्वेन व्यभिचारितया पृथिवीत्वादिना गन्धादेः द्रव्यत्वादिना गुणस्यानुमा-

नभङ्गप्रसङ्गात्, किन्तु साध्यात्यन्ताभाववद्गामित्वम्। एवञ्च स प्रागभावप्रध्वंसावच्छिन्नतदाश्रये तत्प्रतियोगिसाधने पक्षे व्यभिचारो नेति बाधो दूषणम्।

अथावच्छेद्ये सिद्धसाधनम् अवच्छेदके हेत्वसिद्धिः विशिष्टश्च नान्यदिति चेत्। तर्हि प्रागभावप्रध्वंसप्रतियोगिनोरेकवृत्तित्वेनैकसमयतापि स्यात्।

अथ यत्समयावच्छेदेन तत्र प्रागभावः प्रध्वंसो वा न तत्समयावच्छेदेन प्रतियोगीति चेत्। तर्हि तदवच्छेदेन प्रतियोगिसाधने सिद्धसाधनं किन्तु बाध एव। अन्यथा भावात्यन्ताभावयोरप्यवृत्तित्वभङ्गः एकवृत्तित्वात्। अवच्छेदकभेदेन वृत्तिरिहापि तुल्या, तत्र देशभेदोऽवच्छेदकोऽत्र तु समयभेद इति। असिद्धेरपि बाध एवोपजीव्यः॥ न चैवमुपजीव्यत्वाद्बाधवत् सिद्धसाधनमपि पृथक्, उपजीव्यत्वेऽपि स्वतोऽदूषकत्वात्। नहि साध्यज्ञानं तद्बुद्धिविरोधि, धारावाहिकज्ञानोदयात्। नाप्यनुमितिविरोधि, अनुमित्सया प्रत्यक्षसिद्धेऽप्यनुमानदर्शनात्। तदुक्तं 'प्रत्यक्षदृष्टमप्यनुमानेन बुभुत्सन्ते तर्करसिकाः' इति। श्रवणानन्तरं मननदर्शनाच्च। तस्मात् सिद्धिमात्रार्थिनः सिद्धौ न तदिच्छा, सिद्धिविशेषार्थिनः सास्तीति तस्यानुमितिरेव। एवञ्च सिषाधयिषितपक्षविघटनद्वारा सिद्धसाधनं दूषणं न स्वतः।

(दी०) बाधानवतारे बाधितार्थलाघवज्ञानाद्दोषादेव। तथा सामान्यतोदृष्टाचदितरभसिद्धाशेषविशेषबाधसहकृतात् शिष्यमाणमुसिद्धमकारिकानुमितिर्जायते, यथा भोजनमाध्यकपीनत्वा-

दिवासन्ध्याभोजनबाधे रात्रिभोजनप्रकारिका । एवं द्रव्यवृत्तित्वसाधिका गुणत्वादिच्छायां दिगन्तद्रव्यवृत्तित्ववाधे प्रसिद्धमनोवृत्तित्वानुमितिर्जायमाना मनोवृत्तित्वाभावप्रमया बाध्यत इति विशेषबाधो दोषः । किन्तु साध्येत्यादिक्रमापातः ।

वस्तुतस्तु प्रतियोग्यसमानाधिकरणसम्बन्धविशेषावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वं व्यभिचारः । स्वप्रागभावेत्यादिकं स्पष्टत्वेनोक्तम् । तत्र तदानीं तदत्यन्ताभावस्यापि व्युत्पादितत्वात् । अत एवोत्पत्तिकालावच्छिन्ने घटे पृथिवीत्वादिना रूपादिसाधने बाधो निराबाधं पदमादधाति । एवं साध्यवत्तानवच्छेदकदेशावच्छिन्नस्य पक्षत्वेऽपि बाधो बोध्यः ।

(गा०) उभयत्रैकमुत्तरमाह बाधानवतार इति । असल्लिङ्गपरामर्शाभावेऽपि बाधानवतारस्तदुक्तहस्तवयाधितार्थविषयकलाघवज्ञानरूपाहार्याद्धेतोरेव भ्रान्तानुमितिविबाधग्रहरूपोत्तेजकाभावविशिष्टताहशदोषरूपप्रतिबन्धकसत्वात्प्रमानुमित्यनुत्पादश्चोपपद्यते इत्यर्थः । यद्यपि भ्रमरूपपरामर्शविरहेऽपि ग्राह्याभाववद्विशेष्यकव्याप्यवत्ताज्ञानरूपसल्लिङ्गपरामर्शस्तत्राक्षत एव, तथापि तन्मात्राच्च पर्वतादौ महानसीयवन्ह्यादिमानमिति लाघवज्ञानस्य दोषताया आवश्यकत्वे तस्य तथात्वमप्रामाणिकम् । न च लाघवज्ञानं विनापि महानसीयवह्निव्याप्यवान् पर्वत इत्यादि परामर्शाद्भ्रमानुमित्युत्पत्त्या तादृशपरामर्शस्यापि दोषत्वमावश्यकमिति वाच्यम् । सर्वसाधारणपरामर्शत्वस्यैकस्याभावात् पर्वतविशेष्यकमहानसीयवह्न्यनुमितौ तद्विशेष्यकमहानसीयवह्नित्वावच्छिन्ननिरूपितव्याप्तिविशिष्टहेतुमत्तापरामर्शस्य हेतुत्वेऽपि महानसीयवह्न्यभाववद्विशेष्यकशुद्धवह्निव्याप्यवत्ताज्ञानत्वेन हेतुत्वाकल्पनात् परामर्शलाघवज्ञानयोर्जन्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशाल्लाघवज्ञानजन्यानुमितौ महानसीयवह्निव्याप्यवत्तापरामर्शस्य तज्जन्यानुमितौ च लाघवज्ञानस्य न व्यभिचारः ।

केचित्तु लाघवज्ञानोपनीतमहानसीयत्वादौ न विधेयतावच्छेद-

कतारूपविलक्षणविषयता स्वीक्रियते अपि तु प्रकारतामात्रं पर्वतो वह्निमानित्यादिसिद्धिदशायां तादृशानुमितिर्न जायत एव महानसीयवह्निव्याप्यत्वज्ञानजन्यानुमितौ च महानसीयत्वसहित वह्नित्वमेव विधेयतावच्छेदकमिति कार्य्यवैचित्र्यान्न परस्परं व्यभिचार इति ।

तन्न । लाघवज्ञानादधिकविषयकानुमितेः साध्यतावच्छेदकावच्छिन्नप्रकारकसिद्धिप्रतिबध्यत्वे देवदत्ते जीवनमरणान्यतरप्रतियोगित्वसामान्यनिश्चयदशायां लाघवज्ञानाज्जीवित्वस्य विशेषतोऽसिद्धया वह्निस्सत्त्वानुमानानुपपत्तेः। तादृशसिद्ध्यभावघटितलाघवज्ञानसहकृतसामान्यधर्मावच्छिन्नव्याप्यत्वज्ञानघटितसामग्र्या भिन्नविषयकप्रत्यक्षादौ प्रतिबन्धकताधिक्य प्रामाणिकत्वान्न दोषायेति सङ्क्षेपः

वह्निव्याप्यधूमवान्पर्वत इत्यादिपरामर्शात् महानसीयवह्नौ लाघवमित्यादिलाघवज्ञानदशायां महानसीयवह्निभिन्नवन्ह्यभाववानित्याद्याकारबाधग्रहदशायां च पर्वतादौ बाधितमहानसीयवह्न्याद्यनुमितिर्बाधानवतारदशायां जायते न तु तदवतारदशाया इति बाधोऽसङ्कीर्णतया हेत्वाभासः सामान्यधर्मावच्छिन्नसाध्यकानुमितौ विशेषव्यभिचारस्यादोषत्वादिति मणिकृत. ।

अत्रोपाध्यायाः । लाघवज्ञानादिसत्वेपि व्यापकतावच्छेदकतया गृहीतेनैव रूपेणानुमितिरिति महानसीयवह्नित्वादिना न महानसीयवन्ह्यनुमितिर्जायते अपि तु शुद्धवह्नित्वादिनैव, तत्र च महानसीयवन्ह्यभावधीर्न विरोधिनी द्वित्वावच्छिन्नाभावनिश्चयदशायामपि प्रत्येकं संशयादेरनुभवसिद्धतया ग्राह्यतावच्छेदकावच्छिन्नाभावनिश्चयस्यैव विशिष्टधीविरोधित्वादित्यतो न विशेषबाधस्य दोषतासम्भव । न च बाधबुद्धेः प्रतिबन्धकतायां समानप्रकारकत्वस्य तन्त्रत्वे लाघवज्ञानादिजन्यमहानसीयवन्ह्याद्यनुमितिर्यदि शुद्धवह्नित्वादिनैव तद्वगाहते तदा तदुत्तरं महानसीयवह्निमान् वा पर्वत इति संशयः स्यादिति लब्धत्वंभासकमपि लाघवज्ञानमनुपयुक्तं स्यादिति समानविषयकत्वेनैव बाधबुद्धेर्विरोधित्व अनुमितौ विशेषरूपेण लब्धविषयकत्व वा आवश्यकमिति उभयथैव विशेषबाधो हेत्वाभासीभवेदिति वाच्यम् । लाघवज्ञानस्यैव तादृशसंशयविरोधित्वाल्लाघवज्ञानजन्यानुमितिनाशानन्तरमपि क्षण संशयोपगमे क्षतिविरहात् ।

अत्र नव्याः । लाघवज्ञाननाशे लाघवज्ञानजन्यानुमितिसत्त्वेपि

यद्युक्तसंशयः स्वीक्रियते तदा लाघवज्ञानस्य लध्वर्थभासकत्व-मेवोच्छिद्येत तज्जन्यानुमितौ लध्वर्थविषयतया व्यर्थत्वात्। न च तस्य फलान्तरासत्त्वेपि लध्वर्थविषयकत्वेनानुमितेरनुव्यवसायाल्लध्वर्थविषयकत्वं दुरपन्हवमिति वाच्यम्। यतो वह्निमानित्यनुमितेरनुव्यवसायस्य वन्हिमनुमिनोमीत्याकारकत्वेनैव न तु महानसीयवह्निमनुमिनोमीत्याकारकत्वेनेति तस्य तदवगाहितया एवासिद्धेः। एवं महानसीयवन्हौ लाघवज्ञानसत्त्वे तदसत्त्वदशायामिव सल्लिङ्गपरामर्शात् प्रमानुमितिः स्यात् इति लाघवज्ञानस्य प्रमानुमितिप्रतिबन्धकत्वमुभयमत एवावश्यकम्। तत्र चोपाध्यायमते पर्वतीयवह्नौ महानसीयवह्नौ च लाघवमित्येतादृशलाघवज्ञानदशायां पर्वते पर्वतीयवन्ह्यनुमितिनिर्वाहाय बाधितार्थविषयकलाघवज्ञाने अबाधितार्थविषयकलाघवज्ञानस्योत्तेजकता वाच्या, तथा च पर्वतचत्वरादिविशेष्यकपर्वतीयचत्वरीयवन्ह्यादिविषयकानुमितित्वेन प्रतिबध्यत्वं पर्वतीयचत्वरीयवह्न्यादिधर्मिकलाघवज्ञानविरहविशिष्टमहानसीयवह्न्यादिधर्मिकलाघवज्ञानत्वेन प्रतिबन्धकत्वमुपेयम् इत्येकैकविधलाघवज्ञानप्रतिबन्धकत्वस्य पक्षविधेयभेदेनानन्त्यम्। नव्यमते च वह्नित्वपर्याप्तविधेयतावच्छेदकताकानुमितित्वं बाधितवह्निधर्मिकलाघवज्ञानस्य प्रतिबध्यतावच्छेदकं पर्वतीयवह्नौ लाघवज्ञानात् पर्वतादौ पर्वतीयवह्नित्वेनैवानुमित्युत्पादात् तस्याः शुद्धवह्नित्वावच्छिन्नाविषयकतया लाघवज्ञानस्योत्तेजकत्वमन्तरेणैव निर्वाहादिति न पक्षभेदेन प्रतिबन्धकताभेदः। वह्नित्वादौ विधेयतावच्छेदकत्वपर्याप्तिनिवेशश्चोपाध्यायमतेऽप्यावश्यकः, अन्यथा पर्वतीयवह्न्यादिमान् पर्वत इत्यादि परामर्शान्महानसीयवह्नौ लाघवज्ञानदशायां पर्वतादौ पर्वतीयवह्न्यनुमितेरनिर्वाहात्।

अथ पर्वतादौ महानसीयवन्ह्यादिबाधग्रहदशायां तद्धर्मिकलाघवधीसत्त्वेपि तत्र पर्वतीयवन्ह्यादेरेवानुमितिर्नव्यमत इति तादृशबाधग्रहस्य लाघवज्ञानप्रतिबन्धकतायामुत्तेजकत्वमावश्यकं, तथा च पर्वतादौ महानसीयवह्नेर्बाधग्रहेपि उक्तलाघवज्ञानसत्त्वेपि चत्वरादौ चत्वरीयवन्ह्यनुमित्युदयात्तत्तद्धर्मिकतद्बाधितवह्न्याद्यनुमितौ तत्तद्धर्मिकमहानसीयवह्निबाधग्रहमुत्तेजकीकृत्य पक्षभेदेन लाघवज्ञानस्य विभिन्नप्रतिबन्धकताकल्पनं नव्यानामप्यावश्यकमिति चेत्।

/

सत्यम्। एवमपि पर्वतादिविशेष्यकशुद्धवह्नित्वावच्छिन्नविधेयताकानुमितित्वं बाधितवह्निधर्मिकलाघवज्ञानप्रतिबध्यतावच्छेदकं नव्यमते, उपाध्यायमते तु पर्वतादिधर्मिकशुद्धवह्नित्वावच्छिन्नपर्वतीयवह्न्याद्यनुमितित्वम्, अन्यथा पर्वतादौ महानसीयवह्न्याद्यनुमितेरपि तद्धर्मिकलाघवज्ञानादनुपपत्तिरिति प्रतिबध्यतावच्छेदकलाघवान्नव्यमतमेव साधीयः। न च महानसीयवह्न्यादिधर्मिकप्रतिबन्धकतायां तज्ज्ञानप्रतिबन्धकबाधतदभावव्याप्यवत्ताज्ञानतदभावावच्छेदकधर्मदर्शनानामनेकेषां नव्यमते उत्तेजकतया गौरवम्, उपाध्यायमते च पर्वतीयवह्न्यादिधर्मिकलाघवज्ञानमात्रस्य तत्रोत्तेजकत्वं तादृशबाधादिग्रहदशायामपि पर्वतादौ महानसीयवह्न्यादेरेव वह्नित्वादिना भानसम्भवेन पर्वतीयवह्न्यादेस्तत्र भानानुपगमेन तादृशबाधादिबुद्धेरनुत्तेजकत्वमिति वाच्यम्। बाधादिबुद्धीनां महानसीयवह्न्यादिमत्ताग्रहविरोधित्वेनानुगमय्य उत्तेजकत्वसम्भवात्। नव्यमतेऽपि तेषां पृथगुत्तेजकत्वविरहात् उपाध्यायमते पर्वतीयवह्न्यादिधर्मिकलाघवज्ञानादेर्यत्रोत्तेजकता तत्र पर्वतीयवह्न्यन्यवह्न्यभाववानिति बाधादिबुद्धेरपि तद्दशायां पर्वतीयवह्न्यादिभाननिर्वाहार्थमुत्तेजकता वाच्यतया गौरवाच्च। लाघवज्ञानप्रतिबन्धकतायां बाधविशेषस्योत्तेजकत्वानुपगमे लघ्वर्थबाधग्रहदशायां लाघवज्ञानसत्त्वे अनुमितिरेव न स्यात् प्रमाया भ्रमस्य च प्रतिबन्धकत्वसत्त्वादिति बाधग्रहाभाववैशिष्ट्यं प्रतिबन्धके निवेशितम्। बाधग्रहश्च विरोधिग्रहमात्रोपलक्षणं तेषां च महानसीयवह्न्यादिमत्ताग्रहविरोधित्वेनैकाभावः प्रातिस्विकरूपेणाभावकूटं वा निविशतामित्यन्यदेतत्। प्रतिबध्यतावच्छेदकं च न यथार्थवह्न्यनुमितित्वं यथार्थस्य तद्वति तत्प्रकारकत्वस्य तत्तद्वह्निव्यक्तिभेदेन भिन्नत्वात्। नापि वह्न्यन्तरानुमितित्वं वह्निद्वये लाघवज्ञानसत्त्वे परस्परप्रतिबन्धनानुमित्युच्छेदप्रसङ्गात्। एकलाघवज्ञानेऽपरलाघवज्ञानानामुत्तेजकत्वे गौरवात्। किन्तु शुद्धवह्नित्वावच्छिन्नविधेयकानुमितित्वमेव अतोऽपि महानसीयवह्नित्वादिभानसिद्धिरिति दिक्।

इतरबाधसहकृतसामान्यतोदृष्टस्यापि व्यापकतानवच्छेदकप्रकारकानुमितिजनकतया उक्तत्वात्तज्जन्यविशेषधर्मप्रकारकानुमितिविरोधित्वेऽपि बाधस्य हेत्वाभासत्वं व्यवस्थापयति तथेति। सामा-

न्यतोऽदृष्टात्–सामान्यधर्मावच्छिन्नव्याप्यवत्ताज्ञानात्, तदितरप्रसिद्धाशेषविशेषबाधसहकृतादिति । यद्विशेषरूपावच्छिन्नं सामान्यं प्रसिद्धं तदेकतररूपाभिन्नापरसकलरूपावच्छिन्नस्य बाधसहकृतादित्यर्थः । शिष्यमाणप्रसिद्धप्रकारिकेति । यद्विशेषरूपावच्छिन्नस्य बाधो न गृहीतस्तद्धर्मावच्छिन्नप्रसिद्धप्रकारिकेत्यर्थः । तदानीमप्रतीतस्यात्मवृत्तित्वस्य बाधग्रहेऽपि गुणत्वादिना दिगन्तद्रव्यवृत्तित्वस्य बाधग्रहे विशेषतो मनोवृत्तित्वानुमित्युत्पत्त्या सहकारिशरीरे प्रसिद्धिनिवेशः। संध्याभोजनप्रसिद्धिदशायां दिवाभोजनमात्रबाधग्रहात् विशेषतो रात्रिभोजित्वस्य पीनत्वेनासिद्ध्या साकल्यनिवेशः । अज्ञातसुरभिगन्धस्य सुरभिविजातीयगन्धबाधग्रहात् गृहीतपृथिवीत्वेन सुरभिगन्धत्वावच्छिन्नप्रकारकानुमित्यनुत्पत्त्या प्रसिद्धेः सहकारितालाभाय शिष्यमाणे प्रसिद्धिविशेषणमुपात्तम् ।

अत्रेदं बोध्यम् । यादृशसामग्रीबलादात्मवृत्तित्वप्रसिद्धिस्थले तद्बाधग्रहेऽपि मनोवृत्तित्वानुमितिस्तादृशीसामग्री अगृहीतबाधस्यात्मवृत्तित्वस्य प्रसिद्धिदशायामपि तत्कथं तदानीं न मनोवृत्तित्वानुमितिः न हि मनोवृत्तित्वानुमितावात्मवृत्तित्वप्रसिद्धेः प्रतिबन्धकता सम्भवति येन तत्सत्त्वात्सामग्रीविरहः, तथासति तद्बाधग्रहेऽपि मनोवृत्तित्वानुमित्यनुपपत्तेः । न च तत्र तत्तद्विशेषबाधग्रहाभावविशिष्टतत्तद्विशेषप्रसिद्धेः प्रतिबन्धकत्वान्नायं दोष इति वाच्यम् । तथा सतीतरबाधग्रहहेतुताया निर्युक्तिकत्वापत्तेः उत्तेजकतयैव तदुपयोगोपपत्तेः। यत्र विशेषान्तरमात्रस्यैव न प्रसिद्धिस्तत्रोपस्थितविशेषप्रकारकानुमितेर्वारणाय विशेषान्तरप्रसिद्धेरेव हेतुताकल्पनौचित्यात्, तस्मात्तद्धर्मविशेषितसामान्यधर्मावच्छिन्नविषयकानुमितौ तद्विपरीतधर्मसहितसामान्यधर्मावच्छिन्नाभावग्रह एव हेतुः न तु विशेषधर्मान्तरविशेषितसामान्यधर्मावच्छिन्नाभावग्रहश्च तद्विपरीतश्च तदत्यन्ताभावस्तद्भेदन्यत्वम्। अत्यन्तान्योन्याभावयोश्च प्रतियोगितत्वावच्छेदकौ,अभाव(ग्रहे) प्रतियोगितावच्छेदकसामान्यघटितविशेषधर्मप्रकारेण भासमाने प्रतियोगिनि निरुक्तविपरीतधर्मस्य यादृशं विशेषणत्वं साक्षात्तद्विशेषणकोटिप्रविष्टपदार्थविशेषणतया वा तादृशमेवानुमितौ तद्धर्मस्य सामान्यधर्मावच्छिन्नविशेषणत्वम्। महानसीयभिन्नवह्न्यभाववानित्यत्र बाधग्रहे महानसीयत्वविपरीतस्य महानसी-

यान्यत्वस्य प्रतियोगिनि साक्षादेव विशेषणतेति साक्षान्महानसीयत्वविशेषितस्य वह्नित्वावच्छिन्नस्य महानसीयवह्निमानित्यनुमितौ भानं विशेष्याभावान्यविशिष्टाभाववत्त्वाद्विशेषिताभावान्यत्वादेर्वृत्त्यादिविशेषणकोटिप्रविष्टेऽभावादौ विशेषणत्वमिति तदधीनविशिष्टव्यभिचाराद्यनुमितावपि तादृशाभावादौ विशेष्यताभावत्वादिसामान्यधर्मस्य विशेषणतया भानाद्विशेषव्यभिचारादिसिद्धिः। एवं च नायं रात्रिभिन्नभोजी इच्छा न मनोभिन्नद्रव्याश्रिता इत्यादिसामान्याभावावगाहिबाधग्रहदशायामेव पीनत्वगुणत्वादिना रात्रिभोजित्वमनोऽन्यद्रव्यवृत्तित्वत्वादिप्रकारकानुमितिः। दिवा न भुंक्ते न संयोगांशे भुंक्ते न पृथिवीवृत्तिर्न जलवृत्तिरित्यादिविशेषाभावकूटग्रहश्च सामान्याभावग्राहकतयैवोपयुज्यते इति। यद्यप्येकविशेषबाधग्रहस्थले तद्विशिष्टसामान्यसाधकहेतुत एव विशेषान्तरप्रकारकसिद्धिरपि सम्भवति, तथापि यत्र तद्विशिष्टसामान्यसाधकहेतौ विशेषान्तरव्याप्तिग्रहोऽप्रामाणिकस्तत्र तत्सिद्ध्यर्थं तादृशसामग्र्यन्तरकल्पनम्। न च तत्रापि फलानुरोधात्तादृशव्याप्तिग्रहकल्पनमेवोचितमिति वाच्यम्। यत्र पूर्वं विशिष्टहेत्वाद्यनुपस्थितिस्तत्र व्याप्तिग्रहो बाधितस्तत्र तत्कल्पनस्यासम्भवात्। न च विशेषणविशेष्ययोरुपस्थितौ महानसविशिष्टोपस्थितिसम्भवात् कालविलम्बेन व्याप्त्यादिग्रहोऽनुमितिश्च शक्यते कल्पयितुम्, यत्र च न व्याप्त्यादिग्रहः प्रमाणान्तरसिद्धस्तत्र फलमपलपनीयमिति वाच्यम्। यत्र धूमत्वादिकमनुपस्थितं शब्दादिना वह्निव्याप्यमहानसीयान्यवह्न्यभावोभयत्वादिना महानसीयवह्न्यादिव्याप्तिपक्षधर्मताग्रहस्तत्र सर्वमतसिद्धमहानसीयवह्न्याद्यनुमित्यर्थं तादृशव्याप्त्यादिज्ञानस्य तादृशानुमितिसामग्रीत्वमकल्पयित्वा महानसीयान्यवह्न्यभावादिग्रहसहकृतवह्न्यादिव्याप्यवत्ताज्ञानस्यैव तादृशानुमितिसामग्रीत्वकल्पनादेवोपपत्तेः फलापलापादेरन्याय्यत्वादिति। यथा विशेषान्तरबाधग्रहसहकृता सामान्यज्ञानसामग्री व्यापकतानवच्छेदकविशेषधर्मप्रकारेण व्यापकानुमितिं जनयति तथा सामान्यज्ञानसहकृता विशेषान्तरबाधसामग्र्यपि विशेषधर्मप्रकारेण व्यापकमप्यनुमापयति स्थलद्वय एव विशेषधर्मप्रकारकसंशयानुत्पादस्यानुभविकत्वात्, तथाविधसामग्र्यास्तादृशानुमितिजनकत्वोपगमे वह्निमहानसीयान्यवन्ह्य-

भावव्याप्योभयादिलिङ्गकमहानसीयवह्नित्वाद्यवच्छिन्नसाध्यकपरामर्शस्य महानसीयवह्नित्वाद्यवच्छिन्नविधेयकानुमितौ हेतुत्वं, तदपेक्षयानेन लाघवाच्चेति मनसि कृत्वा मणिकृता पुरोवर्त्तिविशेष्यकवह्नित्वप्रकारकज्ञानत्वावच्छिन्ने वह्नित्वाभाववति वह्नित्वप्रकारकत्वाभावानुमानाद्वह्नित्ववति वह्नित्वप्रकारकत्वरूपप्रामाण्यसिद्धिरङ्गीकृतेत्यवधेयम् ।

व्यभिचारशरीरे अत्यन्ताभावत्वेनाभावनिवेशनेपि आवश्यकप्रतियोगिवैयधिकरण्यादिविशेषणेन ध्वंसप्रागभाववारणात्, किन्तु साध्यात्यन्ताभाववद्गामित्वमिति मूलमसङ्गतमित्यभिसन्धायाह किन्तु साध्येत्यादिकमापातत इति ।

प्रतियोग्यसामानाधिकरण्यविशेषणेनेव साध्यतावच्छेदकसम्बन्धाद्यवच्छिन्नप्रतियोगिताकत्वविशेषणेनापि ध्वंसप्रागभावादिव्यावृत्तिः सम्भवति ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वमतेपि तयोर्धर्मविशेषसम्बन्धविशेषावच्छिन्नप्रतियोगिताकत्वे मानाभावादिति दर्शयितुं साध्याभावे प्रतियोग्यसामानाधिकरण्यमिव सम्बन्धविशेषाद्यवच्छिन्नप्रतियोगिताकत्वमपि विशेषणं प्रदर्शितं, स्वध्वंसस्वप्रागभावावच्छिन्नस्वाश्रयस्य च सामयिकस्वात्यन्ताभावावच्छिन्नत्वस्वीकारादत्यन्ताभावं परित्यज्य ध्वंसप्रागभावोपादानमयुक्तमित्याशङ्क्याह ध्वंसप्रागभावेत्यादिकमिति । स्पष्टत्वेनेति । तयोः प्रतियोग्यधिकरणवृत्तितायाः सर्वमतसिद्धत्वादिति भावः । उत्पत्त्यादिकाले घटादौ गन्धादेरत्यन्ताभावासत्त्वे तत्तद्गन्धत्वादिना साध्यतायां प्रागभावादिकमादाय बाधसमर्थनेपि रूपत्वगन्धत्वादिसामान्यधर्मपुरस्कारेण साध्यतायां न बाधनिर्वाह इति प्रागभावादिमति तदत्यन्ताभावस्वीकार आवश्यक इत्याह अत एवेति । अत एव-ध्वंसप्रागभावसमये तदत्यन्ताभावसत्त्वादेव, अन्यथा साध्यात्यन्ताभावज्ञानस्यैव स्वतः साध्यवत्ताज्ञानविरोधितया ध्वंसप्रागभावयोर्विरोधित्वासम्भवेन उक्तस्थले बाधानवकाशात् उपष्टम्भसङ्गतिर्न हि साध्यप्रतियोगिकाभावमात्रज्ञानमेव साक्षात् साध्यतावच्छेदकावच्छिन्नसाध्यधीविरोधि तत्तत्साध्यव्यक्त्यभावज्ञानस्यापि साध्यसामान्यधीप्रतिबन्धकतापत्तेः, किन्तु साध्यतावच्छेदकावच्छिन्नाभावज्ञानमेव, न हि ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नसाध्यकस्थले तथात्वम् सा-

मान्यधर्मस्य प्रतियोगितानवच्छेदकत्वादिति ।

मूलेऽवच्छेद्ये सिद्धसाधनमिति । विशिष्टघटकविशेष्यघटादौ साध्यसाधने सिद्धस्याबाधितस्यैव साधन प्रमारूपैवानुमितिरिति यावत् । तथाच न तत्र बाधो दोष इति भावः । अवच्छेदके-ध्वंसप्रागभावादिरूपविशिष्टघटरूपविशेषणे, हेत्वसिद्धिः-पृथिवीत्वादिहेतोरसिद्धिः, तथाच तत्पक्षकानुमाने न बाधस्यासंकर इति भावः । ननु विशेष्यविशेषणपक्षकेऽसंकीर्णबाधासम्भवेपि विशिष्टपक्षके तस्य निष्प्रत्यूहतेत्यत आह विशिष्ट चेति । नान्यदिति । विशेषणविशेष्याभ्यामिति शेष । गन्धादौ गन्धप्रागभावाद्युपलक्षितघटादिवृत्तित्वस्यापि न तद्विशिष्टघटादिवृत्तित्वं न हि तद्वृत्तितयैव एकसमयावच्छिन्नतद्वृत्तित्वरूप तद्विशिष्टवृत्तित्वं निर्वहति, तथा सति प्रतियोगिनो ध्वंसप्रागभावयद्वृत्तितया एकसमयावच्छिन्नतत्सामानाधिकरण्यमपि स्यादिति तद्विरोधो भज्येत । यदि च ध्वंसप्रागभावयोः प्रतियोगिन एकाधिकरणे वृत्तौ एकसमयो नावच्छेदक इत्येकसमयावच्छेदेनैकत्रावर्त्तमानत्वरूपो विरोधस्तदा पक्षतावच्छेदकध्वंसादिसमयावच्छिन्नतद्वृत्तित्वरूप तद्विशिष्टवृत्तित्व प्रतियोगिन्यवगाहमानानुमितिर्बाधितविषयैवेति तादृशानुमितिविरोधी तदवच्छेदेन प्रतियोगिनो बाधोऽसंकीर्णस्तत्र दोष एवेति पृथिवीत्वादिरूपहेतोस्तद्विशिष्टवृत्तित्वेनासिद्धिविरहादिति समाधत्ते तर्हीत्यादि । अधिकरणैक्येनावच्छेदकैक्ये बाधकान्तरमाहान्यथेति । अवच्छेदकभेदेन वृत्तिरिति । एकस्मिन्नप्यधिकरण विभिन्नावच्छेदेन वृत्तिरित्यर्थः ।

दीधितौ साध्यवत्त्वानवच्छेदकेत्यादि । वह्निमत्त्वानवच्छेदकशिखरावच्छेदेन पर्वतादौ धूमादिना वन्ह्यादिसाधनेपीत्यर्थः ॥

( चि० ) नन्वभावधीरपि न भावधीप्रतिबन्धिका नेदं रजतमिति भ्रमानन्तरं रजतनिश्चयात् । न चाभावप्रमा तथा, अपीतः शङ्ख इति प्रमापयत एव पीतोऽयमिति भ्रमदर्शनादिति चेन्न ।

विरोधिज्ञानं हि प्रतिबन्धकं प्रत्यक्षभ्रमस्य च प्रत्यक्षप्रमा विरोधिनी सा च शङ्खादौ नास्त्येव, अनुमितौ

त्वभावप्रमामात्रमेव विरोधीति कथमभावप्रमायां भावानुमितिरिति ।

स चायं दशविधः । धर्मिग्राहकमानबाधितम् घटो-व्यापकः सत्त्वादिति प्रत्यक्षेण परमाणवः सावयवा मूर्त्तत्वादित्यनुमानेन मेरुः पाषाणमयः पर्व्वतत्वादिति सुवर्णमयत्वबोधकागमेन साध्यप्रतियोगिग्राहकबाधितं वह्निरनुष्णः कृतकत्वादिति प्रत्यक्षेण शब्दोऽश्रावणो गुणत्वादित्यनुमानेन गवयत्वं गवयपदाप्रवृत्तिनिमित्तं जातित्वादित्युपमानेन साध्यग्राहकबाधितं नराशिरःकपालं शुचि प्राण्यङ्गत्वादित्यागमेन हेतुग्राहकबाधितं जलानिलावुष्णौ पृथिवीतो विपरीतस्पर्शत्वात्तेजोवदिति प्रत्यक्षेण मनो विभु ज्ञानसमवायाधारत्वादित्यनुमानेन राजसूयं ब्राह्मणकर्त्तव्यं स्वर्गसाधनत्वादग्निष्टोमवदिति राजसूयकर्त्तव्यताबोधकागमेनेति ॥

इति बाधचिन्तामणिः ॥

---

(दी०) अथ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ तदवच्छेदेन हेतुमत्ताज्ञानं प्रयोजकमन्यथा गृहीतभागासिद्धेर्घटत्वादेरपि पृथिवीत्वाद्यवच्छेदेन रूपादिसिद्धिप्रसङ्गात् । न च शिखराद्यवच्छेदेन धूमादिमत्त्वमिति चेन्न । अवच्छेदकत्वयोर्वस्तुनोर्भेदात् शब्दसामान्यस्याकिञ्चित्करत्वात् । अवच्छिन्नावृत्तेरपि च हेतोस्तत्त्वेन गृहीताज्ज्ञायमानामनुमितिं निरुणद्धि बाधप्रमा, सङ्करेऽपि वस्तुनोऽज्ञानासङ्करात् । सुखाद्यनवच्छेदकशरीराद्यवच्छिन्नात्मादौ सुखादिसाध्यकदुःखादेर्वर्त्तमानत्वात् कार्पिसंयोगाद्यनवच्छे-

दकमूलाद्यवच्छिन्ने कपिसंयोगादिसाध्यकवृक्षविशेषत्वादेर्वंचमात्-नत्वाच । अत्र चैतत्कालावच्छिन्नः पर्वतो वह्निमानिति शब्दादिधदेतत्कालावच्छिन्नपर्वतपक्षकधूमादेरप्येतत्कालावच्छेदेन वह्निमत्वाबुद्धिरनुभवसिद्धा नापह्नवमर्हतीत्यभिप्रायः ॥

इति बाधदीधितिः ॥

---

(गा० ) तत्र पक्षतावच्छेदकशिखराद्यवच्छिन्ने धूमादिमत्त्वस्य तदवच्छेदेन वह्न्याद्यनुमितिजनकज्ञानविषयस्यासत्त्वाद्धेत्वसिद्धिरिति कुतो बाधस्यासंकीर्णता,- पक्षतावच्छेदकसामानाधिकरण्यमात्रेण हेतुमत्ताज्ञानस्यावच्छेदकावच्छेदेनानुमितिजनकत्वे भागासिद्धेरदोषतापसङ्गादिति शङ्कतेऽथेत्यादि । घटत्वादेरिति पञ्चमी । पृथिवीत्वाद्यवच्छेदेन रूपादिसिद्धिप्रसङ्गादिति । पृथिवीत्वादिसामानाधिकरण्यमात्रेण घटत्वाभावरूपभागासिद्धिग्रहेऽपि तत्सामानाधिकरण्यमात्रेण तद्वत्ताग्रहसम्भवादिति भावः । भागासिद्धेर्दोषत्वानुरोधेन पक्षतावच्छेदकपृथिवीत्वाद्यंशे साध्यस्यानतिरिक्तवृत्तित्वरूपावच्छेदकत्वावगाहिन्यामनुमितौ तत्र हेतोस्तादृशावच्छेदकत्वावगाहिपरामर्शत्वेन हेतुत्वमास्ताम्, पक्षतावच्छेदकदेशकालयोः स्वरूपसम्बन्धरूपसाध्यीयावच्छेदकत्वावगाहिन्यामनुमितौ च न तादृशावच्छेदकत्वावगाहिपरामर्शत्वेन हेतुता तदवच्छेदेन बाधबुद्ध्यादिरूपप्रतिबन्धकाभावसहितसामानाधिकरण्यमात्रविषयकानुमितिसामग्रीतस्तादृशानुमितिस्वीकारे क्षतिविरहात् । अवच्छेदकत्वपदार्थयोर्भेदेनैकस्य बाधाभावमात्राद्भानेऽपि अन्यस्य भान अधिकापेक्षायां बाधकाभावादिति सेमूधत्ते अवच्छेदकत्वयोरिति । शिखराद्यवच्छेदेन वह्न्याद्यनुमितौ तदवच्छेदेन हेतुमत्ताज्ञानस्य हेतुत्वमभ्युपेत्यापि तत्र बाधस्य दोषतां व्यवस्थापयति अवच्छिन्नवृत्तेरिति । शिखराद्यवच्छेदेन धूमाद्यसत्त्वेऽपि तदवच्छिन्नत्वभ्रमविषयधूमादिनस्तदवच्छेदेन वह्न्याद्यनुमित्युत्पत्तिबाधप्रमेव निरुणद्धीति बाधो दोष इत्यर्थः । बाधबुद्धेः प्रमात्वाभिधानञ्च तद्विष

यरूपदोषमसिद्धिं सूचयितुम् । तथापि तत्र स्वरूपसदसिद्धिसंकर एवे-
त्याशंक्य तत्संकरस्याकिंचित्करतामाह संकरेपि इति । ज्ञानासंक-
रादिति । सिद्धिज्ञानदशायां बाधज्ञानस्यैवानुमित्यनुत्पादप्रयोजक-
त्वादित्यर्थः । वस्त्वसंकरस्थलमप्याह सुखाद्यवच्छेदकेति । सुखा-
द्यनवच्छेदकं यन्नारकीयशरीरादिकं शरीरव्यक्तिविशेषादिर्वा पक्षताव-
च्छेदकं तदवच्छेदेनात्मादिरूपपक्षे समवायेन सुखादिरूपसाध्यव्या-
प्यस्य दुःखादिहेतोर्धर्मसमानत्वादित्यर्थः । तथाच तादृशहेतोरसिद्धि-
विरहात्पक्षतावच्छेदकशरीरविशेषाद्यवच्छेदेन साध्याभावोऽसिद्ध्या-
द्यसंकीर्णो बाध इति भावः । *व्याप्यवृत्तेः सर्वावयवावच्छिन्नवृत्ति-*
कत्वे मूलावच्छिन्नो वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यादावपि मूला-
वच्छिन्नवृत्तिककपिसंयोगाद्यभावरूपबाधस्यासंकर इत्याह कपीति ।

ननु सर्वत्रानुमितौ साध्ये पक्षतावच्छेदकस्य सामानाधिकरण्य-
मेव भासते पक्षधर्मतावलात् व्याप्यस्य हेतोः पक्षतावच्छेदकसा-
मानाधिकरण्यरूपपक्षधर्मतायाः व्यापकस्य साध्यस्य पक्षतावच्छे-
दकसामानाधिकरण्यं विना अनुपपद्यमानत्वात् न तु पक्षतावच्छे-
दकावच्छिन्नत्वमपि साध्यस्य तदवच्छिन्नत्वं विनापि हेतोः पक्षधर्म-
तोपपत्तेस्तद्बलविरहात् बाधाभावबलात् तद्भाने अन्यदपि अबाधितं
साध्यादौ किन्न भासते । अथ व्याप्यस्य पक्षतावच्छेदकव्यापकत्वरूपं
तदवच्छिन्नत्वं साध्यस्य तादृशतदवच्छिन्नत्वमन्तरेण नोपपद्यते इति
तदवगाहिनः परामर्शात् साध्ये पक्षतावच्छेदकव्यापकत्वरूपतदव-
च्छिन्नत्वावगाहिन्यनुमितिर्युक्तैव अत एव भागासिद्धेर्दोषतापीति चे-
त् । भवतु तादृशपरामर्शात् तादृशावच्छेदकावच्छेदेनानुमि-
तिः, न च तावताऽसंकीर्णबाधसौलभ्यम् हेतोः पक्षतावच्छेदक-
धर्मव्यापकत्वे बाधासंभवात् । एवं यत्र तदवच्छेदेन हेतुस्तत्र तद-
वच्छेदेन साध्यमिति व्याप्तौ गृहीतायां देशकालरूपपक्षतावच्छेदका-
वच्छेदेन हेतुमत्ताज्ञानात् तदवच्छेदेन साध्यानुमितिः स्यादेव ता-
दृशव्याप्तिमतो हेतोः पक्षतावच्छेदकदेशकालावच्छेदेन सत्तायास्तद-
वच्छेदेन साध्यवत्त्वमन्तरेणानुपपत्तेस्तद्भासकपक्षधर्मताबललम्पत्ते-
रक्षतत्वादित्येतावतापि न बाधासंकरसौलभ्यम् साध्यानवच्छेदकदेश-
कालावच्छिन्नवृत्तित्वे हेतौ दर्शिताया अवच्छेदकान्तर्भावेण व्याप्तेर-
सिद्धेरित्युपाध्यायानुयायिनामाक्षेपमनुभवावलंबनेन परिहरति अत्र

श्चेति । शब्दादिवदित्यन्तं दृष्टान्ताभिधानमनुभवदार्ढ्याय ।

इदं तु बोध्यम् । यादृशव्याप्तिज्ञानात्पक्षतावच्छेदकसाध्ययोः केवलमेकत्र द्वयमिति रीत्या वैशिष्ट्यविषयिणी प्रमानुमितिस्तादृशमात्र एव चेद्बाधविशेषाभावसहकृतात्पक्षतावच्छेदककालादिविशिष्टानुयोगिकसाध्यवैशिष्ट्यविषया प्रमानुमितिर्भवेत् तदा गुणादौ द्रव्यवृत्तित्वाद्युपलक्षितसत्तादिवैशिष्ट्यविषयकानुमित्यौपयिकजात्यादिलिङ्गकप्रतियोगितावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिवैयधिकरण्यघटितव्याप्तिप्रमातोऽसति बाधावतारे तद्विशिष्टवैशिष्ट्यविषयप्रमानुमितिरपि तुल्ययुक्त्या युज्यतेति व्याप्तौ प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशनमनर्थकं स्यादिति दिक् ॥

गिरीन्द्रदुहितुर्नमत्सुरवरावतंसाभव-
त्पदांबुजरजःकृपाकलिततीक्ष्णधीसम्पदा ।
गदाधरविनिर्मिता कठिनदुर्गतर्काटवी
नवीनपदवी मुदं वितनुतां सदा धीमताम् ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचिता-
अनुमानखण्डदीधितिटिप्पणी समाप्ता ॥

॥ समाप्तेयं बाधान्ता गादाधरी ॥






॥ अथ ॥

# असाधकतासाधकत्वप्रकरणम् ।

अथ हेत्वाभासानामसाधकतासाधकत्वेन सदुत्तरत्वं जात्यादीनां चासाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वादसदुत्तरत्वम् । अथ विरुद्धत्वादिज्ञानादेव स्वानुमितेरिव परानुमितेः प्रतिबन्धे किमसाधकतानुमानेन, यद्वचसि वाद्युक्तदूषणावगमः स निगृहीत इति समयबन्धेन कथाप्रवृत्तौ दूषणमात्रमुद्भाव्यमन्यथार्थान्तरत्वादिति चेन्न । द्वयं ह्युद्देश्यं परानुमितिप्रतिबन्धः, स्थापनाया असाधकतासाधनत्वञ्च । तत्राद्यं दूषणमात्रज्ञानादेव । द्वितीयन्तु अलिङ्गत्वज्ञापनात् । प्रतिबन्धकत्ववदनेनापि रूपेण दूषकत्वसम्भव इत्यभिप्रायेण वाऽसाधकतासाधनम् । नन्वेवं पञ्चावयवप्रयोगापेक्षा स्यात् अन्यथा न्यूनतापत्तिरिति चेन्न । दूषणस्यासाधकताव्याप्यत्वमङ्गीकृत्य कथेति पक्षधर्म्मताया एवोद्भाव्यत्वात् अन्यथा अधिकतापत्तेः । नन्वेवं कृतकत्वेनानित्यत्वानुमाने व्याप्तिर्नाभिधेया उभयासिद्धत्वादिति चेन्न । कथायां समयविपर्ययतया दूषणे त्वसाधकताव्याप्त्युपस्थितेरावश्यकत्वात् अन्यथा कथकत्वविरोधात् ।

(आ०) असाधकतासाधकत्वनिर्वचनायोपोद्घातसंगतिमाह हेत्वाभासानामिति । तथाचासाधकत्वाज्ञाने सदुत्तरत्वापरिचये हेत्वा·

चेति । शब्दादिवदित्यन्तं दृष्टान्ताभिधानमनुभवदार्ढ्याय ।

इदं तु बोध्यम् । यादृशव्याप्तिज्ञानात्पक्षतावच्छेदकसाध्ययोः केवलमेकत्र द्वयमिति रीत्या वैशिष्ट्यविषयिणी प्रमानुमितिस्तत्प्रमात एव चेद्बाधविशेषाभावसहकृतात्पक्षतावच्छेदककालादिविशिष्टानुयोगिकसाध्यवैशिष्ट्यविषया प्रमानुमितिर्भवेत् तदा गुणादौ द्रव्यवृत्तित्वाद्युपलक्षितसत्तादिवैशिष्ट्यविषयकानुमित्यौपयिकजात्यादिलिङ्गकप्रतियोगितावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिवैयधिकरण्यघटितव्याप्तिप्रमातोऽसति बाधावतारे तद्विशिष्टवैशिष्ट्यविषयप्रमानुमितिरपि तुल्ययुक्त्या युज्येतेति व्याप्तौ प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशनमनर्थकं स्यादिति दिक् ॥

गिरीन्द्रदुहितुर्नमत्सुरवरावतंसोभव-
त्पदांबुजरजःकृपाकलिततीक्ष्णधीसम्पदा ।
गदाधरविनिर्मिता कठिनदुर्गतर्काटवी
नवीनपदवी मुदं वितनुतां सदा धीमताम् ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचिता-
अनुमानखण्डदीधितिटिप्पणी समाप्ता ॥

॥ समाप्तेयं बाधान्ता गादाधरी ॥



॥ अथ ॥

# असाधकतासाधकत्वप्रकरणम् ।



अथ हेत्वाभासानामसाधकतासाधकत्वेन सदुत्तरत्वं जात्यादीनां चासाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वादसदुत्तरत्वम् । अथ विरुद्धत्वादिज्ञानादेव स्वानुमितेरिव परानुमितेः प्रतिबन्धे किमसाधकतानुमानेन, यद्वचसि वादियुक्तदूषणावगमः स निगृहीत इति समयबन्धेन कथाप्रवृत्तौ दूषणमात्रमुद्भाव्यमन्यथार्थान्तरत्वादिति चेन्न । द्वयं ह्युद्देश्यं परानुमितिप्रतिबन्धः, स्थापनाया असाधकतासाधनत्वञ्च । तत्राद्यं दूषणमात्रज्ञानादेव । द्वितीयन्तु अलिङ्गत्वज्ञापनात् । प्रतिबन्धकत्ववदन्येनापि रूपेण दूषकत्वसम्भव इत्यभिप्रायेण वाऽसाधकतासाधनम् । नन्वेवं पञ्चावयवप्रयोगापेक्षा स्यात् अन्यथा न्यूनतापत्तिरिति चेन्न । दूषणस्यासाधकताव्याप्यत्वमङ्गीकृत्य कथेति पक्षधर्म्मताया एवोद्भाव्यत्वात् अन्यथा अधिकतापत्तेः । नन्वेवं कृतकत्वेनानित्यत्वानुमाने व्याप्तिर्नाभिधेया उभयसिद्धत्वादिति चेन्न । कथायां समयविपर्यतया दूषणे त्वसाधकताव्याप्त्युपस्थितेरावश्यकत्वात् अन्यथा कथकत्वविरोधात् ।

(आ०) असाधकतासाधकत्वनिर्वचनायोपोद्घातसंगतिमाह हेत्वाभासानामिति । तथाचासाधकत्वाज्ञाने सदुत्तरत्वापरिचये हेत्वा·

भासनिर्वचनमेव व्यर्थमापद्येतेति भावः। नन्वसाधकतासाधकत्वं न सदुत्तरत्वं असाधकतासाधनस्यैवाभाव दित्याह अथेति। परेति। परेण यामनुमितिमुद्दिश्य प्रयोगः कृतस्तस्या इत्यर्थः। अन्यथा पदपेक्षया परस्य तदीयविरुद्धत्वादिज्ञानस्य प्रतिबन्धकत्वप्राप्तेरसङ्गत्यापत्तेः। विरुद्धत्वाद्युद्भावनस्य स्वप्रयुक्तानुमानाद्विरुद्धत्वादिप्रतिहतात्वमेऽनुमितिरित्यर्थो न तूद्भावितेन प्रयोक्तुरनुमितिप्रतिबन्ध इत्यर्थ इति भावः। एवमग्रेऽपि। द्वितीय त्विति। असाधकत्वसाधनं तावन्न यावद्विरुद्धत्वादिलिङ्गत्वेन हेतुपञ्चम्यन्तत्वेनोच्यत इत्यर्थः। ननु द्वयमुद्देश्यमित्यत्रैवाक्षेपः स एव च समाधिरित्यसगतेर्द्वयोरुद्देश्यत्वे बीजमाह प्रतिबन्धकत्ववदिति। दूषणस्योद्भाव्यतया दूषणत्वस्योभयरूपतया तदुभयरूपोद्भावनमुद्देश्यमिति भावः। वस्तुगत्या साधकेऽसाधकत्वानुमतावपि न स्वपक्षसिद्धिरित्यनुमितिप्रतिबन्धकोपन्यास आवश्यकस्तेनासाधकत्वनिर्वाहात् असाधकत्वानुमितिस्त्व नावश्यकी तदभावेऽपि स्वपक्षसिद्धेः, दूषणत्वप्रकारान्तरापेक्षायां तु काचित्कस्तदुपन्यासः सामयिक इति सर्वतात्पर्यार्थः। पक्षधर्मताया इति। यद्यप्यसाधकतानुमाने विरुद्धत्वादित्येव प्रयोज्यं न तु पक्षधर्मतापि धूमवत्त्वादित्यत्रेवानाकाङ्क्षितत्वात्, तथापि विरुद्धोयमिति प्रथमोद्भावनमभिप्रेत्येदं द्रष्टव्यम्। अधिकेति। आकाङ्क्षितादधिकमनाकाङ्क्षितमर्थान्तरमिति यावत्। हेतुद्वयाद्युपन्यासेन यथाश्रुतस्यासङ्गतरिति। अन्यथेति।

नन्वनुमितिप्रतिबन्धकतावच्छेदकत्वरूपदूषणत्वनिश्चयादेव कथकत्वनिर्वाहात्कथमेवं, न हीदमेवासाधकत्वव्याप्तिः, अपि त्विदमसाधकत्वमेव तथा च तद्व्याप्तिप्रतिसन्धान कथकत्वेऽतन्त्रमेव। न चानुमितिप्रतिबन्धकतावच्छेदकरूपवत्त्वमनुमित्यभावनियतं यज्ज्ञानं तद्वत्त्व तथा च यत्र विरुद्धत्वादिस्तत्रानुमित्यभाव इति व्याप्तिभानैवेति वाच्यम्। अनुमित्यभावस्यासाधकत्वरूपत्वाभावादपि त्वनुमित्यभावप्रयोजकज्ञानविषयतावच्छेदकवत्त्वस्य तत्त्वे तद्व्याप्तिप्रतिसहितैवेति।

मेवम् विरुद्धस्यैवानुमितिबन्धकतावच्छेदकतया यत्र विरुद्धत्वं तत्र तथा प्रतिबन्धकतावच्छेदकत्वमिति सहचारधीध्रौव्येण व्याप्तिग्रहाव श्यकत्वादित्युत्तरकल्पे प्रथमकल्पे च स्फुटैव प्रतीतिरित्यभ्युपगमात्, अत एवानुमित्यभावस्य ज्ञानेन साध्यानिश्चये पक्षत्वाभावानुमितिः

सम्भवतीत्यनुमित्साधीनया पक्षतयाऽनुमितिरिति सामयिकसाधकतासाधनं सर्वसिद्धमिति ।

(चि०) नन्वेवं कृतकत्वेनानुमाने तद्व्याप्तिमनङ्गीकृत्यापि कथासम्भवात्। यस्तु कथारम्भे बाधस्याऽसाधकत्वव्याप्तिं नाङ्गीकरोति तं प्रति तद्दूषणत्वं प्रसाध्य पञ्चावयवप्रयोगः कर्त्तव्य एव । यत्तु दूषणे पक्षधर्मताभावमुद्भाव्य तत्र, यत्र वादिनोस्तथा समयोऽन्यत्र तु पञ्चावयवप्रयोग एवेति । तन्न । कथासम्प्रदायविरोधात् । अथासाधकत्वं न पक्षे साध्यप्रत्ययाजनकत्वम्, तेनापि तत्त्वेनाज्ञानदशायां पक्षे साध्यभ्रमजननात् कदाचिदजनकत्वं सद्धेतावपि । नन्वेतत्काले साध्यविशिष्टपक्षधर्मिज्ञानाजनकत्वं तत्, न हि दूषणत्वज्ञानदशायां पक्षे भ्रमरूपाप्यनुमितिः, साध्यविशिष्टपक्षज्ञानञ्च हेतुत्वेन ज्ञानदशायां प्रसिद्धमिति चेन्न । सद्धेतावसत्प्रतिपक्षतादशायामपि पूर्वकाले साध्यविशिष्टपक्षज्ञानाजनकत्वमस्तीत्यसाधकताप्रसङ्गात् । अथ पक्षे साध्यभ्रमजनकत्वं तत्, बाधविरुद्धयोरपि तत्त्वाज्ञानदशायां भ्रमजनकत्वादिति चेन्न । सद्धेतौ सत्प्रतिपक्षेऽसाधारणे च तत्त्वेन ज्ञानदशाया साध्यभ्रमजनकत्वात् अज्ञाने साध्यभ्रमाजनकत्वात् । नापि व्याप्तिपक्षधर्मतान्यतरराहित्यं, सत्प्रतिपक्षासाधारणसद्धेतोरभावात् दशाविशेषे तस्य दोषत्वात् साध्याप्रसिद्धौ प्रकृतसाध्यव्याप्त्यप्रसिद्धेश्च । नाप्यनैकान्तिकाद्यन्यतमत्वम्, यत्किञ्चिदनैकान्तिकत्वस्यातिव्याप्तेः प्रकृतसाध्यानैकान्तिकत्वस्याप्रसिद्धत्वेन केव-

लात्वयिसाधनेऽप्रसिद्धेः अंशतः सिद्धसाधनात् साध्याविशेषाच्च । यत्तु एतत्कालीनएतत्पक्षीयत्वावच्छिन्नप्रतियोगिकैतत्साध्यप्रमाकरणत्वाभावः, तत्तत्कालतत्तत्पक्षविषयसाध्यत्वाभिमतानित्यत्वादिप्रमाजनकत्वाभावो वाऽसाधकत्वम् । न च प्रतियोग्यप्रसिद्धिः, एतत्कालीनैतत्पक्षीयत्वनतत्कालतत्तत्पक्षविषयत्वयोर्व्यधिकरणयोरेव प्रतियोगितावच्छेदकत्वादिति । तन्न । सद्धेतोः सत्प्रतिपक्षत्वाज्ञानदशायामपि तादृशप्रमायामकरणभावेनासाधकतापत्तेः । नापि तृतीयलिङ्गपरामर्शस्य प्रमात्वं तत् । विरुद्धादौ परामर्शाभावात्, सद्धेतौ सत्प्रतिपक्षेऽसाधारणे च तत्प्रमात्वाच्च । नाप्यनुमितिहेतुभूताभावप्रतियोगिज्ञानविषयत्वं तत्, सद्धेतावपि कदाचित् व्यभिचारित्वसत्प्रतिपक्षत्वज्ञानस्यानुमितिप्रतिबन्धकत्वात् ।

(प्रा०) अनङ्गीकृत्येति । तथा चाङ्गीकारनियमो नात्रैव तत्रापीति भावः । नन्वेवं पृथिवीत्वेन पक्षतावच्छेदकेनैवेतरभेदानुमानेन पक्षधर्मत्वं न प्रदर्श्यतेऽभयासिद्धत्वात् । न च तत्राप्यभ्युपगमानियमोऽनभ्युपगमे व्याघातापत्तिरिति, दूषणान्तरं न त्वभ्युपगम इति वाच्यम् । तर्ह्यत्राप्यनभ्युपगमे व्याघातास्तु दोषो नाभ्युपगमानियम इत्यत आह वक्ष्यतीति । यस्तुव्याप्तिमात्रानङ्गीकर्त्ता चार्वाकादिः । बाधस्य-दोषमात्रस्य, दूषणत्वमसाधकत्वव्याप्यत्वं प्रसाध्य व्याघातेनैव प्रयोग एवेत्यनन्तर समाचार इति शेषस्तेनासिद्धिरुत्तरं घटतेऽन्यथा पञ्चावयवप्रयोगः कर्त्तुमर्हतीत्युक्तौ समाचारविरोधो नोत्तर घटतेऽनर्हतया अत्र युक्तत्वादित्यवधेयम् । हेतुत्वेनेत्युपलक्षणं हेत्वन्तरेण प्रसिद्धमित्यपि बोद्धव्यम् । अन्यथा वह्निमानयं वह्निविरहादित्यादौ हेतुत्वभ्रमस्याप्यभावादसङ्गत्यापत्तेरिति । विशेषणत्वमग्रे सिद्धान्त एवेति स्वकालस्योपलक्षणत्वपक्षमालंब्य दूषयति सद्धेताविति । साध्याप्रसि-

द्धाधिति न च वक्ष्यमाणमप्यसाधकत्वं साध्यगर्भं तत्र न सम्भवतीति तदसङ्ग्राह्यत्वेन न युक्तं तदव्याप्तिप्रदर्शनं तस्य केवलापार्थकत्वादिति वाच्यम् । साध्याप्रसिद्धावपि तत्प्रत्ययप्रसिद्धेः शुक्तिरजतप्रत्ययादौ तथा दर्शनेन तदजनकत्वलक्षणवक्ष्यमाणासाधकत्वस्य प्रकृते समर्थनीयत्वादिति भावः । केवलेत्याद्युपलक्षणम् । सत्प्रतिपक्षाद्यनुपस्थितेन्यत्राप्यप्रसिद्धिर्द्रष्टव्या । अंशतः सिद्धेति । संशयस्य सिद्धस्यैव साधनादित्यर्थः । पञ्चमेऽपि ॥

(चि० ) अथानुमितिप्रतिबन्धकप्रमाविषयत्वमसाधकत्वं, सद्धेतौ व्यभिचारादिभ्रमः प्रतिबन्धकः, अनुमितिप्रतिबन्धकत्वञ्च व्यभिचारादिप्रमायास्तृतीयलिङ्गपरामर्शविघटनद्वारा तुल्यबलतया विषयतया वेति चेन्न । सत्प्रतिपक्षयोर्विरुद्धयोर्वास्तवतुल्यबलत्वाभावेन तद्भ्रमस्य प्रतिबन्धकत्वात् । न च तुल्यबलतया ज्ञायमानेन, बाधितसाध्यविपर्ययकत्वज्ञानं प्रतिबन्धकं तच्च प्रमैवेति वाच्यम् । तुल्यबलताज्ञानमेव हि प्रतिबन्धकं न तु ज्ञायमानत्वज्ञानं गौरवादसिद्धेश्च । न च सत्प्रतिपक्षेऽन्यतराङ्गवैकल्यप्रमैव प्रतिबन्धिकेति वाच्यम् । अन्यतरत्वं तदतद्वृत्ति, न च तदतद्वृत्तिसामानाधिकरण्येन ज्ञायमानस्य दोषत्वं, धर्ममात्रस्य व्यभिचारज्ञानादनुमित्युच्छेदापत्तेः, अन्यतराङ्गवैकल्यज्ञानोपजीव्यस्य तुल्यबलत्वज्ञानस्यैव प्रतिबन्धकत्वाच्च, अन्यथा व्याप्यत्वासिद्ध्यन्तर्भावापत्तेः । अथानैकान्तिकादिज्ञानस्य तत्तदनुमितिप्रतिबन्धकत्वमसाधकत्वं, तथा हीदमनैकान्तिकादिज्ञानमेतत्साध्यवत्त्वैतत्पुरुषस्यैतत्कालीनैतत्पक्षकानुमितिप्रतिबन्धकम् एतदनैकान्तिकज्ञानत्वात् एतदन्य-

तज्ज्ञानवदिति चेन्न । एतत्साध्यवत्त्वैतत्पक्षकत्वानुमितेः कदाचिल्लिङ्गभ्रमात् प्रसिद्धावप्येतत्कालीनएतत्पुरुषस्य तादृशानुमित्यप्रसिद्धेः । नापि समीचीनसाध्यविशिष्टपक्षप्रत्ययाजनकत्वं, बाधविरुद्धासिद्धेषु साध्यानधिकरणे पक्षे सत्यसाध्यप्रतीत्यप्रसिद्धेः वह्निमति बाष्पे धूमभ्रमात् वह्न्यनुमितेः सत्यत्वाच्च। न चान्य एव वह्निस्तत्र भासते, मानाभावात् तद्वह्नेः प्रत्यभिज्ञानात् एकव्यक्तिके तदसम्भवाच्च । न च सानुमितिर्लिङ्गविषयत्वेन भ्रमः, अनुमितौ लिङ्गभाने मानाभावात् । किञ्च भावोऽभावो वोभयमपि प्रमेयमिति सत्यानुमितौ भावत्वाभावात्ववति प्रमेयत्वज्ञाने एकत्र तयोरभावादसत्यानुमितिः स्यात् । न चान्यतरत्वं लिङ्गं, तद्व्याप्तिमविदुषोऽप्यनुमितेर्व्यर्थविशेषणत्वाच्च । अथ साध्यव्याप्यत्वमेव तत्र तन्त्रं तत्र च बाधो नास्तीति चेत्, तर्हि कूटलिङ्गादनुमितौ वह्निव्याप्यवत्त्वमेव तन्त्रं वह्निव्याप्यञ्च किञ्चित्तत्रास्त्येव । अथ कूटलिङ्गे वह्निव्याप्याभेदः प्रतीयते तथा च वह्नौ कूटलिङ्गव्यापकाभेदोऽपि, अन्यथा कूटस्यैव वह्निव्याप्यत्वाप्रतीतेः, एवञ्च कूटलिङ्गव्यापको वह्नित्वेन भासते इति वह्न्यनुमितिरसत्यैवेति चेन्न । वह्निव्याप्यालोके धूमारोपात् यत्रानुमितिस्तत्रासिद्धिभेदेऽसत्यत्वाभावापत्तेः आलोकव्यापके धूमव्यापकाभेदात् । अथ लिङ्गमनुमितिविषयो नियमतः पक्षधर्मताज्ञानविषयः स्यात् व्याप्तिज्ञानविषयत्वात् नियमेनानुमितिहेतुविशेषणधीविषयत्वाच्च पर्वतत्ववत्साध्यवच्च । किञ्चैकवि-

शेषणवत्त्वेन ज्ञाते विशेषणान्तरधीसामग्री तत्रैव विशिष्टवैशिष्ट्यज्ञानमिति धूमविशिष्ट एव वह्नि-वैशिष्ट्यानुमितिरिति । नन्वनुमितौ व्यापकत्व-भानेऽनुमित्यविच्छेदः । न च फलीभूतज्ञानन्यू-नविषयस्यैव परामर्शस्यानुमितिहेतुत्वं, गौरवात्, विषयान्तरसञ्चारात् नानुमितिरित्यपि न । परामर्श-स्य चरमकारणत्वात् प्रत्यक्षादिसामग्रीतो बलवत्त्वाच्चे-ति चेत् । न सिद्धसाधनेन विच्छेदात् । यद्यप्येवं लिङ्ग-ज्ञानेऽप्रमात्वेऽपि साध्यप्रमात्वात् कथं तस्यासाधकत्वं, तथाप्युक्तमसाधकत्वमस्त्येवेति चेत्, अस्तु तावदेवं; तथापि दैवात्तत्र धूमसत्त्वे कथं तदंशेऽप्यसत्यता । अत एव आर्द्रेन्धनप्रभवो वह्निर्धूमव्यापको नान्यः, नच वह्नित्वेन व्यापकत्वादन्योऽपि तथा, तेन विनापि धूमसत्त्वात्, एवं बाष्पे धूमभ्रमात् धूमव्यापको वह्नि-र्भासते स च तत्र नास्त्येवेति न सानुमितिः सत्येति निरस्तम् । दैवाद्धूमसत्त्वे सत्यत्वात् ।

(आ०) तुल्यबलतेति । अत्र वस्तुगत्या यत्तुल्यबलमगृहीतविशेषबलं तद्विषयतयोभयविरुद्धबलाविषयतया वेत्यर्थः नतु तुल्यबलत्वमपि विषय इति । नन्वन्यतराङ्गवैकल्यसंशयाधायकतया दोष इत्यनुभवसिद्ध-मित्यस्वरसाद्दोषान्तरमाह अन्यतरेति । एकेति । साध्याशून्यायामपि गवि तदारोपेण गोत्वाद्यनुमित्यादावित्यर्थः । लिङ्गं–लिङ्गतावच्छेदकम् । वह्निव्याप्येति । एतच्चाभ्युपेत्य समाहितम् । वस्तुतो वह्निव्याप्याभेदे वह्निस्तद्व्यापकत्वेन भासते न तु कूटव्यापके वह्नित्वं सामग्रीविरहा-दिति ध्येयम् । नियमत इति श्लिष्टमावश्यकतया निश्चीयमानतया चेत्यर्थः । तेनाद्येनाकस्मिकं द्वितीयेन तु व्यापकतावच्छेदकावच्छि-न्नमपि संदिग्धमुदाहृतभावादि वार्यत इति भावः । मध्यमहेतावपि नि-यमेनेति पूरणीयं आकस्मिकस्य तत्रापि वारणीयत्वादिति । नांशवि-

तज्ज्ञानवदिति चेन्न । एतत्साध्यवत्त्वेनैतत्पक्षकत्वानुमितेः कदाचिल्लिङ्गभ्रमात् प्रसिद्धावप्येतत्कालीनैतत्पुरुषस्य तादृशानुमित्यप्रसिद्धेः । नापि समीचीनसाध्यविशिष्टपक्षप्रत्ययाजनकत्वं, बाधविरुद्धालिङ्गेषु साध्यानधिकरणे पक्षे सत्यसाध्यप्रतीत्यप्रसिद्धेः वह्निमति बाष्पे धूमभ्रमात् वह्न्यनुमितेः सत्यत्वाच्च । न चान्य एव वह्निस्तत्र भासते, मानाभावात् तद्वह्नेः प्रत्यभिज्ञानात् एकव्यक्तिके तदसम्भवाच्च । न च सानुमितिर्लिङ्गविषयत्वेन भ्रमः, अनुमितौ लिङ्गभाने मानाभावात् । किञ्च भावोऽभावो वोभयमपि प्रमेयमिति सत्यानुमितौ भावत्वाभावात्वयति प्रमेयत्वज्ञाने एकत्र तयोरभावादसत्यानुमितिः स्यात् । न चान्यतरत्वं लिङ्गं, तद्व्याप्तिमविदुषोऽप्यनुमितेर्व्यर्थविशेषणत्वाच्च । अथ साध्यव्याप्यत्वमेव तत्र तन्त्रं तत्र च बाधो नास्तीति चेत्, तर्हि कूटलिङ्गादनुमितौ वह्निव्याप्यवत्त्वमेव तन्त्रं वह्निव्याप्यत्वञ्च किञ्चित्तत्रास्त्येव । अथ कूटलिङ्गे वह्निव्याप्याभेदः प्रतीयते तथा च वह्नौ कूटलिङ्गव्यापकाभेदोऽपि, अन्यथा कूटस्यैव वह्निव्याप्यत्वाप्रतीतेः, एवञ्च कूटलिङ्गव्यापको वह्नित्वेन भासते इति वह्न्यनुमितिरसत्यैवेति चेन्न । वह्निव्याप्यालोके धूमारोपात् यत्रानुमितिस्तत्रासिद्धिभेदेऽसत्यत्वाभावापत्तेः आलोकव्यापके धूमव्यापकाभेदात् । अथ लिङ्गमनुमितिविषयो नियमतः पक्षधर्मताज्ञानविषयत्वात् व्याप्तिज्ञानविषयत्वात् नियमेनानुमितिहेतुविशेषणधीविषयत्वाच्च पर्वतत्ववत्साध्यवच्च । किञ्चकवि;

शेषणवत्त्वेन ज्ञाते विशेषणान्तरधीसामग्री तत्रैव विशिष्टवैशिष्ट्यज्ञानमिति धूमविशिष्ट एव वह्नि-वैशिष्ट्यानुमितिरिति । नन्वनुमितौ व्यापकत्व-भानेऽनुमित्यविच्छेदः । न च फलीभूतज्ञानन्यू-नविषयस्यैव परामर्शस्यानुमितिहेतुत्वं, गौरवात्, विषयान्तरसञ्चारात् नानुमितिरित्यपि न । परामर्श-स्य चरमकारणत्वात् प्रत्यक्षादिसामग्रीतो बलवत्त्वाचे-ति चेत् । न सिद्धसाधनेन विच्छेदात् । यद्यप्येवं लिङ्ग-ज्ञानेऽप्रमात्वेऽपि साध्यप्रमात्वात् कथं तस्यासाधकत्वं, तथाप्युक्तमसाधकत्वमस्त्येवेति चेत्, अस्तु तावदेवं; तथापि दैवात्तत्र धूमसत्त्वे कथं तदंशेऽप्यसत्यता । अत एव आर्द्रेन्धनप्रभवो वह्निर्धूमव्यापको नान्यः, न च वह्नित्वेन व्यापकत्वादन्योऽपि तथा, तेन विनापि धूमसत्त्वात्, एवं बाष्पे धूमभ्रमात् धूमव्यापको वह्नि-र्भासते स च तत्र नास्त्येवेति न सानुमितिः सत्येति निरस्तम् । दैवाद्धूमसत्त्वे सत्यत्वात् ।

(आ०) तुल्यबलतेति । अत्र वस्तुगत्या यत्तुल्यबलमगृहीतविशेषबलं तद्विपतयोभयविरुद्धबलाविषयतया वेत्यर्थः नतु तुल्यबलत्वमपि विषय इति । नन्वन्यतराङ्गवैकल्यसंशयाधायकतया दोष इत्यनुभवसिद्ध-मित्यस्वरसाद्दोषान्तरमाह अन्यतरेति । पक्षेति । सास्नाद्यन्यथामपि गवि तदारोपेण गोत्वाद्यनुमित्यादावित्यर्थः । लिङ्ग-लिङ्गतावच्छेदकम् । वह्निव्याप्येति । एतच्चाभ्युपेत्य समाहितम् । वस्तुतो वह्निव्याप्याभेदं वह्निस्तद्व्यापकत्वेन भासते न तु कुत्रव्यापके वह्नित्वं सामग्रीविरहा-दिति ध्येयम् । नियमत इति श्लिष्टमावश्यकतया निश्चीयमानतया चेत्यर्थः । तेनाद्येनाकस्मिक द्वितीयेन तु व्यापकतावच्छेदकावच्छि-न्नमपि संदिग्धमुदाहृतभावादि वार्यत इति भावः । मध्यमहेतावपि नि-यमेनेति पूरणीयं आकस्मिकस्य तत्रापि वारणीयत्वादिति । नांशवि-

पक्षयेदमसाधकत्वं निरुच्यत इत्याह तथापीति । अस्तु तावदे-
षमित्यभ्युपगमवादः वस्तुतो नोक्तानुमानादपि तथा सिद्धिरित्येव-
म्परः । तदसिद्धिबीजं तु अनुमाने सामान्यभावेन फलाभावाद्बाधितं
तथाहि किं साध्यविशिष्टपक्षकानुमितित्ववत्तत्र लिङ्गमपि विषयतया
कार्यतावच्छेदकं विशेष्यानुमितिं प्रति व्याप्तिज्ञानादीनां हेतुतेति म-
न्यसे, अथवा सामान्यत एव प्रमाणमात्रस्योपनीतमानजनकत्वं सुर-
भिचन्दनमित्यादौ क्लृप्तमित्यत्राप्येवमिति । आद्यो गौरवानुभवविरो-
धाभ्यामेव निरसनीयः । द्वितीयस्तु स्यादेव यदि सौरभांशे संस्कार-
रूपप्रत्यक्षसन्निकर्षवदिहापि व्याप्तिरूपलिङ्गसन्निकर्षो लिङ्गेनापि भवेत्,
अत एव शक्तेः शब्दसन्निकर्षत्वस्याभावात् शब्दो न शाब्दबुद्धिविषय
विशेष्याभाने संसर्गाभाने च विशिष्टबुद्ध्यसिद्धेः अन्यथानुपपत्त्यैव प-
क्षसंसर्गावन्तर्भाव्यैवानुमितिशाब्दौ प्रति लिङ्गशब्दयोर्हेतुतेति व्याप्ति-
किविरहेऽपि पक्षसंसर्गगोचरे ताभ्यां ते जन्येते इति सर्वं सुस्थम् ॥

(द्वि१,) उच्यते । स्वज्ञानदशायां पक्षे साध्यप्र-
त्ययाजनकत्वमसाधकत्वं । तथाहि–विरुद्धत्वादिज्ञान-
दशावर्त्तीदं पक्षे साध्यप्रत्ययाजनकं विरुद्धादित्वात्
पक्षविशेषणमहिम्ना तत्तद्दशायां पक्षे साध्यप्रत्ययाजन-
कत्वं सिद्ध्यति । बाधितादावपि लिङ्गत्वभ्रमात् पक्षे सा-
ध्यप्रत्ययजनकत्वमिति न प्रतियोग्यप्रसिद्ध्या साध्याप्र-
सिद्धिः । यद्वा अनुमितिप्रतिबन्धकतावच्छेदकरूपव-
त्त्वमसाधकत्वं, तथाहीदानीमिदमनुमितिप्रतिबन्धक-
तावच्छेदकरूपवदनैकान्तिकादित्वात् ज्ञानवत्, अ-
नुमितिप्रतिबन्धकतावच्छेदकञ्च रूपं ज्ञाने विषयतयानै-
कान्तिकादित्वमेव । न च साध्याविशेषः, उपाधिविशेष-
स्यानुमेयत्वात्, तोयत्वेन पिपासोपशमनसमर्थतावच्छे-
दकरूपपरत्वानुमानवत् ।

अन्ये त्वनैकान्तिकबाधितविरुद्धेष्वव्याप्यत्वं वा-

प्यत्वासिद्धेऽनैकान्तिकत्वं स्वरूपासिद्धसत्प्रतिपक्षासाधारणेषु दशाविशेषेऽनुमितिप्रतिबन्धकज्ञानविषयत्वमसाधकत्वम् । न चैदमनैकान्तिकोऽसाधक इति सह प्रयोगानुपपत्तिः, तत्राव्याप्यत्वस्यासाधकशब्दार्थत्वात् । असाधकताननुगमेऽपि च हेत्वाभासत्वमनुगतमेव यस्य ज्ञानमनुमितिप्रतिबन्धकं तस्य हेत्वाभासत्वादिति ।

इति श्रीमहामहोपाध्यायगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानखण्डे हेत्वाभासानामसाधकतासाधकत्वग्रन्थः समाप्तः ।

---

गादाधर्या अनुमानखण्डो बाधान्तः संमाप्तः ।

---

(आ०) स्वज्ञानकालस्य विशेषणत्वमादाय सिद्धान्तमाह स्वज्ञानेति । साध्यप्रत्ययाजनकत्वं साध्यप्रत्ययजनकतावच्छेदकरूपविरहस्तानि चाव्यभिचारित्वादीनि असत्प्रतिपक्षत्वाबाधितत्वान्तानि तदभावः कदाचित्सत्प्रतिपक्षोत्तीर्णेऽपीति स्वज्ञानकालीनतया स विशेषितः स च न तादृशोऽन्यदा तथाज्ञानरूपविशेषणाभावेन विशिष्टाभावात्, एवं च सव्यभिचारित्वादिरेव पर्यवसितस्तथा सत्यपि यथा न साध्याविशेषस्तथाऽऽकर एव स्फुटम् । ननु स्वज्ञानकालीनतया जनकत्वाभावे विरुद्धत्वादित्यादिव्यभिचारितस्य जनकतावच्छेदकाविरहरूपत्वेऽपि स्वज्ञानविरहकाले विशिष्टाभावात्तथा जनकत्वाभावे यथाश्रुते जनकतावच्छेदकाभावरूपे विवक्षितेऽपि साध्ये च स्वज्ञानाप्रवेशे विरुद्धत्वादिति व्यर्थविशेषणं कदाचिदजनकत्वस्य ज्ञायमानत्वलक्षणतज्जनकतावच्छेदकाविरहात्मनोऽज्ञायमानत्वस्य च केवलान्वयित्वादित्यभिसंधिना साध्यं निष्कृष्याह तथाहीति । तथाहि ज्ञानकालस्य पक्षतावच्छेदकतया तत्कालीनत्वं साध्यस्य न तु तस्यापि साध्यप्रवेशो येन व्यभिचारः । न च व्यर्थविशेषणता, विवक्षितसाध्यस्यासार्वत्रिकत्वात्, साध्यसिद्धि-

जनकतावच्छेदकत्वं तु तत्प्रत्ययजनकज्ञानविषयतावच्छेदकत्वम् , अत एवासत्प्रतिपक्षितत्वं तुल्यबलत्वज्ञानाभावरूपं प्रतिबन्धकाभावरूपतया स्वरूपसदेवानुमितिजनकं न तु ज्ञातमिति मतावलम्बिनेदं घटत इत्यरुच्या लक्षणान्तरं वक्ष्यते, तथाच ज्ञायमानत्वज्ञानमपि यद्यनुमिति हेतुः स्यात् तदा ज्ञायमानत्वमपि तथा जनकतावच्छेदकं भवेत् येनाज्ञायमानत्वमवच्छेदकाभावः स्यात् । एवं च सद्धेतौ सत्प्रतिपक्षाद्यनवतारेऽपि नोक्तावच्छेदकाभावः कोपीति न केवलान्वयित्वमिति न व्यर्थविशेषणता । न च सर्वो वह्निर्व्याप्यवान्वह्निमान् तत्त्वादित्यनुमानेन स न तद्वान्मेयत्वादित्यादिना सत्प्रतिपक्षेणैवमन्यत्रापीति सर्वमेव सत्प्रतिपक्षितमिति वाच्यम् । सर्वत्र सर्वस्यैवमवताराभावात् न च स्वज्ञानदशायामित्यत्र ज्ञाने यथार्थत्वायथार्थत्वविकल्पः, ज्ञानमात्रस्य विवक्षितत्वात्. भ्रममादायातिप्रसङ्गस्य तादृशावच्छेदकाभावस्वरूपसत्त्वाभावादेवाभावात् । नहि व्यभिचारभ्रमे वास्तवतादृशः सः । न च सत्प्रतिपक्षे विरुद्धाव्याप्यादौ लिङ्गान्तरे कुतो वास्तवसत्त्वमिति वाच्यम् । प्रतीतियलेन तत्र तत्सम्बन्धाभ्युपगमात् स च स्वरूपसम्बन्धविशेष पर्वेयुक्तं हेत्वाभासलक्षणे ।

अन्ये तु यथाश्रुते साध्ये व्यर्थविशेषणत्वाभावेन स्वज्ञानकालमपि साध्ये प्रवेशयंति तेषां ज्ञानमात्रगर्भतायां सद्धेतावतिप्रसङ्गः । प्रमात्वपर्यन्ते च वक्तव्ये सत्प्रतिपक्षेऽव्याप्तिरित्यपि दोषो भवति अस्माकं तु दोषशंकैव न भवतीति संक्षेपः ॥

ननु बाधिते तथा साध्यप्रत्ययाप्रसिद्ध्या तज्जनकतावच्छेदकाभावोऽप्रसिद्ध इत्यत आह लिङ्गेति । तस्यान्यस्य वा लिङ्गस्य भ्रमदशायामित्यर्थः । उक्तारुच्या लक्षणान्तरमाह यद्वेति । तद्वत्त्वं चात्र तद्वृत्तिसमानत्वं विवक्षितमतो न सत्प्रतिपक्षोत्तीर्णेऽतिप्रसङ्गः, न हि पूर्वमेवात्रापि स्वज्ञानदशायामित्यस्ति । अत एव तद्वृत्तिमानत्वस्य तदवच्छिन्नत्वरूपस्य सार्वत्रिकत्वात् विरुद्धत्वादित्यादौ न व्यर्थविशेषणतेति भावः ।

केचित्तु नेह व्यर्थविशेषणता व्याप्तेरुभयगृहीततया व्याप्तिग्रहसामग्रीसम्पादनाय हेत्वनुपन्यासात्, अपि तु समयबन्धादुपन्यस्तस्य हेतुत्वप्रतिपादनाय तद्व्याप्यतानवच्छेदकस्य विशेषणस्य प्रवेशे

पि न क्षतिः प्रतिबन्धकप्रयोजनतयोपन्यस्तस्य विशिष्टस्योभयासिद्ध-व्याप्तिकस्य पंचम्या हेतुत्वाभिधानादित्यपि वदन्ति ।

ननु व्यभिचारित्वादि न प्रतिबन्धकतावच्छेदकं तत्सत्त्वेऽप्यप्रतिबन्धादित्यत आहानुमितीति । तथाचानुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकत्वमसाधकत्वमिति पर्यवसितोऽर्थः । ननु साध्याप्रसिद्धावव्यापकमिदमिति चेन्न । आद्ये स्वज्ञानदशायामिति वचनादेव तदसंग्राह्यत्वलाभात् । अन्त्येऽपि न पदार्थरूपस्य साध्यस्याप्रसिद्धिः, जयगडवशादिवन्निरर्थकत्वात्, किन्तु वाक्यार्थरूपसाध्यस्याप्रसिद्धिर्वाच्या तथा च साध्यज्ञानस्य प्रकृतहेतुनिष्ठव्याप्तिप्रतियोगित्वाप्रकारकत्वमनुमितिप्रतिबन्धकतावच्छेदको धर्मः, स चात्राप्रसिद्धावपि साध्यस्य तद्भ्रमे तथा प्रतियोगित्वप्रकारकत्वाभावादक्षतः । वस्तुतः साध्याप्रसिद्धिः शुद्धमपार्थकं हेत्वाभासानामेवासाधकतासाधकत्वात् अज्ञानरूपासिद्ध्यादीनां त्वपार्थकत्व हेत्वर्थान्वययोग्यताविरहनिश्चयात् हेत्वाभासानां तथात्वेऽप्युपजीव्यतया पृथग्दोषत्वम् । न चाज्ञाने किञ्चिदाभासान्तरं तथोपजीव्यमस्ति, अत एव तेषामनाभासत्वे निग्रहान्तरत्वाभावेऽपि कथायामुद्भावनम्, अन्यथाऽपार्थकाप्रवेशे अन्यत्राप्रवेशे द्वाविंशत्यधिकानिग्रहस्थानानामभावे तदुद्भवनं न स्यादेव । 'हेत्वाभासाश्च यथोक्ताः' इत्यत्रानुक्तरूपसमुच्चयरूपतया चकारव्याख्यानात्तत्समुच्चय । अनुक्तप्रकारसमुच्चयार्थकत्वेन तद्व्याख्यानात् । न हि धर्म्यंशानुक्तोऽपि तु उक्तस्यापि व्याप्त्यसिद्ध्यादेरनुक्तसाध्यविकलदृष्टान्तादिप्रकारतालाभाय चकारकरणात्तदपि तथोद्भावनाय, तेन व्याप्त्यसिद्धिवद्दृष्टान्तसाध्यवैकल्य तेनैव रूपेणोद्भाव्यत इति लभ्यते, तद्वदिहापि साध्याप्रसिद्धिलिङ्गांशाज्ञानाद्यपार्थकान्तर्गतमेव साध्याप्रसिद्धिस्थाविनैवोद्भाव्य न त्वन्यथेति सर्वं सुस्थम् ॥

(१) (अनुगतसम्भवेऽननुगतं हेयमित्यरुचिं मनसि कृत्याह अन्ये त्विति । एवं च लक्षणयोः सुस्थत्वे यथाश्रुतमादाय साध्यप्रत्ययजनकत्व लिङ्गत्वभ्रमदशायां विरुद्धस्यापीति व्यभिचारो यदाकदा-

---

(१) ( ) एतदङ्कितः पाठो तातपादसगृहीतातिप्राचीनालोकपुस्तके दृश्यते कलिकातामुद्रितपुस्तके तु नोपलभ्यत इति ।

चित्तद्जनकत्वं वस्तुमात्र एवेत्यर्थपर्यालोचनया विरुद्धत्वादिहेतौ व्यर्थविशेषणत्वमित्याद्ये। भ्रमरूपमपि साध्यज्ञानं न यत्र तत्र साध्यप्रत्ययजनकत्वाभावो साध्यप्रत्ययप्रतिबन्धकतावच्छेदको धर्मो वा इदमप्यप्रसिद्धमित्युभयोः। प्रतिसाधनं साध्याभाववांश्च पक्षोऽनुमितिप्रतिबन्धकत्वधीविषयतावच्छेदकस्तद्वत्त्वं लिङ्गे नास्ति प्रतिसाधनघटकस्य क्वचिदप्यभावात्, स्वरूपासिद्धे च तादृशपक्षसम्बन्धाभावादिति द्वितीये च दूषणमलग्नकं द्रष्टव्यम्। अन्यत्र चैतत्क्रमात्साध्यप्रत्ययजनकत्वप्रतिबन्धकतावच्छेदकत्वयोः सामान्यतो ग्रहेण विवक्षितसाध्ये दूषणास्पर्शात् तादृशप्रतिसाधनसम्बन्धस्य यथा सत्प्रतिपक्षेऽस्तित्व तथाऽऽभाससामान्यलक्षणे उक्तम्। बाधे च पक्षनिष्ठात्यन्ताभावप्रतियोगिसाध्यकत्वं तथा तद्वत्त्वमस्त्येव हेताविति व्यर्थानि दूषणानि चेत् क्व समाधानवार्ता। यच्च व्यर्थविशेषणतापरिहाराय समाधानं हेत्वाभासत्वनियतसाध्यप्रत्ययाजनकत्वं साध्यमिति। तन्न, तथासति हेत्वाभासत्वस्यैव साध्यत्वौचित्ये तस्यैवासाधकत्वापत्तिरिति दिक्॥)

(१) इति जयदेवमिश्रविरचितः हेत्वाभासानामसाधकतासाधकत्वप्रकरणस्यालोकः समाप्तः॥

---

(१) प्रकरणस्यास्य शिरोमणिना तट्टीकाकारैश्चाव्याख्यातत्वात्मुद्रितोऽप्यालोकोऽत्र मूलपाठसंगमनार्थं प्रदत्त इति॥

गंगेशोपाध्यायकृतानुमानखण्डस्य

# अवशिष्टचिन्तामणिः ।

तत्र

## ईश्वरवादः ।



( चि० ) एवमनुमाने निरूपिते तस्माज्जगन्निर्मातृपुरुषधौरेयसिद्धिः–क्षित्यादौ कार्यत्वेन घटवत् सकर्तृकत्वानुमानात् ।

ननु क्षित्यादि प्रत्येकं न पक्षः, तस्य स्वशब्देनाभिधातुमशक्यत्वात् । नापि मिलितम्, एकरूपाभावात् । अत एव सकर्तृकत्वासकर्तृकत्वविचारारम्भकसंशयविषयः तथाभूतविवादविषयो वा न पक्षः, एकरूपाभावेन तयोस्तावत् ग्रहीतुमशक्यत्वात् वादिनोर्निश्चितत्वेन संशयाभावात् । न च वाद्यनुमानयोस्तुल्यबलत्वेन मध्यस्थस्य संशयः, अनुमानाभ्यां तस्य संशयो मध्यस्थप्रश्नानन्तरञ्चानुमानमिति परस्पराश्रयात् घटेऽपि कदाचित् तयोः सम्भवात्, प्रत्येकं संशये विवादास्पदत्वेनानुमानेऽर्थान्तरत्वापत्तेश्च । न च शरीरापेक्षेण कर्त्रा यन्न कृतं शरीराजन्यं जन्यं वा पक्षः, जन्यात्मविशेषगुणशब्दफूत्कारसर्गाद्यकालीनवेदघटादिलिप्यादिसंप्रदायानामीश्वरमात्रकर्तृकाणामसंग्रहात्, असिद्धेश्च अदृष्टद्वारा शरीरिणोऽपि क्षित्यादिकर्तृत्वात् । नापि जन्यकृत्यजन्यं जन्यम् उभयसिद्धकृतिजन्यान्यजन्यं वा पक्षः, क्षित्यादीनामदृष्टद्वारा जन्यकृतिजन्यत्वात् । नाप्यदृष्टज-

नककृत्यजन्यं जन्यकृतिसाक्षादजन्यं वा पक्षः, ईश्वरकृतेरदृष्टजनकत्वेन क्षित्यादौ तदभावात्। (१)घटादावप्येवं पक्षत्वेनांशतः सिद्धसाधनात्। न च क्षितिरेव पक्षः, अङ्कुरेण सन्दिग्धानैकान्तिकत्वात्। न च निश्चितविपक्षे हेतुसन्देहात् स इति वाच्यम्। हेतौ साध्याभाववद्गामित्वसंशयस्य दूषकत्वात्। स च साध्याभाववति हेतुसन्देहात् हेतुमति साध्याभावसन्देहाद्वा उभयथापि दोषः। न चैवं पक्षेऽपि तत् स्यात्, अनुमानमात्रोच्छेदकत्वेन तदितरत्र तस्य दूषकत्वात्। अङ्कुरे हेतोरनिश्चयेन सन्दिग्धानैकान्तिकम्, तन्निश्चये च साध्यसन्देहवति साध्यानुमितिरेव पक्षवत् सामग्रीसत्त्वात्। अत एवाङ्कुरः पक्षसम इति चेन्न। तस्यापक्षत्वेन हेतोः पक्षधर्मताविरहेण स्थापनानुमानाविषयत्वात्। तदा तस्यापि पक्षत्वे प्रतिज्ञानुपपत्तिः। अनुमानान्तराधीनतत्साध्यानुमित्यनन्तरञ्च पक्षेऽनुमितावितरेतराश्रयान्नैकमप्यनुमानं स्यात् तत्रापि क्षित्या सन्दिग्धानैकान्तात्, क्षितेर्विवादविषयत्वे अङ्कुरे प्रथमं साध्यमाने अर्थान्तराच्च (२)। किञ्चैवमेकैकोपादानाभिज्ञसिद्धावपि नेश्वरसिद्धिः। नापि सर्गाद्यकालीनं द्व्यणुकं पक्षः, परम्प्रति सर्गाद्यसिद्धेः।

किञ्च सकर्तृकत्वं ? न तावत् कृतिमत्सहभावः कृतिमज्जन्यत्वं वा, अस्मदादिना सिद्धसाधनात्। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं तदिति चेत्, न। उपादानगोचरत्वं यदि यत्कि-

(१) घटादेरिति पाठस्य प्रकाशकारसंमतत्वेऽपि सकलादर्शपुस्तकेषु सप्तम्यन्तस्यैवोपलब्धत्वादयमेव मुद्रितः।

(२) अर्थान्तरत्वादिति प्रकाशकृत्सम्मतः पाठः।

क्षित्युपादानगोचरत्वं तदा अस्मदादिनाऽर्थान्तरत्वम्, ज्ञानादिजन्यत्वमपि(१) विवक्षितम्, न च घटोपादानगोचरज्ञानादीनां क्षितिजनकत्वं सम्भवति, व्यभिचारादिति चेन्न । क्षितिजनकादृष्टजनकज्ञानादीनाम् उपादानविषयानियमेनादृष्टद्वारा तैरेव सिद्धसाधनात् । न च साक्षात्तज्जन्यत्वं विवक्षितम्, तद्धि न कृतिजन्याजन्यत्वे सति कृतिजन्यत्वम् स्वजनककृत्यव्यवहितोत्तरक्षणवर्त्तित्वं वा, घटदृष्टान्तस्य साध्यविकलतापत्तेः घटादौ कुलालादिकर्तृकत्वाभावप्रसङ्गाच्च । न च शरीरक्रिया दृष्टान्त इति वाच्यम् । घटेनानैकान्तिकत्वात् चेष्टात्वस्योपाधित्वाच्च । नापि क्षित्याद्युपादानगोचरत्वं विवक्षितम्, अप्रसिद्धेः । न चोपादानशब्दस्य सम्बन्धिशब्दत्वेन घटक्षित्यादिसमभिव्याहारे तत्तदुपादानगोचरत्वं चैत्रो मातृभक्तो मैत्रवदिति वाच्यम् । शाब्दे हि बोधे तथा । न चात्र शब्दः प्रमाणं वादिनोऽनाप्तत्वात् । अनुमाने त्वनुगतेन व्यापकत्वग्रहे तेन रूपेण व्यापकसिद्धिः, तच्चोपादानत्वमेवेति कथं नार्थान्तरम् । किञ्चैवं घटादावपि तत्तदुपादानत्वेनैवोपस्थित्या सामान्येन रूपेण कुत्राप्यनुपस्थितेर्व्याप्तिरेव न गृह्णीत । अपि च सामान्यलक्षणया ज्ञानलक्षणया योगजधर्मरूपया वा प्रत्यासत्त्योपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमताऽस्मदादिना सिद्धसाधनम्, तेषां क्षित्यव्यवहितपूर्वसमयासत्त्वेऽपि तद्धनःसत्त्वाददृष्टद्वारा तेषामपि जनकत्वसम्भवात् ज्ञानादिसाक्षाज्जन्यत्वस्य च निरस्तत्वात् ॥

(१) ज्ञानादीनामपि जनकत्वमिति पाठान्तरम् ।

# महामहोपाध्यायरुचिदत्तकृतो अनुमानखण्डचिन्तामणेः अवशिष्टभागस्य प्रकाशः ।

(प्रका०) एवमियता प्रबन्धेन निरूपितस्यानुमानस्य प्रयोजनं दर्शयति *एवमिति* । जगदिति । *कार्यमात्रेत्यर्थः* । ननु तदप्रसिद्धौ साध्याप्रसिद्धेः कथं तदनुमानमित्यत आह—*क्षित्यादावििति* । तथा च पक्षधर्मताबलात्तत्सिद्धिरिति भावः ।

*मिलितमिति* । एकपक्षतावच्छेदकावच्छिन्नमित्यर्थः । *तयोरिति* । संशयविषयत्वाविवादविषयत्वयोरित्यर्थः । ग्राहकाभावमुक्त्वा ग्राह्याभावमाह* वादिनोरिति* । *सम्भवादिति* । विशेषादर्शनदशायामिति भावः । तथाच तस्यापि पक्षान्तर्भूतत्वे तत्रांशतः सिद्धसाधनमिति तात्पर्यम् । अभ्युपेत्याह *प्रत्येकमिति* । क्षितिः सकर्तृका नवेति प्रत्येकमित्यर्थः । विवादास्पदत्वेनेत्युपलक्षणं तादृशसंशयविषयत्वेनेत्यपि द्रष्टव्यम् । *अर्थान्तरत्वादिति* । विचाराङ्गसंशयविषयतावच्छेदकेन रूपेण पक्षे साध्यसाधनस्य तत्संशयनिवर्त्तकत्वेन प्रकृतार्थसम्बद्धत्वं रूपान्तरेण तत्साधनस्य भिन्नप्रकारकतया तत्संशयानिवर्त्तकत्वेन प्रकृतार्थासम्बद्धत्वादिति भावः । *जन्येति* । जन्यात्मविशेषगुणेऽपि अस्मदादिशरीरस्य कारणत्वात् । सर्गाद्यकालीनचेष्टायस्मदाद्यदृष्टोपार्जितेश्वरोपगृहीतशरीरस्य कारणत्वादिति भावः । *असिद्धेरिति* । अप्रसिद्धेरित्यर्थः । अत्र हेतुमाह *अदृष्टेति* । तथा च न सर्वसंग्रह इति भावः । वाद्यन्तरमतं पदूयति *नापीति* । द्वितीयलक्षणे दोषमाह *घटादेरिति* । चेष्टाद्वारा जन्यकृतेस्तत्र जनकत्वादित्यर्थः । *क्षितिरेवेति* । तथाच नार्थान्तरमिति भावः । *तस्यापक्षत्वेनेति* । परार्थानुमाने प्रतिज्ञाविषयस्यैव पक्षत्वं भवतीति भ्रमवत इदं मुत्तरं बोध्यम् । पक्षत्वे–प्रतिज्ञाविषयत्वे । *सर्गाद्येति* । इदानीन्तनद्व्यणुकमस्मदादिनैव योगजज्ञानवता सकर्तृकं स्यादित्यर्थान्तरशङ्कया सर्गादीत्युक्तम् । अत्र सन्दिग्धानैकान्तिकमपि बोध्यम् ।

साध्यं दूषयितुं पृच्छति *किञ्चेति* । *व्यभिचारादिति* । क्षितिपूर्व

(प्रका०) *अथेति* । अत्र प्रत्यासत्त्यजन्यत्वं विशेषणं पक्षे पक्षासिद्धिवारणार्थं साध्ये तु सिद्धसाधनवारणार्थम् अदृष्टद्वारा योगजादिज्ञानानामपि जनकत्वस्योक्तत्वात् । एवमग्रेऽपि । *ज्ञानाव्यवहितेति* । इदं च वस्तुगतिमभिप्रेत्य न त्विदं साध्यतावच्छेदकप्रविष्टं ज्ञानादिप्रत्येकविशिष्टजन्यत्वस्य साधने साध्याप्रसिद्ध्यादेरभावात् पक्षधर्मताबलेन विलक्षणज्ञानासिद्धेः अत एव सिद्धान्तेऽपि तथैव भविष्यति । *न त्विति* । विवक्षितमित्यनुषज्यते, साध्यतावच्छेदकप्रविष्टत्वेनेति शेषः ।

*पक्षसाध्ययोरिति* । पक्षविशेषणसिद्ध्या आश्रयासिद्धिः, साध्यविशेषणाप्रसिद्ध्या साध्याप्रसिद्धिरिति बोध्यम् । *सिद्धा वेति* । योगजधर्मादजन्योपादानगोचरज्ञानादिसिद्धौ वा तस्याप्यदृष्टद्वारा क्षित्यादिजनकत्वसम्भवात् पक्षे तदजन्यत्वस्यासिद्धेरित्यर्थः । *सिद्धसाधनादिति* । यत्किञ्चिदुपादानाभिप्रायेणेदम् । वस्तुतोऽप्रयोजकत्वाद्विशिष्टसाध्ये न व्यापकत्वमिति बोध्यम् । *साध्याप्रसिद्धेरिति* । यद्यप्यपरोक्षज्ञानजन्यत्वं स्वत एवाप्रसिद्धम् अनुमितेरपरोक्षत्वाभावात्, तथाच किं सविकल्पकजन्यत्वोपवर्णनेन । तथापि घटादेस्तादृशप्रत्यक्षजन्यत्वं नास्ति मानाभावादित्यपरोक्षपदमपास्य ज्ञानघटितमेव साध्यं कर्त्तव्यम् । एवञ्च तेन रूपेण साध्याप्रसिद्धिरुक्तेति भावः ।

वस्तुतस्तु अनुमितित्वेन जन्यसविकल्पकव्याप्तिग्रहजन्यत्वेन चेत्यर्थः, तथा च विशेषणविशेष्योभयाविरहाद्विशिष्टसाध्याप्रसिद्धेरित्यर्थः । *उक्तमिति* । त्वयेति शेषः ॥

( चि० ) अथ सर्गाद्यकालीनं द्व्यणुकं ज्ञानेच्छाकृतिसमानकालीनसामग्रीजन्यं कार्य्यत्वात् घटवत्, अदृष्टसामग्रीजन्यत्वेऽदृष्टत्वापत्तिरिति चेन्न । परं प्रति सर्गाद्यसिद्धेः । ज्ञानादीनां सिद्धावपि द्व्यणुकाजनकत्वात् उदासीनसिद्धावप्रयोजकत्वाच्च । एतेन सर्गाद्यकालीनं द्व्यणुकं द्व्यणुकासमवायिकारणसमकालीनकृतिजन्यमिति निरस्तम् । द्व्यणुकासमवायिकारणसमानकालीनकृतित्वेन गौरवाप्रयोजकाभ्यामजनकत्वात् ।

किञ्च कार्य्यत्वं ? न तावत् योगोपस्थितकृत्यर्ह-

त्वम्, असिद्धेः। नापि पूर्वकालासत्त्वे सत्युत्तरकालसम्बन्धित्वम्, तत्तत्पूर्वकालस्याननुगतत्वात् सकलपूर्वकालस्याप्रसिद्धेः। नापि कादाचित्कत्वं प्रागभावेनानैकान्तिकत्वात्। नापि प्रागभावप्रतियोगित्वं, ध्वंसेनानैकान्तिकत्वात्। नापि सत्त्वे सति तत्त्वं, सत्ताजातेः परं प्रत्यसिद्धेः, स्वरूपसत्त्वस्य च ध्वंसेऽपि सत्त्वात् ॥

(प्रका०) *अथ सर्गेति*। तथाच तत्कालेऽस्मदादिज्ञानाभावात्तदाश्रयेश्वरसिद्धिरिति भावः। न च ब्रह्माण्डान्तरवर्त्तिज्ञानादिकमादायार्थान्तरम्, तत्कालविशेषस्य सकलब्रह्माण्डसाधारणत्वेन युगपदेव तन्नाशासम्भवेन तत्र मानाभावात्। अत्र च सर्गान्तरज्ञानादिसमानकालीनकालादिप्रतिकिञ्चित्कारणजन्यत्वेन सिद्धसाधनवारणाय सामग्रीपदम्। ननु तथापि तादृशादृष्टजनकसामग्र्या अर्थान्तरमस्त्वित्यत आह *अदृष्टेति*। न ह्यदृष्टसामग्री अदृष्टप्रागभावादिघटिताऽन्यत्र जनिकेत्यर्थः। यत्पश्चाददृष्टसामग्रीध्वंसेऽदृष्टसामग्रीजन्यस्वर्गे व्यभिचार इति। तन्न। सामग्र्या नित्यकारणघटितत्वेन ध्वंसासम्भवात्, अदृष्टसामग्र्याः स्वर्गं प्रत्यजनकत्वाच्च। अदृष्टजनकयागादेरेव स्वर्गजनकतया बोधितत्वात्। यद्यप्यदृष्टसहकृतादृष्टसामग्रीजन्यत्वेन घ्रणुकस्य नादृष्टत्वापत्तिरिति। तदपि न। लाघवाददृष्टसामग्रीजन्यत्वस्यैवादृष्टत्वप्रयोजकत्वादिति भावः। ननु मास्तु ज्ञानादीनां घ्रणुकजनकत्वं तथापि तदाश्रयत्वेनेश्वरसिद्धिः स्यादेवेत्यत आह *उदासीनेति*। कार्यकारणभावादितर्काभावान्नोदासीनसिद्धिरिति भावः। उदासीनसिद्धावपि न त्वभिमतप्रयोजकेश्वरसिद्धिरित्यप्याहुः। *घ्रणुकासमवायीति*। तत्पूर्घ्रणुकासमवायीत्यर्थः। न च घ्रणुकान्तरे व्यभिचारः। तस्य पक्षसमत्वादिति भावः।

*असिद्धेरिति*। परं प्रतीति शेषः। न चादृष्टद्वारा कार्यहेतुत्वं तस्मतपीति वाच्यम्। तथापि ध्वंसे व्यभिचारादिति भावः॥

( चि० ) यत्तु अयं घटः एतद्घटकजनकानित्यज्ञानचिकीर्षाकृत्यतिरिक्तज्ञानादिजन्यः कार्यत्वात् पटवदित्यादि। तन्न। विपक्षे बाधकाभावेनाप्रयोजकत्वात्, अन्यथाऽयं घटः एतद्घटजनकानित्यादृष्टातिरिक्तादृष्ट·

जन्यः कार्यत्वात् अपरघटवत्(१)। एतत्(२)सुखदुःखसाक्षात्कारौ एतज्जनकानित्यसुखदुःखातिरिक्तसुखदुःखसाध्यौ सुखदुःखसाक्षात्कारत्वादित्यादिना नित्यधर्माधर्मसुखदुःखाश्रयस्यापि सिद्धिप्रसङ्गात्। अयं घटः स्वजनकानित्यज्ञानाद्यतिरिक्तज्ञानाद्यजन्यः घटत्वात् अपरघटवदित्यादिना सत्प्रतिपक्षाच्च ॥

(प्रका०) *यत्त्विति*। पक्षधर्मताबलान्नित्यज्ञानसिद्धिः। साध्ये पलःपदमकिञ्चित्करम्। अप्रयोजकत्वमेव विशदयति *अन्यथेति*॥

(चि०) केचित्तु—दृश्यते तावदभिमतविषयग्राहिणीन्द्रिये मनो निवेशयतः पुंसो मनःक्रियानुकूलो यत्नः, तथा च सर्गाद्यकालीनशरीरजन्यज्ञानध्वंसानाधारकालाधारज्ञानजनकात्ममनःसंयोगजनिका मनःक्रिया तन्मनोगोचरप्रयत्नानाधारतन्मनोगोचरप्रयत्नतद्व्याप्येतरसकलकारणाधारकालानन्तरकालानाधाराद्यसत्ताका तन्मनःक्रियात्वात् सम्मततन्मनःक्रियावत्, अर्थात् प्रयत्नाधारकालानन्तरकालाधारा सा क्रिया सिद्ध्यतीत्याहुः। तन्न, सर्गाद्यकाले ज्ञानजनकमनःसंयोगजनकक्रियायां मानाभावः पूर्वक्रिययैव संयोगसंभवात्। ईश्वरवादिनां तन्मनोगोचरप्रयत्नानाधारः कालोऽप्रसिद्ध एव, क्रियात्वस्यैव हेतुत्वे व्यर्थविशेषणत्वञ्च। किञ्चैवं प्रयत्नाधारकालानन्तरकालाधारत्वम्, अर्थात् तत्सिद्धौ मानान्तरादीश्वरासिद्धावर्थान्तरत्वमिति।

(प्रका०) *दृश्यते तावदिति*। अनेनवक्ष्यमाणानुमाने साध्यप्रसिद्धिर्दर्शितेति। तथाच सर्गाद्येति। सर्गाद्यकालीनं यच्छरीरं तज्जन्यं यज्ज्ञानं तद्ध्वंसानाधारो यः कालस्तदाधारं यज्ज्ञानं तज्जनको य आत्ममनःसंयोगः तज्जनिका मनःक्रिया पक्षः। न च न्यायनये सर्गप्रलय-

(१) घटवदिति २ पु० पाठः। (२) एतौ सुख० २ पु० पाठः।

धीरनादित्वात् सर्गाद्यकालीनशरीरजन्यध्वंसानाधारकालाप्रसिद्धेः सर्गपदस्यैतत्सर्गपरत्वात्, तथाच सर्गाद्यकालीनज्ञानजनकात्ममनःसंयोगजनकमनःक्रियापक्षत्वे इदानीन्तनक्रियाणामस्मदादिप्रयत्नजन्यत्वादंशतः सिद्धसाधनमिति भावः। न च सर्गाद्यकालीनमनःक्रियेत्येवास्त्विति वाच्यम। सर्गाद्यकालीनत्वस्यान्यत्रापि विशेषणत्वात्। *तन्मन इति* । तन्मनोगोचरप्रयत्नानाधारः तन्मनोगोचरप्रयत्नतद्व्याप्येतरसकलतन्मनःक्रियाकारणाधारो यः कालः तदनन्तरकालानाधारा आद्यसत्ता उत्पत्तिर्यस्याः सा तथेत्यर्थः। अत्राकारणीभूततादृशप्रयत्नाधारकालानन्तरकालाधारत्वसिद्धिप्रसङ्गवारणाय तन्मनोगोचरप्रयत्नतद्व्याप्येतरसकलकारणाधारेति विशेषणम्। एवञ्च कारणीभूतस्यैव तस्य सिद्धिः। न हि भवति इतरसकलक्रियाकारणसत्वेऽपि प्रयत्नव्यतिरेकेणोत्तरक्षणे क्रिया जायते अथ च न प्रयत्नजन्येति। बाधवारणाय तन्मनोगोचरप्रयत्नानाधारेति विशेषणम्। तन्मनोगोचरप्रयत्नानाधारचरमक्षणे तदुत्पादितक्रियासत्त्वाद्बाध इत्यत आह *आद्येति। *अर्थादिति। प्रकारान्तरे बाधादित्यर्थः।

दूषयति *तत्रेति*। तथाच पक्षासिद्धिरिति भावः। *पूर्वेति*। प्रलयकालीनक्रिययैवेत्यर्थः। इदं चोपलक्षणम्, तत्कालीनसंयोगेनापि ज्ञानसम्भवात्। पूर्वसहकारि शरीरविरहेणाजननात्। *क्रियात्वस्येति*। अत्रापि ईश्वरवादिनामित्यनुपञ्जनीयम्, तथाच तत्प्रयत्नमादाय तत्क्रियामात्रे साध्यसत्त्वाद्व्यर्थविशेषणमित्यर्थः। *किञ्चैवमिति*। अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमादित्यर्थः। *अर्थादिति*। अनुमानान्तरादित्यर्थः। तदनुकूलतयातूपन्यासेऽप्राप्तकालत्वमिति ध्येयम्॥

(चि०) अत्रोच्यते अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि जन्यानि अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि स्वजनकादृष्टोत्तरोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि वा अपरोक्षज्ञानचिकीर्षाप्रयत्नविषयीभूतोपादानानि वा समवेतत्वे सति प्रागभावप्रतियोगित्वात् यदेवं तदेवं यथा घटः, तथा चैतानि तस्मात्तथा। उक्तपक्षे कस्यचिदनन्तर्भावेऽपि तदादाय तथैव निरुक्तस्य पक्षत्वनिर्देशे समूहालम्बनरूपैवानुमिति-

रुत्पद्यते । न च जन्यकृत्यजन्यत्वं तावत् अननुगतेष्वेकरूपाभावेन ग्रहीतुमशक्यमिति वाच्यम् । जन्यकृत्यजन्यत्वं हि जन्यकृतिजन्यान्यत्वमित्यन्यत्वेन रूपेण सामान्यलक्षणया तावतामुपस्थितेः । न च जन्यत्वविशेषणाव्यावर्त्त्याप्रसिद्धिः, प्रमेयो घट इतिवदव्यावर्त्तकत्वेऽपि तदुपरक्तबुद्धेरुद्देश्यत्वेन तस्योपरञ्जकत्वात् । उक्तान्यतमत्वमेव सकर्तृकत्वम् । अतएव घटभोक्ता न घटकर्त्ता इति व्यवह्रियते । एवञ्च शब्दफूत्कारादीनां पक्षतैव । ज्ञानेच्छादीनामपि पक्षत्वान्न सन्दिग्धानैकान्तिकता । उपादानस्य सिद्धत्वेऽप्युपादेयस्यासिद्धत्वात्तद्वत्त्वेन तत्रापि चिकीर्षा । यद्वा पक्षे हेतौ च समवेतत्वं न विशेषणं तेन ध्वंसोऽपि पक्षः । साध्ये चोपादानपदं कारणमात्रपरमुपादेयमेव । जन्येच्छाकृत्यजन्यत्वञ्च पक्षे विवक्षितं तेन कृतिध्वंसस्य कृतिजन्यत्वेऽपीच्छाजन्यत्वाभावात् पक्षत्वम् । क्षितिरेव वा पक्षः । न चाङ्कुरे सन्दिग्धानैकान्तिकत्वम् पक्षपक्षसमनैरपेक्ष्येण घटादौ निश्चितव्याप्तेर्लिङ्गस्य तयोर्दर्शनेनोभयत्रानुमित्यविरोधात् ।

(प्रका०) *अदृष्टाद्वारकेति* । अत्रोपादानपदं स्वोपादानपरं, तथाच स्वोपादानगोचरजन्यकृतिजन्या घटादयः प्रसिद्धाः तदन्यत्वे सति जन्यत्वं पक्षतावच्छेदकम् । एतेनोपादानपदं यत्किञ्चिदुपादानपरं तदाऽदृष्टाद्वारकरूपाद्युपादानमृद्गोचरास्मदादिकृतिजन्यानां शब्दादीनां पक्षता न स्यात्, क्षित्याद्युपादानपरत्वेऽप्रसिद्धिरिति परास्तम् ।

नन्वेवमदृष्टाद्वारकेति व्यर्थं अदृष्टद्वारककृतिमादाय प्रकृते दोषासंस्पर्शादिति चेत् ।

अत्र वदन्ति । कांस्यादावौषधलेपादिजनिकया तद्गोचरास्मदादिकृत्याऽदृष्टद्वारा यच्चलनं जन्यते तस्य चेश्वरमात्रकर्तृकस्यासङ्ग्रहादिति तद्विशेषणमिति । तन्न । औषधलेपजनककृतेरदृष्टजनकत्वे मानाभावात् । औषधसंयोगद्वारैव तस्याश्चलनजनकत्वसम्भवात् । न च तत्संयोगध्वंसानन्तरमपि चलनोत्पत्तेस्तद्द्वारकत्वं नेति वाच्यम् । अ-

सिद्धेः। तथासति संयोगध्वंसस्यैव जनकत्वापत्तेश्च। न हि संयोगतद्ध्वंससमययोश्चलनोत्पत्तौ मानमस्तीति। विषचलनादौ मन्त्रपाठादिसाध्ये यद्यप्यदृष्टद्वारकत्वं सम्भवति कृतेस्तथापि न तदुपादानविषाविगोचरत्वम्, किन्तु कण्ठताल्वादिगोचरत्वमेवेति तदर्थमपि नैतद्विशेषणमिति।

अन्ये तु विष्णुप्रतियोगिकस्वात्माभेदचिन्तनजनककृतिजन्यस्वर्गस्य परमेश्वरकर्तृकस्यासङ्ग्रहः स्यादित्यदृष्टाद्वारकत्वं विशेषणं तस्य स्वोपादानगोचरमन्यकृतिजन्यत्वात्। न चैवं तज्जनकादृष्टस्येश्वरकर्तृकस्यासङ्ग्रहः स्यात्, न ह्यदृष्टजननेऽप्यदृष्टं व्यापारः कृतेरिति वाच्यम्। अदृष्टाद्वारकपदस्यादृष्टप्रागभावव्याप्यप्रागभावाप्रतियोगित्वपरत्वादित्याहुः। तदपि न। अदृष्टजन्यकृतिजन्यगङ्गास्पर्शादेरस्मदादिकर्तृकस्य पक्षान्तर्भूतत्वापत्तेः। न चेष्टापत्तिः। अंशतः सिद्धसाधनप्रसङ्गात्। न चोद्देश्यप्रतीतेरसिद्धेर्न तथा, पक्षतावच्छेदकनानात्व एव तस्य दोषत्वादिति वाच्यम्। एवं सति समवेतजन्यमात्रस्यैव पक्षत्वापत्तौ घटादिवारकविशेषणानुपपत्तेः। तथा च प्राचीनमतेनेदम्। न च गङ्गास्पर्शस्यैवादृष्टजनकत्व न तु जनककृतेरिति वाच्यम्। एवं हि अभेदचिन्तनस्यैव स्वर्गादिजनकत्वं न तु तज्जनककृतेरिति तुल्यत्वात्।

अत्राहुः। कालीशरीरे यद्घोरं रूपमुत्पन्नं तत्कालीशरीरगोचरतपश्चरणादिकृत्या जन्यते, सा च कृतिरदृष्टद्वारिका तद्रूपोपादानकालीशरीरगोचरा चेति तद्रूपेऽव्याप्तिवारणायैतद्विशेषणमिति। न चैवमपि निदिध्यासनादेरसङ्ग्रह इति वाच्यम्। तत्र तदुपादानगोचराजन्यकृतेरेवानभ्युपगमात्, अभ्युपगमे वाऽस्मदादिकर्तृकत्वेनासङ्ग्राह्यत्वात् अदृष्टाद्वारकतदुपादानगोचरकृतेरेव तत्कर्तृतानिर्वाहकत्वात्। न चादृष्टाद्वारकत्वमात्मगुणाद्वारकत्वमिति वाच्यम्। कृतिद्वारीभूतात्मगुण एवाव्याप्तेरिति। एवञ्चैतन्मतेऽभेदचिन्तनजन्यस्वर्गेऽव्यव्याप्तिवारणायैतद्विशेषणम्। तज्जनकादृष्टे तु अस्मदादिकर्तृकमेवेति संक्षेपः। ध्वंसे गोत्वादौ चातिव्याप्तिवारणाय जन्यसमवेतपदे। तत्पक्षतायामंशतो बाधापत्तेरितिभावः। अदृष्टाजनकेत्युक्ते बाधः ईश्वरकृतेरप्यदृष्टजनकत्वादिति तद्वारणाय तमेवार्थं अन्यतरेणाह *अदृष्टेति*। अत्र व्याप्तिश्च कालिकी।

ननूपादानपदं यत्किञ्चिदुपादानपरं प्रकृतोपादानपरं वा ? नाद्यः। शब्दादीनामंशतः सिद्धसाधनात्। न च तत्र ज्ञानेच्छयोर्न कारणत्वं किन्तु कृतिमात्रस्यैव मिलितानां तेषां स्वसमवेतकार्ये प्रत्येव जनक-

त्वादिति वाच्यम्। तथापि ज्ञानादिघटितं प्रत्येकं साध्यत्रयं, तथैवाग्रे ग्रन्थकृता विभावनात्। तथाच कृतिमादायांशतःसिद्धसाधनतादवस्थ्यात्। नान्यः। अप्रसिद्धेरिति चेत्।

नैवम्। उपादानगोचरत्वेन यस्य ज्ञानादेर्जनकत्वं तादृशतज्जन्यत्वं साध्यम्, तेन च रूपेण स्वविषयसमवेतकार्यं प्रत्येव तस्य जनकत्वमिति नांशतः सिद्धसाधनम्। नन्वेवमदृष्टप्रागभावेत्यादिविशेषणं व्यर्थम् जन्मान्तरीयज्ञानादीनां तेन रूपेणाजनकतया सिद्धसाधनानवकाशात् इति चेत्। न। कालीरूपेऽभेदचिन्तनजन्यस्वर्गे चांशतः सिद्धसाधनवारकत्वादिति। अत्राऽदृष्टपदं स्वजनकाऽदृष्टपरम्। न चैवं क्वचित्पक्षः क्वचिद्दृष्टान्त इति पूर्वोक्ताऽननुगमस्तदवस्थ एवेति वाच्यम्। सामान्यव्याप्तिग्रहे तस्यादोषत्वात्। तस्या एव प्रकृतानुमानाङ्गत्वेनाभिमतत्वात्। द्वितीयसाध्ये स्वपदोपादानेन तथैव ग्रन्थकृताऽस्पर्योंस्यनात्। अन्यथा स्वपदानुपादानेऽपि जनकत्वगर्भसाध्यमननुगतमेव स्यादिति। अत्र यद्यपि प्रत्यक्षेत्येवं वक्तुमुचितं घट इति वाच्ये ऽनघट इत्यप्रयोगात्, तथापि प्रत्यक्षत्वस्येन्द्रियजन्यत्वे बाधः, साक्षात्त्वजातिपरत्वे परं प्रत्यसिद्धिरित्युभयप्रसिद्धये अपरोक्षेत्युक्तम्। तदर्थस्तु लिङ्गादिकरणकज्ञातान्यज्ञानत्वमुभयसाधारणमेवेति ध्येयम्। *स्वजनकेति*। अत्र स्वजनकेत्यादिविशेषणं पूर्वोक्तकालीरूपाद्यंशतः सिद्धसाधनवारणाय, शब्दे च पूर्वोक्तरूपेणांशतःसिद्धसाधनवारणम्। *अपरोक्षेति*। तादृशज्ञानविषयोपादानसमवेतानीत्यर्थात्। क्त्यर्थलडर्थयोरविवक्षितत्वमत्रेति ध्येयम्। ननु कालीरूपेऽभेदचिन्तनजन्यस्वर्गे चांशतःसिद्धसाधनमिति चेत्। स्वजनकाऽदृष्टोत्तरापरोक्षज्ञानादिविषयोपादानसमवेतत्वस्य विवक्षितत्वात्। न चाऽदृष्टाजनकोत्तरकालीनतादृशज्ञानादिविषयत्वस्यापि सम्भवात् पुनः सिद्धसाधनमेवेति वाच्यम्। ज्ञानादेः स्वजनकत्वेनापि विवक्षणीयत्वात्। उपाधिभेदाच्च न पूर्वसाध्यावैशिष्ट्यम्। समवेतत्व इति। ध्वंसे व्यभिचारवारणाय सत्यन्तम्। गोत्वादौ व्यभिचारवारणाय प्रागभावेत्यादि। पूर्वं निदिध्यासनादेरभेदचिन्तनजन्यादृष्टस्य च स्वोपादानगोचरजन्यकृतिजन्यत्वानभ्युपगमात्, अभ्युपगमे वा अस्मदादिकर्तृकमेवेति न दोष इत्युक्तम्। स्वर्गजनकादृष्टस्य संप्रति तादृशजन्यकृतिजन्यत्वेनास्तु पक्षान्तर्भूतत्वं माऽस्त्वस्मदादिकर्तृकत्वं तेषाम्। अन्यात्मविशेषगुणानामीश्वरमात्रकर्तृकत्वस्य पूर्वमुक्तत्वात्तथापि तमादाय पक्षत्वनिर्देशात् न कोऽपि दोष इत्यभिप्रेत्याह *उक्तेति*। *न च जन्यत्वेति*। दोषायेति शेषः। *तदुपरक्तेति*। उभयसिद्धप्रयोजनकत्वं तन्त्रं

न तु प्रयोजनस्योभयसिद्धिरिति भावः। ननु सकर्तृकत्वे विवादात्साध्यान्तरे क्रियमाणेऽर्थान्तरमित्यत आह *उक्तेति*। ननु कृतिजन्यत्वमेव सकर्तृकत्वं न त्वदृष्टप्रागभावादिघटितमित्यत आह *अत एवेति*। एवं हि भोजकादृष्टद्वारा भोक्तृकृतिजन्यघटे भोक्तृत्ववत् कर्तृत्वव्यवहारापत्तिरित्यर्थः।

ननु यद्युक्तान्यतमत्वमेव सकर्तृकत्वं तदा ध्वंसः सकर्तृको न स्यात्, तथा चानुमानाज्जगन्निर्माणकर्तृसिद्धिरित्यपि न स्यादित्यत आह *यद्वेति*।

ननु पक्षेऽप्युपादानपदं कारणमात्रपरं यथाश्रुतमेव वा? आद्ये शब्दादेरसङ्ग्रहापत्तिः, अन्त्ये कृतिध्वंससङ्ग्रहार्थं जन्येच्छाकृतिजन्यं विशेषणमनर्थकम्, तस्य स्वोपादानाभावेन स्वोपादानगोचरजन्यकृतिजन्यान्यत्वेनैव सङ्गृहीतत्वात्। न चोपादानमधिकरणं विवक्षितं, मृदङ्गादेश्च न शब्दाधिकरणत्वं किन्त्वधिकरणतावच्छेदकत्वमिति वाच्यम्। अधिकरणता समवायेन विवक्षिता सम्बन्धमात्रेण वा? नाद्यः। उक्तदोषात्। नान्त्यः। अवच्छेद्यावच्छेदकभावसम्बन्धेन मृदङ्गादेरपि शब्दाधिकरणत्वात्, अत एव शरीरस्यापि भोगाधिकरणत्वम्, अत एव च मृदङ्गादौ शब्द इति प्रतीतिरिति चेत्।

नैवम्। पक्षेऽप्युपादानपदं कारणमात्रपरम् अनुपादेयमेव वा, जन्येच्छेत्यत्र जन्यज्ञानेच्छेत्यर्थः। अन्यथा प्रतियोगितयेच्छाजन्ये विरोधिगुणत्वेन च जन्यकृतिजनिते इच्छाध्वंसे पक्षतावच्छेदकाव्याप्त्यापत्तेः। एवञ्च शब्दानां सङ्ग्रह एव। मिलितानां ज्ञानादीनां स्वविषये समवेतकार्ये प्रत्येव जनकत्वात्। अतएव तत्राऽस्मदादिना नांशतःसिद्धसाधनम्। न चैवमुक्तस्य साध्यस्य ध्वंसे बाध एव स्यात् तस्यासमवेतत्वात्, ज्ञानादीनां च स्वविषयसमवेतकार्ये प्रत्येव जनकत्वादिति वाच्यम्। अनित्यानामेव तेषां तथात्वावधारणात्। ध्वंसे च नित्यानामेव तेषां जन्यत्वस्य साध्यतात्पर्यावसानात्। न चैवं कुत्रापि महाक्षितिध्वंसादौ नास्मदादीनां कर्तृत्वं स्यादिति वाच्यम्। एतन्मते इष्टापत्तेः, अत एव ध्वंसमात्रस्यैवेश्वरकर्तृकत्वात् ध्वंसोऽपि पक्ष इत्येव ग्रन्थकृतोक्तं न तु ध्वंसविशेष इति दिक्।

अत्र च मते कृतिमात्रघटितं न साध्यमतो नांशतःसिद्धसाधनम्। एतीयसाध्ये उपादानपदं कारणमात्रपरं बोध्यम्, न तु तदेवमेवेति। *पक्ष इति*। प्रतिज्ञाविषय इत्यर्थः। नयोरिति सप्तम्यन्तस्य पक्षपदसमयोरित्यर्थः।

(चि०) न त्वनुमित्योरन्योन्योपक्षत्वं, येनान्योन्याश्रयः स्यात्, प्रतिज्ञाया अविषयत्वात्तत्र पक्षसमव्यपदेशः। न चाङ्कुरस्य पक्षत्वेनानिर्देशात्तत्र न पक्षधर्मताज्ञानमिति वाच्यम्। सिषाधयिषाविरहसहकृतसाधकप्रमाणविरहवति(१) लिङ्गज्ञानस्यानुमितिमात्रकारणत्वात्, तच्च क्षितौ पक्षावयवेनाङ्कुरे स्वत एवेति न कश्चिद्विशेषः। यदि च क्षितौ हेतुनिश्चयदशायां हेतुमत्तयाऽङ्कुरस्य न निश्चयस्तदा क्व सन्दिग्धानैकान्तिकम्? (२)।

अथ पक्षसमे साध्याभावसामानाधिकरण्यसंशयाद्धेतौ व्याप्तिग्रह एव नोत्पद्यते उत्पन्नोऽपि वा बाध्येत इति चेत्, तर्हि महानसेऽपि धूमव्याप्तिग्रहो न स्यात भूतोऽपि वा बाध्येत सन्दिग्धवह्निकपर्वतापर्वतधूमवतामेकधर्माभावेनायोग्यत्वात्, तस्मात्साध्यसन्देहवति हेतुनिश्चयो न दोषः किन्तु गुण एव, अन्यथाऽनुमानमात्रमुच्छिद्येत। पक्षादन्यत्र दूषणमिति यदुक्तं तत्र पक्षान्यत्वं सिषाधयिषितसाध्यान्यत्वं यदि, तदाऽनपेक्षितानुमितिर्न स्यात्। अथ सन्दिग्धसाध्यान्यत्वं साधकबाधकप्रमाणाभावविषयान्यत्वं वा विवक्षितं(३), तदाङ्कुरेऽपि तन्नास्ति। अथ प्रतिज्ञाविषयान्यत्वं, तदा स्वार्थानुमित्युच्छेदः। नियतविषयज्ञानाजन्यत्वेन पक्षविशेषणात् सर्वविषयज्ञानसिद्धिः। साध्ये च ज्ञानेच्छाप्रयत्नानां विशेषणत्वेन विशिष्टस्य साधनत्वं विवक्षितम्, तेन न तदुपलक्षितक्षेत्रज्ञेनाऽर्थान्तरम्, सामान्यतोऽपि साध्यनिर्देशे पक्षधर्मताव-

(१) प्रमाणाभाववतीति पाठान्तरम्।

(२) १ म पंक्तिमारभ्यैतदन्तश्चिन्तामणिः १९५३ पृष्ठेऽन्वितः प्रमादादत्र मुद्रित इत्यवधेयम्।

(३) विवक्षितमिति नास्ति का०लि० मु० पुस्तके।

लेनाभिमतविशेषसिद्धेः(१)।

(प्रका०) तस्मादिति। तथाच व्यभिचारज्ञानस्य दूषकत्वम्, तथोक्तं साधारणानैकान्तिकलक्षणव्याख्यानावसरे। ननु सर्वत्र घटादेः पक्षान्तर्भूतत्वात्तदुपादानगोचरत्वेन ईश्वरज्ञानस्यासिद्धेर्न सर्वविषयत्वसिद्धिरित्यत आह *नियतेति*। उपादानगोचरेति विशेषणान्नाश्रयासिद्धिः। तृतीयकोटेरभावादनियतविषयज्ञानजन्यत्वसिद्धिरित्यर्थः। पक्षोपनीतमानवादिमते।

ननु साध्यगतेनोपादानपदेन क्षित्याद्युपादानमेव न विवक्षितं किन्तु घटाद्युपादानमपि, तथाच घटाद्युपादानगोचरज्ञानादीनां क्षित्याद्यजनकत्वेऽपि तदुपलक्षितास्मदादेर्जनकत्वसम्भवादर्थान्तरम्, न च तेषां न सर्वविषयत्वम्, अनादौ संसारे योगिनस्तादृशज्ञानादेरपि सम्भवादित्यत आह *साध्ये चेति*। साधनत्वं-जनकत्वम्।

(चि०) नन्वाद्यसाध्यद्वये, घटाद्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतीनामेव जनकत्वमायातित्यर्थान्तरम्। न च तेषां व्यभिचारात् क्षित्यादावकारणत्वमिति वाच्यम्। अनादौ प्रवाहे कस्यचित् कदाचित् क्षितिद्व्यणुकादिपूर्वं घटाद्युपादानगोचरज्ञानादिसत्त्वात्। न च सर्गाद्यकालीनस्यापि पक्षत्वात्तत्रेश्वरसिद्धिः, परं प्रति तदसिद्धेरिति चेत् न।

ज्ञानादीनां त्रयाणां स्वविषयसमवेतकार्यं प्रत्येव जनकत्वावधारणेनैतदनुमानस्य तदविषयत्वात्। अत एवान्योपादानगोचरापरोक्षज्ञानाद्यजन्यत्वेन पक्षविशेषणमपि न युक्तम्। तृतीयसाध्ये तु नार्थान्तरं क्षित्यादेर्घटाद्युपादानासमवेतत्वात्।

ननु सामान्यलक्षणादिप्रत्यासत्त्या क्षित्याद्युपादानगोचरं यत् प्रत्यक्षं तज्जन्यत्वमेवास्तु, तथाचेश्वरे न प्रत्यक्षं न चेच्छाप्रयत्नौ तयोः समानाधिकरणज्ञानाविषयेऽसत्त्वात्। न च तादृशप्रत्यासत्त्यजन्यत्वं प्रत्यक्षे विशेषणं, परं

(१) सिद्धिश्चेति पाठान्तरम्।

प्रत्यसिद्धेरिति चेन्न ।

द्रव्यत्वेन ज्ञानलक्षणया, वा कपालगोचरप्रत्यक्ष... घटादावकर्तृत्वात् क्षित्यादौ सकर्तृत्वनिर्वाहकं ज्ञानं सि... ध्यत्तद्विलक्षणमेव सिध्यति । न चावयवविभागद्वारा क्षित्यादिषु जलक्षेपात् समुद्रादिषु हस्तक्षेपात् परमाणुद्वयसंयोगे च द्व्यणुकेऽस्मदादिकर्तृकत्वादंशतः सिद्धसाधनमिति वाच्यम् । तत्र हि क्षितिनाशे अस्मदादीनां कर्तृत्वं न खण्डक्षितौ, अवस्थितसंयोगेभ्य एव तदुपपत्तेः सकलतदुपादानगोचरज्ञानेच्छाकृतीनामभावाच्च । अत एव द्व्यणुकेऽपि न कर्तृत्वं, जलक्षेपादधिकपरिमाणसमुद्रादेः सपक्षत्वमेव घटस्येव ।

(प्रका०) *नन्विति* । ननूपादानगोचरत्वेन जनकत्वस्य पूर्वं विवक्षणात् घटोपादानगोचरस्य तथात्वान्नेयं शङ्केति चेन्न । तेनैव रूपेण जनकत्वमस्त्वप्यायातु इत्यर्थान्तरापादनसम्भवात् । न च तेषामसर्वविषयत्वान्न तैरर्थान्तरमिति वाच्यम् । व्यापकतावच्छेदकप्रकारनैयत्यमनुमितौ यन्मते तत्र सर्वविषयत्वसिद्ध्यर्थमग्रे प्रकारान्तरमेव भविष्यतीति तन्मतेनैतत्सम्भवात् । *ज्ञानादीनामिति* । अस्मदादिज्ञानादीनामदृष्टाद्वारकारणमिति शेषः । *अत एवेति* । बाधेन तत्सिद्धिप्रसङ्गाभावादित्यर्थः ।

*द्रव्यत्वेनेति* । प्रत्यासत्त्येति शेषः *तद्विलक्षणमिति* । तथाच सामान्यज्ञानप्रत्यासत्तिजन्यप्रत्यक्षयोः स्वरूपायोग्यत्वात् तज्जन्यत्वेन नार्थान्तरम् । न च योगिप्रत्यक्षमादाय दोषः । तादृशानानायोगिकल्पने गौरवादेकस्यैव सिद्धेरिति भावः । *कर्तृत्वमिति* । एतच्च यन्मते ज्ञानादीनां स्वविषयसमवेतकार्यं प्रत्येव जनकत्वं तन्मतेनेति ध्येयम् । *अत एवेति* । द्व्यणुकोपादानपरमाणुगोचरप्रत्यक्षादेरभावादित्यर्थः । *सपक्षत्वमेवेति* । तत्र प्रक्षिप्तजलबिन्दुसमुद्रयोरेवावयवत्वेनोपादानगोचरज्ञानादिसम्भवादस्मदादिकर्तृत्वमित्यर्थः ।

(चि०) ननु घटे साध्यविकलत्वम् अन्वयव्यतिरेकाभ्यां ज्ञानादेरेव जनकत्वात् न तु तदाश्रयस्य धर्मिग्राहकस्यान्वयव्यतिरेकस्य वा ग्राहकस्याभावात् । न च घट

आत्मजन्य उत्पत्तिमत्त्वात् ज्ञानवदिति वाच्यम्। आत्मसमवेतत्वस्योपाधित्वात्, घट आकाशजन्य उत्पत्तिमत्त्वात् शब्दवदितिवत् अप्रयोजकत्वाच्चेति चेत्।

मैवम्। प्रयत्नवदात्मसंयोगश्चेष्टाद्वारा घटहेतुरतः प्रयत्नवदात्मापि हेतुः। न चात्मसंयोगे सत्यपि प्रयत्नं विना न चेष्टेति प्रयत्न एव तत्कारणम्, असमवायिकारणं विना कार्य्यानुत्पत्तेः। न चात्मसंयोगस्य कारणत्वेऽपि संयोगपरिचायकमात्रमात्मेति वाच्यम्। संयोगमात्रस्याकारणत्वेन संयोगिविशेषितस्य हेतुत्वात्। आत्मसंयोगव्यतिरेकप्रयुक्तक्रियाव्यतिरेकस्यासिद्धेर्नात्मसंयोगः कारणमिति चेन्न। या क्रिया व्यधिकरणयदीयगुणजन्या सा तत्संयोगासमवायिकारणिका यथा स्पर्शवद्द्रव्यसंयोगजक्रियेति तत्सिद्धेः। न च क्रियाया मूर्त्तमात्रसमवेतासमवायिकारणत्वानियम इति वाच्यम्। कार्य्यमात्राभिप्रायेण ज्ञानादौ व्यभिचारात् विशिष्याऽप्रयोजकत्वात् असमवायिकारणसंयोगाश्रयस्य तत्कार्य्यजनकत्वनियमाच्च।

(प्रका०) *नन्विति*। तथाच घटादौ व्यभिचारोऽपीति भावः। *आत्मेति*। आत्मवृत्तित्वस्येत्यर्थः। यद्वा समवेतत्वपक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरिति न ज्ञानध्वंसादौ साध्याव्यापकत्वम्। *हेतुत्वादिति*। विशेषणत्वे बाधकं विना उपलक्षणत्वस्यायुक्तत्वादिति भावः। *आत्मेति*। तथा चात्मसंयोगस्य क्रियायामेव न हेतुत्वं कुतस्तद्द्वारा घटेऽपीत्यर्थः। *क्रियेति*। कपालरूपजन्यघटरूपे व्यभिचारादाह क्रियेति। स्पन्द इत्यर्थः। गुरुत्वजन्यपतनक्रियायां वेगजनितक्रियायां च व्यभिचारादाह *व्यधिकरणेति*। नन्वाम्रादिपतने व्यभिचारः, स्वव्यधिकरणस्वाश्रयावयवीयाम्रादिजन्यत्वात् स्वाश्रयावयवसंयोगाजन्यत्वाच्चेत्यत आह गुणेति। अत्र गुणजन्यत्वं गुणव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वम्, तेनेश्वरज्ञानादिजन्यत्वेऽपि क्रियायां नेश्वरसंयोगोऽसमवायिकारणमिति व्यभिचारो न भवतीति। युक्तेश्चैवयाच-

स्याप्यसमवायिकारणत्वमित्यप्याहुः। एतेन मन्त्रपाठजन्यविषचलने व्यभिचारो निरस्तः, इष्टापत्तेः। अदृष्टाद्वारकत्वेन विशेषणाद्वा मन्त्रस्याशुं विनाशित्वेनादृष्टद्वारकत्वात्। ननु तुलायामेकदिगवस्थिताधिकगुरुजन्यापरादिगवस्थितोन्नमनक्रियायां व्यभिचार इति चेत्। न, तत्राधिकगुरुत्वाश्रयद्रव्यसंयुक्तसंयोगस्योन्नमनहेतुत्वात् पङ्कादौ तस्य तद्धेतुत्वकल्पनात्। न चैवं व्यधिकरणपदं व्यर्थम्, वेगादिजन्यक्रियायां तथापि व्यभिचारात्। न चादृष्टवदात्मसंयोगस्यैवं कारणता न स्यादिति वाच्यम्। व्याप्त्यन्तरेणापि तत्सम्भवात्। तथाचानुपदमेव वक्ष्यामः। नन्वेवमपि क्रियायामात्मकारणत्वसिद्धावपि घटे न तत्सिद्धिः, तथा च साध्यवैकल्यं तदवस्थमेवेति चेत्,। न। मूर्त्तवृत्तियत्कार्यं यदीयगुणनिमित्तकारणकं तत्तत्समानाधिकरणसंयोगजन्यमिति व्याप्त्या तत्सिद्धेः। यदि च व्यभिचारशङ्का, तदाऽत्र विशेषणान्तरमपि प्रवेश्यम्। न चात्र विपक्षबाधकाभावः। अप्रत्यासन्नस्य जनकत्वेऽतिप्रसङ्गात्, पूर्वव्याप्तावपि तदेव विपक्षबाधकमिति संक्षेपः।

*विशिष्येति*। क्रियाया इत्यत्र क्रियापदेन कर्ममात्राभिधान इत्यर्थः। *असमवायीति* प्रकृताभिप्रायेण, कारणसंयोगाश्रयस्येत्यत्र तात्पर्यम्।

(चि०) अन्ये तु अनुकूलकृतिसमवायित्वं कर्तृत्वं न तु जनकत्वे सति, गौरवात्। कर्त्तरि कारकव्यवहारश्चाभियुक्तानां "सविशेषण" इति न्यायेन कृतिपर्य्यवसन्न एव। एवं ज्ञानेच्छाकृतिजन्यत्वमेव साध्यं तदाश्रयत्वमेवेश्वरस्य कर्तृत्वम्।

अथ घटे कृतिसाध्येष्टसाधनताज्ञानं चिकीर्षाद्वारा हेतुः, तच्च न प्रत्यक्षं चिकीर्षाविषयेऽनागते इन्द्रियासामर्थ्यात्,(१) किन्तु अनुमितिरूपं, तथा च साध्यविकलो दृष्टान्तः साध्याप्रसिद्धिर्वेति चेन्न।

सिद्धवृत्त्यसिद्धविषया हि कृतिः सिद्धविषयप्रत्यक्षे सति संभवति, न हि मृदवयवानां संस्थानविशेषे कृतिसाध्येष्टसाधनतानुमितावप्यवयवस्य प्रत्यक्षेणोपस्थि-

(१) सन्निकर्षादिति पाठान्तरम्।

तिं विना प्रवृत्तिः, अतएव यागे शब्दात्तदुपजीविलिङ्गाद्वा कृतिसाध्येष्टसाधनत्वेऽवगतेऽपि हविरादीनां प्रत्यक्षेणानुपस्थितौ न प्रवृत्तिः। न चोपादानप्रत्यक्षं प्रवर्त्तकज्ञानोपक्षीणम्। अप्रत्यक्षपरमाणौ तन्नुक्रियायामिष्टसाधनताज्ञानेऽप्यप्रवृत्तेः। प्रवृत्तिविषयस्य मृदङ्गादेः प्रत्यक्षत्वान्न शब्दफूत्कारादिना व्यभिचारः। न चाभिमतग्राहकेन्द्रियसंयोगान्मनसि प्रयत्नजन्यक्रियाप्रदर्शनाच्च व्यभिचारः, अदृष्टसहकृतत्वगिन्द्रियेण हि मनोवहनाडीनामुपलम्भेन तद्गोचरप्रयत्नान्नाडीक्रिया ततः स्पर्शवद्वेगवन्नाड्या नोदनान्मनसि क्रिया न तु प्रयत्नात्। अतएव जलाद्यभ्यवहारमलोत्सर्गहेतुनाडीनामनाद्यभ्यासवासनावशाददृष्टसहकृतत्वगिन्द्रियेणोपलम्भात् तद्गोचरः प्रयत्नः।

नन्वेवं घटादावनुमितेर्जन्यत्वदर्शनादीश्वरेऽनुमितिरपि सिध्येत्, यथा च प्रत्यक्षस्येन्द्रियजन्यत्वेऽपि नित्यं तदीश्वरे तथानुमितेर्नित्यं जन्यत्वेऽपि सा तत्र नित्यैव अनित्येनानादिद्व्यणुकाद्यजननादिति चेन्न। सुखदुःखाभावादिसाधनानुमिते तर्हि घटादौ हेतुत्वं गृह्यतं, न च तावता शरीरादृष्टाभावेन सुखमस्यतो न क्षित्यादौ तस्यानुमितिर्यथार्था सम्भवति। न च तादृशानुमितेरनुमित्यन्तरस्य वाऽनुमितित्वेन घटादौ प्रवृत्तिविषयप्रत्यक्षवद्धेतुत्वं गृहीतमतो नेश्वरेऽनुमितिः।

ननु द्वेषजन्यकृतिसाध्ये चिकीर्षाविरहाद् व्यभिचारः तद्दृष्टान्तेन क्षित्यादौ द्वेषसाध्यत्वादीश्वरे द्वेषोऽपि स्यात् द्वेषवतः संसारित्वेन भगवतोऽपि तथा त्वापत्तिरिति चेन्न। न हि सर्पादिद्वेषादेव तन्नाशानुकूलव्यापारे कृतिरुत्पत्तुमर्हति, प्रयोजनं विना दुःखैकफले प्रेक्षावतां

कृतेरनुपपत्तेः, किन्तु दुःखसाधनध्वंसं तत्साध्यदुःखानुत्पादं वा फलमुद्दिश्य तत्साधनताज्ञानात्, तथा चेष्टसाधनताज्ञानात्तत्रेच्छाऽस्त्येवेति सैव कृतिकारणं क्लृप्तत्वात्, द्वेषस्तु परम्परया तदुपक्षीणः। कुतस्तर्हि द्वेषसिद्धिः? शत्रुं द्वेष्मीति अबाधितप्रत्ययात्। न चादृश्यस्य कर्तुरनुपलब्धिबाधः, अनुपलब्धिमात्रस्य बाधकत्वेऽतीन्द्रियोच्छेदात्, योग्यानुपलब्धेश्चासिद्धेः परात्मनोऽयोग्यत्वनियमात्, शशशृङ्गप्रतिबन्द्या च नादृश्यमात्रनिरासः, परमाण्वादिस्वीकारात्। नाप्ययोग्यकर्तृकनिरासः, चेष्टया ज्ञानादिमतः परात्मनोऽनुमानात् परं प्रति तस्यायोग्यत्वात्। नापि शृङ्गे पशुत्ववदप्रयोजकम्, कर्तुः कार्यमात्रे कारणत्वावधारणात् प्रतिबन्दिमात्रस्यादूषणत्वात्। शशे पशुत्वेनायोग्यशृङ्गसिद्धिः कुतो नेति चेत्, न अर्थान्तरत्वात् विपक्षे बाधकाभावात्(१)व्याप्त्यसिद्धेः शृङ्गत्वस्य योग्यसंस्थानविशेषव्यङ्ग्यत्वेनायोग्यस्य विरोधेन शङ्कितुमशक्यत्वात्, शशे शृङ्गस्यात्यन्ताभाव इति सर्वेषामबाधितप्रत्यक्षबाधितत्वाच्च। अथ कृतिकार्यत्वयोर्नान्वयव्यतिरेकाभ्यां व्याप्तिग्रहः त्वन्मते व्यापककृतेः सत्त्वे तद्देशे समये वा कृतिमात्रव्यतिरेकानिरूपणात्। नित्यकृतेरन्वयोऽपि न गृहीतो वह्निमात्रव्यतिरेकोऽस्ति गृह्यते च। न चैवमाकाशात्मनोरप्यसिद्धिः समवायिमात्रस्य व्यतिरेकानिरूपणेन कार्यं समवायिकारणजन्यमिति व्याप्तेरसिद्धेरिति वाच्यम्। समवायिकारणत्वग्रहे हि तत्संसर्गाभावोऽप्रयोजको निमित्तमात्रसाधारणत्वात्, किन्तु यत्समवायि तत्र कार्यं

(१) बाधकाभावेनेति पाठान्तरम्।

**पक्ष समवायि तत्र नेत्यन्योन्याभावमादाय कार्यं समवायिजन्यमिति व्याप्तिग्रहसम्भवात्, समवायित्वेन तयोरन्योन्याभावोऽस्ति गृह्यते च।**

(प्रका०) विशेष्ये बाधे सत्येव "सविशेषणे हि" इति न्यायावतार इत्यपरितोषं हृदि निधायाह—*अन्ये त्विति*। कृतीत्युपलक्षणं ज्ञानेच्छेत्यपि द्रष्टव्यम्, अत एवानुपदं तथैव विभावयिष्यति। *साध्याप्रसिद्धिर्वेति*। यद्युक्तदोषभिया दृष्टान्तस्त्यज्यते तदा प्रकृतसाध्याप्रसिद्धिरेव दोष इत्यर्थः। ननूपादानप्रत्यक्षं विनापि शब्दार्थिप्रवृत्तेर्व्यभिचार इत्यत आह—प्रवृत्तिविषयस्येति। न ह्युपादानप्रत्यक्षत्वेन कारणत्वं ब्रूमः किन्तु प्रवृत्तिविषयप्रत्यक्षत्वेन, प्रवृत्तिविषयश्च न गगनादि किन्तु स्वशरीरादिकमेव तच्चास्मदादिप्रत्यक्षमेवेति न व्यभिचार इत्यर्थः। अत्र वायवीयशरीरप्रत्यक्षाभावेन तद्गोचरप्रयत्नाभावात्तत्र कथं चेष्टेति चिन्त्यम्। *अदृष्टेति*। न चादृष्टवदात्मसंयोगादेव तत्र क्रियोत्पत्तिरस्तु किं प्रयत्नेनेति वाच्यम्। स्वतन्त्रान्वयव्यतिरेकानुविधायित्वादिति भावः। *न च भगवतीति*(१)। न चायथार्थैव साऽस्त्विति वाच्यम्। विशेषदर्शनवत ईश्वरस्य तदसम्भवादिति भावः। ननु स्वसुखादिसाधनतानुमितित्वेन न कारणत्वं किन्तु स्वेष्टसाधनतानुमितित्वेन, तत्र बाधः विश्वस्येश्वरेच्छाविषयत्वादित्यपरितोषादाह—*नचेति*। तथापि तादृशानुमितित्वेन न कारणत्वं किन्तु तादृशज्ञानत्वेन, तादृशं च तत्प्रत्यक्षमेव भवतीति पक्षधर्मताबलात्तदनुमितावपि प्रत्यक्षजन्यत्वमेव सिध्यतीति भावः। रागवतः—इच्छावतः। *द्वेषस्त्विति*। दुःखे तत्साधने वा यतो द्वेष उत्पद्यते ततस्तदभाव इच्छा भवति नत्वन्यथा द्वेषाविषयघटाद्यभाव इच्छाविरहात्, तथा च दुःखादिद्वेषो दुःखाभाव इच्छामुत्पादयति ततः कृतिरितीच्छायामेव तदुपक्षय इत्यर्थः। इदं च प्रवृत्तिप्रयत्नमभिप्रेत्य—निवृत्तिप्रयत्ने तु द्वेषजन्यत्वमेव समानविषयत्वेन लाघवेन प्रवृत्तिं प्रत्येव चिकीर्षाया हेतुत्वात्, निवृत्तौ तु समानविषयतया द्वेष एव हेतुर्न भिन्नविषयचिकीर्षा। न च प्रवृत्तिविरह एव निवृत्तिः, वैपरीत्यापत्तेः, तदुक्तं कुसुमाञ्जलौ—'प्रवृत्तिप्रयत्नो रागान्निवृत्तिस्तु द्वेषादिति'। न चैवं कथं व्यभिचारोद्धारः निवृत्तेः क्रियाविरहहेतुत्वेन प्रवृत्तिसाध्यतानियमेन कार्या-

(१) अत्र मूले वाधतेति कलिकातापुस्तकस्थपाठो मुद्रितः किन्तु भगवतीत्येव टीकाकारसंमतो बोध्यः।

णां चिकीर्षाजन्यत्वस्वीकारात्। नन्वेवं कुत इत्यादिग्रन्थः कथं इत्थं कारणान्तरमेव निवृत्तेः कल्प्यतामित्याक्षेपे शत्रुं द्वेष्मीत्यनुव्यवसाय-साक्षिके तत्र ततोऽन्यत्कारणं न कल्प्यमिति परिहार इत्येतदभिप्राय-कत्वादिति।

वस्तुतस्तु प्रवृत्तिविरह एव निवृत्तिः। न च वैपरीत्यं, सुषुप्तिद-शायामपि निवृत्तिविरहस्य सत्त्वेन प्रवृत्तिकार्यचेष्टादिकार्यापत्तेः। न च तदा निवृत्तिरेवास्तीति वाच्यम्। तत्कारणद्वेषाभावे तदभावात्। द्वेषाभावश्च तत्कारणदुःखसाधनत्वज्ञानाभावात्। तथा च प्राचीनमते ग्रन्थकर्त्तुरनुशयप्रकाश एवायमिति मन्तव्यम्। एवञ्च यथाश्रुत एवा-ग्रिमग्रन्थः सुकर इति।

यत्र तु धूमवन्ह्यादौ व्याप्तिग्रहः सिद्धस्तत्र साध्यसामान्यव्यति-रेकग्रहोऽस्त्येवेति न व्याप्तिग्रहस्तद्व्यभिचारीति दर्शयति *वह्निमात्रेति* *समवायिमात्रस्येति*। आकाशात्मादेरपि व्यापकस्य समवायित्वाभ्यु-पगमादिति भावः।

(चि०) यद्वा भावकार्य्यं समवेतमिति व्याप्त्या तयोः सिद्धिरिति, यथा हि यद्वह्नेरन्वये धूमो गृहीतस्त-त्तद्व्यतिरेके धूममात्रव्यतिरेकग्रहात् वह्निधूममात्रयोर्व्या-प्तिग्रहः न तु पर्वतीयवह्नेः रन्वयव्यतिरेकग्रहात्। न चान्या-न्वयव्यतिरेकाभ्यामन्यव्याप्तिग्रहेऽतिप्रसङ्ग इति वाच्यम्। यद्विशेषयोरन्वयव्यतिरेकग्रहः तत्सामान्ययोर्बाधकं वि-ना व्याप्तिग्रहात्, स च वह्निधूमव्याप्तिग्रहे उत्पद्यमानः स-कलधूमगोचरो धूमत्वपुरस्कारेण प्रसिद्धधूमगोचर एव वा भवति, तथेहापि कृतिविशेषकार्य्यविशेषयोरन्वयव्य-तिरेकग्रहो बाधकं विना कृतिकार्य्यत्वमात्रयोर्व्याप्तिग्रहे उपायः, न तु पक्षधर्मताबललभ्यविशेषान्वयव्यतिरेक-ग्रहः अनुमानमात्रोच्छेदप्रसङ्गात्। एतेन—

कार्य्यत्वस्य विपक्षवृत्तिहतये सम्भाव्यतेऽतीन्द्रियः
कर्त्ता चेद्व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिध्यति।
दृश्योऽथ व्यतिरेकसिद्धिमनसा कर्त्ता समाश्रीयते

तस्यागोऽपि तदा तृणादिकमिति व्यक्तं विपक्षेक्षणम् ॥

इति निरस्तम् । ननु यदि कर्तृमात्रव्यतिरेकग्रहाददृश्यकर्तृसिद्धिस्तदा वह्निमात्रव्याप्यधूमाददृश्यजाठरीयवह्निसिद्धिरपि स्यात् । न स्यात्, अदृश्यवह्नेर्धूमानुत्पत्तेः दृश्यस्यैव तत्र हेतुत्वात् ।

ननु ज्ञानेच्छाप्रयत्नत्रयव्यतिरेकान्न कार्यव्यतिरेकः किन्तु एकैकव्यतिरेकात् तथा च व्यर्थविशेषणत्वेन विशिष्टव्यतिरेको न हेतुव्यतिरेकव्याप्य इति न हेतोर्विशिष्टसिद्धिः साध्याभावव्यापकाभावप्रतियोगिन एव साध्यगमकत्वादिति चेन्न । यत एकैकव्यतिरेकात् कार्यव्यतिरेकोऽत एव कार्यत्वादेरेकैकं सिध्यत्त्रयमपि सिध्यति, आर्थस्तु समाजः ।

(प्रका०) ननु द्रव्यस्य गुणकारणत्ववत्समवायिकारणत्व विशिष्ट न ग्राह्यं किन्तु समवायित्वसमानाधिकरणकारणमेव तद्, तथा चोभयग्राहकसमाजादुभयग्रहे आर्थः समाज इत्यपरितोषादाह *पक्षेति* । *बाधकऽपिनति* । सामान्येन रूपेण व्यभिचारज्ञानाभावे सति ततो व्याप्तिग्रह इति भाव । सकलधूमगोचर इति स्वमते, प्रसिद्धधूमगोचर इति परमते, तत्र सामान्यलक्षणानङ्गीकारादिति ध्येयम् ।

*कार्यत्वस्येति* । कार्यत्वस्य हेतोर्विपक्षवृत्तित्वनिवृत्तये सर्वत्र तृणादौ कार्येऽतीन्द्रियः कर्ता चेत्स्वीक्रियते तदा क्वापि तद्व्यतिरेकनिश्चयो नेति तद्धेतुर्याः कथं व्याप्तिर्ज्ञायेत, अथ तद्व्यतिरेकसिद्ध्यर्थं तथा दृश्य एव कर्ता चेत्स्वीक्रियते तदा तद्विरहेऽपि तृणादौ कार्यत्वमस्तीति तत्रैव विपक्षे तस्य व्यक्तमीक्षणमित्यर्थः । दृश्यस्य-योग्यस्य, तथा चाविन्धनवह्नेर्दृश्यमानधूमोत्पत्तिः समर्थिता तस्यापि योग्यत्वादिति भावः । *व्यर्थविशेषणत्वेनेति* । अखण्डाभावानभ्युपगन्तृमतेनेदम् । *साध्याभावेति* । केवलान्वयी नास्त्येवेति भाव । अत्र केवलान्वयिव्यवस्थापनाद्व्यतिरेकव्याप्तिग्रहविरहेऽप्यन्वयव्याप्तिसत्तामात्रेणानुमित्यविरोधेन चान्वयव्याप्तावेव व्यर्थविशेषणत्वाद्य विशिष्टव्यापकत्वग्रहः विशिष्टस्य कारणत्वेन विपक्षबाधकसम्भवात्, अन्यथा इन्धनविशिष्टवह्नावपि धूमव्यापकत्व न गृह्यत । न च तत्र वह्निमात्राद्धूमानुत्पत्तेर्विशिष्ट

कारणतावच्छेदकं प्रकृते चात्मत्वमेव लाघवादिति वाच्यम्। अन्यात्मनि ज्ञानादौ सत्यपि आत्मनः कार्यस्य पटादेरुत्पत्तिप्रसङ्गभयेन ज्ञानादेरवश्यं कारणतावच्छेदकत्वात्। न च तेषामपि कारणत्वान्न कारणतावच्छेदकत्वमवच्छेदकत्वे न करणत्वं दण्डत्ववदिति वाच्यम्। उक्तहेतोरवच्छेदकत्वेऽपि ज्ञानाद्युत्कर्षदर्शनेन कार्योत्कर्षदर्शनात्तेषामपि कारणत्वात्, अत एवालोकरूपस्यावच्छेदकत्वेऽपि व्यञ्जकत्वमिति सिद्धान्त इति यद्यपि तथाप्यभ्युपेत्याह—*यत इति*।

अन्ये तु साध्ये व्यर्थविशेषणता हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य गुरुण्यपि साध्यतावच्छेदके सुग्रहत्वात्। अवच्छेदकतायां हि भवति गौरवं दोषो यथा हेतुनिष्ठनीलधूमत्वादौ। साध्यतानिष्ठधर्मे त्ववच्छेदकत्वं ग्राह्यमेव न, किन्तूक्तप्रतियोगितावच्छेदकत्वाभावः, स च गुरुण्यपि सुग्रह एव, अन्यथा तादृशधर्मस्योक्तप्रतियोगितानवच्छेदकत्वस्य केनापि प्रमाणेनाग्रहे प्रतियोगितावच्छेदकत्वमेव सिद्धं स्यादित्याशङ्क्यान्योन्याभावगर्भव्याप्तौ साध्यवत्त्वावच्छेदेन साधनसमानाधिकरणान्योन्याभावाप्रतियोगित्वस्य ग्राह्यतया तत्र कल्पे व्यर्थं विशेषणत्वमेव नीलधूमत्ववदवच्छेदककोटिप्रवेशादित्याहुः।

(चि०) स्यादेतत् अशरीरसर्वज्ञनित्यज्ञानादिमान् कर्त्ता पक्षे विवक्षितः घटादौ च कार्यत्वस्य तद्विपरीतकर्तृसहचारादिदर्शनाद्विशेषविरुद्धत्वमिति चेत्। न। हेतोर्विवक्षितसाध्यविपरीतसहचारमात्रस्यादूषकत्वात्, अन्यथानुमानमात्रोच्छेदप्रसङ्गात्। न चानित्यज्ञानासर्वज्ञशरीरिकर्तृत्वेन समं कार्यत्वस्य व्याप्तिरस्ति येन तद्विपरीतसाधने विरुद्धत्वं स्यात्, तादृशव्याप्तिश्च त्वया मया वा नाङ्गीक्रियते अङ्कुरादौ योग्यानुपलम्भेन शरीरिकर्तृत्वाभावात्। अथ यथादर्शनबलप्रवृत्तव्याप्त्याऽनित्यज्ञानादिमान् कर्तोपनेयः पक्षधर्मतया च नित्यज्ञानादिमान्, तथा चोपनेयविशेषयोर्विरोधेन व्याप्तिपक्षधर्मतयोर्विरोधात् परस्परसहकारिताविरहान्नानुमानं विशेषविरोधादिति चेन्न। अनित्यज्ञानादिकर्तृजन्यत्वेन व्याप्त्यभा-

वात् ज्ञानादिमत्कर्तृजन्यत्वव्याप्तेः पक्षधर्मताबलेभ्यः विशेषाविरोधात् केवलाया व्याप्तेश्च पक्षधर्मतायाश्च पृथगुपनायकत्वाभावाच्च एकवैयर्थ्यप्रसङ्गाच्च। तथा च निरपेक्षतादशायां विशेषानुपस्थापनादेव न विरोधज्ञानम् सापेक्षतादशायाश्च सहोपलम्भादेव विरोधप्रतियोगिनोः सिद्ध्यसिद्धिभ्यां विरोधभावज्ञानाभावाच्च। लिङ्गविशेषेण साध्यविशेषेण च विरोधे च विशेषविरोधः, यथा चन्दनप्रभववह्निमानयं सुरभिधूमवत्वादिति। ननु ज्ञानत्वनित्यत्वयोः कर्तृत्वाशरीरित्वयोश्च परस्परविरुद्धत्वेन एकधर्म्यसमावेशात् कथं नित्यज्ञानादिकर्तृसिद्धिरिति चेत्, न उपसंहारस्थानस्याभावात्। तथाहीश्वरे तद्बुद्धौ च शरीरित्वकर्तृत्वे बुद्धित्वनित्यत्वे च उपसंह्रियमाणे विरुद्धे न तु स्वाश्रयस्थिते उभयोच्छेदप्रसङ्गात्। न चेश्वरस्तद्बुद्धिर्वोपस्थिता, उपस्थितौ वा धर्मिग्राहकमानेन तयोर्विरोधापहारात्, अनुपस्थिते च तद्द्वये विरोधज्ञानमकिञ्चित्करमेव अस्मदादिबुद्धौ व्योमादौ कुविन्दे मुक्तात्मनि च उपस्थिते विरोधापसंहारात्। बुद्धित्वनित्यत्वयोः कर्तृत्वाशरीरित्वयोरनधिगमेऽपि ईश्वरेऽशरीरिकर्तृत्वनित्यज्ञानादिसिद्धिरप्रत्यूहैव। अत एव नित्यत्वावयवत्वयोर्विरोधज्ञानमकिञ्चित्करमेवेति परमाणुसिद्धिः। ईश्वरतद्बुद्ध्यादिकं तर्कितमिति चेन्न। तर्कस्य प्रसञ्जनस्य सशयस्य चाऽज्ञातेऽसम्भवात्।

(प्रका०) *योग्येति*। शरीराभावस्य योग्यानुपलम्भेन ग्रहे विशिष्टाभावस्यानुमानादित्यर्थः। क तर्हि विशेषाविरोधो दूषणमित्यपेक्षायामाह *लिङ्गेति*। *उपसंहारेति*। यद्यपि घटत्वपटत्वयोरपि विरोधो न स्यात्तथापि तदुभयाश्रयैकसाधकमानाभावात्तद्भान्न सिद्ध्यति प्रकृते च न तदभावः अत एव यत्र तत्साधकमान तत्र विरोधभा·

नमकिञ्चित्करमित्याह *अत एवेति* । *साक्षात्साधनत्वमिति । तथा-
च कृतेर्न हस्तादिव्यापारो द्वारमिति भावः ।

( चि० ) स्यादेतत् घटादौ कृतिसाध्यता हस्तादिव्या-
पारादिद्वारैव न तु साक्षात् । न च पितापुत्रयोरेकघटसा-
धनत्वमिव प्रयत्नहस्तादिव्यापारयोः साक्षात् साधकत्वं
वाच्यमिति वाच्यम् । घटार्थे हस्तव्यापारादिना व्याप्रिय-
माणकुलालसमीपदेशस्थस्य हस्तादिव्यापारशून्यस्य त-
द्घटकर्तृत्वापत्तेः । न च हस्तादिव्यापारवत्ताऽशरीरस्य
सम्भवति । अन्यादृशी च कृतिसाध्यता न दृष्टा, शरीर-
तद्व्यापारौ चाङ्कुरे बाधिताविति कर्त्तुरपि बाध एव, अन्य-
था तदनुमानात् क्षेत्रज्ञ एव कर्त्ता अनुमीयेत युञ्ज्यादिम-
नुपरात्मनो योग्यानुपलब्धिबाधाभावात् । शरीरव्यापा-
रद्वारैव क्षेत्रज्ञस्य हेतुत्वात् शरीरव्यापारस्य चाङ्कुरे
बाधात् बाधित इति चेत् । तर्हि कर्तृमात्रस्यापि तद्द्वारैव
चेष्टेतरकार्ये कर्तृत्वदर्शनात् तद्बाधे कर्तृनात्रबाधो-
ऽपि । एवञ्च कृतिसाध्यत्वे शरीरव्यापारजन्यत्वं प्रयो-
जकमिति स एवोपाधिः । एवं ज्ञानेच्छयोरपीच्छा-
कृतिद्वारा जनकत्वमिति कथं द्वारं विना क्षित्यादौ
जनकत्वमिति ।

( प्रका० ) *तद्द्वारैवेति* । यद्यपि सर्गाद्यकालीनं घटादिकं प्रति
शरीराधिष्ठातुरीश्वरस्य न बाधस्तथापि परेण तदनङ्गीकारादिति भा-
वः । *चेष्टेतरेति* । यदि चाभेदचिन्तनादावप्यस्मदादिकर्तृकत्वं तदा
तदितरेत्यपि बोध्यम् । तत्रापि चेष्टाभावादिति । *एवञ्चेति* । चेष्टे-
तरकार्यं एवं बोध्यम् *द्वारं विनेति* । द्वारत्वस्य जन्यत्वगर्भत्वा-
दिति भावः ।

( चि० ) उच्यते । जन्यमात्रे हस्तादिव्यापारजनककृ-
तित्वेन न जनकत्वं चेष्टायां क्षित्यादौ च व्यभिचारात्,
किन्तु घटादौ तथा जनकत्वमिति जन्यमात्रे कृतिमा-

त्रस्य जनकत्वविरोधिविशेषयोर्जन्यजनकभावे बाधकं विना सामान्ययोरपि तथाभावनियमात्। न हि विशेषे विशेषप्रयोजकत्वेन सामान्ये सामान्यप्रयोजकत्वविरोधः। चेष्टेतरकार्ये शरीरव्यापारद्वारैव कृतेर्हेतुत्वात् तेन विना क्षित्यादौ न कृतिसाध्यत्वमिति चेन्। न, चेष्टेतरकार्यमात्रे शरीरव्यापारजनककृतित्वेन न जनकत्वं क्षित्यादौ व्यभिचारात्, किन्तु तद्विशेषघटादौ इत्युक्तत्वात्। न चैवमामवातजडीकृतकलेवरस्य प्रयत्नादेव घटोत्पत्तिः स्यात् हस्तादिव्यापारं विनैव कृतेर्हेतुत्वादिति वाच्यम्। घटे कृतिवत् हस्तादिव्यापारस्यापि हेतुत्वात्। यदुक्तं–'क्षेत्रज्ञ एव कुतो नानुमीयत' इति। तत्र हस्तादिव्यापारककृतिमान् यदि क्षेत्रज्ञोऽभिमतः तदा हस्तादिव्यापारस्याङ्कुरे योग्यानुपलब्धिबाधात्। अथ हस्तादिव्यापाररहितकृतिमानभिमतस्तदोमित्युच्यते स एव भगवानीश्वरः। अत एव 'सहभावनिरूपकत्वे नियतपूर्ववर्त्तित्वं कारणत्वं समवाय्यसमवायिनोस्तथात्वेन निमित्तेऽपि तथा भावात्। अन्यथा प्रतिबन्धकाभावानन्तरं प्रतिबन्धकसत्त्वकाले कार्यं स्यात् प्रतिबन्धकाभावस्य पूर्वं सत्त्वात्, न च कृतेः सहभावनिरूपकत्वं स्वतः, कार्यसमयेऽभावात्, तथा च तत्परिचायितव्यापारद्वारा तस्याः सहभावनिरूपकत्वमतः शरीरव्यापारद्वारैव कृतेर्जनकत्वं न केवलाया' इत्यपास्तम्। समवाय्यसमवायिप्रतिबन्धकाभावानामविनश्यदवस्थत्वेन कारणत्वात् तथैवान्वयव्यतिरेकात्। तेन तेषामभावे विनाशक्षणे च न कार्य्यम्, अन्यथा प्रतिव्यक्ति कार्य्यसहभावनिरूपणे कार्य्योत्पत्तेः प्राक् सहभावस्य निरूप-

पितुमशक्यत्वात्, कारणत्वानिश्चयेन क्वापि प्रवृत्तिर्न स्यादिति। तज्जातीयत्वस्यावश्यवाच्यत्वे विनश्यदवस्थं कथं सहभावेनापि व्यवच्छेद्यम्, अतः स्वरूपयोग्यतारूपा कारणता तत्रापि। कार्याभावस्तु सहकारिविरहात्, अन्यथा निमित्तानां प्रत्येकं कार्यसहभावनिरूपकत्वेन जनकत्वे गौरवम्, प्रागभावस्य प्रतियोग्यजनकत्वप्रसङ्गश्च। अन्यथा उत्पन्नोऽपि पुनरुत्पद्येत सामग्रीसत्त्वात्। न च स एव तत्र प्रतिबन्धकः, अभावान्तरस्य तत्राकारणत्वेन कारणीभूताभावप्रतियोगित्वरूपस्य प्रतिबन्धकत्वस्य प्रागभावकारणत्व एव विश्रामात्। न चैका सामग्री एकदा एकमेव कार्यं जनयति स्वभावादिति वाच्यम्। सामग्रीतद्विरहस्य कार्यतदभावप्रयोजकत्वेन सामग्र्यां सत्यां कार्यस्य, तदभावे कार्याभावस्य वज्रलेपायितत्वात्।

(प्रका०) प्रत्युतानुकूल्यमित्याह *विशेषयोरिति। अन्यथेति*। प्रतिबन्धकाभावस्य निमित्तत्वादिति भावः। प्रतिबन्धकाभावस्य-प्रतिबन्धकप्रागभावस्य। *अन्वयव्यतिरेकादिति*। अन्यथा निराश्रयं रूपाद्युत्पद्येतेति भावः। तत्रापि-विनश्यदवस्थेऽपि। *गौरवमिति*। एतच्च वस्तुगतिमनुरुध्योक्तम्। वस्तुतः सहभावगर्भेऽपि हेतुत्वे यत्र सहभावो न स्वतस्तत्रास्तु हस्तादिव्यापारद्वारा प्रकृते तु नित्यकृतेः स्वत एव तत्सहभाव इति किं तदपेक्षयेति बोध्यम्। इष्टापत्तिमाशङ्क्य प्रागभावहेतुत्वं साधयति *अन्यथेति। विश्रामादिति*। एतेन-प्रतियोगिप्रतिबन्धकत्वाभ्युपगमेन सर्वत्र प्रतिबन्धकाभावेऽपि न कार्यसहभूतत्वेन हेतुत्वं किन्तु यत्र तथान्वयाद्यनुविधानं तत्रैव तथेति विभावितम्। अत एव सिद्धेः प्रतिबन्धकत्वेऽपि तद्विरहरूपायाः पक्षतायाः न तथा कारणत्वमिति। *एकदेति*। एकामिति सम्पातायातं एकदैव जनयतीत्येव प्रकृतसङ्गतेरिति।

(चि०) स्यादेतत् कर्त्ता शरीर्य्येव ज्ञानमनित्यमेव बुद्धिरिच्छाद्वारैव कृतिद्वारैवेच्छा हेतुरित्यादिसाधर्मिकव्याप्तिमत्पक्षविरोधात् नाशरीरानित्यज्ञानादिकर्तृसिद्धिः।

अत एव शरीरमनित्यमेवेति नियमान्न कर्तृत्वेन नित्यातीन्द्रियशरीरसिद्धिरीश्वरे। न चाप्रयोजकत्वम्, निरुपाधित्वेन शङ्काकलङ्कानवतारात्। कार्य्यत्वसकर्तृकत्वयोर्यदि निरुपाधिकत्वमस्ति तदापि तुल्यबलत्वेन सत्प्रतिपक्षात् तत्प्रतिबन्धो(१)ऽस्तु। न च कार्य्यत्वं पक्षधर्म्मतासत्त्वाद्बलीयः कर्त्ता शरीर्य्येवेत्यादौ तन्नास्तीति वाच्यम्। ज्ञानमनित्यमेवेति व्याप्तेरेव क्षित्यादौ ज्ञानजन्यत्वविरोधित्वात्। एवं कार्य्यं ज्ञानजन्यं ज्ञानमनित्यमेवेत्यनयोर्विरोध एव, अविरोधे तु द्वयमपि स्यात्, तथा च क्षित्यादौ शरीर्य्यनित्यज्ञानपर्य्यवसाने विरोध एव स्यात(२)। किञ्च ज्ञानमनित्यमेवेत्यादौ नित्यज्ञानादेरप्रसिद्धेः तदव्यावर्त्तकतया नोपाधित्वनिश्चयस्तत्संशयो वा, कार्य्यत्वसकर्तृकत्वव्याप्तिग्रहदशायां शरीरव्यापाराव्यभिचारात् उपाधेर्निश्चयः संशयो वास्तीति।

तन्न। ज्ञानमनित्यमेवेत्यादिव्याप्तेरसिद्धेः, विपक्षबाधकाभावेनाप्रयोजकत्वात्। निरुपाधिसहचारदर्शनव्यभिचारादर्शनादेव व्याप्तिग्रहः निरुपाधित्वमेव वा विपक्षे बाधकमिति चेन्न। अवयवो महानेव तेज उद्भूतरूपमेवेत्यादि व्याप्तिग्रहात् परमाणुनेत्रादेरसिद्धिप्रसङ्गात्। अथ द्रव्यचाक्षुषत्वेऽनेकद्रव्यवत्त्वस्य, साक्षात्कारे विषयेन्द्रियसन्निकर्षस्य हेतुत्वात् तन्मूलकविपक्षबाधकेन परमाण्वादिसाधकस्य बलवत्त्वात् परमाण्वादिसिद्धौ विरोधिव्याप्तिर्बाधः, न तु वैपरीत्यं विपक्षे बाधकाभावेन तस्याबलवत्त्वादिति मन्यसे, तर्हि ज्ञानादिकार्य्यकारणभावावधारणात् तन्मूलकविपक्षबाधकेन निष्कलङ्कव्या-

(१) पक्षवत्ताविरोध इति पाठान्तरम्।

(२) बाध एवेति पाठान्तरम्।

प्तिग्रहात् पक्षधर्म्मताग्रहसहितान्नित्यज्ञानादिसिद्धौ व्यभिचारान्न व्याप्तिः । अन्यथा साध्यं पक्षातिरिक्त एवेत्यादिनिरुपाधिसहचाराद्व्याप्तिग्रहे सकलानुमानोच्छेदः ।

( प्रका० ) *बुद्धिरिति । कर्तृत्वनिर्वाहकं हेतुत्वं बुद्धेरिच्छाद्वारैवेति भावः । *सत्प्रतिपक्षवदिति* । एतेन सत्प्रतिपक्षच्छाययैवास्या व्याप्तेः प्रतिबन्धकत्वे हेत्वाभासान्तरत्वशङ्का नेति दर्शितम् । *बलीय इति* । तथाच न सत्प्रतिपक्षत्वं तुल्यबलत्वाभावादिति भावः । *विरोधित्वादिति* । तथाच पक्षधर्मताविनाकृताया अपि तस्या विरोधित्वात्तुल्यबलत्वमस्त्येवेति भाव. । *किञ्चेति* । ज्ञानमनित्यमेवेति व्याप्तौ संसारिज्ञानत्वनित्यज्ञानान्यज्ञानत्वादिकमुपाधिर्वाच्यः, स चेश्वरनित्यज्ञानयोर्व्यावर्त्त्ययोरभावाद्य सम्भवतीत्यर्थ इत्याहुः । वयं तु ज्ञानमनित्यमेवेति व्याप्तावनित्यत्वरूपसाध्यव्यापकस्योपाधेर्ज्ञानत्वरूपसाधनाव्यापकत्वं नास्मदादिज्ञाने ग्राह्यं तत्रोपाधिसद्भावादेव अनित्यत्वस्य तद्व्याप्यस्यास्मदादिज्ञानेपि सत्त्वात्, अन्यथा साध्याव्यापकतयैवानुपाधितापत्तेः, तथाच नित्यज्ञाने साधनाव्यापकत्वं ग्राह्यम् । तच्च न सम्भवति तदसिद्धेः, अत एवाह तद्व्यावर्त्तकतयेति । तत्र ज्ञानत्वरूपसाधनाव्यापकतया य उपाधिस्तन्निश्चयस्तत्संशयो वा नास्तीत्यर्थ इति विभावयामः । उपाधेरिति । शरीरव्यापारजन्यत्वरूपस्येत्यर्थः ।

( चि० ) वयन्तु ब्रूमः । पक्षधर्म्मताबलान्नित्यं ज्ञानं सिध्यत् बुद्धिरनित्यैवेति व्याप्तिप्रत्यक्षेण न प्रतिबध्यतेऽस्मदादिबुद्धिविषयकत्वेन भिन्नविषयकत्वात् एकविषयविरोधिज्ञानस्यैव प्रतिबन्धकत्वात् नित्यत्वानित्यत्वयोरेकजातीये द्रव्येऽविरोधात् । बुद्धिमात्रेऽनित्यत्वावगमात् कथं तद्विशेषे नित्यत्वबुद्धिरिति चेन्न । बुद्धिमात्रस्येश्वरानीश्वरबुद्धिपरत्वे विरोधात् व्यभिचाराच्च । अस्मदादिबुद्धिपरत्वे च भिन्नविषयत्वेनाप्रतिबन्धकत्वात् । बुद्धित्वं नित्यावृत्त्येवेत्यवगतमतस्तत्र कथं नित्यवृत्तित्वावगम इति चेन्न । उभयसिद्धनित्यावृत्तित्वावगमेऽप्यतिरिक्तनित्यवृत्तित्वावगमो विरोधा-

भावात् । बुद्धित्वमनित्यत्वव्याप्यमवगतं नाऽनित्यत्वाभाववति ज्ञानव्यमिति चेत् । न । अनित्यत्वव्याप्यमनित्यमात्रवृत्तित्वं तत्र चोक्तमेव । एतेन 'कर्त्ता शरीर्य्येवेत्याद्यपि ज्ञानं प्रतिबन्धकमिति' निरस्तम् ।

ननु कर्तृजन्यत्वे जन्यत्वं नावच्छेदकं, किन्तु घटत्वादिकमेव तेनैव रूपेणान्वयव्यतिरेकग्रहात् आवश्यकत्वाच्च, अननुगतमपि जन्यतावच्छेदकं वह्निजन्यतायां धूमत्वादिवत् । अथ घटत्वादिवज्जन्यत्वमवच्छेदकं न हि विशेषोऽस्तीति सामान्यमप्रयोजकम्, तथा च वह्निजन्यत्वे धूमविशेषः प्रयोज्योऽस्तीति न धूमसामान्यमग्निं गमयेत्, तस्मात्तद्विशेषयोः कार्य्यकारणभावः तत्सामान्ययोरपि बाधकं विना तथात्वनियम इति चेत् । न, तत्र बाधकाभावात् अत्र च ज्ञानमनित्यमेवेत्यादिप्राथमिकबहुव्याप्तौ बाधात्, तुल्यत्वे वा व्याप्तिसंशयाधायकत्वात् । न च कार्य्यकारणभावमूलकत्वेन कार्य्यत्वव्याप्तिर्बलीयसीति वाच्यम् । विरोधिप्रत्यक्षेण कार्यकारणभावस्यैवासिद्धेः । एतेन 'धूमादौ वह्निजन्यतावच्छेदकमनुगतं न सम्भवति इह तु जन्यत्वमनुगतमस्त्यतो बाधकं विना न मुच्यते इति' निरस्तम् । ज्ञानमनित्यमेवेत्यादिसहचारावसायस्य बाधकं विना पक्षधर्म्मव्याप्तिपर्य्यवसायितत्वेन बाधकत्वादिति ।

मैवम् । निरुपाधित्वेन सहचारावसायस्य साधकं बाधकं च विना साधारण्येन व्याप्तिसंशयाधायकत्वात् । अन्यथा साध्यं पक्षातिरिक्त एव सुखं दुःखसम्भिन्नमेवेत्यादिव्याप्तिग्रहस्य कार्य्यकारणभावग्राहकबाधकत्वे तत्संशयाधायकत्वे वा कारणानुमानोच्छेदे निरीहं जगज्ञा-

येत। तस्माद्यद्विशेषयोः कार्य्यकारणभावस्तत्सामान्ययोः कार्य्यकारणभावो बलवता बाधकेनापनीयते, न चात्र तदस्ति, विरोधिव्याप्तिसाधकस्य विपक्षबाधकस्याभावात्।

(प्रका०) ननु यथा ज्ञानीदर्कार्ययोः कार्यकारणभावस्तत्र विपक्षबाधकस्तथाऽत्रापि निरुपाधित्वस्य व्यवस्थापितत्वात्सदेव विपक्षे बाधकमस्त्वित्यपरितोषं हृदि निधायाह *वयंत्विति*। यद्यपि ज्ञानत्वावच्छिन्ने सर्वत्रैवानित्यत्वावगमात्तदवच्छिन्ने न नित्यत्वावगमः अन्यथा बाधोपि प्रतिबन्धको न स्यात्। तथापि सामान्यलक्षणानङ्गीकर्त्तुस्तादृशं ज्ञानमेव न भवति, भिन्नविषयकं च ज्ञानं न प्रतिबन्धकं, क्वचिन्नास्तीति ज्ञानानन्तरं क्वचिदस्तीति ज्ञानस्यानुभवसिद्धत्वात् अस्मन्मते तु विपक्षबाधकाभावेन तादृशव्याप्तेरेवासिद्धिः। न चैवं बाधोऽपि प्रतिबन्धको न स्याद्भिन्नविषयत्वादिति वाच्यम्। सामान्यलक्षणानङ्गीकर्त्तुरिदमनिष्टं नास्माकमित्याशयात्। सामान्यरूपेण कार्यकारणभावे सत्युक्तरूपं ज्ञानमप्रामाण्यशंकास्कन्दितमिति न प्रतिबन्धकमित्यपि वदन्ति। *व्याप्तीति*। व्याप्तौ पर्यवसायितयेत्यर्थः।

(चि०) नव्यास्तु कार्य्यं कर्तृजन्यमिति व्याप्तावशरीरनित्यज्ञानकर्त्तुरुपस्थितौ ज्ञानमनित्यमेवेत्यनेन विरोधप्रतिसन्धानं न तु तां विना, प्रतियोग्यनुपस्थितौ विरोधानिरूपणात्, तथा चोपजीव्यबाधात् ज्ञानमनित्यमेवेति व्याप्तिज्ञानमकिञ्चित्करमेव। अत एव पक्षधर्मताविनाकृतं विरोधिव्याप्तिज्ञानं न हेत्वाभासस्तयोक्तं विरोधप्रतियोगिसिद्ध्यसिद्धिपराहतत्वादिति।

(प्रका०) *नव्यास्त्विति*। ज्ञानमनित्यमेव कार्यं ज्ञानजन्यमेवेत्यनयोः स्वरूपतो विरोधाभावात् द्वितीयव्याप्त्या पक्षधर्मतासहितया नित्यज्ञानोपस्थापने सति स स्यात्तथा च विरोधज्ञानमकिञ्चित्करम् उपजीव्यविरोधादित्यर्थः। अत्रेदमनभिमतिबीजम् ज्ञानमनित्यमेवेत्यनेन ज्ञानत्वावच्छेदेनापि नित्यत्वावगमात्पक्षधर्मतावलादपि न ज्ञाने नित्यत्वग्रहः नित्यत्वानित्यत्वयोर्विरोधस्य पूर्वावधारितत्वादिति परस्याभिमतं न

तु नित्यानित्यपक्षनयोर्विरोधप्रतिसन्धानं प्रतिबन्धकत्वेनाभिमतं येनो पजीव्यविरोधः स्यात्, तथा च पूर्वोक्तसमाधानमेवात्र द्रष्टव्यम्।

(चि० ) स्यादेतत् अस्तु शरीरजन्यत्वमुपाधिः । न च पक्षेतरत्ववत्पक्षमात्रव्यावर्त्तकविशेषणवत्त्वात् साधनविशेषितत्वात् साधनतुल्ययोगक्षेमत्वेन साध्यव्यापकत्वानिश्चयाच्च नोपाधित्वं, चेष्टेतरकार्येषु शरीरव्यापारद्वारैव कर्त्तुः कारणत्वात् शरीरसहकृतस्यैव स्वकार्ये कारणत्वाच्च । न हि शरीरविनाकृतः कर्त्ता शरीरक्रिया घटादिकं वा जनयति । न च यत्सहकृतं यज्जनकम् तेन विना तज्जनकम् अतोऽर्थाच्छरीरजन्यमेव कर्त्तृजन्यमिति साध्यव्यापकत्वनिश्चयात् । पक्षेतरत्वादौ च विपक्षबाधकाभावान्न साध्यव्यापकतानिश्चय इति तेषामनुपाधित्वे बीजम्। अत एव बाधोन्नीतं वह्नीतरत्वं वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वं, रसवत्त्वेन गन्धवत्त्वे साध्ये पृथिवीत्वमुपाधिः विपक्षबाधकैस्तेषां साध्यव्यापकत्वनिश्चयात्। न च साधनविशेषितत्वमपि,जन्यत्वं हि प्रागभावप्रतियोगित्वं, शरीरजन्यत्वञ्च शरीरकारणवत्त्वम्, अन्यानिरुक्तेः इतरपदसमभिव्याहारेण जन्यपदादितरकारणकस्यैव प्रतीतेस्तदर्थकत्वकल्पनादिति विभो वक्ष्यते । अत एव शरीरिकर्तृकत्वमुपाधिः शरीरसहकृतस्यैव कर्त्तुः कारणत्वात् व्याप्यं व्यापककोटावनिवेशयत एव प्रमाणस्य व्याप्तिग्राहकत्वात् । शरीरिकर्तृकत्वसकर्तृकत्वयोर्न व्याप्तिग्रह इति चेन्न । विशिष्टाविशिष्टभेदेन व्याप्यव्यापकभावाविरोधात् । अत एव जन्यत्वेन कारणजन्यत्वमनुमीयत इति ।

( प्रका० ) *साधनेति* । यद्यपि समवेतत्वघटित साधनं, तत्र

न विशेषितं, तथापि ध्वंससाधारणपक्षत्वे जन्यत्वमात्रस्यैव साधनत्वमिति तदभिप्रायेणेदम् साधनविशेषितवत्साधनैकदेशविशेषितोऽपि नोपाधिरित्यभिप्रायेण चेदं बोध्यम् । आर्द्रेन्धनेति । इदं च पक्षमात्रव्यावर्त्तकविशेषणस्य साधनविशेषितस्य चोदाहरणं बोध्यम् । *व्याप्यमिति* । अभेदे व्याप्तिरूपसम्बन्धाग्रहादिति भावः । *विशिष्टेति* । तथाच सम्बाधितावच्छेदकभेदग्रहात्सम्बन्धग्रहो नानुपपन्नः नीलघटयोरभेदसंबन्धग्रहवदिति भावः । *कारणजन्यत्वमिति* । यद्यपि पदान्तरसमभिव्याहृतजन्यत्वस्य तत्कारणकत्वार्थत्वेन नात्र व्याप्यस्य व्यापककोटिप्रवेशस्तथापि कारणजन्यत्वं कारणप्रागभावव्यापकप्रागभावप्रतियोगित्वं प्रागभावप्रतियोगित्वमात्रं जन्यत्वं विवक्षितम् । शरीरजन्यत्वोपाधौ तु शरीरकारणकत्वमेव विवक्षितम्, तेन तस्य पूर्वोक्तसाधनविशेषितस्योद्धारो नासङ्गत इति भावः ।

( चि० ) नैवम् । कर्तुर्हि शरीरसहकारिता किं घटादौ कर्त्तव्ये कार्य्यमात्रे वा स्वकार्य्ये वा ? आद्ये कर्त्ता शरीरं विना घटादिकं न करोतीति किमायातं कर्त्तुः कार्य्यमात्रकरणे ? द्वितीये च कार्य्यमात्रं कर्तृजन्यमिति न त्वया स्वीक्रियते, स्वीकारे वा शरीराजन्यमपि कार्य्यं कर्तृजन्यमिति साध्याव्यापकत्वम् । तृतीये तु स्वजन्यत्वं न स्वजन्यतावच्छेदकमात्माश्रयात् । तथापि यत्र कर्तृत्वमस्ति तत्र शरीरजन्यत्वमावश्यकमिति तस्य साध्यव्यापकत्वम्, तुल्ययोगक्षेमत्वेन हेतुव्याप्यतासंशयाधायकत्वेन सन्दिग्धोपाधित्वं वेति चेन्न । लाघवेन बाधकं विना कर्तृजन्यत्वे सति जन्यत्वमवच्छेदकं न तु शरीजन्यत्वं गौरवात्, तथा च शरीरजन्यत्वं न सकर्तृकत्वव्यापकम् । घटादौ त्वार्थः समाजः, घटत्वेन शरीरजन्यत्वनियमात् न तु व्यापकत्वात्प्रयुक्तः मानाभावात् । शरीरजन्यत्वं न सकर्तृकत्वव्यापकं तद्व्याप्यजलत्वाव्यापकत्वात् नित्यत्ववदिति बाधकात् हस्तादिनापि कर्त्तृत्वनिर्वाहेण शरीरस्याप्रयोजकत्वात् साक्षात्-

प्रयत्नाधिष्ठेयजन्यत्वस्य साधनव्यापकत्वाच्च। शरीर-कर्तृकत्वमपि नोपाधिः जन्यमात्रे कर्त्तुः शरीरसहकारिताविरहात्।

(प्रका०) ननु स्वजन्यत्वं न स्वजन्यतावच्छेदकमुक्तं किन्तु शरीरं स्वजन्ये सहकारीति, तथा च स्वजन्यत्वं शरीरजन्यतावच्छेदकम्, एवञ्च शरीरजन्यत्वस्य कर्तृजन्यत्वव्यापकत्वात्तद्व्याप्यत्वेन जन्यत्वस्यैव सकर्तृकत्वाव्याप्यत्वमनुमेयमित्यपरितोषादाह #इत्यादिनापीति। साधनेति#। परमाण्वादीनामपीश्वरप्रयत्नाधिष्ठितत्वेन तज्जन्यत्वस्य पक्षे सम्भवादिति भावः। न च चेष्टाजन्यत्वमुपाधिः, चेष्टायामेव साध्याव्यापकत्वात्। न च चेष्टाश्रयजन्यत्वं तथा, अदृष्टद्वारा क्षित्यादेरपि तज्जन्यत्वात्। यद्यप्यदृष्टाजनकचेष्टाश्रयजन्यत्वोपाधौ नोक्तदोषस्तथापि विपक्षबाधकतर्काभावान्नास्य साध्यव्यापकत्वमिति भावः।

(चिं०) अथ यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि बाधकं विना तथा नियम इति त्वयाभिरष्टङ्कि, तथा च कर्तृविशेषशरीरजन्यविशेषयोः कार्यकारणभावनियमात् कर्तृमात्रशरीरजन्यमात्रयोरपि तथाभावः, तथा च शरीरजन्यत्वं कर्त्तृतावच्छेदकमिति भवत्युपाधिः। नचैवं घटवच्छरीरजन्यत्वं सकर्तृकत्वव्याप्यं न तु व्यापकमपीति वाच्यम्। उभयसिद्धसकलसकर्तृकत्ववृत्तित्वेन साध्यव्यापकतानिर्णयात्। जन्यत्वेऽपि सकर्तृकत्वव्याप्यत्वग्राहकमस्तीति चेत्तर्हि उभयत्र ग्राहकसाम्ये विनिगमकाभावात् व्याप्तिसंशयाधायकत्वेन सन्दिग्धोपाधिर्व्याप्यत्वासिद्धिर्वा। हेतुव्याप्यतासंशयाधायक एव सन्दिग्धोपाधिः, स च साध्यव्यापकत्वे साधनाव्यापकत्वे वा, उभयत्र वा सन्देहात्। न च वाच्यं शरीरजन्यत्वसकर्तृकत्वयोरन्वयव्यतिरेकज्ञाने जन्यत्वसकर्तृकत्वयोस्तद्ग्रह आवश्यक इति लाघवात् तयोरेव व्याप्तिग्रहो न तूपाधिसाध्ययोः, हेतुसाध्ययोरन्वयव्याति-

रेकज्ञानञ्च शरीरजन्यत्वानवगमेऽपि भवतीति विनिगमकाभिनि।यतो न कर्तृमात्रजन्यमात्रयोरन्वयव्यतिरेकाभ्यां व्याप्तिग्रहः कर्तृमात्रस्य व्यतिरेकाभावात् । किन्तु विशेषयोरन्वयव्यतिरेकेण कार्य्यकारणभावेन वा सामान्ययोस्तथात्वग्रहस्तौ च तुल्यावेवेति चेत् ।

उच्यते । अस्तु तावत् घटत्ववत् जन्यत्वशरीरजन्यत्वयोरपि कर्तृजन्यतावच्छेदकत्वेन सकर्तृकत्वव्याप्यत्वं ग्राहकसमानत्वात् विनिगमनाभावाद्विरोधाभावाच्च, सकर्तृकत्वव्यापकत्वन्तु शरीरजन्यत्वस्य कुतः ? घटत्ववदव्यापकस्यापि जन्यतावच्छेदकत्वात् । उभयसिद्धसकर्तृकेऽन्वयव्यतिरेकाभ्यां शरीरजन्यत्वस्य व्यापकत्वग्रह इति चेन्न । शरीरजन्यत्वविनिवेशत्वेन तुल्यन्यायेन च प्रथमं कर्तृजन्यत्वे जन्यत्वमवच्छेदकं क्लृप्तमिति तद्विरोधेन शरीरजन्यत्वस्य सकर्तृकत्वव्यापकत्वानवगमात् । अतएव न सन्दिग्धोपाधित्वम् ।

(प्रका०) उक्तोपाध्यभिप्रायेणैव साध्यव्यापकताग्राहकं शङ्कते *अथेति* *शरीरेति* चेष्टाश्रयेत्यर्थः । *शरीरजन्यत्वेति* ।

ननु शरीरजन्यत्वं शरीरकारणकत्वमुक्तम्, अन्यथा साधनविशेषितापत्तेः, तथा च कथं तद्ग्रहे जन्यत्वग्रह आवश्यक इति चेत् ।

अत्र केचित् । शरीरजन्यत्वस्य गुरुत्वात्तावन्न तस्य व्यापकत्वग्रहस्तावदेव कर्तृजन्यत्वं जन्यत्वमवच्छेदकीकृत्य गृहीतमुपस्थितलाघवादित्याहुः ।

अन्ये तु सकर्तृकत्वग्रहः प्रथममवश्यं वाच्यः, अन्यथा शरीरजन्यत्वस्य तद्व्यापकत्वासिद्धेस्तत्र चावच्छेदकग्रहः प्राथमिक इत्यवच्छेदकं लाघवाज्जन्यत्वमेव न त्वन्यदित्यभिप्रायकोऽयं ग्रन्थ इत्याहुः ।

उक्तास्वरसेनैव वाऽऽह तुल्यन्यायेति । *तद्विरोधेनेति* न हि सम्भवति शरीरजन्यत्वं सकर्तृकत्वव्याप्यजन्यत्वाव्यापकं सकर्तृकत्वव्यापकं चेति भावः । *अत एवेति* । सकर्तृकत्वव्याप्यजन्यत्वाव्यापकत्वेन शरीरजन्यत्वस्य सकर्तृकत्वाव्यापकतया ऽनुपाधित्वनिर्णयादित्यर्थः ।

(चि०) ननु घटादौ शरीरजन्यत्वे कर्तृजन्यत्व-मनुगतमवच्छेदकं बाधकाभावात् । न च लाघवाद्घटत्वा-दिकमेव तथा, कर्तृजन्यत्वेऽपि जन्यत्वस्यातथात्वा-पत्तेः । एवं शरीरजन्यत्वस्य व्याप्यं सकर्तृकत्वं वह्नेर्धूम इवेति भवत्युपाधिः । किञ्च कर्तृजन्यत्वे जन्यत्वं शरीर-जन्यत्वं वा सकर्तृकत्वमवच्छेदकमिति संशयेऽपि न हेतोः साध्यव्याप्यतानिश्चय इति चेत्, तर्हि घटादौ कर्तृजन्य-त्वे गृहीते तस्य शरीरजन्यतावच्छेदकत्वं ग्रहीतव्यम् घटं च घटत्ववज्जन्यत्वमपि बाधकं विना कर्तृजन्यतावच्छेदकं गृहीतमतो जन्यमात्रे कर्तृजन्यत्वान्न शरीरजन्यत्वे तद-वच्छेदकत्वं प्रथमगृहीतोपजीव्यविरोधात् । अत एव न तस्य हेतौ व्याप्तिसंशयाधायकत्वमपि । एतेनानणुत्वक्षित्य-धयवत्ववृत्त्यन्यत्वादय उपाधित्वेन निरस्ताः, जन्यत्वस्य साध्यव्याप्यत्वेन तेषां साध्याव्यापकत्वात् । तथापि क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात् गगनवदिति सत्प्रतिपक्षोऽस्त्विति चेत् । न ।

अस्य प्रसिद्धकर्तृजन्यत्वाभावविषयकत्वात् अप्रती-तप्रतियोगिकस्याभावस्य निरूपयितुमशक्यत्वात्, स्था-पनानुमानश्च पक्षधर्मताबलात् प्रसिद्धकर्तृभिन्नकर्तृक-त्वसाधकमतो भिन्नविषयकत्वान्न प्रतिबध्यप्रतिबन्धक-भावः । अत एव तद्व्यापकरहितत्वादिकमभावसाधकं बाधकमपास्तम्, तस्य प्रसिद्धाभावविषयकत्वेनाप्रसि-द्धाभावाविषयकत्वात् । व्यक्तिसाधकस्य च विशेषतोऽप्र-सिद्धव्यक्तिसाधकत्वानियमात्, अन्यथानुमानवैयर्थ्यात् । कर्तृजन्यत्वमनुगतं घटादौ प्रसिद्धं यत् साध्यं तदभावो मया साध्यत इति चेत्, कर्तृजन्यत्वमनुगतमपि पक्षध-

मानबलेन प्रसिद्धं कर्त्तारमादाय पर्य्यवस्यति, तदभावस्तु प्रसिद्धस्य कर्तुरभावमादाय सिध्यति नाप्रसिद्धस्य, अनुगतस्यापि कर्तृजन्यत्वस्य तदभावस्य च कर्तृव्यक्तिघटितत्वात्, अन्यथा व्यक्तितदभावासिद्धिप्रसङ्गात् । नचैवं सत्प्रतिपक्षोच्छेदः, तस्य गोत्वाद्येकभावाभावसाधकाविषयत्वात् ।

(प्रका०) *कर्तृजन्यत्वेपीति* । यद्विशेषयोरित्यादिन्यायविग्राहकस्योभयत्र तुल्यत्वादिति भावः । *एवं शरीरेति* । जन्यतावच्छेदकत्वाद्घटत्वाद्यवच्छेदेनैव कर्तृजन्यत्वं गृहीतं शरीरजन्यतावच्छेदकत्वेन गृह्यताम् । अत एव नोपजीव्यविरोधः । न च हस्तादिजन्ये व्यभिचारात् शरीरजन्यतावच्छेदकं कर्तृजन्यत्वमिति वाच्यम् । शरीरपदस्य पूर्वोक्तचेष्टाश्रयपरत्वात् । न च शरीरजन्यत्वावच्छेदकमेव घटत्वादिकमस्तु कर्तृजन्यतावच्छेदकं जन्यत्वमेवास्त्विति विनिगमकाभावादिति वाच्यम् । तथापि जन्यत्वे सकर्तृकत्वव्याप्यत्वानिश्चयादिति चेत् । अत्राहुः । कर्तृजन्यत्वे जन्यत्वमवच्छेदकं शरीरजन्यत्वे सकर्तृकत्वं वा । यद्विशेषयोरित्यादिग्राहकस्य समानत्वादिति संशये लाघवाज्जन्यत्वमेव कर्तृजन्यतावच्छेदकं स्वीक्रियते न तु कर्तृजन्यत्वस्य शरीरजन्यतावच्छेदकत्वं गौरवात् । नन्वेकप्रतियोगिकजन्यतावच्छेदकद्वयोपस्थितौ लाघवावतारः, न चात्र तथा, उभयस्याप्युभयजन्यतावच्छेदकत्वसम्भवादिति चेत् । न उभयनिरूपितोभयजन्यतावच्छेदकस्य प्रकृते विरुद्धत्वेन एकत्रैवावच्छेदकताकल्पनाप्रसक्तौ कुत्र तत्कल्प्यतामिति लाघवावतारसम्भवादिति । शरीरजन्यत्वस्य कपालादावपि सत्त्वेन तन्मते कर्तृजन्यत्वं न्यूनवृत्तितया तदवच्छेदकं न भवतीत्यप्याहुः ।

*अस्य प्रसिद्धेति* । इदं च सर्वं सामान्यलक्षणानभ्युपगमेन परं प्रत्यापादनं तस्य गोत्वाद्येकभावाभावविषयत्वेन त्वयाऽप्यवश्यवाच्यत्वादित्येवमर्थकतया तस्येत्यादिफक्किकापि योज्येति न स्वसिद्धान्तविरोध इत्याहुः । *अप्रतीतेति* । यद्यपि परमते प्रतियोगितावच्छेदकप्रकारकज्ञानस्यैवाभावधीकारणत्वं न तु प्रतियोगिज्ञानस्य आवश्यकत्वात्, अन्यथा बाधोऽपि तन्मते प्रतिबन्धको न स्यात्, न स्याद् घटादिसामान्याभावज्ञानं सामान्यलक्षणासम्भवेन सकलप्रतियोगिज्ञानाभावात् । तथापि स्वमतावष्टम्भेनेदं द्रष्टव्यम् ।

वस्तुतस्तु स्थापनानुमानस्य तर्कसचिवत्वावस्य च तदभावान्न्यू-नबलत्वात्र सत्प्रतिपक्षत्वमिति भावः।

(चि०) एतेन "ज्ञानत्वं न नित्यवृत्ति ज्ञानमात्र-वृत्तिधर्मत्वात् स्मृतित्ववत्, ज्ञानं न नित्यगुणवृत्तिगुण-त्वव्याप्यजातियोगि चेतनाविशेषगुणत्वात् सुखवत्, आत्मा न नित्यविशेषगुणाधारवृत्तिद्रव्यत्वापरजा-तिमान् विभुत्वात् गगनवदि"त्याद्यपास्तम्, प्रसिद्ध-नित्ये व्योमादौ प्रसिद्धायाश्च रूपत्वजलत्वादि-जातेर्व्यतिरेकविषयत्वात् अप्रयोजकत्वाच्च। किञ्च क्षित्यादौ शरीराजन्यत्वमसिद्धम् अदृष्टद्वारा तज्ज-न्यत्वात्। न चादृष्टाद्वारकजन्यज्ञानाजन्यत्वं हेतुः, ज्ञाने जन्यत्वविशेषणस्याव्यावर्त्तकतया व्यर्थत्वात्। न च स्थापनायां पक्षविशेषणेऽप्येष दोषः, प्रमेयो घट इतिवत्तदुपरक्तबुद्धेरुद्देश्यत्वात्। अपि च शरीराजन्यत्वे व्यर्थविशेषणत्वं, लाघवेनाजन्यत्वस्यैव व्याप्यत्वात्। न च निष्प्रयोजनविशेषणमसिद्धं, व्याप्तिग्रहोपयुक्तवि-शेषणवत् पक्षधर्मतौपयिकविशेषणस्यापि सप्रयोजन-त्वात्व्यभिचारवारकस्यापि सार्थकत्वेऽनुमितिप्रयोज-कत्वस्यैव बीजत्वात्। व्यभिचारवारकविशेषणवत्येव व्याप्तिग्रह इति चेत्, न। निर्विशेषणेऽपि गोत्वादौ व्याप्तिग्रहात्। तत्रापि व्यक्तिविशिष्टे व्याप्तिग्रह इति चेन्न। स्वतो व्यावृत्तगोत्वस्य व्यभिचारात्, अन्यथा-ऽन्योन्याश्रयात्। अपि च व्यभिचारवारकविशेषणव-त्येव व्याप्तिग्रह इत्यप्रयोजकम् सहचारदर्शनादिसत्त्वे तद-भावेन व्याप्तिग्रहाविलम्बात्। व्यभिचारावारकविशे-षणशून्य एव व्याप्तिग्रह इति चेन्न। प्रमेयत्वेन ज्ञाय-माने धूमे व्याप्तिग्रहात्।

(प्रका०) *ज्ञानमात्रेति* । यद्यत्र जातिपदमपि तदाऽनित्यमात्रवृत्तीति साध्यार्थो ज्ञानातिरिक्तावृत्तित्वं च हेत्वर्थो विवक्षणीयस्तथा चावृत्तौ व्यभिचारवारणाय तद्दृष्टव्यम् । केचित्तु कालादिवर्त्तमानत्वेनाप्रसिद्धिः स्यात् । जातिपदोपादाने तु जातित्वनिर्वाहकसम्बन्धेन ज्ञानमात्रवृत्तित्वहेतुलाभ इत्याहुः ।

*चेतनेति* । रूपादौ संख्यादौ च व्यभिचारवारणाय चेतनविशेषपदे । यद्यपि यथाश्रुत भावनायां व्यभिचारि परमाणुवृत्तिनित्यस्थितस्थापकवृत्तिसंस्कारत्वजातिसत्त्वात्तथापि हेतौ गुणपदं प्रत्यक्षेण विशेष्यम् । एवञ्चात्मैकत्वप्रत्यक्षत्वपक्षे विशेषपदम् । *आत्मेति* । यद्यपि न नित्यविशेषगुणाधार इत्येव साध्यमुचितं, तथापि तन्मते शब्दस्य नित्यतयाऽऽकाश एव व्यभिचारः स्यादस्मन्मते चेश्वरात्मनः सिद्धासिद्ध्यां व्याघातेनापक्षतयाऽस्मदाद्यात्ममात्रपक्षत्वे सिद्धसाधनं माभूदिति तादृशजातिगर्भं साध्यमुपात्तमिति ध्येयम् । नन्वदृष्टाजनकशरीराजन्यत्वं हेतुः, न च हस्तादिजन्ये तथापि व्यभिचारः, शरीरपदस्य चेष्टाश्रयपरत्वादित्यपरितोषादाह—*अपि चेति* । *निर्विशेषण इति* । व्यभिचारवारकविशेषणशून्य इत्यर्थः । *सन्त्वेति* । यदि जातिर्न स्वतो व्यावर्त्तिका किन्तु व्यक्तिर्व्यावर्त्तनीया तदा व्यावृत्तपरस्परव्यावर्तनीयत्वेन परस्पराश्रयापत्तिरित्यर्थः । व्यभिचाराधारकविशेषणज्ञानं व्याप्तिग्रहप्रतिबन्धकमित्यभिप्रेत्य शङ्कते *व्यभिचारेति* । विशेषणशून्ये विशेषणज्ञानशून्य इत्यर्थः । अत एवोत्तरे प्रमेयत्वेन ज्ञायमानपर्यन्तमुपात्तमिति ।

(चि०) अथ तत्रोपात्तव्यभिचारावारकविशेषणशून्यत्वं विवक्षितम्, न च तत्र प्रमेयत्वं विशेषणमुपात्तमिति चेन्न । विरोधात्, न हि तत्रोपात्तं तेन शून्यञ्चेति सम्भवति । यद्विषयकत्वेन परामर्शः कारणमनुमितौ तल्लिङ्गं, प्रकृते च व्यभिचारादन्यथासिद्धेश्च न विशेषणविषयकत्वेन तत्त्वमिति चेन्न । धूमस्याप्यतत्त्वापत्तेः व्यभिचारात्तद्विषयत्वेनानुमित्यकारणत्वात् । अपेक्षमवच्छेदकमपरत्र व्याप्तिः । यद्वा लाघवेन व्यासज्यवृत्तिरेकैव व्याप्तिरिति विशिष्टव्याप्त्यर्थः, तत्र विशे-

प्यतावच्छेदकस्य व्याप्त्यनवच्छेदकत्वेन विशेषणस्य तदवच्छेदकत्वमिति नियमात्, एकवृत्तित्वबाधे सत्येव व्यासज्यवृत्तित्वमिति व्याप्तेश्च न शरीराजन्यत्वाभावे नीलधूमादौ च व्याप्तिरिति विशेष्यमात्रे सा, तथा च स्वरूपासिद्धिः तद्वारणार्थं विशेषणाभिधाने व्याप्य-त्वासिद्धिरिति चेत्। न। अव्यभिचारस्यानौपाधिकत्वस्य वा विशिष्टे नीलधूमादौ सत्त्वेन तद्व्यतिरेकसाधने बा-धात्। न च विशेष्यत्वमुपाधिः साधनव्यापकत्वात्। किञ्च सौरभविशेषवद्धूमरहितमिदं चन्दनप्रभववह्निरहित-त्वात्, निर्धूमोऽयमार्द्रेन्धनप्रभववह्निरहितत्वादित्यादावपि कारणविशेषाभावेन कार्य्यविशेषाभावानुमानं न स्यात्, वह्निरहितत्वादिकञ्चोपाधिर्भवेत्, व्यतिरेकिण्यष्टद्रव्या-तिरिक्तद्रव्यानाश्रितत्वं च हेत्वभावव्याप्यं न स्यात्, द्रव्यानाश्रितत्वस्यैव व्याप्यत्वात्, रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वादित्यादौ त्वयाप्यसिद्धिवारकविशेषणस्वी-काराच्च। अपि च गौरवेण विशिष्टस्य व्यापकतापि न स्यात्, तथा च स्थापनानुमाने उपादानगोचरापरोक्ष-ज्ञानचिकीर्षाकृतिमज्जन्यता, धूमेनार्द्रेन्धनप्रभववह्निघ-टत्वेन शरीरजन्यत्वमपि नानुमीयेत।

---

## ईश्वरानुमानदीधितिः।

(दी०) ईश्वरवादे,—न च विशेष्यत्वमुपाधिः साधनव्यापकत्वा-दिति। साध्यस्येति शेषः। शरीरसहकारेणैव कर्त्तुः कार्य्यजनक-त्वात् शरीराजन्यस्य न कर्तृजन्यत्वम्। तथा चाऽकर्तृकत्वरूपसा-ध्यव्याप्यस्य शरीराजन्यत्वस्य हेतोरव्यापकतया साध्यस्याव्या-पकं विशेष्यम् अजन्यत्वं नोपाधिरित्यर्थः। यदि विशिष्टाभावे हेतौ

विशेषणवैयर्थ्यं विशेष्याभावरूपञ्च विशेष्यमुपाधिर्भवेत् तदाऽऽर्द्रेन्धनप्रभववह्निरहितत्वादिना निर्धूमत्वादौ साध्ये व्यर्थविशेषणत्वम् उपाधिश्च वह्निरहितत्वादि सम्भवेदित्याह किञ्चेति । ननु स्वरूपासिद्धिवारकत्वाद्विशेषणस्य न वैयर्थ्यमिति न भ्रमः, अपि तु व्यभिचारवारकत्वात्, रूपादिषु मध्य इत्यत्र गन्धव्यञ्जकत्वस्य हेतोर्व्यभिचारो न शुद्धेनैव वारयितुं शक्यते तस्य समभिव्याहारवशाच्चक्षुरतिरिक्ताव्यञ्जकत्वरूपस्य गन्धव्यञ्जकेऽसत्त्वेन विशेषणत्वायोगादतो रूपाद्यन्तर्गतगन्धातिरिक्ताव्यञ्जकत्वं तच्च व्यभिचारवारकमेव इत्यत आह अपि चेति ।

...(प्रका०) *व्यभिचारादिति* । आकाशादिपक्षकेऽजन्यस्यापि पक्षतयैवानुमितिजनकत्वादित्यर्थः । अत एवान्यथासिद्धिरपीति भावः । *धूमस्यापीति* । आलोकविषयतयापि तज्जन्यत्वादित्यर्थः । अत्र यद्यपि व्यासज्यवृत्तिव्याप्तिर्यत्र विशेष्यबाधस्तत्र वाच्या यथाऽऽर्द्रेन्धनप्रभववह्निमत्त्वादौ, तच्च न सम्भवति, धूमादिसामानाधिकरण्यस्य संयोगविशेषस्य वह्निधूममात्रानिष्ठत्वात्, अपि च आर्द्रेन्धनादौ विशेषणे व्याप्यत्वाभावनिश्चये तदवच्छिन्नवह्निविशेषे व्याप्तिग्रहादनुमितिः, तथापि प्रथमोक्तविशिष्टव्याप्यत्वाभिप्रायेण दूषयति *नेति*। नीलधूमे हेतौ साधनावच्छिन्नसाध्यव्यापकधूमवत्त्वमुपाधिः । तथा चानौपाधिकत्वाभावसाधनेन बाध इति शङ्कते न *चेति* । *साधनेति* नीलधूमवति सर्वत्र धूमवत्त्वसत्त्वादित्यर्थः ।

केचित्तु उभयत्रोपाधिं शङ्कते *न चेति* । अदृष्टद्वारा शरीरस्य क्षित्यादावपि जनकत्वमिति शरीराजन्यत्वं नित्यमात्रवृत्तीति अजन्यत्वोपाधेः साधनव्यापकत्वमित्यर्थ इत्याहुः । तन्न । एवं हि व्याप्यत्वासिद्धिमुद्गरतः स्वरूपासिद्ध्यापत्तेः । तथा च शरीराजन्यत्वे पूर्वोक्तं तात्पर्यम् । तच्च क्षित्यादिवृत्तीति साधनाव्यापकत्वमिति ।

ईदृशे व्यर्थविशेषणतया त्वदभ्युपगतमप्यनुमानं न स्यादित्याह— *किञ्चेति* । उभयत्र वह्निरहितत्वमात्रस्यैव गमकत्वसम्भवादिति भावः । *वह्निरहितेति* । यदि चास्यायोगोलके साध्याव्यापकत्वादनुपाधित्वं तदा धूमवत्त्वोपाधेः साधनव्यापकत्वमिति तुल्यमिति भावः । ननु गन्धादिषु मध्ये इति व्यभिचारवारकतापर्यवसन्नमेव गन्धमात्र-

व्यञ्जकत्वं हि गन्धविशेषित हेतुकार्यम्, अन्यथा सन्निकर्षे व्यभिचारः स्यात् तस्य च तेन व्यभिचारवारणं तदा यदि व्यभिचारः स्यात् स च तदा यदि गन्धमात्रव्यञ्जकत्वं प्रसिद्धं स्यात् तथाच गन्धादिषु मध्ये इति प्रसिद्धिं सम्पाद्य सन्निकर्षे व्यभिचारवारणप्रयोजकमित्यरुचेराह #अपि चेति# ।

( चिं० ) यत्तु जन्यान्योन्याभावापेक्षया शरीरजन्यान्योन्याभावस्याल्पत्वात्तेषामेव व्याप्यत्वमिति विपरीतमेव लाघवमिति। तन्न । विरोधाभावेन बहूनामल्पस्य च व्याप्यत्वात्स्नेहे शीतस्पर्शवत्त्वजलत्वयोर्गन्धाभावेऽपृथिवीत्वपृथिवीत्वाभावयोरिव । अन्यथा नीलधूमस्यैव व्याप्यत्वे धूममात्रस्याव्याप्यत्वप्रसङ्गः। किञ्च त्वन्मते बहून्योन्याभावापेक्षया जन्यत्वात्यन्ताभावस्यैव व्याप्यता स्यात् एकत्वात् । प्रमेयत्वाद्यनन्तधर्मविशिष्टस्य व्याप्तावपि प्रयोजनाभावान्नानुमाने तदुपन्यासः । अथ लाघवेन जन्यत्वस्य शीघ्रोपस्थितिकतया जन्यत्वाभावत्वेन शीघ्रं व्याप्तिग्रहः न तु शरीरजन्यभावत्वेन विलम्बितप्रतीतिकत्वात् । यत्र विशेषणविशेष्यान्यतराभाववति साध्यं तत्र विशिष्टाभावस्यापि व्याप्तिरिति चेन्न । एवं सति उत्पत्तिमत्त्वे सति सत्त्वादिकमनित्यत्वसकर्तृकत्वव्याप्यतया न गृह्येत शीघ्रोपस्थितिकतया घटत्वादेरेव तथात्वात् । यदि च सामान्यविशेषभावाविरोधाभावेनोभयस्यापि व्याप्यत्वं तदा शरीराजन्यत्वजन्यत्वाभावयोरपि तुल्यम् । किञ्च शरीरजन्यत्वं विशिष्टं तदभावमपि विशिनष्टि न तु साक्षात्, तथा च शरीरजन्यत्वाभावोऽखण्ड एव हेतुरतो न व्यर्थविशेषणता । न चात्र विशिष्टाभावो विशेष्याभाव एव, चित्यादावजन्यतापत्तेः । अत एव स्थापनायां शरीरज-

न्यत्वमुपाधिः साध्याभावव्याप्याभावप्रतियोगित्वेन साध्यव्यापकत्वनियमात् । व्यर्थविशेषणेऽधिकं निग्रहस्थानमिति चेन्न । हेतुद्वयोपन्यासे ह्यधिकम् । अत्र तु विशिष्टमेव हेतुरिति विरुद्धस्थल उक्तमिति ॥

(दी०) यत्त्वित्यादि यावद्विशेषाभावानामेव सामान्याभावत्वमते । बह्वल्पेति । बहवो जन्यान्योन्याभावा अल्पाः शरीरजन्यान्योन्याभावाः । अपृथिवीत्वं पृथिवीसामान्यान्योन्याभावः स च विशेषाभावसमुदायः । जन्यत्वात्यन्ताभावस्येत्यभ्युपगममात्रं, जन्यत्वस्याखण्डस्य एकस्य विरहेण तुल्यन्यायतया सामान्याभावस्यापि तत्तज्जन्यत्वाभावरूपत्वात् । यद्यपि प्रत्येकव्याप्यत्वस्य सम्भवे बहूनामल्पानाञ्च तथात्वम्, न चेह, एकैकस्यान्योन्याभावस्य व्यभिचारित्वात् तथा च शरीरजन्यान्यान्योन्याभावसमुदायस्य व्याप्यत्वे न तत्र क्षित्याद्यन्योन्याभावानां निवेशो व्यर्थत्वात्, तथापि जन्यत्वशरीरजन्यत्वावच्छिन्नप्रतियोगिताकावतिरिक्तावेवाभावाविति न तत्र बह्वल्पभावसम्भव इत्यत्र तात्पर्यमिति ॥

विदुषां निवहैरिहैकमत्याद्यदुष्टं निरटङ्कि यच्च दुष्टम् ॥
मयि जल्पति कल्पनाधिनाथे रघुनाथे मनुतां तदन्यथैव ॥

इति महामहोपाध्यायश्रीरघुनाथभट्टाचार्यशिरोमणि-
विरचिता ईश्वरानुमानतत्त्वचिन्तामणिदीधितिः
समाप्ता ।
अनुमानदीधितिः सम्पूर्णा ।

---

(प्रका०) यद्विति शरीरजन्यघटाद्यपेक्षया जन्याः क्षित्यादयो ऽपीति ते बहवः। प्रतियोगिबाहुल्यकृतं चाभावबाहुल्यमिति भावः। *अन्यथेति* । तथा चावच्छेदकलाघवं प्रयोजकं न तु व्यक्तिलाघवमिति भावः। *प्रयोजनेति* । प्रकृते पक्षधर्मतायामुपयोगः शरीरपदस्येति भावः। *अथेति* । न च यदि तत्र व्याप्तिरस्ति तदा न प्रथमं व्याप्तिग्रहो जातस्ततः किं ? पश्चादपि तद्ग्रहेणानुमितिसम्भवादिति वाच्यम्। यत्र प्रथमं व्याप्तिग्रहः तत्रैव व्याप्तिरित्यभिमानेनाभिधानादिति। *यत्रेति* । निर्धूमोऽयमार्द्रेन्धनप्रभववह्निराहितत्वादित्यत्रार्द्रेन्धनरूपविशेषणाभाववति विशेष्यवति तप्तायःपिण्डे साध्यं निर्धूमत्वं तथा वह्निरूपविशेष्याभाववति केवलार्द्रेन्धनवति वनादौ निर्धूमत्वम्, एवञ्च प्रत्येकस्य धूमाप्रयोजकतया तदभावे विशिष्टाभावो हेतुः। न चैवं प्रकृते सिद्धं, जन्यत्वविशेष्यवति शरीररूपविशेषणविरहेणाकर्तृत्वरूपसाध्यसम्बन्धातिक्षयात् क्षित्यादौ पक्षे तस्य सन्दिग्धत्वात्। तथाचात्र विशिष्टाभावो न हेतुरित्यर्थः। यत्तु साध्यं नेति पाठस्तथाच यत्र विशेषणविशेष्यान्यतराभाववति साध्याभावः, विशेषणाद्यन्यतराभावो व्यभिचारीति यावत् तत्र विशिष्टाभावो हेतुः। अत्र तु न तथेति न सद्धेतुरिति। तन्न। विशेषणाद्यन्यतराभावस्य व्यभिचारित्वे विशिष्टाभावस्य व्यभिचारस्यापि वज्रलेपत्वात्। *अखण्ड एवेति* । तथाच शरीरजन्यत्वाभावे जन्यत्वप्रतियोगिकत्वाभावात् तदवच्छेदेन व्याप्त्यग्रहे विशिष्टावच्छेदेनैव तद्ग्रह इति न वैयर्थ्यमिति भावः। अधिकामिति। अनुपयुक्तनीलाद्यंशोपादानादिति भावः। *हेत्विति* । हेतूदाहरणादिकमधिकं तल्लक्षणाविति भावः।

( चिं० ) उच्यते। नीलधूमादौ व्याप्तिरस्त्येव, अन्यथा विशेषणस्याव्याप्यत्वे निराश्रया व्याप्तिः स्यात्। नीलत्वमपि न व्याप्यतावच्छेदकं गौरवात् किन्तु धूमत्वमेव दण्डत्वेन कारणत्वे रूपमिव, धूमत्वञ्च न नीलिम्नि किन्तु तदाश्रये धूमे इति न नीलधूमस्य हेतुत्वम्। नीलधूमे नीलस्य विशेषणत्वे तद्विशिष्टे न धूमत्वम्, उपलक्षणत्वे च धूमादेवानुमितिः। किञ्च व्याप्यतावच्छेदकस्यैव हेतुतावच्छेदकत्वमिति न नीलधूमत्वं तथा। नचैवं धूम-

त्वस्यावच्छेदकत्वेऽपि सामग्रीसत्त्वात् नीलधूमादनुमित्युत्पत्तौ हेत्वाभासत्वं न स्यात् अनुमितिप्रतिबन्धकस्य तत्त्वादिति वाच्यम्। तदभावेऽपि नीलधूमप्रयुक्तसाध्यवत्प्रत्ययस्य भ्रमत्वेन तत्कारणत्वस्याभासत्वसम्भवादिति दिक्॥

एवञ्च शरीराजन्यत्वेऽपि न शरीरमवच्छेदकं गौरवात्, येन विशेषणेन विना व्याप्तिर्न गृह्यते तस्यैव व्याप्यतावच्छेदकत्वनियमात्। अत एव गन्धस्यैव व्यञ्जकत्वादित्यत्राप्रसिद्धत्वेन रूपादिषु मध्ये इति विशेषणं विना व्याप्तिर्ग्रहीतुं न शक्यते इत्यसिद्धिवारकमपि विशेषणं सार्थकमेव। सुरभिधूमविशेषादौ च चन्दनप्रभवाग्न्यादेः कारणत्वात् कारणाभावस्य कार्य्याभावप्रयोजकतया व्याप्यत्वनिश्चयः। व्यापके च न व्यर्थविशेषणता, विशिष्टस्य कारणत्वेन व्यापकत्वात् विशेषव्यतिरेकिस्थले(१) विपक्षबाधकेनानन्यगतिकतया विशिष्टस्य व्यापकत्वात् विशिष्टाभावस्य हेत्वभावव्याप्यत्वम्। यत्र च विपक्षबाधकं नास्ति तत्र विशिष्टस्य व्यापकतापि न, यथा कार्य्यस्य द्विकर्तृकत्वेनापि शरीरजन्यत्वाभावोऽखण्डो हेतुः। यदि हि शरीरजन्यत्वं सकर्तृकत्वप्रयोजकं स्यात् तदा तदभावप्रयुक्तः सकर्तृकत्वाभाव इति तस्य साध्यव्याप्यता स्यात्, नचैवं, किन्तुजन्यत्वं लाघवात्तथा तथा चाजन्यत्वमेवोपाधिः। साध्यव्याप्याभावः साध्याभावव्यापक इति नियमेन तस्य साध्यव्यापकतानिश्चयात् सकर्तृकत्वशरीरजन्यत्वयोर्व्याप्त्यभावेन तदभावयोरपि व्याप्त्यभाव इति व्याप्यत्वासिद्धत्वाच्च।

(१) परिशेष व्यतिरेकिणीति पाठान्तरम्।

अत एव शरीरजन्यत्वाभावस्याकर्तृकत्वाव्याप्यत्वात्सद्भावयोरपि व्याप्यव्यापकभाव इति निरस्तम्। शरीरजन्यत्वस्य सकर्तृकत्वाऽप्रयोजकत्वात्। न चाजन्यत्वं पूर्वसाधनव्यतिरेकत्वेन नोपाधिः सत्प्रतिपक्षोच्छेदकप्रसङ्गादिति वाच्यम्। स्थापनायां यत्राभासत्वं तत्र विशेषादर्शनदशायां सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधिकत्वात्, यथा शब्दोऽनित्यो गुणत्वादित्यत्र शब्दो नित्यो व्योमैकगुणत्वादित्यादिना सत्प्रतिपक्षे गुणत्वाभावो नोपाधिः जलपरमाणुरूपे साध्याव्यापकत्वात्। न चैवमनैकान्तिकत्वमेव तत्रोद्भाव्यं सत्प्रतिपक्षमुपेक्ष्य तस्योद्भावनानर्हत्वात्। किञ्च प्रागभावप्रतियोगित्वे सति समवेतत्वस्य तत्प्रतियोगित्वे सति सत्त्वस्य, सत्त्वे सति उत्पत्तिमत्त्वस्य वा हेतुत्वे, एषामन्यतमव्यतिरेक उपाधिरिति न पूर्वसाधनव्यतिरेकः। अत एवाजन्यत्वस्य नोपाधित्वं ध्वंसे साध्याव्यापकत्वादिति न दोषः।

(प्रका०) तर्हि नीलधूमस्य कथं न हेतुत्वमत आह *नीलत्वमपीति*। विशेष्यतावच्छेदकस्य सम्बन्धितावच्छेदकस्य एव विशेषणस्यापि तदवच्छेदकत्वादित्यर्थः। अत्र दृष्टान्तमाह *दण्डत्वेनेति*। ननु नैल्यं व्याप्यतावच्छेदकत्वेन हेतौ मा प्रविशतु, व्याप्यत्वेनैव प्रविशत्वित्यत आह धूमत्वं चेति। व्याप्यतावच्छेदकावच्छिन्नस्यैव व्याप्यत्वं प्रकृते च धूमत्वं तथा तदवच्छिन्नत्वं च न नैल्य इति व्याप्यतया न प्रवेशस्तत्रेति भावः। इदं च वस्तुगतिमनुरुध्योक्तम्। वस्तुतो धूमत्वस्य नैल्यवृत्तित्वेऽपि धूमव्यक्तिस्थलीयं तदिति धूममात्रमेव हेतुरिति न नीलधूमो हेतुः, नीलधूमत्वस्यानवच्छेदकत्वात्, नैल्यस्यापि धूमत्वावच्छिन्नत्वेनैव हेतुत्वादिति नैल्ये धूमत्वासत्त्वोपवर्णनमप्रकृतमेव प्रकृते तु गौरवमेवेति ध्येयम्। ननु नीलिम्नि धूमत्वासत्त्वेऽपि नीलधूमे धूमत्वमस्त्येव अतस्तदवच्छिन्नत्वेन हेतुप्रवेशस्तस्य स्यादित्यत आह—*नीलधूम इति*। तथाच नीलोपलक्षितधूम-

मात्रस्यैव धूमत्वावच्छिन्नत्वान्न केनापि प्रकारेण हेतौ नैल्यप्रवेश इति भावः। ननु व्याप्यतावच्छेदकमस्तु धूमत्वमात्रं किन्तु नीलधूमस्यापि व्याप्यत्वात्तेनापि हेत्ववयवनिर्देशः स्यादित्यत आह *किञ्चेति*। व्याप्यतानवच्छेदकेन हेतुनिर्देशेऽतिप्रसङ्गादिति भावः। ननु धूममात्रनिष्ठव्याप्तौ नीलधूमत्वं न्यूनवृत्तित्वादेव नावच्छेदकं न तु गौरवात्, नीलधूममात्रनिष्ठव्याप्तौ नीलधूमत्वमेवावच्छेदकं न तु धूमत्वं अतिप्रसङ्गादिति चेन्न। न्यूनवृत्तेरपि व्याप्यतावच्छेदकत्वात्, अन्यथा आलोकाद्यवृत्तित्वेन धूमत्वस्याप्यतत्त्वापत्तेः।

ननु गौरवेण नीलधूमत्वावच्छेदेन व्याप्यग्रहेऽज्ञानरूपासिद्धिरस्तु न तु हेत्वाभासीभूताज्ञायमानप्रतिबन्धकत्वाभावात्। न च यतो गौरवान्नीलधूमत्वस्यानवच्छेदकत्वं तदेव व्याप्यत्वासिद्धित्वेन विवक्षितम्, तस्य ज्ञायमानतयैव प्रतिबन्धकत्वादिति वाच्यम्। परामर्शविषयाभावस्यैव असिद्धित्वेन ग्रन्थकृदभिमतत्वात् गौरवस्यातथात्वात्। तथा च व्याप्यत्वासिद्धिर्व्यर्थविशेषणादावित्यप्यसंगतमिति चेत्।

अत्र केचित्। यत्सम्बन्धितावच्छेदकरूपवत्त्वलक्षणा व्याप्तिर्लाघवादनुमितिहेतुः सकलसाधनाधिकरणे साध्यसत्त्वं दर्शयतोदाहरणेन सैव प्रदर्श्यते इति तदभावो व्याप्यत्वासिद्धिरवच्छेदकत्वाभाव एव पर्यवसन्नो नीलधूमादौ नीलधूमधूमत्वरूपावच्छेदकान्तरसत्त्वे नीलधूमत्वस्य तद्घटितशरीरस्यानवच्छेदकत्वात्। एवञ्च परामर्शविषयाभावत्वमपि समर्थितमित्याहुः।

अत्र वदन्ति। सम्बन्धितावच्छेदकवत्त्वलक्षणायां व्याप्ताववच्छेदकत्वं यद्यनतिरिक्तदेशवृत्तित्वं तदा तन्नीलधूमेऽप्यस्ति, अथ तत्र तादृशधर्मान्तराघटितत्वमपि विशेषणं तदा सर्वव्याप्तिलक्षणतो गौरवादनुमित्यहेतुरेवेति तदभावज्ञानस्य क्व प्रतिबन्धकता तादृशधर्माघटितत्वादेरुदाहरणोपदर्शनशङ्कैव नास्तीति न किञ्चिदेतत्। तस्मादिदमत्र तत्त्वम्। नीलधूमे धूमत्वावच्छिन्नव्याप्तिसत्त्वेऽपि नीलधूमत्वावच्छिन्नव्याप्तिविरहो व्याप्यत्वासिद्धिः। स च विशेषणावच्छिन्नविरहो वा सम्बन्धविरहो वेत्यन्यदेतत्। एवञ्च ज्ञानगर्भहेत्वाभासलक्षणं परामर्शविषयाभावत्वं च सङ्गच्छते। न च नीलधूमत्वावच्छिन्नव्याप्त्यप्रसिद्धेः कथमेवमिति वाच्यम्। कस्तूरिकादहनादिप्रतियोगिकविशेषव्याप्तेरेव तादृश्याः प्रसिद्धेः। न च तादृशी व्याप्तिर्नीलधूमेऽस्त्येवेति नीलधूमत्वावच्छिन्ने वह्नित्वावच्छिन्नप्रतियोगिकव्याप्तिविरहस्य वा-

व्यत्वे पुनः सैवाप्रसिद्धिरिति वाच्यम् । नीलधूमत्वावच्छिन्नव्याप्तिप्रतियोगिकत्वलक्षणव्यापकत्वाभावस्य वह्नित्वावच्छिन्ने व्याप्यत्वासिद्धिपदार्थत्वात् । समानवित्तिवेद्यतया व्याप्यत्ववद्व्यापकत्वस्यापि परामर्शविषयत्वेनोक्तव्यापकत्वाभावे परामर्शविषयाभावत्वस्यापि सत्त्वाच्च ।

यद्वा धूमत्वावच्छिन्ने नीलधूमत्वावच्छिन्नव्याप्त्यभाव एव व्याप्यत्वासिद्धिः । तस्यापि नीलधूमत्वावच्छिन्ने सत्त्वेनान्यधर्मावच्छिन्ने विरहादिति ।

वस्तुतो वह्निनिरूपितधूमनिष्ठव्याप्तौ नीलधूमत्वावच्छेदेन व्याप्यग्रहे ऽज्ञानरूपासिद्धिरित्यपि न स्यात् गौरवज्ञानस्यावच्छेदकत्वज्ञान एव प्रतिबन्धकत्वात् । एवञ्च यत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नसामानाधिकरण्यावच्छेदकावच्छिन्नत्वं व्याप्तिस्तथा च नीलधूमेऽप्येतादृशावच्छेदकत्वाभावः परामर्शविषयाभावतया भवत्वसिद्धिः । न च व्याप्तेरेतादृशावच्छेदकगर्भत्वे मानाभाव इति वाच्यम् । व्यर्थविशेषणे व्याप्तिग्रहप्रतिबन्धस्यैव तत्र मानत्वात् गौरवज्ञानस्य अवच्छेदकत्वातिरिक्तव्याप्तिघटकपदार्थग्रहाप्रतिबन्धकत्वात् । यथा व्यभिचारिते व्याप्तिग्रहप्रतिबन्ध एवाव्यभिचरितत्वगर्भत्वे तस्य मानम् । न च तत्र व्याप्तिग्रहप्रतिबन्धो न भवत्येवेति वाच्यम् । एवं हि अज्ञानरूपासिद्धिरपि न स्यात् । तथैकामसिद्धिं परिहरतो द्वितीयापत्तेरिति सिद्धान्तोऽपि भज्येत । तस्मात्परिहर वा तत्राज्ञानरूपासिद्धिं स्वीकुरु वा व्याप्तेरवच्छेदकगर्भत्वमिति दिक् ।

*भ्रमत्वेनेति*–ननु ज्ञायमानतया प्रतिबन्धकत्वाभावात्तथाप्यस्य कथं हेत्वाभासत्वं किञ्चित्प्रयुक्तं तद्धेतुकत्वं तज्ज्ञाप्यत्वं वा । न च लिङ्गोपहितभानपक्षेऽपि तद्भासते उपस्थापकाभावात् । तत्कथं तद्विषयत्वेनानुमितेर्भ्रमत्वमिति चेत् ।

अत्राहुः । अनुमित्याभासताप्रयोजकत्वं हेत्वाभासत्वमिति सम्प्रदायमतेनास्याऽभिधानम् । तत्प्रयुक्तत्वं तद्विशिष्टत्वम् । तथा च लिङ्गोपहितभानपक्षे व्याप्यत्वासिद्धौ नीलधूमो व्याप्यत्वेनानुमितौ भासत इति तस्या भ्रमत्वम् ।

केचित्तु– वह्निव्याप्यनीलधूमवान् वह्निमानित्यनुमितौ ज्ञाप्यज्ञापकभावस्य संसर्गविधया भासनात् नीलधूमे च तत्त्वेन रूपेण तदभावात् तद्विषयत्वेन तस्या भ्रमत्वमित्याहुः ।

· वस्तुतो अजन्यव्याप्तिज्ञधूमज्ञानादनुमितिसत्त्वेन नीलधूमस्योद्देश्यानु-

मितिप्रतिबन्धकत्वेनैव हेत्वाभासत्वं-शरीराजन्यत्वादौ च विशेष्यस्यासिद्धतया विशिष्टस्य व्याप्यत्वासिद्धतयानुमितिसामान्यप्रतिबन्धकत्वमेव तदेतत्सर्वमभिसन्धायाह- *दिगिति* । प्रकृते योजयति *एवमिति । *शरीराजन्यत्वेपीति* । शरीरजन्यत्वाश्रयमात्रप्रतियोगिकयावदन्योन्याभाववत्त्वेपीत्यर्थः । पूर्वोक्तदोषं निरस्यति-*सुरभीति* । ननु सुरभिधूमत्वं न कार्यतावच्छेदकं प्रत्येकसामग्रीद्वयसमाजादार्थसमाजमहिम्नैव विशिष्टकार्यसिद्धेर्नीलघटत्ववदिति चेत् । न । विशिष्टस्य कार्यतावच्छेदकत्वेपि प्रत्येककारणताया एव व्याप्यत्वनिश्चयमूलत्वसंभवात् । स्थापनानुमाने पूर्वोक्तव्यापकं व्यर्थविशेषणत्वमुद्धरति *व्यापकं चेति* । *विशिष्टस्येति* । यद्यद्दृष्टप्रागभावेत्यादिना कृतित्वादिना प्रत्येकमेव कारणत्वं न तु तादृशकृत्यादिविशिष्टात्मकत्वेन कारणत्वं कृत्यादीनां सहकारितया परस्य दंडचक्रादिवदवच्छेदकत्वाभावात् । तथापि वस्तुगतिमनुरुध्यैतदुक्तं न तु तत्त्वेन जनकत्वं विवक्षितम् । नन्वेवं न विशिष्टस्य व्यापकत्वमिति वाच्यम् । प्रत्येककारणताया एव तन्मूलत्वसम्भवात् । वस्तुतः प्रत्येकमेव तद्व्यापकत्वम् । आर्थसमाजमहिम्ना विशिष्टसिद्धिः । अत एव ग्रन्थकृतापि तथैव विभावितं धूमं प्रति तु आर्द्रेन्धनप्रभववह्नित्वेनैव कारणत्वाद्विशिष्टस्यैव व्यापकत्वम् । न च वह्निसंयोग आर्द्रेन्धनसहकारीति वाच्यम् । तत्संयोगे सत्यपि तत्प्रभववह्न्युत्पादं विना ततो धूमानुत्पत्तेरिति वदन्ति ।

*अखण्ड इति* । तथा च प्रतियोगिविशेषणत्वान्न वैयर्थ्यमिति भावः । *अजन्यत्वमिति* । एवं चाप्रयोजकत्वमपीति ध्येयम् । सत्प्रतिपक्षोच्छेदः-समीचीनप्रतिपक्षोच्छेदः । यथा चैवं व्याख्यातं तथोक्तं प्राक् । *किञ्चेति* । एषामन्यतमः स्थापनाहेतुरपरस्य विरहः प्रत्यनुमानोपाधिरित्यर्थः । *अत एवेति* । यतः समवेतत्वाद्विघटितस्य जन्यत्वस्याभाव उपाधिरतस्तस्य ध्वंसवृत्तित्वान्न साध्याव्याप्तिरित्यर्थः ।

( चि० ) अन्ये तु यन्निष्ठा यन्निरूपिता व्याप्तिर्येन विशेषणेन विना न गृह्यते तत्र विशिष्टं व्याप्यतावच्छेदकम् । अकर्तृकत्वनिरूपिताभावनिष्ठव्याप्तौ च शरीरं विनैव प्रतियोगितया जन्यत्वमवच्छेदकं क्लृप्तमिति न शरीरजन्यत्वमवच्छेदकं धूमे नीलधूमत्वमिव, अतिगौरवेण शरीरजन्यत्वमप्रतियोगितया च जन्यत्वं नावच्छेदकमिति व्याप्यता-

वच्छेदकाभावान्न शरीरजन्यत्वाभावोऽकर्तृकत्वव्याप्यः। व्यभिचाराभावात्तथेति चेन्न। क्षित्यादावेव व्यभिचारात्, अन्यथा क्षित्यादिकं नादृष्टहेतुकं शरीरजन्यत्वाभावादित्यपि स्यात्। नन्वस्तु तावदशरीरानित्यज्ञानादिकत्वानुमितिस्तथापि सानुमितिरयथार्थाऽशरीरे कर्तृत्वज्ञानत्वात् ज्ञानेच्छाप्रयत्नेषु नित्यज्ञानत्वात् शरीराजन्ये सकर्तृकत्वज्ञानत्वात्, घटः कर्त्ता घटज्ञानादिकं नित्यं व्योम सकर्तृकमिति ज्ञानवदिति साध्यम्, न चोपजीव्यबाधः, अनुमितिर्ह्युपजीव्या, नन्वस्तु तद्याथार्थ्यमपीति चेन्न। कर्तृकार्य्ययोर्निरुपाधिकार्य्यकारणभावेन एतस्याप्रयोजकत्वात्, अन्यथा पर्वते वह्न्यनुमितिरयथार्था उभयासिद्धवह्निमद्विषये वह्निज्ञानत्वादित्यादिना सकलान्वयव्यतिरेक्युच्छेदः। किञ्चानुमितेरयाथार्थ्यमनेन ज्ञाप्यं, न तु कार्य्यं, तथा च दोषादुत्पन्नस्यानेन ज्ञापने तत्रायमेव दोषो दोषान्तरं वा? नाद्यः अन्योन्याश्रयात् उत्पन्ने तस्मिन् ज्ञापनं ज्ञापकादेव च तस्माद्दोषात्तदुत्पत्तिरिति। नान्त्योऽसिद्धेः। तर्कापरिशुद्धिस्तु न दूषणम्। यदीश्वरः कर्त्ता स्यात्, शरीरी स्यात्, इष्टसाधनताज्ञानवान् स्यात् प्रयोजनवान् स्यात् अनित्यज्ञानवान् स्यात् क्षित्यादि यदि सकर्तृकं स्यात् शरीरिकर्तृकं स्यादिति तर्काणां विपर्य्यये आश्रयासिद्धिव्यर्थविशेषणतादिना विपर्ययापर्य्यवसानेनाभासत्वात्।

(प्रका०) प्राचां मतमाह। *अन्ये त्विति*। यन्निष्ठेति*। यद्विशेष्यतावच्छेदकविशिष्टनिष्ठेत्यर्थः। अभावानिष्ठव्याप्तौ अभावत्वरूपविशेष्यतावच्छेदकाविशिष्टव्याप्तावित्यर्थः। अत्रेदमनभिमतिबीजम्। लाघवेन यन्निष्ठेत्यत्र व्यक्तिपरत्वं न तु विशेष्यतावच्छेदकावच्छिन्नपरत्वं गौरवात्। एवञ्च शरीरजन्यत्वाभावनिष्ठव्याप्ति शरीरपदं विना न गृह्यते

प्रतियोगितावच्छेदकग्रहं विनाऽभावग्रहस्यैवाभावात्। तथा च कथं न विशिष्टस्य व्याप्यतावच्छेदकत्वम्, अन्यथा जन्यत्वाभावेऽपि व्याप्यो न स्यात्। सकारणकत्वाभावादौ जन्यत्वविशेषणं विनाऽपि भावत्वावच्छिन्नव्याप्तिग्रहादिति केवलव्यतिरेकिण्युभयसिद्धसाध्यवत्त्वं केवलान्वयिन्युभयसिद्धसाध्यवद्भिन्नत्वं चाप्रसिद्धमिति अन्वयव्यतिरेकीत्युक्तम्।

(चि०) ननु क्षित्यादावेककर्तृसिद्धिः कुतः? एककर्तृकत्वेन व्याप्यभावात्। न च लाघवात्, तस्याप्रमाणत्वात्। सकर्तृकत्वप्रमाणादेव लाघवसहकृतात् तत्सिद्धिरिति चेत्। न तावदनुमितिमात्रे लाघवं सहकारि, व्यभिचारात् मानाभावाच्च। न हि लिङ्गपरामर्शे सति तद्विलम्बेनानुमितेर्विलम्बो येन तत् सहकारि स्यात्। नापि लघ्वनुमितौ, अन्योन्याश्रयात्। नापि व्यक्त्यनुमितौ, धूमेन वह्न्यनुमितावेकवह्निहस्तादिसंशयाभावापत्तेः। साधकाभावेन नानात्वासिद्धौ कर्तृसिद्धेरेवैककर्तृसिद्धिरिति चेत्। न। एकत्वसाधकाभावेनैकत्वासिद्धौ कर्तृसिद्धिरेव नानासिद्धिरित्यस्यापि सुवचत्वात्। अथ यमर्थमनालम्ब्यमानाऽनुमितिः पक्षे न साध्यसंसर्गं विषयीकरोति स पक्षधर्मताबलात् सिद्ध्यति न त्वधिकमपि, तथा च द्वितीयं कर्त्तारं न विषयीकुर्वत्यपि कर्त्तारं विषयीकरोत्येवेति न द्वितीयमवगाहते, एकस्तु कर्त्ता सिद्ध्यति तदविषयत्वे कर्तृविषयतैव न स्यात् एकविषयत्वाभावे नानाविषयत्वस्याप्यभावात्, तद्घटितत्वात्तस्येति चेत्। एवं तर्हि कर्त्रेकत्वमपि न विषयः स्यात् एकत्वाविषयत्वं विनापि कर्तृविषयत्वसम्भवात्। वस्तुगत्यैकः सिद्ध्यति न त्वेकत्वेनेति चेन्न, एकत्वासिद्ध्या वस्तुगत्येक इति ज्ञातुमशक्यत्वात्, तथा चेश्वरे एकत्वानेकत्वयोर्नित्यसंशय इति।

उच्यते। यत्र प्रमाणे लघुगुरुविषयता सम्भवति

तत्र लाघवसहकारिता, कारणताकार्यताव्याप्यतादिग्राहके प्रत्यक्षे प्रवृत्तिनिमित्तग्राहके उपमाने शब्दशक्तिग्राहकेऽनुमाने तथाविधप्रमाणमात्रे च सकलतान्त्रिकैः सहकारित्वकल्पनात् । एवं लाघवमेव गौरवमिति ज्ञानानन्तरं बाधकं विना लघूनामेव कारणत्वकार्यत्वव्याप्यत्वप्रवृत्तिनिमित्तत्वशब्दशक्यत्वानां ज्ञानदर्शनात् । तत्रापि लाघवानादरे शब्दशक्यत्वादिसंशये तन्मूलकव्यवहारोच्छेदो विनिर्गमकाभावात्, सोऽयं विचारमारभते लाघवञ्च तदर्थं नाङ्गीकुरुते इति महासाहसम् । नन्वेवं वस्तुगत्या नानाकर्तृकेषु घटत्वेन कुलालकर्तृकत्वानुमानेऽपि बाधकानवतारदशायां लाघवादेककर्तृसिद्धिः स्यात्, न चेष्टापत्तिः, अनुमित्यनन्तर (१)नानात्वैकत्वे संशयादिति चेन्न । तत्रापि लाघवेन कर्त्रैक्यमेव सिद्ध्यति तत्सन्देहस्तु ज्ञानप्रामाण्यसंशयादिति पश्चान्नानाकर्तृकत्वसाधकप्रमाणादेवैककर्तृकतानुमानं तत्र बाध्यते । न चैवं क्षित्यादिकर्त्तर्यपि प्रामाण्यसंशयादेकत्वानेकत्वसंशयो दुरुच्छेदः एकत्वे बाधकस्याभावेन प्रामाण्यनिश्चयात् । न चैकत्वसाधकाभाव एव बाधकः, अनुमितेरेव लाघवसहकारेणैकत्वसाधकत्वात् ।

(प्रका०) *अन्योन्याश्रयादिति* । लाघवज्ञानजन्यानुमितित्वस्यैव लघ्वनुमितित्वादित्यर्थः ।

*यत्र प्रमाण इति* । नन्वेवं सम्भवल्लघुविषयताकानुमितित्वं लाघवज्ञानकार्यतावच्छेदकमिति पर्यवसन्नम्, तथा च यत्र तज्ज्ञानं न जातं वस्तुतो लघोरेवानुमितिस्तत्र व्यभिचारः । न च लाघवज्ञानजन्यानुमितित्वमेव तथा, अन्योन्याश्रयादिति चेत् । न । लाघवगौरवोपस्थितिकालीनलघुविषयताकानुमितित्वस्य कार्यतावच्छेदकत्वात् । ननु तथापि लाघवज्ञानोपनीतमेकत्वं प्रकारीभूयानुमितौ कथं भासतां, व्या-

(१) नानैककर्तृकत्वे इति पाठान्तरम् ।

ष्याद्युपनीतादन्यस्यानुमितौ भाने मानाभावादिति पूर्वोक्तविरोधात्। न च यस्तु गत्यैकः सिद्ध्यति न त्वेकत्वमपीति वाच्यम्। एकत्वानेकत्वसंशयतादवस्थ्यात्।

अत्राहुः। व्याप्त्याद्यनुपनीतमपि लाघवज्ञानोपनीतमनुमितौ भासते नान्यत् अतिप्रसङ्गात्, लाघवज्ञानमात्रस्य प्रमाणमात्रसहकारित्वकल्पनात्, तदिदमुक्तं *तथाविधप्रमाणमात्र इति*। अत्र लाघवज्ञानोपनीतत्वस्यैव नियामकत्वान्नातिप्रसङ्गः। व्याप्त्यादीत्यादिग्रन्थस्तु लाघवानुपनीतविषयकः। नन्वेकविषयत्वेऽप्यनेकविषयत्वसंभवात्संशयतादवस्थ्यमिति चेन्न। एकमात्रकर्तृत्व एव लाघवावतारात्तस्यैवानुमितिविषयत्वात्। अत एव नानाकर्तृके घटे पश्चादेककर्तृकताज्ञानं बाध्यत इत्यग्रे वक्ष्यति, अन्यथा नानाकर्तृकत्वव्येककर्तृकताज्ञानस्य प्रमात्वे बाधासम्भवादिति।

(चि०) अन्ये तु क्षितिकर्त्ता अङ्कुरकर्त्रभिन्नः अशरीरकर्तृत्वात् अङ्कुरकर्तृवदित्यभेदानुमानादेककर्तृसिद्धिः। न च क्षितिकर्त्ता अङ्कुरकर्तृभिन्नः अङ्कुराकर्तृत्वात् कुलालवदिति सत्प्रतिपक्षः, अनित्यज्ञानानाश्रयत्वस्योपाधित्वादित्याहुः। अत्राप्यप्रयोजकत्वे भेदाभेदयोर्गौरवलाघवे एव शरणम्।

तथापि कथं नित्यसर्वविषयज्ञानसिद्धिः। पक्षधर्मताबलादिति चेत्, व्यापकतयाऽवगतस्य पक्षसम्बन्धमात्रं पक्षधर्मर्द्धिनोः सिध्यति, तथा च पक्षे तदुपादानगोचरज्ञानमात्रं सिद्ध्येत् नतु नित्यसर्वविषयज्ञानं, तेन रूपेण व्यापकत्वाग्रहात्। न च येन विनानुपपत्तिः सोऽपि विषयः, व्यतिरेकिविलयापत्तेः।

अत्र प्राञ्चः। यमर्थमनालम्बमानाऽनुमितिः पक्षे साध्यसम्बन्धं न विषयीकरोति स पक्षधर्मताबलात् सिद्ध्यतीत्यनुपपत्तिमूलकोऽन्वयी, प्रतीत्यनुपपत्त्या च व्यतिरेकी। तदिहाऽनादिद्व्यणुकादिकार्यप्रवाहस्य प-

क्षत्वे तदुपादानस्यानादिज्ञानगोचरत्वं विना नो-पादानगोचरज्ञानजन्यत्वमनादिकार्य्यप्रवाहस्यानुमितिरालप्स्यते, अनादितैव च नित्यता, सर्वमुक्तावपि तत्सत्त्वमनादिभावत्वात्, पक्षतदुपादानविषयतैव च सर्वविषयता, लाघवात्तु तावद्विषयकमनाद्येकमेव ज्ञानं सिद्ध्यति, न तु नित्यानित्यज्ञानानीति ।

(प्रका०) अन्य इत्यत्रास्वरसबीजमुद्घाटयति *अत्रापीति* क्षित्यंकुरादिकर्तुरेतद्भिन्नत्वसंशयादीश्वरत्वानात्वसंशयतादवस्थ्यमिति। *अनादिभावत्वादिति* । यद्यप्यनुमितौ नानादित्वं विषयस्तथाऽप्यनादिकार्यप्रवाहविषयत्वेन तत्सिद्धिरिति भावः ।

(चिं०) नव्यास्तु अनित्यज्ञानाजन्यत्वेन पक्षविशेषणात् ज्ञानं सिध्यत् नित्यमेव सिध्यति अनित्ये बाधात् ।

वाचस्पतिमिश्रास्तु लाघवादेकज्ञानसिद्धावुत्पत्तिमतोऽनादिकार्य्यप्रवाहं प्रत्यजनकत्वात् परिशेषेण नित्यज्ञानादिसिद्धिः । नियतविषयता च ज्ञानस्य कारणाधीना, कारणञ्च नित्यज्ञानान्निवर्त्तमानं नियतविषयतामादाय निवर्त्तेत इति सर्वविषयत्वसिद्धिरिति ।

पदपदार्थप्रतिपादकवेदकर्तृत्वेनेश्वरस्य पदपदार्थगोचरसाक्षात्कारवत्त्वेन वा सार्वज्ञ्यम् । घटाकाशसंयोगं प्रतीश्वरस्य कर्तृत्वात् घटादिगोचरमपि ज्ञानं सिद्धमिति केचित् ।

(प्रका०)नव्यास्त्वित्यस्वरसोद्भावनम् । तद्बीजं तूपनीतभानानङ्गीकारान्नित्यज्ञानजन्यत्वं पक्षधर्मताबलादपि न सिध्यतीति ।

ननु तथापि कथं सर्वविषयत्वमित्यत आह *नियतेति* । एवं च पक्षतदुपादानातिरिक्तविषयत्वमपि सिध्यति । एतेन प्रथमकल्पेऽस्वरसोऽपि सूचितः—पक्षादिविषयत्वे तत्र सर्वविषयत्वासिद्धेरिति ।

(चिं०) ननु घटादीनां कथमीश्वरककर्तृत्वं भवति घटे-

ईश्वरकर्तृका कार्यत्वात् क्षितिवदिति चेन्न। घटस्य द्वि-कर्तृकतया तद्दृष्टान्तेन क्षित्यादेरपि द्विकर्तृकतापत्तेः(१), तथा च घटवत् क्षितिः क्षितिवद्घट इतीश्वरानन्त्यम्। कार्ये कर्तृत्वेन कारणता न तु द्विकर्तृकत्वेनेति चेत्। तर्हि नेश्वरकर्तृकत्वेन कारणता किन्तु कर्तृत्वेनेति।

मैवम्। ज्ञानादीनां नित्यत्वेन सर्वविषयतया घटाद्युपादानविषयत्वमपीति कथं न तेषां घटादिकारणत्वं कुलालादिज्ञानतुल्यत्वात्। तदाहुराचार्याः "परमाण्वदृष्टाधिष्ठातृसिद्धौ ज्ञानादीनां नित्यत्वेन सर्वविषयत्वे वेमाद्यधिष्ठानस्यापि न्यायप्राप्तत्वात् न तु तदधिष्ठानार्थमेवेश्वरसिद्धिरिति। "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते" इत्यागमोऽप्यमर्थोऽप्यवसेयः।

अथेश्वरस्य सर्वज्ञत्वे सर्वविषयभ्रान्तेर्ज्ञाने ईश्वरोऽपि भ्रान्तः स्यात् भ्रमस्येव तस्यापि भ्रमविषयविषयकत्वादिति चेत्। न। रजतत्वप्रकारकज्ञानवानयमिति ज्ञानं न भ्रमः अभ्रान्तस्य तथात्वात्। इदं रजतमितिज्ञाने रजतत्वं प्रकारः तेन स भ्रमः, ईश्वरज्ञाने च रजतत्वप्रकारकत्वं प्रकार इति स न भ्रमः। अत एवास्मदादिरपि भ्रान्तिज्ञो न भ्रान्त इति।

(प्रका०) नन्विति, तथाच कथं जगद्विभर्मातृत्वमिति भावः। न भ्रान्त इति॥ न ह्यसद्विषयत्वेन भ्रमत्वं, किन्तु व्यधिकरणप्रकारकत्वेनेति भावः।

(चि०) स्यादेतत् प्रयोजनं विना कथमीश्वरः प्रवर्त्तते? सुखस्याभावात् अधर्म्माभावेन निर्दुःखत्वात्। करुणया प्रवर्त्तते इति चेत्। तर्हि परसुखदुःखप्रहाणे प्रयोजने, तथाच सुखिनमेव सृजेन्न नारकिणम्। धर्माधर्मपर-

(१) द्विरपि द्विकर्तृका स्यादिति पाठान्तरम्।

तन्त्रत्वात् तदनुरूपं फलं प्रापयतीति चेत्। तर्ह्यावश्यकत्वात् कर्मनिर्मितमेव, जगद्वैचित्र्यमस्तु किमीश्वरेण अनपेक्षितकीटादिज्ञानवता। कर्मनिरपेक्षत्वे चैकदैव सदा च सर्गप्रलयौ स्याताम्, ज्ञानादीनां नित्यत्वात्। किञ्च तत्प्रयत्नस्य करुणाजन्यत्वेन शरीरादिजन्यतापत्तौ संसारितापत्तिरिति। न। ईश्वरानभ्युपगमे विचारस्याश्रयासिद्धत्वात्। तमभ्युपगम्य पृच्छसि चेत्, आकर्णय। जगत एव तदिच्छाविषयत्वेन स्वेष्टसाधनताज्ञानसत्त्वात्।

(प्रका०) *स्वेष्टसाधनत्वेति*। तथा च यत्नस्य प्रयोजनज्ञानव्याप्यत्वमव्याहतम्, प्रयोजनज्ञानजन्यत्वनियमश्च जन्यत्वोपाधिदूषित इति भाव।

(चि०) वस्तुतस्तु क्षित्यादितत्तदसाधारणकर्मिकादृष्टादिसामग्रीसमवहिता ईश्वरज्ञानादयो यदा भवन्ति तदा क्षित्यादिक करोतीति व्यवहारः। सर्गप्रलयासाधारणकर्मिकादृष्टादिसामग्रीसमवहितत्वमेव तदिच्छायाश्चिकीर्षासंजिहीर्षात्वे। न चैवं किं तज्ज्ञानादिनेति वाच्यम्। क्षित्यादीनां कार्यत्वेन ज्ञानजन्यतया नित्यज्ञानादीनामपि जनकत्वात्, सुखादिशब्दयोरात्माकाशादिवत्।

नन्वशरीरात् कथ वेदघटादिशब्दव्यवहारसंप्रदायः। उच्यते। सर्गादावदृष्टोपगृहीतभूतभेदात्मीनशरीरोत्पत्तावदृष्टवदात्मसंयोगाददृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञानादिविवक्षासहितात्मनिकलेवरकण्ठताल्वादिक्रियातज्जन्यसंयोगाद्वेदोत्पत्तिः। एवं कुलालादिशरीरावच्छेदेनादृष्टसहकृतप्रयत्नवदीश्वरसंयोगात्तद्बुद्धीच्छासहितचेष्टोत्पत्तौ(१)सकलघटानुकू-

(१) सहिताःप्रयत्नोत्पत्तौ इति पाठान्तरम्।

तद्व्यापाराद् घटोत्पत्तिः । एवं प्रयोज्यप्रयोजकज्ञानाय व्यापाराभिमतशरीरावच्छेदेनापि अदृष्टसहकृते(१)श्वरज्ञानेच्छाप्रयत्नादेव वाग्व्यवहारः, ततस्तत्सुशीलो(२) बालो व्युत्पद्यते सोऽयं भूतावेशन्यायः।

(प्रका०) प्रयोजनज्ञानापेक्षा प्रयत्नोत्पत्तौ न तु तत्स्थतावपीत्याह *वस्तुत इति* । *करोतीति* । ईश्वर इति शेषः । ननु तदिच्छायाः सिसृक्षारूपत्वे प्रलयो न स्यात् संजिहीर्षारूपत्वे च सर्गो न स्यादित्यत आह *सर्गेति* । *सुखादीति* । भावकार्यस्य समवायिकारणजन्यत्वनियमाद्यथात्मादिजन्यत्वमिति भावः ।

*मौनशरीरेति* । तच्च शरीरं नेश्वरस्य तदृष्टोपगृहीतत्वाभावात् किन्तु संसारिण एवेति ध्येयम् । अत एवाह *सोयं भूतावेशन्याय* इति । न चैवं संसार्यात्मा न सिद्ध्येत् तद्व्यापाराणां भूतावेशन्यायेन परमेश्वरादेव सिद्धेरिति वाच्यम् । तथासत्यदृष्टाभावेन शरीरासिद्धौ भूतावेशन्यायस्यापि असम्भवात् भगवत्यदृष्टाभावात् ।

(चि०) यत्तु–यथा लिप्यादिना मौनिश्लोकोऽनुमाप्यते तथा सर्गान्तरोत्पन्नतत्त्वज्ञानवता भोगार्थं सर्गादावुत्पन्नेन मन्वादिना सर्वज्ञेश्वराभिप्रायस्थवेदः साक्षात्कृत्यानूद्यते, ततोऽग्रिमसंप्रदायः, स एव च कायव्यूहं कृत्वा वाग्व्यवहारं करोतीति–मतम् । तन्न । प्रतिसर्गमनन्तसर्वज्ञकल्पनायां गौरवात्, तेषामेव क्षित्यादिकर्तृत्वसम्भवेन ईश्वरानुमानाच्च । एतेन सर्गादौ सर्गान्तरसिद्धयोगिन एव क्षितिकर्त्तारः सन्त्विति निरस्तम् । सर्गादावनन्तसर्वज्ञसिद्ध्यर्थं किं प्रमाणान्तरात् क्षित्यादिकर्तृग्राहकाद्वा । नाद्यस्तदभावात् नान्त्यः अनादिद्व्यणुकादिकार्यप्रवाहस्य सकर्तृकत्वानुमानाल्लाघवसहकृतादेकस्यैव सर्वज्ञस्य सिद्धेः ॥

(१) प्रयोज्यप्रयोजकवृद्धप्रयोजकवृद्धभावाभिमतशरीरव्यापारावच्छेदेनादृष्टसहकृतेति पाठान्तरम् ।

(२) तद्दर्शीति पाठान्तरम् ।

अथेश्वरज्ञानमूलकशब्दशक्तिग्रहे प्रयोजयव्यापारानुमितघटज्ञाने घटशब्दस्य कारणताग्रहो भ्रमः स्यात् तदीयज्ञानस्य नित्यत्वात्, तथा च तज्जन्यघटशब्दशक्तिग्रहस्य भ्रमत्वे सकलशब्दज्ञानं भ्रमः स्यात् भ्रमपरम्परामूलकत्वात्। अनित्यसर्वज्ञमूलकशब्दत्वग्रहे च नायं दोष इति चेन्न। व्यापारानुमितमिदं घटज्ञानं घटपदजन्यमिति ज्ञानस्य शब्दशक्तिग्रहकारणस्य भ्रमत्वेऽपि घटपदं घटशक्तमिति ज्ञानस्य यथार्थत्वात् विषयाबाधात्। न च भ्रममूलकत्वेन तस्य भ्रमत्वमनुमेयम्। तदंशे व्यधिकरणप्रकाराभावेन बाधात् बाधितविषयत्वस्योपाधित्वाच्च।

अत एव घटमानयेति शब्दानन्तरं सूत्रसञ्चाराधिष्ठितदारुपुत्रकस्य घटानयनव्यवहारदर्शनाद्बालो घटपदे व्युत्पद्यते। तन्मूलकशाब्दज्ञानमपि न भ्रमः, तस्यापि भ्रमत्वे प्रयोज्यव्यवहारादिदानीं व्युत्पत्तिर्न स्यात्, किमयं प्रयोज्यश्चेतनव्यवहाराद्व्युत्पन्नोऽचेतनव्यवहाराद्वेति संशयस्य वज्रलेपायमानत्वात्॥ "विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतः पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः इत्यादि श्रुतयः,—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥

इत्यादयः स्मृतयश्च बह्वयो मानत्वेनानुसन्धेया इति॥

इत्यनुमानचिन्तामणौ ईश्वरवादः।

(प्रका०) *ईश्वरानुमानाद्येति* । यद्यपि मन्वादिशरीरारम्भकद्व्यणुकादिकर्तृत्वेनेश्वरानुमानं स्यादेव । तथापीश्वरस्याप्यावश्यकत्वात् किं मन्वादिनेति भावः । विश्वतश्चक्षुः-विश्वविषयकसाक्षात्कारवान्, विश्वतोमुखः-विश्वविषयकवचनवान् । विश्वतोबाहुः-विश्वविषयकप्रयत्नवान्, विश्वतस्पात् विश्वव्यापी, बाहुभ्यां-धर्माधर्माभ्यां, संपतत्रैः-परमाणुभिः, संधमति-संयोजयति । किमर्थमित्यत आह द्यावाभूमी संजनयन् । द्यावेत्यूर्द्धलोकसप्तकं भूमीत्यधोलोकसप्तकमुपलक्षितम् । संद्वयं व्यवहिताश्चेति सूत्रेण धमजननाभ्यामन्वीयते । स्मृतिविरोधेन श्रुतेरन्यपरत्वमाशङ्क्य तद्विरोधमेव दर्शयति *उत्तम इति* ।

॥ इत्यनुमानखण्डावशिष्टांशचिन्तामणिव्याख्यानप्रकाशे ईश्वरवादः ॥

(चि०)स्यादेतत् ईश्वरवत् कार्येणैव शक्तिरप्यनुमीयते, तथाहि यादृशादेव करतलानलसंयोगाद्दाहो जायते तादृशादेव सति प्रतिबन्धके न जायते, अतो यदभावात् कार्याभावस्तदवश्यमादावभ्युपेयं तेन विना तदभावाय तद्दाहाभावानुपपत्तेर्व्यतिरेकमुखेन शक्तिसिद्धिः । न चादृष्टवैगुण्यम्, दृष्टसाद्गुण्ये तदभावात्, तस्य तदर्थत्वात् । अन्यथा दृढदण्डनुन्नमपि चक्रं न भ्राम्येत् । अथादृष्टविलम्बादपि विलम्बो यथा वन्ध्यास्त्रीसंप्रयोगे परमाणुकर्म्मणि अध्ययनतुल्यत्वेऽपि एकत्र फलाभावे चेति चेन्न । अदृष्टविलम्बो हि न तन्नाशानुत्पादौ, मण्यपसारणानुपदं दाहाभावप्रसङ्गात् । किञ्च नियमतो मणिसद्भावे कार्याभावस्तदभावे कार्यमिति दृष्टत्वात् मण्याद्यभाव एव कारणम्, अन्यथा कदाचित् मण्याद्यभावेऽपि तदभावान्न कार्यं स्यात्, वन्ध्यासंप्रयोगे तु दृष्टव्यभिचारादृष्टविलम्बादेव विलम्बः । अदृष्टञ्च क्वचित् साक्षाज्जनकम्, अन्यथा परम्परया हेतुरपि न स्यात् । न च समप्रज्ञयोः समश्च(१) निरपवादमभ्यस्यतोरेकः प्रग-

(१) निरन्तरमिति पाठान्तरम् ।

लभो नापर इति दृश्यते । न च सर्वोत्पत्तिमन्मात्रमदृष्टं निमित्तकारणम्, अगम्यागमनसाध्ये सुखे तदभावात् तद्धि नोऽधर्मात् सुखत्वात् नापि धर्मात् । तेन(१) अगम्यागमनमुत्पाद्य सुखमुत्पादनीयम्, तथा चागम्यागमनकारणत्वेन न स धर्मः, श्येनापूर्ववन्निषिद्धफलकत्वेनानर्थकत्वात् । दाहप्रतिकूलाददृष्टादेव दाहाभाव इति चेन्न । तस्योत्तेजकाभावसहितमण्यजन्यत्वे तत्राऽदाहार्थिनोऽप्रवृत्तिप्रसङ्गात् । तज्जन्यत्वेऽपि तदुत्पादकादेव दाहाभाव इति किमदृष्टेन, प्रथमोपस्थितत्वादुपजीव्यत्वाच्च । प्रतिबन्धकाभावहेतुत्वस्य तेनाभ्युपगमात् अदृष्टोत्पत्तौ शौचाचमनादेः साधारणस्याप्यन्वयः स्यात्, अशुचेरेव तदुत्पत्तौ शौचे सति तदभावापत्ते, प्रतिपक्षसन्निधापकादृष्टस्यैव प्रतिबन्धकत्वे सति मण्यप्रयोगेऽपि दाहानापत्तिः अग्रिमकाल एव सन्निधिदर्शनेन तदसिद्ध्यभावात् । अस्तु तर्हि उत्तेजकाभावसहकृतप्रतिबन्धकाभावस्यान्वयव्यतिरेकाभ्यां हेतुत्वम् । एवं केवलोत्तेजकसद्भावे उभयसत्त्वे उभयाभावे च विशिष्टाभावोऽनुगतो हेतुः । प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वं, तच्च मण्याद्यभावत्वेन न तु प्रतिबन्धकाभावत्वेनेति नान्योन्याश्रयः । अत एव प्रतिबन्धकत्वाभिमतमण्यादीनामभावकूट एव कारणं तेन मणिसद्भावे मन्त्राद्यभावेऽपि न कार्यम् । अनतिरिक्ताभाववादिमते च व्यवहारार्थं तत्तत्स्थानाभिषिक्तस्य हेतुत्वम् । न चाभावो न कारणम्, भाववत्तद्ग्राहकतौल्यात् । दृष्टश्च कुड्यसंयोगाभावस्य गतौ, अनुपलम्भस्याभावविज्ञाने, विहिताकर-

(१) तद्धिनाऽधर्मात्सुखं स्यात् न धर्मात्--एतेनेति पाठान्तरम् ।

णस्य प्रत्यवाये, निर्दोषत्वस्य वेदप्रामाण्ये जनकत्वमिति प्राञ्चः ।

नैवम् । विशिष्टं हि नार्थान्तरं येन तदभावोऽनुगतः स्यात्, किन्तु विशेषणविशेष्यसम्बन्धा इति तेषां प्रत्येकाभावस्य हेतुत्वे क्वचित् विशेषणमप्यभावः क्वचिदुत्तेजकाभावरूपविशेषणाभावः-क्वचिदुभयं कारणमिति व्यभिचारान्नैकमपि हेतुः स्यात् ।

(प्रका०) प्रसङ्गादाह *स्यादेतदिति* । *कार्येणैवेति* । यथा अनुमीयत इति नैयायिकदिशा उपदर्शिताया अर्थापत्तेः पृथक्त्वेन स्वय स्वीकारादिति ध्येयम् । नन्वेवं कार्येण न तदुन्नयनं किन्तु कार्याभावेनेत्यत आह *व्यतिरेकेति* । व्यतिरेकनिरूपकतया तत्प्रयोजकमित्यर्थः । तस्य अदृष्टस्य, तदर्थत्वात्-दृष्टसाद्गुण्यार्थत्वात्, तथा च दृष्टसाद्गुण्यमेवादृष्टसाद्गुण्ये मानमिति भावः । *परमाण्विति* । खण्डप्रलये परमाणुकर्मणि सत्यपि यथा न द्व्यणुकारम्भकसंयोग इत्यर्थः । पूर्वादृष्टस्य नाशादग्रिमस्योत्पादकाभावाद्दाहो न स्यादित्याह *मण्यपसारणेति* । न च मण्यपसारणेनैव तदाऽदृष्टमुत्पद्यत इति वाच्यम् । तस्य विहितनिषिद्धेतरत्वेन तदजनकत्वादिति भावः । *मण्याद्यभाव एवेति* । इदं चादृष्टकारणतानिरासनाभिप्रायेणापाततः, वस्तुतोऽस्यापि न कारणत्वमित्यग्रे वक्ष्यति । तदभावात्-अदृष्टाभावात् । वह्न्येत्युपलक्षणम् । परमाणुकर्मणीत्यपि द्रष्टव्यम् । नन्वदृष्टं दृष्टोपसंहारद्वारैव सर्वत्र जनकं न तु साक्षादित्यत आह *अदृष्टं चेति* । *अन्यथेति* । द्वारे तस्य साक्षाज्जनकत्वं स्वीकार्यमेव तत्रापि द्वारान्तरापेक्षायामनवस्थानादिति भावः । *नचेति* । तथा च दाहेऽपि तदेव जनकमिति भावः । *श्येनेति* । चोदनालक्षणोऽर्थो धर्म इत्यर्थपदेन श्रेयस्करार्थकेन श्येनापूर्वमनर्थरूपं व्यावृत्तं तस्य निषिद्धशत्रुवधजनकत्वेनाश्रेयस्करत्वात्, तददृष्टमपि न धर्म इत्यर्थः । *दाहप्रतिकूलेति* । नियताग्निसाध्यदाहप्रतिकूलमेतादृष्टमुत्पाद्यत इति नान्यथान्तरजन्यदाहप्रतिबन्ध इति भावः । दोषान्तरमाह-*अदृष्टेति* । *अनुचेरिति* । यागागमादौ तथा दर्शनादिति भावः । उभयसत्त्वे-उत्तेजकप्रतिबन्धकसत्त्वे । *तथेति* । कारणत्वमित्यर्थः । मणिसन्नाघे-उत्तेजकाभावविशिष्टमणिसद्भावे ।

(चि०) स्यादेतत् प्रतियोगिभेदादिव प्रतियोगितावच्छे-

दकविशेषणभेदेऽप्यभावो भिद्यते, अन्यथा पृथिव्यादित्रयप्रत्येकरूपाभावेऽवगतेऽपि वायौ रूपसंशयो न स्यात्। एवञ्च यथा केवलदण्डसद्भावे दण्डपुरुषसद्भावे द्वयाभावे च विशेषणविशेष्योभयाभावप्रयुक्तः केवलपुरुषाभावोऽबाधितानुगतव्यवहारबलात् प्रतीतिसिद्धः तथा विशेष्यस्य प्रतिबन्धकस्याभावे विशेषणस्योत्तेजकाभावस्याभावे द्वयाभावे च केवलप्रतिबन्धकाभावो विशेष्यविशेषणोभयाभावव्यापकोऽनुगत एव दाहकारणमस्तु। अथ विशेषणाद्यभावादेव केवलपुरुषाभावव्यवहार एकशक्तिमत्त्वादिति चेन्न। अनुगतव्यवहारस्यानुगतज्ञानसाध्यत्वात् शक्तेश्चातीन्द्रियत्वात्। अथोत्तेजकप्रयोगकाले मणेः कोऽभावः ? न तावत् प्राक्प्रध्वंसाभावौ, तयोः प्रतियोग्यसमानकालत्वात्। न च श्यामोऽयमासीदित्यत्र यथा श्यामध्वंसप्रयुक्तः श्यामघटत्वेन पक्वघटस्य ध्वंस एव तथोत्तेजकाभावध्वंसप्रयुक्त उत्तेजकाभाववत्त्वेन मणिध्वंस एवेति वाच्यम्। ध्वंसस्यानन्तत्वे उत्तेजकापनयेऽपि दाहप्रसङ्गात्। नाप्यत्यन्ताभावः, तस्य कादाचित्कत्वाभावादिति चेत् न। यथा दण्डोपनयापनयदशायां केवलपुरुषाभाव उत्पादविनाशवान् अन्यथाऽबाधितकेवलपुरुषाभावतदभावव्यवहारयोरुपपादयितुमशक्यत्वात्, तथोत्तेजकोपनयापनयशृङ्खलायां प्रतिबन्धकाभावोऽपि तथैव स्वीकरणीयः तुल्यन्यायत्वात्। यदि च संसर्गाभावत्रयवैधर्म्यात्तत्र नान्तर्भवति, तदा तुरीय एव संसर्गाभावोऽस्तु, न हि कॢप्तविशेषबाधे सामान्यबाधो, विशेषान्तरमादायापि तस्य सम्भवात्। अन्यथा कॢप्तमानादिसंसर्गाभाववैधर्म्येण

ध्वंसोऽपि न सिद्ध्येत् । व्यवहारानुपपत्तिश्च तुल्यैव । सोऽयमस्माकं सगोत्रकलहो न तु शक्तिवादः ।

(प्रका०) *प्रतियोगीति* । यद्यपि प्रतियोगिभेदस्थले प्रतियोगितावच्छेदकभेदस्यावश्यकत्वात्तद्भेदादेव भेदस्तथापि यथा प्रतियोगिभेदोऽभावभेदव्याप्यस्तथा प्रतियोगितावच्छेदकभेदोऽपीत्यर्थः । *यत्रश्चेति* केवलदण्डसद्भावे उभयाभावाद्दण्डपुरुषसद्भावे विशेषणाभावाद्दण्डपुरुषोभयाभावे च विशेष्याभावाद्दण्डाभावविशिष्टपुरुषाभाव इत्यर्थः । *प्रयुक्त इति* । विशेषणादिविरहान्यतरत्वात्म इत्यर्थः । *अनुगतेति* । यद्यपि शब्दप्रयोगरूपे व्यवहारे व्यभिचारः नानार्थशब्दानुगमेपि विषयाननुगमात्, तथापि व्यवहारशब्देन ज्ञानमेव विवक्षितम् । न चैवमनन्वयः । ज्ञानेन विषयिणा विषयस्योपलक्षणात् । तथा चानुगतज्ञानस्यानुगतविषयसाध्यत्वादित्यर्थो द्रष्टव्यः । ननु शक्तिरेवानुगता तद्विषयोऽस्त्वित्यत आह *शक्तेश्चेति* । इदानीं ध्वंसप्रयुक्तः—तन्नियतः, न तु तज्जन्यः समसमयत्वादिति ध्येयम् । न तु घटत्वेन, घट आसीदिति प्रत्ययाभावादिति भावः । *सोयमिति* । उत्पादविनाशवान् तुरीयसंसर्गाभावोऽस्तु नोभयथापि शक्तिसिद्धिरिति भावः ।

(चि०) अस्तु वा ध्वंस एवासौ, संसर्गाभावविभागे जन्याभावत्वेन ध्वंसस्य विभजनात् । न चैवं विनाशत्वेन प्रागभाव एव सः, परिभाषाया अपर्यनुयोज्यत्वात् । यद्वाऽत्यन्ताभाव एवासौ, तस्य नित्यत्वेऽपि कादाचित्कप्रतीतिकार्यानुदयौ प्रत्यासत्तिकादाचित्कत्वात् । प्रत्यासत्तिश्च विशेषणाभावो विशेष्याभाव उभयाभावश्च, तदैव विशिष्टात्यन्ताभावसत्त्वादिति । तन्न । यदि त्वतीतविशेषणावच्छेदेन विद्यमानस्यैव विशेष्यस्य ध्वंसः स्यात् तदा क्षणरूपातीतविशेषणावच्छिन्नत्वेन प्रतिक्षणं घटस्य विनाशः स्यात् इति क्षणभङ्गापत्तिः । किञ्च विद्यमानस्य विनष्टत्वेनाप्रतीतेः शिखा विनष्टा पुरुषो न विनष्ट इति विपरीतबाधितप्रत्ययाच्च न विशेषणाभावेऽपि विशिष्टध्वंसः । इदानीमोऽयमासीत्

केवलोऽयमासीत् पुरुष इत्यादौ "सविशेषणे हि"ति न्यायेन विशेष्यवति श्यामकैवल्यादिध्वंस एव प्रतीयते, ध्वंसस्य ध्वंसानुपपत्तेश्च न विद्यमानस्य ध्वंसः। एतेनोत्तेजकसद्भावे सत्युत्तेजकाभावविशिष्टमणेरुत्पन्नध्वंसस्य उत्तेजकापनयसमये ध्वंसो जातोऽध्वस्तश्च ध्वंसः कारणमिति न विफल उत्तेजकापनय इत्यपास्तम्। विद्यमानध्वंसस्य च ध्वंसाभावात्। न च ध्वंसान्यः संसर्गाभावो विशिष्टाभाव इति वाच्यम्। उत्पन्नाभावस्य विनष्टप्रत्ययहेतुतया ततोऽपि विद्यमानस्य विनष्टत्वप्रत्ययापत्तेः। नापि विशिष्टाभावोऽत्यन्ताभावः, तथाहि स एव क्वचित् विशेषणाभावसहितः क्वचिद्विशेष्याभावसहितो दाहकारणमिति अननुगमस्तदवस्थ एव, विशेषणविशेष्याभावयोः प्रत्यासत्तित्वावच्छेदकानुगतधर्माभावात्।

(प्रका०) ननु तुरीयसंसर्गाभावस्वीकारे विभागव्याघात इत्यपरितुष्यन्नाह *अस्तु वेति*। ननु विनाशिनि ध्वंसपदपरिभाषैव सन्दिग्धेत्यरुचेराह *यद्वेति*। *यदि ह्यतीतेति*। यद्यपि विशेष्यतावच्छेदकघटत्वाद्यवच्छिन्नघटादिप्रतियोगिकः प्रतिक्षणं ध्वंसो नेष्यते तादृशक्षणभङ्गपात एव च दोषावहस्तथापि विशेष्यस्य प्रत्यभिज्ञायमानत्वात्समवाय्यसमवायिनाशाभावाच्च न घटादेर्विनाशः, किन्तु विशेषणस्यैव। न च विशेषणनाशसामग्र्येव विशेष्यनाशिका, नित्यमात्रापलापापत्तेः। अत एव श्यामोऽयमासीदिति प्रत्ययो न त्वयमासीदिति प्रत्यय इति भावः। *ध्वंसस्येति*। तथा चोत्तेजकापगमेऽपि दाहापत्तिः। उत्तेजककालोत्पन्नस्य प्रतिबन्धकध्वंसस्य तदानीमनाशादिति भावः। ध्वस्तस्येति क्वचित्पाठः। स च सुगम एव। उत्पादविनाशशीलस्तुर्यः संसर्गाभाव एव विशिष्टाभाव इति निरस्यति *नचेति*। अत्यन्ताभाव एवासाविति पक्षं परिहरति *नापीति*। अत्यन्ताभावस्य नित्यत्वात्सदैव दाहापत्तिरिति प्रत्यासत्तिसहितस्य तस्य हेतुत्वं वाच्यम्, प्रत्यासत्तिश्च 'विशेषणभावादिरित्यननुगम इत्याह *स एवेति*।

(चि०) अथ विशिष्टविरोधित्वं विशेषणविशेष्याभावयोरनुगतं तदवच्छेदकमस्ति तयोश्च सत्त्व एव विशिष्टात्यन्ताभावसत्त्वादिति चेत्, तर्हि विशिष्टविरोधित्वेनानुगतेन तयोरेव हि विशिष्टाभावत्वेन दाहव्यवहारादौ जनकत्वमस्तु कृतं तदुपजीविनाऽतिरिक्तविशिष्टाभावेन । अथोत्तेजककाले विद्यमानात्यन्ताभावानुवृत्तावप्युत्तेजकापनयने उत्तेजकाभावव्यक्तिर्या जाता तदवच्छिन्नमणेरभावो न तत्रेति तदा न कार्योदयः तत्तदुत्तेजकाभावविशिष्टमणेरभावकूटस्य जनकत्वादिति चेन्न । तत्तदुत्तेजकाभावानामननुगतत्वेनानुगताविशिष्टाभावव्यवहारानुपपत्तेः, उत्तेजकाभावत्वेनानुगमेऽतिप्रसङ्ग एव ।

अथ विशेषणविशेष्याभावयोर्विशिष्टविरोधित्वमनुगतकारणतावच्छेदकं यत्र तदन्यतराभावस्तत्र न विशिष्टं यत्र विशिष्टं तत्र न तयोरभाव इति सहानवस्थाननियमस्य विरोधस्यानुभवसिद्धत्वादिति चेन्न । सहानवस्थाननियमो न परस्परविरहरूपतया विशेषणविशेष्याभावस्य प्रत्येकं विशिष्टाभावतया तत्प्रत्येकाभावाभावस्य विशिष्टत्वापत्तेः, तथा च विशेष्यविशेषणयोः प्रत्येकं विशिष्टत्वापत्तिः तदभावस्य तत्त्वात् । न चोभयाभावाभाव उभयं विशिष्टम् । एवं सभावरूपं विशिष्टाभावो न तु प्रत्येकाभावरूप इति प्रत्येकाभावाद्विशिष्टाभावव्यवहारो न स्यात् । नापि परस्पराविरहव्याप्यत्वं तदाक्षेपकत्वं वा, विशेषणविशेष्याभावस्य विशिष्टाभावत्वेन तद्व्याप्यत्वात् तदनाक्षेपकत्वाच्च, अभेदे तयोरभावात् । एतेनान्यदपि विशिष्टव्यवहारावि-

रोधित्वादिनानुगतत्वमपास्तम् । केनाप्यनुगतेन रूपेण विशेषणविशेष्याभावस्य विशिष्टाभावत्वे प्रत्येकाभावावस्य विशेषणविशेष्यान्यतरमात्रस्य विशिष्टत्वापत्तेः, तदभावाभावस्य तत्त्वादित्युक्तत्वात्, तस्माद्विशेषणविशेष्याभावो विशेषणावच्छिन्नविशेष्याभावो न विशिष्टाभाव इति ।

( प्रका० ) *अथेति* उत्तेजककाले विद्यमानो योऽत्यन्ताभावस्तदनुवृत्त्यापत्तिरित्यर्थः । *उत्तेजकाभावत्वेनेति* तदुत्तेजकाभावविशिष्टमण्यभावत्वेन हेतुत्वं, तथाच पूर्वानुवर्तमानतादृशाभावादुत्तेजकापनयकाले दाहापत्तिः, कारणतावच्छेदकावच्छिन्नयत्किञ्चित्सत्त्वे एव कार्योत्पत्तेरित्यर्थः । *तर्हीति* ।

पूर्वोक्त इष्टापत्तिमाशङ्कते *अथेति* । *विशेषणविशेष्याभावस्येति* अतिरिक्तविशिष्टाभावानभ्युपगमादिति भावः ।

( चि० ) अत्रोच्यते । विशेषणविशेष्ययोः सम्बन्धाद्विशिष्टव्यवहार इति तयोः सम्बन्धाभावाद्विशिष्टाभावव्यवहार इति घटतदभावव्यवहाराविव घटसत्त्वासत्त्वाभ्याम् । न हि तयोरसम्बन्धे विशिष्टव्यवहारः, नवा तदभावे सति न विशिष्टाभावव्यवहारः । यस्य च यत्र सम्बन्धः स एव तत्र तस्य वैशिष्ट्यम्, स च सम्बन्धाभावो विशेषणाभावाद्विशेष्याभावादुभयाभावात् सर्वत्राविशिष्ट एकस्तेषां व्यापकोऽनुगतविशिष्टाभावव्यवहारकारणम्, इह दण्डी पुरुषो नास्तीत्यत्र तथा दर्शनात् । अत एव दण्डमात्रसद्भावे दण्डपुरुषसद्भावे उभयाभावे च केवलपुरुषयोः सम्बन्धाभावः सर्वत्रास्तीत्यनुगतः केवलपुरुषभावव्यवहारः । एवञ्च प्रतिबन्धकोत्तेजकाभावयोः सम्बन्धाभावो दाहकारणम् । स च प्रतिबन्धकाभावे प्रतिबन्धकोत्तेजकसद्भावे उभयासत्त्वे चास्ति,

सर्व्वत्र प्रतिबन्धकोत्तेजकाभावयोः सम्बन्धो नास्तीति प्रतीतेः। नन्वेवं यत्र प्रतिबन्धकोत्तेजकाभावौ तत्रापि दाहः स्यात् अधिकरणाभावयोरतिरिक्तसम्बन्धाभावादिति चेन्न। तदभावेऽपि स्वरूपसम्बन्धस्याभावात् सर्व्वत्र स्वरूपसम्बन्धादेवाधिकरणाभावयोर्वैशिष्ट्यप्रतीतेः। तथापि प्रतिबन्धकोत्तेजकाभावावेव स्वरूपसम्बन्धः तयोरभावश्च प्रतिबन्धकाभाव उत्तेजकश्च दाहकारणं, तथा चोभयाभावे उत्तेजकासत्त्वे परं दाहः स्यात्, उत्तेजकवति च प्रतिबन्धके दाहो न स्यादिति चेन्न। अधिकरणाभावावेव स्वरूपसम्बन्धः, तयोर्घटवद्भूतलचत्वरीयतदभावयोरपि स्वरूपसत्त्वे घटवति घटाभावव्यवहारापत्तेः किन्तूपश्लिष्टस्वभावत्वं, तच्च सम्बन्धान्तरं विना विशिष्टप्रत्ययजननयोग्यत्वम्। न च घटवद्भूतलचत्वरीयतदभावयोर्विशिष्टप्रत्ययजननयोग्यत्वमस्ति, घटवति कदापि घटाभावप्रत्ययानुदयात्, तदिहापि प्रतिबन्धकोत्तेजकाभावयोर्विशिष्टप्रत्ययजननयोग्यत्वं स्वरूपसम्बन्धः, अन्यथोत्तेजकवति प्रतिबन्धके चत्वरीयोत्तेजकाभावविशिष्टप्रत्ययापत्तेः। तादृशस्वरूपसम्बन्धाभावश्च प्रतिबन्धकाभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाभावे चाविशिष्ट एव।

यद्वा अदण्डपुरुषस्याभावे दण्डी पुरुषो न प्रतियोगी तस्यादण्डत्वाभावात् किन्तु तदन्यः, तस्य चाभावो दण्डिसद्भावेऽपि दण्डमात्रसत्त्वे उभयासत्त्वे चाविशिष्ट इति तस्मात् केवलपुरुषाभावव्यवहारोऽनुगतः। तदुक्तं "न हि दण्डिनि सति अदण्डानामन्येषां नाभावः, किन्तु दण्डाभावस्यैवेति युक्तम, अन्यथा तत्राऽन्येषामिति

पदस्य व्यर्थत्वापत्तेः, तथा केवलप्रतिबन्धकाभावे उत्तेजकसहकृतः प्रतिबन्धको न प्रतियोगी तस्य केवलत्वाभावात् किन्तु तदन्यः, तदन्यस्य च केवलप्रतिबन्धकस्याभावे उत्तेजकसहितप्रतिबन्धकसत्त्वे उत्तेजकमात्रसत्त्वे उभयासत्त्वे वा विशिष्ट एवेति नाऽननुगमः, उत्तेजकापनये च केवलप्रतिबन्धकोऽस्तीति न तदभाव इति दाहो न भवती"ति ।

(प्रका०) *सम्बन्धाभावादिति* । ननु विशेषणविशेष्यसम्बन्धस्य तदुभयमात्रवृत्तित्वाद्भूतलादौ तत्सम्बन्धाभावाद्दण्डिनि सत्यपि दण्डीह नास्तीति व्यवहारापत्तिरिति चेत् । न । यादृशेन हि सम्बन्धेन यत्र यद्विशिष्टव्यवहारस्तादृशसम्बन्धाभावस्यैव तद्व्यवहारहेतुत्वं दण्डपुरुषसंयोगस्तु नैतद्व्यवहारहेतुः, तस्य भूतलावृत्तित्वेन तत्रेदमस्तीति व्यवहारानापत्तेः, किन्तु परम्परासम्बन्धविशेषः, तथा च तदभाव एव विशिष्टाभावव्यवहारहेतुरिति फलबलेन तथा कल्पनादिति । *सम्बन्धान्तरं विनेति* । संयोगाद्यतिव्याप्तेराह *सम्बन्धेति* । असम्भववारणायाह-*अन्तरेति* । ननु स्वात्मविषयकज्ञाने स्वात्मना समं विषयविषयिभावः सम्बन्धः स्वरूपसम्बन्ध एव वाच्यः, तत्र चेदमव्यापकं तत्र समवायस्यैव सम्बन्धान्तरस्य सत्त्वादिति चेन्न । उद्देश्यव्यवहारप्रयोजकसम्बन्धान्तरं विनेत्यर्थात् । न च समवायो विषयत्वव्यवहारप्रयोजकः । घटादिविषयकज्ञानस्य स्वात्मनि विषयत्वव्यवहारप्रयोजकत्वप्रसङ्गात् । ननु घटाभावप्रमानुपपत्तिः, योग्यतायाः फलबलकल्प्यतया तत्र विशिष्टज्ञानोत्पत्त्या योग्यतावश्यंभावात् । न च प्रत्ययपदं प्रमापरम्, सम्बन्धसत्त्वे तस्यापि प्रमात्वात्, अन्यथा सम्बन्धाभावेन तस्याप्रमात्वं तदप्रमात्वे च तत्र सम्बन्धाभाव इति परस्पराश्रयात् । किञ्च अतीन्द्रियाभावस्वरूपसम्बन्धेऽव्याप्तिः, तत्र सम्बन्धस्य विशिष्टप्रत्ययाजनकत्वात् तत्प्रत्ययस्यानुमित्यादिरूपत्वेन विषयाजन्यत्वादिति चेन्न । विशिष्टप्रत्ययजननयोग्यतावच्छेदकरूपावच्छिन्नस्वरूपस्य सम्बन्धत्वात्, योग्यतावच्छेदकाभावे योग्यत्वस्याप्यभावात् । योग्यतावच्छेदकं चात्यन्ताभावे प्रतियोगिदेशान्यदेशत्वम्, प्रागभावादौ च प्रतियोगिदेशत्वे सति प्रतियोगिकालान्यकालत्वम्, अन्योन्याभावे प्रतियोगितावच्छेदकदेशान्यदेशत्वम् । न चान्यत्वमन्योन्याभाव-

त्वं तत्र च मत्वर्थीयोग इति वाच्यम् । तत्रापि तद्देशान्यत्वस्य सत्त्वात् । न चैवमनवस्था वस्त्वनवस्थायाः प्रामाणिकत्वेनादोषात्, प्रत्ययानवच्छायाश्चासत्त्वात्, उक्तावच्छेदकोपलक्षितस्वरूपस्यैव प्रत्ययविषयत्वे तस्य तदविषयत्वात् । एवञ्चोक्तावच्छेदकावच्छिन्नस्वरूपाभावे यत्राभावधीस्तत्र भ्रमः । एतेनातीन्द्रियस्वरूपसम्बन्धाव्याप्तिरप्यपास्ता । न चोक्तावच्छेदकस्य प्रत्ययाविषयत्वे विषयाभावात्कथं भ्रमत्वप्रमात्वे इति वाच्यम् । एकत्रोक्तावच्छेदकावच्छिन्नस्य सम्बन्धत्वेन विद्यमानसम्बन्धाविषयत्वादन्यत्र तदनवच्छिन्नत्वेन तस्य विद्यमानसम्बन्धाविषयत्वात् ।

ननु यत्किञ्चित्सम्बन्धाभावो न विशिष्टाभावोऽतिप्रसङ्गादिति विशेषणविशेष्योभयप्रतियोगिकसम्बन्धाभावस्तथा वाच्यः, तदभावश्च क्वचिद्विशेषणविशेष्योभयप्रतियोगिस्वरूपविशेषणाभावात् क्वचिद्विशेष्यसम्बन्धाभावादित्यननुगमस्तदवस्थ एव । इयानेव विशेषो यत्पुरुषादौ विशेष्ये दण्डादिर्विशेषणं सम्बन्धे च विशेषणविशेष्योभयप्रतियोगित्वम् । ननु दण्डपुरुषोभयप्रतियोगिकसम्बन्धत्वमेकं प्रतियोगितावच्छेदकं तदवच्छिन्नाभाव एक एवेति नाऽननुगम इति चेत् । तर्हि दण्डावच्छिन्नपुरुषत्वमेकं प्रतियोगितावच्छेदकं तदवच्छिन्नाभावोऽप्यनुगत एवेति किं सम्बन्धाभावस्य विशिष्टाभावत्वोपवर्णनेन । न च विशेष्ये विद्यमाने न तदभाव इति वाच्यम् । विशेषणावच्छिन्नतान्यन्वेषामेवाभावाभ्युपगमेन दोषाभावात् । अत एवानुपदमेव वक्ष्यति "न हि दण्डिनि सत्यी"त्यादि । किञ्चान्यत्र यथा तथाऽस्तु प्रकृते चोक्तज्ञानसापमणिसम्बन्धस्य तदुभयस्वरूपतया तदभावोऽननुगत एव । न च तदुभयं न स्वरूपसम्बन्धः, किन्तु तादृशविशिष्टप्रत्ययजननयोग्यत्वमतिरिक्तमेव तथेति वाच्यम् । विशिष्टबुद्धिविषयस्य सम्बन्धत्वाद्विशिष्टप्रत्ययघटितस्य तस्य विशिष्टबुद्ध्याविषयत्वात्, अत एव सम्बन्धस्य सम्बन्धिभिन्नत्वनियमेन स्वरूपसम्बन्धः परैर्नाङ्गीक्रियते । अत एव समवायसिद्धिः, तत्तत्स्वरूपाणामनन्तत्वेन स्वरूपसम्बन्धेनार्थान्तराभावात्, अन्यथा तेनैवार्थान्तरं स्यात् । न च सम्बन्धत्वस्य मिलितवृत्तित्वेन सम्बन्धत्वावच्छिन्नाभावस्यानुगतत्वमिति वाच्यम् । एवं विशेषणावच्छिन्नविशेष्याभावस्यापि विशिष्टाभावत्वे दोषाभावादित्युक्तम् । अपि च यदि सम्बन्धाभावो विशिष्टाभावस्तदा दण्डी पुरुषो नास्तीत्यत्र तदुभयप्रतियोगित्वेन सम्बन्ध एव भासेत । न चैवं, दण्डावच्छिन्नपुरुषस्यैव तत्त्वेन प्रतीतेः । अन्यथा घटाभावोऽप्यतिरिक्तो न

सिद्धेत्, घटतदधिकरणसम्बन्धाभावादेव तद्व्यवहारसम्भवात्। यदि च सम्बन्धस्य तत्र प्रतियोगित्वेनानुल्लेखात्तज्ज्ञानं विनापि घटत्वावच्छिन्नघटज्ञानादेव तदभावज्ञानाच्च न तदभावेनान्यथासिद्धिः, तदा प्रकृतेऽपि तुल्यमित्यपरितोषं हृदि निधायाह यद्वेति। अयं च विशेषणावच्छिन्नविशेष्यप्रतियोगिताकोऽत्यन्ताभावः न तु ध्वंसो न वा विद्यमानप्रतियोगिक इति न क्षणिकत्वशङ्का। न च तस्य नित्यत्वेन प्रागपि कार्यापत्तिः, समयविशेषावच्छेदेन संसर्गित्वादिति ग्रन्थकृतैवाभिधानादिति।*दण्डी पुरुष इति*। तत्काले दण्डवानित्यर्थः। किन्तु तदन्यः तत्काले दण्डाभाववानित्यर्थः। नहीति। युक्तमिति योजना। अन्यथेति। विशेषणावच्छिन्नप्रतियोगिको यदि नाभावः, किन्तु विशेषणप्रतियोगिक एव तदाऽन्येषामिति पदस्य विशेष्यवाचिनोऽनुपादानापत्तेरित्यर्थः।

यद्वा यदि तत्कालीनदण्डाभाववानेव न प्रतियोगी, तदा अन्यकालीनदण्डाभावमादाय तत्र स्थितदण्डिनोऽप्यदण्डत्वेनाभावप्रतियोगित्वादन्येषामिति व्यर्थमित्यर्थः।

(चि०) ननु न प्रतिबन्धकाभावः कारणम् एकदण्डान्वये घटोत्पत्तिवत् प्रतिबन्धकसत्त्वेऽपि तदन्यप्रतिबन्धकाभावेऽपि(१) कार्य्यानुदयात्, न हि यावत् कारणतावच्छेदकावच्छिन्नं तावदन्वयेऽपि कार्यमिति चेन्न। प्रतिबन्धकाभावत्वेन न हेतुत्वमन्योन्याश्रयात् किन्तु मण्याद्यभावत्वेनेत्युक्तत्वात्, तत्त्वेऽपि वा घटे दण्डसलिलादिवत्प्रतिबन्धकाभावकूटस्य दाहहेतुत्वात्।

यद्वा प्रतिबन्धकत्वावच्छिन्नप्रतियोगिक एवाभावः कारणम्, स च यावद्विशेषाभावनियत इति न प्रतिबन्धकसत्त्वेऽपरप्रतिबन्धकाभावेऽपि कार्योदयः। प्रतिबन्धकस्य च संसर्गाभावो हेतुः, तेन तत्सत्त्वे तदन्योन्याभावेऽपि न कार्य्यम्। अन्वयव्यतिरेकाभ्यां व्याप्तिकारणत्वयोर्ग्रहे संसर्गाभावस्य त्वयाऽपि हेतुत्वाङ्गीकारात्,

(१) प्रतिबन्धकान्तराभावेपीति पाठान्तरम्।

अन्यथा सामग्रीव्यापकयोः सत्त्वे तदन्योन्याभावे कार्यव्याप्याभावापत्तौ कार्यकारणव्याप्यव्यापकभावे व्याघातात् । किञ्च तथापि प्रतिबन्धकाभावे शक्तिरस्तीति तत्सत्त्वे तदन्योन्याभावमादाय शक्तिसत्त्वप्रसङ्गः । न च स दुर्वचः, न वा प्रागभावादित्वेनाऽननुगमव्यभिचारौ, प्रतियोग्यधिकरणयोः संसर्गमारोप्य यो निषेधः स संसर्गाभावः । भूतलं घटसंसर्गो नेत्यत्र भूतले घटसंसर्गस्य संसर्गो नारोप्यते किन्तु तादात्म्यम् ।

( प्रका० ) ननु कार्यानुत्पादप्रयोजकत्वं प्रतिबन्धकत्वं प्रयोजकत्वं च यस्मिन्सतीत्यादिगर्भं न तु पूर्ववर्त्तित्वगर्भमिति नान्योन्याश्रय इत्यत आह—*तत्त्वेऽपि चेति* ।

नन्वेवमन्योन्याश्रयाभावेन तत्सामान्याभाव एक एव लाघवाद्धेतुरस्तु न तु यावद्विशेषाभावा इत्यपरितोषात्तदेव सिद्धान्तयति *यद्वेति* । *संसर्गाभाव इति* । अत्रापि यत्रोत्तेजकमस्ति तत्रोत्तेजकाभावावच्छिन्नात्यन्ताभावमात्रं हेतुरन्यत्र ध्वंसादिसाधारणतत्संसर्गाभावत्वमावश्यकमिति भावः । यो निषेधः, ज्ञायत इति शेषः ।

( चि० ) वयन्तु ब्रूमः । यत्र प्रतियोगिनमधिकरणे समारोप्य निषेधावगमः स संसर्गाभावः, यत्र चाधिकरणे प्रतियोगितावच्छेदकमारोप्य निषेधावगमः सोऽन्योन्याभावः । भूतलं न घट इत्यत्र भूतलस्य घटत्वावगमात् घटत्वमेव च घटतादात्म्यम् । आरोपस्य हेतुत्वे किं मानमिति चेत्, मा भूत्तावदन्यत्, नेदमिह नेदमिदमित्यबाधितविलक्षणव्यवहारस्यैव तत्र मानत्वादिति(१)। ननु प्रतिबन्धकात्यन्ताभावो न हेतुः, तस्मिन् सत्यपि कार्याभावात् । न हि करादौ मण्यत्यन्ताभावः तत्संयोगात्यन्ताभावो वा, मणेः स्वावयववृत्तित्वात् संयो-

(१) इदर एव तत्र मानमिति पाठान्तरम् ।

संसर्गाभावगर्भत्वादन्योन्याश्रयोपि। किञ्च योग्यताया अनिर्वचनेऽप्रत्यक्षे योग्यध्वंसेऽप्यव्याप्तिरिति।

अत्र वदन्ति। प्रतियोग्यारोपपूर्वकनिषेधावगमविषयतावच्छेदकत्वं संसर्गाभावत्वम्। एवमग्रेपीत्युभयं लक्षणम्। स्वरूपं तु विषतावच्छेदकं संसर्गाभावत्वादि, तच्च स्वाभावाभावत्वं अस्वाभावाभाववत्वं तेन नोक्तसर्वदोषावकाशः। अस्ति च घटस्य योऽभावस्तदभावो घटो घटान्योन्याभावस्याभावो घटत्वमिति। न च संसर्गाभावस्य योऽन्योन्याभावस्तदभावो न संसर्गाभाव इति स्वसंसर्गाभावाभावो लक्षणार्थो वाच्य इति पुनरन्योन्याश्रयत्वमिति वाच्यम्। स्वाभावाभावत्वमित्यत्र वस्तुतो यद्यपि संसर्गाभावाभाव एव पर्यवसितस्तथापि संसर्गाभावत्वं न तत्र प्रविष्टम्—अभावत्वेनैव संसर्गाभाव उपस्थित इति न काचिदनुपपत्तिः। अन्योन्याभावे स्वप्रतियोगिकाभावमात्राभावत्वाभावादिति सर्वं सुस्थमिति।

अत्रेदं चिन्त्यम्। स्वभावाभावत्वं न संसर्गाभावत्वम्, अन्योन्याभावेऽतिव्याप्तेः। तथाहि स्वं घटान्योन्याभावस्तदभावो घटस्तदभावश्च तदन्योन्याभावः। ननु घटान्योन्याभावाभावो न घटः, किन्तु घटत्वमिति चेन्न। घटो घटान्योन्याभावो नेति प्रतीत्या घटे घटान्योन्याभावान्योन्याभावो विषयीक्रियते, स च घटस्वरूप एव अभावप्रतियोगिकस्याभावस्याधिकरणानतिरेकात्। न च स्वसंसर्गाभावाभावत्वं तत्त्वमिति वाच्यम्। आत्माश्रयात्।

केचित्तु अखण्डयोः संसर्गाभावत्वान्योन्याभावत्वयोरुभाभ्यां लक्षणाभ्यामुपलक्षणम्। न च तयोः पदार्थान्तरत्वापत्तिः सामान्यान्तर्भावात्। सामान्यं हि द्विविधं उपाधिर्जातिश्च। तत्रोपाधिर्द्विविधः—सखण्डोऽखण्डश्चेत्युपाधावन्तर्भावाव तत्त्वेदन्ते इवेति, तथाच रत्नकोषे तरणिमिश्रैरुक्तम्—"एवमभावत्वध्वंसत्वादिकं बोध्यमित्याहुः।

*भेदमिहेति*। ननु संसर्गाभावान्योन्याभावरूपविषयवैलक्षण्येन ज्ञानवैलक्षण्यं तस्माच्च व्यवहारवैलक्षण्यमित्यन्यथासिद्धं तत्रारोपहेतुतां व्यवस्थापयतीति चेत्। मैवम्। यदि नारोपे हेतुस्तदा भूतले घटसंसर्गाभावान्योन्याभावसत्त्वे कदाचिन्नेदमिह कदाचिन्नेदमिदमिति व्यवहारवैलक्षण्यानुपपत्तेरित्यर्थात्। प्रतियोगिज्ञानानुपलब्ध्यादीनां कारणानां तौल्ये कार्यवैचित्र्यस्याकस्मिकतापत्तौ कारणवैचित्र्यस्य कल्पनीयत्वे पारिशेष्यादारोपहेतुतायामेव विश्रामादिति भाव इत्याहुः।

*गुणेति*। उक्तप्रतिबन्धकाभावस्य तत्रासत्त्वेन तत्र प्रतिबन्धो नु

स्यात् यत्रैव कदाचित् प्रतिबन्धकाभावस्तत्रैवान्यत्र प्रतिबन्धकसत्त्वादिति भावः। प्रतिबन्धकत्वानापत्तेरिति पाठे अन्यस्येति शेषः। तथाच गुणादेः प्रतिबन्धकत्वमन्यस्य न स्यादिति गुणादेः प्रतिबध्यत्वं न स्यादित्येवार्थः पर्यवस्यतीति ध्येयम्। *संसर्गेति*। यद्यपि संसर्गस्याव्याप्यवृत्तित्वात्तदवच्छिन्नाभावोपि तथैव, तथाच सोपि तत्रास्त्येव, तथापि व्याप्यवृत्तिताद्दशाभावस्य हेतुत्वमिति भावः। एवं विद्यमानताविरोधित्वेनेत्यर्थः। अन्यत्र विद्यमानेपि घटे तथा प्रतीतिदर्शनादिति भावः।

( चि० )-एतेन विशेषणाभावविशेष्याभावतदुभयाभावघटितं सामग्रीत्रयमेवास्तु हेतुः दाहे च जातित्रयकल्पनमिति प्रत्युक्तम्। अनुगतहेतुसत्त्वात् दाहवैजात्यस्य योग्यानुपलब्धिबाधितत्वाच। व्यक्तियोग्यतयैव जातियोग्यत्वेन योग्येऽयोग्यजात्यभावात्। ननु प्रहरं मा दहेत्यादौ सावधिमन्त्रपाठे मन्त्रविनाशे दाहः स्यात्। न च सङ्कल्पविषयकालविशेष एव तत्र प्रतिबन्धकः, सङ्कल्पनाशसमयस्य स्वतोऽविशेषात्। 'न च उद्देश्यत्वमेव तत्र विशेषः,' तस्य विनाशात्। न चोद्देश्यध्वंसोऽपि हेतुः, तस्य यामादूर्ध्वमपि सत्त्वात्। न च मन्त्रपाठजनितमदृष्टमेव तत्र प्रतिबन्धकं तत्कालदाहाप्राप्तिकफलनाश्यत्वेन नाग्नेः दाहप्रतिबन्ध इति वाच्यम्। प्रतिबन्धकमन्त्रपाठस्यानिषिद्धत्वेनाविहितत्वेन चादृष्टाजनकत्वात् तदाचारस्य विगीतत्वेन श्रुत्याद्यननुमापकत्वादिति चेत्। मैवम्। उद्देश्यत्वज्ञानाहितसंस्कारविषयकालस्य प्रतिबन्धकत्वात्। ननु प्रतिबन्धमकुर्वतामप्रतिबन्धकत्वेन शक्तिमनपकुर्वतां मन्त्रादीनां न प्रतिबन्धकत्वमतः शक्तिसिद्धिः। न च कार्यानुत्पाद एव प्रतिबन्धः तज्जनकत्वमेव प्रतिबन्धकत्वमिति वाच्यम्। कार्यानुत्पादो हि तत्र न तत्प्रागभावो न वा तदुत्तरकालसंसर्गः तस्य मन्त्राद्यजन्य-

त्वात् इति चेन्न । मन्त्रादीनामप्रतिबन्धकत्वात् तत्प्रयोक्तारस्तु प्रतिबन्धकाः ते च किञ्चित्करा एव । मन्त्रादौ च कार्ये कारणोपचारात् स्वार्थिककन्प्रत्ययाद्वा तथा व्यपदेशः । प्रतिबन्धश्च सामग्रीविरहः । मन्त्राद्यभावघटितसामग्रीविरहश्च मन्त्रादिरेव, तदभावाभावस्य तत्त्वात् ।

(प्रका०) *योग्य* इति । रत्नत्वस्यापि योग्यवृत्तेर्योग्यत्वमेव, पदविशेषणाद्यस्वज्ञानार्थं तत्रोपदेशापेक्षेति भावः । *मन्त्रविनाशेति* । मन्त्रस्याशुविनाशितया प्रहराभ्यन्तरेऽपि दाहः स्यादित्यर्थः । सङ्कल्पस्य विशेषणत्वमालंब्य दूषयति *सङ्कल्पनाश इति* । तथाच सङ्कल्पस्येच्छात्मकत्वात्तदभावे विशिष्टाभावोऽक्षत एवेति भावः । *विगीतत्वेनेति* । यद्यपि विगीतत्वं निषिद्धत्वमेवेत्यनिषिद्धत्वेनेत्यनेन प्रागुक्तेन विरोधः, तथापि शिष्टप्रवृत्त्यविषयत्वं तदभिप्रेत्यैतदुक्तमिति ध्येयम् ।

यद्यप्येवं श्रुत्यनुमापकस्यानिषिद्धत्वरूपाविगीतत्वस्य न क्षतिः, तथापि भोजनाद्याचारे व्यभिचारवारणायालौकिकत्वमपि विशेषणम् । इदं तु मन्त्रौषध्यादिवदलौकिकमेवेति भावः । यद्वा शिष्टाचारत्वस्यैतदनुमानान्तर्गतत्वस्यैव क्षतिरिति भावः । *उद्देश्यस्येति* । ज्ञानमस्थिरमिति तद्विशिष्टाभावः प्रहराभ्यन्तरेऽपि स्यादिति संस्कारेत्युक्तम् । यत्किञ्चित्संस्कारविषयत्वं च प्रहरान्तरेऽपीत्यत उक्तमुद्देश्यज्ञानाद्विति । स च ज्ञानविषयमात्र इति नोक्तदोषः । ननु रोगादिना संस्कारनाशे विशिष्टाभावसम्भवात्प्रहराभ्यन्तरेऽपि दाहः स्यात्, यत्र च संस्कारोदयो न तत्र वा का गतिरिति चेत् । न । तत्र दाहप्रतिबन्ध इत्यस्यैवासिद्धेः । यत्र च दाहप्रतिबन्धस्तत्राऽनन्यगतिककार्यदर्शनात्संस्कारोऽपि कल्प्यते कार्योन्नेयधर्माणां यथाकार्यमुन्नयनादिति साम्प्रदायिकाः ।

वयं तु ब्रूमः सङ्कल्पविषय एव कालः प्रतिबन्धकः । सङ्कल्पस्य न विशेषणत्वं, किन्तु स्वविषयीभूतकालोपलक्षकत्वम्, यथा मङ्गलस्यासन्नसमयसमाप्तिफलकत्वे चासन्नसमयस्य स्ववृत्तिसमाप्त्युपलक्षकत्वम् । इयानेव विशेषो—यत्तस्याधाराधेयसम्बन्धेन तथात्वमस्य च विषयविषयिभावसम्बन्धेनेति न कश्चिद्विशेष इति । प्रतिबन्धकत्वान्यथानुपपत्त्या तत्सिद्धिं निराकर्त्तुमुत्थापयति *नन्विति* । कर्त्तरि ण्वुलो विधानादिति भावः । *तस्येति* । यद्यपि क्षेमसाधारणजन्यत्वमत्रापि

सम्भवति तथापि सत्त्वघटितजन्यत्वाभिप्रायेणेदमुक्तमिति ध्येयम् । 'स्वार्थिकाः क्वचिल्लिङ्गवचनान्यतिवर्त्तन्ते' इति न्यायाद्दीपधं प्रतिबन्धकमिति नपुंसकलिङ्गत्वमिति भावः । ननु भवेदेवं यदि मन्त्रादीनां प्रतिबन्धकत्वं भवेदत आह *प्रतिबन्धश्चेति* । सामग्रीविरहः—सामग्रीघटककारणविरहः ।

( चि० ) नव्यास्तु प्रतिबन्धकाभावो न कारणं न वा शक्तिः, किन्तु तत्तत्कालीनदाहविशेषं प्रति तत्तत्कालप्रतिबन्धेतरवह्नेः कारणत्वमिति प्रतिबन्धकाभावः कारणतावच्छेदको न तु कारणं दण्डत्ववत्, आकाशादौ त्वेकव्यक्तिके न यथा कारणत्वं क्वचित् प्रतिबन्धेऽप्यन्यत्र शब्दोत्पत्तेः किन्तु भेर्यादेस्तथा कारणत्वमिति तत्प्रतिबन्धे शब्दोत्पत्तिर्नेत्याहुः ।

तन्न । वह्निप्रतिबन्धकाभावयोरन्वयव्यतिरेकतौल्येनोभयस्यापि कारणत्वात्, न त्वेकमवच्छेदकं विनिगमकाभावात् । किञ्च यस्मिन् सत्यपि यदभावात् कार्याभावस्तस्य कारणत्वमायाति न तु तदवच्छेदकत्वम् । न हि कार्याऽयोगव्यवच्छेदः कारणत्वं, किन्तु नियतपूर्वसत्त्वं, तच्च सहकारिविरहप्रयुक्तकार्याभावेऽप्यक्षतम् । अन्यथा चक्रसहितदण्डत्वेन कारणत्वे सहकार्युच्छेदः। यस्य यद्धर्ममवगम्यैव नियतपूर्ववर्तित्वमवगम्यते तस्य तदवच्छेदकं दण्डत्वमिव, सहकारी तु न तथा ।

( प्रका० ) यद्वा व्यासज्यवृत्तिप्रतियोगिकाभावमभ्युपगम्य मुरारिमिश्रमतमाह *नव्यास्त्विति* । *भेर्यादेरिति* । इदं तु समाधिसौकर्यादुक्तम् । वस्तुतस्तु तत्कालप्रतिबद्धेतरवह्नेरिव तत्तत्कालतत्तद्देशप्रतिबद्धेतराकाशस्य जनकत्वं सम्भवति, अन्योन्याभावस्याव्याप्यवृत्तित्वाभ्युपगमेन तत्प्रणयनात् (?)। प्रतिबन्धकात्यन्ताभावस्यैवावच्छेदकत्वस्वीकाराद्वा तस्याव्याप्यवृत्तित्वात्, अन्यथा वह्निभेर्यादेरपि कालान्तरे कार्यानुत्पत्त्यापत्तिः प्रतिबद्धेतरत्वाभावादिति । यद्वा तत्कालप्रतिबद्धा अन्ये वह्न्यादयः प्रसिद्धास्तदन्यवह्नित्वं तत्र जनकतावच्छे-

दककोटिप्रविष्टम् । आकाशे तु न तथेत्यनेनैवाभिप्रायेणैतदुक्तमिति । *उभयस्यापीति* । नन्वेवमन्वयव्यतिरेकतौल्येन दृढत्वदण्डयोर्द्वयोरपि जनकत्वापत्तिः । न च दण्डस्य चक्रादिसमवधानं साक्षात्सम्बन्धेन दृढत्वस्य च परम्परासम्बन्धेन तदिति विनिगमकमिति वाच्यम् । वह्निप्रतिबन्धकाभावयोरपि तुल्यत्वात् । किञ्चैवं विनिगमनया परम्परासम्बद्धस्यालोकरूपादेरपि प्रत्यक्षादेर्हेतुत्वं न स्यात्, किन्त्ववच्छेदकत्वमेव स्यात् दृढत्ववत् । अपि च यस्मिन्सत्यपीति नियमाद्दव दार्ढ्यहेतुत्वमेव दण्डे सत्यपि दार्ढ्याभावेन कार्याभावात् । न चादृढेनाप्यनेकेन रज्जुयत्नेन घटोत्पत्तिदर्शनाद्विवक्षितविवेकेन भ्रमिजनकत्वमेव दार्ढ्यं तस्य च न घटजनकत्वं जनकत्वस्याजनकत्वादिति वाच्यम् । भ्रमिजनकत्वस्य घटजनकत्वे विरोधाभावात् । जनकत्वस्य तज्जनकाविरोधः, आत्माश्रयात् । किञ्च भ्रमिजनकतायामेव दण्डस्य किमवच्छेदकं न तावद्दण्डत्वमेव अदृढादपि भ्रम्युत्पत्त्यापत्तेः । न च दृढदण्डत्वं तथा, अवच्छेद्यभ्रमिजनकत्वातिरिक्तस्य दृढत्वस्याभावात्, भावे वा घटजनकं तदेवास्तु । अपि च "अन्यं प्रतीति" न्यायेन दण्डस्यान्यथासिद्ध्यापत्तिः, कुम्भकारपितृवत् । न चान्यमुदासीनं प्रतीति विवक्षितं भ्रमिस्तु जनिकैवेति वाच्यम् । एवं कुम्भकारपितुरपि जनकत्वं स्यात् कुम्भकारस्यापि जनकत्वेनोदासीनत्वाभावात्, तस्मादत्र समाधानं चिन्त्यम् । विपक्षे बाधकमाह *नहीति* । तस्य प्रवृत्तिपूर्वमनिश्चये कारणे कार्यार्थिनो प्रवृत्त्यापत्तिरिति भावः । *अन्यथेति* । कार्यायोगव्यवच्छेदस्यैव कारणत्व इत्यर्थः । ननु तथापि प्रतिबन्धकाभावो न कारणं प्रतिबन्धकसमानकालीनकार्ये प्रत्युत्तेजकरूपविशेषसामग्रीकल्पनेनैव सामञ्जस्ये तद्धेतुताग्राहकान्वयादेरन्यथासिद्धिरिति चेन्न । यत्र प्रतिबन्धके नोत्तेजकं तत्र प्रतिबन्धकाभावस्य कारणत्वकल्पनावश्यकत्वात् अन्यत्रापि हेतुत्वेन तत्त्वेन तत्रावच्छेदकान्तरकल्पनौचित्यात्, न तु विशेषसामग्र्यन्तरकल्पनं गौरवात् । किञ्च उत्तेजकमननुगतमिति न तद्धेतुः । तत्तदुत्तेजकयावदभावविशिष्टमण्याद्यभाव एवानुगत इति स एवानुगतो हेतुः । अत एव पक्षताया अनुमितिहेतुत्वम्, अन्यथा सिषाधयिषोत्तरानुमितित्वावच्छिन्ने सिषाधयिषाविशेषसामग्री सामान्यसामग्रीपरामर्शमात्रमिति तस्या अहेतुत्वात् । नन्वेवं संशयोत्तरप्रत्यक्षत्वावच्छिन्ने विशेषदर्शनरूपसामग्र्यन्तरं न कल्प्यतेति चेत् । न इष्टत्वात्, विशेषादर्शनसहकृतसंशयाभावस्यैव हेतुत्वादिति केचित् ।

( चि० ) ननु मा भूत् अर्थापत्तिः शक्तौ मानमनु-

मानन्तु स्यात् । तथाहि स्थिरोऽवयवी जनकदशाविशिष्टो वह्निरजनकदशाव्यावृत्तभावभूतधर्मवान् जनकत्वात् कुण्ठकुठारात्तीक्ष्णकुठारवत् दाह्यासंयुक्तवह्नेर्दाह्यसंयुक्तवह्निवच्च प्रतिबन्धकसत्त्वे संयोगादेरजनकदशावर्तित्वेन तदतिरिक्तातीन्द्रियभावभूतधर्मसिद्धिः। यद्यपि शक्तेर्भावहेतुजन्यत्वेन नाजनकदशाव्यावृत्तत्वं, तथाप्युक्तविशिष्टायास्तथात्वम् । यद्वा धर्मेऽतीन्द्रियत्वं विशेषणम् । न च दृष्टान्तासिद्धिः, तुल्याधारत्वेऽपि लोहविशेषघटितकुठारे विलक्षणाच्छिदाक्रियारूपकार्यबलादतीन्द्रियतीक्ष्णत्वसिद्धेः । अथ वा तथाभूत एव वह्निः कार्यानुकूलातीन्द्रियवह्निष्ठधर्मसमवायी जनकत्वात् आत्मवत्, अतीन्द्रियत्वञ्च यद्यपि न साक्षात्काराविषयत्वम् अनित्यसाक्षात्काराविषयत्वं योगजधर्माजन्यसाक्षात्काराविषयत्वं वा, परं स्वं वा प्रत्यसिद्धेः, संयोगादिपक्षकजन्यज्ञानाविषयत्वमैन्द्रियकाणामपि । तथापि संयोगाद्यन्यतरप्रत्यासत्तिजन्यसाक्षात्काराविषयत्वमुभयवादिसिद्धम्, अन्यतरत्वञ्च तदन्यान्यत्वम् । न चाभावातीन्द्रियत्वं,तस्यासिद्धेः। न च वह्नौ स्थितिस्थापकेनार्थान्तरं, तत्र तदभावात, क्रियाया वेगेनादृष्टवदात्मसंयोगेन वोत्पत्तेः । न चात्मत्वं नित्यत्वं वोपाधिः, स्पर्शैकत्वादिमति द्व्यणुके साध्याव्यापकत्वात् । यद्वा पिण्डीभूतो वह्निः दाहानुकूलाधिष्ठातीन्द्रियभावभूतधर्मवान् दाहजनकत्वात् आत्मवत् । न चात्मत्वमुपाधिः, अदृष्टत्वस्य दाहानुकूलत्वेनादृष्टे साध्याव्यापकत्वात् । अथ वा करवह्निसंयोगः कार्यानुकूलातीन्द्रियधर्मसमवायी जनकत्वात् आत्मवत् द्व्यणुकवच्च । न चात्मत्वं द्रव्यत्वं वोपाधिः, द्व्यणुकैकत्वस्पर्शादौ साध्याव्यापकत्वात् । यद्वा प्रतिबन्धकदशायां प्रत्यक्ष

सकलदाहहेतुसमवहितो दाहाजनको वह्निर्जनकदशावृत्तिकार्य्यानुकूलभावभूतधर्म्मशून्यः अजनकत्वात् कुण्ठकुठारवत् । यद्वा तथाभूतो वह्निः दाहजनकदशावृत्तिदाहानुकूलभावभूतधर्म्मशून्यः दाहाजनकत्वात् दाह्यासंयुक्तवह्निवत् । अनुकूलत्वञ्च कार्य्याभावप्रयोजकाभावप्रतियोगित्वं कारणतदवच्छेदकसाधारणं, दृढदण्डत्वेन कारणत्वे दृढत्वाभावादपि कार्य्याभावदर्शनादिति ।

(प्रका०) ननु शक्तिरूपसाध्याप्रसिद्धेर्नानुमानं स्यादित्यत आह *तथाहीति* । अवयवी प्रत्यक्ष इत्यर्थः । अन्यथा वह्नित्वस्य परमाणववृत्तित्वेनाव्यावर्त्तकतापत्तेः । अत्र च प्रतिबन्धकसमवधानदशायां यादृशसंयोगवान्वह्निः प्रतिबन्धकाभावकालेपि तादृशदाह्यसंयोगवानेव वह्निः स्थिरपदेन विवक्षित इति न दाह्यसंयोगेनार्थान्तरम् । ननु यावदजनकदशायां व्यावृत्तत्वं शक्तेर्नास्ति यत्किञ्चिदजनकदशाव्यावृत्तत्वं दाह्यसंयोगादेरपीत्यर्थान्तरमित्यपरितोषादाह *यद्वेति* । न चैवं भावभूतपदं व्यर्थम्, दुरदृष्टाभावादेरतीन्द्रियस्य वारणाय तदुपगमात् । भाट्टमतेऽनुपलब्धिगम्यतया भावमात्रस्यैवातीन्द्रियत्वाद्वा ।

वस्तुतस्तु संयोगाद्यन्यतमप्रत्यासत्तिजन्यसाक्षात्काराविषयत्वमभावमात्र एवेत्यनुपदमेव स्फुटम् । ननु लोहविशेषस्येव सातिशयच्छिदाजनकत्वादतीन्द्रियतैक्ष्ण्ये मानाभावः, अतिरिक्तपदार्थापत्तेश्चेत्यस्वरसादाह *अथ वेति* । कार्यानुकूलत्वं स्वनिमित्तकारणककार्यानुकूलत्वं विवक्षितं, तेन कर्मानुकूलस्थितिस्थापकेन नार्थान्तरं कर्मणि तु वह्निः समवायिकारणमिति नोक्तदोषः । वह्नौ स्थितिस्थापकाभावपक्षे कार्यानुकूलपदमुद्देश्यसिद्ध्यर्थम् । अदृष्टवदात्मसंयोगोष्णस्पर्शप्रतिबन्धकाभावादिनार्थान्तरवारणायाद्विगुपदविशेषणम् । यद्यपि गुरुमतेऽभावोऽधिको नास्त्येवेति समवायपदमधिकं, तथापि परस्यार्थान्तरं स्यादेवेति तद्वारणाय तदुपात्तमिति ध्येयम् ।

*ऐन्द्रियकाणामिति* । वस्तुतस्तु संयोगादिपञ्चकजन्यज्ञानस्याप्रसिद्धेः साध्याप्रसिद्धिर्द्रष्टव्या । *तथापीति* । यद्यपि जन्यान्तं व्यर्थं तदजन्यसाक्षात्कारस्य व्यावर्त्यस्याप्रसिद्धेः, तद्राहित्ये च न्यायनयेऽप्रसिद्धं तथापि विशिष्टाभावे न वैयर्थ्यमिति ध्येयम् । अत्र संयोगादीत्यर्थः । तेनात्ममनोयोगस्य योगिप्रत्यक्षादावपि जनक-

त्वान्न परं प्रत्यसिद्धिरिति मन्तव्यम् । *न चाभावेति* । उक्तातीन्द्रियत्वस्य तत्रापि भावादिति भावः । *तस्येति* । गुरुमतेतिरिक्तस्य तस्यासिद्धेरित्यर्थः । नैयायिकमते च पारिभाषिकस्य निरुक्तस्यातीन्द्रियत्वस्याभावे वृत्तावपि न काचित्क्षतिः । तमादायार्थान्तरशङ्कायाः समवायिपदेनैव वारणादिति भावः । परमाणौ साध्याव्याप्तेराह *यद्वेति* । यद्वा कार्यस्य विशेषरूपेण सिद्ध्यर्थमाह—यद्वेति । अदृष्टत्वस्य धर्मत्वादेरित्यर्थः । *अनुकूलत्वेनेति* । कारणतावच्छेदकसाधारणस्य तस्य तस्याग्रे निरुक्तत्वादिति भावः । यद्यपि तन्मते धर्मत्वादिकं न कारणतावच्छेदकं किन्तु शक्तिरेव, तथापि न्यायनये धर्मत्वादिकमादाय तन्मते शक्तिमादाय साध्यमस्त्येवादृष्टे, उपाधिस्तु नोभयसिद्धसाध्याव्यापकत्वमिति भावः । अद्विष्ठपदानुपादानात्साध्ये लाघवं स्थितिस्थापकेन नार्थान्तरत्वशङ्कापीति मनसि कृत्वाह—*अथवेति* । कार्यानुकूलत्वं स्वकार्यानुकूलत्वं तदप्युद्देश्यसिद्धये । संयोगत्वेनार्थान्तरवारणायातीन्द्रियेति । उक्तातीन्द्रियत्वस्य प्रतिबन्धकाभावेऽपि सत्त्वात्परमतेऽर्थान्तरशङ्का माभूदित्यत उक्तं समवायीति । *जनकत्वादिति* । न चाभावे व्यभिचारः, समवायगर्भसाध्यस्य तत्रासत्त्वादिति वाच्यम् । परैरभावानङ्गीकारात् । ननु तथापि समवाये व्यभिचारः । न च तत्रापि शक्तिसमवायोरस्त्येवेति वाच्यम् । अनवस्थानादिति चेन्न । निमित्तकारणतातिरिक्तकारणताश्रयत्वस्य हेत्वर्थत्वात् । तत्र यत्किञ्चित्कार्यं प्रत्येव विवक्षितं न तु दाहलक्षणं प्रतीति नासिद्धिरिति ध्येयम् । अत्र साध्ये हेतौ च दाहपदप्रक्षेपेण वह्निपक्षकानुमान इवानुमानान्तरमपि ग्रन्थकृदभिमतं लेखकप्रमादान्न प्रचरतीति ध्येयम् । अत एवैतदन्तर्भावेनैव वक्ष्यति—'अग्निमत्तुषे वह्निरिन्द्रियाप्रत्यक्षत्वमुपाधिरिति, अन्यथा तदसङ्गतत्वापत्तेरिति वक्ष्यते । *न चात्मत्वमिति* । न च द्व्यणुकादौ साध्याव्याप्तिरिति वाच्यम् । दाहजनकत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वादिति भावः । शुद्धसाध्यव्यापकमाह *द्रव्यत्वमिति । द्व्यणुकेनेति* । नन्वेकत्वत्वस्पर्शत्वजाती नातीन्द्रिये द्व्यणुकैकत्वत्वद्व्यणुकस्पर्शत्वोपाधी च न समवेतौ तथाच तत्र साध्यासत्त्वान्न साध्याव्याप्तिरिति चेत् ।

अत्र केचित् । अतद्गुणसंविज्ञानबहुव्रीहिणा गुरुत्वधर्मादिकमुक्तं तत्र साध्याव्यापकत्वमस्त्येवेत्याहुः ॥

अन्ये तु धर्मादेरस्याविवक्षितत्वेन तत्समवायित्वस्य तन्निरूपितसमवायाश्रयत्वार्थकतया समवायिद्व्यणुकमादायैव तत्र साध्यसत्त्वमिति व-

द्गन्ति। शक्तिवदुपाधिरपि समवैति, अन्यथोपाधिरसंबद्धः स्यात्तन्मते विशेषणतायाः अनभ्युपगमादित्यप्याहुः ।

नन्वनुकूलत्वं यदि जनकत्वं तदा शक्तावेतदभ्युपगमेऽपसिद्धान्तः । अथावच्छेदकत्वं तदा दृष्टान्तासिद्धिः, आत्मन्यदृष्टरूपतादृशधर्मस्य जनकत्वादित्युभयसाधारणं तदाह *अनुकूलत्वं चेति० ।

( चि० ) उच्यते । साध्यं विनाप्युभयासिद्धप्रतिबन्धकाभावादेव जनकत्वादिहेतुसम्भवात् विपक्षबाधकाभावेनानुमानानामप्रयोजकत्वम् । यदि च सहचारदर्शनव्यभिचारादर्शनोपाध्यनुपलम्भमात्रादेव व्याप्तिग्रहस्तदा शक्तिसिद्ध्यनन्तरं तेनैव हेतुना शक्त्यतिरिक्तत्वप्रक्षेपेण शक्त्यतिरिक्तदाहानुकूलातीन्द्रियधर्मसिद्धिः । एवं तत्तदतिरिक्तत्वस्य प्रक्षेपात्तेनैव हेतुनाऽनन्ततादृशधर्मसिद्धिप्रसङ्गः । द्वितीयादितादृशधर्मं विनापि प्रथमानुमितशक्त्यैव जनकत्वाद्युपपत्तेर्न तादृशानन्तधर्मसिद्धिरिति चेत्, हन्तैवं शक्तिं विनापि तदर्थसिद्धेः किं शक्त्या । यद्वीश्वरानन्त्यवच्च शक्त्यानन्त्यमित्युक्तम् । तदयांधात् । कार्य्यमात्रे हि कर्तृत्वेन कारणत्वं न त्वीश्वरत्वेन द्विकर्तृकत्वादिना वा, गौरवात्, घटे त्वार्थः समाजः । एवञ्च जनकदशाव्यावृत्तत्वेनैव प्रयोजकत्वं न तु भावभूतत्वेनेति गौरवात् । अपि च भावकार्य्यमात्रस्य समवायिकारणजन्यत्वेन शक्तेरपि तथात्वात् शक्त्यनुकूला शक्तिरपरा समवायिकारणे मन्तव्या एवं सापि समवायिकारणजन्येति तदनुकूलशक्तिस्वीकारे शक्त्यनवस्था । किञ्च प्रथमानुमानेऽजनकत्वं न स्वरूपायोग्यत्वम्, वह्नौ कुठारे च तदभावात्, किन्तु कार्य्यानुपधानम् । तथा च तदुपधानदशायामपि वह्नौ शक्तिः कुठारे तैक्ष्ण्यमिति बाधो दृष्टान्तासिद्धिश्च, लौहविशेषाणामेव सातिशयच्छि-

दाजनकत्वमतो नातीन्द्रियतैक्ष्ण्यप्रसिद्धिः। अग्रिमचतुर्षु वह्निरिन्द्रियाप्रत्यक्षत्वमुपाधिः तुल्ययोगक्षेमत्वेऽपि सन्दिग्धोपाधित्वेन दूषकत्वात्। अपिच जनकत्वस्य केवलान्वयित्वेन व्यतिरेकाप्रसिद्ध्या नान्वयव्यतिरेकी। न च जनकत्वाभावस्य शक्तावेव प्रसिद्धिः, अन्योन्याश्रयात्। न च गुरुवचनपरम्परात एव वाक्यार्थतया तत्प्रसिद्धिः त्वन्मते सिद्धार्थस्याप्रमाणत्वात्। न च परार्द्धसंख्यायां साध्यजनकत्वव्यतिरेकयोः प्रसिद्धिः, अप्रत्यक्षायाः शब्दैकवेद्यायास्तस्याः प्रत्यक्षेण साध्यहेतुव्यतिरेकयोर्ग्रहीतुमशक्यत्वात्। एतेन षण्डापूर्वेऽपि तत्प्रसिद्धिरपास्ता।

(प्रका०) *उभयसिद्धेति*। तथाच प्रतिबन्धकाभावस्यैव दाहादिप्रयोजकत्वं कल्प्यते धर्मकल्पनाया एव लघुत्वादिति तात्पर्यार्थः। *घटे त्वार्थे समाज इति*। ईश्वरकर्तृकत्वस्य न्यायप्राप्तत्वात्कुलालकर्तृकत्वस्य घटत्वावच्छेदेन अन्वयव्यतिरेकासिद्धत्वादिति भावः। *समवायिकारण इति*। यद्यपि निमित्तकारणेऽपि शक्तिरस्त्येवेति तद्द्वाराऽप्यनवस्था भवत्येव, तथाप्येककार्यमात्रे समवायिकारणजन्यत्वं परो न मन्यते तन्मते कारणस्येव कार्यस्यापि समवायस्य तथाभावाभावात्, तथापि समवेतकार्यं प्रति तथात्वं स्वीकार्यमेवेति भावः। न चेयमनवस्था प्रामाणिकी प्रमाणाभावात्। न कार्यान्यथानुपपत्तिरेव मानं, तस्योभयसिद्धप्रतिबन्धकाभावेनैवोपपत्तेः। न चाभावो न कारणं भाववद्दुधाहकतौल्यात्। एवञ्च गुणादिनिष्ठशक्तौ गुणादीनां समवायिकारणत्वापत्तौ द्रव्यत्वापत्तिरित्यपि दूषणं द्रष्टव्यम्। न च नित्यैव शक्तिर्न कार्येति वाच्यम्। 'अनित्ये भावहेतुजेति' तत्सिद्धान्तात्। किञ्चैव प्रतिबद्धवह्नेरपि दाहापत्तिः। न चोद्भूता शक्तिस्तदा नास्तीति वाच्यम्। उद्भूतत्वमपि यदि नित्यं तदा स एव दोषः। अथानित्यं, तदा तज्जननानुकूला शक्तावपि शक्तिः स्वीकार्या। एवं तत्राप्युद्भूतत्वजननानुकूलं शक्त्यन्तरमित्यनवस्थापत्तेः, उद्भूतत्वस्यैव शक्तिस्थानाभिषेचनीयतया नित्यशक्तौ मानाभावश्चेति भावः। प्रथमानुमान इत्युपलक्षणम्। अजनकत्वगर्भद्वितीयानुमानेऽपीति द्रष्टव्यम्। ननूद्भूत-

स्वविशिष्टा शक्तिरजनकदशाव्यावृत्तेति पूर्वपक्ष एवोक्तमिति न बाध इति चेन्न । नित्यानित्यविकल्पेन पूर्वोक्तेनोद्भूतत्वे मानाभाव इत्येतदवष्टम्भेनैतस्योक्तत्वात् ।

वस्तुतः प्रतिबन्धकाल एव परं शक्तौ नोद्भूतत्वं तथा च सहकार्यन्तरविरहप्रयुक्तं यदा वह्नौ कार्यानुपधानं तदा उद्भूतत्वविशिष्टायास्तस्याः सत्त्वाद्बाध एवेति भावः ।] अतीन्द्रियत्वगर्भे साध्ये प्रागुक्तदृष्टान्तासिद्ध्युद्धारं परिहरति *लोहेति* । *अग्निमेति* । यद्वा धर्मेऽतीन्द्रियत्वमित्यादिचतुर्थोत्यर्थ इति केचित् । तन्न । कुठारे साध्याव्यापकतापत्तेः । तदनुमाने कुठारस्यैतद्दृष्टान्तत्वेन तत्र साध्यसत्त्वात् । न च लोहविशेषाणामित्यनेन तत्र साध्याभावव्यवस्थितेर्नैवमिति वाच्यम् । एवं साध्यव्यापकताग्रहस्थलाभावादेव नोपाधिः । न चात्मैव तथेति वाच्यम् । अदृष्टादेरजनकदशावृत्तित्वेन तत्र साध्यासत्त्वात् । न च जनकदशावृत्तिपरमाण्वादिसंयोगमादाय तत्रापि साध्यसत्त्वमिति वाच्यम् । एवं हि तादृशसंयोगमादाय घटादावपि साध्यसत्त्वेनोपाधेः साध्याव्यापकत्वात् । न च गुरुत्वाभावरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वमिति वाच्यम् । सौदालोकादावपि तादृशपरमाणुसंयोगसत्त्वेन साध्याव्यापकत्वात् । तस्मात्पूर्वोक्तसंयोगपक्षकदाहघटितसाध्यकानुमानेन सह चतुष्टमभिमतम् । न चात्र स्थितिस्थापकवति वृक्षादौ साध्याव्याप्तिरिति वाच्यम् । कार्यानुकूलेत्यस्य स्वनिमित्तककार्यानुकूलेति विवक्षया स्थितिस्थापकस्य तथात्वेन वृक्षादौ तथाऽसत्त्वात् । कार्यपदस्य वह्निकार्यपरत्वाद्वा । तथा च तादृशसाध्यमात्मन्येव, तत्र चोपाधिरस्त्येवेति न साध्याव्याप्तिरिति भावः ।

अपरे तु चतुर्षु मध्ये कार्यानुकूलेत्यादिघटितानुमानत्रयेऽयमुपाधिरित्यर्थ इत्याहुः ।

*अपि चेति* । तन्मते चान्वयव्यतिरेक्येव गमक इति भावः । *सिद्धिरिति* । शक्तिसिद्धिरित्यर्थः । तथा चैतदनुमानेनैव न शक्तिसिद्धिर्येनान्योन्याश्रय इति भावः । परार्द्धसङ्ख्यायामित्युपलक्षणम् । परममहत्त्वपरमाणुपरिमाणादावपि द्रष्टव्यम् । *अप्रत्यक्षाया इति* । ननु प्रत्यक्षमेव न व्याप्तिग्राहकम्, अतीन्द्रियानुमानस्थले तदभावात् । तथा च मानान्तरेण साध्यहेतुप्रतियोगिकव्यतिरेकव्याप्तिग्रहोऽस्त्विति चेत् । अत्र प्रत्यक्षाभिप्रायेणैतदुक्तम् । वस्तुतोऽन्यथोपपन्नतया सर्वमेवानुमानमप्रयोजकमित्याहुः ।

वस्तुतो मानान्तरशब्दः सिद्धार्थत्वात नानुमानम् । कार्यानुकूला·

तीन्द्रियधर्माभावानुमानं हि जनकत्वाभावेनैव लिङ्गेन वाच्यं, जनकत्वसत्त्वे तादृशधर्मसत्त्वस्यावश्यकत्वात् । जनकत्वाभावानुमानं च तादृशधर्माभावेन तादृशधर्मस्य जनकतावच्छेदकस्य सत्त्वे जनकत्वस्यावश्यकत्वात । एवञ्च हेत्वभावेन साध्याभावः साध्याभावेन हेत्वभावोऽनुमेय इति व्यक्तोऽन्योन्याश्रय इति भावः । यद्वा तदनुमानमपि साध्यसाधनाभावव्याप्तिग्रहमन्तरेण न स्यात्तद्ग्रहश्च न तदुभयव्यतिरेकप्रसिद्धिं विना तदुभयव्यतिरेकश्च साध्यसाधने एवेति साध्यसाधनव्याप्तिग्रहे तदुभयाभावव्याप्तिधीस्तस्यां च सत्यां तदुभयव्याप्तिधीरित्यन्योन्याश्रय इति भावः । न चान्वयव्याप्तिर्वानं व्यतिरेकव्याप्तिधीहेतुरिति नान्योन्याश्रय इति वाच्यम् । तथाप्यन्वयव्याप्त्यग्रहादेव तदनुपपत्तेरिति भावः । *एतेन पण्डेति* । न च पण्डापूर्वादौ स्वध्वंससाक्षात्कारजनकत्वेन जनकत्वाभाव एव नेति वाच्यम् । अतीन्द्रियत्वेन योगिज्ञानस्य विषयाजन्यतया च साक्षात्काराजनकत्वात् । न ज्ञाने ध्वंसस्याधिकरणादिरूपतया तदसाध्यत्वाच्चेति भावः ॥

( चि० ) स्यादेतत् तृणारणिमणीनां वह्नौ कारणत्वादेकशक्तिमत्त्वमुपेयम्, एकजातीयकार्ये एकजातीयकारणत्वनियमात् । वह्न्यवान्तरजातीये तेषां प्रत्येकं कारणत्वमिति चेन्न । वह्निजातीयत्वस्याकस्मिकतापत्तेः, कारणगतैकरूपमपहाय कार्यगतबहुतररूपकल्पने गौरवात् । तृणारणिमणिप्रभववह्निष्ववान्तरजातेरनुपलब्धिबाधितत्वाच्च । यत्र च तत्तदिन्धनप्रयोज्यं प्रदीपदारुदहनादौ वैजात्यमनुभूयते तत्र कारणेष्वेकशक्तिमत्त्वमपि नास्ति । किञ्च गोमय–वृश्चिकप्रभववृश्चिकादिषु वैजात्यकल्पने तत्प्रभववृश्चिकेष्वपि वैजात्यं कल्प्यम्, एवं तत्प्रभवत्वं तत्प्रभवेष्वपीति वैजात्यानन्त्यं विजातीयकारणानां विजातीयकार्यजनकत्वनियमात् । न च तयोर्नैकौ वृश्चिकौ, बुद्धिव्यपदेशयोरविशेषात् । यदि विजातीयेष्वेककार्यशक्तिसमवायात् न कार्यविशेषात् कारणविशेषः तदभावात्तदभावः का-

प्यनुमीयेत तदभावेऽपि तज्जातीयशक्तिमतोऽन्यस्मादपि तदुत्पत्तिसम्भवादिति चेत्, वह्निधूम्रिकादावेवमेतत् नि रूपितनियतवह्न्यादिकारणकधूमादौ कुतो न तदनुमानम्। अन्यथा कार्यवैजात्येऽपि तृणस्य वह्निविशेष इव वह्नित्वेन धूमविशेष एव कारणत्वं न तु धूममात्रे। तृणादिप्रभवत्वग्रहानन्तरं वह्न्यवान्तरजातिग्रहवत् वह्नितदन्यजन्यत्वज्ञानानन्तरं धूमावान्तर-जातिग्रहो भविष्यतीत्यप्याशङ्कोत। बाधकं विना धूमत्वेन वह्निकार्यतेति चेत्, तर्हि बाधकं विना धूमं प्रति वह्नित्वेन कारणतेत्यपि तुल्यम्।

यत्तु तृणत्वेन कारणत्वग्रहस्योपजीव्यत्वात्तद्रक्षार्थं वह्नौ जातिविशेष एव कल्प्यते इति। तन्न। वह्नित्वेन कार्यत्वग्रहात्तद्रक्षार्थं तृणादौ शक्तिकल्पनौचित्यात्। यथा चान्वयव्यतिरेकाभ्यां तृणफूत्कारयोः परस्परसहकारित्वं तथैव तच्छक्त्योरपि परस्परसहकारित्वेन वह्न्यनुकूलत्वं, तथैव कार्यदर्शनात्। एवं तृणारणिमणिफूत्कारनिर्मन्थनतरणिकिरणानां वह्न्यनुकूलशक्तिमत्त्वेन कारणत्वेऽपि फूत्कारेण तृणादेव निर्मन्थनेनारणेरेव प्रतिफलिततरणिकिरणैर्मणेरेवाग्न्युत्पत्तिः, न तु मणिफूत्कारादिभ्यो, मणिफूत्कारशक्त्योः परस्परसहकारित्वविरहात्। यत्तु तृणफूत्कारादिस्तोमत्रये विशिष्टे शक्तिरिति। तन्न तृणत्वेन गृहीतकारणताभङ्गप्रसङ्गादिति।

(प्रका०) *तृणारणीति*। तथा च वह्नित्वप्रयोजकतया तृणादीनामेकानुगतशक्तिसिद्धावन्यथापि तदनुमानमिति भावः। ननु वह्निनिष्ठा जातिः प्रमाणसिद्धा, तथा च "धर्मिकल्पनात" इति न्यायात्तस्या एवावच्छेदकत्वं कल्प्यते न शक्तिरित्यत आह—*तृणारणीति*। तथा च जातित्रयमपि कल्प्यमेवेति तदपेक्षयैकशक्तिकल्पनमेव लघीयति भाव।

*यत्र चेति* । तत्रोक्तन्यायावतारादिति भावः । शङ्कते *यदीति* । वैजात्ये–वैजात्यपक्षे । इत्यप्याशंकयेतेत्यन्वयः । नन्वेवं तृणनिर्मन्थनाभ्यामप्यग्न्युत्पत्त्यापत्तिः, कारणतावच्छेदकावच्छिन्नघटितसामग्रीसत्त्वादित्यत आह *यथा चेति* । *तथैव तच्छक्त्योरपीति* । नन्वेवं कार्यवैजात्यमावश्यकम्, एकजातीयकार्ये सहकारिनियमानुपपत्तेः । स हि फलविरोधेन परं स्यात् । स च कार्यतावच्छेदकभेदेन, स च प्रकृते न कार्यवैजात्यं विना, एवञ्च नैकशक्तिमत्त्वेन जनकत्वमिति चेत् ।

अत्राहुः । तृणादीनां वह्नित्वावच्छिन्नं प्रत्येकशक्तिमत्त्वेन फूत्कारादीनां च तृणजन्यवह्नित्वाद्यवच्छिन्नं प्रति जनकत्वेनैव शक्तिसिद्धिसहकारिनियमयोरप्युपपत्तिरिति ।

केचित्तु यथा प्रागभावत्वेन कार्यमात्रं प्रति कारणत्वेऽपि घटप्रागभावो न पटं प्रति योग्यः । यथा वा जन्यविशिष्टज्ञाने विशेषणज्ञानत्वेन कारणत्वेऽपि घटत्वज्ञानं पटत्वविशिष्टज्ञानं प्रति न स्वरूपयोग्यं तथा फूत्कारादीनामेकशक्तिमत्त्वेन कारणत्वेऽपि न तृणनिर्मन्थनादिभ्यो वह्न्युत्पत्तिरित्याहुः ।

तृणफूत्कारसम्बन्धतरणिकिरणमणिसम्बन्धादिष्वेकजातीयशक्तिमत्त्वं कारणतावच्छेदकम्, तथा च तदन्यतमसम्बन्धाभावे तृणनिर्मन्थनसमवधानेऽपि नाग्न्युत्पत्तिरित्यप्याहुः ।

स्वैकदेशिमतं दूषयति *यत्त्विति* । *तृणत्वेनेति* । यद्यपि परमते तृणत्वेन न कारणता किन्त्वेकशक्तिमत्त्वेन, अन्यथा तद्रक्षार्थं कार्यवैजात्यकल्पनापत्तेः । तथापि तृणादिप्रत्येकवृत्तित्वं लाघवात् । कारणतापदेन शक्तिरेवात्र विवक्षिता । तथा च तृणत्वावच्छेदेन गृहीतशक्तिभङ्गप्रसङ्गादित्यर्थः । तृणादिशक्तेश्चैकजातीयत्वेनानुगमः । एकजातिप्रयोजकं च तत्रादृष्टादिकम् । न च गौरवम्, प्रामाणिकत्वादिति भावः ॥

( चि० ) उच्यते । तृणारणि–मणि–फूत्कारादिव्यक्तीनामानन्त्येन प्रतिव्यक्ति भावहेतुजनितानन्तशक्तिस्वीकारे गौरवं तावदनन्तव्यक्तिजन्यानन्तवह्निव्यक्तिषु जातित्रयकल्पने लाघवमिति तदेव कल्प्यते । न च जातौ योग्यानुपलब्धिबाधः, गोमयवृश्चिकप्रभववृश्चिकयोरीपर्णीलत्वकपिलत्ववद्वैजात्यस्य प्रत्यक्षसिद्धत्वात् । तृणजन्यनानावह्निव्यक्तिषु तृणजन्यत्वज्ञानानन्तरं मणिज·

न्यव्यावृत्ताऽनुगतबुद्धिरस्ति जातिविषया । तृणजन्यत्वेनोपाधिनाऽसाविति चेन्न । बाधकं विनानुगतबुद्धेस्तद्व्यङ्ग्यजातिविषयत्वानियमात् । न च गोमयवृश्चिकप्रभववृश्चिकपरम्परायामननुगतजात्यापत्तिः, गोमयजन्यवृश्चिक-प्रभववृश्चिकेषु वृश्चिकप्रभवत्वजातेः सत्त्वात् । वह्निमात्रे च दाहस्पर्शवानवयवः तत्संयोगः पवनादिश्च कारणानि । न च तृणादिकं विनापि तदुत्पत्तिप्रसङ्गः, विशेषसामग्रीमादायैव सामान्यसामग्र्या जनकत्वात् ।

(प्रका०) *प्रतिवक्तीति* । एतच्च 'अनित्ये भावहेतुजा' इति सिद्धान्तात् । नित्यशक्त्यभ्युपगमे च पूर्वोक्त एव दोषो द्रष्टव्यः । *जातीति* । न च मण्यादौ कारणे एकैकजातिः कल्प्यतां लाघवादिति वाच्यम् । प्रस्तरत्वादिना सङ्करापत्तेरिति भावः । *प्रत्यक्षसिद्धत्वादिति* । तथा च 'धर्मिकल्पनातः' इति न्यायेन तस्या एव जातेरवच्छेदकत्वमात्रं कल्प्यते न तु शक्तिं कल्पयित्वा तदवच्छेदकत्वमिति भावः । एतदपि जातेः प्रामाणिकतया तदवच्छेदकत्वस्यैव लाघवादौचित्यमित्यभिप्रेत्योक्तम् ।

वस्तुतः कार्यतावच्छेदकाननुगमस्यादोषत्वाज्जात्यभावेऽपि तत्तद्व्यक्तित्वस्यैवावच्छेदकत्वसम्भवान्न शक्तिसिद्धिरित्यवधेयम् । तन्मते जातेः संस्थानमात्रव्यङ्ग्यतया शक्तौ जात्यभावे कथमनुगम इत्यपि दूषणं वाच्यम् । वह्निवृत्तिजातौ योग्यानुपलब्धिबाधं निराकरोति *तृणजन्येति* अन्यथा विशुद्धमातापितृजन्यत्वेनैव ब्राह्मणानुगतबुद्धेस्तत्रापि जात्यभावः स्यादिति भावः । वैजात्यानन्त्यमुद्धरति—*गोमयेति* । यद्यपि गोमयवृश्चिकप्रभवयोर्वृश्चिकप्रभवयोर्वृश्चिकयोर्वैजात्यमस्ति तथापि वृश्चिकत्वमनुगतमप्यस्ति । तदेवाग्रिमवृश्चिके जनकतावच्छेदकमिति सर्ववृश्चिकप्रभवत्वप्रयोज्यजातिमत्त्वमिति नानन्त्यमिति भावः । वह्निजातीयत्वाकस्मिकत्वप्रसङ्गं प्रागुक्तमुद्धरति *वह्निमात्र इति* । यद्यप्युदर्यवह्नेरनुद्भूतः स्पर्श इति लीलावत्यादौ व्यवस्थापनात्तत्र कथं वह्नित्वं प्रयोजकाभावात् तथापि भौमवह्निमात्र एव तत्प्रयोजकत्वमुक्तमिति भावः । केचित्तु लीलावतीग्रन्थ आपाततः । वस्तुतस्तत्रोद्भूतस्पर्श इत्याहुः ।

*पवनेति* । तदुत्कर्षेण वह्न्युत्कर्षदर्शनादिति भावः ।

(चि०) ननु तृणारणिमणीनां वह्नौ कारणत्वग्रहे

शक्तिवैजात्ययोरन्यतरकल्पनं तद्ग्रहश्च नान्वयव्यतिरेकाभ्यां, व्यभिचारात्। अथारणिमण्यभाववति स्तोमविशेषे तृणं विना वह्निव्यतिरेकः तृणान्वये वह्निरित्यन्वयव्यतिरेकाभ्यां तत्रैव स्तोमे तदितरहेतुसकलसमवधाने तृणान्वयेऽवश्यं वह्निरिति नियतान्वयेन रासभादिव्यावृत्तेन तृणादिकारणत्वग्रह इति चेन्न। तृणं विनापि वह्निरिति ज्ञाने सति वह्नि नियतपूर्ववर्त्तित्वस्य कारणत्वस्य ग्रहीतुमशक्यत्वात्। तृणाजन्ये वह्नौ मणेः कारणत्वग्रह इति चेत्। न। व्यभिचारेण वह्नौ तृणजन्यत्वाग्रहे तदजन्यत्वस्याप्यग्रहात् वह्निमात्रस्यैव तदजन्यत्वाच्च। न च मण्यजन्यत्वेन तृणजन्यत्वग्रहः, अन्योन्याश्रयात्। यत्तु यत्र कारणताग्राहकं नास्ति तत्र व्यभिचारस्तद्ग्रहपरिपन्थीति। तन्न। अबाधितनियतपूर्ववर्त्तित्वाभावग्रहे तद्ग्रहस्यासम्भवात् अभावप्रमायां भावज्ञानानुदयादिति। उच्यते। उक्तग्राहकैर्वह्निनिष्ठकार्यतानिरूपितकारणतावच्छेदकरूपवत्त्वं तृणस्य तृणनिष्ठकारणतानिरूपितकार्यतावच्छेदकरूपवत्त्वं वह्नेर्वाऽकार्याकारणव्यावृत्तं रूपं परिच्छिद्यते, न तु तृणत्वेन कारणत्वं वह्नित्वेन कार्यत्वं वा, तदोभयथापि सम्भवाति वह्नित्वेन कार्यतया तदनुकूलशक्तिमत्त्वेन च तृणादीनां कारणतया वह्नित्वावान्तरजातिविशेषेण कार्यतया वा, तत्र च विनिगमकमुक्तमेव।

(प्रका०) तटस्थः शङ्कते *नन्विति*। ननु तृणजन्यत्वं तृणरूपादौ प्रसिद्धं, तदभावश्च मणिजन्यवह्नौ सुग्रह इति तदवच्छेदेन मणिजन्यत्वं सुग्रहमित्यत आह—*वह्निमात्रस्येति*। व्यभिचारेण तृणस्याजनकत्वाद्वह्निमात्रस्यैव तृणाजन्यत्वादित्यर्थः। तथा च पुनः स एव व्यभिचार इति भावः।

*उक्तग्राहकैरिति* । अन्वयव्यतिरेकाभ्यां नियतेनान्वयेन चेति कृत्वा बहुवचनोपपत्तिः । *अकार्याकारणेति* । ननु कारणत्वसंशये कथं तदवच्छेदकरूपवत्त्वनिश्चयः, तयोरेकानिश्चायकनिश्चेयत्वात्, किञ्च वह्निनिष्ठकार्यतायास्तृणनिष्ठकारणतायाश्चाग्रहे कथं तदवच्छेदकत्वेन ज्ञानं विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्य । अपि च कार्यतावच्छेदकत्वं कार्यताद्याश्रयमात्रवृत्तित्वं, तद्ग्रहे च कार्यताद्याश्रयत्वमवश्यं विषयः । न च कार्यताद्यपि गृह्यत एवेति वाच्यम् । व्यभिचारेण तद्ग्रहस्याशक्यत्वादिति चेत् ।

अत्र वदन्ति । कार्यतादिकमप्यत्र गृह्यत एव । तेन नोक्तसर्वदोषावकाशः । न चोक्तव्यभिचारनिश्चये कथमव्यभिचाररूपनियमगर्भहेतुत्वग्रह इति वाच्यम् । समानप्रकारकविरोधिज्ञानस्यैव प्रतिबन्धकतया तृणत्वावच्छिन्नस्य वह्नित्वावच्छिन्ने व्यभिचारग्रहे तदवच्छिन्नस्य तदवच्छिन्ने हेतुत्वाग्रहेऽपि तदाश्रययोर्हेतुहेतुमद्भावग्रहस्याविरोधात् । अत एव यागं विनापि दानात्स्वर्गज्ञानेऽपि स्वर्गजनको याग इति धीः स्वर्गत्वसामानाधिकरण्येन यागजन्यत्वं विषयीकरोति, तदिदमाह—*ननु तृणत्वेन कारणत्वं वह्नित्वेन कार्यत्वं वेति* । यदि च कार्यकारणभाव एव न गृह्यते तदा न तु हेतुत्वं कार्यत्वं वेत्येव ब्रूयात् । न चैवं वह्नित्वावच्छेदेन व्यभिचारग्रहेपि वह्नित्वसामानाधिकरण्येन रासभजन्यत्वं गृह्यतामिति वाच्यम् । ग्राहकाभावात् । अत्र चारणिमण्यभाववतीत्यादिना ग्राहकस्योक्तत्वात् । न चैवं तृणनिष्ठकारणताप्रतियोगिककार्यताश्रयत्वं गृह्यत इत्येवास्तु किं तदवच्छेदकरूपवत्त्वपर्यन्तेनेति वाच्यम् । अग्रिमविनिगमकगवेषणस्य सामान्यतावच्छेदकग्रहं विनाऽनुपपत्तेः । सामान्यतो दृष्टावतारं विना परिशेषानुदयादिति । यत्तु ससम्बन्धिकप्रत्यक्षज्ञाने सम्बन्धितावच्छेदकरूपवत्त्वज्ञानमावश्यकमिति तद्विषयं विना न कार्यकारणभावग्रह प्रत्यक्षेण, अत एव न शाब्दस्वर्गजनकत्वज्ञानप्रतिबन्धीति । तन्न । इयं वह्निव्यक्तिस्तृणजन्येति प्रत्यक्षेण तद्व्यक्तित्वादेरवश्यं मानात् । न च तस्यानवच्छेदकतया तदवच्छेदेन कार्यताबुद्धेर्भ्रमत्वापत्तिरिति वाच्यम् । कार्यताबुद्धाववच्छेदकांशस्याभानात् । भाने वा तदंशे भ्रमत्वेपि कार्यतांशे प्रमात्वादिति ॥

( चि० ) अथ तृणारणिमणीनामभावत्रये न कार्यमभावत्रयाभावे कार्यमित्यन्वयव्यतिरेकाभ्याम् अभावत्रयाभाववत्त्वेन तृणादीनां कारणत्वमिति न व्यभिचारः

अभावाभावस्य भावपर्यवसन्नत्वादिति चेत् । अभाव-त्रयाणामभावः किं तृणादिप्रत्येकव्यापकोऽन्य एव उत तृणादि प्रत्येकमेव । आद्येऽभावस्य कारणत्वमिति किमा-यातं तृणादिकारणत्वे, द्वितीये तृणस्य नारणिमण्यभा-वाभावत्वं तदुभयापत्तेः । एतेनाभावत्रये न कार्यं तद-भावे कार्यमित्यन्वयव्यतिरेकाभ्यां तृणादिप्रत्येकस्य का-रणत्वग्रह इति परास्तम् ।

(प्रका०) *अन्य एवेति । अभावत्रयप्रतियोगिको व्यासज्यप्रतियो-गिताक इत्यर्थः । *अभावस्येति* । तथाच तृणोत्कर्षेण वह्न्युत्कर्षोऽपि न स्यादिति भावः । *एतेनेति* । तृणस्य तदुभयत्वापत्तेरित्यर्थः । पूर्वं मि-लितानां तृणादीनामभावत्रयाभावत्वेन हेतुत्वमाशङ्कितं इदानीं तु प्रत्येक-स्येति न पौनरुक्त्यमित्याहुः ।

(चि०) स्यादेतत् । मा भूत् सहजशक्तिराधेयशक्ति-स्तु स्यादेव, तथाहि व्रीहीन् प्रोक्षतीत्यत्र कालान्तरका-र्यानुकूलोऽतीन्द्रियोऽतिशयः प्रोक्षणजन्योऽस्तीत्युभय-वादिसिद्धम् । स व्रीहिसमवेतो न वेति संशये व्रीहिनिष्ठ एव वाच्यः, कथमन्यथा प्रोक्षितानामेव तेषां कालान्तरे-ऽवघातादौ विनियोगः । न च मन्त्रादिसहकृतत्वमेव व्रीहिषु विशेषः, तेषां चिरध्वस्तत्वात् ।

ननु कथं प्रोक्षितस्यैवावघातादौ अन्वयः 'व्रीहीनव-हन्तीति' श्रुतेस्तन्मात्रान्वयेऽप्युपपत्तेः । अथ 'व्रीहिभिर्य-जेत' 'व्रीहीन् प्रोक्षति' 'व्रीहीनवहन्ति' 'पुरोडाशैर्यजेत' त्य-त्र यथा पुरोडाशे प्रकृत्यपेक्षायामवहतव्रीहीणामवयवा-नुवृत्तिद्वाराऽन्वयः, प्रोक्षणे च यागार्थमुपात्तव्रीहीणां, त-थाऽवघाते व्रीह्याकाङ्क्षायां प्रोक्षितानामेवान्वयः, बाधकं विना शब्दानां सन्निहितविशेषपरत्वनियमात्, "व्यक्ति-वचनानां सन्निहितविशेषपरत्वमिति" न्यायात्, अन्यथा

प्रकरणादिसन्निहितत्यागे तदन्यसन्निधिकल्पने गौरवमिति चेत्। न, तर्हि एकस्यैव यत्र प्रोक्षणं तत्रावघातो न तु प्रोक्षणविशिष्टे, यत्र रूपं तत्र रस इति वत्, तथा च प्रोक्षणस्य शब्देन कालान्तरकार्यजनकत्वाऽबोधनात् कथं तन्निर्वाहार्थमतिशयकल्पनम्। "प्रोक्षिता व्रीहयोऽवघाताय कल्पन्ते" इति वाक्यशेषात् प्रोक्षणविशिष्टस्यावघाते कारणत्वबोध इति चेत्। अस्तु तावदेवम्, तथापि प्रोक्षिता इत्यत्र भूते क्तानुशासनादतीतप्रोक्षणे व्रीहावघाताऽन्वयः, तथा चावघाते प्रोक्षणध्वंसः कारणं न तु प्रोक्षणमिति चेत्।

मैवम्। प्रोक्षणमवघातजनकं प्रमाणतस्तदर्थमुपादीयमानत्वात् अवघाते व्रीहिवत्। न चासिद्धिः, अप्रोक्षितेऽवघाताभावादवश्यमवघातार्थं प्रोक्षणोपादानात्। न च प्रोक्षणध्वंस एव व्यापारः प्रतियोगिनोऽहेतुत्वापातात्, अन्यथा यागादेरपि तथा स्यात्। फलस्य च नियतसमयोत्पत्तिकत्वमपूर्ववत् स्वभावादेव भविष्यति। न च प्रोक्षिता व्रीहयस्तथा, निरन्वयध्वस्तत्वेनोपलक्षणस्याहेतुत्वात्। कुरूणां क्षेत्रमित्यत्र तु कुरुज्ञानस्येतरव्यावृत्तक्षेत्रज्ञव्यवहारजनकत्वं न तु कुरोः, अन्यथा यागोपलक्षितो यज्वैव स्वर्गं फलिष्यति किमपूर्वेण। न च देवदत्ताद्यशरीरं देवदत्तविशेषगुणजन्यं जन्यत्वे सति तद्भोगसाधनत्वात् तन्निमित्तस्रग्वदिति तन्नासिद्धिः, जन्मान्तरीयैरदृष्टजनकत्वाभिमतैर्ज्ञानेच्छाप्रयत्नैः सिद्धसाधनात्। तस्मात् प्रोक्षणादयो भावभूतमतिशयं जनयन्त एव कालान्तरभाविकार्यजनकाः प्रमाणतस्तदर्थमुपादीयमानत्वात् रोगचिकित्सावत्, स चातिशयो लाघवात् फलसमा-

नाधिकरण इति व्रीहिनिष्ठ एव, तेन तत्समवहितत्वं व्रीहेः साक्षात्सम्बन्धात् पुरुषनिष्ठत्वेन च व्रीहिणो साक्षात्सम्बन्धाभावात् परम्परासम्बन्धे गौरवात् न साक्षात् व्रीहिसमवहितत्वं स्यात् । किञ्च यो यद्गतफलार्थितया क्रियते स बाधकं विना तद्गतमेव तदनुकूलमतिशयं जनयति रोगचिकित्सावत् । अथ प्रोक्षणं पुरुषसमवेतातिशयजनकं कालान्तरभाविकार्यजनकत्वे सति विहितत्वात् यागवत्, अन्यथा विधिविरोधादिति चेन्न । कृषिचिकित्सादिना व्यभिचारात् अप्रयोजकत्वाच्च तेन विनापि विधिसम्भवात् । अस्तु वा सकलव्रीहिनिष्ठ एक एव । न चैकव्रीहिनाशे तन्नाशापत्तिः । किञ्चिदाश्रयनाशस्य वृक्षादाविव कार्यानाशकत्वादिति ।

(प्रका०) उभयसिद्धत्वमेव स्थापयति *कथमिति* । तटस्थ आह—नन्विति । अवघातेन व्रीहेर्नष्टत्वात्तदन्वयः पुरोडाशे न भवतीत्यत आह—*अवयवेति* । *नन्विति* । तथाच तद्व्यापारत्वेनातिशयः कल्प्य इति भावः ।

तटस्थशङ्कां परिहरति *नैवमिति* । क्रमेणोपादीयमानेऽवघाताजनके व्यभिचारादाह *प्रमाणत इति* । नन्वकारणे कारणकारणे व्यभिचारः । न च कारणाकारणसाधारणमनुकूलत्वमात्र साध्यं तदपि मध्यवर्त्तिघटितमित्यतिशयसिद्धिरिति वाच्यम् । एवं हि जनकीभूतध्वंसजनकत्वेनापि साध्यस्य चरितार्थत्वे प्रतियोगिनोऽहेतुत्वापत्तेरिति वक्ष्यमाणविरोधादिति चेत् । न । वेदमूलकावघातोद्देश्यकोपादानविषयत्वादिति विशेषव्याप्त्यैव साधनादिति । वस्तुतो व्यक्तिवचनान्यायेनावघाते प्रोक्षितव्रीहेरन्वये प्रोक्षणस्य बाधकं विना विशेषणत्वं नोपलक्षणत्वमिति । *प्रतियोगिन इति* । अभावतत्प्रतियोगिनोरेकत्राजनकत्वादित्यर्थः । व्यापारं विनैव प्रोक्षणस्यावघातजनकत्वमस्त्विति शङ्कते *न चेति* । *अहेतुत्वादिति* । प्रोक्षणस्य च हेतुत्वं साधितमिति भावः । ननु यद्युपलक्षणमतीतमजनकं तदा ततो व्यावृत्तबुद्ध्यादिकं न स्यादित्यत आह *करणमिति* । तन्निमित्तेत्युपलक्षणं तद्रोगसाधनेत्यपि द्रष्टव्यम् । अन्यथा साधनवैकल्यापत्तेरित्यवधेयम । *जन्मान्तरीयेति*

ति* । अतीतोपलक्षणस्यापि जनकत्वाभ्युपगमादिति भावः । एतावता ध्वंसातिरिक्तं व्यापारं सिद्धमुपसंहरति *तस्मादिति* । प्रमाणत इति* । कार्यापेक्षया चिरध्वस्तत्वे सतीति विशेषणम्, तेन साक्षाज्जनके न व्यभिचारः । अतिशयस्य भावत्वं च पक्षधर्मतावललभ्यं न तु साध्यतावच्छेदकप्रविष्टम्, तेन विघ्नध्वंसद्वारा समाप्तिसाधने मंगले मिथ्याज्ञानध्वंसद्वारा मुक्तिसाधने तत्त्वज्ञाने वा न व्यभिचारः । नन्वस्त्वतिशयः पुरुषसमवेत एव, तथाच नाधेयशक्तिसिद्धिरत आह *स चेति* । *संस्कारत्वेनेति* । नचैवमनेकव्रीह्युपादानं न स्यादिति वाच्यम् । होमादिनिर्वाहार्थं तदुपयोगात् । ननु यत्र किञ्चिदवयवनाशात्सकलव्रीहिनाशेन खण्डव्रीहिणामुत्पत्तिस्तत्र का गतिरित्यस्वरसादाह *अस्तु वेति* । *किञ्चिदिति* । यावत्प्रत्यभिज्ञं वस्तुस्थितिरिति स्वमतावष्टंभेनेदम् ।

( चि० ) उच्यते । अतिशयग्राहकमानाल्लाघवसहकृतात् स एक एव सिध्यति न नाना पुरुषनिष्ठश्च । तथाहि प्रोक्षणमपूर्वजनकं दृष्टद्वाराभावे सति कालान्तरभाविफलजनकतया विहितत्वात् यागतदङ्गवत्, कूप्यादौ दृष्टद्वारसम्भवात् न व्यभिचारो न वाऽप्रयोजकत्वम् । यागदानहोमादितदङ्गानामपूर्वजनकत्वे दृष्टद्वाराभावे सति कालान्तरभाविकार्यजनकतया विहितत्वस्यैव प्रयोजकत्वात् अन्यस्याननुगमात् । न च यो यद्गतफलार्थितया क्रियते स बाधकं विना तद्गतमेव तदनुकूलं फलं जनयतीति नियमः, शत्रुवधमुद्दिश्य प्रवर्त्तिते श्येनयागादौ व्यभिचारात् विपक्षे बाधकाभावाच्च । नापि यदुद्देशेन यत् क्रियते न तत्तत्र भाविकार्यानुकूलातिशयजनकमिति व्याप्तिः हविस्त्यागादिभिर्व्यभिचारात् ।

ननु मोचितव्रीहिणाऽदृष्टस्य जनितत्वात् वर्हिष इव पुनरुपयोगान्तरं स्यात्, विनियुक्तविनियोगविरोधात् उपयोगे वा तज्जातीयान्तरमुपादीयेताऽविशेषात् । न ।

"व्रीहीनवहन्ती"त्यत्रोक्तन्यायेन प्रोक्षितस्यैव व्रीहेरन्वया-त्। विधेर्दुर्लङ्घ्यत्वात्। यथा "बर्हिस्तृणाति" "बर्हिषि ह-विरासादय"तीत्यत्र।

यद्वा विचित्राः संस्काराः केचिदुद्देश्यसहकारिण एवाग्रिमकार्यकारिणः यथाऽभिचारसंस्कारो यं देह-मुद्दिश्य प्रवृत्तस्तदपेक्ष एव तत्सम्बद्धस्यैव दुःखं जन-यति, तथा प्रोक्षणसंस्कारा अपि उद्देश्यव्रीहिसहकृता एवाग्रिमकार्यकर्त्तारः। यथा च कारीरीजनितसंस्कारा-धारपुरुषसंयोगाज्जलमुचामदृष्टसमवायानं तथा प्रोक्षणज-न्यादृष्टवदात्मसंयोगाद्व्रीहीणामुत्तरक्रियाविशेषाः, कर्म-कर्तृसाधनवैगुण्यात् फलाभावस्तुल्य एव। आगमिकत्वात् चाण्डालादिस्पर्शस्याहवनीयादिसंस्कारनाशकत्वश्रुतेर्व्य-धिकरणस्याप्यपूर्वनाशकत्वम्। धर्मनाशे कर्मनाशा-पारगमनवत् निषिद्धकीर्त्तनवच्च। किञ्च प्रोक्षणज-न्यातिशयो व्रीहिनिष्ठो न नाना, आत्मवृत्तेरेकस्मा-दप्युक्तन्यायेन कार्योपपत्तेः। नाप्येकः, एकाश्रिताश्र-यनाशानां प्रत्येकमननुगमेन कार्यनाशे आश्रयमा-त्रनाशस्य जनकत्वादेव व्रीहिनाशेन तन्नाशादपर-प्रोक्षितव्रीहीणामनन्वयापत्तेः। अथ "व्रीहीन् प्रो-क्षती"तीप्सितद्वितीयाश्रुतेः क्रियाजन्येष्टफलभागित्वं व्रीहेरेवावगम्यते, न चापूर्वस्य व्रीहिवृत्तित्वम्, साक्षात्स-म्बन्धस्यैवौत्सर्गिकत्वादिति चेन्न। धात्वर्थतावच्छेदकसं-योगेन व्रीहिकर्मतोपपत्तेः। न च संयोगावच्छिन्न एव व्यापा-रविशेषः प्रोक्षणार्थः, तथा च कथं प्रोक्षणसाध्यतयाऽन्व-य इति वाच्यम्। संयोगस्योपलक्षणत्वेनापदार्थत्वात्, अन्यथा ग्रामं गच्छतीत्यादौ का गतिः, का वा "सक्तून्

प्रोक्षती"त्यादौ, तत्राधेयशक्त्यभावात्। किञ्च घटं साक्षात्करोतीत्यादौ क्रियाजन्यसंस्कारादीनां घटवृत्तित्वात् संस्कारस्य स्वरूपसम्बन्धेन घटवृत्तित्वं, वह्निमनुमिनोमीत्यादिवत्, प्रयोगसाधुरेव वा द्वितीयेति यदि, तदा प्रकृतेऽपि तथाऽस्तु। अथ प्रतिमादौ प्रतिष्ठाजन्यं न यजमानादृष्टं पूज्यत्वप्रयोजकं, भोगादिना तन्नाशेऽपि पूज्यत्वात् तत्सत्त्वेऽपि चाण्डालादिस्पर्शेनापूज्यत्वात् अन्यधर्मं प्रत्यन्यधर्मस्यानुपयोगाच। न च प्रतिष्ठाध्वंसस्तथा, तत एव उपजीव्यप्रतिष्ठाप्रयोजकत्वभङ्गापत्तेः। तस्मात् प्रतिष्ठाजन्याऽस्पृश्यस्पर्शादिनाश्या प्रतिमादिनिष्ठा शक्तिरभ्युपेयेति चेत्, प्रतिष्ठाविधिना प्रतिमादौ देवतासन्निधिरहङ्कारममकाररूपः क्रियते, स्वसादृश्यदर्शिनश्चित्रादाविव ज्ञानस्य नाशेऽपि संस्कारसत्त्वात्। अस्पृश्यस्पर्शादिना तु तन्नाशः। अचेतनदेवतापक्षे च यथार्थप्रतिष्ठितप्रत्यभिज्ञानस्यास्पृश्यस्पर्शादिविरहसहकृतस्य तथात्वं "प्रतिष्ठितं पूजयेदिति" विधिबलात्तत्प्रतिसन्धानस्यावश्यकत्वादिति प्राञ्चः।

नव्यास्तु प्रतिष्ठाविधिनैव तदाधेयशक्तिवदपूर्वान्तरं जन्यते तददृष्टवदात्मसंयोगाश्रयस्य पूज्यत्वम् अस्पृश्यस्पर्शेन तन्नाशे चापूज्यत्वमित्याहुः।

(प्रका०) यद्यप्यतिशयस्यैकत्वेनैव पुरुषनिष्ठत्वं सिध्यति। अन्यथा लाघवेनाध्ययनाशमात्रस्यैव कार्यनाशप्रयोजकत्वेनाध्ययननाशात्तन्नाशानुपपत्तेः (?) द्वारान्तराणामुपयोगो न स्यात्तथापि प्रकारान्तरमाह *तथाहीति*। *दृष्टद्वारेति*। अत्र धर्मजनकत्व साध्यम्, निषिद्धकर्मणि व्यभिचारवारणाय विहितत्वादित्युक्तम्। प्रायश्चित्ते व्यभिचारवारणाय कालान्तरेत्यादि। ननु दृष्टद्वाराभावे सतीत्यस्यादृष्टान्यद्वाराभावे सतीत्यर्थः, तथा चासिद्धिः, परमते शक्तेरेव द्वारत्वात्। न च प्रत्यक्षद्वाराभावे सतीति तदर्थः। औषधपानादौ व्यभिचारात्। न च नेत्र [illegible]

*

न व्यभिचार इति वाच्यम्। आयुर्वेदेन तस्यापि विहितत्वादिति चेत्। न। शब्दतदुपजीविप्रमाणमात्रप्रयोज्यधीविषयद्वारेतरद्वारस्य इष्टद्वारपदेन विवक्षितत्वात्। न चौषधादौ व्यभिचारः। तदीयधातुसाम्यादिरूपातीन्द्रियद्वारविशेषे शब्दानुपजीविप्रमाणासम्भवादिति वाच्यम्। अन्वयव्यतिरेकादिमूलकप्रमाणस्यापि कदाचित्तत्र प्रसरादिति भावः। *कृष्यादाविति*। न च विहितत्वाभावादेव न व्यभिचार इति वाच्यम्। प्रत्येकवर्णोपायविभागविधिना वैश्यस्य कृषिविधिनादिति भावः। *शत्रुवधमिति*। एतच्च परमते। अस्मन्मते श्येनापूर्वस्य शत्रुनिष्ठत्वमेव फलोपपादकमपूर्वं फलाश्रये कल्प्यत इति वक्ष्यमाणयुक्त्या तथा व्यवस्थितेः। अत एव गयाश्राद्धापूर्वस्य पितृनिष्ठत्वम्, पञ्चमटीकायां तथा विभावनाच्च। स्वमतेन दोषमाह *विपक्षेति*। न च फलसामानाधिकरण्ये लाघवमेव विपक्षबाधकमिति वाच्यम्। नानात्वगौरवेण तल्लाघवानादरादिति भावः। *हविस्त्यागेति*। वह्न्युद्देशेन हविस्त्यज्यते, न च तत्रातिशयो जन्यते इत्यर्थः। न च वह्नौ तदनुकूलसंयोगो जन्यत एवेति वाच्यम्। एवं हि प्रोक्षणेनापि व्रीहौ जलसंयोगजननात् सिद्धसाधनादिति भावः। पुरुषसमवेतातिशयस्य परम्परासम्बन्धेन स्वरूपसम्बन्धेन साक्षादेव वा व्रीहिनिष्ठत्वस्याप्युपपत्तेर्नातिरिक्तपदार्थकल्पनमिति तत्त्वम्। अथोत्पन्नतत्त्वज्ञानपुरुषकृतप्रोक्षणेन दोषाभावादइष्टानुत्पादे शक्तिसिद्धिरिति चेन्न। तत्र फलानुत्पादात्। लोकसङ्ग्रहार्थं तदाचरणादिति भावः। *बर्हिष इति*। बर्हिर्योगस्येत्यर्थः। यथा तस्य जनितादृष्टस्य न पुनरुपभोगान्तरं तथा व्रीहेरप्यदृष्टजननोपगमे तत्र स्यादित्यर्थः। यद्वा व्यतिरेकदृष्टान्तोऽयम्। यथा बर्हिस्तृणाति इत्यादिविधिबलात्तस्य पुनरुपयोगस्तथाऽत्र न स्यादित्यर्थः। *उक्तन्यायेनेति*। व्यक्तिवचनन्यायेनावघाते प्रोक्षितस्यैवान्वये सर्वमिदमविरुद्धमिति भावः। ननु पुरुषे पातित्यादिदोषेणादृष्टोत्पद्यते इति अगत्या व्रीहिनिष्ठातिशयः स्वीकार्य इत्यत आह *कर्तृकर्मेति*। एव हि व्रीहिनिष्ठोऽपि स न स्यादित्यर्थः। पुरुषनिष्ठत्वे साधकमुक्त्वा व्रीहिनिष्ठत्वे बाधकमाह *किञ्चेति*। *कार्येति* भावकार्येत्यर्थः। *स्वाश्रयेति*। स्वसमवायिकारणेत्यर्थः। एवञ्च किञ्चिदाश्रयनाशे वृक्षादिनाशे प्रत्यभिज्ञानस्य तज्जातीयत्वं विषय इति भावः। *संयोगस्येति*। ननु फलस्योपलक्षणत्वे तत्तद्व्यापारमात्रस्यैव धात्वर्थत्वे त्यजिगम्योः पर्यायतापत्तिः। अवच्छेदकीभूतयोः फलयोर्विभागसंयोगयोर्धात्वर्थप्रवेशे स्पन्दमात्रस्यैवोभयधात्वर्थत्वात्, कर्ममात्रस्यैवोभयजन-

कत्वेन पतनादिवदवान्तरजातिमादायाप्यर्थभेदस्य दुरुपपादत्वादिति । अत्र वदन्ति । व्यापारे उपलक्षणीभूतस्यापि फलस्य प्रतीतौ विशेषणत्वमेव । इष्टसाधनताविधिपक्षे क्रियोपलक्षणस्यापि इष्टस्य ज्ञानविशेषतावत् । तदत्र फलविशिष्टो व्यापारो यदि वाच्यस्तदा शब्दात्फलविशिष्टव्यापारधीरपरथा फलोपलक्षितव्यापारधीरिति उभयथापि फलांशेपि शक्ति क्व प्रतीत्य विशेषो येन पर्यायता । विशेषणत्वे प्रकृते कर्मत्वानुपपत्तिरिति । अस्तु वा प्रोक्षणजन्यापूर्वस्य साक्षात्स्वरूपसम्बन्धेनैव व्रीहिकर्मत्वं, साक्षाद्धीजन्यसंस्कारविषयतया घटादीनामिव, एवञ्च व्याप्यसंस्कार्यकर्मणो भेदोप्युपपद्यत इत्यभिप्रेत्याह *किञ्चेति* । *वह्निमिति* । न ह्यत्र कर्मणि द्वितीया, अनुमितौ वह्नेरकारकत्वात्, कर्मणश्च कारकविशेषत्वात् । किन्तु साधु विभक्तिस्तथात्रापीत्यर्थः । *नचेति । प्रतिष्ठितं पूजयेदिति निष्ठास्वरसादिति भावः । तत एव-ततस्त्वेपि चाण्डालादिस्पर्शेनापूज्यत्वादेवेत्यर्थः । देवताचैतन्यपक्षमालंब्य परिहरति *प्रतिष्ठाविधिनेति* । *अहङ्कारेति* । अहमियं प्रतिमा ममेदं शरीरमित्यादिज्ञानरूप इत्यर्थः । नन्विदं ज्ञानं विषयबाधाद्भ्रान्तं स्यात्, न च तत्सम्भवति, विशेषदर्शनादित्यत आह *स्वेच्छयेति* । तथाच विशेषदर्शने सत्यप्याहार्यभ्रमोऽयमित्यर्थे ।

( वि० ) वयन्तु ब्रूमः । प्रतिष्ठितं पूजयेदिति विधिवाक्येन प्रतिष्ठायाः कारणत्वं न बोध्यते, किन्तु भूतार्थेऽनुशासनादतीतप्रतिष्ठे पूज्यत्वं बोध्यते, तथा च प्रतिष्ठाध्वंसः प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शादिप्रतियोगिकानादिकालसंसर्गाभावसहितः, पूज्यत्वप्रयोजकः स च प्रागभावोऽत्यन्ताभावश्च क्वचित् । कामिनीचरणाभिघातदोहदादिभिरशोकपुष्पोत्कर्षदर्शनादपि नाधेयशक्तिसिद्धिः, समयविशेषावच्छिन्नचरणदोहदादिसंयोगध्वंसस्यैव कारणत्वात् चरणाभिघाताद्याकृष्टभागान्तरजनितवृक्षादेव वा तदुपपत्तेः, कालान्तरे पुष्पाद्युत्कर्षात् वृक्षावयवोपचयावश्यम्भावेन वृक्षभेदावश्यकत्वात् । नापि ताम्रकांस्यादावस्तु भस्मसंयोगादिजन्यशुद्धिरूपा आधेयशक्तिः, तत्संयोगध्वंसस्य संयोगसमानकालीनास्पृ-

शूद्रस्पर्शादिप्रतियोगिकयावदनादिसंसर्गाभावसहितस्य शुद्धिपदार्थत्वात् ।

भस्मादिसंयोगजनितः कांस्याद्युपभोक्तृनिष्ठः संस्कार एव शुद्धिरित्यन्ये ।

(प्रका०) ननु देवतायां सर्वज्ञत्वाभावेन व्यासङ्गदशायां व्यवहिततनादेशे प्रतिष्ठायां कथमहङ्कारममकारौ संस्कारौ संस्कारनाशे वा कथं पूज्यत्वं कथं वा ज्ञानसंस्कारयोरननुगतयोः पूजाप्रयोजकत्वमिति प्रथमकल्पानुपपत्तिः । यत्र च व्यासङ्गस्तत्र प्रत्यभिज्ञानं तत्र प्रतिष्ठितप्रतिमापूजापि निष्फला स्यात् । प्रतिष्ठितं पूजयेदित्यादिना च प्रतिष्ठायास्तद्ध्वंसस्य वा हेतुत्वं बोध्यते न तत्प्रत्यभिज्ञानस्यापीति द्वितीयकल्पानुपपत्तिः । दृष्टेनैवोपपत्तावदृष्टकल्पनानुपपत्तिरिति तृतीयकल्पानुपपत्तिरित्यस्वरसादाह—*ध्वंसं इयति* । ननु यत्र प्रतिमायां प्रतिष्ठा जाता दैवात्किञ्चिदवयवनाशादन्या प्रतिमा जाता तत्र प्रतिष्ठारूपप्रतियोगिनोऽवृत्तेस्तद्ध्वंसस्यापि न वृत्तिः, प्रतियोग्यधिकरण एव ध्वंसस्य वृत्तेः, तथाच तत्पूजा निष्फला स्यात् । न चेष्टापत्तिः, आचारविरोधात् । अन्यथा एतच्छङ्कया कस्यापि प्रवृत्तिर्न स्यात् । न च तत्प्रतिमावृत्तित्वेन ध्वंसस्य न प्रयोजकत्वं किन्तु स्वरूपेण तच्च तत्रास्त्येवेति वाच्यम् । एवं हि तद्ध्वंसस्य प्रतिमान्तरपूज्यत्वप्रयोजकतापि स्यादविशेषादिति चेत् ।

अत्राहुः । इयं प्रतिष्ठितेति बुद्धेः खण्डप्रतिमायामपि प्रमात्वव्यवहारात्तद्ध्वंसस्य तत्रापि वृत्तिरेव । प्रतिमान्तरे च तदभावात्तदभावः । अत एव प्रोक्षितव्रीहीणां यत्किञ्चिदवयवनाशाद्यंशेऽपि खण्डव्रीहीणामुपयोगः । संस्कृता एते व्रीहय इति प्रतीत्या तथापि पुरुषसमवेतसंस्कारसम्बन्धासिद्धेः । अन्यथा सर्वमिदं तत्रापि तुल्यमिति । *प्रतिष्ठाकालीनेति* । अत्र स्वसमानाधिकरणेत्यपि विशेषणम्, तेन तत्प्रतिष्ठाकालीनप्रतिमान्तरास्पृश्यस्पर्शप्रागभावाभावेन यावदर्थाभावान्नापूज्यतापत्तिः । ननु प्रतिष्ठोत्तरमपि पूज्यता न स्यात्प्रतिष्ठापूर्वकालीनास्पृश्यस्पर्शानां जाततया तत्प्रागभावाभावादित्यत आह प्रतिष्ठाकालीनेत्यभावविशेषणम् । नन्वेकस्पर्शानन्तरमग्रिमस्पर्शप्रागभावसत्त्वात्पूज्यता स्यादित्यत आह—*यावदिति* । आदिपदमवयवविभागादिपरम् । स्फुटितप्रतिमाया अपूज्यत्वात् ।

नन्वनादिसंसर्गपदमत्राकिञ्चित्करमिति चेत् । अत्राहुः । तावदभा-

थत्सहितप्रतिष्ठाध्वंसस्य हेतुत्वे तावदभावा अपि हेतव इति ध्रुवम् । तथा चानादित्वानन्तर्भावे सादभावानामपि जनकत्वमिति बहूनां जनकत्वे गौरवमित्यल्पजनकत्वे लाघवेन सादिव्यावर्त्तनार्थमनादिपदोपादानम् । एवमन्योन्याभावव्यावर्त्तनार्थं संसर्गपदम् ।

अन्ये तु प्रतिष्ठाकालीनत्वेन प्रतिष्ठोत्तरकालीनत्वं विवक्षितम् , तदपि स्पर्शादिविशेषणं न त्वभावविशेषणम् । एवं प्रतिमायामस्पृश्यस्पर्शे जातेऽपि तद्ध्वंसान्योन्याभावावादाय पूज्यतापत्तिः । प्रतिष्ठोत्तरकालीनानां यावदस्पृश्यस्पर्शानामभावस्य तत्र सत्त्वात्, अनादिपदसंसर्गपदोपादाने तु नोक्तदोषः, तत्प्रतिष्ठास्पृश्यस्पर्शव्यक्तेरेवानादिसंसर्गाभावस्य तत्रासत्त्वात् , अत्यन्ताभावस्य प्रतियोग्यसमानाधिकरणत्वात्, प्रागभावस्य प्रतियोगितद्ध्वंसासमानकालीनत्वादित्याहुः । *समयविशेष इति* । स च विशेषः कार्यैकोन्नेयो यदनन्तरं पुष्पमित्यर्थः । नन्वेवं चरणसंयोगस्य कारणीभूताभावप्रतियोगित्वेन प्रतिबन्धकत्वापत्तिः । न चेष्टापत्तिः, चिरसमयव्यापिसंयोगे सति पुष्पानुत्पत्त्यापत्तेरित्यपरितोषादाह—*चरणेति* । *तत्संयोगेति* । अत एवाऽऽलादिसंयोगो जलक्षालनेनापनीयत इति भावः ।

*संस्कार एवेति* । धर्मविशेष इत्यर्थः । अन्ये त्वित्यस्वरसोद्भावनम् । तद्बीजं तु दृष्टद्वारेणैवोपपत्तावदृष्टकल्पनानवकाश इति ।

( चि० ) अभिमन्त्रितपयःपल्लवादावपि समयविशेषावच्छिन्नाभिमन्त्रणध्वंस एव व्यथापनायकः तत्तन्मन्त्रदेवतासन्निधिरेव वा । कलमबीजादीनामापरमाण्वन्तभङ्गे तत्र चावान्तरजात्यभावे नियतकलमजातीयादिसिद्धिरपि परमाणुपाकजविशेषादेव, कार्यगुणसिद्ध्यादिसजातीयस्य पूर्वरूपादिविजातीयस्य परमाणौ पाकजरूपादेरुभयासिद्धत्वात् । यथाहि कलमबीजं यवादेर्जात्या व्यावर्त्यते तथा तत्परमाणवोऽपि पाकभेदेन । एवं माघकर्षणजनितात् परमाणुपाकपरम्पराविशेषादेव हैमन्तिकशस्योत्पत्तिः । एतेन लाक्षारसावसेकादयो व्याख्याताः । निमित्तविशेषजनितपाकजात्यावान्तरविशेषा यथा हारीतमांसं हरिद्रानलसाभिसम्पर्कयोगात् सद्यो

द्यापादयति नान्यथा सञ्चितमित्यादि। यत्र च तोय-तेजोवायुषु न पाकजो विशेषस्तत्रोद्भवानुद्भवकठिनत्वा-दयो विशेषास्तत्तदुपनायकादृष्टविशेषादेव। तुलादौ चा-धिवासपूर्वकतुलारोहणसामग्री तुल्यस्य सत्यासत्यप्रति-ज्ञत्वसहिता प्राचीनधर्म्माधर्म्मफले तज्जयभङ्गौ जन-यति। यद्वा अहं निष्पापः पापवान् वेति तुलाधिरूढाभि-शस्तज्ञानविशेषसहिता सा तथा, तदाहुः--

तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपुरुषः। इति।

अथ वा प्रतिज्ञाशुद्ध्यशुद्धी अपेक्ष्य तथा धर्माधर्मौ जन्येते ताभ्याञ्च जयपराजयौ, सत्यासत्यप्रतिज्ञाभि-शस्ततुलारोहणस्येष्टानिष्टफलत्वेनार्थतो विधिनिषेधात् "अभिशस्तः सत्यप्रतिज्ञो विजयकामस्तुलामारोहेदसत्य-प्रतिज्ञो न तुलामारोहेदि"ति श्रुतेरूहनात्। यद्वा तया देवतासन्निधिः क्रियते ताश्च कर्म्मानुरूपं लिङ्गमभि-व्यञ्जयन्ति।

(प्रका०)*समयविशेषेति*। न चैवं यागेऽप्यपूर्वं न कल्प्यमिति वाच्यम्। तत्र विधिना कार्यकारणभावबोधनात्, अत्र तु न तथेति भावः। पाकजविशेषे मानमाह *कार्येति*। ननु बीजापूरादौ लाक्षाद्यवसेकात्कुसुमारुण्यं दृश्यते तत्र लाक्षारसस्य गलितत्वाच्च कालान्तरीयकुसुमारुण्यमहेतुत्वं न वा स्वल्पात्तस्मात्तादृगुत्कर्षस्तथा च तत्प्रयोजकत्वेनाधेयशक्तिः स्वीकार्येत्यत आह *एतेनेति*। *इत्यादीति*। "दशरात्रोषितं कांस्ये सर्पिश्चापि विषायत" इत्यादि पदग्राह्यम्। कठिनत्वं तु तोये प्रतिबद्धद्रवत्वमित्यर्थः। तुलादौ तुलाविधिजन्याधेयशक्तिं जयादिप्रयोजिकामाशंक्य निराकरोति *तुलादाविति*। तुल्यस्य-तुलनीयस्य। ननु तुलादिसामग्र्याः क्षणिकतया कालान्तरभाविजयादिजनकत्वानुपपत्तिः पापिनोऽपि समाक्षोभादिना पापवत्त्वज्ञानाभावे निष्पापत्वभ्रमे वा भङ्गानुपपत्तिश्चेत्यरुचेराह *अथवेति*। तया-तुलाधिरोहणसामग्र्या। ननु दृष्टद्वारेणैवोपपत्तावदृष्टकल्पनानुपपत्तिः लौकिकक्रियाया अपीष्टानिष्टफलकत्वेन तुलाधिरोहणेन श्रुत्युन्नयनासं-

भवश्चेत्यपरितोषादाह । *यत्रेति* । अयं पापी निष्पापो वा तुलारूढ इति ज्ञानमेव तज्जन्यसंस्कारो वाऽत्र सन्निधिरित्यर्थः । *ताश्चेति* । देवता इत्यर्थः । *लिङ्गमिति* । नमनोन्नमनादिकमित्यर्थः ॥

( दि० ) कस्तर्हि शक्तिपदस्यार्थः ? कारणत्वम् । तच्च स्वस्वव्याप्येतरसकलसंपत्तौ कार्याभावव्यापकाभावप्रतियोगित्वम् ।

(प्रका०) *स्वस्वेति* । अत्र यत्र कार्यस्य घटादेरभावस्तत्र दण्डादेरभाव इति दैशिकी व्यापकता, कालिक्यां तु सामग्रीकाले व्यभिचारात्, एवञ्च दण्डसद्भावेपि चक्राद्यभावेन कार्याभावे व्यभिचार इति तद्वारणाय कार्याभावं विशिनष्टि संपत्तावित्यन्तेन । स्वेतरसकलसंपत्ताविति कृतेऽप्रसिद्धिः, दण्डेतरसकलमध्यपतितानां चक्रभ्रम्यादीनां संपत्तौ घटाभावाप्रसिद्धेरित्यत उक्तं स्वव्याप्येति । चक्रभ्रम्यादीनां च दण्डसमवधाननियतत्वेन दण्डव्याप्यतया तदितरसंपत्तिकालीनकार्याभावप्रसिद्धेर्नोक्तदोषः । एतेन यत्र स्वं स्वव्याप्यमध्यस्ति तत्रापि तत्सम्पत्तिरस्तीति तत्र कार्याभावाप्रसिद्धिरेवेत्यपास्तम्, क्वाचित्कतादृशाभावप्रसिद्ध्यैव व्यापकत्वनिर्वाहात् । ननु तदितरसकलपदं तदितरकारणपरं तदितरमात्रपरं वा ? आद्ये आत्माश्रयः । अन्त्येऽसम्भवः । घटाद्युत्पत्तौ वेमादिसमवधानाभावादिति चेत् । न । कार्यप्रागभावव्याप्यप्रागभावप्रतियोगिसकलस्य विवक्षितत्वात् । कार्यनियतपूर्ववर्तिसकलस्य विवक्षितत्वाद्वा । कार्यत्वं च प्रागभावप्रतियोगित्वम् । न चान्यथासिद्धे दण्डरूपादावतिव्याप्तिः, तत्र स्वस्वव्याप्येतरदण्डादिसकलसंपत्तौ कार्याभावाभावेनोक्तरूपाभावात् । वस्तुतो नान्यथासिद्धत्वमत्रापि देयम्, अतो नोक्तदोषः । अन्यथा कुलालपित्रादौ प्रसक्तताद्वस्थ्यात् । चक्रभ्रम्यादीनां चक्रव्याप्यत्ववत्कुलालादीनां तद्व्याप्यत्वात् । यत्त्विदं कारणसामान्यलक्षणं तथा च कुलालपितृत्वेनान्यथासिद्धत्वेपि कुलालत्वेन तस्यापि घटजनकतयाऽतिव्याप्त्यभावः । न च कुलालपितृत्वेन जनकतापत्तिः । यस्य कार्याभावव्यापकाभावप्रतियोगित्वं तस्य हेतुत्वमित्येव लक्षणार्थत्वादिति । तन्न । दण्डचक्रादिजनके तथात्वातिव्याप्त्यपरिहारात् । न हि तज्जनके दण्डावयवादौ दण्डत्वादिसम्भवः । कुलालमात्रादौ प्रसक्तताद्वस्थ्याच्च । ननु स्वस्वव्याप्येतरसकलसंपत्तौ स्वसंपत्तौ च स्वव्याप्याभावप्रयुक्तकार्याभावव्यापकत्वाभावात्स्वाभावस्यायुक्तमिदमिति चेन्न । तत्सम्पत्तिकालीनकार्याभावव्यापकाभावप्रतियोगित्वस्व-

व्याप्यान्यतरकत्वस्य विवक्षितत्वात् । यत्तु स्वासमवधानकालीनत्वमपि कार्याभावविशेषणम् अतो नोक्तदोष इति । तन्न । आत्मादिहेतावव्याप्तेः । नन्वेवमप्यात्मादिहेतावव्याप्तिरेव कार्याभाववति देशे काले वा तदभावाभावादिति चेन्न । तत्समवधानसत्त्वेऽपि तदभावस्य केवलान्वयित्वेन तत्रापि तत्सत्त्वात् । तद्व्याप्यस्याभावप्रतियोगित्वेनान्यतरगर्भलक्षणस्य तत्रापि सत्त्वाच्च । न चैवमाकाशस्य घटादिहेतुतापत्तिः । अनन्यथासिद्धत्वेनैव वारणात् । तद्व्याप्येतरसकलसंपत्तौ घटाभावाप्रसिद्धेश्च । आत्मादौ च स्वव्याप्यहेत्वन्तरप्रत्यासत्त्यादिव्यतिरेकप्रयुक्तकार्याभावप्रसिद्धिसम्भवात् । अत एवात्मनः कपालगोचरप्रत्यक्षादिसम्बन्धेन घटकारणत्वम् । यत्तु यदवच्छिन्नाभावव्यापकाभावप्रतियोगितावच्छेदकावच्छिन्नस्य हेतुत्वरूपत्वम् । अस्ति चात्मत्वावच्छिन्नाभावस्य ज्ञानाभावाव्यापकत्वेऽपि गुणत्वावच्छिन्नाभावं प्रति समवायित्वावच्छिन्नाभावस्य व्यापकत्वम् । अस्ति च दिक्कालयोरितरावच्छिन्नाभावस्याव्यापकत्वेऽप्याधाराधेयभावत्वेन तदभावस्यापि कार्याभावव्यापकत्वमिति । तच्चिन्त्यम् । एकघटसत्त्वे घटत्वावच्छिन्नाभावाभाववदात्मरूपसमवायिसत्त्वे समवायित्वावच्छिन्नाभावासंभवात् । यदि च केवलान्वयितया तदभावस्तदा आत्मत्वावच्छिन्नाभावोऽपि सुलभ एव ।

केचित्तु जन्यगुणमात्रं प्रति समवायितया कारणत्वेन तत्रापि तज्जातीयतयोक्तलक्षणसत्त्वादित्याहुः । तदपि चिन्त्यम् । उक्तरीत्या समवायित्वस्य कार्याभावव्यापकाभावप्रतियोगितावच्छेदकतया समवायित्वेन हेतुत्वमित्येव न स्यात् । अन्यथा प्रमेयत्वेनैव हेतुत्वापत्तौ तज्जातीयतया गुणादावतिव्याप्त्यापत्तेः । अत एव प्रमेयत्वादौ सामान्यप्रत्यासत्तिकरणे अव्याप्तिः, व्यतिरेकाप्रसिद्धेरित्यपास्तम् । तत्रापि स्वव्याप्यव्यतिरेकप्रयुक्तकार्याभावप्रसिद्धिसम्भवेनान्यतरत्वगर्भलक्षणसत्त्वात् । अन्यथा स्वव्याप्याप्रसिद्ध्यैव लक्षणासिद्धिः स्यात् । यत्तु जन्यसाक्षात्कारं प्रति प्रत्यासत्तितया कारणत्वे इन्द्रियप्रत्यासत्तिव्याप्येतरसकलसमवधाने इन्द्रियप्रत्यासत्तिव्यतिरेके सति सकलसाक्षात्काराभावात्तज्जातीयत्वेन तत्सत्त्वान्नाव्याप्तिः, अत एवेश्वरज्ञानादौ नाव्याप्तिरिति । तन्न । पूर्वोक्तरीत्या प्रत्यासत्तित्वस्य कार्याभावव्यापकाभावप्रतियोगितानवच्छेदकतया तेन रूपेण हेतुत्वमसिद्धेः । न हि येन केनापि रूपेण तज्जातीयत्वं वाच्यम् । अतिप्रसङ्गात् । किन्तु अन्वयव्यतिरेकप्रतियोगितावच्छेदकेनैव । न च प्रत्यासत्तित्वं तथा, तदवच्छिन्नस्य व्यतिरेकाप्रसिद्धेरिति । यद्यपि मानमात्रेऽव्याप्तिः, तद्भिन्नसकलसंपत्तौ

कार्याभावाप्रसिद्धेः उत्पन्नस्य पुनरुत्पादेऽपि कार्यस्य सत्त्वात्। तथाप्युत्पत्तिविशिष्टकार्याभावो विवक्षितः, स च तत्राप्यस्ति । न चैवं गन्धं प्रति रसादिप्रागभावानामपि हेतुत्वापत्तिरिति वाच्यम् । अनन्यथासिद्धत्वेनैव वारणात् । न च सव्येतरविषाणयोः परस्परं कार्यकारणभावापत्तिः, तदितरसकलसंपत्तिकालस्य तत्सामग्रीकालत्वपर्यवसाने तत्कालीनपरस्पराभावव्यापकत्वात्परस्पराभावस्येति वाच्यम्। अग्रिमक्षण इति विशेषणात् । तत्तत्स्वरूपस्याग्रिमक्षणे च कार्याभावाभावात् । यत्तु कार्यपदं तदीयकार्यपरमतो नोक्तप्रसङ्ग इति । तन्न । आत्माश्रयात्, संपत्ताविष्यन्तवैयर्थ्यापत्तेश्च । न च दण्डावयवे घटाभावाव्यभिचारेणाऽव्यापकत्वमिति वाच्यम्। तत्र तदितरसम्पत्त्यवच्छिन्नकार्याभावादित्येके। कार्याभावति यत्संसर्गावच्छिन्नयदभावस्तत्संसर्गावच्छिन्नस्य हेतुत्वरूपत्वम् । अस्ति च घटाभावव्यापको यो दण्डसंसर्गाभावः स दण्डावयवेऽपीत्यन्ये। केचित्तु कार्याभावव्यापकाभावप्रतियोगित्वमित्यत्र षष्ठीबहुव्रीहिसमासेन कार्याभावव्याप्याभावप्रतियोगित्वमर्थः । कारणस्य कार्यव्यापकत्वेन तदभावस्य कार्याभावव्याप्यतौचित्यात् । एवञ्च चन्द्रोदयसमुद्रवृद्ध्योः परस्परं कार्यकारणभावापत्तिस्तद्वारणाय सम्पत्ताविष्यन्तम् । न चैवमपि दोषतादवस्थ्यम् । अग्रिमक्षण इत्यस्य विवक्षितत्वात् । न हि तत्र तादृशाग्रिमक्षणे समुद्रवृद्धिव्यतिरेकश्चन्द्रोदयव्यतिरेकव्याप्तः । आत्मादिहेतौ प्रमेयत्वप्रत्यासत्त्यादौ च तज्जातीयस्वभावादेव लक्षणगमनम्; अन्यच्च पूर्ववदूह्यमित्याहुः ॥

( चि० ) अथ वा यत्र कार्याभावव्याप्यता इतराभावावच्छिन्ना तत्कारणम् । बीजेऽङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते इतरसमवधाने सति बीजादङ्कुरसम्भवात्, किन्त्वितराभावेनावच्छिद्यते इतराभावे बीजस्याङ्कुराभावनियमात् । शिलाशकले त्वङ्कुराभावव्याप्यता शिलात्वेनैवावच्छिद्यते ।

(प्रका०) नन्विदं कारणत्वमतीन्द्रियघटितसकलसंपत्तिगर्भतया दुर्ग्रहं प्रत्यक्षस्याप्रवृत्त्या साध्याप्रसिद्ध्या मानान्तरस्याप्यप्रवृत्तेः, किञ्च अनन्यथासिद्धत्वकार्यनियतपूर्ववर्त्तित्वादेः प्रवेशे आवश्यके तावन्मात्रमेव लक्षणमस्तु लाघवात् अधिकांशस्य गुरुत्वात्, अत एवाग्रेऽपि तथैव लक्षणमित्यरुचेराह *अथवेति* । यत्र कार्याभावव्याप्यता इतरा-

भावसहकारावच्छिन्नया तदवच्छिन्नं कारणं तदवच्छिन्नत्वं कारणत्वमिति यावत् । तेन यत्र दण्डाभाववत्त्वं तत्र घटाभाव इति दण्डाभाववत्त्वनिष्ठव्याप्तौ दण्डाभावस्यैवावच्छेदकतयाऽजनके दण्डाभाववत्त्वादौ नातिव्याप्तिः । न वा बीजत्वस्य कार्याभावव्याप्यस्य जनकत्वासम्भवादसम्भवः, तत्र दण्डाभावसहकृतत्वस्यानवच्छेदकत्वात्, बीजत्वाद्यवच्छिन्नस्य जनकत्वाच्च । एवञ्चाग्रे बीजबीजत्वपदे बीजत्वबीजत्ववत्त्वपरे । इतराभावेन-इतराभावसहकृतत्वेन । शिलायां-शिलात्वे, शिलात्वेन-शिलात्ववत्त्वेन ।

ननु कार्याभावस्तज्जन्यकार्याभावो वा तदभावमात्रं वा ? आद्ये आत्माश्रयः । अन्त्ये शिलायामप्यङ्कुरस्य संयोगवृत्त्या सत्त्वेन तत्रापीतराभावसहकृतशिलात्वस्य कार्याभावव्याप्यत्वात् । किञ्च घटकारणज्ञानादौ कार्याभावव्याप्यत्वं ज्ञानत्वत्वादिनैवावच्छिद्यते । दण्डाभावसाहित्यस्य तत्र नीलधूम इव व्यर्थत्वादिति ।

अत्र वदन्ति । उत्पत्तिकालीनसम्बन्धावच्छिन्नकार्याभावव्याप्यत्वं विवक्षितं संयोगसम्बन्धस्योत्पत्त्यनन्तरकालीनतया तदवच्छिन्नाभावमादाय न शिलादौ प्रसङ्गः । उत्पत्तिकालीनसम्बन्धो द्वयमेव कारणता समवायश्च-तदवच्छिन्नाङ्कुराभावश्चेतराभावावच्छिन्ने स्वसमवायिनि बीजादौ च । द्वयं च कारणमेव । न चैवं करणतागर्भत्वेनात्माश्रयः । सम्बन्धत्वेन तज्ज्ञानादिति ।

*अत्रेदं चिन्त्यम्* । विषयविषयिभावसम्बन्धस्याप्युत्पत्तिकालीनतया तदवच्छिन्नकार्याभावव्याप्यत्वस्येतराभावावच्छेद्यतया वह्न्यादेरनुमितिजनकत्वापत्तिः । चरमकारणे कार्यत्वाभावादव्याप्तिश्च ।

वस्तुतस्तु बीजादङ्कुर इति प्रतीतिबलादव्यवधिमत्त्वलक्षणस्वरूपसम्बन्धविशेष एव विलक्षणः कार्यकारणयोः । तत्सम्बन्धावच्छिन्नकार्याभावश्च कारणे इतराभावावच्छेदेन । स्वरूपायोग्ये तु तादृशसम्बन्धाभावात्तदवच्छिन्नकार्याभावः स्वासाधारणशिलात्वादिधर्मावच्छेद्यः । एवं च तादृशसम्बन्धावच्छिन्नकार्याभावव्याप्यत्वं यत्र स्वासाधारणधर्मेतरावच्छिन्नं तदवच्छिन्नं कारणमित्यत्र तात्पर्यम् । चरमकारणे च यद्यपीतराभावो नावच्छेदकः । तथाप्युत्पादकाल एव तथा उत्पादानन्तरमेव कार्योत्पादेन तदा कार्याभावात् । यद्वा चरमकारणे परामर्शादावपि प्रतिबन्धकाभावविलम्बेन कार्योत्पत्तिविलम्बादित्यन्तराभावावच्छिन्नत्वमेव । यदि च क्वचिन्न तथात्वं तदा तत्सजातीयत्वं लक्षणं बोध्यम् । न चात-

र्यस्थदण्डे तद्दण्डत्वादिनैव तदवच्छेदादव्याप्तिरिति वाच्यम्। दण्डत्वमादाय लक्षणसत्त्वात्। एवञ्च घटकारणज्ञानत्वादावपि तत्सम्बन्धावच्छिन्नकार्याभावव्याप्यत्वं दण्डाद्यभावावच्छेद्यमेवेति न तत्राव्याप्तिरिति ध्येयम्। ननु दण्डरूपादावतिप्रसङ्ग इति चेत्। न। दण्डाद्घट इतिवद्दण्डरूपाद्घट इति प्रतीत्यभावेन तादृशसम्बन्धावच्छिन्नकार्याभावसम्बन्धस्य दण्डरूपत्वेनैवावच्छेदात्। अत एव व्योमादावपि न घटकारणत्वप्रसङ्गः। अत्र च स्वभाव एव शरणम्। एवञ्चानन्यथासिद्धत्वेन विशेषणीयमतो नोक्तदोष इति कस्यचिद्व्याख्यानमनादेयम्। उक्तेनैवोपपत्तेरिति॥

(चि०) यद्वा अन्यासमवधानावच्छिन्नकार्यानुत्पत्तिव्याप्यत्वं कारणत्वम्, रासभादेः स्वत एव कार्याभावव्याप्यता अन्यासमवधानस्य वैयर्थ्येनानवच्छेदकत्वात्।

अनन्यथासिद्धनियतपूर्ववर्त्तिजातीयत्वं वा तत्त्वम्। अन्यथासिद्धत्वञ्च त्रिधा। येन सहैव यस्य यं प्रति पूर्ववर्त्तित्वमवगम्यते, यथा घटं प्रति दण्डरूपस्य। अन्यं प्रति पूर्ववर्त्तित्वे ज्ञाते एव यं प्रति यस्य पूर्ववर्त्तित्वमवगम्यते, यथा शब्दं प्रति पूर्ववर्त्तित्वे ज्ञात एव ज्ञानं प्रत्याकाशस्य। अन्यत्र क्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तत्सहभूतत्वम्, यथा गन्धवति गन्धानुत्पादाद्गन्धं प्रति तत्प्रागभावस्य नियतपूर्ववर्त्तित्वकल्पनात् पाकजस्थले गन्धं प्रति रूपादिप्रागभावादीनामप्यन्यथासिद्धत्वम्। एतत्त्रितयव्यतिरेकनियतपूर्ववर्त्तित्वं कारणत्वम्। यागापूर्वयोस्तु यागपूर्ववर्त्तित्वेऽवगते न त्ववगम्यमाने, यत्र जन्यस्य पूर्ववर्त्तित्वेऽवगते जनकस्य पूर्वभावोऽवगम्यते तत्र जन्येन जनकस्यान्यथासिद्धिः, यत्र च जनकस्य तथात्वेऽवगते जन्यस्य पूर्वभावावगतिस्तत्र तद्द्वारा तस्य जनकत्वमेव, दण्डसंयोगभ्रमणयोस्तु युगपदेव पूर्वभावित्वग्रहः। स्वस्वानन्तरोत्पत्तिकसकलसमवधाने

**सत्यपि यस्याभावात् कार्यं न जायते सति च जायते तज्जातीयं प्रति तदनन्यथासिद्धम् ।**

(प्रका०) *अन्यासमवधानावच्छिन्नेति* । अन्यासमवधानावच्छिन्नं कार्यानुत्पत्तिव्याप्यत्वं यस्य तदवच्छिन्नत्वं कारणत्वमित्यर्थः । उत्पत्तिगर्भतया पूर्वस्माद्भेदः । अत्रापि पूर्वोक्तसम्बन्धविशेषमादायोत्पत्त्यभावव्याप्यत्वं बोध्यम् । उत्पत्तिश्च स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयसम्बन्धः । ध्वंसत्वं च प्रागभावप्रतियोग्यभावत्वं प्रागभावत्वं च न प्रतियोगिजनकाभावत्वं येनान्योन्याश्रयः स्यात् । किन्तु गन्धानाधारसमयानाधाराभावत्वम् । शेषं पूर्ववत् ।

*अनन्यथासिद्धेति* । घटजातीयं प्रति रासभजातीयमनन्यथासिद्धमिति अव्याप्तिवारणाय नियतपदम् । ननु नियतत्वं कालमपेक्ष्य देशमपेक्ष्य वा ? नाद्यः । रासभेऽपि गतत्वात् । घटपदादिपूर्वकाले रासभजातीयस्य नियमेन सत्त्वात् । नान्त्यः । साक्षात्सम्बन्धेनादृष्टादेर्घटादिदेशापेक्षयाऽनियमात् । साक्षात्परम्परासाधारणसम्बन्धमात्रविवक्षायां रासभेऽपि घटादिदेशनियतत्वेनातिप्रसङ्गादिति । नैवम् । साक्षात्परंपरासाधारणैकजातीयसम्बन्धेन देशनियतत्वस्य विवक्षितत्वात् । रासभादावेकजातीयसम्बन्धेन घटादिदेशनियतत्वाभात् । घटादावेकजातीयसम्बन्धेनादृष्टादेर्नियतत्वादिति वदन्ति ।

*अत्रेदं चिन्त्यम्* । कियत्सु घटेषु रासभस्याप्येकजातीयतासम्बन्धेन देशनियतत्वादतिप्रसङ्गः । कार्यतावच्छेदकावच्छेदेनादृष्टस्याप्यतथात्वम् । द्रव्यगुणाद्यनेककार्ये एकजातीयतत्सम्बन्धाभावादिति । प्रक्षिप्तबीजसङ्ग्रहाय *जातीयेति* । जातिपदं च कार्यपूर्ववर्तितावच्छेदकधर्मपरम् । अतो नाकाशाद्येकवृत्तिकारणत्वेऽव्याप्तिः । पूर्ववृत्तित्वं च प्रागभावावच्छिन्नसमयवृत्तित्वम् । प्रागभावश्च न विशेषणं येन प्रागभावेऽव्याप्तिः । किन्तु तदुपलक्षितकालविशेषवृत्तित्वं तच्च तत्राप्यस्ति । कालस्य च स्थूलस्यैवाधिकरणतया हेतुत्वं-तस्य च पूर्वक्षणवृत्तित्वमस्त्येव । नत्वधिकरणतया हेतुत्वं तस्य च पूर्वक्षणवृत्तित्वमस्त्येव । नत्वधिकरणस्येति न तदव्याप्तिदोषः । प्रागभावत्वं च न प्रतियोगिजनकाभावत्वम् । अन्योन्याश्रयात् । नापि विनाश्यभावत्वं विनाशस्य प्रागभावगर्भतयान्योन्याश्रयात् । उत्पत्तिगर्भतया तन्निर्वचने चोत्पत्तेः स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयसम्बन्धरूपत्वेऽन्योन्याश्रयात् । किन्तु गन्धानाधारसमयानाधाराभावत्वम् ।

ननु ध्वंसप्रागभावानात्मनि घटादावव्याप्तिः। न चात्र तदलक्ष्यमेवेति वाच्यम्। न प्रागभावलक्षणमिह प्रकृतं किन्तु कारणत्वलक्षणम्। तच्च सामान्यत एव लक्ष्यं तथैवोपक्रमात्। तथा च ध्वंसप्रागभावस्यालक्ष्यत्वे ध्वंसकारणसाधारणं न तल्लक्षणमिति चेत्। न। अभावपदस्य, भावाभावसाधारणविरोधिपरत्वात्। यद्यप्येवं तद्व्येयर्थ्यम् व्यावर्त्याभावात्। तथापि तत्तत्प्रतियोगिकाभावलाभार्थमभावपदम्। न हि प्रागभावसामान्यगर्भं कारणत्वम्, किन्तु तत्तत्प्रतियोगिकप्रागभावावच्छिन्नसमयवृत्तित्व तत्कारणत्वम्। तथा च तादृशकालावृत्तित्वत्तदभावस्तत्प्रागभाव इति पर्यवस्यति। नच तादृशसमयाप्रसिद्धिः। गन्धत्वं स्वाधिकरणानाधिकरणसमयवृत्ति कादाचित्कमात्रवृत्तिजातित्वाच्छब्दत्ववदित्यनुमानात्तत्सिद्धेः। ननु सिद्ध्यतु गन्धानाधारसमयः, तथापि प्रागभावस्य कथं तदनधिकरणत्व ग्राह्यम् नहि तत्र प्रत्यक्षमागमो वा सम्भवति, अनुमानं तु सम्भवेत्तच्च प्रसिद्ध्युत्तरम्। तथा चानुमानप्रवृत्तौ प्रागभावत्वेन धीस्तस्यां चानुमानप्रवृत्तिरित्यन्योन्याश्रय इति चेन्न। तादृशनिर्णयवतोपि मीमांसकस्य भविष्यतीति बुद्धेर्नैककालातिरिक्तरूपेण प्रागभावस्यावश्यं तद्बुद्धिविषयत्वात्तेन रूपेण तद्बुद्धिविषयत्वेन चोपस्थितस्य प्रागभावस्य लिङ्गाभासादिनापि तादृशसमयानाधारत्वानुमितिसम्भवात्, गन्धस्यैव दृष्टान्तत्वाच्च। यद्वा कादाचित्काभावत्वेनैवोपस्थितस्य तस्य तदनुमानं ध्वंसांशे बाधादेवानुमानात्, तदनवतारे तदंशे भ्रमत्वेपि क्षत्यभावाच्च।

ननु गन्धानाधारसमयो नास्तीति निर्णयवतो मीमांसकस्येष्टसाधनतालिङ्गककार्यताज्ञानेन प्रवृत्तिदर्शनान्नैतत्प्रागभावत्वगर्भं कारणत्वम्, किञ्च कारणत्वबोधकशब्दादिरेवैव महाप्रलयकाले प्रमाणं स्यात्तस्य तद्धर्मत्वात्तथाच तदनभ्युपगमेपि तस्य व्याहन्येतेति चेन्न। गन्धानाधारत्वादिना भविष्यतीति प्रतीतिनिर्वाहप्रयोजकस्य प्रागभावत्वस्योपलक्षणत्वात् अत एव मीमांसकं प्रति जनकत्वघटितस्य लिङ्गस्य नैयायिकेनोक्तावपि नान्यतरासिद्ध्यादिदोष इति वदन्ति। तच्चिन्त्यम्। तस्यैवानुगतस्य निर्वक्तुमशक्यत्वात्। न चाखण्डमेव प्रागभावत्वं तेनोपलक्षितमिति वाच्यम्। उपाधेरखण्डत्वे जात्यपलापापत्तेः। जातेश्चाभावेऽनभ्युपगमात्।

वस्तुतस्तु नैवं कारणत्व प्रवृत्त्यनुकूलम्। तथा च स्वमते लक्ष्यतावच्छेदकतया कारणपदप्रवृत्तिनिमित्ततया वा निरुक्तं यस्मिन्सतीत्यादिना निरुक्तं क्षेमसाधारणतत्साध्यकत्वज्ञानमेव प्रवर्त्तकं। तदेव

विपर्ययः । अन्यथा प्रागभावस्य प्रागभावाभावे तत्पूर्ववर्त्तित्वाभावेन तद्घटितजनकत्वाभावाद् दुःखप्रागभावार्थितया प्रायश्चित्तादौ प्रवृत्त्यभावापत्तेरित्यादिविधौ वक्ष्यते । तथाच नोक्तदोषः । एतेन गन्धानाधारगर्भघटीलानाधारगर्भतयापि तन्निर्वचनात्तद्गर्भे कारणत्वमपि भिद्येत । तथाच विनिगमकाभावादुभयगर्भेष्टसाधनताज्ञानस्य प्रवर्त्तकतायां प्रवृत्त्यननुगम इत्यपास्तम् । निरुक्तस्य प्रवर्त्तकतानभ्युपगमात् । यत्त्वाकाशपदात्कदाचिच्छब्दाश्रयत्वेन कदाचिदष्टद्रव्यातिरिक्तद्रव्यत्वेनेतिवत्कदाचिद्घटीलाद्यनाधारत्वेनापि समयविशेषोपलक्षणान्न कापि क्षतिः । तत्समयविशेषावृत्त्यभावत्वावच्छिन्नसमयसत्त्वस्यैव हेतुतया च न प्रवृत्त्यननुगम इति निरुक्तमेव प्रवृत्त्यनुकूलमिति । तच्चिन्त्यम् । तत्समयानभ्युपगन्तुरेतज्ज्ञानं विनैवान्यज्ञानादेव प्रवृत्तिरित्यननुगमस्यैवमप्यपरिहार्यत्वात्, प्रायश्चित्तप्रवृत्त्यनुपपत्तेश्च । अत एव तत्समयाघटितस्यानुगतस्य प्रागभावत्वस्य निर्वक्तुं शक्यत्वेऽपि न प्रवृत्त्यनुकूलत्वमिति ध्येयम् । यत्तु गन्धानाधारसमयस्य महाप्रलयत्वे मानाभावः युगपन्नाशे मानाऽभावात् । तथा च यावद्द्रव्यनाशानन्तरमपि वस्त्वन्तरसत्त्वसम्भावनया तत्प्रागभावस्य गन्धानाधारसमयानाधारत्वसंशयेन तत्कारणं तद्गर्भकारणलक्षणाव्याप्तिसन्देहः, एवञ्च व्यर्थविशेषणतासन्देहात्तद्वारणाय विशेषणमप्यदेयमिति । तन्न । यावद्द्रव्यनाशोऽदृष्टाभावात्, अन्यथा संयोगविभागयोरन्योन्यनाश्यतयान्यतरावस्थितौ सर्वमुक्त्यनुपपत्तेः । तथा च सर्वादृष्टाभावात् कार्याभावो वाच्य इति युगपदेव सर्वनाश इत्याहुः । न चाकाशादेरवृत्तितया पूर्वकालवर्त्तित्वाभावादव्याप्तिरिति वाच्यम् । वर्त्तिपदेन समवधानवत्त्वस्योक्तत्वात् ।

वस्तुतः कालस्य जगदाधारतया तत्रापि तद्वृत्तिः । ननु द्रव्यत्वेन रूपेण दण्डरासभयोर्नियतपूर्ववर्त्तित्वसत्त्वात्कारणत्वं स्यादिति चेन्न । तेन रूपेण तस्यान्यथासिद्धेर्वाच्यत्वात् । सामग्री च न कारणं, क्षणविशेषत्वात् । कालोपाधेश्चाधिकरणत्वेनैव हेतुत्वात् । न च कारणमेलकरूपायां तस्यामतिप्रसङ्गः । दण्डादीनां कारणत्वस्येष्टत्वात् । मेलकस्यातिरिक्तस्यानभ्युपगमात् । अभ्युपगमे वा दण्डरूपवदन्यथासिद्धत्वात्, परस्परप्रत्यासत्तिरूपस्येष्टत्वात् ।

केचित्तु–स्वरूपसम्बन्धविशेषः कारणता प्रतियोगित्वादिवत् । तत्परिचायक एवायं धर्मविशेष उक्त–इत्याहुः ।

ननु कारणत्वादन्येन रूपेण सिद्ध्यभावोऽनन्यथासिद्धत्वमित्यन्योन्याश्रयः । सिद्धिपदस्य चोत्पत्तिपरत्वे नित्यमात्रेऽतिव्याप्तिः । प्रतिप·

रत्वेऽसम्भवः । हेतोरपि प्रमेयत्वादिना ज्ञप्तेरिति योगार्थमपहाय रूढ-मन्यथासिद्धिपदार्थमाह-*अन्यथेति* । यद्यपि कुसुमाञ्जलिप्रकाशे प-ञ्चधान्यथासिद्धिरुक्ता तथाप्यवच्छेदकजनकजनकयोरत्रैव प्रवेशान्न त-त्सङ्ग्रहाय प्रकारद्वयमुक्तम् । अत एव कुसुमाञ्जलिमकरन्देपि तथैव वि-भावितमस्माभिरिति । *येन सहैवेति* । तेन तदन्यथासिद्धमिति शे-षः । ननु शब्दादिना दण्डपूर्ववर्त्तित्वग्रहं विनापि तद्रूपपूर्ववर्त्तित्वग्रह-सम्भवान्नियमो सिद्धः । न च प्रत्यक्षेति विशेषणीयम्, अतीन्द्रियान्यथा-सिद्धेरव्याप्तेः । नियमाविवक्षायां दण्डरूपेणैव दण्डस्यान्यथासिद्ध्या-पत्तेरिति चेन्न । रूपत्वमात्रस्यातिप्रसक्ततया दण्डरूपत्वेनैव पूर्ववर्तित्व-ग्रहो वाच्यः । तत्र साहित्यनियमात् । न चैवं द्रव्यत्वादेरतिप्रसक्ततया दण्डत्वेनैव दण्डस्य पूर्ववर्त्तित्वग्रहाद्दण्डत्वेन दण्डस्यान्यथासिद्धिर-स्त्विति वाच्यम् । येन पृथगन्वयव्यतिरेकवता सहेत्यर्थात् । अत्रापृथग-न्वयादिमत इत्यपि यस्येति विशेषणं देयम्, तेन दण्डेन दण्डसंयोगस्य नान्यथासिद्धिः । एतद्विशेषणमहिम्नैव यत्रोभयोरुभयविशेषणावच्छेदेनै-वान्वयाद्यनुविधानं तत्रैकेनापरस्य नान्यथासिद्धिः । यथोद्भूतरूपतेज-सोरित्येके । यत्रोभयविशेषणावच्छेदेनैवान्वयाद्यनुविधानं तद्भिन्नत्वेन विशेषणान्न तादृशस्थलेतिऽप्रसङ्ग इत्यन्ये । कुम्भकारपितापत्येवान्त-र्भवति कुम्भकारत्वेन तदनन्यथासिद्धस्यैतत्वात्कुम्भकारपितृत्वेना-न्यथासिद्धत्वं वाच्यम् । तत्र तत्साहित्यनियमात् । नन्वेवमुद्भूतरूपते-जसोरिव दण्डत्वदण्डयोरपि नैकेनापरस्यान्यथासिद्धिः स्यात् । उभयो-रुभयविशेषणावच्छेदेनैवान्वयाद्यनुविधानात् । न च दण्डत्वस्य चक्रभ्र-मिजनकत्वस्यान्वयाद्यनुविधानमेव नेति वाच्यम् । तथासति दण्डत्वे-नैव हेतुतापत्तौ दण्डत्वस्यावच्छेदकतापि न स्यात । किञ्च दण्डत्वेन दंडस्य दण्डेन दण्डत्वस्यान्वयाद्यनुविधानमित्युभयोरुभयविशेषणावच्छेदेनैवानु-विधानमिति नैकेनापरस्यान्यथासिद्धिः स्यात् । अपि च कुम्भकारपितृ-त्वेनान्यथासिद्धस्यापि कुम्भकारत्वेनेव दण्डरूपत्वेनान्यथासिद्धस्यापि रूपत्वादिनाऽन्यथासिद्धिरस्तु न तु तदतिप्रसक्तमिति चेत् । तत्किमतिप्र-सक्तत्वमप्यपरान्यथासिद्धिः । तथा चानन्यथासिद्धत्वनियतपूर्ववर्त्ति-त्वयोरप्रतिक्षेपे किं तेन । किञ्च फलानुपहितवृत्तित्वस्यातिप्रसक्तत्वस्य दण्डत्वादिसाधारणत्वात्, अतादृशस्य चाभावात् । न च फलानुपहि-तनित्यवृत्तित्वेन तथात्वम्, रूपत्वेन नित्यरूपस्यापि घटजनकत्वाविरो-धात्, उक्तरूपयोरप्रतिक्षेपात् । जन्यरूपत्वेन वा हेतुत्वमस्तु । न च तेन रूपेणान्यत्र क्लृप्तेत्यत्रान्तर्भवतीति वाच्यम् । तर्हि दण्डरूपत्वेना-

पि तथास्तु किमुक्तान्यथासिद्धेति चिन्त्यम् । *अन्यं प्रतीति* । ननु शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितोऽष्टद्रव्यानाश्रितत्वे सति गुणत्वादित्यनेनाकाशसिद्धौ शब्दपूर्ववर्त्तितामज्ञात्वापि ज्ञानादिकं प्रति तस्य पूर्ववर्त्तित्वं ज्ञायत एवेति चेन्न । तेनापि विपक्षबाधकतया शब्दकारणतामुपजीव्यैवाकाशसिद्धेरित्याहुः । न चैवं संयोगादिकमपि प्रत्याकाशस्यान्यथासिद्धत्वप्रसङ्गः । आकाशत्वेनेष्टत्वात् । द्रव्यत्वेन शब्दपूर्ववर्त्तितामज्ञात्वापि पूर्ववर्त्तित्वग्रहात् । नन्वेवं यागादेरपूर्वेन्यथासिद्ध्यापत्तिः । स्वर्गं प्रति पूर्ववर्त्तित्वे ज्ञात एव तस्य तं प्रति तद्ग्रहादिति चेन्न । साक्षादिति पूर्ववर्त्तित्वे विशेषणादित्याहुः ।

तत्पूर्ववर्त्तित्वानुपपादकं यस्य पूर्ववर्त्तित्वं गृह्यत इत्यर्थादित्येके ।

न च परत्वादिपूर्ववर्त्तित्वग्रहानन्तरमन्यकार्ये दिक्कालयोस्तद्वदेवान्यथासिद्धिः । तद्ग्रहं विनाप्यधिकरणत्वेन कार्यमात्रपूर्ववर्त्तित्वग्रहात् कुम्भकारपितुरत्राप्यन्तर्भावः । ननु कुम्भकारपितृत्वेन तथात्वेपि चैत्रत्वादिना तस्यानन्यथासिद्धत्वमस्त्विति चेन्न । तेनापि रूपेण कुम्भकारजनकत्वं ज्ञात्वैव तस्य घटं प्रत्यन्वयादिग्रहात् । तदानीं तद्देशे तस्य सत्त्वानियमेन कुम्भकारद्वारैव घटनियतपूर्ववर्त्तित्वग्रहात् । नन्वन्यं प्रति पूर्ववर्त्तित्वे ज्ञात एवेत्यत्र येन केनचिद्रूपेण वा ? नाद्यः । दण्डादावतिप्रसङ्गात् । नान्त्यः । शब्दनित्यत्वानित्यत्वसन्देहेपि शब्दकारणतामनुपजीव्य शब्दाश्रयत्वेनाकाशसिद्धौ ज्ञानादिपूर्ववर्त्तिताग्रहसम्भवात् । निरुपाधित्वादेरपि विपक्षबाधकत्वसम्भवात् । वस्तुतः शब्दनित्यत्वनिर्णयवतो मीमांसकस्य तत्पूर्ववर्त्तित्वमज्ञात्वैव ज्ञानादिपूर्ववर्त्तित्वग्रह इति नियमासिद्धिः । किञ्च द्रव्यत्वेनैवाकाशस्य स्वसंयोग इव ज्ञानादौ हेतुत्वमस्तु । न च ग्राहकाभावेन तेन रूपेण नियतपूर्ववर्त्तित्वाग्रह इति वाच्यम् । ग्राह्यसत्त्वे ग्राहकाभावासम्भवात् । न च तेन रूपेणान्यत्रेत्यत्रान्तर्भवतीति वाच्यम् । तथा सत्याकाशत्वेनापि तथात्वापत्तेः । अपि च एवं शब्दसाक्षात्कारं प्रत्यपि तस्यान्यथासिद्ध्यापत्तिः । न च शब्दपूर्ववर्त्तितामज्ञात्वापीन्द्रियत्वेन तत्पूर्ववर्त्तिग्रह इति वाच्यम् । श्रोत्रत्वेन तथाप्यन्यथासिद्ध्यापत्तेः । तस्याकाशघटितत्वादाकाशस्य च शब्दपूर्ववर्त्तित्वग्रहं विना सिद्धेरनभ्युपगमादन्यथा ज्ञानेपि तस्यान्यथासिद्धत्वं न स्यात् । एवं च पाञ्चभौतिकशरीरं प्रत्यपि तदन्यथासिद्धं स्यात् । किञ्च ईश्वरज्ञानादेः क्षितिपूर्ववर्त्तित्वे ज्ञात एव घटपूर्ववर्त्तिताग्रहात्तत्राप्यन्यथासिद्ध्यापत्तिः । न च कार्यमात्रे कर्तृमात्रस्यैकदैव पौर्वापर्यग्रहात्सैव मिति वाच्यम् । प्रकृतेपि कार्यमात्रे विभुमात्रस्यैकदैव

पौर्वापर्यग्रहस्य शब्दादिना सम्भवादन्यथासिद्ध्यभावापत्तेः । शब्दस्यापि वर्णध्वनिभेदेन नानात्वादन्यतरपूर्ववर्त्तित्वग्रहेणापि सम्भवेन नियमाभावात् । तत्र शब्दत्ववदत्राप्यनुगतपक्षतावच्छेदकस्यान्यतमत्वादेर्वा विशेषणस्य सम्भवादिति चिन्त्यम् । *अन्यत्रेति* । एतच्च प्रायिकम् । अवश्यकल्प्यं यल्लघुनियतपूर्ववर्त्ति तत्समवधाननियतत्वं तत्त्वमित्यत्र तात्पर्यम् । तेन गुणेन दोषाभावस्य महत्त्वेनानेकद्रव्यत्वस्यान्येषां च गुरूणां पदार्थानामन्यथासिद्धिर्भवति । अतः पञ्चम्या हेतुत्वाभिधानादात्माश्रय इत्यपास्तम् । पूर्ववर्त्तिन इत्यत्रावधौ पञ्चमीत्यन्ये । अत एव च रासभादेरपि यथाश्रुतान्यथासिद्ध्यन्तर्भावेऽनन्यथासिद्धपदेनैव तद्वारणे नियतपदं व्यर्थमित्यपास्तम् । निरुक्तस्य रासभेऽसत्त्वात् । नन्वेवं दण्डरूपाकाशादेरप्यत्रैवान्तर्भावे तद्ग्राहकान्यथासिद्धेरानर्थक्यम् । किञ्च अवश्यकल्प्यत्वं नियतपूर्ववर्त्तित्वमात्रेण कारणतया वा ? नाद्यः । गन्धं प्रति रूपविशेषप्रागभावस्यापि तथात्वेन तेन गन्धप्रागभावस्यान्यथासिद्ध्यापत्तेः । नान्त्यः । आत्माश्रयात् । अपि च सहकारिणोः परस्परेणान्यथासिद्ध्यापत्तिः । द्वयोरप्यवश्यकल्प्यलघुनियतपूर्ववर्त्तित्वेन तत्समवधाननियतत्वात् । न च पृथगन्वयाद्यननुविधायित्वे सतीत्यपि विशेषणम्, तद्धि पृथगन्वयादिग्रहाविषयत्वं समनियतत्वं वा ? नाद्यः । रूपप्रागभावस्यापि शब्दादिना तादृशग्रहाविषयत्वेन तथात्वापत्तेः । नान्त्यः । आलोकरूपादेरीश्वरज्ञानादेश्चैवमपि परस्परमन्यथासिद्ध्यापत्तेः । एतेनावश्यकल्प्यपूर्ववर्त्तिन एव कार्यसम्भवे तन्नियतसहभूतत्वमित्यर्थः, पञ्चमी चावधित्वे न तु हेतुतायामित्यपास्तम् इति चिन्त्यम् । ननु येन सहैवेत्यन्यथासिद्धिर्यागेपीत्यत आह । *यागेति* । अपूर्वानुपस्थितावपि विधिना यागकारणत्वबोधनान्न तु तेन सहेत्यर्थः । तदेवाह *तत्पश्चान्मान इति* । नन्वेवमपूर्वेण यागवत्कुलालेन पितान्यथासिद्धो न स्यादित्यत आह—*यत्रेति* । कुलालं प्रति पूर्ववर्त्तित्वे ज्ञात एव घटं प्रति कुलालपितृत्वेन पूर्ववर्त्तित्वग्रहाचेन सोऽन्यथासिद्ध इत्यर्थः । नन्वेवं कुलालपितृवद्यागोपि अन्यथासिद्धः स्यादित्यत आह *यत्र चेति* । पूर्वोक्तरीत्या तत्रोक्तान्यथासिद्धेरभावादित्यर्थः । नन्वेवं चक्रभ्रमणेन दण्डसंयोगस्यापि कुलालपितृवदन्यथासिद्धिः स्यादत आह *दण्डेति* । तत्र द्वयोरपि समवधानसम्भवेन स्वातन्त्र्येणापि नियतपूर्ववर्त्तिताग्रहसम्भवेन अन्यं प्रति पूर्ववर्त्तित्वे ज्ञात एवेत्यवधारणासम्भवादिति भावः । *इत्स्वेति* । इदं कारणत्वेनाभिमतं दण्डादि तदनन्तरोत्पत्तिकं तत्संयोगादि तदितरसकलसमवधाने सतीत्यर्थः ।

पि तथास्तु किमुक्तान्यथासिद्ध्येति चिन्त्यम्। *अन्यं प्रतीति*। ननु शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितोऽष्टद्रव्यानाश्रितत्वे सति गुणत्वादित्यनेनाकाशसिद्धौ शब्दपूर्ववर्त्तितामज्ञात्वापि ज्ञानादिकं प्रति तस्य पूर्ववर्त्तित्वं ज्ञायत एवेति चेन्न। तेनापि विपक्षबाधकतया शब्दकारणतामुपजीव्यैवाकाशसिद्धेरित्याहुः। न चैवं संयोगादिकमपि प्रत्याकाशस्यान्यथासिद्धत्वप्रसङ्गः। आकाशत्वेनेष्टत्वात्। द्रव्यत्वेन शब्दपूर्ववर्त्तितामज्ञात्वापि पूर्ववर्त्तित्वग्रहात्। नन्वेवं यागादेरपूर्वेऽन्यथासिद्ध्यापत्तिः। स्वर्गं प्रति पूर्ववर्त्तित्वे ज्ञात एव तस्य तं प्रति तद्ग्रहादिति चेन्न। साक्षादिति पूर्ववर्त्तित्वे विशेषणादित्याहुः।

तत्पूर्ववर्त्तित्वानुपपादकं यस्य पूर्ववर्त्तित्वं गृह्यत इत्यर्थादित्येके।

न च परत्वादिपूर्ववर्त्तित्वग्रहानन्तरमन्यकार्ये दिक्कालयोस्तद्ग्रह इत्यन्यथासिद्धिः। तद्ग्रहं विनाप्यधिकरणत्वेन कार्यमात्रपूर्ववर्त्तित्वग्रहात् कुम्भकारपितुरत्राप्यन्तर्भावः। ननु कुम्भकारपितृत्वेन तथात्वेऽपि चैत्रत्वादिना तस्यानन्यथासिद्धत्वमस्त्विति चेन्न। तेनापि रूपेण कुम्भकारजनकत्वं ज्ञात्वैव तस्य घटं प्रत्यन्वयादिग्रहात्। तदानीं तद्देशे तस्य सत्त्वानियमेन कुम्भकारद्वारैव घटनियतपूर्ववर्त्तित्वग्रहात्। नन्वन्यं प्रति पूर्ववर्त्तित्वे ज्ञात एवेत्यत्र येन केनचित्सम्बन्धेन वा? नाद्यः। दण्डादावतिप्रसङ्गात्। नान्त्यः। शब्दनित्यत्वानित्यत्वसन्देहेऽपि शब्दकारणतामनुपजीव्य शब्दाश्रयत्वेनाकाशसिद्धौ ज्ञानादिपूर्ववर्त्तिताग्रहसम्भवात्। निरुपाधित्वादेरपि विपक्षबाधकत्वसम्भवात्। वस्तुतः शब्दनित्यत्वनिर्णयवतो मीमांसकस्य तत्पूर्ववर्त्तित्वमज्ञात्वैव ज्ञानादिपूर्ववर्त्तित्वग्रह इति नियमासिद्धिः। किञ्च द्रव्यत्वेनैवाकाशस्य स्वसंयोग इव ज्ञानादौ हेतुत्वमस्तु। न च ग्राहकाभावेन तेन रूपेण नियतपूर्ववर्त्तित्वाग्रह इति वाच्यम्। ग्राह्यसत्त्वे ग्राहकाभावासम्भवात्। न च तेन रूपेणान्यत्रैवान्तर्भवतीति वाच्यम्। तथा सत्याकाशत्वेनापि तथात्वापत्तेः। अपि च एवं शब्दसाक्षात्कारं प्रत्यपि तस्यान्यथासिद्ध्यापत्तिः। न च शब्दपूर्ववर्त्तितामज्ञात्वापीन्द्रियत्वेन तत्पूर्ववर्त्तिग्रह इति वाच्यम्। श्रोत्रत्वेन तथाप्यन्यथासिद्ध्यापत्तेः। तस्याकाशघटितत्वादाकाशस्य च शब्दपूर्ववर्त्तित्वग्रहं विना सिद्धेरनभ्युपगमादन्यथा ज्ञानेऽपि तस्यान्यथासिद्धत्वं न स्यात्। एवं च पाञ्चभौतिकशरीरं प्रत्यपि तदन्यथासिद्धं स्यात्। किञ्च ईश्वरज्ञानादेः क्षितिपूर्ववर्त्तित्वे ज्ञात एव घटपूर्ववर्त्तिताग्रहात्तत्राप्यन्यथासिद्ध्यापत्तिः। न च कार्यमात्रे कर्तृमात्रस्यैकत्वेन पौर्वापर्यग्रहादेवमिति वाच्यम्। प्रकृतेऽपि कार्यमात्रे विभुमात्रस्यैकत्वेन

पौर्वापर्यग्रहस्य शब्दादिना सम्भवादन्यथासिद्ध्यभावापत्तेः । शब्दस्यापि वर्णध्वनिभेदेन नानात्वादन्यतरपूर्ववर्त्तित्वग्रहेणापि सम्भवेन नियमाभावात् । तत्र शब्दत्ववदत्राप्यनुगतपक्षतावच्छेदकस्यान्यतमत्वादेर्वा विशेषणस्य सम्भवादिति चिन्त्यम् । *अन्यत्रेति* । एतच्च प्रायिकम् । अवश्यकल्प्यं यल्लघुनियतपूर्ववर्त्ति तत्समवधाननियतत्वं तत्त्वमित्यत्र तात्पर्यम् । तेन गुणेन दोषाभावस्य महत्त्वेनानेकद्रव्यत्वस्यान्येषां च गुरूणां पदार्थानामन्यथासिद्धिर्भवति । अतः पञ्चम्या हेतुत्वाभिधानात्मात्माश्रय इत्यपास्तम् । पूर्ववर्त्तिन इत्यत्रावधौ पञ्चमीत्यन्ये । अत एव च रासभादेरपि यथाश्रुतान्यथासिद्ध्यन्तर्भावेऽनन्यथासिद्धपदेनैव तद्वारणे नियतपदं व्यर्थमित्यपास्तम् । निरुक्तस्य रासभेऽसत्त्वात् । नन्वेवं दण्डरूपाकाशादेरप्यत्रैवान्तर्भावे तद्ग्राहकान्यथासिद्धेरानर्थक्यम् । किञ्च अवश्यकल्प्यत्वं नियतपूर्ववर्त्तित्वमात्रेण कारणतया वा ? नाद्यः । गन्धं प्रति रूपविशेषप्रागभावस्यापि तथात्वेन तेन गन्धप्रागभावस्यान्यथासिद्ध्यापत्तेः । नान्त्यः । आत्माश्रयात् । अपि च सहकारिणोः परस्परेणान्यथासिद्ध्यापत्तिः । द्वयोरप्यवश्यकल्प्यलघुनियतपूर्ववर्त्तित्वेन तत्समवधाननियतत्वात् । न च पृथगन्वयाद्यननुविधायित्वे सतीत्यपि विशेषणम्, तद्धि पृथगन्वयादिग्रहाविषयत्वं समनियतत्वं वा ? नाद्यः । रूपप्रागभावस्यापि शब्दादिना तादृशग्रहाविषयत्वेन तथात्वापत्तेः । नान्त्यः । आलोकरूपादेरीश्वरज्ञानादेश्चैवमपि परस्परमन्यथासिद्ध्यापत्तेः । एतेनावश्यकल्प्यपूर्ववर्त्तिन एव कार्यसम्भवे तन्नियतसहभूतत्वमित्यर्थः, पञ्चमी चावधित्वे न तु हेतुतायामित्यपास्तम् इति चिन्त्यम् । ननु येन सहैवेत्यन्यथासिद्धिर्यागेपीत्यत आह । *यागेति* । अपूर्वानुपस्थितावपि विधिना यागकारणत्वबोधनान्न तु तेन सहेत्यर्थः । तदेवाह *तत्त्वगम्यमान इति* । नन्वेवमपूर्वेण यागवत्कुलालेन पितान्यथासिद्धो न स्यादित्यत आह—*यत्रेति* । कुलालं प्रति पूर्ववर्त्तित्वे ज्ञात एव घटं प्रति कुलालपितृत्वेन पूर्ववर्त्तित्वग्रहात्तेन सोऽन्यथासिद्ध इत्यर्थः । नन्वेवं कुलालपितृवद्यागोपि अन्यथासिद्धः स्यादित्यत आह *यत्र चेति* । पूर्वोक्तरीत्या तत्रोक्तान्यथासिद्धेरभावादित्यर्थः । नन्वेवं चक्रभ्रमणेन दण्डसंयोगस्यापि कुलालपितृवदन्यथासिद्धिः स्यादत आह *दण्डेति* । तत्र द्वयोरपि समवधानसम्भवेन स्वातन्त्र्येणापि नियतपूर्ववर्त्तिताग्रहसम्भवेन अन्यं प्रति पूर्ववर्त्तित्वे ज्ञात एवेत्यवधारणासम्भवादिति भावः । *इदस्त्वेति* । इद कारणत्वेनाभिमतं दण्डादि तदनन्तरोत्पत्तिक तत्संयोगादि तदितरसकलसमवधाने सतीत्यर्थः ।

क्वचित्स्वस्यानन्तरोत्पत्तिकसकलसमवधाने सतीति पाठः । तत्र स्वप-दमनन्यपरम् ॥

(चि०) अनन्यथासिद्धनियतपूर्ववर्त्तित्वं कारणत्व-मित्यन्ये । तन्न । ईश्वरतद्बुद्ध्यादीनामसङ्ग्रहात् । तद्व्यतिरे-कस्य तत्समवधानव्यतिरेकस्य वाऽभावात् । कार्यस्या-न्यथानुपपद्यमानताऽवस्थाप्यत्वं वाऽनन्यथासिद्ध-त्वम् । नन्वेवमतिरिक्तशक्तौ साधकबाधकप्रमाणाभावा-न्नित्यं संशयः । न च साधकाभावस्य बाधकत्वम्, बाधका-भावस्य साधकत्वादिति चेन्न । साधकाभावेन वह्नावन्यत्र सिद्धातीन्द्रियधर्माभावसाधने लाघवं बाधकाभावेनाती-न्द्रियधर्मसाधने च गौरवमिति साधकाभावात्तदभाव एव सिद्ध्यतीति ॥

इति शक्तिवादः ।

---

(प्रका०) *ईश्वरेति* । एतद्वोपलक्षणम् । यस्याभावादिति पञ्चम्या हेतुत्वार्थकत्वादात्माश्रयः । यदभावनियतः कार्याभाव इति विवक्षायां स्वसत्त्वे स्वानन्तरोत्पत्तिव्यतिरेकेण यत्र कार्याभावस्तत्र व्यभि-चारः । द्वितीयपाठे दण्डानन्तरोत्पत्तिकचरमकारणसमवधाने चक्रा-द्यभावात्कार्याभावाप्रसिद्धेस्तत्राव्याप्तिः । उक्तानन्यथासिद्धत्वस्यैव कारणतारूपत्वसम्भवे शेषवैयर्थ्यमुभयत्रेत्यपि द्रष्टव्यम् । *साधकाभावे-नेति* । यद्यप्येकत्र गुरुलघुविषयतासम्भवे लाघवं सहकारि, अन्यथा मानान्तरेण लाघवावतारसम्भवे गुरुमात्रस्यासिद्धिप्रसङ्गात् । तथापि यत्रैवैकसिद्धिरपरसिद्धिविरोधिनी तत्रैव लाघवावतारस्य गुरुसिद्धिप्र-तिबन्धकत्वमित्याहुः ॥

इति शक्तिवादः ॥

---

# अथ गङ्गेशोपाध्यायकृतपरिशिष्टचिन्तामणौ

# मुक्तिवादः ।

(चि०) परमप्रयोजनन्त्वनुमानस्यापवर्गः, "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( साक्षात् कर्त्तव्यः )" इति श्रुतेः । स च समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसः ।

(प्रका०) ननु निःश्रेयसानुकूलतया प्रमाणतत्त्वविवेचनमत्र प्रतिज्ञातं, न चानुमानस्य तद्धेतुत्वे मानमित्यत आह *परमेति* । बह्वर्थिप्रवृत्त्यादिकमपि तत्प्रयोजनमतः परमेत्युक्तम् । यद्यपि श्रुतिर्न साक्षादपवर्गहेतुतामाह, तथापि "दुःखेनात्यन्तं विमुक्तश्चरती"त्यर्थवादसमभिव्याहृता तथात्वेन बोध्या । यद्यपि मन्तव्य इत्येव प्रकृतोपयोगि तथापि पक्षज्ञानाभावे मननासम्भव इति श्रोतव्य इत्युक्तम् । तस्याशुविनाशिनो द्वारापेक्षायां निदिध्यासितव्य इत्युक्तम् । यद्यपि 'द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्येवमाकारा श्रुतिस्तथापि 'अग्निहोत्रं जुहोति यवागूं पचतीति' वद्दृष्टद्वारकत्वाकल्पनाच्छाब्दक्रमलङ्घनेनार्थक्रमोपादाने पर्यवसितार्थपरतया साक्षात्कर्त्तव्य इति व्यत्ययेन व्युत्क्रमेण च निर्दिष्टमिति ध्येयम् । ननु 'दुःखेनात्यन्तं विमुक्तश्चरती'त्यादिना दुःखात्यन्ताभावोऽपवर्गत्वेन श्रूयते तस्यासाध्यत्वान्नानुमानप्रयोजनत्वमित्यत आह *स चेति* । तथा च तदसहवृत्तित्वमेव श्रुतावात्यन्तिकत्वम्, इदानीन्तनदुःखध्वंसातिव्याप्तिवारणाय दुःखप्रागभावासहवृत्तित्वे सतीति ध्वंसविशेषणं दुःखप्रागभावासमानकालीनेत्यर्थः । संसारिदुःखप्रागभावसमानकालीनतया शुकादिमुक्तावव्याप्तेराह—समानाधिकरणेति प्रागभावविशेषणं स्वसमानाधिकरणेत्यर्थः । संयोगादिप्रागभावसमानकालतया दोषतादवस्थ्यादाह—आद्यं दुःखपदम् एकविंशतिप्रभेददुःखपरम् अतश्चरमभोगरूपदुःखप्रागभावसमानदेशकालतयोपान्त्यदुःखध्वंसे नातिव्याप्तिः । अत एव प्रागभावपदमप्यर्थवत् । चरमदुःखध्वंसस्तु यत्समानोऽप्यचिरमनुभूयत इति सिद्धान्तेन भोगरूपदुःखसमानदेशकालतयाऽसम्भववारकत्वात् । केचित्तु दुःखप्रागभावासमानदेशत्वं दुःखविशेषण·

मतो नोपान्त्यदुःखध्वंसेऽतिव्याप्तिरित्याहुः । रूपध्वंसादावतिव्याप्तेराह चरमदुःखपदं सुखदुःखपरम् । न च तत्र समानाधिकरणदुःखप्रागभावाप्रसिद्धेर्न प्रसङ्गः विषयत्वेन रूपादेरपि दुःखत्वात् । ननु सुखान्तमुक्तावव्याप्तिः 'ते नराः सुखमृत्यव' इति श्रुतेर्मरणस्य दुःखाव्याप्तत्वसम्भवात् । न च तत्सुखपूर्वकालीनदुःखध्वंस एव मुक्तिः । तत्राप्युक्तलक्षणाव्याप्तेः । तत्सुखज्ञानस्यापि दुःखतया तत्प्रागभावसमानकालत्वात् । मुक्तस्य सुखोत्पत्त्यसम्भवादिति चेन्न । 'ते नरा' इत्यादिश्रुतेरन्यापेक्षया मरणे दुःखाभाव इत्यत्र तात्पर्यात् । नचानुपपत्तिं विना न मुख्यार्थत्याग इति वाच्यम् । दुःखविशेषहेतुरोगादिसत्त्वे दुःखोत्पादस्यावश्यकत्वात् । ननु मरणे दुःखं मे माभूदिति कामनया प्रयागस्नातो यत्र मृतस्तत्र का गतिरिति चेन्न । तत्र हि कामनैव बाधिता, अन्यथा यत्र मुक्तौ सुखं मम भवत्विति कामनया स्नातस्तत्र का गतिः । यदि च तत्र कारणबाधात्सुखं बाधितमिति कामनाबाधस्तदा दुःखसामग्रीसत्त्वे तदभावोऽपि बाधित इति चिन्त्यम् । न च भोजकादृष्टं विना कथं दुःखोत्पत्तिरिति वाच्यम् । अदृष्टान्तरस्य भोगेन क्षीणत्वेऽप्यवश्योत्पत्स्यमानमरणदुःखभोजकादृष्टस्य सत्त्वात् । न चैवमीश्वरस्यापि शरीरत्यागकाले दुःखोत्पत्तिरिति वाच्यम् । अदृष्टादिकारणबाधेन बाधादिति संक्षेपः ॥

(चि०) ननु नासौ पुरुषार्थः, अतीतदुःखध्वंसस्य सिद्धत्वात् अनागतदुःखस्य ध्वंसयितुमशक्यत्वात् वर्तमानस्य पुरुषप्रयत्नं विनैव विरोधिगुणनाश्यत्वात्, अतीतदुःखवत् हेतूच्छेदे पुरुषव्यापारः प्रायश्चित्तवदिति चेत् । न । तत्र किं हेतूच्छेदस्य सुखदुःखाभावेतरत्वेन स्वतोऽपुरुषार्थत्वात् अनागतानुत्पादमुद्दिश्य क्रियमाणत्वाच्च यथा तत्र दुःखानुत्पादः पुरुषार्थस्तथेहापीति विवक्षितम्, अथानुत्पादस्य प्रागभावत्वेनासाध्यत्वात् फलान्तरस्याभावाच्चानन्यगतिकतया कण्टकनाशवद्दुःखसाधननाश एव स्वतः पुरुषार्थस्तथेहापीति वा, उभयथापि दुःखध्वंसस्यापुरुषार्थत्वमेव, न च तयोरपि पुरुषार्थत्वमिति वक्ष्यते ।

मैवम् । दुःखान्तरध्वंसस्याऽयत्नसाध्यत्वेऽपि तादृशदुःखध्वंसस्य मिथ्याज्ञानोच्छेदद्वारा पुरुषप्रयत्नाधीनतत्त्वज्ञानसाध्यत्वात्, तथाहि तत्त्वज्ञानात् सवासनमिथ्याज्ञानाभावे दोषानुत्पत्तौ प्रवृत्त्यभावेऽदृष्टानुत्पत्तौ जन्माभावे तादृशदुःखध्वंसो भवति । अथ चरमदुःख उत्पन्ने तद्ध्वंसस्तज्ज्ञानादेव भविष्यति तदनुत्पादे तत्त्वज्ञानादपि न स्यादिति चेन्न। प्रतियोगिवत्तत्त्वज्ञानस्यापि तद्धेतुत्वात्तुल्यवदुभयोरपि कारणत्वात्,तेन विना तदनुत्पत्तेः । अत एव शुकस्य तत्त्वज्ञानमुत्पन्नमिति तस्य तद्ध्वंस उत्पन्नो नास्मदादीनाम् । तत्र दुःखं नोत्पन्नमस्ति तेन स ध्वंसो नास्मदादीनामिति चेत् , अनादौ संसारे तत् कुतो नोत्पन्नम् ? स्वकारणाभावादिति चेन्न। अन्वयव्यतिरेकानुविधायितत्त्वज्ञानादन्यस्यान्विष्यमाणस्याभावात् । मुक्तौ स ध्वंसोऽस्त्येव तस्मिन् सति मुक्तिरस्त्येवेति स मुक्त्युपपादकोत्पाद्य इति सर्वथानुपगतम् । मुक्तिः सा अन्या वा ? ननु ध्वंसार्थं दुःखमुपादेयं तदनुत्पादध्वंसानुत्पादादिति चेत्, सत्यम्, पुरुषार्थहेतुत्वेन लोके दुःखतत्साधनयोरप्युपादानदर्शनात् अनागतकुम्भनाशार्थं मुद्गरादौ प्रवृत्तिदर्शनादनागतदुःखध्वंसार्थमपि प्रवृत्तिः । चरमदुःखध्वंसो न दुःखध्वंसत्वेनोद्देश्यः अयत्नसिद्धदुःखान्तरध्वंसवदपुरुषार्थत्वादिति चेन्न। समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसत्वेन तस्योद्देश्यत्वात् दुःखासंभिन्नसुखवत् , तस्य च पुरुषप्रयत्नसाध्यत्वमेवेत्युक्तम् । एतेन दुःखध्वंसस्यैव मोक्षत्वम्, तत्तदात्मयावद्दुःखध्वंससमुन्मूलनदशायान्तु तथा व्यपदेशः प्रतिपुरुषं दुःखध्वंसस्तोमस्य व्यक्तिस्थानीयत्वात् तेजोऽभावे संघलितेऽन्धतमसपदप्रयोगवत्, यथा मेलित एव ग्रा-

विति बुद्धिव्यपदेशौ प्रवृत्तिरपि संवलनार्थमित्यपास्तम् । मिलितानामसाध्यत्वात् मेलकस्यानतिरिक्तत्वेऽतिप्रसङ्गात्, अतिरिक्तत्वे जन्यस्य ध्वंसावृत्तेः अजन्यस्य पुरुषार्थत्वाभावात् साध्यतया संवलने भोगावश्यम्भावात् । अन्धतमसादौ तथा संवलन एव प्रयोगात् अत एव संस्काराजनकभोगाविषयदुःखध्वंसः संस्काराजनकानुभवध्वंसो वा मुक्तिः । न चातिव्याप्तिः, जनकत्वस्याजनयत्यपि भावादिति निरस्तम् । अपुरुषार्थत्वात् ।

(प्रका०) असौ दुःखध्वंसः नतु प्रकृतः तस्यातीतादावभावेन विकल्पासम्भवादिति ध्येयम् । हेतावप्यतीतादिविकल्पदोषे सत्येवाह *तदिति* । मिथ्याज्ञानेऽप्यतीतादिविकल्पसम्भवादाह *सुवासनेति* । तथा चानागतस्याभावे वर्त्तमानस्यायत्ननिवर्त्यत्वेऽपि तद्वासनैव निवर्त्येत इति भावः । ननु वासनापि मिथ्याज्ञानमुत्पाद्य प्रवृत्तिद्वारा मुक्तिविरोधिनी न स्वतः, तथा च मिथ्याज्ञानप्रागभावाभावे तदसम्भवात्तत्सत्त्वेऽपि न क्षतिरिति तन्निवृत्त्यर्थं किं तत्त्वज्ञानेन । न च तत्सत्त्वे अशेषविशेषगुणोच्छेदलक्षणो न मोक्ष इति वाच्यम् । चरमसंस्कारवत्तस्यापि कालाद्विनाशसम्भवादिति चेत् । न । अन्वयव्यतिरेकाभ्यां चरमदुःखं तद्ध्वंसं च प्रति तत्त्वज्ञानस्य हेतुत्वमित्यग्रे स्फुटत्वात् तत्त्वज्ञानं विना कायव्यूहाभावेऽनन्तकर्मक्षयानुपपत्तेश्च तदावश्यकत्वे विरोधितया तेनैव तद्वासना निवर्त्तत इत्याशयात् । तादृशदुःखध्वंसस्तत्त्वज्ञानोत्पाद्य इति सर्वसंमतमित्याह *मुक्ताविति* । *दुःखध्वंस एवेति* । लाघवादित्यभिमानः । *मिलितानामिति* एकदा तावद्दुःखानुत्पादेन तद्ध्वंसस्य तत्त्वज्ञानासाध्यत्वादित्यर्थः । ननु तन्मेलकमेव साध्यं स्यादित्यत आह *मेलकस्येति* । तस्य मेलकदुःखध्वंसानतिरिक्तत्वे तावतामुक्तरीत्याऽसाध्यत्वे यत्किञ्चिद्दुःखध्वंसो मुक्तिरित्यस्मदादिरपि मुक्तः स्यादित्यर्थः । चरमध्वंसघटितस्तोमस्य मुक्तित्वे लाघवात्स एव मुक्तिरित्यपि बोध्यम् । *संवलन एवेति* । तत्र मिलितानामसाध्यत्वेऽपि तत्पदवाच्यत्वे दोषाभावादिति भावः । जनकत्वस्य स्वरूपयोग्यत्वस्य । *अपुरुषार्थत्वादिति* । यद्यपि प्रथमपक्षे नायं दोषस्तथापि तस्य संस्कारात्कालाद्वा विनाश इति वार्त्तिकदर्शनादसम्भवः स्वरूपयोग्यताविवक्षायां तु सुतरामिति दूषणे तात्पर्यम् ।

(चि०) अन्ये तु दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसो मुक्तिः। लोकेऽहिकण्टकादिनाशस्य वैदिके प्रायश्चित्तादौ पापनाशस्यानन्यगतिकतया दुःखसाधनध्वंसत्वेन पुरुषार्थत्वात्। अथाऽहिकण्टकादिपापं वा नाश्यतां तेन तज्जन्यं दुःखं न भवतीति दुःखानुत्पादमुद्दिश्य प्रवृत्तेर्दुःखानुत्पाद एव प्रयोजनं न तु दुःखसाधनाभावः सुखदुःखाभावेतरत्वादिति चेन्न। दुःखानुत्पादस्य प्रागभावत्वेनानादितयाऽसाध्यत्वात्। न च तत्पालनं साध्यम्। पालनं हि न तत्स्वरूपम्, तस्यासाध्यत्वात्। नोत्तरसमयसम्बन्धः अभावे सम्बन्धिद्वयातिरिक्तस्य तस्याप्रामाणिकत्वादनभ्युपगमाच्च। नापि सम्बन्धिद्वयस्वरूपं साध्यम्, प्रागभावस्याप्यसाध्यत्वात् समयतदुपाध्योश्च प्रयत्नं विनैव सिद्धेः। अथ दुःखे द्वेषाद्यथा तदभावे इच्छा तथा दुःखसाधने द्वेषात्तदभावेऽपीच्छा तथा तत्साधने प्रवृत्तिरिति चेन्न। यदिच्छया यत्साधने यस्य प्रवृत्तिस्तस्यैव तत्प्रयोजनत्वमिति दुःखसाधनाभावस्यैव प्रयोजनत्वात्। अथ चिकीर्षायोनिप्रयत्ने प्रयोजनज्ञानापेक्षा तेन विनोपाये चिकीर्षाविरहात्, न तु द्वेषयोनिप्रयत्ने, अनिष्टसाधनताज्ञानादहिकण्टकादौ द्वेषो द्वेषाच्च तत्त्यागानुकूलो यत्न उत्पद्यते, अयमेव हि द्वेषस्वभावो यत् प्रतिबन्धकं विना स्वविनाश्यविषयनाशानुकूलं यत्नमुत्पादयति अन्यथा प्रयत्नवैविध्यानुपपत्तेः। अत एव फलं विनैवोत्कटक्रोधान्धानामात्मघाते प्रवृत्तिरिति चेन्न। प्रयोजनमनुद्दिश्य द्वेषमात्राद्दुःखैकफलके प्रेक्षावतां प्रयत्नानुत्पादात् क्रोधान्धानामपि तात्कालिकफलाभिमानोऽस्त्येव उत्कटरागान्धा-

नामिव परदारादावपि प्रवृत्तेरिति। तन्न। दुःखं मे मा भूदित्युद्दिश्य प्रायश्चित्तादौ प्रवृत्तेः दुखानुत्पादस्यैव प्रयोजनत्वात्। न च प्रागभावस्यासाध्यत्वम्, दुःखकारणविघटनद्वारा तस्यापि कृतिसाध्यत्वात्। दुःखकारणसमवधानदशायां कृतौ सत्यां दुःखसाधननाशे सत्यग्रिमसमये प्रागभावस्वरूपमस्ति तेन विना नास्तीन्वयव्यतिरेकयोस्तत्र सत्त्वात्। घटेऽपि कृतौ सत्यामग्रिमक्षणे तत्सत्त्वं तया विना नेत्येव कृतिसाध्यत्वम्, न तु प्रागसतोऽग्रिमक्षणे सत्त्वमुत्पत्तिः गौरवात् कृतिं विना न यत् स्वरूपं तत्कृतिसाध्य तत् प्रागभावस्वरूपन्तु न तथेति चेन्न। कृतिध्वंसेऽपि घटसत्त्वेनाग्रिमक्षणे इत्यावश्यकत्वात्। अत एव योगवत् क्षेमस्याप्यनागतानिष्टानुत्पादजनकस्य परीक्षकप्रवृत्तिविषयत्वमिति वक्ष्यते निषेधापूर्वप्रस्तावे।

ननु प्रायश्चित्तनाश्यपापजन्यदुःखस्य प्रागभावो यद्यस्ति तदा दुःखमावश्यकं तस्य प्रतियोगिजनकत्वनियमात्, नास्ति चेत्तर्हि तदभावादेव दुःखानुत्पाद इत्युभयथापि प्रायश्चित्तमफलम्, तस्माद्दुःखसाधनध्वंसमुखेन प्रागभावस्यापि साध्यतेति तत्रैव कृतिसाध्यतापर्यवसानात् दुःखसाधनध्वंस एव पुरुषार्थो न तु दुःखानुत्पादार्थितयेति नत्र प्रागभावसत्त्वविचारो वायसदशनविचारवत्। अथ तदापि प्रागभावस्यासत्त्वे तदभावात् पापं न दुःखसाधनमिति न तन्नाशार्थं प्रवर्त्तते, तस्य सत्त्वे च पापमादावेव तस्य दुःखोत्पादकत्वनियमात् प्रायश्चित्ते सत्यपि गलेपादिकया पापावस्थानमिति न ततः पापनाश इति चेन्न। प्रागभावस्यासत्त्वेऽपि दुःखसा-

धनजातीयनाशस्य पुरुषार्थत्वात् सत्त्वेऽपि पापान्तरमादायापि तस्य दुःखजनकत्वसंभवात्, प्रायश्चित्तात् पापनाशः स्यादेवेति प्रागभावसत्त्वासत्त्वसन्देहेऽपि प्रायश्चित्तादौ प्रवृत्तिरप्रत्यूहैवेति ।

(प्रका०) *प्रयोजनत्वादिति* । मुख्यप्रयोजनत्वादित्यर्थः । तथाच दुःखसाधनध्वंसस्य स्वतः पुरुषार्थत्वाभावान्न मोक्षत्वमिति भावः । *कृतौ सत्यामिति* । एतच्च प्रपञ्चितं प्रत्यक्षप्रकाशे । *अग्निभक्षण इति* । तच्च प्रागभावेऽपीति भावः ।

*नाशेति* । तथाच तस्य स्वतः पुरुषार्थत्वकल्पनात्स एव मोक्ष इति भावः । फलोपहितसाधननाशः पुरुषार्थत्वेनोक्त इति मन्वानो वेशयति *अथेति* । तथाच तत्सत्त्वासत्त्वविचारो युक्त एवेति भावः ।

(चि०) उच्यते । तत्र दुःखप्रागभावोऽस्त्येव तस्यैव दुःखानुत्पादरूपत्वेन पुरुषार्थत्वात् । स च पापनाशद्वारा प्रायश्चित्तसाध्य इति प्रागभावसत्त्वेऽपि न निष्फलं प्रायश्चित्तम् । तेन प्रागभावेन दुःखमवश्यं जननीयमिति चेत् । सत्यम्, किन्तु पापान्तरमासाद्य । न चैवं प्रायश्चित्तमफलं, दुःखानुत्पादेन तस्य सफलत्वात् । न च दुःखानुत्पादस्याऽपि दुःखानुत्पादान्तरमेव फलं तच्च तत्र नास्तीत्यफलत्वम्, स्वरूपसत एव तस्य पुरुषार्थत्वात् अनवस्थानाच्च । अतोऽनेन पापेन दुःखं मे मा भूदिति विद्यमानपापनाशार्थं प्रायश्चित्ते प्रवृत्तिः । एतेन चीर्णप्रायश्चित्ते दुःखप्रागभावो नास्त्येव, अन्यथा तस्य प्रतियोगिनाश्यत्वेनानिर्मोक्षप्रसङ्गात् । न च प्रायश्चित्तवैफल्यं, न वा भगवतो दुःखमयकर्मोपदेशकत्वेनानाप्तत्वम् । तस्य पापध्वंसेनैव सफलत्वात्, प्रागभावानिश्चयेऽपि नरकसाधनपापनिश्चयात्तन्नाशार्थं प्रवृत्तिरित्यपास्तम् । दुःखसाधननाशस्य स्वतोऽपुरुषार्थत्वात् । पापान्तरेण तत्प्रतियोगिजनने तन्नाशात्, तस्मात् दुःखं मे मा भूदित्युद्दिश्य तत्साधनध्वंसार्थं प्र-

प्रवृत्तिरिति दुःखानुत्पाद एव पुरुषार्थो न तु दुःखसाधनध्वंस इति स्थितम् । अपि च न तावत् दुःखमयसंसारबीजमिथ्याज्ञानस्य ध्वंसो मुक्तिः, तत्त्वज्ञानात्तन्नाशेऽपि शरीरधर्मादिसत्त्वदशायां मुक्तिप्रसङ्गात् । नापि शरीरेन्द्रियबुद्ध्यादितन्निदानधर्माधर्मध्वंसः, अचीर्णप्रायश्चित्त-कर्मणां भोगैकनाश्यत्वेन तत्त्वज्ञानानाश्यत्वात्, भोगद्वारा तन्नाशस्य च पुरुषार्थत्वादिति ।

(प्रका०) *किन्तु पापान्तरमिति* । नन्वेवं काशीमृतस्य कृतप्राणान्तिकादिप्रायश्चित्तस्य कथं मुक्तिः । न च तथापि पुनः पापान्तरोत्पत्तिः । काशीमरणेनोत्पन्नतत्त्वज्ञानस्य तस्य दोषाभावेन तदुत्पत्तेरसम्भवादिति चेत् ।

अत्र वदन्ति । तत्र दुःखप्रागभावो नास्त्येव । फलसन्देहपर्यवसिततत्सन्देहाच्च प्रायश्चित्ते प्रवृत्त्युपपत्तौ तत्र तस्याकिञ्चित्करत्वेऽपि काचिन्न क्षतिः । न च निष्फलत्वेन तद्बोधकवेदाप्रामाण्यं सति दुःखप्रागभावे तस्य तथा जनकत्वमिति वेदतात्पर्यात्, सति दोषे निषिद्धकर्मणः पापजनकत्ववत्, सति विघ्ने मङ्गलस्य तद्ध्वंसजनकत्ववच्चेति । तच्चिन्त्यम् । पापादिजनने दोषादेः सहकारित्वमिति निषिद्धकर्मादेः साङ्गत्वाभावान्निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्, इह तु साङ्गस्य प्रायश्चित्तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यं स्यादेव न हि दुःखप्रागभावे फले दुःखप्रागभावस्यापि सहकारित्वं येन तदभावे प्रायश्चित्तस्य साङ्गत्वं न स्यादिति ।

वयं तु ब्रूमः । तत्र दुःखप्रागभावो नास्त्येव काशीमरणस्यैव तत्र मानत्वात् । प्रवृत्तिश्च तद्भ्रमात्तत्सन्देहाद्वा । न चैवं तद्बोधकवेदाप्रामाण्यम्, यत्कामकर्त्तव्यतया हि वेदेन यद्बोध्यते साङ्गस्य तस्यावश्यं तत्फलजनकत्वमिति नियमः । तदिहापि पापध्वंसकामकर्त्तव्यतया प्रायश्चित्तस्य वेदेन बोधनात्तदनुत्पादेन परं तद्बोधकवेदाप्रामाण्यम् । न चात्र तदस्ति । तत्रापि प्रायश्चित्तेन पापस्य नाशितत्वात् । अत एव प्रायश्चित्ते पापध्वंसकामनैवाधिकारो न तु दुःखानुत्पादकामना, तस्यातत्फलत्वात् । न चैवं दुःखानुत्पादस्यैव प्रयोजनत्वादित्यग्रिमग्रन्थविरोधः । दुःखसाधनध्वंस एव स्वतः पुरुषार्थतयाऽपेक्षित इत्याक्षेपे तत्र दुःखानुत्पाद एव स्वतः पुरुषार्थः । तथाच तदर्थतया पापध्वंसस्तत्र गौणं प्रयोजनं न तु मुख्यमिति न स मोक्ष इति तदर्थः । तदिदमुक्तम्-

'तस्यैव दुःखानुत्पादरूपत्वेन पुरुषार्थत्वादिति' । तथाच प्रायश्चित्तस्य पापध्वंसः फलं । तत्फलं च स्वतः पुरुषार्थो दुःखानुत्पादः । तदिदं वक्ष्यति । न च प्रायश्चित्तस्य दुरितोत्पत्तिनिमित्तकत्वं पापनाशफलश्रवणादिति । न च परमपुरुषार्थानिष्पत्तौ वेदबोधितं फलं जनयतोऽपि निष्फलत्वम् । तथासति विघ्नध्वंसं समाप्तिं वा जनितवतो मङ्गलस्य तत्साध्यस्वतःपुरुषार्थसुखाद्यनुत्पत्तौ निष्फलत्वापत्तेः । तस्माद्दुःखप्रागभावासत्त्वेऽपि न तद्बोधकवेदाप्रामाण्यमिति । अस्तु वा तत्र दुःखप्रागभावः । पूर्वजन्मोत्पन्नं पापान्तरमासाद्य कायव्यूहदशायां तेन दुःखाजनने मोक्षोपपत्तेः । न हि तज्जन्मकृतान्येव कर्माणि तदा भुज्यन्त इति नियमः । तस्माद्यदि तत्सत्त्वं तदा पापान्तरमावश्यकम्, अन्यथा तत्सत्त्वे मानाभाव एव । प्रवृत्तिस्तु पूर्वोक्तरीत्यैवेति । यत्तु तत्रापि दुःखप्रागभावोऽस्त्येव, तथा च तस्य न निष्फलत्वं प्रागभावस्य चानन्यगतिकतया अनियतदेशकल्पनादात्मान्तरे पापान्तरमासाद्य तेन दुःखोत्पादनम् । नचैवं दुःखप्रागभावसत्त्वे काशीमृतस्य कथं मुक्तिरिति वाच्यम् । स्वसमवेतदुःखजनकप्रागभावस्यैव मुक्तिविरोधित्वात् । तद्ध्वंसमेव च मुक्तिलक्षणमिति । तन्न । प्रागभावस्य प्रतियोगिसमानदेशत्वं प्रायश्चित्तप्रवृत्त्यन्यथानुपपत्त्या कल्प्यं मानान्तराद्वा ? नाद्यः । उक्तरीत्या तदन्यथोपपत्तेः । नान्त्यः । तदसिद्धेः । एतेन तत्र सत्त्वेऽपि दुःखप्रागभावः पापसहकारिविरहान्न दुःखोत्पादकः । अत एव न मुक्तिविरोधीति कस्यचिन्मतं निरस्तम् । तादृशप्रागभावे मानाभावात् प्रतियोग्यनुपपत्तेश्चेति । *अफलमिति* । स्वतः पुरुषार्थाप्रयोजकमित्यर्थः । *दुःखानुत्पादेनेति* । तावत्कालीनदुःखानुत्पादेनेत्यर्थः । *विद्यमानेति* । तथाच न निष्फलत्वशङ्कापीति भावः । *चीर्णेति* । कृतेत्यर्थः । क्वचित्स्थितेति पाठः । अनिर्मोक्षप्रसङ्गमुद्धरति *पापान्तरेणेति* ॥

(चि०) अपरे तु दुःखात्यन्ताभावो मुक्तिः । यद्यपि परदुःखात्यन्ताभावः स्वतःसिद्ध एव दुःखात्यन्ताभावः स्वात्मन्यसम्भवी घटादावतिप्रसक्तोऽसाध्यश्च, तथापि दुःखसाधनध्वंस एव स्ववृत्तिदुःखात्यन्ताभावसम्बन्धः स च साध्य एव । न चावश्यकत्वेन स एव मुक्तिः, तस्य स्वतोऽपुरुषार्थत्वेन दुःखाभावमुद्दिश्य तत्र प्रवृत्तेः "दुःखेनात्यन्तं विमुक्तश्चरतीति" अत्रात्यन्ताभावत्वेन मुक्तिश्रवणात् ।

यद्यपि दुःखसाधनध्वंसो न स्वतः पुरुषार्थः अत्यन्ताभावश्च न साध्यः, तथापि विशिष्टस्य पुरुषार्थत्वं, विशेषणसाध्यत्वेन विशिष्टसाध्यत्वञ्च । अहिकण्टकादिनाशस्यापि तत्तद्व्यक्तिसाध्यदुःखात्यन्ताभावमुद्दिश्य तत्सम्बन्धत्वेनैव साध्यतेति । तन्न । अधर्म्मादिदुःखसाधनध्वंसस्य न मुक्तिनिर्वाहकत्वमित्युक्तत्वात् । किञ्च नाऽनागतस्ववृत्तिदुःखस्यात्यन्ताभावसम्बन्धः साध्यः, मुक्तस्यानागतस्ववृत्तिदुःखानभ्युपगमात्, अभ्युपगमे वाऽमुक्तत्वापातात् अत्यन्ताभावसम्बन्धविरोधाच्च । नाप्युत्पन्नस्ववृत्तिदुःखस्य, तद्वृत्तेस्तत्रात्यन्ताभावविरोधात् तदभावस्य स्वतःसिद्धत्वात् अतीतदुःखाभावस्यानुद्देश्यत्वाच्च । नापि परकीयदुःखात्यन्ताभावसम्बन्धः, तस्य स्वतःसिद्धत्वात् । अपि च दुःखसाधनध्वंसस्य नात्यन्ताभावसम्बन्धत्वे मानम् । दुःखसाधनध्वंसादावस्य दुःखस्यात्यन्ताभाव इति बुद्धिव्यपदेशौ स्त इति चेन्न । तस्य समानाधिकरणदुःखाभावविषयत्वेनाप्युपपत्तावतिरिक्तसम्बन्धाविषयत्वात् । एतेन सर्वदुःखप्रागभावसंबन्धाभावो मुक्तिः, घटादेश्च न मुक्तत्वं दुःखसाधनध्वंसविशेषितेनयोगिनो मुक्तपदार्थत्वात् तथैव व्यवहारात् योगरूढिभ्यां पङ्कजादिपदवाच्यत्ववदिति परास्तम् । प्रागभावसंसर्गाभावस्य स्वतोऽनुद्देश्यत्वात् प्रत्युतात्यन्ताभावस्यासाध्यत्वेन ध्वंसरूपत्वेन तस्य दुःखरूपतया हेयत्वात् ।

(प्र०का०) ननु विशिष्टं नार्थान्तरं किन्तु विशेषणात्मकमेव । तत्र विशेषणस्य स्वतःपुरुषार्थत्वाभावाद्विशेष्यस्यासाध्यत्वात्तदुभयसम्बन्धस्यासाध्यत्वात्तदुभयसम्बन्धस्यापि तदुभयात्मकत्वेनोक्तदोषनादयस्थाप्रोक्तपक्षः क्षोदसह इत्याशयेनाह—*अधर्मादीति* । तावदित्यादिनेति शेषः । *योगेति* । पद्मत्वपङ्कजनिकर्तृत्वोभयविशिष्टे यथा

पङ्कजपदप्रयोगो योगादिना तथोकोभयविशिष्टे रूढ्यैव मुकपदप्रयोग इत्यर्थः ॥

(चि०) प्राभाकरास्तु आत्यन्तिकदुःखप्रागभावो मोक्षः । न च तस्यानादित्वेनापुरुषार्थत्वम्, कदाचित् कृत्यनपेक्षत्वेऽपि प्रतियोगिजनकाधर्म्मनाशमुखेन तस्य कृतिसाध्यत्वात्, कृत्यधीनतत्त्वज्ञानादधर्म्मनाशे सत्यग्रिमसमये दुःखप्रागभावस्वरूपं नास्ति । तथा च विनाऽधर्म्मेण दुःखाजननान्न तत्प्रागभावस्वरूपमस्तीति घटवत् कृतिसाध्यत्वात् । व्यवस्थापितञ्च त्वया प्रागभावस्य कृतिसाध्यत्वमह्निकण्टकादिनाशप्रायश्चित्तक्षेमार्थिप्रवृत्तिस्थले । न चैवं युगपदधर्म्मध्वंस एव मुक्तिः प्रागभावस्यानादितया विवक्षितविवेकेन तत्रैव कृतिसाध्यत्वपर्य्यवसानादिति वाच्यम् । अधर्म्मध्वंसस्य स्वतोऽपुरुषार्थत्वात्, दुःखानुत्पादहेतुत्वेनैव तस्य प्रयोजनता वाच्या, सा च कथमसाध्यत्वे प्रागभावस्य स्यादिति । अत एव 'दुःखजन्मप्रवृत्तिदोषे'त्यादि (गौ०१अ०१आ०२) सूत्रमपि सङ्गच्छते । अन्यथा मिथ्याज्ञानाद्यनुत्पादानां दुःखानुत्पादाहेतुत्वेनासङ्गतं स्यादित्याहुरित्यपि ।

तदतिस्थवीयः । तथा ह्यस्तु प्रागभावस्य साध्यत्वं तथापि तस्य प्रतियोगिजनकस्यानियमात् मुक्तस्यापि दुःखोत्पादप्रसङ्गः। अधर्म्मशरीरादिसहकारिविरहान्न दुःखोत्पाद इति चेत्, तर्हि उत्तरावधिविधुरत्वेनानादेरत्यन्ताभावत्वापत्तौ प्रागभावत्वव्याकोपः। प्रतियोगिजनकनाश्यजातीयत्वेन तत्र प्रागभावत्वव्यपदेशो वस्तुतो नित्य एव स इति चेन्न। नित्यत्वेनात्यन्ताभावरूपतया प्रागभावान्यत्वेन नाशजातीयत्वाभावात् प्रतियोगिजनकस्यनाशमुखेन तस्यासाध्यत्वाच । अपि च मुक्तेः प्रागभावस्य सनाना-

धिकरणं भावि दुःखं न प्रतियोगि, तस्याभावात्, भावे वाऽमुक्तत्वापातात् । नापि समानाधिकरणमतीतं वर्त्तमानञ्च, तत्प्रागभावस्य विनष्टत्वात् । नापि व्यधिकरणम्, अन्यवृत्तिदुःखस्यान्यत्रात्यन्ताभावेन प्रागभावाभावात् तस्य प्रतियोगिसमानदेशत्वात् । न च दुःखमात्रं प्रतियोगि, स्वपरावृत्तेर्दुःखमात्रस्याप्रामाणिकत्वात् तस्यात्यन्तासतो नित्यानिवृत्तत्वेन तन्निवृत्तये प्रेक्षावत्प्रवृत्त्यनुपपत्तेः । अहिकण्टकादिनाशप्रायश्चित्तादिसाध्यदुःखप्रागभावस्य कलञ्जभक्षणप्रागभावस्य च समानाधिकरणमेव भावि दुःखं भक्षणञ्च प्रतियोगि ।

ननु दुःखाभावो न पुरुषार्थः सुखस्यापि हानेस्तुल्यायव्ययत्वात् । न च बहुतरदुःखानुविद्धतया सुखस्यापि प्रेक्षावद्धेयत्वम् , आवश्यकत्वेन दुःखस्यैव हेयत्वात् सुखस्य निरुपधीच्छाविषयत्वात्, अन्यथा दुःखाननुविद्धतया तथात्वेन पुरुषार्थत्वविरोधादिति चेत् । न, सुखमनुद्दिश्यापि दुःखभीरूणां दुःखहानार्थं प्रवृत्तिदर्शनात् दुःखाभावस्य स्वत एव पुरुषार्थत्वात् । नहि दुःखाभावदशायां सुखमस्तीत्युद्दिश्य दुःखाभावार्थं प्रवर्त्तते । वैपरीत्यस्यापि सम्भवे सुखस्याप्यपुरुषार्थत्वापत्तेः । अतो दुःखाभावदशायां सुखं नास्तीति ज्ञानं न दुःखाभावार्थिप्रवृत्तिप्रतिबन्धकम् । तस्मादविवेकिनः सुखमात्रलिप्सवो बहुतरदुःखानुविद्धमपि सुखमुद्दिश्य "शिरो मदीयं यदि यातु यात्विति" कृत्वा परदारादिष्वपि प्रवर्त्तमानाः "वरं वृन्दावनेऽरण्ये" इत्यादि वदन्तो नात्राधिकारिणः । ये च विवेकिनोऽस्मिन् संसारकान्तारे कियन्ति दुःखदुर्दिनानि कियती सुखखद्योतिकेति कुपितफणिफणामण्डलच्छायाप्रतिममिदमिति मन्यमा-

नाः सुखमपि हातुमिच्छन्ति तेऽत्राधिकारिणः। न च भोगार्थिनामप्रवृत्तौ पुरुषार्थता हीयते, कस्यचिदप्रवृत्तावपि चिकित्सादेः पुरुषार्थत्वात् ॥

(प्रका०) *अत एवेति*। अनुत्पादस्य साध्यत्वादेवेत्यर्थः। *प्रतियोगीति*। प्रतियोगिजनकनाश्यः प्रागभावः तन्नाशस्य प्रतियोगिद्धंसत्वात्तज्जातीयत्वेनेत्यर्थः। यत्तु प्रतियोगिजनकत्वेन प्रतियोगिनाश्यत्वेन चेत्यर्थ इति। तन्न। तन्नाश्यत्वं हि तज्जन्यनाशप्रतियोगित्वम्। न च प्रागभावनाशः प्रतियोगिजन्यः। *अभेदे तदनुपपत्तेरिति*। *प्रायश्चित्तसाध्य इति*। प्रायश्चित्तप्रयोज्य इत्यर्थः। कलञ्जः करपा इति प्रसिद्धः पक्षिविशेष इत्याहुः। शुष्कमांसमित्यपरे। तथापि तुल्यायव्ययत्वं न समाहितमित्युपसंहरति *तस्मादिति*। तथा च विवेकिनं प्रति न तुल्यायव्ययत्वमिति भावः। *कस्यचिदिति*। अन्यथा मुमुक्षुप्रवृत्त्यभावे सुखमपि पुरुषार्थो न स्यादिति भावः ॥

(चि०) अथ,—

दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते।
न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥

पुरुषार्थत्वे सुखवज्ज्ञायमानत्वनियमात्, न च मुक्तिज्ञानं सम्भवतीति चेत्। न हि दुःखाभावं जानीयामित्युद्दिश्य प्रवृत्तिः, किन्तु दुःखं मे मा भूदित्युद्दिश्येयतो दुःखाभाव एव पुरुषार्थः। तस्य ज्ञानन्तु स्वकारणाधीनं, न तु पुरुषार्थतोपयोगि, सुखी स्यामित्युद्दिश्य प्रवर्त्तते, न तु सुखं जानीयामिति सुखमेव तथास्तु न तु तदवगमः तस्यावश्यकत्वेनान्यथासिद्धत्वात् गौरवाच्च। किञ्च बहुतरदुःखजर्जरकलेवरा दुःखाभावमुद्दिश्य मरणेऽपि प्रवर्त्तमाना दृश्यन्ते। न च मरणे तस्य ज्ञानमस्ति। न ते विवेकिन इति चेन्न। पुरुषार्थत्वे विवेकानुपयोगात्। किञ्च चरमदुःखानुभवेऽनागतदुःखध्वंसोऽपि विषयः, तथा चाग्रिमक्षणे तदुपरमः(१) तद्विषयकश्च चिरन्तनध्वंसे ज्ञानमस्तीति

(१) तदुपरम इति पाठान्तरम्।

वर्त्तमानमप्यचिरमनुभूयते। ज्ञानसमये मुक्तिलक्षणस्य सत्त्वात् ज्ञानं मुक्तिविरोधि । प्रमाणन्तु—दुःखत्वं देवदत्तदुःखत्वं वा स्वाश्रयासमानकालीनध्वंसप्रतियोगिवृत्ति कार्यमात्रवृत्तिधर्म्मत्वात् सन्ततित्वाद्वा एतत्प्रदीपवत्। सन्ततित्वञ्च नानाकालीनकार्य्यमात्रवृत्तिधर्म्मत्वम्। एवञ्च सुखत्वादावपि साध्यं, तेन समूलोच्छेदे मोक्षः। न चाप्रयोजकत्वम्, सन्तत्युच्छेदे मूलोच्छेदस्य प्रयोजकत्वात्। प्रकृते च मिथ्याज्ञानस्य संसारमूलस्य श्रवणादिक्रमेणोत्पन्नतत्त्वज्ञानान्निवृत्तिः सम्भवत्येव। "आत्मा ज्ञातव्यो न स पुनरावर्त्तत इति" श्रुतिस्तत्र प्रमाणम्। रात्रिसत्रन्यायेनार्थवादोपनीतापुनरावृत्तेरधिकारिविशेषणत्वात्। स आत्मज्ञो न पुनरावर्त्तते न पुनः शरीरी भवतीत्यर्थः। "आत्मा वा अरे श्रोतव्यो निदिध्यासितव्यः( साक्षात् कर्त्तव्यः )" इत्युपक्रम्य "दुःखेनात्यन्तं विमुक्तश्चरतीति" श्रुतिश्च मानम्।

( प्रका० ) नन्वस्तु तज्ज्ञानमित्यत आह *नचेति*। शरीराद्यभावादिति भाव । *पुरुषार्थत्व इति*। निरुपाधिच्छाविषयत्वस्य तयाऽप्यनपायादिति भावः। *अनागतेति*। योगजधर्मबलादिति भावः। *मुक्तिलक्षणस्येति* । पूर्वोक्तस्येत्यर्थः। अशेषविशेषगुणोच्छित्तिस्तु न लक्षण येन ज्ञान मुक्तिविरोधि स्यादिति भाव.। ननु देवदत्तदुःखत्वं न पक्षतावच्छेदकमुक्तहेतुद्वयस्य दुःखत्वे व्यभिचारात्प्रत्येकं मुक्तिरपि न सिद्ध्येदित्याशयेन सर्वमुक्तिं साधयन्नाह—*दुःखत्वमिति*। *स्वाश्रयेति*। स्वाश्रयत्वावच्छिन्नासमानकालीनेत्यर्थः। द्रव्यत्वादौ व्यभिचारादाह मात्रेति। यद्यपि ध्वंसत्वे व्यभिचार. स च भावकार्यविवक्षायां परिहर्तुं शक्यः, तथापि यथाश्रुतेऽपरितुष्यन्नाह—*सन्ततित्वाद्वेति*। नन्वत्रापि दोषतादवस्थ्यमत आह सन्ततित्व चेति। नानाकालः पूर्वोत्तरकाल, ध्वंसे च नोत्तरकालस्तस्यानन्तत्वात्, तथा च ध्वंसप्रतियोगिमात्रवृत्तिधर्मत्वादित्यत्र तात्पर्यम्। *पक्षमिति*। न च ज्ञानत्वादेः पक्षत्वे कार्यमात्रवृत्तित्वमसिद्धमिति वाच्यम्। जन्यज्ञानत्वादे. पक्षत्वात्।

*सन्तत्युच्छेद इति* । एवं चोपाधिशङ्कापि प्रत्युक्ता । *रात्रीति* । यथा "य एता रात्रीरुपयन्ति तस्य पितरो घृतकुल्यां मधुकुल्यां वा क्षरन्ती"त्यत्रार्थवादोपनीत फलं तथाऽत्रापीत्यर्थः । *पुनः शरीरीति* । यद्यपि तत्त्वज्ञानवतोऽपि भोगार्थं शरीरं तथापि दोषानुपरक्तशरीराभावात्तद्वान् भवतीत्यर्थः । तत्त्वज्ञानहेतुत्वासिद्धपर्थमाह *इत्युपक्रम्येति* ।

( चि० ) आचार्यास्तु-"अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः" इति श्रुतिस्तत्र मानम् । वावसन्तमिति यङ्लुकि । तेन संसारदशायां क्षणमात्रमशरीरत्वेन नान्यथासिद्धिः । ननु द्वन्द्वस्वरसेन मिलितसुखदुःखोभय निषेधः प्रतीयते स तु नित्यवत् प्राप्त एव एकैकनिषेधे च वाक्यभेदापत्तिः, न च मुक्तौ प्रमाणमिति चेन्न । द्वित्वेनैकेन रूपेणोपस्थितयोः प्रत्येकं निषेधान्वयेऽपि वाक्यभेदाभावात्, धवखदिरौ छिन्धीत्यत्र प्रत्येकं छिदान्वय इव, न हि तत्र मिलितछिदा । अपि च न प्रियाप्रियरूपं किञ्चिदस्तीति मिलितनिषेधोप्येकैकान्वये प्रत्येकाभावे वा भवेत् तत्र एकैकान्वयस्याशरीरे योग्यत्वात् प्रत्येकाभाव एव पर्य्यवस्यति । अत एव सर्व्वमुक्तिरपि, सर्वदुःखसन्ततिपक्षीकरणे तत्सिद्धेः अन्यथा मुक्तिरपि न स्यात् तत्रैव व्यभिचारात् । यदि चोभयात्मान एव केचित्तदा तच्छङ्कया मोक्षार्थं न कश्चित्प्रवर्त्तेत । शमदमभोगानभिष्वङ्गादिमुक्तिचिह्नश्रुतिसिद्धेन सन्देहनिवृत्तिरिति चेन्न संसारित्वेन मुक्तियोग्यत्वात् न तु तद्विशेषणशमादिमत्त्वेन सामान्ये बाधके सत्येव योग्यतया विशेषानिष्टत्वात् । किञ्च शमादयः श्रुत्या मुक्तौ सहकारितया बोधिताः न तु योग्यतया, तत्त्वेऽपि संसारित्वेन तेऽपि साधनीयाः, शमादिकमपि हि कार्य्यं तत्रापि संसारित्वेनैव योग्यता सामान्ये बाधकाभावात् ।

( प्रका० ) *तेनेति* । न चैवमपि षष्ठ्यष्टमकालभाद्रोपान्वयासि-

द्धिरिति वाच्यम्। मुक्तिप्रकरणाम्नातत्वेन तत्परत्वादित्याहुः। ननु यङ्न्तत्वे चावसतमिति स्यात्। नाभ्यस्ताच्छतुरिति नुम्निषेधात्। तथा च वाधेति संबोधनम्। अतः क्षणमात्रशरीरत्वेनैवान्यथासिद्धिरिति। न। छान्दसत्वेनोपपत्तेः। एतदस्वरसादेवाचार्यास्त्वित्युक्तमित्यन्ये। *स चेति*। एकसत्त्वेऽपि मिलितनिषेधसम्भवाच्च मुक्तौ प्रमाणत्वमिति भावः। श्रुतेः प्रत्येकमुक्तिपरतयाप्युपपत्तेः सर्वमुक्तावुक्तानुमानमेव शरणमित्याह—*अत एवेति*। अतएवेत्यस्य श्रुतिपरामर्शभ्रमं वारयति। *सर्वेति*। दुःखत्वपक्षीकरण इत्यर्थः॥

(चि०) न च नित्यसुखाभिव्यक्तिर्मुक्तिः। सा हि न नित्या, मुक्तसंसारिणोरविशेषापातात्। नोत्पाद्या, तद्धेतुशरीराद्यभावात्, ज्ञानमात्रे सुखमात्रे वा तद्धेतुत्वावधारणात्। न च संसारदशायां तद्धेतुः, सामान्ये बाधकाभावात्। अत एव सर्गादौ शरीरकल्पना। किञ्च तज्जनकं न तावदात्ममनोयोगः, तस्यादृष्टादिनिरपेक्षस्याजनकत्वात्। विषयमात्रापेक्षणे तु संसारिदशायामपि तदभिव्यक्तिप्रसङ्गः। नापि योगजो धर्म्मः सहकारी, तस्योत्पन्नभावत्वेन विनाशित्वेऽपवर्गनिवृत्त्यापत्तेः। नच तज्जन्याभिव्यक्तिरनन्ता तस्या अपि तत एव नाशात्। अथ तत्त्वज्ञानात् सवासनमिथ्याज्ञाननाशे दोषाभावेन प्रवृत्त्याद्यभावाद्धर्माधर्मयोरनुत्पादे प्राचीनधर्म्माधर्म्मक्षयाद्दुःखसाधनशरीरादिनाश एव तत्र हेतुः अत एव तस्यानन्त्येनाभिव्यक्तिप्रवाहोऽप्यनन्त इति चेन्न। शरीरं विना तदनुत्पत्तेः तस्य तद्धेतुत्वे मानाभावाच्च। न च मोक्षार्थप्रवृत्तिरेव तत्र मानम्, दुःखहानार्थितया तदुपपत्तेः। न च नित्ये सुखे मानमस्ति। "नित्यं विज्ञानमानन्दं ब्रह्म" "आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमित्यादि" श्रुतिर्मानमिति चेन्न। उपजननापाय(१)धर्मणोर्ज्ञानसुखयोरहं जानाम्यहं सुखीति भिन्नत्वेना-

(१) उपजननापायेति पुस्तकान्तरसम्मत. पाठः।

नुभूयमानयोर्ब्रह्माभेदबोधने प्रत्यक्षबाधात् ।

अथ सुखस्य ब्रह्माभेदबोधनादेवायोग्यतयाऽनित्यं-सुखं विहाय वाक्यार्थत्वेन नित्यसुखसिद्धिः स्वर्गवत् न तु नित्यसुखे सिद्धे तदभेदबोधनं येनान्योन्याश्रयः । यद्वा नित्यं सुखं बोधयित्वा तदभिन्नं ब्रह्म बोध्यते न च वाक्यभेदः वाक्यैकवाक्यत्वादिति चेन्न । आत्मनोऽनुभूयमानत्वेन तदभिन्नस्य नित्यसुखस्याप्यनुभवप्रसङ्गात् सुखमात्रस्य स्वगोचरसाक्षात्कारजनकत्वनियमात् तदननुभवे वाऽऽत्मनोऽप्यनुभवो न स्यात् । अथात्माभिन्नं नित्यसुखमनुभूयत एव सुखत्वं तु तत्र नानुभूयत इति चेन्न । सुखानुभवसामग्र्या एव सुखत्वानुभावकत्वात् तस्मादानन्दं ब्रह्मेति मत्वर्थीयाच्प्रत्ययान्तत्वेनानन्दवत्त्वं बोध्यं तेनाभेदः, अन्यथा नपुंसकलिङ्गत्वानुपपत्तेः ।

( प्रका० ) लीलावतीकारमतं निरस्यति । *नचेति* । नित्यसुखस्याभिव्यक्तिरित्यर्थः । सुखमात्रे वेति दृष्टान्तार्थमुक्तम् । असत्त्वासिद्धिमाशंक्याह *अत एवेति* । सुखमात्रस्य शरीरजन्यत्वादेवेत्यर्थः । *उत्पत्त्यपायेति* । इदानीमुत्पन्नं सुखमित्यनुभवबलादिति भावः । *अभिन्नत्वेनेति* । अभेदे तद्व्यवच्छानुपपत्तेरिति भावः ।

बाधस्य विशेषविषयत्वेन सामान्यतो योग्यतासंशयसत्त्वादन्यपस्यादित्याह—*अथेति* । *स्वर्गवदिति* । अन्यथाऽस्मदादिसुखस्य दुःखसम्भिन्नत्वनिश्चयाद्बाधापत्तेरिति भावः । उक्तयुक्त्या प्रथममपि नित्यसुखसिद्धिः सम्भवत्येवेति नान्योन्याश्रय इत्यरुचेराह *यद्वेति* । श्रुतिविरोधं निरस्यति *तस्मादिति* । *अन्यथेति* । यद्यपि छान्दसत्वेन लिङ्गव्यत्ययः सम्भवी तथाप्युक्तयुक्त्या तयोर्भेदे तद्व्यत्ययपरत्वैवेति भावः ॥

(चि०)एतेन ब्रह्माद्वैततत्त्वसाक्षात्कारादविद्यानिवृत्तौ विज्ञानसुखात्मकःकेवल्यात्माऽपवर्गे वर्त्तत इति वेदान्तिमतमपास्तम् । स्वप्रकाशसुखात्मकब्रह्मणो नित्यत्वेन सु-

क्षसंसारिणोरविशेषप्रसङ्गात् पुरुषप्रयत्नं विना तस्य सत्त्वादपुरुषार्थत्वाच्च । अविद्यानिवृत्तिः प्रयत्नसाध्येति चेत् । अविद्या यदि मिथ्याज्ञानमर्थान्तरं वा, उभयथापि सुखदुःखाभावतत्साधनेतरत्वेन तन्निवृत्तेरपुरुषार्थत्वात् ।

त्रिदण्डास्तु आनन्दात्मकपरमात्मनि जीवात्मलयो मुक्तिः । लयश्च लिङ्गशरीरापगमः । लिङ्गशरीरश्चैकादशेन्द्रियाणि पञ्च महाभूतानि सूक्ष्ममात्रया सम्भूयावस्थितानि जीवात्मनि सुखदुःखावच्छेदकानीत्याहुः ।

तन्न । लिङ्गशरीरध्वंसस्य स्वतो दुःखसाधनाभावतयाऽपुरुषार्थत्वात् । न चोपाधिशरीरनाशे औपाधिकजीवनाशो लयः, स्वनाशस्यापुरुषार्थत्वात् ब्रह्मणां नित्यत्वेन तदभिन्नस्य नाशानुपपत्तेः भेदाभेदस्य विरोधेनाभावात् ।

नाप्यनुपप्लवा चित्तसन्ततिरपवर्गः आवश्यकत्वेनानुपप्लवस्य दुःखाभावस्य पुरुषार्थत्वे चित्तसन्ततेरपुरुषार्थत्वात् शरीरादिकारणं विना चित्तसन्ततेरनुत्पादाच्च । न हि चित्तमात्रं तत्सामग्री, शरीरादिवैयर्थ्यापत्तेः । नापि दुःखत्वेनात्महानमेव मुक्तिः, सुखदुःखाभावेतरत्वेनापुरुषार्थत्वात् ज्ञानरूपात्महानस्यायत्नसिद्धेरतिरिक्तहानस्याशक्यत्वात् ।

यत्तु योगर्द्धिसाध्यनिरतिशयानन्दमयीं जीवन्मुक्तिमुद्दिश्य प्रवृत्तेः कारणवशादात्यन्तिकदुःखाभावरूपां मुक्तिमासादयतीति मतम् । तन्न । परममुक्तेरपुरुषार्थतापत्तेः विरक्तस्य मोक्षेऽधिकारात् सुखोद्देशेनाप्रवृत्तेश्च ॥

( प्रका० ) एकदण्डिमत निरस्यति *एतेनेति* । *तत्साधनेति* यद्यपि मिथ्याज्ञाननिवृत्तिस्तत्त्वज्ञानव्यापारतया दुःखाभावसाधनमेव, तथापि दुःखाभावस्य मोक्षत्वेनानभ्युपगमान्मुमुक्षूणां तदर्थतया प्रवृत्तिस्तन्मते न स्यादित्याशयः ।

ननु लयः संयोगो विनाशो वा विभुत्वनित्यत्वाभ्यामसम्भवतीति व्याचष्टे *लयश्चेति*। तथा च जीवात्मलय इत्यस्य जीवात्मसम्बन्धिलिङ्गशरीरध्वंस इत्यर्थः। लिङ्गशरीरमेव किमित्यत आह—*लिङ्गेति*। चक्षुरादीनि ज्ञानेन्द्रियाणि षट्, वाक्पाणिपादपायूपस्थात्मकानि पञ्च कर्मेन्द्रियाणीत्येकादशेन्द्रियाणीति। *सूक्ष्मेति*। किञ्चित्तन्मात्रया शरीरभावेनावस्थितानीत्यर्थः।

*उक्तव्याख्यायामानन्दमयपरमात्मनीत्यलग्नकमेवेति दीपे सत्येवा-* ॥ *लिङ्गेति*। *दुःखसाधनेति*। अहिकण्टकादिध्वंसस्यानागतदुःखप्रागभावप्रयोजकतया प्रयोजनत्वम्। न च दुःखप्रागभावो मुक्तस्येति न तस्य प्रवृत्त्यङ्गत्वमिति भावः।

मुक्तेः—परममुक्तेः। इष्टापत्तिमाशंक्याह *विरक्तस्येति*। स च दुःखाभावमुद्दिश्य प्रवर्त्तते न सुखोद्देशेनेति तस्य स एव पुरुषार्थ इति भावः॥

(चिं०) मोक्षे च सर्वाश्रमिणामधिकारः आश्रमचतुष्टयमुपक्रम्य "स ब्रह्मसंस्थोऽमृतत्वमेतीति" श्रुतेः, सङ्कोचे(१) कारणाभावात्, आकाङ्क्षाया अविशेषेणानन्तर्यस्याप्रयोजकत्वात्। कथन्तर्हि "मोक्षाश्रमश्चतुर्थो वै यो भिक्षोः परिकीर्त्तितः" इति प्रव्रज्यां मोक्षाश्रममाहुः, गृहस्थस्य च पुत्रदारादिसङ्गो दुर्वार इत्यसाधारण्येन तथोपदेशात्। "तत्त्वज्ञाननिष्ठो गृहस्थोऽपि हि मुच्यत" इत्यागमाच्च। एवं स्थिते मोक्षमुपक्रम्य "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (साक्षात् कर्त्तव्यः)" इति श्रुतिः, श्रुतिभ्यश्च शरीरादिभिन्नमात्मानमवधार्य शास्त्रेण पदार्थान् विविच्य तद्बोधितोपपत्तिभिस्तस्य स्थिरीकरणरूपं मननं विदधाति। न च शब्दोपपत्तिजन्यतत्त्वज्ञानात् साक्षात्कारिसंसारबीजसवासनमिथ्याज्ञाननिवृत्तिः, दिङ्मोहादौ तथानुपलब्धेः। अतः श्रुति-

(१) मानाभावादिति पाठान्तरम्।
(२) संशयकरपात पाठान्तरम्।

स्मृत्युदितविधिना चिरनिरन्तरादरसेवितनिदिध्यासनजन्ययोगजधर्मादात्मतत्त्वसाक्षात्कारं संसारबीजसवासनमिथ्याज्ञानोन्मूलनसमर्थमासाद्य दोषाभावात् प्रवृत्त्यादेरभावेऽनागतधर्माधर्मानुत्पादेऽनादिभवसञ्चितकर्मणां भोगेन क्षयादपवृज्यते। उपदेशमात्राच्छरीरभिन्नात्मावगमेऽप्यन्यपरत्वशङ्कया सङ्कासूकस्य नाऽश्रद्धामलक्षालनमिति मननमावश्यकम्। तथा च "मन्तव्यश्चोपपत्तिभिरिति" श्रुतिरेवोपपत्तिबोधकस्य शास्त्रस्यापवर्गहेतुत्वं बोधयति मननस्य तदेकसाध्यत्वात्। एवञ्च शमदमब्रह्मचर्याद्युपबृंहितयावज्जीवनैमित्तिकसन्ध्योपासनादिकर्मसहितात्तत्त्वज्ञानान्मुक्तिः।

(प्रका०) प्रसङ्गादाह *मोक्षे चेति*। ननु "ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथे"त्युपक्रम्य "स ब्रह्मसंस्थो अमृतत्वमेतीति" श्रुत्या यतेरेवाधिकारबोधनम्, अव्यवहितानन्तर्येण तस्यैव तत्पदेन परामर्शादित्यत आह *आकाङ्क्षाया इति*। आनन्तर्यस्य—अव्यवहितानन्तर्यस्य। बाधकं विना सङ्कोचानुपपत्तेरिति भावः। *कथमिति*। तथा च एतद्बलादेव सङ्कोच इति भावः। नन्वेतदेव कथमित्यत आह *तत्त्वज्ञानेति*। पर्यवस्यति मननं विदधातीत्यन्वयः। गृहस्थादिरपीति शेषः। *इतिश्रुतिरिति*। इत्यादिश्रुतिरित्यर्थः। शरीराद्भिन्नमित्युपलक्षणम्। इष्टसाधनीभूतमननसाधनं चेत्यपि द्रष्टव्यम्। इतरभिन्नत्वानुमितौ प्रतियोगिज्ञानद्वारा शास्त्रोपयोगं दर्शयति *शास्त्रेणेति*। उपपत्तिबोधायापि तदुपयोगमाह—*तथा चेति*। ज्ञानकर्मसमुच्चयवादमाक्षिपति *एवञ्चेति*। ज्ञानहेतुत्वाभ्युपगमे तथैव कर्मणोऽपि हेतुत्वमिति तुल्यवदुभयप्राधान्यमित्यर्थः। केचित्तु एवञ्च तत्त्वज्ञानमात्रं न प्रयोजकं किन्तु प्राधान्येन कर्मणोऽपि तथात्वमित्यत आह *एवञ्चेति*। तथाच सिद्धान्तग्रन्थ एवायम् ततस्तटस्थपूर्वपक्षे प्रसक्ते ज्ञानमात्रतन्त्रत्वपरे परद्वारा निरस्ते सिद्धान्तावतार इत्याहुः॥

(चि०) स्यादेतत् ज्ञानकर्मणोर्न समप्राधान्येन समुच्चयः कर्मणां स्ववाक्यात् फलान्तरार्थत्वेन श्रुतत्वान्मोक्षार्थकल्पनाविरोधात् तत्त्वज्ञानस्य कर्मनैरपेक्ष्येण

मुक्तिहेतुत्वप्रतीतेश्च। नाप्यङ्गाङ्गिभावेन, तथा हि न कर्म सन्निपत्योपकारकम्, तत्त्वज्ञानशरीरानिर्वाहकत्वात्। नापि प्रयाजादिवदारादुपकारकम्, स्ववाक्यत एव कर्मणां प्रयोजनलाभेन फलवत्सन्निधावफलत्वाभावात्। उपपत्तिविरुद्धश्च ज्ञानकर्मसमुच्चयः काम्यनिषिद्धयोस्त्यागात्(१)। नाप्यसङ्कल्पितफलवत्काम्यकर्मसमुच्चयः,चतुर्थाश्रमविधिविरोधात्। अत एव न यावन्नित्यनैमित्तिकसमुच्चयोऽपि। नापि यत्याश्रमविहितेन कर्मणा, तत्त्वज्ञाने सति गृहस्थस्यापि मुक्तेः,—

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते ॥

इति स्मृतेः।

नचाऽननुगतमपि साधनम्, स्वर्गवदपवर्गे प्रकारभेदाभावात्। न चापवर्गार्थिकर्त्तव्यतया विहितानि कर्माणि, येन तत्समुच्चयः स्यात्। "संन्यस्य सर्वकर्माणीति" स्मृतेः "सर्वकर्मसंन्यासो ज्ञानमात्राच्च मोक्ष इति।

मैवम्। स्वस्वाश्रमविहितेन कर्मणा ज्ञानस्य समप्राधान्येन समुच्चयात् ज्ञानकर्म्मणोस्तुल्यत्वेन मुक्त्यर्थत्वाभिधानात्। तथा च भगवद्गीता—

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥

श्रीविष्णुपुराणे—

तस्मात् तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः।
तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामते ! ॥

हारीतः—

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।

(१) त्यागादिति पाठान्तरम्।

तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ॥

श्रुतिश्च—"सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येणेति"। एतन्मूलकमेव—

परिज्ञानात् भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशभयाच्चैव कर्म नेच्छन्ति पण्डिताः ॥
ज्ञानं प्रधानं न तु कर्महीनं कर्म प्रधानं न तु बुद्धिहीनम् ।
तस्मात्तयोरेव भवेत् प्रसिद्धिर्न ह्येकपक्षो विहगः प्रयाति॥

न च फलान्तरार्थत्वेन श्रुतस्य कर्मणः फलान्तरार्थत्वमनुपपन्नम्, तथा वाक्यस्वरसात् ज्ञानतुल्यताप्रतीतेः॥ तत्तत्फलजनकत्वेऽपि कर्मणां शब्द एव मानमेवमन्यत्रापि। अथ वा(१) आरादुपकारितया अङ्गाङ्गिभावेन समुच्चयः, स च प्रयाजादिवत् अपूर्वद्वारैव । यत्तु जडभरतोपाख्याने—

न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम् ।
न ददर्श च कर्माणि शास्त्राणि जगृहे न च ॥

तद् योगिधर्मसङ्कल्पत्यागार्थं जातिस्मरत्वेन न शिक्षितानीत्येवं परं वा । तदुक्तं "जज्ञे जातिस्मरो द्विजः सर्वविज्ञानसम्पन्नः सर्वशास्त्रार्थतत्त्ववित्" इति ।

(प्रका०) संनिपत्योपकारित्वं यदि तत्त्वज्ञानसहकारितया मुक्तिहेतुत्वं तदा नाङ्गाङ्गिभावः, किन्तु समप्राधान्यमेव तच्च दूषितमेवेति प्रधानीभूतशरीरनिष्पादकत्वमेव तद्वाच्यम्, एवंसत्याह *तत्त्वज्ञानेति*। *नापीति*। असङ्कल्पितफलमभिलाषाविषयफलं, काम्यं कामनापूर्वकं फलं नित्यश्राद्धादि तत्समुच्चय इत्यर्थः। *चतुर्थेति*। तस्य काम्यमात्रस्यैव निषेधादित्यर्थः।

*तयोरेवेति*। ज्ञाने कर्मणि च सतीत्यर्थः। प्रसिद्धिः—प्रकृष्टा सिद्धिः, मुक्तिरित्यर्थः। *भवतु चेति*। न च फलान्तरार्थत्वेनाङ्गत्वानुपपत्तिः, न ह्यतिरिक्तफलत्वेनैवाङ्गत्वक्षतिः, किन्तु प्रधानातिरिक्तमुख्योद्देश्य·

(१) भवतु चेति पाठान्तरं प्रकाशछन्नम् ।

फलवत्त्वेन, अन्यथा विघ्नध्वंसफलकमङ्गलस्य ग्रन्थाङ्गत्वं न स्यादिति भावः। *जातिस्मरत्वेनेति*। तत्सर्वं पूर्वकृतमेव कर्म स्मृत्वा न शिक्षितवानित्यर्थः।

(चि०) अत्र केचित्। अनुत्पन्नतत्त्वज्ञानस्य ज्ञानार्थिनस्तत्प्रतिबन्धकाधर्मनिवृत्तिद्वारा प्रायश्चित्तवदारादुपकारकं कर्म, सन्निपत्योपकारकं तु तत्त्वज्ञानम्। उत्पन्नतत्त्वज्ञानस्य तु अन्तरालब्धवृष्टेः कारीरीसमाप्तिवदारब्धाश्रमपरिपालनं लोकसङ्ग्रहार्थम्। यदपि लोकसंग्रहो न प्रयोजनं सुखदुःखाभावतत्साधनेतरत्वात्, तथाऽप्यकरणे लोकानां विगानानिन्यत्वेन यज्ज्ञानं तत्परिहारार्थं तत्कर्मसाध्यदुःखोत्पादनेनाधर्मचयार्थञ्चेति। तन्न। तत्त्वज्ञानं प्रत्यङ्गत्वपक्षे कर्मणामपूर्वद्वारा जनकत्वं दुरितध्वंसकल्पनातो लघुत्वात्, तस्माद् यानि कर्माण्युपनीतमात्रकर्त्तव्यत्वेन विहितानि सन्ध्योपासनादीनि तानि मोक्षार्थिभिरवश्यं कार्याणि, तत्परित्यागस्य प्रत्यवायहेतुत्वेनाशास्त्रीयत्वात् सङ्कोचे मानाभावात्। निषिद्धानि काम्यानि च बन्धहेतुत्वात् मुक्तिपरिपन्थीनीति त्यज्यन्ते। धनमूलानि च धनत्यागादेव त्यज्यन्ते। सोऽयं "संन्यस्य सर्वकर्माणि" इत्यस्यार्थः। अयमेव हि संन्यासपदार्थः, तथा च गीता—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः॥ इति॥

तत्त्वज्ञानं धर्मद्वारा मुक्तिसाधनं विहितत्वेन धर्मजनकत्वनियमादिति धर्मस्यैव प्राधान्यम्। स च धर्मो मुक्त्यैव फलेन नाश्यते इति केचित्। तन्न। मिथ्या-

ज्ञाननिवृत्त्या दृष्टद्वारेणैवोपपत्तावदृष्टकल्पनानवकाशात्, अन्यथा भेषजादिष्वपि तथा स्यात्। एवञ्च तत्रैव विहितत्वस्य व्यभिचारः।

अत्र वदन्ति। संसारकारणोच्छेदक्रमेण कार्योच्छेदान्मोक्षः। एवञ्च तत्त्वज्ञानमात्रादेव मिथ्याज्ञानोच्छेदादपवर्गः तत्र न तस्य कर्मसहकारित्वम्, मिथ्याज्ञानोन्मूलने कर्मविनाकृतस्यैव तस्य दिङ्मोहादौ हेतुत्वावधारणात्। कर्मणामपवर्गहेतुताश्रुतिश्च तत्त्वज्ञानद्वाराप्युपपद्यते साक्षात्तस्याश्रुतेः। तत्त्वज्ञानवतश्चाधिकारे नित्याकरणेऽपि दोषाभावेन प्रत्यवायाभावोपपत्तेः, अन्यथा भोगार्थं विहितनिषिद्धाचरणेन धर्माधर्मोत्पत्तौ मोक्षाभावप्रसङ्गः।

(प्रका०) आचार्यमतमाह *अत्रेति*। *संनिपत्येति*। कर्मापेक्षया सन्निधायोपकारकमित्यर्थः। 'ननु जनेनायमतो योगी'त्यादिना तस्य तत्पाज्यमित्यरुचेराह *तत्कर्मसाध्येति*। *अपूर्वद्वारेति*। प्रायश्चित्ते तु पापनाशफलश्रुतेस्तथात्वमिति भावः। समुच्चयवादी परमवं दूषयित्वा स्वमतमुपसंहरति *तस्मादिति*।

*अत्रेति*। नैयायिका इति शेषः। मात्रपदव्यवच्छेद्यं कर्ममात्रमित्याह *तत्रेति*। मिथ्याज्ञानोच्छेदे इत्यर्थः। तस्य–तत्त्वज्ञानस्य। *कर्मणामिति* "तं विद्याकर्मणी समारभेते, विद्या चैव तपश्चेत्यादि" श्रुतेश्चेत्यर्थः। यद्यपि तत्त्वज्ञानहेतुत्वमप्यदृष्टद्वारा, तथाच तद्द्वारा मुक्तिहेतुत्वमेवास्तु ज्ञानं प्रत्यपि हेतुत्वकल्पने गौरवात्, तथापि "तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेत्यादि" श्रुत्या वेदनं प्रत्यपि यज्ञादेर्हेतुत्वासिद्धेः प्रामाणिकं गौरवमिति भावः। विपरीताश्च न श्रुतिरित्याह *साक्षात्तस्येति*। दोषाभावेनेत्युपलक्षणं प्रागभावाभावेनेत्यपि द्रष्टव्यम, अन्यथा प्रतियोग्युत्पत्तेरावश्यकत्वात्॥

(चि०) ननु तत्तत्तीर्थमहादानस्नानकाशीमरणादिकर्मणा तत्त्वज्ञाननैरपेक्ष्येण मुक्तिहेतुत्वं श्रूयते तत्कथं तत्त्वज्ञानमेव तद्धेतुः। न च तेषां तत्त्वज्ञानमेव व्या-

थापि मिथ्याज्ञानप्रागभावासहवृत्तिमिथ्याज्ञानध्वंसस्य तदेकसाध्यत्वम् "आत्मा ज्ञातव्यः न स पुनरावर्त्तत" इत्यादिश्रुतेर्मोक्षं प्रति तत्त्वज्ञानस्य हेतुत्वावधारणात्। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति" श्रुत्या तत्त्वज्ञानं विना न मोक्षः किन्तु तस्मिन् सत्येवेति प्रतिपादनाच्च। अन्यथा स्वर्गादौ न शरीरादयः कल्प्येरन्, कर्म्मणां तत्त्वज्ञानद्वाराऽपि मुक्तिजनकत्वसम्भवात्, प्रमाणवतो गौरवश्च न दोषाय। कर्मणां तत्त्वज्ञानविशेष एव जनकत्वमतो न तत्रानुगमो दोषाय। वाराणसीमरणस्य तत्त्वज्ञानफलजनकत्वमागमादेवावगम्यते। तत्त्वज्ञानाददत्तफलान्येव कर्माणि प्रायश्चित्तादिव विनश्यन्ति अनन्यथासिद्धशब्दबलात्। न च प्रायश्चित्तस्य दुरितोत्पत्तिनिमित्तकत्वं, पापनाशफलश्रवणात्। अतएव न ब्रह्महत्यादीनां प्रायश्चित्तदुःखमेव फलम्, नरकफलश्रुतिविरोधात् प्रायश्चित्तविधिवैयर्थ्याच्च दुःखैकफलत्वेन तत्राप्रवृत्तेः। नापि कर्मान्तराधिकार एव फलम् महापातकातिरिक्तेऽनधिकाराभावात्। अन्यथा यत्किञ्चित्पापवतोऽकृतप्रायश्चित्तत्वेनानाधिकारापत्तेः, प्राणान्तिके तदभावाच्च। श्रूयते हि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परात्मनि॥

स्मृतिश्च—

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन!। इति॥

"नाभुक्तं क्षीयते कर्म्म" इत्यत्र च प्रायश्चित्तादिस्मृतितः सङ्कोचस्यावश्यकत्वेन शब्दबोधितनाशकानाश्यपरत्वं लाघवात् न तु तत्तदन्यकर्मपरत्वं गौरवात् पा-

पपुण्यपक्षपहेतूनां बहुतरत्वात् ज्ञानस्य नाशकत्वं शब्दबोध्यमित्युक्तम् ।

(प्रका०) ननु "नान्यः पन्था विद्यतेऽयनाये"त्यादिश्रुतिः प्रकृते साहित्यबोधिकैवेति न विकल्प इत्यरुचेराह *वस्तुतस्त्विति*। यद्यपि बाधकं विना सामान्यपरत्वमेव तथाप्युक्तश्रुतेर्विशेषपरत्वेनाप्युपपत्तेर्निःसन्दिग्धं प्रमाणमाह *तमेवेति* । तं विदित्वैवेत्यर्थः । तदेवाह*नान्य इति* अन्यस्तत्त्वज्ञानानिरपेक्षः । *अन्यथेति* । तथाच यथा सुखत्वावच्छेदेन तद्धेतुत्वकल्पनात्तत्र शरीरकल्पनं तथा मुक्तित्वावच्छेदेन लाघवात्तद्धेतुत्वकल्पनात्सर्वत्र तज्ज्ञानकल्पनापीति भावः । नन्वेवं कर्महेतुत्वबोधकश्रुतेः का गतिरित्यत आह *कर्मणामिति* । एवं पूर्वोक्तगौरवं निरस्यति *प्रमाणेति* । तथापीत्यादिप्रतिबन्दिमुद्धरति *तद्वदिति* । तृणारणिमणिन्यायादिति भावः । मन्वनादिकर्मराशेः क्षयानुपपत्तौ न मोक्ष इत्याशंक्य परमतं दूषयितुमुपन्यस्यति *नरकज्ञानादिति* दृष्टान्तासिद्धिमाशङ्क्य निराकरोति *नचेति* ननु निषिद्धकर्मणां नरकफलकत्वाभावात्तदुपपादकतया पापस्यैवाभावात्कुतः प्रायश्चित्तस्य तन्नाशकत्वं ततः पुनरपि दृष्टान्तासिद्धिरित्यत आह *अत एवेति* । वक्ष्यमाणहेतोरित्यर्थः । *प्रायश्चित्तेति* । नन्वेतदेव कुत इत्यत आह-*दुःखेति* ।*प्राणान्तिक इति* तत्र कर्मान्तराभावेन तदधिकारार्थितयाऽप्रवृत्तेरित्यर्थः । ननु शब्दबलादित्यसिद्धं तादृशशब्दाभावादित्यत आह *श्रूयते इति* हृदयग्रन्थिः-मिथ्याज्ञानवासना,कर्म-अदृष्टं, तन्निबन्धनं-शेषः कर्माणि अदृष्टानीत्यर्थः । *शब्देति* । यदि च भोगोपि शब्दबोधितस्तदा वाक्ष्मत्वं नाशके विशेषणं बोद्धव्यम् ॥

( चि० ) अथ भस्मसात्पदस्य लाक्षणिकत्वेन यथा वह्नेः परम्परया भस्म तथा ज्ञानात् कर्मक्षय इत्यर्थः । तथा च "नाभुक्तं क्षीयते कर्मेति" स्मृतिरुत्सर्गतो भोगेनैव क्षयमाह, अनन्यथासिद्धप्रायश्चित्तविधिना सा बाध्यते । ज्ञाननाश्यत्वञ्च(१) भोगद्वारापि सम्भवतीत्यबाधे सम्भवति न बाधकल्पना नेति चेत्। कर्मणो भोगनाश्यत्वे ज्ञानस्यानाशकत्वात् । न हि भोगस्तत्त्वज्ञान-

(१) ज्ञानस्य नाशकत्वञ्चेति पाठान्तरम् ।

थापि मिथ्याज्ञानप्रागभावासहवृत्तिमिथ्याज्ञानध्वंसस्य तदेकसाध्यत्वम् "आत्मा ज्ञातव्यः न स पुनरावर्त्तत" इत्यादिश्रुतेर्मोक्षं प्रति तत्त्वज्ञानस्य हेतुत्वावधारणात्। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति" श्रुत्या तत्त्वज्ञानं विना न मोक्षः किन्तु तस्मिन् सत्येवेति प्रतिपादनाच्च। अन्यथा स्वर्गादौ न शरीरादयः कल्प्येरन्, कर्म्मणां तत्त्वज्ञानद्वाराऽपि मुक्तिजनकत्वसम्भवात्, प्रमाणवतो गौरवश्च न दोषाय। कर्मणां तत्त्वज्ञानविशेष एव जनकत्वमतो न तत्राननुगमो दोषाय। वाराणसीमरणस्य तत्त्वज्ञानफलजनकत्वमागमादेवावगम्यते। तत्त्वज्ञानाददत्तफलान्येव कर्माणि प्रायश्चित्तादिव विनश्यन्ति अनन्यथासिद्धशब्दबलात्। न च प्रायश्चित्तस्य दुरितोत्पत्तिनिमित्तकत्वं, पापनाशफलश्रवणात्। अतएव न ब्रह्महत्यादीनां प्रायश्चित्तदुःखमेव फलम्, नरकफलश्रुतिविरोधात् प्रायश्चित्तविधिवैयर्थ्याच्च दुःखैकफलत्वेन तत्राप्रवृत्तेः। नापि कर्मान्तराधिकार एव फलम् महापातकातिरिक्तेऽनधिकाराभावात्। अन्यथा यत्किञ्चित्पापवतोऽकृतप्रायश्चित्तत्वेनानाधिकारापत्तेः, प्राणान्तिके तदभावाच्च। श्रूयते हि—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परात्मनि॥

स्मृतिश्च—

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन!। इति॥

"नाभुक्तं क्षीयते कर्म्म" इत्यत्र च प्रायश्चित्तादिस्मृतितः सङ्कोचस्यावश्यकत्वेन शब्दबोधितनाशकानाश्यपरत्वं लाघवात् न तु तत्तदन्यकर्मपरत्वं गौरवात् पा-

पपुपक्षपहेतूनां बहुतरत्वात् ज्ञानस्य नाशकत्वं शब्दबोध्यमित्युक्तम् ।

(प्रका०) ननु "नान्यः पन्था विद्यतेऽयनाये"त्यादिश्रुतिः प्रकृते साहित्यबोधिकैवेति न विकल्प इत्यरुचेराह *वस्तुतस्त्विति*। यद्यपि बाधकं विना सामान्यपरत्वमेव तथाप्युक्तश्रुतेर्विशेषपरत्वेनाप्युपपत्तेर्निःसन्दिग्धं प्रमाणमाह *तमेवेति*। तं विदित्वैवेत्यर्थः। तदेवाह*नान्य इति* अन्यस्तत्त्वज्ञाननिरपेक्षः। *अन्ययेति*। तथाच यथा सुखत्वावच्छेदेन तद्धेतुत्वकल्पनात्तत्र शरीरकल्पनं तथा मुक्तित्वावच्छेदेन लाघवात्तद्धेतुत्वकल्पनात्सर्वत्र तज्ज्ञानकल्पनापीति भावः। नन्वेवं कर्महेतुत्वबोधकश्रुतेः का गतिरित्यत आह *कर्मणामिति*। एवं पूर्वोक्तगौरवं निरस्यति *प्रमाणेति*। तवापीत्यादिप्रतिबन्दिमुद्धरति *तत्त्वादिति*। तृणारणिमणिन्यायादिति भावः। नन्वनादिकर्मराशेः क्षयानुपपत्तौ न मोक्ष इत्याशंक्य परमतं दूषयितुमुपन्यस्यति *तत्त्वज्ञानादिति* दृष्टान्तासिद्धिमाशङ्क्य निराकरोति *नचेति* ननु निषिद्धकर्मणां नरकफलकत्वाभावात्तदुपपादकतया पापस्यैवाभावात्कुतः प्रायश्चित्तस्य तन्नाशकत्वं ततः पुनरपि दृष्टान्तासिद्धिरित्यत आह *अत एवेति*। वक्ष्यमाणहेतोरित्यर्थः। *प्रायश्चित्तेति*। नन्वेतदेव कुत इत्यत आह–*दुःखेति*।*प्राणान्तिक इति* तत्र कर्मान्तराभावेन तदधिकारार्थितयाऽप्रवृत्तेरित्यर्थः। ननु शब्दबलादित्यसिद्धं तादृशशब्दाभावादित्यत आह *श्रूयते इति* हृदयग्रन्थिः मिथ्याज्ञानवासना,कर्म–अदृष्टं, तच्चिरन्धनं–शेषः कर्माणि अदृष्टानीत्यर्थः। *शब्देति*। यदि च भोगोऽपि शब्दबोधितस्तदा तद्भिन्नत्वं नाशके विशेषणं बोद्धव्यम् ॥

(चि० ) अथ भस्मसात्पदस्य लाक्षणिकत्वेन यथा वह्नेः परम्परया भस्म तथा ज्ञानात् कर्मक्षय इत्यर्थः। तथा च "नाभुक्तं क्षीयते कर्मेति" स्मृतिरुत्सर्गतो भोगेनैव क्षयमाह, अनन्यथासिद्धप्रायश्चित्तविधिना सा बाध्यते। ज्ञाननाश्यत्वञ्च(१) भोगद्वारापि सम्भवतीत्यबाधे सम्भवति न बाधकल्पनेति चेन्न। कर्मणो भोगनाश्यत्वे ज्ञानस्यानाशकत्वात्। न हि भोगस्तत्त्वज्ञान-

(१) ज्ञानस्य नाशकत्वञ्चेति पाठान्तरम्।

व्यापारा, तथाऽश्रवणात् तेन विनापि कर्मण एव तदुपपत्तेश्चाकर्मणो भोगनाश्यत्वे तत्त्वज्ञानानुपयोगात्। धनु मामुक्तामिति स्मृतिविरोधेन क्षीयन्त इत्यादिश्रुतेरन्यथावर्णनम्। तन्न। स्मृतेः प्रत्यक्षवेदबाधितत्वेन तद्विरुद्धार्थकवेदाननुमापकत्वात्। वामदेवसौभरिप्रभृतीनां कायव्यूहश्रवणात्तत्त्वज्ञानेन कायव्यूहमुत्पाद्य भोगद्वारा कर्मक्षय इति चेन्न। तपःप्रभावादेव तत्त्वज्ञानानुत्पादेऽपि कायव्यूहसम्भवात्। भोगजननार्थश्च कर्मभिरवश्यं तत्तत्कायनिष्पादनमिति न तत्र तत्त्वज्ञानोपयोगः, यौगपद्यञ्च कायानां तज्जनककर्मस्वभावात् तपःप्रभावाद्(१) वा। न च ज्ञानं भोगद्वारा कर्मनाशकमित्युक्तम्।

एतेनागमयोः परस्परविरोधादनिर्णये विमतिपदं कर्म्म भोगनाश्यं प्रायश्चित्ताद्यनाश्यत्वे सति कर्मत्वात् भुक्तभुज्यमानकर्मवदिति अनुमानान्निर्णय इत्यपास्तम्।

ज्ञानस्य प्रायश्चित्ततुल्यत्वेनाप्रयोजकत्वात् श्रुतिबाधितत्वाच्च। शब्दबोधितनाशकानाश्यत्वस्योपाधित्वाच्च अकृतप्रधानेन कृतप्रधानेन चाङ्गापूर्वेण व्यभिचाराच्च, तस्य प्रधानयागादिनाश्यत्वात्। न च तस्यापि यागस्यैव स्वर्गफलकत्वमिति तन्नाश्यत्वमेव अधिकृताधिकारेपि स्वर्गकामस्याधिकारात् अन्यथा निष्फलेऽप्रवृत्तेरिति वाच्यम्। स्वर्गफलत्वेऽङ्गत्वविरोधात्। प्रवृत्तिश्च फलवद्यागान्विततया,(२) तदुक्तम्–"यागे रागादङ्गे वैधीति"।

ननु "तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते कैवल्येनेति" श्रुतेस्तावदेवास्योत्पन्नतत्त्वज्ञान-

(१) स्वभावाद्वेति पाठान्तरम्। (२) यागार्थितयेति पाठान्तरम्।

स्य चिरं विलम्बो यावन्नोत्पन्नकर्मणो विमोक्षः, अथ संपत्स्यते कैवल्येनेति' अत्र भोगेन चपयित्वेति शेषः । न च शेषे मानाभावः, सत्यपि विज्ञाने कर्म्मावस्थाने फलप्रसामर्थ्यस्य भोगस्यैव नाशकत्वेनाक्षेपादिति चेन्न । तत्त्वज्ञाने सति तत्त्वज्ञानदशायां न मोक्षः किन्तु तदग्रिमक्षण इत्यर्थत्वेनाप्युपपत्तेः । यत्तु अकृतप्रधानाङ्गापूर्वाभिप्रायमेतद्–'ज्ञानाग्निः सर्वकर्माणी'त्यादि, तेषां कार्य्याणां नाशकान्तराभावादिति । तन्न । प्रधानार्थं तथा फलसानां तदभावे तत्सामग्र्यसिद्धेः तत्सत्त्वेऽपि सर्व्वकर्म्मपदस्य कर्म्मान्तरापरिग्राहकस्य सङ्कोचे मानाभावात् । यदपि भस्मसात्करणादिना फलाजनकत्वमुच्यते तत्त्वज्ञानात् कृतमपि विहितं कर्म न फलायेति, तथा च श्रुतिः "तद्यथा पुष्करपलाशे नापः श्लिष्यन्ते" इत्यादि । तदपि न । न हि भस्मसात्करणं क्षयश्चानुत्पत्तिरुच्यते, न च लक्षणा, मुख्ये बाधकाभावादिति । उच्यते । कर्मणो भोगनाश्यत्वेऽपि ज्ञानस्य कर्म्मनाशकत्वं भोगस्य तत्त्वज्ञानव्यापारत्वात् । न च भोगमात्रस्यैव कर्म्मनाशे सामर्थ्यात्तत्त्वज्ञानव्यभिचारः, कर्मप्रागभावासहवृत्तिकर्म्मनाशे युगपत्कर्मभोगे वाऽव्यभिचारात् । अत एवानुमानेनागमबाधाप्रयोजकत्वेन च श्रुतिवाक्यशेषे मानाभावः । उत्पन्नतत्त्वज्ञानस्यापवर्गविलम्बोपपादनार्थमुक्तरीत्या भोगस्यैवाक्षेपादिति । तदस्यापवर्गस्य परमपुरुषार्थस्य श्रुतिसिद्धकारणमनुमानं विविक्तमिति ॥

इति श्रीमहामहोपाध्याय गङ्गेशविरचिते तत्त्वचिन्तामणावनुमानाख्यद्वितीयखण्डे ईश्वरानुमानम् ॥

समाप्तञ्च द्वितीयमनुमानखण्डम् ।

( प्रका० ) कीर्त्तनादिनापि तन्नाशादाह *उत्सर्गत इति*। *प्राय-श्चित्तेति*। प्रायश्चित्तादिविधिनेत्यर्थः। *तप इति* तथाच तत्त्वज्ञानवतः कायव्यूहोऽसिद्ध एव तस्य ज्ञानेनैव कर्मक्षयादिति भावः। *तप इति*। पूर्वं कायव्यूहहेतुत्वमुक्तमिदानीं वधोगपद्यमुक्तमित्यपौनरुक्त्यम् *विम-तिपदमिति*। एतच्च प्रायश्चित्तनाश्यकर्मभागे बाधासिद्धिवारणार्थम्। *ज्ञानस्येति*। तथाच ज्ञानानाश्यत्वमपि भोगनाश्यत्वे तन्त्रम्, अन्यथा कर्मत्वमात्रस्यैव तन्त्रतायां प्रायश्चित्तादिरपि तन्नाशको न स्यादिति भावः।

ननु फलप्रधाने कथं व्यभिचारः। तत्र भोगसंभवेन तन्नाश्यत्वसंभवादित्यत आह *तस्येति*। याग आदिर्यस्य तदपूर्वं,तथाच प्रधानापूर्व-नाश्यत्वादित्यर्थः। तस्य यागशरीरनिष्पादकतया तन्नाश्यत्वमेवेत्यप्या-हुः। *अधिकृतेति*। अधिकृतस्याधिकारो यत्र तदधिकृताधिका-रकमङ्गं तत्रेत्यर्थः। यागार्थितया-प्रधानापूर्वार्थितयेत्यर्थः। श्रुतिं योजयति *तावदेवेति*। *प्रधानेति* यद्यप्येवं तत्र प्रागुक्तव्यभि-चारोद्भावनमयुक्तं तथाप्येतदनुशयादेव तत्र व्यभिचारान्तरोद्भावन-मिति ध्येयम्। यद्वा नहि प्रयोजनसापेक्षा सामग्री कार्यं जनयति त-थाच यत्र सामग्री तदुत्पत्तिसंभवात्, एतदनुशयादेवाह *यत्सत्त्वे-पीति*। *क्षयश्चेति*। क्षीयन्ते चास्य कर्माणीत्यत्रेत्यर्थः। *कर्मण इति* तथाच नाभुक्तमित्यादिश्रुतिरुत्सर्गतो भोगेन क्षयमाह, ज्ञानस्य कर्मनाशकत्वं भोगद्वाराप्युपपद्यत इति न तत्र तद्बाध इति भावः। अत्र पूर्वोक्तदूषणमाशंक्य निराकरोति *नचेति*। अन्वयव्यतिरेकाभ्यां दुःखध्वंसविशेष इव तद्धेतुत्वमिति भावः। वस्तुतोऽनियमः यत्कर्मज-दुःखप्रागभावोऽस्ति तस्य भोगेनैव नाशः तत्र प्रागभावस्यादृष्टद्वारेण प्रतियोगिजनकत्वनियमात्। अन्यथा तन्नाशकाभावे तस्यात्यन्ता-भावत्वापत्तेः। यत्कर्मजदुःखप्रागभावो नास्ति तत्र चानन्यगत्या······ स्यैव तत्त्वज्ञानानाश्यता इति युक्तमुत्पश्यामः। अनुमाने-विमतिपद-मित्यत्र *उत्पन्नेति* क्षणमात्रस्य विलम्बपदग्राह्यत्वाभावादिति भावः। तथाप्येकश्रुतिरप्यनन्यथासिद्धा तत्र प्रमाणमेवेति तात्पर्यम्। अतएव शा-स्त्रमपि तत्त्वज्ञानपूर्वकमुपपद्यते तदा दुरुक्षण एव मोक्षापत्तौ तदसं-भवादिति॥

इति श्रीमहामहोपाध्यायश्रीरुचिदत्तविरचितोऽनुमानप्रकाशः समाप्तः॥